श्रीगणेशायनमः ॥ शिवमभयमनंतसौख्यसिंधुंहृदिनिहितंहितमस्तमोहजालम् जगदुदयनयक्षयप्रवीणंनिरुपमबोधघनात्मदेवमीडे ॥ १ ॥ निर्ममानिरहंकारानिःसंकल्पवि
कल्पनाः ॥ यथाजीवंतिचेष्टंतेमुक्तायुक्तिस्तथोच्यते ॥ २ ॥ पूर्वार्धेश्रीरामसमाधिप्रदर्शनव्याजेनोत्तमाधिकारिणःश्रवणादृत्तिपरिपाकादेवसाक्षात्कारज्ञानोदयेनपरमपदेस
कृद्विश्रांतिर्भवतीतिदर्शितम् तस्यदैवात्पुनर्व्युत्थानेपियथाअविरतंतत्रैवविश्रांतिरनायासेनसिद्ध्यतितथोत्तरोत्तरभूमिकारोपणायोत्तरार्द्धमिदमारभ्यते ॥ अत्रादौरामः अहं
ममेतिसंविदन्दुःखतोविमुच्यते असंविदन्विमुच्यतेयदीप्सितंतदाचरेत्यंतेयदुक्तंतत्रसर्वकल्पनात्यागेकल्पनाधीनदेहधारणादिव्यवहारासिद्धिंशंकते ॥ नैष्कर्म्यादिति ॥ देहभा
णादिष्वहंतादिकल्पनात्यागाद्धेतोर्नैष्कर्म्यात्सर्वक्रियोपरमात्देहधारकप्राणादिचेष्टोपरमेदेहिनस्तनुराशुपततिअतएतत्त्वदुक्तंतस्यजीवतोव्यवहारादिकथंसंभवतीत्यर्थः ॥ १ ॥
नकल्पनाधीनंजीवनंयेनतत्त्यागात्तनुपातःस्यात्किंतुभोजकप्रारब्धाधीनम् कल्पनात्यागएवप्रत्युतजीवनाधीनजन्मेतिनोपजीवनंबाधतइत्यविरुद्धंकित्वजीवनमेवविरुद्ध्यतइ
त्याशयेनभगवान्वसिष्ठःसमाधत्ते ॥ जीवतइति ॥ अस्यकल्पनात्यागस्यस्वरूपंयथाजीवनविरुद्धंनभवतितथामयायथातत्त्वंवर्ण्यमानंशृण्वित्यर्थः ॥ २ ॥ अहंभावनंदेहादि

श्रीरामउवाच ॥ ॥ नैष्कर्म्यात्कल्पनात्यागात्तनुःपततिदेहिनः ॥ कथमेतदतोब्रह्मन्संभवत्याशुजीवतः ॥ १ ॥ ॥ श्रीवसिष्ठउवाच
जीवतःकल्पनात्यागोयुज्यतेनत्वजीवतः ॥ रूपमस्ययथातत्त्वंशृणुश्रवणभूषणम् ॥ २ ॥ अहंभावनमेवाहुःकल्पनंकल्पनाविदः ॥ न
भोर्थभावनंतस्यसंकल्पत्यागउच्यते ॥ ३ ॥ पदार्थरसमेवाहुःकल्पनंकल्पनाविदः ॥ नभोर्थभावनंतस्यसंकल्पत्यागउच्यते ॥ ४ ॥ इदं
वस्त्वितिसंवेगमाहुःकल्पनमुत्तमाः ॥ नभोर्थभावनंतस्यसंकल्पत्यागउच्यते ॥ ५ ॥ स्मरणंविद्धिसंकल्पंशिवमस्मरणंविदुः ॥ तत्रप्राग
नुभूतंचनानुभूतंचभाव्यते ॥ ६ ॥ अनुभूतानानुभूतांस्मृतिंविस्मृत्यकाष्ठवत् ॥ सर्वमेवाशुविस्मृत्यगूढस्तिष्ठमहामते ॥ ७ ॥ सर्वास्मर
णमात्रात्मातिष्ठायातेपुकर्मसु ॥ अर्द्धसुप्तशिशुस्पंदइवाभ्यस्तोपपत्तिपु ॥ ८ ॥

परिच्छेदाध्यासम ॥ नभःअपरिच्छिन्नब्रह्माकाशस्तद्रूपस्यार्थस्यस्वपारमार्थिकस्वभावस्यभावनंप्रतिसंधानंपरिच्छेदाध्यासोच्छेदित्वात्संकल्पत्यागस्तैरुच्यते ॥ ३ ॥ ४ ॥ इदं
देहादिसर्वंदृश्यंवस्तुपरमार्थसत्यमितिसंवेगमभिमानम् ॥ तस्यनभःकार्यभूतचतुष्टयविकारत्वात्तत्त्वतोनभोर्थएवैकःस्फुरतीत्यर्थस्यभावनंपर्यालोचनम् ॥ इदंद्वयमपिभातानुभ
वविरुद्धत्वेपिनजीवनविरुद्धम ॥ जीवतएवभ्रांतिनिवृत्तिदर्शनादितिभावः ॥ ५ ॥ एवंस्मरणात्मकाध्यासविरोधिनस्तन्निरोधस्यापिनजीवनविरोधित्वमित्याशयेनाह ॥ स्मरणमि
ति ॥ भूतविषयमनुभूतंभाविविषयमननुभूतम ॥ स्मरणपदंणंपरोक्षवृत्तिमात्रोपलक्षणम् ॥ ६ ॥ स्मृतिस्मरणंसर्वमनुमित्यादिवृत्त्यंतरंचविस्मृत्यअपरिच्छिन्नब्रह्माकारनिर्लो
नःकाष्ठवद्गूढोनिश्चलस्थितिश्चिरंजीव ॥ तथाचब्रह्मात्मभावेनचित्तवृत्तिनिरोधोयोगिनामायुर्वर्द्धनप्रत्युतजीवनहेतुरेवेतिभावः ॥ ७ ॥ व्यवहारकालेतुस्मृतिमात्रनिरोधःकार्य
इत्याह ॥ सर्वेति ॥ दृढाभ्यस्तव्यवहारेनपूर्वापरस्मृतिप्रयत्नाद्यपेक्षास्तीत्याशयेनाह ॥ अर्द्धेत्यादिना ॥ अभ्यस्तोपपत्तिपुपूर्वाभ्यासमात्रेणोपपद्यमानेष्वित्यर्थः ॥ ८ ॥

विनाप्रयोजनोद्देशंपूर्वसंस्कारमात्रेणकृतकार्यंकुलालचक्रंयथायावद्वेगक्षयंप्रस्पंदतेभ्रमतितथेत्यर्थः ॥ ९ ॥ सत्वंनिर्वासनंमनस्तदीयंसंस्कारवेगमागतोऽनुगतःसन्रागादिदोष
क्षयान्चोच्छृंखलप्रवृत्तिप्रसक्तिरित्याशयेनाह ॥ प्रवाहेति ॥ १० ॥ एवंप्रश्नंसमाधायबहुकृत्वोपिपथ्यंवदितव्यमितिन्यायेनप्रागुक्तमेवसंकल्पत्यागादिश्रेयःसाधनमित्युद्घोष
यन्पुनःपुनराह ॥ ऊर्ध्वबाहुरित्यादिना ॥ ११ ॥ १२ ॥ अवेदनंदृश्यदर्शननिर्मुक्तमात्मतत्त्वंतदेवमुख्योऽसंकल्पः ॥ १३ ॥ तूर्णीसंकल्पचेष्टांविना ॥ १४ ॥ प्राक्तनसंकल्पप्रयु
क्तक्रियावेगवशादेवयावत्तत्क्षयंव्यवहारसिद्धौप्रागुक्तंदृष्टांतांतरंपुनराह ॥ गम्येति ॥ १५ ॥ अवेदनमसंकल्पइतियदुक्तंतद्व्यवहारकालेप्युपपादयति ॥ सर्वेति ॥ १६ ॥ यथास्व
तश्चेष्टितोन्मुक्तंशष्पंबालतृणंवाय्वादिप्रवाहपतिततृणांतरसंयोगवियोगादिकार्येस्पंदतेतद्वत् ॥ १७ ॥ यथापरेषांकौतुकार्थंनृत्यादिकुर्वतइवस्थितस्यदारुपुत्रिकायंत्रस्यनटवच्छृं

निःसंकल्पप्रवाहेणचक्रंप्रस्पंदतेयथा ॥ स्पंदस्वकर्मस्वनघप्राक्संस्कारवशात्तथा ॥ ९ ॥ अविद्यमानचित्तस्त्वंसत्त्वसंस्कारमागतः ॥
प्रवाहपतितेष्वेवस्पंदस्वस्वेषुकर्मसु ॥ १० ॥ ऊर्ध्वबाहुर्विरौम्येषनचकश्चिच्छृणोतिमे ॥ असंकल्पःपरंश्रेयःसकिमंतर्नभाव्यते ॥ ११ ॥
अहोमोहस्यमाहात्म्यंयदयंसर्वदुःखहा ॥ चिंतामणिर्विचाराख्योहृत्स्थोपित्यज्यतेजनैः ॥ १२ ॥ अवेदनमसंकल्पस्तन्मयेनैवभूयताम् ॥
एतावत्परमंश्रेयःस्वयमेवानुभूयताम् ॥ १३ ॥ किलतूर्ष्णींस्थितेनैवतत्पदंप्राप्यतेपरम् ॥ परमंयत्रसाम्राज्यमपिरामतृणायते ॥ १४ ॥ ग
म्यदेशैकनिष्ठस्ययथापांथस्यपादयोः ॥ स्पंदोविगतसंकल्पस्तथास्पंदस्वकर्मसु ॥ १५ ॥ सर्वकर्मफलाभोगमलंविस्मृत्यसुप्तवत् ॥ प्र
वाहपतितेकार्येस्पंदस्वगतवेदनम् ॥ १६ ॥ स्पंदस्वाकृतसंकल्पंसुखदुःखान्यभावयन् ॥ प्रवाहपतितेकार्येचेष्टितोन्मुक्तशष्पवत् ॥ १७ ॥
रसभावनमंतस्तेमालंभवतुकर्मसु ॥ दारुयंत्रमयस्येवपरार्थमिवकुर्वतः ॥ १८ ॥ नीरसाएवतेसंतुसमस्तेंद्रियसंविदः ॥ आकारमात्र
संलक्ष्याहेमंतेम्लौलताइव ॥ १९ ॥ बोधार्कपीतरसयास्पंदन्षड्वर्गसत्तया ॥ यंत्रस्पंदोपमस्तिष्ठवल्ल्येवशिशिरेद्रुमः ॥ २० ॥ चिदांतरर
सान्येवप्रवृत्तान्यपिधारय ॥ स्वयत्नेनेंद्रियाण्याशुहेमंततुंस्तरूनिव ॥ २१ ॥ सरसेंद्रियवृत्तेस्तेकुर्वतोऽकुर्वतस्तथा ॥ संसारानर्थसार्थो
यंनकदाचनशाम्यति ॥ २२ ॥ निःसंकल्पमरुज्ज्वालायंत्रांबुस्पंदवद्यदि ॥ स्पंदसेतदनंतायश्रेयसेपरिकल्पसे ॥ २३ ॥ एतदेवपरंधैर्यंज
न्मज्वरनिवारणम् ॥ यदवासनमभ्यस्तानिजकर्मसुकर्तृता ॥ २४ ॥

गारादिरसभावनंनास्तितद्वत्त्वमपिकुर्वतोविषयसुखेमूर्खस्येवरसभावनंकौतुकबुद्धिर्माभूदित्यर्थः ॥ १८ ॥ १९ ॥ षड्वर्गःपंचकोशसंवलितचिदाभासः समनस्कःप्राणवर्गोज्ञा
नेंद्रियवर्गः कर्मेंद्रियवर्गोज्ञानकर्मेंद्रियसहितांतःकरणचतुष्टयम् षाट्कौशिकंशरीरंचेतिषट्षड्वर्गास्तेषांसत्तया ॥ वल्ल्यावेष्टितःशिशिरेद्रुमइवनीरसः ॥ २० ॥ ननुनीरसस्य
षड्वर्गस्यकथंजीवनंतत्राह ॥ चिदिति ॥ अनावरणभूमानंदरूपाचिदेवांतरोजीवनपुष्ट्यादिहतूरसोयेषांतानिप्रवृत्तानिस्वभावाद्बाह्यरसास्वादेप्रवृत्तान्यपिस्वयत्नेननिवार्यचिदां
तररसान्येवकृत्वाधारयेत्यर्थः ॥ इंद्रियग्रहणंषड्वर्गोपलक्षणम् ॥ यथाहेमंततुंस्तरून्बाह्यजलाभावेप्यांतरेणैवरसेनजीवयतितद्वदित्यर्थः ॥ २१ ॥ इंद्रियवृत्तीनामनिवारणेसर
सत्वेचकिंस्यात्तत्राह ॥ सरसेति ॥ २२ ॥ निःसंकल्पमेवमरुतोज्वालायायंत्रस्यांबुनश्चयथास्पंदस्तथायदिस्पंदसे ॥ परिकल्पसेसमर्थःस्याः ॥ २३ ॥ २४ ॥

चक्रेभ्रमतीतिभ्रमआभोगःसन्निवेशइवशनैरुत्तरोत्तरमुपशमशीलःस्पंदस्त्व ॥ २५ ॥ कर्मफलेआसक्तिबुद्धिर्यस्यतथाविधोमाभूः ॥ अकर्मणिकर्मत्यागेपितत्फलासक्तिलक्ष
णःसंगोमास्तु ॥ फलासंगाभावेकर्मकरणेतत्त्यागेचनविशेषइत्याशयेनाह ॥ उभयमिति ॥ २६ ॥ २७॥ अकार्यंत्याज्यम् ॥ प्राग्वद्यथास्थितमेवआस्यतांस्थीयताम् ॥२८॥
अकर्मत्वंनिष्क्रियब्रह्मात्मताम् ॥ अकर्मणितादृशब्रह्मभावस्थितौकर्मतामवश्यकर्त्तव्यताम ॥ २९ ॥ अवेदनंप्राग्व्याख्यातम ॥ ३० ॥ निस्पंदंतूष्णीमवस्थानमामवातजडीकृ
तसर्वांगस्येवखेदायैवेतिशंकांवारयति ॥ समेइति ॥ ३१ ॥ ३२ ॥ कृतेनअकृतेनवालौकिकवैदिककर्मणाजीवतऐहिकोऽजीवतआमुष्मिकोप्यर्थःपुरुषार्थोनास्ति ॥ ३३ ॥
कुतोनास्तितत्राह ॥ यदिति ॥ यद्यस्मात्कारणात्कर्माकर्मोभयबाधावधौतदुभयात्मभूतेचशाश्वताभेदरूपिणित्वयिप्रातिभासिककर्मात्मनाविवर्त्तमानेपिवस्तुतःकर्मतानास्ति

अवासनमसंकल्पंयथाप्राप्तानुवृत्तिमान् ॥ शनैश्चक्रभ्रमाभोगइवस्पंदस्वकर्मसु ॥ २५ ॥ माकर्मफलबुद्धिर्भूर्मातेसंगोस्त्वकर्मणि ॥
उभयंवात्यजैतत्त्वमुभयंवासमाश्रय॥२६॥ बहुनात्रकिमुक्तेनसंक्षेपादिदमुच्यते॥संकल्पनंमनोबंधस्तदभावोविमुक्तता ॥ २७॥ नेह
कार्यंनवाकार्यमस्तिकिंचिन्नकुत्रचित् ॥ सर्वंशिवमजंशांतमनंतंप्राग्वदास्यताम् ॥२८॥पश्यन्कर्मण्यकर्मत्वमकर्मणिचकर्मताम्॥य
थाभूतार्थचिद्रूपःशांतमास्वयथासुखम्॥२९॥अवेदनंविदुर्योगंचित्तक्षयमकृत्रिमम्॥अत्यंतंतन्मयोभूत्वातथातिष्ठयथासिभोः॥३०
समेशांतेशिवेसूक्ष्मेद्वैतैक्यपरिवर्जिते॥ ततेऽनंतेपरेशुद्धेकिंकेनकिलखिद्यते॥३१॥ नोदेतुत्वयिसंकल्पोमरुभूमाविवांकुरः॥ इच्छानो
देतुभवतिलतिकेवोपलोदरे ॥ ३२ ॥ अवेदनस्यशांतस्यजीवतोवाप्यजीवतः॥ नेहकिंचित्कृतेनार्थोनाकृतेनापिकश्चन॥ ३३ ॥ यत्क
र्माकर्मशांतेऽतःशाश्वताभेदरूपिणि॥ नकर्मणिचकर्माणिनकर्त्तर्यपिकर्त्तृता॥३४॥ अहंममेतिसंविदन्नदुःखतोविमुच्यसे॥ असंविद
न्विमुच्यसेयदीप्सितंतदाचर॥ ३५॥ अहंममेतिनास्त्यलंयदस्तितच्छिवंपरम् ॥ परात्परंत्विदंशिवादशब्दमर्थरूपकम्॥ ३६॥ यद्दृश्य
तेजगदिदंखलुकिंचिदेतद्दृष्टोऽगदत्वमिवभातिनविद्यमानम्॥अस्यक्षयंविदुरवेदनमेवपश्चात्सत्यंतदेवपरमार्थमथावशिष्टम्॥३७॥
इत्यार्षेवासिष्ठमहारामायणेवा॰देवदूतोक्तेमोक्षोपायेपुनिर्वाणप्रकरणेउत्तरार्धेइच्छादिचिकित्सायोगोपदेशोनामप्रथमःसर्गः॥१॥

तादृशकर्त्रात्मनाविवर्त्तमानेपिकर्तृतानास्ति ॥ यस्यकर्मकर्तृतादौसत्यताबुद्धिस्तस्यैवकर्मफलमितिश्रद्धादिवदधिकारिविशेषणविधायकशास्त्रेणबोधनादितिभावः ॥ ३४॥
अतएवंदृष्टात्वायदहंममेतिसंवेदनवतएवविधिनिषेधशास्त्राधिकारात्कर्मकृतोबंधोनेतरस्येतिप्रागुक्तमित्याह ॥ अहंममेति ॥ ३५ ॥ परानूमानंदाख्याच्छिवात्परमन्यदिदंदृश्यमर्थ
रूपमिथार्थरूपकंप्रातिभासिकंजगदशब्दमनिर्वचनीयमयस्त्वेवेत्यर्थः ॥ ३६ ॥ एतदेवस्पष्टमाह ॥ यदिति ॥ किंचिदिदंत्वमीदृशंचेतिनिर्वचनशब्दशून्यम् ॥ एतद्बाधावधिज्ञानंतु
अथतत्त्वबोधबाधानंतरंपश्चादवशिष्टमवेदनंवेदनाऽविषयमेवानुभवनिष्ठाःसत्यंकरूपंपरमपुरुषार्थरूपंविदुरित्यर्थः ॥३७॥ ॥ इतिश्रीवा॰म॰ता॰नि॰उत्तरार्धेप्रथमःसर्गः॥१॥

१ अयमर्थोमूलस्थकर्मणीत्यस्य

२ मूलस्थकर्माणीत्यस्यभावप्रधानानिर्देशादयमर्थइतिभाति

निरूप्यतेऽत्रप्रथमंसर्वंशिवमयंजगत् ॥ कर्मबीजंतथान्विष्यसमूलंविनिवार्यते ॥ १ ॥ सर्वंशिवमयंशांतमनंतंप्राग्वदास्यतामितियदुक्तंतदत्रप्रथममुपपादयितुंप्रतिजानीते ॥ अद्वैतैक्यमिति ॥ आत्मनिपारमार्थिकस्वभावेतत्त्वदृष्ट्याअवस्थितम् ॥ १ ॥ यद्यद्धिचिद्भास्यंतत्तच्चिद्विवर्त्तत्वाच्चिन्मयमित्यंतःकरणचतुष्टयेक्रमेणदर्शयति ॥ मनइति ॥ प्रथमंहिचितश्चेत्योन्मुखत्वलक्षणंमननंचिद्भाप्रमेवततस्तदभिमानाध्यवसायस्मरणकामसंकल्पादिवृत्तयस्तथैवचिद्भाप्राःसर्वानुभवसिद्धाः ॥ तथाचिच्चेत्यसंबंधलक्षणःकाल श्चेत्याकारस्तत्क्रियानामसंस्थानसहितंसर्वमंतःकरणसंसरणंसाक्षात्साक्षिवेद्यत्वाच्छिवमयमितिबोद्धुंशक्यमित्यर्थः ॥ २ ॥ एवंबहिरिंद्रियतद्द्वारकबाह्यदर्शनतद्विषयेष्वपिचि द्याप्तिप्रयुक्तैवापरोक्षप्रथेतितत्रापिशिवमयत्वमेवविवेकिभिर्द्रष्टुंशक्यमित्याशयेनाह ॥ शिवेति ॥ रूपालोकग्रहणंशब्दाद्यालोचनानामप्युपलक्षणम् ॥ मनःक्रमाबाह्यसवि कल्पकहानोपादानादिबुद्धयस्तद्विषयाश्च ॥ एवंशिवमयत्वदर्शनेशिवएवसर्वत्रिपुटीरूपेणप्रथतेनततोवस्त्वंतरमस्तीत्याह ॥ तन्मयत्वादिति ॥ ३ ॥ तदेवविशदयति ॥ मात्रि

श्रीवसिष्ठउवाच॥ ॥अद्वैतैक्यंविमननंशांतमात्मन्यवस्थितम्॥यथापंकमयंसैन्यंतथाशिवमयंजगत्॥१॥मनोहंकारबुद्ध्यादिचि त्तमेवचतन्मयम्॥कालाकारक्रियाशब्दशक्तिसंदर्भसंयुतम्॥२॥शिवपंकमयाएवरूपालोकमनःक्रमाः॥तन्मयत्वादनंतत्वादतःकिं केनचेत्यते॥३॥मातृमेयप्रमाणादिदेशकालौदिगादिच॥भावाभावविवर्त्तादिशिवपंकमयात्मकम्॥४॥अहंममेत्यतःसारान्नेतर त्परमेश्वरात्॥असंसक्तमतिस्तिष्ठहाशिलोदरमौनवत्॥५॥ ॥श्रीरामउवाच॥ ॥अहंममेत्यसद्रूपंज्ञस्याभावयतःप्रभो॥अशुभंकर्म णांत्यागादनुष्ठानाच्चकिंशुभम्॥६॥ ॥श्रीवसिष्ठउवाच॥ ॥पृच्छामियदहंतत्त्वंकथयाशुममानघ॥यदिजानासितत्त्वेनकर्मताव त्किमुच्यते॥७॥विस्तारःकर्मणःकीदृङ्मूलंतस्यचकिंभवेत्॥नाशनीयंचनिपुणंकथंकथयनाश्यते॥८॥ ॥श्रीरामउवाच॥ ॥यन्ना शनीयंनिपुणंतन्नूनंचविनाश्यते॥मूलकाषेणभगवन्नशाखादिविकर्त्तनैः॥९॥

ति ॥ ४ ॥ सर्वंविवर्त्तानहंममेतिद्वैरूप्येणैवसंगृह्यतत्रचिद्भाप्तत्वपर्यालोचनेतत्सारतन्मात्रत्वपरिशेषात्तत्रस्थितिःसुलभेत्याशयेनाह ॥ अहमिति ॥ शिलोदरेयत्प्रसिद्धंवागादि चेष्टाशून्यत्वलक्षणंमौनंतद्वत् ॥ नामरूपकर्मात्मकेप्रपंचेनामरूपयोरपरोक्षचिद्भास्यैवस्फुरणाच्छिवमयत्वंनिर्णीयतत्रबाधेनतत्स्वरूपेऽवस्थानंसुकरम् ॥ कर्मणांतुपुण्यपापल क्षणानामनंतकोटिजन्मसंचितानामपरोक्षतयाभानादर्शनान्नशिवमयत्वदर्शनेनबाधसिद्धिरितितन्निवारणेपरिशेषादामरणंनिश्चेष्टावस्थानलक्षणस्तत्त्यागएवोपायः ॥ नहि ज्ञानिनःकर्मकरणेनकिंचित्फलमपेक्षितंनवानित्यनैमित्तिकत्यागेप्रत्यवायप्रसक्तिरस्तियेनतूष्णीमवस्थानंनसिद्ध्येदितिसंभावनयारामःपृच्छति ॥ अहमिति ॥ ६ ॥ सत्यमेवत वनैष्कर्म्यंसिद्ध्येद्यदिमूलेनसहत्वयातत्त्यक्तुंशक्येत मूलंतुतथातवदुस्त्यजमेवेतिदर्शयितुंवसिष्ठोरामेणकर्मणांकिंमूलमितिनिश्चित्येत्थंपृच्छयतेइतिपरीक्षार्थंरामंत्वयाकर्मणःस्व रूपंतस्यफलात्मकोविस्तारस्तन्मूलंतत्रनाशयोग्यांशस्तदुपायश्चकीदृशोनिश्चितइतिपृच्छति ॥ पृच्छामीतिद्वाभ्याम् ॥ ७ ॥ ८ ॥ मूलकाषेणमूलोच्छेदेन ॥ ९ ॥

तत्रस्वरूपंतन्नाशप्रकारंचरामःस्वाभिप्रेतमाह ॥ शुभाशुभमिति ॥ पुण्यपापरूपमित्यर्थः ॥ १० ॥ तृतीयप्रश्नस्योत्तरमाह ॥ कर्मवृक्षस्येति ॥ तत्रादौअथकर्मणामात्मेत्ये तदेषामुक्थमतोहिकर्माण्युत्तिष्ठंतीतिश्रुत्यानिष्कृष्यदर्शितंमूलंप्रथमंदर्शयति ॥ ब्रह्मन्निति ॥ यस्यनिकाषेणअनशनादिनामरणेनेतियावत् ॥ ११ ॥ ऐहिककर्ममूलंदेहंप्राक्त नकर्मणोविस्तारोपिभवतीतिद्वितीयप्रश्नमपितस्यकर्मवृक्षतयावर्णनेनसमाधत्ते ॥ देहस्तावदित्यादिना ॥ विचित्राभिर्हस्ताद्यंगलक्षणाभिर्लताभिःशाखाभिरंचितोविराजमा नः ॥ १२॥ तस्यप्राक्तनंकर्मबीजम् ॥ १३ ॥ मुहूर्त्तंप्रतिप्रतिमुहूर्त्तंकालरूपेणोग्रमर्कटेनहर्षविषादरोगजरादिविकारचेष्टाभिर्ध्वंसिताकृतेर्निद्रालक्षणेहेमंतजठरेलीनाःसंकुचिताः स्वप्नलक्षणादलोद्गतयःपर्णनिर्गमायस्य॥ १४॥स्वस्यवार्धकलक्षणेशरदीवशरदिशिशिरांतेशांताउपरताःशीर्णाश्चईहाश्चेष्टास्तल्लक्षणाःपर्णसंततयोयस्य ॥ कलत्रंभार्यादिपोष्य

शुभाशुभंनाशनीयंस्वकर्मखलुधीमता॥ मूलकाषविनाशेनतच्चनष्टंभवत्यलम् ॥ १० ॥ कर्मवृक्षस्यवक्ष्यामिब्रह्मन्मूलानिमेशृणु॥ यन्निकाषेणनिर्मूलोनसभूयःप्ररोहति॥ ११ ॥ देहस्तावदयंब्रह्मन्कर्मवृक्षःसमुत्थितः ॥ रूढःसंसारविपिनेविचित्रांगलतांचितः॥ १२॥ कर्मबीजंतरोरस्यसुखदुःखफलावलेः॥ क्षणतारुण्यकांतस्यजराकुसुमहासिनः॥ १३॥ मुहूर्त्तप्रतिकालोग्रमर्कटध्वंसिताकृतेः॥ निद्रा हेमंतजठरलीनस्वप्नदलोद्गतेः॥ १४॥ स्ववार्धकशरच्छांतशीर्णेहापर्णसंततेः ॥ जगज्जंगलजातस्यकलत्रोपवनावलेः॥ १५॥ पल्लवा वयवाहस्तपादपृष्ठादयोऽरुणाः ॥ पत्राणितनुवृत्तानिसुरेखाणिचलानिच ॥ १६॥ अरुणाःपवनालोलामृद्वोमसृणमूर्त्तयः॥ स्नाय्व स्थिदिग्धसरसाअंगुल्योबालपल्लवाः ॥ १७ ॥ मृद्वोमसृणतीक्ष्णाग्रावृत्तारूढाःपुनःपुनः ॥ द्वितीयेंदुकलाकाराःकलिकानखपंक्तयः ॥ १८॥ कर्मणःपरिफुल्लस्यदेहरूपतयेतिहि ॥ कर्मेंद्रियाणिमूलानिदुष्टानिग्रंथिमंतिच॥ १९ ॥ स्थिरास्थिग्रंथिनद्धानिपंकमग्नात्मका निच॥ वासनारसपीतानिनिजरक्तरसानिच ॥ २० ॥ गुल्फवंतिदृढांगानिसुत्वंचिमसृणानिच ॥ तेषामपिचमूलानिविद्धिबुद्धींद्रिया णिहि॥ २१ ॥

वर्गस्तद्रूपाउपसमीपप्ररूढातृणावलिःकक्षोयस्य ॥ १५ ॥ हस्तयोःपादयोश्चपृष्ठानिमृदूनिआविपदाद्योष्ठौकर्णौजिह्वेत्यादयस्तस्यअरुणास्ताम्रवर्णाःपल्लवरूपाअवयवाः ॥ अल्पारुणानितुतनुवृत्तानिसुरेखाणिचहस्तपादतलानिईषत्कठोरत्वात्पत्राणि ॥ १६ ॥ अंतःस्नाय्वस्थिदिग्धत्वात्सरसारम्याअंगुल्यस्तस्यपवनालोलाबालपल्लवाः ॥ १७ ॥ छिन्नाअपिपुनःपुनारूढाःप्रादुर्भूतानखपंक्तयस्तस्यकलिकाःकोरकाः ॥ १८ ॥ इतिदेहवृक्षरूपतयापरिफुल्लस्यप्ररूढस्यप्राक्तनकर्मणःकर्मेंद्रियाणिमूलानि ॥ तेषुतरुमूलधर्मा न्दर्शयति ॥ दुष्टानीति ॥ तेषुयानिसच्छिद्राणितान्यासंगकामादिसर्पदुष्टानियान्यच्छिद्राणितानिपर्वधर्मंति ॥ १९ ॥ तानिपुनर्यथायोगंविशिनष्टि ॥ स्थिरेति ॥ पंकोनाडी पुपूर्णोन्नरसस्तन्मग्नात्मकानि ॥ २० ॥ तत्रपादेंद्रियाणिगुल्फवंति ॥ सुत्वंचिशोभनत्वक्संवृतानिअतएवमसृणानि ॥ तेषांमूलांतराण्याह ॥ तेषामपीति ॥ २१ ॥

सुदूरस्थविषयंप्रत्यपिजातानिप्रादुर्भूतानि देहाद्बहिर्विषयदेशंगत्वापिग्रहीतुंसमर्थानीत्यर्थः ॥ पंचस्तंबानिनेत्रगोलकादिपंचविधस्थानाश्रितानि कर्मेंद्रियवदेतस्वस्वविषयवासनापंकमग्नानि ॥ अतएवतत्ररसवंति ॥ महांतिनिग्रहीतुमशक्यानि ॥ २२॥ पंचेंद्रियस्रोतोरूपाभिःशिराभिरंतराकृष्टाउपभोगोत्तरंमुक्ताश्च अनंतारूपादिरसद्रवायेन ॥२३॥ तस्यमनसोपिमूलंचेत्योन्मुखीचिदाभासभावेनचेत्यप्रवणायातेजोबन्नप्रविष्टाचित्तदात्मकम् ॥ तत्रचेत्यांशस्यचेतनमविद्याशबलाचिन्मूलम् ॥ २४ ॥ चितश्चिदाभासांशस्यतुबिंबभूतंब्रह्मचैतन्यमेवमूलम् ॥ २५ ॥ वेदनंचेत्योन्मुखचित् ॥ तच्चाहंकारादितादात्म्यापन्नंकर्तृस्वरूपमहमितिचेतयित्वाक्रियात्मकस्पंदःसंस्तत्फलायप्रवर्त्तते ॥ २६ ॥ चेतनंजीवचिदेव ॥ २७ ॥ एतज्जीवचैतन्यमहंकारादिसंवलनेनकर्तृचेतनोहमितिशब्दार्थभावनयोद्बुद्धयायदिसंवलितंतत्तदेवेत्यर्थः ॥ कर्मणांबीजतांमूलताम् ॥ २८ ॥ तदेवस्पष्टमाह ॥ चितिरिति ॥ वलिताचेष्टिता ॥ तत्भावनासंवलितरूपम् ॥ २९ ॥

सुदूरमपिजातानिपंचस्तंबानितानितु॥ वासनापंकमग्नानिरसवंतिमहांतिच॥ २२ ॥ तेषांमूलंबृहत्स्तंभंमनोव्याप्तजगत्त्रयम् ॥ पंचस्रोतःशिराकृष्टमुक्तानंतरसद्रवम् ॥ २३ ॥ तस्यमूलंविदुर्जीवंचेत्योन्मुखचिदात्मकम्॥ चेत्यस्यचेतनंमूलंसर्वमूलैककारणम्॥ २४॥ चितेस्तुब्रह्ममूलंयत्तस्यमूलंनविद्यते॥ अनाख्यत्वादनंतत्वाच्छुद्धत्वात्सत्यरूपिणः॥२५॥ सर्वेषांकर्मणामेवंवेदनंबीजमुत्तमम्॥ स्वरूपंचेतयित्वांतस्ततःस्पंदःप्रवर्त्तते॥ २६॥ मुनेचेतनमेवाद्यंकर्मणांबीजमुच्यते ॥ तस्मिन्सतिमहाशाखोजायतेदेहशाल्मलिः॥ २७॥ एतच्चेतनशब्दार्थभावनावलितंयदि॥ तत्कर्मबीजतामेतिनोचेत्सत्परमंपदम्॥ २८॥ चितिश्चेतनशब्दार्थभावनावलितायदि ॥ तत्कर्मबीजतामेतिनोचेदाद्यंपरंपदम्॥ २९ ॥ तस्माद्वेदनमेवेहकर्मकारणमाकृतेः ॥ यदेतत्कर्मणांप्रोक्तंत्वयैवोक्तंमुनीश्वर ॥ ३० ॥ ॥ श्रीवसिष्ठउवाच॥ ॥अस्यराघवसूक्ष्मस्यकर्मणोवेदनात्मनः॥ कस्त्यागःकिमनुष्ठानंयावद्देहमितिस्थितम्॥ ३१॥ यच्चेत्यतेनुतेनाशुबहिरंतश्चभूयते॥ सत्याकारमसत्यंवाभवत्वाहितविभ्रमम्॥ ३२॥ नचेत्यतेचेत्तदलंभ्रमादस्माद्विमुच्यते॥ भ्रमःसत्योस्त्वसत्योवाकिंविचारणयानया॥ ३३॥ एतच्चेतनमेवांतर्विकसत्युद्भवभ्रमैः॥ वासनेच्छामनःकर्मसंकल्पाद्यभिधात्मभिः॥ ३४॥

उक्तार्थस्यप्रामाणिकतासिद्धयेगुरुवाक्यसंवादित्वोक्त्योपसंहरति ॥ तस्मादिति ॥ आकृतेर्देहाद्यहंभावाकारस्यस्वस्यवेदनमेवकर्मणांकारणम् ॥ मयायदेतत्कर्मणांमूलंप्रोक्तंतत्प्राक्त्वयैवोक्तंत्वद्वचनमालंब्यैवेदंमयाप्रोक्तमित्यर्थः ॥ ३० ॥ एवंत्वयावर्णितंकर्ममूलंनतूष्णीमवस्थानेनदेहत्यागेनवात्यक्तुंशक्यमितिनत्वदुत्प्रेक्षितरीत्याकर्मनिवृत्तिःसंभवतीत्याशयेनवसिष्ठउवाच ॥ अस्येति ॥ यावद्देहंयावदुपाधि ॥ ३१ ॥ तस्मिन्सतिबाह्यांतरदृश्याध्यासोदुर्निवारइत्याह ॥ यदिति ॥ यद्यत्तेनबाह्यमाभ्यंतरंवाचेत्यतेतेनतेनदृश्येनभूयतेउद्भवःप्राप्यते ॥ नुइतिसंभावने ॥ ३२ ॥ सुषुप्त्यादिकालेनचेत्यतेचेत् ॥ तीर्णोहितदासर्वाञ्छोकान्हृदयस्यभवतीतिश्रुतेस्तथैवानुभवाच्चेतिभावः ॥ नन्वसत्यभ्रमेणास्यकाक्षतिस्तत्राह ॥ भ्रमइति ॥ बाधाभावेअसत्यदुःखस्याप्यनुभवेसत्यविशेषादितिभावः ॥ ३३ ॥ एतज्जीवचेतनमेवौपाधिकैर्वासनादिनामभिरुद्भवभ्रमैःसंसारात्मनाविकसति ॥ ३४ ॥

ननुतर्हिप्रबोधेनसप्रतिबिंबहेतुश्चित्तोपाधिर्निरसनीयस्तत्राह ॥ प्रबुद्धस्येति ॥ ३५ ॥ तस्मात्तूष्णींभावेनदेहत्यागेनवाकर्मोपरमःकर्मत्यागःकिंतुयथाप्राप्तव्यवहारकालेप्यसं गाद्वितीयकूटस्थचिन्मात्रोहंनैवकिंचित्करोमीतिनिष्क्रियात्मस्वभावस्थित्याकर्मशब्दार्थभावनायाअभावनेअनुद्भवेसतिविनापियत्नंकर्माकर्मत्वविकल्पमुत्सृज्यकेवलंस्वयमे वभवतीत्यर्थः ॥३६॥ इतोन्यथातुकर्मत्यागोदुष्करइत्याह ॥ असंभवतीति ॥३७॥ बोधात्सर्वद्वैतबाधेनकर्मणोपिबाधलक्षणस्त्यागस्तुकुर्वतोप्यविरुद्धइत्याशयेनाह ॥ बोधादि ति॥ इदंतासंवित्तेर्दृश्यप्रतिभासस्यस्वयमेवविलयनाद्बाधात्तुयदत्यंतासत्त्वंतंजगतस्त्यागंम् ॥३८॥ ननुबोधाद्वैतमेवबाध्यतेनवेदनंतत्कथंतद्बाधउच्यतेतत्राह ॥ वेदनमिति॥३९॥ साचवेद्यदृक्तत्त्वदृशानोत्पन्नानैवविद्यते ॥ उपाधिबाधेचिदाभासस्यपृथगनवस्थानादितिभावः ॥ यत्तुचिदाभासत्वरूपंवेद्योन्मुखत्वंसंत्यज्यशुद्धचिदात्मकरूपंशिष्टंतन्नद्वैत वेदनंयतस्तत्कर्मक्रियानो येनभावल्युडंतविदधात्वर्थःस्यादित्यर्थः ॥ किंतुब्रह्मैवेत्याह ॥ वेद्योन्मुखत्वमिति ॥ ४० ॥ यत्तुचिदाभासात्मकंचेतनंतत्कर्मक्रियारूपमेवप्रोच्यते

प्रबुद्धस्याप्रबुद्धस्यदेहिनोदेहगेहके॥ आदेहंविद्यतेचित्तंत्यागस्तस्यनविद्यते॥ ३५॥ जीवतांतस्यसंत्यागःकथंनामोपपद्यते ॥ केवलं कर्मशब्दार्थभावनाभावनेसति॥ ३६ ॥ कर्माकर्मत्वमुत्सृज्यस्वयमेवभवत्यजम् ॥ असंभवतिसंत्यागेकर्मणोयःकरोतिहि॥ ३७॥ इदंकर्तव्यतात्यागंनकिंचित्तेनतत्कृतम्॥ बोधादिदंतासंवित्तेःस्वयंविलयनात्तुयत् ॥ ३८ ॥ जगतस्तंविदुस्त्यागमसंगंमोक्षमेवच॥ वेदनंसतिसंवेद्येसर्गादावेववेद्यदृक्॥ ३९॥ नोत्पन्नाविद्यतेनैवतस्मात्किंकेववेदनम्॥ वेद्योन्मुखत्वंसंत्यज्यरूपंयद्वेदनस्यवै॥४०॥ न वेदनंतन्नोकर्मतच्छांतंब्रह्मकथ्यते॥ चेतनंप्रोच्यतेकर्मसंस्तृत्याभ्रविकासितम्॥ ४१॥ अचेतनंविदुर्मोक्षंज्ञंप्रत्येवोपदेशगीः॥ त्यागो हिकर्मणांतस्मादादेहंनोपपद्यते॥ ४२॥ यैस्तुसंपूज्यतेकर्मतन्मूलंतैर्नमुच्यते॥ मूलंस्वकर्मणःसंविन्मनसोवासनात्मनः॥ ४३॥ साचा देहंसमुच्छेत्तुमतेबोधान्नशक्यते॥ रामकेवलमेषांतःकर्ममूलकरापरा॥ ४४॥ सूक्ष्मसंविदसंवित्त्यास्वयत्नेननिकृंत्यते॥ येनसंविदसं वित्त्यास्वयत्नेनविचार्यते॥ ४५॥

यतस्तत्संस्तृत्याबुद्ध्याद्युपाधिकारकव्यापारेणजलादौप्रतिबिंबितमभ्रमाकाशमिवविकासितम् ॥ ४१ ॥ अतएवमोक्षमचेतनंचिदाभासशून्यमेवविदुरनुभवनिष्ठाः ॥ तेषांज्ञंबि वेकिनंशिष्यंप्रतिउपदेशगीरुपदेशवाणीचइतिएवंरूपंवश्रूयतइत्यर्थः ॥ इत्थंचयावद्देहंसुखेनव्यवहारःसिद्धइत्याशयेनाह ॥ त्यागइति ॥ ४२ ॥ वासनात्मनोमनसःसंबंधि नीचिदाभाससंवित् ॥ ४३ ॥ कर्ममूलान्यन्यान्यपिकामवासनादीनिकरोतीतिकर्ममूलकरा पराकर्तृत्वात्तत्कारिपुश्रेष्ठाच ॥ ४४ ॥ तस्मात्मदुक्तएवकर्मत्यागोपायइत्याशये नोपसंहरति ॥ सूक्ष्मेति ॥ येनचिदाभासरूपासंवितअसंवित्त्यामूलाज्ञानेनसहस्वयत्नेनतत्त्वंबुद्ध्याविचार्यतेरलयोरभेदाद्विचाल्यतेस्वरूपात्प्रच्याव्यतेतेननतन्मूलातत्तद्रूपदर्शनरू पायस्यवच्छिन्नचिदाभासात्मिकापिमूलबाधकस्वयत्नेनैवअसंवित्त्याअप्रतिसंधानेननिकृंत्यते ॥ नतन्निकृंतनेपृथक्प्रयत्नापेक्षास्तीतिभावः ॥ क्वचित्पुस्तकेयेनेत्यापुत्तरार्द्धं नपठ्यतएवतदातेनसंस्तृतिवृक्षस्यतत्त्वज्ञानेनसर्वबाधलक्षणोमूलकाषोवितन्यतेयेननिकृंत्यतइतिपरेणयोज्यम् ॥ ४५ ॥

१ मूलेटीकायांचविकलनादित्यपिक्वचित्पाठः

॥ ४६ ॥ नविद्यतेचेतनंचिदाभासोयत्रतथाविधमाकाशमेकमनन्यत्सजातीयभेदैरिदमर्थैर्दृश्यैर्हीनंतद्ब्रह्मैवमुक्तदृशाअस्तिदेवसर्वेषामस्मदादित्वेननानांसारंपारमार्थिकंरूपमा हुर्ब्रह्मविदइत्यर्थः ॥ ४७ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेद्वितीयःसर्गः ॥ २ ॥ अत्यंतमार्जितेवेद्येयथातत्त्वमवेदनम् ॥ निष्क्रियंचापिविदुषांतथोपा यद्दहोच्यते ॥ १ ॥ अवेदनंविदुर्मोक्षंचित्तक्षयमकृत्रिममितियदुक्तंतत्रामःशंकते ॥ अवेदनमिति ॥ यद्यपिवेद्योन्मुखत्वंसंत्यज्यरूपंयद्वेदनस्यैवं नवेदनंतच्छोकमंतच्छांतंब्रह्म कथ्यतइतिप्रागुक्तत्वान्नास्याःशंकायाउत्थानंसंभवति तथाप्यनेनसंविदसंविस्यानिकृत्यतेइत्युक्त्यातन्नाशएवोक्तःसचतच्छांतंब्रह्मकथ्यतइतिप्रागुक्त्यासहविरुद्धःसतोऽसत्वायो गादितिसंभवत्येवप्रश्नः ॥ एतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतिनप्रेत्यसंज्ञास्तीत्युक्तेअत्रैवमाभगवानमूमुहत्नप्रेत्यसंज्ञास्तीतिमैत्रेय्याप्रश्नवदिति ॥ १ ॥ अतएवनवाअरे मोहंब्रवीम्यविनाशीवारेऽयमात्माअनुच्छित्तिधर्मामात्रासंस्पर्शस्त्वस्यभवतीतियाज्ञवल्क्यवद्वसिष्ठोपिसमाधत्ते ॥ नासतइति ॥ २ ॥ कथंसुकरंतदाह ॥ एताविति ॥ एतौसंसा

तेनसंसृतिवृक्षस्यमूलकाषोवितन्यते ॥ ४६ ॥ अचेतनाकाशमनन्यदेकंतदेवमस्तित्विदमर्थहीनम् ॥ तद्व्योमरूपंयतएतदेवंनिरामयंचे तनसारमाहुः ॥ ४७ ॥ ॥ इ०वा०वा०दे०मो०नि०उ०कर्मबीजदाहयोगोपदेशोनामद्वितीयःसर्गः ॥ २ ॥ ॥ श्रीरामउवाच ॥ ॥ अवे दनंवेदनस्यमुनींद्रक्रियतेकथम् ॥ नासतोविद्यतेभावोनाभावोविद्यतेसतः ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ नासतोविद्यतेभावोनाभावो विद्यतेसतः ॥ यदातदैवसुकरंवेदनावेदनंस्वयम् ॥ २ ॥ एतौवेदनशब्दार्थौरज्जुसर्पभ्रमोपमौ ॥ असत्यावुदितौविद्धिमृगतृष्णांभसासमौ ॥ ३ ॥ अबोधस्त्वनयोःश्रेयान्बोधोदुःखायचैतयोः ॥ तस्मात्सदेवबुध्यस्वमाऽसद्बुध्यस्वराघव ॥ ४ ॥ जंतोर्वेदनशब्दार्थबोधोदुःखकरः परः ॥ निष्कृत्यज्ञप्तिशब्दार्थबोधंतिष्ठयथास्थितम् ॥ ५ ॥ सर्वावबोधावसरेज्ञप्तिशब्दार्थयोरिह ॥ निर्वाणोदयइत्येवपरमोमितिशाम्यताम् ॥ ६ ॥ शुभाशुभात्मकर्मस्वंनाशनीयंविवेकिना ॥ तन्नास्तीत्यवबोधेनतत्त्वज्ञानेनसिध्यति ॥ ७ ॥ कर्ममूलनिकाषेणसंसारःपरिशाम्यति ॥ सुविचारितमन्विष्टंयावत्कर्मनविद्यते ॥ ८ ॥ चिद्रूपोबिल्वमज्जांतश्चित्तसंज्ञांयदात्मनि ॥ करोतितद्यथाबिल्वान्नस्वल्पमपिभिद्यते ॥ ९ ॥

रदशाप्रसिद्धौ ॥ यत्रहिद्वैतमिवभवतितदितरइतरंपश्यति यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत् यत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमेत्यादिश्रुतिषुएतयोर्नि षिद्धत्वादितिभावः ॥ ३ ॥ अतएववेदनघटितत्रिपुटीसाक्षिणस्त्रिपुटीनिवृत्तिरेवमोक्षइत्याशयेनाह ॥ अबोधस्त्विति ॥ सदविनाशिकूटस्थात्मरूपमेवबुध्यस्व असतत्रिपुट्यंतर्ग तवृत्त्याद्युपहितचिदाभासंमाआत्मेतिबुध्यस्व ॥ ४ ॥ परिच्छिन्नेतस्मिन्नात्मतावुद्धिरेवसर्वेषामनर्थहेतुरित्याह ॥ जंतोरिति ॥ निष्कृत्यसमूलंछित्त्वा ॥ ५ ॥ व्यवहारकालेत स्यकथमुच्छेदःकार्यस्तत्राह ॥ सर्वेति ॥ सर्वत्रिपुटीबोधलक्षणव्यवहारावसरेपिव्यावहारिकज्ञप्तिशब्दार्थयोःपरमन्यत्तत्रयथायोगंसर्वार्थपरंकूटस्थचिन्मात्रंसर्वशब्दपरेणओ मित्यनेनलक्षयित्वासएवात्मानिर्वाणोदयइत्येवशाम्यतांनिर्विक्षेपंव्यवह्रियतामित्यर्थः ॥ ६ ॥ ईदृशबोधव्यवहारादेवोत्तरपूर्वयोःशुभाशुभयोरश्लेषविनाशौसिद्ध्यतइत्याह ॥ शुभेति ॥ ७ ॥ कूटस्थात्मदर्शनमेवसर्वकर्ममूलवेदनोच्छेदेनसर्वकर्मबाधइत्याह ॥ कर्मेति ॥ यावत्समूलंसफलंसशाखोपशाखपत्रपुष्पंचसर्वंकर्मनविद्यते ॥ ८ ॥ यथाबिल्व मज्जास्वांतर्यद्बीजादिकरोतितद्बिल्वाद्यथानभिद्यतेतथाचिद्रूपोप्यात्मनियच्चित्तसंज्ञांक्रियाकारकादित्रिपुटींकरोतितत्स्वल्पंमनागपिनभिद्यतइत्यन्वयः ॥ ९ ॥

भूलोकसन्निवेशांतर्गतोजंबूद्वीपादिसन्निवेशोयथाभुवोनपृथक् ॥ नभोव्योमतदंतर्गतभूतभुवनार्थादिचपरस्मात्सन्मात्रान्नपृथक् ॥ १० ॥ तदर्थयोश्चित्त्वचित्तशब्दार्थयोस्त
दर्थत्वाच्चिन्मात्रार्थकचितिधात्वर्थत्वात् ॥ ११ ॥ अतद्भावंग्राहकत्वस्मर्तृत्वधर्मद्वयशून्यम् ॥ १२ ॥ कुतस्तच्छून्यंतदाह ॥ चेतनमिति ॥ चेतयतीतिचिदितिव्युत्पत्त्याहिचेतन
मर्थप्रकाशनंचितःकर्मक्रियेत्यवगम्यते ॥ तच्चकूटस्थायाश्चितोनिर्मूलंभ्रमयक्षवन्मिथ्यैवयदहेतुकंमिथ्यारूपमुदेतितन्नोदितमेवअतोनक्रियारूपमन्यत्तत्रविद्यतइतिविकल्प
मात्रंतथाव्युत्पादनमित्यर्थः ॥ १३ ॥ एवंचेतनक्रियायाअपृथक्त्वेतद्विषयाणामपितत्सिद्धमित्याह ॥ चेतनमिति ॥ यदाचेतनंकर्मअहेतुकमितिअनिलतत्स्पंदवदपृथक्तदाबहि
र्जाग्रतिअंतःस्वप्नसुषुप्त्योश्चसैवार्थधीरित्यर्थाअप्यात्मैवनपृथगित्यर्थः ॥ १४ ॥ सर्वकर्मविस्तारोदेहएव ॥ अथकर्मणामात्मेत्येतदितिश्रुतेः ॥ सएवमूलतःअहंतात्माशाखातः

नयथासन्निवेशांतःसन्निवेशस्ततःपृथक् ॥ तथानभोर्थादिपृथक्परस्मान्मनागपि ॥ १० ॥ यदेवांभस्तदेवांतर्द्रवत्वमपृथग्यथा ॥ चि
त्त्वमेवतथाचित्तंतद्रूपत्वात्तदर्थयोः ॥ ११ ॥ यथाद्रवत्वंपयसियथालोकश्चतेजसि ॥ तथाब्रह्मण्यतद्भावंचित्त्वंचित्तंचविद्यते ॥ १२ ॥
चेतनंकर्मतत्स्वांतर्निर्मूलंभ्रमयक्षवत् ॥ उदेत्यहेतुकंतच्चेन्नोदितंतन्नविद्यते ॥ १३ ॥ चेतनंकर्मतच्चैतद्भातिस्पंदइवानिलः ॥ अहेतुकं
यदात्मैतद्बहिरंतश्चसार्थधीः ॥ १४ ॥ विस्तारःकर्मणोदेहःसोहंतात्मासंसृतिः ॥ अचेतनानहंत्वेनशाम्यत्यस्पंदवातवत् ॥ १५ ॥ अचे
तनादनंतात्माभूत्वाज्ञोप्युपलोपमः ॥ संसारमूलकंषणंकुरुक्रोडमुखाग्रवत् ॥ १६ ॥ कर्मबीजकलाकोशत्यागएवंकुतोभवेत् ॥ ना
न्यथाराघवांतस्तेशांतमस्तुसदास्थितम् ॥ १७ ॥ कर्मबीजकलात्यागेत्वेतस्मादितरात्मनि ॥ अविद्यमानेजीवस्यतज्ज्ञैर्विदितवस्तुभिः
॥ १८ ॥ शांतैर्नगृह्यतेकिंचिन्नचसंत्यज्यतेपिच ॥ त्यागादानेनजानंतिततस्तैःशांतमानसम् ॥ १९ ॥ आकाशशून्यहृदयैर्ज्ञैर्यथास्थित
मास्यते ॥ क्रियतेचयथाप्राप्तंनाप्यैतैःक्रियतेपिच ॥ २० ॥ प्रवाहपतितंसर्वंस्पंदतेशांतमानसम् ॥ तेषांकर्मेंद्रियाण्येवमर्द्धसंसुप्तबाल
वत् ॥ २१ ॥

संसृतिःअचेतनंचिदाभासात्मकक्रियाबाधस्तल्लक्षणेनानहंत्वेनमूलोच्छेदेनसशाखःसशाम्यतीत्यर्थः ॥ १५ ॥ चिदाभासोच्छेदेनजीवस्यात्मनाशोवृत्तइतिनमंतव्यंकिंतुसब्रह्म
भावेनानंतात्माभूत्वास्वानर्थसंसारमूलोच्छेदंपरमपुरुषार्थंसंपादितवानित्याह ॥ अचेतनादिति ॥ क्रोडोवराहस्तन्मुखाग्रंयथामुस्तादिमूलकषणंकरोतितद्वत् ॥ १६ ॥ नान्य
थाहेराघवअतःकारणात्तेअंतःसदास्थितंवेदनात्मकंकर्ममूलंशांतमस्तु ॥ १७ ॥ एतस्मिन्कर्मबीजकलात्यागेकृतेजीवस्यइतरात्मनिब्रह्मात्मत्वातिरिक्तेचिदाभासात्मनितत्कृत्य
प्रपंचात्मनिचअविद्यमानेजातेतज्ज्ञैःशांतैःकिंचिन्नगृह्यतेनत्यज्यतेचेतिपरेणान्वयः ॥ यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिश्रुतेरितिभावः ॥ १८ ॥ १९ ॥ २० ॥ य
थानदीप्रवाहपतितंतृणकाष्ठादिसर्वंस्पंदतेएवंतेषांकर्मेंद्रियाणिशांतमानसंविनापिमनोविकारंस्पंदंतेइतिविपरिणम्यते ॥ २१ ॥

निर्वासनेनिर्विषयेरसेनिरतिशयानंदे॥रसाभोगप्रवणाःकरणवृत्तयोनीरसारागशून्याःसंतोऽज्ञाननिपुणाःस्वस्वविषयप्रकाशेअसमर्थाइवभूत्वा॥२२॥प्रागुक्तवेदनमेवकर्मणस्त्यागः॥ इतरेणजीवनादृष्टाक्षिप्तदेहादिस्पंदरूपेणकर्मणा ॥२३॥ अनुल्लेखंकृताकृतप्रतिसंधानशून्यम् ॥२४॥२५॥ अत्यागंमूलत्यागरहितंकर्मेंद्रियसंयममात्ररूपम॥ तथाचोक्तंभगवता ॥ कर्मेंद्रियाणिसंयम्ययआस्तेमनसास्मरन् इंद्रियार्थान्विमूढात्मामिथ्याचारःसउच्यतइति ॥ २६ ॥२७॥ इतिप्रागुक्तरीत्यासमूलमुत्सृज्य ॥ २८ ॥ अतन्मयास्तदभिमानलक्षणविकारशून्याः॥ क्षीबामदिरोन्मत्ताइव यंत्रेणसंचारिताःकाष्ठादिप्रतिमाइवच ॥२९॥ व्यसनेनआसक्त्यतिशयेनउपहताःस्वदेहाद्यप्रतिसंधानंप्राप्ताइवेत्युत्प्रेक्षा॥

रसेनिर्वासनेलब्धेरसाअप्यतिनीरसाः॥ नांतस्तिष्ठंतिनवहिरज्ञाननिपुणाइव॥२२॥ कर्मणोवेदनंत्यागःसचसिद्धःप्रबोधतः॥ अवस्तुनेतरेणार्थःकिंकृतेनाकृतेनवा॥२३॥ अवेदनमसंवेद्यंयदवासनमासितम्॥ शांतंसममनुल्लेखंसकर्मत्यागउच्यते॥२४॥ अपुनःस्मरणंसम्यक्चिरविस्मृतकर्मतत्॥ स्थितंस्तंभोदरसमंसकर्मत्यागउच्यते॥२५॥ अत्यागंत्यागमितियेकुर्वतेव्यर्थबोधिनः॥ साभुंक्तेतान्पशूनज्ञान्कर्मत्यागपिशाचिका॥२६॥ समूलकर्मसंत्यागेनैवयेशांतिमास्थिताः॥ नैवतेषांकृतेनार्थोनाकृतेनेहकश्चन॥२७॥ समूलमलमुद्धृत्यकर्मबीजकलामिति॥ नित्यमेकसमाधानास्तज्ज्ञास्तिष्ठंत्यतःसुखम्॥२८॥ प्रवाहपतितेकार्येईषत्स्पंदाअतन्मयाः॥ घूर्णमानाइवक्षीबायंत्रसंचारिताइव॥२९॥ मोक्षलक्ष्म्याविलासिन्याव्यसनोपहताइव॥ अर्द्धसुप्तप्रबुद्धाभाःकामप्यवनिमागताः॥३०॥ यत्समूलंपरित्यक्तंतत्त्यक्तमितिकथ्यते॥ अमूलकाषस्त्यागोयःसशाखालवनोपमः॥३१॥ अकृष्टमूलशाखाग्रलवनःकर्मपादपः॥ पुनःशाखासहस्रेणदुःखायपरिवर्द्धते॥३२॥ अवेदनात्मनातेनकर्मत्यागोंगसिद्ध्यति॥ क्रमेणनेतरेणातएतदेवाहरन्भव॥३३॥ येत्वेवंकर्मसंत्यागमकृत्वान्यत्प्रकुर्वते॥ अत्यागंत्यागरूपात्मगगनंमारयंतिते॥३४॥ बोधात्मकतयाकर्मत्यागःसंपद्यतेस्वयम्॥ दग्धबीजानिरिच्छोच्चैरक्रियैवभवेत्क्रिया॥३५॥ बुद्धींद्रियेहितंकर्मसफलंरसभावनात्॥वेष्टितव्यंकुदाम्नेवस्पंदोन्योनिष्फलोंगजः॥३६॥

कामप्यवनिंपंचम्यादिभूमिकाम् ॥३०॥३१॥ नकृष्टमुन्मूलितंमूलंयत्रतथाविधंशाखाग्रलवनंयस्य ॥३२॥ तेनप्रागुक्तेनक्रमेणाहरन्नभ्यस्यन्भवतिष्ठ ॥ ३३ ॥ ३४ ॥ निरिच्छाजीवन्मुक्तक्रियाउच्चैर्महारंभापिदग्धबीजेत्यक्रियैव ॥ नहिमहानपिदग्धतंतुःपटाभासःपटोभवतीतिभावः ॥ ३५॥ बुद्धिसहितैरिंद्रियैर्भोगासक्तिरसभावनादीहितंनिष्पादितं ॥ यथाकुदाम्नावेष्टितव्यंकूपकाष्ठंरसभावनाज्जलोद्धरणसेचनादिरूपात्सस्यसंपत्त्यासफलंनतुवृथाचेष्टामात्रात्तद्वदन्योंऽगजःकायचेष्टामात्ररूपःस्पंदोनिष्फलः॥३६॥



१ कर्मवदित्यपिक्कचित्पाठः

शाम्यतुधनादिसंपदपचयेनदरिद्रोस्तु उदयंतदुपचयमभ्येतुवा ससमएवेतिशेषः ॥ ३७ ॥ ३८ ॥ गेहमेवेत्येतत्श्लोकस्यपूर्वार्द्धंवर्णयति ॥ परिशांतेतिद्वाभ्याम् ॥ ३९ ॥ निर्वाणंज्ञानाग्निनासहोपरतंदृश्यंयस्य ॥ ४० ॥ तदुत्तरार्धंवर्णयति ॥ अनंतेतित्रिभिः ॥ ४१ ॥ ४२ ॥ विविधैःकार्यैरवश्यकर्त्तव्यैरर्जनव्ययप्रवासकलहादिभिःसंदैवलोभमोहशोकभयासक्त्यादिविकारदशामयी ॥ पुरंशाखानगरं ॥ पत्तनंमहानगरं ॥ मंडलान्यवांतरदेशाः ॥ मलिनेत्वदिदृंदृशीअमलास्फुटासर्वामहीमुकुरकोशेइवप्रतिबिंबिनाभवत्येवेत्यज्ञस्यनारण्येपिविश्रांतिसुखमित्यर्थः ॥ ४३ ॥ ॥ इतिश्रीवासिष्ठम०रा०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेतृतीयःसर्गः ॥ ३ ॥ ॥ ५ ॥ ॥ इहाहंतैवसंसारमूल

कर्मत्यागेस्थितेबोधाज्जीवन्मुक्तोविवासनः ॥ गृहेतिष्ठत्वरण्येवाशाम्यत्वभ्येतुवोदयम् ॥ ३७॥ गेहमेवोपशांतस्यविजनंदूरकाननम् ॥ अशांतस्याप्यरण्यानीविजनासजनापुरी ॥ ३८ ॥ परिशांतमतेर्ज्ञस्यस्वप्नेप्यप्राप्तमानवा ॥ निर्मलावितताह्यग्राह्येववनभूमिका ॥ ३९ ॥ ज्ञस्यनिर्वाणदृश्यस्यनिस्पंदार्थानभोमयी ॥ शांताशेषविशेषार्थाजगदेवमहाटवी ॥ ४० ॥ अनंतसंकल्पवतोह्दयस्यजगत्स्थितेः ॥ ह्यग्रेवावर्त्ततेभूमिरज्ञस्याखिलसागरा ॥ ४१ ॥ जनस्याज्ञस्यदीनस्यविविधद्वंद्वसंकटा ॥ सारंभाविविधाकाराह्यग्रेवग्राममंडली ॥ ४२ ॥ विविधकार्यविकारदशामयीसपुरपत्तनमंडलपर्वता ॥ मुकुरकोशइवप्रतिबिंबिताह्यदिभवत्यमलामलिनेमही ॥ ४३ ॥ ॥ इ० वा० महारामायणेवा० दे० मोक्षोपायेपुनिर्वाणप्रकरणेउ० दृश्योपशमयोगोपदेशोनामतृतीयःसर्गः ॥ ३ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ साहंतादिजगद्भ्रांतौबोधेसंविल्कलात्मनि ॥ संशांतदीपसंकाशस्त्यागःसिद्ध्यतिनान्यथा ॥ १ ॥ नत्यागःकर्मसंत्यागोबोधस्त्यागइतिस्मृतः ॥ अजगत्प्रतिभैकात्मायोनहंतादिरव्ययः ॥ २ ॥ अयंसोहमिदंतन्मइतितिनिःस्नेहदीपवत् ॥ शांतेपरमनिर्वाणप्रबोधात्मेतिशिष्यते ॥ ३ ॥ अयंसोहमिदंतन्मेशांतमित्येवयस्यनो ॥ नज्ञानंतस्यनोशांतिर्नत्यागोनचनिर्वृतिः ॥ ४ ॥ ममेदमयमेवाहमित्येतावतियःक्षयः ॥ बोधात्माशिवमाशांतंतस्मादन्यन्नविद्यते ॥ ५ ॥ अहमंशोविदाक्षीणेसर्वमेवक्षयंगतम् ॥ नकिंचिच्चक्वचित्क्षीणंनिर्वाणैकघनंस्थितम् ॥ ६ ॥

मित्युपवर्ण्यते ॥ तत्त्यागश्चानहंभावभावनादात्मबोधतः ॥ १ ॥ दृगात्मनःसर्वदृश्यत्यागोहिमोक्षःसचस्नेहक्षयेदीपनिर्वाणवत्तत्त्वबोधेनसर्वदृश्यमूलाज्ञानबाधेसिद्ध्यतिनान्यथेत्याह ॥ साहंतादीति ॥ १ ॥ नविद्यतेजगत्प्रतिभायस्मिंस्तथाविधएकात्मैवपरिशिष्टोमुख्यःसर्वत्यागलक्षणोमोक्षइत्यर्थः ॥ २ ॥ सपामरप्रसिद्धोऽयंदेहादिर्दृश्यरूपाएवाहंतद्देहादिसंबद्धंभोग्यंजगन्मेइतिएतस्मिंस्तादात्म्यसंसर्गाध्यासलक्षणेद्विविधेबंधेनिःस्नेहदीपवत्समूलंशांतेसतिप्रकृष्टोबोधश्चैतन्यमेवात्माइतिपरिशिष्यतेसएवनिर्वाणमोक्षइत्यर्थः ॥ ३ ॥ उक्तमर्थंव्यतिरेकमुखेनापिद्रढयति ॥ अयमिति ॥ ४ ॥ एतावतिएतावतोयःक्षयः ॥ षष्ठ्यर्थेसप्तमी ॥ सबोधात्मैव ॥ अध्यस्तबाधस्याधिष्ठानमात्रत्वादितिभावः ॥ ५ ॥ विदातत्त्वबोधेन ॥ सर्वंममतास्पदंजगत् ॥ सर्वनाशेसर्वस्वनाशभीरुःसमाधत्ते ॥ नकिंचिदिति ॥ पारमार्थिकरूपेणसर्वंस्थितमेव ॥ ६ ॥

१ भयारत्यादीत्यपिक्वचित्पाठः

अहंबुद्धिनाशेसुलभउपायमाह ॥ अहंविदिति ॥ अनहंविस्वादनहंभावभावनात् ॥ अविघ्नतइति ॥ नेदंरजतमितिबुद्ध्यारजताध्यासबाधनेविघ्नादर्शनादितिभावः ॥ इयंमु क्तिः ॥ इयमियतीकदर्थनाबहुसाधनसंपादनश्रांतिःकिमिवकिमर्थमित्यर्थः ॥ ७ ॥ नन्वनहंबुद्धिरपिद्वैतत्वादहंबुद्धिवदध्यासएव साकेनशाम्यतीतिचेत्येकेनसहकतकरेणुरिव अहंबुद्ध्यासहस्वतएवचिद्वालनिसाशाम्यतीतिसोपपत्तिकमाह ॥ अहमिति ॥ चिस्वात्परमार्थचित्स्वभावात् ॥ ऋतेविना ॥ ८ ॥ भ्रमतत्साधनतत्फलतदाश्रयाणामज्ञानमात्र विलासत्वादज्ञाननिवृत्तौनपृथगवस्थानमस्तीत्याह ॥ नेति ॥ अनालोकनमज्ञानम ॥ ९ ॥ १० ॥ यद्ययदाअहंभावोदयप्रसक्तिस्तदातदातुल्यकालमेवतद्विरुद्धाअनहंभावबु द्धिरुत्पाद्येत्याह ॥ येनैवेति ॥ ११ ॥ एवमजस्रंसावधानमुपस्थापितेनानहंभावेनअहंभावमाशुनभोर्थैनखपुष्पादिनातुल्यंनिर्वाच्यनिर्वचनार्हतांनीत्वारणेशरासनारूढोर्जुन

अहंविदनहंवित्त्वादेवशाम्यत्यविघ्नतः॥ एतावन्मात्रसाध्येयंकिमिवेयंकदर्थना॥ ७॥ अहंनाहमितिभ्रांतिर्नचचित्त्वादृतेस्तिसा ॥ चि त्त्वंचाकाशविशदमतःक्वैषाभ्रमस्थितिः ॥ ८ ॥ नभ्रमोभ्रमणंनैवनभ्रांतिर्भ्रामकोस्तिवा ॥ अनालोकनमेवेदमालोकान्नेदमस्तिते ॥ ९ ॥ विद्धिचिन्मात्रमेवेदमसद्रूपोपमंततम् ॥ तेनालंमौनमास्वैवंसर्वंनिर्वाणमात्रकम् ॥ १० ॥ येनैवाशुनिमेषेणत्वहमित्येवचेत ति॥ तेनैवनाहमित्येवचेतित्वाशुनशोच्यते॥ ११ ॥ अहंभावनभोर्थैननिर्वाच्यारूढबाणवत्॥ अजस्रमाशुवाक्षीणंतिष्ठावष्टब्धतत्पदः ॥ १२॥ सनभोर्थामहंतांत्वंचेतन्नेवमनारतम्॥ सर्वभावैरनारूढोभवतीर्णभवार्णवः॥ १३॥ स्वभावमात्रविजयेस्वयंयस्यनवीरता॥ तस्योत्तमपदप्राप्तौपशोर्ब्रूहिकथैवका॥ १४ ॥ षड्वर्गोनिर्जितःपूर्वंयेनोत्तमविदास्वतः ॥ भाजनंसमहार्थानांनेतरोनरगर्दभः ॥ १५॥ यस्यस्वांतर्मनोवृत्तिर्जीयमानाजिताथवा ॥ विषयःसविवेकानांसपुमानितिकथ्यते ॥ १६ ॥ अर्थोदृषदिवांभोधौयोयआपततित्व यि॥ तस्मादेवपलायस्वनाहमित्येवभावयन्॥ १७॥ नाहमस्तीतिबुद्ध्यापिसोपपत्तिकमप्यलम्॥ जानानोज्ञप्तिमात्रंचकिमज्ञइवमुह्य सि॥ १८॥ नज्ञेयमर्थतोस्तीहहेग्रीवकटकादिता॥ भ्रांतिमात्रादृतेसाचशाम्यत्यस्मरणेनते ॥ १९॥ योयोभावउदेत्यंतस्त्वयिस्पंदइवा निले ॥ नाहमस्मीतिचिद्वत्त्यातमनाधारतांनय॥ २०॥

वाणइवअपराङ्मुखःअवष्टब्धंदृढमालंबितंतद्ब्रह्मपदंयेनतथाविधःसन्नक्षीणंशाश्वतंतिष्ठ ॥१२॥ नभोर्थैःसमानांसनभोर्थाम् ॥ समानस्यच्छंदस्यमूर्द्धप्रभृत्युदर्केष्वितिसः॥१३॥ स्वभावःस्वाभाविकाज्ञानप्रयुक्तोहंभावस्तन्मात्रविजये ॥ १४ ॥ कामाद्यरिषड्वर्गः ॥ १५ ॥ मध्यमाधिकारिणोर्जीयमाना ॥ उत्तमाधिकारिणोजिता ॥ पुमान्पुरुषार्थसा धनेनसफलीकृतपुंजन्मा ॥ १६ ॥ अंभोधौप्रक्षिप्तादृषदिवेतिनाहमित्यसंगालभावनयातदसंस्पर्शएवात्रपलायनम् ॥ १७॥ सोपपत्तिकंज्ञप्तिरूपंकंसुखंजानानःअनुभवन्न पिकिंमुह्यसिनमुह्यस्येवेत्यर्थः ॥ १८ ॥ अर्थतउपपत्तितस्तेज्ञेयंनास्तिवाचारंभणन्यायाद्युपपत्तीनांत्वयाज्ञातत्वादित्यर्थः ॥ १९ ॥ अथवाकिमुपपत्तिसहस्रैर्नाहमितिदर्शन मेकमेवाभ्यस्तंसर्वभ्रांतिपरिहरिष्यतीत्याह ॥ योयइति ॥ २० ॥

१ करणे ल्युट्

इतिएवंरूपेणानहंभावेनयेननजिताः निरर्थकंनिष्फलंअनर्थैनास्तिक्ययथेष्टाचरणाद्यापादकेअस्मिन्व्यालशास्त्रेअनधिकारीसकिमर्थंप्रवर्त्तते ॥ २१ ॥ त्वयिपरमात्मनि सतितदेनत्नान्यत् ॥ २२ ॥ असर्गःकूटस्थाद्वयचिन्मात्रस्वभावस्तत्संविदापरेपरमात्मनिअस्तोविलीनस्तद्भावंप्राप्तःसन्विराजते ॥ यथास्रजिकल्पितःसर्पादिर्दुरर्थोपिबोधा त्स्रजिविलीनःस्रक्सन्निवेशविशेषेणकंठधृतःशोभतेतद्वत् ॥ २३ ॥ बोधेनजगतोजीवस्यचपरमात्मरूपसन्निवेशविशेषोत्पत्तिरभ्युपगताचेत्तदुत्तरेभावविकाराअपिस्युरितितै र्जीवजगद्भावध्वंसादिभिश्चद्वैतापत्तिस्तत्राह ॥ परमात्मात्विति ॥ कल्पितस्यबाधेनाधिष्ठानात्मतापत्तिर्नोत्पत्तिर्नवाध्वंसःकिनुनित्यसिद्धतत्स्वभावएव ॥ क्रियैवहिविकारादिहेतु र्नज्ञानमितिनद्वैतापत्तिरितिभावः ॥ २४ ॥ अहमादित्रिपुटीबाधेतत्परिच्छेदप्रयुक्तजीवभावापगमात्पूर्णेशांतेशिवेचत्वंपदलक्ष्यंपरमेव तत्त्वपूर्णेशांतेशिवेचतत्पदलक्ष्येपरेस्वभा

लोभोलज्जामदोमोहोयेनादावितिनोजिताः॥ निरर्थकमनर्थेस्मिन्सकिमर्थंप्रवर्त्तते ॥ २१ ॥ अहंत्वंपवनेस्पंदइवयत्त्वयिसंस्थितम्॥ परमात्मनितन्नान्यदेतत्स्पंदइवानिले॥ २२॥ असर्गसंविदासर्गःपरेऽस्तोतिविराजते॥ संनिवेशविशेषेणदुरर्थोपिहिशोभते॥ २३॥ परमात्मातुनोदेतिनास्तंयातिकदाचन ॥ नचास्मादन्यदस्तीतिकोभावोऽभावएववा ॥ २४॥ परंपरेपूर्णपूर्णेशांतंशांतेशिवंशिवे ॥इ त्येवमात्रंविततंनाहंनचजगन्नधीः ॥ २५ ॥ अनिर्वाणेविनिर्वाणंशांतंशांतेशिवेशिवम् ॥ निर्वाणमप्यनिर्वाणंसनभोर्थंनवापितत् ॥ २६॥ शस्त्राघाताःप्रसत्यंतेसत्यंतेव्याधिवेदनाः॥ नाहमित्येवमात्रस्यसहनेकाकदर्थना ॥ २७॥ जगत्पदार्थसार्थानामहमित्यक्ष योंकुरः॥ तस्मिन्निर्मूलतांयातेजगन्निर्मूलतांगतम्॥ २८॥ बाष्पेणेवाहमर्थेननिःसारेणापिसारवत्॥ व्यामलःपरमादर्शस्तच्छांतौसं प्रसीदति॥ २९॥ अहमर्थःपरेवायौस्पंदस्तत्प्रशमेतुतत्॥ अनिर्देश्यमनाभासमनंतमजमव्ययम् ॥ ३० ॥ अहमर्थःपुरोद्रव्यप्रतिबिंब प्रदर्शिति ॥ तच्छांतौसानिराभासमनंतमजमव्ययम् ॥ ३१ ॥ अहमर्थाम्बुदेक्षीणेपरमार्थशरन्नभः ॥ परयानंतयालक्ष्म्यास्वच्छया च्छंविराजते ॥ ३२ ॥

वेस्थितमित्येतावन्मात्रंयथास्थितंतत्स्वबोधेनविततंनापूर्वंकिंचिदुत्पादितमित्यर्थः ॥ २५ ॥ ननुप्रदीपनिर्वाणवत्साभासाविद्यानिर्वाणंज्ञानफलंनिष्पन्नमित्यवश्यंवाच्यं अन्यथा ज्ञानस्यनैष्फल्यप्रसंगात्तत्राह ॥ अनिर्वाणेइति ॥ सत्यंनिर्वाणंज्ञानफलंतथापितदत्यंताप्रसिद्धमनिशेसूर्येनिशानिवृत्तिवदनिर्वाणेएवब्रह्मणिनिर्वाणंनित्यशांतेशांतमितिनानर्थनि वृत्तिरूपंज्ञानफलमपूर्वम् ॥ एवंशिवेनित्यसिद्धनिरतिशयानंदेशिवमानंदावाप्तिलक्षणंफलमपिनापूर्वमितिनज्ञानफलेनद्वैतापत्तिः ॥ यदित्रतीचिबंधोब्रह्मणिवियदादिपदार्थश्वस त्यःस्यात्तदातन्निर्वाणंप्रदीपनिर्वाणवदपूर्वंस्यात् ॥ इदंतुरज्जुसर्पनिर्वाणवत्प्रतीचोबंधनिर्वाणमनिर्वाणमेव ॥ तद्ब्रह्मापिवासनभोर्थंवियदादिसत्यार्थसहितंवस्तुतोनभवत्येवेतितन्नि वृत्तिरपिनद्वैतापादिकेत्यर्थः ॥ २६ ॥ अनहंभावनायाअसह्यतांवारयति ॥ शस्त्रेति ॥ २७ ॥ २८ ॥ परमात्मलक्षणआदर्शोऽहमर्थेनाहंकारेणमुखबाष्पेणप्रसिद्धादर्शइवव्या मलोव्याप्तमलोमलिनोभातीत्यर्थः ॥ २९ ॥ अनंतमद्वयमाकाशमात्रंच ॥ ३० ॥ बाह्यानर्थदर्शनेप्यहंकारएवहेतुरित्याह ॥ अहमर्थइति ॥ साचित् ॥ ३१॥ ३२॥

हेअंगअव्यक्तमनाविर्भूतस्वभावंचिरमहमर्थताम्रमलसंपर्काज्जीवताम्रतामापन्नंब्रह्महेमश्रवणाद्युपायनिष्टममहमर्थमलोन्मुक्तंचेत्तदेवपरंपरमाभासमतिभास्वरमतएवकांतिमत्ब्रह्महेमसंपन्नम् ॥ परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतइतिश्रुतेरित्यर्थः ॥३३॥ अहंतानिवृत्तौममकेनशब्देनव्यपदेशइतिचेद्यथासमुद्रेविलीनायाःसैंधवकरकायथश्रियःकरकाद्यभिधानिवृत्त्याअव्यपदेश्यतातद्वत्तवापीत्याह ॥ यथेति ॥ ३४ ॥ तस्यब्रह्मादिनाम्नाव्यपदेशोपिइतरपदार्थवत्अहंत्वलक्षणाल्पत्वात्ययरूपबृहत्त्वलक्षणंप्रवृत्तिनिमित्तंपरिकल्प्यप्रवृत्तोनवस्तुवृत्तेनेत्याह ॥ अस्तीति ॥ यथाशांततरंगादिजलंस्वभावेनस्थितंप्राक्तनसमुद्रतरंगादिरूपेणांतःसदिवावभासमानंतरंगसमुद्रादिव्यपदेशभाक्जलस्वभावेनाव्यपदेश्यमेवतद्वदित्यर्थः ॥ ३५ ॥ अभावनाद्भावनामूलाज्ञाननाशात् ॥ तर्त्तर्हि ॥ ३६ ॥ अहमर्थस्यजगद्बीजतामुपपादयितुंतदुद्भवप्रकारमाह ॥ सदिति ॥ सत्काल

अहमर्थमलोन्मुक्तमव्यक्तंताम्रमंगचेत् ॥ तत्परंपरमाभासंसंपन्नंहेमकांतिमत् ॥ ३३ ॥ यथानिरभिधार्थश्रीर्भजत्यव्यपदेश्यताम् ॥ तथानहंताहंतेयंब्रह्मत्वमधिगच्छति ॥ ३४ ॥ अस्त्यहंत्वेस्थितंब्रह्मसनामेवपदार्थवत् ॥ शांतवत्सदिवाभासंतद्वत्स्यव्यपदेशवान् ॥ ३५ ॥ अहमर्थोजगद्बीजंयदिदग्धमभावनात् ॥ तदहंत्वंजगद्बंधइत्यादेःकलनैवका ॥ ३६ ॥ सद्ब्रह्मशिवमात्मेतिपरेनामकलंकिता ॥ उदेत्यहंताकुंभत्वादिवमृद्धातुविस्मृतिः ॥ ३७ ॥ अहमर्थादियंबीजात्सत्ताविवलतोत्थिता ॥ यस्यांजगंत्यनंतानिफलान्यायांतियांतिच ॥ ३८ ॥ साद्र्यब्ध्युर्वीनदीसेयंरूपालोकैषणादिका ॥ अहमर्थस्यमरिचबीजस्यांतश्चमत्कृतिः ॥ ३९ ॥ द्यौःक्ष्मावायुराकाशंपर्वताःसरितोदिशः ॥ इत्यामोदोहमर्थोग्रकुसुमस्यविकासिनः ॥ ४० ॥ अहमर्थःप्रविसृतःप्रकटीकुरुतेजगत् ॥ सद्रूपालोकमननंप्रवृत्तइववासरः ॥ ४१ ॥ प्रवृत्तेनदिनेनार्थःप्रकटीक्रियतेयथा ॥ असज्जगदहंत्वेनक्षणान्निर्मीयतेतथा ॥ ४२ ॥ अहमित्यर्थदुस्तैललवोब्रह्मणिवारिणि ॥ प्रसृतोयत्तदाश्वेतत्रिजगच्चक्रकंस्थितम् ॥ ४३ ॥ उन्मेषमात्रेणाहंताजगंत्यनुभवत्यहो ॥ ननिमेषणदृगिवसत्यानीत्यप्यसंत्यलम् ॥ ४४ ॥

त्रयाबाध्यम् ब्रह्मअपरिच्छिन्नम् शिवंनिरतिशयानंदम् आत्माअपरोक्षचिदेकरसमित्येवंस्वभावेपरेनमनंनामश्चतुर्णामपिस्वभावानांसंकोचस्तेनकलंकितासंजातमालिन्याअतएवमृदःकुंभाकारपरिच्छेदान्मृत्स्वभावविस्मृतिरिवस्वभावचतुष्टयप्रतिसंधानशून्यासमष्ट्यहंताउदेति ॥ ३७ ॥ तस्मादहमर्थाद्बीजादियंदृश्यसत्तालक्षणाविवलताउत्थिता ॥ व्यष्टिभावेनानंतान्यसंख्यानि ॥३८॥ तदेवप्रपंचयति ॥ साद्रीत्यादिना ॥ अद्रिभिरब्धिभिरुर्वीभिर्नदीभिश्चसहितासाद्र्यब्ध्युर्वीनदी ॥ बहिरिंद्रियैरर्थालोचनंरूपालोकोमनस्तद्गोचरकामसंकल्पादिवृत्तयएषणास्तदादिका ॥ ३९ ॥ ४० ॥ मेरोःपरभागेसद्रूपएववासरःप्रविसृतःसन्सतएवरूपस्यालोकंमननंचयथानिमित्तभावेनकरोतितद्वत् ॥ ४१ ॥ अर्थोरूपादिः ॥ निर्मीयतइति ॥ मिथ्यार्थस्यभानमेवनिर्माणमित्याशयः ॥ ४२ ॥ तैलस्यलवोबिंदुः ॥ चक्रकंचक्राकाराभासः ॥ ४३ ॥ दृक्दुष्टचक्षुरिवअसंतिअसत्यान्यपिजगंतिसत्यानीत्यनुभवति ॥ निमेषेणतिरोभावेनतुनानुभवति ॥ ४४ ॥

तदेवदृढीकर्त्तुंपुनराह ॥ अहमर्थइति ॥ सुषुप्तिमरणमूर्छासुतिरोभूयस्थितेमोक्षेमूलतःपरिक्षीणेचसतिनानुभूयते ॥ समाधौअंतर्भूयसाक्षात्कारेणपरिक्षीणेइतिवा ॥ तारकेकनीनिकायाम् ॥ ४५ ॥ निरंशत्वंनिःशेषताम् ॥ ४६ ॥ साधनफलयोरतिसुलभतांदर्शयति ॥ स्वसंविदिति ॥ स्वसंवित्स्वप्रकाशचिदात्मातस्यभावनातदाकारवृत्तिमात्रसिद्धिस्तावन्मात्रसाध्येनतुजडेष्विवतत्फलव्याप्तिप्रयत्नापेक्षास्तीतिसाधनेअतिसुलभता ॥ सिद्धमात्रात्मनीतिफलेप्युत्पादनप्रयत्नानपेक्षत्वादतिसुलभतासूचिता ॥ भ्रमीमहंभावादिभ्रांतिम् ॥ कृदिकारादक्तिनइतिङीप् ॥ ४७ ॥ पुरुषांतरादिबाह्यसाधनानपेक्षत्वादप्यतिसुलभतामाह ॥ स्वेति ॥ ४८ ॥ इदानींसर्वोपदेशसिद्धांतसारंसंक्षिप्यदर्शयन्नुपसंहरति ॥ विस्मृत्येति ॥ हेरामत्वंप्रथमंव्यष्ट्यहंभावंविस्मृत्यविष्वक्सर्वतःप्रसिद्धःशैलांतरिक्षक्षितिजलधयश्चमरुद्वायुश्चतन्मार्गआकाशश्चेत्येवंरूपःपूरिताशेषविश्वःपरिस्तृतवि

अहमर्थेप्रविस्तृतेसंसारोह्यनुभूयते॥नांतर्भूयपरिक्षीणेलोचनस्येवतारके॥४५॥अहमंशेनिरंशत्वंनीतेशाश्वतसंविदा॥शाम्यतीयमशेषेणसंसारमृगतृष्णिका॥४६॥स्वसंविद्भावनामात्रसाध्येस्मिन्वरवस्तुनि॥सिद्धमात्रात्मनिस्वैरंमाखेदंगच्छमाभ्रमीम्॥४७॥स्वयत्नमात्रसंसाध्यादसहायादिसाधनात्॥अनहंवेदनान्नान्यच्छ्रेयःपश्यामितेनघ॥४८॥विस्मृत्याहंत्वमास्वप्रविस्तृतविभवःपूरिताशेषविश्वोविष्वक्शैलांतरिक्षक्षितिजलधिमरुन्मार्गरूपोमलात्मा॥स्वस्थःशांतोविशोकःकरणमलकलावर्जितोनिष्प्रपंचोनिःसंचारश्चरात्मासकलमसकलंचेतिसिद्धांतसारः॥४९॥ ॥इ० वा० वा० दे० मो० नि० उ० अहंतानिरासोनामचतुर्थःसर्गः॥४॥ ॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥स्वभावंस्वंविजित्यादाविंद्रियाणांसचेतसाम्॥प्रवर्त्ततेविवेकेयःसर्वंतस्याशुसिध्यति॥१॥स्वभावमात्रंयेनांतर्नजितंदग्धबुद्धिना॥तस्योत्तमपदप्राप्तिःसिकतातैलदुर्लभा॥२॥शुद्धेऽल्पोप्युपदेशोहिनिर्मलेतैलबिंदुवत्॥लगत्युत्तानचित्ते तुनादर्शइवमौक्तिकम्॥३॥अत्रेवोदाहरंतीममितिहासंपुरातनम् ॥ममपूर्वंभुशुंडेनकथितंमेरुमूर्द्धनि॥४॥पुराभुशुंडःकस्मिंश्चित्पृष्टआसीत्कथांतरे॥मयाकदाचिदेकांतमेरोःशिखरकोटरे॥५॥मुग्धबुद्धिमनात्मज्ञंकंत्वंसुचिरजीवितम्॥स्मरसीतिमयापृष्टेनोक्तंतेनेदमंगमे॥६॥

भवःसनसमष्टिभावेनास्य ॥ तदनंतरंनिःसंचारःस्थावरश्चरात्माचेतिसकलंनिष्प्रपंचंब्रह्मैवेतिबाधित्वानिष्प्रपंचःकरणैर्मलैःकलाभिश्चवर्जितःसन्स्वस्थःशांतोविशोकोऽमलात्माआस्वेत्यध्यारोपापवादाभ्यांनिष्प्रपंचात्मपरिशेषएवसर्ववेदांतसिद्धांतसारइत्यर्थः ॥ ४९ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशे नि० उत्तरार्द्धे चतुर्थःसर्गः ॥४॥ ॥५॥ शास्त्रंजितेंद्रियेष्वेवसफलंनेतरेष्विति ॥ वसिष्ठेनभुशुंडोक्ताविद्याधरकथोच्यते ॥ १ ॥ सचेतसांसमनस्कानामिंद्रियाणांस्वंविषयानुधावनलक्षणंस्वभावमादौविजित्यपश्चाद्योनित्यानित्यवस्तुविवेकादिसाधनेप्रवर्त्ततेतस्यैवसर्वंशास्त्राचार्योपदेशफलंप्रसिद्ध्यतिनान्यस्येत्यर्थः ॥ १ ॥ सिकतानिष्पीडनश्रमइवचिराभ्यस्तोपिश्रवणादिर्निष्फलइत्यर्थः ॥ २ ॥ निर्मलेवस्त्रादौतैलबिंदुवल्लगतिअंतर्निविशते ॥ उत्तानमगंभीरंसाधनचतुष्टयारिक्तंचित्तंयेषांतेषु ॥ ३ ॥ ४॥ कथांतरेअध्यात्मकथाप्रस्तावे ॥ ५ ॥ मुग्धबुद्धिरज्ञोऽवस्थमनिर्जितेंद्रियंत्वयाश्रमश्च भविष्यतीतितादृशस्यैवप्रश्नः ॥ ६ ॥

सुष्ठुखेदितःअजितैरिंद्रियैःखेदंप्रापितः अतएवशुष्कोविश्रांतिरसहीनः ॥ तपसानियमेनयमेनचशुष्कइतिपरेणान्वयोवा ॥ आर्यःआयुर्वृद्धिहेतुसदाचारसंपन्नः ॥ ७ ॥ ८ ॥ औचित्याच्चिराभ्यस्ततपोनियमादेर्विवेकोदयावश्यंभावात् ॥ यथाविदूरभूविशेषस्यजलदोदयाद्वैदूर्यरत्नमुद्भवतितद्वत् ॥ ९ ॥ विवेकस्वरूपमेवदर्शयति॥ पुनरिति॥ जरामामाभूत्इतिविभावयन्लज्जेनिर्विण्णइतियावत् ॥ १० ॥ पंचप्राणादशेंद्रियाणिमनोबुद्धीद्वेस्थूलदेहश्चेत्यष्टादशमयींस्वांपुरीम् ॥ उपोह्यचिरंवोढ्वांश्रांतःविरक्तआत्मामनोयस्य ॥ ११ ॥ अवसरतःप्रश्नावसरंप्राप्येत्यर्थः ॥ १२ ॥ तत्रस्वखेदहेतूनिंद्रियादिदोषान्विस्तरेणोत्तरत्रवर्णयिष्यन्नुपक्रमते ॥ मृदूनीतिद्वाभ्याम् ॥ स्वस्वविषयेषुशीघ्रानुप्रवेशित्वान्मृदूनिप्रवेशोत्तरकालंपरितापीनिततश्चालयितुमशक्यत्वाद्दृषद्भ्योपिदृढबलानिस्वशरीरानुप्रविष्टशरादिशस्त्राणींद्रियाणिचतुल्यानीत्यर्थः ॥ १३ ॥ इमानींद्रियाणिहार्दानि

भुशुंडउवाच आसीद्विद्याधरःपूर्वमनात्मज्ञःसुखेदितः॥ लोकालोकांतरशृंगेशुष्कआर्योविचारवान् ॥ ७॥ तपसाबहुरूपेणयमेननियमेनच॥ अक्षीणायुरतिष्ठत्सपुराकल्पचतुष्टयम्॥ ८॥ ततश्चतुर्थेकल्पांतेविवेकस्तस्यचोदभूत्॥ विदूरस्येववैदूर्यमौचित्याज्जलदोदयात्॥ ९॥ पुनर्मृतिःपुनर्जन्मजरामेतिविभावयन्॥ लज्जेऽहंतत्किमेकंस्यात्स्थिरमित्यवमृश्यसः॥ १०॥ मामाजगामसंप्रष्टुमष्टादशमयींपुरीम्॥ स्वामुपोह्यविरक्तात्मासंसाराररसतांगतः॥ ११॥ समस्समीपमागत्यकृतोदारनमस्कृतिः॥ मत्पूजितोवसरतउवाचेदमनिंदितम्॥ १२॥ विद्याधरउवाच मृदूनिपरितापीनिदृषद्दृढबलानिच॥ छेदेभेदेचदक्षाणिस्वशस्त्राणींद्रियाणिच॥ १३॥ पर्याकुलानिमलिनानिविपत्प्रदानिदुःखोर्मिमंतिगुणकाननपावकत्वात्॥ हार्दांधकारगहनानितमोमयानिजित्वेंद्रियाणिसुखमेतिचकिंममार्थैः॥ १४॥ ॥इ०वासिष्ठम०वा०दे०मो०निर्वाणप्रकरणेउ०विद्याधरोपाख्यानेविद्याधरप्रश्नोनामपंचमःसर्गः॥५॥ ॥ विद्याधरउवाच यदुदारमनायासंक्षयातिशयवर्जिम्॥ पदंपावनमाद्यंतरहितंतद्वदाशुमे॥ १॥

हृदिरूढान्यंधकारगहनानिसांधकारारण्यानि कामादिमर्कटैःपर्याकुलानि प्राणमनोदेहहृदयेष्वशनायादिषडूर्मिमंति दैवात्कचिदंकुरितस्यशमदमादिगुणकाननस्यपावकत्वाद्दाहकत्वादूर्मिमत्वेपिनशीतलानि ईदृशानींद्रियाणिचकारात्तदुपाश्रयंमनश्चजित्वासुखमेतिनभोगैः ॥ अतोममवैद्याधरभोगलक्षणैरर्थैःकिंप्रयोजनम् ॥ तद्विरक्तोजिज्ञासुःशरणागतोस्मीत्यर्थः ॥ १४ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेपंचमःसर्गः ॥ ५ ॥ ॥ ५ ॥ ॥ दिव्यभोगप्रसक्तेनचिरंस्वेनपरीक्षिताः ॥ इहविद्याधरेणोक्ताविपर्येंद्रियदुर्नयाः ॥ १ ॥ अतःसाधनचतुष्टयसंपन्नायब्रह्मजिज्ञासवेमह्यंब्रह्मोपदिशेत्याह ॥ यदिति ॥ सर्वकार्पण्यनिवर्त्तकनिर्दुःखनिरतिशयानंदरूपत्वादुदारम् ॥ आशुशीघ्रंवद ॥ प्रदीप्तशिरसइवजलराशिविविक्षोस्त्रिविधतापसंतप्तस्यममविलंबसहनाशक्तेरितिभावः ॥ १ ॥

तर्हिप्रागेवकुतोनागमस्तत्राह ॥ एतावंतमिति ॥ आत्मनोमनसस्तीव्रतरवैराग्यलक्षणात्प्रसादात् ॥ २ ॥ मनोमहामयेनकामेनोत्तप्तम् अज्ञानवृत्तिपुदुर्वासनासुक्षुब्धम् दुरंतादु रुच्छेदाईहाःकर्माणियस्यतम् ॥ तत्रकारणमाह ॥ मोहादिति ॥ अहमित्यनात्मन्यात्माभिमानाकारेणस्थितान्मोहात्स्वतत्त्वापरिज्ञानान्निमित्तादित्यर्थः ॥ मोहादुद्धरेतिबुद्धि कृतापादानेत्रापंचमी ॥ ३ ॥ ननुविद्याधराःसर्वविद्याश्रयत्वाद्विद्याबलादेवसर्वदुःखनिराससमर्थामणिमंत्ररसायनादिसिद्धिभिरणिमाद्यैश्वर्यैश्वयुक्ताःश्रूयंतेतत्किमेवंश्रीमति त्वयिकामादिदुःखशातनाःकातरताकार्पण्यादिदोषाश्चनिपतिताः येनदेवयोनिश्रेष्ठत्वान्मान्यतमोपित्वंनिकृष्टकाकयोनिमपिमांशरणागतोसिपृच्छसिचतत्राह ॥ श्रीमत्यपी ति ॥ सर्वविद्यासिद्ध्यादिश्रीमत्यप्यात्मविद्याशून्येकामक्रोधेर्ष्यासूयादिदुःखशातनाःकातर्यादिदोषाश्चपतंत्येव अजितेंद्रियत्वादितिभावः ॥ पंकजपक्षेश्रीमतिलक्ष्म्याधारेगु

एतावंतमहंकालंसुप्तआसंजडात्मकः॥इदानींसंप्रबुद्धोस्मिप्रसादादात्मनोमुने॥२॥मनोमहामयोत्तप्तंक्षुब्धमज्ञानवृत्तिषु॥मामुद्ध रदुरंतेहंमोहादहमितिस्थितात् ॥ ३ ॥ श्रीमत्यपिपतंत्याशुशातनाःकातरादयः ॥ गुणवत्युग्रपत्रेपितुहिनानीवपंकजे ॥ ४ ॥ जायंतेच म्रियंतेचकेवलंजीर्णजंतवः॥ नधर्मायनमोक्षायमशकाइवपंकजे ॥ ५ ॥ भावैस्तैस्तैरेवतैरेवतुच्छालंभविडंबनैः॥ चिरेणपरिखिन्नाःस्मो विप्रलंभाःपुनःपुनः ॥६॥ नांतोस्त्यस्यनचस्थैर्यावस्थाऽविश्रांतमानसम् ॥ भ्रमंतोभोगभंगेषुमरुभूमिष्विवाध्वनः॥७॥ आपातमधुरा रंभाभंगुराभवहेतवः॥ अचिरेणविकारिण्योभीषणाभोगभूमयः ॥८॥ मानावमानपरयादुरहंकारकांतया ॥ नरमेवामयातातहत विद्याधरश्रिया ॥ ९ ॥ दृष्टाश्चैत्ररथोद्यानभुवःकुसुमकोमलाः॥ कल्पवृक्षलतादत्तसमस्तविभवश्रियः ॥ १० ॥ विद्रुतंमेरुकुंजेषुविद्या धरपुरेषुच ॥ विमानवरमालासुवातस्कंधस्थलीषुच ॥ ११ ॥

णवतिबिसतंतुमतिस्वाश्रयसस्नेहजलविमुखत्वात्तत्कणैरलेप्यत्वाच्चोग्राणिस्नेहनिष्ठुराणिपत्राणियस्यतादृशेपि ॥ ४ ॥ ज्ञानाभावेदेवयोनीनांमशकादियोनिसाम्यमेवधर्माधि काराभावादितिसूचयन्स्ववैराग्यहेतुंसर्वत्रदोषदर्शनंप्रपंचयति ॥ जायंतेइत्यादिना ॥ ५ ॥ भावैःशब्दादिविषयैस्तैस्तैःसहस्रशःपूर्वभुक्तैरेवतुच्छतमसुखलवार्थयआलंभोविष येंद्रियस्पर्शस्तल्लक्षणैर्विडंबनैर्वंचनोपायैर्विप्रलंभाः कर्मणिघञ् विप्रलब्धावंचिताःसंतः ॥ तुच्छान्नैरितिपाठेतुच्छानांक्षुद्रजंतूनामप्यन्नैरुपभोग्यभूतैरित्यर्थः ॥६॥ अविश्रांत मानसंयथास्यात्तथाभोगभंगेषुभंगुरेषुभोगेषुभ्रमतोममास्यसंसाराध्वनोंऽतोनास्तिस्थैर्येणावस्थानंस्थैर्यावस्थाचनास्ति ॥ ७ ॥ ८ ॥ ननुबहुतरपुण्यार्जितयाविद्याधरसंपदैवत्व कुतोनविश्रांतिस्तत्राह ॥ मानेति ॥ मानःस्वोत्कर्षापादनाभिमानः अपमानःपरापकर्षापादनम् तदेवपरंश्रेष्ठंयस्याम् ॥ दुष्टःअहंकारोयेषांतेषांकांतयारम्यया ॥ अतएववाम याविवेकिनांप्रतिकूलयास्त्रियाच ॥ तत्पक्षेपिविशेषणेयोज्ये ॥ ९ ॥ सर्वत्रभुक्तभोगतयावैरस्यंप्रकटयति ॥ दृष्टाइत्यादिना ॥ १० ॥ ११ ॥

हारादिभूषितानांहाराविलासाविहारचमत्कारायासु ॥ १२ ॥ आधयोमानसदुःखानितद्विषोष्मणादग्धम् ॥ अधुनाविवेकोदयकालेविज्ञातंनप्राक् ॥ १३ ॥ कीदृशेनविवेके नकिंकिंकथंकथंज्ञाततत्प्रथमंचक्षुरादिषुदर्शयति ॥ रूपेत्यादिना ॥ गृध्नुनाअभिकांक्षमाणेन ॥ गृधेस्त्रसिगृधीत्यादिनाक्नुः ॥ सावभासेनबाह्यांतरप्रकाशसहकृतेन ॥ दोषाय स्वविषयासंगेनमनोदूषणाय ॥ १४ ॥ वनितापिंडेइदंवस्त्राभरणानुलेपनादिकमेवगुणावहंशोभाकल्पकं इदंरक्तमांसास्थिकेशादिन इतिविकल्पनंविवेचनंमुक्त्वाविनाधावति चक्षुरितिशेषः ॥ १५ ॥ तद्विषयासंगदूषितंरागांधंचेतःप्रदीपरूपरागांधपतंगवत्परस्मैउत्कृष्टायमरणाद्यनर्थाययानिईहितानिदुर्व्यसनानितदुन्मुखंसत्नानाविधानांबंधानांबध बंधनरकाद्यापदांवशंयावदायातितावद्विरतिमुपरमंनायातीत्यर्थः ॥ १६ ॥ चक्षुष्युक्तंदोषंघ्राणादिष्वपिदर्शयति ॥ घ्राणमिति ॥ १७॥ यथाकश्चिदतिदोषेणवैरिणाबलाद्दशी

विश्रांतंसुरसेनासुकांताभुजलतासुच ॥ हारिहारविलासासुलोकपालपुरीपुच ॥ १२ ॥ नकिंचिदुचितंसाधुसर्वमाधिविषोष्मणा ॥ दग्धंभस्मायतेतातविज्ञातमधुनामया ॥ १३ ॥ रूपालोकनलोलेनवनिताननगृध्नुना ॥ सावभासेनदोषायदुःखंनीतोस्मिचक्षुषा ॥ १४ ॥ इदंगुणावहंनेदमितिमुक्त्वाविकल्पनम् ॥ रूपमात्रानुसारित्वादवस्तुन्यपिधावति ॥ १५ ॥ तावदायातिविरतिंनवशंयावदापदाम् ॥ नानाबंधपरंचेतःपरानर्थैहितोन्मुखम् ॥ १६ ॥ घ्राणमेतदनर्थायधावच्चैवाभितःस्फुटम् ॥ ननिवारयितुंतातशक्नोमीहहयंयथा ॥ १७ ॥ गंधोदकप्रणालेनमुखश्वासानुपातिना ॥ वैरिणेवातिदोषेणघ्राणेनास्मिनियोजितः ॥ १८ ॥ चिरंरसनयाचाहमनयानयहीनया ॥ गजगोमायुगुप्तेषुदुःखाद्रिष्वलमाहतः ॥ १९ ॥ निरोद्धुंनचशक्नोमिस्पर्शलंपटतांत्वचः ॥ ग्रीष्मकालसमिद्धस्यतापमंशुमतोयथा ॥ २० ॥ शुभशब्दरसार्थिन्योमुनेःश्रवणशक्तयः ॥ मांयोजयंतिविषमेतृणेच्छाहरिणंयथा ॥ २१ ॥ प्रणताःप्रियकारिण्यःप्रह्वभृत्यसमीरिताः ॥ वाद्यगेयरवोन्मिश्राःशुभशब्दश्रियःश्रुताः ॥ २२ ॥ श्रियःस्त्रियोदिशश्चैवतटाश्चांभोधिभूभृताम् ॥ दृष्टाविभवहारिण्यःप्रक्वणन्मणिभूषणाः ॥ २३ ॥ चिरमास्वादिताःस्वादुचमत्कारमनोरमाः ॥ प्रह्वकांताजनानीताःषड्रसागुणशालिनः ॥ २४ ॥

कृतोदुर्गंधोदकवहेनगरप्रणालेसदासंचरेतिनियोजितोभवतितद्वदहमपिश्लेष्मादिदुर्गंधोदकप्रणालेनासाबिलेनियोजितइत्यर्थः ॥ १८ ॥ नयोभक्ष्याभक्ष्यविभागपरंशास्त्रंतद्धीन या ॥ कृमिकीटपश्वादियोनिलक्षणेषुदुःखाद्रिषु ॥ सुरापाःकृमयोभवंत्यभक्ष्यभक्षिणश्चेत्यादिस्मृतेरितिभावः ॥ यत्रबलवतांगजोबुद्धिमतांगोमायुश्चश्रेष्ठइतितयोरेवगोमृताप्र सक्तिर्नान्यस्येतितथोक्तिः ॥ १९ ॥ २० ॥ शब्दरसःशब्दास्वादनम् ॥ हरिणपक्षेविषमेतृणावृतकूपे ॥ २१ ॥ तर्हिकिंतवरूपादयःशब्दांताविषयादुर्लभायेनतदर्थमनर्थःप्रा प्तोनेत्याह ॥ प्रणताइत्यादिना ॥ प्रह्वभृत्यजनेरितत्वादेवप्रणतप्रायाः ॥ २२ ॥ विशेषणेश्र्यादिचतुष्टयेसाधारणेयोज्ये ॥ २३ ॥ षड्रससौगंध्यानांयथायोग्यंमेलनपाकचातुरीगुणशालिनः ॥ २४ ॥

कौशेयादयःषट्त्वग्विषयाः ॥ २५ ॥ वधूमुखानिओषध्यश्चंदनोशीरागुर्वादयःपुष्पाणिसमालंभनंकर्पूरकस्तूरीपौष्कलकादीनांमिलनंतद्भूमयस्तत्प्रभवाः ॥ २६ ॥ भूयोभूयःसे
व्यमानंसंशुष्कंकाष्ठमिवविरसंसंपन्नंतत्रवांताशनप्रायेजातेकिंभजामि ॥ २७ ॥ वैरस्येनैवतज्जिह्वासानतुतृप्तेत्याह ॥ भुक्तेति ॥ २८ ॥ किमवाप्यतेनकिंचिदित्यर्थः ॥ २९ ॥
येषांहिरण्यकशिपुप्रभृतीनांविनाशनंविनाशसाधनंनासीत्प्राग्जगत्प्रसिद्धम् ॥ नशुष्केणनचार्द्रेणेत्यादिवरप्रार्थनेसर्वप्रसिद्धवधसाधनप्रतिषेधादितिभावः ॥ ३० ॥ इत्थंसति
किंकार्यंतदाह ॥ प्राप्तेनेति ॥ कष्टयाइंद्रियप्राणमनःसंयमादिश्रमसाध्ययापिचेष्टया ॥ ३१ ॥ चिरभुक्तमहाभोगानामपिपुंसांभोगकालेअपगतेअभुक्तभोगेभ्यःपुरुषांतरे

कौशेयकामिनीहारकुसुमास्तरणानिलाः ॥ निर्विघ्नमभितःस्पृष्टाभृशमाभोगभूमिषु ॥ २५ ॥ वधूमुखौषधीपुष्पसमालंभनभूमयः ॥
अनुभूतामुनेगंधामंदानिलसमीरिताः ॥ २६ ॥ श्रुतंस्पृष्टंतथादृष्टंभुक्तंघ्रातंपुनःपुनः ॥ संशुष्कविरसंभूयःकिंभजामिवदाशुमे ॥ २७ ॥
भुक्त्वावर्षसहस्राणिदुर्भोगपटलीमिमाम् ॥ आब्रह्मस्तंबपर्यंतंनतृप्तिरुपजायते ॥ २८ ॥ साम्राज्यंसुचिरंकृत्वातथाभुक्त्वावधूगणम् ॥
भंक्त्वापरबलान्युच्चैःकिमपूर्वमवाप्यते ॥ २९ ॥ येषांविनाशनंनासीद्यैर्भुक्तंभुवनत्रयम् ॥ तेपितेप्यचिरेणैवसमंभस्मपदंगताः ॥ ३० ॥
प्राप्तेनयेननोभूयःप्राप्तव्यमवशिष्यते ॥ तत्प्राप्तौयत्नमातिष्ठेत्कष्टयापिहिचेष्टया ॥ ३१ ॥ येनकांताश्चिरंभुक्ताभोगास्तस्येहजंतुभिः ॥ दृ
ष्टोनकस्यचिन्मूर्ध्नितरुर्व्योमप्लवश्चवा ॥ ३२ ॥ चिरमासुदुरंतासुविषयारण्यराजिषु ॥ इंद्रियैर्विप्रलब्धोस्मिधूर्त्तबालैरिवार्भकः ॥ ३३ ॥
अद्यत्वेतेपरिज्ञातामयास्वविषयारयः ॥ कष्टाइंद्रियनामानोवंचयित्वातुमांपुनः ॥ ३४ ॥ संसारजंगलेशून्येदग्धंनरमृगंशठाः ॥ आश्वा
स्याश्वास्यनिघ्नंतिविषयेंद्रियलुब्धकाः ॥ ३५ ॥ विषमाशीविषैरेभिर्विषयेंद्रियपन्नगैः ॥ येनदग्धानदृष्टास्तेद्वित्राएवजगत्यपि ॥ ३६ ॥
भोगभीमेभवलितांतृष्णातरलवागुराम् ॥ लोभोग्रकरवालाढ्यांकोपकुंतकुलांकिताम् ॥ ३७ ॥

भ्योनकश्चिद्विशेषोदृश्यतइत्याह ॥ येनेति ॥ येनयेनचिरंकांतारम्यतराभोगाश्चिरंभुक्तास्तादृशस्यपुंसोमध्येकस्यचिदपिमूर्ध्निसंजातःकल्पतरुःकैश्चिदपिजंतुभिर्नदृष्टोयेनसत
च्छायायांसदैवपूर्णकामोविश्राम्येत् ॥ नापितस्यगुदेव्योमप्लवोविमानादिःसंजातोदृष्टोयेनससदैवसर्वत्रविहरेदित्यर्थः ॥ ३२ ॥ अर्भकः साधुरितिशेषः ॥ ३३ ॥ शब्दादिवि
षयात्मकानांभूतानामेवमनसोबहिराकर्षणेनस्वस्वभोगायश्रोत्रादींद्रियभावेनावस्थानादिंद्रियनामानःस्वविषयारयोमयाअद्यपरिज्ञाताइत्यन्वयः ॥ ३४ ॥ ३५ ॥ आशीवि
षैर्दृष्टिविषैः ॥ येनदृष्टानदग्धाश्चतेतथाविधाःपुरुषाःसर्वजगत्यपिद्वित्राएवसंभाव्यंतइतिशेषः ॥ ३६ ॥ अवश्यजेतव्यताप्रदर्शनायेंद्रियाण्येवशत्रुसेनात्वेनरूपयति ॥ भोगे
त्यादित्रिभिः ॥ भोगाएवभीमाइभागजास्तैर्वलिताम् ॥ ३७ ॥

द्वंद्वानिशीतोष्णादीनि ॥ अहंकारेणसेनापतिनाअनुपालिताम् ॥ ३८ ॥ शरीरलक्षणस्यनगरस्यसीमांतेषुगतामाक्रम्यस्थिताम् ॥ ३९ ॥ मत्तस्यैरावणदंतिनऐरावतस्य ॥ करटस्यकुंभस्योद्भेदोविदारणम् ॥ ४० ॥ सत्वस्यधैर्यस्य ॥ श्रियोविश्रांतिसंपदः ॥ इंद्रियाणामाक्रमणंजयः ॥ सीमांतोऽवधिःपराकाष्ठेतियावत् ॥ महतांतत्वविदामपि ॥ ४१ ॥ उत्तमतांमान्यताम् ॥ ४२ ॥४३॥ यत्नउपायश्चेदस्तितत्तर्हिजयामि ॥ ४४ ॥ एकएवोपायोमयाज्ञातोस्तीत्याह ॥ इंद्रियेति ॥ ४५ ॥ ४६ ॥ इतःप्रभृतितुल्यैर्विशेषणैःपल्व

द्वंद्वजालरथ्याप्तामहंकारानुपालिताम् ॥ चेष्टातुरंगमाकीर्णांकामकोलाहलाकुलाम् ॥ ३८ ॥ शरीरसीमांतगतांदुरिंद्रियपताकिनीम् ॥ येजेतुमुत्थितास्तातततएवेहहिसद्भटाः ॥ ३९ ॥ सुसाध्यःकरटोद्भेदोमत्तैरावणदंतिनः ॥ नोत्पथप्रतिपन्नानांस्वेंद्रियाणांविनिग्रहः ॥ ४० ॥ पौरुषस्यमहत्त्वस्यसत्वस्यमहतःश्रियः ॥ इंद्रियाक्रमणंसाधोसीमांतोमहतामपि ॥ ४१ ॥ तावदुत्तमतामेतिपुमानपिदिवौकसाम् ॥ कृपणैरिंद्रियैर्यावत्तृणवन्नापकृष्यते ॥४२॥ जितेंद्रियामहासत्वायेतएवनराभुवि ॥ शेषानहमिमान्मन्येमांसयंत्रगणांश्चलान् ॥ ४३ ॥ मनःसेनापतेरस्सेनामिमामिंद्रियपंचकम् ॥ जेतुंचेदस्तिमेयत्नोजयामितदलंमुने ॥ ४४ ॥ इंद्रियोत्तमरोगाणांभोगाशावर्जनादृते ॥ नौषधानिनतीर्थानिनचमंत्राश्चशांतये ॥ ४५ ॥ नीतोस्मिपरमंखेदमभिधावद्भिरिंद्रियैः ॥ एकएवमहारण्येतस्करैःपथिकोयथा ॥ ४६ ॥ पंकवंत्यप्रसन्नानिमहादौर्भाग्यवंतिच ॥ गंधिशैवलतुच्छानिपल्वलानींद्रियाणिच ॥४७॥ दुरतिक्रमणीयानिनीहारगहनानिच ॥ जनितातंकजालानिजंगलानींद्रियाणिच ॥४८॥ पंकजानिसरंध्राणिसुदुर्लक्ष्यगुणानिच ॥ ग्रंथिमंतिजडांगानिमृणालानींद्रियाणिच ॥ ४९ ॥ रूक्षाणिरत्नलुब्धानिकल्लोलवलितानिच ॥ दुर्ग्रहग्राहघोराणिक्षारांबूनींद्रियाणिच ॥ ५० ॥ बांधवोद्वेगदायीनिदेहांतरकराणिच ॥ करुणाक्रंदकारीणिमरणानींद्रियाणिच ॥ ५१ ॥ अविवेकिष्वमित्राणिमित्राणिचविवेकिषु ॥ गहनानंतशून्यानिकाननानींद्रियाणिच ॥ ५२ ॥

लादिसाम्येनेंद्रियाणिवर्णयति ॥ पंकवंतीत्यादिना ॥ गंधिभिःशैवलतुल्यैर्मालिन्यैस्तुच्छानिकुत्सितानि ॥ ४७ ॥ नीहारैर्जाड्यैर्हिमैश्चगहनानि ॥ आतंकोभयम् ॥ ४८ ॥ पंकान्मलाज्जातानि ॥ गुणावासनास्तंतवश्चसूक्ष्मतमत्वात्सुदुर्लक्ष्याः ॥ जडांगानिजडदेहावयवप्रायाणि ॥ लडयोरभेदाज्जलांगानिच ॥ ४९ ॥ निष्ठुरत्वादसुखस्पर्शत्वाच्च रूक्षाणि ॥ कल्लोलैःषडूर्मिभिरूर्मिभिश्च ॥ क्षारांबूनिसमुद्रजलानि ॥५०॥५१॥ गहनानिदुरवगाहानि ॥ अनंतानिनिरवधीनि जनविश्रांतिशून्यानिच ॥ ५२ ॥

घनाआस्फोटाभुजास्फालनगर्जनशब्दायेभ्यः ॥ विद्युदिवक्षणसुखप्रकाशानि ॥ पक्षांतरेस्पष्टम् ॥ ५३॥ क्षुद्रैस्तुच्छसुखासक्तैःकीटादिभिश्चपरिगृहीतानि ॥ अवटानिगर्त्तो त्करस्थलानि ॥५४॥ श्वभ्रायाणिजीर्णश्वभ्रमुखानि ॥५५॥५६॥ दुर्दारूणिजीर्णवंशादिकाष्ठानि ॥५७॥ घनैर्मोहैश्चौर्यकलहद्यूतादिदुर्व्यसनप्रबंधनशीलानि ॥ कुपुराणिअ सज्जननगराणि ॥५८॥ चक्रकाणिकुलालचक्राणि ॥५९॥ हेआपन्नोद्धरणशीलएवंवर्णितप्रकारेंद्रियप्रयुक्तापत्सागरनिमग्नमकिंचनंत्यक्तसर्वस्वमिमंशरणागतंमांदयोदयेनकृ पोत्थेनतत्त्वोपदेशेनोद्धर ॥ यतःकारणाज्जगतियेयेप्रसिद्धास्त्वादृशाःकेचनसंतस्तत्त्वज्ञादयालवोजयंतिसर्वोत्कर्षेणवर्त्तंतेतेषांसंगमंशरणागतिपरमशोकहरंवदंतिसर्वशास्त्राणिस र्वजनाश्चेत्यर्थः ॥ ६० ॥ ॥ इतिश्रीवासिष्ठम०रा०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउ०पष्ठःसर्गः ॥ ६ ॥ ॥ ७ ॥ ॥ ब्रह्मैवनजगद्दुःखमज्ञानंजगदाततम् ॥ अहंबीजात्व

घनास्फोटान्यसाराणिमलिनानिजडानिच ॥ विद्युत्प्रकाशान्येतानिभीमाभ्राणींद्रियाणिच ॥ ५३ ॥ क्षुद्रप्राणिगृहीतानिवर्जितानिकृ तात्मभिः ॥ रजस्तमोभिभूतानिसेंद्रियाण्यवटानिच ॥ ५४ ॥ पातनैकांतदक्षाणिदोषाशीविषवंतिच ॥ रूक्षकंटकलक्षाणिश्वभ्राग्राणीं द्रियाणिच ॥ ५५ ॥ आत्मंभरीण्यनार्याणिसाहसैकरतानिच ॥ अंधकारविहारीणिरक्षांसिसेंद्रियाणिच ॥ ५६ ॥ अंतःशून्यान्यसाराणि वक्राणिग्रंथिमंतिच ॥ दहनैकार्थयोग्यानिदुर्दारूणींद्रियाणिच ॥ ५७ ॥ घनमोहप्रबंधीनिदुष्कूपगहनानिच ॥ महावकरतुच्छानिकुपु राणींद्रियाणिच ॥ ५८ ॥ अनंतेषुपदार्थेषुकारणानिघटादिषु ॥ सभ्रमाणिसपंकानिचक्रकाणींद्रियाणिच ॥ ५९ ॥ आपन्निमग्नमिम मेवमकिंचनंत्वंमामुद्धरोद्धरणशीलदयोदयेन ॥ येनामकेचनजगत्सुजयंतिसंतस्तत्संगमंपरमशोकहरंवदंति ॥ ६० ॥ ॥ इ०वा० म०वा०दे०मो०नि०उ० विद्याधरोपा० वैराग्यवर्णनंनामषष्ठःसर्गः ॥ ६ ॥ ॥ ७ ॥ ॥ भुशुंडउवाच ॥ ॥ ततस्तस्यमयाब्रह्मंस्त च्छुत्वापावनंवचः ॥ इदमुक्तंयथापृष्टंसुस्पष्टपदयागिरा ॥ १ ॥ साधुविद्याधराधीशदिष्ट्याबुद्धोसिभूतये ॥ भवांधकूपकुहराच्चिरेणोत्था नामेच्छसि ॥ २ ॥ पावनीयंतवमतीराजतेघनरूपिणी ॥ विवेकेनानलेनेवकनकद्रवसंततिः ॥ ३ ॥ उपदेशगिरामर्थमादत्तेहारिहेल या ॥ मुकुरेनिर्मलेद्रव्यमयत्नेनैवबिंबति ॥ ४ ॥ यदिदंवच्मितत्सर्वमोमित्यादातुमर्हसि ॥ अस्माभिश्चिरमन्विष्टंनात्रकार्याविचारणा ॥ ५ ॥ यत्किंचित्त्वदतेंऽतस्तेबुध्यस्वाबोधमुत्सृजन् ॥ नासित्वंचिरमप्यंतःप्रेक्षितोपिनलभ्यसे ॥ ६ ॥

रूढोहिजगद्वृक्षोत्रवर्ण्यते ॥ १ ॥ तस्यविद्याधरस्य ॥ इदंवक्ष्यमाणमुत्तरम् ॥ १ ॥ दिष्ट्याभाग्योदयात् ॥ २ ॥ विवेकेनघनरूपिणीनिबिडंव्याप्ता ॥ यथाअनलेनव्याप्ताकन कद्रवसंततिःकांत्यतिशयेनविराजतेतद्वदित्यर्थः ॥ ३ ॥ अतएवतेमतिर्मदुपदेशगिरामर्थमादत्तेअवश्यमादास्यति ॥ हेलयाअप्रयत्नेन ॥ ४ ॥ ओमित्यंगीकारबुद्ध्या ॥ ५ ॥ त त्रादौसर्वदृश्यविवेकेसाक्षिस्वरूपमेवशुद्धंब्रह्मेतिसर्ववेदांतरहस्यंसंक्षिप्योपदिशति ॥ यत्किंचिदिति ॥ यत्किंचिदहंकारादितेअंतर्दृदिस्वदतेदृश्यतयाप्रथतेतत्सर्वंत्वंनासि ॥ दृश्य वर्गेष्वेवकश्चिदात्मास्तिसमयान्विष्यलब्धव्यइतिचिरमप्यंतःप्रेक्षितोऽन्विष्टस्त्वमात्मानलभ्यसे अतोदृश्यमात्रलक्षणमबोधमुत्सृजन्संस्तत्साक्षिणमात्मानंबुध्यस्वेत्यर्थः ॥ ६ ॥

13

नहिद्रष्टृदृश्यलक्षणसर्वदृश्यत्यागेशून्यतापत्तिः किंतुसुखदुःखवैषम्यप्रयोजककल्पितदोषांशनिरस्थावास्तवपरमकल्याणब्रह्मभावेनपूर्णतयासर्वमस्त्येवेत्याशयेनाह ॥ नाहमिति ॥ ७ ॥ दृश्यमात्रस्यअवोधरूपत्वमुक्तमुपपादयति ॥ किमिति ॥ किंसुषुप्तौप्रसिद्धाद‌ज्ञानादहंकारादिभावेनघनीभूताज्जायत्त्वमलक्षणंजगज्जातमथवाजतुकाठिन्यादिवविलीनाज्जायदादिलक्षणाज्जगतःसौषुप्तीअज्ञताजाताइतिविचार्यापिविनिगमकाभावात्कार्यकारणभावव्यवस्थांनोविद्मः ॥ अतःकाठिन्यद्रवावस्थयोर्घृतस्यैवैकत्वात्सर्वस्याज्ञानमात्रत्वमित्यर्थः ॥ ८ ॥ तस्यविवर्त्ततादर्शनमेवत्यागः बाधितस्यजगतस्तुच्छताविभावनेनांकिंचिद्ब्रह्मअधिष्ठानरूपतापत्तिविभावनेनुसर्वमेवब्रह्मेत्याह ॥ मृगतृष्णेति ॥ ९ ॥ उक्तमाशयंविशदयंस्तत्प्रतिभासमपिनिराचष्टे ॥ मृगतृष्णेति ॥ तदभावात्प्रतिभास्याभावात् ॥ नहिघटाभावेप्रकाशसत्वेपिघटप्रकाशशब्दार्थोस्तीतिभावः ॥ १० ॥ अनंतरूपस्यजगतःप्रातिस्विकरूपेणनिरसितुमशक्यत्वाद्बीजदाहेनैवनिरासइतिवक्तुमहंकारंबीजत्वेनजगत्तत्प्रभवतरुत्वेनवर्णयति ॥ विश्वेत्यादिना ॥ ११ ॥ इंद्रियरसोविष

**नाहंत्वमस्तिनजगदितिनिश्चयिनस्तव॥ सर्वमस्तिशिवंतच्चनदुःखायसुखायते ॥ ७॥ किमज्ञत्वाज्जगज्जातंजगतोथकिमज्ञता ॥ विचार्यापीतिनोविद्मएकत्वादलमेतयोः ॥ ८ ॥ मृगतृष्णांबुवद्विश्वमवस्तुत्वात्सदप्यसत्॥ यच्चेदंभातितद्ब्रह्मनकिंचित्किंचिदेववा॥ ९॥ मृगतृष्णांबुवद्विश्वंनास्तित्वमथवास्तिच॥प्रतिभासोपिनास्त्यत्रतदभावादतःशिवम्॥१०॥विश्वबीजमहंत्वंत्वंविद्धितस्माद्विजायते॥ साद्र्यब्ध्युर्वीनदीशादिजगज्जरठपादपः॥११॥अहंत्वबीजादणुतोजायतेसौजगद्रुमः॥तस्येंद्रियरसाढ्यानिमूलानिभुवनानिहि॥१२॥ तारकाजालकलिकाऋक्षौघःकोरकोत्करः ॥ वासनागुच्छविसराःपूर्णचंद्रःफलालयः ॥ १३॥ स्वर्गादयोबृहद्वर्गामहाविटपकोटराः॥ मेरुमंदरसत्व्यादिगिरयःपत्रराजयः॥ १४॥ सप्ताब्धयोप्रसुतयःपातालंमूलकोटरम् ॥ युगानिघुणवंदानिपर्वाणिगुणपंक्तयः॥ १५॥ अज्ञानमुत्पत्तिमहीनराविहगकोटयः॥ उपलंभोबृहत्स्तंभोदवोनिर्वाणनिर्वृतिः॥ १६ ॥ रूपालोकमनस्काराविविधामोदवृत्तयः॥ वनंविपुलमाकाशंशुक्तिजालंमुखत्वचः॥ १७॥**

यासंगस्तदाढ्यानिअधोभुवनानितस्यद्रुमस्यमूलानि ॥१२॥ अश्विन्यादिसप्तविंशतितारकाजालंतस्यप्रधानकलिका ॥ तदन्यऋक्षौघःसूक्ष्मकोरकोत्करः ॥ प्राणिनांधर्मादिवासनाःपुष्पगुच्छसमूहाः ॥ फलालयःफलगुच्छाः ॥ १३ ॥ स्वर्गादयःस्वर्महर्जनतपःसत्यलोकाख्याबृहतांलोकानांवर्गामहांतोविटपकोटराःशाखावलयगर्भदेशाः ॥ १४ ॥ अपसुतयःआलवालपरिखाः ॥ युगानिकृतादीन्युत्तरोत्तरंधर्मपिष्टक्षरणाद्घुणवंदानि ॥ तत्तद्युगवत्सरायनर्त्तुमासादिगुणपंक्तयोवृक्षस्यशाखामूलाद्युद्भवपर्वाणि ॥ १५ ॥ नराजीवाः ॥ उपलंभोभ्रांतिज्ञानमेवबृहत्स्तंभःसर्वविटपाधारमध्यभागः ॥ तस्यतत्त्वबोधान्निर्वाणंनिर्वृतिरेवदवोवनहुताशनः ॥ १६ ॥ इंद्रियैरर्थोपलंभारूपालोकाःमनसातद्गोचरसंकल्पविकल्पामनस्काराश्चतस्यद्रुमस्यविविधाआमोदवृत्तयःसुगंधप्रसराः ॥ आकाशमव्याकृताकाशंतस्यविपुलंवनम् ॥ मुखत्वचोनेत्रपुटानिउत्तराधरोष्ठाश्चनेत्रहास्यमुक्तोद्भेदशुक्तिजालमिवपुष्पोद्भेदनंप्रसवबंधनमितियावत् ॥ १७ ॥

---

१ उद्भेदपर्वाणीत्यपिक्वचित्पाठः ॥

तस्यालसंविदेवजीवनहेतूरसप्रवाहः ॥ सूर्यचंद्राग्न्यादीनांसंवर्गेणनिवर्त्तनः सूत्रात्मैवतस्यवातस्पंदः ॥ १८ ॥ मज्जनोन्मज्जनेप्रत्यहमुदयास्तमयौतदुन्मुखाश्चंद्रार्करुचयस्त
स्यरम्याःकुसुममंजर्यः ॥ सूर्येणसहभ्रमत्तिमिरमंधकारएवभ्रमराणांभ्रमणंभ्रमरभ्रमोभ्रमंतोभ्रमराइतियावत् ॥ १९ ॥ ईदृशोयंसंसारवृक्षःपातालंमूलतोमध्यतआशागणंदि
क्समूहमग्रतोंतरिक्षंचापूर्यवस्तुतोऽसदेवभ्रांतिरूपंसद्वत्तिष्ठति ॥ तस्यअहमर्थरूपेबीजेअनहंतालक्षणेनाग्निनाहतेभर्जितेसतिजीवन्मुक्तिभोगाययावत्तदेहपातंप्रतिभासमात्रेण
सतोप्यस्यसंसारवृक्षस्यपुनर्जन्मादिनारोहःप्ररोहोनास्तीत्यर्थः ॥ २० ॥ ॥ इतिवासिष्ठम०रा०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउ०सप्तमःसर्गः ॥ ७ ॥ ॥ ५ ॥ ॥
इहसंसारवृक्षस्यज्ञानादुच्छेदईर्यते ॥ संकल्पमंडपप्रायःसंसारउपवर्ण्यते ॥ १ ॥ वर्णितंसंसारवृक्षमनुवदति ॥ विद्याधरेति ॥ हेविद्याधरअधस्तनसप्तलोकसहिताधराआधा
रोमूलदेशोयस्य ॥ लोकालोकांतगिरीणांकंदराणिअंतरालभागामंदिरंसालवालावेदिर्यस्य ॥ दशदिगंतरेअंबरेचआचारेणतिर्यग्विटपविस्तारेणचारेणऊर्ध्वविटपप्रसारेणत

विचित्रशाखाकृतवउपशाखादिशोदश ॥ संविद्रसमहापूरोवातस्पंदोनिवर्त्तनः ॥ १८ ॥ चंद्रार्करुचयोलोलामज्जनोन्मज्जनोन्मुखाः ॥
रम्याःकुसुममंजर्यस्तिमिरंभ्रमरभ्रमः ॥ १९ ॥ पातालमाशागणमंतरिक्षमापूर्यतिष्ठत्यसदेवसद्वत् ॥ तस्यानहंताग्निहतेहमर्थबीजेपुन
र्नास्तिसतोपिरोहः ॥ २० ॥ ॥ इ०वा०म०वा०दे०मो०नि०उ०विद्याधरो०जगद्वृक्षबीजवर्णनंनामसप्तमःसर्गः ॥ ७ ॥ ॥ ५ ॥
भुशुंडउवाच ॥ ॥ विद्याधरधराधारोगिरिकंदरमंदिरः ॥ दिगंतरांबराचारचारसंचारचंचुरः ॥ १ ॥ ईदृशोयंजगद्वृक्षोजायतेहंत्वबीज
तः ॥ बीजेज्ञानाग्निनिर्दग्धेनैवकिंचनजायते ॥ २ ॥ प्रेक्ष्यमाणंचतन्नास्तिकिलाहंत्वंकदाचन ॥ एतावदेवतज्ज्ञानमनेनैवप्रदत्यते ॥ ३ ॥
अहंत्वभावाच्चाहंत्वमस्तिसंसारबीजकम् ॥ नाहंत्वभावान्नाहंत्वमस्तीतिज्ञानमुत्तमम् ॥ ४ ॥ सर्गादावेवसर्गस्यकिलास्याभावयोग
तः ॥ कुतोहंत्वंकुतस्त्वंत्वं कुतोद्वित्वैक्यविभ्रमः ॥ ५ ॥ समाकर्ण्यगुरोर्वाक्यंयततेयेस्वयत्नतः ॥ संकल्पत्यागमामूलंपदप्राप्तौजयंतिते ॥ ६ ॥
रंधनाज्जयमाप्नोतिस्वशास्त्रेसूपकृत्कृते ॥ विवेकीस्वविवेकित्वंयतनादेवनान्यथा ॥ ७ ॥

चतत्रप्राणिसंचारेणचचंचुरोऽतिचंचलः ॥ १ ॥ २ ॥ प्रेक्ष्यमाणंतत्त्वतःकिमिदंस्यादितिरत्नपरीक्षावद्विमृश्यब्रह्ममात्रतयावधार्यमाणम् ॥ तदहंत्वम् ॥ ३ ॥ ४ ॥ उत्पत्तिरेवयस्या
सतःसतोवानसंभवतितस्यस्थितिर्दूरनिरस्तेत्याह ॥ सर्गादावेवेति ॥ ५ ॥ संसारःकालत्रयेपिनास्त्येवेत्युक्तार्थस्यदृढीकरणायसंकल्पद्यूतमंडपंवर्णयिष्यन्भूमिकांरचयति ॥ समा
कर्ण्येत्यादिना ॥ वक्ष्यमाणंप्राग्बहुशोवर्णितंचआमूलंसमूलंसंकल्पत्यागंकर्त्तुंगुरोस्तदुपायक्रमवेदकंवाक्यंसमाकर्ण्यतदुक्तक्रमेणस्वप्रयत्नतोयेयतंतेतेतत्त्वबोधप्राप्तौसत्यामसं
कल्पंतत्पदंकैवल्याख्यंजयंति ॥ ६ ॥ यथासूपकृत्सूपकारःस्वशास्त्रेसूपकारविद्याविशेषेकृतेसम्यगभ्यस्तेतदुक्तप्रकारेणैवनानाभक्ष्यभोज्यनानारसायनानांरंधनात्पाकेननि
ष्पादनात्क्षुत्तृडामयजरादिजयंराजसन्मानाद्युत्कर्षंचाप्नोतितद्वद्विवेकीअधिकारीगुरुशास्त्रोक्तमार्गेणयतनादेवस्वविवेकित्वंकैवल्यपर्यंतंजयतिनान्यथेत्यर्थः ॥ ७ ॥

यतोयंसंसारःस्वमेंद्रजालादिवदज्ञातचिच्चमत्कारमात्रमतोनचितोबहिरस्तीत्याह ॥ चिदिति ॥ ८ ॥ चिच्चमत्कारमात्रतामुपपादयति ॥ संकल्पेति ॥ चित्रकृतश्चित्रकारस्यचित्तेकल्पितंयच्चित्रंतद्वत् ॥ ९ ॥ जगतःसंकल्पमात्रतांद्रढयितुंसंकल्पद्यूतमंडपाकारतांकल्पयति ॥ मंडपइत्यादिना ॥ १० ॥ अग्रेअधोमुखंप्रोतोमेरुरिवोर्ध्वगुग्गुलुर्यस्यतथाविधेनमणिस्तंभसहस्रेणवृतः ॥ अतएवक्कचिदिंद्रायुधसहस्राढ्यइवक्कचित्कल्पसंध्याभ्राणीवसुंदरः ॥ ११ ॥ यत्रयस्मिन्मंडपेवास्तव्यानांनिवसतांस्त्रीबालपुरुषादीनांक्रीडार्थंलोकांतराणिपातालस्वर्गादीनितदाकाराःसमुद्गकाःसंपुटकास्तत्रतत्रस्थापिताः ॥ कीदृशास्ते ॥ अंतरेनानानदीपर्वतवनहस्त्यश्वदेवतिर्यङ्नरादिनानारचनयायुक्ताः ॥ १२ ॥ भूतानिप्राणिनस्तल्लक्षणैर्बीजैःपरैस्तदुपभोग्यैश्चआपूर्णाः ॥ तमसांरिपुभिर्घातकैर्मणिप्रदीपसूर्यचंद्रादिभिर्व्यवहारप्रवृत्त्यासघुंघुमाःसशब्दाः ॥ क्कचित्तमोभिःक्कचित्प्रकाशैश्चित्राआख्याअभिख्यायेषाम् ॥ १३ ॥ लीलापद्मायाःक्रीडालक्ष्म्याआकरेयस्मिन्मंडपेस्त्रीणांमंडनायविलूनालवनेनगृहीताआकल्पाःकर्णपूराद्यलंकारायेभ्यस्तथाविधाःकल्पपादपाःकृताः ॥ १४ ॥ बालानांनिःश्वासेनापिचलिताअतिलघीयांसइतियावत् ॥ ईदृशाःकुलाचलायत्रअर्थाद्बालानामेवक्रीडाकंदुकानिकृताः ॥ संध्यांबुदादिग्वधूनांकर्णपूराःकृताः ॥ शरदंबुदाश्चतासांहस्तेचामराःकृताः ॥ १५ ॥ यत्रमंडपेभूतलंसंपूर्णद्यूतफलकंकृतम् ॥ तारकासहितमंबरंवितानंकृतम् ॥१६॥ यत्रमंडपेव्योमलक्षणेअजिरेचत्वरेजगतांभासआविर्भावतिरोभावादिप्रत्ययएवपणोयस्मिन्द्यूतेक्रीडतांगृहनिवासिनांमंडपस्वामिनांब्रह्मादीनांतत्रभूतसाराणांचतुर्विधभूतग्रामाणांशारिफलानांपुनःपुनर्जन्ममरणादिनाभ्रमणंपरावर्त्तस्तल्लक्षणेद्यूतेशशिभान्वादिनवग्रहाअक्षाःकृताः ॥१७॥ इतिईदृशोमंडपोस्तीतिसंकल्पयितुःसंकल्पएवअग्रस्थदृश्योपमयायथासत्यतामिवगच्छतितथैवायंधातुःसंकल्पैःसुसमुत्थितोजगद्रूपोमंडपोपीतिपरेणान्वयः ॥ १८ ॥ १९ ॥

चिच्चमत्कारमात्रंत्वंजगद्विद्धीहनेतरत्॥ नाशासुनबहिर्नांतरेतत्क्कचनविद्यते ॥ ८ ॥ संकल्पोन्मेषमात्रेणजगच्चित्रंविलोक्यते॥ तदुन्मेषविलयिचित्रकृच्चित्तचित्रवत्॥ ९ ॥ मंडपोस्तिमहास्तंभोमुक्तामणिविनिर्मितः॥ बहुयोजनलक्षाणिकांतकांचनचित्रितः॥ १० ॥ मणिस्तंभसहस्रेणवृतोग्रेप्रोतमेरुणा॥ इंद्रायुधसहस्राढ्यकल्पसंध्याभ्रसुंदरः॥ ११ ॥ स्त्रीबालपुरुषादीनांवास्तव्यानामितस्ततः॥ क्रीडार्थंस्थापितायत्रनानारचनयांतरे॥ १२ ॥ भूतबीजपरापूर्णास्तमोरिपुसघुंघुमाः॥ तमःप्रकाशचित्राख्यालोकांतरसमुद्गकाः॥ १३॥ आमोदसुभगालोलजलदावलिपल्लवाः॥ लीलापद्माकरेस्त्रीणांविलूनाःकल्पपादपाः ॥ १४ ॥ बालनिःश्वासचलिताःकंदुकाःकुलाचलाः॥ संध्यांबुदाःकर्णपूराश्चामराःशरदंबुदाः॥ १५॥ कल्पांतकालजलदास्तालवृंतपदंगताः॥ भूतलंद्यूतफलकंवितानंतारकांबरम् ॥ १६॥ भूतशारपरावर्त्तेद्यूतेक्षाःशशिभानवः ॥ व्योमाजिरेजगद्भासपणेगृहनिवासिनाम् ॥ १७॥ इतिसंकल्पएवांतश्चिरभावनया यथा ॥ अग्रस्थदृश्योपमयासत्यतामिवगच्छति ॥ १८ ॥ तथैवायंजगद्रूपःसंकल्पैस्सुसमुत्थितः ॥ चिच्चमत्कारमात्रात्माचित्रकृच्चित्तचित्रवत्॥ १९॥

प्रतिभासतोऽस्तिपरमार्थतोनास्तिच ॥ कुतोपिसमुत्थितांमायाहस्त्यादिरिव ॥ २० ॥ संसारउदरकोटरेयस्यतथाविधश्चिच्चमत्कारएव ॥ २१ ॥ तथाचैच्छिकैर्विकल्पैरविकल्पैश्चाविर्भावयितुंतिरोभावयितुंचतत्त्वविदामत्यंतमेवस्वायत्तइतियथेच्छसितथाकुर्वित्यर्थः ॥ अन्नपानादिरैहिकभोगसामग्रीदानयज्ञादिरामुष्मिकभोगसामग्रीउभयत्राप्यनादरंफलानभिसंधिम् ॥ २२ ॥ विवेकप्राप्त्यैवतेमुक्तिरवश्यंभाविन्यनुमीयतइतिपुनर्जन्मादिसंभावनाभीतंतमाश्वासयति ॥ प्राप्तइति ॥ हेपावनात्मन्शुद्धबुद्धेत्वंपातहेत्वविवेकपदव्यपेक्षयाद्वितीयांपवित्रितजगत्त्रितयांविवेकपदवींप्राप्तोसि ॥ अतोऽमुनामनसानअधःपतिष्यसीतिजानामिअनुमिनोमि ॥ अतस्त्वंमौनंवाङ्मनसचेष्टाशून्यममलंचिन्मात्रपदमवलंब्यमनआदिदृश्यजातमुत्सृजेत्यर्थः ॥२३॥ ॥ इतिश्रीवासिष्ठ० म० रा० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेअष्टमःसर्गः ॥८॥ ॥ ९ ॥ ॥ चिदधीनोदयध्वंससत्तास्फूर्तिविवर्त्तनम् ॥ इहचित्कचनंविश्वंचिन्मात्रमितिवर्ण्यते ॥१॥ हेमीवकटकादित्वंसंसारोदरकोटरः ॥ चिच्चमत्कारएवायमविकल्पनसंक्षयइतियदुक्तंतदुभयमनुभावयिष्यन्नविकल्पनप्रकारंप्रथममुपदिशति॥अबुध्यमानइति ॥ चेत्यंतद्गतक्रियागुणदोषादितद्याष्टत्तंतदवभासकं चिद्रूपमपिविभाजकविकल्पकमनसोबाधादबुध्यमानोनिर्मला

असत्यमेवस्फुरतिसर्वमस्तिचनास्तिच॥ असदुत्थितएवायंकुतोपीवसमुत्थितः॥ २० ॥ हेम्नीवकटकादित्वंसंसारोदरकोटरः॥ चिच्चमत्कारएवायमविकल्पनसंक्षयः॥२१॥अत्यंतमेवस्वायत्तोयथेच्छसितथाकुरु॥ यश्चान्नपानादानादावनादरमुपेयिवान्॥तस्येदंपश्चिमंजन्मनसकर्मसमुज्झति॥ २२ ॥ प्राप्तोविवेकपदवीमसिपावनात्मन्पुण्यांपवित्रितजगत्त्रितयांद्वितीयाम्॥ नाधःपतिष्यसिपुनर्मनसामुनेतिजानामिमौनममलंपदमुत्सृजत्वम्॥२३॥ ॥इ० वाम० वा० दे० मो० नि० उ० वि० मायामंडपवर्णनंनामअष्टमःसर्गः॥८॥ भुशुंडउवाच॥ ॥अबुध्यमानश्चेत्यादिचिद्रूपमयिचानघ॥ शांतचिद्घनएवास्वनिर्मलाप्स्वंतरंशुवत्॥ १ ॥ अचेतनंचेतनांतश्चेतनादेवविद्यते॥ स्वेऽसादृश्येपिसदृशंपयोराशौयथानलः॥ २ ॥ सचेतनाचेतनयोर्हेतुश्चित्त्वात्तथैवचित्॥ विनाशोत्पादयोर्वह्निज्वालायाःपवनोयथा॥ ३ ॥ नाहमस्तीतिचिद्रूपंचितिविश्रांतिरस्तु ते॥ ततोयथायादृशेनभूयतेतादृशोभव॥ ४ ॥

सुअप्सुप्रविष्टाअंशवःसूर्यकिरणाइवप्रशांततापःप्रकाशमात्रावशेषआस्व ॥ सेयमपिकल्पस्थितिर्जगद्विकल्पक्षयहेतुरित्यर्थः ॥१॥ संसारोदरकोटरश्चिच्चमत्कारएवायमित्येतदपिसोपपत्तिकमनुभावयति ॥ अचेतनमित्यादिना ॥ अचेतनंदृश्यंस्वेस्वीयेजाड्यदुःखपरिणामित्वादिलक्षणेचिदसादृश्येसत्यपिचेतनायाश्चितोंतरेविद्यतेनान्यत्र तत्कुतः चेतनादेव ॥ नह्यन्यत्रविद्यमानंतदसंबद्धयाचेतनयाचेतितुंशक्यम् ॥ नचाचेत्यमानंकिंचित्सिद्ध्यति ॥ नापिचेतनासक्रियायेनगत्वाचेतयेत् ॥ सायदिसर्वगतातर्हिसिद्धैवप्रतिज्ञेत्यर्थः ॥ २ ॥ एवंदेशतःसर्वदृश्यस्यचिदंतःस्थितिंप्रसाध्यकालतोपितांसूचयंश्चित्कार्यतांसाधयति ॥ सचेतनेति ॥ सचेतनाअहंवृत्तिविषयाः अचेतनाइदंकारविषयाः ॥ तथापूर्ववदेवकारणंविवर्त्तोपादानम् ॥ चिद्विवर्त्तेतैवचिच्चमत्कारइतिभावः ॥३॥ तत्राहमितिसचेतनांशनिरासेनैवोभयनिरासासिद्ध्याचिन्मात्रावस्थितिसिद्धिरित्याह ॥ नाहमिति ॥ नाहमस्तीत्यहंकारास्पदांशबाधेनप्रत्यक्चिद्रूपंपरिशेष्यविकल्पहेतुक्षयादेवेदंविकल्पनिर्मुक्तपूर्णचितिविश्रांतिरस्त्वित्यर्थः ॥ एवंविश्रांतेनत्वया ॥ ततःप्रारब्धशेषक्षयोत्तरम् ॥ ४ ॥

---

१ मूलस्थसचेतनेत्यादेःफलितार्थकथनम् ॥

अंबुव्यापिनःक्षीरस्यांबुक्षयेपिपरिशेषवद्ब्रह्मरूपमेवानुपमंतेपरिशिष्यतइत्याह ॥ चिद्रूपइतिद्वाभ्याम् ॥ ५ ॥ प्रत्यक्चिद्रूपंब्रह्मचितौलग्नमखंडैक्यंप्राप्तंचेत् ॥ ६ ॥ यथासुरासुरैःसहवर्त्तमानंपातालभूस्त्रिविष्टपमिवस्थितम ॥ प्रीतिहर्षक्रोधयुद्धजयपराजयादिनानाभावैःपलायनानुधावनाद्याजवीभावैस्तत्तदनुरूपक्रियाकालमिवआकुलमपिरंगमपिरंगमयंचित्रलिखितंजगत्कुड्येकुड्यात्मनामौनंमुनिशरीरमिवनिर्व्यापारमेवस्थितंतथामायाशबलचिच्चित्रकचितंजगदपिशुद्धचिदाकाशलक्षणेकुड्येनिर्विकाराद्वयतदात्मनैवसंस्थितंनजगद्भावेनेत्यर्थः ॥ ७ ॥ ८ ॥ अचेतनमनृतजगद्रूपम् चेतनंपरमार्थसद्ब्रह्मरूपंवायदेवचितिस्वतःस्वरसतःकचितंतेनैवभूयते ॥ एवंस्वायत्तयोरुभयोर्व्युत्थानेनसमाधिनावायदेवेच्छसितत्कुर्वित्यर्थः ॥ ९ ॥ एतावांस्त्वज्ञेभ्यस्तत्त्वविदांविशेषः यथामरुभूमौमहानद्यात्मनादृश्यमानाअर्कांशवोमज्जनमरणादिभयजननात्तरणोपायादर्शनाच्चाज्ञानामर्वाक्कूलेनिरोधकानमरुभूमितत्त्वज्ञानाम् तद्वदेकविज्ञानेनतत्त्वतःसर्वविज्ञानाद्विदितवेदिनांतत्त्वविदांजगद्रूपाश्चिच्चमत्कृतयोप्यनिरोधिन्यइत्यर्थः ॥ उपपादितंचेदंली

चिद्रूपःसर्वभावानामंतर्बहिरसिस्थितः॥ प्रसन्नांबुभरस्यांतर्बहिश्चैवयथापयः॥५॥ नाहमस्तीतिचिद्रूपंचितौचेल्लग्नमंगते॥ नचान्यच्चेतितंब्रह्मरूपंकेनोपमीयते॥६॥ ससुरासुरपातालभूविष्टपमिवोषितम्॥ नानाभावाजवीभावक्रियाकालमिवाकुलम्॥७॥ यथारंगमयंकुड्येजगन्मौनमिवस्थितम्॥ तथाचिच्चित्रकचितंखेकुड्येचात्मसंस्थितम् ॥८॥ तेनैवभूयतेभूरियच्चित्तंकचितंस्वतः॥ अचेतनंचेतनंवायथेच्छसितथाकुरु ॥ ९ ॥ चिच्चमत्कृतयोव्योम्निस्फुरंत्येताजगत्तया॥ अर्कांशुवदरोधिन्यःस्वच्छाविदितवेदिनाम्॥१०॥ तिमिराक्रांतदृष्टीनांयथाकेशोंडुकादिखे ॥ स्फुरत्येवंजगद्रूपमनात्मन्येवतिष्ठताम् ॥ ११ ॥ एवंजगत्त्वमहमित्यवबोधरूपमाभासमात्रमुदितंनचनोदितंच॥ अर्कांशुजालरचनानगराभमत्रकुड्यादिसत्यमिदमस्तिनखेलतेव॥१२॥ ॥इ०वा०म०वा०दे०मो०नि०उ०वि०चित्कचनयोगोपदेशोनामनवमःसर्गः॥९॥ ॥७॥ ॥भुशुंडउवाच॥ ॥विद्धित्वंचेतनादेवचेतनेतरचेतनम्॥ जलेऽग्निरिवचिज्जाड्येनातोभिन्नेमनागपि॥१॥

लोपाख्यानेविस्तरेण ॥ १० ॥ अज्ञानांतुनिरोधिन्यएवेत्याशयेनाह ॥ तिमिरेति ॥ अनात्मनिसंसारेएवतिष्ठतामज्ञानाम ॥ ११ ॥ अर्कांशुवदितिदृष्टांतंप्रकारांतरेणापिवर्णयन्नुपसंहरति ॥ एवमिति ॥ आभासमात्रंवर्णितचिच्चमत्कारमात्रमतोऽज्ञदृशोदितंतत्त्वदृशानोदितम् ॥ चकारौविकारांतराणामपिसमुच्चयप्रतिषेधार्थौ ॥ अर्कांशुजालैरेवरचनानिर्माणंयस्यतथाविधंयद्गंधर्वनगरंतदाभमत्रव्यवहारभूमौकुड्यादिजगत् तच्चजगद्रूपेणखेलतेवसत्यंनास्ति अतोनचिन्निरोधकमित्यपरिच्छेदश्चितःसिद्धइत्यर्थः ॥ १२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेनवमःसर्गः ॥ ९ ॥ ॥७॥ ॥ यथाभूतंस्थितंब्रह्मनिर्विकारमकारणम् ॥ नासीदेवजगत्क्वापिकदापीत्युपवर्ण्यते ॥ १ ॥ ब्रह्मणिजगदपलापसिद्धयेतज्जाड्यमपलपितुंजडत्वेनाभिमतस्यचिद्भावमनुभावयति ॥ विद्धीत्यादिना ॥ हेविद्याधरत्वंचेतनेतरत्वेनाभिमतस्यजगतश्चेतनादेवचेतनंस्फुरणंविद्धि ॥ स्फुरद्रूपत्वमेवहिचेतनत्वम् ॥ तर्यदिजगद्रूपंस्फुरतितर्हिचेतनमेवनचेतनेतरदिति ॥ जलेप्रतिबिंबितोऽग्निरिवजलान्नचेतनाद्वस्त्वंतरमस्ति ॥ अतोजलशैत्यादतिरिक्तंप्रतिबिंबवह्नेरौष्ण्यमिवनचैतन्याज्जाड्यंनामान्यदस्तीत्यर्थः ॥ १ ॥

जाड्यमात्रापलापेनैवजगद्वयलापसिद्ध्यानिर्विक्षेपंस्थीयतामित्याह ॥ तदिति॥यंत्रणंयंत्रंपरिच्छेदस्तद्रहितंयथास्यात्तथा ॥ चित्रकुड्यित्तचित्रस्थतज्ज्ञमिवत् गंधर्वनगराधिष्ठा नव्योममध्यवच्च ॥ २ ॥ येतुप्रलयेपिब्रह्मणिअचिद्रूपंजगत्सूक्ष्मरूपेणास्त्येवेतिश्रुतिस्मृतिवादास्तेमायाशबलस्यसर्वशक्तित्वादसत्त्वपिब्रह्मसत्तारोपदृष्ट्याभाविफेनलवेसांप्र तिकजलसत्तयासत्ताव्यवहारवदित्याशयेनाह ॥ ब्रह्मणीति ॥ ३ ॥ वास्तवदृष्ट्यातुमायायाएवासत्वाददि्वतीयेनिर्विकारेक्षोभतद्धेत्वोरेवासंभवाज्जडसर्गादेरुदयएवनसंभवती त्याह ॥ नेत्यादिना ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अनवधारितविशेषसर्वानुगतसत्तासामान्यरूपत्वात्किंचित् ॥ विशेषबाधेतदनुगतस्यसामान्यरूपतायाअपिनिवृत्तेरेकरू प्यावधारणान्नकिंचित् ॥ चेतनाबुद्धिस्तच्चिदाभासश्चनविद्येतेयत्र ॥ ९ ॥ प्रयोजनापेक्षाभावादपिसर्गोनास्तीत्याह ॥ नित्यानंदतयेति ॥ कारणंक्रियानिमित्तंफलम्॥१०॥

तद्वेदनावेदनयोरभेदात्स्वस्थमास्यताम्॥ निर्यंत्रमेवचित्रस्थज्ञमिवव्योममध्यवत्॥२॥ ब्रह्मण्यशेषशक्तित्वादचित्त्वंविद्यतेतथा॥ अक्षुब्धेविमलेतोयेभाविफेनलवोयथा॥३॥ नकारणंविनोदेतिजलात्फेनलवोयथा॥ नकारणंविनोदेतिसर्गादिब्रह्मणस्तथा॥४॥ नचकारणमस्त्यत्रसर्गवृत्तावकारणे॥ नातःसंजायतेकिंचिज्जगदादिर्ननश्यति॥५॥ अत्यंतंकारणाभावान्नकिंचिज्जायतेजगत्॥ मरावंब्विवनास्त्येवदृष्टमप्यग्रतोजगत्॥६॥ ब्रह्मानंतमजंशांतमतोस्तीदंनसर्गधीः॥ कारणाभावतस्तेनब्रह्मैवेदमखंडितम्॥७॥ अतःशिलोदराभोऽसिव्योमकोशोपमोपिच॥ ब्रह्मैकघनरूपत्वादजोनवयवोसिच॥८॥ ज्ञोसिकिंचिन्नकिंचिद्वानिःशंकमलमास्यताम्॥ अचेतनाचिदाभासेशाम्यतामात्मनात्मनि॥९॥ नित्यानंदतयाजस्यकारणंनास्तिकार्यकृत्॥ सर्गाद्यसंभवेतस्माद्यदस्तितदजंशिवम्॥१०॥ अजोयेषांतुचिद्रूपोनास्तिमौर्ख्यविलासिनाम्॥ सर्गनाशेसमुत्पन्नेकिंतेषांप्रविचार्यते॥ ११ ॥ यत्रयत्रपरंब्रह्मतत्रसंतिजगंतिहि॥ जगच्छब्दार्थरूपेणमुक्तान्येवंविधानिच॥ १२ ॥ तृणेकाष्ठेजलेकुड्येसर्वत्रैवपरंस्थितम्॥ सर्वत्रैवचसर्गौघःपरिप्रोतःस्थितोमिथः॥ १३ ॥ ब्रह्मणःकःस्वभावोसावितिवक्तुंनयुज्यते ॥ अनंतेपरमेतत्त्वेस्वत्वास्वत्वात्यसंभवात् ॥ १४ ॥ अभावस्यव्यपेक्षस्यभावस्यासंभवादपि ॥ पदंव्रजंतिनानंतेस्वभावाद्याद्युरुक्तयः॥ १५॥ अस्वत्वाभावयोर्नित्येनंतेत्यंतमसंभवात्॥ स्वत्वभावेषुसिद्धेषुस्वभावोक्तिर्नतिष्ठति॥ १६॥

एवंतत्त्वदृशानित्यमुक्तासिद्धिमुपपाद्यतदनभ्युपगमेनित्यबद्धताप्रसक्तिर्मूर्खाणांस्यादित्याह ॥ अजइति ॥ तेषामनिर्मोक्षदोषानिवृत्तेःकिंप्रविचार्यते ॥ निष्फलामोक्षोपायचिंतेत्यर्थः ॥ ११ ॥ अर्द्धप्रबुद्धदृष्ट्यायादृशीस्थितिस्तामाह ॥ यत्रयत्रेति ॥ १२ ॥ १३ ॥ तर्हिमिथ्यासर्गस्वभावमेवास्तुब्रह्मनेत्याह ॥ ब्रह्मणइति ॥ स्वःस्वीयोभावोव्यावर्त्तकधर्मोहिस्वभावस्तस्यचधर्मताअस्वभावव्यावर्त्तकतयावाच्या ॥ अद्वयेतुब्रह्मणिस्वत्वास्वत्वयोरत्यंतासंभवान्नस्वभावोन्योनिरूपयितुंशक्यइत्यर्थः ॥ १४ ॥ व्यावर्त्तकेस्वशब्दासंघटनमुक्त्वाभावशब्दासंघटनमपिदर्शयति ॥ अभावेति ॥ १५ ॥ व्यावर्त्याप्रसिद्धेरपिपदद्वयस्यापितत्राघटनमित्याह ॥ अस्वत्वेति ॥ कालांतरेदेशांतरेवातत्प्रसिद्धिशंकावारणायविशिनष्टि ॥ नित्येनंतेइति ॥ स्वतःसिद्धेष्वव्यावर्त्तकेपुस्वत्वेपुभावेषुचलोकेस्वभावोक्तिःस्वभावशब्दप्रयोगोनतिष्ठतिअप्रसिद्धइत्यर्थः ॥ १६ ॥

१ दृश्यमित्यपिक्वचित्पाठः    २ स्थिरइत्यपिक्वचित्पाठः

यथाब्रह्मणिसर्गादिर्नसिद्ध्यतीत्यद्वयताएवंप्रतीच्यप्यहंत्वादिरपीत्युभयशोधेअखंडतासिद्धेत्याशयेनाह ॥ नाहंत्वमिति ॥ १७ ॥ प्रेक्ष्यमाणंरत्नतत्त्वज्ञाचार्यानुभवैःपरीक्ष्य तत्त्वदृशादृश्यमानम् ॥ १८ ॥ अनयादृशाजाड्यंचित्स्वभावतामिवजीवजगद्भेदोप्यभेदात्मतामेवापन्नइतिप्रदर्शनायप्राक्तनाहेमकटकाभेददृष्टांताःपर्यवसन्नाइत्याशयेनोपसंहरति ॥ भेदइति ॥ संकल्पोराहोःशिरइतिव्यपदेशवद्विकल्पमात्रंविद्वद्भिःकथितः ॥ कटकत्वंकटकाकारः॥ १९॥ ॥इतिश्रीवासिष्ठ० म० तात्पर्यप्रकाशेनि० उत्तरार्द्धेदशमःसर्गः ॥ १०॥ ॥ इहेंद्रियजयात्पूर्णेनिर्विकारमनःस्थितिः ॥ देहादिदृश्यादृष्टिश्चदृढीकार्येतिवर्ण्यते ॥ १ ॥ निरंबरेवस्त्राद्यनावृतेअंगेस्वदेहेलग्नानिशस्त्राणिदयितायास्तरुण्यास्तनाद्यंगानिचबुध्यमानःसाक्षादनुभवन्नपिकामदुःखभयादिविकारानुदयाद्यःसुसमःस्यात्सपरस्मिन्पदेस्थितः ॥ तादृशस्थितिसिद्धिपर्यंतमिंद्रियजयात्मनिष्ठेदृढीकार्येत्यर्थः ॥ १ ॥

नाहंत्वंलभ्यतेसाधोबुद्ध्यालोकेनिरीक्षितम् ॥ असदेवकुतोप्येतद्बालयक्षइवोदितम् ॥ १७ ॥ मुक्तंत्वहंत्वशब्दार्थैर्लभ्यतेयच्चतत्परम् ॥ युक्तंत्वहंत्वशब्दार्थैःप्रेक्ष्यमाणंविलीयते ॥ १८ ॥ भेदोजगद्ब्रह्मदृशोरभेदःपर्यायशब्दार्थविलासतुल्यः ॥ संकल्पमात्रंकथितोनसत्योयथानयोर्वैकटकत्वहेम्नोः ॥ १९ ॥ ॥ इ० वा० म० वा० दे० मो० नि० उ० विद्या० सर्गापवर्गप्रतिपत्तियोगोपदेशोनामदशमःसर्गः ॥ १० ॥

भुशुंडउवाच ॥ ॥ शस्त्राणिदयितांगानिलग्नान्यंगेनिरंबरे ॥ योबुद्ध्यमानःसुसमःसपरस्मिन्पदेस्थितः ॥ १ ॥ तावत्पुरुषयत्नेनधैर्येणाभ्यासमाहरेत् ॥ यावत्सुषुप्ततोदेतिपदार्थोदयनंप्रति ॥ २ ॥ यथाभूतार्थतत्त्वज्ञमाधयोग्रगताअपि ॥ नमनागपिलिंपंतिपयांसीवसरोरुहम् ॥ ३ ॥ शस्त्रांगनानभांस्यंगलग्नान्यलमसंविदम् ॥ अलग्नानीवशांतात्मायःपश्यतिसपश्यति ॥ ४ ॥ विषंयथास्वांतरेवद्घुर्घुणीभवतिस्वयम् ॥ नचद्घुर्घुणतानामविषादन्यास्तिकाचन ॥ ५ ॥ स्वरूपमजहत्त्वेवंजीवतामधितिष्ठति ॥ तथात्मातत्परिज्ञानमात्रैकप्रविलापिनीम् ॥ ६ ॥

अमुमेवार्थंस्पष्टमाह ॥ तावदिति ॥ शस्त्रकांतादिबाह्यपदार्थेभ्योविकारोदयनंमिथ्यात्वबुद्ध्याप्रतिक्षिप्यस्वात्मसुखमात्रविश्रांतिलक्षणासुषुप्ततायावदुदेतितावत् ॥ २ ॥ तत्त्वज्ञानप्रतिष्ठायाआध्यसंस्पर्शएवलक्षणमित्याह ॥ यथेति ॥ नहिशुक्तिबाधेतद्रजतलाभापहारयोराधिर्दृश्यतइतिभावः ॥ ३ ॥ नभोग्रहणंदृष्टांतार्थम् ॥ सपश्यतिससाक्षात्काराज्ञानवानितिलक्षणेनबोध्यमित्यर्थः ॥ ४ ॥ नभ्रांतिकल्पितेनजीवभावेनास्यवास्तवनिर्विकारस्वभावोऽपगतइतितद्बाधमात्रेणतद्भाभोयुक्तएवेत्येतदुपपादनायदृष्टांतमाह ॥ नचेति ॥ यथाविषंविषस्वभावादप्रच्युतमेवघुणकीटादिविकारंगतमितिघुणताविषादन्यान तथाआत्माब्रह्मापिस्वतत्त्वपरिज्ञानमात्रैकबाध्यांजीवतांजीवाकारविवर्त्तमधितिष्ठतीतिजीवतानान्येवियोज्यम् ॥ ५ ॥ ६ ॥

अमरणस्वभावमेवजडंविषंस्वस्वभावमत्यजदेवयथामरणस्वभावकीटजीवोभवतितथाब्रह्मचिदपिमरणस्वभावंजडंरूपमृच्छतीतिवैपरित्यांशेपिदृष्टांतइत्यर्थः ॥ ७ ॥ जीववज्जगदपिघुणवदेवोत्थितमित्याह ॥ ब्रह्मणीति ॥ ८ ॥ कृमौविषस्वभावदृष्ट्यायथाजन्ममरणेनस्तोदेहिस्वभावदृष्ट्यातुस्तस्तथाजीवेपिब्रह्मस्वभावदृष्ट्यानस्तोजीवस्वभावदृष्ट्यातुस्तइत्याह ॥ विषमितिद्वाभ्याम् ॥ ९ ॥ देहेंद्रियविषयपदार्थेष्वहंममतासत्त्याअमग्नरूपिणाअतिरोहितस्वरूपेण श्रवणादिप्रयत्ननिष्पादितस्वसाक्षात्कारसंविदयांजनभूतेन स्वेनैवतीर्यतेननुदैवंमांतारयिष्यतीतिप्रयत्नोपेक्षयेत्यर्थः ॥ १० ॥ सर्वदृश्यभाववाधपरिशिष्टेएकात्मस्वभावेपरमदरिद्रेनविश्रांतिसंभावनेतिप्रसक्तामवहेलनांवारयति ॥ सर्वेति॥ सर्वेषांप्रियतमभावानामांतरीसारसुखरूपाअवस्थासर्वतापनिवृत्त्याअंतःशीतलतायस्मिनूपूर्णात्मस्वभावे ॥ ११ ॥ जीवस्यमनोहंकारादिकलंकनिवृत्तावुपायमाह ॥ जग

जीवोभवतिदुर्घूणोऽमृत्यात्मैवयथातथा॥ अत्यजंतीनिजंरूपंचिज्जडंरूपमृच्छति॥७॥ ब्रह्मण्यनन्योप्यन्याभोदुर्घुणःक्वचिदुत्थितः॥ तत्स्थःसएवासइवाप्यतत्स्थइवसर्गकः ॥८॥ विषंविषत्वमजहद्यथास्वांतःकृमिःक्रमात् ॥ नजायतेनम्रियतेम्रियतेपिचजायते॥ ९ ॥ स्वेनैवसंविदर्थेनपदार्थामग्नरूपिणा॥ तीर्यतेगोष्पदमिवनतुदैवाद्भवार्णवः॥ १० ॥ सर्वभावांतरावस्थासर्वभावातिशायिनी॥ अंतःशीतलतायस्मिंस्तस्मिन्किमिवहेलनम् ॥ ११ ॥ जगत्पदार्थसत्तांतःसामान्येनाशुभाविते॥ मनोहंकारबुद्ध्यादिकःकलंकोमलात्मनि ॥ १२ ॥ यथाघटपटाद्यर्थान्पश्यस्येवंशरीरकम् ॥ तथाहंत्वमनोबुद्धिवेदनाद्यपिपश्यहो ॥ १३॥ जगत्पदार्थसार्थौघमनोबुद्ध्यादिसंस्थितम्॥ ज्ञएवासंविदंस्तिष्ठपरिनिष्ठितनिष्ठया ॥ १४ ॥ नकेनचित्कस्यचिदेवकश्चिद्दोषोनचैवेहगुणःकदाचित्॥ सुखेनदुःखेनभवाभवेनचास्तिभोक्तानचकर्तृताच॥ १५ ॥ ॥इ० वा० वा० दे० मोक्षोपायेषुनिर्वाणप्रकरणेउत्तरार्द्धेविद्याधरो० यथाभूतार्थवेदनंनामैकादशःसर्गः॥ ११ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

दिति ॥ सामान्येनसन्मात्रब्रह्मरूपेण ॥ १२ ॥ यथाघटपटाद्यर्थांस्तटस्थतयापश्यसितथाप्रथमंतटस्थतयाशरीरंपश्यनाहंत्वाद्यभिमानेनेत्यर्थः ॥ १३ ॥ तदनंतरंज्ञःसर्वसाक्षिरूपएववहिर्जगत्पदार्थसार्थौघमंतर्मनोबुद्ध्यादिचअसंविदन्ज्ञप्तिमात्ररूपःपरिनिष्ठितनिष्ठयास्वाभाविकस्थित्यातिष्ठ ॥ १४ ॥ तस्यांस्थितौसर्वगुणदोषादिविक्षेपहेतूपरमसिद्धिरित्याह ॥ नकेनचिदिति ॥ तस्यांस्थितौभवाभवेनसंपदाविपदातत्प्रयुक्तसुखेनदुःखेनचकेनचिद्धेतुनाकस्यचित्कदाचिदपिदोषोगुणश्चनास्ति ॥ यतःकर्तृतानास्त्यतोभोक्ताचनास्ति ॥ यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादिश्रुतेरित्यर्थः ॥ १५ ॥ ॥ इतिश्रीवासिष्ठ० म० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकादशःसर्गः ॥ ११ ॥

---

१ दीर्घत्वमार्षम्

17

भ्रांतिमात्रमहंभावश्चिद्विवर्त्तोजगद्भ्रमः ॥ तस्यमूलमविद्येतितत्क्षयक्रमईर्यते ॥ १ ॥ वक्ष्यमाणक्रमेणसहोच्छेदसिद्ध्येअविद्यायाएवाहंभावलक्षणसूक्ष्मप्रपंचभावस्तस्यैव स्थूलप्रपंचरूपतेतिसर्वकल्पनानांचिद्विवर्त्तमात्रतयैकतांदर्शयति ॥ खएवेत्यादिना ॥ यथाखेव्योम्न्येवापरंव्योमसंपन्नमुत्पन्नमितिमनसासंकल्पनमेकस्यैवव्योम्नोभेदभ्रांति मात्रंतथाअज्ञातेआत्मनिसूक्ष्मप्रपंचात्मनोऽहंभावस्यभावनंकल्पनमित्यर्थः ॥ १ ॥ ननुदृष्टांतेकल्पयितापुरुषस्तृतीयोस्ति तत्रकस्तृतीयस्तमाह ॥ खेखमिति ॥ निर्व्यपदेशि अविद्यापिहितत्वादसदिवाततमतएवशब्दादिनाअव्यवहार्यमात्मरूपंसद्वस्त्वस्तितृतीयंकल्पकमित्यर्थः ॥२ ॥ दृष्टांतेयथाखेअद्वयःखात्मैवास्तिद्वितीयंतुखंकल्पकपुरुषस्यसंक ल्पावच्छिन्नचिद्रूपंस्वकंसंकल्पात्मकंवपुरेवतथाकल्पयित्वाबुध्यते तथाययस्मादविद्योपहितचिदात्मास्वकंवपुरविद्यामेवाहमिदमित्यभिमंत्रभिमंतव्यरूपेणकल्पयित्वाभास तेततोनाहंनामाज्ञानादन्यदस्तिनाप्यनहंप्रपंचरूपमित्यर्थः ॥ ३॥ अतएवतत्परमसूक्ष्मंसर्वस्थूलकल्पनाधिष्ठानंब्रह्मास्तीतिपरिचेयमित्याह ॥ ततइति ॥ तस्यसंवित्तिःकल्पना॥

भुशुंडउवाच॥ ॥खएवव्योमसंपन्नमितिसंकल्पनंयथा॥भ्रांतिमात्रमसद्रूपंतथाहंभावभावनम् ॥ १ ॥ खेखंजातमितिभ्रांतेरहंक ल्पयितायथा ॥ तथानिर्व्यपदेश्यात्मसदस्त्यसदिवाततम् ॥ २ ॥ खेखात्मैवास्तिचिद्रूपंतत्स्वकंबुध्यतेवपुः ॥ भासतेयदिदंत्वेननाहम स्मिनचानहम् ॥ ३ ॥ ततश्चिद्रूपमस्तीदृग्यत्रस्थूलंखमप्यलम् ॥ अणाविवमहामेरुस्तत्संवित्तिर्हिखादिता ॥ ४ ॥घनस्ततोऽचिदाभासः खादप्यतितरामणुः॥जानातियत्स्वभावंतदेतत्सर्गतयास्थितम् ॥ ५ ॥ अहंताखादिताद्यात्मविदःप्रसरणंजगत्॥ अंभोद्रवप्रसरणंय थावर्त्तादिवेष्टनम्॥६॥ अचित्प्रसरणंशांतमस्पंदीवजलद्रवः ॥ निःस्पंदपवनाकारमाकाशहृदयोपमम्॥ ७॥ नदेशकालादिजगत् प्रसरेषुचयुज्यते॥ घनाच्छून्यान्निराभासाच्चिन्मात्रविसरादृते ॥८॥ चिन्मात्रेप्रसृतेकोलेव्योम्निनाविजलेस्थले॥ निद्रायांजाग्रतिस्व प्नेभवेज्जगदिवोदितम्॥ ९॥प्रसरणाप्रसरणेनचसंभवतोविदः॥ खादप्यत्यंतस्वच्छत्वादक्षोभादेःसदैवहि॥ १०॥

खादिताआकाशादिजगद्रूपता ॥ ४ ॥ परमसौक्ष्म्यंतस्योक्तमुपपादयति ॥ घनइति ॥ खादाकाशादप्यतितरामणुरचिदाभासोऽज्ञानलक्षणोऽनादिविवर्त्तस्ततआत्मचितेःसका शात्घनःस्थूलएव तत्तादृशंपरमसूक्ष्मंचैतन्यमनाद्यहमिदमाकारवासनयोत्तरोत्तरस्थूलस्वभावकल्पनयाजानाति ॥ एतदेवसर्गतयाआभासान्निरूढमित्यर्थः ॥ ५॥ आत्मवि दआत्मचैतन्यस्याऽध्यात्ममहंताद्यधिलोकंतुखादितापंचभूततातदाद्यिप्रसरणंविवर्त्तविस्तारोजगत्सर्गः ॥ ६ ॥ चित्प्रसरणस्याभावःअचित्प्रसरणंशांतंजगदुपरमःप्रलयइतिया वत् ॥ ७ ॥ एवंसिद्धस्यदेशकालादिजगतोऽवांतरकार्यसहस्रलक्षणेषुप्रसरेष्वपिचिन्मात्रप्रसरादृतेअन्यत्पारमार्थिकंरूपंनयुज्यतेनोपपद्यते ॥ ८ ॥ तत्रोपपत्तिंदर्शयति ॥ चि न्मात्रेइति ॥ निद्रायांप्रसिद्धस्वप्नेजाग्रतिप्रसिद्धेमनोराज्यादिस्वप्नेच ॥ ९ ॥ चितोजगदाकारपरिणामलक्षणोवास्तवःप्रसरएवकिंनस्यात्तत्राह ॥ प्रसरणेति ॥ क्षोभःसंचलनं तदादिसर्वविकारशून्यत्वादित्यर्थः ॥ १० ॥

१ काष्ठेइत्यपिक्वचित्पाठः

ननुसुखदुःखभोगाद्यनुभवरूपादेहाद्यहंभावरूपाश्चविकाराश्चिदात्मनिदृश्यंतेतत्राह ॥ ज्ञइति ॥ परेकूटस्थस्वभावे ॥ तथाचचिदाभासस्यैवभोगादिविभ्रमानकूटस्थात्मनइति भावः ॥ ११ ॥ उक्तेऽर्थेसंकल्पादिमनोवृत्त्यन्वयव्यतिरेकदर्शनंप्रमाणमित्याह ॥ धीरिति ॥ धीश्चितात्मकमनोवृत्तिः॥ श्रीःसंपदभिमानलक्षणाहर्षात्मकमनोवृत्तिः॥ कीर्त्तिः स्वगुणख्यातिश्रवणजन्यातादृशवृत्तिः ॥ कांतिरिच्छा ॥ सर्वत्रमनोवृत्तिबोधकैःपदैस्तद्धेतुर्वाबाह्यविषयालक्ष्यंते ॥ १२ ॥ ब्रह्मलक्षणादिंदुबिंबात्स्फुरितायाजीवचिदाभासल क्षणज्योत्स्नातदंशचाक्षुषादिज्ञानरूपंयदमृतंतदधीनसिद्धिकत्वात्तद्द्रवप्रायःसर्गईश्वराद्ब्रह्मणोनातिरिच्यते ॥ कुतः ॥ तदाधारयोर्दिक्कालयोर्निरवयवेनिष्क्रियेचब्रह्मण्यसंभवा त् ॥ सत्यांहिदिशिमूर्त्तद्रव्यस्यक्रिययासर्गकालःकल्प्येत नचसाप्रागस्ति एवंसतिकालेदिगाद्युत्पत्तिःकल्प्येत नचप्रलयेसोस्ति क्रियातिरिक्तस्यतत्साधकस्याभावात् पूर्णेकू टस्थेक्रियाऽयोगात् नचतयोरसतोःकस्यचिदन्यस्यावकाशोस्तीतिनब्रह्मव्यतिरिक्तसिद्धिरित्यर्थः ॥ १३ ॥ परेपरमेश्वरेएवंवर्णितदिशास्वाभिन्नजगदाकारेभासुरंयथास्यात्त

ज्ञश्चेततिनभोगादिनचैवात्मन्यसावहम् ॥ द्रवत्वमंभसीवांतरद्वितीयःपरेस्थितः ॥ ११ ॥ धीर्ह्रीःश्रीर्भीःस्मृतिःकीर्त्तिःकांतिरित्यादिकं गणम् ॥ नपश्यतिविसंकल्पस्तमसीवपदान्यहे ॥ १२ ॥ ब्रह्मेंदुबिंबस्फुरितचिज्ज्योत्स्नांशामृतद्रवः॥ दिक्कालासंभवात्सर्गोनेश्वरादतिरि च्यते ॥ १३ ॥ आधिमान्यःस्फुरत्येवंपरेस्फुरतिभासुरम् ॥ जगदाद्यात्मकंचित्तंचक्रौघत्वमिवांभसि ॥ १४ ॥ मज्जनोन्मज्जनारावैर्विव र्त्तावर्त्तवेष्टनैः॥ अच्छिन्नानुपदंक्षीणाभातिसर्गसरिच्चिरम् ॥ १५ ॥ यथावर्त्तैःपयोभातिधूमोभातियथाघनः ॥ तथाजडात्मकतयाद्व तीयःसर्गएतयोः॥ १६ ॥ दारुणिक्रकचच्छेदेयथावर्त्तादिकंतथा॥ अदिगादौपरेसर्गस्तदतद्रूपवानयम् ॥ १७ ॥ संसारकदलीस्तंभा द्भिनासंकल्पपल्लवम् ॥ मृदुनोपिदृषत्क्रूरान्नकिंचिल्लभ्यतेंतरम् ॥ १८ ॥ सहस्रखुरमूर्द्धाक्षिकरवक्त्रेहितोहितम् ॥ नानाद्रितनुदिग्देशस रित्प्रादेशमात्रकम् ॥ १९ ॥

थासर्वसाधारणसच्चिदानंदात्मनास्फुरतिसतिकचिदेवदेहादौविशेषाभिमानेनतदनुकूलप्रतिकूलेषुहेयोपादेयतादिकल्पनेनआधिमान्योऽहंकारात्माअन्यइवस्फुरतितत्सर्वंजग जीवबंधमोक्षादिकल्पनात्मकमंभसिचक्रावर्त्तौघइवकल्पितंभांतंचित्तमेवनाणुमात्रमप्यन्यदस्तीत्यर्थः ॥ १४ ॥ दृष्टांतदार्ष्टांतिकेरूपकेणैकीकृत्योपपादयति ॥ मज्जनेति ॥ अनुपदंसद्यस्तत्त्वसाक्षात्कारात्क्षीणासर्गलक्षणामरीचिसरित् ॥ १५ ॥ दूराद्धूमराशिर्यथाघनोनिबिडोमेघोवाभाति ॥ एतयोर्ब्रह्ममनसोस्तृतीयःसर्गोविषयत्वाज्जडात्मकत यासत्यतयास्फुरणादजडात्मकतयाचभातीतिशेषः ॥ १६ ॥ तदतद्रूपवान्जडाजडरूपवान् ॥ १७ ॥ स्वतोमिथ्यात्वान्मृदुनोप्यधिष्ठानसत्तयादृषदिवक्रूराद्दृढात्स्फटिकशि लाप्रतिबिंबितकदलीस्तंभादंतरमसाम्यंनकिंचिद्विवेकदृशालभ्यते ॥ संकल्पकल्पितपल्लववैलक्षण्यकृतमेववैसादृश्यंनान्यदित्यर्थः ॥ १८ ॥ इदानींजगत्पटलिखितचित्ररा ज्यसादृश्येनवर्णयति ॥ सहस्रेत्यादिचतुर्भिः ॥ सहस्रसंख्यानिकरादिवक्त्रांतानितदीहितानितर्दिगितानिचऊहितानिवितर्कितानियत्र ॥ नानाविधाअद्रयस्तनवश्चतुर्विधशरी राणिदिशोदेशाःसरितश्चप्रादेशमात्रमिवपरिच्छिन्नायत्र ॥ १९ ॥

अंतःशून्यमवस्तु आंतरावयवशून्यंच ॥बहुभिःरागैःकामैरंजकद्रव्यैश्चोपरंजितम् ॥ विरागोवैराग्यंविरुद्धवर्णमार्जनद्रव्यंचतद्विहितमार्जनामात्रमेवतर्जनंनिरासोयस्य॥२०॥ जडात्मनापवनेनसूत्रात्मनाप्रसिद्धवायुनाचस्पंदनशीलम् ॥ परेणब्रह्मचेतनेनद्रष्टृचेतनेनचचेतितम् ॥२१॥ परामर्शोविचारःपरेणआमर्शउपमर्दश्चतदसहम् ॥२२॥ विकल्पांशे विकल्पवृत्तौमनसिप्रतिबिंबभावेनपतिताअर्थशून्यत्वाद्बाध्यत्वाच्चासत्यरूपिणि ॥२३॥ कथंप्रसरतितदाह ॥ हृल्लेखेति ॥ हृदयंमनोलिखंतिक्षोभयंतीतिहृल्लेखाःकामवासनास्तल्लक्षणस्यजालस्यानायस्यविसरैःसमूहैर्निवद्धा ॥ पुत्रकलत्रादिषुविसरतास्नेहेनसंमिश्रंयथास्यात्तथाजडामिथ्यात्वादनुदयाअनुत्पन्नाएवयेशब्दस्पर्शादयोर्थास्तेषांचर्वणैरास्वादनैःप्रसरतिसएवचित्रमहाराज्यत्वेनवर्णितःसंसारइत्यर्थः ॥२४॥ एवंरीत्याएषाआदिचित्अहमितिविकल्पेनोन्मुखीवहिर्मुखीजीवभावमिवापन्नासत्यपिनपरात्परमात्मनोव्यतिरिक्ता ॥ भेदकोपाधीनांविकल्पमात्रत्वेजीवपरशब्दयोर्जलतोयशब्दवदेकार्थपर्यवसानादितिभावः ॥२५॥ उपाध्यनुप्रवेशेननामरूपव्याकर्त्तुरहमर्थंजीवस्यब्रह्ममात्रत्वेतद्भोग्यसर्गशब्दार्थोपिब्रह्ममात्रंसंपन्नइत्याह ॥ चिदादित्यइति ॥२६॥ जगतोराहुशिरोवच्चिद्विकल्पमात्रतामविद्यामात्रतापर्यवसानायदृष्टांतेनोपपादयति ॥ स्पंदात्मिकायामिति ॥ जलंस्पंदतेइत्यत्रविचार्यताम् किंजलमेवस्पंदात्मनाआस्तेउतान्यत् ॥ नद्वितीयः ॥ अन्यस्यानुपलंभात् अन्यएवस्पंदतइतिहितदास्यात्स्पंदस्यजलापेक्षानियमा

अंतःशून्यमसारात्मबहुरागोपरंजितम् ॥ स्फुरद्विरागविहितमार्जनामात्रतर्जनम् ॥ २० ॥ ससुरासुरगंधर्वविद्याधरमहोरगम् ॥ जडात्मपवनस्पंदिपरचेतनचेतितम् ॥ २१ ॥ पटेचित्रमहाराज्यमिवभासुरसुंदरम् ॥ परामर्शासहंचारुविकल्पस्फूर्जितंजगत् ॥ २२ ॥
स्पंदात्मनिविकल्पांशेपतिताऽसत्यरूपिणि ॥ संवित्प्रसरतिभ्रांतौतैलबिंदुरिवांभसि ॥ २३ ॥ हृल्लेखाजालविसरैःसर्वावर्त्तविवर्त्तनैः ॥
विसरत्स्नेहसंमिश्रजडानुदयचर्वणैः ॥ २४ ॥ अहमित्यादिचिद्रूपेविकल्पेनोन्मुखीसती ॥ नपराद्व्यतिरिक्तैषाजलत्वादिवतोयता ॥ २५ ॥
चिदादित्यःस्वआत्मैवसर्गइत्यभिधीयते ॥ भूत्वाहमितितेनान्योनसर्गोस्तिनसर्जकः ॥ २६ ॥ स्पंदात्मिकायांसत्तायांयथास्पंदोजलद्रवः ॥
तथाचिदात्माव्योमत्वेनव्योमत्वादिवेत्तिहि ॥ २७ ॥ देशकालादिनिर्माणपूर्वकंवेदनंविदः ॥ सर्गात्मकत्वात्तेनांबुद्रवसाम्यंनदूरगम् ॥ २८

भावप्रसंगाच्च ॥ नचसमवायात्तन्नियमस्तस्यसंबंधानवस्थयाअसिद्धेः ॥ आद्येतुकल्पेजलस्यस्पंदकर्तृत्वानुपपत्तिः ॥ नहिस्पंदात्मास्पंदंकरोति स्पंदस्यापिकर्तृत्वापत्तेः ॥ तस्माज्जलद्रवोयथास्पंदात्मिकायांस्वसत्तायामस्पंदएवेतिस्पंदप्रत्ययोविकल्पमात्रंतथाचिदात्माव्योमादिप्रपंचनिर्माणेपिनव्योमत्वेस्थितोनव्योमकर्त्तेतिनस्वस्यान्यस्यवाव्योमभावादिकंवेदितुंशक्नोतीतिजलद्रवभेदविकल्पवद्विकल्पमात्रमेवतदित्यर्थः ॥२७॥ ननुजलद्रवभेदविकल्पेदेशकालभेदोनियामकोस्ति पूर्वकालेपूर्वदेशेस्थितंजलमुत्तरकालेपरदेशेउपलभ्यते ॥ उत्तरदेशप्राप्तिस्तुक्रियापूर्विकैवशरादौक्लृप्तेतिजलेपिद्रवणक्रियाभेदःकल्प्यते ॥ ब्रह्मणित्वद्वयेनदेशकालभेदोस्तीतिनवियदादिभेदविकल्पेनिमित्तमस्तीत्यंबुद्रवसाम्यंदूरापास्तमितिशंकांसमाधत्ते ॥ देशेति ॥ किमयंवियदादिसर्गविकल्पासंभवःसर्गात्मकत्वदशायामाक्षिप्यतेउतब्रह्मदशायाम् ॥ द्वितीयेइष्टापत्तिः ॥ नहिवयंब्रह्मभावेकंचिद्विकल्पमंगीकुर्मः ॥ सर्गात्मकत्वदशायांतुअयंसर्गकालःप्राक्प्रलयकालइतिकालविभागंसंसारासंसारदेशभेदंचकल्पनयानिर्मायतत्रविदश्चिदात्मनोवियदादिविकल्पवेदनंवर्णयामइतिनांबुद्रवसाम्यंदूरगमित्यर्थः ॥ तथाचोक्तंवार्त्तिके ॥ अविद्यास्तीत्यविद्यायामेवासित्वाप्रकल्प्यते ॥ ब्रह्मदृष्ट्यात्वविद्येयंनकथंचनयुज्यतइति ॥ २८ ॥

देशकालभेदनिर्माणस्यापिदेशकालांतरसापेक्षत्वादनवस्था एवंविकल्पानांमनोहंभावबुद्ध्यादिसाध्यत्वाद्वियदादिसर्गभेदविकल्पकालेतेषामसिद्धत्वात्कथंविकल्पनेत्याद्याशं काअपिअनुपपत्त्यादिदोषसहस्रभाजनाविद्यामात्रत्वाभ्युपगमादेवपरिहर्त्तव्याइत्याशयेनाह ॥ मनइति ॥ २९ ॥ केनकेनपौरुषेणकियतीसानश्यतितदाह ॥ अर्द्धमिति ॥ विनयप्रणतिदानसन्मानादिवशीकृतैस्तत्त्वविद्भिःसहसंकथनात्प्रथमभूमिकाप्रतिष्ठापर्यंतमभ्यस्तयोत्कटवैराग्यादिसाधनचतुष्टयसिद्ध्यापुत्रदारधनादिषुममताध्यासहेतुभूतमर्द्धंन श्यतीत्यर्थः ॥ शास्त्रविचारणैःश्रवणादिभिःप्रमाणप्रमेयासंभावनादिरूपोदेहादिष्वहंतारूपश्चाविद्यायाविक्षेपशक्तिरूपोभागश्चतुर्थांशोनश्यति ॥ आत्मप्रत्ययतोब्रह्मात्मभाव

मनोहंभावबुद्ध्यादिर्यत्किंचिन्नामवेदनम् ॥ अविद्यांविद्धियत्नेनपौरुषेणाशुनश्यति ॥ २९ ॥ अर्द्धंमिथःसंकथयाभागःशास्त्रविचारणैः॥आत्मप्रत्ययतःशिष्टमविद्यायानिवर्त्तते ॥ ३० ॥ चतुर्भागात्मनिरुक्तेइत्यविद्याक्षयेक्रमात् ॥ समकालाच्चयच्छिष्टंतदनामार्थंसन्मयम् ॥ ३१ ॥ ॥श्रीरामउवाच॥ ॥ अर्द्धंमिथःसंकथयाभागःशास्त्रविचारणैः॥ आत्मप्रत्ययतोभागःकथंतस्यानिवर्त्तते॥ ३२॥ समकालेक्रमाच्चेतिमुनिनाथकिमुच्यते ॥ तदनामार्थसच्चेतिसच्चासच्चेतिकिंवद ॥ ३३ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥सुजनेनविरक्तेन संसारोत्तरणार्थिना॥ सहचाप्यात्मविदुषासंस्थितिंप्रविचारयेत् ॥ ३४ ॥ यतःकुतश्चिदन्विष्यसविरागममत्सरम्॥ जनंसज्जनमात्मज्ञं यत्नेनाराधयेद्बुधः॥ ३५ ॥ संपन्नेसंगमेसाधोरविद्यार्धक्षयंगतम्॥ विद्धिवेद्यविदांश्रेष्ठज्येष्ठश्रेष्ठदशोदयात् ॥ ३६ ॥

साक्षात्काराच्चतुर्थभूमिकामारभ्योत्तरोत्तरमुपचीयमानात्शिष्टआवरणशक्तिरूपश्चतुर्थभागश्चारुणोदयोत्तरंतमइवक्रमान्निवर्त्ततइत्यर्थः ॥ ३० ॥ इतिप्राग्दर्शितप्रकाराद्भूमिकाभ्याससमकालात्क्रमादविद्याक्षयेकृतेसतियच्छिष्टंतन्नामरूपरहितंसन्मात्रमेवपरमपुरुषार्थइत्यर्थः ॥ ३१ ॥ संक्षेपोक्तंविस्तरेणजिज्ञासूरामःपृच्छति ॥ अर्द्धमित्यादिना ॥ ३२ ॥ अनामार्थसन्मयमित्यत्रमयटाअसदंशस्यापिकोडीकारात्सच्चासच्चेत्युक्तम ॥ तत्रासदंशःकितद्वदेत्यर्थः ॥ ३३ ॥ प्रश्नक्रमाद्वसिष्ठउत्तरमाह ॥ सुजनेनेति ॥ आत्मविदुषासहचशब्दादपिशब्दाच्चान्येनापिमुमुक्षुणासहस्वबुद्ध्याचसंस्थितिकेयंकिंपर्यवसानाकिंमूलाकिंसाराकथमुत्तरणीयेतिचप्रविचारयेत् ॥ ३४ ॥ ३५ ॥ इतरभूमिकाभ्योज्येष्ठासाधनचतुष्टयसंपत्त्याचश्रेष्ठायाप्रथमभूमिकाप्रतिष्ठादशातदुदयादित्यर्थः ॥ ३६ ॥

/७

चतुर्भागंचतुर्थंभागम् ॥ स्वयत्नतोनाशयेदितिशेषः ॥ ३७ ॥ तच्चायमुपपादयति ॥ एकइति ॥ एकउत्कटमुमुक्षालक्षणोभिलाषउत्पन्नश्चेदयंपुरुषोवैराग्यादिसंपदाभोगेभ्यस्तत्साधनेभ्यश्चनिवार्यते ॥ अवश्यंनिर्ममः संन्यस्यतीत्यर्थः ॥ ३८ ॥ युगपत्प्राप्तौतुल्यकालम् ॥क्रमात्प्राप्तौक्रमादपि ॥ ३९ ॥ पंचमप्रश्नस्याप्युत्तरमाह ॥ यदिति ॥ अर्थक्रियाव्यवहारानर्हत्वादसत् अबाध्यपरमपुमर्थत्वात्सच्चेत्यर्थः ॥ ४० ॥ हेरामइदंपरिशिष्टवस्तुआनंदैकघनंजरादिविकारशून्यंब्रह्मैवजीवजगद्रूपंतुसंकल्पोविकल्पस्तत्स्फुरणमात्रमित्यविद्यमानमेव ॥ त्वमेवमात्मानात्मतत्त्वंबुद्धाव्यपगतमानादित्रिपुटीमोहःसन्निर्वाणंब्रह्मैवभूत्वानिरतिशयबृहत्त्वादेवपरितोव्याप्त्याविहरन्सन्विशोकमास्वतिष्ठेत्यर्थः ॥ ४१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०द्वादशःसर्गः ॥ १२ ॥ ॥ ७ ॥ ॥ मायाकार्येनेदशोदरपेक्षेत्यत्रवर्ण्यते ॥ इंद्रस्याणूदरेराज्यकल्पनाख्यानविस्तरः ॥ १ ॥ देशकालादिनिर्माणपूर्वकंवेदनंविदः सर्गात्मकत्वादितियदुक्तंतस्योपपादनायेंद्रत्रसरेण्वाख्यानंवक्तुंभूमिकांरचयति ॥ जगदित्यादिना ॥ देशकालादिनिर्माणपूर्वकंवेदन

अर्द्धंसज्जनसंपर्कादविद्यायाविनश्यति ॥ चतुर्भागस्तुशास्त्रार्थैश्चतुर्भागंस्वयत्नतः॥३७॥एकोभिलाषउत्पन्नोभोगेभ्यश्चनिवार्यते ॥ तत्क्षयेयात्यविद्यायाश्चतुर्थांशःस्वयत्नतः ॥ ३८ ॥ साधुसंगमशास्त्रार्थस्वयत्नैःक्षीयतेमलम् ॥ एकैकेनाथसर्वैश्चतुल्यकालंक्रमादपि ॥ ३९ ॥ यदविद्याक्षयेकात्मनर्किचित्किंचिदेवच ॥ शिष्यतेतत्परंप्राहुरनामार्थमसच्चसत् ॥ ४० ॥ ब्रह्मेदंघनमजराद्यनंतमेकंसंकल्पस्फुरणमविद्यमानमेव ॥ बुद्धैवंव्यपगतमानमेयमोहोनिर्वाणंपरिविहरन्विशोकमास्व ॥ ४१ ॥ ॥ इ० वा० म०वा०दे०मो०नि० उ०विद्या०संकल्पसर्गयोरैक्यप्रतिपत्तिर्नामद्वादशःसर्गः॥ १२ ॥ ॥ ७ ॥ ॥ भुशुंडउवाच ॥ ॥ जगत्प्रसररूपस्यनदेशउपयुज्यते ॥ नकालोधारणेस्तंभआलोकस्यांबरेयथा ॥ १ ॥ मनोमननिर्माणमात्रमेतज्जगत्त्रयम् ॥ शांतंतनुलघुस्वच्छंवातांतःसौरभादपि ॥ २ ॥ चिच्चमत्कृतिमात्रस्यसाधोजगदणोःकिल ॥ वातांतःसौरभंमेरुरन्यानुभवयोगतः ॥ ३ ॥ यंप्रत्युदेतिसर्गोयंसएवैनंहिचेतति ॥ पदार्थःसन्निवेशंस्वमिवस्वप्नंपुमानिव ॥ ४ ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ यद्वृत्तंदेवराजस्यत्रसरेणूदरेपुरा ॥ ५ ॥

मित्यंगीकृत्यवादः वस्तुतस्तुदृष्टसृष्ट्यायुगपदेवसहदेशकालाभ्यांजगत्प्रसररूपस्यमायिकसर्गस्यधारणेनप्राक्सिद्धोदेशउपयुज्यते यथाअंबरेयुगपत्प्रसृतस्यालोकस्यधारणेस्तंभोनोपयुज्यतेतद्वदित्यर्थः ॥ १ ॥ वातांतःप्रसृतमतिसूक्ष्मत्वाद्वातेनापिधारयितुंकंपयितुंचाशक्यंयत्सौरभंज्योतिःसौरभंसौगंध्यंचतस्मादपिशांततिरोभूतंतनुसूक्ष्मंलघुअगुरुस्वच्छंचेत्यर्थः ॥ २ ॥ हेसाधोचिच्चमत्कृतिमात्रत्वेनदृष्टस्यजगदणोरपेक्षयावातांतर्गतसौरभमपिमेरुरिवस्थूलंकिल ॥ अन्यानुभवयोगतःअन्यैरपिचक्षुर्घ्राणादिसंयोगेनानुभूयमानत्वादित्यर्थः ॥ ३ ॥ दृष्टसृष्टिरूपस्यप्रपंचस्यतुनस्वकल्पकदृगन्यगोचरतेत्यसाधारणत्वात्परमसौक्ष्म्यमित्याह ॥ यंप्रतीति॥यथामानोरथिकपदार्थःस्वसन्निवेशंस्वसाक्षिणास्वयमेवचेतति यथापुमान्स्वस्वप्नंस्वयमेवचेततितद्वदित्यर्थः ॥ ४ ॥ अत्रअस्मिन्पूर्वसिद्धदेशकालानपेक्षारूपेअनन्यानुभवगोचरतयापरमसौक्ष्म्यरूपेचार्थेउपपादकम् ॥ ५ ॥

कश्चिच्चासौकल्पद्रुमश्चकिंचित्कल्पद्रुमस्तस्मिन्सर्वकल्पनाफलाधारेमायाशबलेब्रह्मणीतियावत् ॥ युगशाखायांशाखाद्वयसंधौ ॥ जगद्ब्रह्मांडस्तद्रूपमुदुंबरंफलम् ॥६॥ तद्वर्ण यति ॥ ससुरासुरेत्यादिना ॥ शैलैः कोलस्थानीयैर्मांसलानिदृढानिपातालादिलोकत्रयलक्षणानिउग्राणिदुराधर्षाणिकपाटानियत्र॥यद्यप्युदुंबररूपकेंतःकपाटवर्णनमनुपयुक्तं तथापिकल्पवृक्षफलोदुंबरफलकल्पकमनोवृत्त्यनुसारित्वेनप्रसिद्धवैलक्षण्यकल्पनयाकथंचिद्योज्यम् ॥७॥ चितश्चमत्कृत्यारचनाशक्तिवैचित्र्येणचारु ॥ उच्चैर्बृहत् ॥८॥बृहन् प्राग्वर्णितोयोब्रह्मतरुरुदुंबरस्तस्मिन्प्रौढाआविर्भूतायाःसूक्ष्मजगत्सत्ताव्रततिकोटयस्तदंतर्गतम्॥समआलोकःसाक्षिचिन्तेनसमुज्ज्वलम् ॥ ९ ॥ मोक्षद्वारंज्ञानमेवविकासिआ स्यंमुखंयस्य ॥ मात्रास्तन्मात्राणि ॥ तरंतिऊर्ध्वंप्लवमानानितारकाण्येवसीकरारसकणानीहारकणावायत्र ॥ १० ॥ महाकल्पावसानेजरठंपक्वंपातोन्मुखम् अथतदनंतरंका

क्वचित्कदाचित्कस्मिंश्चित्किंचित्कल्पद्रुमेभवत् ॥ कस्यांचिद्युगशाखायांफलंजगदुदुंबरम् ॥ ६ ॥ ससुरासुरभूतौघमशकाहितघुंघुम म् ॥ शैलमांसलपातालद्युभूम्युग्रकपाटकम् ॥ ७ ॥ चिच्चमत्कृतिचारूच्चैर्वासनारसपीवरम् ॥ विविधानुभवामोदंचित्तास्वादमनोहर म् ॥ ८ ॥ बृहद्ब्रह्मतरुप्रौढसत्ताव्रततिकोटिगम् ॥ अहंकारमहावृंतंसमालोकसमुज्ज्वलम् ॥ ९ ॥ मोक्षद्वारविकास्यास्यंसरिदब्धिशिरा वृतम् ॥ मात्रापंचककोशस्थंतरत्तारकसीकरम् ॥ १० ॥ कल्पावसानजरठंकाककोकिलगाम्यथ ॥ पतितंशांतिमायातंक्वाप्यंतावास नंगतम् ॥ ११ ॥ तत्राभूदमराधीशःशक्रस्त्रिभुवनेश्वरः ॥ क्षौद्रकुंभनिषण्णानांक्षुद्राणामिवनायकः ॥ १२ ॥ गुरूपदेशस्वाभ्यासात्सक्षी णावरणोभवत् ॥ महात्माभावितांतात्मापूर्वापरविदांवरः ॥ १३ ॥ नारायणादिषुततःकदाचिद्वीर्यशालिषु ॥ क्वचिदेवनिलीनेषुसत्स्वेक स्ससुराधिपः ॥ १४ ॥ शस्त्रज्वालानलोद्गारैरयुध्यतमहासुरैः ॥ विजितस्तैर्महावीर्यैरतोव्यद्रवदाद्रुतम् ॥ १५ ॥ दिशोदशसुवेगेनदुद्रा वाभिद्रुतोरिभिः ॥ नविश्रमास्पदंप्रापपरलोकइवाधमः ॥ १६ ॥ तद्भ्रांतदृष्टिष्वरिषुमनाक्छिद्रमवाप्यसः ॥ प्रशमंकायसंकल्पंनीत्वास्वं स्वांतरेवहिः ॥ १७ ॥ कमप्यर्कांशुकोशस्थंत्रसरेणुंविवेशसः ॥ संविद्रूपतयापद्मकोशंमधुकरोयथा ॥ १८ ॥

कगामिकोकिलगामिवा ॥ यथाप्रसिद्धोदुंबरमनेकाकैःकोकिलैर्वाभक्ष्यतेतद्वदसच्छास्त्रकटुरवानुसारिण्याअविद्याकाक्याशास्त्रमधुररवानुसारिण्याविद्याकोकिलयावाप्रस्य मानंक्वापिअंतवासनामात्रशेषलक्षणंनाशमवासनंब्रह्मभावंवाआगतंभविष्यतीत्यर्थः ॥ ११ ॥ तत्रतस्मिन्नुदुंबरे ॥ क्षुद्राणांमधुमशकानाम् ॥ १२ ॥ भावितःअंतःसर्वकल्प नावधिरात्मायेन ॥ १३ ॥ १४ ॥ शस्त्रज्वालानलानुद्गिरंतीतिशस्त्रज्वालानलोद्गाराः ॥कर्मण्यण् ॥ कृद्ग्रहणेगतिकारकपूर्वस्यापिग्रहणादुपपदसमासः॥आसमंताद्द्रुतंशीघ्रम्॥ ॥ १५ ॥ सुवेगेनअतिजवेन ॥ अधमःपापकृत् ॥ १६ ॥ अरिषुमनागूभ्रांतदृष्टिषुसत्सु ॥ तत्तदा॥छिद्रंनिलयनावसरं॥कायाकारंस्थूलाकारसंकल्पंस्वांतरेसूक्ष्मप्रशमंनीत्वा विलाप्याणुतरोभूत्वावहिःकमपित्रसरेणुंविवेशेतिपरेणान्वयः ॥ १७ ॥ तदंतःप्रवेशसंकल्पसंविद्रूपतया ॥ १८ ॥

निर्वृत्तिर्बहिर्गमनाभावम् ॥ अनिवृत्तिमितिवाछेदः ॥ १९ ॥ पद्मांतिपद्मासनमध्ये ॥ स्वेस्वलोकप्रसिद्धे विष्टरेसिंहासनइव ॥ २० ॥ २१ ॥ गोवाटाव्रजाः ॥ २२ ॥ ताहृपति स्ताहृशसंकल्पोपहितः ॥ भुवनंभूलोकम् ॥ नद्यःईशाराजानःअंतास्तत्तद्देशसीमास्तैस्सहवर्त्तमानम् ॥ २३ ॥ अथतत्रसुरेशत्वेअतिष्ठदित्यपकृष्यान्वयः ॥ २४ ॥ २५ ॥

सतत्राशुविशश्रामचिरादाश्वासमाययौ ॥ अथविस्मृतसंग्रामोनिर्वृत्तिसमुपागमत् ॥ १९ ॥ कल्पितंसद्मतत्राथसक्षणादनुभूतवान् ॥ तस्मिन्सद्मनिपद्मांतेरेमेस्वइवविष्टरे ॥ २० ॥ गृहस्थःसददर्शाथकल्पितंनगरंहरिः ॥ मणिमुक्ताप्रवालादिकृतप्राकारमंदिरम् ॥ २१ ॥ नगरांतर्गतोपश्यत्ततोजनपदंहरिः ॥ नानाद्रिग्रामगोवाटपत्तनारण्यराजितम् ॥ २२ ॥ ताहृग्रतिश्चेतितवान्सशक्रोभुवनंततः ॥ साद्र्यब्ध्युर्वीनदीशांतंसक्रियाकालकल्पनम् ॥ २३ ॥ ताहृग्रतिश्चेतितवान्सशक्रस्त्रिजगत्ततः ॥ सपातालमहीव्योमविष्टपार्कादिपर्वतम् ॥ २४ ॥ तत्रातिष्ठत्सुरेशत्वेसभोगभरभूषितः ॥ पुत्रोबभूवतस्याथकुंदोनामाथवीर्यवान् ॥ २५ ॥ ततोजीवितपर्यंतेत्यक्त्वादेहमनिंदितः ॥ निर्वाणमाययौशक्रोनिःस्नेहइवदीपकः ॥ २६ ॥ कुंदस्त्रैलोक्यराजोभूज्जनयित्वासुतंनिजम् ॥ कालेनजीवितस्यांतेजगामपरमंपदम् ॥ २७ ॥ तत्पुत्रोपितथैवाथकृत्वाराज्येसुतंनिजम् ॥ जगामजीवितस्यांतेपावनंपरमंपदम् ॥ २८ ॥ एवंपौत्रसहस्राणिसमतीतानिसुंदर ॥ तत्राद्यापिसुरेशस्ययेषांराज्येस्थितोंशकः ॥ २९ ॥ इत्यद्ययावदमरेश्वरवंशएवसंकल्पितेजगतिशक्रपदंविधत्ते ॥ तस्मिन्क्षतेपिगलितेपिहतेपिनष्टेक्काप्यंबरेदिनकरातपपावनाणौ ॥ ३० ॥ ॥ इत्यार्षेवा० वा० दे० मो० नि० उ० विद्याधरोपाख्यानांतर्गतेंद्रोपाख्यानेत्रसरेण्वंतरसर्गसंघवर्णनंनामत्रयोदशःसर्गः ॥ १३ ॥ ॥छ॥ ॥छ॥

॥२६ ॥ २७॥ २८ ॥ तस्यसुरेशस्यपौत्रसहस्राणियेषांराज्येअद्याप्यंशकोनामराजास्थितः ॥ २९ ॥ इतिवर्णितदिशाअद्ययावत्अद्यतनकालपर्यंतंतत्संकल्पितेत्रसरेण्वंतरेजगतितद्वंशएवअमरेशपदंशक्रराज्यंविधत्तेपालयति ॥ क्काप्यंबरप्रदेशेतस्मिन्दिनकरातपपावनेअणौत्रसरेणौक्षतेअपचितेगलितेनष्टेपिहितद्राज्यंनगलितमित्यर्थः ॥ ३० ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेत्रयोदशःसर्गः ॥ १३ ॥

तत्कुलोत्पन्नशक्रस्यबिसतंतौजगत्तथा ॥ तत्रोच्यतेब्रह्मदृष्टौसर्वदृष्ट्याखशक्तता ॥ १ ॥ तस्यप्रागुक्तस्यशक्रस्यकुलजोवंशोद्भवः ॥ १ ॥ तस्यतत्रबृहस्पतेःस्वगुरोरुपदेशगिरा उदिताप्रतिभानंप्रतिभाआत्मतत्त्वसाक्षात्कारस्तद्रूपज्ञानसंप्राप्तिर्बभूवेतिशेषः ॥२॥ आज्यपानांदेवानाम् ॥ ३ ॥ यज्ञानामश्वमेधानाम् ॥ तस्यहिफलंतस्यवक्ष्यमाणाबिसतंता वेतद्ब्रह्मांडेचशक्रताप्राप्तिरितिभावः ॥४॥ बिसस्यपद्मनालस्यबालतंतुस्तदंतरे ॥ तत्रबिसतंतौकल्पितेब्रह्मांडेराज्ययुद्धजयपराजयादीन्यन्यान्यपिवृत्तांतशतान्यनुबभूवहकिल ॥ ५ ॥ ब्रह्मतत्त्वंमायाशबलब्रह्मस्वभावम् ॥ ६ ॥ प्रणिधानेनसमाधिना ॥ अशेषाणांविक्षेपकारणानांत्यागेनशांतधीः ॥ ७ ॥ ८ ॥ श्रुतिमत्श्रोत्रेंद्रियवत् ॥ ९ ॥ सर्वेंद्रिया

भुशुंडउवाच ॥ ॥ तस्यशक्रस्यकुलजःकश्चिदासीत्सुराधिपः ॥ तत्रोत्तमगुणःश्रीमान्पाश्चात्यायस्यसातनुः ॥ १ ॥ अथेंद्रकुलपुत्रस्य तस्यतत्रबभूवह ॥ प्रतिभाज्ञानसंप्राप्तिर्बृहस्पतिगिरोदिता ॥ २ ॥ ततोविदितवेद्योसौयथाप्राप्तानुवृत्तिमान् ॥ चकारजगतांराज्यमा ज्यपानामधीश्वरः ॥ ३ ॥ युयुधेदानवैःसार्द्धमजयत्सर्वशात्रवान् ॥ शतंचकारयज्ञानामज्ञानोत्तीर्णमानसः ॥ ४ ॥ उवासकार्यवशतो विसबालांतरेचिरम् ॥ अन्यान्यपिचवृत्तांतशतान्यनुबभूवह ॥ ५ ॥ कदाचिदासीत्तस्येच्छाप्रबोधबलशालिनः ॥ ब्रह्मतत्त्वमवेक्षेहंय थावद्ध्यानवानिति ॥ ६ ॥ सोपश्यत्प्रणिधानेनततएकांतसंस्थितः ॥ सबाह्याभ्यंतरेऽशेषकारणत्यागशांतधीः ॥ ७ ॥ सर्वशक्तिपरंब्रह्म सर्ववस्तुमयंततम् ॥ सर्वथासर्वदासर्वंसर्वैःसर्वत्रसर्वगम् ॥ ८ ॥ सर्वतःपाणिपादांतंसर्वतोक्षिशिरोमुखम् ॥ सर्वतःश्रुतिमल्लोकेसर्व मावृत्यसंस्थितम् ॥ ९ ॥ सर्वेंद्रियगुणैर्मुक्तंसर्वेंद्रियगुणान्वितम् ॥ असक्तंसर्वभृच्चैवनिर्गुणंगुणभोक्तृच ॥ १० ॥ बहिरंतश्चभूतानाम चरंचरमेवच ॥ सूक्ष्मत्वात्तदविज्ञेयंदूरस्थंचांतिकेचतत् ॥ ११ ॥ सर्वत्रचंद्रार्कमयंसर्वत्रैवधरामयम् ॥ सर्वत्रपर्वतमयंसर्वत्राब्धिमयं तथा ॥ १२ ॥ सर्वत्रसारगुरुकंसर्वत्रैवनभोमयम् ॥ सर्वत्रसंसृतिमयंसर्वत्रैवजगन्मयम् ॥ १३ ॥ सर्वत्रैवचमोक्षात्मसर्वत्रैवाघचि न्मयम् ॥ सर्वत्रसर्वार्थमयंसर्वतःसर्ववर्जितम् ॥ १४ ॥ घटेपटेवटेकुड्येशकटेवानरेतथा ॥ धाम्निव्योम्नितरावद्रावनिलेसलिलेनले ॥ १५ ॥ नानाचारविचाराणिविविधावृत्तिमंतिच ॥ परमाण्वंशमात्रेपित्रिजगंतिददर्शसः ॥ १६ ॥ मरिचस्यांतरेतैक्ष्ण्यंशून्यत्वमिव चांबरे ॥ त्रिजगत्सत्यसतिचविद्यतेचिन्मयात्मनि ॥ १७ ॥

णांगुणैरूपादिग्रहणशक्तिभिरन्वितम् ॥ परमार्थतःअसक्तंव्यवहारतस्तुसर्वभृत् ॥ एवमग्रेपि ॥ १० ॥ ११ ॥ प्राचुर्येमयटः ॥ १२ ॥ भ्रमप्राधान्येनसंसृतिर्भावविकारप्राधा न्येनजगदितिभेदव्यपदेशः ॥ १३ ॥ १४ ॥ धाम्नितेजसिगृहेच ॥ सःत्रिजगंतिददर्शेतिपरेणान्वयः ॥ १५ ॥ नानाविधाःप्राणिनामाचाराःशारीराविचारामानसाश्चक्रियाभे दायेषु ॥ आवृत्तयःस्वर्गनरकादेःपुनरागमनानि ॥ परमाणोरंशाऊर्ध्वाधोमध्यादिभागास्तन्मात्रेपि ॥ १६ ॥ सतिआविर्भावकालात्मनि असतितिरोभावकालात्मनिच ॥ १७ ॥

१ नरेंद्रइत्यपिक्वचित्पाठः

भावयन्पश्यन् ॥ मुक्तोभावोजीवभावोयया ॥ तेनप्राग्वासनाकल्पितेनैवशक्रदेहेनशक्रोनतुसमाध्यनुभूयमानसर्वात्मभावेनेत्यर्थः ॥ १८ ॥ एकत्रमायाशबलब्रह्मणि ॥ इम मस्मदीयंत्वयामयाचानुभूयमानंसर्गंब्रह्मांडम् ॥ १९ ॥ ततस्तदनंतरमस्मिन्सर्गेपातालभूम्यादिलोकदर्शनक्रमेणशक्रलोकांतमनसाविचरन्संस्तत्रशक्रदर्शनेनशक्राहंभावसं स्कारोद्बोधात्प्राक्तनाश्वमेधशतादृष्टफलावश्यंभावाच्चशक्रतांगतः ॥ राजतांप्रजारंजकताम् ॥ राज्यंराजकर्मकरादानपरिपालनादिचकार ॥ २० ॥ हेविद्याधरकुलाधीशइ तिअनयारीत्यातस्यत्रसरेण्वंतर्गतस्येंद्रस्यकुलेउत्पन्नस्सोऽद्यास्मिन्ब्रह्मांडेपिदेवराड्भूत्वातिष्ठतीतिविद्धि ॥ २१ ॥ ततएतदिंद्रभावानंतरंत्वदयेबीजमिवसंस्काररूपेणस्थितस्यप्रा क्तनस्यमुख्यस्यज्ञानयोगाभ्यासस्ययोगतोयथास्थितंप्राक्तनंबिसतंतुनिवासादिस्ववृत्तांतमनुभूतवान्सस्मारेत्यर्थः ॥ २२ ॥ सर्वशक्तौब्रह्मणिसर्वत्रसर्वसद्भावादीदृशशक्रसह

इत्येवंभावयन्मुक्तभावयाशुद्धसंविदा॥ शक्रःक्रमेणतेनैवतथैवध्यानवानभूत्॥ १८॥ ध्यानेनसर्वमेकत्रपश्यंश्चिरमुदारधीः॥ ददर्शे ममसौसर्गमस्मदीयंमहामतिः॥ १९॥ ततोस्मिन्विचरन्सर्गेशक्रांतशक्रतांगतः ॥ चकारजगतांराज्यंवृत्तांतशतशोभितम्॥ २० ॥ विद्याधरकुलाधीशइत्यद्यैवसदेवराट्॥ तस्येंद्रस्यकुलोत्पन्नइतिविद्धियथास्थितम् ॥ २१ ॥ ततोहृदयबीजस्यप्राङ्मुख्याभ्यासयोग तः॥ बिसबालनिवासादिवृत्तांतमनुभूतवान्॥ २२॥ यथैषशक्रःकथितस्त्रसरेणूदरास्पदः॥ बिसबालास्पदश्चैतत्कुलजःकांतिमानथ ॥ २३॥ तथाशतसहस्राणितत्रेतश्चान्यतश्चखे॥ तादृशव्यवहाराणिसमतीतानिसंतिच ॥ २४ ॥ वहतीयमविच्छिन्नाचिरायैवंतरंगि णी॥ तावद्वश्यसरित्प्रौढारूढारूढेचतत्पदे॥ २५॥ इतिमायेयमादीर्घाप्रसृताप्रत्ययोन्मुखी ॥ सत्यावलोकमात्रातिविलयैकविलासि नी॥ २६॥ यतःकुतश्चिन्मायेयंयत्रक्वचनवानघ॥ यथाकथंचित्संपन्नमात्रैवपरिदृश्यते॥ २७॥ अहंभावचमत्कारमात्राद्दृष्टिरिवांबु दात्॥ जायतेमिहिकेवाशुप्रेक्षामात्रविनाशिनी॥२८॥ येनायताभिमतदर्शनदृष्टृदृश्यमुक्तस्वभावमवभासनमात्मतत्त्वम्॥ सर्वार्थशू न्यमतएवचशून्यरूपमेकंखमात्रमिवमात्रविकल्पमेव॥ २९॥ ॥इ०वा०महारामायणेवा०दे०मोक्षोपायेषुनिर्वाणप्रकरणेउ० वि द्याधरोपाख्यानांतर्गतेंद्राण्वाख्यानेसर्गसंकल्पयोरैक्यप्रतिपादनंनामचतुर्दशःसर्गः॥ १४॥

स्त्राण्यपिसर्वत्रसंतीतिसंभावयेत्याह ॥ यथेतिद्वाभ्याम् ॥ अप्यर्थेथशब्दः ॥ २३ ॥ २४ ॥ चतुर्थ्यादिषष्ठ्यंतभूमिकास्वर्ढ्रूढेअर्धमरूढेचतस्मिन्ब्रह्मपदेसतिइयंमायाइतिप्र त्ययोऽनुभवस्तदुन्मुखीभवतीतिपरेणान्वयः ॥ २५ ॥ २६ ॥ मायात्वादेवनवैचित्र्येहेतुविशेषोऽश्वित्याइत्याह ॥ यतःकुतश्चिदिति ॥ त्रिभिर्यद्वृत्तैःकिवृत्तैश्चहेतुकालदेशक्रिया प्रकारनियमानावश्यकतासूच्यते ॥ २७॥ अथवाएकएवाहंकाराध्यासएतद्वैचित्र्येनियतोहेतुरित्याह ॥ अहंभावेति ॥ मिहिकानीहारधूमइवेतिनाशेदृष्टांतः ॥ २८ ॥ ये नहेतुनामात्मसर्वसाक्षिब्रह्मरूपमविकल्पंसर्वविकल्परहितमेवपरमार्थतः अतएवअहंकारवशादायतानिविस्तीर्णानियानिअभिमतानिमानसविकल्पाःदर्शनानित्रिपुटीलक्षणैर्द्वि यकविकल्पाश्चैतैर्मुक्तस्वभावंजाग्रदवस्थाशून्यमितियावत् ॥ अतएववासनामयस्वाप्नसर्वार्थशून्यमतएवचप्रतियोग्यप्रसिद्ध्यासर्वशून्यतालक्षणेनसौषुप्ताज्ञानेनचशून्यंखमात्र मिवपूर्णमवभासनंचिद्रूपमात्मतत्त्वंपरिशिष्टमित्यर्थः ॥ २९ ॥ ॥ इतिश्रीवासिष्ठ०म०रा०तात्पर्यप्रकाशेनि०प्रकरणेउ०चतुर्दशःसर्गः ॥ १४ ॥ ॥७॥

अहंभावोजगद्भ्रांतेर्बीजंरूपंचवर्ण्यते ॥ तन्मार्जनाज्जगन्मृष्याशुद्धशेषात्कृतार्थता ॥ १ ॥ अहंभावचमत्कारमात्राद्दृष्टिरिवांबुदात् जायतेदृश्यसरिदितियदुक्तंतदुपपादकतया इंद्राण्वाख्यायिकांयोजयति ॥ यत्रेति ॥ अभिनवेपिस्वप्नप्रपंचेपूर्वसिद्धमेवजगत्पश्यामीतिसर्वानुभवात्पूर्वमागत्यतिष्ठतीत्युक्तिः ॥ १ ॥ २ ॥ व्योमअव्याकृताकाशस्तल्लक्षणेविपिनेऽरण्ये ॥ ३ ॥ विलीनामेघमिहिकावनप्रच्छन्नाअचलाःपर्वताःपल्लवायस्य ॥ सरित्सारागंगाद्याः ॥ वासनाएवसाराद्दृढाबीजांशायेषुतथाविधास्तेभोगाःफलानियस्य ॥ ४ ॥ इदानीमहंकारंमहाजलतयाजगच्चतत्कार्यतरंगादितयावर्णयति ॥अहंत्वेत्यादिपंचभिः ॥ इदंजगत्अहंत्वसलिलस्यस्पंदोविलासः॥चितश्चमत्करणंवैषयिकसुखंस्वादुमाधुर्यंयत्र ॥ ५ ॥ नभसाआकाशेनअनंतनिखातवान्अपरिच्छेद्यकुक्षिकुहरवान् ॥ भावाःसंपदःअभावाविपदश्चमहांतआवर्त्तायत्र ॥ ६ ॥ त्रिलोकीपदेनतद्गतजनाल

भुशुंडउवाच ॥ ॥ यत्राहंत्वंजगत्तत्रपूर्वमागत्यतिष्ठति ॥ पराण्वंतरपींद्रस्यत्रसरेणूदरेयथा ॥ १ ॥ भ्रमस्यजागतस्यास्यजातस्याकाशवर्णवत् ॥ अहंभावोभिमंतात्मामूलमाद्यमुदाहृतम् ॥ २ ॥ वासनारससंसिक्तादहंबीजकणादयम् ॥ ब्रह्माद्रौव्योमविपिनेजायतेत्रिजगद्द्रुमः ॥ ३ ॥ तारकापुष्पनिकरोविलीनाचलपल्लवः ॥ सरित्सारशिरापूरोवासनासारतत्फलः ॥ ४ ॥ अहंत्वसलिलस्येदंजगत्स्पंदउदाहृतः ॥ चिच्चमत्करणस्वादुर्वासनाविसरद्रवः ॥ ५ ॥ तारकासीकरासारोनभोनंतनिखातवान् ॥ भावाभावमहावर्त्तोनानागिरितरंगकः ॥ ६ ॥ त्रिलोकीविलिखल्लेखोविलोलालोकफेनिलः ॥ ब्रह्मांडबुद्बुदोद्भेदःकवाटापीडपीवरः ॥ ७ ॥ भूपीठदृढडिंडीरपिंडश्चिह्नमद्रुमान् ॥ चित्राजवंजवीभावमज्जनोन्मज्जनात्मकः ॥ ८ ॥ जरामरणमोहादिवीचीचयचमत्कृतिः ॥ उत्पन्नध्वंसिदेहादिबिंदुवृंदैकबंधुरः ॥ ९ ॥ अहंत्वपवनस्पंदोजगदित्यवगम्यताम् ॥ अहंत्वपद्मसौगंध्यंजगदित्यवबुध्यताम् ॥ १० ॥ नाहंत्वजगतीभिन्नेपवनस्पंदवत्सदा ॥ पयोद्रवत्वमिवचवह्नेरौष्ण्यमिवापिच ॥ ११ ॥ जगदस्त्यहमर्थेंतरहमस्तिजगद्धृदि ॥ अन्योन्यभाविनीत्वेतआधाराधेयवत्स्थिते ॥ १२ ॥ जगद्बीजमहंत्वंयोमार्ष्टिबोधादवेदनात् ॥ अलंचित्रंजलेनेवतेनधौतंजगन्मलम् ॥ १३ ॥ अहंत्वंनामतत्किंचिद्विद्याधरनविद्यते ॥ अकारणमवस्तुत्वाच्छशशृंगमिवोदितम् ॥ १४ ॥

क्ष्यंते तएवविलिखंत्यश्चित्रलेख्यवदाविर्भवंत्योलेखारेखायत्र ॥ विलोलैःसूर्यचंद्राद्यालोकैःफेनिलःफेनवान् ॥ ब्रह्मांडाएवबुद्बुदोद्भेदायत्र ॥ कपाटमिवआपीडयतिनिरुणद्धिमोक्षप्रवेशमितिकपाटापीडोमोहसेतुस्तेनपीवरोऽभिवृद्धः ॥ ७ ॥ भूपीठमेवघनोडिंडीरपिंडोयत्र ॥ चिह्नैश्चिदाभासैर्जीवैर्मद्रुमान्जलकाकवान् ॥ तेषांचित्रैराजवंजवीभावैरुर्ध्वाधस्तिर्यग्भ्रमणैर्मज्जनोन्मज्जनात्मकः ॥ ८ ॥ ९ ॥ प्रकारांतराभ्यांजगद्वर्णयति ॥ अहंत्वेति ॥ १० ॥ इत्थंवर्णनेफलितमाह ॥ नेति ॥ ११ ॥ परस्परबीजतामाह ॥ जगदिति ॥ अन्योन्यस्माद्भाविनीआविर्भावशीलेअन्योन्याधीनस्थितिकेच ॥ १२ ॥ अतएवाहंकारमार्जनाज्जगन्मार्जनसिद्धिरित्याह ॥ जगदिति ॥ १३ ॥ अहंत्वस्यतत्त्वदृष्ट्याअसत्त्वदर्शनमेवमार्जनमित्याह ॥ अहंत्वमिति ॥ १४ ॥

तत्कुतस्तत्राह ॥ ब्रह्मणीति ॥ १५ ॥ संभवदपिकारणंलोकेअवस्तुर्निनैतिनव्याप्रियते ॥ प्रकृतेतुसर्गादौकारणंनसंभवतितत्संभवोपिनास्तीत्यर्थः ॥ १६ ॥ निर्वाणंकैवल्यलक्षणंचित्त्वंचिन्मात्रंशिष्टम् ॥ १७ ॥ एवमुपपत्तिप्रतिष्ठिताज्जगदहंत्वयोरभावात् ॥ बाह्यारूपालोकादयःसंसाराआंतरामनस्कारलक्षणाःसंसाराश्चशांताः ॥ नचइतरत्तदुभयव्यतिरिक्तंहेयंदुःखमस्तिअतःशांतमास्वेत्यर्थः ॥ १८ ॥ शांतंनिर्दुःखविक्षेपम ॥ १९ ॥ व्यपगतोबाह्याभ्यंतरदृश्यकलनालक्षणःकलंकोयस्यअतएवशुद्धः ॥ अध्यारोपेखंशून्यमपिपर्वतोपमानंभवतिअपवादेतुजगद्ब्रह्मांडमपिवापरमाणुरूपमाकाशतुल्यमेवभवतीत्यर्थः ॥ २० ॥ ॥ इतिश्रीवासिष्ठ०म०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेपंचदशःसर्गः ॥ १५ ॥ ॥ ॥ ॥ श्रुत्वाविद्याधरस्यात्रसमाधिरुपवर्ण्यते ॥ कथाशेषोपसंहारोनहंभावप्रशंसया ॥ १ ॥ संशांतादृश्यसंवित्तिर्यस्यसमाधिलक्षणोयश्चि

ब्रह्मण्यतितनेऽनंतेसंकल्पोल्लेखवर्जिते ॥ अहंत्वकारणाभावान्नकदाचनसन्मयम् ॥ १५ ॥ अवस्तुन्येतिसर्गादौनसंभवतिकारणम् ॥ अतोहंत्वादिनास्त्येववंध्यासुतइवक्वचित् ॥ १६ ॥ तदभावाज्जगन्नास्तिचित्त्वंजगदभावतः ॥ शिष्टंनिर्वाणमेवातःशांतमास्वयथासुखम् ॥ १७ ॥ अभावादुपपत्तिस्यादेवंजगदहंत्वयोः ॥ रूपालोकमनस्काराःशांतास्त्वनचेतरत् ॥ १८ ॥ यन्नास्तितत्तुनास्त्येवशेषंशांतमसिध्रुवम् ॥ संप्रबुद्धोसिमाभूयोनिर्मूलांभ्रांतिमाहर ॥ १९ ॥ व्यपगतकलनाकलंकशुद्धःशिवमसिशांतमसीश्वरोसिनित्यः ॥ खमपिभवतिपर्वतोपमानंजगदपिवापरमाणुरूपमेव ॥ २० ॥ ॥इ०वा०महारामायणेवा०दे०मो०निर्वाणप्रकरणेउ०वि०विद्याधरनिर्वाणंनामपंचदशःसर्गः ॥ १५ ॥ ॥ ॥ ॥ भुशुंडउवाच ॥ ॥ कथयत्येवमप्येवंसविद्याधरनायकः ॥ आसीत्संशांतसंवित्तिःसमाधिपरिणामवान् ॥ १ ॥ प्रबोध्यमानोपिमयाभूयोभूयस्ततस्ततः ॥ नपपातपुरोदृश्येपरंनिर्वाणमागतः ॥ २ ॥ सप्रापपरमंस्थानंतावन्मात्रप्रबोधवान् ॥ केनचिन्नाधिकेनांगयत्नेनातिशयैषिणा ॥ ३ ॥ अतउक्तंमयारामयदिशुद्धेहिचेतसि ॥ उपदेशःप्रसरतितैलबिंदुरिवांभसि ॥ ४ ॥ नाहमित्यस्तितेनांतर्मैनंभावयशांतये ॥ एतावदुपदेशोक्तिःपरमानेतरास्तिहि ॥ ५ ॥ एवैवाभव्यमनसिपतिताप्रविलीयते ॥ उत्तानेमस्तृणादर्शेमुक्ताफलमिवामलम् ॥ ६ ॥ भव्येतुशांतमनसिलगत्यभ्येत्यविच्युतिम् ॥ प्रविश्यांतर्विचाराख्यामाचिरंर्कमणौयथा ॥ ७ ॥

त्तस्यक्षीरोदकवच्चिदैकरस्येनपरिणामस्तद्वान् ॥ १ ॥ पुरोगतेदृश्येशब्दादिविषयेनपपात ॥ २ ॥ मुख्याधिकारित्वात्तावन्मात्रेणमदुपदेशेनप्रबोधवान् ॥ श्रवणाद्यत्तिमनननिदिध्यासनाद्यतिशयैषिणान ॥ अंगेतिवसिष्ठसंबोधनम् ॥ ३ ॥ इदानींवसिष्ठःप्राक्स्वोक्तेर्थेविद्याधरचित्तमुदाहरणमितिवर्णनत्वरयाभुशुंडोक्तिमुल्लंघ्यरामंप्रत्याह ॥ अतइत्यादि ॥ ४ ॥ कोसावुपदेशस्तमाह ॥ नाहमिति ॥ तेअंतःप्रत्यगात्मनिचिदेकरसेअहमित्यंशोनास्ति अतोऽसंतमेनंमाभावयइत्येतावत्एतावत्येवोपदेशोक्तिःपरमासारसंग्रहभूता ॥ ५ ॥ ६ ॥ अविच्युतिंअभ्येति ॥ अंतःप्रविश्यविचाराख्यांसर्वमोहारण्यदाहक्षमामग्निशिखांचजनयतीतिशेषः ॥ यथाअर्कमणौसूर्यकांतेप्रविष्टंसूर्यार्चिरग्निशिखांजनयतितद्वत् ॥ ७ ॥

तद्वदहंभावनवदेवममेदंभावनंसंसोरवृक्षस्यभूलादिशरीरंयतोरागादिशाखाप्रसरस्यकारणमित्यर्थः ॥ ८ ॥ तदेवाह ॥ अहमिति ॥ आदौबीजावस्थास्थाने ॥ अंतःतत्कार्यवृक्ष
स्थाने ॥इच्छाशाखास्थानेप्रवर्त्तते ॥ ९ ॥ एवंप्रागुक्तंप्रकृतसंमत्यासमर्थ्यवसिष्ठःपुनर्भुशुंडोक्तिकथामेवानुमरन्विद्याधरकथामुपसंहरति ॥ एवंविधाइति ॥ दीर्घायुष्यस्यका
रणंतत्त्वज्ञानमेवेर्तीतिशेषः ॥ १० ॥ अंतःशुद्धेस्तुचिराभ्यासएवज्ञानकारणमितिनियमोऽस्त्वेवेत्याशयेनाह ॥ अंतरिति ॥ सुचिरायाभ्यासेनातःशुद्धमनस्कायेतेपरंपदंज्ञानम् ॥
॥ ११ ॥ विहगाधिपोभुशुंडः ॥ ऋष्यमूकगिरौमतंगाश्रमेमतंगशापभयान्मूकामेघानगर्जंतीतिप्रसिद्धिः ॥ १२ ॥ प्रथमंतंसिद्धंभुशुंडमापृच्छ्यअथोविद्याधरंगत्वातदुक्तिसंवा
दायपुनस्तमप्यापृच्छ्यनिश्चितार्थोहम् ॥ आस्पदंस्वाश्रमम ॥ १३ ॥ हेराममयालघुशीघ्रमेवबोधनेनोत्थमुत्पन्नंविद्याधरस्योपशमनंबलिभुजःकाकस्यभुशुंडस्यकथयाउक्तं

अहंभावनमेवोच्चैर्बीजंदुःखाख्यशाल्मलेः॥ममेदंतद्वदादीतिशाखाप्रसरकारणम्॥८॥अहमादौममेत्यंतस्ततइच्छाप्रवर्त्तते॥इदमर्थ
शतानर्थकारिणीभवभारिणी ॥ ९ ॥ एवंविधामुनिश्रेष्ठमूढाअपिचिरायुषः॥भवंत्यनियमोऽयंगदीर्घायुष्यस्यकारणम्॥ १० ॥ अंतः
शुद्धमनस्कायेसुचिरायाभयप्रदम्॥ मनागप्युपदिष्टास्तेप्राप्नुवंतिपरंपदम्॥ ११ ॥ ॥श्रीवसिष्ठउवाच॥ ॥मेरुमूर्द्धनिमामेवमुक्त्वा
सविहगाधिपः॥तूष्णींबभूवमुक्तात्माऋष्यमूकइवांबुदः॥ १२ ॥ अहमापृच्छ्यतंसिद्धंविद्याधरमथोपुनः॥प्राप्तआत्मास्पदंराममुनि
मंडलमंडितम्॥ १३ ॥ एतत्तवाद्यकथितंबलिभुक्कथोक्तंविद्याधरोपशमनंलघुबोधनोत्थम्॥ अस्मिन्भुशुंडविहगेंद्रसमागमेमेचै
कादशेहहिगतानिमहायुगानि॥ १४ ॥ ॥इ॰वा॰वा॰दे॰मो॰नि॰उ॰ विद्याधरोपाख्यानेविद्याधरनिर्वाणंनामषोडशःसर्गः॥ १६ ॥
श्रीवसिष्ठउवाच ॥ ॥ अनहंवेदनादेवंशुभाशुभफलप्रदा ॥ संसारफलिनीनूनमिच्छांतरुपशाम्यति ॥ १ ॥ अनहंवेदनाभ्यासात्सम
लोष्टाश्मकांचनः॥भूत्वाशांतभवापीडोननरःपरिताम्यति॥ २ ॥ अहंतापुटकोड्डीनपरबोधबलेरितः॥ अहमित्यर्थपाषाणोनजानेका
शुगच्छति॥ ३ ॥

॥ इतिश्रीवासिष्ठ॰म॰तात्प
तवाद्यकथितम् ॥ अस्मिन्वर्णितेभुशुंडविहगेंद्रसमागमेमेजातेतदनंतरमिहअस्मिन्कल्पेएकादशमहायुगानिदिव्ययुगानिगतानीत्यर्थः ॥ १४ ॥
र्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेषोडशःसर्गः ॥ १६ ॥ ॥ ७ ॥ ॥ अत्राहंबीजनिर्दाहादनहंभावववह्निना ॥ देहादिसंसृतेःसम्यग्बाधेऽलीकत्वमीर्यते ॥ १ ॥ सर्वसंसृतेः
काममूलत्वादनहंभावनप्रथमंतन्निवृत्तिमाह ॥ अनहमिति ॥ १ ॥ कामोपरमेलोभादिदोषक्षयाद्वैराग्यादिसंपदासर्वमानसदुःखक्षयइत्याह ॥ अनहमिति ॥ २ ॥ साधनवतो
ऽवश्यश्रवणादिनाज्ञानोदयेब्रह्मव्यतिरिक्ताहमर्थस्यबाधेनालीकत्वमेवपर्यवस्यतीत्याशयेनाह ॥ अहंतेति ॥ श्रवणादिनाज्ञाननिर्मथनाभ्यासेनअहंतालक्षणात्पुटा
कादेववह्निज्वालावदुड्डीनआविर्भूतोयःपरब्रह्मसाक्षात्कारलक्षणोबोधस्तद्बलेनईरितःक्षिप्तोनिरस्तइतियावत् ॥ अहमाविदर्थपाषाणोऽप्रियंप्रक्षिप्तपाषाणइवाशुक्वगच्छ
तिनजाने ॥ तुच्छत्वमेवापद्यतइतिभावः ॥ ३ ॥

---

१ अयमर्थोमूलस्यदुःखाख्येत्यादेः ॥ २ उत्तरार्धस्यादीत्यस्यायमर्थः ॥

चरमसाक्षात्कारवृत्त्यारूढंब्रह्मैवाज्ञानाहंकारादिनिरासनसमर्थमित्याशयेनाह ॥ अहंतेति॥ अज्ञानाहंकारयोरिवस्थूलदेहस्यापिव्यष्टिसमष्टिरूपस्यतादृशंब्रह्मैवनिवर्त्तकमित्याशयेनाह ॥ अहंतेति ॥४॥ ब्रह्मैववीरोविक्रांतस्तद्बलेरितः ॥ पूर्वापरप्रथमचरमजघन्यसमानमध्यममध्यमवीराश्चेतिसमानाधिकरणसमासेवीरशब्दपरनिपातश्छांदसः ॥५॥ अनहंताभावनावृत्तिप्रतिफलितचितैवाहंतानाशइतिपक्षोवास्त्वित्याशयेनाह ॥ अहमर्थेतिद्वाभ्याम् ॥६॥ उद्वर्णात्ब्रह्मविद्याधिकारिब्राह्मणाद्युत्कृष्टवर्णात्परिपाकपांडुराच्च ॥७॥ अथवानबाधिताहंतादेःशून्यताकिंतुब्रह्मतैवेत्याशयेनाह ॥ शरीरेति ॥ अनहंतालक्षणेनार्करश्मिमार्गेणपरतांब्रह्मतांस्वकारणसूक्ष्मजलात्मतांच ॥ ८ ॥ तत्त्वज्ञानंविनातुनकापिकदापिकस्यांचिदवस्थायांदेहस्याहंकारस्यवाआत्यंतिकोच्छेदस्तयोःपरस्परबीजतयापरस्परांतःसत्वेनजगद्भावेनसर्वत्रोद्भवावर्जनादित्याह ॥ शयनेइत्यादिना ॥ शयनेशय्यायांस्थूलादिद्वादशावस्थाप्रामाशयनादिस्थानसप्तकेयत्रतत्रस्थितापिशरीरलक्षणावटधानाअंतःस्थितउद्भूतोऽहंत्वनवांकुरोयस्यास्तथाविधासतीक्षणादिदंसंसाराख्यमाशु

अहंतापुटकोड्डीनब्रह्मवीरबलेरितः॥ अहमित्यर्थपाषाणोनजानेक्काशुगच्छति॥ ४॥ अहंतापुटकोड्डीनोब्रह्मवीरबलेरितः॥ शरीरयंत्रपाषाणोनजानेक्काशुगच्छति ॥ ५॥ अहमर्थहिमंत्वंतरनहंताचिदर्चिषा॥ उड्डीयेवविलीनंसन्नजानेक्काशुगच्छति॥ ६॥ अहंरसोविलीनोंतरनहंताचिदर्चिषा॥ शरीरपर्णाद्रुद्वर्णान्नजानेक्काशुगच्छति॥ ७॥ शरीरपर्णान्निष्पीतस्त्वहंभावरसासवः॥ अनहंतार्कमार्गेणपरतामधिगच्छति॥ ८ ॥ शयनेकर्दमेशैलेगृहेव्योम्निस्थलेजले॥ स्थूलासूक्ष्मानिराकारारूपांतरगतापिच॥ ९॥ यत्रतत्रस्थितासुप्ताप्रबुद्धाभस्मतांगता॥ धृतानीतानिमग्नाचदूरस्थानिकटासती ॥ १०॥ शरीरवटधानांतःस्थिताहंत्वनवांकुरा॥ शाखाजालंतनोत्याशुसंसाराख्यमिदंक्षणात्॥ ११ ॥ अहंत्ववटधानांतःस्थितदेहबृहद्द्रुमः॥ संसारशाखानिवहंयत्रतत्रतनोत्यलम्॥ १२॥ शाखाशतेद्धदलपुष्पफलद्रुमोस्तिबीजोदरेननुदशापरिदृश्यतेसौ॥ देहोस्त्यहंत्वकणिकांतरशेषदृश्यसंवित्परीतइतिबुद्धिदृशैवदृष्टम्॥ १३॥ देहादहंत्वमनवाप्तवतोविचारैश्चिद्व्योममात्रवपुषोवपुषोऽथवोच्चैः ॥ नाहंत्वबीजजठरादसतोभ्युदेतिसंसारवृक्षइहबोधमहाग्निदग्धात्॥ १४॥

इ॰ वा॰ वा॰ दे॰ मो॰ नि॰ उ॰ अहंत्वासत्तायोगोपदेशोनामसप्तदशःसर्गः॥ १७॥ ॥ ६॥ ॥ ६॥

सर्वदिग्व्यापनशीलंशाखाजालंतनोतीतितृतीयेनान्वयः ॥ ९ ॥ १० ॥ ११ ॥ एवमहंत्वलक्षणवटधानांतःस्थितोदेहमहाद्रुमोपिबोध्यइत्याह ॥ अहंत्वेति ॥१२॥ उक्तमर्थंवटादिबीजदृष्टांतेनैवानुभावयति ॥ शाखेति ॥ यथाबीजोदरेशाखाशतेइद्धानिविराजमानानिदलानिपुष्पाणिफलानिचयस्यतथाविधोद्रुमोऽस्तियतोऽसौसत्वादेवबीजपुटंभित्त्वांकुरादिक्रमेणनिर्गच्छन्प्रत्यक्षंसर्वजनैःपरिदृश्यते ॥ नन्वितिप्रसिद्धौ ॥ तथाअहंत्वलक्षणायाकणिकासूक्ष्मबीजंतदंतरशेषदृश्यसंवीतोदेहोस्तीतिसूक्ष्मबुद्धिलक्षणयादृशैवविद्वद्भिर्दृष्टमित्यर्थः ॥ १३ ॥ एवमविचारफलंसर्वत्रानिर्मोक्षमुक्त्वाविचारफलंमोक्षमाह ॥ देहादिति ॥ विचारैःश्रवणादिभिस्तत्त्वबोधाच्चिद्व्योममात्रंवपुःस्वरूपंयस्यतथाविधस्यजीवन्मुक्तस्यविद्यमानादपिदेहादहंत्वंतत्तादात्म्याभिमानमनवाप्तवतःअथवाअदेहवतोविदेहमुक्तस्योच्चैर्निरतिशयानंदेप्रतिष्ठितस्यपुंसोबोधमहाग्निदग्धादहंत्वबीजजठरात्संसारवृक्षोनाभ्युदेति ॥ १४ ॥ ॥ इतिश्रीवासिष्ठ॰ म॰ तात्पर्यप्रकाशेनिर्वाणप्रकरणेउ॰ सप्तदशःसर्गः ॥ १७ ॥ ॥ ७ ॥

उह्यमानान्यनंतानिपवनैःसर्वतोंबरे ॥ मृतजीवमनःस्थानिवर्ण्यंतेत्रजगंतिहि ॥ १ ॥ देहोस्म्यहंत्वकणिकांतरशेषदृश्यसंवित्परीतइतिबुद्धिदृशैवदृष्टमितियदुक्तंतत्रकथमस्तिकीदृशीसाबुद्धिदृगितितदुभयंमृतजीववासनामयानंतजगदुत्पादनेनसमर्थयितुंभूमिकांरचयति ॥ मरणमिति ॥ मनोबुद्ध्यहंकारादिसर्वनाशात्मकंमरणमितिपामरामन्यंते ॥ तथातुकदाचिदपिनविद्यते कृतहानादिदोषप्रसंगात् ॥ किंतुमनुष्यादिशरीरात्मभावभोजकप्रारब्धक्षयेतदनुरूपसंकल्पतिरोभावेदेवादिशरीराहंभावादिभोजककर्मोद्भवेतदनुरूपस्वसंकल्पांतरस्यतद्भोजकादृष्टक्षयपर्यंतंस्थैर्यंपूर्वभावविस्मृतिमपेक्ष्यमृतिरित्यभिधीयतइत्यर्थः ॥ १ ॥ अस्त्वेवंकिंततस्तत्राह ॥ पश्येति ॥ एवंचतत्तज्जीवसंकल्पकल्पितजगत्स्थामंदरमेरुप्रभृतयोदिक्षुवातैःसर्वत्रउह्यंतेप्रवाह्यंतइवमयादृश्यंतेत्वमपिपश्येत्यर्थः ॥ २ ॥ उपर्युपरिबहिर्बहिःयावतांजीवानांभोजकादृष्टसाम्यंतावतांश्लिष्टाएकीभावेनमिलिता अन्ये

श्रीवसिष्ठउवाच ॥ ॥ मरणंसर्वनाशात्मनकदाचनविद्यते ॥ स्वसंकल्पांतरस्थैर्यंमृतिरित्यभिधीयते ॥ १ ॥ पश्यमेपुरउह्यंतइवमंदरमेरवः ॥ अरूढाअपिदिग्वातैःसरिद्बिंबितशैलवत् ॥ २ ॥ उपर्युपर्यंतरंतःकदलीदलपीठवत् ॥ श्लिष्टाश्लिष्टस्वरूपाःखेमिथःसंस्तृतयःस्थिताः ॥ ३ ॥ ॥ श्रीरामउवाच ॥ ॥ पश्यमेपुरउह्यंतइतिवाक्यार्थमक्षतम् ॥ नकिंचिदवगच्छामियथावन्मुनिनायक ॥ ४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ प्राणस्याभ्यंतरेचित्तंचित्तस्याभ्यंतरेजगत् ॥ विद्यतेविविधाकारंबीजस्यांतरिवद्रुमः ॥ ५ ॥ मृतेपुंसिनभोवातैर्मिलंतिप्राणवायवः ॥ सरिज्जलैरिवांभोधिजलान्यात्मद्रुतानिहि ॥ ६ ॥ इतश्चेतश्चयांतीवतेषामंतर्जगंत्यलम् ॥ व्योमवातविनुन्नानांसंकल्पैकात्मकान्यपि ॥ ७ ॥ सप्राणवातैःपवनैःस्फुरत्संकल्पगर्भितैः ॥ सर्वाएवदिशःपूर्णाःपश्यामीमाःसमंततः ॥ ८ ॥ अत्रैतेपश्यपश्यामिसंकल्पजगतांगणे ॥ बुद्धिदृष्ट्यासमुह्यंतेपुरोमंदरमेरवः ॥ ९ ॥ खवातेंतर्मृतप्राणाःप्राणानामंतरेमनः ॥ मनसोंतर्जगद्विद्धितिलेतैलमिवास्थितम् ॥ १० ॥ खवातैःखसमाःप्राणायथोह्यंतेमनोमयाः ॥ उह्यंतेवैतथैतानितदंगानिजगंत्यपि ॥ ११ ॥ सभूतान्यंबरोर्व्यादिद्वंद्वानित्रिजगंत्यपि ॥ उह्यंतेचाप्यरूढानिपुरःसर्वत्रगंधवत् ॥ १२ ॥

पामश्लिष्टस्वरूपाः ॥ ३ ॥ उक्तमर्थमसंभावयन्रामःपृच्छति ॥ पश्येति ॥ यथावत्कथयेतिशेषः ॥ ४ ॥ मृतानांपुरुषाणांप्राणास्तावन्नभस्युत्क्रामंतीतिलोकवेदप्रसिद्धम् ॥ तद्यदिप्राणाःसंतितर्हिप्राणस्याभ्यंतरेचित्तंचित्तस्याभ्यंतरेजगदपिविद्यतेइतिसंभावयेत्यर्थः ॥ ५ ॥ संतुनामतथापिदिग्वातैःकथंप्रवाह्यंतेतत्राह ॥ मृतेइति ॥ पुंसिमृतेसतितत्तउत्क्रांताःप्राणवायवोबाह्यनभसिपूर्णैर्वातैःसहमिलंति ॥ यतस्तान्यप्यात्मनिद्रुतानिद्रवस्वभावानि अतःसमस्वभावानांमेलनेएकतैवभवतीत्यर्थः ॥ ६ ॥ अतोव्योमवातैर्विशेषेणनुन्नानामाकृष्टानांतेषांप्राणानामंतर्गतानिजगंत्यपिइतश्चेतश्चयांतीवेत्युह्यंतइवेत्युक्तिरित्यर्थः ॥ ७ ॥ ८ ॥ अहंपश्यामित्वमपिबुद्धिदृष्ट्यापश्य ॥ ९ ॥ खेविद्यमानेवातेंतर्मृतानांप्राणाः ॥ १० ॥ ननुगुरूणिजगंतिकथंवातैरुह्यंतेतत्राह ॥ खवातैरिति ॥ तथाप्राणवदेवतदंगानिजगंत्यपिखसमानिलघूनीत्युह्यंतइत्यर्थः ॥ ११ ॥ सभूतानिचतुर्विधप्राणिसहितानि ॥ अरूढानिअदृढानि अप्रतिष्ठितानीतियावत् ॥ १२ ॥

दृष्ट्याचक्षुरादिनास्वीयस्वप्नदृष्टपुरवत्तादृशपूरवद्वातादृशपुरांतर्गतनदीपूरवद्वा ॥ १३ ॥ उत्सन्नइवेतियदुक्तम् तत्रइवकारार्थसमर्थनायाह ॥ कल्पनामात्रसारत्वादिति ॥१४॥ यद्यपितानिकल्पनामात्रत्वान्नसंत्येवेतिनोत्संते तथापितान्येवतेषुतत्तज्जीवभोग्येषुस्वेषुस्वर्गनरकभूम्यादिलोकेषुतेषांदृढभावत्वात्सुखदुःखभोगार्थक्रियासमर्थतयासत्यान्येव तत्सत्यतासंपादकस्याधिष्ठानचिदंशस्यसर्वगत्वात् यथाभवानस्मद्दृष्ट्याश्रवणधारणाद्यर्थक्रियासमर्थःपुरोवर्त्तीसत्यस्तद्वदेवेत्यर्थः ॥ १५ ॥ अरूढानिवासनामात्रत्वादनाविर्भूतानिरूढान्याविर्भूतानिचेत्थमुत्संतेनैवचोत्संते ॥ १६ ॥ सौक्ष्म्येवहनेचसौरभसाम्यंप्रागुक्तमित्याह ॥ सौरभाणीति ॥ १७ ॥ अतएवत्रिजगद्भ्रमात्मनाचित्तस्यस्पंदभेदयोरपि नात्मनस्ताविल्याह ॥ कुंभेइति ॥ तथैवात्मनिनान्यतेतिशेषः ॥ १८ ॥ यथामृतानांजगत्संकल्पमात्रत्वादसदित्यंततवापिजगदसत् ॥ भ्रांतिरेवकेवलमुदितेव ॥ साभ्रांतिरपिप

तानिबुद्ध्यैवदृश्यंतेनदृष्ट्यारघुनंदन ॥ पुरःसंकल्परूपाणिस्वस्वप्नपुरपूरवत् ॥ १३ ॥ सर्वत्रसर्वदासंतिसुसूक्ष्माण्येवखादपि ॥ कल्पनामात्रसारत्वान्नचोत्संतेमनागपि ॥ १४ ॥ तान्येवदृढभावत्वात्स्वेषुलोकेषुतेष्वलम् ॥ सत्यान्येवचिदंशस्यसर्वगत्वाद्भवानिव ॥ १५ ॥ प्रतिबिंबपुराणीवपुरःप्राणसरिद्रये ॥ अरूढान्यपिचोत्संतेरूढान्यपिचनैवच ॥ १६ ॥ सौरभाणिसमुत्संतेवातांगस्थानिराघव ॥ जगंतिप्राणसंस्थानिव्योमात्मकमयानितु ॥ १७ ॥ कुंभेदेशांतरंनीतेयथांतर्व्योम्निनान्यता ॥ स्पंदनादिमयेचित्तेतथैवत्रिजगद्भ्रमे ॥ १८ ॥ इत्थंनसज्जगद्भ्रांतिरसत्यैवोदितेवते ॥ नविनश्यतिनोदेतिकेवलंब्रह्मरूपिणी ॥ १९ ॥ यदिवाप्युदितेवातैस्तत्तदस्यानलक्ष्यते ॥ तदंतःसंस्थितैःस्पंदोनाविकोशगतैरिव ॥ २० ॥ यथास्पंदोंगलग्नायांनाव्यंतःसंस्थितैरपि ॥ नलक्ष्यतेतथापृथ्व्यांतत्संस्थैस्तन्मयैरपि ॥ २१ ॥ यथायोजनविस्तीर्णलघौसद्मानुभूयते ॥ यत्तस्यपादपस्तंभेपरमाणौयथाजगत् ॥ २२ ॥

रमार्थतोनविनश्यतिनोदेतीतितत्त्वदृष्ट्याब्रह्मरूपिण्येवेत्यर्थः ॥१९॥ ननुयदिव्यवहारदृशाजगत्तद्भ्रांतीवाप्यंतःप्रवहमानेउदितेतर्हिवयंपृथिवीनिश्चलतयाकथंपश्यामस्तत्राह ॥ यदिवेति ॥ नोदितेएव यदिवाउदितेइतिपक्षस्तथापिवातैःकृतंतत्तद्भ्रमणपरिवर्त्तनादिकमस्याःपृथिव्यास्तदंतःसंस्थितैरस्माभिर्नलक्ष्यते ॥ यथानाविजायमानःस्पंदस्तदंतःकोशगतैर्नरैर्नलक्ष्यते तद्वदित्यर्थः ॥ २० ॥ तदेवस्पष्टमाह ॥ यथेति ॥ यथानाविअंतः संस्थितैरपिशब्दात्तन्मयैरपिकीलाद्यैर्नौस्पंदोनलक्ष्यतेतद्वत्पृथिवीसंस्थैःपार्थिवदेहादिमयैरप्यस्माभिरित्यर्थः ॥ २१ ॥ इत्थंपश्येमेपुरउत्संतइवमंदरमेरवइतिस्वोक्तिंरामायोपपाद्यउपर्युपर्यंतरंतःकदलीदलपीठवदित्युक्तावप्यल्पेबृहतःसमावेशंप्रथमंबृहतोल्पत्वकल्पनयादर्शयति ॥ यथेति ॥ यथायोजनविस्तीर्णमपिसद्मलघौपादपस्तंभेचित्रनिर्व्यूहरचनादिनारचयितुंयत्तस्ययतमानस्यशिल्पिनोबुद्ध्याअल्पत्वकल्पनयातत्रानुभूयतेतथाअंतरंतःसूक्ष्मतमेपिपरमाणौजगद्बुद्धिकल्पनयाऽनुभूयतइत्यर्थः ॥ २२ ॥

१ अयंपाठएकत्रदृष्टोयमेवयुक्तइतिभाति ॥ यद्यपिपुस्तकांतरेषुतथाब्रह्मंस्तत्संस्थैरितिदृश्यतेपाठस्तथापिब्रह्मन्नितिसंबोधनस्यरामंप्रत्ययोग्यत्वादुपेक्षितः

परमाण्वादेर्बृहत्तमत्वकल्पयानवात्रबृहतोजगतःसमावेशोनुभवितव्यइत्याशयेनाह ॥ वस्त्विति ॥ तद्यथारत्नकोशागारेप्रविष्टाअस्वाधनसंबंधशून्यामूषिकानरत्नानिबहुम न्यंतेकित्वंजलिमात्रमितमपिधान्यद्रव्यमेवतत्रदैवाल्लब्धंबहुमन्यंते यथावाअर्भकाबहुमूल्यान्यपिस्वाभरणानिनित्यमनुभूयमानानिनबहुमन्यंतेकिंतुनवमपूर्वंमृगपक्ष्याका रंवर्णकादिपरिष्कृतंपंकमृत्पिंडमेवक्रीडनायबहुमन्यंते येनतद्दानेनवंचिताःस्वाभरणान्यपिविनिमयेनप्रयच्छंतीत्यर्थः ॥ २३ ॥ किंचवास्तवोल्पेबृहतःसमावेशोनसंभवतुनाम भ्रांत्यातुसंभवत्येवेत्याशयेनाह ॥ असत्येवेति ॥ विदःअज्ञानावृतचितोजगदाख्येभ्रमेअसत्येवार्थेकेवलंजीवतोऽयंलोकोमृतस्यलोकांतराणितत्रचधर्माधर्मफलानीत्यादिमयी बृहंगस्यबृंहणंगच्छतश्चित्तस्यसासंकल्परूपाभावनैव ॥ नचभावनांवस्त्वन्यथाभावोनिरुणद्धीत्यर्थः ॥ बृंहधातोर्घञर्थेकविधानमितिभावेकः ॥ ततोऽन्येष्वपिदृश्यतइतिगमे र्डः ॥ बाहुलकान्नुम् ॥ २४ ॥ ननुमूढानामस्त्वंतरंतर्जगद्भ्रमभावनासर्वज्ञानांभवदादीनांकथमंतरंतर्जगदंतरमस्तीतिभ्रांतिस्तत्राह ॥ इदमिति ॥ सर्वज्ञस्यापिभवायव्यवहार

**वस्त्वल्पमप्यतिबृहल्लघुसत्वोहिमन्यते॥ मूषिकाःस्वांजलिद्रव्यंनवपंकमिवार्भकाः॥२३॥ असत्येवस्वरूपेस्मिन्जगदाख्येविदोभ्रमे॥ लोकांतराधर्ममयीसाबृहंगस्यभावना॥ २४॥ इदंहेयमुपादेयमिदमित्यंतरज्ञता॥ यस्यतस्यभवायास्तिसर्वज्ञस्यापिमूढता॥ २५॥ सचेतनोह्यवयवीचेतत्यवयवान्यथा॥ स्वांतरेवततंजीवस्त्रिजगद्बुध्यतेतथा॥२६॥ संविदात्मपराकाशमनंतमजमव्ययम्॥ व्योमेव यवरूपाणितस्येमानिजगंतिभोः॥ २७॥ सचेतनोयःपिंडोंतःक्षुरसूच्यादिकंयथा॥ बुध्यतेबुध्यतेतद्वज्जीवोज्ञस्त्रिजगद्भ्रमम्॥ २८॥ अचिच्चिद्वापिमृत्पिंडःशरावोदंचनादिकम्॥ यथांगमनुतेजीवस्तथांगमनुतेजगत्॥ २९॥ चिदचिद्वांकुरोदेहेवृक्षत्वंमन्यतेयथा॥ वृक्षशब्दार्थरहितंब्रह्मेदंत्रिजगत्तथा॥ ३०॥**

संभवाययावत्प्रारब्धक्षयंलेशतोनुवर्त्तमानामूढताऽस्त्येवेत्यर्थः ॥ २५ ॥ अतएवसर्वज्ञस्यापिसमष्टिजीवस्यहिरण्यगर्भस्यावयववत्स्वांतरेवत्रिजगद्दर्शनमित्याह ॥ सचेतनइ ति ॥ अवयवीदेहात्मालौकिकपुरुषः ॥ जीवःसमष्टिजीवः ॥ २६ ॥ मायोपहितईश्वरस्त्वेवंपश्यतीत्याह ॥ संविदात्मेति ॥ भोइतिसंबोधनेनरामस्तत्स्मार्यते ॥ २७ ॥ ईश्वरः प्रलयकालेकथंस्वांतर्गतंजगत्पश्यतितत्राह ॥ सचेतनइतिचतुर्भिः ॥ अयःपिंडोयदिसचेतनःस्यात्तर्हियथास्वांतःसूक्ष्मरूपेणस्थितंक्षुरसूच्यादिभाविस्वविकारंपश्येत्तद्वदित्यर्थः॥ जीवःस्वलीनसर्वसंस्कारोपहितःसन् ॥ २८ ॥ अधिष्ठानसद्रूपप्राधान्येनचित्आरोपितमृदादिरूपप्राधान्यविवक्षयाअचिद्वा ॥ तात्पर्यंपूर्ववदेव ॥ २९ ॥ उपहितप्राधान्येन चित्आरोपितमृदादिरूपप्राधान्येनाचिद्वांकुरः ॥ एतावांस्तुविशेषः ॥ जीवसंस्कारोपहितरूपेणवृक्षशब्दार्थसहितंबुध्यतेतदनुपहितेश्वररूपेणतुतद्रहितमनादिसिद्धयाविषया वाबाधितरूपमितियावत् ॥ शेषंप्राग्वत् ॥ ३० ॥

---

१ मूलस्याधर्मपदमुपलक्षणंधर्मस्येत्यर्थः ॥

परिणामदृशाजीवेश्वरयोःसर्गासर्गकालेजगद्दर्शनेदृष्टांतमुक्त्वाविवर्तदृशाप्याह ॥ चिद्वेति ॥ जीवेश्वरोपाध्युपहितदृशावेत्तिअनुपहितशुद्धदृशातुनोवेत्ति ॥ यत्रनान्यत्पश्यतीत्यादिश्रुतेरितिभावः ॥ ३१ ॥ एवंरामप्रश्नान्समाधायप्रासंगिकंचसर्वंसमाप्यनाहंत्वजगतीभिन्नेपवनस्पंदनेयथेतिप्राक्प्रस्तुतार्थंप्रकारांतरेणसमर्थयितुमनुसंधत्ते ॥ देशेति॥ अहंत्वमपिदेशकालक्रियाद्रव्यतादात्म्यसंसर्गाभिमानात्मकत्वात्तद्रूपमेवेत्येतदात्मनोःसमानस्वभावत्वादपिभेदोनास्तीत्यर्थः ॥ ३२ ॥ एतदनुभावयितुमेवश्रुत्यामयाचमृल्लोहपिंडादिदृष्टांताअचेतनाअपिचेतनत्वमारोप्यैकदेशसाम्येनोपन्यस्ताइत्याह ॥ कल्पितेनेति ॥ ३३ ॥ वास्तवब्रह्मभावलक्षणंपरमणुत्वंसौक्ष्म्यममुंचतएवविवर्तरूपंस्थूलंजगद्रूपमित्यर्थः ॥ ३४ ॥ अतएवाधिष्ठानदृष्ट्यासर्वविवर्तसंवेदनबाधेनिष्प्रत्यूहंसर्वतःशुद्धात्मप्रसरप्रदेपूर्णपदेनमनागपिजीवजगद्भेदोस्तीत्याह ॥ सर्वेति ॥ ३५ ॥ अबाधेतुसदा

चिद्वाचिद्वायथादर्शोबिंबितंवाप्यबिंबितम्॥ नगरंवेत्तिनोवापितथाब्रह्मजगत्त्रयम्॥३१॥देशकालक्रियाद्रव्यमात्रमेवजगत्त्रयम्॥ अहंत्वजगतोस्तेनभेदोनास्त्येतदात्मनोः ॥ ३२ ॥ कल्पितेनोपमानेनयदेतदुपदिश्यते॥ तत्रोपमैकदेशेनउपमेयसधर्मता॥ ३३॥ यदिदंदृश्यतेकिंचिज्जगत्स्थावरजंगमम्॥ अमुंचतःपराणुत्वंजीवस्यैतत्स्मृतंवपुः ॥ ३४॥ सर्वसंवेदनत्यागेशुद्धसंस्पंदनेपदे॥ नमनागपिभेदोस्तिनिःसंगोपलकोशवत्॥ ३५॥ योयोनामविकल्पांशोयत्रयत्रयथायथा॥ यदायदायेनयेनदीयतेसतथैवचित् ॥ ३६॥ अचित्त्वान्नास्तिमनसिसंकल्पःखइवांकुरः॥ चित्त्वात्तुचेतसोविद्धिचितिरेवेहकल्पनम् ॥ ३७॥ यायोदेतिविकल्पश्रीरप्रबुद्धाशयंप्रति॥ सर्वगत्वादनंतत्वाच्चिद्व्योम्नःसानसन्मयी॥३८॥ यथोदेतिविकल्पश्रीःप्रबुद्धेनोदितैवसा॥ सर्वगत्वादनंतत्वाच्चिद्व्योम्नःसानसन्मयी ॥ ३९॥ सर्वसंकल्पकलनासत्येत्याबालमक्षतम् ॥ स्वप्नादावनुभूतोंतरर्थःकेनापिलभ्यते॥ ४० ॥ संकल्पोवासनाजीवस्त्रयोर्थालिखिताश्चिता॥ सोनुभूतोप्यसत्यःस्यादसत्वस्यैवनोसतः॥ ४१ ॥

सर्वत्रसर्वविकल्पात्मनैवचिद्विवर्ततइत्याह ॥ योयइति ॥ दीयतेमूढेनेतिशेषः ॥ चित्तथैवतद्विकल्पानुसारेणैवसविवर्त्ताभवतीत्यर्थः ॥ ३६ ॥ मनसोपिचिदनुप्रवेशादेवविचित्रसंकल्पसामर्थ्यंनस्वतइतिचितएवसर्वविवर्तस्वातंत्र्यमित्याह ॥ अचित्त्वादिति ॥ ३७ ॥ ३८ ॥ एवमप्रबुद्धेउदितापिप्रबुद्धेतत्त्वेनोदितैव अनंतत्वात्कालवस्तुकृतपरिच्छेदशून्यत्वाच्च ॥ ३९ ॥ यद्यसन्मयीतर्हिकथमाबालगोपालंसत्येवभातितत्राह ॥ सर्वेति ॥ नजाग्रत्संकल्पकलनैवसत्येतिभातिकिंतुस्वप्नादिसाधारण्येनसर्वापि ॥ नचस्वप्नभ्रांत्यादावुपलब्धोगजरजतादिरर्थःकेनापिलभ्यतेइतिकाक्कायोज्यम् ॥ ४० ॥ ननुसत्यःसंसारःकथमसत्यःस्यात्तत्राह ॥ संकल्पइति ॥ जाग्रत्स्वप्नौसंकल्पःसुषुप्तिस्तुवासनामात्रंतदुभयप्रतिबिंबितचिद्रूपस्तदुभयभोक्ताजीवश्चेतित्रयःपदार्थाःसत्यकूटस्थचितास्वात्मनिचित्रवल्लिखिताःसोयंचित्रसंसारकल्पःसंसारोऽधिष्ठानसत्तयासत्यइत्यनुभूतोप्यसत्यस्यजीवस्यैवेत्यसत्यःस्यान्नत्वधिष्ठानसतः॥तेनतदसंस्पर्शादित्यर्थः॥यथाचित्रप्रतिबिंबस्वप्नाश्वाश्चित्रप्रतिबिंबस्वप्नपुरुषाणामसत्यानामेववाहनंनसत्यपुरुषस्यतद्वदितिभावः॥४१॥

ब्रह्मवाइदमग्रआसीदित्यादिश्रुतेरस्तुवासत्यस्यैवस्वावबोधात्संसारस्तथापितन्नित्यमुक्तमेव यथाहितत्सत्यंब्रह्मप्राक्तत्त्वबोधात्स्वसत्यतांजगतिसंक्रामयत्तत्सत्यताभिधंस्वयंभव ति तथातत्त्वबोधोत्तरंबाधिताज्जगतःस्वसत्तांस्वात्मन्युपसंहरत्तदसत्यताभिधमपिभवति ॥ नहिप्रपंचस्याधिष्ठानमात्रपरिशेषादन्याअसत्यताकाचित्सुवचा ॥ यतआतिवाहि कदेहसहितस्यैकस्यस्वाज्ञानस्यपरिक्षयेपिपूर्णतालक्षणविकासवान्मुक्तःप्रत्यगात्मैवशिवोभवेदित्यर्थः ॥ ४२ ॥ अतएवाज्ञानदृष्ट्यैवजगंत्युक्तंनेनतत्त्वदृशेत्युक्तमित्युपसंहरति ॥ जगंतीति ॥ ४३ ॥ इतिवर्णितरीत्याअस्मिन्नखिलपदार्थसमूहानांकोशभूतेअज्ञातेप्रतीचिपरमार्थतोऽतिवितते व्योमनिशून्याकाशकल्पेप्यविषयाअनंतानिजगंतिसंति तानि चकतिपयानांजीवानांभोजकादृष्टसाम्येजागरेब्रह्मांडैक्येचअन्योन्यंपरिमिलितानि तद्वैषम्येतुब्रह्मांडभेदेस्वप्नेचनान्योन्यंपरिमिलितानीत्यर्थः ॥ ४४ ॥ तान्येवविशिनष्टि स

असत्यताभिधंसत्यंमुक्तएवभवेच्छिवः॥ सातिवाहिकदेहैकपरिक्षयविकासवान्॥ ४२॥ जगंतिवातैरुह्यंतेव्योम्निशाल्मलितूलवत्॥ नोह्यंतेचोपलानीवनचसंत्येवकल्पनात्॥ ४३॥ इत्यस्मिन्नखिलपदार्थसार्थकोशेव्योमन्यप्यतिवितते जगंतिसंति॥ अन्योन्यंपरिमिलितानिकानिचिच्चनान्योन्यंपरिमिलितानिकानिचिच्च॥ ४४॥ सर्वत्वात्परमचितेरनंतरूपाण्यारंभप्रचुरदिगंतसंभृतानि॥ लोलांबूदरपुरबिंबभंगुराणिस्वांतःस्थाविरलमहापुरोपमानि॥ ४५ ॥ सस्थैर्याण्यपिसततंक्षणक्षयाणिव्यक्ताक्षाण्यपिसततंनिमीलितानि॥ सालोकान्यपिपरितस्तमोवृतानिचिद्रूपार्णवलहरीविवर्त्तनानि॥ ४६॥ पृथक्स्थितानिव्यतिमिश्रितानिजलानिचैवांबुनिधौनदीनाम्॥ तारार्कचंद्रग्रहमंडलानांसमोदितानांनभसीवभासः॥ ४७॥ ॥ इत्यार्षे० वा० वा० दे० मो० नि० उ० जगज्जालकोशसाधर्म्ययोगोपदेशोनामाष्टादशःसर्गः॥ १८॥ ॥ ७॥

र्वत्वादित्यादित्रिभिः ॥ परमचितेर्ब्रह्मणःसर्वत्वात्सर्वशक्तित्वादियत्तासंकोचकाभावाद्गणतोवस्तुतःक्रियाजात्यादितश्चानंतरूपाणि ॥ बहुविधकार्यारंभप्रचुरैर्दिगंतसंस्थितज नैःसंभृतानि ॥ लोलेअंबूदरेप्रतिबिंबितंपुरबिंबमिवभंगुराणि ॥ अतएवस्वांतःस्थान्यविरलानिसर्वसंभारसंभृतानियानिदेवगंधर्वादिमहापुराणितान्येवोपमायेषांतानि ॥ ४५ ॥ अनुवृत्तवस्त्वात्मनासस्थैर्याण्यपिव्यावृत्तभावविकारैःक्षणक्षयाणि ॥ एवंजागरेव्यक्ताक्षाण्यपितत्त्वतोव्यक्त्यभावान्निमीलितानि ॥ आत्मज्योतिषासालोकान्यपितस्या ज्ञानतमोवृतत्वात्तमोवृतानि ॥ ४६ ॥ पृथक्स्थितानांव्यतिमिश्रितत्वेव्यतिमिश्रितानांपृथक्स्थितत्वेचक्रमाद्दृष्टांतद्वयमाह ॥ पृथगिति ॥ नदीपात्रेपृथक्स्थितान्यप्यंबुनिधौ व्यतिमिश्रितानि नभसिसमकालमुदितानांतारादीनांभासस्तुइयमस्यभाइतिविवेक्तुमशक्यत्वाद्व्यतिमिश्रिताअपिएकचलनेअपरचलनाभावात्पृथक्स्थितास्तानीवताइवच ॥ ॥ ४७ ॥ ॥ इतिश्रीवासिष्ठ० मा० रा० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेअष्टादशःसर्गः ॥ १८ ॥ ॥ ७ ॥

जीवस्वरूपतत्त्वंसमष्टिव्यष्टिदेहयोः ॥ कल्पनंस्थानकरणभेदाद्भोगश्चवर्ण्यते ॥ १ ॥ यत्रूपंशास्त्रीयव्यवहारोपयुक्तंपारमार्थिकरूपंच ॥ आकृतिःस्थूलशरीरंतस्यग्रहणंकल्पनम् ॥ स्थानंबाह्यव्यवहारद्वारम् ॥१॥ तत्रसमष्टिजीवंमोक्षशास्त्रप्रसिद्धंशोधनेब्रह्माभेदयोग्यंप्रथमंदर्शयति ॥ स्वेति ॥ अनंतंयच्चेतनाकाशंब्रह्मतदेवहंताहमिमास्तिस्रोदेवता अनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीतिश्रुतिदर्शितस्वसंकल्पेनस्वचेत्यसूक्ष्मभूतोपाधिप्रवेशात्तद्विष्टंभकप्राणधारणाज्जीवप्राणधारणइतिधात्वर्थानुगमाच्चेत्येनप्राणेनोक्तंजीवइतिव्यपदिष्टम् ॥ चक्षुरादिद्वाराचेतयतीतिचित्चेतनःइत्यपरंनामयस्यतथाविधंसज्जीवशब्देनकथ्यतइत्यर्थः ॥ २ ॥ तस्यपारमार्थिकंरूपमाह ॥ नेति ॥ शून्यमाकाशंतदंतर्गतंवाकिंचनन ॥ ३ ॥ ४ ॥ तस्यसर्वगत्वमनुभावयति ॥ यस्ययस्येति ॥ योभावोजातिगुणसंस्थानाद्यसाधारणरूपंतेनतेनभावेनसंस्थितमतएवतत्तदिवआभासमानम् ॥ तत्कुतः ॥ तदेकांतवेदनात्पुनःपुनस्तद्दर्शनेतत्तदाकारेणैवभाननियमाद्धटचक्षुःसंयोगेहिचक्षुर्द्वारानिर्गतमंतःकरणंस्ववृत्तिव्याप्तघटावच्छिन्नंजीवचित्स्फुरणंघटोयंस्फुर

श्रीरामउवाच ॥ ॥ मुनेजीवस्ययद्रूपमाकृतिग्रहणंतथा ॥ यथाचपरमात्मत्वंस्थानंयच्चास्यतद्वद ॥१॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ स्वसंकल्पेनचेत्योक्तंचिदित्यपरनामकम् ॥ अनंतंचेतनाकाशंजीवशब्देनकथ्यते ॥ २ ॥ नपराणुर्नचस्थूलंनशून्यंनचकिंचन ॥ चिन्मात्रंस्वानुभूत्यात्मसर्वगंजीवउच्यते ॥ ३ ॥ अणीयसामणीयांसंस्थविष्ठंचस्थवीयसाम् ॥ नकिंचिन्मात्रकंचैवसर्वंजीवंविदुर्बुधाः ॥ ४ ॥ यस्ययस्यपदार्थस्ययोभावस्तेनतत्रतम् ॥ स्थितंविद्धितदाभासंतदात्मैकांतवेदनात् ॥५॥ सचेततियथायत्रयद्यदाशुतदेवहि ॥ तथातत्रतदारामभवत्यनुभवात्मकम् ॥ ६ ॥ पवनस्ययथास्पंदश्चैत्यंजीवस्यवैतथा ॥ स्वसंविन्मात्रनिर्णेयंनोपदेशामयक्षवत् ॥ ७ ॥ यथैवास्पंदनाद्वातःसन्नेवैत्यसदात्मताम् ॥ तथैवाचेतनाज्जीवोजीवन्नेतिपरांगतिम् ॥ ८ ॥ जीवश्चिद्घनरूपत्वादहमित्येवचेतनात् ॥ देशकालक्रियाद्रव्यशक्तीर्निर्मायतिष्ठति ॥ ९ ॥ देशकालक्रियाद्रव्यचर्चितार्चितांस्वयम् ॥ असत्यांसत्यवत्स्फारांतावन्मात्रशरीरिकाम् ॥ १० ॥

तिघटोयंस्फुरतीतिघटस्वभावतादात्म्येनैवयतोनियमेनानुभावयतीत्यर्थः ॥ ५ ॥ अतएवसमष्टिजीवोयत्रयथाचेततितत्रतथाभवति सत्यसंकल्पत्वात् ॥ व्यष्टिजीवस्तुसयत्रयथाभवतितत्रतथाचेतति ॥ ६ ॥ तथाचसमष्टिजीवस्यपवनस्यस्पंदइवसर्ववस्तुवैचित्र्यचेतनात्मकःसर्गःपवनस्पंदवत्स्वानुभवसिद्धःस्वभावोनतुबालस्ययक्षभ्रांतिवदुपदेशाभ्यासकृतइत्याह ॥ पवनस्येति ॥ नचोपदेशामउपदेशेननसाधयाम ॥ दिशतेर्विकरणव्यत्ययश्छांदसः ॥ ७ ॥ अतएवास्यमुक्तिसुषुप्तिप्रलयेषुबाह्याभ्यंतरार्थाचेतनेजीवतापिशाम्यतीत्याह ॥ यथैवेति ॥ परांगतिंब्रह्मभावम् ॥८ ॥ तस्याकृतिग्रहणप्रकारंवर्णयितुंसर्वकल्पनामूलस्तंभमाविर्भूतसर्वशक्तिकंसमष्ट्यहंकाराध्यासंप्रथमंदर्शयति ॥ जीवइति ॥ निर्मायआविर्भाव्य ॥ सैवास्यसार्वज्ञसर्वशक्तिसंपत्तिलक्षणारूढता ॥ ९ ॥ ततःसूक्ष्मभूतसंस्काराविर्भावलक्षणसमष्टिचित्तकल्पनामाह ॥ देशेतिसार्द्धाभ्याम् ॥ संस्कारात्मना ईषदाविर्भावाच्चर्चितांस्थूलतयासम्यगनाविर्भावादचर्चितांच ॥ १० ॥

चेतसासमष्टिचित्तभावेनसूक्ष्मतमाप्संवलनात्प्रालेयपरमाणुप्रायाम् ॥ ११ ॥ स्वमेव्याघ्राद्यात्मनादर्शनेप्रतीतंयत्स्वावयवानांहस्तपादादीनामन्यादृशत्वंतत्सदृशींतांसमष्टिचित्त रूपांविष्णुताम् ॥ तस्यैवपूर्णब्रह्मभावविस्मरणेमनःसमष्ट्यात्मकचंद्रभावोपलक्षितस्थूलभावकल्पनयाब्रह्मांडरूपाविराडाकृतिराविर्भवतीत्याह ॥ विस्मृत्येत्यादिना ॥ चेतनां चिदेकरसांब्रह्मसत्तांविस्मृत्यपरिच्छिन्नजडसत्तामेवाहमितिपश्यंस्तद्भावमेवाशुगच्छति ॥ १२ ॥ पंचीकरणेनस्थौल्यापादनात्स्थूलसमष्टिविराडात्मनाप्रोच्छूनत्वम् ॥ तत्रमनः समष्ट्यात्मकंकालोपचयात्मनाद्भुतंद्रवस्वभावंचंद्रबिंबमिवपश्यतिसैवास्यबुद्धिसमष्टिभावलक्षणाविरंचितेत्यर्थः ॥ १३ ॥ तस्यविराड्देहेभोगोपपत्तयेमनःसमष्टेरेवसकाशादादि त्यादिरूपेंद्रियपंचकंतत्स्थानभेदकल्पनांचाह ॥ आत्मनीति ॥ संवित्तिविषयभेदेनैवेंद्रियभेदविभावनात्संवित्तिपंचकमित्युक्तिः ॥ १४ ॥ तद्रूपाणिस्थानभेदरूपाणिरूपादिभो

चेतसात्यसदाकारांप्रालेयपरमाणुताम् ॥ पश्यत्यात्मन्यथात्मत्वेस्वप्नेस्वमरणोपमाम् ॥ ११ ॥ स्वप्नस्वावयवान्यत्वसदृशींतांविभावय न् ॥ विस्मृत्यचेतनांसत्तांतत्तामेवाशुगच्छति ॥ १२ ॥ एवंरूपोबुध्यमानःप्रोच्छूनत्वमथात्मनि ॥ पश्यत्याशुस्वमात्मानंचंद्रबिंबमिव द्रुतम् ॥ १३ ॥ आत्मन्यथेंदुबिंबात्मन्यसौसंवित्तिपंचकम् ॥ काकतालीयवद्भिन्नमुदितंचेततिस्वयम् ॥ १४ ॥ पंचानांसंविदांपंचभिन्ना न्यंगान्यसावथ ॥ बुध्यतेतानितद्रूपरंध्राण्यनुभवत्यपि ॥ १५ ॥ सपंचावयवःपश्चाद्राजतेपुरुषोविराड् ॥ अनंताकारसंवित्तिरव्यक्ता त्मानिरामयः ॥ १६ ॥ मनोमयोसावुदितःपरस्मात्प्रथमोत्थितः ॥ आकाशविशदःशांतोनित्यानंदविभ्रामयः ॥ १७ ॥ सचाप्यपंचभू तात्मापंचभूतात्मकोपमः ॥ विराडात्मैकपुरुषःपरमःपरमेश्वरः ॥ १८ ॥ स्वयमेवाशुभवतिस्वयमेवविलीयते ॥ स्वयमेवप्रसरतिस्वयं संकोचमेतिच ॥ १९ ॥ स्वसंकल्पकृतेनासौकल्पौघेनक्षणेनच ॥ यदृच्छयोदेतिपुनःपुनर्भूत्वोपशाम्यति ॥ २० ॥ मनोमात्रैकरूपात्मा प्रकृतेर्देहएषसः ॥ एषपुर्यष्टकंप्रोक्तःसर्वस्यैवातिवाहिकः ॥ २१ ॥ सूक्ष्मःस्थूलोवरात्मैषव्यक्तोव्यक्तोंतवर्जितः ॥ सर्वस्यबहिरंतश्चनर्कि चित्किंचिदेवच ॥ २२ ॥ अंगानिरामतस्याष्टौमनःषष्ठानिपंचच ॥ साहंभावानींद्रियाणिभावाभावमयानिच ॥ २३ ॥

गद्वाराणि ॥ १५ ॥ आदित्यदिग्वारिवायुपृथिव्याख्यपंचेंद्रियस्थानावयवैःपंचविषयानुपभुंजानोराजानोराजते ॥ तद्विषयेषुमनोविकल्पैरनंताकारकल्पनादनंताकारसं वित्तिः ॥ सचायंकार्यभावस्याव्यक्तत्वात्स्वकारणव्यक्तात्मैव ॥ अतएवनिरामयः ॥ १६ ॥ तस्यमनोमयभावेपिस्वतःसिद्धज्ञानैश्वर्यसर्वशक्तिसंपन्नत्वाज्जीवत्वमीश्वरत्वंचास्ती त्याशयेनाह ॥ मनोमयोसावितिद्वाभ्याम् ॥ १७ ॥ सर्वपुरुषसमष्टिरूपैकपुरुषः ॥ १८ ॥ तस्येश्वरभावेनस्वाविर्भावतिरोभावेपिस्वातंत्र्यमस्तीत्याह ॥ स्वयमेवेति ॥ १९ ॥ ॥ २० ॥ प्रकृतेःसर्वोपादानेश्वरस्यसएषदेहः ॥ एषएवव्यष्टिभावेनसर्वस्यजीवजातस्यपुर्यष्टकंप्राग्व्याख्यातम् ॥ २१ ॥ सचसूक्ष्मेषुपिपीलिकादिदेहेषुसूक्ष्मः ॥ समःप्लुषि णासमोनागेनेत्यादिश्रुतेः ॥ परमार्थतस्तुनकिंचित्व्यवहारतस्तुकिंचित्परिच्छिन्नएवच ॥ २२ ॥ पंचज्ञानेंद्रियाणिचकारात्कर्मेंद्रियसहितःप्राणोमनोऽहंकारइत्यष्टावंगानि ॥ भावाभावमयानिमूर्त्तामूर्त्तरसरूपाणि ॥ २३ ॥

तेनचतुर्मुखोभूयेमेचत्वारोवेदागीताः ॥ नियतिःशास्त्रीयसदाचारादिमर्यादा ॥ २४ ॥ ऊर्ध्वंद्यौरस्यमूर्द्धाशिरः ॥ अधःपृथिवीपादयोस्तलम् ॥ अपरमांतरालिकमुदरम् ॥ तस्य हवाएतस्यात्मनोवैश्वानरस्यमूर्द्धैवसुतेजाश्चक्षुर्विश्वरूपः प्राणःपृथग्वर्त्मासंदेहोबहुलोबस्तिरेवरयिःपृथिव्येवपादावित्यादिश्रुतेरितिभावः ॥ ब्रह्मांडमंडपंशरीरमितिशेषः ॥२५॥ पार्श्वकाःपार्श्वावयवाः ॥ पयोवारिक्षतजंरक्तम् ॥ मूत्रस्याप्युपलक्षणमेतत् ॥ क्षितिधराःपर्वतामांसपेश्यः ॥ सरितःशिरानाड्यः ॥ २६ ॥ रक्ताधारारक्तसंचयपेश्यः ॥ वेष्टनंषट्कोशवेष्टनम् ॥ ककुभोदिशोबाहवः ॥ यद्यपिछांदोग्यादौलोमानिबर्हिरित्युक्तंतथापिश्रुत्यंतरानुरोधेनतारकाइत्युक्तिः ॥ २७ ॥ एकोनाःपंचाशत्प्रावहप्रवहाद्यनिलस्कंधाःप्राणवायवः ॥ चंडकूरंचक्षुरितिशेषः ॥ जठरपावकऔर्वानलःपित्तम् ॥ २८ ॥ जीवादिषट्कंतुशशांकमंडलमेव ॥ सितंवपाभागः ॥ संकल्पकोशात्मेतिमनोविशेषणम् ॥ प

तेनगीताइमेवेदाःसहशब्दार्थकल्पनाः ॥ नियतिःस्थापितातेनतथाद्यापियथास्थिता ॥ २४ ॥ अनंतमूर्ध्वंमूर्द्धास्यतथाधःपादयोस्तलम् ॥ अपराकाशमुदरमिदंब्रह्मांडमंडपम् ॥ २५ ॥ लोकांतराण्यनंतानिपार्श्वकाःक्षतजंपयः ॥ मांसपेश्यःक्षितिधराःसरितःसंतताःशिराः ॥ २६ ॥ रक्ताधाराजलधयोद्वीपान्येवांत्रवेष्टनम् ॥ बाहवःककुभःस्फारास्तारकारोमसंततिः ॥ २७ ॥ पंचाशदनिलस्कंधाएकोनाःप्राणवायवः ॥ मार्त्तंडमंडलंचंडंपित्तंजठरपावकः ॥ २८ ॥ शशांकमंडलंजीवःश्लेष्माशुक्रंसितंबलम् ॥ मनःसंकल्पकोशात्मसारात्मापरमामृतम् ॥ २९ ॥ मूलंशरीरवृक्षस्यबीजंकर्मद्रुमस्यच ॥ प्रसवत्सर्वभावानामिंदुरानंदकारणम् ॥ ३० ॥ यदिंदुमंडलंनामससघाड्जीवउच्यते ॥ शरीरकर्ममनसांबीजंमूलंचकारणम् ॥ ३१ ॥ अस्मादिंदुविराड्जीवात्प्रसरंतिजगत्त्रये ॥ जीवामनांसिकर्माणिसुखान्यत्रामृतानिच ॥ ३२ ॥ विराजएतेसंकल्पाब्रह्मविष्णुहरादयः ॥ तस्यचित्तचमत्काराःसुरासुरनभश्चराः ॥ ३३ ॥ चित्स्वभावोबुध्यमानःप्रालेयपरमाणुताम् ॥ यदादौभावयत्याशुतदातत्रैवतिष्ठति ॥ ३४ ॥

रामृतंब्रह्मैवसारात्मा ॥ २९ ॥ बीजादिभावोपिमनसएवेत्याह ॥ मूलमित्यादिना ॥ अन्नादिभावेनाप्यायनादानंदकारणम् ॥ ३० ॥ सएवविराट्शरीरेजीवः अन्नात्मकेनतेनसमष्टिप्राणधारणादित्याशयेनाह ॥ यदिति ॥ व्यष्टिशरीराणामन्नमयानांसबीजंप्राणहेतुकानांसर्वकर्मणांमूलंव्यष्टिमनसांचकारणम् ॥ चंद्रमामनोभूत्वाहृदयंप्राविशदित्यादिश्रुतेरित्यर्थः ॥ ३१ ॥ तदेवस्पष्टमाह ॥ अस्मादिति ॥ सुखानिभोगाअमृतानिमोक्षाश्च ॥३२ ॥ विराजोविराड्जीवस्य ॥ चतुर्मुखादिशरीराणामपिचांद्रामृतपरिणामरूपत्वात् सोमःपवतेजनितामतीनांजनितादिवोजनितापृथिव्याः ॥जनिताग्नेर्जनितासूर्यस्यजनितेंद्रस्यजनितोतविष्णोरितिश्रुतेरितिभावः ॥ नभश्चराःपक्षिणः ॥ सर्वप्राण्युपलक्षणमेतत् ॥ ३३ ॥ चित्तचमत्कारतांचित्तोपहितचिद्विवर्त्ततयाप्रकटयति ॥ चित्स्वभावइति ॥ प्रालेयपरमाणुतांसुसूक्ष्मामृतकलात्मतांसाक्षितयाचंद्रेबुध्यमानोयदादेवतादिशरीराकारंसर्गादौभावयतिसंकल्पयतिविराडात्माप्रजापतिस्तदातत्रतादृशचतुर्मुखादिशरीरभावेएवस्वयंसिद्धवत्तिष्ठतिसत्यसंकल्पत्वादित्यर्थः ॥ ३४ ॥

एतच्चंद्रमंडलमेवसर्वजीवसमष्टिविराड्जीवस्यापंचीकृतपंचभूतान्यवयवायस्यतथाविधंतस्यविराजःशरीरम् ॥ एतज्जापदितिसर्वैरनुभूयते ॥ ३५ ॥ इंदुविराड्जीवाद्व्यष्टिजीवप्रसरंप्रागुक्तमुपपादयति ॥ विराडिति ॥ जीवभूतानिजीवनसाधनानि ॥ प्रालेयविसरश्चंद्रकलानामोषधीषुप्रसरस्तदात्मना ॥ ३६ ॥ जीवाःजीवोपाधयः ॥३७॥ सहस्रशतशब्दावसंख्यपरौ ॥ संप्रतिसंतिच ॥३८॥ उत्तमपदाद्ब्रह्मणः अभिन्नयाअतएवांतर्वर्जितोनिरवधिर्महांश्चांगसंगोव्यष्टिसमष्टिदेहसंबंधोयस्यास्तथाविधयाअधिष्ठानसत्तयैवतद्विवर्त्तोविराट्पुरुषइतिवर्णितरीत्यासर्वतःसर्वदेशकालेषुइहमायावृतेब्रह्मणितिष्ठतीत्युपसंहारः ॥३९॥ ॥इतिश्रीवासिष्ठ० म० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकोनविंशतितमःसर्गः ॥१९॥ वासनाकर्मकामानुरूपसंकल्पसर्जनैः ॥ समष्टिसाम्यंव्यष्टीनांजीवानामिहवर्ण्यते ॥१॥ विराट्पुरुषसत्यसंकल्पानुसारिविवर्त्तंब्रह्मधत्तइत्याह ॥ संकल्पेति ॥ पंच

तेनैतदेवजीवस्यस्थानंविद्धिरघूद्वह ॥ पंचावयवमेतत्तच्छरीरमनुभूयते ॥ ३५ ॥ विराड्जीवाच्चंद्रमसोजीवभूतानिदेहिनाम् ॥ प्रसरंत्यन्नजातानिप्रालेयविसरात्मना ॥ ३६ ॥ तान्येवदेहिदेहेषुजीवाजीवंतिजीविषु ॥ मनोभूत्वाविचेष्टंतकर्मजन्मसुकारणम् ॥ ३७ ॥ एवंविराट्सहस्राणिमहाकल्पशतानिच ॥ गतान्यथभविष्यंतिनानाचाराणिसंतिच ॥ ३८ ॥ सर्वतोनुभवरूपयानयासत्तयोत्तमपदादभिन्नया ॥ अंतवर्जितमहांगसंगयातिष्ठतीतिपुरुषःपरोविराट् ॥ ३९ ॥ ॥इ० वा० म० वा० दे० नि० उ० विराडात्मवर्णनंनामैकोनविंशःसर्गः ॥ १९ ॥ ॥ ५ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥संकल्पपुरुषस्त्वेषयद्यत्कल्पयतिस्वयम् ॥ तत्तथातादृशंपंचभूतात्माभवतीवखम् ॥ १ ॥ सर्वंरामजगज्जातंतत्संकल्पंविदुर्बुधाः ॥ तादृग्रूपंपंचकात्मविषयोन्मुखमाततम् ॥ २ ॥ जगत्पदार्थसार्थस्यविराट्सर्वस्यकारणम् ॥ कारणेनसमान्येवकार्याणिचभवंत्यतः ॥३॥ यथैषसविराडेवंविराट्प्रत्येकमात्मनि ॥ स्वसंविदिप्रसरतिबोधवान्नत्वबोधवान् ॥४॥ आसरीसृपमारुद्रमेवमभ्युदितोभ्रमः ॥ अणावप्यद्रिविस्तारोबीजकोशइवद्रुमः ॥५॥ आसरीसृपमारुद्रंविराट्प्रत्येकमात्मनि ॥ पराणावप्यनंतात्मबोधतोनत्वबोधतः ॥ ६ ॥ यादृगेवविराडात्मन्येषविस्तारआगतः ॥ तादृगेवेहसर्वस्मिन्नणुमात्रेपिभूतके ॥ ७ ॥

भूतात्माविराट्पुरुषोयद्यद्यथायथाभवत्वितिसंकल्पयतितत्तत्तथातथाखंब्रह्माकाशमपिभवति ॥१॥ यतोब्रह्मपूर्वोपासनाहितवासनयातादृग्रूपंपंचभूतात्मविराड्रूपंसर्गादौभूत्वाउपासनाफलंपंचमहाभूतात्मकविषयसमष्टिभोगोन्मुखंततमित्यर्थः ॥ २ ॥ कारणेनमृदादिनाकार्याणिघटादीनिसमस्वभावान्येवयतोभवंत्यतोहेतोरित्युत्तरयोरन्वयः ॥ ३ ॥ प्रत्येकंव्यष्टिजीवोप्यात्मनिस्वस्मिन्विराट्सर्वसर्गसमर्थइत्यर्थः ॥ यतोमनोदर्पणानुसारेणस्वसंविदिवासनांतरविषयाकारेणप्रसरतिसतिविराडिवायमपितत्तदर्थबोधवानेवनत्वबोधवानितिसाम्यमित्यर्थः ॥ ४ ॥ अपकर्षावधावासरीसृपमुत्कर्षावधावारुद्रमेवंजगदाकारोभ्रमोभ्युदितःसएवसर्गः ॥ अणावपीतिघनत्वेउपपत्तिः ॥ ५ ॥ असत्वेकिंततस्तत्राह ॥ आसरीसृपमिति ॥ विराट्स्रष्टा ॥ तथाचसाम्यंसिद्धमित्यर्थः ॥ ६ ॥ अणुमात्रेमशकपुष्पादिदेहपरिच्छिन्नेपिभूतकेजीवे ॥ ७ ॥

विततंभ्रांत्याविस्तारितम् ॥ ८ ॥ ननुविराजोव्यष्टिमनस्तदुपहितजीवोभयकारणत्वेनवैषम्यमितिकथंसाम्यंतत्राह ॥ मनइति ॥ अथवासमष्टिव्यष्ट्योरेकैवैषासत्तेतिभेदएव नास्तिकुतःकारणतातत्रेत्यविशेषइत्यर्थः ॥ ९ ॥ एवमुपाधिमनःकारणतांनिरस्योपहितजीवंप्रतिकारणतांनिरसितुमुपाधिस्वरूपमाह ॥ शुक्रसारमिति ॥ प्रथमंशुक्रंरेतएवसा रउपाधिर्यस्यतम् ॥ ततःशुक्रोपहितजीवादेवमातापित्रोर्मैथुनकालेअचलस्यपूर्णानंदब्रह्मणोभोगाकारवृत्तौप्रतिबिंबनेनसंदोहःप्रपूर्त्तिलक्षणआनंदःप्रवर्त्तते ॥ एतस्यैवानंदस्या न्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेरित्यर्थः ॥ १० ॥ तंतस्यब्रह्मणआभासलक्षणमानंदंरेतोवच्छिन्नजीवचिदात्मस्थमात्मनारेतोभूतस्वभावेनैवचेतत्यनुभवति ॥ चेतयंती वरेतोरूपमेवानंदःप्रियतमोहमितिबीजमारभ्यतत्रतादात्म्याध्यासलक्षणांतन्मयतांधत्ते ॥ आनंदाद्ध्येवखल्विमानिभूतानिजायंतइतिश्रुतेः ॥ ११ ॥ अथानंतरमेषाजीवसंवि त्तदंतर्गतपंचतांदेहरूपांतादात्म्येनैवोपायाति ॥ सैवास्यास्तदुपहिततातत्रचनविराजोन्यस्यवाकारणतेत्याह ॥ नतत्रेति ॥ १२ ॥ यद्युपहितरूपेणांकिंचित्कारणंतर्हितदनागंतु

परमार्थेननस्थूलंनसूक्ष्मंकिंचनक्वचित् ॥ यद्यथावितंतंयत्रतत्तथाश्वनुभूयते ॥ ८ ॥ मनश्चंद्रमसोजातंमनसश्चंद्रउत्थितः ॥ जीवाज्जी वोथवैकैषासत्ताद्रवजलांगवत् ॥ ९ ॥ शुक्रसारंविदुर्जीवंप्रालेयकणसंनिभम् ॥ आनंदोचलसंदोहस्ततएवप्रवर्त्तते ॥ १० ॥ तंचेतति तदाभासंपूर्णमात्मस्थमात्मना ॥ तत्रतन्मयतांधत्तेतेनतन्मयरूपिणी ॥ ११ ॥ जीवसंविदथैषांतर्यदुपायातिपंचताम् ॥ नतत्रकारणंकिं चिद्विद्यतेनचकार्यता ॥ १२ ॥ प्रतियोगिव्यवच्छित्तेरभावात्स्वस्वभावयोः ॥ स्वभावोक्तिर्नचैवात्रभवत्यर्थानुसारिणी ॥ १३ ॥ जीवो जीवत्वमेवस्वजीवत्वादेवचस्वतः ॥ अंतस्त्वेनबहिष्ट्वेनदृश्यतेनचवायुवत् ॥ १४ ॥ नीहारेणेवसर्वीतश्चेत्यवस्तुपरायणः ॥ जात्यंधइव पंथानंमारुतात्मानपश्यति ॥ १५ ॥

कंजीवानांस्वभावःस्यात् नचकस्यचित्स्वभावोपैतीत्यनिर्मोक्षप्रसंगइत्याशंक्याह ॥ प्रतियोगीति ॥ अत्रोपहितरूपेस्वभावोक्तिरर्थानुसारिणीअर्थवतीनभवति ॥ स्वशब्दार्थवि शिष्टोहिभावशब्दार्थःस्वभावस्तत्रस्वशब्दोयदिशुद्धपरस्तर्हितस्याद्वयत्वान्नप्रतियोगीतद्यवच्छेदोवान्योस्तीत्यव्यावर्त्तकात्तस्मादन्योभावशब्दार्थोपिननिरूपयितुंशक्यतइति तद्विशिष्टार्थसिद्धेर्दूरनिरस्तत्वादित्यर्थः ॥ १३ ॥ यदिवाउपहितपरःस्वशब्दस्तदाप्यसौनस्वबहिर्भूतंभावशब्दार्थंलभतेयःस्वार्थेनविशिष्यादित्याह ॥ जीवइति ॥ उपहितरूपो जीवोपिस्वतःस्वस्यजीवत्वादुपहितरूपत्वादेवजीवत्वमुपहितरूपमेवस्वयंनतद्व्यतिरिक्तंरूपांतरमंतस्त्वेनबहिष्ट्वेनवाभावशब्दार्थभूतंविशेष्यतायोग्यंतत्रदृश्यते ॥ सचवायुर्वातीत्य त्रक्रियात्मैववायुर्यथाविकल्पबुद्ध्याभेदंपरिकल्प्यवातीतिव्यपदिश्यतेतद्वज्जीवोजीवत्वमितिधर्मधर्मिभावेनेत्यर्थः ॥ १४ ॥ यदिनजन्यंननित्यंस्वभावभूतंवातर्हिकिंतज्जीवरूपं यत्संसरतीतिचेदनिर्वचनीयाज्ञानावृतब्रह्मैवतत्स्वात्मनएवान्यथादर्शनंतस्यसंसारइत्याह ॥ नीहारेणेत्यादिना ॥ मारुतात्माप्राणेंद्रियादिजडतादात्म्यापन्नःअतएवस्वरूपंनपश्य ति ॥ नतंविदाथयइमाजजानान्यद्युष्माकमंतरंबभूव ॥ नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंतीत्यादिश्रुतेरितिभावः ॥ १५ ॥

जगदाकारयाजृंभिकयाबृंहिकयाअविद्याशक्त्यासंवीतःअतएवस्वमैक्यमेवद्रष्टृदृश्यमितिद्वित्वंकल्पयित्वातत्रास्थितोऽभिनिविष्टः ॥ १६ ॥ अतएवविद्ययाअविद्यानाशसंभ
वान्नानिर्मोक्षदोषइत्याह ॥ अज्ञानस्येति ॥ अहमित्यर्थरूपस्यमहाग्रंथेर्भेदोविदारणम् ॥ १७॥ अतएवहेरामत्वंव्यपगतोघनोऽज्ञानमेघोयस्मात्तथाविधश्चेतनश्चित्प्रकाशमात्रः
सन्नहमित्यहंकारोपाधिपरिच्छेदमबुध्यमानःशोधितत्वंपदार्थःसन्नुक्षितंबाधितंसन्मूर्त्तंअसदमूर्त्तंसदसत्तन्मूलाज्ञानंचयत्रतथाविधोरूपबाधादेवानभिधोनामशून्यःसैंधवघनव
दानंदैकरसघनोयश्चेतनःशोधिततत्पदार्थस्तदेकरूपःसन्समंतात्पूर्णआस्व ॥ १८॥ ॥ इतिश्रीवासिष्ठम०रा०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेविंशतितमःसर्गः ॥ २०॥७॥
अशुभाचशुभाचात्रद्विविधाज्ञानबंधुता ॥ हेयापाद्याचयत्नेनलक्षणैरुपवर्ण्यते ॥ १ ॥ तत्रादौहेयांवर्णयितुंपीठिकांरचयति ॥ ज्ञानिनैवेति ॥ ज्ञानीउत्तरसर्गवक्ष्यमाणलक्षण
स्तथाविधेनैवसदाभाव्यंभवितव्यंज्ञानव्याजेनसत्कर्मश्रद्धाबाधनाद्भोगलांपट्येनस्वंपरंचानर्थैर्बध्नातीतिज्ञानबंधुस्तथाविधेननभाव्यमित्यर्थः ॥ १ ॥ किंलक्षणंप्राप्यज्ञानबंधु

जगज्जृंभिकयाजीवःस्वमैक्यंद्वित्वमास्थितः ॥ स्पंदशक्त्येवपवनआवृतात्मानपश्यति ॥ १६ ॥ अज्ञानस्यमहाग्रंथेर्मिथ्यावेद्यात्मनो
सतः ॥ अहमित्यर्थरूपस्यभेदोमोक्षइतिस्मृतः ॥ १७॥ व्यपगतघनचेतनस्समंतादहमितिनूनमबुध्यमानआस्व ॥ अनभिधघनचेतनै
करूपःक्षितसदसत्सदसत्सदोदितश्च ॥ १८ ॥ ॥ इ०वा०वा०दे०मो०नि०उ०जीवनिर्वाणयोगोपदेशोनामविंशःसर्गः ॥ २० ॥
श्रीवसिष्ठउवाच ॥ ॥ ज्ञानिनैवसदाभाव्यंरामनज्ञानबंधुना ॥ अज्ञातारंवरंमन्येनपुनर्ज्ञानबंधुताम् ॥ १ ॥ ॥ श्रीरामउवाच ॥
किमुच्यतेज्ञानबंधुर्ज्ञानीचैवकिमुच्यते ॥ किंफलंज्ञानबंधुत्वेज्ञानित्वेपिचकिंफलम् ॥ २ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ व्याचष्टेयःपठति
चशास्त्रंभोगायशिल्पिवत् ॥ यततेनत्वनुष्ठानेज्ञानबंधुःसउच्यते ॥ ३॥ कर्मस्पंदेषुनोबोधःफलितोयस्यदृश्यते ॥ बोधशिल्पोपजीवित्वा
ज्ज्ञानबंधुःसउच्यते ॥ ४ ॥ वसनाशनमात्रेणतुष्टाःशास्त्रफलानिये ॥ जानंतिज्ञानबंधूंस्तान्विद्याच्छास्त्रार्थशिल्पिनः ॥ ५ ॥ प्रवृत्तिलक्ष
णेधर्मेवर्ततेयःश्रुतोचिते ॥ अदूरवर्तिज्ञानत्वाज्ज्ञानबंधुःसउच्यते ॥ ६ ॥

रुच्यतेकिंलक्षणंप्राप्यज्ञानीउच्यतेपुरुषस्तेलक्षणेतत्फलेचवदेतिप्रश्नार्थः ॥ २ ॥ अनुष्ठानेसाधनचतुष्टयसंपादनेमननादौचज्ञानोपायेयोनयतते ॥ ३ ॥ यस्यशास्त्राभ्यासल
ब्धःशाब्दोबोधःकर्मस्पंदेषुभोगव्यवहारेषुदृश्यमानेषुवैराग्योपरमादिफलैःफलितोनदृश्यते ॥ तत्त्वकथाभिःपरवंचनचातुरीबोधशिल्पंतदुपजीवित्वात् ॥ ४ ॥ अर्थाद्वसनाश
नलाभादयएवशास्त्रफलानीतियेजानंति ॥ शास्त्रार्थकथानाटनान्नटादिशिल्पिनइवविद्यात् ॥ ५ ॥ द्वितीयांशुभांज्ञानबंधुतांलक्षणेनदर्शयति ॥ प्रवृत्तिलक्षणेइति ॥ प्रवृत्ति
लक्षणेनिष्कामाग्निहोत्रादिलक्षणेधर्मेश्रुतस्यशास्त्रार्थज्ञानस्योचितेअनुरूपेश्रुतस्यकरिष्यमाणवेदांतश्रवणस्योचितेचित्तशुद्धिद्वाराअनुकूलेश्रुतेश्रुतिबोधितेउचितेस्वाधिकार
कुलाचाराद्युचितेच ॥ विविदिषंतियज्ञेनदानेनतपसेत्यादिश्रुतेः ॥ सत्कर्मानुष्ठानेचित्तशुद्धिक्रमेणावश्यंज्ञानेनबध्यतेइतिव्युत्पत्त्याअदूरवर्तिज्ञानत्वावगमादित्यर्थः ॥ ६ ॥

५१

अनात्मशास्त्राभ्यासपराअपितत्तदर्थज्ञानैःसंबध्यमानादृश्यंतेनत्सदृशोयंमाभूदित्यात्मज्ञानेविशेषंदर्शयति ॥ आत्मज्ञानमिति ॥ तानिज्ञानमिवावभासंतेनतुज्ञानानि ॥ कुतः ॥ रसेनसारभूतेनाबाध्येननिरतिशयानंदात्मनासहवर्त्तंतेइतिसरसौतदभ्यस्तौजगज्जीवौतयोर्भावःसारस्यंतदधिष्ठानब्रह्मरसएवतदनवबोधनादभ्यस्तवाध्यार्थमात्रबोधनाद्भ्रांतिमात्रतयाअज्ञानतरंगमात्रत्वादित्यर्थः ॥ ७ ॥ अतएवतल्लाभमात्रतुष्टानामशुभज्ञानबंधुतैवेत्याह ॥ आत्मज्ञानमिति ॥ अभ्यासश्रमेणदुरभिमानादिदोषाधानेनपारलौकिकानर्थफलेनचकष्टाश्चेष्टायस्मिन्कर्मणितद्यथाभवतितथातेसंतुष्टाइतिहेतोस्तेपिअशुभज्ञानबंधवःस्मृताइत्यर्थः ॥ ८ ॥ अतएवनसप्तमभूमिकास्थैर्यपर्यंतंमुमुक्षुणातोष्टिकेनभवितव्यमित्याह ॥ ज्ञानादीति ॥ ज्ञानंबाह्याभ्यंतरगोचरवृत्तयः आदिपदात्तत्कारणानितदाश्रयःप्रमाताचतेषांज्ञेयाःशब्दादयस्तेषांविकाशाःप्रथाश्चेत्येतेषामात्यंतिकशांत्यापूर्णानंदैकरसस्वप्रकाशब्रह्मात्मैक्यप्रतिष्ठांविनामुमुक्षुणाऽवांतरभूमिलाभमात्रेणकृतार्थोस्मीतिसंतुष्टधियाउत्तरोत्तरभूमिप्रापकप्रयत्नशिथिलेनकदाचिदपिनभाव्यम् ॥ हेरामत्वंसर्वविद्यास्थानकुशलोप्यनात्मशास्त्रपाठवासक्त्याज्ञानोपेक्षणेनानधिकारिषुज्ञानोपदेशकौशलख्यापनेनवाज्ञानबंधुत्वमुपेत्यतत्ख्यातिलाभादिप्रयुक्तभोगलक्षणेपुभवामयेपुमारम

आत्मज्ञानंविदुर्ज्ञानंज्ञानान्यन्यानियानितु ॥ तानिज्ञानावभासानिसारस्यानवबोधनात् ॥ ७ ॥ आत्मज्ञानमनासाद्यज्ञानांतरलवेनये ॥ संतुष्टाःकष्टचेष्टंतेतेस्मृताज्ञानबंधवः ॥ ८ ॥ ज्ञानादितज्ज्ञेयविकाशशांत्याविनानसंतुष्टधियेहभाव्यम् ॥ त्वंज्ञानबंधुत्वमुपेत्यरामरमस्वमाभोगभवामयेषु ॥ ९ ॥ अत्राहारार्थंकर्मकुर्यादनिंद्यंकुर्यादाहारंप्राणसंधारणार्थम् ॥ प्राणाःसंधार्यास्तत्त्वजिज्ञासनार्थंतत्त्वंजिज्ञास्यंयेनभूयोनदुःखम् ॥ १० ॥ ॥इ॰वा॰वा॰दे॰मो॰नि॰उ॰ज्ञानविचारोनामएकविंशतितमःसर्गः ॥ २१ ॥ ॥ ७ ॥

श्रीवसिष्ठउवाच ॥ ॥ज्ञानेनज्ञेयनिष्ठत्वाद्योचित्तंचित्तमेवच ॥ नबुध्यतेकर्मफलंसज्ञानीत्यभिधीयते ॥ १ ॥ ज्ञात्वासम्यगनुज्ञानंदृश्यतेयेनकर्मसु ॥ निर्वासनात्मकंज्ञस्यसज्ञानीत्यभिधीयते ॥ २ ॥

स्वेत्यर्थः ॥ ९ ॥ कथंतर्हिमुमुक्षुणास्थातव्यंतदाह ॥ अत्रेति ॥ आहारोहितमितमेध्याशनंतदर्थंतदुपायप्राप्तयेश्रुतिस्मृतिशिष्टैरनिंद्यंस्ववर्णाश्रमोचितोपायेनाहारार्जनादिकर्मकुर्यात् ॥ शिष्टंस्पष्टम् ॥ १० ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकविंशतितमःसर्गः ॥ २१ ॥ ॥ ७ ॥ ॥ ज्ञानिनोलक्षणान्यादौकीर्त्यंतेत्रोपपत्तिभिः ॥ तथाजीवजगद्ब्रह्मतत्त्वादीनिप्रसंगतः ॥ १ ॥ ज्ञानबंधुतांतत्फलंचोपवर्ण्यज्ञानीचैवकिमुच्यतेज्ञानित्वेपिचकिंफलमितिप्रश्नयोरुत्तरंवक्तुंप्रथमंज्ञानिलक्षणान्याह ॥ ज्ञानेनेति ॥ यःपुमान्भूमिकारोहणक्रमपरिपक्वेनज्ञानेनज्ञेयब्रह्ममात्रेदृढप्रतिष्ठत्वात्प्रारब्धकर्मफलंभुंजानोप्यचित्तंचित्तभिन्नंशब्दादिविषयजातंतत्तदाकारपरिणतंकामसंकल्पादिवृत्तिभेदैःपरिणतंचचित्तमेवेतितच्चबाधितानुवृत्तिमात्रत्वान्नवस्तुसद्बुध्यतेसज्ञानीतितल्लक्षणज्ञैरभिधीयतइत्यर्थः ॥ १ ॥ तथाज्ञस्यशब्दादिविषयभोक्तुःप्रमातुरंतःकरणस्यकर्मसुभोग्यभूतेषुविषयेषुयेनपुरुषेणज्ञानेज्ञानेइत्यनुज्ञानम् ॥ वीप्सायामव्ययीभावः ॥ सर्वेषुचाक्षुषादिवृत्तिभेदेषुसाक्षितयास्थितंचिन्मात्रंसम्यक्तत्त्वतोज्ञात्वाबाधितंदृश्यंनिर्वासनात्मकंवासनामात्रेणाप्यपरिशिष्टंदृश्यतेसज्ञानीत्यर्थः ॥ अथवायेनतत्त्वेनज्ञातेनचित्तंनिर्वासनंभवतितत्तत्त्वंसम्यग्ज्ञात्वास्थितस्ययस्यज्ञस्यसर्वेषांप्राणिनांकर्मसुयथेच्छव्यवहारेषुस्वैरंव्यवहरंत्वित्यनुज्ञानमेवदृश्यते ॥ स्वधनापहारवधबंधादिप्रवृत्तिमपिदस्यूनांयोनुमोदतेसज्ञानीत्यर्थः ॥ इदंतुजडभरतादौप्रसिद्धम् ॥ २ ॥

अकृत्रिमेणैकेनस्वात्मलाभेनशांतस्ययस्येहामुत्रव्यवहारेषु ॥ ३ ॥ पुनर्जन्ममूलाज्ञानोच्छेदित्वात्तत्त्वज्ञानमेवज्ञानंनेतरदित्याह ॥ अपुनर्जन्मनेइति ॥ शेषातदन्याशाब्दज्ञान चातुरीतुवसनाशनेददातीतिवसनाशनदाइतरशिल्पतुल्याजीविकैवनज्ञानशब्दवाच्येत्यर्थः ॥ ४ ॥ शरदाकाशमिवनिरावरणप्रकाशंहृदयंयस्य ॥ ५ ॥ उक्तलक्षणोपपत्तयेत त्त्वज्ञानस्यसर्वद्वैतवासनोच्छेदकत्वंसमर्थयितुंजगतःअसदविद्यामात्रत्वपरिशेषादकारणत्वासत्वेदर्शयति ॥ अकारणमित्यादिना ॥ यतोऽविद्यमानाःअतःअकारणंविनैवका रणंप्रवर्त्ततेउत्पद्यंतइवनतुवस्तुतउत्पद्यंते ॥ एवंचाविद्यमानाएवस्थिताइव ॥६॥ उत्तरभावविकारेष्वप्यकारणत्वादेवासत्वंबोध्यमित्याशयेनाह ॥ आविर्भावेति ॥ ननुबीजादं कुरोत्पत्तेःप्रत्यक्षंदर्शनात्कथमकारणंप्रवर्त्ततइत्युच्यतेतत्राह ॥ पश्चादिति ॥ नेदंसर्गादौसंभवति प्रलयेबीजांकुरयोरुभयोरप्यभावादितिभावः ॥ कारणकर्मभिःकारणव्यापारैः ॥ ७ ॥ सांप्रतंदृश्यमानमपिबीजंसतोंकुरस्यकारणमसतोवा ॥ नाद्यः ॥ सतःकारणापेक्षाभावात् नद्वितीयइत्याह ॥ असतइतिद्वाभ्याम् ॥ ८ ॥ आसादयंत्यारोहंति ॥ असत्त त्कारणतन्मार्गणानांपुत्रपौत्रतत्स्कंधारोहणानिक्रमाद्दृष्टांताः ॥ ९ ॥ यद्यकारणद्वैतभावाभ्युपगमेअनिर्मोक्षप्रसंगवारणायमोक्षशास्त्रप्रामाण्यायचकारणमवश्यंकल्प्यंतर्हिज्ञा नमात्रनिवर्त्यंमिथ्याभूतमज्ञानमेवतत्कारणंकल्पनीयंनान्यत्सद्रूपंतस्यज्ञानेननिवर्त्तयितुमशक्त्याअनिर्मोक्षतादवस्थ्यप्रसंगादित्याशयेनाह ॥ असत्येति ॥ अनालोकनमज्ञानम्

अंतःशीतलतेहासुप्राज्ञैर्यस्यावलोक्यते॥ अकृत्रिमैकशांतस्यसज्ज्ञानीत्यभिधीयते॥३॥ अपुनर्जन्मनेयःस्याद्बोधःसज्ज्ञानशब्दभाक्॥
वसनाशनदाशेषाव्यवस्थाशिल्पजीविका॥ ४॥ प्रवाहपतितेकार्येकामसंकल्पवर्जितः॥ तिष्ठत्याकाशहृदयोयःसपंडितउच्यते॥ ५॥
अकारणंप्रवर्त्ततइवभावाअकारणात्॥ अविद्यमानाअप्येतेविद्यमानाइवस्थिताः॥६॥ आविर्भावतिरोभावैर्भावाभावभवाभवैः॥
पश्चात्कारणतांयांतिमिथःकारणकर्मभिः॥७॥ असतःशशशृंगादेर्नगतृष्णांभसोयथा॥ आलोकनादलभ्यस्यकीदृक्कुत्यात्किलकारण
म्॥८॥ असतःशशशृंगादेःकारणंमार्गयंतिये॥ वंध्यापुत्रस्यपौत्रस्यस्कंधमासादयंतिते॥९॥ असत्यप्रतिभासानामेतदेवाशुकारणम्॥
यदनालोकनंनामसमालोकक्षणक्षयम्॥१०॥ परमात्मायतेजीवोबुध्यमानस्त्वचेतनम्॥ चेतनंबुध्यमानस्तुजीवएवावतिष्ठते॥११॥

॥ १० ॥ बंधस्याज्ञानकार्यत्वंसमालोकक्षणक्षयत्वंचानुभावयति ॥ परमिति॥ अयंजीवःपरंस्वातिरिक्तमचेतनंजडमहंकारदेहादिबुध्यमानस्तत्क्षणमेवतत्तादात्म्याध्याससंस्का रोद्बोधादात्मायतेआत्मेवाचरतिसएवत्वस्यबंधः ॥ चेतनंनिष्कृष्टचिन्मात्रमात्मानंबुध्यमानस्तुजीवएवयेनजातानिजीवंतीतिश्रुतिदर्शितदिशासर्वजगदुज्जीवनहेतुनिष्कृष्टनिरति शयानंदाद्वयएवावतिष्ठतेसोस्यमोक्षइत्यर्थः ॥ अथवाजीवःचेत्यतेअनेनेतिचेतनंबुद्धिः चेत्यतेअस्मिन्निति चेतनंस्थूलदेहः चितिक्रियाचेतनंचिदाभासः तत्त्रितयरहितंकूटस्था द्वयचिन्मात्रमात्मानंबुध्यमानःसन्परमात्माब्रह्मेवाचरतिपरमात्मायते अद्वितीयपूर्णानंदैकस्वभावोवतिष्ठते ॥ चेतनंबुद्ध्यादिकमात्मेतिबुध्यमानस्तुजीवएवभूत्वावतिष्ठतेनपूर्ण भावंलभतेइत्यर्थः ॥ अथवाअयंजीवश्चेतनंविषयेषुचाक्षुषादिवृत्तिफलैर्व्यापनंतद्रहितमचेतनंयथास्यात्तथावृत्तिव्याप्त्यैवनतुफलव्याप्त्येत्यर्थः ॥ एवमात्मानंस्वप्रकाशचिद्रूप तयाबुध्यमानःपरमात्मैवनह्यनात्माअणुमात्रमपिफलव्याप्तिविनाबुध्यते ॥ चेतनंवृत्तिव्यापनंयथास्यात्तथाअणुमात्रमपिबुध्यमानोजीवएवावतिष्ठतेनब्रह्मस्वभावंसंप्रामोती त्यर्थः ॥ तथाचश्रुतिः ॥ यस्यामतंतस्यमतंमतंयस्यनवेदसः ॥ अविज्ञातंविजानतांविज्ञातमविजानतामिति ॥ ११॥

पूर्वार्धंविवृणोति ॥ परमात्मैवेति ॥ अयंजीवोयथोक्तरीत्याअचेतनमजागरणमेवस्वात्मनिबुध्यमानोजागरूकःपरमात्मरसावेशात्परमात्मैवभवति ॥ यथाआम्रएवहेमंतेमुम भ्रायोवसंतेरसावेशात्पल्लवितःपुष्पितश्चप्रबुद्धप्रायःसहकारशब्दवाच्यतांप्रयातितद्वदित्यर्थः ॥ १२ ॥ उत्तरार्धमपिविवृणोति ॥ चेतनमिति ॥ जातिजन्मसुनानायोनिजन्मसु ॥ १३ ॥ अतएवतत्त्वविदांचेष्टास्तदभिमानाभावादस्पंदरूपाएवेत्याह ॥ येइति ॥ रूपालोकमननाभिमानशून्यं अपांनिम्नानुसरणमिवप्रारब्धमात्रानुसरणमित्यर्थः ॥ १४ ॥ यथादग्धपटदर्शनंपटदर्शनमेवनभवतिकिंतुभस्मदर्शनंतथाबाधितदृश्यश्रीदर्शनंतदतीतब्रह्मदर्शनमेवेतिनद्वैतवेदनंतेषामस्तीत्याशयेनाह ॥ येइति ॥ १५ ॥ अतोपितेषांस्पंदस्या स्पंदत्वंरूपदर्शनाभावेप्यापोदृष्टांताइत्याशयेनाह ॥ येइति ॥ १६ ॥ अतएवचतेषांकर्मलेपबंधनाभावइत्याह ॥ अरूपेति ॥ यतोरूपालोकमननवेष्टितानभवंत्यतोमुक्तदामा उत्सृष्टोवृषभस्तद्वद्बंधनशून्याइत्यर्थः ॥ १७ ॥ पारलौकिककर्मापेक्षातुदूरनिरस्तेत्याशयेनाह ॥ येइति ॥ १८ ॥ अज्ञानांतुकर्मैवशरणमित्याह ॥ येइति ॥ विनाबोधंतत्त्व

परमात्मैवजीवोयंबुध्यमानस्त्वचेतनम्॥ आम्रएवरसापत्तेःप्रयातिसहकारताम् ॥ १२ ॥ चेतनंबुध्यमानस्तुजीवएवावतिष्ठते॥ जीवोजीवितजीर्णेषुजातिजन्मसुजर्जरः॥ १३ ॥ येपरांदृष्टिमायाताविद्धितेषामपामिव॥ अरूपालोकमननंस्पंदमस्पंदनंसदा॥ १४ ॥ येपरांदृष्टिमायातादृश्यश्रीपारदर्शिनः॥ नविद्यमानमप्यस्तितेषांवेदनमाततम्॥ १५ ॥ येपरांदृष्टिमायाताविद्धितेषामपामिव॥ स्पंदमस्पंदनंसर्वमवेदनवशादिह॥ १६ ॥ अरूपालोकमननवेष्टितामुक्तदामवत्॥ बुधाःकर्मसुचेष्टंतेवृक्षपत्रेष्विवानिलः॥ १७ ॥ येपरांदृष्टिमायाताःसंसृतेःपारदर्शिनः॥ नतेकर्मप्रशंसंतिकूपंनद्यांवसन्निव॥ १८ ॥ येबद्धवासनामूढाःकर्मशंसंतितेनघ ॥ श्रुतिस्मृत्युचितंतेनविनाबोधंप्रयांतिते॥ १९ ॥ इंद्रियाणिपतंत्यर्थैभ्रष्टंगृध्रइवामिषम्॥ तानिसंयम्यमनसायुक्तआसीततत्परः॥ २० ॥ नासन्निवेशंहेमास्तिनासर्गंब्रह्मविद्यते॥ किंतुसर्गादिशब्दार्थमुक्तंयुक्तमतःशिवम्॥ २१ ॥ एकांधकारेसंपन्नेव्यवहारोयुगक्षये॥ निर्विभागोनिराभासोयथाब्रह्मघनेतथा॥ २२ ॥ अम्भोदरेभ्रमांगानांस्पंदास्पंदमयीयथा॥ स्वसंविदात्मिकासत्ताभूतानामीश्वरीतथा॥ २३ ॥

ज्ञानाभावात्तेनकर्मणैवतेप्रयांतितत्फलभोगमितिशेषः ॥ १९ ॥ कुतस्तेषांकर्मैवशरणंतत्राह ॥ इंद्रियाणीति ॥ भ्रष्टमधःपतितंअधःपातहेतुमितियावत् ॥ सत्कर्मानालंबनेतेषामधःपातएवेंद्रियैःकार्यइतिभावः ॥ तथाचश्रुतिः ॥ कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाः ॥ एवंत्वयिनान्यथेतोस्तिनकर्मलिप्यतेनरेइति ॥ अतएवविदुषोपींद्रियनिग्रहेसत्येवस्वरूपप्रतिष्ठासिद्ध्यतिनान्यथेत्याह ॥ तानीति ॥ २० ॥ अदग्धेदग्धेचपटेसन्निवेशसाम्यवज्जगत्सन्निवेशसाम्यभानमविदुषामिवविदुषामप्यस्तुनामतथापितद्विदुषांब्रह्मैवेत्याशयेनाह ॥ नासन्निवेशमिति ॥ २१ ॥ सर्गशब्दार्थमुक्तत्वेप्रलयोदृष्टांतइत्याह ॥ एकेति ॥ तथाअसन्नपिसन्निितिशेषः ॥ २२ ॥ प्रलयेस्पंदसत्तामसंभावयंतंप्रतिदृष्टांतमाह ॥ अम्भोदरेइति ॥ यथाचलदम्भोदरेतदवयवानामभ्रादविभागादस्पंदमयीदिग्विभागात्तुस्पंदमयीतिस्वानुभवसंविदात्मिकैवविरुद्धधर्मयौगपद्येनसत्तासंभाव्यतेतद्वत्प्रलयेपीश्वरीस्पंदसत्ताभूतानांसंभावनीयेत्यर्थः ॥ २३ ॥

तत्रचिदाभासस्पंदसद्भावेपिदृष्टांतमाह ॥ जलस्येति ॥ जलस्यस्तिमिततडागादिजलस्यद्वैताद्वैतमयस्तैमित्याद्भेदाभेदाभ्यांदुर्वचःस्वसंविदात्माब्रह्मसंविदात्माभूतदृक्तत्तज्जीवाभासः ॥ २४ ॥ निरवयवेसावयवजगत्सद्भावेपिदृष्टांतमाह ॥ यथेति ॥ अंबरांशानांदिग्भेदरूपाणामाकाशावयवानाम् ॥ २५ ॥ अनयैवरीत्याप्रागुक्तमहंकारजगतोरन्योन्यांतर्गतत्वमपिसंभावनीयमित्याह ॥ जगतइति ॥ २६ ॥ अहंकारात्मनोजीवस्यस्वांतर्गतजगतोबहिर्दर्शनेपिदृष्टांतमाह ॥ रूपेति ॥ यथापर्वतोहिमवदादिःस्वरंध्रैर्निर्गतंस्वांतर्गतजलमेवमानसादिमहासरस्तयापश्यतितद्वत् ॥ २७ ॥ यथाहेमपिंडेभूतभाविकटकाद्याकाराःपर्यालोचनेदृश्यंतेकनकमात्रदृष्टौतुनदृश्यंतेतद्वज्जीवेजगदपीत्याह ॥ जीवइति ॥ अकारणंनिर्निमित्तंभ्रांत्यैवेत्यर्थः ॥ २८ ॥ अतएवतद्दर्शिनांजीवन्मुक्तानांजन्ममरणसंसारस्थितयोन्यदृशासत्योपिनसंत्येवेत्याह ॥ जीवंतइति ॥ २९ ॥ ब्रह्मा

जलस्यांतर्जलांशानांद्वैताद्वैतमयोयथा ॥ स्वसंविदात्मासुस्पंदस्तथाब्रह्मणिभूतदृक् ॥ २४ ॥ यथांबरेंबरांशानांद्वैताद्वैतकृतात्मनि ॥ अनन्यास्त्वपिराभातितथानवयवेशिवे ॥ २५ ॥ जगतोंतरहंरूपमहंरूपांतरेजगत् ॥ स्थितमन्योन्यवलितंकदलीदलपीठवत् ॥ २६ ॥ रूपालोकमनस्कारैरंध्रैर्वहिरिवस्थितम् ॥ स्वंद्रिपश्यतिजीवोंतःसरसीमिवपर्वतः ॥ २७ ॥ जीवोजगत्तयात्मानंपश्यत्ययमकारणम् ॥ हेमेवकटकादित्वंतदपश्यन्नपश्यति ॥ २८ ॥ जीवंतोपिनजीवंतिम्रियंतेनमृताअपि ॥ संतोपिचनसंतीवपारावारविदःशुभाः ॥ २९ ॥ प्रबुद्धःसर्वकर्माणिकुर्वन्नपिनपश्यति ॥ गृहकर्माणिगेहस्योगोष्ठभांडमनाइव ॥ ३० ॥ विराड्हृदियथाचंद्रःप्रतिदेहंयथास्थितः ॥ जीवोहिमकणाकारःस्थूलेस्थूलोलघौलघुः ॥ ३१ ॥ अहमात्मात्रिकोणत्वमुपगच्छतिकल्पनम् ॥ असदेवसदाभासंमन्यतेचेतनाद्वपुः ॥ ३२ ॥ कर्मकोशेत्रिकोणेचशुक्रसारेऽवतिष्ठते ॥ देहजीवोहमित्यात्मास्वामोदःकुसुमेयथा ॥ ३३ ॥ अहमित्येवशुक्रस्थासंविदापादमस्तकम् ॥ विसरत्यखिलेज्योत्स्नायथाब्रह्मांडमंडपे ॥ ३४ ॥

सक्तमनसोदेहयात्राकर्मणिनकर्तृतावुद्धिः यथागोष्ठभांडेष्वासक्तमनसोगृहकर्मणीत्याह ॥ प्रबुद्धइति ॥ ३० ॥ प्रासंगिकंसमाप्यप्रस्तुतमनुसंधत्ते ॥ विराडिति ॥ यथाब्रह्मांडस्थहृदिविराड्जीवश्चंद्रःस्थितएवंप्रतिव्यष्टिदेहंरेतोहिमकणाकारोजीवोहृदिस्थितइत्यर्थः ॥ ३१ ॥ तस्यदेहग्रहणप्रकारमाह ॥ अहमात्मेति ॥ सपितृहृदिरेतोरूपेणस्थितोऽहंकारात्माजीवःपित्रामातुस्त्रिकोणयोनौनिषिक्तस्त्रिकोणपरिच्छिन्नत्वरूपंकल्पनमुपगच्छति ॥ तत्रत्यरक्तमिश्रितःकललबुद्बुदपिंडाद्याकारक्रमेणाविर्भूतमसदेववपुःशरीरंसदाकारमहमितिचेतनान्मन्यते ॥ ३२ ॥ एवंत्रिकोणोपलक्षितेमातृगर्भेशुक्रमेवसारःअस्थिस्नाय्वादिकठिनांशोयत्रतथाविधेस्वकर्मनिर्मितकोशेदेहकोशकारकृमिरिवबद्धोऽवतिष्ठते ॥ स्वामोदःसुगंधः ॥ ३३ ॥ तत्रापिचंद्रकलानांचंद्रबिंबइवहृदयस्थशुक्रकणेऽहंभावस्फूर्तीनांविशेषव्याप्तिस्तद्द्वारासर्वदेहसामान्याहंभावप्रथेतिस्वानुभवादेवप्रसिद्धमित्याह ॥ अहमिति ॥ ३४ ॥

तस्यबाह्यार्थदर्शनद्वाराण्याह ॥ अक्षेति ॥ विसृतंबहिर्निःसृतंसाभासांतःकरणलक्षणंवेदनोदकम् ॥ त्रिजगत्त्रैलोक्यस्थान्सन्निकृष्टबाह्यार्थान् ॥ यथाधूमोमेघतयावियद्व्याप्नोतितद्वत् ॥ ३५ ॥ सर्वदेहापेक्षयाहृदयस्थेशुक्रेविशेषाभिमानोऽनुभवसिद्धइत्याह ॥ देहेइति ॥ घनवासनाविशेषाभिमानः ॥ ३६ ॥ अतएवहिहार्दसंकल्पपूर्वकमेवबाह्यार्थव्यवहाराःप्रवर्त्तंतइत्याह ॥ जीवइति ॥ ३७ ॥ अतएवचतदहंभावश्चित्तस्यब्रह्माकारस्थितिविनानोपायसहस्रैरपिशाम्यतीत्याह ॥ यथास्थितामिति ॥ समाधिपरिपाकेस्थिरब्रह्मैकरस्यात्स्थिरोपमाम् ॥ ३८ ॥ अतएवहेरामतेतत्वमनननिदिध्यासनादिनाअनुचिंत्यमानापिब्रह्मचिंताआत्यंतिकाहंभावोपशमनेसाध्येउत्तरोत्तरभूमिकासुनिर्विकल्पसमाधिपरिपाचनक्रमेणचरमभूमिकायामंबरोपमाभावनीयासंपाद्या ॥ नैतावतैवत्वयोपरंतव्यमित्यर्थः ॥ ३९ ॥ तर्हिकिंभवदादीनामपितथासाभावनीयाने

अक्षरंध्रप्रणालेनविसृतंवेदनोदकम् ॥ व्याप्नोतित्रिजगद्धूमोवियन्मेघतयायथा ॥ ३५ ॥ देहेयद्यप्यशेषेस्मिन्बहिरंतश्चवेदनम् ॥ विद्यतेतत्तथाप्यत्रशुक्रेस्तिघनवासना ॥ ३६ ॥ जीवःसंकल्पमात्रात्मायत्संकल्पोवतिष्ठते ॥ हृदिभूत्वासएवाशुबहिःप्रसरतिस्फुटम् ॥ ३७ ॥ यथास्थितांचनिश्चित्तांवर्जयित्वास्थिरोपमाम् ॥ नकयाचिदपिस्थित्याशाम्यत्यहमितिभ्रमः ॥ ३८ ॥ चिंतानुचिंत्यमानापिभावनीयांबरोपमा ॥ अहंभावोपशमनेशमनेनक्रमेणते ॥ ३९ ॥ तज्ज्ञाव्यवहरंतीहभाव्यभावनवर्जितम् ॥ अरूपालोकमननंमौनंदारुनराइव ॥ ४० ॥ अकिंचिद्भावनोयःस्यात्समुक्तइतिकथ्यते ॥ जीवन्नाकाशविशदोबंधशून्यइवस्फुटम् ॥ ४१ ॥ अहमित्येवशुक्रस्थासंविदापादमस्तकम् ॥ विसरत्यखिलेदेहेब्रह्मांडेर्कप्रभायथा ॥ ४२ ॥ दृङ्नेत्रंस्वदनंजिह्वाश्रुतिःश्रोत्रंभवत्यसौ ॥ इत्याद्यावासनाःपंचबद्धातासुनिमज्जति ॥ ४३ ॥ चिद्भावोक्षतयोदेतिमनोभूत्वैकदेशतः ॥ सर्वगोपिरसोभूमौयथांकुरतयामधौ ॥ ४४ ॥ योभावयतिभावेपुनेहरूढेष्वभावताम् ॥ तस्यायत्नवतोदुःखमनंतंनोपशाम्यति ॥ ४५ ॥

त्याह ॥ तज्ज्ञाइति ॥ अरूपालोकमननंबाह्यमानसदृश्यदर्शनाभिमानरहितंयथास्यात्तथा ॥ मौनंकर्मेंद्रियव्यापारशून्यंच ॥ ४० ॥ बंधशून्यःशृंखलादिनिर्मुक्तइव ॥ ४१ ॥ सर्वशरीरेहंऽभावव्याप्तिरपिशुक्रांशव्याप्तिवशादेवेत्याह ॥ अहमिति ॥ ४२ ॥ चक्षुरादींद्रियभावेनतत्तत्स्थानसंबंधोपिशुक्रालभूतस्यैवजीवस्येत्याह ॥ दृगिति ॥ दृगिंद्रियंनेत्रंतद्गोलकम् ॥ एवमग्रेपि ॥ अतएवहिरूपादिदर्शनस्पर्शनश्रवणादौसर्वैंद्रियैरपिकामोद्दीपनान्निमज्जतीत्यर्थः ॥ ४३ ॥ अज्ञानावृतचितोविपरीतभावनैवप्रथमंमनोभूत्वारेतोहंभावेनैकदेशतोऽक्षतयातत्तदिंद्रियभावेनोदेतीत्यर्थः ॥ ४४ ॥ अतएवतत्प्रतिकूलयथार्थभावनांविनानतद्दुःखोपरमइत्याह ॥ यइति ॥ यःपुरुषइहसंसारेरूढेषुमनोहंकारदेहादिजगद्रूपेषुवाचारंभणंविकारोनामधेयम नेहनानास्तिकिंचन अथातआदेशोनेतिनेतीत्यादिश्रुतिदर्शितामभावनांनभावयति ॥ तस्यमोक्षानुकूलयत्नरहितस्यपुंगर्दभस्यानंतंजन्मादिदुःखंनोपशाम्यत्येवेत्यर्थः ॥ ४५ ॥

तथाभावयतस्तुबाह्यसर्वस्वत्यागेपिप्रारब्धाकृष्टजनैःसंपाद्यमानवसनाशनादिभिरांतरस्वानंदामृततृप्त्याचवैराजपदांतसाम्राज्यसुखमस्त्येवेत्याह ॥ येनकेनचिदिति ॥ ४६ ॥ वासनाभिर्ब्रह्माकारवासनाभिर्दग्धपटतंत्वाकारसदृशजगद्वासनाभिर्वा ॥ ४७ ॥ नबोध्यतेषष्ठादिभूमिकाप्रविष्टत्वादितिभावः ॥ ४८ ॥ स्फुटसारेरेतसि ॥ ४९ ॥ एवंव्यष्टिसमष्टिर्जीवभावादिवर्णनंपरमप्रस्तुतेयोजयन्नुपदेशसर्वस्वंसंक्षिप्याह ॥ संविन्मात्रमिति ॥ इतिपरमारहस्यभूताउपदेशभूरुपदेशस्थितिः ॥ ५० ॥ तत्रवैराग्यदार्ढ्यमेवसाधनरहस्यमित्याह ॥ नीरसइति ॥ ५१ ॥ पाषाणहृदयंकृत्वेत्युक्तेस्तात्पर्यंविशदयति ॥ साधोइति ॥ यथाअचित्ववपुषउपलस्यहृदयसौषिर्यमचित्त्वादेवचिन्निवेशानवकाशमसौषिर्यंप्रसिद्धंतथाचिन्मात्रवपुषस्तवदहराकाशरूपंहृदयसौषिर्यंचित्त्वादेवाचिन्निवेशनिरवकाशंचिन्निबिडितमसौषिर्यमिवास्त्वितितदाशयइत्यर्थः ॥ अथवाइयंतंकालमचि

येनकेनचिदाच्छन्नोयेनकेनचिदाशितः॥ यत्रक्वचनशायीहससम्राडिवराजते॥४६॥ वासनाभिरुपेतोपिसमग्राभिरवासनः॥अंतःशून्योप्यशून्यात्माखमिवश्वसनान्वितः॥ ४७॥ आसनेशयनेयानेस्थितोयत्नैर्नबोध्यते॥ निद्रालुरिवनिर्वाणमनोमनननिर्वृतः॥ ४८ ॥ संविन्मात्रंहिपुरुषःसर्वगोपिसतिष्ठति॥स्फुटसारेशरीरस्ययथागंधोब्जकेसरे॥ ४९ ॥ संविन्मात्रंविदुर्जंतुंतस्यप्रसरणंजगत् ॥ आत्मनिष्ठत्वमजगत्परमेत्युपदेशभूः॥ ५० ॥ नीरसोभवभावेषुसर्वेषुविभवादिषु॥पाषाणंहृदयंकृत्वायथाभवसिभूतये॥५१॥ साधोहृदयसौषिर्यमसौषिर्यमिवास्तुते॥ अचित्त्ववपुषोचित्वादुपलस्येवराघव ॥ ५२॥ तज्ज्ञाज्ञयोरशेषेषुभावाभावेषुकर्मसु॥ कृतेनिर्वासनत्वात्तुनविशेषोस्तिकश्चन॥ ५३ ॥ सत्तैवैषाविदोयत्साभवत्युन्मिषिताजगत्॥ परंतत्त्वंनिमिषितादृगिवानामकंततम् ॥ ५४ ॥ दृश्यंविनश्यत्यखिलंविनष्टंजायतेपुनः॥ यन्ननष्टंनचोत्पन्नंतत्सद्भवतितद्भवान् ॥ ५५॥ भावज्ञमिर्हिनिर्मूलाभावितापिनविद्यते॥ सलिलंमृगतृष्णेवनददातिभवांकुरम्॥ ५६॥

दात्माभिमानादचित्त्ववपुषस्तवअचित्त्वादज्ञानात्स्फटिकोपलस्यांतःकल्पितमाकाशमिवभोगसामग्रीधनादिलाभकोटिभिरप्यपूर्यमाणंकामलक्षणंहृदयसौषिर्यमनश्छिद्रंसांप्रतंनित्यनिरतिशयानंदपूर्णात्मलाभात्पूर्णकामत्वेनबाधितंवास्तवंस्फटिकोपलासौषिर्यमिवानंदैकघनमस्त्वितितदाशयइत्यर्थः ॥ ५२ ॥ अतएवस्फटिकोपलप्रतिबिंबितजनव्यवहारकर्मस्विवतज्ज्ञाज्ञयोःप्रतीतिसाम्येपिसत्यत्ववासनाभावकृतएवविशेषइत्याह ॥ तज्ज्ञेति ॥ ५३ ॥ एवंचस्फटिकोपलेद्रष्टृपुरुषदृष्टिरिवविदश्चैतन्यस्यसत्तैववासनाभिरुन्मिषिताजगद्भवतिनिर्वासनत्वेननिमिषिताततमपरिच्छिन्नतत्त्वंमोक्षाख्यंभवतीतिफलितमित्यर्थः ॥ ५४ ॥ अतएवचित्सत्तैवनित्यात्वमित्याह ॥ दृश्यमिति ॥ ५५ ॥ ईदृशबोधेनमूलाज्ञाननाशेसत्यन्वेषणेपिजगद्भ्रांतिर्नलभ्येत्याह ॥ भावेति ॥ भावज्ञमिर्जगद्भ्रांतिः ॥ निर्मूलाबाधितमूला ॥ भाविताअभ्यस्तापि ॥ ५६ ॥

॥ ५७ ॥ अतएवविहितकर्मकरणाकरणयोर्विदुषामविशेषइत्याह ॥ कर्मेति ॥ ५८ ॥ समनसोपियोगिनःशांत्यादिवशादात्मनिकुतोनतिष्ठंतितत्राह ॥ चित्तेति ॥ येहठाच्छां तायोगिनस्तेपिचित्तोपशांतौसत्यामेवसम्यक्शांताभवंतिनान्यथा ॥ यतस्तेषांभोगेनवध्नंनीतिभोगबंधवोभोगवासनानस्वभावपरिक्षीणामूलतश्छिन्नाः हियस्मादेषामाकरः खनीभूतंचित्तमस्त्येवेत्यर्थः ॥५९॥ चित्तदेहादिरूपेणघनीभावएवजीवस्यभेदकस्तापकश्चतदभावेत्वयंब्रह्माभिन्नोनिस्तापएवेत्याह ॥ अघनइति ॥ अघनोमूर्त्तिशून्योजीवः केवलचिदालोकमात्रःशोधितत्वंपदार्थःपरायतेपराभेदयोग्योभवतीत्यर्थः॥ आतपपक्षेअघनोमेघावरणनिर्मुक्तःअरवरश्च ॥६०॥ तदेवाघनंकेवलचिदालोकस्वरूपमात्मनोनु भावयति ॥ एकदेशेति ॥ पुंसोदेहात्दूरंदूरस्थादित्यचंद्रादिविषयंचक्षुरादिद्वारायानस्यचेतसश्चित्तवृत्तेर्मध्येविच्छेदाभावाद्देहमारभ्यचंद्रमंडलपर्यंतमविच्छिन्नाअपरोक्षचिद भिव्यक्तास्त्येव ॥ तस्यादेहप्रदेशेचंद्रप्रदेशेचसविषयत्वेप्यंतरालेनिर्विषयंयद्रूपंप्रसिद्धंतद्रूपमेवसकलंपूर्णंपरमात्मनःपरिचेयमित्यर्थः ॥ तथाचश्रुतिः ॥ तद्विष्णोःपरमंपदंसदाप

यथाभूतार्थसंदर्शाच्छिन्नाहमितिभावना ॥ दृष्टापिनकरोत्यंतर्दग्धंबीजमिवांकुरम् ॥ ५७ ॥ कर्मकुर्वन्नकुर्वन्वावीतरागोनिरामयः॥ निर्मनानित्यनिर्वाणःपुमानात्मनितिष्ठति॥ ५८ ॥ चित्तोपशांतौसंशांताःशांतायेभोगबंधवः॥ नस्वभावपरिक्षीणाश्चित्तमेषांकिलाक रः॥ ५९ ॥ अघनःकेवलालोकोबुधोजीवःपरायते॥ सएवान्योप्यनन्योंतरपराह्णइवातपः॥ ६० ॥ एकदेशस्थितात्पुंसोदूरायातस्यचे तसः॥ यद्रूपंसकलंमध्येतद्रूपंपरमात्मनः॥ ६१ ॥ चारुचिद्व्योमकर्पूरंयच्चमत्कुरुतेस्वयम्॥ अनंतमंतरव्यक्तंजगदित्येववेत्तितत् ॥ ६२ गतभवभ्रमभासुरमक्षयंशममुपेतमुपेक्षितदीपवत्॥ स्थितमपीहजनंजगदीश्वरादनुगतंननुभातिमुदाचखे॥ ६३ ॥ ॥इ०वा०म हारामायणेवा०दे० मोक्षोपायेषुनिर्वाणप्रकरणेउत्तरार्द्धेसुखयोगोपदेशोनामद्वाविंशतितमःसर्गः॥ २२ ॥ ॥श्रीवसिष्ठउवाच॥ ॥ विरागवासनापास्तसमस्तभववासनः॥ उत्थायगच्छप्रकृतेरस्यामंकिरिवांकितः॥ १ ॥ मंकिर्नामाभवत्पूर्वंब्राह्मणःसंशितव्रतः ॥ स कथंशृणुनिर्वाणमाप्नवान्मद्विबोधितः॥ २ ॥

भिस्यंतिसूरयः दिवीवचक्षुराततमिति ॥ ६१ ॥ निर्विषयाचितएवायंमायाचमत्कारोजगदित्याह ॥ चार्विति ॥ अव्यक्तमनभिव्यक्तम् ॥६२॥ एवमिदंजगत्तत्त्वज्ञजनंप्रतिगत भवभ्रमभासुरमुपेक्षितदीपवत्शमंनिर्वाणमुपेतमक्षयंब्रह्मैवभाति ॥ अज्ञजनंप्रतितुनियंतुरीश्वरात्सकाशात्सर्वनियतिव्यवस्थाभिर्मुदाभोगप्रीत्याचानुगतंखेआकाशोदरेपरमार्थ तःस्थितमपिभातीतिदृष्टिभेदमात्रमित्यर्थः ॥ ६३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेद्वाविंशतितमःसर्गः ॥ २२ ॥ ॥ ७ ॥ ॥ मं किनोमरुकांतारेवसिष्ठेनात्रसंगमः ॥ निर्वेदात्तत्त्वजिज्ञासोरुपदेशश्चवर्ण्यते ॥ १ ॥ नीरसोभवभावेषुसर्वेषुविभवादिष्वितियद्वैराग्यदार्ढ्यस्यावश्यकत्वमुक्तंतत्प्रतिष्ठापनायमं क्युपाख्यानमारभते ॥ विरागेत्यादिना ॥ अस्याःपरिदृश्यमानायाःप्रकृतेःस्वाभाविकाज्ञानादिरूपायाःसंसृतेस्तत्त्वबोधेनोत्थायनिर्वाणात्मपदंगच्छेत्यर्थः ॥ अंकितस्तल्लक्ष णैश्चिह्नितः॥ १ ॥ मयाविबोधितउपदिष्टः॥ २ ॥

केनापियज्ञादिरूपेणभवत्पितामहस्याऽजस्यार्थेनप्रयोजनेनप्रागुपनिमंत्रितःसन् ॥ ३ ॥ त्वत्पितामहस्यपत्तनंनगरमयोध्यांप्रतिगच्छन्गमिष्यन्सप्तर्षिलोकाद्भूतलंप्राप्यविहरन्संचरन् ॥ अरण्यानींमहारण्यम ॥ हिमारण्ययोर्महत्त्वेइंद्रवरुणेत्यादिनाआनुक् ॥४॥ पांसूनांप्रतर्द्दनेनाविच्छिन्नप्रसरेणहतांध्वस्तांधूसरामितियावत् ॥ अंकितांकुपामैरितिशेषः ॥५॥ अविद्यमानपांस्वादिनाऽक्षुब्धस्यखस्याकाशस्यानिलस्यझंझापवनस्यआलोकस्यातपस्यमृगतृष्णाजलस्यतमभुवश्चशांत्याशालिनींशोभमानाम्॥दुर्गमत्वाद्भंतूर्णांमहांतआरंभाःप्रयत्नायत्र ॥ अमलांनिष्पंकाम् ॥ ब्रह्मसत्तापक्षेस्पष्टम् ॥६॥ जडतांगतामित्यनुषज्जते ॥७॥ वदंतंव्यक्तंभाषमाणम ॥८॥ यथापापोदुर्जनेनसंगमःपरितापायतथाप्रौढप्रायातपोयंरविः परिखेदायेत्यर्थः ॥९॥१०॥ तत्तस्माद्धेतोः ॥११॥ मयातद्भाग्योदयकालंज्ञात्वातदीयसर्वश्रममूलोच्छेदायेदंतत्त्वबुभुत्सोत्पादकंसाभिप्रायंवक्ष्यमाण

अहंकदाचिदाकाशकोशादवनिमागतः॥ भवत्पितामहार्थेनकेनाप्युपनिमंत्रितः॥ ३ ॥ विहरन्भूतलंगच्छंस्त्वत्पितामहपत्तनम्॥ प्रातोस्मिकामप्यादीर्घामरण्यानींमहातपाम्॥४॥ पांसुप्रतर्द्दनहतांप्रकचत्तमसैकताम्॥ अदृष्टापारपर्यंतांक्वचिद्ग्रामकिलांकिताम्॥५॥ अक्षुब्धखानिलालोकजलभूशांतिशालिनीम्॥ ततांशून्यांमहारंभांब्रह्मसत्तामिवामलाम्॥६॥ अविद्यामिवसंमोहमृगतृष्णांगतांभ्रमात्॥ जडतामाततांशून्यांदिङ्मोहमिहिकाकुलाम्॥७॥ अथतस्यामरण्यान्यांयावत्प्रविहराम्यहम्॥तावत्पश्यामिपुरतोवदंतंपथिकंश्रमात्॥८॥ ॥पांथउवाच॥ ॥अहोनुपरिखेदायप्रौढप्रायातपोरविः॥ परितापायपापोयंदुर्जनेनेवसंगमः॥ ९ ॥ सुगलंतीवमर्माणिस्फुरतीवाग्निरातपे॥ संकुचत्पल्लवापीडास्ताप्यंतेवनराजयः ॥ १० ॥ तत्तावदेवमग्रस्थंग्रामकंप्रविशाम्यहम् ॥ श्रममत्रापनीयाशुवहाम्यध्वानमाशुगः॥ ११ ॥इतिसंचिंत्यसोग्रस्थंकिरातग्रामकंयदा॥ प्रवेष्टुमिच्छतितदामयाप्रोक्तमिदंवचः॥ १२ ॥ अपरिज्ञातनीरागमार्गमित्रशुभाकृते॥ मरुमार्गमहारण्यपांथस्वागतमस्तुते॥ १३ ॥ चिरंमनुष्यदेशेस्मिन्निर्जनग्राममध्वनि ॥ अधराध्वगविश्रांतिविश्रांतोपिनलप्स्यसे॥ १४ ॥ ग्रामेविश्रमणंनैववर्त्ततेपामरास्पदे॥ तृड्ढैलवणपानेनभूयएवाभिवर्द्धते॥ १५॥

वाक्यमुक्तमित्यर्थः ॥ १२ ॥ नपरिज्ञातोनीरागाणामकिंचनानांसंचारयोग्यआतिथेयजनसंभृतोमार्गोयेनेत्युत्तानार्थः ॥ अतएवमरुमार्गमहारण्यपांथ ॥ अभिप्रेतार्थांतरंतुस्पष्टम् ॥ हेमित्रतेऽत्रागमनंमद्दर्शनेनसर्वदुःखमूलक्षयात्स्वागतमस्तु॥१३॥नस्याधराध्वगेतिसंबोधनात्स्वस्यतदानभोध्वगमनंसूच्यते ॥ निर्जनपाममातिथेयजनशून्यपामंयथास्यात्तथास्थितेद्दतिशेषः ॥ प्राक्तनपामेष्वन्नपानप्रतिश्रयादिलाभाद्विश्रांतोप्यपेविश्रांतिनलप्स्यसेइत्युत्तानार्थः ॥ आशयार्थेतुहेअधरकर्माध्वगअस्मिन्कर्मोपासनलभ्यदक्षिणोत्तरायणमार्गलक्षणेऽध्वनिस्वर्गादिभूमिपुर्किंचित्किंचिद्विश्रांतोपिनिर्जनपामंजननंजनोनिर्गतजन्मसमूहंयथास्यात्तथामोक्षवच्चिरंविश्रांतिनलप्स्यसेइतियोज्यम ॥ १४ ॥ नैववर्त्ततेपामराणांदुर्वाक्यादिनाप्रत्युतक्षोभकारित्वादित्युत्तानोभावः ॥ आशयार्थस्तुपामेकर्तृकरणसंघातालयेदेवमनुष्यादिदेहे ॥ पामराणांकामद्वेषादीनामालये ॥ यदिमन्यसेविषयोपभोगैर्विश्रांतिरितितत्राह ॥ तृड्डिति ॥ तथाचोक्तंययातिना ॥ नजातुकामःकामानामुपभोगेनशाम्यति हविषाकृष्णवर्त्मेवभूयएवाभिवर्द्धतइति ॥ १५ ॥

32

पल्लवाःपुलिंदजातिभेदाः ॥ आरण्यकत्वाज्जनपदस्पंदाद्भीरवस्तमसहमानाइत्युत्तानार्थः ॥ आशयार्थेत्वेतेकामादयःपल्लववत्स्लेहरागादियुक्ताविवेकस्पंदभीरवः अयथापथसंचाराःअशास्त्रीयमार्गप्रवणाः ॥ १६ ॥ नस्फुरंतीत्याद्युभयतःस्पष्टंयोज्यम् ॥ अश्ममयंत्रमयाःप्रतिमादयइव ॥ १७ ॥ १८ ॥ आभिजात्यंविशुद्धोभयकुलतातेनाततात्प्रज्ञाइहजनेषुनविश्वसिति ॥ १९ ॥ अंधयतीत्यंधाअंधकारावृतागुहातस्यामहित्वमजगरता ॥ २० ॥ विषकणामधुमिश्रविषकणाः ॥ २१ ॥ भस्मकणाकीर्णाधूलिधूसरामामेभवाग्राम्यायेअधार्मिकाजनास्तल्लक्षणावायवश्चंडपवनावांतिसंचरंति ॥ २२ ॥ एवंमयाउक्तेनसंभाषितेनतेनमंकिनामदाशयबोधादयंमामुद्धरिष्यतीतिसम्यगाश्वासंप्राप्याहमिदंवक्ष्यमाणमुक्तः ॥ २३ ॥ पूर्णात्मात्वमितिशेषः ॥ २४ ॥ पूर्णात्मतामेवहेतुवितर्कैःप्रकटयति ॥ किंत्वयेति ॥ सम्राट्सर्वलोकेश्वरः ॥ संपूर्णश्चंद्रइवराजसे ॥२५॥

एतेग्रामैकशरणाःपल्लवाःस्पंदभीरवः॥ अयथापथसंचाराहरिणाइवजंतवः ॥ १६ ॥ नस्फुरंतिविचारेषुप्रज्वलंत्यनुभूतिषु॥ नत्रस्यंतिदुराचारादश्मयंत्रमयाइव ॥ १७॥ कामार्थरागसद्वेषपरिनिष्ठितपौरुषाः॥ कर्मण्यापातमधुरेरमंतेदग्धबुद्धयः॥ १८ ॥ आभिजात्याततोदाराशीतलारसशालिनी॥ नेहविश्वसितिप्रज्ञामेघमालामराविव ॥ १९ ॥ वरमंधगुहाहित्वंशिलांतःकीटतावरम्॥ वरंमरौपंगुमृगोनग्राम्यजनसंगमः॥ २० ॥ निमेषास्वादमधुराःक्षणांतरविरागिणः॥ मारणैकांतनिरताग्राम्याविषकणाइव ॥ २१ ॥ वांतिभस्मकणाकीर्णाजीर्णाःसंशीर्णसद्मसु ॥ तृणपर्णवनव्यग्राग्राम्याधार्मिकवायवः॥ २२॥ एवमुक्तेनतेनाहमिदमुक्तस्ततोनघ॥ मद्वाक्येनसमाश्वास्यस्नातेनेवाम्रृतांभसा॥ २३॥ ॥ पांथउवाच॥ भगवन्कोसिपूर्णात्मामहात्माकथमात्मवान्॥ पश्यस्यनाकुलोलोकंग्रामयात्रामिवाध्वगः॥ २४ ॥ किंत्वयापीतमम्रृतंकिंत्वंसम्राड्विराडथ ॥ सर्वार्थरिक्तोपिचिरंसंपूर्णइवराजसे॥ २५॥ शून्योसिपरिपूर्णोसिघूर्णोसीवस्थिरोसिच॥ नसर्वमपिसर्वंचनकिंचित्किंचिदेवच॥ २६॥ उपशांतंचकांतंचदीप्तमप्रतिघातिच॥ निवृत्तंचोर्जितंतादृग्रूपंकिमितितेमुने॥ २७॥ भूसंस्थोपिसमस्तानांलोकानामुपरीवखे ॥ संस्थितोसिनिरास्थोसिघनास्थोसीवलक्ष्यसे ॥ २८॥ प्रसृतंनपदार्थेषुनपदार्थात्मनास्तिवै॥ तवेंदोरिवशुद्धस्यमनोम्रृतमयंस्थितम्॥ २९॥ कलावानकलंकोंतःशीतलोभास्वरःसमः॥ रसायनभरापूर्णःपूर्णेंदुरिवराजसे॥ ३० ॥

सांसारिकदोषदुःखैःशून्योसि ॥ निरतिशयानंदेनजीवन्मुक्तगुणैश्चपरिपूर्णोसि ॥ देहाद्यप्रतिसंधानान्मदघूर्णोसीव ॥ परमार्थेस्थिरोसीव ॥ नसर्वमितिसमष्ट्यपवादाध्यारोपदृष्टिभ्याम् ॥ नकिंचिदितिव्यष्ट्यपवादाध्यारोपदृष्टिभ्याम् ॥ २६ ॥ ईदृशोहंकथंत्वयाज्ञातइतिचेत्त्वद्रूपदर्शनादितिसूचयन्नाह ॥ उपशांतमिति ॥ तथाचश्रुतिः ॥ रूपमेवास्यैतन्महिमानंव्याचष्टइति ॥ २७ ॥ मादृशानामुद्धारेघनास्थोसीवलक्ष्यसे ॥ २८ ॥ इंदोरिवशुद्धस्यतवाम्रृतमयंमनःइंदुकरवत्पदार्थेषुनप्रसृतंनाप्यौषधिवनस्पतिसोमाज्यपयोन्नादिपदार्थात्मनाउपभोगार्हमस्तियेनक्षीयेत ॥ अतःसदैवपूर्णंस्थितमितितवचंद्रादतिशयइत्यर्थः ॥ २९ ॥ अन्यदपितत्साम्यंविशेषंचाह ॥ कलावानिति ॥ ३०॥

एवंहिरण्यगर्भसाम्यंततोविशेषश्चतेऽस्तीत्याह ॥ त्वदिच्छायामिति ॥ सार्वज्ञ्यसर्वशक्त्यादिसंपन्नस्यतेचितिआत्मनिअंकुरेकांडादिफलांतंवृक्षरूपमिवेदंसंसारमंडलंसर्गयोग्यतयास्थितंपश्यामिसंभावयामि ॥ तत्सर्गार्थंत्वदिच्छायांतुसदसद्भावंपश्यामिसंवेद्मि ॥ यदीच्छसितर्हित्वमपिजगत्स्रष्टुंशक्तोष्येवपरंतुनेच्छसीत्ययंततोविशेषइतिभावः ॥ ३१ ॥ एवंप्रशंसयाभिमुखीकृतायवसिष्ठायस्ववैराग्यादिसाधनसंपत्त्योपदेशार्हतांदर्शयितुंस्वगोत्रनामादिकीर्त्तयति ॥ अहमित्यादिना ॥ ३२ ॥ ३३ ॥ तडित्सकाशानिक्षणभंगुराणि ॥ ३४ ॥ आत्मानंनामगोत्रादिनाकथयेत्युत्तानार्थः ॥ सत्यमितिविशेषणस्वारस्यात्परमात्मानमुपदिशेत्याशयार्थः ॥ ३५ ॥ ३६ ॥ तमेवाशयंस्फुटमाह ॥ ममेति ॥ अ

त्वदिच्छायांतुसदसद्भावंपश्यामितेचिति ॥ संसारमंडलमिदंस्थितंफलमिवांकुरे ॥ ३१ ॥ अहंतावदयंविप्रःशांडिल्यकुलसंभवः ॥ मंकिर्नाममहाभागतीर्थयात्राप्रसंगतः ॥ ३२ ॥ गत्वासुदूरमध्वानंदृष्ट्वातीर्थानिसंप्रति ॥ चिरकालेनसदनमात्मीयंगंतुमुद्यतः ॥ ३३ ॥ नचमेगंतुमुद्योगोविरक्तमनसोगृहम् ॥ दृष्ट्वातडित्सकाशानिभूतानिभुवनोदरे ॥ ३४ ॥ भगवन्सत्यमात्मानंकथयेहानुकंपया ॥ गंभीराणिप्रसन्नानिसाधुचेतःसरांसिहि ॥ ३५ ॥ दर्शनादेवमित्रत्वंकुर्वतांमहतांपुरः ॥ कमलानीवभूतानिविकसंत्याश्वसंतिच ॥ ३६ ॥ ममेदंचमनोमोहात्संसारभ्रमसंभवम् ॥ मन्येहातुंनसमर्थंसत्त्वंबोधानुकंपितैः ॥ ३७ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥ वसिष्ठोस्मिमहाबुद्धेमुनिरस्मिनभोगृहः ॥ केनाप्यर्थेनराजर्षेरिमंमार्गमुपस्थितः ॥ ३८ ॥ मागाविषादंपंथानमागतोसिमनीषिणाम् ॥ प्रायःप्राप्तोसिसंसारसागरस्यपरंतटम् ॥ ३९ ॥ वैराग्यविभवोदारामतिरुक्तिरपीदृशी ॥ आकृतिःशांतरूपाचनभवत्यमहात्मनः ॥ ४० ॥ मणिर्मधुरकाषेणययैतिविमलात्मताम् ॥ तथाकषायपाकेनचित्तमेतिविवेकिताम् ॥ ४१ ॥ किंज्ञातुमिच्छसिकथंसंसारंहातुमिच्छसि ॥ उपदिष्टमहंमन्येसंपादयतिकर्मभिः ॥ ४२ ॥

प्यर्थेचकारः ॥ ममेदमीषद्विवेकशाल्यपिमनोमोहादज्ञानसंशयप्राबल्यात्संसारभ्रमसंभवंदुःखंहातुंनिःशेषमुच्छेत्तुंविनागुरूपदेशंस्वविमर्शकौशलमात्रेणनसमर्थमितिमन्येपुनःपुनर्मननेननिश्चितवानस्मि ॥ अतःसप्राग्वर्णितमदुद्धरणसामर्थ्यस्त्वंरहस्यबोधानुकूलैरुपदेशानुकंपितैर्मोहसंशयोच्छेदेनदुःखक्षयसमर्थंकुर्वितिशेषः ॥ ३७ ॥ राजर्षेरजस्य ॥ केनापियाजनादिरूपेणार्थेन ॥ ३८ ॥ परंतटंपरतीरम् ॥ ३९ ॥ मनीषिणांपंथानमहंप्राप्तइत्यत्रकिंलिंगंतत्राह ॥ वैराग्येति ॥ अमहात्मनोज्ञानाधिकारभाग्यहीनस्य ॥ ४० ॥ विवेकोदयोपिचित्तकषायपाकेतवलिंगमित्याह ॥ मणिरिति ॥ मधुरेणमृदुनाकाषेणशाणघर्षणेन ॥ ४१ ॥ शिष्योगुरुणोपदिष्टमर्थंपुनःपुनःस्वपरिशीलनाज्ज्ञातारंपुनःश्रवणधारणादिकर्मभिर्यतःफलपर्यवसितंसंपादयति ॥ अतस्त्वंस्वाज्ञातजिज्ञासितांशंवदेत्यर्थः ॥ ४२ ॥

खलुयस्माद्धेतोर्यःशिष्योविमलारागादिमलशून्यावासनायस्य अतएवोत्तमवैराग्यादिसाधनत्रयसंपन्नमानसोभवति परिविविक्तानित्यानित्यसारासारादिविवेकशालिनीमतिर्यस्यतथाविधश्च सएवगुरुजनस्योपदेशतेजसाअशोकमालमतत्त्वपदंप्राप्तुंयुज्यतेयोग्योभवतिनेतरः ॥ अतःकारणाज्जनिभ्योजन्मादिसर्वदुःखेभ्यस्तितीर्षुरुत्तरणेच्छुर्मतिर्यस्यतथाविधस्यसंभाषणपरीक्षणेनज्ञाताधिकारस्यैवतवमयेदमुच्यतेनान्यादृशस्यअतःस्वपूर्वोत्तरवृत्तांतंवदेत्यर्थः ॥ ४३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उत्तरार्द्धेत्रयोविंशतितमःसर्गः ॥ २३ ॥ ॥ ७ ॥ ॥ देहेंद्रियमनोबुद्धिदोषाद्यैःसहविस्तरात् ॥ सांसारिकंस्वदुःखौघंमंकिनेहोपवर्ण्यते ॥ १ ॥ समंकिःइतिएवमुक्तवतोममपादयोर्विनिपत्यआनंदवाष्पपरिपूर्णाक्षंयथास्यात्तथामार्गेमांवहन्सन्नानंदपूर्णमक्षमिंद्रियकलापंवहन्नितिवाइदंवक्ष्यमाणमुवाच ॥ १ ॥ हेभगवन्स्वसंशयविच्छेदायोपदेशकुशलसाध्वन्वेषणपरेणमयादृशोदृष्टयोयथादिक्षुभूरिशोभ्रमंतितथादिशोभ्रांताः ॥ २ ॥ अद्यमयात्वल्लाभात्समस्तेषुदेवासुरतिर्यगादिदेहेषुसाराणांब्राह्मणदेहानांमध्येज्ञानाधिकारसं

विमलवासनउत्तममानसःपरिविविक्तमतिर्जनतेजसा ॥ पदमशोकमलंखलुयुज्यतेजनितितीर्षुमतेरिदमुच्यते ॥ ४३ ॥ ॥इत्यार्षेवा०वा०दे०मो०नि०उ०मंक्युपाख्यानेमंकिनिर्वाणंनामत्रयोविंशःसर्गः॥ २३ ॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥ममेत्युक्तवतोमंकिर्विनिपत्यसपादयोः॥ उवाचानंदपूर्णाक्षमिदंमार्गेवहन्वचः ॥ १ ॥ ॥मंकिरुवाच॥ ॥भगवन्भूरिशोभ्रांतादिशोदशदृशोयथा ॥ मयानतुपुनःसाधुर्लब्धःसंशयनाशकृत् ॥ २ ॥ समस्तदेहसाराणांसारस्याद्यफलंमया॥ खिन्नोस्मिभगवन्पश्चनृदशाःसंसारदोषदाः॥ ३ ॥ पुनर्जातंपुनर्नष्टंसुखदुःखभ्रमःसदा॥ अवश्यंभाविपर्यंतदुःखत्वात्सकलान्यपि॥ ४ ॥ सुखान्येवातिदुःखानिवरंदुःखान्यतोमुने॥ दृढदुःखवदंतत्वाद्दुःखयंतिसुखानिमाम् ॥ ५ ॥ तथारामयथादुःखमेवमेसुखतांगतम्॥ वयोदशनलोमांत्रैःसहजर्जरतांगताम्॥ ६ ॥ उच्चैःपदेपातपराबुद्धिर्नाध्यवसायिनी॥ सुप्रवालंकुसंकल्पाद्गहनंनप्रकाशते॥ ७॥

पत्त्यासारस्यंस्वदेहस्यफलंलब्धमितिशेषः ॥ ३ ॥ खेदमेवहेतुभिःसहप्रपंचयति ॥ पुनरित्यादिना ॥ जातंजन्म ॥ नष्टंमरणम् ॥ ननुसदादुःखभ्रमइतिकुतःसुखानामपिसंसारेनुभूयमानत्वात्तत्राह ॥ अवश्यमिति ॥ सकलान्यपिसुखान्यवश्यंभाविपर्यंतदुःखत्वादतिदुःखान्यत्यंतदुःसहानिदुःखान्येवेतिपरेणान्वयः ॥ ४ ॥ अतएभ्यःसुखेभ्योदुःखान्येववरम् ॥ अविच्छिन्नादुःखपरंपराहिजलचरैस्तच्छीततेवाभ्यासात्सह्यापिस्यात्सुखविच्छिन्नाभ्यासात्तुसादुःसहेतिभावः ॥ प्रबलतरदुःखानुबंधित्वाद्दाकोद्रवान्नजीवनेदुःखापेक्षयाविषसंपृक्तमोदकास्वादसुखेष्विवक्षुद्रदुःखपरंपरापेक्षयाभोगसुखेषुद्वेष्यताधिक्यमुचितमित्याह ॥ दृढेति ॥ ५ ॥ हेरामहेसौम्येतिवसिष्ठसंबोधनम् ॥ सुखानिमांतथादुःखयंतियथामेदुःखमेवसुखतांगतंभवतीत्यन्वयः ॥ इदानींतत्त्वज्ञानानुपयुक्तानांवयःप्रभृतीनांवृथाजीर्णतामनर्थपरंपराबीजतांचदर्शयति ॥ वयइत्यादिना ॥ जर्जरतांशिथिलताम् ॥ ६ ॥ उच्चैःपदेउत्तरोत्तरभोगोत्कर्षस्थानेपातोऽभिलाषस्तत्पराबुद्धिर्नपरमपुरुषार्थसाधनाध्यवसायिनी ॥ मनस्तूत्तरोत्तरंवर्द्धमानैरागपल्लवैःसुप्रवालंपल्लवितमतीतभोग्यकोटिगोचरशोकमोहादिकुसंकल्पाच्चगहनंदुर्विवेकमतएवस्वस्वदोषादिसाक्षिविवेकेननप्रकाशते ॥ ७ ॥

तत्रदृष्टांतमाह ॥ पिप्पलेति ॥ पिप्पलानामश्वत्थादीनांपल्यूलैःप्लवमानैःशुष्कपर्णादिसंचयैर्गहनंकुग्रामांतरालमिवस्थितिर्जीविकापिनानाभोगवासनापूतिगंधानंगेवहंतीति वासनांगवहैरतएवगृध्रैर्गृध्रप्रायैरिंद्रियैःकुग्रामस्थितिरिवनित्यंपापीयसी ॥ ८ ॥ मतिश्चकरंजादिकंटकवल्लीवकरालाकुटिलाच ॥ आयुश्चआयासशालिन्यातमोंधयासंतत विषयचिंतयाअनागतालोकमप्राप्तदीपादिप्रकाशमक्षिचक्षुस्तमोंधयायामिन्येवाप्राप्तब्रह्मदर्शनालोकंवथाक्षीणमितिपरेणान्वयः ॥ ९ ॥ तृष्णाशुष्कलतेवनकिंचिद्विवेकरस मादत्ते ॥ पुनःपुनर्मोघीभावान्नष्टापिननश्यति ॥ १० ॥ ननुकर्मभिरेवतवोद्धारःकिंनस्यात्तत्राह ॥ कर्मेति ॥ यत्किंचिन्नित्यनैमित्तिकंकर्मकृतंतत्प्राक्तनदुष्कर्मराशौकतिपय भागक्षपणेननिर्मग्नमुपक्षीणमितियावत् ॥ भोगवासनाख्यंतुबीजमुत्तरोत्तरानर्थहेतवेअकर्मणेकाम्यनिषिद्धकर्मणिप्रवर्त्तयतीतिशेषः ॥ ११ ॥ जनेपुत्रकलत्रबांधवभृत्यादावा

मनःपिप्पलपल्यूलैरिवकुग्रामकोटरम् ॥ वासनांगवहैर्गृध्रैर्नित्यंपापीयसीस्थितिः ॥ ८ ॥ कंटकद्रुमवल्लीवकरालकुटिलामतिः ॥ आयु रायासशालिन्यायामिन्यंवतमोंधया ॥ ९ ॥ अक्षीवानागतालोकंक्षीणंसंततचिंतया ॥ नकिंचिद्रसमादत्तेनष्टैवापिननश्यति ॥ १० ॥ नपुष्पितानफलितातृष्णाशुष्कलतेवनः ॥ कर्मकर्मणिनिर्मग्नंवासनाख्यमकर्मणे ॥ ११ ॥ जीवितंचजनेजीर्णंनैवोत्तीर्णोभवार्णवः ॥ दिनानुदिनमुच्छूनाभोगाशाभयदायिनी ॥ १२ ॥ पूर्णापूर्णात्मनिक्षीणाःश्वभ्रकंटकवृक्षवत् ॥ चिंताज्वरविकारिण्योलक्ष्म्याःखलुम हापदः ॥ १३ ॥ संपन्नमक्षतंसापिविप्रलंभेनजृंभते ॥ अंतःस्फुरितरत्नेहंभास्वरंबांधकोटरम् ॥ १४ ॥ कल्लोलकलिलंशून्यंचेतःशुष्का ब्धिदुर्भगम् ॥ मामिंद्रियार्थैकपरंनस्पृशंतिविवेकिनः ॥ १५ ॥ सकंटकममेध्यस्थंश्लेष्मातकमिवद्रुमम् ॥ असदेवमहारंभंचलदर्जुन वातवत् ॥ १६ ॥

सत्त्याजीर्णम् ॥ १२ ॥ लक्ष्म्याअर्जनार्थामहापदस्तुश्वभ्रोत्पन्नकंटकवृक्षवत्पुत्रमित्रपशुधनादिभिःकदाचित्पूर्णैकदाचिदपूर्णात्मनिचमहेचिंताज्वरैर्विकारिण्यःक्षीणाःक्षपिताः ॥ १३ ॥ लक्ष्मीर्बहुतरधनादिभिःसंपन्नंशस्त्रादिभिरक्षतमपिपुरुषंभूयोभूयःप्रलोभ्यदूरमाकृष्यशत्रुदस्युवश्यतापादनेनसर्वसंपन्नाशशस्त्रघातादिदुःखपर्यवसायिनीविप्रलंभेन जृंभते ॥ यथासर्पशिरोमणिनाभास्वरमंधकोटरंसांधकारश्वभ्रमंतरदृष्टसर्पस्फुरितरत्नेहंपुरुषंस्वांतःप्रवेश्यसर्पदंशादिविप्रलंभेनजृंभतेतद्वत् ॥ इवार्थेवाशब्दाः ॥ रंभेहमितिपाठे अंतःप्ररूढसफलकदलीकंतादृशश्वभ्रंदृष्टांतः ॥ १४ ॥ चेतश्चित्तमप्याशासहस्रकल्लोलैःकलिलमस्वच्छंसर्वतःप्रधावनेप्यर्थशून्यमतएवशुष्काब्धिरिवदुष्पूरत्वाद्दुर्भगमतएव चित्तपरवशामिंद्रियार्थैकपरंमांविवेकिनोनस्पृशंतिउपेक्षंते ॥ १५ ॥ तत्रदृष्टांतमाह ॥ सकंटकमिति ॥ मनोपिविमर्शेअसदेव महांतःकर्मारंभायस्मात्तथाविधम् ॥ अर्जुनना वोवातरोगविशेषःसदैवभ्रमणकारीयथादेहेचलतितद्वत् ॥ १६ ॥

वह्नुशोऽप्नतेपिमयिमरणमप्राप्तमभिलषितार्थशून्यंदुःखायैववल्गतिधावति ॥ ननुशास्त्रसज्जनसंपर्काद्युपायैर्मनोनिगृह्यतामितिचेत्तावज्ज्ञानफलविवेकार्कोदयेनाज्ञानयामिनीन क्षीणातावच्छास्त्रसज्जनसंपर्कादयश्चंद्रतारकवन्नात्यंतिकमनोभ्रमविनाशायक्षमंतइत्याशयेनाह ॥ शास्त्रेतिद्वाभ्याम् ॥ १७ ॥ अहंभावएवउल्लुसन्बालकल्पितयक्षोयस्याम ॥ १८ ॥ १९ ॥ २० ॥ सेवादिनावशीकृतैःप्राज्ञैरुपायैर्यानाश्रितासापिमेअदृष्टिर्दृष्टिविघातइवांध्यायसंपन्नेत्यन्वयः ॥ एवंवर्णितरीत्यासर्वतोप्यनर्थप्रसक्त्याअतिसंमोहेम ग्रस्यममतदुत्तरणायउदर्केश्रेयसेमोक्षायचयत्कार्यंतत्कथयेतिसंबंधः ॥ २१ ॥ हेभगवन्शरदिशरत्कालेइवनिर्मलस्वच्छज्ञानविवेकादिज्योतिर्गणमंडितेसाधौगुरौप्राप्तेसति आकाशस्येवशिष्यस्यमोहलक्षणामिहिकाःशाम्यंति ॥ अखिलाआशादिशइवमनोरथाश्चविमलानिरस्तरागादिरजोमलाभवंतिइतिलोकेप्रसिद्धासाधुजनैरुपगीतावाक्भ वताकृतेनमदीयभवशांतिदेनमद्बोधनेनसत्याअवाधितार्थाभवत्वितिप्रार्थना ॥ २२ ॥ ॥ इतिश्रीवासिष्ठ॰म॰रा॰तात्पर्यप्रकाशेनि॰प्रकरणेउत्तरार्द्धेचतुर्विंशःसर्गः॥२४॥

मनोमरणमप्राप्तंशून्यंदुःखायवल्गति॥ शास्त्रसज्जनसंपर्कंचंद्रतारकधारिणी ॥ १७ ॥ अहंभावोल्लसद्यक्षाक्षीणानाज्ञानयामिनी ॥ अज्ञानध्वांतमत्तेभसिंहःकर्मवणानलः॥१८॥ उदितोनविकारार्कोवासनारजनीक्षयः॥ अवस्तुवस्तुवद्द्वंद्वंमत्तश्चित्तमतंगजः॥१९॥ इंद्रियाणिनिकृंततिनजानेकिंभविष्यति॥ शास्त्रदृष्टिरपिप्राज्ञैर्नाश्रितातरणायया॥ २०॥ साप्यदृष्टिरिवांध्यायवासनावेशकारिणी ॥ तदवमतिसंमोहेयत्कार्यमिहदारुणे॥ उदर्कश्रेयसेतातत्तन्मेकथयपृच्छते॥ २१ ॥ शाम्यंतिमोहमिहिकाःशरदीवसाधौप्राप्तेभवंतिविमलाश्चतथाखिलाशाः॥ सत्येतिवाग्भवतुसाधुजनोपगीतामद्बोधनेनभवताभवशांतिदेन॥ २२॥ ॥इ॰वा॰महारामायणेवा॰दे॰मो॰नि॰उ॰मंक्यु॰मंकिवैराग्यंनामचतुर्विंशतितमःसर्गः॥२४॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥संवेदनंभावनंचवासनाकलनेतिच॥ अनर्थायेहशब्दार्थौविगतार्थौविजृंभते॥ १॥ वेदनंभावनंविद्धिसर्वदोषसमाश्रयम्॥ तस्मिन्नेवापदःसंतिलतामधुरसेयथा॥ २॥ संसारमार्गेगहनेवासनावेशवाहिनः॥ उपयातिविचित्रौघैर्वृत्तवृत्तांतसंततिः॥३॥ विवेकिनोवासनयासहसंसारसंभ्रमः॥ क्षीयतेमाधवस्यांतेशनैरिवधरारसः॥४॥

संवेदनाद्यविद्योत्थंबंधबीजचतुष्टयम् ॥ परमात्मनिविद्याचतन्निहंत्र्यत्रवर्ण्यते ॥ १ ॥ एवंमंकिनास्वसंसारानर्थमुपवर्ण्यतन्निरासोपायेपृष्टेतद्बीजान्यपरिज्ञायतन्निरसनोपाया नसंपादयितुंशक्याइतितद्बीजचतुष्टयमुपपादयितुमुपदिशति ॥ संवेदनमिति ॥ प्रथमर्मिद्रियैर्विषयोपभोगलक्षणंसंवेदनमपगतेविषयेतद्गुणानुसंधानेनपुनःपुनर्भावनंतेनतदाकार लांछनरूपाचित्तेदृढवासनातयाचमरणादिकालेपिभाविदेहाद्यारंभानुकूलाकलनातत्स्मृतिरितिचतुर्विधइहसंसारेअनर्थायसर्वानर्थबीजभूतोमिथ्याभूतार्थगोचरत्वात्स्वयंमिथ्याभूतत्वाच्चविगतार्थःशब्दार्थःपदार्थोऽविद्ययाविजृंभतेइत्यर्थः ॥ १ ॥ तत्राद्ययोरत्यंतमनर्थताअंत्ययोस्तुतत्पृष्ठभावेनेत्याशयेनाह ॥ वेदनमिति ॥ तत्रापिभावनंमहानर्थ इत्याशयेनाह ॥ तस्मिन्निति ॥ यथापुष्पपल्लवादिसमृद्धालतामधुमासप्रवर्तितेतद्रसेसंततितत्परिणामत्वाल्लतासर्वस्वस्यतद्वदित्यर्थः ॥ २ ॥ ३ ॥ अतएवविवेकिनोविषयदोष भावनयाब्रह्मभावनयाचतत्क्षयेवासनयासहसर्वोपिसंसारःक्षीयतइत्याह ॥ विवेकिनइति ॥ ४ ॥

उत्तरसंसारस्यतुवासनैवप्रवर्त्तिकेत्याह ॥ अस्याइति ॥ सल्लकीसकंटकगुल्मविशेषः ॥ ५ ॥ चितौअज्ञानाश्रयजीवचैतन्ये ॥ ६ ॥ परमार्थापलापहेतुंतदावरणमज्ञानंदर्शयितुंपरमार्थंप्रथममाह ॥ चिन्मात्रादिति ॥ शून्यादद्वयाच्चिन्मात्रादृतेचित्सत्तास्फूर्त्तिभ्यामेव जगत्सत्तास्फूर्त्योःसर्वानुभवसिद्धत्वादित्यर्थः ॥ स्वतःसत्तास्फूर्त्यांतुनान्यत्किंचित्प्रसिद्धम् ॥ यथाखेशून्यत्वेतरद्प्रसिद्धंतद्वदित्यर्थः ॥ ७ ॥ एवंसर्वतःसर्वदास्फुरन्नपिसचिन्मात्ररूपोवेदनात्मादेहेंद्रियादिभ्योन्योनास्तिनभातिचेत्यसत्वाभानापादिकायास्थिरा अनादिःप्रतिभाभ्रांतिरेषैवावरणशक्तिप्राधान्येनाविद्याविक्षेपशक्तिप्राधान्येन भ्रमस्तदुभयफलरूपेणसंसारइत्यर्थः ॥ अविद्यामूलप्रसाधनफलंदर्शयति ॥ अनालोकनेति॥ ९॥ भेदकदृश्योपाधिबाधेसर्वदृष्टीनामैक्यंदर्शयति ॥ सर्वेति ॥ १० ॥ चिन्मात्रादमलाच्छून्यादृतेकिंचिन्नविद्यतेइतियदुक्तंतद्दृष्टांतैरुपपादयति ॥ मृन्मयमित्यादिना ॥ चिन्मयतया

अस्याःसंसारसल्लक्यावासनोत्सेधकारिणी ॥ कदल्यावनजालिन्यारसलेखेवमाधवी ॥ ५ ॥ संसारांध्यतयोदेतिवासनात्मारसश्रितौ ॥ यथावनतयातरछौमधुमासरसःक्षितौ ॥ ६ ॥ चिन्मात्रादमलाच्छून्यादृतेकिंचिन्नविद्यते ॥ नान्यत्किंचिदपर्यंतेखेशून्यत्वेतरद्यथा ॥ ७ ॥ वेदनात्मानसोस्त्यन्यइतियाप्रतिभास्थिरा ॥ एषाविद्याभ्रमस्त्वेषसचसंसारआततः ॥ ८ ॥ अनालोकनसंसिद्धआलोकेनैवनश्यति ॥ असदात्मासदाभासोबालवेतालवत्क्षणात् ॥ ९ ॥ सर्वदृश्यदृशोबाधेबोधसारतयैकताम् ॥ यांत्यशेषमहीपीठसरित्पूराइवार्णवे ॥ १० ॥ मृन्मयंतुयथाभांडंमृच्छून्यंनोपलभ्यते ॥ चिन्मयादितयाचेत्यंचिच्छून्यंनोपलभ्यते ॥ ११ ॥ बोधावबुद्धंयद्वस्तुबोधएवतदुच्यते ॥ नाबोधंबुद्ध्यतेबोधोवैरूप्यात्तेननान्यता ॥ १२ ॥ द्रष्टृदर्शनदृश्येषुप्रत्येकंबोधमात्रता ॥ सारस्तेनतदन्यत्वंनास्तिकिंचित्खपुष्पवत् ॥ १३ ॥ सजातीयःसजातीयेनैकतामनुगच्छति ॥ अन्योन्यानुभवस्तेनभवत्येकत्वनिश्चयः ॥ १४ ॥ यदिकाष्ठोपलादीनांनभवेद्बोधरूपता ॥ तत्सदानुपलंभःस्यादेतेषामसतामिव ॥ १५ ॥ यदात्वेषानुदृश्यश्रीर्बोधमात्रैकरूपिणी ॥ तदान्येवाप्यनन्यैवसतीबोधेनबोध्यते ॥ १६ ॥ सर्वंजगद्गतंदृश्यंबोधमात्रमिदंततम् ॥ स्पंदमात्रंयथावायुर्जलमात्रंयथार्णवः ॥ १७ ॥

आदिपदात्तन्मयतयाच ॥ ११ ॥ चिन्मयतयास्फुरतोविमर्शेचिदेकरस्यमेवपर्यवस्यतीत्याशयेनाह ॥ बोधेति ॥ वैरूप्याद्विरुद्धरूपत्वात् ॥ बोधाभेदंविनास्फुरणासिद्धेरबोधस्यचबोधाभेदायोगादित्यर्थः ॥ १२ ॥ यदिद्रष्ट्रादित्रिपुट्याबोधेनाध्यासिकमभेदंब्रूयास्तर्हितस्याअनृतत्वादधिष्ठानबोधसारैकरस्यमेवसिद्धमित्याशयेनाह ॥ द्रष्टृेति ॥ १३ ॥ परस्परमिलनेनाभेदापत्तिस्तुजलस्यजलेनेवसजातीयानामेवभवतीतिजगतस्तदनुभवमात्रत्वेअनुभवानामेकत्वेचिदेकत्वसिद्धांतएवपर्यवसन्नइत्याह ॥ सजातीयइति ॥ १४ ॥ काष्ठादीनांदृश्यानांस्फुरणाभेदानभ्युपगमेशशशृंगवदत्यंताभानमेवस्यादित्याह ॥ यदीति ॥ १५ ॥ सिद्धांतेतुनायंदोषइत्याह ॥ यदेति ॥ १६ ॥ तथाजगद्बोधमात्रंबोधातिरिक्तस्फूर्त्तिकत्वाद्यद्यदनतिरिक्तस्फूर्त्तिकंतत्तन्मात्रंयथावायोःस्पंदइत्यनुमानंदर्शयति ॥ सर्वमिति ॥ १७ ॥

ननुदृष्टांतेक्रियाक्रियावतोरवयवावयविनोश्चसमवायेनमिश्रीभावमात्रंनत्वत्यंतैक्यमित्याशंक्यजतुकाष्ठयोर्बहिर्मिश्रणेपिविवेकानुभवेमिश्रणादर्शनादिहत्वनुभवेपितद्दर्शनेनवै षम्यात्समवायासिद्धेरित्याशयेनाह ॥ मिश्रीभूताइति ॥ १८ ॥ अंभसोःक्षीरयोर्वाअन्योन्यात्मतानुभवोह्यैक्यम् ॥ दृग्दृश्यपदार्थयोरपितुतादृशमन्योन्यवेदनात्मकमैक्यमस्तेवनतुजतुकाष्ठवत्संयोगमात्रमित्यर्थः ॥ १९ ॥ एवंसर्वदृश्यानांचिन्मात्रत्वेनतत्पदार्थचितोऽपरिच्छिन्नतयानित्यमुक्तत्वेसिद्धेत्वंपदार्थस्याहमितिपरिच्छिन्नबुद्धिरेवबंधायतत्त्यागमात्रंमुक्तयेइतिफलितमित्याह ॥ अहमित्येवेति ॥ २० ॥ तदेवोपपादयति ॥ चंद्रेति ॥ असदहंकिमुत्थितः ॥ अनुत्थितएवेतियोज्यम् ॥ २१ ॥ अहंतात्यागेममताबंधःस्वतएवापैतीत्याशयेनाह ममेति ॥ आत्मायत्तेस्वाधीने ॥ २२ ॥ असताअहंकारेणसत्यस्यात्मनःकुंडबदरन्यायेनांतःप्रवेशेनतिरोधानंवाघटाकाशन्यायेनपरिच्छेदोवानसंभाव्यएवेत्याह ॥ यइति ॥ येनसंबंधेनतिरोधानमवच्छेदोवासिद्ध्येत्ससंबंधोप्यन्यमत्यंतभिन्नमहंकारंकल्पयतोनास्ति तस्माद्वास्तवैक्यमेवचंद्रद्वित्ववद्भेदेनाविषयाविकल्पितभेदस्यात्मनःस्वप्रकाशबलात्स्फुरणमन्योन्यवेदनमिवभवतीत्यर्थः ॥ २३ ॥ येतुजैमिनीयावास्तवमेवजडबोधयोरैक्यंतदेवात्मरूपमितिमन्यंतेतेषांतदैक्यंजाड्यांशगतंजडमेवबो

मिश्रीभूताअपिस्थ्येतेजतुकाष्ठादयोयथा ॥ मिथोऽननुभवेमिश्राऐक्यंत्वनुभवेमिथः ॥ १८ ॥ अन्योन्यानुभवोह्यैक्यमैक्यंत्वन्योन्यवेदनम् ॥ यथांभसोःक्षीरयोर्वानकाष्ठजतुनोरिव ॥ १९ ॥ अहमित्यवबंधायनाहमित्येवमुक्तये ॥ एतावन्मात्रकेबंधेस्वायत्तेकिमशक्तता ॥ २० ॥ चंद्रद्वयप्रत्ययवन्मृगतृष्णांबुबुद्धिवत् ॥ किमनुत्थितएवायमसदेवाहमुत्थितः ॥ २१ ॥ ममेदमितिबंधायनाहमित्येवमुक्तये ॥ एतावन्मात्रकेवस्तुन्यात्मायत्तेकिमज्ञता ॥ २२ ॥ यःकुंडबदरन्यायोयाघटकाशयोःस्थितिः ॥ ससंबंधोपिनैवान्यमैक्यंत्वन्योन्यवेदनम् ॥ २३ ॥ अन्योन्यावेदनंत्वैक्यंभागशोगतमप्यलम् ॥ अजडंवाजडंवापिनैकरूपंविमुंचति ॥ २४ ॥ नाजडंजडतामेतिस्वभावात्स्थनपायिनः ॥ यच्चाजडंजडंदृष्टंद्वैतितत्रास्तिनैकता ॥ २५ ॥ वासनावेशवलिताःकुविकारशतात्मभिः ॥ व्रजंत्यधोधोधावंतंशिलाःशैलच्युताइव ॥ २६ ॥ व्यूढानांवासनावातैर्नृतृणानामितस्ततः ॥ तान्यापतंतिदुःखानितत्रवक्तुंनपार्यते ॥ २७ ॥ भ्रांत्वाभृशंकरतलाहतकंदुकाभंलोकाःपतंतिनिरयेषुरसेनरक्ताः ॥ क्लेशेनतत्रपरिजर्जरतांप्रयाताःकालांतरेणपुनरन्यनिभाभवंति ॥ २८ ॥ ॥इ० वा० वा० दे० मो० नि० उ० मं० मंकिबोधनंनामपंचविंशतितमःसर्गः ॥ २५ ॥

धांशगतमपजडमेवेत्येकमपिनमुंचतीतिजडांशेनस्फुरेदेवचिदंशेस्फुरदपिनिर्विषयमेवेत्यन्योन्यावेदनमेवतदैक्यंस्यादित्यर्थः ॥ २४ ॥ कुतोनमुंचतितत्राह ॥ नेति ॥ हियस्मात्कारणादनपायिनएवधर्माःस्वभावाइत्युच्यते ॥ यच्चत्वयाअजडमेवात्मरूपंजडमित्यंशांतरतयादृष्टंतत्तुद्वैतिभिन्नमेव ॥ तत्रअजडैकतानास्त्येवेतिनजडबोधैक्यात्मसिद्धिरित्यर्थः ॥ १५ ॥ एवंचेत्कथमात्मत्ववादिनोनानाविधंपरस्परविरुद्धंवदंतितत्राह ॥ वासनावेशेति ॥ कुविकारशतात्मभिःस्वस्ववासनाभिरावेशैरभिमानैश्चवलितावेष्टिताःपराग्दृष्ट्यैवतत्त्वंपरीक्षमाणाअधोधोव्रजंतीत्यर्थः ॥ २६ ॥ अतएवश्रौतदृष्टिपरिभ्रष्टानांस्वस्ववासनावातैर्व्यूढानामितस्ततोनीतानांनृतृणानांतानिनानायोनिजन्ममरणनरकादिलोकशास्त्रप्रसिद्धानिदुःखान्यापतंति ॥ २७ ॥ तदेववर्णयन्नुपसंहरति ॥ भ्रांत्वेति ॥ वासनाभिमानानुसारिरागादिरसेनरक्तालोकाजनानारीकरतलाहतकंदुकमिवभृशंभ्रांत्वानिरयेषुपतंति ॥ तत्रचिरंयातनाक्लेशेनपरितोजर्जरतांप्रयाताःकालांतरेपिस्थावरकृमिकीटादिजन्मभिरन्यनिभाअन्यसदृशाएवभवंतिपुनर्मानुष्यंदुर्लभमित्यर्थः ॥ २८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेपंचविंशःसर्गः ॥ २५ ॥

इहप्रपंच्यतेऽनर्थोभावनाद्रसरंजनात् ॥ तच्छांत्यानर्थसंशांतिर्विवेकात्तत्त्वदर्शनात् ॥ १ ॥ एवंस्थावरादियोनिलक्षणेसंसारमार्गेपतितस्यजीवस्यानादिसंसारेबहुशोवृत्तानिच्छेदनभेदनदहनक्षुत्तृड्जराभयमरणादिरूपाणिवृत्तांतलक्षाणिपुनरप्यापतंतिहि ॥ १ ॥ तत्रचभावनैवमूलमित्याशयेनाह ॥ सर्वइति ॥ शृंखलावत्परस्परग्रथनहेतुः ॥ २ ॥ तस्याश्वमूलंविवेकांधरागद्वेषादिरसरंजितंपूर्ववृत्तांतवासनानिबिडितंचित्तमित्याशयेनाह ॥ चित्तमिति ॥ रसोरागादिर्भौमश्च ॥ ३ ॥ ४ ॥ अविद्यमानैर्मिथ्याभूतैरेवत्रिपुटीरूपैरर्थैः ॥५ ॥ अतएवतीर्णभ्रमास्तत्त्वविदःसुखिनइतितान्प्रशंसति ॥ आह्लादिनइति ॥ विशेषणान्यत्रापिमश्लोकयोश्चोभयत्रतुल्यानियोज्यानि ॥६॥ अविवेकिनस्तुनिंदति ॥

श्रीवसिष्ठउवाच ॥ ॥ संसारमार्गगहनेपतितस्यापतंतिहि ॥ वृत्तवृत्तांतलक्षाणिकीटाइवघनागमे ॥ १ ॥ सर्वएवत्विमेभावाःपरस्परमसंगिनः ॥ अटव्यामुपलानीवभावनैतेषुशृंखला ॥ २ ॥ चित्तमांध्यायवृत्तांतद्रुमैर्गहनवस्थितम् ॥ रसरंजनयालोकेवसंतइवकाननम् ॥ ३ ॥ अहोवतविचित्राणिवासनावशतोवशैः ॥ भूतकैरनुभूयंतेसुखदुःखानिजन्मसु ॥ ४ ॥ अहोवतातिविषमावासनायद्दशाज्ञनैः ॥ अविद्यमानैरेवायंभ्रमोंतरनुभूयते ॥ ५ ॥ आह्लादिनामृतवतःशुद्धस्यालोककारिणः ॥ शीतलस्याखिलार्थेषुज्ञस्येंदोश्चकिमंतरम् ॥ ६ ॥ पूर्वापरमनालोच्ययत्किंचिदभिवांछतः ॥ निर्मर्यादस्यमूढस्यबालस्यचकिमंतरम् ॥ ७ ॥ लब्धमाप्राणपर्यंतंशुभाशुभमनुज्झतोः ॥ आमिषंकोविशेषोस्तिवदमाकरमूढयोः ॥ ८ ॥ सर्वएवत्विमेभावादेहदारधनादयः ॥ क्षिप्रमाशुष्कसिकताशरावविशरारवः ॥ ९ ॥ आब्रह्मस्तंबपर्यंतमपियोनिशतेपुते ॥ आकल्पंभ्रमतश्चित्तशांतिर्नास्तिशमादृते ॥ १० ॥ पर्यालोचनमात्रेणबंधगंधोनबाधते ॥ गच्छतोमार्गवैषम्यमिवालोकनकारिणः ॥ ११ ॥ तवनावहितंचित्तंकामःकवलयिष्यति ॥ सावधानस्यबुद्धस्यपिशाचःकिंकरिष्यति ॥ १२ ॥ यथेक्षणप्रसरणंरूपालोकनमात्रकम् ॥ संवित्प्रसृतिमात्रात्मतथासाहंजगत्स्थितम् ॥ १३ ॥ यथाक्षिसंवृतिःसर्वरूपालोकशमोरिहन् ॥ संवित्संवरणंनामसर्वदृश्यशमस्तथा ॥ १४ ॥ असदेवजगत्साहंशुद्धासंवित्तनोतिखे ॥ ईषत्प्रसरणनाशुस्पंदनंपवनोयथा ॥ १५ ॥

पूर्वापरमिति ॥७॥ आमिषंविषयंबडिशामिषंचप्राणानांपर्यंतोमरणंतदवधिअनुज्झतोरत्यजतोः ॥ मकरएवमाकरोमत्स्यजात्युपलक्षणमेतत् ॥८॥ आशुष्कसिकतानिर्मितशरावइवविशरारवोनश्वराः ॥ ९ ॥ इदानींश्रोतृचित्तमेवसंबोध्याह ॥ आब्रह्मेति ॥ १० ॥ पर्यालोचनंविवेकस्तन्मात्रेण ॥ आलोकनंस्वपादन्यासप्रदेशावलोकनंतत्कारिणः ॥ ११ ॥ अवहितंसविवेकावधानम् ॥ बुद्धस्यजागरूकस्य ॥ १२ ॥ साहंकारंजगत्निर्विवेकावधानसंवित्प्रसरमात्रमित्याह ॥ यथेति ॥ यथारूपालोकनमात्रकमेवेक्षणस्यचक्षुषःप्रसरणंनतद्भिन्नंकिंचित्प्रसिद्धंतद्वत ॥ १३ ॥ हेकामाद्यरिषड्वर्गहन् बहिर्मुखसंविदःप्रत्यक्प्रवणवृत्त्यासंवरणंस्वालन्युपरमः ॥ १४ ॥ साहमहंकारसहितंजगत्शुद्धासंविदेवअविवेकप्रयुक्तेनेषत्प्रसरणेनखेआवृतस्वस्वरूपाकाशेतनोति ॥ १५ ॥

ब्रह्मसंवित्परमार्थतोन्यमकुर्वंत्येवासत्यमेवसदिवेदंजगद्रूपमेधतेजृंभते ॥ कथमसत्यमितिज्ञायतेतत्राह ॥ मृदेति ॥ यथामृदाहेम्नावाआत्मगंस्वात्मनिकल्पितंकुंभत्वमपृथग्लभ्यं पृथक्कृत्यलब्धुमशक्यंतथेदंजगदपिचितःपृथक्कृत्यलब्धुमशक्यंयदिसत्यंस्यात्पृथक्कूलभ्येतेतिभावः ॥१६॥ यद्यदपृथग्लभ्यंतत्तत्पृथक्सत्ताशून्यमितिहेमादौव्याप्तिंदर्शयति॥शू न्यमात्रमिति ॥ १७ ॥ अव्यवच्छिन्नेतिसजातीयभेदनिरासः ॥ निर्भागेतिस्वगतभेदनिरासः ॥ वारिणिप्रतिबिंबितंपर्वतंपर्वतसदृशंबृहत्तरंगंवा ॥ १८ ॥ इत्थंजगत्तत्त्वंजानतो नसांसारिकतापप्रसक्तिरित्याशयेनाह ॥ निर्वाणस्येति ॥ सासर्वोत्कृष्टाशीतता सर्वतापोपशांत्युपलक्षिताह्लादता ॥ यत्रयद्दृष्ट्येतियावत् ॥१९॥ तत्रप्रकाशांतरप्रसक्तिरपिनास्ती त्याह ॥ किमिति ॥ जगतिशिवेशून्येसतिअपरालोकःकिंस्वरूपःकेनसाधनेनकयाचक्रियया जन्यतइत्यर्थः ॥ २० ॥ तदेवसर्ववस्तूनामबाध्यंस्वरूपमित्याह ॥ येति ॥ २१ ॥ बाध्यंस्वरूपंतर्हिकितत्राह ॥ यदिति ॥ पदार्थत्वंनामरूपभावः ॥ तच्चतस्यबाधनंचाद्यच्चतस्योत्पत्त्यादिविकारषट्कंतत्सर्वंप्रेक्ष्यसम्यग्विमृश्यापिनविद्मः ॥ यतस्तत्खपुष्पवत्तुच्छ

सदिवासत्यमेवेदमकुर्वंत्यन्यमेधते॥मृदाहेम्नेवकुंभत्वमपृथग्लभ्यमात्मगम्॥१६॥शून्यमात्रंयथाव्योमस्पंदमात्रंयथानिलः॥जलमात्रं यथोर्म्यादिसंविन्मात्रंतथाजगत्॥१७॥अव्यवच्छिन्ननिर्भागसंविन्मात्रंजगत्त्रयम्॥विद्धिशांतंतथाव्योमयथावारिणिपर्वतम्॥१८॥ निर्वाणस्योपशांतस्यज्ञस्यसोदेतिशीतता॥ अंतर्यत्रेंदवोप्येतेदीप्तज्वलनबिंदवः ॥ १९ ॥ किंकेनकथमेकांतशांताततशिवात्मनि ॥ निरालोकोपरालोकःशून्येजगतिजन्यते ॥ २० ॥ यासत्ताब्रह्मशब्दाख्यारूपंसर्वस्यतन्निजम् ॥ नयत्रकाचिद्बाधास्तिसर्वंतन्मयमव्य यम्॥ २१ ॥ यदिदंतुपदार्थत्वंयत्रबाधानुभूयते ॥ यद्यच्चबाधनंप्रेक्ष्यतन्नविद्मःखपुष्पवत् ॥ २२ ॥ ज्ञएवापगतस्वांतंशांतमास्वमहा श्मवत्॥ असौनमननंमानमनंतमजमव्ययम्॥२३॥ आकाशकल्पेस्वेभावेतिष्ठतोंगानिवेदनम्॥ भवत्यभ्यासदार्ढ्येनविनास्वप्नवि कारवत्॥ २४॥ निरुपादानसंभारमभित्तावेवचेतति॥ ब्राह्मंकर्तृजगच्चित्रंनकश्चिद्वानकिंचन॥ २५ ॥ तनोतियत्तदात्मैवतस्यतत्रत थास्थितम्॥ दृश्याभावादसद्दृश्यंतेनकःक्ककरोतिकिम् ॥ २६॥ अहंसुखीतिसुखिताअहंदुःखीतिदुःखिता॥ सर्वएवस्वरूपस्याव्योमा त्मानोपिपार्थिवाः॥ २७॥

मेवेत्यर्थः ॥ २२ ॥ तच्चरूपंमनोविकल्पितंमनोपगमेऽपैतीतिशांतमास्वेत्याह ॥ ज्ञएवेति ॥ स्वांतापगमेनज्ञोप्यपगमिष्यत्येवेतिकथंज्ञएवास्वेत्युच्यतेतत्राह ॥ असाविति ॥ मनोपगमेहिनामरूपात्मकंमननंविकल्पनंतन्मानंचक्षुरादिचाऽपगच्छेत्असौज्ञस्तुनतथाकित्वनं तमजमव्ययंब्रह्मैवेतिनापगच्छतीत्यर्थः ॥ २३ ॥ हेअंगआकाशकल्पेस्वेआत्मभावेमनोबाधेनतिष्ठतोज्ञस्यनामरूपयोरनिवेदनमप्रतीतिरेवभवति यतस्तत्स्वरूपावस्थित्यभ्या सदार्ढ्याभावादेवस्वप्नविकारवन्मनस्युदेतीत्यर्थः ॥२४॥ मनोविकल्पमात्रंजगदितिकथंज्ञायतेतत्राह ॥ निरुपादानेति ॥ यतोब्राह्मंहैरण्यगर्भंमनएवजगतःकर्तृनिर्मातृतच्चनिरु पादानसंभारंनिरस्तरंजकद्रव्यतूलिकाकूर्चादिसामग्रीकमेवजगच्चित्रमभित्तौनिराश्रयएवसंकल्पमात्रेणचेततिपश्यतिनकश्चिद्वामनोतिरिक्तःकर्त्तानकिंचनकार्यंचमानसेस्वप्ना दौदृष्टमित्यर्थः ॥२५॥ तच्चमनोयत्तनोतिविस्तारयतितत्रसर्वत्रमनोराज्यादाविवआत्मास्वयमेवतथातत्तद्वस्त्वाभासात्मनास्थितम ॥ इत्थंस्वातिरिक्तदृश्याभावात्केनकःकिंक करोतिनकश्चित्केनचित्क्वचित्किंचिदित्यर्थः ॥२६॥ इत्थंचसुखदुःखेतत्साधनीभूताःपार्थिवादिविषयाश्चकल्पनोपरमेशून्यरूपाआत्मरूपावासंपन्नाइत्याह ॥ अहमिति ॥२७

पार्थिवानामप्यपार्थिवतास्वमशैलवत्संभावनीयेत्याह ॥ सर्वेषामिति ॥२८॥ एवंचसतियत्फलितंतदाह ॥ अहंत्वोल्लेखतइत्यादिना ॥२९॥३०॥३१॥ निर्वासनत्वादेवअस्पं दपरःस्पंदाभिमानशून्यः ॥ यंत्रनिर्मितशिलादिप्रतिमाशरीरवत् ॥३२॥ देहस्पंददशायामेवतदस्पंदसंभावनायदृष्टांतमाह ॥ यथेति ॥ स्पंदमानदोलामंचकेसुप्तस्यशिशोरंगानि नैवस्पंदंतेतद्वत्संभावनीयमित्यर्थः ॥३३॥ ननुतस्यस्वरूपज्ञानमेवदेहाद्यनुसंधानंकिनस्यात्तत्राह॥निःसंबोधेति॥ निःसंबोधोबहिर्मुखचित्तवृत्तिस्तच्छून्याखंडबोधरूपस्य ॥ चि रप्राप्येविषयेआशाप्राप्तविषयेस्नेहएषणामनोरथैराशासनमाशीरितिभेदः ॥३४॥ द्रष्ट्रादित्रिपुटीबाधादपितस्यनानुसंधानतेत्याह ॥ अद्रष्टुरिति ॥ स्वयंचापरूपिणोनिराकार

सर्वेषामेवभावानांचिदाकाशात्मनामपि ॥ मिथ्यैवस्वप्नशीलानामिवपार्थिवतास्थिता ॥ २८॥ अहंत्वोल्लेखतःसत्ताभ्रमभावविकारिणी ॥ तदभावात्स्वभावैकनिष्ठताशमशालिनी ॥ २९ ॥ हेम्नःकटकशब्दार्थोव्यतिरिक्तोयथास्तिते ॥ व्यतिरिक्तातथासत्यानाहंतास्तिशमात्मनः ॥ ३० ॥ निर्वाणोनिर्मनामौनीकर्त्ताऽकर्त्ताचशीतलः ॥ ज्ञएवशांतएवास्तेशून्यएवाभिपूरितः ॥ ३१ ॥ निर्वासनास्पंदपरोयंत्रपुत्रकगात्रवत् ॥ सयथास्थितमेवास्तेज्ञःसंव्यवहरन्नपि ॥ ३२ ॥ यथामंचकसंस्थस्यस्पंदंतेनैववाशिशोः ॥ अंगानिस्वानुसंधानंविनैवंविदितात्मनः ॥ ३३ ॥ निःसंबोधैकबोधस्यनिराशेहैषणाशिषः ॥ शांतानंतात्मरूपत्वादनुसंधानताकुतः ॥ ३४ ॥ अद्रष्टुरपदृश्यस्यादृग्रूपस्यापरूपिणः ॥ कुतःकिलानुसंधानमनपेक्षस्यपश्यतः ॥ ३५ ॥ अपेक्षैवघनोबंधउपेक्षैवविमुक्तता ॥ सर्वशब्दान्वितातस्यांविश्रांतेनकिमीक्ष्यते ॥ ३६ ॥ पार्थिवत्वेशरीरेस्मिन्स्वस्वप्नांगइवासति ॥ भ्रममात्रात्मनिकुतःक्वकस्यकिमपेक्षणम् ॥ ३७॥ उपशांतसमस्तेहंविगताखिलकौतुकम् ॥ निरस्तवेदनंज्ञेनविदाकेवलमास्यते ॥ ३८ ॥ मंकिनेतिश्रुतवताततोमोहोमहानपि ॥ अशेषेणपरित्यक्तस्तत्रैवत्वगिवाहिना ॥ ३९ ॥ प्रवाहापतितंकार्यंकुर्वतापास्तवासनम् ॥ तेनवर्षशतस्यांतंस्थितमद्रौसमाधिना ॥ ४० ॥ तत्राद्ययावत्पाषाणसमधर्मासतिष्ठति ॥ संशांतकरणोयोगीबोध्यमानःप्रबुध्यते ॥ ४१ ॥ एतेनराघवविवेकपदेनशांतिमासादयोदयवतामनसाविहर्तुं ॥ मादीनतांव्रजतुरागमयीमतिस्तेक्षीणाक्षणादसलिलेवशरद्वनाली ॥ ४२ ॥ ॥ इत्यार्षेवा० वा० दे० मोक्षोपायेषुनिर्वाणप्रकरणे उत्तरार्द्धेमंक्युपा० मंकिनिर्वाणसमाप्तिर्नामषड्विंशःसर्गः ॥ २६ ॥

स्य ॥ ३५ ॥ सर्वशब्दान्विताउपेक्षासर्वोपेक्षैवविमुक्तेतत्यर्थः ॥ तस्यांपूर्णकामतायांविश्रांतेनकिमीक्ष्यतेअपेक्ष्यते ॥ ईप्स्यतेइतिपाठःसाधुः ॥ ३६ ॥ शरीरार्थंहिसर्वोप्यपेक्षते ॥ तस्यस्वाप्नशरीरादिवद्बाधेसतिनकस्यचिदपेक्षाप्रसक्तिरित्यर्थः ॥ ३७ ॥ उपसंहरति ॥ उपशांतेति ॥ ३८ ॥ मुख्याधिकारित्वान्मंकिनःसकृच्छ्रवणमात्रेणमोहनिवृत्तिमाह ॥ मंकिनेति ॥ ३९ ॥ ४० ॥ ४१ ॥ हेराघवत्वमेतेनमंकिपरिगृहीतोपायेनज्ञानेऽभ्युदयवतामनसाविवेकपदेनस्वात्मानंदेविहर्त्तुंशांतिमासादय ॥ तेमतिःरागमयीसतीअसलिलाशरद्वनावलीवक्षणात्क्षीणविवेकाभूत्वादीनतांमाव्रजत्वित्यर्थः ॥ ४२ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेषड्विंशःसर्गः ॥ २६ ॥ ॥ ७ ॥

१ सम्यगाप्तिःसमाप्तिः

चित्तस्पंदेचितःस्पंदभ्रमाद्विश्वविभूतयः ॥ चित्तशांत्यैवतच्छांत्यास्वरूपस्थितिरीर्यते ॥ १ ॥ स्फटिकान्निर्मितःप्रतिमापुरुषोयथासन्नपिदृष्टिप्रसरानिरोधित्वादसत्समस्तद्वत्त्वा
त्माद्वैतदृष्टिप्रसरानिरोधित्वादसत्समः ॥ १ ॥ प्रबोधात्प्रागेकस्मिन्नेवसर्वात्मतयास्थितेप्रबोधेतुनैकस्मिन्नचसर्वस्मिन् ॥ व्यष्टिसमष्टिभावबाधादितिभावः ॥ २ ॥ ननुप्रतिशरी
रमुत्पत्तिनाशाभ्यांसम्प्रवितस्तिपरिमाणेनचपरिच्छेदानुभवान्नानैवास्तुनेत्याह ॥ आद्यंतेति ॥ ३ ॥ जडसर्गादिरूपाःक्रीडाः ॥ चिच्चमत्कारोमनस्तच्चापलात् ॥ ४ ॥ वस्त्रशंका
वस्त्रत्वोत्प्रेक्षानपरमार्थावधारणफलभागिनीतद्वत् ॥ शंकाभ्रांतिः ॥ ५ ॥ अवस्तुनिमिथ्याभूतेदेहादावहंभावनिमग्नोमाभव ॥ भूतयेमुक्तये ॥ ६ ॥ किंतद्वस्तुयद्भावनंकार्यंतदा
ह ॥ चिद्व्योमेति ॥ तादृशवस्तुतत्परंतेमनोस्त्वित्यर्थः ॥ ७ ॥ तस्यकिंफलंतदाह ॥ एवमिति ॥ नचायनिश्चयोऽनिश्चयोध्यानध्यात्रादित्रिपुटीबाधकत्वादित्याशंक्यतस्याबा
ध्यत्वमेवयुक्तमित्याशयेनाह ॥ ध्यातेति ॥ कुतस्तस्याबाध्यत्वंतत्राह ॥ सत्यंचेति ॥ यतोध्यात्रादित्रयेकिंचिदपिसत्यंनेत्यर्थः ॥ ८ ॥ तर्हिदर्शनादित्रिपुट्याअपितत्सामान्या

॥श्रीवसिष्ठउवाच॥ ॥निर्वाणोभवशांतात्मायथाप्राप्तानुवृत्तिमान्॥ सन्नेवासत्समःसौम्यस्फटिकादिवनिर्मितः ॥ १ ॥ एकस्मि
न्नेवसर्वस्मिन्संस्थितेविततात्मनि॥ नैकस्मिन्नचसर्वस्मिन्नानाताकलनाकुतः ॥ २ ॥ आद्यंतरहितंसर्वंव्योमचित्तत्त्वनिर्भरम्॥ शरी
रोत्पत्तिनाशेषुकाचित्तत्त्वस्यखंडना॥ ३॥ स्फुरंतिहिजडक्रीडाश्चिच्चमत्कारचापलात्॥ अचापलात्प्रतीयंतेतरंगाइववारिणि ॥ ४॥ य
थाशुभ्रांबुदेवस्त्रशंकानफलभागिनी॥ देहोयमहमित्येषातथाशंकानवास्तवी ॥ ५ ॥ मावस्तुनिनिमग्नस्त्वंभवभूरिभवप्रदे॥ वस्त्वनं
तसुखाद्यंभव्यंभावयभूतये॥ ६॥ चिद्व्योमानंतमेवास्मिन्नेयत्तास्तिसमात्मनः॥ इत्येवपरमंवस्तुवस्तुतत्परमस्तुते ॥ ७॥ एवंनिश्च
यवान्नात्मत्वमेवासिनिरंजनः॥ ध्याताध्येयंतथाध्यानंसत्यंचापिनकिंचन ॥ ८॥ द्रष्टादृश्यंदर्शनंचचितएवविभूतयः॥ अतत्तत्संविदो
नान्यद्ध्यानंध्येयमस्तिच ॥ ९॥ उद्यतिप्रतिपच्चंद्रेवहतिप्रलयानिले॥ आत्मतत्त्वंसमंसौम्यंनक्षुभ्यतिनशाम्यति॥ १०॥ यथानौयायि
नःस्थाणुतरुशैलादिवेपनम्॥ यथाशुक्तौरजतधीस्तथादेहादिचेतसः ॥ ११ ॥ यथादेहादिचित्तस्यतथादेहस्यचित्तकम्॥ तथैवजीवः
परमेपदेद्वैतमतःकुतः॥ १२ ॥ सर्वमेकमिदंशांतंब्रह्मबृंहितवेदनात्॥ नकिंचिज्जगदाद्यस्तिभ्रांतिरन्यानविद्यते॥ १३॥

त्कथंतद्बाधकत्वमित्याशंक्यविशेषमाह ॥ द्रष्टेति ॥ दर्शनंहिप्रमाणजन्यंवस्तुतंत्रमेवनपुरुषतंत्रमितिवृत्त्यभिव्यक्तपरमार्थचित्प्राधान्यादज्ञाननिवर्त्तकत्वाच्चपरमार्थचितएव
विभूतयोद्रष्ट्रादयः ॥ ध्यानंतुनप्रमाणजंनापिवस्तुतंत्रंपुरुषेच्छानुसारिचेतिक्रियाविशेषमात्रत्वादविद्याविभूतयएवध्यात्रादयइतिबाध्याइत्यर्थः ॥ विशेषांतरमप्याह ॥ अत
दिति ॥ अतत्असंवित्जडवस्तुसर्वंतत्संविदोऽन्यत्पृथग्भूतंनदृष्टमतोदृश्यंदर्शनानुसार्येव ध्येयंतुअध्यानंविनापिध्यानंअस्तिस्फुरतिचेतिनवस्तुनोध्यानानुसारितेतिविशेषइत्य
र्थः ॥ ९ ॥ संविदस्तुनिर्विकारत्वंसर्वतोविशेषइत्याह ॥ उद्यतीति ॥ यथासमुद्रःप्रतिपच्चंद्रेउद्यतिसतिक्षुभ्यतिप्रलयानिलेवहतिशुष्यतिचनतथाआत्मतत्त्वमित्यर्थः ॥ १० ॥
तर्हितस्याद्रष्ट्रादित्रिपुटीकथंविभूतिरितिचेद्विवर्त्ततयैवेत्याशयेनाह ॥ यथेति ॥ चितिचेतसोदृष्ट्याभ्रमइत्यर्थः ॥ ११ ॥ एवंदेहदृष्ट्याचित्तमपिकल्पितम् तदुभयदृष्ट्याजीवः
कल्पितस्तद्दृष्ट्यातदुभयंकल्पितमितिशुद्धचितिविवर्त्ताःसर्वेइत्याह ॥ यथेति ॥ १२ ॥ ब्रह्मदृष्ट्यातुतदद्वैकमित्याह ॥ सर्वमिति ॥ १३ ॥

चेतसितस्त्वदृष्टौ ॥ १४ ॥ विभीर्हिभयंप्रामुहि ॥ १५ ॥ जगदेवास्तिअद्वितीयब्रह्मसत्तानास्तीतियाभ्रांतिस्तवासीत्सा ॥ १६ ॥ १७ ॥ हेरामत्वंसौम्यान्मदुपदेशादहंभावरूप
याविद्याविमुक्तःसन्संपत्सुशांतैषणाहर्षसंविदापत्सुचशांतविषादसंवित्सन्भवाभवेषुविभवानामुत्कर्षापकर्षेपुयथास्थितंसमंतिष्ठमदुपदेशविस्मरणेनविलीयस्वरूपस्थितिदार्ढ्यं
विहायमाआस्व ॥ १८ ॥ तत्किंतत्त्वज्ञानोत्तरंप्रमादात्प्रारब्धप्राबल्याद्वाहर्षशोकानुवृत्त्यपराधेनपुनर्बंधोभविष्यतिनेत्याह ॥ यथास्थितमिति ॥ हेस्वकुलांबरेंदोरामत्वंयथा
स्थितंब्रह्मात्मैक्यवस्तुअपरोक्षतयासम्यगधिगम्यस्थितोसिचेत्तर्हिहर्षशोकेषणालक्षणानिदूषणानिचित्तसंतापकानिविमुच्यवातिष्ठयथेच्छंवातान्यनुवर्त्तमानआस्वेतिप्राक्त
नवाशब्दस्यात्रान्वयः ॥ नवदृष्टसुखार्थंमयाविलीयमास्वेत्युक्तंनतुतावतामुक्तौसंदेहइतिभावः ॥ १९ ॥ ॥ इतिश्रीवासिष्ठ॰म॰रा॰तात्पर्यप्रकाशेनिर्वाण॰उ॰सप्तविंशति
तमःसर्गः ॥ २७ ॥ ॥ ५ ॥ ॥ बीजांकुराणांपुरुषकर्मणांजन्मकारिणाम् ॥ दैवशब्दार्थयुक्तानांतत्त्वंभूयोत्रवर्ण्यते ॥ १ ॥ बीजानामुपादानानामंकुराणामुपादेयानांपुरु

नविद्यतेयथाव्योम्निवनंस्नेहश्चसैकते ॥ विद्युच्छशांकबिंबेचतथादेहादिचेतसि ॥ १४ ॥ अविद्यमानएवास्मिन्माविभीहिजगद्भ्रमे ॥ ए
तदेवपरंसत्यंविद्धिसत्यविदांवर ॥ १५ ॥ जगदस्तिनसत्तेतियासीद्भ्रांतिस्तवाद्यसा ॥ शांतामदुपदेशेनकिमन्यद्बंधकारणम् ॥ १६ ॥ स्या
त्युदंचनकुंभादियथामृन्मात्रकंतथा ॥ चित्तमात्रंजगदिदंक्षीणंतच्चविचारणात् ॥ १७ ॥ आपत्सुसंपत्सुभवाभवेषुशांतैषणाहर्षविषा
दसंवित् ॥ सौम्यादहंभावविदाविमुक्तोयथास्थितंतिष्ठविलीयमास्व ॥ १८ ॥ यथास्थितंवस्त्वधिगम्यरामास्थितोसिचेद्वास्वकुलांबरें
दो ॥ तद्धर्षशोकैषणदूषणादिविमुच्यवातिष्ठयथेच्छमास्व ॥ १९ ॥ ॥ इति॰वा॰महारामायणेवा॰दे॰मो॰नि॰उ॰मुख्ययोगोप
देशोनामसप्तविंशःसर्गः ॥ २७ ॥ ॥ ५ ॥ ॥ श्रीरामउवाच ॥ ॥ बीजांकुराणांपुरुषकर्मणांजन्मकारिणाम् ॥ दैवशब्दार्थयुक्ता
नांतत्त्वंवदविभोपुनः ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ दैवकर्मादिपर्यायंघटादिघटतावधि ॥ संवित्स्पंदनमेवेदंलोकेपुरुषतांगतम्
॥ २ ॥ संवित्स्पंदादृतेपुंस्त्वंकर्मवाकीदृशंभवेत् ॥ घटावटपटाद्यात्मत्वेतेनैवजगत्कृतम् ॥ ३ ॥ प्रवर्ततेजगल्लक्ष्मीःसंवित्स्पंदात्सवास
नात् ॥ निवर्त्ततेहिसंसारःसंवित्स्पंदादवासनात् ॥ ४ ॥

पाणांकर्तॄणांकर्मणांतदीयविहितनिषिद्धोदासीनक्रियाणामितिदृष्टसामग्रीणांदैवशब्दार्थेनादृष्टेननिमित्तेनयुक्तानांसर्वेषांजन्मपरंपरालक्षणसंसारानर्थकारिणांतत्त्वंप्राग्विशक
लितोक्तमपिपुनःपिंडीकृत्यकथयेत्यर्थः ॥ १ ॥ तत्रादौदैवस्यतत्त्वंकर्मकर्मणस्तत्त्वंपुरुषस्तत्तत्त्वंमनोरूपश्चित्स्पंदस्तस्यतुचिदात्मैवतत्त्वंयश्चिदात्मैवप्रथमंबहुस्यांप्रजायेयेतिप्रा
थमिकसंकल्पलक्षणेनचित्स्पंदेनसमष्टिव्यष्टिमनोभवतिततोदेहाकाराध्यासेनपुरुषस्ततःकर्माणिकुर्वन्पुण्यपापादृष्टरूपंदैवतांचापद्यतद्भोगायघटादिद्रव्यात्मनातद्गतगुणक्रिया
त्मनाचघटत्वादिसामान्यंतेनजगद्रूपेणविवर्त्ततइतिदैवकर्मादिकारणशब्दरूपंघटादिघटतावधिकार्यशब्दरूपंचतत्त्वतश्चित्स्पंदपर्यायमित्याशयेनोत्तरमाह ॥ दैवेति ॥ २ ॥
अतएवहिपुरुषकर्मादिघटावटादिचसंविदधीनसत्तास्फूर्त्तिकंसर्वैरनुभूयते संविद्विवर्त्तत्वानभ्युपगमेतुसत्तास्फूर्त्तिशून्यंतत्कीदृशंभवेत् ॥ अलीकमेवस्यादित्यर्थः ॥ ३ ॥ सर्व
स्यसंवित्स्पंदमात्रत्वेवैचित्र्यणोद्भवेतन्निवृत्तौचनिमित्तमाह ॥ प्रवर्त्ततइति ॥ ४ ॥

38

येनहेतुनाआवर्त्तादिनास्वांतःप्रवेश्यमानस्तरंगःसस्पंदोप्यंतःसमुद्रमात्रतामापद्यमानःअस्फुरत्स्पंदएवोह्यतेवितर्क्यतेइत्यर्थः ॥ ५ ॥ अतएवचितःस्पंदएवपुरुषाद्याकारतातन्निवृ त्तिरेवनिराकारतेतिस्पंदपुरुषयोःपरस्परंविमर्शेनभेदइत्याह ॥ मनागिति ॥ ६ ॥ अधिष्ठानाद्भेदस्तुसुतरांनास्तीत्याह ॥ जलेति ॥ जंतुःपुरुषः ॥ ७ ॥ अभिन्नेइति ॥ तथाचभु तिः ॥ अथकर्मणामात्मेत्येतदेषामुक्थमतोहिकर्माण्युत्तिष्ठंतीति ॥ ८ ॥ तथाचक्रियमाणेपुण्यपापेभाविदेहस्यतद्भोग्यस्यचपूर्वावस्थेइत्यर्थः ॥ ९ ॥ एवंचयदुक्तंदैवकर्मादि पर्यायमितितत्सिद्धमित्याह ॥ संविदिति ॥ १० ॥ बीजांकुराणामितिप्रश्नस्योत्तरमाह ॥ स्पंदादिति ॥ तद्बीजमेवांतःसूक्ष्मावयवरूपंनिर्गतमप्यंकुरइत्यर्थः ॥ ११ ॥ चित्त्वंचि

अवासनंहिसंवित्तेःस्पंदमस्पंदनंविदुः॥ सस्पंदोप्यस्फुरत्स्पंदोयेनावर्त्तादिनोह्यते॥५॥ मनागपिनभेदोस्तिसंवित्स्पंदमयात्मनोः॥ कल्पनांशादृतेरामस्रष्टौपुरुषकर्मणोः॥६॥ जलवीच्योर्यथाद्वित्वंसंकल्पोत्थंनवास्तवम्॥ तथेहचित्परिस्पंदरूपयोर्जंतुकर्मणोः॥७॥ कर्मैवपुरुषोरामपुरुषस्यैवकर्मता॥ एतेह्यभिन्नेविद्धित्वंयथातुहिनशीतते॥८॥ हिमंयत्तद्यथाशैत्यंयच्छैत्यंतद्यथाहिमम्॥ यत्कर्मासौतथाजंतुर्योजंतुःकर्मतत्तथा॥९॥ संवित्स्पंदरसस्यैवदैवकर्मनरादयः॥ पर्यायशब्दानेपुनःपृथक्कर्मादयःस्थिताः॥१०॥ स्पंदात्संविज्जगद्बीजमस्पंदाद्यात्यबीजताम्॥ अंकुरश्चतदेवांतःस्थितत्वादंकुरश्रियः॥११॥ चित्त्वंचक्वचिदस्पंदंक्वचित्स्पंदंस्वभावतः॥ अनंतमेकार्णववद्दिक्कालक्रमसंस्थितम्॥१२॥ संवित्स्पंदोवासनावानिहबीजमकारणम्॥ भूत्वाकारणतामेतिदेहादंकुरावलेः॥१३॥ तृणवल्लीलतागुल्मबीजांतरगतेरपि॥ बीजंसंवित्स्पंदएवतस्यबीजंनविद्यते॥१४॥ नबीजांकुरयोर्भेदोविद्यतेग्न्यौष्ण्ययोरिव॥ बीजमेवांकुरंविद्धिविद्धिकर्मैवमानवम्॥१५॥ चित्स्फुरंतीभूमिकोशेकरोतिस्थावरांकुरम्॥ स्थूलान्सूक्ष्मान्मृदुक्रूरान्पयोबुद्बुदकानिव॥१६॥ चिताविनाधराकोशादत्यंतपरिपेलवात्॥ अंकुरान्वज्रसारांश्चकउल्लासयितुंक्षमः॥१७॥ प्राणिवीर्यरसांतस्थासंविज्जंगममाततम्॥ तनोतिलतिकांतस्थोरसःपुष्पफलंयथा॥१८॥

त्स्वभावईदृशोयद्दिक्कालक्रमसंस्थितंस्पंदंक्वचिद्भजतेक्वचिन्नेत्यर्थः ॥ १२ ॥ वासनावान्भूत्वाअकारणमपिकारणतामेति ॥ १३ ॥ अवांतरबीजवेषेवस्थितःसएवसर्वत्रबीजमवांतरवेषास्तुतस्यकार्यवेषविशेषव्यवस्थार्थमित्याशयेनाह ॥ तृणेति ॥ बीजांतराणांगतेर्व्यवस्थितकार्यप्रवृत्तेः ॥ नन्वेवंतदंतरमप्यनुगतंबीजांतरंस्यादित्यनवस्थामाशंक्याह॥ तस्येति ॥ १४ ॥ यदिबीजांतर्गताशक्तिरेवांकुरइतिमन्यसेतदापिनशक्तितद्वतोर्भेदइत्याशयेनाह ॥ नेति ॥ १५ ॥ स्थावराणांवटादीनामंकुरम् ॥ क्रूरान्कठिनान् ॥ तथाचस्फुरंति ॥ भूजलादिस्वरूपेणबीजमाविश्यसर्वकृत् स्वयंकालस्वरूपेणविदध्यादंकुरोदयमिति ॥ १६ ॥ वज्रसारानिति ॥ दृढान्प्रवालादीन्मृदुतरादंकुरात्कउल्लासयितुंनिःसारयितुम् ॥ १७ ॥ शुक्रशोणिताभ्यांदेहनिष्पादनेप्ययमेवन्यायइत्याह ॥ प्राणीति ॥ १८ ॥

१ शब्दास्त्वित्यपिक्वचित्पाठः

॥ १९ ॥ संविदोविस्फुरणास्पंदः ॥ २० ॥ कर्मदैवम ॥ परस्परमपिभेदोनास्तिवस्तुन्यधिष्ठानेपिभेदोनास्ति ॥ २१ ॥ इत्थंश्रौतमभेदंयोनपश्यतितंनंदति ॥ द्वित्वमिति ॥ द्वित्वंभेदम ॥ तयोर्बीजांकुरयोरपि ॥ महतेपशवेतद्रूपपशुत्वेनस्थितायमहतेब्रह्मणेनमइत्यर्थोवा ॥ २२ ॥ वासनासंगप्रयुक्ताअस्यबीजतावासनादाहेपैतीत्याह ॥ संवित्तेरिति ॥ २३ ॥ २४ ॥ यदितुवासनैवसंगस्तदुच्छेदएवासंगतेतिमन्यसेतर्हितत्त्वज्ञानाभ्यासेनैववासनांदहेत्याह ॥ अथवेति ॥ तंवासनोत्सादमेव ॥ २५ ॥ प्रागुक्तराजयोगलक्षणयाहठयोगलक्षणयावायथैवपुरुषयत्नतस्ततयाचिराभ्यस्तयायुक्त्यावासनाक्षयंसुकरंवेत्सितयैवसंपादयेत्यनुषज्यते ॥ एतत्प्रत्यगात्मरूपमेव ॥ २६ ॥ सर्ववासनानांचिद्रू

यदिसर्वगतासंविद्भवेन्नातिबलीयसी॥ तत्कउल्लासनेशक्तःस्याद्देवासुरभूभृताम्॥ १९॥ जंगमानांस्थावराणामेतदाद्यंचबीजकम्॥ संविद्विस्फुरणामात्रमस्यबीजंनविद्यते॥ २०॥ बीजांकुरविकल्पानांक्रियापुरुषकर्मणाम्॥ ऊर्मिवीचितरंगाणांनास्तिभेदोनवस्तुनि ॥२१॥द्वित्वंनृकर्मणोर्यस्यबीजांकुरतयातयोः॥ विपश्चित्पशवेतस्मैमहतेस्तुसदानमः॥ २२॥ संवित्तेर्जन्मबीजस्ययोंतस्योवासनारसः॥ सकरोत्यंकुरोल्लासंतमसंगाग्निनादह॥२३॥ कुर्वतोकुर्वतश्चैवमनसायदमज्जनम्॥शुभाशुभेषुकार्येषुतदसंगंविदुर्बुधाः॥ २४॥ अथवावासनोत्सादएवासंगइतिस्मृतः॥ ययाकयाचिद्युक्त्यांतःसंपादयतमेवहि॥ २५॥ ययैववेत्सिततयायुक्त्यापुरुषयत्नतः॥ वासनांकुरनिर्मूलमेतदेवपरंशिवम्॥२६॥ पौरुषेणप्रयत्नेनयथाजानासिवातथा॥निवारयाहंभावांशमेपोसौवासनाक्षयः॥२७॥नास्त्येवपौरुषादन्यासंसारोत्तरणेगतिः॥ निरहंभावरूपेस्मिन्वासनाक्षयनामनि॥२८॥ आद्यैवसंविदस्तीहसोंकुरोबीजमस्तितत्॥ तत्कर्मतच्चपुरुषस्तद्दैवंतच्छुभाशुभम्॥ २९॥ नबीजमादावस्त्यन्यन्नांकुरोनचवानरः॥ नकर्मनचदैवादिकेवलंचिदुदेतिहि॥ ३०॥ नोबीजमस्तिनकिलांकुरकोपिवास्तिनाप्यस्तिकर्मपुरुषश्चनवास्तिसाधो॥ एकंतुचित्त्वमुदितंत्वनयाभिधानलक्ष्म्यानटःसुरनरासुरशोभयेव॥ ३१॥इत्येवनिश्चयमनामयभावयित्वात्यक्त्वाभृशंपुरुषकर्मविचारशंकाम्॥निर्वासनःसकलसंकलनाविमुक्तःसंविद्वपुर्ननुयथाभिमतंक्षमास्व॥ ३२॥

थिरहंभावएवमूलमतस्तमेवनिवारयेत्याह ॥ पौरुषेणेति ॥ २७ ॥ वासनाक्षयनामनिसंसारोत्तरणे ॥ २८ ॥ अनाद्यनंतप्रत्यगात्मसंवित्सत्तयैवांकुरबीजादीनांसत्तानस्वतइत्याह ॥ आद्येति ॥ २९ ॥ नरःपुरुषः ॥ ३० ॥ बीजादेःस्वतःसत्ताशून्यत्वेएकश्चिदात्मैवाद्वैतैर्बीजादिवेषैर्जंगद्भूत्वानृत्यतीतिफलितमित्याह ॥ नोबीजमिति ॥ चित्त्वंचित्स्वरूपम् ॥ अभिधानपदणंवाचारंभणश्रुतिस्मारणार्थम् ॥ ३१ ॥ ननुहेअनामयरामत्वंइतिएवंरूपमेवनिश्चयमसंदिग्धंभावयित्वापुरुषकर्मादिकृतविचारशंकात्यक्त्वानिर्वासनःसन्यथाभिमतेच्छंसमाहितोव्यवहरन्वाआस्वेत्यर्थः ॥ ३२ ॥

एतदेवस्पष्टयन्नुपसंहरति ॥ प्रशांतेति ॥ ३३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेअष्टाविंशःसर्गः ॥ २८ ॥ ॥ ५ ॥ ॥ व्यवहारे यथाप्राप्तलोकचर्यानुवर्त्तनम् ॥ स्वरूपेतुसदास्थैर्यंरामायात्रोपदिश्यते ॥ १ ॥ यथाप्राप्तंकर्मसर्वत्रशत्रुमित्रोदासीनपुरुषेषुयथायोग्यंभावयन्निष्पादयन् ॥ १ ॥ सब्रह्माब्रह्म समरसआबृंहितोविस्तारितआशयोयस्यतथाविधोभव ॥ २ ॥ यथाप्राप्तेषुखर्वेष्वल्पेषुउन्नतिमत्सुमहत्सुचशोकादिषुअंतरदुःखितःसन्यथादेशंतत्तद्देशधर्ममनुसृत्ययथाक्रमं बाष्पक्रंदनादिपर्यंतंदुःखंदुःखविडंबनंशीतोष्णादिद्वंद्वयुक्तानिवस्त्रस्रक्चंदनादिभोगसुखानिचकुर्विंतिद्वयोरन्वयः ॥ ३ ॥४॥ संक्षेपोक्तार्थमेवप्रपंचयति ॥ समागमेष्वित्यादिना ॥

प्रशांतसर्वेच्छमशंकमच्छचिन्मात्रसंस्थोखिलकार्यकारी ॥ आत्मैकरामःपरिपूर्णकामोभवाभयोरामशमाभिरामः ॥ ३३ ॥ ॥ इ० वा०वा०दे०मो०नि०उ०शंकातत्त्वसिद्धांतप्रतिपादनंनामाष्टाविंशतितमःसर्गः ॥ २८ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ नित्यमंतर्मुखस्तिष्ठवीतरागोविवासनः ॥ चिन्मात्रममलंशांतंकर्मसर्वत्रभावयन् ॥ १ ॥ आकाशविशदःप्राज्ञश्चिन्मात्रैकघनस्थितिः ॥ समःसौम्यःसमानंदःसब्रह्माबृंहिताशयः ॥ २ ॥ शोकेष्वापत्सुघोरेषुसंकटेष्ववटेषुच ॥ यथाप्राप्तेषुसर्वेषुखर्वेषून्नतिमत्सुच ॥ ३ ॥ यथाक्रमंयथादेशंकुरुदुःखमदुःखितः ॥ बाष्पक्रंदादिपर्यंतंद्वंद्वयुक्तसुखानिच ॥ ४ ॥ समागमेषुकांतानामुत्सवेषूद्येषुच ॥ आनंदंभजसौम्यात्मावासनाक्रांतमूढवत् ॥ ५ ॥ भूतानिमृत्युकार्येषुसंग्रामादिषुनिर्दह ॥ दावानलस्तृणानीववासनाक्रांतमूढवत् ॥ ६ ॥ क्रमागतेष्वखिन्नोर्थंवकवर्च्चितयार्जय ॥ अर्थोपार्जनकार्येषुवासनाक्रांतमूढवत् ॥ ७ ॥ बलाद्विदलयाशेषानरीनरिनिषूदन ॥ वातोरिक्तानिवांभोदान्वासनाक्रांतमूढवत् ॥ ८ ॥ जनेषुकरुणार्हेषुधैर्यंकुरुमहात्मसु ॥ आत्माराममनामौनीवासनाक्रांतमूढवत् ॥ ९ ॥ मुदितोभवहर्षेषु दुःखेषुभवदुःखितः ॥ करुणांकुरुदीनेषुभववीरेषुवीर्यवान् ॥ १० ॥ अंतर्मुखःसदानंदःस्वात्मारामतयान्वितः ॥ यःकरोतिशमोदारस्तत्र कर्त्तासिनानघ ॥ ११ ॥ आत्मभावनयासाधोनित्यमंतर्मुखस्थितेः ॥ वज्रधारापितेरामपतितायातिकुंठताम् ॥ १२ ॥ संकल्पकलनोन्मुक्तेस्वसंविन्मात्रकोटरे ॥ यस्तिष्ठत्यात्मनिस्वैरमात्मारामोमहेश्वरः ॥ १३ ॥ नतंभिंदंतिशस्त्राणिनदहंतिहुताशनाः ॥ नक्लेदयंतिवारीणिशोषयंतिनमारुताः ॥ १४ ॥

भोगवासनाभिराक्रांतायेमूढाःकर्मठजनास्तद्वत् ॥ ५ ॥ भूतान्यधार्मिकाणिदंड्यानि ॥ ६ ॥ धर्माविरुद्धक्रमागतेष्वर्थोपार्जनकार्येषु ॥ अर्थंधनम् ॥ ७ ॥ अरीन्शत्रून् ॥ ८ ॥ धैर्यमौदार्यंधीरताम् ॥ मौनीअकत्थनःसन् ॥ ९ ॥ हर्षेषुहर्षस्थानेषु ॥ १० ॥ तत्रमूढवत्कर्त्तृताप्रयुक्तदोषप्रसक्तिवारयति ॥ अंतर्मुखइति ॥ त्वमितिशेषः ॥ ११ ॥ इंद्रप्रयुक्त वज्रस्यधारापि ॥ कुंठतांमोघताम् ॥ तस्यहनदेवाश्चनाभूत्याईशतेइतिश्रुतेरितिभावः ॥ १२ ॥ स्वसंविन्मात्रकोटरेहार्द्दाकाशे ॥ १३ ॥ १४ ॥

चित्तंस्वस्मिन्सुष्ठुस्तंभातीतिसुस्तंभंनित्यनिरतिशयानंदंस्वात्मानम्॥ सुस्तंभंदृढस्तंभंमंदिरमिवधीरात्माऽचलस्तिष्ठ ॥१५॥ जगल्लक्षणवृक्षस्यपदार्थौघलक्षणपुष्पाणामामोदश्रियमिवसारभूतांपरांब्रह्मसंविदमाश्रित्यसर्वाबाह्यसंविदःअच्युतमंतर्मुखंयथास्यात्तथाकृत्वाआस्व ॥१६॥ कार्यंव्यवहारम् ॥ दृषदांपाषाणानामिवेतिवासनानुदयेदृष्टांतः ॥१७॥ कूर्मांगवद्वृत्तिमानंतर्बहिश्चवृत्तिशून्यः ॥१८॥ तदेवाह ॥ अंतरिति ॥ सुप्तप्रबुद्धोर्द्धजागरूकः ॥१९॥२०॥ वृत्तित्यागःसदैवनिर्विकल्पसमाधिज्ञानाभ्यासस्तेनविलीनेनबाधितेन ॥ किंचिद्दग्धपटाकारवत्प्रतिभासमात्रेणप्रसरता ॥ अत्यंतसुप्तेनमग्नेन ॥२१॥२२॥ जाग्रत्सन्व्यवहरन्व्रजन्नपित्वंसुपुप्तसमयावृत्त्यामाकिंचिदिष्टंगृहाणानिष्टंत्यज ॥२३॥

सुस्तंभमजमालिंग्यस्वात्मानमजरामरम्॥ तिष्ठावष्टभ्यधीरात्मासुस्तंभमिवमंदिरम् ॥ १५॥ जगद्वृक्षपदार्थौघपुष्पामोदश्रियंपराम्॥ संविदंसंविदःस्वस्यामास्वांतर्मुखमच्युतम्॥ १६॥ अंतर्मुखतयानित्यंकार्यमाहरतांबहिः॥जीवतामपिनोदेतिवासनादृषदामिव ॥ १७॥ पुनःप्रसरणोन्मुक्तमंतःसुप्तंमनःकुरु॥ कुर्वन्सर्वाणिकर्माणिकूर्मांगवद्वृत्तिमान्॥ १८॥ अंतर्वृत्तिविहीनेनबहिर्वृत्तिमतेवच॥ सुप्तप्रबुद्धप्रायेणकार्यमाचरचेतसा॥ १९॥ बालमूकादिविज्ञानवदंतस्त्यक्तवासनम्॥ भवतःकुर्वतःकार्यंखवच्चित्तंनलिप्यते॥२०॥ वृत्तित्यागविलीनेनकिंचित्प्रसरताबहिः॥ अंतरत्यंतसुप्तेनचेतसातिष्ठविज्वरः ॥ २१ ॥ असंकल्पकलंकायांज्ञानाच्चित्तक्षयोदये॥शुद्धायांसंविदिस्थित्वाकुरुमाकुरुवानघ ॥ २२ ॥ सुपुप्तसमयावृत्त्याजाग्रद्व्यवहरन्व्रजन्॥ गृहाणमाकिंचिदपिमावाकिंचित्परित्यज ॥ २३॥ जाग्रत्यपिसुपुप्तस्थंज्जागर्पिचसुपुप्तके॥ जाग्रत्सुपुप्तयोरैक्यात्तदस्यसिनिरामयः ॥ २४ ॥ एवमाद्यंतरहितमभ्यासेनशनैःशनैः॥ पदमासादयाद्वंद्वमतीतंसर्ववस्तुतः॥ २५॥ नचद्वैतंनचैवैक्यंजगदित्येवनिश्चयी॥ परमामेहिविश्रांतिमाकाशविशदाशयः॥२६॥ श्रीरामउवाच॥ ॥यद्येवंमुनिशार्दूलतदहंप्रत्ययात्मकः॥भवानेवेहकिंतावद्वसिष्ठाख्यःस्थितोवद॥ २७॥ ॥श्रीवाल्मीकिरुवाच॥ राघवेगदतित्वेवंवसिष्ठोवदतांवरः॥तूष्णीमेवमुहूर्तार्द्धमतिष्ठत्स्पष्टचेष्टितः॥२८॥ तस्मिंस्तूष्णींस्थितेकिंस्यादितिसभ्येमहाजने॥ पतितेसंशयांभोधौरामःपुनरुवाचह॥ २९॥ किमर्थंभगवंस्तूष्णींभवानहमिवस्थितः॥ नसोस्तिजगतांन्यायःसतांयोनोत्तरक्षमः॥३०॥

जाग्रदवस्थायामपिस्थूलसूक्ष्मोपाध्यप्ययात्सुपुप्तस्त्वंचेद्भवसितदासुपुप्तकेप्यज्ञानावरणाभावाज्जागर्पि ॥ जाग्रत्सुपुप्त्योर्भेदकाज्ञानतत्कार्ययोर्बाधेनैक्येसतितत्परिशिष्टंवस्तिसन्मात्रंतदसि ॥ २४ ॥ २५ ॥ २६ ॥ सर्वद्वैतापलापेतववसिष्ठाहंभावादेरप्यपरिशेषात्कथंवक्तृत्वादिव्यवहारइत्याशयेनरामःपृच्छति ॥ यद्येवमिति ॥ २७ ॥ नास्त्येववसिष्ठाहंभावादिर्ममश्रोतॄणामज्ञानदृष्ट्यैवसोवलंबितस्तेपांतत्त्वज्ञत्वेसंपन्नेतुमौनमेवोत्तरमित्याशयेनतूष्णींभावमाह ॥ राघवेइति ॥ २८ ॥ मुख्याधिकारिणांकेषांचिज्ज्ञानेजातेपिसर्वेषामज्ञानानुच्छेदात्संशयांभोधौपतितेसति ॥ २९ ॥ गुरोर्युक्तिक्षयादेवनिरुत्तरतांमन्यमानोरामआह ॥ किमर्थमिति ॥ जगतांमध्येसतादृशोन्यायःशिष्टैराम्नातःकोनास्तियःसतांविदुषांगुरूणाम् ॥ ३० ॥

अस्यप्रश्नस्यकोट्यापरमावधित्वेनहेतुनातूष्णीमवस्थानमेवोत्तरम् ॥३१॥कोटित्वमेवदर्शयितुंभूमिकांरचयति ॥ द्विविधइत्यादिना ॥३२॥३३॥३४॥ वाङ्मयउल्लेखोभिलापः ॥ ३५ ॥ प्रतियोगीनिरूपकोव्यवच्छेदोव्यावृत्तिः ॥ संख्यागणना ॥ अतीतस्तत्सर्वमतिक्रांतःपरमार्थः ॥ आदिपदात्तत्साधनंतदिनरबाधकंतद्बोधस्तदुपायोबोध्यबोधकप्रमाणाद्योगृह्यंते ॥ तेषांविभ्रमैःकल्पनाकलंकैरन्वितः ॥ भाःजालांतरातपः ॥३६॥३७॥ अंतेवासिनःशिष्यस्य ॥ अंतविवर्जितंसर्वपरिच्छेदकलंकशून्यम् ॥३८॥ अविचारात्तत्त्वज्ञानोदयात्प्रागज्ञानादुपदेशवाक्प्रवृत्तियोग्यताकल्पनयाससंकल्पंवाग्व्यवहारसंकल्पविषयमाहुः ॥ विचारेणपरिज्ञातंतुमौनंवागगोचरमेवाहुर्यतोवाचोनिवर्त्तंतेअप्राप्यम

श्रीवसिष्ठउवाच॥ ॥नमेवक्तुमशक्तत्वाद्युक्तिक्षयउपस्थितः ॥ किंतुप्रश्नस्यकोट्यास्यतूष्णीमेवानघोत्तरम् ॥ ३१॥ द्विविधोभवतिप्रष्टातत्त्वज्ञोज्ञोथवापिच॥अज्ञस्याज्ञतयादेयोज्ञस्यतुज्ञतयोत्तरः॥३२॥ एतावंतमभूत्कालंभवानज्ञाततत्पदः॥ भाजनंसविकल्पानामुत्तराणांमहामते॥३३॥ तत्त्वज्ञस्त्वधुनाजातोविश्रांतःपरमेपदे॥ योग्योनसविकल्पानामुत्तराणामसिस्फुटम् ॥३४॥ यावान्कश्चित्किलोल्लेखोवाङ्मयोवदतांवर॥ सूक्ष्मार्थःपरमार्थोवाबहुरल्पतरोपिवा॥३५॥ प्रतियोगिव्यवच्छेदसंख्यातीतादिभिर्भ्रमैः॥ सचसर्वोन्वितःसाधोभाइवत्रसरेणुभिः॥३६॥ उत्तरंसकलंकंचतज्ज्ञोनार्हतिसुंदर॥ नाकलंकाचवागस्तित्वंचतज्ज्ञतरःस्थितः॥३७॥ यथाभूतंचवक्तव्यंज्ञस्यांतेवासिनोमया॥ यथाभूतंविदुःकाष्ठमौनमंतविवर्जितम्॥३८॥ अविचारात्ससंकल्पंमौनमाहुःपरंपदम्॥ तदेवतवतज्ज्ञस्यदत्तःसुंदरउत्तरः॥ ३९ ॥ यन्मयोहिभवत्यंगपुरुषोवक्तिताद्दशम्॥ ज्ञेयमात्रमयश्चाहंवागतीतेपदेस्थितः॥४०॥ वागतीतपदस्योहिकथंगृह्णातिवाङ्मलम्॥ अवाच्यंवच्मिनोतेनवाग्घिसंकल्पनांकिता॥४१॥ ॥श्रीरामउवाच॥ ॥वाचियेयेप्रवर्त्ततेताननाद्दत्यदोषकान्॥ प्रतियोगिव्यवच्छेदिपूर्वकान्वदकोभवान्॥४२॥ ॥श्रीवसिष्ठउवाच॥ ॥एवंस्थितेराघवहेयथाभूतमिदंशृणु॥ कस्त्वंकोहंजगद्वाकिमितितत्त्वविदांवर॥४३॥ अहंतावदयंतातचिदाकाशोनिरामयः॥ चेत्यसंवेद्यरहितःसर्वसंकल्पनातिगः॥४४॥ स्वच्छंचिदाकाशमहंभवानाकाशमेवच॥ जगच्चाकाशमखिलंसर्वमाकाशमात्रकम्॥४५॥ शुद्धज्ञानैकरूपात्माशुद्धज्ञानमयात्मनि॥ अन्यसंविद्दशोन्मुक्तःस्वान्यद्वक्तुंनवेद्म्यहम्॥४६॥ स्वपक्षोद्भावनपराअहंतात्मैकवर्द्धनम् ॥ मोक्षार्थमप्युद्यमिनोनयंतिशतशाखताम् ॥ ४७॥

नसासहेत्यादिश्रुतयोविद्वांसश्च॥ तन्मौनमेव ॥३९॥ पुरुषोवक्ता ॥ ज्ञेयंतत्त्वसाक्षात्कारगम्यंनिर्विकल्पवस्तुतन्मात्रमयः॥ स्वार्थेमयट् ॥४०॥ हियस्मात्सर्वावाक्प्रतियोगिव्यवच्छेदादिसंकल्पनांकिता ॥ ४१ ॥ अनादृत्यतात्पर्याविषयीकृत्यभागत्यागलक्षणोपायेनवद ॥ व्यवच्छेदीव्यावृत्तः ॥ प्रतियोगीतन्निरूपकः ॥ ४२ ॥ यथाभूतंयथास्थितम् ॥४३॥४४॥४५॥ स्वान्यत्प्रत्यगात्मव्यतिरिक्तमणुमात्रमपिवक्तुंनवेद्मिनविवक्षामि ॥ तथाचयत्परःशब्दःसएवशब्दार्थइतिन्यायमाश्रित्याखंडंनिर्विकल्पंवाक्यार्थंप्रतिपद्यस्वेतिभावः ॥४६॥ कथंतर्हिज्ञबोधनायप्रतिवादिविजयायचविदुषांनिरहंकाराणामुद्योगसिद्धिस्तत्राह ॥ स्वपक्षेति ॥ शिष्याणांमोक्षार्थंतेषांसंदेहवारणायप्रतिवादिविजयार्थमप्युद्यमिनोविद्वांसःश्रुतियुक्त्यादिप्रमाणैःस्वपक्षोद्भावनपराःसंतोबाधितस्याप्याहार्यारोपेणाहंतात्मनएकस्यैववर्द्धनंकुर्वाणाःशतशाखतांनयंतिनतत्त्वज्ञवद्यामुह्यंतीत्यर्थः॥ ४७ ॥

नैतावतैषांपांडित्यप्रकटनव्यवहारएवपरमंपदमितिवेदितव्यंकिंत्वन्यदेवेत्याह ॥ जीवतइति ॥ ४८ ॥ परमपदमेवविशिनष्टि ॥ अवहिःसाधनमिति ॥ अंतर्बहिःसाधनशून्यत्वा देवनाहंकर्तृभोक्तृत्वशून्यमतएवभोग्येसुखदुःखरहितंस्वप्रकाशनिरतिशयानंदभूमात्मकत्वाच्छिवम् ॥ ४९ ॥ ननुकिमर्थंतत्स्वप्रकाशमुच्यते विषयसुखवद्भोग्यमेवतत्किंन स्यात्तत्राह ॥ मुक्तताया इति ॥ इयमहंतैवमुक्ततायामुक्तेरभावःप्रागभावस्थानीया तादृशेनाहंभावेनमुक्तेर्भावनमनुभवःक्व नह्यभावेनप्रतियोगीअनुभवितुंशक्यः तर्हिसंस्तुमुक्तत यैवमुक्तिभावनंतत्राप्याह ॥ तयैवेति ॥ पक्षद्वयेपिजात्यंधचित्रदर्शनन्यायःस्यादित्यर्थः ॥ ५० ॥ तर्ह्यहंकारप्राणादिस्पंदनेअस्पंदनेचवृक्षमृगादिस्पंदनास्पंदनयोर्गिरिशिलावद चलतयास्थितत्वात्तद्वज्जडमेवकिंनस्यात्तत्राह ॥ स्पंदनेइति ॥ आसितमवस्थानम् ॥ भावेक्तः ॥ यतस्तन्निर्वाणमजरमपक्षयादिविक्रियाशून्यम् ॥ तथाचगिरिशिलायाम प्यपक्षयेणचलनमस्त्येवेतिनात्यंतिकमचलत्वमितिचलेष्वेवजाड्यंनकूटस्थेइतिभावः ॥ ५१ ॥ अतःस्वप्रकाशत्वमेवपरिशेषात्सिद्धमित्याह ॥ तच्चेति ॥ लौकिकात्मनिप्रसिद्धं

जीवतोप्युपशांतस्यव्यवहारवतोपिच ॥ शववद्यदवस्थानंतदाहुःपरमंपदम् ॥ ४८ ॥ अवहिःसाधनंशांतमनंतःसाधनंसमम् ॥ नसु खंनासुखंनाहंनान्यदित्यादितंशिवम् ॥ ४९ ॥ मुक्ततायाअहंतेयमभावोभावनंक्वच ॥ तयैवान्विष्यतेसेतिजात्यंधश्चित्रमीक्षते ॥ ५० ॥ स्पंदनेऽस्पंदनेचैवयत्पाषाणवदासितम् ॥ अजडस्यैवतद्विद्धिनिर्वाणमजरंपदम् ॥ ५१ ॥ तच्चनान्योविजानातिस्वयमेवानुभूयते ॥ लोकैषणाविरक्तेनज्ञेनज्ञत्वमिवात्मनि ॥ ५२ ॥ तत्राहंतानचत्वत्तानानहंतानचान्यता ॥ केवलंकेवलीभावोनिर्वाणममलंशिवम् ॥ ५३ ॥ चेत्योन्मुखत्वमेवाहुश्चेतनस्यास्यचेतनम् ॥ एषएवचसंसारोबंधःक्लेशायभूयसे ॥ ५४ ॥ चेतनस्याचेतनत्वमचेत्योन्मुखता त्मकम् ॥ मोक्षंविद्धिपरंशांतंपदमव्ययमेवच ॥ ५५ ॥ दिक्कालाघनवच्छिन्नेशांतेशांतात्मनिस्थिते ॥ चेत्यंनसंभवत्येवकःकिंचेतयते कथम् ॥ ५६ ॥ संकल्पःस्वप्नदृश्येंतःसंविन्मात्रात्मतांविना ॥ यथान्यवद्भवेद्रूपात्तथैवास्मिन्बहिर्गते ॥ ५७ ॥ मनोबुद्ध्यादयश्चैतेसं विन्मात्रानुरूपिणः ॥ मनोबुद्ध्यादिशब्दार्थभाविताःस्तुजडात्मकाः ॥ ५८ ॥ संविन्मात्रेसमेस्वच्छेसबाह्याभ्यंतरेतते ॥ अभिन्नेभेदबुद्धि र्वाकिमनर्थायजृंभते ॥ ५९ ॥

ज्ञत्वंघटादिस्फूर्त्तिफलमिव नहितज्ज्ञानांतरवेद्यमनवस्थापातादितिभावः ॥ ५२ ॥ तत्तत्र ॥ ५३ ॥ तस्यपरप्रकाशतैवसंसारइत्याह ॥ चेत्योन्मुखत्वमिति ॥ चेतनंचेत्यव्याप्ति लक्षणांक्रियाम् ॥ ५४ ॥ ईदृशचेतनाभावेनाचेतनत्वंतुमोक्षेइष्टमेवेत्याह ॥ चेतनस्येति ॥ ५५ ॥ ननुमोक्षेपिचेत्यमस्तुतत्राह ॥ दिगिति ॥ ५६ ॥ एवमंतर्मुखतामात्रेणस्वतः सिद्धांमुक्तिमुपपाद्यबहिर्मुखतामात्रेणजगद्विकल्पप्रसरंदर्शयति ॥ संकल्पइति ॥ हेभूपाइतिश्रोतृसंबोधनम् ॥ यथास्वप्नदृश्येजगतिसंविदंतर्गतस्तत्तद्वासनानुसारिसंकल्पःसंवि न्मयोपिसंविदात्मतांविहायान्यवद्भवेत्तथैवास्मिन्नात्मनिबहिर्गतेबहिर्मुखेसतिस्वात्मैवान्यवज्जडप्रपंचात्माभवेदित्यर्थः ॥ ५७ ॥ एवंमनोबुद्ध्यादयोपिबहिर्मुखतायामेवजडात्मका अंतर्मुखतायांतुसंविन्मात्रानुसारिणश्चिदेकरसाः ॥ ५८ ॥ एवमंतर्बहिश्चसर्वस्यचिदेकरसत्वेचितोबहिर्मुखतालक्षणाभेदबुद्धिरेकैवव्यर्थानर्थहेतुरित्याह ॥ संविन्मात्रइति ॥ ५९ ॥

सर्वदृश्यापगमेवशिष्टंसंविन्मात्रंशून्यकल्पमपुरुषार्थइतितुनमंतव्यं तस्यनिरतिशयानंदरूपतायाविद्वद्भिरनुभूयमानत्वादित्याह ॥ संविन्मात्रस्येति ॥ वाग्गतिंवागोचरतांनेति ॥ यतोवाचोनिवर्त्तंतइत्यादिश्रुतेरितिभावः ॥ ६० ॥ विवेकियौक्तिकदृश्यातर्हिकथंजगत्तदाह ॥ सदसद्रूपइति ॥ ईक्षितस्यचक्षुःप्रणिधानस्ययत्नेनतमसियथासदसद्रूपआभासोलक्ष्यतेतद्वत् ॥ ६१ ॥ त्वमपिवासनांयदिनबध्नासीतिसंबंधः ॥ ६२ ॥ अन्योपिपुरुषःअयमाकाशएवाहमितिनिश्चयवांस्तज्ज्ञएव ससंज्ञयाव्यवहारेणाज्ञइवविद्यमानोपि चिद्वपुरेवसन्सत्यपिदेहादावसदिवशाम्यति ॥ तद्योयोदेवानांप्रत्यबुध्यतसएवतदभवत्तथर्षीणांतथामनुष्याणामितिश्रुतेरित्यर्थः ॥ ६३ ॥ ननुजीवानामविद्याकिंचिदात्मनाशाम्यतिउतजडेन नाद्यः चिदात्मनःप्रत्युततत्साधकत्वेनाविरोधित्वात् नद्वितीयः जडमात्रस्याविद्याकार्यत्वेनतदविरोधित्वादित्याशंक्याह ॥ जीवानामिति ॥ अहमज्ञइतिसाक्षिज्ञमेरज्ञानसाधकत्वाज्जीवानांसंसारलक्षणोऽविद्याग्निस्तदीयज्ञप्तिरक्षितेनाज्ञानवायुनाज्वलन्नपिपुनरहंब्रह्मास्मीतिप्रबुद्धानांतेषांचरमसाक्षात्कारवृत्त्यात्मनापरिणतेनांतर्गतसाक्षि

संविन्मात्रस्यशुद्धस्यशून्यस्यचकिमंतरम् ॥ यच्चांतरंतद्विबुधाविदंत्येतिनवाग्गतिम् ॥६०॥ सदसद्रूपआभासोयथाकिमपिलक्ष्यते॥ तमसीक्षितयत्नेनब्रह्मणीदंतथाजगत्॥६१॥ अयमाकाशमेवाहंयदिशाम्याम्यवासनम्॥ वासनांतुनबध्नासिस्थितएवासिचिन्नभः ॥६२॥ इतिनिश्चयवानंतस्तज्ज्ञोज्ञइवसंज्ञया ॥ चिद्वपुर्विद्यमानोपिशाम्यत्यसदिवस्वयम् ॥ ६३॥ जीवानांज्ञप्तिगुप्तेनज्वलन्नज्ञानवायुना॥ अविद्याग्निःप्रबुद्धानांपुनस्तेनैवशाम्यति॥६४॥ अजडानांयदज्ञानंस्थाणूनामिवशाम्यताम् ॥ तमाहुर्मोक्षमक्षुब्धमासितंपदमक्षयम्॥६५॥ ज्ञात्वेनज्ञत्वमासाद्यमुनिर्भवतिमानवः॥ अज्ञत्वादज्ञतामेत्यप्रयातिपशुवृक्षताम्॥६६॥ अहंब्रह्मजगच्चेदमित्यविद्यामयोभ्रमः॥ असत्यःप्रेक्षयाध्वांतंदीपेनेवनलभ्यते॥ ६७॥ समग्रकरणग्रामोप्यसंकल्पोविवेदनः॥ नकिंचिदप्यनुभवत्यंतर्वास्थेचशांतधीः॥६८॥ सुषुप्तत्वइवस्वप्नःसमाधौप्रविलीयते॥ दृश्यंसर्वंज्ञबोधेंतःपुनःस्वात्मैवलक्ष्यते॥६९॥

गुप्तेनाज्ञानवायुनैवशाम्यतिनतृतीयमपेक्षतइत्यर्थः ॥ ६४ ॥ ननुमुक्तैर्जगज्ज्ञायतेनवा आद्येसंसाराविशेषः द्वितीयेआत्माज्ञानमेकंपरिहरतात्वयाजगदज्ञानान्यनंतानिस्वीकृतानिस्युः स्थाणुतुल्यानांचकथंतेषांमुक्ततातत्राह ॥ अजडानामिति ॥ अनावृतस्वप्रकाशनिरतिशयानंदात्मरूपत्वादजडानांतेषामज्ञानंसांसारिकज्ञानशून्यमतएवाक्षुब्धंदुःखक्षोभरहितंयदासितमवस्थानंतंमोक्षनामानमाहुः ॥ नचानंताज्ञानप्रसक्तिरेकविज्ञानेनैवसर्वविज्ञानात्सर्वाज्ञाननाशात् ॥ भ्रांतिज्ञानाभावस्यात्मरूपतयातत्त्वज्ञानवैलक्षण्याभावाच्चेतिभावः॥ ६५ ॥ किंचसतिमूलाज्ञानेतद्बलेनैवबाह्यार्थज्ञानाभावानांमौर्ख्यापादकतातन्नाशेतुमुनित्वसंपादकतेत्याशयेनाह ॥ ज्ञात्वेनेति ॥ ६६ ॥ किंचब्रह्मज्ञानंजगद्भ्रमश्चसर्वोप्यज्ञानमेवनचाज्ञाननिवर्त्तिरज्ञानंयेनमुक्तिर्नस्यादित्याशयेनाह ॥ अहमिति ॥ ६७ ॥ तर्हिजीवन्मुक्तानांचक्षुरादिकरणैर्बाह्यज्ञानदर्शनान्मुक्ततानस्यात्तत्राह ॥ समग्रेति ॥ ६८ ॥ समाधौज्ञस्यबोधेसकृज्जातेपुनर्यत्सर्वंदृश्यंदृश्यतेतत्स्वात्मैवलक्ष्यतेनंअनात्मानामतेषामणुमात्रमप्यस्तीत्यर्थः ॥ ६९ ॥

कुतोविलीयतइतिचेद्भ्रांतिमात्रत्वादित्याह ॥ नीलत्वमिति ॥ ७० ॥ अतएवबाधितार्थवासनावासनैवनभवतीत्यवासनएवज्ञइत्याह ॥ वासनाभिरिति ॥ ७१ ॥ ननुविचित्रभुवनैर्देवनरतिर्यगादिभिर्विहितनिषिद्धानेककर्मभिस्तत्फलभोगनियतिभिश्चेश्वरेणाधिष्ठितमद्भुतमिदंजगत्कथमसदनृतंसंकल्पमात्रमित्यायुक्तिभिस्त्वयाअपलप्यते नहिसंकल्पमनोरथादिष्वेवंविधार्थाःसंतीत्याशंक्यतत्राप्यद्भुतार्थसत्तांदर्शयति॥संकल्पेष्विति ॥ हेभव्ययथासांकल्पिकार्थेषुस्वप्नमायेंद्रजालकंयद्वदद्भुतंतद्वत्संसृतयोपि ॥ प्रत्यक्षदृष्टेपिस्वप्नायर्थेकिमास्थायुक्तातद्वत्संसृतिष्वपीत्यर्थः ॥ ७२ ॥ सतोहिकर्त्तृभोक्तोरस्तुसर्वासुखदुःखभोगायपुण्यपापनियतिस्तयोरेवासंभवेकातद्व्यवस्थानियतिरित्याह ॥ नेति ॥ ७३ ॥ अयंममताप्रत्ययोयस्याहंकारस्यसोपिनास्ति ॥ ७४ ॥ केवलःसर्वद्वैतशून्यस्तत्त्वविद्व्यवहारस्थोवास्तुअथवाकाष्ठपाषाणवदचलःसमाधौतिष्ठन्काष्ठमौनगतोस्तुसर्वथापिब्रह्मतामधिगच्छत्येव ॥ १५ ॥ इत्थंमायिकविवर्त्तवादसिद्धांतमाश्रित्याध्यारोपितस्यजगतोऽपवादेनतत्त्वविदःपरमपुरुषार्थेप्रतिष्ठादर्शिता ॥ येत्वन्येतार्किकाअन्यथान्यथा

नीलत्वंचयथाव्योम्नितथापृथ्व्यादिताशिवे ॥ भ्रांतिमात्राहृतेनान्यद्यथाव्योमतथाशिवः ॥ ७० ॥ वासनाभिरुपेतोपिसमस्ताभिरवासनः ॥ भवत्यसावसत्सर्वमिदमित्येवयस्यधीः ॥ ७१ ॥ संकल्पेष्वद्भुतंभव्यस्वप्नमायेंद्रजालकम् ॥ यद्वत्संसृतयस्तद्वदृष्टेप्यास्थाकिमत्र वै ॥ ७२ ॥ नदुःखमस्तिनसुखंनपुण्यंनचपातकम् ॥ नकिंचित्कस्यचिन्नष्टंकर्तुर्भोक्तुरसंभवात् ॥ ७३ ॥ सर्वशून्यंनिरालंबंममताप्रत्ययोप्ययम् ॥ द्विचंद्रस्वप्नपुरवद्यस्यासौसोपिनास्तिनः ॥ ७४ ॥ केवलोव्यवहारस्थःकाष्ठमौनगतोथवा ॥ काष्ठपाषाणवत्तिष्ठन्ब्रह्मतामधिगच्छति ॥ ७५ ॥ शांतत्वेचित्तत्वेनानानानात्मनीहशिवे ॥ अवयविनोवयवित्वेत्विहयुक्तिर्विद्यतेनान्या ॥ ७६ ॥

सिद्धांतान्कल्पयंतितेषांजगदुत्पत्त्यादिव्यवहारेपरमपुरुषार्थलक्षणेपरमार्थेचयुक्तिर्नास्तीत्याह ॥ शांतत्वेइत्यादिना ॥ इहास्मिन्शिवेप्रत्यगात्मनिप्राणबुद्धिमनोदेहादितादात्म्येननानात्मनिभिन्नस्वभावेसांसारिकानर्थशतसंकुलेप्रत्यक्षंभासमानेतन्निराकरणेनशांतत्वेनिर्दुःखनिरतिशयानंदाद्वयरूपपरिशेषणेवादिनामन्यादर्शिताऽध्यारोपापवादन्यायातिरिक्तायुक्तिर्नविद्यते ॥ नित्यशांतस्वभावेशिवेऽभ्युपगम्यमानेतुतस्यनिर्विकारकूटस्थस्यचलनपरिच्छिन्नस्वभावचित्तरूपत्वेदेहेंद्रियादिनानानानाभावेनसंसरणेचयुक्तिरुपपत्तिर्नविद्यते ॥ यदितुतत्सिद्धयेतस्यपरिच्छिन्नतापरिणामितासावयवताचाभ्युपगम्येतनर्ह्यवयविनस्तस्यचेतनैर्जडैर्वाअवयवैरवयवित्वेयुक्तिर्नविद्यते ॥ अवयवानांचेतनत्वेऐकमत्यासंभवेनावश्यंभाविनिविश्लेषेअवयविनाशप्रसंगात् अचेतनत्वेत्ववयविनोप्यचेतनत्वापत्तेरुभयत्राप्यनित्यस्यारब्धस्यप्राक्तनपुण्यपापासंभवेनभोगासिद्धेरित्यादियुक्तिसहस्रेभ्यः ॥ एवंजगत्कारणेपिशिवेशांतत्वेनिर्विकारकूटस्थत्वेऽभ्युपगतेजगत्सृष्ट्यनुकूलसंकल्पात्मकचित्तत्वेतत्प्रवर्त्तकेनानानानात्मनिप्रपंचरूपेतदंतर्गतपृथिव्याद्यवयविनोवयवित्वेवान्यायुक्तिर्नविद्यतइतिविवर्त्तदृष्टिरेवशरणमित्यर्थः ॥ ७६ ॥

नन्वात्मनःशांतत्वेपिप्रलयांतेलीनानांसर्वपदार्थानांब्रह्मणिप्रलयकालेसत्वात्तत्प्रयुक्तस्वस्वभाववैचित्र्यबलादेवचित्तत्वनानात्वाऽनानात्वसावयवत्वादिवैचित्र्ययुक्ताःसर्गादावा विर्भविष्यंतितत्राह ॥ अर्थागतेति ॥ अर्थवैचित्र्यहेतुःस्वभावःशिवेपरमात्मवस्तुन्यर्थेभ्यआगतउतस्वतःसिद्धःतत्रार्थेभ्यआगतस्वभावइतिव्याहतम् ॥ स्वोहिभावःस्वभावः ॥ आगंतुकोऽन्याधीनश्चकथंस्वभावःस्यात् ॥ तथाअसंगत्वाददृयत्वाच्चामलेपरप्रयुक्तस्वभाववैचित्र्यमलसंबंधश्चनैवसंभवति ॥ नचार्थास्तेप्रलयेस्वातंत्र्येणसंतियेनस्वस्वभावब लादेवविचित्राआविर्भवेयुरितिद्योतनार्थःप्रथमश्चकारः ॥ अतःपरिशेषादनागंतुकोब्रह्मणएवस्वस्वभावोवाच्यः ॥ एतस्मिन्सर्वगतेब्रह्मणिवैचित्र्यहेतुस्वभावस्योक्तिसंभवएव नास्ति ॥ सर्ववस्तूनांसर्ववैचित्र्यप्रसंगात् ॥ नहिसर्वगतब्रह्मणिअत्रैवायमेवस्वभावइतिप्रलयेव्यवस्थापकमस्ति ॥ सर्वत्रसर्ववैचित्र्याभ्युपगमेचवैचित्र्यमेवलुप्येत ॥ नहिसर्व साधारणोधर्मोवैचित्र्यंभवतिनापिकिंचिद्भेदकंसिद्ध्यतीतिसर्वजगदैकरस्यप्रसंगादितिभावः ॥७७॥ नन्वेवंसार्वजनीनस्यापिजगद्वैचित्र्यस्ययुक्त्यसहत्वादपलापेतत्संवित्तेरप्यप लापःकिंनस्यात् ॥ नहिसंवेद्यमंतरेणसंवित्प्रसिद्धेतिशून्यवादःप्रसक्तइतिचेत्तत्राह ॥ नचेति ॥ संवेद्यापलापेसंवित्तेरप्यस्तितानास्तीतिनचवक्तुंशक्यम ॥ संविदपलापिनोनास्ति

अर्थागतस्वभावस्यचनैवचसंभवादमले॥ एतस्मिन्सर्वगतेब्रह्मणिनास्तिस्वभावोक्तिः॥ ७७॥ नचनास्तिकोपलंभात्संवित्तेरस्तिताच नैवाजे॥ ग्राह्यग्राहकदृष्टेरसंभवादस्तिकिंचिदपि॥७८॥ शममममलमहार्यमार्यजुष्टंशिवमजमक्षयमासितंसमंयत्॥ तदवितथपदंत दास्वशांतंपिबललभुंक्ष्वभवानयंहिनास्ति॥७९॥ ॥इ०वा०महारामायणेवा०दे० मोक्षोपायेषुनिर्वाणप्रकरणेउ० भावनाप्रतिपाद नंनामैकोनत्रिंशःसर्गः॥२९॥ ॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥अहंतैवपराविद्यानिर्वाणपदरोधिनी॥ तयैवान्विष्यतेमूढैस्तदित्युन्म त्तचेष्टितम्॥ १ ॥ अहंतैवालमज्ञानादज्ञत्वस्यनिदर्शनम्॥ नहितज्ज्ञस्यशांतस्यममाहमितिविद्यते॥ २॥ अहंतामलमुत्सृज्यनिर्वाणः खमिवामलः॥ सदेहमपदेहंवाज्ञस्तिष्ठतिगतज्वरः॥३॥

कात्मनएवोपलंभादपलपितुमशक्यत्वात् ॥ सहिस्वातिरिक्तेएवसंवित्संवेद्येअपलपेन्नतुस्वात्मानम् ॥यद्वासर्वापिसंवित्तदात्मैवतदातत्रसंवेद्यमपलपन्संविदंपरिशेषयत्येव ॥ किं चनिराधारनिषेधायोगाद्ग्राह्यग्राहकयोरग्राह्यग्राहकात्मनिस्वयंप्रकाशेआधारेप्रतिषेधोवाच्यः ॥ सएवतस्यात्मेतितनाजेस्वात्मन्येवग्राह्यग्राहकदृष्ट्योरसंभवप्रतिपादनपर्यवसा नात्सर्वप्रतिषेधावधिभूतंकिंचिदजंतस्याप्यस्तीतिसिद्धंतदेवब्रह्मेत्यर्थः ॥ ७८ ॥ हेरामत्वमार्यैर्ब्रह्मविद्भिर्जुष्टंसेवितमहार्यंपरैर्हर्तुमशक्यंयच्छिवमवितथंपरमार्थसत्यंपदमासितंनि त्यसिद्धंतदेवभूत्वापरमार्थतआस्व ॥ व्यवहारेचेतरलोकवत्पिबभुंक्ष्वललक्रीडस्व तथापिभवान्मुक्तएव ॥ हियस्मादयंदृश्यबंधस्तवनास्तीत्यर्थः ॥ ७९ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकोनत्रिंशःसर्गः ॥२९॥ ॥५॥ ॥ ययाहंताद्यविद्योत्थनानात्वभ्रांतिशांतितः ॥ स्याद्ब्रह्मणिस्थिरोधीरःसादृष्टिरिहसाध्यते ॥१॥ यावदहंतानपरित्यक्तातावद्ब्रह्मविचारोपिनावतरतिदूरेतल्लाभइत्याशयेनाह ॥ अहंतैवेति ॥ परासर्वासांकार्यविद्यानांमूलस्तंभभूतानिर्वाणपदस्यरोधिनीआवरणी ॥ तन्निर्वा णपदम् ॥ १ ॥ अज्ञानादुत्पन्नाअहंतैवाज्ञत्वस्यनिदर्शनंलिंगंयथाधूमोग्नेः ॥ तस्यव्यतिरेकव्याप्तिंदर्शयति ॥ नहीति ॥ २ ॥ अलंनिःशेषंअहंतालक्षणंमलमितिवा ॥ ३ ॥

अहंतापगमादेवज्ञस्यनैर्मल्यंनिर्विक्षेपंपूर्णतांचवर्णयति ॥ नतथेति ॥ ४ ॥ यथाचित्रलिखितेसंगरेयुद्धस्य ॥ युधेर्गत्यर्थाकर्मकेतिकर्त्तरिक्तः ॥ परस्परंसंप्रहरतोपिसैन्यस्यक्षुब्धताप्रतिभासेपिनक्षुब्धता ॥५॥ एवंव्यवहारकार्यलिंगेनानुमीयमानावासनापिबाधेनांतर्निर्वाणैकतयादग्धपटतंतुरेखादामोपमत्वान्नवासना॥६॥ ऊर्म्यादीतिदृष्टांतंविशदयति॥ तरत्तरंगइति॥७॥तस्यांतर्वाह्यसर्ववासनाबाधैकलक्षणमितिचेदक्षोभशमादिकमेवेत्याशयेनाह॥अंतरिति॥ उदितःसदैवप्रसन्नः॥८॥संविन्मयेपरेअज्ञानात्मनि ॥ स्फुरतिविवर्त्तते ॥९॥अभ्रखंडरूपेणव्योम्निस्फुरतोनीहारधूमस्यगजरथादिरूपाव्यूहाआकाररचनाभेदाः ॥१०॥ इदानींभगवान्वसिष्ठःसर्वान्श्रोतॄन्संबोध्याह ॥ संविदिति ॥ हेश्रवणार्थमागताज्ञाअभिज्ञजनाःयूयंविषादंमाकुरुतकिंतुमदुक्तरीत्यासर्वोपिविषादहेतुःप्रपंचःसंविदोभ्रांतिविवर्त्तमात्रमितिविचारेणभ्रांतितद्विषयतत्त्वपरीक्षणेभ्रांतीनांनिःस्वरूपतापत्त्याअलाभेनविलासिनोविलसनशीलाःसंतोविजयध्वंसर्वोत्कर्षेणवर्त्तध्वम् ॥ हियतोमदुपदेशेनवस्तुज्ज्ञतैवास्तिनत्वज्ञतेत्यर्थः ॥११॥ कीदृशीसासंविद्भ्रांतिरज्ञेनानुभूयतेतदाह ॥ अं

नतथाशरदाकाशंनतथास्तिमितोर्णवः ॥ पूर्णेंदुमध्यंनतथायथाज्ञःपरिराजते ॥ ४ ॥ चित्रसंगरयुद्धस्यसैन्यस्याक्षुब्धतायथा ॥ तथैवसमताज्ञस्यव्यवहारवतोपिच ॥ ५ ॥ निर्वाणैकतयाज्ञस्यवासनैवनवासना ॥ लेखादामोपमात्वब्धेरूर्म्यादिनजलेतरत् ॥ ६ ॥ तरत्तरंगोजलधिर्जलमेवयथाखिलम् ॥ दृश्योच्छूनमपिब्रह्मतथाब्रह्मैवनेतरत् ॥ ७ ॥ अतस्तरंगतोऽक्षुब्धोवहिरन्तर्गतःशमी ॥ विद्यतेचोदितोयस्यसमुक्तइतिकथ्यते ॥ ८ ॥ अहंत्वसर्गरूपेणसंवित्संविन्मयेपरे ॥ स्फुरत्यंभोंभसीवातोनानातेयंकिमात्मिका ॥ ९ ॥ धूमस्यस्फुरतोव्योम्नियथागजरथादयः ॥ व्यूहाधूमान्नतेभिन्नास्तथासर्गाःपरेपदे ॥ १० ॥ संविद्भ्रांतिविचारेणभ्रांत्यलाभविलासिनः ॥ विजयध्वंविषादंमागताज्ञास्तज्ज्ञताहिवः ॥ ११ ॥ अंकुरोनुभवत्यंतर्वृक्षपत्रफलंयथा ॥ तथाजगदहंत्वज्ञःस्वात्मास्वात्मखमप्यलम् ॥ १२ ॥ रूपालोकमनःसत्ताज्वालार्चिष्विवदंडता ॥ सत्योपिचनसंत्येताभ्रांतिश्चित्ताबलाइव ॥ १३ ॥ यथासुखंयथारंभंयथानाशंयथोदयम् ॥ यथादेशंयथाकालमजराःशांतमास्यताम् ॥ १४ ॥ इष्टानिष्टोपलंभेषुशांतोव्यवहरन्नपि ॥ शववन्नान्यतामंतर्निर्वाणोनुभवत्यलम् ॥ १५ ॥ अमनोवासनाहंताधत्तेयच्चजगच्चिरं ॥ जीवतोजीवतश्चैवचिज्जीवःसपरंपदम् ॥ १६ ॥ सत्तैवजडवाहेनदुःखभारायकेवलम् ॥ नृणांपाशावबद्धानांपोतकानामिवार्णवे ॥ १७ ॥

कुरइति ॥ अज्ञःस्वात्मावस्तुतःस्वात्मानंखमाकाशकल्पमपिजगदहंत्वेअनुभवति ॥ भग्नसंधिरार्षः ॥ यथाअंकुरःस्वात्मनिवासनात्मकंवृक्षपत्रफलादिभावंतद्वदित्यर्थः ॥१२॥ कीदृशंस्तत्रविचारस्तमाह ॥ रूपेति ॥ बहिःरूपालोकसत्ताअंतर्मनःसत्ताश्चाधिष्ठानात्मनासत्योपिस्वरूपेणनसति यथाभ्राम्यमाणोल्मुकज्वालार्चिःपुदंडचक्रतादयइत्यर्थः ॥ चित्ताबलाःविधुरचित्तकल्पितकामिन्यइव ॥१३॥ अतोहेश्रोतारःसर्वंजगत्यथाउदेतिस्थितंचयथास्वकार्यमारभतेयथाचसुखदुःखेऽनुभावयतियथाचनश्यतियथाचतदीयौदेशकालौतथातथा उत्पत्तिस्थित्युपशमप्रकरणोक्तयुक्तिभिर्विमृश्यमिथ्येतिनिश्चित्त्यशांतमास्यताम् ॥ १४ ॥ शववन्निर्वाणःशांतचित्तः ॥ अतोनानुभवति ॥ १५ ॥ जीवन्मुक्तानांमनोवासनारहितैवाहंताचिरंयावद्देहपातंयजगद्धत्तेयश्चतद्भोक्ताजीवस्तावत्कालंजीवतितदुभयंचिज्जीवएवनजडांशोणुमात्रमपितत्रास्तीतिपरमंपदमेवतदित्यर्थः ॥ १६ ॥ एवंचनिष्कर्षेजीवजगतोर्जडप्रवाहात्मनासत्तैवानर्थइतिफलितमित्याशयेनाह ॥ सत्तैवेति ॥ पोतकपक्षेडलयोरभेदाज्जलरूपेणवाहेनाधारेणार्णवेसत्तैवदुःखसदृशपण्यभारवहनायेतियोज्यम् ॥ १७ ॥

अतएवंतमज्ञमज्ञानजाड्यानुभवापराधादिवचिदेकरस्यपूर्णतालक्षणामोक्षसत्तानश्रयति ॥ यथामृगुपातादिनामृतेनप्राप्यंस्वर्गादिजीवंतंनश्रयतितद्वदित्यर्थः ॥१८॥ ननुमास्तु मोक्षःसांकल्पिकस्वर्गादिफलेष्वेवकश्चिन्नित्यःपुरुषार्थोस्तुतत्राह ॥ यद्यदिति ॥ तन्नाशेचावश्यंभयमस्तीतिभावः॥कितर्हिभयमक्षयंचतदाह ॥ नसंभवतीति ॥ एतत्संकल्पनम् ॥ १९ ॥ एतत्अनहंभावनंअज्ञदृष्ट्याभयावहत्वाद्दुर्ग्रहीतुमयुक्तमपिपरमार्थदृशासत्यमितियुक्तमेवपहीतुम् ॥ यथामूढेनविषबुद्ध्याउपेक्षितमन्नमभिज्ञेनपहीतुंयुक्तमित्यर्थः ॥ २० ॥ तत्सत्यतामुपपादयति ॥ जडमिति ॥ २१ ॥ अतएवाशेषशांतिरहंत्वशांतिरवधिःसैवमुक्तता तस्यांचघृतकाठिन्यविलयेघृतस्येवनाणुमात्रमप्यात्मनःकिंचिन्नष्टमिति नसर्वनाशोयमितिभेतव्यमित्याशयेनाह ॥ शांतेति ॥ २२ ॥ अत्रास्यांमुक्तौभोगत्यागोविचारआत्मनइंद्रियमनोनिग्रहपौरुषंचेतित्रयान्नान्यदुपयुज्यतेइतिनिश्चित्यहेअज्ञा मुमुक्षवःसर्वमनात्मवर्गंपरित्यज्यस्वात्मैवप्रणम्यतांतत्त्वबोधेनशरणीक्रियतामित्यर्थः ॥ २३ ॥ एवमहंतावधिकसर्वद्वैतोपशमेननिर्वासनंसर्ववासनाक्षयोपलक्षितंयन्मननंमन

मोक्षसत्ताश्रयतितंनाज्ञानानुभवादिव॥मृतेनयत्किलप्राप्यंजीवन्नाप्नोतितत्कथम्॥ १८॥यद्यत्संकल्प्यतेतत्तत्संकल्पादेवनाशभाक्॥ नसंभवतियत्रैतत्तत्सत्यंपदमक्षयम्॥ १९॥ नान्योनचाहमस्मीतिभावनान्निर्भयोभव॥ सत्यंयुक्तंभवत्येतद्विषमप्यमृतंयथा॥ २०॥ जडंदेहादिचित्तांतंविचार्यसकलंवपुः॥ लभ्यतेनाहमस्मीतितस्मान्नास्मीतिसत्यता॥ २१॥शांताशेषविशेषाणामहंतांताविचारणात्॥ केवलंमुक्ततोदेतिनतुकिंचिद्विनश्यति॥ २२॥भोगत्यागविचारात्मपौरुषान्नान्यदत्रहि॥उपयुज्यतइत्यज्ञाःस्वात्मैवाशुप्रणम्यताम्॥ २३ निर्वासनंमननमेवमुदाहरंतिमोक्षंविनाभवतितन्नचजातुबोधात् ॥ सन्नोजगद्भ्रमइतीहपरःप्रबोधोनप्रत्ययोत्रयदतःसुचिरायबंधः ॥ २४ ॥ जगदहमसदित्यवेत्यसम्यग्जनधनदारशरीरनिर्व्यपेक्षः॥भवतिहिसचचेतनस्वरूपःपरिमितखंखलुनान्यथास्तिमुक्तिः॥ २५॥ इ०वा०महारामायणेवा०दे०मोक्षोपायेषुनिर्वाणप्रकरणेउत्तरार्धेपरमार्थोपन्यासयोगोनामत्रिंशस्सर्गः॥ ३०॥

सोब्रह्मभावेनावस्थानंतदेवमोक्षंश्रुतयोविद्वांसश्चोदाहरंति ॥ तच्चबोधात्तत्त्वज्ञानाद्विनाजातुकदाचिदपिनभवति ॥ सचपरःप्रबोधोजगद्भ्रमःसन्नपरमार्थोनोनभवत्येवइहमोक्ष शास्त्रेप्रसिद्धः ॥ यद्यस्मात्कारणादत्रईदृशेबोधेनेहनानास्तिकिंचनेत्यादिश्रुत्याजायमानोपिरागादिपुरुषदोषप्राबल्याज्जगत्सत्यताभ्रमदार्ढ्याच्चप्रत्ययोविश्वासोनास्ति ॥ अ तोहेतोःसुचिरायजीवस्यसंसारबंधोऽनुवर्ततइत्यर्थः ॥ २४ ॥ तस्माच्छास्त्रादिविश्वासदार्ढ्याज्जगदित्यहमितिचोभयमप्यसत्नास्त्येवेतिसम्यक्श्रवणमननाभ्यासेनोपेत्यबंध्वा दिजनेधनेदारेषुस्वशरीरेचनिर्व्यपेक्षस्सन्परमार्थतत्त्वंबुद्ध्वापरिमितखंउपाधिपरिच्छिन्नचिदाकाशरूपःसजीवश्चाज्जगच्चचेतनंचिन्मात्रंतत्स्वरूपोभवतिसैवास्यमुक्तिरयमेवतदु पायइतोन्यथास्यमुक्तिर्नास्तीत्यर्थः ॥ २५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्धेत्रिंशःसर्गः ॥ ३० ॥ ॥ ७ ॥ ॥ ७ ॥



१ अहंतायाअंतोयस्यांतथाविधामुक्ततेत्यर्थः

चितापस्तमचिद्रूपमसदेवसदेववा ॥ नकिंचिन्नष्टमित्यत्रनिर्वाणस्थितिरीर्यते ॥ १ ॥ नित्यनिरतिशयानंदपूर्णाद्वयचिदाकाशलक्षणांनिर्वाणस्थितिमनुभावयितुंप्रागुक्तंदृश्यानुभवस्यसंवेदनाभ्यासाधीनत्वंस्मारयति ॥ सर्वात्मनीति ॥ १ ॥ २ ॥ अस्त्वेवंकिंततस्तत्राह ॥ चिद्रूपमिति ॥ सर्वमेतच्चितएवरूपंकल्पितवेषभेदः ॥ वास्तवंतर्हिचितःकिंस्वरूपंतत्राह ॥ चिदच्छेति ॥ यतोघृतंस्वात्मनिकाठिन्यमिवचिदेवजगद्रूपंचिनोतिअतश्चिदेव ॥ ३ ॥ अस्त्वेवंततोपिकिंतत्राह ॥ नेति ॥ ततोब्रह्माद्वैतमिष्टंसिद्धमित्यर्थः ॥ ४ ॥ ननुजगदहंतादेर्जडांशस्यतत्त्वबोधेननाशइष्टःसकथमपलप्यतेतत्राह ॥ नाशेइति ॥ नाशोपिकःइतिशेषः ॥ ५ ॥ ६ ॥ यद्यसदेवजगत्तर्ह्यनर्थरूपत्ववर्णनेनतस्योपालंभोनिंदाहेयत्वेननिर्णयश्चशास्त्रेषुकुतःक्रियतइतिचेत्सत्यम् ॥ अवस्तुनिनोपालंभस्तत्फलंविचारोनिर्णयोवानसंभवत्येव खपुष्पस्यकिमुपालंभोनिर्णयोवाकेनचिदुच्यतेतद्वदित्यर्थः

श्रीवसिष्ठउवाच ॥ ॥ सर्वात्मनिचिदाभासेतदेवाश्वनुभूयते ॥ संवेद्यतेयदेवांतरसत्यंवस्त्ववस्तुवा ॥ १ ॥ तदेवाभ्यासतःपूर्ववात्द्यार्थानुभवात्मना ॥ स्फुरतीवबहिस्त्वेनस्वस्वप्नोत्रनिदर्शनम् ॥ २ ॥ चिद्रूपंसर्वमेतच्चचिदच्छागगनादपि ॥ चिच्चिनोतिचिदेवातोनैतत्किंचन कुत्रचित् ॥ ३ ॥ ननाशोनास्तिनानर्थोनजन्ममरणेनखम् ॥ नशून्यताननानास्तिसर्वंब्रह्मैवनैवच ॥ ४ ॥ नाशेजगदहंत्वादेर्नकिंचिदपि नश्यति ॥ असतःकिलनाशोपिस्वप्नादेःकिंनुनश्यति ॥ ५ ॥ मिथ्यावभासेसंकल्पनगरेकैवनष्टता ॥ तथाजगदहंत्वादौनाशोनासतिविद्यते ॥ ६ ॥ कुतोजगदुपालंभइतिचेत्तदवस्तुनि ॥ ननिर्णयःसंभवतिखपुष्पाणांकिमुच्यते ॥ ७ ॥ निर्णयएषएवात्रयदशेषमभावयन् ॥ यथास्थितंयदाचारंपाषाणइवतिष्ठसि ॥ ८ ॥ जगत्संकल्पमात्रात्मतत्रतेर्थयुतंक्षणात् ॥ शाम्यत्यशेषेणेत्येवनिर्णयःसर्गविभ्रमे ॥ ९ ॥ सर्गेनर्गलएवायंब्रह्मात्मकतयाक्षयः ॥ अन्यथातुनसर्गोयमस्तिनास्तिचसंतिवा ॥ १० ॥ येषांचविद्यतेसर्गःस्वप्नपुंसामिवासताम् ॥ स सर्गःपुरुषास्तेचमृगतृष्णांवुवीचिवत् ॥ ११ ॥ असतामेवसद्भावमिवयेषामुपेयुषाम् ॥ नवयंनिर्णयंविद्मोवंध्यापुत्रगिरामिव ॥ १२ ॥

॥ ७ ॥ तर्हिकिंतच्छास्त्रैवैयर्थ्यमेवनेत्याह ॥ निर्णयइति ॥ स्वाभाविकस्वरूपस्थितिसिद्ध्यर्थमसदपिसदिवकल्पयित्वानिंदादिनावैराग्यविवेकादिस्तत्त्वसाक्षात्कारांतउपायःकल्पितइतिएषएवनिर्णयःसिद्धांतइत्यर्थः ॥ यथास्थितंयथाशास्त्रंयथाचारंयथासंप्रदायंचभूमिकाक्रममभ्यस्येत्यर्थः ॥ ८ ॥ अस्त्वेवमात्मतत्त्वेनिर्णयस्वर्गादिजगत्स्वरूपेकोनिर्णयःसफलस्तमाह ॥ जगदिति ॥ तत्रप्रागुक्तस्थितौ ॥ अर्थःसांसारिकपुरुषार्थाभासस्तद्युतम् ॥ ९ ॥ ननुसर्गःसुषुप्तिप्रलययोःस्वतएवक्षीयतेकिंतस्यब्रह्ममात्रतापरिज्ञानेनतत्राह ॥ सर्गेइति ॥ अनर्गलोमूलोच्छेदात्पुनरुद्भवशून्यः ॥ अन्यथाप्रलयादौक्षयेतुबीजात्मनास्तिकार्यात्मनानास्तिसंतिवाप्रलयेप्येवंदवाण्यानोक्तरीत्याकार्याणि ॥ सांकल्पिकस्यपरैःक्षेतुमशक्यत्वादित्यर्थः ॥ १० ॥ तर्हिसतिसर्गेकथंप्रलयस्तत्राह ॥ येषामिति ॥ प्रलयसंकल्पयितुर्दृष्ट्यातेषामसत्त्वात्स्वसांकल्पिकसर्वनाशादेवतस्यप्रलयव्यवहारादित्यर्थः ॥ ११ ॥ अतएवजीवजगद्रूपाणामनिर्णेयत्वादनिर्वचनीयत्वमुक्तमित्याह ॥ असतामेवेति ॥ १२ ॥

अतएवचतत्त्वविदांसदैवाद्वितीयचिदानंदपूर्णतेत्याह ॥ परिपूर्णेति ॥ हियस्मात्तेद्रष्टृदृश्यांशदृष्टौनपतंतिनाभिनिविशंते ॥ १३ ॥ अचलाइवाप्रकंप्याइतिशेषः ॥ साचाराः इवार्थेवाशब्दाः ॥ १४ ॥ १५ ॥ अज्ञपुरुषास्तर्हिकिंस्वरूपास्तदाह ॥ वासनैवेति ॥१६ ॥ अनालोकनंप्रकाशास्फूर्त्तिः ॥ कृष्णंतमःआदिपदात्तत्कार्यचोरयक्षादिस्तस्यआलोकस्फूर्त्तावनुपलंभोदृष्टांतः ॥ तृष्णेतिपाठेतृष्णामृगतृष्णा ॥ स्पष्टचेष्टितःअतिस्पष्टइतियावत् ॥१७॥ कीदृशादालोकात्तमाह ॥ भूतानीति ॥ देहमांसादिस्थूलदेहोपादानंपंचीकृतानिभूतान्येव ॥ तथाबुद्ध्यहंकारचेतांसिसूक्ष्मशरीरोपादानोपलक्षणम ॥ तान्यप्यन्नमयंहिसोम्यमनइत्यादिश्रुतेस्तन्मयान्यपंचीकृतभूतविकारभूतान्येव ॥ १८ ॥ अस्त्वेवंकिंततस्तत्राह ॥ भूतादीति ॥ तत्रबुद्ध्यादिघटितलिंगोपाधावहंभावेनप्रविष्टश्चिदात्मातद्द्वारास्थूलदेहमप्यविद्ययाहमित्यभिमन्यते ॥ तस्यविवेकेनबुद्ध्यहंकारचेतसांभूता

परिपूर्णार्णवप्रख्याकाप्यपूर्वैवपूर्णता ॥ तज्ज्ञानांद्रष्टृदृश्यांशदृष्टौनहिपतंतिते ॥ १३ ॥ अचलाइवनिर्वातादीपाइवसमत्विषः ॥ साचारावानिराचारास्तिष्ठंतिस्वस्थमेवते ॥ १४ ॥ आपूर्णकार्णवप्रख्याकाप्यंतःपूर्णतोदिता ॥ अंतःशीतलताज्ञस्यापूर्वैवलक्ष्यते ॥ १५ ॥ वासनैवेहपुरुषःप्रेक्षितासानविद्यते ॥ तांचनप्रेक्षतेकश्चित्ततःससारआगतः ॥ १६ ॥ अनालोकनसिद्धंयत्तदालोकान्नविद्यते ॥ कृष्णाद्यनुपलंभोत्रदृष्टांतःस्पष्टचेष्टितः ॥ १७ ॥ भूतानिदेहमांसादितच्चासद्विभ्रमोजडः ॥ बुद्ध्यहंकारचेतांसितन्मयान्येवनेतरत् ॥ १८ ॥ भूतादिमयतांत्यक्त्वाबुद्ध्यहंकारचेतसाम् ॥ अत्यंतंस्थितिरभ्येतियदितन्मुक्ततोदिता ॥ १९ ॥ चिच्छ्लिष्टाचेत्यनिष्ठत्वात्तादृश्येवात्रकास्तिता ॥ तस्मात्केवकुतःकुत्रवासनाकिंस्वरूपिणी ॥ २० ॥ यस्यचैषभ्रमःसोसत्प्रेक्षयासन्नलक्ष्यते ॥ मृगतृष्णांबुवत्तेनसंसारःकस्यकःकुतः ॥ २१ ॥ तदेवंतर्हितस्यस्यादितिचित्तोदयोहियः ॥ पुनःसएवसंसारविभ्रमःसंप्रवर्त्तते ॥ २२ ॥ तस्मात्सर्वमनाश्रित्यव्योमवत्समुपास्यताम् ॥ अपुनःस्मरणंश्रेयइहविस्मरणंपरम् ॥ २३ ॥ नेहदृष्टानभोक्तास्तिनास्तितानचनास्तिता ॥ यथास्थितमिदंशांतमेकंस्पंदिसदाब्धिवत् ॥ २४ ॥ सर्वंदृश्यंजगद्ब्रह्मसदित्यवगतेस्फुटम् ॥ जलशोषादिवोदेतिबिंबविंबिक्षयेशिवम् ॥ २५ ॥

दिमयतांवाचारंभणश्रुतिदर्शितोपायेनत्यक्त्वाअत्यंतंस्वप्रकाशचिन्मात्रस्वभावेनयास्थितिर्यदभ्येतितत्तर्हिसैवमुक्तताउदिताआविर्भूतासएवालोकोमयोक्तइत्यर्थः ॥ १९ ॥ एवमात्मालोकेप्रसृतेवासनापिबाधितैवेतितयापिनबंधप्रसक्तिरित्याह ॥ चिदिति ॥ लिंगोपाधावात्मचित्श्लिष्टातादात्म्याध्यासेनमिलिताचेत्तस्याश्चेत्योन्मुखत्वात्तादृश्येववासनास्तिताप्रसिद्धा ॥ साचात्रअस्यांमुक्ततायांका ॥ २० ॥ बध्यस्यजीवस्यैवतत्त्वदर्शनेअनुपलंभाच्चकेनकस्यबंधप्रसक्तिरित्याह ॥ यस्येति ॥ असन्अलीकः ॥ असच्चप्रेक्षयातत्त्वदृष्ट्यानलक्ष्यते ॥२१॥ आत्मालोकमात्रेतुपुनश्चित्तोदयेनसंसारःस्यादेवेतितद्दार्ढ्यमपुनःस्मरणावधिकार्यमित्याह ॥ तदेवमितिद्वाभ्याम् ॥ तत्तस्मादेवमात्मालोकेप्रवृत्तस्यापिविषयस्मरणेयश्चित्तोदयःसएवपुनःसंसारःसंप्रवर्त्ततेसंप्रवर्तेत ॥२२॥ परंविस्मरणंभूमिकाभ्यासेनसाधयेदितिशेषः ॥२३॥ तदभ्यासपरःकथंपश्येत्तदाह ॥ नेहेत्यादिना ॥ स्पंदिप्रारब्धोपनीतव्याधितव्यवहारनिमित्तम् ॥ सदाअब्धिवत्पूर्णम् ॥ २४ ॥ बिंबनंबिंबश्चिदाभासःसोस्यास्तीतिबिंबीउपाधिस्तदुभयक्षये ॥ २५ ॥

शांततासमाधिपरताव्यवहारोवेतिद्वयमपिदृश्यते ॥ २६ ॥ २७ ॥ सप्तमभूमिकाविश्रांतिपर्यंतंपरिपोषंनोपागतम् ॥ २८ ॥ २९ ॥ एवंचब्रह्मणिस्वाभाविकभावनानुसारेण
जगद्रूपमस्तिशास्त्रीयतत्त्वभावनानुसारेणतात्विकंरूपमप्यस्तीतियथेच्छमनर्थःपुरुषार्थोवासुलभइत्याशयेनाह ॥ कोशेइत्यादिना ॥ बाह्यताआत्मान्यनिष्ठताजगतोनेत्यर्थः ॥
॥ ३० ॥ बहिरस्तीतिप्रतीतिस्त्वात्मन्येवबाह्यताभावनान्नान्याधारत्वादित्याह ॥ बाह्यताभावनादिति ॥ तथाचतत्तद्भावनात्मकमेवबाह्यत्वमांतरत्वंचेतिफलितमित्याशयेनाह॥
भावनमिति ॥ ३१ ॥ अतएवस्वप्नजाग्रतोर्नप्रतीतितोभेदइत्याह ॥ येति ॥ भिन्नभांडस्थक्षीरयोरिवअन्यताभेदोविशेषोनास्ति ॥ ३२ ॥ ननुजाग्रत्स्वप्नार्थानांस्थैर्यास्थैर्येवि
शेषःप्रत्यक्षउपलभ्यतेतस्यकागतिस्तत्राह ॥ स्थैर्येति ॥ एवंस्वप्नस्यजाग्रद्देहाधारताप्रत्ययोपिनभेदकइत्याह ॥ आधारेति ॥ ३३ ॥ स्वप्नार्थानांयावदात्ममात्रतानानुसंधी

शांतताव्यवहारोवारागद्वेषविवर्जितः॥ विश्रांतस्यपरेतत्त्वेदृश्यतेसमदर्शिनः॥२६॥ अथवाशांततैवास्यनिर्वाणस्यावशिष्यते॥निर्वा
सनःकिलमुनिःकथंव्यवहरत्वसौ॥ २७॥ यावत्तस्यननिर्वाणंपरिपोषमुपागतम् ॥ तावद्व्यवहरत्यस्तरागद्वेषभयोदयः॥२८॥ वीतरा
गभयक्रोधोनिर्वाणःशांतमानसः॥ शिलेवाप्यशिलीभूतोमुनिस्तिष्ठतिनित्यशः॥ २९॥ कोशेऽस्तिपद्मबीजस्ययथासर्वाब्जिनीतथा॥
अनन्यास्वप्नविश्रांतिरात्मन्यस्तिनबाह्यता ॥ ३० ॥ बाह्यताभावनाद्बाह्यमात्मैवात्मत्वभावनात् ॥ भवतीदंपरेतत्त्वेभावनंतत्तदेवहि
॥ ३१ ॥ यांतःस्वप्नादिविश्रांतिःसैवेयंबाह्यतोदिता॥ मनागप्यन्यतानात्रद्विभांडपयसोरिव॥ ३२॥ स्थैर्यास्थैर्येतथैवात्रभ्रांतिमात्रम
येतते॥ आधाराधेयतेतेद्वेयथाजलतरंगते ॥३३॥ स्वप्नादावात्मनोन्यत्वज्ञानादन्यत्ववेदनम्॥ अनन्यतावबोधेतुतदनन्यन्नचोदयि
॥ ३४ ॥ कलनारहितंशांतंयद्रूपंपरमात्मनः॥ भवत्यसौतत्तद्भावादतद्भावान्नतद्भवेत्॥३५॥ स्वप्नादिज्ञानसंशांतौयद्रूपंशुद्धमैश्वरम्॥
नतदस्तिनतन्नास्तिनवाग्गोचरमेवतत्॥३६॥आत्यंतिकभ्रांतिलयेयुक्तएवावगच्छति॥ स्वरूपंनोपदेशस्यविषयोविदुषोहितत्॥३७॥
शांतंनिरस्तभयमानविषादलोभमोहात्मदेहमननेंद्रियचित्तजाड्यम् ॥ त्यक्त्वाहमक्षयमपास्तसमस्तभेदंनिर्वाणमेकमजमासितुमेव
युक्तम्॥ ३८॥ ॥इ० वा० महारामायणेवा० दे० मो० नि० उ० निर्वाणयुक्त्युपदेशवर्णनंनामएकत्रिंशत्तमःसर्गः॥ ३१॥ ॥ ५॥

यतेतावदेवभानं आत्ममात्रतानुसंधानेतुझटित्येवजागरणाद्बाधादात्मानन्यत्वंप्रसिद्धंतद्वज्जाग्रदर्थेष्वपिबोध्यमित्याशयेनाह ॥ स्वप्नादाविति ॥ उदयिपृथगाविर्भावबन्नच
॥ ३४ ॥ अतएववास्तवोपिब्रह्मभावस्तद्भावनाधीनइतियदुक्तंतत्सिद्धमित्याह ॥ कलनेति ॥ ३५ ॥ अस्तितानिरूपककालदेशाधाराद्यभावान्नतदस्ति ॥ स्वरूपस्याबाधान्न
नास्ति ॥ अतएववाचामगोचरमित्यर्थः ॥ ३६ ॥ कथंतर्हितद्वाचागुरुणोपदिश्यतेतत्राह ॥ आत्यंतिकेति ॥ युक्तःसमाधिस्थःस्वानुभवेनैवावगच्छतिकांतासंभोगसुखवन्न्यपरंप्र
त्युपदेशस्यविषयस्तथापितदुपायप्रदर्शनेनतत्रश्रोतृबुद्ध्यवतारणमेवोपदेशफलमितिभावः ॥ ३७ ॥ अतोहेरामअहमहंकारंत्यक्त्वानिरस्तानिजाड्यांतान्येकादशयस्मिंस्तथा
विधमतएवशांतमजमक्षयमपास्तसमस्तभेदमेकंनिर्वाणंब्रह्मभूत्वासदैवसमाधावासितुंयुक्तमुचितंनव्यवहारविषयेष्वित्यर्थः ॥ ३८ ॥ ॥ इतिश्रीवासिष्ठम० रा० तात्पर्यप्र
काशेनिर्वाणप्रकरणेउत्तरार्द्धेएकत्रिंशत्तमःसर्गः ॥ ३१ ॥ ॥ ५ ॥ ॥ ५ ॥

साधुसंगमसच्छास्त्रविचाराभ्यासशालिनः ॥ मोक्षोत्रावश्यंभावित्वात्स्वायत्तउपपाद्यते ॥ १ ॥ विद्याविद्याभ्यांबंधमोक्षयोःस्वायत्तत्वंवर्णयिष्यन्प्रथममविद्याचित्प्रसरणाधीनंस्वायत्तंबंधंदर्शयति ॥ यदेति ॥ स्पंदादपिचेतिदृष्टांतार्थम् ॥ इवचेतिपाठःस्पष्टः ॥ १ ॥ २ ॥ ३ ॥ उदितोपिनखेदायेतियदुक्तंतदुपपादयति ॥ यासाविति ॥कूटस्थचितोबाह्यार्थोपसर्पणलक्षणंप्रसरद्रूपंविषयाभावात्स्वतश्चनास्त्येवेतिविषयाबाधान्नखेदायेतिभावः ॥ ४ ॥ अयंचित्प्रसरोऽनुभवादेवासिद्धोत् ॥ सचानुभवोविषयाबाध्यमानोऽसदर्थमननुभवन्नेवार्भकयक्षानुभववन्मुधैवस्थितइत्यर्थः ॥ ५ ॥ उक्तोन्यायआंतरेअहंभावात्मकप्रसरेपितुल्यइतिदर्शयन्बंधमोक्षयोःस्वायत्ततासिद्धेत्याह ॥ अहंभावइति ॥६॥ मोक्षस्यस्वायत्ततामुपपादयतितदित्यादिना ॥ विषयामूलजाड्यापहाराच्चिदात्मैकरस्यापत्त्याअजडानांमनोबुद्ध्यादिसर्ववस्तूनांजडंपाषाणादीवनिश्चलंयदवेदनंवेद्यवेदन

॥श्रीवसिष्ठउवाच॥ ॥यदाचितिःप्रसरतितदाहंताजगद्भ्रमः॥ असदेवाभ्युदेतीवस्पंदादपिचवायुता॥१॥ उदितोपिनखेदायब्रह्मरूपत्ववेदनात्॥ परमायत्वनर्थायजगच्छब्दार्थभावनात् ॥ २ ॥ रूपानुभवमादत्तेचक्षुःप्रसरणाद्यथा॥ चितिःप्रसरणात्तद्वज्जगद्विभ्रममास्थिता ॥ ३ ॥ यासौप्रसरतिव्यर्थंचेत्याभावान्नसासती ॥ असत्कथंप्रसरतिवंध्यापुत्रःक्वनृत्यति ॥ ४ ॥ अयंत्वनुभवादेवमुधैवानुभवन्स्थितः॥ असदेवाननुभवन्स्वयमर्भकयक्षवत्॥५॥ अहंभावोपिदुःखार्थमहमित्येववेदनात्॥ अवेदनान्नाहमतःस्वायत्तेबंधमुक्तते॥६॥ तद्ध्यानंससमाधिर्वायदवेदनमासितम् ॥ अजडानांजडमिवसमंशांतमनामयम् ॥ ७॥ द्वैताद्वैतसमुद्भेदैर्वाक्यसंदर्भविभ्रमैः॥ माविषीदतदुःखायविबुधाअबुधाइव ॥८॥ असदाश्रयतेदुःखंस्वप्नवद्घनवासनः ॥ रूपालोकमनस्कारान्संकल्परचितानिव ॥९॥ दुःखंसदेवनाश्नातिसुप्तवत्तनुवासनः॥ रूपालोकमनस्कारान्संकल्परहितानिव ॥ १० ॥ अत्यंततनुतामेत्यवासनैवैतिमुक्ताम्॥ देशकालक्रियायोगात्पदार्थभावनामिव॥ ११ ॥

भावनिर्मुक्तमासितमवस्थानंतदेवध्यानंसमाधिर्वातदुपलक्षितामुक्तिरितियावत् ॥ ७ ॥ अयमेवविश्रांतिहेतुःसिद्धांतः अन्यथाकल्पनेतुवादिनांकलहमात्रपर्यवसानेनवृथाकंठशोषःस्यादित्याशयेनतान्संबोध्याह ॥ द्वैतेति ॥ हेविबुधाःपंडितंमन्यावादिनोयूयमबुधामूर्खाइवद्वैताद्वैतादिनानाविकल्पसमुद्भेदैर्बहुविधकलहात्मकवाक्यसंदर्भविभ्रमैर्माविषीदतवृथाकंठशोषलक्षणंविषादंमाभूत ॥ इममेवपरमपुरुषार्थहेतुंसिद्धांतमवलंबध्वमित्यर्थः ॥ ८ ॥ घनवासनस्यबहिर्मुखस्यासद्‌पिरूपादिदर्शनमिवदुःखमपिदृढतरंदुर्वारम तनुवासनस्यांतर्मुखस्यतुतद्वदेवप्रारब्धप्रसंजितमपिदुःखमापाततोभुज्यमानंस्वानंदानुभवतिरोहितत्वादभुक्तप्रायमेवभवतीत्याह ॥ असदितिद्वाभ्याम् ॥ आश्रयतेभुंक्ते ॥ ९ ॥ अप्यर्थेएवकारः ॥ सत्प्रारब्धप्रसंजितमपिदुःखंनाश्नातिनभुंक्ते ॥ सुप्तोनिद्रासुखपरवशचित्तोयथामशकमत्कुणादिदंशनदुःखंनानुभवतितद्वत् ॥ १० ॥ अतोवासनानामेवोपचयात्संसारानुभवइवापचयादेशकालक्रमेणमुक्तानुभवोपिसिद्ध्यतीत्याह ॥ अत्यंतेति ॥ ११ ॥

अपक्षयक्रमप्राप्तेनपरेणाणुनासूक्ष्मतमेनचरमपरिणामेन ॥ आदिपदान्नीहारधूमादिपरिग्रहः ॥ १२ ॥ वासनातानवेतर्हिकउपायस्तमाह ॥ अहंभावनयेति ॥ ब्रह्माहंभावनयाबोधेअभिवर्ध्यमानेवासनादिनेदिनेघनंनिरूढंतानवंसौक्ष्म्यंयस्यास्तथाविधासतीमुक्तिःसंपद्यते ॥ यथाविपश्चितांपंडितानांसंगमाद्विद्याभ्यासाद्वर्द्धमानान्मूढताघनतानवंप्राप्यपांडित्यंसंपद्यतेतद्वदित्यर्थः ॥ १३ ॥ कियत्कालंबोधोवर्धनीयइतिचेद्दृढबोधतापर्यंतमित्याशयेनरूढबोधलक्षणमाह ॥ नाहमिति ॥ मद्युक्त्याअहंब्रह्मेतिभावनालक्षणेनप्रत्यगात्मयोगेनाभ्यस्यमानेनेहजीवतोयोगिनोऽजीवतःपरलोकंगतस्यवाअहंशब्दार्थोजीवोनास्तीतिशमात्मकोनिश्चयोंतर्यस्यास्तिसरूढबोधइत्यर्थः ॥ १४ ॥ द्वंद्वंद्रव्यंक्रियेतिचकल्प्यमानम् ॥ स्पंदइतिपाठेस्पष्टम् ॥ आदिपदाज्जीवः ॥ १५ ॥ १६ ॥ १७ ॥ जीवनंप्राणादिधारणंकिम् ॥ यावज्जीवग्रहणमामोक्षोपलक्षणम् ॥ १८ ॥ सचविचारोगुरुसेवनाच्छीघ्रंफलपर्यंतःसिध्यतीत्याशयेनाह ॥ जीवितमिति ॥ यतस्तज्ज्ञस्तत्त्ववित्तल्लक्षणस्यार्कस्यसेवनात्संपर्काद्भुवनंजगदवबोधेनोज्जीवितंभाति ॥ अहमिति ॥

अत्यंततनुतांयातावासनैवैतिमुक्तताम् ॥ पराणुपरिणामेनखतांखेभ्रादिकायथा ॥ १२ ॥ अहंभावनयाबोधेवासनाघनतानवा ॥ विपश्चित्संगमाभ्यासात्पांडित्यमिवमूढता ॥ १३ ॥ नाहमस्तीहमद्युक्त्यानिश्चयोंतःशमात्मकः ॥ जीवतोजीवतश्चास्तिरूढबोधइतिस्मृतः ॥ १४ ॥ वायौद्वंद्वमिवात्रेदंजगदादिचभासते ॥ कोहंकथमिदंचेतिविचारेणैवशाम्यति ॥ १५ ॥ नाहमित्येवनिर्वाणंकिमेतावतिमूढता ॥ सत्संगमविचाराभ्यामेतदाश्ववगम्यते ॥ १६ ॥ क्षीयतेतत्त्ववित्संगादहमित्येवबंधनम् ॥ आलोकेनेवतिमिरंदिवसेनेवयामिनी ॥ १७ ॥ कोहंकथमिदंद्दश्यंकोजीवःकिंचजीवनम् ॥ इतितत्त्वज्ञसंयोगाद्यावज्जीवंविचारयेत् ॥ १८ ॥ जीवितंभुवनंभातिततोहमितिनश्यति ॥ तत्वमेकेनतज्ज्ञार्कसेवनात्सनिषेव्यताम् ॥ १९ ॥ योयोबोधातिशयवांस्तंतंपृथगुपास्वभो ॥ संगमेकथयोदेतितेषांवादपिशाचिका ॥ २० ॥ वादयक्षेप्यभ्युदितेबालस्येवविपश्चितः ॥ युक्तियुक्तमलंमुख्यमुदेत्यहमितिभ्रमः ॥ २१ ॥ अतःप्रत्येकमेकांतेप्राज्ञःसेवेतपंडितम् ॥ एकीकृत्यतदुक्तांस्तानर्थान्बुद्ध्याविचारयेत् ॥ २२ ॥ विचारयेत्तदुक्त्यर्थंबुद्ध्याबुद्धिविवृद्धये ॥ सर्वसंकल्पमुक्तंयत्तत्तत्तन्मयतांव्रजेत् ॥ २३ ॥

सर्वपदार्थतत्त्वावरणंतमोनश्यति वस्तुतत्त्वंचएकेनक्षणेनप्रथतेअतःसतज्ज्ञार्कोनिषेव्यतामित्यर्थः ॥ १९ ॥ यदातुबहुषुविद्वत्सुतार्किकेषुचसरत्वयंतत्त्वज्ञोयंनेतिनिर्द्धारणेअसमर्थोहंतदाकिंकुर्यांतत्राप्याह ॥ योयइत्यादिना ॥ ननुपृथगुपास्वेतिकिमर्थमुच्यते समुदितोपास्तौकोदोषस्तमाह ॥ संगमेइति ॥ कथयापरस्परविरुद्धयुक्तिकथनेन ॥ मुंडेमुंडेमतिर्भिन्नातुंडेतुंडेसरस्वतीतिन्यायादितिभावः ॥ २० ॥ उदेतुनामवादपिशाचिकाकोदोषस्तत्राह ॥ वादयक्षेइति ॥ वादलक्षणेयक्षेपिशाचेभ्युदितेसतिविवेकिनोपिश्रोतुरश्रौतमपियुक्तिभिस्तस्तैर्युक्तंतार्किकैःप्रतिपाद्यमानमहंप्रत्यक्त्वंमुख्यंतदेवालंपर्याप्तंममेतिभ्रमउदेति ॥ तथाचांधगोलांगूलन्यायेनतदालंबनेऽनर्थएवस्यादितिभावः ॥ २१ ॥ सेवेतसेवाद्युपचारेणवशीकृत्यपृच्छेत् ॥ २२ ॥ श्रुतियुक्तिस्वानुभवविद्वदंतरसंवादैर्विचारयेद्रत्नतत्त्वमिवपरीक्षेतसर्वसंदेहोच्छेदेनबुद्धेःशुद्धये ॥ एवंमननेनबुद्धिशुद्धौनिदिध्यासनंकार्यमित्याह ॥ सर्वसंकल्पमुक्तमिति ॥ तत्सत्परमार्थंस्तन्मयतांनिर्विकल्पसमाधिनस्तदेकरस्यम् ॥ २३ ॥

तेनतत्त्वज्ञानोदयेनाज्ञानोच्छेदंदर्शयति ॥ विपश्चिदिति ॥ २४ ॥ तदसंभवशंकानकार्येत्याह ॥ एषोर्थइति ॥ २५ ॥ सर्वसंकल्पमुक्तंयत्तदेवसत् तन्मयताप्राप्तौसर्वजगद्व्यवहारैरपिविदुषोनकश्चिदिष्टनाशोऽनिष्टोदयोवेत्याह ॥ व्योम्नइति ॥ यथाव्योम्नःअंबुवाहनीहारातपादिविजृंभयायथावामहाजलस्यसमुद्रस्यतरंगादिभंग्याकिंचिदनिष्टंनयुज्यतेनापिकिंचिदिष्टंनश्यतितद्वन्निर्मननस्यनिःसंकल्पस्ययोगिनोपिनेष्टानिष्टनाशोदयावित्यर्थः ॥ २६ ॥ आकाशसमुद्रयोःसद्वितीयत्वात्तद्योगवियोगशंकापिस्याद्विदुषस्तुकूटस्थाद्वयब्रह्मरूपत्वान्नाध्यस्तविवर्तैस्तच्छंकापीत्याशयेनाह ॥ इदंहीति ॥ निरामयेआततेपूर्णेब्रह्मणिविचारितेप्रबुद्धेसतिइदंसर्वंमृगतृष्णिकांबुवदहमितिचपृथगात्मरूपंनविद्यते ॥ एवंस्थितेइहतत्त्वविदिमननादिविभ्रमःकुतःक्वकस्मात्स्यादित्यर्थः ॥ २७ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०द्वात्रिंशःसर्गः ॥ ३२ ॥ ॥७॥ ॥ इहोपवर्ण्यतेभ्रांतिकल्पनाप्रतिकल्पना ॥ परलोकचिकित्साचसंविद्व्यसरवारणात् ॥ १ ॥ तत्रादौप्रतिकल्पनांवक्तुंप्रस्तावंरचयति ॥ स्वपौरुषेणेति ॥ नाअधिकारयोग्यशरीरंप्राप्तःपु

विपश्चित्संगमैर्बुद्धिंनीत्वापरमतीक्ष्णताम् ॥ अज्ञानलतिकासैकाकणशःक्रियतामलम् ॥ २४ ॥ एषोर्थःसंभवत्येवतेनेदंकथयाम्यहम् ॥ स्वानुभूतंवयंबालानासमंजसवादिनः ॥ २५ ॥ व्योम्नोंबुवाहादिविजृंभयेवतरंगभंग्येवमहाजलस्य ॥ नयुज्यतेनापिचनश्यतीहनाशोदयोनिर्मननस्यकिंचित् ॥ २६ ॥ इदंहिसर्वंमृगतृष्णिकांबुवन्निरामयेब्रह्मणिशांतआतते ॥ विचारितेनाहमितीहविद्यतेकुतःक्वकस्मान्मननादिविभ्रमः ॥ २७ ॥ ॥इत्यार्षेवा०वा०दे०मो०नि०उ०सत्यावबोधनोपदेशोनामद्वात्रिंशःसर्गः ॥ ३२ ॥ ॥७॥

श्रीवसिष्ठउवाच ॥ ॥ स्वपौरुषेणस्वधियासत्संगमविकासया ॥ यदिनानीयतेज्ञत्वंतदुपायोस्तिनेतरः ॥ १ ॥ स्वंकल्पितंकल्पितंचप्रतिकल्पनयास्वया ॥ तदेवान्यत्वमादत्तेविषत्वममृतंयथा ॥ २ ॥ कल्पनाचाकल्पनांतामुक्ततायदकल्पनम् ॥ एतच्चभोगसंत्यागपूर्वंसिध्यतिनान्यथा ॥ ३ ॥ वचसामनसाचांतःशब्दार्थावविभावयन् ॥ यआस्तेवर्द्धतेतस्यकल्पनोपशमःशनैः ॥ ४ ॥ वर्जयित्वाहमित्येवनाविद्यास्तीतरात्मिका ॥ शांतेत्वभावनादस्मिन्नान्योमोक्षोस्तिकश्चन ॥ ५ ॥

रुषोयदिज्ञत्वंतत्त्वज्ञानंनीयतेप्राप्यते ॥ नयतेर्द्विकर्मकात्प्रधानेनीहृकृष्वहामितिप्रधानेकर्मणिलः ॥ तत्तर्हिनेतरोनान्यथेत्यर्थः ॥ १ ॥ कीदृशंतत्पौरुषंयेनज्ञत्वंनीयतेतदाह ॥ स्वंकल्पितमिति ॥ स्वंस्वाभाविकमशास्त्रीयम् ॥ कल्पितंकल्पितमितिवीप्सा ॥ सर्वंकल्पितंचात्तन्मूलंवासनाविद्यादिचस्वयास्वीययाशास्त्रीययाप्रतिकल्पनयातदेवान्यत्वंबंधहेतुतामपहायमोक्षोपयोगित्वमादत्ते ॥ यथास्वभावतोमरणहेतुरपिविषंरसायनशास्त्रोक्तोपायप्रतिकल्पनयाविषत्वंविहायामृतममरणसाधनंरसायनंभवतितद्वत् ॥ २ ॥ किंयत्कालंप्रतिकल्पनाकार्येतिचेत्सर्वकल्पनानिवृत्तिपर्यंतमित्याह ॥ कल्पनेति ॥ अकल्पनंसर्वकल्पनानिवृत्तिरंतोवधिर्यस्याःसायद्यस्माद्धेतोरकल्पनमेवपरिशिष्टस्यात्मनोमुक्तता ॥ तत्रावश्यकींवैराग्यलक्षणांसंन्यासलक्षणांचप्राथमिकींप्रतिकल्पनांदर्शयति ॥ एतच्चेति ॥ पूर्वमादौभोगसंत्यागात् ॥त्यजंतंवहितज्ज्ञेयंत्यक्तुःप्रत्यक्परंपदमितिश्रुतेरितिभावः ॥ ३ ॥ ततःश्रवणमननाभ्यामात्मतत्त्वंनिश्चित्यवाङ्मनसनिरोधलक्षणाप्रतिकल्पनाकार्येत्याह ॥ वचसेति ॥ ४ ॥ ततोऽनहंभावलक्षणासाकार्येत्याह ॥ वर्जयित्वेति ॥ अभावनात्सर्वभावनानिवर्त्तकतत्त्वसाक्षात्कारात् ॥ अस्मिन्नहंकारेशांतेबाधितेसति ॥ ५ ॥

अथतत्त्वसाक्षात्कारोत्तरमपिप्राक्तनजगज्जीवभावेरुचिर्यस्यतथाविधःसन्आदेहंस्थूलदेहपर्यंतंकिंचिदल्पमप्यहंभावंयदिश्रयसितर्ह्येवापरिच्छिन्नपूर्णानंदस्वरूपविस्मरणान्न
श्यसीव ॥ संसारदुःखेपतसीत्यर्थः ॥ तस्मिन्नहंभावेत्यक्तेतुशाम्यसिसर्वदुःखनिवृत्तिंलभसे निरतिशयानंदस्वभावेनसिध्यसिच ॥ ६ ॥ अचेतनाद्बहिर्मुखवृत्त्याअदर्शना
त् ॥ ७ ॥ परस्मिन्ब्रह्मणिआलीनचित्तस्यातएवोपलस्येवबहिरचेतनादंतश्चित्त्वभावनात्साधकाभावाद्बाधकसत्वाच्चेदंसर्वंदृश्यंशाम्यति ॥ ८ ॥ सुखदुःखयोर्दृश्यसत्वासत्वे
नोपयुज्येर्नांकतुतद्दर्शनादर्शनेएवेतितच्चेतनायप्रवृत्तंचित्तमेवनिरोद्धव्यमित्याशयेनाह ॥ इदमिति ॥ दृश्यस्याचेतनमदर्शनंतुअचेतनाच्चित्तक्रियानिरोधेनब्रह्माकारतापादनां
तप्रतिकल्पनावशादेवेत्यर्थः ॥ ९ ॥ परलोकचिकित्सांवर्णयितुमुपक्रमते ॥ द्वाविति ॥ सर्वैराध्यात्मिकादिभावैः ॥ १० ॥ इहलोकेप्रसिद्धेक्षुत्तृषादिव्याधावन्नपानादिभोगल

अहंभावमयादेहंकिंचिच्छ्रयसिनश्यसि ॥ जगदादिरुचिस्तस्मिंस्यक्तेशाम्यसिसिध्यसि ॥ ६ ॥ अचेतनादिदंसर्वंसदेवासदिवस्थितम् ॥
शांतंयस्योपलस्येवनमस्तस्मैमहात्मने ॥ ७ ॥ अचेतनादिदंसर्वमुपलस्येवशाम्यति ॥ शून्याख्यातःपरालीनचित्तस्यचित्त्वभावनात्
॥ ८ ॥ इदमस्त्वथवामास्तुचेतितंदुःखवृद्धये ॥ अचेतितंसुखायांतरचेतनमचेतनात् ॥ ९ ॥ द्वौव्याधीदेहिनोघोरावयंलोकस्तथापरः ॥
याभ्यांघोराणिदुःखानिभुंक्तेसर्वैर्हिपीडितः ॥ १० ॥ इहलोकेयतंतज्ञाव्याधौभोगैर्दुरौषधैः ॥ आजीवितंयथाशक्तिचिकित्सानापराम
ये ॥ ११ ॥ परलोकमहाव्याधौप्रयतंतेचिकित्सनम् ॥ शमसत्संगबोधाख्यैरमृतैःपुरुषोत्तमाः ॥ १२ ॥ परलोकचिकित्सायांसावधा
नाभवंतिये ॥ मोक्षमार्गमहेच्छायांशमशक्त्याजयंतिते ॥ १३ ॥ इहैवनरकव्याधेश्चिकित्सांनकरोतियः ॥ गत्वानिरौषधंस्थानंसरुजः
किंकरिष्यति ॥ १४ ॥ इहलोकचिकित्साभिर्जीवितंयातुमाक्षयम् ॥ आत्मज्ञानौषधैरज्ञाःपरलोकश्चिकित्स्यताम् ॥ १५ ॥ आयुर्वा
युचलत्पत्रलवांबुकणभंगुरम् ॥ परलोकमहाव्याधिर्यत्नेनाशुचिकित्स्यताम् ॥ १६ ॥ परलोकमहाव्याधौयत्नेनाशुचिकित्सिते ॥ इह
लोकमयोव्याधिःस्वयमाशूपशाम्यति ॥ १७ ॥ संविन्मात्रंविदुर्जंतुंतस्यप्रसरणंजगत् ॥ परमाणूदरेप्यस्तितच्छैलशतविस्तरम् ॥ १८ ॥

क्षणैर्दुरौषधैर्यथाशक्तियतंते ॥ अपरामयेपारलौकिकनरकजन्मपरंपरादिव्याधौभोगैश्चिकित्सानजायतइत्यर्थः ॥ ११ ॥ चिकित्सनंकर्तुमितिशेषः ॥ १२ ॥ अपथ्यभोग
त्यागेसत्संगाद्यौषधसेवनेचसावधानाः ॥ शमाख्यस्यौषधस्यशक्त्या ॥ १३ ॥ ननुपरलोकव्याधेस्तत्रैवचिकित्साकरिष्यतेकिमत्रत्वित्वरयातत्राह ॥ इहैवेति ॥ निरौषधंसाधुसं
गमसच्छास्त्राद्यौषधशून्यंनरकस्थावरादिस्थानम् ॥ १४ ॥ हेअज्ञाः ॥ १५ ॥ १६ ॥ इहलोकव्याधिचिकित्सार्थंपृथग्यत्नोनकार्यइत्याह ॥ परलोकेति ॥ १७ ॥ परलोकव्या
धेस्तपस्तीर्थयज्ञदानप्रायश्चित्तादिचिकित्सायद्यपिसंतितथापितानात्यंतिकतदुच्छेदहेवतःकित्वात्मज्ञानमेव तच्चश्रवणादिपूर्वकसमाध्यभ्यासलक्षणसंविसरनिरोधादेवेत्या
शयेनतदुपायान्वक्तुंभूमिकांरचयति ॥ संविन्मात्रमिति ॥ तज्जगत्परमाणूदरेपिसंविदःपूर्णत्वादस्त्येव ॥ १८ ॥

प्रसरणंबहिर्मुखतयाविवर्त्तनंतदेवरूपालोकाबाह्यार्थामनांसिकामसंकल्पाद्याभ्यंतराइत्यर्थः ॥ व्योमनिचिदाकाशे ॥ १९ ॥ मिथ्यात्वादेवप्रलयसहस्रैरपिनास्यनिवृत्तिः सृष्टिसहस्रैरपिनसत्ताकित्वात्मज्ञानादेवेत्याशयेनाह ॥ प्रलयेष्वपीति ॥ नजायेतसृष्टिपुदृष्टेष्वपीतिशेषः ॥ तत्रहेतुमाह ॥ भ्रांतीति ॥ भ्रांतिमात्रैकरूपित्वादित्यर्थः ॥ २० ॥ आत्मज्ञानेतर्हिकेउपायाइतिचेत्प्रथमंवैराग्यमेवेत्याह ॥ भोगेति ॥ २१ ॥ २२ ॥ जीवितस्यआयुषः ॥ २३ ॥ रागशांतिदइतिविशेषणस्यतात्पर्यंतज्ज्ञाज्ञजीवितनदीवैलक्ष ण्यवर्णनेनदर्शयति ॥ तज्ज्ञस्येत्यादिना ॥ २४ ॥ रसनाःआक्रंदध्वनयस्ताभिरत्यंतभीषणाः ॥ २५ ॥ अज्ञानामविचारादेवसर्गादिप्रतिभासविक्षेपरूपाःसंविद्प्रसरलेशाइत्याह ॥

यत्संविदःप्रसरणंरूपालोकमनांसितत् ॥ व्योमन्येवानुभूयंतेनातःसत्योजगद्भ्रमः ॥ १९ ॥ प्रलयेष्वपिदृष्टेषुजगद्दृश्यास्यविभ्रमः ॥ ननश्यतिनजायेतभ्रांतिमात्रैकरूपिणः ॥ २० ॥ भोगपंकार्णवेमग्नआत्मानोत्तार्यतेयदि ॥ स्वपौरुषचमत्कृत्यातदुपायोस्तिनेतरः ॥ २१ ॥ अजितात्माजनोमूढोरूढोभोगैककर्दमे ॥ आपदांपात्रतामेतिपयसामिवसागरः ॥ २२ ॥ जीवितस्ययथाबाल्यंदृष्टंप्राथमकल्पिकम् ॥ निर्वाणस्यतथाभोगसंत्यागोरागशांतिदः ॥ २३ ॥ तज्ज्ञस्यजीवितनदीसकल्लोलाप्यसंभ्रमा ॥ समंवहतिसौम्यैवचित्रसंस्थेवनीरसा ॥ २४ ॥ अज्ञजीवितनद्यास्तुरसनात्यंतभीषणाः ॥ आवर्त्तावृत्तिविक्षोभकल्लोलाःसहवाहिनः ॥ २५ ॥ सर्गवर्गाःप्रवल्गंतिसंविद्प्रसरलेशकाः ॥ द्विचंद्रवालवेतालमृगांबुस्वप्नमोहवत् ॥ २६ ॥ संविद्वारितरंगौघाभांतिसर्गाःसहस्रशः ॥ विचारितास्त्वसत्यास्तेसत्यास्त्वनुभवभ्रमात् ॥ २७ ॥ जगंत्याकाशकोशेपिसंविद्प्रसरणभ्रमात् ॥ संतीवाप्यनुभूयंतेनतुसत्यानितानितु ॥ २८ ॥ संविद्विकासपयसोबुद्बुदः सर्गविभ्रमः ॥ अहमित्यादिसद्भावविकाराकाररूपवान् ॥ २९ ॥ संविन्निर्वाणमजगत्संविदुन्मीलनंजगत् ॥ नांतर्नवाह्यंनासत्यंनसत्यंसर्वमेवतत् ॥ ३० ॥ चिद्रूपमजमव्यक्तमेकमव्ययमीश्वरः ॥ स्वत्वभावत्वरहितंब्रह्मशांतात्मखादपि ॥ ३१ ॥ ब्रह्मणोनिःस्वभावस्यसर्गसंवेदनेस्वतः ॥ स्पंदनेपवनस्येवकारणंनोपयुज्यते ॥ ३२ ॥ स्वप्नानुभववद्भ्रांतिर्ब्रह्माब्धौब्रह्मवीचयः ॥ सर्गतावस्तुतस्त्वत्रनस्वप्नोनचसर्गता ॥ ३३ ॥ एकमेवनिराभासमचित्त्वमजडंसमम् ॥ नसन्नासन्नसदसदिदमव्ययमद्वयम् ॥ ३४ ॥

सर्गेति ॥ प्रवल्गंतिप्रसरंति ॥ २६ ॥ अनुभवभ्रमाद्भ्रांतानुभवात् ॥ २७ ॥ प्रसिद्धेआकाशकोशेपिगंधर्वनगरादिजगंतिसंतीवानुभूयंते ॥ २८ ॥ अहमित्यादिभिःसद्भिर्भावविकाराकारैरूपवान् ॥ २९ ॥ संविदोनिर्वाणमप्रसरः ॥ अजगत्सर्वजगन्निवृत्तिः ॥ उन्मीलनंप्रसरः ॥ ३० ॥ स्वप्रसरनिरोधयोःस्वयमेवेष्टइतिईश्वरोब्रह्मेत्यर्थः ॥ ३१ ॥ सचस्पंदो मिथ्याभूताविद्याविवर्त्तएवनतुसत्यब्रह्मस्वभावजइत्याह ॥ ब्रह्मणइति ॥ ३२ ॥ आविद्यकत्वेचविवर्त्तरूपाएवसर्गताःब्रह्मणोवीचयोभ्रांतिरेव ॥ वस्तुतस्तुनस्वप्नोनापिसर्गते त्यर्थः ॥ ३३ ॥ परमार्थतस्तर्हिब्रह्मकीदृशंतदाहैकमेवेति ॥ अचित्त्वंचित्त्वाख्यधर्मांतरशून्यम ॥ ३४ ॥

१ नचस्त्वित्यपिक्वचित्पाठः

तादृशब्रह्मभावेनस्थितिरेवयोगिनःसंविप्रशमनंमुनित्वंचेत्याह ॥ यथास्थितस्येति ॥ ३५ ॥ साहंजीवभावसहितम् ॥ ३६ ॥ संकल्पस्रष्टेरसंकल्पनमिवदृष्टस्रष्टेरस्याअदृष्टिरे वनिवृत्तिरित्याह ॥ यथेति ॥ ३७ ॥ सर्वजडवस्तुष्वनुगतःस्वभावोजाड्यंसैवमूलाविद्यातामेकांवर्जयित्वासर्वेएवशब्दार्थानामरूपाणिसहेतुकास्तद्धेतुकाः ॥ तस्यस्वभावस्या पियोहेतुःसाक्षितयासाधकस्तदनुभावनंस्वात्मनस्तन्मात्रतापादनंमुक्तिरित्यर्थः ॥ ३८ ॥ अविद्यापगमेनकस्यचिदपिजाड्यंपरिशिष्यतइतिचिदेकरसंयोगिनोजगदित्याह ॥ चि दित्यादिना ॥ ३९ ॥ ४० ॥ ४१ ॥ कियत्कालंसाभ्रांतिस्तत्राह ॥ भ्रांतिस्त्विति ॥ ४२ ॥ ननुभ्रांतिःकथंब्रह्मतांगच्छतितत्राह ॥ भ्रांतिस्त्विति ॥ भ्रांतौयःसत्तास्फूर्त्यंशःसब्रह्म तांगच्छतिअन्यस्तुनास्त्येवेतिनतदभिप्रायेणोक्तमितिभावः ॥ ४३ ॥ सर्वभ्रांतिबाधपरिशिष्टंब्रह्मदर्शयन्रामंतद्भावस्थितौस्थापयति ॥ अनादीति ॥ हेरामत्वंदेहप्रसंगप्रसक्तांस

यथास्थितस्यैवसतोयस्यासंवेदनात्मकम् ॥ संविप्रशमनंजातंतमाहुर्मुनिसत्तमम् ॥ ३५ ॥ सतोपिद्धन्मयस्येवयस्यासंवेदनात्मक म् ॥ साहंजगद्विगलितंतमाहुर्मुनिसत्तमम् ॥ ३६ ॥ यथाशाम्यत्यसंकल्पात्संकल्पनगरंतथा ॥ वेदनोत्थंजगदहंचितिशाम्यत्यवेदनात् ॥ ३७ ॥ स्वभाववर्जंशब्दार्थाःसर्वएवसहेतुकाः ॥ स्वभावस्यतुयोहेतुर्मुक्तिस्तदनुभावनम् ॥ ३८ ॥ नकस्यचित्पदार्थस्यस्वभावोस्तीह कश्चन ॥ महाचिदंबुद्रवताःसर्वाएवानुभूतयः ॥ ३९ ॥ महाचिदनिलस्पंदाएताएवानुभूतयः ॥ एतास्ताब्रह्मगगनशून्यताइतिबुध्यताम् ॥ ४० ॥ वातस्पंदाविवाभिन्नौब्रह्मसर्गौविभिन्नता ॥ तयोस्त्वसत्यास्वभ्रांतौस्वप्नेस्वमरणोपमा ॥ ४१ ॥ भ्रांतिस्तुतावत्तत्वार्थविचारो यावदस्फुटः ॥ विचारेतुस्फुटेभ्रांतिर्ब्रह्मतामेवगच्छति ॥ ४२ ॥ भ्रांतिस्त्वसत्यावस्त्वेवप्रेक्षयातोनलभ्यते ॥ शशशृंगवदत्यच्छमतोब्रह्मै वशिष्यते ॥ ४३ ॥ अनादिमध्यांतमनंतमच्छंसमंशिवंशाश्वतमेकमेव ॥ सर्वांजरामोहविकारभारभ्रांतिंविमुच्यांबरभावमेहि ॥ ४४ ॥ इ॰वा॰म॰वा॰दे॰मो॰नि॰उ॰सत्यार्थोपन्यासयोगोनामत्रयस्त्रिंशःसर्गः ॥ ३३ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ग्रामेषु सुखदुःखेषुयोनश्यतिसनश्यति ॥ योननश्यत्यनाशोसावलंशास्त्रोपदेशनैः ॥ १ ॥ ॥ यस्यचेच्छोदयस्तस्यसंत्यवश्यंसुखादयः ॥ तेचे त्सम्यक्चिकित्स्यंतेपूर्वमिच्छैवमुच्यताम् ॥ २ ॥

वींजरामोहादिविकारभारभ्रांतिंविमुच्यब्रह्माकाशभावमेहिप्राप्नुहीत्यर्थः ॥ ४४ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनि॰उ॰त्रयस्त्रिंशत्तमःसर्गः ॥ ३३ ॥ ॥ ५ ॥ दृष्टस्रष्टिर्जगत्तस्यादर्शनादेवसंक्षयः ॥ इतियत्प्रस्तुतंतस्यवर्ण्यंतेऽत्रोपपत्तयः ॥ १ ॥ वेदनोत्थंजगदहंचितिशाम्यत्यवेदनादितियदुक्तंतत्रोपपत्तीर्विवक्षुर्भगवान्वसिष्ठःप्रथमंन श्वरीभ्यःसुखदुःखानुभवत्रिपुटीभ्यःपृथक्कृत्यानश्वरमात्मानंदर्शयंस्तद्दर्शनादेवसर्वशास्त्रोपदेशानांचरितार्थतेत्याह ॥ ग्रामेष्विति ॥ १ ॥ यस्त्विच्छाविनानूतनित्यदुःखीनात्मा किंत्विच्छात्यागाद्युपायचिकित्सनीयसंसृतिरोगकोटावेवेत्याशयेनाह ॥ यस्यचेति ॥ २ ॥

18

यस्त्वविनाश्यात्मातत्रेच्छाद्यभिमानीतदभिमंतव्यंजगच्चनसंभाव्यमेवेत्याह ॥ अहमिति ॥ ३ ॥ एवंचाहमादिशब्दास्तत्रनिर्विषयाइत्य..ः ॥ अहमिति ॥ ४ ॥ तदभावेदूरा पास्तैवकर्तृभोक्त्रादिकथेत्याह ॥ नेहेति ॥ ५ ॥ ननुसर्वापक्वेउपदेशादिरप्यपकूयेत तथाचतद्बोधोपायोनलभ्येतइतिचेदस्तुनामैवं उपदेश्यस्यब्रह्मणःसर्वापक्वेप्यनपक्ववाद पकूयमानाचृतसर्वार्थेभ्यःपारमार्थिकसत्यप्रत्यगात्मस्वरूपातिशयवत्वाच्चापक्वोपायेनतद्बोधानंतरमुपदेशाद्युपायस्यानपेक्षणाचेत्याशयेनाह ॥ उपदेश्येति ॥ विशिष्यतेपरि शिष्यतेअतिशय्यतेच ॥ ६ ॥ अस्त्वेवंतथापिकथमदर्शनमात्रेणदृश्योपशमस्तत्राह ॥ अपस्थेति ॥ यथापुरोभागेपिस्थितानामंतर्द्धानशक्त्याअंतर्हितानांसिद्धानांपिशाचा

अहंजगदिदंभ्रांतिर्नास्त्येवपरमेपदे॥ इदंशांतमनालंबंसर्वंनिर्वाणमव्ययम् ॥ ३ ॥ अहंब्रह्मजगच्चेतिशब्दसंभ्रमविभ्रमः॥ सर्वस्मि न्छांतआकाशेकेननामोपकल्पितः॥४॥ नेहास्त्यहंनचजगन्नचब्रह्मादिशब्दकाः॥ शांतस्यैकस्यसर्वत्वात्कर्त्ताभोक्तेहकःकुतः॥५॥ उ पदेश्यातिशायित्वात्सर्वापक्वएवच॥ कुतोयंसचसत्यात्मातएवाहंविशिष्यते॥ ६॥ अग्रस्यसिद्धसंचारोज्ञायतेनापिदारुणः॥ यथैक पार्श्वसंसुप्तनरःस्वप्नाभ्रगर्जितम्॥ ७॥ ज्ञप्तौनास्तियतस्तेनसिद्धाचारोनलक्ष्यते॥ स्वभावइतिसर्वेणज्ञप्तिस्त्योत्यनुभूयते॥ ८॥ ज्ञप्तिर प्यात्मभूतैवसर्वंभातिहितन्मयम्॥ तस्मात्साहंजगत्सर्वमभिन्नंपरमात्मनः॥ ९ ॥ ज्ञप्तिर्जगत्तयाभातिसंकल्पस्वप्नयोरिव ॥ अनाना वयवोदेतिजलमूर्मितयायथा॥ १० ॥ एकात्मैवोदयेज्ज्ञप्तेर्नानातामिवचागतः॥ अज्ञानात्सत्त्ववस्तुत्वात्प्रेक्षितोनोपलभ्यते ॥ ११ ॥ यथास्वावयवानेवसर्वानवयवीभवेत्॥ नित्यानवयवंशांतंब्रह्मैवेदंतथाजगत्॥ १२॥ भांडलक्षाणिधत्तेतश्चिद्रूपकनकेष्टिका॥ यदेव साचेतयतेजगदादीववेत्तितत्॥ १३ ॥ ब्रह्मैवकचतीवेदंसत्तयाच्छजगत्तया॥ चिद्रूपत्वाद्द्रवात्मत्वात्तरंगादितयाब्धिवत्॥ १४॥ यच्च चेतयतेंतस्तुजगदादीवपश्यति॥ अरूपमपिरूपंस्वंयन्नचेतयतेननतत्॥ १५॥ चेतनाचेतनत्वोक्तीतस्येशत्वात्स्वदेहगे॥ उपदेशार्थमेवो क्तेनसद्विषयमर्थतः॥ १६॥ नजगत्सन्नचैवासद्भासतेचेतनाच्चिति ॥ अचेतनान्नकचतिकइवार्थग्रहोत्रनः॥ १७॥

दीनांचसंचारोव्यवहारोदारुणोभयंकरोपिनज्ञायते यथावाएकशय्याप्रदेशेसुप्तस्यनरांतरस्यस्वप्नेप्रसिद्धानामभ्राणांगर्जितंदारुणमपिनज्ञायतेतच्चास्मदृष्ट्यानास्त्येवतद्वदित्यर्थः ॥ ७ ॥ तदेवाह ॥ ज्ञप्ताविति ॥ सर्वेणापिद्रष्ट्रास्वज्ञप्तिस्थोनुभूयतेइतिस्वभावोहिप्रसिद्धइत्यर्थः ॥ ८ ॥ अस्त्वेवंकिततस्तत्राह ॥ ज्ञप्तिरपीति ॥९॥ अनानावयवापिज्ञप्तिर्नाना वयवजगत्तयाभाति ॥ १० ॥ नानातामिवागतएकआत्मैवज्ञप्तेरज्ञानाद्विवर्त्तरूपउदयः सतूदयोऽवस्तुत्वात्तत्त्वदृशाप्रेक्षितोनोपलभ्यते ॥ ११ ॥ यथाऽयमनवयवोपिजीवः स्वान्हस्तपादाद्यवयवान्कल्पयन्स्वप्नमनोरथादावयवीभवेत्तथाब्रह्मापीत्यर्थः ॥१२॥ चिद्रूपाकनकेष्टिकाकुलालीचेतयतेस्मरति ॥ १३ ॥ १४ ॥ यन्नचेतयतेनाभ्यस्यति नतत्पश्यति ॥१५॥ ईशत्वान्मायाशबलत्वेनसर्वशक्तिसंपन्नत्वात्स्वदेहभूतमायागते ॥ इदंतुवचनमर्थतःसद्विषयंपरमार्थगोचरंनेत्यर्थः ॥ १६ ॥ १७ ॥

अस्त्वेवं किंततस्तत्राह ॥ अचेतनमिति ॥ स्वायत्तेस्वाधीनेनकदर्थंस्थेयत्नश्रमसाध्ये ॥ यथास्वस्थस्यनिश्चलस्यस्फटिकपाषाणस्यस्वांतर्गतप्रतिबिंबसहस्रस्पंदास्पंदेनयत्नसा ध्येतद्वत्स्थिते ॥१८॥ सर्वकल्पनामूलस्यैकस्याहंकारस्यैवपरीक्षणेनमिथ्यात्वावधारणेसर्वजगन्मिथ्यात्वंसिद्धमित्याशयेनाह ॥ यस्येति ॥१९॥सत्यतोवस्तुतः ॥ सत्ताविषमा नता ॥ २० ॥ काकतालीयवदाकस्मिकम् ॥ २१ ॥ एवंचयत्फलितंतदाह ॥ ब्रह्मैवेति ॥ किमास्पदंविषयआश्रयश्च ॥ २२ ॥ वर्णितांदृष्टसृष्टिकल्पनामनूद्यतत्फमाह ॥ सर्वे श्वरत्वादिति ॥ तेतत्रअचेतितंजगद्दर्शनमस्तुतदेवसर्वदृश्यमार्जनरूपामुक्तिःफलमित्यर्थः ॥ २३ ॥ वर्णितरीत्याजगतोपिचित्त्वाद्ब्रह्मत्वमेवस्वप्नसंकल्पपुरवत्काकतालीयवद कस्मादन्यथाभाति ॥ वस्तुतस्तुतज्जगत्तस्मात्कथंभिद्यनेतद्भेदेसत्तास्फूर्त्यलाभेनालीकत्वप्रसंगादित्यर्थः ॥ २४ ॥ स्तिमितेजलेयथाऊर्म्यादि अनुत्कीर्णेवृक्षकाष्ठेशालभंजि

अचेतनंचेतनंचस्पंदास्पंदवदात्मनः॥स्वायत्तेनकदर्थंस्थेस्वस्थपाषाणवत्स्थिते॥ १८ ॥ यस्येक्षितस्यनोसत्तानाधारोनचकारणम्॥ सोहमित्येवयोयक्षोनजानेकुतउत्थितः ॥ १९ ॥ यस्याहमितियक्षस्यसत्तैवास्तिनसत्यतः ॥ अहोनुचित्रंतेनमेभवंतोविवशीकृताः ॥ २० ॥ काकतालीयवद्भ्रांतमहंब्रह्मणिभासते॥स्वमेवरूपंदृग्भ्रांतौकेशोंड्रकमिवांबरे॥२१॥ ब्रह्मैवाहंजगच्चात्रकुतोनाशसमुद्भवौ॥ अतोहर्षविषादानांकिंत्वेवकथमास्पदम् ॥ २२ ॥ सर्वेश्वरत्वादीशस्यविभातीदंप्रचेतितम् ॥ अचेतितंचनोभातितेनाचेतितमस्तुते ॥२३॥ काकतालीयवच्चित्त्वाज्जगतोभातिब्रह्मत्वम् ॥स्वप्नसंकल्पपुरवत्तत्तस्माद्भिद्यतेकथम्॥२४॥ यथोर्म्यादिजलेवृक्षेयथावाशाल भंजिका ॥ यथाघटादयोभूमौतथाब्रह्मणिसर्गता॥ २५॥ अनाकृतावसंस्थानेस्वच्छेयदनुभूयते ॥ तत्तदेवातउदितंकिंनामाहंजगंति किम्॥२६॥ मरुतःस्पंदवैचित्र्यंसत्तयैवयथातथा॥ब्रह्मणोनिःस्वभावस्यजगदाद्यहमादिच॥२७॥ यथाभ्रेलक्ष्यतेवृक्षगजवाजिमृगा दिता ॥ असन्निवेशाकृतिनिसर्गाहंतेतथापरे॥ २८॥ सर्गोवयववद्भातिसर्वएवपरेशिवे॥एवंतदुपमांविद्धिकार्यकारणवद्यथा॥२९॥ अंतःशांतमनायासमनुपाधिगतभ्रमम् ॥जगत्यसंभवादेवव्योमवत्सममास्यताम्॥३०॥ नभवंतोनचवयंनजगंतिनखादयः॥ संति शांतमशेषेणब्रह्मेदंनिर्भरंस्थितम्॥३१॥अशेषेष्वविशेषेषुशांताशेषविशेषता॥सत्यासैवाहमित्याशुत्यक्त्वामोक्षायभाव्यताम्॥३२॥

का भूमौचानुद्भूताघटादयस्तथेत्यर्थः ॥ २५ ॥ असंस्थानेनिरवयवे ॥ दृष्टांतेयथाभ्रेइतिवक्ष्यति ॥ २६ ॥ सत्ताभेदादर्शनादपितन्मात्रत्वमित्याह ॥ मरुतइति ॥ निःस्वभाव स्यनिरविषयस्य ॥ २७ ॥ गजवाजिमृगादितातत्तदाकारः ॥ तादृशसन्निवेशाकृतिशून्येअभ्रेआकाशेनीहारेवा ॥ २८ ॥ अवयववत्वृक्षशाखावत् कार्यंवटादिःकारणंतद्बी जादिस्तद्वद्यथालोकेसूक्ष्मार्थोपमानानिप्रसिद्धानिएवंतयोःसर्गब्रह्मणोरप्युपमांविद्धि ॥ २९ ॥ वर्णितरीत्याजगत्याःजगतःस्वव्यतिरिक्तस्यासंभवादेवव्योमवत्समंनिर्विक्षेपमा स्यताम ॥ ३० ॥ निर्भरमतिवेलंपूर्णमितियावत ॥ ३१ ॥ चिदतिरिक्तरूपानिरूपणादशेषेषुपदार्थेष्वविशेषेषुसत्सुविशेषभ्रमंत्यक्त्वाशांताशेषविशेषतापरमार्थसत्यासाचिदे वाहमितिभाव्यताम ॥ ३२ ॥

यथाचारंविद्वदाचारंभूमिकाभ्यासमनतिक्रम्य ॥ ३३ ॥ तत्त्वबोधदार्ढ्येजडार्थचेतनप्रसक्तिरेवनास्तीत्याह ॥ द्रष्टेति ॥ ३४ ॥ असत्तोपमंशून्यकल्पंनतुशून्यमेव ॥ ३५ ॥ ब्रह्मण्यज्ञानात्पवनस्पंदवद्भेददर्शनम् ॥ तथाचचिदचिद्भेददर्शनमेवसर्गः ऐक्यदर्शनमेवतन्मोक्षइतिनिष्कर्षइत्यर्थः ॥ ३६॥३७॥ भेददर्शनस्यैवसर्गतांदृष्टांतैरुपपादयति ॥ बीजमित्यादिना ॥ ३८ ॥ वेदनसमकालमेवतद्भावस्थितावप्येतादृशएवदृष्टांतइत्याह ॥ पत्रादीति ॥ ३९ ॥ वृक्षस्यषड्भावविकाराअप्यत्रदृष्टांताइत्याह ॥ यथेति ॥ भावविकाराणामाभाःक्रमिकप्रतिभासाः ॥ बीजादिरूपेणस्थितायाश्चितएवविकारत्वात्तन्मयाः ॥ ४० ॥ ४१ ॥४२॥४३॥ पुरापूर्वसिद्धासैवअवोधतोमानवोस्मीत्याकारेणाहंताचाज्जग

वेदनंबंधनंविद्धिविद्धिमोक्षमवेदनम्॥ यथास्थितंयथाचारंभवशांतमवेदनम् ॥३३॥ द्रष्टानदृश्यतांयातिचितिर्नायातिचेत्यताम्॥ चेत्याभावादजगतिकःकिंचेतयतेकथम्॥३४॥ द्रष्टृदृश्यदशाभावाज्जाग्रत्येवसुषुप्तिवत्॥ शरदाकाशकोशाभमसत्तोपममास्यताम् ॥३५॥ तथैकब्रह्मचिद्रूपेपवनस्पंदनेयथा॥ अत्राचिद्बोधतासर्गोमोक्षोब्रह्मैकबोधता ॥ ३६ ॥ चित्स्पंदोब्रह्ममरुतोयत्रसर्गइतिस्थितः॥ नात्रचित्स्पंदनंयत्स्यान्निर्वाणंतदुदाहृतम् ॥ ३७ ॥ बीजमंतर्यथावेत्तिस्वरूपंपल्लवादिकम्॥ तथामहाचिदंतस्थंस्वरूपंवेत्तिसर्गताम्॥ ३८ ॥ पत्रादिवेदनाद्बीजंयथापत्रादितिष्ठति॥ परांचित्सर्गसंवित्तिस्तथाभवतिसर्गता॥३९॥ यथाभावविकाराभाश्चित्पराःसर्गतास्तथा॥ सर्वेबीजानिदृष्टांतास्तद्रूपाएवतन्मयाः॥४०॥ निर्विकारपरब्रह्ममयंसर्वमिदंजगत्॥ निर्विकारमनाद्यंतमेवंविद्धिनिरामयम्॥ ४१ ॥ निजसंकल्पमात्रात्मानिजसंकल्पनात्क्षयी॥ द्वैताद्वैतविकारोयंसंकल्पनगरंयथा ॥ ४२ ॥ शून्यत्वाकाशयोर्भेदोयादृशोवगतस्त्वया॥ भेदंनिरात्मकंविद्धितादृशंब्रह्मसर्गयोः॥ ४३ ॥ महाचिद्रूपिणीशांतायासत्ताब्रह्मणःपुरा॥ स्वतःसेयमहंत्वंचमानवोस्मीत्यवोधतः॥४४॥ ब्रह्मण्यस्मिन्जगद्रूपेनकिंचिदपिजायते॥ जातमप्यथनष्टंचननश्यत्यंबुवीचिवत्॥४५॥ पदार्थंब्रह्मरूपेणब्रह्मैवात्मनितिष्ठति॥ अवयवीवावयवेखंखंवारीववारिणि॥ ४६ ॥ निमेषादर्द्धभागेनदेशाद्देशांतरस्थितौ ॥ यद्रूपंसंविदोमध्येसस्वभावउपास्यताम्॥ ४७॥ संक्षुब्धमक्षुब्ध मितिद्विरूपंसंवित्स्वरूपंप्रवदंतिसंतः॥ श्रेयःपरंयेनसमीहसेत्वंतदेकनिष्ठोभवमाऽमतिर्भूः॥४८॥ ॥

इ०वा०महारामायणेवा०दे०मो०नि०उ०परमार्थयोगोपदेशोनामचतुस्त्रिंशःसर्गः॥ ३४॥ ॥ ९ ॥ ॥ ९ ॥

त्ता चभवतीत्यर्थः ॥ ४४ ॥ जातमपिनजायतेनष्टमपिननश्यति ॥ ४५ ॥ पदार्थरूपेणब्रह्मरूपेणचस्थितंब्रह्मआत्मन्यविकृतस्वभावेतिष्ठति ॥ यथावृक्षःस्वावयवे ॥ ४६ ॥ वास्तवीस्थितिस्तुचितोनिर्विषयैवेत्याह ॥ निमेषादिति ॥ प्राग्व्याख्यातमेतत् ॥ ४७ ॥ हेरामसंतोविवेकिनःशास्त्रज्ञाः संवित्स्वरूपमेकंसंक्षुब्धंसविवर्त्तमज्ञानुभवसिद्धमपरमक्षुब्धंनिर्विवर्त्तंकूटस्थपूर्णानंदैकरसमितिद्विरूपंप्रवदंति ॥ तयोर्मध्येयेनत्वंपरंश्रेयःपरमपुरुषार्थंसमीहसेतदेकनिष्ठोभव ॥ अपरीक्ष्ययत्किंचिद्ग्राहीअमतिरविवेकीमाभूरित्यर्थः ॥ ४८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उत्तरार्धेचतुस्त्रिंशत्तमःसर्गः ॥ ३४ ॥ ॥ ९ ॥ ॥ ९ ॥ ॥ ९ ॥

सप्रपंचाप्रपंचात्मवस्त्वखंडैक्यदृष्टये ॥ सत्यावृतोभयाभासंब्रह्मरूपंप्रपंच्यते ॥ १ ॥ संक्षुब्धमक्षुब्धमितिद्विरूपंब्रह्मविरोधाभासोक्तिभिःप्रपंचयिष्यन्नक्षुब्धरूपंप्रथमंप्रागु क्तोपायपरिचितंतन्निष्ठताविधानायस्मारयति ॥ देशादिति ॥ क्रमिकविषयद्वयांतरालकालेयन्निर्विषयंरूपंतत्परमक्षुब्धमित्यर्थः ॥ १ ॥ एतन्मयोनिर्विषयचिन्मात्रनिष्ठोन् नमवश्यंभव ॥ २ ॥ यथास्थितंजीवन्मुक्तस्थितिमनतिक्रम्ययथाचारंस्वकुलाचारमप्यनतिक्रम्यव्यवहरन्नपिततस्तादृशनिष्ठायाःसकाशादचलनचलैव ॥ नञर्थोयम कारोननञ् ॥ अचलातन्निष्ठैवविद्येत्यर्थः ॥ ३ ॥ वक्ष्यमाणोपयोगितयातद्विरुद्धामविद्यांलक्षयति ॥ एतदिति ॥ प्रेक्षिताप्रमाणैर्विमृष्टा ॥ ४ ॥ चेत्यचित्त्वेचिद्वेत्यभेदौ ॥ भेदासंभवेचस्वांतरेवकथंचेत्यतेचेतनायव्याप्रियते ॥ अतोविमर्शेशांतिर्निर्वेद्यवेदनचिन्मात्रस्थितिरेवबलादुदितेत्यर्थः ॥ ५॥ विद्याविद्यामिश्रितयाआंतरालिकभूमिकारूढवि

॥ श्रीवसिष्ठउवाच ॥ ॥ देशाद्देशांतरंदूरंप्राप्तायाःसंविदःक्षणात् ॥ यद्रूपममलंमध्येपरंतद्रूपमात्मनः ॥ १ ॥ गच्छञ्छृण्वन्स्पृशञ्जिघ्रन्नुन्मिषन्निमिषन्हसन् ॥ नूनंनिरामयत्वायनित्यमेतन्मयोभव ॥ २ ॥ ततएवनिराभासात्सत्यान्निर्वासनैषणात् ॥ यथास्थितंयथाचारमचलामरशैलवत् ॥ ३ ॥ एतद्रूपमविद्यायाःप्रेक्षितायन्नलभ्यते ॥ प्रेक्षितालभ्यतेचेत्सातद्दृष्ट्यैवपराभवत् ॥ ४ ॥ अविद्यासंभवाच्चेत्यचित्त्वेसंभवतःक्वकिम् ॥ चेत्यतेकथमेवांतःशांतिरेवबलोदिता ॥ ५ ॥ सत्यंब्रह्मजगच्चैकंस्थितमेकमनेकवत् ॥ सर्वंवासर्वंवद्भातिशुद्धंचाशुद्धवत्ततम् ॥ ६ ॥ अशून्यंशून्यमिवचशून्यंवाशून्यवत्स्फुटम् ॥ स्फारमस्फारमिवतदस्फारंस्फारसन्निभम् ॥ ७ ॥ अविकारंविकारीवसमंशांतमशांतवत् ॥ सदेवासदिवादृश्यंतदेवातदिवोदितम् ॥ ८ ॥ अविभागंविभागीवनिर्जाड्यंजडवद्गतम् ॥ अचेत्यंचेत्यभावीवनिरंशंसांशशोभनम् ॥ ९ ॥ अनहंसोहमिवतदनाशमिवनाशवत् ॥ अकलंकंकलंकीवनिर्वेद्यंवेद्यवाहिवत् ॥ १० ॥ आलोकिध्वांतघनवन्नववच्चपुरातनम् ॥ परमाणोरपितनुगर्भीकृतजगद्गणम् ॥ ११ ॥ सर्वात्मकमपित्यक्तदृष्टंकष्टेनभूयसा ॥ अजालमपिजालाढ्यंचाशेषवदनेकधा ॥ १२ ॥ निर्मायमपिमायांशुमंडलामलभास्करम् ॥ ब्रह्मविद्विविदांनाथमपामिवमहोदधिम् ॥ १३ ॥ जगद्रत्नमहाकोशंतुलायांतूलकाल्लघु ॥ मायामरीचिशशिनमपिनेक्षणगोचरम् ॥ १४ ॥

वेकिदृष्यात्तुब्रह्मनियतैकरूपमप्यनियतविरुद्धनानास्वभावमिवतिष्ठतीतिविरोधाभासैःप्रमाणयुक्त्यनुभवादिभिश्चासर्गसमाप्तेस्तत्प्रपंचयति ॥ सत्यमित्यादिना ॥ ब्रह्मजगच्च सत्यंपरमार्थतएकमेवतदेकमेवअनेकवत्तद्विरुद्धरूपेणस्थितमितियोज्यम् ॥ एवमग्रेपि ॥ सर्वंपूर्णम् ॥ ६ ॥ शून्यमिवप्रलये ॥ अशून्यवत्सर्गे ॥ कालतोदेशतस्तुस्फारम् ॥ ७ ॥ अदृश्यंद्रष्टुमशक्यमित्यसदिव ॥ ८ ॥ सांशमिवशोभनंशोभमानम् ॥ ९ ॥ नाशवदिव ॥ वेद्यंवहतिप्रथनेननिर्वहतितच्छीलमिव ॥ १० ॥ आलोकिस्वप्रकाशम् ॥ राहोःशिरइतिवद्भेदकल्पनादिभिः ॥ ११ ॥ भूयसायज्ञदानतपश्चित्तशुद्धिवैराग्यश्रवणमननादिनाकष्टेनपुरुषप्रयत्नेनत्यक्तंदृष्टंदृश्यजातंयेन ॥ अनेकधास्थितमप्यशेषवत्द्वितीयपरिशेषशून्यम् ॥ १२ ॥ मायालक्षणस्यांशुमंडलस्यरश्मिजालस्यामलभास्कररूपम् ॥ विन्मेवेदनमात्रस्वरूपमपि ॥ अप्यर्थेहिशब्दः ॥ विदांसर्ववेदनानांनाथंस्वामिभूतमिवसर्वज्ञम् ॥ १३ ॥ ब्रह्मांडात्मनाजगद्रत्नमहाकोशम् ॥ गुरुतममपिविवेकतुलायांतोलनेगुरुत्वमात्रस्याद्दृष्टत्वात्तूललवादपिलघु ॥ १४ ॥

अनंतंकालतःनिष्पारंदेशतस्तथापिक्वचिद्देशेकालेवानावस्थितम् ॥ आकाशेशून्यदेशेपि ॥ १५ ॥ १६ ॥ परिपूरितंकर्त्रादिकारकैः ॥ १७ ॥ १८ ॥ प्रत्येकंप्रतिवस्तु ॥ प्रत्यहं प्रतिकालम् ॥ जगत्तिरोभावकत्वात्तमः ॥ अप्यर्थेतुशब्दः ॥ १९ ॥ २० ॥ अनहंयुष्मदर्थः अन्यदिदमर्थइत्यपौनरुक्त्यम् ॥ २१ ॥ उक्तेष्वर्थेषुमायामात्रत्वमभिप्रेत्योपपत्तीराह ॥ अस्येत्यादिना ॥ २२ ॥ २३ ॥ २४ ॥ प्रसरंतिदलस्थानीयानिपंचभूतलक्षणपंचकानियासाम ॥ २५ ॥ स्वप्रतिबिंबस्यवर्णितस्यजीवजगद्रूपस्याकारांतरस्य ॥ मुकुरतांदर्पणताम् ॥ २६ ॥ अपरिच्छिन्नब्रह्मसंविदिवृक्षोगगनोदुंबरस्तदीयफलकल्पस्यब्रह्मांडस्यस्वेच्छाकल्पितेत्रैलोक्यावयवेउज्ज्वलादीप्यमानाश्चंद्रसूर्यादयस्तेभ्यउपचक्षुरादिकरणजालंचजीवभूतस्यात्मनःसर्गोपलंभेरूपादिदर्शनेउपकरणतयाचमत्कुर्वंतीत्यर्थः ॥ २७ ॥ सएषपरमात्माअंतस्थेनवासनामयप्रपंचेनबहिष्ठेनभुवनात्मनाजाग्रत्स्वप्नयोर्नानातयासुषुप्तावनानातयाचभावाभावविभावनयास्वयमेवांतर्बहिश्चभातिनान्यदतोणुमात्रमप्यस्तीत्यर्थः ॥ २८ ॥ एतदेवप्रपंचयति ॥ एतद्रूपेत्यादिना ॥ २९ ॥ संविदैवस्वादुयथास्यात्तथाउपलभ्यंतइत्युपलंभान्यंगानिरूपरसाद्येकदेशायस्य ॥ ३० ॥ सर्वासामेवसूर्यचंद्राग्निकरणादिभासांरूपादिपदार्थश्रीरत्रास्मिन्नेवभास्वतिसुषुप्तप्रलययोःशाम्यतिजाग्रत्स्वप्नयोश्चैतस्मादेवोदेति ॥ यथासूर्यादितेजसःस्वालोकःप्रभामंडलम् ॥ ३१ ॥

अनंतमपिनिष्पारंनचक्वचिदपिस्थितम् ॥ आकाशेवनविन्यासनगनिर्माणतत्परम् ॥ १५ ॥ अणीयसामणीयांसंस्थविष्ठंचस्थवीयसाम् ॥ गरीयसांगरिष्ठंचश्रेष्ठंचश्रेयसामपि ॥ १६ ॥ अकर्तृकर्मकरणमकारणमकारकम् ॥ अंतःशून्यतयैवैतच्चिरायपरिपूरितम् ॥ १७ ॥ जगत्समुद्गकमपिनित्यंशून्यमरण्यवत् ॥ अनंतशैलकठिनमप्याकाशलवान्मृदु ॥ १८ ॥ प्रत्येकंप्रत्यहंप्रायःपुराणंपेलवंनवम् ॥ आलोकमंधकाराभंतमस्त्वालोकमाततम् ॥ १९ ॥ प्रत्यक्षमपिदुर्लक्ष्यंपरोक्षमपिचाग्रगम् ॥ चिद्रूपमेवचजडंजडमेवचिदात्मकम् ॥ २० ॥ अहमेवानहंभावमनहंवाहमेवच ॥ अन्यदेवतदेवाहमहमेवान्यदेवतत् ॥ २१ ॥ अस्यपूर्णार्णवस्यांतरिमेत्रिभुवनोर्मयः ॥ स्फुरंतइवतिष्ठंतिस्वभावद्रवतात्मकाः ॥ २२ ॥ बिभर्त्तिसर्वमंगस्थंतुषारमिवशुक्लताम् ॥ भातिसर्गस्त्वनेनैवतुषारेणेवशुक्लता ॥ २३ ॥ अदेशकालावयवोप्येषदेवोदिवानिशम् ॥ असज्जगत्तनोतीवयथावारितरंगकम् ॥ २४ ॥ एतस्मिन्विकसंतीमाविपुलाकाशकानने ॥ जगज्जरठमंजर्यःप्रसरत्पत्रपंचकाः ॥ २५ ॥ एषस्वप्रतिबिंबस्यस्वयमालोकनेच्छया ॥ अत्यंतनिर्मलाकारःस्वयंमुकुरतांगतः ॥ २६ ॥ व्योमवृक्षफलस्यास्यस्वेच्छावयवउज्ज्वलाः ॥ सर्गोपलंभउपचचमत्कुर्वंतिसंविदि ॥ २७ ॥ अंतस्थेनबहिष्ठेननानानानानातयात्मनि ॥ एषसोंतर्बहिर्भातिभावाभावविभावया ॥ २८ ॥ एतद्रूपपदार्थश्रीरेतस्मिन्नेतदिच्छया ॥ चमत्करोत्येतदर्थंजिह्वेवस्वास्यकोटरे ॥ २९ ॥ अस्यांभसोद्रवत्वंयत्तदिदंजगदुच्यते ॥ संवित्स्वादूपलंभांगंभुवनावर्त्तवृत्तिमत् ॥ ३० ॥ शाम्यत्यत्रपदार्थश्रीःसर्वासामेवभास्वति ॥ एतस्मादेवचोदेतिस्वालोकइवतेजसः ॥ ३१ ॥

इदंब्रह्म ॥ अतोस्याविदश्चिद्रूपब्रह्मणःसकाशात् ॥ एताःपदार्थश्रियः ॥ ३२ ॥ अनंगान्निरवयवाद्रंगतोरंजकद्रव्यात् ॥ जन्मादिभावविकारैरादिपदात्स्वगतवैचित्र्यैश्चशून्यम् ॥ एतन्मयंचिन्मयमेवविद्धि ॥३३॥३४॥ अत्रएतस्मिन्नविचलेअचलेअचलेपर्वतेव्ययोदयौक्षासवृद्धीतद्वतीदृश्यलक्षणातरंगिणीनदीवहति ॥३५॥ वारैःकल्पभेदरूपैर्वासरैर्नियतोत्सववासरैश्च ॥३६॥ तयानियतिनर्तक्याब्रह्मरंगमायावितानेकाललक्षणःस्वबालकःपुत्रोभूयोभूयोनाट्यतेउपसंहृत्यचभूयोजन्यते ॥ सकीदृशः ॥ जगतांब्रह्मांडानां कोटयोमहाप्रलयाअवांतरप्रलयाश्चनेत्रोन्मेषनिमेषणेयस्यतथाविधः ॥ ३७ ॥ अनिच्छइच्छादिविक्रियाशून्यः ॥ ३८ ॥ भौतिकसर्गाणांकारणंभूतपंचकमिव ॥ ३९ ॥ उन्मेषोनिमेषश्चसमायस्य ॥ निर्मायस्त्वसौअनुन्मेषनिमेषःअतएवस्वात्मन्येवावतिष्ठते ॥ ४० ॥ परिमाणतोमहांतिचतानिकालसंख्यावैभवादितोमहांतिचमहामहांतिजगंतित्रि

इदमेवजगत्सर्वंशुक्लत्वंतुहिनेयथा ॥ अतएताःप्रवर्त्ततेविदइंदोरिवांशवः ॥ ३२ ॥ एतस्माद्रंगतोनंगाज्जगच्चित्रमिदंस्थितम् ॥ विद्धि भावविकारादिशांतमेतन्मयंततम् ॥ ३३ ॥ अस्माद्घनतरोरेताःस्वैरूढागगनांगणे ॥ वृक्षशाखाःप्रवर्त्ततेजगज्जालगुलुच्छकाः ॥ ३४ ॥ व्ययोदयवतीनूनमत्रदृश्यतरंगिणी ॥ नानातानंतकुसुमावहत्यविचलाचले ॥ ३५ ॥ अस्मिन्व्योमात्मकेरंगेभुवनाभिनयभ्रमैः ॥ नृत्यत्यविरतारंभंवारैर्नियतिनर्त्तकी ॥३६॥ जगत्कोटिमहाकल्पकल्पोन्मेषनिमेषणः ॥ वितानेनाट्यतेभूयोजन्यतेकालबालकः ॥ ३७ ॥ उद्यत्स्वपिजगत्स्वेषशांतमेवावतिष्ठते ॥ अनिच्छएवमुकुरःप्रतिबिंबशतेष्विव ॥ ३८ ॥ भूतानांवर्त्तमानानांसर्गाणांसंभविष्यताम् ॥ एषोकारणकंबीजंसर्गाणामिवकारणम् ॥ ३९ ॥ अस्योन्मेषोजगल्लक्ष्मीर्निमेषःप्रलयागमः ॥ अनुन्मेषनिमेषोसावात्मन्येवावतिष्ठते ॥ ४० ॥ उद्यंत्यमूनिसुबहूनिमहामहांतिसर्गागमप्रलयजन्मदशाजगंति ॥ सर्वाणितान्ययमपारस्वरूपएवप्रस्पंदनानिमरुदेवयथास्वशांतम् ॥ ४१ ॥ ॥ इ० वा० म० वा० दे० मो० नि० उ० परब्रह्मस्वरूपवर्णनंनामपंचत्रिंशत्तमःसर्गः ॥ ३५ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ चमत्कुर्वंत्यथानर्थाआवर्त्ताइववारिणि ॥ एकस्वभावाःसकलायथावारितरंगकाः ॥ १ ॥

ब्रह्मांडास्तेषांतदंतर्गतपदार्थानांचसर्गःअगमनमगमःस्थितिःप्रलयश्चतत्रप्राणिनांजन्मदेहपरिग्रहःबाल्यादिदशाजापदादिदशाउत्कर्षापकर्षदशाश्चेत्यमूनिचिदाकाशेउद्यंतितानि सर्वाण्यपारांःपरिच्छिन्नःस्वरूपश्चिदाकाशएव यथामरुत्प्रस्पंदनानिमरुदेवनवस्त्वंतरमितिबुद्ध्याशांतमास्वेत्यर्थः ॥ ४१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० पंचत्रिंशत्तमःसर्गः ॥ ३५ ॥ ॥ ७ ॥ ॥ तुच्छस्यानिच्छतोभोगोनबंधायेतिवर्ण्यते ॥ इच्छैवपरमोबंधस्तत्त्यागान्मुक्तिरित्यपि ॥ १ ॥ इहसर्वेपदार्थाविरुद्धानेकरूपाअविरुद्धैकरूपाश्चभासंते तत्रप्रथमंरूपंरागद्वेषाद्युद्भवेनदुःखहेतुत्वादनर्थरूपम् द्वितीयंतुतदुपशमेनमोक्षोपयोगीतिदर्शयति ॥ चमत्कुर्वंतीति ॥ सकलाःपदार्थावारिण्यावर्त्ताइवभिन्नरूपाःप्रथमंचमत्कुर्वंतिइच्छोत्पादनेनचित्तंभ्रमयंतिअथानंतरमनर्थारागद्वेषनरकादिरूपाःपर्यवस्यंति ॥ यथातरंगकाःवारिजलमात्रंतथाएकस्वभावास्तुनचमत्कुर्वंतिनाप्यनर्थाइतिभावः ॥ १ ॥

कितदविरुद्धंरूपंयेनरूपेणैकस्वभावास्तद्दर्शयति ॥ सर्वस्यैवेति ॥ सर्वस्याप्यस्यविश्वस्यसत्तामात्ररूपापरमाकाशतैवतादृशंरूपंसाचसर्वेभ्योज्ञेयेभ्योविशेषरूपेभ्योनिष्कृष्यज्ञे यंयत्सन्मात्रंतद्रूपिणीअतएवपरेणसमाधिलक्षणेनोपशमेनसंश्रयोयस्यास्तथाविधा ॥२॥ प्रसिद्धेव्योम्निबालबुद्धिवेद्यंयक्षपिशाचादिभीषणरूपंप्रौढबुद्धिवेद्यंतन्निष्कृष्टंशुद्धरू पंचदृष्टांततयाप्रसिद्धमित्याह ॥ बालेति ॥ बालस्यचिंताचिंतनकल्पितरक्षःपिशाचादिरूपंप्रौढस्यदृष्ट्यायथानकिंचिदस्तितथाविदुषोमेदृष्ट्याविश्वंनास्ति ॥ ३ ॥ शिलापुत्रक सैन्यवदरूपालोकमननमेवविश्वंविद्वद्दृशातत्रविश्वताकेव ॥ अज्ञदृशातुरूपालोकमनस्काराभ्रांति ॥ ४ ॥ रूपालोकमनस्कारयोरपितत्त्वतोविमर्शेचिन्मात्रातिरिक्तंरूपंदुर्लभं दूरेताभ्यांविश्वतासिद्धिरित्याह ॥ रूपेति ॥५॥ तथाचविदावेदितृपुरुषस्यवित्त्वमेवजगद्भ्रांतिरवेदितृत्वमेवनविभ्रमः सर्वविभ्रमशांतिरितिफलितम् ॥ तच्चस्मृत्यस्मृतिवत्स्वायत्त

सर्वस्यैवास्यविश्वस्यनिर्ज्ञेयज्ञेयरूपिणी ॥ परमाकाशतारूपंपरोपशमसंश्रया ॥ २ ॥ बालचिंतापुरोव्योम्निर्नकिंचिदपिमेयथा ॥ तथेदंतत्त्वतोविश्वंसत्यंतुसिशुचेतसि ॥ ३ ॥ अरूपालोकमननंशिलापुत्रकसैन्यवत् ॥ रूपालोकमनस्काराभ्रांतिकेवात्रविश्वता ॥ ४ ॥ रूपालोकमनस्कारसारश्चिन्मात्रतांविना ॥ नलभ्यतेसावपरंव्योमेवात्रक्वविश्वता ॥ ५ ॥ विदोवित्त्वंजगद्भ्रांतिरवित्त्वंतुनविभ्रमः ॥ वित्त्वावित्त्वेत्वदायत्तेचित्ताचित्तेयथातव ॥ ६ ॥ परमाकाशरूपत्वाच्चिद्व्योम्नोविततात्कृतेः ॥ नस्वभावविपर्यासःकश्चित्संभवतिक्वचित् ॥ ७ ॥ तन्मयस्यास्यविश्वस्यनस्वभावविकारिता ॥ विद्यतेप्रेक्ष्यमाणापिकिमुसास्यभविष्यति ॥ ८ ॥ सर्वंचिद्व्योमचैवेदंनसत्त्वमहमित्यपि ॥ विकाराद्यस्तिनज्ञभावज्ञर्सिनलभेक्वचित् ॥ ९ ॥ सर्वंशांतंशिवंशुद्धंत्वमहंतादिविभ्रमम् ॥ नकिंचिदपिपश्यामिव्योमजंकाननंयथा ॥ १० ॥ संविदाकाशशून्यत्वंयत्तद्विद्धिवचोमम ॥ इदंत्वत्संविदाकाशेस्वयमात्मनितिष्ठति ॥ ११ ॥ पदमाहुःपरंसयदनिच्छोदयमासितम् ॥ पाषाणपुरुषस्येवचित्रस्थस्येवचासनम् ॥ १२ ॥ सविश्रांतमनामौनीयस्यप्रकृतकर्मसु ॥ स्पंदोदारुनरस्येवविगतेच्छमनाकुलम् ॥ १३ ॥

मित्यर्थः ॥६॥ अपरंव्योमेवेतियदुक्तंतद्विशदयति ॥ परमाकाशेति ॥ नहिचिज्जडीभवतीनवाव्योममूर्त्तिर्भवतीतिभावः ॥७॥ ब्रह्मदर्शनबाध्यत्वादपिजगन्नब्रह्मविकारइत्याह ॥ तन्मयस्येति ॥ यायत्रप्रेक्ष्यमाणापिनविद्यतेबाध्यतेअस्यसाकिमुभविष्यतिउत्पत्स्यतेस्थास्यतेवा ॥ नैतत्संभावितमित्यर्थः ॥८॥ अभिमंतव्यविकारनिरासन्यायेनाभिमंतृवि कारोपिनिरसनीयइत्याह ॥ सर्वमिति ॥ विकारआदिपदाद्बाधश्चज्ञप्तौचिदात्मनिनास्त्यतःक्वचिदप्यज्ञाभिचिद्व्यतिरिक्तम् ॥ ९॥१०॥ इत्थंचमदीयमुपदेशवचोयत्तदपिसंविदाका शरूपंशून्यत्वंविद्धि ॥ यस्मादिदंवचस्त्वत्संविदाकाशरूपेआत्मन्येवस्वयंतिष्ठतिनजडस्वरूपे ॥ शब्दतत्त्वस्यापिचिद्रूपस्फोटात्मनैवनिष्कर्षेपर्यवसानादितिभावः ॥ ११ ॥ एवंमे यमातृमानानांचिन्मात्रत्वेसिद्धेइच्छाविषयादेरभावादनिच्छोदयंयदासितमवस्थानंतदेवपरमंपदमाहुः ॥ १२ ॥ इच्छाभावेपिजीवनहेतुव्यवहारसिद्धिमाह ॥ सदति ॥१३॥

एवंव्यवहारेणजीवतोऽज्ञस्यकथंजगद्भातितदाह ॥ अंतरिति ॥ वेणोर्वंशनालस्येवांतर्बहिश्चशून्यम् ॥ १४ ॥ नस्वदतेनरोचते ॥ १५ ॥ अस्वदनमेवप्रतींद्रियविषयंप्रपंचयंस्त दुत्तीर्णतांदर्शयति ॥ उच्यंतामित्यादिना ॥ प्रकृतःप्रस्तुतःप्रारब्धशेषक्षयस्तदुपयुक्तान्यशब्दोच्चारणरहितैर्व्यवहारैरनंगलग्नेनव्यवहारांगदेहादावहंममतासंबंधरहितेनरसेनमा धुर्येणवंशवन्मुरलीवद्गतवासनंयथास्यात्तथाशब्दजालान्युच्यंतामुच्चार्यंतांवागिंद्रियेणेत्यर्थः ॥ १६ ॥ एवंत्वगिंद्रियेणत्वयानटभटवेश्यादिकूटनिवासगृहेणेवानिच्छममनो दयंचस्पर्शनीयानिस्रक्चंदनादीनिस्पृश्यंताम् ॥ १७ ॥ १८ ॥ अरसमनिच्छम् ॥ निर्मनोमानंमनोमीयतेनिर्मीयतेयेनवासनाजालेनतद्रहितम् ॥ अगर्वंनिरभिमानम् ॥ चित्रलि

अंतःशून्यंबहिःशून्यंविरसंगतवासनम् ॥ जगद्वेणोरिवाज्ञस्यजीवतोभातिजीवनम् ॥ १४ ॥ यस्यनस्वदतेहस्यमहस्यंस्वदतेहृदि ॥ स वाह्याभ्यंतरंशांतःसवितीर्णोभवार्णवात् ॥ १५ ॥ उच्यंतांशब्दजालानिवंशवद्गतवासनम् ॥ रसेनानंगलग्नेनप्रकृतानन्यचोदनैः ॥ १६ ॥ स्पृश्यंतांस्पर्शनीयानियथाप्राप्तान्यवासनम् ॥ कूटागारवदक्षुब्धमनिच्छममनोदयम् ॥ १७ ॥ स्वाद्यंतांरसजालानिविगतेच्छाभयैष णम् ॥ अपरागाभिलषणंयथाप्राप्तानिदर्विवत् ॥ १८ ॥ दृश्यंतांरूपजालानिपुनःप्राप्तान्यवासनम् ॥ अरसंनिर्मनोमानमगर्वंचित्रने त्रवत् ॥ १९ ॥ जिघ्र्यंतांगंधपुष्पाणिविगतेच्छमवासनम् ॥ स्पंदयंघोपलब्धानित्यागायवनवातवत् ॥ २० ॥ इतिचेद्विरसत्वेनबोधयि त्वाचिकित्सिताः ॥ नभोगरोगास्तदुःखशांत्यैनास्तिकथैवच ॥ २१ ॥ यःस्वादयन्भोगविषंरतिमेतिदिनेदिने ॥ सोऽग्नौस्वमूर्तिज्वलिते कक्षमक्षयमुज्झति ॥ २२ ॥ निरिच्छत्वंसमाधानमाहुरागमभूषणाः ॥ यथाशाम्येन्मनोनिच्छंनोपदेशशतैस्तथा ॥ २३ ॥ इच्छोदयो यथादुःखमिच्छाशांतिर्यथासुखम् ॥ तथाननरकेनापिब्रह्मलोकेनुभूयते ॥ २४ ॥ इच्छामात्रंविदुश्चित्तंतच्छांतिर्मोक्षउच्यते ॥ एतावं त्येवशास्त्राणितपांसिनियमायमाः ॥ २५ ॥

खितपुरुषादिनेत्रवत् ॥ १९ ॥ जिघ्र्यंतांघ्रायंताम् ॥ अशितिजिघ्रादेशश्छांदसः ॥ जिघ्रंतामितिपाठेविकरणव्यत्ययः ॥ अपानोपनीतंगंधंस्पंदेनघ्राणत्यासंगपाप्मनेतिस्पंदयंघो घ्राणंतदुपलब्धानि ॥ त्यागायननुरागाय ॥ २० ॥ इतिउक्तरीत्याअनुक्तेष्वपिकर्मेंद्रियविषयेषुतद्वत्पाग्वत्चाज्ञानेंद्रियवच्चविरसत्वेननिःसारत्वेनमनोबोधयित्वाभोगरोगाश्चेच्चि चिकित्सितास्तदादुःखशांत्यैकथैवनास्तिचादनर्थपरंपरोद्भवश्चास्तीत्यर्थः ॥ २१ ॥ तदेवाह ॥ यइति ॥ कक्षंतृणपूलम् ॥ अक्षयमखंडितमजस्रमितियावत् ॥ उज्झतिक्षिप ति ॥ २२ ॥ अतोभोगेच्छात्यागएवमनःशांतौमुख्योहेतुरितिस्तौति ॥ निरिच्छत्वमिति ॥ २३ ॥ नापिब्रह्मलोकेइति ॥ तथाचोक्तंययातिना ॥ यच्चकामसुखंलोकेयच्चदिव्यं महत्सुखम् ॥ तृष्णाक्षयसुखस्यैतेनार्हतःषोडशींकलामिति ॥ २४ ॥ एतावंत्येतावन्मात्रपर्यवसितानि ॥ २५ ॥

---

१ मनःशब्दस्यादंतत्वंसंध्यार्षत्वंवा २ ऊर्ध्वंप्राणउन्नयत्यपानःप्रत्यगस्यतीतिकठवल्लीश्रुत्यनुरोधेनापानस्याधआकर्षणेप्राणाकर्षणाद्वाह्यनिर्गतस्यश्वासस्यांतराकर्ष णंयदाभवतितदातेनाकृष्टोगंधोघ्राणेंद्रियेणसंयुज्यतेअतउक्तमपानोपनीतमिति ॥

॥ २६ ॥ २७ ॥ लोकस्यजनस्य ॥ २८ ॥ तच्चिकित्सायांचधैर्यलक्षणःपुरुषप्रयत्नएवौषधंनान्यदित्याह ॥ इच्छेति ॥ २९ ॥ स्वल्पमपीति ॥ अल्पाल्पेच्छानिरोधाभ्यासक्रमेणसर्वतउपशमोयुक्तेनभाव्यमित्यर्थः ॥ मार्गस्थःसन्मार्गप्रविष्टः ॥ ३० ॥ दिनानुदिनंप्रतिदिनम् ॥ ३१ ॥ आत्यंतिकेच्छाबाधस्तुज्ञानेनतन्मूलनाशादेवेत्याह ॥ दुःखेति ॥ ॥ ३२ ॥ तस्याअवेदनमसत्वापादानम् ॥ विदसत्तायांभावेल्युट् ॥ वृथाश्रमैर्यत्नांतरैः ॥ ३३ ॥ इच्छाप्रशमनयत्नाभावेशास्त्रादिवैयर्थ्यमपीत्याह ॥ शास्त्रेति ॥ समाधिश्चित्त

यावतीयावतीजंतोरिच्छोदेतियथायथा॥तावतीतावतीदुःखबीजमुष्टिःप्ररोहति॥२६॥यथायथेच्छातनुतांयातिजंतोर्विवेकतः॥तथातथोपशाम्यंतिदुःखचिंताविषूचिकाः॥२७॥ यथायथेच्छाघनतांयातिलोकस्यरागतः॥ तथातथाविवर्धंतेदुःखचिंताविषोर्मयः॥२८॥ इच्छाचिकित्स्यतेव्याधिर्नस्वयत्नौषधेनचेत्॥ तदत्रबलवन्मन्येविद्यतेनौषधांतरम्॥ २९॥ इच्छोपशमनंकर्तुंयदिकृत्स्नंनशक्यते॥ स्वल्पमप्यनुगंतव्यंमार्गस्थोनावसीदति॥३०॥ यस्त्विच्छातानवेयत्नंनकरोतिनराधमः॥सोंधकूपेस्वमात्मानंदिनानुदिनमुज्झति॥३१॥ दुःखप्रसवशालिन्याबीजमिच्छैवसंस्तृतेः॥ सम्यग्ज्ञानाग्निदग्धासानभूयःपरिरोहति॥ ३२॥ इच्छामात्रंहिसंसारोनिर्वाणंतदवेदनम्॥ इच्छानुत्पादनेयत्नःक्रियतांकिंवृथाश्रमैः॥ ३३॥ शास्त्रोपदेशगुरवःप्रेक्ष्यंतेकिमनर्थकम्॥ किमिच्छाननुसंधानसमाधिर्नाधिगम्यते॥ ३४॥ यस्येच्छाननुसंधानमात्रेदुःसाध्यतामतेः॥ गुरूपदेशशास्त्रादितस्यनूनंनिरर्थकम्॥ ३५॥ इच्छाविषविकारिण्यामंतएवनृणामलम्॥ दुःखप्रसरकारिण्यांहरिण्याजन्मजंगले॥ ३६॥ नबालीक्रियतेत्वौषदात्मज्ञानायचेदसौ॥ इच्छोपशांतिःक्रियतांतयालंतदवाप्यते॥ ३७॥ निरिच्छतैवनिर्वाणंसेच्छतैवहिबंधनम्॥ यथाशक्तिजयेदिच्छांकिमेतावतिदुष्करम्॥ ३८॥ जरामरणजन्मादिकरंजखदिरावलेः॥ बीजमिच्छासदैवांतर्दह्यतांशमवह्निना॥ ३९॥ यतोयतोनिरिच्छत्वंमुक्ततैवततस्ततः॥यावद्गतियथाप्राणंहन्यादिच्छांसमुत्थिताम्॥ ४०॥ यतोयतश्चसेच्छत्वंबंधपाशास्ततस्ततः॥ पुण्यपापमयादुःखराशयोविततार्त्तयः॥४१॥

समाधानोपायःकिंनाधिगम्यतेकिमर्थंनाश्रीयते॥ ३४ ॥ मतेःस्वविवेकात् ॥ ३५ ॥ इच्छाविषविकारिण्यांसंसृतौनृणामंतोमृत्युरेव ॥ यथाहरिण्याव्याघ्रादिसंकुलेजंगलेमृत्युरेवतद्वत् ॥ ३६ ॥ असौनाइच्छयाचेन्नबालीक्रियतेबालवच्चपलोनक्रियतेतदाआत्मज्ञानार्थंतुईषदेवप्रयत्नः ॥ अतइच्छोपशांतिरेवक्रियतांतयैवतज्ज्ञानमवाप्यते॥३७॥ ॥ ३८ ॥ सदैवाभ्यस्तेनशमवह्निनादह्यताम् ॥ ३९ ॥ यावद्विवेकवैराग्याद्युपायप्राप्ति ॥ यथाप्राणंयथाधैर्यादिबलम् ॥ ४० ॥ ४१ ॥

दस्युभिर्लुंटाकैर्मुषितस्यापहृतसर्वस्वस्येव ॥ ४२ ॥ कल्याणसाधनचतुष्टयम् ॥ ४३ ॥ विषयोपभोगैरेच्छायाःपरिपूरणंयत्तदेव ॥ ४४ ॥ तत्तद्दर्यंतद्वृक्षणाद्वृक्षादाश्रया दिंधनाच्चजाताःशितांताःनिशिताग्रा इच्छाइच्छारूपादुष्कृतकृशानुशिखास्तत्रस्थंचिदाभासरूपंपुंस्पशुंजीवलक्षणंपशुंस्वाश्रयेदृढिकृतादशुभात्पापलक्षणाच्छुभात्पुण्यलक्ष णाच्चस्वाश्रयदूषणापराधादुत्पन्नाद्वैरादिवमोहधूमैरंधीकृत्यस्नेहपाशैर्दृढंबद्धाचआसाद्यपातयित्वातदीयौसुखदुःखकुबीजानांकोशौकुसूलस्थानीयौतद्वृषणौआसमंताद्दहंति वार्त्ताकवद्भर्जयंति ॥ छमच्छमितीतितद्दसादाहोत्थशब्दानुकरणम् ॥ इच्छाःकर्त्र्यः ॥ दुष्कृतकृशानुशिखाःआसाद्यप्रज्वाल्यतदीयकुबीजकोशौदहंतीतिवा ॥ कुबीजको शौआसाद्यपुंस्पशुंदहंतीतिवायथेच्छमन्वयः ॥ पुमःखव्ययमपरेइतिरूत्वेसंपुंकानामितिसत्वम् ॥ पुंपशुमितिपाठस्तुच्छांदसः ॥ ४५ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशे

इच्छानिरासरहितेगतेसाधोःक्षणेपिच ॥ दस्युभिर्मुषितस्येवयुक्तमाक्रंदितुंचिरम् ॥ ४२ ॥ यथायथास्यपुंसोंतरिच्छासमुपशाम्यति ॥ तथातथास्यकल्याणंमोक्षायपरिवर्द्धते ॥ ४३ ॥ आत्मनोनिर्विवेकस्ययदिच्छापरिपूरणम् ॥ संसारविषवृक्षस्यतदेवपरिषेचनम् ॥ ४४ ॥ तद्वृक्षजाःस्वसुखदुःखकुबीजकोशौवैरादिवाश्रयकृतादशुभाशुभाच्च ॥ आसाद्यदुष्कृतकृशानुशिखाःशितांताइच्छाच्छम च्छमितिपुंस्पशुमादहंति ॥ ४५ ॥ ॥ इ०वा०महारामायणेवा०द०मो०निर्वाणप्रकरणेउत्तरार्द्धेसंसारबीजकथनंनामषट्त्रिंशत्त मःसर्गः ॥ ३६ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥इच्छाविषविकारस्यवियोगंयोगनामकम् ॥ शांतयेशृणुभूयोपिपूर्वमुक्तम पिस्फुटम् ॥ १ ॥ आत्मनोव्यतिरिक्तंचेद्विद्यतेतदिहेच्छया ॥ इष्यतामसतित्वेतत्स्वात्मान्यत्वंकिमिष्यते ॥ २ ॥ निर्भागावयवासूक्ष्माव्यो मःशून्यतरैवचित् ॥ सैवाहंजगदाकारासतीकिंतत्तयेष्यते ॥ ३ ॥ साव्योमरूपाव्योमैवव्योमात्मवेद्यवेदिका ॥ व्योमात्मजगदाभासम त्रेच्छाविषयोस्तिकः ॥ ४ ॥ ग्राह्यग्राहकसंबंधःकुतश्चिदितितन्नतः ॥ विद्यतेसौप्रशांतानांयेषामस्तिनवेद्मितान् ॥ ५ ॥

निर्वाणप्रकरणेउत्तरार्द्धेषट्त्रिंशत्तमःसर्गः ॥ ३६ ॥ ॥ ७ ॥ ॥ यथेच्छैवनजायेतजातापिब्रह्मकेवलम् ॥ तथोपपत्तिभिर्भूयोज्ञानयोगोत्रवर्ण्यते ॥ १ ॥ वियोगफलक त्वाद्वियोगम् ॥ इच्छामूलकसर्वानर्थशांतये ॥ १ ॥ इच्छयाइष्यताम् यथेच्छमिच्छाप्रवर्त्ततामित्यर्थः ॥ इच्छंतामितिपाठेप्ययमेवार्थः ॥ तथाचयावदात्मानज्ञायतेतावदेव द्वितीयवस्तुसत्यताभ्रांत्याइच्छोदयइत्यात्मज्ञानयोगएवविषयापहारद्वारातन्निवृत्त्युपायइतिभावः ॥ २ ॥ यदितुज्ञानेनजगत्सत्यंब्रह्मैवसंपन्नमितिनमिथ्येतिमन्यसेतदाप्यत्यं ताभेदेएषित्राद्विदित्रिपुटीघटितेच्छायाअसिद्धिरित्याह ॥ निर्भागेति ॥ निर्गतोभागस्त्रिपुटीविभाजकोपाधिभेदोविभजनीयावयवभेदश्चयस्याः ॥ अहमाकाराजगदाकाराचसै वसती ॥ ३ ॥ ४ ॥ बुद्ध्याअगृहीतेविषयेइच्छानुदयाद्ग्राह्यग्राहकसंबंधाभावेग्रहणस्यासिद्धेरपिविदुषांनेच्छाप्रसक्तिरित्याह ॥ ग्राह्येति ॥ प्रशांतानांनःअसौअज्ञदृष्टिप्रसिद्धो ग्राह्यग्राहकसंबंधःकुतश्चिदपिनिमित्तात्प्रमाणाद्वानविद्यतेइत्येतस्माद्धेतोरपिकिमिष्यतेइत्यन्वयः ॥ येषामज्ञानामस्तितान्नवेद्मि ॥ तेपितत्त्वदृशाअत्यंताप्रसिद्धाइत्यर्थः ॥ ५ ॥

१ वंताकवत् ॥ २ अत्रपाठेविकरणव्यत्ययआर्षइतिभाति ॥

त्वर्थेअपिशब्दः ॥ असितःश्यामः ॥ ६ ॥ ग्राहकादीनांसर्वत्रिपुटीनामेषैवसत्ता ॥ कैषा ॥ यन्नात्मनिष्ठतातात्त्विकेआत्मन्यविश्रांतिरज्ञानमितियावत् ॥ तेचग्राहकादयःस्व भावोऽशास्त्रीयदृष्टिस्तदपेक्षयासत्याःशास्त्रीयतत्त्वदृष्ट्युदयेक्कप्रयांतीतिनजाने ॥ ७ ॥ तत्त्वज्ञानस्याप्येषएवस्वभावोयद्सत्याअहंताशास्त्रतःस्वतत्त्वंज्ञात्वातस्मिन्नात्मनिगच्छ त्यपैति ॥ सएवाखिलोद्रष्टृदृश्यक्षयोविशिष्टंनिर्वाणंचेत्यर्थः ॥ ८ ॥ दृश्यनिर्वाणयोःपरस्परासहभावोपिस्वभावतएवेत्याह ॥ निर्वाणइति ॥ मिथोऽनुभवःसहानुभवः ॥ ९ ॥ कुतोनसहानुभवोपीतितत्राह ॥ उभेइति ॥ यदिमिथःसहस्यातांतदाउभेपरस्परबाधितत्वादसत्येस्याताम् ॥ स्तामसत्येकोदोषस्तत्राह ॥ असत्येचेति ॥ तथाचविद्वदनुभववि रोधइत्याह ॥ यतइति ॥ १० ॥ ननुतर्हिसर्वजनप्रसिद्धंदृश्यादिमहाकौतुकंनिर्वाणेदुर्लभंस्यादित्यनाश्वासंपरिहरन्नाह ॥ भ्रमभूतमिति ॥ असत्त्वादनर्थरूपंचतद्दृश्यादिमा भाव्यतांनचिंत्यताम् ॥ ११ ॥ तत्अर्थकारिपुरुषार्थसंपादकंनास्त्येव ॥ अत्रईदृशेदृश्येअपङ्कत्वेनकिंकौतुकंगतमित्यर्थः ॥ १२ ॥ अभावःशाब्दज्ञानकृतोबाधःसोपपत्तिर्म

ग्राह्यग्राहकसंबंधःस्वनिष्ठोपिनलभ्यते ॥ असतस्तुकथंलाभःकेनलब्धोसितःशशी ॥ ६ ॥ एषैवग्राहकादीनांसत्तायन्नात्मनिष्ठता ॥ स्वभावावेक्षयासत्यानजानेक्कप्रयांतिते ॥ ७ ॥ एषएवस्वभावोयद्द्रष्टृदृश्यक्षयोखिलः ॥ ज्ञात्वासत्याविनिर्वाणमहंतात्मनिगच्छति ॥ ८ ॥ निर्वाणेनास्तिदृश्यादिदृश्यादौनास्तिनिर्वृतिः ॥ मिथोनयोरनुभवोनच्छायातपयोरिव ॥ ९ ॥ उभेएतेमिथोऽसत्येअसत्येचननिर्वृतिः ॥ यतोनिर्वाणमजरमदुःखमनुभूयते ॥ १० ॥ भ्रमभूतंचदृश्यादिनित्यंनात्रसुखप्रदम् ॥ असच्चतद्भाव्यतांमानिर्वाणेस्थीयतामजे ॥ ११ ॥ शुक्तिकारूप्यसदृशंप्रेक्षितंयन्नलभ्यते ॥ अर्थकार्यपितन्नास्तिकिमत्रापङ्कवेनच ॥ १२ ॥ तत्सद्भावान्महद्दुःखमसद्भावान्महत्सुखम् ॥ अभावःसोपपत्तिस्तुदृढतांयातिभावनात् ॥ १३ ॥ तत्किमात्मनिबंधायविदग्धंनमुधाधमाः ॥ स्पष्टएवोपचयादेर्वस्तुन्यस्तमिताऽपदे ॥ १४ ॥ कार्यकारणभावादिब्रह्मैवसकलंयदा ॥ तदातुब्रह्मतास्यस्मिन्संविन्मात्रात्मकेतते ॥ १५ ॥ मार्गयंतिप्रबोधायतेमृगैरलमस्तुनः ॥ व्योमरूपेकिलैकस्मिन्सर्वात्मनिततेसति ॥ १६ ॥

ननसहितोभावनान्निदिध्यासनात् ॥ १३ ॥ इदानींपरमकारुणिकोभगवान्वसिष्ठोदृश्यकौतुकासक्तानधमाधिकारिणःश्रोतृन्बलान्निर्भर्त्स्यदृश्यासक्तित्याजयन्नाह ॥ तत्किमिति ॥ हेअधमाःयूयमुपचयादेर्विकारजातस्यअपदेपरमार्थवस्तुनिस्वप्रकाशत्वाच्छास्त्राचार्योपदेशाच्चकरतलामलकवत्स्पष्टेएवस्फुरतिसत्यस्तमदर्शनंकिंइतप्राप्तुत ॥ भवद्भिस्तद्दृश्यजातंकिमात्मनिबंधनायनविदग्धम् ॥ किंबंधएवाभिलषितोस्तियेनदृश्यासक्तिनमुंचतेत्यर्थः ॥ १४ ॥ यदाकार्यकारणभावादिसर्वंब्रह्मैवभवतितदैवतुदेहादिप रिच्छेदापगमात्तनेविस्तारंप्राप्तेचिन्मात्रात्मकेप्रतीचिब्रह्मतासिद्ध्यतिनाणुमात्रमपिदृश्यपरिशेषे ॥ १५ ॥ अतएवव्योमरूपेसर्वात्मनिपूर्णेपिकार्यकारणतादिदृश्यमंगीकृत्ययेब्रह्मप्रबोधायसाधनानिमार्गयंतिमृगयंतेतैर्वादिमृगैस्तार्किकैःशिष्यमृगैर्वाअलमस्तुप्रयोजनंनास्तीत्यर्थः ॥ १६ ॥

यदिचावश्यंहेतुर्वाच्यस्तर्हिसर्वस्वभावरूपास्त्वविद्यैवेत्याशयेनाह ॥ यइति ॥ १७ ॥ अतएवविदुषांतद्बाधात्सर्गादिहेतुनिरूपणेनिर्लज्जतादोषइत्याह ॥ कार्येति ॥ १८ ॥ कारणप्रतिपादनार्थाउक्तिर्विलज्जतानिर्लज्जता ॥ १९ ॥ २० ॥ यदिसर्वंब्रह्मैवतर्हिइच्छापिसुतरांब्रह्मेतितदुत्पत्तौकाक्षतिरितिविद्वद्दृष्ट्यारामःशंकते ॥ एवंचेदिति ॥ २१ ॥ इच्छानुत्पादनेयत्नःक्रियतांकिंवृथाश्रमैरित्यादिप्रागुक्तयत्नविधिनिषेधनेनिवारणेसत्यंविदुषइच्छोदयेपिनकाचित्क्षतिः ॥ विद्याबाधितायास्तस्याउदयएवदुर्लभइत्युत्तरमा

कार्यकारणताद्यानामुक्तीनामेवकःक्रमः॥ योहेतुःस्पंदनेवायोर्द्रवत्वेसलिलस्यच॥ १७॥ शून्यत्वेनभसःसौम्यसर्गादित्वेचिदात्मनः॥ कार्यकारणभावादिब्रह्मैवसकलंयदा ॥ १८ ॥ तदाब्रह्मणिसर्गाणांकारणार्थाविलज्जता ॥ नदुःखमस्तिनसुखंशांतंशिवमयंजगत् ॥ १९ ॥ नास्तिचिन्मात्रतान्यत्वमतइच्छोदयःकुतः ॥ मृद्देहयोधसेनायांनमृन्मात्रेतरद्यथा ॥ २० ॥ नसज्जगदहंतादौदृश्येब्रह्मेतरत्तथा ॥ श्रीरामउवाच॥ ॥ एवंचेत्तद्बुदेत्विच्छामावोदेतुमुनीश्वर॥ २१॥ सातुब्रह्मैवकोर्थःस्याद्स्याविधिनिषेधने॥ ॥ श्रीवसिष्ठउवाच ॥ ज्ञातायांसंप्रबुद्धायामिच्छाब्रह्मैवनेतरत्॥ २२॥ यथासंबुद्धवान्रामतत्सत्यंकिंचिदंशृणु॥ यदायदाज्ञतोदेतिशाम्यतीच्छातदातदा ॥ २३॥ वस्तुस्वभावादुदयत्यादित्येयामिनीयथा ॥ शाम्यत्येवनतूदेतिज्ञप्ताविच्छादितत्तथा ॥ २४॥ यथायथोदयोज्ञस्यैतशांतिस्तथातथा॥ वासनाविलयश्चैवकथमिच्छोदयोभवेत् ॥ २५॥ तस्याविद्योपशांतेयंनिर्मलामुक्ततोदिता॥ अशेषदृश्यवैरस्यायस्येच्छोदेतिनक्वचित्॥ २६॥ विरक्ततास्यनोदृश्येनोदेत्यत्रास्यरक्तता ॥ केवलंद्रष्टदृश्यश्रीःस्वदतेनस्वभावतः॥ २७॥ काकतालीययोगेनपरप्रेरणयानया ॥ यदिकिंचित्कदाचिच्चसम्यगिच्छतिवानवा॥ २८॥ तदस्यसेच्छानेच्छावाब्रह्मैवात्रनसंशयः ॥ इच्छानजायतेज्ञस्यावश्यमेवानुवानवा॥ २९॥ ज्ञाताचेदुदिताजंतोस्तदिच्छास्योपशाम्यति॥ नैतयोःस्थितिरेकत्रप्रकाशतमसोरिव॥ ३०॥

ह ॥ ज्ञातायामित्यादिना ॥ २२ ॥ २३ ॥ इटकिटकटीगतावित्यत्रईइतिप्रश्लिष्टस्यधातोःशत्रंतस्यसप्तम्येकवचनेअयतीतिरूपंनत्वयतेस्तस्यात्मनेपदित्वात् ॥ २४ ॥ २५ ॥ मूलोच्छेदादपिविदुषोनेच्छोदयसंभवइत्याशयेनाह ॥ तस्येति ॥ २६ ॥ नस्वदतेनरोचते ॥ २७ ॥ सम्यक्शास्त्रानिषिद्धंदेहधारणमात्रसाधनमन्नपानादि ॥ २८ ॥ ततस्तदाअस्यविदुषःसाइच्छानेच्छाऽनिच्छावाउभयंब्रह्मैव ॥ अथवाज्ञस्यविदुषोनवाअभिनवभोगचमत्कारविषयाइच्छाअवश्यंनजायतेएव ॥ प्रागभ्यस्तमनुसृत्यतुवाअनियतेत्यर्थः ॥ २९ ॥ ज्ञातातत्त्वज्ञानम् ॥ तत्तदा ॥ ३० ॥

१ यथासिबुद्धवानित्यपिक्वचित्पाठः

५७

अतएवरागतःप्रसक्तनिषिद्धक्रियाप्रतिषेधशास्त्रेनीरागोयंनाधिकारीत्याह ॥ प्रतिषेधेति ॥ किंकुतेकस्मैप्रयोजनाय ॥ नह्यंधस्यकूपेनपतनीयमित्यंधेनवक्तव्यमस्तीतिभावः ॥ ३१ ॥ बाह्येच्छानिवृत्तिःस्वानंदानुभवतृप्तिश्वतत्त्वबोधोदयचिह्नमित्याह ॥ एतदेवेति ॥ सर्वलोकानामभयदानेनह्लादनम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ अद्वैतंद्वैतध्वंसरूपंवस्त्वंतरम् ऐक्यंमेलनमेकत्वसंख्याचतैर्विवर्जितंयथास्यात्तथायआस्तेतस्येतिपरेणान्वयः ॥ ३५ ॥ अर्थव्यपाश्रयःप्रयोजनलाभः ॥ ३६ ॥ नानिच्छयेति ॥ अर्थव्यपाश्रयइति सर्वत्रानुषज्जते ॥ ३७ ॥ ३८ ॥ ३९ ॥ इतिप्राग्वर्णितमात्मतत्त्वंनिश्चित्यदुःखंसुखंचनिरतिशयानंदात्मभावनयाविषममृतमिवकुर्वन् ॥ ४० ॥ तद्बोधानुसारिणीस्थितिरेवसर्व

प्रतिषेधविधीनांतुतज्ज्ञोनविषयःक्वचित् ॥ शांतसर्वैषणेच्छस्यकोस्यकिंवक्तिकिंकुते ॥ ३१ ॥ एतदेवज्ञताचिह्नंयदिच्छास्वतितानवम् ॥ ह्लादनंसर्वलोकानामथानुभवएववा ॥ ३२ ॥ दृश्यंविरसतांयातंयदानस्वदतेक्वचित् ॥ तदानेच्छाप्रसरतितदैवचविमुक्तता ॥ ३३ ॥ बोधादनैक्यमद्वैतंयःशांतमवतिष्ठते ॥ इच्छानिच्छादयःसर्वेभावास्तस्यशिवात्मकाः ॥ ३४ ॥ बोधादस्तमितद्वैतमद्वैतैक्यविवर्जितम् ॥ यःस्वेच्छोविगतव्यग्रःशांतआत्मन्यवस्थितः ॥ ३५ ॥ नैवतस्यकृतेनार्थोनाकृतेनेहकश्चन ॥ नचास्यसर्वभूतेषुकश्चिदर्थव्यपाश्रयः ॥ ३६ ॥ नानिच्छयानेच्छयाथनसतानासतासदा ॥ नैवात्मनानचान्येननैतैर्मरणजीवितैः ॥ ३७ ॥ इच्छाचतस्यनोदेतिनिर्वाणस्यप्रबोधिनः ॥ यदिचोदेतितस्येच्छाब्रह्मशाश्वतमेवसा ॥ ३८ ॥ नदुःखमस्तिनसुखंशांतंशिवमजंजगत् ॥ इतियोंतःशिलेवास्तेतंप्रबुद्धंविदुर्बुधाः ॥ ३९ ॥ दुःखंसुखंभावनयाकुर्वन्विषमिवामृतम् ॥ इतिनिश्चित्यधीरात्माप्रबुद्धइतिकथ्यते ॥ ४० ॥ तत्स्थितंव्योमनिव्योमशांतेशांतंशिवेशिवम् ॥ शून्येशून्यंसतिचसद्यद्ब्रह्मणिजगत्स्थितम् ॥ ४१ ॥ असंवेदनसंवित्त्वेततेऽविश्वमितिस्थिते ॥ सौम्येसमसमेशांतेशिवेहंताभ्रमःक्षयी ॥ ४२ ॥ यदिदंदृश्यतेकिंचिज्जगत्स्थावरजंगमम् ॥ तत्सर्वंशांतमाकाशंपरचिंतापुरोपमम् ॥ ४३ ॥ परचिंतापुरोमध्येगतविघ्नंगमागमौ ॥ यथांतस्तत्वशून्यत्वात्तथैवास्मिन्जगद्भ्रमे ॥ ४४ ॥ अब्धिघूर्वीनदीशैलशोभाशून्यतरात्मनि ॥ जृंभतेदृष्टकरणंमृगतृष्णांबुवीचिवत् ॥ ४५ ॥

वस्तूनामविपर्यस्तस्थितिर्नाज्ञप्रसिद्धेत्याह ॥ तदिति ॥ तत्तदा ॥ ४१ ॥ इतिउक्तरीत्याअविश्वंनिर्जगत्कंयथास्यात्तथास्थितेसति ॥ ४२ ॥ चितापुरंमनोराज्यनगरंतदुपमम् ॥ ४३ ॥ परःपुरुषांतरंतदीयमनोराज्यकल्पितायाःपुरोनगर्यामध्येतवयथाअंतर्गमागमावविघ्नंकुड्यादिप्रतिबंधशून्यंसिध्यतस्तथाविदुषोप्यस्मिन्जगद्भ्रमेसिध्यतइत्यर्थः ॥ ४४ ॥ तत्कुतस्तत्राह ॥ अब्धीति ॥ यतःअब्ध्यादिशून्यतरात्मनिदृष्टुरंतःकरणमेवाब्ध्यादिशोभात्मनाजृंभते ॥ यथातृपितश्रांतपुरुषस्यचक्षुरूपंकरणमंबुशून्येपुरोदेशेमृगतृष्णांबुवीच्यात्मनाजृंभतेतद्वदित्यर्थः ॥ ४५ ॥

१ स्वस्थइत्यपिक्वचित्पाठः

असत्यतायाइतरतसत्यत्वंकिंकिल ॥ ४६ ॥ भ्रांतिभाजोमिथ्यात्वादपिभ्रांतेर्मिथ्यात्वमित्याह ॥ असत्यमेवेति ॥ यतःसत्यंब्रह्मैवाहमिदमितिचासत्यमेवभासतेअतइयंभ्रांति भ्रांतिभाजंविनैवस्फुरतीत्यसतीत्यर्थः ॥ ४७ ॥ अत्यंतासत्त्वेशून्यवादिमतप्रवेशः अत्यंतसत्त्वेअद्वैतश्रुतिविद्वदनुभवविरोधः उभयरूपत्वंतुविरोधादसंभवीत्यनिर्वचनीयताय तिपुंस्त्ववदस्यपरिशेषादित्याह ॥ नसदिति ॥ अतींद्रियंइंद्रियानवधार्यतत्त्वम् ॥ खवत्इंद्रियवत् ॥ गंधर्वनगराद्याकारावक्षुब्धाकाशवद्वा ॥ ४८ ॥ ज्ञस्यतत्त्वविदस्तत्त्वबोधबलादेवालंशाम्यतांविषयाणांयत्यद्यपिइच्छानिच्छेतेसमेतुल्यफलेतथाप्यनिच्छोदयमेवस्फुटंनिर्विक्षेपसुखाभिव्यक्तिहेतुंश्रेयसेमन्ये ॥ नन्विति रामसंबोधने ॥ ४९ ॥ यथाअविकृतेएवखेआकाशाद्वायुरित्यादिश्रुत्युक्तक्रमेणाहंजगदितिज्ञप्तिरास्थितातद्वदज्ञानावृतचिदात्मनोपि ॥ नात्रकारणांतरंमृग्यमित्यर्थः ॥ ५० ॥ तथाचचिदात्मनोबहिः

स्वप्ननिर्माणपुरवद्बालवेतालतालवत् ॥ यदिदंदृश्यतेतत्रकिंकिलासत्यतेतरत् ॥ ४६ ॥ असत्यमेवाहमितिभासतेसत्यमेवच ॥ भ्रांतिभाजंविनैवेयंभ्रांतिःस्फुरतिसासती ॥ ४७ ॥ नसन्नासन्नसदसत्किमपीदमतींद्रियम् ॥ अवाच्यंजगदित्येवभात्यवक्षुभितंखवत् ॥ ४८ ॥ इहेच्छानिच्छतेज्ञस्यशाम्यतांयदलंसमे ॥ तथापिश्रेयसेमन्येनन्वनिच्छोदयंस्फुटम् ॥ ४९ ॥ अहंजगदितिज्ञप्तिःखेखस्येवेयमास्थिता ॥ चिदात्मनोयथावायोःस्पंदोनात्रास्तिकारणम् ॥ ५० ॥ चितश्चेत्योन्मुखत्वंयत्तच्चित्तंसैवसंसृतिः ॥ सेच्छातन्मुक्ततामुक्तिर्युक्तिंज्ञात्वेतिशाम्यताम् ॥ ५१ ॥ इच्छाभवत्वनिच्छावासर्गोवाप्रलयोथवा ॥ क्षतिर्नकस्यचित्काचिन्नचकिंचिदिहास्तिहि ॥ ५२ ॥ इच्छानिच्छेसदसतीभावाभावौसुखासुखे ॥ इत्यत्रकलनाव्योम्निसंभवंतिनकाश्चन ॥ ५३ ॥ इच्छानांतानवंयस्यदिनानुदिनमागतम् ॥ विवेकशमवृत्तस्यतमाहुर्मोक्षभागिनम् ॥ ५४ ॥ इच्छाक्षुरिकयाविद्धेहृदिशूलंप्रवर्त्तते ॥ जयंतियत्रनैतानिमणिमंत्रौषधानिच ॥ ५५ ॥ यान्कार्यकरणव्यूहान्कृतवान्पूर्वमेवतान् ॥ संप्रेक्षयानपश्यामिमिथ्याभ्रमभरादृते ॥ ५६ ॥ भ्रमभूतेनकुर्मश्चेद्व्यवहारमवस्तुना ॥ तत्कस्मात्परचित्ताद्रिःकवलत्वंननीयते ॥ ५७ ॥

प्रवणतैवेच्छाचित्तंसंसारश्च अंतःस्वरूपेस्थितिरेवमुक्तिरितिफलितमित्याह ॥ चितइति ॥ ५१ ॥ तथाचेश्वरस्यसर्गप्रलययोरिवविदुषइच्छानिच्छयोर्नकश्चिल्लाभःक्षतिर्वेत्याह ॥ इच्छेति ॥ अस्तिफलमितिशेषः ॥ ५२ ॥ तत्रोपपत्तिमाह ॥ इच्छानिच्छेइति ॥ कलनाःकल्पनाः ॥ अत्रतत्त्वविद्रूपव्योम्निचिदाकाशे ॥ ५३ ॥ ५४ ॥ इच्छालक्षणयाक्षुरिकयाक्षुरप्रबाणशल्येन ॥ शूलंशोकमोहादिवेदना ॥ यत्रयस्मिन्शूलेएतानिलोकप्रसिद्धानिमणिमंत्रौषधानिनजयंतिकुंठीभवंतीतियावत् ॥ ५५ ॥ विधाताप्राणिदुःखविचिकित्सार्थंयानौषधमंत्रयंत्रादिकार्यकरणग्रामान्कृतवांस्तान्पूर्वमेवबहुशःपरीक्षणार्थंसंप्रेक्षयायतमानोहंमिथ्याभ्रमभरेणआदृतेपुंसितच्चिकित्सासमर्थान्नपश्यामि ॥ ५६ ॥ ननुभ्रांतिसिद्धेनैवकेनचिदुपायेनतच्चिकित्सादिव्यवहारोस्तुतत्राह ॥ भ्रमभूतेनेति ॥ भ्रमोभ्रांतिज्ञानंतेनभूतेनसिद्धेन ॥ अस्मद्भ्रांतिसिद्धोपायेनपरभ्रांतिसिद्धदुःखनिवारणेअस्मन्मनोरथकल्पितबहुयोजनविस्तृतमुखेनपरकीयस्वप्नशैलादेःकवलनप्रसंगइत्यर्थः ॥ ५७ ॥

भ्रांतिसिद्धस्यासत्वादपिनपारमार्थिकेपरदुःखनिवारणेसामर्थ्यमित्याह ॥ असतेति ॥ क्रियतेइतिपूर्वान्वयि ॥ तस्मात्तदीयंतत्त्वज्ञानाभिव्यक्तंपरमार्थसत्यंब्रह्मैवतदीयसर्वभम दुःखनिवारणोपायोनान्यइतिभावः ॥ ५८ ॥ नन्वमूर्त्तमनोभ्रांतिमात्रंजगच्चेत्कथंमूर्त्तदेहादिभावंयातितत्राह ॥ अहंभावादिति ॥ देहाद्याकाराहंभावात् ॥ जलंजाड्याति शयतःपाषाणतांकरकाभावमिव ॥ ५९ ॥ कल्पितेचितःस्वमरणतुल्येजडदेहभावेपिवास्तवचिद्रूपमक्षतमेवेतितेनतामनुभवतीत्याह ॥ चित्त्वादिति ॥ ६० ॥ प्रातिभासिक जडभावःप्रतिभासाधीनसत्ताकत्वादनिर्वचनीयइत्याह ॥ व्योम्नीति ॥ ६१ ॥ अतएवजगद्ब्रह्मसत्तयोरैक्याद्भेदोनास्तीत्याह ॥ यथेति ॥ ६२ ॥ प्रातिभासिकार्यस्यस्वाभार्थ वप्रतिभासातिरिक्तमुत्पत्त्यादिकमप्रसिद्धमित्याह ॥ नेहेति ॥ ६३ ॥ अतएवतत्त्यागादानयोरभिनिवेशोनयुक्तइत्याह ॥ अविद्यमानेइति ॥ ६४ ॥ देहार्थंहिपृथ्व्याद्यर्थस्य

असताव्यवहारश्चेत्प्रेक्षामात्रविनाशिना ॥ क्रियतेशशशृंगेणतत्कथंछाद्यतेनखम् ॥ ५८ ॥ अहंभावाच्चिदाकाशोजाड्यातिशयतःक्षणात् ॥ पाषाणतांजलमिवमनस्त्वाद्यातिदेहताम् ॥ ५९ ॥ चित्त्वादनुभवत्येतामसत्यामेवदेहिताम् ॥ अविनष्टैवचिच्छक्तिःस्वप्नेस्वमरणंयथा ॥ ६० ॥ व्योम्न्यसत्यमवस्तुत्वात्सत्यंचानुभवाद्यथा ॥ नीलत्वंतद्वदीशेस्मिन्सर्गोनासन्नसन्मयः ॥ ६१ ॥ यथाशून्यत्वनभसोर्यथास्पंदनभस्वतोः ॥ भेदोनास्तितथासर्गब्रह्मणोरेकरूपयोः ॥ ६२ ॥ नेहसंजायतेकिंचिज्जगदादिननश्यति ॥ स्वप्नोनिद्रागतस्येवकेवलंप्रतिभासते ॥ ६३ ॥ अविद्यमानेपृथ्व्यादौप्रतिभामात्ररूपिणि ॥ सर्गेकइवसंरंभस्त्यागादानैश्चिदंबरे ॥ ६४ ॥ नदेहःप्रतिभातोस्तिपृथ्व्यादिकारणान्वितः ॥ केवलंब्रह्मचिन्मात्रमेवात्मन्येवसंस्थितम् ॥ ६५ ॥ बुद्ध्यादेःकरणत्वंचद्वैतैक्यासंभवान्नसत् ॥ अनेनेदंक्रियतइत्यस्यार्थंयातिसंभवात् ॥ ६६ ॥ अहेतुरक्रमंभातिचितिकल्पक्रियागणः ॥ क्षणेनैवयथास्वप्नेमृतिजन्मादिसत्वराः ॥ ६७ ॥ खमेवपृथ्वीखंशैलाःखमेवदृढभित्तयः ॥ खमेवलोकाःस्पंदःखंसर्गसंवेदनंचितेः ॥ ६८ ॥ व्योमभित्तौजगच्चित्रंचिद्रंगमयमाततम् ॥ नोदेतिनास्तमायातिनशाम्यतिनताम्यति ॥ ६९ ॥ चिद्वारिणिजगत्तुंगतरंगद्रवरूपिणि ॥ किंनुवाकथमुत्पन्नंकिंशांतंचकदाकथम् ॥ ७० ॥ शांतेमहाचिदाकाशेजगच्छून्यत्वशालिनि ॥ चेत्यासंभवतःसंतिनोदयास्तमयौकुतः ॥ ७१ ॥

त्यागादानेस्याताम् यदातदुभयंप्रतिभासमात्रत्वादसत्तदातेअप्यसतीइत्याशयेनाह ॥ नेति ॥ प्रतिभातःप्रतिभासमात्रत्वात् ॥ ६५ ॥ एवंबुद्ध्यादेरपिस्वप्रतिभासकचैतन्यापेक्ष याद्वैतैक्ययोर्भेदाभेदयोरसंभवादनेनेदंक्रियतइत्यस्यव्यवहारस्यकारणत्वमप्यसत्तदर्थंपरमार्थवस्त्वेवयाति ॥ तस्यैवसंभवादित्यर्थः ॥ ६६ ॥ एवंब्रह्मणिकल्पमहाकल्पादयस्त त्रत्यक्रियागणाश्चनिर्हेतुकानिक्रमाएवसहेतुसंक्रमवत्प्रतिभासंतइत्याह ॥ अहेतुरिति ॥ मृतिजन्मादयःसत्वरादीर्घकालरहिताः ॥ ६७ ॥ तथाचसर्वंचिदाकाशएवेतिफलित मित्याह ॥ खमेवेति ॥ यतश्चितेःस्वात्मन्येवसर्गसंवेदनंनान्यत्रेत्यर्थः ॥ ६८ ॥ नताम्यतिनम्लायति ॥ ६९ ॥ ७० ॥ स्तांतर्हिचितएवजगदात्मनाउदयास्तमयौनेत्याह ॥ शांतेइति ॥ चेत्यासंभवतोयदाजगत्स्येवनसंतितदात्मनाचितउदयास्तमयौकुतःकस्मात्सिद्ध्यतइत्यर्थः ॥ ७१ ॥

यदितुमायाविलासदृशादृश्यतेतदासर्वस्यसर्वरूपतायथेच्छमुपपद्यतइत्याह ॥ पर्वताइति ॥ संवेदनस्यवासनावैचित्र्यानुसारिकल्पनालक्षणेनप्रयोगेणसंकल्पेन ॥ ७२ ॥ अतएवयोगसिद्धानामैच्छिकीविरुद्धकल्पनाक्षणात्सिद्ध्यतीत्याह ॥ संविदिति ॥ संविल्लक्षणंयत्सिद्धौषधचूर्णंतत्प्रयोगेण ॥ ७३ ॥ यथाप्रसिद्धेअंबरेआकाशेअनंतानिसिद्धसंकल्पकल्पितानिनगराणिपरस्परमसंलग्नान्यंतर्हितानिसंतितथाब्रह्मणिसर्गसहस्राणिसंति ॥ ७४ ॥ तत्रदृष्टांतमाह ॥ महार्णवेइति ॥ ७५ ॥ ७६ ॥ अन्योन्यमंतर्हितानामपिसिद्धलोकांतराणामिच्छयालोकनेयोगिनोयास्वोपाधेर्मूलचितिप्रविलापनेनपरचित्तानुप्रवेशद्वारातल्लोकानुप्रवेशलक्षणाप्राप्तिःसैवस्वसर्गात्सर्गांतरालोकनेपीतिविबुधानांविदुषामुक्तयः ॥ तथैवलीलोपाख्यानादौवर्णनादितिभावः ॥ ७७ ॥ एवंचसर्वप्राणिनांतद्भोग्यसर्गाणांचशाश्वतेब्रह्मण्येवविवर्त्तरूपास्थितिःफलितेत्याह ॥ अविनाशिनीति

पर्वतागगनायंतेगगनंपर्वतायते॥ संवेदनप्रयोगेणब्रह्मणःसर्गतास्थितौ ॥ ७२ ॥ संविच्चूर्णप्रयोगेणनिमेषार्द्धेनयोगिनः॥ कुर्वंतिजगदाकाशमाकाशंत्रिजगंतिच ॥ ७३॥ सिद्धसंकल्पनगराण्यसंख्यानियथांबरे॥ तथासर्गसहस्राणिसंतितानितुचिन्नभः॥ ७४ ॥ महार्णवेयथावर्त्ताअन्योन्यमपिमिश्रिताः॥ पृथगेवावतिष्ठंतेपयसोन्येचनैवते॥ ७५॥ महाचितिमहासर्गाअन्योन्यमपिमिश्रिताः॥ पृथगेवावतिष्ठंतेव्यतिरिक्तानतेततः॥ ७६ ॥ सर्गात्सर्गांतरालोकेयाप्रबुद्धस्ययोगिनः॥ सिद्धलोकांतरेप्राप्तिःसैवेतिविबुधोक्तयः॥ ७७॥ अविनाशिनिभूतानिस्थिनानिपरमेशिवे॥ व्योम्नीवशून्यतोल्लासाःसर्गवर्गानिरर्गलम्॥ ७८॥ परमार्थनिजामोदाःसहजाःसर्गविभ्रमाः॥ नोद्यंतिनोपशाम्यंतिलेखाइवशिलोदरे॥ ७९॥ अन्योन्यंकुसुमामोदामिलिताअप्यमीलिताः॥ व्योमरूपास्तथासर्गाअन्योन्यं सिद्धभूमयः॥८०॥ संकल्पाकाशरूपत्वात्सर्वानुभववत्स्थितेः ॥ तनुसंकल्पमोहानांसत्याश्चमननोक्तयः ॥ ८१ ॥ नज्ञानवादितासत्यानवाद्यानर्थवादिता॥ यथावेदनमेतानिवेदनानिफलंतिवः॥८२ ॥

॥ ७८ ॥ तथाचपरमार्थचिदाकाशस्यनिजामोदकल्पाःसर्गविभ्रमास्तत्स्वरूपाएवेतिनोत्पत्त्यादिरेषामस्तीत्याह ॥ परमार्थेति ॥ स्फटिकशिलोदरेदृश्यमानालेखारेखाइव ॥ ७९ ॥ सिद्धभूमयइवेतिशेषः ॥ ८० ॥ अतएवप्रपंचस्यस्थूलसंकल्पमोहानांपामराणांदृष्ट्यास्थूलानुभववत्स्थितिः सूक्ष्मसूक्ष्मतरसूक्ष्मतमसंकल्पमोहानांयोगिभेदानांदृष्ट्यासूक्ष्मादिभावेनस्थितिरितिसर्वानुभवानुसारित्वात्स्वस्वानुभवानुसारिण्यःसर्वेषामुक्तयःसत्याइत्याह ॥ संकल्पेति ॥ तनवःसूक्ष्माःसंकल्पामोहाश्चयेषांयोगिनांतेषांमननपूर्विकाजगत्सौक्ष्म्योक्तयश्चसत्याःनपामरानुभवविरोधेनासत्यामंतव्याइत्यर्थः ॥ ८१ ॥ अतएववादिभेदानांनानाविधकल्पनाअपितत्तद्वासनासंकल्पानुसारेणैवसत्याःनसर्वसंकल्पानुसारेणपरमार्थतोवेतितान्संबोध्याह ॥ नेति ॥ ज्ञानवादिताआंतरविज्ञानमात्रपरमार्थवादिता ॥ बाह्यादृश्यायेअनर्थादुःखहेतवोद्रव्यगुणकर्मादिसप्तपदार्थास्तन्मात्रवादितापिसत्या ॥ यथावेदनंयथासंकल्पंतत्तदर्थक्रियासमर्थतयाफलंति ॥ ८२ ॥

१ मिश्रिताअप्यमिश्रिताइत्यपिक्वचित्पाठः

कस्तर्हिप्रामाणिकःपक्षस्तमाह ॥ चितीति ॥ चित्त्वंत्रिपुटीप्रकाशनशक्तिः ॥ सबाह्याभ्यंतरोह्यजइत्यादिश्रुतेरितिभावः ॥ ८३ ॥ उक्तमनूद्यप्रकृतेयोजयन्नुपसंहरति ॥ कालइति ॥ सर्वाधारःकालस्तदंतर्गतानिजगंतिब्रह्मांडास्तदंतर्गतानिचतुर्दशभुवनानितदंतर्गताअहंत्वमित्यादयोभोक्तारस्तेषांभोगोपकरणभूतोऽक्षवर्गस्तानिशब्दस्पर्शादिभोग्यानितत्रचतथाविचित्रोभोगश्चेत्येतत्सर्वमीश्वरात्ममायिकसार्वज्ञ्यसर्वशक्त्यादिसंपन्नंपरमार्थतःशांतमेकंचिद्व्योमैव ॥ एवंखलुनिश्चितेकेचनरागादयोनसंभवंत्येवेत्ययमेवेच्छादिसर्वदोषजयेमुख्योपायइत्यर्थः ॥ ८४ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउ०सप्तत्रिंशत्तमःसर्गः ॥ ३७ ॥ ॥७॥ ॥ इहचिच्चेत्यसंसर्गभेदभ्रमनिरासतः ॥ चिदेवजगदित्येतत्सत्तैक्यैरुपपाद्यते ॥१॥ चेत्यस्यसर्वंजगतश्चिन्मात्रतांतर्कैरुपपादयिष्यन्भूमिकांरचयति ॥ चिदिति ॥ मिथ्यास्ववेदनंस्वस्याअब्रह्मताभ्रमस्ते

चितिचित्त्वंयदस्त्यंतर्जगदित्येवभाविते॥ भेदोद्रवत्वपयसोरिवनात्रोपपद्यते॥८३॥ कालोजगंतिभुवनान्यहमक्षवर्गस्त्वंतानितत्रच तथेतिचसर्वमेकम्॥ चिद्व्योमशांतमजमव्ययमीश्वरात्मरागादयःखलुनकेचनसंभवंति॥८४॥ ॥इ०वा०म०वा०दे०मो०नि० उ०दृश्योपदेशयोगोनामसप्तत्रिंशत्तमःसर्गः॥३७॥ ॥३७॥ ॥श्रीवसिष्ठउवाच॥ ॥चित्पश्यतिजगन्मिथ्यास्ववेदनविबोधिता॥व्योम्निमायांजनासिक्ताद्दृगिवाचलतांतरम्॥१॥ ब्रह्मसर्गश्चित्तसर्गौद्वावेतौसदृशौमतौ॥परमार्थस्वरूपत्वादक्षुब्धत्वात्सदैवच॥२॥ज्ञानरूपतयाबाह्यंबाह्यंचानुभवात्तथा॥ सत्यरूपमतःसत्यांविद्धिबाह्यार्थरूपताम्॥३॥बाह्यार्थवादविज्ञानवादयोरैक्यनेवनः॥वेदनात्मैकरूपत्वात्सर्वदासदसंस्थितेः॥४॥ अक्षुब्धखानिलालोकजलभूशांतिशालिनी॥ ततःशून्यामहारंभाब्रह्मसत्तैवसर्वतः॥५॥तस्मैसर्वंततःसर्वंतत्सर्वंसर्वतश्चतत्॥तच्चसर्वमयंनित्यंतस्मैसर्वात्मनेनमः॥६॥

नविबोधिताविक्षिप्ता ॥ यथामायादर्शनहेतुनांजनविशेषेणासिक्तादृक्चक्षुर्व्योम्निअचलतांपर्वतभावंतदांतरंनितंबप्रस्थशिखरदरीवनकुंजादिचपश्यतितद्वदित्यर्थः ॥ १ ॥ भ्रांतिकल्पितस्त्वयंसर्गश्चित्रसर्गवन्मनःकल्पनयैवक्षुब्धवद्भातिनवस्तुतइत्याह ॥ ब्रह्मेति ॥ २ ॥ अस्त्वेवंकिंततस्तत्राह ॥ ज्ञानेति ॥ यथाभित्तिस्थश्चित्रसर्गोवास्तवभित्तिरूपेणभित्तेरबाह्योभ्रांतानुभवात्मनातुतद्बाह्यस्तद्वज्ज्ञानेकल्पितःसर्गोपिवास्तवज्ञानरूपतयाअबाह्योभ्रांतानुभवात्मनातुबाह्यइतिसिद्धेज्ञानंसत्यरूपमित्यतोहेतोर्बाह्यार्थरूपतामपितदात्मनासत्यांविद्धीत्यर्थः ॥ ३ ॥ एवंचास्मन्मतंनबाह्यार्थवादेननापिविज्ञानवादेनविरुद्ध्यते ॥ अत्रोभयोरैकरस्यात् ॥ सर्वदाचिदतिरिक्तस्यांतरविज्ञातस्यबाह्यप्रपंचस्यचासतःअसंस्थितेःअनभ्युपगमादित्यर्थः ॥ ४ ॥ सर्वस्यचिदैक्येचितःसदैवाक्षुब्धत्वान्निर्विशेषत्वाच्चक्षुब्धानांखादिपंचभूतानांशांतिरर्थसिद्धेतिपूर्णब्रह्मसत्तामात्रपरिशेषःसिद्धइत्याह ॥ अक्षुब्धेति ॥ ५ ॥ तदेवंसर्वकारकक्रियाफलात्मकंजगद्ब्रह्मीभूतंनमस्यति ॥ तस्मैइति ॥ ६ ॥

व्यवहारकालेपिचेत्यस्यचिदैक्यापत्तिबलादेवसत्तास्फूर्तीनान्यथेत्याह ॥ चिन्मयत्वादिति ॥ घटादिचेत्यंब्रह्मचिन्मयत्वादेवद्रष्टृचिताचाक्षुषवृत्त्यवच्छिन्नप्रमातृचैतन्येनय
दावृत्तिव्याप्तिद्वाराएकतामेतितदादृश्यमंगंशरीरंयस्यास्तथाविधयैवतयाचिताएतद्घटादिचेत्यतेनान्यथेत्यर्थः ॥ ७ ॥ एवंद्रष्टातद्दर्शनसाधनंदृश्यंदृक्तत्फलंचेत्येतत्सर्वंचिदैक्या
धीनसिद्धिकत्वाद्यदाचिन्मात्रमेवतदासर्वस्यजगतोऽनुभवनमात्रमेवस्वरूपंपरमार्थतःस्थितंफलितमित्यर्थः ॥ ८ ॥ द्रष्टृदृश्ययोरैक्यसाधनानुग्राहकंतर्कमाह ॥ द्रष्टृदृश्येइति ॥
द्रष्टृदृश्येचिदात्मकेसाक्षिणियद्येकंनाभविष्यत्तर्हिइक्षुभक्षणेप्रवृत्तोनापुरुषइक्षुंदृष्ट्वाचोषयन्नपिउपलइवदृश्यस्यास्वादंतन्माधुर्यमज्ञोऽननुभवन्स्यात् नहिजडोरसमनुभ
वितुंशक्नोतिनवाजडोरसस्तंप्रतिस्फुरिष्यतियेनानुभवेदित्यर्थः ॥९॥ तयोश्चिन्मयत्वाभ्युपगमेत्वनुभवितृचितौचेत्यमनुभवनीयमप्सुपतितोजलबिंदुरिवतदनुप्रवेशेनमज्जतितेनहे
तुनाइक्षुमाधुर्यमास्वादयामीतित्रिपुट्याःस्फुरणानुप्रवेशेनानुभूतिर्भवतिसिद्ध्यतीत्यर्थः ॥ १०॥ व्यतिरेकेकाष्ठयोरिवेत्युक्तदृष्टांतसाम्यंदार्ष्टांतिकेउपपादयति ॥ सजातीयेति ॥

चिन्मयत्वाद्यदाचेत्यमेतिद्रष्टृचितैकताम्॥ तदादृश्यांगयैवैतच्चेत्यतेनान्यथाचिता॥७॥ यदाचिन्मात्रमेवेयंद्रष्टृदर्शनदृश्यदृक्॥ तदानु
भवनंतत्रसर्वस्यफलितंस्थितम्॥८॥ द्रष्टृदृश्येनयद्येकमभविष्यच्चिदात्मके॥ तद्दृश्यास्वादमज्ञःस्यान्नाद्दृष्टेक्षुमिवोपलः॥९॥ चिन्मय
त्वाच्चितौचेत्यंजलमप्स्विवमज्जति॥ तेनानुभूतिर्भवतिनान्यथाकाष्ठयोरिव॥१०॥ सजातीयैकताभावाद्यद्वत्काष्ठंनचेतते॥ दारुतद्वद
पिद्रष्टृदृश्यंनाज्ञास्यदाजडम्॥११॥ यादृक्सत्तानिकाष्ठानितादृग्रूपंत्वचेतनम्॥ जानंतिनेतरत्तस्माद्दृश्यंचिद्दृश्यचेतनम्॥१२॥ म
हाचिदात्मनैवास्तिजलानिलधराश्मतम्॥ नैतेषुस्पंदबुद्ध्यादिप्राणजीवाद्यभावतः॥१३॥ प्राणबुद्ध्यादयःसत्ताभावनावशतोगताः॥
भावनाचिच्चमत्कारःसययेच्छमुदेतिच॥१४॥ जगत्तयाशांततयाब्रह्मसत्तावतिष्ठते॥ पुंस्त्वयागतएवात्मारेतोवटकबीजयोः॥१५॥

57

काष्ठंकर्तृदारुद्वितीयंकाष्ठंकर्मयथाकाष्ठत्वेनसजातीयत्वेपिचिदैक्याभावाद्यद्वन्नचेततेतथाद्रष्टापिआजडंसर्वथाचिदैक्यशून्यंदृश्यंनाज्ञास्यत्॥११॥ नचद्रष्टृदृश्ययोर्जडत्वेका
ष्ठद्वयाद्विशेषंकेचिज्जानंतीत्याह ॥ यादृगिति ॥ यादृशीसत्तास्थितिर्येषांतानि ॥ इतरद्वैलक्षण्यंतुनजानंतिकेचिदपीत्यर्थः ॥ तस्मादुक्ततर्कबलादृश्यंसर्वंचिद्रूपेणैवद्रष्टादृश्यंचे
तनंचिदभिन्नंचेतिसिद्धमित्यर्थः ॥ कर्मधारयः ॥ १२ ॥ एवंद्रष्टृदृश्ययोश्चिद्रूपत्वेदृश्येजगतिधरानिलजलादिभेदापगमाद्दृष्टेरिचस्पंदबुद्धिप्राणादिभेदापगमात्सर्वस्यजगतोब्र
ह्मैक्यमेवसिद्धमित्याह ॥ महाचिदात्मनेति ॥ अश्मतांतसमाहारद्वंद्वेनपुंसकह्रस्वः ॥ १३ ॥ भावनाकल्पितत्वादपिप्राणादिभेदानांमिथ्यात्वमित्याह ॥ प्राणेति ॥ १४ ॥ ब्र
ह्मसत्ताविवर्तमात्रत्वादपिजगद्भेदानांमिथ्यात्वमित्याह ॥ जगत्तयेति ॥ शांततयासुषुप्तिप्रलयात्मना ॥ एवेत्यप्रआइवेतिच्छेदः॥ पुंस्त्वयाप्रसवशक्ततयाआगतःआक्रांतः ॥ व
टएववटकः ॥ १५ ॥

तत्रवटबीजेपुंस्त्वाकांतंसूक्ष्ममविकृतंब्रह्मसत्ताकंभागंतत्रवटादिविवर्तंचदर्शयति ॥ सर्वांग्रेति ॥ अग्रशब्दःसारपरः ॥ योयोग्रगतोणुकोऽतिसूक्ष्मःसस:परमात्मा ॥ सएवांकुरकांडशाखादौतत्तदुत्तरोत्तरकार्येपुरोभूयापंबीजंचभवतीत्यर्थः ॥ १६ ॥ तत्रयोयोयस्मात्सूक्ष्मःकारणतयाप्रसिद्धःससब्रह्मकोटीयश्चस्थूलःकार्यात्मनाप्रसिद्धःसमायाकोटौमिथ्येत्युपलक्षयेदित्याशयेनाह ॥ ब्रह्मेति ॥ एवमुपलक्षितेसर्वत्रवस्तुब्रह्मतिष्ठतिनान्यदित्यर्थः ॥ १७ ॥ यथाघटादेरेकैकद्रव्यमामूलापंतदेवद्रव्यंनाणुमात्रमपितदन्यदस्तितथासर्वंजगदामूलापंयेनयेनपुरुषेणयथायथापरीक्ष्यदृष्टंसन्मात्ररूपंब्रह्मैवनाणुमात्रमपितदन्यदस्तीत्यर्थः ॥ १८ ॥ अविकारित्वेपिदृष्टांतमाह ॥ हेमत्वमिति ॥ सर्गोजगद्भावः अहंत्वंजीवभावस्तद्गणे ॥ १९ ॥ तस्यविवर्तैरलेपमाह ॥ पार्श्वस्थेति ॥ २० ॥ व्योम्नोयापंकतामलिनताकल्पितायाचगंधर्वपुत्रकाणांपताकिनीसेनासायथाखमेव ॥

सर्वाग्राणुमयेबीजेयोस्मादग्रगतोणुकः ॥ ससतत्तद्भवत्यग्रंबीजंस्वात्मनिसंस्थितः ॥ १६ ॥ ब्रह्मसर्वपराण्वात्मायोयस्मादग्र्यतोणुकः ॥ ससतत्तद्भवेद्वस्तुवस्तुब्रह्मैवतिष्ठति ॥ १७ ॥ द्रव्यमेवयथाद्रव्यंतिर्यगूर्ध्वमधस्तथा ॥ सर्वमेवतथाब्रह्मयेनतेनयथातथा ॥ १८ ॥ हेमत्वमेवनान्यत्वंहेमरूपशतेयथा ॥ शांतत्वमेवशांतस्यसर्गाहंत्वगणेतथा ॥ १९ ॥ पार्श्वस्थस्वप्नमेघौघायथातवनकाश्चन ॥ सर्गप्रलयसंरंभास्तथाखात्मानएवमे ॥ २० ॥ पंकताकल्पिताव्योम्नोयापुत्रकपताकिनी ॥ सायथाशांततामात्रंखमेवेदंतथाजगत् ॥ २१ ॥ संकल्पभ्रमएवांतःपुष्पीभूयजगत्स्थितम् ॥ जलावनितलक्लिन्नबीजंकल्पइवद्रुमः ॥ २२ ॥ अनहंतात्मनोज्ञस्यसतएकत्वमासतः ॥ जरत्तृणलवायंतेननुनामाणिमादयः ॥ २३ ॥ त्रैलोक्यतन्नपश्यामिसदेवासुरमानुषम् ॥ एकरोमांशविश्वस्ययल्लोभायमहात्मनः ॥ २४ ॥ यथातथास्थितस्यापियत्रतत्रगतस्यच ॥ द्वैतसंकल्पसंदोहानसंत्यधिगतात्मनः ॥ २५ ॥ विश्वमेवनभोयस्यशून्यंसर्वमहात्मनः ॥ कुतःकस्यकथंतस्यभवत्विच्छानिरात्मनः ॥ २६ ॥ शांताशेषविशेषस्यनिरेषणविशेषतः ॥ सत्तामसत्तांसदृशौकआकलयितुंक्षमः ॥ २७ ॥ मारैर्नकिंचिन्म्रियतेजीवैःकिंचिन्नजीवति ॥ शुद्धसंविन्मयस्यास्यसमालोकस्यखस्यच ॥ २८ ॥

॥ २१ ॥ हृदयांतःपुष्पीभूयबहिर्जगत्फलंस्थितम् ॥ यथाजलेनावनितलेक्लिन्नमार्द्रीभूतंवटादिबीजंकल्पतेछायाश्रयादिनाप्राण्युपकारसमर्थोभवतीतिकल्पोमहान्वटादिद्रुमःसंपद्यतेतद्वत् ॥ २२ ॥ ननुयदिपरमसूक्ष्मंब्रह्मतद्भावस्थितिरेवमोक्षस्तर्ह्यणिमादिसिद्धिभिरसौतुल्यइत्याशंकांवारयति ॥ अनहंतात्मनइति ॥ अहंतादिप्रतिबंधनिरासेनाविर्भूतनिरतिशयानंदस्यज्ञस्यदृष्ट्येत्यर्थः ॥ २३ ॥ एकोरोमांशइवविश्वंयस्यतथाविधस्यमहात्मनः ॥ २४ ॥ २५ ॥ निरात्मनोनिःस्वरूपाद्भोगादिनिमित्तात् ॥ २६ ॥ सत्तांविभवंअसत्तांदारिद्र्यंचसदृशौसमेपश्यतःकआकलयितुंक्षमोमहिमानमितिशेषः ॥ २७ ॥ बंधुपुत्रादिमरणजीवनादिनापिनास्यहर्षविषादप्रसक्तिरित्याशयेनाह ॥ मारैरिति ॥ मारैर्मरणहेतुभिर्जीवैर्जीवनहेतुभिः ॥ २८ ॥

---

१ बीजंचस्वात्मनिस्थितइत्यपिक्वचित्पाठः     २ अलेपइतिपाठइतिभाति ॥

लोकस्याज्ञजनस्यभ्रांत्यामृगतृष्णानदीतटप्रायेभ्रांतिभाज्यात्मनिमिथ्यैवमरणजन्मनीकचतः ॥ २९ ॥ यावदस्माभिःसम्यक्परीक्षितंतावन्नभ्रांतिर्नवापरीक्षकानवाजन्मम रणेसंतीत्यर्थः ॥ ३० ॥ नपरीक्षकाइतिकथमुच्यतेतत्त्वविदःपरीक्षकस्याबाधात्तत्राह ॥ दृश्यादिति ॥ ब्रह्मभावेनसन्नपिदेहेंद्रियादिसहितपरीक्षकात्मनाअसदाभासइत्यर्थः ॥ ३१ ॥ ब्रह्मात्मनासंतमेवदीपनिर्वाणमिवनिर्वाणंविदुः ॥ ३२ ॥ अतएवतस्यनसंसारःस्वदतेइत्याह ॥ आबुद्ध्यादीति ॥ ३३ ॥ तत्त्वज्ञश्चेद्दीपवन्निर्वाणस्तर्हित्वंवसिष्ठःकथ मसितत्राह ॥ अहमिति ॥ ३४ ॥ अभावःकुतस्तत्राह ॥ संविदिति ॥ वास्तवंचिदंबरमेवस्वसंविदोऽन्यथासंवेदनादेवबुद्ध्याद्याकारवत्स्थितंसत् ॥ ३५ ॥ ममेवयथार्थसंवेदने नभ्रांतिनाशेसर्वार्थरिक्तमनसस्तवापिनिर्वाणरूपैवस्थितिःसेत्स्यतीत्याह ॥ सर्वार्थेति ॥ ३६ ॥ सर्वमाचरणंप्रपंचयति ॥ यदिति ॥ ३७ ॥ आचरणग्रहणंजगन्मात्रोपलक्षण

मिथ्यालोकस्यकचतोभ्रांत्यामरणजन्मनी॥असत्यपिभ्रांतिभाजिमृगतृष्णानदीतटे॥२९॥सम्यक्परीक्षितंयावन्नभ्रांतिर्नपरीक्षकाः ॥ननामजन्ममरणेकेवलंशांतमव्ययम् ॥ ३० ॥ दृश्याद्योविरतिंयातआत्मारामःशमंगतः॥ससन्नेवासदाभासःपरितीर्णभवार्णवः ॥ ३१ ॥ दीपनिर्वाणनिर्वाणमस्तंगतमनोगतिम् ॥ आत्मन्येवशमंयातंसंतमेवामलंविदुः॥ ३२ ॥ आबुद्ध्यादिजगद्दृश्यंयस्मैनस्वदते स्वतः॥ आकाशस्येवशांतस्यतमाहुर्मुक्तमुत्तमाः॥३३॥ अहमस्यविचारेणविचारेणाहमस्तिनो॥ अभावादहमर्थस्यक्कजगत्क्कचसं सृतिः॥ ३४ ॥ संवित्संवेदनादेवबुद्ध्याद्याकारवत्स्थितम् ॥रूपालोकमनोरूपंजगद्धेत्तिचिदंबरम् ॥ ३५ ॥ सर्वार्थरिक्तमनसःसतःस र्वात्मनस्तव॥सर्वथासर्वदासर्वंसर्वमाचरणंशिवम्॥ ३६ ॥ यत्करोषियदश्नासियज्जुहोषिददासियत्॥ यत्तपस्यसिहंस्येपितत्सर्वंशि वमव्ययम्॥ ३७॥ यदहंयत्त्वमाशायद्यत्क्रियाकालखादयः॥ यल्लोकालोकगिरयस्तच्चिद्व्योमशिवंततम् ॥ ३८॥ यद्रूपालोकमननंय त्कालत्रितयंजगत्॥ यज्जरामरणात्यादितन्महाचिन्नभःशिवम्॥ ३९ ॥ निश्चिकित्सोनिराभासोनिरिच्छोनिर्मनामुनिः॥ भूत्वानिरा त्मानिर्वाणस्तिष्ठसंतिष्ठसेयथा॥ ४० ॥ गतेच्छमननंशांतमनंतस्थमभावनम् ॥ व्यवहारोस्तुतेमावास्पंदास्पंदैर्यथानिलः॥ ४१ ॥ नि र्वासनानिष्कलनाशांतापुरुषतास्तुते॥ शास्त्रेणयंत्रवाहेनवात्यादारुमयीयथा ॥ ४२ ॥ भूतालोकस्तुमास्नेहोमावास्नेहश्चवास्त्वगः॥ अनिर्देशधरालोकश्चित्रदीपवदास्यताम्॥ ४३॥

मित्याशयेनाह ॥ यदिति ॥ आशाइच्छादिशश्च ॥ ३८ ॥ ३९ ॥ निश्चिकित्सोदुःखप्रशमोपायान्वेषणशून्योनिर्विचिकित्सोवा ॥ निर्विकल्पइतिपाठःस्पष्टः ॥ यथानिर्वा णःसंतिष्ठसेतथातिष्ठ ॥ ४० ॥ यथाअनिलःअनिलसंबंधीस्पंदास्पंदैर्व्यवहारस्तथातेतवाप्यस्तु ॥ ४१ ॥ पुरुषतापुरुषोचितचेष्टातेशास्त्रलक्षणेनयंत्रवाहेनवासनानिर्वासास्तु ॥४२॥ हेरामतवबांधवगोमातृपितृबंधुजनादिभूतानामालोकनमालोकआस्नेहःस्नेहबहुलोमाभूत्अस्नेहोवामाभूत्किंतुअनिर्देशधरःअस्तिनास्तीतिपरीक्षकैर्निर्देष्टुमशक्यआ लोकःप्रकाशोयस्यतथाविधोऽस्तु ॥ एवंचत्वयाचित्रदीपवदास्यतांस्थीयताम् ॥ तस्यापिहिचित्रलिखिततैलपूर्णत्वात्परमार्थतस्तैलाभावाच्चभूतानांप्राणिनामालोकनमालो कआस्नेहःस्नेहबहुलःअस्नेहस्तच्छून्यश्चनभवति ॥ आलोकःप्रकाशश्चचित्रलिखितःअस्तिनास्तीतिनिर्देशार्होनभवतीतिसाम्यादित्यर्थः ॥ ४३ ॥

१ निर्ममइत्यपिक्वचित्पाठः

निर्वासनानिष्कलनेतिश्लोकार्थमेवपुनरनुवादेनदृढीकुर्वन्नुपसंहरति ॥ निर्वासनस्येति ॥ वर्त्तमानभोगेषुविरसस्य ॥ भाविषुनिरेषणस्य ॥ शास्त्रात्सच्छास्त्रात् ॥ तत्त्वेस्वसुखे विनोदोविश्रांतिस्तद्धेतुः ॥ आदेहधारणमवश्यभावित्वादवर्जनीयेव्यवहारेसच्छास्त्रानुसरणेएवचित्तदोषनिर्हरणेनविवेकायुद्बोधनेनचतत्त्वज्ञानप्रतिष्ठासिद्धेरितिभावः ॥ अतः अनभिसंधिमतःअतएवामलस्यापितस्यतत्त्वविदःसंवेदनपूर्वकव्यवहारेषुशास्त्रार्थेस्वस्ववर्णाश्रमोचिताचारेशमदमादौचसज्जनंसम्यगनुवर्त्तनमेवस्वरूपमसाधारणंलक्षणंनय थेष्टाचरणमित्यर्थः ॥ तथाचाहुर्वृद्धाः ॥ विदितब्रह्मतत्त्वस्ययथेष्टाचरणंयदि ॥ शुनांतत्त्वदृशांचैवकोभेदोशुचिभक्षणेइति ॥ ४४ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशे निर्वाणप्रकरणेउ०अष्टत्रिंशत्तमःसर्गः ॥ ३८ ॥ ॥ ७ ॥ ॥ प्रबुद्धात्मनिविश्रांतोयद्रूपःपरिशिष्यते ॥ जगच्चतस्ययद्रूपंतत्सम्यगिहवर्ण्यते ॥ १ ॥ विदुषःशास्त्रानुसारनिय मेतन्नियामकसंकल्पस्यापिप्रसक्तिमाशंक्याह ॥ संजातेति ॥ संजातोयथाभूतार्थगोचरत्वादकृत्रिमःक्षीणासंसृतिर्यस्मात्तथाविधःप्रत्ययःसाक्षात्कारोयस्यतथाविधःपुमा न्शास्त्रीयव्यवहारनियमेप्यसंकल्पएवावतिष्ठते ॥ यतोयंतत्तद्व्यवहाराभासहेतुसंकल्पाभासंस्वात्मैवेतिपश्यन्संकल्पंनवेत्ति ॥ नचवेदनमंतरेणकस्यचित्सत्ताप्रसिद्धेतिससंक

निर्वासनस्यविरसस्यनिरेषणस्यशास्त्रादृतेकइवतत्त्वविनोदहेतुः॥ शास्त्रार्थसज्जनमतोप्यमलस्यतस्यसंवेदनेष्वनभिसंधिमतःस्वरूप म्॥ ४४ ॥ ॥इ०वा०महारामायणेवा०दे०मो०निर्वाण०उ०निर्वाणवर्णनंनामाष्टत्रिंशत्तमःसर्गः॥ ३८ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउ वाच॥ संजाताकृत्रिमक्षीणसंसृतिप्रत्ययःपुमान्॥ असंकल्पोनसंकल्पंवेत्तितेनासदेवसः॥१॥ श्वासान्म्लानिरिवादर्शेकुतोप्यहमि तिस्थिता॥ विद्धिसाऽकारणंदृष्टानश्यंत्याशुनलभ्यते॥ २॥ यस्यक्षीणावरणताशांतसर्वेहतोदिता॥ परमामृतपूर्णात्मासत्तयैवसराज ते॥ ३॥ सर्वसंदेहदुर्ध्वांतमिहिकामातरिश्वना॥ भातिभास्वद्धियादेशस्तेनपूर्णेंदुनेवखम्॥ ४॥ विसंसृतिर्विसंदेहोलब्धज्योतिर्निराव तिः॥ शरदाकाशविशदोज्ञेयोविज्ञायतेबुधः॥ ५॥ निःसंकल्पोनिराधारःशांतःस्पर्शात्पवित्रताम्॥ अंतःशीतलआधत्तेब्रह्मलोकादि वानिलः॥ ६॥ असद्रूपोपलंभानामियंवस्तुस्वभावता॥ यत्स्वर्गवेदनंस्वप्नवंध्यापुत्रोपलंभवत्॥ ७॥

ल्पाभासोऽसदलीकमेवेत्यर्थः ॥ १ ॥ नसंकल्पंवेत्तीत्युक्तेर्विवरणायसर्वसंकल्पबीजस्याहंताध्यासस्यबाधादपितस्यनसंकल्पप्रसक्तिरित्याशयेनाह ॥ श्वासादिति ॥ भाम्बो धात्कुतोप्यनिर्वचनीयान्निमित्तान्निःश्वासोत्थाआदर्शेम्लानिरिवअहमित्यहंतास्थिता सातत्त्वविदिअकारणमाशुनश्यंतीदृष्टायत्नेनान्विष्टापिनलभ्यते ॥ २ ॥ कामनयाहि संकल्पप्रसक्तिःसाचपूर्णकामस्यनास्तीत्याशयेनाह ॥ यस्येति ॥ सत्तयानिरतिशयानंदस्वरूपसत्तयैव ॥ ३॥ एकलाभादेवसर्वलाभाल्लब्धव्यविषयइवएकविज्ञानेनैवसर्ववि ज्ञानाज्ज्ञातव्यविषयेपिभ्रमसंशयाद्यभावात्तदर्थमपितस्यनसंकल्पप्रसक्तिरित्याशयेनाह ॥ सर्वेति ॥ भास्वतीनिरावरणात्मकप्रकाशाधीर्यस्यतेनातएवसर्वेषांदेहलक्षणानांदु र्ध्वांतनिमित्तमिहिकानांमातरिश्वना ॥ तद्देशस्थसर्वजनभ्रमसंशयनिराससमर्थस्यतद्व्यसत्त्यभावादितिभावः ॥ ४ ॥ यतोबुधस्तत्त्ववित्शिवमद्वैतंचतुर्थंमन्यंतेसआत्मासविज्ञे यइत्यादिश्रुतिषुज्ञेयआत्मैवेतिविज्ञायतइत्यर्थः ॥ ५ ॥ स्पर्शात्प्रणतिशुश्रूषादिनासंगमात् ॥ जनानांपवित्रतांनिष्पापताम् ॥ ब्रह्मलोकादागतःअनिलइव ॥ ६ ॥ नसंकल्पं वेत्तीत्येतद्विशदीकृत्यतेनासदेवसइतितच्छेषंविशदीकर्त्तुमसद्रूपोपलंभस्यस्वरूपंप्रपंचयति ॥ असद्रूपेतिचतुर्भिः ॥ ७ ॥

॥ ८ ॥ स्वप्नवंध्यापुत्रोपलंभवदित्युक्तदृष्टांतसाम्यंदर्शयति ॥ असत्येष्विति ॥ कुतोभवेत्किंसत्यादुतासत्यात् ॥ नतावत्सत्यात् तस्यकूटस्थत्वात् ॥ नद्वितीयः ॥ असत्यादसत्यस्योत्पत्तेरप्यसत्त्वापत्तेः ॥ एवंकआस्तांसत्यस्यासंगाद्वयत्वादसत्यस्याधारत्वायोगादितिभावः ॥ अतःअसत्येष्वेवसंसारेषुसर्गस्यबंधस्यतदपवर्गस्यचशब्दावेवयत्रवंध्यासुतोपमौतत्रदूरेतदर्थसिद्धिरित्यर्थः ॥ ९ ॥ यदातुजगत्सत्यमितिपक्षस्तदापिसब्रह्माभेदेनैवनिर्वाह्यइत्युत्पत्तिस्थितितन्निरूपकादिविभागोनिरालंबनएवेत्याह ॥ जगदिति ॥ अभावितंभावनयाअविषयीकृतम आधारविशेषेअनिष्ठितंच ॥ अन्यथाब्रह्मतानभ्युपगमेतु ॥ १० ॥ असद्रूपोपलंभस्वभावमुपवर्ण्यसद्रूपोपलंभस्वरूपविश्रांतिर्वस्तुस्वभावंप्रपंचयति ॥ आत्मेत्यादिना ॥ अनुपलंभतानिर्विषयचिन्मात्रतेतियावत् ॥ ११ ॥ चितोनिर्विषयतायाअप्रसिद्धिमाशंकमानंप्रतिदेशाद्देशांतरप्राप्ताविति श्लोकेदर्शितांतत्प्रसि

अविद्यमानमेवेदंजगद्यदनुभूयते ॥ असद्रूपोपलंभस्यसैषावस्तुस्वभावता ॥ ८ ॥ असत्येष्वेवसंसारेष्वास्तामर्थःकुतोभवेत् ॥ सर्गापवर्गयोःशब्दावेववंध्यासुतोपमौ ॥ ९ ॥ जगद्ब्रह्मतयासत्यमनिर्मितमभावितम् ॥ अनिष्ठितंचान्यथातुनाहंनावगतंचतत् ॥ १० ॥ आत्मस्वभावविश्रांतेरियंवस्तुस्वभावता ॥ यदहंतादिसर्गादिदुःखाद्यनुपलंभता ॥ ११ ॥ क्षणाद्योजनलक्षांतंप्राप्तेदेशांतरेचितः ॥ चेतनेयस्यतद्रूपंमार्गमध्येनिरंजनम् ॥ १२ ॥ अस्पंदवातसदृशंखकोशाभासचिन्मयम् ॥ अचेत्यंशांतमुदितंलताविकसनोपमम् ॥ १३ ॥ सर्वस्यजंतुजातस्यतत्स्वभावंविदुर्बुधाः ॥ सर्गोपलंभोगलतितत्रस्यस्यविवेकिनः ॥ १४ ॥ सुषुप्तेस्वप्नधीर्नास्तिस्वप्नेनास्तिसुषुप्तधीः ॥ सर्गनिर्वाणयोर्भ्रांतीसुषुप्तस्वप्नयोरिव ॥ १५ ॥ भ्रांतिवस्तुस्वभावोसौनस्वप्नोनसुषुप्तता ॥ नसर्गोनचनिर्वाणंसत्यंशांतमशेषतः ॥ १६ ॥ भ्रांतिस्त्वसन्मात्रमयीप्रेक्षिताचेन्नलभ्यते ॥ शुक्तिरूप्यमिवासत्यंकिलसंप्राप्यतेकथम् ॥ १७ ॥ यन्नलभ्यंचतन्नास्तितेनभ्रांतेरसंभवः ॥ स्वभावाद्रुपलंभोन्योनास्तिकस्यनकस्यचित् ॥ १८ ॥ स्वभावएवसर्वस्मैस्वदतेकिलसर्वदा ॥ अनानैवहिनानेवकिंवादैस्संविभाव्यताम् ॥ १९ ॥ अस्वभावेमहद्दुःखंस्वभावेकेवलंशमः ॥ इतिबुद्ध्याविचार्यांतर्यदिष्टंतद्विधीयताम् ॥ २० ॥

द्धिस्मारयति ॥ क्षणादिति ॥ शाखादिदेशाच्चंद्रादिदेशांतरेयोजनलक्षांतंचक्षुर्द्वाराप्राप्तेचेतनेचाक्षुषवृत्त्यवच्छिन्नचैतन्येमार्गमध्येअयतेप्याभोतीत्ययस्यचैतन्यस्ययद्वेत्यंखकोशाभासचिन्मयंरूपंसर्वस्यजंतुजातस्यप्रसिद्धंतत्स्वभावंविदुरितिव्यवहितेनसंबंधः ॥ १२ ॥ १३ ॥ १४ ॥ सुषुप्तिस्वप्नयोःपरस्परविषयशून्यतेववःतुरीयेनिर्विषयताचितस्संभावनीयेत्याह ॥ सुषुप्तेइति ॥ १५ ॥ स्वप्नसुषुप्त्यादिविभागोपिभ्रांतौवस्तुस्वभावभूतःपरमार्थोनास्तीत्याह ॥ भ्रांतीति ॥ १६ ॥ कुतोनास्तितत्राह ॥ भ्रांतिरिति ॥ १७ ॥ भ्रांतिर्विषयोर्थोभ्रांत्यानलब्धोप्युपलंभांतरेणलभ्यतांतत्राह ॥ स्वभावादिति ॥ भ्रांतिरन्यउपलंभःप्रमात्मकोवाच्यःसचकस्यचिद्भ्रांतिगोचरार्थस्यसाक्षिस्वभावादन्योनास्तीत्यर्थः ॥ १८ ॥ एवंचसम्यग्विभावनेसाक्षिस्वभावएकएवस्वात्मनित्रिपुटीकल्पनयाप्रथतेनान्यदस्मादणुमात्रमपीत्याह ॥ स्वभावइति ॥ स्वदतेपरमप्रेमास्पदतयाप्रथते ॥ १९ ॥ तस्यस्वभावातिरिक्तकल्पनमेवसंसारदुःखमकल्पितस्वरूपावस्थितिरेवकैवल्यसुखमित्याह ॥ अस्वभावेइति ॥ विधीयतांउपादीयताम् ॥ २० ॥

तदुपादानेकउपायइतिचेत्तदध्यस्तस्यविश्वस्यतन्मात्रतादर्शनमेवेत्याशयेनोत्पत्तिप्राक्कालादारभ्यतदपृथक्सत्तांदर्शयति ॥ सूक्ष्मेइति ॥ अगोवृक्षः ॥ उत्तमानांतत्त्वविदांवेदानांचसंकथासदुक्तिरित्यर्थः ॥ २१ ॥ एवंप्रत्यगात्मन्याध्यात्मिकभावानामप्यपृथक्सत्तैवस्वधर्मताप्रतीतेःसर्वानुभवसिद्धेत्याह ॥ रूपेति ॥ २२ ॥ एवंतत्पदार्थव्यवहारःसर्गादिस्त्वंपदार्थव्यवहारश्चचिदात्मापृथक्सत्ताकत्वात्तदवयवप्रायैःसर्वपदार्थैःप्रवृत्तइत्याह ॥ मूर्त्तइति ॥ स्वसदृशैःस्वात्मप्रायैःस्वापृथक्सत्ताकैरितियावत् ॥ २३ ॥ अर्थव्यवहारइवशब्दप्रयोगादिव्यवहारोप्यपृथक्सत्तयाचिदधिष्ठितादेवदेहवागादेर्जायतेइत्याह ॥ आत्मस्थादिति ॥ असंस्कृतेर्जडत्वेनस्वतोव्यवहारासमर्थादस्मदादेर्वसिष्ठरामादिदेहाद्योऽहमित्यादिरर्थप्रकाशनाभिप्राययुक्तःशब्दोजिह्वादिकरणव्यापारेणजायतेसआत्मस्थाच्चिदात्माधिष्ठितादेवजायते ॥ नटीपदक्रमतालाभिज्ञवादकपुरुषाधिष्ठितेषुपटहादिषुयथातदभिप्रायानुसारिविचित्रशब्दोजायतेतथेतिशेषः ॥ २४ ॥ एवंसर्वजगद्व्यवहारस्यचिदभेदनिर्वाह्यत्वेआत्यंतिकएवाभेदोस्तुकिमर्धजरतीयेनाविचारमात्रसिद्धजा

सूक्ष्मेबीजेस्त्यगःस्थूलोदृष्टमित्युपपद्यते॥ शिवेमूर्त्तेजगन्मूर्त्तमस्तीत्युत्तमसंकथा ॥ २१ ॥ रूपालोकमनस्कारबुद्ध्यहंतादयःपरे॥ स्वरूपभूताःसलिलेद्रवत्वमिवखात्मकाः ॥ २२ ॥ मूर्त्तोयथास्वसदृशैःकरोत्यवयवैःक्रियाः ॥ आत्मभूतैस्तथाभूतैश्चिदाकाशमकर्त्तृसन् ॥ २३ ॥ आत्मस्थादहमित्यादिरस्मदादेरसंस्कृतेः॥ शब्दोर्थभावमुक्तोयःपटहादिषुजायते ॥ २४ ॥ यद्भातंप्रेक्षयानास्तितन्नास्त्येवनिरंतरम् ॥जगद्रूपमरूपात्मब्रह्मब्रह्मणिसंस्थितम् ॥२५॥ येषामस्तिजगत्स्वप्नस्तेस्वप्नपुरुषामिथः॥ नसंतित्वात्मनिमिथोनास्मास्वंबरपुष्पवत् ॥२६॥मयिब्रह्मैकरूपंतंशांतमाकाशकोशवत्॥ वायोःस्पंदैरिवाभिन्नैर्व्यवहारैश्चतन्मयि ॥२७॥ अहंतुसन्मयस्तेषांस्वप्नःस्वप्नवतामिव ॥ तेतुनूनमसंतोमेसुषुप्तस्वप्नकाइव ॥ २८ ॥ तैस्तुयोव्यवहारोमेतद्ब्रह्मब्रह्मणिस्थितम् ॥ तेयत्पश्यंतिपश्यंतुतत्तैरलमलंमम ॥२९॥

ड्यांशभेदोपगमेनेत्याशयेनाह ॥ यदिति ॥ आपाततोभातम् ॥ प्रेक्षयाविचारजन्यतत्त्वज्ञानेन ॥ अतोजाड्यभेदांशरूपंजगद्रूपमरूपात्मनिःस्वरूपमेव ॥ एवंचब्रह्मब्रह्मणिस्वस्वभावेसंस्थितम् ॥ सैवास्यस्वरूपावस्थितिरितिभावः ॥२५॥ नन्वसंसारिब्रह्मब्रह्मस्वभावेतिष्ठतुनामतेनसंसारिणांकोलाभइत्याशंक्यतेषांपुरुषार्थचिंतावंध्यायाःस्वपुत्रराज्यादिलाभचिंतावद्व्यर्थैवेत्याशयेनाह ॥ येषामिति ॥मिथःअन्योन्यंभ्रांतिदृष्ट्यापिजागरेस्वप्नांतरेचतत्तदात्मनिनसंतिमिथःपरमैकांततमब्रह्मभूतेष्वस्मासुखपुष्पवन्नतरांसंतीत्यर्थः॥ एवार्थेहिशब्दः ॥ २६ ॥ अस्मासुजडांशेएवतेतद्व्यवहाराश्चखपुष्पवत् सच्चिदंशेतुमयिब्रह्मैकरूपत्वात्संत्येवेत्याह ॥ मयीति ॥ तेपुरुषाःवायुस्पंदवत्स्वाभिन्नैस्तैस्तैःस्वव्यवहारैःसहमयिसंत्येवयतस्तदुभयंशांतंसद्ब्रह्मात्मैकरूपंतच्चब्रह्ममयिप्रत्यगात्मस्वभावेऽस्तीत्यर्थः ॥ २७ ॥ अपरंविशेषमाह ॥ अहंत्विति ॥ अप्रबुद्धदृष्ट्याजगतइववसिष्ठदेहस्यापिसत्यत्वादितिभावः ॥ तेत्विति ॥ प्रबुद्धदृष्ट्याजगतासहतद्देहादीनांबाधादितिभावः ॥ २८ ॥ अनुपहोपदेशादिव्यवहारस्तैस्तद्दृष्टिसिद्धसत्यभावैर्मद्व्यवहारैर्ममअलमलमितिवीप्साआत्यंतिकनिष्प्रयोजनताद्योतनाय ॥ २९ ॥

अहंआत्मनिवसिष्ठदेहभावेनैवास्मि ॥ इयंवसिष्ठाद्याकारात्वदर्थैब्रह्मसत्तैवसमुदेतीव ॥ इयंवागपितथारूपात्वदर्थैब्रह्मसत्ताविवर्त्तरूपैव ममदृष्ट्यातुनास्त्येवेत्यर्थः ॥ ३० ॥ सर्वंवस्तूनामानंदैकरसात्मतादर्शनादविरुद्धंविरुद्धंदुःखादिकमपियस्यतथाविधस्यतत्त्वविदः ॥ ३१ ॥ मोहादविरुद्धनिरतिशयानंदात्मापरिज्ञानादितिप्रसिद्धाइयंसंसारकदर्थना मोक्षोपायक्रमाभ्यासकदर्थनाच ॥ ३२ ॥ अभावस्यासतएवदुःखस्योपशमरूपिणि ॥ ३३ ॥ अप्सुपतितःअप्पतितस्तैलबिंदुर्यथानानावर्णचक्रंभवति ॥ ३४ ॥ ज्ञानबाधितंतुजगत्स्वप्नवत्स्मृतिमात्रयोग्यतामापद्यतइत्याह ॥ जाग्रतीति ॥ स्मृतौप्रतिभासमानायादृग्प्रसायादृग्विधा ॥ ३५ ॥ तेनप्रागुक्तेनैवभूमिकाभ्यासयोगेन॥तज्जगज्जालम्॥ तनुतामपक्षयम् ॥ ३६ ॥ प्रत्यक्प्रवणदृष्ट्यापरीक्षणेइदानीमपितदपक्षयोबाधश्चानुभवितुंशक्यइत्याशयेनाह ॥ यदायदेति ॥ गलतिअपक्षीयतेआत्यंतिकबाधेन ॥ नस

अहमात्मनिनैवास्मिब्रह्मसत्तेयमातता॥ त्वदर्थंसमुदेतीवतथारूपैववागियम् ॥ ३० ॥ अविरुद्धविरुद्धस्यशुद्धसंविन्मयात्मनः ॥ न भोगेच्छानमोक्षेच्छाहृदिस्फुरतितद्विदः ॥ ३१ ॥ स्वभावमात्रायत्तेस्मिन्बंधमोक्षक्रमेनृणाम् ॥ कदर्थनेत्यहोमोहाद्गोष्पदेप्युदधिभ्रमः ॥ ३२ ॥ स्वभावसाधनेमोक्षेऽभावोपशमरूपिणि ॥ नधनान्युपकुर्वंतिनमित्राणिनचक्रियाः ॥ ३३ ॥ तैलबिंदुर्भवत्युच्चैश्चक्रमप्पतितोयथा ॥ तथाशुचेत्यसंकल्पेस्थिताभवतिचिज्जगत् ॥ ३४ ॥ जाग्रतिस्वप्नवृत्तांतस्थितिर्यादृग्प्रसास्मृतौ ॥ तादृग्प्रसाहंत्वजगज्जालसंस्थाविवेकिनः ॥ ३५ ॥ तेनैवाभ्यासयोगेनयातितत्तनुतांतथा ॥ यथानाहंनसंसारःशांतमेवावशिष्यते ॥ ३६ ॥ यदायदास्वभावार्कःस्थितिमेतितदातदा ॥ भोगांधकारोगलतिनसन्नप्यनुभूयते ॥ ३७ ॥ मोहमहत्तारहितःस्फुरतिस्वतौभवतिभासतेचतथा ॥ बुद्ध्यादिकरणनिकरोयस्माद्दीपादिवालोकः ॥ ३८ ॥ ॥ इत्यार्षेवा०वा०दे०मो०नि०उ०वसिष्ठगीतासुखभावविश्रांतियोगोपदेशोनामएकोनचत्वारिंशःसर्गः ॥ ३९ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥रूपालोकमनस्कारबुद्ध्यादींद्रियवेदनम्॥ स्वरूपंविदुरम्लानमस्वभावस्यवस्तुनः॥ १ ॥ अस्वभावतनुत्वेनस्वभावस्थितिरातता ॥ यदोदेतिसदासर्गोभ्रमाभःप्रतिभासते ॥ २ ॥ यदास्वभावविश्रांतिःस्थितिमेतिशमात्मिका॥ जगद्दृश्यंतदास्वप्नःसुषुप्तइवशाम्यति॥ ३॥

नूकालत्रयेपिनास्तीत्यप्यनुभूयते ॥ ३७ ॥ एवंभोगांधकारस्यमृतौविनाशेसतिबुद्ध्यादिकरणनिकरोमोहेनात्मावरणेनाज्ञानेनमहत्तयास्थूलदेहाद्यभ्यासेनचरहितोभवति ॥ नथाब्रह्माकारवृत्त्युद्धेनबोधेनस्फुरति ॥ यस्मात्स्फुरणाद्दीपात्प्रसृतआलोकइवसर्वतोव्याप्यब्रह्मीभूतोभासतेचेत्यर्थः ॥ ३८ ॥ ॥ इतिश्रीवासिष्ठ०म०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकोनचत्वारिंशःसर्गः ॥ ३९ ॥ ॥ ७ ॥ ॥ नसंसृतौब्रह्मभातिनब्रह्मणिचसंसृतिः ॥ जीवन्मुक्तौद्वयंभातिपर्यायेणेतिवर्ण्यते ॥ १ ॥ तत्रादौनिःस्वभावस्यबाह्याभ्यंतरवस्तुनस्तत्साक्षिचैतन्यमेवबास्तवंस्वरूपमितिविद्वदनुभवइत्याह ॥ रूपेति ॥ अम्लानंनिर्विकारकलंकम् ॥ १ ॥ तत्रतद्बोधान्वयव्यतिरेकानुविधानलक्षणांयुक्तिमाह ॥ अस्वभावेतिद्वाभ्याम् ॥ यदाआतताअपरिच्छिन्नावास्तवस्वभावस्थितिःअस्वभावस्तत्तिरोधायीअविद्यातत्तनुत्वेनतत्कृतपरिच्छेदेनतच्छरीरतयावउदेतितदेत्यन्वयोक्तिः ॥ २ ॥ व्यतिरेकमाह ॥ यदेति ॥ स्वबोधेनेतिशेषः ॥ बीजशेषवैषम्येप्यद्वैतात्ममात्रस्थित्यंशेसुषुप्तदृष्टांतः ॥ ३ ॥

अतएवस्वरूपविश्रांतिविरोधिनोभोगादयोनर्थाएवेत्याह ॥ भोगाइति ॥ ४ ॥ एवंचस्वायत्तानांस्वभावस्थितौनानर्थेपातोयुक्तइत्याह ॥ भूयतामिति ॥ इहसंसारे ॥ माना म्यतांग्लायताम् ॥ ५ ॥ स्वायत्ततामेवस्वानुभवाभिनयेनदर्शयति ॥ नेति ॥ आत्मानंदृष्ट्वादिभिपुत्थामार्थवसिष्ठजीवम् ॥ ६ ॥ हेरामवसिष्ठस्त्वमितित्वंशब्दार्थबृंहितंत्वंत्वमपि सन्तादृशस्त्वमेवपश्यसि अहंतुशांतमेवपश्यामि ॥ ७ ॥ तवापिएतेशब्दार्थादिरूपालोकमनोमयाविभ्रमानपरमार्थतोजाताःकिंतुसंजातकल्पाः ॥ ८ ॥ ममद्वैतादर्शनंनद्वैतमदे पात्किंतुद्वैताद्वैतयोर्युगपद्दर्शनासंभवादित्याह ॥ ब्रह्मात्मेति ॥ ९ ॥ अत्यंतादर्शनेकथंतदुपदेशप्रसिद्धिस्तत्राह ॥ प्रबुद्धइति ॥ जीवन्मुक्तस्तुपर्यायेणोभयंपश्यतीत्युपदेष्टाभव तीत्याशयः ॥ १० ॥ सोप्युत्तरोत्तरभूमिकासुक्रमेणद्वैतादर्शनात्प्रशाम्यतीत्याह ॥ यथाभूतमिति ॥ ११ ॥ तद्दृष्ट्याद्वैतस्योत्तरोत्तरपैलवतांदृष्टांताभ्यामाह ॥ स्मृतिस्थइति॥

भोगाभवमहारोगाबंधवोदृढबंधनम्॥ अनर्थायार्थसंपत्तिरात्मनात्मनिशाम्यताम्॥ ४ ॥ अस्वभावात्मतासर्गःस्वभावैकात्मताशिवः॥ भूयतांपरमव्योम्नाशाम्यतांमेहताम्यताम्॥ ५ ॥ नात्मानमवगच्छामिनदृश्यंचजगद्भ्रमम्॥ ब्रह्मशांतंप्रविष्टोस्मिब्रह्मैवास्मिनिरामयः॥ ६ ॥ त्वमेवपश्यसित्वंत्वंसत्वंशब्दार्थजृंभितम्॥ पश्यामिशांतमेवाहंकेवलंपरमंनभः॥ ७॥ ब्रह्मण्येवपराकाशेरूपालोकमनोमयाः॥ विभ्रमास्तवसंजातकल्पाःस्पंदाइवानिले॥८॥ब्रह्मात्मावेत्तिनोसर्गंसर्गात्माब्रह्मवेत्तिनो॥ सुषुप्तोवेत्तिनोस्वप्नंस्वप्नस्थोनसुषुप्तकम्॥९॥ प्रबुद्धोब्रह्मजगतोर्जाग्रत्स्वप्नदृशोरिव॥ रूपंजानातिभारूपंजीवन्मुक्तःप्रशांतधीः॥१०॥ यथाभूतमिदंसर्वंपरिजानाति बोधवान्॥ संशाम्यतिचशुद्धात्माशरदीवपयोधरः॥ ११ ॥ स्मृतिस्थःकल्पनस्थोवायथाख्यातश्चसंगरः॥ सदसद्भांतितामात्रस्तथाहंत्वजगद्भ्रमः॥ १२ ॥ आत्मन्यपिनास्तिहियाद्रष्टायस्यानविद्यतेकश्चित्॥ नचशून्यंनाशून्यंभ्रांतिरियंभासतेसेति॥ १३॥ ॥इत्यार्षे वा०वा०दे०मो०नि०उ०वसिष्ठगीतासुआत्मविश्रांतिकथनंनामचत्वारिंशःसर्गः॥ ४०॥ ॥ ५९॥ ॥श्रीवसिष्ठउवाच॥ अस्वभावस्वभावोयंसर्वोहंतादिवेदनः॥ स्वभावैकस्वभावेननिर्वाणीक्रियतांस्वयम्॥१॥ यत्रादित्योभवेत्तत्रयथालोकस्तथाभवेत्॥ परंविषयवैरस्यंतत्रयत्रप्रबुद्धधीः॥ २॥

संगरोयुद्धम ॥ १२ ॥ यापरिदृश्यमानाजगन्मायाप रमार्थसत्येआत्मनिअपिशब्दादत्यंतासतिशून्येचनास्ति ॥ यस्याःकश्चिद्द्रष्टाजीवोपिनविद्यते ॥ इतिशून्याशून्यविलक्षणेयंभ्रांतिरनिर्वचनीयैवभासतेइत्यर्थः ॥१३॥ ॥ इति श्रीवा०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेचत्वारिंशःसर्गः ॥ ४०॥ ॥ त्रिजगत्सुत्रिकात्र्यमस्वभावस्वभावतः ॥ स्वभावैकस्वभावेननिर्वाणंचात्रवर्ण्यते ॥ १ ॥ अस्वभावोऽविद्यातत्स्वभावोयमात्मासर्वजगद्रूपःसन्नहंतादिवक्ष्यमाणत्रिजगत्सुत्रिकात्र्यंवेत्तीत्यहंकारादिवेदनःसंपन्नः ॥ एवमनिर्वाणोयमात्मास्वयंशास्त्रीयोपायप्रभवविद्याविर्भूतेनाद्वितीयस्वप्रकाशपूर्णानंदलक्षणस्वभावैकस्वभावेनस्वेनैवनिर्वाणीक्रियताम ॥ १ ॥ साचविद्याविद्वत्समागमविवेकजन्याद्वैराग्यादेवसिद्ध्यतीत्याशयेनाह ॥ यत्रेति ॥ २॥

१ अत्रटीकानुरोधाद्बृंहितमितिपाठोपेक्षितइतिभाति ॥

तत्रवैराग्यार्थमविद्यास्वभावाच्छुद्धेजगच्चित्राध्यासंवर्णयति ॥ अकर्त्रिति ॥३॥ विद्यास्वभावेनतदपोह्यनिर्वाणस्वरूपंदर्शयति ॥ नचेति ॥४॥ तत्राद्यमस्वभावस्वभावंत्रिजग
न्नृत्यदनंतपुत्रिकात्वेनवर्णयति ॥ चिच्चमत्कारेत्यादिना ॥ चिच्चमत्कारमात्रात्मानोयेजीवास्तेषांकल्पनामात्रात्मकेरंगेनृत्यमंडपेशृंगारादिनानारसरंजनायासाम् ॥ जगच्चित्र
पुत्रिकाःखेनृत्यंतीतिपरेणान्वयः ॥५॥ रसैःशृंगारादिभिर्भावैःस्थायिभावैर्विकारैःकंपस्वेदादिसंचारिभावैःआढ्यंयथास्यात्तथा ॥ अभिनयैस्तत्तद्रसाकारव्यंजकचेष्टाभिः॥
परमाणुप्रतिपरमाणुमात्रास्वपिविद्यमानेखेचिदाकाशे ॥ प्रायइतिसंभावितत्वद्योतनार्थः ॥ ६ ॥ ब्रह्मलोकःशिरोधराकंधरायासांब्रह्मलोकरूपाणांशिरसोधराधारयित्र्यइ
तिवा ॥ ७ ॥ तारोत्करास्तनूरुहाणिलोमानियासाम् ॥ परितोदिक्षुअच्छंस्वच्छमंबरमाकाशमेवांबरंवस्त्रंयासाम् ॥ ८ ॥ भूतानांभौतिकशरीरादीनांभारेणधारणेनपोषणेनच

अकर्त्तृकर्मकरणमदृश्यद्रष्टृदर्शनम् ॥ जगदग्र्यात्यसंभारमभित्तौचित्रमुत्थितम् ॥ ३ ॥ नचोत्थितंकिंचनवाशांतेशांतंयथास्थितम् ॥
अनामयंपरंब्रह्मसत्यमव्ययमेवतत् ॥ ४ ॥ चिच्चमत्कारमात्रात्मकल्पनारंगरंजनाः ॥ संख्यातुंकेनशक्यंतेखेजगच्चित्रपुत्रिकाः ॥ ५ ॥
रसभावविकाराढ्यंनृत्यंत्यभिनयैर्नवैः ॥ परमाणुप्रतिप्रायःखेस्फुरंत्यंबरात्मिकाः ॥ ६ ॥ सर्वर्त्तुशेखरधरादिग्बाहुलतिकाकुलाः ॥ पाता
लपादलतिकाब्रह्मलोकशिरोधराः ॥ ७ ॥ चंद्रार्कलोलनयनास्तारोत्करतनूरुहाः ॥ सप्तलोकांगलतिकाःपरितोच्छांबरांबराः ॥ ८ ॥ द्वी
पांबुराशिवलयालोकालोकाद्रिमेखलाः ॥ भूतभारचलज्जीवप्रवहत्प्राणमारुताः ॥ ९ ॥ वनोपवनविन्यासहारकेयूरभूषिताः ॥ पुराण
वेदवचनाःक्रियाफलविनोदनाः ॥ १० ॥ त्रिजगत्पुत्रिकानृत्यंयदिदंदृश्यतेपुरः ॥ ब्रह्मवारिद्रवत्वंतत्तद्ब्रह्मानिलवेपनम् ॥ ११ ॥ अस्व
भावस्थितैवास्यकारणंकारणात्मकम् ॥ असुषुप्तस्थितास्वापेस्वप्नस्येवसतीवसा ॥ १२ ॥ असुषुप्तसुषुप्तस्थःस्वभावंभावयन्भव ॥
जाग्रत्यपिगतव्यग्रोमास्वप्नमिदमाश्रय ॥ १३ ॥ यज्जाग्रतिसुषुप्तत्वंबोधादरसवासनम् ॥ तंस्वभावंविदुस्तज्ज्ञामुक्तिस्तत्परिणामिता
॥ १४ ॥ अकर्त्तृकर्मकरणमदृश्यद्रष्टृदर्शनम् ॥ अरूपालोकमननंस्थितंब्रह्मजगत्तया ॥ १५ ॥ कांतेकांतंप्रकचतिपूर्णंपूर्णंव्यवस्थितम् ॥
द्वित्वैक्यरहितेभातिद्वित्वैक्यपरिवर्जितम् ॥ १६ ॥

निमित्तेनचलंतोजीवाएवप्रवहंतःप्राणमारुतायासाम् ॥ ९ ॥ पुराणानिवेदाश्चवचनंयासाम् ॥ तत्तत्क्रियाफलसुखदुःखानिविनोदनानिविलासायासाम् ॥ एवंविधाजगत्पुत्रि
कानृत्यंतीतिपूर्वत्रान्वयः ॥ १० ॥ ११ ॥ अस्यचनृत्यस्यअस्वभावस्थितैवचित्कारणम् ॥ यतस्तादृशमेवकारणात्मकंश्रुतिषुप्रसिद्धम् ॥ यथास्वापेनिद्रायामसुषुप्तंस्थितासा
स्वप्नस्यकारणंतद्वदित्यर्थः ॥ १२ ॥ एवमस्वभावस्वभावमुपवर्ण्येदानींस्वभावैक्यस्वभावेननिर्वाणीकरणेउपायमाह ॥ असुषुप्तेति ॥ हेरामत्वंपारमार्थिकस्वभावंभावयन्जा
ग्रत्यप्यज्ञाननाशादसुषुप्तंसर्वद्वैतोपसंहारात्सुषुप्तंचतुर्थंपदंतत्स्थोभव ॥ १३ ॥ रसोरागोवासनायतस्तच्छून्यम् ॥ तत्परिणामितातत्स्वरूपेणपरिनिष्ठितत्वम् ॥ १४ ॥ तस्यापरिनि
ष्ठायांव्यवहारकालेपिविवेकरसंजगद्भातीत्याह ॥ अकर्त्रित्यादिना ॥ १५ ॥ द्वित्वैक्यरहितेशोधितेप्रतीचिद्वैतैक्यपरिवर्जितंशोधितंब्रह्मअसत्कैकरस्येनभाति ॥ १६ ॥

सर्गात्मनिस्थितंसत्यंसत्येआत्मनिशांतंस्वयमेवस्थितम् ॥ १७ ॥ शिलाजठरवदप्रकाशस्वभावताभ्रांतिवारयति ॥ सुरत्नेति॥ अतएवजगत्प्रतिबिंबंप्राप्यक्षुब्धमिवस्थितमप्यक्षुब्धम् ॥ १८ ॥ अभेदीकृतमेकरसीकृतंमानसंयत्र ॥ १९ ॥ २० ॥ हेमपीठंपीठवच्चतुरस्रोहेमपिंडः ॥ स्फारंनानाविस्तारंलक्ष्यमाणमपि ॥ २१ ॥ कांतिमत्प्रास्वरम् ॥ २२॥ ननुहेरामप्रबुद्धेसतिशांतिघनभावगतंब्रह्मैवप्रसभमद्वैतस्वभावबलादेवविगतास्तमयोदयेनसर्गलक्षणेनउदयेनस्वाराज्यविभवेनभाति ॥ यथाव्योमगलत्स्वभावलाभंबाधितस्वरूपलाभंकेशोंड्रकगंधर्वनगरतलमलिनतादिकंप्रतिप्रसभंबलादेवस्फूर्त्तिनिरासोभयप्रदेनस्वीयशून्यविभवेनविभातितद्वदित्यर्थः ॥ २३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकचत्वारिंशःसर्गः ॥ ४१ ॥ ॥ ७ ॥ ॥ भूयःप्रपंच्यतेचात्रविश्वविश्वेश्वरैकता ॥ विवेकैःपूजनीयश्चस्वात्मैवपरमेश्वरः ॥ १ ॥ प्रागुक्तांजग

सत्यंसत्येस्थितंशांतंसर्गात्मन्यात्मनिस्वयम् ॥ आकाशकोशसदृशंशिलाजठरसंनिभम् ॥ १७ ॥ सुरत्नजठराकारंघनमप्यंबरोपमम् ॥ प्रतिबिंबमिवक्षुब्धमप्यक्षुब्धमसच्चसत् ॥ १८ ॥ भविष्यन्नवनिर्माणंचेतसीवस्थितंपुरम् ॥ ब्रह्मबृंहितभारूपमभेदीकृतमानसम् ॥ १९ ॥ यथासंकल्पनगरंसंकल्पान्नैवभिद्यते ॥ तथायंजगदाभासःपरमार्थान्नभिद्यते ॥ २० ॥ हेमपीठमिवानेकभविष्यत्सन्निवेशवत् ॥ लक्ष्यमाणमपिस्फारंशांतमव्ययमास्थितम् ॥ २१ ॥ अजस्रनाशोत्पादाढ्यमेकरूपमनामयम् ॥ अनाशोत्पादमजरमनेकमिवकांतिमत् ॥ २२ ॥ ब्रह्मैवशांतिघनभावगतंविभातिसर्गोदयेनविगतास्तमयोदयेन ॥ व्योमेवशून्यविभवेनगलत्स्वभावलाभंप्रतिप्रसभमेवननुप्रबुद्धे ॥ २३ ॥ ॥ इ०वा०म०वा०दे०मो०नि०उ०स्वरूपविश्रांत्यर्थमुपदेशकरणंनामएकचत्वारिंशःसर्गः ॥ ४१ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ चित्तवत्कचनंशांतेयत्तत्तस्मान्नभिद्यते ॥ अव्याकृतामलतयाक्वातस्सर्गादिसंभवः ॥ १ ॥ चित्तदीपेगतेयांतिभ्रांतिवद्भ्रांतिखेस्थिते ॥ रूपालोकमनस्कारसंविदोबुद्बुदोर्मयः ॥ २ ॥

तोब्रह्ममात्रतामनुभावयितुंजगद्भेदकचनहेतोश्चित्तस्यचिद्भेदंनिरस्यति ॥ चित्तवदिति ॥ शांतिकूटस्थात्मनिप्रथमंयत्चित्तवत्कचनंतत्तस्मात्कचनरूपाच्चिदात्मनोनभिद्यते ॥ कुतः ॥ अव्याकृतत्वादमलत्वाच्च ॥ तथाहि ॥ नामरूपभेदाद्धिलोकेभेदःप्रसिद्धः ॥ सचनामरूपव्याकरणात्पूर्वंभूतजीवभावानुप्रवेशोपाधौचित्तेनसंभवति ॥ तस्याव्याकृतत्वात् ॥ सूक्ष्मतेजोबन्नात्मकलिंगसृष्ट्यनंतरंहिसेयंदेवतैक्षतहंताहमिमास्तिस्रोदेवताअनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीतितद्व्याकरणंश्रूयते ॥ तथाअमलत्वाच्चचितोनभिद्यते ॥ चिदप्यमलाचित्तमपि ॥ नचतादृशयोःप्रभाकाशयोरिवभेदःकेनचिल्लक्षयितुंशक्यते ॥ चित्तस्यचिद्भेदनिरासादेवतदधीनोजगद्भेदःसुतरांनिरस्तइत्याह ॥ कातइति ॥ १ ॥ इदमेवस्फुटमाह ॥ चित्तदीपेइति ॥ स्थितेकूटस्थेखेप्रत्यगात्माकाशेरूपालोकमनस्कारसंविल्लक्षणाअंबुद्बुदोर्मयोमृगतृष्णाभ्रांतिवद्भ्रांति ॥ तेचचित्तलक्षणेदीपयतीतिदीपःसूर्यस्तस्मिन्नस्तंगतेयांतिअपगच्छंतीत्यर्थः ॥ २ ॥

सत्तायांचिदतिरिक्तकारणनिरपेक्षत्वादपिजगच्चिदेवेतिदृष्टांतैरुपपादयति ॥ निरस्तेत्यादिना ॥ निरस्ताकरणापेक्षायेन ॥ भासःप्रभायाविसरणंप्रसारः ॥ ३ ॥ कीलालेजले ॥ आत्ममयमात्मविवर्त्तः ॥ किमप्यनिर्वचनीयम् ॥ ४ ॥ प्रतीचिचित्तादीनामवस्थाद्वयेकचनमिवब्रह्मणिमायाधीनंवियदादिकचनमपितदभिन्नमेवेत्याशयेनतैरेवदृष्टांतैरुपपादयति ॥ महाचितीत्यादिना ॥ ५ ॥ ६ ॥ स्फूर्त्तावपिचिदतिरिक्तनिरपेक्षत्वाच्चिदभेदइत्याशयेनाह ॥ वेत्तीति ॥ द्वैतंचैक्यंचसंख्येयभेदाश्चतेषाम् ॥ ७ ॥ अविवेकेनभासुरं विवेकेनभंगुरम् ॥ परमार्थबोधेतुब्रह्ममात्रत्वादुभयशून्यम् ॥ ८ ॥ बोधेनयन्निर्णीतंतदाह ॥ ज्ञमीति ॥ ९ ॥ तत्रैववेदानुसारिणामवेदानुसारिणांचविचारयतांवादिनांयथार्थायथार्थरूपैःकल्पनाभेदाःप्रवृत्ताइत्याह ॥ तदिति ॥ १० ॥ तत्रैवानाद्यविद्यादिदृश्याकारताध्यासइत्याह ॥ तदिति ॥ ११ ॥ तत्रचित्त्वबलादेवाध्यस्तस्फूर्तेश्चित्तया

निरस्तकरणापेक्षंमरुतःस्पंदनंयथा ॥ यथाविसरणंभासस्तथाजगदिदंपरे ॥ ३ ॥ द्रवत्वमिवकीलालेशून्यत्वमिवचांबरे ॥ स्पंदत्वंमरुतीवेदंकिमप्यात्ममयंपरे ॥ ४ ॥ महाचितिमहाकाशेयदिदंभासतेजगत् ॥ तच्चित्त्वमेवकचतिनिर्मलत्वंमणाविव ॥ ५ ॥ यथाद्रवत्वंपयसियथाशून्यत्वमंबरे ॥ यथाप्रस्पंदनंवायौमहाचितितथाजगत् ॥ ६ ॥ वेत्तिवायुर्यथास्पंदंतथावेत्तिजगच्चितिः ॥ नद्वैतैक्यादिभेदानांमनागप्यत्रसंभवः ॥ ७ ॥ अविवेकविवेकाभ्यांभासुरंभंगुरंजगत् ॥ बोधेसदैवसद्रूपमभासुरमभंगुरम् ॥ ८ ॥ ज्ञप्तिमात्राहतेशुद्धादादिमध्यांतवर्जितात् ॥ नान्यदस्तीहनिर्णीतंमहाचिन्मात्ररूपिणः ॥ ९ ॥ तत्कस्यचिच्छिवंशांतंकस्यचिद्ब्रह्मशाश्वतम् ॥ कस्यचिच्छून्यतामात्रंकस्यचिज्ज्ञप्तिमात्रकम् ॥ १० ॥ तदनंतात्मचिद्रूपंचेत्यतामिवभावयत् ॥ स्वसंस्थमेवज्ञेयत्वमज्ञत्वमिवगच्छति ॥ ११ ॥ चित्तयानास्तिसत्ताचचित्ततानास्तितांविना ॥ विनाविनायथावायोर्यथास्पंदेषुकारणम् ॥ १२ ॥ तथामहाचितोच्छायाःसर्गसंवित्तिवृत्तिषु ॥ नित्यंसत्वमसत्वंवाहेतोरन्यानपेक्षणात् ॥ १३ ॥ इत्यत्रार्थोभविष्यत्सद्वित्वैकत्वास्तितावशात् ॥ कोत्रकल्पयिताद्वित्वमेकत्वंवामहांबरे ॥ १४ ॥

विनाज्ञेयस्यसत्तानास्तितांसत्तांविनाचतस्यचित्तताचित्तस्यनास्ति ॥ यथाविनाशून्यात्मनाकूटस्थेनाकाशेनविनावायोःकारणंनास्ति ॥ वायुंचविनास्पंदेषुकारणंनास्तितद्वदित्यर्थः ॥ १२ ॥ तथानित्यब्रह्मसत्ताधीनसत्ताकासुसर्गभ्रांतिष्वधिष्ठानमपेक्ष्यनित्यंसत्वंस्वरूपतस्तुनित्यमसत्वंचेतिद्वेधापिशास्त्रेसदेवसोम्येदंनेहनानेतिचव्यपदेशइत्यर्थः ॥ अन्यस्यहेतोरनपेक्षणात् ॥ असमर्थसमासश्छांदसः ॥ १३ ॥ चिज्जडद्वित्वस्यतत्कारणैकत्वस्यचअस्तितास्वतःसत्तातद्वशाद्धिअत्रसर्गसंवित्तिषुइतिप्रसिद्धोर्थोभविष्यत् ॥ कूटस्थाद्वयेचिदंबरेद्वित्वमेकत्वंवाकःकल्पयितासत्तास्फूर्तिभ्यांसमर्थयिता ॥ जडेषुनकश्चित्तादृशोस्तीत्यर्थः ॥ १४ ॥

---

१ मूलस्यसर्गेत्यादिपदस्यायमर्थः

एवंच आकाशद्वित्वाप्रसिद्धिवत्स्पंदानिलभेदाप्रसिद्धिवच्च विश्वविश्वेश्वरद्वित्वस्याप्रसिद्धिरेवफलितेत्याह ॥ विष्वगित्यादिना ॥ १५ ॥ १६ ॥ अथवाब्रह्मदृष्ट्याअन्तृतस्यापि विश्वस्यस्वन्यूनदेशकालस्वकार्यापेक्षयाऽधिकदेशकालव्याप्त्यासत्यतामाशंक्यपरिहरति ॥ देशकालेति ॥ १७ ॥ कार्यकारणभेदेसिद्धेतथास्यात्सएवासिद्धइत्याह ॥ द्वित्वैक्येति ॥ १८ ॥ काल्पनिकःकार्यकारणभेदोंगीक्रियतइतिचेन्नकाल्पनिकेनतेनसत्यतानिर्वाहइत्याह ॥ स्याच्चेदिति ॥ १९ ॥ अत्यंताभेदेपिखलेखेतिखेभेदकल्पनादृष्टेतिजगदपितद्वत्स्यादित्याह ॥ खेइति ॥ २० ॥ खस्यलेखेतिखाद्भिन्नमिवकल्पितंलेखापदवाच्यंव्योमयद्रूपंतद्रूपंब्रह्मणोजगदित्यर्थः ॥ एवंस्थितेब्रह्मण्यपिजगत्कारणतागतेत्याह ॥

विष्वग्विश्वमपारैकपरमाकाशकोशता॥ यथास्पंदानिलद्वित्वंशाब्दमेवनवास्तवम् ॥ १५॥ विश्वविश्वेश्वरद्वित्वंतथैवासन्मयात्मकम्॥ सदेवासंभवद्वित्वंमहाचिन्मात्रकंचयत्॥ १६॥ विश्वाभासंतदेवेदंनविश्वंसन्नविश्वता॥ देशकालादिमत्त्वेनकदाचिद्वेत्तिसत्यता ॥ १७॥ कटकत्वस्यभिन्नस्यविश्वस्यचतथापरे॥ द्वित्वैक्यासंभवेचात्रकार्यकारणताकुतः॥ १८॥ स्याच्चेत्तत्कल्पनामात्रमेवैतन्नान्यवस्तुता॥ शून्यतानभसीवात्रद्रवत्वमिवचांभसि॥ १९॥ खेखलेखाप्यभिन्नेवकिलाखिजगदादिता ॥ यद्रूपंब्रह्मतद्रूपंजगत्कात्रद्वितैकते॥ २०॥ यद्रूपंव्योमतद्रूपमेवंशून्यंकिलाखिलम् ॥ एकात्मनितितेस्वच्छेचिन्मात्रेसर्वरूपिणि ॥ २१ ॥ शिलापुत्रकसेनायांपाषाणत्वइवास्थिते॥ कार्यकारणवैचित्र्यंकथंसंभवतिक्कवा ॥ २२ ॥ कथमव्योमताव्योम्निद्वितीयासंभवाद्भवेत्॥ प्रतिभात्मैवभारूपोभातिसर्गोमहाचिति ॥ २३ ॥ पुत्रिकेवोपलोत्कीर्णातन्मयत्वात्तदात्मिका॥ साधोयथास्थितस्यैवंबुध्वाविश्वंप्रलीयते॥ २४॥ काष्ठमौनदशाभासंसंसारमवशिष्यते ॥ यथानिमीलिताक्षस्यरूपालोकामनोभ्रमः ॥ २५ ॥ स्वप्नेजाग्रत्यनग्रस्थोप्यसन्नेवास्तिभावनात् ॥ तथैवोन्मिलीताक्षस्यरूपालोकमनोभ्रमः॥२६॥ स्वप्नेजाग्रत्यनग्रस्थोप्यसन्नेवास्तिभावनात् ॥ भावनोपशमंकृत्वाशिलीभूययथास्थितम्॥ २७॥ अशिलीभूतमेवांतःस्वभावंसममास्यताम् ॥ आविवेकोपहारेणयथाप्राप्तार्थपूजनैः॥ २८॥

एकात्मनीत्यादिना ॥ २१ ॥ २२ ॥ २३ ॥ यथास्थितस्यवास्तवस्यैवतत्त्वंबुद्ध्वा ॥२४॥ काष्ठमौनंबाह्यमानससर्वचेष्टाशून्यत्वंतादृशयादशयाआभासंस्फुरत्ब्रह्मसंसारमवधूयशिष्यते ॥ भावनालक्षणमनःस्पंदमात्रजन्यःसर्वःसंसारभ्रमोभावनात्यागादस्पंदावस्थितिमात्रेणविधूयतेइत्याह ॥ यथेत्यादिना ॥ २५ ॥ २६ ॥ २७ ॥ चिदेकरसत्वेनशिलावैलक्षण्यादंतःअशिलीभूतंस्वभावमवलंब्यआस्यताम् ॥ तादृशस्थित्यनुकूलविवेकवैराग्यादिसाधनाभ्यासएवपरमेश्वरस्यात्मनःसर्वोत्कृष्टापूजेत्याह ॥ आविवेकेति ॥ आसमंतात्सर्वतोयोविवेकस्तल्लक्षणेनोपहारेणोपचारेण ॥ २८ ॥

१ अस्यस्थितस्येतिशेषः

स्फारंनिरतिशयानंदलक्षणंवरंप्रददातीतिस्फारवरप्रदः ॥ २९ ॥ ३० ॥ ३१ ॥ अन्यमनात्मभूतंतटस्थमीश्वरम् ॥ अथयोन्यांदेवतामुपास्तेऽन्योसावन्योहमस्मीतिनसवेद
यथापशुरेवंसदेवानामितिश्रुतेरितिभावः ॥ ननुतटस्थेश्वरःपूजनेनप्रसन्नएनंशस्त्राहिविषवह्निप्रभृतिभ्यउपघातकेभ्यःसर्वतोरक्षिष्यतिकूटस्थात्मांकिंकरिष्यतितत्राह ॥ सत्संगे
ति ॥ आसमंतात्पूजितआत्मायेनतस्य ॥ ३२ ॥ किंचाऽविवेकिभिःकृतेषुदेवतार्चनादिष्वपराधावश्यंभावेननैष्फल्यानर्थयोरवश्यंभावात्तत्रापिदेशकालद्रव्यपात्रकर्मादि
विशुद्धिविवेकःश्रद्धाभक्तिशांतिदांत्यादयोयद्यावश्यकास्तर्ह्यक्लेशेमहाफलेआत्मदर्शनेएवतेकुतोनोपयोज्यंतेइत्याह ॥ देवार्चनेत्यादिना ॥ ३३ ॥ देशकालपात्राद्यविवेकेन ॥
अमहात्मनांदुरात्मनाम् ॥ ३४ ॥ कोसौविवेकोयःसाध्यइत्युच्यतेतमाह ॥ यथाभूतेति ॥ ३५ ॥ यत्नइति ॥ तथाचवैराग्यादिसर्वसाधनसंपद्इतिभावः ॥ आत्मप्रसादतोनि

बोधायपूज्यतांबुद्ध्वास्वभावःपरमेश्वरः॥ विवेकपूजितःस्वात्मासद्यःस्फारवरप्रदः ॥ २९ ॥ रुद्रोपेंद्रादिपूजात्रजरत्तृणलवायते ॥ वि
चारशमसत्संगबलिपुष्पैकपूजितः॥ ३० ॥ सद्योमोक्षफलःसाधोस्वात्मैवपरमेश्वरः॥ सत्यालोकनमात्रैकपूजितोनुत्तमार्थदः॥ ३१॥
यत्रास्यात्मेश्वरस्तत्रमूढःकोन्यंसमाश्रयेत्॥ सत्संगशमसंतोषविवेकापूजितात्मनः॥ ३२॥ शिरीषकुसुमायंतेशस्त्राहिविषवह्नयः॥
देवार्चनतपस्तीर्थदानान्यतिकृतान्यपि॥ ३३ ॥ भस्मायंतेनिरर्थत्वादविवेकामहात्मनाम्॥ एतान्यपिविवेकेनक्रियंतेसफलानिचेत्
॥ ३४ ॥ विवेकएवतत्कस्मात्स्फुटमंतर्नसाध्यते ॥ यथाभूतार्थविज्ञानाद्वासनोपरमेपरे ॥ ३५ ॥ यत्नोविवेकशब्दाख्योभवत्यात्मप्र
सादतः॥ तथातथाविवेकोंतर्वर्द्धिनेयःशमामृतैः॥३६॥ यथायथापुनःशोषमुपयातिनविभ्रमैः॥ देहसत्तामनादृत्ययथाभूतार्थदर्शना
त्॥ ३७॥ लज्जांभयंविषादेर्ष्येसुखंदुःखंजयेत्समम्॥ जगदादिशरीरादिनास्त्येवादौकुतोद्यतत्॥ ३८॥ कार्यंचेत्कारणस्यैतत्तथापिब्र
ह्ममात्रकम्॥ प्रतिभामात्रमेवाच्छंनतुज्ञप्तेर्घटादिसत्॥ ३९॥ ज्ञानात्मिकैवप्रतिभाज्ञप्तिरेवाखिलंजगत्॥ ज्ञप्तिरप्यात्मतत्त्वश्रीःपरि
ज्ञातोपशाम्यति॥ ४०॥

ष्कामानुष्ठितयज्ञदानादिसाध्यचित्तप्रसादात्॥ ३६ ॥ विभ्रमैर्विषयभ्रांतिभिः ॥ ३७॥ देहसत्तानादरेउपायंविचारंदर्शयति ॥ जगदादीति ॥ शरीरस्यआदिकारणभूतंजग
त्आदिपदात्तत्कारणंचआदौनास्त्येव ॥ यच्चादौनास्तितदद्यकुतोभवेत् ॥ नासतोविद्यतेभावइतिन्यायात्॥ ३८ ॥ ननुसदेवसोम्येदमग्रआसीदितिब्रह्मात्मनाआदौसदेवकार
णस्यब्रह्मणःकार्यमस्तुतत्राह ॥ कार्यंचेदिति ॥ तथापिब्रह्ममात्रकमेवनततोभिद्यते ॥ सद्भेदेअसत्त्वापत्तेः ॥ अद्वयकार्यस्यकारणेअद्वयत्वाविघातकत्वेनभेदप्रतिभासस्यविक
ल्पमात्रत्वादित्याह ॥ प्रतिभामात्रमेवेति ॥ ज्ञप्तेःपृथगितिशेषः ॥ ३९ ॥ विकल्पप्रतिभापिचिदाभासज्ञानात्मिकैवेतिसैवाखिलंजगदित्यर्थः ॥ साचिदाभासलक्षणाज्ञप्तिरप्य
ज्ञातात्मतत्त्वस्यैवदर्पणदृष्टामुखश्रीरिवप्रत्यगात्ममात्रत्वेनदृष्टमात्राभेदकोपाध्यपगमेनोपशाम्यति ॥ ४०॥

---

१ पुष्पौघपूजितइत्यपिक्वचित्पाठः ॥

यतउपाधिभूतज्ञेयाभावेबिंबात्पृथगिवानिर्वाच्येतिपूर्वान्वयि ॥ अनयारीत्याप्रत्यग्भावेअशरीरादिब्रह्मभावेअविश्वात्मेत्यखंडंसर्वंपूर्णंशाश्वतंशिवंशिष्यतइत्यर्थः ॥ ४१ ॥ तद्भावस्थितिरेवभवद्भिःसर्वैःसंपाद्येत्याह ॥ शांतेति ॥ ४२ ॥ तस्यास्थितौयथाप्राप्तव्यवहारेपिनक्षतिरित्याह ॥ चलंतइत्यादिना ॥ ४३ ॥ ४४ ॥ समाधौवाकामंस्थीयतामित्याह ॥ अथवेति ॥ ४५ ॥ सर्वदासमाधिकालेव्यवहारकालेचप्रबुद्धस्याऽविच्छिन्नप्रबोधस्यपुंसःसंकल्पपुरवत्स्वप्नवच्चसदैवतुच्छत्वादसंगतम् ॥ ४६ ॥ प्रबोधश्चसनेत्रस्यरूपानुभववत्परिनिष्ठितःपूर्णानंदानुभवपर्यंतोनिर्वाणेउपयुज्यतेनजात्यंधरूपकल्पनातुल्यःपरोक्षकल्पइत्याशयेनाह ॥ सनेत्रेत्यादिना ॥ ४७ ॥ अज्ञःकतिपयवाक्यश्रवणेनै

ज्ञेयाभावेत्वनिर्वाच्याशिष्यतेशाश्वतंशिवम्॥ अशरीराद्यविश्वात्मसर्वंशांतमिदंततम् ॥ ४१ ॥ ज्ञानज्ञेयज्ञप्तिमुक्तंदृषन्मौनमिवस्थितम्॥ शांतांतःकरणाःस्वस्थाःशिलापुत्रककोशवत्॥ ४२ ॥ चलंतश्चालयंतश्चज्ञरूपाएवतिष्ठत ॥ अज्ञेयज्ञत्वसद्रूपाःसदसत्साररूपिणः ॥ ४३ ॥ आकाशकोशविशदाभवताभवभूमयः॥ यथास्थितंचतिष्ठंतिगच्छंतश्चयथागतम्॥ ४४ ॥ यथाप्राप्तैककर्माणःसंपद्यंतेबुधाःपरम्॥ अथवासर्वसंत्यागशांतांतःकरणोज्ज्वलाः॥ ४५ ॥ एकांतेष्वेवतिष्ठंतुचित्रकर्मार्पिताइव॥ संकल्पशांतौसंकल्पपुरवत्सर्वदाखिलम्॥ ४६ ॥ स्वप्नवच्चप्रबुद्धस्यसदैवास्तंगतंजगत्॥ सनेत्ररूपानुभवंजातितोंधइवभ्रमैः ॥ ४७॥ निर्वाणंवर्णयन्नज्ञस्ताप्यतेतर्नशाम्यति॥ कल्पनांशोपदेशेनलोकोविद्यामयात्मना॥ ४८ ॥ येनकेनचिदज्ञत्वात्कृतार्थोस्मीतिमन्यते॥ अकृतार्थःकृतार्थत्वंजानन्मौर्ख्यंविमोहितः॥ ४९ ॥ विज्ञास्यत्यकृतार्थत्वंक्षणांतरकदर्थनैः॥ उपायंकल्पनात्मानमनुपायंविदुर्बुधाः॥५० ॥ दुःखदत्वान्निमेषेणभावाभावैषणभ्रमैः॥ जगद्भ्रमंपरिज्ञाययदवासनमासितम्॥ विरसाशेषविषयंतद्धिनिर्वाणमुच्यते॥ ५१ ॥

वतत्स्वज्ञोहंसंपन्नइतिभ्रमेनिर्वाणंवर्णयन्सनेत्रस्यरूपानुभवंवर्णयन्जात्यंधइवांतर्मानापमानादिभिस्ताप्यतेनतुतत्त्वज्ञवच्छाम्यतिशांतिसुखमनुभवतीत्यर्थः॥ अंधगोलांगूलन्यायेनासदुपदेशप्रतारितानामपिकृतार्थताभ्रांतिर्लोकेप्रसिद्धेत्याह ॥ कल्पनांशेति ॥ ४८ ॥ ४९ ॥ तस्मात्कल्पनात्मकंज्ञानंननिर्वाणोपायइत्यभिज्ञानुभवेनोपसंहरति ॥ उपायमिति ॥ ५० ॥ निमेषेणभावाभावैषणभ्रमैर्दुःखदत्वात्कल्पनात्मानमुपायमनुपायंविदुरितिपूर्वत्रान्वयः ॥ तस्मात्प्रागुक्तंसम्यग्ज्ञानमेववासनानाशपर्यंतंदृढीकार्यंतदेवनिर्वाणंपर्यवस्यतीत्याशयेनाह ॥ जगदिति ॥ विरसाअशेषाहैरण्यगर्भपदांताविषयायत्र ॥ ५१ ॥

अतएवहेरामत्वंमदुपदिष्टमर्थमाख्यायिकाउपलब्धार्थालौकिकीपौराणिकीवाकथातदर्थइवपरोक्षःकल्पनामात्ररूपःप्रतिभासोयस्यतथाविधमेत्यबहिर्मुखतयाअधिगम्य नकृतार्थोभविष्यसिंकिंतुभराद्वासनामात्रपूरातिशयात्तद्ववालपरितःप्रवहत्स्वरूपंजगत्स्वरूपमचिद्वारिसंवेत्सिपश्यस्येव ॥ प्रत्यग्दृष्ट्यात्वशेषंपूर्णमच्छमवेद्यचिद्रूपंपश्यन्साक्षादनुभवन्विनिर्वासिनिर्वाणविश्रांतोभविष्यसीत्यर्थः ॥ ५२ ॥ तदेतद्दृढयन्नाह ॥ जात्यंधेति ॥ आगमैरुपदेशवाक्यैर्बहिर्मुखतयाजात्यंधरूपानुभवसदृशंयद्बुद्धंतदबोधरूपमेव ॥ अपरोक्षेवस्तुनिपरोक्षज्ञानस्यभ्रांतिमात्रत्वात् ॥ अतस्तादृशबोधमधस्पदीकृत्यपादेनाक्रम्येवतिरस्कृत्य ॥ अधःशिरसीपदेइतिसत्वंच्विः ॥आंतरेप्रत्यगात्मरूपेअस्मिन्नित्यापरोक्षेबोधेसाक्षादनुभवेननिपत्यअभूर्जन्मादिशून्यःसोनुभवएवत्वंभवतदेवतेनिर्वाणमित्यर्थः ॥ ५३ ॥ ॥ इतिश्रीवासिष्ठ०म०रा०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेद्विचत्वारिंशःसर्गः ॥ ४२ ॥ ॥ ७ ॥ ॥ मनोयक्षपुरप्रायेजगत्यज्ञानकल्पिते ॥ बोधमात्रेणनिर्मृष्टेब्रह्मैकस्थितिरीर्यते ॥ १ ॥ आंतरमहंतादिबाह्यमिदंजगच्चभोक्तृभो

आख्यायिकार्थप्रतिभानमेत्यसंवेत्स्यचिद्वारिभराद्ववाला॥ अवेद्यचिद्रूपमशेषमच्छंपश्यन्विनिर्वासिजगत्स्वरूपम्॥५२॥जात्यंधरूपानुभवानुरूपंयदागमैर्बुद्धमबोधरूपम्॥ अधस्पदीकृत्यतदंतरेस्मिन्बोधेनिपत्यानुभवोभवाभूः॥५३॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०निर्वाणोपदेशोनामद्विचत्वारिंशःसर्गः॥४२॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥अहंतादिजगच्चेदंपरिज्ञानादसत्यताम्॥ यातिसानुभवोमोहात्सत्यमेवान्यथाधियाम्॥१॥अज्ञानज्वरमुक्तस्यबोधशीतलितात्मनः॥एतदेवभवेच्चिद्भंयद्भोगांबुनरोचते॥२॥अलमन्यैःपरिज्ञानैर्वाच्यवाचकविभ्रमैः॥ अनहंवेदनामात्रंनिर्वाणंतद्विभाव्यताम्॥३॥परिज्ञातायथास्वप्नेपदार्थारसयंतिनो॥नचसंतितथैवास्मिन्नहंजगदिदंभ्रमे॥४॥ यथास्वभावनायक्षस्तरौसस्वजनंपुरम्॥ पश्यत्यसत्यमेवैवंजीवःपश्यतिसंस्थितिम्॥५॥

ग्यरूपंसर्वंतदनुभवरूपभोगतत्त्वपरिज्ञानादसत्यतांयाति ॥ चिदवसानोहिभोगः सहिभोक्तृभोग्यसंबंधानुभवः तेनानुभवेनहिमोहादालविनिमयेनान्यथाधियांभोक्तॄणांवालबुद्धिमतांमूढानामात्मासानुभवोनस्वतइतिसत्यंब्रह्मैवसइत्यर्थः ॥ १ ॥ अतएवतत्त्वविदांभोग्यवर्गेष्वरुचिरित्याह ॥ अज्ञानेति ॥ २ ॥ एवंभोग्येषुविरक्तानांभोक्तर्यहंकारांशत्यागमात्रेणचिन्मात्रपरिशेषात्मकंनिर्वाणंसिद्धमित्याह ॥ अलमिति ॥ वाच्यंरूपंवाचकंनामतद्विषयभ्रांतिरूपैः ॥ ३ ॥ भोगांबुनरोचतइत्येतद्विशदयति ॥ परिज्ञातेति ॥ स्वप्नेदृष्टाःपदार्थायथाजागरूकंपुरुषंनरसयंतिनरंजयंतिनसंतिचतथैवाहंजगदिदमितिभ्रमेदृष्टाःपदार्थाअपितत्त्वज्ञमित्यर्थः ॥ ४ ॥ अरण्येयक्षोगंधर्वमायाकल्पितंनगरंवायदृष्टंतद्दित्याह ॥ यथेति ॥ यक्षतनौइतिपाठेयक्षविद्यानिपुणमनुष्यःस्वभावनाकल्पितयक्षतनौस्थित्वास्वजनसहितंपुरंयथाकल्पयित्वापश्यतीतिव्याख्येयम् ॥ ५ ॥

तत्रयक्षोविभ्रमात्माभ्रांतिकल्पितभोक्तृस्वरूपःयक्षलोकस्तन्नगरंचभ्रांतिकल्पितभोग्यरूपमित्युभयंनास्त्येवतथापितौमिथउपभोगलक्षणार्थक्रियाकारितयायथासद्रूपाविव स्थितौतथेत्यर्थः ॥६ ॥ दृष्टांतेदार्ष्टांतिकेचासतोपिसत्यतयाप्रतिभासेअनावृतसाक्षिण्यध्यासएवनिमित्तमित्याशयेनाह ॥ अनावरणतइति ॥ भुवनोपाधिसंख्ययाचतुर्दश ॥ ॥ ७ ॥ यक्षस्यस्वकल्पितदेहनगराद्युपसंहारइवजगद्भ्रमबाधेपितन्मिथ्यात्वदर्शनमेवहेतुरित्याह ॥ भ्रममात्रमिति ॥ चित्तत्त्वतांचिद्रूपतात्त्विकभावम् ॥ ८ ॥ चत्वारिक्रियाविशेषणानि ॥ ९ ॥ तत्त्वतोविमर्शेदृश्यस्यद्रष्टृमात्रघनानुच्छतावापर्यवस्यतीत्याह ॥ असत्तेति ॥ नविद्यतेसत्तायाःसंभवउत्पत्तिर्यस्मिंस्तथाविधंनैवबाद्रष्ट्रात्म ॥ कुतः ॥ सत्परमार्थचिद्रूपंद्रष्टृतत्त्वमवाच्यंतुच्छंदृश्यरूपंकिमास्यतेस्थाप्यते ॥ नहिसतोऽसद्रूपताकेनचित्संपादयितुंशक्येत्यर्थः ॥ आसेरण्यंतकर्तुर्ण्यंतेगतिबुद्ध्यातिकर्मत्वेकर्मणिलः ॥ १० ॥ द्र

विभ्रमात्मायथायक्षोयक्षलोकश्चतेमिथः॥ सद्रूपौसुस्थितौमिथ्यातथाहंत्वजगद्भ्रमौ ॥६॥ अनावरणतोरण्येयक्षाविभ्रमरूपिणः॥ यथास्फुरंतिभूतानितथेमानिचतुर्दश ॥ ७ ॥ भ्रममात्रमहंमिथ्यैवेतिबुद्ध्वाविभावयन् ॥ यक्षोऽयक्षत्वमायातिचित्तंचित्तत्वतामिदम् ॥ ८ ॥ निरस्तकलनाशंकंत्यागग्रहणवर्जितम् ॥ अविसारिसमस्तेच्छंशांतमास्वयथास्थितम् ॥ ९ ॥ असत्तासंभवंद्रष्टृसंद्रष्ट्रात्मकमिदंततम् ॥ अथवानैवद्रष्ट्रात्मसदवाच्यंकिमास्यते ॥ १० ॥ वसंतरसपूरस्ययथाविटपगुल्मता ॥ स्वरूपमात्रभरितसंविदःसर्गतातथा ॥ ११ ॥ यदिदंजगदाभासंशुद्धंचिन्मात्रवेदनम् ॥ कात्रैकताद्वितावानिर्वाणमलमास्यताम् ॥ १२ ॥ भूयतांचिन्मयव्योम्नापीयतांपरमोरसः ॥ स्थीयतांविगताशंकंनिर्वाणानंदनंदने ॥ १३ ॥ किमेतास्वतिशून्यासुसंसारारण्यभूमिषु ॥ मानवावातहरिणाभ्रमयोभ्रांतबुद्धयः ॥ १४ ॥ जगत्त्रयमरीच्यंबुविप्रलब्धांधबुद्धयः ॥ माधावतगतव्यग्रमाशयोपहताशयाः ॥ १५ ॥ रूपालोकमनस्कारमृगतृष्णांबुपायिनः ॥ व्यर्थमायासमायूंषिमामाक्षपयतैणकाः ॥ १६ ॥ जगद्गंधर्वनगरगुरुगर्वेणनश्यथ ॥ सुखरूपाणिदुःखानिनाशनायैवपश्यथ ॥ १७ ॥ जगत्क्लेशोड्रकभ्रांत्यैमामहांबरमध्यगम् ॥ अवलोकयताभ्रांतंस्वरूपेपरिणम्यताम् ॥ १८ ॥

ष्टृदृश्यात्मत्वाभावेपिव्यवहारेदृश्यसत्तास्फूर्तिनिर्वाहकतासंभवत्येवेतिदृष्टांतेनदर्शयति ॥ वसंतेति ॥ ११ ॥ परमार्थेतुद्वैक्याद्विसंभावनापिनास्तीत्याह ॥ यदिदमिति॥१२॥ इदानींभगवान्वसिष्ठःसर्वान्प्रतिदययाहितमुद्घोषयन्नुपदिशति ॥ भूयतामित्यादिना ॥ परमोरसोनिरतिशयानंदः ॥ रसोवैसइतिश्रुतेः ॥ निर्वाणानंदलक्षणेनंदनेस्वर्वने ॥ १३ ॥ वातहरिणावातप्रम्यइवेतिशेषः॥भ्रमथउइतिच्छेदः ॥१४॥ आशयातृष्णयाउपहताशयाःसंतोगतव्यग्रंप्राप्तवैय्यग्र्यंयथास्यात्तथामाधावत ॥ १५ ॥ रूपालोकावाग्भोगामनस्काराआभिमानिकभोगास्तएवमृगतृष्णांबूनि ॥ आयासंप्राप्येतिशेषः ॥१६॥ जगद्रूपेगंधर्वनगरइवविवेकहारीयोगर्वस्तेननश्यथ ॥ माइत्यनुषज्जते ॥ १७ ॥ महांबरंब्रह्माकाशस्तन्मध्यगमज्ञाननैल्यंमाअवलोकयतकित्वभ्रांतियथार्थतोदृष्टेस्वरूपेपरिणम्यताम् ॥ १८ ॥

हेमानवावातैर्लोलानिउच्चेषूर्ध्वंशाखास्थितेषुपिप्पलपत्रेषुप्राप्तानिस्कन्नान्यवश्यायांबूनीवभंगुरामानवामनुष्यदेहायासुआसुसंसारलक्षणास्वंधगर्भंशय्यासुमासुप्यताम्॥ १९
अविराममखंडितम ॥ स्वभावेपारमार्थिकब्रह्मभावे ॥ द्रष्ट्रादिदशादोषलक्षणादस्वभावारस्वरूपविनिमयान्माविनश्यताम् ॥ २० ॥ २१ ॥ तृष्णालक्षणयाअयःश्रृंखलयाव
लितंवेष्टितंसंसारपंजरंज्ञानबलात्त्रोटयित्वामृगेंद्रःसिंहस्तद्वत्सर्वस्योर्ध्वमुत्कर्षकाष्ठायांतिष्ठ ॥ २२ ॥ आत्मात्मीयग्रहःअहंममेत्यभिमानस्तल्लक्षणभ्रांतिशांतिमात्रातावन्मात्र
स्वरूपाविमुक्ततानान्याकाचिदस्ति ॥ साचयोगिनःस्वात्मसत्तैवेत्यर्थः ॥२३॥ तामेवसंसाराध्वखिन्नविश्रांतिभूमिभेदत्वेनकल्पयित्वाह ॥ निर्वाणतेति ॥ अवासनतेतिच्छेदः ॥
पराउत्कृष्टाअपतापताअपगतत्रिविधतापता ॥ एताःपंचम्याद्यास्तिस्रोभूमिकाः ॥२४॥ मिथःपरस्परमवाच्यावक्तुमयोग्यायेऽर्थास्तन्मयस्तत्प्रचुरः ॥ तच्चअज्ञस्यदुःखौघमयं

मानवावातलोलोच्चपत्रप्राग्रांबुभंगुर ॥ मानवासुनचास्वंधगर्भशय्यासुसुप्यताम्॥ १९॥ अविराममनाद्यंतेस्वभावेशांतमास्यता
म्॥ द्रष्टृदृश्यदशादोषादस्वभावाद्विनश्यताम्॥ २०॥ अज्ञावबुद्धःसंसारःसहिनास्तिमनागपि॥ अवशिष्टंचयत्सत्यंतस्यनामनविद्यते
॥ २१ ॥ त्रोटयित्वातुतृष्णायःश्रृंखलावलितंबलात्॥ संसारपंजरंतिष्ठसर्वस्योर्ध्वंमृगेंद्रवत्॥ २२॥ आत्मात्मीयग्रहभ्रांतिशांतिमात्रा
विमुक्तता॥ यथातथास्थितस्यापिसास्वसत्तैवयोगिनः॥ २३॥ निर्वाणतावासनतापरापतापताज्ञता॥ संसाराध्वनिखिन्नस्यशांता
विश्रामभूमयः॥ २४॥ तज्ज्ञज्ञातोनमूर्खाणांमूर्खज्ञातोनतद्विदाम्॥ विद्यतेजगदर्थोसाववाच्यार्थमयोमिथः॥ २५॥ विश्वताभ्रांति
संशांतौसंस्थितैवनलभ्यते॥ महार्णवांबुवलितापुत्रिकेवपयोमयी ॥ २६ ॥ भ्रांतिशांतौप्रबुद्धस्यविनिर्वाणस्यविश्वता ॥ यथास्थि
तैवगलिताविद्यतेचयथास्थितम ॥ २७॥ निर्दग्धतृणभस्मालीक्वापियातियथानिलैः॥ सतांस्वभावविश्रामैःक्वापियातितथाजगत्
॥ २८॥ जगद्ब्रह्मपदार्थस्यसन्निवेशःसतूत्तमः॥ ब्रह्मशब्दार्थरूपात्मानजगच्छब्दकार्यभाक्॥ २९॥ अविज्ञातस्यबालस्यपदार्थायाद
शाइमे॥ विदुषस्तादृशाएवतिष्ठतःक्षीणवासनम्॥ ३०॥

ज्ञस्यानंदमयंजगदितिप्रागुक्तमेवेति ॥ २५॥ गंगागोदानर्मदेत्यादिरूपापयोमयीपुत्रिकाआकारभेदकल्पनायथामहार्णवांबुवलितासतीतद्रूपेणसंस्थितैवार्णववासिभिर्नलभ्यते
तद्वद्भ्रांतिसंशांतौज्ञानिभिर्विश्वतापीत्यर्थः ॥ २६ ॥ तदेवस्पष्टमाह ॥ भ्रांतीति ॥ २७ ॥ २८ ॥ ब्रह्मपदस्यबृंहणरूपोयोर्थस्तस्यसन्निवेशआकारविशेषःसतुब्रह्मशब्दस्यमु
ख्यार्थरूपोनिर्विकल्पस्वप्रकाशनिरतिशयानंदप्रत्यगात्माचेदुत्तमः ॥ गच्छतिषड्विधविकारैः परिवर्त्तनइतिजगदितिजगच्छब्दप्रवृत्तिनिमित्तविकारकार्यभाक्चेन्नोत्तमइत्यर्थः
॥ २९ ॥ जगतिनिर्विकल्पानुभवःशिशोरपिप्रसिद्धइतितत्साम्यमाह ॥ अविज्ञातस्येति ॥ नविद्यतेविज्ञानंविशेषज्ञानंयस्यबालस्यशिशोः ॥ ३० ॥

तज्ज्ञज्ञातोनमूर्खाणांमूर्खंज्ञातोनतद्विदामित्युक्तिमुपपादितांभगवद्वचनेनसंवादयति ॥ यानिशेति ॥ ३१ ॥ तदिदंव्याचष्टे ॥ स्थितमेवेत्यादिना ॥ यद्यस्माद्धेतोःसर्वजनानामज्ञानांधकारावृतत्वात्सुषुप्तवत्स्थितमेवात्मतत्त्वमस्यतत्त्वविदःअविरामीविरामशून्योजाग्रत्जागरस्तस्माद्यानिशासर्वभूतानांतस्यांजागर्त्तीत्युच्यतइत्यर्थः ॥ यस्माच्चास्यजाग्रत्योमूढजनजाग्रत्त्वेनप्रसिद्धारसैषणाइंद्रियैःशब्दादिविषयास्वादाश्चित्रावलोकितनृत्ययुद्धादिरिवपुरोगताअपिनसंतितस्माद्यस्यांजाग्रतिभूतानिसानिशापश्यतोमुनेरित्युच्यतइत्यर्थः ॥ ३२ ॥ उत्तरार्द्धंपुनर्व्याचष्टे ॥ जात्यंधेति ॥ भातिचेन्निशास्वप्नवन्नभातिचेन्निशासुषुप्तवदितिभावः ॥ ३३ ॥ विमूढानांदुःखत्वेनप्रसिद्धंत्रिजगद्विमूढविषयमेवनप्रबुद्धविषयंयतोनसदित्यर्थः ॥ ननुज्ञस्ययदिविषयोपभोगोनास्तितर्हिकेनसत्नभोजीवतितत्राह ॥ स्वप्नेइत्यादिना ॥ ३४ ॥ जाग्रत्स्वप्नेजाग्रत्स्वप्नभोगामास्फुरंतुनामतथापिज्ञो

यानिशासर्वभूतानांतस्यांजागर्त्तिसंयमी॥ यस्यांजाग्रतिभूतानिसानिशापश्यतोमुनेः ॥ ३१ ॥ स्थितमेवाऽविरामीयज्जाग्रदस्यसुषुप्तवत्॥ चित्रावलोकितइवजाग्रत्योस्यरसैषणाः ॥ ३२॥ जात्यंधरूपानुभवसमंभुवनवेदनम्॥ भ्रांतप्रायमसद्रूपंज्ञस्यभातिनभातिच॥ ३३॥ विमूढदुःखंत्रिजगद्विमूढविषयंनसत्॥ स्वप्नेस्वप्नतयाज्ञातेरूपालोकमनःक्रियाः॥ ३४॥ नस्वदंतेयथातद्वज्जाग्रत्स्वप्नेस्फुरंतुमा॥ निर्विभागःसमाश्वस्तोऽविरोधंपरमागतः॥ ३५॥ आशीतलांतःकरणोनिर्वाणोज्ञोवतिष्ठते॥ तज्ज्ञस्याकृष्टमुक्तस्यसमंध्यानंविनास्थितिः॥ ३६॥ निम्नंविनैवतोयस्यनसंभवतिकाचन॥ अर्थएवमनस्कारोमनएवार्थरंजनम् ॥३७॥ एषएवैषआभासःसबाह्याभ्यंतरात्मकः॥आसमुद्रंनदीवाहशतसंघमयात्मकम्॥३८॥ यथैकश्लेषपिंडात्मवहत्यंबुतरंगिणाम्॥ सबाह्याभ्यंतराकारमर्थानर्थमयात्मकम्॥ ३९ ॥ मनएवस्फुरत्यर्थनिर्भासंव्याततंतथा॥नास्त्यर्थमनसोर्द्वित्वंयथाजलतरंगयोः॥ ४० ॥एकाभावेद्वयोःशांतिःपवनस्पंदयोरिव॥नूनमेकोपशांत्यैवनिःसारेपरमार्थतः ॥४१॥

निर्वाणआशीतलांतःकरणोवतिष्ठतेइतिपरेणान्वयः ॥ ३५ ॥ आकृष्टानिभोगवासनाभिश्चित्तस्यबहिराकर्षणानितैर्मुक्तस्यवर्जितस्यतज्ज्ञस्यध्यानंचित्तनिरोधयत्नंविनैवसमंस्थितिर्भवति ॥ ३६॥ तद्दृष्टांतेनोपपादयति ॥ निम्नमिति ॥ यथातडागादितोयस्यकुल्यादिनिम्नमार्गंविनाकाचनप्रवाहादिक्रियानसंभवतितद्वदित्यर्थः ॥ ननुतत्त्वज्ञानेनबाह्यार्थबाधेबहिरिंद्रियाणिनप्रवर्त्तंतांमनस्कारनिरोधस्तुकथंसिद्ध्येत्तत्राह ॥ अर्थएवेत्यादि ॥३७॥ एषमनस्कारएवैषोऽर्थाभासः ॥ यथातरंगिणामासमुद्रंनदीप्रवाहाद्यनंतभेदात्मकंप्रसिद्धंसर्वमंबुएकत्रश्लेषेएकपिंडात्मकंजलसामान्यमेवस्फुरतितथासबाह्याभ्यंतरंसर्वार्थाकारंमनएवस्फुरतीतिपरेणान्वयः ॥ ३८ ॥३९ ॥ ४० ॥अस्त्वेवंकिंततस्तत्राह ॥ एकेति ॥ तत्त्वज्ञानेनार्थबाधेमनोपिबाधितमेवेतिनमनस्कारप्रसक्तिरित्यर्थः ॥ ४१ ॥

॥ ४२ ॥ अयंचतयोर्बाधःस्वाप्नव्याघ्रनाशवदनष्टनाशइत्याह ॥ अनष्टेइति ॥ ४३ ॥ यथामृन्मयेप्रतिमायांभ्रांतिकल्पितेद्विषतिस्ववैरिणिज्ञानाद्बाध्यमानेतस्मिन्द्विषद्भावस्तत्प्रयुक्तभयंचनश्यतस्तद्वदित्यर्थः ॥ यथासंस्थंपारमार्थिकब्रह्मस्वभावेन ॥ ४४ ॥ अन्यत्सांसारिकदशाप्रसिद्धरूपादन्यत्पूर्णानंदरूपंसंपन्नेभावरूपिणिपरमार्थसद्रूपिणिसंहितेहेतुफलभावेनघटितेअर्थःसुखदुःखभोगस्तत्साधनंजगत्त्रैलोक्यंचयेनतथाविधःसंसारकालःअपिशब्दात्कालकृताःपदार्थानांजन्मादिविकारास्तज्ज्ञोकाअज्ञस्तद्विषयःशब्दादिविषयोपीतिसर्वंतत्त्वज्ञदृष्ट्याअसत् ॥ ४५ ॥ तत्रदृष्टांतावाह ॥ पार्श्वेति ॥ क्लीबपदेनअधीरोबालादिर्लक्ष्यतेतदपेभासमानयक्षवच्च ॥ ४६ ॥ वंध्यापिपुत्रपौत्रादि

एकत्वादर्थंमनसीसममेवाशुशाम्यतः ॥ अर्थःसंकल्परूपात्मानेहितव्योविजानता ॥ ४२ ॥ मनश्चसम्यग्ज्ञानेनशांतिरेवंभवेत्तयोः ॥ अनष्टेनश्यतश्चैतेज्ञस्यार्थमनसीस्वतः ॥ ४३ ॥ मृन्मयेद्विषतिज्ञानाद्वीषद्भावभयेयथा ॥ यथासंस्थंस्थितेएवज्ञस्यार्थमनसीसदा ॥ ४४ ॥ किमप्यपूर्वमेवान्यत्संपन्नेभावरूपिणि ॥ संहितार्थजगत्कालोप्यज्ञोज्ञविषयोप्यसत् ॥ ४५ ॥ पार्श्वसुप्तनरस्वप्नइवक्लीबाग्रयक्षवत् ॥ ज्ञस्यसाज्ञंजगन्नास्तिवीरस्येवपिशाचधीः ॥ ४६ ॥ ज्ञमज्ञोभावयत्यज्ञंचिरंवंध्यापिवर्द्धते ॥ विनैवज्ञातशब्दार्थमर्थभावमिवागतम् ॥ ४७ ॥ स्थितंबोधमनाद्यंतंस्वभावंसंर्गगंविदुः ॥ मनःशब्दार्थरहितंविभागांतविवर्जितम् ॥ ४८ ॥ बोधवारिमनोबुद्धितरंगमिवनिर्मलम् ॥ क्वसंभवतएवांतःकेवार्थमनसीकिल ॥ ४९ ॥ निरर्थिकैवविश्रांतिःस्वभावमयमास्यताम् ॥ शुद्धबोधस्वभावस्यैराकाशमिवशारदैः ॥ ५० ॥ जाग्रत्स्वप्नसुषुप्तांतैर्मनस्त्वंनानुभूयते ॥ विधूयानंतनानात्वमसद्भावमनामये ॥ ५१ ॥ ज्ञेयंरज्जुरिवाशेषंस्वभावेतिष्ठचिद्घने ॥ ज्ञप्तिरेवांतरंयात्यंचार्थत्वमधितिष्ठति ॥ ५२ ॥ बीजंशाखाफलानीवफातोर्थमनसीवद ॥ ज्ञेयासंभवतोज्ञप्तिरप्यनाख्यंपदंगता ॥ ५३ ॥

विस्तारेणवर्द्धतेतद्दृष्ट्येतिशेषः ॥ तत्त्वज्ञास्तर्हिजगत्स्वभावंकीदृशंविदुस्तमाह ॥ विनैवेति ॥ ज्ञातशब्दस्यार्थोज्ञानविषयत्वंतंविनैवस्वप्रकाशत्वादेवार्थाभासमिवस्थितंभासमानमनाद्यंतंबोधंब्रह्मैवेतिविदुरित्यर्थः ॥ ४७ ॥ बाह्यार्थैर्पृक्तवेदनप्रकारआंतरेपुमानसेप्यपिबोध्यइत्याह ॥ मनःशब्देति ॥ ४८ ॥ निर्मलंविदुरित्यनुषज्जते ॥ एवंमपंचितयोरज्ञतत्त्वज्ञजगद्बोधप्रकारयोर्मध्येद्वितीयएवोपादेयोयथार्थत्वात्नाद्यइत्याह ॥ क्वेति ॥ ४९ ॥ स्वभावस्थितौनिरूढायामवस्थात्रयस्यतुरीयबोधमात्रतासंपत्तेर्मतव्याभावान्मनसोमनस्त्वमप्यपैतीत्याह ॥ शुद्धेति ॥ शारदैःपर्वैर्ज्योतिर्भिर्जनैर्वा ॥ ५० ॥ जाग्रत्स्वप्नसुषुप्तलक्षणैरंतैरवस्थापरिच्छेदैःअनंतानिनानात्वानियस्मिंस्तथाविधमशेषंज्ञेयंविधूयाध्यस्तसर्पंविधूयरज्जुरिवानामयेस्वभावेतिष्ठ ॥ ५१ ॥ अधितिष्ठतिपक्षे ॥ ५२ ॥ ज्ञप्तिर्बुद्धिवृत्तिः ॥ ५३ ॥

१ सर्वगमित्यपिक्वचित्पाठः ॥

66

स्वभाःस्वप्रकाशः ॥ अर्थमनसोःपरस्पराधीननिरूपणत्वादभेदेद्वयोरपिभ्रांतिमात्रतापर्यवस्यतीत्याह ॥ अर्थएवेति ॥ बाह्यस्यांतरभावात्मकत्वादांतरस्यबहिरभावात्मकत्वाच्चे तिभावः ॥५४॥ अर्थइवसंस्क्रियतइत्यर्थसंस्कारः ॥ घञंतत्वात्पुमान्घञवंतइत्यजहल्लिंगः ॥ तह्यर्थोमनश्चतत्त्वतःकितत्राह ॥ सर्वात्मत्वादिति ॥ अजस्यब्रह्मणःसर्ववस्तुना मात्मत्वान्मनइतिरूपेणापितदेवभासते ॥ तन्निष्कृष्टरूपेपितुच्छमेवेतिभावः ॥ ५५ ॥ ब्रह्ममनोरूपेणेवमनोप्यर्थरूपेणनिष्कारणमेवभासतइत्याह ॥ भ्रमानुभवतइति ॥ ५६ ॥ ॥५७॥५८॥ अभावभावोबोधः ॥५९॥ केनोपायेनतर्हिइतराअहमितिसत्ताशाम्यतितमाह ॥ मृगतृष्णेति ॥ अहमहंकारोमृगतृष्णांबुसदृशःशून्यस्वरूपकइत्येवशाम्यति ॥ ॥ ६० ॥ कुतएवंतत्राह ॥ ज्ञात्वेति ॥ यस्तद्ब्रह्मसर्गादौसर्वज्ञतयास्वात्मभूतमेवस्रष्टव्यपदार्थंज्ञात्वाताद्दशज्ञानमयोहिरण्यगर्भःस्वयंभूत्वातत्संकल्पानुसारेणस्वयमेवसबाह्याभ्यं

शांताशेषविशेषात्मातेनशेषोस्तिसत्स्वभाः॥ अर्थएवमनस्कारःसचाभावात्मकोभ्रमः॥ ५४॥ मनएवार्थसंस्कारःसचाभावात्मको भ्रमः॥ सर्वात्मत्वादजस्यैतदप्यकारणकंमनः॥ ५५॥ भ्रमानुभवतोर्थश्चमिथ्यैवास्तीवभासते ॥ अकारणकमेवार्थनिर्भासंभासते मनः॥ ५६॥ विद्युद्विलसिताकारमस्थिरंतरलायते॥ त्वंमनस्कारमात्रात्मासंस्तुतौविभ्रमायसे॥ ५७॥ स्वभावैकपरिज्ञानान्नासिना पिभ्रमायसे॥ मनसैवहिसंसारआत्मबोधेनशाम्यति॥ ५८॥ शुक्तिरूप्यभ्रमाकारोजनोमिथ्यैवताम्यति ॥ अभावभावस्तुपरंबोध रूपमसंस्तुतिः॥ ५९॥ निर्वाणादितरासत्ताद्दुःखायाहमितिभ्रमः ॥ मृगतृष्णांबुरूपोहमसच्छून्यस्वरूपकः॥६०॥ इत्येवात्मपरिज्ञाना दहमित्येवशाम्यति॥ ज्ञात्वाज्ञानमयोभूत्वासबाह्याभ्यंतरार्थताम्॥ ६१॥ गतंस्वमत्यजद्रूपंतरंगत्वंयथापयः ॥ मूलशाखाग्रपर्यंता सत्ताविटपिनोयथा॥ ६२॥ निर्विकारमलंज्ञप्तेर्ज्ञेयांतैकैवभासते ॥ यथायोजनलक्षाभमेकमेवामलंनभः॥ ६३॥ एकमेवतथाज्ञा नंज्ञेयांतंभात्यखंडितम्॥ शून्यत्वादेकममलंयथासर्वगमेवखम्॥ ६४॥ तथैकममलंज्ञात्वाज्ञानज्ञेयदशास्वपि ॥ घृतेनात्माघनीभू यपाषाणीक्रियतेयथा ॥ ६५ ॥ चिताचेत्यतयात्मैवस्वचित्तीक्रियतेतथा ॥ देशकालंविनैवात्मावोधाबोधेनचित्तताम्॥ ६६॥ अबु द्धोनीयतेन्यायैरेकमेवैषसुस्थितः॥ अत्रयद्यप्यबोधादेःसंभवोनास्तिकश्चन॥ तथापिकल्प्यतेत्रैवबोधनायपरस्परम् ॥ ६७॥

तरार्थतांस्वरूपमत्यजदेवगतमित्यर्थः ॥ ६१ ॥ अस्त्वेवंकिंततस्तत्राह ॥ मूलेति ॥ इदमतःसिद्धं यथाविटपिनोमूलाच्छाखाग्रपर्यंताएकैवसत्तातथाज्ञातृज्ञानज्ञेयरूपेजगत्य प्यलमत्यंतंनिर्विकारंस्थिताज्ञेयांताएकैवसत्ताभासतेनसत्तांतरमस्तीति ॥ ६२ ॥ सत्तैक्येदृष्टांतांतररपिसत्तैक्यमुपपादयति ॥ यथेत्यादिना ॥ ६३ ॥ तस्यनैर्मल्येप्ययमेव दृष्टांतइत्याशयेनाह ॥ शून्यत्वादिति ॥ ६४ ॥ ६५ ॥ बोधरूपस्यस्वतत्त्वस्याबोधेन ॥ ६६ ॥ तदात्मानंस्वयमकुरुतेतिश्रुतिदर्शितैर्लाघवतर्कानुगृहीतन्यायैःशंकते ॥ अत्रे ति ॥ अत्रशुद्धेचिदात्मनि ॥ परिहरति ॥ तथापीति ॥ अत्रैवअस्यामबोधदशायामेवनतत्त्वतइत्यर्थः ॥ तथाचोक्तंवार्त्तिके ॥ अविद्यास्तीत्यविद्यायामेवासित्वाप्रकल्प्यते ॥ ब्रह्मदृष्ट्यात्वविद्येयंनकथंचनयुज्यतइति ॥ ६७ ॥

असंभवद्रूपत्वादेवतत्त्वज्ञानोदयेनाज्ञानेनसहसर्वेगलंतीत्युपसंहरति ॥ महानुभावाइति ॥ अतएवमहानुभावाअधिकारिदेहादिसंघातास्तत्त्वज्ञानेनविमूढभावस्यमूलाज्ञानस्य ज्ञानेनोपशमेघृतकाठिन्यवत्स्वात्मन्येवगलंति ॥ तद्गलनाच्चानंततयानिरतिशयानंदपूर्णभावेनशांताःसंतोनिर्भ्रांतयोनिर्विक्षेपानित्यमनवरतमेवसमाधानंसमाधिविश्रांतिस्तत्स्व राभवंतीत्यर्थः ॥ ६८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेत्रिचत्वारिंशःसर्गः ॥ ४३ ॥ ॥ ५ ॥ ॥ वर्ण्यतेवर्द्धनीयोत्रसमाधानसुरद्रुमः ॥ त लेतस्यचविश्रांत्यैश्रांतोदेहिमनोमृगः ॥ १ ॥ क्रमात्बीजक्षेत्रसेकांकुरीभावपत्रकांडशाखापुष्पफलच्छायाविस्तारादिवर्णनक्रमात् ॥ आजीवनमाजीवोविवेकिजनैःसर्वप्र कारैरुपजीवनंतत्फलशालिनीम् ॥ लताःशाखाःकल्पलताश्वतत्सहिताम् ॥ मनोमृगविश्रांतिदाम् ॥ सत्तांस्थितिम् ॥ १ ॥ आजीव्यतेसर्वात्मनाउपजीव्यतइत्याजीवस्तथा

महानुभावाविगताभिमानाविमूढभावोपशमेगलंति ॥ निर्भ्रांतयोनंततयैवशांतानित्यंसमाधानमयाभवंति ॥६८॥ इ०वा०म० वा०दे०मो०नि०उ०ब्रह्मैकताननोपदेशोनामत्रिचत्वारिंशःसर्गः ॥ ४३ ॥ ॥५॥ ॥श्रीरामउवाच॥ ॥क्रमात्समा धानतरोराजीवफलशालिनीम् ॥ सलताकुसुमांब्रूहिसत्तांविश्रांतिदांमुने ॥ १ ॥ ॥ श्रीवसिष्ठउवाच॥ ॥ आजीवमुद्यदुत्सेधंविवे किजनकानने ॥ पत्रपुष्पफलोपेतंसमाधानतरुंशृणु ॥ २ ॥ यथाकथंचिदुदितंदुःखेनस्वयमेवच ॥ संसारवननिर्वेदंबीजमस्यविदुर्बु धाः ॥ ३ ॥ शुभजालहलाकृष्टंरसासिक्तमहर्निशम् ॥ प्रवहद्व्यसनाकुल्यंक्षेत्रमस्यविदुर्बुधाः ॥४॥ समाधिबीजंसंसारनिर्वेदःपततिस्व यम् ॥ चित्तभूमौविविक्तायांविवेकिजनकानने ॥ ५ ॥ स्वचित्तभूमौपतितंध्यानबीजंमहाधिया ॥ सेकैरमीभिर्यत्नेनसंसेक्तव्यमखेदि ना ॥ ६ ॥ शुद्धैःस्निग्धैःपवित्रैश्चमधुरैरात्मनोहितैः ॥ सत्संगमनवक्षीरैरिंदुवैरमृतैरिव ॥ ७ ॥ अंतःशून्यप्रदैःपूर्णैःस्वच्छैरमृतशीतलैः ॥ वि स्तरैरमृताकुल्याशास्त्रार्थवरवारिभिः ॥ ८ ॥

विधम् ॥ २ ॥ शत्रुस्वजनापमानादिजन्यदुःखेनभाग्यवशात्स्वयमेववासाधुसुहृज्जनोपदेशादिनानिमित्तांतरेणवायथाकथंचिदुदितंनिर्वेदमुत्कटजिहासात्मकंपरवैराग्यमस्य समाधानतरोर्बीजंविदुरित्यर्थः ॥३॥४॥ तत्रसंसारनिर्वेदरूपंसमाधिबीजंविवेकिजनलक्षणेकाननेनंदनेविविक्तायांविवेकपरिष्कृतायांचित्तभूमौस्वयमेवपततिनवापापेक्षास्ती त्यर्थः ॥ ५ ॥ उक्तवैराग्यलक्षणंध्यानबीजंमहाधियातत्परिवर्द्धनोद्युक्तदृढधियापुरुषेणाऽमीभिर्वक्ष्यमाणलक्षणैःसेकैःसंसेक्तव्यंनप्रसूतिवैराग्यवत्पुनर्भोगासक्त्यानाशनीयमि त्यर्थः ॥ अखेदिनाकामक्रोधादिवेगःखेदस्तत्सहिष्णुना ॥ ६ ॥ तत्रप्रथमंसत्संगमलक्षणैर्नवैःक्षीरैःपश्चात्तन्मुखावगतशास्त्रामृतैःसेक्तव्यमित्याह ॥ शुद्धैरितिद्वाभ्याम ॥ ७ ॥ ने तिनेतीतिसर्वद्वैतनिषेधादंतःसर्वसंसारशून्यात्मप्रदैःअतएवपूर्णैःसर्वतापोपशमनादमृतवत्स्वादुशीतलैः गुरुहृदयस्थस्यब्रह्मसरसोव्याख्याद्वाराप्रसृतैः अमृतप्रवाहस्यासमंतात्कु ल्यावद्द्वारभूतश्रवणमननादिशास्त्रार्थवरवारिभिः ॥ ८ ॥

१ मनोविदुरित्यपिक्वचित्पाठः ॥ अयमेवयुक्तइतिभाति

ध्यानस्यबीजंसंसारनिर्वेदरूपंरक्ष्यम् ॥ ९ ॥ केनेयत्नास्तानाह ॥ तपइति ॥ तपोत्रभगवदुक्तंदेवद्विजगुरुप्राज्ञपूजनंशौचमार्जवमित्यादिकंकायिकंवाचिकंमानसंचत्रिविधं सात्विकंतल्लक्षणेनप्रकीर्यंतइतिप्रकाराःक्षेत्रदोहदास्तद्दानेन ॥ पदार्थाअमानित्वादयस्तेषांघटनेनईशितैःसमर्थितैः ॥ तीर्थायतनादिपुण्यस्थानेविश्रांतिर्वासस्तल्लक्षणस्यवृति विस्तारस्यप्राकारप्राचीराद्यावरणविस्तारस्यकल्पनैः ॥ १० ॥ एवंसेचनाद्युपायैरंकुरितस्यसंजातांकुरस्यास्यबीजस्यरक्षणोपायेषुशिक्षिताशयोनिपुणतरोमुदिताख्ययाप्रि ययापत्न्यान्वितःसंतोषनामारक्षितापरिपालकपुरुषःकर्त्तव्यः ॥ ११ ॥ अस्माद्वृक्षकाद्धेतोःपश्चात्पूर्ववासनासुस्थितान्आशालक्षणान्विहगान्परेष्वात्मातिरिक्तेषुपुत्रमित्रध

स्वचित्तभूमौपतितंपरिज्ञायमहाधिया ॥ बीजंसंसारनिर्वेदोरक्ष्यंध्यानस्ययत्नतः ॥ ९ ॥ तपःप्रकारदानेनपदार्थघटनेशितैः ॥ तीर्थायतनविश्रांतिवृतिविस्तारकल्पनैः ॥ १० ॥ कर्तव्योंकुरितस्यास्यरक्षिताशिक्षिताशयः ॥ संतोषनामाप्रिययानित्यंमुदितयान्वितः ॥ ११ ॥ पश्चात्स्थिताशाविहगान्परप्रणयपक्षिणः ॥ अस्मादापततःकामगर्वगृध्रान्निवारयेत् ॥ १२ ॥ मृदुभिःसत्क्रियाकुंतैर्विवेकार्कातपैरपि ॥ अचिंत्यालोकदैरस्मान्मार्जितव्यंरजस्तमः ॥ १३ ॥ संपदःप्रमदाश्चैवतरंगाभोगभंगुराः ॥ पतंत्यशनयस्तस्मिन्दुष्कृताभ्रसमीरिताः ॥ १४ ॥ धैर्योदार्यदयामंत्रैर्जपस्नानतपोदमैः ॥ विनिवारयितव्यास्ताःप्रणवार्थत्रिशूलिना ॥ १५ ॥ इतिसंरक्षितादस्माद्ध्यानबीजात्प्र वर्त्तते ॥ आभिजात्योन्नतःश्रीमान्विवेकाख्योनवांकुरः ॥ १६ ॥ तेनसाचित्तभूर्भातिसप्रकाशाविकासिनी ॥ भवत्यालोकरम्याचस्वयं थाभिनवेंदुना ॥ १७ ॥ तस्मादंकुरतःपत्रेउभौविकसतःस्वयम् ॥ एकंशास्त्राभिगमनंद्वितीयंसाधुसंगमः ॥ १८ ॥ स्तंभमंपनिबध्नाति स्थैर्यंनामसमुन्नतिम् ॥ संतोषत्वग्विवलितंवैराग्यरसरंजितम् ॥ १९ ॥ वैराग्यरसपुष्टात्माशास्त्रार्थप्रावृषान्वितः ॥ स्वल्पेनैवस्वकाले नपरामेतिसमुन्नतिम् ॥ २० ॥ शास्त्रार्थसाधुसंपर्कवैराग्यरसपीवरः ॥ रागद्वेषकपिक्षोभैर्नमनागपिकंपते ॥ २१ ॥ अथतस्मात्प्रजायं तेविज्ञानालंकृताकृतेः ॥ लतारसविलासिन्यइमावितंतदेशगाः ॥ २२ ॥

नादिषुप्रणयोनुरागस्तद्रूपान्पक्षिणःकामगर्वादिगृध्रांश्चध्यानांकुरविघातार्थमापततोनिवारयेत् ॥ १२ ॥ अहिंसाप्रधानत्वान्मृदुभिर्यमनियमासनप्राणायामेश्वरोपासनादि सत्क्रियालक्षणैःकुंतैर्मार्जनीपूलैः ॥ अस्मादंकुरक्षेत्राद्रजोमार्जितव्यम् ॥ एवमचिंत्यब्रह्मलोकदैर्विवेकातपैस्तमोऽज्ञानतिमिरमपिमार्जितव्यम् ॥ १३ ॥ तस्मिन्अंकुरे ॥ १४ ॥ प्रणवमात्राभिर्विराडादिभिःस्थूलसूक्ष्मप्रपंचविलापनेनतद्बोधेनेतियावत् ॥ १५ ॥ आभिजात्येनपुष्टिसौंदर्यातिशयेनोन्नतः ॥ १६ ॥ १७ ॥ १८ ॥ स्तंभंकांडम् ॥ स्थैर्यंदृढमू लताम् ॥ समुन्नतिमुच्छ्रायम् ॥ १९ ॥ २० ॥ २१ ॥ विज्ञानंश्रवणावर्त्तनजंज्ञानम् ॥ इमावक्ष्यमाणाः ॥ विततदेशगाःप्रतानविस्तीर्णाअपरिच्छिन्नात्मप्रदेशगताश्च ॥ २२ ॥

स्फुटतास्वात्मतत्त्वस्यस्फुटीभावसदेकसत्यता ॥ सत्तातद्रात्मनास्थितिः ॥ धीरतातत्राप्यकंप्यता ॥ समतासर्ववैषम्यनिवृत्तिः ॥ २३ ॥ गुणाःशांत्यादयःपत्राणियासाम् ॥ यतेःसंन्यासिनः ॥ २४ ॥ भविष्यत्ज्ञानंमूलाज्ञानोच्छेदक्षमोब्रह्मसाक्षात्कारःसप्तमभूमिकाविश्रांतिपर्यंतः ॥ २५ ॥ २६ ॥ सर्गातपंसांसारिकतापम् ॥ २७ ॥ निरोधंचित्तस्थैर्यम् ॥ २८॥ पीठंमूलबंधम् ॥ फलस्यकैवल्याख्यस्यघटिकांघटयित्रीम् ॥ मंगलादितांशांत्यादिकल्याणगुच्छश्रियंरचयति ॥२९॥३०॥ तलस्यमूलभूमेर्हृदयस्यप्रसिद्धानाध्यात्मिकादितापानपहरतितच्छीला॥३१॥ अवांतरेषुसंसारप्रांतरेषुश्रांतोमनोमृगोयस्यांछायायांविश्राम्यति ॥ तमेवमनोमृगंसर्गोपांत्यश्लोकस्थंमनोहरिणकइत्यंतंबहुतरश्रमादिहेतूपपादकैर्विशेषणैर्वर्णयति ॥ आजन्मेत्यादिना ॥ पथिदैवात्प्राप्तेसन्मार्गेपिनानावादिकोलाहलैराकुलोव्यग्रःसन्भ्रंशितइत्यर्थः ॥ ३२ ॥ अरिभिःकामाद्यरिषड्वर्ग

स्फुटतासत्यतासत्ताधीरतानिर्विकल्पता ॥ समताशांततामैत्रीकरुणाकीर्त्तिरार्यता ॥ २३ ॥ लताभिर्गुणपत्राभिःसध्यानतरुरूर्जितः ॥ यशःपुष्पाभिरेताभिःपारिजातायतेयतेः ॥ २४ ॥ इत्यसौज्ञानविटपीलतापल्लवपुष्पवान् ॥ भविष्यज्ज्ञानफलदोदिनानुदिनमुत्तमः ॥ २५ ॥ यशःकुसुमगुच्छाढ्योगुणपल्लवलासवान् ॥ वैराग्यरसविस्तारीप्रज्ञामंजरिताकृतिः ॥ २६ ॥ सर्वाःशीतलयत्याशाःप्रावृषीवपयोधरः ॥ सर्गातपंशमयतिसूर्यतापमिवोडुपः ॥ २७ ॥ प्रतनोतिशमच्छायांछायामिवघनागमः ॥ निरोधमास्फारयतिशमोनिलइवांबुदम् ॥ २८ ॥ निबध्नात्यात्मनापीठंकुलाचलइवस्थितम् ॥ फलस्यरचयत्यूर्ध्वंघटिकामंगलादिताम् ॥ २९ ॥ विवेककल्पवृक्षेतुवर्द्धमानेदिनेदिने ॥ छायावितानवलितेपुंसोत्हृदयकानने ॥ ३० ॥ प्रवर्त्ततेशीतलतातलतापापहारिणी ॥ अभ्युल्लसन्मतिलतातुषारोदरसुंदरी ॥ ३१ ॥ यस्यामवांतरश्रांतोविश्राम्यतिमनोमृगः ॥ आजन्मजीर्णपथिकःपथिकोलाहलाकुलः ॥ ३२ ॥ सत्तामात्रात्मशारीरचर्मार्थंप्रेक्षितोरिभिः ॥ नानातासारसाकारगोपयज्जर्जरोन्मुखः ॥ ३३ ॥ संसारारण्यविसरद्वासनापवनेरितः ॥ अहंतातापसरितासर्वदाविप्रदारदी ॥ ३४ ॥ दीर्घांदरीदूरचितसारसंचारजर्जरः ॥ पुत्रपौत्रपरामर्शप्रतापात्पतितोऽवटे ॥ ३५ ॥

लुब्धकैः सत्तामात्रात्मायःशारीरःपुरुषस्तल्लक्षणस्यचर्मणोऽपहारार्थंप्रेक्षितोऽनुसृतइतियावत् ॥ नानातालक्षणेष्वसारेषुसाकारेषुशरीरादिकंटककुंजेषुमुहुर्मुहुर्निलीयस्वंगोपयंश्वासौतद्दोषकंटकैर्जर्जरमूर्ध्वंमुखंयस्यसचेतिबहुव्रीह्युत्तरपदःकर्मधारयः ॥ ३३ ॥ अहंतालक्षणयातापसरितामृगतृष्णानद्यासर्वदाविप्रधावनेनदारदोविषभेदःसोस्यास्तीतिदारदीविषाक्रांतइवांतर्दाहतृष्णादिव्याकुलइत्यर्थः ॥ ३४ ॥ दीर्घेष्वेवभोगविस्तारेष्वादरोस्यास्तीत्यादरीनाल्पसंतुष्टइत्यर्थः ॥ अतएवदूरेप्युपचितेषुसारेषुहरिततृणप्रायेषुविषयेषुसंचारेणधावनेनजर्जरःशिथिलितगात्रः ॥ पुत्रपौत्रादीनांपरामर्शःपरिपालनंतत्प्रयुक्तादाध्यात्मिकादित्रिविधदावाग्नितापादवटेअनर्थगर्त्तेपतितः ॥ ३५ ॥

मूलस्थविप्रेत्यस्यायमर्थः

लक्ष्मीःसंपत्तल्लक्षणासुलतासुपादवेष्टनेनविलुठनाच्छत्रुचोरराजादिप्रयुक्तैर्बंधनताडनदंडनादिसंकटैःकुंठितांगकः ॥ कल्लोलैःअशनायापिपासाशोकमोहजरामृत्युलक्षणैरूर्मिभिः ॥ ३६ ॥ नशंकितःसंभावितोविधिर्दैवंयेन ॥ कृताकृतिःसंकुचिताकारः ॥ ३७ ॥ ज्ञेयानांनेत्रादिज्ञानेंद्रियास्वाद्यानांगीतघंटारावयवांकुरादीनामास्पदेभ्योनिमित्तभूतेभ्योलुब्धकक्षेत्रकादिभ्यःसमायाताद्दुःखसायकाच्छंकितः ॥ दृषद्गिराहरणैःप्रहारैरिवपूर्वंपूर्वदुःखानुभवसंस्कारैरंकितः ॥ ३८ ॥ उन्नतानतेपूर्ध्वाधस्तनेषुस्वर्गनरकादिषुक्रमात्संपातनिपातेन ॥ दृषदाहरणांकितइत्यत्रदृषत्पदार्थंदर्शयति ॥ विकारेति ॥ विकाराःकामक्रोधभयादयः ॥ पारंपर्येणनैरंतर्येण ॥ ३९ ॥ ४० ॥ सुदुर्ग्रहोगजेंद्रःकामः ॥४१॥ विपोथितोविमर्दितः ॥४२ ॥ कोपदावानलेनप्लुष्टोदग्धः ॥ अतएवपृष्ठेविस्फोटादिवबहिर्दाहवान् ॥ सदागतागतैर्विषयेषुपुनःपुनर्भ्रमणैरनंतांचनाशोकादिदीर्घदुःखैरंतःप्रदाहवान् ॥४३॥४४॥ दारिद्र्यलक्षणेनद्वीपिनाव्याघ्रेणानुद्रुतः ॥ पुत्रकलत्रासक्तिलक्षणयाव्यामोहमिहिकयाअंधत्वेसतिकूटेषुकपटेषुगिरिशृंगेष्ववटेषुनीचकृत्येषुगर्त्तेषुचलुठत्तनुः ॥ ४५ ॥ हृदयस्योत्कंपनंभयंतेनातुरः ॥ येनप्रसिद्धेनमरणेनमृत्युव्याघ्रेणरणेसंप्रहारेवर्कैतेआवदतेदृश्वंतिवाल्का:स्वनरवास्तेषांपुष्पमिवसुखदार्यईक्षितः ॥ ४६ ॥ गर्वेणार्थादजगरेणनिगिरणायदूरतोजनायस्मात्तद्दूरतोजनंमहारण्यंतत्रसेवितःचिरंप्रतीक्षितइतियावत् ॥ कामैर्निमित्तैःसमंततोदैन्ययाञ्चादिनादंतविकासाद्वितानिताविस्तारितादिवदंतप्रभायवांकुरायेन ॥४७॥ तारुण्यलक्षणेननार्यर्थंसुहृदानत्वतः ॥ पवनैर्झंझापवनसदृशैरिंद्रियैर्दुःसंचारेषुनरकस्थावरादियोनिकांतारेषुवर्जितोबहुशःक्षिप्तः ॥४८॥

लक्ष्मीलताविलुठनात्संकटैःकुंठितांगकः॥ तृष्णाश्रीसरितंगृह्णन्कल्लोलैर्दूरमाहतः॥ ३६ ॥ व्याधिदुर्व्याधवैधुर्यपलायनपरायणः॥ अशंकितविधिर्व्याधपातादिवकृताकृतिः॥ ३७॥ ज्ञेयास्पदसमायातदुःखसायकशंकितः॥ वैरिविद्रवणव्यग्रोदृषदाहरणांकितः॥ ३८॥ उन्नताननतसंपातनिपातेनातिघूर्णितः॥ विकारोपलनिर्घातैःपारंपर्येणचूर्णितः॥ ३९॥ तृष्णाचारुलताजालप्रवेशवशविक्षतः॥ स्वप्रज्ञारचिताचारःपरमायास्वशिक्षितः॥ ४०॥ इंद्रियग्राममागत्यप्रपलायनतत्परः॥ सुदुर्ग्रहगजेंद्रोग्रविस्फूर्जनविमर्दितः॥ ४१ ॥ विषयाजगरोदारविषफूत्कारमूर्छितः॥ कामुकःकामिनीभूमौरसात्प्रायोविपोथितः ॥ ४२ ॥ कोपदावानलप्लुष्टपृष्ठविस्फोटदाहवान् ॥ सदागतागतानेकदीर्घदुःखप्रदाहवान्॥४३॥ स्वात्मलप्राभिलाषांशदंशदोषैरुपद्रुतः॥ भोगलोभलसन्मोदश्रृगालचिरविद्रुतः॥४४॥ स्वकर्मकर्त्तृतोद्भ्रांतदारिद्र्यद्वीप्यनुद्रुतः॥ व्यामोहमिहिकांधत्वकूटावटलुठत्तनुः॥ ४५॥ मानसिंहसमुल्लासहृदयोत्कंपनातुरः॥ मरणेनरणेयेनवृकपुष्पमिवेक्षितः॥ ४६॥ गर्वेणगिरणायाशुदूरतोजनसेवितः॥ कामैःसमंततोदंतवितानितयवांकुरः॥ ४७॥ तारुण्यनारीसुहृदाक्षणमालिंग्यवर्जितः॥ दुःसंचारेषुपवनैःकुपितैरिववर्जितः॥ ४८॥

हेराजन्नितिदशरथस्यभाविदृत्त्यारामस्यवासंबोधनम् ॥ ईदृशोयंमनोहरिणकःकदाचिद्बहुजन्मसंचितसुकृतपरिपाकभाग्योदयकालेकचिदधिकारिजन्मनिशमादिसाधनस
हितंयथास्यात्तथावर्णितलक्षणेध्यानतरौनिर्वृतिंविश्रांतिसुखंयाति ॥ यथाआसमंताज्जीवतीत्याजीवंप्राणिजातंरात्रौशीतांधकारार्तंभास्वतिसूर्येऽभ्युदितेनिर्वृतियातितद्वदित्य
र्थः ॥ ४९ ॥ हेश्रोतारःतालीतमालादिवृक्षमूलविश्रांतिसदृशेषुभूम्यादिसत्यलोकांतलोकवासेषुप्रचुरपुष्पविलासहाससदृशैरनित्यभोगाभासैर्यस्यनिरतिशयस्यभूमाख्यस्यसुख
स्यनामापिमूढाआत्मज्ञानशून्याजनानविदंतितत्तादृशमपुनरावृत्तिमोक्षविश्रांतिसुखंवःस्वमनोमृगःप्रागुक्तरीत्याक्षेत्रबीजसेकादिनावर्द्धिताच्छमतरोर्ध्यानकल्पवृक्षात्प्राप्नोती
त्यर्थः ॥ ५० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उत्तरार्धेचतुश्चत्वारिंशःसर्गः ॥ ४४ ॥ ॥ ७ ॥ ॥ वर्ण्यंतेमनसोध्यानपादपारोहणक्रमः ॥ आरोहतःसुखो

कदाचिन्निर्वृतिंयातिसशमंचतरौक्वचित् ॥ मनोहरिणकोराजन्नाजीवमिवभास्वति ॥ ४९ ॥ तालीतमालवकुलादिकवृक्षगुल्मवि
श्रांतिषुप्रचुरपुष्पविलासहासैः ॥ नामापियस्यनविदंतिसुखस्यमूढाःप्राप्नोतितच्छमतरोःस्वमनोमृगोवः ॥ ५० ॥ ॥ इ०वा०महा
रामायणेवा०दे०मो०निर्वाण०उ०मनोमृगविपद्वर्णनंनामचतुश्चत्वारिंशःसर्गः ॥ ४४ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥
इतिविश्रांतवानेषमनोहरिणकोरिहन् ॥ तत्रैवरतिमायातिनयातिविटपांतरम् ॥ १ ॥ एतावताऽथकालेनसविवेकद्रुमःफलम् ॥ अंत
स्थंपरमार्थात्मशनैःप्रकटयत्यलम् ॥ २ ॥ ध्यानद्रुमफलंपुण्यंतदसौस्वमनोमृगः ॥ अधःस्थितःप्रांतगतंतस्यपश्यतिसत्तरोः ॥ ३ ॥ आ
रोहतिनरोवृक्षंतदास्वादयितुंफलम् ॥ अन्यवर्गपरित्यागोवितताध्यवसायवान् ॥ ४ ॥ विवेकवृक्षपान्नामवृत्तीस्त्यजतिभूगताः ॥ उ
न्नतंपदमासाद्यभूयोनाधःसमीहते ॥ ५ ॥ तेनोत्तमफलार्थेनसंस्कारान्प्राक्तनानसौ ॥ विवेकपादपारूढस्त्यजत्यहिरिवत्वचम् ॥ ६ ॥

त्कर्षोप्युत्तरोत्तरभूमिषु ॥ १ ॥ हेअरिहन् ॥ तत्रध्यानकल्पतरावेव ॥ १ ॥ एतावताप्राग्वर्णितेनगुच्छारंभतिनमनोमृगविश्रांत्यंतेनचकालेनसवर्णितोविवेकसहितध्यानद्रुमो
ऽतस्थंपंचकोशांतस्थंगुच्छांतस्थंचपरमार्थात्मपारमार्थिकस्वस्वरूपंकैवल्यफलंशनैर्वक्ष्यमाणभूमिकारोहणक्रमेणपरिपच्यमानंप्रकटयतिसाक्षादनुभावयति ॥ २ ॥ तत्राद्या
वसंभावनादोषस्येषत्क्षयान्मंदांधकारेघटादेरिवसंभावनाप्रायंसाक्षात्कारंचतुर्थभूमिकाद्वारंदर्शयति ॥ ध्यानेति ॥ प्रांतगतंशाखाप्रसंलग्नम ॥ ३ ॥ प्राक्तनमृगरूपकस्यवृक्षा
रोहणेअनुपयोगाच्चापलपशुभावादिनिवृत्तेश्चनरइत्युक्तिः ॥ ४ ॥ कथमारोहतितदाह ॥ विवेकेति ॥ विवेकवृक्षेदृढप्रतिष्ठितःपादोयस्यतथाविधोनामप्रथमंभूत्वाप्राक्तनीःसं
सारभूगतादेहादिष्वहंममतादिवृत्तीस्त्यजति ॥ पादस्यलोपोहस्त्यादिभ्यइतिलोपःसमासांतः ॥ नाधःसमीहतेआरोढव्यावलंबनीयवृक्षभागेष्वेवसावधानदृष्टिचित्तनिवेशनादि
तिभावः ॥ ५ ॥ संस्कारांस्त्यजतिनांकिचित्पूर्वंतनंस्मरतीतियावत् ॥ ६ ॥

कदाचिद्दैवात्स्मरन्नपिहसति ॥ कृपणोविषयसुखकणप्रार्थनयादीनः ॥ ७ ॥ करुणासर्वभूतदयाआदिपदादभयंसत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिरित्यादैव्यःसंपदोगृह्यंते ॥ तल्लक्षणेषुअस्यवृक्षस्यशाखांतरेषुभ्रमन्व्युत्थानकालेविहरन्सम्राडिवपूर्णकामः ॥ ८ ॥ हृदयेंदोःसद्बुद्धिचंद्रस्यगलत्यस्मिन्निति गलःकलाक्षयहेतुर्दर्शस्तस्यश्रेणीपंक्तिभूता दुःखलक्षणस्यअनस्यचंद्रस्यवहुत्वभ्रांतिहेतुस्तिमिरंनेत्ररोगविशेषस्तदावलिः कृष्णायःअयोजातिभेदस्तन्निर्मिताशृंखलेवप्राणिनांबंधनहेतुः ईदृशीतृष्णाशुभेच्छारंभदिनमारभ्यदिनानुदिनंक्षीयमाणाचतुर्थभूमिकायांनिःशेषमुज्झति ॥ रसोप्यस्यपरंदृष्ट्वानिवर्त्ततइतिभगवद्वचनादितिभावः ॥९॥ १० ॥ शास्त्रमध्यालशास्त्रंतदर्थाःशमदमसंतोषादय

हसत्युच्चैःपदारूढमात्मानमवलोकयन् ॥ एतावंतमहंकालंकृपणःकोऽभवंत्विति ॥ ७ ॥ करुणादिषुतेष्वस्यभ्रमञ्छाखांतरेषुसः ॥ लोभव्यालमधःकुर्वन्सम्राडिवविराजते ॥ ८ ॥ हृदयेंदोर्गलश्रेणीदुःखाब्जतिमिरावलिः ॥ कृष्णायःशृंखलातृष्णादिनानुदिनमुज्झति ॥ ९ ॥ उपेक्षतेनसंप्राप्तंनाप्राप्तमभिवांछति ॥ सोमसौम्योभवत्यंतःशीतलःसर्ववृत्तिषु ॥ १० ॥ शास्त्रार्थपल्लवेष्वेवनिषण्णात्मावतिष्ठते ॥ उन्नतावनतायाताअधःपश्यञ्जगद्गतीः ॥ ११ ॥ भीमद्रुमलतोत्कीर्णपुष्पप्रकरदंतुराः ॥ प्राक्तनीःस्वाःस्थलीःपश्यन्हसत्यंतर्वराकताम् ॥ १२ ॥ तेषुतत्स्कंधदेशेषुतथोड्डीनविडीनया ॥ हारिण्याविहरञ्ज्ञात्याराजेवपरिराजते ॥ १३ ॥ पुत्रदारसमग्राणिमित्राणिचधनानिच ॥ जन्मांतरकृतानीवस्वप्नजानीवपश्यति ॥ १४ ॥ रागद्वेषभयोन्मादमानमोहमहत्तया ॥ नटस्येवास्यदृश्यंतेशीतलामलचेतसः ॥ १५ ॥ उन्मत्तचेष्टिताकाराहसत्यपिपुरोगताः ॥ तरंगभंगुराधाराःसंसारसरितोगतीः ॥ १६ ॥ नसचेतयतेकांश्चिल्लोकदारधनैषणाः ॥ अपूर्वपदविश्रांतोजीवन्नेवयथाशवः ॥ १७ ॥ केवलंकेवलेशुद्धेबोधात्मनिमहोन्नते ॥ दत्तदृष्टिःफलेतस्मिन्परंसमधिरोहति ॥ १८ ॥ स्मृत्वास्मृत्वापदःपूर्वसंतोषामृतपोषितः ॥ अर्थानामप्यनर्थानांनाशेषुपरितुष्यति ॥ १९ ॥

स्तल्लक्षणेषुपल्लवेषुकिसलयेषु ॥ इतरशास्त्रानुसारिप्रवृत्तौप्राणिनांब्रह्मलोकपर्यंतमुन्नताःस्वाभाविकप्रवृत्तौनिरयांतमवनताश्चजगद्गतीरधःअज्ञदशायामेवेतिपश्यन् ॥ ११ ॥ भीमाभयानकाविषद्रुमलतास्तत्रोत्कीर्णैर्विषपुष्पप्रकरैर्दंतुराःप्रकटितोन्नतदंताइवस्थिताःस्थलीःप्राग्वर्णिताःसप्तअज्ञानभूमिकाःपश्यन्स्मरन् ॥ १२ ॥ तस्यध्यानतरोःस्कंधदेशेषूत्तरोत्तरभूमिकाभेदेष्वभ्यासदशायामारुह्यावतरणादुड्डीनविडीनप्रायया अतएवविहरञ्ज्ञात्याचित्तवृत्त्या ॥ १३ ॥ १४ ॥ व्यवहारेनटस्येवपरानुरंजनमात्रप्रधानयाकृत्रिमयारागादिमहत्तयाअस्यदृश्यंतेव्यवहाराइतिशेषः ॥ १५ ॥ पुरोगताअपिसंसारमृगतृष्णासरितोगतीर्मिथ्यात्वबुद्ध्याहसति ॥ १६ ॥ १७ ॥ परंपंचमभूमिकास्थानम् ॥ १८ ॥ १९ ॥

ननुआकृष्टमुक्तधनुषइवचित्तस्याखंडाकारवृत्त्युपरमेपुनःपूर्वावस्थास्थितिर्दुर्वारेत्याशंक्याह ॥ तज्ज्ञस्येति ॥ तज्ज्ञस्यलब्धसाक्षात्कारस्यधनुरादिकठोरोपमांविनाकोमल
तरस्यस्रग्दामकस्येवस्थितिः ॥ भूमौपतितंहिस्रग्दामऋजुवक्रादिभावेनयथैवाकृष्यस्थाप्यतेतथैवावतिष्ठतेनधनुर्वत्पूर्वावस्थास्थितिस्तस्यसंभवतीत्यर्थः ॥ ३३ ॥ किंसाक्षा
यत्ताध्यानरूपानेत्याह ॥ यथेतिद्वाभ्याम् ॥ अप्रकटितांगाअनाविष्कृतावयवा ॥ ३४ ॥ अस्त्वेवंकिंततस्तत्राह ॥ ध्यानमिति ॥ इत्थंप्राग्बोधात्सप्रपंचेब्रह्मणिनिष्प्रपंचत्व
भावस्यावोधेनध्यानंतावत्कर्तुंनशक्यते ॥ साक्षाद्विबुद्धस्तुस्वयंतत्स्वभावेएवतिष्ठन्कथंतद्ध्यातुंशक्नुयात् ॥ नहिस्वपन्जागरूकोवाअस्वमोहमस्मीत्यात्मानंध्यातुंशक्नोतीतिभा
वः ॥ ३५ ॥ जागरूकेणस्वाप्नार्थेष्विवतत्त्वविदाप्रपंचेतुच्छबुद्ध्याआत्यंतिकंवैरस्यमात्रंतुकर्तुंशक्यमित्याशयेनाह ॥ आत्यंतिकमिति ॥ ३६ ॥ यदिनध्यानंतर्हितद्विषये
ब्रह्मणिकथंसमाधिः धारणाध्यानसमाधीनामेकविषयत्वनियमात् तथाहिभगवतःपतंजलेःसूत्राणि देशबंधश्चित्तस्यधारणा तत्रप्रत्ययैकतानताध्यानं तदेवार्थमात्रनिर्भासं
स्वरूपशून्यमिवसमाधिः त्रयमेकत्रसंयमइति तत्राह ॥ दृश्यस्येति ॥ योदृश्यस्यत्रिपुटीलक्षणस्यजगतस्तत्साक्षिस्वरूपबोधमात्रताबोधःसएवसुष्ठुसम्यग्यथार्थस्वभावेआहि

तज्ज्ञस्याकृष्टमुक्तस्यस्वभावेषूपमांविना ॥ स्थितिःस्रग्दामकस्येवनसंभवतिकाचन ॥ ३३ ॥ यथाऽप्रकटितांगांतःसंस्थिताशालभंजि
का ॥ नसतीनासतीस्तंभेतथाविश्वस्थितिःपरे ॥ ३४ ॥ ध्यानंनशक्यतेकर्तुंनचैतदुपयुज्यते ॥ अबोधेनविबुद्धस्तुस्वयमत्रैवतिष्ठति
॥ ३५ ॥ आत्यंतिकीविरसतायस्यदृश्येषुदृश्यते ॥ सबुद्धोनाप्रबुद्धस्यदृश्यत्यागेहिशक्तता ॥ ३६ ॥ दृश्यस्यबोधताबोधोयोबोधादपरि
क्षयः ॥ ससमाधानशब्देनप्रोच्यतेसुसमाहितैः ॥ ३७ ॥ द्रष्टृदृश्यैकतारूपःप्रत्ययोमनसोयदा ॥ सतदेकसमाधानेतदाविश्राम्यतिस्वय
म् ॥ ३८ ॥ स्वभावोदृश्यवैरस्यमेवतत्त्वविदोनिजः ॥ दृश्यस्पंदनमेवाहुरतत्त्वज्ञत्वमुत्तमाः ॥ ३९ ॥ अतज्ज्ञायैवविषयाःस्वदंतेनतुतद्वि
दः ॥ नहिपीतामृतायांतःस्वदतेकटुकांजिकम् ॥ ४० ॥ वितृष्णस्यात्मनिष्ठत्वादेषणात्रयमुज्झतः ॥ ज्ञस्याप्यनिच्छतोध्यानमर्थायातंप्र
वर्त्तते ॥ ४१ ॥ बोधःस्फुरतितृष्णायाःसैवयस्यनविद्यते ॥ तस्यस्वरूपमुत्सृज्यक्वासौतिष्ठतिकःकथम् ॥ ४२ ॥

तेःस्थापनाद्धेतोःसम्यगाधानंसमाधिरितिविग्रहेसमाधानशब्देनोच्यते ॥ तादृशबोधस्वभावाद्धिप्रपंचोऽपरिक्षयःशाश्वतोभवतीतिसम्यक्स्वभावेतस्याधानंसंपन्नमित्यक्षरार्था
नुगमादित्यर्थः ॥ ३७ ॥ अर्थमात्रनिर्भासंस्वरूपशून्यमिवेतिपतंजलिवचनस्यापिदृग्दृश्यैक्यापादनेनमनसोविलयेनात्मस्वर्यंसुवचमित्याशयेनाह ॥ द्रष्ट्रिति ॥ द्रष्टासाक्षिदृश्यात्रि
पुटीतदेकतांरूपयतीतिरूपः ॥ ३८ ॥ दृश्यस्यवैरस्यंजाड्यदुःखादिरसताविरुद्धचिदानंदरसभावः ॥ ३९ ॥ विषयाअचित्स्वभावाअचित्स्वभावदेहाद्यालनेअतत्त्वज्ञायैवस्वदं
ते ॥ रुच्यर्थानांप्रीयमाणइतिसंप्रदानता ॥ तद्विदइतितस्यैवशेषत्वविवक्षयाषष्ठी ॥ कांजिकंमद्यविशेषः ॥ ४० ॥ यदितुपुनःपुनःस्वस्वरूपानुसंधानमेवध्यानंमन्यसेतर्हितज्जाग
रूकस्यजाग्रदात्मनीवविदुषःसहजसिद्धमित्याह ॥ वितृष्णस्येति ॥ ४१ ॥ वितृष्णस्येत्युक्तेस्तात्पर्यमुद्घाटयति ॥ बोधइति ॥ बोधःस्वरूपानुसंधानलक्षणंध्यानंतृष्णादिविक्षेपहे
तोःस्फुरतिसंचलतीतिप्रसिद्धम् ॥ यस्यतत्त्वविदः ॥ तथाचपरिशेषात्स्वरूपानुसंधानस्यैवसिद्धिरित्याह ॥ तस्येति ॥ किंतत्तानिदृश्यद्रष्टृदर्शनत्रिपुटीपरामर्शीनि ॥ ४२ ॥

यथासंनिद्रःपुरुषोबोधितःसन्निद्रासुखविच्छेदादुद्वेगमायातितद्वदयमवश्यकार्येषुव्यवहारेषुपरैर्बोध्यमानःसमाधिसुखविच्छेदादुद्वेगमायातीत्यर्थः ॥ २० ॥ प्राकूचिरंमौर्व्यं प्रयुक्तेनजन्ममरणपरंपराभ्रमश्रमेणाक्रांतइतिसांप्रतंसमाधिविश्रांतिमेवाभिवांछतीत्यर्थः ॥ २१ ॥ श्वासमात्रेणेतरजनसमोप्यंतरहंभावाभिमानेनाऽतिष्ठन्नेवेतिपूर्णात्मनिशाम्यति ॥ २२ ॥ बाह्यपदार्थेष्वरतिपूर्वाभ्यासबलादापतंतींअत्रबाह्यार्थेषुच्युतांस्खलितांयथाप्राप्तोपभोगदृष्टिमिवनिराकर्त्तुंनशक्नोति अप्रतिकूलत्वादितिभावः ॥ २३ ॥ भूमिकांपष्ठभूमिकाम् ॥ २४ ॥ अचेष्टितेषुप्रयत्नरहितेष्वेवकुतोपिपरप्रयत्नादिर्निमित्तात्प्राप्तेषु ॥ २५ ॥ २६ ॥ खगःसिद्धः ॥ अगपदवींमेरुशिखरमिव पक्षीवृक्षायमिवेतिवा

व्यवहारेषुकार्येषुभोगसंपादकेष्वपि ॥ परमुद्वेगमायातिसनिद्रइवबोधितः ॥ २० ॥ दीर्घाध्वगइवोदारामनारतमबाधिताम् ॥ चिरंमौर्व्यंश्रमाक्रांतोविश्रांतिमभिवांछति ॥ २१ ॥ निःश्वासबोधितोप्यग्निर्निंधनइवात्मनि ॥ श्वासमात्रसमोप्यंतरतिष्ठन्नेवशाम्यति ॥ २२ ॥ आपतंतींबलादेवपदार्थेष्वरतिंशनैः ॥ नशक्नोतिनिराकर्त्तुंदृष्टिमत्रच्युतामिव ॥ २३ ॥ तांमहापदवींगच्छन्परमार्थफलप्रदाम् ॥ भूमिकामप्युपायातिवचसामप्यगोचराम् ॥ २४ ॥ कुतोप्यचेष्टितेष्वेवसंप्राप्तेषुविधेर्वशात् ॥ भोगेष्वरतिमायातिपांथोमरुमहीष्विव ॥ २५ ॥ घूर्णःक्षीणइवानंदीसुप्तःसंसारवृत्तिषु ॥ अंतःपूर्णमनामौनीकामपिस्थितिमृच्छति ॥ २६ ॥ सतादृग्रूपतामेत्यपरमार्थफलस्य तत् ॥ क्रमान्निकटमाप्नोतिखगोगपदवीमिव ॥ २७ ॥ ततस्तदखिलांबुद्धिंविहायवियतासमः ॥ गृह्णात्यथास्वादयतिभुंक्तेऽथपरितृप्यति ॥ २८ ॥ संकल्पार्थपरित्यागाद्दिनानुदिनमातता ॥ शुद्धस्वभावविश्रांतिःपरमार्थाभिरुच्यते ॥ २९ ॥ भेदबुद्धिर्विलीनार्थाऽभेदएवावशिष्यते ॥ शुद्धमेकमनाद्यंतंतद्ब्रह्मेतिविदुर्बुधाः ॥ ३० ॥ लोकैषणाविरक्तेनत्यक्तदारैषणेनच ॥ धनैषणाविमुक्तेनतस्मिन्विश्रम्यतेपदे ॥ ३१ ॥ परेणपरिणामेनमिथश्चित्परमार्थयोः ॥ तापेनहिमलेखेवभेदबुद्धिर्विलीयते ॥ ३२ ॥

॥ २७ ॥ तस्यसप्तमभूमिकाप्रतिष्ठामाह ॥ ततइति ॥ अखिलांबुद्धिंविहायेत्यनेनतत्रास्यात्यंतिकवासनाक्षयमनोनाशौदर्शितौ ॥ गृह्णातिभूमानंदब्रह्मभावफलमितिशेषः ॥ आवरणभंगाद्गृह्णाति निर्विक्षेपस्फुरणादास्वादयति तदेकप्रवणवृत्त्याभुंक्ते तद्भावेनपूर्णस्थित्यापरितृप्यतीतिचतुर्थ्यादिभूमिकाफलानामत्रलाभोदर्शितः ॥ २९ ॥ सर्वभूमिकारोहणोपायरहस्यमाह ॥ संकल्पेति ॥ २९ ॥ तत्राप्युपायमाह ॥ भेदेति ॥ भेदबुद्धिस्त्रिपुटीभेदसाक्षिचित् विलीनाअर्थास्त्रिपुटीभेदायस्यास्तथाविधासतीअभेदएवावशिष्यते ॥ सचशुद्धंब्रह्मैवेत्यर्थः ॥ ३० ॥ तस्याप्युपायमाह ॥ लोकैषणेतिद्वाभ्याम् ॥ दारैषणात्यागेनैवार्थात्पुत्रैषणात्यागोलभ्यतइत्याशयः ॥ ३१ ॥ दृश्यतत्त्वशोधनेसन्मात्रंपरमार्थः ॥ दृष्टृतत्त्वशोधनेचिन्मात्रम् ॥ तयोरखंडैक्यलक्षणेनपरेणनिरतिशयानंदात्मनापरिणामश्चित्तस्यचरमसाक्षात्कारवृत्तिस्तेनेत्यर्थः ॥ ३२ ॥

अथवावितृष्णस्यज्ञस्यसातृष्णा अनंता अपरिच्छेद्या यतोऽयंस्वयंनिर्विभागोऽपरिच्छिन्नात्मरूपएवोदितः ॥ अतोध्येयस्यचिंतनीयस्यबाह्यार्थस्यबोधोयोयादृशोभवेत्सता दृशेसमाधौव्यवहारेवानयतुतथाप्यसौतस्याऽनाराधकोनतत्तृष्णापूर्त्तिसमर्थइत्यर्थः ॥ ४३ ॥ अतोबाह्यार्थेऽपगततृष्णस्यतस्यतादृशतृष्णाया नित्यनिरतिशयानंदात्मैवपरि शेषाद्वोधकइतितदनुभवलक्षणमनंतध्यानंस्वयमेवप्रवर्त्ततेनयत्नमपेक्षतइत्यर्थः ॥ ४४ ॥ अतएवशुद्धबोधोदयपर्यंतमेवसमाधियत्नः ॥ शुद्धबोधात्मनिसाक्षादनुभूतेज्ञत्ववि रोधादेवाऽसमाहितत्वंसमाधियत्ननिवृत्तिस्तत्त्वविद्भिरुदितेत्यर्थः ॥ विरोधंदृष्टांतेनप्रकटयति ॥ नजात्विति ॥ ४५ ॥ विक्षेपहेतूनांरागादिदोषाणामात्यंतिकोच्छेदलक्षणंतुस माधानंविदुषामेवाऽस्यतस्तेनमस्याइत्याह ॥ परमिति ॥ आहृतंसंपादितम् ॥ ४६ ॥ तृष्णापाशबद्धान्स्वपशून्प्रत्येवदेवानांतृष्णोद्दीपनेनविघ्नसमर्थत्वादितिभावः ॥ ४७ ॥

ज्ञस्यानाराधकोध्येयबोधोनयतुयोभवेत् ॥ अनंतासावितृष्णस्यनिर्विभागोदितःस्वयम् ॥ ४३ ॥ अनंतमपतृष्णस्यस्वयमेवप्रवर्तते ॥ ध्यानंगलितपक्षस्यसंस्थानमिवभूभृतः ॥ ४४ ॥ शुद्धबोधात्मनिज्ञत्वादसमाहिततोदिता ॥ नजातुसुसमिद्धेग्नौ घृतबिंदोरवस्थितिः ॥ ४५ ॥ परंविषयवैतृष्ण्यंसमाधानमुदाहृतम् ॥ आहृतंयेनतन्नूनंतस्मैनृब्रह्मणेनमः ॥ ४६ ॥ नूनंविषयवैतृष्ण्येपरिप्रौढिमुपागते ॥ नशक्नुवंतिनिर्हर्तुंध्यानंसेंद्राःसुरासुराः ॥ ४७ ॥ परंविषयवैतृष्ण्यंवज्रध्यानंप्रसाध्यताम् ॥ भेदेविगलितेज्ञानादन्यध्यानतृणेनकिम् ॥ ४८ ॥ मूर्खस्योविश्वशब्दार्थोनामूर्खविषयस्तथा ॥ तज्ज्ञाज्ञयोस्तयोश्चैवविश्वविश्वेशयोस्तथा ॥ ४९ ॥ यत्रैकीभूयकचनंतत्रविश्रा म्यतांबुधाः ॥ बोधभूमिषुसिद्धानामर्थानांवाविवेकिनाम् ॥ ५० ॥ सत्तासत्तेद्वयैक्येचनिर्णीतिनेहकेनचित् ॥ उपायएकःशास्त्रार्थोद्वितीयोज्ञसमागमः ॥ ५१ ॥ ध्यानंतृतीयंनिर्वाणेश्रेष्ठस्तत्रोत्तरोत्तरः ॥ जीवादर्शान्मिथोरूपंगृह्णात्येषामहद्वपुः ॥ ५२ ॥

विषयवैतृष्ण्यंचज्ञानेनसर्वविषयबाधपर्यवसितकार्यंतदेववज्रवत्दृढंध्यानमपीतिप्रशंसति ॥ परमिति ॥ ४८ ॥ अतएवविदुषांविश्वशब्दोबाधितार्थकइत्याह ॥ मूर्खेति ॥ तज्ज्ञाज्ञयोरित्याद्युत्तरश्लोकान्वयि ॥ तयोस्तद्विशेषज्ञानाज्ञानयोः ॥ ४९ ॥ यत्रयस्मिन्भूमानंदेद्वैतबाधाभिप्रायेणैकीभूयकचनमित्युच्यतेनत्वेकत्वसंख्याभिप्रायेण ॥ यतो विवेकिनामारुरुक्षूणांमननादिबोधभूमिषुसिद्धानामारूढानांसाक्षात्कारादिबोधभूमिषुवा आत्मातिरिक्तेसत्तासत्तेद्वैतक्येचकेनचिदपिननिर्णीतेइत्यन्वयः ॥ ५० ॥ तत्रविश्रां तावुपायानाह ॥ उपायइति ॥ शास्त्रस्याध्यात्मशास्त्रस्यार्थंनमादरनैरंतर्येणाभ्यासःशास्त्रार्थः ॥ ५१ ॥ फलसन्निकर्षाधिक्याच्छ्रेष्ठः ॥ एवंविचारजन्यज्ञानवैराग्ययोरपिनि र्वाणोपायतांपरस्पराधीनप्रतिष्ठांचदर्शयितुमविवेकप्रयुक्तजीवोपाधिपरिच्छेदाधीनरागद्वेषाभ्यांप्रियाप्रियविषयसंघट्टात्साम्यवैषम्यकल्पनांदर्शयति ॥ जीवेति ॥ महद्वपुरपरि च्छिन्नाएषानित्यापरोक्षाब्रह्मचित्जीवाख्यस्यस्वमप्रतिबिंबस्यादर्शभूतादंतःकरणोपाधेर्वशान्मिथःपरस्परंबिभिन्नंरूपंगृह्णाति ॥ ५२ ॥

तत्रजगतिप्रियाप्रियसंघट्टात्आविशेषंब्रह्मादिस्तंबपर्यंतान्विशेषानभिव्याप्यस्वकर्मवैचित्र्यात्समविषमेशरीरभेदेउदेतीत्यर्थः ॥ तदेवमनादिकालात्संसरतांजीवानांमध्येकस्य चिद्भाग्योदयाज्ज्ञानाधिकारयोग्येजन्मनिशास्त्रसज्जनसंगाद्युपायलाभाज्ज्ञातपूर्वापराशेषजन्ममरणभ्रमणरूपजगच्छारिफलकीडास्थितेःपुरुषधौरेयस्यबोधवैतृष्ण्यरूपयो र्दीपयोरेकसिद्धौद्वयोरपिसिद्धिरित्यन्वयः ॥ ५३ ॥ ज्ञानाग्निनादग्धोभस्मीभूतोखिलोजगत्तूलश्चिद्व्योमन्युत्तरभूमिकाभ्यासलक्षणयामतिवात्ययाधुतउड्डायितःसन्क्वगच्छति नजाने ॥ ५४ ॥ भ्रांतिनिवारणसमर्थएवबोधोमूलाज्ञानजाड्यांच्छेदहेतुर्नत्वापातज्ञानमात्रमित्याह ॥ चित्राग्निनेति ॥ जाड्यमज्ञानंशीतंच ॥ ५५ ॥ अज्ञस्याभिनिवेशलक्ष णादपज्ञानाद्यथासंसारभ्रांतिरभिवृद्ध्याप्रकाशतेतथातत्त्वज्ञस्यपरिज्ञानाभिवृद्ध्याउत्तरोत्तरभूमिष्वज्ञानमधिकंदह्यतइत्याह ॥ यथेति ॥ ५६ ॥ दह्यमानेऽज्ञानेजगत्कीदृशंतेषां

जगत्युदेतिसंघट्टादाविशेषंसमेसमे ॥ ज्ञातपूर्वापराशेषजगदृष्टापदस्थितेः ॥ ५३ ॥ एकसिद्धौद्वयोःसिद्धिर्बोधवैतृष्ण्यदीपयोः ॥ मति वात्याधुतोव्योम्निदग्धोज्ञानाग्निनाखिलः ॥ ५४ ॥ जगत्तूलःपरेशांतेनजानेक्वाशुगच्छति ॥ चित्राग्निनेवबोधेनतेनजाड्यंनशाम्यति ॥५५॥ निर्मूलापिजगद्भ्रांतिर्येनाशुनविलीयते ॥ यथाज्ञस्यजगज्ज्ञप्तिरपज्ञानात्प्रदीप्यते ॥ ५६ ॥ तथाज्ञस्यपरिज्ञानात्तदज्ञप्तिःप्रदीप्य ते ॥ तज्ज्ञस्याज्ञजगज्ज्ञप्तिशब्दार्थरहितास्थिता ॥ ५७ ॥ यथास्थितैवत्रिजगज्ज्ञप्तिश्चित्रइवोदिता ॥ शून्यत्वेनैवरचितासुमत्वेनेवनि र्मिता ॥ ५८ ॥ भासतेभामयीवांछाजगज्ज्ञप्तिर्ज्ञचेतसि ॥ नूनंबोधेविमूढस्यनाहंतानजगत्स्थितिः ॥ ५९ ॥ भासतेपरमाभासरूपिणः काप्यवस्थितिः ॥ बोधाबोधात्मकंचित्तंभातिशुष्कार्द्रकाष्ठवत् ॥ ६० ॥ बोधादेकंजगद्भावैर्जाड्यान्नानात्वमागतम् ॥ मिथोबोधाद्वि वदतिमैत्रींभजतिबोधतः ॥ ६१ ॥ यएवास्याधिकोभागस्तन्मयत्वेनतिष्ठति ॥ बुधःसतत्त्वंनावैतिजगतोऽभावभावयोः ॥ ६२ ॥ जाग्र त्स्वप्नसुषुप्तानांस्वभावमिवतुर्यगः ॥ वासनैवमनःसेयंस्वविचारेणनश्यति ॥ ६३ ॥ अवस्तुत्वादतोमोक्षोनात्मनाशेप्रवर्त्तते ॥ ६४ ॥

भासतेतदाह ॥ तज्ज्ञस्येति ॥ ५७ ॥ ५८ ॥ अविमूढस्येतिच्छेदः ॥ ५९ ॥ अर्धप्रबुद्धस्यतर्हिकीदृशंभातितदाह ॥ बोधेति ॥ ६० ॥ द्विवत्उभयस्वभाववत् ॥ बोधतोबोधा धिक्येनसर्वजनेष्वतिमैत्रींभजतिआत्मौपम्येनसुखदुःखेदययापश्यतीत्यर्थः ॥ अबोधादबोधांशेनविवदतिविवादादिनाव्यवहरतीतिवा ॥ ६१ ॥ यस्तुबुधःपरिपक्वज्ञानःसतुज गतःअभावभावयोःसत्त्वासत्त्वयोःसतत्वंयाथार्थ्येननावैत्येव ॥ ६२ ॥ यथातुर्यगःसप्तमभूमिकारूढोजाग्रदादीनांस्वभावंनपश्यतितद्वदितिभेदकल्पनादुपमा ॥ ननुमनोहरिणक स्यध्यानतरौविश्रांतिःप्रस्तुतेतितस्यैवरूपांतरेणतदारोहणेपरमपुरुषार्थफलावाप्तिर्वाच्या तत्रमनोनाशलक्षणोमोक्षःकथंतस्यपुरुषार्थःस्यात्तत्राह ॥ वासनैवेति ॥ ६३ ॥ अव स्तुत्वादिति ॥ तथाचात्मनएवमायिकमनोहरिणवेषेणानर्थविश्रांत्यादिवर्णनंप्रस्तुतमितिभावः ॥ ६४ ॥

तथाचायंमनोनाशोमनोहरिणवेषेणवर्णितस्यात्मनोनिगडमोक्षप्रायःफलितइत्युपसंहरति॥ध्यानेति ॥ इच्छन्मुमुक्षुःप्रस्तुतोमनोहरिणकोवर्णितरूपादंकुरकांडशाखापल्लवपुष्पफलांतपरिणामलक्षणानल्पपरिपाकात्कालेनस्वयमुपोढमुपचितंबोधंफलमुपयातवतोध्यानद्रुमादाद्यंपरबोधोऽखंडाकारवृत्त्यभिव्यक्तःपरमानंदस्तल्लक्षणंरसायनफलंभुक्त्वा संसारनिगडाद्विमुक्तोभवतीत्यर्थः ॥ ६५ ॥ ॥ इतिश्रीवासिष्ठ॰महारा॰तात्पर्यप्रकाशेनि॰उत्तरार्द्धेपंचचत्वारिंशःसर्गः ॥ ४५ ॥ ॥७॥ ॥ ध्यानद्रुमफलास्वादेयादृशीमनसःस्थितिः ॥ दृढंविषयवैरस्यंयादृक्तद्दिहवर्ण्यते ॥ १ ॥ ज्ञातेसाक्षादनुभूते ॥ बोधश्चरमसाक्षात्कारवृत्तिरपिस्वोपादानाज्ञानबाधादसद्भवतिमनोमृगश्चपरमपुरुषार्थरूप

ध्यानद्रुमात्स्वयमुपोढमनल्पपाकाल्कालेनबोधमुपयातवतःक्रमेण ॥ भुक्त्वारसायनफलंपरबोधमाद्यमिच्छन्मनोहरिणकोनिगडाद्विमुक्तः॥ ६५॥ ॥ इत्यार्षेवा॰वा॰दे॰मो॰नि॰उ॰मनोहरिणकोपाख्यानंनामपंचचत्वारिंशःसर्गः॥ ४५॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥ परमार्थफलेज्ञातेमुक्तौपरिणतिंगते॥ बोधोप्यसद्भवत्याशुपरमार्थोमनोमृगः॥ १ ॥ क्वापिसामृगतायातिप्रक्षीणस्नेहदीपवत् ॥ परमार्थदशैवास्तेतत्रानंतावभासिनी ॥ २ ॥ ध्यानद्रुमफलप्राप्तौबोधतामागतंमनः॥ वज्रसारांस्थितिंधत्तेछिन्नपक्षइवाचलः॥ ३ ॥ मनस्ताक्वापिसंयातितिष्ठत्यच्छैवबोधता॥ निर्बाधानिर्विभागाचसर्वाखर्वात्मिकासती॥ ४॥ सुविविक्ततयाचित्तसत्ताबोधतयोदिता॥ अनाद्यंताभवत्यच्छप्रकाशफलदायिनी ॥ ५ ॥ स्वयमेवततस्तत्रनिरस्तसकलैषणम्॥ अनाद्यंतमनायासंध्यानमेवावशिष्यते ॥ ६ ॥ यावन्नाधिगतंब्रह्मनविश्रांतंपरेपदे॥ तावत्तन्मननत्वेननध्यानमवगम्यते॥ ७॥ परमार्थैकतामेत्यनजानेक्वमनोगतम्॥ क्ववासनाक्वकर्माणिक्वहर्षामर्षसंविदः॥ ८ ॥ केवलंदृश्यतेयोगीगतोध्यानैकनिष्ठताम्॥ शांतोवज्रसमाधानेविपक्षइवपर्वतः॥ ९ ॥ विरसाखिलभोगस्यप्रशांतेंद्रियसंविदः॥ नीरसाशेषदृश्यस्यस्वात्मारामस्ययोगिनः॥ १० ॥ क्रमेणविगलद्वृत्तेर्बलाद्विश्रांतिमीयुषः॥ अर्थायातंसमाधानंकेननामविचार्यते॥ ११ ॥

आत्मैवभवतीत्यर्थः ॥ १ ॥ साप्राक्तनीमृगताविषयतृणान्वेषणस्वभावतायातिअपैति ॥ २ ॥ स्थितिरचांचल्यम् ॥ ३॥ मनस्तावासार्थमननस्वभावता ॥ सर्वापूर्णाअतएवाखर्वात्मिकाबोधताचिन्मात्रतातिष्ठति ॥ ४ ॥ चित्तेयासत्ताप्राग्जडदेहाद्यविवेकाज्जडेवाभूत्सैवसांप्रतंदेहादेःसुविविक्ततयास्थिताबोधतयाउदितेव ॥ यतःपरमार्थप्रकाशफलदायिनीत्यर्थः ॥ ५ ॥ यतोनिरस्तसकलैषणमतस्तदनन्यगतिकत्वात्स्वात्मध्यानमेवपरिशेषादवगम्यतइत्यर्थः ॥ ६ ॥ कदातर्हितन्मनोनध्यानंतदाह ॥ यावदिति ॥ तन्मनः ॥ मननत्वेनविषयांतरानुसंधानत्वेन ॥ ७ ॥ ८ ॥ ध्यानवत्तस्यसमाधिरप्यर्थसिद्धइत्याह ॥ केवलमितिद्वाभ्याम् ॥ ९ ॥ १० ॥ ११ ॥

तस्यपरवैराग्यमप्यर्थसिद्धमित्याह ॥ तावदिति ॥ चित्रनरश्चित्रलिखितान्पुरुषान् ॥ १२ ॥ वज्रवदभेद्येसमाधानेसमाधावन्येननियंत्रेवबलान्निवेश्यते ॥ १२ ॥ यःसमाधिराविर्भूतानंदैकरसःप्रथमदत्तावुपस्थितस्तंगुडपिपीलिकान्यायेनवस्तुस्वभावबलादेवैकाग्र्यमायातमास्वादयन्मनस्ततोनचलति ॥ १४ ॥ ज्ञानाद्बलादागतंयद्विषयांतरवैरस्यंसएवसमाधिर्नहिरागादिनादंदह्यमानेचेतसिसमाधानंकदाचिदपिकस्यचित्प्रसिद्धमिति ॥ १५ ॥ एवंध्यानोपपत्तिरपिविषयवैरस्येसत्येवनान्यथेत्याह ॥ दृढमिति ॥ १६ ॥ तथाचभोगवैतृष्ण्यंबीजमेवांकुरितावस्थंध्यानंप्ररूढावस्थंसमाधिरित्यभेदेपिव्यपदेशभेदःफलितइत्याह ॥ तदेतदिति ॥ १७ ॥ साक्षात्कारदशयाविर्भूतंब्रह्मैवअविद्योच्छेदित

तावद्विषयवैरस्यंभावयंत्युचिताशयाः॥ नपश्यंत्येवतान्यावद्भोगांश्चित्रनरोयथा ॥१२॥ अपश्यञ्जागतानर्थान्निर्वासनतयात्मवान्॥बलाद्वज्रसमाधानेत्वन्येनेवनिवेश्यते॥१३॥ प्रावृषीवनदीपूरोयःसमाधिरुपस्थितः॥बलादेवतमायातंभूयश्चलतिनोमनः॥१४॥ सर्वार्थशीतलत्वेनबलाद्ध्यानेयदागतम्॥ ज्ञानाद्विषयवैरस्यंससमाधिर्हिनेतरः ॥ १५॥ दृढंविषयवैरस्यंतेनध्यानमुदाहृतम्॥ तदेवपरिपाकेनवज्रसारंभवत्यलम्॥ १६॥ तदेतद्भोगवैतृष्ण्यंध्यानमंकुरितंहितत्॥ तदेवपीठबंधेनवर्द्धंभवतिबंधुरम्॥ १७॥ सम्यग्ज्ञानंसमुच्छूनंसदैवोज्झितवासनम्॥ ध्यानंभवतिनिर्वाणमानंदपदमागतम् ॥ १८॥ अस्तिचेद्भोगवैतृष्ण्यंकिमन्यद्ध्यानदुर्धिया॥ नास्तिचेद्भोगवैतृष्ण्यंकिमन्यद्ध्यानदुर्द्धिया॥१९॥ दृश्यस्वदनमुक्तस्यसम्यग्ज्ञानवतोमुनेः॥ निर्विकल्पंसमाधानमविरामंप्रवर्त्तते॥२०॥ यस्मैनस्वदतेदृश्यंससंबुद्धइतिस्मृतः॥ नस्वदंतेयदाभोगाःसम्यग्बोधस्तथोदितः॥ २१ ॥ यस्यस्वभावविश्रांतिःकथंतस्यास्तिभोगिता॥ अस्वभावोहिभोगित्वंतत्क्षयेतत्कथंकुतः ॥ २२ ॥ श्रुतपाठजपांतेषुसमाधिनिरतोभवेत् ॥ समाधिविरतःश्रांतःश्रुतपाठजपाञ्छ्रयेत् ॥ २३ ॥ निर्वाणमासीतनिरस्तखेदंसमस्तशंकास्तमयाभिरामम्॥ सुषुप्तसौम्यंसमशांतचित्तंशरद्घनाभोगविशुद्धमंतः॥२४॥ ॥इ० वा० महारामायणेवा० दे० मो० नि० उ० साम्यावबोधनोनामषट्चत्वारिंशःसर्गः॥ ४६ ॥ ॥७॥ ॥७॥

याज्ञानंवासनोच्छेदितयाध्यानंसर्वदुःखोच्छेद्यानंदरूपतयानिर्वाणमितिव्यपदिश्यतइत्याह ॥ सम्यगिति ॥१८ ॥ सर्वमिदंभोगवैतृष्ण्येसत्येवसिद्ध्यतिनान्यथेतितदेवदृढीकर्तुंप्रशंसति ॥ अस्तिचेत्यादिना ॥ १९ ॥ २० ॥ २१ ॥ पूर्णाद्वयस्वभावविरुद्धंभोगित्वमज्ञानकृतस्वभावविपर्ययकालमात्रेसंभवतिनाज्ञाननाशोत्तरमित्याह ॥ यस्येति ॥ २२॥ अभ्यासकालेव्युत्थितेनकिंकार्यंकदावासमाधिःसेव्यस्तत्क्रममाह॥ श्रुतेति ॥ श्रुतंगुरुसतीर्थ्यादिभिःसहवेदांतश्रवणम् ॥ पाठउपनिषदाद्यावर्त्तनम् ॥ जपःप्रणवादेः ॥ तथाचोक्तंस्कांदे ॥ जपश्रांतःपुनर्ध्यायेद्ध्यानश्रांतःपुनर्जपेत् ॥ जपध्यानाभियुक्तस्यप्रसीदतिपरःशिवइति ॥ २३ ॥ तत्रापिसदैवसमाधिप्रधानेनभाव्यमित्याशयेनोपसंहरति ॥ निर्वाणमिति ॥ स्पष्टम् ॥ २४ ॥ ॥ इतिश्रीवासिष्ठ० म० रा० तात्पर्यप्रकाशेनि० उ० षट्चत्वारिंशःसर्गः ॥ ४६ ॥ ॥७॥ ॥७॥

भूयोपिविस्तरान्मुक्तिसाधनक्रमवर्णने ॥ प्रस्तुतेदृढवैराग्यप्राप्त्यंतमिहवर्ण्यते ॥ १ ॥ बहुकृत्वोपिपथ्यंवदितव्यमितिन्यायमाश्रित्यपरमकारुणिकोवसिष्ठःपूर्वंध्यानवृक्षोत्पादनपरिपालनफलोन्मुखीकरणमनोहरिणकाश्रयणतदारोहणफलोपभोगांतरूपकपरंपरयावर्णितमेवशुभेच्छादिमोक्षसाधनभूमिकाक्रमंपुनःकुत्रकुत्रकियद्गुणसंपल्लाभइत्येतत्प्रतिपादनप्रकारेणस्पष्टंमंदाधिकारिप्रबोधनायवर्णयिष्यंस्तच्छ्रवणायशिष्यमभिमुखीकरोति ॥ संसारेति ॥ मरणमूर्च्छादिसंकटेलुठंतितन्वोयस्य ॥ क्रमंतत्रतत्रगुणप्रकर्षलाभक्रमम् ॥ १ ॥ तत्रविवेकांकुरोदयेयेषांगुणानांलाभस्तान्दर्शयति ॥ पूर्वमित्यादिना ॥ कारणादैहिकयज्ञतपोदानादिपापक्षयकारणात् ॥ अकारणात्तदभावात् ॥ जन्मांतरानुष्ठितसत्कर्मभिरेवक्षीणपापानांबाल्यात्प्रभृत्येवविनैवैहिककारणंविवेकोदयदर्शनादितिभावः ॥ यदैवनिर्वेदमयीविवेककणिकाजायतेतदैवसाधुत्वेनसुष्ठुविशालिनोविस्तीर्णा

श्रीवसिष्ठउवाच ॥ ॥ संसारभारसुश्रांतःसंकटेषुलुठत्तनुः ॥ योभिवांछतिविश्रांतिंतस्यक्रममिमंश्टणु ॥ १ ॥ पूर्वंविवेककणिकायदास्वहृदिजायते ॥ संसारनिर्वेदमयीकारणाद्वाप्यकारणात् ॥ २ ॥ तदाश्रयंतिसच्छायान्साधुत्वसुविशालिनः ॥ अध्वश्रमहरांस्तापतप्तामार्गतरूनिव ॥ ३ ॥ दूरेपरिहरत्यज्ञान्यज्ञयूपानिवाध्वगः ॥ स्नानदानतपोयज्ञान्करोतिविबुधानुगः ॥ ४ ॥ पेशलंचानुरूपंचव्यवहारमकृत्रिमम् ॥ लोक्यमाह्लादनंधत्तेचंद्रबिंबमिवामृतम् ॥ ५ ॥ परप्रज्ञानुगोभव्यःपरार्थपरिपूरकः ॥ पवित्रकर्मरसिकःकोपिसौम्यप्रवर्त्तते ॥ ६ ॥ नवनीतस्थलीवाच्छास्निग्धाम्हद्वीमनोहरा ॥ जनंसुखयतिस्वाद्वीतदीयानवसंगतिः ॥ ७ ॥ शीतलानिपवित्राणिचरितानिविवेकिनः ॥ इंदोरिवांशुजालानिजनंशीतलयंत्यलम् ॥ ८ ॥ नतथोद्यानखंडेषुपुष्पप्रकरहारिषु ॥ विश्राम्यतेवीतभयंयथासाधुसमागमे ॥ ९ ॥ मंदाकिनीपयांसीवसंगतानिविवेकिनाम् ॥ प्रक्षालयंतिपापानिप्रयच्छंतिविशुद्धताम् ॥ १० ॥ विवेकिषुविरक्तेषुसंसारोत्तरणार्थिषु ॥ जनःशीतलतामेतिहिमहारगृहेष्विव ॥ ११ ॥

र्णांवक्ष्यमाणगुणास्तंश्रयंतीतिपरेणान्वयः ॥ २ ॥ तत्रदृष्टांतस्तापतप्ताःपुरुषाःसच्छायान्मार्गतरूनिवेति ॥ ३ ॥ तथाज्ञजनसंगत्यागोयज्ञदानादिपरतादेवताराधनादिगुणाःप्रथममुद्यंतीत्याह ॥ दूरेइति ॥ एवमग्रेपिगुणाःयोज्याः ॥ ४ ॥ लोकेभ्यःपरिणामेहितंलोक्यंसद्यश्चाह्लादनम ॥ चंद्रबिंबंकर्तृअमृतंकर्म ॥ ५ ॥ स्वपक्षरागलोभाभिमानाद्यभावात्परहितकारित्वाच्चपरप्रज्ञानुगः ॥ अतएवसर्वजनप्रियोभवतीतिभव्यः ॥ पवित्रेषुशास्त्रानिषिद्धेषुकर्मसुरसिकः ॥ कोपिसर्वजनोत्कृष्टःसौम्यस्सन्प्रवर्त्ततेव्यवहरति ॥ ६ ॥ नवनीतस्यस्थलीमुख्याश्रयोदधिमंडइवाच्छास्निग्धेत्यादिसाधारणम ॥ नवसंगतिःप्रथमसमागमः ॥ मथनविवेचनपरिपाकक्रमेणचिरसंगतेरुत्तरोत्तरसारत्वात्स्वादुतरार्थलाभहेतुत्वसूचनायनवेतिविशेषणम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ हिमैर्हारैश्चरचितेषुगृहेष्विव ॥ ११ ॥

नविद्यतेसेतिशेषः ॥ १२ ॥ क्रमादनुष्ठितादुचितान्निष्कामकर्मणोहेतोःप्रज्ञाबुद्धिःप्रसादंविशुद्धिमायाति ॥ तच्छुद्ध्याचविचित्रदिषोदयेगुरुमुखश्रुतंशास्त्रार्थमंतःकरोतितद्वदिस्था पयतीत्यर्थः ॥ मुकुरभूर्दर्पणतलंस्वप्रतिबिंबितार्थमिव ॥ १३ ॥ विवेकिनिविवेकवतितद्धत्स्थाने ॥ विलासेनमूलप्ररोहादिविस्तारेण ॥ १४ ॥ साविवेकिप्रज्ञासर्वार्थानंतर्मनोवि लासमात्रतयाअनुभवति ॥ १५ ॥ अग्नावेवशौचंमालिन्यदाहाद्विशुद्धिर्यस्यतथाविधमंशुकंवस्त्ररत्नमिव ॥ तद्धिदिव्यंसिद्धांबरंमलदाहोत्तरंवह्नेरुद्भूतंविद्युत्पुंजमिवभास्वरतरं भातीतिशास्त्रप्रसिद्धम ॥ १६ ॥ साधुर्विवेकी ॥ स्वतेजसाआंतरेणात्मप्रकाशेन ॥ १७ ॥ शास्त्रमभ्यासेनसाधोर्गुरोःसमागमंचसेवादिनातथाअनुगच्छतिनिरंतरमनुसरतिय थाअत्यंतंतदुपदिष्टार्थाभिनिवेशलक्षणेनतदनुषंगेणस्वमेपितच्चिंतनतच्छुश्रूषापरस्तावेवानुभवतिनतदतिरिक्तंस्वशरीरादिकमपीत्यर्थः ॥ १८ ॥ रागद्वेषलोभप्रमादादिदोषक्षय

ननुनामरतोदारायाविवेकिनिविद्यते॥ सुरगंधर्वकन्यासुमानवीपुनर्विद्यते॥ १२ ॥ प्रज्ञाप्रसादमायातिक्रमादुचितकर्मणः॥ अंतः करोतिशास्त्रार्थमर्थंमुकुरभूरिव॥ १३ ॥ सम्प्रज्ञोन्नतिमायातिशास्त्रार्थरसशालिनी॥ विवेकिनिविलासेनकदलीवमहावने ॥ १४ ॥ अंतरेवानुभवतिसर्वार्थान्प्रतिबिंबितान्॥ आदर्शवदशेषेणप्रज्ञानैर्मल्यशालिनी ॥ १५ ॥ साधुसंगमशुद्धात्माशास्त्रार्थपरिमार्जितः॥ प्राज्ञोभात्युद्धृतंवह्नेरग्निशौचमिवांशुकम् ॥ १६ ॥ कचत्कांचनकांतेनविमलालोककारिणा ॥ भुवनंभास्करेणेवभातिसाधुःस्वतेज सा ॥ १७ ॥ तथानुगच्छतिप्राज्ञःशास्त्रसाधुसमागमौ ॥ यथात्यंतानुषंगेणतावेवानुभवत्यसौ ॥ १८ ॥ क्रमात्सज्जनतामेत्यशास्त्रार्थप्र रभावितः॥ भातिभोगानधःकुर्वन्पंजरादिवनिर्गतः॥ १९ ॥ भोगाभिगमदौर्भाग्यंदिनानुदिनमुज्झता ॥ तेनतत्कुलमाभातिताराचक्र मिवेंदुना ॥ २० ॥ अभोगकृपणाक्कापिनचैवास्यप्रवर्त्तते॥ मुखेकांतिरपूर्वैवचंद्रेराहूज्झितेयथा॥ २१ ॥ तृणीकृतत्रिजगतांमहतामभि धेयताम्॥ सयातिकल्पविटपीनभसीवदिवौकसाम् ॥ २२ ॥ भोगानद्वेषणेनांतर्लज्जमानोमनस्यपि ॥ भोगानामप्यसंपत्त्यापरमं परितुष्यति॥ २३ ॥ स्वाएवोपहसत्यंतस्तरुणीस्तरलक्रियाः॥ खेदस्मेरमुखोजातीर्जातिस्मरइवाधमः॥ २४ ॥

मैत्र्यादिगुणसंचयक्रमात्सज्जनतांनिर्दोषगुणवज्जनताम् ॥ १९ ॥ भोगान्प्रतिव्यसनितयाविषयाभिमुख्येनगमनंभोगाभिगमस्तल्लक्षणंदौर्भाग्यम ॥ कुलंवंशस्तद्घटितसमाजश्च आभाति ॥ २० ॥ अभोगकृपणाभोगकार्पण्यनिर्मुक्ताअभिनवैवकापिकांतिरस्यमुखेप्रवर्त्तते ॥ राहुंक्तेविनाराहुनिर्मुक्तेयथेतियावत् ॥ २१ ॥ अभिधेयतांप्रशंसनीयता म् ॥ नभसिस्वर्गे ॥ २२ ॥ प्राप्तभोगानांपरित्यागेतुष्यन्नपित्यक्तसर्वद्वेषेणमयाभोगेषुद्वेषःकथंकृतइतिमनसिलज्जमानोपिकदाचिद्भवतीतिनतथापरितुष्यति ॥ भोगानामसं पत्त्याअलाभेनतुलज्जाप्रसक्त्यभावात्परमंपरितुष्यतीत्यर्थः ॥ त्वर्थेऽपिशब्दः ॥ २३ ॥ प्राक्तनीस्तरुणीःरागादिप्रौढाःस्वाःस्वीयाएवभोगौत्सुक्यतरलाःक्रियाःसांप्रतंस्मरन्खेदे नस्मेरमुखःसन्नंतरुपहसतियथाअधमश्चांडालादिर्देवाज्जातिस्मरस्सन्स्वाएवजातीरंतरुपहसतितद्वदित्यर्थः ॥ २४ ॥

ताद्दशंतंद्रष्टुम् ॥ साधवःसिद्धाः ॥२५॥ ततस्तेभ्यःसिद्धेभ्यःप्रसन्नेभ्यःप्राप्तमुचितारंभमनिषिद्धमपिसिद्ध्यादिभोगंसनबहुमन्यते ॥२६॥ कुतोनबहुमन्यतइतिचेद्गुरुशास्त्रसंपर्कात्पूर्वमेववैराग्यादिसाधनानांदृढाभ्यस्तत्वादित्याशयेनोक्तमेवगुणोदयक्रमंपुनरनुक्रामति ॥ पूर्वमित्यादिना ॥२७॥२८ ॥ २९ ॥ ३० ॥ ३१ ॥ स्वार्थानप्युपेक्षमाणःपरार्थंकुतःस्पृहयेदितिभावः ॥ ३२ ॥ तेनैवत्यागाभ्यासयोगेनस्वमांसान्यपियाचमानेभ्योददाति ॥ ३३ ॥ विवेकानुसरणक्रमेणविलीयमानचित्तानांदिनेदिनेज्ञानप्रचयेनाज्ञानंक्षी

अथतंद्रष्टुमायांतिसौहार्देनैवसाधवः ॥ भूमाविवोदितंचंद्रंविस्मयोत्फुल्ललोचनाः ॥ २५ ॥ नित्यानादृतभोगोसौततोप्युचितयाधिया ॥ प्राप्तमप्युचितारंभंभोगंनबहुमन्यते ॥ २६ ॥ पूर्वसंस्तुतिवैरस्यमंतरेवोदितात्मनः ॥ जायतेजीर्णजाड्यस्यपाकादिवशरत्तरोः ॥ २७ ॥ ततःसज्जनसंपर्कमुदर्कश्रेयसेस्वयम् ॥ करोतिस्वस्थतागृध्नुर्भिषगाश्रयणंयथा ॥ २८ ॥ तेनोदारमतिर्भूत्वाशास्त्रार्थेषुनिमज्जति ॥ महान्महाप्रसन्नेषुसरःस्विवमहागजः ॥ २९ ॥ सज्जनोहिसमुत्तार्यविपद्भ्योनिकटस्थितम् ॥ नियोजयतिसंपत्सुस्वालोकेष्विवभास्करः ॥ ३० ॥ परस्वादानविरतिःपूर्वमेवप्रवर्त्तते ॥ विवेकिनोनिजार्थेषुसंतोषश्चोपजायते ॥ ३१ ॥ परस्वादानविरतःसंतोषामृतनिर्भरः ॥ विवेकीक्रमशःस्वार्थानप्युपेक्षितुमिच्छति ॥ ३२ ॥ ददातिकणपिण्याकशाकाद्यपिहियाचते ॥ तेनैवाभ्यासयोगेनस्वमांसानिददात्यसौ ॥ ३३ ॥ नूनंविलयच्चित्तानांविवेकमनुधावताम् ॥ मौर्ख्यंलघुत्वमायातिधावतामिवगोष्पदम् ॥ ३४ ॥ परार्थादानविरतिंपूर्वमभ्यस्ययत्नतः ॥ आहर्त्तव्याविवेकेनततःस्वार्थेष्वरक्तता ॥ ३५ ॥ ततोभोगनिरासेनसहस्वार्थनिराकृतिः ॥ परमार्थेसुविश्रांत्यैक्रियतेकृतिभिःक्रमात् ॥ ३६ ॥ नताद्दशंजगत्यस्मिन्दुःखंनरककोटिषु ॥ याद्दशंयावदायुष्कमर्थोपार्जनशासनम् ॥ ३७ ॥ आसनेशयनेयानेगमनेरमणेजने ॥ आधिचिंतापराएवननुमूढाविदंतुताम् ॥ ३८ ॥ नन्वर्थावितताऽनर्थाःसंपदःसंततापदः ॥ भोगाभवमहारोगाविपरीतेनभाविताः ॥ ३९ ॥

यतइत्याह ॥ नूनमिति ॥ मौर्ख्यमज्ञानम् ॥ लघुत्वमपक्षयेणाल्पताम् ॥ यथाधावतामश्वादीनांगोष्पदमनायासोल्लंघ्यत्वलक्षणंक्षुद्रत्वमायातितद्वत् ॥ ३४ ॥ परेषांस्वंधनादितस्यआदानाद्विरतिंनिवृत्तिम् ॥ ३५ ॥ ३६ ॥ अर्थोपार्जनप्रयुक्तंशासनंदंडनम् ऐहिकपारलौकिकदुःखजातमितियावत् ॥ ३७॥ तत्रमूढानांपारलौकिकदुःखास्मरणेपिऐहिकंसर्वप्रसिद्धंस्मारयति ॥ आसनेइति ॥ विदंतुस्मरंतु ॥ ३८ ॥ अर्जनरक्षणव्ययादौराजचोरादिभ्यश्चार्थार्थिनामनर्थसहस्रस्यप्रसिद्धत्वाद्विततानर्थाः रागविपरीतेनविवेकेनभाविताःपर्यालोचिताश्चेदित्यर्थः ॥ अथवाभावप्रधानोनिर्देशः ॥ अनर्थरूपाअप्येतेमोहाज्जनैस्तद्वैपरीत्येनभाविताइत्यर्थः ॥ ३९ ॥

---

१ अर्थांचतेत्यपिक्वचित्पाठः

यावत्कदर्थार्थमर्थलक्षणोऽनर्थः पुरुषेणनार्थ्यतेनाभिलष्यतेतावत्सपुरुषंवैरस्यंतापत्रयप्रयुक्तशोषंनायाति ॥ ४० ॥ यस्मैपुरुषायमोक्षाख्यमनुत्तमंसुखंरोचतेसपुमानर्थंधनं जगल्लक्षणस्यतृणस्यशिखेवतुच्छतरमितिदृष्ट्यापश्यतु ॥ धनस्पृहात्यागएवमुख्योमोक्षोपायस्तस्येत्यर्थः ॥ ४१ ॥ तुच्छतामेवदृढयितुंपुनःपुनर्धनंनिंदति ॥ भूरीति ॥ चिंता शोकमोहादिभावविकाराणांजरामरणयोर्दुष्कर्मणांदैन्यादीनांचाऽर्थएवसार्थःसमूहइत्यर्थः ॥ अजंतुविषयेपिजंतुवदुपचारात्सार्थशब्दः ॥ ४२ ॥ संतोषएववैराग्यप्रतिष्ठाप नेनसर्वदुःखहारीतितंप्रशंसति ॥ अस्मिन्निति ॥ ४३ ॥ सर्वसुखहेतुरपिसएवेत्याह ॥ वसंतइत्यादिना ॥ एकतःस्मृताइत्यन्वयः ॥ ४४ ॥ पूर्णतापुरुषस्यभवतीतिशेषः ॥ शिष्ट

तावन्नायातिवैरस्यंचिंताविषयजृंभणैः ॥ यावदर्थमहानर्थोनकदर्थार्थमर्थ्यते ॥ ४० ॥ अनुत्तमसुखंयस्मैचिरायपरिरोचते ॥ जगत्तृणशिखादृष्ट्यासोर्थंपश्यतुशाम्यतु ॥ ४१ ॥ भूरिभावविकाराणांजरामरणकर्मणाम् ॥ दैन्यदौरात्म्यदाहानामर्थःसार्थइतिस्मृतः ॥ ४२ ॥ अस्मिन्जगतिजंतूनांजरामरणशालिनाम् ॥ अजरामरणंकर्तुंसंतोषोस्तिरसायनम् ॥ ४३ ॥ वसंतोनंदनोद्यानमिंदुरप्सरसःस्मृताः ॥ इत्येकतःसमुदितंसंतोषाम्रुतमेकतः ॥ ४४ ॥ सरसःप्रावृषेवांतःसंतोषेणैवपूर्णता ॥ गंभीरांशीतलांस्वच्छांप्रसन्नांरसशालिनीम् ॥ ४५ ॥ साधुरोजस्वितामेत्यसंतोषेणैवराजते ॥ सुपुष्पितवनाकारोवसंतेनेवपादप. ॥ ४६ ॥ पादपीठपरामर्शपिष्टकीटवदीहते ॥ दीनप्रकृतिरर्थार्थीदुःखादुःखांतरंव्रजेत् ॥ ४७ ॥ कल्लोलविकलाःक्षुब्धसमुद्रपतिताइव ॥ नाप्नुवंतिस्थितिंस्वस्थांविकृताकृतयोर्थिनः ॥ ४८ ॥ संपदःप्रमदाश्चैवतरंगोत्तुंगभंगुराः ॥ कस्तास्वहिफणच्छत्रच्छायासुरमतेबुध. ॥ ४९ ॥ अर्थोपार्जनरक्षाणांजानन्नपिकदर्थनाम् ॥ यः करोतिस्पृहांमूढोनृपशुंतंनसंस्पृशेत् ॥ ५० ॥ मनसोवाह्यमारंभमांतरंचलुनातियः ॥ समंवैलक्ष्ण्यदात्रेणतस्यक्षेत्रंप्रकाशते ॥ ५१ ॥ जगत्त्वमज्ञसंबुद्धंज्ञोविदन्नसदेवयत् ॥ सतीवतत्रस्फुरतितदनभ्यासजृंभितम् ॥ ५२ ॥

मुत्तरान्वयि ॥ ४५ ॥ साधुःसंतोषेणैवओजस्वितामेत्यसुपुष्पितवनाकारोराजते ॥ ४६ ॥ असंतुष्टस्त्वर्थार्थीसन्पादपीठेनपादुकयापरामृष्टोदैवादास्कंदितोनिष्पिष्टश्चयःकीटस्तद्वद्दीनप्रकृतिःसन्ईहतेचेष्टते ॥ ४७ ॥ अर्थिनोधनलिप्सवः ॥ ४८ ॥ तासुतल्लक्षणास्वहिफणच्छत्रच्छायासुबुधःकोरमते ॥ नकश्चिदित्यर्थः ॥ ४९ ॥ ५० ॥ बाह्यमारंभमिंद्रियानुधावनलक्षणमांतरंसंकल्पादिलक्षणंवाक्षेत्रंज्ञानबीजोद्भवस्थानंमुक्तिनिधानस्थानंवाहृदयम् ॥ ५१ ॥ अनुक्रांतादृढवैराग्यांतागुणाअभ्यस्ताएवज्ञानंप्रतिष्ठापयंतिनहेलयासेविताइत्याशयेनोपसंजिहीर्षुराह ॥ जगत्त्वमिति ॥ अज्ञैःसंबुद्धंजगत्त्वंजगदाकारवैचित्र्यंतत्साक्षिण्यसदेवेतिविदन्नपिज्ञःअपक्वज्ञानतयातत्रजगद्वैचित्र्येसतीवसत्यार्थइवाज्ञवद्यत्स्फुरतिव्यवहरतितत्प्रस्तुतवैराग्यांतगुणानभ्यासविजृंभितमित्यर्थः ॥ ५२ ॥

प्रथमंसंसारेनिर्वेददशामुपेत्यतेनसत्संगमंशास्त्राभ्यासंचोपेत्यतदर्थदृढभावनयासर्वान्भोगान्निरस्यदर्शितलक्षणाद्वैतृष्ण्यदार्ढ्यात्परमार्थंस्वतत्त्वंभूमिकापरिपाकक्रमेणैतीत्यर्थः ॥ ५३ ॥ इतिश्रीवासिष्ठ० म० तात्पर्यप्रकाशेनि० उ० सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ ॥७॥ ॥ निरूढेपरवैराग्येपुंसोयैर्लक्षणैःस्थितिः ॥ येश्वज्ञानप्रतिष्ठायांवर्ण्यंतेतानिवि स्तरात् ॥१॥ तत्रादावष्टभिर्वैराग्यप्रतिष्ठायांसत्यांयानिलक्षणानिभवंतितान्याह ॥ रूढेइत्यादिना ॥१॥ श्लोकद्वयंप्रागुक्तानुवादः॥२॥ संशुष्काण्यमेध्यान्यपवित्राण्युच्छिष्टा दिपर्णानियथागृहान्निरस्यंतेतद्वत् ॥३॥ यथापांथानांदृष्ट्याउपयुक्ताअपिभांडोपस्करावोढुमशक्त्याहातुंभारायदृश्यंतेतद्वद्भिरक्तेनापिदाराश्चबंधवश्चदृश्यंतइत्यर्थः ॥क्रियार्थो पपदस्यचकर्मणीतिचतुर्थी ॥ लकारेणदृशिक्रियानिरूपितकर्मशक्तेरभिधानेपिगम्यमानजहातिक्रियानिरूपितायास्तस्याअनभिधानात् ॥ तर्हिकिंसहसैवत्यज्यंतेनेत्याह ॥

संसारनिर्वेददशामुपेत्यसत्संगमंशास्त्रमुपेत्यतेन॥ शास्त्रार्थभावेननिरस्यभोगान्वैतृष्ण्यदार्ढ्यात्परमार्थमेति ॥ ५३ ॥ ॥इ० वा० म हारामायणेवा० दे० मो० नि० उ० मुमुक्षुप्रथमोपक्रमोनामसप्तचत्वारिंशः सर्गः ॥ ४७ ॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ रूढसंसार निर्वेदेस्थितेसाधुसमागमे ॥ शास्त्रार्थभावितेबुद्ध्याभोगवैतृष्ण्यआगते ॥१॥ जातेविषयवैरस्येसज्जनत्वेतथोदिते ॥ प्रकाशेसोन्मुखी भूतेहृदयेकलितोदये ॥२॥ धनानिनाभिवांछ्यंतेतमांसीवविवेकिना ॥ त्यज्यंतेविद्यमानानिसंशुष्कामेध्यपर्णवत् ॥ ३ ॥ भारायपांथ दृष्ट्येवदृश्यंतेदारबंधवः॥ यथाशक्तियथाकालमुपचर्यंतएवच ॥ ४ ॥ इंद्रियेष्वपिसंलग्नाइंद्रियार्थाःपुनःपुनः॥ नभोगाअनुभूयंतेनूनं शांतमनस्तया ॥ ५ ॥ एकांतेषुदिगंतेषुसरःसुविपिनेषुच ॥ उद्यानेपुण्यदेशेषुनिजेष्वेवगृहेषुवा ॥ ६ ॥ सुहृत्केलिविलासेषुशुभभोग्यानां शनादिषु॥ शास्त्रतर्कविचारेषुनतथास्थीयतेस्थिरम् ॥ ७ ॥ उपशांतेनदांतेनस्वात्मारामेणमौनिना ॥ ज्ञातैवान्विष्यतेज्ञनविज्ञानैकां तवादिना ॥८॥ एवमभ्यासवशतःपरेविश्रम्यतेपदे॥ निष्प्रेवांभसिशांतेनस्वयमेवविवेकिना ॥९॥ सबाह्याभ्यंतरंशांताज्ञतैवार्थतयो दिता ॥ नसंभवतिभिन्नोर्थइत्येवपरमंपदम् ॥ १० ॥

यथाशक्तीति ॥ ४ ॥ ५ ॥ तदेवप्रपंचयति ॥ एकांतेष्वित्यादिना ॥ ६ ॥ आस्थीयतेआस्थावताभूयते आसक्त्यभावाच्चिरंनस्थीयतइतिवा ॥ ७ ॥ दैवादास्थितेनापितत्रतत्र ज्ञातातत्त्वविदेवज्ञानदार्ढ्यायान्विष्यते ॥ अथवाज्ञातादेहेंद्रियबुद्ध्यादीनांसाक्षाद्द्रष्टाप्रत्यगात्मैवचेतसान्विष्यतेननदतिरिक्तंकिंचिदित्यर्थः ॥ ८ ॥ एवंनिरंतरान्वेषणेनस्वयंस्वा त्मदर्शनेनविश्रांतिःसिद्ध्यतीत्याह ॥ एवमिति ॥ ९ ॥ कीदृशंतत्पदंयत्रास्यविश्रांतिःकीदृशनिश्चयात्मिकाचसातदाह ॥ सबाह्याभ्यंतरमिति ॥ अज्ञतास्वाज्ञानमेवाऽर्थतयाद श्यवर्गाकारेणोदिता साचभिन्नोर्थोनसंभवतीतिशांता साशांतिरेवपरमंपदमित्यर्थः ॥ अथवासबाह्याभ्यंतरंभिन्नोर्थोनसंभवतीत्येवनिश्चयरूपाज्ञताचरमसाक्षात्कारवृत्तिरेव दग्धेंधनाग्निवच्चिदात्मनिशांताचेत्तदेवपरमंपदमित्यर्थः ॥ १० ॥

७८

इतिअनुभूतौस्वानुभवेसर्वबाधावधित्वेनस्थितंयत्तदेवपरमंपदमित्यर्थः ॥ ११ ॥ तस्यपरमपदस्यनबोधतानशून्यतानाप्यर्थतेतिविद्धि ॥ कुतः ॥ सर्वस्यवस्तुजातस्यैकेनाद्वये नबोधेनैवाऽतिशयितःसंबंधोऽतिसंबंधआत्यंतिकैकरस्यंतथापरिणामात् ॥ नहिबोध्याभावेतद्यावृत्तावोधताप्यपदेष्टुंशक्यानापितदर्थतातस्यैवव्यपदेष्टुंशक्या नाप्यर्थशून्यता मात्रेणबोधस्यशून्यताप्रसक्तिरितिभावः ॥ १२ ॥ तद्विश्रांतावात्यंतिकंविषयवैरस्यंसिद्ध्यतीत्याह ॥ स्वेति ॥ यथाअमनसांदृषदांक्षीराणिनस्वदंतेतद्वत् ॥ १३ ॥ बहिर्मुखचि त्तानांस्वात्मप्रवणतांस्वात्मविश्रांतानांचबहिर्मुखतांनिरुणद्धीतिनिरोधस्तथाविधंपदम् ॥ चित्रेकृतोलिखितइवनिश्चलः ॥ १४ ॥ कीदृशंतदातस्यमनोभवतितदाह ॥ सर्वार्थ

नार्थोपलब्धिर्नोशून्यमस्तिबोधात्मतांविना॥ इत्यंतरनुभूतिस्थमाहुस्तत्परमंपदम् ॥ ११ ॥ एकबोधातिसंबंधपरिणामान्नबोधता॥ नशून्यतानार्थतेतिविद्धितत्परमंपदम्॥१२॥स्वसंविन्मात्रविश्रामवतामनसांसताम्॥ नस्वदंतेहिविषयाःपयांसिदृषदामिव॥१३॥ निरोधपदमापन्नोनिर्मनामौनमंथरः ॥ स्वभावेस्थितएवास्तेचित्रेकृतइवात्मवान्॥ १४॥ सर्वार्थमर्थरहितंमहदेवपराणुवत्॥ अशू न्यमेवशून्यात्मत्दृदयंवेद्यवेदिनः॥१५॥ अहंत्वंजगदीहादिदिक्कालकलनादिच॥ ज्ञस्यज्ञानादिशून्यादिस्थितमेवनविद्यते॥१६॥ ज्ञेना मलपदस्थेनदीपेनेवनिरस्यते॥ तमोहार्दतथाबाह्यंरागद्वेषभयादिच॥ १७॥ रजोरहितसर्वांशंसत्त्वात्पारमुपागतम्॥ असंभवत्तमो रूपंप्रणमेत्तंन्नभास्करम्॥ १८॥ भेदप्रविलयेजातेचित्तेचादृश्यतांगते॥ यास्थितिःप्राप्तबोधस्यनवाग्गोचरमेतिसा॥ १९॥ ददात्येत न्महाबुद्धेनिर्वाणंपरमेश्वरः॥ अहर्निशंपरमयाचिरंभक्त्याप्रसादितः॥ २०॥ ॥श्रीरामउवाच॥ ईश्वरःकोमुनिश्रेष्ठकथंभक्त्याप्रसा द्यते॥ एतन्मेतत्त्वतोब्रूहिसर्वतत्त्वविदांवर॥ २१॥ ॥श्रीवसिष्ठउवाच॥ ॥ईश्वरोनमहाबुद्धेदूरेनचसुदुर्लभः॥ महाबोधमयैकात्मा स्वात्मैवपरमेश्वरः॥ २२॥

मिति ॥ वेद्यमवश्यवेदनीयमात्मतत्त्वंवेदितुंशीलंयस्यतथाविधस्यतस्यत्दृदयंमनःअर्थरहितमेवसत्सर्वार्थंभवति ॥ सर्वस्यतत्त्वतस्तन्मात्रत्वात् ॥ तथाअपरिच्छिन्नब्रह्माकारत्वा न्महदेवसत्तद्यतिरेकेणदुर्लक्ष्यत्वात्परमाणुवद्भवति ॥ १५॥ अशून्यमेवशून्यात्मेतिशेषंव्याचष्टे ॥ अहंत्वमिति ॥ यतोज्ञानादिअतस्तत्तयास्थितमेव यतश्वशून्यादिअतोनवि द्यते ॥ नासतोविद्यतेभावोनाभावोविद्यतेसतइतिन्यायादितिभावः ॥ १६ ॥ भयादियत्तच्चनिरस्यते ॥ १७ ॥ पक्षद्वयेपिविशेषणानिस्पष्टानि ॥ अज्ञाननिशातिरोहितस्वेपि सत्वात्पारंतमोब्धिपारम् ॥१८॥१९॥ एतद्वर्णितंपरमपदलक्षणंनिर्वाणंपरमेश्वरोददाति ॥तपःप्रभावाद्देवप्रसादाच्चेत्यादिश्रुतेरितिभावः॥२०॥रामप्रश्नःस्पष्टः॥२१॥२२॥

ईश्वरताहिईश्यविषयेसर्वथास्वातंत्र्यम् तच्चसर्वप्रतिसर्वप्रकारेणस्वात्मनएवसंभवतीत्युपपत्तिमाह ॥ तस्मैइति ॥ अचेतनंहिसर्वरथगृहप्रासादादिचेतनार्थम् नचतदतिरिक्तो न्यश्चेतनधातुरस्ति ॥ नान्योतोस्तिद्रष्टेत्यादिश्रुतेः ॥ अनेनसर्वोपभोक्तृतास्वातंत्र्यमुक्तम् ॥ कर्तृतादिस्वातंत्र्यमपितस्यैवेत्याह ॥ ततइति ॥ तृतीयापंचमीषष्ठीसप्तमीविभक्त्यं तात्सार्वविभक्तिकस्तसिःकर्तृकरणनिमित्तस्वाम्यादिभावेनापिस्वातंत्र्यद्योतनार्थोबोध्यः ॥ससर्वमित्युपादानाधिष्ठानतादिस्वातंत्र्यप्रदर्शनाय ॥ एवंसर्वतइत्यपिसर्वशक्तिनिरू पकतास्वातंत्र्यद्योतनायबोध्यम् ॥ सौक्ष्म्यसर्वगतत्वपरिणामादिस्वातंत्र्यमपितस्यैवसंभवतीत्याह ॥ सोंतःसर्वमयइति ॥ इत्थंसर्वथासर्वदासर्वात्मनस्तस्यैवसर्वथापिसर्वोत्क र्षात्सएवेश्वरइतिनमस्कार्यइत्याह ॥ तस्मैइति ॥ २३ ॥ अतएवश्रुतिप्रसिद्धंजन्मादिहेतुतालक्षणंतस्येत्याशयेनाह ॥ तस्मादिति ॥ २४ ॥ सर्वाराध्यतापितस्यैवप्रसिद्धेत्याह

तस्मैसर्वंततःसर्वंससर्वंसर्वतश्चसः॥ सोंतःसर्वमयोनित्यंतस्मैसर्वात्मनेनमः ॥ २३ ॥ तस्मादिमाःप्रसूयंतेसर्गप्रलयविक्रियाः॥ अ कारणंकारणतोगतयःपवनादिवः ॥ २४ ॥ अनिशंपूजयंत्येताःसर्वाःस्थावरजंगमाः॥ यथाभिमतदानेनसर्वेतेभूतजातयः॥ २५॥ सुवहून्येषजन्मानियथाभिमतयेच्छया॥ यदासंपूजितस्तेनप्रसादमधिगच्छति ॥ २६ ॥ प्रसन्नःसमहादेवःस्वयमात्मामहेश्वरः॥ बो धायप्रेरयत्याशुदूतंपूतंशुभेहितैः॥ २७॥ ॥श्रीरामउवाच॥ ॥आत्मनापरमेशेनकोदूतःप्रेर्यतेमुने॥ सदूतोबोधनंवापिकरो तिवदमेकथम्॥ २८॥ ॥श्रीवसिष्ठउवाच॥ ॥ आत्मसंप्रेरितोदूतोविवेकोनामनामतः॥ हृद्गुहायांसदानंदस्तिष्ठतींदुरिवांबरे ॥ २९॥ सएषवासनात्मानंजंतुंबोधयतिक्रमात्॥ संसारसागरादस्मात्तारयत्यविवेकिनम्॥ ३०॥ बोधात्मैषोंतरात्मैवपरमःपरमेश्व रः॥ अस्यैववाचकोनामप्रणवोवेदसंमतः॥ ३१॥ जपहोमतपोदानपाठयज्ञक्रियाक्रमैः॥ एषप्रसाद्यतेनित्यंनरनागसुरासुरैः॥ ३२॥ द्यौर्मूर्द्धापृथिवीपादौतारकारोमराजयः॥ भूतान्यस्थीनिहृदयंव्योमास्यपरमेश्वरः ॥ ३३॥

अनिशमिति ॥ २५ ॥ २६ ॥ सएवमहादेवःशुभेहितैःसुकृतैःप्रसन्नःसन्बोधायतत्त्वज्ञानाधानायपूतंविशुद्धतमंवक्ष्यमाणंदूतंप्रेरयतिप्रेषयति ॥ २७ ॥ कथंकरोतितन्मेवद ॥ २८ ॥ तेनात्मनादेवेनसंप्रेरितोविवेकोनामदूतःप्रागुक्ताधिकारिणोहृद्गुहायामागत्यतिष्ठतियावज्ज्ञानप्रतिष्ठंस्थिरीभवति ॥ २९ ॥ सविवेकदूतः ॥ यद्बोधयतितदेवतस्यतार णमित्याशयः ॥ ३० ॥ एषसर्वजगद्व्यथाहेतुत्वेनप्रसिद्धोबोधात्मैवांतरात्मानवासनात्मासएवपरमःपरमेश्वरः ॥ प्रणवोऽस्यैववाचकःसन्नामभवति ॥ ३१ ॥ ३२ ॥ तस्यस्थू लप्रपंचोपहितंवैश्वानररूपमात्मभेदभ्रमनिरासायोपास्यंदर्शयति ॥ द्यौरिति ॥ तथाचश्रुतिः ॥ अग्निर्मूर्धाचक्षुषीचंद्रसूर्यौदिशःश्रोत्रेवाग्विवृताश्चवेदाः ॥ वायुःप्राणोहृदयंवि श्वमस्यपद्भ्यांपृथिवीह्येषसर्वभूतांतरात्मेति ॥ ३३ ॥

१ अत्रपाठांतरमपेक्षितमितिभातिपरंतुतन्नोपलभ्यते

विश्वतश्चक्षुरुतविश्वतोमुखो विश्वतोबाहुरुतविश्वतस्पात्इत्यादिश्रुतीनामप्यवंसामंजस्यमित्याशयेनाह ॥ सर्वत्रेति ॥ सर्वतोलक्ष्यंकरकर्णाक्षिपादंबिभर्त्तितथाविधः॥३४॥ नीयतेअनेनेतिशेषः ॥ ३५ ॥ ३६ ॥ कल्लोलाःषडूर्मयस्तल्लक्षणैर्जलदैराकुलेसंसारलक्षणरात्रेस्तिमिरेस्वात्मैवआसमंतात्पूर्णश्चंद्रमाःसाक्षादप्रकाशइत्यर्थः ॥ ३७ ॥ विवेकस्यैवोत्तारणत्वंवक्तुंसंसारंसमुद्रतयारूपयति ॥ अगाधेतिद्वाभ्याम् ॥ ३८ ॥ महतांस्थावरजंगमभूतायात्मनांजडलवानांजलकणानामाधारे ॥ ३९ ॥ उक्तंप्रश्नोत्तरंसंक्षिप्योपसंहरति ॥ पूर्वमिति ॥ स्पष्टम् ॥ ४० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उत्तरार्द्धेअष्टचत्वारिंशःसर्गः ॥ ४८ ॥ ॥ ९ ॥ ॥ सुप्ररूढविवेकानां

सर्वत्रैषचिदात्मत्वाद्यातिजागर्त्तिपश्यति ॥ तेनैषसर्वतोलक्ष्यकरकर्णाक्षिपादभृत् ॥ ३४ ॥ विवेकदूतमुद्बोध्यहत्वाचित्तपिशाचकम् ॥ आत्मनःपदवींस्फारांजीवःकामपिनीयते ॥ ३५ ॥ त्यक्त्वासर्वविकल्पौघान्विकारानर्थसंकरान् ॥ पौरुषेणात्मनैवात्मास्वयमेवप्रसाद्यताम् ॥ ३६ ॥ भ्रमन्मनःपिशाचेस्मिन्कल्लोलजलदाकुले ॥ संसाररात्रितिमिरेस्वात्मैवापूर्णचंद्रमाः ॥ ३७ ॥ अगाधमरणावर्त्तकल्लोलाकुलकोटरे ॥ तृष्णातरंगतरलेस्वमनश्चंडमारुते ॥ ३८ ॥ महाजडलवाधारेसंसारविषमार्णवे ॥ इंद्रियग्रामगहनेविवेकःपोतकोमहान् ॥ ३९ ॥ पूर्वंयथाभिमतपूजनसुप्रसन्नोदत्वाविवेकमिहपावनदूतमात्मा ॥ जीवंपदंनयतिनिर्मलमेकमाद्यंसत्संगशास्त्रपरमार्थपरावबोधैः ॥ ४० ॥ ॥ इत्यार्षेवासि०महारामायणेवा०दे०मो०नि०उ० विवेकमाहात्म्यंनामाष्टचत्वारिंशःसर्गः ॥ ४८ ॥ ॥ ९ ॥

॥ श्रीवसिष्ठउवाच ॥ ॥ परिपुष्टविवेकानांवासनामलमुज्झताम् ॥ महत्तामहतामंतःकाप्यपूर्वैवजायते ॥ १ ॥ औदार्योदारमर्यादांमतिंगांभीर्यसुंदरीम् ॥ महतांनावगाहंतेभुवनानिचतुर्दश ॥ २ ॥ चित्तभ्रांतिर्जगदितिप्ररूढेप्रत्ययेसताम् ॥ बाह्यश्चांतश्चरन्नक्रग्राहोमोहश्चशाम्यति ॥ ३ ॥ द्विंदुवत्तापजलवत्केशोंडूकवदंबरे ॥ विस्फुरंत्यांजगद्भ्रांतौवासनाप्रत्ययःकुतः ॥ ४ ॥

महत्तायादृशीभवेत् ॥ यादृक्वविश्वंभवतिस्फुटंतदिहवर्ण्यते ॥ १ ॥ कापिलोकोत्तरामहत्ताजायते ॥ १ ॥ तामेवप्रपंचयति ॥ औदार्येत्यादिना ॥ औदार्यस्यसर्वलोकेतारतम्येनप्रसिद्धस्यउदारांश्रेष्ठांमर्यादामवधिभूतांगांभीर्येणचसुंदरीमहतांमतिंचतुर्दशापिभुवनानितद्गतसंपदोजनाश्चनावगाहंतेनप्रलोभयितुमियत्तयाकलयितुंवाशक्नुवंतीत्यर्थः ॥ २ ॥ बहिःशब्दादिलक्षणेष्वतिप्रहेषुप्रभवोबाह्यःअंतःसंकल्पविकल्पादिरूपैश्चरन्नतएवहृदांतर्बहिःसंचारक्षमनक्रप्रायोग्रहःसमनस्केंद्रियादिकलापस्तन्मूलभूतोमोहोऽज्ञानंचकाराद्वासनाकामकर्मादिश्चशाम्यतीत्यर्थः ॥ ३ ॥ भ्रांतीनांसत्यताभिमानोयावत्कालंतावदेवतद्वासनोपचयः तासांभ्रांतित्वेनस्फुरणेतद्वासनानामपिमूलोच्छेदादुच्छेदोलोकेप्रसिद्धइतिदृष्टांतानुदाहृत्यदर्शयति ॥ द्विंदुवदिति ॥ जगद्भ्रांतौभ्रांतिरेवेयमितितत्त्वबोधाद्विस्फुरंत्यांसत्याम् ॥ ४ ॥

१ संकटान्इत्यपिक्वचित्पाठः २ ग्राहगहनेइत्यपिक्वचित्पाठः

सावासनाशून्याअवस्थापिमनसःअसत्वेसतिसिध्यति ॥ सानिर्वासनानिर्मनस्कावस्थासप्तमभूमिकायांविवेकिनाप्राप्ताकुतस्त्याज्यातत्त्यागेहेतुर्नास्त्येवेत्यर्थः ॥ ५ ॥ एतत्तुजा
ग्रदाद्यवस्थात्रयमेवसर्वेषांप्रसिद्धं यातुअनेनत्रयेणवर्जितासावस्थादर्शनादिव्यवहारमूलबाधादपश्यंत्यपिजीवनमात्रहेतुप्रारब्धशेषेणपश्यंतीवान्यदृशाभातितद्दृष्ट्यातुपरमैव
सोच्यतेनदृश्यानुपपत्तेत्यर्थः ॥ ६ ॥ तादृशांव्युत्थानकालेपिजगन्नआलानघनंनापिपृथिव्यादिघटितंकिंतुविचित्रोरत्नरश्म्योघोनिबिडितप्रभापुंजइवघनताद्याभासमात्रमि
त्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ यतोनानातानास्त्यतःस्रष्टयोनसंति यतश्चनाशताःनसंतिअतःअस्रष्टयःप्रलयाश्चनसंतिकिंत्वमूर्त्ताएवकल्पनार्कगणाघनीभूयभासंतइत्यर्थः ॥ अ
र्कपदेनतत्किरणालक्ष्यंते ॥ १० ॥ संकल्पकल्पितमूर्त्ताकाराणांमनोराज्यादौशून्यतैवप्रसिद्धानपिंडमहइत्याह ॥ एवंतावदिति ॥ ११ ॥ शून्यताप्रसाधनस्यफलमाह ॥ त

वसनाप्रत्ययेशून्येशून्यंव्योमैवशिष्यते ॥ साप्यवस्थामनोऽसत्वेकुतस्त्याज्याविवेकिना ॥ ५ ॥ त्रयमेतत्तुयावस्थात्रयेणानेनवर्जिता ॥ पश्यंतीवाप्यपश्यंतीसावस्थापरमोच्यते ॥ ६ ॥ विचित्ररत्नरश्म्योघइवनानात्मकंजगत् ॥ आभासमात्रंनत्वालानघनंनचपार्थिवम् ॥ ७ ॥ रूपालोकनमात्रंहिशून्यमेवजगत्स्थितम् ॥ खेविचित्रमणिव्यूहकरजालमिवोत्थितम् ॥ ८ ॥ नेहसत्यानिभूतानिनजगत्तानशून्यता ॥ इदंब्रह्माख्यरत्नेशप्रभाजालंविजृंभितम् ॥ ९ ॥ स्रष्टयोऽस्रष्टयोब्राह्म्योनानाताचननाशताः ॥ अमूर्त्ताएवभासंतेकल्पनार्कगणाघनाः ॥ १० ॥ एवंतावद्घनीभूतःपिंडग्राहोनविद्यते ॥ संकल्पितेचव्योम्नीवशून्यतैवावगम्यते ॥ ११ ॥ तस्यामवस्तुभूतायांकथंभावनिबंधनम् ॥ भविष्यदाकाशतरौविश्रांतःकोविहंगमः ॥ १२ ॥ पिंडत्वंनास्तिभूतानांशून्यताचनविद्यते ॥ चित्तमप्यतएवास्तंशेषंसत्तन्नचास्थिति ॥ १३ ॥ अनानासममेवास्तेनानारूपोविबोधवान् ॥ अंतरालीननानार्थोयथाकनकपिंडकः ॥ १४ ॥ यथास्थितस्यसाहंत्वंविश्वंचित्तंविलीयते ॥ ज्ञस्यावाच्यमचित्त्वंसत्स्वरूपमवशिष्यते ॥ १५ ॥

स्यामिति ॥ तस्यांशून्यतायांअहंममतारागद्वेषादिभावनिबंधनंकथम् ॥ नसंभवत्येवेत्यर्थः ॥ १२ ॥ एवंजगतःपिंडत्वाद्यपलापेसन्मात्रंसारतयापरिशिष्टमित्याह ॥ पिंडत्व
मिति ॥ तत्तुदुरपह्नवमित्याह ॥ तन्नचास्थितीति ॥ १३ ॥ अतएवतत्त्वविज्ञापत्यपिसुषुप्तस्थोभासमाननानात्वानांसन्मात्रालन्यंतर्लयादितिसदृष्टांतमाह ॥ अनानासममे
वेति ॥ १४ ॥ ननुज्ञस्यतत्सन्मात्रमवशिष्टमचिद्रूपमेवकिंनस्यात्सतिहिचित्तेचिदभिव्यक्तिःप्रसिद्धातद्विलयेतदसंभवादित्याशंक्याह ॥ यथास्थितस्येति ॥ यद्ययथास्वभावे
जाड्येस्थितस्यास्यसाहंत्वंविश्वंचित्तंचविलीयेततदाजडसन्मात्रपरिशेषोभवेत् नत्वेवं किंतुज्ञस्ययथाभूतचिदेकस्वभावेस्थितस्यसाहंत्वंविश्वंचित्तंचतत्स्वदर्शनाद्विलीयते तदा
तुपरिशिष्टचिदेकरसस्याऽचित्त्वंवक्तुमशक्यमितिचिदेकरससत्परिशेषसिद्धिरित्यर्थः ॥ १५ ॥

22

यदितत्स्वरूपमेवतर्हिसर्वेषांकुतोनसुलभमितिचेदुच्चावचविषयेष्वेवबुद्धेश्चंचलतयास्थैर्याभावादित्याह ॥ क्लिश्यतइति ॥ १६ ॥ कासौस्तोकायुक्तिस्तांदर्शयंस्तदभ्यासफलं ज्ञानलक्षणमित्याह ॥ विराडिति ॥ येनअधिकारिणाभूतभव्यभविष्यत्सर्ववस्तुलक्षणस्यजगदंगस्यसंभवंजन्मकार्यकारणतादिभिर्विमृश्यवाचारंभणश्रुतिदर्शितन्यायेनविराजास्थूलप्रपंचेनओजसातद्विष्टंभकसूत्रात्मकप्रधानेनसूक्ष्मप्रपंचेनविरहितंपरिशिष्टसन्मात्ररूपाखंडबोधात्मनाबुद्धंसएवज्ञस्तत्त्वविदितिसार्द्धस्यार्थः ॥ १७ ॥ १८ ॥ सर्वोपदेशानांतत्तदसंभावनांशव्यावर्त्तकानांतादृशानुभवेपर्यवसानमित्याह ॥ पूर्वोक्ताइति ॥ १९ ॥ युक्त्यंतरमाह ॥ पिंडत्वमिति ॥ चतुर्विधभूतग्रामाणांपृथिव्यादिमहाभूतानांचावयवशोगुणशश्चविविच्यदृश्यमानानांपरमाणुभावेप्यविश्रांतेःपिंडत्वंतावन्नास्ति ॥ नापिचशून्यत्वंप्रत्यक्षत्वाद्यसंभवात् ॥ उभयासंभवेचसर्वविकल्पापगमात्तदधीनस्थि

क्लिश्यतेकेवलंबुद्धिरुत्तराधरदर्शनैः॥ स्तोकयाभ्यस्तयायुक्त्यासत्योर्थोह्यवगम्यते॥ १६॥ विराडोजोविरहितंकार्यकारणतादिभिः॥ भूतभव्यभविष्यस्यजगदंगस्यसंभवम्॥१७॥ येनबोधात्मनाबुद्धंसज्ञत्यइभिधीयते॥ अद्वैतस्योपशांतस्यतस्यविश्वंनविद्यते॥१८॥ पूर्वोक्ताःसर्वएवैतेउपदेशाविशेषणाः॥ज्ञस्यानुभवमायांतिसतःसाधुकथाइव॥ १९॥ पिंडत्वंनास्तिभूतानांशून्यत्वंचाप्यसंभवात्॥ अतएवमनोनास्तिशेषंसत्तत्त्वस्थितिः॥२०॥ चेत्योन्मुखत्वमेवांतश्चेतनस्यास्यचेतनम्॥ उदितंतदनर्थायश्रेयसेनुदितंभवेत्॥२१॥ उदितंवाह्यतामेतितत्रगच्छतिपिंडताम्॥ स्वयंसंवेदनादेवजाड्यादब्धिवशैलताम्॥ २२॥ स्वप्नाद्यर्थवदादत्तेबोधोऽयोधेनपिंडताम्॥ तद्ग्राहकतयाचित्तंभूत्वाबध्नातिदेहकम्॥ २३॥ एतावतीष्ववस्थासुबोधस्योदेतिनान्यता॥ शब्दकल्पनयाभेदःकेवलंपरिकल्पितः॥ २४॥ वहिरंतश्चबोधस्यभात्यात्मैवार्थदृष्टिभिः॥ अंतस्त्वेनवहिष्ट्वेननैवास्यमनसोयथा॥ २५॥ बोधस्याकाशकल्पत्वात्कालाकाशादितद्वपुः॥ पदार्थाश्चैवखात्मानःस्वप्नवन्नार्थरूपिखम्॥ २६॥ बाह्यार्थतानांतरत्वंतद्बोधवशाद्व्रजेत्॥ नासादृश्यंहिबोधत्वंगंतुंशक्तंजडंक्वचित्॥ २७॥

तिकंमनोपिनास्तीत्यविकल्पंसन्मात्ररूपंस्फुरणमेवशिष्यतइतिशेषंतदेवतत्पारमार्थिकंरूपंस्थितिःप्रतिष्ठेत्यर्थः ॥ २० ॥ युक्त्यंतरमाह ॥ चेत्योन्मुखत्वमिति ॥ अंतश्चेतनस्यास्यप्रत्यगात्मनश्चेत्योन्मुखत्वमेवचेतनंसंसारात्मनाबोधः ॥ २१ ॥ कथमनर्थायतदाह ॥ उदितमिति ॥ शैलतांकरकोपलभावम् ॥ २२ ॥ बोधश्चिदात्मा ॥ अबोधेनस्वाज्ञानेन ॥ २३ ॥ ईदृशविवर्त्तसहस्रैरपिचितोनाणुमात्रमपिविकारइतितेषांवाचारंभणमात्रत्वमित्याह ॥ एतावतीष्विति ॥ २४ ॥ यथास्वमस्यमनसादर्शनेमनसएवांतस्त्वेनवहिष्ट्वेनचमनएवविकृतंभातिनतथाबोधात्माअर्थदृष्टिभिर्भासमानोपिविकृतइत्यर्थः ॥ २५ ॥ कुतोनविकृतस्तत्राह ॥ बोधस्येति ॥ कालाकाशादिवदविकृतमित्यर्थः ॥ अर्थरूपिअर्थाकारपरिणामि ॥ २६ ॥ चिज्जडबाह्यार्थाकारेणनविक्रियतांजडमेवतत्त्वबोधवशादांतरचिदाकारत्वेनविक्रियतांतत्राह ॥ बाह्येति ॥ हियस्माज्जडमसादृश्यमत्यंतविसदृशमित्यर्थः ॥ २७ ॥

तांदृश्यस्थितिंविवर्त्तवशात्प्राप्तोपिसबोधोयथास्थितमविकृतएवास्ते ॥ २८ ॥ सप्तमभूमिकाविश्रांतिपर्यंतेपरिणामेपरिणतौ ॥ २९ ॥ दृश्यस्यमनोभावनयैवदृढीभावइवतयैव शिथिलीभावइत्याह ॥ आतिवाहिकेत्यादिना ॥ ३० ॥ नटैःपिशाचवेषनाटनायकल्पितापिशाचतेव ॥ ३१ ॥ ३२ ॥ भावनाअर्थसत्यतावासना ॥ ३३ ॥ एतस्याश्छेदेउच्छेदेपराउद्युक्ताः ॥ ३४ ॥ साअज्ञानप्रयुक्ताउन्मत्तता ॥ ३५ ॥ बोधस्यसत्ताअभ्यासदृढीकृतास्थितिस्तत्प्रसादतःआतिवाहिकदेहोभावनांब्रह्माहंभाववासनामात्रतांतथानीयतइत्यर्थः ॥ ३६ ॥ भावनांनीत्वाजीवपदंजीवतांनीत्वाततोब्रह्मतांनेतव्यः ॥ ३७ ॥ कथंजीवपदंनेतव्यःकथंचब्रह्मतांतदाह ॥ स्ववस्तुवदिति ॥ उत्पन्नान्दृहिबाह्यानाध्यात्मिकांश्चभावान्प्रतिरागाद्युद्भावनेनात्मानमतिवहतीत्यतिवाहोवासनासंघस्तदुद्भवोहिलिंगदेहआतिवाहिकइत्युच्यते ॥ तत्रसर्वभावानांप्रथमोविकारउत्पत्तिःसाचेद्विम्ब

बोधोदृश्यदशांनैतिप्राप्तोवापिचतांस्थितिम् ॥ सयथास्थितमेवास्तेमनागप्येतिनान्यताम् ॥ २८ ॥ अत्यर्थंशुद्धबोधैकपरिणामेकृतोदये ॥ बोधावबोधार्थशब्दानांश्रुतिरप्यस्तमेष्यति ॥ २९ ॥ आतिवाहिकदेहानांचित्तानामेवजायते ॥ आधिभौतिकताबोधोदृढभावनयास्वया ॥ ३० ॥ आकाशविशदैश्चित्तैर्भावितैषातिवाहिकैः ॥ आधिभौतिकतामिथ्यानटैरिवपिशाचता ॥ ३१ ॥ भ्रांतिरभ्रमणाभ्यासात्प्रज्ञातैषोपशाम्यति ॥ नोन्मत्तोस्मीतिसंबोधाच्छाम्यत्युन्मत्तताकिल ॥ ३२ ॥ भ्रांतेःस्वयंपरिज्ञानाद्वासनाविनिवर्त्तते ॥ स्वप्नेस्वप्नतयावुद्धेकस्यस्यात्किलभावना ॥ ३३ ॥ वासनातानवेनैवसंसारउपशाम्यति ॥ वासनैवमहायक्षिण्येतच्छेदपराबुधाः ॥ ३४ ॥ अज्ञानोन्मत्ततापुंसांयथाभ्यासेनभाविता ॥ तथैवबोधात्स्वभ्यासात्साकालेनोपशाम्यति ॥ ३५ ॥ आतिवाहिकदेहोयमाधिभौतिकतांयथा ॥ नीयतेभावनांतज्ज्ञैर्बोधसत्ताप्रसादतः ॥ ३६ ॥ आतिवाहिकदेहोपिनीत्वाजीवपदंतथा ॥ दृढेनबोधाभ्यासेननेतव्योब्रह्मतामपि ॥ ३७ ॥ स्ववस्तुवच्चेदुत्पत्तिर्बुध्यतेबोधरूपिणी ॥ तदातिवाहिकीबुद्धिःकथमित्यपिबुध्यते ॥ ३८ ॥ नोचेत्तत्प्रतिवाक्यार्थात्तद्द्वयीर्विनिवर्त्तते ॥ भूतोत्सादनसूत्रस्यप्रतिपत्तृपदंयथा ॥ ३९ ॥

श्यस्ववस्तुवत्कूटस्थाबोधमात्ररूपिणीबुध्यतेतदाआतिवाहिकीबुद्धिरपिकथंकितत्त्वाइतितुल्यन्यायेनबुध्यते ॥ नतावत्कस्यचिद्भावस्यकूटस्थबोधस्वभावव्यतिरेकेणोत्पत्तिर्निरूपयितुंशक्या ॥तथाहि॥ साहिप्राक्स्वयमुत्पन्नभावान्विशिष्यादनुत्पन्नवा ॥ द्वितीयेशृंगमपिशशंविशिष्यात् ॥ आद्येस्वयमुत्पत्त्यादिभिर्विशेष्यमाणाभावएवस्यान्नभावविकारः ॥ एवंतदुत्पत्तिरपीत्यनवस्थादोषाभ्युपगमेनिर्विकारभावानवस्थैवस्यादितिनोत्पत्त्यादिविकाराःकस्यचित्केनचिन्निरूपयितुंशक्याइतिकूटस्थबोधरूपाएवतेइतिबुद्धेकःकस्मैकमतिवहेत्किंतदतिवहनंकावातद्बुद्धिरन्यास्यादितिसापितत्त्वतोबुद्ध्यतइत्यर्थः ॥ ३८ ॥ अनयैवरीत्यातत्त्वंपदार्थशोधनेसर्वमहावाक्यान्यखंडार्थबोधनेनसर्वसंदेहग्रंथिभेदनेसमर्थानि ॥ अन्यथातुभूतोत्सारणमंत्रगतहुंफडादिपदवदनर्थकान्येवश्रवणमात्रबलात्संसारंनिवर्त्तयंतीतिकल्प्यंस्यादित्याह ॥ नोचेदिति ॥ सूत्रस्यमंत्रस्यप्रतिपत्तृपठकंहुंफडादिपदंयथातथाभवेदितिशेषः ॥ ३९ ॥

तत्पदार्थशोधायवाचारंभणन्यायेनप्रथमंजगत्कारणेश्वरस्वरूपबोधैकतांबुद्ध्वातदनंतरंत्वंपदार्थशोधायप्रत्यक्चिदपिसपर्यगात्छुक्रमकायमव्रणमितिश्रुतिदर्शितदिशाअसंगाद्व यावोद्धव्या ॥ कियत्कालंपदार्थद्वयशोधनपरेणभाव्यंतत्राह ॥ अत्यंतेति ॥ यावत्पदार्थयोरखंडैकरसवाक्यार्थरूपेणात्यंतपरिणामेनसाअखंडाकारवृत्तिरपिनबुध्यतेताव त्कालमित्यर्थः ॥ ४० ॥ ४१ ॥ सएवमुख्योविश्वजिदाख्योज्ञानयज्ञइत्याह ॥ ज्ञानवानिति ॥ विरोपयन्दृढंनिखायोच्छ्रयन्सन् ॥ सर्वत्यागएवएकामुख्यासर्वस्वदक्षिणाय स्यतथाविधोभूत्वाजगद्विश्वंविजित्यजयतिसर्वोत्कर्षेणास्ते ॥ ४२ ॥ सर्वोत्कर्षमेवसर्वविपदप्रकंप्यत्वेनप्रथमंवर्णयति ॥ पततीति ॥ ४३ ॥ वज्रसारवैतृष्ण्यशांतिसुखोत्कर्षस्थै र्येणापितंवर्णयति ॥ वैतृष्ण्यमित्यादिना ॥ ४४ ॥ शांतिसाधनानांमध्येवैतृष्ण्यस्योत्कर्षमाह ॥ यथेति ॥ ४५ ॥ संपत्सर्वाप्यत्यापदितिभावनान्मनोलक्षणस्यतृणोच्चयस्यम

जगद्बोधैकतांबुद्ध्वाबोद्धव्यातावदव्रणम् ॥ अत्यंतपरिणामेनयावत्सापिनबुध्यते ॥ ४० ॥ सबाह्याभ्यंतरेचित्तेशांतेभातिस्वभावता ॥ शीतलांव्योमनिर्भासांतामेवाश्रित्यशाम्यताम् ॥ ४१ ॥ ज्ञानवान्ज्ञानयज्ञस्योध्यानयूपंविरोपयन् ॥ जगद्विजित्यजयतिसर्वत्यागै कदक्षिणः ॥ ४२ ॥ पतत्यंगारवर्षेचवातिवाप्रलयानिले ॥ भूतलेव्रजतिव्योम्निसममास्तेज्ञआत्मनि ॥ ४३ ॥ वैतृष्ण्यशांतमनसोनिरो धमलमेयुषः ॥ स्थितिर्वज्रसमाधानंविनानान्योपपद्यते ॥ ४४ ॥ यथाबाह्यार्थवैतृष्ण्येनोपशाम्यत्यलंमनः ॥ नतथाशास्त्रसंदर्भैर्नोप देशतपोदमैः ॥ ४५ ॥ मनस्तृणस्यसर्वार्थवैतृष्ण्याग्निर्विबोधितः ॥ सर्वत्यागानिलैःसंपदत्यापदितिभावनात् ॥ ४६ ॥ बहिरंतश्चमोहश्च पिंडग्राहोर्थवेदनम् ॥ ज्ञप्तिरेवेतिकचतिज्ञात्वामणिरिवात्मनि ॥ ४७ ॥ नरनागासुरागारगिरिगह्वरदृष्टिभिः ॥ चितिरेवेतिविस्तताधूमो बुदतयेवखे ॥ ४८ ॥ वेपंतेचिद्द्रवत्वेनब्रह्मांडजडभांडगाः ॥ स्वविवर्त्ततरंगिण्योजीवशक्त्यापतद्रसाः ॥ ४९ ॥ जीवकाजीर्णशफ रीव्योमवारिविहारिणी ॥ मोहजालेनवलितानस्मरत्यात्मनिस्थितिम् ॥ ५० ॥ घनीभूताघनत्वेनचिद्घनागगनांगणे ॥ नानापदार्थ रूपेणस्फुरतिस्वात्मनात्मनि ॥ ५१ ॥

ध्येसर्वत्यागलक्षणैरनिलैर्विबोधितःसर्वार्थवैतृष्ण्यलक्षणोग्निर्ज्ञात्वाचरमसाक्षात्कारज्वालात्मनाप्रबुध्यबहिरंतश्चप्रसिद्धोयोमोहांधकारोयश्चतत्प्रयुक्तश्चोरयक्षादिकल्पनातु ल्योब्रह्मांडभूतभौतिकमूर्त्तलक्षणपिंडग्राहोयच्चतत्प्रयुक्तंचक्षुरादिनाशब्दार्थवेदनंतत्सर्वंज्ञप्तिश्चिदात्मैवेत्यखंडाद्वयस्वभावेनैवकचति ॥ यथावज्रादिमणिःस्वप्रतिबिंबितवस्तुजा तंस्वैकरस्येनप्रथयन्स्वतएवकचतितद्वदितिद्वयोरन्वयः ॥ ४६ ॥ ४७ ॥ विस्तताविविधंवैचित्र्यंप्राप्ता ॥ ४८ ॥ ब्रह्मांडभांडांतर्गतसर्ववस्तूनांचिद्व्याप्यधीनस्पंदत्वादपिचिद्वि वर्तमात्रत्वमित्याशयेनाह ॥ वेपंतेइति ॥ जीवशक्त्याप्राणेनआपतद्रसाःसरसाः ॥ ४९ ॥ तत्रचतुर्विधशरीरलक्षणचिद्विवर्त्ततरंगिणीषुजीवशफरीणांमोहजालेनबंधात्स्वतत्त्वा स्मरणमित्याह ॥ जीवकेति ॥ ५० ॥ चिदेवआत्मनिस्वरूपलक्षणेगगनांगणेघनामेघाइवसंपद्यस्थिताघनत्वेनभूरादिमूर्त्ताकारेणनानापदार्थरूपेणस्फुरति ॥ ५१ ॥

तत्रजीवानांतुल्यस्वभावत्वेपिवासनावैचित्र्यादेवसंसारदुःखवैचित्र्यंनान्यकृतमित्याह ॥ सर्वएवेति ॥ वासनामंतरेणविनाइतरांशेसमावासनावैषम्यादेवशुष्कपर्णवदुड्डीनाः संतोविचित्रस्वर्गनरकादिभूविभागेषुपतंतिनस्वतः यतोजडोपाधिसाम्याज्जडाःश्वसनस्यप्राणस्यवेणवइवध्वनिवैचित्र्येपिवासनांगुलिचेष्टावैचित्र्यमंतरेणक्षमंतइत्यर्थः ॥५२॥ अतएववासनावज्रपंजरभेदनार्थमेवनिस्तंद्रपौरुषप्रयत्नोवर्द्धनीयस्ततएवपरमपुरुषार्थसिद्धिरित्युपसंहरति ॥ आहत्येति ॥ आदौपौरुषबलानिसाधनचतुष्टयश्रवणमननादीन्याहत्यततोध्यानविघ्नभूतांतंद्रीमासनप्राणायामाद्यभ्यासेनावजित्यसंप्रज्ञातसमाधिनाबहिर्दृष्टेरुत्थायनिर्विकल्पासंप्रज्ञातसमाध्यनुप्रवेशादेवसर्जितंप्राक्समर्जितवासनौघलक्षणंसंसारपाशघनपंजरमंजसाशीघ्रमेवतत्त्वसाक्षात्कारेणभंक्त्वाअभितःपूर्णानंदैकरसब्रह्मात्मनाउदेयंत्वयानत्वज्ञसमेनसंसारांतर्वर्त्तिनाभाव्यमित्यर्थः ॥ ५३ ॥ ॥ इति

सर्वएवसमाजीवावासनामंतरेणच ॥ शुष्कपर्णवदुड्डीनाजडाःश्वसनवेणवः ॥ ५२ ॥ आहत्यपौरुषबलान्यवजित्यतंद्रीमुत्थायतर्जितसमर्जितवासनौघम् ॥ संसारपाशघनपंजरमंजसैवभंक्त्वाभ्युदेयमतिनाज्ञसमेनभाव्यम् ॥ ५३ ॥ ॥इत्यार्षेवा० वा० दे० मो० नि० उ० सर्वोपशांतिर्नामैकोनपंचाशत्तमःसर्गः ॥ ४९ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥इमेयेजीवसंघातादृश्यंतेदशदिग्गताः ॥ नरनागसुरागेंद्रगंधर्वाद्यभिधानकाः ॥ १ ॥ तेस्वप्नजागराःकेचित्केचित्संकल्पजागराः ॥ केचित्केवलजाग्रत्स्थाश्चिराज्जाग्रत्स्थिताःपरे ॥ २ ॥ घनजाग्रत्स्थिताश्चान्येजाग्रत्स्वप्नास्तथेतरे ॥ क्षीणजागरकाःकेचिज्जीवाःसप्तविधाःस्मृताः ॥ ३ ॥ ॥श्रीरामउवाच ॥ एतेषांभगवन्भेदोबोधायममकथ्यताम् ॥ जीवानांसमरूपाणांजलानामर्णवेष्विव ॥ ४ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥कस्मिंश्चित्प्राक्तनेकल्पेकस्मिंश्चिज्जगतिक्कचित् ॥ केचित्सुप्ताःस्थितादेहैर्जीवाजीवितधर्मिणः ॥ ५ ॥ येस्वप्नमभिपश्यंतितेषांस्वप्नमिदंजगत् ॥ विद्धितेहिखलूच्यंतेजीवकाःस्वप्नजागराः ॥ ६ ॥ क्कचिदेवप्रसुप्तानांयःस्वप्नःस्वयमुत्थितः ॥ विषयःसोयमस्माकंतेषांस्वप्ननरावयम् ॥ ७ ॥ तेषांचिरतयास्वप्नःसजाग्रत्त्वमुपागतः ॥ स्वप्नजागरकास्तेतुजीवास्तेतद्गताःस्थिताः ॥ ८ ॥

श्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकोनपंचाशःसर्गः ॥ ४९ ॥ ॥ ७ ॥ ॥वासनादार्ढ्यशैथिल्यभेदवैचित्र्यकल्पितम् ॥ इहबोधायजीवानांसाप्तविध्यंप्रपंच्यते ॥ १ ॥ सर्वएवसमाजीवावासनामंतरेणचेत्यंतेयज्जीवानांवासनावैचित्र्यमात्रेणवैचित्र्यमुक्तंतत्साप्तविध्येनलक्षणैर्निरूपयितुंप्रतिजानीते ॥ इमेइति ॥ नरनागादिदेहवैचित्र्यैर्येदृश्यंतेतेइतिसंबंधः ॥ १ ॥ २ ॥ ३ ॥ अर्णवेपुष्करादिरसभेदवासितानांजलानामिव ॥ ४ ॥ तत्राद्यान्जीवटोपाख्यानदर्शितन्यायमवलंब्यलक्षयति ॥ कस्मिंश्चिदित्यादिना ॥ देहैर्जीवितधर्मिणोजीवंतःसंतोयेस्वप्नमभिपश्यंतीतिपरेणान्वयः ॥ ५ ॥ ६ ॥ तेषांस्वयमुत्थितोयःस्वप्नप्रपंचःसोयंसमानकर्मवासनोद्भववशादस्माकंयदाविषयोभवतितदावयंतेषांस्वप्ननराइत्यर्थः ॥ उपपादितोह्ययमर्थःशाम्बलीलोपाख्याने ॥ ७ ॥ तेषुस्वप्नजागरकशब्दमुपपादयति ॥ तेषामिति ॥उपागतोव्यक्तोऽभूदितिशेषः ॥ ८ ॥

७९

तेषांस्वप्नरावयमितियदुक्तंतदप्युपपादयति ॥ सर्वज्ञत्वादिति ॥ नन्वस्मदीयदेहादिप्रपंचोयदिवासनात्मनातच्चित्तेस्यात्तदासएवतेषांस्वप्नेउद्बुद्धइतितदंतर्गतानामस्माकंतदीयस्वप्नरत्वंस्यात् नत्वेतत्संभवतीतिचेन्मैवम् ॥ येनहेतुनासर्वंसर्वत्रविद्यतेसर्वसत्ताप्रदस्यमायाशबलब्रह्मणःसर्वगस्यसर्वत्रसर्वज्ञत्वात् ॥ अतोवयंतेषांस्वप्नरास्तदंतःकरणेवासनात्मनास्थिताएवतत्स्वप्नेकर्मसाम्यायुगपदभिव्यक्ताइत्यर्थः ॥ ९ ॥ अस्तुदैशिकीसर्वत्रसर्वस्थितिःकालिकीतुनसंभवति अतीतकल्पेषुवर्त्तमानवस्तुस्थित्ययोगादन्यथासर्वकल्पानांयौगपद्यापत्त्याभेदाभावप्रसंगादित्याशयेनरामःपृच्छति ॥ येष्विति ॥ प्राग्येषुकल्पेषुतेअस्मत्प्रपंचस्वप्नद्रष्टारोजीवाजाताजन्मप्राप्तास्तेषांकल्पानांकल्पनाःसहतद्देहैःसांप्रतंयदिक्षीयंतेनष्टास्तर्हितस्मात्स्वप्नात्प्रबुद्धानांतेषांपुनरतीतेकल्पेनावस्थितिःसिद्ध्यति ॥ नद्ययतनस्वप्नात्प्रबुद्धेनपूर्वेद्युस्तनोपिजागरोनुभवितुंशक्योदूरेपूर्वकल्पस्थःसइतिभावः ॥ १० ॥ तेजीवायद्यस्मत्प्रपंचालकेस्वस्वप्नेतत्त्वज्ञानंदैवाल्लभंतेतर्हिमुच्यंतएवेतिनैतद्दोषप्रसक्तिर्यदितुतन्नलभंतेतर्हिनतत्कल्पशेषस्तेषामतीतइत्यपेउद्भविष्यत्येव ॥ अन्य

सर्वज्ञत्वात्सर्वगस्यसर्वंसर्वत्रविद्यते॥ येनस्वप्नवतांतेषांवयंस्वप्ननराःस्थिताः ॥ ९॥ ॥ श्रीरामउवाच॥ ॥ येषुकल्पेषुतेजाताःक्षीयंतेकल्पकल्पनाः॥ यदितास्तत्कथंतेषांप्रबुद्धानामवस्थितिः॥ १०॥ ॥श्रीवसिष्ठउवाच॥ ॥इहस्वप्नभ्रमांतेतेमुच्यंतेवाविनिद्रताम्॥ प्राप्यसंकल्पतोदेहांस्तथैवान्यान्श्रयंत्यलम्॥ ११॥ तथैवान्यंप्रपश्यंतिजगत्कल्पंचकल्पितम्॥ कल्पनाभासनभसोनहिसंकटताभवेत्॥ १२॥ संकल्पनात्मकजगज्जीर्णोदुंबरकीटकाः॥ स्वप्नजागरकाःप्रोक्ताःशृणुसंकल्पजागरान्॥ १३॥ कस्मिंश्चित्प्राक्तनेकल्पेकस्मिंश्चिज्जगतिक्वचित्॥ अनिद्रालवएवांतःसंकल्पैकपराःस्थिताः ॥ १४ ॥ ध्यानाद्विलुठितावायमनोराज्यवशानुगाः॥ संकल्पदार्ढ्यमापन्नागलिताग्रानुभूतयः॥ १५॥ संकल्पएवजाग्रत्त्वंयेषांचिरतयांशतः ॥ तत्रास्तमितचेष्टानांतेहिसंकल्पजागराः ॥ १६॥ संकल्पोपशमेभूयस्तमन्यंवाश्रयंतिते॥ देहेतेषांवयमिमेसंकल्पपुरुषाःस्थिताः ॥ १७॥ संकल्पजागराःप्रोक्ताएतेसंकल्पशायिनः॥ जीवाजीवितगालोकाःशृणुकेवलजागरान्॥ १८ ॥

कल्पनाकल्पितानामेवात्ययात् ॥ तच्चेतसिप्रातिस्विकतत्कल्पशेषकल्पनायाअपेष्वैंदवोपाख्यानन्यायेनोपपत्तेरित्याशयेनवसिष्ठःसमाधत्ते ॥ इहेति ॥ अन्यान्श्रयंतीत्युक्त्यादृष्टसृष्टिवादमालंब्यप्रत्यहंजागरेदेहांतरकल्पनायामपिसंस्कारवशादेवप्रत्यभिज्ञेत्यपिदर्शितम् ॥ ११ ॥ संकटतानिरवकाशता ॥ १२ ॥ आद्यजीवानांनिरूपणमुपसंहृत्यद्वितीयान्वक्तुमुपक्रमते ॥ शृण्विति ॥ १३ ॥ अनिद्रालवस्त्यक्तनिद्राएवैंदववत्संकल्पपराः ॥ १४ ॥ अथवाजीवटोपाख्यानोक्तभिक्षुवद्ध्यानाद्विलुठिताश्चलिताः ॥ गलिताअग्रानुभूतिःपूर्वावस्थानुसंधानंयेषाम् ॥ १५ ॥ येषांजीवानांसंकल्पएवचिरानुवृत्त्याघनीभूतेजाग्रत्त्वंजागराभिमानः ॥ तत्रसांकल्पिकार्थेष्वेवास्तमितानपूर्वापरप्रतिसंधानक्षमामनश्चेष्टायेषाम् ॥ १६ ॥ तंप्राक्तनंव्यवहारमन्यंतद्विलक्षणंवा ॥ तेषांदृष्ट्यातुवयंसंकल्पपुरुषाएवतुल्यसंकल्पोद्भवादित्यर्थः ॥ १७॥ एतेजीवाः ॥ तेषांसंकल्पजीवितंगच्छंतिप्रविशंतितथाविधाअस्मदादिलोकाश्चतद्दृष्ट्यासंकल्पजागराएव ॥ तृतीयान्श्रावयति ॥ शृण्विति ॥ १८ ॥

सृष्टिसंकल्पेनबृंहितात्मनोब्रह्मणोवक्ष्यमाणरूपादस्मिन्कल्पेप्राथम्येनावतीर्णालब्धशरीरास्तस्मिन्जन्मनिस्वप्नपूर्वकत्वाभावात्केवलजागर्याः॥ यथाप्रागुक्तादामव्यालकटाः॥ यतस्तेप्रागुत्पत्तिविकाशलक्षणस्वप्नशून्याः कल्पांतरीयजाग्रत्संस्कारस्यजाग्रज्जननेनैवोपक्षीणस्यैतत्कल्पीयस्वप्नहेतुत्वाकल्पनादितिभावः॥ १९॥ चतुर्थानाह॥ भूयइति॥ जन्मांतरेपूत्तरोत्तरजन्मपरंपरासुगताःकार्ययोर्जाग्रत्स्वप्नयोःकारणेसुषुप्तौचसंचरणशीलाः॥ २०॥ पंचमान्लक्षयति॥ तएवेति॥ जाग्रत्सुजाग्रद्दशासुघनतामज्ञाननिबिड ताम्॥ जाग्रदिस्थितिविशेषणात्स्वप्नेस्थावराणामपिकदाचिन्मनुष्यभावादिदर्शनमस्त्येवेतिगम्यते॥ इतिपंचधाभिन्नाबद्धजीवाः॥ २१॥ अवशिष्टंभेदद्वयंजीवन्मुक्तेषुदर्शयि ष्यन्पष्ठानाह॥ येत्विति॥ चतुर्थपंचमषष्ठभूमिकास्थाइतियावत्॥ २२॥ सप्तमभूमिकारूढाएवसप्तमाइत्याशयेनाह॥ येत्विति॥ २३॥ श्रेयःपरःउत्तरोत्तरश्रेष्ठभूमिकात त्परः॥ २४॥ हेरामत्वंजगतांगणनाद्वितीयादिवस्तुबुद्ध्यादर्शनंतदात्मिकांभ्रांतिपरित्यज ॥ यतःअलंबोधैकरूपघनतामागतोसि॥ तेनद्वितीयाद्यभावेनतद्व्यावृत्तैक्यस्याप्यसं

प्राथम्येनावतीर्णास्तेब्रह्मणोबृंहितात्मनः॥ प्रोक्ताःकेवलजागर्याःप्रागुत्पत्त्यविकाशिनः॥ १९॥ भूयोजन्मांतरगतास्तएवचिरजाग राः॥ कथ्यंतेप्रौढिमायाताःकार्यकारणचारिणः॥ २०॥ तएवदुष्कृतावेशाज्जडस्थावरतांगताः॥ घनजाग्रत्तयाप्रोक्ताजाग्रत्सुघन तांगतः॥ २१॥ येतुशास्त्रार्थसत्संगबोधिताबोधमागताः॥ पश्यंतिस्वप्नवज्जाग्रज्जाग्रत्स्वप्नाभवंतिते॥ २२॥ येतुसंप्राप्तसंबोधाविश्रां ताःपरमेपदे॥क्षीणजाग्रत्प्रभृतयस्तेतुर्याभूमिकांगताः॥ २३॥ इतिसप्तविधोभेदोजीवानांकथितस्तव॥ समुद्राणामिवमयाबुद्ध्वाश्रे यःपरोभव॥ २४॥ भ्रांतिंपरित्यजजगद्गणनात्मिकांत्वंबोधैकरूपघनतामलमागतोसि॥ शून्यत्ववर्जितमशून्यतयाचमुक्तंतेनद्वयै क्यकविमुक्तवपुस्त्वमाद्यम्॥ २५॥ ॥इ॰वा॰महारामायणेवा॰दे॰मो॰नि॰उ॰जीवसप्तकप्रकारवर्णनंनामपंचाशत्तमःसर्गः ॥५०॥ ॥७॥ ॥श्रीरामउवाच॥ ॥कथंकेवलजाग्रत्त्वमकारणमनर्थकम्॥ परादिकसतिब्रह्मन्गगनादिवपादपः॥१॥ श्रीवसिष्ठउवाच॥ ॥अकारणंमहाबुद्धेनकार्यमुपलभ्यते॥ तज्जाग्रतःकेवलस्यनकश्चिदिहसंभवः॥ २॥

भवेनद्वैक्यकाभ्यांविमुक्तवपुःअतएवशून्यत्ववर्जितमप्यशून्यताख्यधर्मेणापिमुक्तम्॥ आद्यंसर्वकल्पनाभ्यःप्राथमिकमधिष्ठानसन्मात्रमेवत्वंशिष्टइत्यर्थः॥ २५॥ ॥इति श्रीवासिष्ठम॰तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेपंचाशत्तमःसर्गः॥ ५०॥ ॥७॥ ॥ब्रह्मदृष्टावनुत्पन्नमात्मदृष्टौमृषोद्भवम्॥ बोधादमूर्त्तंचजगद्यथातदिह वर्ण्यते॥ १॥ प्राथम्येनावतीर्णास्तेब्रह्मणोबृंहितात्मनः प्रोक्ताःकेवलजागर्याइतियउक्तंतदनुपपन्नम् कूटस्थाद्वयस्यब्रह्मणःप्राथम्येनजीवतयावतारेबीजप्रयोजनयोरसंभवा त्कामकर्मवासनादिबीजानांजीवभावोत्तरकालत्वादितिरामःशंकते॥ कथमिति॥ १॥ अस्त्यल्पमिदमुच्यते कूटस्थाद्वयात्केवलजागराख्यजीवावतारोनसंभवतीतितन्मूलक जीवांतराणांजगतश्चावतारस्यानुपपत्तेस्तुल्यत्वात्किंतुकूटस्थाद्वयवस्तुनोजगज्जीवोभयापलापमंतरेणोपदेष्टुमशक्यत्वात्तदुपदेशार्थंब्रह्मणएवजीवजगच्छब्दार्थाकारकलना श्रुतिस्मृतीतिहासपुराणेषुकल्पितेत्युत्तरंवासिष्ठआह॥ अकारणमित्यादिना॥ २॥

कारणाभावादेवविक्षतानिरस्ताइतियावत् ॥ ३ ॥ ४ ॥ अस्त्वेवंतथापिभोगायतनस्यदेहादेःकर्मादिद्वारासाक्षाद्वाकश्चिन्निर्माताअवश्यंवाच्यः कार्यमात्रस्यसकर्तृकत्वनियमात् ॥ तत्रचजीवंप्रवेश्यविषयैर्व्यामोहयिताऽन्योविनाव्यामोहकंचेतनस्यव्यामोहादर्शनात् ॥ तथाचव्यामोह्यव्यामोहकौद्वौचेतनावन्यौजीवेश्वराख्यौसर्गादिश्रुतियुक्तिप्रमाण्यात्स्वीकार्यावेवेतिपुनारामःशंकते ॥ कःकरोतीति ॥ ५ ॥ भवेतामावश्यकौयदिशरीरादिकर्तृनाव्यामोह्यव्यामोहकभावश्चसत्यइतिश्रुतियुक्तिसिद्धंस्यात् ॥ वाचारंभणश्रुत्यातत्त्वमस्यादिश्रुतिभिश्चतस्यानृतत्वेनिरूढेप्रतिभासमात्रस्यकूटस्थाद्वयेनापिविवर्त्तमात्रेणनिर्वोढुंशक्यत्वान्नतयोरावश्यकतेत्याशयेनवसिष्ठउत्तरमाह ॥ नकश्चिदेवेत्यादिना ॥ ६ ॥ कंजलंयथाऊर्म्यादितयातरंगतयास्वात्मनिस्थितंतथाबोधात्मात्मनिस्थितः ॥ ७ ॥ ननुबाह्यार्थस्यकथमांतरचिदात्मविवर्त्ततान्याश्रयत्वात्तत्राह ॥ बाह्य

तस्यातोसंभवादन्येजीवभेदाःसजीवकाः॥ सर्वेनसंभवंत्येवकारणाभावविक्षताः॥ ३ नेहप्रजायतेकिंचिन्नेहकिंचननश्यति ॥ उपदेश्योपदेशार्थशब्दार्थकलनोदयः॥४॥ ॥श्रीरामउवाच॥ ॥कःकरोतिशरीराणिमनोबुद्ध्यादिचेतनैः॥ कोमोहयतिभूतानिस्नेहरागादिबंधनैः॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥नकश्चिदेवकुरुतेशरीराणिकदाचन॥ नमोहयतिभूतानिकश्चिदेवकदाचन॥ ६॥ अनाद्यंतावभासात्माबोधआत्मनिसंस्थितः॥ नानापदार्थरूपेणकमूर्म्यादितयायथा ॥ ७॥ बाह्यंनविद्यतेकिंचिद्बोधःस्फुरतिबाह्यवत्॥ उदेतिबोधहृदयाद्बीजादिववरद्रुमः ॥८॥ बोधस्यांतरिदंविश्वंस्थितमेवरघूद्वह॥ स्तंभस्यांतर्यथाशालभंजिकाप्रकटीकृता॥ ९॥ सबाह्याभ्यंतरात्मैकमनंतंदेशकालतः॥ बोधामोदप्रसरणंजगदेवप्रबुध्यताम् ॥ १० ॥ अयमेवपरोलोकोभाव्यतांवासनाक्षयः॥ शाम्यतांपरलोकस्थंकाःकिलायांतिवासनाः॥ ११॥देशकालक्रियालोकरूपचित्तात्मसत्पदम्॥देशकालादिशब्दार्थरहितंनचशून्यकम्॥ १२॥ पदेपदविदामेवतस्मिन्बोधगतिर्भवेत्॥ द्रष्टॄणांशांतदृश्यानामेवान्येषांनराघव ॥ १३॥ येवैतरलगंभीरमहंतागर्त्तमाश्रिताः॥ पश्यंतितेतमालोकंनकदाचनकेचन॥ १४॥ चतुर्दशविधानंतभूतजातसुघुंघुमा॥ जगद्दृष्टिरियंह्यस्यशरीरावयवोपमा॥ १५॥

मिति ॥ आंतराद्बोधहृदयादेवांतरेवबाह्यवदुदेति ॥८॥ बीजाद्द्रुमोबहिरेवोदेतीतिविषमोदृष्टांतइत्याशंक्यसमंतमाह ॥ बोधस्येति ॥ अथवाययंतरुदितंस्यात्तर्ह्यंतरेवस्थितंस्यात्बहिर्हिविश्वंतिष्ठतितत्राह ॥ बोधस्येति ॥ ९ ॥ वस्तुतस्तुचिद्वस्तुनांतरंनबाह्यंकिंत्वनंतंतदंतरेवामोदवदांतरबाह्योभयविधजगत्कल्पनेत्याह ॥ सबाह्येति ॥ १० ॥ नन्वत्रैवचेज्जगत्कल्पनातर्हिब्रह्मलोकादिःपरलोकोर्चिरादिमार्गगम्योदूरेकथंप्रसिद्धइतिचेत्तादृशानादिवासनाप्रवाहवशादेव वासनाक्षयेतुससर्वोपिस्वात्ममात्रतयात्यंतसन्निहितएवेत्याशयेनाह ॥ अयमेवेति ॥ शाम्यतांविदुषांपरलोकात्मनाइहैवस्थितमात्मानंनदूरत्वादिवासनाःसमायांतीत्यर्थः ॥ ११ ॥ ननुप्रत्यगात्मैवचेत्परलोकदेशकालादिसर्वात्मातर्हिदेशकालादिबाधेशून्यरूपएवकिंनस्यात्तत्राह ॥ देशेति ॥ १२ ॥ यदिनशून्यंतर्हिपृथग्जनानामपिप्रपंचापलापमात्रेणतस्मिन्पदेकुतोनबोधगतिस्तत्राह ॥ पदेइति ॥ १३ ॥ ॥ १४ ॥ तद्दर्शिनस्तर्हिकीदृशीजगद्दृष्टिस्तामाह ॥ चतुर्दशेति ॥ १५ ॥

तेषांसमाहितदृशासृष्टिःकीदृशीव्यवहारदृशाचकीदृशीतामुक्तोपपादनायपूर्वोत्तरार्द्धाभ्यामाह ॥ कारणेति ॥ १६ ॥ तत्रपूर्वार्द्धोक्ततर्केणोपपादयति ॥ यदीति ॥ कुतोनस्थि तातत्राह ॥ कार्यमेवेति ॥ कुंडलव्यतिरिक्तवस्त्वंतरादर्शनान्नकारणमन्यदस्तीत्यर्थः ॥ १७ ॥ उत्तरार्द्धोक्तमपिदृष्टांतेनोपपादयति ॥ सौम्यस्येति ॥ १८ ॥ अंतर्गतनानाभां डात्माएकोमृत्पिंडइवब्रह्मस्थितम् ॥ यथाअंतर्गतकटककुंडलादिरूपकंहेमतथाऽवस्थितम ॥ पिंडावस्थायाअपिकार्यत्वेनकुंडलादिसाम्यादितिभावः ॥ १९ ॥ यथापिंडका लेघटःपिंडएवघटकालेचपिंडोघटएवेतिव्यवस्थितमेकस्यैवदर्शनमेवंप्रपंचस्यापिस्वप्नकालेजाग्रत्स्वप्नएवजाग्रत्कालेपिस्वप्नोजाग्रदेवेतिव्यवस्थितमेकमेवजगत्तत्त्वविद्भिर्बुध्यत इत्याह ॥ स्वप्नेति ॥ व्यग्रस्यवासनाविस्ताराभिनिविष्टस्यमनसःअपरिग्रहादनवरोधात् ॥ २० ॥ जाग्रत्कालेपिजाग्रच्चित्तमात्रतयापर्यालोचितंस्वप्नतुल्यतामेवैतिसैवविदुषः

कारणाभावतःसृष्टिर्नोदितानचशाम्यति ॥ यादृशंकारणंवास्यात्तादृग्भवतिकार्यकम् ॥ १६ ॥ यदिस्यात्कारणेकार्यंस्थितंकारणता स्यका ॥ कार्यमेवोपलंभात्तदसद्वयमवेदनात् ॥ १७ ॥ सौम्यस्यांतर्यथांभोधेरूर्म्यावर्त्तादयःस्थिताः ॥ ब्रह्मण्यसंभवक्षोभेजगच्चित्ता दयस्तथा ॥ १८ ॥ सर्वात्मैवामलंब्रह्मपिंडएकइवस्थितम् ॥ नानाभांडात्महेमैवयथांतस्थितरूपकम् ॥ १९ ॥ स्वप्नकालेस्वप्नएवजाग्र द्व्यग्रापरिग्रहात् ॥ जाग्रत्कालेजाग्रदेवस्वप्नःसत्यावबोधतः ॥ २० ॥ चित्तमात्रतयाबुद्धंमृगतृष्णांबुवत्स्थितम् ॥ जाग्रत्स्वप्नत्वमाया तिविचारविकलीकृतम् ॥ २१ ॥ सम्यग्ज्ञानेनभूतानिज्ञस्यदेहतयासह ॥ पीठबंधंविमुंचंतिगतकालइवांबुदाः ॥ २२ ॥ यथागलितुमा रब्धोघनोगगनतामियात् ॥ तथासत्यावबोधेनशाम्येत्सात्मग्रहंजगत् ॥ २३ ॥ शरदभ्रवदालूनामृगतृष्णांबुवत्तथा ॥ पुनःसंस्पृश्यमा नैवबोधाद्गलतिदृश्यता ॥ २४ ॥ यथादीप्तानलेलीनंसुवर्णघृतमिंधनम् ॥ एकतांयातिविज्ञानेतथाभुवनचित्तदृक् ॥ २५ ॥ बोधेनतनु तामेतिपिंडबंधोजगत्त्रये ॥ पिशाचबुद्धिःसदनेबोधितस्ययथाशिशोः ॥ २६ ॥ बोधस्यानंतरूपस्यस्वयमेवात्मनात्मनि ॥ जगच्चित्तादि ताभातापिंडबंधःकिलात्रकः ॥ २७ ॥ बोधाबोधनमेवेदंजगच्चित्तमिवोदितम् ॥ तदेवास्तंगतंबोधात्पिंडबंधस्यकास्तिता ॥ २८ ॥

सृष्टेःशरीरावयवोपमतेत्थमुपपादितेत्युपसंहरन्सम्यग्ज्ञानेतस्यापिसमूलंबाधमाह ॥ चित्तमात्रतयेति ॥ २१ ॥ गतेवर्षाकालेअंबुदाःपीठबंधस्वकारणनीहारभावमपियथा विमुंचंतितद्वदित्यर्थः ॥ २२ ॥ आत्मग्रहोहंकारस्तत्सहितम चरमसाक्षात्कारवृत्तिसहितंवा ॥ २३ ॥ संस्पृश्यमानास्पर्शादिनाअनुभूयमानैव ॥ २४ ॥ २५ ॥ पिंडबंधोमूर्त्ता द्याकारग्रहः ॥ तनुतांक्रमाद्विलयम् ॥ २६ ॥ अयंचविलयोनजतुकाठिन्यविलयवन्निमित्तापायादपैतिकिंतुशुक्तिरूप्यवदसत्प्रतियोगिकत्वादपुनरागामीत्याशयेनाह ॥ बोध स्येति ॥ अंतास्त्रिविधपरिच्छेदारूपाण्याकारभेदाश्चनविद्यंतेयस्यतथाविधस्यबोधस्यसाक्षिचितःस्वयमेवनिर्निमित्तमेवजगच्चतद्विकल्पकंचित्तंचतदाद्यज्ञानंचेतित्रिरूपताभा ता ॥ अत्रास्मिन्बोधे ॥ २७ ॥ तथाचानृतजगच्चित्तभावेनानृतमज्ञानमेवविजृंभतइतिफलितमित्याह ॥ बोधाबोधनमेवेति ॥ २८ ॥

81

एतेनजाग्रदेवस्वप्नकालेस्थौल्यंविहायसूक्ष्मप्रपंचतांयाति स्वप्नभ्रांतिरेवचिराभ्यासाद्घनतयाजाग्रत्तामिवगच्छतीत्यादियत्प्रागुक्तंतत्सिद्धमित्याह ॥ जहातीत्यादिना ॥ २९ ॥ तौजाग्रत्स्वप्नौ ॥ ३० ॥ रसोभोगरागोजलंच ॥ ३१ ॥ पेलवतांतुच्छताम् ॥ ३२ ॥ आत्मसुखवत्तृप्तत्वादपितस्यविषयेष्वनादरइत्याशयेनाह ॥ केति ॥ यदित्त्वज्ञस्यापिविषया स्वदेरस्तर्हिसुषुप्तजाग्रतोरैक्यमपिसंभाव्येत तथाभ्रांताभ्रांतात्मनोर्मूढतत्त्वज्ञयोश्चैक्यंसंभाव्येतेत्यर्थः ॥ ३३ ॥ जगतिचित्तमात्रेसंपन्नेस्वप्नमात्रात्मनिस्थितेसतिइहस्रक्चंदनादि पदार्थेभ्यःसत्यताबुद्धिर्निवर्त्तते ॥ ३४ ॥ असत्यान्यपिभोग्यानितस्यस्वदंतांतत्राह ॥ कस्येति ॥ वार्थेएवकारः ॥ कथंवास्वदंतइत्यर्थः ॥ ३५ ॥ जालेवातायनेप्रविष्टस्यदी

जहातिपिंडकाठिन्यंजाग्रत्स्वप्नाववोधतः ॥ परांपेलवतामेतिहेमद्रुतमिवाग्निना ॥ २९ ॥ यथास्थितंबोधएवघनतामिवगच्छति ॥ विनैवदेशकालाभ्यांतौविनिर्मायहेमवत् ॥ ३० ॥ जाग्रत्येवंविचारेणस्वप्नाभेपेलवेस्थिते ॥ क्षीयमाणेशरत्कालेइवैतितनुतांरसः ॥ ३१ ॥ परांपेलवतांयाताहृश्यलक्ष्म्यःस्थिताअपि ॥ स्वप्नाइवपरिज्ञातानस्वदंतेविवेकिनः ॥ ३२ ॥ क्वकिलस्वात्मविश्रांतिःक्वैतद्विषयवेदनम् ॥ सुषुप्तजाग्रतोरैक्यंभ्रांताभ्रांतात्मनोर्भवेत् ॥ ३३ ॥ चित्तमात्रेभ्रांतिमात्रेस्वप्नमात्रात्मनिस्थिते ॥ जगतीहपदार्थेभ्यःसत्यबुद्धिर्निवर्त्तते ॥ ३४ ॥ कस्यस्वदंतेऽसत्यानिकथमेवमहामते ॥ मृगतृष्णाजलानीवदृश्यान्यपिपुरःस्थितैः ॥ ३५ ॥ सत्यबुद्धौविलीनायांजगत्पश्यति शांतधीः ॥ जालदीपांशुजालाभमपिंडात्मांबरात्मकम् ॥ ३६ ॥ जाग्रतोवस्तुतःशून्यात्परिज्ञातान्निवर्त्तते ॥ चित्तभ्रमात्मनोभ्रांतिरू पास्वादनभावना ॥ ३७ ॥ यदवस्त्वितिविज्ञातंतत्रोपादेयताकुतः ॥ केनस्वप्नंपरिज्ञायस्वप्नहेमाभिगम्यते ॥ ३८ ॥ स्वप्नादिवपरिज्ञाता द्रसोदृश्यान्निवर्त्तते ॥ द्रष्टृदृश्यदशादोषग्रंथिच्छेदःप्रवर्त्तते ॥ ३९ ॥ नीरसःशांतमननोनिर्वाणाहंकृतिःकृती ॥ वीतरागोनिरायासःशां तस्तिष्ठतिबुद्धधीः ॥ ४० ॥ रसेनीरसतांयातेवासनाप्रविलीयते ॥ शिखायांप्रविलीनायांप्रदीपस्यांशवोयथा ॥ ४१ ॥ बोधाद्दीपांशुजा लाभमघनंव्योमदृश्यते ॥ भ्रांतिरूपंजगत्कृत्स्नंगंधर्वनगरंयथा ॥ ४२ ॥

पांशुजालस्याभेवप्रकाशरूपमप्यपिंडात्मकमेवांबरात्मकंपश्यति ॥ ३६ ॥ अतएवचित्तमात्रात्मनःस्वाप्नस्रक्चंदनादेःस्वदनभावनाजाग्रतःपुरुषस्यशून्यत्वेनपरिज्ञातात्तस्मा न्निवर्त्ततेइतिप्रसिद्धमित्यर्थः ॥ ३७ ॥ स्वप्नहेमउपादातुंकेनाभिगम्यते ॥ ३८ ॥ ३९ ॥ रसनिवृत्तावसौकथमास्तेतदाह ॥ नीरसइति ॥ नीरसोनिःस्नेहोवंध्यादिषु वीतरागो विषयेषु ॥ ४० ॥ ४१ ॥ प्राग्भ्रांतिरूपंकृत्स्नंजगत्तत्त्वबोधाद्दीपांशुजालवत्प्रकाशैकरसमघनंसद्व्योमतुल्यंदृश्यते ॥ ४२ ॥

१ मात्रात्मनइतिपाठष्टीकानुरोधाज्ज्ञाति

सप्तमभूमिकास्थितिलक्षणेनात्यंतपरिणामेनतर्हिकथंभवतितदाह ॥ नैवेति॥पश्यंस्तत्त्वज्ञः॥४३॥४४ ॥अज्ञैःपिंडपदेहेणसंबुद्धाभूम्यादितातुज्ञानादस्तंबाधमुपागता ॥४५॥४६॥ ॥ ४७॥ यस्मात्कारणात्तनूनांचतुर्विधशरीराणांतदाधाराणांभुवनानांतदाधारस्यगगनस्यविहारस्थानानांगिरिगणानांतत्साधनानांकरणानांचपरमुपादानकारणंपरममज्ञानंमूलाज्ञानमेवनान्यत् ॥ अतःकारणात्तस्मिन्मूलाज्ञानेज्ञानेनगलितेसतिइदंतनुभुवनादिसकलंजगदज्ञदृशाविद्यमानमपिविगलतिअसद्भवतीत्यर्थः ॥ ४८ ॥ एवंरीत्यागलितविकल्पोयोगीस्वरूपसारमयःसन्परमशमामृतेनस्वानंदेनतृप्तोनिरावरणभूमानंदस्वभावस्तिष्ठतीत्यर्थः॥ ४९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकपंचाशत्तमःसर्गः ॥ ५१ ॥ ॥ ५ ॥ ॥ इहतार्किकतर्कोत्थकल्पनांतरखंडनैः ॥ अनिर्वाच्यजगद्भावःकूटस्थस्यसमर्थ्यते ॥ १ ॥ बोधःकूटस्थचिदात्मायेनक्रमेणप्रकार

नैवात्मानंनचाकाशंनशून्यंनचवेदनम् ॥ अत्यंतपरिणामेनपश्यन्पश्यतितत्पदम् ॥ ४३ ॥ यत्रनात्मानशून्यंचनजगत्कलनानच ॥ नचित्तदृश्योदयधीःसर्वंचास्तियथास्थितम् ॥ ४४ ॥ भूम्यादिताज्ञसंबुद्धाज्ञानादस्तमुपागता॥ज्ञस्यशून्यैवसंपन्नासंस्थितापिनविद्यते॥४५॥भवत्येकसमाधानसौम्यात्माव्योमनिर्मलः॥तिष्ठत्यपगतासंगःस्थितएवाप्यसत्समः ॥ ४६॥ अस्तंगतमनामौनीनिरोधपदवींगतः॥तीर्णःसंसारजलधेःकर्मणामंतमागतः ॥ ४७ ॥ तनुभुवनगगनगिरिगणकरणपरंपरममज्ञानम्॥ विगलतिगलितेतस्मिन्सकलमिदंविद्यमानमपि ॥ ४८ ॥ संशांतातःकरणोगलितविकल्पःस्वरूपसारमयः॥परमशमामृततृप्तस्तिष्ठतिविद्वान्निरावरणः॥४९॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०विश्रांतियोगोपदेशोनामैकपंचाशत्तमःसर्गः ॥ ५१ ॥ ॥ ५ ॥

॥श्रीरामउवाच॥ ॥बोधोजगदिवाभातिमुनेयेनक्रमेणह॥तंक्रमेणक्रमंब्रूहिभूयोभेदनिवृत्तये ॥ १ ॥ ॥श्रीवसिष्ठउवाच॥ वृक्षस्येवविमूढस्ययद्दृष्टौतत्स्वचेतसि॥यन्नदृष्टौनतच्चित्तेभवत्यल्पतरस्मृतेः ॥ २ ॥भव्यःपश्यतिशास्त्रार्थमेवपूर्वापरान्वितम्॥नदृष्टिविपर्ययंवस्तुयत्पश्यतिकरोतितत्॥३॥भावानुष्ठाननिष्ठःसन्शास्त्रार्थैकमनामुनिः॥भूत्वोपदेशंत्वमिमंशृणुश्रवणभूषणम्॥ ४॥

णतंक्रमंवाद्यंतरकल्पनाभेदखंडनैःसमर्थनक्रमेणभूयोब्रूहि ॥ १ ॥ चिदात्मनोजगद्भावोयमनिर्वचनीयएवेत्यस्यार्थस्यसमर्थनायप्रथमंदृष्टसृष्टिपक्षमवलंब्यदृश्यस्यान्वयव्यतिरेकानुविधायिस्थितिकत्वंतस्यदर्शयति ॥ वृक्षस्येवेति ॥ विमूढस्याज्ञस्यात्मनोवृक्षस्यमूलदारुपत्रपल्लवादिनानाकारघटितस्येवनानाकारंयज्जगद्रूपंतत्दृष्टौसत्यामेवअस्तीतिस्वचेतसिप्रसिद्धंनान्यथा ॥ अतएवस्वल्पतरमपिदृष्टमेवस्मर्यतेनवृक्षप्यदृष्टंतत्सत्ताऽप्रसिद्धेरित्यर्थः॥ २ ॥ विद्वदविदुषोःशास्त्राशास्त्रानुसारिक्रियावैलक्षण्यदर्शनादर्पितत्तदृष्ट्यनुसारव्यवस्थितैवजगत्सत्तागम्यतइत्याशयेनाह ॥ भव्यइति ॥ दृष्टेर्नेत्रस्यविपर्यंसन्निकृष्टमपिनिषिद्धंवस्तुभोग्यतयानपश्यति ॥ ३॥ अतएवहिमयाप्यत्वंशास्त्रीयदृष्टिव्यवस्थापनमुखेनैवश्रवणादौनियम्यसेइत्याशयेनाह ॥ भावेति ॥ भावश्चित्तशुद्ध्यनुकूलंकर्म ॥ ४॥

82

अविद्यात्वप्रसिद्धेरपितत्तथेत्याह ॥ इयमिति ॥ ५ ॥ तर्हिकथंशास्त्रोपदेशतत्फलासिद्धिस्तत्राह ॥ उपदेश्येति ॥ ६ ॥ उपदेशफलसिद्धिकालेत्वियंभ्रांतिर्निःशेषंनिवर्त्तते त तोपितथेत्याशयेनाह ॥ कुतइति ॥ अनुदाहरन्अनुल्लिखन् ॥ ७ ॥ इत्थंविवर्त्तपक्षमनुभवपर्यवसितंप्रदर्श्यपक्षांतरेषुदोषान्विवक्षुःसत्यस्यैवप्रपंचस्यवक्ष्यशाखान्यायेनब्रह्माभे दमभ्युपगच्छतांपक्षेब्रह्मणआनंत्यहानिःस्यादितिदोषंवक्तुंजगतोनश्वरत्वंप्रतिजानीते ॥ यदिदमिति ॥ ८ ॥ प्रतिज्ञातंसाधयति ॥ अस्येति ॥ अस्यजगतोभागानांभूराद्यवयवा नांविभागोविश्लेषस्तदात्मनाशोबोधेविमर्शेदुर्वारः सावयवत्वात् ॥ हियस्माद्घटादिगतजलस्यबिंदुनाबिंदुनापृथक्कृत्योद्धृतस्यक्षयोलोकेप्रसिद्धोस्तितद्वदित्यर्थः ॥ ९ ॥ अस्तु नाशःकोदोषस्तत्राह ॥ एवमिति ॥ शाखाद्यवयवनाशेवृक्षनाशवद्भूरादिद्रव्यनाशेब्रह्मणोपिनाशप्रसंगेश्रुत्युक्तमनंतत्वंनसिद्ध्यति ॥ अवयवेभ्यःपृथक्कृतस्यावयविनोविमर्शेअ सत्त्वादस्तित्वंचनसिद्ध्यतिनचचिदेकरसंनिरवयवंचब्रह्ममूर्त्तादिजगदवयवकंसंभवतीत्यर्थः ॥ १० ॥ ननुमाभूच्चिदात्माजडजगदवयवकः जडानामेवभूम्यादिभूतानांकायाकार

इयंदृश्यभरभ्रांतिर्नन्वविद्येतिचोच्यते ॥ वस्तुतोविद्यतेनैषातापनद्यांयथापयः ॥ ५ ॥ उपदेश्योपदेशार्थमेनांमद्युपरोधतः ॥ सत्यामिव क्षणंतावदाश्रित्यश्रूयतामिदम् ॥ ६ ॥ कुतएषाकथंचेतिविकल्पाननुदाहरन् ॥ नेदमेषानचास्तीतिस्वयंज्ञास्यसिबोधतः ॥ ७ ॥ यदिदंदृ श्यतेकिंचिज्जगत्स्थावरजंगमम् ॥ सर्वंसर्वप्रकाराढ्यंकल्पांतेतद्विनश्यति ॥ ८ ॥ अस्यभागविभागात्मानाशोवश्यमवारितः ॥ बिंदुना बिंदुनाबोधेउद्धृतस्यास्तिहिक्षयः ॥ ९ ॥ एवंस्थितेद्रव्यनाशेब्रह्मणस्तन्मयत्वतः ॥ नानंतत्वंनचास्तित्वंनचैवंसंभवत्यलम् ॥ १० ॥ मद शक्तिरिवज्ञानमितिनास्मासुसिध्यति ॥ देहोविज्ञानतोस्माकंस्वप्नवन्नतुतत्त्वतः ॥ ११ ॥ नश्यत्येवचदृश्यश्रीःसैवनान्यैवनैवच ॥ इत्थंभ वेत्समुचितंकृतंशास्त्रंचनान्यथा ॥ १२ ॥ सैवैतीत्यसमुल्लेखंकथंनष्टस्यसंभवः ॥ तद्रूपान्येतियुक्तंस्यादनुभूतानुगावयम् ॥ १३ ॥

परिणतानांमदिरावयवानुगतामदशक्तिरिवचैतन्यंधर्मोस्त्वितिचार्वाकपक्षमुद्दंक्यदूषयति ॥ मदशक्तिरिवेति ॥ अस्मासुआस्तिकेषु ॥ नसिध्यत्यस्मान्प्रतिचार्वाकेनसाधयि तुंनशक्यमितियावत् ॥ यतोऽस्माकंप्रामाणिकानांमतेदेहोविज्ञानाधीनसिद्धिकत्वात्स्वप्नदेहवत्तात्त्विकोनभवति ॥ नहिविज्ञानातिरेकेणदेहसत्तासाधकमस्ति नचासिद्धेदेहेम दशक्तिवद्विज्ञानमुत्पत्तुमर्हतीतिभावः ॥ ११ ॥ किंचजगतोब्रह्माभेदेउच्यमानेदृश्यनाशाद्ब्रह्मणोऽतवत्त्वशंकास्यात् ॥ आध्यासिकेत्वभेदेप्रतियोगिनइवतन्नाशस्यापिवस्तुतो ब्रह्मसंस्पर्शाभावान्नतत्प्रसक्तिःशास्त्रसाफल्यंचेत्याशयेनाह ॥ नश्यत्येवेति ॥ यतःपुनःपुनर्नष्ट्वाउद्भवंतीदृश्यश्रीःसैवन ॥ अन्यैवचनैवेत्यनिर्वचनीयाअविद्यामात्रम् ॥ इत्थंस त्येवविद्ययातद्बाधेशास्त्रंकृतंसफलंभवेत् ॥ अन्यथासत्यबंधनिवृत्तौशास्त्रस्यानुपायत्वाद्व्यर्थमेवस्यादित्यर्थः ॥ १२ ॥ प्रलयेनष्टायाभुवनसंस्थितेःपुनःसृष्टावुद्भवंत्याःसैवान्यै वेत्यनिर्धार्यत्वादप्यनिर्वचनीयतैवेत्याह ॥ सैवेतीत्यादिना ॥ यानष्टासैवपुनरुन्मज्जनेनैतीत्यसमुल्लेखंसंभावयितुमशक्यम् ॥ अनुभूतानुगाःअनुभवानुसारिणोवयंतन्नानुभवविरु द्धमण्वपिसहामहेइत्यर्थः ॥ १३ ॥

अनुभवानारोहमेवस्फुटयति ॥ सैवेति ॥ सामूर्त्तंतैवप्रलयेव्योमतयाअमूर्त्तंभावेनासीदित्यसत् ॥ यतःसामूर्त्तंतैवामूर्त्तताकथम् ॥ व्योमसंस्थापिसातथापूर्वावस्थापन्नैवचेत्प्र लयेनाशंनगंतेवेतिप्रलयवादोच्छेदःस्यादित्यर्थः ॥ १४ ॥ एवंसर्गेपिप्रलयावस्थायाअपितुल्यन्यायेनप्रसक्तौप्रलयावस्थादव्याकृतात्कार्यस्यसर्गस्यैक्यापत्तौकूटस्थवादाप त्तिरित्याह ॥ कार्येति ॥ अस्मदागमोऽस्मत्सिद्धांतःस्यादित्यर्थः ॥ १५ ॥ यद्वस्तुउपलंभत्वंगतमपिशून्यत्वंगतंतन्नष्टमेव सदाउपलब्धिकालेप्यसत्वाभ्युपगमात् ॥ असत्त्वापत्तिरे वहिनाशः ॥ यद्यन्यादृशोनाशोलोकेभवेत्तर्हिसकीदृशःकथ्यताम् ॥ नचोपलब्धत्वबलान्नष्टमप्यनष्टंभवति ॥ नष्टानामपिस्वप्नेउपलंभदर्शनादनष्टत्वासिद्धेः ॥ १६ ॥ भूयः समुत्पत्तिदर्शनान्मध्येनष्टस्यापिसत्वंकल्प्यतइतिचेद्भेदेनाप्युत्पत्त्युपपत्तेः ॥ प्रत्यभिज्ञादेरदर्शनाच्चनैवमित्याह ॥ नष्टमिति ॥ प्रत्ययेतिप्रत्यभिजानाति ॥ अयतेर्लटिपदवर्णव्य त्ययश्छांदसः ॥ १७ ॥ ननुयथैकस्मिन्नेवतरौमध्येमध्येकोटरस्कंधशाखादिवैचित्र्यभेदेप्यामूलाग्रंवृक्षदेहस्यैकताशाखादिनत्कार्याण्येवभिद्यंतेएवमुत्पत्त्यादिविकारभेदेषुप्र लयेपुनरुद्भवेचभुवनाद्येकतैवकिंनस्यादितिचेत्तत्राह ॥ मध्येइति ॥ उत्सेधऔन्नत्यंफलानिआदिपदाच्छाखोपशाखादारुस्कंधपत्रपुष्पादयश्चयेअवयवास्तेष्वेकिकाअनुग

सैवव्योमतयैवासीदित्यसत्सैवसाकथम् ॥ तथैवव्योमसंस्थाचेन्नाशंतर्हिनसागता ॥ १४ ॥ कार्यकारणयोरेकरूपतैवंयदातदा ॥ का र्यकारणताभावादैक्यमेवास्मदागमः ॥ १५ ॥ शून्यत्वमुपलंभत्वंयद्गतंनष्टमेवतत् ॥ अन्यस्तर्हिभवेन्नाशःकीदृशःकिलकथ्यताम् ॥ १६ ॥ नष्टंभूयस्तदुत्पन्नमितियत्प्रत्ययेतिकः ॥ नश्यत्यवश्यंतेनेदंपुनरन्यत्प्रवर्त्तते ॥ १७ ॥ मध्येमध्येयदुत्सेधफलाद्यवयवैकिका ॥ आदेहंवीजसत्तास्तिकार्यकारणताकुतः ॥ १८ ॥ देशकालक्रियात्मैकंयथादृष्टमिहस्थितम् ॥ बीजमेवैककर्मातोनघटःपटकार्यकृत् ॥ १९ ॥ सर्वदर्शनसिद्धांतेनास्तिभेदोनवस्तुनि ॥ परमार्थमयेतेनविवादेनकिमत्रनः ॥ २० ॥ इदंशांतमनाद्यंतंतद्रूपत्वाद्विचारतः ॥ व्योमाभंबोधतामात्रमनुभूतिप्रमाणतः ॥ २१ ॥ यथैतन्नानुभूतंसद्यथैतदनुभूयते ॥ यथैतत्सिद्धिमाप्नोतितदिदंकथ्यतेक्रमात् ॥ २२ ॥

तावृक्षदेहमभिव्याप्यस्थिताबीजसत्तैवाखंडातत्रास्तीतिसत्तैक्यदृष्टौशाखादेःपृथक्सत्ताऽसिद्धेःकार्यकारणतोच्छेदःस्यादित्यर्थः ॥ १८ ॥ दृष्टांतेउक्तंकार्यकारणतोच्छेदंदा र्ष्टांतिकेदर्शयति ॥ देशेति ॥ यदिप्रलयसर्गादिदेशकालक्रियात्मकमेकंसन्मात्रमेवबीजमभ्युपगम्येततर्हितन्‌एकंस्वयमेवैकंकर्मक्रियातत्फलंचयस्यतथाविधंसत्नकिंचित्कु र्यात असमर्थत्वात् ॥ नहिघटःपटकार्यासमर्थस्तत्करोतीत्यर्थः ॥ अथवातदनुगतंबीजंदेशात्मकंकालात्मकंक्रियात्मकंवाएकस्वभावंवाच्यम् नसेकंनानास्वभावंसंभवति ॥ स्वभावभेदेएकत्वानुपपत्तेः ॥ तथाचयदिदेशैकस्वभावंतर्हिकालकार्यंनकुर्यात् ॥ नहिघटस्वभावंवस्तुपटकार्यंकृद्दृष्टमित्यर्थः ॥ १९ ॥ नानास्वभावमेकंवस्त्विनिवदन्सर्वदर्श नसिद्धांतातिलंघनाद्वैतंडिकःस्यादित्याशयेनाह ॥ सर्वेति ॥ वस्त्वैक्येकार्यभेदःसर्वदर्शनसिद्धांतेनास्ति ॥ परमार्थमयेवस्तुनिवस्तुस्वभावेपिभेदोनानात्वंनास्ति ॥ अतःसर्वद र्शनविरुद्धवादिनासहविवादेनकिमित्यर्थः ॥ २० ॥ परिशेषादेकस्वभावत्वंतुचित्स्वभावस्यैवोपजीव्यस्यैकस्यपरिशेषःसिद्धइत्याह ॥ इदमिति ॥ सर्वकल्पनानामनुभूतिप्रमा णसारत्वात्तत्स्वभावापलापायोगेनपरिशेषाज्जडस्वभावस्यैवहानादितिभावः ॥ २१ ॥ तदुपपादनंप्रतिजानीते ॥ यथैतदिति ॥ २२ ॥

अतएवहिसर्वभेदप्रलयेप्यविपरिलुप्तोऽनुभवात्मैवावशिष्यतइत्याह ॥ महाकल्पांतइत्यादिपंचभिः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ परिशिष्टंवाय्वादिस्वरूपमेवकिंने स्यात्तत्राह ॥ तदिति ॥ २८ ॥ इदानीमपितद्विद्वदनुभवसिद्धमित्याह ॥ तद्विदेति ॥ २९ ॥ तत्रकालःस्वभावोनियतिर्यदृच्छाभूतानियोनिःपुरुषइतिचिंत्यमित्याद्यागममर्थतोदर्शयति ॥ नकालइति ॥ ३० ॥ तद्यदात्मविदोविदुरित्यागमंचतथोदाहरति ॥ किमपीति ॥ चतुर्थ्यादेःपराम् ॥ ३१ ॥ मयापितेऽर्थाःश्रुत्यनुसारेणानुभवमाश्रित्यमुहुःप्रतिषि

महाकल्पांतउन्नष्टेसर्वस्मिन्दृश्यमंडले॥ आमहादेवपर्यंतंसमनोबुद्धिकर्मणि ॥ २३ ॥ व्योमन्यपिशमंयातेकालेप्यकलितस्थितौ॥ वायावपित्वपगतेतेजस्यत्यंतमस्थिते ॥ २४ ॥ तमस्यपिगतेध्वंसंवार्यादौसुचिरंक्षते ॥ अलमंतमनुप्राप्तेसर्वशब्दार्थसंचये॥ २५॥ शिष्यतेशांतबोधात्मसदच्छंबाध्यवर्जितम् ॥ अनादिनिधनंसौम्यंकिमप्यमलमव्ययम्॥ २६॥ अवाच्यमनभिव्यक्तमतींद्रियमनामकम्॥ सर्वभूतात्मकंशून्यंसदसच्चपरंपदम् ॥ २७॥ तन्नवायुर्नचाकाशंनबुद्ध्यादिनशून्यकम्॥ नकिंचिदपिसर्वात्मकिमप्यन्यत्परंनभः॥ २८॥ तद्विदातत्पदस्थेनतन्मुक्तेनानुभूयते ॥ अन्यैःकेवलमाम्नातैरागमैरेववर्ण्यते ॥ २९॥ नकालोनमनोनात्मानसन्नासन्नदेशदिक्॥ नमध्यमेतयोर्नांतंनबोधोनाप्यबोधितम् ॥ ३० ॥ किमप्येवतदत्यच्छंबुध्यतेबोधपारगैः॥ शांतसंसारविसरैःपरांभूमिमुपागतैः॥ ३१ ॥ प्रतिषिद्धामयैतेतुयेर्थाःसर्वत्रतेस्थिताः॥ अस्मद्बुद्ध्यापरिच्छेद्याःसौम्यांभोधेरिवोर्मयः॥ ३२॥ यथास्थितंस्थिताःसर्वेभावास्तत्रयथातथा॥ अनुत्कीर्णामहास्तंभेविविधाःशालभंजिकाः ॥ ३३ ॥ एवंतत्रास्थिताःसर्वेभावाएवंचनस्थिताः॥ असर्वात्मैवसर्वात्मतदेवनतदेवच ॥ ३४ ॥ पदंयथैतत्सर्वात्मसर्वार्थपरिवर्जितम् ॥ यथातत्रचपश्यंतितत्रैकपरिणामिनः॥ ३५॥ सर्वसर्वात्मकंचैवसर्वार्थरहितंपदम्॥ सर्वार्थपरिपूर्णंचतदाद्यंपरिदृश्यते॥ ३६॥

द्धाइत्याह ॥ प्रतिषिद्धाइति ॥ सर्वत्रश्रुतिषुप्रतिषेध्यतयास्थितायेऽर्थास्तएवमयाप्रतिषिद्धाः॥३२॥ तर्हिसदेवसोम्येदमग्रआसीदित्यादिसत्कार्यवादश्रुतीनांकोभिप्रायस्तमाह॥ यथास्थितमिति ॥ ब्रह्मस्वभावस्थितिरेवाविकल्पिताजगतोपिसत्तेत्याशयस्तासामितिभावः ॥ ३३ ॥ अतएवनेहनानेत्यादिश्रुतीनांसदेवसोम्येत्यादिश्रुतीनांचाविरोधेनैकमेवोभयथापिव्यपदिश्यतइत्याशयेनाह ॥ एवमिति ॥ ३४ ॥ अनुत्कीर्णशिलायांपुत्रिकाभेदानामिवयोगिनांतत्रेच्छयाअस्तिनास्तीत्युभयथापिदर्शनंप्रसिद्धमित्याह ॥ पदमिति ॥ ३५ ॥ ३६ ॥

एतावत्याग्वर्णितसमाधिकालपर्यंतम् ॥ संशयोत्रसम्यग्ज्ञानानुत्पत्तौ निदर्शनंलिंगम् ॥ छिद्यंतेसर्वसंशयाइतिश्रुतेर्निश्चितेतत्त्वेसंशयाननुभवाच्चेतिभावः ॥ ३७ ॥ निराभासं सर्वदृश्याभासनिर्मुक्तम् ॥ परंआभासंचरमसाक्षात्कारम् ॥ ३८ ॥ हेमपिंडांतःरूपकाणांरूप्यमुद्राणांजालकंसमूहइवकल्पनयाअस्ति ॥ ३९ ॥ तर्हिकिंरूपकवद्भेदेनापिज गत्सत् नेत्याह ॥ हेमपिंडादिति ॥ नानापृथक्सदितियावत् ॥ ४० ॥ यद्यप्यनृतंसतोनभिद्यतेतथापिसत्त्वनृता च्छिद्यतएवेत्याह ॥ सर्वदैवेति ॥ अंगदरूपकमिवानृतमित्यर्थः ॥ ४१ ॥ देशादिशब्दानामर्थैःप्रवृत्तिनिमित्तैर्जातिगुणक्रियादिभिःरिक्तंरहितम् ॥ ४२ ॥ ४३ ॥ तथैवभेदादिनादुर्निरूपत्वभावमनृतंब्रह्मणिस्थितमित्याह ॥ तथेति ॥ त

तवैतावन्महाबुद्धेसर्वार्थोपशमात्मकम् ॥ नसम्यग्ज्ञानमुत्पन्नंसंशयोत्रनिदर्शनम् ॥ ३७ ॥ यःप्रबुद्धोनिराभासंपरमाभासमागतः ॥ स्व च्छांतःकरणःशांतस्तंस्वभावंसपश्यति ॥ ३८ ॥ अयंत्वमहमित्यादित्रिकालगजगद्भ्रमः ॥ तत्रास्तिहेमपिंडांतरिवरूपकजालकम् ॥ ३९ ॥ हेमपिंडाद्यथाभांडजालंनानोपलभ्यते ॥ तथानलभ्यतेभिन्नंपरमार्थघनाज्जगत् ॥ ४० ॥ सर्वदैवहिभिन्नात्मास्वांगभूतोपलंभदृक् ॥ सज गद्वैतमेवेदंहेमेवांगदरूपकम् ॥ ४१ ॥ रिक्तंदेशादिशब्दार्थैर्देशकालक्रियात्मकम् ॥ यथास्थितमिदंतत्रसर्वमस्तिनवास्तिच ॥ ४२ ॥ यथो र्म्यादिसमेतोयेचित्रंचित्रकृदीहते ॥ भांडवृंदंमृदःपिंडेतथेदंब्रह्मणिस्थितम् ॥ ४३ ॥ तथैतदत्रनोभिन्नंनाभिन्नंनास्तिचास्तिच ॥ नित्यंतन्म यमेवाच्छंशांतेशांतमिदंतथा ॥ ४४ ॥ अनिखातैवभातीयंत्रिजगच्छालभंजिका ॥ स्वरसस्यैवदृश्यत्वमिताब्रह्मणिदारुणि ॥ ४५ ॥ निखाताद्दृश्यतांयातिस्तंभस्याःशालभंजिकाः ॥ अस्मिन्नक्षोभ्यएवांतस्तरंगाःसृष्टिदृष्टयः ॥ ४६ ॥ सरस्यतिरसेभांतिचिद्घनान्तत्वदृष्टयः ॥ अविभागेविभागस्थाअक्षोभेक्षुभिताइव ॥ अविभाताविभांतीवचिद्घनेसृष्टिदृष्टयः ॥ ४७ ॥ परमाणौपरमाणावत्रसंसारमंडलम् ॥ वि भातिभासुरारंभंनविभातिचकिंचन ॥ ४८ ॥

स्वज्ञानेनशांतेब्रह्मणिशांतात्मनैवस्थितम् ॥ ४४ ॥ अनिखाताअनुत्कीर्णा ॥ स्वरसस्यस्वसाक्षिणःशिल्पिनोदृश्यत्वंइतेव ॥ ब्रह्मणिदारुणीतिव्यस्तरूपकम् ॥ ४५ ॥ तद्वयो विशेषस्तमाह ॥ अस्मिन्निति ॥ अक्षोभ्येअविकार्येविवर्तरूपास्तरंगाः ॥ ४६ ॥ तमेवाह ॥ सरसीतिसार्द्धेन ॥ अतिरसेनिरतिशयानंदजलपूर्णेचित्सरसिचिद्घनेयान्तत्वदृ ष्टयःसृष्टिदृष्टयोविभाजकधर्मशून्येपिविभागस्थाअक्षोभेपिक्षुभिताअविभाताएवविभांतीत्यपिविशेषइत्यर्थः ॥ ४७ ॥ तथाविभाताविभांतीत्येतद्विशदयति ॥ परमाणा विति ॥ ४८ ॥

वर्णितंकूटस्थस्यजगद्भावंसंगृह्योपसंहरति ॥ आकाशेति ॥ अंगरहितस्यनिरवयवस्यास्ययदाकाशकालपवनादिपदार्थजातरूपमंगंवर्णितंतदपिमिथ्यात्वादधिष्ठानमात्रपरिशेषाच्चानंगंनिरवयवमेव ॥ एवंसकलभावविकारशून्यमप्येतदजरमात्मतत्त्वंसर्वाध्यारोपेणसर्वात्मकंश्रुतयआहुरित्यर्थः ॥ ४९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेद्विपंचाशत्तमःसर्गः ॥ ५२ ॥ ॥ ७ ॥ अध्यारोपितचेत्यानांप्रातिस्विकभिदाजुषाम ॥ भावस्त्वप्रत्ययाद्यर्थोब्रह्मैवेत्युपवर्ण्यते ॥ १ ॥ ब्रह्मणोऽध्यारोपितानिर्वचनीयजगद्रूपप्राप्तिक्रमेवर्णितेतत्रकतिपयव्यक्तिष्वनुगतमितराभ्योव्यावृत्तंत्वतलादिभावप्रत्ययाभिधेयंयज्जात्यादिरूपंतत्स्वरूपंतत्त्वतोजिज्ञासूरामःपृच्छति ॥ यथेत्यादिना ॥ चेत्येस्मृतिविषयेचेतनतास्मृतिविषयभावः ॥ वैषयिकाधारेल्युटितलू ॥ चेत्यतेतियावत् ॥ १ ॥ अभूतंवर्त्तमानंआदिपदाद्भविष्यच्चतत्रअभूतता ॥ २ ॥ भिन्ने

आकाशकालपवनादिपदार्थजातमस्यांगमंगरहितस्यतदप्यनंगम् ॥ सर्वात्मकंसकलभावविकारशून्यमप्येतदाहुरजरंपरमार्थतत्त्वम् ॥ ४९ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० ब्रह्मस्वरूपवर्णनंनामद्विपंचाशत्तमःसर्गः ॥ ५२ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ यथाचेत्येचेतनतायथाकालेचकालता ॥ यथाचव्योमताव्योम्नियथाचजडताजडे ॥ १ ॥ यथावायौचवायुत्वमभूतादावभूतता ॥ यथास्पंदात्मनिस्पंदोयथामूर्त्तेचमूर्त्तता ॥ २ ॥ यथाभिन्नेचभिन्नत्वंयथानंतेप्यनंतता ॥ यथादृश्येचदृश्यत्वंयथासर्गेपुसर्गता ॥ ३ ॥ एतत्क्रमेणहेब्रह्मन्वदमेवदतांवर ॥ आदितःप्रतिपाद्यैवबोध्यंतेह्यल्पबोधिनः ॥ ४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ तदनंतमहाकाशंमहाचिद्घनमुच्यते ॥ अवेद्यचिद्रूपमयंशांतमेकंसमस्थिति ॥ ५ ॥ ब्रह्मविष्णीश्वराद्यंतेमहाप्रलयनामनि ॥ शब्दार्थेरूढिमापन्नेयच्छुद्धमवशिष्यते ॥ ६ ॥ सर्गस्यकारणंतत्रनकिंचिदुपपद्यते ॥ मलमाकारबीजादिमायामोहभ्रमादिकम् ॥ ७ ॥ केवलंशांतमत्यच्छमाद्यंतपरिवर्जितम् ॥ तद्विद्यतेयत्रकिलखमपिस्थूलमश्मवत् ॥ ८ ॥ नचनास्तीतितद्वक्तुंयुज्यतेचिद्वपुर्यदा ॥ नचैवास्तीतितद्वक्तुंयुक्तंशांतमलंतदा ॥ ९ ॥

वस्तुकृतपरिच्छेदादिमति ॥ अनंतेतच्छून्ये ॥ ३ ॥ एतदेवंरूपंसर्ववस्तूनामसाधारणंभावंबोधकोपायक्रमेणमेवद ॥ क्रमेणेत्युक्तेराशयमुद्घाटयति ॥ आदितइति ॥ ४ ॥ त्वत्पृष्टश्चेत्यादिवस्तूनांभावश्चिदात्मैवतस्यैवस्वाध्यस्तेष्वन्योन्यतादात्म्याध्यासेतद्भावताविभावनादित्युत्तरमभिप्रेत्यतस्यनित्यसद्रूपतांदर्शयितुमारभते ॥ तदनंतमित्यादिना ॥ यत्त्वयापृष्टंतदिदमित्यर्थः ॥ ५ ॥ सर्वनाशेपरिशिष्यमाणत्वात्सएवसर्ववस्तूनांभावः ॥ भूधातोर्भावेघञिनित्यसत्तार्थेभावशब्दव्युत्पत्तेरित्याशयेनाह ॥ ब्रह्मेति ॥ शब्दार्थेनामरूपेअरूढिंतिरोभावमापन्ने ॥ असन्मात्रप्रलयेनपरिशिष्टेसच्छब्दार्थेरूढिप्रसिद्धिमापन्नेइतिवा ॥ ६ ॥ ननुतदपिस्वकारणेलीयतांतेनासद्वस्तुतत्राह ॥ सर्गस्येति ॥ तत्रसदात्मनिसर्गस्यजन्मनःकारणंकिंचिदपिनोपपद्यते ॥ मलमायादीनांतदधीनसिद्धिकत्वादितिभावः ॥ ७ ॥ यतआद्यंतपरिवर्जितमतस्तत्सदैवविद्यतइतिसत्तार्थकभावशब्दार्थइतिभावः ॥ ८ ॥ तद्यदाशांतमलंतदाअस्तीतिवाच्यवृत्त्यावक्तुंनयुज्यते ॥ तदाहिभवितास्यान्नभावइतिभावः ॥ ९ ॥

तादृशनिर्विषयचित्स्वभावस्यात्यंताप्रसिद्धिमनुभवप्रदर्शनेननिवारयति ॥ निमेषेइति ॥ शाखाचंद्रदर्शनकालेनिमेषमात्रेणशाखोर्ध्वदेशेयोजनशतंचाक्षुषवृत्तिद्वाराप्राप्तायांप्र
मातृसंविदिशाखाचंद्रयोर्मध्येतस्यानिर्विषयंरूपंप्रसिद्धमितिप्रागसकृद्दर्शितमेवेत्यर्थः ॥ १० ॥ अर्द्धरात्रिपर्यंतंगाढनिद्रयामनसोनिद्राकालुष्येऽपनीतेसतिततःसमाध्यारूढा
नांयोगिनांतद्रूपमनुभवसिद्धमित्याह ॥ सबाह्येतिद्वाभ्याम् ॥ ११ ॥ १२ ॥ तृणानांगुल्मानामंकुरकांडतरुविटपादीनांचसर्वपदार्थानामुद्भवेउद्भवंतदनुषक्ततयाविर्भूतंयत्सत्ता
सामान्यमाततमनुगतंरूपंतदेवत्वप्रत्ययाद्यर्थइत्यर्थः ॥ तथाचोक्तंवाक्यपदीये ॥ सासत्तासामहानात्मातामाहुस्त्वतलादयइति ॥ १३ ॥ तस्मिन्नेवसत्तासामान्यरूपेतादा
त्म्येनानुषक्तंव्यावृत्तमिवयद्घटपटादिजगद्रूपमागंतुकत्वात्सकारणमिवकंबुग्रीवाद्याकारैःकरालमिवचभासतेतत्सर्वमनृतमतएवकारणाभावान्नजातंनविद्यतेचेतिपरेणान्वयः ॥

निमेषेयोजनशतेप्राप्तायामात्मसंविदि॥ मध्येतस्यास्तुयद्रूपंरूपंतस्यपदस्यतत् ॥ १० ॥ सबाह्याभ्यंतरेशांतेवासनाविषयभ्रमे॥ सर्वचिं
ताविहीनस्यप्रबुद्धस्यार्द्धरात्रतः ॥ ११ ॥ शांतंनिःसुखदुःखस्यपुरुषस्यैवतिष्ठतः॥ यदस्पंदिमनोरूपंरूपंतस्यपदस्यतत् ॥ १२ ॥ तृणगु
ल्मांकुरादीनांसत्तासामान्यमाततम् ॥ यदुद्भवोद्भवंरूपंरूपंतस्यपदस्यतत् ॥ १३ ॥ तस्मिन्पदेजगद्रूपंयदिदंदृश्यतेस्फुटम् ॥ सकारणमि
वाकारकरालमिवभेदवत् ॥ १४ ॥ तत्सर्वंकारणाभावान्नजातंनचविद्यते ॥ नाकारयुक्तंनजगन्नचद्वैतैक्यसंयुतम् ॥ १५ ॥ यदकार
णकंतस्यसत्तानेहोपपद्यते ॥ स्वयंनित्यानुभूतेर्थेकोत्रापह्नवशक्तिमान् ॥ १६ ॥ नचशून्यमनाद्यंतंजगतःकारणंभवेत् ॥ ब्रह्मामूर्त्तंस
मूर्त्तस्यदृश्यस्याब्रह्मरूपिणः ॥ १७ ॥ तस्मात्तत्रजगद्रूपंयदाभातंतदेवतत् ॥ स्वयमेवतदाभातिचिदाकाशमितिस्थितम् ॥ १८ ॥ जग
च्चिद्ब्रह्मभावाच्चतथाभावोभ्रमादिव ॥ सर्वमेकमजंशांतमद्वैतैक्यमनामयम् ॥ १९ ॥ पूर्णात्पूर्णंविसरतिपूर्णेपूर्णंविराजते ॥ पूर्णमेवो
दितंपूर्णेपूर्णमेवव्यवस्थितम् ॥ २० ॥

॥ १४ ॥ तत्तुसद्रूपंनाकारयुक्तमतएवनजगत्द्वैतैक्यादिनापिनसंबद्धम् ॥ १५ ॥ तत्कुतस्तत्राह ॥ यदिति ॥ अत्रार्थेसर्वेषांस्वानुभवएवमानमित्याह ॥ स्वयमिति ॥ १६ ॥
अस्तुतर्ह्यसतोजगतःशून्यमेवकारणंतत्राह ॥ नचेति ॥ शून्यस्यकारणत्वेतस्यदेशादिपरिच्छेदाभावात्सर्वसर्वत्रसदास्यादित्याशयेनविशिनष्टि ॥ अनाद्यंतमिति ॥ अतएवनब्र
ह्मापिकारणम् अमूर्त्तस्यमूर्त्ताकारपरिणामायोगाच्चेत्याह ॥ ब्रह्मेति ॥ तथाचश्रुतिः ॥ तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्ममयमात्माब्रह्मसर्वानुभूरिति ॥ १७ ॥ तस्मादीदृशेब्रह्म
णियज्जगद्रूपंभातंतद्ब्रह्मैवतथाभातमिति ॥ ब्रह्मैवसर्ववस्तूनांभावस्त्वतलाद्यर्थइत्युपसंहरति ॥ तस्मादिति ॥ १८ ॥ एवंजगतश्चिद्ब्रह्मभावादापातप्रतीतस्तथाभावोघटपटाद्याकारो
भ्रमादिवेतिसिद्धेसर्वत्रसर्वमेकमेव ॥ १९ ॥ भ्रांत्यातस्यजगज्जीवभावेभ्रांत्यपगमेवास्तवब्रह्मभावेचपूर्णमदःपूर्णमिदमित्यादिश्रुतिःप्राग्दर्शितैवेत्यनुवदति ॥ पूर्णादिति ॥ २० ॥

वर्णितरीत्यासर्वमाकारैर्मुक्तंसत्सदसदेकतयासदाउदितात्मेतियदिदमुत्तमबोधरूपंब्रह्मपरिशिष्टंतदेवनिर्वाणमितिभावप्रत्ययार्थंतत्त्वमित्यर्थः ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम०ता त्पर्यप्रकाशेनिर्वाण० उत्तरार्द्धेत्रिपंचाशत्तमःसर्गः ॥५३॥ ॥७॥ सर्ववस्तुस्वभावस्थंस्वभावेनक्रियाभिदे ॥ अविकारमतोद्वैतंसन्मात्रमितिवर्ण्यते ॥१॥ घटपटादीनांनघटत्व पटत्वाद्यनुल्लिख्यस्वरूपंभेदोवानिरूपयितुंशक्यंघटघटत्वयोरपिपरस्परंननिरवच्छिन्नप्रतियोगिताकौभेदौनिरूपयितुंशक्यावितिपृथक्करणेनिर्विकल्पतयासमाभासयोर्भावप्र विन्नोर्विभागस्यविकल्पमात्रत्वात्सर्ववस्तूनांभावमात्रत्वेघटेघटत्वमित्यादिशब्दार्थनिष्कर्षेब्रह्मब्रह्मणिस्थितमित्येवपर्यवस्यतीतिप्रसाधितस्यभावप्रत्ययार्थनिष्कर्षस्यफलमि होपपादयितुमारभते ॥ जगन्नामेत्यादिना ॥ घटत्वपटत्वादिभावेभ्योनिष्कृष्यमाणंजगन्नभइवस्वच्छंनिर्भेदकलंकमेवप्रसिद्धम ॥ तत्रचघटत्वपटत्वादिभावःप्रागुक्तरीत्याब्रह्मैव

शांतंसमंसमुदयात्ममयैर्विहीनमाकारमुक्तमजमंबरमच्छमेकम् ॥ सर्वंसदासदसदेकतयोदितात्मनिर्वाणमाद्यमिदमुत्तमबोधरूपम् ॥२१॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०निर्वाणवर्णनंनामत्रिपंचाशत्तमःसर्गः॥५३॥ ॥७॥ ॥श्रीवसिष्ठउवाच ॥ ॥ जगन्नामनभःस्वच्छंसद्ब्रह्मनभसिस्थितम् ॥ नभोनभसिभातीदंजगच्छब्दार्थइत्यजम् ॥ १ ॥ त्वमहंजगदित्यादिशब्दार्थोब्रह्मब्रह्मणि ॥ शांतंसमसमाभासंस्थितमस्थितमेवसत् ॥ २ ॥ समुद्रगिरिमेघोर्वीविस्फोटमयमप्यजम् ॥ काष्ठमौनवदेवेदंजगद्ब्रह्मावतिष्ठते ॥ ३ ॥ द्रष्टाद्रष्टैवदृश्यस्यस्वभावात्स्वात्मनिस्थितः ॥ कर्त्ताकर्त्तैवकर्त्तव्याभावतःकारणादृते ॥४॥ नज्ञत्वंनचकर्तृत्वंनजडत्वंनभोक्तृता ॥ नशून्यतानचार्थत्वमिहनापिनभोर्थता ॥ ५ ॥ शिलाजठरवत्सत्यंघनमेकमजंततम् ॥ सर्वंशांतमनाद्यंतमेकंविधिनिषेधयोः ॥ ६ ॥ मरणंजीवितंसत्यमसत्यंचशुभाशुभम् ॥ सर्वमेकमजंव्योमवीचिजालजलंयथा ॥ ७ ॥

स्थितम् ॥ तथाचैवंदर्शनेघटःपटइत्यादिभावेनभएवनभसिभातिसएवजगच्छब्दस्यघटपटादिशब्दस्यचार्थस्तच्चाजंजन्मादिविकारशून्यमेवेतिनकार्यकारणभावःकस्यचि त्किंचित्प्रतीत्यर्थः ॥ ॥ १ ॥ अमुमेवार्थंपुनःस्पष्टमाह ॥ त्वमहमिति ॥ भावभविन्नोःपृथक्कृत्यदर्शनेअत्यैतैक्यदर्शनेपिवासौक्ष्म्यादिनासमसमाभासमेवपृथगस्थितमेवतथासत् ॥ २ ॥ एवंसमुद्रगिरिमेघोर्व्यादिविभागप्रचुरंविचित्रकारकक्रियाफलभेदैर्भासमानमपितत्तद्भावभवितृतत्त्वंनिष्कर्षेनिष्क्रियंब्रह्मैवावतिष्ठतेइत्यर्थः ॥ ३ ॥ तदेवद्रष्ट्रादिविभागप्रचुरंविचित्रकारकेषुतत्तद्भावनिष्कर्षेणप्रपंचयति ॥ द्रष्टेति ॥ दृश्यस्यस्वभावान्निष्कृष्टोद्रष्टाचिन्मात्रस्वभावेस्वात्मनिस्थितस्सन्द्रष्टैवभवतिएवंकर्त्तापीत्यर्थः ॥ ४ ॥ अनयादृष्ट्यासवर्जगद्वैचित्र्यमपमार्ष्टुंशक्यमितिदर्शयति ॥ नेति ॥ ५ ॥ भावाभावविभागस्याप्यपमार्जनाद्विधिनिषेधयोरेकम् ॥ ६ ॥७ ॥

ब्रह्मणोजीवभावेनविभागेसत्येकमेवंचिदंशप्राधान्येनद्रष्टृतांसदंशप्राधान्येनचिद्रूपंतिरोधायदृश्यतांचैवगच्छति ॥ यथास्वप्नेव्यावहारिकजीवात्प्रातिभासिकजीवस्यविभागे स्वापतिरोहितोव्यावहारिकजीवःस्वाप्नजीवदृश्यपुरादिभावंगच्छतितद्वदित्यर्थः ॥८॥ प्रथमंनिष्प्रपंचंयद्ब्रह्मतदेवातोजीवात्मनाविभागादित्थंजगद्भावेनस्थितम् ॥ ९ ॥ तत्तस्मा दिदंसर्वात्मकंजगद्रूपंप्रथमंयादृशंनिष्प्रपंचंतादृशमेवसदेतिविद्धि ॥ तादृशंनिष्प्रपंचमनावृतंचितोरूपमप्रसिद्धमितितुनवाच्यम ॥ शाखाचंद्रोभयदर्शनवृत्त्यभिव्यक्तचितस्तदु भयमध्यमप्रदेशेतथाप्रसिद्धेःप्रागसकृदुक्तत्वादित्याह ॥ देशादिति ॥ अनंकितंविषयविशेषेणाचिह्नितम ॥१०॥ इदानीमपिप्रत्यग्दृष्ट्यापर्यालोचनेतद्रूपंसुदर्शमित्याशयेनदृष्टां

विभागएवदृश्यत्वंद्रष्टृत्वंचैवगच्छति ॥ एतच्चकल्पनंस्वप्नपुरादिष्वनुभूयते ॥ ८ ॥ एवमच्छंपराकाशेस्वप्नपत्तनवज्जगत् ॥ भातिप्रथम मेवेदंब्रह्मैवेत्यमतःस्थितम् ॥ ९ ॥ तदिदंतादृशंविद्धिसर्वंसर्वात्मकंचयत् ॥ देशाद्देशांतरप्राप्तौविदोमध्यमनंकितम् ॥ १० ॥ चिद्व्योम्नः शांतशांतस्यमध्यमेचैवमास्थितम् ॥ जगत्तथैवसलिलमेवोर्म्यादितयायथा ॥ ११ ॥ यदुदेत्युदितंयच्चयच्चनोदेतिनोदितम् ॥ देशाद्देशां तरप्राप्तौविदोमध्यान्नभेदितम् ॥ १२ ॥ अतःकिलास्यसर्गस्यकारणंशशशृंगवत् ॥ प्रयत्नेनापिचान्विष्टंनकिंचिदुपलभ्यते ॥ १३ ॥ य दकारणकंभातितदभातंभ्रमात्मकम् ॥ भ्रमस्यासत्यरूपस्यसत्यताकथमुच्यते ॥ १४ ॥ कारणेनविनाकार्यंकिलकिंनामविद्यते ॥ यद पुत्रस्यसत्पुत्रदर्शनंसभ्रमोनसत् ॥ १५ ॥ यस्त्वकारणकोभातिसस्वभावोविजृंभते ॥ सर्वरूपेणसंकल्पगंधर्वनगरादिवत् ॥ १६ ॥ दे शाद्देशांतरप्राप्तौक्षणान्मध्यंविदोवपुः ॥ स्वरूपमजहत्त्वेवराजतेऽर्थविवर्त्तवत् ॥ १७ ॥ बोधएवकचत्यर्थरूपेणसचखादणुः ॥ दृष्टांतोत्रा नुभूतोंतःस्वप्नसंकल्पपर्वतः ॥ १८ ॥ ॥ श्रीरामउवाच ॥ ॥ विद्यतेवटबीजांतर्यथाभाविमहाद्रुमः ॥ परमाणौतथासर्गोब्रह्मन्क स्मान्नविद्यते ॥ १९ ॥

न्तःसलिलमेवेति ॥ ११ ॥ सर्वंजगत्तादृशनिर्विषयचैतन्याभिन्नमेवेत्याह ॥ यदिति ॥ उदेत्युदितंचकार्यरूपंनोदेतिनोदितंचकारणरूपम ॥ नभेदितंनभिन्नम् ॥ स्वार्थण्यंतान्क्तः ॥ १२ ॥ अस्त्वभिन्नंकिंनतस्तत्राह ॥ अतइति ॥ १३ ॥ ततोपिकिंतत्राह ॥ यदिति ॥ १४ ॥ यदपुत्रस्यवंध्यापतेःस्वप्नेसत्पुत्रदर्शनंसभ्रमएवेत्यर्थः ॥ १५ ॥ स्वभावोब्रह्मैव देवस्वरूपंजहत्तथाविजृंभते ॥ १६ ॥ कर्तर्हिस्वरूपमजहद्राजतेतत्राह ॥ देशादिति ॥ शाखाचंद्रदेशयोरेवपरमर्थविवर्त्तवदित्युभयरूपकचनंतत्प्रसिद्धमित्यर्थः ॥ १७ ॥ असत्यप्यर्थेबोधोर्थरूपेणकचतेइत्यर्थेपिदृष्टांतमाह ॥ बोधएवेति ॥ १८ ॥ बोधएवार्थरूपेणकचतीतिकिमर्थंकल्प्यतेवटबीजांतःसूक्ष्मोवृक्षइवबोधांतर्जडात्मकःप्रपंचो लब्ध्यएवप्राक्स्थितइत्येवकुतोनानकल्प्यतइतिरामःशंकते ॥ विद्यतइति ॥ १९ ॥

साकारेहिबीजेंतर्निराकारोवटःप्रागभूत्सचभूजलादिसहकारिकारणसमवधानेंकुरादिक्रमेणाविरभूत् ॥ नचसर्वजगत्प्रलयेकिंचित्साकारंसंभवतिसहकारिणोवालक्ष्यंतइति विषमोदृष्टांतइत्युत्तरंवसिष्ठआह ॥ यत्रेत्यादिना ॥ २० ॥ आकारोस्यास्तीत्याकारिकिंबीजंभवेत् ॥ एवंसहकार्यपितस्यबीजस्यकिंभवेत् ॥ २१ ॥ ननुब्रह्मैवतत्रजगच्छक्ति गर्भंबीजमस्तुतत्राह ॥ यत्त्विति ॥ अत्रास्मिन्ब्रह्मणिपरमाणुत्वयोगोपिनास्तिआकारकल्पनादूरापास्तेत्यर्थः ॥ २२ ॥ अतएवकारणासंभवःप्रागुक्तइत्याह ॥ कारणस्येति॥

श्रीवसिष्ठउवाच॥ ॥यत्रास्तिबीजंतत्रास्याच्छाखावितततरूपिणी॥जन्यतेकारणैःसाचवितता सहकारिभिः॥२०॥समस्तभूतप्रलये बीजमाकारिकिंभवेत्॥सहकार्यथकिंतस्यजायतेयद्वशाज्जगत्॥२१॥यत्तुब्रह्मपरंशांतंकातत्राकारकल्पना॥परमाणुत्वयोगोपिना त्रकेवात्रबीजता ॥ २२ ॥ कारणस्येतिबीजस्यसत्यासत्यैककारिणः॥असंभवाज्जगत्सत्ताकथंकेनकुतःक्क॥२३॥जगदालेपर स्याणोरंतरित्यपिनोचितम् ॥ सार्षपेकणकेमेरुरास्तइत्यज्ञकल्पना ॥ २४॥सतिबीजेप्रवर्त्ततेकार्यकारणदृष्टयः॥निराकारस्यकिंबी जंकजन्यजनकक्रमः॥ २५ ॥ अतोयत्परमंतत्त्वंतदेवेदंजगत्स्थितम्॥नेहप्रथयतेकिंचिन्नचकिंचिद्विनश्यति॥ २६॥ चिदाकाशश्चि दाकाशेत्वदिचित्त्वाज्जगद्भ्रमम् ॥ अशुद्धवदिवाशुद्धेशुद्धंशुद्धेप्रपश्यति॥ २७॥खमेवाभासतेतस्यरूपंस्पंदइवानिले ॥ सर्गशब्दार्थक लनानेहकाश्चनसंतिनः॥ २८॥यथाशून्यत्वमाकाशेद्रवत्वंचयथाजले॥अन्यतात्ममयीशुद्धासर्गतेयंतथात्मनि॥ २९॥भारूपमिद माशांतंजगद्ब्रह्मैवनस्तम्॥अनादिनिधनंसत्यंनोदेतिनचशाम्यति॥३०॥देशाद्देशांतरप्राप्तौक्षणान्मध्येचिदोवपुः॥यत्तज्जगदिती वेदंव्योमात्मनिव्यवस्थितम्॥३१॥यथास्पंदोनिलेतोयेद्रवत्वंव्योम्निशून्यता॥तथाजगदिदंभातमनन्याश्लेषमात्मनि॥३२॥

इतिअनयारीत्या ॥ २३ ॥ यदित्वणुःपंथाविततःपुराणःअणोरणीयानित्यादिश्रुतिबलादणुत्वमभ्युपगम्येततथापितत्रजगत्स्थितिर्दुरुपपादेत्याह ॥ जगदिति ॥ २४ ॥ यदितु जगदपिनिराकारमेवेत्यभ्युपगम्येततर्हिसुतरांबीजाद्यसंभवात्तादृशब्रह्मतैवपर्यवसितेत्याह ॥ सतीतिद्वाभ्याम् ॥ २५ ॥ प्रथयतेआविर्भूयस्वरूपंप्रख्यापयति ॥ २६ ॥ किंत र्हितत्तदाह ॥ चिदाकाशइति ॥ २७॥ २८ ॥ आत्ममयीस्वविवर्त्तरूपास्वान्यता ॥ २९ ॥ अविवर्त्ततर्हिकीदृक्तदाह ॥ भारूपमिति ॥ ३० ॥ तदप्रसिद्धिस्तुबहुशोवारिते तिस्मारयति ॥ देशादिति ॥ ३१ ॥ अन्येनवस्त्वंतरेणाश्लेषःसंबंधस्तच्छून्यमसंगाद्वयमितियावत् ॥ ३२ ॥

वर्णितंसर्वंजगतश्चित्स्वभावमात्रत्वंसंगृह्योपदिशन्नुपसंहरति ॥ संविदिति ॥ हेरामजगतआत्मनिपरमार्थस्वभावेऽवस्थितंसत् नन्विति निश्चयेनसंविन्नभएव ॥ शून्यतापन्नंसत्प्रसिद्धंनभएवकिंनस्यात्तत्राह ॥ नभइति ॥ अनर्कंसूर्यरहितंतदस्तमयोदयरहितंचआत्मनिस्वरूपमात्रेऽवस्थितंचनभइतिकप्रसिद्धम् ॥ नहिनभःसच्चित्स्वभावमर्कादिशून्यंवाप्रसिद्धमपितुजडंशून्यम् ॥ किंचसर्वदृश्यानांयत्तत्त्वंसच्चित्स्वभावरूपंतदनुविद्धत्वेनभानात्तदंगभूतमेवाखिलंप्रसिद्धंनशून्यनभोंगम् येनतन्मात्रंस्यात् अतस्तेनसच्चिदात्मनैवानन्यत् ॥ तस्मात्त्वमपिनिरस्तसकलदृश्यश्चिदंबरमात्रंसत्आस्वतिष्ठेत्यर्थः ॥ ३३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वा०उत्तरार्द्धेचतुष्पंचाशःसर्गः ॥ ५४ ॥ ॥ ७ ॥ अन्यभावनयान्यांस्वांपश्यंतीचिज्जगत्स्थिता ॥ स्वभावनादनन्येतिपरमार्थमयंजगत् ॥ १ ॥ एवंजगतआत्यंतिकेब्रह्माभेदेअनुत्पत्तिरेवफलितेत्याह ॥ भावेति ॥ १ ॥

संविन्नभोननुजगन्नभइत्यनर्कमात्मन्यवस्थितमनस्तमयोदयंक ॥ तत्त्वंगभूतमखिलंतदनन्यदेवदृश्यंनिरस्तकलनौघपरमात्रमास्व ॥३३॥ ॥इ०वा०वा०दे०मो०नि०उ०अद्वैतैक्यप्रतिपादनंनामचतुष्पंचाशत्तमःसर्गः॥ ५४ ॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ भावाभावग्रहोत्सर्गस्थूलसूक्ष्मचराचराः॥ आदावेवहिनोत्पन्नाःसर्गादौकारणंविना ॥ १ ॥नत्वमूर्त्तोहिचिद्धातुःकारणंभवितुंक्वचित्॥ स्वात्माशक्तःसमूर्त्तानांबीजमुर्वीरुहामिव ॥ २ ॥ स्वभावमेवसततंभावयन्भावनात्मकम्॥ आत्मन्येवहिचिद्धातुःसर्वोनुभववान्स्थितः ॥ ३ ॥ आस्वादयतियंभावंचिद्धातुर्गगनात्मकः ॥ लब्धःसर्गःप्रलापेनक्षीवःक्षुब्धतयायथा ॥ ४ ॥ यदासर्वमनुत्पन्नंनास्येवापिचदृश्यते॥ तदाब्रह्मैवविद्धीदंसमंशांतमसत्समम् ॥ ५॥ चिन्नभश्चिन्नभस्येवपयसीवपयोद्रवः॥ चित्त्वात्कचतियत्तेनतदेवेदंजगत्कृतम्॥ ६ ॥ स्वप्नेतदेवजगदित्युदेतिविमलायथा ॥ काचकस्येवकचतितथेत्थंसादिसर्गखे ॥७॥ चित्काचकस्यकचनंयथास्वप्नेजगद्भवेत्॥ तथैवजाग्रदविधंतत्स्वमात्रमिदंस्थितम्॥८॥

87

उत्पत्तिवादेत्ववश्यंबीजंवाच्यंतत्तुदुर्वचमित्यसकृदुक्तंस्मारयति ॥ नत्विति ॥२॥ अतएवतत्त्ववित्सर्वंजगच्चित्स्वभावमेवभावयंस्तद्भावेनैवस्थितइत्याह ॥ स्वभावमेवेति ॥ सर्गानुभववानितिपाठेतुअज्ञश्चिद्धातुरात्मन्येवसर्गस्वभावंभावयंस्तथानुभववान्स्थितइतिव्याख्येयम् ॥३॥ अतएवाज्ञात्मनास्वभावभावनानुरूपःसर्गोलब्धइत्याह ॥ आस्वादयतीति ॥ यथामदिरादिक्षुब्धतयाआत्मनैवक्षीवःस्वात्मालब्धस्तद्वत् ॥ ४ ॥ अतएवानुत्पन्नवस्त्वंतरस्वभावदर्शनेतद्भावस्थितिरितिविद्धीत्याह ॥ यदेति ॥ ५ ॥ कथंतर्हिमेनेदंजगत्कृतमितिश्रुत्यादिप्रवादउपपन्नस्तत्राह ॥ चिन्नभइति ॥ यद्यस्मात्तेनचिदात्मनानिमित्तेनेदमध्यस्तंजगत्कचतितेनहेतुनाजगद्ब्रह्मैवजगदाकारेणतेनैवकृतमितिप्रवादइतिशेषः ॥ ६ ॥ सचायंस्वप्नदृष्टुरथरथान्रथयोगान्पथःसृजतेइतिश्रुतौतत्स्पष्टताप्रवादवदित्याह ॥ स्वप्नेइति ॥ यथावाकाचकदूषितनेत्रस्यनभसिकेशोंडूकादिकचतितथाइत्थंविचित्रंसादिरूपंसर्गात्मभाविते चिदाकाशेकचतीत्यर्थः ॥ ७ ॥ तत्तस्मात्स्वमात्रंचिदाकाशमात्रम् ॥ ८ ॥

कस्तर्हि तथासति जाग्रत्स्वप्नयोर्भेदस्तमाह ॥ आदीति ॥ आदौ प्रवृत्ते हिरण्यगर्भात्मकसर्गे ॥ अपरात्रौ प्रवृत्ते स्वस्वव्यष्ट्यंतःकरणमात्रपरिमाणरूपे सर्गे यश्चितेः स्वप्नः ॥ ९॥ आदिसर्गसंकल्प एवामहाप्रलयं सर्वपदार्थस्वभावव्यवस्थापिका नियतिस्तदनुसारेणैवाद्यापि यथास्थितं पदार्थरचनारूढा यथापूर्वं प्रवृत्ता सरितां तरंगरेखादृष्टीनां प्रत्यक्षारूढेत्यन्वयः ॥ १० ॥ तथा च वारिसत्तातिरिक्तसत्ता यथा तरंगश्रियो नास्ति एवं जगतश्चित्सत्तातिरिक्ता सा नास्तीत्याशयेन ब्रह्मोपादानकताप्रवाद इत्याशयेनाह ॥ यथेति ॥ ११॥ एवं जगतः पृथक्सत्ताभावे जन्ममरणभीतिप्रसक्तिरेव नास्ति प्रत्युतोभयथापि सुखमेवेत्याह ॥ मृतस्येति ॥ यदि मृतस्याऽत्यंतासत्वं तथापि ब्रह्मसुखसत्ताया एव तत्त्वाशोभयसत्तात्मनः परि

आदिसर्गे हि चित्स्वप्नो जाग्रदित्यभिशब्द्यते ॥ अपरात्रौ चितेः स्वप्नः स्वप्न इत्यपि शब्द्यते ॥ ९॥ पूर्वं प्रवृत्ता सरितां रूढाद्यापि यथास्थिता ॥ तरंगलेखादृष्टीनां पदार्थरचना तथा ॥ १० ॥ यथा वारितरंगश्रीः सरितां रचनामिता ॥ तथा चिद्ब्रह्मचिद्बीजसत्तांतः स्थपितामिता ॥ ११ ॥ मृतस्यात्यंतनाशश्चेत्तन्निद्रासुखमेव तत् ॥ भूयश्चोदेति संसारस्तत्सुखं नवमेव तत् ॥ १२ ॥ कुकर्मभ्यस्तु चेद्भीतिः सा समेह परत्र च ॥ तस्मादेते समसुखे सर्वेषां मृतिजन्मनी ॥ १३ ॥ मरणं जीवितं वास्तु सहजे वासने तयोः ॥ इति विश्रांतचित्तो यः सोंतःशीतल उच्यते ॥ १४ ॥ सर्वसंवित्तिविगमे संविद्बोहति या दृशी ॥ भूयते तन्मयेनैव तेनासौ मुक्त उच्यते ॥ १५ ॥ अत्यंताभावसंवित्त्या सर्वदृश्यस्य वेदनम् ॥ उदेत्यपास्तसंवेद्यं सति वासति सर्गके ॥ १६ ॥ यन्न चेत्यं न चिद्रूपं यच्चितेरप्यचेतितम् ॥ तद्भावैक्यं गतास्तज्ज्ञाः शांताव्यवहृतौ स्थिताः ॥ १७ ॥ चित्काचकाचकच्यं यज्जगन्नाम्ना तदुच्यते ॥ अत्यच्छे परमाकाशे बंधमोक्षदृशः कुतः ॥ १८ ॥ चिन्नभःस्पंदमात्रात्मसंकल्पात्मतया जगत् ॥ सद्भूतमयमेवेदं न पृथ्व्यादिमयं क्वचित् ॥ १९ ॥

शेषान्निद्रायां सुषुप्तौ निरतिशयानंदत्वेन प्रसिद्धं सुखमेव प्राप्तं भूयश्च पुनर्मृतौ देहाद्यात्मनासंसारो यद्युदेति तत्तस्य नवं संसाररूपमपि तदेव सुखं नहि सुखान्यसत्तास्तीति न कश्चिद्भयप्रसक्तिरित्यर्थः ॥ १२ ॥ ननु मृतस्य कुकर्मभ्यो नरकादिदुःखसंभावनाद्भयं किं न स्यादित्याशंकामुत्थाप्याह ॥ कुकर्मभ्य इति ॥ सा भीतिरिह जीवतः परत्र मृतस्य च समा नरकादेर्जीवनस्य च ब्रह्मसुखसत्तातिरिक्तसत्ताभावाद्दुःखस्यापि सुखसत्तयैव स्थितेर्विशेषाभावादित्यर्थः ॥ १३॥ तयोर्मरणजीवितयोर्वासने सौक्ष्म्येण स्थितिरूपे सत्ते सहजे स्वाभाविकब्रह्मसुखरूपे ॥ १४ ॥ तेन दृश्यबंधस्य पृथक्सत्तापगमेनासौ मुक्त उच्यते ॥ १५ ॥ एवं दृश्यस्यात्यंताभावसंवित्त्या परसत्तया सर्गके सत्यसति वा सर्वदृश्यस्य वेदनमपास्तसंवेद्यं निर्विषयमेवोदेतीति मुक्तत्वोपपत्तिरित्यर्थः ॥ १६ ॥ चेत्याभावादेव तत्सापेक्षचितिक्रियारूपं न ॥ १७ ॥ अभीक्ष्णं कचतीति कचकचस्तद्भावः काचकच्यम् ॥ १८ ॥ १९ ॥

प्रतिभासमात्रेणोच्छूनंवाप्यनुच्छूनमेवेत्यसत् ॥ २० ॥ २१ ॥ २२ ॥ हेरामचिद्व्योमआविलंजगद्रूपमित्थमुक्तरीत्याअनाविलंरूपमाततंनिर्वाणमेव ॥ अनेनक्वचिदपिनप्रसृतं नकिंतुसर्वत्रप्रसृतमेव ॥ अंबरेशून्यत्वमिवअंबुधौद्रवत्वमिवचइदंजगन्ननानाकिंतुतदेवेत्यर्थः ॥ २३ ॥ ॥ इतिश्रीवासिष्ठ॰म॰रा॰तात्पर्यप्रकाशेनिर्वाण॰उत्तरार्द्धेपंच पंचाशत्तमःसर्गः ॥ ५५ ॥ ॥ ७ ॥ ॥ चिदेवसर्वंसर्वत्रसर्वंचिदितिनिश्चितेः ॥ दृढीकारायपाषाणाख्यायिकात्रोपवर्ण्यते ॥१॥ चिन्मयेव्योम्निब्रह्माकाशेतत्सत्त्व

नेहदेशोनकालोस्तिनद्रव्यंनक्रियानखम् ॥ सदिवाखिलमुच्छूनंवाप्यनुच्छूनमप्यसत् ॥ २० ॥ भातिकेवलमेवेत्थंपरमार्थघनंघनम् ॥ यन्नशून्यंनवाशून्यमत्यच्छंगगनादपि ॥ २१ ॥ साकारमप्यनाकारमसदेवातिभास्वरम् ॥ अतिशुद्धैकचिन्मात्रस्फारंस्वप्नपुरंयथा ॥२२॥ निर्वाणमेवमिदमाततमित्थमंतश्चिद्व्योमआविलमनाविलरूपमेव ॥ नानेवनक्वचिदपिप्रसृतंनतन्नानाशून्यत्वमंबरइवांबुनिधौद्रवत्वम् ॥ २३ ॥ ॥इ॰वा॰महारामायणेवा॰दे॰मो॰नि॰उ॰जगतःपरमार्थमयत्ववर्णनंनामपंचपंचाशत्तमःसर्गः॥५५॥ ॥७॥ श्रीवसिष्ठउवाच ॥ ॥सर्वत्रसर्वथासर्वंसर्वदाव्योम्निचिन्मये ॥ साधुसंभवतिस्वच्छंशून्यत्वंखइवाखिले ॥१॥ यत्रचित्तत्रसर्गश्रीरव्योम्नित्र्योम्निवास्तिचित् ॥चिन्मयत्वात्पदार्थानांसर्वेषांनास्त्यचित्क्वचित् ॥२॥ पदार्थजातंशैलादियथास्वप्नेपुरादिच ॥ चिदेवैकंपरंव्योमतथाजाग्रत्पदार्थभूः ॥ ३ ॥ पाषाणाख्यानमत्रेदंशृणुरामरसायनम् ॥ पूर्वंमयैवयद्दृष्टंचित्रंप्रकृतमेवच ॥४॥ अहंविदितवेद्यत्वात्कदाचित्पूर्णमानसः ॥ त्यक्तुमिच्छुरिमंलोकव्यवहारंघनभ्रमम् ॥ ५ ॥ ध्यानैकतानतामेत्यशनैर्विश्रांतयेचिरम् ॥ त्यक्त्वाजवंजवीभावएकांतार्थीशमंव्रजन् ॥ ६ ॥ इदंचिंतितवानस्मिकस्मिंश्चिदमरालये ॥ संस्थितोविविधाःपश्यन्भंगुराजागतीर्गतीः ॥ ७ ॥ विरसाखल्वियंलोकस्थितिरापातसुंदरी ॥ नजातुसुखदामन्येकस्यचित्केनचित्क्वचित् ॥ ८ ॥

यासर्वत्रसर्वदासाधुअसंकुचद्वृत्तितयासंभवतितच्चसर्वंसर्वदासर्वत्रस्वच्छमेवस्वमालिन्यलेशेनापित्र्रह्मनदूषयति ॥ यथाखेशून्यत्वमखिलेतस्मिन्नैल्यात्मनाभासमानमपिनखंदूषयतीत्यच्छंतद्वदित्यर्थः ॥१॥ उक्तार्थेउपपत्तिमाह ॥ यत्रेति ॥ अव्योम्निपृथिव्यादौ ॥ २ ॥ सर्वस्यचिन्मात्रतात्वमेप्रसिद्धेतितदृष्टांतेनजाग्रत्यपितांसाधयति ॥ पदार्थजातमिति ॥ ३ ॥ रसानांमाधुर्यवैचित्र्याणांशृंगारादीनांचायनंस्थानंभ्रांतिरोगभेषजंचविविधकथोपजृंभितत्वाच्चित्रंविस्तरेणवर्णयितुंप्रकृतंप्रस्तुतंच ॥ ४ ॥ ५ ॥ ६ ॥ अमरालये संस्थितोहमिदंवक्ष्यमाणंचिंतितवानस्मि ॥ ७ ॥ केनचिदप्युपायेनप्रकारेणच ॥ क्वचिद्देशेकालेच ॥ ८ ॥

नसुखदेत्येतावदेवनकिंतुदुरंतदुःखदापीत्याहोद्वेगमिति॥ ९॥अल्पीरगणीरगकंविवर्त्तंइत्यर्थः॥ १०॥तस्माद्विक्षेपोद्वेगस्यावश्यहेयत्वात्तद्धानायेत्यर्थः॥आत्मानंस्वदेहमात्मनास्वे
नैवांतर्द्धानाद्युपायैःसंगोप्यगूहयित्वासंरक्ष्यच ॥ ११॥ विगतबाह्यार्थवेदनंयथास्यात्तथा ॥ १२॥ १३॥ ननुगिरिशिखरप्रस्थद्रोण्यादयःसागरकुक्षितटादयःपातालकुहरादयश्च
बहवएकांतदेशाःप्रसिद्धास्तेकुतोनाध्यास्यंतेसमाध्यर्थंतत्राह ॥ शब्देत्यादिना॥ विक्षेपहेतुशब्दप्रचुरैःकाननैर्वारिभिरब्दैर्मेघैःसिंहव्याघ्रादिभूतौघैश्चाभितःसमाकुलागिरयःस्व
यंसंक्षुब्धाःसंतोऽन्यानपिक्षोभयंतितस्मात्तेमेअरयइवप्रतिकूलाइत्यर्थः॥ १४॥ अंतराद्द्रोणीप्रदेशाःकिरातादिजनैर्वलितावेष्टिताः॥ विषयाहिभिर्दूषितत्वाद्विषमयाएव॥ १५॥वि

उद्वेगंजनयत्यंतस्तीव्रसंवेगखेदतः॥ इमाहृश्यहशोद्रष्टुरिष्टानिष्टफलप्रदाः॥ ९ ॥ किमिदंदृश्यतेकिंवाप्रेक्षतेकोहमेववा॥ सर्वंशांतमजं
व्योमचिन्मात्रात्मनिरिंगकम् ॥ १० ॥ तस्मात्समस्तसिद्धेंद्रदेवदैत्यादिदुर्गमम् ॥ सुप्रदेशमितोगत्वासंगोप्यात्मानमात्मना॥ ११ ॥
अदृश्यःसर्वभूतानांनिर्विकल्पसमाधिगः॥ समेस्वच्छेपदेशांतेआसेविगतवेदनम्॥ १२ ॥ तस्मात्कोनुप्रदेशःस्यादत्यंतंशून्यतांगतः॥
यत्रैतानानुभूयंतेपंचबाह्यार्थवेदनाः ॥ १३ ॥ शब्दकाननवार्यब्दभूतौघाभिसमाकुलाः॥ क्षोभयंत्यथसंक्षुब्धास्तस्मान्मेगिरयोरयः
॥ १४ ॥ नानाविधानगेंद्राणामंतरावलिताजनैः ॥ देशाविषमयाएवनिःशेषाविषयाहिभिः॥ १५॥ जनैर्जलचरैर्व्याप्ताःसागरास्तीरकु
क्षयः ॥ विविधारंभसंक्षुब्धैर्नगराणीवनागरैः ॥ १६ ॥ तटान्यन्द्र्यंबुराशीनांलोकपालपुराणिच॥ भूताकुलानिश्रृंगाणिपातालकुहरा
णिच॥ १७॥ गायंत्यनिलभांकारैर्नृत्यंतिलतिकाःकरैः ॥ पुष्पैर्हसंत्यगेंद्राणांगुहागहनकोटराः ॥ १८ ॥ मौनिमीनमुनिस्पर्शकंपिनाल
चलांबुजाः॥ सरस्योविरसाएववार्यावर्त्तविराविताः॥ १९ ॥ पवनस्पर्शसंक्षुब्धतृणपांसुपताकिनी॥ रटत्यनिलभांकारैर्निर्झरोर्व्यप्य
संयता ॥ २० ॥

विधारंभसंक्षुब्धैरित्युभयान्वयि ॥ १६॥ अद्रीणांअंबुराशीनांचतटानिश्रृंगाणिच ॥ १७॥ गिरिगुहास्तर्हिसेव्यंतांतत्राह ॥ गायंतीति ॥ सिंहसर्पादिगर्भत्वाद्गहनकोटराः ॥ १८॥
संतुतर्हिमहासरांसिदक्षिणापथेसरस्यइतिप्रसिद्धाःस्वतीरेसमाधिहेतवस्तत्राह ॥ मौनीति ॥ दर्पभयव्याकुलानांमीनानांस्नानशीलानांमुनीनांचस्पर्शैःक्रीडास्नानाद्यभिघातैःकंप
नशीलैर्नालैश्चलान्यंबुजानियासुतथाविधाःसरस्योवार्यावर्त्तैर्विराविताःसत्यःसमाधिभंगहेतुत्वान्ममविरसाएवयतोहंतदामीनान्नतन्निवारणसमर्थः॥ १९ ॥ अस्तुतर्हिनिर्झ
रोर्वीतिविश्रांतिहेतुस्तत्राह ॥ पवनेति ॥ असंयताअनियताअनिवारितविक्षेपेतियावत्॥ २० ॥

परिशेषादाकाशएवसर्वविक्षेपहेतुवर्जनाच्छरणमित्याशयेनाह ॥ तस्मादिति ॥ २१ ॥ वज्रोदरदृढमितिपूर्वोत्तरोभयक्रियाविशेषणम् ॥ २२ ॥ विततांतरंविक्षेपहेतुसहस्रव्याप्तगर्भम् ॥ २३ ॥ विक्षेपहेतुबाहुल्यमेवविशेषणैःसर्वतःप्रपंचयति ॥ क्वचिदित्यादिना ॥ २४ ॥ उद्वृत्ताउन्मादरौद्रवृत्तायोगिन्योयत्र ॥ २५ ॥ आसन्नैर्दैत्यपुरैरुड्डीनानिसगंधर्वाण्येवदेवपुराणियत्र ॥ २६ ॥ मंडलैर्मेघादिचक्रवालैर्मंडितम् ॥ २७ ॥ अपूर्वाःअपूर्वदृष्टविचित्राकाराभूतौघाःपिशाचसंघायस्मिन् ॥ नागरैर्नगरसमूहैरावलितम् ॥ अन्ये

तस्मादाकाशमाशून्यंकस्मिंश्चिद्दूरकोणके ॥ अत्रतिष्ठाम्यवष्टभ्ययोगयुक्तिमनिंदिताम् ॥ २१ ॥ कस्मिंश्चिदेककोणेत्रकृत्वाकल्पनयाकुटीम् ॥ वज्रोदरदृढंतस्यामंतस्तिष्ठाम्यवासनम् ॥ २२ ॥ इतिसंचिंत्ययातोहमाकाशमसिनिर्मलम् ॥ यावत्तदपिपश्यामिसकलंविततांतरम् ॥ २३ ॥ क्वचिद्भ्रमत्सिद्धगणंक्वचिदुद्भूर्जदंबुदम् ॥ क्वचिद्विद्याधराधारंयक्षोत्क्षिप्तक्षयंक्वचित् ॥ २४ ॥ क्वचिद्भ्रमत्पुरवरंप्रारब्धसमरंक्वचित् ॥ क्वचिद्द्रवज्जलधरंक्वचिदुद्वृत्तयोगिनि ॥ २५ ॥ क्वचिद्दैत्यपुरोड्डीनसगंधर्वपुरंक्वचित् ॥ क्वचिद्भ्रमद्ग्रहगणंतारकाकुलितंक्वचित् ॥ २६ ॥ क्वचित्खेखगसंघृष्टंक्वचित्क्रुद्धमहानिलम् ॥ क्वचिदुत्पातवलितंक्वचिन्मंडलमंडितम् ॥ २७ ॥ क्वचिदपूर्वभूतौघंनागरावलितंक्वचित् ॥ क्वचिदर्करथाक्रांतंक्वचिदन्यरथोद्धुरम् ॥ २८ ॥ क्वचिदादित्यदाहांतंशशिशैत्यान्वितंक्वचित् ॥ क्वचित्क्षुद्रजनासह्यंक्वचिदभ्यौघ्ययदुर्गमम् ॥ २९ ॥ क्वचिदुत्तालवेतालंगरुडोड्डामरंक्वचित् ॥ क्वचित्सप्रलयांभोदंक्वचित्सप्रलयानिलम् ॥ ३० ॥ ततोभूतगणांस्त्यक्त्वादूराद्दूरतरंगतः ॥ प्राप्तवानहमेकांतंशून्यमत्यंतविस्तृतम् ॥ ३१ ॥ अत्यंतमंदपवनंस्वप्नेप्यप्राप्यभूतकम् ॥ मंगलोत्पातरहितमगम्यंविद्धिसंस्तृतेः ॥ ३२ ॥ कल्पिताथमयातत्रकुटीप्रकटकोटरा ॥ नीरंध्रकुड्यनिबिडापद्मकुड्मलसुंदरी ॥ ३३ ॥ घुणक्षुण्णांगपूर्णेंदुबिंबोदरमनोहरा ॥ कह्लारकुंदमंदारपुष्पश्रीकोशशोभिता ॥ ३४ ॥ समस्तभूतागम्यत्वंतत्रसंकल्प्यचेतसा ॥ अगम्येसर्वभूतानामहमासंतदाततः ॥ ३५ ॥

र्यांचंद्रादिग्रहाणांरथैरुद्धुरम् ॥ २८ ॥ आदित्यसन्निधेर्दाहैरंतोमृत्युःप्राणिनांयत्र ॥ क्षुद्रजनैर्भूतप्रेतादिभिरसह्यंबीभत्सम् ॥ २९ ॥ ३० ॥ ३१ ॥ मंगलैःशुभचिह्नैरुत्पातैरशुभचिह्नैश्चरहितम् ॥ ३२ ॥ कल्पितासत्यसंकल्पेननिर्मिता ॥ ३३ ॥ घुणैःकीटभेदैःक्षुण्णंछिद्रीकृतंपूर्णेंदुबिंबोदरमिवमनोहरेत्यभूतोपमा ॥ ३४ ॥ तत्रअहंचेतसासमस्तभूतागम्यत्वंसंकल्प्यवक्ष्यमाणलक्षणनिर्विकल्पसमाधिस्थःआसमितिव्यवहितेनान्वयः ॥ ३५ ॥

८१

॥३६॥३७॥ पुनःशतवर्षोत्तरंसमाधेर्व्युत्थानेनिमित्तमाह ॥ चिरमिति ॥ ततश्चिरेणवर्षशतांतेचित्तमाशावत्पवनवद्ययदावितंतंतदाबोधबीजंव्युत्थाननिमित्तंकर्मह्रदयक्षेत्रेएकं कालंविकासतोवृत्तमांतरंमध्यभागोयस्यतथाविधमासीदितिपरेणान्वयः ॥ नासापवनव्यक्तिवदितिपाठेप्राणाभिव्यक्तिवदित्यर्थः॥३८॥३९॥ मधौचैत्रमासे ॥४०॥एकधियए कामचित्तस्यमनाकूअत्यल्पाभवंति ॥ ४१ ॥ तदनंतरंतेकिमभूत्तत्राह ॥ विकासमिति ॥ वृक्षाणांमदस्यपल्लवादिपुष्टिहेतोर्हर्षस्यनिमित्तभूतोंतर्गतोरसःपुष्पद्रूपेणेव ॥ ४२ ॥ ततःकिमासीत्तदाह ॥ मामिति ॥ अयंप्राणैःपंचवृत्तिवायुभिरिंद्रियैश्चपूरितंतद्वशादेवउपागतआविर्भूतोजीवसंविदंशोयस्यतथाविधंदेहंसद्यःअभ्यागतंतुमामभिलक्ष्यइच्छाल क्षणयाअंगनयापिशाच्याविवलितःपरिष्वक्तःअहमितिप्रसिद्धोहंकारपिशाचःकुतोप्यतर्किताद्देशादुपगतःप्राप्तः ॥ यथाउपंशाल्मल्यादिवृक्षंप्रोन्नामानांतरूणांसन्नमनोवा

बद्धपद्मासनःशांतमनाःपरममौनवान्॥ संवत्सरशतांतेननिर्णीयोत्थानमात्मनः॥३६॥ निर्विकल्पसमाधिस्थोनिद्रामुद्रामिवागतः॥ समःसौम्यनभःस्वस्थःसमुत्कीर्णइवांबरात् ॥ ३७ ॥ चिरंयदनुसंधत्तेचेतःपश्यतितत्क्षणात् ॥ चिरेणचाशापवनव्यक्तिवद्विततंयदा ॥३८॥ तदावर्षशतेनात्रबोधबीजंवृतांतरम्॥ आसीन्मेहृदयक्षेत्रेकालमेकंविकासतः॥३९॥ संप्रबुद्धोभवन्मेयजीवःसंबुद्धवेदनः॥ शिशिरक्षीणगात्रस्यमधाविवरसस्तरोः॥ ४० ॥ तच्छतंतत्रवर्षाणांनिमेषमिवमेगतम्॥ बह्व्योपिकालगतयोभवंत्येकधियोमनाक् ॥ ४१ ॥ विकासमागतोवाथ्यंगतोबुद्धींद्रियक्रमः॥ वासंतःपुष्परूपेणमदस्येवरसोमम॥४२॥ मांप्राणपूरितमुपागतसंविदंशमभ्या गतंत्वहमितिप्रसृतःपिशाचः॥ इच्छांगनाविवलितोथकुतोपिसद्यःप्रोन्नामसन्नमनवायुरिवोग्रवृक्षम्॥४३॥ ॥इ०वा०महारामा यणेवा०दे०मो०निर्वाणप्रकरणेउ०पाषाणोपाख्यानेआकाशमंदिरेवसिष्ठसमाधानवर्णनंनामषट्पंचाशत्तमःसर्गः॥५६॥ ॥७॥ श्रीरामउवाच॥ ॥त्वामप्युदितनिर्वाणमहंकारपिशाचकः॥ बाधतेकिमितिब्रूहिमुनेसंदेहशांतये॥ १॥ ॥श्रीवसिष्ठउवाच॥ अहं भावंविनादेहस्थितिस्तज्ज्ञाज्ञयोरिह॥ आधेयस्यनिराधारानसंस्थेहोपपद्यते॥ २॥

युश्चंडपवनःप्रसरतितद्वदित्यर्थः ॥ ४३ ॥ ॥ इतिश्रीवासिष्ठ०म०रा०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेषट्पंचाशत्तमःसर्गः ॥ ५६ ॥ ॥७॥ ॥ ज्ञाज्ञाहंकार योरत्रविशेषप्रतिपत्तये ॥ ज्ञानबाधितदृश्यस्यचिन्मात्रत्वंसमर्थ्यते ॥ १ ॥ मामहमितिप्रसृतःपिशाचइत्युक्त्याप्रोन्नामसन्नमनवायुरितिदृष्टांतोक्त्याचवसिष्ठस्याप्यहंकारपि शाचकृतबाधावगमाज्ज्ञानफलानित्यत्वंसंभावयन्रामःपृच्छति ॥ त्वामपीति ॥ उदितंनिर्वाणंज्ञानमूलंयस्यतथाविधंत्वामपि ॥ १ ॥ नप्रारब्धशेषभोगमात्रप्रयोजनदग्धप टप्रायदेहधारणनिमित्ताहंकाराभासप्रतीतिमात्रेणाज्ञवज्ज्ञानिनोबंधप्रसक्तिरितिदर्शयितुमज्ञाहंकारात्तत्त्वज्ञाहंकारेनिर्दोषताविशेषप्रदर्शनेनोत्तरमाहवसिष्ठः ॥ अहंभावंविने त्यादिना ॥ देहस्थितिर्नोपपद्यतेयस्मादाधेयस्यनिराधारासंस्थानेतिनआवृत्त्याव्याख्येयम् ॥ २ ॥

॥ ३ ॥ अज्ञानलक्षणेनशिशुनाबालेनकल्पितः ॥ तेनाज्ञानवशेनैवसंस्थितः ॥ ४ ॥ अस्त्वेवंकिंततस्तत्राह ॥ अज्ञानमपीति ॥ ज्ञानेनाज्ञानेबाधितेतदधीनस्थितिकोहंकारोऽ पिबाधितएवेत्याशयः ॥ ५ ॥ तथाचविदुषामनुभवोत्कर्षक्रमेणाज्ञानक्षयोत्कर्षःप्रसिद्धइत्याह ॥ यथायथेति ॥ ६ ॥ अतएवविद्याप्रागभावकालनियताअज्ञताप्रसिद्धेत्या ह ॥ किलेति ॥ अज्ञताकार्याविद्यावा ॥ ७ ॥ एवंकारणाविद्यापिकार्याविद्योदयकालमात्रव्यवहारत्वात्तदुपाधिकजीवचिद्वैद्यत्वाच्चतदधीनेत्याह ॥ सतीति ॥ संभवः अनुभवाधीनासिद्धिः ॥ ८ ॥ अस्तुतथाकिंततस्तत्राह ॥ सर्गस्त्विति ॥ ९ ॥ कारणाभावमुपपादयति ॥ परमाकाशेति ॥ १० ॥ मनःषष्ठेंद्रियापासत्वात्तदात्मनोमनःष

अयंत्वत्रविशेषस्तंश्रृणुविश्रांतचेतसः ॥ श्रुतेनयेनाहंभावपिशाचःशांतिमेतिते ॥ ३ ॥ अहंभावपिशाचोयमज्ञानशिशुनामुना ॥ अ विद्यमानएवांतःकल्पितस्तेनसंस्थितः ॥ ४ ॥ अज्ञानमपिनास्त्येवप्रेक्षितंयन्नलभ्यते ॥ विचारिणादीपवतास्वरूपंतमसोयथा ॥ ५ ॥ यथायथाविलोक्यतेतथातथाविलीयते ॥ इहाज्ञतापिशाचिकातथाविचारितासती ॥ ६ ॥ किलसत्यामविद्यायामज्ञतोदेतिशाश्वती ॥ बुद्धिमोहात्मिकायक्षीनिर्देहैवयथानिशि ॥ ७ ॥ सतिसर्गेत्वविद्यायाःसंभवोनान्यतःक्वचित् ॥ सतिद्वितीयेशशिनिद्वितीयोविद्यतेशशः ॥ ८ ॥ सर्गस्त्वयमजातत्वादज्ञज्ञातोनविद्यते ॥ नजातःकारणाभावात्पूर्वमेवखवृक्षवत् ॥ ९ ॥ परमाकाशकोशांतरादिसर्गेनिरामये ॥ पृथ्व्यादेरुपलंभस्यभवेत्किमिवकारणम् ॥ १० ॥ मनःषष्ठेंद्रियातीतंमनःषष्ठेंद्रियात्मनः ॥ साकारस्यनिराकारंकथंभवतिकारणम् ॥ ११ ॥ बीजात्कारणतःकार्यमंकुरःकिलजायते ॥ नबीजमपियत्रास्तितत्रस्यादंकुरःकुतः ॥ १२ ॥ कारणेनविनाकार्यंनचनामोपप द्यते ॥ कदाकइवखेकेनदृष्टोलब्धःस्फुटोद्रुमः ॥ १३ ॥ संकल्पेनांबरेयद्वद्दृश्यतेविटपादिकम् ॥ ससंकल्पस्तथाभूतोनतत्रास्तिपदार्थता ॥ १४ ॥ एवंयेयंचिदाकाशेसर्गादावनुभूयते ॥ शून्यरूपइवाकाशेसर्गस्थितिरनर्गला ॥ १५ ॥ समएवचिदाकाशःकचत्यात्मनितत्तथा ॥ स्वभावएवसर्गाख्यश्चित्त्वाच्चैतन्यमीश्वरः ॥ १६ ॥ स्वप्नसर्गोत्रदृष्टांतःप्रत्यहंयोनुभूयते ॥ स्वयंसंवेदनेस्वप्नेस्फुरत्यद्रिपुराकृतिः ॥ १७ ॥

ष्ठेंद्रियसिद्धिंविनाउल्लेखायोगादनुल्लिखितस्यकर्तुमशक्तेरितिभावः ॥ एवंसाकारस्यघटादेःसाकारेणैवकुलालमृत्पिंडादिनाकरणमुचितंननिराकारेणेत्यर्थः ॥ ११ ॥ १२ ॥ ॥ १३ ॥ यदिनोत्पन्नएवसर्गस्तर्हिकस्तथाभासतेतंसदृष्टांतमाह ॥ संकल्पेनेत्यादिना ॥ १४ ॥ सर्गादिकालेयेयमनर्गलासर्गस्थितिरनुभूयतेसापिआकाशेशून्यरूपोवृक्षादिरि वबोध्या ॥ १५ ॥ तर्हिकिंशून्यमेवसर्गात्मनाप्रथतेनेत्याह ॥ समइति ॥ समःसर्गाकारवैषम्यरहितईश्वरएवतथाप्रथतइत्यर्थः ॥ १६ ॥ अविकृतस्यैवविकारजगदात्मनास्फुर णेस्वप्नएवात्मैवदृष्टांतइत्याह ॥ स्वप्नेति ॥ १७ ॥

९०

॥ १८ ॥ तथाचसर्गात्प्राग्यादृशमात्मतत्त्वंतादृशमेवसर्गकालेपीत्याह ॥ अवेद्यवेदनमिति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ तथाचस्वच्छेआकाशेप्रतीतवर्णवैचित्र्यमिवब्रह्मण्येवब्रह्मस्वात्मभूतेनवैचित्र्येणस्वेनैवस्वयंस्फुरतीतितत्स्वभावएवसर्गइतिफलितमित्याह ॥ स्वच्छेइति ॥ २३ ॥ ननुस्वभावपदेभावइतिभावघञंतपदेनभवनमुच्यते तच्चभावकव्यापाररूपभावनाफलंभाव्यनिष्ठंभावनाचभवितुर्भवनानुकूलोभावकव्यापारःकरणादिकारकनिर्वर्त्यइतिभाव्यभावकादित्रिपुटीभूमीनामेकरसेकथंसंभवस्तत्राह ॥ भाव्येति ॥ नकल्पितंनानारसत्वंवास्तवैकरस्यविरोधादितिभावः ॥ २४ ॥ स्थितेनिश्चयेनस्थिरीभूते ॥ २५ ॥ तथाचाज्ञानेवाहंभावोवाधतेनतज्ज्ञानितिफलितमित्याह ॥ अहंभा

चित्स्वभावेयथास्वप्नेआस्तेसर्गइवेहयः॥ असर्गेसर्गवद्भातितथापूर्वमहांबरे ॥ १८ ॥ अवेद्यवेदनंशुद्धमेकंभात्यजमव्ययम्॥ सर्गादौयदनाद्यंतंस्थितःसर्गःसएवनः॥ १९ ॥ नेहसर्गोस्तिनैवायंपृथ्व्यादिगणगोलकः॥ सर्वंशांतमनालंबंब्रह्मैवब्रह्मणिस्थितम् ॥ २० ॥ सर्वशक्त्यात्मतद्ब्रह्मयथाकचतियादृशम्॥ रूपमत्यजदेवाच्छंतथाभवतितादृशम्॥ २१ ॥ यथास्वप्नपुरंजंतोश्चिन्मात्रप्रविजृंभितम्॥ तथैवसर्गःसर्गादौशुद्धचिन्मात्रजृंभितम्॥ २२॥ स्वच्छेचित्परमाकाशेचिदाकाशोयआस्थितः॥ स्वभावएवसर्गोसावितितेनैवभावितः॥ २३॥ भाव्यभावकभावादिभूमीनांभावनंभृशम्॥ सर्वंचिन्नभएवाच्छमात्मनात्मनिसंस्थितम् ॥ २४॥ एवंस्थितेकुतःसर्गःकुतोविद्याक्वचाज्ञता॥ ब्रह्मशांतंघनंसर्वंक्वाहंकारादयःस्थिताः॥ २५ ॥ अहंभावस्यसंशांतिरेषासौकथितातव॥ अहंभावःपरिज्ञातःपिशाचइवशाम्यति॥ २६॥ मयात्वेवमहंभावःपरिज्ञातोयदाखिलः॥ तदामेविद्यमानोपिनिष्फलःशरदभ्रवत् ॥ २७॥ चित्राग्निर्दाहोविज्ञातोयथादात्र्येषुनिष्फलः॥ तथाहंभावसर्गादिज्ञातंनिष्फलतामियात् ॥ २८ ॥ इतिमेहंकृतेस्त्यागेरागेचसमतायदा ॥ तदाव्योम्नइवाव्योम्नःसर्गेसर्गेचमेस्थितिः॥ २९ ॥ अहंभावस्यनैवाहंनाहंभावोममेतिच॥ तेनविद्धिचिदाकाशमेवेदमितिनिर्घनम् ॥ ३०॥ यथाममतथान्येषामपिबोधवतामिह॥ अग्नित्वमिवचित्राग्नेर्नास्त्ययंवोधविभ्रमः॥ ३१ ॥ नाहमस्मिनचान्योस्तिसर्वंनास्तीतिनिश्चये ॥ प्रकृतव्यवहारस्त्वंशिलामौनमयोभव॥ ३२॥

वइति ॥ पिशाचोबालकल्पितपिशाचइव ॥ २६ ॥ एतेनत्वत्प्रश्नःसमाहितइतिदर्शयति ॥ मायात्विति ॥ २७ ॥ दाहःअध्यस्तादहनक्रिया ॥ २८ ॥ समाधौत्यागेव्यवहारकालेरागेच अव्योम्नोमेघाडंबरातपवाय्वादिनानिरवकाशीकृतस्यस्थितिःसमेतिशेषः ॥ २९ ॥ संबंधत्यागमात्रेणाप्यहंतानबाधतेकिंपुनर्बाधितेत्याशयेनाह ॥ अहंभावस्येति ॥ नितरांघनंनिर्घनम् ॥ ३० ॥ अस्मिन्नर्थेसर्वविद्वदनुभवसंवादइत्याह ॥ यथेति ॥ अयंअहंभावादिः ॥ ३१ ॥ त्वमप्यहमिवांतःसर्वबाधेनाद्वितीयोभवेत्याह ॥ नाहमिति ॥ प्रकृतंव्यवहरतीतिप्रकृतव्यवहारः ॥ ३२ ॥

निर्देशोनिरवकाशःशिलाघनस्तद्वत् ॥ अद्यसर्गकाले ॥ आदितःसर्गप्राक्काले ॥ सार्वविभक्तिकस्तसिः ॥३३॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेसप्त
पंचाशत्तमःसर्गः ॥ ५७ ॥ ॥सर्वत्रसर्वसर्गश्रीःसदैवास्तिनचेतिच ॥ दृष्टिभेदेनपाषाणाख्यायिकार्थोत्रवर्ण्यते ॥१॥ प्रासंगिकेजीवन्मुक्ताहंकारस्याबाधकत्वेसमर्थितेप्रक्रांत
स्यसर्वत्रसर्वथासर्वमित्याद्यर्थस्यपाषाणाख्यायिकयासमर्थनंयत्प्रतिज्ञातंतदेवप्रष्टुंभूमिकांरचयति ॥ अहोइति ॥१॥ सर्वंसर्वत्रसर्वथासन्सर्वंसर्वत्रसर्वदाचसन्इतियत्वस्तुतंतदनु
भूतितोविमृश्यमानंसममविषममेकरसमेवपर्यवस्यति ॥ सर्वधर्मधर्मिणांदेशतःकालतोवस्तुतश्चसर्वभावेव्यावृत्तिव्यावर्त्तकताद्यसिद्धेरितिभावः ॥ २॥ तत्रप्रष्टव्यांशंदर्शयति॥
अयमिति ॥ इदंपाषाणाख्यानंकिंकेनांशेनसाम्यमभिप्रेत्योच्यते ॥ व्यावर्तकधर्मवतोरेवसाधारणधर्मेणसादृश्यप्रसिद्धेरितिभावः ॥ ३ ॥अयंवक्ष्यमाणप्रकारः॥ ४ ॥ नपाषा

आकाशकोशविशदाकृतिरेवतिष्ठनिर्देशवच्चिरमपकृतसर्वभावः ॥ अद्यादितश्चकिलचिन्मयमेवसर्वंनोदृश्यमस्तिशिवमेवमशेषमि
त्यम्॥ ३३॥ ॥इ०वा०वा०दे०मो०नि०उ०पाषाणो०विदितवेद्याहंकारविचारोनामसप्तपंचाशःसर्गः॥ ५७॥ ॥ ७॥
श्रीरामउवाच॥ ॥अहोनुविततोदाराविमलाविपुलाचला॥ भवताभगवन्भूत्यैभूयोदृष्टिरुदाहृता॥ १ ॥ सर्वथासर्वदासर्वंसर्वंसर्व
त्रसर्वदा॥ सदित्येवस्थितंसत्यंसमंसमनुभूतितः ॥ २ ॥ अयमस्मिमब्रह्मन्संशयस्तंनिवारय॥ किमिदंभगवन्नामपाषाणाख्यानमु
च्यते॥ ३॥ ॥श्रीवसिष्ठउवाच॥ ॥सर्वत्रसर्वदासर्वमस्तीतिप्रतिपादने॥ पाषाणाख्यानदृष्टांतोमयायंतवकथ्यते॥४॥ नीरंध्रैकघनां
गस्यपाषाणस्यापिकोटरे ॥ संतिसर्गसहस्राणिकथयेतिप्रदर्श्यते ॥ ५॥ भूताकाशेमहत्यस्मिन्खशून्यत्वमनुज्झति॥ संतिसर्गसहस्रा
णिकथयेतिप्रदृश्यते॥६॥ अंतर्गुल्मांकुरादीनांप्राणिवाय्वंबुतेजसाम्॥ संतिसर्गसहस्राणिकथयेतिप्रदृश्यते॥ ७॥ ॥श्रीरामउवाच॥
कुड्यादौसंतिसर्गौघाइतिचेत्कथ्यतेमुने॥ तत्खेविभांतिसर्गौघाइतिकिंनप्रदृश्यते॥ ८॥ ॥श्रीवसिष्ठउवाच॥ ॥एतत्तेवर्णितंराममुख्य
मेवमयाखिलम्॥ योयमालक्ष्यतेसर्गःसखएवखमास्थितम्॥ ९॥

णसाम्यंसर्वधर्मसंकरंवावक्तुंपाषाणाख्यायिकारभ्यतेकिंतुपाषाणोदराध्यासाधिष्ठानेब्रह्मणिअसंकीर्णतयैवसर्वजगदध्याससंभवसंभावनार्थेत्याह ॥ नीरंध्रेति ॥ कोटरेआंतरे
चिदाकाशे ॥ कथयाप्रस्तुताख्यायिकया इतिअयमर्थःप्रदर्श्यते ॥५॥ अथवाभावोदरचितीवशून्यात्मकाकाशरूपाभावाधिष्ठानचित्यप्यसंकीर्णतयासर्वजगदारोपःसंभवती
त्याशयेनाह ॥ भूताकाशेति ॥ ६ ॥ अयंन्यायःसर्वत्रयोजनीयइत्याशयेनाह ॥ अंतररिति ॥७॥ यदिकुड्यादिसर्वभावाभावावच्छिन्नचितिसर्वजगदध्यासआख्यायिकाभिप्रे
तस्तर्हिशुद्धेचिदाकाशेसर्वजगदध्यासइत्येवपक्षःकुतोनपरिगृह्यते येनाध्यस्तजगद्बाधेशुद्धमेवपरिशिष्यतइत्यपरमनुकूलंस्यादितिरामःपृच्छति ॥ कुड्यादाविति ॥ तत्तर्हिखेशु
द्धचिदाकाशे ॥ ८ ॥ सत्यमेषएवपक्षोमुख्यतयामेविवक्षितः शुद्धचिदाकाशःसहसानपरिचेतुंशक्यइतितदुपायतयाउपहितचित्यपिप्रत्येकंसर्वजगदध्यासोदर्शितइत्याशयेनो
त्तरमाह ॥ एतदिति ॥ संविदाकाशात्मकमेव ॥ ९ ॥

एवंदृश्यमात्रस्यैवब्रह्ममात्रत्वेअनुत्पत्तिरेवफलितेत्याह ॥ आदावेवेति ॥ परमार्थदृष्टेरित्यर्थः ॥ १० ॥ आरोपदृष्टौतुप्रतिभूतपरमाणुसर्वमारोप्यद्रष्टुंशक्यमपवाददृष्टौतुतद्वैप रीत्यमित्याशयेनाह ॥ नास्तीत्यादिना ॥ निर्विवरागाढभरितायानतादृशीअणुमात्रापिभूर्नास्ति सर्वापिसर्गभरितैवेत्यर्थः ॥ एवमग्रेपियोज्यम् ॥ ११ ॥ ततुतेजः ॥ १२ ॥ त त्सः ॥ १३ ॥ भूतानांप्रक्रमेअपांत्यागायोगाद्भूतेजसोरंतरालेनचापामणुरप्यस्तीत्यादिश्लोकोप्यूह्यः ॥ १४ ॥ महाभूतेतिपंचानांसमुदितरूपव्यपदेशः ॥ १५ ॥ १६ ॥ ब्रह्म णोहिरण्यगर्भस्यसूक्ष्मभूतोपाधेः ॥ १७ ॥ सर्गेषुतत्कृतेषुभुवनभूतग्रामेषु ॥ तथासतियत्फलितंतदाह ॥ ब्रह्मेति ॥ १८ ॥ अग्न्यर्कयोर्यैऔष्ण्येतयोरिव ॥ १९ ॥ सर्जनात्सर्गोबृं हणाद्ब्रह्मेतिसृजिबृंहिक्रिययोःपरस्परंभेदाभावादाधाराधेयभावस्यदुर्वचत्वाच्चनक्रियापिस्वरूपाद्यतिरिच्यतइतिसर्गब्रह्मादिशब्दाःप्रवृत्तिनिमित्तधर्मरूपस्वार्थपरिवर्जिताःसंतः

आदावेवहिनोत्पन्नमद्यापिनचविद्यते ॥ दृश्यंयच्चावभातीदंतद्ब्रह्मब्रह्मणिस्थितम् ॥ १० ॥ नास्तिभूरणुमात्रापिसर्गैर्निर्विवरानया ॥ नचकचनविद्यंतेसर्गाब्रह्मखमेवते ॥ ११ ॥ नतेजसोणुरप्यस्तिसर्गैर्निर्विवरोनयः ॥ नचकचनसर्गास्तेसंतिब्रह्मखमेवतत् ॥ १२ ॥ नवा योरणुरप्यस्तिसर्गैर्निर्विवरोनयः ॥ नचकचनविद्यंतेसर्गाब्रह्मखमेवतत् ॥ १३ ॥ खंनाणुमात्रमप्यस्तिसर्गैर्निर्विवरंनयत् ॥ नचकच नसर्गास्तेसंतिब्रह्मखमेवतत् ॥ १४ ॥ नसामहाभूततास्तिसर्गैर्निर्विवरानया ॥ नचकचनविद्यंतेसर्गाब्रह्मखमेवतत् ॥ १५ ॥ शैलानां नाणुरप्यस्तिससर्गैर्योननिर्घनः ॥ नचकचनविद्यंतेसर्गाब्रह्मखमेवतत् ॥ १६ ॥ ब्रह्मणोनाणुरप्यस्तिसर्गैर्निर्विवरोनयः ॥ नचकचनस र्गास्तेसंतिब्रह्मखमेवतत् ॥ १७ ॥ सर्गेषुनाणुरप्यस्तिनब्रह्मात्मैवयःसदा ॥ ब्रह्मसर्गास्तथेत्येषवाचिभेदोनवस्तुनि ॥ १८ ॥ सर्गाएवपरंब्र ह्मपरंब्रह्मैवसर्गता ॥ मनागप्यस्तिनद्वैतमत्राग्न्यकौष्ण्ययोरिव ॥ १९ ॥ इमेसर्गाइदंब्रह्मतेऽत्यंतावाच्यदृष्टयः ॥ विदार्यदारुरववद्भांत्यर्थ परिवर्जिताः ॥ २० ॥ द्वैतमैक्यंचयत्रास्तिनमनागपितत्रते ॥ सर्गब्रह्मादिशब्दार्थाःकथंकस्येवभांतुके ॥ २१ ॥

कुठारादिनाविदार्यैकाष्ठेयेदारुणोरवाःप्रसिद्धास्तद्वदर्थपरिवर्जिताःसंतोलक्षणयाअत्यंतमवाच्येदृष्टिःप्रतीतिर्येभ्यस्तथाविधाभांतीत्यर्थः ॥ अथवादीर्यतइतिदारुतदेवविदार्य मितिपर्यायप्रायौयौरवौशब्दौतद्वद्भिन्नार्थपरिवर्जिताभांतीत्यर्थः ॥ २० ॥ मास्तुपरमार्थेतेषामर्थभेदस्तत्रद्वैतैक्ययोरभावात् व्यवहारेतुब्रह्मैकंसर्गानानेत्यर्थभेदसत्वाद्भिन्ना र्थाःकिंनस्युस्तत्राह ॥ द्वैतमिति ॥ यत्रव्यवहारेद्वैतमैक्यंचास्तितत्रापिसर्गब्रह्मादिशब्दार्थामनागपिनभांति ॥ तेहिद्वैतात्मकस्यद्रष्टुर्भायुरद्वैतात्मकस्यवा ॥ आद्येऽन्यस्यतस्यक थंभांतुद्वितीयेकस्येवभांतुकेकिंस्वभावाभांतु ॥ नह्यद्वैतभानाद्भास्यवैलक्षण्यंसुवचमितिभावः ॥ अथवाअत्यंतावाच्यदृष्टितामेवप्रकटयति ॥ द्वैतमिति ॥ यत्रवस्तुनिद्वैतमै क्यंचमनागपिनास्तितत्रेत्यन्वयः ॥ २१ ॥

१ विद्यंतेसर्गाब्रह्मेत्यपिक्वचित्पाठः

अतएवतत्त्वविदोव्यवहारकालेपितत्तथैवास्तेइत्याह ॥ शांतमिति ॥ २२ ॥ वर्णितंपाषाणाख्यायिकातात्पर्यमुपसंहरति ॥ निर्वाणमिति ॥ हेअंगरामत्वंजगत्ताहक्समवलोकय ॥ अथजागरानंतरंजंतुमनसिस्वमेदृष्टंयादृग्व्यवहारजालमीषत्स्मर्यमाणमप्यात्ममात्रशेषमित्यर्थः ॥२३॥ ॥ इतिश्रीवासिष्ठ॰म॰रा॰तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेअष्टपंचाशत्तमःसर्गः ॥५८॥ ॥७॥ ॥ समाधिविरमेसूक्ष्मध्वनिश्रवणमीर्यते ॥ तन्मूलान्वेषणध्यानेऽनंतकोटिजगत्तथा ॥१॥ एवंसर्गद्वयेनप्रासंगिकेप्रश्नविषयेउपवर्णिते पुनराख्यायिकाशेषंश्रोतुकामोरामःपृच्छति ॥ अनंतरमिति ॥ वर्षशतेनध्यानात्प्रबुद्धस्यतवप्राग्वर्णितेच्छांगनासहिताहंकारपिशाचप्रसरानंतरंकिंवृत्तमितिप्रश्नः ॥ १ ॥ निःस्वनंशब्दम् ॥ मृदुव्यक्तानिनातिस्पष्टान्यक्षराणिपदानिचयत्र ॥ तत्कुतः ॥ यतोऽयंनिःस्वनोवाच्यानुगःपदार्थप्रतिपादनसमर्थोवाक्यार्थबोधनसमर्थश्चन ॥ २ ॥ स्त्रीकंठप्रभवप्र

शांतमेकमनाद्यंतमिदमच्छमनामयम् ॥ व्यवहारवतोप्यंगज्ञस्यमौनंशिलाघनम् ॥ २२ ॥ निर्वाणमेवमखिलंनभएवदृश्यंत्वंचाहमद्रिनिचयाश्चसुरासुराश्च ॥ तादृग्जगत्समवलोकययादृगंगस्वप्नेऽथजंतुमनसिव्यवहारजालम् ॥ २३ ॥ ॥इ॰वा॰वा॰दे॰मो॰नि॰उ॰पाषा॰सर्गब्रह्मत्वप्रतिपादनंनामाष्टपंचाशःसर्गः ॥५८॥ ॥७॥ ॥श्रीरामउवाच॥ ॥अनंतरंनभःकोशकुटीकोटरतोमुने ॥ तवध्यानात्प्रबुद्धस्यवृत्तंवर्षशतेनकिम् ॥ १ ॥ श्रीवसिष्ठउवाच ॥ ॥ततोध्यानात्प्रबुद्धोहंश्रुतवांस्तत्रनिःस्वनम् ॥ मृदुव्यक्तपदंद्व्यंनचवाच्यानुगोयतः ॥ २ ॥ स्त्रीस्वभावादिवमृदुमधुरंवानिनादिवा ॥ स्वल्पांगत्वादनिर्ह्रादिमयातद्वाक्यमूहितम् ॥ ३ ॥ इंदिंदिररुताकारंतंत्रीरणितरंजनम् ॥ नरोदनंचपठनंविसकोशसमस्वनम् ॥ ४ ॥ तदाकर्ण्यांशुतत्रेदमहंचिंतितवानथ ॥ शाब्दिकान्वीक्षणात्पश्यन्दिशोदशसविस्मयः ॥५॥ व्योम्नोयंसिद्धसंचारमार्गशून्यान्यनंतरम् ॥ भागोयोजनलक्षाणिसमतिक्रम्यसंस्थितः ॥ ६ ॥ तदिहेदृग्विधस्यस्यात्कुतःशब्दस्यसंभवः ॥ शाब्दिकंनचपश्यामियत्नेनापिविलोकयन् ॥ ७ ॥ अनंतमिदमाशून्यंपुरोमेनिर्मलंनभः ॥ इहभूतंप्रयत्नेनप्रेक्ष्यमाणंनदृश्यते ॥ ८ ॥

युक्तस्वभावविशेषादिवमृदुमधुरंनिनादिअनुरणनशीलंच ॥ स्वल्पांगत्वादतारत्वादनिर्ह्रादिअदूरश्रवमितियावत् ॥ ३ ॥ इंदिंदिरोभ्रमरस्तदीयंरुतंध्वनिस्तदाकारम् ॥ तंत्रीवीणातद्रणितस्यरंजनंरक्तिप्रदम् ॥ नबालरोदनप्रायंनापिप्रौढपठनप्रायम् ॥ बिसकोशेप्रसिद्धभ्रमरस्वनसमस्वनम् ॥ ४ ॥ शाब्दिकस्यशब्दकर्तुरन्वीक्षणादन्वेषणाद्दशदिशःपश्यन् ॥ शब्दददुर्दुरंकरोतीतिठक् ॥ ५ ॥ कुतःसविस्मयःकिंवाचिंतितवानसितदाह ॥ व्योम्नइत्यादिना ॥ सिद्धानामपिसंचारयोग्यैर्मार्गैःशून्यानियानियोजनलक्षाणितानिसमतिक्रम्यानंतरंतदूर्ध्वमयंव्योम्नोभागःसंस्थितइत्यन्वयः ॥ ६ ॥ तत्तादृशेइहएकांतस्थानेईदृग्विधस्यस्त्रीवाक्यसदृशस्य ॥ शाब्दिकंशब्दकर्त्तारम् ॥ ७ ॥ भूतंप्राणिमात्रम् ॥ प्रयत्नेनापिप्रेक्ष्यमाणमन्विष्यमाणम् ॥ ८ ॥

शब्देश्वरंशब्दोच्चारणसमर्थंयदानपश्यामितदा ॥ इदंवक्ष्यमाणम् ॥ ९ ॥ अहंप्रथममुपाधित्यागेनचिदाकाशएवभूत्वातदध्यस्ताव्याकृताकाशेनैकतांगतःसंस्तत्कार्यभूताकाशगुणंशब्दंतदर्थांश्चतस्मिन्नाकाशकोशकेविद्यमानान्साक्षात्करोमिअनुभविष्यामीतियावत् ॥१०॥ तदेवसोपायमाह ॥ देहाकाशमित्यादिना ॥ व्योम्नाअव्याकृताकाशेन ॥ वार्जलंबिंदुरंबुनाजलसामान्येनेव ॥ ११ ॥ १२ ॥ ऐंद्रियानिंद्रियसंबंधिनोबाह्यार्थसंस्पर्शान्निरोधेनत्यक्त्वा ॥ आंतरानंतःकरणचतुष्टयविषयान्मंतव्यादीनपिमननादिनिरोधेनत्यक्त्वा ॥ १३ ॥ बुद्धितत्त्वपदंगतःसंस्तदपिसंत्यज्यचिदाकाशेवास्तवरूपेस्थितःसन्स्वाध्यस्तजगज्जालप्रतिबिंबानामेकदर्पणःसंपन्नः ॥ १४ ॥ अंबुनाजलसामान्येनअंबु

यदेतिचिंतयित्वाहंभूयोभूयोविलोकयन् ॥शब्देश्वरंनपश्यामितदाचिंतितवानिदम् ॥ ९ ॥ आकाशएवभूत्वाहमाकाशेनैकतांगतः ॥ आकाशगुणशब्दार्थान्करोम्याकाशकोशके ॥ १० ॥ देहाकाशमिहस्थाप्यध्यानेनेहयथास्थितम् ॥ चिदाकाशवपुर्व्योम्नायाम्यैक्यंवारिवांबुना ॥ ११ ॥ चिंतयित्वेत्यहंत्यक्त्वादेहंपद्मासनस्थितः ॥ आसंसमाधिमाधातुंपुनरामीलितेक्षणः ॥ १२ ॥ त्यक्त्वाबाह्यार्थसंस्पर्शानैंद्रियानांतरानपि ॥ चित्ताकाशोहमभवंसंवित्स्पंदमयात्मकः ॥ १३ ॥ क्रमात्तदपिसंत्यज्यबुद्धितत्त्वपदंगतः ॥ संपन्नोहंचिदाकाशेजगज्जालैकदर्पणः ॥ १४ ॥ ततस्तेनस्वभावेनभूतव्योमैकतामहम् ॥ संप्रयातोंबुनैवांबुसौरभंसौरभेणवा ॥ १५ ॥ संपन्नोयमहाकाशंव्याप्यानंतोथसर्वगः ॥ अनाकारोप्यनाधारःसर्वार्थाधारतांगतः ॥ १६ ॥ अहंत्रैलोक्यवृंदानिसंसाराणांशतानिच ॥ तत्रब्रह्मांडलक्षाणिपश्याम्यगणितान्यपि ॥ १७ ॥ परस्परमदृष्टानिमिथःस्वान्यमलानिच ॥ नानाचारविचाराणिशून्यान्येवपरस्परम् ॥ १८ ॥ स्वप्नरूपाणिसुप्तानांतुल्यकालंनृणामिव ॥ महारंभानुमृष्टानिशून्यानिचपरस्परम् ॥ १९ ॥ जायमानानिनश्यंतिवर्द्धमानानिभूरिशः ॥ वर्त्तमानान्यतीतानिभविष्यंतिचसर्वशः ॥ २० ॥ अनेकचित्रजालानिमहाभित्तीनिखानिच ॥ मनसेवोग्रराज्यानिकृतानिविविधैर्जनैः ॥ २१ ॥ निरावरणरूपाणितथैकावरणानिच ॥ पंचावरणयुक्तानिषडेकावरणानिच ॥ २२ ॥

समुद्रादिजलमिव ॥ १५ ॥ तस्मिन्भूताकाशेतत्कार्यसर्वंजगदवलोकनायचिदाकाशाभेदकल्पनमाह ॥ संपन्नइति ॥ तथाचासंगाद्वयत्वादनाधारोप्यहंसर्वाधारतायोग्यभूताकाशाभेदात्सर्वार्थाधारतांगतः ॥ १६ ॥ तत्रतदवस्थापन्नेचिदाकाशे ॥ १७ ॥ मिथःअन्योन्यदृष्ट्यास्वानिअव्याकृताकाशमात्ररूपाणि ॥ अतएवपरस्परमदृष्टानि ॥ १८ ॥ तत्रदृष्टांतमाह ॥ स्वप्नेति ॥ तुल्यकालंसुप्तानांजनानांस्वप्नरूपाणीव ॥ एकदृशामहारंभाण्यपरदृशाअनुमृष्टानि ॥ अतएवशून्यान्यशून्यानिच ॥ १९ ॥ २० ॥ महाभित्तीन्यनेकचित्रजालानिखानिनिर्भित्तीनिच ॥ २१ ॥ तत्रस्वप्नवद्दृष्टसृष्टिपुब्रह्मांडावरणतत्संख्यादिनियमोपिनास्ति ॥ यस्ययावद्विषयेवासनाविर्भूतातंप्रतितावत्सर्गस्यैवकल्पनादित्याशयेनाह ॥ निरावरणेत्यादिना ॥ २२ ॥

पंचीकृतानांपंच अपंचीकृतानांपंचेतिदशावरणचित्राणि ॥ तैःसंहृतन्मात्राण्यहंकारोमहत्तत्वंप्रकृतिश्चेतिसांख्यकल्पनयाषोडशावरणानि ॥ तेषामेवतत्त्वगणनयाचतुर्विंश त्यावृतीनि शैवकल्पनयाषट्त्रिंशत्तत्त्वलक्षणैःखैराकाशकल्पैरावरणैरावृतानिच ॥ २३ ॥ एकैकानिपृथ्व्यादीन्येवभूतानियेषु ॥ २४ ॥ एवंपृथिव्यादिद्वित्रिचतुर्भूतयुक्तानिच ॥ कालदिशोःसावयवत्वेनभूतत्वकल्पनेसप्तमहाभूतानि ॥ २५ ॥ सिद्धविद्याधरगंधर्वयक्षराक्षसादिकल्पनावैचित्र्याणिमनुष्यबुद्ध्यासंभावयितुमप्यशक्यानीत्याशयेनाह ॥ त्वादृशेति ॥ त्वादृशानामनुभवाभोगेविरुद्धाअत्यंतमसंभाव्याः ॥ अतिशयितदशाअतिदशाभूतानांसौक्ष्म्यवैचित्र्यपरिणतिभेदायासुतानि ॥ २६ ॥ मीलितसर्गाणिप्रल

दशावरणचित्राणिषोडशावरणानिच॥ चतुर्विंशत्यावृतीनिषट्त्रिंशत्खावृतानिच॥२३॥ शून्यानिभूतपूर्णानिपंचभूतमयान्यपि॥ एकपृथ्व्यादिभूतानिचतुःपृथ्व्यादिकानिच॥२४॥ त्रिःपृथ्व्यादीनिचान्यानिद्विःपृथ्व्यादीन्यथापिच॥ तथासप्तमहाभूतान्येकजातिमयानिच॥२५॥ त्वादृशानुभवाभोगविरुद्धातिदशानितु॥तथानित्यांधकाराणिसूर्यादिरहितानिच॥२६॥तथामीलितसर्गाणिएकनाथावृतानिच॥ विलक्षणप्रजेशांशविचित्राचारवंतिच॥२७॥ तथानिर्वेदशास्त्राणिनिःशास्त्राणितथैवच॥ कृमिक्रमसमारंभदेवादिप्राणिमंतिच॥२८॥ जात्यातुपारंपर्येणसंकेताचारवंतिच॥ तथानित्यप्रकाशानिज्वलिताग्निमयानिच॥२९॥ तथाजलैकपूर्णानिपवनैकमयानिच॥ स्तब्धानिपरमाकाशेवहंतिचतथानिशम्॥३०॥ जायमानानिपुष्यंतिपरिपुष्टानिचाभितः॥ तिर्यग्गच्छंतिचान्यानिपूर्णसर्वमयान्यपि॥३१॥ देवमात्रैकसर्गाणिनरमात्रमयानिच॥ दैत्यद्वंद्वमयान्येवकृमिनिर्विवराणिच॥ ३२॥ अंतरंतस्तदंतश्वस्वकोशेप्यणुकंप्रति॥ जातानिजायमानानिकदलीदलपीठवत्॥३३॥ परस्परमदृष्टानिनानुभूतानिवैमिथः॥ सैनिकस्वप्नजालानिजातानीवमहांत्यपि॥३४॥ विविधान्यप्यनंतानिस्वच्छाकाशात्मकान्यलम्॥ अन्योन्यमन्यवृत्तीनिनमिथोन्यस्थितीनिच॥ ३५॥

यसुषुप्तिप्रायाणि ॥ सर्गादौएकेनैवनाथेनहिरण्यगर्भादिनाआवृतान्यधिष्ठितानि ॥ प्रजेशाःप्रजापतयस्तदंशादेवादिगणास्तेषांविचित्राचारैस्तद्वंति ॥ २७ ॥ तदेवप्रपंचयति॥ तथेत्यादिना ॥ उदुंबरकृमिसदृशसमारंभैर्देवादिभिःप्राणिमंति ॥ २८ ॥ क्वचित्कलियुगारंभाद्वेदशास्त्रोच्छेदेब्राह्मणादिजात्यापारंपर्यमात्रेणसंकेतितब्राह्मणाद्याचारवंति॥२९॥ कानिचित्परमाकाशेस्तब्धानिनिश्चलानिकानिचिद्वहंतिचलंतिच ॥ ३० ॥ पुष्यंतिवर्द्धमानानि ॥ पूर्णसर्वंसौम्यमयानि ॥ ३१ ॥ ३२ ॥ अणुकंपरमाणुमपिप्रतिअंतरंतस्तदंतश्चकल्पितेस्वकोशेपिजातानीत्याद्यन्वयः ॥ ३३ ॥ सैनिकानांस्वप्नजालानीवपरस्परमदृष्टानि ॥ ३४ ॥ तथाविविधानीत्यादियोज्यम् ॥ अन्यवृत्तीनिभिन्नार्थक्रियाणि ॥ मिथोऽन्यस्थितीनिनसमस्थितिकानिचेत्यर्थः ॥ ३५ ॥

---

१ इदंविचारणीयम

93

यानिमिथःअनंतानिअपरिच्छेद्यब्रह्मस्वभावानि ॥ धर्मानंत्याद्वाअनंतानि ॥ भेदेप्यन्योन्यस्यैवसन्निवेशोयेषांतानि ॥ प्रत्यभिज्ञायामन्योन्यात्मकानिच ॥ ३६ ॥ एकब्रह्मणै रपरत्रगमनादन्योन्यपरलोकानिपरस्परंप्रत्यंतर्द्धानशक्तियोगान्मिथःसिद्धनगरप्रायाणिच ॥ ३७ ॥ अतएवान्यस्यान्यत्रवर्णनेअपरिनिष्ठितमतीनामगम्यत्वादसमंजसरूपाणि भांतीत्याह ॥ त्वादृशेति ॥ अनुभवानामीहानांप्रयत्नानांचागम्यान्यविषयभूतान्यभ्यागतान्यभिमुखमागतानिसन्निहितान्यपीतियावत् ॥ तर्हितानित्वादृशांकथंनैर्ज्ञास्यंतेत त्राह ॥ असमंजसेति ॥ ३८ ॥ चिदादित्यस्यांऽशुमंडलप्रायेसर्वतःप्रसृतेचैतन्येयेअणवोजालसूर्यमरीचिषुप्रसिद्धास्तद्वत्सेष्यमाणानिप्रसिद्धिभांजि ॥ शेष्यमाणानीतिपाठेप रिशेषभांजि ॥ तथापरमार्थश्रियोमोक्षसाम्राज्यलक्ष्म्याःकुंडलेताटंकप्रायेव्योम्निअव्याकृताकाशेभूताकाशेचविचित्ररत्नरश्मिजालप्रायाणि ॥ ३९ ॥ ४० ॥ तेपुकानिचि

मिथश्चान्यान्यशास्त्राणिमिथोनंतानियानिच ॥ अन्योन्यसन्निवेशानिमिथोन्योन्यानियानिच ॥ ३६ ॥ अन्योन्यंपरलोकानिमिथः सिद्धपुराणिच ॥ अन्यादृशमहाभूतान्यन्यादृग्दिग्गिरीणिच ॥ ३७ ॥ त्वादृशानुभवेहानामगम्याभ्यागतानिच ॥ असमंजसरूपाणिक थ्यमानानिमादृशैः ॥ ३८ ॥ अणुवत्सेष्यमाणानिचिदादित्यांशुमंडले ॥ परमार्थश्रियोव्योम्निरश्मिजालानिकुंडले ॥ ३९ ॥ कानिचि त्तानितान्येवभूत्वाभूत्वाभवंत्यलम् ॥ कानिचित्तादृशान्येवजातानिवनपर्णवत् ॥ ४० ॥ अन्योन्यत्वाच्चसदृशान्यन्यानिसदृशान्यपि ॥ कंचित्कालंसुसदृशान्यन्यान्येवचकानिचित् ॥ ४१ ॥ फलानितान्यनंतानिपरमार्थमहातरोः ॥ अनन्यान्येवचान्यानितन्मयान्येववै ततः ॥ ४२ ॥ कानिचित्स्वल्पकल्पानिदीर्घकल्पानिकानिचित् ॥ अन्यान्यनियतंभूरिनियतंभूरिकानिचित् ॥ ४३ ॥ अन्यान्यज्ञातकाला नियदृच्छावशतःस्वयम् ॥ जायमानानिपुष्टानिसुस्थिराणिस्थितानिच ॥ ४४ ॥ तानिशून्यत्वजालानिपरमाकाशकोशके ॥ अपरि ज्ञातकालानिरूढान्यज्ञातदोषके ॥ ४५ ॥ अब्ध्यर्काकाशमेर्वादिशतैरावलितान्यलम् ॥ चिच्चमत्कारखेस्वप्नजालान्याभांतिचाविलम् ॥ ४६ ॥ अनुभूतेर्भ्रमात्मत्वात्कारणानामभावतः ॥ पृथ्व्यादीनामहेतूनामत्यंतंसंत्यसंतिच ॥ ४७ ॥

त्एकस्यैवचितिसर्वेषामध्यासादपृथक्सत्वेनान्योन्यात्मकत्वात्सदृशान्यन्यादृशान्यपि ॥ एवंसदृशान्यपिकंचित्कालंसुसदृशानि ॥ कानिचिदन्यान्यत्यंतविसदृशान्येव ॥ मा यायाअघटितघटनापटीयस्त्वादितिभावः ॥ ४१ ॥ वृक्षफलवद्वातत्रभेदाभेदकल्पनेत्याह ॥ फलानीति ॥ ४२ ॥ अनियतंदेशकालवस्तुस्वभावनियमरहितमेवभूरिबहूनि ॥ कानिचिन्नियतंतद्विपरीतमित्यर्थः ॥ ४३ ॥ सूर्याद्यभावादज्ञातकालानि ॥ ४४ ॥ तानिकिंसत्यानिनेत्याह ॥ तानीति ॥ कदाप्रभृतितर्हिरूढानितत्राह ॥ अपरिज्ञातेति ॥ अ नादीनीत्यर्थः ॥ अज्ञातमज्ञानंतदेवदोषोयस्मिंस्तथाविधेप्रतीचिरूढानि ॥ ४५ ॥ चिच्चमत्काररूपेखेचिदाकाशे ॥ आविलंरजस्तमःकलुषितंयथास्यात्तथा ॥ ४६ ॥ अहेतू नांपृथ्व्यादीनामनुभूतेर्भ्रमात्मत्वात्तानिजगंत्यत्यंतमधिष्ठानात्मनासंतिस्वरूपेणत्वसंतिच ॥ ४७ ॥

॥४८॥ अतश्चतथेत्याह ॥चित्संकल्पेति ॥४९॥ ब्रह्मोदुंबरद्रुमेसुरासुरोरगनरादयोमशकाः ॥ ब्रह्मांडानिनुभोगवैचित्र्यरसपूर्णानिफलानि॥५०॥अथवाजगंतिशुद्धस्यकेवलस्य चित्तत्त्वलक्षणबालस्यसंकल्पनगराणि ॥ ५१ ॥ संकल्पनगरत्वेदाढर्यैकोहेतुस्तमाह ॥ त्वमिति ॥ अहंताद्यभिमानधियाबलेनअलमत्यंतंदृढानिसंपन्नानि ॥ पंकमयानिक्रीडनकानीव॥ चकारोहिमेनघृनकरकादीनीवेतिदृष्टांतांतराभ्यूहनार्थः॥५२॥ नित्यमभीक्ष्णंतृमयात्तृभिमत्या रसोरागोद्रवत्वंचतच्छालिन्या कर्मफलावश्यंभावनियत्यावृत्तानि निष्पन्नशाखोपशाखानि ॥५३॥ सृष्टिश्रुतिदृशामहद्ब्रह्मैवकर्तृयेषांतानि ॥ अपूर्वमनपरमित्यादिश्रुतिदृशातुअकर्तृणिअकर्तृकाणि॥५४॥तदन्यद्वातदन्यदिव ॥ मणीवोष्ट्रस्ये

मृगतृष्णांबुभरवद्द्विचंद्रव्योमवर्णवत्॥ संपन्नानिनसत्यानिसत्यान्यप्यनुभूतितः॥ ४८ ॥ चित्संकल्पनभस्येवभासमानानिभूरिशः ॥ वासनावातनुन्नानिविलुठंत्यात्मचेष्टितैः॥४९॥ सुरासुरादिमशकावद्बृह्मोदुंबरद्रुमे॥ फलानिरसपूर्णानिघूर्णमानानिमारुतैः॥ ५०॥ अभिजातस्वभावस्यसर्गारंभकरस्यच॥ शुद्धचित्तत्त्वबालस्यसंकल्पनगराणिखे॥ ५१॥ त्वमहंसइदंचेतिधियाबलदृढान्यलम्॥ संपन्नान्यर्कदीप्त्येवपंकक्रीडनकानिच॥ ५२ ॥ वृत्तानिरसशालिन्यानियत्यानित्यतृमया ॥ वनान्युग्रफलानीववसंतरसलेखया ॥ ५३ ॥ महाकर्तृण्यकर्तृणिनकृतान्येवखानिवा॥ स्वयंसंपन्नरूपाणिचिह्नोम्न्येवकृतानिवा ॥ ५४ ॥ परमार्थमयान्येवतदन्यद्वोदितान्यपि॥ अलब्धान्येवलब्धानिसदाऽसंत्येवसंतिच ॥ ५५ ॥ चतुर्दशदशैकादिविधभूतगणानिच ॥ पुनस्तान्येवतान्यंतरन्यान्यन्यान्यथोबहिः ॥५६॥ नरकस्वर्गपातालबंधुमित्रमयान्यपि॥ महारंभमयान्येवशून्यानिपरमार्थतः॥५७॥ क्षीरांबुधेर्जलानीवस्नेहसाराणिसर्वतः॥ तरंगभंगुराण्यंतर्बहिश्चावृत्तिमंतिच ॥ ५८ ॥ आभासमात्ररूपाणितेजस्यात्मविवस्वतः ॥ जातानीवस्वतस्तानिस्पंदनानिनभस्वतः ॥ ५९ ॥ वृक्षरूपाणिपत्राणांबुद्ध्यहंकारचेतसाम्॥ असतामप्यसंत्येवस्वप्नेन्यस्तनृणामिव॥ ६० ॥ पुराणवेदसिद्धांतकल्पनातल्पपालिषु॥ घननिद्राणिसुप्तानिविभ्रांतिशवतामिव ॥६१॥

तिवदिवार्थेवाशब्दः ॥ सदाअसंत्येवेतिच्छेदः ॥ ५५ ॥ भुवनसंख्ययाचतुर्दश देवयोनिमात्रसंख्ययादशविधाःमनुष्याद्यैकैकजात्याएकविधाआदिपदाद्यथासंभवंद्व्यादिनियतविधाभूतगणायेषु ॥ ५६ ॥ ५७ ॥ स्नेहोघृतंप्रीत्यतिशयश्चतत्साराणि आवृत्तिःपरिवृत्तिस्तद्वंतिच ॥५८॥ स्वतोजातानिनभस्वतोवायोःस्पंदनानीव ॥ ५९ ॥ बुद्ध्यहंकार चित्तरूपाणांपत्राणामाश्रयभूतवृक्षरूपाणि ॥ असतांस्वातिरिक्तद्रष्टृणामपिसाधारणायमानानिअसंत्येवयथास्वप्नेनितरामसतामसतांस्वातिरिक्तनृणांदृश्यानीत्यर्थः ॥६०॥ पुराणादिप्रसिद्धव्रतदानयज्ञादिफलावश्यंभावकल्पनालक्षणेषुतल्पवृत्तिषुस्वप्नेषुदृढविश्वासघननिद्राणिआत्मस्वरूपस्यात्यंतमप्रबोधाच्छवतामिवविभ्रंति ॥ अभ्यस्तान्नुम्छांदसः ॥ ६१ ॥

---

१ संधिरार्षः

परमार्थोब्रह्मतल्लक्षणेमहारण्येमायोपहितचिद्गंधर्वेणकृतानिसूर्यलक्षणैर्दीपकैर्दीप्तानिगृहाणीत्युत्प्रेक्षा॥६२॥हेरामअहंतदातस्मिन्समाधिकालेअंनतेचिन्नभसिनिर्निमित्तंप्रजायमानानिनिर्निमित्तंचविशीर्यमाणानितिमिराक्षदृष्टकेशोंड्रकानीवभ्रांतिमात्रसिद्धानिजगंतिअपश्यंदृष्टवानित्यर्थः॥६३॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाण०उत्तरार्द्धेएकोनषष्टितमःसर्गः॥५९॥ ॥७॥ ॥ समाधौशब्दकारिण्याःस्त्रियोदर्शनमीर्यते ॥ तामनादृत्यभूयोपिविचित्रजगदीक्षणम्॥१॥तादृशंप्रागुक्तप्रकारंशब्दकारणंप्रविचारयन्न्विष्यन् ॥ असंरुद्धसंविदाकाशतामपरिच्छिन्नचिदाकाशताम् ॥१॥ आर्यात्वंआर्याख्यच्छंदोलक्षणलक्षितत्वम् ॥ यथाहुः ॥ यस्याःप्रथमेपादेद्वादशमात्रास्तथातृतीयेपि ॥

परमार्थमहारण्येचिद्गंधर्वकृतानिवै ॥ सूर्यदीपकदीप्तानिगृहाणिगहनात्मनि॥ ६२ ॥ प्रजायमानानिनभस्यनंतेविशीर्यमाणानिचनिर्निमित्तम्॥ तदात्वहंवैतिमिराक्षदृष्टकेशोंड्रकानीवजगंत्यपश्यम्॥ ६३ ॥ ॥ इ०वा०महारामायणेवा०दे०मो०नि०उ०पा०जगज्ज्वालवर्णनंनामैकोनषष्टितमःसर्गः॥५९॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥ ततोहमभितोभ्रांतस्तादृशंप्रविचारयन्॥ बहुकालमसंरुद्धसंविदाकाशतांगतः॥ १ ॥शब्दंपश्चात्तमश्रौषमहंवीणास्वनोपमम्॥ क्रमात्स्फुटपदंजातंततआर्यात्वमागतम् ॥ २॥ शब्ददेशपतद्दृष्टिर्दृष्टवान्वनितामहम्॥ पार्श्वेकनकनिष्पंदप्रभयाभासितांबराम् ॥ ३॥ आलोलमाल्यवसनामलकाकुललोचनाम्॥ लोलद्धम्मिल्लवलनामन्यांश्रियमिवागताम्॥ ४ ॥ कांतकांचनगौरांगींमार्गस्थनवयौवनाम् ॥ वनदेवीमिवामोदिसर्वावयवसुंदरीम्॥ ५॥ सापूर्णचंद्रवदनापुष्पप्रकरहासिनी॥ यौवनोद्दामवदनापक्ष्मलक्षणशालिनी॥६॥ आकाशकोशसदनाशशांककरसुंदरी॥ मुक्ताकलापरचनाकांतामदनुसारिणी॥ ७॥ स्वरेणमधुरेणैवमार्यामार्यविलासिनी॥ पपाठाकठिनंवामामत्पार्श्वेमृदुहासिनी॥ ८॥ असदुचितरिक्तचेतनसंसृतिसरितिप्रमुह्यमानानाम्॥ अवलंबनतटविटपिनमभितोनौमिभवंतमेवमुने॥ ९ ॥

अष्टादशद्वितीयेचतुर्थकेपंचदशसार्येति ॥ २ ॥ शब्दस्यप्रभवप्रदेशेपतंतीदृष्टिर्योगदृष्टिर्यस्यतथाविधःसन्वनितांस्त्रियम् ॥ पार्श्वेइतिपूर्वोत्तरान्वयि ॥ ३ ॥ तामेववर्णयति ॥ आलोलेत्यादिना ॥ लोलत्चंचलंधम्मिल्लवलनंकेशबंधनंयस्याः ॥ ४ ॥ मार्गस्थमिवगच्छत्नवयौवनंयस्याः ॥ ५॥६॥ आकाशकोशःप्राग्वर्णितभूताकाशःसदनंयस्याः ॥ मामनुसरतितच्छीला ॥ ७ ॥ सावामामत्पार्श्वेअकठिनंमृदुयथास्यात्तथामधुरेणस्वरेणएवंवक्ष्यमाणरूपामार्यांपपाठ ॥ ८ ॥ तामेवार्यामुदाहरति ॥ असदिति ॥ हेमुने अहंअसतांखलानामुचितैरागद्वेषकामलोभमोहादिदोषैःरिक्ताविरहिताचेतनाचेतोयस्यतथाविध ॥ तथासंसृतिलक्षणायांसरितिप्रमुह्यमाणानामवलंबनभूतंतटविटपिनंतीरवृक्षभूतंभवंतमेवअभितोनौमिप्रशंसामिनान्यमित्यर्थः ॥ ९ ॥

तच्छ्रुत्वात्वंकिमकार्षीस्तत्राह ॥ इतीति ॥ १० ॥ तदुत्तराद्र्शकंस्फुटयति ॥ ततइति ॥ ११ ॥ अनादृत्येतिपदंविहर्तुमितिपदंचव्याचष्टे ॥ ततइति ॥ खेशून्यस्वभावेस्थिताम् ॥ व्योमात्माचिदाकाशरूपः ॥ १२ ॥ खेस्थितामित्येतदुपपादयन्ति ॥ यावदिति ॥ यस्मादित्यर्थेयावच्छब्दः ॥ संकल्पेमनोराज्ये ॥ कथनेकथार्थप्रकाशने ॥ चार्थेतथाशब्दः ॥ १३ ॥ शून्यरूपत्वादेवतानिजगंतिकानिचित्क्वचिदपिपरमार्थतःकिंचिदपिनपश्यंतिनशृण्वंति ॥ अतएवकल्पेषुमहाकल्पेषुमहाजन्मसुसर्गेषुचसमताऐकरूप्यमवयेपांतानि ॥ बहुव्रीहौगोस्त्रियोरुपसर्जनस्येतिटापोह्रस्वेनपुंसकस्यझलचइतिनुमिपुनर्दीर्घः ॥ परस्परोत्पत्तिसमारंभानिवपरस्परप्रलयसमारंभानपितानिनपश्यंतीत्येतदपिप्रलयसंरंभवर्णनपुरःसरंदर्शयितुमारभते ॥ अथेत्यादिना ॥ १४ ॥ सर्वेषांद्वितीयाबहुवचनांतानांपंचमश्लोकस्थेकल्पांतान्नविचेतंतीत्यत्रान्वयः ॥ १५ ॥ कल्पाग्निविस्फोटैश्च

इत्याकर्ण्याहमालोक्यतांचारुवदनस्वनाम् ॥ ललनेयंकिमनयेत्यनादृत्यैवतांगतः ॥ १० ॥ ततोजगद्द्वंदमयींमायांसंप्रेक्ष्यविस्मितः ॥ अनादृत्यैवतांव्योम्निविहर्तुमहमुद्यतः ॥ ११ ॥ ततस्तांतत्कृतांचिंतामलमुत्सृज्यखेस्थिताम् ॥ जगन्मायांकलयितुंव्योमात्माहंप्रवृत्तवान् ॥ १२ ॥ यावत्तानितथोग्राणिजगंतिसकलान्यखम् ॥ शून्यमेवयथास्वप्नेसंकल्पेकथनेतथा ॥ १३ ॥ नपश्यंतिनशृण्वंतिकदाचित्कानिचित्क्वचित् ॥ तानिकल्पमहाकल्पमहाजन्मैकतान्यथ ॥ १४ ॥ प्रमत्तपुष्करावर्त्तानुन्मत्तोत्पातमारुतान् ॥ स्फुटिताद्रींद्रढांकारघटितब्रह्ममंडपान् ॥ १५ ॥ ज्वलत्कल्पाग्निविस्फोटचटटैडविडास्पदान् ॥ प्रतपद्द्वादशाकारकंदुमार्त्तंडमंडलान् ॥ १६ ॥ लुठत्सुरपुरव्रातवितताक्रंदघर्घरान् ॥ रणत्सर्वाद्रिकटकश्रेणीनिगिरणोद्भटान् ॥ १७ ॥ कल्पाग्निज्वलनोल्लासपठत्पटपटारवान् ॥ आत्मभ्रंशबृहत्क्षोभक्षुब्धांबरमहार्णवान् ॥ १८ ॥ देवासुरनरागारघर्घराक्रंदकर्कशान् ॥ सप्तार्णवमहापूरपूरितार्कैंदुमंडलान् ॥ १९ ॥ नविचेतंतिकल्पांतान्सर्वाण्येवपरस्परम् ॥ एकमंदिरसंसुप्ताःस्वप्नेरणरयानिव ॥ २० ॥ तत्ररुद्रसहस्राणिब्रह्मकोटिशतानिच ॥ दृष्टानिविष्णुलक्षाणिकल्पवृंदान्यलंमया ॥ २१ ॥ तत्रक्वचिदनादित्येनिरहोरात्रभूतले ॥ अकल्पयुगवर्षांतिजगत्यूहैःक्षयोदयः ॥ २२ ॥

टंतिध्वनंतिऐडविडास्पदानिकुबेरभवनानियेषु ॥ प्रतपंतिद्वादशाकारकंदुकवद्विविभ्रमंतिमार्त्तंडमंडलानियेषु ॥ १६ ॥ रणतांसर्वाद्रिनितंबश्रेणीनांनिगिरणेउद्भटान् ॥ १७ ॥ कल्पाग्नीनांयानिज्वलनानितेषांयेउल्लासास्तैस्तत्प्रयुक्तवंशादिग्रंथिविस्फोटनैःपठंतोव्यक्तमुच्चरंतःपटपटारवायेषु ॥ आत्मस्वभावभ्रंशप्रयुक्तबृहत्क्षोभादिवेदेवयादोगणक्षोभैःक्षुब्धाःअंबरमहार्णवायेषु ॥ १८ ॥ द्युलोकपर्यंतसप्तार्णवाभिवृद्ध्यासप्तार्णवमहापूरैःपूरितान्यर्कैंदुमंडलानियेषु ॥ १९ ॥ ईदृशानपितत्तदंतःप्रवृत्तान्कल्पांतान्सर्वाण्येवजगंतिपरस्परंनविचेतंति ॥ २० ॥ एवंजगतांप्रासंगिकींपरस्परंशून्यरूपतामुपपाद्यप्रस्तुतमेवाह ॥ तत्रेत्यादिना ॥ तत्रतेषुजगत्सुमयादृष्टानि ॥ २१ ॥ तत्रतस्मिन्वर्णितबहुप्रकारेजगतिक्वचित्क्वचिद्वस्तुनिऊहैर्वितर्कैरेवक्षयउदयश्चदृष्टइत्यनुषज्यते ॥ २२ ॥

---

१ एतदपिमपंचकस्थपंचमेत्यर्थः

95

अस्तुऊहेरेवक्षयोदयःकिंततस्तत्राह ॥ चितीति ॥ ततःप्रागुक्तंपाषाणाख्यायिकाद्वयंचितिसर्वमित्यादिरूपंमया अन्वयव्यतिरेकाभ्यांपरीक्ष्यदृष्टमित्यर्थः ॥ २३ ॥ कीदृशेनऊहेनचितिकीदृशउदयःकीदृशोवाक्षयस्तानुदाहरति ॥ त्वमिति ॥ हेरामत्वंघटःपटःकुड्यमितिवायदेवकिंचिदितिरूपंसंकल्प्यनाभावक्षितन्नतस्यांदशायांचित्त्वद्वित्रक्षितंतत्किंचितद्वत्तत्तन्नामरूपात्मनेवभवतिसउदयः ॥ सैवव्योम्नोपिशून्यतमाविवक्षितासतीनकिंचननामभवतिनकिंचनरूपमितिसतत्क्षयइत्यर्थः ॥ २४ ॥ किंचजगदितिनामरूपकल्पनयातच्छून्यात्मकमाकाशमेवभाति ॥ आकाशस्यैववाय्वादिक्रमेणजगदाकारपरिणामश्रुतेः ॥ तच्चाकाशंशब्दतन्मात्ररूपत्वात्सर्ववस्तुनोनामसामान्यमपिभवति ॥ तेनैवतत्त्वमस्यहंब्रह्मास्मिनेहनानास्तिकिंचनेत्यादिशब्दात्मनापरिणतेननभसासर्वंजगत्परमंचिन्नभएवभवति ॥ सएवास्यात्यंतिकःक्षयइत्यर्थः ॥ २५ ॥ एवंविमर्शेस्वस्यया

चितिसर्वंचितःसर्वंचित्सर्वंसर्वतश्चचित् ॥ चित्सत्सर्वात्मिकेत्येतद्दृष्टंतत्रमयाखिलम् ॥ २३ ॥ त्वंकिंचिदितिचेद्वक्षितत्रकिंचिदिवांगचित् ॥ साहिशून्यतमाव्योम्नोनचनामनकिंचन ॥ २४ ॥ तदाकाशमिदंभातिजगदित्यभिशब्दितम् ॥ तेनैवशब्दनभसासर्वंहिपरमंनभः ॥ २५ ॥ दृश्यदृष्टिरियंभ्रांतिराकाशतरुमंजरी ॥ चिद्व्योमांगकमेवेतितत्राहमनुभूतवान् ॥ २६ ॥ बुद्ध्याकाशैकरूपेणव्यापिनाबोधरूपिणा ॥ तत्रानंतेनसंकल्पमनुभूतमिदंमया ॥ २७ ॥ ब्रह्मव्योमजगज्जालंब्रह्मव्योमदिशोदश ॥ ब्रह्मव्योमकलाकालदेशद्रव्यक्रियादिकम् ॥ २८ ॥ तत्राहमिवसंसारशतेभातेमुनीश्वराः ॥ दृष्टावसिष्ठनामानोब्रह्मपुत्राःसदुत्तमाः ॥ २९ ॥ ब्रह्मन्द्वासप्ततिस्त्रेताःसर्वाएवसराघवाः ॥ तत्रदृष्टंकृतशतंद्वापराणांशतंतथा ॥ ३० ॥ भेदोदयेनवैदृष्टास्तास्ताःसर्गदशास्तथा ॥ बोधेनचेत्तदत्यच्छमेकंब्रह्मनभस्ततम् ॥ ३१ ॥ नेदंब्रह्मणिनामास्तिजगद्ब्रह्मण्यथत्विदम् ॥ ब्रह्मैवाजमनाद्यंतंतत्सर्वंतत्पदादिकम् ॥ ३२ ॥ पाषाणमौनप्रतिमंनकिंचिदभिशब्दितम् ॥ यत्तत्किंचिदितिद्योतरूपंब्रह्मजगत्स्मृतम् ॥ ३३ ॥ विभात्यचेत्यंचिद्व्योमस्वसत्तैवजगत्तया ॥ निराकारंनिराकारास्वभानुभवसन्निभा ॥ ३४ ॥

दृशोनुभवोभूत्तमाह ॥ दृश्येति ॥ हेअंगपरिशिष्टंयच्चिद्व्योमतत्कंसुखमेवनिरतिशयानंदैकरसमेवेत्यनुभूतवानित्यर्थः ॥ २६ ॥ बुद्धिश्चरमसाक्षात्कारवृत्तिस्तद्रूपोयआकाशस्तत्राविर्भावात्तदेकरूपेणव्यापिनापूर्णेनाऽनंतेनत्रिविधपरिच्छेदरहितेनमयातत्रतस्मिन्समाधौनसंकल्पंनिःसंकल्पमिदंवक्ष्यमाणमनुभूतम् ॥ २७ ॥ जगज्जालंब्रह्मांडसमूहास्तदंतर्गतादशदिशस्तदंतर्गतंकलाकालदेशादिकंचसर्वंब्रह्मव्योमैवतथास्थितंदृष्टमित्यर्थः ॥ २८ ॥ तत्रवक्ष्यमाणभेदोदयेनभातेसंसारशतेअहमिवमत्समानरूपामुनीश्वराः ॥ २९ ॥ द्वासप्ततिसंख्याकाःसराघवारामावतारसहितास्त्रेतायुगभेदादृष्टाइत्यनुकृष्यते ॥ ३० ॥ भेदोदयेनभेदवासनोद्बोधेन ॥ बोधेनतत्त्वदृशातुएतत्सर्वंब्रह्मनभएवदृष्टमित्यर्थः ॥ ३१ ॥ तथाचब्रह्मणःसप्रपंचतानिष्प्रपंचताचदृष्टिभेदेनाविरुद्धेत्याह ॥ नेदमिति ॥ अथत्विदमस्तीतिशेषः ॥ पद्यतेज्ञानेनप्राप्यतइतिपदंतदात्मकम् ॥ ३२ ॥ नकिंचिदभिशब्दितंसर्वनामरूपशून्यम् ॥ द्योतरूपंज्योतीरूपम् ॥ तदेवजगद्रूपेणस्मृतमित्यर्थः ॥ ३३ ॥ अचेत्यंचेत्यंविनापिचितस्स्वसत्तैवचेत्यजगत्तयाविभाति ॥ ३४ ॥

विभातीत्येतत्प्रत्यगभेदप्रदर्शनेनोपपादयन्स्वयंज्योतिष्ट्वंदर्शयति॥ अनन्यमिति॥ अनन्यंअनन्यंत्॥ अदडादेशाकरणंछांदसम्॥ भामात्ररूपकंब्रह्मसर्वंकरोतिनकरोतिच॥ यथाआलोकःप्रकाशनंकरोतिस्वातिरिक्तप्रकाशनाप्रसिद्धेर्नकरोतिचतद्वत्॥३५॥ ननुयदिचिदेवजगत्तर्हिचंद्रःशीतएवसूर्यउष्णएवेतिव्यवस्थितानियतिर्विपर्यस्येतेतिचेदिष्टापत्तिः ब्रह्मांडभेदेवैपरीत्यस्यापिदर्शनादित्याह॥ तेष्वित्यादिना॥३६॥ उलूकस्यदिवांधस्य॥ उलूकेनसमआचारोदर्शनादिव्यवहरोयासाम्॥समशब्दार्थस्यनित्यंप्रतियोगिसापेक्षत्वेनसामर्थ्याविघातात्समासः॥ तस्यैवतेनैव॥३७॥ इतइति॥ मनःकल्पनायानिरंकुशत्वादियमुक्तिर्नतुवस्तुतः॥ वेदाप्रामाण्यापादकत्वादितिबोध्यम्॥ ३८॥ तत्कुतस्त

अनन्यमात्मनोब्रह्मसर्वंभामात्ररूपकम्॥ प्रकाशनमिवालोकःकरोतिनकरोतिच॥ ३५॥ तेषुनामानुभूयंतेजगल्लक्षेषुतत्रवै॥ उष्णानिचंद्रबिंबानिसूर्याःशीतलमूर्त्तयः॥ ३६॥ प्रजास्तमसिपश्यंतिपश्यंत्येवनतेजसि॥ उलूकस्यसमाचारास्तस्यैवसदृशास्वराः॥ ३७॥ इतःशुभेननश्यंतियांतिपापैस्तथादिवम्॥ विषाशनेनजीवंतिम्रियंतेऽमृतभोजनैः॥ ३८॥ यद्यथाबुध्यतेबोधेयथोदेत्यथवास्वतः॥ तथाशुस्फुटतामेतिसद्वासद्वातदेवतत्॥३९॥विटपाकारमूलौघदर्शनाद्व्यशोभिभिः॥ घूर्णंतेपत्रपुष्पाभैःपादपैर्व्योम्निकाननम्॥४०॥ सिकताःपीडिताःसत्यःस्रवंतिस्नेहजंरसम्॥ शिलाफलककेभ्यश्चजायंतेकमलान्यलम्॥ ४१॥ दारुण्यश्ममनिर्भित्तौचचंचलाःशालभंजिकाः॥ देवांगनाभिःसहितंगायंतिकथयंतिच॥४२॥ मेघान्परिदधत्युच्चैर्भूतान्युच्चैःपटानिव॥ प्रतिवर्षंविजातीयान्युत्पद्यंतेफलान्यगे॥ ४३॥ सन्निवेशैर्ननियतैरंगानांविविधांगकैः॥ शिरोभिःसर्वभूतानिपरिक्रामंतिभूमिगैः॥ ४४॥ शास्त्रवेदविहीनानिनिर्धर्माण्येवकानिचित्॥ यत्किंचनैककारीणितिर्यग्वंतिजगंत्यधः॥ ४५॥ कामसंवित्तिहीनानिनिःस्त्रीजातानिकानिचित्॥ भूतैःसंशुष्कस्तद्यैर्व्याप्तान्यश्ममयैरिव॥ ४६॥

त्राह॥ यदिति॥चिराभ्यासदृढीकृतेबोधेयद्वस्तुहिताहितसाधनत्वेनयथाबुध्यतेतथैवभोजकादृष्टवशादुदेतियथोदेतितथैवभोगकालेपिस्फुटतामेति॥ अन्यथसद्वाअसद्वास्तुनविशेषः॥ यतस्तद्ब्रह्मैवतद्वासनाकर्मानुसारेणविवर्त्ततइत्यर्थः॥ ३९॥ एतद्ब्रह्मांडप्रसिद्धकाननविपरीतपत्रपुष्पसंस्थानार्थक्रियासंपन्नंब्रह्मांडांतरेप्रसिद्धमित्याह॥ विटपेति॥ विटपाःशाखास्तदाकाराणांमूलौघानांदर्शनाद्व्यमणिवद्दृढःशोभावद्भिःपत्रपुष्पैराभांतीतिपत्रपुष्पाभैःपादपैरुपलक्षितंघूर्णतेइत्यर्थः॥ ४०॥ एवमसंभावितसहस्रमप्यन्यत्रसंभावनीयमित्याह॥ सिकताइति॥ पीडितास्तिलयंत्रनिष्पीडिताः॥ स्नेहजंरसंतैलंस्रवंति॥ ४१॥ ४२॥ भूतानिप्राणिनःपटानिवमेघान्परिदधतिपरिधानंकुर्वंति॥ अगेवृक्षे॥ ४३॥ ४४॥ तिर्यग्वंतिपश्वादिमात्रपूर्णानि॥ अधःभूम्याअधोलोकेषु॥ ४५॥ यतःकामसंवित्त्याहीनान्यतएवनिःस्त्रीजातानि॥ ४६॥

96

पवनाशनाःसर्पाएवभूतानिप्राणिनोयत्र ॥ समानिरत्नान्यश्मकानिचयत्र ॥ अजातार्थान्यसंजातधनानिधनादिव्यवहारशून्यानीतियावत् ॥ अतएवालुब्धानि ॥ निगर्वाणि निरहंकाराणीव ॥ कानिचकानिचित् ॥ ४७ ॥ क्वचिद्व्यष्ट्यहंभावभेदंविनाविराडहंभावैनैकात्म्येनैवसर्वदेहभेदव्यवहारमाह ॥ क्वचिदिति ॥ इतरदात्मांतरंनाप्नोति ॥ तत्रापि चतुर्विधभूतभेदैर्बहुभूतकंस्वेदजाद्यैकैकभूतपूर्णंचास्तीत्यर्थः ॥ ४८ ॥ तत्रदेहभेदेष्वेकीभूतात्मभावनाकीदृशीतांदर्शयति ॥ नखेति ॥ यद्वन्नखकेशादिकेछिद्यमानेजायमाने चात्मनःस्वच्छेदनजन्मादिपश्यतीत्यन्यत्रसंस्थितइवभवति ॥ तत्सौंदर्यादिसुखभोगेत्वेकीभूतात्मभावनाअस्यदृश्यतेतद्वदित्यर्थः ॥ अतएवाहश्रुतिः ॥ नहवैदेवान्पापंगच्छतिपु ण्यमेवामुंगच्छतीति ॥ ४९ ॥ क्वचित्तुसर्गभेदवासनानुद्भवादव्याकृताकाशमात्रतयाविभाव्यतइत्याह ॥ अनंतेति ॥ तर्हिकथंसर्वत्रसर्वात्मकंतदित्युक्तंतत्राह ॥ यत्नतइति ॥ तिरोभावावस्थादृष्टितिरोभाव्यसंस्कारविषयाविर्भावनयत्नतस्तस्यशून्यस्यांतेनतिरस्करणेनपुनर्जगदाप्नोतिपश्यति ॥ ५० ॥ मोक्षशब्दार्थोनिर्विशेषब्रह्मभावस्तद्दृष्टिषुअ

पवनाशनभूतानिसमरत्नाश्मकानिच ॥ अजातार्थान्यलुब्धानिनिगर्वाणीवकानिच ॥ ४७ ॥ क्वचित्प्रत्येकमात्मानंपश्यत्याप्नोतिनेतरत् ॥ बहुभूतकमप्यस्तिजगदित्येकभूतकम् ॥ ४८ ॥ नखकेशादिकेयद्वत्तद्वदन्यत्रसंस्थितः ॥ आत्मवत्सर्वभूतानामेकीभूतात्मभावना ॥४९॥ अनंतापारपर्यंतंशून्यमेवबहुक्वचित् ॥ यत्नतःसंविदाप्नोतितस्यांतेनजगत्पुनः ॥ ५० ॥ अत्यंताबुद्धबुद्धानिमोक्षशब्दार्थदृष्टिषु ॥ दारुयंत्रमयाशेषभूतौघानीवकानिचित् ॥ ५१ ॥ ऋक्षचक्रविहीनानिनिष्कालकलनानिच ॥ मूकसंकेतसाराणिभूतजालानिकानिचित् ॥ ५२ ॥ कानिचिद्वर्जितान्येवनेत्रशब्दार्थसंविदा ॥ व्यर्थदीप्तात्मतेजांसिभूतानीत्येकचिंतया ॥ ५३ ॥ प्राणसंविद्विहीनानिव्यर्थामोदानिकानिचित् ॥ मूकानिशब्दवैयर्थ्याच्छ्रुतिहीनानिकानिचित् ॥ ५४ ॥ वाक्यसंविद्विहीनत्वान्मूकान्यन्यानिकानिचित् ॥ स्पर्शसंविद्विहीनत्वादश्मांगानीवकानिचित् ॥ ५५ ॥ संविन्मात्रमयान्येवदृष्टान्यपिचकानिचित् ॥ व्यवहारीण्यप्यग्राह्याण्येवनित्यंपिशाचवत् ॥ ५६ ॥ भूमयान्येकनिष्ठानिनिष्पिंडान्येवकानिचित् ॥ कानिचिद्वारिपूर्णानिवह्निपूर्णानिकानिचित् ॥ ५७ ॥

त्यंताबुद्धान्यलीकानितद्वद्बुद्धानि ॥ चित्पृथक्कारबुद्धौतुदारुयंत्रमयानिहस्त्यश्वादिरूपाण्यशेषाणिभूतौघानीवचेतनतयादृष्टानि ॥ ५१ ॥ ऋक्षचक्रैर्ज्योतिश्चक्रैर्विहीनान्यत एवनिष्कालकलनानिकानिचित् ॥ शब्दाभावाच्छ्रोत्राभावाद्वामूकानांहस्तपादाद्यभिनयसंकेतसाध्यव्यवहारत्वात्तत्साराणिकानिचिदिति विभज्यान्वयः ॥ एवमग्रेपियथा योगंबोध्यम् ॥ ५२ ॥ नेत्रशब्देनतदर्थेननेत्रेणतज्जन्यसंविदारूपादिदर्शनेनचवर्जितान्येव ॥ अतएवव्यर्थदीप्तात्मकानिसूर्यादितेजांसियेषु ॥ इतिइयंजगत्स्थितिःएकचिंतया एकाग्रचित्तयोगिमनःकल्पनयामयोक्तेत्यर्थः ॥ ५३ ॥ प्राणोघ्राणेंद्रियंतज्जन्यगंधसंविद्वताभ्यांविहीनानीत्यादिपूर्ववत् ॥ ५४ ॥ अश्मांगानीवत्वगिंद्रियरहितानि ॥ ५५ ॥ संविन्मात्रमयानिमनोराज्यकल्पानीतियावत् ॥ कानिचित्तुव्यवहारीण्यपिपिशाचवदनुद्भूतगुणभूतारब्धत्वादिंद्रियैरग्राह्याण्येव ॥ साक्षिमात्रवेद्यानीत्यर्थः ॥ ५६ ॥ निष्पि डानिघनीभावरहितानि ॥ ५७ ॥

सर्वाकाराणिसर्वकार्यक्षमसर्वैवस्तुकानि ॥ प्राकाम्यसिद्धिशालिमनःकल्पनयेदमुक्तं ॥ तत्रखेचिदाकाशे ॥ बतेत्याश्चर्ये ॥ ५८ ॥ भूमयान्येवेतियदुक्तंतत्रभूतजीवनानुपपत्ति शंकांदृष्टांतेनपरिहरति ॥ धरेति ॥ ५९ ॥ एवंवार्यादिपूर्णेष्वपिजीवनोपपत्तिर्बोध्येत्याह ॥ जलेति ॥ उग्रमीनोग्राहस्तद्वत् ॥ ६० ॥ अलातवत्भ्रमदुल्मुकवत्स्फुरंतिसंच लंति ॥ ६१ ॥ अर्जुनवातोरोगविशेषः ॥ तद्वंतोहिजनाआकाशेभ्रमंतीतिदेशविशेषेप्रसिद्धम् ॥ ६२ ॥ ६३ ॥ तत्रचिदाकाशेअधऊर्ध्वंपरितश्चकल्पितेदिग्विभागेष्ववमानानि सर्वाणिविचित्राणिजगंतितदंतर्गतवस्तूनिचमयादृष्टानीत्युपसंहरति ॥ पातालेति ॥ चिज्जलधेश्चंचलबुद्बुदप्रायेषुनानाजगत्सुमयायन्नदृष्टंनामतत्किमिवनकिंचिदित्यर्थः ॥ सर्व ज्ञसाक्ष्यविषयस्याप्रसिद्धेरितिभावः ॥ ६४ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेषष्टितमःसर्गः ॥ ६० ॥ ॥७॥ ॥ अज्ञातब्रह्मतद्द

कानिचिद्वातपूर्णानिसर्वाकाराणिकानिचित् ॥ जगंतिव्योमरूपाणिबततत्रकचंतिखे ॥ ५८ ॥ धरापीठैकपूर्णेषुतिष्ठंत्यन्येषुदेहिनः ॥ भे काइवशिलाकोशेकीटाइवधरोदरे ॥ ५९ ॥ जलैकपरिपूर्णेषुतिष्ठंत्युर्वीविनाद्रिषु ॥ भ्रमंत्यन्येषुभूतानिनित्यमेवोग्रमीनवत् ॥ ६० ॥ अ न्येष्वग्न्येकपूर्णेषुजलादिरहितान्यपि ॥ भूतान्यग्निमयान्येवस्फुरंत्यलमलातवत् ॥ ६१ ॥ अन्येष्वनिलपूर्णेषुभूतान्यस्तेतराण्यपि ॥ वात मात्रमयांगानिस्फुरंत्यर्जुनवातवत् ॥ ६२ ॥ अन्येषुव्योममात्रात्मदेहेषुव्योमरूपिणः ॥ प्राणिनस्संतिसर्गेषुदर्शनव्यवहारिणः ॥ ६३ ॥ पातालपातिषुतथांबरमुत्पतत्सुतिष्ठत्सुविभ्रमपदेष्वथदिङ्मुखेषु ॥ नानाजगत्सुकिमिवास्तिमयानदृष्टंयन्नामचिज्जलधिचंचलबुद्बुदे षु ॥ ६४ ॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०पापा०जगज्जालवर्णनंनामषष्टितमःसर्गः ॥ ६० ॥ ॥७॥ ॥श्री वसिष्ठउवाच ॥ ॥ चिदाकाशाच्चिदाकाशेपयसीवपयोरयाः ॥ चित्त्वाज्जीवाःस्फुरंत्येतेएतएवमनांसिनः ॥ १ ॥ विशदाकाशरूपाणिता न्येवचमनांसिनः ॥ जगंतितान्यनंतानिसंपन्नान्यभितस्स्वयम् ॥ २ ॥

यंजगन्नाशेप्यनश्वरम् ॥ ज्ञातेतुब्रह्मणिजगन्नासीदस्तिभविष्यति ॥ १ ॥ अनाद्यज्ञातंब्रह्मैवस्वकूटस्थपूर्णानंदचित्स्वभावविस्मरणाच्चलनपरिच्छेदादिस्वभावांतरंपरिकल्प्यम नःप्राणादिक्रमेणभोक्ताजीवोभोग्यंजगच्चभूत्वासर्वत्रसर्वदासर्वरूपेणसंसरत्येवेत्यस्ययावदविधंसंसारःशाश्वतस्वभावः ॥ तदेवशास्त्राचार्योपदेशाज्ज्ञातंचेत्सर्वदासर्वतःसर्वात्म नाचपूर्णानंदचिदेकरसमात्रंनकदापिक्वापिकश्चिदपिकस्यचिदपिसंसारलेशःसंभावयितुंशक्यइतिनित्यमुक्तस्वभावमेवतद्वितिव्युत्पादयितुंवसिष्ठोभूमिकांरचयति ॥ चिदाका शादिति ॥ चित्त्वात्अज्ञातचिदेकरसस्वभावात् ॥ जीवाःप्राणोपाधिपरिच्छिन्नाःस्फुरंतिअनादितादृशवासनोद्भवाभासंते ॥ तएवोत्तरोत्तरसंकल्पविकल्पसहस्रैःसंसरणबीज त्वात्स्वात्मनिकरणभावमिवापद्यमानानिमनांसिइत्युच्यंतइत्यर्थः ॥ १ ॥ तान्येवमनांसिस्वांतर्गतभोग्यजगद्वासनानांजगदाकारेणविकासादनंतानिजगंतिसंपन्नानीत्याह ॥ जंगतीति ॥ २ ॥

नन्वेवंसतिब्रह्मैवस्वाविद्ययानानाजीवभावैर्नानासंसारात्मनाएकमेवसंसरतिएकमेवस्वविद्ययासर्वजीवसंसारभावेभ्योमुच्यतइत्युक्तंस्यात्तथाचप्राक्तनप्राकृतप्रलयांतेसर्वजीव समष्ट्यात्मनोहिरण्यगर्भस्यतत्त्वज्ञानेनाज्ञाननिवृत्तौतन्मूलसर्वजीवजगद्भावानांबाधावर्जनात्सर्वमुक्तिरवश्यंवाच्येतिमुक्तस्यब्रह्मणःपुनरेतज्जगज्जीवपरंपरयासंसारोनिर्बीजःक थंसंपन्नइत्याशयेनरामःशंकते ॥सर्वेति॥ भूयश्चांतेविश्वमायानिवृत्तिरितिश्रुतेःसर्वमुक्तेरवश्यवाच्यत्वादितिभावः॥३॥प्रश्नमनूद्यतदुत्तरंगद्यपद्यैर्वक्तुंवसिष्ठःप्रतिजानीते ॥ महाप्र लयेत्यादिशृण्वित्यंतेन ॥ आकाशांतानामशेषविशेषाणांविनाशेसतिब्रह्मादिस्थावरांतेषुजीवजगत्सुमुक्तौपरिणतेषुअव्यपदेश्यंब्रह्मचिन्मात्रमवशिष्यतेइतियद्व्याचक्षतेतथा पितस्यावशिष्टस्यब्रह्मचिन्मात्रस्यहृदयमिदंजगत्तस्माद्ब्रह्मणोऽव्यतिरिक्तमेवेतिपूरयित्वाव्याख्येयं॥अयंभावः॥ यद्यपिमुक्तदृष्ट्यासर्वजीवन्मुक्तिरेवनकस्यचित्किंचित्परिशि

॥श्रीरामउवाच॥ ॥सर्वभूतगणेमोक्षंमहाकल्पक्षयेगते॥पुनःकस्यकथंसर्गसंवित्तिरुपजायते॥३॥ ॥श्रीवसिष्ठउवाच॥ म हाप्रलयपर्यंतेक्षितिजलपवनहुताशाकाशाशेषविशेषविनाशेआब्रह्मस्थावरांतेषुमुक्तौपरिणतेषुभूयोयथेदंजगदनुभूयतेतथाशृणु॥ अव्यपदेश्यंयत्परमार्थघनंब्रह्मचिन्मात्रमित्याचक्षतेमुनयः तस्यहृदयमिदंजगत्तस्मादव्यतिरिक्तमेव सएवचदेवस्तदात्मीयंहृदयंस्व भावंजगदित्यवगच्छतिचविनोदेनैवनतुवास्तवेनरूपेणजगदितिकिंचिदुपलभामहे॥ विचारयंतस्तस्मात्किमिवनश्यतिकिमिवजा यते यथापरमकारणमविनाशितथातद्धृदयमविनाश्यंच महाकल्पादयश्चतदवयवाएव अपरिज्ञानमात्रमत्रकेवलंभेदायैवतदपिप्रे क्ष्यमाणंनलभ्यतएव॥४॥तस्मान्नकस्यचित्किंचित्कदाचिन्नश्यतिक्वचित्॥नचैवजायतेब्रह्मशांतंदृश्यमजंस्थितम्॥५॥

ष्यतेतथाप्यन्येषांप्रत्येकंतत्त्वज्ञानोदयाभावात्तद्दृशास्वस्वाविद्यानष्टैवेतिबंधानुभवएव॥यथाचंद्रलोकस्थानांसांप्रतंचंद्रमंडलंगतानांचदृष्ट्याअत्यंतासदपिचंद्रप्रादेशिकत्वंभू मिष्ठानांदृशातथैवास्तेतद्वदिति॥ एतदेवाह॥ सएवदेवइत्यादिना॥ अवगच्छतिबद्धदृशा चकारान्नावगच्छतिचमुक्तदृशा॥ यूयंजीवन्मुक्तास्तर्हिकीदृशंजगदुपलभध्वेतत्राह॥ विनोदेनैवेति॥ विनोदेनबाधितानुवृत्तिरूपकौतुकेनैवदग्धपटवदित्यर्थः॥ तस्मादेवंदृष्टित्रयेप्यव्यतिरिक्तत्वात्जगत्किमिवनश्यतिकिमिवजायते ॥ यद्यविनाश्येवतर्हिकथंम हाकल्पावांतरकल्पादयस्तत्राह॥ महाकल्पादयइति॥ नहिशाश्वतस्यतस्यैकदेशाअशाश्वताःशक्यावक्तुं नवानष्टाःकल्पभेदाःपुनःपुनरागंतुंशक्नुवंति अतःसतामेवकल्पसर्ग भेदानांजपमालावयववत्परिवृत्तिरेवपुनःपुनःकालचक्रात्मनेतिभावः॥ कथंतर्ह्यतीतानागतकल्पादिषुभेदप्रत्ययस्तत्राह॥ अपरिज्ञानमात्रमिति॥४॥ गद्यप्रसाधितमर्थंपद्ये नोपसंहरति॥ तस्मादिति॥५॥

जगतोऽविनाशित्वेयुक्त्यंतरमाह ॥ आकाशेति ॥ महत्त्वोत्कर्षावधावाकाशेअणुत्वोत्कर्षावधौपरमाणुसहस्रांशमात्रेचजगतिब्रह्मचित्सत्तयैवसत्तेतियदासिद्धांतस्तदातद्विना भावेकथंविनाशोपपत्तिरितिसमुदायार्थः ॥ वपुरित्यादीनिपद्यानि ॥६॥७॥ संविद्गुदयत्वंचसंविन्मात्रसारेस्वप्नेपिप्रसिद्धमित्याह ॥ संविदइति ॥८॥९॥ तर्हिसंतुसंविदोपिनाश स्तत्रगद्येनोत्तरमाह ॥ एषाहीति ॥ यथाअसौसंविन्ननश्यतितथातदंतर्वर्त्तीतदुदयभूतोजगतस्तद्धेत्वज्ञानस्यचानुभवःप्रतिभापिनजायतेननश्यतिच ॥ यदिननश्यत्येवतर्हिकथं सुखदुःखादीनांकादाचित्कत्वानुभवस्तत्राह ॥ केवलमिति ॥ १० ॥ जगतःशाश्वतेनात्मनासात्मकत्वादपिननश्वरतेतिपद्येनाह ॥ यद्यदिति॥ यद्यदितिदर्शनात्तत्तदित्यध्याहा र्यम् ॥ तत्तत्तद्विनाशंविनाअक्षयिअविनाशि ॥११॥ यदिब्रह्मात्मकंविश्वंतर्हितन्नानात्वाद्ब्रह्मनानात्वंकिनस्यात्तत्राह ॥ महाप्रलयादयइति ॥ तस्यमहाकालात्मनोब्रह्मणःअ

आकाशपरमाणुसहस्रांशमात्रेपियाशुद्धचिन्मात्रसत्ताविद्यते ॥ ६ ॥ वपुर्जगदिदंतस्याननुनाममहाचितेः ॥ कथंनश्यत्यनष्टायांत स्यांसाचननश्यति ॥ ७ ॥ संविदोदयंस्वप्नेयथाभातिजगत्तया ॥ व्योमात्मैवतथैवादिसर्गाप्रभृतिभासते ॥ ८ ॥ चिद्व्योमावयवःसर्गः सर्गस्यैतादृशाःक्षयाः ॥ उदयाश्चेतिखंसर्वंकिंनाशिकिमनाशिच ॥ ९ ॥ एषाहिपरमार्थसंविदच्छेद्याअदाह्याऽक्लेद्याऽशोष्यासात्यत द्विदामदृश्यातस्यायदुदयंतत्तदेवभवतियथासौननश्यतितदंतर्वर्तीजगदाद्यनुभवोनजायतेननश्यत्येवेतिकेवलंस्मरणविस्मरणवशो नस्वभावरूपेणानुभवाननुभवौकल्पयतीव ॥ १० ॥ यद्यद्यदात्मकंतत्त्वंतद्विनाशंविनाऽक्षयि ॥ तस्माद्ब्रह्मात्मकंदृश्यंविद्धिब्रह्मवदक्षयम् ॥ ११ ॥ महाप्रलयादयस्तदवयवाएव ॥ १२ ॥ चिन्मात्रेपरमेव्योम्निकुतएवभवाभवौ ॥ कुतोभावविकारादिःकथंव्योम्निनिराकृते ॥ १३ ॥ महाकल्पादयोभावानामैतानिजगंतिच ॥ ब्रह्मात्मकतयैवास्मिन्संविद्ब्रह्मणिसंस्थितम् ॥ १४ ॥ निराकृत्यच्छचिन्मात्रंदृश्यंसंकल्प्य तद्वशम् ॥ यातियेनैवघटितोयक्षस्तदुदयेकिल ॥ १५ ॥ यथावयविनोवृक्षस्यशाखाविटपफलपल्लवपुष्पादयोवयवास्तथापरमार्थ घनस्याकाशादप्यच्छरूपस्याव्यपदेश्यस्यप्रलयमहाप्रलयनाशोद्भेदभावाभावसुखदुःखजननमरणसाकारनिराकारत्वादयोवय वाः ॥ यथैवचासाववयव्यनाशोऽव्यपदेश्यश्चतथैवतइति ॥ १६ ॥

वयवाएव ॥ १२ ॥ नन्वचेतनसर्गप्रलयाद्यनंतावयवघटितंकथंचिदेकरसंस्यादितिचेद्दिरिवक्षनगराद्यनेकप्रतिबिंबघटितस्फटिकशिलायास्वच्छशिलैकरसत्ववदित्याशयेनप द्येनोत्तरमाह ॥ चिन्मात्रइत्यादिना ॥ निराकृतेनिराकारे ॥ भावेक्तः बहुव्रीहिः ॥ १३ ॥ यथाविचित्रप्रतिबिंबभेदाःस्फटिकात्मनैवस्थितास्तद्वन्महाकल्पादयोविविधभावाः संविदेकरसेब्रह्मणिसंस्थिताइत्यर्थः ॥ १४ ॥ यथामनःसंकल्पजानांयक्षनगरसेनादीनांमनोमात्रत्वंतथाचित्संकल्पजस्यजगतोपिचिन्मात्रत्वमित्याशयेनाह ॥ निराकृतीति ॥ १५ ॥ अस्त्वेवंतथापिकथंजगतामविनाशित्वमितिचेदविनाश्यवयवत्वादेवेत्याशयेनवृक्षशाखासाम्येनगद्येनवर्णयति ॥ यथेत्यादिना ॥ असौब्रह्मरूपोऽवयवीयथैवाविना शःअव्यपदेश्यश्चतथैवतेअवयवाःसर्गप्रलयादयइतिएतस्मात्कारणादित्यर्थः ॥ १६ ॥

तत्कुतस्तत्रपंचेनाह ॥ अवयवावयविनोरिति ॥ ननुदृश्यादृश्ययोःकथमभेदस्तत्राह ॥ दृश्ययोर्वेति ॥ अभेदेपिसएवस्थौल्येदृश्योभवतिसौक्ष्म्येत्वदृश्यइति॥ नदृश्यत्वादृश्यत्वे भेदनियतेइत्याशयः ॥१७॥ तत्रावयवावयविनोरभेदंदृक्षतदवयवसाम्यनिरूपणेनोपपादयति ॥ यथेत्यादिना ॥ यथातरुसद्भावेतरुसंविदेवमूलंतथापरमार्थघनस्यजगतोपिस द्भावेसंविदेवमूलमितिसाम्यंप्रसिद्धम्॥ एवंसंविन्मूलतयैवक्कचित्प्रदेशेकिंचिद्वैचित्र्यंतरुवदेवदर्शयति ॥ क्कचिदिति॥ सर्गलक्षणःस्तंबोमध्यकाष्ठम् ॥ तत्संलग्नाभूरादिलोकांतरल क्षणाविटपाःस्कंधाः॥ तत्रापिजंबूद्वीपादिव्यवस्थाःशाखाः॥ तेषुगिरिनदीजनपदादिपदार्थाःपल्लवाः॥ तेषुचंद्रादित्यादिप्रकाशःकुसुमम्॥ अंधकारलक्षणंहरितच्छदकार्ष्ण्यम् प्रलयलक्षणागुल्मायंथिभेदाः ॥ हरिहरादिदेवोत्तमलक्षणागुलुच्छकागुच्छाः ॥ सजलमेघजाड्यलक्षणात्वक्॥ एवंवर्णितरीत्याअनाकारंव्योमरूपमेवाकारभेदैःसंविदात्मनि

अवयवावयविनोर्दृश्ययोर्वाप्यदृश्ययोः ॥ एकात्मनोरेवसदाभेदोस्तिनकदाचन ॥ १७ ॥ यथातरोस्संविन्मूलंतथापरमार्थघनस्य क्कचित्किंचित्त्वं क्कचित्सर्गस्तंबः क्कचिल्लोकांतरविटपाः क्कचिद्व्यवस्थाःशाखाः क्कचित्पदार्थपल्लवाः क्कचित्प्रकाशकुसुमम् क्कचिदंधका रकार्ष्ण्यं क्कचिन्नभःकोटरम् क्कचित्प्रलयगुल्माः क्कचिन्महाप्रलयगुल्माः क्कचिद्धरिहरादिगुलुच्छकाः क्कचिज्जाड्यत्वक् एवमना कारंव्योमरूपमेवसंविदात्मनिब्रह्मणिब्रह्मसदृशभावादव्यतिरिक्तमेवैतत्स्थितम् ॥ १८ ॥ इतोभाव्यइतोभावइतःसर्गइतःक्षयः ॥ स्व भावएवानुभवइतिब्रह्माचलंस्थितम् ॥ १९ ॥ एवंमयेपिपरमेब्रह्माकाशेनरंजनाः ॥ काश्चिदेवांगसंतींदुबिंबेविमलतायथा॥ २०॥ निर्मलेपरमाकाशेक्कभावाभावरंजनाः ॥क्कादिमध्यांतकलनाःक्कलोकांतरविभ्रमाः॥ २१ ॥ अपरिज्ञानमेवैकंतत्रदोषवदुत्थितम् ॥ केवलंतत्परावृत्यप्रेक्षणात्परिशाम्यति ॥ २२ ॥ अज्ञानंज्ञप्तिबोधेनपरामृष्टंप्रणश्यति ॥ येनैवाभ्युदितस्तेनपवनेनेवदीपकः ॥ २३॥ अज्ञानंसंपरिज्ञातंनासीदेवेतिबुध्यते॥ अबंधमोक्षंब्रह्मैवसर्वमित्यवगम्यते ॥ २४॥

ब्रह्मणिब्रह्मसदृशस्वच्छभावादेवाव्यतिरिक्तंस्थितमित्यर्थः ॥१८॥उक्तमेवार्थंपद्यैराह ॥इतइत्यादिना ॥ भाव्योभविष्यदर्थः॥ भवतीतिभावोवर्त्तमानपदार्थः॥ अतीतस्याप्यु पलक्षणमेतत् ॥ सचसर्वोप्यनुभवाधीनसिद्धिकत्वादनुभवएव ॥ सचस्वोभावआत्मैवेतिब्रह्मैवाचलमेकमेवंवैचित्र्यकल्पनयास्थितमित्यर्थः ॥ १९ ॥ तर्हिब्रह्मणिसर्गप्रलयादि रंजनाःकिंसत्यानेत्याह ॥ एवमिति ॥ काश्चिदपिनसंत्येवेत्यन्वयः ॥ इंदुबिंबेविमलतानिष्कलंकतायथानास्तीतिकथंचिदुपमा ॥ तथानिर्मलेइत्युत्तरान्वयोवा ॥२०॥ २१॥ तर्हितथाविभ्रमेकोहेतुःकुतोवातच्छांतिस्तत्राह ॥ अपरिज्ञानमेवेति ॥ परावृत्यपराग्दृष्टिमपहायप्रत्यगात्मप्रवणयाधियाप्रेक्षणात् ॥ कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुर मृतत्वमिच्छन्नित्यादिश्रुतेरितिभावः ॥ २२ ॥ अज्ञानसाधकस्यैवचरमसाक्षात्कारवृत्तीद्धस्यतद्बाधकत्वेयुक्तिमाह ॥ अज्ञानमिति ॥ २३ ॥ ज्ञानस्याज्ञानतत्कार्यबाधकत्वं प्रसिद्धमेवेत्याह ॥ अज्ञानमिति ॥ बाधपरिशिष्टब्रह्मानुभवमभिलप्यदर्शयति ॥ अबंधमोक्षमिति ॥ २४ ॥

हेराममयामोक्षेएवंवर्णितरूपाबोधादयउपायाःउक्ताः ॥ एतांस्तूपायान्निरंतरंविचारेयत्नोयस्यतथाविधोऽधिकारीलभते ॥ २५ ॥ अनादिइदंजगज्जालंकदाप्यजातंनोत्पन्नमेवकिंतुब्रह्मैवार्थयतेप्रार्थयतेभोगमोक्षावित्यर्थमज्ञानस्वस्वरूपमितियावत् ॥ इतिवर्णितजगद्बुदयादिरूपेणाभातंवर्त्तते ॥ जीवःअधिकारीइतिविवेकदृष्ट्याइतिविचारदृष्ट्या अणिमाद्यष्टगुणसंपन्नमीश्वरत्वमपिमायामात्रत्वादसारमेवेतिपरवैराग्योत्कर्षेणतृणप्रायंपश्यन्निरतिशयानंदंब्रह्मैवाहमितिनिश्चित्यस्वात्मन्येवपूर्णकामआस्तेइत्यर्थः ॥ २६॥ ॥ इ०वा०ता०नि०उ०एकषष्टितमःसर्गः ॥६१॥ ॥९॥ ॥ देहवज्जगतांवीक्षावर्ण्यतेत्रमुनेःस्त्रिया॥संभाषाव्योमरूपस्यस्वमवद्व्योमरूपया॥१॥ त्वयातज्जगज्जालंकिंपरिच्छिन्नभावेनस्थित्वापक्षिवदंबरेभ्रमतादृष्टमुतापरिच्छिन्नचिद्व्योमभावेनेतिसंदिहानोरामःपृच्छति ॥ यदेतदिति॥१॥तत्रद्वितीयकल्पमालंब्यवसिष्ठउत्तरमाह॥संपन्नइति॥तस्यामानंत्यावस्थायांगमागमौ ॥ क्रियामात्रोपलक्षणमेतत्॥२॥मयटौप्राचुर्ये ॥ तत्तस्माद्धेतोःस्वेएवास्मिन्चित्याऽपरोक्षेआत्मनिएतज्जगन्मयादृष्टम्॥३॥एकदेशस्थित्यादिकल्पनांविना

एवंबोधादयोराममोक्षउक्ताःस्वसंविदा॥ विचारयत्नोलभतेनात्रकश्चनसंशयः॥२५॥ इदंजगज्जालमनाद्यजातंब्रह्मार्थमाभातमिती हदृष्ट्वा॥विचारदृष्ट्याष्टगुणेश्वरत्वंपश्यंस्तृणंस्वात्मनिजीवआस्ते॥२६॥ ॥इ०वा०महारा०वा०दे०मो०नि०उ०पाषा०जगदाकाशैकबोधोनामैकषष्टितमःसर्गः॥६१॥ ॥९॥ ॥श्रीरामउवाच॥ ॥यदेतद्भवतादृष्टंचिद्व्योमवपुषातदा॥तदेकदेशसंस्थेनकिमुतभ्रमतांवरे॥१॥ ॥श्रीवसिष्ठउवाच॥ ॥संपन्नोहमनंतात्माव्यापीव्योमतदाकिल॥स्यातांतस्यामवस्थायांकीदृशौतौगमागमौ॥२॥ नैकस्थानस्थितमयोनाहंगतिमयोभवम्॥तदनेनस्वएवास्मिन्दृष्टमेतन्मयात्मनि॥३॥ यथांगानिशरीरत्वेपश्याम्यापादमस्तकम्॥ चिन्नेत्रेणाप्यनेत्रेणतथैतद्दृष्टवानहम्॥४॥ अनाकृतेर्निरवयवस्थितेस्तदातथाभवद्विमलचिदंबरात्मनः॥ जगंतितान्यवयवजालकानिमेयथास्वतोनविगलितानवस्तुता॥५॥ प्रमाणमत्रतेस्वप्नदृशोभुवनविभ्रमः॥स्वप्नेनुभूयतेदृश्यंनचकिंचित्स्वमेवतत्॥६॥ यथापश्यतिवृक्षःस्वंपत्रपुष्पफलादिकम्॥स्वसंवेदननेत्रेणतथैतद्दृष्टवानहम्॥७॥ यथांबुधिरनंतात्मावेत्तिसर्वान्जलेचरान्॥ तरंगावर्त्तफेनांश्चतथैतद्बुद्धवानहम्॥८॥ अवयवान्स्वानवयवीयथावेत्तिनिजात्मनि॥ अनन्यानात्मनःसर्गांस्तथैतान्बुद्धवानहम्॥९॥

स्वात्मतयानात्मदर्शनाप्रसिद्धिदृष्टांतोपन्यासैर्निराचष्टे ॥ यथेत्यादिना॥शरीरत्वेदेहात्मतादर्शने ॥ अंगानिहस्तपादादीनि ॥ यथादेहैकदेशस्थितिर्देहांतरभ्रमणादिकल्पनांविनापिअनेत्रेणअक्षिगोलकानपेक्षेणापिचिन्नेत्रेणयथापश्यामितद्वदित्यर्थः॥४॥ असंगोदासीननिरवयवब्रह्मभूतस्यतदाजगदवयवताकथमभूत्तत्राह ॥ अनाकृतेरिति ॥ तदानस्यांसमाध्यवस्थायामनाकृतेर्निरवयवस्थितेर्विमलचिदंबरात्मनोपिमेतानिजगंतितथाअवयवजालकान्यभवन्यथास्वतोवस्तुनानविगलितानापिवस्तुताअभवन्मत्सत्तयासत्त्वाद्वस्तुतानविगलितेतिमदवयवतास्वतःसत्ताशून्यत्वात्तुनवस्तुतातथाचवास्तवीसावयवतानाभवदित्यदोषइतिभावः॥५॥ उक्तेर्थेस्वप्नजगतस्तथाविधतांप्रमाणयति ॥ प्रमाणमिति ॥ ६ ॥ यच्चत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादिश्रुतिस्तुनिर्विकल्पसमाध्यादावेवजगद्दर्शनमाहनसविकल्पसमाधावित्याशयेननेत्रादिकरणानिविनाप्यात्मदर्शनेदृष्टांतांतरमाह ॥ यथेति ॥ वृक्षोवृक्षदेहात्मभूतोजीवः॥७॥अंबुधिःसमुद्राभिमानीजीवः॥८॥किंबहुनासर्वप्राणिष्वपिस्वावयवानांतथावेदनंप्रसिद्धमित्याशयेनाह॥ अवयवानिति ॥९॥

तदैवमेस्वात्मनिजगद्भुदयतादर्शनमितिनर्किंतुसदैवतत्ववणयाद्दष्ट्यातद्द्रष्टुंशक्यमित्याह ॥ अद्यापीति ॥ अद्यअपिशब्दाच्छ्वोपि ॥ १०॥ ११ ॥ अंगआदिपदानितत्तद्देवतापराणि ॥ १२ ॥ किंत्वमेकएववेत्सिनेत्याह ॥ योयइति ॥ ससर्वोपिमयासहएकात्मा अहंचस्वात्मानमीदृशंतदात्मभूतंवेद्मीतिमत्वयाएवसर्वविदुषांप्रत्ययाइतिनतेपृथगन्वेष्या इत्याशयः ॥ १३ ॥ परिणतेःपरिपाकवशाद्वेदित्रादित्रिपुटीवुद्धिर्नकाचित्स्वात्मातिरिक्तास्तियतोविज्ञानेनैकात्मतैवतेषामभ्युदितेत्यर्थः ॥ १४ ॥ एकेनज्ञानेनकथंव्यवहितविप्रकृष्टसर्वदर्शनमितिचेत्तद्दृष्टांतेनसंभावयति ॥ दिव्येति ॥ अद्रिसंस्थस्यपर्वतारूढस्यपुंसस्तिमिररोगाद्यप्रतिहतत्वादौषधादिपरिष्कृतत्वाद्वाआजानसिद्धत्वाद्योगपरिष्कृतत्वाद्वा

अद्यापितानहंदेहेव्योम्निशैलेजलेस्थले ॥ तथैवसर्गान्पश्यामिरामबोधैकतांगतः॥ १० ॥ पुरोस्माकमिदंविश्वंगृहस्यांतर्बहिस्तथा॥ पूर्णमेतज्जगद्दृष्टंदेवैर्ग्निबोधैकतांगतः॥ ११ ॥ यथांभोरसतांवेत्तिशैत्यंवेत्तियथाहिमम्॥ स्पंदंवेत्तियथावायुस्तथैतद्वेत्तिशुद्धधीः॥ १२ ॥ योयोनामविवेकात्माशुद्धबोधैकतांगतः ॥ समएवमयैकात्मावेद्मिस्वात्मानमीदृशम्॥ १३ ॥ अस्यादृष्टेःपरिणतेर्वेत्तृवेदनवेद्यधीः॥ नकाचिदस्यभ्युदिताविज्ञानात्मैकतायतः॥ १४॥ दिव्यादृगद्रिसंस्थस्यतथायोजनकोटिगान्॥ भावान्वेत्तिबहिश्चांतरेवंतद्वद्वानहम् ॥ १५॥ यथाभूमंडलंभावान्निधिधातुरसादिकान्॥ वेत्त्येवंतन्मयाबुद्धमनन्यद्दृश्यमात्मनः॥ १६॥ ॥श्रीरामउवाच॥ ॥ब्रह्मन्ननुभवत्येवंत्वयितामरसेक्षण ॥ साकिंकृतवतीब्रूहिकांतार्यापाठपाठिनी ॥ १७॥ ॥श्रीवसिष्ठउवाच॥ ॥तामेवार्यांपठंतीसातथैवानुनयान्विता॥ मत्समीपेनभोदेहाव्योम्निदेवीवसंस्थिता ॥ १८॥ यथाहमाकाशवपुस्तथैवासौखरूपिणी॥ तेनदृष्टानसापूर्वदेहेनललनामया ॥ १९ ॥ अहमाकाशमात्रात्मासाखमात्रशरीरिणी ॥ जगज्जालंखमात्रंतदिति तत्रतदास्थितम् ॥ २० ॥ ॥श्रीरामउवाच॥ शरीरस्थानकरणप्रयत्नप्राणसंभवैः॥ यद्वदेतिवचोवर्णैस्तत्कुतस्त्वादृशाकृतेः॥ २१ ॥ रूपालोकमनस्कारःकुतोनामात्मनामिति॥ ब्रूहिमेभगवंस्तत्त्वंयथावत्तश्चनिश्चयम्॥ २२॥ ॥श्रीवसिष्ठउवाच॥ ॥रूपालोकमनस्काराःशब्दपाठवचांसिच॥ यथास्वप्नेनभस्येवसंतितत्रतथांबरे॥ २३॥ रूपालोकमनस्कारैःस्वप्नेचिन्नभएवते॥ यथोदेतितथातत्रतद्दृश्यंखात्मकंस्थितम्॥ २४॥

दिव्याबहिराधिभौतिकानंतराध्यात्मिकांश्चभावान्वेत्तिसाक्षात्पश्यति ॥ एवंतद्वदित्यर्थः ॥ १५ ॥ भूमंडलपदेनतदभिमानीजीवोगृह्यते ॥ १६ ॥ १७ ॥ अनुनयेनप्रशंसादिप्रीतिजनकव्यापारेणान्विता ॥ १८ ॥ यदिसमीपेसंस्थितातर्हिविनैवसमाधिंप्रागेवत्वयाकुतोनदृष्टातत्राह ॥ यथेति ॥ १९ ॥ तत्रतस्मिंश्चिदाकाशे ॥ तदासमाधिकाले ॥ २० ॥ यद्याकाशरूपैवसातर्हिजिह्वाताल्वोष्ठप्राणवाय्वाद्यभावात्कथमार्यांपठितवतीतिरामःपृच्छति ॥ शरीरेति ॥ तादृशाकृतेराकाशशरीरायाः ॥ २१ ॥ एवमाकाशमात्रस्यतवतद्रूपदर्शनपर्यालोचनाद्यपिदुर्लभमित्याशयेनाह ॥ रूपालोकेति ॥ त्वंचतद्वाययथायादृशंवृत्तंसंभाषणादिव्यवहारोयस्यसयथावृत्तोभूस्तन्निश्चयंचब्रूहीत्यर्थः ॥ २२ ॥ तत्रस्वप्नदृष्टांतेनैवकल्पनयासर्वमुपपन्नमित्युत्तरमाह ॥ रूपेत्यादिना॥ २३ ॥ २४ ॥

अत्यल्पमिदमुच्यतेतदातदृश्यंस्वात्मकमिति तत्त्वतो विचारेइदानीमिदंजगदपिस्वात्मकमेव अत्रापिशरीरादिभ्रांत्यैवव्यवहारभ्रमश्चेत्याह ॥ नकेवलमिति ॥ वय मस्माकंविषयं गोचरंचयावत्तत्सर्वंजगच्चेत्यन्वयः ॥ २५ ॥ नामेतिश्रुतिविद्वदनुभवादिप्रसिद्धमिदमितिद्योतनाय ॥ स्वभावस्यजगद्वासनोपहितचित्स्वभावस्य ॥ २६ ॥ काप्रमा तत्सत्तावु द्धेरशरीरंशरीरेष्वनवस्थेष्ववस्थितमित्यादिश्रुतिबाधितत्वादितिभावः ॥ २७ ॥ सत्निर्विशेषात्मतत्त्वंचाद्यत्वादसदिवात्यंताप्रसिद्धमिवस्थितम् ॥ चकारश्चिदानंदस्वभावव्य त्यासोप्येवमित्यनुक्तसमुच्चयार्थः ॥ २८ ॥ धरापृष्ठेकृष्यादिव्यवहृतिरध्वपृष्ठेगमनादिव्यवहृतिःसौधादिपृष्ठेशयनादिव्यवहृतिश्चनभश्चिदाकाशएव ॥ २९ ॥ ३० ॥ स्वप्नैवं चिद्व्येपिहेत्वंतरसंभावनायास्तुनावकाशः अनवस्थादिदोषभयेनतत्रसर्ववादिनांमूकीभावादविद्योपहितचिदात्मनएवस्वभावोयमितिमत्पक्षस्यैवपरिशेषात्सिद्धेरित्याह ॥

नकेवलंतुतदृश्यंयावत्तुविषयंवयम् ॥ जगच्चेदंस्वमेवाच्छंयथातन्नस्तथाखिलम् ॥ २५॥ परमार्थमहाधातुर्वेद्यनिर्मुक्तचिद्वपुः॥एवं नामस्वयंभातिस्वभावस्यैवनिश्चयः॥ २६॥शरीरस्थानकरणसत्तायांकातवप्रमा॥यथैवतेषांदेहादितथास्माकमिदंस्थितम्॥ २७॥ यथैवतत्तथैवेदंतथैवेदंयथैवतत्॥ असत्सत्तामिवगतंसच्चासदिवचास्थितम्॥ २८॥ यथास्वप्नेधराध्वाद्रिपृष्ठव्यवहृतिर्नभः॥ तदाद्य हंचत्वंसाचतदिदंचतथानभः॥ २९॥ यथास्वप्नेनृभिर्युद्धकोलाहलगमागमाः॥ असंतोप्यनुभूयंतेसंसारनिकरास्तथा॥ ३०॥ वक्षिचे त्स्वप्नदृष्टश्रीःकस्मात्तदसमंजसम्॥ अवाच्यमेतद्धेतुर्हिनान्योस्त्यनुभवास्थितेः॥ ३१॥ कथमात्मस्यतेस्वप्नइतिप्रष्टुःप्रकथ्यते॥ यथैवं पश्यसीत्येवहेतुरत्रास्तिनेतरः॥ ३२॥ स्वप्नजंतुरिवव्योम्निभातिप्रथमसर्गतः॥ प्रभृत्येवविराडात्मास्वेखमेवपरस्परे॥ ३३॥ स्वप्नशब्देन बोधार्थंतवव्यवहराम्यहम्॥ दृश्यंत्विदंनसन्नासन्नस्वप्नोब्रह्मकेवलम्॥ ३४॥ अथराघवसाकांतामयाकांतानुषंगिणी॥ संविदंतन्म यींकृत्वापृष्टेदंदृश्यरूपिणी॥ ३५॥ व्यवहारोयथोदेतिस्वप्नेस्वप्नजनैस्सह॥ तथातदातयासार्द्धंव्यवहारोममोदितः॥ ३६॥ यथैवस्वप्न संकाशोव्यवहारःस्वमेवसः॥ तथैवत्वमिमंविद्धिमामात्मानंजगच्चखम्॥ ३७॥ यथास्वप्नजगद्रूपंखमेवैवमिदंजगत्॥ जाग्रदादौसहि स्वप्नःसर्गादौजगदुद्भवः॥ ३८॥

वक्षीति ॥ तत्तेवचनमसमंजसम् स्वामानुभवस्थितेरन्योहेतुर्हियस्मान्नास्ति ॥ ३१ ॥ प्रष्टुःसैवैरेवयथैवपश्यसीतितदनुभवएवोत्तरंप्रकथ्यतेनेतरोत्रहेतुस्तत्साधकोस्तीत्यर्थः ॥ ३२ ॥ तथाहिपुसुप्तिसदृशप्रलयानंतरंप्रथमसर्गतःप्रभृत्येवस्वप्नजंतुरिवकल्पनात्माविराडात्माचिदाकाशेचिदाकाशमेवप्रथतइत्याह ॥ स्वप्नेति ॥ परस्परेविषयविषयितया अन्योन्यसापेक्षरूपे ॥ ३३ ॥ तर्हिकिंदृष्टांतभूतस्वप्नस्वभावमेवजगत् नेत्याह ॥ स्वप्नशब्देनेति ॥ ३४ ॥ एवमवांतरप्रश्नंसमाधायपूर्वपृष्टकथाशेषमाह ॥ अथेत्यादिना ॥ कांतिवक्ष्यमाणेअनुषंगिणीअनुरागवती ॥ तन्मयींतदभिप्रायजिज्ञासाप्रधानांसंकल्पसंविदंकृत्वा ॥ ३५ ॥ अशरीरस्यतेतयासहकथंप्रभादिव्यवहारोभूत्तत्राह ॥ व्यवहारइ ति ॥ ३६ ॥ त्वयासहेदानींतनव्यवहारोपिममतादृशएवेत्याह ॥ यथैवेति ॥ ३७ ॥ कथंतर्हिस्वप्नइतिजगदितिचनामभेदस्तत्राह ॥ जाग्रदादाविति ॥ ३८ ॥

अयंजगद्वेषआत्मनःस्वमएवअथवानकिंचित् ॥ ३९ ॥ अथवाकश्चिद्विशेषोपिवक्तुंशक्यइत्याशयेनाह ॥ स्वमस्येति ॥ युष्मदादिवासनाकारेणसाकारः ॥ ४० ॥ यतंद्रष्टृदृश्यांतरालिकंदर्शनमपितथाव्योमैव ॥ ४१ ॥ यःस्वमःस्फुरतितस्यसर्गोजन्मकुतः ॥ तेनचवंध्यापुत्रकल्पेनजगतासाकृतित्वंकथंभवेत् ॥ ४२ ॥ यत्रसाकारस्ययुष्मदादेःप्रसिद्धंस्वमजगदसत् तत्रनिराकारस्यब्रह्मणःस्वमभूतस्सर्गस्तथेतिकिंवाच्यमित्यर्थः ॥ ४३ ॥ ४४ ॥ ब्रह्मणाहिरण्यगर्भाख्येनब्राह्मणेनअक्षाइंद्रियच्छिद्राण्येवगवाक्षायस्मिंस्तथाविधोदेहादिसर्गमंडपःकृतोपिनकृतएव ॥ ४५ ॥ अतःसर्वदृश्यमार्जनात्परिशिष्टोबुधस्तत्साक्ष्येवसन्परमार्थः अतोहेरामत्वमंतःपाषाणमौनमवलंब्यबहिर्यथाप्रवाहमाचारमाचरतस्तेशरीरंयावदारब्धशेषमस्तुतदुत्तरंमास्तुवानकश्चिद्विशेषइत्यर्थः ॥ ४६ ॥ ॥ इतिश्रीवासिष्ठ० म० रा० तात्पर्यप्रकाशेनिर्वाण० उत्तरार्द्धेद्विषष्टितमःसर्गः ॥ ६२ ॥ ७ ॥

स्वप्नोयंजगदाभोगोनकिंचिद्वाखमेवच ॥ निर्मलंज्ञप्तितामात्रमित्थंसन्मात्रसंस्थितम् ॥ ३९ ॥ स्वप्नस्यविद्यतेद्रष्टासाकारोयुष्मदादिकः ॥ द्रष्टातुसर्गस्वप्नस्यचिद्व्योमैवामलंस्वतः ॥ ४० ॥ यथाद्रष्टामलंव्योमदृश्यंतद्वद्गतंतथा ॥ स्वप्नरूपजगत्युच्चैर्जगत्त्वेनामलंनभः ॥ ४१ ॥ चिद्व्योम्नोऽनाकृतेःस्वप्नोहृदिस्फुरतियःस्वतः ॥ सर्गस्तस्यकुतस्तेनसाकृतित्वंकथंभवेत् ॥ ४२ ॥ साकारस्यैवयत्स्वप्नजगत्तद्व्योमनिर्मलम् ॥ निराकारस्यचिद्व्योम्नःसर्गःस्वप्नःकथंनखम् ॥ ४३ ॥ निरुपादानसंभारमभित्तावेवचित्रभः ॥ पश्यत्यकृतमेवेमंजगत्स्वप्नंकृतंयथा ॥ ४४ ॥ स्वच्छाचिदाकाशमुदाब्रह्मणाब्राह्मणेनखे ॥ कृतोपिनकृतःसर्गमंडपोक्षगवाक्षकः ॥ ४५ ॥ नोकर्तृतानचजगंतिनभोक्तृतास्तिनास्तीतिनास्तिनचकिंचिदतोबुधःसन् ॥ पाषाणमौनमवलंब्ययथाप्रवाहमाचारमाचरशरीरमिहास्तुमावा ॥ ४६ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० पाषा० चिदैक्यंनामद्विषष्टितमःसर्गः ॥ ६२ ॥ ॥ ७ ॥ ॥श्रीरामउवाच॥ ॥तवस्त्रियाऽस्वरूपेणदेहेनाभूत्तयाकथम् ॥ कथमुच्चारितास्तत्रवर्णाःकचटतादयः ॥ १ ॥ ॥श्रीवसिष्ठउवाच॥ ॥ वर्णेषुखशरीराणांवर्णाःकचटतादयः ॥ कदाचनापिनोद्यंतिशवानामिवकेनच ॥ २ ॥ वर्णोच्चारोभविष्यच्चेत्प्रकटार्थस्ततःक्वचित् ॥ स्वप्नेष्वन्वभविष्यत्तंविनिद्रःपार्श्वगोजनः ॥ ३ ॥

अज्ञपक्षेंतरंतःसंत्यनंताःसर्गसंपदः ॥ ब्रह्मैवब्रह्मवित्पक्षेचिदेकघनमीर्यते ॥ १ ॥ स्वमव्यवहारदृष्टांतेनप्राक्समर्थितमप्यशरीरस्यसंवादादिव्यवहारंमंदप्रज्ञानांस्फुटबोधायपुनारामःपृच्छति ॥ तवेति ॥ हेमुनेतवतयापूर्वोक्तयास्त्रियासहअस्वरूपेणमुखजिह्वाद्यवयवशून्येनवासनामात्रात्मनादेहेनकथंव्यवहारोभूत् ॥ तत्रतस्यांदशायांकचटतपादयोवर्णास्त्वयाविनाजिह्वांकथमुच्चारिताः ॥ १ ॥ वर्णोच्चारणादिव्यवहारेशरीरस्यनकारणता सत्यपिशवशरीरेतददर्शनाद्विनापिशरीरंस्वमेतद्दर्शनादन्वयव्यतिरेकव्यभिचारात् सहेतुकत्वेव्यवहारस्यसत्यतापत्तेश्च किंतुकल्पनामात्रं तच्चतदापिसुलभमित्याशयेनवसिष्ठउत्तरमाह ॥ वर्णेष्वित्यादिना ॥ खमिवशरीरंयेषांतत्त्वविदांतेषांमतेवर्णेषुमध्येयेकचटतपादयस्तेकदाचनापिनोद्यंति ॥ कल्पनामात्ररूपत्वादित्यर्थः ॥ २ ॥ उक्तेऽर्थेनुकूलंविपक्षेप्रतिकूलंचतर्कमाह ॥ वर्णोच्चारइति ॥ प्रकटश्चासावर्थश्चप्रकटार्थःपरमार्थइत्यर्थः ॥ यदिस्वामवर्णोच्चारःपरमार्थःस्यात्तदापार्श्वस्थश्रवणानुभवगोचरःस्यादितितर्कः ॥ ३ ॥

स्वभावजंनिद्रास्वभावबलकल्पितम् ॥४॥ यदैवंतदाकितत्राह ॥ तदेति ॥ तदातैमिरिकाध्यस्तमिंदुकाष्ण्यमाकाशमूर्त्तताशिलाकर्त्तृकंगीतमित्यादिप्रातिभासिकार्थतांगतास्त दवच्छिन्नचिदाकाशाइवस्वाप्नदेहशब्दादयोपितत्तदुद्बुद्धसंस्कारोपहितचिदाकाशाएवतथाभांतीतिसिद्धमित्यर्थः ॥ ५ ॥ तेचिदाकाशाएवतथाभांतुकिंततस्तत्राह ॥ तदिति॥ यथानभसोमूर्त्तात्मनाकचनंनभसोनेतरत्तथातच्चिदाकाशकचनादियत्स्वप्नवेदनेजगदाकारंप्रसिद्धंतच्चिदाकाशमेवविद्धि ॥ ६ ॥ एवंस्वाप्नार्थानांचिदाकाशमात्रतांप्रसाध्यत त्साम्येनैवपुरस्थितानांसमाधिदृष्टानांचार्थानांचिदाकाशमात्रतेत्याह ॥ यथेति ॥ तत्समाधिदृष्टम् ॥ ७ ॥ तथाचायंसर्वोपिचितएवकचनचमत्कारोनाणुमात्रमप्यचिद्रूपंकि चिदस्तीत्याह ॥ तथेति ॥ इदंजगत्सत्यमिवस्थिरमिवचस्फुरद्भवतितथाचतुरंतच्चेतनंब्रह्मस्थितमित्यन्वयः ॥ ८ ॥ प्रमाणगम्यस्यजाग्रत्प्रपंचस्यतदगम्यस्वप्नसाम्यमयुक्तमितिरा

तस्मान्नकिंचित्स्वप्नेषुतत्सत्यंभ्रांतिरेवसा ॥ चिन्मात्राकाशकचनंतत्तथाखेस्वभावजम् ॥ ४ ॥ तदेंदुकाष्ण्यंखतनुशिलागेयादितांगताः॥ इवाभांतिचिदाकाशास्तथादेहरवादयः॥५॥तच्चिदाकाशकचनंयन्नामस्वप्नवेदने॥ आकाशमेवनभसःकचनंविद्धिनेतरत्॥६॥ यथास्वप्नस्तथैवेदंजाग्रदग्रेव्यवस्थितम् ॥ आकाशमप्यनाकाशंयथैवेदंतथैवतत् ॥ ७ ॥ तथाकचतितच्चारुचेतनंचतुरंतथा ॥ यथा स्थितंतदेवेदंसत्यंस्थिरमिवस्फुरत्॥८॥ ॥श्रीरामउवाच ॥ ॥ भगवन्स्वप्नएवेदंकथंजाग्रदवस्थितम्॥ असत्यमेवसत्यत्वमिवयातं कथंभवेत्॥ ९॥ ॥श्रीवसिष्ठउवाच॥ ॥ शृणुस्वप्नमयान्येवकथंसंतिजगंत्यलम्॥ नान्यानिनचसत्यानिनस्थिराणिस्थितानिच ॥ १० ॥ अनुभूतानिबीजानिबीजराशाविवांबरे ॥ अन्यान्यन्यानितान्येवसमानिनसमानिच ॥ ११ ॥ प्रत्येकमंतरन्यानितथैवाभ्युदि तानिच॥ परस्परमदृष्टानिबहूनिविविधानिच ॥ १२ ॥ अन्योन्यंतानिसर्वाणिनपश्यंत्येवकिंचन ॥ जडानीवैकराशीनिबीजानीवग लंत्यपि॥ १३॥ व्योमात्मत्वान्नगगनंनविदंतिपरस्परम्॥ अपिचेतनरूपाणिसुप्तानीवनिरंतरम्॥ १४॥

मः शंकते ॥ भगवन्निति ॥ असत्यमेवसत्यत्वंचक्षुरादिप्रमाणवेद्यतांकथंयातंकथंसंभवेत् ॥ ९ ॥ अस्त्वापाततश्चक्षुरादिमानगम्यतातथापितत्त्वतोविमर्शासहत्वेनास्थिरत्वेन चस्वप्नसाम्यमस्त्येवेत्याशयेनोत्तरमाह ॥ शृण्वित्यादिना ॥ स्वप्नवदेवात्मनोनान्यानिनाप्यात्मवत्सत्यानिस्थिराणिचेत्यनिर्वचनीयान्येवेत्यात्मसत्तयैवस्थितानिचेत्यर्थः॥१०॥ एवंपरस्परंबीजभावाद्विरुद्धभेदाभेदसमासमरूपत्वाच्चस्वप्नसाम्यमित्याह ॥ अनुभूतानीति ॥११॥ कदलीत्वक्संन्निवेशवत्परस्परमंतरंतरानंत्येनावस्थानानुभवादपिमिथ्यात्वा त्स्वप्नसाम्यमेवेत्याह ॥ प्रत्येकमिति ॥ स्वप्नवत्परस्परमदृष्टत्वादपितथेत्याह ॥ परस्परमिति ॥ १२ ॥ तदेवोपपादयति ॥ अन्योन्यमिति ॥ कुसूलस्थबीजानीवांतरेवगलंत्य पि ॥ १३ ॥ गलितान्यपितानिचेतनरूपाण्येवेतिनप्रतप्तखर्परनिपतितजलबिंदुवद्व्योमात्मतांप्राप्यशून्यमेवसंपद्यंतेनापिअस्मदादिवत्परस्परंविदंतिपश्यंतिकिंतुअज्ञानावृतचेत नरूपत्वान्निरंतरंसुप्तानीवस्वप्नमेवानुभवंतीत्यर्थः ॥ १४ ॥

101

तत्रसुप्ताजीवाःस्वप्नजगज्जालंप्राप्यतत्रैवकल्पितेअहर्निसर्वव्यवहारिणोभवंतीतिप्रतिजानीते ॥ सुप्ताइति ॥ प्रतिज्ञातमर्थमसुरमनुष्यराक्षसादीनांस्वप्नहतानांगत्यंतराभावात्प रिशेषानुमानेनसाधयिष्यन्प्रथममसुरेषुदर्शयति ॥ असुराइतिसार्द्धेन ॥ १५ ॥ असुरादैत्याःसौप्तिकेनदेवैर्निहताःसंतःस्वस्वप्नजगत्येवस्थितायतोज्ञानाभावान्मुक्तिनगताः ॥ नापिजडतांपाषाणादिभावमिताः ॥ नापिदेहवंतःसंपन्नाः ॥ ईदृशास्तेस्वप्नजगत्स्थितेर्विनाकिंसंत्वित्यर्थः ॥ १६ ॥ एवंपुरुषामनुष्याअपिस्वस्वप्नरूपेजगज्जालेवासनाभिर्व्य वहारिणः ॥ तेचतत्रैवान्यैःपुंभिर्निहताःसंतस्तथैवप्रागुक्तासुरजीववत्स्वप्नपरंपरायामेवव्यवस्थिताः ॥ १७ ॥ यतस्तेपिज्ञानाभावान्निर्मोक्षानिःशरीराश्चेतिनजागरक्षमावास नाभिश्चव्यवहरणशीलाः ॥ ईदृशास्तुतेस्वप्नजगज्जालंविनाक्ववसंतु ॥ तेषांस्वप्नंविनानान्यागतिरस्तीत्यर्थः ॥ १८ ॥ अयमसुरेषुमनुष्येषुचदर्शितोन्यायोराक्षसादिष्वपियो

सुप्ताःस्वप्नजगज्जालमहर्निव्यवहारिणः ॥ असुरानिहतादेवैस्तेस्वप्नजगतिस्थिताः ॥ १५ ॥ अज्ञानान्नगतामुक्तिंनजाड्याज्जडतामि ताः॥ नदेहवंतःकिंसंतुविनास्वप्नजगत्स्थितेः ॥१६॥ सुप्ताःस्वप्नजगज्जालेस्वाचारव्यवहारिणः॥ पुरुषानिहताःपुंभिस्तेतथैवव्यवस्थिताः ॥ १७॥ निर्मोक्षानिःशरीरास्तेचेतनावासनान्विताः॥ दृष्टंस्वप्नजगज्जालंविनाचक्वसंतुते ॥ १८ ॥ सुप्ताःस्वप्नजगज्जालव्यवस्थाचार चारिणः॥ येहताराक्षसादेवैस्तेयथैवव्यवस्थिताः॥ १९ ॥ एवंयेनिहतारामकिंतेकुर्वंतिकथ्यताम् ॥ अज्ञत्वान्नगतामुक्तिंचेतनान्नदृष त्स्थिताः॥ २० ॥ साद्र्यब्ध्युर्वीजनंदृश्यमिदंसर्वंयथास्थितम् ॥ चिरायानुभवंत्येतेयथेमेवयमादृताः॥ २१॥ तेषांकल्पजगत्संस्थायथा स्माकंतथैवताः॥ अस्माकंजगतीसंस्थायथातेषांतथैवच॥२२॥ एतेषांस्वप्नपुरुषास्तएवेमेवयंस्थिताः॥ येचतेनामसंसारास्तेभ्यएक मिमंविदुः॥ २३॥ तेस्वप्नपुरुषास्तेषांसत्याएवानुभूतितः ॥ आत्मनोपिपरस्यापिसर्वगत्वाच्चिदात्मनः ॥ २४॥ यथातेस्वप्नपुरुषाःसत्य मात्मन्यथापरे॥ तथापिस्वप्नपुरुषाःसत्यमेवतथैवते ॥ २५ ॥ स्वस्वप्नपुरपौरायेत्वयादृष्टास्तथैवते॥ स्थितास्तत्रतथाद्यापिब्रह्मसर्वात्म कंयतः॥ २६॥ प्रबोधेपिहिभिद्यंतेस्वप्नभावायथास्थिताः ॥ तथास्थित्यानुभूयंतेपरब्रह्मतयाथवा॥ २७॥

ज्यइत्याशयेनाह ॥ सुप्ताइतिद्वाभ्याम् ॥ १९ ॥ २० ॥ तेषांस्वस्वप्नश्चिरानुवृत्त्याअस्मदनुभवंसाम्याज्जाग्रदवस्थैवभवतीत्याह ॥ साद्रीति ॥ आदृताःसत्यत्वाभिमानिनः ॥ ॥ २१ ॥ २२ ॥ तथाचास्माभिरनुभूयमानंजगत्तदंतर्गतावयंचयदितैर्दृष्टास्तर्हिअस्मज्जाग्रत्तेषांस्वप्नोवयंचतेषांस्वप्नपुरुषाःसंपद्यामहेइत्याह ॥ एतेषामिति ॥ २३ ॥ आत्म नोपिपरस्यपुरुषांतरस्याप्यनुभूतितःअनुभवाद्यतस्तुल्याअतःसत्याएव तत्सत्तानिमित्तस्याधिष्ठानचिदात्मनःसर्वगतत्वेनतुल्यत्वादित्यर्थः ॥ २४ ॥ अपिशब्दोभिन्नक्रमः ॥ यथातेस्वप्नपुरुषाःसत्यास्तथाअपरेपिमयाप्रतिस्वप्नमनुभूयमानाःपुरुषाःसत्यमेवतथैवतेत्वयापिस्वप्नपुरुषाबोध्याः ॥ २५ ॥ २६ ॥ यथातेतेस्वप्नभावाःप्रबोधेजागरणेयथा भिद्यंतेविशीर्यंतइत्यनुभूयतेतथास्वप्नकालेस्थित्यास्थिताइत्येवानुभूयंते ॥ तथाचतद्बाधइवतत्सत्ताप्यनुभवबलंलब्धानापह्नोतुंशक्येत्यर्थः ॥ अथवाब्रह्मसत्तायाएवसर्वसत्ता त्मकत्वात्कस्यापिसत्ताकदापिनापह्नोतुंशक्येत्याशयेनाह ॥ परब्रह्मतयेति ॥ २७ ॥

तथाचप्राक्प्रतिज्ञातंफलितमित्याह ॥ सर्वमिति ॥ यथासर्वंजगदाकाशकार्यत्वादाकाशमेवेतितद्रूपेणनक्वचित्किंचिदपिहन्यतेतथाप्रथमंविनोदयेउत्पत्तिशून्येमध्येनिरंतरेअपेचनिरंतेपरमाकाशेब्रह्मणितत्रनिरंतेअसंख्येचित्तसंघातेतेषुचासंख्येजगतांगणेतत्रापिप्रत्याकाशंतत्रापिप्रतिसंसारमंडलंतत्रापिप्रतिभूरादिलोकंतत्रापिप्रतिद्वीपंतत्रापिप्रतिगिरितत्रापिप्रतिमंडलविस्तारंतत्रापिप्रतियामंप्रतिपुरंतत्रापिप्रतिगृहंतत्रापिप्रतिजंतुप्रतियुगादिकालंचयावंतोयेजीवाम्टतामोक्षविवर्जिताःस्थितास्तावंतःसंसाराःपृथक्पृथगक्षयाएवस्थिताइतिपंचानामेकान्वयः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ तावत्संख्ययापिजगत्संख्यायानविश्रांतिरित्यनवस्थैवमायायाभूषणमित्याशयेनाह ॥ तेषामित्यादिना ॥ ३३ ॥ ३४ ॥ हेरामकुड्येनभसिउपलेपाषाणेसलिलेस्थलेचांतर्हियतश्चिन्मात्रमस्तितदेवाशेषविश्वंनजगन्नामवस्त्वंतरम् ॥ तत्तथासतिचितःसर्वगत्वाद्यत्रतत्रसर्वत्रजग

सर्वंसर्वात्मसर्वत्रसर्वदास्तितथापरे ॥ यथानकिंचिन्नाकाशंनक्वचिन्नचहन्यते ॥ २८ ॥ निरंतरेपराकाशेनिरंतेचविनोदये ॥ निरंतेचित्तसंघातेनिरंतेजगतांगणे ॥ २९ ॥ प्रत्याकाशकलाकोशंप्रतिसंसारमंडलम् ॥ प्रतिलोकांतराकारंप्रतिद्वीपंगिरिंप्रति ॥ ३० ॥ प्रतिमंडलविस्तारंप्रतिग्रामंपुरंप्रति ॥ प्रतिजंतुप्रतिगृहंप्रतिवर्षयुगंप्रति ॥ ३१ ॥ यावंतोयेम्टताःकेचिज्जीवामोक्षविवर्जिताः ॥ स्थितास्तत्रतावंतःसंसाराःपृथगक्षयाः ॥ ३२ ॥ तेषामंतर्जनाःसंतिजनंप्रतिपुनर्मनः ॥ पुनर्मनःप्रतिजगज्जगत्प्रतिपुनर्जनः ॥ ३३ ॥ इत्यमाद्यंतरहितएषदृश्यमयोभ्रमः ॥ ब्रह्मैवब्रह्मवित्पक्षेनात्रेयत्तास्तिकाचन ॥ ३४ ॥ कुड्येनभस्युपलकेसलिलेस्थलेंतश्चिन्मात्रमस्तिहियतस्तदशेषविश्वम् ॥ तद्यत्रतत्रजगदस्तिकुतोत्रसंख्यातज्ज्ञेषुतत्परमथाज्ञमनस्सुदृश्यम् ॥ ३५ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० निर्वाणप्र० उ० पा० जगत्तत्त्वैक्यप्रतिपादनंनामत्रिषष्टितमःसर्गः ॥ ६३ ॥ ॥ ६४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ततस्तत्कुवलोल्लासिमालतीमाल्यलोचना ॥ ललनाललितालोक्यलीलयालपितामया ॥ १ ॥ कात्वंकमलगर्भाभेकिमर्थमामुपागता ॥ कस्यासिकिंप्रार्थयसेक्वगतासिकिमास्पदा ॥ २ ॥ ॥ विद्याधर्युवाच ॥ ॥ मुनेश्शृणुयथावत्त्वमात्मोदंतंवदाम्यहम् ॥ प्रष्टुमर्हसिविलब्धमार्त्ताकरुणयार्थिनीम् ॥ ३ ॥

दृश्येव ॥ अत्रजगतिसंख्याकुतः ॥ तत्त्वविश्वंतज्ज्ञेषुपरंनिर्विशेषंनिरतिशयानंदैकरसंब्रह्मैव ॥ तुशब्दार्थेऽथशब्दः ॥ अज्ञानांमनःसुतुतदेवदृश्यप्रपंचमेवेत्यनर्थरूपमेवेत्यर्थः ॥ तथाचश्रुतिः ॥ तत्त्वेवभयंविदुषोऽमन्वानस्येति ॥ ३५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० त्रिषष्टितमःसर्गः ॥ ६३ ॥ ॥ ६४ ॥ ॥ पृष्टयेहवसिष्ठेनविद्याधर्याहिविस्तरात् ॥ स्वगेहजन्मकर्माद्यानिर्वेदांतानिरूपिताः ॥ १ ॥ प्रासंगिकंप्रश्नंसमाधायश्रीवसिष्ठःप्रस्तुतकथाशेषमाह ॥ ततइत्यादिना ॥ कुवलयान्युत्पलानीवोल्लासिनीकटाक्षमालाभिर्मालतीमाल्यानीवप्रसर्तीलोचनेयस्याःसाललनामयाआलोक्यलीलयाकौतुकेनआलपितासंभाषितापृष्टेतियावत् ॥ १ ॥ कस्यासिदुहिताभार्यावेतिशेषः ॥ किमास्पदमावासस्थलंयस्याः ॥ २ ॥ आत्मनःस्वस्याउदंतंवृत्तांतम् ॥ एकांतेविलब्धंपरदारसंभाषणमयुक्तमितिशंकांवारयति ॥ प्रष्टुमिति ॥ आर्त्तांआर्तिप्रशमनोपायार्थिनींमांकरुणयाविलब्धंप्रष्टुमर्हसीत्यन्वयः ॥ तथाचसतामार्त्ताश्वासनमुचितमेवेतिभावः ॥ ३ ॥

---

१ अत्रटीकानुरोधेन ( ततःकुवलयोल्लासि ) इतिपाठोपेक्षितइतिभातिदृष्टश्चैकस्मिंश्चित्पुस्तके ॥ कुवलयपर्यायःकुवलशब्दोप्यस्तीतितोपिसंगच्छते

तत्रप्रथमंस्वास्पदंवक्तुमुपक्रमते ॥ परमाकाशेत्यादिना ॥ कस्मिंश्चिदिति ॥ पादोस्यसर्वाभुतानीत्यादिश्रुतेरितिभावः ॥ ४ ॥ इहास्मिन्युष्मज्जगद्गृहेअपवरकाअंतर्गृहप्रकोष्ठाः ॥ अत्रएष्वपवरकेषुधातृत्वंहिरण्यगर्भतातदाकारयामाययासर्गवैचित्र्यकल्पनाख्याएकैवकुमारीगृहस्वामिनीक्रीडार्थंकृतेत्यर्थः ॥ ५ ॥ यतोद्वीपैःसमुद्रैश्चवलयैरिववलितमतएवतद्वर्णैःपाटलंसद्वुत्थमुन्नतंजगल्लक्ष्म्याःप्रकोष्ठंकरमूलमिवस्थितमित्यर्थः ॥ ६ ॥ समानांद्वीपानांसमुद्राणांचांतेसर्वदिक्कंपरितइनियावत् ॥ योजनानांदशसहस्राणिपरिणाहतोदैर्घ्येण ॥ ७ ॥ तांमहींवर्णयति ॥ स्वयमित्यादिना ॥ स्वयमेवरात्रावपिप्रकाशतेइतिस्वयंप्रकाशा ॥ संकल्पानांसर्वकामानांफलदा ॥ अंबरमिवनिर्मला ॥ चि

परमाकाशकोशस्यकस्मिंश्चित्कोणकोटरे ॥ युष्माकंसंस्थितंकिंचिदिदंतावज्जगद्गृहम् ॥ ४ ॥ पातालभूतलस्वर्गाइहापवरकास्त्रयः ॥ कल्पनैकाकुमार्यत्रकृताधातृत्वमायया ॥ ५ ॥ तत्रद्वीपैःसमुद्रैश्चवलितंवलयैरिव ॥ पाटलोत्थंजगल्लक्ष्म्याःप्रकोष्ठमिवभूतलम् ॥ ६ ॥ अंतेद्वीपसमुद्राणांसर्वदिक्कमवस्थिता ॥ योजनानांसहस्राणिदशहेममयीमही ॥ ७ ॥ स्वयंप्रकाशसंकल्पफलदांबरनिर्मला ॥ चिंतामणिमयीस्वच्छास्वच्छायाजितविष्टपा ॥ ८ ॥ साप्सरोमरसिद्धानांलीलाविहरणावनिः ॥ संकल्पमात्रसंपन्नसर्वसंभोगसुंदरी ॥ ९ ॥ अंतेतस्याभुवःशैलोलोकालोकोस्तिविश्रुतः ॥ भूपीठस्यप्रकोष्ठस्यवलयावलनांदधत् ॥ १० ॥ क्वचिन्नित्यंतमोव्याप्तोमूढबुद्धेरिवाशयः ॥ क्वचिन्नित्यंप्रकाशात्मामनःसत्त्ववतामिव ॥ ११ ॥ क्वचिदाह्लादजनकःसाधूनामिवसंगमः ॥ क्वचिदुद्वेगजनकोमूर्खैरिवसमागमः ॥ १२ ॥ क्वचित्प्रकटसर्वार्थोमनोमतिमतामिव ॥ क्वचिदत्यंतगहनोमूर्खश्रोत्रियचित्तवत् ॥ १३ ॥ क्वचिद्प्राप्तसोमांशुःक्वचिद्प्राप्तसूर्यभाः ॥ क्वचिल्लोकमयस्तेनक्वचिदाशून्यदिक्तटः ॥ १४ ॥ क्वचिद्देवपुरव्याप्तःक्वचिद्दैत्यपुरान्वितः ॥ क्वचित्पातालगहनःक्वचिच्छृंगोर्ध्वकंधरः ॥ १५ ॥ क्वचिच्छ्वभ्रभ्रमद्भूधःक्वचित्सानुमनोहरः ॥ क्वचिच्छृंगशिखाक्रांतवैरिंचनगरांतरः ॥ १६ ॥ क्वचिच्छून्यमहारण्यवहत्कल्पांतमारुतः ॥ क्वचित्पुष्पवनोद्यानगायद्विद्याधरीगणः ॥ १७ ॥ क्वचित्पातालगंभीरगुहाकुंभांडभीषणः ॥ क्वचिन्नंदनसोदर्यमुन्याश्रममनोरमः ॥ १८ ॥ क्वचिदक्षयमत्ताभ्रःक्वचिद्दुर्लभवारिदः ॥ क्वचिद्भर्गगुहाश्वभ्रगहनोपांतमंडलः ॥ १९ ॥ क्वचित्क्षुब्धजनाक्षेपसमुत्सादितभूतभूः ॥ क्वचिद्वास्तव्यजनतासौजन्यजितविष्टपः ॥ २० ॥

तामणिप्रचुरा ॥ स्वच्छानीरजस्का ॥ स्वकांत्याजिताविष्टपाःस्वर्गादिलोकाययया ॥ ८ ॥ साप्सरसाममराणांसिद्धानांचलीलाविहरणोचिताअवनिः ॥ सेतिपृथक्पदंवा ॥ ९ ॥ अंतेबहिःप्रांतेभूपीठलक्षणस्यजगल्लक्ष्मीप्रकोष्ठस्यवलयवदावलनांपरितःस्थितिम् ॥ १० ॥ तंशैलंवर्णयति ॥ क्वचिदित्यादिना ॥ ११ ॥ १२ ॥ १३ ॥ लोकमयोजनप्रचुरः ॥ क्वचित्तुबहिर्भागेतेनलोकेनाशून्यानिदिक्तटानियस्य ॥ १४ ॥ पातालमिवगहनोदुष्प्रवेशः ॥ १५ ॥ श्रृंगशिखाक्रांतवैरिंचनगरांतरइत्यौन्नत्यातिशयोक्तिः ॥ १६ ॥ १७ ॥ पातालगंभीरासुगुहासुकुंभांडैःपिशाचभेदैर्भीषणः ॥ १८ ॥ अक्षयाणिसदास्थितानिमत्तानीवगर्जनपराण्यभ्राणियस्मिन् ॥ १९ ॥ जनपदक्षोभेणक्षुब्धानांसंचलितानांजनानामाक्षेपैःखड्गकुठारादिप्रहारैःसमुत्सादिताभूतभुवोरक्षःपिशाचादिनिवासायस्मिन् ॥ वास्तव्यजनसमूहानांसौजन्येनजितत्रिविष्टपः ॥ २० ॥

नित्यमभीक्ष्णंवहद्भिर्वार्तैरेवआजाताउद्भूताअजातावास्थावरजंगमायत्र ॥ विषशस्त्राग्निरोगादिनिमित्तभेदजैःसर्वैःक्षयैरुन्मुक्ताअतएवचिरंस्थिराःस्थावरजंगमायत्र ॥ २१ ॥ ॥ २२ ॥ २३ ॥ पिशाचैःकुंभांडैश्चवेष्टितानिअतएवआचेष्टानीवदिक्तटानियस्य ॥ २४ ॥ उद्धर्षतामंभोदानांसरिल्लक्षणैर्वार्द्धभिर्लुठत्तटोविशीर्यमाणवप्रः ॥ २५ ॥ कमलिन्याःकोशलक्षणवक्त्रस्थैर्भमरनेत्रैरारब्धध्यानंअर्थात्सरोजिनीमंडलंयत्र ॥ स्वर्गांगनानामप्सरसांसिद्धसुंदरीणांचदंतांस्तांबूलैर्मंडयतीतितथोक्तः ॥ नागवल्लीवनभूषितइतियावत् ॥ २६ ॥ २७ ॥ २८ ॥ निःशून्यःशून्यएव ॥ जलपूर्णैःश्वभ्रांतैर्गंभीरःशुष्कैस्तुपातालभीषणः ॥ २९ ॥ मत्ताहरिव्रजाःसिंहवानरादिसमूहायस्मिन् ॥ ३० ॥ निर्भूतंप्राणि

क्वचिन्नित्यंवहद्वाताजातस्थावरजंगमः ॥ क्वचित्सर्वक्षयोन्मुक्तस्थिरस्थावरजंगमः ॥ २१ ॥ क्वचिन्महामरुमरुन्मुक्तभांकारभीषणः ॥ क्वचित्क्वणत्कमलिनीमत्तसारसभूषणः ॥ २२ ॥ क्वचित्सलिलकल्लोलजलदोल्लासघर्घरः ॥ क्वचिन्मत्ताप्सरोदोलाविलासजनितस्मरः ॥ २३ ॥ क्वचित्पिशाचकुंभांडवेष्टिताचेष्टदिक्तटः ॥ क्वचिद्विद्याधरीसिद्धनृत्यगीतसरित्तटः ॥ २४ ॥ क्वचिदुद्धर्षदंभोदसरिद्वाद्धुलुठत्तटः ॥ क्वचित्सततगानीतनीतनानाभ्रसत्पदः ॥ २५ ॥ क्वचित्कमलिनीकोशवक्त्रस्याध्यानमंडलः ॥ क्वचित्स्वर्गांगनासिद्धसुंदरीदंतमंडनः ॥ २६ ॥ क्वचित्तपद्दिनकरजनताचारसुंदरः ॥ क्वचिन्नैशतमोगेहनृत्यन्मत्तनिशाचरः ॥ २७ ॥ क्वचिदुत्पतदुत्पाततयानस्वजनावनिः ॥ क्वचित्सौराज्यसंपत्त्याप्रोद्भवत्पुरमंडलः ॥ २८ ॥ क्वचिदत्यंतनिःशून्यःक्वचिज्जनपदावृतः ॥ क्वचिच्छ्वभ्रांतगंभीरःक्वचित्पातालभीषणः ॥ २९ ॥ क्वचिद्बृहत्कल्पतरुःक्वचिन्निर्जलजंगमः ॥ क्वचिन्महाकरिकुलःक्वचिन्मत्तहरिव्रजः ॥ ३० ॥ क्वचिन्निर्भूतमुत्पातःक्वचिदुन्मत्तराक्षसः ॥ क्वचित्करंजगहनःक्वचित्तालमहावनः ॥ ३१ ॥ क्वचिद्व्योमोपमसराःक्वचिद्दीर्घमरुस्थलः ॥ क्वचिन्नित्यभ्रमत्पांसुःक्वचित्सर्वर्तुकाननः ॥ ३२ ॥ शिखरेषुशिलास्तस्यसामान्याचलसन्निभाः ॥ संतिसुस्थितकल्पाभ्रारत्नमय्योवरामलाः ॥ ३३ ॥ क्षीरोदकार्कगौरीणांवनस्कंधौकसामिव ॥ विश्राम्यंत्यनिशंयासुहरयोहरियोनयः ॥ ३४ ॥ तासामुत्तरदिग्भागेपूर्वशृंगशिलोदरे ॥ निवसाम्यहमक्षीणवज्रसारसमत्वचि ॥ ३५ ॥ विधिनातत्रयद्वास्मिवसाम्युपलयंत्रके ॥ अत्रासंख्यामुनेयातामन्ययुगगणामम ॥ ३६ ॥

निकायशून्यंयथास्यात्तथाउत्पातोयथोन्नतइतियावत् ॥ ३१ ॥ नैर्मल्यविस्तारादिभिर्व्योमोपमानिसरांसियस्मिन् ॥ सर्वैऋतवोयस्तयाविधानिकाननानियस्मिन् ॥ ३२ ॥ तस्यवर्णितरूपस्यलोकालोकशैलस्यशिखरेषुसामान्याचलाःसप्तमलयादयस्तत्सन्निभारत्नमय्यःशिलाःसंति ॥ ३३ ॥ क्षीरमिवोदकमिवार्कइवचगौराणामवदातानांवासोशिलानांपृष्ठेषुवनेस्कंधौकसांमहानरुणास्कंधेष्विवअन्येषांहरीणांयोनयःकारणभूताःसपुत्रपौत्राइतियावत् ॥ हरयःसिंहवानरास्योविश्राम्यंति ॥ ३४ ॥ तासांशिलानांमध्ये तस्यगिरेरुत्तरदिग्भागेपूर्वदिक्स्थस्यशृंगस्ययाशिलातदुदरेअहंनिवसामीतिकिमास्पदाइतिप्रश्नस्योत्तरम् ॥ ३५ ॥ ३६ ॥

कस्यासीत्यादिप्रश्नानामुत्तरंवक्तुमारभते ॥ नकेवलमित्यादिना ॥ ३७ ॥ ३८ ॥ एकोदोषःकामस्तेन ॥ आबद्धाभावनाममतायाभ्यांतौ ॥ ३९ ॥ परिवारःपुत्रपौत्रभृत्यादिःपरिजनः ॥ नौआवयोः ॥ ४० ॥ असौमेपतिर्युगशतानिजीवन्नपिएकस्थानात्स्वासनान्नचलतिनोत्तिष्ठति ॥ ४१ ॥ श्रोत्रियःस्वाध्यायशीलः ॥ अतएवान्येषांपाठकोपि ॥ अजिह्मवृत्तिःऋजुः ॥ अचापलःइंद्रियचापलशून्यः ॥ ४२ ॥ स्वयंतुनतथेत्याह ॥ अहमिति ॥ ४३ ॥ अस्माकंआवयोः ॥ अस्मदोर्द्वयोश्चेतिबहुवचनम् ॥ ४४ ॥



नकेवलमहंबद्धायावद्भर्त्तापितन्मे ॥ बद्धःसायंतनेपद्मकुड्मलेषट्पदोयथा ॥३७॥ तेनसार्द्धंमयाभर्त्राशिलाकोटरसंकटे ॥ अनुभूताश्चिरंकालमत्रवर्षगणागताः ॥ ३८ ॥ अद्याप्यात्मैकदोषेणनहिमोक्षंलभावहे ॥ चिरंतत्रैवतिष्ठावस्तथैवाबद्धभावनौ ॥ ३९ ॥ पाषाणसंकटेतस्मिन्बद्धावावांनकेवलम् ॥ बद्धोयावदशेषेणपरिवारोपितन्नौ ॥ ४० ॥ पुराणपुरुषोवृद्धोद्विजस्तत्रास्तिमेपतिः ॥ एकस्थानान्नचलतिजीवन्युगशतान्यसौ ॥ ४१ ॥ आबाल्याद्ब्रह्मचारीचश्रोत्रियःपाठकोलसः ॥ एकांतएकएवास्तेऽजिह्मवृत्तिरचापलः ॥४२॥ अहंव्यसनिनीभार्यातस्यवेदविदांवर ॥ ननिमेषंसमर्थास्मितंविनादेहधारणे ॥ ४३ ॥ शृणुतेनकथंब्रह्मन्भार्याहंसमुपार्जिता ॥ कथंवृद्धिमयंयातःस्नेहोस्माकमकृत्रिमः ॥ ४४ ॥ तेनजातेनमद्भर्त्राबालेनैवसतापुरा ॥ किंचिज्ज्ञेनसतैकेनतिष्ठतात्मालयेमले ॥ ४५ ॥ श्रोत्रियत्वानुरूपेणजायामेजन्मशालिनी ॥ कुतःसंभवतीत्येवनिर्णीयचिरचिंतया ॥ ४६ ॥ स्वयमेवानवद्यांगीतेनतामरसेक्षण ॥ उत्पादितास्मिनाथेनज्योत्स्नेवशशिनामला ॥ ४७ ॥ मनसामानसीभार्यामंदारोत्तमसुंदरी ॥ ततोवृद्धिंप्रयातास्मिवसंतइवमंजरी ॥४८॥ सहजांबरसंछन्नाभूतानांचित्तहारिणी ॥ पूर्णेंदुबिंबवदनाद्यौरिवामलतारका ॥४९॥ कोरकोच्चस्तनभरासमग्ररसशालिनी ॥ लतावरवनेनेवकरपल्लवशालिनी ॥ ५० ॥ सर्वस्यजंतुजातस्यनित्यंहृदयहारिणी ॥ हरिणीतारनयनामदनोन्माददायिनी ॥ ५१ ॥ लीलाविलासैकरताहेलावलितलोचना ॥ गेयवाद्यप्रियानित्यंनचत्वमानुरागिणी ॥ ५२ ॥ सौभाग्यभोगपरमालक्ष्म्यलक्ष्म्योःप्रियासखी ॥ अनन्यामोहजालानामखिन्नासंपदापदोः ॥ ५३ ॥ नकेवलमहंगेहंधारयामिद्विजन्मनः ॥ यावत्त्रैलोक्यसदनमिदमंगबिभर्म्यहम् ॥ ५४ ॥ अहंकुलकरीभार्याकलत्रभरणक्षमा ॥ त्रैलोक्यगृहसंभारधारणैकभरोद्वहा ॥ ५५ ॥ अथाहंतरुणीजातासमुद्भिन्नोन्नतस्तनी ॥ लतोल्लुलद्गुलुच्छेवविलासरसशालिनी ॥ ५६ ॥

स्वजन्मप्रकारमाह तेनेति ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ स्वांवर्णयति ॥ सहजेत्यादिना ॥ ४९ ॥ रस्यंतइतिरसागुणास्तैःशालिनी ॥ ५० ॥ हरिण्याइवतारेदीर्घेनयनेयस्याः ॥ ५१ ॥ व्यसनिनीतियदुक्तंतद्विवृणोति ॥ लीलेत्यादिना ॥ नचत्वमाभोगेष्वित्यर्थः ॥ ५२ ॥ समदर्शिभर्तृमनःकल्पनामयत्वाल्लक्ष्म्यलक्ष्म्योःप्रियासखीवसमदर्शिनी ॥ अतएवमोहजालानामभिन्नापिसंपदापदोरखिन्ना ॥ ५३ ॥ भर्तृमनोमयत्वादेवतत्कल्पितत्रैलोक्यधारणमपिमदधीनमेवेत्याह ॥ नकेवलमिति ॥ ५४ ॥ कुलकरीपुत्रपौत्रपरंपराप्रसवयोग्या ॥ कलत्रंपोष्यवर्गस्तद्भरणक्षमा ॥ ५५ ॥ उल्लुलद्गुलुच्छाउल्लसत्फलपुष्पगुच्छालतेव ॥ ५६ ॥

इमामेवंगुणलक्षणामपिमांपतिःसब्राह्मणोदीर्घसूत्रत्वादशीघ्रकारितास्वभावात्कयापिवक्ष्यमाणयामोक्षापेक्षयानविवाहितवान् ॥५७॥ अविवाहेत्वंकथंतस्यभार्यातत्राह ॥ तेनेति ॥ तेनसहयौवनेनसंपन्नोयोभोगविलासविषयोरसइच्छातच्छालिनी ॥ अहंस्वमनोरथेनैवतंभर्त्तारंवृतवतीत्यर्थः ॥ ५८ ॥ पूतानांभस्ममार्जनेनसंधुक्षितानामंगाराणां स्थलीष्विव ॥५९॥ तप्ताःसिकतायासुतथाविधामरुभूमयःसंपन्नाः ॥६०॥ कह्लाराणांपद्मभेदानांकमलानांचोत्करैःकोमलाःसुखस्पर्शाः ॥६१॥ दाहशांतयेपुष्करादिकुसुमोत्करैःसखीभिर्दोलाशय्यादिरचनेनमालितादोलिताविलुठिनेव ॥ ६२ ॥ अंगसंगमान्निमित्ताद्ग्रीष्मेणतापोष्मणाशुष्काःप्रथमंमर्मराभूत्वाततोभस्मतांयांति ॥ ६३ ॥ ६४ ॥

पतिर्मादीर्घसूत्रत्वाच्छ्रोत्रियत्वात्तपोरतः॥ कयाप्यपेक्षयाद्यापिनविवाहितवानिमाम् ॥५७॥ तेनयौवनसंपन्नविलासरसशालिनी॥ तंविनाव्यसनेनाहंदग्धेयंग्राविवपद्मिनी ॥ ५८ ॥ शीतानिलविलोलासुनलिनीषुनिरंतरम् ॥ अंगदाहमवाप्नोमिपूतांगारस्थलीष्विव ॥५९॥ उद्यानावनयःसर्वाःपूर्णाःकुसुमवर्षणैः॥ संपन्नास्तप्तसिकताःशून्यामेमरुभूमयः॥ ६० ॥ जलकल्लोलकह्लारकमलोत्करकोमलाः॥ सरस्यःसारसारावसरसाममनीरसाः ॥ ६१ ॥ अहंपुष्करमंदारकुमुदोत्करमालिता॥ भृशंदाहमवाप्नोमिकंटकेष्विवदोलिता ॥ ६२ ॥ कुमुदोत्पलकह्लारकदलीतल्पपालयः॥ मदंगसंगमाद्ग्रीष्ममर्मरायांतिभस्मताम् ॥ ६३ ॥ यत्कांतमुचितंस्वादुविचित्रंचित्तहारिच॥ तदालोक्यभवाम्यंतर्बाष्पपूर्णायतेक्षणा॥६४॥ व्यसनानलसंतप्ताःपतंतोबाष्पबिंदवः॥ छमच्छमितिमज्जंतीकमलोत्पलपंक्तिषु ॥६५॥ कदलीकंदलीस्कंधदोलांदोलनलीलया॥ लालितोद्यानखंडेषुमुखमाच्छाद्यरोदिमि॥ ६६ ॥ तुषारनिकराकीर्णकदलीदलमंडपम्॥ पश्याम्यूष्माणमुज्झंतंखदिरांगारभीषणम्॥ ६७॥ नलिनीनालदोलासुसारसींसारसाश्रिताम्॥ दीनाननाविलोक्यांतर्निंदामिनिजयौवनम्॥ ६८॥ रम्येरोदिमिमध्यस्थेपदार्थेयामिसौम्यताम् ॥ लुप्याम्यशोभनेदीनानजानेकिमहंस्थिता॥ ६९॥ दृष्टानिकुंदमंदारकुमुदानिहिमानिच॥ मयाकामाग्निदग्धानांभस्मानीवदिशंप्रति॥ ७० ॥

छमच्छमीतिप्रदीपनिपतत्सार्चिःस्नेहबिंदुनिपातशब्दसादृश्यद्योतनार्थमव्यक्तानुकरणम् ॥ डाचिबहुलंद्वेभवतइत्यभबहुलग्रहणाद्वित्वेअव्यक्तानुकरणस्यातइतावितिउत्तरवलाच्छब्दस्यपररूपम् ॥ नाम्रेडितस्यांत्यस्यतुवेतिनिषेधस्तुछांदसत्वान्नेतिबोध्यम् ॥ मज्जंतिअंतःप्रविशंतिस्वोष्मणाकमलोत्पलानिप्रदहतिशोषयंतःस्वयमपिशुष्यंतीतियावत् ॥ ६५ ॥ उद्यानखंडेषुसखीभिःकदलीकंदलीस्कंधकल्पितपल्लवदोलासुआंदोलनलीलयालालितासतीताभ्यःस्वदुःखंवक्तुमशक्तालज्जयामुखमाच्छाद्यरोदिमि ॥ ६६ ॥ ॥ ६७ ॥ सारसेनभर्त्राआश्रितांसंगताम् ॥ ६८ ॥ अशोभनेमूर्छाजडीभावादौलुप्यामियतस्तदानीमहंकिंस्थितेतिनजाने ॥ तथाचाहंताविलयेतद्धनदुःखस्याननुभवाद्विश्राम्यामीत्यर्थः ॥ ६९ ॥ दिशंप्रतिप्रतिदिशम् ॥ असमासेअद्विर्वचनंछांदसम् ॥ ७० ॥

107

आनीलानांतमालादिपल्लवानांमृणाललतानांउपलानांचतथाकह्लारादीनांचशय्याःअंगचलनेनदेहसंयोगेनविशोषयंत्याममनवयौवनवासराणिव्यर्थंगतानि ॥ ७१॥ ॥ इति श्रीवासिष्ठम०रा०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेचतुःषष्टितमःसर्गः ॥ ६४ ॥ ॥ ७ ॥ ॥ इहकालेनसंप्राप्तेस्वानुरागेविरागताम् ॥ संसिद्धाधारणाख्यासौर्जिता सुःसान्यवेदयत् ॥ १ ॥ शरच्छांतौहेमंतारंभेपल्लवोयथाविरसःसन्विरागतांप्राप्नोतितद्वत् ॥ १ ॥ कीदृशविचारक्रमेणविरागतांप्राप्तस्तमाह ॥ वृद्धइत्यादिना ॥ अजिह्ममतिः ऋजुचित्तः ॥ किंफलमितिशेषः ॥ २ ॥ ३ ॥ ४ ॥ असंस्कारिणीशास्त्रीयसंस्कारहीना ॥ तथाङ्गीःसत्कुलाचाराद्युचितापुंसांलज्जाचवेश्याभिःपुंश्चलीभिर्हृताचेद्धता ॥ ५ ॥

आनीलपल्लवमृणाललतोत्पलानांकह्लारकुंदकदलीदलमालतीनाम् ॥ शय्याममांगचलनेनविशोषयंत्याव्यर्थंगतानिनवयौवनवासराणि ॥७१॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०पाषाणोपाख्यानेविद्याधरीव्यसनवर्णनंनामचतुःषष्टितमःसर्गः ॥ ६४ ॥
विद्याधर्युवाच ॥ ॥ अथकालेनमहतासोनुरागोविरागताम् ॥ प्राप्तोममशरच्छांतौविरसःपल्लवोयथा ॥ १ ॥ वृद्धएकांतरसिकोनीरसः स्नेहवर्जितः ॥ भर्ताऽजिह्ममतिर्मौनीकिंमन्येजीवितेनमे ॥ २ ॥ वरंवैधव्यमाबाल्याद्वरंमरणमेवच ॥ वरंव्याधिरथापद्वानात्वग्रप्रकृतिः पतिः ॥ ३ ॥ एतावज्जन्मसाफल्यंसौभाग्यमविखंडितम् ॥ रसिकःपेशलाचारोयन्नार्यास्तरुणःपतिः ॥ ४ ॥ हतानीरसनाथास्त्रीहताऽसंस्कारिणीचधीः ॥ हतादुर्जनभुक्ताश्रीर्हृतावेश्याह्वताचह्रीः ॥ ५ ॥ सास्त्रीयानुगताभर्त्रासाश्रीर्यानुगतासता ॥ साधीर्यामधुरोदारासाधुतासमदृष्टिता ॥ ६ ॥ नाधयोव्याधयोनैवनापदोनदुरीतयः ॥ कुर्वंतिमनसोबाधांदंपत्योरनुरक्तयोः ॥ ७ ॥ उत्फुल्लाःकुसुमस्थल्योनंदनोद्यानभूमयः ॥ धन्वायंतेकुनाथानांविनाथानांचयोषिताम् ॥ ८ ॥ सर्वएवजगद्भावायथेच्छंगुणलेशतः ॥ संत्यज्यंतेप्रमादात्तुवर्जयित्वापर्तिस्त्रिया ॥ ९ ॥ स्थिरयौवनयाद्दुःखान्येतानिमुनिनायक ॥ भुक्तानिवर्षवृंदानिपश्यदौर्भाग्यजृंभितम् ॥ १० ॥ अथक्रमेणतेनैवसरागोमेविरागताम् ॥ आययौहिमदग्धायानलिन्याइवनीरसः ॥ ११ ॥ विरागवासनास्तेनसर्वभावानुरंजना ॥ तवोपदेशेनेच्छामि मुनेनिर्वाणमात्मनः ॥ १२ ॥

शमदमादिसंपत्त्यामधुरायासैवधीःसाबुद्धिः ॥ एवंसैवसाधुतायासमदृष्टितेत्यनुषज्जते ॥६॥ दुष्टाईतयः अतिवृष्टिरनावृष्टिःशलभामूषकाःखगाः अत्यासन्नाश्चराजानःषडेतेईतयःस्मृताः ॥ ७ ॥ धन्वायंतेमरुभूमिवदाचरंतिसंतापयंतीतियावत् ॥ ८ ॥ अतएवसर्वंसुत्यजंपतिरेकोदुस्त्यजइत्याह ॥ सर्वएवेति ॥ जगतिप्रसिद्धाभावागृहक्षेत्रबंधुधनादयः ॥ गुणलेशतःगुणाल्पतावशात् प्रमादादनवधानाद्वा ॥ तुशब्दोभिन्नक्रमः ॥ पतिमेकंतुवर्जयित्वेति ॥ ९ ॥ भुक्तानिमयेतिशेषः ॥ वर्षवृंदानीतिकालाध्वनोरत्यंतसंयोगेद्वितीया ॥ दौर्भाग्यजृंभितंममेतिशेषः ॥ १० ॥ अथवाममायंभाग्योदयएवेत्याशयेनाह ॥ अथेत्यादिना ॥ क्रमेणनीरसःसन्विरागतामाययौ ॥ ११ ॥ तेनोक्तेनक्रमेणविरागवासनाःप्राप्यसर्वभावेषुतदनुरंजनायस्यास्तथाविधाअहंसंप्रतितवोपदेशेनआत्मनोनिर्वाणमिच्छामि ॥ १२ ॥

ईदृशेपिसमयेत्वादृशोपदेष्टृलाभेपिविश्रांतिमनिच्छंत्याममजीवनंव्यर्थमपितुमरणमेववरमित्याशयेनाह ॥ अप्राप्तेति ॥ मरणैर्मरणतुल्यदुःखप्रवाहैरुह्यमानानाम् ॥ १३ ॥ सहधर्मचारिणीनांस्त्रीणांभर्तृसमानशीलौचित्याच्चभर्त्रासहत्वयाहमुपदेश्येत्याह ॥ सइतिद्वाभ्याम् ॥ यथाराजाराज्ञैवसहायेनराजानंजेतुंप्रबुध्यतेनीतिशास्त्रोक्तोपायैर्जागरूकोभवतितद्वत्सममभर्त्तापिमनसैवमनोजेतुंप्रबुध्यतेविवेकोपायजागरूकोवर्त्ततइत्यर्थः ॥ १४ ॥ आत्मनःस्मरणंविस्मृतकंठचामीकरवत्प्रबोधनम् ॥ १५ ॥ मांअनपेक्ष्य मदपेक्षांविहायैवेत्यर्थः ॥ विरागोजगत्स्थितिंवैरस्यंनीरसतामनयत् ॥ नयतेर्द्विकर्मताप्रसिद्धा ॥ १६ ॥ इदानींस्वस्याःधारणाभ्यासस्थिरचित्तत्वेनाप्युपदेशाधिकारसंपत्तिर

अप्राप्ताभिमतार्थानामविश्रांतधियांपरे ॥ मरणैरुह्यमानानांजीवितान्मरणंवरम् ॥ १३ ॥ समद्भर्त्ताद्यनिर्वाणमीहमानोदिवानिशम् ॥ राजाराज्ञेवमनसामनोजेतुंप्रबुध्यते ॥ १४ ॥ ब्रह्मंस्तस्यचमद्भर्त्तुर्ममचाज्ञानशांतये ॥ न्यायोपपन्नयावाचाकुरुस्मरणमात्मनः ॥ १५ ॥ यदामामनपेक्ष्यैवसमद्भर्त्तात्मनिस्थितः ॥ तदाविरागोवैरस्यमनयन्मेजगत्स्थितिम् ॥ १६ ॥ संसारवासनावेशवर्जितास्मितोऽवसम् ॥ निबध्याभिमतांतीव्रांव्योमसंचारधारणाम् ॥ १७ ॥ अर्जयित्वातयाव्योम्निगतिंधारणयामया ॥ अभ्यस्ताधारणाभूयःसिद्धसंगफलप्रदा ॥ १८ ॥ ततःस्वजगदाधारपूर्वापरनिरीक्षया ॥ स्थिताहंधारणांबद्ध्वासापिसिद्धिंसमागता ॥ १९ ॥ अथस्वजगतोहृद्यात्हृदयंतस्यबाह्यगा ॥ अहंदृष्टवतीस्थूलांलोकालोकगिरेःशिलाम् ॥ २० ॥ एतावतापिकालेनदंपत्योरावयोर्मुने ॥ परंद्रष्टुमभूदिच्छानकाचनकदाचन ॥ २१ ॥ मद्भर्त्ताकेवलंशुद्धवेदार्थैकांतचिंतया ॥ नचयातंनचायातंवेत्त्यहोविगतैषणः ॥ २२ ॥ तेनासौमत्पतिर्विद्वानपिनप्राप्तवान्पदम् ॥ अद्यसोहंचवांछावःप्रयत्नेनपरंपदम् ॥ २३ ॥ तदेतामर्थितांब्रह्मन्सफलांकर्त्तुमर्हसि ॥ महतामर्थिनोव्यर्थानकदाचनकेचन ॥ २४ ॥

स्तीत्याशयेनाह ॥ संसारेति ॥ व्योमसंचारसिद्धिदांप्राग्वर्णितांखेचरीमुद्राख्यांधारणाम् ॥ १७ ॥ सिद्धसंगःसिद्धैःसहसंवादादिव्यवहारस्तत्फलप्रदा ॥ अतएवान्यैरगम्यमपीदंरहःस्थानमागत्यत्वयासहसंवदामीतिभावः ॥ १८ ॥ स्वजगत्स्वावासब्रह्मांडस्तदाकारस्यपूर्वापरभागघटिताकारस्यशास्त्रदृशायोगदृशाचकरतलामलकवन्निरीक्षयात दाकारांभावनांबद्ध्वास्थिता ॥ साधारणापिमंतव्ययवसर्वभूतजयक्रमेणसिद्धिमागता ॥ १९ ॥ हृदयमंतर्गतसर्ववस्तुदृष्ट्वातस्यबाह्येनिर्गताअहंप्राग्वर्णितांस्वजगद्ब्रह्मितब्रह्मांडस्थस्यलोकालोकगिरेःशिलांदृष्टवती ॥ २० ॥ प्राक्तुकदाप्ययंब्रह्मांडोमयामत्पतिनावानदृष्टस्तद्दिच्छाभावादित्याह ॥ एतावतेति ॥ २१ ॥ शुद्धवेदार्थोधर्मःपरमात्माचतदेकांतचिंतया ॥ यातंगतंकालंअयातंवर्त्तमानभविष्यत्कालंतदंतर्गतपदार्थान्नस्तस्वंचनवेत्ति ॥ २२ ॥ तेनतत्त्वावेदनेन ॥ अद्यत्वदुपदेशश्रवणमननादिप्रयत्नेनपरंपदंप्राप्तुमितिशेषः ॥ २३ ॥ महतांभवादृशानांसंनिधौअर्थिनःपुरुषार्थलिप्सवः ॥ अभ्यर्थैचनंशब्दौ ॥ २४ ॥

अन्यएवसिद्धाइममर्थंकुतोनप्रार्थितास्तत्राह ॥ भ्रमंतीइति ॥ २५॥ इत्थंस्ववृत्तांतमखिलंजिज्ञासितंचनिवेद्यशरणंप्रतिपद्यस्वस्याअनुपेक्षणीयतांप्रार्थयते ॥ ब्रह्मन्निति॥ यतःकारणात्संतोविनैवकारणेनअर्थिजनवांछितपूरणानिकुर्वंतितेनकारणेनशरणागततामुपेतांमांतिरस्करणेनोपेक्षणेनयोक्तुंनार्हसि ॥ अर्थिनामुपेक्षायाएवतिरस्कारत्वादितिभावः ॥ २६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०पंचषष्टितमःसर्गः ॥ ६५ ॥ ॥ कथंस्थितिरनाकाशेग्रहंवांतेशिलोदरे ॥ पृष्टयेतितयातत्रजगद्विस्तारईर्यते ॥ १ ॥ प्राग्वर्णितेब्रह्मांडोर्ध्वनभसिस्थितेनतत्रापिसंकल्पितासनस्थेनमयातस्मिन्नेवनभसिकल्पितासनस्थिताइतिप्राग्वर्णितप्रकारेणस्ववृत्तांतमुक्तवतीसाअथानंतरंपृष्टा ॥ १ ॥ किंपृष्टातदाह ॥ कथमिति ॥ निरवकाशेशिलोदरेशरीरादिमतीनांत्वद्विधानांस्थितिःकथंभवेत् संचलनंचकथंभवेत् तत्रआस्पदंगृहंचतेकिमर्थंकिंप्रयोजनकम् ॥ यत्रप्रवेशएवा

भ्रमंतीसिद्धसेनासुसदानभसिमानद ॥ त्वदृतेनेहपश्यामिघनाज्ञानदवानलम् ॥ २५॥ ब्रह्मन्विनैवकरुणाकरकारणेनसंतोयतोर्थिजनवांछितपूरणानि॥ कुर्वंतितेनशरणागततामुपेतांमामर्हसीहनतिरस्करणेनयोक्तुम्॥ २६ ॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०पाषा०विद्याधरीजन्मव्यवहारवर्णनंनामपंचषष्टितमःसर्गः॥६५॥ ॥६॥ ॥श्रीवसिष्ठउवाच॥ ॥अथेत्युक्तवतीपृष्टासामयाकल्पितासना॥ संकल्पितासनस्थेनस्थितेननभसिस्थिता ॥ १ ॥ कथंशिलोदरेबालेत्वद्विधानांभवेत्स्थितिः॥ कथंसंचलनंतत्रकिमर्थंतत्रचास्पदम् ॥ २ ॥विद्याधर्युवाच॥ ॥मुनेयथेदंभवतांजगत्स्फारंविराजते ॥ तथास्माकंजगत्तत्रसर्गसंसारयुक्स्थितम्॥ ३ ॥स्फुरंतिनागाःपातालेतिष्ठंतिभुविपर्वताः ॥ आपश्छलछलायंतेवहंतिव्योम्निवायवः॥ ४ ॥ अर्णवाअर्णसाभांतियांत्यंतःशनकैःप्रजाः॥ भूतान्यजस्रंजायंतेम्रियंतेविरतंयथा ॥ ५॥ वांतिवातावहंत्यापोभांतिचाभांतिखेसुराः ॥ तिष्ठंत्यगाःसमुद्यंतिग्रहायांतिमहींनृपाः॥ ६॥ देवासुरमनुष्याणांव्यवहारपरंपराः ॥ लोलाःप्रवृत्ताआकल्पमासमुद्रमिवापगाः॥ ७॥ दिनपद्मानिभूलोकसरस्याकल्पमानभः॥ लोलाभ्रालीनिफुल्लानिमीलितोन्मीलितान्यलम्॥ ८ ॥ चंद्रश्चर्चाश्चतुर्दिक्कंचंदनेनात्मतेजसा॥ रचयन्रात्रिरोहिण्योस्तमोहंत्यपिद्रुतम् ॥ ९ ॥

संभावितस्तत्रेदंसर्वमत्यंतासंभावितमित्यर्थः ॥ २ ॥ नैतावदेवत्वयाअसंभावितंतत्रास्तीतिसंभावनीयंकिंत्वीदृशंजगदंतरमपीतिविद्याधरीप्रश्नस्योत्तरमाह ॥ मुनेइति ॥ ३ ॥ तदेवप्रपंचयति ॥ स्फुरंतीत्यादिना ॥ छलछलायंतेइत्यव्यक्तध्वन्यनुकरणम् ॥ ४ ॥ अर्णसाउदकेन ॥ यांतिगमनादिनाव्यवहरंति ॥ यथाअत्रेतिशेषः ॥ ५ ॥ नक्षत्रादिरूपेणभांति ॥ स्वस्वशरीराकारेणआभांति ॥ ६ ॥ ७ ॥ आकल्पंकालतः ॥ आनभोदेशतः ॥ अभिविधावाङौ ॥ लोलान्यभ्राण्येवालयोभ्रमरायेषुतथाविधानिदिनपद्मानिभूलोकसरसिफुल्लानिअलंमीलितान्युन्मीलितानीतितदंतःपातिपदार्थकेसराद्यभिप्रायम् ॥ ८ ॥ चंद्रआत्मतेजसाचंद्रिकालक्षणेनचंदनेनचतुर्दिक्कंचर्चाःलेपनानिरचयन्सन्रात्रेःरोहिण्याश्चस्वद्रुतंवहिर्गतमपितमःहंति ॥ ९ ॥

स्वीयदशविलक्षणाया दशायावर्तिकाया आस्वादनेद्रव्यस्नेहोपभोगेरतावातलक्षणेनयंत्रेणसुचालितापरितोभ्रमितारोदसीद्यावाभूमीतल्लक्षणेसद्मनिगृहे ॥१०॥इदानींरोदस्यौ भ्रमताज्योतिश्चक्रेणघरट्टयंत्रतयारूपयति ॥ ब्रह्मेतिद्वाभ्याम् ॥ खेऋक्षाणांचक्रंज्योतिश्चक्ररूपोगुणैरावर्त्ततइतिगुणावर्त्तोघरट्टोविवर्त्ततेभ्रमति ॥ सचविवर्त्तमानश्चतुर्विधभूत लक्षणतंडुलमास्रष्टेःसृष्टिकालमारभ्यपिनष्टि ॥ केनासौशिल्पिनानिर्मितस्तमाह ॥ ब्रह्मसंकल्पितइति ॥ कैरयंविष्टब्धस्तानाह ॥ वातसंचारचारिभिर्वातरश्मिभिःरुद्धःअवष्ट ब्धः ॥ कस्मिन्कीलेरुद्धस्तमाह ॥ ध्रुवकीलकइति ॥ रोदस्योःकपाटवत्पिधानोद्घाटनस्वभावैरंभोदैर्घर्घरोध्वनन् ॥ ११ ॥ १२ ॥ तत्राप्यत्रेवभूरादिलोकायथोचितंद्वीपपर्व तादिभिःपूर्णाःसंतीत्याह ॥ द्वीपेति ॥ विमानसंनिवेशरचितैर्नगरैर्नभःपूर्णम् ॥ १३ ॥ तत्रापिनीलंभूतलमंडलमाचारचंचलायास्त्रिजगल्लक्ष्म्याःस्फुरन्मणिचंचलंकुंडलमिवस्थित

स्वदशास्वादनरतावातयंत्रसुचारिता ॥ रोदःसद्मनिसूर्याख्यादीप्यतेदिविदीपिका ॥ १० ॥ ब्रह्मसंकल्पितोरुद्धोवातसंचारचारिभिः ॥
खेनिशंचक्रमृक्षाणांगुणावर्त्तोविवर्त्तते ॥ ११ ॥ भूततंडुलमास्रष्टेःपिनष्टिध्रुवकीलकः ॥ नियत्याचलितोरोदःकपाटांभोदघर्घरः ॥ १२ ॥
द्वीपाब्धिशैलैर्भूपीठंविमाननगरैर्नभः ॥ दैत्यदानवनागौघैःपूर्णपातालमंडलम् ॥ १३ ॥ कुंडलंत्रिजगल्लक्ष्म्यानीलंभूतलमंडलम् ॥
स्थितंचंचलमाचारचंचलायाःस्फुरन्मणि ॥ १४ ॥ बुद्ध्यादिरहितांस्पंदसंविदंवायवीमिव ॥ स्थावरंजंगमंचैवसूक्ष्ममादायजायते
॥ १५ ॥ मुनिमौनैर्धरावार्भिर्मारुतैःकपिचापलम् ॥ आकाशैरवकाशित्वंतेजोभिर्भासनंश्रितम् ॥ १६ ॥ वृक्षोर्व्यब्ध्यद्रिखचराःप्राणिनो
तःस्फुरंत्यलम् ॥ मृतिजन्मोन्मुखाःकीटसुरासुरजलौकसः ॥ १७ ॥ ससुरासुरगंधर्वाःकालःकलयतिप्रजाः ॥ दोर्भिःकल्पयुगाब्दैश्चस्व
पशूनिवपालकः ॥ १८ ॥ अनंतविपुलागाधगंभीरेकालसागरे ॥ उत्पत्योत्पत्यलीयंतेतेत्वावर्त्तविवर्त्तया ॥ १९ ॥ चतुर्दशविधावातवे
ल्लिताभूतपांसवः ॥ नाशाकाशेविलीयंतेशरदंभोदलीलया ॥ २० ॥

106

म् ॥ १४ ॥ तथापिस्थावरंजंगमंचैवप्राणिजातंबुद्ध्यादिरहितांबाह्यांवायवींक्रियामिवआंतरींसूक्ष्मांप्राणाख्यांस्पंदसंविदमादायजायतेजन्मादिविकारान्लभते ॥ १५ ॥ तथापिमु निमौनैर्मुनिकर्मभिःश्रितः ॥ धरासमुद्रादिवार्भिःश्रिता ॥ मारुतैःकपिवच्चापलंश्रितम् ॥ आकाशैस्तत्तदुपाधिभिन्नैरुपाध्यनुरूपमवकाशित्वंश्रितम् ॥ सर्ववस्तूनांस्वभावानि यतास्तुल्याइत्यर्थः ॥ १६ ॥ वृक्षचरामर्कटादयः उर्वीचरामनुष्यादयः अब्धिचरामत्स्यादयः अद्रिचरामृगादयः खचराःपक्षिदेवादयस्तत्राप्यंतरलंस्फुरंति ॥ १७ ॥ कालः सुरादिसहिताःप्रजाःपालकःपुरुषःस्वदोर्भिःस्वपशूनिवकल्पयुगवर्षादिलक्षणैर्दोर्भिःकलयतिपालनाविनाउपभुंक्ते ॥ १८ ॥ तेसुरादयोयादोगणाःकालसागरेआवर्त्तविवर्त्त याकालगत्याउत्पत्योत्पत्यलीयंते ॥ १९ ॥ नश्यत्यस्मिन्नितिनाशःतथाविधेअव्याकृताकाशे ॥ २० ॥

आकाशएवांशुकंवस्त्रंयस्याः आकल्पभूतास्तारकोल्कराःशेखरेयस्यास्तथाविधाद्यौश्चंद्रार्ककरचामरैःसंवीज्यमुत्तंभुवनंबोधयंतीवस्थिता ॥ २१ ॥ तत्रापिककुभोदिशस्तंभिताःस्थावरप्राणिनइवपवनभूकंपवृष्ट्यातपसहिष्णवोभूत्वास्थिताः ॥ २२ ॥ ज्योतिःशास्त्रकुशलैर्विज्ञातैरन्यैरज्ञातैरपिउत्पातादिनिमित्तैर्भूतानामिष्टानिष्टलक्षणागतिस्तत्रापि जायते ॥ २३ ॥ लोकांतराणांचतुर्दशभुवनभेदानांभूतगणंप्राणिनिकायंयथाकालःपिबतितद्वत् ॥ २४ ॥ उक्तंसर्वंसंक्षिप्योपसंहरति ॥ पातालमिति ॥ तत्रापिपातालयोग्यो भूतगणःप्राणिनिकायःपातालमाविशति॥ नभोबिलवासयोग्योनभोविलंयातिइतरस्त्वंतरालेदिङ्मंडलंभ्रमति॥ मरुतोवायोस्सरणक्रमेणसंचरणवत्पर्वतमहार्णवमंडलानिद्वीपां

भुवनंबोधयंतीद्यौश्चंद्रार्ककरचामरैः॥ स्थिताकाशांशुकाकल्पतारकोल्करशेखरा ॥ २१ ॥ स्थिताःपवनभूकंपमेघतापसहिष्णवः॥ स्वंप्रदेशमनुज्झंत्यःककुभःस्तंभिताइव ॥ २२ ॥ उत्पातमेघनिर्ह्रादभूमिकंपग्रहग्रहैः॥ अज्ञातैरपिविज्ञातैर्भूतानांजायतेगतिः ॥ २३ ॥ सप्तानांजलमब्धीनामौर्वाग्निःपिबतिज्वलन् ॥ लोकांतराणामाकल्पंकालोभूतगणंयथा ॥ २४॥ पातालमाविशतियातिनभोविलं चदिग्मंडलंभ्रमतिभूतगणःसमंतात्॥ पर्यैतिपर्वतमहार्णवमंडलानिद्वीपांतराणिचमरुत्सरणक्रमेण ॥ २५ ॥ ॥इ०वा०महारामायणेवा०दे०मो० निर्वाणप्रकरणेउ०पाषा०शिलांतरवर्णनंनामषट्षष्टितमःसर्गः॥ ६६॥ ॥ ६७॥ ॥विद्याधर्युवाच॥ ॥यावत्तंसर्गमागच्छप्रसादःक्रियतांमुने॥ आश्चर्येषूपपन्नेषुमहांतोह्यतिकौतुकाः॥ १ ॥ तथेत्युक्तेमयासार्द्धंगंतुमारब्धमंबरे ॥ वात्ययासौरभेणेवशून्येशून्येनशून्यया ॥ २ ॥ अथाहंदूरमध्वानंशून्यमुल्लंध्यनाभसम्॥ नभःस्थंभूतसंघातंतथासार्द्धमवाप्तवान्॥ ३॥ तमुल्लंघ्य चिरेणात्रभूतसंचारमंबरे ॥ लोकालोकशिरोव्योमप्राप्तोस्मिधवलांबुदम्॥ ४ ॥ उत्तरांशेंदुशुभ्राभ्रपीठान्निर्गत्यतांशिलाम्॥ आनीतोस्मितयोत्तुंगांतप्तकांचनकल्पिताम् ॥ ५ ॥ यावत्पश्याम्यहंशुभ्रांशिलांतांनचतज्जगत्॥ कलधौतमयीमुच्चैरग्निलोकतटीमिव ॥ ६ ॥ तदामयोक्तासाकांताक्वभवत्सर्गभूरिति ॥ क्वरुद्रार्काग्नितारादिक्वलोकांतरसप्तकम् ॥ ७॥

तराणिचपर्यैति ॥ तथाचसर्वोप्यत्रत्यव्यवहारस्तत्रापिवर्त्ततएवेतिसंभावयेत्यर्थः ॥ २५॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेषट्षष्टितमःसर्गः ॥६६॥ कौतुकात्तांशिलांगत्वाप्यदृष्टामुनिनाजगत् ॥ पृष्टयाभ्यासमाहात्म्यंविद्याधर्यात्रवर्ण्यते ॥ १ ॥ हेमुनेत्वंयदिमदुक्तार्थजातमसंभावितंमन्यसेतर्हिस्वयमेवसाक्षात्तंसर्गंयावत्साकल्येनद्रष्टुमागच्छ ॥ १ ॥ इतितयाउक्तेसतिमयातथास्त्वित्यभ्युपगम्यतयासहांबरेगंतुमारब्धमित्यन्वयः ॥ वात्ययासहसौरभेणचंपकादिगंधेनेव ॥ २ ॥ भूतसंघातंदेवादिप्राणिनिकायम् ॥ ३ ॥ ४ ॥ उत्तरायादिशःअंशेपूर्वभागेस्थितादिंदुवत्शुभ्रादभ्रपीठादधोनिर्गत्य ॥ ५ ॥ अहंअग्निनावलोक्यतेइत्यग्निलोकांमेरुतटीमिवस्थितांतांशिलांयावत्साकल्येनान्विष्यपश्यन्नपितत्तयोक्तंजगत्तत्रनपश्यामीत्यर्थः ॥ ६ ॥ भवत्सर्गभूःक्वनत्वयावर्णितारुद्रार्कादयश्चक्वेतिसामयोक्तेतिसर्वत्रापेसंबंधः ॥ ७॥

१ अत्रश्रीवसिष्ठउवाचेत्यपेक्षितर्मितिभाति

ककुभोदिशः ॥ उन्मज्जननिमज्जनेप्राणिनांजन्मनाशौ ॥ ८॥ ९॥१०॥ क्वपयोभूपालास्तेपुमुनयश्चक्व ॥ भूपातालमुनयइतिपाठेनुस्पष्टम् ॥ पंचयामाहेमंतयामिन्यः ॥११॥ ॥१२ ॥ मयिएवंवदतिसतिसामामुवाच ॥१३॥ अहमपिनपूर्ववत्पश्यामिकिंतुप्रागुक्तंसर्वंदेवमनुष्यासुरादिजनंमुकुरेप्रतिबिंबभावेनास्थितंयथसिद्धपुरादन्यत्पुरंतद्वत्पश्यामीत्यर्थः ॥ १४ ॥ तदभावस्तत्तिरोधानम् ॥ पादादौतेइतिछांदसम ॥ १५ ॥ सर्वसूक्ष्मार्थग्रहणक्षमविशुद्धमनोमात्रदेहताविस्मृतिवशादपितवतद्दर्शनंममतदस्फुटदर्शनंचेत्याह ॥ अन्यच्चेति ॥ १६ ॥ ममापीदंनिजंजगद्गतंनष्टप्रायम् ॥ यतश्चिराभ्यस्तांव्योमलतामिवेदंनस्फुटंपश्यामीत्यन्वयः ॥ १७ ॥ १८ ॥ स्वास्थ्यंप्रागुक्तधारणाभ्याससिद्धशुद्धातिवाहिकैकालदेहत्वंनतुस्वरूपावस्थितिः ॥ पूर्वग्रंथविरोधात् ॥ १९ ॥ अभ्यासपदेनतज्जन्यदृढसंस्कारोलक्ष्यते ॥ प्रकचतिउद्बुद्धःप्रकाशते ॥ इवकारोभिन्नक्रमः ॥ अंतःआं

क्वार्णवाकाशककुभःक्वोन्मज्जननिमज्जने ॥ क्वमहांभोदसंभारःक्वतारांबरडंबरम् ॥ ८ ॥ क्वशैलशिखरश्रेण्यःक्वमहार्णवलेखिकाः ॥ क्वद्वीपवलयास्सप्तक्वतप्तकनकावनिः ॥ ९ ॥ क्वकार्यकालकलनाःक्वभूतभुवनभ्रमः ॥ क्वविद्याधरगंधर्वाःक्वनरामरदानवाः ॥ १० ॥ क्वपिभूपालमुनयःक्वनयापनयक्रमः ॥ क्वपंचयामयामिन्यःक्वस्वर्गनरकभ्रमः ॥ ११ ॥ क्वपुण्यपापकलनाक्वकलाकालकेलयः ॥ क्वसुरासुरवैराणिक्वद्वेषस्नेहरीतयः ॥१२॥ वदत्येवंमयिवचःसोवाचवरवर्णिनी ॥ विस्मयाकुलमालोक्यशिलामलिविलोचना ॥१३॥ विद्याधर्युवाच ॥ ॥पश्याम्यखिलमात्मीयमहंसर्वमिहोपले ॥ मुकुरप्रतिबिंबस्थपुरान्यपुरवज्जनम् ॥१४॥ नित्यानुभवएवात्रदर्शनेकारणंमम ॥ तदभावोमुनेमन्येतंकारणमदर्शने ॥१५॥ अन्यच्चचिरकालैकद्वैतसंकथयानया ॥ शुद्धातिवाहिकैकात्मदेहताविस्मृतावयोः ॥१६॥ ममातिसुचिराभ्यस्तमपिव्योमलतामिव ॥ गतंनिजंजगदिदंयतःपश्यामिनस्फुटम् ॥१७॥ अभ्युद्यत्स्वजगत्पूर्वमतिप्रकटमेवमे ॥ तत्पश्यामीदमादर्शइवबिंबितमस्फुटम् ॥ १८ ॥ चिरव्यर्थोत्थयानाथसंकथाव्यथयामिथः ॥ स्वास्थ्यंविस्मृतमात्मीयमवदाततमंततम् ॥ १९ ॥ योभ्यासःप्रकचत्यंतःशुद्धचिन्नभसोरसात् ॥ भवेत्तन्मयमेवांतराबालमिवलक्ष्यते ॥ २० ॥ नसच्छास्त्रेणसाविद्धिनसन्न्यायेनसाकला ॥ अस्तिनास्त्यमितोद्योगाद्यदभ्यासान्नसिद्ध्यति ॥२१॥ स्वजगत्संतताभ्यासवशतोमांकथाभ्रमः ॥ नूनमाक्रांतवानेषद्वयोर्हिबलवान्जयी ॥२२॥ इष्टवस्त्वर्थिनांतज्ज्ञसूपदिष्टेनकर्मणा ॥ पौनःपुन्येनकरणान्नेतरच्छरणंमुने ॥२३॥ अयमित्थमिहाज्ञानभ्रमःप्रौढोहमात्मकः ॥ शाम्यतिज्ञानचर्चाभिःपश्चाभ्यासविजृंभितम् ॥ २४ ॥

तरांचित्तंतन्मयमेवभवेदिवेति ॥ २० ॥ अतएवाभ्यासहीनस्यश्रवणमननेनिष्फलेइत्याह ॥ नेति ॥ साकलाअस्तीतिपूर्वत्रान्वयः ॥ अभ्यासस्यत्वसाध्यंनकिंचिदस्तीत्याह ॥नास्तीति ॥ २१॥ अयंत्वत्संवादकथाभ्रमःस्वीयजगत्संतताभ्यासवशतोमांपूर्वजगद्भ्रमवर्तीमाक्रांतवान्वशीकृतवान् ॥ तेनतत्संस्कारस्तिरोहितइवाभूदित्यर्थः ॥ अतीतभ्रमापेक्षयावर्तमानस्यबलीयस्त्वादित्याशयेनाह ॥ द्वयोर्हीति ॥ २२॥ अतएवलौकिकंवैदिकंवाशिल्पविद्यादिफलमिच्छतांतत्तद्गुरूपदिष्टक्रमेणपुनःपुनस्तदभ्यासएवशरणंनान्यदित्याह ॥ इष्टेति ॥ तज्ज्ञैर्गुरुभिःसूपदिष्टेनकर्मणातत्करणप्रकारेण ॥ २३ ॥ अनाद्यनंतःसंसारानर्थोपिज्ञानाभ्यासान्नश्यतिचेत्किमन्यदनिष्टमवशिष्यते ॥ यदभ्यासेननचिकित्स्येतेत्याह ॥ अयमिति ॥ ज्ञानस्यचर्चाभिःश्रवणाद्यभ्यासैः ॥ २४ ॥

अभ्यासपाटवेबालानामपिप्रौढतादृष्टातद्विस्मरणेतुमहतामपिव्यामोहःसंभावितइत्यर्थेआवामेवनिदर्शनमित्याह ॥ अहमिति ॥ अहंशिष्यभूतापिशिलासर्गंपश्यामित्वंसर्वज्ञोगुरुरपिनपश्यस्याश्चर्यमेतदभ्यासविजृंभितमित्यर्थः ॥ २५ ॥ बाणःअचेतनोपिमहदलक्ष्यंसूक्ष्मतममपिलक्ष्यंशरसंधानाभ्यासपाटवादेतिप्राप्नोति ॥ २६ ॥२७॥ निंबभक्षणाभ्यासवतेद्रविडायनिंबोपिरोचते ॥ २८ ॥ बंधुतांबंधुवत्स्निग्धताम् ॥२९॥ देहेभौतिकताभ्रांतिरपिस्वाभाविकात्तदभ्यासादेवेत्याह ॥ आतिवाहिकेति ॥ ३० ॥ खमभ्येतिखेचरसिद्धिंलभते ॥ ३१ ॥ कीर्त्तनाद्यल्पापराधेनापिमहांत्यपिपुण्यानिवैफल्यंयांति ॥ भाग्यानिधनानि ॥ ३२ ॥ औषधार्थमभ्यासेनसेवितानिविषाणिअमृतवदारोग्याविहेतुतांयांति ॥ ३३ ॥ अतएवशास्त्रीयशुभाभ्यासःकदापिनपरित्याज्यइत्याह ॥ येनेति ॥ ३४ ॥ तर्हिंशास्त्रीयत्वादभिमतंदारपुत्रधनसत्कर्मानुष्ठानादिवस्तुतत्कदापिनत्याज्यंनेत्याह ॥ यदपीति ॥ स्वभ्यासेनप्रयत्नसहस्रेणतदर्जनादत्यंताभिमतंदारादियद्वस्तुतदपिनसहसात्याज्यंकिंतुवैराग्याभ्यासेनदरत्यादिपरिकल्पनादियुक्तिपूर्वकंत्याज्यम् ॥ यथाआमृत्योरत्यंताभिमतमपिजीवितंयोगिभिर्युक्तिपूर्वकंत्यज्यतेतद्वदित्यर्थः ॥ ३५ ॥ तत्त्वज्ञानाभ्यासस्तुसर्वथानत्याज्यः तत्त्यागेदेहाहंभावाद्यभ्यासस्यनांतरीयकस्यवारयितुमशक्यत्वादनिर्मोक्षएवेत्याशयेनाह ॥ इष्टेइति ॥ अनिष्टेदेहाद्यहंभावेअनिष्टमेवाभ्यासस्वभावादेवाप्नोति ॥ ततश्चनरकान्नरकांतरम् ॥ ३६ ॥ संसारःअसारोयेनतादृशविवेकसंविनोयेपुरुषाआत्मविचाराख्यमभ्यासंनत्यजंतितएवस्फीतांप्रायासरितंतरंतीत्यन्वयः ॥ ३७ ॥

अहंशिष्याबलाबालापश्यामित्वंनपश्यसि ॥ सर्वज्ञोपिशिलासर्गंपश्याभ्यासविजृंभितम् ॥ २५ ॥ अज्ञोपितज्ज्ञतामेतिशनैःशैलोपिचूर्ण्यते ॥ बाणोप्येतिमहालक्ष्यंपश्याभ्यासविजृंभितम् ॥ २६ ॥ इत्थंनामपरिप्रौढामिथ्याज्ञानविषूचिका ॥ शाम्यत्येवविचारेणपश्याभ्यासविजृंभितम् ॥ २७ ॥ अभ्यासेनकटुद्रव्यंभवत्यभिमतंमुने ॥ अन्यस्मैरोचतेनिंबस्त्वन्यस्मैमधुरोचते ॥ २८ ॥ अबंधुर्बंधुतामेतिनैकट्याभ्यासयोगतः ॥ यात्यनभ्यासतोदूरात्स्नेहोबंधुषुतानवम् ॥ २९ ॥ आतिवाहिकदेहोयंशुद्धचिद्व्योमकेवलम् ॥ आधिभौतिकतामेतिभावनाभ्यासयोगतः ॥ ३० ॥ आधिभौतिकदेहोसौधारणाभ्यासभावनात् ॥ विहंगवत्खमभ्येतिपश्याभ्यासविजृंभितम् ॥ ३१ ॥ पुण्यानियांतिवैफल्यंवैफल्यंयांतिमातरः ॥ भाग्यानियांतिवैफल्यंनाभ्यासस्तुकदाचन ॥ ३२ ॥ दुःसाध्याःसिद्धिमायांतिरिपवोयांतिमित्रताम् ॥ विषाण्यमृततांयांतिसंतताभ्यासयोगतः ॥ ३३ ॥ येनाभ्यासःपरित्यक्तइष्टेवस्तुनिसोधमः ॥ कदाचिन्नतदाप्नोतिवंध्यास्वतनयंयथा ॥ ३४ ॥ यदप्यभिमतंवस्तुस्वभ्यासेनतदर्जनात् ॥ तद्युक्तिपूर्वकंत्याज्यमामृत्योर्जीवितंयथा ॥ ३५ ॥ इष्टेवस्तुनिनाभ्यासंयःकरोतिनराधमः ॥ सोनिष्टेनिष्टमाप्नोतिनरकान्नरकांतरम् ॥ ३६ ॥ तरंतिसरितंस्फीतांसंसारासारसेविनः ॥ तएवात्मविचाराख्यमभ्यासंनत्यजंतिये ॥ ३७ ॥

यथाघटार्थिनेदीपप्रभाघटंप्रकटयंति निर्विघ्नंप्रापयंतिचतथाआत्मवस्त्वर्थिनेअभ्यासलक्षणाभासःप्रकाशाअभिमतमात्मवस्तुप्रकटयंतिनिर्विघ्नंप्रापयंतिच ॥ तत्रश्रवणमनना भ्यासोऽसंभावनातिमिरनिरासेनप्रकटयति निदिध्यासनाभ्यासस्तुविपरीतभावनारूपविघ्ननिरासेनप्रापयतीत्याशयः ॥ ३८ ॥ ३९ ॥ देहलक्षणायामुर्व्यामिष्टंवस्तुपरमप्रेम विषयआत्मैवतद्विचाराभ्यासलक्षणोभास्वान्सूर्यस्तथाभासयतियथाप्रजाःप्रकृष्टजन्मानोऽधिकारिजनाइंद्रियाख्यांरागद्वेषजन्ममरणाद्यनर्थसहस्रदुःखस्वप्नमोहनिद्राप्रदां रात्रिंनपश्यंतीत्यर्थः ॥ ४० ॥ ४१ ॥ अप्यर्थेतुशब्दः ॥ चतुर्दशभुवनस्थायाअपिभूतजातेमध्येकस्यचिदपिप्राणिनःकिंचिदप्यभिमतंवस्तुअभ्यासंविनानसिद्ध्यतीत्यर्थः ॥ ४२ ॥ अभ्यासस्वरूपंदर्शयति ॥ पौनःपुन्येनेति ॥ सएवइहशास्त्रेपुरुषार्थःप्राग्बहुशोवर्णितःपुरुषप्रयत्नःपरमपुरुषार्थफलस्तेनविनागतिर्निस्तारोनास्ति ॥ ४३ ॥ निजवेद

अभ्यासभासोभिमतंवस्तुप्रकटयंत्यलम् ॥ प्रापयंतिचनिर्विघ्नंघटंदीपप्रभायथा ॥ ३८ ॥ यथाकल्पद्रुमलताःसच्चिंतामणयोयथा ॥ फलंतिशरदश्चैतास्तथैवाभ्यासभूमयः ॥ ३९ ॥ इष्टवस्तुचिराभ्यासभास्वान्भासयतिप्रजाः ॥ तथेंद्रियाख्यांदेहोर्व्यांरात्रिंपश्यंतिनोयथा ॥ ४० ॥ सर्वस्यजंतुजातस्यसर्ववस्त्ववभासने ॥ सर्वदैवैकएवोच्चैर्जयत्यभ्यासभास्करः ॥ ४१ ॥ चतुर्दशविधायास्तुभूतजातेर्नकस्य चित् ॥ सिध्यत्यभिमतंवस्तुविनाभ्यासमकृत्रिमम् ॥ ४२ ॥ पौनःपुन्येनकरणमभ्यासइतिकथ्यते ॥ पुरुषार्थःसएवेहतेनास्तिनविनागतिः ॥ ४३ ॥ दृढाभ्यासाभिधानेनयत्नेनाम्नास्वकर्मणा ॥ निजवेदनजेनैवसिद्धिर्भवतिनान्यथा ॥ ४४ ॥ अभ्यासभास्वतितपत्यवनौवनेच वीरस्यसिद्ध्यतिनयन्नतदस्तिकिंचित् ॥ अभ्यासतोभुविभयान्यभयीभवंतिसर्वासुपर्वतगुहास्वपिनिर्जनासु ॥ ४५ ॥ ॥ इ० वा० वा० दे० मो० नि० उ० पा० अभ्यासप्रशंसानामसप्तषष्टितमःसर्गः ॥ ६७ ॥ ॥ ७ ॥ ॥ विद्याधर्युवाच ॥ ॥ ततःप्राचीनमभ्यासंबोधधारणयामले ॥ कुर्वःप्रकटतांतेनजगदेष्यतिशैलगम् ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ युक्तियुक्तेतयेत्युक्तेविद्याधर्याधरोरसि ॥ बद्धपद्मासनोथाहंसमाधावुदितोभवम् ॥ २ ॥

नंस्वविवेकस्तज्जेनैव ॥ ४४ ॥ वीरस्येंद्रियजयादिशूरस्यपुंसःअभ्यासभास्वतितपतिप्रकाशमानेसत्यवनौभूमौवनेजलेचादंतरिक्षेचयदभिलषितंवस्तुनसिद्ध्यतितन्नास्तिकिंचित् ॥ भयानिभयहेतुव्याघ्रसर्पादीनि ॥ ४५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि० उ० सप्तषष्टितमःसर्गः ॥ ६७ ॥ ॥ ७ ॥ ॥ दृढाधिभौतिकभ्रांतिनिरासेनसमाधिना ॥ आतिवाहिकभावस्यस्थितिःसत्यासमर्थ्यते ॥ १ ॥ यतोदृढाभ्यासाख्यसमाधियत्नमंतरेणदेहाद्याधिभौतिकताभ्रांतिर्ननिवर्तते आतिवाहिकभावश्चनाविर्भवतितंविनाचसर्गांतरस्थितिःसाक्षिप्रत्यक्षेणद्रष्टुमशक्यातत्तोहेतोरमलेपरमात्मनिसर्वबोधानुकूलयासमाधिरूपधारणयाप्राचीनमातिवाहिकभावाभ्यासमावांकुर्वस्तेनोपायेन शैलगंशिलांतर्गतंमदुक्तंजगत्प्रकटतामेष्यति ॥ १ ॥ तयाविद्याधर्यायुक्तियुक्तेइतिएवंरूपेवचस्युक्तेसति ॥ धरस्यशैलस्योरसिअधित्यकायाम् ॥ उदितउपुक्तोःभवम् ॥ २ ॥

108

तत्रसमाधौसर्वबाह्यार्थकलनात्यागेसतिपूर्वकथार्थआधिभौतिकदेहादिभावनातत्संस्कारमलमप्यत्यजंत्यक्तवानित्यर्थः ॥ ३ ॥ इदमेवस्पष्टमाह ॥ अथेत्यादिना ॥ ४ ॥ ५ ॥ सततोदयमयीनित्यानावृतस्वप्रकाशा ॥ ६ ॥ स्वस्यसाक्षिणएववृत्त्यौद्धेनअमलतेजसा ॥ वस्तेर्जडायाःस्वतोदृक्शक्त्यभावादितिभावः ॥ ७ ॥ तत्परमार्थघनंपरंतत्त्वमेवमदीयआत्मातथाउपलभावनयाउपलंदृष्टवानित्यर्थः ॥ ८ ॥ ९ ॥ यद्ययंव्यवहारःस्वप्नएवतर्हिकथंस्वपरजाग्रत्ताप्रतिभासस्तत्राह ॥ स्वयमिति ॥ स्वप्नेअज्ञानवशादेवप्रबुद्धोहमितिमन्यमानस्यान्यस्यस्वप्नदृश्यपुरुषत्वंगतःस्वप्नान्वितःस्वयंस्वरूपतोयादृक्प्रतिबुद्धोस्मीतिप्रतिभातितादृगित्यर्थः ॥ १० ॥ अतएवसौमिकेसुप्तहतानांजागरणोपायदेहा

सवार्थभावनात्यागेचिन्मात्रैकांतभावितः ॥ अत्यजंतमहंपूर्वकथार्थकलनामलम् ॥ ३ ॥ अथचिद्व्योमतांप्राप्तःपरांदृष्टिमहंगतः ॥ शरत्समयसंप्राप्तौव्योमनिर्मलतामिव ॥ ४ ॥ ततःसत्यावधानैकघनाभ्यासेनदेहके ॥ ममाधिभौतिकभ्रांतिर्नूनमस्तमुपागता ॥ ५ ॥ उदयास्तमयोन्मुक्तासततोदयमय्यपि ॥ महाचिद्व्योमतास्वच्छाप्रोदितेवतदाभवत् ॥ ६ ॥ अथपश्याम्यहंयावत्स्वस्यैवामलतेजसा ॥ वस्तुतस्तुनचाकाशंनोपलःपरमेवतत् ॥ ७ ॥ परमार्थघनंस्वच्छंतत्तथाभातितादृशम् ॥ तथाभावनयात्यात्मामदीयोदृष्टवांस्तथा ॥ ८ ॥ यथास्वप्नेसुमहतीदृष्टागेहगताशिला ॥ व्योमैवकेवलंतद्वत्सुशुद्धंचिन्नभःशिला ॥ ९ ॥ स्वयंस्वप्नान्वितोन्यस्यस्वप्नपुंस्त्वंगतोनरः ॥ स्वप्नेज्ञानप्रबुद्धस्ययादृक्तादृक्स्वरूपतः ॥ १० ॥ स्वप्नस्थानांशिरश्छिन्नंयेषांतेसंस्थितौस्थिताः ॥ कालेनज्ञानलाभेनविनाकुर्वंतुकिंकिल ॥ ११ ॥ बोधःकालेनभवतिमहामोहवतामपि ॥ यस्मान्नकिंचनाप्यस्तिब्रह्मतत्त्वादृतेक्षयम् ॥ १२ ॥ अतस्तच्चिद्घनंस्वच्छंब्रह्माकाशंशिलाकृति ॥ दृष्टंमयातथातत्रनतुपृथ्व्यादिसत्क्वचित् ॥ १३ ॥ भूतानामादिसर्गेयच्छुद्धंयत्पारमार्थिकम् ॥ वपुस्तदेवत्स्येतेषांध्यानलभ्यमवस्थितम् ॥ १४ ॥ ब्राह्मंवपुर्हिभूतानामात्मीयंयत्पुरातनम् ॥ तदेवाद्यमनोराज्यंसंकल्पइतिकथ्यते ॥ १५ ॥ सत्तातिवाहिकोदेहस्तत्परंपरमार्थतः ॥ प्रत्यक्षंपरमंयत्तत्तदाद्यंकचनंचितः ॥ १६ ॥

भावादगत्यास्वप्नएवतेषांजागरतापरिशिष्यतइतिप्रागुक्तंमयेतिस्मारयति ॥ स्वप्नस्थानामिति ॥ ११ ॥ तस्मान्मूलाज्ञाननिद्रोच्छेदेनस्वरूपप्रतिबोधएवास्यमुख्यःप्रतिबोधोऽन्यदातुस्वप्नएवतथाजागराभिमानइत्याह ॥ बोधइति ॥ १२ ॥ अतएवमयापिस्वरूपजागरात्तप्राग्दृष्टशिलाकृतिस्वच्छंचिद्घनंदृष्टंनपृथ्व्यादिविकारंसदित्यर्थः ॥ १३ ॥ सर्गस्यादिरादिसर्गोमहाप्रलयस्तदेत्यर्थः ॥ एतेषांतत्त्वविदांध्यानलभ्यमैकाप्यप्राप्यम् ॥ १४ ॥ ब्राह्मंरूपमेवसर्वभूतानांवपुःपारमार्थिकरूपंइतिएवंजगदाकारेणकथ्यते मूढैरितिशेषः ॥ १५ ॥ अस्त्वेवंतथाप्यातिवाहिकोदेहःकः यद्भावेसर्वजगद्दर्शनंचित्स्वभावकचनंचप्रागुक्तमाह ॥ सत्तेति ॥ मायाशबलंब्रह्मसदित्युच्यते ॥ तत्रचितोजगत्संस्कारसंवलितांशसत्तासएवातिवाहिकोदेहः ॥ नित्यापरोक्षशुद्धचिदंशस्तुस्वरूपकचनमित्यर्थः ॥ १६ ॥

तर्हिकथंमनोजीवस्यातिवाहिकोदेहइतिप्रागुक्तंतत्राह ॥ उद्यदिति ॥ तत्सत्तारूपंसर्गोदयेनतदाकारमिवोद्यत्सर्गगोचरमध्यक्षंजीवस्यचिदाभासात्मनःप्रथमंहिरण्यगर्भाख्यंस मष्टिरूपमातिवाहिकवपुर्भवति ॥ तत्पुनःसमष्टिभावस्यापिदुर्बुद्धयाविस्मरणेअद्यैवव्यष्टितांगतंतत्सर्वजनप्रत्यक्षंमनइतिप्रागुक्तमित्यर्थः ॥ १७ ॥ तदित्थंत्स्वयमेवचितोरूपंसम ष्टिरूपेणयोगिप्रत्यक्षंसर्वजनसाधारण्येनतुमनःप्रत्यक्षमित्यप्युक्तम् ॥ १८ ॥ तत्रइदमद्यतनंमनःप्रत्यक्षमाधिभौतिकदेहादिकल्पनयाअत्यंतासद्रूपेणैवोत्थितमित्यसत्प्रत्यक्षमेव विद्धि तद्योगिप्रत्यक्षमेवहेअंगसद्याथात्म्यस्फूर्तेर्मुख्यंप्रत्यक्षम् ॥ १९ ॥ कथंतर्हिसर्वजनानांतस्मिन्प्रत्यक्षेपरोक्षतानुभवःइतरत्रचप्रत्यक्षतानुभवस्तत्राह ॥ अहोइति ॥ २० ॥ प्रथमोदितमितिसूक्ष्मपूर्वकत्वात्स्थौल्याध्यासस्येत्यर्थः ॥ यदग्नेरोहितंरूपंतेजसस्तद्रूपंयच्छुक्लंतदपांयत्कृष्णंतदन्नस्यापागादग्नेरग्नित्वंत्रीणिरूपाणीत्येवसत्यमितिश्रुतेः ॥ सत्यं

उद्यत्प्रथममध्यक्षंजीवस्यप्रथमंवपुः॥ मनःप्रत्यक्षमित्युक्तंतत्तेनाद्यैवदुर्धिया ॥ १७॥ योगिप्रत्यक्षमित्युक्तंमनःप्रत्यक्षमित्यपि॥ त त्स्वमेवचितोरूपंगतमेवान्यतांमुधा॥ १८ ॥ इदमद्यतनंनामप्रत्यक्षमसदुत्थितम्॥ असत्प्रत्यक्षमेवेतिविद्धिप्रत्यक्षमंगतत्॥ १९॥ अहोनुचित्रामायेयंप्राक्प्रत्यक्षेपरोक्षता॥ निर्णीतास्मिंस्त्वनध्यक्षेप्रत्यक्षकलनागता॥ २० ॥ आतिवाहिकदेहत्वंप्रत्यक्षंप्रथमोदित म्॥ सत्यंसर्वगतंविद्धिमायैवत्वाधिभौतिकम्॥ २१ ॥ अनुभूतापिनास्त्येवहेम्नःकटकतायथा ॥ तयातिवाहिकस्याधिभौतिकत्वंनवि द्यते॥ २२ ॥ भ्रममभ्रमतांयातमभ्रमंभ्रमतांगतम्॥ वेत्तिजीवोविचारेणविनाहोनुविमूढता॥ २३ ॥ आधिभौतिकदेहोयंविचारेण नलभ्यते॥ आतिवाहिकदेहस्तुकिललोकद्वयेऽक्षयः॥२४॥ आधिभौतिकचिद्रूढात्यातिवाहिकदेहके॥ मरौमरीचिकास्वेवयथामिथ्यै ववारिधीः॥ २५॥ जाताधिभौतिकीसंविदातिवाहिकचित्क्रमे॥ देहदृष्टिवशात्प्रौढास्थाणौपुरुषधीरिव॥ २६ ॥ शुक्तौरजततातापेज लतेवौयथास्थिता॥ आधिभौतिकतातद्वन्माययैवातिवाहिके॥ २७॥ यदसत्तत्कृतंसत्यंयत्सत्यंतदसत्कृतम् ॥ अहोनुमोहमाहात्म्यंजी वस्यास्याविचारजम्॥ २८॥ योगिप्रत्यक्षमेवास्तिकिंचिदस्तितुमानसम्॥ यस्माल्लोकद्वयाचारस्ताभ्यामेवप्रसिध्यति॥ २९॥ आ द्यंप्रत्यक्षमुत्सृज्ययःसत्येऽस्मिन्कृतास्थितिः॥ प्रत्यक्षेमृगतृष्णांबुपीत्वासमुखमास्थितः॥ ३० ॥

समष्टिभावात्सर्वगतंमायैवावृतमेव ॥ २१ ॥ २२ ॥ २३ ॥ स्थूलस्यसूक्ष्मात्पृथक्त्वेअपृथक्त्वेवाकीदृशंतत्त्वरूपंस्यादित्यादिप्राक्प्रपंचितविचारेण ॥ इहामुत्रचसर्वव्यवहारनि र्वाहकत्वादामोक्षमक्षयः ॥ २४ ॥ आधिभौतिकचिदाधिभौतिकतायथारूढाप्रादुर्भूता ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ स्फूर्तिस्पंदनेहिव्यवहारसर्वस्वं तेचलोकद्वयसाधारण त्वादातिवाहिकदेहस्यैवनिष्कर्षेपर्यवस्यतइत्याह ॥ योगीति ॥ मानसंस्पंदनमितिशेषः ॥ तच्चप्रत्यक्षाधीनसिद्धिकत्वात्किंचिदस्तिनप्रत्यक्षसमसत्ताकस्यास्तीत्यप्रकृतमेवतदपीति भावः ॥ २९ ॥ तथाचसर्वसाधारणप्रत्यक्षमात्रेसर्वमन्यद्विहाययोगेनस्थिरताकार्यानपामरजनमात्रप्रसिद्धेऐहिकमात्रेस्थूलाद्विप्रत्यक्षेइत्याशयेनाह ॥ आद्यमिति ॥ ३० ॥

109

एवंसुखेपिसर्वलोकसाधारणेयोगिनामेवानुभवसिद्धेपरमपुरुषार्थतानपामरजनप्रसिद्धेइत्याशयेनाह ॥ यदिति ॥ क्षणमात्रेणनाशानुभूतिभिर्दुःखपर्यवसितंप्राक्दुःखसहस्र निष्पादितंयद्विषयसुखंतद्दुःखमेवाहुर्विवेकिनइत्यर्थः ॥ ३१ ॥ उक्तमेवदृढीचिकीर्षुःपुनराह ॥ प्रत्यक्षेणेत्यादिना ॥ ३२ ॥ ३३ ॥ ३४ ॥ मिथ्यासंकल्पमयस्यजन्मैवयत्र दुर्लभंतस्यसत्ताअत्यंतदुर्लभा असतश्चार्थक्रियासमर्थताततोपिदूरनिरस्तेत्याह ॥ अजातेति ॥ ३५ ॥ ननुचक्षुरादिप्रमाणप्रसाधितःप्रपंचःकथमपलप्यतेतत्राह ॥ यत्रेति ॥ योगिप्रत्यक्षबाधितत्वाच्चक्षुरादेरपीतिभावः ॥३६ ॥ यदासाक्षादर्थसाधकेषुचक्षुरादिष्वियंगतिस्तदातन्मूलाअनुमानादयोपिदूरनिरस्ताइत्याह ॥ प्रत्यक्षएवेति ॥ ऊर्णायोर्मेघ

यत्सुखंदुःखमेवाहुःक्षणनाशानुभूतिभिः॥ अकृत्रिममनाद्यंतंयत्सुखंतत्सुखंविदुः॥३१॥प्रत्यक्षेणैवमध्यक्षंप्रत्यक्षंप्रविचार्यताम्॥ यदाद्यंतत्सदध्यक्षंतत्प्रत्यक्षेणदृश्यताम्॥३२॥लोकत्रयानुभवदंत्यक्त्वाप्रत्यक्षमैहिकम्॥मायात्मकंयोगृह्णातिनास्तिमूढतमस्ततः॥३३॥ आतिवाहिकमेवैषांभूतानांविद्यतेवपुः॥अत्राधिभौतिकव्याप्तिरसत्यैवपिशाचिका॥ ३४ ॥ अजातसंकल्पमयंप्रत्यक्षंसत्कथंभवेत्॥ स्वयमेवनयत्सत्यंतत्स्यात्कार्यकरंकथम्॥३५॥ यत्रप्रत्यक्षमेवासदन्यत्किंतत्रसद्भवेत्॥ क्वतत्सत्यंभवेद्वस्तुयदसिद्धेनसाध्यते॥३६॥ प्रत्यक्षएवभावत्वेनष्टेक्वेवानुमादयः॥ उह्यंतेवारणायत्रतत्रोर्णायुपुकाकथा ॥ ३७॥ अतःप्रमाणसंसिद्धंदृश्यंनास्त्येवकुत्रचित् ॥ अनन्यदिदमस्तीवतत्तद्ब्रह्मघनंघनम्॥ ३८ ॥ स्वप्नेद्रष्टुःखमेवाद्रिर्गृहेनान्यस्यवैयथा॥ तथातद्भावनवतोरावयोःसाशिलैवचित्॥ ३९ ॥ अयंशैलइदंव्योमजगदेतदिदंत्वहम्॥ इतिचिन्मयआत्मांतःखंचमत्कुरुतेस्वयम्॥ ४० ॥ पश्यत्येतत्प्रबुद्धात्मानाप्रबुद्धःकदाचन॥ श्रोतुःकथार्थसंवित्तिर्नाश्रोतुर्भवतिक्वचित्॥ ४१ ॥ अप्रबुद्धमितिभ्रांतिरवेयंसत्यतांगता॥ क्षीबस्यसुस्थिराएवनृत्यंतितरुपर्वताः॥४२॥ सर्वत्राप्रतिहतमेकरूपबोधंप्रत्यक्षंशिवमनुबुध्यचित्स्वरूपम्॥ प्रत्यक्षांतरमिहपेलवंश्रयंतेयेमूढास्तृणतनुभिःशठैरलंतैः॥ ४३॥

स्य ॥ मत्वर्थीयोयुस्॥ ३७ ॥ एवंदृश्यमार्जनेफलितमाह ॥ अनन्यदिति ॥ यदिदंसदनन्यदस्तीवेतिभासतेतद्घनंसैंधवघनतुल्यंब्रह्मघनमेवेतिफलितमित्यर्थः ॥ ३८ ॥ स्वमे अद्रिर्द्रष्टुःप्रसिद्धोद्रिस्तदानीमपिखंशून्यएव ॥ यतस्तस्मिन्नेवकालेजाग्रतःस्वपतोवाअन्यस्यसोद्रिर्नास्ति ॥ यथाऽयंदृष्टांतस्तथाशिलाभावनवतोरावयोर्दृश्यापिसाशिलाचिदेवेत्यर्थः ॥ ३९ ॥ चमत्कुरुतेभासतइतियावत् ॥ ४० ॥ चिदेवेत्थंप्रथतेनान्यदितिप्रबुद्धात्मैवपश्यतिनाप्रबुद्धः ॥ यथाभारतादिकथार्थसंवित्तिस्तच्छ्रोतुरेवनान्यस्यतद्वदित्यर्थः ॥ ४१ ॥ ४२ ॥ येतुयोगिप्रत्यक्षंपूर्णानंदैकरसंस्वरूपमनुबुध्यापितद्बाधितंचक्षुरादिप्रत्यक्षांतरंपेलवंतुच्छमपिप्रमाणत्वेनसहंतेतेतृणतनुभिस्तृणप्रायैःशठैरालवंचकैस्तैःअलं नकिंचित्प्रयोजनमस्ति ॥ स्वानुभवेपिविश्वासशून्याःपरवाक्यंकथंविश्वसीरन्नित्यनुपदेश्याएवतेइत्यर्थः ॥ ४३ ॥

१ क्वतत्सिद्धंभवेदित्यपिक्वचित्पाठः

॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेऽष्टषष्टितमःसर्गः ॥ ६८ ॥ ॥ ७९ ॥ ॥ शिलासर्गप्रवेशोत्रतत्रत्यविधिदर्शनम् ॥ स्वासितस्यमुनेस्तेनसंभाषाचात्रवर्ण्यंते ॥१॥ शिलोदरेजगत्सद्भावसंभावनायतत्सत्तास्फूर्त्तिप्रदंतदधिष्ठानंब्रह्मदर्शयति ॥ जगदंगमिति ॥ जगंतिअंगानीवयस्य ॥ अनाभासंसूर्यादिज्योतिषामविषयः ॥ अदृश्यंचक्षुराद्यविषयः ॥ १ ॥ २ ॥ साविद्याधरी ॥ तत्रशिलोदरे ॥ तंप्रागुक्तंसर्गंप्रविष्टा ॥ ३ ॥ सोद्यमातदानयनोद्यमवतीसातत्रत्यंवैरिंचंलोकमासाद्यविरिंचस्यपुरःउपविष्टासतीअयंमेपतिरित्यादिवाक्यंयावद्वक्तितावदस्मिन्जगतिमहाप्रलयआसन्नइतिपंचमेऽन्वयः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ पुनःसैवाह ॥ संप्रतीत्यादिना ॥ ८ ॥ तत्त्वोप

॥इ०वा०वा०दे०मो०नि०उ०पाषा०प्रमाणाप्रतिसिद्ध्यादृश्यानुपपत्तिवर्णनंनामाष्टषष्टितमःसर्गः॥६८॥ ॥७९॥ ॥श्रीवसिष्ठउवाच॥ ॥जगदंगमनाभासमदृश्यंदृश्यवत्स्थितम्॥परयादृश्यतेदृष्ट्यातद्ब्रह्मैवनिरामयम् ॥ १ ॥ तत्रशैलसरित्स्रोतोलोकालोकांतरभ्रमाः॥ भांतितेपरमादर्शेमहाव्योमनिबिंबिताः॥ २ ॥ साप्रविष्टाततःसर्गंतमनर्गलचेष्टिता॥ अहमप्यविशंतत्रसंकल्पात्मातयासह॥ ३ ॥ यावत्सातत्रवैरिंचंलोकमासाद्यसोद्यमा॥ उपविष्टाविरिंचस्यपुरःपरमशोभना॥४॥ वक्त्ययंमुनिशार्दूलपतिर्मेपातिमामिमाम्॥ विवाहार्थमनेनाहंजनितामनसापुरा॥५॥ पुराणःपुरुषोप्येषमामप्यद्यजरागताम् ॥ नविवाहितवांस्तेनविरागमहमागता॥ ६ ॥ विरागमेषोप्यायातोगंतुमिच्छतितत्पदम् ॥ यत्रनद्रष्टतानैवदृश्यतानतुशून्यता ॥ ७॥ महाप्रलयआसन्नोजगत्यस्मिंश्चसंप्रति॥ ध्यानान्नचचलत्येषशैलमौनादिवाचलः ॥ ८॥ तस्मान्मामेनमपिचबोधयित्वामुनीश्वर॥ आमहाकल्पसर्गादौपरमेपथियोजय॥ ९ ॥ इत्युक्त्वामामसौतस्यबोधायेदमुवाचह॥ नाथायंमुनिनाथोद्यसद्मसंप्राप्तवानिदम्॥ १०॥ एषोन्यस्मिन्जगद्गेहेब्रह्मणस्तनयोमुनिः॥ पूजयैनंगृहायातंगृहस्थगृहपूजया॥११॥ बुद्ध्यतामर्घ्यपाद्येनपूज्यतांमुनिपुंगवः॥ महन्महत्सपर्याभिर्महात्मभ्योहिरोचते॥१२॥ तयेत्युक्तेमहाबुद्धिर्बुबुधेससमाधितः॥ स्वसंवित्तिद्रवात्मत्वादावर्त्तइववारिधौ॥१३॥शनैरुन्मीलयामासनयनेनयकोविदः॥ मधुःशिशिरसंशांतावनौकुसुमेयथा॥१४॥शनैःप्रकटयामासुस्तान्यंगान्यस्यसंविदम्॥ मधुपल्लवजालानिनवानीवनवंरसम्॥१५

देशेनबोधयित्वाआमहाकल्पंवैज्ञानिकप्रलयपर्यंतंयेयेप्रसिद्धाःसर्गास्तेषामादौमूलभूतेब्रह्माख्येपथियोजय ॥ ९ ॥ तस्यचतुर्मुखस्यबोधायसमाधिव्युत्थानायउचितार्थावगमायच ॥ १० ॥ गृहस्थानांगृहेषूचितयापूजयापूजयप्रीणय ॥ ११ ॥ त्वयाअयंमुनिपुंगवःपूज्यत्वेनबुध्यताम् ॥ अतएवार्घ्यपाद्येनपूज्यताम्॥ यतोमहात्मभ्यस्त्वादृशेभ्योमहत्सपर्याभिःप्राप्यंयन्महत्फलंतदेवरोचतेनक्षुद्रम् ॥ रुच्यर्थानांप्रीयमाणइतिचतुर्थी ॥ १२ ॥ १३ ॥ कुसुमेद्वेनयनयोरुपमे ॥ मधुर्यथाउन्मीलयतितद्वत् ॥ १४ ॥ मधोःसंबंधीनिपल्लवजालानिनवंस्वरसमिवेत्यर्थः ॥ १५ ॥

---

१ तस्यांशिलायामानयनम्

॥१६॥ प्रणवपूर्वकैःस्वरैःसुंदरंयथास्यात्तथा ॥१७॥ करामलकवत्दृष्टःसंसारलक्षणस्यअसारस्यसारःआत्मायेन: ॥१८॥१९॥ दृष्ट्याकटाक्षेणदर्शितेमणिमयेपीठेअहंनिविष्टउपविष्टः ॥ २० ॥ स्थितिनीतयोयुक्तव्यवहारनियतयः ॥ २१॥ सर्वैर्भूतगणैर्गंधर्वादिभिरुदितेवागादिभिःकृतेप्रणतिसंरंभेशांतेसति ॥२२॥ इयंविद्याधरीमामुपागतासतीअस्मांस्त्वंज्ञानगिराबोधयेतियद्वक्तिइदंकिमुचितमनुचितंवेत्यर्थः ॥ २३ ॥ कुतस्तेऽयंसंशयस्तत्राह ॥ भवानिति ॥ तथाचतवकृतकृत्यत्वान्मदुपदेशापेक्षैवनास्ति अस्यास्तुसाधनसंपत्त्यभावादधिकारोनास्तीत्युपदेशप्रार्थनानुपपत्तेःसंशयइतिभावः ॥ २४ ॥ संशयांतरंदर्शयति ॥ कथमिति ॥ विरसतांनिर्वेदम् ॥ २५ ॥ सत्यंममास्याश्चनोपदेशार्हता

सुरसिद्धाप्सरःसंघाःसमाजग्मुःसमंततः ॥ यथाहंसालयोलोलाःप्रातर्विकसितंसरः ॥ १६ ॥ ददर्शासौपुरःप्राप्तंमांचतांचविलासिनीम् ॥ उवाचाथवचोवेधाःप्रणवस्वरसुंदरम् ॥१७॥ ॥अन्यजगद्ब्रह्मोवाच॥ ॥करामलकवद्दृष्टसंसारासारसारहे॥ज्ञानामृतमहांभोदमुनेस्वागतमस्तुते ॥ १८ ॥ पदवीमसिसंप्राप्तइमामतिदवीयसीम् ॥ दूराध्वसुपरिश्रांतइदमासनमास्यताम् ॥ १९ ॥ इत्युक्तेतेनभगवन्नभिवाद्यइत्यहम् ॥ वदन्मणिमयेपीठेनिविष्टोदृष्टिदर्शिते ॥ २० ॥ अथामरर्षिगंधर्वमुनिविद्याधरोदिताः ॥ प्रस्तुताःस्तुतयःपूजानतयःस्थितिनीतयः ॥ २१ ॥ ततोमुहूर्त्तमात्रेणसर्वभूतगणोदिते ॥ शांतेप्रणतिसंरंभेतस्योक्तंब्रह्मणोमया ॥ २२ ॥ किमिदंभूतभव्येशयदियंमामुपागता ॥ वक्तिज्ञानगिरास्मांस्त्वंबोधयेतिप्रयत्नतः ॥ २३ ॥ भवान्भूतेश्वरोदेवसकलज्ञानपारगः ॥ इयंतुकाममूर्खाकिंब्रूतेब्रूहिजगत्पते ॥ २४ ॥ कथमेषात्वयादेवजायार्थंजनितासती ॥ नेहजायापदंनीतानीताविरसतांकथम् ॥ २५ ॥ ॥अन्यजगद्ब्रह्मोवाच॥ ॥मुनेश्शृणुयथावृत्तमिदंतेकथयाम्यहम् ॥यथावृत्तमशेषेणकथनीयंयतःसताम् ॥२६॥ अस्तितावदजंशांतमजरंकिंचिदेवसत् ॥ ततश्चित्कचनेकांतरूपिणःकचितोस्म्यहम् ॥ २७ ॥ आकाशरूपएवाहंस्थितआत्मनिसर्वदा ॥ भविष्यतिस्थितेसर्गेस्वयंभूरितिनाममे ॥२८॥ वस्तुतस्तुनजातोस्मिनचपश्यामिकिंचन ॥ चिदाकाशश्चिदाकाशेतिष्ठाम्यहमनावृतः ॥ २९ ॥

तथापीयंस्ववासनयैवममाप्यज्ञतांस्वस्याअधिकारंचमन्यमानात्वांप्रार्थितवती तथाअस्याजन्ममात्रंमयासंपादितंजायार्थमहंजनिताअहंचास्यभार्यास्मीत्यादिकल्पनासर्वाप्यस्याःस्ववासनयैवसंपन्ना अतएवास्यामद्वासनामात्रत्वान्मिथ्याभूतायाःसांप्रतंममविदेहकैवल्यप्राप्त्यैवसहस्वकल्पितप्रपंचेनप्रलयस्तत्समक्षमेवभविष्यतीत्युत्तरंविस्तराद्वक्तुकामःप्रतिजानीते ॥ मुनेइति ॥ २६ ॥ तत्रादौवक्ष्यमाणोपोद्घातेनज्ञानमप्रतिघंयस्यवैराग्यंचजगत्पतेः ॥ ऐश्वर्यंचैवधर्मश्चसहसिद्धंचतुष्टयमितिपुराणप्रसिद्धमौत्पत्तिकंतत्त्वज्ञानंस्वस्यास्तीतिप्रकाशयितुंस्वकारणंततःस्वोत्पत्तिस्वरूपंचाह ॥ अस्तीति ॥ कचितोस्मिप्रकटीभूतोस्मि ॥ २७ ॥ तादृशतत्त्वज्ञानबाधितास्वोत्पत्तिस्तत्प्रयुक्तस्वनामचकथंप्रसिद्धंतत्राह ॥ आकाशेति ॥ व्यवहर्तृप्रजासर्गेउत्पद्यस्थितेसतितद्दृष्ट्याव्यावहारिकंस्वयंभूरितिनामभविष्यति ॥ २८ ॥ वस्तुतस्तत्त्वदृशातु ॥ २९ ॥

तर्हितत्त्वविदोरावयोःप्रश्नोत्तरादिव्यवहारःकीदृशस्तत्राह ॥ यदिति ॥ यथाएकएवसमुद्रोऽखंडस्तरंगभेदैःखंडनपरस्पराघातैर्ध्वनिवैचित्र्यंदर्शयतितद्वदितिभावः ॥३०॥ एवं समुद्रात्तरंगवदीषत्कल्पितस्वपरदृष्टिवेद्यभेदरूपस्यकालवशातईषत्स्वरूपविस्मरणादविशदाकृतेर्मेनांतरीयकचिदाभासमात्रस्यांतर्याममाहमितिवासनाउदितासाकुमार्याअन्यस्यतवअन्येवविभातिममतुअनन्याविभाति ॥ साउदिताअनुदिताचावयोर्दृशेतिद्वयोरन्वयः ॥ ३१ ॥ ३२ ॥ त्वंतर्हिस्वदृशाकीदृक्तत्राह ॥ अनाशेति ॥ अहंतुअनाशसत्तायतोऽनुदितः ॥ ३३ ॥ ईदृशात्त्वत्तइयंकथमुत्पन्नाकाचवातत्राह ॥ तस्येति ॥ आअहमितिभ्रांतिः ॥ स्मरणेआकारःअच्छिन्नप्रगृह्यः ॥ पूर्वपूर्वाहंकारसंस्कारप्रभवत्वात्स्मृतिकल्पायाअहमितिभ्रांतेर्जगत्स्थितेर्वासनायाश्चाधिष्ठात्रीदेवताइयंमत्संकल्पाद्देहरूपिणीसंपन्नेत्यर्थः ॥ ३४ ॥ ३५ ॥ तर्हीयंत्वांकथंपतिरितिब्रूतेतत्राह ॥ स्वेति ॥ यस्मादेषैव

यदयंत्वंममाहंतेयदिदंकथनंमिथः ॥ तत्तरंगस्तरंगाग्रेरणतीवेतिमेमतिः ॥ ३० ॥ एवंरूपस्यमेकालवशतोऽविशदाकृतेः ॥ साकुमार्याश्चिदाभासमात्रस्यांतःस्वभावतः ॥ ३१ ॥ ममानन्यातवान्यस्यचान्येवेहविभातिया ॥ सोदितानुदितेवांतर्ममाहमितिवासना ॥ ३२ ॥ अनाशसत्तानुदितस्त्वहमात्मात्मनिस्थितः ॥ स्वभावादच्युताकारस्त्वात्मारामःस्वयंप्रभुः ॥ ३३ ॥ तस्याअहमितिभ्रांतेर्वासनायाजगत्स्थितेः ॥ संपन्नेयमधिष्ठातृदेवतादेहरूपिणी ॥ ३४ ॥ वासनायाअधिष्ठातृदेवतैवमियंस्थिता ॥ नतुमेगृहिणीनापिगृहिण्यर्थेनसत्कृता ॥ ३५ ॥ स्ववासनावेशवशेनभावंगृहिण्यहंब्रह्मणइत्युपेत्य ॥ एषास्वयंव्यर्थमितातिदुःखंयस्माल्किलैषैवहिवासनांतः ॥ ३६ ॥ ॥ इ० वा०वा०दे०मो०नि०उ०पाषा०सर्गप्राप्तिर्नामैकोनसप्ततितमःसर्गः ॥ ६९ ॥ ॥ ७० ॥ ॥ अन्यजगद्ब्रह्मोवाच ॥ ॥ अथाहंचिन्मयाकाशस्त्वन्याकाशमयींस्थितिम् ॥ परांग्रहीतुमिच्छामितेनेहोपस्थितःक्षयः ॥ १ ॥ महाप्रलयकालेऽस्मिंस्त्यक्तुमेषामयाधुना ॥ मुनींद्रनूनमारब्धातेनवैरस्यमागता ॥ २ ॥ आकाशत्वाद्यदायोयंपराकाशोभवाम्यहम् ॥ तदामहाप्रलयतावासनायाश्चसंक्षयः ॥ ३ ॥ तेनैषाविरसीभूतामन्मार्गंपरिधावति ॥ नानुगच्छतिकोनामनिर्मातारमुदारधीः ॥ ४ ॥

अंतःसर्वंजगद्वासनाअतोगृहिण्यहमितिस्वमनीषयैवोपेत्यव्यर्थमतिदुःखमिताप्राप्ता ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०एकोनसप्ततितमःसर्गः ॥ ६९ ॥ वर्ण्यतेवासनादेव्याइहनिर्वेदकारणम् ॥ प्रलयोजगतश्चाथमिथ्याविभ्रममात्रता ॥ १ ॥ कथमेषात्वयाब्रह्मन्जायार्थंजनितासती नेहजायापदंनीतेतिप्रश्नस्योत्तरमुक्तमिदानींनीताविरसतांकथमितिप्रश्नस्योत्तरंवक्तुमारभते ॥ अथेत्यादिना ॥ अथस्वसंकल्पकल्पितद्विपरार्द्धायुःप्रमाणादनंतरंचिन्मयःचिद्विवर्त्तरूपोयश्चित्ताकाशस्तद्रूपोहंपरांनिरतिशयानंदरूपामन्याकाशमयींब्रह्माकाशात्मिकांकैवल्यस्थितिम् ॥ तेनहेतुनाइहमद्वासनाकल्पितेजगतिक्षयोनित्योनैमित्तिकोदैनंदिनआत्यंतिकश्चेतिपुराणप्रसिद्धश्चतुर्विधोपिप्रलयउपस्थितः ॥ १ ॥ त्यक्तुंमूलोच्छेदात्स्वसत्तातःप्रच्यावयितुम् ॥ तेनहेतुनावैरस्यंक्षयोन्मुखताम् ॥ २ ॥ तत्रोपपत्तिमाह ॥ आकाशत्वादिति ॥ ल्यब्लोपेपंचमी ॥ अयमहंयदाचित्ताकाशतांविहायआद्योब्रह्माकाशोभवामितदेत्यर्थः ॥ ३ ॥ ४ ॥

कलेश्चरमकल्पचरममन्वंतरचरमकलियुगस्यांऽतःपरिसमाप्तिकालः ॥ प्रजाश्चमनुश्चेंद्रश्चदेवाश्चतेषाम् ॥ ५ ॥ चतुर्विधप्रलयानामपियुगपत्प्राप्तिरित्याह ॥ अद्यैवेति ॥ वासनांतइत्यात्यंतिकवैज्ञानिकप्रलयोक्तिः ॥ देहव्योमांतइतिप्राकृतप्रलयोक्तिः ॥ ६ ॥ तेनआत्मावलोकनेच्छादिकारणकलापेन ॥ ७ ॥ स्वनाशहेतौस्वात्मावलोकनेऽस्याःकथमिच्छाजायतेइतिचेत्स्वभावादेवेतिसोपपत्तिकमाह ॥ यथेत्यादिना ॥ अपकारणंकारणांतरंविनास्वभावादेवेत्यर्थः ॥ ८ ॥ ९ ॥ तर्हितस्याअस्मदीयब्रह्मांडदर्शनेकोहेतुस्तमाह ॥ आत्मेति ॥ आत्मज्ञानार्थंप्रवृत्तस्यधारणाभ्यासस्यब्रह्मांडांतरगमनादिसिद्धयोनांतरीयकंफलमितितत्परीक्षेच्छैवतद्धेतुरितिभावः ॥ वर्गेषुधर्मार्थादिचतुर्वर्गेषुव्यपानिरर्गलाःप्रजायस्मिन् ॥१०॥ प्रागुक्तशिलादर्शनमप्यस्यास्तद्बलादेवेत्याह ॥ अनयेति ॥ ११ ॥ १२ ॥ भेददृष्टौव्युत्थानदशायांस्थितावयंनपश्यामः ॥ समाधिनाबोधैकतांगतास्तुयो

इहाद्यायंकलेरंतश्चतुर्युगविपर्ययः ॥ प्रजामन्विंद्रदेवानामद्यैवांतोयमागतः ॥ ५ ॥ अद्यैवचायंकल्पांतोमहाकल्पांतएवच ॥ ममायंवासनांतोद्यदेहव्योमांतएवच ॥ ६ ॥ तेनेयंवासनाब्रह्मन्क्षयंगंतुंसमुद्यता ॥ क्षेवपद्माकराशोषेगंधलेखावतिष्ठताम् ॥ ७ ॥ यथाजडाब्धिलेखायाजायतेलहरीचला ॥ वासनायास्तथैवेच्छामुधोदेत्यपकारणम् ॥ ८ ॥ आभिमानिकदेहायावासनायाःस्वभावतः ॥ अस्याआत्मावलोकेच्छास्वयमेवोपजायते ॥ ९ ॥ आत्मतत्त्वंनुपश्यंत्याधारणाभ्यासयोगतः ॥ दृष्टोनयाभवत्सर्गोवर्गव्यग्रनिरर्गलः ॥ १० ॥ अनयांबरसंचारपरयाद्रिशिरःशिला ॥ दृष्टास्वजगदाधारभूतास्माकंतुखात्मिका ॥ ११ ॥ एतद्यस्मिन्जगद्यत्रतद्वपत्वंजगद्गिरौ ॥ अस्मज्जगत्पदार्थेषुसंत्यन्यानिजगंत्यपि ॥ १२ ॥ वयंतानिनपश्यामोभेददृष्टौस्थिताइमे ॥ बोधैकतांगतास्त्वाशुपश्यामस्तानिवीक्षणात् ॥ १३ ॥ घटेपटेवटेकुड्येखेनलेऽभ्रसितेजसि ॥ जगंतिसंतिसर्वत्रशिलायामिवसर्वदा ॥ १४ ॥ जगन्नाममुधाभ्रांतिःकिलस्वप्नपुरोपमा ॥ मिथ्यैवेयंक्वनामासौचिद्रूपास्त्यथनास्तिच ॥ १५ ॥ परिज्ञातासतीयेषामेषाचिन्नभसैकताम् ॥ गतातेनविमुत्यंतिशिष्टास्तुभ्रमभाजनम् ॥ १६ ॥ अथान्यधारणाभ्यासात्स्वविरागवशोदितम् ॥ साधयंत्याऽर्थमात्मीयंदृष्टस्त्वमनयामुने ॥ १७ ॥

गद्दशावीक्षणात्पश्यामएव ॥ १३ ॥ १४ ॥ इयंजगन्मायामिथ्यैव ॥ असौमिथ्याभ्रांतिःक्वनामास्ति ॥ यद्यस्तिचतर्ह्यधिष्ठानचिद्रूपाअन्यथैवास्तिनप्रतीयमानजडरूपेत्यर्थः ॥ १५ ॥ १६ ॥ किमिदंभूतभव्येशयदियंमामुपागतेतियत्त्वसमीपागमनसामर्थ्यकारणंपृष्टंतस्योत्तरमाह ॥ अथेति ॥ अथप्रागुक्तनिर्वेदप्राप्त्यनंतरंस्वविरागवशादुदितमात्मीयंस्वाभिलाषितमात्मज्ञानानुकूलंचगुरूपसदनश्रवणमननाद्यर्थंत्वदुपदेशात्साधयंत्यासाधयितुमिच्छंत्याअनयाअन्यासांप्रागुक्तजगत्सर्गदर्शनहेतुधारणाव्यतिरिक्तानांखेचरसिद्धिब्रह्मांडांतरसंचारपरमनःकल्पितसूक्ष्मार्थानुप्रवेशसिद्धसंदर्शनसंभाषणादिसिद्धिहेतूनांचूडालोपाख्यानोपवर्णितधारणाविशेषाणामभ्यासात्त्वत्संकल्पकल्पितंत्वत्समाधिस्थानंपरिज्ञायतत्रगतयाअनयाअंतर्हितोपित्वंदृष्टइत्यर्थः ॥ १७ ॥

इतिवर्णितप्रकारेणजीवचिच्छक्तिरविद्याऐंद्रजालिकमायेवपरिजृंभते ॥ ब्राह्मीचमायाशक्तिरित्थमेवपरिजृंभते ॥ सातुविद्यानिरस्तावरणशक्तित्वादनामयेतिविशेषइत्यर्थः ॥ अथवापूर्वार्द्धेनमायेवमायिकोपाधीननुसरंतीजीवचिच्छक्तिर्विजृंभतइत्यज्ञकथाउत्तरार्द्धेतुब्राह्मीशक्तिराविर्भूताब्रह्मचिदेवसर्वतोविजृंभतइतितत्त्वज्ञकथेतियोज्यम् ॥ १८ ॥ प्रवर्त्ततेउत्पद्यंतेनिवर्त्ततेनश्यंति ॥ किंतुकेवलंचितिरेवद्रव्यमिवकालइवक्रियेवद्योतमानातपतिस्फुरति ॥१९॥ अंगानांप्रतिकृतिरंगकम् ॥ इवेप्रतिकृताविति कन् ॥२०॥ अवतिष्ठत्यवतिष्ठते ॥छांदसःपदव्यत्ययः ॥२१॥ चितएवेदंविपरीतदर्शनंभ्रांतचित्स्वभावादेवेत्याह॥ विज्ञानेति॥साद्यंतादेशकालकृतपरिच्छिन्नाइतिएवंविधवस्तुकृतपरिच्छेदमपिगता ॥ २२ ॥ निराकारापिसाकारासतीजगंतिअंगानियस्यास्तथाविधेतिवैपरीत्येनसंस्थिता ॥ २३ ॥ यद्वत्यथास्वप्नेचिद्व्योमैवस्वरूपंपत्तनंवेत्तितद्वज्जागरेपिजगच्चिद्व्योमैवजगदंगकंगिरिपाषाणमपिवेत्तिपश्यति ॥ २४ ॥ स्वप्नवदेवप्रबोधेबाधसाम्यंदर्शयति ॥ नसरंतीति ॥ २५ ॥ पयसिसमुद्रेतरंगादिपयोंतरमिवपृथग्रूपाः ॥ २६ ॥ एवंसतिअध्यारो

इतिमायेवदुष्पाराचिच्छक्तिःपरिजृंभते ॥ इत्यमाद्यंतरहिताब्राह्मीशक्तिरनामया ॥ १८ ॥ प्रवर्त्ततेनिवर्त्ततेनेहकार्याणिकानिचित् ॥ द्रव्यकालक्रियाद्योताचितिस्तपतिकेवलम् ॥ १९ ॥ देशकालक्रियाद्रव्यमनोबुद्ध्यादिकंत्विदम् ॥ चिच्छिलांगकमेवैकंविद्धिनस्तमयोदयम् ॥ २० ॥ चिदेवेयंशिलाकारमवतिष्ठतिबिभ्रती ॥ अंगमस्याजगज्जालंमरुतःस्पंदनंयथा ॥ २१ ॥ विज्ञानघनमात्मानंजगदित्यवबुध्यते ॥ अनाद्यंतापिसाद्यंताचित्त्वादितिगतापिचित् ॥ २२ ॥ चिच्छिलेयमनाद्यंतासाद्यंतास्तीतिबोधतः ॥ साकारापिनिराकाराजगदंगेतिसंस्थिता ॥ २३ ॥ यद्वत्स्वप्नेचिदेवस्वरूपंव्योमैवपत्तनम् ॥ वेत्तितद्वदिदंवेत्तिपाषाणंजगदंगकम् ॥ २४ ॥ नसरंतीहसरितोनचक्रंपरिवर्त्तते ॥ नार्थाःपरिणमंत्यंतःकचत्येतच्चिदंबरम् ॥ २५ ॥ नमहाकल्पकल्पांतसंविदःसंविदंबरे ॥ संभवंतिपृथग्रूपाःपयसीवपयोंतरम् ॥ २६ ॥ जगंतिसंत्येवनसंतिशांतेचिदंबरेसर्वगतैकमूर्त्तौ ॥ नभोंतराणीवमहानभोंतश्चित्संतिसत्तानिपरांबराणि ॥ २७ ॥ वसिष्ठतद्गच्छमुनेजगत्त्वंत्वंचासनेसंप्रतिशांतिमेहि ॥ बुद्ध्यादिरूपाणिपरंत्वजंतुवयंबृहद्ब्रह्मपदंप्रयामः ॥ २८ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० पाषा० शिलांतर्जगत्पितामहवाक्यानिनामसप्ततितमःसर्गः ॥ ७० ॥ ॥ ५ ॥ ॥

पदृष्ट्यादर्शनेजगंत्यनंतानिसंदेवसर्वत्रैवचित्सत्तयासंत्येवनाणुमात्रमपिकापिकिंचिदप्यपलपितुंशक्यम् अपवाददृष्ट्यादर्शनेनक्वापिकिंचिदपिचित्स्वरूपव्यतिरिक्तंसमर्थयितुंशक्यमितिफलितमित्याह ॥ जगंतीति ॥ यथामहानभोंतर्घटाकाशादिनभोंतराणिमहानभःसत्तयासंतिपृथक्त्वेःसंतितथातानिजगंत्यपिपरांबराणिशून्यान्यपिचित्संतिसत्रवंतीत्यर्थः ॥ २७ ॥ हेवसिष्ठमुनेत्वंसंप्रतितत्स्वंजगद्गच्छतत्रचैकांतकल्पितेप्राक्तनेनिजासनेसमाधिनाशांतिनिर्विक्षेपसुखमेहि ॥ इमानिमत्कल्पितानिबुद्ध्यादिजगद्रूपाणिप्रलयेनपरमव्यक्तंव्रजंतु ॥ वयंतुहैरण्यगर्भोपाधिसहितमूलाज्ञानबाधेनपरंपदंकैवल्याख्यंप्रयामइत्यर्थः ॥ २८ ॥ ॥ इतिश्रीवासिष्ठ० म० रा० तात्पर्यप्रकाशेनि० उ० सप्ततितमःसर्गः ॥ ७० ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

कल्पनाहेतुर्वैधात्रसंकल्पोपशमक्रमात् ॥ तत्कल्पितानां भूतानां वर्ण्यते प्रलयक्रमः ॥ १ ॥ नविद्यते अंतः अवसानं पुनर्व्युत्थानं यस्मात्तथाविधं यत्समाधानं समाधिस्तत्परः ॥१॥ ॐकारस्य उत्तरार्द्धया अर्द्धमात्रा तदंतर्नादबिंदुशक्तिशांताख्यतद्भागेषु क्रमाच्चित्तविलापनेन अतिशांतनिःशेषवासन इति संपद्योक्तिः ॥ २ ॥ नशिष्यंते अंशाः स्मृतिबीजभेदा यस्यां तथाविधा भूत्वा शांता सती आकाशरूपिणी शून्यस्वभावा आसीत् ॥ ३ ॥ इदं तदीयमांतररहस्यं त्वं कथमद्राक्षीस्तत्राह ॥ परमेष्ठिनीति ॥ स्थूलसूक्ष्मकारणलक्षणार्थसहितप्रणवमात्राप्रविलयक्रमेण स्ववासनाक्षयात्तानवमुत्तरोत्तरसूक्ष्मभावं आईयुषि एयुषि सति अहमपि समाधिना सर्वगानंतचिद्व्योमरूपः संस्तत्सर्वमपश्यम् ॥ ननु ईयुषीति परोक्षे लिटः कथं उरपश्यमित्यपरोक्षोक्तिश्च विरुध्यते ॥ नैषदोषः ॥ वसिष्ठस्य समाध्यारंभात् प्राग्दशामालंब्य पारोक्ष्यम् ॥ समाध्यारूढदशामालंब्यापारोक्ष्यमित्युभयोपपत्तेः ॥ नचैवं तुल्यकालता

श्रीवसिष्ठ उवाच ॥ ॥इत्युक्त्वा भगवान्ब्रह्मा ब्रह्मलोकजनैः सह ॥ बद्धपद्मासनोऽनंतसमाधानगतोऽभवत् ॥ १ ॥ ओंकारार्द्धार्द्धमात्रांतःशांतनिःशेषमानसः ॥ लिपिकर्मार्पिताकार आसीदाशांतवेदनः[1] ॥ २ ॥ तमेवानुसरंती सा तथैव ध्यानगा सती ॥ वासनासीदशेषांशा शांता चाकाशरूपिणी ॥ ३ ॥ परमेष्ठिन्यसंकल्पे तस्मिंस्तानवमेयुषि ॥ सर्वगानंतचिद्व्योमरूपोऽपश्यमहं यदा ॥ ४ ॥ यावत्संकल्पनं तस्य विरसीभवति क्षणात् ॥ तथैवाशु तथैवोर्व्याः साद्रिद्वीपपयोनिधेः ॥ ५ ॥ तृणगुल्मलताशालिसमुद्भवनशक्तता ॥ समस्तैवास्तमागंतुमारब्धा च शनैःशनैः ॥ ६ ॥ किल तस्य विराडात्मरूपस्यांगैकदेशताम् ॥ सा बिभर्त्ति मही तेन तदसंवेदनोदयात् ॥ ७ ॥ विचेतना सा विरसा बभूव परिजर्जरा ॥ मार्गशीर्षांतवल्लीव जराविधुरतां गता ॥ ८ ॥ यथास्माकमसंवित्तेरंगाली विरसा भवेत् ॥ तथा विरिंचिसंवित्तेर्धरा वैधुर्यमागता ॥ ९ ॥ संपन्ना संहतानेकमहोत्पातभरावृता ॥ दुष्कृतांगारनिर्दग्धनरकोन्मुखमानवा ॥ १० ॥ दुर्भिक्षाकांडदौस्थित्यदैन्यदारिद्र्यदुर्भगा ॥ दुःशीलाशेषवनितानिर्मर्यादनरावृता ॥ ११ ॥

बोधकभावलक्षणसप्तमीविरोधः ॥ सामीप्यातिशयेनापि भावस्य भावांतरलक्षकत्वदर्शनात्तुल्यकालत्वोपचारेणापि तदुपपत्तेरिति ॥ ४ ॥ तस्य विधेः संकल्पनं शनैःशनैस्तत्क्षणादारभ्य यथायथा यावद्विरसीभवति तावत्तथैव तथैव साद्रिद्वीपपयोनिधेरुर्व्यास्तृणगुल्मादिसमुद्भवनशक्तता तथा समस्तैव जलादीनामपि शक्तिरस्तं गंतुमारब्धेति परेणान्वयः ॥ ५ ॥ ॥ ६ ॥ मुमूर्षोर्विदुषः सर्वदेहव्यापिसंवेदनस्य तत्संहारे तदंगवैरस्यवद्धातत्र विराड्देहावयवपृथ्व्यादीनां वैरस्यं बोध्यमित्याशयेनाह ॥ किलेति ॥ तदसंवेदनस्य तत्संवेदनोपसंहारस्य उदयात्सा विचेतना सती विरसा परिजर्जरा बभूवेति परेणान्वयः ॥ ७ ॥ ८ ॥ आशयस्थं दृष्टांतं प्रकाशयति ॥ यथेति ॥ ९ ॥ कथंकथं विजर्जरा बभूवेत्येतत्प्रपंचयति ॥ संपन्नेत्यादिसार्द्धपंचदशभिः ॥ तत्र मनुष्याणां नाशादौ कलिकल्मषमपि निमित्तमित्याशयेन तत्प्रपंचयन्नाह ॥ दुष्कृतेत्यादि ॥ १० ॥ दौस्थित्यैः राजचोराद्युपप्लवैः ॥ ११ ॥

[1] टीकानुरोधादाशांतवासन इति पाठः प्रतिभाति ॥

पांसुवत्प्रमंदैर्नीहारैर्धूलिभिश्चधूसरोभास्करोयस्याम् ॥ शीतोष्णादिद्वंद्वैस्तन्निरासोपायेमूर्खैरतएवमहादुःखिभिर्दुर्व्यसनिभिर्व्याधितैश्चआकुला ॥ १२ ॥ १३ ॥ १४ ॥ जलदौर्लभ्यादशंकितंस्थलीमध्येयत्रक्वचनजलाशयाखननात् सर्वतःसंजाताअगाधकूपकायस्याम् ॥ वर्णसंकरायनारीणांमध्येगोत्रसापिण्ड्यागम्यादिविचारंविनैवविवाहायासक्ताजनाभूमिपाश्चयस्याम् ॥ १५ ॥ अद्यतइत्यट्टमोदनादिशूलंविक्रयापहारादिनाउपजीव्यंयेषांतथाविधाअखिलजनायस्याम् ॥ शिवःशुल्कंतदेवशूलमुपजीव्यंयेषु तथाविधानिचतुष्पथानियस्याम् ॥ केशोभगःसएवैकंशूलमुपजीव्यंयासांतथाविधावनितायस्यां ॥ पात्रंशिरःकरस्तदेवशूलमुपजीव्यंयेषांतथाविधानरेश्वराराजानोयस्या

पांसुप्रमंदनीहारधूलिधूसरसूर्यका॥ द्वंद्विमूर्खमहादुःखिव्यसनिव्याधिताकुला॥ १२॥ अग्निदाहजलापूरयुद्धप्रोच्छिन्नमंडला ॥ अवृष्ट्यवग्रहोन्नष्टकष्टचेष्टितपामरा॥ १३॥ अशंकितमहोत्पातपतत्पर्वतपत्तना ॥ शिशुश्रोत्रियमुन्यार्यगुणिनाशरुदज्जना॥ १४॥ अशंकितस्थलीमध्यसंजातागाधकूपका॥ वर्णसंकरनारीणामासक्तजनभूमिपा॥ १५॥ अट्टशूलाखिलजनाशिवशूलचतुष्पथा॥ केशैकशूलवनितापात्रशूलजनेश्वरा॥ १६॥ दुःखशूलसमाचाराद्वंद्वशूलाखिलप्रजा ॥ अधर्मशूलवनितापानशूलजनेश्वरा॥ १७॥ अधर्मशूलवलिताकुशास्त्रशतशूलिनी॥ दुर्जनाखिलवित्ताढ्याविपद्विहतसज्जना॥१८॥ अनार्यवसुधापालातदनादृतपंडिता॥ लोभमोहभयद्वेषरागरोगरजोरता॥ १९॥ अप्यन्यगामिपुरुषारुषाभिहतसद्विजा ॥ अनारतपराक्रंदपरापर्यंतपामरा॥ २०॥ दस्यूत्सन्नपुरग्रामदेवद्विजसमाश्रया ॥ आपातमधुरारंभदुःखदोदरभंगुरा॥२१॥ आलस्योल्लासविलसत्कार्यवैधुर्यधर्मिणी॥ सर्वापदुपतापांताक्रमेणोत्सन्नदिग्गणा॥२२॥ भस्मशेषपुरग्रामानिर्जनाखिलमंडला॥ रोरूयमाणभस्माभ्रकुंडलोड्डामरांबरा॥ २३॥

मितिसंप्रदायव्याख्या ॥ अथवाअट्टअतिक्रमेइतिधातोःअट्टःस्वस्ववर्णाश्रमोचितवृत्त्यतिक्रमः ॥ शिवाःशृगालाः ॥ केशाःप्रसिद्धाएव ॥ पात्रंवेश्यानर्तक्यादयश्चशूलरोगद्वव्यसनक्रंदनहेतवोयेषामितियथायोगंयोज्यम् ॥ शेषंप्राग्वत् ॥ १६॥ एवंदुःखान्येवशूलानीवप्राणिक्रंदनहेतवोयेषांतथाविधाजनसमाचारायस्याम् ॥ एवमग्रेपि ॥ १७ ॥ अधर्मशूलैरधर्माक्रोशपरैर्जनैःसर्वतोवलिता ॥ कुशास्त्रशतैर्वेदबाह्यैःशूलिनीरोगार्तेवसाक्रंदा ॥ दुर्जनाश्चोरपिशुनादयोऽखिलजनावित्ताढ्यायत्र ॥ १८ ॥ १९ ॥ अन्यगामिनःस्वधर्मत्यागेनपरधर्मप्रवृत्ताःपुरुषायत्र ॥ रुषाक्रोधेनअभिहताःसंतोद्विजाःस्वधर्मोपदेष्टारोयत्र ॥ अनारतंपरेषामाक्रंदेरोदनेतत्पराअपर्यंताःपामरायत्र ॥ २० ॥ अन्यायार्जितवित्तैर्भरणकालेआपातमधुरारंभंपरिणामेपरलोकेचदुःखदंउदरंयेषांतथाविधाभंगुराअल्पायुषोयत्र ॥ २१ ॥ आलस्योल्लासेनविलसत्संध्यावंदनादिकार्यवैधुर्यंयेषां तथाविधाधर्मिणोधार्मिकजनायत्र ॥ सर्वेषामापदउपतापारोगाश्चांतेयस्याम् ॥२२॥रोरूयमाणैर्ध्वनद्भिर्भस्माभोभयकुंडलैश्चकवातैरुड्डामरंविशालमंबरंयस्याम् ॥२३॥

दुर्भगानांप्रजानामाडंबरारंभैरोदनैश्चउरुरवंध्वनिबहुलमुदरंयस्याः ॥ नासिकोदरौष्ठेतिङीप् ॥ मोषणंमुष्टिश्चौर्यंतत्प्रमाणाजनताजनसमूहोयस्याम् ॥ २४ ॥ सर्वैःक्रतुगुणैर्वर्जिता ॥ इतिवर्णितप्रकारेणअस्यब्रह्मणोविधातुर्विराड्देहारंभकेपार्थिवेधातौगतवेदनेउपसंहृतचैतन्येसतिपृथिवीपृथुवैधुर्यासंपन्नेतिपरेणान्वयः ॥ २५ ॥ आसन्नान्नाशतःप्रलयात् ॥ एवंजलभागादपिचैतन्योपसंहारारंभेसमाब्धीनांक्षोभेणनिर्मर्यादत्वमासीदित्याह ॥ अथेत्यादिना ॥ २६ ॥ विवृतार्णसोविस्तृतजलाः ॥ २७ ॥ वेलाविपिनानांलावकाश्छेदकाः ॥ २८ ॥ महाभ्रैर्भ्रमद्भिरुत्तुंगतरंगैश्चात्तानभोदिशश्चयैः ॥ २९ ॥ बृहद्भिर्गुलुगुलायमानैरावर्त्तैर्गर्जनेनउद्भवाःकूजंतःपर्वतकंदरायेषाम् ॥ ३० ॥ स्वस्ववेगोत्क

दुर्भगाडंबरारंभरोदनोरुरवोदरी ॥ मुष्टिप्रमाणजनताजनतापानुषंगिणी ॥ २४ ॥ नीरसाशेषदेशांतासर्वर्त्तुगुणवर्जिता ॥ इत्यस्यपार्थिवेधातौब्रह्मणोगतवेदने ॥ २५ ॥ पृथिवीपृथुवैधुर्यासंपन्नासन्ननाशतः ॥ अथतत्संविदुन्मुक्तोजलधातुःक्षयोन्मुखः ॥ २६ ॥ यदाविक्षुभितात्मासीत्तदानियतिलंघनात् ॥ समुत्सार्यार्यमर्यादामर्णवाविवृतार्णसः ॥ २७ ॥ प्रवृत्ताविकृतिंगंतुमुन्मत्ताइवराविणः ॥ वीचिविक्षोभविन्यासैर्वेलाविपिनलावकाः ॥ २८ ॥ कल्लोलवलनावर्त्तविवर्त्तोद्वर्त्तिताश्रयाः ॥ महाभ्रभ्रमदुत्तुंगतरंगात्तनभोदिशः ॥ २९ ॥ बृहद्गुलुगुलावर्त्तगर्जनोद्भवकंदराः ॥ सीकरौघमहारंभघनसंवलिताचलाः ॥ ३० ॥ चलचलचलद्वीरमकराघूर्णितांतराः ॥ उल्लसन्मकराक्रांतद्रुमकाननितोदराः ॥ ३१ ॥ दरीविदारणभ्रष्टसिंहाहतजलेचराः ॥ ऊर्म्युदस्तमहारत्नभरतारकितांबराः ॥ ३२ ॥ उत्फालमकरच्छन्ननभश्वरबृहद्घनाः ॥ परस्परोर्मिसंघट्टभांकारकटुटांकृताः ॥ ३३ ॥ तरत्तरलमातंगफूत्काराधौतभास्कराः ॥ अन्योन्यवेल्लनव्यग्रप्रविदीर्णाद्रिभित्तयः ॥ ३४ ॥ तटपर्वतलुंटाकतरंगकरमंडलाः ॥ गर्जद्गिरिदरीगेहविशदुन्मत्तवारयः ॥ ३५ ॥ भूपाःपरपुराक्रांतालग्नाइवहतारयः ॥ तारारवरणद्गेहविद्रावितनभश्वराः ॥ ३६ ॥ प्रलुंठितवनव्यूहलूनकाननितांबराः ॥ सपक्षपर्वताकारतरंगापूरितांबराः ॥ ३७ ॥ महारवमरुच्छिन्नकल्लोलाचलचालिताः ॥ चंचत्तीरगिरिव्रातपतत्तटरटज्जलाः ॥ ३८ ॥ उल्लसद्विपुलावर्त्तप्रोत्क्षिप्तमकरोत्कराः ॥ विमज्जन्निस्तलावर्त्तनिगीर्णगिरिकंदराः ॥ ३९ ॥

र्षस्व्यापनेनेतरजयार्थंचलद्भ्यस्तरंगेभ्योपेचलद्भिस्तेभ्योप्यपेचलद्भिर्वीरमकरैराघूर्णितांतराः ॥ ३१ ॥ ३२ ॥ उत्फालैरुच्छलद्भिर्मकरैश्छन्नानभश्वराबृहंतोघनाश्चयेषाम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ हताअरयःस्वविरोधिदवाग्नयोयैः ॥ तारारवंउच्चैःस्वरंयथास्यात्तथारणद्भिस्तरंगैर्गेहेभ्योविद्रावितानभश्वरादेवादयोयैः ॥ ३६ ॥ प्रलुंठितैरुत्खायोन्नीतैर्वनव्यूहैर्लूनकाननमिवकृतमंबरमाकाशंयैः ॥ ३७ ॥ मरुद्भिश्छिन्नैर्विभक्तैःकल्लोलैरचलाइवचालिताः ॥ रत्नधात्वादिप्रभाभिश्चंचत्तीरेभ्योगिरिव्रातेभ्यःपतद्भिर्वप्रैरटज्जलाः ॥ ३८ ॥ निस्तलैरगाधैरावर्तैर्निगीर्णागिरयस्तत्कंदराश्चयेषाम् ॥ ३९ ॥

दरीदलनवशात्संप्राप्तैःस्फटिकादिदृषद्दशनैर्दंतुराहसंतइवेतियावत् ॥ शृंगेषुलंबिषुदीर्घेषुदरीप्रांतेषुमग्नाःप्रविष्टावीचयोजलेभकायादोगजभेदायेषाम् ॥ ४० ॥ यमस्यइंद्रस्य
वसुधायाश्चवाहैर्वाहनैर्महिषैरावतदिग्गजादिभिः उत्कर्णैरूर्ध्वीकृतकर्णैः ॥ ४१ ॥ ४२ ॥ लीलालूनेषुवनव्यूहेषुविश्रांतानीवशीतलान्यासारवारीणियेषाम् ॥ ४३ ॥
स्वीयेनरसेनजलेनविभोराश्रयस्येंधनस्यनाशैर्विशंकिताभीताइवतिरोभूतामहानलायेभ्यः ॥ अर्थात्स्थलमातंगैःसहमिलंतःशिखरिमालायेषुजलमातंगायोधिनोयुद्धशीलाये
षाम् ॥ ४४ ॥ जलैरचलानामचलैरन्योन्यसंघट्टेस्फोटनेचपंडिताः ॥ ४५ ॥ उड्डामराःउत्सुवंत्योयाम्रतवनगजोत्फुल्लशरीरलक्षणाभेर्यस्तासांतरंगाघताडनैर्यद्वादनंतेनभासुरैः
कल्लोलैर्बृहत्तरंगैरसुरैःपातालमिवअलमत्यंतमाकुलाइतिपरेणान्वयः ॥ ४६ ॥ अथसागरक्षोभानंतरंतत्रप्लवमानत्वादुन्नासानामूर्ध्वीकृतपुष्कराणांदिङ्नागानांदिग्गजानांध्वनि

दरीदलनसंप्राप्तदृषद्दशनदंतुराः ॥ शृंगलंबिदरीप्रांतमग्नवीचिजलेभकाः ॥ ४० ॥ व्यालोलवलनाक्रांतविटपिप्रोतकच्छपाः ॥ यमेंद्रव
सुधावाहैरुत्कर्णैर्भयविह्वलैः ॥ ४१ ॥ श्रूयमाणपतच्छैलतटीकटकटारवाः ॥ मत्स्यपुच्छच्छटाच्छिन्नमग्नोन्मग्नद्रुताद्रयः ॥ ४२ ॥ लीला
लूनवनव्यूहशीतलासारवारयः ॥ प्रज्वलद्वडवावह्निज्वालावलिमिलज्जलाः ॥ ४३ ॥ सरसेनविभोर्नाशैर्विशंकितमहानलाः ॥ मिल
च्छिखरिमालाग्रजलमातंगयोधिनः ॥ ४४ ॥ नृत्यंतीवतरंगौघैर्जलावलनवेधिनः ॥ जलाचलाचलान्योन्यसंघट्टस्फोटपंडिताः ॥ ४५ ॥
बृहद्भिरिवनव्रातप्राणिमंडलमंडिताः ॥ उड्डामरवनेभेंद्रभेरीवादनभासुरैः ॥ ४६ ॥ असुरैरिवपातालंकल्लोलैरलमाकुलाः ॥ अथोदपतदु
न्नासदिङ्नागवदनध्वनिः ॥ ४७ ॥ पातालतलताल्वंतर्विस्फोटामोटनोद्भटः ॥ चंचलाचलकीलोर्वीचचालक्षणचालिता ॥ ४८ ॥ लोला
शैवालवल्लीवव्यालोलांभोधिलंघिता ॥ अथदुर्वारनिर्घोषनिर्वाताडंबरान्विता ॥ ४९ ॥ पुस्फोटेवपतंतीद्यौर्दिशांप्रतिरवारवैः ॥ आव
र्त्तवलनाकाराःकेतवःपेतुरंबरात् ॥ ५० ॥ हेमरत्नमयामुक्ताःसिंदूरभुजगाइव ॥ ककुब्भ्योनभसोभूमेरुद्गुर्दग्धदिक्तटाः ॥ ५१ ॥

रुदपतत्उद्गतोभूत ॥ ४७ ॥ कीदृशःसध्वनिः ॥ पातालतललक्षणस्यतालुनःअंतर्विस्फोटनविदारणेनआमोटनेनपिंडीकरणेनचोद्भटोघनतरः ॥ दिग्गजैश्चानुस्रमानाउर्वीचं
चलानिमेर्वाद्यचलकीलानियस्यास्तथाविधाभूत्वाक्षणादेवस्वस्थानाच्चालितासतीव्यालोलैरंभोधिभिर्लंघिताचसतीलोलाशैवालवल्लीवचचालेतिपरेणसहान्वयः ॥ ४८ ॥
ततःकिमासीत्तदाह ॥ अथेति ॥ दुर्वाराणांप्रलयांबुदानांनिर्घोषनिर्घातानामाडंबरैरन्विताद्यौर्दिशांप्रतिध्वनिलक्षणैरारवैःपतंतीपुस्फोटेव ॥ ४९ ॥ केतवऔत्पातिकधूमके
तवःपेतुःउत्पेतुः ॥ ५० ॥ वर्णतोहेमरत्नमयाइवमुक्ताइवसिंदूरवर्णभुजगाइवचेत्यपिमोत्पातपंक्त्युपमानानि ॥ ककुब्भ्योदिग्भ्योनभसोभूमेश्चोत्पातपंक्तयउद्गुरितिव्यवहिते
नान्वयः ॥ ५१ ॥

ब्रह्मणाप्रागुक्तधात्राउन्मुक्तानिविधारणसंकल्पोपसंहाराडुपेक्षितानि ॥ असुरादीनिपृथ्व्यादीनिचेतिद्विविधान्यपिमहांतिभूतशब्दवाच्यानिसंक्षोभमाययुः ॥ ५२ ॥ ५३ ॥ ब्रह्मलोकंगतईश्वरःस्वस्वाधिकारनिर्वाहकःप्रभावोयेषांतथाविधाःसंतः ॥ ५४ ॥ ५५ ॥ लोकांतराण्यद्रयःपुराणिवारिधयःकाननानिचेत्येतदंतंसर्वंजगदुत्पातसहितेनकल्पपवनेनमिथोन्योन्यंहतानांहन्यमानानांजनानांकोलाहलैःरुद्रबाणाग्निदाहेनअभिपातीअभितःपतनशीलस्त्रीणिपुराणिपूरयतीतित्रिपुरपूरोदैत्यसंघइवपूर्णार्णवेप्रविकीर्णंशीर्णमभूदित्यर्थः ॥ ५६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०एकसप्ततितमःसर्गः ॥ ७१ ॥ ॥ ७ ॥ ॥ धातुःप्राणनिरोधेनवातस्कंधस्थितिक्षयः ॥ तत्प्रसंगात्पुनःपृ

चलज्ज्वालाजटाटोपाविविधोत्पातपंक्तयः ॥ पृथ्व्यादीन्यसुरादीनिब्रह्मोन्मुक्तानिसर्वतः ॥ ५२ ॥ द्विविधानिमहाभूतान्यलंसंक्षोभमाययुः ॥ चंद्रार्कानिलशक्राग्नियमाःकोलाहलाकुलाः ॥ ५३ ॥ परिपातपराआसन्ब्रह्मलोकगतेश्वराः ॥ कंपैःकटकटारावपतत्पादपपंक्तयः ॥ ५४ ॥ भूमेरन्वभवन्भूरिदोलांदोलनमद्रयः ॥ भूकंपलोलकैलासमेरुमंदरकंदराः ॥ पेतुःकल्पतरून्मुक्तारक्तस्तवकवृष्टयः ॥ ५५ ॥ लोकांतराद्रिपुरवारिधिकाननांतमुत्पातकल्पपवनेनमिथोहतानाम् ॥ कोलाहलैर्जगदभूत्प्रविकीर्णशीर्णपूर्णार्णवेत्रिपुरपूरइवाभिपाती ॥ ५६ ॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०पाषा०कल्पक्षोभवर्णनंनामएकसप्ततितमःसर्गः ॥ ७१ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥अथाकृष्टवतिप्राणान्स्वयंभुविनभोभुवः ॥ विराडात्मनितत्याजवातस्कंधस्थितःस्थितिम् ॥ १ ॥ तेहितस्यकिलप्राणास्तेनक्रांतेषुतेष्वपि ॥ ऋक्षचक्रेस्थितिंकोन्योधत्तेभूतैकधारिणीम् ॥ २ ॥ वातस्कंधेसमाक्रांतेब्रह्मणाप्राणमारुते ॥ समंगंतुंपरित्यज्यसंस्थितिंक्षोभमागते ॥ ३ ॥ निराधारास्सवाताग्निदाहोल्मुकवदापतन् ॥ व्योम्नस्तारास्तरोःपुष्पनिकराइवभूतले ॥ ४ ॥ कालपाकचलन्मूलाजगत्खंडफलालयाः ॥ प्रशांतपवनाधाराविमानावलयोपतन् ॥ ५ ॥ प्रलयोन्मुखतांयातेब्राह्मेसंकल्पनेंधने ॥ सिद्धानांगतयःशेमुरिद्धानामर्चिषामिव ॥ ६ ॥ प्रभ्रमंत्योंबरेकल्पमारुतैस्तनुतूलवत् ॥ स्वशक्त्यपचयेमूकाःसिद्धसंततयोपतन् ॥ ७ ॥

ष्टावर्ण्यंतेयेविराट्स्थितिः ॥ १ ॥ विराडात्मनिस्वयंभुविप्राणानाकृष्टवतिस्वदृष्टदेशेउपसंहर्तुमारब्धवतिसतिवातस्कंधस्थितोनभोभवोवायुःस्थितिंग्रहनक्षत्रविमानादिविधारणमर्यादांतत्याज ॥ १ ॥ तेवातस्कंधास्तस्यस्वयंभुवःप्राणाः ॥ क्रांतेषुउपसंहृतेषु ॥ २ ॥ स्थितिंप्रागुक्तांत्यक्त्वासममुपसंहारेणसाम्यावस्थांगंतुंक्षोभमागतेसति ॥ ३ ॥ सवातेअग्निदाहेउड्डीनैरुल्मुकैस्तुल्यंताराःभूतलेआसमंतात्अपतन् ॥ ४ ॥ जगत्खंडेअर्जितस्यसुकृतफलस्यआलयाःभोगस्थानभूताविमानावलयःकालविपाकेनचलद्विच्छिन्नंभोगमूलंकर्मयेषांतथाविधाःसंतःअपतन् ॥ ५ ॥ इद्धानांदीप्तानाम् ॥ ६ ॥ खेचरादिसिद्धीनांक्षयिष्णुतांतुच्छतांचसूचयन्नाह ॥ प्रभ्रमंत्यइति ॥ मूकावाग्व्यापारेप्यसमर्थाः ॥ ७ ॥

इंद्रादिनगरैःसहितानिसेंद्रादिनगराणिअमरभूभृतोमेरोःशिरांसिशिखराणिचपेतुः ॥८॥ ननुब्रह्मणःस्थूलदेहोब्रह्मांडरूपोविराट्तदंतर्गतःसत्यलोकनिवासीचतुर्मुखदेहस्तुतन्मनःकल्पितःप्रातिभासिकएव ॥ नचसोपितस्यस्थूलदेहएवेतियुक्तम् ॥विराड्देहातःस्थित्ययोगात् ॥ नहिकस्यचिदपिस्थूलदेहांतःस्थूलदेहांतरंदृष्टंश्रुतंवासंभावयितुंवाशक्यम् ॥एवंसतिमानसेचतुर्मुखदेहेप्रातिभासिकेस्वाप्नदेहप्रायेप्राणोपसंहारसंकल्पेनकथंविराड्देहविष्टंभकप्राणस्थानीयवातस्कंधादिक्षयः॥ नहिस्वप्नदेहेप्राणाद्युपसंहारेणमरणदर्शनेजाग्रत्सिद्धस्थूलदेहक्षयोदृश्यतइत्याशयेनरामःशंकते ॥ चितिसंकल्पमात्रात्मेत्यादिना ॥ ब्रह्माचतुर्मुखश्चितिसंकल्पमात्रंमनस्तदात्माजगद्वपुर्ब्रह्मांडशरीरकःप्रसिद्धः॥ तस्यसंकल्पमात्रात्मनश्चतुर्मुखस्यभूर्लोकादयोलोकाअंगंअवयवाःकिम् ॥नह्यमूर्तस्यमनसोमूर्तान्यंगानिसंभवंति ॥ यदापिसंभवंतितदाभूर्लोकःकिमंगंपादाअन्योवास्वर्गश्चकिमंगंरसातलंचकिमंगंकोवयवइतिविभागप्रश्नः॥९॥ अस्तुवाचतुर्मुखदेहोपिमूर्त्तस्तथाप्यल्पपरिमाणस्यैतस्यैतान्यतिविस्तृतानिभूरादीन्यंगानिकथंस्थितानि ॥ तस्यापिविस्तृतत्वकल्पनेन

संकल्पद्रुमजालानिसेंद्रादिनगराणिच॥ पेतुर्भूकंपलोलस्यशिरांस्यमरभूभृतः॥८॥ ॥श्रीरामउवाच॥ ॥चितिसंकल्पमात्रात्माविराड्ब्रह्माजगद्वपुः॥ किमंगंयस्यभूलोकःकिंस्वर्गःकिंरसातलम् ॥ ९ ॥ कथमेतानिचांगानिब्रह्मंस्तस्यस्थितानिच॥ कथंवासौंतरेतस्यस्वस्यैववपुषःस्थितः॥ १० ॥ब्रह्मासंकल्पमात्रात्मानिराकृतिरिदंस्थितम्॥ जगदित्येवजातोमेनिश्चयःकथयेतरत्॥ ११॥ ॥श्रीवसिष्ठउवाच॥ अदौतावदिदंनासन्नसदास्तेनिरामयम् ॥ चिन्मात्रपरमाकाशमाशाकोशैकपूरकम् ॥ १२॥ तत्स्वामाकाशतांचैतच्चेत्यमित्यवबुध्यते॥ स्वरूपमत्यजन्नित्यंचित्वाद्भवतिचेतनम् ॥ १३ ॥ विद्धितच्चेतनंजीवंसघनत्वान्मनःस्थितम् ॥एतावतिस्थितिजालेनकिंचित्साकृतिस्थितम्॥ १४ ॥शुद्धंव्योमैवचिद्व्योमस्थितमात्मनिपूर्ववत्॥ यदेतत्प्रतिभातंतुतदन्यन्नशिवात्ततः॥ १५॥

ब्रह्मांडात्मताययुज्येतततर्हिसस्वस्यैववपुषएतस्यब्रह्मांडस्यांतःसत्यलोकेकथंस्थितः ॥१०॥ किंचब्रह्मासंकल्पमात्रात्मानिराकृतिरमूर्त्तएवइदंतुजगत्साकारंस्थितमितिमेनिश्चयोजातः ॥ अतइतरप्रकारांतरमस्तिचेत्कथय ॥ ११ ॥ तत्रप्रथमंपृष्टंस्थूलदेहस्यमनोमयदेहानन्यत्वंतदवयवानांतदवयवत्वंचानुभावयितुंभूमिकांमूलोद्घाटनेनरचयति ॥ आदावित्यादिना ॥ आशानांसर्वाभिलाषाणांदिशांचकोशानांभूमानंदात्मकत्वादेकमेवपूरकम् ॥ १२ ॥ तदेतत्परमाकाशंस्वरूपमत्यजद्विकारमनापद्यमानमेवस्वामाकाशतांचंद्रोद्वितीयचंद्रमिवकल्पयत्परंस्वातिरिक्तंवस्त्विति अवबुध्यते ॥१३॥ तत्रबोध्यबोधबोद्धृभावलक्षणत्रिपुटीमननेनसघनत्वाद्घनीभावान्मनोवेषेणस्थितंतथाभूतंचेतनंजीवंविद्धि ॥ स्वरूपमत्यजदितियदुक्तंतदुपपादयति ॥ एतावतीति ॥ एतावतित्रिपुटीजीवभावपर्यंतेस्थितिजालेअभ्यासेनसंपन्नेपितेषुनकिंचिदपिसाकृतिपरस्परव्यावृत्ताकारसहितंरूपंपरमार्थतःस्थितंकिंतुशुद्धंव्योमैवशून्यमेवेतिपरेणसंबंधः ॥ १४ ॥ किंतर्हिस्थितंतदाह ॥ चिद्व्योमेति ॥ १५ ॥

एवमभिमानाकारभावनादसतैवतद्भावेनापिस्फुरतीत्याह ॥ अथेति ॥ १६ ॥ अहंकारकल्पनोत्तरंस्थूलदेहकल्पनापितस्यावस्तुभूतैवेत्याह ॥ तदित्यादिना ॥ १७ ॥ १८ ॥ यदिदेहंशून्यमेवतर्हिकथंसाकारमनुभूयतेतत्राह ॥ शून्यमेवेति ॥ १९ ॥ प्रलयमोक्षादिकल्पनाप्येवमेवेत्याह ॥ संविदइति ॥ २० ॥ कदोपशाम्यतितदाह ॥ यदेति ॥ तदा आततमितिच्छेदः ॥ २१ ॥ यथाभूतंपरमार्थसत्यंब्रह्मतत्परिज्ञानान्मिथ्यावासनाअत्रास्मिन्नेवजन्मनिशाम्यति ॥ २२ ॥ अस्त्वेवंतथाप्येतदुक्त्यायत्पृष्टंकसमाहितंतत्राह ॥ एवमिति ॥ २३ ॥ तथाचब्रह्मांडस्यापिभ्रांत्यैवस्थूलदेहत्वंविचारतस्तुतदीयमनोमात्रत्वमितितदंगोपसंहारेणोपसंहारःसिद्धइतिभावः ॥ २४ ॥ जाग्रदुन्मुखतायांस्वाप्नदेहांगो

अथतन्मनआभोगिभावितहंकृतिस्फुरत् ॥ संकल्पात्मकमाकाशमास्तेस्तिमितमक्षयम् ॥ १६ ॥ तत्संकल्पचिदाभासनभोहमितिभावितम् ॥ असत्तमेवानुभवत्सन्निवेशंखमेवखे ॥ १७ ॥ वेत्तिभावितमाकारंपश्यत्यनुभवत्यपि ॥ संकल्पकात्मकंशून्यमेवदेहइतिस्थितम् ॥ १८ ॥ शून्यमेवयथाकारिसंकल्पनगरंभवान् ॥ पश्यत्येवमजोदेहंखेखमेवानुभूतवान् ॥ १९ ॥ संविदोनिर्मलत्वात्सयावदित्थंतथाविधम् ॥ अनुभूयानुभवनंस्वेच्छयैवोपशाम्यति ॥ २० ॥ यदातत्त्वपरिज्ञानमस्मदादेस्तदाततम् ॥ इदंसंसरणंविद्धिशून्यंसत्यमिवस्थितम् ॥ २१ ॥ यथाभूतपरिज्ञानादत्रशाम्यतिवासना ॥ अद्वैतान्निरहंकारात्ततोमोक्षोवशिष्यते ॥ २२ ॥ एवमेषसयोब्रह्मासएवेदंजगत्स्थितम् ॥ विराजोब्रह्मणोरामदेहोयस्तदिदंजगत् ॥ २३ ॥ संकल्पाकाशरूपस्यतस्ययाभ्रांतिरुत्थिता ॥ तदिदंजगदाभातितद्ब्रह्मांडमुदाहृतम् ॥ २४ ॥ सर्वमाकाशमेवेदंसंकल्पकलनात्मकम् ॥ वस्तुतस्त्वस्तिनजगत्त्वत्तामत्तेचनक्वचित् ॥ २५ ॥ क्वचिन्मात्रेऽमलेव्योम्निकथंवाकेनवाजगत् ॥ किंजायतेकिमत्रास्तिकारणंसहकारियत् ॥ २६ ॥ अतोऽलीकमिदंजातमलीकंपरिदृश्यते ॥ अलीकंस्वदतेऽलोकमेवंपश्यतिशून्यकम् ॥ २७ ॥ जगदादिकयाभासाचिन्मात्रंस्वदतेस्वतः ॥ आत्मनात्मांबरैद्वैतेस्पंदनेनेवमारुतः ॥ २८ ॥ इदंकिंचिन्नकिंचिद्वाद्वैताद्वैतविवर्जितम् ॥ चिदाकाशंजगद्विद्धिशून्यमच्छंनिरामयम् ॥ २९ ॥ शांताशेषविशेषोहंतेनराघवसंस्थितः ॥ सन्नेवासन्निवातस्त्वमेवमेवास्वनिर्ममः ॥ ३० ॥

पसंहारेणस्वाप्नभूरादिलोकोपसंहारवद्वातदुपसंहारः द्वयोरपिसंकल्पाकाशमात्रत्वादित्याशयेनाह ॥ सर्वमिति ॥ २५ ॥ अवास्तवत्वंकथंज्ञेयमितिचेदसंभाव्यत्वादित्याशयेनाह ॥ क्वेति ॥ किंवृत्तपंचकंदेशकालादिसर्वप्रकारैरप्यसंभाव्यत्वस्यसमर्थनार्थम् ॥ २६ ॥ स्वदतेप्रियाप्रियभावेनप्रथते ॥ अलोकंनिष्प्रपंचंब्रह्मैवभ्रांत्याशून्यकंजगच्छून्यंखमेवएवंजगद्भावेनपश्यति ॥ २७ ॥ तदेवस्पष्टमाह ॥ जगदादिकयेति ॥ आदिपदात्तद्धर्माउत्पत्त्यादिभावविकारागृह्यंते ॥ २८ ॥ द्वैतविवर्जनात्किंचित् ॥ अद्वैतस्यापिवर्जनान्नकिंचिद्वा ॥ २९ ॥ तस्मादहमिवत्वमपिएवंपरमार्थतःसन्नेवव्यवहारेअसन्देहादिरिवआस्वकिंतुनिर्ममइत्यर्थः ॥ ३० ॥

व्युत्थितःसर्वंव्यवहारंकुरुसमाहितःसन्माबाकुरु।किंपहः।किमर्थमेकत्राग्रहइत्यर्थः ॥ ३१ ॥ तस्मात्सर्वंदृश्यंब्रह्मैवतदज्ञानान्येवभ्रांत्याकारपरिणतानिदृश्यानुभवाइतिनिष्कर्षंइ त्युपसंहरति ॥ अनादीति ॥ सत्येअनुभूते ॥ भावेक्तः ॥ अनुभवैकरसेब्रह्मणियाअननुभूतयःअज्ञानानिताएवभ्रांतिवैचित्र्यैःसुविस्तृतादृश्यमहादृशइत्यर्थः ॥ ३२ ॥ ॥ इति श्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उत्तरार्द्धेद्विसप्ततितमःसर्गः ॥ ७२ ॥ ॥७॥ ॥ इहारोपक्रमोभूयोबोधदार्ढ्यायवर्ण्यते ॥ कथमेतस्यचांगानीत्यादिप्रश्नोत्तरं ततः ॥ १ ॥ किमंगंतस्यभूर्लोकः कथमेतानिचांगानि कथंवासौंतरेतस्येतिप्रस्तुतप्रश्नत्रयोत्तरोपोद्घातत्वेनवर्णितंशुद्धेब्रह्मणिजगदध्यारोपप्रकारंपुनःक्रमशस्तात्पर्यंतश्चसम्य ग्जिज्ञासमानोरामस्तत्रतात्पर्यतःस्वज्ञातांशंदर्शयितुंसिंहावलोकनन्यायेनव्यवहितोक्तनिष्कर्षंस्मारयति॥ बंधेत्यादिना ॥ सन्मयीसत्यार्थविषया ॥ सर्वसाक्षित्वादेवस्वयंनास्ति

निर्वासनःशांतमनामौनीविगतचापलः ॥ सर्वंकुरुयथाप्राप्तंकुरुमावात्रकिंग्रहः ॥ ३१ ॥ अनादिनित्यानुभवोयएकःसएवदृश्यंनतुदृ श्यमन्यत् ॥ सत्यानुभूतेननुभूतयोयाःसुविस्तृतादृश्यमहादृशस्ताः ॥ ३२ ॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०पा०निर्वा णवर्णनंनामद्विसप्ततितमःसर्गः ॥ ७२ ॥ ॥ ७ ॥ ॥श्रीरामउवाच ॥ ॥बंधमोक्षजगद्बुद्धिर्नशून्यानापिसन्मयी॥नास्ति मेतिनचोदेतिकिमप्यायमसौकिल॥ १॥ उपदिष्टमिदंब्रह्मंस्त्वयाबुद्धमलंमया॥ भूयःकथयत्वमिहिंशृण्वतोनास्तिमेमतम्॥ २॥ सर्गा दिसंभ्रमदृशःशून्यतादिदृशस्तथा॥नकाश्चनविभ्रोसत्याअसत्याश्चनकाश्चन ॥ ३ ॥ एवंस्थितेतुयत्सत्यंतत्सर्वंबुद्धवानहम्॥ तथापि भूयोबोधायसर्गानुभवउच्यताम् ॥ ४ ॥ ॥ श्रीवसिष्ठउवाच॥ ॥यदिदंदृश्यतेकिंचिज्जगत्स्थावरजंगमम्॥ सर्वंसर्वप्रकाराढ्यंदेश कालक्रियादिमत् ॥ ५॥ तस्यनाशेमहानाशेमहाप्रलयनामनि ॥ब्रह्मोपेंद्रमरुद्रुद्रमहेंद्रपरिणामिनि ॥ ६॥ शिष्यतेशांतमत्यच्छंकिम प्यजमनादिसत्॥ यतोवाचोनिवर्त्ततेकिमन्यदवगम्यते॥७॥

मेतिनोदेतिच ॥ अतःअसौसर्वसाक्षिणीबुद्धिरेवविषयमार्जनेकिमपिवाङ्मनसागम्यमायंब्रह्मेतित्वयातात्पर्यगत्याउपदिष्टम् ॥ किलेतिगुरुबुद्धिविसंवादशंकापरिहाराय ॥ इदं मयाबुद्धमितिपरेणान्वयः ॥ १ ॥ तर्हिकिमुपदेशोपरमोस्तुनेत्याह ॥ भूयइति ॥ २ ॥ सत्याअबाधितार्थाअसत्याबाधितार्थाअपिन ॥ तत्तद्व्यवहर्तृदृशाब्रह्मणएवतथास्थितेर र्थक्रियाऽविसंवादादसत्कार्यपक्षानभ्युपगमात्सर्वशक्तिमतिब्रह्मणिसर्वशून्यतापादनशक्तेरपिसंभवान्माययासर्वविरोधपरिहाराच्चेतिभावः ॥ ३ ॥ मायाशबलब्रह्ममाहात्म्यमि वतदधिष्ठाननिर्विशेषनित्यमुक्तब्रह्मतत्त्वमप्यहंबुद्धवानित्याह ॥ एवमिति ॥ सर्गानुभवःप्रपंचाध्यासक्रमोभूयउच्यताम् ॥ भूयसांश्रोतॄणांबोधायबोधबाहुल्यायेतिवा ॥ ४ ॥ ॥ ५ ॥ स्थूलस्यभूतभौतिकस्यसूक्ष्मभूतेषुनाशेभूतसूक्ष्मैःसहअव्याकृतानुप्रवेशेमहानाशेप्राकृतेप्रलयेइतियावत् ॥ ब्रह्मोपेंद्रादिदेहानांपरिणामश्वरमोभावविकारस्तद्वतितच्छी लेवा ॥ ६ ॥ तदायच्छिष्यतेतद्वर्णयति ॥ शिष्यतइत्यादिना ॥ ७ ॥

116

अन्यापेक्षयाशून्यंपरमसूक्ष्मंसदप्याकाशंयदपेक्षयास्थूलम् ॥ ८ ॥ तथाअन्यापेक्षयास्थूलंविशालतममपिब्रह्मांडंयदपेक्षयासूक्ष्मतरमणुतरम् ॥ ९ ॥ मानहेतुसूर्यस्पंदादुपाधिप्रलयादमानकलितेतादृशप्रलयकालेचिरंद्विपरार्द्धपरिमितब्रह्मायुःकालतुल्यप्रमाणपरिणतेअतिवाहितेसति ॥ १० ॥ मायावरणांतःसुषुप्तमायश्चिदाकाशःस्वमोन्मुखइवस्वांतर्लीनजगत्संस्काररूपांपरमाणुतांवेत्तिपर्यालोचयतीव ॥ ११ ॥ भावयन्पर्यालोचयन् ॥ तत्पर्यालोचनेनैषद्बुचितभावप्राप्तेर्बृंहणाद्ब्रह्मेतिप्रसिद्धंब्रह्मशब्दार्थम् ॥ तथाचश्रुतिः ॥ तपसाचीयतेब्रह्मेति ॥ १२ ॥ तद्वोचरतालक्षणेतद्वेदनेचित्स्वभावातिरिक्तोहेतुर्दुर्निरूपइत्याह ॥ चिद्भावइति ॥ तेनैवद्रष्टृतासंपत्तिदर्शयति ॥ तामेवेति ॥ १३ ॥ नन्वेकत्रदृश्यद्रष्टृभावोविरुद्धःकथंसंपद्यतेइतिचेत्स्वमवद्विरोधापर्यालोचनादित्याह ॥ यथेति ॥१४॥ तथाकल्पनेपिनवास्तवैक्यक्षतिरित्याह ॥ ततइति ॥ १५ ॥ शून्यएवेत्य

सर्षपापेक्षयामेरुर्यथातिविततारुतिः ॥ तथाकाशमपिस्थूलंशून्यंसद्यदपेक्षया ॥ ८ ॥ शैलेंद्रापेक्षयासूक्ष्मायथेमेत्रसरेणवः ॥ तथासूक्ष्मतरंस्थूलंब्रह्मांडंयदपेक्षया ॥ ९ ॥ अमानकलितेसौम्येकालेपरिणतेचिरम् ॥ शांतेतस्मिन्परेव्योमन्यायेत्यनुभवात्मनि ॥ १० ॥ असंकल्पोमहाशांतोदिक्कालैरमितारुतिः ॥ अंतर्महांश्चिदाकाशोवेत्तीवपरमाणुताम् ॥ ११ ॥ असत्यामेवतामंतर्भावयन्स्वप्नवत्स्वतः ॥ ततःसब्रह्मशब्दार्थंवेत्तिचिद्रूपतांतताम् ॥ १२ ॥ चिद्भावोनुभवत्यंतश्चित्त्वाच्चिदणुतांनिजाम् ॥ तामेवपश्यंतीवाथततोद्रष्टेवतिष्ठति ॥ १३ ॥ यथास्वप्नेमृतंपश्यत्येकएवात्मनात्मनि ॥ मृतएवमृतेर्द्रष्टातथाचिदणुरात्मनि ॥ १४ ॥ ततश्चिद्भावएषोंतरेकएवद्वितामिव ॥ पश्यन्स्वरूपएवास्तेद्रष्टृदृश्यमिवस्थितः ॥ १५ ॥ चिद्भावशून्यएवातिनिराकारोप्यणुंतनुम् ॥ पश्यन्दृश्यमिवोदेतिद्रष्टेवचतदाद्वितााम् ॥ १६ ॥ प्रकाशमणुमात्मानंपश्यंस्तदनुभावतः ॥ उच्छूनतांचेतयतेबीजमंकुरतामिव ॥ १७ ॥ देशकालक्रियाद्रव्यद्रष्टृदर्शनदृग्दृशः ॥ अर्थांतरस्वभावेनतिष्ठंत्यनुदिताभिधाः ॥ १८ ॥ चिदणुर्यत्रभातोसौदेशोमितिमुपागतः ॥ यदाभातस्तदाकालोयद्भानंतत्क्रियास्मृता ॥ १९ ॥ उपलब्धंविदुर्द्रव्यंद्रष्टृताप्युपलब्धृता ॥ आलोकनंदर्शनताहृगालोकनकारणम् ॥ २० ॥ एवमुच्छूनताभातिमितानंताथवाक्रमात् ॥ असत्यैवनभस्येवनभोरूपैवनिष्क्रमा ॥ २१ ॥

स्यव्याख्याअतिनिराकारइति ॥ दृश्यमिवद्रष्टेवचद्वितांतदाउदेतिउद्वहति ॥ १६ ॥ सचद्रष्टामायाबलेनप्रकाशस्वभावमणुंपरिच्छिन्नमात्मानंपश्यन्संस्तदनुभावतउच्छूनतामुपचयंचेतयतेकल्पयति ॥ १७ ॥ तदैवतस्यतन्नांतरीयकतयादेशकालादिविभागकल्पनाअपिभवंतिपरंतुतावागाद्यभिव्यक्त्यभावादनुदिताभिधाइत्याह ॥ देशेति ॥ १८ ॥ तद्विभागकल्पनाप्रकारंविशदयति ॥ चिदणुरिति ॥ परिच्छिन्नस्यदेशकालानवगाह्यप्रतीत्यप्रसिद्धेरितिभावः ॥ १९ ॥ तदैवत्रिपुटीविभाजकोपाधिभेदानांसाक्षिणस्तदालोकननिमित्तभावस्यचकल्पनाभवतीत्याह ॥ उपलब्धमिति ॥ द्रव्यगुणक्रियादिकल्पनाधारत्वाद्द्रव्यम् ॥ २० ॥ एवमेवकर्त्ताकार्यंकारणंभोक्ताभोग्यंभोगइत्यादित्रिपुटीभेदानांतत्साक्षिणस्तन्निमित्ततायाश्चकल्पनंसर्वत्रबोध्यमित्याशयेनाह ॥ एवमिति ॥ देशकालवस्तुपरिच्छेदैर्मितासंख्येयत्तादिनाअनंतावा ॥ २१ ॥

१ पश्यतीवांतरित्यपिक्वचित्पाठः

तत्ररूपादित्रिपुटीसिद्धौचक्षुरादिकरणविभागकल्पनापिनांतरीयकीभवतीतिसंक्षेपेणदर्शयति ॥ चिदणोरिति ॥ चिदणोर्जीवस्यभातंभासनंसौरायालोकंयेनगोलकप्रदेशेन च्छिद्रेणयेनचार्तीद्रियेणकरणेनपश्यतितदुभयंचक्षुः ॥ सर्वासांश्रोत्राद्यक्षदृष्टीनामप्ययंन्यायःसमइतिसंग्रहःसंक्षेपः ॥२२॥ श्रोत्रादींद्रियपंचकविषयेष्वेवनामरूपभेदकल्पना प्रागवस्थातन्मात्रशब्देनोच्यतइत्याह ॥चिदण्विति॥एतेषांश्रोत्रादिपंचकविषयाणांप्रथमंप्राक्तनंयन्नामवर्जितस्वरूपंतत्तन्मात्रमितिशब्दोयस्यतथाविधंयतस्तदेतदाकाशरूपि सूक्ष्मतममित्यर्थः ॥ २३ ॥ एवंक्रमेणचिदणोःप्रतिभालक्षणआकाशएवघनस्थितिःसन्पिंडःस्थूलदेहोभवतितत्ररूपाद्यनुसंधानवशादिंद्रियपंचकंचेततीत्युपसंहारः ॥ २४ ॥ अंतःकरणचतुष्टयकल्पनाप्रकारमाह ॥ एवमिति ॥ दृश्येषुशब्दादिषुपुनःपुनरनुभवात्पोषमुपचयमुपैतितत्रेंद्रियगृहीतविषयाणांस्मृतिदशायांज्ञानंचित्तमितिअध्यवसायदशा

चिदणोर्भासनंभातंतत्प्रदेशेनदेहगम् ॥ येनपश्यतितच्चक्षुःसंग्रहोक्षदृशामिति ॥२२॥ चिदणुप्रतिभासेंतःप्रथमंनामवर्जितम् ॥ तन्मात्रशब्दमेतेषामेतदाकाशरूपितत् ॥ २३ ॥ चिदणुप्रतिभाकाशपिंडएवघनस्थितिः ॥ अनुसंधानविवशश्चेततींद्रियपंचकम् ॥ २४ ॥ एवंचिदणुसंधानंदृश्यपोषमुपैत्यलम् ॥ तदेवज्ञानमित्युक्तंबुद्धिरित्यभिधीयते ॥ २५ ॥ ततोमनस्तदारूढमहंकारपदंगतम् ॥ देशकालपरिच्छेदइत्यंगीकृतआत्मना ॥ २६ ॥ चिदणोरस्यभावस्यप्रत्यग्रंयत्रवेदनम् ॥ सतत्रोत्तरकालेनपूर्वाभिख्यांकरिष्यति ॥ २७ ॥ अन्यस्मिन्नेकदेशेसाऊर्ध्वाभिख्यांकरिष्यति ॥ एवंदिगभिधानादिकल्पयिष्यतिसक्रमात् ॥ २८ ॥ देशकालक्रियाद्रव्यशब्दानामर्थवेदनम् ॥ भविष्यतिस्वयमसावाकाशविशदोपिसन् ॥ २९ ॥ इत्थंस्वानुभवेनैषव्योम्नैवव्योमरूपभृत् ॥ आतिवाहिकनामांतर्देहःसंपद्यतेचितेः ॥३०॥

112

यांबुद्धिरितिचाऽभिधीयते ॥ २५ ॥ ततःसंकल्पविकल्पदशायांमनोऽभिमानेनाहंममतयातदारूढंनदभिनिविष्टंसत्अहंकारपदंगतम् ॥ देशकालविभागकल्पनांवर्णयितुंप्रस्तौति ॥ देशेति ॥ इतिवक्ष्यमाणरीत्या ॥ २६ ॥ तत्रकालेदेशेचपूर्ववत्कल्पनाउत्तरकालकल्पनामपेक्ष्यैवप्रवर्त्ततइत्याह ॥ चिदणोरिति ॥ अस्यप्रसिद्धस्यभावस्यशब्दादिविषयस्यप्रत्यग्रंनवंआद्यमितियावत् ॥यत्रदेशरूपेकालरूपेवाआधारेवेदनंयस्यचिदणोर्जीवस्यभवतिसचिदणुस्तस्यदेशकालस्यचोत्तरकालेनव्यावर्त्येननिमित्तेनपूर्वइत्यभिख्यांनामकरिष्यतिकल्पयिष्यतीतिप्रतिजीवंप्रतिवस्तुचेदमनियतमेवेतिभावः ॥ २७ ॥ तांकल्पनामपेक्ष्यऊर्ध्वाभिख्यांततोन्यस्मिन्कालेएकामेवकरिष्यति ॥ दिशिपूर्वदक्षिणपश्चिमाद्यभिधानानिबहूनीतिविशेषइतिभावः ॥ २८ ॥ एवंदेशकालवस्तुभेदांस्तन्नामानिचकल्पयित्वागृहीतसंकेतानांपुरुषाणांशब्दश्रवणेतत्तदर्थवेदनात्मनापिस्वयमेवसंपत्स्यतइत्याह ॥ देशेति ॥ २९ ॥ एवंस्वयमेवप्रथममातिवाहिकदेहस्ततोदेशकालक्रियावस्तुविभागस्ततस्तत्तन्नामभेदइतिक्रमेणनामांतसर्वंजगच्छरीरंसंपद्यतइत्यर्थः ॥३०॥

एवंसर्वंजगतोमनःकल्पनामात्रत्वेनातिवाहिकदेहावयवत्वेकथमाधिभौतिकताप्रत्ययस्तत्राह ॥ एषएवेति ॥ ३१ ॥३२॥ सगगनाकृतिश्चिदणुःस्वदेहेपिकल्पनीयेवक्ष्यमाणप्र पंचांसंकल्पनामुपादत्ते ॥ ३३ ॥ एवंबाह्यार्थहानोपादानादिव्यवहारकल्पनापिबोध्येत्याह ॥ भावेति ॥३४॥ इत्थमाकारोगौरित्थमश्वइत्यादिनियताकारकलनाम् ॥ ३५ ॥ ॥ ३६ ॥ ईश्वराणामपिदेहादिकल्पनासंकल्पवशादेवांकिपुनरन्येषामित्याह ॥ एवमिति ॥ ३७ ॥ सर्वापीयंकल्पनाअद्वैतैवेत्याह ॥ नचेति ॥३८ ॥ व्यष्टिवत्समष्ट्यात्माविरा डप्येवमेवकल्पनयोत्थितइत्याह ॥ प्रतिकंदइति ॥ व्यष्टिशरीराणांप्रतिनियतःकंदःप्रतिकंदः ॥ तदाधारत्रैलोक्यवल्लीनामपिसएवबीजम् ॥ मुक्तेर्द्वारेपुप्रतिबंधकविषयसर्गार्ग

एषएवचिरंकालंतत्रभावनयातया॥गृह्णातिनिश्चयंपूर्णमाधिभौतिकमात्मनः॥३१॥व्योमाव्योम्न्येवरचितोनिर्मलेनेतिविभ्रमः॥अस तासत्समास्तीर्णस्तापनद्याजलंयथा॥३२॥संकल्पनामुपादत्तेस्वदेहेगगनाकृतिः॥शिरःशब्दार्थदांकांचित्पादशब्दार्थदांक्वचित्॥३३॥ उरःपार्श्वादिशब्दार्थमयींक्वचिदनाविलाम् ॥ भावाभावग्रहोत्सर्गशब्दाद्यर्थमयीमपि ॥ ३४ ॥ नियताकारकलनांदेशकालादियंत्रि ताम्॥विषयोन्मुखतांयातामिंद्रियव्रातवेधिताम्॥३५॥सोणुःपश्यत्यथाकारमात्मनःस्वात्मकल्पितम्॥हस्तपादादिकलितंचित्तादिक लनान्वितम्॥३६॥ एवंसंपद्यतेब्रह्मातथासंपद्यतेहरिः॥ एवंसंपद्यतेरुद्रएवंसंपद्यतेकृमिः॥३७॥ नचकिंचनसंपन्नंयथास्थितमवस्थित म्॥शून्यंशून्येविलसितंज्ञप्तिर्ज्ञप्तौविजृंभिता॥३८॥प्रतिकंदःशरीराणांबीजंत्रैलोक्यवीरुधाम्॥सर्गार्गलप्रदोमुक्तेःसंसारासारवारिदः ॥३९॥कारणंसर्वकार्याणांनेताकालक्रियादिषु॥सर्वाद्यःपुरुषःस्वैरमित्यनुत्थितउत्थितः॥४०॥नास्यभूतमयोदेहोनास्यास्थीनिशरीर के॥ अवष्टब्धुमसौमुष्याशक्यतेनतुकेनचित्॥४१॥तेनाब्धिमेघसंग्रामसिंहगर्जोर्जितात्मना॥ अपिसुप्तनरेणेवनूनंमौनवतास्थितम् ॥४२॥जाग्रतःस्वप्नसंदृष्टयोद्धारभटिवेदनम्॥यथास्मृतिगतंनासन्नसत्तद्वदसौस्थितः॥ ४३ ॥ बहुयोजनलक्षौघप्रमाणोपिबृहद्वपुः॥ परमाण्वंतरेभातिलोमांतस्थजगत्त्रयः ॥ ४४ ॥ कुलशैलगुणौघात्माजगद्वृंदात्मकोपिसन् ॥ कुलायंधानकामात्रमपिनोपूरयत्यजः ॥ ४५ ॥जगत्कोटिशताभोगविस्तीर्णोप्यणुमात्रकम्॥वस्तुतोव्याप्तवानेषनदेशंस्वप्नशैलवत् ॥ ४६ ॥

लप्रदः ॥ ३९ ॥ ४० ॥ भूतमयदेहाद्यभावादेवमुष्याअवष्टब्धुंनशक्यते ॥ ४१ ॥ यथास्वप्नेअब्धीनांमेघानांसंग्रामाणांसिंहानांचगर्जाभिर्महाध्वनिभिश्चोर्जितात्मनापिसुप्त नरेणवस्तुतोमौनवतानिःशब्दमेवस्थितंतथातेनापिविराजानिष्प्रपंचेस्वरूपेस्थितमित्यर्थः ॥ ४२ ॥ स्वप्नसंदृष्टानांयोद्धृणामारभटीकोलाहलस्तद्वेदनंजाग्रतःस्मृतिपथंगतंसय थानात्यंतासन्नापिसत्तथाप्रपंचोयंस्थितः ॥ ४३ ॥ मायामात्रत्वादेवासंभावितसहस्रमप्यत्रसंभवत्येवेत्याशयेनाह ॥ बह्विति ॥ ४४ ॥ धानकावटबीजादयस्तावन्मात्रमपि कुलायंनीडञ्छिद्रंनपूरयति ॥ ४५ ॥ ४६ ॥

॥ ४७ ॥ ४८ ॥ उक्तंसर्वंसंक्षिप्याह ॥ तेजइति ॥ अणुमात्रंतेजःपरमसूक्ष्माचित्प्रथमंचेतित्वाच्चित्तवपुःसंपन्नम् ॥ सएवचित्तात्मावर्णितक्रमेणस्फारसंवित्तिःसन्महान्ब्रह्मांडा लैवाहमितिस्थितइतिसंग्रहइत्यर्थः ॥ ४९ ॥ अतएवतदीयाःप्राणाःवातस्कंधास्तदुपसंहारेणवातस्कंधभंगोस्माभिर्वर्णितइत्याशयेनाह ॥ स्पंदेति ॥ ५० ॥ स्पंदसंवेदनात्तेन प्राणस्पंदइत्यनुभूयतेइतियदुक्तंतत्सर्वानुभवप्रसिद्ध्यासमर्थयति ॥ प्राणेति ॥ सोयंतदीयप्राणस्पंदस्तद्ब्रह्मांडाकाशेवातस्कंधोस्माभिरुदाहृतःप्रागित्यर्थः ॥ ५१ ॥ धिष्ण्यतांसूर्य चंद्रग्रहनक्षत्रादिस्थानताम् ॥ ५२ ॥ हृदयंउदरांतर्गतमांसास्थ्यादीतियावत् ॥ ५३ ॥ प्रतिच्छंदाःप्रतिजीवभेदमिच्छास्तत्कल्पितव्यष्टिशरीराणाम् ॥ ५४ ॥ परेच्छाकल्पि तादेहाःकथमेतस्यव्यष्टितांगतास्तत्राह ॥ प्रतिच्छंदादिति ॥ प्रतिच्छंदंभवःप्रतिच्छंद्यः ॥ दिगादित्वाद्यत् ॥ यद्यस्माद्धेतोस्तथाविधादस्मादुत्थिताःप्रतिपुरुषदेहंतत्तद्वासनामया

स्वयंभूरेषकथितोविराडेषसउच्यते॥ब्रह्मांडात्माजगद्देहोवस्तुतस्तुनभोमयः॥ ४७॥ सनातनइतिप्रोक्तोरुद्रइत्यपिसंज्ञितः॥ इंद्रोपेंद्रम रुन्मेघशैलजालादिदेहकः॥ ४८॥ तेजोणुमात्रंप्रथितंचेतित्वाप्रथमंवपुः॥ क्रमेणस्फारसंवित्तिर्महानहमितिस्थितः॥ ४९॥ स्पंदसंवे दनात्तेनस्पंदइत्यनुभूयते॥ यःसएवानिलाभिख्योवातस्कंधात्मनास्थितः ॥ ५० ॥ प्राणापानपरिस्पंदोवेदनादनुभूयते॥ तेनयःसोय माकाशेवातस्कंधउदाहृतः॥ ५१ ॥ चित्ताद्येकल्पितास्तेनबालेनेवपिशाचिकाः॥ तेजःकणाअसंतोपितएतेधिष्ण्यतांगताः॥ ५२ ॥ प्रा णापानपरावर्त्तदोलातद्धृदरोदिता॥ वातस्कंधाभिधांधत्तेजगत्तद्धृदयंमहत्॥ ५३॥ प्रतिच्छंदशरीराणांप्रथमंबीजमेषसः॥ जगद्गता नांसर्वेषामाकल्पव्यवहारिणाम् ॥ ५४ ॥ प्रतिछंद्याद्यदेतस्माद्धुत्थिताजगदात्मना॥ देहास्तदाययावात्यमंतरेपांतथास्थितम्॥ ५५॥ चितिस्तस्याद्यबीजस्यपूर्वमेवयथोदिता॥ तथैवाद्यापिजीवैंतस्तथोदेतितदीहिता॥ ५६॥ श्लेष्मपित्तानिलास्तस्यचंद्रार्कपवनास्त्रयः॥ ग्रहाऋक्षगणास्तस्यप्राणाष्ठीवनसीकराः॥ ५७ ॥ तस्यास्थीन्यद्रिजालानिमेदसोजातिकाघनाः॥ शिरःपादौत्वचंदेहान्पश्यामस्तस्य नोवयम् ॥ ५८ ॥ वपुर्विराजोजगदंगविद्धिसंकल्परूपस्यहिकल्पनात्म ॥ आकाशशैलावनिसागरादिसर्वंचिदाकाशमतःप्रशांतम् ॥५९॥ ॥इ०वा०म०वा०दे०मो०नि०उ०पा०विराडात्मवर्णनंनामत्रिसप्ततितमःसर्गः ॥ ७३ ॥

ब्रह्मांडाएवमेवबोध्याइत्याह ॥ देहाइति ॥ ५५ ॥ तत्रैकबीजांतरंतर्यथावृक्षबीजपरंपराक्रमेणोद्भवदर्शनादस्तीतिसंभाव्यतेतद्वदत्रापिसंभाव्यतामित्यभिप्रेत्याह ॥ चितिरिति ॥ तदीहितातेनहिरण्यगर्भेणवांछिता ॥ ५६ ॥ तस्यहिरण्यगर्भस्यश्लेष्मपित्तादयः ॥ अतएवान्येपिमहाऋक्षगणानक्षत्रसमूहाश्चप्राणेनयदाष्ठीवनंनिष्ठीवनंतत्सीकराःश्लेष्मबि दवइत्यर्थः ॥ ५७ ॥ मेदसोजातयइवजातिकाः ॥ घनामेघाः ॥ तस्यशिरःऊर्ध्वकपालंपादौअधःकपालंत्वचंब्रह्मांडावरणानिचवयंदूरस्थत्वान्नपश्यामः ॥ ५८ ॥ हेअंगइदं जगद्विराजोवपुर्विद्धि तच्चसंकल्परूपस्यकल्पनात्मनःकल्पनामात्रंनबाह्यसाधनसाध्यंनचमनःकल्पनात्मकंकिंचिद्वास्तवंसंभवति ॥ अतोहेनोराकाशशैलादिसर्वंप्रशांतंचिदा काशमेवेत्यर्थः ॥ ५९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेत्रिसप्ततितमःसर्गः ॥ ७३ ॥ ॥ ५ ॥ ॥ ७ ॥

यान्यंगान्यस्ययेलोकायेचास्यावयवाःपृथक् ॥ यथाचांतःस्थितोस्यैषतत्सर्वमिहवर्ण्यंते ॥ १ ॥ इदानींकिमंगंतस्यभूर्लोकःकिंस्वर्गःकिंरसातलमितिविभागप्रश्नस्यकथंवा सोंतरेतस्येतिप्रश्नस्यकथंवातन्मनोमात्रंनिराकृतिरिदंस्थितमितिप्रश्नस्यचविस्तरेणोत्तरंवक्तुंश्रोतारमवधापयति ॥ तस्मिन्निति ॥ तस्मिन्शिलोदरदृष्टेब्रह्मकल्पात्मकेतस्यविरा जःसंकल्पेयद्ब्रह्मांडात्मकंवपुःस्थितंतस्यइयंवक्ष्यमाणाजन्मकर्मावयवादिविभागव्यवस्थातांशृण्वित्यर्थः ॥ १ ॥ तत्रास्यब्रह्मैववास्तवंस्वरूपंप्राथमिकमकल्पितंवपुर्विराट्श रीरंतुकाल्पनिकंतद्दृष्ट्याअतिलघुतरमित्याह ॥ परममिति ॥ २ ॥ चिदाकाशमाद्यंतमध्यरहितंतस्यस्वरूपमितिकथंज्ञायतेतत्राह ॥ संकल्परहितइति ॥ यतःसब्रह्मास्वसंकल्प वपुषोब्रह्मांडाद्बहिःसंकल्परहितोनिःसंकल्पसाक्षिचिदाकाशमात्रःसन्संकल्पनात्मकंस्वांडंपश्यतितच्चपरमार्थदृशाआकाशमेवेत्यर्थः ॥ ३ ॥ तत्रादौतस्यशिरःपादौनितंबंचव

श्रीवसिष्ठउवाच ॥ ॥ तस्मिन्कल्पेतुसंकल्पेतस्ययद्वपुरास्थितम् ॥ शृणुतत्रव्यवस्थेयंविचित्राचारहारिणी ॥ १ ॥ परमंयच्चिदाकाशं तद्विराडात्मनोवपुः ॥ आद्यंतमध्यरहितंलघुत्वस्यवपुर्जगत् ॥ २ ॥ संकल्परहितोब्रह्मास्वांडंसंकलनात्मकम् ॥ वपुषःपरितोभास्वत्पश्य त्याकाशमेवतत् ॥ ३ ॥ ब्रह्मात्मैषस्वसंकल्पंस्वमंडमकरोद्द्विधा ॥ तैजसंतैजसाकारःपुष्टःपुष्टंविहंगवत् ॥ ४ ॥ अंडस्यैकंनभोदूरंगतंसंबु द्धवानसौ ॥ भुवोधःसंस्थितंभागंव्यतिरिक्तंचनात्मना ॥ ५ ॥ ब्रह्मांडभागऊर्ध्वस्थोविराजःशिरउच्यते ॥ अधोभागोस्यपादास्योनितं बोमध्यमात्रखम् ॥ ६ ॥ दूरंविमुक्तयोःसंधिःखंडयोरितिविस्तृता ॥ अनंताव्योमलेखासाश्यामाशून्येतिदृश्यते ॥ ७ ॥ द्यौस्तालुविपुलंत स्यतारारुधिरबिंदवः ॥ संविद्वातलवादेहेसुरासुरनरादयः ॥ ८ ॥ देहांतःकृमयस्तस्यभूतप्रेतपिशाचकाः ॥ लोकांतराणिरंध्राणिसुषिरा ण्यस्यदेहके ॥ ९ ॥ ब्रह्मांडखंडमस्याधोविस्तृतंपादयोस्तलम् ॥ जानुमंडलरंध्राणिपातालकुहराण्यधः ॥ १० ॥ जलैश्चलचलायंतीसु षिरानेकरंध्रिका ॥ भूरंतर्मंडलीलोलासमुद्रद्वीपवेष्टना ॥ ११ ॥

क्तुंब्रह्मांडस्योर्ध्वाधःकपालद्वयविभागमाह ॥ ब्रह्मेति ॥ तैजसंहिरण्मयं॥ तैजसाकारोलिंगसमष्ट्यभिमानिचिदाकारः ॥ ४ ॥ दूरमूर्ध्वंगतमितिसंबुद्धवान्संकल्पितवान् ॥ एवमा त्मनानव्यतिरिक्तमभिन्नंचसंकल्पितवान् ॥ मध्यमात्रखंआंतराकाशमध्यमितियावत् ॥ ६ ॥ खंडयोःकपालयोःसंधिरंतरालंशून्याश्यामाव्योमलेखेतिदृश्यतेजनैः ॥ ७ ॥ तालु काकुदम् ॥ संविद्वातयोर्बुद्धिप्राणयोर्लवावृत्तिभेदाः ॥ ८ ॥ भूतप्रेतपिशाचकारक्तमांसाद्यशुचिलोलुपत्वात्कृमयः ॥ लोकांतराणिसूर्यचंद्रादिलोकाश्चक्षुरादिरंध्राणि ॥ या म्यादिनारकलोकांतराण्यधःसुषिराणि ॥ ९ ॥ १० ॥ चलचलायंतीचंचलायमाना ॥ अंतर्मंडलीमध्यस्थवस्तिजघननितंबमंडली ॥ लोलाकामरोगजरामरणादिव्याकुला समुद्राद्वीपाश्चवेष्टनान्यंतरीयकांचीकटिसूत्रप्रायाणियस्याः ॥ ११ ॥

नाड्यःशिराः ॥ सरित्पदेनतज्जलंलक्ष्यते ॥ तच्छिरांतर्गतोरसः ॥ १२ ॥ कुक्षयःकुक्षिभागाः ॥ ककुभोदिशः ॥ यकृत्प्लीहादयोमांसभेदाः ॥ मेदसोधातुविशेषस्यजालिकाः पटल्यः ॥ घनामेघाः ॥ १३ ॥ तेजोरेतः ॥ १४ ॥ वातस्कंधेषुप्रसिद्धाआवहनिवहप्रवहादयोमहावाताः ॥ १५ ॥ कल्पद्रुमवनान्यन्यानिवनान्युपवनानिच ॥ क्वचित्ताना लादौप्रसिद्धानिसर्पवृंदानिचास्यलोमजालानि ॥ १६ ॥ ब्रह्मांडस्योर्ध्वप्रांतरंध्रेप्रसिद्धंदीप्तार्चिरथयदतःपरोदिवोज्योतिर्दीप्यते विश्वतःपृष्ठेषुसर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषुलोकेष्विति श्रुतिप्रसिद्धमर्चिर्ज्योतिरस्यदीप्ताशिखाचूडा ॥ १७ ॥ एवंविधविराड्देहकल्पनाकर्त्तुस्तस्यकिंमनःकानींद्रियाणितत्राह ॥ स्वयमिति ॥ यतःसर्वंमनःसमष्ट्यात्माएषविधातास्व

जलैर्गुडगुडायंत्योनद्योनाड्यःसरिद्रसः ॥ जंबूद्वीपंहृदंभोजमस्यहेमाद्रिकर्णिकम् ॥ १२ ॥ कुक्षयःककुभःशून्यायकृत्प्लीहादयोचलाः ॥ म्छ्लाःस्निग्धाःपटाकारामेदसोजालिकाघनाः ॥ १३ ॥ चंद्रार्कौलोचनेतस्यब्रह्मलोकोमुखंस्मृतम् ॥ तेजःसोमोस्यकथितःश्लेष्माप्राले यपर्वतः ॥ १४ ॥ अग्निलोकस्तथौर्वाग्निःपित्तमस्यातिदुःसहम् ॥ वातस्कंधमहावाताःप्राणापानाहृदिस्थिताः ॥ १५ ॥ कल्पद्रुमवना न्यस्यसर्पवृंदानिचक्वचित् ॥ लोमजालान्यनंतानिवनान्युपवनानिच ॥ १६ ॥ ऊर्ध्वब्रह्मांडखंडंतुसमस्तमुरुमस्तकम् ॥ ब्रह्मांडप्रांतरंध्रार्चिरस्यदीप्ताशिखोत्थिता ॥ १७ ॥ स्वयमेषमनस्तेनमनोनास्योपयुज्यते ॥ आत्मैवभोक्तृतामेतिकिलकस्यकथंकुतः ॥ १८ ॥ स्वयमेवेंद्रियाण्येषतेनान्यत्रास्तिताकृता ॥ यतस्तत्कल्पनामात्रमेवेंद्रियगणःकिल ॥ १९ ॥ अवयवावयविनोरिवेहेंद्रियचित्तयोः ॥ नमनागपि भेदोस्तिचैक्यमेकशरीरयोः ॥ २० ॥ तस्यतान्येवकार्याणिजगतांयानिकानिचित् ॥ संकल्पाएवपुंवृत्त्याचलंत्यारुपितद्विताः ॥ २१ ॥

यंमनएव ॥ अतोस्यसर्वकल्पनासुअन्यन्मनोनोपयुज्यते अनवस्थाप्रसंगात् ॥ यद्वितुआत्मैवस्वभोगायभोग्यवर्गंकल्पयतीतिमन्येथास्तन्न तस्यकूटस्थाद्वयस्वभावत्वादित्याह ॥ आत्मैवेति ॥ किंवृत्तानिप्राग्वत् ॥ १८ ॥ एवमिंद्रियाण्यप्यस्यनोपयुज्यंते ॥ यतस्तेनान्यत्रअस्मदादिषुइंद्रियाणामस्तिताकृताकल्पिता नचेंद्रियकल्पनायामिंद्रियाणां निमित्तत्वमनवस्थाप्रसंगादितिभावः ॥ १९ ॥ कथंतर्हिइंद्रियमनसोर्भेदव्यवहारस्तत्राह ॥ अवयवेति ॥ अस्तिचैक्यंमनःप्रवृत्त्यन्वयव्यतिरेकदर्शनादिंद्रियप्रवृत्तेःस्वप्नेमनसैवसर्वेंद्रियकार्यनिर्वाहदर्शनाच्चेतिभावः ॥ २० ॥ अतएवचसर्वजगत्क्रियास्तत्क्रियाएवेतिनक्रियापिपृथक्प्रष्टव्येत्याह ॥ तस्येति ॥ यतस्तदीयसंकल्पाएवपुंवृत्त्याव्यष्टिसर्वपुरुषवेषेणआरुपितद्विताआरोपितभेदाःसर्वव्यवहारात्मनाचलंति ॥ २१ ॥

तर्ह्यस्मदादिमरणजन्मनीतस्यैवमरणंजन्मचस्याताम् तथाचद्विपरार्द्धकालजीवनप्रसिद्धिविरोधस्तत्राह ॥जागतेइति॥ समष्टिजगन्मृतिजन्मनीएवतस्यमरणजन्मनीविज्ञेये अन्येअस्मदादिव्यष्टिमात्रप्रसिद्धेतुअस्यन यतइदंजगतिसमष्टिरूपंसएवअस्मत्संकल्पात्मापिसएवनेतरन्नेतरइत्यर्थः॥ अथवातस्यविधातुःसहसिद्धंचतुष्टयमितिपुराणदर्शितन्यायेनतत्त्वज्ञतयाजीवन्मुक्तस्यद्विपरार्द्धांतादिकालप्रसिद्धेअस्मदादिव्यष्टिषुप्रसिद्धेचमृतिजन्मनीजागतेजगदंतर्गतास्मद्दृष्टिकल्पितेएवनान्ये॥स्वदृष्टिसिद्धेइत्यर्थः॥यतःसएवेदंजगतिप्रसिद्धः अस्मत्संकल्पात्माव्यवहारोप्यस्यैवरूपंनेतरदित्यर्थः ॥ अथवाइंद्रियमनांसीवतस्यमृतिजन्मनीअपिजागतेअस्मदादिप्रसिद्धेविज्ञेयेनान्ये पृथक्कल्पेनतस्यसंकल्पात्मापिजगतिप्रसिद्धःअस्मत्संकल्पात्मैव ॥ यतःसएवेदंसर्वंनेतरत्किंचिदस्तीत्यर्थः ॥ २२ ॥ कुतःसएवेदंतत्राह ॥ तत्सत्तयेति ॥ तस्यचजगतश्चनयोः ॥ २३ ॥ २४ ॥ एतेविरा

जागतेतस्यविज्ञेयेनान्येस्यमृतिजन्मनी॥सएवेदंजगत्यस्मत्संकल्पात्मास्यनेतरत्॥ २२॥ तत्सत्तयाजगत्सत्तातन्मृत्यैवजगन्मृतम्॥ यादृशीस्पंदमरुतोःसत्तैकातादृशीतयोः॥ २३ ॥ जगद्विराजोःसत्तैकापवनस्पंदयोरिव॥ जगद्यत्सविराडेवयोविराट्तज्जगत्स्मृतम् ॥२४॥ जगद्ब्रह्माविराट्चेतिशब्दाःपर्यायवाचकाः॥ संकल्पमात्रमेवैतेशुद्धचिद्व्योमरूपिणः॥२५॥ ॥श्रीरामउवाच॥ ॥संकल्पात्सविराडेवखमेवाकृतिमागतम्॥ अस्तुनामस्वदेहांतःकथंब्रह्मैवतिष्ठति॥ २६ ॥ ॥श्रीवसिष्ठउवाच॥ ॥यथाध्यानेनदेहांतस्तिष्ठसित्वंयथास्थितम्॥ तथास्तेनिजदेहेंतःसंकल्पात्मापितामहः॥ २७॥ नृणांतथाचमुख्यानांजीवोब्रह्मपुरोदरे॥ उत्पत्तिपुत्रिकादेहःप्रतिबिंबोपमोस्तिसः॥ २८ ॥ यत्रत्वमपिदेहांतःकर्त्तुंशक्तोस्यलंस्थितिम्॥ संकल्पात्माविभुस्तत्रब्रह्माकिंनकरिष्यति॥ २९॥ बीजांतःस्थावरंत्वास्तेपदार्थेयत्रजंगमः॥ किंनास्तेतत्रदेहेंतर्निजचित्कल्पनात्मिका॥ ३०॥

ड्जगतीशुद्धचिन्मात्ररूपिणःपरमात्मनोबहुस्यांप्रजायेयेत्यादिश्रुतिप्रसिद्धंसंकल्पमात्रंतत्त्वनिःस्वरूपमितिब्रह्मैवपरिशिष्टमितिनिष्कर्षः ॥ २५ ॥ अस्तुनामेत्यंतेनउक्तमभ्युपगम्यश्रीरामःशिष्टंप्रश्नंस्मारयति ॥ स्वदेहांतरिति ॥ कथंवासौंतरेतस्यस्वस्यैववपुषःस्थितइतिप्रश्नस्योत्तरंवदेत्यर्थः ॥ २६ ॥ ध्यानेनेति ॥ मानसपूजायांहित्ददिकल्पितेरत्नमंडपेदेवमुपवेश्यस्वंतत्समीपस्थंछत्रचामरव्यजनदर्पणतांबूलादिभिर्देवंपरिचरंतंयथानुभवसितद्वदित्यर्थः ॥ २७॥ किंचस्थूलदेहात्मकस्यस्वस्यांतर्हृदयपुंडरीकेलिंगदेहात्मकस्यस्वस्यावस्थानंसर्वेषांविवेकिनामनुभवसिद्धमित्याह ॥नृणामिति॥ मुख्यानांविवेकिनाम् ॥ ब्रह्मपुरेशरीरे॥ उत्पत्तिपुत्रिकाऔत्पत्तिकतत्तद्देहप्रतिमाकारः॥ अतएवदर्पणांतर्गतप्रतिबिंबोपमः ॥ २८ ॥ कैमुतिकन्यायेनधातुःस्वदेहांतःस्थितिरित्याह ॥ यत्रेति ॥ २९ ॥ यत्रस्थावराणामपिस्वबीजदेहांतरवस्थानसामर्थ्यंतत्राविर्भूतसर्वशक्तिकचित्कल्पनात्मिकायाश्चतुर्मुखमूर्त्तेःकितद्वाच्यमित्याह ॥ बीजेति ॥ ३० ॥

तथाचब्रह्माब्रह्मांडाकारेणसाकारःसंश्चिद्गगनात्मावास्तु मनःसमष्टिरूपेणनिराकारंखमस्तुवापक्षद्वयेपिबहिरंतश्चास्तेबाह्यांतरभावकल्पनेएवपरंस्वरूपाद्बहिःस्थितेभिन्नेनत्वक ल्पितमांतरंसद्रूपंभिद्यतइत्यर्थः ॥ ३१ ॥ सतर्हिबहिरंतश्चकीदृशःकीदृशेस्वभावेपरमार्थतस्तिष्ठतितदाह ॥ आत्मारामइति ॥ सबहिर्विराड्ब्रह्मांडात्मा अंतस्तुअहंत्वमित्यादि व्यष्टिसमष्टिभूतभौतिकमयः ॥ आत्मनितुआत्मारामःसन्काष्ठमौनीनिर्वाक्योदृषद्विवजडःस्थितःसोपिचिदेकरसत्वान्नजडस्तिष्ठति ॥ ३२ ॥ नकेवलंविराजएवेदृशीस्थितिः किंतुतत्त्वज्ञानांसर्वेषामितिदर्शयितुंनामेवदृष्टांतैर्विशदयति ॥ आवेष्टितेति ॥ तज्ज्ञस्तत्त्ववित्परापराधसहिष्णुताविषयेयथालतातृणंकक्षःदारुपुमान्प्रतिमावापूर्वंरज्ज्वादिना आवेष्टितावद्धाःपश्चादुज्झितामुक्ताअपिनकुप्यंतिकिंतुनिःशब्दंतूष्णीमेवासते ॥ यथाअंबुरयोजलप्रवाहोनिरुद्धोविरोपितांगःशातितावयवोपिप्राक्तनस्थितिंनजहातितथाना

साकारोगगनात्मास्तुनिराकारंखमस्तुवा॥ आस्तेबहिरथांतश्चभिन्नेवास्यांतरेवहिः॥३१॥ आत्मारामःकाष्ठमौनीनजडोपिदृषज्जडः॥ अहंत्वमित्यादिमयोविराडात्मनितिष्ठति॥ ३२॥ आवेष्टितोज्झितलतातृणदारुपुंवद्रुद्धब्दमंबुरयवच्चविरोपितांगः॥ नानाविधेपिविहरन्नपिकार्यजालेतज्ज्ञःशिलाजठरशांतमनस्कएव॥ ३३॥ ॥ इ० वा० महारामायणेवा० दे० मो० निर्वाणप्रकरणेउत्तरार्द्धेपाषा० विराडात्मवर्णनंनामचतुःसप्ततितमःसर्गः॥७४॥ ॥श्रीवसिष्ठउवाच॥ ॥अथाग्रस्थब्रह्मलोकोब्रह्मणिध्यानशालिनि॥निक्षिप्ताक्षःशनैर्दिक्षुदृष्टवानहमग्रतः॥ १ ॥ द्वितीयमर्कंमध्याह्नेपश्चादभ्युदितंस्फुटम् ॥ दिग्दाहमिवदिग्चक्रेवनदाहमिवाचले ॥ २ ॥ वह्निलोकमिवव्योम्निवडवाग्निमिवार्णवे ॥ ततोपश्यमहंदीप्तंसूर्यंनैर्ऋतदिङ्मुखे॥ ३ ॥ सूर्ययाम्येककुब्भागेसूर्यमग्निककुम्मुखे ॥ सूर्यमैंद्रककुब्भागेसूर्यमीशानदिङ्मुखे॥ ४ ॥ कुबेरककुभिसूर्यसूर्यंवायव्यदिक्तटे॥ सूर्यंवरुणदिग्भागेतेनविस्मयवानहम् ॥५॥

नाविधेकार्यजालेविहरन्नपिशिलाजठरमिवशांतमनस्कःपूर्वस्थित्यैवास्तेनमनागपिक्रोधहर्षविषादादिनाविक्रियतइत्यर्थः ॥ ३३ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० चतुःसप्ततितमःसर्गः ॥ ७४ ॥ ॥ ५ ॥ ॥ विधातरिध्यानपरेद्वादशादित्यसंभवः ॥ दहन्नत्रजगत्सर्वंवर्ण्यतेप्रलयानलः ॥ १ ॥ प्रश्नप्रासंगिकंसमाप्यप्रस्तुताख्यायिका मेवानुसंधत्ते ॥ अथेत्यादिना ॥ अथसेंद्रादिनगरमेरुशिखरपत्तनदर्शनानंतरंशनैर्दिक्षुनिक्षिप्ताक्षोहंद्वितीयमर्कंदृष्टवानितिपरेणान्वयः ॥१॥ मध्याह्नइत्यनेनमध्यदिस्यर्केसतीति गम्यते ॥ दिक्षुदिशांमध्ये ॥ अग्रतःपुरोगतेपश्चाद्दिग्चक्रेपश्चिमदिङ्मुखेमध्यस्थादर्काद्द्वितीयमर्कमहंदृष्टवानितिसंबंधः ॥ २ ॥ दिग्दाहमिवेत्यादीनिसर्वेषामर्काणामुपमानानि प्रत्येकंयोज्यानि ॥ ३ ॥ ४ ॥ वरुणदिग्भागेइतिप्रागुपक्रांतानुवादः ॥ ५ ॥

120

विधिवैधुर्यंदैवप्रातिकूल्यम् ॥६ ॥ दिग्गणानामंतरेआंतरालिकेमध्यमांबरे ॥ असमर्थसमासश्छांदसः ॥ मध्यमस्यैकादशत्वोक्तेरूर्ध्वमध्यन्योकंउदितइतिगम्यते ॥ तेषुमध्यमे एकादशेकैंदर्पणोदरेप्रतिबिंबमिवान्यदर्काणांत्रयमुदभूत् ॥ तद्भिमध्यतनादित्यांतरुदितमर्कत्रयात्मकमेकंब्रह्मविष्णुशिवात्मकस्यैकस्यरुद्रस्येदंरौद्रंवपुः ॥ तदेवतत्सवितुर्वरेण्यंभ गंइतिगायत्र्याप्रकाश्यते ॥ अतएवहितच्चतुर्विंशत्यक्षरप्रसूतचतुर्विंशतिसहस्रश्लोकात्मकस्यपूर्वरामायणस्यसारसंग्रहात्मकेआदित्यहृदयेब्रह्मेशानाच्युतेशायरौद्रायवपुषेनम इतित्रिमूर्तिमूलपरशिवत्वेननमस्कृतमितितदेवसर्वोत्कृष्टमुपास्यमित्याहुः ॥ ७ ॥ तत्रतस्मिन्नर्कत्रयमध्येरौद्रवपुर्मध्येलोचनत्रयंतद्रौद्रंवपुरेवद्वादशादित्याकारपरिमाणंविवस्वतां

यावद्विचारयाम्याशुविधिवैधुर्यमाकुलम् ॥ उदभूद्भूतलात्तावदर्कऔर्वइवार्णवात् ॥६॥ एकादशेखिलार्काणांप्रतिबिंबमिवोस्थितम् ॥ उदभूत्त्रयमर्काणामंतरेदिग्गणांबरे ॥ ७ ॥ तद्धिरौद्रंवपुस्तत्रतन्मध्येलोचनत्रयम् ॥ तद्द्वादशपरीमाणंदीप्तंद्वंद्वंविवस्वताम् ॥ ८ ॥ सर्वंदि ग्धंददाहोच्चैःशुष्कंवनमिवानलः ॥ अथोदभूज्जगत्खंडशोपणग्रीष्मवासरः ॥ ९ ॥ अनग्निरग्निदाहोत्रागदृश्योल्मुकगुल्मकः ॥ अनग्निना ग्निदाहेनतेनतामरसेक्षण ॥ १० ॥ अंगानिदावदग्धानिखिन्नानीवममाभवन् ॥ प्रदेशंतमथत्यक्त्वादूरमारूढवानहम् ॥ ११ ॥ दृढहस्त तलाघातहतकंदुकवन्नभः ॥ अपश्यंगगनस्थोहमुदितंचंडतेजसम् ॥ १२ ॥ तपंतंद्वादशादित्यगणंदिक्षुदशस्वपि ॥ बृहत्तत्रसताराव ज्वालेवभगणंचलम् ॥ १३ ॥ महाकुहकुहाशब्दंक्वथत्सप्ताब्धिडंबरम् ॥ सज्वालोल्मुकनीरंध्रलोकांतरपुरांतरम् ॥ १४ ॥ ज्वालाघनप टाटोपसिंदूरीकृतपर्वतम् ॥ दीप्यमानमहागारस्थिरविद्युत्ककुप्तटम् ॥ १५ ॥ स्फुरत्कटकटाटोपचटत्पत्तनमंडलम् ॥ विदधद्भूतलोद्भूत धूमदंडैःशिलाघनैः ॥ १६ ॥ काचस्तंभसहस्राढ्यंभुवनस्थानमंडपम् ॥ क्वथद्भूतमहाभूततारार्कंदातिघर्घरम् ॥ १७ ॥

द्वंद्वंभूत्वाददाहेतिपरेणान्वयः ॥ ८ ॥ ९ ॥ अदृश्योल्मुकगुल्मकत्वादेवप्रसिद्धाग्निरहितःसौराग्निदाहउदभूत् ॥ १० ॥ दूरमूर्ध्वंनभआरूढवान् ॥ ११ ॥ १२ ॥ तत्रतामुदिक्षु सतारंनभःअर्चतिव्याप्नोतीतिसताराचाज्वालेवावर्त्ताकारेणचलंभगणंनक्षत्रचक्रमपश्यमित्यर्थः ॥ १३ ॥ इतऊर्ध्वंसार्धद्वादशश्लोकेषुस्थितानिसर्वाणिद्वितीयांतपदानिप्रस्तु तद्वादशादित्यगणविशेषणत्वेनयोज्यानि ॥ कुहकुहेतिक्वथनशब्दानुकरणम् ॥ १४ ॥ ज्वालालक्षणैर्घनैःपटाटोपैःरक्तवस्त्राडंबरैःसिंदूरवर्णाःकृताःपर्वतायेन ॥ दीप्यमानेषुमहतां लोकपालानामगारेषुस्थिरविद्युतद्वत्ककुप्तटायेन ॥ १५ ॥ धूमदंडैर्दंडाकारैर्धूमैः ॥ काचस्तंभसहस्राढ्यंभुवनस्थानलक्षणंमंडपंविदधत्कुर्वाणमिवेतिसंबंधः ॥ १६ ॥ भूता नांप्राणिनांमहाभूतानांपृथिव्यादीनांचतारैःआक्रंदैरोदनैरतिघर्घरम् ॥ १७ ॥

भूतानांप्राणिनांलोकानांभुवनानांतदंतर्गतपुराणांचआसमंतात्पातैःस्फुटतांपदार्थानांचटचटाशब्दैरुद्भटम् ॥ ताराणामश्विन्यादीनांविशरणैःपतनैर्येउद्घाताअभिघातास्तैर्घृंटर लंधरातलंयेन ॥ १८ ॥ सर्वेषुस्थलेषुआलयेषुच्चस्वगेहेषुचलंतोधावंतोदह्यमानाजनव्रजायेन ॥ क्षीणंमृतैराक्रंदपूर्वकंकथद्भिःपच्यमानैश्चभूतगणैःप्राणिनिकायैर्दुर्वासानिदुर्ग धीनिवासायोग्यानिचदिक्कटानियेन ॥ १९ ॥ सर्वदिग्व्यापिनाअनलेनप्लोषोदाहस्तेनक्षीणाक्रंदशांतरोदनंपुरांतरमन्यन्नगरंयेन ॥ २० ॥ विदलतांविशीर्यमाणानांदग्धानांच दिग्दंतिनांदंतैरेवस्तंभप्रायैरुत्तंभिताअधोभागेधारितादिगंतभूधरायेन ॥ २१ ॥ २२ ॥ तापतमग्न्नमज्जिरुच्छलद्भिश्चभूतैर्ज्वरितास्संजातज्वराइवार्णवाःपर्वताश्चयेन ॥ २३ ॥ के

भूतलोकपुरापातस्फुटच्चटच्चटोद्भटम् ॥ ताराविशरणोद्घातघृष्टरलधरातलम् ॥ १८ ॥ सर्वस्थलालयचलद्दह्यमानजनव्रजम् ॥ क्षीणा
क्रंदक्वथद्भूतगणदुर्वासदिक्कटम् ॥ १९ ॥ उत्तप्तांबुदराखिन्नजलेचरमहार्णवम् ॥ सर्वदिक्कानलप्लोषक्षीणाक्रंदपुरांतरम् ॥ २० ॥ विद
लद्दग्धदिग्दंतिदंतोत्तंभितभूधरम् ॥ धराधरदरीरंध्रधूममंडलकुंडलम् ॥ २१ ॥ पतत्पर्वतनिष्पिष्टपुष्टपत्तनमंडलम् ॥ पचत्पचपचाशब्द
शब्दितार्द्रीद्रकुंजरम् ॥ २२ ॥ नापनमोन्नमद्भूतज्वरितार्णवपर्वतम् ॥ हृदयस्फोटनिःसारपतद्विद्याधरांगनम् ॥ २३ ॥ आक्रंदरोदनश्रां
तमूर्द्धनिःसरणामरम् ॥ नागलोकज्वलज्ज्वालापातालोत्तप्तभूतलम् ॥ २४ ॥ शुष्कार्णवसदापर्कविवर्ताग्रजलेचरम् ॥ और्वर्णाविध
नाप्तावार्द्दांवैवसहस्रधा ॥ २५ ॥ गतेननृत्यतोत्थायगृहीतगगनांगनम् ॥ अथोदभुज्ज्वलज्ज्वालाकिंशुकांशुकशोभिनः ॥ २६ ॥
तांडवायेवकल्पाग्निस्तरलोन्मुकमाल्यवान् ॥ तारपटपटाटोपीरटद्रटड्वोद्भटः ॥ २७ ॥ ज्वालाद्रुजोधूमकचोजगज्जीर्णकुटीनटः ॥
जज्वलुर्वनजालानिपुराणिनगराणिच ॥ २८ ॥ मंडलद्वीपदुर्गाणिजंगलानिस्थलानिच ॥ सर्वस्थानिमहाकाशमाशादशदिवःशिरः
॥ २९ ॥ श्वभ्ररूपारघट्टाट्टपट्टनोदारदिक्तटः ॥ शृंगाणिसिद्धवृंदानिगिरयःसागरार्णवाः ॥ ३० ॥

चिदाक्रंदैरोदनैश्चश्रांताःकेचिद्योगबलेनब्रह्मरंध्रंविदार्यमूर्द्धनिःसरणाअतएवामराश्चयोगिनोयच ॥ २४ ॥ शुष्केष्वर्णवेषुसदापर्काश्चरकाथिताविवर्तैःपरिवर्तनैरुपाभावगा श्चनक्रादिजलेचरायेन ॥ २५ ॥ गृहीतागगनांगनाअप्सरसोयेन ॥ एवंद्वादशादित्यगणमुपवर्ण्यतदुद्भवंप्रलयाग्निनटत्वेनवर्णयति ॥ अथेत्यादिनानटद्वर्णनेन ॥ उज्ज्वलज्वाला हर्षैःकिंशुकपुष्पवर्णैरंशुकैर्वस्त्रैःशोभितः ॥ २६ ॥ तरलंचलन्मुकंमाल्यवान् ॥ तारविस्फुटंद्रवैर्वादिभिःपटपटाटोपानानावाद्याडंबरवान् ॥ २७ ॥ २८ ॥ सर्वाणिस्थानानिचानि लाविभूच्छिद्राणिभूमेरुर्ध्वमहाकाशम् ॥ दिवोद्युलोकस्यशिरऊर्ध्वभागः ॥ २९ ॥ तथाकाचित्श्वभ्ररूपःकाचिदारघट्टघट्टैःसोपैश्चयुक्तःपट्टनैश्चोदारांतरम्योदिक्तटः ॥ तथा पर्वतशृंगाणितत्रत्यासिद्धवृंदानितद्युक्तागिरयःसागरार्णवाः ॥ ३० ॥

विधिवैधुर्यंदैवप्रातिकूल्यम् ॥६॥ दिग्गणानामंतरेआंतरालिकेमध्यमांबरे ॥ असमर्थंसमासश्छांदसः ॥ मध्यमस्यैकादशत्वोक्तेरूर्ध्वमप्यन्योर्कउदितइतिगम्यते ॥ तेषुमध्यमे एकादशेर्कदर्पणोदरेप्रतिबिंबमिवान्यदर्काणांत्रयमुदभूत् ॥ तद्विमध्यतनादित्यांतरुदितमर्कत्रयात्मकमेकंब्रह्मविष्णुशिवात्मकस्यैकस्यरुद्रस्येवरौद्रंवपुः ॥ तदेवतत्सवितुर्वरेण्यंभर्गइतिगायत्र्याप्रकाश्यते ॥ अतएवहितच्चतुर्विंशत्यक्षरप्रसूतचतुर्विंशतिसहस्रश्लोकात्मकस्यपूर्वरामायणस्यसारसंग्रहात्मकेआदित्यहृदयेब्रह्मेशानाच्युतेशायरौद्रायवपुषेनम इतित्रिमूर्त्तिमूलपरशिवत्वेननमस्कृतमितितदेवसर्वोत्कृष्टमुपास्यमित्याहुः ॥७॥ तत्रतस्मिन्नर्केतन्मध्येरौद्रवपुर्मध्येलोचनत्रयंतद्रौद्रंवपुरेवद्वादशादित्याकारपरिमाणंविवस्वतां

यावद्विचारयाम्याशु विधिवैधुर्यमाकुलम् ॥ उदभूद्भूतलात्तावदर्कऔर्वइवार्णवात् ॥६॥ एकादशेखिलार्काणां प्रतिबिंबमिवोत्थितम् ॥ उदभूत्त्रयमर्काणामंतरे दिग्गणांबरे ॥७॥ तद्विरौद्रंवपुस्तत्र तन्मध्ये लोचनत्रयम् ॥ तद्द्वादशपरीमाणं दीप्तंवृंदं विवस्वताम् ॥८॥ सर्वदिक्कं ददाहोच्चैः शुष्कंवनमिवानलः ॥ अथोदभूज्जगत्खंडशोषणग्रीष्मवासरः ॥९॥ अनग्निरग्निदाहोद्रागदृश्योल्मुकगुल्मकः ॥ अनग्निनाग्निदाहेन तेन तामरसेक्षण ॥१०॥ अंगानि दावदग्धानि खिन्नानीव ममाभवन् ॥ प्रदेशं तमथत्यक्त्वा दूरमारूढवानहम् ॥११॥ दृढहस्ततलाघातहतकंदुकवन्नभः ॥ अपश्यं गगनस्थोहमुदितं चंडतेजसम् ॥१२॥ तपंतं द्वादशादित्यगणं दिक्षु दशस्वपि ॥ वृहत्त्रसतारावज्वालेव भगणं चलम् ॥१३॥ महाकुहकुहाशब्दं क्वथत्समाब्धिडंबरम् ॥ सज्वालोल्मुकनीरंध्रलोकांतरपुरांतरम् ॥१४॥ ज्वालाघनपटाटोपसिंदूरीकृतपर्वतम् ॥ दीप्यमानमहागारस्थिरविद्युत्ककुत्पटम् ॥१५॥ स्फुरत्कटकटाटोपचटत्पत्तनमंडलम् ॥ विदधद्भूतलोद्भूतधूमदंडैः शिलाघनैः ॥१६॥ काचस्तंभसहस्राढ्यं भुवनस्थानमंडपम् ॥ क्वथद्भूतमहाभूततारा क्रंदातिघर्घरम् ॥१७॥

वृंदंभूत्वाददाहेतिपरेणान्वयः ॥८॥९॥ अदृश्योल्मुकगुल्मकत्वादेवप्रसिद्धाग्निरहितःसौराग्निदाहउदभूत् ॥१०॥ दूरमूर्ध्वंनभआरूढवान् ॥११॥१२॥ तप्तनासुदिक्षु सतारंनभःअवर्तिष्व्यामेर्तानिसतारावाज्वालेवावर्त्ताकारेणचलंभगणंनक्षत्रचक्रमपश्यमित्यर्थः ॥ १३ ॥ इतऊर्ध्वंसार्धद्वादशश्लोकेषुस्थितानिसर्वाणिद्वितीयांतपदानिप्रस्तुतद्वादशादित्यगणविशेषणत्वेनयोज्यानि ॥ कुहकुहेतिक्वथनशब्दानुकरणम् ॥१४॥ ज्वालालक्षणैर्घनैःपटाटोपैःरक्तवस्त्राडंबरैःसिंदूरवर्णाःकृताःपर्वतायेन ॥ दीप्यमानेषुमहतांलोकपालानामगारेषुस्थिरविद्युतदयककुत्पटायेन ॥ १५ ॥ धूमदंडैर्दंडाकारैर्धूमैः ॥ काचस्तंभसहस्राढ्यंभुवनस्थानलक्षणंमंडपंविदधत्कुर्वाणमिवेतिसंबंधः ॥ १६ ॥ भूतानांप्राणिनांमहाभूतानांपृथिव्यादीनांचतारैःआक्रंदैरोदनैरतिघर्घरम् ॥ १७ ॥

भूतानांधा मिनांलोकानांभुवनानांतदंतर्गतपुराणांचआसमंतात्पातैःस्फुटतांपदार्थानांचटचटाशब्दैरुद्भटम् ॥ ताराणामश्विन्यादीनांविशरणैःपतनैर्येउद्धाताअभिघातास्तैर्घृष्टं धरातलंयेन ॥ १८ ॥ सर्वेषुस्थलेषुआलयेषुस्वस्वगृहेषुचलंतोधावंतोदह्यमानाजनव्रजायेन ॥ क्षीणैर्मंतराक्रंदपूर्वंकंकथद्भिःपच्यमानैश्चभूतगणैःप्राणिनिकायैर्दुर्वासानिदुर्गं धीनिवासायोग्यानिचदिक्कटानियेन ॥ १९ ॥ सर्वदिग्व्यापिनाअनलेनप्लोषोदाहस्तेनक्षीणाक्रंदंशांतरोदनंपुरांतरमन्यन्नगरंयेन ॥ २० ॥ विदलतांविशीर्यमाणानांदग्धानांच दिग्दंतिनांदंतैरेवस्तंभप्रायैरुत्तंभिताअधोभागेधारिताद्दिगंतभूधरायेन ॥ २१ ॥ २२ ॥ तापतमेरुन्नमद्भिरुच्छलद्भिश्चभूतैर्ज्वरिताःसंजातज्वराइवार्णवाःपर्वताश्चयेन ॥२३॥ के

भूतलोकपुरापातस्फुटच्चटचटोद्भटम् ॥ ताराविशरणोद्घातघृष्टरत्नधरातलम् ॥ १८ ॥ सर्वस्थलालयचलद्दह्यमानजनव्रजम् ॥ क्षीणा क्रंदक्वथद्भूतगणदुर्वासदिक्कटम् ॥ १९ ॥ उत्तमांबुदराखिन्नजलेचरमहार्णवम् ॥ सर्वदिक्कानलप्लोषक्षीणाक्रंदपुरांतरम् ॥ २० ॥ विद लद्दग्धदिग्दंतिदंतोत्तंभितभूधरम् ॥ धराधरदरीरंध्रधूममंडलकुंडलम् ॥ २१ ॥ पतत्पर्वतनिष्पिष्टपुष्टपत्तनमंडलम् ॥ पचत्पचपचाशब्द शब्दितार्द्रीद्रकुंजरम् ॥ २२ ॥ तापतमोन्नमद्भूतज्वरितार्णवपर्वतम् ॥ हृदयस्फोटनिःसारपतद्विद्याधरांगनम् ॥ २३ ॥ आक्रंदरोदनश्रां तमूर्द्धनिःसरणामरम् ॥ नागलोकज्वलज्ज्वालापातालोत्तप्तभूतलम् ॥ २४ ॥ शुष्कार्णवसदापक्वविवर्तोग्रजलेचरम् ॥ आवर्णाविध नाभावास्यांडीयेवसहस्रधा ॥ २५ ॥ गतेननृत्यतोत्थायगृहीतगगनांगनम् ॥ अथोदभूज्ज्वलज्ज्वालाकिंशुकांशुकशोभितः ॥ २६ ॥ तांडवायेवकल्पाग्निस्तरलोल्मुकमाल्यवान् ॥ तारंपटपटाटोपीरटद्भटटचोद्भटः ॥ २७ ॥ ज्वालाद्भुजोधूमकचोजगज्जीर्णकुटीनटः ॥ जज्वलुर्वनजालानिपुराणिनगराणिच ॥ २८ ॥ मंडलद्वीपदुर्गाणिजंगलानिस्थलानिच ॥ सर्वस्वानिमहाकाशमाशादर्शादिवःशिरः ॥ २९ ॥ श्वभ्ररूपारघट्टाट्टपट्टनोदारदिक्कटः ॥ शृंगाणिसिद्धवृंदानिगिरयःसागरार्णवाः ॥ ३० ॥

चिदाक्रंदैरोदनैश्चश्रांताःकेचिद्योगबलेनब्रह्मरंध्रंविदार्यमूर्द्धनिःसरणाअतएवामराश्चयोगिनोयत्र ॥ २४ ॥ शुष्केष्वर्णवेषुसदापक्वाश्चिरक्वथिताःविवर्तैःपरिवर्तनैरुग्राजीवना श्चनक्रादिजलेचरायेन ॥ २५ ॥ गृहीतागगनांगनाअप्सरसोयेन ॥ एवंद्वादशादित्यगणमुपवर्ण्यतदुद्भवंप्रलयाग्निनटत्वेनवर्णयंति ॥ अथेत्यादिनानटद्वृन्देनेन ॥ [illegible] रूपैःकिंशुकपुष्पवर्णैरंशुकैर्वस्त्रैःशोभितः ॥ २६ ॥ तरलैश्चलैरुल्मुकैर्माल्यवान् ॥ तारंविस्फुटंद्विर्वर्णवाद्यैःपटपटाटोपीनानावाद्याडंबरवान् ॥ २७ ॥ २८ ॥ सर्वाणिस्वानिधनानि [illegible] लादिभूच्छिद्राणिभूमेरूर्ध्वंमहाकाशम् ॥ दिवोद्युलोकस्यशिरऊर्ध्वभागः ॥ २९ ॥ तथाकश्चित्श्वभ्ररूपःकश्चिद्वारपट्टयंत्रैरट्टैःसौधैश्चयुक्तैःपट्टनैश्चोदारोरम्योदिक्कटः ॥ तदा पर्वतशृंगाणितत्स्थसिद्धवृंदानितद्युक्तागिरयःसागरार्णवाः ॥ ३० ॥

आशादिशश्चतदंतर्गतपुरुषैःसहशिवार्चिषांरुद्रनेत्रज्वालानांशनशनाशब्दंजज्वलुरितिपूर्वेणान्वयः ॥ ३१ ॥ किंचेताआशाःज्वालाजालैरुज्ज्वलाऊर्ध्वजाःकेशायासांतथा विधाःसत्योभमद्भमितिप्रसिद्धैर्झींपर्णझांकारध्वनिभिर्भूरिभस्मभिश्चपरस्परंविक्षिपंत्यः ॥ क्ष्वेडापरस्परधूलिजलादिप्रक्षेपैःक्रीडानत्पराःकुराक्षस्यइवआसन् ॥ ३२ ॥ ३३ ॥ किंचाश्रियःसंपद्रहितास्तादिशःसद्योनिःसृतरक्ताभैर्ज्वालाजालैःस्थलपद्मोदरालीनांश्रियमाजकृजगृहुः ॥ ३४ ॥ वेत्युत्प्रेक्षयोर्विकल्पः ॥ ३५ ॥ आवृतंनभइत्यनुपज्जते ॥ वाशब्दःप्राग्वत् ॥ एवमौर्वेणाग्निनासंवृताअर्णवाश्चफुल्लान्यशोकवनानियेपुतथाविधाइवस्थलाज्ज्वलिताइवराविराःबालरविनिकरव्याप्ताइववाआसन्नितिपरेणसहान्वयः ॥ रवीनरानिस्त्वाकुर्वंतीतिरविरास्तएवराविराइतिस्वार्थिकोण्कल्प्यः ॥ ३६ ॥ तथावनेपुर्यौवनंयुवभावोयस्यतथाविधःपावकोदवाग्निश्चित्रलिखितंसौधतलाश्रयंमिथ्यार्वाक्रयौ

सरःसरस्यःसरितोदेवासुरनरोरगाः॥ आशाःशनशनाशब्दैःपुरुषैश्चशिवार्चिषाम्॥ ३१॥ आसन्क्ष्वेडाकुराक्षस्योज्वालाजालोज्ज्वलोर्ध्वजाः॥ भमद्भमितिझांकारैर्झींपर्णैर्भूरिभस्मभिः॥३२॥ ज्वालाःश्वभ्राद्रिभूमीनांगुहाभ्यःपरिनिर्ययुः॥ ज्वालोदरस्थाअरुणाःसमस्ताभूतजातयः॥ ३३॥ स्थलपद्मोदरालीनामाजह्रुःश्रियमश्रियः॥ सद्योनिःसृतरक्ताभैःसिंदूरांभोदसुंदरैः॥३४॥ धगद्धगितिगायद्भिर्ज्वालाजालैर्जगद्भृतैः॥ आसीद्रक्तांशुकैःकीर्णसंध्याभ्रैरिववानभः॥ ३५॥उत्फुल्लकिंशुकवनैरुड्डीनैरिववावृतम्॥ और्वेणचावृताआसन्फुल्लाशोकवनाइव॥ ३६॥इवस्थलाज्ज्वलिताराविराइवचार्णवाः॥ नानावर्णज्वलज्ज्वालाधूमविन्यासबंधवान्॥ ३७॥ रूढंवह्निमिवाधातुंचित्रसौधलताश्रयम्॥ अनंतइवविन्यासवनयौवनपावकः॥ ३८ ॥ उदयास्तमयादिभ्योविंध्योविधुरतामगात्॥ अंगारकल्पविटपैर्ज्वालावनविवल्गनैः॥ ३९ ॥ शनैरीपदिवक्षुब्धःसत्योसत्यत्वमाययौ ॥ मध्यमध्यकचत्काण्र्यभ्रमद्भूमालिमालितम्॥ ४०॥ वलज्ज्वालाज्ञमलिनंदर्पसरइवांबरम्॥ खेऽद्रीणांशिखरेव्योम्निशिखाशिखरशेखराः॥ ४१॥

ढंयथार्थभूतमाधातुंसंपादयितुमिवनानावर्णानांज्वलज्ज्वालानांधूमविन्यासानांचबंधःप्रबंधःश्रेणिरितियावत्तद्वान्सन्फणासहस्रप्रबंधवाननंतःसर्पराडिवविनिआसविस्तृतोनितरामासीदित्युत्तरेणसहान्वयः ॥ ३७ ॥ ३८ ॥ किंचसूर्योदयास्तमयादिवैधुर्याकांक्षिणोविंध्यस्यमनोरथस्तदाफलितइत्याशयेनाह ॥ उदयास्तमयादिभ्यइत्यर्धेन ॥ अंगारेत्याद्युत्तरान्वयि ॥ ३९ ॥ सत्योदक्षिणदेशप्रसिद्धोगिरिः ॥ मध्येमध्येकचत्प्रकाशमानंकार्ष्ण्यंयेषांतथाविधैर्धूमलक्षणैरलिभिर्मालितम्॥ वलद्भिर्धूमसंवलितैर्ज्वालालक्षणैरज्ञैर्मलिनंचेतिनिनभसःसरःसाम्योपपत्तिः ॥ ४० ॥ शिखाशिखरशेखराःज्वालापोत्तंसाः ॥ केतुर्धूमावर्त्तोधूमकेत्वाख्यउत्पातविशेषश्चकुंतलस्थानीयोयासांतथाविधानाशात्यवस्तल्लक्षणानर्त्तक्यःअद्रीणांखेविवराकाशेशिखरेशृंगदेशेव्योम्निअन्यादिशून्यशुद्धाकाशप्रदेशेचनीरसाःकरुणादिरसशून्याःसत्योनत्नुः ॥ ४१॥

ब्रह्मांडस्य ऊर्ध्वभाग एव कपाटं पिधानं यस्यास्तथाविधा भूः पृथिवी तले अधोभागे आहिता अनलज्वाला यस्यास्तथाविधासीत् तज्जनैर्ध्वंसनैः प्रोत्पतंति भूतानि प्राणिनिकाया एव धानी धाना भज्यमानबीजस्थानीया यस्यां तथाविधा भ्राष्टभूमिका अंबरीषपर्यायं मभूदिति शेषः ॥ ४२ ॥ किंचेयं पृथिवी तदा प्रलयकाले संरलाडनं रुदंत्या जगल्लक्ष्म्याः हृदयसत्केऽप्रकोष्ठे द्वीपभेदभिन्नाभिर्भूमिभिः समसमुद्रादिलक्षणं जलैस्तथा भैरवाग्नि श्च काचनत्कौनिका चनस्थानीयैर्नानावर्णैराननैर्मुखैर्मणिभिश्च अरुणा सौवर्णीकणत्कंकणश्रेणीवाभवत् ॥ ४३ ॥ विदलनं विशीर्णताम् ॥ ४४ ॥ एवमब्धयोऽपि परस्परं मुखमाहत्य कलहुरित्युत्प्रेक्षते ॥ अब्धय इति ॥ अर्के मुखे सूर्यप्रतिबिंबतिलके स्वमुखे ॥ ४५ ॥ किंचतेऽब्धयः अन्योन्यं वेल्लितं वेल्लितरंगास्फालनैः कल्लोलमन एव कर्मणम्लपाषाणादीनां समीकरणात् भूतलाकारतां प्राप्तं पर्वतं जङ्घुः आजघ्नुः आहारतो निम्नपुरप्रस्थितियावत् ॥ प्रकुपिता जडा मूर्खा मृत्तिकाशि

ननृतुर्नीरसानाशनर्त्तक्यः केतुकुंतलाः ॥ तलाहितानलज्वालाब्रह्मांडोर्ध्वकपाटभूः ॥ ४२ ॥ तज्जनप्रोत्पतद्भूतधानोघाभ्राष्टभूमिका ॥ कणच्छ्रेणीमज्जलाग्निर्नानावर्णाननारुणा ॥ ४३ ॥ ह्लत्कोष्ठे जगल्लक्ष्म्याः सौवर्णीवाभवत्तदा ॥ शैलाश्चटचटास्फोटैर्ध्वंसाः कटकटारवैः ॥ ४४ ॥ देशाहलहलोल्लासैरलं विदलनं ययुः ॥ अब्धयः क्वथिताकाराः फेनिलोल्लासमांसलाः ॥ ४५ ॥ वीचीकरतलाघातांश्चक्रुरर्के मुखेमुखे ॥ अन्योन्यवेल्लितोल्लोलभूतलाकारपर्वतम् ॥ ४६ ॥ जङ्घुर्वीचीकरैर्देहं जडाः प्रकुपिता इव ॥ आशाकाशाशिनामेषां गुहागुहगुहारवान् ॥ ४७ ॥ पपाठशब्द आग्नेयो ज्वालातटतटोद्भवः ॥ लोकपालपुरापातनमांगाराद्रिभित्तयः ॥ ४८ ॥ दिशो दशापि विवशं ययुरुन्मत्तवृत्तयः ॥ कांचनद्रवसार्द्रद्रुमागारगुहागृहः ॥ ४९ ॥ शनैश्चावाकृतिर्मेरुरासीद्धिमइवातपे ॥ क्षणेनैवानलात्तस्माद्धिमवान्जतुवद्द्रुतः ॥ ५० ॥ सर्वतः शीतलः शुद्धाद्दुर्जनादिव सज्जनः ॥ तस्यामपि दशायां तु मलयोऽमलसौरभः ॥ ५१ ॥ आसीत्त्यजत्युदारात्मा ननाशेऽप्युत्तमं गुणम् ॥ नश्यन्नपि महान्ह्लादं नखेदं संप्रयच्छति ॥ ५२ ॥ चंदनं दग्धमप्यासीदानंदायैव जीवनाम् ॥ न कदाचन संयाति वस्तूत्तममवस्तुताम् ॥ ५३ ॥ प्रलयानलनिर्दग्धमपि हेमनन भवत् ॥ हेमन भसीतस्मिन्न नष्टं प्रलयानले ॥ ५४ ॥ तयोरेव वपुः श्लाघ्यं सर्वनाशेऽप्यनाशयोः ॥ नष्टो विश्रुतया नाशि हेमाकृष्टतयाक्षयम् ॥ ५५ ॥

लादिपर्यंतं निर्यातिक्रम ॥ ४६ ॥ कांचिज्ज एव आमर्थीनां गुहामुखनिर्गतानगुहगुहेत्येवंरूपानारवान् प्रदेशानं ज्वालातटस्य गिरितटस्य संघट्टनादुद्भूत आग्नेयः शब्दः पपाठ ॥ गुहकान् शब्दान् शिष्यध्वनिरिव अनुचकारेत्यर्थः ॥ ४७ ॥ किंच तदानलयांपुरानीनिरंतरंसमुत्कटयोः शाखिशो लोकपालपुराणां शानामप्यापतितैरिह्यतमांगारभित्ताद्रिभित्तयः अस्य उन्मत्तवृत्तयो भूत्वा विवशं व्याकुलतां ययुः ॥ ४८ ॥ कांचनद्रवभूतः अद्रिभिः प्रत्यंतपर्वतैरद्रिपादुमैरगारैर्गुहागृहैश्च सहितश्चावाकृतिर्मेरुपर्वतः शनैः आतपे हिमइवार्द्रविलीनः आसीत् ॥ ४९ ॥ जतुवल्लाक्षावद्द्रुतो विलीनः ॥ ५० ॥ अमलसौरभः सुगंधिरित्यावत् ॥ ५१ ॥ महानुत्तमपुरुषः ॥ ५२ ॥ ५३ ॥ दग्धं यस्मान्नपि ॥ ननष्टमनुननाश ॥ ५४ ॥ अविनाशिवस्तुत्वसारत्वं हेम्नः श्लाघ्यमित्याशयेनाह ॥ तयोरेवेति ॥ आकृष्टतयादेविभ्यो निष्कृष्य शोधितया ॥ ५५ ॥

---

१ धामांतरितेषु ॥ रदेहमानपर्वतानित्यन्वयः

122

अतएवरजस्तमोनिष्कृष्टंशुद्धंसत्वमेवब्रह्मसुखाभिव्यक्तयासुखसारंमन्ये॥ दग्धाअब्दाअंबुदलक्षणाअद्रयोयेनतथाविधोमहाधूमज्वालःप्रलयवह्निलक्षणोवारिदःचलंतिउच्चानिवनानीवनभसिस्फुरन्विकीर्णांगारवर्षणोऽभूदित्यन्वयः॥ ५६ ॥ रसानांजलानामात्यंतिकशोषेसंस्कारमात्रस्याप्यनवशेषाद्विस्मरणेनार्त्तानांशून्यानांस्फारदेहिनांअंडजादिचतुर्विधभूतानाम्॥ ५७ ॥ तथाशुष्काणांदग्धानामतएवव्योमविटपिपत्रपात्रप्रायाणांशून्यतांगतानामितियावत्॥ अथवासवारीणामार्द्राणामेवप्रलयार्चिषाबलाद्दग्धानांवारिदानांहेअंगज्ञानाग्निदग्धानांज्ञस्यतत्त्वविदोदोषाणामिवभस्मापिक्वचिन्नदृष्टमित्यन्वयः ॥ ५८ ॥ नलंघयतिनाभिभवति॥ कैलासंरजतगिरिम्॥ ५९ ॥ तंकैलासम्॥ कल्पार्थंकुपितः तद्दाहमपिवर्णयति॥ दाहेत्यादिना ॥ ६० ॥ भूभृतस्तत्पादपर्वताः ॥ किंचतेभूभृतोज्वालाघनघटाटोपैःसावतंसानिचलानिअंनिमानिअग्रशिखराणियेषां

सत्वमेकंसुखंमन्येनरजोनचवातमः॥ चलदुच्चवनानीवविकीर्णांगारवर्पणः॥ ५६॥ दग्धाब्दाद्रिर्महाधूमज्वालोभूद्वह्निवारिदः॥ रसविस्मरणार्त्तानांशून्यानांस्फारदेहिनाम्॥ ५७॥ शुष्काणांव्योमविटपिपत्राणांपात्ररूपिणाम्॥ वारिदानांसवारीणांदग्धानांप्रलयार्चिषा॥ ५८॥ ज्ञस्येवांगनदोषाणांदृष्टंभस्मापिनक्वचित्॥ नलंघयतिकैलासंयावदुल्लसितोनलः॥ ५९॥ तावत्तंकल्पकुपितोरुद्रोनेत्राग्निनादहत्॥ दाहस्फुटद्रुमस्थूलशिलाचटचटारवाः॥ ६०॥ लकुटोपललोष्टौघैरयुध्यंतेवभूभृतः॥ ज्वालाघनघटाटोपसावतंसचलांतिमाः॥ ६१॥ बभूवुर्व्योमविकसत्स्थूलपद्मवनाइव॥ सर्गःकदाचिदेवासीदित्यगात्स्मरणीयताम्॥ ६२॥ कल्पांतःस्मारयन्मूर्खानगादस्मरणीयताम्॥ तापोपतापपरमाःपरमारणतत्पराः॥ वह्नयोपह्नवंचक्रुर्जगतामसतामिव॥ ६३॥ बभुरशनिनिपातपीडितांगाःकचदनलोल्मुकगुल्ममंडलाभाः॥ प्रलयसमयवायवोनलांताद्दलदमरावलयोलयेलिहंतः॥ ६४॥ व्यालोलस्फुटदानलद्रुमवनप्रोद्भूतभस्मोष्मणादत्ताभ्राभ्रमदुल्मुकाहतिवहत्सांगारगौरार्चिषः॥ भ्रश्यत्पावकशृंगमध्यविलसज्ज्वालावलीश्यामलानिःशेषाग्निनिकाशस्रुस्तवजवावेगनवातावबुः॥ ६५॥

तथाविधाःसंतोव्योम्निविकसंतिस्थूलानांपद्मानांवनानियेषांतथाविधाइवबभूवुः ॥ ६१ ॥ ६२ ॥ अस्मरणीयतांप्रत्यक्षतामितियावत्॥ मूर्खान्स्मारयन्जगदसारतामितिशेषः॥ असतामलीकानांशशशृंगादीनामिवापह्नवमत्यंतासत्वम्॥ ६३ ॥ लयेनतस्मिन्प्रलयेप्रवृत्तेअशनिनिपातैःपीडितानिप्राण्यंगानियैःक्वचद्भिरनलोल्मुकैर्गुल्मानिक्षुद्रवृक्षास्तन्मंडलाभाः दलंत्योविशीर्यमाणाअमरावलयोयैस्तथाविधाःप्रलयसमयवायवःअनलांताद्वह्निमध्यान्निर्गत्यदिशोलिहंतइवबभुः॥ ६४ ॥ पुनःकीदृशास्तेवातावबुस्तदाह॥ व्यालोलेति॥ व्यालोलाज्वालापल्लवकोटिभिःस्फुटंतोविकसंतश्चयेआनलावह्निमयाद्रुमास्तेषांवनेपूद्भूतेनभस्मसहितेनोष्मणादत्ताभ्राभ्रमाकाशाउत्पादितमेघावातथाभ्रमतामुल्मुकानामाहतिभिरभिघातैर्वहंत्योनिःसरंत्यःसांगारागौराःपीताअर्चिषोयेभ्यः ॥ तथाभ्रश्यंतीभिःकज्जलात्मनास्खलंतीभिःपावकशृंगप्रायशिखामध्येविलसंतीभिःसकज्जलज्वालावलीभिःश्यामलाः तथानिःशेषेजगत्यग्नीनांनिकाशेनप्रदीपनेनस्रुस्तवःस्तुतियोग्योजवोयेषांतथाविधावातावेगेनबबुरित्यर्थः॥ ६५ ॥

इतिश्रीवासिष्ठ॰तात्पर्यप्रकाशेनि॰उ॰पंचसप्ततितमःसर्गः ॥ ७५ ॥ ॥ ५ ॥ ऊर्ध्वेवारुणदिग्भागेपुष्करावर्तकोदयः ॥ वर्ण्यतेत्रोपसंहारोप्यग्नेराग्नेयदिङ्मुखे ॥ १ ॥ अवधूताचलेकंपितशैले ॥ १॥ विमुद्रेषुविगतचिह्नेषुधनिष्वधनेषुसत्सु अंबुदारिद्र्योपद्रवेण जलाभावदुःखेनद्रुतेपक्वापितेद्रुतिघनेन भूतलेनचासंबंधः ॥ २ ॥ किमपिप्रसिद्धंविल क्षणंपातालंविनाशमितंयावत् ॥ ३ ॥ दिविद्युलोकेव्योमगतआलोकःसौरोग्निस्तद्भावापन्ने ॥ ४ ॥ गुलुगुलेतिआरवानुकरणंप्रथमंदूराद्दताश्रवणाभिप्रायम् ॥ ५ ॥ सा मीप्यक्रमेणतस्यैवतारतांदर्शयति ॥ ब्रह्मेति ॥ ब्रह्मणाविस्फोटितेस्वाहिकुड्यस्यब्रह्मांडभित्तेर्विस्फोटनइवउद्भटंनारतमम् ॥ अन्योन्यास्फालनेनास्फालाउच्छलंतोयेमत्ताअर्ण वास्तदीयरववद्दाविलम् ॥ शब्दसमकालभवनस्यदिग्जलमालिन्यस्योपमेयोपमानयोःशब्देप्यारोपाद्दाविलत्वोक्तिः ॥ ६ ॥ लोकव्यर्णवपुरेषुप्रतिध्वन्यात्मना उद्दीर्णघनैः

॥ इ॰वा॰ महारामायणेवा॰दे॰मो॰नि॰उ॰पा॰ महाकल्पांताग्निवर्णनंनामपंचसप्ततितमःसर्गः ॥ ७५ ॥ ॥ ५ ॥ ॥ श्रीव सिष्ठउवाच ॥ ॥ अथकल्पांतमरुतिवहत्यवधुताचले ॥ वलनांभोधिकल्लोलेनभस्यावर्तकारिणि ॥ १ ॥ समुद्रेषुविमुद्रेषुमर्यादालंघनं घने ॥ अधनेषुधनिष्वंबुदारिद्र्योपद्रवद्रुते ॥ २ ॥ भूतलेभूतलेशांशवर्जितेवह्निभर्जिते ॥ पातालमपिपातालंगतंकिमपिकालतः ॥ ३ ॥ दिविवाविद्यमानायांविशीर्णेसर्गवर्गके ॥ लोकव्योमगतालोकेशोकोकसिककुब्गणे ॥ ४ ॥ कुतोप्याकाशकुहराद्व्मदेत्यगणाइव ॥ पु ष्करावर्तकामेघाश्चक्रुर्गुलुगुलारवम् ॥ ५ ॥ ब्रह्मविस्फोटितस्वांडकुड्यविस्फोटनोद्भटम् ॥ अन्योन्यास्फालनास्फालमत्तार्णवरवाविल म् ॥ ६ ॥ लोकार्णवपुरोद्दीर्णघनकोलाहलोल्बणम् ॥ एतत्कुलाचलस्कंधवद्धोग्ररवघर्घरम् ॥ ७ ॥ ब्रह्मांडशंखजठरपूरणावर्तमंथरम् ॥ स्वर्लोकरोदःपातालतलतोतिसगुल्मकम् ॥ ८ ॥ समस्तदूरदिग्भित्तिहेलाहलनपंडुलम् ॥ महाप्रलयसंपन्नापानकापानतुंडलम् ॥ ९ ॥ प्रस्तुतप्रलयाख्येंद्रमत्तैरावनबृंहितम् ॥ आकल्पक्षुब्धमेघाब्धिनिक्रांदमिवसंभृतम् ॥ १० ॥ महाप्रलयसंक्षुब्धक्षीरोदमथनारवम् ॥ ब्र ह्मांडोग्रारघट्टेस्मिन्वार्यंत्रमिवसारवम् ॥ ११ ॥

कोलाहलैरनिवारितत्वपांडुःसहम् ॥ एतैःशाखर्घितैः कुलाचलस्कंधसंघट्टद्वार्धाशोपार्वेमिश्रणाद्घर्घरम् ॥ ७ ॥ ब्रह्मांडशंखजठरपूरणेनतिनद्धितत्रनिर्गंधयुक्तःपगावर्तनेमंथरंतिवि हनरमतएवस्वर्लोकात्तगेदोभ्यांपातालतलतश्चअतिशयेनसगुल्मकंशास्त्राप्रकरसहितमिव ॥ ८ ॥ समस्तदूराणामपाराणांदिग्भित्तीनांहेलयाहलनेनविलेखनेनपंडुलंकंप शीलमिव ॥ महाप्रलयेसमाप्तीनांविश्रमेनकथनात्तपन्नस्यपानकस्यआपानेआस्वादनेनपुंडलंपिपासितमिव ॥ ९ ॥ प्रस्तुतस्यविजयार्थनिर्गतस्यप्रलयाख्यस्यइंद्रस्यमत्तैरा वतगर्जितमिवस्थितम् ॥ आकल्पंप्रलयपर्यंतंचिरनिरोधेनक्षुब्धानांमेघलक्षणानामब्धीनांसंभूतंचिरसंचितंयुगपन्निःसृतंनिक्रांदमिवस्थितम् ॥ १० ॥ आरघट्टीयंत्रस्या नेगसिद्धंवार्यंत्रं जलधारायंत्रमिव ॥ ११ ॥

23

अथवर्णितमेघध्वनिश्रवणानंतरंविस्मितमाश्चर्यबुद्धिस्तद्वानहंसंजातोस्मि ततअधोदिगतिरिक्तेदिक्चक्रेदृशंदृष्टिमेघान्वेषणायअत्यजंविमुक्तवान्व्यापारितवानस्मीतियावत् ॥१२॥ नपश्यामिमेघानितिशेषः ॥ किंतर्हिदृष्टवानसितत्राह ॥ केवलमिति॥ तरंतिआकाशेप्लवंते॥१३॥१४॥अनुभूतवान्त्वगिंद्रियेण॥१५॥एतावतिदूरेयोयावान्दूरप्रदेशस्ते षामधःप्रवृत्तानामग्नितापानांसतांतत्रजीवतांप्राणिनांदृशांचविषयोन ॥१६ ॥१७॥ ज्वालालक्षणाअचलाःपर्वताः ॥ पर्वतत्वोपपादकेद्वेविशेषणे ॥१८॥ भस्मभरलक्षणान्य भ्राणदभ्राणि पूतानांवायुशोधितानामंगाराणांरजांसि ॥१९॥२०॥ सौम्यानिर्ज्वालायेंगारास्तद्भरात्मकेजातेसतीतिशेषः ॥ भास्वतांद्वादशादित्यानांतेजसिरजोपगमाद्भाते

अथास्मिन्सतिकल्पाग्नौस्थितिमेतिकथंघनः॥ इतिविस्मितवानस्मिदृशंदिग्नवकेत्यजम्॥ १२ ॥ यावन्नक्वचिदेवात्रपश्याम्याशासुके वलम्॥ तरंतितरलास्फालमुल्मुकाशनिवृष्टयः ॥ १३॥ तेनज्वलनतापेनबहुयोजनकोटिषु॥ पदार्थाभस्मतांयांतिदूरेदिक्षुदशस्वपि ॥ १४॥ अनंतरंक्षणाद्व्योम्निदूरेहमनुभूतवान्॥ ऊर्ध्वतःशीतलंवातमधस्तादनलोपमम्॥ १५॥ एतावतिनभोमार्गेदूरेकल्पांबुदाःस्थि ताः॥ यस्तेषामग्नितापानांविषयोनचसदृशाम्॥ १६ ॥ अथवारुणदिग्भागादाययौकल्पमारुतः॥ यस्मिंस्तृणवद्धुत्यंतेविंध्यमेरुहि मालयाः ॥ १७॥ तेनज्वालाचलाःप्रांतोड्डीनांगारविहंगमाः ॥ लोलोल्मुकवनाक्रांताजग्मुरग्निदिशंद्रुतम्॥ १८॥ संध्याभ्रसदृशा कारास्तेरुरंगारवारिदाः ॥ भ्रेमुर्भस्मभराभ्राणिपूतांगाररजांसिखे ॥ १९॥ सज्वालविलसद्वातोद्धुष्टानलदृशंव्रजन्॥ हेमाद्रीणांसप क्षाणामनीकंद्रवतामिव ॥२०॥ धराद्रिमंडलाभोगेसौम्यांगारभरात्मनि॥ ज्वालावलिगणेजातेभातेतेजसिभास्वताम्॥ २१॥ अर्ण वेष्वनलार्णस्सुक्वथनोत्फालवारिषु ॥ वनेष्वस्मृतपर्णेषुदीप्ताग्नितरुधारिषु ॥ २२॥ ब्रह्मलोकस्थनाथेपुब्रह्मलोकपुरेषुच ॥ सांगनावा लवृद्धेषुदग्धेषुनिपतत्सुखम्॥ २३॥ कल्पांतानलपद्मिन्याब्रह्माग्रावसरोवरे ॥ ज्वालापल्लवशालिन्याःसबीजायाःसटोल्मुकैः॥२४॥ अनिलात्मसुमूलेषुनागेषुचनगेषुच॥ आपातालंनिमग्नेषुमहत्स्वंगारकर्दमे॥२५॥ उष्ट्रसैन्यमिवालक्ष्यगतिमन्निकटंनभः॥ आययावं जनश्यामःकल्पांबुदगणःक्वणन्॥ २६॥ स्थिरकल्पानलज्वालातुल्यविद्युन्मयाचलः ॥एककोणकविश्रांतसमार्णवपयोभरः॥ २७॥

स्फुटेसति ॥ २१ ॥ क्वचिदनलाएवार्णांसियेषांतथाविधेषु क्वचित्क्वथनोत्फालवारिषु ॥ सर्वेषांसमम्यंतानांकल्पांबुदगणआययावित्ययेन्वयः ॥ २२ ॥ २३ ॥ सटाःकेसरसदृ शाःस्फुलिंगास्तद्घटितैरुल्मुकैःसबीजायाःज्वालापल्लवशालिन्याःब्रह्मलक्षणेअग्रावेनिरुपलेसरोवरेप्ररूढायाःकल्पांतानलरूपायाःपद्मिन्याःअनिलात्मसुविष्टंभकवायुप्रधाने पुनागेपुनगेषुचसर्पपर्वतरूपेषुमूलेषुआपातालमंगारकर्दमेनिमग्नेपुसत्सुइतिद्वयोरन्वयः ॥२४॥२५॥ चर्मभस्त्राभिरुष्ट्राणांपश्चिमदेशेजलवाहकत्वप्रसिद्धेस्तत्सैन्यमिव ॥२६ ॥ तमेववर्णयति ॥ स्थिरेत्यादिना ॥ २७ ॥

भित्तिवत्भासुरैर्नीहारभारैर्निर्वाराणिनिरवकाशानिदिक्कटानियस्य ॥ ब्रह्मांडकुड्यपर्यंतंनिविडस्यभूमंडलस्यास्फोटेविदलनेपंडितः ॥ ब्रह्मांडकुड्यपर्यंतंस्वयंनिविडःसन्नभो मंडलास्फोटनप्रायेध्वनौपंडितइतिवा ॥ २८ ॥ कल्पांतक्षुभितांभोधिरेवखमायातोऽधिरूढइवेत्युत्प्रेक्षा ॥ वर्तुलावर्त्तस्थानीयद्वादशादित्यपरिवेषवृत्तिमानित्यादिविशेषणा न्युत्प्रेक्षोपपादकानि ॥ २९ ॥ उत्प्रेक्षांतरंदर्शयति ॥ मृतइति ॥ परमत्यूर्ध्वदेशरूपंपरलोकमाश्रित्यान्यमाकारमंबुदगणलक्षणंशरीरांतरमागतइव ॥ ३० ॥ हेमसंभारसदृश विद्युद्गणरूपेणजाड्येनस्तंभितानिनिःशेषाणिसमस्तानिजलानिकाष्ठमिवाचलानियेनतथाविधंहिमालयंदधत्धारयन्निव ॥ ३१ ॥ अथमेघागमनानंतरंवृष्टिःपपात ॥ कथं ब्रह्मांडस्यविस्फोटवत्कठिनवज्रनिर्घातेनघटितमंबरंयस्मिन्कर्मणितथाविधाप्राक्प्रथमंद्रुताउद्भटनीहाराःकाष्ठादिशोयस्याम् ॥ ३२ ॥ तांवृष्टिमेववर्णयति ॥ अग्निदाहेत्यादि

भित्तिभासुरनीहारभारनिर्वारदिक्कटः ॥ ब्रह्मांडकुड्यनिविडमंडलास्फोटपंडितः ॥ २८ ॥ कल्पांतक्षुभितांभोधिर्वर्त्तुलावर्त्तवृत्तिमान् ॥
तडिज्जलचरःसारनिर्ह्रादःखमिवागतः ॥ २९ ॥ मृतोदग्धोनिशानाथस्ततोद्विगुणशीतलः ॥ अन्यमाकारमाश्रित्यपरंलोकमिवागतः
॥ ३० ॥ हेमसंभाररूपेणहिमालयमिवाखिलम् ॥ जाड्यस्तंभितनिःशेषजलकाष्ठाचलंदधत् ॥ ३१ ॥ अथब्रह्मांडविस्फोटकठिनंघटि
तांबरम् ॥ प्राग्द्रुतोद्भटतौपारकाष्ठावृष्टिःपपातह ॥ ३२ ॥ अग्निदाहवनाकाशविद्युदुन्मेषभीषणा ॥ चटद्गडगडास्फोटस्फुटद्ब्रह्मांडमंडला
॥ ३३ ॥ प्रथितोत्थितसीत्कारशतक्ष्वेडाक्षयारवा ॥ शीतसीकरनीहारभित्तिबंधमयांबरा ॥ ३४ ॥ रोदोमंडपवैडूर्यस्तंभसंभारभासुरैः ॥
धारासारैर्द्धराधुर्यशैलशातकशालिनी ॥ ३५ ॥ धराचटचटास्फोटस्फुरदंगारपत्तना ॥ गर्जितोर्जितसंपातपतल्लोकांतराकुला ॥ ३६ ॥
सावभूवाथसांगारजगद्देहविलासिनी ॥ कृतप्रत्युद्गमावाप्यश्रियाज्वलनयाभुवः ॥ ३७ ॥ ज्वालालवोल्लुलनडंबरमंबरंतद्व्यूढस्थलाब्ज
दलजालमिवालमासीत् ॥ ज्वालाभ्रमद्भ्रमरपंक्तिनिभास्तदासंस्तत्रस्फुरच्छिशिरसीकरपक्षपुंजाः ॥ ३८ ॥

ना ॥ अग्निदाहसदृशेनवनाकाशयोर्विद्युदुन्मेषेणभीषणा ॥ चटद्भिर्गडगडास्फोटैःस्फुटद्ब्रह्मांडमंडला ॥ ३३ ॥ ३४ ॥ रोदसीद्यावाभूमीतल्लक्षणमंडपस्यवैडूर्यस्तंभानांसंभा रइवभासुरैःस्थूलतरैर्धाराणामासारैःसंपातैर्धराधूर्वहाणांशैलानांशातकायेटंकप्रहारास्तच्छालिनी ॥ ३५ ॥ स्फुटंतिअंगारपत्तनान्यंगारसमूहायया ॥ ३६ ॥ सांगारजगद्देह विलासिनीसावृष्टिःअथअज्वलनयाभुवोबाप्यश्रियासर्वावकृतप्रत्युद्गमावभूव ॥ ३७ ॥ तदातत्तादृशमंबरमाकाशंज्वालालवानामुल्लुलनंविलासस्तदाडंबरंयस्मिंस्तथाविधं सद्व्यूढानिप्ररूढानिस्थलाब्जदलजालानियस्मिंस्तथाविधमिवआसीत् ॥ तत्रतस्मिन्नंबरेस्फुरंतःशिशिराःशीकरपक्षपुंजाजलधरास्तुज्वालासुभ्रमंतीयाभ्रमरपंक्तिस्तन्निभाआ सन् ॥ ३८ ॥

---

१ मूलस्थतौपारपदस्यायमर्थः ॥ अथवाएतदनुरोधेनमूलेउद्भटनीहारेतिपाठइतिभाति ॥

किंचतदासलिलदानांमेघानामनलानांचसंनिपातःसमागमःउद्यद्बृहच्चटचटारवैःपूरिताआशादिशोयेनतथाविधःसन्दुर्वारैर्वैरिविषमःअतएवोग्रोमहतांबलानांसेनानांहेतिभिर्हताःउग्राःहेतयोयत्रतथाविधःसंग्रामइवभीमोभयानकःअभवत् ॥ ३९ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उत्तरार्द्धेषट्सप्ततितमःसर्गः ॥ ७६ ॥ ॥ ७॥ ॥ पुष्करावर्त्तकोत्सृष्टवृष्टिधाराविसंष्ठुलम् ॥ सप्ताब्धिक्षोभनिर्धूतंजगद्भूयोत्रवर्ण्यते ॥ १ ॥ अवनिश्चपयश्चतेजश्चपवनश्चेत्येतेषांचतुर्णांमहाभूतानांपरमसंक्षोभेजातेसतिजगत्त्रयंयादृशंबभूवतद्वर्णयामिशृण्वित्यर्थः ॥ १ ॥ तापिच्छविपिनंतमालवनम् ॥ २ ॥ सार्द्रेषुदाह्येषुधूमनीलज्वालालवोल्लासलक्षणाभिर्हेलाभिष्टिमिटिमित्यारटनशीलम् ॥ ३ ॥ दीर्घारुत्

उद्यद्बृहच्चटचटारवपूरिताशोभीमोभवत्सलिलदानलसन्निपातः॥दुर्वारवैरिविषमोमहतांबलानांसंग्रामउग्रइवहेतिहतोग्रहेतिः॥३९॥ ॥इ०वा०वा०दे०मो०नि०उ०पा०पुष्करावर्त्तडंबरवर्णनंनामषट्सप्ततितमःसर्गः॥७६॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ अथावनिपयस्तेजःपवनानांयुगक्षये॥ जातेपरमसंक्षोभेवभूवास्मिन्जगत्त्रयम्॥ १ ॥ तापिच्छविपिनोड्डीतिनिभभस्माभ्रभासुरम्॥ महार्णवमहावर्त्तवृत्तिधूमविवर्त्तनम्॥२॥ नीलज्वालालवोल्लासंहेलाटिमिटिमारटि॥ कृतभस्माभ्रसंभारपूर्णलोकांतरांतरम्॥ ३ ॥ उच्छलद्दीर्घरुत्कारैश्छमच्छममयात्मकैः॥ तूर्यमुन्नमदासारविसारिजयघोषणम्॥४॥ भ्रमद्भस्माभ्रधूमाभ्रबृहत्कल्पाभ्रसंभ्रमम्॥ वाष्पाभ्रविभ्रमोद्भ्रांतसीकरोग्राभ्रवृंदवत्॥ ५॥ ब्रह्मांडभित्तिभांकारभीषणैर्मातरिश्वनः॥ प्रसरैरंबरोड्डीनदग्धेंद्रादिपुरोत्करम्॥६॥ जलानलानिलोल्लासस्फुटत्कोटिगताश्मनाम्॥ प्रविघट्टनटंकारैर्जडीभूताक्षकश्रुति॥ ७॥ नभःस्तंभनिभावंधधारानारंध्रवर्षणैः॥ कर्षणैःकल्पवल्लीनांछमच्छमघनध्वनि ॥८॥ गंगातरंगिकायेषांतादृशैःसरितांगणैः ॥ अभ्रैरिवनभोभीमैःपूर्यमाणाखिलार्णवम् ॥ ९ ॥ तापिच्छपत्रवृंदस्थपुष्पगुच्छसमोपमैः॥ तपद्भिरर्ककैरालीढपीठकल्पाभ्रमंडलम्॥१०॥ वहद्भिरसरिद्व्यूहशिखरिद्वीपपत्तनम्॥ कल्पानिलघनक्षोभकृतपर्वतकुट्टनम्॥ ११ ॥ ग्रहताराणगणैरुग्रैर्व्यग्रैर्विग्रहदुर्ग्रहैः॥ पतद्भिर्द्विगुणालातलतामावर्त्तपातिभिः॥ १२ ॥ आवहोत्थजलाद्रींद्रसंघट्टास्फोटघट्टितम् ॥ महाप्रलयपर्यस्तपर्वतप्रांतकुट्टिमम् ॥ १३ ॥ घनसीकृतबाष्पाभ्रैःकल्पाभ्रैरपिमेदुरैः ॥ अंधीकृतार्कजालांशुतमोनिविडमंथरम्॥ १४ ॥

ध्वनिस्तत्कारैःसार्द्रैर्धनैः ॥ आसाराणांविसारिजयघोषणंतूर्यमुन्नमदुद्यच्छदित्युत्प्रेक्षा ॥४ ॥ पंचविधाभ्रवृंदवदित्यर्थः ॥५॥६॥ प्रविघट्टनैर्जडीभूतत्वगाद्यक्षकम्॥ टंकारैर्जडीभूतश्रुतिवधिरीकृतश्रोत्रम् ॥७॥ कल्पवल्लीनांकर्षणैर्विलेखनैर्विदारणैरितियावत् ॥ ८ ॥ तरंगिकाएकैकतरंगप्राया ॥९॥ तमालपत्राधस्थानांपुष्पगुच्छानांयाउपमासैवार्काणामितितत्समोपमैः॥ आलीढपीठंआस्वादिताधारप्रायंकल्पाभ्रमंडलंयत्र ॥ अविधनानामर्काणांतदास्वादकत्वादिति ॥१०॥११॥ विग्रहेणपरस्परप्रहारेणदुर्ग्रहैर्दुर्निरोधैःअतएवआवर्त्तपातिभिरतेपतद्भिश्चद्विगुणांभूमिष्ठालातेभ्योद्विगुणामलातलतांनभस्यपिकुर्वदितिशेषः ॥ १२॥ आसमंताद्वहतीत्यावहःप्रचंडपवनस्तदुत्थानांजलाद्रींद्रप्रायाणांबृहत्तरंगाणांसंघट्टैःस्फुटंतीतिस्फोटाःपर्वतायत्र ॥१३॥ घनानिसीकृतानिसीकरायेषुतथाविधैर्बाष्पाभ्रैः ॥१४॥

॥ १५ ॥ ऊर्मिभ्यउद्यद्भिर्हर्म्यैमभिरूर्ध्वंप्रक्षिप्तैरुपलैश्छिन्नाघनामेघायैस्तथाविधैर्घस्मरमारुतैःप्रलयवायुभिर्भग्नदिक्तटम् ॥ १६ ॥ ब्रह्मांडकुड्यलक्षणस्यक्रोडापस्यउरोदेशस्य कुट्टकैरास्फालकैःअतएवकटुटांकृतैःकल्पाभ्रकल्पविटपलक्षणकरवाङ्कास्फोटैःपरस्परघट्टितैकार्णवंआरटिसोरस्ताडंरुददितियावत् ॥ १७ ॥ किंचोड्डीनैःस्वर्गादिलोकत्रयखं डखंडैर्गुरुतारतम्यक्रमेणयथास्वभावमंतरिक्षेतिष्ठद्भिःअधोभागेवृष्टिजलासंस्पर्शात्संभावितजलभागस्यवायुनाशोषणाच्चमरुवन्निर्जलंवुध्नंमूलमधोभागोयेषांतैः ॥ १८ ॥ स मानविपत्कत्वेपिपरस्परंवैरिदृष्ट्यैवान्योन्यंदर्शनात्परस्परवधायभ्रामितायुधम् ॥ तथाचविनाज्ञानंविपत्सहस्रैरपिनवैरदृष्टिरज्ञानांशाम्यतीतिसैवविपज्ञोपिमहाविपदितिध्वनि

वीशीर्णवसुधापीठखंडखंडैर्गलत्तटैः॥ उह्यमानैर्लुठच्छैलपतनैःसंकटार्णवम्॥१५॥ऊर्म्युद्यदुपलच्छिन्नघनैर्घस्मरमारुतैः॥ समुद्रघोषैर्निर्घातगंभीरैर्भग्नदिक्तटम्॥१६॥ ब्रह्मांडकुड्यक्रोडाग्रकुट्टकैःकटुटांकृतैः॥ कल्पाभ्रविटपास्फोटैर्घट्टितैकार्णवारटि॥१७॥ स्वर्गपातालभूर्लोकखंडखंडैर्विमिश्रितैः॥ यथास्वभावंतिष्ठद्भिर्मरुबुध्नैर्वृतांवरम्॥१८॥मृतार्द्धमृतदग्धार्द्धदग्धांगैर्देवदानवैः॥ अन्योन्यदर्शनाद्द्वातवेल्लितैर्भ्रामितायुधम्॥१९॥ कल्पांतपवनोद्भ्रांतैर्लोकांतरजरत्तृणैः॥ आरब्धार्जुनवाताख्यास्तंभमुद्भूतभस्मभिः॥२०॥ उह्यमानशिलाजालप्रहारविलुठत्तटैः॥ पतल्लोकांतरैःस्फारदुष्कालकटुटांकृतम्॥२१॥ वातोद्व्यूहगिरिव्रातगुहाभांकारभासुरम्॥ पतद्भिर्विहितावर्त्तलोकपालपुरीपुरैः॥ २२ ॥ कृतकर्कशनिर्ह्रादैरसुरैरिवमारुतैः ॥ उह्यमानवनव्यूहप्रोतवातायनैर्वृतम्॥ २३ ॥ पुरमंडलदैत्याग्निसुरनागविवस्वताम्॥ निकुरंवंदधद्व्योम्निमशकानामिवोच्चयम् ॥ २४ ॥ नश्यन्नगवराभोगैर्भोगैर्भग्नसुरालयैः॥ आवर्त्तघर्घरारावैर्जलमूर्ध्वमधोनलम्॥ २५॥ कुर्वज्जलाद्रिनिष्पेषैर्दिक्पालपुरकुट्टनम्॥ निपतद्देवदैत्येंद्रसिद्धगंधर्वपत्तनम्॥ २६॥ कुट्टनंपर्वतादीनांप्रशांतांगाररूपिणाम्॥ वातैःकुर्वत्पदार्थानामसारंरजसामिव॥२७॥ पुराण्यमरदैत्यानांभ्रमद्भित्तीनिशातयत्॥ रत्नैःखणखणायंतिपयांसीवपयस्वताम्॥ २८॥

तम् ॥ १९ ॥ अर्जुनवातइतिवातरोगविशेषस्यनाम ॥ तेनहिरोगेणरोगिणोनभस्युड्डीयभ्राम्यंते ॥ ननुतस्यरोगस्यार्जुनवर्णतास्तीतितन्नामनिरालंवनंमाभूदितिलोकांतरजरत्तृ णैःस्वोद्भूतभस्मभिर्वातंधवलीकृत्यआरब्धःअर्जुनवाताख्यायाःस्तंभःप्रतिष्ठासालंवनतायस्मिन्नित्युत्प्रेक्षा ॥ २० ॥ स्फारंदुष्कालप्रयुक्तंकटुटांकृतंयस्मिन् ॥ २१ ॥ वातस्योद्व्यूहेनसंघट्टनेनगिरिव्रातगुहानांभांकारैर्भासुरम् ॥ २२ ॥ २३ ॥ २४ ॥ आवर्त्तःपरावर्त्तनंउत्पाट्यद्रोणवद्वैपरीत्येनधारणंतेनघर्घरारावैरूर्ध्वंवृष्टिजलमधोनिरावाधंदवानलंदधदितिशेषः ॥ २५ ॥ २६ ॥ पर्वतादीनांपदार्थानांरजसामिवकुट्टनंकुर्वन् ॥ २७ ॥ पयस्वतांमेघानांपयांसीवरत्नैःखणखणायंतिअमरदैत्यानांपुराणिशातयत् ॥ २८ ॥

पतंतोलोकाजनायेभ्यस्तथाविधैर्लोकसप्तकमंदिरैःपूर्णांवरम् ॥ २९ ॥ ३० ॥ आकीर्णमित्यंतानांसर्वेषांपदानांसर्गाद्यश्लोकस्थेद्भूवास्मिन्जगत्त्रयमित्यत्रान्वयः ॥३१॥ वाराद्दृष्टिजलेन ॥ ३२ ॥ ३३ ॥ चलंतःसज्जीवाईपज्जीवनयुक्ताभूतकाःप्राणिनोयत्र ॥ अनुकंपायांकन् ॥ ३४ ॥ ३५ ॥ पतंतःगिरिशृंगाणीवस्थूलानांधारौघाणांनिर्भराय स्मिन् ॥ ३६ ॥ ३७ ॥ तत्त्वज्ञानेद्धचिद्व्योमक्षणदाह्यस्यास्यजगतःप्रलयेचिरेणनाशोनाश्चर्यपदमित्याशयेनाह ॥ अत्यंतेति ॥ तत्त्वज्ञानदौर्लभ्यद्योतनायात्यंतदूरेत्युक्तिः॥चि

पूर्णांवरंपतल्लोकलोकसप्तकमंदिरैः॥ चक्रावर्त्याभ्रमद्रूपैरमरैःसागरैरिव ॥ २९ ॥ डीनोड्डीनैःपरिवृतंविचलद्वातवेल्लितैः॥ दग्धादग्धैःपदार्थैःखेशीर्णपर्णगणैरिव ॥ ३० ॥ हेमस्फटिकवैदूर्यसुसारमणिमंदिरैः॥ दिवःपतद्भिराकीर्णमुद्यज्झणझणस्वनैः॥ ३१ ॥ उत्पेतुर्दूरमभ्रस्माद्व्द्राःपेतुर्वारापुरोत्कराः॥ उन्ममज्जुस्तरंगौघाममज्जुर्भूतलाद्रयः॥ ३२ ॥ आवर्त्तघर्घरारावामिथोविदलनोद्यताः॥ जुघूर्णुरर्णवाकीर्णपर्णवत्प्रौढपर्वताः॥ ३३ ॥ क्रंदच्छिष्टामरगणंचलत्सज्जीवभूतकम्॥ भ्रमत्केतुशतोत्पातंदुष्प्रेक्ष्यमभवज्जगत्॥ ३४ ॥ स्मृताद्वंस्मृतयाभूतसंतत्यानिललोलया॥ अभून्नीरंध्रमाकाशंजीर्णपर्णसवर्णया॥ ३५॥ जगदासीत्पतच्छृंगस्थूलधारौघनिर्भरम्॥ वहद्दहद्गिरिपुरवातपूर्णसरिच्छतम्॥ ३६॥ शाम्यच्छमशमाशब्दशतशाखहुताशनम्॥ चलाब्धिवलनांदोललोलशैललसत्तटम्॥३७॥ तृणराशिसरिन्न्यायमिश्रद्वीपार्णवोल्कटम्॥ अत्यंतदूरचिद्व्योमक्षणज्वालासहावनम्॥३८॥ वर्षशाम्यद्धुताशोत्थभस्मामोदपतत्सुरम्॥ भूतपूर्वजगद्भूतंपरिविस्मृतसर्गकम्॥ ३९ ॥ निरर्गलोल्लसन्नादंसर्गलोपशमक्रमम्॥ सर्गलोपोल्लसच्छेषंसर्गलोपविवर्जितम्॥ ४० ॥ अनारतविपर्यासकारिमारुतनिर्वृतम्॥ वीजराशिरिवाजस्रंपूर्य्यमाणंपुनःपुनः॥ ४१ ॥ उल्मुकान्योन्यनिष्पेषवह्निचूर्णसुवर्णजैः॥ रजोभिर्विवृतैर्हैमकुट्टिमाकाशकोटरम्॥ ४२ ॥ भूमंडलवृहत्खंडैर्भ्रष्टैःसद्वीपसागरैः॥ पूर्णसप्तमपातालंलुठत्पातालमंडलैः॥ ४३॥ आसममसुतालांतमामहीतलपर्वतम्॥ आव्योमैकार्णवीभूतंपूर्णप्रलयवायुभिः॥ ४४॥ एकार्णवोथववृधेशनैःशीघ्रंसरिच्छतैः॥ भुवनेजलकल्लोलैःकोपोमूर्खाशयेयथा ॥ ४५ ॥ मुसलोपमयापूर्वंततःस्तंभनिभांगया॥ ततस्तालद्रुमाकारधारयासारसारया॥ ४६॥

द्व्योम्निक्षणज्वालांनसहतेतथाविधमवनंस्थितिर्यस्य ॥ ३८ ॥ पूर्वंभूतंभूतपूर्वंजगद्भूतंचराचरंयत्र ॥ सांप्रतंतुपरिविस्मृतसर्गकम् ॥ ३९ ॥ सर्गस्यलोपेनशमक्रमोयत्र ॥ परमार्थतःसर्गलोपेउल्लसतिशेषःपरमात्मायत्र ॥ सर्गलोपाभ्यांवस्तुतोविवर्जितम्॥ ४० ॥ सदैववासर्गतल्लोपविशिष्टमित्याशयेनाह ॥ अनारतेति ॥ ४१ ॥ हेमकुट्टिममिवआकाशकोटरंयत्र ॥ ४२ ॥ लुठंत्यन्यपातालमंडलानियेषुतथाविधैर्भूमंडलवृहत्खंडैः ॥ ४३ ॥ अभिव्याप्तावाङः ॥ सप्तमंसुतलमेवसुतालंपातालम् ॥ छांदसोदीर्घः ॥ ४४ ॥ ४५॥ आसारःसंपातस्तत्सारया ॥ ४६ ॥

ततस्तालपरिमाणधारापातानंतरंनदीप्रवाहस्यताम्रपर्ण्यादौप्रसिद्धोमलयाद्यग्रप्रावउग्रोजलपातस्तदेकपातया ॥ एकशब्दःसदृशपरः ॥ सप्तद्वीपविशिष्टसप्तमहीपीठसमामेदुरामेघायस्याउत्सृष्टारस्तया ॥ ४७ ॥ गाढंदुःखकोटिनिबिडमापत्पदंसर्वविपत्स्थानमज्ञानंयथा ॥ ४८ ॥ कुत्सिताभिर्बालस्यविस्फोटनलीलाभिर्विलोलंबिल्वफलमिवविधुरंविनष्टमभूदित्यर्थः ॥ ४९ ॥ ॥ इतिश्रीवासिष्ठम०रा०तात्पर्यप्रकाशेनिर्वा०उत्तरार्द्धेसप्तसप्ततितमःसर्गः ॥ ७७ ॥ ॥ ७ ॥ ॥ नदीप्रमाणैरासारैरभितःपूरयन्नभः ॥ एकार्णवःप्रवृद्धोत्रविस्तरेणोपवर्ण्यते ॥ १ ॥ जडवेगोजलवेगः ॥ १ ॥ व्योमगंगाप्रवाहेषुपतितायामेघधारास्तत्पातेनविवर्धितः ॥ विवर्जितैरितिपाठेविवर्जितैर्विसर्जि

ततोनदीप्रवाहोग्रजलपातैकपातया ॥ सप्तद्वीपमहीपीठसममेदुरमेघया ॥४७॥ वह्निर्विदाहरुद्दृष्ट्याशममभ्याययौतथा ॥ शास्त्रसज्जनसंगत्यागाढमापत्पदंयथा ॥ ४८ ॥ ऊर्ध्वाधरस्थपरिवृत्तपदार्थजातमंतःकणैःखणखणायितशैलमज्जम् ॥ ब्रह्मांडकोटरमभूद्विधुरंकुबाललीलाविलोलमिवबिल्वफलंविशुद्धम् ॥ ४९ ॥ ॥ इ०वा०वा०दे०मो०नि०उ०पाषा०पुष्करावर्त्तवृष्टिविसंष्ठुलजगद्वर्णनंनामसप्तसप्ततितमःसर्गः ॥ ७७ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ वातवर्षहिमोत्पातपातभग्नेधरातले ॥ जडवेगोगमद्वृद्धिंकलाविवमहीपतिः ॥ १ ॥ गंगाप्रवाहपतितधारापातविवर्धितः ॥ सरित्सहस्रैःसहसामेरुमंदरभासुरैः ॥ २ ॥ आदित्यपथसंप्राप्तकंदरोजडमंथरः ॥ एकार्णवःसमुच्छूनआसीन्मूर्खइवेश्वरः ॥ ३ ॥ विपुलावर्त्तवृत्त्यात्तविवृत्ताद्रिजरत्तृणः ॥ स्फुरत्तुंगतरंगाग्रनिगीर्णादित्यमंडलः ॥ ४ ॥ मेरुमंदरकैलासविंध्यसह्यजलेचरः ॥ गलितावनिपंकांतर्लीनव्यालमृणालकः ॥ ५ ॥ अर्धदग्धद्रुमवनव्यूहशैवलसंकटः ॥ त्रैलोक्यभस्मसंसृष्टआसीत्कर्दमकुत्सितः ॥ ६ ॥ नभःस्तंभवृहद्भानोत्तालभास्करपुष्करः ॥ धाराजालमहांभोदविलीननलिनीदलः ॥ ७ ॥ डिंडीरपर्वतप्रांतनदद्दुन्मत्तवारिदः ॥ भ्रमदिंद्रानिलार्केंदुपुरपत्तनपूरणैः ॥ ८ ॥ काष्ठवल्लोह्यमाणोग्रसुरासुरजनोत्करः ॥ शनैःक्रमोच्छूनतयालिहन्नादित्यमंडलम् ॥ ९ ॥ तरत्तारतरारावधाराधरसमुद्भवैः ॥ बुद्बुदैःपरिसंदिग्धप्रोह्यमाणमहाचलः ॥ १० ॥

तैःसरित्सहस्रैःसमुच्छूनः ॥ सहसोत्थितैर्मेरुवन्मंदरवच्चभासुरैस्तरंगैःआदित्यपथसंप्राप्ताःप्रवाह्यमाणगिरिकंदरायस्यतथाविधएकार्णवआसीदितिद्वयोरन्वयः ॥ २ ॥ ३ ॥ तमेवैकार्णवमासर्गसमाप्तेर्विशिनष्टि ॥ विपुलेत्यादिना ॥ विपुलानामावर्त्तानांवृत्त्याआत्तानिअतएवविवृत्तानिभ्राम्यमाणानिअद्रिजरत्तृणानियस्मिन् ॥ ४ ॥ सह्यांताःजलेचराइवयस्य ॥ तमेवार्णवंपद्माकरत्वेनसंभावयति ॥ गलितेत्यादिना ॥ गलितायाअवनिस्तत्पंकांतर्निर्लीनाःशेषादिव्यालमृणालकायस्य ॥ ५ ॥ ६ ॥ नभोलक्षणेपुस्तंभेपुनालेपुवृहत्सुकर्णिकासुधानाभिर्बीजभूतैःकिरणैरुत्तालाभास्कराद्वादशादित्याएवपुष्कराणिपद्मानियस्मिन् ॥ धाराजालामहांभोदाएवजलोपरिसंलग्नत्वाद्विलीनप्रायाणिनलिनीदलानियस्मिन् ॥ ७ ॥ ८ ॥ ९ ॥ किमेतेबुद्बुदाउतमहाचलाइतिपरितःसंदिग्धाःप्रोह्यमाणामहाचलायस्मिन् ॥ १० ॥

उत्तालैःरलयोरभेदादुद्धतास्ताराःकनीनिकायेषांतथाविधैस्तैःसमेघबुद्धुदैरनाधारैःस्वाधारमुखमात्ररहितैर्नेत्रैःअपरंसन्निहितंवारिदंपश्यन्नित्युत्प्रेक्षा ॥ ११ ॥ घोषैर्घुंघुमितंमुखरीकृतमंबरंयेन ॥ एकस्मिन्प्रवाहेमहितामग्नाःसव्योमकुलपर्वतायस्य ॥१२॥१३॥ तिर्यग्विततानिऊर्ध्वमुन्नतानिचयोजनलक्षाणिस्वस्मिन्कुर्वन् ॥१४॥ तृणवद्दोलांदोलनंकुर्वद्भिरद्रिभिरुपलाघातैर्भग्नानिभास्करमंडलानियेन ॥१५॥ किंचशून्यब्रह्मांडलक्षणेविपुलेजलसंघातस्यकुलायकेनीडेस्थितान्नीलान्अचलाःपर्वतास्तल्लक्षणान्काकोलान्द्रोणकाकान्बृहन्मद्गूनितियावत् ॥ सलिललक्षणैर्जालकैरानायैर्जङ्गन्बद्ध्वाहरन्निव ॥ हरतेःशतुश्छांदसोलिड्वद्भावः ॥१६ ॥ अचलकाकोलानेवद्वाभ्यांविशेषणाभ्यांविशिनष्टि ॥ मृतेति ॥ इवेतिपूर्वश्लोकान्वयि॥१७॥फेनलक्षणानागद्रीणांतटिषुकोटिषुशिखरेषुच ॥ दधत्वहन् ॥१८॥विपुलोयोयतनःप्रसिद्धआकाशःअधोमुखीकृतरजतकटाहवदृश्यमानस्तद्वद्विपुलानितिबुद्बुदांतर्निविष्टप्राणिदृष्ट्योक्तिः ॥ लोचनानीववासवइतिबहिष्ठदृष्ट्याउपमा ॥ १९ ॥ नद्यइवधारायेषांतान् ॥ २० ॥ २१ ॥ अद्रयएवकटकानिवलयायेषाम् ॥ अद्रिकटककटकैरितिवार्थः ॥ श्वमुखःस्वरमुखइतिवद्वृत्तिविषयेद्रिपदस्यतत्कटकपरत्वात् ॥ २२ ॥ नविद्यतेधरायस्य ॥ २३ ॥ २४ ॥ दलतिविशरणशीलेस्वर्गखंडेक्रंदतोनभश्चरादेवतालक्षणाहंसादयोयस्यअतएवपद्मिनीसुंदरांतरः ॥ २५ ॥

भ्रमद्बुद्बुदविश्रांतभ्रांतकल्पांतवारिदः ॥ उत्तालैस्तैरनाधारैःपश्यन्नपरवारिदम् ॥ ११ ॥ महाप्रवाहवार्योघघोषघुंघुमितांबरः ॥ एकप्रवाहमहितसव्योमकुलपर्वतः ॥ १२ ॥ चंडवातकृतापूर्वजलौघकुलपर्वतैः ॥ महाघुरघुरारावघर्घरोग्रमहारयः ॥१३॥ ब्रह्मांडखंडसंघट्टपरावृत्तिभिरुद्धतः ॥ कुर्वन्योजनलक्षाणिविततान्युन्नतानिच ॥ १४ ॥ तृणैरिवतरंगेषुदोलांदोलनमद्रिभिः ॥ कुर्वद्भिरुपलाघातभग्नभास्करमंडलः ॥ १५ ॥ शून्यब्रह्मांडविपुलजलघातकुलायके ॥ नीलानचलकाकोलान्जङ्गन्सलिलजालकैः ॥ १६ ॥ मृतामृतमहद्भूतमज्जनोन्मज्जनाकुलान् ॥ तरंगमकरावर्तप्रतिबिंबान्वितानिव ॥ १७ ॥ मृतशिष्टान्पुरभ्रष्टान्फेनाद्रितटिकोटिषु ॥ दधज्जलबलश्रांतांस्त्रिदशान्मशकानिव ॥ १८ ॥ विपुलायतनाकाशविपुलानंबुबुद्बुदान् ॥ सहस्रसंख्यान्कलयन्लोचनानीववासवः ॥ १९ ॥ शरद्व्योमसमाभोगैर्वलद्भिर्बुद्बुदेक्षणैः ॥ पश्यन्निवनदीधारान्मेघानाताम्रपूरकान् ॥ २० ॥ पुष्करावर्तकाभ्राणांवद्भुभिर्वीचिमंडलैः ॥ कुर्वन्नालिंगनानीवसपक्षाद्रिवदुत्थितैः ॥ २१ ॥ त्रिजगद्ग्रासंतृप्तःप्रगायन्निवघर्घरैः ॥ स्वैर्नृत्यन्निवचोग्राद्रिकटकैर्वीचिदोर्द्रुमैः ॥ २२ ॥ नदीधाराधरैरुर्द्धमध्येदग्धैर्धराधरैः ॥ अधोधराधरैर्नागैरधरःपंकगैर्वृतः ॥२३॥ धारात्रिपथगापूरैर्निपतद्भिर्निरंतरम् ॥ मग्नोन्मग्नोह्यमानाद्रिश्रृंगडिंडीरबुद्बुदः ॥ २४ ॥ उह्यमानदलत्स्वर्गखंडक्रंदन्नभश्चरः ॥ वहद्विद्याधरीवृंदपद्मिनीसुंदरांतरः ॥ २५ ॥

१ अस्यक्रस्वांतत्वंविचारणीयम् ॥

॥२६॥ वीचीनांवशोनभवतीत्यवीचिवशोपिकश्चिन्नासीत् ॥ हंतेतिखेदे ॥२७॥ स्पष्टम् ॥२८॥ ॥ इतिश्रीवा० तात्पर्यप्रकाशे निर्वाण० उत्तरार्द्धेअष्टसप्ततितमः सर्गः ॥ ७८ ॥
सर्पिदेवगणस्यात्रधातुर्निर्वाणमीर्यते ॥ स्वमस्येवप्रबोधेनबाधस्तत्त्वसमर्थ्यते ॥ १ ॥ अथएतस्मिन्नंतरेतपोलोकपर्यंतमेकार्णववारिपूरणोत्तरकालंसत्यलोकसंनिहितव्योमस्थो
हंमहालोकेप्रकाशबहुलेब्रह्मलोकेचक्षुःअत्यजंदर्शनायप्रेरितवानितियावत् ॥ १ ॥ प्रधानःपरिवारःप्राणाद्युपासनाभिःसालोक्यादिमुक्तिप्राप्तोब्रह्मणासहविदेहकैवल्यंविवि
क्षुर्जीवन्मुक्तपरिवारस्तद्वान् ॥ तथाचोक्तम् ॥ ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेकृतात्मानःप्रविशंतिपरंपदमिति ॥ २ ॥ देवानांशक्रादीनामाधिकारिकदेवानांतादृश

एकार्णवपयःपूरैर्घर्घरारावरंहसि ॥ त्रैलोक्यखंडसंहारेप्रोत्थमाणेमहांभसि ॥ २६ ॥ नासीत्कश्चित्परित्राताहंतावीचिवशोपिच ॥ श
क्रोतिकःपरित्रातुंकालेनकवलीकृतम् ॥ २७ ॥ नाकाशमासीन्नदिगंतआसीदधोपिनासीन्नतदूर्ध्वमासीत् ॥ भूतंनआसीन्नचसर्गआ
सीदासीत्परंकेवलमेववारि ॥ २८ ॥ ॥ इत्यार्षेवा० वा० दे० मो० नि० उ० पापा० एकार्णववर्णनंनामअष्टसप्ततितमःसर्गः ॥ ७८ ॥
श्रीवसिष्ठउवाच ॥ ॥ एतस्मिन्नंतरेचक्षुर्व्योमस्थोहमथात्यजम् ॥ ब्रह्मलोकेमहालोकेप्रभातेर्कप्रभामिव ॥ १ ॥ यावद्दृष्टोमयात
त्रशैलादिवविनिर्मितः ॥ परमेष्ठीसमाधिस्थःप्रधानपरिवारवान् ॥ २ ॥ समूहश्चैवदेवानांमुनीनांभावितात्मनाम् ॥ शुक्रोबृहस्पति
श्चैवशक्रोवैश्रवणोयमः ॥ ३ ॥ सोमोथवरुणोग्निश्चतथान्येपिसुरर्षयः ॥ देवगंधर्वसिद्धानांसाध्यानांचविनायकाः ॥ ४ ॥ लिपिक
र्मार्पिताकाराःसर्वेध्यानपरायणाः ॥ बद्धपद्मासनास्तत्रनिर्जीवाइवसंस्थिताः ॥ ५ ॥ अथतेद्वादशादित्यास्तमेवोद्देशमागताः ॥ ब
द्धपद्मासनास्तस्थुस्तथैवाशुयथैवते ॥ ६ ॥ ततोमुहूर्त्तमात्रेणदृष्टवानहमब्जजम् ॥ पुरोविनिद्रतांयातःस्वप्नदृष्टमिवाग्रगम् ॥ ७ ॥ ब्रह्म
लोकजनंसर्वंमहतामिववासनाम् ॥ नापश्यंस्वप्ननगरंबुध्यमानइवाग्रगम् ॥ ८ ॥ अरण्यशून्यमेवासीत्तद्ब्रह्मंमननंतदा ॥ कठिनाकांड
विध्वस्तंपृथिव्यामिवपत्तनम् ॥ ९ ॥

शुक्रादिमुनीनांचसमूहस्तत्रमयादृष्टइत्यन्वयः ॥ तानेवकांश्चिद्दवयुत्याह ॥ शुक्रइत्यादिना ॥ ३ ॥ विनायकानियंतारःस्वामिनइतियावत् ॥ ४ ॥ सर्वेनिर्जीवाइवसंस्थिताम
यादृष्टाइतिविपरिणामेनानुषंगः ॥ ५ ॥ तदनंतरंयद्वृत्तंतदाह ॥ अथेत्यादिना ॥ ६ ॥ तस्यधातुर्द्वितीयपरार्धान्त्यमुहूर्त्तोमीयतेयेनचरमक्षणेनसमुहूर्त्तमात्रस्तेनतदीयचरमसाक्षा
त्कारबोधेद्धब्रह्मचैतन्येनतदविद्याकल्पिततद्देहसहिततदीयसर्वप्रपंचबाधाद्विनिद्रतांप्रबोधंप्राप्तःपुरुषःस्वप्नदृष्टंस्वापगंस्वाप्नपदार्थजातमिवबाधितमात्ममात्रपरिशेषमपश्यंतदेवा
स्यविदेहकैवल्यमित्यर्थः ॥ ७ ॥ प्रागुक्ततत्परिवारजनेष्वप्येवमेवकैवल्यंवृत्तमित्याह ॥ ब्रह्मलोकजनमिति ॥ महतांतत्त्वज्ञानांज्ञानबाधितांपूर्ववासनामिवेत्यपरोदृष्टांतः ॥
शिष्टंप्राग्वत् ॥ ८ ॥ तदातदीयचरमसाक्षात्कारक्षणेतद्ब्रह्मनगरंब्रह्मांडंवाअरण्यमिवशून्यंगृहजनादिरहितमेवासीत् ॥ कठिनेनाकांडेनाकस्मिकेननाशहेतुनाविध्वस्तम् ॥ ९ ॥

१ ब्रह्मसंकल्पसिद्धम्

तेमुनिदेवादयोपिसर्वेतथाताद्दशाःशून्यमेवासन्निति विपरिणामेनान्वयः ॥ यतस्तेनक्वापिगताइतिशेषः ॥ १० ॥ नामरूपात्मनाशून्यभावेपिस्वरूपेणतुनिर्वाणात्मतयास्थिताए वेत्यात्मानुभवेनदर्शयति ॥ ज्ञातमिति ॥ अवधानेनप्रणिधानेन ॥ ११ ॥ सैवतेषांवासनाकल्पितरूपापगमेनवास्तवस्वरूपावाप्तिरित्याशयेनाह ॥ वासनायामिति ॥१२॥ तदे वोपपादयति ॥ आकाशात्मैवेत्यादिना ॥ बोधवतःप्रबोधशालिनः ॥ १३ ॥ अंतरिक्षगतःआकाशगमनवान् ॥ १४ ॥ स्वप्नाज्जागरेस्वाप्नाधिभौतिकमात्रबाधस्तत्त्वबोधेत्वा धिभौतिकादिदेहत्रयस्यापिबाधइतिविशेषइत्याशयेनाह ॥ जाग्रत्यपीति ॥ वासनाक्षयहेतुतत्त्वप्रबोधस्यप्रमाणजस्यजाग्रत्येवसंभवाज्जाग्रत्यपीत्युक्तिः ॥ १५ ॥ तथाचस्व प्नबाधानुभवएकांशमात्रसदृशोप्याबालप्रसिद्धत्वाद्दृष्टांतत्वेनोदाह्रियतइत्याह ॥ स्वप्नेति ॥ तस्यत्रयआवसथास्त्रयःस्वप्नाइतिश्रुतंपुराणादिषुचस्मृतम् ॥ १६ ॥ एवंस्वपरानु

सर्वएवचनक्वापितेतथाताद्दशास्तदा ॥ ऋषयोमुनयोदेवावेदाविद्याधरादयः ॥ १० ॥ ज्ञातंततोवधानेनमयानभसितिष्ठता ॥ यावन्नि र्वाणमापन्नाब्रह्मन्सर्वएवते ॥ ११ ॥ वासनायांविलीनायामदर्शनमुपागताः ॥ स्वप्नलोकाःप्रबुद्धानामिवस्वंरूपमागताः ॥ १२ ॥ आकाशात्मैवदेहोयंभातिवासनयास्फुटः ॥ तदभावात्तुनोभातिस्वप्नेबोधवतोयथा ॥ १३ ॥ अंतरिक्षगतोदेहोयथास्वप्नेविलोक्यते ॥ बोधेतद्वासनाशांतौनकिंचिदपिलक्ष्यते ॥ १४ ॥ जाग्रत्यपितथैवायंवासनायाःपरिक्षये ॥ नैवातिवाहिकोनैवलक्ष्यतेत्राधिभौतिकः ॥ १५ ॥ स्वप्नानुभवएषोत्रदृष्टांतत्वेनलक्ष्यते ॥ आबालमेतत्संसिद्धमनुभूतंश्रुतंस्मृतम् ॥ १६ ॥ अपह्नुतेचवायोपिस्वमेवानुभवंशठः ॥ स त्याज्यःकोत्यलीकेनसुप्तमुद्बोधयेत्किल ॥ १७ ॥ देहकारणकःस्वप्नोदेहाभावान्नदृश्यते ॥ इतिचेत्तदेहानांपरलोकोपिनास्तिच ॥ १८ ॥ इत्येतदभविष्यच्चेत्तच्छरीरकसंक्षये ॥ नाभविष्यदयंसर्गःसचास्त्येवचसर्वदा ॥ १९ ॥

भवसिद्धमपिस्वप्नबाधंयोपह्नुतेस्वप्नादिसर्वदृश्यसत्यतावादीसनप्रबोधनीयएवेत्याह ॥ अपह्नुतेइति ॥ अलीकेनमिषेणसुप्तंस्वापंविडंबयंतम् ॥ १७ ॥ ननुतथापिनस्वप्नदृष्टांतो युज्यतेपित्रादिदेहकारणकोह्ययंदेहःस्वप्नदेहस्तुनतथेतिस्वप्नदेहस्यात्यंतासत्वेनवैषम्यादितिचेत्तर्हियज्ञादिनाजायमानस्वर्गिदेहस्यापिदेहकारणकत्वाभावेनात्यंतासत्त्वप्रसंगा न्नास्तिकत्वमेवप्रतिवादिनांप्रसज्जेतेत्याह ॥ देहेति ॥ १८ ॥ किंचदेहाकारणकस्यदेहस्यात्यंतासत्त्वेआतिवाहिकदेहसमष्ट्यात्मनोहिरण्यगर्भस्याप्यत्यंतासत्त्वप्रसंगस्तथासति सर्गाद्यर्थक्रियाप्यलीकैवस्यादित्याह ॥ इत्येतदिति ॥ इतिएवंरीत्यात्वदुक्तमेतदसत्त्वमभविष्यच्चेत्तर्हिपूर्वसर्गप्रलयांतेसर्वशरीरसंक्षयेएतत्सर्गादिकालेशरीरहेतुकशरीराभा वादयंसर्गोपिनाभविष्यन् सचायंपरिदृश्यमानोस्त्येव ॥ एवंपूर्वपूर्वसर्गेप्येवमापादयितुंशक्यमित्याशयेनाह ॥ सर्वदेति ॥ १९ ॥

ननुतर्हिमास्तुकदापिप्रलयः अनादौसंसारेअविच्छिन्नप्रवाहाःसर्वेदेहकारणकाएवदेहाअर्थक्रियासमर्थाभविष्यंतिहिरण्यगर्भदेहस्यवापूर्वपूर्वनारायणादिदेहादुत्पत्तिःकल्पयि
ष्यते यथाचनकदाचिदनीदृशंजगदितिजैमिनीयमतंदूषयति ॥ अवयवेति ॥ क्षित्यादिभूतानांहिसावयवत्वादेवसंयोगस्यविभागावसानत्वाद्विनाशोदुर्वारः ॥ तथाचनकदाचि
दनीदृशंजगदितिमतमसंस्थितमप्रतिष्ठितमेव ॥ भूम्यादिनाशेचतुर्विधभूतग्रामशरीराणामाधाराभावेनावस्थानायोगान्नारायणदेहस्यापिसावयवत्वाद्विनाशित्वावारणादप्सु
शयानत्वप्रसिद्धेरजन्मविनाशत्वेदेहाकारणकत्वेनात्यंतासत्त्वप्रसंगाच्चेतिभावः ॥ २० ॥ अत्रप्रसंगाच्चार्वाकमतमपिनिरसितुमनुवदति ॥ नकदाचिदिति ॥ पृथिव्यादिभूतचतु
ष्टयमेवहिचतुर्विधदेहाकारेणघटपटाद्याकारेणचसंमिलज्जगत् ॥ तस्यचपृथिव्यादिभूतात्मनाकदाचिदपिनाशोनास्ति ॥ देहस्तुभूतानांमेलनेउद्भूतज्ञानेच्छादिगुणाहस्तपादाद्यव
यवसंस्थानतत्तद्भिव्यंग्याजातिरित्येवमादिकमेवतदीयोधर्मसंघातः ॥ तत्रयद्यपिज्ञप्तिर्नैकैकत्रभूतेदृश्यतेतथापिसुरारंभकेषुपिष्टतोयक्षारकिण्वादिद्रव्येषुमिलितेषुकालपाका
दिनामदशक्तिरिवदेहाकारपरिणतेषुचतुर्षुभूतेषुज्ञप्तिगुणउदेतितेनतद्गुणकोदेहएवात्मेतिहेचार्वाकत्वंवक्षिचेत् शृणु ॥ तस्योत्तरमितिशेषः ॥ २१ ॥ तर्हिसर्ववस्तूनांसंक्षयोनि

अवयवविभागात्मन्यवश्यंभाविनिक्षये ॥ नकदाचिदनित्थंतज्जगदित्यप्यसंस्थितम् ॥ २० ॥ नकदाचिज्जगन्नाशोदेहोद्भूतगुणादिक
म् ॥ मदशक्तिरिवज्ञप्तिरुदेतीतिचवक्षिचेत् ॥ २१ ॥ तत्पुराणेतिहासानांसर्वसंक्षयवादिनाम् ॥ स्मृत्यादीनांसवेदानांवैयर्थ्यमुपजायते
॥ २२ ॥ अप्रमाणतयैतस्मिन्नर्थेतेषांमहामते ॥ अन्यत्रापिप्रमाणत्वंवंध्यादावपिकिंभवेत् ॥ २३ ॥ नचैतदिष्यतेलोकेजगदुच्छेदकार
णात् ॥ अन्यच्चास्तामेतदंगममेदमपरंशृणु ॥ २४ ॥

त्यनैमित्तिकप्राकृतवैज्ञानिकाख्याश्चतुर्विधाप्रलयास्तद्वादिनामष्टादशपुराणानांभारतादीतिहासानांपारलौकिकात्महिताहितधर्माधर्मबोधकमन्वादिस्मृतीनांसदाचाराणांचवै
यर्थ्यप्रसज्जतेत्यर्थः ॥ २२ ॥ नन्वस्तुवेदपुराणादीनामप्रामाण्यमभिमतमेवचार्वाकाणामिदंत्वयाआपादितमितिचेत्तत्राह ॥ अप्रमाणतयेति ॥ निर्दोषाणामेतेषांवेदपुराणादी
नामेतस्मिन्प्रलयधर्माधर्मात्मतत्त्वलक्षणेअर्थेअप्रामाण्येसतिभोगलांपट्यलोभद्वेषादिदोषसहस्रदुष्टेअन्यत्रत्वद्वाक्येपिइयंवंध्याशतंपुत्रानसूतेत्यादिवाक्यतुल्येकिंप्रामाण्यंभ
वेत् ॥ संभावनायांलिङ् ॥ तत्संभावनापिदुर्लभेत्यर्थः ॥ २३ ॥ नचैतत्त्वदुक्तंवेदपुराणादीनामप्रामाण्यंलोकेप्रेक्षावद्भिरिष्यतेअंगीक्रियते ॥ कृतहानाकृताभ्यागमादिदोषेणनिर्बी
जप्रयोजनसर्गाद्यसंभवेनचजगदुच्छेदप्रसंगात् ॥ किंचदेहात्मवादेकिमवयवाःसर्वेप्यात्मानउतावयव्येव ॥ आद्ये बहूनांचेतनानांसदैकमत्यनियमाभावेनवैमत्येदेहोन्मथनप्र
संगः ॥ द्वितीयेएकस्मिन्हस्ताद्येकावयवेअवयविनाशाज्जीवनाभावप्रसंगइत्याद्यन्यच्चदूषणसहस्रमस्त्येवेत्यास्तामेतत् ॥ एतेनहेअंगत्वयाकिण्वपिष्टजलादिसंघातेमदिरायांमदश
क्तिरिवकायाकारपरिणतभूतसंघातेज्ञप्तिगुणउत्पद्यतइतियदुक्तंतदपिदत्तोत्तरमेव ॥ तत्रइदमपरंदूषणंवक्ष्यमाणंशृण्वित्यर्थः ॥ २४ ॥

ज्ञानेज्ञानगुणेमदशक्त्यात्मनिमदशक्तिरिवआत्मास्वभावोयस्यतथाविधेअभ्युपगम्यमानेगुणिनोदेहस्यनाशेगुणस्याप्यवश्यनाशाद्देशांतरेषुप्रमृतानांजीवानांदेहस्योच्छेदात्पि
शाचादिदेहांतरेणस्वदेशागमनंपरशरीरावेशेनप्राक्तनस्वजनादिप्रत्यभिज्ञासंभाषणाद्यर्थक्रियाचयालोकेप्रसिद्धासानसिध्यति ॥२५॥ अथयदिभ्रयाःसापिशाचादिकल्पनापि
मुधाभ्रांतिरेव पिशाचानामप्रत्यक्षत्वाच्चार्वाकमतेप्रत्यक्षातिरिक्तप्रमाणाभावात् ॥ नहिप्रत्यक्षातिरिक्तंप्रमाणंसंभवति ॥ शतशोदृष्टसहचारेष्वपिपार्थिवत्वलोहलेख्यत्वादिषु
वज्रमण्यादौव्यभिचारदर्शनात् ॥ उत्पातादिकालांतरेगवादौखरादिप्रसूतिदर्शनाद्देवताप्रतिमादिभ्यश्चविनापिवह्निंधूमोद्गमदर्शनात्सर्वत्रलिंगेषुदेशांतरेकालांतरेचव्यभिचार
शंकायावारयितुमशक्यत्वेनानुमानप्रामाण्यायोगात् ॥ कृत्स्नैकदेशसादृश्यविकल्पनेउपमानप्रामाण्यासिद्धेर्मानांतरामूलकशब्देषुलोकेअर्थसिद्धिनियमादर्शनादन्यशब्दा
नामनुवादित्वाच्चशब्दप्रामाण्यायोगादर्थापत्त्यनुपलब्ध्योश्चव्यतिरेकव्याप्त्युपजीविन्योरनुमानसमानयोगक्षेमत्वात्संभवैतिह्ययोःसंभावनामात्रत्वादनुमानादौचसंभावनास्वेव
प्रामाण्याभिमानात्प्रवृत्तिसिद्धेः संदिग्धेपिफलेअर्थातुराणांप्रवृत्तिनियमदर्शनेनार्थनिश्चयस्यप्रवृत्त्यनंगत्वाच्चसर्वव्यवहारोपपत्तेः ॥ किंचपिशाचग्रस्तस्यपिशाचवाग्व्यवहा
रोपियावद्देहमेवदृश्यतेनतुतन्मरणे ॥ अतस्तद्देहस्यैवसान्निपातिकभ्रांतिरिवपिशाचग्रस्तोहमितिवृथाभ्रांतिरितिचेत् तत्त्वदुक्तंसर्वंनामशब्दजातंमुधाव्यर्थमेव ॥ स्वोक्त्यैव
व्याहतत्वात् ॥ नहिप्रत्यक्षातिरिक्तस्यसर्वस्याप्रमाणत्वेचार्वाकानांवाक्यंप्रमाणंभवति ॥ तस्यापिप्रत्यक्षातिरिक्तत्वात् ॥ नचानुमानादीनामप्रामाण्येत्वयास्वोक्तोर्थोयुक्ति

**मदशक्त्यात्मनिज्ञानेदृष्टादेशांतरेषुया ॥ प्रमृतानांपिशाचादिदेहतासानसिद्ध्यति ॥२५॥ अथसापिमुधाभ्रांतिर्यावद्देहंप्रदृश्यते ॥ इतिचे
त्तन्मुधानामसत्यमित्येववोभवेत् ॥ २६ ॥ एवंचेत्तत्परोलोकःसत्स्वर्गनरकादिकम् ॥ इत्येषापिनसंविल्किंसत्यतामुपगच्छति ॥ २७ ॥
नपिशाचप्रमासत्यामदशक्तिमतोपिहि ॥ प्रतिभास्यनसत्यास्यात्परलोकात्मिकाकथम् ॥ २८ ॥**

भिःसमर्थयितुंशक्यः ॥ युक्तीनामनुमानतयातत्प्रामाण्यापत्तेः ॥ नचतेदृष्टांतोस्ति सादृश्यस्योपमानगम्यत्वात्तदप्रामाण्येतदसिद्धेः ॥ नापिस्वपक्षेअनुकूलःपरपक्षेप्रतिकूलो
वातर्कस्त्वयोद्भावयितुंशक्यः ॥ तर्कस्यान्वयव्यतिरेकव्याप्तिघटितत्वेनतदपलापिनस्तेतदप्रसिद्धेः ॥ आपत्तिव्यतिरेकयोरनुपपत्त्यनुपलब्ध्यधीनत्वेनतदभ्युपगमेअर्थापत्त्यनु
पलब्धिप्रामाण्याभ्युपगमापत्तेः ॥ प्रमाणषट्कमपिसत्यमित्येववश्चार्वाकाणामभ्युपगंतव्यंभवेदित्यर्थः ॥ २६॥ अस्त्वेवंतेनकस्तेलाभस्तमाह ॥ एवंचेदिति ॥ एवंशब्दादीनां
प्रामाण्यमभ्युपगतंचेत्तत्तस्मान्निर्दोषशब्दरूपायाःश्रुतेःप्रामाण्यावश्यंभावाद्धेतोःश्रुतिजन्यापरोलोकःस्वर्गनरकादिकंचसत्तद्वृत्त्येषापिसंवित्सत्यतांप्रामाण्यंकिंनोपगच्छति ॥
प्रामाण्यमभ्युपगतंचेत्तत्तस्मान्निर्दोषशब्दरूपायाःश्रुतेःप्रामाण्यावश्यंभावाद्धेतोःश्रुतिजन्यापरोलोकःस्वर्गनरकादिकंचसत् ...
ज्ञानानांहिस्वतएवप्रामाण्यंकारणदोषबाधकज्ञानाभ्यांक्वचिदपोद्यते ॥ नचात्रकारणेदोषोस्तिनापिस्वर्गनरकादयोनसंतीतिबाधकंप्रमाणजंज्ञानमस्तीतिभावः ॥ २७ ॥ अ
थसापिमुधाभ्रांतिरितियदुक्तंतद्दूषयति ॥ नेति ॥ पिशाचग्रस्तस्यपिशाचविषयिणीप्रमापिशाचस्यपरदेहेस्थितस्यतदनुभवसिद्धादर्शनश्रवणादिप्रमाद्रष्टॄणामस्मदादीनांपरदेहे
नपिशाचव्यवहारप्रमाचज्ञानानांस्वतःप्रामाण्यादेवलोकेसत्याप्रसिद्धासापियदिनसत्यातर्हिअस्यक्षीवस्यमदिरादेर्मदशक्तिमतोद्रव्यस्यमदशक्तिप्रतिभापिनसत्यास्यात् ॥ न
ह्यमत्तानुभवसिद्धार्थापलापिनस्तेप्रमत्तप्रतीतिसिद्धमदशक्तिःपरेणापलपनीया ॥ तथाचतवदृष्टांतासिद्ध्याज्ञानस्यभूतगुणत्वासिद्धेःपरलोकात्मिकास्वर्गनरकादिस्थितिःकथं
त्वयानिरसितुंशक्येतिशेषः ॥ २८ ॥

तेनसर्वजनप्रसिद्धेनज्ञानानांस्वतःप्रामाण्येनपिशाचोस्तीतिसंवित्सत्यार्थाचेदनुभवबलात्प्रसिद्धाम्मृतस्यापिपरलोकोस्तीतिश्रुतिजन्यायांप्रतीतौतद्बलादेवकिंनसत्यता ॥ २९ ॥ किंचपिशाचग्रस्तस्यपैशाचीज्ञप्तिर्नश्रुतिसदृशदृढतरप्रमाणजाकिंतुकाकतालीयवदाकस्मिकी तथाविधापिसास्वानुभवापलापायोगादस्तिप्रमाचेत्सकारणादृढतरश्रुत्यादिकारणसहितापरलोकार्थसंवित्तिःकथंनास्तिकुतोनप्रमेत्यर्थः ॥ ३० ॥ ननुनानुभवबलादेवार्थसत्त्वमवधारयितुंशक्यंशुक्तिरजतानुभवेपितदर्थसत्त्वादर्शनादित्याशंक्याह ॥ येति ॥ यासंवित्अंतर्यदर्थसत्त्वंयथावेत्तितदर्थसत्त्वंतथानुभवति तत्रशुक्तिरजतसंवित्स्वप्रतिभासकालिकमर्थसत्त्वमवगाहते नेदंरजतमित्यौत्तरकालिकीबाधसंवित्तुत्रैकालिकंरजतासत्त्वम् ॥ तत्राद्यसंविद्बलात्प्रातिभासिकंरजतादेःसत्त्वमस्तुद्वितीयसंविद्बलादसत्त्वंवाअनुभूतितःसिद्धम् अर्थरूपंनानुभवमंतरेणापलपितुंशक्यमित्यर्थः ॥ ३१ ॥ तत्रयदिजीवतःसतिदेहेश्रुत्यादिप्रमाणवशाद्वाम्मृतस्यअसतिदेहेस्वप्नवत्प्रतिभामात्रबलाद्वायदिपरोलोकोस्तीत्येवंमयीएवमनुभवरूपासंविदवश्यंभवेदेवतर्हितेनमरणेनकिंजीव

पिशाचोस्तीतिचेत्संवित्सत्यार्थातेनसंविदः ॥ मृतस्यास्तिपरोलोकइत्यस्यांकिंनसत्यता ॥ २९ ॥ काकतालीयवद्देहात्पैशाचीज्ञप्तिरस्तिचेत् ॥ परलोकार्थसंवित्तिःकथंनास्तिसकारणा ॥ ३० ॥ यांतर्वेत्तियथासंवित्सातथानुभवत्यलम् ॥ अस्तुसत्यमसत्यंवासिद्धमित्यनुभूतितः ॥ ३१ ॥ मृतस्यास्तिपरोलोकोविदित्येवंमयीभवेत् ॥ सतिवासतिदेहेस्मिंस्तेनकिंसदसच्चकिम् ॥ ३२ ॥ तस्मात्स्वभावःप्रथमंप्रस्फुरन्वेत्तिसंविदम् ॥ वासनाकारणंपश्चाद्बुद्धासंपश्यतिभ्रमम् ॥ ३३ ॥ तत्क्षयाच्छममायातिद्रष्टृदृश्यदृगामयः ॥ तत्सत्तायामुदेतीयंसंसृत्याख्यापिशाचिका ॥ ३४ ॥

दनुभवसिद्धंसन्मृतानुभवसिद्धमसदित्यपलप्येतकिंवाविपरीत्येन नोभयमप्यपलपितुंशक्यमितिसिद्धंश्रुत्यादिप्रामाण्यमित्यर्थः ॥ ३२ ॥ सयदिभ्रमात्कायाकारपरिणतेभ्योभूतेभ्यःसंविदुद्भवान्मृतस्यकायनाशेपारलौकिकीसंविदुद्भविष्यतीतितर्हिससंविदःशाश्वतत्वात्स्वतःसिद्धत्वात्प्रत्युततत्सिद्धिबलेनैववासनामयस्यातिवाहिकदेहस्यतत्कल्पितस्थूलदेहस्यबाह्यप्रपंचस्यचपश्चात्सिद्धेस्तदन्यस्यदृश्यसिद्धिहेतोरप्रसिद्धेर्नदेहाधीनंसंविज्जन्मेतिप्रतिवक्तव्यइतिसूचयंस्तत्प्रतिवचनमुपसंहृत्यवासनायांविलीनायामदर्शनमुपागताइत्यादिनाप्रागनुक्तांतंवासनाक्षयादेवसर्वदृश्योच्छेदंसमर्थयितुंप्रस्तौति ॥ तस्मादित्यादिना ॥ तस्माद्वेदादिप्रामाण्यस्यज्ञानानांस्वतःप्रामाण्यस्यचसिद्धत्वाज्ज्ञानस्वभावःपरमात्मास्वप्रकाशत्वात्सर्वव्यवहारात्प्रथमंस्वरूपांसंविदंस्वतएवनित्यसिद्धांवेत्तिनतद्वेदनफलमन्यतोपेक्षतेस्वौष्ण्यप्रकाशात्मतामिववह्निरित्यर्थः ॥ वासनानांकारणमुद्भवोपादानंसर्वजगद्वासनामयमातिवाहिकदेहंतुततःपश्चात्स्रष्टिजापदार्थंजक्षणेस्वरूपचिरत्वभावबलादेवबुद्ध्वाततोदेहादिभ्रमंसंपश्यतीतिनसर्वतःपूर्वसिद्धसंवित्तिसिद्धिर्देहाधीनेतिभावः ॥ ३३ ॥ अतएववासनाक्षयादेवातिवाहिकदेहक्षयद्वारासर्वानर्थक्षयःसिद्धइत्याह ॥ तत्क्षयादिति ॥ ३४ ॥

129

तत्रसर्गादौब्रह्मणआदौवासनांतर्गतप्रपंचपर्यालोचनात्माउपलंभउदेति ॥ तदैक्षतबहुस्यांप्रजायेयेतीतिश्रुतेः ॥ ततस्तस्मात्प्राक्तनजगद्वासनानांजगदात्मनाउद्भवोभवति वासना शांतौतुबीजाभावादेवजगदनुद्भवादर्थसिद्धंनिर्वाणमित्याह ॥ तदिति ॥ ३५ ॥ ननुवासनाकुतउत्पन्ना नतावद्ब्रह्मणः तस्यतदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमित्यादिश्रुतिभिःकारणत्वप्रतिषेधादसंगकूटस्थाद्वयत्वश्रुतेश्चनापिपूर्वकल्पीयजगतः तस्यप्रलयेस्वयंविनश्यतःअन्योत्पादनाशक्तेः ॥ ननुनविनश्यति स्वयमेवचरमभावविकारेणसूक्ष्मीभूयतिष्ठति तथास्थितिरेवास्यप्रलयोवासनालेतिचेन्न ॥ तथास्थितिरस्यकिंप्रलयेस्वसत्तयाउतब्रह्मसत्तया ॥ आद्येसदेवसोम्येदमग्रआसीदेकमेवाद्वितीयमित्यादिश्रुतिविरोधात्द्वितीयेस्वतोऽसत्परसत्तयातिष्ठतीतिप्रलापस्यालीकेप्यतिप्रसक्तत्वात्सद्वयेपिसृष्टिप्रलययोरविशेषापत्तेरभासमानसत्ताऽप्रसिद्धेर्नष्टंतिष्ठतीतिचव्याघातादितिचेत्सत्यम् ॥ सावासनाआदौप्रलयेपूर्वसर्गेवाउत्पन्नैवन ॥ असंगाद्वयेपरब्रह्मण्यसंभवस्यत्वयैवोक्तत्वात् ॥ तथाप्यद्वितीयब्रह्मबोधनोपायतयाशास्त्रकल्पितात्सर्गादिसमयान्निर्बीजजगदुत्पत्त्ययोगात्सा वासनापिप्राक्केनचिन्निमित्तेनोत्पन्नेतियावद्बोधोदयंस्वीक्रियताम् ॥ बोधोदयेतुसर्वंजगद्ब्रह्मैवसावासनापिपरंब्रह्मैवेतिपर्यवस्यतीत्यर्थः ॥३६॥ नचश्रुतिभ्यःअसंगाद्वयंब्रह्माप

उपलंभउदेत्यादौब्रह्मणोवासनाततः॥ तच्छांतिंविद्धिनिर्वाणंतत्सत्तांसंसृतिभ्रमम्॥ ३५॥ उत्पन्नैवचसानादौपरब्रह्मण्यसंभवात्॥ उत्पन्नासमयाद्यासौब्रह्मैवपरमेवसत्॥ ३६ ॥ एतावद्यत्परिज्ञानंतन्निर्वाणंविदुर्बुधाः॥ यदत्रैवापरिज्ञानंतंबंधंविद्धिराघव॥ ३७॥ विज्ञानघनएवायंकचनाकचनात्मकः॥ स्वयमेवकचत्यंतर्नकचत्येववास्वयम् ॥ ३८॥ संविदंशपरावृत्तिमात्रेपेलवरूपिणि ॥ बंधदृङ्मोक्षदृक्चेतिक्लेशस्तत्साधनंकियत् ॥ ३९ ॥ संविदुद्बोधनेबंधस्तदनुद्बोधनेशिवम् ॥ असत्सद्वज्जगद्भातिसंविदुद्बोधनोदरम् ॥ ४० ॥ अजडंवेदनंसुसंमोक्षइत्यभिधीयते ॥ प्रबुद्धंबंधइत्याहुर्यदिच्छसितदाहर॥ ४१॥ निर्वाणवासनमनंतमनाद्यमच्छबोधैकतानमपयंत्रणमस्तशंकम्॥ अद्वैतमैक्यरहितंचनिरस्तशून्यमाकाशकोशविशदाशयशांतमास्व॥ ४२॥ ॥ इ०वा०वा०दे०मो० नि०उ०पाषा०वासनाभावप्रतिपादनंनामैकोनाशीतितमःसर्गः॥ ७९॥ ॥ ७९॥

रिज्ञायतत्रवासनाद्यसंभवस्त्वयोद्भावयितुंशक्यः ॥ तत्परिज्ञानेतुसर्वसंशयबीजाज्ञानोच्छेदान्निर्वाणमेवसंपन्नमितिनवासनोत्पत्त्याद्यनुपपत्तिशंकाप्रसक्तिरित्याशयेनाह ॥ एतावदिति ॥ ३७॥ यौक्तिकदृष्ट्यानिष्कर्षे तुअज्ञातंब्रह्मैवजगत्तद्वासनातदविद्याचाज्ञातंब्रह्मैवतन्निवृत्तिर्विद्यातत्फलंनिर्वाणंचेतिपर्यवस्यतीत्याशयेनाह ॥ विज्ञानेति ॥ श्रुत्यादिप्रमाणलाभात्प्राक्नकचत्येव ॥ ३८ ॥ बद्धास्मीतिस्वभावतःस्वांमन्यमानास्वयमेवस्वबंधानित्यमुक्तास्मीतिप्रमाणतःस्वांप्रबुद्धासास्वयमेवमोक्षइतिनिष्कर्षेवगतेनकश्चिन्मोक्षसाधनेक्लेशइत्याह ॥संविदंशेति ॥३९॥तदिदंपरीक्षकैर्व्युत्थानसमाधिभ्यांव्युत्थानसुषुप्तिभ्यांचस्पष्टंद्रष्टुंशक्यमित्याशयेनाह ॥ संविदुद्बोधनेइति ॥ संविदउद्बोधनेबहिर्मुखत्वापादने ॥ शिवंनिर्वाणम् ॥ संविदुद्बोधनोदरमेवअसज्जगत्सद्वद्भाति॥४०॥४१॥ एवमैच्छिकयोर्बंधमोक्षयोर्मोक्षस्वभावाहरणमेवनिर्विक्षेपपरमानंदरूपत्वायुक्तमित्याशयेनोपसंहरति ॥ निर्वाणवासनमिति ॥ हेरामत्वमच्छबोधैकतानंब्रह्मैवसन्नपयंत्रणंनिर्मुक्तबंधमास्व ॥ विशेषणान्यन्यानिब्रह्मणिवाक्रियायांवायोज्यानि॥ ४२॥ ॥ इ०वा०ता०नि०उ०एकोनाशीतितमःसर्गः॥ ७९॥

वैज्ञानिकस्तत्त्वदृशावर्णितःप्रलयक्रमः ॥ प्राकृतोयोगिगम्योन्योवर्ण्यतेप्रलयक्रमः ॥ १ ॥ धातुर्वासनाकल्पितस्यतल्लोकदेवभुवनादिसर्वप्रपंचस्यतत्प्रारब्धक्षयक्षणोत्पन्ने नसाक्षात्कारेणयोबाधस्तल्लक्षणोवैज्ञानिकःप्रलयोनापश्यंस्वमनगरंवुध्यमानइवायगमित्यादिनास्वमबाधसदृशःसोपपत्तिकंमुक्तदृशाउपवर्णितः ॥ बद्धदृशातुधातुर्देहस्यतद्दारं भकोपाधीनांतदिंद्रियादीनांचस्वस्वकारणेलयद्वारामायाशबलेब्रह्मणिलयलक्षणंप्रलयमुपवर्णयितुमुपक्रमते ॥ इतीति ॥ १ ॥ ब्रह्मणिविधातृदेहे ॥ मायाशबलब्रह्मताम् ॥ ज गद्दह्मस्यादिवत् ॥ २ ॥ आदित्याद्यधिकारिजीवानामप्यधिकारप्रारब्धसमाप्तेश्वरमसाक्षात्कारेणसमस्तस्वस्वप्रपंचबाधात्तद्देवविदेहकैवल्यमासीदित्याह ॥ वैरिंचेति ॥ ३ ॥ तदुत्तरंकिमासीत्तदाह ॥ ततइति ॥ प्राक्प्रक्रांतएवैकार्णवापूरः ॥ मूर्त्तिमानितिपाठेपंचीकृतजलात्मा ॥ ४ ॥ अर्णसाजलेन ॥ तद्ब्रह्मांडम् ॥ ५ ॥ तैस्तैरूर्मिभिःप्लवमानैर्गि

श्रीवसिष्ठउवाच ॥ ॥इतितेसर्वआयाताब्रह्मलोकनिवासिनः॥अदृश्यतामेवगतादीपाःक्षीणदशाइव॥१॥ अथतेद्वादशादित्याब्रह्मणि ब्रह्मतांगते ॥ जगद्दह्मलोकंतमदहन्भास्वरार्चिषः॥२॥ वैरिंचनगरंदग्ध्वाध्यानंकृत्वाविरंचिवत् ॥ तेपिनिर्वाणमाजग्मुर्निःस्नेहदशादी पवत् ॥३॥ ततएकार्णवापूरोविरिंचनगरांतरम् ॥ रात्रौभुवमिवध्वांतंपूरयामाससूर्मिमान् ॥४॥ आब्रह्मलोकमभवज्जगदापूर्णमर्ण सा ॥ तुल्यंरसैकपूर्णेनपक्वद्राक्षाफलेनतत् ॥५॥ तत्तदूर्मिगिरिव्रातखगैरावलिताःखिलाः॥ विच्छिन्नाःकल्पजलदाजलएवनिलिल्यिरे ॥६॥एतस्मिन्नंतरेतत्रदृष्टवानहमंबरात् ॥यावदभ्युदितंभीमंभीतःकिंचिन्नभोंतरात्॥७॥कल्पांतजगदाकारंकृष्णमापूरितांबरम्॥आ कल्पंसंभृतंनैशंदेहेनेवोत्थितंतमः॥८॥ तरुणादित्यलक्षाणांतेजआभास्वरंदधत् ॥ आदित्यत्रयसंकाशैःस्थिरविद्युच्चयोल्बणैः॥९॥नेत्रै राभास्वरमुखंज्वालापुंजसमुद्गिरम् ॥ पंचाननंदशभुजंत्रिनेत्रंशूलपाणिकम् ॥ १० ॥ आयांतमंतमुक्तेपिव्योम्नीववितताकृतिम् ॥ ख मिवासिघनश्यामंदेहमासाद्यसंस्थितम् ॥ ११ ॥स्थितमेकार्णवापूर्णाद्ब्रह्मांडाद्बहिरंबरे॥व्योमेवहस्तपादादिसंनिवेशेनलक्षितम् ॥ १२ ॥ घोणानिलपरावृत्तिविधूतैकमहार्णवम् ॥ गोविंदमिवदोर्दंडक्षोभितक्षीरसागरम् ॥ १३ ॥

रिव्रातैःखगैर्देवशरीरैश्चावलिताविघट्टिताअतएवखिलाविशीर्णाविच्छिन्नाश्चकल्पजलदाःप्रागुक्ताःपुष्करावर्त्तकादयः ॥ ६ ॥ एतस्मिन्नंतरेअहमंबरादभ्युदितंभीमंभयानकं किंचिद्रूपंदृष्टवान्नतुविशिष्यरुद्रोयमितिपरिचितवान् ॥ तावद्भीतइत्यर्थः ॥ ७ ॥ तदेवरूपंभीतिहेतुभिरद्भुतैर्विशेषणैर्वर्णयति ॥ कल्पांतेत्याद्यष्टभिः ॥ आकल्पंद्विपरार्द्धाव सानकालपर्यंतंप्रतिनिशंजातंतमएकत्रसंभृतमुपचितंसद्देहेनोत्थितमिवेतिसंहारमूर्त्तेरघोररुद्रस्यकृष्णवर्णोत्कर्षाद्युत्प्रेक्षा ॥ ८ ॥ वर्णेनकृष्णत्वेपितेजसाभास्वरत्वमपीत्याह ॥ तरुणेति ॥ दधदित्येतदुत्तरश्लोकेप्याभास्वरंमुखंदधदितिसंबध्यते ॥ ९ ॥ ज्वालापुंजंसमुद्गिरतीतिज्वालापुंजसमुद्गिरम् ॥ १० ॥ ११ ॥ १२ ॥ घोणानासातदनिलस्यश्वा सवायोःपरावृत्तिभिर्भ्रमणैः ॥ १३ ॥

पुंस्त्वेनपुरुषाकारेणसमुत्थितमिव ॥ सर्वाहंकारसमष्टिरूपंमूर्त्तियुक्तंभूत्वाआगतमिव ॥ सर्वकारणत्वात्स्वयमस्तकारणम् ॥ १४ ॥ १५ ॥ ततस्तादृशरूपदर्शनानंतरंमयात्रिशूलेनत्रिभिर्नयनैश्चप्रसिद्धैर्लक्षणैरसौरुद्रःपरमेशोजगदीश्वरइतिपरिज्ञायनमस्कृतः ॥ १६ ॥ ननुपरमेश्वरोमायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरमित्यादिश्रुतिषुमायाशबलंब्रह्मैवामूर्त्तंमहेश्वरइतिप्रसिद्धंतत्किमर्थंकैश्चोपाधिभिःपंचवदनादिविशिष्टांमूर्त्तिंधत्तेसर्वात्मनोवाकथंपरिच्छिन्नमूर्त्तिभावइतिविशिष्यजिज्ञासमानोरामःपृच्छति ॥ किंसइति ॥ ससर्वश्रुतिप्रसिद्धःपरमेशस्तादृग्विधस्त्वद्वर्णितरीत्याभयानकस्वरूपःकिंनिमित्तंकेनोपाधिनास्थितइतिप्रश्नस्यप्रपंचभूतादशप्रश्नास्त्रयःस्वतंत्राः ॥ सतिष्ठतीत्यत्रापिकेत्यध्याहृत्याधारप्रश्नोबोध्यः ॥ एवंकिमुपःकिमात्मेतिकिमःप्रत्येकंसंबंधाद्द्वौप्रश्नौ ॥१७॥ संकिंस्वतंत्रउतपरतंत्रः ॥ यदिस्वतंत्रस्तर्हिपूर्णकामस्यास्यकिमर्थंसंहारेप्रवृत्तिः ॥ यदि

कल्पार्णवजलापूरंपुंस्त्वेनेवसमुत्थितम् ॥ मूर्तियुक्तमहंकारमस्तकारणमागतम् ॥ १४ ॥ कुलाचलबृहद्वृंदमिवोड्डयनडंबरैः ॥ पक्षौघैरुत्थितंव्योमसमस्तमभिपूरयत् ॥ १५ ॥ ततस्त्रिशूलनयनैर्मयारुद्रोयमित्यसौ ॥ दूरादेवपरिज्ञायपरमेशोनमस्कृतः ॥ १६ ॥ ॥ श्रीरामउवाच ॥ ॥ किंसतादृग्विधोरुद्रःकिंरूष्णःकिंमहाकृतिः ॥ किंपंचवदनःकस्माद्दशबाहुःसतिष्ठति ॥ १७ ॥ किंत्रिनेत्रःकिमुग्रात्माकिमेकःकिंप्रयोजनः ॥ केनेरितःकिमकरोच्छायासीद्वदकामुने ॥ १८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ काकुत्स्थरुद्रनामासावहंकारतयोत्थितः ॥ विषमैकाभिमानात्मामूर्त्तिरस्यामलंनभः ॥ १९ ॥ व्योमाकृतिःसभगवान्व्योमवर्णोमहाद्युतिः ॥ चिद्व्योममात्रसारत्वादाकाशात्मासउच्यते ॥ २० ॥ सर्वभूतात्मभूतत्वात्सर्वगत्वान्महाकृतिः ॥ यानितस्यानुषक्तानिपंचखानींद्रियाण्यलम् ॥ २१ ॥ तानितस्यमुखान्याहुस्तपद्रूपाणिसर्वतः ॥ कर्मेंद्रियाणिविषयास्तेहितस्यभुजादश ॥ २२ ॥

परतंत्रस्तर्हिकेनेरितः ॥ तस्मिन्नीश्वरेरुद्ररूपेसतितदीयच्छायारूपामायापिकाआसीत्तद्वदेत्यर्थः ॥१८॥ हेकाकुत्स्थअसौपरमेश्वरःसर्वसर्गस्थितिसंहारादिगोचरसंकल्पाध्यवसायादिबीजभूतसर्वाभिमानात्मकमायावृत्तिरूपयाअहंकारतयासर्वजगदध्यासमूलस्तंभभूतयासर्वप्राणिरोदनेसर्वशरणागतरुगूद्रावणेचनिमित्तभूतयारुद्रनामासन्नुत्थितः ॥ तत्ररोदनेविषमाभिमानात्मारुगूद्रावणेतुएकाभिमानात्मासंपद्यते ॥ अस्यसामयादृष्टामूर्त्तिस्त्वमलंनभआकाशमेव ॥ १९ ॥ अनेनकिंसतादृग्विधःकिंरूष्णःकिंमहाकृतिरितिप्रश्नत्रयंसमाहितमित्याह ॥ व्योमेति ॥ २० ॥ किंपंचवदनइतिप्रश्नस्योत्तरमाह ॥ यानीति ॥ तस्याहंकारस्यप्रतिशरीरमनुषक्तानियानिपंचज्ञानेंद्रियाणितानितस्यरुद्रस्यमुखान्याहुस्तत्त्वविदः ॥ २१ ॥ अतएवहिज्ञानेंद्रियाणिसर्वतस्तपद्रूपाणिप्रकाशस्वभावानि ॥ कस्माद्दशबाहुःसइतिप्रश्नंसमाधत्ते ॥ कर्मेंद्रियाणीति ॥ वाक्पाणिपादपायूपस्थाख्यानिपंचकर्मेंद्रियाणिदक्षिणतः वचनादानविहरणोत्सर्गानंदाख्याःपंचतद्विषयाश्चवामतइतिक्रमात्तस्यदशभुजाइत्यर्थः ॥ २२ ॥

तद्यंसौप्रागपितादृशमूर्त्याकुतोनदृष्टइतिचेच्चराचरनामरूपकार्याकाराध्यारोपव्यामूढदृष्टिभिस्तदंतर्गतकारणस्वभावस्यदुर्ग्रहत्वादेवेत्याशयेनाह ॥ सर्वेति॥सर्वैर्भूतैश्चतुर्विधश
रीरैर्नरैस्तत्तज्जीवैश्चसार्द्धंपरंकारणंमायाशबलंब्रह्मआईयुषाप्रलयेनप्राप्तवताब्रह्मणाचतुर्मुखेनस्वाध्यारोपितकार्यैणपटेनतंतुरिवयदासौपरित्यक्तस्तदास्वांप्रागुक्ताकाशमात्र
परिशेषरूपांवर्णितांमूर्त्तिमागतःकारणरूपेणस्फुटीभूतइतियावत् ॥ २३ ॥ यद्यसावाकाशमात्रात्मातर्हिमूर्त्तस्यतस्यप्राग्वर्णितादेहाकृतिःकथंदृष्टातत्राह ॥ सचेति ॥ सचरुद्रः
सर्वकार्यविशेषप्रविलयावशिष्टोयःकारणैकांशस्तदेकरूपात्मातस्यसामयावर्णितादेहाकृतिर्नास्ति ॥ तथाउपासकैःस्ववासनयाअसौदृश्यतइत्यर्थः ॥ २४ ॥ प्रश्नेपुसतिष्ठती
त्यत्रक्केत्यध्याहृत्यआधारप्रश्नोयोवर्णितस्तस्योत्तरमाह ॥ चिदाकाशगतेइति ॥ इदंचावस्थानंतत्तदंतर्यामिभावेनेतिसूचनायवायुरिवेति ॥ २५ ॥ २६ ॥ किंत्रिनेत्रइतिप्रश्न
स्योत्तरमाह ॥ येइति ॥ २७ ॥ तेगुणादिपंचत्रिकारुद्रस्यपंचसुवक्त्रेषुक्रमात्त्रिनेत्रपंचकसंनिवेशेनसंस्थिताइत्यर्थः ॥ किमुपात्मेत्यत्रकिंशब्दस्यप्रत्येकमन्वयात्किमुपःकिमा
त्मेतिद्वौप्रश्नौवर्णितौतत्राद्यस्यकेनत्रिशूलायुधेनोपइतिगूढार्थस्यरामाभिप्रेतस्यसर्वज्ञतांख्यापयन्मुनिरुत्तरमाह ॥ त्रिशूलमिति ॥ करकोटरेमुष्टिच्छिद्रे ॥ २८ ॥ किमात्मे

सर्वभूतनरैःसार्द्धंब्रह्मणापरमेयुषा॥ यदासौसंपरित्यक्तस्तदास्वांमूर्त्तिमागतः॥ २३॥ सचैकांशैकरूपात्मानास्तितस्यहिसाकृतिः॥ तथादृश्यतएवासौभ्रांतिमात्रेणमूर्त्तिमान्॥२४॥ चिदाकाशगतेस्फारभूताकाशेसतिष्ठति॥ देहेचसर्वभूतानांनित्यंवायुरिवेश्वरः॥२५॥ सर्वभूतपरित्यक्तस्तस्मिन्कालेखमूर्त्तिमान्॥ क्षोभयन्सक्षणंक्षीणःपरमांशांतिमेष्यति॥ २६॥ येगुणाकृतयःकालाश्चित्ताहंकारबुद्धयः॥ प्रणवस्यचयेवर्णायेचवेदास्तथात्रयः॥२७॥ रुद्रस्यतस्यतेनेत्रसन्निवेशनसंस्थिताः॥ त्रिशूलंतनत्रैलोक्यंगृहीतंकरकोटरे॥२८॥ यस्मात्तद्व्यतिरेकेणसर्वभूतगणेष्वपि॥ अन्यन्नविद्यतेकिंचिद्देहात्मैवततःस्थितः॥२९॥ सर्वसत्वोपलंभात्मास्वभावोस्यप्रयोजनम्॥ईरितःशिवरूपेणचिन्मात्राकाशरूपिणा॥३०॥ तेनैवचनिगीर्णःसन्परमांशांतिमेत्यसौ॥ निर्मलाकाशरूपात्माकृष्णइत्येपईश्वरः॥३१॥

तिद्वितीयस्योत्तरमाह ॥ यस्मादिति ॥ सर्वभूतगणेदेहात्मेत्यर्थः ॥ अतएवहिसर्वभूतानामहंकारात्मकरुद्राभिध्यानादेवदेहात्मत्वाभिमानः ॥ तथाचभगवतोवादरायणस्यसू
त्रम् ॥ पराभिध्यानात्तुतिरोहितंततोह्यस्यबंधविपर्ययाविति ॥ २९ ॥ किंप्रयोजनइत्यस्योत्तरमाह ॥ सर्वेति ॥ स्वसृष्टानांसर्वेषांसत्वानांस्वस्वकर्मानुरूपविषयभोगात्मकोय
उपलंभःक्रमाज्ज्ञानसाधनप्राप्त्यावतेयःस्वात्मतत्त्वोपलंभश्चतदात्मायःशास्त्रीयविहितनिषिद्धकर्मज्ञानफलदानस्वभावःसएवास्यसर्गादौप्रयोजकत्वात्प्रयोजनम् ॥ तथाचोक्तं
गौडपादैः ॥ देवस्यैषस्वभावोयमाप्तकामस्यकास्पृहेति ॥ केनेरितइतिप्रश्नंसमाधत्ते ॥ ईरितइति ॥ चिन्मात्राकाशरूपिणा शिवंवाङ्मनसागोचरनिरतिशयभूमानंदात्मकंपर
मकल्याणंस्वरूपंयस्यतथाविधेनपरमात्मनैवबहुस्यांप्रजायेयेतिसंकल्पात्मकमायावृत्त्याईरितःसर्गायुन्मुखतयाप्रेरितःसृजति ॥ ३० ॥ प्रलयार्थमीरितश्चसर्गक्रमविपरीत
क्रमेणजगन्निगीर्याकाशभावेनस्थितःस्वयमपितेनैवशिवरूपेणस्वात्मनानिगीर्णःसन्आकाशभावमपिविहायपरमांभूमानंदस्वरूपप्रतिष्ठालक्षणांशांतिमेतीत्यर्थः ॥ किंकृष्णइ
त्यादिप्रश्नानांसर्वेषांसोपपत्तिकंसमाधानमुक्तंस्मारयन्नुपसंहरति ॥ निर्मलेतिसार्द्धेन ॥ ३१ ॥

॥ ३२ ॥ किमकरोदित्युपांत्यप्रश्नस्यकथाशेषशुश्रूषाविषयत्वमभिप्रेतंज्ञात्वोत्तरमाह ॥ अनंतरमित्यादिना ॥ प्राणवेगेनश्वासानिलवेगेनआक्रष्टुंपातुमितियावत् ॥ ३३ ॥ जलस्यतेजस्युपसंहारद्योतनायज्वालामालासमाकुलमित्युक्तम् ॥ ३४ ॥ इतरकालेपिजलशोषेतेजस्येवोपसंहारःप्रसिद्धइत्याशयेनाह ॥ सएवेति ॥ ३५ ॥ पंचवायुःपंचवृत्तिःप्राणःप्राणिनांमुखाकाशमिव ॥ अपानस्यापिप्राणात्मकत्वात्पंचवृत्तिकत्वव्यपदेशः ॥ ३६ ॥ अगुणंदोषजातम् ॥ ३७ ॥ समंसर्ववैषम्यनिर्मुक्तम् ॥ ३८ ॥ इमेवक्ष्यमाणाःपदार्थाः ॥ ३९ ॥ आमोदःसौरभंतद्विवंतत्स्वरूपंतद्वत् ॥ ४० ॥ ४१ ॥ त्रयाणांलोकानांतद्गतपदार्थानांचभस्मीभावात्पुनर्जलक्लेदनेनपंकमात्रात्मनापार्थिवभागेन

कृत्वाकल्पंजगत्सर्वंतत्पीत्वैकार्णवंतदा ॥ सप्रयातिपरांशांतिमभूयःसन्निवृत्तये ॥ ३२ ॥ अनंतरंमयादृष्टस्तत्रासौयावदुद्यमात् ॥ प्रवृत्तःप्राणवेगेनतमाक्रष्टुंमहार्णवम् ॥ ३३ ॥ अथतस्यमुखंस्फारंज्वालामालाकुलांतरम् ॥ प्राणाकृष्टोमहांभोधिर्वाडवाग्निमिवाविशत् ॥ ३४ ॥ सएववाडवोभूत्वावह्निराकल्पमर्णवे ॥ अहंकारःपिबत्यंबुरुद्रःसर्वंतुतत्तदा ॥ ३५ ॥ पातालमिवपानीयंसर्पोबिलमिवक्षणात् ॥ पंचवायुरिवाकाशमविशत्तन्मुखंजवात् ॥ ३६ ॥ समुपेत्यापिबद्रुद्रःसमुद्रंतेनतत्पयः ॥ कृष्णांगोर्कइवध्वांतंसत्संपर्कइवागुणम् ॥ ३७ ॥ आब्रह्मलोकपातालंशांतंशून्यमथाभवत् ॥ रजोधूमानिलांभोधिभूतमुक्तंसमंनभः ॥ ३८ ॥ केवलंतत्रदृष्टंतेचत्वारोव्योमनिर्मलाः ॥ इमेपदार्थानिस्पंदाःशृणुतान्रघुनंदन ॥ ३९ ॥ एकस्तावदसौमध्येरुद्रःकृष्णांबराकृतिः ॥ निराधारःस्थितोव्योम्निनिस्पंदामोदबिंबवत् ॥ ४० ॥ द्वितीयोवस्थितोदूरेपृथ्व्याकाशतलोपमः ॥ भागोब्रह्मांडसदनस्याधःपातालसप्तकात् ॥ ४१ ॥ पातालभूतलदिवांसशैलेंद्रदिवौकसाम् ॥ व्याप्तःपार्थिवभागेनपंकमात्रात्मनात्मभाक् ॥ ४२ ॥ तृतीयोत्रपदार्थोभूदूर्ध्वंब्रह्मांडभागभूः ॥ दृष्टिक्षयात्सुदूरत्वाद्दुर्लक्ष्यगगनासितः ॥ ४३ ॥ दूरविश्लिष्टयोर्मध्यंयत्तद्ब्रह्मांडखंडयोः ॥ तदाकाशमनाद्यंतंब्रह्मनिर्मलमाततम् ॥ ४४ ॥ चतुर्थोसौपदार्थस्तुतदासंलक्षितोमया ॥ चतुष्टयादत्रनान्यदेतस्मादेवकिंचन ॥ ४५ ॥ ॥श्रीरामउवाच॥ ॥ बहिःकिंविद्यतेब्रह्मन्ब्रह्मसद्मकटाहतः ॥ कास्तत्रावरणाब्रूहिकियत्यःसंस्थिताःकथम् ॥ ४६ ॥ ॥श्रीवसिष्ठउवाच॥ ॥ ब्रह्मांडखंडयोःपारेततोदशगुणंजलम् ॥ संध्याकाशमनंतंतद्वर्जयित्वाततःस्थितम् ॥ ४७ ॥

व्याप्तःसन्नात्मभाकूऊर्ध्वभागापेक्षयाकिंचिदुपचितात्मा ॥ ४२ ॥ दृष्टिक्षयान्नयनरश्मीनांतत्राप्रसरात् ॥ तत्रहेतुः ॥ सुदूरत्वादिति ॥ ४३ ॥ चतुर्थःपदार्थस्तदुभयांतरालाकाशमेवेत्याह ॥ दूरेति ॥ ब्रह्मेवनिर्मलम् ॥ ४४ ॥ असौअंतरालाकाशः ॥ अत्रमत्पुरोगतपदार्थमध्येएतस्माच्चतुष्टयादन्यत्किंचननैवासीदित्यन्वयः ॥ ४५ ॥ सावरणाभ्यांब्रह्मसद्मकटाहौब्रह्मांडखर्परेताभ्यांबहिःकिंविद्यते तत्रतयोःकाआवरणाः ताश्चकियत्यःनिराधाराश्चकथंसंस्थिताइति चत्वारःप्रश्नाः ॥ ४६ ॥ तत्रमध्यमप्रश्नयोःप्रथममुत्तरमाह ॥ ब्रह्मांडखंडयोरिति ॥ तच्चजलमनंतमतिविस्तृतंखंडद्वयसंध्याकाशमंतर्वर्जयित्वाबहिरेवाततंस्थितम् ॥ यद्यपि खंडद्वयसंध्याकाशोबृहदारण्यकेतयावतीक्षुरस्यधारायावद्वामक्षिकायाःपत्रंतावानंतरेणाकाशइतिक्षुरधारामक्षिकापक्षपरिमितोत्यंतसूक्ष्मःप्रतिपादितस्तथापिप्रागत्रचतुर्मुखोब्रह्मांडखंडद्वयंविभेदतच्चभिन्नंदूरतरंगतमितिवर्णितत्वात्तदनुसारेणसंध्याकाशस्यानंतत्वोक्तिरितिबोध्यम् ॥ ४७ ॥

तथैवजलवदेवपवनस्तज्जलपवित्रीकरणःस्वयंचरजोमालिन्यरहितःपवनोवायुःस्थितः ॥ ४८ ॥ नभःआकाशम् ॥ प्रथमप्रश्नस्योत्तरमाह ॥ ततइति ॥ अतिसूक्ष्मत्वादत्यच्छं मायाशबलब्रह्माकाशंस्थितम् ॥ ४९ ॥ ननुपुराणादौआकाशात्परतोदशगुणमहंकारतत्त्वंततःपरंतद्दशगुणंमहत्तत्वंतदपेअनंताप्रकृतिश्चवर्णितातदत्रकथंपरित्यक्तंतत्राह ॥ अन्यत्रेति ॥ तस्यमायाशबलब्रह्मणःखेआवृतेस्वरूपाकाशेअन्यत्रान्यत्रयोगिमाहेश्वरपांचरात्रकापिलादितंत्रेषुअन्याअन्यामहदहंकारादितत्त्वभेदावरणकल्पनादृष्टयःअनंताःकचंतिताश्चमिथःपरस्परंसंवादेनदृष्टात्मकल्पनास्तदृष्टयःपुराणेषुकीर्त्यंतेनश्रुतिषुताःप्रक्रियाःसंतीत्यस्माभिरुपेक्षिताइत्यर्थः ॥ ब्रह्मांडभेददृष्टिपरतयावाश्लोकोव्याख्येयः ॥ ५० ॥ चतुर्थंप्रश्नंपरिशिष्टंस्मारयन्रामःपृच्छति ॥ ऊर्ध्वेइति ॥ ब्रह्मांडादप्युत्तरोत्तरंदशदशगुणविस्तारान्महाकारम् ॥ ५१ ॥ तंपार्थिवंब्रह्मांडखर्परभागमेवआधावंतिआ

ततस्तथैवज्वालात्मतेजोदशगुणंस्थितम् ॥ ततस्तथैवपवनःपवनोनिर्मलःस्थितः ॥ ४८ ॥ ततस्तथैवविमलंनभोदशगुणंस्मृतम् ॥ ततः परममत्यच्छंब्रह्माकाशमनंतकम् ॥ ४९ ॥ अन्यत्रान्यत्रतस्याथदृष्टयोन्यास्तथैवखे ॥ कचंत्यनंतादूरस्थामिथोदृष्टात्मदृष्टयः ॥ ५० ॥ श्रीरामउवाच ॥ ॥ ऊर्ध्वेब्रह्मांडखंडस्यतथाधस्तान्मुनीश्वर ॥ तज्जलादिमहाकारंककथंकेनधार्यते ॥ ५१ ॥ ॥ श्रीवसिष्ठउवाच ॥ सपार्थिवपदार्थानांस्थितःपुष्करपत्रवत् ॥ भागस्तमेवाधावंतितेसुतामातरंयथा ॥ ५२ ॥ अतोयदेवनेदीयोब्रह्मांडाख्यंमहावपुः ॥ तत्पदार्थाःप्रधावंतितद्वपिताःसलिलंयथा ॥ ५३ ॥ अवलंब्यतदेवांतःसंस्थितास्तैजसादयः ॥ नस्थितिंप्रविमुंचंतिस्वांयथावयवाइव ॥ ५४ ॥ श्रीरामउवाच ॥ ॥ ब्रह्मन्ब्रह्मांडखंडेतेतिष्ठतःकथमुच्यताम् ॥ किमाकृतीधृतेकेनकथंवापरिनश्यतः ॥ ५५ ॥ ॥ श्रीवसिष्ठउवाच ॥ अधृतंधृतमेवोच्चैरपतच्चैववापतत् ॥ अनाकृत्येवसाकारंजगत्स्वप्नपुरंयथा ॥ ५६ ॥ किमस्यनामपततिकिंवाकेनास्यधार्यते ॥ यथा संवित्तिकचनंतथैतदवतिष्ठते ॥ ५७ ॥ यथाकेशोंड्रकंव्योम्नियथाचव्योम्निशून्यता ॥ यथावापवनेस्पंदोजगच्चिद्गगनेतथा ॥ ५८ ॥ चितौसंकल्पनगरंब्रह्मांडाख्यंजगद्गृहम् ॥ खेखमेवाप्यनाकारंप्रत्याकारमिवस्थितम् ॥ ५९ ॥ पातसंवित्समुद्भूतंपतदास्तेदिवानिशम् ॥ गच्छंत्यासंविदोद्भूतंगच्छदास्तेदिवानिशम् ॥ ६० ॥

धारादित्त्वेनाश्रयंति ॥ यथासुतावानरीशिशवोमातरमुदरेदृढंगृहीत्वाप्लवनेपिनपतंतितद्वदित्यर्थः ॥ ५२ ॥ ऊर्ध्वखर्परोपरितनजलस्याप्यपतनेअयमेवन्यायःसामीप्यानुगृहीतोबोध्यइत्याशयेनाह ॥ अतइति ॥ नेदीयःसन्निहिततरम् ॥ अंतिकबाढयोर्नेदसाधावितिईयसुनिनेदादेशः ॥ ५३ ॥ यथाशरीरसंयुक्ताहस्तपादाद्यवयवादृढतरसंयोगस्थितिंनप्रतिमुंचंतितद्वत् ॥ ५४ ॥ इतरावरणाधारयोर्ब्रह्मांडखर्परयोरतिगुरुत्वादवश्यंपिपतिषतोःकस्तयोराधारइतिरामःपृच्छति ॥ ब्रह्मन्निति ॥ कथंकेनाधारेणतिष्ठतः ॥ ५५ ॥ सत्यतादृष्टावियमाधारादिचिंता मिथ्यादृष्टौतुनगुरुतराणामप्याधारादिनियमोस्तीतिस्वमदृष्टांतेनवसिष्ठउत्तरमाह ॥ अधृतमिति ॥ अनाकृतिअमूर्त्तम् ॥ ५६ ॥ ५७ ॥ ५८ ॥ प्रत्याकारंप्रतिनियताकारमिव ॥ ५९ ॥ सर्वपदार्थानांयथासंवेदनमेवस्वभावोनियतोऽनियतोवासिद्ध्यतीत्याह ॥ पातेति ॥ गच्छंत्यागमनाध्यासवत्या ॥ ६० ॥

तथाचकिमाकृतीधृतंकेनेतिप्रश्नावपिस्वसंवित्कल्पितनियतानियताकृतीसंविदेवधृतेइत्यर्थाद्दत्तोत्तरौ ॥ ६१ ॥ कथंवापरिनिश्यतइत्यस्योत्तरमाह ॥ एतीति ॥ ६२ ॥ यथा शरदंबरांतर्विलोकयतोदृष्टौपतद्बदरकाकारोमौक्तिकगणआभाति ॥ तथाचिन्नभसिभ्रांत्यास्फुरतामेषांजगतांसंख्यामाधारादितत्त्वपरिगणनंकर्तुंकःसमर्थोनकश्चिदित्यर्थः ॥ ६३ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेअशीतितमःसर्गः ॥ ८० ॥ ॥ ७ ॥ ॥ रुद्रःसनृत्यन्प्रलयेभैरवोत्रोपवर्ण्यते ॥ तच्छायाकालरात्रिश्चनृत्यंतीजगदंबिका ॥ १ ॥ किमकरोदितिप्रश्नोत्तरशेषंप्रलयाकाशेरुद्रनृत्यंछायासीद्वदकामुनेइतिप्रश्नोत्तरंनृत्यत्कालरात्रिस्वरूपंचवर्णयितुमुपक्रमते ॥ अथेति ॥ १ ॥

स्थितसंवित्समुद्भूतंतिष्ठदास्तेदिवानिशम् ॥ उत्पतंत्याचितोद्भूतमुत्पतच्चैवतिष्ठति ॥ ६१ ॥ एतिनाशविदानाशंमहाकल्पादिवेदनैः ॥ जायतेजन्मसंवित्त्याव्योम्निसर्वादिवेदनैः ॥ ६२ ॥ आभातिमौक्तिकगणःशरदंबरांतर्दृष्टावसत्यउदितोप्यतिसत्यरूपः ॥ भ्रांत्यायथा नभसिचस्फुरतांतथैषांसंख्यांविधातुमिहकोजगतांसमर्थः ॥ ६३ ॥ ॥ इ०वा०वा०दे०मो०नि०उ०पा० भ्रांतिमात्रत्वप्रतिपादनं नामाशीतितमःसर्गः ॥ ८० ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अथराघवरुद्रंतंतदातस्मिन्महांबरे ॥ प्रवृत्तंनर्त्तितुंमत्तमपश्यं विततकृतिम् ॥ १ ॥ व्योमेवाकृतिमापन्नमजहद्व्यापितांनिजाम् ॥ महाकारंघनश्यामंदशाशापरिपूरकम् ॥ २ ॥ अर्केंदुवह्निनयनंच लद्दशदिगंबरम् ॥ घनदीर्घप्रभाजालमालानंश्यामलार्चिषाम् ॥ ३ ॥ वडवाग्निदृशंलोलभुजोर्मिभरभासुरम् ॥ एकार्णवार्णोद्राग्देहवं धेनेवसमुत्थितम् ॥ ४ ॥ पश्याम्यनंतरमहंयावत्तस्यशरीरतः ॥ छायेवपरिनिर्यातिनर्त्तनानुविधायिनी ॥ ५ ॥ सूर्येष्वविद्यमानेषुमहात मसिचांबरे ॥ स्थिताकथमियंछायाभवेदितिमतिर्मम ॥ ६ ॥ यावद्विचारयाम्याशुतावत्तस्यतदापुरः ॥ सास्थितापरिनृत्यंतीविस्ती र्णाश्रीत्रिलोचना ॥ ७ ॥ कृष्णाकृशाशिरालांगीजर्जराविततकृतिः ॥ ज्वालाकुलानलालोलवनसंभारशेखरा ॥ ८ ॥ भिन्नांजनतमः श्यामायामिनीवाकृतिंगता ॥ तमःश्रीर्देहयुक्तेवसाकारेवांबरद्युतिः ॥ ९ ॥ अतिदीर्घाकरालास्यानभोमातुमिवोद्यता ॥ दीर्घजानुभु जभ्रांत्यामातुकामेवदिङ्मुखम् ॥ १० ॥ कृशावहूपवासेवपरिनिम्नमहातनुः ॥ कज्जलश्यामलामेघमालेवपवनाकुला ॥ ११ ॥

नृत्यंतावद्वर्णयति ॥ व्योमेवेत्यादिना ॥ २ ॥ श्यामलार्चिषांनीलप्रभाज्वालानामालानंबंधनस्तंभमिव ॥ ३ ॥ वडवाग्नयइवदृशोयस्य ॥ देहबंधेनशरीरग्रहणेनसमुत्थितमि वेत्युत्प्रेक्षा ॥ ४ ॥ नर्त्तनानुविधायिनीरुद्रनर्त्तनमनुकुर्वाणा ॥ ५ ॥ इतिममतिराशंकाआसीदितिशेषः ॥ ६ ॥ श्रीमंतित्रीणिलोचनानियस्याः ॥ ७ ॥ तांवर्णयति ॥ कृष्णे त्यादिना ॥ जर्जराशिथिलांगी ॥ लोलोवनसंभारोवनसमृद्धिरिवपुष्पपल्लवादिभूषितःश्यामलःशेखरोयस्याः ॥ ८ ॥ तिस्रउत्प्रेक्षाः ॥ ९ ॥ मातुंस्वदैर्घ्यसाम्येनपरिमातुमुप मातुंच ॥ १० ॥ परितोनिम्नासगर्त्तामहतीतनुर्यस्याः ॥ ११ ॥

१ ज्वालाकुलाननेतिपाठोपेक्षितइतिभाति

सुदीर्घाकृशाचसायदास्थानुमशक्ताविधात्रालक्षिततदाशिरारूपैर्दामभिर्दार्ढ्यायग्रथितेवेत्युत्प्रेक्षा ॥ १२ ॥ सातथासुदीर्घायथामयाप्रयत्नेनयोगबलान्मनोवेगेनचिरमनेक सहस्रवर्षकालमूर्ध्वमधश्चगमागमैर्द्धावनैस्तस्याःशिरःखुराःपादनखाश्चतेषांसमाहारःशिरःखुरम् ॥ द्वंद्वश्चप्राणितूर्येत्येकवद्भावः ॥ दृष्टंनान्येनद्रष्टुंशक्यमितिभावः ॥ १३ ॥ अंत्रैःशिराजालैरांत्रतंत्रीभिश्चग्रथिताःशिरःप्रभृतिकरपादनखांताअंगोत्करायस्याः ॥ आमूलात्मूलमारभ्यशाखाग्रपर्यंतसूत्रैर्वलिताकंटकानांस्थलीनिवासभूमिःखदिरादि लतेवस्थिता ॥ १४ ॥ विश्वरूपमयैर्नानावर्णैरर्कादिदेवदानवशिरःकमलजालकैःकंठेकृतमालाभूषिता ॥ अमलआलोकोयस्यतथाविधोवातप्रदीप्तोयोवह्निस्तन्मयान्यं

कृशाशक्तायदास्थातुंसुदीर्घाविधिनातदा ॥ ग्रथितेवशिरारूपैर्दामभिर्दैर्घ्यशालिभिः ॥ १२ ॥ तथानामसुदीर्घासायथातस्याःशिरःखुरम् ॥ मयादृष्टंप्रयत्नेनचिरोर्ध्वाधोगमागमैः ॥ १३ ॥ अंत्रांत्रतंत्रीग्रथितशिरःकरखुरोत्करा ॥ आमूलात्सूत्रवलिताकंटकानामिवस्थली ॥ १४ ॥ विश्वरूपमयार्कादिशिरःकमलजालकैः ॥ कृतमालामलालोकवातवह्निमयांचला ॥ १५ ॥ प्रलंबकर्णालुलितनागान्तशवकुंडला ॥ शुष्कतुंबीलताष्ठीलादीर्घालोलासितस्तनी ॥ १६ ॥ कुमारबर्हिपिच्छौघैर्ब्राह्ममूर्द्धजमंडलैः ॥ लांछितोच्चसुराधीशशिरःखट्वांगमंडला ॥ १७ ॥ दंतेंदुमालाविमलाविमलोद्योतपाततः ॥ तमोर्णवोर्द्धलेखेववृत्तावर्त्तविवर्त्तिनी ॥ १८ ॥ शुष्कतुंबीलतेवोच्चैराकाशतरुसंस्थिता ॥ विलोलावयवाष्ठीलावातैःपटपटारवा ॥ १९ ॥ बृहत्तरंगोर्ध्वभुजाश्यामलोल्लासशालिनी ॥ एकार्णवोर्मिमालेवनृत्तावृत्तिविवर्त्तिनी ॥ २० ॥ क्षणमेकभुजाकाराक्षणंबहुभुजाकुला ॥ अनंतोग्रभुजाक्षिप्तजगन्नर्त्तनमंडपा ॥ २१ ॥ क्षिप्रमेकमुखाकाराक्षिप्रंबहुमुखाकृतिः ॥ अनंतोग्रमुखीक्षिप्रंनिर्मुखीचापिचक्षणम् ॥ २२ ॥ एकपादान्विताक्षिप्रंक्षिप्रंपादशतान्विता ॥ क्षणंचानंतपादाढ्यानिष्पादाकारिणीक्षणम् ॥ २३ ॥ कालरात्रिरियंसेतिमयानुमितदेहिका ॥ कालीभगवतीसेयमितिनिर्णीतसज्जना ॥ २४ ॥

चलानिपटच्चराणियस्याः ॥ १५ ॥ प्रलंबयोःकर्णयोरालुलितानागायस्याः ॥ तथान्तशवेकुंडलेयस्याः ॥ शुष्कालंबफलातुंबीलतेवआष्ठीलंऊरुपर्वग्रंथिपर्यंतमादीर्घावालोलावसितौस्तनौयस्याः ॥ १६ ॥ कुमारबर्हिणांपिच्छौघैर्ब्राह्मैर्मूर्द्धजानांकेशानांमंडलैश्चलांछितान्युच्चानिसुराधीशानामिंद्रादीनांशिरांसियस्मिंस्तथाविधंखट्वांगमंडलंयस्याः ॥ १७ ॥ दंतलक्षणयाइंदुमालयाविमला अतएवतदीयविमलोद्योतपातवशादभिवृद्धा ॥ वृत्तैरावर्तैर्विवर्त्तिनीव्यालोलातमोलक्षणस्यार्णवस्यऊर्ध्वलेखाउपरिभागइवस्थिता ॥ १८ ॥ आकाशलक्षणमाकाशप्रसूतंचतरुंसंस्थिता ॥ एवमग्रेपिविशेषणेउभयत्रयोज्ये ॥ १९ ॥ २० ॥ अनंतैरुग्रभुजैराक्षिप्तोव्याकुलितोजगन्नृत्यमंडपोयया ॥ २१ ॥ २२ ॥ ॥ २३ ॥ इतिनिर्णीताःसज्जनाःयां ॥ निपूर्वस्यनयतेरवगत्यर्थत्वाद्गत्यर्थाकर्मकेतिकर्त्तरिक्तः ॥ २४ ॥

पुनस्तांमुखादिपादांतंवर्णयितुमारभते ॥ ज्वालेत्यादिना ॥ आरघट्टयंत्रस्यशिरःकाष्ठेप्रसिद्धंखातत्रयंज्वालाभिःपूर्णंस्यात्तदानेत्रत्रयोपमावोध्या ॥ ज्वलंतीधरायस्मिंस्तथावि धोयइंद्रनीलाद्रिप्रस्थस्तदुपमाललाटभूर्यस्याः ॥ २५ ॥ लोकालोकाचलस्यप्रसिद्धमिंद्रनीलश्वभ्रमिवाधोनिम्नत्वात्कुंडलकांतिप्रकाशाप्रकाशमतएवभीमंहनुद्वयंयस्याः ॥ २६ ॥ इंद्रनीलाद्रौतुल्येतुलनार्हेउपमायोग्येउच्चेतोरणेनगरबहिर्द्वारेपद्मरागादिप्रभारंजितेअंबरेद्वारांतश्छिद्रेविश्रांतःप्रतिष्ठितःअधोमुखःकृत्रिमःकाचशैलइवभगवायसो भगनामाकाकोयस्याः ॥ २७ ॥ २८ ॥ कल्पांबुदपक्षेस्फुरत्प्रभाःप्राणिजागजप्रभवादंताइवप्रतिपुताराःबृहत्प्रभालेखाधाराश्रेणीर्वर्षद्भिः ॥ भुजपक्षेप्राणिजागजादिप्रभवा मुक्ताइवप्रांतेप्रलयेनिपतंत्यस्ताराश्रेणीवचभास्यमानानखपंक्तिबृहत्प्रभाःवर्षद्भिः ॥ २९ ॥ कृष्णैरतएवोग्रमूर्त्तिभिः ॥ नखाएवपुष्पाणियेषुतथाविधान्यंगुलीवल्लीजाला

ज्वालापूर्णारघट्टोग्रखाताभनयनत्रया ॥ ज्वलद्वरेंद्रनीलाद्रिसानूपमललाटभूः ॥२५॥ लोकालोकेंद्रनीलोग्रश्वभ्रभीमहनुद्वया ॥ वात स्कंधगुणप्रोततारामुक्ताकलापिनी ॥२६॥ इंद्रनीलाद्रितुल्योच्चतोरणोच्चैःप्रभांबरे ॥ विश्रांतकाचशैलाभभगभीषणवायसी ॥२७॥ नृ त्यद्भुजलतापुष्पैर्नखशुभ्राभ्रमंडलैः ॥ पूर्णचंद्रशतानीवभ्रमयंतीनभस्तले ॥ २८ ॥ भ्रमद्भिर्व्याप्तदिक्चक्राभुजैःकल्पांबुदैरिव ॥ वर्षद्भिः प्राणिजप्रांततारालेखाबृहत्प्रभाः ॥ २९ ॥ नखपुष्पांगुलीवल्लीजालैर्भ्रांतभुजद्रुमैः ॥ कृष्णैःकाननिताशेषगगनाग्रोग्रमूर्त्तिभिः ॥ ३० ॥ तमालतालतःस्थूलांभुवंदग्धमहावनैः ॥ विडंबयंतीवलितांजंघासंघेनलोलता ॥३१॥ अप्यनंतमहाव्योम्निपारंप्राप्तैःशिरोरुहैः ॥ कुर्वा णेवाततंवासंचरत्तिमिरदंतिनः ॥ ३२ ॥ उह्यंतेमेरवोयेनतेननिःश्वासवायुना ॥ घनघुंघुमदिक्चक्रगगनग्रामघोषिणा ॥३३॥ घनमारु तफूत्कारक्ष्वेडगेयंप्रगायता ॥ नियतानुनयेनेवचलितासानुवृत्तिना ॥ ३४ ॥ ततोनृत्तवशावेशाद्वर्द्धमानशरीरिणी ॥ मयादृष्टावधाने नगगनाभोगभूरिणा ॥ ३५ ॥ यावत्तयावृतादेहेहेलावलनसारया ॥ मालामलयकैलाससह्यमंदरमेरुभिः ॥ ३६ ॥ आसीत्तस्यायुगां ताभ्रमालिकापट्टपट्टिका ॥ आदर्शमंडलान्यंगेत्रीणिलोकांतराणिच ॥ ३७ ॥

नियेषांतथाविधैर्भ्रांतभुजद्रुमैःकाननितंवनमिवकृतमशेषंगगनाग्रमाकाशप्रांतोयया ॥ ३० ॥ लोलतासर्वतश्चलितेनजंघासंघेनदग्धैःखर्जूरादिमहावनैर्वलितांदग्धशिष्टतमा लतालवृक्षमात्रतःस्थूलांप्रोन्नतांभुवंविडंबयंतीअनुकुर्वाणा ॥ ३१ ॥ शिरोरुहैःचरत्तिमिरलक्षणस्यदंतिनोव्योम्निवासंकुर्वाणासंपादयंतीव ॥ ३२ ॥ प्रतिध्वनिभिर्घनघुंघुमं दिक्चक्रंयस्यतथाविधेगगनग्रामेउद्घोषणशीलेननिःश्वासवायुनानियतानुनयेनअतएवसानुवृत्तिनानटेनसहचलितेवासीदित्युत्तरेणान्वयः ॥ ३३ ॥ ३४ ॥ ३५ ॥ कथंदृष्टात दाह ॥ यावदिति ॥ हेलयाविलासेनवलनंनृत्यमेवसारोभिप्रेतार्थोयस्यास्तथाविधयातयामलयकैलाससह्यादिगिरिभिर्यावत्साकल्येनरचितामालादेहेआवृताभूषणत्वेनसंनि वेशिता ॥ घृतेतिवापाठः ॥ ३६ ॥ किंचजगत्सर्वंतस्याभूषणादिनृत्यसामग्रीवभूवेत्याशयेनाह ॥ आसीदित्यादिना ॥ युगांतेप्रसिद्धापुष्करावर्त्ताद्यभ्रमालिकावक्षसिइंद्रनील पट्टपट्टिकाआसीत् ॥ त्रीणिलोकांतराणिअंगेजघनोदरादौमणिमयादर्शमंडलान्यासन्नित्यादिःसर्वत्रयथायोगंविपरिणामेनानुषंगःकार्यः ॥ ३७ ॥

॥ ३८ ॥ ३९ ॥ दृष्टानीतिनंपुंसकमनपुंसकेनेतिनपुंसकशेषः ॥ ४० ॥ अन्यकर्णयोःहिमवन्मेरुकुंडलप्रागुक्तकर्णातिरिक्तकर्णयोः ॥ ४१ ॥ सकलशास्त्रार्थक्षीराणिऋग्य जुःसामाथर्वाख्यचतुःसंस्थानानिचूचुकानिकुचाग्राणियेषाम् ॥ ४२ ॥ ४३ ॥ ताःप्रसिद्धालोमावलयोरोमावलयः ॥ ४४ ॥ ४५ ॥ सर्वस्यापिनृत्येचलनात्स्थावरात्मक म् ॥ पूर्वंमृतत्वात्तद्देहलक्षणेपरलोकेसुखंस्थितम् ॥ ४६ ॥ जगल्लक्षणोजीर्णःअहिःसर्पोययातथाविधाचातकीपक्षिणी ॥ अत्रचातकीशब्देनमयूरीलक्ष्यतेमेघप्रियत्वसा म्यात् ॥ अहिजरणनृत्ययोस्तस्यांप्रसिद्धेश्च ॥ ४७ ॥ सरूपधृक्प्राक्तनजगत्सदृशरूपधृक् ॥ ४८ ॥ कदाचिदनृत्यंत्यामपितस्यांतदंतर्गतंजगन्नृत्यतीतिमयादृष्टमित्याह ॥ से

कर्णयोर्हिमवन्मेरूरूप्यकांचनमुद्रिके॥ब्रह्मांडघुंघुमैर्मालामहतीकटिमेखला॥३८॥ स्रजःकुलाचलाःशृंगवनपत्तनगुच्छकाः॥जरत्पुर वनद्वीपग्रामपेलवपल्लवाः॥३९॥ तस्याअंगेषुदृष्टानिपुराणिनगराणिच॥ ऋतवश्चत्रयोलोकामासाहोरात्रमालिकाः॥४०॥ मुक्ताल तादिकंनद्यःकालिंदीत्रिपथादिकाः॥धर्माधर्मावुभौकर्णभूषणेचान्यकर्णयोः॥४१॥ स्तनास्तस्यास्तुचत्वारःस्रवद्धर्मपयोलवाः॥ वेदाः सकलशास्त्रार्थचतुःसंस्थानचूचुकाः ॥ ४२ ॥ त्रिशूलैःपट्टिशैःप्रासैःशरशक्त्यृष्टिमुद्गरैः ॥ निर्यदायुधजालानिस्रग्दामानिबिभर्त्तिसा ॥४३॥ चतुर्दशविधाभूतजातयोयाःसुरादिकाः ॥ तस्याःशरीरशालिन्यास्तालोमावलयःस्थिताः ॥४४॥ तस्याश्चनगरग्रामगिरयो देहशायिनः॥ नृत्यंत्यासहनृत्यंतिपुनर्जन्ममुदंवते॥४५॥ जंगमात्मैकमेवैतज्जगत्स्थावरंतदा॥ नृत्यतीतिमयाज्ञातंपरलोकेसुखंस्थि तम्॥४६॥ निगीर्णजगदंगस्थंकृत्वात्वमिमुपागता॥ परिनृत्यतिसामत्ताजगज्जीर्णाहिचातकी॥४७॥ आदर्शप्रतिबिंबस्थमिवाभात्य खिलंजगत्॥ तस्यावपुषिविस्तीर्णेस्वरूपिणिसरूपधृक्॥ ४८॥ स्नाननृत्यतितत्सर्वंसशैलवनकाननम्॥ जगन्नृत्यतिनानात्मनृत्वापुन रुपागतम्॥ ४९ ॥ तज्जगन्नर्त्तनंचारुतद्देहादर्शसंस्थितम्॥ चिरंमयातदादृष्टमविनष्टंपुनःस्थितम् ॥ ५० ॥ विचलत्तारकाजालंभ्रमत्प र्वतमंडलम्॥ मशकव्यूहवद्वातव्याधूतामरदानवम्॥५१ ॥ संग्रामोन्मुक्तचक्राभद्वीपार्णववृतांबरम्॥ हेलाविवलनावर्त्तप्रौढशैलध रातृणम्॥५२ ॥ नीलमेघांशुकावृत्तिवातघुंघुमितांबरम्॥काष्ठास्थ्यादिस्फुटास्फोटपटत्पटपटारवम्॥५३॥ जगत्पदार्थैर्व्यामिश्रैरमि श्रैर्मुकुरैर्यथा॥ व्याप्तमाभोगिभांकारैरंगैरंगभ्रमैस्तथा॥५४॥

ति ॥ ४९ ॥ ५० ॥ तदेवजगन्नर्तनंवर्णयति ॥ विचलदित्यादिना ॥ ५१ ॥ संग्रामेउन्मुक्तचक्राणामिवआभाभ्रमणसादृश्यश्रीर्येषांद्वीपादीनांतथाविधैस्तैर्वृतांबरम् ॥ हेलया विवलनैर्भ्रमणैरावर्त्तवर्तिरिवप्रकर्षेणोढानिशैलधरातृणानियस्मिन् ॥ प्रादूह्योढतिर्वृद्धिः ॥ ५२ ॥ नीलमेघलक्षणानामंशुकानांवस्त्राणामावृत्तिपुपरिवर्त्तनेषुवातैर्घुंघुमितमं बरमाकाशंयस्मिन् ॥ अधस्तुपरस्परसंघर्षाहतानांकाष्ठास्थ्यादीनांस्फुटास्फोटैःसंधिविघट्टनैःपटत्पटेत्याद्यनुकरणाहारवविशिष्टम् ॥ ५३ ॥ अन्योन्यसंघट्टनाद्विश्लेषाच्चप्रतिक्ष णंव्यामिश्रैरमिश्रैश्चजगत्पदार्थैस्तद्वद्भिरंगैस्तद्भ्रमणैश्चआभोगिभांकारैर्मूर्त्तिमद्भिर्भयैरिवव्याप्तम् ॥ ५४ ॥

तदेवजगन्नृत्यंप्रत्येकंवर्णयति ॥ मेरुरित्यादिना ॥ भ्रमद्भिरभ्रपटैरुपेताश्छन्नानमंत्यस्तनवस्तनूरुहाःकल्पवृक्षाश्चयस्य ॥ ५५ ॥ मर्यादामुद्रणंवेलामर्यादानियमम् ॥ ५६ ॥ वास्तुषुवेश्मभूमिषुभवावास्तव्यास्तदैतैःसहितंयथास्यात्तथालुठितानि ॥ ५७ ॥ तस्यांकालरात्र्यांभ्रमंत्यांसत्यांचंद्रार्कादयस्तन्नखाग्ररेखासुयेआलोकाःप्रभाविशेषास्तदं तर्भावेणभ्रमंतःकांचनसूत्रवद्दीर्घाकाराभांति ॥ भ्रमद्लानवङ्किप्रायाइत्यर्थः ॥ ५८ ॥ नीहारैर्हारिण्याहारवत्यानीलवारिदवस्त्रायास्तस्याःसृष्टयोमेघैर्विसृष्टाजलजालिका घर्माणिस्वेदबिंदवइवविभांतीत्यर्थः ॥ ५९ ॥ इदानींजगत्सर्वंतस्याअंगत्वेनसंपन्नमितिवर्णयति ॥ खमेवेत्यादिना ॥ ६० ॥ द्वीपाअब्धयश्चअंत्रसहितावलयःसंपन्नाः ॥ आ वहोद्वहप्रवहादयःपवनस्कंधलक्षणानभःसौधशालिकास्तस्याःप्राणापानावलीदोलाःसंपन्नाः ॥ ६१ ॥ अतएवतदंगत्वेनसंपन्नैर्हिमवदाद्यद्रिभिस्तद्वपुषिदोलनप्रयुक्ताभ्र

मेरुर्नृत्यतिलोलोच्चकुलाचलबृहद्भुजः ॥ भ्रमदभ्रपटोपेतनमत्तनुतनूरुहः ॥ ५५ ॥ अत्यजंतःसमुद्राश्चमर्यादामुद्रणंद्रुमाः ॥ भूमेर्नभ स्तलंयांतिनभसोयांतिभूतलम् ॥ ५६ ॥ पुराणिघर्घरारावैर्दस्यंतेलुठितान्यधः ॥ सगृहाट्टालवास्तव्यंनचकिंचिल्लुठत्यधः ॥ ५७ ॥ तस्यां भ्रमंत्यांचतुरंचंद्रार्कदिनरात्रयः ॥ नखाग्रलेखालोकांतर्भांतिकांचनसूत्रवत् ॥ ५८ ॥ विभांतिसृष्टयस्तस्याघर्माणिजलजालिकाः ॥ इवनीहारहारिण्यानीलवारिदवाससः ॥ ५९ ॥ खमेवतस्याःसंपन्नंकवरीमंडलंबृहत् ॥ पातालंचरणौभूमिरुदरंबाहवोदिशः ॥ ६० ॥ द्वीपाब्धयोंत्रवलयःपार्श्वकाःसर्वपर्वताः ॥ प्राणापानावलीदोलाःपवनस्कंधशालिकाः ॥ ६१ ॥ तदानुभूतंनृत्यंत्यास्तस्यावपुषिवि स्तृते ॥ हिमवन्मेरुसह्याद्यैर्दोलनभ्रममद्रिभिः ॥ ६२ ॥ तरदद्रिगुलुच्छास्तावलयंत्यातयास्रजः ॥ पुनःकल्पांतआरब्धइवतांडवहेलया ॥ ६३ ॥ सुरासुरोरगानीकरोमशांगःशरीरकः ॥ निस्पंदंस्थातुमशकन्नसौभ्रमतिचक्रवत् ॥ ६४ ॥ नानाविभवविज्ञानयज्ञयज्ञो पवीतिनी ॥ सासरंतीनभस्यासीद्घनघूत्कारघोषिणी ॥ ६५ ॥ तत्रभूतलमाकाशमाकाशमपिभूतलम् ॥ प्रतिरुतिभवत्यंतर्नचकिं चिद्विवर्त्तते ॥ ६६ ॥

मार्यास्मिस्तथाविधंप्रेंखोलिकाक्रीडनसुखमनुभूतमित्युत्प्रेक्षा ॥ ६२ ॥ तरंतःप्लवमानाअद्रिलक्षणागुलुच्छामंजर्योयासुतथाविधाःप्राग्वर्णितस्रजोवलयंत्यापरिवर्त्तयंत्यातया तांडवलीलयापुनःप्रलयआरब्धइवेत्युत्प्रेक्षा ॥ ६३ ॥ असौतस्याःशरीरमेवशरीरकोनिस्पंदंस्थातुमशकन्अशक्नुवन्सन्भ्रमतीत्युत्प्रेक्षा ॥ शकेश्छांदसोविकरणव्यत्ययः ॥ ६४ ॥ कर्मफलभूताविभवास्तदनुष्ठानहेतुविज्ञानानितदनुष्ठानरूपायज्ञाश्चेतित्रिसूत्रयज्ञोपवीतिनीनभसिसरंतीनृत्यंतीसादेवीघनघूत्कारामेघध्वनयस्तैर्घोषिणीवेदघोषणवतीब्रह्मचा रिणीवासीत् ॥ ६५ ॥ अथवातत्रतन्नृत्येनचकिंचिदपिविवर्त्ततेचलतिकिंतुभूतलमाकाशंचक्रमिषेणपरस्परस्मिन्प्रतिबिंबनेनप्रतिकृतिपरस्परसदृशंसत्पर्यायेणभूतलमाकाशं भवतिआकाशंचभूतलंभवतितत्रपश्यतांद्वेअपिसहस्वस्वगतैःपदार्थैरूर्ध्वाधोविवर्त्तेतेइतिभ्रांतिमात्रमित्यर्थः ॥ ६६ ॥

तच्छ्वासवायून्वर्णयति ॥ वृहदिति ॥ ६७ ॥ ६८ ॥ धीराधैर्यवतीस्थैर्यवतीचमेदृष्टिःसंगरेसेनेवतदंगजजगद्वस्तुभिःसहजातानियानिभ्रमणानितत्संभवाच्छ्रमात्सन्नाकुंठितशक्तिरासीदित्यर्थः ॥ ६९ ॥ तस्यादेहदर्पणेवलितेपरिवर्त्तितेसति ॥ ७० ॥ उर्व्यांभवाऔर्व्यःअनलताइवव्यूढाविशकलिताः ॥ ७१ ॥ अंबरेराजहंसाइववृक्षावर्त्तेअंतर्भ्रमंतः ॥ अंताइतिद्रलोपेऽणोदीर्घः ॥ ७२ ॥ तद्देहलक्षणेवारिणिसरसिसुरलोकानामालयःपंक्तयःपद्माइवेत्यनुषज्जते ॥ उत्प्रेक्षापंक्तिनिवेशात्ताभिस्तद्देहेसरोरूपकसमर्थनात् ॥ ७३ ॥ पिंडीभूतैरादित्यैःसमत्विपितस्याअंगेविंध्यादयःसर्वेजंगमतांगताइतिपरेणान्वयः ॥ ७४ ॥ कांचनाचलस्यशिरोरुहेवनेविंध्यश्चिरंतनवैरंनिर्यातयन्निवनृत्यति ॥ तद

बृहन्नासागुहागेहनिर्गताघनघुंघुमाः॥ तत्रोग्रावायवोवांतिघोरघूत्कारकारिणः॥६७॥ नभःकरशतैस्तस्याश्चतुरावृत्तिवर्त्तिभिः॥ भातिचंडानिलोद्भूतैराकीर्णमिवपल्लवैः॥६८॥ तदंगजजगद्वस्तुजातभ्रमणसंभवात्॥ दृष्टिर्द्धीरापिमेमोहेसन्नासेनेवसंगरे ॥ ६९ ॥ प्रोत्थंतेयंत्रवच्छैलानिपतंतिनभश्चराः॥ लुठंत्यमरगेहानिवलितेदेहदर्पणे ॥ ७० ॥ मेरवःपर्णवद्व्यूढामलयाःपल्लवाइव ॥ हिमाद्रयोहिमकणाइवौर्व्योऽनलताइव ॥ ७१ ॥ सत्यामस्यामिवखगाविंध्याविद्याधराइव ॥ वृक्षावर्त्तेभ्रमंतोंताराजहंसाइवांबरे॥ ७२ ॥ द्वीपान्यपितृणानीवसमुद्रावलयाइव ॥ सुरलोकालयःपद्माआसंस्तद्देहवारिणि ॥ ७३॥ विशदाकाशसंकाशस्वप्नांजनपुरोपमे॥ अंगेतस्यावृहज्जंघेपिंडादित्यसमत्विषि॥ ७४ ॥ विंध्योनृत्यतिकांचनाचलवनेसह्यश्चसह्योगिरिःकैलासोमलयोमहेंद्रशिखरीक्रौंचाचलोमंदरः॥ गोकर्णोगगनांगणेवसुमतीविद्याधराणांपुरंसर्वेजंगमतांगतावनभुवस्तस्याःशरीरेसदा ॥ ७५ ॥ अब्धिर्नृत्यतिपर्वतेगिरिरपिप्रोच्चैर्नभःकोटरेव्योमापींदुदिवाकरैःक्वचलितंभूमेरधस्ताद्गतम् ॥ सद्वीपाचलपत्तनोवनगणःप्रोत्कीर्णपुष्पादिविव्यालोलंजगदंबुधाविवतृणंदिक्चक्रकेभ्राम्यति॥ ७६ ॥ व्योम्निभ्रमंतिगिरयोंबुधयोदिगंतलोकांतराणिपुरपत्तनमंडलानि ॥ नद्यःसरांसिमुकुरांतरिवप्रवृद्धवातावकीर्णतृणविक्रमणक्रमेण॥ ७७॥

सह्यःसह्योगिरिःकैलासादयश्चगगनांगणेकोपादिवनृत्यंति ॥ तत्पक्षपाताद्वसुमतीविद्याधराणांपुरंचनृत्यतः ॥ इत्थंसर्वेस्थावराजंगमतांगताइत्यर्थः ॥ ७५ ॥ किंचेदमपरमाश्चर्यम् ॥ अब्धिःपर्वतेनृत्यति ॥ सचगिरिःप्रोच्चैर्नभःकोटरेनृत्यति ॥ तद्व्योमापिइंदुदिवाकरैःसहभूमेरधस्ताच्चलितंसत्क्वगतंनज्ञायते ॥ प्रोत्कीर्णानिपुष्पाणियस्मिंस्तथाविधःसद्वीपाचलपर्वतोवनगणोदिविद्युलोकेसूर्यादिस्थानेनृत्यति ॥ इत्थंव्यालोलंजगदंबुधौतृणमिवदिक्चक्रकेभ्राम्यतीत्यर्थः ॥ ७६ ॥ तथागिरयोव्योम्निभ्रमंति ॥ अंबुधयश्चदिगंतेभ्रमंति ॥ पुरपत्तनमंडलानिनद्यःसरांसिचस्वाश्रयलोकाल्लोकांतराणिमुकुरांतरिवप्रविश्यप्रवृद्धेनवातेनावकीर्णानांतृणानांयानिविक्रमणानिउड्डयनानिलोकेप्रसिद्धानितत्क्रमेणभ्रमंतीत्यर्थः ॥ ७७ ॥

किंचमत्स्यावरवारिणिसमुद्रद्रवमरौ चरंति ॥ नगराणिचभुवीवव्योम्निस्थिराणिभांति ॥ भूधराःखेभांति ॥ गगनंचसंक्षयवारिवाहाःप्रलयमेघाश्चतेषांसमाहारोगगनसंक्षयवा रिवाहमुत्पातवातपरिवृत्तगिरिपुस्थिततत्परमाश्चर्यमित्यर्थः ॥ ७८ ॥ किंचऋक्षोत्करोनक्षत्रसमूहोमणीनांवर्षणवेगइवचारुर्मनोहरःसन्दीपसहस्राणांभ्रमंतियांतियंत्रचक्राणि तत्क्रमेणभूमेरंतर्बहिश्चभ्रमति ॥ यथाविद्याधरामरगणैःप्रणयेनत्वत्सभायांमुक्तंपुष्पवर्षमंतर्बहिश्चभ्रमतितद्वत् ॥ ७९ ॥ किंचतद्देहेसंहाराःप्रलयाःसर्गनिचयाश्चदिनरात्र्योर्भा गेपक्षेउल्लसंति दिनरात्रिप्रायाअल्पाइतियावत् ॥ तथादिवसोत्करादिनरात्रिसमूहाश्चमलिनामलिनयोरजतयोर्विद्रूपमाअत्यल्पाउल्लसंति ॥ कृष्णाःसिताश्चपक्षाःपरितःअ मलायेशुक्लाःकृष्णाश्चवज्रेंद्रनीलादिनिर्मिताःशोभनाआदर्शास्तन्मंडलवदुल्लसंतीत्यर्थः ॥ ८० ॥ तथातद्देहेभास्करनिशाकरमंडलानिरत्नानिसंपन्नानि ॥ तारोत्करानक्षत्रसमू हास्तुतरलामंडलाकाराकांतिर्येषांतथाविधाहाराःसंपन्नाः ॥ स्वच्छान्यंबराण्याकाशास्तुवलितानिवेष्टितानिमहांत्यंबराणिवस्त्राणिसंपन्नानि ॥ तेषुभ्रमद्वैद्युताग्न्यादयःअला

मत्स्याश्चरंतिचमरौवरवारिणीवव्योम्निस्थिराणिनगराणिभुवीवभांति ॥ खेभूधरागगनसंक्षयवारिवाहमुत्पातवातपरिवृत्तगिरिस्थि तंतत् ॥ ७८ ॥ ऋक्षोत्करोभ्रमतिदीपसहस्रयंत्रचक्रक्रमेणमणिवर्षणवेगचारुः ॥ अंतर्बहिश्चपरितःप्रणयेनमुक्तंविद्याधरामरगणैरि वपुष्पवर्षम् ॥ ७९ ॥ संहारसर्गनिचयादिनरात्रिभागेविद्रूपमारजतयोर्दिवसोत्कराश्च ॥ कृष्णाःसिताश्चपरितामलशुक्लकृष्णस्वादर्श मंडलवदाकुलमुल्लसंति ॥ ८० ॥ रत्नानिभास्करनिशाकरमंडलानितारोत्करास्तरलमंडलकांतिहाराः ॥ स्वच्छांबराणिवलितानिमहांब राणिकुर्वंत्यनारतमनल्पमलातलेखाः ॥ ८१ ॥ कल्पांतकालविलुठत्त्रिजगन्मणीनिव्यावर्त्तनैर्झगितिजातझणज्झणानि ॥ तेजांसिझंकृ ततयोर्द्ध्वमधश्चयांतिनानाविधानिगुणवंतिविभूषणानि ॥ ८२ ॥ संग्राममत्तभटखड्गमरीचिवीचिश्यामायमानसकलातपवासराणा म् ॥ व्यावृत्तिभिर्विलुठतामपिसुस्थिराणामाकर्ण्यतेकलकलोजनमंडलानाम् ॥ ८३ ॥ ब्रह्मेंद्रविष्णुहरवह्निरवींदुपूर्वादिवासुराःपरि विवृत्तिभिरातपंतः ॥ अन्येन्यएवविविधाउपयांतियांतिवातावधूतमशकाशनिविभ्रमेण ॥ ८४ ॥

तलेखाअनारतमनल्पंप्रकाशंकुर्वंतीत्यर्थः ॥ ८१ ॥ तन्नृत्येकल्पांतकालेविलुठत्त्रिजगत्व्यावर्त्तनैर्झगितिझटितिजातझणज्झणानिमणीनिसंपन्नानि ॥ तथाझंकृततयाझंका रेणऊर्ध्वमधश्चयांतिसूर्यादितेजांसिनानाविधानिगुणवंतिनूपुरवलयादिविभूषणानिसंपन्नानीत्यर्थः ॥ ८२ ॥ किंचापरमत्याश्चर्यम् ॥ संग्रामेषुमत्तानांभटानांखड्गप्रभावीचि भिःश्यामायमानसकलातपावासरायेषाम् ॥ तथादेवीतांडवेव्यावृत्तिभिर्भ्रमणैर्विलुठतामप्यधिष्ठानब्रह्मस्थैर्यात्सुस्थिराणांवीरजनमंडलानांकलकलोमहायुद्धकोलाहलआ कर्ण्यते ॥ ८३ ॥ किंचेदमपरमाश्चर्यम् ॥ अनंतकोट्यतीतानागतसर्गप्रलयघटितशरीरायाअस्यास्तांडवेब्रह्मेंद्रादयोदेवासुराअधिकारप्रवृत्तिभिरन्येऽन्यएवआपतंतआपद्यमा नाःसंतोवातावधूतमशकानामशनीनांविद्युतामिवचप्रसिद्धेनविभ्रमेणअस्थिरताविलासेनआयांतियांतिच ॥ ८४ ॥

किंचापरमाश्चर्यम् ॥ तत्रतस्याःशरीरेप्रतीयमानेसर्गेसंहारसर्गादयःपरस्परविरुद्धाअपिसर्वभावाःपरस्परासंस्पर्शेनसदासार्द्धंपृथक्कविलसंति ॥ व्यामिश्रतामुपगताअपिविल संतीत्यर्थः ॥ ८५ ॥ किंचात्रतच्छरीरेखेचिदाकाशेमिथ्यैवप्रकचतामतएवखशरीरकाणांशून्यानांसंहारसर्गभुवनावनिविभ्रमाणांभावादधिष्ठानादुद्भवःस्थितिर्विपदपक्षयःक रणमर्थक्रियाक्षमाःपरिवर्त्ताश्चेत्येतेषांसंख्याइयत्तामनागपिनसंलक्ष्यते ॥ ८६ ॥ किंचतत्रतद्वपुषिउत्पाततच्छांत्यादिविरुद्धद्वंद्वजातमेकत्रकोशेरत्नचयइवविभाति ॥ यतस्त द्वपुर्नानारसाअपिपरस्परमप्रतिघाःसर्गपरंपरायस्मिंस्तथाविधमित्यर्थः ॥ ८७॥ किंचतस्याःपरमार्थतश्चिदंबरमयेवपुषिस्वभावभूतःअशास्त्रीयप्रतीतिसिद्धोयोमायावरणलक्ष णोऽस्फुटानुभवभावस्तत्प्रयुक्ताजगद्व्यवस्थाःसर्वक्षयाश्चपरितस्तिमिररोगमलिनदृशाकलितानिअंबरस्थकेशोंड्रकस्फुरणानीवस्फुरंति ॥८८॥ अचलायामधिष्ठानसन्मात्रस्थि

संहारसर्गसुखदुःखभवाभवेहानीहानिषेधविधिजन्ममृतिभ्रमाद्याः॥ सार्द्धंपृथक्कविलसंतिसदैवसर्गैर्व्यामिश्रतामुपगताअपितत्रभा वाः ॥ ८५ ॥ भावोद्भवस्थितिविपत्करणभ्रमाणांसंहारसर्गभुवनावनिविभ्रमाणाम् ॥ मिथ्यैवखेप्रकचतांखशरीरकाणांसंलक्ष्य तेत्रनमनागपिनामसंख्या ॥ ८६ ॥ उत्पातशांतिमरणोत्सवयुद्धसाम्यविद्वेषरागभयविश्वसनादितत्र॥ एकत्रकोशइवरत्नचयोविभा तिनानारसाप्रतिघसर्गपरंपरंतत् ॥८७॥ तस्याश्चिदंबरमयेवपुषिस्वभावभूतास्फुटानुभवभावजगद्व्यवस्थाः॥ सर्वक्षयामलिनदृक्कलि तांबरस्थकेशोंड्रकस्फुरणवत्परितःस्फुरंति ॥८८॥ जगत्संक्षुब्धमक्षुब्धंदृश्यतेस्थितिसंस्थिति॥ संचाल्यमानमुकुरप्रतिबिंबइवास्थितम् ॥८९॥ नृत्यस्फुरत्प्रतापांतर्जगदर्थाःप्रतिक्षणम् ॥ स्थितिंत्यजंतिगृह्णंतिबालसंकल्पसर्गवत् ॥९०॥ क्रियाशक्तिःशरीरेंतःपूर्यमाणाअ नारतम् ॥ राशीभूयविशीर्यंतेजगन्मुद्गकणोत्कराः ॥ ९१ ॥ क्षणमालक्ष्यतेकिंचिन्नकिंचिदपिसाक्षणम् ॥ क्षणमंगुष्ठमात्रैवक्षणमा काशपूरिणी ॥ ९२ ॥ यस्मात्सासकलादेवीसंविच्छक्तिर्जगन्मयी ॥ अनंतापरमाकाशकोशशुद्धशरीरिणी ॥ ९३ ॥

तौसंस्थितिर्यस्यतथाविधंजगदक्षुब्धमेवमायाक्षोभदृष्ट्यासंक्षुब्धंदृश्यतेयतस्तद्विवात्मनाअचलएवगिरिःसंचाल्यमानमुकुरप्रतिबिंबःसंश्चलइवभवतितद्वदास्थितमित्यर्थः ८९ नृत्येनस्फुरत्प्रतापायामायायाअंतर्निविष्टाःसर्वेजगदर्थाःप्रतिक्षणंपरिणामेनपूर्वस्थितिंत्यजंतिअन्यांचस्थितिंगृह्णंति ॥ तत्रबालसंकल्पसर्गएवप्रसिद्धोदृष्टांतइत्यर्थः ॥ तथाचा हुःसांख्याः ॥ प्रतिक्षणपरिणामिनोहिसर्वेभावाइति ॥ ९० ॥ सर्वपदार्थानामुत्पादनार्थमेवकारकक्रियाशक्तयउपयुज्यंते उत्तरेतुभावविकाराःस्वतएवकालेप्रवर्त्तंते यथामु द्गानांराशीकरणेकारकक्रियाशक्तिरुपयुज्यतेविशीर्यप्रसरणेतुस्वःस्निग्धतास्वभावएवहेतुर्नकारकांतरक्रियाशक्तिस्तद्वदित्याह ॥ क्रियाशक्तीति ॥ ९१ ॥ परिणामिस्वभाव जडजगन्मयीत्वादेवसादेवीप्रतिक्षणमन्यथान्यथालक्ष्यतइत्याह ॥ क्षणमिति ॥ ९२ ॥ ९३ ॥

साहिदेवीकालत्रयस्थितस्यसर्वतत्तत्परिणामवैचित्र्यशालिनोजगत्त्रितयस्यांतर्भवाआंतरीचित् अतःकारणाद्यथास्थितेनपर्यायवर्त्तिनातत्तत्कामकर्मवासनापरिपाकानुसा
रेणकचज्जवेनचित्रकृतःपुरुषस्यउदारेमनसिस्थितंयच्चित्रसंसारजालंतत्सदृशेनयथास्थितेनतेनतेनविचित्रेणरूपेणतथाकचतीत्यर्थः ॥ ९४ ॥ तर्हिकिंसासप्रपंचैवनेत्याह ॥
सर्वात्मकेति ॥ सादेवीअविद्याद्दशैकचिदात्मकत्वात्सर्वसंसारात्मैकैकवपुश्चित्रभित्तिरिवास्ते ॥ विद्यानिरस्ताविद्यैकचिद्दात्मकत्वात्तुसंशांतंयन्नूखमाकाशंतद्वपुर्निष्प्रपंचैवास्ते॥
एवंबद्धदृशामुक्तदृशाचगम्यंनिमेषणेनसमुन्मिषितेनचाविद्याविद्याभ्यांपर्यायव्यंजितेनोपलक्षितंपरमार्थतश्चिदेकरूपमनाद्यनंतंवपुर्बिभर्तीसाभातीत्यर्थः ॥ ९५ ॥ विवर्त्तद

कालत्रयस्थितजगत्त्रितयांतरीहिचित्सातथाकचतितेनयथास्थितेन ॥ रूपेणचित्रकृदुदारमनःस्थचित्रसंसारजालसदृशेनकचज्जवे
न ॥ ९४ ॥ सर्वात्मकैकवपुरेकचिदात्मकत्वात्संशांतखैकवपुरेकचिदात्मतत्त्वात् ॥ एवंनिमेषणसमुन्मिषितैकरूपंसाविभ्रतीवपुरनंत
मनादिभाति ॥ ९५ ॥ तस्यांविभातितदनंतशिलात्मकोशेलेखाब्जचक्ररचनादिवदेवदृश्यम् ॥ व्योमात्मकंगगनमात्रशरीरवत्यांचि
त्त्वाद्रवज्जलधिकोशइवोर्मिलेखा॥९६॥ महतीभैरवीदेवीनृत्यंत्यापूरितांबरा ॥ तस्यकल्पांतरुद्रस्यसापुरोभैरवाकृतेः॥ ९७॥ शिरोमं
दाश्रितोग्राग्निदग्धस्थाणुवनावनिः॥ कल्पांतवातव्याधूतावनमालेवनृत्यति ॥ ९८ ॥ कुद्दालोलूखलवृसीफलकुंभकरंडकैः॥ मुसलोदं
चनस्थालीस्तंभैःस्रग्दामधारिणी॥९९॥ एवंविधानांस्रग्दामजालानांकुसुमोत्करम्॥किरंतीसंसृजंतीवनृत्तक्षुब्धंक्षयक्षतम्॥१००॥
वंद्यमानस्तयासोपितथैवाकाशभैरवः॥ तथैवविततकारस्तदोच्चैःपरिनृत्यति ॥ १०१ ॥

शापरिणामदृशाचजीवन्मुक्तानांयौक्तिकानांचतस्यांजगद्भानेदृष्टांतद्वयमाह ॥ तस्यामिति ॥ शिलाश्चस्फटिकशिला ॥ गगनमात्रशरीरवत्यामित्यंतमाद्यदृष्टांतस्यविवरणंशि
ष्टंद्वितीयस्य ॥ ९६ ॥ इत्थंतस्यास्तन्नृत्यस्यचतत्त्वमुपवर्ण्यपुनस्तन्नृत्यमुत्प्रेक्षादिभिर्वर्णयति ॥ महतीत्यादिना ॥ ९७ ॥ कल्पांतरुद्रस्यशिरोललाटस्थानममंदमाश्रितेनउग्रे
णतृतीयनेत्राग्निनादग्धानिअतएवस्थाणुपरिशेषाणिवनानियस्यांतथाविधाअवनिर्भूमिर्यस्यास्तथाविधाकल्पांतवातैर्व्याधूतावनमालावनपंक्तिरिवसानृत्यतीत्युत्प्रेक्षाउपमा
वा॥ ९८ ॥ नकेवलंतस्याःप्राग्वर्णितान्येवस्रग्दामानिकिंतुखनित्रमुसलोलूखलाद्यपीत्याह ॥ कुद्दालेति ॥९९॥ नृत्तक्षुब्धंव्याधूतंक्षयेणभंगेनक्षतंकिरंतीनवंनवंसंसृजंतीव ॥
॥ १०० ॥ १०१ ॥

रक्तासवानांपूर्णयममहिषस्यमहाशृंगंपाणावादायडिंबंडिंबमित्यादिभिस्तालव्यंजकैःशब्दवाद्यैर्नृत्यंत्याउरसिशिरःशिरांस्येवस्रजंकृत्वा बिभ्रत्याताक्ष्र्यपक्षैःशेखरंभूषितवत्या प्रलयेजगद्भुक्त्वामुदितयाकालराव्यावंद्यमानःस्तूयमानोभैरवोवःपायात्ज्ञानप्रतिबंधकदोषनिरासेनरक्षत्वित्याशीः॥ डिंबंडिंबमित्यादेश्चायमर्थः॥ हेभैरवत्वंसर्वप्राणिनांडिंबम नर्थभोगोपाधिस्थूलशरीरादिप्रपंचंआझम्य॥ झमुअदने॥भक्षयित्वाततोडिंबंसूक्ष्मशरीरादिप्रपंचमपिझम्यंभक्ष्यंकृत्वाततोपिसुडिंबंमूलोपाधिभूतंकारणशरीरमपिचरमसाक्षा त्कारेतत्त्वतआविर्भूयप्रझम्यंसम्यग्भक्ष्यंकृत्वापंचमादियोगभूमिकारोपणेनसहसाशीघ्रमेवपचपचसप्तमभूमिकापर्यंतंसम्यक्परिपाच्यविदेहकैवल्येनजरयेतिस्तूयमानइति ॥ इतिनृत्यंत्याकालराव्यासहयुष्माभिःस्तूयमानोभैरवोवःपायादितिवान्वयः॥ १०२ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकाशीतितमःसर्गः ॥८१॥ चिद्रूपस्यशिवस्यात्रतत्त्वंनिष्कृष्यवर्ण्यते ॥ सकलंयावदज्ञातंपरिज्ञातंतुनिष्कलम् ॥ १ ॥ सर्वस्यप्रपंचस्यविस्तरेणप्राक्प्रलयोवर्णितः प्रलीनस्यचतस्यनृत्यंत्याःकालराव्या भूषणादिभावेनगिसद्भावोनृत्तभ्रमणादिचवर्णितमितिनष्टस्यपुनरुन्मज्जनमुक्तमसंभावितंमन्यमानोरामःपृच्छति ॥ किमेतदिति ॥ सर्वनाशेसतिसादेवीकेनांगेननृत्यति ॥ शूर्पफ

डिंबंडिंबंसुडिंबंपचपचसहसाझम्यझम्यंप्रझम्यंनृत्यंतीशब्दवाद्यैःस्रजमुरसिशिरःशेखरंताक्ष्र्यपक्षैः॥ पूर्णरक्तासवानांयममहिषमहा शृंगमादायपाणौपायाद्वोवंद्यमानःप्रलयमुदितयाभैरवःकालराव्या॥ १०२॥ ॥इ०वासि०महारामायणेवा०दे०मो० निर्वाणप्र करणेउ०पाषाणोपाख्यानेकालरात्रिवर्णनंनामैकाशीतितमःसर्गः॥८१॥ ॥७॥ ॥श्रीरामउवाच॥ ॥ किमेतद्भगवन्सर्वनाशे नृत्यतिकेनसा॥ किंशूर्पफलकुंभाद्यैस्तस्याःस्रग्दामधारणम्॥ १॥ किंनष्टंत्रिजगद्भूयःकिंकाल्यादेहसंस्थितम्॥ परिनृत्यतिनिर्वाणंक थंपुनरुपागतम्॥२॥ ॥श्रीवसिष्ठउवाच॥ ॥नासौपुमान्नचासौस्त्रीनतन्नृत्तंनतावुभौ॥ तथाभूतेतथाचारेआकृतीनचतेतयोः॥३॥ अनादिचिन्मात्रनभोयत्तत्कारणकारणम्॥अनंतंशांतमाभासमात्रमव्ययमाततम्॥४॥ शिवंतत्सच्छिवंसाक्षाल्लक्ष्यतेभैरवाकृति॥ तथास्थितोजगच्छांतौपरमाकाशएवसः॥५॥ चेतनत्वात्तथाभूतस्वभावविभवाद्दते॥ स्थातुंनयुज्यतेतस्ययथाहेम्नानिराकृति॥६॥

लकुंभाद्यैर्नष्टैस्तस्याःस्रग्दामधारणंचत्वयोक्तंकिंकथंसंभावनीयमित्यर्थः॥ १ ॥ तदेवस्पष्टमाह ॥ किमिति ॥ नष्टंस्थितंचेत्कथंनिर्वाणमुपरतंजगत्पुनरुपागतंसत्कथंपरिनृत्य तीतिव्याहतंप्रतिभातीत्यर्थः ॥२॥ यदिपरमार्थदृष्ट्यामदुक्तंव्याहतंमन्यसेतर्हिवस्तुनामपरमार्थतश्चिन्मात्रैकरसपूर्णानंदसन्मात्रातिरिक्तस्त्रीपुंसादिजगद्रूपस्यरुद्रदेव्यादिविभागस्य चात्यंतासंभावितत्वात्॥ भ्रांतदृशातुनकिंचिद्व्याहतम् ॥ ब्रह्मसत्तयासदासतांसर्ववस्तूनांनाशानाशयोर्विशेषस्यदुर्निरूपत्वादित्यसकृदावेदितत्वाच्चदृष्टानामपिस्वप्नोन्मादयोरुन्म ज्जनप्रसिद्धेर्मृतानामपिचिराद्भस्मीभूतानांमुनिसिद्धेश्वरादिवरप्रभावात्पुनरागमनप्रसिद्धेर्यावदज्ञानंजगदाकारस्यचित्तेसंस्कारात्मनासर्वेषांसद्भावेनात्यंतभ्रांतिःकेवलजगद्रूपेणस र्वंजगद्दृष्टिनैकमूर्त्यात्मनारुद्रदेव्याद्युपासकैस्तादृशरूपेणचयोगसिद्धिबलाद्द्रष्टुंशक्यत्वादित्याशयेनवसिष्ठउत्तरमाह ॥ नासावित्यादिना ॥ ३ ॥ ४ ॥ शिवंनिरतिशयानंदैकरसं तत्सद्ब्रह्मैवशिवंनीलकंठत्रिनेत्रत्वादिशिवरूपंसत्प्रलयकालेभैरवाकृतिलक्ष्यतेउपासकैरितिशेषः ॥ यतस्तद्वासनानुसारेणसपरमाकाशएवतथातयाआकृत्यास्थितइत्यर्थः॥ ५॥ किंचचेतनेब्रह्मणिजगदुपसंहारःश्रुतिषुप्रसिद्धः नचनिराकारश्चेतनोलोकेकेनचिद्दृश्यतइतिश्रौतोहिसंहर्त्तेश्वरउमासहायंपरमेश्वरंप्रभुंत्रिलोचनंनीलकंठंप्रशांतमित्यादिश्रुतिप्र सिद्धरूपेणसंभावनीयइत्याशयेनाह ॥ चेतनत्वादिति ॥ तृतीयार्थेपञ्चमी ॥ यथाहेम्नानिराकृतियथास्यात्तथास्थातुंनयुज्यतेतथातेनापीत्यर्थः॥ ६॥

१३७

यथाहेम्नोहेमादिद्रव्यस्यपिंडकुंडलाद्यन्यतमाकारावश्यंभावनियमस्तथाचितोप्यवश्यंचेत्याकारावलंबननियमोलोकेप्रसिद्धइतिनिराकारपरिशेषपक्षएवप्रत्युतासंभावितइतिप्रौढिवादेनाह ॥ कथमिति ॥७॥ अज्ञातचितःसविषयतास्वभावत्वादप्याकारोदुस्त्यजइत्याशयेनाह ॥ कथंस्वभावेनेत्यादिना ॥८॥९॥ अपिचनष्टानामपिस्मृतौभानदर्शनाच्चिदृष्ट्याकस्यापिनिरन्वयनाशएवाप्रसिद्धइत्याह ॥ नचेति ॥१०॥ किंचब्रह्मानन्यस्यजगतोब्रह्मसत्तामात्रकातिरिक्तरूपाप्रसिद्धेर्नकस्यचिन्नाशःप्रसिद्ध्यतीत्याह ॥ स्वेति ॥ ननुनिरुक्तंचानिरुक्तंच निलयनंचानिलयनंच विज्ञानंचाविज्ञानंच सत्यंचानृतंचसत्यमभवदितिब्रह्मसत्तातिरिक्तरूपंश्रूयते अनुभवंतिचपामरास्तत्राह॥अन्यत्वमिति ॥ असौब्रह्मात्माबहुस्यांप्रजायेयेतिजगदाकारेणअन्यत्वमुररीकर्तुंतस्माद्वाएतस्मादात्मनआकाशःसंभूतइतिश्रुतेःप्रथमंव्योमानन्यमाकाशाभिन्नंस्वात्मानंकरोतिकिल ॥यदिस्वानन्यं

कथमास्तांवदप्राज्ञचिन्मात्रंचेतनंविना ॥ कथमास्तांवदप्राज्ञमरिचंतिक्ततांविना ॥७॥ कटकादिविनाहेमकथमास्तांविलोच्यताम् ॥ कथंस्वभावेनविनापदार्थस्यभवेत्स्थितिः ॥८॥ विनातिष्ठतिमाधुर्यंकथयेक्षुरसःकथम् ॥ निर्माधुर्यश्चयस्त्विक्षुरसोनहिसतद्रसः ॥९॥ अचेतनंयच्चिन्मात्रंनतच्चिन्मात्रमुच्यते ॥ नचचिन्मात्रनभसोनष्टंकचनयुज्यते ॥ १० ॥ स्वसत्तामात्रकादन्यत्किंचित्तस्यनयुज्यते ॥ अन्यत्वमुररीकर्तुंव्योमानन्यमसौकिल ॥ ११ ॥ तस्मात्तस्ययदक्षुब्धंसत्तामात्रंस्वमासनम् ॥ अनादिमध्यपर्यंतंसर्वशक्तिमयात्मकम् ॥ १२ ॥ तदेतच्चिजगत्सर्गकल्पांतौव्योमभूर्दिशः ॥ नाशउत्पादनंनामविनामाभासनंनभः ॥ १३ ॥ जननंमरणंमायामोहमांद्यमवस्तुता ॥ वस्तुताचविवेकश्चबंधोमोक्षःशुभाशुभे ॥ १४ ॥ विद्याविद्याविदेहत्वंसदेहत्वंक्षणश्चिरम् ॥ चंचलत्वंस्थिरत्वंवात्वंचाहंचेतरश्चतत् ॥ १५ ॥ सदसच्चाथसदसन्मौर्ख्यंपांडित्यमेवच ॥ देशकालक्रियाद्रव्यकलनाकेलिकल्पनम् ॥ १६ ॥ रूपालोकमनस्कारकर्मबुद्धींद्रियात्मकम् ॥ तेजोवार्यनिलाकाशपृथ्व्यादिकमिदंततम् ॥ १७ ॥ एतत्सर्वमसौशुद्धचिदाकाशोनिरामयः ॥ अजहद्व्योमतामेवसर्वात्मैवैवमास्थितः ॥ १८ ॥

व्योमकरोतितर्हिअन्यत्वंकथमुररीकृतंस्यात् ॥ सद्रूपानन्यत्वासंपादनेवाकथंव्योमकृतंस्यात् ॥ सदात्मतालाभएवहिव्योमादेरुत्पत्तिरितिननिरुक्तंचानिरुक्तंचेत्यादिश्रुत्युक्तस्यमूर्त्तामूर्त्तरूपस्यसद्रूपान्यतासिद्धिरित्यर्थः ॥ ११ ॥ किंतर्हिजगद्रूपमितिचेद्ब्रह्मसत्तैव साहितत्त्वाववोधकमानंविनालौकिकदृशाजगत्तत्प्रलयाद्याकारेणसर्पात्मनेवरज्जुर्भासते तत्त्वाववोधकमानेनतुयथार्थरूपेणेतिनिष्कर्षइत्युपसंहरति ॥ तस्मादिति ॥ १२ ॥ विनामाभासनंतत्त्वावेदकमानंविनैवाविद्यादूषितदृशाभासनंतैमिरिकदृशाचंद्रव्योमादिभासनमिवनभःशुद्धसत्तातिरिक्तार्थशून्यमेवेत्यर्थः ॥ १३ ॥ परमार्थतस्तुजननादिएतत्सर्वंशुद्धचिदाकाशोनिरामयइतिपंचमेसंबंधः ॥ मायाविक्षेपोमोहआवरणंतयोःसमाहारः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

सदनन्यत्वमिवचिदनन्यत्वमप्यस्यस्वप्नदृष्टांतेनसंभावनीयमित्याशयेनाह ॥ एतत्सर्वमिति ॥ १९ ॥ ससच्चिदेकस्वभावःपरमात्मा शिवएकोध्येयःशिवंकरःसर्वमन्यत्परित्यज्ये त्यादिश्रुतिषुशिवइत्युक्तएषसनातनःशिवोभवत्येवेतिमयारुद्रमूर्त्तिरुपन्यस्तइत्यर्थः ॥ २० ॥ सएवविष्ण्वाद्याकारेणोपासितवतांहरिरितिवेषेणास्ते ॥ एवंपितामहोप्यन्येषां भवति ॥ किंबहुना चंद्रार्कादिवासनावासितधियांतत्तद्रूपोपिभवतीत्याह ॥ चंद्रइति ॥ तथाचश्रुतिः ॥ इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मान् एकंसद्विप्राबहु धावदंत्यग्नियमंमातरिश्वानमाहुरिति ॥ २१ ॥ सएवानिलोवायुः ॥ ह्यःअतीतंदिनम् ॥ कालमात्रोपलक्षणमेतत् ॥ तत्रयद्वस्त्वस्तिनास्तिचेतिविकल्प्यतेतत्सर्वमेषएवेत्यर्थः ॥ तथाचश्रुतिः ॥ सब्रह्मासहरिःसेंद्रःसोक्षरःपरमःस्वराट् सएवविष्णुःसप्राणःसकालोग्निःसचंद्रमाः सएवसर्वंयद्भूतंयच्चभव्यंसनातनम् ज्ञात्वातंमृत्युमत्येतिनान्यःपंथाविमुक्तये

एतत्सर्वंचविमलंखमेवात्रनसंशयः ॥ अस्मादनन्यत्स्वप्नाद्रिर्दृष्टांतोत्राविखंडितः ॥ १९ ॥ चिन्मयःपरमाकाशोयएवकथितोमया ॥ एषोसौशिवइत्युक्तोभवत्येषसनातनः ॥ २० ॥ सएषहरिरित्यास्तेभवत्येषपितामहः ॥ चंद्रोर्कइंद्रोवरुणोयमोवैश्रवणोनलः ॥ २१ ॥ अनिलोजलदोंभोधिर्ह्योयद्वस्त्वस्तिनास्तिच ॥ इत्येतेचिन्मयाकाशकोशलेशाःस्फुरंत्यलम् ॥ २२ ॥ एवंविधाभिःसंज्ञाभिर्मुधाभावन येदृशाः ॥ स्वभावमात्रबोधेनभवंत्येतेतुतादृशाः ॥ २३ ॥ अबोधोबोधइत्येवंचिद्व्योमैवात्मनिस्थितम् ॥ तस्माद्वैद्वैतमैक्यंनास्त्येवेतिप्र शाम्यताम् ॥ २४ ॥ तावत्तरंगत्वमयंकरोतिजीवःस्वसंसारमहासमुद्रे ॥ यावन्नजानातिपरंस्वभावंनिरामयंतन्मयतामुपेतः ॥ २५ ॥ ज्ञानेतुशांतिंसतथोपयातियथानसोब्धिर्नतरंगकोसौ ॥ यथास्थितंसर्वमिदंचशांतंभवत्यनंतंपरमेवतस्य ॥ २६ ॥ ॥ इ० वा० महा रामायणेवा० दे० मो० नि० उ० पाषाणोपाख्यानेशिवस्वरूपवर्णनंनामद्व्यशीतितमःसर्गः ॥ ८२ ॥ ॥ ७ ॥ ॥

इति ॥ इतिवर्णिताएतेहरिपितामहादयोभावाश्चिन्मयस्यब्रह्माकाशकोशस्यगुणाद्युपाधिप्रयुक्तालेशाअंशाः ॥ २२ ॥ मुधाभावनयाअन्यथाग्रहणकारिण्याअविद्ययापर मार्थस्वभावमात्रबोधेनतुएतेतादृशाश्चिन्मात्रस्वभावाभवंति ॥ २३ ॥ तथाचब्रह्मैवकंचित्कालमज्ञदृशाअबोधइतिजीवजगद्वेषेणस्थितम् ततोविद्वद्दृष्ट्याबोधइतिवेषेणस्वरूपे स्थितमितिफलितम् नतदन्यत्किंचित्कदाचिदपीत्याह ॥ अबोधइति ॥ २४ ॥ तथाचजीवःअज्ञातस्वात्मस्वरूपेसंसारमहासमुद्रेतावत्कालंजन्ममरणभ्रमणादिनानातरंगत्वंक रोति यावत्परब्रह्मात्मकंस्वस्वभावंनजानाति यदातुजानातितदातन्मयतामुपेतःसन्निरामयंतदेवास्तेइत्यर्थः ॥ २५ ॥ तदेवाह ॥ ज्ञानेत्विति ॥ २६ ॥ ॥ इतिश्रीवासिष्ठ म० तात्पर्यप्रकाशेनि० उ० द्व्यशीतितमःसर्गः ॥ ८२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

चिन्मात्रमेवसशिवोनकालीभैरवाकृतिः ॥ बोधायकल्पनादृष्ट्यातथाभातीतिवर्ण्यते ॥ १ ॥ अतएवतवमयाअविद्याभ्रांतिनिरासेनतात्विकशिवस्वभावदृष्ट्युद्घाटनायजगत्प्रलयरुद्रनृत्यादिस्वानुभूतंवर्णितंनतदेवपरमार्थइतिभ्रमितव्यमित्याह ॥ चिन्मात्रेत्यादिना ॥ १ ॥ २ ॥ तत्त्वदृशातुमयातदाकृतिश्चिदाकाशमात्रमेवदृष्टा ॥ अन्यस्तत्त्वदृष्टिहीनः ॥ ३ ॥ तत्त्वदृष्ट्यैवमयाकल्पांतादिसर्वंमायामात्रमितिपरिज्ञातम् ॥ ४ ॥ ५ ॥ कल्पनादृष्टिदृष्टस्यापितवपुरतोवर्णनंतुवाच्यवाचकशब्दार्थसंबंधकल्पनंविनानिर्विशेषस्यव्युत्पादनायोगात्तत्कल्पनेनत्वद्व्युत्पादनार्थमित्याह ॥ वाच्येति ॥ ६ ॥ तन्निरसनंतुकल्पितप्रक्रियायांसत्यताबुद्धिर्माभूदित्येतदर्थमित्याह ॥ यदेवेति ॥ हेरामसदैवचिरा

श्रीवसिष्ठउवाच ॥ ॥ चिन्मात्रपरमाकाशएषयःकथितोमया ॥ एषोसौशिवइत्युक्तस्तदारुद्रःप्रनृत्यति ॥ १ ॥ यासौतस्याकृतिर्नासावाकृतिःकृतिनांवर ॥ तच्चिन्मात्रघनंव्योमतथाकचतितादृशम् ॥ २ ॥ मयादृष्टातदाकाशमेवशांतंतदाकृतिः ॥ मयैवतत्परिज्ञातंनान्यःपश्यतितत्तथा ॥ ३ ॥ यथानामसकल्पांतःसरुद्रःसाचभैरवी ॥ मायामात्रंतथासर्वंपरिज्ञातमलंमया ॥ ४ ॥ चिद्व्योमैवपरंशून्यंसन्निवेशेनतेनतत् ॥ तथासंलक्ष्यतेनामभैरवाकारतांगतम् ॥ ५ ॥ वाच्यवाचकसंबंधंविनाबोधोनजायते ॥ यस्मात्तस्मात्त्वयिमयादृष्टमेवप्रवर्णितम् ॥ ६ ॥ यदेववाच्युपारूढमेतद्रामसदैवते ॥ रूढाधिभौतिकदृशःक्षणान्मायात्मतांगतम् ॥ ७ ॥ नभैरवीसानैवासौभैरवोनैवसंक्षयः ॥ समस्तमेवतद्भ्रांतिमात्रंचिद्व्योमभासते ॥ ८ ॥ स्वप्ननिर्माणपुरवत्संकल्परणवेगवत् ॥ कथार्थसार्थरसवन्मनोराज्यविलासवत् ॥ ९ ॥ यथास्वप्नपुरंस्वच्छेव्योम्निमौक्तिकधीर्यथा ॥ यथाकेशोंड्रकंव्योम्नितथाऽचिद्भातिचिद्घने ॥ १० ॥ चिन्मात्राकाशमेवाच्छंकचतिस्वात्मनात्मनि ॥ तथानामयदाभातितदात्मैवजगत्तया ॥ ११ ॥ यथाचिद्व्योम्निकचतिस्वएवात्मातथापटे ॥ तथाकचतितत्त्वकल्पांतानलनर्तने ॥ १२ ॥ शिवयोरेवमाकारोनिराकारोंगवर्णितः ॥ अधुनाशृणुतेवक्ष्येनृत्यस्यानृत्ततास्थितिम् ॥ १३ ॥

भ्यासाज्जगतिरूढाधिभौतिकदृशस्तेयदेववाच्युपारूढंतदेवक्षणान्मायात्मतांसत्यताभ्रांतिगतम् ॥ ७ ॥ नभैरवीत्यादिनापुनर्निषेधेनतत्समस्तमेवभ्रांतिमात्रंपरमार्थतश्चिद्व्योमैवेतिभासते ॥ ८ ॥ ९ ॥ तथाअचित्चिद्घनेभातिभ्रांत्या ॥ १० ॥ प्रबोधेनतर्हिकथंभातितदाह ॥ चिन्मात्रेति ॥ ११ ॥ तर्हिकिंस्वप्रकाशचिदात्मनःस्वपरकचनेविशेषोस्तिनेत्याह ॥ यथेति ॥ १२ ॥ तथाचकचनैकस्वभावंनिर्विशेषंचिद्व्योमैवशिवयोस्तात्त्विकोनिराकारएवाकारःपरिशिष्टइत्युपसंहृत्यनृत्यस्यस्थितिस्तुमायामात्रत्वादनृत्ततास्थितिरेवेत्यंशंव्युत्पाद्यमानंशृण्वित्याह ॥ शिवयोरिति ॥ १३ ॥

यथाभ्रांत्यादृश्यमानंशुक्त्यादिवस्तुरजताद्यवस्तुतयाविनास्थातुंनशक्नोतितथाचेतनाधातोश्चेननमपिकिंचित्संस्पंदनंविनास्थातुंनशक्नोति ॥ भ्रांतेःस्वभावविपर्यासकत्वनियम साम्यादित्यर्थः ॥ १४ ॥ अतएवसद्रूपंब्रह्मसर्वजगद्घटितदेहरुद्रदेव्याकारविपर्यासेनअधिष्ठानतास्वभावेनस्थितमित्याह ॥ स्वभावादित्यादिना ॥ १५ ॥ वस्तुताअधिष्ठानता ॥ १६ ॥ १७ ॥ १८ ॥ प्रामाणिकदृशानास्त्येवेतिनतस्मिन्कल्पेप्रश्नः ॥ अप्रामाणिकदृष्टिकल्पेपृच्छामि ॥ यदेवकिंचिदस्तीवतत्सर्वंकल्पांतेप्रविनश्यति ॥ १९ ॥ तत्तथास तिचितःअचेत्यंचेत्यरहितंचिन्नामवाकथम् तथाआश्रयाभावेचेताचेतयितावाकथम् स्वातिरिक्तचितिक्रियाभावेचिद्घनश्चेततिवाकथम् ॥ त्रिपुटीनोपपद्यतइत्यर्थः ॥ यदिचा विद्यातदानीमसदपिदृश्यंदर्शयतीतिततएवत्रिपुटीसिद्धिरुच्येततर्हिसर्गप्रलययोरविशेषः ॥ नह्यचेतितेसर्वजगद्घटितेरुद्रदेवीशरीरेतन्नृत्यंवासंभवति ॥ नहियुगपद्द्वैतमैक्यंचभाव

चेतनंचेतनाधातोःकिंचित्संस्पंदनंविना ॥ क्वचित्स्थातुंनशक्नोतिवस्त्ववस्तुतयायथा ॥ १४ ॥ स्वभावाच्चेतनंतस्माद्रुद्रत्वेनतथास्थित म् ॥ हेमेवरूपकत्वेनसंनिवेशविलासिना ॥ १५ ॥ यन्नामचेतनंयत्रतदवश्यंस्वभावतः ॥ स्पंदधर्मिभवत्येववस्तुताहिस्वभावजा ॥ १६ ॥ यःस्पंदश्चिद्घनस्यास्यशिवस्यास्यसएवनः ॥ स्ववासनावेशवशान्नृत्यमेवविराजते ॥ १७ ॥ अतःसकल्पांतशिवोरुद्रोरौद्राकृतिर्ध्रुतम् ॥ यन्नृत्यतिहितद्विद्धिचिद्घनस्पंदनंनिजम् ॥ १८ ॥ ॥ श्रीरामउवाच ॥ ॥ प्रामाणिकदृशादृश्यमिदंनास्त्येववस्तुतः ॥ यदेवास्तीवतत्सर्वं कल्पांतेप्रविनश्यति ॥ १९ ॥ तत्कल्पांतमहाशून्येएतस्मिन्परमांबरे ॥ कथंचिन्नामवाचेत्यंचेताचेततिचिद्घनः ॥ २० ॥ ॥ श्रीवसिष्ठउ वाच ॥ ॥ एतदेवतदाप्यंगद्वैतैक्यांभोधिशांतये ॥ यदिचिन्मात्रनभसश्चेत्यमस्तिनकिंचन ॥ २१ ॥ नकिंचिच्चेततितत्तःक्वचित्किंचित्क दाचन ॥ सर्वंशांतंदृषन्मौनंविज्ञानघनमंबरम् ॥ २२ ॥ यच्चेदंचेत्यतेनामतत्स्वभावोस्यवल्गति ॥ चित्स्वभावस्यशांतस्यस्वसत्ताया मवास्थितेः ॥ २३ ॥

यितुंशक्यमितिभावः ॥ २० ॥ हेअंगयद्येवंशंकसेतदापितवद्वैतैक्यसंदेहांभोधिशांतयेएतदेवोत्तरंशृणु ॥ तदेवाह ॥ यदीति ॥ यदिसर्वप्रलयेपरिशिष्टस्यचिन्मात्रनभसःकिंच नचेत्यमस्तितदाततोद्वितीयासत्वादेवक्वचिद्देशेकदाचनकालेकिंचिदपिवस्तुकश्चिदपिनचेतति ॥ यच्चत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादिश्रुतेरितिभावः ॥ २१ ॥ तथाचा यंप्रामाणिकदृष्टिसिद्धोनित्यमुक्तात्मस्वभावएवप्रलयइतित्वयोपन्यस्तइतिप्रथमकल्पएवसंपन्नइत्याह ॥ सर्वमिति ॥ तथाचाप्रामाणिकदृशाद्वितीयकल्पमाश्रित्यप्रश्नोनोचि तइतिभावः ॥ २२ ॥ यदितुप्रथमकल्पवैलक्षण्यायप्रलयेअविद्यादिकिंचिच्चेत्यमभ्युपगच्छसितर्हितेनैवत्रिपुटीजगद्घटितरुद्रदेवीशरीरेतन्नृत्यंचसेत्स्यतीतिनासंभावितंकिंचिन्म योक्तमित्याशयेनाह ॥ यच्चेदमित्यादिना ॥ स्वभावःअविज्ञातात्मस्वरूपमस्यब्रह्मणःप्रलयेपिरुद्रदेवीतन्नृत्यरूपेणवल्गतिप्रथते ॥ नचैतावतावास्तवकूटस्थचित्स्वभावहानिरि त्याह ॥ चित्स्वभावस्येति ॥ २३ ॥

भ्रांत्याअन्यथात्वप्रतिभासेपिवास्तवस्वभावाप्रच्युतौदृष्टांतमाह ॥ यथेति ॥ २४ ॥ तथाचसर्वंज्ञेयंज्ञात्वापिचित्आत्मनाआत्मनिसदैवज्ञेयंशून्यम् ॥ तथाचप्रलयकालेपिसर्गारंभक्षणादारभ्ययावत्प्रलयक्षणंयद्यथासंपन्नंतत्सर्वंस्वंकचनंवेत्तीतिसदासर्वज्ञंतद्ब्रह्मप्रसिद्धमित्यर्थः ॥ २५ ॥ अतएवतत्सर्गकालेपिप्रलयमतीतानागतसर्वप्रलयसहस्रैःसहपश्यत्येवेत्यपिसंभावनीयमित्याशयेनाह ॥ स्वयमित्यादिना ॥ २६ ॥ २७ ॥ अतएवहिसर्वदृश्यस्यतदभावस्यचपरस्परबाधितत्वात्परमार्थवस्तुनोभावाभावोभयनिषेधावधित्याशयेनोपसंहरति ॥ तस्मादित्यादिना ॥ सर्गप्रलययोर्विशेषोपिस्वानुभवेनैवसिद्धोनयुगपत्प्रत्ययेनापलपितुंशक्यइतिभावः ॥ २८ ॥ २९ ॥ ३० ॥ हेरामत्वमपिईश्वरइव

यथास्वप्नेचिदेवांतःपुरपत्तनवद्भवेत् ॥ पुरादिनतुतत्किंचिद्विज्ञानाकाशमेवतत् ॥ २४ ॥ आत्मनात्मनिचिच्छून्यंज्ञात्वाचज्ञेयमप्यलम् ॥ तथाचसर्गादारभ्यवेत्तिस्वंकचनंचतत् ॥ २५ ॥ स्वयमंतःकचंतीचित्स्वभावाकाशकोटरे ॥ क्षणकल्पजगद्भ्रांतिंधत्तेकल्पनयास्वया ॥ २६ ॥ स्वयमंतःकचत्कांतिश्चिदाकाशःस्वभावखे ॥ अयंसोहमयंचत्वंकरोतीत्यादिकल्पनम् ॥ २७ ॥ तस्मान्नद्वैतमस्तीहनचैक्यंनचशून्यता ॥ नचेतनाचेतनंवैमौनमेवनतच्चवा ॥ २८ ॥ नचेततिकचित्किंचित्कश्चिच्चेत्यात्मभावतः ॥ तेनचेतापिनास्तीवमौनमेवावशिष्यते ॥ २९ ॥ निर्विकल्पसमाधिर्हिसिद्धांतःसर्ववाङ्मये ॥ तच्चजीवदृपन्मौनंतूष्णीमेवातआस्यताम् ॥ ३० ॥ कुर्वन्निजंप्रकृतमेवयथाप्रवाहमाचारजालमचलःपरमार्थमौनात् ॥ निर्मानमोहमदभेदमनंगजीवमाकाशकोशविशदाशयशांतमास्व ॥ ३१ ॥ ॥इ०वा०वा०दे०मो०नि०उ०पाषा० विश्वरूपदर्शनंनामत्र्यशीतितमःसर्गः ॥ ८३ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ अनंतरंमुनेब्रूहिकालीकिमिवनृत्यति ॥ किंशूर्पफलकुद्दालमुसलादिस्रजावृता ॥ १ ॥

लोकदृशानिजंप्रकृतमेवराज्यपरिपालनाद्याचारजालंयथाप्रवाहंपितृपितामहप्राप्तक्रमेणकुर्वन्नेवस्वदृशापरमार्थमौनान्निर्मानंनिर्मोहमपगतमदभेदमनंगैस्तदभिमानिजीवेनचरहितमाकाशकोशवद्विशदाशयंचयथास्यात्तथाशांतंनिर्विक्षेपमास्व ॥ ३१ ॥ ॥ इतिश्रीवासिष्ठ०म०रा०तात्पर्यप्रकाशेनि०उ०त्र्यशीतितमःसर्गः ॥ ८३ ॥ ॥ ७ ॥ याकालीनृत्यतीतित्वयावर्णितासाकिमिवकिंस्वरूपेत्यर्थः ॥ साचकिमात्मकशूर्पफलकुद्दालादिस्रजाआवृतातदुभयंब्रूहीत्यर्थः ॥ कालःकिमिवनृत्यतीतिपाठेपिकालात्मककालीस्वरूपस्यैवप्रश्नस्तस्याएवपूर्वोत्तरग्रंथयोर्नृत्यस्यशूर्पमुसलादिस्रग्धारणस्यचवर्णनात् ॥ १ ॥ शिवशक्त्योर्निजंरूपंविविच्यात्रोपवर्ण्यते ॥ शूर्पादिमालारूपंचसत्यासत्याविमर्शतः ॥ १ ॥

शिवस्यस्वरूपमनिरूप्यतच्छक्तिस्वरूपनिरूपणायोगादुभयरूपंसहैवनिरूपयितुमुपक्रमते॥सइति॥चलनस्वभावरजोगुणप्राधान्येनस्पंदशक्तिसत्वगुणस्वच्छताप्राधान्येनसर्वत श्चित्प्रतिबिंबव्याप्त्याजगत्संस्कारघटितत्वेनचसर्गादिसंकल्पविकल्पहेतुत्वेनमनःसाम्यान्मनोमयीम् शिवेतादात्म्येनाध्यासात्तदधीनसत्तास्फूर्त्तिकत्वाच्चतदनन्यांमायांतांविद्धी त्यर्थः ॥२॥अनन्यत्वंदृष्टांताभ्यांसमर्थयति ॥ यथेति ॥ मोक्षात्प्रागेवसर्वकालव्यवहारसमाप्तेःसर्वकालव्याप्तिरस्त्येवेत्याशयेनसर्वदेत्युक्तिः ॥३॥ यतोवाइमानिभूतानिजायंते येनजातानिजीवंतीत्यादिश्रुतिपुजगत्सर्गप्राणस्पंदादितत्क्रिययैवशिवस्यब्रह्मणोलक्षणादपितदनन्यत्वमित्याह ॥ स्पंदेनेतिद्वाभ्याम् ॥ ४ ॥ ननुश्रुतौसर्गादिब्रह्मलक्षणंतच्छिवस्य कथमुच्यतेतत्राह ॥ शिवमिति ॥ यतःसर्वाःश्रुतयोब्रह्मविदश्चशिवमेवब्रह्मविदुरतोनाशिवंब्रह्मान्यदस्तीत्यर्थः ॥ ५ ॥ सोकामयतबहुस्यांप्रजायेयेत्यादिपुसास्पंदशक्तिरेवशि

श्रीवसिष्ठउवाच॥ ॥सभैरवश्चिदाकाशःशिवइत्यभिधीयते॥अनन्यांतस्यतांविद्धिस्पंदशक्तिंमनोमयीम्॥ २॥ यथैकंपवनस्पंदमेकमौष्ण्यानलौयथा॥चिन्मात्रंस्पंदशक्तिश्चतथैवैकात्मसर्वदा ॥ ३ ॥ स्पंदेनलक्ष्यतेवायुर्वह्निरौष्ण्येनलक्ष्यते॥ चिन्मात्रममलंशांतंशिवइत्यभिधीयते॥ ४ ॥ तत्स्पंदमायाशक्त्यैवलक्ष्यतेनान्यथाकिल॥ शिवंब्रह्मविदुःशांतमवाच्यंवाग्विदामपि॥ ५॥ स्पंदशक्तिस्तदिच्छेदंदृश्याभासंतनोतिसा॥ साकारस्यनरस्येच्छायथावैकल्पनापुरम्॥ ६ ॥ करोत्येवशिवस्येच्छाकरोतीदमनाकृतेः॥सैषाचितिरितिप्रोक्ताजीवनाज्जीवितैषिणाम्॥ ७॥ प्रकृतित्वेनसर्गस्यस्वयंप्रकृतितांगता ॥ दृश्याभासानुभूतानांकरणात्सोच्यतेक्रिया॥ ८॥ वडवाग्निशिखाकाराच्छोष्याच्छुष्केतिकथ्यते ॥ चंडित्वाच्चंडिकाप्रोक्तासोत्पलोत्पलवर्णतः ॥ ९ ॥ जयाजयैकनिष्ठत्वात्सिद्धासिद्धिसमाश्रयात्॥ जयंतीचजयाप्रोक्ताविजयाविजयाश्रयात्॥ १० ॥ प्रोक्तापराजितावीर्याद्दुर्गादुर्ग्रहरूपतः ॥ ॐकारसारशक्तित्वादुमेतिपरिकीर्तिता॥ ११ ॥

वस्येच्छेत्युक्तासैवसत्यकामस्यतस्यमनोराज्यमिवजगत्तनोतीत्याह ॥ स्पंदशक्तिरिति ॥ ६ ॥ सैषास्वांतर्गतचिदाभासप्रदीप्तत्वाच्चितिशक्तिर्जीवचैतन्यमितिप्रोक्ता ॥ ७ ॥ प्रकृतित्वेनजगदाकारपरिणामित्वेन ॥ तथाचश्रुतिः ॥ मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरमिति ॥ दृश्याभासेष्वनुभूतानामुत्पत्त्याप्तिविकृतिसंस्कारलक्षणानांचतुर्विधफलानांकरणात् ॥ ८ ॥ द्वीपिचर्मपरीधानाशुष्कमांसातिभैरवेत्यादिपुराणेपुतस्याःशुष्कताप्रसिद्धेरपिनिमित्तमाह ॥ वडवेति ॥ यतःसमुद्रादिजलार्द्रब्रह्मांडदेहासावडवाग्निशिखाकाराद्ग्रैष्मादित्यादिज्योतिषःसकाशाच्छोष्याअतःशुष्केतिकथ्यतइति ॥ ९ ॥ यतोजयाअतोजयंतीचप्रोक्ता तथाचनामद्वयस्याप्येकमेवप्रवृत्तिनिमित्तम् ॥ विशिष्टोजयस्तु विजयापदस्य ॥ एवमपेप्यूह्यम् ॥ १० ॥ उमेतिपरिकीर्त्तिता ॐकारघटकानामकारोकारमकाराणांउमअइतिव्यत्यासेनघटनेटापिउमाशब्दनिष्पत्तेरितिभावः ॥ समेतिपरिकीर्त्तितेतिपाठेतुॐकारलक्ष्यतुरीयस्वरूपस्थूलसूक्ष्मादिसर्वप्रपंचसारचिच्छक्तित्वात्सर्ववैषम्यरहितेत्यर्थः ॥ ११ ॥

गायनाजापकास्तेषांपरमपुरुषार्थालत्वात् ॥ स्वर्गापवर्गसाधनसर्वकर्मोपासनज्ञानदृष्टीनांसरणात्प्रसरात् ॥ १२ ॥ भवत्यस्माद्विश्वमितिभवईश्वरस्तद्देहानुषंगिणी ॥ उमाना मपुनःप्रकारांतरेणव्याचष्टे ॥ सुप्तानामिति ॥ चार्थेअथशब्दः ॥ सुप्तानांप्रबुद्धानांचत्रैलोक्यस्थसर्वप्राणिनांहृदिअनाहतनादात्मनाअकारादिमात्रात्रयशून्यस्यप्रणवनादभा गस्यशब्दब्रह्माख्यस्यनित्यंसर्वदैवोच्चारणादंगुष्ठपरिमितहृत्पुंडरीकच्छिद्रेलिंगाकारेणस्थितस्यदहराकाशाख्यस्यशिवस्यमूर्ध्निभूषणभूतात्विंदुरूपाइंदुकलाउमेत्युच्यते ॥ तथा चोक्तंवायवीयसंहितायाम् ॥ ओमित्येकाक्षरंब्रह्मब्रह्मणःप्रतिपादकम् ॥ अउमेतित्रिमात्राभिःपरस्तादर्द्धमात्रया ॥ तत्राकारःस्थितोभागेज्वालालिंगस्यदक्षिणे ॥ उकारश्चोत्त रेतद्वन्मकारस्तस्यमध्यतः ॥ अर्द्धमात्रात्मकोनादःश्रूयतेलिंगमूर्द्धनीति ॥ हंसोपनिषदिचपूर्वदलेपुण्यमतिरित्यादिहृदयपुंडरीकदलेषुजीवस्यमतिभेदमुक्त्वालिंगेसुषुप्तिःपद्मत्यागे तुरीयंयदाहंसोनादेविलीनोभवतितत्तुरीयातीतमितिलिंगमूर्द्धस्थेनादेसर्वोपाधिविलयेनब्रह्मप्रतिष्ठातुरीयातीतावस्थेत्युक्तमितिभावः ॥ १३ ॥ कालीकिमितिनृत्यतीतिप्रश्नेकि

**गायत्रीगायनात्मत्वात्सावित्रीप्रसवस्थितेः ॥ सरणात्सर्वदृष्टीनांकथितैषासरस्वती ॥ १२ ॥ गौरीगौरांगदेहत्वाद्भवदेहानुषंगिणी ॥ सुप्तानामथबुद्धानाममात्रोच्चारणाद्धृदि ॥ १३ ॥ नित्यंत्रैलोक्यभूतानामुमेतींदुकलोच्यते ॥ शिवयोर्व्योमरूपत्वादसितंलक्ष्यतेवपुः ॥ १४ ॥ नभोहिमांसमेताभ्यांदृष्टिकृष्टंविलोक्यते ॥ अस्तिनभोनभस्येवतौनभोनभसिस्थितौ ॥ १५ ॥ नभोनिभावभूतांगावच्छौव्यो म्नइवाग्रजौ ॥ हस्तपादास्यमूर्ध्नांयद्बहुत्वाल्पत्वभेदतः ॥ १६ ॥ नानात्वंहलशूर्पादिस्रग्धरत्वंचतच्छृणु ॥ साहिक्रियाभगवतीपरिस्पंदैक रूपिणी ॥ १७ ॥ दद्यात्स्नायाच्चजुहुयादित्याद्यग्रशरीरिणी ॥ चितिशक्तिरनाद्यंतातथाभातात्मनात्मनि ॥ १८ ॥ साकाशरूपिणीकांता दृश्यश्रीःस्पंदधर्मिणी ॥ देव्यास्तस्याहियाःकाल्यानानाभिनयनर्त्तनाः ॥ १९ ॥ ताइमाब्रह्मणःसर्गजरामरणरीतयः ॥ क्रियासौग्रामनग रद्वीपमंडलमालिकाः ॥ २० ॥**

मितिकालीतिवर्णनिमित्तप्रश्नमभिप्रेत्योत्तरमाह ॥ शिवयोरिति ॥१४॥ ननुचिद्रूपयोःशिवयोर्जडव्योमरूपताकथंतत्राह ॥ नभइति ॥ चिद्रूपाभ्यामेवैताभ्यांमांसमयंस्वशरीर मिवश्यामंसर्गसंकल्पदृष्ट्यादृष्टमतःश्याममिवजडमिवचविलोक्यते ॥ निराधारस्थितिरपितयोर्नभोवदेवानुमेयेत्याह ॥ अस्तीति ॥१५॥ अमूर्त्तत्वस्वच्छत्वेअपितयोर्व्योमवदे वबोध्येइत्याह ॥ नभोनिभाविति ॥ अग्रजौज्येष्ठभ्रातराविवेत्युपमादार्ढ्यायसंभावना ॥ अमूर्त्तत्वेहस्तपादादिमत्वंहलशूर्पादिस्रग्धरत्वंचकथमितिचेत्तत्रोत्तरंश्रावयति ॥हस्ते त्यादिना॥हस्तपादास्यमूर्ध्नंइतिसमाहारद्वंद्वैकवद्भावः ॥ हस्तादेर्यद्बहुत्वाल्पत्वभेदतोनानात्वंवैचित्र्यंयच्चहलशूर्पादिस्रग्धरत्वंतच्छृण्वितिपरेणान्वयः ॥ १६ ॥ हियस्मात्साभग वतीअनाद्यंताचितिशक्तिरपिआत्मनास्वेच्छयैवस्वात्मनिसर्ववैदिकक्रियारूपाभूत्वादद्यात्स्नायाज्जुहुयादित्यादिवेदविहितदानस्नानयागादिश्रेष्ठशरीरिणीसंपन्नातस्मात्तस्यादे व्यायानानाविधाभिनयसहितानर्त्तनास्ताइमाब्रह्मणःकर्मफलरूपाःसर्वप्राणिसर्गस्थितिजरामरणरीतयोबोध्याइतिपरेणान्वयः ॥ १७ ॥ १८ ॥ १९ ॥ यतःअसौदेवीक्रि याअतोनिरवयवायाःक्रियायाअप्रसिद्धेःस्वरूपप्रसिद्ध्यर्थमेवकल्पितहस्तपादाद्यवयवात्मिकाग्रामनगरद्वीपमंडलमालिकाःशरीरांतर्द्धंत्तैःस्पंदान्करोतिस्वांक्रियारूपतांप्रक टयतीतियावत् ॥ २० ॥

कालीनामनिर्वचनेपितस्याःक्रियैकस्वभावत्वंब्रह्मांडशरीरतयासर्वलोकावयवधारिणीत्वंचप्रसिद्ध्यतीत्याशयेनाह ॥ कालीति ॥ कलगतौसंख्यानेचेतिधातोर्हिकालश
ब्दःकालीशब्दश्चनिष्पद्यते ॥ कलिःकामधेनुरितिचवैयाकरणाधारणादिसर्वक्रियावाचीकलधातुरित्याहुः ॥ तथाचेयंब्रह्मांडलक्षणानांबीजकोशानांकालिकाकलयित्रीनि
र्मात्रीधारयित्रीपरिणामादिविकारप्रापयित्रीचक्रियास्वयंसतीकमलिनीपद्मिनीलतेवकालीश्यामलासंपन्ना ॥ अतएवहिस्वपुष्पाद्यवयवीभूतामिमांपृथ्व्यादिदृश्यलक्ष्मींहृदि
धत्तइत्यर्थः ॥ एवंजगदंगधारणेपितस्याअसंगोदासीनचिद्रूपशिवस्वभावत्वान्निरवयवत्वमेवेत्याह ॥ नकदाचनेति ॥ २१ ॥ २२ ॥ अंगाभावेप्यंगव्यपदेशेदृष्टांतानाह ॥ य
थेति ॥ २३ ॥ ज्योत्स्नायाश्चंद्रिकायाश्चेत्यंप्रबोधनीयंकुमुदाद्यंगम् ॥ ज्योत्स्नांगमिंदोरितिपाठेनुस्पष्टम् ॥ एवंतस्याःकालात्मकंजगदंगकंक्रियास्वरूपमुपवर्ण्यवास्तवंस्वरूपं

स्पंदान्करोतिधत्तेंतःकल्पितावयवात्मिका ॥ कालीकमलिनीकालीक्रियाब्रह्मांडकालिका ॥ २१ ॥ धत्तेस्वावयवीभूतांदृश्यलक्ष्मीमिमां हृदि ॥ नकदाचनचिद्देवीनिर्दिष्टावयवाक्वचित् ॥ २२ ॥ शिवत्वाव्यतिरेकेणशिवतैवंविदृश्यताम् ॥ यथांगशून्यताव्योम्नःस्पंदनंमातरिश्वनः ॥ २३ ॥ ज्योत्स्नायाश्चेत्यमेवंहिदृश्यमंगंचितेःक्रिया ॥ शिवंशांतमनायासमव्ययंविद्धिनिर्मलम् ॥ २४ ॥ नमनागपितत्रास्तिस्तैमित्यंस्पंदधर्मता ॥ साक्रियैवतथारूपासतिबोधवशाद्यदा ॥ २५ ॥ व्यावृत्त्यैवतथैवास्तेशिवइत्युच्यतेनदा ॥ चितिशक्तेःक्रियादेव्याःप्रतिस्थानंयदात्मनि ॥ २६ ॥ यथाभूतस्थितेरेवतदेवशिवउच्यते ॥ देव्याःक्रियायाश्चिच्छक्तेःस्वरूपिण्यामहाकृतेः ॥ २७ ॥ कल्पिताकारधारिण्याअनन्यावयवाइमे ॥ सर्गाःसज्जनतावर्गालोकाआलोकभास्वराः ॥ २८ ॥ सद्वीपसागराःपृथ्व्यःसवनावनयोद्रयः ॥ सांगोपांगास्त्रयोवेदाःसविद्यास्थानगीतयः ॥ २९ ॥ सविधिप्रतिषेधार्थाःसशुभाशुभकल्पनाः ॥ सदक्षिणाग्नयोयज्ञाःपुरोडाशाद्यशंसिनः ॥ ३० ॥ भूपालोलूखलबृसीशूर्पयूपादिसंयुताः ॥ संग्रामाःसायुधग्रामाःसशूलशरशक्तयः ॥ ३१ ॥

वर्णयति ॥ शिवमिति ॥ २४ ॥ तत्रक्रियास्वरूपंतस्याअवोधदशामात्रदृश्यमवास्तवंशिवरूपंतुबोधदृश्यंवास्तवमित्याह ॥ सेति ॥ २५ ॥ यदाबोधवशात्क्रियास्वभावाद्या
वृत्यतथैववास्तवस्वभावेनास्तेनदैवशिवइत्युच्यते ॥ कूटस्थस्यचितिशक्त्यात्मिकायादेव्याआत्मनिस्वस्याअविद्यावशाद्यस्तिस्थानंप्रतिकूलस्पंदजडभावेनावस्थानंतदेवक्रिये
त्युच्यते ॥ २६ ॥ विद्ययायथाभूतचिन्मात्रस्वभावस्थितेरेवहेतोःशिवइत्युच्यते ॥ २७ ॥ तथाचकल्पितजगद्देहधारिण्यानृत्येकल्पितागीतयइचतादृशशूर्पमुसलादिस्रग्दाम
भूषणमेवोचितमितिवक्तुंभूमिकांरचयति ॥ कल्पिताकारेति ॥ संतोविद्यमानाजनतावर्गायेषुइमेवक्ष्यमाणाःसर्वे ॥ २८ ॥ २९ ॥ पुरोडाशरूपंयदाद्यमदनीयंतच्छंसिनस्तन्नि
रूप्याः ॥ यज्ञानांद्रव्यदेवतानिरूप्यत्वादितिभावः ॥ ३० ॥ युद्धानामपियोद्धृस्वर्गसंपत्त्यादिहेतुविहितकर्मत्वेनयज्ञसाम्यात्तदंगैःसहनिर्देशः ॥ भूपालोलूखलवृस्यादिघटित
स्रग्दामसंयुताः ॥ ३१ ॥

लोकाश्चतुर्दशेत्यंतानांसर्वेषामिमेकल्पिताकारधारिण्यादेव्याअनन्यावयवाइतिपूर्वेणसंबंधः ॥ ३२ ॥ एवंप्रश्नद्वयेत्वयासमाहितेपिममप्राक्तर्गकृतद्वैतैक्ययौगपद्यासंभवशं कायाःसम्यक्समाधानंनवृत्तम् नष्टस्यासतोऽर्थक्रियाकारित्वासंभवात् स्वसत्तावलेनकार्यसत्तासंपादनमेवहिकारणानांकार्यार्थक्रिया उपादानेनकार्यस्यतत्तापहारश्चनाशः नचैकस्मिन्नेवकालेकारणेनस्वकार्येसत्तासंपाद्यतेअपह्रियतेचेतिश्लिष्यते नवासर्वकारणसदात्मप्रवृत्तसत्ताकैःपदार्थैःप्रलयेस्वस्वार्थक्रियासंभावयितुंशक्येत्याशयेनरामःपृच्छति॥ चितेरिति॥ रुद्रकालीशरीरिण्याश्चितेरपेप्रलयकालेप्यतीतानागताःसर्वेसर्गाःकल्पाःप्रलयाश्चस्थिताइतियत्त्वयावर्णितंतत्रपृच्छामि येस्थिताःसर्गास्तेकिमात्मन्यर्थक्रियासमर्थेसत्स्वभावेतिष्ठंतिउतअसत्यास्तादृशसत्स्वभावशून्यामृगतृष्णांबुप्रायाइतिवदेत्यर्थः ॥ ३३ ॥ जगतःप्रलयस्यचकदाचिदपिनात्यंतिकंसत्त्वंनाप्यसत्त्वंकिंतुसत्यसंकल्पानुसारिचितासत्यमितिचेतितंसत्यमसदितिचेतितमसत्यंनस्वतोस्यकिंचिद्व्यपदेशार्हंरूपमस्ति ॥ तथाचप्रलयकालेप्यैंदवसर्गाःस्थिताअर्थक्रियासमर्थाश्चतत्संकल्पचितो दृष्ट्या इतरसंकल्पदृष्ट्यातुनेनस्थितानप्रलीनाश्चेतिप्राग्वर्णितमेवेत्याशयेनवसिष्ठउत्तरमाह ॥ रामेत्यादिना ॥ यद्वस्तुतयासत्यसंकल्पचितातत्तद्भोक्तृवासनाकर्मबीजोद्

सभुशुंडीगदाप्रासहयेभभटभासुराः ॥ ज्ञातयोभूतसंघानांचतुर्दशसुरादिकाः ॥ चतुर्दशाब्धिद्वीपोर्व्यस्तथालोकाश्चतुर्दश ॥ ३२ ॥ श्रीरामउवाच॥ ॥चितेःकल्पाःशरीरिण्याःसर्गायेंगेस्थितास्तथा॥तेकिमात्मनितिष्ठंतिउतासत्यावदेतिभो॥३३॥ ॥श्रीवसिष्ठउवाच॥ रामासौकिलचिच्छक्तिस्तयायच्चोदितंतथा॥ तत्रचेतितमेवातःसत्यंचेदमिवाखिलम् ॥ ३४ ॥ तत्प्रतिबिंबितंवाद्यान्मुकुरप्रतिबिंबव त् ॥ सत्यंतदंतरेवास्तिचितेर्नासत्यमर्थतः ॥ ३५ ॥ चिद्रूपस्यतथाप्यंतःसत्संकल्पपुरंभवेत् ॥ दृढध्यानाद्विशुद्धायाश्चितेर्भवतुसाकथम् ॥ ३६ ॥ आदर्शेष्वथवास्वप्नेसर्गःसंकल्पनेस्तुवा ॥ सआत्मन्यर्थकारित्वात्सत्यइत्येवमेमतिः॥ ३७॥ ममनार्थायसइतिवक्षिचेत्तत्क थंभवेत्॥देशांतरगताःसर्वेभवंत्यर्थायसंप्रति॥ ३८ ॥

दनेनसर्गायवाप्रलयायवाचोदितंतथातैर्भोक्तृभिःप्रचेतितमनुभूतमेव ॥ अतस्तदनुभवितृदृशाइदमखिलंसत्यमिव ॥ चादन्यदृशाअत्यंताप्रसिद्धेरसत्यमिव ॥ ३४ ॥ कुतःसत्य मिवतत्राह ॥ तदिति ॥ यतस्तत्वाह्यान्मुखादेर्बिंबान्निमित्तान्मुकुरप्रतिबिंबवत्पूर्वानुभववासनादिनिमित्तात्तत्साक्षिचितिप्रतिबिंबितंतदंतरेवास्तिअतोऽर्थतस्तत्प्रतिसत्यमेव ॥ ३५ ॥ कथंतर्ह्यसत्यंतत्राह ॥ चिद्रूपस्येति ॥ तथातदनुभवबलात्सत्यत्वेपिचिद्रूपस्यांतरचिद्रूपस्यप्रवेशायोगात्तत्संकल्पनगरवन्मिथ्यैवभवेत् ॥ अतएवध्यानदार्ढ्येनवासना क्षयेतत्रसक्तिरेवनास्तीत्याह ॥ दृढेति ॥ ३६ ॥ प्रतीतिमात्रेणाइदृशासत्यत्वंतुप्रतिबिंबस्वप्नाद्यर्थानामपिस्तुवचेतेषामपितदंतःस्वानुरूपार्थक्रियाकारित्वदर्शनादित्याह ॥ आद र्शेष्विति ॥ ३७ ॥ सआदर्शांतर्गतोघटादिर्ममबाह्यजलाहरणाद्यर्थायसमर्थोनेतिचेत्त्वंवक्षिवदसितर्हिश्णु ॥ तदादर्शांतर्गतंबहिरर्थायकथंभवेत् ॥ नह्यन्यत्रविद्यमानमन्यत्र जलाहरणाद्यसमर्थमित्येतावताअसद्भवति ॥ किंतवदेशांतरगताःसर्वेघटाद्यर्थाःसंप्रतितेगृहेजलाहरणाद्यर्थायसमर्थाभवंतीतिकाकुः ॥ ३८ ॥

देशांतरंतेषामर्थक्रियाकारित्वमित्यदर्पणस्वमाद्यंतरर्थक्रियातुप्रतिबिंबादेरप्यस्त्येवेत्याह ॥ यथेति ॥ तद्भावंस्वमादिद्रष्टृभावम् ॥ ३९ ॥ अतएवतत्तदर्थक्रियाद्रष्टृदृष्ट्यैवतत्सत्यं नान्यदृष्ट्येतिव्यवस्थितंतस्यसत्यत्वमित्याह ॥ यदिति ॥ आत्मनस्तद्द्रष्टात्मनःसत्यम् अतत्तांअतद्द्रष्टृतामुपेयुपःअन्यस्यपुरुषस्यदृशानैवसत्यम् ॥ ४० ॥ तद्वदेवप्रकृतेपियोज्य मित्युपसंहरति ॥ तस्मादिति ॥ ४१ ॥ अन्यथानेषामसत्यत्वेसर्वात्मापरंतत्वंकथंस्यात् ॥ नह्यत्यंतासतस्तत्त्वमात्मावाप्रसिद्धइतिभावः ॥ ४२ ॥ अतएवपरस्वमाद्यर्थाअपि योगिभिःप्राप्यंतेइच्छयाउपभुज्यंतेचेत्याह ॥ प्राप्यंतइति ॥ अन्येनतत्स्वामपुरुषातिरिक्तेनापिपरकायप्रवेशेनतद्धृदयंप्रविश्यतन्मनोभावंगतेनयथादेशांतरेविद्यमानाःपर्वतग्रा

यथादेशांतरग्रामस्तद्गतस्यार्थकृद्भवेत् ॥ सर्वंतथैवतद्भावंगतस्यार्थविनिश्चयात् ॥३९॥ यद्यथाभूतसर्वार्थक्रियाकारिप्रदृश्यते ॥ तत्स त्यमात्मनोन्यस्यनैवातत्तामुपेयुषः ॥४०॥ तस्माच्चिच्छक्तिकोशस्याःसर्वाःसर्गपरंपराः ॥ सत्यआत्मेतितद्भावंगतस्यान्यस्यनाखिलाः ॥४१॥ भूतभव्यभविष्यस्याःसंकल्पस्वप्नपूर्गणाः ॥ सर्वेसत्याःपरंतत्वंसर्वात्माकथमन्यथा ॥४२॥ प्राप्यंतेयोगसिद्धेनतद्भावंतुगतेनते ॥ अन्येनपर्वताग्रामागत्यादेशांतरेयथा ॥४३॥ चालितस्ययथागाढनिद्रस्यस्वप्नपत्तनम् ॥ नलुठत्येवलुठितमित्यप्यनुमतंस्फुटम् ॥४४॥ तथाचलंत्यालुठितंतस्यादेहगतंजगत् ॥ नलुठत्येवमुकुरप्रतिबिंबमिवस्थितम् ॥४५॥ सत्रैलोक्यमहारंभःसत्योपिभ्रांतिमात्रकम् ॥ भ्रांतिमात्रस्यकेनामलुठनालुठनेवद ॥४६॥ कदास्वप्नपुरंसत्यंकदास्वप्नपुरंमुधा ॥ कदास्वप्नपुरंभग्नंकदास्वप्नपुरंस्थितम् ॥४७॥ भ्रां तिर्वकेवलंसैवदृश्यश्रीर्यावदग्रगा ॥ त्वंविद्धीमामपिभ्रांतिंजगल्लक्ष्मीमवास्तवीम् ॥४८॥ संकल्पनेमनोराज्येस्वप्नेसंकथनेभ्रमे ॥ य थापुरानुभवनंत्रैलोक्यानुभवंतथा ॥४९॥ अहमितिजगदितिनांतर्भ्रांतिरियंप्रकचतीवचितः ॥ परमाकाशकृशाख्याशाम्यतिनिपुणं परिज्ञाता ॥५०॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०पाषा० शिवशक्तिवर्णनंनामचतुरशीतितमःसर्गः ॥८४॥ ॥श्री वसिष्ठउवाच ॥ ॥इतिनृत्यतिसादेवीदीर्घदोर्दंडमंडलैः ॥ परिस्पंदात्मकैर्व्योमकुर्वाणाघनकाननम् ॥१॥

मास्तद्गतस्याप्राप्यंतेतद्वत् ॥ ४३ ॥ नृत्येनकाल्याश्चलनेपितद्देहगतभूम्याद्यचलनेदृष्टांतमाह ॥ चालितस्येति ॥ शनैःपर्यंकस्यान्यत्रनयनेनशयनस्थलादन्यत्रचालितस्या पि ॥ ४४ ॥ दार्ष्टांतिकेयोजयति ॥ तथेति ॥ ४५ ॥ तदचलनेयुक्त्यंतरमाह ॥ सइति ॥ ४६ ॥ ४७ ॥ इमांइदानींतनीमपि ॥ ४८ ॥ तथात्रैलोक्यानुभवंविद्धीत्यनुषज्जते ॥ ४९ ॥ चितःअंतःअहमितिजगदितिचवस्तुतोनास्ति ॥ परंतुइयंआकाशःकृशइतीवआख्यायतइत्याख्याभ्रांतिःकचति ॥ नह्याकाशेकार्श्यंकाणर्थंवास्ति ॥ साह्यज्ञानाद्भ्रां तिः ॥ अतएवनिपुणंपरिज्ञाताशाम्यतीत्यर्थः ॥ ५० ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वा०उ०चतुरशीतितमःसर्गः ॥ ८४ ॥ ॥ ५ ॥ ॥ देव्यास्तथाप्रनृत्यंत्यादृष्ट्वा स्पष्टाचतंशिवम् ॥ प्रेम्णातदंगेविलयादेकीभावोत्रवर्ण्यते ॥ १ ॥ परिस्पंदात्मकैर्दीर्घदोर्दंडमंडलैर्व्योमघनंकाननंकुर्वाणासादेवीइतिप्रागुक्तरीत्यानृत्यति ॥ १ ॥

अज्ञातस्वतत्त्वाचितिशक्तिरेवासौक्रिया ॥ साचतथानृत्यतिस्वभावादेवेत्यर्थः ॥२॥३॥ अलातस्पंदश्चक्राद्याकारमिवसचित्स्पंदएवजगदाकारंधत्तेइत्याह ॥ चित्स्पंदइति ॥ यथामनोराज्यकल्पनैवद्धदिपुराकारंधत्तेतद्वत् ॥ अथवाजगदेवसानभेदइत्याह ॥ सैवेति ॥ ४ ॥ अथशिवेच्छासाशिवाभिन्नेत्याह ॥ पवनस्येति ॥ इच्छात्मिकायास्तस्याःकथंपूर्णकामशिवाभेदस्तत्राह ॥ यथेति ॥ यथाअनिलस्यांतःस्पंदोनानिलस्वरूपादन्यइत्यस्पंदएवएवंशिवेच्छापिशिवादनन्येत्यनिच्छैवतद्रूप्येतिभावः ॥ ५ ॥ कथममूर्त्तायाइच्छायामूर्त्तजगदाकारस्तत्राह ॥ अमूर्तइति ॥ आनिलःअनिलाश्रितःस्पंदः ॥ ६ ॥ संरंभःप्रेमनिर्भरस्तद्वशतोयदाशिवःस्पृष्टस्तदाप्रकृतिंगंतुंप्रवृत्तेतिव्यवहितेनान्वयः ॥ ७ ॥

क्रियासौनृत्यतितथाचितिशक्तिरनामया॥ अस्याविभूषणंशूर्पकुद्दालपटलादिकम्॥ २ ॥शरशक्तिगदाप्रासमुसलादिशिलादिच॥ भावाभावपदार्थौघकलाकालक्रमादिच॥३॥ चित्स्पंदोंतर्जगद्वत्तेकल्पनेवपुरंद्धदि॥ सैववाजगदित्येवकल्पनैवयथापुरम्॥४॥ पवनस्ययथास्पंदस्तथैवेच्छाशिवस्यसा॥ यथास्पंदोनिलस्यांतःप्रशांतेच्छस्तथाशिवः॥ ५॥ अमूर्त्तोमूर्त्तमाकाशेशब्दाडंबरमानिलः॥ यथास्पंदस्तनोत्येवंशिवेच्छाकुरुतेजगत्॥६॥ नृत्यंत्याथयदातत्रतथातस्मिन्परांबरे॥ काकतालीययोगेनसंरंभवशतःस्वयम्॥७॥ निकटस्थःशिवःस्पृष्टःसमनागभ्रमंतिकम्॥ वाडवोग्निःस्वनाशायावहंत्येवांबुलेखया॥८॥ स्पृष्टमात्रेशिवेतस्मिंस्ततःपरमकारणे॥ प्रवृत्ताप्रकृतिंगंतुंसाशनैस्तनुतांतथा॥ ९ ॥ अनंताकारतांत्यक्त्वासंपन्नागिरिमात्रिका॥ ततोनगरमात्रासौततश्चद्रुमसुंदरी॥ १० ॥ ततोव्योमसमाकाराशिवस्यैवाकृतिंततः॥ साप्रविष्टासरिच्छांतसंरंभेवमहार्णवम्॥ ११॥ एकएवाभवदथोशिवयापरिवर्जितः॥ शिवएवशिवःशांतआकाशेशमनोभितः॥१२॥ ॥श्रीरामउवाच॥ ॥भगवञ्छिवसंस्पृष्टासाशिवापरमेश्वरी॥ किमर्थमागताशांतिमितिमेब्रूहितत्त्वतः॥ १३॥ ॥श्रीवसिष्ठउवाच॥ ॥सारामप्रकृतिःप्रोक्ताशिवेच्छापारमेश्वरी॥ जगन्मायेतिविख्यातास्पंदशक्तिरकृत्रिमा ॥ १४ ॥ सपरःप्रकृतेःप्रोक्तःपुरुषःपवनाकृतिः॥ शिवरूपधरःशांतःशरदाकाशशांतिमान्॥ १५ ॥ भ्रमतिप्रकृतिस्तावत्संसारेभ्रमरूपिणी ॥ स्पंदमात्रात्मिकासेच्छाचिच्छक्तिःपारमेश्वरी॥ १६ ॥ यावन्नपश्यतिशिवंनित्यतृप्तमनामयम्॥ अजरंपरमाद्यंतवर्जितंवर्जितद्वयम्॥ १७॥

अंतिकंअभ्रमिवतिरोधायकंस्वावरणशक्त्यंशंमनाक्अपनीयेतिशेषः ॥ यथावहंत्यासमुद्रांबुलेखयावाडवाग्निःस्वनाशायस्पृश्यतेतद्वत् ॥ ८ ॥ प्रकृतिंअव्यक्तभावम् ॥ ९॥ तत्रादौभौतिकानंताकारत्यागेनभूतमात्रभावमाह ॥ अनंतेति ॥ ततःपंचीकरणत्यागेनसूक्ष्मभूतात्मनानगरमात्रा ॥ ततोविचित्रवासनामात्रपल्लवशाखाशालित्वात्द्रुमइवसुंदरी ॥ १० ॥ अव्याकृतव्योमसमाकारा ॥ ११ ॥ आकाशेप्राग्वर्णितेशमनःसर्वसंहर्त्तासर्वोपप्लवशांत्याशिवएकएवाभितोऽभवत् ॥ १२ ॥ किमर्थंकिंनिमित्तम् ॥ १३ ॥ १४॥ ॥ १५ ॥ सापारमेश्वरीइच्छा ॥ १६ ॥ तथाचेच्छायाइष्टप्राप्तिपर्यंतमेवस्पंदस्तत्प्राप्तौनुशांतिरेवोचितेतिभावः ॥ १७ ॥

॥ १८ ॥ प्रकृतित्वंकार्याकारपरिणामम् ॥ १९ ॥ अत्रोपपत्तिमाह ॥ आपगेत्यादि ॥ २० ॥ आयसीअयोविकारक्षुरादिसंबंधिनीधारेव ॥ २१ ॥ वनादिच्छायांप्रविष्टस्य पुंसोनिजच्छायायथातच्छरीरकंप्रविशतितद्वत् ॥ २२ ॥ तर्हिवनाद्बहिर्निर्गमनेपुनश्छायेवब्रह्मप्राप्तस्यापिपुनःसंसृतिःस्यात्तत्राह ॥ चेतित्वेति ॥ पुनरागमनेनिमित्तस्याज्ञान स्यबाधादितिभावः ॥ २३ ॥ पुनःसंसारेच्छायांहिपुनरागमःसंभाव्येततत्त्वबोधेसैवदुर्लभेत्याह ॥ साधुरिति ॥ चोरमेवभ्रांत्यायावत्स्वेहितंपरिजानाति चोरोयंममाहितइतिवि

संविन्मात्रैकधर्मित्वात्काकतालीययोगतः॥ संविद्देवीशिवंस्पृष्ट्वातन्मयीवभवत्यलम् ॥ १८ ॥ प्रकृतिःपुरुषंस्पृष्ट्वाप्रकृतित्वंसमुज्झति॥ तदंतरेकतांगत्वानदीरूपमिवार्णवे॥ १९॥ आपगाहिपयोमात्रंसंगअर्णवएवसा ॥ यदातदातमेवाशुप्राप्यतत्रैवलीयते ॥ २० ॥ चितिः शिवेच्छासादेवंतमेवासाद्यशाम्यति ॥ जन्मस्थानशिलांप्राप्यतीक्ष्णधारायथायसी ॥ २१ ॥ पुंसश्छायांनिजच्छायाप्रविष्टस्यशरीर कम् ॥ यथाशुप्रविशत्येवप्रकृतिःपुरुषंतथा ॥ २२ ॥ चेतित्वाचिन्निजंभावंपुरुषाख्यंसनातनम् ॥ भूयोभ्रमतिसंसारेनेहतत्तांप्रयाति हि ॥ २३ ॥ साधुर्वसतिचोरौघेतावद्यावदसौनतम् ॥ परिजानातिविज्ञायनतत्ररमतेपुनः ॥ २४ ॥ द्वैततावदसद्रूपरमतेभ्रमतेचितिः ॥ परंपश्यतिनोयावत्तंदृष्ट्वातन्मयीभवेत् ॥ २५ ॥ चितिनिर्वाणरूपंयत्प्रकृतिःपरमंपदम् ॥ प्राप्यतत्तामवाप्नोतिसरिदब्धाविवाब्धिताम् ॥ २६ ॥ तावद्विमोहवशतश्चितिराकुलेपुसर्गेपुसंसरतिजन्मदशासुतासु ॥ यावन्नपश्यतिपरंतमथाशुदृष्ट्वातत्रैवमज्जतिघनंमधुनीव भृंगी ॥ २७ ॥ संप्राप्यकस्त्यजतिनामतदात्मतत्त्वंप्राप्यानुभूयचजहातिरसायनंकः ॥ शाम्यंतियेनसकलानिनिरंतराणिदुःखानिजन्म मृतिमोहमयानिराम ॥ २८ ॥ ॥ इत्यार्षेवा० महारामायणेवा० दे० मो० नि० उ० पाषाणोपाख्यानेप्रकृतिपुरुषक्रमवर्णनंनामपं चाशीतितमःसर्गः ॥ ८५ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शृणुरामकथंतत्रमहाकाशेतथास्थितः ॥ देहभ्रांतिंतुतांत्यक्त्वासरु द्रोप्युपशाम्यति ॥ १ ॥

ज्ञायतुतत्रनरमते ॥ २४ ॥ २५ ॥ यद्यस्माच्चितिनिर्वाणंप्रशांतंरूपमेवपरमंनिरतिशयानंदंपदंतत्तस्मात्प्रकृतिरज्ञचिदपिज्ञानेनतत्प्राप्यतत्तामवाप्नोति ॥ २६ ॥ उक्तमेवार्थंवित्र स्योपसंहरति ॥ तावदितिद्वाभ्याम् ॥ स्पष्टम ॥ २७ ॥ २८ ॥ ॥ इतिश्रीवासिष्ठ० तात्पर्यप्रकाशेनि० उ० पंचाशीतितमःसर्गः ॥ ८५ ॥ ॥ ७ ॥ ॥ ब्रह्मांडस्वर्प रपासिरुद्रदेहस्यसौक्ष्म्यतः ॥ चिदाकाशेतिरोभावःशिलायामत्रवर्ण्यते ॥ १ ॥ तत्प्रदेशांतरेष्वन्यशिलावृक्षतृणादिषु ॥ सर्वत्रसर्गवैचित्र्यदर्शनंत्रह्मणीर्यते ॥ २ ॥ तत्रादौरुद्र देहोपसंहारक्रमंश्रावयति ॥ शृण्विति ॥ यथाइत्यर्थेकथंशब्दः ॥ सप्राग्वर्णितप्रभावः ॥ १ ॥

१ मूलस्थनतमित्यस्यायमर्थइतिभाति

तौ जगत्खंडौ ऊर्ध्वाधस्तनब्रह्मांडखर्परे चेति त्रयोपि चित्रे अर्पिता लिखिता इव निस्पंदा एव तत्राकाशे तदा आसन् ॥ २ ॥ अर्केण सूर्यालिकया दृशा रोदसी द्यावाभूमी इव ॥ कोणनेति पाठे कटाक्षेण रोदसी द्यावाभूमिभूतौ तौ जगत्खंडाविति व्याख्येयम् ॥ ३ ॥ घोणा नासिका तदुपलक्षितमुखाकृष्टेन श्वासेन ॥ ४ ॥ भुक्तेब्रह्मांडखंडलक्षणे उपेक्षीरमंडं च मंडकमंडलं चेत्येते द्वे येन ॥ जलाद्यावरणलक्षणक्षीरमंडसहिते वा ब्रह्मांडखंडमंडकमंडले द्वे व्याख्येये ॥ क्षीरमंडेन सह हिमंडकमंडलं तद्धुजां रोचते ॥ ५ ॥ अभ्रमिव लघुरभवत् ॥ यष्टिर्दंडस्तत्स

सरुद्रस्तौ जगत्खंडौ तदा चित्र इवार्पिताः ॥ निस्पंदा एव तत्रासन्प्रेक्षमाणे स्थिते मयि ॥ २ ॥ ततो मुहूर्तमात्रेण स रुद्रस्तौ नभोंतरे ॥ खंडौ विलोकयामास दृशार्केणेव रोदसी ॥ ३ ॥ ततो निमेषमात्रेण घोणाश्वासेन खंडकौ ॥ तौ समानीय चिक्षेप पातालांतरिवानने ॥ ४ ॥ अतिष्ठदेक एवासावेकं खे खमिवाखिले ॥ भुक्तब्रह्मांडखंडोग्रमंडमंडकमंडलः ॥ ५ ॥ ततो मुहूर्तमात्रेण लघुः सोभ्रमिवाभवत् ॥ ततोभवद्यष्टिसमस्ततः प्रादेशमात्रकः ॥ ६ ॥ ततः काचकणाकारो मया दृष्टः स तादृशः ॥ ततः सोणूभवन्दृष्टो मया खाद्दिव्यदृष्टिना ॥ ७ ॥ परमाणुरथो भूत्वा ततस्त्वंतर्द्धिमाययौ ॥ इत्यसौ शममायातः शरदंबुदखंडवत् ॥ ८ ॥ तादृशोपि महारंभः पुरः पश्यत एव मे ॥ इति सावरणे तेन तब्रह्मांडकवाटके ॥ ९ ॥ विनिगीर्णे क्षुधार्त्तेन हरिणेनेव पर्णके ॥ अथाभून्निर्मलं व्योम शांतं ब्रह्मैव केवलम् ॥ १० ॥ अनादिमध्यपर्यंतं संविदाकाशमात्रकम् ॥ इत्यहं दृष्टवांस्तत्र कल्पांतमुरुविभ्रमम् ॥ ११ ॥ दर्पणप्रतिबिंबाभं शिलाशकलकोटरे ॥ अथ तामंगनां स्मृत्वा तां शिलां तं च विभ्रमम् ॥ १२ ॥ राजद्वारगतो ग्राम्य इवाहं विस्मयं गतः ॥ तामालोकितवान्भूयः कलधौतशिलामहम् ॥ १३ ॥ यावत्सर्वत्र संत्यत्र सर्गाः काल्या इवांगके ॥ बुद्धिनेत्रेण दृश्यंते दिव्याक्ष्णावानते यथा ॥ १४ ॥ सर्वत्र सर्वदा सर्वं यदस्त्येव तदा तथा ॥ दूरवत्प्रेक्ष्यते मां सदृशा यद्येव सा शिला ॥ १५ ॥

मः ॥ ६ ॥ काचकणः सूक्ष्मं काचशकलम् ॥ खादाकाशादप्यणूभवन् ॥ ७ ॥ ८ ॥ ९ ॥ अल्पे पर्णे पर्णके ॥ निर्मलं दृश्यकालुष्यरहितम् ॥ १० ॥ पाषाणोदरसंसारकथासमाप्तिं सूचयन्नुपसंहरति ॥ इत्यहमिति ॥ कल्पांतं महाप्रलयम् ॥ ११ ॥ तामंगनां विद्याधरीम् ॥ १२ ॥ ग्रामे भवो ग्राम्यः कदाप्यदृष्टनगरो जन इव ॥ तां शिलां पूर्वदृष्टप्रदेशात् प्रदेशांतरेष्वप्यालोकितवान् ॥ १३ ॥ यावदिति साकल्येयनइत्यर्थे वा ॥ प्राग्दृष्टे काल्या अंगके शरीर इव सर्वत्र सर्गाः संति ॥ कल्पाइवेति पाठे कल्पाः सर्गा इवेति मिथ्यात्वसूचक इवशब्दो व्याख्येयः ॥ ते सर्गाः ॥ १४ ॥ यदि सा शिला मां सदृशैव दूरस्थवस्तुवदापाततः प्रेक्ष्यते तर्हि एका शिलैवेत्यन्वयः ॥ १५ ॥

१ शिलांतर्गतं ब्रह्मवृत्तं लयपर्यंतं तद्विलासं चेत्यर्थः

॥ १६ ॥ संध्याजलदस्यकांचनवर्णप्रसिद्धेःसइवसुंदरी ॥ १७ ॥ जगदारंभैर्मंथरंसंक्लिष्टम् ॥ अंबरमितिपाठेतुजगतामारंभायत्रतथाविधमंबरंयस्मिन् ॥ १८ ॥ तथापूर्वदृष्टप्रदेशवदेवसुषिराकारेणानार्थसुंदरम् ॥ इवशब्दोमिथ्यात्वद्योतकः ॥ १९ ॥ २० ॥ २१ ॥ २२॥ परयाआधिभौतिकेदेहभावभ्रांतिशून्ययासर्वसाक्ष्यहंभावबुद्ध्यैव ॥ तत्रतत्रदृष्टान्विशेषान्प्रपंचयति ॥ क्वचिदित्यादिना ॥ प्रायशोबहुव्रीहयःसर्वत्र ॥ जायमानःप्रजापतिर्यस्मिन् ॥ जायमानप्रजापतिनाकल्प्यमानर्क्षेत्याद्युत्तरश्लोकार्द्धेनसहतत्पुरुष

दृश्यतेतच्छिलैवैकानतुसर्गादिकिंचन ॥ सावस्थिताशिलैवैकरूपानिबिडमंडला ॥ १६ ॥ कलधौतमयीस्फारासंध्याजलदसुंदरी ॥ ततोहंविस्मयाविष्टःप्रविचारितवान्पुनः॥ १७॥ शिलायामपरंभागंतथैवपरयादृशा ॥ यावत्तमपिपश्यामिजगदारंभमंथरम्॥१८॥ तथैवसुषिराकारइवनानार्थसुंदरम् ॥ पुनरन्यंतथैवाहंप्रदेशंपरिदृष्टवान्॥ १९॥ सर्गसंरंभवलितंयावत्तमपितादृशम्॥ यंयंप्रदेशंपश्यामिशिलायास्तत्रतत्रवै॥ २० ॥ जगत्पश्यामिविमलमादर्शइवबिंबितम् ॥ मयातिकौतुकेनाथसर्वास्तस्यगिरेःशिलाः॥ २१ ॥ अन्विष्टाभूमिभागाश्चतृणगुल्मादयस्तथा॥ यावत्सर्वत्रतत्तादृग्जगदस्तियथास्थितम्॥२२॥ बुद्ध्यैवदृश्यतेनाक्ष्णापरयाविविधाकृति॥ क्वचित्प्रथमसर्गात्मजायमानप्रजापति ॥ २३ ॥ कल्प्यमानर्क्षचंद्रार्कदिनरात्र्यृतुवत्सरम् ॥ क्वचित्क्वचिन्महीपीठसंपन्नजनमंडलम् ॥२४॥ क्वचित्किंचिदखातोग्रचतुःसागरखातकम्॥ क्वचित्किंचिदसंजातसुरसंजातदानवम्॥२५॥क्वचित्किंचित्कृतयुगाचारसज्जनभूतकम्॥ क्वचित्किंचित्कलियुगाचारदुर्जनभूतकम्॥ २६॥ क्वचित्किंचित्पुरव्यूहदैत्यसंगरदुस्तरम्॥२७॥ क्वचित्किंचिन्महाशैलजालनिर्विवरावनि॥ क्वचित्किंचिदसंपन्नसर्गमेकांबुजोद्भवम्॥२८॥ क्वचित्किंचिज्जरामृत्यून्मुक्तभूतलमानवम्॥ क्वचित्किंचिदसंजातचंद्रशून्यशिरःशिवम्॥ २९॥ अनिर्मथितदुग्धाब्धिमृत्युमत्सुरपूरितम्॥ असंजातामृताश्वेभवैद्यगोकमलाविषम्॥ ३०॥ शुक्रामरमहाविद्यानाशनोत्कसुरव्रजम्॥ क्वचित्किंचिच्चगर्भांगकर्त्तनोत्कसुरेश्वरम्॥ ३१॥

घटितबहुव्रीहिर्वा ॥ २३ ॥ महीपीठेसंपन्नंजनमंडलंयत्र ॥ २४ ॥ सगरपुत्रैरद्याप्यखातमुग्रंचतुःसागरखातकंयत्र ॥ अजातसुरंचतत्संजातदानवंच ॥ २५॥ २६ ॥ २७॥ एकःअंबुजोद्भवोद्रुहिणएवयस्मिन् ॥ २८ ॥ असंजातचंद्रत्वाद्भूषणशून्यशिराःशिवोयस्मिन् ॥ २९ ॥ वैद्योधन्वंतरिः ॥ गावःकामधेनवः ॥ कमलालक्ष्मीः॥विषंकालकूटम् ॥ ३० ॥ शुक्रेणतपसासाध्यमानायाअमरमहाविद्यायाःमृतसंजीवनाख्यायास्तपोविघ्नाचरणेननाशनेउत्कउत्कंठितमनाःसुरव्रजोयत्र ॥ किंचिच्चभाविस्वशत्रुविनाशबुद्धिश्चदितेरुदरंप्रविश्यतद्गर्भस्यांगानांकर्त्तनेउत्कःसुरेश्वरइंद्रोयत्र ॥ ३१ ॥

पूर्वस्मात्प्रसिद्धसन्निवेशक्रमादन्यसन्निवेशक्रमापदार्थस्थितिर्यस्मिन् ॥ ३२ ॥ ३३ ॥ ३४ ॥ अमृतमंथनार्थंसमारब्धंगीर्वाणानामसुराणांचपरस्परसौहृदंयत्र ॥ ३५ ॥ महाविश्वगणात्मनिमायाशवलचिद्वपुषितदामयाएवंविचित्रजगदाडंबरमनुभूतमित्यन्वयः ॥ तमेवजगदाडंबरंपुनःप्रपंचयति ॥ एकत्रेत्यादिना ॥ ३६ ॥ ३७ ॥ नित्यमभिन्ने नअविनाशितेनतमसाघनम् ॥ ३८ ॥ भगवन्नाभिनलिनीनालेनिलीनौमधुकैटभौयत्र ॥ ३९ ॥ एकार्णवेप्रलयेउदयेउन्नतायेअक्षयवटवृक्षेपत्रपुटेविश्रांतोमाधवोयत्र ॥

अपरिम्लानधर्मत्वात्स्वप्रकाशाखिलव्रजम् ॥ क्वचित्किंचिच्चपूर्वान्यसंनिवेशक्रमस्थिति ॥ ३२ ॥ अपूर्ववेदशास्त्रार्थसमाचारविचारणम् ॥ क्वचित्किंचिन्नकल्पांतसंक्षोभमिवसंस्थितम् ॥ ३३ ॥ क्वचित्किंचिच्चदैत्यौघविलुंठितसुरालयम् ॥ क्वचित्किंचित्सुरोद्यानगायद्गंधर्वकिन्नरम् ॥ ३४ ॥ क्वचित्किंचित्समारब्धगीर्वाणासुरसौहृदम् ॥ भूतभव्यभविष्यत्स्थजगदाडंबरंमया ॥ ३५ ॥ तदानुभूतंवपुपिमहाविश्वगणात्मनि ॥ एकत्रकल्पविक्षुब्धपुष्करावर्तमंथरम् ॥ ३६ ॥ एकत्रसौम्यसकलभूतसंततिसंस्थितम् ॥ एकत्रसमनुक्षुब्धसुरासुरनरेश्वरम् ॥ ३७ ॥ एकत्रासंभवद्भानुनित्याभिन्नतमोघनम् ॥ एकत्रासंभवद्ध्वांतंकांतंज्वालोदरोपमम् ॥ ३८ ॥ एकत्रनलिनीनालनिलीनमधुकैटभम् ॥ एकत्रपद्ममंजूषासुप्तबालनवाब्जजम् ॥ ३९ ॥ एकत्रैकार्णवोदग्रवृक्षविश्रांतमाधवम् ॥ एकत्रकल्परजनीनिःशून्यतिमिराकुलम् ॥ ४० ॥ शिलाजठरनिस्पंदंव्योमैवविततात्कृति ॥ सुषुप्तजठराकारमप्रज्ञातमलक्षणम् ॥ ४१ ॥ अप्रतर्क्यमविज्ञेयंसुप्तमिवसर्वतः ॥ एकत्रपक्षविक्षुब्धशैलकाकाकुलांबरम् ॥ ४२ ॥ एकत्रवज्रनिष्पेषद्रवद्भूधरभासुरम् ॥ एकत्रोद्वृत्तमत्ताब्धिक्रियमाणधराचलम् ॥ ४३ ॥ एकत्रपुरवृत्रांधबलिसंगरसंकुलम् ॥ एकत्रमत्तपातालगजकंपिवसुंधरम् ॥ ४४ ॥ एकत्रशेषशिरसःकल्पांतलुठितावनि ॥ क्वचिदल्पेनरामेणहतरावणराक्षसम् ॥ ४५ ॥ रक्षसारावणेनैवक्वचिद्विहतराघवम् ॥ भूस्थपादेनदेवाद्रिशिरस्थशिरसापरम् ॥ ४६ ॥ पश्याम्यंबरमाक्रांतंक्वचिद्वैकालनेमिना ॥ क्वचिच्चापसुरैर्नित्यंदानवैरेवपालितम् ॥ ४७ ॥

आलोकनिःशून्येनगाढेनतिमिरेणाकुलम् ॥ ४० ॥ भूम्याद्यनुत्पत्तेर्व्योममात्रोत्पत्तेर्व्योमैवएकत्रेत्यनुषज्यते ॥ ४१ ॥ पक्षच्छेदाभावात्पक्षैर्विक्षुब्धाःशैलाएवकाकाइवकाकास्तैराकुलांबरम् ॥ ४२ ॥ ४३ ॥ पुराणांत्रिपुराणांवृत्रस्यअंधस्यबलेश्चसंगरैःसंकुलम् ॥ मत्तैःपातालगजैर्दिग्गजैःकंपिनीवसुंधरायत्र ॥ ४४ ॥ अल्पेनबालेनैवरामेण ॥ ४५ ॥ विहृतःसीताहरणेनवंचितोराघवोयत्र ॥ ४६ ॥ अपसुरैरपसारितदेवैः ॥ ४७ ॥

जिष्णुरर्जुनस्तद्युक्तेन ॥ विष्णुनाकृष्णेन ॥ गुप्तेनपालितस्वजनेन ॥ ४८ ॥ क्वचिदल्पेनरामेणेत्यादिश्रुत्वासाश्चर्योरामःपृच्छति ॥ किमहमिति ॥ ४९ ॥ अनेनइदानींदृश्यमा
नेनावयवाकृतिसन्निवेशेनाभवंकिवाअन्यादृशेनेत्यर्थः ॥ ५० ॥ पूर्यमाणाःकुंभकुसूलादौपुनःपुनस्तेनान्येनचक्रमेणसन्निवेशेनयथाविवर्त्ततेतद्वदित्यर्थः ॥ तयाप्राक्तनयाकृ
त्याअन्येनवाआकारेण ॥ ५१ ॥ ५२ ॥ तत्त्वदृशात्वाह ॥ नकदाचनेति ॥ मायादृशातएवजायंतेअन्येवाजायंतेइत्यनिर्णयएवेत्याह ॥ तएवेति ॥ निर्णयोयद्वन्नजायतेइ
त्यन्वयः ॥ ५३ ॥ ५४ ॥ ५५ ॥ इदंचप्राङ्मुमुक्षुव्यवहारप्रकरणेउक्तमेवेतिस्मारयंस्तदेवाह ॥ वित्तेति ॥ ५६ ॥ ५७ ॥ जीवैक्येसदृशान्येवशरीराणिभवंतीत्यप्यनियमइ

क्वचिच्चभ्रष्टदनुजैरमरैरेवपालितम् ॥ जिष्णुयुक्तेनगुप्तेनविष्णुपांडवकौरवैः ॥ ४८ ॥ क्वचिद्भारतयुद्धेननिहताक्षौहिणीगणम् ॥ ॥श्री
रामउवाच ॥ ॥किमहंभगवन्पूर्वमभवंकथयेतिमे ॥ ४९ ॥ अभवंचेदनेनैवसंनिवेशेनतत्कथम् ॥ ॥श्रीवसिष्ठउवाच ॥ ॥सर्वए
वविवर्त्ततेरामभावाःपुनःपुनः ॥ ५० ॥ पूर्यमाणायथामाषाःक्रमेणान्येनतेनवा ॥ सर्वक्रमसमाःकेचित्तयैवान्येनवामिथः ॥ ५१ ॥
स्फुरंत्यर्थसमाभावाःकेचिदब्धितरंगवत् ॥ पुनस्त्वंपुनरेवाहंपुनःपुनरिमेजनाः ॥ ५२ ॥ नकदाचननैवान्येसंभवंत्यखिलंपरे ॥ तएवान्ये
थवांभोधौतरंगाइवनिर्णयः ॥ ५३ ॥ यद्वन्नजायतेतद्वद्भूतानांभ्रमतांभवेत् ॥ आयांतियांत्यनंतानिभूतानीहभवभ्रमैः ॥ ५४ ॥ तान्येवा
न्यानिचान्यानिसमानिविषमाणिच ॥ आवृत्तिमंतितान्येवतथैवान्यानिचाभितः ॥ ५५ ॥ विद्धिसीकरजालानिभूतानिजगदंबुधेः ॥ वित्त
बंधुवयःकर्मविद्याविज्ञानचेष्टितैः ॥ ५६ ॥ तैरेवकेचिज्जायंतेभूयोभूयःशरीरिणः ॥ अर्द्धैस्तैःसदृशाःकेचित्केचित्पादेनतैःसमाः ॥ ५७ ॥
तज्जीवास्तैर्विसदृशाभवंत्यन्यशरीरिणः ॥ सर्वैरेभिःसमाःकेचित्कालेनैवविलक्षणाः ॥ कालेनसदृशाःकेचिदनेनचविलक्षणाः ॥ ५८ ॥
कालेनाकुलचेष्टयान्यइवतेगच्छंत्यधोर्द्धंपुनर्देहालेखनखेदितान्यगणितान्यन्यानिचान्यान्यलम् ॥ भूतांबूनिवहंतिसंसृतिमयेयान्यंबु
धौचंचलेचक्रावृत्तिमयानिसंकलयितुंशक्नोतिकस्तान्यलम् ॥ ५९ ॥ ॥इ० वा० महारामायणेवा० दे० मो० नि० उ० पापा० जगद
न्यान्यत्ववर्णनंनामषडशीतितमःसर्गः ॥ ८६ ॥

त्याह ॥ तज्जीवाइति ॥ एवंजीवभेदेविसदृशान्येवतानीत्यप्यनियमइत्याशयेनाह ॥ सर्वैरिति ॥ अनेनशरीरेण ॥ ५८ ॥ यस्मात्कारणात्तेजीवारागद्वेषभोगलांपट्यादिदोषा
कुलयाविचित्रधर्माधर्मचेष्टयाकालेनविचित्रनानादेहधारणादन्येऽन्येइवभूत्वाअधोलोकेपूर्ध्वंस्वर्गादिषुचपुनःपुनर्गच्छंति ॥ अधोर्ध्वमितियलोपासिद्धेःसंधिरार्षः ॥ तस्मा
त्कारणाच्चंचलेसंसृतिमयेअंबुधौचक्रावर्त्तप्रायाणियानिभूतांबूनिवहंतितानिसदृशानिविसदृशानीतिवातान्येवान्यानीतिवाअलंसम्यक्संकलयितुंनिर्द्धारयितुंकःपुरुषःशक्नो
तीत्यर्थः ॥ ५९ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० षडशीतितमःसर्गः ॥ ८६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

१ अत्रसमासैकदेशविष्णुशब्देतृतीयांतविशेषणद्वयाऽन्वयेसमासश्छांदसः

115

वसिष्ठेनस्वदेहेत्रवर्ण्यतेविश्वकल्पनम् ॥ स्वस्यैवहिस्वयंभूत्वंतन्वक्षायुद्भवक्रमात् ॥ १ ॥ कलधौतशिलावृक्षतृणगुल्मलतादिष्विवमयास्वशरीरावयवेष्वप्यवहितदृशासर्गा दृष्टाइत्याह ॥ ततइति ॥ ततःशिलातृणगुल्मादिषुविचित्रसर्गदर्शनानंतरम् ॥ १ ॥ कथमंकुरितोपमस्तदाह ॥ कुसूलस्येति ॥ कुसूलस्यत्द्दिदृष्टिसिक्तस्यबीजस्येव ॥ २ ॥ आकारवतिमूर्त्तेअनाकारेअमूर्त्तेचित्त्वाचित्त्वेचेतनाचेतनेसर्ववस्तुनिअंतःसेकादूर्ध्वमुच्छूनेबीजेंकुरइवजगदस्तीतिशेषः ॥ ३ ॥ सत्वयासमाधौकथमनुभूतस्तत्राह ॥ यथेति ॥ यथासुषुप्तात्सकाशाद्बोधंस्वप्नदर्शनमेयुषश्चिन्मात्रस्यपुंसःस्वचेतनात्स्वाप्नदृश्यश्रीरुन्मिषति विगतेवास्वप्नेबोधमेयुषोजाग्रत्प्रपंचउन्मिषति तथैवेत्यप्येन्वयः ॥४॥५॥ त्द्दिसर्गोदयइतित्वयात्द्पदेनत्द्दयाकाशउक्तआकाशरूपतइतिचचिदाकाशइतिमयात्वदभिप्रायोवगतइतिसंबोधनेनसूचयन्रामःस्फुटपरिज्ञानायविस्तरात्पुनःकथयेतिप्रार्थ

श्रीवसिष्ठउवाच॥ ॥ततश्चिदाकाशवपुर्व्याप्यनंतोनिरामयः॥ दत्तावधानोवपुषितदापश्याम्यहंक्वचित्॥१॥ यावदंतर्गतःसर्गःसंस्थितोंकुरितोपमः॥ कुसूलस्येवबीजस्यसिक्तस्यैवांकुरोत्द्दि॥ २॥ ऊर्ध्वमुच्छूनएवांतःसेकाद्बीजेयथांकुरः॥ आकारवत्यनाकारेचित्त्वाचित्त्वेतथाजगत्॥ ३ ॥ यथोन्मिषतिदृश्यश्रीःसुषुप्ताद्बोधमेयुषः॥ जाग्रद्वाविगतेस्वप्नेचिन्मात्रस्यस्वचेतनात्॥४॥ तथैवात्मनिसर्गादावनुभूतस्वरूपिणि॥ त्द्दिसर्गोदयोनान्यरूपआकाशरूपतः॥५॥ ॥श्रीरामउवाच॥ ॥आकाशरूपआकाशेपरमाकाशकथ्यताम्॥ भूयोनिपुणबोधायकथंसर्गःप्रवर्त्तते॥६॥ ॥श्रीवसिष्ठउवाच॥ ॥शृणुरामयथापूर्वंस्वयंभूत्वंमयातदा॥अनुभूतमसत्सद्वदिदंस्वप्नपुरोपमम्॥७॥ तमालोक्यमहाकल्पसंभ्रमंव्योमरूपिणा॥ भागेन्यत्रशरीरस्यसंविदुन्मेषितामया ॥ ८ ॥ यदैवसामलासंविल्किंचिदुन्मेषितास्थिता॥ तदैवाहंक्वचित्तत्रपश्याम्याकाशतामिव॥ ९ ॥ गतंस्वभावंचिद्व्योमयथात्वंरामनिद्रया॥ जाग्रद्वास्वप्नलोकंवाविशन्वेत्सिसमंघनम्॥ १० ॥

यते ॥ आकाशेति ॥ त्द्दयाकाशपरमाकाशरूपहेवसिष्ठचिदाकाशरूपेत्वयिकथंसर्गःप्रवर्त्ततेतत्पुनःकथ्यतामित्यर्थः ॥ ६ ॥ पृष्टमर्थंविस्तराद्वक्तुंप्रतिजानीते ॥ शृण्विति ॥ स्वयंभूत्वंशरीरेसर्वजगत्सर्गकल्पनात्परमेष्ठित्वम् ॥ ७ ॥ तंप्राग्विस्तराद्वर्णितंकलधौतशिलादौमहाकल्पसंभ्रममालोक्यचिद्व्योमरूपिणामयाशरीरस्यान्यत्रभागेस्थितासंवित् सर्गदर्शनसंकल्पेनकौतुकादुन्मेषितेत्यर्थः ॥ ८ ॥ तत्रादौतस्माद्वाएतस्मादात्मनआकाशःसंभूतइतिश्रुत्युक्तक्रमोपलक्षणमाकाशकल्पनमाह ॥ यदैवेति ॥ यथैवेतिपाठेतथैवेतिपाठ्यम् ॥ ९ ॥ इयंचाकाशतानचिद्घनस्यांतःशून्यभावप्राप्तिलक्षणसौक्ष्म्याधिक्यंकिंतुचित्सौक्ष्म्यापेक्षयाजाड्याधिक्यात्स्थौल्यमेवेत्याशयेनदृष्टांतेनसंभावयति ॥ गतमिति ॥ हेरामयथात्वंनिद्रयाप्राग्वर्णितस्वप्नजाग्रल्लोकंवास्वप्नस्वप्नलोकंवाविशन्स्वात्मनएवसमंघनंतदाधारस्वभावंवेत्सितद्वत्संभावयेत्यर्थः ॥ १० ॥

आकाशकल्पनयैवतद्गोचरचित्ताद्यंतःकरणचतुष्टयसिद्धिमाह ॥ दिङ्मात्रेति ॥ दिशोमिमीतेस्वचलनानुकूलतयास्वात्मनिपर्यालोचयतीतिदिङ्मात्रंतथाविधमाकाशमेवादौचे तनाच्चित्तंभवति ॥ ततआकाशमहमस्मीत्येववेदनंसोहंकारः ॥ तदेवघनमाकाशमेवेत्यवधारणात्पूर्वभावविस्मरणाच्चबुद्धिःकथ्यते ॥ सैवसंकल्पविकल्पकामविचिकित्सादि कल्पनघनामनउच्यतइत्यर्थः ॥ ११ ॥ तदेवंविषयान्कल्पयित्वातद्ग्राहकाणींद्रियाण्यपिकल्पयतीत्याह ॥ तदिति ॥ १२ ॥ तद्वशादेवप्राक्सिद्धंःखस्यात्मनःस्वप्नइवव्यवहारदुः खावाप्तिरित्याह ॥ सुषुप्तादिति ॥१३॥ ननुस्वप्नेनाकाशादिक्रमेणसर्गःकिंतुतुल्यकालमेवसहसासर्वजगद्दर्शनमितिवैषम्यंतत्राह ॥ तुल्यकालेति ॥ सऐक्षतलोकान्नुसृजाइति

दिङ्मात्राकाशमेवादौततोस्मीत्येववेदनम् ॥ तद्घनंकथ्यतेबुद्धिःसाघनामनउच्यते ॥ ११ ॥ तद्वेत्तिशब्दतन्मात्रंतन्मात्राणीतराण्यथ ॥ पंचेंद्रियाणितत्स्थौल्यादितींद्रियगणोदयः ॥ १२ ॥ सुषुप्ताद्विशतःस्वप्नंजगद्दृश्यघनोदयम् ॥ यथातथैवसर्गादौदुःखंभातिनिमेषतः ॥ १३ ॥ तुल्यकालमनंतेस्मिन्दृश्यजालावभासने ॥ कथयंतिक्रमंकेचित्केचिन्नकथयंतिच ॥ १४ ॥ परमाणुकणेकांतेसंपन्नमनुभूत वान् ॥ अहंचेतनमात्मानंवस्तुतोमलमेवखम् ॥ १५ ॥ यथास्वभावतोव्योम्निचलत्येवानिशंमरुत् ॥ तथास्वभावात्सर्वत्रपश्यत्येवव पुस्त्विति ॥ १६ ॥ यादृशंचेतितंरूपंशक्त्यापरमयातया ॥ तच्छक्नोत्यन्यथाकर्तुंनैपायत्नेनभूयसा ॥ १७ ॥ ततःपश्याम्यहंयावत्संपन्नो प्यणुरूपकः ॥ चित्त्वाच्चेतस्तदेवाशुतथाभूतोस्मिसंस्थितः ॥ १८ ॥ ततोहंबुद्धवान्रूपंतनुतेजःकणाकृति ॥ तदेवभावयन्पश्चाद्गतोहंस्थू लतामिव ॥ १९ ॥ प्रेक्षेतावदहंकिंचिदितिबोधाल्लघोस्ततः ॥ मनागालोकनायैवसंप्रवृत्तोनुभूतवान् ॥ २० ॥ यन्नामतत्रतत्किंचित्तस्य द्वाग्रघूद्रह ॥ शृणुनामानिमुख्यानिकल्पितानिभवादृशैः ॥ २१ ॥ द्रष्टुंप्रवृत्तोरंध्रेणयेनतच्चक्षुरुच्यते ॥ यच्चपश्यामितद्दृश्यंदर्शनंतुफलं ततः ॥ २२ ॥

सइमान्लोकानसृजत सतपस्तप्त्वाइदंसर्वमसृजतइत्यादिश्रुतिषुतुल्यकालमपिसर्गश्रवणात्क्षणोदरेपिकालदैर्घ्यकल्पनेनक्रमोपपत्तेरितिभावः ॥ १४ ॥ क्षणोदरेकालदैर्घ्यमिव परमाणूदरेपिदेशदैर्घ्यकल्पनयातत्रब्रह्मांडात्मकंचेतनमात्मानमहमेवकल्पनयादृष्टवानित्याह ॥ परमाण्विति ॥ १५ ॥ मरुतश्चलनमिवमनसःशरीरादिकल्पनंस्वभावइत्याह ॥ यथेति ॥ १६ ॥ तयाप्राथमिकमनःकल्पनाशक्त्याएषाशक्तिःस्वयमप्यन्यथाकर्तुंनशक्नोतीत्युत्तरकल्पनासुसैवस्थिरानियतिरित्यर्थः ॥ १७ ॥ अतएवाहमपरिच्छिन्नोपित त्कृतपरिच्छेदकल्पनयाअणुरूपकःपरिच्छिन्नःसंपन्नइत्याह ॥ ततइति ॥ १८ ॥ तनुसूक्ष्मंलिंगशरीरंचित्यतिविवव्याख्यातेजःकणाकृति ॥ स्थूलतांस्थूलदेहतामिव ॥ १९ ॥ तच्चचक्षुरादिद्वारकल्पनयारूपादिद्रष्टतास्वस्यसंपन्नेत्याह ॥ प्रेक्षेइत्यादिना ॥ २० ॥ २१ ॥ तद्दृश्यंरूपम ॥ २२ ॥

तदनुनिष्पादिनीनांतरीयकीदेशकालादिनियतिरपिसंपन्नेत्याह॥ यदेति॥२३॥अथकल्पनादार्ढ्यंकाले॥तदातर्हित्वंकीदृक्तत्राह॥तदेति॥तदानींतनदृष्ट्यासर्वंचिदुन्मेषएवेतितन्मात्रकारणमहमित्यर्थः ॥२४॥ देहेचक्षुरादिरंध्रकल्पनादिदर्शनादिकौतुकात्तदाभूदित्याह ॥ पश्यामीति ॥२५॥२६॥ सहैवविषयकल्पनामाह ॥ ततइति॥२७॥याभ्यांप्रदेशाभ्यां विततस्वनमश्रौषंतेइमे ॥ प्रगृह्यत्वेसंधिरार्षः ॥ श्रवणव्रणेकर्णच्छिद्रे ॥ विचरतामरुतेतिश्रोत्रादिव्यापारस्यापिप्राणाधीनत्वद्योतनार्थम् ॥२८॥ एवंत्वक्कल्पनेत्याह ॥ स्पर्शेति ॥२९॥ सहैवतद्विषयकल्पनामाह ॥ येनेति ॥ वायुग्रहणंत्वग्विषयमात्रोपलक्षणम् ॥ सत्संवेदनंसत्यसंकल्पस्तन्मात्रात्मा ॥३०॥ इतिउक्तरीत्यावेदिनिमयिस्पर्शनेंद्रियतन्मात्रंसं

यदापश्यामिकालोसौयथापश्यामिसक्रमः॥ प्रौढानियतिरित्यस्ययत्रपश्यामितन्नभः॥ २३॥ स्थितोस्मियत्रदेशोसावित्यद्यैषाप्रकल्पना॥ तदात्वहंचिदुन्मेषमात्रात्तन्मात्रकारणम्॥ २४॥ पश्यामीतिततस्तत्रमनाग्बोधोममोदभूत्॥ ततोरंध्रद्वयेनाहमपश्यंयत्तदप्यखम्॥ २५॥ याभ्यामपश्यंरंध्राभ्यांतइमेलोचनेस्थिते ॥ ततःकिंचिच्छृणोमीतिसंविदित्युदितामम॥ २६॥ ततःकिंचिन्मनाग्मात्रंझंकारंश्रुतवानहम्॥ प्रध्मातस्येवशंखस्यशब्दंव्योम्नःस्वभावजम्॥२७॥ याभ्यामहमथाश्रौषंतइमेश्रवणव्रणे॥ प्रदेशाभ्यांविचरतामरुताविततस्वनम्॥ २८॥ स्पर्शसंवेदनंकिंचिदहमत्रानुभूतवान्॥ येननामप्रदेशेनतेनसात्वक्कथ्यते॥ २९॥ येनस्पृष्टमिवांगंतत्तदाहमनुभूतवान्॥ सत्संवेदनमात्रात्मासोयंवायुरितिस्मृतः॥ ३०॥ स्पर्शनेंद्रियतन्मात्रमितिवेदिनिसंस्थितम्॥ आस्वादसंविद्याभून्मेतदास्वाद्यरसेंद्रियम्॥ ३१॥ घ्राणान्मेघ्राणतन्मात्रमुदितंव्योमरूपिणः॥ इत्थंनकिंचित्संपन्नंसर्वंसंपन्नमत्रमे॥ ३२॥ एवमिंद्रियतन्मात्रजालंचेत्तत्रसंस्थितः॥ यावत्तावद्विदःपंचबलादेवममोदिताः॥ ३३॥ शब्दरूपरसस्पर्शगंधमात्रशरीरिकाः॥ अनाकारास्तथाभातस्वरूपिण्योभ्रमात्मिकाः॥ ३४॥ एवंरूपमहंजालंभावयन्यत्तदास्थितः॥ तदहंकारइत्यद्यकथ्यतेत्वादृशैर्जनैः॥ ३५॥

स्थितंसंपन्नमितिपूर्वानुवादः ॥ रसनेंद्रियकल्पनामाह ॥ आस्वादेति ॥ ततआस्वाद्यरसभेदसहितंरसनेंद्रियंसंस्थितमित्यनुकृष्यते॥३१॥ घ्राणात्आघ्राणसंकल्पाकृष्टप्राणभेदादपानात् ॥ घ्राणंचतद्विषयगंधतन्मात्राचतयोःसमाहारोघ्राणतन्मात्रम् ॥ सेयंदेहेंद्रियविषयसंपत्तिःकल्पनामात्रत्वान्मिथ्यैवेतिदर्शयन्नुपसंहरति ॥ इत्थमिति ॥ ३२ ॥ ततोबलादेवपंचभोगसंविदउदिताइत्याह ॥ एवमिति ॥ विदःशब्दादिप्रथालक्षणाभोगसंविदोमिथ्यात्वादेवअनाकाराभ्रांतिमात्रेणतथाभातस्वरूपिण्यः ॥ ३३ ॥ ३४ ॥ भावयन्अभिमन्यमानः ॥ तेनैवाहंकारकल्पनाभूदित्याह ॥ तदिति ॥ ३५ ॥

घनीभूतोदृढाध्यवसायेनबहलीभूतः ॥ मनोपिपुनःपुनर्विषयान्स्मरच्चित्तंसंपन्नमित्यपिबोध्यम् ॥ ३६ ॥ ३७ ॥ यतोहंशून्याकृतिरतएवसर्वेषामेवकल्प्यमानभावानामरोधकः अनिरोधकोऽनिवारकश्च ॥ ३८ ॥ तत्रतस्मिन्पूर्वकल्पिनेब्रह्मात्मकेदेहेचिरंयदास्थितस्तदातदंतःअहंस्वेनैवचतुर्मुखदेहवान्दृष्टः ॥ ३९ ॥ तेनतादृशदेहप्रत्ययेनस्वप्नेउड्डीनोन भसिसंचरन्नरोयथारवंकरोतितथाशब्दंकर्त्तुंप्रवृत्तवान् ॥ ४० ॥ तत्रविशेषाभिलापेविनिगमकाभावात्सर्वसाधारणार्थकःशब्दसमष्ट्यात्मा ॐकारएवप्रथममुच्चारितइत्याह ॥

एषएवघनीभूतोबुद्धिरित्यभिधीयते॥ साथबुद्धिर्घनीभूतामनइत्यभिधीयते॥३६॥ अंतःकरणरूपत्वमेवमत्राहमास्थितः॥ आतिवाहिकदेहात्माचिन्मयव्योमरूपवान्॥ ३७॥ पवनाद्यप्यहंशून्यःकेवलाकाशमात्रकः॥ सर्वेषामेवभावानांशून्याकृतिररोधकः॥ ३८॥ अथैवंभावनाच्चाहंयदातत्रचिरंस्थितः॥ तदाहंदेहवान्दृष्टइतिमेप्रत्ययोभवत्॥ ३९॥ तेनाहंप्रत्ययेनाथशब्दंकर्त्तुंप्रवृत्तवान्॥ शून्यएवयथासुप्तःस्वप्नोड्डीननरोरवम्॥ ४०॥ अथपूर्वंकृतःशब्दोबालेनेवतदोमिति॥ ततःसएषॐकारइतिनीतःपुनःप्रथाम्॥ ४१॥ ततःस्वप्ननरेणेवयत्किंचिद्गदितंमया॥ तदेतद्विद्धिवाचंत्वंपश्चान्नीतांप्रथामिह॥ ४२॥ ब्रह्मैवसोस्मिसंपन्नःस्रष्टःकर्त्ताजगद्गुरुः॥ ततोमनोमयेनैवकल्पिताःसृष्टयोमया॥ ४३॥ एवमस्मिसमुत्पन्नोनतुजातोस्मिकिंचन॥ दृष्टवानस्मिब्रह्मांडंब्रह्मांडांतंनकिंचन॥ ४४॥ एवंजगतिसंपन्नेममैतस्मिन्मनोमये॥ नकिंचित्तत्रसंपन्नंतच्छून्यंव्योमकेवलम्॥ ४५॥ इत्थंसंशून्यमेवेदंसर्ववेदनमात्रकम्॥ मनागपिनसंत्येतेभावाःपृथ्व्यादयःकिल॥ ४६॥ जगन्मृगतृष्णांबूनिभ्रांतिसंविदिसंविदः॥ नवाच्यमस्तिनोवाच्येखेतद्व्योमतथास्थितम्॥ ४७॥ मरौनास्त्येवसलिलंसंवित्पश्यतितत्तथा॥ निर्मूलमंतःसंतप्तास्वसंभ्रमवतीभ्रमम्॥ ४८॥ नास्त्येवब्रह्मणिजगत्संवित्पश्यतितत्तथा॥ निर्मूलमेवसंवित्त्वादेवंभ्रांतेश्चसंभ्रमम्॥ ४९॥

अथेति ॥ ४१ ॥ यत्किंचिद्यात्स्वतिगायत्रीवेदादिप्रागभ्यस्तंगदितम् ॥ ४२ ॥ ब्रह्माचतुर्मुखएव ॥ मनोमयेनैवचतुर्मुखदेहेनमया ॥ ४३ ॥ स्वीयस्थूलदेहभूतंब्रह्मांडंसावरणम् ॥ ब्रह्मांडांतंब्रह्मांडबहिर्भूतम् ॥ ४४ ॥ ४५ ॥ अयमेवन्यायःसर्वसर्गेषुबोध्यइत्याशयेनाह ॥ इत्थमिति ॥ ४६ ॥ तद्व्योमब्रह्माकाशमेवतथास्थितम् ॥ ४७ ॥ निर्मूलंनिष्कारणमेवांतःसंतप्तेनक्षुब्धा ॥ ४८ ॥ संवित्वादज्ञानावृतसंवित्स्वभावात् ॥ ४९ ॥

संकल्पनप्रयुक्तंमनोराज्यंयथातथेनिपृथग्योज्यम् ॥ नृमनोराज्यमितिपाठेसंकल्पेस्थितस्यनुःपुरुषस्यमनोराज्यंयथेति ॥ ५० ॥ परकायप्रवेशेनस्वमद्रष्टृचित्तावेशनायोगिभि रनुभूयते ॥५१॥ तद्दृपदंतत्कल्पनाधिष्ठानंचिच्छिलाम् ॥ अन्यथानतथाकिंत्वसदपि ॥ ५२ ॥ अतएवप्रागाधिभौतिकदृशादर्शनेलोकालोकगिरिरेवदृश्यतेनशिलांतर्गतंब्रह्मांड मित्युक्तमित्याह ॥ आधिभौतिकेति ॥ ५३ ॥ सर्गोदृश्यतेसचपरमात्मैवलक्ष्यतेयोगिभिरित्यर्थः ॥ ५४ ॥ तत्त्वदृशादर्शनेत्वाह ॥ सर्वत्रेति ॥५५॥ तत्त्वदृष्टियोगिदृष्टिचसर्वो त्कर्षेणप्रशंसति ॥ यदिति ॥ ५६ ॥ तत्रस्वस्यतत्त्वज्ञस्ययदाजीवन्मुक्तयोगिदृशापश्यतआकाशमिवभूरपिसर्वतःसर्गैर्व्याप्तेतिबुद्धिरुत्पन्नातदाक्रमाद्भूम्याद्येकैकभूताहंभावधा

असदेवेदमाभातिद्धयेवजगदाततम्॥ संकल्पनमनोराज्यंयथास्वप्नपुरादिवत् ॥ ५० ॥ पार्श्वसुप्तजनस्वप्नस्तच्चित्तावेशनंविना ॥ य थानकिंचित्तच्चित्तावेशनादनुभूयते॥ ५१ ॥ तथाजगत्तद्दृपदंसंप्रविश्यानुभूयते॥ आदर्शबिंबिताकारंदृष्टमप्यन्यथाप्यसत् ॥ ५२ ॥ आधिभौतिकभावेनत्रेणयदिलक्ष्यते॥ तत्तन्नदृश्यतेकिंचिद्गिरिरिवप्रदृश्यते॥५३॥ आतिवाहिकदेहेनपरंबोधदशायदि॥ प्रेक्ष्यतेदृश्य तेसर्गःपरमात्मैवचामलः॥ ५४ ॥ सर्वत्रसर्गनिर्वाणंप्रज्ञालोकेनलक्ष्यते ॥ ब्रह्मात्मैवान्यथाचेत्तन्नकिंचिदभिलक्ष्यते॥ ५५॥ यत्पश्य त्यवदाताधीःसोपपत्तिविचारणा॥ नतन्नेत्रैस्त्रिभिःशर्वोनेंद्रोनेत्रशतैरपि॥ ५६॥ यथाखमावृतंसर्गैस्तथाभूरितिबुद्धवान्॥ तदाहमभ वंध्याताधराधारणयान्वितः॥ ५७॥ तयाधराधारणयाधरारूपधरोभवम् ॥ अत्यजन्नेवचिद्व्योमवपुःसद्यादिवाचिरात्॥ ५८॥ धरा धारणयाचैवधराधातूदरंगतः॥ द्वीपाद्रितृणवृक्षादिदेहोहमनुभूतवान् ॥ ५९ ॥ संपन्नोस्म्यथभूपीठंनानावनतनूरुहम्॥ नानारत्नाव लीव्याप्तंनानानगरभूषणम्॥ ६० ॥ ग्रामगह्वरपर्वाढ्यंपातालसुषिरोदरम्॥ कुलाचलभुजाश्लिष्टद्वीपाब्धिवलयान्वितम्॥ ६१ ॥ तृ णौघतनुरोमाढ्यंगिरिखंडकगुल्मकम्॥ दिग्वारणकटव्यूहधृतंशेषशिरःशतैः॥ ६२ ॥ क्रियमाणंमहीपालैःशोभमानेभतंतुभिः॥ प्राणि भिर्भुज्यमानांगंवर्द्धमानंव्यवस्थया॥ ६३॥

रणयायद्यत्कौतुकंस्वेनदृष्टंतत्सर्वंविस्तराद्वर्णयिष्यन्प्रथमंधराधारणादृष्टंतद्वक्तुमुपक्रमते ॥ यथेति ॥ यदाबुद्धवांस्तदाधराधारणयाअन्वितःअभवमित्यर्थः॥ ५७॥ यथासम्राट् चक्रवर्त्तीस्वदेहमात्राहंभावमत्यजन्नेवसमस्तभूमंडलेममताभावंधत्तेतथाअहमपिचिद्व्योमवपुर्ब्रह्माहंभावमत्यजन्नेवधराहंभावेनधरारूपधरोऽभवमित्यर्थः ॥ ५८ ॥ धरा धातुर्भूम्यभिमानिजीवस्तदुदरंतद्बुद्धितादात्म्यंगतःसन् ॥ ५९ ॥ यदनुभूतवांस्तदाह ॥ संपन्नइत्यादिना ॥ इतआरभ्यआसर्गसमाप्तेर्भूपीठमेवदेहाकारेणवर्ण्यते ॥ ६० ॥ ॥ ६१ ॥ गिरिखंडकागिरिकदंबागुल्मरोगग्रंथयइवयस्य ॥ कटपदेनशिरांसिलक्ष्यंतेतद्व्यूहैर्धृतम् ॥ तथाशेषस्यशिरसांशतैर्दशशतैर्धृतम् ॥ ६२ ॥ शोभमानाइभास्तंतवःसे नाजालतंतुग्रंथयइवयेषांतथाविधैर्महीपालैःपरस्परंयद्धैःक्रियमाणम्॥ उत्करनगरादिप्रदेशव्यवस्थया ॥ ६३ ॥

॥६४॥ गुहागहनाःकच्छादयोदेशायस्मिन्॥ सागराआदर्शमंडलाइवयस्मिन्॥ मरुदेशलक्षणैरूषरस्थललक्षणैश्चश्वेतैःसुवरांबरैःसुंदरम॥६५॥ पूर्वभूतैर्भूतपूर्वैर्महार्णवैःप्रलय
कालेपरापूर्णमतएवसांप्रतंस्नात्वोद्गतमिवपरितःपूतंपवित्रम्॥ पुष्पवनैर्माल्यैरिवालंकृतम्॥ चंदनस्थानीयैरजोघनैःसमालब्धंलिप्तम्॥ ६६॥ ६७॥ अप्रस्थलंसमभूप्रदेशः
॥ ६८॥ लोकालोकसमीपेप्राग्वर्णितोयोमहाखातवलयस्तल्लक्षणेनोग्रेणास्येनभीषणम्॥ भूतानांपरिस्पंदएवपरिस्पंदएकीभूतंचेतनमेवचेतनंयस्य॥६९॥ नानाभूतगणलक्ष
णैःकीटकैर्व्याप्तम्॥ तेषुदेवदानवेत्यवयुत्यानुवादः॥ ७०॥ ७१॥ उक्तमेवसंक्षिप्योपसंहरन्विशिनष्टि॥ व्याप्तमिति॥ नद्यादिद्वीपांतैर्जंतुविषयैःप्राणिभोग्यैःस्थलजंगलौ

हिमवद्विंध्यसुस्कंधंसुमेरूदारकंधरम्॥ गंगादिसरिदापूरमुक्ताहाररणत्तनुम्॥ ६४॥ गुहागहनकच्छादिसागरादर्शमंडलम्॥ मरूषर
स्थलश्वेतसुवरांबरसुंदरम्॥ ६५॥ भूतपूर्वैःपरापूर्णपरिपूतंमहार्णवैः॥ अलंकृतंपुष्पवनैःसमारब्धरजोघनैः॥ ६६॥ नित्यंकृपीवलैःकृ
ष्टंवीजितंशिशिरानिलैः॥ तापितंतपनैस्तप्तैरुक्षितंप्रावृडंबुभिः॥ ६७॥ विपुलाग्रस्थलोरस्कंपद्माकरकृतेक्षणम्॥ सितासितघनोष्णी
षंदशाशोदरमंदिरम्॥ ६८॥ लोकालोकमहाखातवलयोग्रास्यभीषणम्॥ अनंतभूतसंघातपरिस्पंदैकचेतनम्॥ ६९॥ व्याप्तमंतर्व
हिश्चैवनानाभूतगणैःपृथक्॥ देवदानवगंधर्वैर्वहिरंतस्तुकीटकैः॥ ७०॥ पातालेंद्रियरंध्रेपुनागासुरकृमिव्रजैः॥ सप्तस्वर्णवकोशेपुना
नाजातिजलेचरैः॥ ७१॥ व्याप्तंनदीवनसमुद्रदिगंतशैलद्वीपाख्यजंतुविषयस्थलजंगलौघैः॥ नानावलीवलितमंडलकोशखंडवल्लीसरः
सरिदरातिगणाब्जखंडैः॥ ७२॥ ॥इ० वा० वा० दे० मो० नि० उ० पा० पार्थिवधात्वंतर्गतजगदानंत्यप्रतिपादनंनामसप्ताशीतितमः
सर्गः॥ ८७॥ ॥ ५॥ ॥श्रीवसिष्ठउवाच॥ ॥ भूपीठनसतातत्रमयातदनुमानव॥ अनुभूतंनदनदीस्वसंवेदनसंस्थितेः॥ १॥
क्वचिन्मरणसाक्रंदनारीकरुणवेदनम्॥ क्वचिद्वृत्ततांडवस्त्रैणमहोत्सवमहासुखम्॥ २॥

घैश्चव्याप्तम्॥ नानाविधाभिर्गिरिनदीपर्वताद्यावलिभिर्जनावलिभिश्चवलितामंडलकोशानांखंडायस्मिन्॥ तथावल्लीभिःसरोभिःसरिद्भिररातिगणैरब्जखंडैश्चव्याप्तमित्यनुष
ज्जते॥ ७२॥ ॥ इतिश्रीवासिष्ठ० तात्पर्यप्रकाशे नि० उत्तरार्द्धेसप्ताशीतितमःसर्गः॥ ८७॥ ॥ ५॥ ॥ स्वदेहभूतेभूपीठेतत्रतत्रव्यवस्थिताः॥ विशेषादह
वर्ण्यंतेकौतुकात्स्वेनवीक्षिताः॥ १॥ हेमानवमनुवंशोद्भववर्णितरीत्याभूपीठभूतेनमयातदनुप्राग्वर्णितसाधारणसर्वभूधर्मघटितस्वदेहदर्शनानंतरंप्रत्येकंनदनदीसमुद्रादिविशेषा
कारप्रातिस्विकसंवेदनेच्छावशाद्यथायथानुभूतंतच्छृण्वितिशेषः॥ १॥ क्वचित्प्रदेशेभर्तृपुत्रभ्रात्रादिमरणेनसाक्रंदानांनारीणांकरुणवेदनायत्रतथाविधम्॥ अत्रापिप्रायेण
सर्वत्रभूपीठमेवविशेष्यम्॥ स्त्रैणानांस्त्रीसमूहादीनांमहोत्सवैर्महत्सुखंयत्र॥ २॥

सुवृष्ट्याफलितैःसकलसस्यौघैःसुभिक्षत्वात्संपन्नानिघनसौहृदानियत्र ॥ ३ ॥ जलेनप्लवनमाप्लावनंतेनालूनाः ॥ पुरपत्तनयोर्योधवणिक्प्रकर्षाभ्यांभेदः ॥ ४ ॥ ५ ॥ जलाशयानामुल्लासेनपूर्त्याकेदारारामादीनांवेल्लनैःसेकैरुत्पुलकसस्यगुल्माग्र्यकम् ॥ कंदरोदरेतितत्रोपपत्तिः ॥ ६ ॥ संविद्बोधेनप्रहर्षेणउन्नमंतःपुलकिताःस्वांगकेशाइवउत्थान्यंकुरलोमानियत्र ॥ वारीणांवहनमेववाहनंप्रवाहस्तद्विक्षोभेण ॥ ७ ॥ नतोन्नतत्वमेवभूतलानांदर्शयति ॥ सश्वंगेति ॥ अंतर्गतबृहच्छिलादिभिःसश्वंगाणीवभैरवाणिभीषणानिश्वभ्राणियेषुतथाविधानिपुरादीनियत्र ॥ अतएवसंविदंतीतिसंविदोनागरादिजनास्तन्मंडलस्यसंचालेतत्पदलेखांकनिपतनादिशंकयामृदुकंपनंचयत्र ॥ ८ ॥ ९ ॥ पूर्वं

क्वचिद्दुर्वारदुर्भिक्षदुराक्रंदंदुरीहितम् ॥ क्वचित्सकलसस्यौघसंपन्नघनसौहृदम् ॥ ३ ॥ क्वचिदग्निमहादाहदग्धदेहोग्रवेदनम् ॥ क्वचिज्जलप्लवालूनपुरपत्तनखंडकम् ॥ ४ ॥ क्वचिच्चपलसामंतकृतलुंठनमंडलम् ॥ क्वचिदुद्दामदौरात्म्यरक्षःपैशाचमंडलम् ॥ ५ ॥ क्वचिज्जलाशयोल्लासवेल्लनोत्पुलकाग्रकम् ॥ कंदरोदरनिष्क्रांतवातवेल्लितवारिदम् ॥ ६ ॥ संविद्बोधोन्नमत्स्वांगकेशोत्थांकुरलोमकम् ॥ वारिवाहनविक्षोभनतोन्नतलसत्तलम् ॥ ७ ॥ सश्वंगभैरवश्वभ्रपुराद्रिवनपत्तनम् ॥ संविन्मंडलसंचाललेखांकमृदुकंपनम् ॥ ८ ॥ क्वचित्सामंतसंक्षुब्धसैन्यसंहरणंरणे ॥ क्वचित्सौम्यसुखासीनसर्वसामंतमंडलम् ॥ ९ ॥ अरण्यंक्वचिदाशून्यमुल्लसद्वातझंकृति ॥ जंगलंक्वचिदालूनव्युप्तसंपन्नसस्यकम् ॥ १० ॥ हंसकारंडवाकीर्णसरःफुल्लांबुजंक्वचित् ॥ क्वचिन्मरुस्थलस्थूलस्तंभनार्जुनमारुतम् ॥ ११ ॥ क्वचिन्नदनदीवाहहेलानिकषघर्घरम् ॥ क्वचिदंकुरकार्यांगसिक्तबीजस्यजृंभणम् ॥ १२ ॥ क्वचिदंतस्तुकीटास्यमृदुस्पंदनवेदनम् ॥ मांत्वमेवाशुबुद्धेहत्रायस्वेतीवबोधनम् ॥ १३ ॥ शाखापरिकराभोगंमृद्वागांगनिपीडनैः ॥ मूलजालमवष्टभ्यक्वचिद्विटपधारिणम् ॥ १४ ॥ अन्योन्यमलमाक्रम्यदिक्तटांगनिपीडनैः ॥ क्वचिदद्र्यस्थिनिविडैरर्णवोल्लासवेल्लितम् ॥ १५ ॥

मालूनंपश्चाद्युप्तंततःसंपन्नंसस्यंयत्र ॥ १० ॥ मरुस्थलेषुवात्योड्डीनधूलिभिःस्थूलान्स्तंभान्कुर्वंतीतिस्थूलस्तंभनाअर्जुनाःपांसुधवलामारुतायस्मिन् ॥ ११ ॥ अंकुरकार्यार्थंकुल्याघटीयंत्राद्यंगैःसिक्तस्यक्षेत्रगतव्रीह्यादिबीजस्यांकुरादिभावेनजृंभणम् ॥ १२ ॥ शिलादिसंकटनिविष्टंमांहेवसिष्ठत्वमेवआशुबुद्ध्वात्रायस्वेतिकीटेनमांप्रतिबोध्यतेयत्रतादृशमिवस्थितम् ॥ १३ ॥ क्वचिद्वटादिवनेशिखानांभूसंलग्नत्वान्मृद्वागांगनिपीडनैरुपलक्षितःशाखापरिकराणामाकारोयत्र ॥ क्वचिच्चमूलजालमवष्टभ्यविटपानांधारणशीलम् ॥ १४ ॥ क्वचिदद्रीणामस्थीनिशिलाइवनिबिडैर्वृक्षैरन्योन्यमलमत्यंतमाक्रम्यसंश्लिष्यदिक्तटांगानांनिरवकाशीकरणान्निपीडनैःअर्णवोल्लासेनेववेल्लितंवेष्टितम् ॥ १५ ॥

१ लसत्तममित्यपिक्वचित्पाठः

क्वचित्तुगाढवक्षैर्मुविस्वप्रसरनिरोधापराधादमर्षणैःक्रुद्धैःरार्कैःकरैरातपैःस्वरसाकर्षणंप्राप्यशुष्कपल्लवसंकोचंनिविडांगनिपीडनंवनंयत्र ॥ १६ ॥ क्वचित्तुगिरिशृंगमंदिराणां मातंगानांदंतप्रहाराशनेःभूरुहांवृक्षाणांनिविडांगोत्कटस्थैर्यप्रतिपरुपाण्यापतनानियत्र ॥ सापेक्षसमासश्छांदसः ॥ परुपंपतनंक्वचिदितिपाठेअशनिभिर्भूरुहांनिविडांगोत्कटस्थैर्येणपरुपंपतनमेवक्वचिन्मयानुभूतमितियोज्यम् ॥ १७ ॥ क्वचित्तुनिमीलितानीक्षणानियेनतथाविधानंदोपलक्षिततनूनांसमाधिनिष्ठानांसूक्ष्मतरंतत्त्वमुल्लिखत्यनुभूयमानंसूचयतितथाविधमतएवासमाक्रमंनवमपूर्वंरोमांकुरोल्लासनमनुभूतमित्यर्थः ॥ अथवाक्वचित्क्षेत्रप्रदेशेनिमीलितेक्षणानामानंदोपलक्षिततनूनांविषयभोगिनामिवअसममक्रमंचसूक्ष्मतरांतरानंदाविर्भावोल्लेखंवीजेभ्योंऽकुरोल्लासनंनवंचमत्कृतमनुभूतमित्यर्थः ॥१८॥ यूकानांसमूहोयौकम् ॥ तन्निवासमलिनांबरसदृशम् कुड्यलेशानामल्पकुड्य

शुष्कपल्लवसंकोचनिविडांगनिपीडनम् ॥ अमर्षणैःकरैरार्कैःस्वरसाकर्षणंक्वचित् ॥ १६ ॥ शृंगमंदिरमातंगप्रहाराशनिभूरुहाम् ॥ निविडांगोत्कटस्थैर्यपरुपापतनंक्वचित् ॥ १७ ॥ निमीलितेक्षणानंदतनूनामसमाक्रमम् ॥ क्वचित्सूक्ष्मतरोल्लेखमंकुरोल्लासनंनवम् ॥ १८ ॥ मक्षिकायौकमशकनिवाससदृशंक्वचित् ॥ कुड्यलेशकुभृंगारिहलहलानिकर्षणम् ॥ १९ ॥ शीतंशीतविशीर्णांगजर्जरत्वग्विकीर्णवत् ॥ पापाणीभूतसलिलंक्वचित्परुपमारुतम् ॥ २० ॥ उद्दालीभूतमृद्वंगमज्जदंतःक्रमिव्रजम् ॥ क्वचिदुद्द्रवदंगादिमूलंजलनिमज्जनम् ॥ २१ ॥ शनैरंतर्निलीनांबुकृताह्लादंवहिश्वरे ॥ सोन्नामांकुररोमौघंक्वचिद्दर्पविजृंभितम् ॥ २२ ॥ तनुतरपवनविकंपितकोमलनलिनीदलास्तरणैः ॥ विहरणमिवमेविहितंसरोभिरंगेपुनिर्वाणम् ॥ २३ ॥ ॥इ० वा० महारामायणेवा० दे० मो० निर्वाणप्रकरणेउ० पापा० भूमंडलगतविशेपवर्णनंनामाष्टाशीतितमःसर्गः ॥ ८८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

खंडानांप्रमादात्पद्मकोशशायिनांकुभृंगाणांचोपमर्दकत्वाद्दरयोयेदंतिनस्तैर्हलैरिवहेलाभिर्वप्रादेर्निकर्पणंदृष्टम् ॥ कुड्मलेशेतिपाठेकुड्मलश्रेष्ठपद्मकुड्मलेसुप्तानांकुभृंगाणांयेअरयइतिव्याख्येयम ॥ १९ ॥ क्वचित्क्वचिद्धिमवत्प्रदेशेशीतंशीतविदीर्णांगानांदेहिनांजर्जरत्वग्व्याप्तमवस्थितम् ॥ २० ॥ उद्दलनमुद्दालोविदलनंतथाभूतपुमृदुष्वंगेपुमज्जंतःअंतःक्रमिव्रजायत्र ॥ क्वचिज्जलनिमज्जनमनुभूतमितिपृथक्संबंधः ॥ २१ ॥ क्वचिद्बीजेपुवर्पविजृंभितमतएवशनैरंतर्निविष्टैरंबुभिःकृताह्लादंततोवहिश्वरसोन्नामांकुररोमौघम ॥ २२ ॥ किंचमेअंगेपुसरोभिस्तनुतरपवनविकंपितकोमलनलिनीदलानामास्तरणैर्निर्वाणंनिरतिशयानंदरूपंविहरणंक्रीडनमिवविहितमित्यर्थः ॥ २३ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उत्तरार्द्धेअष्टाशीतितमःसर्गः ॥ ८८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

१ वहिश्वरेत्यारभ्यरोमौघमित्यंतंसमस्तंपदम्

अत्रतद्धारणादृष्टंभूमंडलमिदंतथा ॥ जगत्सर्वंचचिद्व्योम्निमनोमात्रमितीर्यते ॥ १ ॥ हेगुरोकौतुकात्त्वात्मनिजगंतिसमवेक्षितुंप्रवृत्तस्त्वंपार्थिवींधारणांबद्ध्वाकिमसावस्मदादि दृश्योमृत्पाषाणादिमयोलोकःसंपन्नउतमानसोमनोमात्रमयोमनोराज्यकल्पोमृदाद्यघटितःस्वप्नमयोलोकःसंपन्नइतिप्रश्नः ॥ १ ॥ कल्पनादृशातत्त्वदृशावाविमर्शैकोटिद्वय भेदाप्रसिद्धेःसंशयानुपपत्तिंसूचयन्वसिष्ठउत्तरमाह ॥ इदंचेति ॥ यदिकल्पनादृशापृच्छसितर्हिइदंमृत्पाषाणमयत्वेनत्वत्प्रसिद्धंचतदेवमनोमात्रविकारत्वान्मानसंचेतिसमुच्चयः संपन्नः ॥ यदितुतत्त्वदृशापृच्छसितर्हिनोभयमपिसंपन्नइत्यर्थः ॥२॥ पूर्वार्धोक्तंप्रतिज्ञापूर्वकंसमर्थयति ॥ अमानसमित्यादिना ॥ सत्येवमनसितस्मिन्नेवास्तिनास्तीतिविकल्प दर्शनादितिभावः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ अज्ञप्रसिद्धमृद्दारुपाषाणादिमयत्वस्यअपागादग्नेरग्नित्वंत्रीणिरूपाणीत्येवसत्यमित्यादिश्रुतिनिषिद्धत्वात्तत्त्वज्ञस्यधारणायांदृष्टंनाज्ञ

श्रीरामउवाच॥ ॥पार्थिवींधारणांबद्ध्वाजगंतिसमवेक्षितुं॥संपन्नस्त्वमसौभूमिलोकःकिमुतमानसः॥ १ ॥ ॥श्रीवसिष्ठउवाच॥ इदंचमानसंचाहंसंपन्नःपृथुभूतलम्॥नेदंनमानसंनैवसंपन्नोवस्तुतस्त्वहम् ॥ २ ॥ अमानसंमहीपीठंनसंभवतिकिंचन॥यदसद्वेत्सि यत्सद्वामनोमात्रकमेवतत्॥ ३ ॥ चिदाकाशमहंशुद्धंतस्यमेतत्पदात्मनः॥यच्चिन्मात्रात्मकचनंतत्संकल्पाभिधंस्मृतम्॥ ४॥ तन्मनस्त न्महीपृष्ठंतज्जगत्सपितामहः॥संकल्पपुरवद्व्योम्निकचत्येतन्मनोनभः॥५॥एवंसंकल्पमात्रंमेमनोमात्रंतदाततम्॥ धारणाभ्याससंपु ष्टंभूमंडलमितिस्थितम्॥६॥नेदंभूमंडलंतद्वैतदन्यद्धिमनोमयम्॥ आकाशमात्रकचनमचेत्यंकचनंचितेः ॥ ७ ॥ तदेवाकाशमात्रा त्मतथाभूतंचिरंस्थितम्॥इदंप्रत्ययलब्धत्वान्मानसत्वंसमुज्झति॥८॥इदंस्थिरंसुकठिनंविततंभूमिमंडलम् ॥ अस्तीतिजायतेबुद्धि र्व्योम्नीवचिरवेदनात्॥ ९॥ न्यायेनेदमिवानेननस्थितंवसुधातलम्॥इदंचैवैकमेवाद्यसर्गस्याद्यमुपागतम्॥ १० ॥ यथास्वप्नेपुरत्वेन चिदेवव्योम्निभासते॥तथाचिदेवसर्गादाविदंजगदितिस्थितम्॥ ११ ॥ विद्धिचिद्रूपबालस्यमनोराज्यंजगत्त्रयम् ॥ महीतलादिकंदृश्य मिदंसर्वंचसर्वदा॥ १२ ॥ चिद्रूपस्यात्मनोनान्यःसंकल्पस्तन्मयंजगत्॥ वस्तुतस्तुनसत्यात्मनपिंडात्मनभासुरम्॥ १३॥

दृष्टिप्रसिद्धेदंरूपमित्यसमुच्चयोवास्त्वित्याशयेनाह ॥ नेदमिति ॥ ७ ॥ यद्याकाशमात्रस्यामूर्त्तस्यैवेत्थंकचनंतर्हिकथंमूर्त्तेदंप्रत्ययमाधत्तेतत्राह ॥ तदेवेति ॥ तर्हिकिंदधित्वेदु ग्धत्वमिवमानसत्वंमुंचतिनेत्याह ॥ इदंप्रत्ययेति॥ स्वप्नादावस्थूलस्यकेवलमानसस्यपृथ्व्यादेर्जाग्रद्वदिदंप्रत्ययेनोपलब्धत्वान्नदुग्धत्वसाम्यंकिंतुतरंगकटकशाटकादिभावेपिज लकनककार्पासमयत्ववदिदंबोध्यमितिभावः ॥८॥ व्योम्निनैल्यादिवुद्धिरिवचिरवेदनाज्जायते ॥ ९ ॥ वाचारंभणश्रुतिदर्शितन्यायेनतुदर्शनेइदमिवाज्ञप्रसिद्धरूपेणवसुधातलंन स्थितंकिंत्वाद्यसर्गस्यमनोरूपस्यआद्यंसूक्ष्मंयदेकमेवरूपंतदेवोपागतंस्थितम् ॥ त्रीणिरूपाणीत्येवसत्यमितिश्रुत्योपदर्शितमित्यर्थः ॥ १० ॥ इदंप्रत्ययलब्धत्वादित्युक्तिविशदय ति ॥ यथेति ॥ ११ ॥ चिद्रूपबालस्यचतुर्मुखस्य ॥ १२ ॥ १३ ॥

अज्ञदृष्टिनिष्कर्षेअज्ञातचिन्मात्रंजगत् तत्त्वनिष्कर्षेतुचिन्मात्रमेवेत्याशयेनाह ॥ दृश्यमिति ॥ यदिदंचिरंमयोपदिश्यमानंश्टणोपिकथंनप्रबुध्यसेइत्यर्थः ॥ १४ ॥ कीदृशंपरि
ज्ञातंतत्राह ॥ सर्वमिति ॥ १५ ॥ मणिर्वैदूर्यादिः ॥ अकुर्वन्अव्याप्रियमाणः ॥ १६ ॥ नेतिनेत्यादिश्रुतिपर्यालोचनेनोपसंहरति ॥ यतइति ॥ १७ ॥ अतलंतलभावशून्यम्
॥ १८ ॥ अंतरंभेदंअंतर्द्धिवाविशतास्वभावेनभूमंडलमिवदृश्यतइत्यर्थः ॥ १९ ॥ तत्रधारणाकल्पितभूमंडलमिदंभूमंडलंचतुल्यमेवचिद्विवर्त्तत्वेइत्याह ॥ इदमिति ॥ २० ॥
अज्ञानोपहितात्मपरिज्ञानाद्भाति ॥ ज्ञानात्तुनइदंनापितत्धारणास्थम ॥ २१ ॥ संभ्रमोभ्रांतिरेव ॥ सचमनोराज्यदशायाःस्थितौमर्यादायांनत्साम्येबोध्यइतियावत् ॥ २२ ॥

दृश्यमस्यपरिज्ञातंपरिज्ञातंनविद्यते॥ परिज्ञातंतदेवास्यश्टणोपियदिदंचिरम्॥ १४॥ सर्वंचिन्मात्रमाशांतंप्रकचत्यात्मनात्मनि॥ भूमंडलात्मदृश्यात्मद्वैतैक्याभ्यांविवर्जितम्॥ १५॥ मणिर्यथास्वभावेनशुक्लपीतादिकास्त्विपः॥ अकुर्वन्नेवकुरुतेचिदाकाशस्तथाजगत्॥ १६॥ यतोनकिंचित्कुरुतेनचरूपंसमुज्झति॥ तस्मान्नमानसंनेदंकिंचिदस्तिमहीतलम्॥ १७॥ महीतलमिवाभातिचिद्व्योमैवनिरंतरम्॥ आत्मन्येवातलंव्योमयथामलतलंस्थितम्॥ १८॥ स्वभावमात्रकचनंतत्तदेवयथास्थितम्॥ भूमंडलमिवात्यच्छंखमेवविशतांतरम्॥ १९॥ इदंभूमंडलंतच्चद्वयमेतन्महाचितेः॥ स्वरूपमेवकचतितवस्वप्नपुरंयथा॥ २०॥ इदमाकाशमात्रात्मतदप्याकाशमात्रकम्॥ अज्ञानात्मपरिज्ञानाज्ज्ञानान्नेदंनतत्क्वचित्॥ २१॥ त्रैलोक्यभूतजालानांकालत्रितयभाविनाम्॥ संभ्रमःस्वप्नसंकल्पोमनोराज्यदशास्थितौ॥ २२॥ भूतान्यथभविष्यंतिवर्त्तमानानियानिच॥ भूमंडलानितान्यंगसत्तासामान्यतांगता॥ २३॥ अहमेवसमग्राणितेषामंतर्गतान्यपि॥ तेनतान्यनुभूतानितथादृष्टानिचाखिलम्॥ २४॥ चिन्मात्रमेतदजरंपरमात्मतत्त्वंशुद्धात्मतामजहदंगगतंविभर्त्ति॥ सर्वंयथास्थितमिदंजगदात्तभदंबुद्धंसदंगनविभर्त्तितुकिंचनापि॥ २५॥ ॥इ० वा० महारामायणवा० दे० मो० नि० उ० पा० दृश्यमनोमात्रत्वप्रतिपादनंनामैकोननवतितमःसर्गः॥ ८९॥ ॥ ९ ॥ ॥श्रीरामउवाच॥ अनंतरंवदब्रह्मन्जगंतिभवतातदा॥ भूमंडलानांहृदयेक्वचिद्दृष्टानिनैववा॥ १॥

सामान्यतांसर्वाधिष्ठानत्वात्साधारणतांगताआत्मसत्तैवतानिसर्वाणिसत्तासामान्यमेवतेनहेतुनातानितदंतर्गतानिचसर्ववस्तून्यहमेवेतिधारणायांमयामनसाअनुभूतानिसाक्षिद
शाचअखिलंनिःशेषंयथास्यात्तथादृष्टानीत्यर्थः ॥ २३ ॥ २४ ॥ हेरामपरमात्मतत्त्वमेवाबोधदशायांस्वशुद्धात्मतामजहदत्यजदेवयथास्थितंसर्वंजगदात्मगतंस्वात्मतामिवप्रा
प्तंसद्रूपंकृत्वाविभर्त्तिबुद्धंतुसत्किंचनापिनविभर्त्तिसैवास्यमुक्तिरित्यर्थः ॥ २५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणउत्तरार्द्धेएकोननवतितमःसर्गः ॥ ८९ ॥
पृथिवीहृदयेनंतजगद्दृष्टिरिहोच्यते ॥ जलधारणयासर्वजलर्लीलाचपूर्ववत् ॥ १ ॥ यथाप्रसिद्धेजगतिकलधौतशिलादिप्रदेशभेदेष्वनेकानिब्रह्मांडानिसंतितथाधारणादृष्टेष्व
पितन्मंडलेषुप्रतिवस्तुनानिसंतिनवेतिसंदिहानोरामःपृच्छति ॥ अनंतरमिति ॥ मंडलशब्दःप्रदेशभेदपरः ॥ १ ॥

उर्वीधारणयापरमात्मनोजायदुर्वीमंडलात्मनास्वमोर्वीमंडलात्मनाचमयातत्तदुर्वीप्रदेशभेदलक्षणेतद्धृदयेपरयाईश्वरसाक्षिदृशासाक्षाद्दृष्टंमनसाचविमृश्यानुभूतम् ॥ स्वमपह णंस्वामोर्व्यादिप्रदेशभेदेष्वप्यनंतजगत्संभवप्रदर्शनाय ॥ २ ॥ किंदृष्टमनुभूतंचतदाह ॥ यावदिति ॥ तथाप्राग्दृष्टकलधौतशिलादिवदेव ॥ यावदितिसाकल्ये ॥ शांतमद्वैतंद्वैत मयात्मकमपि ॥ ३ ॥ कुतोद्वैतमयंकुतोवाशांतंतत्राह ॥ जगंतीति ॥ ४ ॥ ५ ॥ नानाअनानावासत्यमितिप्रसिद्धेतद्दर्शनाभिमानिनिसिध्येत्सएवतावन्नास्तीत्याह ॥ अहमित्ये वेति ॥ ६ ॥ ७ ॥ यद्यस्मात्सर्गादौसृष्टेःप्राक्चिन्नभएवतत्तस्मात्तदुत्तरंचिन्नभसिदृष्टमपीदंस्वमपुरसममेव ॥ इत्थंप्रतियोगिन्याअस्तितायाअव्यवस्थितैतदभावोनास्तिता प्यव्यवस्थितैवेत्याह ॥ अस्तितेति ॥ ८ ॥ पृष्टस्योत्तरंसमाप्यजलधारणायायद्यत्कौतुकंदृष्टंतद्वक्तुमारभते ॥ यथेत्यादिना ॥ ९ ॥ गुलगुलायितंअव्यक्तानुकरणादिवार्थगर्भा

श्रीवसिष्ठउवाच ॥ ॥ परात्मजाग्रत्स्वप्नोर्वीमंडलौघात्मनामया ॥ ततोनुभूतंहृदयेदृष्टंचपरयादृशा ॥ २ ॥ यावत्तथैवसर्वत्रजगज्जा लमवस्थितम् ॥ सर्वंदृश्यमयंशांतमपिद्वैतमयात्मकम् ॥ ३ ॥ जगंतिसंतिसर्वत्रसर्वत्रब्रह्मसंस्थितम् ॥ सर्वंशून्यंपरंशांतंसर्वमारंभमं थरम् ॥ ४ ॥ सर्वत्रैवास्तिपृथ्व्यादिस्थूलंतच्चनकिंचन ॥ चिद्व्योमैवयथास्वप्नपुरंपरमजातवत् ॥ ५ ॥ नेहनानास्तिनोनानाननास्तित्वंन चास्तिता ॥ अहमित्येवनैवास्तियत्रतत्रकुतोस्तिकिम् ॥ ६ ॥ अनुभूतमपीदंसदहमित्यादिरूपकम् ॥ नास्त्येवयदिवाप्यस्तितद्ब्रह्माजम नामयम् ॥ ७ ॥ यत्स्वप्नपुरमेवेदंसर्गादावेवचिन्नभः ॥ अस्तितानास्तितेतत्रकीदृशेकक्कुतःस्थिते ॥ ८ ॥ यथाहंदृष्टवांस्तानिजगंत्यवनि रूपधृक् ॥ तथामयाजलीभूयदृष्टंतादृशमेवतत् ॥ ९ ॥ वारिधारणयावारिभूत्वाजडमिवाजडम् ॥ समुद्रमंदिरेष्वंतश्चिरंगुलगुलायितम् ॥ १० ॥ तृणवृक्षलतागुल्मवल्लीनांस्तंभनादिषु ॥ मृद्वलक्षितमारूढंतवांगेष्विवयूकया ॥ ११ ॥ सर्वोत्थानोपमास्तंभेतच्छेदेवलयोप मा ॥ मृद्ध्याकर्णाहिगत्येवरचनाप्रकृतोदरे ॥ १२ ॥

दाचारेक्यङ्भिावेक्तः ॥ १० ॥ मृदुमंदमलक्षितंचयथास्यात्तथाआरूढम् ॥ ११ ॥ यथाकरर्णाहिःसूक्ष्मतंतुनिभःकीटकविशेषोमृद्ध्यागत्याअलक्षितःकर्णेलीनइवप्रविशतित द्वत्तेषांतृणगुल्मादीनांछेदभेदेपर्वभेदेतदुदरेछिद्रभेदेचगतिरचनाप्रकृतेत्यर्थः ॥ १२ ॥

---

१ दृश्यकर्मित्यपिक्वचित्पाठः    २ मयाकर्णाहिगत्येवमृद्ध्यागत्यातृणादीनांस्तंभेप्रकांडेसर्वोत्थानोपमासर्वेषांतृणादीनामुत्थानमूर्ध्वस्थितिस्तदुपमातत्सदृशी यथाऊर्ध्वस्थितिःस्यात्तथेत्यर्थः ॥ तेषांतृणादीनांछेदेभेदेपर्वभेदेतदुदरेछिद्रभेदेचवलयोपमावलयाकारवतीरचनाप्रकृतासंपादितेत्यर्थइतियोजनाकर्तव्येतिप्रतिभाति ॥ पूर्वत्र श्लोकेयूकोपमयाआरोहणमात्रंप्रतिपादितंकर्णाहीत्याद्युपमयात्वाकारविशेषप्रतिपादनपूर्वकंतत्प्रतिपादितम्

वल्लीनांलतानांतमालतालादिवृक्षाणांचपल्लवेषुफलेषुचरसरूपेणविश्रम्यपर्णादिभावेनकालतःपुष्टयातत्तत्पर्णाद्याकृत्याअंतःशिरारेखाविरचनंकृतम् ॥ १३ ॥ तथाप्राणिनांदेहेषुपानकालेमुखेनस्वदयमाविश्यवसंतादिकृतुप्रयुक्तवैषम्यधारिणामयावातपित्तकफाख्याधातवःक्वचिद्धृताःकदाचिद्विधुरिताःकेचिद्भुक्ताजठराग्निनापरिपाचिताःकेचिल्लूनाःखंडिताइत्यर्थः ॥ १४ ॥ १५ ॥ कर्दलक्षणायेनदीनांगेहाःपथ्यावासास्तद्ग्राहिणानित्यंप्रवाहादविरताध्वना ॥ १६ ॥ विदाचैतन्येनाविदंशस्यविषयतयाअनुसंधानात्तत्रविषयांशमात्रतयातस्यचिरस्वभावस्यानाश्रयाज्जडेनअतएवलडयोरभेदाज्जलेनमयाजडाशयेषुजडाशयप्रायेषुभ्रांतिसहस्रैरावर्त्तवर्त्तिनाउल्लसितम् ॥ १७ ॥ भार्यश्चित्तार्थंभृगुपातेप्रवृत्तेनदुष्कृतिनापापकारिणेवमयाभूभृतांपर्वतानामूर्ध्वशिलाभ्यःअस्वस्थेनचलितेननिर्झरेणश्वभ्रपातेषुविशीर्णेनशतधागतम् ॥ १८ ॥ गगनलक्षणेअर्णवेसमुद्रेनीलवर्णायेऋक्षमणयोनक्षत्ररत्नानितदंतर्वर्त्तिनाकणरत्नेनरत्नकणेनभूत्वास्थितम् ॥ वसिष्ठवचनप्रामाण्याद्दूरस्थैरदृश्यानिनीलवर्णान्यपिनक्षत्राणिदिविसंतीतिगम्यते ॥ १९ ॥ २० ॥

वल्लीनमालतालादिपल्लवेपुफलेषुच ॥ विश्रम्यपुष्ट्याकृत्यारेखाविरचनंकृतम् ॥ १३ ॥ मुखेनाविश्यहृदयमृतुवैधुर्यधारिणा ॥ हृताविधुरिताभुक्तालूनादेहेषुधातवः ॥ १४ ॥ सुमंपल्लवतल्पेषुप्रालेयकणरूपिणा ॥ तुल्यकालमशेषेषुदिक्षुसर्वास्वखेदिना ॥ १५ ॥ नानाकर्दनदीगेहग्राहिणाविरताध्वना ॥ विश्रांतंसेतुसुहृदःप्रसादेनक्वचित्क्वचित् ॥ १६ ॥ विदाविदनुसंधानाज्जडेनतदनाश्रयात् ॥ जडाशयेषूल्लसितंजलेनावर्त्तवर्तिना ॥ १७ ॥ मयादुष्कृतिनेवोर्ध्वशिलास्वस्थेनभूभृताम् ॥ स्वावर्त्तवर्त्तिनाश्वभ्रपातेपुशतधागतम् ॥ १८ ॥ धूमरूपेणनिर्गत्यदारुभ्योगगनार्णवे ॥ कणरत्नेननीलर्क्षमण्यंतर्वर्त्तिनास्थितम् ॥ १९ ॥ विश्रांतमभ्रपीठेषुविद्युद्वनितयासह ॥ भिन्नेंद्रनीलनीलेनशेषांगेष्विवशौरिणा ॥ २० ॥ परमाणुमयेसर्गेपिंडरूपेष्वलक्षितम् ॥ स्थितमंतःपदार्थेषुब्रह्मणेवाखिलात्मना ॥ २१ ॥ प्राप्यजिह्वाणुभिःसंगमनुभूतिःकृतोत्तमा ॥ यामात्मनोनदेहस्यमन्येज्ञानस्यकेवलम् ॥ २२ ॥ नमयानचदेहेननान्येनास्वादितात्मयत् ॥ तदंतर्विद्वतंचेत्यमज्ञानायतदप्यसत् ॥ २३ ॥

कृमिषुपुत्तिकादिपरमसूक्ष्मदेहात्मकेपिसर्गेतत्तत्प्राणिपिंडरूपेष्वंतर्गतेषुपरमसूक्ष्मेषुतन्वाद्यादिपदार्थेषुब्रह्मणेवपरमसूक्ष्मजलात्मनामयास्थितम् ॥ २१ ॥ किंचमधुरादिरसात्मनामयातदीयजिह्वालक्षणैरणुभिःसहसंगंप्राप्यतेषांरसास्वादलक्षणाउत्तमाअनुभूतिःकृता ॥ यामनुभूतिनदेहस्यमन्येकिंतुकेवलंज्ञानस्वरूपस्यआत्मनएवविषयानंदाकाराविर्भूतस्वरूपंमन्ये ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेरितिभावः ॥ २२ ॥ तत्रपृथग्जनाविषयमेवानंदरूपमास्वाद्यमानंमन्यंतेतन्नतथाविद्यात्किंत्वसद्दुःखरूपमनास्वादनीयमेवेतितंपृथक्कृत्यदर्शयति ॥नमयेति॥ यच्चेत्यंविषयरूपंतन्नमयातदधिष्ठानचितानाप्यास्वादकपुरुषदेहेननाप्यन्येनतज्जीवेनास्वादितात्मसुखलेशस्याप्यभावेनास्वादनायोग्यत्वात्तत्तथाविधंचेत्यंचितायदंतर्विद्वतंप्रकाशितंतत्केवलंजीवानामज्ञानायव्यामोहायैव ॥ यतस्तच्चेत्यंतदज्ञानमप्यसदेव॥ असतःअसदर्थत्वस्यैवौचित्यादित्यर्थः ॥ २३ ॥

आस्वाद्यत्वपक्षेपिविषयाधिष्ठानचिदास्वादितामेवविषयांस्तदुच्छिष्टप्रायानन्येआस्वादयंतीतिवाकल्पनास्त्वित्याशयेनाह ॥ सर्वर्त्विति ॥ अलयेभ्रमराय ॥ २४ ॥ कल्पनयाजडेनापिवस्तुतोऽजडात्मना ॥ २५ ॥ मारुतरूपंरथमारुह्यविहितंक्रीडनंजनाह्लादनंचेतिशेषः ॥ २६ ॥ तत्रापिपरमाणुपर्यंतसर्ववस्तुप्रतिवस्त्वंतःकलधौतशिलायामिवसर्गाअनुभूताइत्याह ॥ रामेति ॥ २७ ॥ जालयाजलविषयिण्यासमयातुल्यरूपयातयाधारणया ॥ २८ ॥ प्रतिवस्त्वंतर्दृष्टजगद्गतप्रतिवस्त्वंतरेपितथाविधजगदंतराण्यनवस्थितान्यंतरंतर्दृष्टानीत्याह ॥ जगतामिति ॥ कदलीदलपीठवदंतरंतःप्ररूढान्यनंतानीत्यर्थः ॥२९॥ एवंकल्पितानंतजगद्व्याप्तत्वेपिनाधिष्ठानचितिःकिंचिन्मालिन्यमस्तीत्याह ॥

सर्वर्तुरसरूपेणनानामोदानिदिक्ष्वलम् ॥ भुक्तानिपुष्पजालानिप्रोच्छिष्टंददतालये ॥ २४ ॥ चतुर्दशप्रकाराणांभूतानामंगसंधिषु ॥ उषितंचेतनेनेवजडेनाप्यजडात्मना ॥ २५ ॥ सीकरोत्कररूपेणरथमारुह्यमारुतम् ॥ आमोदेनेवविहितंविमलव्योमवीथिषु ॥ २६ ॥ रामतस्यामवस्थायांपरमाणुकणंप्रति ॥ अनुभूतमशेषेणयथास्थितमिदंजगत् ॥ २७ ॥ अजडेनजडेनेवसमयाजालयातया ॥ अंतःसर्वपदार्थानांज्ञाताज्ञातेनसंस्थितम् ॥ २८ ॥ जगतांतत्रलक्षाणिनाशोत्पातशतानिच ॥ मयादृष्टानिरूढानिकदलीदलपीठवत् ॥ २९ ॥ एवंजगच्चाजगद्वासाकारंवानिराकृति ॥ चिन्मात्रगगनंसर्वमाकाशाधिकनिर्मलम् ॥ ३० ॥ नकिंचनत्वंचनकिंचनेदंशुद्धःपरोबोधइदंविभाति ॥ सचापिनोकिंचननापिशून्यमाकाशमेवासिविकासमास्व ॥ ३१ ॥ ॥ इत्यार्षेवा० महारामायणेवा० दे० मो० नि० उ० पाषा० जलजगद्वर्णनंनामनवतितमःसर्गः ॥ ९० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ ततोहमभवंतेजस्तेजोधारणयेद्धया ॥ चंद्रार्कतारकाग्न्यादिविचित्रावयवान्वितम् ॥ १ ॥ नित्यंसत्वप्रधानत्वात्प्रकाशाकृतिराजगत् ॥ सर्वदृश्यमृतेसर्वंचौरध्वांतप्रतापयुक् ॥ २ ॥

एवमिति ॥ ३० ॥ उक्तंन्यायंरामदृश्यजगत्यपियोजयन्सर्वाधिष्ठानशुद्धचिन्मात्रेरामंप्रतिष्ठापयति ॥ नकिंचनेति ॥ नकिंचनत्वमित्यवस्थात्रयेणसहदेहेंद्रियादिप्रतिषेधः ॥ नचकिंचनेदमितिवियदादिबाह्यप्रपंचप्रतिषेधः ॥ सचशोधिततत्वंपदार्थलक्षणोबोधःनोकिंचनदृश्यस्वभावोनाप्यदृश्यस्वभावोनाप्यदृश्यशून्यस्वभावःकिंत्वखंडाकाशरूपःसएवत्वमस्यतोविकासमखंडवाक्यार्थबोधध्वस्तसर्वद्वैतसंकोचंयथास्यात्तथाआस्वेत्यर्थः ॥ ३१ ॥ ॥ इ० वा० तात्पर्यप्रकाशेनि० प्र० उत्तरार्द्धेनवतितमःसर्गः ॥ ९० ॥ ॥ ७ ॥ तेजोधारणयातेजोभावमासाद्यवीक्षिताः ॥ सूर्यचंद्राग्निरत्नादिचमत्काराइहोदिताः ॥ १ ॥ ततोजलधारणाकौतुकदर्शनानंतरम् ॥ १ ॥ आजगत्सर्वंजगदभिव्याप्यप्रकाशाकृतिः ॥ राजवदितिपाठेसर्वंदृश्यंचक्षुर्विषयंस्वापहृतंकृत्वेविहायसर्वतश्चौरेष्विवपलायमानेषुध्वांतेषुराजवत्प्रतापयुगितिसंबंधः ॥ २ ॥

यथासुराजादशाशतैर्नानावेषैर्विहारिभिः स्निग्धैश्चारैः प्रतिगेहंप्रत्यक्षीकृतसर्ववृत्तांतार्थस्तद्वद्वर्त्तिकाशतविहारिभिर्दीपादिभिः प्रत्यक्षीकृतसर्वार्थम् ॥ तेजएवसर्वत्रविशेष्यमनुवर्त्तते ॥ ३ ॥ परप्रकाशैकरतैरतएवलोकानांजनानांभुवनानांचआलोकेअतिसंतुष्टैःपुलकितैश्चचंद्रार्कांशुलक्षणैरोमभिर्दूरेउत्ऊर्ध्वंक्षिप्तमस्तमंबरंसर्वावरकतमोवस्त्रमिवदृश्यमानमंबरमाकाशंयेनेत्युत्प्रेक्षा ॥ ४ ॥ किमर्थमंधकारंदूरेउत्क्षिपतीतिचेत्तत्राह ॥ अंधकारस्येति ॥ यतःसत्विद्यमानंजगत्सर्वंसमस्तान्गुणान्रूपादीन्नाशयत्यदर्शनंनयतितथाविधस्यांधकारलक्षणस्यदैन्यस्यदृश्यंविषयः सर्वस्यचगुणशालिनःपरदैन्यनिवर्त्तनसमर्थस्यसत्उत्तममपगतदैन्यंजगद्दृश्यंदर्शनार्हमतस्तदपनयनंयुक्तमेवेत्यर्थः ॥ ५ ॥ पुनःकीदृशंतेजः ॥ तमोलक्षणानांतमालवृक्षाणांपरशुःखंडकम्॥ परमुत्कृष्टंशुद्धिकरंपद्यतेअनेनेतिपदम् ॥ निस्तेजस्कानांसुवर्णादीनामनादरात्तल्लक्षणानांजनानांजीवितमादरहे

दीपादिभिःशनैःस्निग्धैर्दशाशतविहारिभिः ॥ प्रत्यक्षीकृतसर्वार्थंप्रतिगेहंसुराजवत् ॥ ३ ॥ लोकालोकेचहृषितैश्चंद्रार्कांशुरोमभिः ॥ परप्रकाशैकरतैर्दूरोत्क्षिप्तमंवरांवरम् ॥ ४ ॥ अंधकारस्यदैन्यस्यसमस्तगुणनाशिनः ॥ दृश्यंसद्दृश्यमनिशंसर्वस्यगुणशालिनः ॥ ५ ॥ तमस्तमालपरशुःपरशुद्धिकरंपदम् ॥ सुवर्णमणिमाणिक्यमुक्तादिजनजीवितम् ॥ ६ ॥ शुक्लकृष्णारुणादीनांनित्यंज्योत्स्नांगशायिनाम् ॥ पुत्राणामिववर्णानांसर्वेषांदेहदःपिता ॥ ७ ॥ घनस्नेहरसंपृथ्व्यारक्षितानलवेधनम् ॥ गृहंप्रतिघनानंदैर्वृतदीपकपुत्रकम् ॥ ८ ॥ दृष्टंपातालकेप्वीषत्तमोरूपेषुपावकम् ॥ अर्धदृष्टंरजोरूपेभूतलेभूतमालिते ॥ ९ ॥ सत्वात्मसुमहासत्वंनित्यत्वंदेवसद्मसु ॥ जगज्जीर्णकुटीदीपःकूपोंभस्तमसोमहान् ॥ १० ॥ दिग्वधूविमलादर्शोनिशानीहारमारुतः ॥ सत्वंचंद्रार्कवह्नीनांकुंकुमालेपनंदिवः ॥ ११ ॥

तुः सुवर्णादिरूपेणजनानांजीवनसाधनमितिवा ॥ ६ ॥ ज्योत्स्नाआलोकस्तदंगशायिनाम् ॥ रूपमात्रस्यालोकांशगुणत्वादितिभावः ॥ ७ ॥ इदंचतेजःपृथ्व्यासहघनःस्नेहरसःप्रीत्यतिशयोयस्यतथाविधम् ॥ कुतः ॥ यतोरक्षितमनलाद्वेधनंदहनंयेन ॥ सर्वदाहकोप्यनलोमृदंनदहतीतिदस्यस्नेहलक्षणमित्यर्थः ॥ एवंपृथ्व्यापिस्वस्नेहलक्षणप्रकटनायगृहंप्रतिप्रतिगृहंघनानंदैःप्रीत्यतिशयैर्भित्तिप्रासादादिभावेनवृतोवाय्वभिघाताद्रक्षितोदीपकपुत्रकोयस्य॥८॥ तमोरजःसत्ववहलेपुपातालादिपुलोकेपुतेजसःप्रकाशतारतम्यमाह ॥ दृष्टमितिसार्धेन ॥ ईषत्पावकंईषत्प्रकाशकम् ॥ अर्द्धदृष्टमर्द्धप्रकाशम् ॥ ९ ॥ महासत्वंमहाप्रकाशम् ॥ नित्यत्वंनित्यता ॥ अंभस्तमसोमहानगाधःकूपइवांतर्यासि ॥ १० ॥ दिग्वधूनांविमलआदर्शइवविविच्यप्रकाशकम् ॥ निशानीहारस्यमारुतइवअपनेतृ ॥ सत्वंजीवितसर्वस्वम् ॥ ११ ॥

१ दूरोत्क्षिप्तमासितांवरमितिपाठोवहुपुपुस्तकेपुयद्यपिदृश्यतेतथापिसनैतट्टीकासंमतइतिभाति

तमसाउच्छूनामुच्छूनानांरूपाणामनुग्रहः ॥ नभोलक्षणस्यकाचमयबृहत्पात्रस्यक्षालनार्थमंबु ॥ १२ ॥ चिन्मात्रलक्षणस्यपरमार्थस्यजाड्यमात्रेणजघन्यत्वादनुजइव ॥ १३ ॥ रूपालोकस्यचाक्षुषस्यतत्प्रयुक्तमनस्कारस्यचचच्त्यारूढचितेरिवविषयावरणतमोनिवर्त्तनलक्षणश्चमत्कारः ॥ १४ ॥ किंचेदंतेजोबृहद्ब्रह्मांडखातस्थोमहार्णवएवेत्युत्प्रेक्षणायरूपककल्पितैरर्णवधर्मैर्विशिनष्टि ॥ नभस्तलेति ॥ दिनर्तुवत्सरादिकालभेदलक्षणैरावृत्तैः सर्वतःप्रवृद्धैर्वाडवाग्न्यादिभिर्विक्षोभात्फेनिलः ॥ १५ ॥ चंद्रार्कादिलक्षणतरंगांतःप्रसृतैरजोभिःअजडंविनैवजलंकदाचित्पंकिलः ॥ १६ ॥ किंचेदंतेजःसन्नहंहेमादिषुसुवर्णत्वंसंपन्नः ॥ नरादिषुपराक्रमःसंपन्नइतियोज्यम् ॥ काचकच्यंकांतिविशेषः ॥ अवभासनंविद्युत्प्रकाशः ॥ १७ ॥ मुखसदृशेष्विंदुबिंबेषुतुज्योत्स्नासंपन्नः ॥ पक्ष्मलेक्षणलक्ष्मसुमुखलक्षणेंदुबिंबेषुतुज्योत्स्नासदृशःस्ववत्स्नेहामृतापूरोहाससौहार्दयुक्तंभासनंचसंप

केदारंदिनसस्यानांतमोच्छूनामनुग्रहः ॥ नभःकाचबृहत्पात्रक्षालनांबुसमुल्लसत् ॥ १२ ॥ सत्ताप्रदतयार्थानांप्रकाशकतयापिच ॥ चिन्मात्रपरमार्थस्यसहोदरइवानुजः ॥ १३ ॥ क्रियाकमलिनीभानुर्भूतलादरजीवितम् ॥ रूपालोकमनस्कारचमत्कारश्चितेर्यथा ॥ १४ ॥ नभस्तलगतासंख्यनक्षत्रमणिमालितः ॥ दिनर्तुवत्सरावृत्त्यवाडवाग्न्यादिफेनिलः ॥ १५ ॥ चंद्रार्कादितरंगांतरजडंपंकिलोमहान् ॥ बृहद्ब्रह्मांडखातस्थोनित्यमेकार्णवोऽक्षयः ॥ १६ ॥ हेमादिषुसुवर्णत्वंनरादिषुपराक्रमः ॥ काचकच्यंचरत्नादौवर्षादिष्ववभासनम् ॥ १७ ॥ ज्योत्स्नामुखेंदुबिंबेषुपक्ष्मलेक्षणलक्ष्मसु ॥ स्ववत्स्नेहामृतापूरोहाससौहार्दभासनम् ॥ १८ ॥ कपोलबाहुनेत्रादिभ्रूकरालकलासकः ॥ निजोऽजेयतयाजातोविलासःकामिनीजने ॥ १९ ॥ तृणीकृतत्रिभुवनचपेटास्फोटितद्विषाम् ॥ शिरःसुवज्रीकरणंवीर्यंसिंहादिचेतसि ॥ २० ॥ कटुकंकटकुद्दाकखड्गसंघट्टटांकृतैः ॥ पटुस्फुटाटोपरटिभटेष्वटनमुद्भटम् ॥ २१ ॥ देवेषुदानवारित्वंसुरारित्वंसुरारिपु ॥ सर्वभूतेषुसोजस्त्वमुन्नामःस्थावरादिषु ॥ २२ ॥

न्नइत्यर्थः ॥ १८ ॥ कामिनीजनेत्वहमजेयतयाप्रसिद्धोनिजःस्वाभाविकःकामविलासोजातः ॥ सकीदृक् ॥ कपोलादीनांलासकोलावण्यातिशयेनप्रकाशकः ॥ लामकइतिपाठेचलनादिविकारहेतुः ॥ १९ ॥ किंचाहंतृणीकृतत्रिभुवनानांचपेटाभिरास्फोटिताद्विषोयैस्तथाविधानामपिपराक्रमिणांरुद्रादीनांशिरःसुवज्रीकरणंवज्रप्रहारःसंपन्नः ॥ सिंहादिचेतसिवीर्यंचसंपन्नइतिप्रत्येकंविशेषणविशेष्यभावेनवायोज्यम् ॥ २० ॥ किंचाहंभटेषुउद्भटंरणांगणेष्वटनंलक्षणयातत्प्रयोजकंवीर्यंसंपन्नः ॥ तत्कीदृशम् ॥ कटुभिःकंकटानामायसकवचानांकुद्दाकायेखड्गास्तत्संघट्टजन्यैर्टांकृतैःपटुस्फुटाटोपंचयथास्यात्तथारटिरटनशीलम् ॥ २१ ॥ उन्नामऔन्नत्यम् ॥ बाह्वादिबलेनाप्यनाम्यत्वप्रयोजकंबलंवा ॥ २२ ॥

अथतेपुत्त्वधारणाकल्पितेषुजगदाकाशकोशेपुतेतवप्रसिद्धामरुस्थलीयथास्वांतर्नद्यादिकल्पनमनुभवतितद्वदहमपिभास्वान्सन्वक्ष्यमाणंसर्वंस्वांतरनुभूतवानित्यर्थः ॥ २३॥ तदेवाह ॥ दिगंतेत्यादिना ॥ अहमर्कत्वमनुभूतवान् ॥ कीदृशंतत् ॥ दिगंतेपुदशसुनिस्तीर्णैःप्रसृतैःकरजालैः अद्रयःअंगान्यवयवायस्यतथाविधंजगल्लक्षणंखगंपक्षिणंगृह्णत् ॥ पुनःकीदृशम् ॥ यामवदल्पपरिमाणंदृष्टंभूतलंयत्र ॥ २४ ॥ पुनस्तत्कीदृशमर्कत्वम् ॥ चंद्रकामवत्युत्पलेकोशबंधनहेतुभूतंचक्रम् ॥ शिष्टंस्पष्टम् ॥ २५ ॥ तथाइंदुत्वंचंद्रभावमप्यनुभूतवान् ॥ तदपिकीदृशम् ॥ रसायनस्यामृतस्यकुंदइवाकारोयस्य ॥ दिवोवदनमिववदनम् ॥ निशालक्षणायानिशाचर्याअभिसारिकायाहासमिवहासम् ॥ तथारजन्यांविशंतिप्रवेशादिव्यवहारंयेकुर्वंतितेरजनीविशस्तेषांविकासंप्रकाशकम् ॥ २६ ॥ २७ ॥ तथासर्वप्राणिनांनेत्रवृंदस्यवक्त्रस्यमुखस्यचआह्लादविकासहेतुत्वात्परमंप्रियमि

अथतेमरुवद्भास्वांस्तत्राहमनुभूतवान् ॥ जगदाकाशकोशेपुतेपुतामरसेक्षण ॥ २३ ॥ दिगंतदशनिस्तीर्णैःकरजालैर्ज्जगत्खगम् ॥ गृह्णदद्र्यंगमर्कत्वंग्रामवद्दृष्टभूतलम् ॥ २४ ॥ कामोत्पलेकोशचक्रंवाडवंतिमिरार्णवे ॥ ब्रह्मांडसदनेदीपंवृक्षंदिनफलावलेः ॥ २५ ॥ रसायनकुंदाकारमिंदुत्वंवदनंदिवः ॥ निशानिशाचरीहासंविकासंरजनीविशाम् ॥ २६ ॥ जगल्लावण्यलक्ष्मीणांसर्वासामुपमास्पदम् ॥ रजनीरोहिणीनारीकैरवाणांपरंप्रियम् ॥ २७ ॥ नेत्रवृंदस्यवक्त्रस्यद्युलतापुष्पजालकम् ॥ स्वर्गौघमशकव्यूहंतारकापटलंमृदु ॥ २८ ॥ वणिग्मात्रेवणिग्घस्ततुलातोलनदोलितम् ॥ रत्नत्वंजलकल्लोलहस्तांदोलनमब्धिभिः ॥ २९ ॥ अब्धाब्धौशफरावर्त्तमब्धागोमंजरीगणः ॥ अब्दादौदावदहनंवैद्युतंद्योतनंतनौ ॥ ३० ॥ दारुदारणदुर्वारदीप्तंज्वलनमाततम् ॥ यज्ञाग्निदाहकल्याणंविस्फोटकठिनारवम् ॥ ३१ ॥

त्यनुकृष्यान्वयः ॥ तथाअहंमृदुतारकापटलम् ॥ भावप्रधानोनिर्देशः ॥ तारकासमूहत्वंचानुभूतवान् ॥ तदपिकीदृशम् ॥ द्यौराकाशस्तल्लक्षणायालतायाःपुष्पजालकमिवस्थितम् ॥ स्वर्गसुखलक्षणेओघेतन्मकरंदप्रवाहेआसक्तंमशकव्यूहमिवमृदुक्षुद्रम् ॥ २८ ॥ तथाअहंरत्नत्वमप्यनुभूतवान् ॥ तच्चवणिजोमिर्मीतेइतिवणिङ्मात्रोविपणिस्तस्मिन्वणिजांहस्तैस्तुलासुतोलनैश्चदोलितमांदोलितम् ॥ प्राक्अब्धिभिर्जलकल्लोलहस्तैरांदोलनंप्राप्तमितिशेषः ॥ बाहुलकात्कर्मणिवाल्युट् ॥ २९ ॥ किंचाहमब्धौसमुद्रेअपोधयतिपिबतीत्यब्धावडवानलःसन्शफराणांक्षुद्रमत्स्यानांमद्गीतानामावर्त्तपरिभ्रमणकौतुकमनुभूतवान् ॥ तथासर्वत्रअपःधयतिशोषयतीत्यब्धागोमंजरीगणःसूर्यकिरणमंजरीसमूहात्मकःसंस्तनौस्वशरीरेद्योतनमनुभूतवान् ॥ अब्दादौमेघपर्वतादौप्रविश्यदावदहनंवैद्युतंचतत्तच्छरीरेद्योतनंत्वमनुभूतवानित्यर्थः ॥ ३० ॥ किंचाहमग्निभावंप्राप्यदारूणांदारणंविदारणनिमित्तंदुर्वारंयथास्यात्तथादीप्तमतएवदारुविस्फोटैःकठिनारवमाततंसर्वतोविस्तृतंज्वलनमनुभूतवान् ॥ तथायज्ञाग्निःसन्नानाहविर्दाहकल्याणंचानुभूतवानित्यर्थः ॥ ३१ ॥

किंचतस्मिन्नग्निभावेकचल्लावण्यातिशयेनदीप्यमानंकांचनादिमयंमहोज्योतिःकोशागारदाहेनआक्षिप्यपरिभूयभस्मादिभावंनीत्वातत्स्वामिनांतपस्तांसंतापविषयतांनीतम् ॥ यथावलवद्भिःपामरैर्बहुभिरेकस्यपंडितस्यपांडित्यंवितंडावादैरभिभूयसंतापविषयतांनीयतेतद्वत् ॥ तथाचाभाणकमाहुः॥ पलाशंपंडितःप्राहमूर्खाजल्पंतिपाडलम् ॥ मुष्टिप्रहारैःसंक्लिष्टःपंडितोप्याहपाडलमिति ॥ ३२ ॥ प्रसंगोपात्तेमुक्ताभावेपियदनुभूतंतदाह॥ विश्रांतमिति॥३३॥ खद्योतभावेयदनुभूतंतदाह ॥ पादाहतिमिति ॥ खद्योतभूतेनमयातत्खद्योतत्वंमार्गेसंचरतांजनानांपादाहतिगतंलब्धम् ॥ वधूमुखेतुतिलकत्वंगतंलब्धम् ॥ स्थानभेदप्रयुक्तासूत्कर्षापकर्षावस्थासुचापलमनैयत्यंपश्य ॥ ३४ ॥ खस्थेषुमेघेषुमयाक्वचिद्विद्युत्तयार्णवेषुशफर्येवचारुयथास्यात्तथाविकृतंचेष्टितम् ॥ वार्यावर्त्तैर्विरा विष्विति द्वयोरपिविशेषणम् ॥३५॥ अंतःपुरेषुआनीयस्थापितेनेतिशेषः ॥ ३६ ॥ ज्वालालक्ष

कचत्कांचनमाणिक्यमुक्तामणिमयंमहः ॥ तपस्तांनीतमाक्षिप्यपांडित्यमिवपामरैः ॥ ३२ ॥ विश्रांतंस्तनशृंगेषुमुक्ताहारतयातया॥ असुरोरगगंधर्वनरनायकयोषिताम्॥३३॥ पादाहतिंगतंमार्गेतिलकत्वंवधूमुखे॥ खद्योतेनमयालब्धंपश्यावस्थासुचापलम्॥३४॥ क्वचिद्विद्युत्तयातेषुशफर्याचार्णवेष्विव ॥ खस्थेषुविकृतंचारुवार्यावर्त्तविराविषु ॥ ३५ ॥ क्वचिद्दीपतयानीयकलिकाकोमलांगया॥ अंतःपुरेषुकांतानांसुरतालोकनंकृतम्॥३६॥ क्वचित्कज्जलजालस्यज्वालाकनकदाकृते॥ खेदिनाघनकूर्माभंसंगेनैवस्वकोटरे॥३७॥ कल्पांतेषुक्वचित्सर्वंजगद्भ्रमघनश्रमात्॥ खेकज्जलासितेलीनंरुद्रेभइवविद्युता ॥ ३८ ॥ क्वचिदाकल्पमापीयवाडवाग्नितयाजलम्॥ जगत्सुगगनेष्वंतेनन्नृतेजलराशिषु॥३९॥ क्वचिदुल्मुकदंतेनमयाज्वालाभुजात्मना॥ विलोलधूमावर्त्ताग्रकुंतलेनाकुलौजसा॥४०॥ पुरपल्लवदाहेषुकवलीकृतजंतुना॥ कृताःकृताष्टकाष्ठादिपदार्थाःस्वादनोचिताः ॥ ४१ ॥

णंकनकंदातिखंडयतितथाविधाकृतेस्वकोटरेवर्त्तिकाम्रेप्ररूढकज्जलजालस्यसंगेनैवखेदिनामंदप्रभेणदीपेनमयाज्वालाद्यवयवसंकोचाद्घनकूर्माभंरूपंकृतमित्यर्थः ॥ कल्पांताग्निभूतेनचमयाकल्पांतेषुसर्वेषुजगत्सुभ्रमणप्रयुक्ताद्दृढतःश्रमात्कज्जलेनासितेश्यामेक्वचित्खेआकाशेलीनम् ॥ यथामेघवाहनस्यरुद्रस्यइभेवाहनभूतेमेघेविद्युतालीनंतद्वत् ॥ ३८ ॥ गगनेषुशून्यतांप्राप्तेषुजलराशिषुमयाअंतेगगनेननृते ॥ गात्रविक्षेपार्थस्यन्नृतेर्द्धात्वर्थोपसंगृहीतकर्मकत्वेनाकर्मकत्वाद्भावेलिट् ॥ ३९ ॥ क्वचिदुल्मुकदंतेनज्वालाभुजात्मनाविलोलावर्त्तधूमाग्राण्येवकुंतलाःकेशायस्यतथाविधेनौजसाग्निनामयापुराणांप्ररूढकक्षपल्लुलानांचदाहेषुक्रियमाणेषुकाष्ठादिपदार्थाःस्वादनोचिताभक्षणयोग्याःकृताइतिपरेणान्वयः ॥ ४०॥ हेकृताष्ट कृताःस्थिरीकृतादयाद्यस्पृहांतागौतमोक्ताअष्टौगुणायेनेतिव्युत्पत्तेः ॥ ४१ ॥

१ बहुव्रीहिः ॥ आकृतमाकृतिः

क्वचित्कर्मारशालादौशस्त्रैरयोमुद्गरैःपाषाणैश्चहतेनलोहाभिघातादभिहतेनकणकाविस्फुलिंगाउपलता:पाषाणखंडाश्चोद्गीर्णाः ॥ ४२ ॥ पाषाणमणिनावज्रवैदूर्यादिरूपेण स्थितम् ॥ ४३ ॥ तस्यांपाषाणमण्याद्यवस्थायाम् ॥ ४४ ॥ चिदानंदैकरसपूर्णब्रह्मभूतस्यममकौतुकाज्जगद्भावारोपवीक्षणेनदुःखलेशस्यापिप्रसक्तिःकिंतुसुखमेवेत्युत्तरंवक्तुं वसिष्ठोभूमिकांरचयति ॥ यथेति ॥ ४५ ॥ अस्यब्रह्मणस्तद्वास्तवंसच्चिदानंदरूपमन्यथानस्यादेवेतिनदुःखप्रसक्तिरितिभावः ॥ ४६ ॥ कुतोनस्यात्तत्राह ॥ वस्तुतइति ॥ स ममविकृतमेवस्थितम् ॥ ४७ ॥ अज्ञानेहिदुःखप्रसक्तिःस्यान्नचतदस्तीत्याह ॥ एतदिति ॥ ४८ ॥ ४९ ॥ ५० ॥ यदिममपाषाणमण्यादिभावेचैतन्यमेवनस्यात्तर्हितदनुभवो

हतेनशस्त्रपाषाणैरयःपिंडादिवासिना ॥ हंत्वदाहार्थमुद्गीर्णाःकणकोपलताःक्वचित् ॥ ४२ ॥ क्वचिन्महाशिलाकोशेपाषाणमणिनाम या ॥ समस्तभूतादृश्येनस्थितंयुगशतान्यपि ॥ ४३ ॥ ॥ श्रीरामउवाच ॥ ॥ मुनेतस्यामवस्थायामनुभूतंत्वयासुखम् ॥ उतदुःखमिति ब्रूहिबोधायममानद ॥ ४४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यथायातिनरःसुप्तोजडतांचेतनोपिसन् ॥ चिद्व्योमगच्छेद्दृश्यत्वंतथाजाड्यं प्रचेतति ॥ ४५ ॥ आत्मानंचेततिब्रह्मपृथ्व्यादीवयदातदा ॥ सुप्तंजडमिवास्तेऽतःस्यादस्यनतदन्यथा ॥ ४६ ॥ वस्तुतस्तस्यखोर्व्यादिनास द्रूपंनसन्मयम् ॥ द्रष्टृदृश्यमिवाभातिब्रह्मचैतत्समंस्थितम् ॥ ४७ ॥ एतत्सत्यपरिज्ञानंयस्योत्पन्नमखंडितम् ॥ नतस्यपंचभूतानिनदृश्यद्र ष्टृविभ्रमः ॥ ४८ ॥ तदामयैवंशुद्धेनतत्कृतंब्रह्मरूपिणा ॥ ब्रह्मरूपादृतेकिंचिदेतत्कर्त्तुंनयुज्यते ॥ ४९ ॥ यदासर्वमिदंदृश्यंजातंब्रह्मनिरा मयम् ॥ तदाब्रह्मपदस्थेनमयात्मैवेवमीक्षितः ॥ ५० ॥ यदापुनरहंपंचभूतानीत्येवभासयन् ॥ भवामिजडएवाहंतदाचेतामिकिंकिल ॥ ५१ ॥ सुप्तोस्मीतिदृढंभावंबुद्ध्वांश्चेतनोपिसन् ॥ नैद्रमेवैत्यलंजाड्यंलसच्चेततिकिंचन ॥ ५२ ॥ यस्तुज्ञानप्रबुद्धात्मादेहस्तस्याधिभौ तिकः ॥ शाम्यत्युदेतिविमलोबोधात्मैवातिवाहिकः ॥ ५३ ॥ आतिवाहिकदेहेनतेनबोधात्मनाणुना ॥ बृहतावायथाकामंनिर्वाणात्मा वतिष्ठते ॥ ५४ ॥

द्यस्मरणंचनस्यादित्याशयेनाह ॥ यदेति ॥ किंचेतामिकथमनुभवामि ॥ ५१ ॥ सुषुप्तौकथंतर्हिनकिंचिदवेदिषमित्यवेदनप्रत्ययस्तत्राह ॥ सुप्तोस्मीति ॥ तत्रनैद्रंनिद्रोपस्थापि तमज्ञानमेवनावेदिषमितिप्रतीतिप्रापितंजाड्यंअलंएति ॥ लसत्स्वप्रकाशंकिंचनवस्तुचेतत्येव ॥ अन्यथासुप्तिकालाननुभूतस्यस्वापाज्ञानादेःस्मरणंकथंस्यादितिभावः ॥ ५२ ॥ ज्ञानोदयेनस्थूलव्यष्टिसमष्टिदेहस्याधिभौतिकभावापगमादपिनजाड्यदुःखप्रसक्तिरित्याशयेनाह ॥ यस्त्विति ॥ ५३ ॥ निर्वाणात्माजीवन्मुक्तः ॥ ५४ ॥

---

१ आर्षत्वाद्भ्रामजनेत्यत्रनलितियोगविभागाद्वासमूहेतल्

॥ ५५ ॥ तथाचनमेदुःखप्रसक्तिरित्युपसंहरति ॥ तस्मादिति ॥ ५६ ॥ ५७ ॥ ५८ ॥ स्वेच्छानिर्मितकौतुकत्वादपिनदुःखप्रसक्तिरित्याशयेनाह ॥ स्वेच्छयैवेति ॥ स्वेच्छयैवान्यत्रप्रयातिचेद्यथानदुःखंतथैवतत्तत्रैवस्थितिंयातिचेदपि ॥ यथापुनरागतिस्तथैवतत्रस्थितिरपिइष्टैवनानिष्टेत्यर्थः ॥ ५८ ॥ ५९ ॥ तवापितत्त्वज्ञानितयाआतिवाहिकदेहत्वंधारणाभेदैर्जगद्भावकौतुकदर्शनंचसुलभमेवेतिमदुक्तंपरीक्षस्वेत्याशयेनाह ॥ बोधमात्रमिति ॥ तमेवातिवाहिकदेहंधारणयाजगद्भावंचानुभवसियदीच्छसीतिशेषः ॥६०॥ तत्त्वज्ञैरिच्छयैवअर्कादिसर्वंजगदस्तंनीत्वाआत्ममात्रतयास्थापयितुंशक्यमित्याह ॥ चिन्मात्रेति ॥ आत्मनाआत्मरूपेणसन्नेवजगद्रूपबाधादसन्निवभवतीत्यर्थः ॥ ६१ ॥ ननुअस्मदादिदृशासताजगताकथमसतेवस्थितमितिचेत्स्वप्नादिजगतिजाग्रज्जगतेवेत्याह ॥ स्थितमिति ॥ यथादृशंजाग्रत्पुरुषदृष्टिप्रतिसताविद्यमानेनैवजगतासुप्तपुरुषप्रसिद्ध

बोधदेहेनहृदयंशिलानामप्यभेदिनाम् ॥ प्रविश्याशुविनिर्यातियातिपातालमंबरम् ॥५५॥ तस्मान्मयापुरारामबोधदेहेनतत्तदा॥ तथाकृतमनंतेनचिन्मयव्योमरूपिणा॥५६॥ वज्रपाषाणपातालनभोंवरगमागमान्॥ कुर्वतस्तादृशस्याशुनविघ्नउपजायते॥५७॥ बोधमात्रशरीरेणयावदास्तेजडेष्वसौ॥ पदार्थेषुतथाभूतस्तावत्तत्रावतिष्ठते॥५८॥ स्वेच्छयैवचलित्वाथततोन्यत्रप्रयातिचेत्॥ तत्तत्रैवस्थितिंयातितत्तथैवागतिर्यथा॥५९॥ बोधमात्रंविदुर्देहमातिवाहिकमव्ययम् ॥ इदानींत्वंतमेवेहबुधोनुभवसिस्वयम्॥६०॥ चिन्मात्रव्योमरूपोस्मीत्यर्कादावितिबोधतः॥ आत्मैवास्तमुपानीतःसन्नेवासन्निवात्मना ॥६१॥ स्थितंस्वप्नादिजगतितमसेवासतेवच॥ आवृतेनेववान्यासामलभ्येनसतादृशम्॥६२॥ तरंगलेखयांगारसरितःस्वांगलग्नया॥ मनोराज्यश्रियेवाशुकृप्रोत्पन्नस्तद्वदेहया॥६३॥ कज्जलालिकयावह्निविपिनंपुष्पशोभया॥ फुल्लस्थलांबुजाकारंकिंशुकाशोकरूपया॥६४॥ विततारंभयाप्युच्चैर्ज्वालाज्वलतयेद्धया॥ उपोत्थायांगगलितंखललक्ष्म्येवलोलया॥६५॥

स्वप्नादिजगतितमसाअज्ञानभावेनेवअसताशून्यभावेनैवआवृतेनेववाअन्यासांसुप्तदृशामलभ्येनस्थितंतद्वदित्यर्थः ॥ ६२ ॥ किंचयथाकश्चिन्मनोराज्यश्रियाकल्पितायाअंगारसरितस्तरंगलेखयास्वांगलग्नयापिअशुकृन्निर्दुःखएवकौतुकीप्रोत्पन्नस्तद्वदहमपिआईहयाईषदिच्छयापाषाणमण्यादिभावेनप्रोत्पन्नइतिनशुकृप्रसक्तिरित्यर्थः ॥ ६३ ॥ इत्थंरामप्रश्नस्योत्तरमभिधायप्रस्तुतमेवानुवर्त्तमानआह ॥ कज्जलेति ॥ वह्निभूतेनैवमयाकज्जलमेवालिकमलिसमूहोयस्यांतथाविधयाअतएवपुष्पशोभयाकिंशुकाशोकरूपयाइद्धयादीप्तयाज्वालाज्वलतयावह्निव्याप्तंविपिनंफुल्लस्थलांबुजाकारंकृतमितिशेषः ॥ ६४ ॥ हेअंगमयाइद्धयादीप्तयाखललक्ष्म्येवलोलयाज्वालाज्वलतयाउपोत्थायझटित्येवोत्कर्षंप्राप्यसहसैवगलितम् ॥ ६५ ॥

---

१ पुंस्त्वमार्षम् ॥ अभेदिनेतिवापाठस्तत्राभेर्दिनतिच्छेदः ॥ नापुरुषःअभेदीतिहृदयविशेषणमितिभाति

हेराममयातेजस्तयापिपरमाणुकणानामुदरेपिप्रत्येकंइत्थमेवजगच्छ्रीर्दृष्टा ॥साजगच्छ्रीर्भवदादिप्रसिद्धाचजगच्छ्रीःपरस्माच्चिदंबरतःअन्यान ॥ अत्रास्मिन्नर्थेवःयुष्माकंस्वमे प्रसिद्धःपुरगणःअचलगणश्चनिदर्शनंदृष्टांतइत्यर्थः ॥ ६६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०एकनवतितमःसर्गः ॥ ९१ ॥ ॥ ७ ॥ ॥ वायुधारणयावायुभावेतत्कर्मविस्तरः ॥ ततःसाकाशसार्वात्म्यस्थितिश्चात्रोपवर्ण्यते ॥ १ ॥ विततांवायुभावप्रतिष्ठापर्यंतंविस्तीर्णांतामागतःप्राप्तःसन्ननिलःसंपन्नोस्मीत्यन्वयः ॥ १ ॥ प्रसिद्धैरनिलधर्मैरात्मानंविशिनष्टि ॥ वल्लीत्यादिना ॥ आमोदान्पालयतिस्वाधीनीकृत्यरक्षतीत्यामोदपालकः ॥ २ ॥ ३ ॥ फलोल्लासानांकुसुमानांचामोदैर्मंडितः ॥

तेजस्तयापिपरमाणुकणोदरेपिदृष्टेत्थमेवमिहराममयाजगच्छ्रीः॥ अन्याचसानचचिदंबरतःपरस्मात्स्वप्नेपुराचलगणोत्रनिदर्शनंवः ॥ ६६ ॥ ॥ इ०वा०वा०दे०मो०नि०उ०पाषा०तैजसजगद्वर्णनंनामैकनवतितमःसर्गः ॥ ९१ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अथवातमयींकृत्वाजगत्प्रेक्षणकौतुकात् ॥ धारणांधीरयावत्त्याविततामहमागतः ॥ १ ॥ संपन्नोस्म्यनिलोवल्लीललनालोकलासकः ॥ कमलोत्पलकुंदादिजालकामोदपालकः ॥ २ ॥ सीकरोत्करनीहारहेलाहरणतत्परः ॥ सुरतश्रांतसर्वांगसमाह्लादनतर्पुलः ॥ ३ ॥ तृणगुल्मलतावल्लीदलतांडवपंडितः ॥ लतौषधिफलोल्लासकुसुमामोदमंडितः ॥ ४ ॥ मृदुर्मंगलकालेपुललनालोकलालकः ॥ भीमउत्पातकालेपुपर्णवत्प्रौढपर्वतः ॥ ५ ॥ नंदनेकुंदमंदारमकरंदरजारुणः ॥ नरकेंगारसंभारभूरिनीहारभासुरः ॥ ६ ॥ सागरेसरलावर्त्तलेखानुमितसर्पणः ॥ दिविवारिदसंचारमृष्टामृष्टेंदुदर्पणः ॥ ७ ॥ नक्षत्रक्षत्रसैन्यस्यरथोरंहोविबृंहितः ॥ त्रैलोक्यसिद्धसंचारविमानधरणेहितः ॥ ८ ॥ सहोदरइवक्षिप्रगामित्वादस्यचेतसः ॥ अनंगोपिसमस्तांगःस्पंदानंदनचंदनः ॥ ९ ॥ तुषारसीकरासारजरारोमविजर्जरः ॥ आमोदयौवनोन्मादोमौनमार्दवशैशवः ॥ १० ॥

संपन्नोस्मीतिसर्वत्रानुषंगः ॥ ४ ॥ मंगलकालेषुभाविकल्याणसूचनायमृदुशैत्यमांद्यसौरभ्ययुक्तः उत्पातकालेपुतुभीमस्तद्विपरीतत्वात्खरोष्णपरुषः ॥ प्रलयकालेतुपर्णवत्प्रौढा उड्डायिताःपर्वतायेनतथाविधः ॥ ५ ॥ नंदनेस्वर्गे ॥ ६ ॥ सरलाभिरावर्त्तलेखाभिस्तरंगलेखाभिरनुमितंसर्पणंप्रचलनंयस्य ॥ मेघापसारणेमृष्टइवतदाच्छादनेनामृष्टोमलिनीकृतइवेंदुदर्पणोयेन ॥ ७ ॥ नक्षत्रलक्षणस्यक्षत्रसैन्यस्यराजसेनायारंहोभिर्विबृंहितोविवृद्धोरथः ॥ प्रवहाख्योमरुद्धेदोनक्षत्रचक्रंभ्रमयतीतिज्योतिःशास्त्रप्रसिद्धेः ॥ तथात्रैलोक्येपिसिद्धानांसंचारेदेवानांविमानधारणेचहितोऽनुकूलः ॥ ८ ॥ ९ ॥ तुषारादिलक्षणैर्जराधवलरोमभिर्विजर्जरोवृद्धइव ॥ कुसुमायामोदैर्यौवनोन्मादवानिव ॥ मौनमार्दवेशैशवमिवयस्य ॥ १० ॥

155

नंदनेइंद्रोद्यानेउदारोमधुरश्च ॥ चैत्ररथात्कुबेरोद्यानादुन्मुक्तःप्रसृतः ॥ ११॥ गंगातरंगांगदोलासुआंदोलनेनसश्रमइवपरश्रमनिवारणौत्सुक्येनस्वश्रमानभिज्ञतयानिवारितास्ततािवस्तीर्णाःपरश्रमायेन ॥ १२ ॥ वसंतस्यवनिताइवस्थितालतानर्मस्पर्शैरिवचिरंचपलयन् ॥ लोलदलहस्ताश्चताअलिलोचनाश्चेतिकर्मधारयः ॥ १३ ॥ इंदुबिंबेअग्रंश्रेष्ठमसृतंचिरंभुक्त्वा ॥ रतश्रमःस्वीयःपरकीयोवा ॥१४॥१५॥ तडिल्लक्षणंशृंगंगोपबालानांप्रसिद्धंवायमाप्यधीरेणतन्नादेनपयोदलक्षणानांपशूनांगोमहिष्यादीनांपालकः ॥ रजोरुजांधूलिविनाशकानांजलभागानामरिधर्माशोषकइतियावत् ॥१६॥ आकाशलक्षणस्यकुसुमस्यामोदोगंधभूतःअतएवतद्गुणानांसर्वशब्दानांसहोदरः ॥ भूतानांप्राणिनामंगेषुउपांगेषुचवर्त्तकःसंस्तदीयनाडीलक्षणप्रणालीनांसलिलमिवसंपन्नइत्यर्थः ॥ १७ ॥ एवंभूतानांप्राणभूतत्वाद्धृदयादिमर्मस्थानत्वान्मर्मकर्मकराणांसर्वेषामेकआत्मा॥एकां

नंदनामोदमधुरामधुरोदारसंस्तुतिः ॥ चारुचैत्ररथोन्मुक्तोत्धृतकांतारतश्रमः॥११॥ चिरंगंगातरंगांगदोलांदोलनसश्रमः॥ श्रमस्वरूपाज्ञतयानिवारिततश्रमः॥ १२॥ पुष्पभारानताःस्पर्शैर्वसंतवनितालताः॥ चिरंचपलयन्लोलदलहस्तालिलोचनाः॥ १३ ॥ चिरंभुक्त्वेंदुबिंबाग्रंसुधापूर्णाभ्रतल्पके॥ विधूयकमलानीकमपनीतरतश्रमः॥१४॥ समस्तरजसामेकोव्योमगामीतुरंगमः॥ आमोदमदमातंगसमुल्लासमहासुहृत्॥१५॥ धीरेणाप्यतडिच्छृंगंपयोदपशुपालकः॥ तंतुःसीकरमुक्तानामरिधर्मारजोरुजाम्॥१६॥ आकाशकुसुमामोदःसर्वशब्दसहोदरः॥ नाडीप्रणालीसलिलंभूतांगोपांगवर्त्तकः॥१७॥ मर्मकर्मकरैकात्माद्दहृहागेहकेसरी॥ नित्यमेकांतपथिकःसारविज्ञातवेदसः॥१८॥ आमोदरत्नलुंटाकोविमाननगरावनिः॥ दाहांधकारशीतांशुःशैत्येंदुक्षीरसागरः॥१९॥ प्राणापानकलारज्ज्वाप्राणिनांयंत्रवाहकः॥ अरिर्मित्रंचद्वीपानांद्वीपसंचारणेरतः॥ २०॥ पुरोगतोप्यदृश्यात्मामनोराज्यपुरोपमः॥ तालवंततिलेतैलमालानंस्पंददंतिनः॥ २१॥ एकक्षणलवेनैवचालिताखिलभूधरः॥ वर्णावलितरंगाणांगंगावाहइवैककृत् २२॥

तंनियतंपथिकःसंचरणशीलः ॥ जातवेदसःसारंबलंवेत्तीतिसारवित् ॥ यतोदुर्बलंदीपादिभावेनाशयतिप्रबलंचमित्रभावेनवर्द्धयति ॥ १८ ॥ आमोदलक्षणरत्नानांलुंटाकोवलात्कलिकाग्रंथिमुन्मोच्यहर्त्ता ॥ विमानगणलक्षणनगरस्यअवनिर्विधारकः ॥ दाहस्तापस्तल्लक्षणांधकारस्यशीतांशुः ॥ शैत्येंदोःक्षीरसागरइवजन्मभूमिः ॥ १९ ॥ द्वीपानांतरंगैःखंडकत्वादरिःपांसुभिरुपचेतृत्वान्मित्रंच ॥ २० ॥ २१ ॥ प्रलयकालेएकक्षणलवेनैवचालिताउत्खाताअखिलाभूधरायेन ॥ वर्णावलिर्नानावर्णास्तल्लक्षणानांतरंगाणांगंगाप्रवाहइवधूलिमिश्रणेनैकत्वकृत् ॥ २२ ॥

१ टीकानुरोधान्नंदनोदारमधुरइतिपाठःप्रतिभाति

पुनःकीदृग्वायुः ॥ धूमानामंबुवाहानांरजसामंभसांचमहावर्त्तंकृत् ॥ द्युनदीप्रवाहएवमकरंदवार्योघोयत्रतथाविधस्यनभोलक्षणनीलोत्पलस्यअलिकोभ्रमरः ॥ २३ ॥ वा त्याशरीरावेष्टनेनोन्मुक्तानांजीर्णतृणानांचोपनोमंदगतिहेतुः ॥ स्पंदःक्रियासामान्यंतल्लक्षणस्यपद्मवनस्यआदित्योविकासहेतुः ॥ शब्दलक्षणस्यवर्षस्यवष्टेरेकोमुख्योवारिदः ॥ २४ ॥ शरीरगृहेगर्गटोयंत्रविशेषइवसदैवशब्दायमानः ॥ धूलीलक्षणनायिकाकदंबस्यविपिनमालालक्षणनायिकानांचालिंगनेनायकः ॥ २५ ॥ स्त्यानीकरणंहिमघृतादेः पिंडीकरणंकर्दमादेःसंशोषोमेघादेर्धृतिर्धारणंतृणादेःस्पंदनंसौरभानिगंधाहरणानिशैत्यंतापहरणंचेतिषड्भिःकर्मभिःआक्षयंप्रलयपर्यंतमलब्धःक्षणोविश्रामोयेन ॥ २६ ॥ हरणा दानकर्तॄणांहस्ताद्यंगानांविनियोगकृत्चालकइतियावत् ॥ २७ ॥ गतिविषयेनिरर्गलोनिरंतरायः ॥ अन्नरसमयेदेहभांडेप्राणापानादिभावेनपरावर्तादायुर्मणिरक्षणव्ययविष

धूमांबुवाहरजसांमहावर्त्तकृदंभसाम् ॥ द्युनदीवाहवार्योघनभोनीलोत्पलालिकः ॥ २३ ॥ शरीरावेष्टितोन्मुक्तपुराणतृणचोपनः ॥ स्पंदपद्मवनादित्यःशब्दवर्षैकवारिदः ॥ २४ ॥ व्योमकाननमातंगःशरीरगृहगर्गटः ॥ धूलीकदंबविपिनमालालिंगननायकः ॥ २५ ॥ स्त्यानीकरणसंशोषधृतिस्पंदनसौरभैः ॥ सशैत्यैःकर्मभिःषड्भिरलब्धक्षणआक्षयम् ॥ २६ ॥ रसाकर्षणसव्यग्रोनित्यंभ्रातेवतेजसः ॥ हरणादानकर्तॄणामंगानांविनियोगकृत् ॥ २७ ॥ शरीरनगरेनाडीमार्गैर्गतिनिरर्गलः ॥ रसभांडपरावर्त्तादायुर्मणिमहावणिक् ॥ २८ ॥ शरीरनगरीनाशनिर्माणैकपरायणः ॥ रसकिट्टकलाधातुपृथक्करणकोविदः ॥ २९ ॥ प्रतिसूक्ष्माणुकंदेहेततोदृष्टंमयाजगत् ॥ तत्रेत्थंरूपवानस्मिस्फुटमाभोगिसुस्थिरम् ॥ ३० ॥ परमाणुप्रतित्वत्रप्रोत्थंतइवसर्गकाः ॥ नचकिंचित्किलोत्थंतखाकृतेकिमिवोच्यते ॥ ३१ ॥ सचंद्रार्कानिलाग्नींद्रपद्मवैश्रवणेश्वराः ॥ सब्रह्महरिगंधर्वविद्याधरमहोरगाः ॥ ३२ ॥ ससागरगिरिद्वीपदिगंतरमहार्णवाः ॥ सलोकांतरलोकेशक्रियाकालकलाक्रमाः ॥ ३३ ॥ सस्वर्गभूमिपातालततलोकांतरांतराः ॥ सभावाभाववैधुर्यजरामरणसंभ्रमाः ॥ ३४ ॥ एवंनामतदारामभूतपंचकरूपिणा ॥ मयाप्रविद्धंतंतत्रत्रैलोक्यनलिनोदरे ॥ ३५ ॥

येमहावणिक् ॥ २८ ॥ अन्नरसानांकिट्टस्यमलस्यकलानांसूक्ष्मतरसारभागानांषण्णांत्वगसृङ्मांसमेदोस्थिमज्जाशुक्राख्यानांवातपित्तकफाख्यानांवाधातूनांचपृथक्करणे कोविदःकुशलः ॥ २९ ॥ तत्रवायुभावेपिप्रतिसूक्ष्माणुकंपरमाणुपर्यंतंप्रतिद्रव्यंदेहेतत्तदुदरेमयाकलधौतशिलावदेवजगद्दृष्टम् ॥ तत्रतेष्वपिजगत्सुइत्थंपृथिव्यादिजगद्रूपवानह मेवास्मि ॥ ३० ॥ परमार्थदृशातुनचकिंचित्किलोत्थंते ॥ खाकृतेशून्याकारे ॥ ३१ ॥ प्रतिपरमाणुकिंकिंसहिताःसर्गकाःप्रोत्थंतइवतदाह ॥ सचंद्रार्केत्यादित्रिभिः ॥ सर्वत्रते नसहेतितुल्ययोगेइतिबहुव्रीहिः ॥ सहस्यसः ॥ ३२ ॥ ३३ ॥ ३४ ॥ एवमाकाशधारणयाआकाशभावेतद्विलासभेदानुभवाअप्यूह्याइत्याशयेनोपसंहरति ॥ एवंनामेति ॥ ३५ ॥

कथंकथंप्रविष्टस्तंतत्प्रपंचयति ॥ रसःपीतइत्यादिना ॥ प्राणिनांभूजलानिलतेजःसमवायरूपाणांवृक्षाणांदेहेवसतामयामूलजालेनभौमोरसःपीतः ॥ ३६ ॥ रसायनमभृतंतद्घनांगेषुचंदनद्रवच्छैत्यशौक्ल्यादिगुणशोभिषु ॥ ३७ ॥ नानामोदानिपुष्पजालानिभुक्तान्यनुभूतानि ॥ स्वभोगप्रोच्छिष्टंमकरंदंअलयेदत्तामया ॥ ३८ ॥ अंबराजिरेआकाशचत्वरेस्वास्तीर्णासुशुभ्राभ्रशय्यासुसुप्तम् ॥ ३९ ॥ सुमनसांशिरीषादिपुष्पाणांपत्रमिवमृदुषुसुरसिद्धांगनांगेषु ॥ किंकामुकेनत्वयासुप्तमेनेत्याह ॥ दूरास्तेति ॥ ४० ॥ ४१ ॥ किंचब्रह्मांडभूतेनमयासरंतीनांसरिच्छिरासाराणांमूलभूतभूमंडलेनान्विताःस्फुरद्भूताभुवनावलयःअंगैरूढाः ॥ अद्रयोलोमामालयःपंक्तयइवांगैरूढाः ॥ ४२॥ येरबाद्रयोजग

रसःपीतोनुभूतश्चक्ष्माजलानिलतेजसाम् ॥ मूलजालेनवृक्षाणांप्राणिनांवसतामया ॥ ३६ ॥ रसायनघनांगेषुचंदनद्रवशोभिषु ॥ लुठितंचंद्रबिंबेषुतुषारशयनेष्विव ॥ ३७ ॥ सर्वर्तुवनजालेषुनानामोदानिदिक्ष्वलम् ॥ भुक्तानिपुष्पजालानिप्रोच्छिष्टंददतालये ॥ ३८ ॥ ततोन्नतासुमृद्वीषुस्वास्तीर्णास्वंबराजिरे ॥ सुप्तंशुभ्राभ्रमालासुनवनीतस्थलीष्विव ॥ ३९ ॥ सुमनःपत्रमृदुषुनीललक्ष्मीविलासिषु ॥ सुरसिद्धांगनांगेषुदूरास्तस्मरवासनम् ॥ ४० ॥ रुतःकुमुदकह्लारकमलेनलिनीवने ॥ कोमलःकलहंसीभिर्लीलाकलकलारवः ॥ ४१ ॥ सरत्सरिच्छिरासारामूलभूमंडलान्विताः ॥ अंगैरूढाःस्फुरद्भूतालोमालयइवाद्रयः ॥ ४२ ॥ स्वाद्रयःप्रथितादीर्घसरित्सूत्रैःसमुद्रकैः ॥ आदर्शैरिवविश्रांतमंगेषुप्रतिबिंबिभिः ॥ ४३ ॥ भूतसर्गेणविश्रांतंसिद्धविद्याधरादिना ॥ मद्देहेचेतितेनेवमक्षिकायौकरूपिणा ॥ ४४ ॥ मत्प्रसादेनमुदितैर्लब्धमर्कादिभिर्वपुः ॥ कृष्णरक्तसितापीतहरितैर्हरितैरिव ॥ ४५ ॥ समुद्रमुद्रयासप्तद्वीपसप्तात्मरूपया ॥ संस्थयास्थापिताभूमिःप्रकोष्ठेवलयोपमा ॥ ४६ ॥ विद्याधरपुरंध्रीणांपराम्रष्टांगयष्टिना ॥ अदृष्टेनैवविहितःपुलकोल्लासआत्मना ॥ ४७ ॥ सरिच्छिरामलस्फाररसानिसुषिराणिच ॥ जगंत्येवास्थिजालानिममासन्संस्थितानिच ॥ ४८ ॥

तिप्रथितास्तैर्दीर्घसरित्सूत्रैःसमुद्रकैश्चसहममअंगेषुप्रतिबिंबसहितैरादर्शैरिवविश्रांतंस्थितमित्यर्थः ॥ ४३ ॥ सिद्धविद्याधरादिनाभूतसर्गेणप्राणिनिकायेनतुमद्देहेचेतितेनपरिज्ञातेनमक्षिकायौकरूपिणेवविश्रांतम् ॥ ४४ ॥ तर्हिकिंतैर्मक्षिकायूकावद्बाधितैःप्रतिक्षणंनिवार्यमाणैरुद्विग्नैस्त्वयास्थितंनेत्याह ॥ मत्प्रसादेनेति ॥ वपुःकृष्णेत्यादिसमस्तपदंबोध्यम् ॥ वपुषाकृष्णरक्तादिवर्णैर्हरितैःस्निग्धैर्वृक्षैरिवस्थितैःपेपीयमानैर्मोदमानैश्चेत्यर्थः ॥ ४५ ॥ सप्तद्वीपैःसप्तविधात्मरूपयासंस्थयासन्निवेशेनप्रसिद्धाभूमिर्मयाप्रकोष्ठेवलयोपमास्थापिता ॥ ४६ ॥ ताभिरदृष्टेनैवात्मनामयातासांस्वानंदेनपुलकोल्लासोविहितः ॥ ४७ ॥ सरिल्लक्षणशिराभिरमलस्फारांतर्गतरसानिसुषिराणिच्छिद्रवंतिचपर्वतादिजगंतिममदेहेअस्थिजालानिचान्मांसादीनिचसंस्थितानि ॥ ४८ ॥

व्योममातंगैरैरावतादिभिः ॥ मद्धृदयेहृदयाकाशे ॥ ४९ ॥ एवमतिविस्तृतब्रह्मांडरूपेणापिमयापरमसूक्ष्मचिन्मात्रस्वभावतानहापितेत्याह ॥ सर्वेति ॥ ५० ॥ शून्यरूपेणस र्वद्वैतशून्यचिन्मात्ररूपेण ॥ ५१ ॥ तदापरिच्छेदापरिच्छेदादिसर्वविरुद्धधर्माणांस्वात्मनिसमुच्चयोनुभूतइत्याह ॥ किंचित्त्वमिति ॥ ५२ ॥ समुद्रादिकुक्षिदेशेष्वपिकलधौतशि लायामिवानंतानिजगंतिसंतितान्यपिमयानुभूतानीत्याह ॥ मैनाकेति ॥ मैनाकवदंतर्निर्लीनैः पर्वतशिलादिभिर्मुग्धस्यपीनस्यातिविस्तृतस्यचसागरस्यअवनिप्रतिप्रतिप्रदेशं स्थाणुभूतानिसर्गसहस्राणिसंतितानिचमयाअथोअनुभूतानीतिविपरिणामेनानुषज्यते ॥ ५३ ॥ ५४ ॥ स्वप्नेषुप्रसिद्धयाचितेवकृतम ॥ ५५॥५६॥ प्रतिपरमाणुएवंविस्तृतंव्यो

असंख्यैर्व्योममातंगैश्चंद्रार्कचलचामरैः ॥ उदुंबरांतर्मशकैरिवमद्धृदयेस्थितम् ॥ ४९ ॥ सर्वपातालपादेनभूतलोदरधारिणा ॥ खमूर्ध्ना पितदारामनत्यक्ताथपराणुता ॥ ५० ॥ दिक्षुसर्वासुसर्वत्रसर्वदासर्वकारिणा ॥ सर्वात्मनाप्यसर्वेणशून्यरूपेणसंस्थितम् ॥ ५१ ॥ किं चित्त्वंसदकिंचित्त्वंसाकृतित्वंनिराकृति ॥ अनुभूतंसजाड्यंचचेतनत्वमलंमया ॥ ५२ ॥ मैनाकमुग्धपीनस्यसागरस्यावनिंप्रति ॥ संतिस र्गसहस्राणिस्थाणुभूतान्यथोमया ॥ ५३ ॥ जगंत्यंगेमयोढानिगूढानिप्रकटान्यपि ॥ प्रतिबिंबपुराणीवमुकुरेणाजडात्मना ॥ ५४ ॥ ए वंजलानिलाग्नित्वंभूमित्वंखात्मनामया ॥ कृतंचितेवस्वप्नेषुवतमायाविजृंभितम् ॥ ५५ ॥ अपितस्यामवस्थायांजगंत्याकाशकोशके ॥ मयादृष्टान्यसंख्यानिपरमाणुकणंप्रति ॥ ५६ ॥ परमाणुप्रतिव्योमपरमाणुप्रतिस्थितम् ॥ सर्गद्वंद्वंयथास्वप्नेस्वप्नांतरयुतंपुरम् ॥ ५७ ॥ स्वमेवाहमभूवंभूमंडलंद्वीपकुंडलम् ॥ सर्वात्मनापिनव्याप्तंकिंचनापिमयाक्वचित् ॥ ५८ ॥ समुत्पादयताशेपंलतातरुतृणांकुरम् ॥ भूत लेनरसाःकृष्टामयार्थेनैवपुंभृताम् ॥ ५९ ॥ अवदाततमेयुद्धबोधकालमुपेयुषि ॥ जगल्लक्षाणितिष्ठंतिनतिष्ठंतिचकानिचित् ॥ ६० ॥ चितियास्तुचमत्कारंचमत्कुर्वंतियत्स्वतः ॥ स्वचमत्कृतयोतस्यास्तदेताःसृष्टिदृष्टयः ॥ ६१ ॥

मस्थितंतत्रसंचरत्प्रतिपरमाणुसर्गद्वंद्वंस्थितम् ॥ ५७॥ स्वंआध्यासिकमात्मरूपमेवाभूवम् ॥ एवंसर्वजगदात्मभूतेनापिमयाक्वचित्किंचनापिनव्याप्तंनस्पृष्टम् असंगाद्वयत्वादित्य र्थः ॥ ५८ ॥ पुंभृतांपुरुषादिशरीरभृतामर्थेनैवाशेपंलतातरुतृणांकुरंसमुत्पादयतामयावृष्टिनिपतितारसाभूतलेनकृष्टानिपीताः ॥ ५९ ॥ युद्धसदृशंसर्वद्वैतसंहारकंबोधकालं उपेयुपिमयिजगल्लक्षाणितिष्ठंतिनतिष्ठंतिच ॥ ६० ॥ केनरूपेणतिष्ठंतिकेनचनतिष्ठंतीतिचेच्चिच्चमत्कारमात्ररूपेणतिष्ठंतितदन्यरूपेणनतिष्ठंतीत्याह ॥ चितीतिद्वाभ्याम् ॥ चि तियाअंतस्याःस्वचमत्कृतयःस्वसत्तास्फूर्त्तिलक्षणंचमत्कारंयत्स्वतश्चमत्कुर्वंतिजगत्यारोप्यप्रकटयंतितत्तेनरूपेणएताःसर्गदृष्टयःसंतीत्यर्थः ॥ ६१ ॥

१ पुस्तकांतरेतुशुद्धबोधकालमयेमयीतिपाठोदृश्यतेसचायुक्तटीकाऽसंमतश्चेतिभाति

॥ ६२ ॥ अतएवाध्यारोपेप्रत्येकंस्वसत्तार्पणाद्विश्वरूपात्मापवादेनप्रबुद्धस्तुशुद्धबोधात्मैवेत्यर्थः ॥ ६३ ॥ अतएवएकैकवस्त्वंतरेब्रह्मणिसर्वजगदध्यासात्सर्वःसर्वत्रसर्वात्मा च सर्वगःसर्वसंश्रयइत्येतत्प्रबुद्धविषयंजगद्रूपंपर्यवस्यति ॥ अप्रबुद्धगम्यंतुरूपंनप्रबुद्धैर्द्रष्टुंशक्यमित्याह ॥ अप्रबुद्धमिति ॥ ६४ ॥ तथाचाद्वयेचिदात्मनिविदुषांसर्वत्रसर्वात्मता कल्पनाविकल्पमात्रंनचिद्यतिरिक्तंवस्तुकिंचिदस्तीत्याह ॥ आकाशेति ॥ साअंतस्तदेव ॥ यथातापस्यांतरूष्मेतिप्रयोगेतापपदस्यतदंतःपदस्योष्मपदस्यचनपृथगर्थोस्तिकिंनु वाक्याद्विकल्पमात्रंतद्वद्भेदोपलंभोपीतिनजगदस्तिकिंत्वनंतंसदस्तीत्यर्थः ॥ ६५ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उ०द्विनवतितमःसर्गः ॥ ९२ ॥ ॥ ७ ॥ ॥ व

अनुभूतंकृतंकष्टंयावत्क्वचनकिंचन ॥ परमार्थचमत्काराद्दतेनेहोपलभ्यते ॥ ६२ ॥ प्रत्येकंविश्वरूपात्मासर्वकर्तानिरामयः ॥ प्रबुद्धःशुद्धबोधात्मासर्वंब्रह्मात्मकंयतः ॥ ६३ ॥ सर्वःसर्वत्रसर्वात्मासर्वगःसर्वसंश्रयः ॥ एतत्प्रबुद्धविषयमप्रबुद्धंनवेद्म्यहम् ॥ ६४ ॥ आकाशकोशविशदात्मनिचित्स्वरूपेयेयंसदाकचतिसर्गपरंपरेति ॥ सांतस्तदेवकिलतापइवांतरूष्माभेदोपलंभइतिनास्तिसदस्त्यनंतम् ॥ ६५ ॥ ॥ इ०वा०वा०दे०मो०नि०उ०पाषा०परमार्थसर्गयोरैक्यप्रतिपादनंनामद्विनवतितमःसर्गः ॥ ९२ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अथैवंरूपसंवित्तेःपरावृत्त्यप्रयत्नतः ॥ तमंबरकुटीकोशदेशमागतवानहम् ॥ १ ॥ यावत्तत्रनपश्यामिस्वदेहंक्वचनस्थितम् ॥ पश्यामिकेवलंसिद्धंकमप्यन्यंपुरःस्थितम् ॥ २ ॥ उपविष्टंसमाधाननिष्ठमिष्टंपदंगतम् ॥ सौम्योदयमिवादित्यंदग्धेंधनमिवानलम् ॥ ३ ॥ बद्धपद्मासनंशांतंसमाधाननिरिंगनम् ॥ गुल्फद्वितयमध्यस्थवृषणंविषयातिगम् ॥ ४ ॥ मृष्टसौम्यसमाभोगस्कंधबंधुरकंधरम् ॥ सुस्थिरोदारविश्रांतस्फारकस्थितिसुंदरम् ॥ ५ ॥ नाभीनिकटगोत्तानपाणिद्वितयदीप्तिभिः ॥ हृदयांभोजतेजोभिर्बहिष्ठैरिवभासितम् ॥ ६ ॥

सिष्ठकुट्यांध्यानस्थसिद्धस्येहनिरीक्षणम् ॥ पातःकुट्युपसंहारात्स्वोदंतोक्तिश्चवर्ण्यते ॥ १ ॥ अथधारणासिद्धजगद्देहदर्शनानंतरमेवंरूपायाउक्तरूपायाःकौतुकदर्शनसंवित्तेः सकाशात्परावृत्त्याहंतस्याकनंस्वसमाधिस्थानमंबरकुटीकोशदेशमागतवान् ॥ १ ॥ यावत्साकल्येनान्विष्टमपिक्वचनस्वदेहंनपश्यामि ॥ २ ॥ इष्टंपरमप्रेमास्पदंनिरतिशयानंदब्रह्मपदंगतम् ॥ तंवर्णयति ॥ सौम्योदयमिवेत्यादिना ॥ ३ ॥ समाधानेनेष्टविषयेचित्तस्थैर्येणनिरिंगनंनिश्चलम् ॥ ४ ॥ समंकायशिरोग्रीवंधारयन्नितिभगवदुक्तध्यानांगं हस्थितिलक्षणान्यस्याह ॥ मृष्टेति ॥ भस्मत्रिपुंड्ररेखामृष्टाभ्यांसौम्याभ्यांगांभीर्यरम्याभ्यांसमाभोगाभ्यांस्कंधाभ्यांबंधुराकंधराग्रीवायस्य सुस्थिरस्यउदारेवस्तुनिविश्रांतेन मनसास्फारस्यप्रसन्नवदनस्यकस्यशिरसःस्थित्यासुंदरम् ॥ ५ ॥ पाणिद्वितयस्यदीप्तिभिःफुल्लपद्मद्वयसदृशशोभाभिः ॥ हृदयांभोजेतितासामेवोत्प्रेक्षा ॥ ६ ॥

क्षीणाःसर्वाईक्षावाह्येंद्रियव्यापारायस्य ॥ दिनात्ययेरात्रौ ॥ ७॥ ८ ॥ इदंवक्ष्यमाणंचिंतितम् ॥ ९ ॥ पूर्वमहमिवैकांतविश्रामार्थी ॥ १० ॥ समाधियोग्यमेकांतंस्थलंलभे यइतिचिंतयाइहसंप्राप्तः ॥ एतेनइयंकुटीस्वध्यानयोग्यादृष्टा ॥ ११ ॥ ततएतेनचिरंमदुपेक्षणाच्छवीभूतंतत्रस्थितंस्वदेहंवसिष्ठदेहंदृष्ट्वातत्रपुनर्मदागमनमचिंतयताअजानतातं देहमपास्यअन्यतःक्षिप्त्वाइहकुट्यांस्थितिःकृता ॥ १२ ॥ तन्ममशरीरमिहअस्तंनष्टमतोहमातिवाहिकेदेहेनैवस्वंसप्तर्षिलोकंयामिइतिनिश्चयंकृत्वायावद्गंतुमहंप्रवृत्तोस्मिता

श्लिष्टपक्ष्मेक्षणंक्षीणसर्वेक्षंस्वच्छतांगतम्॥ सरोनिमीलितांभोजमिवसुप्तंदिनात्यये॥७॥ अविक्षुभितमाशांतमंतःकरणकोटरम्॥ दधानंधीरयावृत्त्याशांतोत्पातमिवांबरम्॥८॥ अपश्यतानिजंदेहंतंमुनिंपश्यतापुरः॥ इदंमयातदातत्रचिंतितंचारुचेतसा॥९॥ अयं कश्चिन्महासिद्धःसंप्राप्तोस्मिन्दिगंतरे॥ विचार्याहमिवैकांतंविश्रामार्थीमहांबरम्॥१०॥ समाधियोग्यमेकांतंलभेयेतीहचिंतया॥ कुटीदृष्टेयमेतेनसत्यसंकल्पशालिना॥११॥ मदागमनमेतेनततोऽचिंतयताचिरम्॥ तंस्वदेहंशवीभूतमपास्येहकृतास्थितिः॥१२॥ तदिहास्तमहंयामिस्वंलोकमितिनिश्चयम्॥ यावद्गंतुंप्रवृत्तोस्मितावत्संकल्पनक्षयात्॥१३॥सानिवृत्ताकुटीतत्रसंपन्नंव्योमकेवलम्॥ ससिद्धोपिनिराधारःपतितोधःसमाधिमान्॥१४॥ स्वप्नसंकल्पसंशांतौस्वप्नसंकल्पपत्तनम्॥ यदासासुकुटीनष्टामत्संकल्पोपशांतितः ॥१५॥ सपपातततोध्यानीजलोत्पीडइवांबुदात्॥ खादिवानिलनुन्नोब्दइंदुर्बिंबमिवक्षये॥१६॥ वैमानिकइवापुण्यश्छिन्नमूलइव द्रुमः॥ खाच्च्युतइवपाषाणःसपपातततोवनौ॥१७॥ अहंयावदियंतावत्कुटिकास्त्वितिकल्पने॥ क्षीणेकुटीक्षयेजातेससिद्धःपतितःक्ष णात्॥१८॥ पततातेनसिद्धेनततःसौजन्यकौतुकः॥ मनसैवाहमगमंनभसोवसुधातलम्॥१९॥ सोपतत्पवनस्कंधवलनावर्तवृत्ति भिः॥ सप्तद्वीपसमुद्रांतगीर्वाणरमणावनौ॥२०॥

वदित्यर्थः॥१३॥ १४ ॥ पत्तनमिवेतिशेषः ॥ पूर्वस्यपरस्यचायंकुटीनाशस्यदृष्टांतः ॥ १५ ॥ जलोत्पीडोजलासारः ॥ क्षयेप्रलयकालेइंदुर्बिंबमिव ॥ १६ ॥ अपुण्यःक्षीण पुण्यः ॥ अवनौवक्ष्यमाणकांचनावनौ ॥ १७ ॥ अहंयावदिहस्थास्यामितावदियंकुटिकाअस्तुतिष्ठतुइतिएवंरूपेमदीयसत्यसंकल्पनेगमनसंकल्पेनक्षीणेसति ॥ १८ ॥ तेनसि द्धेनसहअहंमनसातेनातिवाहिकदेहेनैववसुधातलमगमम् ॥ १९ ॥ प्रवहादिपवनस्कंधानांवलनंपरिवर्त्तनंतत्प्रयुक्ताभिरावर्तसदृशवृत्तिभिर्यथाआवर्त्तैर्भ्रमज्जलमधःप्रविशति तद्वदित्यर्थः ॥ गीर्वाणानांरमणाधिकरणेकांचनावनौ ॥ २० ॥

उर्व्यांस्पृष्टःप्रथमंनिवेशितःपूर्वःपादन्नागोयेनतथाविधश्चासावूर्ध्वंमूर्द्धांचतथाविधःसन् ॥ तत्कुतः ॥ प्राणेनापानस्योर्ध्वआकर्षणेनोर्ध्वगामित्वात्कूपेवतरतःकुंभस्यरज्ज्वेवतुंबस्य दंतेनेवचोर्ध्वंप्राणापानाभ्यांविष्टब्धत्वेनाधःशिरस्कत्वाघटनादित्यर्थः ॥ २१ ॥ तंतथाविधंविचरंचलनंप्राप्याप्यसौसमाधेर्नप्रबुद्धोवभूव ॥ यतश्चित्तस्यान्यत्रदृढासक्तेरचेतन प्रायः ॥ तर्हिअतिदूरात्पतनेनभग्नगात्रःकुतोनाभूत्तत्राह ॥ पाषाणेति ॥ वज्रपाषाणदेहइवयोगवलादृढस्तूलपिंडइवलघुरेववा ॥ २२ ॥ वोधार्थंसमाधेर्व्युत्थापनार्थम् ॥ ज लदतांमेघतांकृत्वाद्दृष्टम् ॥ ऊर्जितंवलवत्तरंचगर्जितम् ॥ २३ ॥ असौमेघभूतोहंप्रावृषामयूरमिवामुंसिद्धंवुद्ध्यास्वबुद्धिकौशलेनवहिराकृष्टयातद्बुद्ध्यावावोधितवान्समाधे

प्राणापानोर्ध्वगामित्वात्स्वाद्यथास्थितमेवसः॥ स्पृष्टपूर्वोर्ध्वमूर्धोर्व्यांवद्धपद्मासनोपतत् ॥२१॥ नप्रबुद्धोवभूवासौविचरंतमचेतनः॥ पाषाणदेहइववातूलात्मेवैववालघुः॥ २२॥ मयातदवबोधार्थमथयत्नवतातदा॥ कृत्वाजलदतांव्योम्निवृष्टंगर्जितमूर्जितम् ॥ २३॥ करकाशनिपातेनतेनतस्मिन्दिगंतरे ॥ मयूरंप्रावृषेवामुंबुद्ध्यावोधितवानसौ॥ २४ ॥ वभूवाभासितांगश्रीर्विकासितविलोचनः॥ धारानिकरफुल्लात्माप्रावृषीवांबुजाकरः॥२५॥ प्रबुद्धंसंप्रशांतायांदृष्टौतमहमग्रतः॥ अपृच्छंस्वच्छयावृत्त्यानिवृत्तपरमार्थतः॥२६॥ क्वस्थितोसिकरोषीदंकिंचभोमुनिनायक ॥ कस्त्वंकस्माद्लंदूरान्नभ्रंशमपिचेतसि ॥ २७॥ इत्युक्तोमामसौप्रेक्ष्यसंस्मृत्यप्राक्तनींग तिम्॥ उवाचवचनंचारुचातकोजलदंयथा ॥ २८ ॥ ॥ सिद्धउवाच॥ ॥प्रतिपालयमेयावत्स्ववृत्तांतंस्मराम्यहम्॥ कथयिष्यामिते पश्चात्पाश्चात्यंवृत्तमात्मनः॥ २९ ॥इत्युक्त्वाचिंतयित्वाशुसयथावृत्तमक्षतम्॥ स्मृतवान्सायमह्नीवसमाचरितमात्मनः॥ ३० ॥ माम थोवाचवचनंचारुचंद्रांशुशीतलम्॥ आह्लादनमनिंद्यंचनिरवद्यंसुखोदयम्॥ ३१ ॥ सिद्धउवाच ॥ ॥ अधुनात्वंमयाब्रह्मन्परिज्ञा तोभिवादये ॥ अतिक्रमोयंक्षंतव्यःस्वभावोहिसतांक्षमा ॥ ३२॥ मुनेचिरमहंभ्रांतोदेवोपवनभूमिषु ॥ भोगामोदविमोहेषुषट्पदः पद्मिनीष्विव ॥ ३३॥

व्युत्थापितवान् ॥ २४ ॥ २५ ॥ परमार्थतःपरमार्थस्थितिहेतोःसमाधेः ॥ २६ ॥ किमपृच्छस्तदाह ॥ क्वेति ॥ दूराद्भ्रंशमधःपातमपिकस्मान्नचेतसिनसंजानासि ॥२७॥२८॥ प्रतिपालयप्रतीक्षस्व ॥ २९ ॥ वृत्तंपूर्वंस्ववृत्तांतंजन्मांतरवृत्तांतैःसह ॥ अक्षतंसमग्रम् ॥ अह्निवृत्तमात्मनश्चरितंयथाजनःसायंस्मरतितद्वत् ॥ ३० ॥ वक्ष्यमाणवचनस्यविवेक वैराग्यप्रधानत्वाच्चार्वित्यादिविशेषणैःप्रशंसा ॥ ३१ ॥ अतिक्रमःप्रथमदर्शनेऽनभिवादनलक्षणोपराधः ॥ ३२ ॥ तत्रक्वस्थितोसीतिप्रश्नस्यप्रत्यक्षदृष्टसमाधिस्थानकुटीविषय त्वायोगात्तत्पूर्वतनाधारभेदान्जातिस्मारत्वंव्यापयन्जन्मांतरसाधारणानाह ॥ मुनेइति ॥ ३३ ॥

चित्तजलकल्लोलहेलयास्वप्नवद्दृश्यनद्यामुह्यमानेनअतएवचिरकालेनविचारोदयेसंसारादुद्विग्नेनवक्ष्यमाणंचिंतितम् ॥ ३४ ॥ अवग्रहेदृष्टिप्रतिबंधे ॥ ३५ ॥ किंचिंतितंतदाह ॥ संविन्मात्रेति ॥ भोगेपुर्किनामरम्यम् ॥ यदितत्रसंविदात्मनाप्रथमानंसुखमेवरम्यंतदतिरिक्तानांतत्साधनानांदुःखस्वरूपत्वेनतन्मात्रसारत्वात्तर्हिदुःखांशंसर्वंविहायसारभूतेसुखसंविद्ग्रोऽन्येवकेवलमवतिष्ठेकिमन्येनासारेणेत्यर्थः ॥ ३६ ॥ नन्वपरिच्छिन्नंसुखंविहायपरिगणितेपरिच्छिन्नेअसुखेरमणमुचितमित्याह ॥ शब्देति ॥ एतावत्यल्पे ॥ ३७ ॥ एतत्शब्दादिसर्वंचिन्मात्रेस्वतःसतितद्व्यतिरेकेणविभाव्यमानमाकाशंशून्यमेवतदव्यतिरेकदर्शनेचिन्मात्रमेवपर्यवस्यति ॥ तदेवमुभयथाप्यसदाकारेअत्रशब्दादौकिंरमे नष्टमतिरुन्मत्तोयथातथेत्यर्थः ॥ ३८ ॥ विपयाःशब्दादयोविषवन्मरणोन्मादादिवैपम्यहेतवः ॥ वामाःस्त्रियः ॥ रसाःरागाःसरसस्यापिपुंसोवैरस्यहेतवः ॥ एपुलुठन्कोनहतः ॥

दृश्यनद्यामथोचित्तजलकल्लोलहेलया ॥ चक्रावर्त्तोह्यमानेनमयोद्विग्नेनचिंतितम् ॥ ३४ ॥ संसारसागरेदृश्यकल्लोलैरहमाकुलः ॥ कालेनोद्वेगमायातश्चातकोवग्रहेयथा ॥ ३५ ॥ संविन्मात्रैकसारेपुरम्यंभोगेपुनामकिम् ॥ अवतिष्ठेगतोद्वेगसंविद्ग्रोऽन्येवकेवलम् ॥ ३६ ॥ शब्दरूपरसस्पर्शगंधमात्राहृतेपरम् ॥ नेहकिंचननामास्तिकिमेतावत्यहंरमे ॥ ३७ ॥ चिन्मात्राकाशमेवैतत्सर्वंचिन्मात्रमेववा ॥ तत्किमत्रासदाकारेरमेनष्टमतिर्यथा ॥ ३८ ॥ विपयाविषवैपम्यावामाःकामविमोहदाः ॥ रसाःसरसवैरस्यालुठन्नेपुनकोहतः ॥ ३९ ॥ जीर्णाजीवितजंबालजरच्छफरिकामतिः ॥ कायंद्रुतगतादातुंजरेच्छतिवृहद्बकी ॥ ४० ॥ कायोयमचिरापायोबुद्बुदोम्बुनिधाविव ॥ स्फुरन्नेवपुरोंतर्द्धियातिदीपशिखायथा ॥ ४१ ॥ विविधाकुलकल्लोलाचक्रावर्त्तविधायिनी ॥ मृतिजन्मवृहत्कूलासुखदुःखतरंगिणी ॥ ४२ ॥ यौवनोल्लासकलिलाजराधवलफेनिला ॥ काकतालीययोगेनसंपन्नसुखबुद्बुदा ॥ ४३ ॥ व्यवहारमहावाहरिवाजडरवाकुला ॥ रागद्वेपघनोल्लासाभूतलालोलदेहिका ॥ ४४ ॥ लोभमोहमहावर्त्तापातोत्पातविवर्त्तनी ॥ हातमाजीविताख्येयंनदीनदनशीतला ॥ ४५ ॥ अपूर्वाण्युपगच्छंतितथापूर्वाणियांत्यलम् ॥ संसारसरिदंबूनिसंगतानिधनानिच ॥ ४६ ॥

कुरंगमातंगादीनामेकैकासक्त्यापिवधबंधनादिदर्शनादित्यर्थः ॥ ३९ ॥ एवंकायेप्यासक्तिर्नोचितेत्याह ॥ जीर्णेति ॥ द्रुतगताजरावृहद्बकीजीवितजंबालेवृहतीयंशफरिकालब्धेतिमतिर्यस्यास्तथाविधासतीकायमादातुंग्रसितुमिच्छति ॥ ४० ॥ ४१ ॥ एवंजीवितेप्याशानोचितेतितन्नदीत्वेनवर्णयति ॥ विविधेत्यादिना ॥ विविधाआकुलाविक्षेपाएवकल्लोलायस्याः ॥ ४२ ॥ कलिलापंकाविला ॥ ४३ ॥ व्यवहारलक्षणयामहाप्रवाहलेखयाजडरवैर्मूर्खप्रलापैःलडयोरभेदात्तल्लक्षणैर्जलरवैराकुला ॥ रागद्वेपलक्षणैर्घनैर्मेघैरुल्लसनिवर्धतेनथाविधा ॥ ४४ ॥ हाइतिखेदे ॥ नदनंनदनःशब्दमात्रेनेनर्शानलावस्तुनस्तापचयतप्नावहतीतिसंबंधः ॥ ४५ ॥ संसारसरिदंबुभूतानिसंगतानिदृष्टपुत्रमित्रादिसंगमाः ॥ धनानिचपूर्वाण्यपयांतिअपूर्वाणिचोपगच्छंति ॥ ४६ ॥

159

तत्रगच्छत्स्वागच्छत्सुचनशोकहर्षावुचितावित्याह ॥ प्रवृत्ताइति ॥ ४७ ॥ आयुषिधनादिवैलक्षण्यमाह ॥ सर्वस्याइति ॥ आकराद्गिरिमेघादेः ॥ ४८ ॥ प्रतिपिंडंप्रतिदेहंप्र तिक्षणंचभोग्याभावाःकुलालचक्रकेष्वारूढाघटशरावादिभावाइव ॥ ४९ ॥ भावोविवेकस्तल्लक्षणंसर्वस्वम् ॥ ५० ॥ ५१ ॥ गतमायुःप्राप्तंमृत्युंचनवेत्ति ॥ ५२ ॥ अन्यत् अपूर्वम् ॥ ५३ ॥ निष्कौतुकाभोगेषुनिरुत्कंठाः ॥ ५४ ॥ ५५ ॥ अकृत्रिमंशाश्वतंकिंसंप्राप्तंनकिंचिदित्यर्थः ॥ ५६ ॥ सर्वभोगेष्वसारतांविविच्यदर्शयति ॥ सर्वत्रेति॥५७॥

प्रवृत्तायेनिवर्त्ततेतैरलंहतभावकैः॥ अपूर्वायेप्रवर्त्ततेतेष्वथास्थेहकीदृशी॥ ४७॥ सर्वस्याःसरितोवारिप्रयात्यायातिचाकरात्॥ देहनद्याःपयस्त्वायुर्यात्येवायातिनोपुनः॥ ४८ ॥ शतशःपरिवर्त्ततेप्रतिपिंडंक्षणंप्रति॥ कुलालचक्रकाभावाइवभावाभवांबुधौ॥ ४९॥ चरंतिचतुराश्चौराविषमाविषयारयः॥ हरंतिभावसर्वस्वंजागर्मिस्वपिमीहकिम्॥ ५० ॥ आयुषःखंडखंडाश्चनिपतंतःपुनःपुनः॥ नकश्चिद्वेत्तिकालेनक्षतानिदिवसान्यहो॥ ५१॥ इदमद्यतथेदंचतथेदमिदमस्यमे॥ एवंकलनयालोकोगतंप्राप्तंनवेत्त्यहो॥ ५२॥ भुक्तंपीतमनंतासुभ्रांतंचवनभूमिषु॥ दृष्टानिसुखदुःखानिकिमन्यदिहसाध्यते॥ ५३॥ सुखदुःखानुभवनाद्भूयोभूयोविवर्त्तनात्॥ अनित्यत्वाच्चभावानांस्थितानिष्कौतुकावयम् ॥ ५४ ॥ भुक्तानिभोगवृंदानिदृष्टाचानित्यताभृशम् ॥ नोपलभ्यतएवातिविश्रांतिरिहकुत्रचित् ॥ ५५॥ भ्रांतमुत्तुंगशृंगासुमेरूपवनभूमिषु॥ लोकपालपुरीषूच्चैःसंप्राप्तंकिमकृत्रिमम् ॥ ५६ ॥ सर्वत्रदारुभिर्वृक्षामांसैर्भूतानिभूर्मृदा॥ दुःखान्यनित्यताचेतिकथमाश्वास्यतेवद॥ ५७॥ नधनानिनमित्राणिनसुखानिनबांधवाः॥ शक्नुवंतिपरित्रातुंकालेनाकलितंजनम्॥ ५८॥ जनोजीमूतजठरजलवद्गिरिकुक्षिषु॥ यात्यंतःशून्यएवास्तंपांसूपचयपेलवः॥ ५९॥ नमेमनोरमाःकामानचरम्याविभूतयः॥ इदंमत्तांगनापांगभंगलोलंचजीवितम् ॥ ६० ॥ क्वेवकस्यकथंनामकृतआश्वासनामुने॥ अद्यश्वोवापदंपापोमृत्युर्मूर्ध्निनियच्छति॥ ६१ ॥ शरीरंपर्णवद्भ्रंशिजीवितंजीर्णसंस्थिति॥ धीरधीरतयाग्रस्तारसानीरसतांगताः ॥ ६२॥ नीतंमनोरथैरेवनीरसैर्वायुराततम्॥ नममस्वंचमत्कारकारिकिंचिदपीहितम् ॥ ६३ ॥ मोहोद्यमांद्यमायातोदेहोनेहोपयुज्यते॥ अनास्थैवोत्तमावस्थास्यानास्थैवाधमास्थितिः ॥ ६४॥

॥ ५८ ॥ पांसूपचयःपांसुराशिरिवपेलवःअस्थिरःअदृढश्चजनोगिरिकुक्षिषुपतितजीमूतजठरजलवद्विपर्यांतःआसक्तःसन्क्षणेक्षणेहीयमानःअंतःपुरुषार्थशून्यएवअस्तंमरणं याति ॥ जरठजीमूतेतिपाठेशरन्मेघजलवत् ॥ ५९ ॥ ६० ॥ किंवृत्तानिकालकर्तृप्रकारनिमित्ताक्षेपकाणि ॥ पापःक्रूरोमृत्युर्यस्मादद्यश्वोवामूर्ध्निआपदंयच्छतिप्रापयतीत्यर्थः ॥ ६१ ॥ ६२ ॥ नीरसैर्भोगैस्तन्मनोरथैरेववाआततमायुर्नीतम् ॥ चमत्कारकारिकिंचित्संपुरुषार्थरूपंममनेहितंनसंपादितम् ॥ ६३ ॥ अनास्थाविषयेषु ॥ स्थानंजीवनंतद्वास्थैवअधमास्थितिः ॥ ६४ ॥

विवेकिनांसंपदादिप्राप्तौइयंआपदेवापततेतिमंतव्यम् ॥ ६५ ॥ विवेकिनःकर्मशास्त्राण्यपिव्यामोहकान्येवभांतीत्याह ॥ विधिभिरिति ॥ ६६ ॥ यतःकार्मिणामैहिकामुष्मिक
विषयाविवेकंहत्वाअनर्थमेवप्रापयंतीत्याह ॥ विवेकामोदसर्वस्वमिति ॥ ६७ ॥ वस्तुतस्तुविषयरूपमसदेवतथासद्रूप्याद्दृष्टंसत्तामुपागतंनवस्तुतः यथासद्रूपमावरणेनासदेवसं
पन्नंतथाअसदेवविक्षेपेणसत्संपन्नम् ॥ मायाशक्तेरघटितघटनपटीयस्त्वादित्यर्थः ॥ ६८ ॥ तत्रपराग्दृष्टीनांविषयोन्मुखीप्रवृत्तिःस्वाभाविकीत्याह ॥ दोलायंत्यइति ॥ कूलद्व
यावनौदेहंप्रवाहंदोलावद्दोलयंत्यःसागरांगनानद्योयथासागरान्धावंति ॥ ६९ ॥ गुणान्विवेकवैराग्यादीन्मौर्वीश्च ॥ ७० ॥ अतितरांस्नेहासक्त्याशातयंतीतिशत्रवः ॥ नैध

आपदापततिनैवेयमहामोहविधायिनी ॥ नित्यमित्येवमंतव्यंसक्तव्यंनेहसंस्तौ ॥ ६५ ॥ विधिभिःप्रतिषेधैश्चशाश्वतैरप्यशाश्वतैः ॥ य
थेष्टंनीयतेलोकोजलंनिम्नोन्नतैरिव ॥ ६६ ॥ विवेकामोदसर्वस्वंचेतःकुसुमकोशतः ॥ हृत्वामूर्छांप्रयच्छंतिविषयाविषवायवः ॥ ६७ ॥
असदेवतथानामदृष्टंसत्तामुपागतम् ॥ यथासदेवसद्रूपंसंपन्नमसदेवसत् ॥ ६८ ॥ दोलायंत्योऽवनौदेहंसागरान्सागरांगनाः ॥ यथा
धावंतिधावंतिजनताविषयांस्तथा ॥ ६९ ॥ धावंतिविषयान्लक्ष्यमुन्मुक्ताश्चित्तसायकाः ॥ स्पृशंतिनगुणान्भूयःकृतघ्नाःसौहृदंयथा
॥ ७० ॥ उत्पातवायुरेवायुर्मित्राण्येवातिशत्रवः ॥ बंधवोबंधनान्येवधनान्येवातिनैधनम् ॥ ७१ ॥ सुखान्येवातिदुःखानिसंपदःपरमा
पदः ॥ भोगाभवमहारोगारतिरेवपरारतिः ॥ ७२ ॥ आपदःसंपदःसर्वाःसुखंदुःखायकेवलम् ॥ जीवितंमरणायैवबतमायाविजृंभित
म् ॥ ७३ ॥ बहून्कालपरावर्त्तानिष्टानिष्टान्सुखंमनाक् ॥ पश्यन्प्रियवियोगांश्चयातिजर्जरतांजनः ॥ ७४ ॥ भोगाविषयसंभोगाभो
गाएवफणावताम् ॥ दशंत्येवमनाक्स्पृष्टादृष्टनष्टाःप्रतिक्षणम् ॥ ७५ ॥ आयुर्यातिनिरायासपदप्राप्तिविवर्जितैः ॥ उदर्कभंगुराकारैः
करालैःकष्टचेष्टितैः ॥ ७६ ॥ भोगाशाबद्धतृष्णानामपमानःपदेपदे ॥ आलानमवलीनानांवन्यानामिवदंतिनाम् ॥ ७७ ॥ संपदःप्रम
दाश्चैवतरंगोत्संगभंगुराः ॥ कस्तास्वहिफणाच्छत्रच्छायासुरमतेबुधः ॥ ७८ ॥ सत्यंमनोरमाःकामाःसत्यंरम्याविभूतयः ॥ किंतुमत्तां
गनापांगभंगलोलंहिजीवितम् ॥ ७९ ॥ आपातरमणीयेषुरमंतेविषयेषुये ॥ अत्यंतविरसांतेषुपतंतिनिरयेषुते ॥ ८० ॥ द्वंद्वदोषोपरुद्धा
निदुःसाध्यान्यस्थिराणिच ॥ धनान्यभव्यसेव्यानिममजातुनतुष्टये ॥ ८१ ॥

नंनिधनसाधनम् ॥ ७१ ॥ आसक्तिजननेनातिदुःखानि ॥ रतिरासक्तिरेवपराअरतिरुद्वेगः ॥ ७२ ॥ प्रागुक्तमेवविवृण्वन्नाह ॥ आपदइत्यादिना ॥ ७३ ॥ ७४ ॥ फणावतांस
र्पाणांभोगाःफणाएव ॥ तदुपपादयति ॥ दशंत्येवेति ॥ ७५ ॥ ७६ ॥ अवलीनानांखानपानोपवासादिनाकर्शितानाम् ॥ ७७ ॥ नकेवलंभंगुराअपितुसद्योमृत्युदाश्चेत्याह ॥
अहिफणेति ॥ ७८ ॥ सत्यशब्दावभ्युपगमवादद्योतकौ ॥ संतुनाममनोरमाइत्यर्थः ॥ ७९ ॥ आपातइंद्रियसंयोगक्षणःअविचारोवा ॥ पतंतीति॥विषयव्यसनिनामधर्मावश्यं
भावादितिभावः ॥ ८० ॥ तदुपायधनदोषमाह ॥ द्वंद्वेति ॥ अर्जनकालेशीतोष्णक्षुत्पिपासादिद्वंद्वदोषोपरुद्धानिदुःसाध्यानिच ॥ कष्टेनार्जितान्यपिराजचोरदुर्व्यसनप्रमादादि
भिर्विनाशादस्थिराणिच ॥ ८१ ॥

॥ ८२ ॥ संगतानिधनादिसंबंधाःखलैःसंगतानिमैत्र्यइवेत्यावृत्त्यायोज्यम् ॥ ८३ ॥ अयंश्लोकःकिरातार्जुनीयेअन्त्यएवपठितोबोध्यः ॥ ८४ ॥ पर्यवस्थाताअवश्यंप्रत्यवस्थाता ॥ चलंतिस्खलंति ॥ ८५ ॥ ८६ ॥ इदानींभोगानभुक्त्वाजन्मांतरेविवेकवैराग्यादिप्राप्स्यामीतिप्रत्याशातुनकार्यैवेत्याह ॥ भोगेति ॥ सर्वस्मिन्आविदेहपरंपरारूपेपिकायकानने ॥ ८७ ॥ तत्रापिवाल्यादिषुनवैतृष्ण्यप्रत्याशेत्याशयेनाह ॥ वाल्यमिति ॥ ८८ ॥ कुतोयातितत्राह ॥ जीवितमिति ॥ जीवितंआयुः ॥ वाहिन्यानद्याः ॥ ८९ ॥

आपातमात्रमधुराद्दुःखपर्यवसायिनी ॥ मोहनायैवलोकस्यलक्ष्मीःक्षणविलासिनी ॥८२॥ आपातरमणीयानिविमर्दविसराण्यति॥ दुःखान्यापत्प्रदार्तॄणिसंगतानिखलैरिव ॥८३॥ शरदंबुधरच्छायागत्वर्योयौवनश्रियः॥ आपातरम्याविषयाःपर्यंतपरितापिनः॥ ८४॥ अंतकःपर्यवस्थाताजीवितेमहतामपि ॥ चलंत्यायूंषिशाखाग्रलंबांबूनीवदेहिनाम् ॥ ८५ ॥ जीर्यंतेजीर्यतःकेशादंताजीर्यंतिजीर्यतः॥ क्षीयतेजीर्यंतेसर्वंतृष्णैवैकानजीर्यते ॥८६॥ भोगाभोगातिगहनेसर्वस्मिन्कायकानने॥ परमुल्लासमायातितृष्णैकाविषमंजरी॥८७ बाल्यंयौवनवद्यातियौवनंयातिबाल्यवत्॥ उपमानोपमेयत्वंभंगुरत्वंमिथोनयोः ॥८८ ॥ जीवितंगलतिक्षिप्रंजलमंजलिनायथा॥ प्रवाहइववाहिन्यागतंनविनिवर्त्तते ॥८९॥ झटित्येवागतोदेहःकुतोप्यर्जुनवातवत्॥ यातिपश्यतएवास्तंतरंगांबुददीपवत् ॥ ९० ॥ रम्येष्वरम्यताद्दृष्टास्थिरेष्वस्थिरतापिच॥ सत्येष्वसत्यतार्थेषुतेनेहविरसावयम्॥ ९१ ॥ सुखंयदात्मविश्रांतौगतेमनसिसत्त्वताम् ॥ पातालेभूतलेस्वर्गेतन्नभोगेषुकेषुचित् ॥ ९२ ॥ अपिसंपूर्णदृग्धार्थाःपंचापींद्रियवृत्तयः॥ तावज्जयंतिमामेताभृंगंचित्रलताइव॥ ९३॥ अद्यदीर्घेणकालेननिरहंकृतिनामया॥ स्वर्गापवर्गवैतृष्ण्यमिदमासादितंधिया ॥ ९४ ॥ चिरमेकांतविश्रांत्यैतेनैतन्नभसःपदम्॥ त्वमिवागतवानत्रदृष्टवानस्मितांकुटीम्॥ ९५॥ अद्यैतत्संपरिज्ञातंयदेषाभवतःकुटी॥ आगंतात्वंपुनश्चेतिमयातन्नविचारितम्॥ ९६॥ तदात्वत्रमयाज्ञातंकश्चित्सिद्धोयमात्मना॥ देहंत्यक्त्वेहनिर्वाणंगतइत्यनुमानतः॥ ९७॥ एतन्मेभगवन्वृत्तमेषोस्मीतियथास्थितम्॥ मयातेकथितंसर्वंयथाजानासितत्कुरु॥ ९८॥

योयोदेहआगतःसकुतोपिनिमित्ताज्झटित्येवपश्यतएवअस्तंनाशंयाति ॥ तरंगवदंबुदवद्दीपवच्च ॥ ९० ॥ सत्येषुसत्यतयाज्ञातेषु ॥ विरसाविरागाः ॥ ९१ ॥ सत्त्वतांनिर्वासनताम् ॥ ९२ ॥ सांप्रतंदृढवैराग्यंमांसंपूर्णसर्वविषयसहिताअपिसर्वेंद्रियवृत्तयःसंभूयापिनजेतुंशक्नुवंतीत्याह ॥ अपीति ॥ तावज्जयंतीतिकाकुस्तेननजयत्येवेत्यर्थः ॥ ९३ ॥ ॥ ९४ ॥ एतन्त्वत्कुटीकल्पनास्पदम् ॥ ९५ ॥ त्वत्कुटीयंत्वंचपुनस्तस्यामागतेतिनतदाविचारितम् ॥ एतत्सर्वमद्यपरिज्ञातमित्यर्थः ॥ ९६ ॥ किंतर्हितदाज्ञातंतदाह ॥ तदेति ॥ ॥ ९७ ॥ क्वस्थितोसीत्यादित्वयापृष्टंयन्मेवृत्तंतदेतन्मयोक्तमित्यर्थः ॥ अतःपरंत्वंयथास्मिन्नपराधेदंडमनुग्रहंवाजानासितत्कुर्वित्यर्थः ॥ ९८ ॥

हेमुनेसिद्धैरपियुष्मदादिभिर्यावत्स्वयंतमवधानपरैर्भूत्वाअंतःअशेषवस्तुउत्तमयाधियाविचार्यननिर्णीतंतावत्तेत्रिकालस्थवृत्तांतस्यकलनंसम्यग्ज्ञानंकिंचिदपिनविदंति ॥ अय मज्जादिमनसोपीदृशएवस्वभावःकिंपुनर्मादृशस्येतित्वद्वृत्तांतापरिज्ञानदेहनिरासायपराधंक्षमस्वेत्यर्थः ॥ ९९ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वा०उ०त्रिनवतितमः सर्गः ॥ ९३ ॥ ॥ ७ ॥ ॥ सिद्धलोकेद्वयोर्यानंपिशाचानांचसंस्थितिः ॥ वर्ण्यंतेदेवतानांचमनोमात्रानुसारिणी ॥ १ ॥ हेममय्यामाकाशमिवविस्तीर्णायां सप्तद्वीपसमुद्रबहिःस्थितायांमहाभुवि ॥ सौहार्दात्सुहृद्भावात् ॥ १ ॥ अयमविचारापराधोनकेवलंतवैवकिंतुममापितुल्यइत्याह ॥ त्वयेति ॥ तत्रसिद्धैर्नयावदवधानपरैरिति यत्त्वयोक्तंतत्सत्यमेवेत्याह ॥ आध्याभ्रांति ॥ देहिनांदेहवतांयोगिनामपिआध्याभिःप्रणिधानेनसर्वविषयेमनोव्याप्तिस्तद्रहिताअतीतानागतार्थसंवित्तिर्नसंभवत्येव ॥ २ ॥ य दिसंभवतिनर्हितवपतनंमाभूदितिसासंकल्पकुटीस्थिरीकृतास्यादित्याह ॥ कस्मादिति ॥ स्थिरस्थितिःपतनरहितः ॥ तथाचपरस्परप्रमादोद्वाभ्यामपिक्षंतव्यइतिभावः ॥ ३ ॥

सिद्धैर्नयावदवधानपरैर्विचार्यनिर्णीतमुत्तमधियांतरशेषवस्तु ॥ तावत्त्रिकालकलनंनविदंतिकिंचिदित्यब्जजादिमनसोपिमुनेस्वभावः ॥ ९९ ॥ ॥ इ०वा०महारामायणेवा०दे०मो०निर्वाण०उ०पाषा०आकाशमंडपसिद्धसमागमगाथावर्णनंनामत्रिनवतितमः सर्गः ॥ ९३ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अथहेममयाकाशविस्तीर्णायांमहाभुवि ॥ सौहार्दादेवसिद्धस्यतस्येदमहमुक्तवान् ॥ १ ॥ त्वयानकेवलंतावन्मयापिनविचारितम् ॥ आध्याभिरहितानामनसंभवतिदेहिनाम् ॥ २ ॥ कस्मान्मयातवोदंतंविचार्यासौस्थिरीकृता ॥ नकुटीव्योम्नितेनत्वमभविष्यःस्थिरस्थितिः ॥ ३ ॥ उत्तिष्ठसिद्धलोकेपुनिवसावोयथास्थितम् ॥ स्वास्पदस्थितयःसौम्याःस्वात्मसिद्धौसुसाधनम् ॥ ४ ॥ इतिनिर्णीयतावुच्चैरुत्स्तौतारकोपमौ ॥ सममेकपुरोड्डीनौव्योमयंत्रोपलाविव ॥ ५ ॥ प्रणामपूर्वमन्योन्यमथकृत्वाविसर्जनम् ॥ गतःसोभिमतंदेशमहंचाभिमतंगतः ॥ ६ ॥ इतिवृत्तांतमखिलमुक्तवानस्मिराघव ॥ तवाश्चर्यमयींपश्यसंस्तृतीनांविचित्रताम् ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ भगवंस्तवदेहोसौपृथिव्यामणुतांगतः ॥ भ्रांतःकेनशरीरेणसिद्धलोकांस्ततोभवान् ॥ ८ ॥

स्वंस्वीयंमयासप्तर्षिलोकेत्वयानंदनवनेचप्राक्तनेनिवसितव्यमितिभावः ॥ तत्किमर्थंतत्राह ॥ स्वास्पदेति ॥ स्वात्मनःसिद्धौनिर्विक्षेपस्थितौ ॥ ४ ॥ सचअहंचतौ ॥ त्यदादी निसर्वैर्नित्यमितितच्छब्दशेषः ॥ ननुत्यदादीनांमिथःसहोक्तौयत्परंतच्छिष्यतइत्यस्मच्छब्दशेषेआवामितिभाव्यम् ॥ सत्यम् ॥ छांदसत्वात्तन्नाश्रितम् ॥ उच्चैर्व्योमिउत्पतौ उड्डीनौ ॥ एकयंत्रपुटादुड्डीनौयंत्रोपलाविव ॥ ५ ॥ उड्डीयव्योम्निकिंचक्रथुस्तत्राह ॥ प्रणामपूर्वमिति ॥ सःनंदनंअहंसप्तर्षिलोकादीन्गतः ॥ ६ ॥ इतिवर्णितपाषाणाख्यायिकालक्षणंवृत्तांतंस्वानुभूतमखिलंसिद्धवृत्तांतंचतवाहमुक्तवानस्मि ॥ तंवृत्तांतंप्रस्तुतेयोजयति ॥ आश्चर्यमयीमिति ॥ ७ ॥ कुटीसंस्थस्त्वदीयस्थूलदेहःसिद्धेनापास्तइतित्वयैव स्वयमूहितमित्युक्तम् ॥ निरस्तश्चपार्थिवोदेहःपृथिव्यांकालेनपांसुभावमापद्यतइतिपरिशेषादेवज्ञातम् ॥ एवंसतिमनोमात्रदेहेनसिद्धलोकान्गतोभवान्कथंतत्रत्यजनैःसहव्यवहृतवान् ॥ नहिमनोमात्रात्माअन्यैःसहव्यवहर्तुंशक्नोत्यन्येवातेनसहव्यवहर्तुंशक्नुवंतीत्याशयेनरामःपृच्छति ॥ भगवन्निति ॥ अणुतांपांसुताम् ॥ भ्रांतःसंचरितवानसि ॥ ८ ॥

आइतिस्मरणद्योतकोनिपातःअङ्गित् ॥ ९ ॥ १० ॥ गगनाकृतिराकाशवदस्थूलः ॥ चिदाकाशप्रचुरंयन्मनस्तदात्मकः ॥ ११ ॥ त्वादृशायेस्थूलार्थावबोधिनस्तेषांनतुसूक्ष्मार्थदर्शिनांयोगिनाम् ॥ प्रेषणप्रतीक्षणादिनान्येषांदेशकालपरिवर्त्तनकारकश्चनसंपन्नः ॥ १२ ॥ पदार्थानांस्तंभकुंभादीनामसंस्पर्शादरोधकः ॥ १३ ॥ स्वप्नमनोराज्यवत्स्वप्नमनोमयैर्भूतैर्व्यवहर्त्ता ॥ १४ ॥ स्वप्नानुभूतयःस्वप्नानुभवाःअत्रईदृशार्थसंभावनेअविखंडितःसमस्तोदृष्टांतोऽनुसंधेयइत्यर्थः ॥ यस्तुनैयायिकोज्ञानमात्रेअवच्छेदकतासंबंधेन देहस्यकारणतात्वङ्मनोयोगस्यापिकारणतासुषुप्तौतदभावेज्ञानाभावोपपत्तेरित्यादिप्रलपतिसमूर्खस्त्वयानसंभाष्यएवेत्याह ॥ अनुभूतीति ॥ तेनसहतेअलमस्तुसंभाषणादिना प्रयोजनंनास्ति ॥ सुषुप्तावपिसुखमहमस्वाप्समित्यादिस्मृतिदर्शनेनसुखस्वापादिज्ञानसत्त्वात्स्वप्नेनशारीरमभिप्रहत्यासुप्तमसुप्तानभिचाकशीति शुक्रमादायपुनरेतिस्थानंहिरण्मयःपूरुषएकहंसइत्यादिश्रुतिविरोधान्निमिशापात्त्यक्तशरीरेणमयादुःखानुभवात्तन्निवारणायब्रह्माज्ञयामित्रावरुणोद्भवशरीरपरिग्रहाच्चेतिभावः ॥ १५ ॥ गेहमुप्तःस्वप्नेचरती

श्रीवसिष्ठउवाच ॥ ॥ आस्मृतंशृणुवृत्तांतंततोममजगद्गृहे ॥ भ्रमतःसिद्धसेनासुलोकपालपुरीषुच ॥ ९ ॥ अहमिंद्रपुरंप्राप्तोनकश्चित्तत्रदृष्टवान् ॥ मामिमंदेहरहितमातिवाहिकदेहिनम् ॥ १० ॥ अहंकिलतदारामसंपन्नोगगनाकृतिः ॥ नचाधारोनचाधेयश्चिदाकाशमयात्मकः ॥ ११ ॥ नग्रहीतानचग्राह्यस्त्वादृशार्थावबोधिनाम् ॥ नचैवदेशकालानांकचिदावृत्तिकारकः ॥ १२ ॥ मनोमननमात्रात्मा पृथ्व्यादिपरिवर्जितः ॥ संकल्पपुरुषाकारःपदार्थानामरोधकः ॥ १३ ॥ अरुद्धश्चपदार्थौघैःस्वयंस्वानुभवोन्मुखः ॥ व्यवहर्त्तातथाभूतैरेवंपुंभिर्मनोमयैः ॥ १४ ॥ स्वप्नानुभूतयोरामदृष्टांतोत्राविखंडितः ॥ अनुभूत्यपलापंतुयःकुर्यात्तेनतेस्त्वलम् ॥ १५ ॥ यथास्वप्नचरोगेहेव्यवहर्त्तानदृश्यते ॥ तथातदानदृष्टोस्मिपुरस्थोपिनभोगतैः ॥ १६ ॥ अहमन्यान्प्रपश्यामिपार्थिवाकारभासुरान् ॥ मामातिवाहिकात्मानंनकश्चिदपिपश्यति ॥ १७ ॥ ॥ श्रीरामउवाच ॥ ॥ नदृश्यतेविदेहत्वाद्भवान्व्योमवपुर्यदि ॥ तत्कथंतनसिद्धेनदृष्टोसिकनकावनौ ॥ १८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अस्मदादिर्जनोनामयथासंकल्पकल्पितान् ॥ नासंकल्पितमाप्नोतिसत्यकामवपुर्यतः ॥ १९ ॥ व्यवहारेषुमग्नेनलौकिकेष्वमलात्मना ॥ क्षणाद्विस्मर्यतेपुंसाआतिवाहिकमात्मनः ॥ २० ॥ मयापश्यतुमामेषइतिसंकल्पितंतदा ॥ तेनमांदृष्टवानेषस्वसंकल्पार्थभाजनम् ॥ २१ ॥

तिस्वप्नचरःपुरुषःस्वप्नेव्यवहर्त्ताप्यन्यैस्तद्गेहस्थैर्नदृश्यतेतथाअहमपिनभोगतैर्देवैर्नदृष्टइत्यर्थः ॥ १६ ॥ १७ ॥ मांनकश्चिदपिपश्यतीत्येतत्तेस्वोक्तिविरुद्धम् ॥ प्राक्सिद्धेनदृष्टोहमितित्वयैवोक्तत्वात् ॥ अहमन्यान्प्रपश्यामीत्यप्यसंगतम् ॥ मनसोवहिरस्वातंत्र्यात्स्वप्नेस्वमनोमयानामेवदर्शनादित्याशयेनरामःपृच्छति ॥ नदृश्यतइति ॥ १८ ॥ सत्यसंकल्पानुसारिदर्शनव्यवस्थयाउभयंवसिष्ठःपरिहरति ॥ अस्मदादिरिति ॥ अस्मदादिर्ज्ञानयोगसिद्धोजनः ॥ १९ ॥ ननुज्ञानसिद्धानांसदातिवाहिकदेहएवास्तिनस्थूलइतित्वयैवासकृदुक्तंतत्कथंतेषांस्थूलदेहबुद्ध्यापरदर्शनसंवादादिसत्यसंकल्पनंघटतेतत्राह ॥ व्यवहारेष्विति ॥ सत्यंसमाधिविवेककालयोस्तथैवव्युत्थानव्यवहारकालेआतिवाहिकभावविस्मरणमप्यस्तीतितत्संकल्पनसंभवइत्यर्थः ॥ २० ॥ एषसिद्धःसोपिसत्यसंकल्पःसिद्धश्चेतिवामांद्रष्टुंशक्नोतीत्याशयेनंतविशिनष्टि ॥ स्वसंकल्पार्थभाजनमिति ॥ २१ ॥

सिद्धस्येतरजनेभ्योविशेषमाह ॥ जनइति ॥ जरठश्चिरवासनादृढीकृतोभेदःस्वस्याब्रह्मभावोयेनतथाविधत्वात् जीर्णभेदत्वाद्बाधितभेदवासनत्वात्सएषसिद्धःसत्यकामत्वस्य भाजनंयोग्यः ॥ २२ ॥ ननुतर्हियत्रद्वौसिद्धौपरस्परविरुद्धंसंकल्पयतः यथाएकःअहमेनंपश्यामीतिसंकल्पयतिअपरस्तुमामयंनपश्यत्विति तत्रकथंव्यवस्थातत्राह ॥ द्वयोरिति ॥ यस्यैवात्मज्ञानवैशद्याधिक्यंतत्संकल्पःप्रबलः ॥ यथैकराज्यसिद्ध्यर्थंयतमानयोराजपुत्रयोर्यस्यैवशौर्याद्याधिक्यंतस्यजयस्तद्वदित्यर्थः ॥ तुल्यबलत्वेतूभयसंपत्तिर्वरशापाविरोधसर्गेवक्ष्यते ॥ २३ ॥ अस्त्वेवंतथापिप्रकृतेकिंतत्राह ॥ भ्रमतइति ॥ व्यवहारौघैर्हेतुभिर्यदाविस्मृतातदाव्यवहर्तुंप्रवृत्तइतिपरेणान्वयः ॥ २४ ॥ २५ ॥ आरटतःकूजतः ॥ २६ ॥ अवष्टब्धुंअन्यस्यपतनारोहणादिप्रसंगेकराद्यवलंबनंदातुंप्रवृत्तस्यममकिंचिदपिहस्ताद्यन्यस्यअवष्टब्धयेअवलंबनायनसंपद्यते ॥ २७ ॥ एवमनयारीत्या ॥

जनोजरठभेदत्वान्नसंकल्पार्थभाजनम् ॥ सएपजीर्णभेदत्वात्सत्यकामत्वभाजनम् ॥ २२ ॥ द्वयोस्तुसिद्धयोःसिद्धविरुद्धेप्सितयोर्मिथः ॥ अधिकैकावदातात्माजयीपुरुषयत्नवान् ॥ २३ ॥ भ्रमतःसिद्धसेनासुलोकपालपुरीपुमे ॥ विस्मृताव्यवहारौघैःसातिवाहिकतात्मनः ॥ २४ ॥ यदातदाहमपरैर्व्यवहर्तुमहांवरे ॥ प्रवृत्तोनचमांकश्चित्तत्रपश्यतिचंचलम् ॥ २५ ॥ अत्यंतमप्यारटतःशब्दोनश्रूयतेमम ॥ केनचित्सुरलोकपुस्वप्नपुंसइवानघ ॥ २६ ॥ अवष्टब्धुंप्रवृत्तस्यनान्यावष्टब्धयेमम ॥ संपद्यतेकिंचिदपिमनोमननदेहिनः ॥ २७ ॥ एवंव्योमपिशाचोहंसंपन्नोरघुनंदन ॥ मयानुभूताकाप्येपादेवागारपिशाचता ॥ २८ ॥ ॥ श्रीरामउवाच ॥ ॥ पिशाचाःसंतिलोकेस्मिन्किमाकाराःकिमास्पदाः ॥ किंजातीयाःकिमाचाराःकीदृशाःकीदृशाशयाः ॥ २९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ पिशाचाःसंतिलोकेस्मिन्यादृशास्तादृशान्शृणु ॥ नसभ्योसौनयोवक्तिप्रसंगापतितंवचः ॥ ३० ॥ पिशाचाःकेचिदाकाशसदृशाःसूक्ष्मदेहकाः ॥ हस्तपादादिसंयुक्ताःपश्यंतित्वमिवाकृतिम् ॥ ३१ ॥ छाययाभयदायिन्यात्वन्यत्रभ्रमरूपया ॥ तेचित्ताक्रमणंकृत्वाबोधयंतिनराशयम् ॥ ३२ ॥ घ्नंत्यदंतिपिबंत्याशुलघुसत्वबलंजनम् ॥ बलंसत्वमथोजीवान्हिंसंत्याक्रम्यचित्तकम् ॥ ३३ ॥

देवागारेपुपिशाचताअनुभूता ॥ २८ ॥ प्रासंगिकोरामप्रश्नः ॥ २९ ॥ सभ्यःसभार्हः ॥ सत्यइतिपाठेयथार्थवक्ता ॥ श्रोतुःप्रमयाहिअर्थयाथार्थ्यंपहःनचश्रोतुःप्रासंगिकार्थजिज्ञासायामजिज्ञासितमर्थंतिरेवाक्यात्प्रमोत्पद्यतइत्यनवधेयवचनोसावुन्मत्तवदुपेक्ष्येतेति ॥ तथाचाहुर्वाचस्पतिमिश्राः ॥ प्रतिपित्सितमर्थंप्रतिपादयन्प्रतिपादयिताअवधेयवचनोभवति ॥ अप्रतिपित्सितंतुप्रतिपादयन्नासौलौकिकोनपरीक्षकइत्युन्मत्तवदुपेक्ष्येतेति ॥ ३० ॥ सूक्ष्मदेहकामनोमयदेहकाः ॥ स्वप्नवन्मनःकल्पितहस्तपादादिसंयुक्ताः ॥ ३१ ॥ यदितेमनोमात्रमयदेहास्तर्हिअन्येपामाक्रमणंकथंकुर्वंति मनसोवहिराक्रमणाद्यसामर्थ्यादित्यतआह ॥ छाययेति ॥ तेपिशाचाअन्यत्रनरांतरेतदीयचित्तभ्रमरूपयाअतएवनानाभयदायिन्यास्वच्छाययाप्रतिबिंबेनानुप्रविश्यतदीयचित्तेतादात्म्यमिवापद्यतस्यनरस्याशयंदुःखभोगप्रदंकर्मकामवासनादिकंनानाभांतिचेष्टाद्यनुरूपतयाउद्बोधयंतीत्यर्थः ॥ ३२ ॥ तन्मरणानुकूलेकर्माशयेसतिघ्नंतिस्वयंचस्वीयकर्णानुबंधानुसारेणतदीयदेहधातूनदंतिरुधिरादिपिबंति ॥ बलंसत्वंचक्षपयंतीतिशेषः ॥ ३३ ॥

62

एतेनकिमाचाराइतिप्रश्नःसमाहितः किमाकाराःकिंजातीयाइतिप्रश्नौसमाधत्ते ॥ आकाशेति ॥ विचित्रकर्मानुसारेणतेषांसौक्ष्म्यतारतम्येनदेहारंभादंतर्द्धानादिशक्तितारतम्येननानावासनानुसारिरूपभेदेनचावस्थानमितिभावः ॥ ३४ ॥ अभ्रदलंमेघखंडः ॥ भ्रमात्मकाःआक्रमणीयपुरुषभ्रांत्यनुसारिदेहाइतियावत् ॥ ३५ ॥ पश्यंतिस्वयमनुभवंति ॥ परस्परंचपश्यंति ॥ ३६ ॥ वाम्रजलादिपातुम् ॥ अन्नाद्यत्तुंभोक्तुम् ॥ ईहितुंयथेष्टंदानादानादिनाव्यवहर्तुम् ॥ ३७ ॥ ३८ ॥ केनोपायेनतर्हितेदृश्यंतेमनुष्यैस्तमाह ॥ सत्वेति ॥ सत्वावष्टंभोयोगधारणाभेदः ॥ यंत्रंभूतदर्शनानुकूलबीजाक्षरघटितंरजतादिपत्रलिखितंकंठादौधार्यमाणंतेन ॥ गृह्यंतेवशीकृत्यसेवादौनियुज्यंते ॥ केनचिद्भूतविद्यावतापुरुषेण क्वचिद्देशेप्रसिद्धमेतदित्यर्थः ॥ ३९ ॥ एकादशदेवयोनिभेदांतर्गतत्वादणिमाद्यैश्वर्यतारतम्येनसुखभोगोपितेष्वस्तीतिसूचयंस्तज्जात्याकृतिभेदान्प्रपंचयति ॥

आकाशसदृशाःकेचित्केचिन्नीहारसन्निभाः ॥ केचित्स्वप्ननराकाराःसाकाराअपिखात्मकाः ॥ ३४ ॥ केचिदभ्रदलप्रख्याःकेचित्पवनदेहकाः ॥ केचिद्भ्रमात्मकाएवसर्वेबुद्धिमनोमयाः ॥ ३५ ॥ ग्रहीतुंनैवयुज्यंतेग्रहीतुंशक्नुवंतिनो ॥ आकाशशून्यवपुषःपश्यंत्याकृतिमात्मनः ॥ ३६ ॥ शीतातपादिविहितंसुखंदुःखंविदंतिच ॥ पातुमत्तुमवष्टब्धुमीहितुंशक्नुवंतिनो ॥ ३७ ॥ इच्छाद्वेषभयक्रोधलोभमोहसमन्विताः ॥ मंत्रौषधतपोदानधैर्यधर्मवशीकृताः ॥ ३८ ॥ सत्वावष्टंभयंत्रेणमंत्रेणाराधितेनवा ॥ दृश्यंतेपिचगृह्यंतेकदाचित्केनचित्क्वचित् ॥ ३९ ॥ देवयोनिर्हिसातेनकेचिद्देवोपमादयः ॥ केचिन्नरसमश्रीकाःकेचिन्नागसमन्वयाः ॥ ४० ॥ श्वश्रृगालोपमाःकेचिद्ग्रामजंगलवासिनः ॥ कुल्यावकररथ्यासुवसंतिनिरयेषुच ॥ ४१ ॥ एतदास्पदमेतेषामित्याकाराःप्रकीर्त्तिताः ॥ पिशाचाएवमाचाराजन्मैषांश्रूयतामिदम् ॥ ४२ ॥ अचेत्यचिन्मयंब्रह्मसर्वशक्तिस्वभावतः ॥ यत्स्थितंबुद्धमेवांतश्चेत्यंसंकल्पयन्निव ॥ ४३ ॥ तंजीवंविद्धिसप्रौढस्त्वहंकारइतिस्मृतः ॥ सोहंकारःस्मृतःपुष्टोमनइत्युदितात्मभिः ॥ ४४ ॥ सएवकथ्यतेब्रह्मासंकल्पाकाशरूपवान् ॥ असदेवासतोबीजंजगतोविगताकृतिः ॥ ४५ ॥ एवंमनःस्थितोब्रह्मासदेहोप्यमलंनभः ॥ तत्स्वप्नपुरुषाकारःसन्नेवासद्वपुःसदा ॥ ४६ ॥

देवयोनिर्हीति ॥ नागैःसर्पैःसमन्वयःसादृश्यंयेषाम् ॥ ४० ॥ निरयेषुनरकप्रायेष्वशुचिदेशेषु ॥ ४१ ॥ एतेनकिमाकाराःकिमास्पदाःकिमाचाराइतिप्रश्नाःसमाहिताइत्याह ॥ एतदिति ॥ किंजातीयाइतिप्रश्नोयदिजन्मपरस्तथाप्युत्तरंमूलतआरभ्यसर्गादिनाजगत्तत्त्वंव्युत्पादयन्श्रावयति ॥ जन्मेत्यादिना ॥ ४२ ॥ तत्रप्रथमंमायाशबलस्यब्रह्मणोजीवभावप्राप्तिमनआद्युपाध्युद्भवंक्रमेणदर्शयति ॥ अचेत्येति ॥ चेत्यचिन्मयंकार्यब्रह्मतद्विलक्षणमचेत्यचिन्मयम् ॥ चेत्यंसंकल्पयन्मनःपुरुषइवबुद्धंसत्तद्रूपेणयत्स्थितंतदेवजीवंप्रथमांकुरंविद्धि ॥ ४३ ॥ प्रौढःअभिमानोर्जितः ॥ अज्ञानतिमिरनाशायतत्त्वसाक्षात्कारवृत्त्यारूढतयाउदितआविर्भूतआत्मायेषांतैः ॥ ४४ ॥ समनोरूपोजीवएवसमष्ट्यात्मनाब्रह्माकथ्यते ॥ असतोजगतःअसन्मनएवबीजम् ॥ ४५ ॥ ४६ ॥

॥ ४७ ॥ ४८ ॥ अतएवसविरिंचोयद्यत्स्वसंकल्पनंवेत्तितत्तदर्थाकारेणपश्यत्यनुभवत्यपि ॥ योयावन्मात्रकोजीवःप्रसिद्धःससर्वोपिनचिद्रूपंसदेवअतोज्ञानशक्तिमत्तत्कस्माद्धेतोर्नपश्यति ॥४९॥ शून्यात्मानिराकारमनोरूपःसब्रह्माअंबरेचिदाकाशेशून्यमेवयद्ब्रह्मांडाकारंपश्यतितदिदंजगदित्यर्थः ॥५०॥५१॥५२॥५३ ॥ तदात्माजीवोजगच्चतयोर्द्वयोः ॥५४॥५५॥ पृथ्व्यादिभूतमयत्वंवेत्ति ॥ यथात्वंस्वसंकल्पपुरुषस्यअसतएवसतोनगरादेर्भूतमयत्वंवेत्सितद्वत् ॥ ५६ ॥ ब्रह्मांडात्मकस्वशरीरधातूनांकठिनद्रवादिभागानांतेनब्रह्मणापृथ्व्यादिकाअभिधाःसंज्ञाःकृताः ॥ ताःसमुदितरूपेणजगदित्येवस्थिताः ॥५७ ॥ यथाअसत्योपितेसंकल्पोमनोराज्यकौतुकाद्यर्थक्रियाकारित्वात्सत्यएवानुभूयते

पृथ्व्यादिमूर्त्तिरहितस्त्वातिवाहिकदेहवान् ॥ पृथ्व्यादयःकिलकुतःसंकल्पपुरुषस्यखे ॥४७॥ भवन्मनोयथाकाशपुरंपश्यतिकल्पितम् ॥ तथामनोविरंचित्वंपश्यत्यात्मनिकल्पितम् ॥ ४८ ॥ यद्वेत्तिकल्पितंतत्तत्पश्यत्यनुभवत्यपि ॥ योयावन्मात्रकस्तत्सकस्मात्किलनपश्यति ॥ ४९ ॥ सयत्पश्यतितत्ताहक्शून्यात्माशून्यमंबरे ॥ ब्रह्मब्रह्मणिवाब्रह्मातदिदंजगदुच्यते ॥ ५० ॥ तथासंप्रतिभासोस्यचिरकालैकभावनात् ॥ घनीभूतःस्थितःपुष्टःसुदीर्घस्वप्नसुंदरः ॥ ५१ ॥ आतिवाहिकदेहस्यतस्यतच्चिरभावनात् ॥ सर्गानुभवनंभूरिब्रह्मणोब्रह्मरूप्यपि ॥ ५२ ॥ गतंप्रकटतोत्कर्पादाधिभौतिकदेहताम् ॥ तेनैवसर्गइत्युक्तोभेदसंततिभासुरः ॥ ५३ ॥ सब्रह्माब्रह्ममात्रात्माब्रह्ममात्रात्मनोस्तयोः ॥ अजातयोरेवसदातदात्मजगतोर्द्वयोः ॥ ५४ ॥ अभिन्नयोरेवभृशंशून्यत्वांबरयोरिव ॥ ऐकात्म्यनैवसतोःपवनस्पंदयोरिव ॥ ५५ ॥ वेत्तिभूतमयत्वंतन्मिथ्यैवनतुवास्तवम् ॥ तथायथात्वंसंकल्पपुरुषस्यसतोसतः ॥ ५६ ॥ ततःशरीरधातूनांतेनपृथ्व्यादिकाःकृताः ॥ अभिधाःपंचचित्पुष्टाजगदित्येवताःस्थिताः ॥५७॥ यथात्वसत्यएवायंसंकल्पःसत्यएवते ॥ तथासावात्मसंकल्पंसत्यमेवानुभूतवान् ॥५८॥ सस्वयंचिन्मयाकाशःससंकल्पश्चिदंबरम् ॥ अतःस्वप्नोजगत्सर्वंकृतौनाशोद्भवौस्थितौ ॥५९॥ यथैवैतन्मनःसत्यंतदंशाःसत्यमेवते ॥ तथैवतत्कृताश्चंद्ररुद्रार्कैंदुमरीचयः ॥६० ॥ एवंस्थितेजगज्जालंतन्मनोराज्यमुच्यते ॥ तच्चशून्यंनिरालंबमाकाशकचनंचिति ॥ ६१ ॥ यथास्वप्नपुरंव्योमसंकल्पाद्रिर्यथानभः ॥ तथाब्रह्मजगच्चैवखमेवाच्छमनाकृति ॥ ६२ ॥ एवमाभासमात्रस्यकचतोनिशमव्ययम् ॥ सर्गादिमध्यांतदशोमुधैवात्रोदिताःस्थिताः ॥६३॥ किंचिदाकाशकोशस्यतववाममवानघ ॥ जगतोवापिजायेतेकिंवानश्यतिमेवद ॥ ६४ ॥

त्वयःतथाअसौब्रह्मापिआत्मनःसंकल्पंसत्यमित्येवानुभूतवान् तस्यसमष्ट्यात्मत्वात्तुतत्संकल्पजस्यसर्वजनसाधारणार्थक्रियेतिविशेषइतिभावः ॥५८॥ तमेवस्फुटयति ॥ सइत्यादिना ॥ सब्रह्मास्वयंचिन्मयाकाशएवपरमार्थतः तत्संकल्पोपिचिदंबरमेव ॥५९॥ कथंतर्हितत्कृताश्चंद्रतारादयःसर्वार्थक्रियाहेतवस्तत्राह ॥ यथैवेति ॥ तदंशास्तद्वृत्तयस्तेसत्यंप्रवृत्त्याद्यर्थक्रियासमर्थाएव ॥६०॥६१॥६२॥ सर्गस्यआदिमध्यांतदशाजन्मस्थितिभंगप्रत्ययाः ॥ ६३ ॥ अतएवात्मनश्चिदाकाशरूपतानुसंधानेनतववाममवान्यस्यवानकस्यचित्सर्गादयःसंतीत्याह ॥ किमिति ॥ जगतोजडत्वादेवसुतरांनजन्मादिप्रत्ययप्रसक्तिरितिद्योतनायपदद्वणंपुरुषांतराभिप्रायेणवा ॥६४॥

॥ ६५ ॥ वस्तुतःपरमार्थदृशा ॥ सर्गस्यआदिःकारणम् ॥ सकृदाभातंअपुनरावरणतयाप्रथांगतम् ॥ इदंप्रत्यग्रूपंसदैवतद्ब्रह्म ॥ ६६ ॥ तथाविधेपिचिदंबरक्षेत्रेअज्ञानकल्पनापंकेनकलिलेसतिखात्मनस्तस्मादेवबीजादियंभूरिभूतशिलावलिर्भविष्यतिप्राग्जाताचेतिपरेणान्वयः ॥ ६७ ॥ ६८ ॥ कलनापंकनिरासेत्वाह ॥ नास्तीति ॥६९॥ एवंपिशाचजातिवर्णनप्रसंगेनसर्गतत्त्वंव्युत्पाद्यप्रस्तुतानुकूलतयावर्णितभूतशिलायाअवयवादिभेदतयाजातिभेदान्दर्शयति ॥ याइति ॥ तत्रतस्मिन्कलनापंककलितेआत्मक्षेत्रेयाःशिलावलयःपुष्टाःसंरूढास्ताविबुधादयोजातयइतिसामान्योक्तिः॥विशिष्यविभजते ॥ याइत्यादिना ॥ तत्रयास्तुवर्णेनकांत्यतिशयेनोज्ज्वलारत्नरूपाबुद्धबुद्ध्ययोदेवर्ष्यादिजातयः ॥ ७० ॥ अर्धपक्वाअर्धवर्णोज्ज्वलाःशिलाः ॥ आश्यानाम्लानाःशिलाः ॥ ७१ ॥ गुर्व्योबृहत्योभारभूताःकांतिप्रकाशादिफलैर्हीनाद्दृथापाषाणाइतियावत् ॥ अशरी

तत्किमर्थमनर्थायनिरर्थकमपार्थकाः॥ कस्मादभ्युदिताब्रूहिरागद्वेषभयादयः॥ ६५ ॥ वस्तुतोंगनसर्गादिर्नसर्गोनाप्यसर्गता॥ विद्यतेसकृदाभातमिदमित्थंसदैवतत्॥६६॥ आशून्येविपुलाभोगेस्वच्छचिज्जलपूरिते॥ कलनापंककलिलेभविष्यतिचिदंवरे॥६७॥ अंतरिक्षाक्षयक्षेत्रेखात्मनोगगनात्मिका॥ तस्माद्बीजादियंजाताभूरिभूतशिलावलिः ॥६८ ॥ नास्तिकिंचिदिहक्षेत्रंव्युप्तंनामनकिंचन॥ नबीजमस्तिनोजातंकिंचित्सर्वंचसंस्थितम् ॥ ६९ ॥ याःशिलावलयस्तत्रपुष्टास्ताविबुधादयः ॥ यास्तुवर्णोज्ज्वलाएताःस्वास्थिताबुद्धबुद्धयः ॥ ७० ॥ यास्त्वर्द्धपक्वास्ताएतानरनागादिजातयः॥ यास्त्वाश्यानारजोनष्टास्ताःकृमिस्थावरादयः॥ ७१ ॥ यास्तुगुर्व्यःफलैर्हीनाःशून्याकाराःक्षयक्षताः॥ अशरीराःशरीरिण्यस्ताःपिशाचादिकाःस्मृताः॥ ७२ ॥ नहिसंकल्पितुःस्वेच्छाक्वचित्पर्यनुयुज्यते ॥ तास्तथेच्छाविरिंचस्यतथानामतयोदिताः ॥ ७३ ॥ सर्वाएवचिदाकाशरूपिण्योभूतजातयः॥ आतिवाहिकदेहिन्यःपृथ्व्यादिरहितात्मिकाः ॥ ७४ ॥ ताश्चिराभ्यासवशतस्त्वाधिभौतिकसंविदम्॥ प्राप्तादीर्घानुभवनात्स्वप्नजाग्रद्दशामिव ॥ ७५ ॥ पिशाचाद्यास्तथाएतेतथाभूताधिभौतिकाः॥ तिष्ठंतितुष्टमनसःस्वसंसारविहारिणः॥ ७६ ॥ पश्यंतिकाश्चिदन्योन्यंग्राम्याग्राम्येयकानिव॥ स्वप्नैकलोकवास्तव्याइवैताभूतजातयः॥ ७७ ॥ काश्चिद्बहुनरग्रामस्वप्ननिर्माणलोकवत्॥ नान्योन्यमपिपश्यंतिनानासंस्थानसंस्थिताः ॥ ७८ ॥

राअदेहाकाराःशरीरिण्योदेहाकाराश्वशिलाः ॥ ७२ ॥ ननुहिरण्यगर्भस्योत्तमदेवादिरत्नान्येवतत्रक्षेत्रेउत्पद्यंतामित्येवसंकल्पःकुतोनाभूत्किमर्थंदृथापाषाणरूपपिशाचजात्युत्पादनसंकल्पोभूत्तत्राह ॥ नहीति ॥ संकल्पितुःसंकल्पयितुर्धातुरिच्छानहिपर्यनुयुज्यतेआक्षिप्यते ॥ तत्तत्स्रज्यजीवप्राक्तनकर्माद्यनुसारित्वादितिभावः ॥ विरिंचस्यताइच्छास्तथाजातास्तथैवपिशाचजातयउदिताः ॥ ७३ ॥ शिलात्वोत्प्रेक्षणात्प्रसक्तंभौतिकत्वंभूतजातीनांवारयति ॥ सर्वाएवेति ॥ ७४ ॥ कथंतर्ह्यस्माकंदेहेभौतिकत्वानुभवस्तत्राह ॥ ताइति ॥ ७५ ॥ तथाभूतंचिराभ्यासप्राप्तमाधिभौतिकमाधिभौतिकत्वंयेषाम् ॥ स्वयोनिभोग्यभोगैस्तुष्टमनसः ॥ तथाचतेषांपिशाचदेहःकुत्सितभोगश्चप्रियएवनवीभत्सोभातीतिभावः ॥ ७६ ॥ अन्योन्यंपश्यंतिदर्शनादिनाव्यवहरंति ॥ ग्राम्येयकान्ग्रामीणानिव ॥ ग्राम्यशब्दात्स्वार्थेढकञ्छांदसः ॥ ७७ ॥ बहुप्रायेण ॥ ७८ ॥

पिशाचजातिषदेवकुंभांडादिजातीनांप्रायशस्तामसीआतिवाहिकदेहचेष्टादिस्थितिरित्याह ॥ स्थिताइति ॥ ७९ ॥ निम्नतातारतम्यनजलस्थितितारतम्यवत्पापतारतम्येनतेषु
तमस्तारतम्यमित्याह ॥ यथेति ॥ ८० ॥ तत्रेतिदर्शनाद्यत्रेत्यध्याहार्यम् ॥ अजिरेसातपचत्वरेपितिष्ठतिचेत् ॥ ८१ ॥ भानुःसूर्यस्तत्तमोननिहंति ॥ सपिशाचएव ॥ ८२ ॥
अस्मदादीनांप्रकाशसिद्धयेअग्न्यादित्यादितेजोमंडलमिवपिशाचादेर्व्यवहारसिद्धयेतामसंमंडलमस्तीत्याह ॥ अग्नेरिति ॥ इंधनाद्यजन्याल ॥ ८३ ॥ अनोजस्त्वंनैर्बल्यम् ॥
तदेतदाश्चर्यम् ॥ ८४ ॥ हेराममयातेपिशाचयोनौआजनितस्यजीवस्यएषाजातिर्यथाप्रश्नंप्रोक्ता ॥ समयःपृष्टमवश्यंवक्तव्यमितिव्याख्यातृसंप्रदायस्तदनपेता ॥ तद्वशादि

स्थितायथैताजगतिपिशाचाद्याःकुजातयः॥प्रायस्तथैताःकुंभांडयक्षप्रेतादयःस्थिताः॥७९॥ यथायत्रेहवैनिम्नाजलंतत्रावतिष्ठते॥ त
थायत्रपिशाचाद्यास्तमस्तत्रावतिष्ठते॥८०॥मध्याह्नेपिपिशाचश्चेदजिरेतिष्ठतिस्वयम्॥तत्तस्यांधंतमस्तत्रसंनिधानंकरोत्यलम्॥८१॥
ननिहंतिचतद्भानुर्नचान्यस्तत्रपश्यति॥ सएवचानुभवतिपश्यमायाविजृंभितम्॥८२॥ अग्नेरादित्यचंद्रादेस्तैजसंमंडलंयथा॥ पिशा
चादेरजन्यात्मतामसंमंडलंतथा॥८३॥यातितेजस्यनोजस्त्वंतमस्योजःप्रधानताम्॥उलूकवत्पिशाचाद्याआश्चर्यंतत्स्वभावतः॥८४॥
एषापिशाचाजनितस्यजातिःप्रोक्तामयातेसमयानपेता॥ पिशाचतुल्यःसुरलोकपाललोकेपुजातोहमितिप्रसंगात्॥८५॥ इ॰ वा॰
महारामायणेवा॰दे॰मो॰नि॰उ॰पाषा॰ पिशाचवर्णनप्रसंगेनजगद्ब्रह्मणोरैक्यप्रतिपादनंनामचतुर्नवतितमःसर्गः॥९४॥ ॥७॥
॥श्रीवसिष्ठउवाच॥ ॥ततश्चिदाकाशवपुर्भूतपंचकवर्जितः॥ विहरन्नहमाकशेपिशाचइवसंस्थितः॥ १ ॥ नमांपश्यंतिचंद्रार्कशक्रा
हरिहरादयः॥ नदेवसिद्धगंधर्वकिंनरानाप्सरोगणाः ॥ २ ॥ नाक्रामंतिमयाक्रांतानचशृण्वंतिमद्वचः ॥ इत्यहंमोहमापन्नोविक्रीतइ
वसज्जनः॥३॥ ॥अथचिंतितवानस्मिसत्यकामाइमेवयं॥ पश्यंतुमांसुरगणास्तेनतस्मिन्सुरालये॥४॥ द्रष्टुंप्रवृत्तामामग्रेवास्तव्याः
सर्वएवते॥ झटित्येवपुरंप्राप्तमिंद्रजालद्रुमंयथा ॥ ५॥ अथगीर्वाणगेहेषुसंपन्नोव्यवहार्य्यहम्॥ यथास्थितसमाचारःस्थितोनिःशंक
चेष्टितः ॥ ६॥ यैरविज्ञातवृत्तांतैर्दृष्टोहमजिरोत्थितः॥ वसिष्ठःपार्थिवइतिलोकेपुप्रथितोस्मितैः॥ ७॥

॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनिर्वाणप्रकरणेउ॰ चतुर्नव
तियावत् ॥ सुरलोकपाललोकेष्वहंपिशाचतुल्योजातोस्मीतियदवोचंतत्प्रसंगात्त्वयापृष्टेसतीत्यर्थः ॥ ८५ ॥
तितमःसर्गः ॥ ९४ ॥ ॥ ७ ॥ ॥ सत्यसंकल्पतास्मृत्याव्यवहारःपुनर्जनैः ॥ स्वस्याकाशवसिष्ठादिनामाप्तिश्चेहवर्ण्यते ॥ १ ॥ विहरन्संचरन् ॥१॥२॥ मयापादन्यासारो
हणाध्यासनादिनाआक्रांताअपिमांनप्रत्याक्रामंति ॥ मोहंपूर्वापरकर्त्तव्याप्रतिसंधानम् ॥३॥ चिंतितवान्चिंतयास्मृतवान् ॥ सत्यकामाइमेवयमितिस्मृत्यभिनयः ॥ पश्यंतुमां
सुरगणाइतिचसंकल्पितवानितिशेषः ॥ ४ ॥ अपेवसंतीतिवास्तव्याः ॥ वसेस्तव्यत्कर्तरिणिच्चेत्युपसंख्यानात् ॥ ५ ॥ व्यवहारीसंभाषणादिव्यवहरणशीलःसंपन्नः ॥६॥ अजि
रेचत्वरभूमौप्रथममाविर्भूतोदृष्टस्तैस्तत्पृथिवीतएवमदुत्पत्तिकल्पयद्भिःपृथिव्याजातःपार्थिवोयंवसिष्ठइतिलोकेपुप्रथितःप्रख्यातिंनीतोस्मि ॥ एवमग्रेपियोज्यम् ॥ ७ ॥

॥ ८ ॥ ९ ॥ इतिएवंरीत्यापरकल्पनयैवमेपृथिव्यादिभ्योजन्मनांसंततिःपरंपरा ॥ १० ॥ मारुतोमरुन्मयदेहः ॥ ११ ॥ तस्मिन्नेवातिवाहिकेदेहेआधिभौतिकतारूढाप्रादुर्भूता रूढेनचिराभ्यासपरिणतेनआंतरेणमनसाईरितागमिता ॥ आरूढांतरैरन्यैःसिद्धैरीरितागदितेतिवा ॥ १२ ॥ तर्हिकिमज्ञवद्भौतिकदेहात्मैवाभूर्नेत्याह ॥ यदेतदिति ॥ यतइदंद्वयमपिखमाकाशमेवतद्रूपेणैकदेहात्मेत्येतत्तत्त्वतःपरिज्ञातंततोमेचितिरेवात्मभावेनकचतिनदेहात्मभावेन ॥ देहात्मभावइत्यर्थः ॥१३॥ क्वचिद्व्योमादिभूतरूपेणकचनात्माप्यहम् एवमात्मचिदेकस्वभावंपरंनभएवनभूताकाशादिस्वभावः ॥ कथंतर्ह्याकारवान्दृश्यसेतत्राह ॥ युष्मास्विति ॥ युष्मदुपदेशादिव्यवहारसिद्ध्यर्थमित्यर्थः ॥ १४ ॥ वस्तु

व्योमन्यादित्यरश्मिभ्योदृष्टोहंयैर्नभोगतैः॥ वसिष्ठस्तैजसइतिलोकेषुप्रथितोस्मितैः॥८॥ वातात्समुदितोदृष्टोयैरहंगगनास्पदैः॥ सिद्धैर्वातवसिष्ठाख्यस्तैरहंसमुदाहृतः ॥ ९॥ यैरहंसलिलाद्दृष्टःप्रोत्थितस्तैर्मुनीश्वरैः॥ उक्तोवारिवसिष्ठोहमितिमेजन्मसंततिः॥ १० ॥ ततःप्रभृतिलोकेहंपार्थिवःप्रथितःक्वचित् ॥ अम्मयःक्वचिदन्येषांतैजसोमारुतःक्वचित् ॥ ११ ॥ अथकालेनमेतत्रतस्मिन्नेवातिवाहिके॥ आधिभौतिकतादेहेरूढारूढांतरेरिता॥१२॥ यदेतदातिवाहित्वमाधिभौतिकताचखम् ॥द्वयमप्येकदेहात्मततःकचतिमेचितिः॥१३॥ एवमात्मक्वचिद्व्योमकचनात्माप्यहंनभः ॥ परमेवनिराकारंयुष्मास्वाकारवानपि॥ १४ ॥ जीवन्मुक्तोव्यवहरंस्तथास्तेब्रह्मखात्मकः॥ तथैवादेहमुक्तोपितिष्ठतिब्रह्ममात्रकः॥ १५ ॥ ममनब्रह्मतापेताताद्दृग्व्यवहृतेरपि ॥ असंभवादन्यदृशोयुष्मदादिष्वहंत्वहम् ॥ १६ ॥ यथाज्ञस्यस्वप्ननरेनिर्जन्मनिनिराकृतौ॥ आधिभौतिकताबुद्धिस्तथामेजगतांपिच॥ १७॥ एवमेवावभासंतेसर्वएवस्वयंभुवः॥सर्गाश्चनतुजायंतेप्रयाताइवचोदिताः॥१८॥ एषसोहमिहाकाशवसिष्ठःपुष्टतामिव॥ गतोघस्वात्मनाभ्यासाद्भवतांवाभवस्थितिः॥१९॥ आकाशात्मानएवैतेसर्वएवस्वयंभुवः॥ यथात्वेतन्मनोमात्रमिमेसर्गास्तथैवहि॥ २० ॥ अहमादिरयंसर्गस्त्वपरिज्ञानदोषतः ॥ वेताळइवबालानांगतोवोवज्रसारताम्॥ २१ ॥ परिज्ञातस्तुकालेनस्वल्पेनैवोपशाम्यति ॥ वासनातानवात्स्नेहोवंधौदूरगतेयथा ॥ २२॥ घनत्वमहमासाद्यतथासर्गस्यशाम्यति॥ परिज्ञातायथास्वप्ननिधेरादेयभावना॥२३॥ शाम्यंतिसंपरिज्ञाताःसकलादृश्यदृष्टयः॥ यथामरुनदीवेगवारिग्रहणबुद्धयः॥ २४॥

तस्तुसदेहविदेहमुक्तयोरैकरूप्यमेवेत्याह ॥ जीवन्मुक्तइति ॥ १५ ॥ युष्मदादिषु उपदेशार्थमहंवसिष्ठदेहःसंपन्नइत्यर्थः ॥ १६ ॥ शून्येदेहेकथंतर्हिआधिभौतिकतारूढेत्युक्तिस्तत्राह ॥ यथेति ॥ जगतोजनांतरस्यच ॥ १७ ॥ ब्रह्मादिशरीराणितत्कृतसर्गाश्चैवमेवपरदृष्ट्यैवाधिभौतिकाइत्याह ॥ एवमेवेति ॥ १८ ॥ भवस्थितिर्भवद्बुद्ध्यनुसारिभौतिकदेहस्थितिः ॥ १९ ॥ ममेवहिरण्यगर्भस्यापिस्वदृष्ट्याजगद्ब्रह्माकाशात्मकमेवेत्याह ॥ आकाशेति ॥ परीक्षकदृशाएतन्मनोमात्रम् ॥ २० ॥ वःअज्ञजनानाम् ॥ २१ ॥ दूरगतेबंधौस्नेहोयथाकालेनोपशाम्यतितद्वत् ॥ २२ ॥ अहंकाररूपंघनत्वंस्थौल्यंतथाशाम्यति ॥ आदेयभावनाउपादेयतावासना ॥ २३ ॥ २४ ॥

प्रायपदंसदृशपरम् ॥ एतत्उक्तरूपंजीवन्मुक्तत्वम् ॥ २५ ॥ संसारात्यासक्त्याअध्यात्मशास्त्रपराङ्मुखंनिंदति ॥ संसारेति ॥ यस्यजनस्यधीःसंसारवासनावशात्अभावरू
पेअवस्तुस्वभावेदेहेंद्रियभोग्यादिरूपेसक्तामोक्षविषयेनिराकांक्षीसजनोऽशुचिभोगासक्तिसाम्यात्श्वाअथवाकीटोननुमनुष्यः ज्ञानाधिकारयोग्यमनुष्यदेहस्यायोग्यइत्यर्थः
॥ २६ ॥ यथैकमेवान्नंहविःपुरोडाशादिशुचितमरूपदेवद्विजादिभिर्भुज्यतेउच्छिष्टपुरीषाद्यशुचिरूपंतुश्वकीटादिभिस्तथाजीवन्मुक्तैःशब्दादिर्भोगःशुद्धचिन्मात्रानंदस्वरूपो
भुज्यते मूर्खैस्तुअशुचितमविषयरूपइत्याशयेनाह ॥ भोगेति ॥ जीवन्मुक्तबुद्धिनाभुज्यमानोभोगस्याभोगःकलापःकीदृशःस्यात् मौर्ख्यंमन्यथावस्तुवेदनंसेवतेतच्छीलेनमू
र्खेणचभुज्यमानःकीदृक्स्यात्तद्विमृश्यमित्यर्थः॥२७॥ किंचाज्ञानांभोग्यार्थेष्वग्निरिवतृष्णाक्रोधलोभादिलक्षणःसंतापएवोदेतिशास्त्रपरिशीलिनांसुज्ञानांसर्वार्थेषुपराअंतःशी
तलतोदेतीत्यपरोविशेषइत्याह ॥ महारामायणेति ॥२८॥ एतस्मिन्नीदृशेपिमोक्षेलोकस्यनार्थित्वम् अहोआश्चर्यम् ॥२९॥ अयंजनःप्रकृत्यास्वभावेनैवविषयैर्वशीकृतःअत

महारामायणप्रायशास्त्रप्रेक्षणमात्रतः॥ एतदासाद्यतेनित्यंकिमेतावतिदुष्करम्॥ २५॥ संसारवासनाभावरूपेसक्तानुयस्यधीः॥ मं
दोमोक्षेनिराकांक्षीसश्वाकीटोथवाजनः॥ २६॥ भोगाभोगःकिलायंयःसजीवन्मुक्तबुद्धिना॥ कीदृशोभुज्यमानःस्यात्कीदृक्स्यान्मौ
र्ख्यसेविना॥ २७॥ महारामायणप्रायशास्त्रप्रेक्षणमात्रतः॥ अंतःशीतलतोदेतिपरार्थेषुहिमोपमा॥ २८॥ मोक्षःशीतलचित्तत्वंबंधः
संतप्तचित्तता॥ एतस्मिन्नपिनार्थित्वमहोलोकस्यमूढता॥२९॥ अयंप्रकृत्याविषयैर्वशीकृतःपरस्परंश्रीधनलोलुपोजनः॥ यथार्थसंद
र्शनतःसुखीभवेन्मुमुक्षुशास्त्रार्थविचारणादितः॥ ३०॥ ॥श्रीवाल्मीकिरुवाच॥ ॥इत्युक्तवत्यथमुनौदिवसोजगामसायंतनायवि
धयेस्तमिनोजगाम॥ स्नातुंसभाकृतनमस्करणाजगामश्यामाक्षयेरविकरैश्चसहाजगाम॥ ३१॥ ॥इ॰वा॰वा॰दे॰मो॰नि॰उ॰
पाषा॰वसिष्ठशरीरवर्णनंनामपंचनवतितमःसर्गः॥ ९५॥ दिवस १७ ॥ ७॥ ॥पाषाणोपाख्यानंसमाप्तम्॥ ॥श्रीवसिष्ठउवाच॥
पाषाणाख्यानमेतत्तेकथितंकार्यकोविदं॥ अनयेमाःस्फुरद्दृष्ट्यास्सृष्टयोनभसिस्थिताः॥ १॥ नचस्थितंकिंचनापिकचनापिकदाचन॥
स्थितंब्रह्मघनेब्रह्मयथास्थितमखंडितम्॥ २ ॥ब्रह्मचिन्मात्रकंविद्धितद्यथास्वप्नदृष्टिषु॥ पुरंभवन्निजाद्रूपान्नकदाचनभिद्यते॥ ३॥

एवपरस्परंयुद्धचौर्यहरणादिनापिस्त्रीधनादिसंपादनात्तल्लोलुपः ॥ एवंभ्रांतिसंतापैःसदादंदह्यमानोयंमुमुक्षुशास्त्राणामर्थविचारणनिदिध्यासनाद्युपायतोयथार्थवस्तुसंदर्शनतए
वमुखीगतसंतापःपूर्णानंदोभवेन्नोपायांतरेणेत्यर्थः ॥ ३० ॥ ३१ ॥ ॥ इतिश्रीवासिष्ठ॰तात्पर्यप्रकाशेनि॰उत्तरार्द्धेपंचनवतितमःसर्गः ॥ ९५ ॥ ॥ ७ ॥ ॥ पाषाणाख्यानता
त्पर्यंचिद्विवर्त्तोजगद्भ्रमः ॥ वर्ण्यतेत्रचिदेवात्माब्रह्मानंदोऽजरामरः ॥ १ ॥ विस्तरेणवर्णितंपाषाणाख्यानंपरमप्रकृतेयोजयति ॥ पाषाणाख्यानमिति ॥ अनयाआख्यायिकया
स्फुरंत्याचिन्मात्रपूर्णतादृष्ट्यासर्वाःसृष्टयोनभसिचिदाकाशेशून्यभावेचस्थिताइतिनिश्चिन्वित्यर्थः ॥ १ ॥ ब्रह्मघनेसैंधवघनवदेकरसेस्वभावे ॥ २ ॥ जगतश्चिन्मात्रविवर्त्तत्वंस्वभ
सर्वानुभवसिद्धमित्याह ॥ ब्रह्मेति ॥ निजाच्चिद्रूपात्कदापिनभिद्यतेनप्रच्यवते ॥ तथाचस्वरूपादप्रच्युतस्यरूपांतरप्रतिभासोविवर्त्तइतितल्लक्षणंजगतिप्रसिद्धमित्यर्थः ॥ ३ ॥

स्वमवत्सर्गेपिविवर्ततांबोध्येत्याह ॥ स्वयंभूत्वसमापत्ताविति ॥ स्वयंभूःसमष्टिजीवस्तत्त्वेनसूक्ष्मोपाधिसमापत्तौदृश्यस्थूलव्यवस्थितौच ॥ अजंनिर्विकारम् ॥ ४ ॥ जगच्चेद्वि
वर्तस्तर्हिपरमार्थदृष्ट्याकिंस्थितंतदाह ॥ नेति ॥ ५ ॥ दृष्टांतेनपितत्समर्थयाह ॥ यथेति ॥ अखंडचिद्रूपंयथास्थितमेवमास्त्वटेरामहाप्रलयाज्जगद्रूपंभवत्तदेवस्थितमित्यर्थः
॥ ६ ॥ चिदनुविद्धतयासर्वसर्गानुभवादपिसैवतथास्थितेतिनिश्चयइत्याह ॥ हेमेति ॥ हेमाश्मर्मेर्वादौप्रसिद्धम् ॥ ७ ॥ ८ ॥ ९ ॥ आकाशंस्वच्छंसर्वगतमलेपकंच ॥ १० ॥
पुरुषोजीवः ॥ भवानित्यादिरुक्तस्यप्रपंचः ॥ ११ ॥ शवंनिर्जीवमेवस्यात् ॥ १२ ॥ १३ ॥ चितोमरणेतद्भेदेप्रमाणाभावात्सर्वमरणंस्यादित्याह ॥ चिन्मात्रेति ॥ आत्मावैपु

स्वयंभूत्वसमापत्तौतथादृश्यव्यवस्थितौ ॥ स्वरूपमजहत्त्वेवचिदाकाशमजंस्थितम् ॥ ४ ॥ नस्वयंभूर्नचजगन्नस्वप्नपुरमस्त्यलम् ॥
स्थितंसंविन्महादृष्ट्याब्रह्मचिन्मात्रमेतया ॥५॥ यथापुरंभवत्स्वप्नेचिद्रूपंस्वात्मनिस्थितम् ॥ अखंडमेवमास्त्वष्टेरामहाप्रलयस्थितेः ॥६॥
हेमहेमाश्मनोःस्वप्नपुरचेतनयोर्यथा ॥ भेदोनसंभवत्येवनभेदश्चितिसर्गयोः ॥ ७ ॥ चितिरेकास्तिनोसर्गोहेमास्तिनतदूर्मिका ॥ स्वप्ना
चलेचिदेवास्तिनतुकाचनशैलता ॥ ८ ॥ चिदेवशैलवद्भातियथास्वप्नेनिरामया ॥ तथाब्रह्मनिराकारंसर्गवद्भातिनेतरत् ॥ ९ ॥ चिन्मात्र
मिदमाकाशमनंतमजमव्ययम् ॥ महाकल्पसहस्रेपुनोदेतिनचशाम्यति ॥१०॥ चिदाकाशोहिपुरुषश्चिदाकाशोभवानयम् ॥ चिदाका
शोहमजरश्चिदाकाशोजगत्रयम् ॥ ११ ॥ चिदाकाशंवर्जयित्वाशवमेवशरीरकम् ॥ अच्छेद्योसावदाह्योसौचिदाकाशोनशाम्यति
॥ १२ ॥ अतोनकिंचिन्म्रियतेनचकिंचनजायते ॥ चित्त्वात्ततश्चिल्कचनंजगदित्यनुभूयते ॥ १३ ॥ चिन्मात्रपुरुषोजंतुर्म्रियतेयदिनाम
वा ॥ ततोमरिष्यत्तत्पुत्रोनिःसंदेहंपितुर्मृतौ ॥ १४ ॥ एकस्मिन्प्रमृतेजंतावमरिष्यंस्तुसर्वदा ॥ सर्वएवजनाःशून्यमभविष्यन्महीतलम्
॥ १५ ॥ नचाद्यापिमृतंरामचिन्मात्रंकस्यचित्क्वचित् ॥ नचशून्यास्थिताभूमिस्तस्माच्चित्पुरुषोऽक्षयः ॥ १६ ॥ एकंचिन्मात्रमेवाहंनश
रीरादयोमम ॥ इतिसत्यनुसंधानेक्वजन्ममरणादयः ॥ १७ ॥ अहंचिन्मात्रममलमित्यात्मानुभवंस्वयम् ॥ अपहत्यात्महंतारोनिमज्जं
त्यापदर्णवे ॥ १८ ॥ चिदहंगगनादच्छानित्यानंतानिरामया ॥ किंजीवितंमेकिंवापिमरणंवासुखासुखे ॥ १९ ॥ व्योमात्मचेतनमहंके
शरीरादयोमम ॥ इत्यात्महापकुर्तेतर्यौनुभूतंधिगस्तुतम् ॥ २० ॥

त्रनामार्सीतिपुत्रस्यपित्रात्माऽभेदश्रुतेरितिभावः ॥ १४ ॥ एकएवहिभूतात्माभूतेभूतेव्यवस्थितइतिश्रुतेरेकमरणेसर्वमरणप्रसंगश्चेत्याह ॥ एकस्मिन्निति ॥ एकैकमरणानधिक
रणक्षणाप्रसिद्धेःसर्वदेत्युक्तिः ॥ महीतलग्रहणंजगन्मात्रोपलक्षणम् ॥ १५ ॥ तर्कस्यविपर्ययपर्यवसानंदर्शयति ॥ नचेति ॥ १६ ॥ तथाचचिदात्मपरिज्ञानादेवजननमरणाद्य
नर्थनिवृत्तिःसिद्धेत्याह ॥ एकमिति ॥ १७ ॥ चिन्मात्रमहमित्येवंरूपमात्मानुभवंयेअपहंतिकुतर्कैःखंडयंतितएवात्महंतारः ॥ वचनव्यत्ययश्छांदसः ॥ अपहत्येतिवापाठः
॥ १८ ॥ १९ ॥ इतिविद्वद्भिरंतरनुभूतमनुभवंयःकुतर्कैरपकुरुतेसआत्महातंधिगस्तु ॥ २० ॥

यस्यचिदात्माहमित्यनुभूतिरस्तंनाशमागतातंमूढंजीवंतमपिशवंविदुस्तत्त्वविदः ॥ २१ ॥ इतिबोधेनलब्ध्वात्मानंअविद्यादिमालिन्यापगमात्स्वच्छंपुरुषंमरणाद्यापदोनप्रवि लुंपंति ॥ २२ ॥ २३ ॥ वस्तुतःसुवर्णंपरित्यज्यभस्मस्वर्णबुद्ध्यागृहीतम् ॥ २४ ॥ एतदेवबलबुद्ध्यादि ॥ २५ ॥ किंनिष्ठाःस्युः ॥ नह्यात्मनिष्ठास्तेतदायेनतैरात्मादुष्येदित्यर्थः ॥ २६ ॥ देहान्स्थूलसूक्ष्मकारणाख्यान् ॥ सारमात्मानमवाप्नुयात्पश्येत् ॥ तस्मैमूढाय ॥ २७ ॥ अंतकरोमृत्युः ॥ २८ ॥ ज्ञानदृष्टीनांपंडितानामपिमुग्धताव्यामोहोदृश्यते ॥ यत्शरीरलक्षणशकलस्यजडवर्गैकदेशस्याभावेनाशेउपस्थितेनश्यामइतिमोहिताभीताजायंतइतिशेषः ॥ २९ ॥ ३० ॥ अमरंचिन्मात्रमहंनअतोनश्यामीतियद्रोदितितदनष्टे

चिदाकाशमहंस्वच्छमनुभूतिरितिस्फुटा॥ यस्यास्तमागतामूढंतंजीवंतंशवंविदुः ॥ २१ ॥ अहंवेदनमात्रात्माकानिदेहेंद्रियाणिमे॥ लब्ध्वात्मानमितिस्वच्छंप्रविलुंपंतिनापदः ॥ २२ ॥ चिन्मात्रंशुद्धमात्मानंयोवलंब्यस्थिरःस्थितः॥ नाधयस्तंविलुंपंतिमहोपलमिवेषवः ॥ २३ ॥ चित्त्वंस्वभावंविस्मृत्ययद्धास्थायेशरीरके॥ तैःसुवर्णंपरित्यज्यगृहीतंभस्मवस्तुतः॥ २४॥ बलंबुद्धिश्चतेजश्चदेहोहमितिभावनात्॥ नश्यत्युदेत्येतदेवचिदेवाहमितिस्थितेः॥२५॥ चिदाकाशमहंशुद्धंकमेमरणजन्मनी॥ एवंस्थितेस्युःकिंनिष्ठालोभमोहमदादयः ॥ २६॥ चिदाकाशादृतेदेहान्योन्यत्सारमवाप्नुयात्॥ तस्मैतद्युज्यतेवक्तुंसंतिलोभादयस्त्विति॥ २७॥ नच्छिद्येनचदह्येहंचिन्मात्रंवज्रवच्चिति॥ नदेहीनिश्चयोयस्यतंप्रत्यंतकरस्तृणम् ॥ २८ ॥ अहोनुमुग्धताज्ञानदृष्टीनांयद्विदंत्यलम्॥ शरीरशकलाभावेनश्यामइतिमोहिताः॥ २९॥ अहंचिन्नभएवेतिसत्येंभावेस्थिरेसति ॥ वज्रपातयुगांताग्निदाहाःपुष्पोत्करोपमाः॥ ३० ॥ चिन्मात्रममरंनाहंयन्नश्यामीतिरोदिति॥ अनष्टएवतद्देहोजातापूर्वाखरोलिका ॥ ३१ ॥ इदंचेतनमेवाहंनाहंदेहादिदृश्यः॥ इतिनिश्चयवान्योंतर्नसमुत्थतिकर्हिचित्॥ ३२॥ अहंचेतनमाकाशोनाशोमेनोपपद्यते॥ चेतनेनजगत्पूर्णंकेवसंदेहितात्रवः॥ ३३॥ चेतनंवर्जयित्वान्यत्किंचिद्यूयंजनायदि॥ यदुच्यतांमहामूढाःस्वात्माकिमपलप्यते ॥ ३४ ॥ तच्चेतनंचेन्म्रियतेतज्जनाःप्रत्यहंमृताः॥ ब्रूतकिंनमृतायूयंतन्मृतंकिलचेतनम्॥ ३५॥ तस्मान्नम्रियतेकिंचिन्नचजीवतिकिंचन॥ जीवामीतिमृतोस्मीतिचिच्चेततिननश्यति ॥ ३६ ॥

एवात्मनिरोदिति ॥ सेयंविवेकिदृशानटस्येवरोदनविडंबनाअपूर्वाखरोलिकापरिहासक्रीडैवजाता ॥ ३१ ॥ इदंनित्यापरोक्षंचेतनंचिन्मात्रमेवाहम् ॥ ३२ ॥ संदेहिताजन्ममरणादिसंशयः ॥ ३३ ॥ चेतनादन्यद्द्वयमितिहिचेतयद्भिरुच्येतअचेतयद्भिर्वा ॥ नाद्यः ॥ चेतयद्भिश्चेतनास्वभावंस्वस्यानुभवद्भिस्तथावक्तुमशक्यत्वात् ॥ नद्वितीयः ॥ दासर्वैर्पाजीअचेतयद्भिर्जडैर्वयमचेतनाइत्यनुभवितुमभिरूपितुंकिंचिदपलपितुंवाशक्यमित्याशयेनाह ॥ चेतनमिति ॥ ३४ ॥ किंचचैतन्यंस्वमरणंचेत्पश्यतितर्हिसदैवपश्येत् ॥ तदासर्ववतांमरणानुभवःस्यादित्याह ॥ तदिति ॥ ३५ ॥ एवंमरणाप्रसिद्धौतद्व्यावृत्तंजीवनमित्यपिकल्पनाव्यर्थेत्याशयेनाह ॥ तस्मादिति ॥ चेततिभांतिमनुभवति ॥ स्वयंतुकदापिननश्यति ॥ तथाचश्रुतिः ॥ नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेअविनाशित्वादिति ॥ ३६ ॥

सर्वेषामविनाशिचिच्चेतनानुसारेणैवार्थानुभवः प्रसिद्धो नतद्वैपरीत्येनेत्याह ॥ चिदिति ॥३७॥ स्वरूपाच्चित्स्वभावात्तुचेत्यभेदेदेशभेदेकालभेदेचनभिद्यते॥३८॥ तर्हिबंधमोक्षयोः किंकृतःकोवाविशेषस्तमाह ॥ अपरिज्ञातेति ॥ ३९ ॥ ४० ॥ तथाचजगद्रूपेषुसत्यत्वमिथ्यात्वेस्वस्वनिर्णयानुसारनियतेनवास्तवेइत्याह ॥ ननदस्तीति ॥ ४१ ॥ उक्तमर्थंनिगमयन्नुपसंहरति ॥ यद्यदिति ॥ पदार्थजातंविषामृतदृशेवकालभेदाद्भोक्तृभेदात्सहकारिभेदाच्चानियतविपरीतव्यवस्थितार्थक्रियाभेदसंविदनुसारेणैवव्यवस्थितंदृष्टमित्यतोहेतोःसंविदविधेयंसंविदननुसारिकिंचिदपिवस्तुनास्तीतियदुक्तंतत्प्रसिद्धमित्यर्थः ॥ ४२ ॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेषण्णवतितमःसर्गः ॥९६॥ वर्ण्यतेसर्वशक्तित्वात्सर्ववायुक्तिसत्यता ॥ भोगासक्तिश्चसर्वेषांतत्त्वज्ञविरलस्थितिः ॥ १ ॥ ब्रह्मणःसर्वशक्तित्वात्सर्ववायुक्तीनांसत्यतेतिवक्ष्यमाणार्थोपयोगितयाननदस्तिनय

चिच्चेततियथावायत्तत्तथासाशुपश्यति ॥ आवालमेषोनुभवोनक्वचित्साचनश्यति ॥३७॥ परिपश्यतिसंसारंपरिपश्यतिमुक्तताम् ॥ सुखदुःखानिजानातिस्वरूपात्तन्नभिद्यते॥३८॥ अपरिज्ञातदेहात्तुधत्तेमोहाभिधांस्वयम् ॥ परिज्ञातस्वरूपात्तुधत्तेमोक्षाभिधांस्वयम् ॥ ३९ ॥ नास्तमेतिनचोदेतिनकदाचनकिंचन ॥ सर्वमेवचचिन्मात्रमाकाशविशदंयतः॥४०॥ ननदस्तिनयत्सत्यंनतदस्तिनयन्मृषा॥ यद्यथायेननिर्णीतंतत्तथातंप्रतिस्थितम् ॥ ४१ ॥ यद्यद्यथाजगतिचेततिचेतनात्मातत्तत्तथानुभवतीत्यनुभूतिसिद्धम् ॥ दृष्टंविषामृतदृशेवपदार्थजातंनातोस्तिसंविदविधेयमितिप्रसिद्धम् ॥ ४२ ॥ ॥इ०वा०वा०दे०मो०नि०उ०अमरत्वप्रतिपादनंनामषण्णवतितमःसर्गः ॥ ९६ ॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥संविन्मयत्वाज्जगतःस्वप्नस्यपरमात्मनः॥ ब्रह्माकाशतयासर्वंब्रह्मैवेत्यनुभूयते ॥ १ ॥ भ्रमस्यचातिदृश्यत्वादृश्यत्वान्महाचितेः॥ मदशक्तिवदात्मेतिसत्यतास्यापियुज्यते॥ २ ॥ असत्त्वादृश्यविश्रांतेरलभ्यत्वान्महाचितेः॥ उपलब्धुरभावाच्चशून्यनाम्नीवसत्यपि ॥ ३ ॥

त्सत्यमितिसर्गोपांत्यश्लोकोक्तंसमर्थयितुंभूमिकांरचयति ॥ संविन्मयत्वादिति ॥ परमात्मनःस्वप्नभूतस्यजगतःपरमार्थसत्यब्रह्माकाशतयासर्वंब्रह्मैवेतिसत्यमेवजगत्सर्वैरनुभूयतइतिनासत्यंकिंचिदस्तीत्युक्तमित्यर्थः ॥१॥ एवंब्रह्मरूपेणसत्यत्वेपिकथंप्रतीयमानरूपेणसत्यता नहिरज्जुरूपंसत्यमितितदध्यस्तःसर्पःसत्योभवतितत्राह ॥ भ्रमस्येति ॥ तत्रहिसर्पोपिदृश्योरज्जुरपिदृश्या उभयोर्दृश्यत्वेरज्जुदर्शनेसर्पबाधादसत्यताइहतुजगद्भ्रांतिर्दृश्यातदधिष्ठानंमहाचितिरदृश्येतिवैषम्याच्चिदात्मामदशक्तिरिवस्वयमदृश्योदृश्यभ्रमहेतुःकार्यरूपेणैवस्वसत्तांप्रकटयतीत्यस्यजगद्रूपस्यसत्यतायुज्यतइत्यर्थः ॥ २ ॥ तर्हिनतदस्तिनयन्मृषेत्युक्तिःकथंघटतांब्रह्मणोमृषात्वायोगात्तत्राह ॥ असत्वादिति ॥ बंधकालेदृश्यविश्रांतेःसर्वदृश्योपरमलक्षणमोक्षस्यासत्वादसंपत्तेस्तांविनामहाचितेरद्वितीयचिदात्मनःअलभ्यत्वान्मुक्तिकालेपिउपलब्धुःप्रमातुरंतःकरणोपहितजीवस्योपलंभकप्रमाणादेश्चबाधेनाभावाच्चात्यंताप्रसिद्धप्रायतयासतिपरमार्थवस्तुन्यपिशून्यत्वमिवसुवचमित्यर्थः ॥ ३ ॥

एवंसतिसर्वेषांवादिनांवाक्यंस्वस्वानुभवसिद्धार्थप्रतिपादनात्सत्यमेवेतिप्रपंचयिष्यन्प्रथमंसांख्योक्तेःसत्यतांदर्शयति ॥ चिन्मात्रमिति ॥ इदंजगत्सुखदुःखमोहात्मतयाअन्वीयमानंतथाविधसामान्यपरंपरावधिभूतगुणत्रयसाम्यावस्थालक्षणादव्यक्ततःप्रधानाख्यान्मूलकारणान्महदहंकारादिक्रमेणसमेतिआविर्भवति॥ पुरुषस्तुचिन्मात्रमकर्त्ताच॥ तस्यभोगमोक्षसिद्ध्येसर्गःप्रवर्त्ततइत्येवंदृष्टिर्यस्यकपिलस्यतस्यतथैवतत्सत्यमित्यर्थः ॥ ४ ॥ यस्तुवेदांतीब्रह्मणोविवर्त्तोजगदितिवादीतस्यापिमतंसत् ॥ तथापर्यालोचनेएवंरूपाणामेवार्थानामनुभवादित्यर्थः ॥ ५ ॥ एवंकणादगौतमसौत्रांतिकवैशेषिकार्हतानांपरमाणुसमूहात्मकमेवजगदितिकल्पनापितदनुभवानुसारित्वात्सत्यैवेत्याह ॥ परमाण्विति ॥ ६ ॥ एवंदृष्टसृष्टिवादिनामनिर्वचनीयमेवेहलोकेपरत्रचजगन्नतुसदसदन्यतरकोटिप्रतिष्ठितमित्याध्यात्मिकीमनःकल्पनामात्ररूपाजगतोगतिरवगतिरपिसत्यम् ॥ तैस्तथैवानुभवादित्यर्थः ॥ ७ ॥ एवंयेअन्येचार्वाकावाह्यंपृथिव्यादिभूतचतुष्टयमेवास्तिअन्यदांतरमात्मरूपंनास्तीतिवदंतितेपिसत्यवादिनएव ॥ यतस्तेअक्षगणेभ्यश्चक्षुरादिभ्योऽतीतंस्वात्मनिदेहेविमृशंतोनप्राप्नुवंति ॥ ८ ॥ एवंक्षणिकवादिनांक्षणभंगधीरपियुक्तैव ॥ प्रतिक्षणपरिणामिनांसर्वभावानामनारतंविपर्यासदर्शनादित्यर्थः ॥ ९ ॥ यथा

चिन्मात्रंपुरुषोकर्त्तासमेत्यव्यक्ततोजगत्॥ एवंदृष्टेःसत्यमेतदेवमर्थानुभूतितः ॥४॥ विवर्त्तोब्रह्मणोदृश्यमित्येवंवादिनोपिसत्॥ मतमेवंस्वरूपाणामर्थानामनुभूतितः॥५॥ परमाणुसमूहात्मजगदित्यपिसत्यतः॥ संवेद्यतेयथायद्यत्तत्तथैवानुभूतितः॥ ६॥ यथादृष्टंतथैवेदमिहलोकेपरत्रच॥ नासन्नसदितिप्रौढासत्यमाध्यात्मिकीगतिः॥७॥ बाह्यमेवास्तिनास्त्यन्यदित्यन्येसत्यवादिनः॥ स्वात्मन्यक्षगणातीतंप्राप्नुवंतिनतेयतः॥८॥ अनारतविपर्यासदर्शनात्क्षणभंगधीः॥ युक्तैवतद्विदामाद्यंसर्वशक्तिहितत्पदम् ॥ ९॥ कलविंकघटन्यायोधर्मइत्यपितद्विदाम्॥ तथात्मसिद्धेर्म्लेच्छानांतद्देशेपुनदुष्यति॥ १०॥ समाःसंतश्चविप्राग्निविषामृतमृतिष्वपि॥ भ्रांत्येवंतद्विदांसर्वमिदंसर्वात्मकंयतः॥ ११॥ स्वभावसिद्धमेवेदंयुक्तमित्येवतद्विदाम्॥ अन्विष्टायातिनोप्राप्तिंबुद्धिमत्सर्वकर्तृता॥ १२॥

घटेऽवरुद्धःकलविंकस्तन्मुखापावरणेबहिरुड्डीयगच्छतिएवंदेहांतःपरिच्छिन्नोधर्मोजीवःकर्मक्षयेपरलोकेउड्डीयगच्छतीत्यार्हतकल्पनापिसत्या ॥तथाम्लेच्छानांयवनादीनामीश्वरोत्पादितोदेहाकारएवजीवोदेहनिखननदेशेपुतिष्ठतिसततःकालांतरेईश्वरेणपरामृष्टस्तदिच्छयामुच्यतेउच्छिद्यतेशाश्वतंस्वर्गेनरकेवानिवेश्यतइतिकल्पनापितदनुभवानुसारादेवनदुष्यति ॥ १० ॥ एवंसर्वत्रसमबुद्धीनांसन्मात्रवस्तुनिदत्तदृष्टीनांविषामृतमृतिजन्मादिषुविषमत्वेनकादाचित्कत्वेनचप्रसिद्धेष्वपिसर्वत्रसमाःसदासंतश्चभांति ॥ यतइदंब्रह्मैवसर्वंसर्वात्मकंचातोनकिंचिदग्र्यदुर्लभमितिसर्ववादिनामपिसर्वाभिलषितसिद्धिरित्यर्थः ॥ ११ ॥ एवंस्वभावादेवस्वयमेवसर्वंजगदुत्पद्यतेस्वभावादेवनश्यतिनजगतःकर्त्ताकश्चिदस्तीतितद्विदांस्वभाववादिनांचार्वाकाणांमतमपियुक्तमेव यतोघटपटादौदृष्टापिबुद्धिमत्सर्वकर्तृतावृष्टिवाततृणांकुरादौसम्यगन्विष्टापिप्राप्तिंनोयाति ॥ नह्यकालवृष्टिषुक्षेत्रतृणादयःकृषीवलानांसस्यकर्तृणामनिष्टाविनैवकर्त्रास्वभावादेवजायमानाःकर्तृकल्पनांसहंते ॥ नहिसर्वानिष्टकर्त्ताकश्चिदस्ति तस्यचाकालवृष्टिपरक्षेत्रतृणादिनाप्रयोजनमस्तीतिकल्पनासंभवतीतिभावः ॥ १२ ॥

क्षित्यंकुरादौसर्वत्रकार्यमात्रेएकःकर्त्ताइतियत्कल्पनंतदपिसत्यम् ॥ तथानिश्चयवतामीश्वरोपासकानांतत्प्राप्त्यनुग्रहवरदानाद्यर्थक्रियादर्शनादित्याह ॥ एकइति ॥ तन्मयंतदासक्तंचेतोयेषाम् ॥ सोयमुपासकोयतस्तथानिश्चयवांस्ततःसोंतस्तत्स्वोपास्यंसर्वकर्त्तारंप्राप्नोति ॥ नह्यसौपूर्ववादीवतंबाधितंमन्यते ॥ अकालवृष्टिसुक्षेत्रतृणादीनामपिसर्वानिष्टत्वासिद्धेःसर्वकर्मफलप्रदस्येश्वरस्यदुष्कर्मफलानिष्टकर्तृत्वेदोषाभावाच्चेति ॥ १३ ॥ आस्तिकानामयंलोकइवपरोपिलोकोस्ति अतःपरलोकार्थिनांतीर्थस्नानाग्निहोत्रादिइतरत्निष्फलंन ॥ एतादृशंनेषामेतत्भावितभावनंसत्यमेव ॥ १४ ॥ एतत्तद्भावनमपिसत्यमेव ॥ यत्रशून्यवादेतत्प्रमाणशून्येप्रमेयशून्यत्वकल्पनसंभवादितिभावः ॥ १५ ॥ सर्ववादिनांस्वस्वाभिलषितसिद्धावुपपत्तिमाह ॥ चितिरिति ॥ १६ ॥ एवंशून्याशून्यविलक्षणानिर्वचनीयतृतीयविधावादिनामपितत्स्वाभिमतमवस्त्वसत्यंन ॥

**एकःसर्वत्रकर्त्तेतिसत्यंतन्मयचेतसाम् ॥ सोयंनिश्चयवान्सोत्रतदाप्नोतीत्यबाधितम् ॥ १३ ॥ अयंलोकःपरश्चास्तिस्नानाग्न्यादिचनेतरत् ॥ एतदेतादृशंसत्यंविद्धिभावितभावनम् ॥ १४ ॥ अशेषंशून्यमेवेतिबौद्धानामेतदेवसत् ॥ लभ्यतेतद्विचारेणयत्रकिंचननैवहि ॥ १५ ॥ चितिश्चिंतामणिरिवकल्पद्रुमइवेप्सितम् ॥ आशुसंपादयत्यंतरात्मनात्मनिखात्मिका ॥ १६ ॥ नेदंशून्यंनचाशून्यमित्यवस्तुनतद्विदाम् ॥ सर्वशक्तिर्हिंसाशक्तिर्नतद्विद्यतएवतत् ॥ १७ ॥ तस्मात्स्वनिश्चयेयस्मिन्यःस्थितःसतथाततः ॥ अवश्यंफलमाप्नोतिनचेद्बाल्यान्निवर्त्तते ॥ १८ ॥ विचार्यपंडितैःसार्धंश्रेष्ठवस्तुनिधीमता ॥ सरूढोनिश्चयोग्राह्योनेतरत्रयथातथा ॥ १९ ॥ संभवत्युत्तमप्रज्ञःशास्त्रतोव्यवहारतः ॥ योयत्रनामतत्रासौपंडितस्तंसमाश्रयेत् ॥ २० ॥ सतांविवदमानानांसच्छास्त्रव्यवहारिणाम् ॥ यःसमाह्लादकोनिंद्यःसश्रेष्ठस्तंसमाश्रयेत् ॥ २१ ॥ सर्वएवानिशंश्रेयोधावंतिप्राणिनोबलात् ॥ परिनिम्नंपयांसीवतद्विचार्यसमाश्रयेत् ॥ २२ ॥ कल्लोलैरुह्यमानानांनृणांसंसारसागरे ॥ अज्ञातादिवसायांतितृणानामिवबिंदवः ॥ २३ ॥**

यतःसर्वशक्तेर्ब्रह्मणःसाअनिर्वचनीयामायाशक्तिः ॥ हियस्मात्तच्छून्यंन यद्विद्यतेब्रह्मतदेवचनउभयविलक्षणेत्यर्थः ॥ १७ ॥ बाल्यादविश्वासलक्षणाच्चापलाद्धेतोःपूर्वनिश्चयान्ननिवर्त्ततेचेदित्यर्थः ॥ अथवाबाल्यादज्ञानान्ननिवर्त्ततेचेत् ॥ तथाचयावदात्मज्ञानंनास्तितावदेवतत्तत्सिद्धांताःसत्याः आत्मज्ञानेतुआत्मैवसत्योनान्यदितिभावः ॥ १८ ॥ अतएवाविचाराद्यस्यकस्यचित्सिद्धांतोनग्राह्यइत्याह ॥ विचार्येति ॥ १९ ॥ पंडितश्रेष्ठलक्षणमाह ॥ संभवतीतिद्वाभ्याम् ॥ शास्त्रतःअध्ययनतः ॥ व्यवहारतःआचरणतः ॥ यत्रदेशे ॥ नामेतितस्यदौर्लभ्यान्वेष्यत्वद्योतनाय ॥ २० ॥ अनिंद्योनिंदायोग्यनिषिद्धाचरणहीनः ॥ २१ ॥ तर्हिंकिंनिश्चयांतरनिष्ठाविफलाएवनेत्याह ॥ सर्वएवेति ॥ श्रेयःस्वस्वनिश्चयानुरूपमभिलषितम् ॥ धावंतिप्राप्नुवंति ॥ तत्तेषुपरमपुरुषार्थसाधनंकिंस्यादितिविचार्यसच्छास्त्रसद्गुरूएवसमाश्रयेत् ॥ २२ ॥ तौचशीघ्रंसमाश्रयेन्नविलंबेन आयुषिविश्वासायोगादित्याशयेनाह ॥ कल्लोलैरिति ॥ कल्लोलैर्मनोरथपरंपरातरंगैः ॥ अज्ञाताःअलक्षिताः ॥ तृणानामग्रेलग्नाबिंदवइव ॥ २३ ॥

भोगतृष्णाप्राबल्यात्तद्विरक्तामुमुक्षवएवदुर्लभास्तेष्वपिपरमात्मतत्त्वसाक्षात्कारवंतस्त्वदुक्तलक्षणाःपंडितश्रेष्ठाअतिदुर्लभाइत्यमुमेवार्थंविस्तरेणश्रोतुकामोरामःपृच्छति॥ जगदिति ॥ विततेपदेब्रह्माकाशेजगद्विटपसहस्रवितानजालप्रसारपूर्वकमतिविस्तारेणविश्रांताप्राणिनांभोगतृष्णेतिशेषः ॥ एवंसतिपूर्वापरजगत्स्वरूपानर्थविचारेणसारासारविचारेणचभावःपरमार्थस्तद्दर्शिनःपरास्त्वदुक्तश्रेष्ठपंडिताःकेवास्युः ॥ तेअतिदुर्लभाइत्यर्थः ॥ २४ ॥ सत्यमतिदुर्लभास्तथापिदेवासुरमनुष्यगंधर्वादिजातिभेदेषुतेसंत्येवेतिप्रयत्नान्वेष्याइतिवसिष्ठउत्तरमाह ॥ जातौजाताविति ॥ तद्योयोदेवानांप्रत्यबुध्यतसएवतदभवत्तथर्षीणांतथामनुष्याणामित्यादिश्रुतिव्यपदेश्याभवंतिसंभवंत्येव ॥ २५ ॥ अन्येतुसर्वेमूढामोहमहांबुधौभोगतृष्णाकल्लोलैस्तृणवदुह्यंते ॥ २६ ॥ तदेवदेवादिजातिभेदेषुप्रपंचयति ॥ नष्टात्मस्थितयइत्यादिना ॥ दवेनवनहुताशनेन ॥ २७ ॥ दानवारिभिर्देवैर्नारायणलक्षणेअवटेमहागर्त्तेपातिताः ॥ २८ ॥ गंधंलेशमपि ॥ गीतलक्षणंयत्प्रीतंमदिरातद्वशात्परैररिषड्वर्गैराम्रश्यंतइतिपरामर्शाहरिणाइवमृत्युव्याधसंनिधिसरंतिगच्छं

श्रीरामउवाच॥ ॥जगत्पूर्वंलतेवापिविश्रांताविततेपदे॥ पूर्वापरविचारेणकेपराभावदर्शिनः॥ २४॥ ॥श्रीवसिष्ठउवाच॥ ॥जातौजातौकतिपयेव्यपदेश्याभवंतिते॥ येषांयांतिप्रकाशेनदिवसाभास्वतामिव॥ २५॥ अधश्चोर्ध्वंचधावंतश्चक्रावर्त्तविवर्त्तनैः॥ सर्वेतृणवदुह्यंतेमूढामोहभवांबुधौ॥ २६॥ नष्टात्मस्थितयोभोगवह्निषुप्रज्वलंत्यलम्॥ देवादिविद्वेनाद्रौदह्यमानाद्रुमाइव॥ २७॥ पातितामदसंपन्नादानवादानवारिभिः॥ गजाइवनिरालानाघोरेनारायणावटे॥ २८॥ नगंधमपिगंधर्वादर्शयंतिविवेकजम्॥ गीतपीतपरामर्शाःसरंतिहरिणाइव॥ २९॥ विद्याधराश्चविद्यानामाधारत्वेनमोहिताः॥ स्फुरितानामुदाराणामपिकुर्वंतिनादरम्॥ ३०॥ यक्षाविक्षोभितभुवोदक्षतामक्षताइव॥ दर्शयंत्यसहायेषुबालवृद्धातुरेषुच॥ ३१॥ दंतिनामिवमत्तानांरंहसाहरिणारिणा॥ कृतःकरिष्यसित्वंचराक्षसानांपरिक्षयम्॥ ३२॥ भृशंपिशाचाःपश्यंतिभूतभोजनचिंतया॥ धूमांधकारानिलयाज्वालयाहुतयोयथा॥ ३३॥ नागजालम्रणालानिमग्नानिधरणीतले॥ नगानामिवमूलानिजडानीवस्थितान्यलम्॥ ३४॥

ति ॥ २९ ॥ ब्रह्मविद्यायाअपिविद्यात्वात्तद्योग्यताबलेनस्फुरितानामप्युदाराणांविवेकानामादरंनकुर्वंति ॥ भोगसाधनविद्यास्वेवरमंतइत्यर्थः ॥३० ॥ भयज्वरोन्मादादिदोषोत्पादनेनविक्षोभिताभूर्जनावासोयैः ॥ स्वयमक्षताइवस्वदेहंस्थिरंमन्यमानाइतियावत् ॥ असहायेष्वेकाकिषुमणिमंत्रादिबलशून्येषुचबालादिषुस्वदक्षतांदर्शयंति ॥ ३१ ॥ राक्षसानांतुकामबलशौर्यादिनादंतिवन्मत्तानामरिणाशत्रुभूतेनहरिणासिंहभूतेनविष्णुनाप्राग्बहुशःपरिक्षयःकृतःअग्रेचत्वंकरिष्यसीतितत्प्रमादफलंतेषांप्रत्यक्षमेवेत्याह ॥ दंतिनामिति ॥ ३२ ॥ पिशाचानांतुसदाक्षुधातुरत्वात्प्राणिवधभोजनचिंतैवसदातिनकदाचिदपिविवेकप्रसक्तिरित्याह ॥ पिशाचाइति ॥ अज्ञानधूमांधकारस्याःनिलयक्रोधहिंसादिज्वालात्वसंपादिकयाभूतभोजनचिंतया ॥ यथाअग्नौपतिताआहुतयःसदैवसधूमज्वालयादंदह्यमानंस्वंपश्यंतितथापिशाचाअपीत्यर्थः ॥ ३३ ॥ एवंनागजातावपिविवेकोदुर्लभइत्याह ॥ नागजालेति ॥ धरणीतलेपाताले ॥ नगानांवृक्षाणांमूलानीवजडान्यचेतनानीवविवेकहीनानिस्थितानि ॥ ३४ ॥

॥ ३५ ॥ एवंबलवीर्यप्रभावादिसंपन्नानांदेवाद्यसुरांतानांविवेकदौर्लभ्येअन्येषांतत्किंवाच्यमित्याशयेनाह ॥ अल्पमात्रेत्यादि ॥ पुरुषामनुष्याः ॥ ३६ ॥ ३७॥ यथाजलेनिमज्जंतरजःशुष्कपांसुर्नस्पृशतितद्वत् ॥ ३८ ॥ मानोदेहाद्यभिमानस्तल्लक्षणैर्वायुभिःअक्रोधादिनियमेभ्यःआधूताश्चालिताःक्रोधादिवश्यतांनीयंते ॥ यथाकांपिकैःशूर्पकंपकर्तृभिःकृपीवलैर्धानास्फुटतासिद्ध्यर्थंखलेपुपूताउड्डायिताःकिरारुनिकरानिःसारधान्याभाससमूहावायुभिर्नीयंतेतद्वदित्यर्थः ॥ ३९ ॥ सुरारुधिरपानमांसादिभोजनलक्षणोजंबालःपंकोयस्मिंस्तथाविधेतामसधर्मफलभोगासक्तिलक्षणदुर्गंधपल्वलोद्गारेपतिताः ॥ अविवेकेनेत्यर्थः ॥ ४० ॥ एवंदेवादिजातिषुविवेकज्ञानदौर्लभ्यंप्रपंच्यतेषुयेप्रबुद्धास्ता

विवरंशरणंयेषांकीटानामिवभूतले॥ तेषामसुरबालानांविवेकेपुकथैवका ॥ ३५॥ अल्पमात्रकणार्थेनसंचरंतिदिवानिशम्॥ पिपीलिकासधर्माणःप्रायेणपुरुषाअपि ॥ ३६ ॥ सर्वासांभूतजातीनांव्यग्राणांव्यर्थदीर्घया ॥ क्षीवाणामिवगच्छंतिदिवसानिदुरीहया ॥३७॥ नकंचित्संस्पृशत्यंतर्विवेकोविमलोजनम्॥जलेगाधेनिपतितंनिमज्जंतंरजोयथा॥३८॥ नीयंतेनियमाधूतामानवामानवायुभिः॥ कांपिकैःस्फुटतापूताःकिरारुनिकराइव ॥ ३९॥ पानभोजनजंबालेगहनेयोगिनीगणाः ॥दुर्गंधपल्वलोद्गारेपतिताःपामराइव ॥ ४० ॥ केवलंयमचंद्रेंद्ररुद्रार्कवरुणानिलाः॥ जीवन्मुक्ताहरिब्रह्मगुरुशुक्रानलादयः ॥ ४१ ॥ प्रजापतीनांसप्तर्षिदक्षाद्याःकश्यपादयः॥ नारदाद्याःकुमाराद्याःसनकाद्याःसुरात्मजाः ॥४२॥ दानवानांहिरण्याक्षवलिप्रह्लादशंबराः॥ मयवृत्रांधनमुचिकेशिपुत्रमुरादयः॥ ४३ ॥ विभीषणाद्यारक्षस्सुप्रहस्तेंद्रजिदादयः॥शेषतक्षककर्कोटमहापद्मादयोहिषु॥४४॥ ब्रह्मविष्णिवद्रलोकेपुवास्तव्यामुक्तदेहिनः॥ मुक्तस्वभावास्तुषिताःसिद्धाःसाध्याश्चकेचन ॥ ४५॥ मानुषेषुचराजानोमुनयोब्राह्मणोत्तमाः॥ जीवन्मुक्ताःसंभवंतिविरलास्तुरघूद्वह॥४६॥भूतानिसंतिसकलानिबहूनिदिक्षुबोधान्वितानिविरलानिभवंतिकिंतु॥ वृक्षाभवंतिफलपल्लवजालयुक्ताःकल्पद्रुमास्तुविरलाःखलुसंभवंति॥४७॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ० विवेकिविरलत्ववर्णनंनामसप्तनवतितमःसर्गः॥ ९७॥

श्रीवसिष्ठउवाच॥ ॥विवेकिनोविरक्तायेविश्रांतायेपरेपदे॥ तेषांतनुत्वमायांतिलोभमोहादयोरयः॥ १ ॥

न्नरिगणितानिवकतिपयान्दर्शयति ॥ केवलमित्यादिना ॥४१॥४२ ॥ ४३ ॥ अहिषुनागेषु ॥ ४४ ॥ वसंतीतिवास्तव्याः॥ मुक्तदेहिनोजीवन्मुक्ताः ॥ तुषितादयोदेवयोनिभेदाः ॥ केचननतुसर्वे ॥ ४५ ॥ ४६ ॥ सर्वजातिष्वपिजीवन्मुक्ताःसंतिकिंतुतेविरलाइत्येतद्दृष्टांतेनोपपादयति ॥ भूतानीति ॥ स्पष्टम् ॥ ४७ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०सप्तनवतितमःसर्गः ॥ ९७ ॥ ॥ ७ ॥ ॥ लक्षणान्युपवर्ण्यंतेसतांतत्त्वविदामिह ॥ परीक्ष्योपेक्ष्यतद्दोषानूकर्त्तव्यश्चतदाश्रयः ॥ १ ॥ तनुत्वमल्पताम् ॥ तथाचलोभादिदोषाल्पतापितल्लक्षणंचेन्निर्दोषत्वंकिंवाच्यमितिभावः ॥ १ ॥

नाविशंतिक्वापिविषयेनाभिनिविशंते ॥ एवंनाहरंतिनसंगृह्णंतिभोग्यजातम् ॥ २ ॥ एवंपारलौकिककर्मस्वपिनात्यंतकायक्लेशावहेषुशुष्कवैदिकवद्धठात्क्लिश्यंतीत्याह ॥ नेति ॥ अस्तिपरलोकइतिमतिर्यस्यसआस्तिकः नास्तिसइतिमतिर्यस्यसनास्तिकस्तदन्यतरभावाभिमानप्रयुक्ताद्धठादित्यर्थः ॥ ३ ॥ कार्याणांकर्त्तुमुचितानांलौकिकवैदिककर्मणांपरस्परविरोधादनुष्ठानसंकटेअकार्येभ्योविवेचयितारःसंदेहनिर्णेतारः ॥ ४ ॥ नागराश्चतुराः ॥ सर्वैःसमःसाधारणआचारोयेषाम् ॥ ५ ॥ ६ ॥ सज्जनस्थितौसदाचारे ॥ अनावरणमुपदेशेनहृदयकोशोद्घाटनंतत्प्रयुक्तैर्ज्ञानोदयसौगंध्यैःपरैःआस्पदैःआश्रयदानैःसुखरशनैरन्नैश्च आगतमर्थिनंपूजयंतीतिपरेणान्वयः ॥ ७ ॥ पद्मपक्षेअनावरणेत्यादिस्पष्टम् ॥ आवर्जयंतिगुणैर्वशीकुर्वंति ॥ ८ ॥ शीतलमास्पदमुद्यानादितद्वत्स्निग्धाः ॥ भूभृतांराज्ञांभंगकरंदेशभंगदंचआकुलंदुर्भिक्षमारीपरचक्रादिप्रयुक्तंजनक्षोभंतपःप्रभाव

नहृष्यंतिनकुप्यंतिनाविशंत्याहरंतिच ॥ उद्विजंतेपिनोलोकाल्लोकान्नोद्वेजयंतिच ॥ २ ॥ ननास्तिक्यान्नचास्तिक्यात्कष्टानुष्ठानवैदिकाः ॥
मनोज्ञमधुराचाराःप्रियपेशलवादिनः ॥ ३ ॥ संगादाह्लादयंत्यंतःशशांककिरणाइव ॥ विवेचितारःकार्याणांनिर्णेतारःक्षणादपि ॥ ४ ॥
अनुद्वेगकराचाराबांधवानागराइव ॥ बहिःसर्वसमाचाराअंतःसर्वार्थशीतलाः ॥ ५ ॥ शास्त्रार्थरसिकास्तज्ज्ञाज्ञातलोकपरावराः ॥ हेयोपादेयवेत्तारोयथाप्राप्ताभिपातिनः ॥ ६ ॥ विरुद्धकार्यविरतारसिकाःसज्जनस्थितौ ॥ अनावरणसौगंध्यैःपरास्पदसुखाशनैः ॥ ७ ॥
पूजयंत्यागतंफुल्लाभृंगंपद्माइवार्थिनम् ॥ आवर्जयंतिजनतांजनतापापहारिणः ॥ ८ ॥ शीतलास्पदवत्स्निग्धाःप्रावृषीवपयोधराः ॥
भूभृद्भंगकरंधीरादेशभंगदमाकुलम् ॥ ९ ॥ रोधयंत्यागतंक्षोभंभूकंपमिवपर्वताः ॥ उत्साहयंतिविपदिसुखयंतिचसंपदि ॥ १० ॥ चंद्रबिंबोपमाकारादाराइवगुणाकराः ॥ यशःपुष्पामलदिशोभाविसत्फलहेतवः ॥ ११ ॥ पुंस्कोकिलसमालापामाधवाइवसाधवः ॥ कल्लोलबहुलावर्त्तंव्यामोहमकरालयम् ॥ १२ ॥ लुठंतमिवहेमंतंलोडयंतंजनास्पदम् ॥ वीचिविक्षोभचपलंपरचित्तमहार्णवम् ॥ १३ ॥
तद्वरोधयितुंशक्तास्तटस्थाःसाधुपर्वताः ॥ आपत्सुबुद्धिनाशेषुकल्लोलेष्वाकुलेषुच ॥ १४ ॥ संकटेषुदुरंतेषुसंतएवगतिःसताम् ॥ एभिश्चिह्नैरथान्यैश्चज्ञात्वातानुचिताशयान् ॥ १५ ॥

सत्कर्मानुष्ठापनसामाद्युपायैःरोधयंतिविष्टभ्यनिवारयंतीतिपरेणान्वयः ॥ ९ ॥ १० ॥ रूपमाधुर्यप्रेमादिगुणाकरादाराःपतिव्रताइव ॥ यशइत्यादिविशेषणैःसाधूनृवसंतत्वेनोत्प्रेक्षते ॥ ११ ॥ माधवावसंताः ॥ कल्लोलेत्यादीनिपरचित्तमहार्णवविशेषणानि ॥ १२ ॥ पद्माकरेषुअतिशिशिरनरपवनविक्षिप्ततरंगच्छलेनलुठंतंहेमंतमिवजनास्पदंजनपदंभृंगहंसादिजनास्पदंपद्मवनंचलोडयंतम् ॥ वीचयःषड्र्मयस्तद्विक्षोभैश्चपलंतत्प्रसिद्धलोभद्वेषादिमोहितम् ॥ चोप्यर्थे ॥ ईदृशमपिपरेषांराजादीनांचित्तमहार्णवंसामदानादिनाविवेकोपदेशैश्चरोधयितुंशक्ताः ॥ १३ ॥ तटस्थाउदासीनावेलासन्निहिताश्च ॥ साधुपर्वताइतिरूपकंनोपमितसमासः ॥ सामान्यधर्माणांप्रयोगात् ॥ अतएवसतांविवेकिनामापदादिषुप्राप्तेषुसंतएवगतिः कल्लोलेषुअशनायापिपासाशोकमोहजरामृत्युलक्षणषड्र्मिषु ॥ आकुलेषुदेशविड्वरादिषुच ॥ १४ ॥ एभिरिदानीमुक्तैः ॥ अथशब्दचशब्दौसमुच्चये ॥ अन्यैःप्रागुक्तैश्च ॥ १५ ॥

169

एकस्मिन्नद्वयेब्रह्मणिविश्रांत्यै ॥ उरगभीषणःसागरउरगसागरः ॥ १६ ॥ १७ ॥ कल्कंप्रमादम् ॥ उक्तगुणानांमध्येएकोपिगुणोयस्यविद्यतेतमपितावन्मात्रमुद्दिश्यसर्वकार्यांतरमुत्सृजन्सन्अनादृतान्यतद्दोषंयथास्यात्तथाआश्रयेदितिपरेणान्वयः ॥ १८ ॥ १९ ॥ २० ॥ स्थूलादोषायस्यतथाविधंत्वनिर्वाणंपूर्वपरिजनंशनैःपरिहरेत्त्यजेत् ॥ तदपरिहारेकेदोषास्तानाह ॥ यातीति ॥ रम्यंशोधितमपिचित्तमरम्यत्वंरागादिकलुषतांयाति ॥ स्थिरमपिविश्रांतिसुखंविच्छेदादस्थिरतांयाति ॥ २१ ॥ कुतएतन्मन्यसेइतिचेल्लोकेतथैवदर्शनादित्याह ॥ यथेति ॥ अस्त्वेवंततोपिकोदोषस्तत्राह ॥ एषइति ॥ उत्पातोजगदनिष्टसूचकः ॥ २२ ॥ पापैर्जनानांदुरदृष्टैः ॥ दृश्यतेयथाविश्वामित्रस्यलुब्धामात्यादिसंगाद्वसिष्ठकामधेनुहरणेप्रवृत्तिस्तयाचपरस्परवैरवृद्ध्याबहुतरमाडीबकयुद्धांतंजगदनिष्टम् ॥ एवंकश्यपविश्रवःप्रभृतीनांभार्यासंगत्याजगदनिष्टनिमित्तदैत्यराक्षसाद्युत्पादनेप्रवृत्तिरपिदेशकालवशाद्धूमकेत्वादिप्रसिद्धमहोत्पातवद्दृश्यतइत्यर्थः ॥ उक्तमनूद्योपसंहरति ॥ सर्वेति ॥२३॥ सचसज्जनसमागमोगुणार्जनक्रमेणज्ञानप्रतिष्ठासिद्धिपर्यंतंन

आश्रयेत्तैकविश्रांत्यैश्रांतःसंसारवर्त्मना ॥ यस्मादत्यंतविषमःसंसारोरगसागरः ॥१६॥ विनासत्संगमन्येनपोतकेननतीर्यते ॥ आस्तां किंमेविचारेणयद्भवेदस्तुतन्मम ॥ १७ ॥ इत्यंतःकल्कमासाद्यनस्थेयंगर्त्तकीटवत् ॥ एकोपिविद्यतेयस्यगुणस्तंसर्वमुत्सृजन् ॥ १८ ॥ अनादृतान्यतद्दोषंतावन्मात्रंसमाश्रयेत् ॥ गुणान्दोषांश्चविज्ञातुमाबाल्यात्स्वप्रयत्नतः ॥ १९ ॥ यथासंभवसत्संगशास्त्रैःप्राग्धियमेधयेत् ॥ दोषलेशमनादृत्यनित्यंसेवेतसज्जनम् ॥ २० ॥ स्थूलदोषंत्वनिर्वाणंशनैःपरिहरेत्क्रमात् ॥ यातिरम्यमरम्यत्वंस्थिरमस्थिरतामपि ॥ २१ ॥ यथादृष्टंतथामन्येयातिसाधुरसाधुताम् ॥ एषसोत्यंतउत्पातोयःसाधुर्यातिदुष्टताम् ॥ २२ ॥ देशकालवशात्पापैर्महोत्पातोपिदृश्यते ॥ सर्वकर्माणिसंत्यज्यकुर्यात्सज्जनसंगमम् ॥ एतत्कर्मनिराबाधंलोकद्वितयसाधनम् ॥ २३ ॥ नसज्जनाद्दूरतरःक्वचिद्भवेद्भजेत साधून्विनयक्रियान्वितः ॥ स्पृशंत्ययत्नेनहितत्समीपगंविसारिणस्तद्गतपुष्परेणवः ॥२४॥ ॥इ०वा०म०वा०दे०मो०नि०उ०सज्जनसमागमप्रशंसानामाष्टनवतितमःसर्गः ॥९८॥ ॥छ॥ ॥श्रीरामउवाच ॥ ॥ संतिदुःखक्षयेऽस्माकंशास्त्रसत्संगयुक्तयः ॥ मंत्रौषधितपोदानतीर्थपुण्याश्रमाश्रयाः ॥ १ ॥ कृमिकीटपतंगाद्यास्तिर्यक्स्थावरजातयः ॥ कथंस्थिताःकिमारंभास्तेषांदुःखक्षयःकथम् ॥ २॥

विच्छेदनीयइत्याह ॥ नेति ॥ क्वचिदपिकालेसज्जनाद्दूरोदूरतरोनभवेत् ॥ विनयसेवादिक्रियान्वितःसन्सदैवभजेतकिंततस्तत्राह ॥ स्पृशंतीति ॥ तेषांसाधूनांसमीपगमेनमयत्नेनैवविसारिणस्तेषांशांतिदांत्यादिगुणलक्षणाःपुष्परेणवःसौगंध्यविशेषाअधिवासनमिश्रीकृततिलानिवस्पृशंतिअवश्यंसंक्रामंतीत्यर्थः ॥ २४ ॥ ॥ इ०वा०म०तात्पर्यप्र०नि०उ०अष्टनवतितमःसर्गः ॥ ९८ ॥ ॥ छ ॥ ॥ कृमिकीटपतंगानांतिर्यक्स्थावरजन्मनाम् ॥ संसारेयादृशोभोगस्तत्सर्वमिहवर्ण्यते ॥ १ ॥ कृमिकीटपतंगादीनामतिमूढजंतूनांतात्कालिकदुःखोपशमोपायाभावेजीवनमेवदुर्लभम् उपायंचतेज्ञातुंनशक्नुवंति तथासतिकथंजीवंतीतितेषांसंसरणस्थितिंजातिप्रसंगाज्जिज्ञासमानोरामःपृच्छति ॥ संतीत्यादिना ॥ अस्माकंमनुष्यजातीनामैहिकामुष्मिकदुःखक्षयेशास्त्रादयउपायाःसंति ॥ येकृम्यादयस्तेषांदुःखक्षयःकथंकेनोपायेनतदभावेचतेकथंस्थिताजीवंतीत्यन्वयः ॥१॥२॥

आत्मोचितायांतत्तद्योग्यभोगोचितायांसुखसत्तायाम् ॥ तथाचतत्तद्योनिभोग्यविषयसुखलवएवतेषांमहान्पुरुषार्थइवभातितावन्मात्रेणविश्रांतास्तदाशयैवबहुतरदुःखान्य पिसहमानाजीवंतीत्यर्थः ॥३॥ एषणाःस्वस्वयोन्युचितसुखभोगेच्छाःसंतीतिशेषः॥किंतुवयंतेपुभोगेष्वल्पास्थाअल्पविघ्नाश्च ॥ तेषांतुमोहकामादिदोषप्राबल्याद्विवेकाभावाच्च बद्धाआस्थाअचलसन्निभामहांतोबहवश्चविघ्नाः ॥४॥ भोगेषुबद्धास्थाइतिकुतोज्ञायतेइतिचेत्प्रयत्नाधिक्यलिंगादित्याशयेनाह ॥ यथेति ॥ विराट्ब्रह्मांडशरीरोजीवोयथास्वा धिकारनिर्वाहचेष्टाभिःस्वभोगायप्रयततेतथावालानांकेशानांखिलैरपभागैःसंमितदेहाःकृमिकीटमशकमत्कुणादयोपितथैववालमुष्टिच्छिद्रापेक्षयाअल्पकायेपिखेस्वावका शेप्रयतंते ॥ ५ ॥ खगाःप्रागुक्ताआकाशपक्षिणः ॥ स्वास्थ्यंस्थैर्यंप्रयत्नविच्छित्तिरितियावत् ॥ ६ ॥ पिपीलिकादीनांकणाद्यर्जनप्रयत्नबाहुल्यदर्शनादपितेषांभोगास्थाबाहु

॥श्रीवसिष्ठउवाच॥ ॥सर्वाण्येवेहभूतानिस्थावराणिचराणिच॥ आत्मोचितायांसत्तायांविश्रांतानिस्थितान्यलम्॥ ३॥ भूतानाम णुमात्राणामप्यस्माकमिवैषणाः॥ किंत्वल्पास्थावयंविघ्नास्तेषांत्वचलसन्निभाः॥४॥ यथाविराट्प्रयततेवालखिल्यास्तथैवखे॥बाल मुष्ट्यल्पकायेपिपश्याहंकृतिजृंभितम्॥ ५॥ जायंतेचम्रियंतेचनिराधारेंवरेखगाः ॥ शून्यैकविषयास्तेषांस्वास्थ्यंनभवतिक्षणम्॥ ६॥ पिपीलिकायाश्चेष्टाभिर्ग्रासावासात्मबंधुभिः॥ अस्मद्दिवसकल्पोपिनपर्याप्तःक्षणोयथा॥ ७॥ त्रसरेणुप्रमाणात्माकृम्यणुस्तिमिना मकः॥ गमनेव्यग्रतातस्यगरुडस्येवलक्ष्यते॥ ८॥ अयंसोहमिदंतन्मइत्याकल्पितकल्पनम्॥ जगद्यथानृणांस्फारंतथैवोच्चैर्गुणैःकृमेः ॥ ९॥ देशकालक्रियाद्रव्यव्यग्रयाजर्जरीकृतम्॥ क्षीयतेव्रणकीटानामस्माकमिवजीवितम्॥ १०॥ पादपाःकिंचिदुन्निद्राघननिद्राः खलूपलाः॥ कृमिकीटादयःकार्येनरवत्स्वप्नबोधिनः॥ ११॥शरीरनाशएवैषांसुखंसंप्रतिदुःखकृत्॥ अस्माकमिवतेषांतज्जीवितंतु सुखायते॥ १२ ॥ जनोद्वीपांतरंयाद्दृग्विक्रीतःपरिपश्यति ॥ पदार्थजालंपश्यंतितादृक्पशुमृगादयः॥ १३॥ अस्माकमिवसंसारस्तिर श्चांसुखदुःखदः॥ पदार्थप्रविभागेनकेवलंतेविवर्जिताः॥ १४॥

ल्यमनुमीयतइत्याशयेनाह ॥ पिपीलिकायाइति ॥ ग्रासावासपदाभ्यांतत्संपादनप्रयत्नाल्लक्ष्यंते ॥ आत्मबंधुपदेनचकुटुंबपोषणप्रयत्नः ॥ अस्मद्दिवसकल्पोपिदीर्घःकालस्ता सांकणार्जनादिप्रयत्नेक्षणवन्नपर्याप्तोनालमित्यर्थः ॥ ७ ॥ तिमिनामकःकृम्यणुरणुतमःकृमिरस्ति ॥ ८ ॥ देहेतद्भोग्येषुचाहंममतालक्षणाध्यासश्चनृणांकृमेश्चसमानइत्या ह ॥ अयमिति ॥ उच्चैर्गुणैर्गुणातिशयैःस्फारंबहुतरास्थायोग्यंतथैवकृमेरपि ॥ ९ ॥ विषयास्थयाव्यर्थमायुषःक्षयोपिकीटादीनामस्माकंचसमानइत्याह ॥ देशेति ॥ १० ॥ किंचिदुन्निद्राईषज्जागरूकाः ॥ कार्येस्वस्वोचितविषयभोगेस्वप्नश्चबोधोजागरश्चयेषांतइतिस्वप्नबोधिनः ॥ ११ ॥ एषांकृमिकीटस्थावराणांसंप्रतिशरीरकालेसुखंस्थिता नामस्माकमिवशरीरनाशएवदुःखकृत् ॥ तज्जीवनंशरीरेप्राणावस्थानम् ॥ १२ ॥ अस्मद्भोग्यगृहप्रासादधनरत्नादिकंतेकथंपश्यंतितदाह ॥ जनइति ॥ स्वाभोग्यंपदार्थजा लमुदासीनतयासंमुग्धदृशापश्यंतीत्यर्थः ॥ १३ ॥ पदार्थानामुत्कर्षापकर्षादिबुद्धिहेतुनागुणक्रियोपयोगादिप्रविभागेन ॥ १४ ॥

170

विक्रीतजनसाम्यंपशूनामुपपादयति ॥ हृदयादिति ॥ पशवोहिबलीवर्दादयोनाथहरयोर्हृदयान्मनसःसकाशादंतःसुखदुःखाभ्यांपरिकृष्यंते ॥ नासातोनासिकाप्रदेशाच्चनाथ नरशनागुणैर्बहिःपरिकृष्यंते ॥ एवमुभयतःपराधीनतयाकृष्यमाणाअपिकिंचिदपिस्वदुःखंपरिहर्तुंनिवेदयितुंवानशक्नुवंतितथाद्वीपांतरेविक्रीताःपामराअपीतितयोःसाम्यमित्यर्थः ॥ १५ ॥ वृक्षादीनांसुखदुःखानुभवप्रकारमप्यस्मदनुभवानुकूल्येनोपपादयति ॥ सुप्तानामिति ॥ स्पष्टसुत्वचांसुकुमारत्वचांसुप्तानांनिद्रापरवशचेतसामस्माकंवह्नतरशीतोष्णमशकमत्कुणादिभिर्बाध्यमानानामसुखनिद्रायांयादृकूउद्दामंदुःखवेदनंतादृगित्यर्थः ॥ अंकुरग्रहणंसौकुमार्यात्तत्रकृमिकीटादिदंशनेदुःखातिशयद्योतनार्थम् ॥ १६ ॥ तिरश्चांपदार्थप्रविभागेनविवर्जितंवेदनंयदुक्तंतदप्युपपादनेनानुभवमारोहयति ॥ यादृगिति ॥ ईतिर्देशक्षोभपलायनेनधावनादिगतिस्तदर्थेकुशकंटकतप्तवालुकाक्रमणभारोद्वहनादिक्रमसंसारेपतनशीलानामस्माकंयादृशंसर्वतोभयाशंकिपदार्थवेदनंतादृकूपक्षिसर्पादितिरश्चामपिसदेत्यर्थः ॥ १७ ॥ विकल्पविद्भिर्विक्षेपानुभवैर्मुक्तंचेत्आह्लादमात्रेसामान्यभूतेस्वरूपानंदेसुखतःआहारनिद्रामैथुनादिसुखेषुचइंद्रस्यकीटस्यचसौम्यत्वंमनःप्रसादलक्षणंसमम् ॥ विकल्पोविक्षेपएवतुद्वयोरप्यनतिक्रमोदुरतिक्रमइत्यर्थः ॥ १८ ॥

हृदयात्सुखदुःखाभ्यांनासातोरशनागुणैः ॥ पशवःपरिकृष्यंतेविक्रीताःपामराअपि ॥ १५ ॥ सुप्तानांयादृगस्माकंवेदनंस्पष्टसुत्वचाम् ॥ वृक्षगुल्मांकुरादीनांतादृगुद्दामवेदनम् ॥ १६ ॥ यादृगस्माकमीत्यर्थंक्रमसंसारपातिनाम् ॥ पदार्थवेदनंतादृक्तिरश्चांभ्रांतमभ्रमम् ॥ १७ ॥ आह्लादमात्रसौम्यत्वंसुखतश्चेंद्रकीटयोः ॥ समंविकल्पविन्मुक्तंविकल्पस्त्वनतिक्रमः ॥ १८ ॥ रागद्वेषभयाहारमैथुनोत्थंसुखासुखम् ॥ तिरश्चांजन्ममृत्यादिखेदःकश्चिन्नभिद्यते ॥ १९ ॥ ऋतेपदार्थभूतार्थभविष्यद्वस्तुबोधतः ॥ शेषंबभ्रुवहिगोमायुगजादीनांनृभिःसमम् ॥ २० ॥ निद्रामयानांवृक्षाणांस्वसत्तामचलादयः ॥ स्थिताअनुभवंतोन्येचिदाकाशमखंडितम् ॥ २१ ॥ आपीननिद्रावृक्षाद्याःस्वसत्तास्थास्तथाद्रयः ॥ जंगमानिचिदाकाशंनामकिंचित्कदाचन ॥ २२ ॥ अखंडचित्ताशैलादिसत्तानिद्राचभूरुहाम् ॥ द्वैतोपलंभमुक्तत्वात्खमेवैकमतोजगत् ॥ २३ ॥

तिरश्चांइंद्रस्यचेतिशेषः ॥ नभिद्यतेनविशिष्यते ॥ १९ ॥ पदार्थाःशास्त्रगम्याःपुण्यपापब्रह्मतत्त्वादयः भूतार्थाअतीतपदार्थाःभविष्यद्वस्तूनिभाविकृषिफलादिपदार्थाएतेषांबोधतःऋतेएतद्बोधान्विहायशेषंज्ञानंबभ्रुर्नकुलःअहिःसर्पःगोमायुःसृगालःगजादिश्चयेपशवस्तेषांसर्वेषांनृभिःसमंतुल्यमित्यर्थः ॥ २० ॥ पर्वतादयस्तर्हिकथमनुभवंतितत्राह ॥ निद्रेति ॥ निद्राप्रचुराणांसुषुप्तस्थानांवृक्षाणांयागाढमूढतयास्वसत्तातांअचलाःपाषाणादयोऽनुभवंतःस्थिताअन्येहिमवन्मेर्वादयस्तत्त्वज्ञपर्वतास्त्वखंडितंचिदाकाशमनुभवंतःसदासमाधौस्थिताइत्यर्थः ॥ २१ ॥ इत्थंचनवृक्षादिजीवदृशाजगत्कल्पनातेषामापीननिद्रत्वात् नाप्यद्र्यादिजीवजातिदृशातेषांस्वसत्तास्थत्वात् जंगमजातिष्वपिनतत्त्वज्ञदृशातेषांचिदाकाशमात्रत्वात्किंतुकतिपयाज्ञजंगमजातिदृशासाचदृष्टिर्नबहुतरदृष्टिविरुद्धांजगत्सत्तांसाधयितुंक्षमतइत्याशयेनाह ॥आपीनेति ॥ यानिजंगमानिजीवजातानितान्यसुषुप्तिमरणमूर्छामोक्षाद्यवस्थासुचिदाकाशमेवनाम॥तत्रकेषांचित्कदाचनस्वप्नेअर्द्धविकासेनजागरेसर्वविकासेनभासमानंकिंचिज्जगद्बहुतरदृष्ट्यनुरोधाच्चिदाकाशमेवेतियुक्तमित्यर्थः ॥ २२ ॥ तत्रयाशैलादिसत्तायाचभूरुहांनिद्रासाद्वैतोपलंभमुक्तत्वात्खमेवअतस्तद्दृशाजगदेकमज्ञानोपहितचिन्मात्रमेव ॥ २३ ॥

अन्यदृशापिस्वतत्त्वंयावदपरिज्ञानसंयुतंतावदेवजगत् ॥ परिज्ञातंतुनत्वंनाहंनाप्यस्तिनास्तीसत्तासत्तेनापिभविष्यतीतिकचित्कोटौव्यवतिष्ठतइत्यर्थः ॥ २४ ॥ एवमव्यवस्थित्याजगद्भावनिरासेब्रह्मैवपरिशिष्टमितिदर्शयति ॥ यथास्थितमिति ॥ अज्ञदृशासनिद्रकंनिद्रयेवस्वात्मन्येवजगद्वैचित्र्यंकल्पयदित्यर्थः ॥ २५ ॥ परमार्थतस्तुसदैवैकरूपमित्याह ॥ पूर्वमिति ॥ अधुनावर्त्तमानकालेतथैवास्ति अनंतकालमग्रेचतथैवभविष्यतीत्यन्वयः ॥ २६ ॥ तस्यचआत्मत्वादयोपिविशेषाव्यावर्त्याभावान्नसंतिकिंपुनरन्येइ

परिज्ञातंजगद्यावदपरिज्ञानसंयुतम् ॥ नत्वंनाहंनचैवास्तिनास्तीनचभविष्यति ॥ २४ ॥ यथास्थितंसदैवेदंमौनमेवशिलाघनम् ॥ अनाद्यंतमविच्छिद्रमनिद्रंचसनिद्रकम् ॥ २५ ॥ पूर्वंसर्गाद्यथैवासीत्तथैवैकंसमस्थितम् ॥ भविष्यत्यधुनानंतंकालमेवंतथैवच ॥ २६ ॥ नैवात्मतानपरतानजगत्तानशून्यता ॥ नमौनतानमौनित्वंकिंचिन्नेहोपपद्यते ॥ २७ ॥ त्वंयथास्थितमेवास्वयथास्थितमहंस्थितः ॥ सुखासुखेपराकाशेशांतेनेहास्तिकिंचन ॥ २८ ॥ परमाकाशतांमुक्त्वाकिंस्वप्ननगरेवद ॥ विद्यतेकिलतच्छांतंचिद्व्योमाच्छमनामयम् ॥ २९ ॥ अपरिज्ञप्तिरेवैकातत्रसंभ्रमकारिणी ॥ परिज्ञातमिदंयावद्विद्यतेसापिनक्वचित् ॥ ३० ॥ परिज्ञातेजगत्स्वप्नेयावत्सत्यंनकिंचन ॥ ग्रहस्तदेनंप्रतिकिंस्नेहोवंध्यासुतेतुकः ॥ ३१ ॥ स्वप्नकालेपरिज्ञातेजगत्स्वप्नमणावणौ ॥ किमुपादेयताकास्थाप्रबोधेसौनकिंचन ॥ ३२ ॥ यन्नकिंचित्प्रबोधोस्तिनाप्रबोधोस्तितत्क्वचित् ॥ यस्तूपलंभस्तत्कालेपूर्वावस्थैवसातथा ॥ ३३ ॥ विद्यतेवर्त्तमानत्वंभविष्यद्भूततातथा ॥ बोधाबोधश्चनोसत्यंवस्तुशांतंकिलाखिलम् ॥ ३४ ॥ यथोर्मिणोर्मौनिहतेनकाचित्पयसांक्षतिः ॥ तथादेहेननिहतेदेहेनास्तिचितेःक्षतिः ॥ ३५ ॥ चितावाकाशएवाहंदेहइत्युपजायते ॥ संविदेवततोदेहेनष्टेकिंनामनश्यति ॥ ३६ ॥ प्रबुद्धस्यैवचिद्व्योम्नःस्वप्नोजगदितिस्थितम् ॥ पृथ्व्यादिरहितंयस्मात्तस्मात्स्वप्नात्मकंजगत् ॥ ३७ ॥ सर्गादौपूर्वचित्स्वप्नाज्ज्ञातापृथ्व्यादिवस्तुधीः ॥ स्वप्नार्थेसत्यताभ्रांतिःकल्पनामात्ररूपिणी ॥ ३८ ॥

त्याह ॥ नैवेति ॥ २७ ॥ २८ ॥ २९ ॥ साअपरिज्ञप्तिरपिपरिज्ञातमितिहेतोर्नविद्यते ॥ ३० ॥ एवंजगत्स्वप्नंप्रतिकिकिमर्थंग्रहःअभिनिवेशः ॥ ३१ ॥ अणौअणौसंभाव्यनइतिशेषः ॥ ३२ ॥ प्रबोधकालेअसदप्यप्रबोधकालेसदस्तुतत्राह ॥ यदिति ॥ पूर्वावस्थाअज्ञैवसातथातदुपलंभात्मनाप्रथतेइत्यर्थः ॥ ३३ ॥ तर्हिकालत्रयमज्ञानंतज्ज्ञानंचकिंसत्यंनेत्याह ॥ विद्यतेइति ॥ ३४ ॥ तथाचमिथ्याभूतेदेहादौमिथ्याभूतैःशत्रुभिर्हतेपिनतदुभयाधिष्ठानात्मनःक्षतिरित्याह ॥ यथेति ॥ ३५ ॥ आकाशभूतायांचितावेवदेहइतिभ्रांतिसंविदेवउपजायते ॥ तथाचभ्रांतिसंविद्रूपेदेहेनष्टेकिंनामनश्यति ॥ ३६ ॥ ३७ ॥ पूर्वपूर्वचित्स्वप्नसंस्कारान् ॥ ३८ ॥

१७।

एवंपूर्वात्पूर्वतरस्यानादिप्रवाहरूपस्यस्वप्नस्याऽवयवस्थितौइदानींतन्यामसत्यरूपायामेवसत्येवकलनामूढैःकृता ॥ ३९ ॥ तत्परमार्थसत्यंत्वत्यंतनिर्मलंनजाड्यकलुषमित्यर्थः ॥ ४० ॥ असत्यरूपायांसत्येवकलनाकृतेतिइवकारेणोपमित्वातेनभ्रांतिकलनायांसत्यार्थकलनासादृश्यंदर्शितम् तच्चसत्सुप्राक्सत्यार्थेपुतदनुभवेसांप्रतंचतत्स्मर्त्तरियुज्यतेनान्यथेत्याशंक्याह ॥ वस्तुनइति ॥ तत्सत्यरूपंपृथ्व्यादिकिंचित्प्रागपिनचसंस्थितम् एवंचतदनुभवस्यात्यंताप्रसिद्धौस्मर्त्ताअस्मर्ता विस्मर्तावाकिमात्मकः ॥ ४१ ॥ तर्हसत्येअत्यंताप्रसिद्धसत्यतायाःसादृश्यस्यचकिंप्रतिबोधकमितिचेत्स्वप्रकाशसत्यस्वरूपाऽपरिज्ञानमेवेत्याह ॥ एवंमात्रेति ॥यथार्थभूतचिद्ब्रह्ममात्रगोचरमपरिज्ञानमज्ञानमेवजगतिसत्यताप्रतिबोधकम् ॥ अतएवतत्त्वपरिज्ञानमेवाज्ञानावरणकवाटस्यजगत्सत्यताभ्रांत्यादिविक्षेपकपाटस्यचप्रविघाटनमपावरणमित्यर्थः ॥ ४२ ॥ सकार्याज्ञानबाधेचिन्मात्रपारिशेष्यात्तत्परिशिष्टंचिन्मात्रंशिवमेव ॥ ४३ ॥ बाह्यार्द्बिबान्निमित्तार्द्बिबंप्रतिबिंबम् ॥ अबिंबात्विनैवबाह्यंबिंबमितिमुकुरापेक्षयाविशेषः ॥ ४४ ॥ कस्तर्हिमुकुरदृष्टांते

पूर्वात्पूर्वतरस्यास्यस्वप्नस्यावयवस्थितौ ॥ सत्येवासत्यरूपायांपृथ्व्यादिकलनाकृता ॥ ३९ ॥ साचभ्रांतिस्तथारूढायथासत्यैवसत्यताम् ॥ परमामागतातत्तुसत्यमत्यंतनिर्मलम् ॥ ४० ॥ वस्तुतस्तुयथाभूतंचिद्ब्रह्मैवाततंस्थितम् ॥ नचतत्संस्थितंकिंचित्स्मर्त्तास्मर्त्ताकिमात्मकः ॥ ४१ ॥ एवंमात्रापरिज्ञानमेवात्रप्रतिबोधकम् ॥ अत्रैवतुपरिज्ञानंकवाटप्रविघाटनम् ॥ ४२ ॥ पारिशेष्यान्नपृथ्व्यादिकिंचित्संभवतिक्वचित् ॥ योद्रष्टायच्चवादृश्यंविमलंशिवमेवतत् ॥ ४३ ॥ मुकुरेंतर्यथाबिंबाद्बिंबंभातिजगत्तथा ॥ चिद्व्योमनिस्वतोभातमबिंबादेवबिंबितम् ॥ ४४ ॥ मुकुरेंतर्यथाबिंबंनदृष्टमपिकिंचन ॥ तथाचिद्व्योमगंविश्वंनदृष्टमपिकिंचन ॥ ४५ ॥ लभ्यतेयद्विचारेणयत्सकारणकंस्थितम् ॥ तत्सच्छेषंतुभामात्रमभूतंसत्कथंभवेत् ॥ ४६ ॥ भवेद्भ्रमात्मकमपिकिंचिदर्थक्रियाकरम् ॥ स्वप्नांगनापिकुरुतेसत्यामर्थक्रियांनृणाम् ॥ ४७ ॥ यत्तद्भानंतुसाचिद्भापरमंतच्चिदंबरम् ॥ इतिकाहंकविश्वश्रीःक्वत्वंदृश्यदृशश्चकाः ॥ ४८ ॥ मृत्वापुनर्भवनमस्तिकिमंगनष्टंमृत्वानचेद्भवनमस्तितथापिशांतिः ॥ विज्ञानदृष्टिवशतोस्त्यथचेद्विमोक्षस्तन्नेहकिंचिदपिदुःखमुदारबुद्धेः ॥ ४९ ॥ मूर्खस्ययादृशमिदंतुतदज्ञएवजानात्यसौनहिवयंकिलतत्रतज्ज्ञाः ॥ मत्स्योहियोमृगनदीसलिलेसएवजानातितच्चपलवीचिविवर्त्तनानि ॥ ५० ॥

विवक्षितांशस्तमाह ॥ मुकुरेइति ॥ ४५ ॥ विचारेणशास्त्रीयविचारेण ॥ सकारणकंसप्रमाणकंतदेवसत्परमार्थसत्यम् ॥ शेषमितरत्तुभामात्रंप्रतिभामात्रंकालत्रयेप्यभूतम् ॥ ४६ ॥ असच्चेत्कथंव्यवहारार्थक्रियाक्षमंजगत्तत्राह ॥ भवेदिति ॥ सत्यांस्वाधिकसत्ताकांचरमधातुविसर्जनलक्षणामर्थक्रियाम् ॥ ४७ ॥ अहमादिविश्वश्रीर्हिभासमानासिद्धानान्यथा ॥ तत्रयत्तद्भानंसाचिद्भाआत्मस्वरूपचित्प्रकाशएवनान्या ॥ तद्भानव्यावर्त्तकंदृश्यरूपंतुभानात्पृथक्कारेशून्यत्वाज्ज्ञानात्मकत्वेतद्व्यावर्त्तकत्वायोगाच्चिदंबरमेव ॥ इतिविमर्शैर्नाकचिज्जगद्रूपंप्रसिध्यतीत्यर्थः ॥ ४८ ॥ हेअंगउदारबुद्धेस्त्वदर्शितप्रकारायाविज्ञानदृष्टिस्तद्वशतश्चिन्मात्रभूतस्यदेहापगमेनमृत्वापुनर्देहांतरोत्पत्त्याभवनंचेदस्तिमोक्षोनास्तीतियावत् ॥ तथापिकिंनष्टंकाक्षतिः ॥ निर्दुःखनिरतिशयानंदचिदात्मनोनाशोत्पत्तिभ्यामस्पर्शात् ॥ अथचेन्मृत्वापुनर्भवनंनास्तिविमोक्षोस्तिचेदितियावत् ॥ तथापिसर्वप्रपंचशांतिरेव ॥ तत्तस्मादिहदुःखंकिंचिदपिपक्षद्वयेपिनप्रसज्जतइत्यर्थः ॥ ४९ ॥ मूर्खस्यतर्हिकथंमरणजन्मनोर्दुःखप्रसक्तिरितिचेत्तांसएवजानातीत्याह ॥ मूर्खस्येति ॥ योमृगनदीसलिलेमत्स्योहमितिमत्स्यभावमनुभवतिसएवतस्याश्चपलवीचिविवर्त्तनानिजानातिनतुमृगनदीभ्रांतिशून्यःकश्चिदित्यर्थः ॥ ५० ॥

तत्त्वविद्दृष्ट्यात्वंतर्बहिश्चतच्चिन्नभःत्वंअहमपिचैवमादिजगच्चेतिसर्वात्मकंभूत्वाएकमेवतपतिस्फुरति ॥ यथाबोधखमात्रसारआत्मैवशाखातच्छिखातद्विटपास्तत्पत्रफलानि चेत्याद्येकदेहःसंकल्पवृक्षःसन्मनोराज्येस्फुरतितद्वदित्यर्थः ॥ ५१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०नवनवतितमःसर्गः ॥ ९९ ॥ ॥ ७ ॥ ॥ देहात्मवादिमतेनिविष्टानांमतेरपि ॥ यथातत्त्वेवतारःस्यात्तथायुक्तिरिहोच्यते ॥ १ ॥ प्राक्सर्गेवायुक्तिसत्यतावर्णनक्रमेस्वभावसिद्धमेवेदंयुक्तमित्येवतद्विदामितियच्चार्वाकोक्तीनांयुक्तत्वंवर्णितंतत्तेषांदेहात्मवादविषयेसर्वास्तिकपक्षप्रतिपक्षभूतेकथंयुक्तम् तेषांकथंवापुरुषार्थसिद्धिःस्यादित्येतज्जिज्ञासमानोरामःपृच्छति ॥ युक्तिरिति ॥ अयंवक्ष्यमाणोमत्प्रश्नोमनोदत्वाश्रूयतांतनउत्तरमुच्यताम् ॥ १ ॥ अगोचरःअप्रत्यक्षः ॥ नतावज्जीवतःस्वस्यमृत्युःप्रत्यक्षः ॥ परेषांमृत्युदर्शनाद्धिस्वस्यापिमृत्युस्तद्वदनुमीयते ॥ नचानुमानंचार्वाकाणांप्रमाणम् ॥ प्रत्यक्षातिरिक्तप्रमाणानभ्युपगमादितिभावः ॥ अस्तुवादेहनाशएवमृत्युस्तथापिपुनर्जन्मानभ्युपगमात्सएवसर्वदुःखनिवृत्तिलक्षणोमोक्षएवेतिस्पृहणीयएवतेषामित्याशयेनाह ॥ भस्मीभूतस्येति ॥ शांतस्यसर्वदुःखोपशमंप्राप्तस्य ॥ अयंयेषांपक्षस्तेषामितिपूर्वेणान्वयः ॥ २ ॥ संविदःस्वनिश्चयानुसारिविवर्तानुभवनियमएवदेहा

अंतर्बहिस्त्वमहमित्यपिचैवमादिसर्वात्मकंतपतिचिन्नभएकमेव ॥ शाखाशिखाविटपपत्रफलैकदेहःसंकल्पवृक्षइवबोधखमात्रसारः ॥ ५१ ॥ ॥ इ०वा०वा०दे०मो०नि०उ०परमार्थनिरूपणंनामनवनवतितमःसर्गः ॥ ९९ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ युक्तिःस्यात्कीदृशीब्रह्मन्संसारेदुःखशांतये ॥ तेषांयेषामयंपक्षःश्रूयतामुच्यतांततः ॥ १ ॥ यावज्जीवंसुखंजीवेन्नास्तिमृत्युरगोचरः ॥ भस्मीभूतस्यशांतस्यपुनरागमनंकुतः ॥ २ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यंयंनिश्चयमादत्तेसंविदंतरखंडितम् ॥ तत्तथैवानुभवतिप्रत्यक्षमितिसर्वगम् ॥ ३ ॥ यथाखंसर्वगंशांतंतथाचिद्व्योमसर्वगम् ॥ तदेवैक्यमथद्वैतमन्यार्थस्यात्यसंभवात् ॥ ४ ॥ सर्गादौतद्दृतेऽन्योर्थोमहाप्रलयरूपिणि ॥ अकारणत्वान्नास्त्येवब्रह्मैवेदमतस्ततम् ॥ ५ ॥ समस्तवेदशास्त्रार्थयेमहाप्रलयादिच ॥ नेच्छंतितेमहामूढानिःशास्त्रानोमृताइव ॥ ६ ॥ सर्वशास्त्राविरुद्धेनसर्वंब्रह्मेदमित्यलम् ॥ स्थितंसानुभवंयोक्तृयेषांतैर्नकथाक्रमः ॥ ७ ॥

त्मभावेप्युपपत्तिस्तन्मोक्षेपीत्याशयेनवसिष्ठस्तंसमर्थयितुमुपक्रमते ॥ यंयमिति ॥ इतिइदंसर्वगंसर्वजनीनंप्रत्यक्षंस्वानुभवसिद्धम् ॥ ३ ॥ तत्तद्वादिपामरजनकल्पितदेहादिद्वैतंवेदांतविद्वदनुभवादिसिद्धमैक्यंचतच्चिद्व्योमैवतद्व्यतिरिक्तस्यात्यंतमसंभवादित्यर्थः ॥ ४ ॥ अन्यस्यासंभवेसदेवसोम्येदमग्रआसीदित्यादिश्रुत्यनुगृहीतांयुक्तिमाह ॥ सर्गादाविति ॥ सर्गस्यआदौपूर्वावस्थायामद्वितीयब्रह्मरूपेमहाप्रलये ॥ तर्हिब्रह्मणःकारणंततोन्यत्पूर्वमस्तुतत्राह ॥ अकारणत्वादिति ॥ ५ ॥ ननुब्रह्मरूपोमहाप्रलयएवनाभ्युपगम्यतेबीजांकुरादिपरंपरानादित्वेनपृथिव्यादिभूतानांप्रवाहानादित्वान्नकदाचिदनीदृशंजगदितिकर्मजडानांपूर्वमीमांसकादीनांपक्षंदूषयति ॥ समस्तेति ॥ सर्वेवेदायत्पदमामनंति तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतीत्यादिश्रुतेःसमस्तवेदशास्त्रार्थेआदिपदाज्जीवानांब्रह्मप्राप्तिलक्षणंमोक्षंतत्साधनानिचयेनेच्छंतितेमोक्षशास्त्रवैयर्थ्येतुल्यन्यायेनकर्मशास्त्रस्याप्यप्रामाण्यावारणान्निःशास्त्रानोस्माकंतत्त्वविदांदृशामृताइव ॥ नतत्त्वोपदेशकथायोग्याइत्यर्थः ॥ ६ ॥ येषांयोक्तृदेहेंद्रियादीनांसर्वव्यवहारेपुनियोक्तृप्रत्यगात्मचैतन्यंमनोवासर्वशास्त्राविरुद्धेनसर्वंखल्विदंब्रह्मेतिदर्शनेनसानुभवमलंपर्याप्तंपूर्णकामंस्थितम् कृतकृत्यैस्तैःसहापिनोपदेशकथाक्रमइतिजिज्ञासुम्प्रत्येवोपदेशकथाप्रस्तावइत्यर्थः ॥ ७ ॥

प्रासंगिकंसमाप्यप्रस्तुतमनुसंधत्ते ॥ नित्येति ॥ तथाचचार्वाकाभिमतेदेहात्मभावेपितादृशदृढनिश्चयात्मकसंविदुदयएवान्वयव्यतिरेकाभ्यांहेतुर्नदेहोव्यभिचारादितिभावः ॥ ८ ॥ अतएवानंदैकरसस्याप्यात्मनोविरुद्धदुःखित्ववेदनदार्ढ्येनदुःखमयतासर्वानुभवसिद्धेत्याह ॥ बोधादिति ॥ अंगेतिसंबोधने ॥ ९ ॥ एवंदुःखमयस्यापिजगतोनिरतिशयानंदचिद्व्योमकचनमात्रमेवेतिभावनाद्वास्तवतद्भावदर्शनेभ्रांतिकल्पितदुःखरूपतातद्ग्रहणग्राहकादयश्चशाम्यंतीतिदेहात्मवादिनामपितथाभावनेनिस्तारसिद्धिरित्याशयेनाह॥ जगदिति ॥ तत्प्राक्प्रसिद्धंदुःखादिवेदनंकथंव्योम्नाकूटस्थाद्वयचिदाकाशेनदुःखादेर्बोधःकस्यभवेत्कुतोवानिमित्तादित्यर्थः ॥ १० ॥ उक्तेर्थेतत्रकोमोहःकःशोकएकत्वमनुपश्यतइतिश्रुतिमर्थतउदाहरति ॥ नकानिचिदिति ॥ प्रधावंतिप्राप्नुवंतिलिंपंतीतियावत् ॥ ११ ॥ स्वस्वदृढनिश्चयानुसार्यर्थानुभवेसंविदःप्रामाण्यंचित्तवृत्तेःसत्यत्वंवानोपयुज्यतेदेहात्मभावाद्यनुभवेआद्याभावाद्ब्रह्मसाक्षात्कारवृत्तौद्वितीयाभावादित्याशयेनाह ॥ संविदिति ॥ संवेदनंसंवित्सत्याप्रमा संवेद्यतेययासासंवित्सत्याअबाधितावेत्युभयनिय

नित्यानिरंतरोदेतियादृशीसंविदाशये॥ भूयतेतन्मयेनैवपुंसादेहोस्तुमाथवा ॥८ ॥ बोधाच्चेत्संविदोजातःसदुःखीपुरुषोभवेत्॥ विरुद्धवेदनंयावत्तावज्जीवोंगतन्मयः॥ ९ ॥ जगच्चिद्व्योमकचनमात्रमेवेतिभाविते॥ तत्कथंवेदनंव्योम्नाबोधःकस्यकुतोभवेत्॥ १० ॥ नकानिचित्प्रधावंतिएकनिश्चयसंविदाम्॥ पुंसांसुखानिदुःखानिरजांसिनभसामिव ॥ ११ ॥ संवित्सत्यास्त्वसत्यावानिश्चयस्तावदीदृशः॥ आबालमेतत्संसिद्धंकेनापह्नूयतेकथम्॥ १२॥ नदेहःपुरुषोवापिजीवोन्यउपलभ्यते॥ संवित्सर्वमिदंसातुयथावेत्तितथाजगत् ॥ १३ ॥ सासत्याप्यथवासत्यातयादेहोनुभूयते॥ स्वातंत्र्येणयथास्वप्नेपातालेखेजलेदिवि॥ १४॥ संवित्सत्यास्त्वसत्यावातावन्मात्रःस्मृतःपुमान्॥ सयथानिश्चयोनूनंतत्सत्यमितिनिश्चयः॥ १५ ॥ प्रामाण्यंसर्वशास्त्राणामेतेनैवप्रसिद्ध्यति॥ सर्वसिद्धांतसिद्धांतएषएवेतिमेमतिः॥ १६ ॥ तस्मादबोधतायास्तेयथासंवित्तथैवसा॥ भवत्यकलुषाकारातथैवफलभागिनी॥ १७॥

माभावोक्तिः ॥ ईदृशएतादृशसदसदर्थानुभवहेतुर्भवत्येवेत्यर्थः ॥ कथमपह्नूयते नह्यनुभवविरुद्धमवलंब्यानुभवोपह्नोतुंशक्यइत्यर्थः ॥ १२ ॥ अतएवसर्ववाद्यभिप्रेततत्तद्देपकल्पनासमर्थासंविदेवात्मेतिसर्वैर्वादिनोबोधयित्वाकृतार्थीकर्त्तुंशक्याइत्याशयेनाह ॥ नदेहइति ॥ देहश्चार्वाकाभिमतःपुरुषःसांख्याभिमतोजीवोमीमांसकाद्यभिमतोवापिभोक्ताअन्यःसंवित्पृथक्कृतोनोपलभ्यते अतःसर्वमिदंवादिनांकल्पनापदंदेहादिसंविदेव ॥ १३ ॥ स्वातंत्र्येणस्वकल्पनामात्रेणनपृथ्व्यादिकारणसापेक्षतयेत्यर्थः ॥ १४ ॥ पुमान्आत्मा ॥ तत्सत्यंतदर्थक्रियासमर्थम् ॥ १५ ॥ संविदएवसर्ववाद्यभिमतात्मादिभावेनावस्थानेतस्याःपरमार्थसत्यत्वात्तत्कल्पितार्थानांतत्तदभिमतार्थक्रियासमर्थत्वाच्चसर्वशास्त्रप्रामाण्यंप्रागुक्तंप्रतिष्ठितमित्याह ॥ प्रामाण्यमिति ॥ तथाचायंसंविदद्वैतात्मवादसिद्धांतःसर्ववादिनामुपजीव्यत्वात्पुरुषार्थहेतुत्वाच्चसर्वसिद्धांतशिरोमणिःसिद्धांतइत्याह ॥ सर्वेति ॥ १६ ॥ तर्हिकिंसंविदेवतत्तद्वाद्यभिमतदेहाद्याकारेणतत्तन्निश्चयानुरोधेनपरिणमते नेत्याह ॥ तस्मादिति ॥ यासंविदिअबोधताअविद्याआस्तेसैवयथातत्तद्वादिनांसंवित्तथैवपरिणामेनप्रवृत्त्यादिकालेभवति सैवतत्त्वबोधात्मनापरिणामेअकलुषशुद्धचिदाकारातथैवमोक्षफलभागिनीत्यर्थः ॥ १७ ॥

अतएवपुण्यदेशकालादौस्नानदानादिक्रियाभिःरसायनमंत्रौषधादिद्रव्यैःकर्मशास्त्रबोधितैःस्वर्गपशुपुत्राद्येषणाभ्रमैश्चसाअबोधतातत्प्रयुक्तायाविक्षेपसंवित्साचकदाचिदपि नविनश्यति ॥ १८ ॥ बोधेबाधितायाअविद्यायाःपुनराविर्भावस्तुनशंक्योबीजाभावादनिर्मोक्षप्रसंगाच्चेत्याह ॥ आविर्भवतीति ॥ आत्यंतिकबाधेनक्षीणापुनःप्रसक्त्याशंकापि ॥ साअविद्याभूयःक्षणादाविर्भवतिचेत्तर्हिसंविदोजीवस्यदुःखंकदाकेनवानामोपशाम्यति ॥ नकदाचिन्नकेनचिदपीत्यर्थः ॥ १९ ॥ २० ॥ प्रत्यगात्मरूपसंविदेवतत्त्वतोज्ञातास्वकार्यंबंधंहरतीतिसैवमुमुक्षूणांशरणंतदभावेतुजगदांध्यमेवस्यादूरेमोक्षप्रत्याशेत्याह ॥ संविदिति ॥ अवशिप्यतेपरिशेपात्प्रसज्जते ॥ २१ ॥ कुतआंध्यमेवावशिप्यतेतत्राह ॥ यदिति ॥ यद्यस्माद्धेतोःस्वभावज्ञस्यास्वप्रकाशयातयैवप्रत्यगात्मसंवित्त्यापुंसानिद्रयास्वजाड्यमिवआंध्यकल्पेनअवेदनेनैवाऽयंप्रपंचोलभ्यतेतत्रसंवित्त्यपलापेअसाक्षिकस्यांध्यस्यैवपरिशेपादित्यर्थः ॥ २२ ॥ नकदाचिदनीदृशंजगदित्यभ्युपगम्ययेमहाप्रलयादिनेच्छंतितेनिःशास्त्रामृनाइवेतियेत्वयानिर्दिष्टास्तन्मतानुसारिदृढनिश्चयवतां

देशकालक्रियाद्रव्यवेदशास्त्रैषणाभ्रमैः॥ अबोधतातयासंवित्कदाचित्साननश्यति ॥ १८॥ आविर्भवतिसाभूयःक्षीणाशंकाक्षणेनचेत्॥ तत्केनसंविदोदुःखंकदानामोपशाम्यति ॥ १९॥ संविदेवनृणांजीवःसयथादृढभावनः॥ तथासुखीवादुःखीवाभवेदित्येपनिश्चयः ॥ २०॥ संविच्चेदस्तितज्ज्ञानांशरणंभवभेदने॥ नास्तिचेत्तच्छिलामूकमांध्यमेवावशिप्यते ॥ २१ ॥ यत्तयैवचसंवित्त्यावेदनेनैवलभ्यते॥अयंस्वभावज्ञस्यांतर्जाड्यंपुंसेवनिद्रया॥२२॥ ॥श्रीरामउवाच॥ ॥ दिक्ष्वधस्ताच्चनांतोस्याभावीनापिजगत्क्षयः॥ अस्तीतिभावितंयेनसंत्यक्ताभावबुद्धिना॥ २३ ॥ विज्ञानघनमेवेदमितिनूनमपश्यता ॥ पश्यताचयथादृष्टंसर्वंक्षयमपश्यता ॥ २४॥ तस्यस्यात्कीदृशीब्रह्मन्युक्तिराधिविनाशने॥इतिमेसंशयंछिंधिभूयोबोधाभिवृद्धये ॥ २५ ॥ ॥ श्रीवसिष्ठउवाच॥ ॥ अत्रैकंतावदुचितंपूर्वमेवतथोत्तरम्॥ द्वितीयमुत्तरंन्याय्यंवक्ष्यमाणमिदंशृणु ॥ २६ ॥ ईदृग्भावस्त्वयाप्रोक्तोयःपुमान्पुरुषोत्तम ॥ सतावच्चेतनामात्रंभवतीत्यनुभूयते॥ २७॥

तत्त्वज्ञानावतारादौयुक्तिरस्तिनवेतिसंदिहानोरामःपृच्छति ॥ दिक्ष्विति ॥ अस्याःसंसृतेःप्राच्याद्यूर्ध्वांतनवदिक्षुअधस्तादधोदिशिचअंतएवनास्ति ॥ एवंजगतःक्षयोनाशोपिनास्तीतियेनसंत्यक्तप्रागभावाद्यभावत्रयबुद्धिनापुंसाभावितम् ॥ २३ ॥ पुनःकीदृशेनतेनपुंसाइदंसर्वंविज्ञानघनमेवेतिपरमार्थतत्त्वमपश्यतेतिपूर्वेणान्वयः ॥ यथादृष्टंजगदेवसत्यमितिपश्यता ॥ २४ ॥ २५ ॥ पूर्वंप्रागुक्तंनिःशास्त्रानोमृताइव तैर्नकथाक्रमइत्येवोत्तरम् ॥ अथवापूर्वपूर्ववादिनंप्रतियदुक्तंयंयंनिश्चयमादत्तेसंविदंतरखंडितमित्याद्युत्तरंतदेवोचितम् ॥ तथाचचैतन्याननुविद्धतादृशनिश्चयाप्रसिद्धेःसोपिमंदचैतन्यंव्युत्पाद्यपूर्वनिश्चयस्यतद्विवर्त्ततांव्युत्पादनेनचिदखंडैकरस्यानुभवेअवतारयितुंशक्यइतिभावः ॥ २६ ॥ हेपुरुषोत्तमईदृग्भावस्तदुक्तनिश्चयवान्यःपुमांस्त्वयाप्रोक्तःसकिंदेहातिरिक्तचेतनात्मदर्शीउतनित्यातिवाहिकदेहात्मदर्शीउतस्थूलदेहात्मदर्शीउतशुद्धसंविदात्मदर्शीउताज्ञानावृतसंविदात्मदर्शीउतसंविदपलापी ॥ तत्राद्यकल्पेतावदाह ॥ सतावदिति ॥ सयदिचेतनाःरूपादिसंविदोमीयंतेयत्रतच्चेतनामात्रंचिदाभासरूपंभवतीत्यभ्युपगच्छतितर्ह्यनुभूयतएवक्रमात्तेनात्मतत्त्वमित्यर्थः ॥ २७ ॥

तत्कुतस्तत्राह ॥ सचेति ॥ स्वर्थेयंच:पठित:॥यस्मात्सदेहाद्याकारोपाधिनाशेनपरमात्मनासहयुज्यतेएकीभवति ॥ द्वितीयेत्वाह ॥ अथेति ॥ विनाशिन्यन्नमयेदेहेआत्मताबुद्धो सर्वतोविनाशाशंकयादुःखम् ॥ अविनाशिन्यात्मतानिश्चयेतुनदेहाकारत्वदर्शनमात्रापराधेनदुःखप्रसक्तिरितिक्रमात्सोपिबोध्यमानस्तत्त्वंप्रतिपत्स्यतइतिभावः ॥ तर्त्तर्हि ॥ क्रमःप्रसंगः ॥ २८ ॥ तृतीयेकल्पेतावदाह ॥ भवेदिति ॥ भागविभागोऽवयवभेदस्तद्घटितःस्थूलात्मातस्यात्मत्वदर्शिनातद्विनाशःसन्नपिनविचारितः ॥ अवश्यंचसावयवस्य विनाशोभवतिकिलेतिप्रतिबोधनेतस्यापितदतिरिक्तात्मनिश्चयःसिद्ध्यतीत्यर्थः ॥ २९ ॥ चतुर्थकल्पेप्याह ॥ मृतइति ॥ सशुद्धसंविदात्मदर्शीजीवन्मुक्तःसर्वदासर्वत्रलीलयाज गत्पश्यन्नपिमृतोविदेहतामात्रेणकैवल्यंप्राप्तःसन्भूयःसंसृतिनोवेत्तिनपश्यतीत्यर्थः ॥ पंचमकल्पेप्याह ॥ ज्ञानेति ॥ यासंवित्तत्त्वज्ञानेननधौतासासंसृतिबीजभावाविनाशाद संसृतिर्नतिष्ठत्यवश्यंसंसरत्येवेत्यर्थः ॥ तथाचनस्याअपिक्कचिज्जन्मनिज्ञानोदयान्निस्तारइतिभावः ॥ ३० ॥ षष्ठकल्पेप्याह ॥ अथवेति ॥ दृषदिवजडोविशेषज्ञानशून्योभव त्येवचिरमित्यर्थः ॥ ३१ ॥ तेनतत्रांकिकथंवाश्रेयोदृष्टंतत्राह ॥ यथावेदनमिति ॥ आमरणंदृढीकृततादृग्वेदनानुसारेणैवदेहपातादनंतरंचित्त्वेविशेषविज्ञानेक्षतेनष्टेसतिगाढसु

सचाकारविनाशेनयुज्यतेनात्रसंशयः॥अथाविनाशोदेहश्चेत्तद्दुःखस्यात्रकःक्रमः॥२८॥भवेद्भागविभागात्मविनाशस्त्वविचारितः॥ अवश्यंतस्यभवतिकिलेतिननुनिश्चयः॥ २९ ॥ मृतःससंविदात्मत्वाद्भूयोनोवेत्तिसंसृतिम्॥ ज्ञानधौतानयासंविन्नसातिष्ठत्यसंसृतिः ॥ ३० ॥ अथवानास्तिसंवित्तिरितिनिश्चयवान्यदि॥ ततस्तादृग्वेदनतोभवत्येवदृषज्जडः॥ ३१॥ यथावेदनमर्थेषुचित्त्वेदेहक्षयात्क्षते॥ मृतिरेवपरंश्रेयोदृष्टंनानुभवादिति॥ ३२॥ असंभवच्छुद्धविदोनिःशरीराभवंतिये॥ जडभावाजडीभूयदुर्भेदांध्याभवंतिते॥ ३३॥ ये चापिस्वप्नपुरवत्सर्वंपश्यंतिचिन्मयाः॥ तेषामिदमिवाशेषंजगज्जालंप्रवर्त्तते॥ ३४॥ स्थैर्यास्थैर्येणभूतानांकिमपूर्वमतोभवेत्॥ भूत स्थैर्येतथास्थैर्येसुखंचैवासुखंसमम् ॥ ३५ ॥ स्थिरमस्त्वस्थिरंवापिमत्यादिमहतामपि ॥ चिद्भामात्रमिदंभातियावदज्ञानमाततम् ॥ ३६॥ संविदासंविदोसत्तामिहाव्याप्यविनष्टया॥ निर्णीयांगीकृतंयैर्वाजाड्यंतद्वालकैरलम्॥ ३७॥

पुष्तिकल्पासामृतिरेवनैयायिकमोक्षकल्पानिर्दुःखत्वात्परंश्रेयइतितैनदृष्टंनतुनिरतिशयानंदानुभवाच्छ्रेयस्तेनमूर्खेणदृष्टमित्यर्थः ॥ ३२ ॥ येतुशून्यवादिनोनैरात्म्यदृढनिश्च यास्तेषांमृतानांकागतिस्तामाह ॥ असंभवदिति ॥ निःशरीरामृताः ॥ तथाचश्रुतिः ॥ असुर्यानामतेलोकाअंधेनतमसावृताः ॥ तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाइति ॥ ३३ ॥ येपिविज्ञानवादिनःक्षणिकविज्ञानमयंस्वप्नतुल्यंजगदितिपश्यंतितेषामपिव्यवहारसिद्धिस्तुल्येत्याह ॥ येचापीति ॥ चिन्मयाःक्षणिकविकारिचिदात्मभूताः ॥ ३४ ॥ येजगतःस्थैर्यवादिनोयेचक्षणिकत्ववादिनस्तेषामुभयेषामपिसुखदुःखभोगांतव्यवहारसिद्धिःसमेत्याह ॥ स्थैर्येति ॥ अपूर्वमतोजगद्व्यवहारवैचित्र्यबुद्धौकिमंतरंभवेत् ॥ असुखंदुःखम् ॥ ३५ ॥ तत्त्वविदांतुभूम्यादिभूतानांक्षणिकत्वाक्षणिकत्वयोर्नाग्रहः अध्यस्तस्याधिष्ठानब्रह्ममात्रसतत्त्वकत्वेनशुक्तिरजतमूल्यविचारवत्तद्विचारस्यव्यर्थत्वा दित्याशयेनाह ॥ स्थिरमिति ॥ मह्यादीनांमहतांभूतानामपि ॥ ३६ ॥ संविदस्तुनक्षणिकत्वंतयास्वासत्तालक्षणस्यस्वनाशस्यजाड्यस्यचव्याप्तुमशक्यतयासंविद्याभिमतंतरेण तदुभयसिद्ध्ययोगाच्चतदुक्तिसंभवाभावादित्याह ॥ संविदेति॥संविदःकालतोऽसत्ताक्षणिकत्वंदेशतःअसत्तातुजाड्यंद्विविधामपितांअव्याप्यअस्पृष्ट्वाविनष्टयाक्षणिकत्वाभिमत संविदाजाड्यम क्षणिकत्वस्याप्युपलक्षणमेतत्॥ यैर्निर्णीयांगीकृतंतैस्तथाविधैर्बालकैर्मूर्खैरलंसंभाषणेनेत्यर्थः ॥ ३७ ॥

अतएवहिकूटस्थचितोविवर्त्तभावेनतद्यामदेहांतजडप्रपंचोत्पत्तिवादिनोधन्याः वाचारंभणन्यायेनविकारान्तत्वदर्शनेचित्परिशेषलाभात् ॥ अचितोदेहादेश्चिदुत्पत्तिवादिन श्चार्वाककणभक्षादयोमूर्खाःचिद्विनाशेनजडपरिशेषस्याऽपुरुषार्थत्वात्साधकाभावाच्चेत्याशयेनाह ॥ येषामिति ॥ विज्ञइतिबहुत्वमविवक्षितम् ॥ ३८ ॥ जीवसमष्टिरूपहि रण्यगर्भेचिदाभासबहुत्वाद्वाबहुवचननिर्देशः ॥ तथाचसमष्ट्यात्माहिरण्यगर्भएकएवनानाजीवात्मनाऊर्ध्वाधोलोकगमनादिनासंसरतीतिकल्पनापिसाध्वीत्याह ॥ चिद्रूपइ ति ॥ आकाशकृमयोमशकादयस्तज्जालवत् ॥ यथामणिकमल्लिकादौपूर्यमाणोजलौघस्तिर्यगूर्ध्वमधोयातितद्वत् ॥ ३९ ॥ सानानाकर्तृजीवसमष्टितापिहिरण्यगर्भचितःस्व कल्पनाभिनिवेशवशादेवेत्याह ॥ चेत्यतइति ॥ बीजौघेनेतीत्थंभावेतृतीया ॥ येनहिरण्यगर्भचिदाभासेनबीजौघभावेनसमष्टितांस्वस्योपास्यतद्वासनानुसारात्कल्पादौअन्यः बहुधाभिन्नोव्यष्टिरूपःकर्त्तास्वांतश्चेत्यतेसतत्परस्तदासक्तःसंस्तथैवनानाकर्तृरूपंस्वांतःस्वयमेवानुभवतितथैवविवल्गतिसंसरतिचेत्यर्थः ॥ ४० ॥ अनेनप्रकारेणापिभाग्यद

येषांविज्ञःशरीराणितेवंद्याःपुरुषोत्तमाः ॥ शरीरेभ्योविदोयेषांतैरलंपुरुषाधमैः ॥ ३८ ॥ चिद्रूपोजीवबीजौघआकाशकृमिजालवत् ॥
ऊर्द्ध्वंतिर्यगधोयातिपूर्यमाणइवस्वयम् ॥ ३९ ॥ चेत्यतेयेनकर्त्तान्योबीजौघेनसतत्परः ॥ तथैवानुभवत्यंतःस्वयमेवविवल्गति ॥ ४० ॥
यद्यथाचेत्यतेयेनतज्जीवेनाशुतेनतत् ॥ चिद्रूपेणाप्यतेसिद्धमेतदाबालमक्षतम् ॥ ४१ ॥ यथाधूमस्यनभसियथांभोधौमहांभसः ॥ आव
र्त्तवत्तयश्चित्रास्तथाचिद्व्योम्निसंसृतेः ॥ ४२ ॥ पुरीभवतिचिद्व्योमयथास्वप्नेनरंप्रति ॥ तथादिसर्गात्प्रभृतितदेवेदंजगत्स्थितम् ॥ ४३ ॥
सहकारिनिमित्तानियथास्वप्नेनसंतिवै ॥ पृथिव्यादीनिभूतानितथैवादौजगत्स्थितेः ॥ ४४ ॥ अंगानांस्वप्ननगरेवसुधाविविधाकृताः ॥
यास्ताएवजगत्स्वप्ननगरेपुष्टतांगताः ॥ ४५ ॥ चिन्मात्राकाशमेवेमाःप्रजाद्वैतैक्यवर्जिताः ॥ केवात्ररंजनान्याखेयद्भाभातिखमेवतत्
॥ ४६ ॥ चिच्चंद्रिकाचतुर्दिक्कंशीतलाह्लादकारिणी ॥ तनोतिचेतनालोकंतस्येदंकचनंजगत् ॥ ४७ ॥ अद्यैवाद्यंतयोर्व्योम्निचिन्मयेसर्गद
र्शनम् ॥ चिदुन्मेषनिमेषाभ्यांस्वात्मोदेत्यस्तमेतिच ॥ ४८ ॥

स्वाभिःप्रतिज्ञातंतदेवसिद्धमित्याह ॥ आबालंआवृद्धंचअक्षतमव्याहतसिद्धम् ॥ ४१ ॥ अतएवहितज्जीवचितांवासनावैचित्र्यानुरूपतत्तत्संसृतिचेतनवैचित्र्यात्संसृतिवैचित्र्य मनंतमित्याह ॥ यथेति ॥ ४२ ॥ तदेवचिद्व्योमैवेदंजगद्भूत्वास्थितम् ॥ ४३ ॥ सहकारिकारणानिविनैवस्वर्गादौप्रतिभामात्रेणसिद्धत्वादपिस्वप्नसाम्यमेवेत्याह ॥ सहकारीति ॥ आदौसर्गादौ ॥ ४४ ॥ अंगानांनगरावयवभूतगृहाणांवसुधाउत्तरोत्तरभूमिकाभेदाः याअर्द्धविकासेनपेलवाःकृतास्ताएवसम्यग्विकाशेनघनीभावात्पुष्टतांगताः ॥ ४५ ॥ य त्तुआभातीतिच्छेदः ॥ ४६ ॥ त्रिविधतापोपशमनाच्छीतलाचेतनाअर्थप्रथातल्लक्षणमालोकम् ॥ तस्यचेतनालोकस्याऽर्थरूपेणकचनम् ॥ ४७ ॥ आदौसर्गात्प्रागंतेप्रलये चव्योम्निसर्गशून्यस्वभावेचिन्मयेव्योम्निअद्यवर्त्तमानक्षणएवसर्गदर्शनंप्रसिद्धंतच्चस्वात्मब्रह्मैवस्वचितःपरिच्छिन्नरूपेणोन्मेषादपरिच्छिन्नरूपेणनिमेषाच्चस्वयमेवस्वप्नवदुदेत्य स्तमेतिचेतिनिष्कर्षइत्यर्थः ॥ ४८ ॥

चिच्चेत्स्वसत्ताबलेनसत्कृत्यजगत्पश्यतितदानींकिंचिदसदितिवक्तुंशक्यमित्याह ॥ यदिति ॥ यत्तच्छ्रुतिप्रसिद्धंसद्वस्तुयस्माद्धेतोःयद्यद्यथायथावेत्तिसर्गादौनदयापितथैवानुभवति ॥ तस्मात्समस्तमपिचिन्मात्रेतत्रकिंनविद्यतेयदसत्स्यादित्यर्थः ॥ ४९ ॥ चिद्यतिरिक्तरूपेणासंतः ॥ चिदात्मनातुसंतः ॥ ५० ॥ तेषांतादृशींस्थितिंलक्षणेनानुभावयति ॥ निर्मानमोहाइति ॥ यंत्रमयाःपुरुषप्रतिमाइव ॥ तत्पक्षेजलादिप्रवाहवशात्संप्राप्तनिजचेष्टाद्यर्थभाजःपश्यतामन्येषांकार्यव्यवहारदृष्टौतिष्ठंतीतियोज्यम् ॥ ५१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०प्र०उत्तरार्द्धेशततमःसर्गः ॥ १०० ॥ ॥ ७ ॥ ॥ संविदैकात्म्यममलंसदासर्वत्रपश्यतः ॥ अप्राप्तेर्भयहेतूनामभयस्थितिरीर्यते ॥ १ ॥ सर्ववादिनामपिचिन्मात्रमेवतत्त्वमित्यवगमेयथाअभयप्रतिष्ठाप्राप्तिस्तथावर्णयितुंपीठिकांरचयति ॥ चिन्मात्रमेवेत्यादिना ॥ इत्थमनेननानावादिपरिकल्पितस्थायिक्षणिकादिरूपेणजन्ममरणभयशोकादिरूपेणच ॥ १ ॥ तदेवोपपादयंस्तत्फलमाह ॥ तच्चेति ॥ तच्चिन्मात्रंचावदातंनिर्मलमाकाशमेव ॥ तन्मयेतद्विवर्त्तभूते ॥ २ ॥ हेयोपादेयाभावे

यद्यथावेत्तियत्तत्सत्तथैवानुभवत्यलम् ॥ यस्मात्समस्तंचिन्मात्रंकिमिवात्रनविद्यते ॥४९॥ शरदाकाशविशदंसंविदःसौम्यमानसाः ॥ असंतएवतिष्ठंतिसंतोधिगततत्पदाः ॥ ५० ॥ निर्मानमोहाजितसंगदोषाःप्रवाहसंप्राप्तनिजार्थभाजः ॥ तिष्ठंतिकार्यव्यवहारदृष्टौनिरामयायंत्रमयाइवैते ॥५१॥ ॥इ०वा० महारामायणेवा०दे०मो०नि०उ०नास्तिक्यनिराकरणंनामशततमःसर्गः ॥ १०० ॥ ॥श्रीवसिष्ठउवाच ॥ ॥चिन्मात्रमेवपुरुषस्तदेवेत्थमवस्थितम् ॥ चिन्मात्रव्यतिरेकेणकिमन्यदुपपद्यते ॥१॥ तच्चावदातमाकाशंतन्मयेद्रष्टृदृश्यते ॥ तावन्मात्रंजगद्दतोहेयोपादेयधीःकुतः ॥ २ ॥ नविद्यतेपरोलोकोबार्हस्पत्यस्ययस्यतु ॥ विदोन्यत्तस्यकिंसारंरागद्वेषावतःकुतः ॥३॥ इष्टानिष्टदृशोरागद्वेषदोषाःकिमात्मकाः ॥संविद्व्योममयेस्वप्नेजगदाख्येंगकथ्यताम् ॥४॥ इदंहेयमुपादेयंवेत्तिसंवित्खमात्मनि ॥ निर्मलेनिर्मलंभातिकेवात्रतदतद्दृशौ ॥५॥ संविन्नरोमरोनागःसंवित्स्थावरजंगमम् ॥ भावाभावादयोस्याब्धेस्तरंगावर्त्तवृत्तयः ॥६॥ संविदाकाशमेवाहंभवानपिजनाअपि ॥ म्रियामहेनोकदाचित्संवित्किलकदामृता ॥७॥ संविदोनास्तिसंवेद्यंस्वयंसंवेद्यतामिता ॥ चित्त्वादतोविशालाक्षद्वित्वैकत्वेक्ववास्थिते ॥ ८ ॥

नरागद्वेषप्रसक्तिरितिविज्ञानैकस्कंधवादिनोबौद्धस्यापिसंमतंकितुक्षणिकविज्ञानमसारमित्येवतन्मतमुपेक्षितव्यमित्याह ॥ नविद्यतइति ॥ बार्हस्पत्यस्यबृहस्पतिप्रणीतबुद्धशास्त्रानुसारिणोयस्यवादिनःक्षणिकविज्ञानात्परोन्योलोक्यतइतिलोकोजगन्नविद्यतेतस्यअतोनिर्विषयत्वादेवरागद्वेषौकुतःनप्रसज्जेतेएवंकिंतुविदःअन्यत्किंसारंनित्यंपुरुषार्थरूपंयत्संभावनयाविदःशाश्वतत्वंसनेच्छतीत्यर्थः ॥ रजिपुत्राणामसुराणांचविमोहनायबृहस्पतिनापिबुद्धशास्त्रंप्रणीतमितिमत्स्यपुराणादौप्रसिद्धम् ॥ ३ ॥ कूटस्थसंविदएवविवर्त्तरूपःस्वप्नोजगदित्यस्मत्सिद्धांतेतुसुतरांनरागद्वेषप्रसक्तिरित्याह ॥ इष्टानिष्टेति ॥ ४ ॥ अस्तुवाहेयोपादेयविकल्पाध्यासस्तथापिसंविदाकाशेनकश्चिद्विशेषइत्याशयेनाह ॥ इदमिति ॥ तदतद्दृशौइष्टानिष्टादिदृष्टी ॥ ५ ॥ सर्वस्याविनाशिसंविन्मात्रत्वेजन्ममरणादयोपिनसंभावयितुंशक्याइत्याह ॥ संविदितिद्वाभ्याम् ॥ ६ ॥ ७ ॥ सर्वस्यसंवित्त्वेसंवेद्यमन्यन्नपरिशिष्यते स्वस्याःस्वसंवेद्यताकल्पनातुस्वस्यस्वस्कंधारोहणकल्पनाकल्पेत्याह ॥ संविदइति ॥ स्वयमेवचेत्संवेद्यतांइताप्राप्ताअतश्चित्वादन्यत्संवेद्यतालक्षणक्रियाकर्मभेदरूपंद्वित्वंतद्व्यावृत्तमेकत्वंवाक्वस्थिते ॥ ८ ॥

भूतंनित्यंसद्वस्तु ॥ कुतोवयंजीवामइतिशेषः ॥ ९ ॥ एवंसतिसंविदाकाशएवसर्ववादिनांस्वस्वाभिमतार्थाकारेणप्रथतेइतिफलितम् ॥ नांविनागत्यंतराभावादित्याशयेनाह ॥ वादिनइति ॥ १० ॥ उक्तमर्थंब्रह्मवादिनंपुरस्कृत्यप्रपंचयति ॥ संविदाकाशमितिद्वाभ्याम् ॥ ज्ञानंविज्ञानम् ॥ ११ ॥ केनचिद्देहात्मवादिना ॥ मदिरामदशक्त्याभंदेहाकारपरिणतभूतधर्मभूतम् ॥ पुरुषाभिधंसांख्येन ॥ चिदाकाशंयोगिना ॥ शिवईश्वरआत्माअणुर्जीवश्चेतिशैवेन ॥ १२॥ एवंवादिभिर्बहुधाविकल्पनेपिचितोनकाचित्क्षतिः स्वस्याः सर्वविकल्पसाक्षिण्यात्वेननिर्विकल्पत्वादित्याह ॥ चिन्मात्रमिति ॥ १३ ॥ चिद्रूपमेववपुःस्वरूपंयस्यतथाविधस्यमम ॥ १४ ॥ अस्माकंपितामहाद्यादेहात्मनास्तेषांचित्तुनमृतासापिम्रियेतचेन्मृतसंविदांतेषांपुनर्जन्मैवनस्यादित्यर्थः॥अस्माकमितिअस्मास्वपितन्न्यायसाम्यप्रदर्शनपरतयावायोज्यम् ॥ १५ ॥ आकाशस्यसंक्षयःकिंभवेत्कथंवाभवेत्क

संविन्मात्रादृतेतस्माद्भूतंकिमिवकथ्यताम् ॥ कथ्यतांम्रियतेतच्चेत्तदघेमेकुतोवयम् ॥ ९ ॥ वादिनःसौगताद्यायेयेलोकायतिकादयः ॥ संविदाकाशमुत्सृज्ययेन्मयंतेतदुच्यताम् ॥ १० ॥ संविदाकाशमेवैतत्केनचिद्ब्रह्मकथ्यते ॥ केनचित्प्रोच्यतेज्ञानंकेनचिच्छून्यमुच्यते ॥ ११ ॥ केनचिन्मदशक्त्याभंकेनचित्पुरुषाभिधम् ॥ केनचिच्चचिदाकाशंशिवआत्माचकेनचित् ॥ १२ ॥ चिन्मात्रमेवमप्युक्तंयातिनक्वचिदन्यताम् ॥ यस्मात्स्वयंतदेवैवमात्मानंवेत्तिनेतरत् ॥ १३ ॥ चूर्णतांयांतुमेंगानिसंतुमेरूपमानिच ॥ कास्रतिःकाचवावृद्धिश्चिद्रूपवपुषोमम ॥ १४ ॥ मृताःपितामहाद्याश्चिन्नमृतासाम्रियेतचेत् ॥ तज्जन्मनैवनामस्यादस्माकंमृतसंविदाम् ॥ १५ ॥ नजायतेनम्रियतेसंविदाकाशमक्षयम् ॥ भवेत्कथंकथयकिंकिलाकाशस्यसंक्षयः ॥ १६ ॥ जगद्रूपैकककचनमविनाशिचिदंबरम् ॥ उदयास्तमयान्मुक्तंस्थितमात्मनिकेवलम् ॥ १७ ॥ जगद्भानंदधद्दार्हंचिन्नभःस्फटिकाचलः ॥ अनादिमध्यपर्यंतःस्वच्छआत्मनितिष्ठति ॥ १८ ॥ यथायथांधकारेणप्रेक्ष्यमाणंप्रणश्यति ॥ किमप्यंगाभ्रचक्राभंतथेदंविश्वमात्मनि ॥ १९ ॥ यथांबुधिःस्वयंयातितोयाद्यावर्त्तकादिकम् ॥ स्थितोदधत्तथैवेदंचिदाकाशोंगमात्मनि ॥ २० ॥ चिन्मात्रमेवपुरुषःखवत्सचननश्यति ॥ कदाचनापितद्व्यर्थंयन्नश्यामीतिशोकिता ॥ २१

थय ॥ १६ ॥ एवंसंक्षयासंभवेजगद्रूपस्यकचनंप्रथारूपंतच्चिदेवांबरमविनाशिस्थितम ॥ १७ ॥ चिन्नभोलक्षणःस्फटिकाचलःस्वांतःस्वयमेवजगद्भानंदधत्स्वतत्त्वसाक्षात्कारवह्निनातद्दार्हंविधायस्वच्छआत्मनितिष्ठति ॥ यथास्वच्छःस्फटिकाचलःस्वांतःप्रतिबिंबवनंप्राग्दधत्कदाचित्प्रतिबिंबवह्निभावमिवप्राप्नेनस्वेनैवतद्वनंदग्ध्वास्वरूपमात्रेअवतिष्ठतेतद्वदित्याशयः ॥ १८ ॥ यथायथाज्ञानप्राबल्यंतथातथासाज्ञानस्यजगतोनाशेदृष्टांतमाह ॥ यथेति ॥ अंधकारेणनिशिसंपादितंकिमपिअभ्रचक्राभंजगदावरणमुपप्रेक्ष्यमाणंयथायथाक्रमान्निःशेषंप्रणश्यतितथाअज्ञानांधकारेणकृतमिदंविश्वमपीत्यर्थः ॥ १९ ॥ यथास्वयमेवतोयप्रवाहस्तरंगाद्यावर्त्तकफेनबुद्बुदादिकमंगंदधत्स्थितस्तथैवचिदाकाशोप्यात्मनिजगदंगंदधत्स्थितइत्यर्थः ॥ २० ॥ २१ ॥

---

१ यन्मन्यंतइतिपाठेपेक्षितइतिज्ञाति

जीर्णदेहत्यागेननवतरदेहप्राप्तिनिमित्तेमरणेउपस्थितेहर्षएवोचितोनशोकइत्याह ॥ देहादिति ॥ २२ ॥ यदिपुनर्जन्मनास्त्येवेतिवोभ्रमस्तथापिविषादोनोचितः मरणादेवसर्वा नर्थप्राप्तिनिवारणादित्याह ॥ मृतइति ॥ उपचयःपुरुषार्थोत्कर्षः ॥ २३ ॥ इत्थंजन्ममरणयोःसतोरपियत्रनदुःखप्रसक्तिस्तत्रात्यंतमसतोस्तयोर्दूरेतत्प्रसक्तिरित्याशयेनोपसंहर ति ॥ मरणमिति ॥ २४ ॥ मृतस्यदेहलाभोस्तिवानवेतिसंदेहादेवमरणाद्भयमितिमन्वानंप्रतिउक्तमेवार्थंभंग्यंतरेणाह ॥ मृतस्येति ॥ हियस्मान्मृतिर्जरारोगादियस्तस्यकारागृ हकल्पस्यपूर्वदेहस्यनाशः ॥ २५ ॥ अतएवकोट्यंतरेपिसातथैवेत्याह ॥ मृतिरिति ॥ २६ ॥ मरणोत्तरंकुकर्मिणांनरकादिश्रवणाद्भयमितिचेज्जीवतामपितेषांराजदंडादिवशा दत्युत्कटानामिहैवफलदर्शनाच्चभयंतुल्यमितिकुकर्माण्येवमाकुर्वित्याह ॥ कुकर्मभ्यइति ॥ माकार्षमाकार्षीः ॥ सिपश्छांदसोऽकारादेशः ॥ २७ ॥ २८ ॥ परमार्थदृशातुज

देहाद्देहांतरप्राप्तौनवएवमहोत्सवः॥ मरणात्मनिर्किंमूढाहर्षस्थानेविषीदथ॥ २२॥ मृतश्चेन्नभवेद्भूयःसोत्राप्युपचयोमहान् ॥ भावा भावग्रहोत्सर्गज्वरःप्रशममागतः॥ २३॥ मरणंजीवितंतस्मान्नदुःखंनसुखंयतः॥ नास्त्येवैतच्चिदाकाशःकिलेत्थमभिजृंभते॥ २४॥ मृतस्यदेहलाभश्चेन्नवएवतदुत्सवः॥ मृतिर्नाशोहिदेहस्यसाच्चतिःपरमंसुखम्॥ २५॥ मृतिरंत्यतनाशश्चेत्तद्भवामयसंक्षयः॥ भूयःशरी रलाभश्चेन्नवएवतदुत्सवः॥ २६॥ कुकर्मभ्योथभीतिश्चेत्सासमेहपरत्रच ॥ तानिमाकार्षभोस्तस्माल्लोकद्वितयसिद्धये ॥ २७॥ मरि ष्यामिमरिष्यामिमरिष्यामीतिभाषसे॥ भविष्यामिभविष्यामिभविष्यामीतिनेक्षसे ॥ २८॥ क्वनामजन्ममरणेक्वभवाभवभूमयः॥ संविदात्मकमेवेदंव्योमव्योम्निविवर्त्तते॥ २९॥ संविदाकाशमात्रात्मापिबभुंक्ष्वास्वनिर्ममः॥ आकाशकोशकांतस्यकुतइच्छोदयस्त व॥ ३०॥ स्वप्रवाहबलोद्युक्तदेशकालवशादितान्॥ भावान्भुंक्तेभयोभव्यःपावनान्पावनादपि ॥ ३१ ॥ मध्यमध्यगतान्दोषान्दे शकालवशोदितान्॥ अनादृत्यांतरेवास्तेसुप्रधीरवहेलयन्॥ ३२॥ नदुःखमेतिमरणात्सुखमेतिनजीवितात् ॥ नाभिवांछतिनद्वेष्टिस तदास्तेविवासनः॥ ३३॥ मरणजीवितजन्मजरत्तृणान्यविमृशन्विगतेच्छमवासनः ॥ विदितवेद्यइहाज्ञइवोदितोवसतिवीतभयस्त्व चलोयथा॥ ३४॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०परमोपदेशोनामैकाधिकशततमःसर्गः॥ १०१॥

न्ममरणादिप्रसक्तिरेवनास्तीत्याह ॥ क्वेति ॥ २९ ॥ ज्ञानपूर्णानांनिरिच्छव्यवहारान्नकदापिदुःखप्रसक्तिरित्याह ॥ संविदाकाशेति ॥ ३० ॥ स्वीयप्रवाहबलेनप्रसक्तादुद्युक्ता त्प्रयत्नात्देशकालवशाच्चइतान्प्राप्तान्भावान्शब्दादिविषयांस्तेष्वपिपावनादपिपावनान्भुंक्तेनमनोमालिन्यविक्षेपहेतूनित्यर्थः ॥ पावनान्पादपोयथेतिपाठेस्पष्टम् ॥ ३१ ॥ मध्येमध्येदेशक्षोभदुर्भिक्षादिकालेप्यस्यनदुःखप्रसक्तिस्तदाक्वचिदेकांतपर्वतगुहादौसमाधिसुखानुभवेनतत्कालावहेलनसंभवादित्याह ॥ मध्येति ॥ अंतर्निर्विकल्पसमाधौ सुप्रधीः॥३२॥ ॥ ३३ ॥ सर्गोक्तमर्थंसंक्षिप्योपसंहरति ॥ मरणेति ॥ मरणादिलक्षणानिजरत्तृणानिअविमृशन्विदितवेद्योप्यज्ञःअतिमूढइववीतभयःसन्नचलोयथातथावस तीत्यर्थः ॥ ३४ ॥ ॥इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उत्तरार्द्धेएकाधिकशततमःसर्गः ॥ १०१ ॥ ॥ ६॥ ॥ ६ ॥ ॥ ६ ॥

भूयोपिबुद्धतत्त्वस्यवर्ण्यतेलक्षणावलिः ॥ तदभ्यासदृढत्वेनबोधदार्ढ्यंनयेदिति ॥ १ ॥ कीदृशःकिंलक्षणविशिष्टःसंपद्यते ॥ १ ॥ कथंस्वभावःकिमाचारश्चावतिष्ठतेतच्छृणु ॥ २ ॥ तत्रस्वभावभूतान्यांतराणिलक्षणानिप्रथमंवक्तुमुपक्रमते ॥ उपलाअपीत्यादिना ॥ मित्रादिपूपलादिपुचसंयोगवियोगादिपुतुल्यांतःस्थितिरित्यर्थः ॥ ३ ॥ आकीर्णंजनसंकुलंस्थानम् ॥ विपदोधनवंध्वादिनाशाः ॥ व्यसनानिवधबंधनपारवश्यादिदुःखानि ॥ सूत्सवामहोत्सवसमाः ॥ ४ ॥ व्यवहारोवाचिकः ॥ कर्माणिकायिकानि ॥ ५ ॥ सुषुप्तसदृशेनिर्विकल्पात्मनितिष्ठतीतिसुषुप्तस्थः ॥ अशरीरात्मभावस्थितेर्मृतोपमः ॥ अकर्त्रात्मप्रतिष्ठत्वान्नकरोति ॥ ६ ॥ विषयसुखेष्वप्यात्मसुखमात्रतादृशारसिकः ॥ विषयदृशात्वत्यंतविरसः ॥ स्वीयताबुद्ध्यभावान्निर्घृणः ॥ स्वात्मताबुद्ध्यातुनिरुपाधिप्रेम्णाबंधुषुवत्सलः ॥ दयाविषयद्वितीयादर्शनान्निर्दयः ॥ स्वदेहौपम्येनपरशरीरेपिसुखदुःखदर्श

श्रीरामउवाच ॥ ॥ परिज्ञातेपरेवस्तुन्यनादिनिधनात्मनि ॥ संपद्यतेवदब्रह्मन्कीदृशःपुरुषोत्तमः ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शृणु संपद्यतेकीदृग्ज्ञातज्ञेयोनरोत्तमः ॥ यावज्जीवंकथंचैषकिमाचारोवतिष्ठते ॥ २ ॥ उपलाअपिमित्राणिबंधवोवनपादपाः ॥ वनमध्यस्थितस्यापिस्वजनामृगपोतकाः ॥ ३ ॥ आकीर्णंशून्यमेवास्यविपदश्चातिसंपदः ॥ स्थितस्यापिमहाराज्येव्यसनान्येवसूत्सवाः ॥ ४ ॥ असमाधिःसमाधानंदुःखमेवमहत्सुखम् ॥ व्यवहारोपिसन्मौनंकर्माण्येवात्यकर्मता ॥ ५ ॥ जाग्रदेवसुषुप्तस्थोजीवन्नेवमृतोपमः ॥ करोतिसर्वमाचारंनकरोतिचकिंचन ॥ ६ ॥ रसिकोत्यंतविरसोनिर्घृणोबंधुवत्सलः ॥ निर्दयोत्यंतकरुणोवितृष्णस्तृष्णयान्वितः ॥ ७ ॥ सर्वाभिनंदिताचारःसर्वाचारवहिष्कृतः ॥ वीतशोकभयायासःसशोकइवलक्ष्यते ॥ ८ ॥ तस्मान्नोद्विजतेलोकोलोकान्नोद्विजतेतुसः ॥ परमुद्वेगमापन्नःसंसृतौरसिकोपिसन् ॥ ९ ॥ नाभिनंदतिसंप्राप्तंनाप्राप्तमभिवांछति ॥ आस्तेनुभूयमानेर्थेनचहर्षविषादयोः ॥ १० ॥ दुःखितेदुःखितकथःसुखितेसुखसंकथः ॥ आस्तेसर्वास्ववस्थासुहृदयेनापराजितः ॥ ११ ॥ कर्मणःसुकृतादन्यदस्मैकिंचिन्नरोचते ॥ स्वभावएवमहतांननुयत्नविचेष्टितम् ॥ १२ ॥ नालंबतेरसिकतांनचनीरसतांक्वचित् ॥ नार्थेषुविचरत्यर्थीवीतरागःसरागवत् ॥ १३ ॥ यथाशास्त्रव्यवहृतेःसुखदुःखैःक्रमागतैः ॥ अनागतोपिचायातिनहर्षंनविषादिताम् ॥ १४ ॥

नादत्यंतकरुणः ॥ एवंपूर्णत्वात्स्वयंवितृष्णः ॥ अज्ञजनोद्धारस्वभावात्तद्भिनतृष्णयान्वितः ॥ ७ ॥ किमाचारोवतिष्ठतेइतिपृष्टानिबाह्यलक्षणान्याह ॥ सर्वेति ॥ अज्ञजनदुःखदर्शनात्ताननुशोचन्सशोकइवलक्ष्यते ॥ ८ ॥ नोद्विजतेनबिभेति ॥ उद्वेगंभयम् ॥ ९ ॥ अनुभूयमानेपिहर्षविषादहेतावर्थेतयोर्नास्ते ॥ १० ॥ सुखदुःखाभ्यामपराजितःअनभिभूतःसहिष्णुरितियावत् ॥ ११ ॥ नन्विितिसंबोधने ॥ नविचेष्टितमशास्त्रीयचेष्टावर्जनंयत्नतन्महतांस्वभावएव ॥ यत्नविचेष्टितमितिपाठेशास्त्रीययत्नमात्रप्रयुक्तंविचेष्टितम् ॥ १२ ॥ रसिकतामासक्तिम् ॥ नीरसतांनिष्प्रणयताम् ॥ अर्थेषुधनेषुअर्थीउपयाचकोभूत्वानविचरति ॥ १३ ॥ सुखदुःखैरनागतोऽसंस्पृष्टोप्यायातिस्पृशतीव ॥ ततोहर्षंविषादितांवानायात्येव ॥ १४ ॥

सुखदुःखाभ्यांस्पृश्यतइवेतियदुक्तंतल्लिंगोपदर्शनेनविवृणोति ॥ संप्रहृष्टाश्चेति ॥ नहर्षेनविषादितामित्युक्तिमपिहेतूपदर्शनेनविवृणोति ॥ नस्वभावमिति ॥ स्वभावंनिरतिशयानंदप्रतिष्ठाप्रयुक्तंधैर्यम् ॥ तथाचसंप्रहर्षादिलिंगविडंबनंतेषांनटविडंबनतुल्यंफलितमित्याशयेनविशिनष्टि ॥ संसाराभटीनटाइति ॥ १५ ॥ १६ ॥ १७ ॥ अज्ञास्तुनसुज्ञवदनासक्त्याविषयान्भोक्तुंजानंतीत्याह ॥ वायूनिवेति ॥ तेहिदेहात्मनैवयास्वसत्तातल्लक्षणाद्द्वीपान्मूढाःसंतापमूर्च्छिताइवकामादिसंतापशांतयेअत्यासक्त्याविषयोदरेलीयंते ॥ तथालीनाअपिप्रनप्तवैतरणीनदीप्रवाहस्थानारकिपुरुषाउपरिभागेनवायूनिवविषयान्किंचिदेवमुधास्पृशंतिनतत्त्वतःकात्स्न्र्येनविषयमनुभूयविश्रमितुंशक्नुवंतीत्यर्थः ॥ १८ ॥ सर्वैःशिष्टैःसमआचारोयस्यांस्थितौ सर्वेअर्थाश्वशीतलायस्यामितिद्वेअपिस्थितिक्रियाविशेषणे ॥ तिष्ठतितत्त्ववित्दितिशेषः ॥ १९ ॥ उक्तैर्लक्षणैस्तत्त्वज्ञपरिचयोदुर्घटःसूर्ख

संप्रहृष्टाश्चलक्ष्यंतेलक्ष्यंतेदुःखितास्तथा ॥ नस्वभावंत्यजंत्यंतःसंसाराभटीनटाः ॥ १५ ॥ आत्मीयेष्वर्थजातेषुमिथ्यात्मसुसुतादिषु ॥ बुद्बुदेष्विवतोयानांनस्नेहस्तत्त्वदर्शिनाम् ॥ १६ ॥ अस्नेहएवसुघनस्नेहार्द्रहृदयोयथा ॥ वत्सलांदर्शयन्वृत्तिंज्ञस्तिष्ठतियथाक्रमम् ॥ १७ ॥ वायूनिवप्रवाहस्थाःस्पृशंतिविषयान्मुधा ॥ देहसत्ताविषान्मूढालीयंतेविषयोदरे ॥ १८ ॥ बहिःसर्वसमाचारमंतःसर्वार्थशीतलम् ॥ नित्यमंतरनाविष्टआविष्टइवतिष्ठति ॥ १९ ॥ ॥श्रीरामउवाच ॥ ॥ स्वरूपमीदृशंतस्यकोवेत्तिमुनिनायक ॥ वदसत्यमसत्यंवाभवत्यज्ञोप्यपीदृशः ॥ २० ॥ अश्ववद्ब्रह्मचर्येणचरंतोऽचारुचेतसः ॥ मिथ्यातपस्विदार्ढ्यायभवंत्येवंविधामुने ॥ २१ ॥ ॥श्रीवसिष्ठउवाच ॥ असत्यंवास्तुसत्यंवास्वरूपंवरमीदृशम् ॥ विद्धिवेदविदांत्वेषस्वभावानुभवस्थितः ॥ २२ ॥ अनाविष्टाविचेष्टंतेवीतरागाःसरागवत् ॥ गतहासाहसंत्यज्ञान्सहसाकरुणाकुलाः ॥ २३ ॥ चित्तादर्शगतंदृश्यंसर्वंकपटकुट्टिमम् ॥ पश्यंत्यसत्परिज्ञातंस्वप्नेहेमेवहस्तगम् ॥ २४ ॥ अंतःशीतलतामेषांतांनजानंतिकेचन ॥ दूराच्चंदनदारूणामामोदमिवजंतवः ॥ २५ ॥ येतुविज्ञातविज्ञेयास्तादृशाःपावनाशयाः ॥ जानंतितांस्तथैवांतरहेःपादानिवाहयः ॥ २६ ॥

दांभिकवंचकतापसेष्वपिहठात्संपादितानामेषांलक्षणानांदर्शनादितिरामःशंकते ॥ स्वरूपमिति ॥ ईदृशमुक्तलक्षणपरिचेयंस्वरूपंसत्यमथवाअसत्यंदंभादिपरिकल्पितंवेतिकोवेदितुंशक्नोति ॥ हियतःअज्ञोपिदांभिकईदृशस्त्वदुक्तलक्षणवान्भवतिलोकेइत्यन्वयः ॥ २० ॥ अचारुचेतसोविद्वत्सादृश्यविडंबनेनतादृशमानपूजादिसापेक्षचित्ताः ॥ तपस्विशब्देनतथाख्यातिर्लक्ष्यते ॥ मिथ्यापरिकल्पितस्वतपस्विताप्रख्यातिदार्ढ्यायेत्यर्थः ॥ २१ ॥ दंभार्थमपिदृढीकृतान्येतानिलक्षणानिशुभोदर्काण्येवेतिनतल्लक्षणवतामुपेक्षाकार्यायतस्तादृशानामनुसरणेस्वभावसिद्धलक्षणसंपन्नस्तत्त्वविदपिदैवाल्लभ्यतइत्याशयेनश्रीवसिष्ठउत्तरमाह ॥ असत्यंवेति ॥ ईदृशमुक्तलक्षणसंपन्नंस्वरूपंवरंदुर्लभत्वाच्छ्रेष्ठम् ॥ वेदविदांवेदार्थतत्त्वविदांतुएषलक्षणकलापःस्वभावानुभवबलादेवस्थितःप्रतिष्ठितोनहठात्संपादितइत्यर्थः ॥ २२ ॥ अनाविष्टाःक्रियाफलेष्वनभिनिविष्टाः ॥ २३ ॥ सर्वंदृश्यंचित्तादर्शगतंकपटकुट्टिमकल्पमसत्पश्यंति ॥ २४ ॥ २५ ॥ यद्यपितत्त्वविदःस्वरूपमज्ञाज्ञातुंनशक्नुवंतितथापितत्त्वविदोजानंत्येवेत्याह ॥ येत्विति ॥ पादान्पदानि ॥ २६ ॥

दांभिकास्तुलक्षणानिप्रख्यापयंति तत्त्वज्ञास्तुनिगूहयंतीत्यनेनविशेषेणवातेपरिचेयाइत्याशयेनाह ॥ भावमिति ॥ किमर्थंनिगूहयंतितत्राह ॥ ग्राम्यैरिति ॥ ग्राम्यैर्पामनगरा
दिपुभवैर्धनैरनर्घ्यःक्रेतुमशक्यश्चिंतामणिःआपणेकःप्रसार्यतेनकश्चिदित्यर्थः ॥ २७ ॥ आपणप्रसारणलिंगेननार्यचिंतामणिरितिवद्बलास्वगुणप्रख्यापनलिंगेनदांभिकोयंन
तत्त्वविदितिज्ञेयमित्याशयेनाह ॥ तस्मिन्निति ॥ तेषांतत्त्वविदांतस्मिन्स्वगुणादौविपयेनिगूहनेएवभावस्तात्पर्यंनतुदर्शनपरेभ्यःप्रख्यापने यतस्तेनिर्वासनाःख्यातिमानादिराग
वासनाशून्याः ॥ अंगेत्यामंत्रणे ॥ २८ ॥ किमर्थंतेख्यात्यादिनेच्छंतितत्राह ॥ एकांतेति ॥ ख्यातिमानधनादिसमृद्धौजनसमाजाभिमानाद्यनर्थसहस्रैर्विक्षेपेआत्मसुखानुभ
वविच्छेदापत्तेरितिभावः ॥ अमानंपूजावर्जनम् ॥ दौर्गत्यमकिंचनता ॥ जनैरवज्ञमयोऽवज्ञाः ॥ २९ ॥ याविदितवेद्यतासास्वसंवेदनेनस्वानुभवेनैवसंवेद्यःसारोनिरतिशयानं

भावंनिगूहयंत्येतेतमुत्तममनुत्तमाः॥ ग्राम्यैर्धनैःकिलानर्घ्यःकश्चिंतामणिरापणे॥२७॥ तस्मिन्निगूहनेभावोयतस्तेषांनदर्शने॥ निर्वा
सनागतद्वैतागतमानाःकिलांगते॥ २८॥ एकांतामानदौर्गत्यजनावज्ञमयस्तुतान्॥ सुखयंतियथारामनतथैवमहर्धयः॥ २९॥ स्वसं
वेदनसंवेद्यसाराविदितवेद्यता॥ नैपादर्शयितुंशक्यादृश्यतेनचतद्विदा॥३०॥ गुणंममेमंजानातुजनःपूजांकरोतुमे॥ इत्यहंकारिणामी
हानतुतन्मुक्तचेतसाम्॥३१॥ क्रियाफलानिचिद्व्योमगमनादीनिराघव॥ अज्ञानामपिसिध्यंतिमंत्रौपधिवशादिह॥ ३२॥ योयादृक्
क्लेशमाधातुंसमर्थस्तादृगेवसः॥ अवश्यंफलमाप्नोतिप्रबुद्धोस्त्वज्ञएववा॥ ३३॥ आमोदश्चंदनस्येवस्पंदनस्यफलंहृदि॥ सर्वस्यैवा
स्तितन्नूनंतद्वृताममवाप्यते॥ ३४॥ अहंतावासनाद्वैतंवस्तुतादृश्यवस्तुपु॥ यस्यास्त्यसौसाधयतिखगमादिक्रियाफलम्॥ ३५॥ इदंन
किंचिद्भांतिवांखंचेतिज्ञस्तुवेत्तियः ॥ सोवासनःकर्मवात्याःकथंसाधयतिक्रियाः॥ ३६॥ नैवतस्यकृतेनार्थोनाकृतेनेहकश्चन॥ नचा
स्यसर्वभूतेषुकश्चिदर्थव्यपाश्रयः॥३७॥ नतदस्तिपृथिव्यांवादिविदेवेषुवाक्वचित्॥ यदुदारमनोवृत्तेर्लोभायविदितात्मनः॥ ३८॥जग
देवतृणंयस्यनकिंचिद्रजएववा ॥ किंनामतस्यभवतुअन्यदादेयतांगतम् ॥ ३९॥ निर्वाहितजगद्यात्रःपरिपूर्णमनामुनिः॥ यथास्थि
तमसावास्तेसंप्रयातियथागतम्॥ ४०॥

दांयस्यांसा ॥ एपाअन्यंप्रतिदर्शयितुंनशक्यायतस्तद्विदापिसानदृश्यतेनदृग्विपर्याक्रियतेकिंतुस्वप्रकाशतयैवस्वयंप्रथतइत्यर्थः ॥ ३० ॥ ३१ ॥ व्योमगमनादीनिमंत्रजपादि
क्रियाफलानिअज्ञानामपिसिद्ध्यंति ॥ चिदितिनिपातोबाहुल्यद्योतनार्थः ॥ ३२ ॥ ३३ ॥ स्पंदनस्यविहितनिषिद्धकर्मणांफलंस्वहृद्येवसर्वस्यापिजंतोरपूर्वात्मनाअस्ति त
च्चकालेनाविर्भूतंसमवाप्यते ॥ ३४ ॥ सिद्धिलक्षणदृश्यवस्तुपुअहंभोक्तास्यामित्यहंतावासनालक्षणंद्वैतंपरिच्छिन्नात्मकल्पनंयस्यास्तिसखेचरसिद्ध्यादिक्रियाफलंसाधयती
त्यर्थः ॥ ३५ ॥ इदंसिद्धिजातंनकिंचित्तुच्छंभ्रांतिर्मनोभ्रममात्रंखमधिष्ठानचिदाकाशमात्रंवेतियस्तुज्ञोवेत्तिअवासनःसतत्त्वज्ञःकर्मवात्याभ्रमणप्रायखेचरादिसिद्धिफलाम
त्रौपधादिक्रियाःकथंसाधयति ॥ ३६ ॥ ३७ ॥ ३८ ॥ कात्स्न्र्यपरएवकारः ॥ कृत्स्नंजगद्यस्यतृणंरजोनकिंचिदेववातस्यधीरस्यान्यदनात्मभूतंकिमादेयतांगतमुपादेयमस्तु
नकिंचिदित्यर्थः ॥ ३९ ॥ निर्वाहिताजगद्यात्रालोकसंग्रहार्थप्रवृत्तिर्यस्य ॥ यथाआगतंयथाप्राप्तंशिष्टाचारंसंप्रयातिअनुसरति ॥ ४० ॥

॥४१॥ स्वयंह्लादंधत्तेअन्यस्यचकरोति ॥४२॥ ह्लादकारित्वंतस्यविशदयति ॥ मंदारेति ॥ देवभूमयोनंदनादयः ॥ पंडितबुद्धयोबोधनैरित्यर्थः ॥४३॥ सारग्राहीहिविवेकीसुरभिर्यीष्मर्तुस्तत्संबंध्यालोकभोगिषुचंद्रबिंबैःसारमादत्तेसौगंध्यभोगिपुवसंतैःसारमादत्तेसौभाग्यभोगिपुमहतांतत्त्वविदांअहतैःरागाद्यनुपहतैःआशयैःसारमादत्तइतिद्वंद्वनिर्दिष्टानांव्युत्क्रमेणसंबंधः ॥ तैरेवहितत्सारोलभ्योनान्यत्रान्यैरुपायैरित्यर्थः ॥ ४४ ॥ महतामाशयैःकंसारमादत्तइतिचेत्प्रथमंजगन्मिथ्यात्वदर्शनात्क्रमात्सर्वैषणात्यागमित्याह ॥ भ्रांतिमात्रमिति ॥ ४५ ॥ ततःशीतोष्णादिद्वंद्वसहिष्णुतालक्षणंसारमादत्तेइत्याह ॥ शीतेति ॥ ४६ ॥ तदनंतरंसर्वभूतानुकंपास्वरूपदृढावलंबनंयथाप्राप्तेनजलमात्रेणापिसं

नित्यांतःशीतलोमौनीसत्त्वीभूतमनोवनिः॥ परिपूर्णार्णवाकारोगंभीरप्रकटाशयः॥४१॥ रसायनपरापूर्णकंदवत्ह्लादमात्मनि॥ धत्ते करोतिवान्यस्यसकलेंदुरिवामलः॥४२॥ मंदारमंजरीकुंजपिंजरादेवभूमयः॥ नतथाह्लादयंत्येतायथापंडितबुद्धयः॥४३॥ चंद्रबिंबैर्वसंतैश्चमहतामहताशयैः॥ सारंसौभाग्यसौगंध्यसौरभालोकभोगिषु ॥४४॥ भ्रांतिमात्रमिदंविश्वमिंद्रजालमसन्मयम्॥ त्यजतीतिविनिश्चित्यदिनानुदिनमेषणाः॥४५॥ शीतातपादिदुःखानिनिजदेहगतान्यपि॥ अन्यदेहगतानीवज्ञःपश्यत्यवहेलया॥४६॥ करुणोदारयावृत्त्यावृत्त्याव्रततिधीरया॥ नीरसोनीरसारांतुसारतांसरतिस्थितिम्॥४७॥ व्यवहारंयथाप्राप्तंलोकसामान्यमाचरत्॥ चराचराणांभूतानामुपर्येवावतिष्ठते॥४८॥ प्रज्ञाप्रासादमारूढस्त्वशोच्यःशोचतेजनान्॥ भूमिष्ठानिवशैलस्थःसर्वान्प्रज्ञोनुपश्यति ॥४९॥ चिरंकल्लोलवलितःसुमनाजलधौभ्रमे ॥ परंपारमुपागत्यपरांविश्रांतिमेतिसः॥५०॥ हसन्सशांतयावृत्त्याप्राक्तनीर्जागतीर्गतीः॥ स्मयमानइवास्तेंतर्जनताश्चघनभ्रमाः॥५१॥ एताःकांतारनिर्मग्नमिताःसंसारदृष्टयः॥ असत्योद्धतवत्योमामित्यंतर्यातिविस्मयम्॥५२॥ दृष्ट्वाष्टगुणमैश्वर्यमनिष्टंमेतृणायते ॥ इत्युपैत्युपशांतत्वात्स्मयमानोपिनस्मयम् ॥५३॥ कश्चिद्गिरिगुहागेहःकश्चित्पुण्याश्रमाश्रयः॥ कश्चिद्गृहस्थाश्रमवान्कश्चिद्दूरटन्स्थितः ॥५४॥ कश्चिद्भिक्षाचराचारःकश्चिदेकांततापसः॥ कश्चिन्मौनव्रतधरःकश्चिद्ध्यानपरायणः॥ ५५ ॥ कश्चिद्विपश्चिद्विख्यातःकश्चिच्छ्रोताश्रुतेःस्मृतेः॥ कश्चिद्राजाद्विजःकश्चित्कश्चिदज्ञइवास्थितः॥५६॥ गुटिकांजनखङ्गादिसिद्धःकश्चिन्नभोगतः॥ कश्चिच्छिल्पकलाजीवीकश्चित्पामररूपभृत् ॥ ५७ ॥

तोपइत्यादिगुणसारमादत्तेइत्याह ॥ करुणेति ॥ इत्थंनीरसोविरक्तःसःकरुणयाउदारावृत्तिःसर्वस्वव्ययेनाप्यार्त्तपरिपालनव्रतंतया व्रततिर्लतातद्वद्धीरयावृत्त्यापरार्थैकप्रयोजनच्छायाफलपुष्पादिसंग्रहःस्वतरुदृढावलंबोजलमात्रेणापियथाप्राप्तेनसंतोषइत्येवंरूपयावृत्त्यानीरमात्रमपिसारःसंतोषहेतुर्यस्यांस्थितौतादृशस्थितिरूपांसारतांसरति ॥ ४७ ॥ उपरिउत्कर्षेऊर्ध्वंमूलभूतेब्रह्मणिवा ॥ ४८ ॥ उपरिस्थितिमेवदर्शयति ॥ प्रज्ञेति ॥ ४९ ॥ तदैवासौचिरप्रवृत्तरागादिविक्षेपदुःखेभ्योमुक्तःसम्यग्विश्राम्यतीत्याह ॥ चिरमिति ॥ कल्लोलैःषडूर्मिभिर्वलितोविक्षिप्तः ॥ ५० ॥ ५१ ॥ कांतारेमार्गभ्रंशेननिर्मग्नोयोंधस्तेनमिताउपमिताः ॥ उद्धतवत्योमोहितवत्यः ॥ ५२ ॥ इतिएवंज्ञात्वास्मयमानंईषद्धसन्नपिस्मयंगर्वंनोपैति ॥ ५३ ॥ तस्यस्थानादिनियमोपिनास्तीत्याह ॥ कश्चिदिति ॥ अटन्ूरटन्इतिवाछेदः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

॥ ५८ ॥ रामप्रश्नवाक्येकीदृशःपुरुषोत्तमइतिपदंश्रुत्वातदर्थंजिज्ञासामपिसंभावयन्पुरुषंवर्णयंस्तदुत्तमतांदर्शयति ॥ पुरुषइति ॥ नसनश्यतीत्यविनाशित्वात्सएवोत्तमइत्यर्थः ॥ ५९ ॥ छेदभेदादिविनाशहेत्वसंस्पर्शादिभिरपिसएवोत्तमइत्याह ॥ अच्छेद्यइति ॥ ६० ॥ एतादृशपुरुषोत्तमतत्त्वपरिज्ञानादेवतत्त्ववित्पुरुषोत्तमोनतुवर्णाश्रममर्यादापालनमात्रेण तदभावेपितस्यपुरुषोत्तमत्वानपायादित्याशयेनाह ॥ इतीति ॥ स्थानंवर्णाश्रममर्यादास्थितिस्तदास्थानियमेनतस्यकिंसाध्यमितिविद्याप्रभावोक्तिररुन्मुखान्यतीन्सालावृकेभ्यःप्रायच्छमितिवत् ॥ ६१ ॥ तस्याविनाशिपुरुषत्वमेवद्रढयन्नुपसंहरति ॥ पातालमिति ॥ तत्त्वविद्बलात्स्वनाशचिकीर्षयापातालमाविशतुनभोविलंघ्योर्ध्वंवायातुदिङ्मंडलंवाभ्रमतुयेनभ्रमणेनमानसोत्तरलोकालोकादिगिरिशिलासहस्रघर्षणात्पेषणंसंचूर्णनमेवसंभाव्यते ॥ पेषणमेवयात्विति पाठेगिरिशिलासहस्रैःस्वस्यपेषणंकारयतुवेत्यर्थः ॥ तथाप्येतत्तत्त्वविरस्वरूपमसंगाद्वयंचिन्मात्रमजरमेवेतिनाशंनतुयाति ॥ यतस्तदाकाशकोशइवशिवंनिरुपप्लवनित्यनिरतिशयानंदरूपमेवेत्यर्थः ॥ ६२ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० द्व्युत्तरशततमःसर्गः ॥ १०२ ॥ ॥ ५ ॥ ॥ चितोनित्यत्वमेकत्वंस्वातंत्र्यमपिसाध्यते ॥ सच्छास्त्रस्यास्यमाहात्म्यंहितंचात्रोपदिश्यते ॥ १ ॥

कश्चित्त्यक्तसमाचारः कश्चिच्छ्रोत्रियनायकः ॥ कश्चिदुन्मत्तचरितःप्रव्रज्यांकश्चिदाश्रितः ॥ ५८ ॥ पुरुषोनशरीरादिनचचित्तादिकिंचन ॥ पुरुषश्चेतनंनामनसनश्यतिकर्हिचित् ॥ ५९ ॥ अच्छेद्योसावदाह्योसावक्लेद्योऽशोष्यएवच ॥ नित्यःसर्वगतःस्थाणुरचलोसौसनातनः ॥ ६० ॥ इतिसम्यक्प्रबुद्धोयःसयथायत्रतिष्ठति ॥ तथातिष्ठतुतत्रात्रस्थानास्थानियमेनकिम् ॥ ६१ ॥ पातालमाविशतुयातुनभोविलंघ्यदिङ्मंडलंभ्रमतुपेषणमेवयेन ॥ चिन्मात्रमेतदजरंनतुयातुनाशमाकाशकोशइवशांतमजंशिवंतत् ॥ ६२ ॥ ॥ इ० वा० म० वा० दे० मो० नि० उ० मरणाद्यभावोपदेशोनामद्व्युत्तरशततमःसर्गः ॥ १०२ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ भामात्रंभानमात्रंवाशांतंभासतएवच ॥ चिन्मात्रंयदनाद्यंतंतस्यनाशःकथंकदा ॥ १ ॥ तावन्मात्रंचपुरुषःकदाचित्सननश्यति ॥ यदिनश्यतिचिन्मात्रंभूयोजायेतकिंकथम् ॥ २ ॥ नचान्यदन्यच्चिन्मात्रंक्वचित्किंचनकस्यचित् ॥ सर्वानुभवसादृश्येकीदृशीनामसान्यता ॥ ३ ॥ सर्वस्यैवहिमंशीतमुष्णोग्निर्मधुरंपयः ॥ चिन्मात्रस्यावदातस्यकीदृगन्यत्वमत्रतु ॥ ४ ॥

तत्रचित्सामान्यस्याविनाशित्वंसर्वानुभवबलेनप्रथमंसाधयति ॥ भामात्रमिति ॥ जाग्रत्स्वप्नयोरंतःकरणसाक्षितयासुषुप्तावज्ञानस्वापादिसाक्षितयाचप्रत्यगात्मभामात्रंविषयभानमात्रंवासर्वेषांभासतएवेतिप्रत्यक्षेणचकाराद्व्यवहारस्मृत्यादिलिंगेनचयदनाद्यंतंचिन्मात्रंतत्सिद्धंतस्यकथंकेननिमित्तेननाशोभवेत्तदसाधितस्यनिमित्तस्याप्रसिद्धेस्तत्साधितस्यचतदुपजीवकतयातन्नाशनिमित्तत्वायोगादेवंकदावानाशोभवेत् तादृशकालस्यापितदधीनसिद्धिकस्यतदुपजीवकत्वादितिभावः ॥ १ ॥ भवतुचिन्मात्रमविनाशिपुरुषस्यकिमायातंतत्राह ॥ तावन्मात्रमिति ॥ तन्नाशेअपेक्षदृष्टिरेवनस्यादसाक्षिकसर्गासिद्धेरित्याह ॥ यदीति ॥ २ ॥ ननुचिदंतरमुत्पत्स्यतेननतःसर्गःप्रवर्त्स्यतीतित्राह ॥ नचेति ॥ औत्तरकालिक्याश्चितःपूर्वचितोभेदःकिमध्येविच्छेदानुभवात्स्यादुतवैलक्षण्यात् ॥ नतावद्विच्छेदानुभवादनुभवस्यैवचित्वात्तत्सद्भावेविच्छेदासिद्धेः ॥ नापिवैलक्षण्यम् ॥ अचित्वापत्तेः ॥ सर्वांशेअनुभवस्यपूर्वोत्तरकालयोःसादृश्येसान्यताभिन्नताकीदृशीनामअलीकेत्यर्थः ॥ ३ ॥ कालभेदादिवपुरुषभेदादपिचितोनभेदः हिमशैत्यादिविषयेष्विवचित्यपिवैलक्षण्याननुभवादेवेत्याह ॥ सर्वस्यैवेति ॥ ४ ॥

ननुसुखदुःखानुभवलक्षणविशेषज्ञानातिरिक्तंनचित्सामान्यमभ्युपगच्छामः विशेषविज्ञानेषुचाऽवच्छेदकतासंबंधेनशरीरंकारणंतन्नाशाच्चज्ञाननाशइत्यभ्युपगच्छतांचार्वाकवैशेषिकादीनांशंकामुद्भाव्यनिरस्यति ॥ शरीरेति ॥ हर्षस्थानेइति ॥ दुःखप्रागभावासमानकालिकदुःखध्वंसएवहिवोमुक्तिःसाचदेहनाशाच्चित्सामान्यनाशेउत्तरत्रदेहदुःखादिसाधकाभावादेवसिध्यति ॥ नहिचिदतिरिक्ततत्साधकमस्ति नचनिःसाधकोपिमदेहःसिद्ध्यति नचतंविनातत्साधिकाचित्सिद्ध्यतीतिमुक्तिहेतोर्मरणाद्धर्षएवस्यान्नविषादइत्यर्थः ॥ ५ ॥ तथ्यंस्तुतथेत्याशयामुखंव्याददानस्याशांछिनत्ति ॥ नचेति ॥ प्रायेणहिपिशाचाबंधूनेवबाधंते प्रत्यंतदेशेष्वेवबहुधापिशाचादृश्यंतइतिद्योतनायबंधुम्लेच्छग्रहणम् ॥ ६ ॥ किंचशरीरनाशाच्चिन्नाशइत्यसंगतमेवसत्येवमृतशरीरेचिन्निवृत्तिदर्शनविरोधादित्याह ॥ यावदिति ॥ नचलतिनचेतति ॥ ७ ॥ यदिकश्चिच्चार्वाकोब्रूयात्जीवन्म्लेच्छजीवधर्मएवपिशाचदर्शनंनमृतम्लेच्छचिदवशेषप्रयुक्तःपिशाचस्तत्रास्तीतितदाशंकामुद्दंक्यपरिहरति ॥ पिशाचानुभवइति ॥ सर्वदाबंधुमरणंविनासपिशाचंकिंनपश्य

शरीरनाशेनाशश्चेच्चिन्मात्रस्यतदुच्यताम् ॥ हर्षस्थानेविषादःकिंमरणेसंसृतिक्षये ॥ ५ ॥ नचनामशरीरस्यनाशेनश्यतिचिन्नभः ॥ देहेनष्टेपिबंधूनांम्लेच्छैर्दृष्टापिशाचता ॥ ६ ॥ यावच्छरीरसत्ताचेच्चेतनस्यतदुच्यताम् ॥ शवःकस्मान्नचलतिसत्यखंडेशरीरके ॥ ७ ॥ पिशाचानुभवोजीवधर्मश्चेत्तत्ससर्वदा ॥ किंनपश्यतिकिंबंधौमृतेपश्यतितत्तथा ॥ ८ ॥ जीवधर्मोविशिष्टश्चेत्तादृशस्तंनरःकथम् ॥ मिथ्यादेशांतरमृतेपिशाचत्वंनपश्यति ॥ ९ ॥ तस्मात्सर्वात्मकंत्वेतच्चिन्मात्रंननियंत्रितम् ॥ यद्यद्यत्रयथावेत्तितत्तत्त्रावगच्छति ॥ १० ॥ अबाधितैवैकघनासंविद्भवतियादृशी ॥ तादृश्येवानुभूतिर्हितत्स्वभावोत्रकारणम् ॥ ११ ॥ अन्यन्नसंभवत्यत्रसर्गादावेवकारणम् ॥ यन्नामतदिदानींस्यात्कथ्यतांकीदृशंकथम् ॥ १२ ॥ सर्गादावेवनोत्पन्नानचैवाद्यावभासते ॥ विकल्पश्रीर्जगद्भासाकेवलंभातिचिन्नभः ॥ १३ ॥ आभासमात्रमेवेदंदृश्यमित्यवबुध्यते ॥ दृश्यमित्यवबोधेनतद्गतेस्यात्क्वदृश्यता ॥ १४ ॥ सचमत्कारचातुर्यंचारुचिन्नभसारसात् ॥ बोधेनबुध्यतेदृश्यमित्यबोधान्नबुध्यते ॥ १५ ॥

तिमृतेसत्येवकस्मात्पश्यतीतिवक्तव्योनियमद्वयेत्वयाहेतुरित्यर्थः ॥ ८ ॥ सजीवोबंधुमरणज्ञानविशिष्टश्चेत्तद्धर्मःपिशाचदर्शनमितितादृशोनियमश्चेत्तत्तथापिजीवत्येवमिथ्यादेशांतरमृतेऽन्येनकल्पितेसतितत्पिशाचत्वंनरःकथंनपश्यति ॥ ९ ॥ तस्माच्चितोभेदविनाशयोरयोगात्सर्वात्मकत्वेसिद्धेसतिवस्तुकृतपरिच्छेदेनापितन्ननियंत्रितम् ॥ तथाचयद्वस्तुयत्रदेशेकालेवावेत्तिस्वात्मानमेवतत्तद्रूपस्वात्मनावगच्छतीतिनतद्द्वयंपृथगस्तीत्यर्थः ॥ १० ॥ एवंचसर्गादौसत्यकामत्वादबाधितासंवित्स्वसंकल्पात्मनायादृश्येवभवतितादृश्येवेदानींसर्वजनानामनुभूतिः ॥ ११ ॥ सत्यसंकल्पब्रह्मसंविदोऽन्यत्प्रधानपरमाण्वादिकंसर्गादौकारणंनसंभवत्येव ॥ यत्कारणंब्रह्मातिरिक्तंस्यात्तत्कीदृशंकथंचतत्कारणंइदानींमत्पुरतोवादिभिःकथ्यतांश्रुतियुक्तिभ्यांसद्यएवनिरसिष्यामीत्यर्थः ॥ १२ ॥ तवतर्हिकीदृशःसिद्धांतस्तमाह ॥ सर्गादावेवेति ॥ १३ ॥ यदिकेवलंचिन्नभएवभातितर्हिदृश्यमितिसर्वैर्जनैःकिमवबुध्यतेतत्राह ॥ आभासमात्रमेवेति ॥ विवर्तमात्रमेवेत्यर्थः ॥ दृश्यमित्यवबोधेनगृह्यमाणस्याऽस्यशुक्तिरजतमरुनदीकेशोंड्रकादेस्तच्चिन्नभःकृतेकसत्यतादृष्टेत्यर्थः ॥ १४ ॥ तथाचचिन्नभसास्वचमत्कारचातुर्यमेवदृश्यमितिरसाज्जायतस्वमबोधेनबुध्यतेसुषुप्तौचाबोधान्नबुध्यतइतिनिष्कर्षइत्यर्थः ॥ १५ ॥

तर्हितौबोधाबोधौकौतत्राह ॥ बोधइति ॥ तस्यचिन्मात्रस्यएवरूपंनजडस्य ॥ अतस्तदात्मनाएकमेव नहिबोधमंतरेणाबोधस्यरूपंप्रसिद्ध्यति ॥ सतिचबोधेतत्रनभोर्थोदुर्लभइति राहोःशिर[illegible]वराहुरितिवद्वाक्यमात्रकृतोभेदोनत्वर्थेऽस्तीत्यर्थः ॥ १६ ॥ अथवास्वतत्त्वाविचारणैवचितोदृश्यताविचारेनष्टेत्याह ॥ याचेति ॥ १७ ॥ अतएवविचारेएवमहान्यत्नःकार्यइतिबहुशोमयोक्तमित्याह ॥ अस्मिन्नेवेति ॥ यत्नेनविचारस्यकिंस्यात्तदाह ॥ यत्नेनेति ॥ लोकद्वयेइहवाअमुत्रवाज्ञानसिद्धिदः ॥ तथाचसूत्रे ॥ आवृत्तिरसकृदुपदेशात् ॥ ऐहिकमप्रस्तुतप्रतिबंधेनतद्दर्शनादिति ॥ १८ ॥ ननुनित्यापरोक्षेवस्तुनिप्रवृत्तमुपदेशवाक्यंसकृच्छ्रवस्यैवाविद्यांशमयित्वावस्तुप्रकटयिष्यतिकिमभ्यासेनतत्राह ॥ अविद्योपशमइति ॥ सिद्धिंजीवन्मुक्तिप्रतिष्ठाम् ॥१९॥ तर्हिकंपंथमुपादायविचारोभ्यसनीयःकेनवाशीघ्रंप्रबोधःसिद्ध्येत्तत्राह ॥ नेति ॥ न्याशमादिसाधनसंपन्नपुरुष

बोधोऽबोधश्चतद्रूपमेवमेवनिरामयम्॥भेदोत्रवाचिनत्वर्थेतस्मान्नास्त्येवदृश्यता॥१६॥याचासीदृश्यतैषांतांविद्धित्वमविचारणाम्॥ साचेदानींदि[illegible]रणविनष्टातःक्वदृश्यते ॥ १७ ॥ अस्मिन्नेवधियोयत्नआत्मज्ञानविचारणे ॥ यत्नेनपरमोभ्यासःसलोकद्वयसिद्धिदः ॥ १८ ॥ अविद्योपशमस्त्वेपजातोपिभवतामिह ॥ अभ्यासेनविनासाधोनसिद्धिमुपगच्छति ॥ १९ ॥ न्रोद्वेगंसंपरित्यज्यगृहीत्वानुदिनंक्षणम् ॥ लोकद्वयहितंपथ्यमिदंशास्त्रंविचार्यताम् ॥२०॥विज्ञातमप्यविज्ञातमात्मज्ञानमिदंभवेत्॥ भवतांभूरिभागानांसंभूयाभ्यसनंविना ॥ २१ ॥ योयमर्थंप्रार्थयतेतदर्थंयततेतथा ॥ सोवश्यंतमवाप्नोतिनचेच्छ्रांतोनिवर्त्तते ॥ २२ ॥ तस्मादस्मान्निवर्त्तध्वमसच्छास्त्रविचारणात् ॥ शांतिंप्राप्स्यथसच्छास्त्राज्जयलक्ष्मींयथारणात् ॥ २३॥ विवेकंचाविवेकंचवहत्येपामनोनदी ॥ यत्रैववाह्यतेयत्नात्तत्रैवस्थितिमृच्छति ॥ २४ ॥ अस्माच्छास्त्रादृतेश्रेयोनभूतंनभविष्यति ॥ ततःपरमबोधार्थमिदमेवविचार्यताम् ॥ २५॥ स्वयमेवविचार्येदंपरोबोधोनुभूयते ॥ संसाराध्वश्रमहरोनत्वेतद्वरशापवत् ॥ २६ ॥ यन्नपित्रानवामात्रानचापिसुकृतैःकृतम् ॥ श्रेयस्तद्धःपरिज्ञातमिदमाशुकरिष्यति ॥ २७॥ भवबंधमयीसाधोविषमेयंविषूचिका ॥ आत्मज्ञानादृतेदीर्घानकदाचनशाम्यति ॥ २८ ॥ महामोहमयीमायामिथ्यैवाहमितिस्थिता ॥ शास्त्रार्थभावनेनाशुमुच्यतांपरशोच्यता ॥ २९ ॥

णआलस्यारत्याद्युद्वेगंतद्धेतुयथेष्टाशनदुःसंगादिचपरित्यज्यक्षणंगुरुशुश्रूपादिनियमंगृहीत्वाइदंमहारामायणाख्यंशासनाच्छास्त्रमनुदिनंविचार्यताम् ॥ २० ॥ तत्रचबहुभिःसतीर्थ्यैःसंभूयाभ्यसनंपरस्परानुभवसंवादेनसद्योज्ञानप्रतिष्ठाहेतुरित्याह ॥ विज्ञातमिति ॥ अविज्ञातंविस्मरणादविज्ञातप्रायम् ॥ भूरिभागानांबहुविधासंभावनादिशालिनाम् ॥ २१ ॥ ज्ञानंदुर्लभमित्युद्वेगाच्छ्रवणंनत्याज्यमित्याह ॥ यइति ॥ २२ ॥ अनात्मशास्त्राभ्यासान्निवर्त्तेरंतच्छास्त्राभ्यासःकार्यइत्याह ॥ तस्मादिति ॥ जयलक्ष्मीभूजयलक्ष्मीःस्वर्गजयलक्ष्मीर्वा ॥ २३ ॥ यत्नात्विरोधिस्रोतोंतरनिरोधप्रयत्नात् ॥ २४ ॥ श्रेयःप्रशस्यतरंविवेकसाधनम् ॥ २५ ॥ तच्छास्त्रंविचार्यस्थितेनस्वयंप्रत्यक्षतयाआत्मतत्त्वबोधोनुभूयतेननुवरवत्शापवद्वाकालांतरविलंबेनेत्यर्थः ॥ २६ ॥ पितृमात्राद्यपेक्षयापिशास्त्रमेतद्धितकृत्तममित्याह ॥ यदिति ॥ विचारेणशास्त्रंपरिज्ञातंसत् परिज्ञातंप्रत्यक्षंश्रेयइतिवा ॥ २७ ॥ २८ ॥ अहमितिमिथ्यैवस्थितामहामोहमयीमायातद्युक्तापराशोच्यताचमुच्यताम् ॥ २९ ॥

आपातमधुरंव्योमशून्यंविषयजातंलिहंतःसंतोव्योमैकरूपिणीमनंतांसंसृतिमायातलेलिहानाःक्षुधितारसशून्यंवायुंलिहंतःअहयःसर्पाइव ॥ ३० ॥ ३१ ॥ मरणरूपआयुषोऽवधिर्यावन्नायातितावदेवभवतांसच्छास्त्रावलंबनयोग्यतयाआश्वासनाअस्ति ॥ ३२ ॥ तदुत्तरंकिंभविष्यतितत्राह ॥ आगच्छंत्यामिति ॥ तंतादृशंपरितापमवाप्स्यथयत्रअंगानामंगानांविच्छेदोपिशीतचंदनलेपनवदवश्यंभोक्तव्यइत्यर्थः ॥ ३३ ॥ घनभ्रमामूर्खाजनायुद्धादौप्राणपण्येनापिधनंजयाभिमानंचक्रीणंति ॥ यथाशास्त्रैर्विवेकवैराग्यश्रवणाद्युपायैःप्राप्यातत्त्वबुद्ध्याअजरंमोक्षपदंकथंनक्रीणंत्याश्चर्यमेतदित्यर्थः ॥ ३४ ॥ यैर्विवेकिभिःअयत्नेनस्वतत्त्वज्ञानमात्रेणचिदंबरेब्रह्माकाशेपदंस्थानंक्रियतेपरंसर्वोत्कृष्टैस्तादृशैरज्ञानशत्रुवधसमर्थैःसच्छास्त्राद्युपेक्षयास्वमूर्धनिअज्ञानशत्रुपादःकथंसह्यते ॥ ३५ ॥ हेजनाःयूयंनिर्गतौमानमोहौयस्मात्तथाविधंदृढविवेकमापन्नाःसंतस्तत्त्वबुद्ध्यामोक्षगतिंगच्छतअधमांसंसारगतिमागच्छत ॥ ३६ ॥

यातमाऽऽपातमधुरंव्योमव्योमैकरूपिणीम् ॥ शून्यंवायुंलिहंतोंतर्लेलिहानाइवाहयः ॥ ३० ॥ यांतिवोदिवसाःकष्टमविज्ञातगमागमाः॥ व्यवहारेहितैरेवप्रतिपालयतांमृतिम्॥ ३१ ॥ तावदाश्वासनैषास्तिभवतांभयभागिनाम्॥ दिनानिकतिचिद्यावन्नायातिमरणावधिः॥ ३२ ॥ आगच्छंत्यांमृतौकष्टंपरितापमवाप्स्यथ ॥ तंयत्रांगांगविच्छेदःशीतचंदनलेपनम्॥ ३३॥ क्रीणंतिप्राणपण्येनधनंमानंघनभ्रमाः॥ यथाशास्त्रैःकथंबुद्ध्यानक्रीणंत्यजरंपदम्॥ ३४॥ पदंपरमयत्नेनक्रियतेयैश्चिदंबरे ॥ कथंतैःसह्यतेऽज्ञानशत्रुपादःस्वमूर्द्धनि॥ ३५॥ निर्मानमोहमापन्नागतिंगच्छतमाधमाम् ॥ क्रियतेस्वात्मबोधेनमूलकाषोमहापदाम् ॥ ३६॥ प्रलपंतमहोरात्रंयुष्मदर्थेनमामिमम्॥ यंप्रदृश्येदमाकर्ण्यस्वात्मनैवात्मताप्यंताम्॥ ३७॥ अद्यैवनचिकित्सांयःकरोतिमरणापदः॥ संप्राप्तायांमृतौमूढःकरिष्यतिकिमातुरः॥ ३८ ॥ अस्माद्ग्रंथादृतेग्रंथोनान्यःस्वात्मावबोधने॥ नूनमर्थकरोग्राह्यस्तिलस्तैलार्थिनामिव॥ ३९॥ आत्मज्ञानमिदंशास्त्रंप्रकाशयतिदीपवत्॥ पितेवबोधयत्याशुकांतेवरमयत्यलम्॥ ४० ॥ विद्यमानमपिज्ञानंज्ञातंशास्त्रगणान्नयत्॥ दुर्बोधंमधुरंत्वज्ञास्यंतीतोनसंशयः॥ ४१ ॥ इदमुत्तममाख्यानंमुख्यानांशास्त्रदृष्टिषु॥ सुखेनबोधदंहृद्यमपूर्वंनतुकिंचन॥ ४२॥

बहुकालंबहुप्रकारैरस्मद्बोधनेप्रवृत्तोयंवसिष्ठःकंठशोषदुःखादिमुच्यतामितिमयिदययावामद्वचनंसम्यगाकर्ण्यस्वात्मायुष्माभिर्बुध्यतामितिवात्सल्यातिशयेनाह ॥ प्रलपंतमिति ॥ यंजगत्प्रसिद्धमिमंयुष्मद्बोधनायोद्युक्तंयुष्मदर्थेनअहोरात्रंप्रलपंतंकंठशोषश्रमादिनानित्यंक्लिश्यमानंमांप्रदृश्यसम्यग्दृष्ट्वादययाइदंमद्वचनमादरेणाकर्ण्यप्रबुद्धेनात्मनैवदेहेंद्रियादिपरिच्छिन्नात्मभावंविहाययथाभूतब्रह्मात्मताअर्प्यतांप्राप्यतामितिप्रार्थनायांलोट् ॥ ३७॥ किमद्यैवात्मज्ञानेनअग्रेकदाचित्करिष्यामइतिमन्वानान्प्रत्याह ॥ अद्यैवेति ॥ ३८ ॥ नान्यःविद्यतेइतिशेषः ॥ नूनंनिश्चयेनअर्थकरःअभिलषितार्थकारीतिबुद्ध्याग्राह्यः ॥ ३९ ॥ इतराध्यात्मग्रंथेभ्योऽस्यकोतिशयस्तमाह ॥ आत्मज्ञानमिति ॥ आत्मरूपंज्ञानम ॥ ४० ॥ विद्यमानंनित्यप्राप्तमपियत्आत्मरूपंज्ञानंशास्त्रांतरान्नज्ञातंतत्इतःअस्माच्छास्त्राज्ज्ञास्यंति ॥ ४१॥ शास्त्रदृष्टिषुमुख्यानामाख्यानानांमध्येइदमाख्यानमुत्तमम ॥ अस्मिन्नाख्यानेअपूर्वमनादितत्त्वविसंप्रदायप्रसिद्धव्यतिरिक्तंस्वकपोलकल्पितंकिंचननतुनास्त्येव ॥ ४२

विनोदेनकौतूहलेनापिविचारयन्पुमान्परमात्मबोधंयातिप्राप्नोति ॥ ४३ ॥ पंडितैःसर्वशास्त्रज्ञैरपियोबोधोद्यापिनसंप्राप्तःसइतःअस्माच्छास्त्रात्प्राप्यते ॥ यथासुवर्णाकरेक्षाल नेनविवेचितात्सैकतात्सुवर्णप्राप्यतेतद्वत् ॥ ४४ ॥ ननुअस्माच्छास्त्रादेवज्ञानंचेदेतच्छास्त्रकर्त्ताकस्माच्छास्त्राज्ज्ञातवान् यतएवसज्ञातवांस्ततएववयमपिज्ञास्यामः यद्यज्ञात्वैवै तच्छास्त्रंप्रणीतवांस्तर्हस्माच्छास्त्राज्ज्ञानोदयेकाप्रत्याशेतिशंकमानान्प्रत्याह ॥ शास्त्रकर्त्तरीति ॥ यद्येतच्छास्त्रंयुक्तियुक्तमनुभवपर्यवसितंचनस्यात्तदाएतत्कर्तृबोधमूलकप्रा माण्यमेतच्छास्त्रमितितत्कर्त्तरिबोधहेतुचिंतयामंक्तव्यंस्यात् ॥ अस्मिंस्तुशास्त्रेस्वतोयुक्तिसहस्रयुक्तेअनुभूतिदेचसतिस्वानुभवेनैवसर्वशंकानिवृत्तेस्तत्रैवतन्मज्जनंनित्यंयुक्तमि तिनशास्त्रकर्त्तरिबोधशंकयाकदाचिन्मंक्तव्यमित्यर्थः ॥ ४५ ॥ अतएवैतच्छास्त्रावहेलनपरैःसहमैत्रीनकार्येत्याह ॥ अज्ञानादिति ॥ एकतामैत्री ॥ अध्यात्मशास्त्रावहेलने आत्मज्ञानानवाप्तिरेवात्महत्येत्याशयः ॥ ४६ ॥ त्वंतर्ह्यस्माभिरन्यैश्चाज्ञैःसहकथंमैत्रींभजसेयतोदययाउपदेशेप्रवृत्तोसितत्राह ॥ जानामीति ॥ हेरामइमाःश्रोतृश्रेणयोय

नानाख्यानकथाचित्रंविनोदेनविचारयेत् ॥ इदंशास्त्रंपरंयातिपुमान्नास्त्यत्रसंशयः ॥ ४३ ॥ योत्यद्यापिनसंप्राप्तःपंडितैरविखंडितैः ॥ सइतःप्राप्यतेबोधःसुवर्णमिवसैकतात् ॥ ४४ ॥ शास्त्रकर्त्तरिमंक्तव्यंनकदाचनकुत्रचित् ॥ शास्त्रार्थएवतन्नित्यंयुक्तियुक्तानुभूतिदे ॥ ४५ ॥ अज्ञानान्मत्सरान्मोहादविचारिभिरेकता ॥ अवहेलितशास्त्रार्थैःकर्त्तव्यानात्महंतृभिः ॥ ४६ ॥ जानाम्येवयथैवेमायदहंत्वंयथा धियः ॥ तथाबोधितकारुण्यात्स्वभावोहिममेदृशः ॥ ४७ ॥ युष्मत्संविल्लवःशुद्धएवंवक्तुमिहस्थितः ॥ अहंनरोनगंधर्वोनामरोनचराक्ष सः ॥ ४८ ॥ संविन्मात्राभवंतोहितद्भावोस्त्यतिनिर्मलः ॥ स्थितोस्मीतिभवत्पुण्यैर्ननुनास्मिनचापरः ॥ ४९ ॥ श्यामायमानानायांतिया वन्मरणवासराः ॥ सारःसंक्रियतांतावद्वैरस्यंवस्तुदृष्टिषु ॥ ५० ॥ इहैवनरकव्याधेश्चिकित्सांनकरोतियः ॥ गत्वानिरौषधंस्थानंसरुजः किंकरिष्यति ॥ ५१ ॥ सर्वभावेषुवैरस्यंनयावत्समुपागतम् ॥ भावानांभावनातावत्तानवंनोपगच्छति ॥ ५२ ॥ आत्मानमलमुद्धर्तुं वासनातानवादृते ॥ नास्त्युपायोमहाबुद्धेकश्चनापिकदाचन ॥ ५३ ॥

थायादृशाधिकारिविशेषणसंपन्नाः त्वंचयथायादृगधिकारिविशेषणसंपन्नः यथाचवोधियःश्रवणधारणाभ्यासपटवः अहंचयत्यादृशंभवदाद्युपदेशायपितुराज्ञापनंप्राप्त स्तत्सर्वंजानाम्येव अतस्तथाविधभवद्भाग्योदयोद्बोधितात्कारुण्याद्युष्मदुपदेशेहंप्रवृत्तइतिशेषः ॥ हियस्मान्ममस्वभावईदृशःसदादीनेपूद्बुद्धकारुण्यएवननिष्ठुरइतियुष्मद्धितै षिणोदयालोर्ममवचनमाद्रियध्वमितिभावः ॥ ४७ ॥ अथवाभवतामात्मैवाहंभवत्पुण्यवशाच्छुद्धंयुष्मत्तत्त्वंयुष्मभ्यमुपदेष्टुमागतः ममचभवंतःपरमप्रेमास्पदमात्मैवेतियुष्म न्मित्रतामिवप्राप्तइत्याह ॥ युष्मदितिद्वाभ्याम् ॥ संविद्रूपोलवःशोधितःसूक्ष्मार्थोनतुनरगंधर्वादिशरीरमित्यर्थः ॥ ४८ ॥ अपरोभवदात्मव्यतिरिक्तोनास्मि ॥ नन्वितिसंबोधने ॥ ४९ ॥ अतःपरमाप्तमोहमितिमदुक्तःप्रथमःसारःसर्ववस्तुदृष्टिषुवैराग्यलक्षणःसंक्रियतांसंगृह्यताम् ॥ ५० ॥ सरुजःनरकरुजाभिःपीड्यमानः ॥ ५१ ॥ वैराग्यमेवपरमः सारइतिकुतइतिचेत्तद्विनावासनातानवासिद्धेरित्याह ॥ सर्वेति ॥ ५२ ॥ वासनातानवेवाकिमर्थमादरस्तत्राह ॥ आत्मानमिति ॥ ५३ ॥

180

ननुभावेषुसत्सुकथंतद्वासनातानवंप्रसिद्ध्येत्तत्राह ॥ भावास्त्विति ॥ यदिसत्यतयाविद्यंतेतर्त्तर्हितेषुभावेषुहितेस्वानुकूलेवस्तुनिवस्तुममेदमावश्यकंसंपाद्यमित्यादिभावनाभवेत् ॥ ५४ ॥५५॥ नन्वेतेभावावेदांतिनांविचारेपुनसंतिचेदपिकापिलकाणादादिविचारेषुसंत्येवेतिकुतोऽसत्वावधारणंतत्राह ॥ प्रामाणिकेति ॥ प्रामाणिकविचारेषुकृतेषुयेनविद्यंते ॥ तेकेसंतिकिंस्वरूपाः एकैकवस्तुरूपाउतसर्ववस्तुरूपाः सदैववातेसंत्युनकदाचिदेववा ॥ सर्वथापिप्राकृशतशःखंडितमेवेत्यर्थः ॥५६॥५७॥ कारणाभावःकुतस्तत्राह ॥ पदे इति ॥ नहींद्रियावेद्येस्वप्रकाशचिदेकरसेब्रह्मणिइंद्रियवेद्याःप्रलकालेसंभावयितुमपिशक्याइतिभावः ॥ ५८ ॥ सनामरूपकस्यजगतःअनामरूपकमपिकारणंनसंभवतीतियुक्त्यंतरमप्याह ॥ भावनामिति ॥ एवंवस्त्ववस्तुनःकारणंशून्यमशून्यस्येतितदपिदुर्वचंतदात्मतापत्त्ययोगादित्याह ॥ कुतइति ॥ ५९ ॥ एवंनिराकारंसाकारस्यकारणमित्यप्य

भावास्तुयदिविद्यंतेतद्धितेवस्तुभावना॥ किंत्वेतेनैवसंतीहशशशृंगादयोयथा॥५४॥ सर्वएवजगद्भावाअविचारितचारवः॥ अविद्यमानसद्भावाविचाराद्विशरारवः॥५५॥ प्रामाणिकविचारेपुनविद्यंतेकृतेषुये॥ कथंसंतिजगद्भावास्तेकेसंतिसदैववा॥५६॥ सर्वएवजगद्भावाःकारणाभावतोभृशम्॥ सर्गादावेवनोत्पन्नायच्चेदंभातितत्परम्॥५७॥ पदेसर्वेंद्रियातीतेमनःषष्ठेंद्रियात्मनाम् ॥ भावानांकारणंनास्तिमनःषष्ठेंद्रियात्मकम् ॥५८॥ भावानांविविधाख्यानामनाख्यंकारणंकुतः॥ कुतोवस्तुन्यवस्तुत्वंव्योमन्यव्योमताकुतः॥५९॥ साकारस्यहिसाकारंवटधानादिवद्भवेत्॥ वीजंतद्वस्तुसाकारंजायतेन्यत्कुतोन्यथा॥६०॥ नकिंचिदपियत्रास्तिवीजमाकृतिमन्मनाक्॥ ततआकृतिमद्विश्वंभवतीतिविडंबनम्॥६१॥ कार्यकारणभावादितस्मिन्नहिपरेपदे॥ वाचालत्वेनयन्नामकल्प्यतेमौर्ख्यमेवतत्॥६२॥ सहकारिनिमित्तानामभावेहिनकारणात्॥ कार्यंभवेदन्यदेतिबालैरप्यनुभूयते ॥६३॥ तन्मात्रवेदनंभूयःपृथ्व्यादीनांचकारणम्॥ किमस्तिकथ्यतांछायाकथमास्तेवदातपे॥६४॥ परमाणुसमूहायेजगदित्यप्यवास्तवम्॥ शशशृंगंधनुःप्रख्यमज्ञानादभिधीयते॥६५॥ परमाणुसमूहश्चेत्संभूयकुरुतेजगत्॥ यदृच्छयैवनभसिशीर्यतेचयदृच्छया॥६६॥

युक्तमित्याह ॥ साकारस्येति ॥ बीजंभवेत् ॥ ६० ॥ विडंबनंविडंबनवाक्यवदर्थशून्यमितियावत् ॥ ६१ ॥ वाचालत्वेनबहुभाषित्वेन ॥ ६२ ॥ ६३ ॥ जगद्वेदनत्वादपिचितोनजगत्कारणत्वंघटवेदनेघटकारणत्वाभावदर्शनादित्याह ॥ तन्मात्रेति ॥ तत्रकुलालवेदनस्यघटकारणत्वदर्शनाद्व्यभिचारमाशंक्यमात्रपदम् ॥ चित्यचिदवस्थानायोगाद पिचितोनकारणतेत्याशयेनाह ॥ छायेति ॥६४॥ अतएवपरमाणुकारणवादिनोबौद्धादयोप्यपास्ताः अतींद्रियसमूहस्यैंद्रियकत्वादर्शनादित्याशयेनाह ॥ परमाण्विति ॥६५॥ यदिपरमाणवःसंभूयजगत्कुर्युस्तर्हितेपांसदानभसिउड्डयनपतनदर्शनात्प्रतिगृहंदिनेदिनेगिरेरिवशृंगंकूपादिवत्खातोवास्यादित्याह ॥ परमाण्वितिद्वाभ्याम् ॥ ६६ ॥

तस्यजगतःअंगमवयवभूतंरजोदेशेदेशेगृहेगृहेचअपूर्वंनवंनवमिगतेचलत्येवेतिशृंगंखातंवास्यादित्यर्थः ॥ ६७॥ नचपरमाण्वाख्यंनिरवयवंकिंचिद्द्रव्यंकेनचिद्दृश्यते ॥ जालांतरमरीचिपुसावयवानामेवरजसांदर्शनात् ॥ तदवयवपरंपरावधिर्निरवयवोऽनुमीयतइतिचेन्न ॥ तस्यसंयोगानर्हत्वेनाद्रव्यत्वापत्तेः ॥ नहिनिरवयवोन्येनसंयोगमर्हति ॥ संयोगस्यैकदेशावच्छिन्नवृत्तिकत्वनियमात् ॥ नचतदभावेद्व्यणुकादिसिद्धिरितिव्याघातः ॥ किंचातींद्रियाणांखपुष्पकल्पानांपरमाणूनांसंयोजनेनजगद्रचनंकस्यकर्म किमसंसारिणउतसंसारिणः ॥ तत्रसंसारिणस्तावत्परमाणुभिर्जगन्निर्माणेअसामर्थ्यंस्पष्टमेवेत्यभव्यस्यभवानर्हस्येश्वरस्यजडस्यवातद्वाच्यम् ॥ तत्रआद्यस्यव्यर्थंनिष्प्रयोजनंजगद्रचनंभवेन् ॥ नहिनित्यमुक्तस्येश्वरस्यप्रयोजनापेक्षाप्रयोजनंवासर्गस्योपपादयितुंशक्यते ॥ नचजडाःपरमाणवःस्वतःसर्गेप्रवर्त्तितुंशक्नुवंतीत्यर्थः ॥ ६८ ॥ ननुचेतनस्यबुद्धिपूर्वकेरचनेप्रयोजनापेक्षाअबुद्धिपूर्वकेतुनसातत्राह ॥ नेति ॥ हेअंगतत्मनसाप्यचिंत्यरचनात्मकंभूतभुवनंचतुर्विधभूतग्रामसंभृतंसर्गकर्मअबुद्धिपूर्वकस्यचिन्नसंभवति ॥ बुद्धिपूर्वकंतु

तदंगमिंगतेनित्यंदेशेदेशेगृहेगृहे॥ अपूर्वात्मरजःशृंगंख्यातंवास्याद्दिनेदिने॥६७॥ नचतद्दृश्यतेकिंचित्कस्यतत्कर्मतादृशम् ॥ भवेद्व्यर्थमभव्यस्यजडास्तुपरमाणवः॥६८॥ नाबुद्धिपूर्वंतत्कर्मसंभवत्यंगकस्यचित्॥ बुद्धिपूर्वंतुयद्व्यर्थंकुर्यादुन्मत्तकोहिकः॥६९॥ जडस्यबुद्धिपूर्वेहामरुतोनास्तितांविना॥ नसंभवत्यणुचयोनान्यत्कर्त्तोपपद्यते॥७०॥ वयमात्मानएवेमेखात्मानःखात्मकाजनाः॥ तथास्थितायथास्वप्नेभवतांस्वप्नमानवाः॥ ७१ ॥ तस्मान्नजायतेकिंचिद्विश्वंनापिचविद्यते॥ इत्थंचिन्नभएवाच्छंप्रकचत्यात्मनात्मनि ॥ ७२॥ विश्वाकाशंचिदाकाशेविष्वग्विश्रांतिमागतम्॥स्पंदोद्रवत्वंशून्यत्वमनिलेंभसिखेयथा॥७३॥ देशाद्देशांतरप्राप्तौनिमेषेणातिदूरतः॥ संविदोयद्वपुर्मध्येचिद्व्योम्नोविद्धितद्वपुः॥७४॥सस्वभावोहिसर्वेषामर्थानांतेचतन्मयाः॥ तादृशास्तन्नभोरूपास्तेनविश्वमतोनभः॥७५॥

व्यर्थंकर्मकउन्मत्तकःकुर्यात् ॥ ६९ ॥ एतेनवायुरेवाणुचयंकरिष्यतिबुद्धिपूर्वव्यापारंविनैवाणुचयोभविष्यतीतिप्रत्याशापिनिरस्तेत्याह ॥ जडस्येति ॥ जडस्यमरुतोबुद्धिपूर्वादीहाचेष्टानास्ति तांतुविनाअणुचयोनसंभवति जडसर्वज्ञाभ्यामन्यज्जीवजातंतुप्रलयेदेहाद्यभावादसमर्थमेवेतिनसर्गादौकश्चित्कर्त्तोपपद्यतइत्युपसंहारः ॥ ७० ॥ ननुयदिकर्त्रभावादनुत्पन्नमेवजगत्तर्हिवयंकिमात्मकाःकथंवाजगतिस्थितास्तत्राह ॥ वयमिति ॥ इमेवयंखात्मानोदेहादिमूर्त्तताशून्याश्चिदात्मानएव ॥ एवंजनाअपिखात्मकाएवतथापिस्वप्नेयथाभवतांस्वप्नमानवाःस्थितास्तथाअस्मत्कल्पनयैवस्थिताइत्यर्थः ॥ ७१ ॥ इत्थंसर्वोपपत्तेर्ब्रह्माद्वैतसिद्धांतोनिष्प्रत्यूहइत्याह ॥ तस्मादिति ॥ ७२ ॥ अनिलादौस्पंदादियथाअभिन्नमेवविष्वग्विश्रांतिमागतंतथाचिदाकाशेविश्वाकाशमपीत्यर्थः ॥ ७३ ॥ जगच्छून्यस्यचिद्व्योम्नोयद्रूपंतत्प्रागवहृशोदृष्टांतेनानुभावितंस्मारयति ॥ देशादिति ॥ ७४ ॥ सर्वेषांपदार्थानांसंविदाकाशएवपरमार्थस्वभावः ॥ अतोहेतोर्विश्वंतेनतद्भावेनैवनभोनशून्यभावेनेत्यर्थः ॥ ७५ ॥

तस्यचिदाकाशस्यस्वभावादविभिन्नैवयाविवर्त्तभावेनस्वभावस्यपरावृत्तिःसैवेदंजगदितिआपातदर्शिनांस्थिता ॥ ७६ ॥ ७७ ॥ तन्मुख्यंअनुभवस्यसंपन्नंनिदर्शनंनेतरदित्यर्थः ॥ ७८ ॥ ७९ ॥ इदंविश्वंचिद्दर्पणेआभासाकाशमेव ॥ तदवभासनंचभामात्रम् ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ सर्गादौपृथिव्यादिभावानामेवासत्तेतिहेतोरयंपार्थिवादिदेहकःकुनःअस्तितस्मादिदंभासमानंशरीरत्वंनभोरूपस्वचितेःस्वप्नएव ॥ ८४ ॥ पूर्वःप्राथमिकः ॥ इतःस्वयंभूशरीरादुत्थानंयेषांतेवयंतदनुस्वप्नात्स्वप्नांतरमिवेत्यर्थः ॥ ८५ ॥ अतएवनोमनःपरमेणापिप्रयत्नेनप्रवर्तमानंब्रह्मणिझटितिनयास्यति ॥ गलगंडोत्थितस्यस्फोटस्यगलेनेवव्यवहितसंबंधभ्रांतिदार्ढ्यादित्याह ॥ गंडस्येति ॥ ८६ ॥ यथागॅलमेवगं

स्वभावस्यपरावृत्तिर्मनागेवाशुतस्यसा ॥ स्वभावादविभिन्नैवसेदंजगदितिस्थिता ॥ ७६ ॥ जगच्चिन्नभसोस्तस्मान्नकदाचनभिन्नता ॥ एकमेवद्वयोरूपंपवनस्पंदयोरिव ॥ ७७ ॥ देशाद्देशांतरप्राप्तौविदोमध्येहियद्वपुः ॥ शांताशेषविशेषात्मतन्मुख्यंनेतरद्विदुः ॥ ७८ ॥ सस्वभावोंगभूतानांतत्रतिष्ठंतिपंडिताः ॥ तस्मान्नविचलंत्येतेनित्यध्यानाद्धरादयः ॥ ७९ ॥ आभासाकाशमेवेदंभामात्रमवभासनम् ॥ विश्वमाकाररहितंस्वभावंविदुरव्ययम् ॥ ८० ॥ नजायतेनम्रियतेनभूत्वाभाविकुत्रचित् ॥ अनन्यदेवचिद्व्योम्नःशून्यत्वमिवखाज्जगत् ॥ ८१ ॥ नविश्वमस्तिनैवासीन्नचनामभविष्यति ॥ इदमाभासतेशांतंचिद्व्योमपरमात्मनि ॥ ८२ ॥ चिन्मात्रमेवकचतिस्वप्नेपुरतयायथा ॥ तथैवजाग्रदाख्येस्मिन्सस्वप्नेकचतिस्वयम् ॥ ८३ ॥ सर्गादावेवभावानामसत्तेत्यस्तिदेहकः ॥ कुतस्तस्माच्छरीरत्वंस्वप्नएवनभश्चितेः ॥ ८४ ॥ स्वयंभ्वाख्यंशरीरंस्वंपूर्वःस्वप्नोमहाचितेः ॥ इतउत्थानास्तदनुस्वप्नात्स्वप्नांतरंवयम् ॥ ८५ ॥ गंडस्योपरिजातानांस्फोटानामतएवनः ॥ परमेणप्रयत्नेननमनोनामयास्यति ॥ ८६ ॥ ब्रह्मैवासत्यपुरुषःसत्यवच्चानुभूयते ॥ स्थितंततःप्रभृत्येवनत्वलीकमिदंततम् ॥ ८७ ॥ आब्रह्मस्तंबपर्यंतमलीकंजायतेजगत् ॥ यथास्वप्नेतथालीकमेवमाशुविनश्यति ॥ ८८ ॥ चिद्व्योमैवैत्यविश्वत्वंयथास्वप्नेविनश्यति ॥ अनुदित्वैवविश्वत्वंजाग्रदाख्येतथैवच ॥ ८९ ॥ अनुभूतमलीकंचाप्यलीकंसत्यवत्स्थितम् ॥ संविदेवयथास्वप्नेनगरादितयोदिता ॥ ९० ॥ साकारेवनिराकारास्थितातद्वज्जगत्तया ॥ संविदाकाशमाकाशादणुमेरोरणुर्यथा ॥ ९१ ॥

डालनास्थित्वातद्गतस्फोटालनापिस्थितमपृथग्भूतमपिपृथक्सत्यमिवानुभूयतेतथाब्रह्मैवहिरण्यगर्भव्यष्टिजीवलक्षणासत्यपुरुषोभूत्वातद्भावेनैवसत्यवच्चानुभूयतइत्यर्थः ॥ यदाप्रभृतिब्रह्मजीवभूतंततःप्रभृत्येवअलीकमिदंजगत्ततंस्थितम् ॥ ८७ ॥ अलीकमनृतम् ॥ एवंस्वप्नवदेवआशुविनश्यतितदप्यलीकमेव ॥ ८८ ॥ अनुदित्वाउदयंजन्मअप्राप्यैव ॥ ८९ ॥ यद्यलीकमेवतर्हिकथमनुभूतंकथंवासत्यवत्स्थितम् ॥ शशशृंगादावुभयादर्शनात्तत्राह ॥ अनुभूतमिति ॥ अलीकमप्यनुभूतमलीकमपिसत्यवत्स्थितम् ॥ यतस्तदस्मन्मतेसंविदेवनशून्यमित्यर्थः ॥ ९० ॥ आकाशादप्यणु ॥ तत्रदृष्टांतः ॥ मेरोरेणुःपरमाणुर्यथाअणुस्तद्वत् ॥ ९१ ॥

तर्हि किमाकाशादप्यणुतातस्यधर्मोनेत्याह ॥ किलेति॥आकाशादणुताव्योंधर्मःकुतःक्वाप्रसिद्धोयत्किलतस्यब्रह्मणोधर्मोनामस्यात् ॥ अणुतोक्तेस्तर्हिकोऽभिप्रायस्तमाह ॥
कारणेति ॥ अन्यस्यजगतःस्थूलआकारोनोपपद्यतेतादृशकारणाभावा दितिवक्तुंतस्यतथात्वोक्तिरित्यर्थः ॥ ९२ ॥ नन्विदानीमिष्टकादेःपुरादिजन्मदर्शनाज्जगतएवजगज्जा
यतांनब्रह्मणस्तत्राह ॥ सर्गादावेवेति ॥ यःपुरादिःसर्गादावेवअजातःसजगतःकुतोजातः ॥ किंचस्वप्नेविनैवेष्टकादिभ्यःपुरादयोदृश्यंते ॥ जाग्रद्वेदनाकाशेयदेवपुरंतदेवनःसिद्धां
तेस्वप्नेपिपुरंतत्रचव्यभिचारःस्फुटइत्यर्थः ॥९३॥ एवंस्वप्नजाग्रदर्थयोर्भेदाभावेस्वामार्थानांचिद्व्योमभेदाभावाज्जाग्रदर्थानामपितदभेदःसिद्धइत्याशयेनाह ॥ भेदइति ॥९४॥
उक्तेअभेदेस्पंदनपवनौवाय्वाकाशौचदृष्टांतावित्याह ॥ यदेवेति ॥ व्योमोपमोव्योमाभिन्नः ॥९५॥ ९६ ॥ सकृद्विभातमखंडस्फुरणरूपम् ॥९७॥ एवंचचितोनिष्प्रपंचतासि

किलयत्तस्यनामस्यादाकाशादणुताकुतः ॥ कारणाभावतोन्यस्यनाकारउपपद्यते ॥ ९२ ॥ सर्गादावेवयोजातोजातोयंजगतःकुतः ॥
यदेववेदनाकाशेपुरंस्वप्नेतदेवनः ॥ ९३ ॥ भेदःस्वप्नाद्रिचिद्व्योम्नोर्नशून्यांबरयोरिव ॥ यदेवचिन्नभोनामतदेवस्वप्नपत्तनम् ॥ ९४ ॥ यदे
वस्पंदनंनामसएवपवनोयथा ॥ स्पंदास्पंदैकरूपात्मावायुर्व्योमोपमोयथा ॥ ९५ ॥ तस्माच्चिन्नभएवेदंजगदाकृतिलक्ष्यते ॥ सर्वंशून्यं
निरालंबंभासनंचिद्विवस्वतः ॥ ९६ ॥ शांतमेवेदमखिलंनिरस्तास्तमयोदयम् ॥ सकृद्विभातममलंदृपन्मौनमनामयम् ॥ ९७ ॥ तस्मा
द्वदकथंभावाःकुतोभावाःक्वभावधीः ॥ क्वद्वैतंक्वैकताक्वाहंक्वभावाःक्वचभावनाः ॥ ९८ ॥ नित्योदितोव्यवहरन्नपिनिर्विकारोद्वित्वैक्यमु
क्तमतिरुत्तमशीतलोंतः ॥ निर्वाणआस्वविगतामयशुद्धबोधबोधैकतामुपगतोंगनसंतिभावाः ॥ ९९ ॥ ॥ इ० वा० महारामायणेवा०
दे० मो० नि० उ० सकलभावाभावोपदेशेनपरमार्थैकताप्रतिपादनंनामत्र्यधिकशततमःसर्गः ॥ १०३ ॥ ॥ ५ ॥ ॥ श्रीव
सिष्ठउवाच ॥ ॥ आकाशःशब्दतन्मात्रंस्पर्शतन्मात्रकोनिलः ॥ तत्संगोत्कर्षजंतेजस्तच्छांतिश्चेत्यपांस्थितिः ॥ १ ॥

द्धेत्याह ॥ तस्मादिति ॥ ९८ ॥ हेअंगत्वंविगतामयशुद्धबोधरूपस्यतत्त्वस्यबोधेनतदेकतामुपगतःसन्नित्योदितोव्यवहरन्नपितदभिनिवेशाभावान्निर्विकारोद्वित्वैक्याभ्यांपर
स्परविरुद्धाभ्यांमुक्तामतिर्यस्यतथाविधःसन्अंतःउत्तमशीतलोभूत्वानिर्वाणोनिरतिशयानंदनिर्वृतआस्व यतस्तेविक्षेपहेतवोभावानसंतीत्यर्थः ॥ ९९ ॥ ॥ इतिश्रीवासिष्ठ
म० तात्पर्यप्रकाशेनि० उ० त्र्यधिकशततमःसर्गः ॥१०३॥ ॥ ५ ॥ ॥ आकाशादेर्हिवाय्वादिभावोनुभवतोयथा ॥ चितएवजगद्भावोऽनुभवादेवसाध्यते ॥ १ ॥ चिन्मा
त्रमेवजगदाकारेणस्वमवभातीतियदुक्तंतदेवानुभवालंबनेप्रमाणतःपदार्थतत्त्वंजिज्ञासमानैःसर्वैराकाशादिक्रमसृष्टिकल्पनापरंपराभिःसुदूरमपिगत्वाअंततःशरणीकरणीयमिति
वर्णयिष्यन्नाकाशादीनांतैर्थिकप्रसिद्धांस्वरूपस्थितिमाह ॥ आकाशइत्यादिना ॥ तयोर्यःसंगोत्कर्षःसंघर्षातिशयस्तस्माज्जातंरूपतन्मात्रंतेजस्तस्यतेजसःशांतिःऔष्ण्यरौ
क्ष्यप्रशमनेनशैत्यद्रवत्वावलंबनलक्षणंरसतन्मात्रमित्यपांस्वभावस्थितिरित्यर्थः ॥ १ ॥

भूस्तु एषां संहंतीति संघो मेलने घनीभावहेतुर्गंधतन्मात्रमिति चित एव स्वप्नाभे जगद्भाने इयं क्रमस्थितिः ॥ तत्रेदं पृच्छामः ॥ अमूर्त्ताद्व्योम्नः पृथिव्यंता मूर्त्तिः कथं प्रवर्त्तत इति ॥ यदि कश्चिद्ब्रूयाद्वायुरेव प्रथमम् आकाशात्क्रियास्पर्शप्रधान उत्पद्यते स च रूपाभावात्किंचिदाकाशवत्स्पर्शक्रियाशालित्वात्किंचिन्मूर्त्तवदपीति रूपतन्मात्रप्रधानं मूर्त्तं तेजो जनयिष्यतीति ॥ तन्न ॥ निरवयवकूटस्थेनाकाशेन वायोरेवासिद्धेः ॥ नह्यव्याप्रियमाणं निरवयवं च किंचिदारब्धुं विकर्तुं वा शक्नोति ॥ किंच यदि कृत्स्नं विक्रियेत तत्र्याकाशाभावान्निरवकाशा वाय्वादयः स्युः ॥ यद्यर्धं ततोल्पं वा तर्ह्याकाशस्यापि सावयवत्वप्रसंगः ॥ अस्तु सावयवमपीति चेत्तदेव स्पर्शवत्क्रियावच्च स्यादिति वाय्वादिजननवैयर्थ्यं निरवकाशता च तस्य तदवयवानां च स्यात् ॥ एवं वायोरपि नीरूपाद्रूपतन्मात्रोत्पत्तिरारंभेण परिणामेन वा दुर्निरूपैव ॥ कारणगुणा हि कार्यगुणानारभंते न च रूपं वायावस्ति परिपाकेन हि परिणामः स्यान्न च विना तेजः परिपाकोस्ति एवमुत्तरभूतयोरप्यूह्यमिति ॥ २ ॥ नन्वनुभवबलादेव कूटस्थादप्याकाशाच्चलनात्मकं वायुं नीरूपाच्च वायो रूपवत्तेजो नीरसाच्च तस्माद्रसालं वारि अगंधाच्च तस्माद्गंधवतीं पृथ्वीमुत्पन्नां कल्पयिष्यामः अनुभवात्मिका ज्ञप्तिरेव भगवती नः सर्वं विरोधमुत्सार्य यथानुभवमर्थान्समर्थयिष्यतीति चेत्तत्राह ॥ गत्वेति ॥ यदि सुदूरमपि गत्वा ज्ञप्तिरेव शरणी क्रियते तर्हि सैव स्वभावादविवविवर्त्तमात्रेण सर्वं जगद्रूपं निर्वहिष्यतीति आदौ ब्रह्मण्येव सर्वार्थस्वरूपे सति अमले सर्वदोषनिर्मुक्ते सिद्धांते को दोष इत्यर्थः ॥ ३ ॥ कोसौ सिद्धांतस्तमाह ॥ ज्ञप्तिरेवेति ॥ तदेव जगदिति सत्यतः परमार्थसत्याधिष्ठानबलात्सर्वं खल्विदं ब्रह्मेत्यादि यथार्थवादिश्रुतिबलाच्च सत्यमित्येव सिद्धांतरहस्यमुक्तमित्यर्थः ॥ ४ ॥ भूतभौतिकशून्यैव चिद्यतः स्वप्ने भूतभौतिकवत्सर्वानुभवसिद्धेत्याह ॥ नक्वचिदिति ॥ ५ ॥ तद्वज्जाग्रत्यपि चिरस्वभाव एव जगद्वत्कचतीत्याह ॥ स्वभाव इति ॥ ६ ॥ वस्तु तत्सुखमित्येतद्विशदयति ॥ चेतनाकाश इति ॥ ७ ॥ अस्त्वयं सर्ग एवमादिसर्गो ब्रह्मांडांतरादिसर्गः कल्पांतविवर्त्तनं वा अन्यथापि स्यादिति शंकां निरस्यति ॥ यदिति ॥ ८ ॥ एवं सति जीवन्मुक्तिविदेहमुक्त्योर्न कश्चिद्विशेष इत्याह ॥ सतीति ॥ अमले स्वभावे बुद्धे सति यन्निर्दुःखसुखत्वं भूमानंदरूपत्वमक्षयं स एव मोक्षः स च देहे सति वा असति वा समान एवेति तत्र सर्वापूर्णा निर्भरविश्रांतिस्ते ऽस्तु तावतैव त्वं कृतार्थ इत्यर्थः ॥ ९ ॥ ॥ इति श्रीवासिष्ठम० तात्पर्यप्रकाशे नि० उ० चतुरुत्तरशततमः सर्गः ॥१०४॥ ॥ ७ ॥ ॥ चिदेवाभातिजा पद्वच्चिदेव स्वप्नवत्तथा ॥ न जाग्रत्स्वप्नयोर्भेदः स्वभावेनेति वर्ण्यते ॥१॥ उक्तं स्वप्नसाम्यं जगतः प्रपंचयितुं पीठिकां रचयति ॥ स्वभावमिति ॥ चिद्भावश्चित्स्वभाव आत्मा ॥१॥

**भूरेषां संघः स्वप्नाभे जगद्भाने क्रमस्त्विति ॥ कथं नाम किलामूर्ताद्व्योम्नो मूर्तिः प्रवर्त्तते ॥ २ ॥ गत्वा सुदूरमप्येतज्ज्ञप्तेश्श्वेत्परिकल्प्यते ॥ तदादावेव सत्यर्थे दोषोस्मिन्कइवामले ॥ ३ ॥ ज्ञप्तिरेवातिविमला स्वरूपात्मनि भातियत् ॥ तदेव जगदित्युक्तं सत्यमित्येव सत्यतः ॥ ४ ॥ नक्वचित्संति भूतानि पंचकुड्यादयो नवा ॥ असंत्यप्यनुभूतानि ननु स्वप्नदशास्विव ॥ ५ ॥ स्वभाव एव विमलो यथा स्वप्ने पुरादिवत् ॥ कचत्येवं जाग्रतीदं जगद्वद्वस्तु तत्सुखम् ॥ ६ ॥ चेतनाकाश एवाहं तदेवेदं जगत्स्थितम् ॥ इत्यहं जगदित्येकं खमेवैकं शिलाघनम् ॥ ७ ॥ यदादिसर्गजननं यत्कल्पांतविवर्त्तनम् ॥ यद्वा भुवनसंस्थानं तद्व्योम निराकृति ॥ ८ ॥ सति वा सति वा देहे निर्दुःखसुखत्वमक्षयं मोक्षः ॥ बुद्धे मले स्वभावे निर्भरविश्रांतिरस्तु सर्वेह ॥ ९ ॥ ॥ इ० वा० म० वा० दे० मो० नि० उ० जगदसत्ताप्रतिपादनं नाम चतुरधिकशततमः सर्गः ॥ १०४ ॥**

**॥ श्रीवसिष्ठ उवाच ॥ ॥ स्वभावं जगदाकारं चिद्भावो नुभवन्स्थितः ॥ स्वतः स्वप्नमिवानन्यमात्मनः कल्पनाभिधम् ॥ १ ॥**

इदंजाग्रज्जगत्त्वेननोज्झितमेवसत्सुषुप्तमज्ञानमेवमूलतःशिलाजठरमेवाधिष्ठानतःशून्यंखमेवस्वतइत्यर्थः॥ २ ॥ स्वप्नोप्येतादृशएवेतिसएवात्रदृष्टांतइत्याह॥ स्वप्नइति॥ ३॥ तत्रतृतीयकल्पेस्वप्नसाम्यंस्फुटमित्याह॥ त्रैलोक्यमिति॥ ४॥ द्वितीयकल्पेपितत्साम्यंविवेकिनांसुगममित्याशयेनाह॥ नेति॥ ५॥ प्रथमकल्पेपितंदर्शयति॥ चिद्व्योम्नेति॥ स्वयमेवभवतिअस्तीतिस्वयंभुवाचिद्व्योम्नातमोवृतात्मरूपेव्योमनिअद्र्यादिरूपभृत्स्वचमत्कारस्तमएवजाग्रत्स्वप्नेजगदित्यंतर्वुद्धः॥ ६ ॥ पुनस्तृतीयकल्पमेवसमर्थयति॥ जगदिति॥ भास्यजगतःशून्यत्वेचितस्तद्भासकंरूपंचनकिंचन॥नभःअत्यंतासतीएतेचिज्जगतीग्राह्यग्राहकरूपेब्रह्मणिमुधाभातः॥ ७॥ तत्रदृष्टांतंयोजयति॥ आभातमेवेति॥ एवंजाग्रत्यपिआभातंत्रैलोक्यमेवंनिर्वपुःशून्यमेव॥ ८ ॥ ९ ॥ अव्योमब्रह्मैवअतिविततंशून्यात्मकंव्योमप्रथमंसंपन्नम्॥ व्योमैवचवाय्वादिक्रमेणाऽचलसंघातोनानापुरग

जाग्रत्सुषुप्तमेवेदंशिलाजठरमेववा॥ आकाशमेववाशून्यंजगत्त्वेनचनोज्झितम्॥२॥ स्वप्नएवात्रदृष्टांतःपुरमंडलमंडितः॥ स्वप्नेजगन्नकिंचित्सदित्थमाभातिभासुरम्॥ ३ ॥ त्रैलोक्यमसदेवेदंयथास्वप्नेवभासते॥ जाग्रत्यस्मिंस्तथैवेदंमनागप्यत्रनान्यथा॥४॥ नजाग्रतिनचस्वप्नेजगच्छब्दार्थसंभवः॥ स्वंवस्तुतस्तुचिद्व्योम्नोभानंवुद्धंजगत्तया॥५॥ चिद्व्योम्नस्वचमत्कारोव्योमन्यद्र्यादिरूपभृत्॥ जगदित्येववुद्धोंतर्जाग्रत्स्वप्नेस्वयंभुवा॥६॥ जगन्नकिंचिदेवेदंचिद्रूपंचनकिंचन॥ एतेकिंचिदिवाभातोनभश्चिज्जगतीमुधा॥७॥ आभातमेवत्रैलोक्यंयथास्वप्नेनकिंचन॥ शून्यमेवभवेदेवमेवंजाग्रतिनिर्वपुः॥८॥ स्वप्नेकिलमहावुद्धेनानानिर्माणशालिनि॥ आरंभाएवनारंभाअसत्सदिवचाततम्॥ ९ ॥ अव्योमैवातिविततंव्योमांतपरिवर्जितम्॥ व्योमैवाचलसंघातोनानापुरगणोत्करः॥१०॥ अप्यब्दाब्ध्यद्रिनिर्घोषोमौनमेवयथातथा ॥ नशृणोत्येवपार्श्वस्थःसंप्रवुध्यापिकिंचन॥११॥ प्रजायतेवाजातोपिवंध्यायास्तनयोयथा॥ जातोप्यजातएवास्तेयथात्मस्मृतिविस्मृतौ॥१२॥ सदसद्भवतिक्षिप्रंभुवोननुभवोयथा॥ विपर्यस्यतिसर्वंचरात्रिरेवयथादिनम्॥१३॥ असद्यत्संभवत्याशुदिनमेवयथानिशा ॥ असंभवःसंभवतियथास्वस्मृतिदर्शनम्॥ १४ ॥ असंभवःसंभवतिजगद्भानमिवांवरं॥ तमएवमहालोकोयःसनिद्रःसवासरः॥ १५॥ आलोकएवैतितमोयन्निद्रास्वप्नवासरा॥ वसुधैवभवेद्व्योमश्वभ्रादिपतनेयथा॥१६॥

णोत्करश्चसंपन्नमित्युभयमप्याश्चर्यमित्यर्थः॥ अथवाअव्योमगिरिमहीपुरादिव्योमभवतिएवंव्योमैवाऽचलसंघातादिभवतीतियथाश्रुतंप्रतिज्ञापरम्॥ १०॥ तत्रायंदृष्टांतेनसाधयति॥ अपीति॥ अब्दाश्चअब्धयश्चअद्रयश्चतेषांनिर्घोषश्चस्वप्नेएकंसुप्तंप्रतिप्रसिद्धोप्यपरंप्रतिमौनंशून्यमेवयथातथाजाग्रदब्दादयोपीत्यर्थः॥ दृष्टांतेमौनमेवेत्येतत्कुतस्तत्राह॥ नशृणोत्येवेति॥ यतःपार्श्वस्थःअपरःसुप्तनरःसंप्रवुध्यापिकिंचनअब्दाब्ध्यादितद्घोषंवानशृणोत्येव॥ ११॥ द्वितीयमपितथासाधयति॥ प्रजायतइति॥ अजातोपिवंध्यायास्तनयःस्वप्नेप्रजायतेतथात्रापिवोध्यमित्यर्थः॥ एवंमृत्वाजातोपिपुरुषआत्मनःस्वस्यस्मृतेर्विस्मृतौसत्यामजातोऽनुत्पन्नएवाहमित्यास्तेयथातथेत्यर्थः॥ १२॥ सुप्तस्यस्वप्नेस्वशयनभुवोननुभवोयथातदसत्त्वमापादयतितथेत्यर्थः॥ १३॥ एवमन्येपिविपर्यासाःप्रसाध्याइत्याह॥ असदित्यादिना॥ १४॥ १५॥ यद्यस्माद्धेतोःस्वप्नेदिनुवासरोयस्यांतथाविधाउलूकादीनांनिद्रादृश्यते॥ स्वप्नेश्वभ्रादिपतनेऽनुभूयमानेशयनवसुधैवश्वभ्रव्योमभवेत्॥ १६॥

॥१७॥ द्वौसूर्यौपूर्वेद्युस्तनाद्यतनौ ॥ अत्रअनयोः ॥ १८ ॥ वर्णितंजाग्रत्स्वप्नयोःसाम्यमाक्षिप्यवैषम्यंदर्शयन्रामःशंकते ॥ नैतदिति ॥ मनागप्यत्रनान्यतेतियस्त्वयोक्तमेतन्न ॥ कुतः॥यद्यस्मिन्स्वप्नेक्षिप्राज्जायमानोबाधकोयोजाग्रत्प्रत्ययस्तद्दर्शनेनांतःस्वयमेवतस्याभासतानुभवात् ॥ अतःकथंजाग्रत्तत्समंभवेदित्यर्थः ॥ १९ ॥ नैतावतावैषम्यसिद्धिः भिन्नदेशस्यजाग्रत्प्रत्ययस्यस्वाप्नप्रत्ययबाधकत्वासिद्धेः स्वप्नदेशेहिसनिद्रःस्वप्नदेहस्थोद्रष्टास्वाप्नबंध्वादीन्पश्यति अपगतस्वप्नदेहोविनिद्रोजाग्रद्देहस्थश्चस्वप्नदृष्टबंध्वाद्यसत्वं पश्यति नचदेशांतरेदेहांतरदृष्टानांदेहांतरेदेशांतरेचान्यदर्शनेतददर्शनंतद्बाधः ॥ पूर्वजन्मबंध्वादीनामिहजन्मन्यदर्शनस्यापितद्बाधत्वापत्तेरितिसाम्यानपायादित्याशयेनवसिष्ठः समाधत्ते ॥विद्धत्येत्यादिसप्तभिः ॥ मृतिंस्वप्नदेहापगमम् ॥ २० ॥ जंतुर्जीवः ॥ २१ ॥ म्रियतेस्वाप्नदेहंजहाति ॥ २२ ॥ इहास्मिन्शयनदेशेजायतेअनेनदेहेनसंबध्यते ॥ तत

असत्यरूपमेवेतिभातिस्वप्नेजगद्यथा॥ तथैवजाग्रदाभातिमनागप्यत्रनान्यता ॥ १७ ॥ यथाद्यौसदृशौसूर्यौयथाद्यौसदृशौनरौ ॥ जाग्रत्स्वप्नौतथैवैतौमनागप्यत्रनान्यता ॥ १८ ॥ ॥ श्रीरामउवाच ॥ ॥ नैतदेवमपिक्षिप्राप्रत्ययोयत्रबाधकः॥ स्वप्नेतद्दर्शनेनांतःकथं जाग्रत्समंभवेत् ॥ १९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ विद्धत्यस्वप्नजगतिस्वप्नबंधुजनैःसमम् ॥ मृतिमाप्नोतितत्रासौद्रष्टास्वप्नस्यराघव ॥ २० ॥ मृतःसन्स्वप्नजगतिस्वप्नजंतुवियोगवान् ॥ इहप्रबुध्यतेजंतुर्निद्रामुक्तश्चकथ्यते ॥ २१ ॥ सुखदुःखदशामोहान्दिनरात्रिविपर्ययान् ॥ अनुभूयबहून्द्रष्टाम्रियतेस्वप्नसंसृतौ ॥ २२ ॥ गतनिद्रतयापश्चान्निद्रांतइहजायते ॥ नसत्यमेतदित्येवंततःप्रत्ययवान्भवेत् ॥ २३ ॥ स्वप्नद्रष्टायथास्वप्नसंसारेमृतिमाप्तवान् ॥ अन्यंजाग्रन्मयंस्वप्नंद्रष्टुंभूयःप्रजायते ॥ २४ ॥ जाग्रद्द्रष्टातथाजाग्रत्संसारेमृतिमाप्तवान् ॥ अन्यंजाग्रन्मयंस्वप्नंद्रष्टुंभूयःसजायते ॥ २५ ॥ नस्वप्नमसदित्येवंपूर्वस्मिन्जाग्रदात्मनि ॥ पुनःप्रत्ययमादत्तेस्वप्नात्स्वप्नांतरं गतः ॥ २६ ॥ सजाग्रत्प्रत्ययंतत्रपुनर्गृह्णातिमुग्धधीः ॥ स्वप्नसंदर्शनंत्वन्यत्तत्राप्यनुभवत्यथ ॥ २७ ॥ स्वप्नंजाग्रत्तयाजाग्रत्स्वप्नत्वंचेतिनामनि ॥ नजायतेनम्रियतेजायतेम्रियतेपिच ॥ २८ ॥ स्वप्नद्रष्टास्वप्नमृतःप्रबुद्धइहकथ्यते ॥ इहजाग्रन्मृतोजंतुःप्रबुद्धोन्यत्रकथ्यते ॥ २९ ॥

स्तदनंतरमेतत्स्वप्नदृष्टबंध्वादिनसत्यमित्येवंप्रत्ययवान्भवेत् ॥ सचप्रत्ययोनस्वाप्नार्थबाधनसमर्थइतिद्योतनायसंभावनायांलिङ् ॥ २३ ॥ २४ ॥ २५ ॥ जाग्रतिमृत्वाजाग्रदंतरेजातःसन् पूर्वस्मिन्जाग्रदात्मनिप्रपंचेनस्वप्नमसदित्येवंपुनःप्रत्ययंयथाआदत्तेतथास्वप्नात्स्वप्नांतरंगतउत्तरस्वप्नेजाग्रत्प्रत्ययंपुनर्गृह्णाति ततउत्तरस्वप्नेजाग्रत्प्रत्ययोयथामुग्धताप्रयुक्तस्तद्वत्पूर्वंजाग्रतिस्वप्नत्वासत्वयोरग्रहणमपिमुग्धताप्रयुक्तमेवेतिभावः ॥ २६ ॥ २७॥ अथतत्रापिस्वप्नेस्वप्नसंदर्शनांतरमनुभवत्स्वप्नमेवजाग्रत्तयाअनुभवतीतिपूर्वेणान्वयः ॥ एवंरीत्याजाग्रत्स्वप्नत्वंचेत्येवंनामनिअवस्थाद्वयेऽयंजीवःस्वतोनजायतेनम्रियते तत्तद्देहाभिमानोपादानत्यागाभ्यांतुजायतेम्रियतेपिच ॥ २८ ॥ तथाचस्वप्नद्रष्टास्वप्ने मृतःसन्इहजागरेप्रबुद्धःकथ्यते ॥ इहजाग्रतिमृतस्तुअन्यत्रस्वप्नेप्रबुद्धःकथ्यतइतितयोःसाम्यमेवेत्यर्थः ॥ २९ ॥

एवंचस्वप्नात्स्वप्नांतरस्थितौ द्वितीयंस्वप्नरूपमेवपूर्वापेक्षयावर्त्तमानत्वात्प्रकृष्टंदर्शनंजाग्रद्भवति ॥ एवंजाग्रतिमृत्वाअन्यत्रस्वप्नेजाग्रदंतरेवाप्रबुद्धस्यपुंसःपूर्वजाग्रत्स्वप्नएवाल मवश्यंभवति ॥ ३० ॥ इतिहासःकीर्त्यमानपूर्ववृत्तकथार्थस्तन्मयौतत्सदृशावेवनयथार्थावितिहेतोःपरस्परमुपमानोपमेयतांगतावित्यर्थः ॥ इतीहासमयावितिदीर्घपाठेतुइति दृहअसमंविषमंयातइत्यसमयौकिंचिद्विलक्षणावपीत्यर्थः ॥ इतीहासन्मयावितिपाठःसाधुः ॥ ३१ ॥ किंचवर्त्तमानदशायांस्वप्नोपिजाग्रदिवप्रत्यक्षमाभाति ॥ अतीतंतुजाग्रद

स्वप्नात्स्वप्नस्थितौजाग्रज्जाग्रत्स्वप्नप्रदर्शनम् ॥ मृत्वान्यत्रप्रबुद्धस्यजाग्रत्स्वप्नोभवत्यलम् ॥ ३० ॥ इतिहासमयावेवजाग्रत्स्वप्नावुभा वपि ॥ परस्परंगतावेतावुपमानोपमेयताम् ॥ ३१ ॥ स्वप्नोजाग्रदिवाभातिजाग्रत्स्वप्नमिवोदितम् ॥ वस्तुतस्तुद्वयमसच्चित्स्वंकचतिके वलम् ॥ ३२ ॥ स्थावरंजंगमंचैवभूतजातमशेषतः ॥ चिन्मात्रव्यतिरेकेणकिमन्यदुपपद्यते ॥ ३३ ॥ मृन्मयंतुयथाभांडंमृच्छून्यंनोपल भ्यते ॥ चिच्चमत्कारमात्रात्मतथाकाष्ठोपलाद्यपि ॥ ३४ ॥ वस्तुजातमिदंस्वप्नेजाग्रत्यपितथैवनः ॥ दृष्टोयउपलःस्वप्नेचिच्चमत्करणादृते ॥ ३५ ॥ किमन्यत्संवदप्राज्ञकिलावश्यंविदेवसा ॥ ननुयादृग्वपुःस्वप्नेजाग्रत्तादृगखंडितम् ॥ ३६ ॥ जगज्जातमतःसर्वंचिन्मात्रंब्रह्मखं डितम् ॥ जगज्जातमतःसर्वंचिन्मात्रंब्रह्मकुट्टिमम् ॥ ३७ ॥ मृन्मयंतुयथाभांडंमृच्छून्यंनोपलभ्यते ॥ चिन्मयंतुतथाचेत्यंचिच्छून्यंनोप लभ्यते ॥ ३८ ॥ शैलात्मकंयथाभांडंशैलशून्यंनलभ्यते ॥ चिन्मयंतुतथाचेत्यंचिच्छून्यंनोपलभ्यते ॥ ३९ ॥ द्रवरूपंयथावारिद्रवरिक्तं नलभ्यते ॥ चिन्मयंतुतथाचेत्यंचिच्छून्यंनोपलभ्यते ॥ ४० ॥ ऊष्मरूपोयथावह्निर्निरूष्मानोपलभ्यते ॥ चिन्मयंतुतथाचेत्यंचिच्छून्यं नोपलभ्यते ॥ ४१ ॥ यथास्पंदमयोवायुरस्पंदोनोपलभ्यते ॥ चिन्मयंतुतथाचेत्यंचिच्छून्यंनोपलभ्यते ॥ ४२ ॥ यद्यन्मयंतद्विनातुतत्कथं किललभ्यते ॥ क्वाशून्यंलभ्यतेव्योमक्वाघनालभ्यतेमही ॥ ४३ ॥ चिद्व्योममयमेवेदंयथाघटपटादिकम् ॥ स्वप्नेतथेदंशैलादिचिद्व्योमा भासमात्रकम् ॥ ४४ ॥

पिप्रसिद्धस्वप्नमिवउदितम् ॥ ३२ ॥ चित्स्वंकचतिकेवलमित्युक्तिमुपपादयति ॥ स्थावरमित्यादिना ॥ ३३ ॥ ३४ ॥ चिच्चमत्करणादृतेअन्यत्किंस्यात् ॥ हेप्राज्ञअस्मिन्नर्थे विद्वद्भिःसहयुक्त्यासंवदसंवादेनावधारय ॥ विचारोत्पन्नतत्त्वदर्शनेसाप्रसिद्धाचिदेवस्वप्नोपलइतिपरेणान्वयः ॥ ३५ ॥ ३६ ॥ चिन्मात्रंब्रह्मैवजगदाकारेणखंडितंविभक्तमध्या रोपे अपवादेतुजगत्सर्वंब्रह्मकुट्टिमंजातमित्यर्थः ॥ ३७ ॥ चिद्व्यतिरेकेणजगदनुपलंभादपिचिन्मात्रत्वमेवेत्याह ॥ मृन्मयमित्यादिना ॥ ३८ ॥ शिलायाअवयवःशैलस्तदात्म कम् ॥ ३९ ॥ ४० ॥ ४१ ॥ स्पंदमयःस्पंदस्वभावः ॥ ४२ ॥ अघनाअमूर्त्ता ॥ ४३ ॥ तथाइदंजाग्रच्छैलाद्यपि ॥ ४४ ॥

उक्तमेवस्फुटयन्नुपसंहरति ॥ स्वप्नइति ॥ स्वप्नेप्रसिद्धंपुराचलादियथासंविन्मयंगगनमेवहेसुभगजाग्रतिप्रसिद्धंपुराचलाद्यपितद्वदेवसंविन्मयंगगनमेव ॥ एवंचस्वप्नोऽथजाग्रदि
तिविकल्पनशांतमेकंचिन्मात्रमेवपरिशिष्टम् ॥ अत्रईदृशेतत्त्ववादिनांविपर्ययंविनावृथाविवादइत्यर्थः ॥ ४५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०पंचोत्तरशततमः
सर्गः ॥ १०५ ॥ ॥ ७ ॥ ॥ लक्षणौघैश्चिदाकाशमिहभूयःप्रदर्श्यते ॥ तदेवजगदित्येतदपिभूयःप्रपंच्यते ॥ १ ॥ प्रपंचितेनजगतःस्वप्नसाम्येनयादृशचिदाकाशमात्रंतत्त्व
मितिप्रतिपत्तव्यंतत्स्वरूपंप्राक्शतशोनिरूपितमपिमंदमतिभिःकैश्चित्सम्यङ्नावधारितंस्यादितिसंभावनयातदनुकंपयापुनस्तस्यैवस्वरूपतटस्थलक्षणभेदैःसम्यग्व्युत्पादनंश्रोतु
कामोरामःपृच्छति ॥ कीदृशमिति ॥ १ ॥ पृष्टंवर्णयिष्यन्वसिष्ठःप्रस्तुतंजाग्रत्स्वप्नसाम्यमेवतद्वर्णनपीठिकात्वेनानुवदति ॥ समयोरिति ॥ यमयोर्यमलजातयोर्नामनीयद्वद्वेभि

स्वप्नेयथागगनमेवपुराचलादिसंविन्मयंसुभगजाग्रतितद्वदेव ॥ स्वप्नोथजाग्रदितिशांतमनंतमेकंचिन्मात्रमत्रननुनामविनास्तुवादः
॥४५॥ ॥इ०वा०वा०दे०मो०नि०उ०जाग्रत्स्वप्नैक्यप्रतिपादनंनामपंचोत्तरशततमःसर्गः॥१०५॥ ॥७॥ ॥श्रीरामउ
वाच॥ ॥कीदृशंस्याच्चिदाकाशंतद्ब्रह्मन्ब्रह्मयत्परम्॥ भूयःकथयतत्तृप्तिर्हिंश्रृण्वतोनास्तिमेऽमृतम्॥१॥ ॥श्रीवसिष्ठउवाच॥ ॥सम
योर्यमयोर्भ्रात्रोर्व्यवहारायनामनी॥ यद्वत्क्रियेतेद्वैतद्वज्जाग्रत्स्वप्नशिलामये॥२॥ वस्तुतस्त्वनयोर्भेदोनद्वयोःपयसोरिव॥ द्वयमप्येक
मेवैतच्चिन्मात्रंव्योमनिर्मलम्॥३॥ देशाद्देशांतरंदूरंप्राप्तायाःसंविदोवपुः॥ निमिषेणैवतन्मध्येचिदाकाशंतदुच्यते॥४॥ यादृशस्ति
ष्ठतःस्वच्छंरसमाकर्षतस्तरोः॥ भवेद्भावोनभःस्वच्छस्तादृशंचिन्नभःस्मृतम्॥५॥ विनिवृत्ताखिलेच्छस्यपुंसःसंशांतचेतसः॥ यादृशः
स्यात्समोभावस्तादृशंचिन्नभःस्मृतम्॥६॥ अनागतायांनिद्रायांमनोविषयसंक्षये॥ पुंसःस्वस्थस्ययोभावःसचिदाकाशउच्यते॥७॥
तृणगुल्मलतादीनांवृद्धिमागच्छतामृतौ॥ यःस्याद्धुन्ममतोभावःसचिदाकाशउच्यते॥८॥ रूपालोकमनस्कारविमुक्तस्यामृतस्ययः॥
भावःपुंसःशरद्व्योमविशदस्तच्चिदंबरम्॥९॥ यदेतदासनंस्पष्टंकाष्ठपाषाणभूभृताम्॥ चेतनानांचसत्तात्मचिदाकाशःसउच्यते॥१०॥

न्नेक्रियेतेतद्वज्जाग्रत्स्वप्नलक्षणाखंडचित्स्फटिकशिलामयेतत्प्रतिबिंबप्रायेसदृशेप्रपंचद्वयेद्वेनामनीक्रियेतेइत्यर्थः ॥ २ ॥ ३ ॥ तस्यचिद्व्योम्नोलक्षणंप्रागुक्तमेवस्मारयन्प्रथम
माह ॥ देशादिति ॥ मध्येयन्निर्विषयंसंविदोवपुःप्रसिद्धंतदित्यर्थः ॥ ४ ॥ मूलेनभौमंरसंजलमाकर्षतस्तरोःपेपीयमानोमोदमानस्तिष्ठतीतिश्रुतिप्रसिद्धोयादृशोवृद्धिह्रासशून्य
आह्लादभावःप्रसिद्धस्तादृशमित्यर्थः ॥ ५ ॥ समःसर्ववैषम्यशून्योभावःसहजसुखस्वरूपानुभवः ॥ निर्विक्षेपदशायामहंसुखंतिष्ठामीतिसर्वानुभवात् ॥६॥ अनागतायामिति॥
यथाहुः ॥ निद्रादौजागरस्यांतेयोभावउपजायते ॥ तंभावंधारयन्योगीनदुःखैरभिभूयतइति ॥ ७ ॥ ऋतौप्रावृषिशरदिवा ॥ उन्मुक्ताममतायस्मिंस्तथाविधोयआनंदभा
वः ॥ ८ ॥ अमृतस्यजीवतःपुंसः ॥ ९ ॥ आसनंनिष्क्रियमवस्थानंधात्वात्स्वभावतयास्पष्टंतदेवचेतनानांजीवानांसत्तात्मस्थितिस्वरूपंचेत्स्यात्तदासचिदाकाशउच्यते ॥ तच्च
मनोनाशेसत्येवसिद्ध्यतीतिभावः ॥ १० ॥

यतोयस्मात्सुषुप्तिसाक्षिणःस्वप्नजागरयोर्द्रष्ट्रादित्रिपुट्याउदयोयस्मिन्नेवचास्तमयः ॥ ११ ॥ विचित्राःसर्वेपदार्थानुभवायतउद्यंतिउदयंप्राप्नुवंतियस्मिंश्चआलोचनविमर्श
नाध्यवसायहानोपादानादिभावेनोत्तरोत्तरंपरिणमंति ॥ १२ ॥ द्वौश्लोकौप्राग्व्याख्यातौ ॥ १३ ॥ १४ ॥ विश्वांगेयस्मिन्स्थितंसन्मूर्तमसदमूर्तंचविश्वंतत्तौस्रगिवतिष्ठति
तत् ॥ १५॥ यतोवाइमानिभूतानिजायंतेइतिश्रुत्युक्तंतटस्थलक्षणमाह ॥ यस्मादिति ॥ १६ ॥ सुषुप्तिप्रलयलक्षणायांनिद्रायांविनिवृत्तायांसत्यांयतोयस्मात्प्रतीचोविक्षेपश
क्तिवशात्जाग्रत्स्वप्नलक्षणंवियदादिलक्षणंचविश्वंप्रवर्त्ततेआविर्भवति ॥ यस्यशांतौविक्षेपशक्तिशांतौनिवर्त्तते ॥ १७॥ उन्मेषश्चरमसासाक्षात्कारवृत्तावाविर्भावस्तेनजगत्सत्ता

द्रष्टृदर्शनदृश्यानांत्रयाणामुदयोयतः ॥ यत्रवास्तमयश्चित्खंतद्विद्धिविगतामयम् ॥ ११ ॥ यतउद्यंतियस्मिंश्चचित्राःपरिणमंत्यलम्॥
पदार्थानुभवाःसर्वेचिदाकाशःसउच्यते ॥ १२ ॥ यस्मिन्सर्वंयतःसर्वंयःसर्वंसर्वतश्चयः॥ यश्चसर्वमयोनित्यंसचिदाकाशउच्यते॥ १३॥
दिविभूमौबहिश्चांतस्तथान्यस्यसमाभिधः ॥ योविभात्यवभासात्माचिदाकाशःसउच्यते ॥ १४ ॥ यस्मिन्नित्येततेतंतौदृढेस्रगिवतिष्ठ
ति ॥ सदसद्वृत्थितंविश्वंविश्वांगेतच्चिदंवरम् ॥ १५॥ यस्मात्सर्वाःप्रसूयंतेसर्गप्रलयविक्रियाः॥ यस्मिंश्चैवप्रलीयंतेयन्मयास्तच्चिदंवरम्
॥ १६ ॥ निद्रायांविनिवृत्तायांयतोविश्वंप्रवर्त्तते ॥ निवर्त्ततेचयच्छांतौतच्चिदंवरमुच्यते ॥ १७॥ यस्योन्मेषनिमेषाभ्यांजगत्सत्तालयो
दयौ ॥ स्वानुभूत्यात्मकंस्वांतःस्थितंतद्विद्धिचिन्नभः ॥ १८ ॥ नेदंनेदंतदित्येवंसर्वंनिर्णीयसर्वथा ॥ यन्नकिंचित्सदासर्वंतच्चिद्व्योमेतिक
थ्यते ॥ १९ ॥ देशाद्देशांतरप्राप्तौयन्मध्येसंविदोवपुः ॥ दूरतोर्धनिमेषेणतच्चिन्मात्रवपुःस्मृतम् ॥ २० ॥ विश्वंतन्मयमेवेदंयथाभूतंयथा
स्थितम् ॥ रूपालोकमनस्कारैर्युक्तमप्येवमीदृशम् ॥ २१ ॥ ईषदुन्मेषणादेतदन्यतामिवगच्छति ॥ अनन्यरूपमपिसच्चिद्व्योमविमलाकृ
ति ॥ २२ ॥ पश्यन्नेवेंद्रियैरर्थान्नूनंनिर्वासनाशयः ॥ प्रबुद्धएवैकघनःसुषुप्तावस्थितोभव ॥ २३॥ निर्वासनःशांतमनावदव्रजपिबाहर॥
पाषाणइवसंजीवोनित्यंसुघनमौनवान् ॥ २४ ॥ इदंनसंभवत्येवदृश्यंपश्यसियत्पुरः ॥ मृगतृष्णाजलमिवद्वैतमिदाविवोदितम् ॥ २५॥
इदमादावनुत्पन्नंकारणाभावतःकिल ॥ कारणेनविनाकार्यंनहिनामोपपद्यते ॥ २६ ॥

यालयः निमेषःस्वरूपावरणंतेनचउदयः ॥ १८ ॥ एवंसर्वनिषेधावधिसर्वात्मत्वमपितल्लक्षणमित्याह ॥ नेदमिति ॥ सदासर्वमपियन्नकिंचित् ॥ १९॥ अर्धनिमेषेणअविलंबेन
देशांतरप्राप्तौ विलंबेहिवृत्तिविच्छेदाद्विषयांतरानुप्रवेशाद्वानशुद्धचिदंबरंपरिचेतुंशक्यमिति ॥ उपक्रमोक्तस्यपुनःकीर्त्तनमुपसंहारद्योतनार्थम् ॥ २० ॥ लक्षणान्युक्त्वातदद्वैतसि
द्धयेविश्वस्यतन्मयतामाह ॥ विश्वमित्यादिना ॥ २१ ॥ तर्हिकथंप्रलयावस्थातःसर्गावस्थायाभेदविभावनंतत्राह ॥ ईषदिति ॥ २२ ॥ सेयमन्यताभ्रांतिर्वासनावशादेवेतिनिर्नि
र्वासनस्येत्याह ॥ पश्यन्नेवेति ॥ २३ ॥ २४ ॥ अन्यतामिवेतिइवकारेणान्यतायामिथ्यात्वमुक्तंतत्कुतइतिचेदसंभवादेवेत्याह ॥ इदमिति ॥ २५ ॥ २६ ॥

185

यद्वा किंचिद्बीजादंकुरादिअन्वयव्यतिरेकदर्शनादुपपद्यतेतदप्यकारणकादद्वयाद्ब्रह्मणएवोद्भवोयस्यतथाविधम् ॥ ननुनिर्विकारात्तस्मात्कथमंकुराद्युद्भवस्तत्राह ॥ यथास्थितमिति ॥ २७ ॥ यथाअद्वयमपिचंद्रबिंबभ्रांतौद्वयेनाप्युपलक्षितंतद्वदितिभावः ॥ २८ ॥ तदेवचेत्कथमन्यथाप्रहत्वंतत्राह ॥ तत्रेति ॥ २९ ॥ मायामात्रत्वेकिंसिद्धंतदाह ॥ तस्मादिति ॥ ३० ॥ तद्विश्वंपरंशांतंचिद्व्योमैवतथाविश्ववेपेणस्थितम् ॥ किंपरिणामेनेनेत्याह ॥ स्वरूपादिति ॥ ३१ ॥ कुतोनपरिणामेनेतिचेत्तत्समसत्ताकत्वाभावादित्याह ॥ नहीति ॥ अतएवतद्द्रष्टृतापिनपरिणामः ॥ दृश्यनिरूप्ययातत्समत्वादित्याह ॥ नचेति ॥ ३२ ॥ यदिद्रष्टृदृश्येअत्यंतासतीतर्हितयोःकथमवभासनम् अत्यंतासतोभानादर्शनादितिरामःशंकते ॥ एवंचेदिति ॥ तत्प्रागुक्तमपिभूयोपिवदहेवदतांवर ॥ ३३ ॥ तत्रासतोभानासंभवंप्रथमश्लोकेनाभ्युपेत्यअतएवसतःपरमात्मनएवमाययातथाभानमि

यद्वोपपद्यतेकिंचित्तदकारणकोद्भवम् ॥ यथास्थितंपरंरूपमुद्भूतमिवलक्ष्यते॥ २७॥ तद्यथास्थितमेवांगपूर्वरूपमवस्थितम् ॥ भवत्यद्वयमेवाच्छंद्वयेनाप्युपलक्षितम् ॥ २८ ॥ तत्रेदंप्रत्ययःप्रौढोभवत्यनुभवोहियः॥ समायातमिदंभ्रांतंतत्स्वप्नस्त्रीसमंविदुः॥ २९ ॥ तस्माद्दृश्यंनचोत्पन्नंनैवास्तिनभविष्यति॥ नचनश्यतियन्नास्तितस्यकिंनामनश्यति॥ ३०॥ तत्तदेवपरंशांतंचिद्व्योमैवतथास्थितम्॥ स्वरूपादच्युतंस्वस्थंसौम्यंजगदिवोदितम् ॥ ३१ ॥ नहीदमग्रेयद्दृष्टंदृश्यंतत्सत्कदाचन॥ नचापिद्रष्टादृष्टार्थाभावेकद्रष्टताकिल॥ ३२॥ श्रीरामउवाच ॥ ॥ एवंचेत्तद्वदब्रह्मन्द्रष्टृदृश्यावभासनम् ॥ किमिदंकथमाभातिभूयोपिवदतांवर ॥ ३३ ॥ ॥ श्रीवसिष्ठउवाच॥ असद्रूपस्यदृश्यस्यकारणाभावतःसदा॥ दृश्यतास्येत्यपिप्रौढिनिर्देशस्यात्यसंभवात्॥ ३४॥ यदिदंभासतेकिंचिद्द्रष्टृदृश्यभ्रमात्मकम्॥ जगदादिपरंरूपंतद्विद्धिपरमात्मनः॥ ३५॥ स्वप्नेचिन्मात्रएवास्तेयथागगनकाननम्॥ तथाजगत्तयाभातिस्वयंचिन्मात्रमात्मनि॥ ३६॥ इहादिसर्गात्प्रभृतिनास्त्युपादानकारणम्॥ किंचनापिकचिदपिभातीत्थंब्रह्मकेवलम्॥ ३७॥ यच्चिदाकाशकचनंस्वयमात्मनिजृंभते॥ तदिदंभातितस्यैवजगदित्युदितंवपुः॥ ३८॥ यथाभावस्यभावत्वंयथाशून्यस्यशून्यता॥ आकारिणोयथाकारस्तथाचिन्नभसोजगत्॥ ३९॥ इदंविद्धिचिदाभासंपरमार्थघनंघनम्॥ इत्थंस्थितंस्वयंभातंद्रष्टृदृश्यदृगात्मकम्॥ ४०॥

त्युत्तरंद्वितीयेनाह ॥ असद्रूपस्येति ॥ कारणाभावतःअसद्रूपस्योत्पत्तेरेवासंभवादस्यदृश्यतापीतिप्रौढ्यानिर्देशःप्रौढिवादस्तस्यअत्यसंभवात्सुतरामसंभवादित्यर्थः ॥ ३४ ॥ अतएवेदंद्रष्टृदृश्यंनअसतोरूपंकिंतुपरमार्थसतोब्रह्मणइत्याह ॥ यदिदमिति ॥ ३५ ॥ परमात्मनएवेदंरूपमितिकथंज्ञातमितिचेत्स्वप्नदर्शनादित्याह ॥ स्वप्नेइति ॥ ३६ ॥ स्वप्नसाम्यमस्यकुतइतिचेत्सर्वकारणकलापशून्यसुषुप्तिसदृशात्प्रलयादुद्भूतत्वादित्याशयेनाह ॥ इहेति ॥ ३७ ॥ चिदाकाशकचनाधीनकचनत्वादपिस्वप्नसाम्यमित्याशयेनाह ॥ यदिति ॥ ३८ ॥ निर्धर्मकस्यचिन्नभसःकथंजगद्धर्मकतेतिचेन्मायिकविकल्पवशादेवेतिदृष्टांतैरुपपादयन्नाह ॥ यथेति ॥ आकारिणोमूर्तस्य ॥ ३९ ॥ घनंसैंधवघनवदेकरसंपरमार्थघनमेवमायायांचिदाभासंद्रष्टृत्वंत्रिपुटीभूयस्थितंविद्धि ॥ ४० ॥

मायात्यागेतुद्वयाभावात्सद्वाअसद्वेतिकोवेत्ति बाधितस्यविमर्शायोग्यत्वादितिभावः ॥ ४१ ॥ एवंनाभासिनचभासनमितित्वदुक्तरीत्याद्रष्टृदृश्योभयशून्यंचेत्परमार्थतत्त्वं तर्हिकार्यकारणतादिकोभेदःकथम् ॥ नह्यद्रष्टृकःकश्चित्सेद्धुमर्हति कस्मादुपादानान्निमित्ताद्वाआयातः यद्यसत्यएवेतिब्रूषेतर्हिकथंसत्यत्वमागतः सर्वजनानांसत्यत्वेनकथं भातीत्यर्थः ॥ ४२ ॥ तत्रप्रथमप्रश्नस्योत्तरमाह ॥ चित्प्रकाशइति ॥ वस्तुतःस्वात्मापिचित्प्रकाशईश्वरःस्वयंयदायथाभानंयथाप्राणिकामकर्मवासनोद्बोधंयद्यथासत्यसंकल्पतयाभावयतितत्तदात्वंतथैवाशुपश्यसित्वदात्मनाचसएवइतिप्रागुक्तंद्रष्टृदृश्यभावमनुभूतवान् ॥ तेनास्यसिद्धिरित्यर्थः ॥ ४३ ॥ द्वितीयस्योत्तरमाह ॥ चिद्व्योमैवेति ॥ अयंकार्यकारणभावाद्याकारश्चिद्व्योमैव यथाघटोमृदेवेतिचिद्व्योमैवोपादानंमोहएवास्यनिमित्तम् ॥ कथमिदंज्ञायते ॥ यतोयंस्वेव्योम्न्येवपरिज्ञातेनमुह्यतिअन्यथातुमुह्यत्येव॥यथास्वप्नेस्वयमेवमुह्यतिस्वात्मप्रबोधादेवमोहंजहातितद्वत्॥ ननुस्वात्मबोधेसमर्थईश्वरःस्वयमेवजीवोभूत्वाकिमर्थंमुह्यतिकुतोवानप्रबुध्यतेतत्राह ॥ कोस्येति ॥ स्वतंत्रस्येश्वरस्यकिमर्थंजीवोभूत्वामुह्यसीतिपर्यनुयोगमाक्षेपंकरोतीतिपर्यनुयोगकृत्कोवास्यान्नकश्चिदित्यर्थः॥४४॥तृतीयस्योत्तरमाह ॥ भावादिति ॥ दुग्धभावाद्दधिभावप्राप्तौपिंड

वस्तुतस्तुद्वयाभावान्नाभासिनचभासनम्॥ किमपीदमनिर्देश्यंसद्वासद्वेतिवेत्तिकः॥४१॥ ॥श्रीरामउवाच॥ ॥एवंचेत्तद्वदब्रह्मन्कार्यकारणतादिकः॥ कथंभेदःकिमायातःकथंसत्यत्वमागतः॥४२॥ ॥श्रीवसिष्ठउवाच॥ ॥चित्प्रकाशोयथाभानंयदाभावयतिस्वयम्॥ स्वात्मातथातदेवाशुपश्यसीत्यसिदृष्टवान्॥४३॥ चिद्व्योमैवायमाकारःस्वेव्योम्न्येवनमुह्यति॥ स्वयमेवयथास्वप्नेकोस्यपर्यनुयोगकृत्॥४४॥ भावाद्भावांतरप्राप्तौमध्येयत्संविदोवपुः॥ तच्चिद्व्योमतदेवेदंसर्वंच[1]स्थितिनेतरत्॥४५॥ कार्यकारणभावादिदृशोविद्याविजृंभिकाः॥ जगद्वत्कल्पयत्येषकोस्यपर्यनुयोगकृत्॥४६॥ द्रष्टाभोक्ताथकर्त्तावाकश्चित्स्यादितरोयदि॥ तत्कथंकिमिदंदृश्यमितियुज्येतनान्यथा॥४७॥ यत्रस्वप्नेनिराभासंचिद्व्योमैवविराजते॥ शुद्धमेकमनेकात्मतत्रकिंकविकल्प्यते॥४८॥ आस्वयंभुवएवेयंचिन्मात्रेभातिसर्गभाः॥ परिज्ञातासतीसातुब्रह्मैवभवतिक्षणात्॥४९॥ एषैवत्वपरिज्ञाताभ्रांतिर्मायेतिकथ्यते॥ जगदित्युच्यतविद्यादृश्यमित्युपवर्ण्यते॥५०॥ चिदाकाशप्रकाशेनचित्तादृश्यपिशाचकः॥ वेतालोबालकेनेवबुद्धोसन्नेवसन्निव॥५१॥

भावाद्घटभावप्राप्तौपूर्वभावनिवृत्तावुत्तरभावानुपजनेचमध्येक्षणमात्रंसन्मात्ररूपंप्रसिद्धंतत्परमार्थसत्याःसंविदोवपुःस्वरूपंतदेवचिद्व्योममयाप्रागुक्तंतदेवेदंसर्वंचस्थितिवस्तुविभाव्यतइतिसर्वंसत्यत्वमागतमित्यर्थः॥४५॥ ईश्वरस्यजीवभावकल्पनायामिवजीवस्यस्वाविद्ययाकार्यकारणरूपावस्थात्रयकल्पनायामपिनपर्यनुयोगोयुक्तइत्याह ॥ कार्यकारणेति ॥ नहिस्वात्मानंप्रतिकश्चित्किमर्थमेवंकरोमीतिपर्यनुयोगंकर्त्तुंसमर्थइतिभावः॥४६॥आत्मान्यस्यकर्तृत्वेभोक्तृत्वेवास्यादेवपर्यनुयोगइत्याह॥द्रष्टेति॥इतिपर्यनुयोगोयुज्येत ॥४७॥ विकल्प्यतेपर्यनुयुज्यते ॥४८॥ स्वयंभुवःआस्वयंभुवमभिव्याप्यैवसर्गभाःसर्गभ्रांतिर्भातितत्त्वापरिज्ञानादित्यर्थः ॥४९॥ एषासर्गभ्रांतिरेवतत्त्वतःअपरिज्ञातामायेतिशास्त्रेषुकथ्यते लोकेजगदित्युच्यते अज्ञैरविद्येत्युच्यते दृग्विवेकिभिर्दृश्यमित्युपवर्ण्यते ॥५०॥स्वीयाचित्ताच्चिरस्वभावःपृथगसन्नेवसन्निवदृश्यपिशाचकोबुद्धः ॥५१॥

---

१सर्वपुस्तकेष्वयमेवपाठोयद्यपिदृश्यतेतथापिटीकायांकेषुचित्पुस्तकेषुतदेवेदंसर्वंवस्तुविभाव्यतइतिस्थितिपदरहितपाठदर्शनान्मूलेसर्वंवस्त्वितिनेतरदितिपाठोपेक्षितइतिभाति

186

असतोनिरवयवस्यापिसनूसावयवइत्यनुभवःस्वप्नवदत्रोपपादनीयइत्याह ॥ जगत्तेति ॥ सांगलेखासावयवेवच ॥५२॥ तत्राहंताध्यासेनानुभवंप्रपंचयति ॥ अहमिति ॥ अद्रिर्मेरुर्हिमवदादिः ॥ ५३ ॥ चिदनुभवएवसर्गइतिकिमर्थंवर्ण्यते प्रधानपरमाण्वादिकारणांतरादेवायंजातइतिकुतोनवर्ण्यतेतत्राह ॥ आकारीति ॥ ५४ ॥ शून्यांगंनिरवयवम ॥ ५५ ॥ सर्वएवजंतवोदर्पणाइवस्वांतःपरिकल्पितजगद्भेदाअपिविचाराभावात्स्वरूपदर्शनासामर्थ्याज्जडाःसंतोयथाजीर्णाः ॥ विचारणंकुर्वतःपुरुषधौरेयस्यतुपरमपुरुषार्थांऽतःप्रत्यगात्मरूपत्वात्समीपगतएवेत्यर्थः ॥ ५६ ॥ विचारेणस्वरूपंबुद्धाकथंस्थेयंतत्राह ॥ तत्तदिति ॥ तत्तन्नामरूपस्वरूपमुत्सृज्यपरिशिष्टंचिन्मात्रंखमेवेतिजगद्बुद्धाचेतनेनचिदेकघनेनाश्मनेवअचलेनस्थेयंइतरामायिकीदेहाद्यास्थानोत्तमा ॥ ५७ ॥ चित्कथंजगदात्मनास्थितातत्राह ॥ यथेति ॥ यथावारिस्वदेहंचलयत्सत्आवर्तादि

जगत्तात्मन्यसत्यापिचिद्व्योम्नैवानुभूयते ॥ सत्येवसांगलेखेवस्वप्नेद्रिपुरतायथा ॥ ५२ ॥ अहमद्रिरहंरुद्रःसमुद्रोहमहंविराट् ॥ चेत्यतेखे चितैवेतिस्वप्नेद्रिपुरतायथा ॥ ५३ ॥ आकारिकारणाभावाज्जातंकार्यंनकिंचन ॥ महाप्रलयचिद्व्योम्निचित्स्थितेत्थमिदंतया ॥ ५४ ॥ अकारणकमेवेदंव्योमव्योम्नानुभूयते ॥ जगदित्येवशून्यांगंचिन्मात्रात्मचिदात्मनि ॥ ५५ ॥ सर्वएवजडाजीर्णादर्पणाइवजंतवः ॥ समीपगतएवांतःकुर्वतस्तुविचारणम् ॥ ५६ ॥ तत्तत्स्वरूपमुत्सृज्यबुद्धाचिन्मात्रखंजगत् ॥ अश्मनाचेतनेनैवस्थेयंनास्थेतरोत्तमा ॥ ५७ ॥ यथास्तंचलयद्देहंवार्यावर्तंजगद्भवः ॥ चेततीतितथाचित्त्वंस्थिताचित्तज्जगद्दृशा ॥ ५८ ॥ यथाकल्पद्रुमोभीष्टंकुर्याच्चिंतामणिर्यथा ॥ तथायद्भावितंस्वांतस्तत्पूरयतिचित्क्षणात् ॥ ५९ ॥ चितिश्चिंतामणिरिवकल्पद्रुमइवेप्सितम् ॥ आशुसंपादयत्यंतरात्मनात्मनिखात्मिका ॥ ६० ॥ देशाद्देशांतरप्राप्तौमध्यदेशेचितेर्वपुः ॥ यत्तन्मयमिदंदृश्यंकुतोद्वैतैक्यविभ्रमः ॥ ६१ ॥ चिच्छायैवंकचत्यच्छमनंताभास्वरोदरा ॥ अंगरिक्तापिदृश्यांतःशून्यतानीलतेवखे ॥ ६२ ॥ विसदृशकार्यानुभवोनभवतिसहकारिकारणाभावात् ॥ सर्गादावतआद्याचिदेवदृश्यंयथास्वप्ने ॥ ६३ ॥ ॥इ० वा० महारामायणेवा० दे० मो० नि० उ० कार्यकारणनिरासोनामषडुत्तरशततमःसर्गः ॥ १०६ ॥

जगद्भवोभूत्वाआस्तेतथाचिदपिचेततीतिव्यापाररूपंचित्त्वंस्वात्मनिपरिकल्प्यस्थितासतीतत्कर्मजगद्दृशाआस्ते ॥ ५८ ॥ यत्रअल्पशक्तीनांकल्पद्रुमादीनामपिसंकल्पितार्थकल्पनसामर्थ्यंतत्रसर्वशक्तेःपरमात्मनस्तत्किंवाच्यमित्याशयेनाह ॥ यथेति ॥ ५९ ॥ ६० ॥ खात्मिकेत्येतद्विषयाकर्षणेनोपपादयन्जगतस्तन्मयत्वमाह ॥ देशादिति ॥ ६१ ॥ चितश्छायाकांतिरेवजगद्रूपेणकचति ॥ अंगैरवयवैरिक्ताशून्यापि ॥ ६२ ॥ विस्तरेणव्यवस्थापितमर्थंसंग्रहेणोपसंहरति ॥ विसदृशेति ॥ सर्गादौचितोविसदृशंजडंयत्कार्यंतस्यानुभवउद्भवोनसंभवति ॥ वैसादृश्येनिमित्तभूतानांसहकारिकारणानामभावात् ॥ सुसदृशेतुभेदकाभावात्कार्यत्वासिद्धिरित्याशयः ॥ अतःआद्याचिदेवेदंदृश्यंनतद्व्यतिरिक्तमणुमात्रमप्यस्तीतिस्वप्नदृष्टांतेनसिद्धमित्यर्थः ॥ ६३ ॥ ॥ इतिवासिष्ठ० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउ० षडुत्तरशततमःसर्गः ॥ १०६ ॥ ॥ ७ ॥

१ भास्वरोदयेतिक्वचित्पाठः

द्दोपपाद्यतेचेत्यपृथ्व्यादीनामवस्तुता ॥ चिन्मणेरेवकचनंस्वप्नवज्जगदित्यपि ॥ १ ॥ विश्वस्यचेत्यभावमपलप्यचिन्मात्रभावंपरिशेषयितुंप्रतिजानीते ॥ अचेत्येति ॥ यत
श्चिन्नभवएवविष्वगाभाति ॥ तथाचचिन्नभोमात्राधीनसिद्धिकत्वादित्यनुमानंदर्शितम् ॥ अत्रचेतयतीतिचित्चेतनंक्रियाचेत्यंचेतित्रिपुटीचिन्मयीतिप्रतिज्ञार्थइत्याह ॥ अ
त्रेति ॥ अत्रास्यांप्रतिज्ञायामेवमालकंशुद्धचिदालकंप्रतिज्ञार्थत्वेनाभिप्रेतमितिशेषः ॥ १ ॥ प्रतिज्ञासिद्धेःफलद्वयम् ॥ स्थितस्यैवजगतोजगद्भावनिवृत्तिर्जीवतामेवास्मा
कंजीवभावनिवृत्तिश्चेत्याह ॥ अतइति ॥ २ ॥ सर्वभावानांकौटस्थ्यामूर्त्तत्वासिद्धिर्वातत्फलमित्याह ॥ काष्ठेति ॥ काष्ठमौनमात्यंतिकनिष्क्रियतालक्षणंकौटस्थ्यंकृताःप्रा
प्ताः ॥ खेगमनंगमःआत्यंतिकामूर्त्तभावप्राप्तिर्येषाम् ॥ ३ ॥ नभोनैल्यादिवद्भासमानस्याप्यसत्त्वावधारणंवातत्फलंविद्धीत्याह ॥ आकाशेति ॥ काचकच्यंकाचवत्कचवन्नै

श्रीवसिष्ठउवाच ॥ ॥ अचेत्यचिन्मयंविश्वंविष्वगाभातिचिन्नभः ॥ अत्रचिच्चेतनंचेदंचेत्यमप्येवमात्मकम् ॥ १ ॥ अतोजीवन्नपिमृ
तइवसर्वोवतिष्ठते ॥ असावहंचत्वंचेतिजीवंतोपिमृताइव ॥ २ ॥ काष्ठमौनमृताएवव्यवहारगताअपि ॥ खगमाएववासर्वेभावाःस्था
वरजंगमाः ॥ ३ ॥ आकाशकाचकच्यात्मयदिदंकिंचिदाततम् ॥ नकिंचिदेवतद्विद्धिकिंचिद्व्योम्निकुतोभवेत् ॥ ४ ॥ केशोंड्रकनदीवाहधू
मालीमौक्तिकादिवत् ॥ यत्खंकचतितत्रास्तिनानुभूतेपिवस्तुता ॥ ५ ॥ तथैवास्मिन्जगन्नाम्निचिद्व्योम्निकचनेचिते ॥ अनुभूतेपिनिःशू
न्येकास्यास्थाभावकश्चकः ॥ ६ ॥ चिद्बालकल्पनाजालेशून्यात्मनिनिरर्थके ॥ अवस्तुभूतेपृथ्व्यादौभ्रांतिमात्रांबरोदये ॥ ७ ॥ किमा
स्थाबालकाभूतममेदमहमित्यलम् ॥ आज्ञातंरमतेबालसंकल्पेबालएवच ॥ ८ ॥ पृथ्व्याद्यसद्विचारैर्वाव्यर्थंयास्यतिजीवितम् ॥ किं
चिन्नज्ञास्यतिभोराकाशक्षालनोद्यतः ॥ ९ ॥ सहकार्यादिपूर्वाणांकारणानामभावतः ॥ यदादावेवनोत्पन्नंतन्नामाद्यभवेत्कुतः ॥ १० ॥
अजातेनासतार्थेनखेनव्यवहरंतिये ॥ मूढाम्तमजातंवातनयंपालयंतिते ॥ ११ ॥ कुतःपृथ्व्यादयःकेनकेनामकथमुत्थिताः ॥ चिद्व्यो
मेत्थमिदंशांतंप्रकचत्यात्मनात्मनि ॥ १२ ॥

ल्यम् ॥ ४ ॥ ५ ॥ तथाचनभोमौक्तिकालिप्यवजगतिभोगास्थानयुक्तेत्यपिफलितमित्याह ॥ तथैवेति ॥ आस्थायाभावकउत्पादकश्चकःपदार्थोस्ति ॥ ६ ॥ ७ ॥ यथा
स्थाअनुचितैवतर्हिकोहेतुर्यज्जनास्तत्रास्थांकुर्वंतितत्राह ॥ आज्ञातमिति ॥ हेतुस्मरणेऽयमाकारोनिपातः ॥ ज्ञातंस्मृतम् ॥ तेषांबाल्यमेवतदास्थाहेतुरितिस्मृतमित्यर्थः ॥ ८ ॥
अतएवोत्पन्नसंजातविवेकैःपृथ्व्यादीनामसतांलाभादिहेतुंव्यर्थजन्मनाशकरंविचारंत्यक्त्वाजन्मसार्थक्यापादकंवैराग्यादिसाधनजातमवलंबनीयमित्याशयेनाह ॥ पृथ्व्यादीति ॥
यथास्वर्णरत्नादिलोभेच्छयाप्रवृत्तस्तदाकरस्थानक्षालनंविहायआकाशक्षालनोद्यतश्चेन्महतापिश्रमेणनकिंचिच्चफलंज्ञास्यतिद्रक्ष्यतितद्वदित्यर्थः ॥ ९ ॥ पृथ्व्यादीनामसत्त्वं
तुअकारणकत्वादजातत्वादिनाप्राक्साधितमित्याह ॥ सहकारीति ॥ १० ॥ अतएवव्यवहारेऽभिनिविष्टाविदुषांहास्यास्पदमित्याह ॥ अजातेनेति ॥ ११ ॥ तत्त्वदृष्टौपृथ्व्या
दीनामत्यंतासंभवमनुभवमवलंब्याह ॥ कुतइति ॥ १२ ॥

मूढदृष्टिस्तुनास्माकंप्रमाणमित्याह ॥ कार्येति ॥ १३ ॥ एवंचप्रतिज्ञार्थःसिद्धइत्याह ॥ अपृथ्व्यादीति ॥ नामेतिप्रसिद्धम् ॥ स्वात्ममपृथ्व्यादिजगज्जायत्प्रसिद्धंसपृथ्व्यादिजग च्चेत्युभयमपिस्वात्मकंचिदाकाशात्मकम् ॥ किंतर्हिजगदितिकचतितदाह ॥ कचतीति ॥ १४ ॥ स्वानुभवएवानुसृतंमानंयत्रतथाविधंयदेतस्यचिदंबरस्यनिराकृतिनिराकारमं गंशरीरंस्वरूपमितियावत् ॥ तदेतदेवमहीतलादिरूपेणवेद्यदृश्यइतिप्रातिपदिकरूपंकृतमभिधानंयेनतथाविधंसदाभातिप्रथतेनवस्त्वंतरमवस्तुवेत्यर्थः ॥ १५ ॥ ॥ इतिश्रीवा सिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्र०उत्तरार्द्धेसप्तोत्तरशततमःसर्गः ॥ १०७ ॥ ॥ ६ ॥ ॥ अनष्टायामविद्यायांजगदंतोनकर्हिचित् ॥ अत्रार्थेविस्तराच्चित्रमविद्या ख्यानमीर्यते ॥ १ ॥ तस्मिन्विपश्चिच्चरितेचतुर्दिक्षुविपश्चितः ॥ इहद्विषत्समुत्थानोदंतश्रुत्यंतमुच्यते ॥ २ ॥ वर्णितायाःसंसृतिरूपायाअविद्यायास्तत्त्वज्ञानेनत्रैकालिकासत्वा पत्तिलक्षणंबाधंविनापिदेशतःकालतोवाअंतःसंभवतिनवेतिसंदिहानोरामःपृच्छति ॥ अविद्येति ॥ इयंचिन्नभःस्वप्ननगरीविद्यमानापिशून्यभूतादृश्यरूपाअविद्यायस्यपुंसःअ

कार्यकारणकालादिकल्पनाकुलचेतसाम् ॥ एवंपृथ्व्यादयःसंतितैर्बालैरलमस्तुनः ॥ १३ ॥ अपृथ्व्यादिजगन्नामसपृथ्व्यादिचखात्म कम् ॥ कचतीत्थंनभोरूपंस्वप्नादिष्विवचिन्मणिः ॥ १४ ॥ अंगंयदेतस्यचिदंबरस्यनिराकृतिस्वानुभवानुमानम् ॥ तदेतदाभातिमहीत लादिरूपेणवेद्येतिकृताभिधानम् ॥ १५ ॥ ॥ इ०वा०महारामायणेवा०दे०मो०नि०उ० अविद्याभावप्रतिपादनंनामसप्तोत्तरशतत मःसर्गः ॥ १०७ ॥ ॥ श्रीरामउवाच ॥ ॥ अविद्यादृश्यरूपेयंकचंतीयस्यविद्यते ॥ चिन्नभःस्वप्ननगरीदृश्यमानापिशून्यकम् ॥ १ ॥ त स्याज्ञस्यकियत्कालंकिंरूपास्यात्किमात्मिका ॥ कियतीसाचवेत्येवंमुनेमेकथ्यतांपुनः ॥ २ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अविद्याविद्य तेयेषामज्ञानांभूतलादिका ॥ तेषामस्यांब्रह्मणीवनास्त्यंतोत्रकथांशृणु ॥ ३ ॥ सदृशंजगतोस्यास्तिक्वचिदंबरकोणके ॥ कस्मिंश्चिच्चिज गत्किंचिदनयैवव्यवस्थया ॥ ४ ॥ अस्तिकश्चिद्भुवोभागोभूषणंतत्रभूस्थितेः ॥ पुरीततमितिर्नाम्नासुव्यक्तकलनावनौ ॥ ५ ॥ तत्रासी त्पार्थिवःकश्चिद्विपश्चिदितिविश्रुतः ॥ यःसभायांसुसभ्यायांविपश्चित्त्वाद्विराजते ॥ ६ ॥

वाधात्कचंतीविद्यतेतस्याज्ञस्यसाकियत्कालंस्यात्किंरूपास्यात्किमात्मिकाचस्यात्देशतश्चकियतीवास्यादित्येवंपुनर्मेत्वयाकथ्यतामितिद्वयोरन्वयः ॥ १ ॥ २ ॥ तत्रसंशयद्वि तीयकोटिंपरिगृह्यवसिष्ठस्तत्प्रतिष्ठापनायप्रथमंविपश्चित्कथांश्रावयितुंराममवधापयति ॥ अविद्येति ॥ ब्रह्मणियथादेशतःकालतोवाअंतोनास्तितद्वदस्यामपिनास्ति ॥ अत्रा स्मिन्नर्थेउपपादिकांवक्ष्यमाणकथांशृण्वित्यर्थः ॥ ३ ॥ तामेवप्रस्तौति ॥ सदृशमिति ॥ लोकालोककलधौतशिलाप्रायेकस्मिंश्चिद्वस्तुनिस्थितेचिदंबरस्यकोणकेतत्रापिक्वचि त्प्रदेशेअस्यजगतस्त्रैलोक्यस्यसदृशंकिंचिच्चिज्जगत्अनयैवैतज्जगत्प्रसिद्धयाभुवनद्वीपदेशकालादिव्यवस्थयामर्यादयाअस्ति ॥ ४ ॥ तत्रजंबूद्वीपलक्षणायाभूस्थितेर्भूषणभूतः कश्चिद्भुवोभागोस्ति ॥ तत्रापिगिरिवप्रवालुकादिकृतवैषम्याभावान्नरगजतुरगरथादीनांसुव्यक्तासंचारादिव्यवहारकलनायस्यांसंभवतितथाविधायामवनौसमभूमौनाम्नाततत मितिरितिप्रसिद्धापुरीअस्तीत्यर्थः ॥ ५ ॥ तत्रतस्यांपुर्यांशोभनाःसभ्यायस्यांतथाविधायांसभायांविपश्चित्त्वात्सर्वशास्त्रेषुविद्वत्वाद्विराजते ॥ ६ ॥

वैभवसौंदर्यादिनापितस्यतचविराजमानतामाह ॥ राजहंसइति ॥ अजिन्यामब्जवत्यांसरस्याम् ॥ ऋक्षचक्रेननक्षत्रगणेउडुराट्चंद्रइव ॥ ७ ॥ सर्वत्रोत्तरोत्तरगुणोत्कर्षवर्णनेप्र वृत्तंकवीनांवचनंयतोयस्माद्विपश्चितोऽवधेःसकाशाद्गुणानंत्येननिरुपमत्वेनचवर्णनाशक्त्यावर्णनान्निवर्त्तते तथापिकवयस्तंभजंतएव॥यतोयस्माद्विपश्चितःसकाशात्कवीनाम चलाकारास्थिरासंपत्ख्यातिगुणोत्कर्षप्रयुक्ताभाशोभाभवेत् ॥ सहिभूधरोमेरुर्यथास्वाश्रितनरमृगतृणगुल्मादीन्स्वभासास्वर्णीकरोतितादृशइत्यर्थः ॥ ८ ॥ श्रीःसंपत् ॥ अंबु जपक्षेप्रतापादातपाज्जनिताश्रीःशोभा ॥ ९ ॥ ब्रह्मण्याब्राह्मणहितामतिर्यस्यअतएवदेवेषुवह्नेर्ब्राह्मणत्वाद्वह्निमेवाधिदैवतंदेवेषुअपूजयत् ॥ तथाचाग्न्युपस्थानेमंत्रः ॥ त्वंदेवेषु ब्राह्मणोस्यहंमनुष्येषुब्राह्मणोहिब्राह्मणमुपधावत्युपत्वाधावामीति ॥ तदग्निर्वैदेवेषुब्रह्माभवदितिचवाजसनेयके ॥ १० ॥ अस्यमंत्रिषुमध्येअकंपनाधीराबाहुबलेनचाधि काअकंपनेननिर्भयेनबलेनसैन्येनचाधिकाश्चत्वारोमंत्रिणश्चत्वारःसत्सागराइवचतसृषुदिक्षुपरचक्रनिरोधेनदेशमर्यादापालनेयुक्तानियुक्ताइतिद्वयोरन्वयः ॥ तत्रसागराःसम

राजहंसइवाब्जिन्यामृक्षचक्रइवोडुराट् ॥ सुमेरुरिवशैलौघेयःसभायामराजत ॥ ७ ॥ निवर्त्ततेयतोशक्त्यावचनंगुणवर्णनात् ॥ कवी नामचलाकाराभवेद्भाभूधरोयथा ॥ ८ ॥ प्रातःप्रातर्विकसितात्सर्वाशाभासनोद्यतात् ॥ यतःप्रतापजनितश्रीरुदैत्यंबुजादिव ॥ ९ ॥ सब्रह्मण्यमतिर्मानीवह्निमेवाधिदैवतम् ॥ अपूजयत्समंभक्त्यादेवंवेत्तिस्मनेतरम् ॥ १० ॥ समत्स्यमकरव्यूहागजवाजिगणान्विताः ॥ आवर्त्तचक्रव्यूहाढ्याःकल्लोलबलमालिताः ॥ ११ ॥ मर्यादापालनेयुक्ताअकंपनबलाधिकाः ॥ मंत्रिष्वप्यस्यचत्वारोदिक्षुसत्सागराइ व ॥ १२ ॥ तैरशेषककुब्चक्रनाभिराभासितावनिः ॥ आसीत्सुदुर्जयोजेतासत्सुदर्शनचक्रवत् ॥ १३ ॥ तमेकदायर्यौपूर्वदिङ्मुखाच्चतु रश्चरः ॥ सउवाचरहोरंहोगंतिघोराक्षरंवचः ॥ १४ ॥ देवदोर्द्रुमविश्रांतधरागोवंधनाच्युत ॥ श्रूयतांमन्मुखात्पश्चाद्यथाप्रामंविधीयताम् ॥ १५ ॥ पूर्वदिङ्मुखसामंतोज्वरेणास्तमुपागतः ॥ मन्येजेतुंयमंयातस्त्वयारब्धोजितारिणा ॥ १६ ॥ तस्मिन्समंततोजेतुंदक्षिणापथ नायकः ॥ पूर्वापराभ्यामाक्रम्यबलाभ्यामरिणाहतः ॥ १७ ॥

त्स्यमकरव्यूहामंत्रिणस्तुगजवाजिगणान्विताः ॥ समुद्राआवर्त्तव्यूहाढ्यामंत्रिणश्चक्रव्यूहाढ्याः ॥ समुद्राःकल्लोलमालितामंत्रिणोबलमालिताः ॥ ११ ॥ समुद्राःअकंपनानांपर्व तानांबलेनाधिकाः ॥ १२ ॥ तैर्मंत्रिभिःसराजाअशेषाणांककुप्चक्राणांदिक्चक्राणांनाभिरिवआधारभूतःसन्सुदर्शनचक्रवत्सुदुर्जयःशत्रुभिरपरिभवनीयःस्वयंजेताचआसी त् ॥ १३ ॥ चरश्चारःआययौ ॥ रंहःकालरयइवदुर्निवारत्वाद्घोराण्यक्षराणियस्मिन् ॥ १४ ॥ दोर्द्रुमयोर्विश्रांतिनधरागोवंधनेनअच्युतअविच्युत ॥ सदैवभूस्त्वद्भुजावष्टब्धेति यावत ॥ अत्राच्युतपदश्लेषाद्विष्णुत्वारोपोपिगम्यते ॥ १५ ॥ पूर्वदिङ्मुखेत्वयामर्यादापालनायनियुक्तोयःसामंतःप्रागुक्तमंत्रीसज्वरेणास्तंमरणमुपागतः ॥ तत्रोत्प्रेक्षते ॥ म न्येइति ॥ जितारिणात्वयादिग्विजयायआरब्धःउपक्रम्यनियुक्तःसदक्षिणदिक्पतियमंजेतुंयातइतिमन्ये ॥ १६ ॥ तस्मिन्मृतेसतिदक्षिणापथनायकस्त्वत्सामंतःसमंततःपूर्वद क्षिणांचदिशंजेतुंप्रवृत्तःसोप्यरिणापूर्वापराभ्यांबलाभ्यामाक्रम्यहतः ॥ १७ ॥

189

तस्मिन्मृतेसतिवारुणदिशःपतिस्तेसामंतोयावद्बलेनसमागम्यतेपूर्वंदक्षिणेककुभौदिशौसमादातुमादृतःसन्नायातितावदेवअरिभिःपूर्वदेशनृपैःसार्धंदक्षिणापथपार्थिवैःअसौअर्धमार्गेरणेहतइतिद्वयोःसंबंधः ॥ १८ ॥ १९ ॥ अपरश्चरस्त्वरयाआर्त्तपीडितंयथास्यात्तथाहर्म्यंविवेशहकिल ॥ उपप्लवेप्रलयेप्रसिद्धोजडोत्पीडोजलप्रवाहइव ॥ २० ॥ हेदेव ॥ २१ ॥ वस्तूनांवास्तूनांचाहितमवास्तवंमन्यमानःसन्वरमंदिरान्निर्गच्छन्नेवउवाच ॥ संनिहितान्पुरुषान्प्रतीत्यर्थः ॥२२॥ किमुवाच ॥ राज्ञस्तथासामंतान्मंत्रिणश्चसन्नस्रयुद्धसन्नाहयुक्तान्कृत्वासर्वेप्यानीयंताम् ॥ ल्यबंतक्रियाकर्मणोनभिहितत्वात्पक्त्वौदनंभुज्यतइतिवद्द्वितीया ॥ पक्त्वौदनोभुज्यतइतिप्रयोगेत्वभिहितेप्रधानक्रियाकर्मणि

तस्मिन्मृतेसमागम्ययावद्वारुणदिक्पतिः॥ बलेनायातिककुभौतेसमादातुमादृतः॥ १८॥ पूर्वदेशनृपैःसार्धंदक्षिणापथपार्थिवैः॥ तावदेवारिभिरसावर्धमार्गेरणेहतः॥ १९॥ ॥श्रीवसिष्ठउवाच॥ ॥अथास्मिन्कथयत्येवंत्वरार्त्तमपरश्चरः॥ उपप्लवोजडोत्पीडइवहर्म्यंविवेशह॥ २०॥ ॥चरउवाच॥ ॥उत्तराशाबलाध्यक्षोदेवारिभिरुपद्रुतः॥इतआयातिसबलोभग्नसेत्वंबुपूरवत्॥ २१॥ ॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिश्रुत्वामहीपालःकालक्षेपमवास्तवम्॥ मन्यमानउवाचेदंनिर्गच्छन्वरमंदिरात्॥ २२॥ राज्ञःसन्नह्यसामंतानानीयंतांचमंत्रिणः॥ उद्घाट्यंतांहेतिशालादीयंतांघोरहेतयः॥ २३॥ श्लेष्यंतांकंकटादेहेष्वागच्छंतुपदातयः॥ गण्यंतामाशुसैन्यानिक्रियंतांवरकल्पनाः॥ २४॥ कल्प्यंतांचबलाध्यक्षाःप्रेष्यंतामभितश्चराः॥ ॥श्रीवसिष्ठउवाच॥ ॥वदत्येवंत्वरायुक्तंसंरंभवतिराजनि॥ २५॥ प्रतिहारउवाचेदंप्रविश्याकुलमानतः॥ ॥प्रतीहारउवाच॥ ॥उत्तराशाबलाध्यक्षोदेवद्वार्यवतिष्ठति॥ कांक्षत्यन्नमिवार्कस्यदेवदेवस्यदर्शनम्॥२६॥ ॥राजोवाच॥ ॥गच्छाविलंबितंतावदेनमेवप्रवेशय॥ जानीमःकिंदिगंतेपुवृत्तंवृत्तांतसंश्रवात्॥ २७॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्तउत्तराशेशंप्रतिहारप्रवेशितम्॥ प्रणामपरमग्रेसौराजापश्यद्बलाधिपम्॥ २८॥ क्षतविक्षतसर्वांगमंगमंगेपुसंततम्॥ श्वासाकुलंवमद्रक्तंधैर्येणाबलनिर्जितम्॥२९॥ सप्रणम्यत्वरायुक्तमुवाचेदमुपक्रमम्॥ संस्तभ्यांगव्यथामाशुसंततोच्छ्वासमुच्छ्वसन्॥ ३०॥ ॥बलाध्यक्षउवाच॥ ॥देवत्रयोपिदिक्पालाबलेनबहुनासह॥ त्वदाज्ञयेवनिर्जेतुंयमंयमपुरंगताः॥ ३१॥

प्रथमैव क्त्वांतक्रियायांत्वार्थिकोन्वयोनशाब्दः ॥ हेतीनामायुधानांशालाःकोशगृहाउद्घाट्यंताम् ॥ २३ ॥ वरकल्पनाःभटश्रेष्ठसमर्थनाः ॥ २४ ॥ २५ ॥ देवदेवस्यराजाधिराजस्यतव ॥ २६ ॥ वृत्तांतस्यसंश्रवात्सम्यक्श्रवणात्दिगंतेपुकिंवृत्तमितिजानीमोज्ञास्यामः ॥ २७ ॥ इतिराज्ञाउक्तेसतिप्रतिहारप्रवेशितमुत्तराशेशमग्रेप्रणामपरंराजाअपश्यत् ॥ २८ ॥ अंगमंगंप्रत्यंगंइपुभिःसंततम् ॥ अबलमतएवनिर्जितम् ॥ धैर्येणेतिपदस्योत्तरग्रसंबंधः ॥ २९ ॥ सधैर्येणअंगव्यथांसंस्तभ्यप्रणम्यअयंवक्ष्यमाणउपक्रमोयस्मिंस्तदिदमुपक्रमंवाक्यमुवाच ॥ ३० ॥ त्रयोपिप्रागुक्तास्तेदिक्पालाःसामंतायमपुरंगतामृताइतियावत् ॥ त्वदाज्ञयायमंनिर्जेतुमिवेत्युत्प्रेक्षा ॥ ३१ ॥

॥ ३२ ॥ प्राप्तंपरबलंतथातन्निर्जितास्मद्बलवद्दुर्दशाप्राप्तंविधीयताम् ॥ ३३ ॥ ३४ ॥ हेनरेश्वरअस्यमंडलस्यपुरुपादलानामश्वत्थादिपर्णानांप्रसिद्धयाकंपलीलयाविपुलाविस्तीर्णाःसंपन्नाः ॥ चतुर्दिक्कमखिलान्युच्चैःस्थितानि ॥ ३५ ॥ नःभूमिररिभिर्वलितावेष्टिता ॥ ३६॥ पताकाआयुधानियोद्धारश्चांगेयेषाम् ॥ ३७॥ करान्शुंडापाणि ॥ वर्षासुप्रसिद्धवारिदवृंदवत् ॥ बृंहंतिगर्जंति ॥ ३८ ॥ स्पंदेनगतिक्रमेणउर्वीनतोन्नतैःसदृशानिनतोन्नतानिकुर्वंतः ॥ वातेनस्पंदंतइतिवातस्पंदैर्महाब्धिभिस्तुल्यंहेपंते ॥ ३९ ॥ रसंति

तद्देशपालनाद्यर्थमशक्तंमामिमंततः॥ अनुद्रवंतोबहवोभूपाःप्राप्तावलादिह॥३२॥ महत्परबलंप्राप्तमिदंदेवस्यमंडलम्॥ विधीयतांतथाप्राप्तंनदेवस्यास्तिदुर्जयम्॥३३॥ ॥श्रीवसिष्ठउवाच॥ ॥अथतस्मिन्वदत्येवमार्त्तिमत्याजिविक्षते॥ सहसैवाभ्युवाचेदंप्रविश्यपुरुपोपरः॥ ३४॥ पुरुपामंडलस्यास्यविपुलादललीलया॥ स्थितान्यखिलान्युच्चैश्चतुर्दिक्कंनरेश्वर ॥ ३५॥ कचचक्रगदाप्रासकुंतकाननकांतिभिः॥ वलितानोरिभिर्भूमिर्लोकालोकतटैरिव ॥ ३६॥ पताकायुधयोधंगाश्चलत्परिकराकुलाः ॥ विसरंतिरथास्तत्रप्रोड्डीनत्रिपुरौघवत्॥ ३७॥ करानुन्नामयंतःखेमांसवृक्षवनोपमाः॥ बृंहंतिवारणव्यूहावर्षावारिदवृंदवत् ॥ ३८ ॥ नतोन्नतानिकुर्वंतःस्पंदेनोर्वीनतोन्नतैः॥ हेपंतेहयसंघातावातस्पंदमहाब्धिवत्॥ ३९॥ रसंतितुरगापूराःफेनिलावर्त्तपातिनः ॥ सर्वतोवलयाकारालवणार्णववारिवत्॥ ४०॥ आकाशकांतिसन्नाहैर्दिशंप्रतिवलंबलम्॥ उदेत्यलघुकल्लोलैःप्रलयार्णवपूरवत्॥ ४१॥ शरास्त्रशस्त्रसन्नाहमुकुटाभरणत्विषः॥ कचंतित्वत्प्रतापाग्नेर्ज्वालाइवतदंगगाः॥ ४२॥ समत्स्यमकरव्यूहाःसचक्रावर्त्तवृत्तयः॥ उद्यंतिसैन्यसंघट्टैःकल्लोलाजलधेरिव॥ ४३॥ परस्परपरामर्शात्कुंताद्यायुधपंक्तयः॥ कोपादिवोग्रहुंकारैर्ज्वलंतिविरटंतिच ॥ ४४॥ इतिकर्त्तुमहंदेवविज्ञप्तिंस्वामिनेरितः॥ तस्मान्मंडलसीमांतगुल्माद्युद्धायगच्छता॥ ४५॥ तमहंदेवगच्छामिशक्त्यृष्टिशरसंगतः॥ मयेहावेदितंसर्वंदेवोजानात्यतःपरम्॥ ४६॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्त्वाथप्रणामंचसकृत्वात्वरयाययौ॥ कृत्वागुलुगुलारावंशांतोर्वीचिरिवांबुधेः॥४७॥

ध्वनंति ॥ फेनिलाश्चतेआवर्त्तवत्पातिनोभ्रमंतइतियावत् ॥ ४० ॥ आकाशवत्स्वच्छकांतिभिःकवचशस्त्रादिसन्नाहैरुपलक्षितंबलंदिशंदिशंप्रतिउदेति ॥ वीप्साव्यत्यासश्छांदसः ॥ ४१ ॥ तेषांवलानामंगगाःशरास्त्रशस्त्रादित्विपस्त्वत्प्रतापाग्नेर्ज्वालाइवकचंति ॥ ४२ ॥ मत्स्यमकराद्याकारैर्व्यूहैःसहिताः ॥ उदधिपक्षेस्पष्टम् ॥ कल्लोलावृहत्तरंगाःसैन्यप्रसरभेदाश्च ॥ ४३ ॥ उग्रैर्हुंकारैर्हुंकारप्रायैर्झणत्कारैः ॥ ४४ ॥ स्वामिनात्वत्सामंतेनत्वत्समीपेईरितःप्रेषितः ॥ ४५ ॥ तंप्रेषयितारमहंशक्त्यृष्टिशरैःसंगतःसन्नद्धःसन्गच्छामि ॥ तदीयवचनंसर्वमिहत्वत्पुरोमयाआवेदितंविज्ञापितम् ॥ अतःपरंयत्कर्त्तव्यंतद्देवोजानातिनाहमित्यर्थः ॥ ४६ ॥ ४७ ॥

189

संभ्रांतामंत्रिणोनृपायोधानियोगिनोराजनियोगानुष्ठातारोनागागजानार्योरथाअश्वाःपरिचारकाःपरिचर्याकारिणोनागरौघायस्मिन् ॥ स्वभयेनतोलिताउद्यताहेतयोयैस्तथा विधाःसार्थाजंतुसंघायत्र ॥ अलिहृतेतिसार्थमितिपाठेअलयइवहृताउपगताईतिसार्थाईतिसमूहायस्मिंस्तथाविधंराज्ञोगृहंचंडानिलाकुलेनमहावनेनतुल्यंतुलनार्हमत्यंतव्या कुलमासीदित्यर्थः ॥ ४८ ॥ ॥ इतिश्रीवासिष्ठ० म० रा० तात्पर्यप्रकाशेनि० उ० अष्टोत्तरशततमःसर्गः ॥ १०८ ॥ ॥ ६ ॥ ॥ इहमंत्रिवचःश्रुत्वाद्रुतदेहस्यपा पावकात् ॥ राज्ञश्चतुर्भिर्देहैर्द्राक्समुत्थानमुदीर्यते ॥ १ ॥ दैत्यैराक्रांतेनभश्चभूश्चेत्येतेयस्य नभसिभवतीतिनभोभूःस्वर्गलोकोयस्यतथाविधंवासवंमुनयइव ॥ १ ॥ यावदिति

संभ्रांतमंत्रिनृपयोधनियोगिनागनारीरथाश्वपरिचारकनागरौघम् ॥ राज्ञोगृहंस्वभयतोलितहेतिसार्थंचंडानिलाकुलमहावनतुल्य मासीत् ॥ ४८ ॥ ॥ इ० वा० महा० वा० दे० मो० नि० उ० अविद्योपाख्यानांतर्गतविपश्चिदुपाख्यानेअविद्याक्षेपणेपार्थिवसंरंभवर्णनं नामाष्टोत्तरशततमःसर्गः ॥ १०८ ॥ ॥ ६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एतस्मिन्नंतरेसर्वेमंत्रिणोनृपमाययुः ॥ मुनयोवासवमिव दैत्याक्रांतनभोभुवम् ॥ १ ॥ ॥ मंत्रिणऊचुः ॥ ॥ देवनिर्णीतमस्माभिर्यावन्नविषयोरयः ॥ त्रयाणामप्युपायानांदंडस्तेषुविधीयता म् ॥ २ ॥ प्रणयोनुप्रवेशोवानकदाचनयःकृतः ॥ अधुनातेषुतंदेवकुर्यात्तेषुकथैवका ॥ ३ ॥ पापाम्लेच्छाधनाढ्याश्चनानादेश्याःसुसं हताः ॥ बहवोलब्धरंध्राश्चसामादेर्नास्पदंद्विषः ॥ ४ ॥ तत्सुसाहसमेवेदंवर्जयित्वाप्रतिक्रिया ॥ नान्यास्तिशीघ्रमेवातोरणोद्योगोविधी यताम् ॥ ५ ॥ वीराणांदीयतामाज्ञापूज्यंतामिष्टदेवताः ॥ आहूयंतांचसामंताहन्यतांरणदुंदुभिः ॥ ६ ॥ सन्नह्यंतामशेषेणनिर्गच्छंतुर णेभटाः ॥ क्रियंतांकालकल्पाभ्रमेदुराराजितादिशः ॥ ७ ॥ आस्फाल्यंतांधनूंष्युच्चैःक्वणंतुगुणपंक्तयः ॥ भवंतुजलदश्यामाःककुभःखंड मंडलैः ॥ ८ ॥ स्फुरज्ज्याविद्युतःशूरवारिदाघनगर्जिताः ॥ नाराचधारामुंचंतुकचत्कोदंडकुंडलाः ॥ ९ ॥ ॥ राजोवाच ॥ ॥ गम्यतांसंग रायाशुसंविधानंविधीयताम् ॥ स्नात्वाहंपूजयित्वाग्निंनिर्गच्छामिरणाजिरम् ॥ १० ॥

साकल्ये ॥ विचार्यसकलंनिर्णीतमित्यर्थः ॥ किंनिर्णीतम् ॥ अरयस्त्रयाणामप्युपायानांसामदानभेदानांविषयोन ॥ २ ॥ प्रणयोदानमानादिनास्नेहः ॥ अनुप्रवेशःस्वप क्षीयाणामेवकेषांचिच्छरणागतिच्छलेनकाकोलूकन्यायेनतद्बधायांतःप्रवेशः ॥ तेषुशत्रुषुतेषुतादृशेषुयशोहरेषूपायेषुकर्तव्यताकथैवका ॥ ३ ॥ किंचिद्विश्वासार्हेषुअना ढ्येषुसामदानोपायप्रवृत्तिरेतेतुनतादृशाइत्याह ॥ पापाइति ॥ म्लेच्छाःप्रत्यंतदेशवासिनः ॥ लब्धरंध्राज्ञातास्मच्छिद्राः ॥ ४ ॥ ५ ॥ ६ ॥ भटाःसन्नह्यंतां ततोरणेनिर्गच्छंतु ॥ दिशःअर्थाद्गजघटाभिःकालवर्णैःकल्पाभ्रैरिवराजिताःक्रियंताम् ॥ ७ ॥ गुणपंक्तयोमौर्वीश्रेणयः ॥ खंडमंडलैरर्धमंडलसदृशैर्धनुर्भिः ॥ ८ ॥ घनंगर्जितंसिंहनादोयेषांतथा विधाःशूरवारिदानाराचलक्षणाजलधारामुंचंतु ॥ कचंतिकोदंडकुंडलानियेषाम् ॥ ९ ॥ संविधानंनगरगुप्तिव्यूहरचनादि ॥ १० ॥

प्रावृषिनवोद्यानमिवक्षणात्स्नातः ॥ महारंभोपीत्यनेनावश्यकान्यप्यन्यानिकार्याणित्यक्केतिगम्यते ॥ ११ ॥ चिंतयामासवक्ष्यमाणार्थमित्यर्थः ॥ १२ ॥ समुद्रितंशासन मुद्रासहितम् ॥ १३ ॥ दशापिककुभोदिशःकरादिफलभरेणलताइवनमिताःकृताः ॥ १४ ॥ प्रजाचित्तलक्षणेष्विंदुबिंबेषुलिखितंविन्यस्तंपूरितमितियावत् ॥ यशसःकलासाम्यमनुक्तमपिगम्यते ॥ कीर्त्तिलतालक्षणात्रिपथगामिनीगंगा ॥ त्रिपथगामिनीतिरूपणात्कीर्त्तिलतायाऊर्ध्वाधोलोकयोरपिवृद्ध्याप्रतानव्याप्तिर्गम्यते ॥ १५ ॥ आर्याःपूज्याब्राह्मणाः ॥ अर्णवतीरेष्वित्युक्त्याचतुःसमुद्रांतंदिग्विजयोगम्यते ॥१६॥ द्विषांअसवःप्राणाःभेकानांरटनकालेगललक्षणेअंगेप्रसिद्धात्वगिवआकंपिताः ॥१७॥ दिगंतेप्र

इत्युक्त्वानृपतिःस्नातोमहारंभोपिसक्षणात् ॥ प्रावृषीवनवोद्यानंगंगाजलधरैर्घटैः॥११॥अथप्रविष्टोग्निगृहंपूजयित्वाहुताशनम् ॥ आदरेणयथाशास्त्रंचिंतयामासभूमिपः॥१२॥ नीतमायुरनायासविलासविभवश्रिया ॥ प्रजाभ्योदत्तमभयमासमुद्रसमुद्रितम् ॥१३॥ आक्रांतवसुधापीठाःपादपीठेकृताद्विषः॥लताःफलभरेणेवनमिताःककुभोदश॥१४॥प्रजाचित्तेंदुबिंबेषुलिखितंधवलंयशः॥भूमावारोपिताकीर्त्तिलतात्रिपथगामिनी॥ १५॥ कोशवद्भरितारत्नैःसुहृन्मित्रार्यबंधवः॥ निपीतोर्णवतीरेषुनालिकेररसासवः॥१६॥ द्विषामाकंपिताभेकगलांगत्वगिवासवः॥ मच्छासनांकिताजाताद्वीपांतरकुलाचलाः॥१७॥ विहृतंसिद्धसेनासुदिगंतनवभूमिषु ॥ भूम्यंतभूभृतांमूर्ध्निविश्रांतंमेघलीलया॥ १८ ॥ धियेवोच्चैःपदेज्ञानपूर्णयैकांतशीलया ॥ विलब्धान्यविनष्टानिराष्ट्रानीष्टार्थकारिणा ॥ १९ ॥ रक्षांस्यप्यविनीतानिवद्धानिनिगडैर्घनैः॥ धर्मार्थकामैरन्योन्यंचयापचयवर्जितैः॥ २०॥ अखंडितैर्मयानीतंपीतातियशसावयः॥ इदानींशष्पविश्रांतप्रालेयभरभासुरम् ॥ २१ ॥ आगतंवार्धकंसर्वभोगसंरंभमार्जनम् ॥ तस्योपर्यरयोरौद्रावलवंतोरणैषिणः॥ २२ ॥ संभूयसर्वतःप्राप्ताःसंदिग्धोवर्त्ततेजयः॥ तदिहैवानलायास्मैदेवायजयदायिने॥२३॥ मस्तकाहुतिमेवेमांसमुद्यम्यददामिवै ॥ ॥ राजोवाच॥ ॥कृशानोदेवमूर्धायंतुभ्यमाहुतितांगतः॥२४॥मयापूर्वंपुरोडाशइवदेवेशदीयते॥यदितुष्टोसिभगवंस्तदनेनकृतेनमे॥२५॥

सिद्धासुनवास्वपूर्वासुकांचनादिभूमिषु ॥ भूम्यंतभूभृतांलोकालोकांतानांप्रत्यंतदेशराजानांच ॥ १८ ॥ दृष्टांतांतरमाह ॥ धियेवेति ॥ यथाज्ञानपूर्णयाधियाएकांतसमाधिशीलयाउच्चैःपदेब्रह्मणिविश्रांतंतद्वत्प्रजानामिष्टार्थकारिणामयाराष्ट्राण्यविनष्टानिविवृद्धानिलब्धानि ॥ १९ ॥ अविनीतान्यविनययुक्तानिलंकादिनिलयानिरक्षांस्यपिघनैर्निगडैर्बद्धानि ॥ २० ॥ अन्योन्यमखंडितैःचयेनउपचयेनअपचयेनचवर्जितैःसमसंचितैरितियावत् ॥ धर्मार्थकामैर्वयोनीतम् ॥ पीतातियशसेवसांप्रतंजराधवलेनमयाशष्पेषुतृणांकुरेषुविश्रांतप्रालेयातिशयइवभासुरंधवलंवार्धकमागतमितिपरेणान्वयः ॥ शक्यविश्रांतेतिपाठेघनीभवितुंशक्येपुपलालादिषुविश्रांतेतिव्याख्येयम् ॥ २१ ॥ तस्यवार्धकस्योपरितस्मिन्सतीतियावत् ॥ २२ ॥ २३ ॥ २४ ॥ पूर्वमिष्टिषुपुरोडाशइवइदानीमयंमूर्धादीयते ॥ यदिमेतुष्टोसितत्तर्हिअनेनकृतेनकर्मणा ॥ २५ ॥

190

चत्वारोभवतःकुंडात्स्वदेहामेप्रोद्भवंतु ॥ २६ ॥ वध्यांवध्यासम ॥ सलोपश्छांदसः ॥ मतिमतेत्वद्दर्शनेच्छयात्वत्स्मृतिमते ॥ २७ ॥ लीलयाबालकःकमलमिवसमहीपालः शिरश्चिच्छिदे ॥ २८ ॥ असितवर्त्मनेकृष्णवर्त्मने ॥ शरीरेणकबंधेनसह ॥ २९ ॥ भुक्त्वाहविष्वेनोपयुज्य ॥ महतामुपयुक्तंमहद्भिःस्वीकृतमित्यर्थः ॥ ३० ॥ ३१ ॥ सहैवजातानिउत्तमान्युत्तंसभूषणायुधवासांसियेषाम् ॥ ३२ ॥ मौलिपदेनतद्भूषणानिशिरोरत्नादीनिलक्ष्यंते ॥ सर्वान्अवंतिरक्षंतीतिसर्वाः ॥ वेरपृक्तलोपाद्धलिलोपःपूर्वविप्रपेधेनेतिवलिलोपेपूर्वसवर्णदीर्घः ॥ ३३ ॥ अवस्थिताअधिरूढाः ॥ ३४ ॥ ससुवर्णपदंशरैस्तूर्णीरैश्वसंबध्यते ॥३५॥ अपरमसाधारणंगुणमाह ॥ समारोहंतीति ॥ तेदेहायस्मिन्पुंसिशि

चत्वारोभवतःकुंडात्स्वदेहाःप्रोद्भवंतुमे ॥ वलवंतःश्रियादीप्तानारायणभुजाइव ॥ २६ ॥ तैश्चतुर्दिक्कमेवारीन्वध्यामहमविघ्नतः ॥ त्वयाचदर्शनंदेयंमत्वंमतिमतेविभो ॥ २७॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्त्वासमहीपालःखड्गमादायचिच्छिदे ॥ शिरःकमलमालोलंलीलयेवाशुवालकः ॥ २८ ॥ छिन्नमेषशिरोयावज्जुहोत्यसितवर्त्मने ॥ तावच्छरीरेणसहपपाताग्नौसपार्थिवः ॥ २९ ॥ भुक्त्वाथवह्निस्तंदेहंददावस्मैचतुर्गुणम् ॥ महतामुपयुक्तंहिसद्यएवाभिवर्धते ॥ ३० ॥ चतुर्मूर्त्तिरथोत्तस्थौपावकाद्वसुधाधिपः ॥ प्रज्वलंस्तेजसांपुंजैर्नारायणइवार्णवात् ॥ ३१ ॥ तेदेहास्तस्यचत्वारोविरेजुर्भास्वरत्विषः ॥ सहजातोत्तमोत्तंसभूषणायुधवाससः ॥ ३२ ॥ सकंकटशिरस्त्राणाःसमौलिकटकांगदाः ॥ सहारकुंडलाभोगाःसर्वाःसर्वैमहाशयाः ॥ ३३ ॥ सर्वएवसमाकाराःसदृशावयवान्विताः ॥ चंचलोच्चैःश्रवःप्रख्यंहयरत्नमवस्थिताः ॥ ३४॥ ससुवर्णशरापूर्णतूणीराःसुमहाशयाः ॥ समानगुणकोदंडाःसमानवपुषःशुभाः ॥ ३५॥ समारोहंतितेयस्मिन्पुंसिनागेरथेहये॥ सर्वेषामरिदोषाणांनैवगम्योभवत्यसौ॥३६॥पीत्वाधृत्वाचिरंकालंगर्भेपुरुषतापिताः॥ वेद्यामिवहितास्तत्रसागरावडवार्चिषा ॥ ३७ ॥रत्नाश्वदेहकुसुमोत्करपूर्णदेहाश्चत्वारइंदुहसितैरवभासयंतः ॥सन्मूर्त्तयोहरयएवयथाब्धयोवावेदाइवाहुतिहुतादनलात्प्रसस्रुः॥ ३८॥ ॥इ०वा०वा०दे०मो०नि०उ०अवि०वि० अग्निप्रवेशाद्देहलाभोनामनवाधिकशततमःसर्गः॥ १०९॥

बिकावाहेनागेगजेरथेहयेवासमारोहंतिअसौनरोनागादिश्वसर्वेषामरिप्रयुक्तमंत्रयंत्रकृत्याशस्त्रास्त्रादिदोषाणांनैवगम्यःप्राप्योभवतीति ॥ ३६ ॥ किंचतेदेहाश्चत्वारःसागराःवडवार्चिषामात्राप्रथमंपीत्वाततोगर्भेचिरंकालंधृत्वापुरुषतांपुरुषाकारंआपिताःप्रापितास्ततस्तत्राग्निकुंडवेद्यामाहिताःप्रसूताइवेत्युत्प्रेक्षा ॥ ३७ ॥ किंचरत्नभूषितेषुरत्नभूतेषुचअश्वदेहेषुकुसुमोत्करैःपूर्णदेहाइंदुसदृशैर्हसितैर्दिशोऽवभासयंतस्तेचत्वारोविपश्चितआहुतिभिर्हुतादनलाच्चत्वारोहरयोविष्णवएवयथासन्मूर्त्तयोमूर्त्तिमंतः अब्धयोवायथामूर्त्तिमंतोवेदाइववाप्रसस्रुर्निर्जग्मुः ॥ ३८ ॥ ॥ इतिवासिष्ठ०तात्पर्यप्रकाशेनि०उ०नवोत्तरशततमःसर्गः ॥ १०९ ॥ ॥ ६ ॥ ॥ ६ ॥

पुरोपकंठेसंप्राप्तैश्चतुर्दिक्षुसहारिभिः ॥ प्रवृत्तंदारुणंयुद्धंविस्तरेणात्रवर्ण्यते ॥ १ ॥ पुरस्योपकंठेसमीपेसंप्राप्तैररिभिःसहरणंयुद्धंप्रवृत्तम् ॥ १ ॥ प्रजानांकुलंमहाव्याकुलंयत्र ॥ २ ॥ शरजालैर्महाधूमैश्चच्छन्नेनार्केणविलसत्तमोयत्र ॥३॥ प्रतपत्पर्णानिशुष्यत्पत्राणिकाननानियत्र ॥ लोलैरलातलतादिभिःपूर्णंखंयत्र ॥ ४ ॥ द्विगुणज्वलनानिद्विगुणदीप्तानिआयुधानियत्र ॥ रणभग्नैर्महाशूरैःप्राप्ताइंद्रवनिताअप्सरसःसुधाचयत्र ॥ ५ ॥ रणलंपटानांरणोत्सुकानांशूराणांहर्षदम् ॥ ६ ॥ भटानांकोलाहलोल्लासश्रवणमात्रेणत्वद्भंगान्मृताःपामराःकातरायत्र ॥ द्युपथवारणंअंतरिक्षमार्गनिरोधः ॥७॥ मरणेव्यग्राणांसामंतानांमुक्तनादंयथास्यात्तथाव्रजंतोव्रजास्तोमायत्र ॥ वैद्युतेनोत्पाताग्निनाउपहताःप्रजायत्र ॥ ८ ॥ अग्निदग्धैःपतद्भिर्गेहैःप्रोज्झितानिर्मुक्ताअग्निमयाअग्निवर्षिणोधूमांबुदायत्र ॥ ९ ॥ १० ॥ कोटानांदुर्गाणांकोटिषुसंक्रमेषुयाःकुट्यस्तदीयकुड्यपुकंटकवच्छरावापेऽद्भटाःसद्भटायत्र ॥ कंकटोद्भटेतिपाठेवारबाणैरुद्भासमानाःसद्भटायत्र ॥ चटत्सुवह्निनावेष्ट्यमानेष्वतएवकुंठितेषुकोटाट्टकूटेषुसंक्रमाट्टालशिखरेषुअटनैर्नटंतोवह्निच्छटायत्र॥११॥ लुठंतिपटनकुद्दाकानिगमनविच्छेदकानिसाटोपस्फुटानिपद्दिशानियत्र ॥ खेवटंतोवेष्टंतःकेतुपट्टायेषुतथाविधेष्वट्टेषुपटत्पटपटारवायत्र ॥ १२ ॥ दंतिनांदंतगुणानांशौल्क्यादीनामुद्गीर्णैरुद्गिरणैर्हेतीनामायुधानांपाषाणेषुघर्षणैर्घट्टनैस्तारैःकेंकारैर्हुंकारैश्चयुद्धोत्साहजननादाहूतादेवसुरवारणादिग्गजायत्र ॥१३॥ वहद्भिःशरनदीपूरैःपूर्णःअंबरलक्षणोमहार्णवोयत्र ॥ १४ ॥ उन्मादानांयोधानांसंघट्टेषुकंकटानांवारबाणानामुत्कटैष्टांकृतैर्लसद्भिर्झणझणारावैश्चघटितानिव्याप्तानिद्वीपमंडलानियत्र ॥ १५ ॥ १६ ॥

श्रीवसिष्ठउवाच ॥ ॥ पुरोपकंठसंप्राप्तैश्चतुर्दिक्कसहारिभिः ॥ एतस्मिन्नंतरेतत्रप्रवृत्तंदारुणंरणम् ॥ १ ॥ लुंठितग्रामनगरंप्रजाकुलमहाकुलम् ॥ अग्निदाहज्वलद्देहधूमाभ्रपटलावृतम् ॥ २ ॥ शरजालमहाधूमच्छन्नार्कविलसत्तमः ॥ क्षिप्रदृष्टरविक्षिप्रमदृष्टरविमंडलम् ॥ ३ ॥ अग्निदाहमहातापप्रतपत्पर्णकाननम् ॥ लोलालातलताशूलमुसलोपलपूर्णखम् ॥ ४ ॥ अनलप्रतिबिंबौघैर्द्विगुणज्वलनायुधम् ॥ रणभग्नमहाशूरप्राप्तेंद्रवनितासुधम् ॥५॥ उद्दामवारणारावैरणलंपटहर्षदम् ॥ भुशुंडीमंडलप्रासशूलतोमरवर्षदम् ॥६॥ भटकोलाहलोल्लासत्वद्भंगमृतपामरम् ॥ रजःपटलशुभ्राभ्रकृतद्युपथवारणम् ॥ ७॥ मरणव्यग्रसामंतमुक्तनादव्रजद्व्रजम् ॥ इतश्चेतश्चनिपतद्वैद्युतोपहतप्रजम् ॥ ८ ॥ अग्निदग्धपतद्गेहप्रोज्झिताग्निमयांबुदम् ॥ मरणाह्लाददासंख्यशरधारामयांबुदम् ॥ ९ ॥ जितसागरकल्लोलंतुरंगमतरंगकैः ॥ दंतिदंतविनिष्पेषतारकेंकारकर्कशम् ॥ १० ॥ कोटकोटिकुटीकुड्यकंटकोद्भटसद्भटम् ॥ चटत्कुंठितकोटाट्टकूटाटननटच्छटम् ॥ ११ ॥ लुठत्पटनकुद्दाकसाटोपस्फुटपद्दिशम् ॥ खेवटत्केतुपट्टाट्टपटत्पटपटारवम् ॥ १२ ॥ दंतिदंतगुणोद्गीर्णैर्हेतिपाषाणघर्षणैः ॥ तारकेंकारहुंकारैराहूतसुरवारणम् ॥ १३ ॥ वहच्छरनदीपूरपूर्णांबरमहार्णवम् ॥ विचलच्चक्रकुंतासिधारामकरकर्कशम् ॥ १४ ॥ उन्मादयोधसंघट्टकंकटोत्कटटांकृतैः ॥ लसज्झणझणारावैर्घटितद्वीपमंडलम् ॥ १५ ॥ पादपातपरापिष्टशरसंजातकर्दमम् ॥ वहद्रक्तनदीरंहःप्रोह्यमाणरथद्विपम् ॥ १६ ॥

शरलक्षणैर्वारितरंगैरार्त्तानांभग्नाआयुधजलेचरायत्र ॥ १७॥ देवभावप्राप्त्यावलीपलितनिर्मुक्तैःशूरैराक्रांतंत्रिविष्टपंयत्र ॥१८॥ पांडुपुपांसुलक्षणेपुपयोवाहेपुकचचक्रलक्षणाअचिरद्युतयोविद्युतोयत्र ॥ हेतिभिर्निर्विवरंनिरवकाशंयुधानांसंप्रहाराणामनाधारंभूतलंयत्र ॥ १९ ॥ कटंतःशरान्वर्षंतोयेभटेभ्योपिभटास्तेषामाटोपैःरटद्भिस्तत्प्रतिभटैरुत्कटम् ॥ तथाचटतांभुवमारुण्वानानांशकटानांसंघट्टैःपिष्टेपुरथांतरकाष्ठेपुलुठंतोरथायत्र ॥ २० ॥ कवंधादिभिर्मिश्रायेकंटकाःशत्रवस्तैःसंकटंदुरवगाहम् ॥ २१ ॥ शूरैःशातितंशीरार्धंशिरार्धम् ॥ छांदसोदीर्घः ॥ शिरांसिकरादिकंचयत्र ॥ २२ ॥ तरद्भिःप्लवद्भिर्लोलास्यैर्वेतालैःप्रहर्षाद्धासैर्घट्टितानिशवैःपूरितानिपेटकानिस्वकरंडकानियत्र ॥ कंकटैरुत्कटानांसाटोपानांभटानांभ्रुकुटिभिर्भीषणम् ॥ २३ ॥ एकांतेननियमेनमारणंमरणंचेत्युभयमपिशूराणामेकांतभूषणंयत्र ॥ प्रहाराणांदानेग्रहणेचकार्पण्यमसामर्थ्य

सुपर्णहेलानिपतत्प्रोत्पतत्पट्टपट्टिशम् ॥ शरवारितरंगार्त्तभग्नायुधजलेचरम् ॥ १७ ॥ हेतिसंघट्टनिष्क्रांतज्वालाप्रज्वलितांवरम् ॥ वलीपलितनिर्मुक्तशूराक्रांतत्रिविष्टपम् ॥ १८ ॥ पांडुपांसुपयोवाहकचचक्राचिरद्युति ॥ हेतिनिर्विवराकाशायुधानाधारभूतलम् ॥ १९ ॥ कटद्भटभटाटोपरटत्प्रतिभटोत्कटम् ॥ चटच्छकटसंघट्टपिष्टकाष्ठलुठद्रथम् ॥ २० ॥ कवंधभटवेतालमिश्रकंटकसंकटम् ॥ वेतालभुज्यमानाग्र्यशवमांसत्वद्वंबुजम् ॥ २१ ॥ शूरशातितशीरार्धशिरःकरखुरोरुकम् ॥ कवंधदोर्द्रुमस्पंदवनीकृतनभस्तलम् ॥ २२ ॥ तरल्लोलास्यवेतालहासघट्टितपेटकम् ॥ कंकटोत्कटसाटोपभटभ्रुकुटिभीषणम् ॥ २३ ॥ एकांतमारणैकांतमरणैकांतभूषणम् ॥ प्रहारदानग्रहणकार्पण्यापारदूषणम् ॥ २४ ॥ शूरवारणसामंतमदवारिविशोषणम् ॥ मारणैकांतरसिककृतांतानंदपोषणम् ॥ २५ ॥ अविकत्थनगुप्तानांशूराणांजयघोषणम् ॥ अशूराणांचगुप्तानांप्रभावुद्घोषणंपरम् ॥ २६ ॥ शौर्यादीनांप्रसुप्तानांसगुणानांप्रबोधनम् ॥ धनमाधारभूतानांराष्ट्रेपुभुजशालिनाम् ॥ २७ ॥ दंत्यारूढरथास्फोटप्रभग्नकटवारणम् ॥ समस्तमत्तगंधेभदानवारिनिवारणम् ॥ २८ ॥ सारसारवसामंतमुक्तमत्तमतंगजम् ॥ जरज्जितकरानीककल्पितासीकवेदनम् ॥ २९ ॥

मेवापारंदूषणंनिंदायत्र ॥ २४ ॥ २५ ॥ अविकत्थनेनस्वमुखेनस्वशौर्यानभिलापेनगुप्तानांप्रच्छन्नानांशूराणांक्रिययैवरणेतच्छौर्यदर्शिजनमुखेनप्रभौजयघोषणंतथागुप्तानामशूराणांचप्रभौअशौर्योद्घोषणंयत्र ॥ २६ ॥ भुजशालिनामतएवराष्ट्रेपुदुर्बलानामाधारभूतानांशूराणाम् ॥ धनंधनवत्प्रियम् ॥ २७ ॥ दंत्यारूढानांरथानांचपरस्परमास्फोटेयुद्धेप्रभग्नकटावारणायत्र ॥ समस्तानांमत्तगंधेभानांदानवारिणांमदजलानांनिवारणंविशोषणम् ॥ २८ ॥ मत्तमतंगजेषुसरसिप्रविष्टेपुसारसैरिवआरवेणाक्रोशेनसामंतैस्त्रुणैरपिपलायमानैर्मुक्तामत्तमतंगजायत्र ॥ ततोजरद्भिरपिखड्गविद्यायांजितकराणामनीकैःकल्पितंसमर्थितंअसिःप्रहरणंयेषांतेआसीकास्तद्वेदनंतद्भावप्रकटनंयत्र ॥ शक्तियष्ट्योर्विहितईकक्छांदसत्वादसेःकृतः ॥ २९ ॥

१ जरद्भिरपिखड्गविद्याविशारदैरावेशवशात्स्वविद्याकौशलंप्रकटितमितिभावः ॥

क्वचित् अनागतेष्वेवभटव्रातेषुतदागमनभीत्यापलायनेपरस्परपादतलपिष्टाअर्धमृतप्रायामानवायत्र ॥ अतएवदिनंदिनकरस्येवनृपस्यपादौशरणंगतम् ॥ ३० ॥ मानोभिमान स्तल्लक्षणोन्मादवायुबलेनोन्मत्तैर्नतेष्वपिप्रारब्धंकुट्टनंयत्र प्राणैःपण्यानांधनानांनवमापणस्थानभूतंपत्तनम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ गणैःप्रमथैर्गंधर्वैर्गीर्वाणैश्चगीताःशूरा णामाशयाउत्साहादयोयत्र ॥ तेषांगणानांगंधर्वादीनांभाभिस्तरलैस्तालाग्रैर्ध्वजाग्रैर्हेतिहालाभिश्चसोन्मादत्वाद्धलायुधभूताभटायत्र ॥३४॥ संघंसंभूयलीलयाप्रहरणंयेषां तथाविधैरसंख्यैर्यातुधानैरझगज्झणंनिःशब्दंस्वयंभुक्त्वाचकाराच्छत्रादिभारान्नीत्वाअद्रिगुहालक्षणेस्वगेहेपूरिताभोजिताअन्येप्यशेषाद्रुद्रुमाविषवृक्षप्रायायातुधानायत्र

दिनंदिनकरस्येवनृपस्यशरणंगतम् ॥ अनागतभटव्रातपिष्टार्धमृतमानवम् ॥ ३० ॥ मानवायुबलोन्मत्तनतप्रारब्धकुट्टनम् ॥ धनानां प्राणपण्यानांनवमापणपत्तनम् ॥३१॥पटनद्धपताकौघजातसंचारिदोर्द्रुमम् ॥ रक्तोज्ज्वलत्वात्त्रैलोक्यलक्ष्म्याभूषणविद्रुमम् ॥३२॥ मंदाराहननोद्भूतक्षीरोदजलसुंदरैः ॥ छत्रैश्छादितहेत्योघपुष्पाढ्यगगनांगनम् ॥३३॥ गणगीर्वाणगंधर्वगीतशूराशयंकृतम् ॥ तद्भात रलतालाग्रहेतिहालाहलायुधम् ॥ ३४ ॥ संघप्रहरणासंख्ययातुधानाझणज्झणम् ॥ भुक्त्वाचाद्रिगुहागेहपूरितापूर्वद्रुद्रुमम् ॥ ३५ ॥ क चत्कुंतवनव्यस्तशिरःकरवृतांबरम् ॥ क्षेपणोन्मुक्तपाषाणपूरप्लुतककुब्नुतम् ॥ ३६ ॥ महाचटचटाशब्दस्फुटद्रवबृहद्दुमम् ॥ नारीहलह लारावरणन्नगरमंदिरम् ॥३७॥ मंदरावानलाकारनभोभातायुधव्रजम् ॥ परित्यज्यधनंगेहंदूरोर्वीविद्रुतप्रजम् ॥३८॥ सर्वतोहेतिवह नात्समक्षप्रेक्षकोज्झितम् ॥ वर्जितंभीरुभिःपक्षिराजवृंदमिवाहिभिः ॥ ३९ ॥ दंतिदंतविनिष्पिष्टशिष्टसद्भटसंकटम् ॥ कटेमृत्योरिव नरद्राक्षापीडनयंत्रके ॥ ४० ॥ यंत्रपाषाणसंघट्टपिष्टांबरगतायुधम् ॥ योधनादनदद्दंतिवृंदबंधुरकंदरम् ॥४१॥ धराधरदरीरंतःप्रतिश्रु त्प्रोतगर्जितम् ॥ अर्जितंप्राणसर्वस्वमर्जयद्भिरुपार्जितम् ॥ ४२ ॥ भर्जितंहेतिदहनैरग्निदाहैश्चसंततैः ॥ तैरेवान्यैरथान्यैश्चद्वंद्वयुद्धैरनि ष्ठितम् ॥ ४३ ॥

॥ ३५ ॥ कचद्भिःकुंतवनैःकुंतारण्यप्रायैःकुंतधरैर्व्यस्तैश्छित्त्वाक्षिप्तैःशिरोभिःकरैश्चवृतांबरम् ॥ ३६ ॥ भुजास्फोटनजैर्महाचटचटाशब्दैःस्फुटतामिवरवोयेषांतथाविधावृहद्द्रु मायत्र ॥ ३७ ॥ ३८ ॥ हेतीनामायुधानांसर्वतोवहनात्प्रवहणात्सर्वतःप्रेक्षकैर्भयादुज्झितम् ॥३९॥ मृत्योर्नरलक्षणानांद्राक्षाणांनिष्पीडनयंत्रमिवविद्यमानेकटेगंडस्थलेदंतिभि र्दंतविनिष्पिष्टशिष्टानांसद्भटानांसंकटंयत्र ॥ ४० ॥ ४१ ॥ धराधरदरीःप्राप्यप्रतिश्रुद्भिःप्रतिध्वनिभिःप्रोतानिगर्जितानियत्र ॥ तथामहतायत्नेनजन्मप्रभृत्यर्जितंप्राणसर्वस्वंबल सर्वस्वंअर्जयद्भिर्गमयद्भिःप्रकटयद्भिःशूरैरुपार्जितंरणंप्रवृत्तमित्यत्रान्वयः ॥ ४२ ॥ पुनःकीदृशंतद्रणंप्रवृत्तंतदाह ॥ भर्जितमित्यादि ॥ निष्ठांसमाप्तिमप्राप्तमनिष्ठितम् ॥ ४३ ॥

१ हलायुधोबलरामः  २ पटनद्धाःपताकौघाएवयत्रसंचारिणोदोर्द्रुमाजाताइतिभावः  ३ ऋजेर्गत्यर्थस्येदंरूपं

192

सारतामेवदृष्टांतेनव्यनक्ति ॥ कैलासैरिवेति ॥ संशुद्धैःस्वाम्यवंचकैःअतएवस्वदिईश्वराधारतांगतैःसुभटपेटकैः ॥ कैलासपक्षेस्पष्टेद्वे ॥४४ ॥ येषांभटानांरणेमरणंजीवितमिव प्रियंपलायनेनजीवितंजीवनंतुमरणमिवद्वेष्यं उदारैस्तैःपुरुषैस्त्रैलोक्यमपिसमाक्रांतंजितमित्यर्थः ॥ येमृत्योरपिमृत्यवःपरमपदप्राप्ताःसंपद्यंते ॥ यथाहुः ॥ द्वावेतौपुरुषौलोके सूर्यमंडलभेदिनौ ॥ परिव्राड्योगयुक्तश्चरणेचाभिमुखोहतइति ॥ ४५ ॥४६॥ तदेवयुद्धंवर्णयन्नुपसंहरति ॥ यंत्रेति ॥ यंत्राश्मनांक्षेपणानांयानिप्रसरणानिप्रवाहास्तल्लक्षणा नांसरितांघूकृतैर्ध्वनिविशेषैस्तथाद्राक्सद्यएवच्छिन्नोड्डीनानांव्योम्निक्रांतानांचलितानांमूर्ध्नांफूत्कृतैःफूत्कारशब्दैस्तथाशरसलिलमुचांसैनिकानांचनादैस्तथानभसिविसरता

वेष्टितंमृतशिष्टैश्चसारैःसुभटपेटकैः ॥ कैलासैरिवसंशुद्धैरीश्वराधारतांगतैः ॥ ४४ ॥ तैरुदारैःसमाक्रांतंयेमृत्योरपिमृत्यवः ॥ मरणंजीवितंयेषांजीवितंमरणंरणे ॥४५॥ रणेनभसिनिर्लूनवरवारणवारिजे ॥ सारसाःसरसीवात्ररेजुरत्युद्भटाभटाः ॥४६॥ यंत्राश्मक्षेपणानांप्रसरणसरिताघूकृतैःफूत्कृतैर्द्राकूक्रांतानांव्योम्निमूर्ध्नांशरसलिलमुचांसैनिकानांचनादैः ॥ टांकारैरायुधानांनभसिविसरतामश्वचक्रेभशब्दैरासीन्निःसंधिवंधोपलजठरजडंजीर्णकर्णंगतंतत् ॥ ४७॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०अविद्यो०विप० संग्रामवर्णनंनामदशोत्तरशततमःसर्गः ॥ ११० ॥ ॥श्रीवसिष्ठउवाच ॥ ॥इतिकल्पांतसदृशेयत्तेसमरसंभ्रमे ॥ पतंतीषूत्पतंतीषुसेनासुसमरेजिरे ॥ १ ॥ तूर्यभेरीमहाशंखखड्गेषुखेनदत्सुच ॥ धनुर्ध्वनिषुवीराणांतारकेंकारकारिषु ॥ २ ॥ अन्योन्यकठिनास्फोटविकटेभटपेटके ॥ कवल्कटकटाटोपेकटुकुट्टितकंकटे ॥३॥ किंचित्प्रभज्यमानासुविशल्कश्मासुसंगरे ॥ विपश्चित्पक्षसेनासुलूयमानलतास्विव ॥४॥ उदभूत्पूरयन्नाशान्नृपनिर्याणदुंदुभिः ॥ चतुर्धाशनिसंपूर्णकल्पाभ्ररवमांसलः ॥५॥ स्फुटतांकुलशैलानांतुल्यकालमिवोत्कटः ॥ स्फुटच्चटचटास्फोटैर्जडिताखिलदिक्तटः ॥ ६ ॥ लोकपालैरिवाकारैर्नारायणभुजैरिव ॥ सचतुर्भिश्चतुर्दिक्कंनिर्जगाममहीपतिः ॥ ७॥ चतुरंगेणमहतासैन्येनपरिवारितः ॥ अट्टालवलयात्कृच्छ्रान्निर्गत्यनगराद्बहिः ॥८॥

मायुधानांनादैस्तथाश्वचक्राणामिभानांचहेषावृंहितशब्दैश्चगतंव्याप्तंतद्युद्धंजीर्णाविधिरीकृताःकर्णायस्मिंस्तथाविधंसन्निःसंधिवंधमुपलजठरमिवजडमासीत् ॥४७॥ ॥इति श्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्धेदशोत्तरशततमःसर्गः ॥ ११० ॥ ॥ ७ ॥ ॥ स्वसैन्येहीयमानेचनिर्गतेनमहीभृता ॥ वायव्यास्त्रैश्चतुर्दिक्षुत्रण्यंतेद्विपतांक्षयः ॥ १ ॥ यत्तेप्रवृत्ते ॥ सर्वेषांभावलक्षणसप्तम्यंतानांपंचमश्लोकेउदभूदित्यत्रान्वयः ॥ १ ॥ तूर्यादिषुत्रिषुप्रतिध्वनिभिःखेतत्रखड्गेषुचनदत्सु ॥ वीराणांतारकेंकारानुकारिषु ॥ २ ॥ भटपेटकेयोधकदंबेकटुयथास्यात्तथाकुट्टितकंकटेकवल्कटकटाटोपेसति ॥ कुशब्देशतृप्रत्यः ॥ ३ ॥ विशंतीकश्मामूर्छायासु ॥ ४ ॥ ५ ॥ तुल्यकालंस्फुटताम् ॥ जडितानिजडीकृतानि ॥ ६ ॥ आकारैर्मूर्त्तिधरैर्नारायणभुजैरिवचतुर्भिर्देहैः ॥ ७ ॥ ८ ॥

आत्मबलंरिक्तंददर्श रिपुमंडलंतुबलवत्ऊर्जितंददर्श ॥ तदेवरिपुमंडलमर्णवत्वेनवर्णयति ॥ गर्जंतमित्यादिना ॥ ९ ॥ प्रायेणरूपकाणिसर्वत्र ॥ १० ॥ चक्रावर्त्तवद्दृढद्विर्व्यू
हैःसेनारचनाभेदैर्जनकल्लोलैश्चकलितांतरम् ॥ ११ ॥ हयानांहेषितमेवयादसांफीत्कारशब्दोयत्र ॥ कचंतीनांधाराणामाकरम् ॥ १२॥ हेतिलक्षणेअंभसिकचंतःप्रकाशमा
नाःपापाःकृष्णसर्पायमाणाम्लेच्छायत्र ॥ द्रविडादिभटवार्त्ताभिरुद्यद्बुलुगुलोदरम् ॥ १३ ॥ नतैरुन्नतैश्चमातंगैःकृताअद्रींद्राणांमज्जनोन्मज्जनलक्षणमहास्पंदायस्मिंस्तथा
विधविपुलशरीरकम् ॥ १४ ॥ अपारंविकचन्यःसेनापूरस्तदेवकल्लोलैरलंभूपितंमहाजलंयस्य ॥ १५ ॥ अकालेकल्पांतदशासमुत्थानमिवघनाआकृतिर्यस्य ॥ रोदसीरंध्रे

ददर्शात्मबलंरिक्तंबलवद्रिपुमंडलम् ॥ गर्जंतंचलयाकृत्याभीमंयुद्धोद्धतार्णवम् ॥ ९ ॥ शरसीकरनीरंध्रंमकरव्यूहसंकुलम् ॥ वारणव्यू
हवलितंतरंगव्यूहविस्तृतम् ॥ १० ॥ चक्रावर्त्तवहद्व्यूहकल्लोलकलितांतरम् ॥ चलद्रथशतावर्त्तंपताकालहरीगणम् ॥ ११ ॥ प्रस्फुरच्छत्रफे
नाढ्यंहयहेषितफीत्कृतम् ॥ समुल्लसद्धेतिजलंकचद्धाराकरंपरम् ॥ १२ ॥ तरत्तरलमातंगतुरंगौघतरंगकम् ॥ हेत्यंभसिकचत्पापमुद्यद्बुलु
गुलोदरम् ॥ १३ ॥ दरीदलनसंक्षुब्धमरुज्जनितघुंघुमम् ॥ नतोन्नतकृताद्रींद्रमहास्पंदशरीरकम् ॥ १४ ॥ मज्जन्मातंगतुरगहेलाहतमहींध
रम् ॥ अपारविचरत्पूरकल्लोलालमहाजलम् ॥ १५ ॥ अकालकल्पांतदशासमुत्थानघनाकृतिम् ॥ आक्रांतरोदसीरंध्ररुधिरैकमहार्णवम्
॥ १६ ॥ कचदायुधखंडौघडीनरत्नावृतोदरम् ॥ चलद्व्यूहचलद्व्यस्तयंत्राश्मक्षेपणाश्मकम् ॥ १७ ॥ रत्नसीकरनीहारसंध्याभ्रपटलानत
म् ॥ क्वचित्पांसुपयोवाहपीतहेतिपयोधरम् ॥ १८ ॥ तमालोक्यरणांभोधिमगस्त्योस्यभवाम्यहम् ॥ इतिसंचिंत्यमनसासपातुंतंरणार्ण
वम् ॥ १९ ॥ अस्त्रंसस्मारवायव्यंचतुर्दिक्कंचसंदधे ॥ धनुषिशिखराधारेत्रिपुरांतइवोद्यतः ॥ २० ॥ आत्मीयदेशसैन्यानांश्रेयोर्थंशांत
येऽनलम् ॥ नमस्कृत्याथजस्वाशुसतत्तत्याजदारुणम् ॥ २१ ॥ यथातथैवतत्याजतस्यसाहायकायसः ॥ पर्जन्यास्त्रंमहास्त्रेशंद्विपदान
पशांतये ॥ २२ ॥ तस्मादस्त्रजुषोघोराद्धनुषःपरिनिर्गताः ॥ अष्टमूर्त्तेश्चतुर्दिक्कमाशाकुहरपूरकाः ॥ २३ ॥

त्यलुकूल्छांदसः ॥ १६ ॥ कचद्भिरायुधखंडौघलक्षणैर्डीनैरुच्छलद्भीरत्नैराहृतोदरम् ॥ चलत्सुसेनाव्यूहेषुचलंतोव्यस्तायंत्राश्मक्षेपणाश्मकायत्र ॥ समुद्रेपिपोतेपुसामुद्रजना
नांयंत्राश्मक्षेपणाश्मनांप्रसिद्धेरितिभावः ॥ १७ ॥ १८ ॥ तंवर्णितप्रकारंरणहेतुंरिपुबलांभोधिमालोक्यास्यपानेअहमगस्त्योभवामीतिसंचिंत्यसविपश्चित्तंबलार्णवंपातुंवाय
व्यमस्त्रंसस्मार ॥ १९ ॥ यथाशिखराणामाधारेमेरुलक्षणेधनुषित्रिपुराणांअंतवधेउद्यतःशिवःअस्त्रंसंदधेतद्वत् ॥ २० ॥ शत्रुशांतयेइतिपाठनमस्कृत्यअनलमितिशेषः ॥ सः
तदस्त्रंतत्याज ॥ २१ ॥ यथावायव्यमस्त्रंतत्याजतथैवतस्यसाहायकायपर्जन्यास्त्रमपितत्याजेत्यर्थः ॥ २२ ॥ चतुर्दिक्कंअस्त्रद्वयजुषःअतएवाष्टमूर्त्तेस्तस्माद्धनुषोबाणाद्विसरि
तोनिर्ययुरितिपरेणान्वयः ॥ २३ ॥

॥ २४ ॥ २५ ॥ वाताश्चंडवायवः ॥ २६ ॥ २७ ॥ महावार्तैर्हर्षलाःप्रवृद्धाउत्पाताइवपीवराःपुष्टानागाःसर्पाश्चनिर्ययुः ॥ युगपर्यंतेस्फुटितेभ्योद्रींद्रेभ्योजाताइव ॥ २८ ॥ तेनअस्त्रवर्षवेगेनसःअरिबलार्णवःकालेनविलंबेननर्नाकतुझटित्येवपांसुराशिरिवअभितोधुतउड्डायितः ॥ २९ ॥ ३० ॥ द्रुतःपलायमानःसंश्चतुर्दिक्कंययौ ॥ ३१ ॥ तमेवपलायमानंबलौघंगिरिणदीसाम्योपपादनादिनावर्णयति ॥ वहदित्यादिना ॥ वायुप्रवाहेणवहंतःस्विन्नाःस्वेदार्द्राबृहंतश्छिन्नाश्चपताकाकेतवएवपादपायत्र ॥ मरीचिपुष्पैःश

निर्ययुर्बाणसरितस्त्रिशूलसरितस्तथा॥ शक्तीनामुग्रसरितोभुशुंडीसरितस्तथा॥ २४॥ मुद्गराणांचसरितःप्रासानांसरितोरयात्॥ चक्राणांचैवसरितःपरश्वधनदीरयाः॥ २५॥ तोमराणांचसरितोभिंदिपालमहापगाः॥ पाषाणानांचसरितोवाताःकल्पांतशंसिनः॥ २६॥ अशनीनांचसरितोविद्युतांसरितस्तथा॥ जलधारासरित्पूराःखड्गवर्षसमन्विताः॥ २७॥ सनाराचामहावर्षहर्षलोत्पातपीवराः॥ नागाश्चयुगपर्यंतस्फुटिताद्रींद्रजाइव॥ २८॥ तेनास्त्रवर्षवेगेनधुतःसोरिबलार्णवः॥ झटित्येवनकालेनपांसुराशिरिवाभितः॥ २९॥ सलिलाशनिशस्त्राणामासारैश्चंडमारुतैः॥ सरांसीवविसेतूनिसैन्यानिपरिदुद्रुवुः॥ ३०॥ चतुरंगश्चतुर्दिक्कंबलौघःसपराङ्मुखः॥ ययौप्रावृड्गिरिणदीमहावाहइवद्रुतः॥ ३१॥ वहत्स्विन्नबृहच्छिन्नपताकाकेतुपादपः॥ मरीचिपुष्पशबलविलोलासिलतावनः॥ ३२॥ विलुठत्पुष्टपाषाणापृषद्रक्तद्रवावचः॥ घोरैर्घुरघुरारावैरलंहृदयभंगदः॥ ३३॥ उह्यमानबृहद्दंतिदंतद्रुमविघट्टनैः॥ स्फूर्जच्चटचटारावतर्जितोद्गर्जितांबुदः॥ ३४॥ हेतिवृत्तोग्रसंघट्टपुष्पजातझणज्झणः॥ तरत्तरलसारावतुरंगमतरंगकः॥ ३५॥ रथादिभटचक्रौघशिलाक्केंकारपीवरः॥ पदातिरथहस्त्यश्वशिलासंघट्टसंकटः॥ ३६॥ कटुंचंकारचीत्कारकेंकारपरिपीवरः॥ मृतामृतावयमितिघनकोलाहलाकुलः॥ ३७॥ सेनावारिमहावर्त्तचलद्गुलुगुलारवः॥ रक्तसीकरनीहारसंध्यांबुदवितानकः॥ ३८॥ हेतिवीचिविटाच्छिन्नवारिवामनवारिदः॥ वर्षपंकिलभूपीठतटखंडनमंडितः॥ ३९॥

बलानिविलोलान्यसिलतावनानियेन ॥ ३२ ॥ पलायनाशक्त्याविलुठंतःपुष्टजनलक्षणायेपाषाणास्तेपांपृषद्भिर्बिंदुभूतैरक्तद्रवैरवचोद्वर्चः ॥ तत्रपातमूर्छितानांघोरैर्घुरघुरारावैर्हृदयभंगदोभीषणइतियावत् ॥ ३३ ॥ गिरिणद्याःप्रावृड्विशेषणमंबुदकल्पनेनोपपादयति ॥ उह्यमानेति ॥ ३४ ॥ हेतिषुवृत्तोयउग्रःशिलादिसंघट्टःसएवनदीतीरतरुपुष्पेपुजातोभ्रमरझणज्झणध्वनिर्यत्र ॥ ३५ ॥ रथादीनांभटचक्रौघानांचयच्छिलासंकटेकूजितंतल्लक्षणेनभेकपक्ष्यादिकेंकारेणपीवरःपुष्टः ॥ ३६ ॥ तदेवाह ॥ कट्विति ॥ ३७ ॥ ॥ ३८ ॥ हेतिभिर्वीचिभिर्विटाइवआच्छिन्नावारिणावामनानम्रावारिदायत्र ॥ पंकिलस्यभूपीठतटस्यमार्गनिष्पादनायखंडनेनमंडितः ॥ ३९ ॥

1 टंकारेत्यपिक्वचित्पाठः

पलायमानैः कुंतादिधरैर्वहत्तालतलं तालवनमिवाद्भुतः ॥ ४० ॥ ४१ ॥ चूर्णीकृतान्यस्थीनिइंपरस्थूलसैकतानि खुरैरापिष्टानितुसूक्ष्मतमसैकतानीतिभेदः ॥ उह्यमानैः शिलापू
रैः काष्ठकोटिभिश्वपरस्परघट्टनात्कटंकटइतिध्वन्यभेदारोपोक्तिः ॥ ४२ ॥ उद्गर्जद्बलयांभोदैरित्यादीनांतृतीयांतानांपंचमश्लोकेइत्थंविद्रवंतिभूभृतांबलानिमशकौघवद्विने
शुरित्यत्रान्वयः ॥ ४३ ॥ सितंतीक्ष्णंयच्छैत्यंतद्वशादश्यानैरशुष्यद्भिर्जलधाराकृतैःखेपंजरैः ॥ ४४ ॥ ४५ ॥ भुविरथनिक्रांदैर्दिविअंभोधरनिक्रांदैः ॥ चतुर्दिक्कंनारस्यविपश्वि
द्धनुःक्रेंकारस्यचतुष्टयैः ॥ ४६ ॥ विद्युद्वलयविस्तारकारिणांमेघानांसंघट्टघर्षणैश्च ॥ ४७ ॥ ४८ ॥ प्रत्यंतभूभृतांबलानिउद्दामपावकवनोपमहेतिसार्थैर्मेघानामनलैराकुला

कुंतशूलगदाप्रासवहत्तालतलाद्भुतः ॥ साक्रंदभीरुजनताप्रतपन्मृगपोतकः ॥ ४० ॥ मृतहस्त्यश्वयोधौघजीर्णपर्णनिरंतरः ॥ पिष्टदेह वसामांसपंकसंजातकर्दमः ॥ ४१ ॥ चूर्णीकृतखुरापिष्टमहास्थिघनसैकतः ॥ उह्यमानशिलापूरकाष्ठकोटिकटंकटः ॥ ४२ ॥ उद्गर्जद्बल यांभोदैर्वहत्प्रलयवायुभिः ॥ प्रपतत्प्रलयासारैःप्रलयाशनिसंकटैः ॥ ४३ ॥ पंकिलाखिलभूपीठैःसलिलोपप्लुतस्थलैः ॥ सितशैत्यवशा श्यानधाराकृतखपंजरैः ॥ ४४ ॥ समग्रनगरग्रामगृहज्वलितवह्निभिः ॥ प्रजाश्वेभपदातीनामाक्रंदेनापिघर्घरैः ॥ ४५ ॥ रथांभोधरनि क्रांदैर्दिविभूमौघनारवैः ॥ चतुर्दिक्कघनंतारक्रेंकारस्यचतुष्टयैः ॥ ४६ ॥ विद्युद्वलयविस्तारकारिसंघट्टघर्षणैः ॥ शरशक्तिगदाप्रासभिंदि पालादिवर्षणैः ॥ ४७ ॥ सर्वदिक्कमसंख्यानिबलानिबलशालिनाम् ॥ भूभृतांविद्रवंत्याशुविनेशुर्मशकौघवत् ॥ ४८ ॥ उद्दामपावक वनोपमहेतिसार्थमेघानलाकुलजनाशनिवर्षपातैः ॥ आसन्बलानिचपलाब्धिजलाबलानिपर्याकुलानिवडवाग्निमिवाविशंति ॥ ४९ ॥ ॥ इति श्रीवा० वा० दे० मो० नि० उ० अ० वि० चतुर्दिग्गतबलद्रवणंनामैकादशोत्तरशततमःसर्गः ॥ १११ ॥ ॥ ७ ॥ ॥ श्रीव सिष्ठउवाच ॥ ॥ लोकहारांबरव्यालंचेदिचंदनकाननम् ॥ छिन्नंपरशुधाराभिःपतितंदक्षिणार्णवे ॥ १ ॥ पर्णवल्म्योत्यपूरेणपारसीकाः परस्परम् ॥ प्रहरंतोविमोहेनविनष्टावंजुलावने ॥ २ ॥

जनार्थैस्तथाविधैरशनिवर्षपातैश्चपर्याकुलानिसंतिवडवाग्निमाविशंतिचपलेअब्धिजलेकथ्यमानान्यबलानियादांसीवआसन् ॥ ४९ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रका शेनि० उत्तरार्द्धेएकादशोत्तरशततमःसर्गः ॥ १११ ॥ ॥ ७ ॥ ॥ यत्रयत्रयथानष्टायद्देश्याःपलायिताः ॥ वर्ण्यंतेत्रतथासर्वेचतुर्दिक्षुद्विपद्भटाः ॥ १ ॥ तत्रप्रथमंचेदिदे शभटानांनाशप्रकारमाह ॥ लोकेति ॥ चेदिभटलक्षणंचंदनकाननंपरशुभिश्छिन्नंसद्दक्षिणार्णवेपतितम् ॥ तत्रचंदनदक्षाणांव्यालवेष्टितत्वप्रसिद्धिसमर्थनायविशिनष्टि ॥ लो केति ॥ लोक्यंतइतिलोकादर्शनीयाहाराअंबराणिचव्यालायस्मिन् ॥ अत्रसर्वत्रदेशनाम्नैवभटनिर्देशोबोध्यः ॥ १ ॥ पारसीकाभटाअत्रपूरेणपर्णवल्योसमाणाविमोहेनपर स्परंप्रहरंतःसंतोवंजुलावनेदेशेविनष्टाः ॥ २ ॥

१ मूलेल्यबंतस्यप्रवहणंप्राप्येत्यर्थकरणेफलितमिदम्

तथादरदाभटादर्दुराद्रौदुरंतेषुदरीरंध्रेषुसंलीनाः ॥ ३ ॥ शरप्रासासिपरशुलक्षणानांचतुर्णामायुधानांधाराग्रप्रयुक्तशिलाकवचादिचूर्णलक्षणनीहारधारिणोविद्युद्भिर्वलयिनोवे ष्टितावेल्लितायुधावारुणास्त्रप्रयुक्तावारिदावाताश्चलिताः ॥ ४ ॥ तेषुचलितेषुकिमासीत्तदाह ॥ दंतिनइति ॥ अन्योन्यंप्रहारैराभग्नदंतादेहेषुरुधिरौघेणपीडिताश्चदंतिनोमृत्यो रुदरस्यउंभकाःपूरकायासपरिमिताःपिंडपिंडाइवअभवन् ॥ द्विरुक्तिरनेकत्वद्योतनाय ॥ ५ ॥ तज्जादरददेशजाएवकेचिद्रैवतिकारैवतकपर्वतेनिलीनाः ॥ रूपिकाभिःस्वरूपेण पुरुषवंचिकाभिःपिशाचीभिः ॥ ६ ॥ दशार्णास्तद्देशजाभटाः ॥ ७ ॥ नालिकेरधरायांवेलावनौ ॥ ८ ॥ नीलंकार्ष्णायसंनाराचनिकरंशकानासहन् ॥ एवंरमठाअपिवाता हतानलिनीषंडाइवतांडवितासवआसन् ॥ ९ ॥ श्रवणनक्षत्रस्याभोगःसंस्थानमिवत्रीणिश्रृंगाग्राणियस्यतथाविधोमहेंद्रोद्रिर्विद्रुतैर्नीलैर्दविव्रजैर्भटैर्वलितःसन्जलमुचांजालैर्व

दर्दुराद्रौदुरंतेषुदरदीर्णत्वदंतराः॥ दरीरंध्रेषुसंलीनादरदादानवाइव ॥ ३ ॥ चतुरायुधधाराग्रचूर्णनीहारधारिणः॥ विद्युद्वलयिनोवाता वेल्लितायुधवारिदाः॥ ४ ॥ दंतिनोन्योन्यमाभग्नदंतदेहौघपीडिताः ॥ मृत्यूदरोंभकग्रासपिंडपिंडाइवाभवन् ॥ ५ ॥ तज्जारैवतिकारा त्रौरौद्रतोमरताडिताः॥ रूपिकाभिःपिशाचीभिर्भुक्ताभागीकृतांगकाः॥ ६ ॥ तालीतमालगहनेदशार्णाजीर्णजंगले॥ गलेपादंनिधायां तःकृत्ताःसिंहैर्गतासवः॥ ७ ॥ पश्चिमार्णवतीरस्थानालिकेरधरावनौ॥ यवनाविगतप्राणानिगीर्णामकरोत्करैः॥ ८ ॥ नाराचनिकरंनी लंनिमेषंनासहन्त्छकाः॥ रमठानलिनीषंडाइवतांडवितासवः॥ ९ ॥ श्रवणाभोगश्रृंगाग्रोमहेंद्रोद्रिर्दिविव्रजैः॥ विद्रुतैर्वलितोनीलैर्जा लैर्जलमुचामिव ॥ १० ॥ चामीकरवराकाराभग्नातंगणवाहिनी॥ मृताहृतांबराचौरैर्भुक्तैकांतेनिशाचरैः ॥ ११ ॥ द्यौरिवर्क्षभरैरासीत्त दासारंभुवस्तलम्॥ विवर्त्तमानैरभितःकचद्भिर्ज्वलनायुधैः ॥ १२ ॥ धाराधरधरारंध्रप्रतिश्रुद्घनघुंघुमा॥ जगद्गेहगुहासीद्यौर्घनंगातु मिवोद्यता॥ १३ ॥ द्वीपांतरजनाश्चक्रैर्जर्जराजीवितंजहुः ॥ मीनजंगलजंबालेजीर्णमत्स्याइवाजले॥ १४ ॥ यावद्द्वीपाजिताःकुक्षौ सत्याद्रौसममूर्त्तयः॥ आश्वस्यदिवसान्सप्तययुरायासमंथरम्॥ १५ ॥ गंधमादनपुन्नागवनकुंजेषुपुंजिताः॥ विद्याधरकुमारीभिर्गां धाराःपरिरक्षिताः॥ १६ ॥

लितइवासीत् ॥ १० ॥ तंगणानांभटानांवाहिनीपूर्वंचोरैर्हृतांबरापश्चादेकांतेनिशाचरैर्भुक्तासतीमृता ॥ ११ ॥ तदातंगणसेनाभक्षणकालेतत्रत्यंभुवस्तलमभितोविवर्त्तमानैः संचरद्भिर्ज्वलनायुधैरुल्मुकधरैरतएवकचद्भिर्निशाचरैःऋक्षभरैर्नक्षत्रसमूहैर्द्यौरिवसारंशोभमानमासीत् ॥ १२ ॥ किंचतस्मिन्विपश्चिद्विजयेजगदेवगेहगुहायस्यास्तथाविधा द्यौर्धाराधराणांधरारंध्रेषुगर्जनप्रतिध्वनिभिर्घनघुंघुमाबहलमृदंगध्वनिःसतीघनंतद्यशोगातुमुद्यतेवासीत् ॥ १३ ॥ मीनविहारजंगलभूतेजंबालेशैवलपल्वलेदैवादजलेसतिम त्स्याइवअशरणाः ॥ १४ ॥ यावद्द्वीपाःयावद्द्वीपाभिजनाभटाःसह्याद्रौनिलीयसप्तरात्रमाश्वस्यचिकित्सादिनाव्रणोपशमात्सममूर्त्तयःसंतआसारैःक्लिद्यमानाआयासेनमंथरंमं दंस्वदेशंययुः ॥ १५ ॥ १६ ॥

हूणानांचीनानांकिरातानांचशिरांसिअभिमुखानिलैरतएववेगवद्भिर्विपश्चिन्मुक्तैश्चक्रवर्षणैःकमलानीवलूनानि ॥ १७ ॥ निलीपास्तन्नामकदेशजाभटाद्रुममयाद्वक्षप्रायाःसंतोऽवसन् ॥ १८ ॥ सारंगाणांमृगाणांपक्षिणांचविहाररंगभूमिभूतासुशैलकाननभूमिपुतस्यविपश्चितआपातैर्घनमतिशयितंक्षोभणंसंपन्नम् ॥ १९ ॥ कंटकस्थलंकरंजवनमिवकर्कशाःकटंकानांदस्यूनांस्थलेमंडलेदेशेकंटकस्थलगाःकरंजादिवननिलीनाआसन् ॥ २० ॥ २१ ॥ दृषदांप्रहारैःपर्वतकटकेपुअंकिताःकृतचिह्नाः ॥ प्रलयशंकिताःप्रलयशंकाविपर्याकृताः ॥ २२ ॥ दशदिशोबहुक्षुब्धैरायुधैरनिलैश्चआसारसाराभूत्वापंकांबुप्लुताअदृश्याआसन् ॥ २३ ॥ वातैर्नीहारावहच्छपछपारवंयथास्यात्तथाप्रसस्रुः ॥ छपछपेत्यव्यक्तनीहाराभिघातध्वन्यनुकरणम् ॥ महार्णवरयाअपिवातप्रयुक्तावहच्छपछपारवाश्वतद्नुभविनांप्रसिद्धाः ॥ २४ ॥ अनिलैःप्रोह्यमाणाविदूरदेशस्थारथिका

हूणचीनकिरातानांमुक्तैस्तैश्चक्रवर्षणैः॥ कमलानीवलूनानिशिरांस्यभिमुखानिलैः॥ १७॥ निलीपानलिनीनालेकंटकाइवनिश्चलाः॥ द्रुमेद्रुमेद्रुममयाभयात्त्वस्यावसंश्चिरम्॥ १८॥ चारुसारंगरंगासुशैलकाननभूमिपु॥ चतुर्दिक्कंतदापातैःसंपन्नंक्षोभणंघनम्॥ १९॥ कंटकस्थलनामानःकंटकस्थलकर्कशाः॥ कंटकस्थलगाआसन्कंटकस्थलमंडले॥ २०॥ पारसीकाःपरंपूरैःपारंप्राप्यपयोनिधेः॥ निपेतुःपवनैःपूताःप्रलयेतारकाइव ॥ २१ ॥ ववुरंभोधिकुट्टाकादृपदांकटकांकिताः॥ सर्वदिग्वनलुंटाकावाताःप्रलयशंकिताः ॥ २२ ॥ आसारसाराःपंकांबुप्लुताःसघनघुंघुमाः॥ आसन्दशदिशोऽदृश्यावहुक्षुब्धायुधानिलैः॥ २३॥ निर्ह्रादकारिभिर्वातैर्वहच्छपछपारवम्॥ प्रसस्रुर्भुविनीहारामहार्णवरयाइव ॥ २४॥ विदूरस्थारथेभ्यश्चवीचिचीत्कारकारिणः॥ सरोंभस्यनिलैःपेतुःपद्मेभ्यइवपट्पदाः ॥ २५॥ आयुधौघेपिचक्रौघात्पादातंवलमाविलम्॥ रजोराशिरिवासारेनसमर्थंपलायने॥ २६॥ हूणाआमस्तकंमग्नाउत्तरार्णवसैकते॥ क्लिन्नास्तत्रैवपंकांतःपूरणाविलशूलवत् ॥ २७॥ तीरैलावनलेखासुशकाःपूर्वपयोनिधेः॥ नीतावद्धादिनंमुक्तानगतायमसादनम्॥ २८॥ मंदंमद्रामहेंद्राद्रौक्रंदंतःपतितादिवः॥ आश्वासितामुनिवरैर्निजाश्रममृगाइव॥ २९॥ प्रविष्टायाचनंसत्वेलब्धाःसुरविलाद्द्वयम्॥ अनर्थेनार्थआयातिकाकतालीयतःक्वचित्॥ ३०॥

वीचयइवचीत्कारकारिणःसंतःसरोंभसिपेतुः ॥ २५ ॥ तेषांपादातंवलंनुआयुधौघेसत्यपिविपश्चिच्चक्रौघादाविलमश्रुकलुषाक्षंसत्आसारेधारासंपातेरजोराशिःपांसुजालमिवपलायनेनसमर्थमभूत् ॥ २६ ॥ भुविपूरणेनआविलंमृन्मालिन्यमापद्यमानंलोहशूलंयथाक्लिद्यतेतद्वत्क्लिन्नाः ॥ २७॥ शकाभटाःपूर्वपयोनिधेस्तीरैलावनलेखासुनीताःसंतोदिनमात्रंविपश्चितावद्धापश्चाद्दययामुक्तायमसादनंनगतानमृताइत्यर्थः ॥ २८ ॥ दिवोद्युवदुन्नताद्गिरिशिखरात् ॥ २९ ॥ सह्येगिरौप्रविष्टाभटास्तुमूकांबिकासन्निधौकुटजाद्याख्येतच्छिखरेदेवात्प्रविष्टात्सुरविलात्द्वयंऐहिकामुष्मिकंयाचनंअभिलषितसिद्धिफलंलब्ध्वाःप्राप्तवंतः ॥ तथाहि ॥ भाग्योदयकालेक्वचित्काकतालीयन्यायतःअनर्थेनापिअर्थःपुरुषार्थआयाति ॥ यतोमरणार्हैःसुरविलंप्रविष्टैःसिद्धयोलब्धाइत्यर्थः ॥ ३० ॥

दशार्णाभटाद्दर्दुरगिरेररण्येपतिताःप्रविष्टाःसंतः ॥ ३१ ॥ हैहयदेशीयाभटाहिमाद्रौविशल्यकरणीमोषधिंभुक्त्वाविद्याधराइवखेचराःसंतोगृहंययुः ॥ ३२ ॥ एवंवंगाअपि हैमवतीरोषधीर्भुक्त्वापृष्ठलग्नानरइवम्लानानिउत्तंसकुसुमानियेषांतथाविधाःसंतःशरव्ययात्केवलंधनुर्भिरुपलक्षितागृहमागताःसंतोभयाद्दयापिवहिर्निःसरणाभावान्नदृश्यंते ॥ ३३ ॥ दिविविद्याधराभूत्वास्थिताः ॥ ३४ ॥ पारसीकास्तालीतमालखंडेषुपतिताःप्रविष्टमात्राःशत्रुभिःपातितांगकाःसंतोमोहंमूर्छांगताः ॥ तत्रचभ्रमाद्वैमानिकाइवाभवन् ॥ ३५ ॥ हेअंगकलिंगानांतरलासारमातंगंचतुरंगबलंअंगैर्हतंसत्पलायमानंतंगणांगणेपतितम् ॥ ३६ ॥ साल्वाभटाःशराःशैलाःशिलासमूहाउदकानिचोदरेयस्यत

पतितादर्दुरारण्येदशार्णाजीर्णपर्णवन् ॥ भुक्त्वाविषफलान्यज्ञाम्रृतास्तत्रैवतेस्वयम् ॥ ३१ ॥ विशल्यकरणींभुक्त्वाकाकतालीययोगतः ॥ हिमाद्रौहैहयायातागृहंविद्याधराइव ॥ ३२ ॥ पृष्ठनृम्लानकुसुमाधनुर्भिर्गृहमागताः ॥ वंगानाद्यापिदृश्यंतेपिशाचत्वमिवागताः ॥ ३३ ॥ अंगावनफलैर्भुक्तैर्विद्याधरपदप्रदैः ॥ विद्याधरीभिःक्रीडंतिदिविविद्याधराःस्थिताः ॥ ३४ ॥ तालीतमालखंडेषुपतिताःपातितांगकाः ॥ पारसीकागतामोहंभ्रमाद्वैमानिकाइव ॥ ३५ ॥ तरलासारमातंगंपतितंतंगणांगणे ॥ अंगैरंगकलिंगानांचतुरंगबलंहतम् ॥ ३६ ॥ क्रमत्यरिबलेसाल्वाःशरशैलोदकोदरे ॥ पतिताःप्रभुणासार्धमद्याप्येवोपलाःस्थिताः ॥ ३७ ॥ असंख्याःप्रपलायंतःककुभंककुभंप्रति ॥ नराःसरत्तरंगेषुसागरेषुलयंगताः ॥ ३८ ॥ क्षेत्राटवीपुरजलस्थलशैलकूलकुल्याग्रहारसरिदब्धिभृगुद्रुमेषु ॥ ग्रामारपट्टिगिरिकूपगुहागृहेषु भ्रष्टानिकःकलयितुंकुबलानिशक्तः ॥ ३९ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० अवि० विप० बलपरिभ्रंशोनामद्वादशोत्तरशततमःसर्गः ॥ ११२ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ बलान्यनुतरंतोथतदित्थंद्रवतांद्विषाम् ॥ दूराद्दूरतरंप्राप्ताश्चत्वारस्तेविपश्चितः ॥ १ ॥ सर्वशक्तिमयैकेनचेतनेनेश्वरेणते ॥ प्रहितादिग्जयंचक्रुःसर्वएवसमाशयाः ॥ २ ॥

थाविधेअरिबलेक्रमतिआक्रमतिसतिप्रभुणासार्धंपतितास्तेचाद्यापितद्देशग्रामदेवताभूताउपलाःप्रतिमाभूत्वास्थिताः ॥ ३७ ॥ ३८ ॥ नकेवलंसागरेष्वेवकिंतुक्षेत्रेष्वटवीषुपुरेषुजलेषुस्थलेषुशैलेषुकूलेषुकुल्यासुअग्रहारेषुसरित्सुअब्धिषुभृगुषुद्रुमेषुतथाग्रामेषुआरपट्टिषुशुल्कस्थानेषुगिरिषुकूपेषुगुहासुगृहेषुचभ्रष्टानिमृतानितेषांकुबलानिकलयितुंगणयितुंकःशक्तोनकश्चिदपीत्यर्थः ॥ ३९ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० द्वादशोत्तरशततमःसर्गः ॥ ११२ ॥ ॥ ७ ॥ ॥ अस्त्राणामरिसंशांत्यासाधनानांचसंक्षयः ॥ अर्णवानांचविभवोवर्ण्यतेविस्तरादिह ॥ १ ॥ द्रवतांद्विषांबलान्यनुतरंतोऽनुधावमानाः ॥ १ ॥ सर्वशक्तिमयेनसर्वशक्तिसंभृतेनसर्वदेहेष्वेकेनचेतनेनेश्वरेणप्रहितादिग्विजयायप्रवर्त्तिताः ॥ समाशयास्तुल्याभिप्रायाः ॥ २ ॥

अविच्छिन्नमखिलैरनुस्यूतंयथास्यात्तथा अनुसस्नुः ॥ ३ ॥ दूरमविश्रांतिनयानेनगमनेनतेषांविपश्चित्सैन्यानांतत्प्रसिद्धंसर्वंजीवनयुद्धादिसाधनंधनास्त्रशस्त्रादिप्रत्यहंव्ययेन क्षीणम् ॥ कुसरितांकुल्यानामंबुवत् ॥ ४ ॥ धावतांतेषांविपश्चितामात्मीयान्यन्यदीयानिचवीक्षणार्हाणिबलानिसैन्यानिमुमुक्षूणांपुण्यपापानीवअलंनिःशेषंक्षीणानि ॥ ५ ॥ ६ ॥ आलयेषुनिषंगकोशादिस्वस्थानेपुरथादिषुचलीनाःसंतोनिद्रालवइवनिश्चेष्टाआसन् ॥ ७ ॥ ८ ॥ वर्षधाराप्रयुक्तेपंकतलेआलीनाअतएवशांताहेतिलक्षणाजलेचरामीनमकरादयोयस्य ॥ तथानाराचलक्षणैःसीकरासारनीहारैःपरिवर्जितइत्याद्यब्धिरूपकोपपादकविशेषणानांचतुर्थश्लोकस्थेव्योमैकाब्धिरभूदित्यत्रान्वयः ॥ ९ ॥ प्र

दूरात्तावदविच्छिन्नमनुसस्नुर्बलानिते ॥ यावत्तीरंसमुद्राणांप्रवाहाःसरितामिव ॥३॥ दूराविश्रांतयानेनतेषांतत्सर्वसाधनम् ॥ आत्मीयंपरकीयंचक्षीणंकुसरिदंबुवत् ॥ ४ ॥ आत्मीयान्यन्यदीयानितेषांवीक्ष्यबलान्यलम् ॥ क्षीणानीवमुमुक्षूणांपुण्यपापानिधावताम् ॥ ५ ॥ स्वयमस्त्राणिशांतानिकृतकृत्यान्यथांबरे ॥ ज्वालाजालानिवह्नीनांदाह्यस्यासंभवादिव ॥ ६ ॥ आलयेपुरथाश्वेभवक्षौघादिषुहेतयः ॥ आसन्निद्रालवोलीनादिनांतेविहगाइव ॥ ७ ॥ तरंगाइवतोयेंतर्नीहाराइववारिदे ॥ मेघावायाविवामोदाव्योमनीवनिलिल्यिरे ॥ ८ ॥ धारापंकतलालीनशांतहेतिजलेचरः ॥ नाराचसीकरासारनीहारपरिवर्जितः ॥ ९ ॥ चक्रावर्त्तशतोन्मुक्तोयुक्तःसौम्यतयाच्छया ॥ प्रशांतमेघसंरंभतरंगोत्तुंगवर्षणः ॥ १० ॥ अंतर्लीनर्क्षरत्नौघकोणसंस्थार्कवाडवः ॥ शून्यतावारिरमलोव्योमैकाब्धिरभूत्पृथुः ॥ ११ ॥ लंबप्रकाशगंभीरंप्रसन्नंकांतिमत्ततम् ॥ रजोविरहितंरेजेखंमनोमहतामिव ॥ १२ ॥ अथार्णवांस्तेददृशुराकाशस्यानुजानिव ॥ विस्तीर्णान्विमलाकारान्पूरिताखिलदिक्तटान् ॥ १३ ॥ तरंगकणकल्लोलमहागुलुगुलाकुलान् ॥ भूरिसीकरनीहारहारिहारिशरीरिणः ॥ १४ ॥ स्थितानात्मानमास्तीर्यभूमौव्याध्यातुरानिव ॥ श्वसनार्त्तांश्चलद्देहान्विवर्त्तोर्मिमहाभुजान् ॥ १५ ॥ जडानपिसंदमयान्कल्लोलाकोटकोटरान् ॥ संसारानिवविस्तीर्णांश्चक्रावर्तदशाकुलान् ॥ १६ ॥

शांतानिमेघसंरंभप्रयुक्तानितरंगेभ्योप्युत्तुंगानिवर्षणानियस्मिन् ॥ १० ॥ अंतर्लीनाऋक्षलक्षणारत्नौघायस्मिन् ॥ कोणेएकदेशेसंस्थःअर्कलक्षणोवाडवोवडवानलोयस्मिन् शून्यतैववारियस्मिन् ईदृशोव्योमलक्षणएकाब्धिःप्रलयेप्रसिद्धएकार्णवःपृथुर्विस्तृतःअभूत् ॥ ११ ॥ खंमहतांमनइवरेजे ॥ लंबेनविस्तीर्णेनात्मप्रकाशेनसूर्यालोकेनचगंभीरम् ॥ रजोगुणैर्धूलिभिश्चविरहितम ॥ १२ ॥ आसर्गसमाप्तेरर्णवान्वर्णयितुमुपक्रमते ॥ अथेति ॥ १३ ॥ भूरिभिःसीकरनीहारहारिभिर्मेघैर्हारिमनोहरंशरीरंयेषाम् ॥ नित्ययोगाद्यर्थाधिक्यविवक्षयाकर्मधारयादपिमत्वर्थीयःसमर्थनीयः ॥ १४ ॥ आत्मानंस्वदेहंभूमौआस्तीर्यप्रसार्य ॥ विवर्त्यंतइतिविवर्त्ताउत्क्षिप्यमाणाऊर्मिमहाभुजायेषाम् ॥ १५ ॥ संसारपक्षेकल्लोलाःषडूर्मयस्तैराकोटाःकुटिलाःकोटराजलाशयायेषु ॥ १६ ॥

रत्नराशिधरैस्तटोद्योतैरुदयकालेपीवरीकृतःस्थूलीकृतइवभास्करोयैः ॥ शंखराशिषुविशतोवातस्यशब्दएवतर्जितघुंघुमस्तर्जनध्वनिर्येषाम् ॥ १७ ॥ मांसलानांपुष्टानामूर्मिघटानांघोषैर्मेघघर्घरांबरडंबरयुक्तान् ॥ १८ ॥ पुच्छच्छटापुच्छाघातेनच्छिन्नैर्द्विधाकृतैरतएवमज्जद्भिःपोतैःकृतारवान् ॥ १९ ॥ उद्ग्रीवैःकूर्मैर्मकरैश्चनिगीर्णाऔर्णाऊर्णांबरानरोत्करायेषु ॥ सामुद्राणांनराणांप्रायेणौर्णांबरत्वद्योतनायौर्णेतिविशेषणम् ॥ २० ॥ विस्तीर्णपटभांकारकारिभिःपवनैःपततोगच्छंतोभूत्याःभूतिसंभृतास्तताःउत्उर्ध्वंघटंते चेष्टंतइत्युद्भटाःपोतायेषु ॥ बलात्पतनाभिघातबलात् ॥ २१ ॥ २२ ॥ करिणांकराणांशुंडानामुन्नामैरुन्नमनैर्वंशवनमिवकृतान् ॥ २३ ॥ लहरीषुवल्लर्यइवकरिणांवालाः

रत्नराशितटोद्योतपीवरीकृतभास्करान् ॥ शंखराशिविशद्वातशब्दतर्जितघुंघुमान् ॥ १७ ॥ मांसलोर्मिघटाघोषघर्घरांबरडंबरान् ॥ वर्तुलावर्तविस्तारप्रभ्रमद्द्रिद्रुमद्रुमान् ॥ १८ ॥ मकरव्यूहनिर्ह्रादघर्घरोदरघुंघुमान् ॥ मत्स्यपुच्छच्छटाच्छिन्नमज्जत्पोतकृतारवान् ॥ १९ ॥ उद्ग्रीवकूर्ममकरनिगीर्णौर्णनरोत्करान् ॥ ऊर्मिविंवितसप्ताश्वसहस्रार्कनभोनिभान् ॥ २० ॥ भांकारकारिपवनपतद्भूत्यततोद्भटान् ॥ ऊर्म्युदस्तमणिव्रातवलाज्झणझणध्वनीन् ॥ २१ ॥ नानाजालैर्बलभुजैर्हेलास्पृष्टार्कमंडलान् ॥ नमदुन्नमदुद्रश्मिरत्नमाणिक्यमंडलान् ॥ २२ ॥ उत्फालफेनिलावर्तविवर्तमकरोत्करान् ॥ क्वचित्करिकरोन्नामैःक्षणंवंशवनीकृतान् ॥ २३ ॥ लहरीवल्लरीवालान्पृष्ठतालिपुमाधवान् ॥ क्वचिदंतरविश्रांतसपरिच्छदमाधवान् ॥ २४ ॥ एकदेशस्थितासंख्यनानासुरसुरालयान् ॥ तारानवतरंगौघपरिदंतुरितांबरान् ॥ २५ ॥ गुहामशकवद्गर्तभीतशाखायिताचलान् ॥ नयतोंबुतरंगौघैर्वेलाद्रीनतिखर्वताम् ॥ २६ ॥ खक्षेत्रारोपितानल्परत्नरश्मिपथांकुरान् ॥ शुद्धशुक्तिमुखोन्मुक्तमुक्तांतरितसैकतान् ॥ २७ ॥ नानारत्नांशुकौशेयसूत्रचित्रांस्तरंगितान् ॥ विशन्नदीन्दशादिभिःसमाकीर्णान्पटानिव ॥ २८ ॥ इंद्रनीलतटैर्व्युप्तमुक्ताशुक्तिशतांकितैः ॥ क्वचिद्दर्शयतःकांतशतेंदुकनखश्रियम् ॥ २९ ॥

पुच्छानियेषुतान् ॥ करिणांपृष्ठसमूहःपृष्ठतातल्लक्षणास्वालिषुपंक्तिषुमाधवान्वसंतानिवफेनपुंजैःपुष्पितान् ॥ क्वचित्श्वेतद्वीपादौ ॥ २४ ॥ नानाविधानामसुराणांसुराणांचालयभूतान् ॥ द्वंद्वगर्भपष्ठीतत्पुरुषांतचतुष्पदबहुव्रीहिर्वा ॥ प्रतिबिंबफेनादितारावद्भिर्नवतरंगौघैःपरिदंतुरितंपरिहसितमंबरंयैः ॥ २५ ॥ गुहास्थमशकवत्पातालगर्तेनिविष्टाबहिर्निर्गमनभीताअतएवमूलशाखायिताअचलायेषाम् ॥ खर्वतांनयतइतिवेलाद्र्यपेक्षयातरंगौघाणामौन्नत्यसंपादनादितिभावः ॥ २६ ॥ रश्मिपथाःरश्मिप्रसराः ॥ खक्षेत्रेआरोपितास्तल्लक्षणाअंकुरायैस्तान् ॥ २७ ॥ नानारत्नांशुलक्षणैःकौशेयसूत्रैश्चित्रान् ॥ विशंत्योनद्यएवतुरीप्रवेश्यमानतंतवोयेषांतान् ॥ दशाभूताभिर्दिग्भिःपरितःसमाकीर्णान्अतएवऊयमानपटानिवस्थितान् ॥ २८ ॥ कांतशतेंदुकामिवनखश्रियंक्वचिद्दर्शयतः ॥ २९ ॥

१ वर्धितेत्यपिक्वचित्पाठोदृश्यतेपरंत्वयंनटीकासंमतइतिभाति ॥

तरंगाणामादेशेषुप्रदेशेषुप्रतिबिंबितास्तीरतालीवनावलीस्तरंगपरिवृत्त्यापरिवर्तयतः ॥ ३० ॥ वेलावनलताभ्योभ्रष्टामेलादिफलमालांजिघृक्षुभिर्जलेचरैःआत्ताःआवृत्तयस्ती रेसंचारायेषुतान् ॥ ३१ ॥ भक्ष्योपदर्शनादिच्छद्मनातरंगसंनिधावाकृष्यभुंजानैर्जलचरैःकृताआच्छोटाअंगुलीध्वनयस्तत्प्रायाध्वनयोयेषु ॥ ३२ ॥ ३३ ॥ अमूर्तत्वादिसाध र्म्येणदिक्षुचतुरोनारायणानिवस्थितान् ॥ ३४ ॥ ३५ ॥ आशयैर्हृदयैर्दधतः ॥ आत्मगंकोशगर्भस्थम् ॥ ३६ ॥ गंभीरैरितिभावप्रधानोनिर्देशः ॥ अंतर्गतगिरिकंदरासुपवनप्र वेशनिर्गमलक्षणोयउद्गारस्तदनुमेयकंदरागांभीर्यैःकल्पांतजलदानामालयभूतान् ॥ ३७ ॥ गुहासुगुलुगुलारूपैरावर्तनिर्घोषैःअशनयइवभीषणान् ॥ स्वपासिनःअगस्त्यानौ

रत्नांशुजालसंदिग्धास्तरंगादेशबिंबिताः ॥ परिवर्तयतःफुल्लास्तीरतालीवनावलीः ॥ ३० ॥ एलालवंगकंकोलफलमालांजिघृक्षुभिः ॥ वेलावनलताभ्रष्टामात्तावृत्तीन्जलेचरैः ॥ ३१ ॥ चूतनीपकदंबाग्रविहगान्प्रतिबिंबितान् ॥ भुंजानैर्विप्रलंभेनकृताच्छोटान्जलेचरैः ॥ ३२ ॥ खेचरप्रतिबिंबेनविद्रवद्भिरितस्ततः ॥ भग्नबंधबृहत्सेतूनूक्षणंप्रतिजलेचरैः ॥ ३३ ॥ अमूर्तान्प्रतिबिंबेनत्द्धृदयस्थजगत्त्रयान् ॥ चतुरोव्योमविमलान्दिक्षुनारायणानिव ॥ ३४ ॥ अतिगांभीर्यनैर्मल्यविस्तारविभवैर्नभः ॥ निर्गीर्यसंदर्शयतोहृदयादिवबिंबितम् ॥ ३५ ॥ जलचारिविहंगानांसाकाशंप्रतिबिंबितम् ॥ आशयैर्दधतःसारैःपद्मान्भृंगमिवात्मगम् ॥ ३६ ॥ तरंगतरलास्फालमारुतैराहतांबरान् ॥ कंदरोद्गारगंभीरैःकल्पांतजलदालयान् ॥ ३७ ॥ गुहागुलुगुलावर्तनिर्घोषाशनिभीषणान् ॥ भृशंभावयतोग्रस्तानगस्त्यौर्वानलानिव ॥ ३८ ॥ भूरिसीकरपुष्पाणितरंगौघतरूणिच ॥ प्राभान्यंबुवनानीवलहरीमंजरीणिखम् ॥ ३९ ॥ सरत्तरंगजालानिप्रोड्डीनप्राणिमंत्यधः ॥ आकाशखंडखंडत्वात्पतितानीवविभ्रमात् ॥ ४० ॥ एलालवंगबकुलामलकीतमालहिंतालतालदलतांडवखंडिताग्रे ॥ प्रान्तेपतल्लवणवारिधिदीर्घतीरेरेखावभावलिनिभांबरशैलमूर्ध्नि ॥ ४१ ॥ ॥ इ० वा० महारामायणे वा० दे० मो० नि० उ० अवि० विप० समुद्रवर्णनंनामत्रयोदशोत्तरशततमःसर्गः ॥ ११३ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

र्वानलांश्चगुहोदरेषुभृशंग्रस्तान्संभावयतइव ॥ ३८ ॥ तथाखंप्राभान्यंबुवनानिभावयतइवस्थितान् ॥ कीदृशान्यंबुवनानि ॥ भूरिशीकराएवपुष्पाणियेषुतानि ॥ तरंगौघास्त रवोयेषु ॥ लहर्योमंजर्योयेषु ॥ ३९ ॥ तथाप्रोड्डीनप्राणिमंतिमत्स्यादियुक्तानिसरंतितरंगजालानिआकाशस्यखंडशस्तैःखंडनेकृतेखंडत्वादेवअधःपतितानीवविभ्रमाद्भावयतश्च तुरोर्णवांस्तेददृशुरितिपूर्वेणान्वयः ॥ ४० ॥ वर्णितप्रकारैःपततांतरंगैःप्रत्युद्गच्छतांलवणवारिधीनांदीर्घतीरंविपश्चितस्तैन्येप्रान्तेसतिपरितोदीर्घेतीरायेअंबरसंपृक्तानांशैलानांमूर्ध्नि ए लालवंगादिवृक्षाणांदलतांडवैःखंडिताविभक्ताअलिनिभाश्यामलावनरेखावभौअशोभतेत्यर्थः ॥ ४१ ॥ ॥ इतिश्रीवासिष्ठ० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउ० त्रयो दशोत्तरशततमःसर्गः ॥ ११३ ॥ ॥ ७ ॥ ॥ ७ ॥

इतआरभ्यवर्ण्यंतेविपश्चिद्भ्यःप्रदर्शिताः ॥ पार्श्वगैर्वनवृक्षाब्धिशैलमेघवनेचराः ॥ १ ॥ अथेतिवनादिवर्णनविस्तरारंभद्योतनाय ॥ तेषांविपश्चितांपार्श्वगामंत्र्यादयस्ततःसमुद्र सन्निधिप्राप्त्यनंतरंतांस्तान्विचित्रान्वनवृक्षादीन्अदर्शयन्कौतुकार्थमित्यर्थः ॥ १ ॥ हेदेवमध्यदेशादेरुपत्यकाधित्यकाप्रस्थादिप्रदेशाक्रमेणापेअश्मदेशंशिलाप्रचुरभागता मुपेयुषःअस्यशैलस्ययेयमभ्रंकषाअत्युन्नताअतएवसमरुत्प्रचुरवायुयुक्ताविहरद्देवगंधर्वादियुक्तावाअग्रभूःशिखरभूमिस्तांपश्येत्यर्थः ॥ २ ॥ वांतउद्गीर्णोविविधामोदोमारु तोयाभिः याइमाविपिनावलयस्ताअपिपश्य ॥ ३ ॥ वार्द्धिर्लहरीलक्षणैर्दात्रैरुपत्यकामद्रेरासन्नांभूमिंलुनाति ॥ तथाशैलेशालंतेशोभंतेयाःशिलावलयस्ताश्चलुनाति ॥ त थाआपादंफलपल्लवव्याप्तावनालीश्चलुनातिपश्येत्यर्थः ॥ ४ ॥ जलधिःपवनकंपिततरुलताभुजाद्यभिनयैर्नृत्यतांस्वेदबिंदुप्रायस्वांबुकणांचितानांभूभृतामधित्यकासुविश्रां



श्रीवसिष्ठउवाच॥ ॥अथतेषांतदातत्रततस्तांस्तानदर्शयन्॥ पार्श्वगावनवृक्षाब्धिशैलमेघवनेचरान्॥ १ ॥ देवपश्यास्यशैलस्ययेय मभ्रंकषाग्रभूः॥ समरुन्मध्यदेशादेरश्मदेशमुपेयुषः॥ २॥ इमावकुलपुन्नागनालिकेरकुलाकुलाः॥ विपिनावलयोवांतविविधामोदमा रुताः॥ ३ ॥ लुनात्युपत्यकांवार्धिःशैलशालिशिलावलीः ॥ वनालीर्लहरीदात्रैरापादफलपल्लवाः ॥ ४ ॥ अधित्यकासुमेघालीर्नृत्यतां स्वांबुभूभृताम्॥ धुनोतिजलधिर्बालोगृहधूमावलीमिव ॥५॥ राकाब्धिपूरसंप्रोतशंखशाखास्तटद्रुमाः॥ चंद्रबिंबफलाःकल्पवृक्षाइव विभांत्यमी॥ ६॥ रत्नपुष्पभरापूर्णरक्तपल्लवपाणयः॥ भवंतंपूजयंतीवलतादारान्विताद्रुमाः॥७॥ प्रोतोर्मिमकरग्रासैर्दृषद्दंतैर्गुहामुखैः॥ ऋक्षवान्ऋक्षवद्भूभृद्धत्तेघुरघुरारवम् ॥ ८ ॥ महेंद्रोमंद्रगर्जाभिरभिक्षिपतिगर्ज्जतः॥ पर्ज्जन्यानूर्जितोजन्यःप्रतिजन्यान्यथाजडैः॥९॥ चंदनारूपितःश्रीमान्जेतुंजलधिवेल्लनाः॥ समुद्यतइवोच्चोसौमल्लोमलयपर्वतः ॥ १० ॥

तामेघालीःपवनेनधुनोति ॥ यथाबालःस्वगृहधूमावलींव्यजनपवनेनधुनोतितद्वत्पश्य ॥ ५॥ राकासुपूर्णेंदूदयकालेप्रवृद्धस्याब्धेःपूरैःसंप्रोतशंखाःशाखायेषांतथाविधाअमी तटद्रुमाश्चंद्रबिंबानीवामृतरसपूर्णानिशुभ्राणिचफलानियेषांतथाविधाःकल्पवृक्षाइवविभांति ॥ पश्येतिसर्वत्रानुषंगः ॥ ६ ॥ लतारूपैर्दारैरन्विताद्रुमारत्नसदृशैःपुष्पभरैःआपू र्णारक्तपल्लवलक्षणाःपाणयोयेषांतथाविधाःसंतःस्वगृहंप्राप्तमतिथिंभवंतंपूजयंतीवकिरंतीत्यर्थः ॥ ७॥ प्रोतोर्मीन्मकरान्ग्रसंतितथाविधैःशुक्लादिवर्णदृषद्दंतैर्गुहालक्षणैर्मुखैः ऋक्षवान्नामभूभृतऋक्षवद्भल्लूकवत्घुरघुरारवंधत्ते ॥ ८ ॥ अयंमहेंद्रोगिरिरूर्ध्वंगर्जतःपर्जन्यानधोमंद्रगर्जाभिरभिमुखंक्षिपतिभर्त्सयति ॥ यथाऊर्जितोजन्योयुद्धकुशलःप्र तिजन्यान्रिपून्जडैर्वाक्यैःक्षिपतितद्वत् ॥ ९ ॥ असौमलयपर्वतलक्षणोमल्लोजलधेःप्रतिमल्लस्यलहरीभुजवेल्लनाःजेतुंसमुद्यतइव ॥ १० ॥

सर्वतोरत्नयुक्तवीचिभिःक्वचितोयमंबुधिःसूर्यमार्गगैर्नभश्वरैरजस्रंभूरत्नवलयभ्रांत्याप्रेक्ष्यते ॥ क्वचितौजस्कमितिपाठेएकपद्येक्रियाविशेषणंयोज्यम् ॥ ११ ॥ वानंवनसमूहस्तैःपूर्यंतइतिवानपूराःपर्वतकाःसूक्ष्माःपर्वताःवायुनात्वनेकंप्यमानेचलकाःसंतःसर्पाइवसरंति ॥ रत्नमूर्द्धानःअनिलपायिनइतिसाधारणेविशेषणे॥नतोन्नतैर्गतिभेदैः ॥ १२ ॥ वीचिशृंगेषुभ्रमंतःसामुद्रामकराआरण्याइभाश्ववीचिशृंगेपुनिर्गच्छत्सुप्रविशत्सुचपरस्परप्रहणायकरैरुत्कटैर्व्यात्तैर्मुखैश्चभ्रमंतोमेघैरनुद्राविताअनुद्रुताःसीकरमुचोंभोदाइवहरंतिकौतुकदर्शिनांमनइतिशेषः ॥ १३ ॥ तत्रैकःकरीदैवादगाधेजलेआवर्त्तेनकलितःपरिवर्तितआकारोयस्यतथाविधःसन्सीकरोत्करैःकीर्णादिशोयेनतथाविधोभूत्वामज्जनजलपूर्णत्वात्तुशिरउन्नेतुमशक्तऊर्ध्वीकृतकरःसन्म्रियतेपश्य ॥ १४ ॥ सजलाश्चतेअद्रिभिर्नतोन्नताविषमाश्चअंभोधयोयथासंतितथासर्वाद्वीपभूमयोपिसंतीतिबोध्यमित्यर्थः ॥ १५ ॥ अंबुधिर्ब्रह्मजगंतीवआवर्त्तान्धत्तेइतिद्वयोरन्वयः ॥ आत्मनोऽनन्यानप्यन्यानिवेत्यादिविशेषणानिआवर्त्तजगतोःसाधारण्येनयोज्यानि ॥ १६ ॥ १७ ॥

सर्वतःक्वचितोऽजस्रंरत्नवीचिभिरंबुधिः॥ भूरत्नवलयभ्रांत्याप्रेक्ष्यतेसूर्यमार्गगैः॥ ११ ॥ सरंतिरत्नमूर्द्धानश्चलंकानिलपायिनः॥ वानपूराःपर्वतकाःसर्पाइवनतोन्नतैः॥ १२ ॥ भ्रमंतोवीचिशृंगेषुमकरेभाःकरोत्कटैः॥ हरंतिसीकरांभोदामेघानुद्राविताइव॥ १३ ॥ आवर्त्तवलिताकारःसीकरोत्करकीर्णदिक्॥ पूर्णत्वात्तुशिरोऽशक्तोम्रियतेऽत्युत्करःकरी॥ १४ ॥ विविधप्राणिसंपूर्णाःसजलाद्रिनतोन्नताः॥ यथैवांभोधयःसर्वास्तथैवद्वीपभूमयः॥ १५॥ आवर्त्तानात्मनोनन्यानप्यन्यानिवभास्वरान्॥ गृह्यमाणानसद्रूपान्दृश्यमानानपिस्फुटान्॥ १६॥ तरंगतरलानंतर्जडानप्यंबुधिश्चलान्॥ धत्तेब्रह्मजगंतीवसांतानप्यंतवर्जितान्॥ १७॥ यानंतरिंद्रवद्भानुमणीन्धत्तेंबुधिर्बहून्॥ मंथापहृतसर्वस्वोदेवेभ्यःपरिरक्षितान्॥ १८॥ दृश्यमानान्महातेजस्तथापातालताप्यलम्॥ प्रतिबिंबविभंग्यांतरसत्यानिवगोपितान्॥ १९॥ तेषांमध्यादेकमेकंप्रत्यहंपश्चिमार्णवे॥ निक्षेपायक्षिपतियंतेनमन्येदिनंभवेत्॥ २०॥ नानादिग्देशपयसामब्धौसाधुसमागमः॥ यात्रायामिवलोकानांमिथःकलकलान्वितः॥ २१॥ जलेचरावरानूनंसागरार्णवसंगमे॥ अन्योन्यवेष्ठनाद्युद्धंनकदाचनशाम्यति॥ २२॥ ताम्यत्तिमितरंगाग्रनर्त्तनावर्त्तविभ्रमम्॥ वलयन्वायुरायातिवांतसीकरमौक्तिकैः॥ २३॥

मंथनेदेवासुरैरपहृतसर्वस्वोंबुधिस्तस्मिन्कालेदेवेभ्यःपरिरक्षितान्गोपितान्यान्बहून्भानुमणीनंतर्धत्ते ॥ इंद्रवत्यथाइंद्रःअसुरेभ्योगोपयन्मणीनंतर्धत्तेतद्वत् ॥ १८ ॥ तथामहातेजोरूपाननएवपातालतोपिअलंदृश्यमानान्यन्मणीन्प्रतिबिंबविभंग्याअसत्यानिवकृत्वाअंतर्गोपितान्धत्ते ॥ १९ ॥ तेषांमणीनांमध्यात्प्रत्यहमेकंयंमणिपश्चिमार्णवेनिक्षेपायांतरिक्षेक्षिपतितेनतद्दिनंभवेदितिमन्येइत्युत्प्रेक्षा ॥ २० ॥ अब्धिकलकलेहेतुमुत्प्रेक्षमाणआह ॥ नानेति ॥ २१ ॥ युद्धोत्साहवतांमध्येजलेचराएववराः नूनमितिवितर्के ॥ कुतः ॥ यतःसागरार्णवयोःपूर्वापरसमुद्रयोःसंगमेयेषांसदैवान्योन्यवेष्ठनान्नकदाचनयुद्धंशाम्यति ॥ २२ ॥ ताम्यतांग्लायतांतिमीनांमत्स्यभेदानांतरंगाग्रेषुनर्त्तनेयआवर्त्तविभ्रमस्तंवांतैरुद्गीर्णैःसीकरलक्षणैःसीकरसहितैर्वामौक्तिकैःपारितोपिकैर्वलयन्वेष्टयन्प्रभुरिववायुरायातिपश्य ॥ २३ ॥

१ चलकानिलेतिसंधिरार्षः

सरिल्लक्षणानांमुक्तालतानांमध्येमध्येस्थिताअब्दलक्षणामणीश्वरामणिश्रेष्ठाअंबुधेःकंठेसर्वतोदीर्घालंबमानाःपरस्पराभिघातात्खणखणायंतइत्युत्प्रेक्षा ॥ २४ ॥ पुनःकीदृशोवायुः ॥ महेंद्राद्रेर्भांकारिण्यःअरतिकारिणीः ॥ विभक्तिव्यत्ययश्छांदसः ॥ भुवःप्राप्यतत्रारुच्यागुहागेहेपुरत्यर्थंपरावृत्तार्णवाध्वनांसिद्धानांसाध्यानांचदेवयोनिभेदानांरतिश्रमापनोदेनसुसुखावहः ॥ २५ ॥ अपरोमंदरंवर्णयन्दर्शयति ॥ मंदरइति ॥ कंदरेभ्यउद्गीर्णैर्मातरिश्वनोवायोःप्रसरैःखेपुष्पवर्षिणोमेघांस्तनोतिविस्तारयति ॥ प्रस्थारूढान्मेघान्पुष्पैःपूरयतीतियावत् ॥ २६ ॥ २७ ॥ विभिन्नाःअब्दाःअब्धिवीचयश्चयैः ॥ शैत्यमांद्यसौरभ्योपपादकानिविशेषणानि ॥ २८ ॥ २९ ॥ अलकायाःकुबेरपुर्याअलक

सरिन्मुक्तालतामध्यमध्यस्थाब्दमणीश्वराः॥दीर्घाःखणखणायंतेचंचलाःसर्वतोंबुधेः॥२४॥ महेंद्राद्रेर्गुहागेहपरावृत्तार्णवाध्वनाम्॥ भांकारिण्योभुवःसिद्धसाध्यानांसुसुखावहः॥ २५ ॥ मंदरःकंदरोद्गीर्णैःप्रसरैर्मातरिश्वनः ॥ कंपाकुलवनाभोगःपुष्पमेघांस्तनोतिखे ॥ २६ ॥ चूतनीपकदंबाढ्यगंधमादनकंदरान् ॥ विशंतिमेघहरिणास्तडित्तरललोचनाः ॥ २७॥ हिमवत्कंदरोद्गीर्णावल्लीवलयतांडवम् ॥ तन्वानावायवोयांतिविभिन्नाब्दाब्धिवीचयः ॥ २८॥ तातचूतकदंबाग्रपरामर्शसुगंधयः ॥ वलयंत्यब्धिकल्लोलान्गंधमादनवायवः ॥ २९ ॥ जलदान्वलयन्वायुरलकालकतांगतान् ॥ इतआयातिपुष्पाभ्रंरचयन्वनवीथिषु ॥ ३० ॥ कुंदमंदारसंदोहमधुरामोदमंथरान् ॥ तुषारसीकरोन्मिश्रानिवात्रकलयानिलान् ॥ ३१ ॥ नालिकेरलतालास्यलब्धतिक्तसुगंधयः ॥ पतंतिपवनाःपश्यपारसीकपुरीःपुरा ॥ ३२ ॥ धुन्वानाःपुष्पितेशानवनकर्पूरवारिदान् ॥ चालयंतोनिलावांतिकैलासकमलाकरान् ॥ ३३ ॥ करींद्रकुंभनिष्क्रांतमदमंथरमूर्त्तयः ॥ इमेशुकशुकायंतेविंध्यकंदरवायवः ॥ ३४ ॥ शवरीणांशरीरेषुशीर्णपर्णोत्करेगिरौ ॥ नाराचैःपर्णशबरैर्वनालीनगरायते ॥ ३५ ॥ अब्ध्यद्रिसरिदंभोदवनलेखांगिकादिशः ॥ त्वमतापवलैरेताहसंतीवार्करश्मिभिः ॥ ३६ ॥

तांकुंतलतांगतान्प्राप्तान् ॥ ३० ॥ अथास्मिन्गंधमादनेअनिलान्कलयस्पृश ॥ ३१॥ नालिकेरतरूणांमल्लिकादिलतानांचलास्येनक्रमाल्लब्धस्तन्मधतिक्तगंधःसुगंधश्चयैः ॥ पुरापश्य ॥ ३२ ॥ पुष्पितंयदीशानस्यप्रमदवनंतत्रत्यकदलीकर्पूरसुरभीन्वारिदान्धुन्वानाः ॥ ३३॥ शुकशुकायंतेइतिर्वीरणस्तंबोद्भूताव्यक्तध्वन्यनुकरणम् ॥ अथवाविंध्यशुकैःसहनिर्गमनात्तद्वर्णैःशुकायंतेहरितायंते ॥ ३४ ॥ शवरीणांशरीरेषुपरिधानकल्पनयाशीर्णपर्णोत्करेमलयगिरौपर्णपरिधानैःशबरैस्तन्नाराचैश्चपूर्णाअल्पावशेषमृगपक्षिगणामलयवनालीनगरमिवाचरतिनगरायते ॥ ३५ ॥ ३६ ॥

अत्रास्मिन्प्रदेशे उपशैलवनवीथिषु रत्यर्थं विद्याधरैरुपरचिताः पुष्पशय्याः परिवर्णयंतिसूचयंति ॥ कस्माल्लिंगात्किंसूचयंतितदाह ॥ पार्श्वेति ॥ समुद्रात्अलक्तकमुद्रासहितात् पार्श्वद्वयस्थात्परिवृत्तात्सम्यङ्निष्पन्नात्पदाल्लिंगात् पुंसिरतिश्रांतेसतिअधोदेशाद्व्यावृत्तायाः मुग्धवनितायाः उपरिसुरतलक्षणानिपुरुषायितानिपुरुषवदाचरणानिसूचयंतीत्यर्थः ॥ ३७ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेचतुर्दशोत्तरशततमःसर्गः ॥ ११४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ वर्ण्यंतेत्रचतुर्दिक्षुवनानिगिरयोनगाः ॥ नद्यःसमुद्राःपवनपक्षिपामघनादयः ॥ १ ॥ हेउत्तमाशयअत्रास्मिन्गिरौलीलासुविलोलाआसक्तालललनायेषांतथाविधाःकिन्नरगणाउद्दामैर्भावैःसंचारिभावैःरसैःसंभोगशृंगाररसैश्चविस्मृतावासरेहादिनचेष्टालक्षणःकालोयैस्तथाविधाःसंतोविश्रम्यकलाःकाकल्योयस्मिंस्तथाविधंगीतंकलयंतिगायंतिशृण्वंतिच ॥ १ ॥ अत्युन्नताअपिगिर

अत्रोपशैलवनवीथिषुपुष्पशय्याविद्याधरीविरचिताःपरिवर्णयंति ॥ पार्श्वद्वयस्थपरिवृत्तपदात्समुद्राद्व्यावृत्तमुग्धवनितापुरुषायितानि ॥ ३७ ॥ ॥ इतिश्रीवासिष्ठमहारामायणवाल्मीकीयेदे॰मोक्षपायेषुनिर्वाणप्रकरणेउत्तरार्द्धेअवि॰विप॰दिग्दर्शनंनामचतुर्दशोत्तरशततमःसर्गः ॥ ११४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ पार्श्वगाऊचुः ॥ ॥ अत्रोत्तमाशयलतावलयालयेषुलीलाविलोलललनाःकलयंतिगीतम् ॥ उद्दामभावरसविस्मृतवासरेहाविश्रम्यकिंनरगणाःकलकाकलीकम् ॥ १ ॥ एतेहिमाद्रिमलयाचलविंध्यसह्यक्रौंचामहेंद्रमधुमंदरदर्दुराद्याः ॥ दूरस्थितादृशिसिताभ्रपटावहंतिसंशुष्कपर्णलवलांछितलोष्टलीलाम् ॥ २ ॥ अमीदूरालोकव्यवहितमहावर्त्मनिचयाःपुरःप्राकाराणांकुलशिखरिणोबिभ्रतिवपुः ॥ विशंतीरंभोधिंकलयलुलिताभांतिसरितःपटस्यांतःसक्ताःप्रतनुसितसूत्राइवदशाः ॥ ३ ॥ दशाशाःशैलानामुपरिपरितःप्रावृतघनाघनश्यामाकाराःखगकलकलालापलपिताः ॥ लतामुक्तैःपुष्पैर्ललितवनलेखाभुजलताहसंत्यस्तेराजन्भवनवनिताभांतिपुरतः ॥ ४ ॥

योदूराद्दृश्यमानाअल्पवद्भांतीत्याह ॥ एतेइति ॥ एतेहिमाद्रिमलयाद्याःसिताभ्रपटाःशैलादूरस्थिताःसंतोदृशिप्रेक्षकदृष्टौसंशुष्कपर्णलवलांछितानांलोष्टानांलीलांसाम्यंवहंतिपश्य ॥ २ ॥ किंचामीकुलशिखरिणोदूराद्वालोकनमालोकस्तस्मिन्अपारेपरेषांव्यवहिताअंतरालदेशवर्त्मनिचयायेषांतथाविधाःसंतःपरस्परसंलग्नतयापरितोदृश्यमानाः पुरःप्राकाराणांवपुर्बिभ्रति ॥ तथाअंभोधिंविशंतीःप्रवेशत्वरयाचलुलिताःसरितःपटस्यांतःसक्ताःप्रतनुसितसूत्रादशाइवभांति ॥ ३ ॥ हेराजन्परितःशैलानामुपरिप्रावृताघनाम्घायाभिस्ताःघनाइवश्यामाकाराः खगानांकलकलालापाएवलपितानियासांताः तथालताभिर्मुक्तैःपुष्पैरुपलक्षिताः ललिताःशोभमानावनलेखालक्षणाभुजलतायासांतथाविधादशआशादिशस्तेभवनवनिताराज्ञीहसंत्यइवपुरतोभांति ॥ ४ ॥

१ अत्रटीकानुरोधेनविद्याधरोपरचिताइतिपाठोपेक्षितइनिभाति

ताल्यादिभिराकुलानितुंगानिगिरिशृंगाणियस्मिंस्तथाविधम् दूराद्दृप्रवद्भासमानेषुशैलेष्वेकीकृताकृति पवनतरलम् वनंजलनिधेस्तरलैस्तरंगैरभ्याहतंतीरांतलग्नघनशैवलजालकल्पंविभाति ॥ ईषदसमाप्तिद्योतकेनकल्पपासादृश्यस्यगम्यमानत्वाद्गम्यमानोपमा ॥ ५ ॥ शिखरिणःपर्वतास्तल्लक्षणाःपत्त्रिणःपक्षिणःशेरतेस्वपंति ॥ शीङोरुट् ॥ सिंधोःसमुद्रस्यवपुर्विततंविस्तीर्णंऊर्जितंवलवत्भरसहंबहुभारसहिष्णुअहोआश्चर्यमनुपममित्यर्थः ॥ ६ ॥ कश्चिदुत्तरदिशिप्रस्थितंविपश्चितंप्रतिमेरुमूलेसौवर्णान्जंबूनदीतटान्प्रदर्शयन्नाह ॥ एतेइति ॥ हेमभूताःअखिलाग्रामादयोयेपुतथाविधाएतेजंबूनदीतटारविकरैर्व्याप्ताःसंतःअभितःआभांति ॥ ज्वालालीवलितांवरांतरलिहःसंतःअभितोभासोमुंचंति ॥ हेभूमिपइहएवंभूतासर्वाभूःअमरैर्देवैरासेव्याउपभोक्तुंयोग्यास्तिमानुषैर्नोआसेव्येत्यर्थः ॥ ७ ॥ अस्याचलस्यअंबुदाभंकदंववनकंवलंवहंतोभास्करपथानुगताएतेअधित्यकाप्रदेशाआभांति ॥ अतःएपुप्रदेशेपुतववसुधेवइदमपितटमितिबुद्धिरस्तु ॥ सूर्यरोधकानभस्थाघनौघाएतेइतिशंकामास्त्वित्यर्थः ॥ ८ ॥ अपरोदक्षिणदिक्प्र

तालीतमालवकुलाकुलतुंगशृंगमेकीकृताकृतिवनंतरलंविभाति॥ अभ्याहतंजलनिधेस्तरलैस्तरंगैस्तीरांतलग्नघनशैवलजालकल्पम् ॥५॥ इतःस्वपितिकेशवःकुलमितस्तदीयद्विषामितोपिशरणार्थिनःशिखरिपत्त्रिणःशेरते॥ इतोपिवडवानलःसहसमस्तसंवर्त्तकैरहो विततमूर्जितंभरसहंचसिंधोर्वपुः॥६॥ एतेजंबुनदीतटारविकरैराभांतिहेमाखिलग्रामारण्यपुरस्थलीगिरितरुस्थाणवग्रहारोच्चयाः॥ ज्वालालीवलितांवरांतरलिहोमुंचंतिभासोभितःसर्वाभूमिपभूरिहैवममरासेव्यास्तिनोमानुषैः॥ ७॥ एतेकदंबवनकंवलमंबुदाभमा भांतिभास्करपथानुगतावहंतः॥ अस्याचलस्यवसुधेवतटंतवास्तुमासूर्यरोधकनभस्थघनौघशंका॥८॥ एषोसौमलयोलयोग्रलवलीवल्लीलसच्चंदनस्फीतामोदमदाद्रसेनतरवोवक्रेक्रियंतेत्रिभिः॥ सज्वालोद्दहनाक्षसंस्थितकपोलोष्मोदयोत्तांडवेअंगुष्ठांगुलिभिर्यथोष्णककणास्तप्तायथायोपिताम्॥ ९॥ एषोब्धिधौतकलधौततटाधिरूढभोगींद्रभोगपरिवेष्टितचंदनोगः॥ विद्याधरीवदनपंकजदीप्तिपुंजहेमीकृताखिलशिलोमलयाभिधानः॥ १०॥

स्थितायविपश्चितेमलयाद्रिवर्णयन्दर्शयति ॥ एषइति ॥ एषसमीपेदृश्यमानोमलयोसावेवंप्रभावः ॥ यस्यअग्राभिःश्रेष्ठाभिर्लवलीवल्लीभिर्लसतांचंदनानांस्फीतादामोदमदादन्येपितरवोरसेनचंदनीभूतास्त्रिभिरपिदेवैर्मनुष्यैरसुरैश्चवक्रेमुखपद्मेअलयइवतिलकीक्रियंते॥ किंचाऽस्मादामोदमदात्सज्वालऊर्ध्वोज्वलनःअक्षेतृतीयनेत्रेसंस्थितोयस्यतथाविधस्यरुद्रस्यकपोलयोरुष्मोदयोयस्मिंस्तथाविधेउत्कृष्टेतांडवेप्रसक्तास्तप्ताःयथोपपन्नाउष्णककणाःस्वेदबिंदवोयथायोपितांरतिश्रमजाःस्वेदबिंदवःशिशिरतरास्तथाक्रियंतेएवंप्रभावोयमित्यर्थः॥ ९॥अब्धितरंगैर्धौतेषुकलधौतंसुवर्णतन्मयेषुतटेष्वधिरूढाःप्रादुर्भूताभोगींद्राणांभोगैःकायैःपरिवेष्टिताश्चंदनवृक्षायस्मिंस्तथाविधःतथाविद्याधरीणांवदनपंकजदीप्तिपुंजैर्हेमीकृताअन्याअप्यखिलाःशिलायस्यतथाविधएषपुरोवर्तीअगोमलयाभिधानः॥मालक्ष्मीर्लीयतेअस्मिन्नित्यन्वर्थनामेत्यर्थः ॥ ङ्यापोरितिह्रस्वः॥१०

कूजंतःकुंजानांकठोराणांशिलाकटकादिप्रदेशानांगह्वराणांनदीनांकत्काराःस्तालध्वनिभेदास्तद्वंनोयेक्रौंचकस्तंभास्तेषांगीताडंबरेणतच्छ्रवणासक्त्यामूकंनिःशब्दंमौकुलिनां मुकुलनिवासिनांभ्रमराणांकुलंयस्मिंस्तथाविधःक्रौंचाचलनामायंगिरिः ॥ एतस्मिन्गिरौप्रचलतांप्रकृष्टाःबलाकिनोबलाकावंतोनीलमेघाःप्रियायेषांमयूराणांतेषांकूजितै रुद्वेजिताःकुंभीनसाःसर्पजातिभेदाःपुराणांचिरंतनंरोहणंप्रादुर्भावोयेषांतथाविधानांसकोटरजीर्णतरूणांस्तंभेषुमध्यकाष्ठेषुउद्वेल्लंतिअधिरुह्यभोगसंकोचेननिलीयंतइत्यर्थः ॥ ११ ॥ हेराजन्इहास्यक्रौंचस्यतटेकोमलकनकलतारचितेआलयेनिकुंजेकांतिनसहविलसितानांललनानांरतिविलोलैर्वलयैःकृतंरागिश्रवणयोरसायनपानप्रायंविततंसि जितमाकर्णय ॥ १२ ॥ करिणांकरटेभ्योगंडस्थलेभ्योगलितैर्मदजलैर्वलितोमिश्रितइतिहेतोश्चलवीचिषुचंचरीकचयैर्भ्रमरसमूहैश्चर्वितइववारिनिधौकणनिकरोविरौतिरोदि

कूजत्कुंजकठोरगह्वरनदीक्त्कारवत्क्रौंचकस्तंभाडंबरमूकमौकुलिकुलःक्रौंचाचलोयंगिरिः॥ एतस्मिन्प्रबलाकिनांप्रचलतामुद्वेजिताः कूजितैरुद्वेल्लंतिपुराणरोहणतरुस्तंभेषुकुंभीनसाः॥ ११॥ कोमलकनकलतालयविलसितललनाविलोलवलयकृतम् ॥ श्रवणरसायन पानंविततमिहाकर्णयास्यतटे॥ १२॥ करिकरटगलितमदजलवलितश्चलवीचिचंचरीकचयैः॥ चर्वितएषकदर्थितइवकणनिकरोविरौ तिवारिनिधौ॥ १३॥ पश्यामलेंदुरामृतनवनीतशरीरसुंदरीवलितः॥ पितुरुत्संगेकुरुतेजललीलांक्षीरवारिनिधौ॥ १४॥ नृत्यंतिमत्त कलकोकिलकाकलीकाःपश्यामलेमलयसानुनिबालवल्ल्यः ॥ लोलालिजालनयनारुणपत्रपाणिपुष्पामधूत्सवविलासविशेषवत्यः ॥ १५ ॥ वंशानांह्रदिपर्वतेषुजलधौतोयार्थिनीनांतुयेशुक्तीनांहृदयेविशंतिसमयेवर्षांभसांबिंदवः॥ तेमुक्ताफलतांव्रजंतिकरिणांकुं भेषुवान्यद्भवेत्शुद्धौमौक्तिकवत्स्युरुत्तमगुणाएतास्त्रिधाजातयः॥ १६॥

तीत्युत्प्रेक्षा ॥ १३ ॥ अब्धेश्चलंप्रतिबिंबचंद्रंदर्शयन्नुत्प्रेक्षते ॥ पश्येति ॥ हेराजन्अमलेंदुःआमृतंअमृतमथनजंयन्नवनीतंतादृशशरीरस्तादृशशरीराभिर्नक्षत्रसुंदरीभिर्वलितः सन्क्षीरवारिनिधौप्रतिबिंबितःपितुरुत्संगेजललीलांजलक्रीडांकुरुते ॥ पश्येदंकौतुकमित्यर्थः॥ १४ ॥ अपरःकश्चिन्मलयेलतानृत्यंदर्शयति ॥ नृत्यंतीति ॥ लोलालिजाल नयनाअरुणपत्रपाणिपुष्पाणियासांताः ॥ मधूत्सवविलासैःपरागैर्विशेषवत्योविशेषकवत्यः ॥ १५ ॥ कश्चित्त्रीनुत्तमान्मुक्ताकरांस्तेषूत्तमगुणमुक्ताफलोत्पत्तिंचवर्णय ति ॥ वंशानामिति ॥ पर्वतेषुवंशानांवेणुभेदानांहृदिकांडच्छिद्रे तथाजलधौतोयार्थिनीनांशुक्तीनांहृदयेचस्वातिसमयेयेवर्षांभसांबिंदवोविशंतितेमुक्ताफलतांव्रजंति ॥ अ न्यत्तृतीयंतुमुक्ताफलंकरिणांगंधहस्तिनांकुंभेषुभवेत् ॥ एषामुक्तरूपाणांमुक्ताफलानांएतास्त्रिधाप्रसिद्धाजातयःस्थानशुद्धौमौक्तिकस्यौल्यप्रकर्षवद्गुणतोप्युत्तमगुणाभवं तीत्यर्थः ॥ १६ ॥

---

१ विशेषणोभयपदःकर्मधारयः

एवंरत्नानामप्याकरभेदेनोत्पत्तिगुणक्रियावैचित्र्यंचरत्नशास्त्रेप्रसिद्धमित्याह ॥ शैलेइति ॥ तेषांयथायोगंकर्माणिशृणु ॥ ह्लादस्तापशांतिः ॥ शत्रूणामुच्चाटनं मारणं ज्वरःभ
यं भ्रांतिः अंधता खेदः उत्तापनंचेति ॥ रत्नस्वामिनोव्यंवहितविप्रकृष्टार्थप्रकाशोभूगतिर्दूरगमनशक्तिर्भूमौनिमज्ज्यगमनशक्तिर्वानभोगतिःप्रसिद्धाअतीतानागतदर्शनंव्याधि
दुर्भिक्षादिनाशःपरप्रयुक्तविषकृत्यायंत्रादिप्रतिविधानंचेत्यर्थः ॥ चार्थेतथाशब्दः ॥ १७ ॥ अपरःकश्चिद्विदूदयेप्रहर्षप्रवृत्तंनगरेवातायनादिजनघोषंमंदरेश्वभ्रादिघोषंचोप
मेयोपमानभावेनोत्प्रेक्षमाणश्चंद्रस्तवपाठत्वेनोत्प्रेक्षते ॥ वातायनेति ॥ इहास्मिन्देशेपुराणिकर्तॄणिइंदौउदितेसतिवातायनोदरादिलक्षणैराननैर्मंदरोगिरिःश्वभ्राभ्रकंदरदरीवन
वेणूनांरंध्रवर्गेणेवअमृतसमुद्रभूतमिंदुंपठंतिस्तुवंतीत्युत्प्रेक्षा ॥ १८ ॥ हिमाद्रितटेभ्योऽभ्रोत्पतनंपवनकृतश्रृंगहरणत्वेनभूम्युत्थिताकाशपातालोत्तोलनस्तंभत्वेनचोत्प्रेक्षमाणः

शैलेव्यौपुरुषेवनौजलधरेभेकेशिलायांगजेनानाकारधराभवंतिमणयःकर्माणितेषांविभो ॥ ह्लादोच्चाटनमारणज्वरभयभ्रांतिप्रका
शांधताखेदोत्तापनभूनभोगतिदृशोनाशोविधानंतथा ॥ १७ ॥ वातायनोदरगवाक्षकवाटकक्षाद्वाराननैरिहपुराण्युदितेपठंति ॥ श्व
भ्राभ्रकंदरदरीवनवेणुरंध्रवर्गेणमंदरइवामृतसिंधुमिंदुम् ॥ १८ ॥ एतच्छृंगंहरतिपवनःकिंस्विदित्युन्मुखीभिर्दृष्टोत्साहश्चकितचकितं
मुग्धसिद्धांगनाभिः ॥ प्रालेयाद्रेःप्रतितटवनंप्रोत्पतत्यभ्रमूर्ध्वंवज्रस्तंभोगगनसुतलोत्तोलनायेवभूमेः ॥ १९ ॥ गंगातरंगहिमसीकर
शीतलानिविद्याधराध्युषितचारुशिलातलानि ॥ पुष्पाभ्रसंवलितपुष्पितकाननानिराजन्विलोकयमहेंद्रगिरेस्तटानि ॥ २० ॥ देशांतरे
षुविततानिवनांतराणिपुष्पस्थलान्युपवनान्यथपत्तनानि ॥ तीर्थेषुपूतभुवनानिजलानिदृष्ट्वादौर्भाग्यभीतिरपयातिजवानुविद्धा
॥ २१ ॥ श्रृंगाणिपूरितदिगंतरमंडलानिश्वभ्राभ्रकंदरनिकुंजकुलाकुलानि ॥ व्योमोपमान्यपिचवारिधिकुंडलानिदृष्ट्वागलंतिकुरुता
निवृहत्तराणि ॥ २२ ॥ रम्याश्चंदनवीथयोहिमलयेविंध्येमदांधागजाःकैलासेनृपपादजातिकनकंचंद्रंमहेंद्राचले ॥ दिव्याश्चौषधयस्तु
पारशिखरेसर्वत्ररत्नानिवैसंत्यंधाखुवदेषजीर्णसदनेव्यर्थंजनोजीर्यते ॥ २३ ॥

कश्चिदाह ॥ एतदिति ॥ गगनस्यसुतलस्यचगुरुत्वाधिक्यपरीक्षार्थमुत्तोलनायेव ॥ १९ ॥ २० ॥ पुण्यतमदेशवनतीर्थादिदर्शनस्यदौर्भाग्यनिवृत्तिर्महाफलमस्तीत्याह ॥ दे
शांतरेष्विति ॥ जवेनानुविद्धाघटिताद्रुतमपयातीतियावत् ॥ २१ ॥ श्रीशैलादिश्रृंगाणि साधुजनपूरितानिदिगंतराणि तीर्थकूपवाप्यादिश्वभ्राणि हिमवदादीनामभ्रयुक्तानि
कंदराणिचंपकारण्यादीनि निकुंजकुलैराकुलानि व्योमोपमानिनिर्मलानिवारिधिकुंडलानिसेतुबंधादितीर्थानिदृष्ट्वाप्राणिनांकुरुतानिपापानिवृहत्तराणिब्रह्महत्यादीन्यपि
गलंतिनश्यंति ॥२२॥ तत्तदुत्तमवस्तुशालिनांकुलशैलानामदर्शनेनृणांनेत्राणांवैयर्थ्यमेवेत्याशयेनाह ॥ रम्याइति ॥ हेनृप ॥ पादजातिश्रेष्ठंकनकम् ॥ चंद्रंगिरिधातुविशेषः ॥
तुपारशिखरेहिमवति ॥ सर्वत्रान्येष्वेतेपुचरत्नानिसंति ॥ एवंसत्यप्येपभाग्यहीनोजनस्तान्यपश्यन्नंधश्चासावाखुर्मूपकश्चतद्वज्जीर्णेसदनेव्यर्थंजीर्यते ॥ आश्चर्यमित्यर्थः ॥ २३ ॥

सजलदास्तिमिरावृतादिशःकश्चिद्वर्णयति ॥ सोन्नतमिति ॥ मेघतिमिरेणावृताएतादिशोयुगांतेवारिणाविवलितंसोन्नतमंतरिक्षलोकपर्यंतंपूर्णजगदेवएकतटाकभूतमिवप्रस्फुरं ति ॥ तच्चलोलाविद्युतस्तस्मिंस्तटाकेशफरिकाःक्षुद्रमत्स्याइवप्रस्फुरंति ॥ २४ ॥ स्वयंसावश्यायाःसहिमाःभूम्यादौचश्यानाःशोषणेनतनूकृतानीहारधाराद्यैः धाराउद्गिरंती तिधारोद्गारास्तथाविधान्वारिदान्मादयंतोमत्तान्कुर्वाणाः शीतस्पर्शेनआनीताजनानामुद्दामरोमांचचर्चायैस्तथाविधावर्षवाताःप्रोद्यच्छब्दंयथास्यात्तथावांति ॥ अहोइ त्याश्चर्ये ॥ २५ ॥ नीलजलदप्रसरानुसारीअंकुरद्रुमवनांतरचारेणचारुःसौगंध्यादिगुणवान्आसारसीकराणांकदंबकैर्निकुरंबैःसारादपिसारोधीरोवातोविटपिनांपल्लवपुष्पगु च्छान्किरन्सन्वाति ॥ हाइतिशीतार्त्तस्यविरहिणोवाखेदोक्तिः ॥ २६ ॥ स्वर्गाच्युताःजीवाःपूर्वपुण्यवासनालवमिव ॥ २७ ॥ कुवलयेभूमंडलेयानिकुवलयान्युत्पलानितेषां

सोन्नतंजगदिवोरुतटाकंवारिणाविवलितंतिमिरेण ॥ प्रस्फुरंतिचयुगांतइवैताविद्युतःशफरिकाइवलोलाः ॥ २४ ॥ सावश्यायाश्यान नीहारधाराधारोद्गारान्वारिदान्मादयंतः ॥ शीतानीतोद्दामरोमांचचर्चाःप्रोद्यच्छब्दंवांत्यहोवर्षवाताः ॥ २५ ॥ हावातिनीलजलदप्र सरानुसारीवातःकिरन्विटपिपल्लवपुष्पगुच्छान् ॥ धीरोत्करद्रुमवनांतरचारचारुरासारसीकरकदंबकसारसारः ॥ २६ ॥ मारुताःसुरत क्लांतकांतानिःश्वसितैरिमे ॥ वहंतिवर्द्धिगंधंचलवंस्वर्गादिवच्युताः ॥ २७ ॥ कुवलयकुवलयविकचनकुसुमलताविदलनोद्यताम्रदवः ॥ घनपटपाटनपटवोविधुतोपवनावहंत्यमीपवनाः ॥ २८ ॥ संध्याभ्रलेशानुपयंतिवातानभस्तलेकोमलकंपनेन ॥ नृपांगणेपुष्पविचित्र लेखानुवासितेभृत्यवराइवैते ॥ २९ ॥ क्वचित्कुसुमगंधयःकमलवर्गगंधाःक्वचित्क्वचित्कुसुमवर्षिणोललितकेसरासारिणः ॥ क्वचिच्च हिमपांडवोहरितपीतलश्यामलावहंतिशिखरानिलाःसुरतमंदघर्मच्छिदः ॥ ३० ॥ क्वचिद्धुंकारकांकारैरंगारनिकरान्करैः ॥ किंकरैर्विं किरत्यर्कोमूर्खसंसर्गवानिव ॥ ३१ ॥ नररसायनतृप्तिविमुक्तयाप्रमदयामदयापितलज्जया ॥ उपगतेवपुषानविषत्यतेविषविमूर्छ नयेवसमायता ॥ ३२ ॥

विकचनेविकासे तथाकुसुमलतानांविदलनेमुकुलपुटभेदनेचउद्यताइतिमृगंधयः घनलक्षणानांपटानांपाटनेपटवइतिशीताःअमीपवनावहंति ॥ २८ ॥ एतेवातानभस्तलेसंध्या भ्रलेशान्कोमलकंपनेनमंदचालनेनोपयंति ॥ यथापुष्पाणांविचित्रलेखाभिरनुवासितेनृपांगणेभृत्यवराःपुष्पाण्यनुपमृद्नंतःसंचरंतितद्वदित्यर्थः ॥ २९ ॥ कुसुमानामिवगंधोये षां ॥ उपमानपूर्वपदत्वादित् ॥ क्वचित्कमलवर्गाणांगंधइवगंधोयेषाम् ॥ हिमैःपांडवःहरितपीतलश्यामलैर्गिरिधातुभिस्तद्वर्णाःशिखरसंबंधिनोऽनिलाःसुरतेमंदानांश्रांतानांघ र्माबुच्छिदोवहंति ॥ ३० ॥ किंकरैःसेवकवदाज्ञाकारिभिःसूर्यकांतमणिभिर्गुहादौदह्यमानानांप्राणिनांहुंकारैःकांकारैराक्रंदनशब्दैश्चोपलक्षितानंगारनिकरान्करैर्विकिरतिप्र क्षिपति ॥ ३१ ॥ नरःपुरुषस्तल्लक्षणंयत्संगमास्वादरसायनंतद्विषयेतृप्तिविमुक्तयाअतृप्तयाअतएवमदेनयापितलज्जयाअपनीतत्रपयाप्रमदयावपुषाउपगतेआलिंगितेपुरुषेसु रतोपरमायआवश्यककार्यांतरोपवर्णनलक्षणासमायतावंचनोक्तिर्विषविमूर्छनयाप्रयुक्तास्वमृतिरिवनविषह्यतेइत्यर्थः ॥ ३२ ॥

 

तामरसवलनादिप्रयुक्तसर्वगुणसंपन्नाअपिवनावनिवायवोविरहिणीषुसदहनाइवदाहकारिणइत्यर्थः ॥ ३३ ॥ हेराजन्इहपूर्वपयोधितटलक्षणे अवटेनिम्नदेशेकटक्यःशवर जातिप्रसिद्धकांस्यादिकटकास्तदन्वितप्रकोष्ठतटाः विकटानिनिर्गुंडीपत्राण्येवपरिधानपटोयासाम् नवोमदासवोयस्मात्तथाविधस्ययौवनस्यसंश्रयाःशवरस्त्रियःकथंयां तितद्गमनविलासंकलयपश्य ॥ ३४ ॥ इयमंगनानवःसुरतरसोयस्मात्तथाविधआसवसारःसमदसंभोगोयस्मिंस्तथाविधस्यनिशागमस्यक्षयाद्यद्भयंतद्वातुरचित्ततयाद्रुतंसाद्रं भावंकांतंमनागपिनत्यजति ॥ इतःपुरोदृश्यमानाअह्निभिर्वलिताचंदनलतेवसेत्यर्थः ॥ ३५ ॥ ३६ ॥ ज्वलितेवेतिपुनःपुनःसेकेहेतूत्प्रेक्षा ॥ ३७ ॥ अस्याःप्रफुल्लकिंशुकवनरा जेःसकाशात्धूमाइवकृष्णाःकेसराऊर्ध्वंभागायेषांतथाविधाअंबुधराधूमाइवनिर्यांति ॥ एवंकिंशुककुसुमान्यंगाराइवनिर्यांति ॥ खगाश्चभृंगाश्चउपशांतांगारवच्चनिर्यांति ॥ पश्येतिपूर्वोक्तार्थेउपपत्तिः ॥ ३८ ॥ कल्पितज्वलनांवनराजिंदर्शयित्वायथार्थज्वलनांतामुत्तरतोदर्शयति ॥ ईदृश्येवेति ॥ पवनैःखेधूयतेकंप्यतेच ॥ ३९ ॥ हेराजन्क्रौंचा पश्येतिपूर्वोक्तार्थेउपपत्तिः ॥ ३८ ॥

वलिततामरसाम्बुशीकराःशशिकरोत्करवीचिविभेदिनः॥ सदहनाइवतापमयाःपुरोविरहिणीषुवनावनिवायवः॥ ३३॥ इहहिपूर्व पयोधितटावटेविकटपत्रपटाःकटकीतटाः॥ नवमदासवयौवनसंश्रयाःकलययांतिकथंशबरस्त्रियः॥ ३४॥ नवरसासवसारनिशाग मक्षयभयातुरचित्ततयांगना॥ त्यजतिकांतमियंनमनागपिद्रुतमितोवलितेवपुरोहिभिः ॥ ३५ ॥ प्रभाततूर्यमुखरैर्दिवसैरिवतर्जि ता॥ त्वयेवस्फुटितानारीनिलीनादयितोरसि॥ ३६॥ प्रोत्फुल्लकिंशुकैषादक्षिणजलधेस्तटेत्रवनराजी॥ ज्वलितेवजलतरंगैःपौनःपुन्ये नसिच्यतेंबुधिना॥ ३७॥ अस्यानिर्यात्यनिलैर्धूमाइवकृष्णकेसरांबुधराः॥ अंगाराइवकुसुमान्युपशांतांगारवच्चखगभृंगाः॥ ३८ ॥ ईदृश्येवविलोकयवनराजीसत्यवह्निनाज्वलिता॥ गिरिशिरसितूत्तरस्यांदिशिदूरेधूयतेचखेपवनैः ॥ ३९ ॥ क्रौंचाचलस्यभुविमंथरमे घचक्रगंभीरताररवनर्त्तितबर्हिणीयम्॥ पश्योत्थितंतुमुलमाकुलवर्षवातव्याधूतपुष्पफलपल्लवकाननीयम्॥ ४०॥ अस्ताचलेविकट कांचनकूटकोटिसंघट्टनस्फुटितजर्जरचारुसंधिः॥ खर्वैरथःपततिसस्मरवेःसचक्रचीत्कारताररतरकूबररासएषः॥ ४१॥ भुवनभवन प्राकारेद्रौनिशाकरमेरुकंपरिविकसितंभीतंभासामलालिरुपाश्रितः॥ तदिहजगतांवस्तुश्रेष्ठंनकिंचनविद्यतेविधिरुपहतःकुर्यान्नोय त्क्षणेनकलंकितम्॥ ४२॥

चलस्यभुविमंथरस्यमंदगतेर्मेघचक्रस्यगंभीरैस्ताररवैर्नर्त्तितंबर्हिणीयंबर्हिसमूहोयस्मिंस्तथाविधमाकुलवर्षवा तव्याधूतपुष्पफलपल्लवमुत्थितमुन्नतंकाननीयंवनसमूहंपश्य ॥ ४० ॥ सएषरवेःरथःअस्ताचलेविकटोविषमोयःकांचनमयःकूटःशृंगंतत्कोटौसंघट्टनेनस्फुटिताजर्जराश्चारुसं धयोयस्यतथाविधःसन्सचक्रचीत्कारस्तारतरःकूबरस्यरासोध्वनिर्यस्यतथाविधःसन्खर्वेनिम्नदेशंपततिस्मअवतरतिकिलेत्यौन्नत्यातिशयोक्तिः ॥ ४१ ॥ भुवनलक्षणस्यभ वनस्यगृहस्यप्राकारभूतेअद्रौमानसोत्तरपर्वतेउदयगिरिशिखरेनिशाकरश्चंद्रस्तल्लक्षणंमेरुकंमांगलिकंतरुविशेषजंपुष्पंदेशविशेषप्रसिद्धंतच्चमंगलसूचकत्वादमंगलान्मालिन्या द्भीतंपरितोभासाविकसितमभूत् ॥ तथाविधमप्यदःपुष्पममंगलकारिणाविधिनाप्रेरितोमलंकलंकस्तल्लक्षणःअलिरुपस्थितएव ॥ तदेवंसतिइहभुवनेतत्तादृशंजगतांमध्येश्रेष्ठंव स्तुकिंचननविद्यतेयद्वस्तुउपहतोविधिःक्षणेनकलंकितंनकुर्यात् ॥ भुवमस्पृशतोगिरिशिखरेनभःस्थस्यचंद्रस्यापियत्रेदृशीदशातत्रकिंवाच्यमन्यस्येत्यर्थः ॥ ४२ ॥

चंद्रप्रकाशंसर्वतःप्रसृतंत्रेधाउत्प्रेक्षते ॥ त्रिभुवनेति ॥ एषगगनाब्धेश्चांद्रआलोकःप्रदोपकालेनृत्यतस्त्रिभुवनहरस्यत्रैलोक्यसंहारिणोरुद्रस्याट्टहासः ॥ अथवाभुवनलक्षणेम हाभवनेमंकोलःसुधालेपः ॥ अथवाक्षीरलक्षणस्यसलिलस्यावदातःपूरोऽवपूरः ॥ ४३ ॥ संध्याधातुरागैःस्पृष्टेनप्रदोषमयेनमंदरेणमथ्यमानोयश्चंद्रलक्षणःक्षीरार्णवस्तदुल्लसि तैर्दुग्धतरंगभंगप्रायैःप्रसरद्भिःप्रभापटलकैःउपःशिवस्तद्विसृष्टायागंगासरितःप्रसरद्भिःपूरैरिवपरिपूरितांगीःआशादिशःपश्य ॥ ४४ ॥ हेअतुलनिरुपमतालवत्करालैर्वेतालबालैर्व लिताःसहिताएतेगुह्यकौघानिशिनिरस्तशांतिकर्मस्वस्तिवाचनमंगलाचरणानिअतएवोत्पातैर्विकलानिद्रूणेश्वरस्यत्वद्रिपोर्नगराणितत्स्थान्जनान्भोक्तुंपतंतिगच्छंति ॥ ४५ ॥ सद्मनोवाह्यमनावरणमंगणदेशंवधूवदनंनएति वाह्यांगणनभसिअबलाननेंदौनिर्गमनेनाभ्युद्यतेसतितत्सौंदर्यनिरस्तशोभस्येंदोःसिताभ्रशकलस्यचकोविशेषोनकश्चिदितिकामु

त्रिभुवनहराट्टहासोभुवनमहाभवनएषमंकोलः॥ क्षीरसलिलावपूरोगगनाब्धेश्चांद्रआलोकः॥ ४३॥ स्पृष्टप्रदोषमयमंदरमथ्यमान चंद्रार्णवोल्लसितदुग्धतरंगभंगैः ॥ पश्यप्रभापटलकैःपरिपूरितांगीःपूरैरिवोग्रसरितःप्रसरद्भिराशाः॥ ४४ ॥ एतेपतंत्यतुलतालकराल लोलवेतालवालवलितानिशिगुह्यकौघाः॥ द्रूणेश्वरस्यनगराणिनिरस्तशांतिस्वस्तिश्रवादिविकलानिबलेनभोक्तुम्॥४५॥ तावद्विभा तिगगनेपरिपूर्णचंद्रोयावद्वधूवदनमेतिनसद्मबाह्यम्॥ अभ्युद्गतेंगणनभस्यबलाननेंदाविंदोःसिताभ्रशकलस्यचकोविशेषः॥४६॥ रुद्धानिचंद्रांशुनवांबराणिगंगौघनिर्धूतशिलान्यमूनि॥ हिमाततान्युग्रलताजटानितुषारशैलेश्वरमस्तकानि॥४७॥ सएषमंदारवना वतंसोदोलाप्सरोगेयविसारिवातः॥ क्वचिन्मणिद्योतविचित्रचित्रःसंदृश्यतेव्योमनिमंदराद्रिः॥ ४८॥ प्रोन्निद्रनीरंध्रशिलींध्रसांद्रपुष्पा र्घ्यपात्रध्रमहामहीध्राः॥ सांद्राभ्रनिर्ह्रादगभीरकुक्षौसर्क्षांतरिक्षश्रियमुद्वहंति ॥ ४९॥ इतःसकैलासगिरिर्गरीयसाप्रभाप्रवाहेणमिते नयस्यखम्॥ शंभोरिवाभातिसुतस्यकुट्टिमंचंद्रोपिचक्षीरसमुद्रगोयथा ॥५०॥

कोक्तिः ॥ ४६ ॥ चंद्रकरव्याप्तानिहिमवच्छिखराणिकश्चिद्वर्णयति ॥ रुद्धानीति ॥ रुद्धिरचैर्दैर्घ्यम ॥ तुषारशैलेश्वरोहिमवांस्तस्यमस्तकानिशिखराणि ॥४७॥ दोलाःप्रेंखा स्तदारूढानामप्सरसांगीतानिविसारयंतितत्त्वर्द्धोलोवातोयस्य ॥ अत्युच्चत्वाद्व्योमनिसंदृश्यते ॥ ४८ ॥ प्रोन्निद्राणिनीरंध्राणिपुष्पभरितानियानिशिलींध्राणितान्येवसांद्रपुष्पा ण्यर्घ्यपात्राणिधारयंतितथाविधायेमहांतोमहीध्राःपर्वताःसांद्राभ्रनिर्ह्रादैर्गंभीरायांकुक्षौद्रोणीप्रदेशेसर्क्षंऋक्षैर्नक्षत्रैःसहवर्त्तमानंयदंतरिक्षंतच्छ्रियमुद्वहंतिधारयंति ॥ ४९ ॥ इतउत्तरतःसप्रसिद्धःकैलासगिरिर्दृश्यताम ॥ कीदृशः ॥ यस्यगरीयसाप्रभाप्रवाहेणमितेनव्याप्तेनखमाकाशमधोभागेशंभोःसुतस्यस्कंदस्यमुक्ताचूर्णनिर्मितंक्रीडागृहकुट्टिम मिवआभाति ॥ ऊर्ध्वभागेतुचंद्रोपिक्षीरसमुद्रगस्तन्मध्योयथातथाआभाति ॥ ५० ॥

हेराजन्कौतुकीवासवःकुठारैश्छिन्नशाखानांस्थाणूनामग्निनाछिन्नच्छायादिशाखानांमृन्मयानांकुड्यादीनांचपरस्परदूराणामपिदृष्टिसेकेनोभयत्राप्यंकुरोपजननान्मुक्तशिखाइवनिर्मायवातैःपरस्परग्रथनायेवसंधत्तेपश्य ॥ ५१ ॥ तथाएतेकदंबकुलैःकुंदैश्चसुगंधयोवातामकरंदवृष्टेर्हेतोस्तत्पानेनमांसलतयाअलिजालनीलाअभ्रकायाश्चभूत्वासर्वाणिपरिमलानिव्यालोड्यमेघपटललक्षणैःखमिवघनैःपरिमलैर्जनानांघ्राणच्छिद्रमपिलिंपंतिपश्येत्यर्थः ॥ ५२ ॥ वर्षर्त्तौवनस्थल्यादिषुचतुर्पुस्थानेषुस्वनिवासहेतोःशोभातिशयस्यदर्शनादिवनिवसति ॥ ५३ ॥ एषपुरोवर्त्तीग्रामोवातायनद्वाराआगताभिरंतःप्रविष्टाभिरर्थात्कोशातकीलताभिरावृतेपुसौधकोशेषुकोशातकीकुसुमानितत्केसरांश्चाहरद्भिर्वातैःआगुल्फंकीर्णानिकुसुमानियत्रतथाविधान्यजिराण्यंगणानियस्मिंस्तथाविधःसन्वनदेवतानांनगरंविभाति ॥ ५४ ॥ उन्निद्राणांपुष्पितानाममलचंपकद्रुमाणांलता

स्थाणूनांछिन्नशाखानांमृन्मयानांचवासवः॥ संधत्तेपश्यदूराणांवातैर्मुक्तशिखाइव ॥५१॥ एतेकदंबकुलकुंदसुगंधिवातालिपंक्तिमांसलतयामकरंदवृष्टेः ॥ घ्राणंघनैःपरिमलैरलिजालनीलाव्यालोड्यमेघपटलैःखमिवाभ्रकायाः ॥५२॥ उन्निद्रकुड्मलदलासुवनस्थलीपुसच्छायशाद्वलघनेपुचजंगलेपु ॥ ग्रामेषुसंततफलद्रुमसंकुलेपुलक्ष्मीःस्वयंनिवसतीवनिवासहेतोः॥ ५३॥ वातायनागतलतावृतसौधकोशकोशातकीकुसुमकेसरमाहरद्भिः॥ आगुल्फकीर्णमुकुलाजिरएषवातैर्ग्रामोविभातिनगरंवनदेवतानाम्॥ ५४॥ उन्निद्रामलचंपकद्रुमलतादोलाविलोलांगनाःकूजन्निर्झरवारयःपरिसरप्रोन्निद्रतालद्रुमाः ॥ उत्फुल्लोज्ज्वलमंजरीसितलतागेहोल्लसद्बर्हिणःपर्यंतोन्नतसाललंबजलदारम्यागिरिग्रामकाः॥५५॥वातालोलविचित्रपत्रलतिकासंपूर्णनीलस्थलाःकूजल्लावककोककुक्कुटघटागायत्पुलिंदांगनाः ॥ बालाव्याकुलतर्णकादधिमधुक्षीराज्यपानोज्ज्वलाःकस्येवामृतमंडपाविरचितारम्यागिरिग्रामकाः ॥५६॥

इ॰वा॰महारामायणेवा॰दे॰मो॰नि॰उ॰अवि॰विप॰विपश्चिदनुचरकृतपदार्थवर्णनंनामपंचदशोत्तरशततमःसर्गः॥ ११५॥

दोलासुविलोलाःक्रीडंत्यःअंगनायेषु ॥ तथाकूजंतिनिर्झरवारीणियेषु ॥ परिसरेषुपरितःप्रोन्निद्राःपुष्पितास्तालद्रुमायेषु ॥ उत्फुल्लाभिरुज्ज्वलमंजरीभिःसितेष्वलंकृतेपुलतागेहेपुउल्लसंतोनृत्यंतोबर्हिणोमयूरायेषु ॥ पर्यंतेपून्नतेपुसालेषुप्राकारेपुवृक्षेपुवालंबाजलदामेघायेषु सालवृक्षाएवलंबालोलाजलदायेष्वितिवा ॥ ईदृशागिरिग्रामकारम्याः ॥५५॥तथावातैरालोलाभिःपल्लवादिदृशाविचित्रपत्राभिर्लतिकाभिःसंपूर्णानिशाद्वलनीलानिस्थलानियेषाम् ॥ लावकामधुरस्वराःक्षुद्रपक्षिभेदाः ॥गायंत्यःपुलिंदानांम्लेच्छजातिभेदानामंगनायेषु॥ बालैःपालनादव्याकुलास्तर्णकावत्सायेषु॥ तथातएवबालाअव्याकुलास्तर्णकाश्चयथायोगंदधिमधुक्षीराज्यानांपानेनउज्ज्वलाःपुष्टायेषु ॥ ईदृशागिरिग्रामकाःकस्यधातुर्विश्रांतयेरम्याअमृतपूर्णाविरचितामंडपाइवभांतीत्यर्थः ॥ ५६ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनि॰उ॰पंचदशोत्तरशततमःसर्गः ॥ ११५ ॥

संग्रामव्योमविरहिशिखरियामडंबराः ॥ गिरिगह्वरमेघाश्वमूर्खकाकाश्ववर्णिताः ॥ १ ॥ तत्रादौसप्तभिःसंग्रामंवर्णयितुंप्रस्तौति ॥ देवेति ॥ बलानिचतुर्विधानिसेनांगानि ॥१॥ अंगनाअप्सरसः ॥ रथैर्विमानैः ॥ २ ॥ विजिगीषोर्बलवतःशत्रूणांरणेप्रकटेसंकटेप्राप्तेविनाधर्मेणतेषांवधोनशोभतेकिंतुधर्म्यंधर्मादनपेतंयुद्धंविराजतेइत्यर्थः ॥ ३ ॥ तत्कुत स्तत्राह ॥ लोकैरिति ॥ यतएतानीदृशान्येवजीवनस्योत्तमफलानिनतुर्निंदितसंपदादयइत्यर्थः ॥४॥ योधानुरूपमिति॥तद्यथाएकस्मिन्योधेएकएवसःसवाहनेसवाहनःसधनु षिसधनुःसखड्गेसखड्गोनिरायुधेनिरायुधएवबाहुयुद्धंचरन्योहंतीत्यर्थः ॥ ५ ॥ हेराजन्प्रोन्नामाउन्नताहेतिभराएवभूषणानितद्भाजिअस्मिन्शूरपुरुषेएषसंग्रामलक्ष्म्याहस्तस्थि तासिवरलक्षणेननीलसरोजदाम्नाश्यामोहयोत्थघनरेणुकृतोंधकारलक्षणोनिशागमोऽग्रास्यांसंग्रामभूमौकथंक्रमणंकरोति॥किंलक्ष्मीरेनमस्यांनिशिस्वयंवरेवृणीतेउतनेतिकौ

अनुचराऊचुः॥ ॥देवपश्यात्रसंग्रामलग्नसीमांतभूभृताम्॥ कचंतिहेतिसंघाताविसरंतिबलानिच ॥ १ ॥ हतान्हतानभिमुखान्वीरा न्वीरैःसहस्रशः॥ आरोप्यारोप्यखंयांतिपश्यपश्यांगनारथैः॥ २ ॥ विजिगीषोःपुनःप्राप्तेसंकटेप्रकटेरणे॥ धर्म्यंविराजतेयुद्धंयौवनेसुर तंयथा॥ ३ ॥ लोकैरनिंदितालक्ष्मीरारोग्यंश्रीसमन्वितम्॥ धर्म्यंयुद्धंपरार्थेनजीवितस्योत्तमंफलम्॥ ४ ॥ अविरोधेनधर्मस्ययुद्धेसंमु खमागतम्॥ योधानुरूपंयोहंतिशूरःस्वर्ग्यःसनेतरः॥ ५ ॥ हस्तस्थितासिवरनीलसरोजदामश्यामोहयोत्थघनरेणुनिशागमोऽत्र॥ आ लोकयक्रमणमेषकथंकरोतिप्रोन्नामहेतिभरभूषणभाजिलक्ष्म्याः॥ ६ ॥ एतेकचंतिशरशक्तिगदाभुशुंडीशूलासिकुंतपट्टतोमरचक्रपू र्णाः॥ तापाःसतांडवकचप्रचलेचलेब्धौदेहेनवल्गतिभुवीवफणींद्रसंघाः॥७॥ पश्यांबरंबलवदंबुधराब्धिपूर्णंपश्यांबरंतरलतारकतार हारम्॥पश्यांबरंसुघनसक्तमसैकसारंपश्यांबरंविशदचंद्रकरावसिक्तम्॥८॥यत्रानेकसुरासुरास्पदघटातारापदेशंगताऋक्षाणांचय दास्पदंविसरतांसर्वोन्नतानांचयत्॥तस्मिञ्छून्यमितिप्रतीतिरधुनाप्यस्तंगतानांवरेकोन्योमार्जयितुंजनोऽज्ञरचितंलोकापवादंक्षमः ॥ ९ ॥ मेघाटोपैःप्रलयदहनैरद्रिपक्षाभिघातैस्तारापूरैरमरदितिजक्षुब्धसंग्रामसंघैः ॥ व्योमाद्यापिप्रकृतिविकृतिंनामनायात्यसंख्यैरं तःसाराशयगुणवतांलक्ष्यतेनोमहिम्नः॥ १० ॥

तुकंपश्येत्यर्थः ॥ ६ ॥ शरशक्त्याद्यायुधैःपूर्णाएतेयोधाःसतांडवकचप्रायतृणदारुप्रचलेअचलेपर्वतेप्रज्वलितास्तापादवाग्नयइवकचंति ॥ तेषुचशरशक्त्यादिसंघाःअब्धौदेहेनव ल्गतिसतितत्रत्याःफणींद्रसंघाभुविप्रसृताइवकचंति ॥ ७ ॥ इतःप्रभृत्याकाशंचतुर्दिक्षुवर्णयति ॥ पश्येत्यादिना ॥ सुघनंसज्जतइतिसुघनसक्तथाविधेनतमसाएकसारंतुल्य सारंनीलमितियावत् ॥ ८ ॥ यत्रयस्मिन्नंबरेअनेकेषांसुरासुरास्पदानांविमानादीनांघटाताराइत्यपदेशंव्याजंगता ॥ ऋक्षाणामश्विन्यादीनांयदास्पदंयद्विसरतांसर्वोन्नतानांचं द्रसूर्यादीनांचास्पदंतस्मिन्नंबरेसर्वतःपूर्णेपिअज्ञानांशून्यमितिप्रतीतिरधुनापिनास्तंगता ॥ यत्रैवंमहान्समर्थोप्याकाशःअज्ञरचितंशून्यतापवादंमार्जयितुंनक्षमस्तत्रकोन्यःक्षमः स्यादित्यर्थः ॥ ९ ॥ साराशयगुणवतांमहिम्नःअंतोनदृश्यते ॥ १० ॥

हेसाधोगगनत्वमविरतमर्कंनारायणंचकारात्तत्परिजनान्सर्वान्देवान्शशिनंचकारादन्याग्रहांस्तथाइतराणिभासुरतडित्प्रभृतीनितेजांसिचअंकेआंदोलयसितथाप्यंतर्यदां ध्यंतमःश्यामिकालक्षणंतन्नजहासिचित्रमाश्चर्यमित्यर्थः ॥ ११ ॥ हेआकाशत्वंमलिनोसि यत्रशशांकबिंबंत्वयाछिद्रात्मनाकीर्णकज्जलतमःप्रायंसंपन्नंतत्रकलंकच्छलेनम लिनःप्रत्यक्षंकाशसितुदृश्यसेखल्वित्यर्थः ॥ एवंसतिस्वसंगात्संपूर्णशशांकबिंबंयत्असितत्वंननयसितत्तउच्चैर्महच्चित्रम् ॥ वाअथवामलिनसंगाद्दंतर्मलिनएवबहिरपिमालिन्य मापद्यते ॥ अंतरमलंतुकोनाममलिनीकरोतिनकश्चिदित्यर्थः ॥ १२ ॥ अथवासंतुमालिन्यादयःसर्वेपिदोषास्तथापिनिर्विकारताबलेनैवतत्प्रयुक्तसर्वानर्थशून्यतासुखंसुलभ मित्याशयेनाह ॥ पूर्णस्यापीति ॥ बुधस्यतत्त्वविदइव ॥ १३ ॥ हेअंगअसंकुलाशयउदारबुद्धेहेआकाशत्वंकल्पाभ्राणांप्रलयांबुदानांद्रुमाणांवीरुधांलतानांचोन्नतिपश्यंत्य

आंदोलयस्यविरलंगगनार्कमंकेनारायणंचशशिनंचतथेतराणि ॥ तेजांसिभासुरतडित्प्रभृतीनिसाधोचित्रंतथापिनजहासियदांध्य मंतः ॥ ११ ॥ आकाशकाशसितुयत्रशशांकबिंबंत्वत्कीर्णकज्जलतमोमलिनोसितत्त्वम् ॥ संगान्नयन्नयसितत्खलुचित्रमुच्चैःकोनाम वांतरमलंमलिनीकरोति ॥ १२ ॥ पूर्णस्यापिजगद्दोषैःसर्वदैवाविकारिणः ॥ खस्यमन्येबुधस्येवसुखंसर्वार्थशून्यता ॥ १३ ॥ कल्पाभ्रद्रु मवीरुदुन्नतिदृशांकर्त्तासिधर्त्तासिचआकाशेंदुघनार्ककिन्नरमरुत्स्कंधामराणामपि ॥ सर्वंरम्यमसंकुलाशयसमस्वच्छस्वभावस्य तेयत्त्वेतद्दहनत्वमंगतदहोमुख्यायखेदायनः ॥ १४ ॥ आकाशकाशमसिनिर्मलमच्छमुच्चैराधारउन्नततयोत्तममुत्तमानाम् ॥ त्वामे त्यकिंतुविरलंकरकाघनोयंलोकंविमर्दयतितेनपरोसिनीचैः ॥ १५ ॥ आकाशकर्पकषएवनिकर्षणंतेमन्येचिरंसमुचितंनतुकिंचिदन्य त् ॥ शून्योसियज्जलधरर्क्षविमानचंद्रसूर्यानिलान्वहसिभासिनचार्थशून्यः ॥ १६ ॥

भिलषंतीत्युन्नतिदृशस्तेषामवकाशदानेनोन्नतेःकर्त्तासि ॥ इंदुश्चघनाश्चअर्कश्चकिन्नराश्चमरुत्स्कंधाश्चअमराश्चेत्येतेषामपिधर्त्ताआधारश्चासीतिसमस्वच्छस्वभावस्यतेसर्वं कर्मरम्यमेव ॥ यत्त्वग्नेःसूर्यस्यचप्रज्वलनावकाशदानेनदहनत्वंसंतापकत्वंएतत्कर्मनःमुख्यायखेदायनतुसुखायेतिदावाग्न्यातपादिसंतप्तस्योक्तिः ॥ १४ ॥ हेआकाशत्वंनिर्मलम च्छंकाशंभास्वरंउन्नततयाउत्तमानांदेवादीनामुत्तममाधारश्चासिकिंतुविरलंसावकाशंत्वामेत्यआश्रित्यअयंकरकावर्षीघनोलोकंजनंविमर्दयतितेनतद्दोषेणपरःनीचैःअत्यंत मपकृष्टोसीत्यर्थः ॥ १५ ॥ हेआकाशतेतवस्वर्णवत्कर्षकषेकर्षकषणस्थानेनिकषोपलएवनिघर्षणंचिरमुचितम् ॥ नत्वन्यत्किंचित्त्वत्परीक्षास्थानमित्यर्थः ॥ यद्यस्मात्त्वंशू न्योसितथापिजलधरान्ऋक्षाणिविमानानिचंद्रंसूर्यमनिलांश्चवहसिभासिअर्थशून्योनिष्प्रयोजनश्चनचासीतितवसकलकनकगुणशालिनोगुणपरीक्षार्थमपितद्गुणपरीक्षास्था नस्यैवौचित्यादितिभावः ॥ १६ ॥

१ मेघाद्यावरणशून्यम्

हेव्योम ॥ नैड्विसंबुद्ध्योरितिनलोपनिषेधश्छांदसत्वादनित्यत्वाद्वानाश्रितः ॥ त्वंअह्निप्रकाशंभास्वरवर्णमसि दिनांतेसंध्यारागेणरक्तवपुरसि यामासुनामैकदेशेनामपहणात्त्रियामासुकृष्णमसि अथचनित्यंनकिंचिदपिसद्वस्तुवहसीतिहेतोरखिलवस्तुरिक्तमसिइतितवमायांविदुषस्तत्त्वविदोविचेष्टितमपिनकश्चिदपिवेत्तीत्यर्थः॥१७॥ आतताशयःअतिविपुलबुद्धिस्तत्त्ववित् ॥ १८॥ गगनाध्वनिअध्वगविश्रांतिसाधनंतृणंसलिलंचनास्ति ॥ ग्रामस्तुनैवास्ति ॥ पत्तनंनगरंचननामअत्यंतासंभाव्यमित्यर्थः ॥ दलभरैःस्निग्धच्छायस्तरुश्चनास्ति ॥ सनीरम्याप्रपापानीयशालाचनास्ति ॥ तत्तथापिसूर्योगगनाध्वानंदिनेदिनेप्रयाति ॥ सात्विकाःसत्ववंतोविषममन्येषामसाध्यमपियत्प्रारब्धंतन्नत्यजंतिस्वसामर्थ्येनावश्यंसाधयंत्येवेत्यर्थः॥१९॥दिवसःअर्कालोकलक्षणेननवांशुकेनस्वंभूषयति॥ द्यौःरात्रितारौघपुष्पोत्करैःस्वंभूषयति॥ सर्वर्त्तवोवसंतादयःअंभोदतुषारलक्षणैर्वारिकुसुमैःस्वंभूषयंति ॥ एतेसर्वेपिमिलित्वाकालकलात्मनोस्त्रिभुवनेनाथयोःस्वामिनोश्चंद्रसूर्ययोःक्रीडास्थानंव्योमांगणंभूषयंतीत्यर्थः ॥ २० ॥ महाशयस्यस्थितिश्चित्राआश्चर्य

अह्निप्रकाशमसिरक्तवपुर्दिनांतेयामासुकृष्णमथचाखिलवस्तुरिक्तम् ॥ नित्यंनकिंचिदपिसद्वहसीतिमायांनव्योमवेत्तिविदुषोपिविचेष्टितंते॥ १७॥ अकिंचनोपिकार्याणिसाधयत्याततताशयः ॥ अंतःशून्यमपिव्योमसर्वस्योन्नतिकारणम्॥ १८॥ नतृणसलिलंनैवग्रामोननामचपत्तनंनचदलभरस्निग्धच्छायस्तरुर्नचसत्प्रपा ॥ तदपिगगनाध्वानंसूर्यःप्रयातिदिनेदिनेविषममपियत्प्रारब्धंतत्त्यजंतिनसात्विकाः॥१९॥ यामाध्वांतपटेनशीतलरुचिःकर्पूरपूरैःकरैरर्कालोकनवांशुकेनदिवसस्तारौघपुष्पोत्करैः॥ द्यौरंभोदतुषारवारिकुसुमैःसर्वर्त्तवोभूषयंत्येतेकालकलात्मनोस्त्रिभुवनेव्योमांगणंनाथयोः ॥ २० ॥ धूमाभ्ररेणुतिमिरार्कनिशेशसंध्यातारविमानगरुडाद्रिसुरासुराणाम्॥ क्षोभैरपिप्रकृतिमुज्झतिनांतरिक्षंचित्रोत्थितास्थितिरहोनुमहाशयस्य॥२१॥दिग्भित्तिबद्धमिदमूर्ध्वतलांतरिक्षमुर्वीतलंघनपुराचलभूरिभांडम्॥ विद्याधरामरमहोरगजालकारंलोकौघसंसरणसंघपिपीलिकाढ्यम्॥२२॥कालःक्रियाचभुवनंभवनंचिरायनामाधितिष्ठतइवोपवनंविकासि॥ आशंक्यतेप्रतिदिनंननुनष्टमवनाद्यापिनश्यतिचकेयमहोनुमाया॥२३॥ युगलकम्॥

रूपाउत्थिताउन्नतादृश्यतेयतोंतरिक्षंधूमादीनांत्रयोदशानांक्षोभैरपिप्रकृतिपूर्वावस्थांनोज्झति ॥२१॥ अपरःकश्चित्त्रिभुवनमेकजीर्णगृहत्वेनवर्णयति ॥ दिग्भित्तीति ॥ दिशएवभित्तयस्ताभिर्बद्धम् ऊर्ध्वतलंउपरितनसौधभूतमंतरिक्षंयस्य उर्वीभूमिरेवअधस्तलंयस्य घनंपुराण्यचलाश्चभूरिभांडगृहोपस्करोयस्मिन् विद्याधरादयोजालकाराऊर्णनाभिकीटायस्मिन् तथालोकौघाश्चतुर्विधभूतग्रामास्तल्लक्षणाभिःसंघपिपीलिकाभिराढ्यम् ॥ २२ ॥ ईदृशमिदंभुवनंभवनंकालःक्रियाचेतिदंपतीचिरायनामअधितिष्ठतःपालयतः ॥ यथामालाकारदंपतीविकासिउपवनमधितिष्ठतस्तद्वत् ॥ यद्यपिकालक्रियाभ्यांनाधिष्ठीयतेप्रतिदिनंननुनष्टमेवाशंक्यतेतथापिनाद्यापिनश्यतिचकारान्नश्यतिचतथापिप्रवाहेणानुवर्त्ततएव ॥ एवंनश्यदपिननश्यतीतिविरुद्धधर्मकत्वादहोनुमायाइंद्रजालसदृशमेतदित्यर्थः ॥ तथाचश्रुतिः॥ कस्मात्तानिनक्षीयंतेअद्यमानानिसर्वदेति ॥ पुरुषोवाअक्षितिःसहीदमन्नंधियाधियाजनयतेकर्मभिरिति ॥ २३ ॥

मन्येइत्युत्प्रेक्षायाम् ॥ आदिपदाद्वृद्धिमतांसर्ववस्तूनाम् ॥ ननुनिरोधकव्यापारशून्यस्यखस्यनिरोधेअकर्तृतैवतत्कथंतद्विरुद्धाकर्तृतोत्प्रेक्ष्यतेतत्राह ॥ अकर्तुरेवेति ॥ रुंधंति मार्गंगिरयोऽध्वगानामितिवदितिभावः ॥२४॥ कश्चिद्व्योमशून्यतावादिनोयुक्त्याखडयन्निंदति ॥ जगतामिति ॥ नत्रभवंतिलीयंतेउद्भवंतिजायंतेच ॥ २५ ॥ अपरोव्योम्न्येवेश्वरलक्षणानिपश्यंस्तदन्यतावादिनंनिंदति ॥ व्योमन्येवेति ॥ ईश्वरादन्यद्व्योमेतिभिदाउन्मत्ततांगच्छताभ्रमेनवादिनाकृता ॥ यतःसर्वाणिजगंतिव्योमन्येवप्रलीयंतेव्योमतएव प्रोद्भवंतिचकाराद्व्योमन्येवतिष्ठंतीतिजन्माद्यस्ययतइतिशास्त्रसिद्धमीश्वरलक्षणंव्योम्न्येवदृश्यतइतितदेवेश्वरइत्यर्थः ॥ ईश्वराद्यभिधाःकृताइतिपाठेएतांउक्तार्थबोधप्रयुक्तां उन्मत्ततांभ्रांतिंगच्छतावादिनाअन्यताभ्रमेणव्योम्नएवेश्वराद्यभिधाःकृताः ॥ २६ ॥ यदिव्योम्नःसकाशादेवाग्निविस्फुलिंगन्यायेनजगज्जन्मादिमन्यसेतर्हिनजडंव्योमतत् किंतुचिद्व्योमरूपोहमेव मय्येवसकलंजातंमयिसर्वंप्रतिष्ठितंमयिसर्वंलयंयातितद्ब्रह्माद्वयमस्म्यहमितिश्रुतेरहमेवसईश्वरइतितटस्थेश्वरपक्षएवनिरसनार्हइतितत्रकश्चित्तत्त्ववि

खंमन्येपादपादीनांरोधयत्यधिकोन्नतिम् ॥ अकर्तुरेवमहतोमहिम्नोदेतिकर्तृता ॥ २४ ॥ जगतांयत्रलक्षाणिनभवंत्युद्भवंतिच ॥ तच्छून्यमुच्यतेव्योमधिक्पांडित्यमखंडितम् ॥ २५ ॥ व्योमन्येवप्रलीयंतेव्योमतःप्रोद्भवंतिच ॥ गच्छतोन्मत्ततामेतामीश्वरान्यभिदाकृता ॥ २६ ॥ आयांतियांतिनिपतंतितथोत्पतंतिसर्गश्रियःकणघटाइवपावकोत्थाः ॥ यत्रामलंतदहमेकमनादिमध्यंमन्येखमेवनतुकारणमीश्वराख्यम् ॥ २७ ॥ आधारमायततरंत्रिजगन्मणीनामंगेबिभर्त्यमितमंतरशेषवस्तु ॥ व्योमैवचिद्वपुरहंपरमेवमन्येयत्रोदयास्तमयमेतिजगद्भ्रमोयम् ॥ २८ ॥ वनावनौवनचरचारुकामिनामनोहरद्रुमगहनेषुगीयते ॥ इतोगिरेःशिरसिविलोक्यतेमुनावियोगिनापथिवहतारसाकुलम् ॥ २९ ॥ गीतंशृंगतरूच्चपल्लवपुटेनिःश्वस्यसोत्कंठयाकंठाश्लिष्टगिराविंयोगहतयाविद्याधराणांस्त्रिया ॥ यन्नामात्रतदेपनाथपथिकःसोच्छ्वासमाकर्णयन्दोलांदोलनयेवचंचलधियानोयातिनोनूच्यते ॥ ३० ॥ गायत्यद्रिशिरस्तरौदलपुटेनिःश्वस्यविद्याधरीकाकल्यातिलकंवियोगविधुरावाष्पाकुलैपापुरः ॥ नाथोत्संगगृहेगृहीतचिबुकंस्मेरंभवच्चुंबनंस्मृत्वास्वाद्यरसायनंहृतसमानीतामयैताइति ॥ ३१ ॥

दाह ॥ आयांतीति ॥ ईश्वराख्यंतटस्थंनैयायिकाद्यभिमतंनतु ॥ २७ ॥ अमितंयदशेषवस्तुअंगेबिभर्त्तित्रिजगन्मणीनामायततरमाधारंतद्व्योमैवचिद्वपुःपरंब्रह्मैवेत्यहंमन्ये ॥ २८ ॥ कश्चिद्गिरौकौतुकविशेषंदर्शयन्नाह ॥ वनावनाविति ॥ गिरेःशिरसिवनावनौवनचरेणचारुणाकामिनामनोहरद्रुमगहनेपुगीतंगीयते ॥ अधःपथिवहतागच्छताअमुनावियोगिनापुरुषेणतद्गीतंश्रुत्वारसाकुलंयथास्यात्तथासगाताऊर्ध्वंविलोक्यते ॥ २९ ॥ अपरस्तथाविधमपरंकौतुकंदर्शयन्नाह ॥ गीतमित्यादिना ॥ हेनाथगिरिशृंगवनेउच्चोयस्तरुस्तदीयपल्लवपुटप्रायेकुंजेवियोगहतयासोत्कंठयाविद्याधराणांस्त्रियानिःश्वस्यकंठाश्लिष्टगिरायन्नामगीतंतदद्याधस्ताद्गच्छन्नेषपथिकःसोच्छ्वासमाकर्णयन्नूसन्दोलायामांदोलनयेवचंचलयाधियाअयंनोयाति अनुगैरपियाहीतिनोनूच्यतेचित्रमित्यर्थः ॥ ३० ॥ साविद्याधरीवाष्पाकुलासतीअतिलकंविमृष्टविशेषकंयथास्यात्तथागायति ॥ किंगायतितदाह ॥ हेनाथत्वदुत्संगलक्षणेगृहेगृहीतचिबुकंस्मेरमीषद्धास्यसहितंभवच्चुंबनलक्षणंरसायनंस्मृत्वापुनःपुनरास्वाद्यइहमयाएताहतसमानिद्याःसंवत्सरकालानीताइतिगायति ॥ ३१ ॥

किमर्थंतत्रैवसास्थितागायतितत्राह ॥ अस्याइति ॥ सःगीयमानःप्राग्भवतीतिप्राग्भवःसन्युवापतिर्विद्याधरोमुनिनाकेनचिदपराधेननिमित्तेनशापेनवर्षद्वादशकंवृक्षीकृतस्तदे
वगणयंतीसैषाअत्रैवस्थिताउत्कलिताउत्कंठितातमेवस्वदयितंपादपंसंश्रितासतीसागायति ॥ हेराजन्मार्गविहारिणांवदनतोमयाएतन्मार्गेश्रुतम् ॥ ३२ ॥ सचमुनिरस्मद्दर्शनमे
वशापांतमकरोद्तःसएपवृक्षभूतोविद्याधरोऽस्मदवलोकनाद्वशांतशापःसन्विटपितामवमुच्यवालांतांविद्याधरींविटपाकृतिव्याजैस्तैरेववाहुभिःस्फुटपुष्पाण्येवहासत्वेनसंप
न्नानियस्यतथाविधःसन्आलिंग्यकंठेकरोतिपश्य ॥ ३३ ॥ अपरःशिखरिणोवर्णयति ॥ शिखरिणामिति ॥ शिखरिलक्षणानांकरिणांविटपिलक्षणेपुस्फुटरोमसुकुसुमोत्करः
शिखरेपुमेपतुपारोवासंतिकहिमकणस्तत्समानयागगनविच्युततारकलीलयाराजते ॥ ३४ ॥ अपरःकावेरींवर्णयति ॥ मीनेति ॥ मीनावलीनांसरभसप्लुतिभिर्घट्टितास्वंबुवीचि
पुविलोलाभिःक्रीडंतीभिर्विरुवतीभिःकुररीभिःकरालाकुसुमशुक्लपटानिःशंकैःरंकुभिर्मृगभेदैःसंकुलाःकूलानिकच्छाजलप्रायदेशाश्चयस्यास्तथाविधाकावेरीअवभाति ॥ अ

अस्याःप्राग्भवसत्पतिःसमुनिनाशापेनवृक्षीकृतोवर्षद्वादशकंतदेवगणयंत्येषैवसात्रस्थिता॥गायत्युत्कलितातदेवदयितंतंपादपंसंश्रि
तामार्गेमार्गविहारिणांवदनतोराजन्ममैतच्छ्रुतम् ॥ ३२॥ पश्यैपसोस्मदवलोकनशांतशापोविद्याधरोविटपितामवमुच्यवालाम्॥
कंठेकरोतिविटपाकृतिविप्रलंभैस्तैरेववाहुभिरलंस्फुटपुष्पहासः ॥ ३३ ॥ शिखरिणांकरिणांकुसुमोत्करोविटपिपुस्फुटरोमसुराजते॥
गगनविच्युततारकलीलयाशिखरमेपतुपारसमानया ॥ ३४॥ मीनावलीसरभसप्लुतिघट्टितांवुवीचीविलोलविरुवत्कुररीकराला ॥
कावेर्यहोकुसुमशुक्लपटावभातिनिःशंकरंकुकुलसंकुलकूलकच्छा॥ ३५॥ भात्यत्रपश्यरविणाकटकेसुवेलशैलस्यकांचनशिलासक
लामलश्रीः ॥ वेलाबलोलवरुणालयवीचिभंगपर्यस्तवाडवकृशानुकणोपमानम्॥ ३६॥ आसन्नपीनजलदावलितालयानांगेहोप
शल्यपरिफुल्लनवद्रुमाणाम्॥ लक्ष्मीःपलाशपटलावलितांवराणांघोपौकसांसमवलोकयपर्वतेपु॥ ३७॥ उन्निद्रपुष्पपटुपांडुरपुष्पखं
डामंदारभांडविशिखंडिकरंडकच्छाः ॥ ग्रामाःप्रपातजलजालविलासवाद्यावल्गद्गुहागहनगीतजनाजयंति॥ ३८॥

होइत्याश्चर्ये ॥ ३५ ॥ हेराजन्अत्रसुवेलशैलस्यकटकेसकलाकांचनशिलारविणाप्रद्योत्यमानावेलास्ववलोलस्यवरुणालयस्यवीचिभंगैःपर्यस्तस्यवाडवकृशानोर्वडवाग्नेः
कणाएवोपमानंयस्यास्तथाविधाभाति ॥ ३६ ॥ तथापर्वतेषुआसन्नैःपीनैर्जलदैरावलितालयानांगेहोपशल्येपुग्रहसीमांतेपुपरिफुल्लवनद्रुमाणांतथापलाशपटलैरावलितांवरा
णांघोपौकसामाभीरपल्लीगृहाणांलक्ष्मीःसमवलोकय ॥ ३७ ॥ तथाउन्निद्रैःपुष्पैःपटुपांडुराअतिशुभ्राःपुष्पखंडाःपुष्पवाटिकायेपु ॥ तथामंदारवृक्षाएवभांडानीवबहुतरपुष्प
भाजनानियेपुतथाविधाविविधशिखंडिनांनृत्यस्थानत्वात्तत्करंडप्रायाःकच्छाजलप्रायाःशिशिरप्रदेशायेपु ॥ तथाप्रपातेपुऊर्ध्वदेशात्पततोजलजालस्यविलासाएवशिखंडि
नांनृत्येवाद्यानियेपुतथाप्रतिध्वनिभिर्वल्गंत्योगुहायत्रतथाविधेपुगहनेपुगीतानियेपांतथाविधाजनायेपुएवंविधागिरिग्रामाजयंतिस्वर्गमतिशेरते ॥ ३८ ॥

तदेवस्फुटयति ॥ उन्निद्रेति ॥ इहगिरिग्रामेगोकुलेषुउन्निद्राणांसद्योविकसितानांकंदलानांमुकुलानांदलांतरेषुगर्भेषुलीयमानैःकूजद्भिर्मदांधैर्मधुपैर्निरीक्षितैरुन्मदानामुद्दीपितकामानांपामराणामपिगिरिगह्वरिणांनराणांघोषमिथुनानांयातुष्टिर्भवतिसातुष्टिर्नंदनेक्रीडतामप्यमराणांनभवतीतिमन्ये ॥ ३९ ॥ भृंगैरवदोलिताभिर्दोलात्वेनकल्पिताभिर्लताभिराकुलकाननस्यांतर्गिरिगह्वरेषुगायंतीनांपुलिंददयितानामाननेषुदत्तनेत्रंयथास्यात्तथालीलासुशृंगारचेष्टाभिराकुलाःकिराताःमुग्धमृगंशत्रुमिवगतघृणंनिर्दयंकाकिकथंघ्नंति ॥ अहोयेषामन्यत्रदत्तदृष्टीनामन्यमनसांचललक्ष्यवेधनपाटवमीदृशसमयेप्यतिनिर्दयत्वंचेत्यर्थः ॥ अथवाभृंगावदोलितलतासदृशपुलिंदललनानामाननेषुदत्तनेत्रत्वान्मुग्धमृगाणांपुलिंदललनानेत्रसौंदर्यापहारित्वलतापल्लवाशित्वप्रतिसंधानाच्छत्रुमिवमन्यमानादयायोग्यसमयेपिनिर्दयंघ्नंतिकिमित्युत्प्रेक्षा ॥ ४० ॥ किंचनानाविधेभ्यःकुसुमोत्करेभ्योलब्धःशैत्यसौगंध्यपरागादिसारोयेनतथाविधस्यवायोर्वल्लीदलानांचावलनैःशीतलितानिअध्वगानामंगानियैः अंभोभिःसहतद्गुणेनशैत्येनप्रथंतइतिसांभःप्रथास्तथाविधानांवायूनांप्रसरेणतरत्तरंगाजलाशयायेषुतथाविधायामाःसौरभ्यगुणाधिक्येनचंद्रंजयंति ॥ तथाचचंद्रमंडलस्थेभ्योदेवेभ्योपिग्रामवासिनांसुखाधिक्यमितिभावः ॥ ४१ ॥ पादत्रयंव्याख्यातम् ॥ ईदृशागिरिग्रामकाःशशिपुरस्यस्वर्गस्थचंद्रनगरस्ययान्युद्यानानितद्भागाइवसोश्वत्थःसोमसवनइतिश्रुतेश्चांद्रामृतस्राविणाअश्वत्थेनमितांब्रह्मलोकावनिंचजयंतीत्यनुषज्जते ॥४२॥ किंचैतेगिरिग्रामाआसन्नाःपीताविद्युतोयेषांतथाविधानांघनघर्घराणांमेघानांनादैर्नृत्यतांशिखंडिनांनवतांडवेषुविप्रकीर्णैःकलापिकुलानांकोमलैर्बर्हखंडैःप्रोड्डीनाश्चंद्रकलक्षणामणिप्रकरायेषुतथाविधाःसंतोजयंतिप्रागुक्तमित्यर्थः ॥ ४३ ॥ किंचैकपार्श्वस्थंयच्चारुशशिमंडलंतदेवमंडनंयेषाम् एकपार्श्वेचविश्रांतावारिगुरवोवारिदवारणायेषुनथाविधेषुगिरितटेषुस्थितेषुग्रामेषुयाविलासलक्ष्मीःसाविभववत्सुविरिंचेःराज्येष्वपिकुतः दुर्लभेत्यर्थः ॥ ४४ ॥

उन्निद्रकंदलदलांतरलीयमानकूजन्मदांधमधुपोन्मदपामराणाम् ॥ मन्येनसाभवतितुष्टिरिहामराणांयागोकुलेषुगिरिगह्वरिणांनराणाम् ॥ ३९ ॥ भृंगावदोलितलताकुलकाननांतर्गायत्पुलिंददयिताननदत्तनेत्रम् ॥ लीलाकुलागतघृणंगिरिगह्वरेषुकिंघ्नंतिशत्रुमिवमुग्धमृगंकिराताः ॥ ४० ॥ नानाविकासिकुसुमोत्करसारलब्धवल्लीदलावलनशीतलिताध्वगांगाः ॥ सांभःप्रथप्रसरणेनतरत्तरंगाग्रामागिरींद्रगहनेषुजयंतिचंद्रम् ॥ ४१ ॥ कूजनिर्झरवारयःपरिसरप्रोन्निद्रतालद्रुमाहेलोल्लासितपुष्पपल्लववलद्वल्लीवितानांवराः ॥ पर्यंतोन्नतसाललंबिजलदारम्यागिरिग्रामकाश्चंद्राश्वत्थमितावनिंशशिपुरोद्यानस्यभागाइव ॥ ४२ ॥ आसन्नपीतघनघर्घरमेघनादनृत्यच्छिखंडिनवतांडवविप्रकीर्णैः ॥ ग्रामाःकलापिकुलकोमलबर्हखंडैःप्रोड्डीनचंद्रकमणिप्रकराजयंति ॥ ४३ ॥ पार्श्वस्थचारुशशिमंडलमंडनेषुविश्रांतवारिगुरुवारिदवारणेषु ॥ ग्रामेषुयागिरितटेषुविलासलक्ष्मीराज्येषुसाविभववत्सुकुतोविरिंचेः ॥ ४४ ॥

१ सर्वपुस्तकेषुपुरोद्यानस्यभागाइतिमूलपाठस्यदर्शनात्यदुद्यानंतद्भागाइवेतिपाठोपेक्षितः अथवाटीकानुरोधेनशशिपुरस्योद्यानभागाइवेतिमूलपाठःकल्पनीयइतिभाति

स्वामोदनंदनवनांतरमिवसुंदरेपु संतानकस्यकल्पवृक्षभेदस्यस्तवकान्हसंतितच्छीलानिकुंजकायेपु उन्निद्राःपुष्पितामंद्रध्वनिमधुपाकुलाःपारिभद्रानिंवतरुरूपाःसांद्राद्रुमाः येपुतथाविधेपुगिरिगह्वरेप्वहंअभिरमे ॥ ४५ ॥ पुष्पेपुर्मन्मथस्तत्पुरेष्विव ॥ ४६ ॥ स्फाटिकस्तंभानांसंभाराइवरम्याणिधारापातीनिनिर्झरवारीणियेपु ॥ ४७ ॥ रणंति ध्वनंतिनिर्झरपुष्कराणिनिर्झरजलानियस्मिंस्तथाविधेअत्रग्रामगह्वरे ॥ ४८ ॥ हारीतैःपक्षिभेदैर्हारिणोमनोहराहरिताउपवनद्रुमायासु तथावापीप्रमाणेनहंससारसादिरणित लक्षणाअमलाःकाकल्योयासु गिरिगह्वरैर्गोपितासुव्यवहितासुग्रामस्थलीपुएपसर्वजगत्प्रसिद्धःकामोमुदास्वरसेनरमतेइतिमन्ये ॥ ४९ ॥ आसर्गसमाप्तेरितआरभ्यप्रायेणा न्यापदेशावोध्याः ॥ हेश्रीमतांवृत्तमिववृत्तंमहौदार्यंयस्यतथाविध जगत्परिपालनेप्सुत्वान्महाशय आतपहराप्रोच्चैरुन्नतागभीराचआकृतिःशरीरंयस्यतथाविध भोमेघ

स्वामोदनंदनवनांतरसुंदरेपुसंतानकस्तवकहासिनिकुंजकेषु॥ उन्निद्रमंद्रमधुपाकुलपारिभद्रसांद्रद्रुमेष्वभिरमेगिरिगह्वरेपु॥ ४५॥
हरिणीरावरम्येपुहारिहारीतहारिपु॥ गिरिग्रामेपुपुष्पेपुपुरेष्विवरतिर्नृणाम्॥ ४६॥ स्फाटिकस्तंभसंभाररम्यनिर्झरवारिणि ॥ नृत्यंत्ये
ताःशिखंडिन्यःपश्यास्मिन्ग्रामगह्वरे॥ ४७॥ शिखंडिन्योविलासिन्यःपुष्पभारनतालताः॥ अत्रनृत्यंतिकुंजेपुरणन्निर्झरपुष्करे॥ ४८॥
हारीतहारिहरितोपवनद्रुमासुवापीप्रमाणरणितामलकाकलीपु ॥ ग्रामस्थलीपुगिरिगह्वरगोपितासुमन्येमुदैपरमतेस्वरसेनकामः
॥ ४९ ॥ श्रीमद्वृत्तमहाशयातपहरप्रोच्चैर्गभीराकृतेभूभृन्मूर्द्धसुभूपणंभवसिभोभूमेरसैकास्पदम्॥ एतत्तुक्षपयन्मनांसियदिदंमेघत्व
यावपर्वताहर्पादूपरपल्वलस्थलतरुष्वंभोविभागक्रमः॥ ५०॥ नित्यंस्नासिसुतीर्थवारिविसरैरुच्चैःपदस्थोंवुदःशुद्धःसन्विपिनावनौनि
वससिप्रारब्धमौनव्रतः॥ रिक्तस्याप्यतिकांतिरेवभवतःकायाश्रयालक्ष्यतेप्रोत्थायाशनिमातनोषिकिमिदंतुच्छंतवाचेष्टितम्॥ ५१॥
वस्त्वस्थानगतंसर्वंशुभमप्यशुभंभवेत्॥ दुर्मेघंस्थानमासाद्यवारित्वसिततांगतम्॥ ५२॥

त्वंभूभृतांपर्वतानांमूर्द्धसुभूपणंभवसि तथाभूमेःक्षेत्रारामादिसंपत्तिहेतोःरसस्यजलस्यैकास्पदमसि ॥ एवंसद्गुणसहस्रवतापिहर्पाद्दर्पतात्वयायदपात्रभूतेपुऊपरस्थलेपुपल्वल स्थलेपुतत्रत्यकंटकादितरुपुचसुक्षेत्रसाम्येनअंभोविभागक्रमआस्थितएतत्तेसदसत्पात्रविभागापरिज्ञानंतुसतांमनःक्षपयेत्पीडयेत् ॥ यदिभवादृशामहांतोपिसुपात्र[illegible]गोत्कर्पेन मानयंतितर्ह्यन्येकेमानयिष्यंतीतिभावः ॥ ५० ॥ दानप्रारंभादिकालेरुक्षकटुकर्णकठोरजल्पनंतुदातॄणांमहान्दुःसहोदोपइत्याशयेनाह ॥ नित्यमिति ॥ हेमेघत्वंसुतीर्थानांसमु द्रगंगादीनांवारिविसरैर्नित्यंस्नासि ॥ तथाउच्चैःपदस्थःसर्वप्राणिनामंवुददासीत्यंवुदः ॥ किंचशुद्धःसन्विपिनावनौप्रारब्धंमौनंमुनिसंबंधिव्रतंयेनतथाविधोनिवससि ॥ किंचशर दिरिक्तस्यापिभवतःअतिशयिताधवलकांतिरेवकायाश्रयादृश्यते ॥ ईदृशोपित्वंदानार्थमुत्थायअशार्निविद्युदग्निपुरःसरंकटुध्वनिमातनोपि इदंतुच्छंक्षुद्रोचितंतवआचेष्टितंकि म् सर्वथाअनुचितमेवेत्यर्थः ॥ ५१ ॥ तटस्थआह ॥ वस्त्विति ॥ शुभमपिवस्तुअयोग्यस्थानगतंसदशुभंभवेत् ॥ वारितुइतिच्छेदः ॥ ५२ ॥

दीनोदरिद्रः प्रणयीसुहृद्दिवभूमौम्लानसस्यादिःपरितोषितश्च ॥ ५३ ॥ दयौदार्यादिगुणवर्णनप्रसंगात्तद्विपरीतनैर्घृण्यादिशालिनोमूर्खान्कश्चिच्छुगुणविनिमयसंदेहप्रदर्शनेननिंदति ॥ नैर्घृण्यमिति॥ ५४॥ यदिमूर्खोनिंद्यएवतर्हिकथंमहीपास्तंसंगृह्णंतितत्राह ॥ गुणैरिति ॥ श्वेवमूर्खोपिशौर्यादिगुणैःकस्यचित्कुनृपादेरुपादेयोभवति॥ ५५॥ विषयवीथिषुभोगपरंपरासुदत्तमूर्त्तिःप्रसंजितशरीरोविषयलंपटोमूर्खोधत्तूरादिभक्षणेनोन्मत्तान्मदिरादिनामत्तान्प्रमादक्रोधावेशादिनाकूपादिपतनोन्मुखान्पिशाचाद्यावेशेनधावमानांस्तत्त्वज्ञानप्रकर्षेणदेहादिपरिच्छेदविस्मरणादहंब्रह्मेतिसर्वोत्कृष्टप्रमाणप्रतिष्ठानाच्चमानाधिकान्षष्ठादिभूमिकारूढांश्चस्वाभिज्ञतारोपेणयत्तृणंमन्यते ॥ हेतृणलवापतत्त्वमेवविलोकय ॥ अस्यविषयलंपटस्यइच्छासत्त्वमुतवाजडत्वमितितद्रहस्यंविचार्यताम् ॥ यदीच्छासत्त्वंतर्हिसएवश्वभिस्तुल्यः ॥ यदिजडत्वंतर्हितृणलवादपिविषयलांपट्यादिदोषा

अहोनुमेघेनजलंविमुक्तमहोनुतोयेनविपूरिताभूः॥ अहोनुभूमौपरिपोषितश्चजलैर्धनाढ्यैःप्रणयीवदीनः॥५३॥ नैर्घृण्यमस्थैर्यमथाशुचित्वंरथ्याचरत्वंपरिकुत्सितत्वं॥ श्वभ्योगृहीतंकिमुनाममूर्खैर्मूर्खेभ्यएवाथशुनानजाने॥५४॥ गुणैःकतिपयैरेववद्दुदोपोपिकस्यचित्॥ उपादेयोभवत्येवशौर्यसंतोषभक्तिभिः॥५५॥ उन्मत्तमत्तपतनोन्मुखधावमानमानाधिकान्विषयवीथिषुमुक्तमूर्त्तिः[1] ॥ यन्मन्यतेतृणलवाग्रविलोकयेच्छासत्त्वंजडत्वमुतवास्यविचार्यतांतत्॥ ५६॥ कोलाहलःसमानेपितिर्यक्तेक्षुभ्यमानसैः॥ अन्यथासह्यतेसिंहैर्मीलितैरन्यथाश्वभिः॥ ५७॥ नित्याशुचेप्रियजनेभषणैकनिष्ठरथ्यांतरभ्रमणनीतसमस्तकाल॥ कौलेयकाशयसमानतयैवमन्येमूर्खेणकेनचिदहोबतशिक्षितोसि॥ ५८ ॥ नित्यंसर्वंजगदसदृशंकुर्वतोच्चैर्विधात्रादौहित्रेस्मिञ्छुनिसमदृशेनिर्मितंसर्वमेव ॥ वासोऽमेध्यावकरकुहरेभोजनंगूथपूयंसर्वालोकेकुरतिकुरतिःसर्वनिंद्यंशरीरम्॥ ५९॥

धिक्यात्ततोपिस्वयंनीचइतितृणसाम्यमपितस्यदुर्लभतरमितिविचारेफलिष्यतीतिउन्मत्तादिभ्योनीचत्वंतस्यकिंवाच्यमित्यर्थः ॥ ५६ ॥ घनगर्जितादिकोलाहलःसिंहैरक्षुब्धमानसैरनादरान्मीलिताक्षैःसह्यते श्वभिस्तुक्षुब्धमानसैर्भयान्मीलिताक्षैःसह्यतइत्युभयत्राप्यन्यथात्वमितिभावः ॥ ५७ ॥ हेकौलेयकश्वन्आशयश्चित्तवृत्तिस्तेनसमानतयास्वगुणशिक्षायोग्यंत्वांमन्यमानेनकेनचिन्मूर्खेणनित्याशुचित्वादीन्स्वगुणांस्त्वंशिक्षितोसि ॥ मन्येइतिपूर्वोक्तेसंदेहेनिर्णयः ॥ तथाहिसतिशिष्याद्गुरोर्गुणाधिक्यदर्शनमुपपद्यतइतिभावः ॥ ५८ ॥ असदृशंकर्मवैषम्याद्विषमंजगत्कुर्वताविधात्रादौहित्रेदुहितुःसरमाख्यायादेवशुन्याअपत्यभूतेस्मिन्शुनिसमानामनुरूपाणांसर्वधर्माणांदृशेदर्शनायसर्वमेववक्ष्यमाणंसमंनिर्मितम् ॥ किंतत्सर्वंतदाह ॥ वासइति ॥ अमेध्येअवकरस्यस्वनिर्मितेकुहरेगर्त्तकुलाये ॥ गूथंपुरीषंपूयंचभोजनम् ॥ सर्वैर्जनैरालोक्यतइतिसर्वालोकोरथ्यामार्गस्तस्मिन्कुत्सिताचिरयंथिलायारतिर्मैथुनंतद्विषयेकुरतिर्दुरिच्छातथासर्वैर्निंद्यंशरीरंचेतिसर्वमित्यर्थः ॥ ५९ ॥

१ टीकानुरोधेनमूलेदत्तमूर्त्तिरितिमूलानुरोधाट्टीकायांवामुक्तमूर्त्तिरितिवापाठोपेक्षितः

उदीरितवतेपृष्टवतेपुरुषायश्वाहासान्वितंयथास्यात्तथाउवाच ॥ मौर्ख्यमज्ञानम् ॥ अमेध्यमपवित्रंदेहाद्यभिमानम् ॥ आंध्यंविचारनेत्रराहित्यम् ॥ तर्हितवमूर्खापेक्षयाकैर्गुणै राधिक्यंनानाह ॥ शौर्यमिति ॥ धृतिरल्पसंतोषः ॥ एषगुणकदंबश्चिरमन्विष्यापिदर्शनेमूर्खान्नोलभ्यतेअतःसमत्तोऽधमइत्यर्थः ॥ ६० ॥ अवस्करेपुरीषे ॥ वर्चस्केवस्करइतिसु दू ॥ सचेतनंसजीवमपिनकुलमूषकादिदैवाल्लब्ध्वातूष्णींनिरपराधमेवास्ति ॥ निश्चेतनंनिर्बलंचछागवत्सादितूष्णींनिरपराधमेवकृंतंतिदशति ॥ शुनीविवलितेरतेप्रसक्तःसर्वैर्जनैरे त्यलोष्टैस्ताड्यते ॥ एवमलमत्यंतंनेश्वरःअसमर्थःश्वाधात्राखेलनंखेलोद्गुविलासकौतुकंतेनसमन्वितायावदायुःस्थितिर्यस्यतथाविधःकृतइत्यर्थः ॥ श्वेवसमन्वितस्थितिरितिपा ठेनेश्वरःसेवकः ॥ ६१ ॥ क्वचिन्नदीतीरेनिर्माल्याक्षतभक्षणायशिवलिंगस्योर्ध्वंरटंतंकाकंदृष्ट्वाकश्चित्तद्रटनतात्पर्यमुत्प्रेक्षते ॥ लिंगस्येति ॥ आत्मानंस्वंदर्शयतिनिदर्शयति ॥

त्वत्तःकोधमइत्युदीरितवतेश्वोवाचहासान्वितंमत्तोमौर्ख्यममेध्यमांध्यमशुभंयःसेवतेसोधिकः ॥ शौर्यंभक्तिरकृत्रिमाधृतिरितिश्रीमा नगुणोयोस्तिमेमूर्खादेषगुणःप्रयत्ननिचयैरन्विष्यनोलभ्यते ॥ ६० ॥ भुंक्तेऽमेध्यममेध्यएवरमतेनित्यंमहावस्करेतूष्णीमत्तिसचेतनंकृ तरतिनिश्चेतनंकृंतति ॥ सर्वैरेत्यरतेशुनीविवलितेलोष्टैर्जनैस्ताड्यतेधात्राखेलसमन्वितस्थितिरलंलोकेकृतोनेश्वरः ॥ ६१ ॥ लिंगस्योर्ध्व रटत्काकआत्मानंदर्शयत्ययम् ॥ सर्वाधःपातकोत्तुंगगतंपश्यतमामिति ॥ ६२ ॥ काककटुकल्कारवकवलितगुणकर्दमेभ्रमन्सरसि ॥ अंतरयसिमधुपरवंयदतोमेशिरसिफलभूतः ॥ ६३ ॥ कवलयतिनरकनिकरंपरिहरतिमृणालिकांध्वांक्षः ॥ यदतोस्तुमास्मयस्तेस्वभ्य स्तंसर्वदास्वदते ॥ ६४ ॥ विविधवनकुसुमकेसरधवलवपुर्हंसइवदृष्टः ॥ काकःकृमिकुलकवलंक्लिन्नमथोकवलयनज्ञातः ॥ ६५ ॥ तुल्य वर्णच्छदैःकृष्णःसंगतैःकिलकोकिलैः ॥ केनविज्ञायतेकाकःस्वयंयदिनभाषते ॥ ६६ ॥

किमितिनिदर्शयतितदाह ॥ सर्वेषामधःपातकानामधोगतिहेतूनांमध्येयदुत्तुंगंशिवस्वभक्षणायशिवलिंगाश्रयणंतद्गतंमांप्रत्यक्षंकाकभूतंपश्यतेति ॥ ६२ ॥ अपरःसरसिर टंतंभ्रमंतंकाकमपदिश्याह ॥ काककेति ॥ हेकुत्सितकाककाककटुभिःकल्कारवैर्दंभध्वनिभिःकवलिताहंससारसादिगुणायेनतथाविधत्वंसरसिकर्दमेभ्रमन्सन्मधुपानांरवमं तरयसित्वंकटुकरवैर्यदंतर्द्धत्से अतोहेतोर्मेशिरसिवेदनाहेतुत्वात्फलभूतःशल्यभूतोसि ॥ ६३ ॥ सखायंप्रतिकश्चिदाह ॥ कवलयतीति ॥ ध्वांक्षःकाकोनरकनिकरंनानाविधम मेध्यंकवलयतिमृणालिकांप्राप्तामपिपरिहरतीतियत्अतस्तेस्मयोविस्मयोमास्तु ॥ यतःकुत्सितमपिखाद्यंव्यसनितयास्वभ्यस्तंचेत्तदेवसर्वदास्वदते ॥ यथालशुनोपस्कृतंव्यंजनं तद्भुजामित्यर्थः ॥ ६४ ॥ विविधानांवनकुसुमानांकेसरैःकेसरस्थैःपरागैर्धवलवपुःकाकोभ्रांत्याहंसइतिदृष्टः ॥ इत्यर्थेइवशब्दः ॥ अथोअनंतरंक्लिन्नंकृमिकुलकवलंकवलय न्काकोज्ञातः ॥ ६५ ॥ ६६ ॥

अरण्यान्यामहारण्यस्यमृदःस्थाणौमृन्मयजीर्णभित्तिस्तंभेस्थितोयंकाकोयथानिशिसुप्तेजनेचोरश्चैत्यवृक्षमारुह्यदशदिशोनिरीक्षतेतद्वन्निरीक्षतइत्यर्थः ॥ ६७ ॥ सरभसैः सारसैर्विदलतांपुष्कराणांपद्मानांमकरंदैश्चसुंदरेइहसरसिस्फुरतावायुनोद्धूयमानधूलिनाअवकरेणधूसरःस्कंधोयस्यनथाविधःकाकःकथंविहरति ॥ अनुचितमिदमित्यर्थः ॥ ६८ ॥ स्फुटानांविकसितानांपुंडरीकाणांकोशेइष्टवपुषिअभिमतस्वरूपेसरसिस्थितैराजहंसैःसहएषःकपर्दीतिकपाःशिलास्ताभिराहननयोग्यंमुखंयस्यतथाविधःकाकः पिशाचःअस्मिन्कुपल्वलेउपविश्यराजहंसविडंबनायविविधालीलाःकरोतिहाकष्टंहेराजन्त्वंपश्य ॥ ६९ ॥ वंचनापहारादिनास्वलभ्यधनादिभागंन्याय्येनोपायेनसाधुर्माप्रापदितिशंकयातन्निरासायराजसभासुकटुरटंतंखलंप्रत्यन्यापदेशेनकश्चिदाह ॥ हेकाकेति ॥ कर्कशरवलक्षणोयःश्रोतृकर्णविदारणःक्रकचःसएवैकंचिह्नंयस्यतथाविधहे काकस्वभागमकाकोमाभुंक्तामितिशंकयासदाकाकानेवाह्वयंस्त्वंरटसितत्तेतादृक्स्वशंकनमद्यकनुयातम् ॥ त्वमेकःपुत्रोमेजीवत्वित्याशयापिकस्यकोकिलस्यपाकमर्भकंक

अरण्यान्यामृदःस्थाणौस्थितःकाकोनिरीक्षते॥ चैत्याद्दशदिशश्चोरोनिशिसुप्तेजनेयथा॥६७॥ सरभससारसविदलत्पुष्करमकरंदसुंदरेसरसि॥ कथमिहविहरतिकाकःस्फुरदवकरनिकरधूसरस्कंधः ॥ ६८ ॥ हाकष्टमिष्टवपुषिस्फुटपुंडरीककोशेकपाहननयोग्यमुखःपिशाचः॥पश्यैषकाकउपविश्यकुपल्वलेस्मिन्लीलाःकरोतिविविधाःसहराजहंसैः॥ ६९ ॥ हेकाककर्कशरवक्रकचैकचिह्नताहृक्स्वशंकनमपिक्कनुतेद्ययातम्॥ कस्मादनर्थकमिदंपिकपाकमेकपुत्राशयातदपितेह्युपहाससिद्ध्यै ॥ ७० ॥ आलोक्यपंकजवनेसविलासवंतंकाकंकलंकसदृशंभृशमारटंतम् ॥ हाकष्टशब्दशतनष्टविचेष्टितोयोनोरोदितिक्रकचकेनविदार्यतांसः ॥ ७१ ॥ विशरारुशरारुमयेवकमद्गुघनेचपल्वलेचपलाः॥ स्युर्यदिकौशिककाकास्तत्स्यादेषासमन्वितागोष्ठी॥ ७२॥ कोकिलःकाकसंघातैःसमसंवरणाकृतिः॥ गदितैर्व्यक्ततामेतिसभायामिवपंडितः ॥ ७३ ॥ मृदुकुसुमांकुरदलनंसोढुमलंकोकिलस्यकुसुमलता॥ नतुकंकगृध्रमद्गुकबककुक्कुटवायसादीनाम्॥ ७४ ॥

स्मादनर्थकंव्यर्थंपुष्णासि ॥ हियस्माद्धेतोःकटुभाषणैकशीलस्यतद्भ्रांत्याक्रियमाणमपिसुस्वरपिकपोषणंनमनोरथसिद्ध्यैकिंतुउपहाससिद्ध्यैभविष्यतीत्यर्थः ॥ ७० ॥ काकमालोक्यकश्चिदाहेतिशेषः ॥ किमाहतदाह ॥ हाइति॥ हेकाकयःपुरुषस्तवखलानांवाकष्टैःक्रूरैःशब्दशतैःश्रुतैःखेदान्नष्टविचेष्टितःसन्नरोदितिसपुरुषस्त्वयाकटुरवक्रकचकेनविदार्यताम् ॥ अहंतुनतथेतिकिमर्थंरटसीत्यर्थः ॥ ७१ ॥ खलसभायामन्येपिखलाएवयोग्यानैकोपिसाधुरित्यन्यापदेशेनाह ॥ विशरारुविति ॥ विशरारुभिःसंचरद्भिःशरारुभिर्हिंस्रैःप्रचुरैर्बकैर्मद्गुभिर्जलकाकैश्चघनेपल्वलेयदिचपलाःकौशिकाउलूकाःकाकाश्चस्युस्तर्हिएषापल्वलरूपागोष्ठीसभातद्योग्यैःसमन्वितास्यात् ॥ कौशिककाकाइत्यत्रसतोपिविरोधस्याविवक्षितत्वाद्येषांचविरोधःशाश्वतिकइतिद्वंद्वैकवद्भावोनकृतः ॥ शकुनिद्वंद्वैकवद्भावस्तुवैकल्पिकः ॥ ७२ ॥ वर्णतःसमाःसंवरणाःशरीराच्छादकाःपक्षाआकृतिःसंस्थानंचयस्य ॥ गदितैर्व्यक्तवाग्भिः ॥७३॥ साधूनामपराधोपिसोढुंशक्यःखलानांतुसंबंधएवदुःसहइत्याशयेनाह ॥ मृद्विति ॥ वायसादीनांसंस्पर्शमपीतिशेषः॥७४॥

१ समवर्णाननाकृतिरित्यपिक्वचित्पाठःसचटीकाऽसंमतः

खलुसभायांसद्विद्योपन्यासोत्सुकंजनंप्रतिकश्चिदाह ॥ श्रोत्रेति ॥ हेकलकंठकोकिलअत्रदंपत्योः रतिविग्रहेमानादिनिमित्तप्रणयकलहेसंधौसंधानेदूतभूतंकलंमधुरमतएवश्रोत्रोत्सवभूतंतवनादंकःशृणोति ॥ यतःइहपिचुमंदगुल्मकेपुउलूकैःसहसंदेवकलहोयेषांतथाविधैःकाकैःकेंकारघर्घररवैःसर्वेषांश्रुतिःश्रोत्रेंद्रियमस्तमागताबधिरतांगतेतियावत् ॥७५॥ उपवनेरागिणांश्रवणानुरागवतांपुरःसुकोकिलशिशुःकोमलयावाचाकल्याणंमहोत्सवस्तत्कल्पांकथांकृत्वायावदार्जवेनसर्वेषांश्रोतॄणामावर्जनंमनोरंजनंकुरुतेतावद्ध्वांक्षेणोपनिपत्यअयंकोकिलशिशुर्मत्तनयोममपुत्रोमयापुष्टोमयोज्जीवितइत्यादिभिर्द्रांकारोन्यक्कारस्तद्रूपैर्भीमैरारवैःसर्वेश्रोतारोनीरसानिरुत्साहाःकृताः ॥ ७६॥ अयोग्येपुश्रोतृष्वसमयेयोग्यतादिभ्रमेणस्वगुणप्रदर्शनोत्सुकंकंचित्प्रत्यपरआह ॥ किंकिमिति ॥ हेकोकिलत्वंश्रोतॄणांयोग्यतादिकमविचार्यैवस्वगुणप्रख्यापनौत्सुक्यप्रयुक्ताद्धर्षात्तद्भुततरं किंकिंकूजसि॥ आबाधेद्विर्वचनम् ॥ ग्रीवाकोटरतोहर्षाद्यवत्तंसमुल्लासितंकूजनसमुल्लासंपुनरंतःप्रवेशय तेचिरमयंगुणोपन्यासकालएतेचश्रवणयोग्याइतिभ्रमोमाभूत् ॥ इदं

श्रोत्रोत्सवंतवकलंकलकंठकोत्रनादंशृणोतिरतिविग्रहसंधिदूतम् ॥ काकैरुलूककलहैरिहगुल्मकेपुकेंकारघर्घररवैःश्रुतिरागतास्तम् ॥७५॥वाचाकोमलयासुकोकिलशिशुःकल्याणकल्पांकथांसर्वावर्जनमार्जवेनकुरुतेयावत्पुरोरागिणाम्॥तावन्मत्तनयोयमित्यविरतंद्रांकारभीमारवैर्ध्वांक्षेणोपवनेनिपत्यनभसःसर्वेकृतानीरसाः॥७६॥ किंकिंकोकिलकूजसिद्रुततरंहर्षात्समुल्लासितंग्रीवाकोटरतःप्रवेशयपुनर्माभूच्चिरंतेभ्रमः॥उद्दामैःकुसुमैर्निरंतरतरंनेदंमधोर्जृंभितंहेमंतेनकृतास्तुपारनिकरैःशुष्काअमीपादपाः॥ ७७॥ कूजत्कोकिलकोमलंकलरवैर्नित्यंप्रशस्ताकृतेकेनेदंबतशिक्षितोसिवचनंदुःखप्रदंदुर्भगम् ॥ चैत्रेचित्रनवांकुरेविरहिणीवक्तित्वयायात्मनःकस्यायंमधुरित्यतस्तवबतवेत्युक्तंत्वरोच्चैस्तरोः ॥ ७८ ॥ मौनस्पंदविहारवर्णवपुषांसाम्येपिकाकव्रजेकाकःकोकिलएपकांतिरुचिरोदूरात्परिज्ञायते॥ मध्येमूर्खजनस्यपंडितइवस्वाकारभव्यक्रियःसर्वोहिप्रथिमानमेतिसदृशस्वांतश्चमत्कारतः॥ ७९॥

उद्दामैःकुसुमैर्निरंतरतरंमधोर्वसंतस्यजृंभितंनकिंतुहेमंतेनअमीपादपास्तुपारनिकरैःशुष्काःकृताः ॥ तथाचनैतेपुत्वद्गिरांसाफल्यमित्यर्थः ॥ ७७ ॥ चित्रानवाअंकुरायस्मिंस्तथाविधेचैत्रेमासियाविरहिणीसावक्ति ॥ किंवक्ति ॥ नित्यंप्रशस्ताकृतेहेकूजत्कोकिलअयंमधुश्चैत्रोमासःकस्येत्यतःअस्मान्मत्प्रश्नात्त्वयाआत्मनःस्वस्यमधुस्तरोःसकाशात्त्वरोच्चैस्तवतवेतिकलरवैःकोमलंयदुक्तमिदंदुःखप्रदंदुर्भगमनृतंवचनंकेनशिक्षितोसि॥ बतेतिखेदे ॥ नहिविरहदुःखितायाममममधुःकिंतुप्रिययासहकलंगायतस्तवैव एवंचममममेतिवक्तव्येनवतवेत्यनृतोक्तिर्मर्त्पीडनायैवतवेत्यर्थः ॥ ७८ ॥ काकव्रजेकाकसमूहेमौनस्पंदस्यपक्षादिचलनस्यविहारस्यवर्णस्यवपुषोगात्रस्यचसाम्येपिकांतिरुचिरएपकोकिलोमूर्खजनस्यमध्येपंडितइवदूरादेवअकाकःपरिज्ञायतेपरिचीयते ॥ तथाहि ॥ सर्वोपिस्वाकारसूचितभव्यक्रियःपुरुषःसदृशायुक्तास्वांतश्चमत्कारतोनिगूढोपिप्रथिमानंप्रख्यातिंएति ॥ ७९ ॥

हेसखेभ्रातःकोकिलअयंकटुरटत्काकावलीसंकुलःशिशिरस्यकालोवसंतोत्सवोन ॥ संप्रतिकूजितैरनर्घ्योगुणोनायातिअतःकूजितैरलमलम् ॥ क्वचिदुद्दामद्रुमकंदरेविशीर्णैः पर्णपटलैश्छन्नेकोटरेतूष्णीमास्व ॥ ८० ॥ तत्राश्चर्याणिदर्शयति ॥ चित्रमिति ॥ एषकोकिलशिशुःकाकींमातरंसंत्यज्ययद्गतस्तदेकंचित्रम् तदुत्तरंसैषाकाकीमाताएनंकोकिलशिशुंचंचुचरणेनतुदतिइत्यपरंचित्रमित्यहंक्षणंयावदाचिंतयामितावत्सकोकिलशिशुरपिरसादुत्साहान्मातृसदृशंवार्धितुंश्लिष्टउद्युक्तोभूदित्यपरंचित्रम् ॥ तथाहि ॥ स्वभावसुभगोभाग्यवान्जनोयांदिशमायातिसैवदिगस्यमाहात्म्यदासंपद्यतइत्यर्थः ॥ ८१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०षोडशोत्तरशततमःसर्गः ॥ ११६ ॥ ॥छ॥ वर्ण्यंतेत्रसरःपद्मकुमुदोत्पलमंडितम् ॥ पद्मभ्रमरहंसाद्यास्तत्प्रसंगेनवर्णिताः ॥ १ ॥ तत्रादौत्रयोदशभिःसरएवप्राधान्येनवर्णयितुंप्रस्तौति ॥ पश्येति ॥ हेराजन्नद्रहपुरःअद्रिसानौकह्लारपद्मोत्पलजालानांनालेषुमृणालार्थंललद्भिःक्रीडद्भिर्विविचारवैःपक्षिभिर्वीतंव्याप्तम् ॥ अतएवसनक्षत्रपक्षिकंप्रतिबिंबितंखमिवस्थितंसरःपश्य ॥ यःअद्रिसानुः

भ्रातःकोकिलकूजितैरलमलंनायात्यनर्घ्योगुणस्तूष्णीमास्वविशीर्णपर्णपटलच्छन्नेक्वचित्कोटरे ॥ उद्दामद्रुमकंदरेकटुरटत्काकावली संकुलःकालोयंशिशिरस्यसंप्रतिसखेनायंवसंतोत्सवः ॥ ८० ॥ चित्रंमातरमेषकोकिलशिशुःसंत्यज्यकाकींगतःसैषैनंतुदतीतियावदहमप्याचिंतयामिक्षणम् ॥ तावत्सोपितथाशुमातृसदृशंश्लिष्टोरसाद्वर्धितुंयामायातिदिशंस्वभावसुभगःसैवास्यमाहात्म्यदा ॥ ८१ ॥ इ०वा०महारामायणेवा०दे०मो०नि०उ०अवि०विपश्चि०श्वकाककोकिलान्योक्तिवर्णनंनामषोडशोत्तरशततमःसर्गः ॥ ११६ ॥ ॥ सहचराऊचुः ॥ ॥ पश्याद्रिसानाविवबिंबितंखंपुरःसरोमारपुरःसरोयः ॥ कह्लारपद्मोत्पलजालनालललद्विचित्रारवपक्षिवीतम् ॥ १ ॥ विकासितोद्दंडसहस्रपत्रकोशस्थलस्योद्धुरराजहंसम् ॥ पीठद्विरेफद्विजलोकजुष्टंभुवीवगेहंकमलासनस्य ॥ २ ॥ आकीर्णसीकरकरालदिगंतरालेफुल्लोत्पलाब्जपटलोदररेणुगौरम् ॥ आमोदमत्तमधुपद्विजगीतिगीतंयातंवितानकमिवांबरगंवहंतम् ॥ ३ ॥ क्वचित्तरत्तारतरंगभंगंक्वचिद्द्विपद्भूरिविराविभृंगम् ॥ क्वचिद्गभीरामलवारिसुप्तंक्वचित्सरोजोज्ज्वलपुष्पगुप्तम् ॥ ४ ॥

सरःशोभातिशयेनमारस्योद्दीपकत्वात्पुरःसरःप्रधानभृत्यइवास्तीत्यर्थः ॥ १ ॥ तदेवसरोविशिनष्टि ॥ विकासितेत्यादिद्वादशभिः ॥ विकासितपूर्द्दंडेषुसहस्रपत्राणांपद्मभेदानां कोशस्थलेषुस्थिताउद्धुरास्तच्छोभाधुरंधराराजहंसायत्र तथेंद्रनीलपीठस्थानीयैर्द्विरेफैर्द्विजैःसारसक्रौंचादिपक्षिभिर्ब्राह्मणैर्लोकैर्जनैश्चजुष्टंसेवितंभुविकमलासनस्यगेहमिव स्थितम् ॥ २ ॥ आकीर्णैःसीकरैःकरालानिसहिमानिदिगंतरालानियेन ॥ फुल्लानामुत्पलाब्जादीनांपटलस्यसमूहस्योदरस्थैरेणुभिर्गौरम् ॥ आमोदमत्तानांमधुपानांद्विजानां चगीतिभिर्गीतम् ॥ ऊर्ध्वंयातंवितानकमिवांबरगंमेघनीहारादिप्रतिबिंबच्छलेनवहंतंवहत् ॥ पुंस्त्वंछांदसम् ॥ ३ ॥ क्वचित्तरंतस्तारास्तरंगभंगायस्मिन् ॥ क्वचिन्मदोत्कर्षात्परस्परंद्विपंतःअतएवभूरिविराविणोभृंगायत्र ॥ गभीरेणामलवारिणानिश्चलत्वात्सुप्तमिव ॥ सरोजैरुज्ज्वलपुष्पैःकुमुदैश्चगुप्तंशोपितमिवच्छन्नम् ॥ ४ ॥

कणाणुभिः सीकरीभूतैर्मुक्ताप्रायैर्जलैस्तापं टालयति अपसारयतीति तितापटालम् ॥ तीरे पुंसि हे प्रतिबिंबं सिंहांतरशंकया जलपानाप्रगल्भतां किंचिद्वृक्षाग्रादारभ्य जलपर्यंतं प्रलंबिताभिः सुलताभिः प्रतिबिंबदर्शननिरोधेन सुष्ठु टालयतीति तत्तथा ॥ तथा तरंगैर्निर्धूतशिलाः पंकोग्राः कच्छा जलप्रायप्रदेशा यस्य ॥ तथा अनंतैर्मेघैरनंतकच्छं महीतले अवतीर्णमाकाशमिव स्थितम् ॥ ५ ॥ अस्याः निरसनीया मेघा यस्य तथाविधेन वायुना नुन्नं कंपितं यदब्जजातं पद्मसमूहस्तदुत्थरजःप्रभाभिस्तडित्प्रकाशमिव उदरं यस्य ॥ अतएव एकतः पृषद्वरमयो जलबिंदुप्रचुरः अन्यतश्च ध्वांतमयोऽधकारप्रचुर एकदेशो यस्य तथाविधं संध्याकालिकमंबराभोगमाकाशसंस्थानमिव आसमंतात्प्रकाशत इत्याप्रकाशं ईषत्प्रकाशमिति वा ॥ ६ ॥ बिसलतामृणालानि तल्लक्षणानि यानि कवलानि शिशूनां पोषणाय नीडं प्रति नीयमानानि तद्द्वारेण अलसा अंसाः स्कंधा येषां तथाविधैर्हंसैः कालेन एकत्र संचयरूपेण कृतैश्चंद्रबिंबैरिव स्थितैः आवृतांगं सत् वातावकीर्णाः शरदंबुदानां खंडखंडा वहवः खंडा यस्मिंस्तथाविधं व्योमेव केवलसमीरणमपि लसत् किं पुनः सर्वगुणोपपन्नसमीरणमित्यर्थः ॥ ७ ॥ अस्य सरसः आमोदभरादिव मंदैर्मकरंदसंपर्कात्कराालैरार्द्रैर्वातैर्व्याधूतस्य पंकपुटस्य जलसंमिश्रितपंकभागस्य यत्पाटनं पंकस्याधोनयनेन जलाद्विभजनं तद्विषये पाटवेन त्वरया उ

**कणाणुमुक्ताजलतापटालं तीरे पुंसि हे सुलतासुटालम् ॥ तरंगनिर्धूतशिलोग्रकच्छं महीतलाकाशमनंतकच्छम् ॥ ५ ॥ तडित्प्रकाशोदरमस्य मेघनुन्नाब्जजातोत्थरजःप्रभाभिः ॥ पृषद्वरध्वांतमयैकदेशं संध्यांबराभोगमिवाप्रकाशम् ॥ ६ ॥ वातावकीर्णशरदंबुदखंडखंडं व्योमेव केवलसमीरणमावृतांगम् ॥ हंसैर्लसद्बिसलताकवलालसांसैः कालेन संचयकृतैरिव चंद्रबिंबैः ॥ ७ ॥ आमोदमंदमकरंदकरालवातव्याधूतपंकपुटपाटनपाटवेन ॥ उद्यन्महापटपटावयतीव लेखाक्षुभ्यत्खगाश्रिततलतोज्झितपुष्पवर्षम् ॥ ८ ॥ वेल्लन्महाकमलपल्लवतालवृंतसंवीजितं वलितचामरचारुफेनम् ॥ राजायमानमलिकोकिलगीतगीतं सद्वृत्तपंकजलताललितांगनौघम् ॥ ९ ॥ भृंगाग्रभाजनमनोहरहारिगीतं राजीवरेणुरणकीर्णपिशंगतोयम् ॥ डिंडीरपिंडपरिपांडुरपुंडरीकखंडोपमंडिततटोपवनावतंसम् ॥ १० ॥ विविक्तहृद्यांभोजं हृदयाह्लादनं परम् ॥ रसवत्स्वादु भातीदं सरः सत्संगमोपमम् ॥ ११ ॥ विवितेन मरुव्योम्ना भातीदं सौम्य निर्मलम् ॥ शास्त्रार्थपरिणामेन महतामिव मानसम् ॥ १२ ॥**

द्यन्महान्पटपटा इति शब्दो यस्यास्तथाविधा लेखा तरंगपंक्तिः स्वध्वनिः क्षुभ्यत्खगैराश्रिताभिस्तीरलताभिरुज्झितं पुष्पवर्षं पटपटानि पुष्पाणि सरःपटवद्वीवयतीव संतनोतीवेत्यर्थः ॥ क्षुभ्यदित्यादिबहुव्रीह्याश्रयणेन विच्छिन्नं स्वतंत्रं सरोविशेषणं वा ॥ ८ ॥ तदेव सरो राजसाम्येन वर्णयति ॥ वेल्लदिति ॥ वेल्लद्भिश्चलद्भिर्महाकमलपल्लवलक्षणैस्तालवृंतैः संवीजितम् ॥ वलितानि चामराणीव चारुफेना यस्य ॥ अलीनां कोकिलानां च गीतिभिर्गीतम् ॥ सद्वृत्तः चारुवर्तुलः सच्चरितश्च पंकजलतालक्षणो ललितः अंगनौघो यस्य ॥ अतएव राजायमानम् ॥ ९ ॥ भृंगलक्षणानामग्रभाजनानां श्रेष्ठपात्राणां मनोहराणां हारि मनोहरं गीतं यस्मिन् ॥ तथा राजीवरेणूनां पद्मपरागाणां रणेन विमर्देन कीर्णव्याप्तम् ॥ अतएव पिशंगं पीतवर्णं तोयं यस्मिन् ॥ डिंडीरपिंडा इव परिपांडुरैः पुंडरीकखंडैरुपसमीपे मंडितमलंकृतम् ॥ तटवनस्यावतंसं शिरोभूषणं पुष्पजालं येन ॥ १० ॥ एवंविधमिदं सरः सत्संगमोपमं भाति ॥ विशेषणान्युभयत्र योज्यानि ॥ ११ ॥ मरुदेशवन्निर्जलेन व्योम्ना शरदाकाशेनेति यावत् ॥ हे सौम्य ॥ शास्त्रार्थो ब्रह्म तदाकारेण चरमसाक्षात्कारवृत्तिरूपेण परिणामेन ॥ १२ ॥

हेमंतेतर्हिइदंसरःकीदृशंतत्राह॥किंचिदिति॥सर्वतोनीहारावृतत्वात्किंचिल्लक्ष्यम्॥नीहारैःस्ववर्णसाम्यापादनादपगतश्यामम् ॥१३॥ नविद्यतेविकारःपरिणामः॥ आदिपदादारंभसंघातविवर्त्तागृह्यंते ॥ नइतरत्कूटस्थंकिंतुब्रह्ममात्रंतथास्यसरसोंभसितरंगादिअंभोमात्रमित्यर्थः॥१४॥आत्मनास्वेनैवांभसाउह्यमानानाम् ॥ हाइत्याश्चर्ये ॥ छाययेदंब्रह्मण्यपियोज्यम् ॥१५॥ कूपवाप्याद्युपाधिभेदेनांभसितारतम्यमिवनारीपुरुषादिशरीरोत्कर्षात्तदात्मन्यपितारतम्यविभावनमित्याह॥ कूपेति॥अंतरंउत्कर्षापकर्षतारतम्यम् ॥१६ जलेजातिर्जन्मयेषांपद्मोत्पलादीनाम् ॥ लडयोरभेदाज्जडाज्ज्ञातयोनानायोनिभेदाश्चतेषांवंधेनसंवंधेनजीर्णस्यजंतोर्मनसइवास्यसरसःपद्मादीनांतत्तद्देहानांचजर्जरदशांतायालहर्यस्तरंगाभोगोत्साहश्चतद्भ्रमेणाऽतिशयेनसंततानिआवर्त्ततुल्यानिइच्छाद्वेषादिवृत्तीनांवलितानिपरिवर्त्तनानीवासंख्यातानिकमलानिसंकलयितुंकोनामशक्तोनकश्चिदित्यर्थः॥१७॥पद्मानिवर्णयितुंप्रस्तौति ॥ चित्रमित्यादिना॥इतःपरंप्रायेणान्यापदेशाः॥जडसंगमस्यजलसंवंधस्यमूर्खसमागमस्यचविजृंभितंचित्रमाश्चर्यभूतंअहो ॥ तत्कुतः ॥

किंचिल्लक्ष्यमपश्यामंपृषत्परुषमारुतम्॥ हिमाभ्रमिवभातीदंसरःसरससारसम्॥१३॥ यथेदंब्रह्मणोदृश्यमविकारादिनेतरत्॥ तथांभसितरंगादिराजन्पृथगिवस्थितम्॥ १४॥ आत्मनैवोह्यमानानांचक्रावर्त्तविधायिनाम्॥ जडाशयानांविषमाहाकल्लोलपरंपरा॥१५॥ कूपवापीसरोब्धीनांदृश्यतेयादृगंतरम्॥ नारीपुरुषतोयानांविज्ञेयंतादृगंतरम्॥१६॥ जंतोरिवास्यमनसोजलजातिबंधजीर्णस्यजर्जरदशालहरीभ्रमेण॥ आवर्त्तवृत्तिवलितान्यतिसंततानिकोनामसंकलयितुंकमलानिशक्तः॥१७॥ चित्रंविजृंभितमहोजडसंगमस्यपद्मोपियन्निजगुणानगुणानिवैषः॥ अंतःप्रगोपयतिकंठतलेनिवेश्यसर्वस्यदर्शयतिदुर्भगकंटकौघम्॥ १८॥ सच्छिद्रैरदृढैःसूक्ष्मैर्गोपितैर्जाड्यसंयुतैः॥ अनल्पैरपिनिःसारैःपद्मस्येवगुणैरलम्॥ १९॥ महतांकुलपद्मानांगुणसौंदर्यशालिनाम्॥ प्रभावंनास्तिसंख्यातुंवासुकेरपिशक्तता॥ २०॥ हरिवक्षोगतालक्ष्मीरपिशोभार्थमेवयत्॥ बिभर्त्तिकमलंहस्तेकान्याऽऽशंसाधिकाभवेत्॥ २१॥ सितासिताभ्यांरूपाभ्यांकमलोत्पलखंडयोः॥ वैसादृश्यंभवेत्किंतुसमाजडजडैतयोः॥ २२॥ साम्यंनफुल्लविपिनेनसरःसुयातिव्योम्नानतारकयुतेननचेंदुवृंदैः॥ नृत्यद्वधूविहसिताननशोभयैतिफुल्लस्यपंकजवनस्यनवोदिताश्रीः॥ २३॥ यद्यतएपसद्गुणनिधित्वेनप्रसिद्धतमःपद्मो

ऽपिनिजान्सौरभ्यसौंदर्यमकरंदादीन्गुणानगुणान्दोषानिवमुकुलितःसन्कंठतलेनिवेश्यअंतःप्रगोपयति ॥ दुर्भगंकंटकौघंचवहिःसर्वस्यजनस्यदर्शयति॥१८॥ येतुपद्मस्यगुणशब्दवाच्यास्तंतवस्तत्सदृशाःसदोषागुणास्तुसर्वत्रोपेक्ष्याएवेनिप्रसंगादाह ॥ सच्छिद्रैरिति ॥ सच्छिद्रत्वादिदोषदुष्टत्वात्अलंउपादेयतानास्तीत्युपेक्ष्याइत्यर्थः॥१९॥ कुलपद्मानांयशःसौरभेणकुलप्रख्यापकानाम् ॥ वासुकेःशेषस्यापि ॥२०॥ तस्यपद्मस्यसर्वसौंदर्याधिदेवतायालक्ष्म्याअपिशोभासंपादकत्वापेक्षयाअन्याऽऽशंसाप्रशंसासर्वसौंदर्योत्कर्षोक्तिरधिकाकाभवेत् ॥ तत्साम्यंकस्यवाभवेदितिपाठेतुस्पष्टम् ॥२१॥ एतयोःकमलोत्पलखंडयोर्जडनजलेनजडाअचेतनाचंद्रसूर्यद्वेषरूपमौख्यंलक्षणाचवृत्तिःसमाकिंतुसिताऽसिताभ्यांरूपाभ्यामेववैसादृश्यंवैलक्षण्यंभवेदितियोज्यम्॥२२॥ सरःसुफुल्लस्यपंकजवनस्यनवोदिताश्रीःशोभाफुल्लेनमंदारादिविपिनेनसाम्यंनयाति ॥ तारकयुतेनव्योम्नापिसाम्यंनयाति॥एवमिंदुबिंबैरप्येकत्रमिलितैःसाम्यंनयाति ॥ किंतुनृत्यंतीनांवधूनांविहसितयुक्तयाआननशोभयासाम्यमेतिलभतेइत्येतद्विध्यर्थापूर्वोपमाननिराक्रिया॥२३

प्रसंगाद्भृंगान्वर्णयति ॥ येषामिति ॥ येषांभृंगाणांपुष्पलतास्वादैरायामिदीर्घमायुर्गतंतेभृंगाएवसुभगोत्तमाः ॥ हेसुभगेतिपृथक्पदंवा ॥ २४ ॥ चूतस्यचारुचमत्कारंसुगंधिम करंदरसंनवांकुरकषायरसंचचरंतिआस्वादयंतियेभृंगाःकोकिलाश्च ॥ २५ ॥ पद्ममकरंदास्वादिनोभृंगावनांतरासक्तान्भृंगानहसंतीवेत्याह ॥ मत्ताइति ॥ येभृंगाःभ्रमराणांह संतिजन्मेतिशेषःकर्मणःशेषत्वविवक्षावा ॥ २६ ॥ येनभृंगेणपद्मोदरेषुउषितंविहृतंउल्लसितंप्रसुप्तंचसएषभृंगःशिशिरेविरसेषुतरुपुष्पकेषुभावंप्रीतिंकथंकरिष्यति ॥ २७ ॥ मुकुलपदेनैवाफुल्लत्वेलब्धेअफुल्लपदंविकासोन्मुखव्यावृत्त्याशूलसाम्योपपादनार्थम् ॥ २८ ॥ अंगहेभृंगत्वंविविधपुष्पमधूनिआस्वादयन्सन्सकलशैललतागृहेषुनित्यंभ्रम न्नद्यापिकिंनतुष्यसिमधुलंपटत्वाद्दुराशयोसिअद्यापिवनेभ्यःसारंनोपगच्छसिवा ॥ कष्टमितिखेदे ॥ मन्येइतिवितर्के ॥ नहिसारलाभेअपरितोषोभ्रमणंवासंभावयितुमपिश क्यमितिभावः ॥ २९ ॥ कमलकुलेपद्मवनेकवलनंकवलोमकरंदास्वादनंतत्रकोविदहेमधुपत्वंसरःपद्माकरंगच्छ ॥ रूढंमकरंदपुष्टंस्वदेहंबदरदरीषुकंटकक्रकचैर्विदीर्णमाकुरु

येषांपुष्पलतास्वादैरनन्यमनसांगतम् ॥ भृंगाणामायुरायामितएवसुभगोत्तमाः ॥ २४ ॥ चूतचारुचमत्कारंचंचरीकाश्चरंतिये ॥ तएवस चमत्काराइतरेजातिपूरणम् ॥ २५ ॥ मत्तामधुमदामोदैःपुष्करेषुरणंतिये ॥ तुष्टानामितरस्वादैर्भ्रमराणांहसंतिते ॥ २६ ॥ येनोषितंविरुत मुल्लसितंप्रसुप्तंपद्मोदरेषुशशिकोटरकोमलेषु ॥ भृंगःसएषशिशिरेविरसेषुभावंकथंकरिष्यतिकथंतरुपुष्पकेषु ॥ २७ ॥ अफुल्लमल्लिकोद्दा ममुकुलोपरिषट्पदः ॥ हस्तेकालरुद्रेणशूलेप्रोतइवांधकः ॥ २८ ॥ आस्वादयन्विविधपुष्पमधूनिभृंगनित्यंभ्रमन्सकलशैललतागृहेषु ॥ नाद्यापितुष्यसिकिमंगदुराशयोसिमन्येनसारमुपगच्छसिवावनेभ्यः ॥ २९ ॥ कमलकुलकवलकोविदगच्छसरोमधुपमारूढम् ॥ वद रदरीषुविदीर्णदेहंकुरुकंटकक्रकचैः ॥ ३० ॥ अतसीकुसुमेकुवलयदलवलयेविकसितेचतापिच्छे ॥ परभागमेहिमधुनातासुविसदृशी वपंडितःपुरुषः ॥ ३१ ॥ पश्यैपानाभिनलिनीकेसरैःपालिताश्रिया ॥ हंसमालामलावल्लीसामगायनकूजिता ॥ ३२ ॥ दोलाकमलनी लस्थांदृष्ट्वाखेप्रतिबिंबिताम् ॥ हंसोहंसीमनुसरन्मंडलेनेहचेतति ॥ ३३ ॥ माभूत्कस्यचिदेवैषाराजन्व्यसनिताभृशम् ॥ पश्यैतांविवि तांहंसोहंसीमनुसरन्मृतः ॥ ३४ ॥ हेलयाराजहंसेनयत्कृतंकलकूजितम् ॥ नतद्वर्षशतेनापिजानात्याशिक्षितुंबकः ॥ ३५ ॥

॥ ३० ॥ हेमधुपयासुहेमंतशिशिरादिकालकलासुकमलानिनलभसेतास्वपित्वद्वर्णसदृशेअतसीकुसुमेतथाकुवलयदलवलयेतथाविकसितेतापिच्छेतमालेचयथायोगंप्राप्तेन मधुनाआयुषःपरभागंएहियापय ॥ यथापंडितःपुरुषःस्वानुरूपप्रभुसमाजाद्यलाभेविसदृशिप्रभौवसन्नपिविद्वत्प्राप्तयेवसतिनकिरातकुलेतद्वदित्यर्थः ॥ ३१ ॥ तत्रहंसमालां वर्णयन्दर्शयति ॥ पश्येति ॥ हेराजन्सरोनाभिनलिनीनांकेसरैरुपभुक्तैस्तत्समानवर्णरूपयाश्रियाशोभयापालिताहंसमालालक्षणाअमलावल्लीसामगायनमिवगंभीरंकूजितं यस्यास्तथाविधास्तितांपश्येत्यर्थः ॥ गायनमित्यशिल्पात्वाभावश्छांदसः ॥ अथवाभगवन्नाभिनलिनीकेसरैःश्रियालक्ष्म्यापालितायथार्थसामगानमेवकूजितंयस्यास्तथा विधेतिदैवाद्दृष्टप्राप्तहंसमालापरतयाव्याख्येयम ॥ ३२ ॥ इहसरोमंडलेखेहंसीमनुसरन्हंसःप्रतिबिंबितांदोलासदृशेकमलनीडेस्थितांहंसींदृष्ट्वातत्पतनमज्जनशंकयानचेतति मूर्छितोभूदित्यर्थः ॥ ३३ ॥ तादृशींस्त्रीव्यसनितांनिंदति ॥ माभूदिति ॥ अप्यर्थेएवकारः ॥ ३४ ॥ ३५ ॥

आकरोजन्मस्थानम् ॥ आकारःसंस्थानम ॥ अशनमाहारः ॥ आदिपदान्नामवर्णादयोगृह्यंते ॥ इतरहंसस्यराजहंसस्यचात्यंतमंतरंतारतम्यंदूरंविप्रकृष्टम् ॥ यतस्तेमानसेस्वर्णपद्मवनेक्रीडंतिसमुद्रेचनिमज्यमुक्ताःखादंतिसर्वपक्ष्यगम्येऊर्ध्वभागेनभसःसंचरंतिनान्येइतिभावः ॥ राजहंसास्तुतेचंचुचरणैर्लोहितैःसिताः ॥ ३६ ॥ शुक्लेनपक्षेणचंद्रःशुक्लाभ्यांपक्षाभ्यांहंसोव्योम्निस्थितः ॥ कुमुदानामाकरस्यभासकोविकासकश्चंद्रःशोभाढ्येनहंसइतितयोःसाम्यम् ॥ ३७ ॥ उन्नालायानलिन्यस्तन्नाललक्षणैःकदलीस्तंभैःसंकुलेकदलीवनप्रायेपद्मवनेविहरतांहंसानांलक्ष्मींशोभामित्युत्तानोर्थः ॥तात्पर्यंतस्तु॥योगेनऊर्ध्वीकृतनालायाहृदयपद्मलक्षणानलिनीतस्याःप्राणायामाभ्यासाद्विकासेनकदलीवद्यःस्तंभनंस्तंभस्तत्संकुलेप्रागुक्तहृत्पद्मत्रयलक्षणेवनेनिरस्तत्रिविधतापनिरतिशयानंदास्वादनेनसदाविहरतांहंसानांयतीनांजीवन्मुक्तिसुखसाम्राज्यलक्षणांलक्ष्मींसंपदंखगोदेवोपिकएतिप्राप्नोतीत्यर्थः ॥३८॥ इदानींतांसरसींनारीसाम्येनरूपयन्नुत्प्रेक्षते ॥ तरंगेत्यादिना॥तरंगाएववलयायस्याः ॥ लोलैःसीकरोत्करैर्हारिणीहारवती ॥३९॥ भृंगाएवलोलाअलककलतायस्याः ॥४०॥ रसोमनोरथोजलंचनस्यपूर्तिःपूरस्तत्करंधरंपर्वतंप्रतीक्षमाणाप्रतिमुखमीक्षमाणा ॥ हंसकाभ्यांमंजीराभ्यांहंसपोताभ्यांच ॥ ४१ ॥

समानेष्वाकराकारजातिचेष्टाशनादिषु ॥ हंसस्यराजहंसस्यदूरमत्यंतमंतरम् ॥ ३६ ॥ शुक्लपक्षस्थितोव्योम्निकुमुदाकारभासकः ॥ आह्लादयतिचेतांसिहंसश्चंद्रइवोत्थितः ॥३७॥ उन्नालनलिनीनालकदलीस्तंभसंकुले ॥ वनेविहरतांलक्ष्मींहंसानामेतिकःखगः ॥३८॥ तरंगवलयालोलसीकरोत्करहारिणी ॥ कुमुदोत्पलकह्लारपुष्पसंभारसुंदरी ॥ ३९ ॥ भृंगलोलालकलतारणत्सारसनूपरा ॥ वर्त्तुलावर्त्तनाभीकाचलद्वीचिविलोचना ॥४०॥ प्रतीक्षमाणादयितंरसपूरकरंधरम् ॥नारीवसरसीचारुहंसकाभ्यांविराजते ॥ ४१ ॥ हेहंसमद्गुबककाकशरारुसारमात्वंसरस्यविरतंकुरुवासमेकः ॥आपद्यपीहसमशीलवयोवचोभिःश्रेयःफलाभवतिसंगतिरात्मवर्गैः ॥४२॥ पादाक्रांतमहेभमस्तकतटःपद्माकरैकालयःकह्लारोत्पलकुंदचंपकलतासंभोगसौभाग्यवान् ॥ भृंगोप्येषविधेर्वशेनशिशिरेलोष्टंतृणंस्वादयन्शीतिशुष्कवकत्यहोनुविपदादैन्येमनोदीयते ॥ ४३ ॥ पुत्रस्येहदलोदरेद्युतितरत्तारंचिरंसंस्मृतंहंसस्यांसविनुन्ननालगहनेसंचारिणाभोमया ॥ शुक्लासारमिवाब्जिनीविकिरतिस्वंवारिबिंदूत्करंमध्याह्नेशिशिरंविकासिसहसामूर्ध्निस्फुटंदृश्यताम् ॥ ४४ ॥

प्रसंगात्कश्चिदन्यापदेशेनकंचिदत्याह ॥ हेहंसेति ॥ हेहंसत्वंमद्गुर्जलकाकोबकःप्रसिद्धकाकश्चएतद्रूपायेशरारवोहिंस्रास्तत्सारेतत्प्रधानेसरसिएकोवासंमाकुरु॥ यतःइहआपद्यपिसमशीलवयोवचोभिरात्मवर्गैर्हंसैरेवसहसंगतिःश्रेयःफलासुखोदर्काभवतिनान्यैरित्यर्थः ॥४२॥ अन्यःप्रसंगादाह ॥ पादेति ॥ पादैराक्रांतामहेभानांमस्तकतटायेनतथापद्माकरएवैकआलयोयस्यतथाकह्लारादिलतावधूनांसंभोगशृंगारवान्एवंईदृशप्रभावोपिभृंगोविधेर्दैवस्यवशेनशिशिरर्त्तौलोष्टंतृणंचस्वादयन्नास्वादयन्सन्शुष्कोवकइवाचरतिवकति॥सर्वप्रातिपदिकेभ्यआचारेक्विब्वक्तव्यइतिक्विप् ॥अहोइतिसखेदाश्चर्ये ॥ विपदामहद्भिरपिमनोदैन्येदीयते ॥४३॥ भोराजन्हंसस्यांसाभ्यांपक्षाभ्यांविनुन्नेनालगहनेनालवनेप्रविष्टेनमयाद्युतिद्योतमानेपद्मदलोदरेनिविष्टस्यपुत्रस्यहंसपोतस्यतरन्निःसरत्तारमुच्चैःस्वरंस्वपितरंप्रतियद्वचनंतत्सदृशदर्शनोद्बोधकसमवधानात्संस्मृतम् ॥ किंतद्वचनंतदाह॥शुक्लेति ॥ हेनातअब्जिनीशुक्लंमुक्तामयमासारमिवस्वंवारिबिंदूत्करंविकिरति ॥ मूर्ध्निशिरोभागेमध्याह्नकालेपिसहसाविकासिशिशिरंहिमंस्फुटंप्रत्यक्षंदृश्यतामिति॥४४॥

हेराजन्दृहसरसिव्योम्न्याकाशेइंदोरिवचंद्रवत्सौम्येप्रसन्नेवारिणिनिःशब्दकंसर्पतोगच्छतोहंसस्यअंसाभ्यांपक्षाभ्यांहतानियान्यब्जनालानितत्संवलनलक्षणैर्निष्कंपटंकाघातैःपुष्करपुटाद्वाह्यात्हिरण्यगर्भासनपुष्करपुटादिवयेजलबिंदवःअस्योपरिभ्रष्टास्तान्जलचरामत्स्यादयोदृष्टाःसंतोगंगावारिवदाशुपिबंति ॥ ४५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० सप्तदशोत्तरशततमःसर्गः ॥ ११७ ॥ ॥७॥ ॥ बकमद्गुमयूराणांपांथानांचवियोगिनाम ॥ मत्स्यानांचातकानांचचरित्रमिहवर्ण्यते ॥ १ ॥ प्रावृट्प्रावृडितिबकशब्दस्याव्यक्तस्यव्यक्तवर्णैरनुकृत्योक्तिः ॥१॥ अत्राप्यन्यापदेशोक्तयःप्राग्वत् ॥ हेबकत्वंवर्णतोहंसइवाभासि ॥ मद्गुसौहृदादिदोषत्रयंत्यक्त्वाहंसोभवेत्यर्थः ॥ २ ॥ हेचतुरतरमत्स्यवधेविदग्धाःपंडितायेमद्गवःप्रसृताजलचरायस्मिंस्तथाविधंवारिगर्भंप्रविश्यप्रविश्यपुनःपुनःप्रविश्येत्यर्थः ॥ प्राक्गिलनसमयेमत्स्यैःप्रोताश्चंचवोयेषांतथाविधाः

व्योम्नींदोरिवसौम्यवारिणिचिरंनिःशब्दकंसर्पताहंसस्यांसहताब्जनालवलनानिष्कंपटंकक्षतैः ॥ गंगावारिवदत्रपुष्करपुटाद्वाह्यादिवास्योपरिभ्रष्टायेजलबिंदवोजलचरात्दृष्टाःपिबंत्याशुतान् ॥ ४५ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० अवि० विप० पद्मभ्रमरहंसवर्णनंनामसप्तदशोत्तरशततमःसर्गः ॥ ११७ ॥ ॥७॥ ॥ सहचरसहचर्यंक्रमेणोचुः ॥ ॥ निर्गुणस्यबकस्यास्यगुणएकोस्तिदृश्यताम् ॥ यत्प्रावृषंस्मारयतिप्रावृट्प्रावृडितिब्रुवन् ॥ १ ॥ बकहंसइवाभासिसरःस्थोमद्गुसौहृदम् ॥ नृशंसत्वंचवार्णींचत्यक्त्वाहंसोभवस्फुटम् ॥ २ ॥ गंभीरंवारिगर्भंप्रसृतजलचरंयेप्रविश्यप्रविश्यप्राङ्मत्स्याप्रोतचंचश्चतुरतरपरंजग्धवंतोविदग्धाः ॥ तेकेनाप्यद्यदिष्ट्यामृततिमिगमिताःकालयुक्तेमहिम्नानाक्रामंतिक्रमस्याःसुहरमपिपुरःपंगवोमद्गवोमी ॥ ३ ॥ एवंविहन्यतेलोकःस्वार्थेनेतिप्रदर्शयन् ॥ मद्गुर्मद्गुरुतांयातइत्येवंस्तौतिदुर्जनः ॥ ४ ॥ उत्कंधरोविततनिर्मलचारुपक्षोहंसोयमत्रनभसीतिजनैःप्रतीतः ॥ गृह्णातिपल्वलजलाच्छफरींयदासौज्ञातस्तदाखलुबकोयमितीहलोकैः ॥ ५ ॥ अतिबहुकालविलोलानवलोक्यबकांस्तपोदंभान् ॥ अत्रैवातिमिरस्यांस्तटवनिताविस्मिताधूर्त्तान् ॥ ६ ॥

संतोमत्स्यान्जग्धवंतोभक्षितवंतस्तेऽमीमद्गवोदिष्ट्यादैववशात्केनापिमहिम्नामृतैस्तिमिभिर्मत्स्यजातिभेदैर्गलरुजंगमिताःसंतःक्षुधातिशयकालयुक्तेआक्रमणेतरेक्रमेणपंक्तिबंधेनस्थिताःसंतोपिपुरस्तीरप्रदेशागतंसुहरमपिमत्स्यंपंगवःसंतोनाक्रामंति ॥ आश्चर्यमित्यर्थः ॥ ३ ॥ दुर्जनैर्लोकाहिंसनेनस्वार्थसंपादनंमद्गुभ्यःशिक्षितमितिभंग्यंतरेणाह ॥ एवमिति ॥ एवंमद्गुवदेवस्वार्थेनवांछितेनलोकोविहन्यतेहंतुंयुज्यतेइतिइममर्थंप्रदर्शयन्मद्गुर्ममगुरुर्मद्गुरुस्तद्भावंप्राप्तइतिएवंदुर्जनोमद्गुंस्तौतिप्रशंसति ॥ ४ ॥ अत्रनभसिउत्कंधरऊर्ध्वीकृतकंठोविततौनिर्मलौचारूपक्षौयस्यतथाविधोयंपुरोवर्त्तीहंसएवेतिप्राग्जनैःप्रतीतोनिश्चितोबकोयदाअसौइहभूमौपल्वलजलाच्छफरींगृह्णातितदाबकोयमितिलोकैर्ज्ञातः ॥ ५ ॥ पल्वलादौमत्स्यार्थमतिबहुकालंविलोलान्अत्रैवसरसितपोदंभानबकान्विलोक्यज्ञातधूर्त्तचरित्राकाचित्तटवनितातथैवाऽन्यत्राऽतिबहुकालंविषयलांपट्येनविलोलानत्रैवतपोदंभान्आतिमिरस्थान्तिमिरोदयपर्यंतंप्रतीक्षमाणान्धूर्त्तान्विलोक्यविस्मिताभूदित्यर्थः ॥ ६ ॥

पांथस्त्रीपद्महारिणीःपश्यंतंपांथंप्रत्याह ॥ हेकांतअत्रास्मिन्जलेहिमंशीतंहेलयंतिनगणयंतितथाविधाएताग्रामीणवध्वः ॥ हीतिपृथक्पदम् ॥ महिलाएवमहेलाइतिवा ॥ सितपद्मानपहरंति त्वंताअनुगंतुमिच्छसि तेनअहंतेवल्लभाप्रियानइतिहेतोरहंव्रजामीति ॥ ७ ॥ एवंवादिनींकुपितांतांकांतामनुनेतुमेषपथिकःपथिकुसुमलताकुहरेकेलितीरवनेयत्नपरःप्रार्थयते ॥ हेनरनायकत्वमवलोकयेतिद्वयोरन्वयः ॥ ८ ॥ इममेवपथिकंमिथुनचरित्रंप्रागल्भ्यात्कथयंतींवारांगनांराज्ञेदर्शयति ॥ इतीति ॥ ९ ॥ शरारूणांहिंस्राणांनिषादादीनाम् ॥ वृद्धेःसंकरोमेलनंप्रीतिरितियावत् ॥ १० ॥ कीटोत्रपतंगः ॥ किटिकिटीतिरौतिकिटिकिटायते ॥ डाजंतादिवार्थेनिष्ठात्करोत्यर्थेक्यङ् ॥ स्फिटिकिटायतेइतिपाठेस्फेटयतिविमोचयतिपक्षाविति स्फिटिचंचग्रेकिटायतेकेटतीतिकिटःकंपमानःसइवाचरति ॥ पुराणस्यप्राक्संचितस्यदौर्भाग्यस्यपापस्यउन्नतेऊर्ध्वभागेउच्छ्रितापताकेव ॥ ११ ॥ पल्वलतीरतरौप्रोल्लसन्सवकोयावद्दैतिकूजतितावद्वंबुकलिलेईषज्जलार्द्रेपल्वलगोष्पदेयावद्धूलात् यावदितिसाकल्ये ॥ सर्वप्राणेनेत्यर्थः ॥ प्रियवक्षसि

अत्रजलेहिमहेलाःपश्यैताअपहरंतिसितपद्मान् ॥ इच्छसिताअनुगंतुंनाहंतेवल्लभाव्रजामीति ॥ ७ ॥ कुपितांतामनुनेतुंयत्नपरःपांथएष पथिकांताम् ॥ अवलोकयनरनायककुसुमलताकुहरकेलितीरवने ॥ ८ ॥ इतिहावभावविलसितविवलनकोपार्धदृष्टिहसितानि ॥ कुर्वाणावरवनिताकथयतितेदृश्यतांराजन् ॥ ९ ॥ बकमद्गुशरारूणांनित्यमेकौकसामपि ॥ संकरोस्तिमिथोवृद्धेर्नमूर्खविदुषामिव ॥ १० ॥ चंच्वग्रेखंजरीटस्यकीटःकिटिकिटायते ॥ दौर्भाग्यस्यपुराणस्यपताकेवोच्छ्रितोन्नते ॥ ११ ॥ तारंतीरतरौसरौतितरलोयावद्बकःप्रोल्लसंस्तावत्पल्वलगोष्पदेंवुकलिलेयावद्धूलाद्दहकम् ॥ मज्जंत्याप्रियवक्षसीवनिपुणंत्रातंशफर्याभयाद्गुद्रंगेनमहापदीहहिम्रतेर्नान्यद्भवेत्सौख्यदम् ॥ १२ ॥ बकाजगरमद्गूनांहृदियाप्राणिनांधृतिः ॥ अचर्वितनिगीर्णानांमन्येनिद्रोपमैवसा ॥ १३ ॥ आसन्नमद्गुवकगृध्रविडालसर्पदृष्ट्याभयंभवतियत्सलिलाशयानाम् ॥ तस्याग्रतस्तृणमिवाशनिपातभंगोजातिस्मरेणविदुषोक्तमदःपुरामे ॥ १४ ॥ इहसरोवरतीरतरोस्तलेकुसुमशालिनिमुग्धमृगान्पुरः ॥ समवलोकयलोकमलौवलात्समवकीर्णनवोत्पलकेतकान् ॥ १५ ॥ वर्हीप्रोन्नतचित्तत्वात्तोयमिंद्रंप्रयाचते ॥ सपूरयतितेनास्यमहात्मानिखिलांमहीम् ॥ १६ ॥

रागादिवभयान्मज्जंत्याशफर्यामृत्वापिस्वदेहकंत्रातम् ॥ इहसंसारेमहापदिप्रमायांत्द्रंगेनम्रतेर्मरणादन्यत्सौख्यदंशरणंनभवेत् ॥ तथाचमृत्वापितयाकृतंस्वदेहरक्षणमुचितमेवेत्यर्थः ॥ १२ ॥ बकादीनांहृदिउदरेप्रविष्टानामचर्वितंनिगीर्णानांमत्स्यादिप्राणिनांयाधृतिश्चित्तस्थितिःसानिद्रोपमासुषुप्तिसदृशीमूर्छैवेतिमन्ये ॥ १३ ॥ सलिलाशयानांमत्स्यादीनांआसन्नमद्गुवकादिदर्शनेनयद्भयंभवतितस्यभयस्याग्रतःअशनिपातप्रयुक्तोभंगोभयंतृणमिवाल्पमेव ॥ अदःरहस्यंमेपुराजातिस्मरेणमत्स्यादियोनिदुःखानिस्मरताविदुषास्वानुभूतमुक्तंनासत्यमितिमंतव्यमित्यर्थः ॥ १४ ॥ नेत्रश्रोत्रशोभाबलात्अलौभ्रमरेसतिसम्यगवकीर्णानिनवोत्पलानिकेतकानिचयैस्तथाविधान्मुग्धमृगान्लोकंप्रियाजनंसमवलोकयदर्शय ॥ १५ ॥ वर्हीमयूरःप्रोन्नतचित्तत्वादक्षुद्राशयत्वादिंद्रंतोयंप्रयाचते ॥ याचेर्द्विकर्मत्वादिंद्रोप्यकथितंकर्मसइंद्रस्तेनप्रोन्नतचित्तत्वगुणेनसंतुष्टःसन्अस्यप्रीत्यैनिखिलांमहींतोयेनपूरयतियतोमहात्माअत्युदारइत्यर्थः ॥ १६ ॥

स्तनंपिबंतीतिस्तनपावत्साइव ॥ १७ ॥ यंत्रनिर्मितपुत्रिकातुल्यतांनिश्चेष्टतामितियावत् ॥ १८॥ किंसर्पस्यदौरात्म्यमथवाशिखिनोदौरात्म्यंतन्नजाने ॥ १९ ॥ तत्तस्मैसर
सेयानतिःशिरोनमनंतद्भीतितः ॥ २० ॥ २१॥ विस्तताविश्राणितामुक्तायेनतद्भावेनेवइहवनेपयोनिधिरेवकलापिनांमयूराणांविलासनोनर्त्तयितानमेघःपश्येत्यर्थः ॥ २२ ॥ हे
चकितचातकतेवनावनौग्रीष्मेपावकदूषितासंभावितपावकाशुष्कतरुकोटरवासनिर्बंधसूचिताअतिमानितासुखायनहिभवति ॥ कदलीवनसंनिहितानिशीतलहरिततृणानिचर
कुल्यादिष्वंबुपिब कदलीवनेविश्रमणंकलयेत्यन्यापदेशः ॥ २३ ॥ हेमयूरअयमग्रेप्रदृश्यमानःअंबरमारुरुक्षुःपदार्थोमकरालयस्यसमुद्रस्यवारिभिःपूर्णोदरोजलधरइतिते
भ्रांतिर्माभूत्किंत्वेषदावाग्निनादग्धानांवनपादपानांकोटराग्रेधूमावलीवलयःशैलादुत्थितस्तथाचास्थानेतेनृत्यारंभसंभ्रमइत्यर्थः ॥ २४ ॥ अनावृष्टौभौमंवार्यपिबतोमयूर

मेघाननुसरंत्येतेमयूरास्तनपाइव ॥ मलिनोमलिनस्यैवपुत्रइत्यनुमीयते॥१७॥ मृगानालोक्यपथिकश्चिंतयनद्यितेक्षणे ॥ पुरस्थेपुप
दार्थेपुयंत्रपुत्रिकतांगतः॥१८॥ शिखीवार्यपिनादत्तेभूमेर्भुंक्तेवलादहिम्॥ दौरात्म्यंतन्नजानेकिंसर्पस्यशिखिनोथवा॥१९॥ सज्जना
शयनीकाशंत्यक्त्वाबर्हीमहत्सरः॥ पिबत्यंब्वभ्रनिष्ठ्यूतंमन्येतन्नतिर्भीतितः॥ २०॥ लसत्कलापजलदाःपश्यनृत्यंतिबर्हिणः॥ धुन्वानाः
पिच्छकांतींदुंप्रावृषःपोतकाइव॥२१॥ वरंवनेवनवातविसारिणांचपलचंद्रकचारुतरंगिणाम्॥ इहपयोनिधिरेवकलापिनांविस्तृतमु
क्तयेवविलासनः॥ २२ ॥ चरतृणानिपिबांबुवनावनौकलयविश्रमणंकदलीवने॥ चकितचातकपावकदूषितानहिसुखायभवत्यति
मानिता॥ २३॥ नायंमयूरमकरालयवारिपूरपूर्णोदरोजलधरोंबरमारुरुक्षुः॥ दावाग्निदग्धवनपादपकोटराग्रधूमावलीवलयउत्थि
तएषशैलात्॥ २४॥ येनाब्देनशरद्विधावपिशिखीसंतर्पितोवारिभिर्नोवर्षास्वपिपूरयेद्यदिसरस्तद्वाललोकोचितम्॥ आरब्धंसमवेक्ष्य
सज्जनजनोहासेनदुःस्थोभवेद्बर्हीत्यात्मतृषैवनेतुमखिलंकालंसमभ्युद्यतः॥२५॥ स्फटिकविमलंपीत्वातोयंघनोदरनिर्गतंपिबतिनपुन
र्मार्गेक्षुभ्यंस्तृषापिशिखीजलम्॥ स्फुरतिचघनंस्मृत्वास्मृत्वानचापिविपद्यतेगुणवतिजनेबद्धाशानांश्रमोपिसुखावहः॥ २६॥

स्याशयंकश्चिद्वर्णयति ॥ येनेति ॥ येनअब्देनमेघेनशरत्कालेपिशिखीमयूरोवारिभिःसंतर्पितःसवर्षासुवर्षर्त्तावपिसरोनपूरयेदितियच्चरित्रंतद्वाललोकानांक्षुद्राणामेवोचितं
नमहतस्तस्य ॥ औदार्ययोग्येसमयेप्यारब्धमिदमनौदार्यंसमवेक्ष्यपामरैःकृतेनहासेनसज्जनजनोदुःस्थोदुःखितोभवेत् इतिएवंविचिंत्यबर्हीमयूरःआत्मनस्तृषैवनिखिलंकालं
नेतुंसमभ्युद्यतउद्युक्तइत्यर्थः ॥ २५ ॥ तर्हिसमयूरःकिमनुचितकारीनेत्याह ॥ स्फटिकविमलमिति ॥ शिखीतृषाक्षुभ्यन्नपिप्राक्स्फटिकविमलंघनोदरनिर्गतंतोयंपीत्वापुनर्मा
र्गेसकर्दमंजलंनपिबति ॥ तर्हिसकुतोनतृषाम्रियतेतत्राह ॥ स्फुरतीति ॥ सघनंमेघंस्मृत्वास्मृत्वास्फुरत्युल्लसतिनापिचविपद्यतेम्रियते ॥ यतोगुणवतिजनेबद्धाआशायैस्तेषांश्रमो
पिसुखावहएवनदुःखदइत्यर्थः ॥ २६ ॥

कांतावियोगिनांपथिकानांवर्षासुकचित्कथालापादिनाकष्टेनकालयापनंयथाआत्मज्ञानहीनानांमूर्खाणांजन्मयापनंतथाइत्याह ॥ इहेति ॥ एतेपथिकाः ॥ २७ ॥ कह्ला रपत्रनिबद्धपयसांचभारानादायवालिकास्तरुण्यश्चलिताःहेनाथपश्य ॥ २८ ॥ इदंभारजातंकिकिमर्थंनयथइतिपृष्टाभिस्ताभिर्वालिकाभिरेतस्यप्रष्टुर्ममउत्तरमुक्तम् ॥ हेप थिकवयंवियोगव्यसनज्वरतप्तायाःबालसख्यस्तथाचतदुपचारायकमलोत्पलादिभारान्नयामइत्यर्थः ॥ २९ ॥ अथतदुत्तरंस्वकांतिषुरागरक्तहृदयास्ताःस्वाःपश्यतांपथिका नांस्वगेहस्थाःप्रियाःस्मरणपथमनयन् ॥ सदृशदर्शनस्यसंस्कारोद्बोधकत्वादितिभावः ॥ ३० ॥ तत्रकश्चित्पथिकःस्वप्रियांस्मरन्नाह ॥ सेति ॥ सुस्निग्धायेघनामेघास्तल्लक्ष णैस्तमोभिःश्यामंगगनंसुस्निग्धंघनइवतमइवचश्यामंगहनंवनंचदृष्ट्वाममकांताप्रलपतिभुविपततिगच्छंतीचविस्खलति ॥ नूनमितिसंभावनायाम् ॥ ३१ ॥ भृंगावल्याकुवल

इहातिवाहयंत्येतेमार्गदौस्थ्यंघनागमे ॥ कथाभिःपथिकाःप्रायोविमूढाजीवितंयथा ॥ २७ ॥ पश्यात्रनाथसरसःकमलोत्पलकुमुदवि समृणालानाम् ॥ कह्लारपत्रपयसांभारानादायवालिकाश्चलिताः ॥ २८ ॥ किमिदंनयथेतिततःपृष्टाभिस्ताभिरुक्तमेतस्य ॥ व्यसन ज्वरतप्तायाःपथिकवयंवालसख्यइति ॥ २९ ॥ अथरागरक्तहृदयाःस्तनभरविततावलासललितांग्यः ॥ पथिकानांस्मरणपथंभूयो प्यनयन्प्रियाःस्वगेहस्थाः ॥ ३० ॥ सानूनंममकांताहृष्ट्वासुस्निग्धघनतमःश्यामम् ॥ गगनंचशून्यगहनंप्रलपतिभुविपततिविस्खल ति ॥ ३१ ॥ भृंगावलीकुवलयावलितान्नपात्रसंप्रेर्यमाणनलिनीमधुपानमत्तः ॥ हावातितीरतरुपल्लवलास्यलब्धसंमुग्धशब्दगणगीत गुणोनभस्वान् ॥ ३२ ॥ ॥इ०वा०वा०दे०मो०नि०उ०अवि०विप०हरिणमयूरबकमुग्धादिवर्णनंनामाष्टादशोत्तरशततमःसर्गः ॥ ११८ ॥ ॥ ६ ॥ ॥सहचराऊचुः ॥ ॥कथयत्येषपथिकःपश्यमंदरगुल्मके ॥ प्रियायाश्चिरलब्धायावृत्तांविरहसंकथाम् ॥ १ ॥ एकत्रशृणुकिंवृत्तमाश्चर्यमिदमुत्तमम् ॥ दातुंत्वन्निकटेदूतमहंचिंतान्वितोवदम् ॥ २ ॥

यैश्चआवलितेनाऽन्नलक्षणेनपानपात्रेणसंप्रेर्यमाणंयन्नलिनीमधुतत्पानेनमत्तस्तथातीररुहाणांतरुवल्लीनांपल्लवलास्येनलब्धोयःसंमुग्धोमृदुमंद्रःशब्दगणस्तेनगीतःख्यापितःशै त्यमांद्यसौरभ्यादिर्गुणोयस्यतथाविधोनभस्वान्वायुर्वाति ॥ हाइतिविरहोद्दीपनप्रयुक्तखेदे ॥ ३२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वा०उ०अष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥ ॥ ६ ॥ ॥ पथिकःस्वांप्रियांप्राप्यतदग्रेतद्वियोगजाम् ॥ प्राक्तनींस्वांदशामत्रश्मशानांतामवर्णयत् ॥ १ ॥ हेराजन्मंदरगिरेःकुंजगुल्मकेएषपथिकश्चिर लब्धायाःप्रियायाःपुरतःप्राग्वृत्तांस्वांविरहसंकथांकथयतितंपश्य ॥ १ ॥ प्रियाग्रेतेनवर्णितांविरहसंकथांवर्णयितुमुपक्रमते ॥ एकत्रेत्यादिना ॥ हेप्रियेत्वद्वियोगदशायांममए कत्रएकस्मिन्दिनेजातंकिंवृत्तंवृत्तांतमाश्चर्यमिदंवक्ष्यमाणंत्वंशृणु ॥ त्वन्निकटेस्ववृत्तांतंदातुंप्रेषयितुंदूतंविचारयंश्चितान्वितोऽहमिदमवदम् ॥ २ ॥

किमवदत्तदाह ॥ अस्मिन्निति ॥ अस्मिन्महाप्रलयकालसमेवियोगेवियोगलक्षणायांमहापदिइहस्थंमांवृत्तांतप्रापणेनतयासभाजयितुंयोममगृहंयातिसतादृशोदयालुर्दूतःकः स्यात् ॥ यःपरदुःखशांत्यैप्रीत्यासरलंयथास्यात्तथानिरंतरंयनेत ॥ असौतादृशःपुरुषोजगतिनैवास्ति ॥३॥ आइदानींस्मरःपुरोवर्त्तिगिरिशिखरेएषपरिदृश्यमानोमेघःप्रीत्यास ततंपरदुःखोपशमनादिगुणैःसंयुतःस्मरस्याश्वइवशीघ्रंमद्गृहगमनसमर्थःपरोपकाररसिकोविद्युल्लतालक्षणयाविलासिन्यावलितःस्थितोस्तीत्यर्थः ॥ ४ ॥ अतोहमेनमेवप्रार्थयि प्यामीत्यभिप्रेत्याह ॥ भ्रातरिति ॥ हेभ्रातर्मेघत्वंकंठेगुणोयस्यसकंठेगुणस्तथाविधंगुणवतस्तवउचितंमहेंद्रचापंव्यालंब्यगृहीत्वासुगतेहेशोभननभोमार्गगामिन्तांमत्प्रियांगत्वा गलज्जललवैरात्मानिलैःप्रथममाश्वासय ततोमत्संदेशंप्रापयितुंनीचैर्मंदंगर्जंमुहूर्त्तंकंदयांकुरुयतस्तेगाढगर्जितंमद्विरहदुःखाद्बाष्पपूर्णेक्षणाबालमृणालकोमलतनुस्तन्वीबालासा सोढुंनक्षमा ॥ ५ ॥ हेपयोदसादयितामयात्वद्व्योम्निचित्ततूलिकयालिखित्वाआलिंगितासतीअधुनाइतःक्वगतानजाने ॥ ६ ॥ हेतन्विइत्थंमेघंप्रत्युक्त्वात्वच्चिंतापरवशमतेःअंत

अस्मिन्महाप्रलयकालसमेवियोगेयोमांतयेहममयातिगृहंसकःस्यात्॥नैवास्त्यसौजगतियःपरदुःखशांत्यैप्रीत्यानिरंतरतरंसरलंयते त ॥३॥आएपशिखरेमेघःस्मराश्वइवसंयुतः॥ विद्युल्लताविलासिन्यावलितोरसिकःस्थितः॥४॥ भ्रातर्मेघमहेंद्रचापमुचितंव्यालंब्यकं ठेगुणंनीचैर्गर्जमुहूर्त्तकंकुरुदयांसावाष्पपूर्णेक्षणा ॥ बालाबालमृणालकोमलतनुस्तन्वीनसोढुंक्षमातांगत्वासुगतेगलज्जललवैरा श्वासयात्मानिलैः॥ ५ ॥ चित्ततूलिकयाव्योम्निलिखित्वालिंगितासती॥ नजानेक्काधुनेवेतःपयोददयितागता॥ ६ ॥इत्थंचिंतापरवश मतेस्तन्विसार्द्धंत्वयासावंतर्लीनप्रसरमनसःक्कापियातास्मृतिर्मे॥ संपन्नोहंपरवशवपुःकाष्ठकुड्योपमांगोभंगंसोढुंकइवविरहक्लेशजं नामशक्तः॥७॥ पश्चाज्जातःकलकलरवःसंततेपांथसार्थेदीनालापैर्व्यसनविधुरैरालपंतेचमेघम्॥कष्टंपांथोमृतइतिमहारंभसंपन्नहा हाशब्दःप्रोद्यत्पथिकवनिताविस्तृतोरःप्रहारः॥८॥ लोकेनायंमृतइतिततोबाष्पसंपूरिताक्षंशार्वींपूजांविरचितवतासंचयीकृत्यदारु॥ दग्धुंनीतोस्म्यतिभयमहंप्रज्वलच्चित्यनंतप्रोद्यत्स्फोटस्फुटपटपटारावरौद्रंश्मशानम्॥ ९ ॥

रवलीनप्रसरंमनोयस्यतथाविधस्यमेसाप्रसिद्धास्मृतिःपूर्वापरप्रतिसंधानसमर्थाबुद्धिस्त्वयासार्द्धंक्कापियाता ॥ ततःस्मृतिलोपादहंपरवशवपुःसन्काष्ठकुड्योपमान्यंगानियस्यत थाविधःसंपन्नः ॥ तथाहि ॥ विरहक्लेशजंभंगंपरिभवंसोढुंकइवशक्तोनामनकश्चिदित्यर्थः ॥ ७ ॥ ततःपश्चान्मांतथाविधंपश्यतिसंततेमिलितेपांथसार्थेपांथजनसमूहेमहारंभे णसंपन्नाहाहाहाशब्दायस्मिंस्तथाविधःप्रोद्यंतीनामागच्छंतीनांपथिकवनितानांविस्तृताउरःप्रहाराश्चयस्मिंस्तथाविधश्चपांथोमृतइतिकलकलरवःकोलाहलध्वनिर्जातः ॥ तत्र केचिद्व्यसनेनविधुरैर्भ्रंष्टस्वरैर्दीनालापैर्मेघंचआलपंतेअधिक्षिपंति ॥ ८ ॥ ततःकिमभूत्तचाह ॥ लोकेनेति ॥ ततस्तेनपांथलोकेनअयंमृतइतिनिश्चित्यबाष्पैःसंपूरिताक्षंयथा स्यात्तथाशार्वीशवोचितांगंधमाल्यादिभिरलंकरणरूपांपूजांविरचितवतादारुकाष्ठंसंचयीकृत्यसंगृह्यदग्धुमहमतिशयितंभयंयघ्नतथाविधंप्रज्वलंतीभिश्चितिभिरनंतैःप्रोद्यद्भिः स्फोटस्फुटपटपटारावैःरौद्रमुद्वेगदंश्मशानंनीतोस्मि ॥ ९ ॥

हेकमलवदनेतत्रअहंकैश्विद्बाप्पपूर्णाक्षिपक्षैस्तैःपांथैश्चितिशयनकेन्यस्तः ॥ तत्रवद्धापरितोलोकालिरिवलेखापंक्तिर्यस्यतथाविधेधूमोद्गारैरविरलंजटिलेमत्तस्यमृत्योर्मस्तके प्रसिद्धचूडारत्नोत्तमेइवद्योतमानेअग्निलक्षणेहेम्निकलामात्रेणदृश्येजातेसति ॥ १० ॥ तस्मिन्कालेकुवलयलतेवकोमलामृद्वीतथाउष्णाकृष्णादैर्घ्यसंकोचात्कुब्जाधूमलेखा मेमृदुगलविलंनासारंध्रंनकुलेनकलिताभीषिताप्पूर्वोक्तविशेषणकद्वयवतीवालसर्पीतनुंसूक्ष्मंभूमेरंध्रमिवनियातुंनिश्चितंप्रवेष्टुंप्रवृत्ता ॥११॥ हेप्रियेअहंत्वदाकारेणामृतेनकवचि तःकवचेनावृतःसंस्तयाधूमलेखयानापविद्धोनपीडितः॥ यथावज्रकायःअजोब्रह्मामृत्योर्दृढपतनयाकुंतश्रेण्यानापविद्धस्तद्वत् ॥ किंचस्त्वद्धहेआसन्नांमदनसरितंत्वांगाहमानो हमग्निदाहेनमर्मच्छेदेपुक्रियमाणेष्वपिविलसिताउद्भूनास्तावेदनानाविदांकिपुनर्धूममात्रस्येत्यर्थः ॥१२॥ हेतन्विएतावंतंसमयंमयात्वदिअंतस्त्वयासार्द्धंविरचितमत्रास्यांमूर्छायां

तत्राहंतैःकमलवदनेवाप्पपूर्णाक्षिपक्षैर्न्यस्तःकैश्चिच्चितिशयनकेबद्धलोकालिलेखे ॥ धूमोद्गाराविरलजटिलेमस्तकेमत्तमृत्योश्चूडार त्नोत्तमइवकलामात्रदृश्येग्निहेम्नि ॥ १० ॥ अस्मिन्कालेकुवलयलताकोमलाधूमलेखानासारंध्रंमृदुगलविलंमेप्रवृत्तानियातुम्॥ उ ष्णाकृष्णानकुलकलितासत्वरंवालसर्पीभूमेरंध्रंतनुमिवदराद्दैर्घ्यसंकोचकुब्जा॥ ११ ॥ त्वत्संकल्पामृतकवचितोनापविद्धस्तयाहंकुंतश्रे ण्यादृढपतनयावज्रकायोयथाजः ॥ त्वामासन्नांमदनसरितंत्वद्धहेगाहमानोमर्मच्छेदेष्वपिविलसितानाविदंवेदनास्ताः॥ १२॥ एता वंतंसमयमुचितंतन्विसार्द्धंत्वयांतर्लीलालोलंत्वदिचिरतरंतन्मयात्रानुभूतम् ॥ यस्मिन्दृष्टेमृतह्रदइवोन्मज्जनौघैर्यथासौराज्याभोगो विशसनमिवाल्पाल्पमेवेतिबुद्धिः॥ १३॥सालीलातेविलासावचनमपिचतत्सस्मितंतेकटाक्षाःसानंदानंतरस्यप्रसरसमुचितादूरमण्ये कभूपा॥ तानीहारावसारावहसनचलनावेगविक्षोभितानिकिंवातत्तन्नयत्संस्मृतमसृतरसाह्लादमंतःकरोति॥ १४॥त्वत्संगमेसुरत सौख्यरसायनेनवालेततोहमतितृप्तयाश्रमार्त्तः॥ तत्रस्थितांमृदुनितल्पतलेशशांकविंवंशरद्धिशिरनिर्मलशोचिषीव ॥ १५॥

तत्तादृशंसुखमनुभूतम ॥ कीदृशंतदाह ॥ यस्मिन्निति ॥ अमृतह्रदेउन्मज्जनौघैर्यथातथायस्मिन्सुखेदृष्टेसतिअसौप्रसिद्धोराज्यस्याभोगस्त्रैलोक्यराज्याधिपत्यसुखमपिप्रागु क्तंमर्मविशसनंदुःखमिवआल्पादप्यल्पंतुच्छमेवेतिवुद्धिर्भवतीत्यर्थः ॥१३॥ हेप्रियेतवसाअनुभवैकगम्यनिरतिशयानंदरूपाअनुपमालीलातेतादृशाएवभ्रूविक्षेपादिविलासास्त त्तादृशमेववचनमपितत्तादृशमेवस्मितंतेचकटाक्षास्तथादूरेमणिमयीएकभूषाप्रधानभूषणभूताएकावलीयस्यांतथाविधासाआनंदस्यानंतरस्यसुरतस्यप्रसरेसमुचिताअर्थादा लिंगनक्रियातानितादृशानिर्ईहानखक्षतादिचेष्टारतिकूजितापारावास्तत्साराण्यत्रहसनानिचलनावेगेनचित्तविक्षोभितानिचेत्येतेपुयत्संस्मरनंनरमृताह्लादंनकरोतितत्तत्किंवा स्तिनकिंचित्सर्वमपिअमृतरसाह्लादंकरोत्येवेत्यर्थः ॥१४॥ हेवालेततस्तदनंतरमहंत्वत्संगमेसुरतसौख्यमेवरसायनंयस्मिंस्तथाविधेअतितृप्ततयाश्रमेणार्त्तोमंथरःसंस्तत्रमृदुनित ल्पतलेशरदिशिशिराणिशोचींपियस्मिंस्तथाविधेशशांकविंवइवस्थितः ॥ १५॥

अत्रांतरेअस्मिन्नवसरेचंदनपंकशीताद्दीर्घादिंदुशकलादशनिरित्रात्यंतमसंभाव्यःस्वतल्पादुत्थितःस्वांगगतःसशब्दश्चितितलेज्वलितोहुताशःक्षीराब्धिसंबंधिवाडवोवडवानलस्त न्निभोदृष्टः ॥ १६ ॥ कांतइतिइमांकथामुक्तवतिसतितच्छ्रुत्वामुग्धासास्त्रीमौग्ध्यादेवरःश्रेष्ठआवर्तःसंवर्त्तस्तच्छंकयामूर्छिताभूत्वास्थिता ॥ १७ ॥ तांतथाविधामेनांकां तामेषकांतोनलिनीदलैर्वीजनंवीजस्तेनशीतैर्वारिभिश्चआश्वासयंस्तन्मूर्छामपनयन्संस्तथावस्थांतांकंठेकृत्वाअत्रमंदरकुंजेसंस्थितः ॥ १८ ॥ तांप्रागुक्तामेवसंकथांकथाशे षमितियावत् ॥ वक्तिपश्य ॥ १९ ॥ तमेवाह ॥ हाहेति ॥ हेप्रियेअहंकिंचिद्विवोपजातखेदःसन्हाहाहुताशइतियावद्वदामितावज्झटितितैर्लसद्भिःप्रहृष्टैःपांथैःखरखरध्वनि भिराकुलितासाचितिःसर्वोल्मुकापहारेणावलुंठिता ॥ २० ॥ मृतस्यपुनरुज्जीवनहर्षात्पांथास्तरलतालविलासवाद्यंयथास्यात्तथोत्थापितचितास्थितिमतनुभिर्बहुभिर्मंगलार्थैः

अत्रांतरेझटितिचंदनपंकशीताद्दीर्घादिवेंदुशकलादशनिःसशब्दः ॥ दृष्टोमयाचितितलज्वलितोहुताशःक्षीराब्धिवाडवनिभोंगगतःस्व तल्पात् ॥ १६ ॥ ॥सहचराऊचुः ॥ ॥इत्युक्तवतिकांतेस्मिन्हाहतास्मीतिवादिनी ॥ मुग्धामौग्ध्याद्दरावर्त्तशंकयामूर्छितास्थिता ॥ १७ ॥ तामेनामेषनलिनीदलवीजेनवारिभिः ॥ आश्वासयंस्तथावस्थांकंठेकृत्वात्रसंस्थितः ॥ १८ ॥ पुनःपृष्टोनयावक्तिपश्यतामेवसंकथा म् ॥ एषपार्श्वगतामेनांगृहीत्वाचिबुकेप्रियाम् ॥ १९ ॥ हाहाहुताशइतिकिंचिद्विवोपजातखेदोवदामिखलुयावदहंत्वरावान् ॥ तावच्चि तिर्झटितितैरवलुंठितासापांथैःक्षणात्खरखराकुलितालसद्भिः ॥ २० ॥ पांथास्ततस्तरलतालविलासवाद्यमालिंग्यमामतनुशेखरपूरि तांगम् ॥ उत्थापितस्थितिमलंपरिवार्यसर्वेनेदुर्जगुर्जहसुराननृतुर्ववल्गुः ॥ २१ ॥ विषमविनायकसुखदंवलितंभस्माहिशवशिरःप्र प्रकरैः ॥ शशिधवलास्थिकपालंवपुरिवरौद्रंश्मशानमथदृष्टम् ॥ २२ ॥ पार्श्वच्छायांहरंतोविचलितविदलत्छिन्नकंकालगंधास्त्वं तोभूरिभस्मप्रविततमिहिकामाधुनानाःशवानाम् ॥ केशानाकाशकोशेशशिगलितशराकारिणःशांकराणामस्थीनांटांकृतेनारचितख रगिरस्तत्रवातावहंति ॥ २३ ॥ ज्वलदनलचितिप्रवाहनिर्यत्पवनहतोष्मविशुष्कपर्णवृक्षा ॥ ज्वलनपवनभास्करात्मजानांरमणगृहानु कृतिविभर्त्तिसाभूः ॥ २४ ॥

शेखरैस्तरुमंजरीगणोत्तंसैःपूरितांगमामालिंग्यसर्वेपरिवार्यहर्षान्नेदुर्जगुर्जहसुरासमंतान्नन्नृ तुर्ववल्गुरुच्चेलुश्चेत्यर्थः ॥ २१ ॥ अथमयाश्मशानंरौद्रंसंहाररुद्रसंबंधिवपुरिवभीषणंदृष्टम् ॥ विशेषणान्युभयत्रतुल्यतयायोज्यानि ॥ २२ ॥ तत्रतस्मिन्श्मशानेवातावायवो वहंति ॥ कीदृशास्ते ॥ पार्श्वेवनस्यहरितच्छायांभस्मक्षेपैर्हरंतोविचलिताःप्रवृत्ताविदलतछिन्नकंकालानांगंधायैर्भूरिभस्मभिःप्रविततांमिहिकांनीहारपटलींतन्वंतःशवानांके शान्आधुनानाआकाशलक्षणेकोशेनिषंगशशिनःसकाशाद्गलितायेशरास्तदाकारिणस्तथाशांकराणांशंकरभूषायोग्यानामस्थीनांटांकृतेनाभिघातशब्देनआरचिताःखराऊ क्षागिरःशब्दायैस्तथाविधाइत्यर्थः ॥ २३ ॥ ज्वलंतःअनलायासुतथाविधाभ्यश्चितिभ्यःप्रवाहेणनिर्यतासधूमस्फुलिंगेनपवनेनहताअतएवोष्मणाविशुष्कपर्णावृक्षायस्यांतथा विधासाश्मशानभूर्ज्वलनस्याग्नेःपवनस्यभास्करात्मजस्यशनैश्चरस्यचरमणयोग्यंयद्गृहंतदनुकृतिंतत्सदृशलक्षणानिबिभर्त्ति ॥ २४ ॥

४१७

तत्तादृशंश्मशानंदृष्टंयत्अनंतैर्भीमैःकरंकैरर्धदग्धैःकंकालैःशवैर्घनमत्यंतमामगंधिदुर्गंधि ॥ २५ ॥ पुनःकीदृशंतच्छ्मशानम् ॥ आनीतानांनानाशवानांयोवंधुसार्थस्तदीयसंरोदनैरासमंतात्क्रादिनोदिगंताःकुंजाश्चयस्मिन् ॥ खगैरवकृष्टायाअर्द्राशिराआंत्रतंत्र्यश्चताभिर्निवद्धंदग्धप्रायंद्रुमखंडंलताजालंचयस्मिन् ॥ २६ ॥ चितेःक्षोभःसंचलनंतेनज्वालोद्दीपनात्कृतप्रकाशम् ॥ महाकेशैःकृतमब्दवृंदंमेघसमूहइवयत्र ॥ क्वचित्तुअस्तस्यक्तःशैलोयेनतथाविधंरक्तैःअक्तंधरायावितानमिवस्थितम् ॥ नक्तंस्तनत्गर्जदभ्रमिवस्थितम् ॥ २७ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उ०एकोनविंशत्युत्तरशततमःसर्गः ॥ ११९ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ वर्ण्यंतेवायवोवृक्षाभ्रमरावनपंक्तयः

दृष्टंश्मशानंतदनंतभीमकरंककंकालघनामगंधि॥ माद्यच्छिवावायसकंकगृध्रपिशाचवेतालविरावरौद्रम् ॥ २५॥ आनीतनानाशवबंधुसार्थसंरोदनाक्रादिदिगंतकुंजम् ॥ खगावकृष्टार्द्रशिरांत्रतंत्रीनिवद्धदग्धद्रुमखंडजालम्॥ २६॥ क्वचिच्चितिक्षोभकृतप्रकाशंक्वचिन्महाकेशकृताब्दवृंदम्॥ क्वचिच्चरक्ताक्तधरावितानंनक्तंस्तनत्त्वभ्रमिवास्तशैलम्॥ २७॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०अवि०विप०पथिकविरहवृत्तवर्णनंनामएकोनविंशाधिकशततमःसर्गः॥ ११९॥ ॥ ५॥ ॥सहचराऊचुः॥

एवंप्रायाःकथाःकुर्वत्पश्यैतन्मिथुनंमहत्॥ पानंप्रवृत्तवत्सारंपातुंपद्मनिभेक्षण॥ १ ॥ कदलीकंदलीस्वच्छगुच्छाच्छोटनपंडिताः॥ विविधावायवोवांतिपुष्पकेसरमंडिताः॥ २॥ वांतिवातावनोद्वांतविविधामोदमांसलाः॥ पीतघर्मकणाःकांतललनालकलालकाः॥ ३॥ कुलाचलगुहागेहवलनोद्यन्मृगाधिपाः॥ सरंत्यसुरसंरंभैर्लवणार्णवमारुताः ॥ ४ ॥ तमालतालतरललीलांदोलनलालिताः॥ अनिलाजलकल्लोलोत्क्रांतकोमलपल्लवाः ॥ ५ ॥ ललन्नवलतावांतपुष्पधूलिविधूसराः ॥ सरंतिमरुतोमंदमुद्यानेषुनृपाइव॥ ६॥ मधुरंवंशविश्रांतोगातुमेषवनानिलः॥ प्रवृत्तःपांडुनगरनारीभिरिवशिक्षितः॥ ७ ॥ निकारःकर्णिकारेणपवनस्ययदाकृतः ॥ तदापरिहरंत्येनंभ्रमराअपिदूरतः॥८॥

देवस्त्रियोब्धिवीच्यश्चहेमचूडखगादयः ॥ १ ॥ हेपद्मनिभेक्षणएवंप्रागुक्तप्रायाःकथाःकुर्वदेनत्प्रागुक्तंमिथुनंस्त्रीपुंसयुग्मंसंप्रतिसारमुत्तमंसीधुपानंपातुंप्रवृत्तवत्पश्येतिमिथुनकथोपसंहारः ॥ अन्वादेशेनपुंसकेएनद्वक्तव्यइत्येनदादेशः ॥ १ ॥ वायून्कश्चिद्वर्णयति ॥ कदलीत्यादिना ॥ गुच्छानामाच्छोटनेविकासनेपंडिताः ॥ २ ॥ क्रांतानांविक्षिप्तानांललनालकानांलालकाविलासकाः ॥ ३ ॥ कुलाचलानांगुहागेहेषुवलनेप्रविश्यभ्रमणेउद्यंतउद्युक्तामृगाधिपाःसिंहाइव ॥ असुराणामिवसंरंभैर्मेरुशिखराक्रमणोद्योगैःसरंति ॥ ४ ॥ तमालेषुतालेषुचतरलशिशुवत्लीलांदोलनैर्दोलिताः जलकल्लोलेभ्यउत्प्लुत्यक्रांतावृक्षाग्रकोमलपल्लवायैः ॥ ५॥ ललंत्योयानवालतास्ताभिर्वांतायाःपुष्पधूलयस्ताभिर्विधूसराः ॥ ६ ॥ वंशेषुकीचकवनेषुविश्रांतः ॥ पांडुनगरेहस्तिनापुरेनार्योगानविद्याकुशलाइतिप्रसिद्धिः ॥ ७॥ भ्रमरैःकर्णिकारवृक्षस्यदूरतस्त्यागेहेतुमुत्प्रेक्षते ॥ निकारइति॥ निकारोगंधपरागाद्यनर्पणेनतिरस्कारः ॥ ८ ॥

अयंतालःस्तंभतयास्तंभप्रायतयादुरारोहत्वादर्थिनेफलंनददातिपल्लवंचनददाति ॥ हियस्मात्कारणादुन्नताप्याकृतिरस्यअर्थ्यभिलाषपूरणारंभंविनाअरूपैव ॥ नशोभतइत्यर्थः ॥ ९ ॥ औदार्यादिगुणशून्यानांजडात्मनांमूर्खाणांवस्त्रालंकाराद्याडंबरेणरागःशरीररंजनमेवशोभायैनान्यदित्यर्थः ॥ किंशुकःपुष्पितःपलाशः ॥ १० ॥ विकारस्यद्रथायमनुस्तइतिविषादलक्षणस्यचित्तविकारस्यैव ॥११॥ मंजरीजाललक्षणतडित्संगेनस्थितःअसितश्चतमालश्चातकस्यांबुदभ्रांतिंकुरुते ॥ मुधावृथा ॥१२॥ पत्रैःपर्णैर्वाहनैश्चअलाःभूपिताः ॥ घनोदुर्भेद्यःसंघातोयेषाम् ॥ सतीभिश्छायाभिर्वृताभूभृतोगिरयोयैः ॥ सतांछायार्थंवृताःस्वीकृताभूभृतोराजानोयैः ॥ गुणानांधनुर्भावेमौर्वीणांसन्माना

नददातिफलंकिंचिदर्थिनेनचपल्लवम् ॥ तालःस्तंभतयारंभंत्यरूपैवविनाऽऽकृतिः ॥ ९ ॥ रागएवहिशोभायैनिर्गुणानांजडात्मनाम् ॥ राजेवराजतेराजन्रागेणैवैपर्किंशुकः ॥ १० ॥ आगच्छकर्णिकारोयंविकारस्यैवभाजनम् ॥ निरामोदःकिमेतेननिर्गुणेनेवजंतुना ॥११॥ विलोलमंजरीजालतडित्संगस्थितोऽसितः ॥ चातकस्यांबुदभ्रांतिंतमालःकुरुतेमुधा ॥१२॥ पत्त्रालाघनसंघाताःसच्छायावृतभूभृतः ॥ गुणानांमहतांयोग्यावंशावंशाइवोन्नताः ॥१३॥ हेमसान्वासनस्थोऽयोवातव्याधितटोंबुदः ॥ तडित्पीतांबरंधत्तेक्षुब्धंहरिरिवोर्द्धवः ॥१४॥ प्रवेशनिर्गमव्यग्रतरत्खगशिलीमुखः ॥ प्रफुल्लकिंशुकोभातिवीरोरक्तइवास्रजा ॥१५॥ मंदारमंजरीपुंजपिंजरांभोदमंदिरे ॥ महेंद्रमस्तकेमत्ताःसुप्तागंधर्वकामिनः ॥१६॥ कल्पद्रुमवनच्छायाविश्रांताविततान्विताः ॥ पश्यपार्थिवगायंतिसिद्धविद्याधराध्वगाः ॥१७॥ पश्यकल्पद्रुमस्यास्यपल्लवेपल्लवेवने ॥ विश्रांताःसुरसुंदर्योगायंतिचहसंतिच ॥१८॥ मंदिरंमंदपालस्यमंदरेमद्रुमंदिरे ॥ मुनेरिदमुदारस्यभार्यासायस्यपक्षिणी ॥१९॥ अन्योन्यामतासिंहेभनकुलोरगकेलिकाम् ॥ पश्यमुन्याश्रमश्रेणिंसर्वर्तुकुसुमद्रुमाम् ॥२०॥

दीनांच ॥ १३ ॥ हेममयसानुलक्षणेआसनेतिष्ठत्यंबुदःहेमसानुसदृशेहरिः ॥ अतएवायेभवोग्र्यः ॥ वातलक्षणोव्याधिस्तटेपुयस्यांबुदस्य वातव्याधिरुद्धवस्तटेसन्निधीयस्यहरेः ॥ तडिद्भिःपीतमंबरमाकाशंधत्तेंबुदःतडिद्वत्पीतमंबरंवस्त्रंधत्तेहरिः ॥ १४ ॥ प्रवेशनिर्गमयोर्व्यग्राःसरंतःखगाइवशिलीमुखाबाणाःअलयश्चयस्य ॥ वीरोयोधःअस्रजारक्तप्रवाहेणरक्तोरंजितइव ॥ १५ ॥ महेंद्रस्यगिरेर्मस्तकेशिखरे ॥ पानमत्ताःसंतःसुप्ताः ॥ १६ ॥ विशिष्टैस्ततैर्वीणादिवाद्यैरन्विताः ॥ १७ ॥ १८ ॥ मंदपालस्यमुनेर्महाभारतादौप्रसिद्धस्यसाप्रसिद्धापक्षिणीजरिताख्यागृध्री ॥ १९ ॥ अन्योन्यममतानांसिंहेभादीनांजातिवैरपरित्यागेनप्रीतिकेलिकायस्यांतथाविधांमुन्याश्रमश्रेणिम् ॥ २० ॥

---

१ आकाशपक्षेतडिद्भिरेवक्षुब्धम् ॥ वस्त्रपक्षेसंचलितंस्फुरदितियावत्
२ उर्ध्वभवःपक्षेउत्कृष्टैश्वर्यः

विद्रुमद्रुमैर्मिश्राणांसंवलितानामंभोधितटस्थानांवीरुधांलतानांपल्लवेपुविवितःअर्कोयेषुतथाविधाएतेउदविदवःउदकविंदवःकचंति ॥ मंथौदनसक्तुविंदुवज्रभारहारवीवधगाहेपुचेत्युदकस्योदादेशः ॥ २१ ॥ रत्नमाणिक्यानांपदेष्वाकरस्थानेषुवीचयआवर्त्तवृत्तिभिर्मुहुर्मुहुःपरिवर्त्तनैर्विलसंतिक्रीडंति ॥ विलासिन्यस्तरुण्योविलासिनांस्वकांतानांवक्षःस्विव ॥ २२ ॥ २३ ॥ श्रवणोपांतादृंडस्थलाद्विभ्रष्टैर्मदैर्मत्तानामलिनीनांस्वरैरैरावणस्यैरावतस्यस्नानभूमेर्गिरेरिमागुहागायंतीवपश्य ॥ २४ ॥ कृष्णपक्षेचंद्रमनुकृसतःअंबुधेःकृष्णांतरेखारूपावास्तुकेनिवासभूमिभूतेवेलातटेपंक्तयोदृश्यंते॥२५॥ वनान्येवकांश्चित्स्त्रीरूपेणवर्णयति ॥ आमोदेतिद्वाभ्याम् ॥ विशेषणानिसर्वाणिश्लेषादिनार्थद्वयपराण्येकीकृत्ययोज्यानि ॥

विद्रुमद्रुममिश्राणामंभोधितटवीरुधाम्॥ विंवितार्काःकचंत्येतेपल्लवेषूदविंदवः ॥ २१ ॥ वीचयोरत्नमाणिक्यपदेष्वावर्त्तवृत्तिभिः॥ विलसंतिविलासिन्योवक्षःस्विवविलासिनाम्॥ २२ ॥ नागलोकेंद्रलोकस्त्रीगमनागमनोद्भवः ॥ दिव्योभूषणझांकारःश्रूयतेनभसःशृणु॥ २३ ॥ श्रवणोपांतविभ्रष्टमदमत्तालिनीस्वरैः॥ ऐरावणस्नानभुवोगायंतीवगुहागिरेः॥ २४ ॥ कृसतोनुदिनंकृष्णपक्षेकृष्णांतलेखिकाः॥ दृश्यंतेकृशगात्रस्यवास्तुकावलयोंबुधेः॥ २५ ॥ आमोदगंधश्वसनासच्छायाशीतलांगिका॥ एकांतदर्शिताकारानानाकुसुमपूरिता॥ २६ ॥ वनविन्यासवसनानिर्झरामलहासिनी॥ आस्तीर्णपुष्पास्तरणाधन्यावनविलासिनी ॥ २७ ॥ रमंतेनंदनोद्यानेनतथोदारबुद्धयः॥ यथोपशांतशब्दासुशुद्धासुवनभूमिषु ॥ २८ ॥ सुविरक्तंमुनेश्चेतोरक्तंचविषयार्थिनः ॥ रमयंतिसमंरम्याविजनावनभूमयः॥ २९ ॥ सलिलाधौतवप्राणामंभोधितटभूभृताम्॥ नूपुरैरिवरत्नौघैःपादाभांतिध्वनंतिच॥ ३० ॥ पुन्नागनगविश्रांताःकांतकांचनकांतयः ॥ हेमचूडाःखगाभांतिदिविदेवगणाइव ॥ ३१ ॥ भ्रमरांभोदधूमाढ्याःफुल्लचंपककाननाः ॥ कंपंतेपश्यवातेनज्वलिताइवपर्वताः॥ ३२ ॥ कुर्वंतंकरवीराग्रलतांदोलावदोलकम्॥ कोकिलंकोकिलालिंग्यलोलाऽऽलापयतिप्रियम् ॥ ३३ ॥ लसत्कलकलारावमेतालावणसैंधवीः॥ पूर्णास्तटभुवोभूपैःपश्योपायनपाणिभिः॥ ३४ ॥

वनामोदएवगंधयुक्तंश्वसनंश्वासोयस्याः ॥ २६ ॥ वनलक्षणाविलासिनीस्त्री ॥२७॥ उदारबुद्धयोदेवादयः ॥ २८ ॥ मुनेर्विरक्तंचेतोविषयार्थिनःकामिनोरक्तंचचेतःसमंतुल्यतयारमयंति ॥ २९ ॥ पादाःप्रत्यंतपर्वतास्तल्लक्षणाश्चरणाश्च ॥३०॥३१॥ भ्रमरैरंभोदैश्चधूमाढ्याः ॥ यतःकंपंतेअतोज्वलिताइव ॥३२॥ करवीरस्यअपलताऊर्ध्वशाखातल्लक्षणदोलायाअवदोलकमांदोलनंकुर्वंतंकोकिलंतत्प्रियाकोकिलाआलिंग्यमधुरगीतमालापयति ॥ ३३ ॥ हेराजन्एतालवणसिंधोरिमालावणसैंधवीः ॥ तद्धगसिध्वंतेपूर्वपदस्यचेत्युभयपदवृद्धिः ॥ लसत्कलकलंयथास्यात्तथाउपायनपाणिभिर्भूपैःपूर्णास्तटभुवःपश्य ॥ ३४ ॥

हेदेवआपूर्वाल्लवणजलनिधेःआःपरस्मात्पश्चिमाल्लवणजलनिधेश्चतथाआउत्तराद्दक्षिणाद्वालवणजलनिधेः ॥ मर्यादायामाङः ॥ इहास्मिन्जंबूद्वीपेउदयेआजौशिष्टाअवशिष्टायेयावंतोनरपतयस्तेसर्वेपादपीठीक्रियंतांशिरसिपादार्पणेनानुगृह्यंतामितियावत् ॥ किंचतत्तन्मंडलानामवन्यादिशिदिशिचिरंरक्षायैयथाशास्त्रंनीतिशास्त्रोक्तप्रकारेणक्षांतिपूर्वंसमाधानपुरःसरंशांतयाधियाशासनानिदीयंताम् ॥ तदन्वस्त्राणिदीयंतांतदनुचबलंस्वसैन्यंदीयताम् ॥ ३५ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वा०उ०विंशत्युत्तरशततमःसर्गः ॥ १२० ॥ ॥ ७ ॥ ॥ अत्रमंडलमर्यादांसंस्थाप्याग्निमुपेयुषाम् ॥ वरादग्नेर्दिगंतानांदर्शनोद्योगईर्यते ॥ १ ॥ अथएतेप्रागुक्ताविपश्चितस्तेष्वर्णतवटेषुउपविश्यएतत्प्राङ्मंत्रिभिर्निवेदितंमंडलमर्यादास्थापनरूपंप्रयोजनंचक्रुः ॥ १ ॥ स्वयंनत्रतस्थुर्मंडलमर्यादांचस्थापयामासुः ॥ २ ॥ तेषांविपश्चितांप्रतापम् ॥ लोकांत

आपूर्वादापरस्माल्लवणजलनिधेरोत्तराद्दक्षिणाद्वादेवोदग्राजिशिष्टाइहनरपतयःपादपीठीक्रियंताम् ॥ दीयंतांमंडलानांदिशिदिशिचयथाशास्त्रमस्त्राण्यवन्यारक्षायैक्षांतिपूर्वंचिरमतुलबलंशांतयाशासनानि ॥ ३५ ॥ ॥इ०वा०वा०दे०मो०नि०उ०अवि०विप०दिगंतरव्याप्तिवाध्यादिवर्णनंनामविंशत्युत्तरशततमःसर्गः ॥ १२० ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥ अथतेष्वर्णवतटेष्वेतेभूमौविपश्चितः ॥ उपविश्यैतदखिलंचक्रूराज्यप्रयोजनम् ॥ १ ॥ नदातत्रैवतेवासभूमिंकृत्वायथाक्रमम् ॥ तस्थुर्मंडलमर्यादांस्थापयामासुरक्षताम् ॥ २ ॥ अथवर्णयितुंश्रीमांस्तत्प्रतापमिवागमत् ॥ संप्रविश्यसमुद्रांतरन्यलोकांतरंरविः ॥ ३ ॥ आययौयामिनीश्यामामेघलेखेवतानवम् ॥ संपादिताहर्व्यापारास्तस्थुःस्वशयनेषुते ॥ ४ ॥ आसमुद्रंनदीवाहाइवदूराद्गुपागताः ॥ इदंसंपादयामासुर्विस्मयाकुलचेतसः ॥ ५ ॥ अहोनुदूरमध्वानंप्राप्तावयमयत्नतः ॥ प्रभावाद्देवदेवस्यवह्नेर्दिव्यैःस्ववाहनैः ॥ ६ ॥ कियतीस्यात्प्रविस्तीर्णाद्दृश्यश्रीरियमाता ॥ इतःसमुद्रात्तदनुद्वीपभूरंबुधिःप्रभुः ॥ ७ ॥ इतोद्वीपंततोंभोधिःकिमंतेस्यात्ततोपिच ॥ कियतीकीदृशीवास्यान्मायेयंचेत्यरूपिणी ॥ ८ ॥ तत्प्रार्थयामहेदेवंहुताशंतद्वरादिमाः ॥ प्रेक्षामहेदिशःसर्वाआपर्यंतमखेदिनः ॥ ९ ॥ इतिसंचिंत्यतेसर्वेयथास्थानमवस्थिताः ॥ सममेवाह्वयामासुर्भगवंतंहुताशनम् ॥ १० ॥ बभूवभगवानेषामथदृश्योहुताशनः ॥ आकारवान्वरंपुत्राःप्रगृह्णीतेत्युवाचह ॥ ११ ॥

रंज्योतिषमतेपाताललोकम् ॥ पौराणिकमतेमेरूत्तरभागस्थंवर्षांतरम् ॥ समुद्रांतःप्रविश्येतिसमुद्रतीरस्थजनदृष्ट्योक्तिः ॥ ३ ॥ तानवंविस्तारम् ॥ तेविपश्चितः ॥४ ॥ इदंवक्ष्यमाणंमनसिसंपादयामासुश्चिंतयामासुः ॥ ५ ॥ ६ ॥ तदेवाह ॥ कियतीस्यादित्यादिना ॥ इतःअस्माज्जंबूद्वीपात्परतोलवणसमुद्रस्तदनुप्लक्षद्वीपभूस्ततइक्षुरसांबुधिःप्रभुर्महान्लवणसमुद्राद्द्विगुणायामइतियावत् ॥ ७ ॥ इतःइक्षुसमुद्रात्परतःकुशद्वीपंततःपरतःसुरोदोंभोधिः ॥ एवंक्रमेणसप्तद्वीपसमुद्राणामंतेकिंस्यात् ततोपिचपरतःकिंस्यात् इयंचेत्यरूपिणीमायाकियतीस्याद्वस्तुवैचित्र्येणकीदृशीवास्यात् ॥ ८ ॥ तत्सर्वंद्रष्टुंहुताशंदेवंप्रार्थयामहेप्रार्थयेमहि ॥ ९ ॥ यथास्थानंचतुःसागरकूलेष्ववस्थितास्तेसमंयुगपदेव ॥ १० ॥ ११ ॥

यावदनेनदेहेनगंतुंशक्यंतावदनेनदेहेन ॥ एतदगम्यंवैदिकमंत्रप्रभावसंस्कृतेनानेनैवदेहेन ॥ तदगम्येमनसा ॥ १२ ॥ यावत्संवेदनमितिप्रत्यक्षयोग्यसर्वार्थोक्तिर्यावत्संभवमि
त्यनुमानगम्यसर्वार्थोक्तिर्यावदात्मकमितिश्रुत्यादिगम्यतदुक्तिः ॥ अथवाआद्येनयावत्स्थूलोक्तिर्द्वितीयेनयावत्सूक्ष्मोक्तिस्तृतीयेनयावत्कारणप्रपंचोक्तिः ॥ इतिनःअस्मभ्यं
वरोदीयताम् ॥१३॥ सिद्धायोगिनस्तेषांयोगप्रभावगम्यमभिव्याप्येत्यासिद्धगम्यम् ॥ वपुषाअनेनैवदेहेन ॥ अथतदंतेतदगम्यमितियावत् ॥१४॥ अध्वानंगच्छतामितिशेषः ॥
असंभवद्देहेअध्वनिदक्षिणोत्तरायणादिमार्गरूपेमृत्वैवगंतुंशक्येअध्वनि ॥ १५ ॥ अथतद्वरप्रार्थनानंतरम् ॥ और्वतयावडवाग्निभावेनसमुद्रेयातुंसत्वरइव ॥ १६ ॥ एवंवरं
दत्वाअग्निर्जगाम ॥ अथनिशासमाजगाम ॥ सानिशापियामचतुष्टयंविलंब्यजगाम ॥ अथरविःसमाजगाम ॥ तेषांविपश्चितांधीरार्णवलंघनेहाचसमाजगाम ॥ १७ ॥

विपश्चितऊचुः॥ ॥पंचभूतात्मकस्यास्यदृश्यस्यांतंसुरेश्वर॥ देहेनमंत्रदेहेनतदंतेमनसापिच॥ १२॥ यावत्संवेदनंयावत्संभवंयाव
दात्मकम्॥ पश्येमइतिनोदेवदीयतामुत्तमोवरः॥ १३॥ आसिद्धगम्यमध्वानंपश्येमवपुषावयम् ॥ तदंतेमनसैवाथदृश्यंपश्येमभोप्र
भो॥ १४॥ आसिद्धगम्यमध्वानंमृत्युरस्माकमस्तुमा॥ अध्वन्यसंभवद्देहेमनएवप्रयातुनः॥ १५॥ ॥श्रीवसिष्ठउवाच॥ ॥अथैव
मस्त्वितिप्रोच्यपावकःसहसागमत्॥ क्षणादौर्वतयायातुंसमुद्रइवसत्वरः॥ १६॥ अग्निर्जगामाथसमाजगामनिशाविलंब्याथजगा
मसापि॥ समाजगामापिरविर्जगामतेषांचधीरार्णवलंघनेहा॥ १७॥ ॥इ०वा०वा०दे०मो०नि०उ०अवि०विप०विपश्चिन्निर्ण
योनामैकविंशत्युत्तरशततमःसर्गः॥१२१॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥ततःप्रभातेप्रसभंपृथिव्याःकृत्वायथाशास्त्रमलंव्यवस्था
म्॥ आविष्टदेहाइवतेरसेननिषेध्यमानाइवमंत्रिमुख्यैः॥ १॥ निवार्यसर्वंपरिवारमात्रमाक्रंदमानंवदनैरुदद्भिः॥ निरस्यचास्नेहतया
भिमानमात्सर्यलोभाभिभवैषणादि॥२॥दिगंतमालोक्यसमुद्रपारेक्षणात्समायामइतिब्रुवंतः॥ स्वमंत्रशक्त्योत्तमतांगतैस्तैरद्भिःपदैरे
वतदाप्रविष्टः॥ ३॥ विपश्चितस्तेदिशिदिक्ष्वनल्पैर्भृत्यैःसमुद्रंप्रविशद्भिरेव॥ भृत्यैश्चकैश्चित्त्वनुगम्यमानाययुर्यथावारिणिपद्भिरेव॥४॥

॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उ०एकविंशत्युत्तरशततमःसर्गः ॥ १२१ ॥ ॥ ७ ॥ ॥ पदैरब्धितरंगेषुगच्छंतोत्रविपश्चितः ॥ विदार्यावर्त्तमकरान्निर्याताःसा
धुवर्णिताः ॥ १ ॥ यथाशास्त्रंनीतिशास्त्रमनतिक्रम्यराज्यविभागपरिपालनोपायोपदेशमर्यादास्थापनादिव्यवस्थांकृत्वा ॥ रसेनदिगंतदर्शनोत्कंठातिशयेन ॥ महाग्रहाविष्टदे
हाइवसाक्षान्निषेद्धुमशक्नुवद्भिर्मंत्रिमुख्यैरिंगितैर्निषेध्यमानत्वादिवकारः ॥१॥ परिवारमात्रंकृत्स्नंपरिजनंनिवार्य ॥ अभिभवःशत्रुपराभवस्तद्देषणाआदिपदाद्राज्यस्त्रीपुत्राद्ये
षणापरिग्रहः ॥ अथवाअभिभवःशत्रुभिरुपहसद्भिस्तिरस्कारएषणाश्चप्रागुक्ताः ॥ आदिपदाद्राज्यधनादींश्चनिरस्यहित्वा ॥ २ ॥ वयंसमुद्रपारेदिगंतमालोक्यक्षणाच्छीघ्रमे
वसमायामइतिपरिजनसमाधानायब्रुवंतःसंतोजग्मुरित्यध्याहारः ॥ अग्निप्रसादहेतुमंत्रशक्त्यैवभूमिजलादिभूतजयेनोत्तमतांसिद्धतांगतैस्तैस्तदाअब्धिःपदैरेवप्रविष्टोनतुपो
ताद्युपायेनेत्यर्थः ॥ ३ ॥ स्नेहातिशयात्समुद्रंप्रविशद्भिःकैश्चिद्भृत्यैरनुगम्यमानाःपद्भिरेवययुः ॥ ४ ॥

कथंययुस्तदाह ॥ तरंगेति ॥ स्थलस्यभूमेःपृष्ठइवतरंगजालेपुपदानिकृत्वाविन्यस्य ॥ युक्ताउद्युक्ताः ॥५॥ तटस्थितैर्भृत्यजनैस्तेतावत्कालमवलोकितायावच्छरन्नभोमेघल
वाइवअदृश्यभावमापुः ॥६॥ विततेनाध्यवसायेनदृढनिश्चयेन ॥ हस्तिपकस्थानीयेनप्रेर्यमाणास्तेविपश्चितोबद्धांकक्षांहरंतितथाविधागजाइवतंजलाध्वानंऊहुःअतिवाहया
मासुः ॥ ७ ॥ अद्रिसमैःआरोहावरोहणैर्निम्नोन्नतीभावैःउन्नतावनतांवारितरंगाणांश्रियंशोभांस्वयमपितत्स्वीकाराद्धरंतःअतएवहरेर्मूर्त्तिरिवमूर्त्तिर्येषाम् ॥ हरिमूर्त्तिरपिहिमंथा
द्रेर्मंथनकालेवारितरंगाणांसमारोहावरोहणैरुन्नतावनतांश्रियंलक्ष्मींजहारेतिप्रसिद्धमितिभावः ॥८॥ मत्ताभ्रप्रविष्टेनचंद्रमंडलेनेवस्वप्रवेशाच्छोभमानेष्वावर्त्तेपुतृणानीवचिरं

तरंगजालेपुपदानिकृत्वापृष्ठेस्थलस्येवजलस्यचांतः ॥ चत्वारएकैकतयैवयुक्ताभृशंवियुक्तानिजसेनयाते ॥ ५ ॥ पदक्रमेणैवमहार्ण
वांतस्तावत्प्रविष्टाअवलोकितास्ते ॥ तटस्थितैर्यावददृश्यभावंशरन्नभोमेघलवाइवापुः ॥ ६ ॥ तमध्वानमथोहुस्तेजलधौपादचारिणः ॥
वितताध्यवसायेनबद्धकक्षाहराइव ॥ ७ ॥ उन्नतावनतामद्रिसमारोहावरोहणैः ॥ श्रियंवारितरंगाणांहरंतोहरिमूर्त्तयः ॥ ८ ॥ आवर्त्तेपु
तृणानीवभ्रांताविगतसंभ्रमम् ॥ चिरंचंचलमत्ताभ्रचंद्रमंडलशोभिषु ॥ ९ ॥ मंत्रविद्याबलौजोभिर्दुर्जयाःशस्त्रपाणयः ॥ क्वचिन्मत्तै
र्मकरैर्निगीर्णोद्गीर्णदेहकाः ॥ १० ॥ जलकल्लोलविश्रांतवातोत्सारितमूर्त्तयः ॥ नीतानीताःक्षणेनैवयोजनानांशतंशतम् ॥ ११ ॥ जल
कल्लोलमातंगतुंगितांगतयातया ॥ दधानानिजराज्येभपृष्ठरोहस्थितिश्रियम् ॥ १२ ॥ विस्तीर्णोर्मिघटापट्टपाटपट्टनपाटवैः ॥ दर्शयंतो
जलांभोदनिष्क्रांतिमारुताइव ॥ १३ ॥ तरत्तरलमातंगतरंगौघविघट्टिताः ॥ अत्यजंतोनिजंधैर्यंवेलावरतटाइव ॥ १४ ॥ महोर्मिमुक्ता
माणिक्यमंडलप्रतिविंबिताः ॥ एकाकिनोपिपरितःपौरुषेयवृताइव ॥ १५ ॥ पांडुडिंडीरपिंडेपुकुर्वंतोलाघवात्पदम् ॥ श्वेतपद्मपरिक्रां
तराजहंसश्रियंदधुः ॥ १६ ॥ घननिर्घातनिर्घोषभीषणार्णवघुंघुमात् ॥ नभीताभूभृतस्तत्रवेलावलनजृंभितात् ॥ १७ ॥ अभ्रंलिहजला
द्रींद्रपातोत्पातविघट्टिताः ॥ क्षणंपातालमाजग्मुःक्षणमर्कास्पदंययुः ॥ १८ ॥ अशंकितोत्पतद्वारिपूरपातपटावृताः ॥ उत्पातपातनिपत
द्वितानकवृताइव ॥ १९ ॥

भ्रांताः ॥ ९ ॥ पूर्वंनिगीर्णाःपश्चाज्जरणाशक्त्याउद्गीर्णादेहायेषाम् ॥ १० ॥ ११ ॥ जलकल्लोललक्षणैर्मातंगैस्तुंगितांगतयाआरोहितांगतयाअपूर्वचमत्कारिण्या ॥ १२ ॥
विस्तीर्णानामूर्मिघटालक्षणानांशिलापट्टानांयःपाटनंपाटोविदारणंयच्चपट्टनमधोमुखीकरणंतच्चपाटवैःकौशलैःजललक्षणादंभोदान्निष्क्रांतिमारुतामरुदुद्दीपिताविद्युतइववद
र्शयंतः ॥ १३ ॥ तरलमातंगैरिवतरंगौघैर्विघट्टिताअपिवेलासुप्रसिद्धावरतटाःशिलावप्राइवनिजंधैर्यंअत्यजंतः ॥ १४ ॥ महोर्मिपुमुक्तामाणिक्यमंडलेपुचप्रतिबिंबिताः
संतःपुरुषाणांसमूहःपौरुषेयंतेनपरिवृताइवभासमानाः ॥ १५ ॥ श्वेतपद्मेपुपरिक्रांतस्यारूढस्यराजहंसस्यश्रियम् ॥ १६ ॥ निर्घातःस्फूर्जथुः ॥ भूभृतइतिश्लिष्टम् ॥ यतो
भूभृतस्ततोनभीताः ॥ १७ ॥ अभ्रंलिहेभ्योजलमयेभ्योऽद्रींद्रेभ्यःपातैरुत्पातैश्चविघट्टिताःसंतः ॥१८॥ उत्पातस्यपातेप्राप्तौनिपतंतोयेमेघवितानकास्तैर्वृताइव ॥ १९ ॥

अदभ्रैर्बहलैरभ्ररूपैर्व्यक्ताव्यक्तांशुजालैर्भ्रांतैर्माणिक्यमुक्तासमूहैः अंतरालेसलिलमयतरुलताप्रायाणांतरंगाणांसीकरैश्चकुसुमैरिववपुःकांतियुक्तंभूषितंकुर्वंतः तथाशूरैर्नक्रैः कुलीरैःकर्कटैश्चव्याप्तेष्वावर्त्तेषुआसमंताद्विवृत्ताःसहचरामकरायेषांतथाविधास्तेविपश्चितःअंबुराशौसमुद्रेप्रक्रांताःचलिताइत्यर्थः॥ २० ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनि॰उ॰द्वाविंशत्युत्तरशततमःसर्गः ॥ १२२ ॥ ॥ ७ ॥ ॥ इहद्वीपसमुद्रेषुप्रयातानांविपश्चिताम् ॥ पाश्चात्यादिक्रमात्प्राप्तावर्ण्यंतेविविधादशाः ॥ १ ॥ इतिअनयारीत्याएतेविपश्चितःपादचारेणदृश्यरूपायाअविद्यायाअंतपर्यंतंविचारणेप्रवृत्ताः ॥ १ ॥ लाघवात्शैघ्यात् ॥ २ ॥ तत्रपाश्चात्यःपश्चिमदिगंतदर्शनायप्रवृत्तोविपश्चिदमरोहमित्यभिमानवतामीनेनपीतोनिगीर्णः ॥ वितस्तानदीसाह्यत्यंतशीघ्रगाप्रसिद्धातद्वाहनस्यनौकादेरोजइवशीघ्रतरमोजोयस्यतथाविधेन ॥ ३ ॥ सुदुर्जरोजरयितुमश

प्रक्रांतास्तेंबुराशौसहचरमकराःशूरनक्रैःकुलीरैर्व्याप्तावर्ताविवृत्ताःसलिलतरुलतासीकरैरंतरालैः ॥ कुर्वंतःकांतियुक्तंवपुरिवकुसुमैर्भ्रांतमाणिक्यमुक्तैर्व्यक्ताव्यक्तांशुजालैःप्रतिपदमितरैरभ्ररूपैरदभ्रैः॥ २०॥ ॥इ॰वा॰महारामायणेवा॰दे॰मो॰नि॰उ॰अवि॰अर्णवपरिक्रमणंनामद्वाविंशत्युत्तरशततमःसर्गः॥ १२२॥ ॥७॥ ॥श्रीवसिष्ठउवाच ॥ ॥इत्येतेदृश्यरूपायाअविद्यायाविचारणे॥ प्रवृत्ताःपादचारेणसमुद्रद्वीपगामिनः॥ १ ॥ अब्धेर्द्वीपंपुनर्द्वीपादब्धिंद्वीपंगिरिंवनम् ॥ लाघवाल्लंघयामासुश्छेदभेदविवर्जिताः॥ २ ॥ पीतोविपश्चित्पाश्चात्यामीनेनामरमानिना॥ विष्णुर्मीनकुलोत्थेनवितस्तावाहनौजसा ॥ ३॥ क्षीरोदंप्राप्यमत्स्येनतेनोद्गीर्णःसुदुर्जरः॥ तेनक्षीरोदमुल्लंघ्यगतोदूरंदिगंतरम्॥४॥दक्षिणोयक्षनगरेसंप्रेक्ष्येक्षुरसार्णवे ॥ शिक्षादक्षिणयाक्षिप्ययक्षिण्याकामुकीकृतः॥५॥पूर्वोमकरमाक्रम्ययदागंगांनिकृत्तवान्॥ गंगयासतदानीयकान्यकुब्जेसमुज्झितः॥६॥ उत्तरस्तूत्तरकुरूनाराध्यप्राप्तवान्श्रियम्॥ तंतयैनंनबाधंतेदिगंतेम्रतभीतयः॥७॥ तयामकरमातंगनिगीर्णोद्गीर्णमूर्त्तिमान्॥ अतिचक्रामसुबहून्द्वीपांतरकुलाचलान्॥ ८॥ पश्चिमःपृष्ठमारोप्यहेमचूडेनपक्षिणा ॥ कुशद्वीपेकुशांगश्रीस्तरसातारितोर्णवान्॥ ९॥

क्यः ॥ ४ ॥ द्वितीयस्योदंतमाह ॥ दक्षिणइत्यादिना ॥ इक्षुरसार्णवेस्थितेयक्षनगरे ॥ वशीकरणविद्याशिक्षाविषयेदक्षिणयाकुशलयायक्षिण्याप्रेक्ष्यविद्याबलेनाक्षिप्यस्वकामुकीकृतः ॥ ५ ॥ तृतीयस्योदंतमाह ॥ पूर्वइति ॥ पूर्वदिशिप्रवृत्तोविपश्चित्गंगासहस्रमुखसंभेदान्क्रमेणपश्यन्यदाकंचिन्मकरंग्रसितुकामंबलादाक्रम्यतस्योद्धारायगंगामानीयनिकृत्तवान्विदारितवान्तदासविपश्चित्गंगयापरावृत्यानीयकान्यकुब्जेनगरेसमुज्झितस्त्यक्तः ॥ ६ ॥ चतुर्थस्योदंतमाह ॥ उत्तरस्त्विति ॥ उत्तरकुरून्लक्षणयाउत्तरकुरुषुदेव्यासहक्रीडंतमीश्वरमाराध्यश्रियमणिमाद्यैश्वर्यंप्राप्तवान् ॥ अतएवतमेनंविपश्चितंतयैवश्रियादिगंतेप्रसृतमपिमृतंमरणंतत्प्रयुक्ताभीतयोनबाधंतेअमरोभूदित्यर्थः ॥७॥ तयाश्रियैवतत्प्रभावेणैवेत्यर्थः ॥ ८ ॥ पुनःपश्चिमस्योदंतमाह ॥ पश्चिमइति ॥ हेमचूडेनगरुडेनेतियावत् ॥ कुशद्वीपेहिकुशस्तंबेस्थितोगरुडःपूजादिनाप्रसादितस्तद्वीपमर्णवांश्चतारयतीतिप्रसिद्धिः ॥ स्वर्णमयकुशस्येवअंगश्रीर्देहकांतिर्यस्य ॥ ९ ॥

पुनःपूर्वस्योदंतमाह ॥ क्रौंचेति ॥ क्रौंचद्वीपेप्रसिद्धेवर्षसीमाचलेरक्षसानिगीर्णः ॥ अथतद्रक्षस्तेनविपश्चिताअंत्राणांविकर्त्तनैःपाटितंविदारितम् ॥ १० ॥ पुनर्दक्षिणस्योदंत
माह ॥ दक्षिणइति ॥ मोक्षंशापमोक्षम् ॥ ११ ॥ तरसाजवेनैवउत्तीर्णास्तारामहांतःअवराःक्षुद्राश्चतरंगिण्यश्चतरंगिणःसमुद्राश्चतरंगिणोयेन ॥ महार्णवस्यस्वादूदस्यपरतः
प्रसिद्धायांसुवर्णोर्व्यांशिलांशिलात्वंगतः ॥ १२ ॥ येनसिद्धेनशापोदत्तस्तेनैवशापादुन्मोचितःसन्रतिमनःप्रीतिमामवाप् ॥ १३ ॥ पुनःपूर्वस्योदंतमाह ॥ वर्षाणीति ॥ कान्य
कुब्जदेशादुत्तरांदिशंगतस्तत्रनालिकेरप्रधानदेशनिवासिनांराजाभवदित्यर्थः ॥ प्राक्स्मृतिंपूर्वोदंतस्मरणम् ॥ १४ ॥ १५ ॥ पुनःपश्चिमस्योदंतमाह ॥ विहगेति ॥ विहगाना
माश्वासेवशीकरणविपयेतत्त्वज्ञोरहस्यज्ञः ॥ अतएवप्राग्गरुडेनपृष्ठमारोप्यार्णवांस्तारितइत्युक्तम् ॥ पक्षिण्यानीडितयासहक्रीडयादशसमाःन्यवसदित्यर्थः ॥ १६ ॥ तदनंतरं

क्रौंचद्वीपाचलेपूर्वोनिगीर्णोरक्षसावने ॥ तद्रक्षःपाटितंतेनत्द्दयैंत्रविकर्त्तनैः ॥ १० ॥ दक्षिणोदक्षशापेनयक्षतामागतःक्षणात् ॥ शाकद्वीपेशतेनासौवर्षाणांमोक्षमागतः ॥ ११ ॥ उत्तरस्तरसोत्तीर्णतारावरतरंगिणः ॥ महार्णवसुवर्णोर्व्यांसिद्धशापाच्छिलांगतः ॥ १२ ॥ ततोवर्षशतेनासौप्रसादाज्जातवेदसः ॥ तेनैवोन्मोचितस्तत्रसिद्धेनरतिमाप्तवान् ॥ १३ ॥ वर्षाण्यष्टावभूद्राजानालिकेरनिवासिनाम् ॥ पूर्वःपरमधर्मिष्ठःप्राप्तवान्प्राक्स्मृतिंततः ॥ १४ ॥ कल्पवृक्षवनेमेरोरुत्तरेप्सरसासह ॥ उवासदशवर्षाणिनालिकेरफलाशनः ॥ १५ ॥ विहगाश्वासतत्त्वज्ञःशाल्मलिद्वीपशाल्मलौ ॥ पश्चिमःपक्षिणीनीडेक्रीडयान्यवसत्समाः ॥ १६ ॥ मंदराद्रौमृदुलतेमंदारतरुमंदिरे ॥ किंनरीमंदरीनाम्नीदिनमेकमसेवत ॥ १७ ॥ क्षीरोदवेलावनकल्पवृक्षवनावलीनंदनदेवताभिः ॥ सार्धंसमाःसप्ततिमप्सरोभिर्निनायकामाकुलितोथपूर्वः ॥ १८ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० अवि० विपश्चिदुपाख्यानेदिग्विहरणंनामत्रयोविंशत्युत्तरशततमःसर्गः ॥ १२३ ॥ ॥ ५ ॥ ॥ श्रीरामउवाच ॥ ॥ एकसंविन्मयाःसर्वएवैकवपुषोपिते ॥ विविधेच्छाःकथंब्रह्मन्संपन्नाएकदेहिनः ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एकसंविद्धनाकाशमप्यनानैवसर्वगम् ॥ स्वयंनानेवसंपन्नंसुप्तेचित्तमिवात्मनि ॥ २ ॥

मंदराद्रौगतंतंपश्चिमविपश्चितंमंदराद्रौकिन्नरीदिनमेकमसेवत ॥ १७ ॥ अथपूर्वोनालिकेरवनात्क्षीरोदवेलांगतःसंस्तत्रत्यकल्पवृक्षवनावलीपुनंदनदेवताभिरप्सरोभिःसार्द्धंका
माकुलितःसन्सप्ततिसमाःनिनाय ॥ १८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्र० नि० उ० त्रयोविंशत्युत्तरशततमःसर्गः ॥ १२३ ॥ ॥ ५ ॥ ॥ एकस्यापिचतुर्देहैर्व्यवहारःसमर्थ्यं
ते ॥ द्वीपपुनानाशैलेपुविहारश्चविपश्चिताम् ॥ १ ॥ चतुर्णामेकदेहत्वेएकजीवकत्वेचभिन्नेच्छत्वमनुपपन्नमितिरामःशंकते ॥ एकेति ॥ एकसंविदेकंसाक्षिचैतन्यंतन्मयाएकस्यै
ववपुषश्चतुर्द्धाभावादेकवपुषश्चतेविपश्चितः ॥ एकःदेहीजीवोयेपाम ॥ तथाचजीवभेदंविनायुगपदिच्छाभेदोऽनुपपन्नइत्यर्थः ॥ १ ॥ एकस्यापिजीवस्याविद्ययास्वप्नेनानादे
हादिकल्पनदर्शनात्तेपुघशत्रुमित्रोदासीनभावकल्पनेननानेच्छत्वदर्शनाच्चसर्गादौब्रह्मणिजीवेजापत्यपितादृशकर्मसत्त्वेसर्वंसंभवइत्याशयेनवसिष्ठउत्तरमाह ॥ एकसंविदिति ॥ २ ॥

१ एकशेषः

तस्यसंविद्घनाकाशस्याच्छत्वाद्दर्पणवदतिस्वच्छत्वात्तथाभूतंनानात्मतामिवापन्नंआत्मास्वमेवात्मनिर्विंबतिदर्पणोदराकाशेगिरिनद्यादिसहितंमहाकाशमिवेत्यर्थः ॥ तादृशस्य स्वच्छस्यापितथाभूतौनानाजगदाकारभवनेमुकुरस्येवनिर्मलास्वच्छतैवहेतुरितिशेषः ॥ ३ ॥ ननुजगदपिवस्तुतश्चिदेव तथासतिचितएवचितिकथंप्रतिबिंबनमितिचेच्छृणुदृष्टां तमित्याह ॥ एकेति ॥ पारमार्थिकाःपरमार्थतश्चिद्रूपाअपीत्यर्थः ॥ मायोपाधेरचिंत्यशक्तित्वाद्गंधर्वनगरस्फटिककुड्यरूपेणभासिसचंद्रार्काभमहानभःप्रतिबिंबनदर्शनाच्चेति भावः ॥ ४ ॥ अतएवाध्यस्तभोग्यजगदाकारंब्रह्मविषयेंद्रियसंयोगेबुद्ध्यवच्छिन्नजीवचितिप्रियाप्रियविषयभोगाकारेणप्रतिबिंबतीत्याह ॥ तेनेति ॥ यद्यद्भोग्यवस्तुपुरोभव तिसन्निकर्षमापद्यतेतेनवस्तुनाअसौतदर्थंतद्भोगार्थंयुज्यतेउपपद्यते ॥ यदिभोग्यंवस्तुबुद्धौनप्रतिबिंबेतभोगएवनयुज्येतेत्यर्थः ॥ ५ ॥ तर्ह्येकस्यनानाऽनानात्मकत्वंविरुद्धंमाय यापिकथंस्यात्तत्रयुक्तिर्वाच्येतिचेत्तत्राह ॥ नचेति ॥ यदिनानात्वमात्रनिषेधःस्यात्तदानियतैकरूपमेवस्यात् अनानात्वधर्मस्यापिनिषेधान्नानात्वेनापितत्संभावयितुंशक्य

तस्याच्छत्वात्तथाभूतमात्मैवात्मनिर्विंबति ॥ तादृशस्यतथाभूतौमुकुरस्येवनिर्मला ॥ ३ ॥ एकलोहमयाएवयथादर्शाःपरस्परम् ॥ त थैतेप्रतिबिंबंतिपदार्थाःपारमार्थिकाः ॥ ४ ॥ तेनयस्ययदायद्यत्पुरोभवतिवस्त्वसौ ॥ यदर्थंयुज्यतेतेनचिद्घनैकस्वभावतः ॥ ५ ॥ इत्य नानैवनानेदंनानानानाचवस्तुतः ॥ नचनानानचानानानानानानानात्मकंततः ॥ ६ ॥ तेनयस्यपदायातंपुरोवस्तुविपश्चितः ॥ सतेनसंवि न्मयतामेत्यतद्वशमागतः ॥ ७ ॥ एकदेशगताविष्वग्व्याप्यकर्माणिकुर्वते ॥ योगिनस्त्रिषुकालेषुसर्वाण्यनुभवंत्यपि ॥ ८ ॥ अब्दोपिव्या मिमानकस्तुल्यकालंपृथक्क्रियाः ॥ आह्लादस्तेनपादेनकरोत्यनुभवत्यपि ॥ ९ ॥ तुल्यकालमसंख्यातमीश्वरप्रतियोगिनः ॥ कर्मजालं जगज्जातंकुर्वंत्यनुभवंतिच ॥ १० ॥ एकोविष्णुश्चतुर्भिःस्वैर्बाहुभिर्वाशरीरकैः ॥ पृथक्कुर्वन्क्रियाःपातिजगद्भुंक्तेवरांगनाः ॥ ११ ॥ बहु बाहुर्यदाद्वाभ्यांहस्ताभ्यांद्व्यर्थसंग्रहम् ॥ करोतिबहुभिर्भूयःसंग्रामंसततंकरैः ॥ १२ ॥

मित्यविरोधेयुक्तिरित्यर्थः ॥ ६ ॥ अतएवविपश्चितोनानादिगाभोग्यानांयुगपद्भोगप्रदकर्मपरिपाकेएकस्यैवदेहादेश्चातुर्विध्यंतत्तद्देशस्यविषयाणांतत्रतत्रबुद्धौयुगपत्प्रतिबिंबनं चसंपन्नमित्याशयेनाह ॥ तेनेति ॥ ७ ॥ यदायोगिनामगस्त्यादीनांमलयादिनियतैकदेशेनित्यंस्थितानामपिनानादेशेष्वतीतानागतादिकालेपुयोगबलात्सन्निधानेनसर्वानुभ वितृत्वंप्रसिद्धंतदाभिन्नदेशंप्रयातानांविपश्चितांतत्किंवाच्यमित्याशयेनाह ॥ एकदेशेति ॥ ८ ॥ नानादेशेपुयुगपदेकस्यभिन्नक्रियाकारित्वेतत्तद्देशव्याप्तिरेवोपयुज्यतेनजी वभेदइत्याह ॥ अब्दइति ॥ यथाघर्मार्त्तान्आह्लादयतीत्याह्लादःअब्दोमेघोपिमहत्त्वादेवनानानगरगिरिनदीक्षेत्रादिव्याप्तिमांस्तुल्यकालंसौधक्षालनकूटभेदनजलवर्द्धनस स्यपोषणादिपृथक्क्रियास्तुल्यकालंतेनतेनपादेनांशेनकरोतितदभिमानीजीवश्चमयेमाःक्रियाःकृताइत्यनुभवत्यपितद्वद्वात्रोपपत्तिर्बोध्येत्यर्थः ॥ ९ ॥ अणिमाद्यैश्वर्यला भादीश्वरप्रतिमाःयोगिनः ॥ १० ॥ चतुर्भिःशरीरकैःक्वचिद्योगनिद्रांक्वचित्तपःक्वचिदिंद्रानुजतयातत्साहाय्यंक्वचिद्वैकुंठेभोगजानमितिपृथक्क्रियाःकुर्वन्जगत्पातिवरांगनाभुं क्तेअनुभवति ॥ ११ ॥ यदाद्वाभ्यांबाहुभ्यांद्वयोरर्थयोःसंग्रहप्रसक्तिस्तदातंस्भूयसर्वैःकरैःसंग्रामप्रसक्तौनंचकरोति ॥ १२ ॥

दृष्टांतान्प्रकृतेयोजयति ॥ तथैवेति ॥ प्राप्तंसुखदुःखादिकमितिशेषः ॥ १३ ॥ प्रक्रांतंचलितम् ॥ १४ ॥ घनमालिषुमेघमालावत्सुपर्वताग्रेषुनिलीयस्थितम् ॥ १५ ॥ रूढं प्रादुर्भूतम् ॥ १६ ॥ तथापूर्वेणविपश्चिताशाकद्वीपेप्रसिद्धस्योदयगिरेस्तटेविदलस्यदलरहितस्यस्नुहीवृक्षस्यगहनेअंतर्यक्षेणसंमोहनविद्ययासंमोहितेनसप्तवर्षाणिसुप्तम् ॥ अ मुनैवपूर्वविपश्चितापाषाणकरंअंबुअत्रास्मिन्गिरौकचित्पीत्वाप्रसभंबलाद्दृप्तत्तांपाषाणभावमागत्यभूमेरंतस्तज्जात्येनभूत्वासप्तसमाःस्थितम ॥ १७ ॥ अभ्रसन्निहितेगुहागृहे ॥ १८ ॥ शांतभयाख्येवर्षेभूमिभेदेकस्यचिन्मुनेःशापाद्धरीतकीवृक्षतांप्राप्यांऽतर्धानंजनैरदृश्यताम् ॥ वर्षसप्ततिवर्षम् ॥ १९ ॥ २० ॥ दरीषुदर्दुरतांभेकताम ॥ २१ ॥ उत्त रस्योदंतंपुनराह ॥ कौमारमिति ॥ श्यामाद्रेर्नीलगिरेः ॥ अंधोदर्दुरःसन्नित्यर्थः ॥ २२ ॥ पाश्चात्यस्योदंतमाह ॥ मरीचकइति ॥ विद्याधरत्वप्रापिकयामंत्रविद्यया ॥२३॥ कि

तथैवतैर्विपश्चिद्भिःसर्वदिक्कंतथास्थितैः॥ तथाप्यवद्धतंप्राममेकसंविन्मयैरपि॥ १३॥ सुप्तंतैर्भूमिशय्यासुभुक्तंद्वीपांतरेषुच॥ विह्रतंव नलेखासुप्रक्रांतंमरुभूमिषु॥ १४॥ उषितंगिरिमालासुभ्रांतंसागरकुक्षिषु॥ विश्रांतंद्वीपलेखासुनिलीनंघनमालिषु॥ १५॥ रूढमर्णव मालासुवात्यासुजलवीचिषु॥ क्रीडितंभूभृदब्धीनांतटीपुनगरीषुच॥ १६॥ शाकद्वीपोदयगिरितटसप्तवर्षाणिसुप्तंपूर्वेणांतर्विदलगहने यक्षसंमोहितेन॥ पाषाणांबुप्रसभममुनैवात्रपीत्वाद्दृप्तत्तामागत्यांतःस्थितमथसमाःसप्तजात्येनभूमेः॥ १७॥ शाकद्वीपेस्तशैलस्यशिर स्यभ्रगुहागृहे॥ पिशाचाप्सरसामासंपाश्चात्यःकामुकीकृतः॥ १८॥ यत्रशांतभयेवर्षेजलधारेमहागिरौ॥ हरीतकीवनेवर्षपूर्वोतर्द्धानमा ययौ॥ १९॥ अत्ररैवतकेशैलेवर्षेशिशिरनामनि॥ दशरात्रमभूत्सिंहःपूर्वोयक्षवशीकृतः॥ २०॥ अत्रकांचनशैलादिदरीदर्दुरतांगतः॥ पि शाचमायाछलितोदशवर्षाण्युवाससः॥ २१॥ कौमारंवर्षमासाद्यश्यामाद्रेरुत्तरस्तटम्॥ शाकद्वीपेंधकूपेंधोन्यवसच्छरदांशतम्॥ २२॥ मरीचकेकरोद्दर्षेवर्षाण्यत्रचतुर्दश॥ विद्याधरत्वंपाश्चात्यःसविद्याधरविद्यया॥ २३॥ रतक्रमक्रांतपुरारिलक्ष्मीचलांगलेखाक्रमशीक राक्तम्॥ एलालतालिंगनलब्धगंधमालंब्यवेलावनगंधवाहम्॥ २४॥ ॥इ० वा० वा० दे० मो० नि० उ० अवि० वि० चतुर्विंशत्युत्तरशत तमःसर्गः॥ १२४॥ ॥श्रीवसिष्ठउवाच॥ ॥वर्षेशांतभयाभिख्येजलधारेगिरौतरौ॥ तादृक्कर्त्तरिपानीयंशाकद्वीपेपिबन्स्थितः॥ १॥

मालंब्यविद्याधरत्वमकरोत्तदाह ॥रतेति॥ रतंसुरतंतत्र्यत्येनक्रमेणक्रांतस्यपुरारेर्लक्ष्म्याशोभातिशयेनचलानामंगलेखानांक्रमेणोद्भूतैःसीकरैःरक्तंसंपृक्तम् ॥ तथाएलालतानामा लिंगनैर्लब्धगंधंवेलावनस्यगंधवाहंवायुमालंब्यआनंदहेतुत्वेनाश्रित्येत्यर्थः ॥२४॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० चतुर्विंशत्युत्तरशततमःसर्गः ॥१२४॥ ॥ ५ ॥ परस्परोपकारित्वंविपद्यत्रविपश्चिताम् ॥ विष्वगर्थक्रियाजीवन्मुक्तानांचोपवर्ण्यते ॥ १॥ तत्रविपश्चितांभिन्नदिक्षुभ्रमतांपरस्परानुसंधानंविपत्सुपरस्परानुग्रहाकत्वंचास्तिनवेति रामस्यसंशयंलिंगरुपलक्ष्यतंनिराचिकीर्षुर्वसिष्ठःप्रथमंपूर्वस्यशांतभयवर्षेहरीतक्यांतरुभावसंकटेपश्चिमकृतमनुग्रहमाह॥ वर्षेइति ॥ शांतत्र्यर्यामित्याभिख्याप्रसिद्धिर्यस्यतस्मिन् वर्षेअत्रशांतभयेवर्षेजलधारेमहागिराविति प्राक्सर्गोक्तेगिरौहरीतकीवनेहरीतकीवृक्षभूतस्तादृक्तद्वस्थःकर्तरीयंत्रसदृशभूम्यंतःशिलासंबंधिपानीयंमूलैःपिबन्स्थितःपूर्वोविप श्चित्पाश्चात्येनविपश्चितातद्वृत्तांतंज्ञात्वातत्रएत्यआगत्यशापप्रदंमुनिंप्रसाद्यतद्दत्तयाविद्ययाक्रकचेनवृक्षत्वंछित्त्वेववृक्षभावान्मोक्षितइतिपरेणान्वयः ॥ १ ॥

॥ २ ॥ एवंपाश्चात्योपिशिशिराख्येवर्षेपिशाचपतिशापात्पाषाणत्वमुपागतोदक्षिणेनएत्यगोमांसादिप्रयोगतःपिशाचपतिप्रसाद्यमोचितः ॥ ३ ॥ गोरूपयापिशाच्यापिशाच विग्रयावृषीकृतोवृषपिशाचीकृतःपश्चिमोदक्षिणेनमोचितः ॥ ४ ॥ यक्षतांपिशाचभेदताम् ॥ देवतायक्षभावस्यमोक्षणेप्रयोजनाभावात् ॥ यक्षेणपश्चिमप्रसादितेनयक्षपति नानिमित्तेन ॥ ५ ॥ अत्रास्मिन्नेवशाकद्वीपे ॥ ६ ॥ विष्वक्सर्वतोव्याप्यविविधंआप्य ॥ कर्माणिअनुग्रहादीनिकथंकुर्वंतेतत्रोपपत्तिर्वाच्येत्यर्थः ॥ ७ ॥ योगिनांदृशासर्वप्रपं चस्यमनोमात्रत्वान्मानसक्रियासुचमनसःसर्वत्रयुगपद्यवहारेपिनिरंकुशस्वातंत्र्याविघातात्सर्वक्रियोपपत्तिरित्याशयेनवसिष्ठउत्तरमाह ॥ इहेत्यादिना ॥ हेरामइहजगतिअ

पूर्वोथवर्षसप्तत्यापाश्चात्येनैत्यमोक्षितः॥ विग्रयाक्रकचेनेवछित्त्वावृक्षत्वमक्षतः ॥ २ ॥ पाश्चात्यःशिशिरेवर्षेपाषाणत्वमुपागतः ॥ मोचितोदक्षिणेनाशुगोमांसादिप्रयोगतः॥ ३॥ शिवेस्ताचलपारस्थेवर्षेवर्षेणपश्चिमः ॥ मोचितोदक्षिणेनैत्यगोपिशाच्यावृषीकृतः ॥ ४ ॥ अत्रैवक्षेमकेवर्षेआंग्रिकेयगिरौतरौ ॥ दक्षिणोयक्षतांयातोमोक्षंयक्षेणलब्धवान् ॥ ५ ॥ अत्रैवद्वंपकेवर्षेशैलेकेसरनामनि ॥ केसरित्वंगतःपूर्वःपाश्चात्येनैवमोचितः॥ ६ ॥ ॥ श्रीरामउवाच ॥ ॥ एकदेशगताविष्वग्व्याप्यकर्माणिकुर्वते ॥ योगिनस्त्रिपुकालेषु सर्वाणिभगवन्कथम् ॥ ७॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इहरामाप्रबुद्धानांयदस्त्यस्त्वलमेवनः ॥ तेनयत्तुप्रबुद्धानांतदिदंशृणुकथ्यते ॥ ८ ॥ चिन्मात्रसत्तासामान्यादृतेन्यन्नात्मतद्विदाम्॥ दृश्यात्यंताभावबोधेसर्गासर्गदृशोःक्षये ॥ ९ ॥ चिन्मात्रसत्तासामान्येविश्रांत स्यनिरंतरम्॥ सर्वेशस्येहसर्वत्वंसर्वात्मत्वंचसर्वदा ॥ १०॥ वदकेनकथंकुत्रकदाकिमिवरोध्यते॥ सर्वगस्त्वथसर्वात्मायत्रभातियदा यथा ॥ ११ ॥ तथाभातितदातत्रसर्वात्मनिकिमस्तिनो॥ अतीतंवर्त्तमानंचभविष्यत्स्थूलमप्यणु ॥ १२ ॥ तथादूरमदूरंचनिमेषःकल्प एवच ॥ स्वरूपमजहत्येवसामान्येतानिसर्वदा॥१३॥ सर्वात्मनिस्थितान्येवपश्यमायाविजृंभितम्॥ अजातमनिरुद्धंचयथास्थितम वस्थितम्॥ १४॥

प्रबुद्धानांदृशायद्यत्भौतिकादिस्थूलंवस्त्वस्तितेननःप्रबुद्धानामुपपत्तिचिंतयाअलम् ॥ प्रबुद्धानांदृशायत्तुचिन्मात्रंमनोमात्रंवस्तुतत्सर्वत्रार्थक्रियासमर्थंयथोपपद्यतेतथा कथ्यतेशृणिवत्यर्थः ॥ ८ ॥ तत्रचिन्मात्रमेववस्त्वितिकल्पेसर्वेश्वरस्येवसर्वत्रसर्वार्थक्रियोपपत्तिरित्याह ॥ चिन्मात्रेति ॥ तद्विदांतत्त्वविदांदृशाचिन्मात्रसत्तासामान्यादृते अन्यत्जगद्रूपंनविद्यतेआत्मास्वरूपंयस्यतन्नात्म ॥ नशब्दोयंनतुनञ् ॥ निःस्वरूपमितियावत् ॥ ९ ॥१०॥ किंवत्तानिप्राग्वत् ॥ रोध्यतेसर्वत्रसर्वार्थक्रियाविषयेनिवार्यते ॥ दृष्टसृष्टिपक्षमालंब्यापितदनिरोधमाह ॥ सर्वगइति ॥ अथेतिपक्षांतरद्योतनाय ॥ ११ ॥ किंनोअस्तिकितद्यत्ततःसत्तांनलभतइत्यर्थः ॥ अतीतमित्यादिस्तत्प्रपंचः ॥ १२ ॥ सामान्येसत्तासामान्ये ॥ तान्यतीतादीनि ॥ १३ ॥ अनिरुद्धमनष्टम् ॥ १४ ॥

१ क्षेमकेवर्षेइत्यपिक्वचित्पाठः

अतएवसत्तासामान्याधीनस्थितिकत्वादेव ॥ अविकृतस्यसदात्मनएवनभआदिरूपेणस्थितिंप्रपंचयति ॥ नभस्त्वमिति ॥ अत्यजन्स्वसत्तयाअनुगृह्णन्नेव ॥ १५ ॥ मायाशव लोहिजगदात्मातदेवद्रष्टृदृश्यतयाजगद्रूपमुदितम् ॥ यत्तुविश्वात्मनःशबलस्यदृङ्मात्ररूपंवपुस्तत्केनकथंकदाकिंस्यात् ॥ शुद्धेपरिणामविवर्त्ताद्यघटनादित्यर्थः ॥ १६ ॥ सा ध्यासाध्यस्वरूपिणःशबलस्यदुःसाध्यंकिंनकिंचिदितिसर्वदासर्वत्रसर्वार्थक्रियोपपत्तिरित्यर्थः ॥ १७॥ रामप्रश्नसमाधानंप्रकृतेयोजयन्नुपसंहरति ॥ तस्मादिति ॥ ईश्वरचित एवोपाधिभेदेविपश्चिदादिजीवत्वादेकस्याअप्युपाधिनानात्वेनानेकभावापन्नायाअभ्यादिप्रसादात्सर्वंसर्वत्रकार्यंयुज्यतइत्यर्थः ॥ १८ ॥ बोधाबोधात्मरूपेशबलेकिंनामा स्तिअसाध्यमितिशेषः ॥ तत्रैवयुक्त्यंतरमाह ॥ अप्रामायाइति ॥ १९ ॥ योगिनामैच्छिकार्थक्रियासामर्थ्यलक्षणसिद्धतायामप्युपपत्तिमाह ॥ किंचिदिति ॥ बोधप्रकर्षक्र मेणअकामहतत्वप्रकर्षसंभवात्तद्युक्तानंदोत्कर्षप्रयोजकैश्वर्यप्रकर्षक्रमस्याप्युपपत्तेरितिभावः ॥ तेविपश्चितःसंकटंविपद्रोगंचिकित्संतप्रतिकुर्वंति ॥ २० ॥ प्रबुद्धानांमनो

विज्ञानघनमेवेदमतएवजगत्त्रयम् ॥ नभस्त्वमत्यजंश्चैवसर्वात्मैवनभःस्थितम् ॥ १५ ॥ जगदात्माजगद्रूपंद्रष्टृदृश्यतयोदितम् ॥ विश्वात्मदृग्वपुर्यत्स्यात्तत्किंकेनकथंकदा ॥ १६ ॥ दुःसाध्यंब्रूहितत्त्वज्ञसाध्यासाध्यस्वरूपिणः ॥ तस्मादस्याःसदैकस्याविपश्चिद्राजसंविदः ॥ १७ ॥ प्रबोधमनुगच्छंत्याअप्रामायाःपरंपदम् ॥ एकस्याअप्यनेकस्याःसर्वंसर्वत्रयुज्यते ॥ १८ ॥ बोधाबोधात्मरूपेहिकिंनामास्तिपरात्मनि ॥ अप्रामायाःपरंबोधंपदार्थाकुलतोचिता ॥ १९ ॥ किंचिद्बोधंप्रविष्टायाःसिद्धताप्युचितैवसा ॥ एवंतेसर्वदिक्संस्थाःसर्वमेवपरस्परम् ॥ २० ॥ पश्यंत्यनुभवंत्याशुचिकित्संतेचसंकटम् ॥ बोधाकाशःस्वकाद्रूपादीषच्च्युतइवाशुचेत् ॥ २१ ॥ तदन्यतामिवादत्तेसुस्थितोपियथास्थितम् ॥ ॥ श्रीरामउवाच ॥ ॥ विपश्चितःप्रबुद्धाश्चेत्कथंसिंहत्वपादिताम् ॥ २२ ॥ दिक्षुयांतीतिमेब्रह्मन्बोधायकथयाश्वलम् ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ प्रबुद्धाःकथितायेतेयोगिनस्तेमयानघ ॥ २३ ॥ प्रसंगरूपांतरतोनप्रबुद्धाविपश्चितः ॥ विपश्चितोमहाबाहोप्रबुद्धानिपुणंनते ॥ २४ ॥ बोधाबोधदृशोर्मध्येतेहिदोलायिताःस्थिताः ॥ मोक्षचिह्नानिदृश्यंतेबंधचिह्नानिचाभितः ॥ २५ ॥

मात्रमेवसर्वंवस्त्वितिकल्पेतुसर्वत्रसर्वार्थक्रियामनोराज्यवदुपपन्नतैवेत्याशयेनाह ॥ बोधाकाशइति ॥ ईषत्स्वरूपात्प्रच्युतिरेवमनोभावइत्युत्पत्तिप्रकरणेबहुशोव्युत्पादित त्वादितिभावः ॥ २१ ॥ यथास्थितंसुस्थितोपितत्तस्मान्मनोभावलक्षणादीषच्च्यवनदोषादन्यतांजगद्रूपतांयुगपदादत्ते ॥ विपश्चित्त्वसंगेयोगिनांप्रबुद्धानांयुगपत्सर्वार्थक्रियोप पत्तौवर्णितायांविपश्चितोपिप्रबुद्धाइतिमन्यमानोरामःशंकते ॥ विपश्चितइति ॥ प्रबुद्धानांसर्वार्थक्रियास्वातंत्र्येपारतंत्र्येणसिंहत्वपादिदेहसंकटाप्रसक्तेःपरस्परानुपहोक्तिरसं गतेतिभावः ॥ २२ ॥ त्वयायोगिनःकथंव्याप्यकर्माणिकुर्वतेइतिपृष्टमितिमयात्रयोगिनःप्रबुद्धावर्णितानतुविपश्चितोपिप्रबुद्धायोगिनइतीतिवसिष्ठःसमाधत्ते ॥ प्रबुद्धाइति ॥ २३ ॥ त्वत्प्रश्नसमाधानार्थंविपश्चित्प्रसंगरूपस्यांऽतरतःअंतरेणयोगिनस्तेकथितानतुविपश्चितोपिप्रबुद्धाइत्याशयेनेत्यर्थः ॥ २४ ॥ तर्हितेकिमत्यंतमूढानेत्याह ॥ बोधेति ॥ द्वितीयभूमिकास्थाइत्यर्थः ॥ भाविमोक्षचिह्नानिविवेकादीनि ॥ बंधचिह्नानिरागादीनि ॥ २५ ॥

तयाउक्तयातथाभूतयादोलायिततयाधारणयायोगिनोनतुपरंगतायोगिनइत्यर्थः ॥ २६ ॥ हृदयादिप्रदेशेष्वग्निदेवतायांचित्तनिरोधेनतत्प्रसादप्राप्तसिद्धित्वाद्धारणायोगिनोनतुज्ञानयोगिनोयेष्वविद्यानष्टेत्यर्थः ॥ २७ ॥ तेज्ञानयोगिनश्चेदविद्यांकिंकिमर्थमवेक्षंते ॥ तद्दर्शनेनच्छेत्वैषामविद्यानुच्छेदेर्लिंगमित्यर्थः ॥ धारणापरिपाकांतेदेवताप्रसादजेनवरेणप्राप्तसिद्धयस्ते ॥ २८ ॥ तेविपश्चितःअतद्विचारिणआत्मविचारशून्याः ॥ जीवन्मुक्तानांव्यवहारकालएवदेहादिभानंसमाधौनुविदेहकैवल्यसाम्यमेवेतिविपश्चिद्भ्योविशेषांतरंश्रावयति ॥ अन्यच्चेत्यादिना ॥ २९ ॥ व्यवहृतौव्युत्थानकालेएव ॥ कुतस्तेषांसमाधावेवतथात्वंतत्राह ॥ मोक्षइति ॥ योहिबद्धस्तस्यबंधनिवृत्तिर्मोक्षः ॥ चित्तमेवबध्यतेनात्मेतिमोक्षोपितद्धर्मएव ॥ अतःसमाहितेचेतस्येवसमोक्षस्तिष्ठतिनदेहेदेहभावापन्नेव्युत्थितइत्यर्थः ॥ ३० ॥ नदेहेइतिपूर्वान्वयि ॥ यस्तुदेहधर्मोदेहभावाधीनोव्यवहारःसजीवन्मुक्तस्यापिदेहान्ननिवर्त्ततेइतिपदार्थांतरवेदनोपपत्तिरित्यर्थः ॥ तर्हिजीवन्मुक्तचेतोपिदेहभावेबद्ध्येतेतिचेन्नेत्याह॥नकदाचनेति ॥ ३१ ॥ वृंताच्च्युतंपतितंफलं

नित्यधर्मंप्रवुद्धानांतथाभूततयातया॥ विपश्चितोधारणयायोगिनोनपरंगताः॥ २६॥ धारणायोगिनस्तेहिधारणाप्राप्तसिद्धयः ॥ येपरंबोधमायातायेष्वविद्यानविद्यते॥ २७॥ किमविद्यामवेक्षंतेतेतामरसलोचन॥ धारणायोगिनोह्येतेवरेणप्राप्तसिद्धयः॥ २८॥ अविद्याविद्यतेतेषांतेनतेऽतद्विचारिणः॥ अन्यच्चशृणुहेरामजीवन्मुक्तशरीरिणाम्॥ २९॥ भवेद्व्यवहृतावेवपदार्थांतरवेदनम्॥ मोक्षोपिचेतसोधर्मश्चेतस्येवसतिष्ठति॥ ३०॥ नदेहेदेहधर्मस्तुनदेहाद्विनिवर्त्तते॥ नकदाचननिर्मुक्तंचेतोभूयोनिबध्यते॥ ३१॥ यत्नेनापिपुनर्वृंतेकेनवृंतच्युतंफलम्॥ देहस्तुदेहधर्मेणजीवन्मुक्तिमतामपि॥ ३२॥ गृह्यतेतद्वदंतेषांचेतस्त्वचलमेवतत्॥ मोक्षोहिनपरज्ञेयोधारणादिप्रयोगवत्॥ ३३॥ आत्मसंवेद्यएवासौमध्वाद्यास्वादसौख्यवत्॥ सुखदुःखैर्युतोयोसौस्वयंबंधानुभूतिमान्॥ ३४॥ तन्मुक्तौमुक्तइत्युक्तःस्वानुभूतिप्रदस्त्वसौ॥ अंतःशीतलचित्तोहिमुक्तइत्यभिधीयते॥ ३५॥ बंधःसंतप्तचित्तेतिदेहादेस्तन्नदृश्यते॥ शरीरेकणशःकृत्तेराज्येवाविनियोजिते॥ ३६॥

पुनःकेनसमर्थेनापिवृंतेपूर्ववद्बद्धम्॥ नकेनापीत्यर्थः ॥ अतएवमुक्तानाममुक्तानांचदेहधर्मानुवृत्तिस्तुल्यानचित्तधर्मानुवृत्तिरित्याह॥ देहस्त्विति ॥ ३२ ॥ एतएवतेपरैर्जीवन्मुक्ताइमेइतिनज्ञातुंशक्यंतेधारणादिसिद्धास्तुज्ञातुंशक्यंतइत्यपरोविशेषइत्याह ॥ मोक्षइति ॥ ३३ ॥ मनोधर्मोमोक्षःकथमात्मसंवेद्यइत्युच्यतेतत्राह ॥ आत्मसंवेद्यइति ॥ बंधवन्मोक्षस्यापिमनोगतस्यसाक्षिस्वानुभूत्यैवसिद्धेरितिभावः ॥ यदिबंधमोक्षौमनोधर्मौतर्हिकथमात्माबद्धोमुक्तइतिचशास्त्रेव्यवह्रियतेतत्राह ॥ सुखदुःखैरिति ॥ स्वानुभूतिप्रदःअसौआत्मातुमनोधर्मैःसुखदुःखैर्युतःसन्योजीवःस्वयंबंधानुभूतिमान्भवतिसतस्यमनसोमुक्तौमुक्तइतिशास्त्रेउक्तइत्यन्वयः ॥ ३४ ॥ मन्वेवंसतिदेहादयोपिमनोधर्माभ्यांताभ्यांबद्धामुक्ताश्चेतिव्यवह्रियेरंस्तत्राह ॥ अंतरिति ॥ आंतरयोराह्लादसंतापयोरांतरेएवचिदात्मन्यध्यासोऽनुभवसिद्धोभ्युपगंतुंव्यवहर्त्तुंचयुक्तोनबाह्येदेहादावितिभावः ॥ ३५ ॥ संतप्तचित्तेतिसंधिरार्षः ॥ युक्तेमनसिशरीरधर्माणामिवनमनोधर्मस्यमोक्षस्यशरीरेप्रतीतिप्रसक्तिरित्याशयेनाह ॥ शरीरइति ॥ कृत्तेछिन्ने ॥ ३६॥

तत्स्थितंदेहप्रयुक्तम् ॥३७॥ ननुपादेमेकंटकदुःखंदेहेमेचंदनसुखमितिदेहेपिजनोमनोधर्मसुखदुःखादीन्गृह्णातितत्कथमात्मन्येवतदध्यासस्तत्राह ॥ गृह्णतइति ॥ अवच्छेदक तासंबंधेनदेहेसुखदुःखादीन्गृह्णतोपिजनस्यअहंसुखीअहंदुःखीत्यात्मन्येवतदनुभवपर्यवसानात्तत्रैवैषाकल्पनास्तिनअपरेबाह्येदेहादौ ॥ अतएवहिआत्मन्यध्यासमनभ्युपग च्छंतोदेहाद्यात्मताभिमानाद्रूपांतरमुपागताश्चार्वाकनैयायिकसांख्यबौद्धकाणादादयःपंडितामोक्षोपायालाभाद्भग्नाःपराभूताद्दृश्यंतेवेदांतिभिर्वादजल्पकथायांभग्नाःपराजिता दृश्यंतइतियोज्यम् ॥३८॥ अस्तुवाबंधस्यसुखदुःखादेर्देहेपिकथंचिदनुभवोमोक्षस्यतुसनास्त्येव जीवन्मुक्तेःसमाधौदेहाभानेस्फुटंतदनुभवाद्देहभानेव्युत्थानकालेमंदमध्यमज्ञा निभिस्तदनुभवाच्चेत्याशयेनाह ॥ देहादीति ॥ स्वभावान्नित्याशरीरात्मस्वभावात् ॥ तथाचश्रुतिः ॥ अशरीरंशरीरेष्वनवस्थेष्ववस्थितम् ॥ महांतंविभुमात्मानंमत्वाधीरोनशो

रुदतोहसतश्चैवजीवन्मुक्तमतेरिह ॥ नदुःखंनसुखंकिंचिदंतभर्वतितत्स्थितम् ॥ ३७ ॥ गृह्णतोप्यनुभूतिस्तुतत्रैवैषास्तिनापरे ॥ दृश्यंतेपं डिताभग्नारूपांतरमुपागताः ॥ ३८ ॥ देहादिजीवन्मुक्तानांस्वभावान्नकदाचन ॥ मृतोपिनैवम्रियतेरुदन्नपिनरोदिति ॥ ३९ ॥ विहसन्न हसत्येवजीवन्मुक्तामहोदयः ॥ वीतरागाःसरागाभाअकोपाःकोपसंयुताः ॥ ४० ॥ अमोहामोहवलिताद्दृश्यंतेतत्त्वदर्शिनः ॥ इदंसुख मिदंदुःखमित्यादिकलनास्तुताः ॥ ४१ ॥ अलंदूरगतास्तेषामंकुरानभसोयथा ॥ जगदात्माचनास्त्येवयस्यैकंसर्वमस्तिच ॥ ४२ ॥ सुख दुःखादितस्येतिवाग्व्योमविटपोपमा ॥ अशोकाएवशोचंतेजीवन्मुक्ताजयान्विताः ॥ ४३ ॥ अच्छिन्नाएकतद्भावाद्दृश्यंतेतत्त्वदर्शिनः ॥ शिरःकमलजस्योच्चैःसामगायनतत्परम् ॥ ४४ ॥ हरोनखेनचिच्छेदसुकुमारमिवांबुजम् ॥ शक्तोपिनपुनर्ब्रह्माजनयामासतच्छिरः ॥ ४५ ॥ व्योमैकतास्यचिच्छेदोमुधामूर्धंतरेणकिम् ॥ नैवतस्यकृतेनार्थोनाकृतेनेहकश्चन ॥ ४६ ॥ यद्यथानामसंपन्नंतत्तथास्त्वितरेण किम् ॥ हरोहरिणशावाक्षीमक्षीणशरतोश्रुच ॥ धत्तेवपुषिदुग्धाब्धिर्गुप्तामृतकलामिव ॥ ४७ ॥ शक्तोपिरागितामेपनत्यजत्युत्तमाश यः ॥ पंचेपुदाहसमयेदृष्टानीरागतागुणाः ॥ ४८ ॥

चतीति ॥ अतएवसमरणादिदेहधर्मैर्नयुज्यतइत्याह ॥ मृतोपीति ॥ ३९ ॥ मनोधर्मैरपितेषामसंबंधमाह ॥ वीतरागाइति ॥ ४० ॥ ४१ ॥ जगदात्माजगत्स्वरूपंचकारात्तन्मूल मज्ञानंचयस्यनास्त्येव ॥ यस्यसर्वमेकमेकरसंसदस्तिच तस्यजीवन्मुक्तस्यसुखदुःखाद्यस्तीतिवाग्व्योम्नोविटपाःशाखाःसंतीतिवागुपमेत्यन्वयः ॥ ४२ ॥ तत्रकोमोहः कःशो कएकत्वमनुपश्यतइतिश्रुतेःशोकमोहजयान्विताः ॥ ४३ ॥ शिरआद्यंगच्छेदेप्यच्छिन्नाएकतद्भावाअद्वितीयात्मभावाः ॥ कृतदृष्टंतदुदाहरति ॥ शिरइति ॥ गायनमित्यशि त्वात्वाभावश्छांदसः ॥ ४४ ॥ ४५ ॥ अस्यकमलजस्यव्योमैकताआकाशसमताअतोमुधामिथ्याभूतेनेतरेणपंचमेनमूर्ध्नाकिंप्रयोजनमित्यर्थः ॥ तर्हितस्यचतुर्भिःशिरोभिर्वा किमर्थंवेदोपदेशकरणंतत्राह ॥ नैवेति ॥ ४६ ॥ संपन्नंप्राणिकर्मवशादितिशेषः ॥ ईश्वरस्यापिप्राणिकर्मानुसारेणैवव्यवहारोनस्वार्थइत्याह ॥ हरइति ॥ अनुगृहीतादक्षी णशरतोमन्मथाद्धरिणशावाक्षीमर्धांगेधत्ते ॥ निगृहीतात्तुनिरुपप्लवसमाधिप्रवृत्तेरानंदाश्रुस्ववपुषिधत्ते ॥ गुप्तामृतकलामिवेत्युभयदृष्टांतः ॥ ४७ ॥ ४८ ॥

अर्थव्यपाश्रयःप्रयोजनलाभः ॥ ४९ ॥ अरागितयाअन्ययारागितयावाकिंकोलाभःकावाक्षतिरित्यर्थः ॥ ५० ॥ स्वयमसुरनिपहादिकरोतिइंद्रादिद्वाराकारयति ॥ म्रियते अवतारसमाप्तिषुमरणमंगीकरोति ॥ तदनुकूलैःशरभलुब्धकादिभिर्मार्यतेपिच ॥ ५१ ॥ तंप्राणिकर्मवशोपगतंआजवंजवीभावंव्यवहारव्यपतांनचत्यक्तुंशक्नोति ॥ ५२ ॥ ॥ ५३ ॥ सूर्यादीनामपिनिरिच्छानामेवप्राणिकर्मानुसारादेवस्वस्वाधिकारपालनमित्याह ॥ आत्मानमिति ॥ आंदोलयतिभ्रमयति ॥ ५४ ॥ निर्वाणोजीवन्मुक्तः ॥ ५५ ॥ आकल्पंकल्पांतावधि ॥ क्षयंराजयक्ष्माणम् ॥ ५६ ॥ मरुत्तस्ययज्ञेद्वादशवर्षपर्यंतंगजशुंडाप्रमाणाजस्रनिपतद्धृतधारादिहव्यग्रासप्रयुक्ताऽजीर्णेन स्कंदोत्पत्तिप्रसंगेगौरीशस्य

नैवतस्यकृतेनार्थोनाकृतेनेहकश्चन ॥ नचास्यसर्वभूतेषुकश्चिदर्थव्यपाश्रयः ॥ ४९ ॥ रागितैषास्तुमावास्यकिमरागितयान्यया ॥ यद्यथानामसंपन्नंतत्तथास्त्वितरेणकिम् ॥ ५० ॥ करोतिकारयत्युच्चैर्म्रियतेमार्यतेपिच ॥ जायतेवर्धतेजस्रंजीवन्मुक्तोजनार्दनः ॥ ५१ ॥ नचाजवंजवीभावंत्यक्तुंशक्तोप्यसौनतम् ॥ तेनत्यक्तेननैवार्थस्तस्यनैवाश्रितेनच ॥ ५२ ॥ तद्यथास्थितमेवास्तुइहइत्यस्तवासनम् ॥ हरिर्निरिच्छएवास्तेशुद्धचिन्मात्ररूपभृत् ॥ ५३ ॥ आत्मानमांदोलयतिकालकंदुकतांगतम् ॥ अजस्रंनित्यमादित्योजगद्गृहनभोंगणे ॥ ५४ ॥ नचरोधयितुंदेहंनसमर्थोदिनेश्वरः ॥ निरिच्छएवनिर्वाणस्तथाप्यास्तेयथास्थितम् ॥ ५५ ॥ चंद्रोनुभवतिव्यर्थमाकल्पंक्षयमक्षयम् ॥ जीवन्मुक्ततयाखिन्नोयथास्थितमवस्थितः ॥ ५६ ॥ मरुत्तहव्यगौरीशवीर्यग्रासादिखेदिताम् ॥ जीवन्मुक्तोवहत्यग्निर्यथास्थित्यासमस्थितिः ॥ ५७ ॥ वह्वीभिर्विजिगीषाभिःकृपणाविवतिष्ठतः ॥ जीवन्मुक्तावपिगुरूलोकेशुक्रबृहस्पती ॥ ५८ ॥ करोतिजनकोराज्यंजीवन्मुक्तमनामुनिः ॥ जगत्यामाजिषूग्रासुदेहंजर्जरतांनयन् ॥ ५९ ॥ नलमांधातृसगरदिलीपनहुषादयः ॥ जीवन्मुक्ताश्चिरंराज्यंचक्रुराकुलिताइव ॥ ६० ॥ व्यवहारेयथैवाज्ञस्तथैवखलुपंडितः ॥ वासनावासनेएवकारणंबंधमोक्षयोः ॥ ६१ ॥ वलिप्रह्लादनमुचिवृत्रांधकमुरादयः ॥ जीवन्मुक्ताःस्थितिंचक्रुर्वीतरागाःसरागवत् ॥ ६२ ॥ तस्मादसत्त्वेसत्त्वेचरागद्वेषक्षयोदये ॥ नमनागपिभेदोस्तिज्ञखंप्रतिस्वरूपिणि ॥ ६३ ॥

गौरीसंगमेदेवैर्विघ्नाचरणेस्थानात्क्षुभितस्यवीर्यस्यब्रह्मणोनियोगाद्ग्रासःपानंतत्प्रयुक्तेनांतर्दाहेनआदिपदाद्देवानांदिवानिशंहव्यवहनदेवस्वापहरणाप्सुनिलयनादिनाखेदिताम् ॥ ५७ ॥ विजिगीषाभिःपरस्परजयेच्छाभिः ॥ ५८ ॥ आजिषुयुद्धेषु ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ एतेनजीवन्मुक्तानांरागद्वेषाभासदर्शनेपिमुक्तिसंदेहोनिरस्तइतिदर्शयन्नुपसंहरति ॥ तस्मादिति ॥ ज्ञखंजीवन्मुक्तचिदाकाशंप्रतिलक्षीकृत्यरागद्वेषयोःक्षयेउदयेवाचरितेनचसत्त्वेसुचरित्रत्वेअसत्वेदुश्चरित्रत्वेवास्वरूपिणिआविर्भूतस्वरूपवतिमोक्षेमनागपिभेदःसंशयोनास्ति ॥ ६३ ॥

१ हव्यवहनेनदेववस्त्वपहारेणेत्यादिःक्वचित्पाठः

नाहंब्रह्मेतिभेदमतौसत्यांहिमुक्तौसंशयःस्यात्सैवतेषांनास्तीत्याह ॥ ज्ञानेनेति ॥ आकाशोब्रह्माकाशस्तद्वच्छुद्धेनचरमसाक्षात्कारवृत्त्यात्मकज्ञानेनयेधारयंतिदेहमनःप्राणादीनितिधर्माजीवास्तान्गगनोपमानसंगाद्वयपूर्णब्रह्मभावेनाकाशसदृशान्विंदंतिलभंतेतेषांजीवन्मुक्तानांभेदभ्रमहेत्वज्ञानस्यनष्टत्वात्पुनर्भेदमतिःकुतःकस्मान्निमित्तात्संभाव्येतेत्यर्थः॥ ६४ ॥ तत्त्वसाक्षात्कारेणजीवजगद्भेदःकुतोबाध्यतइतिचेत्भ्रांतिमात्रसिद्धत्वादित्याशयेनतस्यावस्तुतांदृष्टांतेनसाधयति ॥ भास्वरमिति ॥ शक्रकोदंडमिंद्रचापः ॥ मेघपटलस्थाःसूर्यरश्मयएवेंद्रचापात्मनादृश्यंतइतिप्रसिद्धम् ॥ ६५ ॥ ब्रह्मांडलक्षणाःपरमाणवः ॥ ६६ ॥ व्यक्तिप्रकटताम् ॥ अजातमनुत्पन्नम् ॥ अनिरुद्धमनष्टम् ॥६७॥ अप्यर्थेतथाशब्दः ॥ जातमप्यजातमेवरुद्धंनष्टंचअरुद्धमनष्टमेव ॥ जगत्तयापिगृहीतेनित्यकूटस्थासंगाद्वयेवस्तुनिआद्यंतायप्रसक्तेरितिभावः ॥ ६८ ॥ जगद्भावइवतज्जन्मनिरोधभावोपिब्रह्मणिकल्पनयोपपाद्यतेइतिचेदिष्टापत्तिः ॥ कल्पनामात्रेणकौटस्थ्याक्षतेरित्याशयेनाह ॥ जातमिति ॥ यथास्तंभोदारुमयोदार्वेवतथातस्यस्तंभस्यैकदेश

ज्ञानेनाकाशशुद्धेनधर्मान्येगगनोपमान् ॥ विंदंतिजीवन्मुक्तानांतेषांभेदमतिःकुतः ॥ ६४ ॥ भास्वरंशक्रकोदंडंयथानानेवशून्यकम् ॥ आभासमात्रमेवायंतथादृश्यात्मकोभ्रमः ॥ ६५ ॥ शक्रचापेयथाभांतिनानावर्णानभोंगणे ॥ तथाशून्यात्मकाएवब्रह्मांडपरमाणवः ॥ ६६ ॥ इदंजगदसद्भातिसदिवव्यक्तिमागतम् ॥ अजातमनिरुद्धंचयथाशून्यत्वमंबरे ॥ ६७ ॥ साद्यंतमप्यनाद्यंतमशून्यमपिशून्यकम् ॥ जगज्जातंतथाजातमरुद्धंरुद्धमेवच ॥ ६८ ॥ जातंनिरुद्धमस्येवंब्रह्मव्योमैवभासते ॥ यथादारुमयस्तंभस्तथातच्छालभंजिका ॥ ६९ ॥ समस्तकलनोन्मुक्तंसमंनिर्निद्रमासनम् ॥ यदेकांतचिदाकाशंतद्विद्यात्तन्मयंजगत् ॥ ७० ॥ देशाद्देशांतरप्राप्तौयन्मध्येसंविदोवपुः ॥ अनुन्मेषंचिदाकाशंतद्विद्यात्तन्मयंजगत् ॥ ७१ ॥ तत्रयद्द्वैतमैक्यंतन्मन्येतदपिनैवच ॥ तद्व्योमकेवलंभातिमन्येतदपिनैववा ॥ ७२ ॥ जगदाकाशमेवेदमात्मैवात्मनिवास्थितम् ॥ भविष्यत्पुरवद्दृष्टमपिस्फारमपिस्फुटम् ॥ ७३ ॥

स्याशालभंजिकाप्रतिमापिदार्वेवेत्यर्थः ॥ ६९ ॥ अकल्पनंतुजगद्ब्रह्मैवेतिसमाधिदृष्ट्याअनुभवमारोपयेदित्याह ॥ समस्तेति ॥ समाधिनासमस्तकलनोन्मुक्तंनिर्निद्रंचसमंयदासनमात्ममात्रतयावस्थानंतन्मयंतन्मात्रमेवतज्जगद्विद्यात् ॥ ७० ॥ असमाधावपिशाखाचंद्रदर्शनेबुद्धिवृत्तेःशाखादेशाच्चंद्रदेशप्राप्तौमध्येयन्निर्विषयंवृत्त्यभिव्यक्तंसंविदःस्वरूपंतन्मयंजगद्विद्यादित्याह ॥ देशादिति ॥ ७१ ॥ तत्रतादृशेचिदात्मनियद्द्वैतंविशेषरूपमैक्यंसामान्यरूपंचाभातितदपितत्त्वस्माच्चिदाकाशस्वभावाद्वनैवनास्त्येवेतिमन्येमननेननिश्चिनोमि ॥ तत्केवलंव्योमशून्यमितिचयद्भातितदपिचनैव ॥ पूर्णानंदैकरसेशून्यत्वस्याप्ययोगादित्यर्थः ॥ ७२ ॥ शून्यतापूर्णताचसप्रतियोगिकालोकेयादृशीप्रसिद्धायथाजलेनशून्योघटोजलेनपूर्णइतिवा साआत्मनिनसंभवति किंतुजगदिदंजगद्भावस्यात्यंताप्रसिद्ध्याआकाशमेवेदमितिशून्यत्वम् ॥ एवमात्मैवात्मनिसंस्थितमित्यन्यनिरपेक्षंपूर्णत्वम् ॥ यथाभविष्यत्पुरमिदानींप्रतियोगिनिरपेक्षशून्यतयादृष्टंस्फारंदिक्कालादियथाप्रतियोगिनिरपेक्षपूर्णतयास्फुटंदृष्टंतद्वदित्यर्थः ॥ ७३ ॥

हेआकाशकोशमिवविशदाशयरामयद्दृश्यजातंशिलाघनप्रायमेवशांतंब्रह्मैवमौनंतिष्ठतिनामतस्यस्वात्मैवजगदित्यभिधांविधायायंमोहितइवतिष्ठतिअहोनुमायाअत्याश्चर्यंभू तेत्यर्थः ॥ ७४ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०पंचविंशत्युत्तरशततमःसर्गः १२५ ॥ ॥ ७ ॥ ॥ मृतानामिहसर्वेषांस्वांतःसंस्थतिविभ्रमः ॥ उत्तरस्य तमःस्वातदर्शनांतोऽनुवर्ण्यते ॥ १ ॥ तेषुपूर्वादिषुदिगंतेषुगतास्तेविपश्चितःकिंकुर्वंतआसन् ॥ १॥ एतेषांकिंवृत्तंवृत्तांतम् ॥ २ ॥ तेषांमध्येएकोविपश्चित्क्रौंचद्वीपेप्रसिद्धस्यवर्ष सीमगिरेःपश्चिमेतटभागेकरिणाअद्रितटेवप्रशिलायांकटेनगंडेनदंताभ्यांपिष्टःसंचूर्णितोमृतइत्यर्थः ॥ वरप्रार्थनकालेआसिद्धगम्यमध्वानंमृत्युरस्माकमस्तुमाइत्यवधिकरणात्त

आकाशकोशविशदाशयदृश्यजातंमौनात्मतिष्ठतिशिलाघनमेवशांतम् ॥ यन्नामतस्यजगदित्यभिधांविधायस्वात्मैवमोहितइवाय महोनुमाया ॥ ७४ ॥ ॥ इ०वा०वा०दे०मो०नि०उ०अवि०विप०जीवन्मुक्तकलनंनामपंचविंशत्युत्तरशततमःसर्गः ॥ १२५॥ श्रीरामउवाच॥ ॥ अनंतरंमुनिश्रेष्ठकुर्वंतःकिंविपश्चितः॥ आसंस्तेषुदिगंतेषुसद्वीपाब्धिवनाद्रिषु॥ १ ॥ ॥श्रीवसिष्ठउवाच॥ ॥शृ णुकिंवृत्तमेतेषांताततत्रविपश्चिताम् ॥ तालीतमालमालाढ्यद्वीपाद्रिवनचारिणाम् ॥ २ ॥ क्रौंचद्वीपगिरेरेकोविपश्चित्पश्चिमेतटे ॥ क टेनाद्रितटेपिष्टःकरिणाकमलंयथा ॥ ३॥ द्वितीयोनभसानीतोरक्षसाविक्षतांगकः ॥ निक्षिप्तोवाडवेवह्नौतत्रभस्मत्वमागतः ॥ ४ ॥ तृ तीयस्त्वैदर्शदेशंनीतोविद्याधरेणवै ॥ गतोऽप्रणामकुपितशक्रशापेनभस्मताम् ॥ ५ ॥ चतुर्थश्चतुरंगच्छन्कुशद्वीपगिरेस्तटे ॥ दुर्वारेणन दीकच्छेमकरेणाष्टधाकृतः ॥ ६ ॥ इतितेपंचतांप्रापादिङ्मुखेष्वाकुलाशयाः ॥ क्षयेचतुर्षुचत्वारोभूपालालोकपालवत् ॥ ७॥ अथतेषां ददर्शासौव्योम्न्येवव्योमरूपिणाम् ॥ संविस्प्राक्तनसंस्काराद्व्योमात्मावनिमंडलम् ॥ ८ ॥ सप्तद्वीपाब्धिवलयंपुरपत्तनभूषणम् ॥ सुरशै लशिरःपीठंब्रह्मलोकशिरोमणिम् ॥ ९ ॥ चंद्रार्कबिंबनयनंतारामुक्ताकलापकम् ॥ विलोलमेघवसनंनानावनतनूरुहम् ॥ १० ॥ देहा न्विपश्चितांसंविद्ददर्शचतुरोपिसा ॥ प्राग्वत्कल्पपरावृत्तौद्यौर्दिगंतानिवाततान् ॥ ११ ॥

दुत्तरंसिद्धागम्योध्वेत्यनुक्तमदिगम्यते ॥ एवमग्रेपिबोध्यम् ॥ ३ ॥ द्वितीयोविपश्चिद्रक्षसायुद्धेविक्षतांगकोनभसानभोमार्गेणनीतोवाडववह्नौसामुद्रेनिक्षिप्तस्तत्रभस्मत्वंचाग तः ॥ ४ ॥ त्वैदर्शदेशमिद्रसभांगतः ॥ तत्रचअप्रणामान्नमस्काराकरणात्कुपितस्यशक्रस्यशापेनभस्मतांगतः ॥ ५ ॥ चतुर्थोविपश्चित्कुशद्वीपगिरेस्तटेनदीकच्छेमकरेणअष्ट धाशकलीकृतोमृतइत्यर्थः ॥ ६ ॥ इतिअनयारीत्यातेचत्वारोभूपालाविपश्चितःपंचतांमरणंप्रापुर्यथाक्षयेकल्पांतेचत्वारोलोकपालाःपंचतांयांतितद्वत् ॥ ७ ॥ अथमरणा नंतरंतेषांसंविद्व्योमात्माभूत्वातस्मिन्व्योम्न्येवअवनिमंडलंपूर्ववद्ददर्श ॥ ८ ॥ अवनिमंडलकीदृशंददर्शतदाह ॥ सप्तद्वीपेत्यादि ॥ सुरशैलोमेरुःसएवशिरःपीठमिवोन्नतोयस्य ॥ ब्रह्मलोकोत्रमेरुस्थंब्रह्मगृहम् ॥ ९ ॥ १० ॥ कल्पःप्रलयस्तत्परावृत्तौसर्गारंभकाले ॥ द्यौरितितत्रप्रथमसृष्टाःप्रजापतयोगृह्यंते ॥ ११ ॥

अन्योन्स्येवचिदात्मनिव्योमताप्रतीतिस्तदात्मकास्ते विपश्चितःआतिवाहिकसंवित्तेर्मानसप्रतिभासमात्रस्य विषयेप्रातिभासिकदेहआधिभौतिकदेहत्वभ्रयुक्तस्थौल्यजाड्यादि भावान्अपतोददृशुः ॥ १२ ॥ अस्यैवंनिश्चितस्यदेहस्यअज्ञातआत्माआत्मकत्वद्भावेसतिइयंदृश्यपृथ्व्यादिरूपाअविद्याकियतीकिंपरिमाणास्यादितीक्षितुंपूर्वसंस्कारवशा त्प्रवृत्ताः ॥ १३ ॥ दृश्यदर्शनयोर्मध्येउर्वीमंडलरूपायाअनुभवाकृतेरविद्यायानिष्ठामियत्तयापरिच्छितिंद्रष्टुम् ॥ १४ ॥ तेषुपश्चिमोविपश्चित्घनभूमौप्रागुक्तस्वर्णघनायांभू मौक्रीडंतंजनार्दनंभाग्योदयवशात्प्रापददर्श ॥ १५ ॥ तस्माज्जनार्दनादनुपमंज्ञानंब्रह्मविद्यांसमासाद्यतस्मिन्नेवदिगंतरेसःसमाधानेसमाधौवर्षपंचकमतिष्ठत् ॥ १६ ॥ देहंदेह भावंपरित्यज्यवीतहव्योपाख्यानोक्तरीत्याचित्तेसत्तांसन्मात्ररूपताम् ॥ असत्तामितिवाछेदः ॥ सविपश्चित्परंनिर्वाणंकैवल्यमाययौयथातस्यप्राणआकाशभावमाययौतद्व त् ॥ उपलक्षणमेतत्षोडशकलानाम् ॥ गताःकलाःपंचदशप्रतिष्ठामितिश्रुतेः ॥ १७ ॥ पूर्वःपूर्वदिक्प्रवृत्तोविपश्चित्पर्वणिराकायांशीतांशोःपूर्णचंद्रस्यबिंबपार्श्वेचंद्रसंनिधावि तियावत् ॥ स्थितंस्वंवपुश्चिरमैंदववदातद्भावोदयंचिंतयन्नुन्नष्टदेहोभूत्वाचंद्रपुरेस्थितः ॥ नन्विदमयुक्तम् ॥ चतुर्ष्वपिशरीरेष्वेकोहिविपश्चिज्जीवोयोगिकायव्यूहेष्विवविभक्त

आतिवाहिकसंवित्तेस्तेऽव्योम्निव्योमतात्मकाः ॥ आधिभौतिकदेहत्वभावान्ददृशुरग्रतः ॥ १२ ॥ अस्यात्मकत्वेत्विद्येयंकियतीस्यादिती क्षितुम् ॥ चत्वारोपिप्रवृत्तास्तेसंस्कारवशतःपुरः ॥ १३ ॥ दृश्यदर्शनयोरुर्वीमंडलानुभवाकृतेः ॥ निष्ठांद्रष्टुमविद्यायाभ्रेमुर्द्वीपांतराणिते ॥ १४ ॥ द्वीपसप्तकमुल्लंघ्यसमहार्णवसप्तकम् ॥ विपश्चित्पश्चिमःप्रापघनभूमौजनार्दनम् ॥ १५ ॥ तस्मादनुपमंज्ञानंसमासाद्यदिगंतरे ॥ तस्मिन्नेवसमाधानेसोतिष्ठद्वर्षपंचकम् ॥ १६ ॥ ततोदेहंपरित्यज्यचित्तेसत्तामुपागते ॥ सतत्प्राणइवाकाशंपरंनिर्वाणमाययौ ॥ १७ ॥ पूर्वःपर्वणिशीतांशुबिंबपार्श्वेस्थितंवपुः ॥ चिंतयंश्चिरमुन्नष्टदेहश्चंद्रपुरेस्थितः ॥ १८ ॥

स्थितःतस्यपश्चिमशरीरेविष्णुप्रसादाज्ज्ञानेननिर्वाणप्राप्तौकोन्यःपुनःपूर्वविपश्चिच्छरीरेचंद्रोपासनयाचंद्रलोकंयायात् ॥ नह्येकस्यैवजीवस्यकचिन्मुक्तिःकचिद्बंधश्चयुगपत्स मंजसौ ॥ मुक्तिफलस्यपाक्षिकत्वपरिच्छिन्नत्वयोरापत्तेः ॥ नचैकस्यदेहचतुष्टयधारणेनजीवचतुष्टयभावोजीवांतरोत्पत्तिर्वायुक्ता ॥ आद्येचतुर्द्धाविभागेपूर्वजीवस्यनाशाप त्तेः ॥ द्वितीयेप्यभिनवोत्पन्नानांकामकर्मवासनादिबीजाभावेनसंसारानापत्तेः ॥ नचभोगवैचित्र्यमिवबंधमोक्षवैचित्र्यंकर्मभिर्माययावाअविरोधेननिर्वोढुंशक्यंमोक्षस्याक र्मतंत्रत्वाद्विश्वमायानिवृत्तिश्रुतिविरोधाच्चेतिचेत् ॥ सत्यम् ॥ अयमत्राशयोभगवतोवसिष्ठस्यलक्ष्यते ॥ नजीवोनामब्रह्माकाशादतिरिक्तःकश्चिदस्ति ॥ ब्रह्मैवह्यंतःकरणोपाधि पुमाययाविभक्तंतद्गतकामकर्मवासनानुसारेणसंसरदिवविभाव्यमानंजीवइत्युच्यते ॥ तत्रांतःकरणानांदीपवद्बहूनांमेलनेएकत्वमुचयश्चभवति ॥ एकस्यचयोगदेवताप्रसादा दिनिमित्तवशायुगपद्विरुद्धानेकदेशभोग्यकर्मोद्भवाच्चानेकभावोपिभवति ॥ तत्रयदाबहूनांजीवानांतुल्यदेशकालभोग्यसमानकामकर्मवासनोद्भवस्तदातद्भोगायमेलनेएक जीवत्वमेवभवतियावद्विरुद्धदेशभोगहेतुकर्मोद्भवंलाघवादेकमेवभोगायतनंशरीरंसंपद्यते ॥ यथायुधिष्ठिरजीवोधर्मस्यइंद्रस्यचमेलनेनैकोजीवः[1] यथावाअर्जुनजीवोद्वयोरिंद्र योर्नरस्यचमेलनेनैकःयथावानकुलसहदेवयोरिंद्रस्याश्विनोश्चमेलनेनैकोजीवः ॥ द्रौपद्याश्चनारायणीलक्ष्मीगौर्यंशमेलनेनैकोजीवःपंचेंद्रोपाख्यानादिपर्यालोचनेप्रसिद्धः ॥

१ एतदपेयथावाभीमस्यवाय्विंद्रयोर्मेलनेनैकोजीवइत्यपेक्षितमितिभाति

यथावाअग्नेर्वायोश्चेंद्रशापादगस्त्यावतारेमेलनेनैकोजीवइत्याद्यूह्यम् ॥ एकस्यजीवस्यानेकधोपाधिविभागेअनेकजीवतापि ॥ इंद्रहंतारंपुत्रंकश्यपाद्गर्भंप्राप्यअशुचित्वेनसु
प्तायादितेरेकर्जीवैकशरीरकस्यगर्भस्थेंद्रेणप्रथमंसप्तधाछेदनेसप्तजीवास्ततएकैकस्यसप्तधाछेदनेजातानामेकोनपंचाशन्मरुतामेकोनपंचाशर्ज्जीवाःसंपन्नाः ॥ वटेक्षुदूर्वादीनां
चकांडशाखारुहांप्रतिशाखंप्रतिकांडंचप्ररोहेणजीवनदर्शनादेकस्यनानाजीवात्मनोपाधिकोविभागश्चप्रसिद्धतरएव ॥ इत्थंचप्रकृतेपिचतुर्णांजीवानांयावत्समानकामकर्मो
द्भवेएकदेहतयाराज्यपरिपालनम् ॥ विरुद्धभिन्नदेशभोग्यकर्माद्युद्भवेचदेहादिविभागेनदिगंतरप्रसर्पणमितिकल्पनेवाएकस्यैवविपश्चिज्जीवस्योपाधिविभागेनमरुद्वच्चतुर्जीव
भावोभूदितिकल्पनेवाएकमुक्तौनसर्वमुक्तिप्रसंगः ॥ नचबहूनांमेलनेनैकजीवारंभेतस्याभिनवस्यकर्माभावात्संसारानुपपत्तिः ॥ आरंभवादेनाभिनवजीवोत्पत्त्यनभ्युपगमात् ॥
गंगायमुनयोर्मेलनेनैक्यापत्तावप्यभिनवगंगोत्पत्तिबुद्ध्यभावेनसैवेयंगंगेतिप्रत्यभिज्ञयाद्वयोरप्येकगंगात्मनावस्थानवदनादिजीवयोरैक्येनावस्थानेबाधकाभावात् ॥ उपाधि
द्वयस्यमेलनेनैक्येउपहितेपिमेलनैक्यस्यसर्वप्रत्ययसिद्धत्वात् ॥ एकत्वेनापिप्राक्तनकर्मभोगसंभवात् ॥ एवमेकस्यचतुर्जीवभावेप्रत्यभिज्ञयाचतुर्णामपिप्राक्तनजीवादभेदेन
तद्गतकामकर्मवासनाराशीनांचतुर्धाविभागेनव्यवस्थितेःसंसरणोपपत्तिस्तत्रैकस्यमुक्तावप्यपरस्यज्ञानाभावात्संसरणोपपत्तिश्च ॥ नचैवंमुक्तिफलस्यपाक्षिकत्वपरिच्छिन्नत्व
योःप्रसंगः ॥ व्यष्टिजीवानांमुक्तावपिसमष्टिहिरण्यगर्भजीवस्याधिकारांतमुक्तिवदुपपत्तेः ॥ नहिसमष्ट्यात्मनोहिरण्यगर्भस्यतत्त्वज्ञानंव्यष्टीनांमुक्त्यभावेपाक्षिकपरिच्छिन्न
मोक्षफलम् यत्रवर्त्तमानेपिव्यष्टिसमष्ट्यभेदेनमुक्तिसंकरस्तत्रसांप्रतिकेजीवभेदेसतिप्राक्तनतदभेदमात्रेणमुक्तिसंकरापादनस्यानवसरएव ॥ भूयश्चांतेविश्वमायानिवृत्तिरिति

दक्षिणःशाल्मलिद्वीपेराजमुत्सन्नशात्रवः ॥ करोत्यद्यापिनसतोविस्मृतान्यविनिश्चयः ॥ १९ ॥

श्रुतिरपितत्तज्जीवोपाधिकृत्स्नबीजनिवृत्तिपरा ॥ अन्यथाएकमुक्त्यैवज्ञानशून्यानामपिसर्वजीवानांमुक्त्यापत्तेः ॥ तद्योयोदेवानांप्रत्यबुध्यतसएवतदभवत्तथर्षीणांतथामनु
ष्याणाम् बहवोज्ञानतपसापूतामद्भावमागताइत्याद्यनेकश्रुतिस्मृतिवैयर्थ्यापत्तेश्च ॥ नचेदानींतनमंदाधिकारिणोभाविबहुतरजन्मलभ्यमोक्षप्रत्याशयासाधनानुष्ठानंनस्यान्म
मैकस्यानेकजीवभावेक्वचिन्मोक्षेपिक्वचिद्बंधानुवृत्त्यनिवृत्तिःस्यादितिशंकयाअनिर्मोक्षशंकानपनयादिनिवाच्यम् ॥ मोक्षसाधनानुष्ठानप्रवृत्तेःस्वल्पमप्यस्यधर्मस्यत्रायतेमह
तोभयात् नहिकल्याणकृत्कश्चिद्दुर्गतिंतातगच्छति अनेकजन्मसंसिद्धस्ततोयातिपरांगतिमितिस्मृतिप्रामाण्यानुरोधेनोत्तरजन्मसुनानाजीवात्मनाअविभागस्यविभागेवासंहै
वसाधनसंस्कारैर्विभागात्सर्वत्रक्रमेणावश्यंज्ञानोदयस्यवानुमानेनसाधनानुष्ठानेप्रवृत्त्युपपत्तेः ॥ वर्णिताहितथैवभिक्षुजीवटोपाख्यानेभिक्षोःसाधनानुष्ठानवतःप्रमादिकसंक
ल्पप्राप्तनानाजीवभावस्यांतेशतरुद्रभावेसर्वेषांतद्विभागजीवानांज्ञानावाप्तिर्मुक्तिश्चेति ॥ नचैवंसर्वजीवमुक्त्यनापत्तिरिष्टापत्तेः ॥ मायादृष्ट्यामायानंत्यस्यनरूपमस्येहतथोप
लभ्यतेनांतोनचादिर्नचसंप्रतिष्ठा नित्यैवसाजगन्मूर्त्तिस्तयासर्वमिदंततमित्यादिस्मृतिसिद्धत्वात् ॥ तत्त्वदृष्ट्यातुजीवएवनास्तिकस्यमुक्त्यनापत्तिः ॥ नचातोन्यदार्त्तमितिश्रुति
विरोधः ॥ तस्याःश्रुतेर्व्यक्त्यार्त्तिमात्रेणाप्युपपत्तेःप्रवाहानंत्येप्यविरोधात् ॥ चरमव्यक्तिनाशस्यैवप्रवाहनाशतयासर्वजीवसंसारचरमव्यक्त्यप्रसिद्धौतन्नाशस्याप्रसिद्धेः ॥ प्र
कृतेतुपश्चिमविपश्चितएकस्यैवभगवद्भक्तिपरिपाकोदितात्तदनुग्रहाज्ज्ञानलाभोनान्येषामितितस्यैकस्यैवमुक्त्युपपत्तिरिति ॥ १८ ॥ अथदक्षिणोविपश्चित्किमकरोत्तत्राह ॥
दक्षिणइति ॥ उत्सन्नाःशात्रवायेनतथाविधःसन् ॥ सतःपारमार्थिकतत्त्वस्यलाभाद्विस्मृतःअन्यविनिश्चयोबाह्यार्थनिश्चयोयेनतथाविधस्तुन ॥ १९ ॥

सप्तमांबुधौस्वादूदेमकरेणनिगीर्णःसन्मकरोदरेवर्षाणांसहस्रमेकंउवास ॥ २० ॥ तत्रकिमाहारोभूत्तत्राह ॥ मकरोदरेति ॥ २१ ॥ ततःहिमकल्पजलस्यस्वादूदांभोधेरवशि
ष्टान्यशीतिसहस्राणियोजनान्युल्लंघ्यसुघनंविशालमुदरंयस्यास्तथाविधांसौवर्णींमहामहींप्राप्तइत्युत्तरेणान्वयः ॥ २२ ॥ २३ ॥ अथतस्यांभूमौसविपश्चिन्मृतःसन्नुत्तमांना
कितांदेवभावमगात् ॥ यथाग्निमध्यस्थंकाष्ठंक्षणादग्नितांगच्छतितद्वत् ॥ २४ ॥ असौविपश्चित्प्रधानदेवोदेवश्रेष्ठोभूत्वाप्राक्तनदिगंतोपसर्पणवासनयाततोलोकालोकगिरिंग
तः ॥ कीदृशंलोकालोकगिरिम् ॥ उत्तरेआमेरुशृंगमुन्नतत्वात्तरुप्रायस्यास्यभूमंडलस्यमूलेआलवालंसेतुमिवस्थितम् ॥ २५ ॥ अस्यलोकालोकगिरेःएकःप्रथमोभागःसूर्या

उत्तरस्तरलास्फालकल्लोलेसप्तमांबुधौ ॥ सहस्रमेकंवर्षाणामुवासमकरोदरे ॥ २० ॥ मकरोदरमांसाशीमृतेमकरनायके ॥ मकरोदर
तोब्धेश्चनिर्गतोमकरोयथा ॥ २१ ॥ ततोशीतिसहस्राणियोजनानांघनावनिम् ॥ हिमकल्पजलांभोधेरुल्लंघ्यसुघनोदरीम् ॥ २२ ॥ प्रा
प्तोदशसहस्राणियोजनानांमहामहीम् ॥ सौवर्णींसुरसंचारसरणिंमृतवानसौ ॥ २३ ॥ तस्यांभूमौचमध्येचविपश्चिन्नाकितामगात् ॥
उत्तमामग्निमध्यस्थंक्षणात्काष्ठमिवाग्नितम् ॥ २४ ॥ प्रधानदेवोभूत्वासौलोकालोकगिरिंगतः ॥ अस्यभूमंडलतरोरालवालमिवस्थि
तम् ॥ २५ ॥ सपंचाशत्सहस्राणियोजनानांसमुन्नतः ॥ आलोकलोकाचाराढ्योभागएकोस्यनेतरः ॥ २६ ॥ लोकालोकशिरःप्राप्तंतार
कामार्गसंस्थितम् ॥ अधःस्थिताअपश्यंस्तमुच्चनक्षत्रशंकया ॥ २७ ॥ तस्मात्प्रदेशात्तत्पारेतमस्तस्यमहागिरेः ॥ चतुर्दिक्कंमहाखातंन
भःशून्यमनंतकम् ॥ २८ ॥ ततोभूगोलकोयंहिसमानोवर्त्तुलाकृतिः ॥ नभःशून्यंमहाखातंततस्तिमिरपूरितम् ॥ २९ ॥ तत्रालिकज्जल
तमालनभोंतरालनीलंतमोनचमहीनचजंगमादि ॥ नालंबनंनचमनागपिवस्तुजातंकिंचित्कदाचिदपिसंभवतीतिविद्धि ॥ ३० ॥
इ०वा०वा०दे०मो०नि०उ०अवि०वि०विपश्चिज्जन्मांतराचरणंनामषड्विंशाधिकशततमःसर्गः ॥ १२६ ॥ ॥छ॥

लोकेनलोकानांजनानामाचारेणव्यवहारेणचाढ्यइतरस्तुन ॥ २६ ॥ लोकालोकगिरेरारोहणेनतच्छिरःप्राप्तंतंदेवविपश्चितंअधःस्थाजनानक्षत्रशंकयाअपश्यन् ॥ २७ ॥
तस्यमहागिरेःपारेपरभागेतमः ॥ चतुर्दिक्कंपरितःमहत्खातंपरिखाकारोगर्त्तः ॥ नभइवसर्वप्राणिशून्यमनंतकमनेकयोजनविस्तृतम् ॥ २८ ॥ २९ ॥ हेरामतत्रतस्मिन्खातेअ
लिरिवकज्जलमिवतमालद्रुवनभोंतरालेनीलंतमएवास्ति ॥ नचमहीनचजंगमादिप्राणिजातमस्ति ॥ आलंबनमाश्रयश्चनास्ति ॥ नचकिंचिद्वस्तुजातंकदाचिदपिसंभवतीतित्वं
विद्धीत्यर्थः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेषड्विंशत्युत्तरशततमःसर्गः ॥ १२६ ॥ ॥छ॥ ॥छ॥

भूमिनक्षत्रचक्रादेःस्थितिस्तत्परतोनभः ॥ ब्रह्मांडखर्परद्वंद्वस्थितिश्चात्रोपवर्ण्यते ॥१॥ प्रासंगिकोरामप्रश्नः ॥निराधारंभूगोलकंकथंस्थितम् ॥ ऋक्षगणोनक्षत्रचक्रंचनिराधारं कथंयातिभ्रमति॥त्वदुक्तोगिरिश्चकथंलोकालोकः ॥ तत्संज्ञानिमित्तंकिमित्यर्थः ॥१॥ तत्राद्यप्रश्नस्यवसिष्ठःप्रथममुत्तरमाह ॥ यथेति॥वीटाकंदुकः॥ चिन्मात्रबालेनहिरण्य गर्भेणकल्पिताभूरपितथाअंबरेआकाशेतिष्ठतिनपततीत्यर्थः ॥ २ ॥ मिथ्यात्वाद्वापतनसंभावनावारणीयेत्याह ॥ यथेति ॥ तिमिरमस्यास्तीतितिमिरिकम् ॥ मत्वर्थीयष्ठन् ॥३ ॥ धार्यमाणंकेनचिदाधारेणाध्रियमाणंनदृश्यतेनानुभूयते ॥ सांकल्पिकैरेवस्तंभकुड्यादिभिर्धार्यंतेयद्यपितथापिसांकल्पिकस्तंभादेरवस्तुत्वान्माधार्यंतेनधार्यंतेच ॥ तथोर्व्यपीत्य र्थः॥४॥सर्ववस्तुस्वभावानांचिदधीनसिद्धिकत्वादधृतगोलकाकारेणचितासिद्धायाभूमेस्तादृशएवस्वभावोवाऽनुमीयतामित्याशयेनाह ॥ यद्यथेति ॥तदात्मकमितिवस्तुस्वभाव स्तथेतितत्प्रकारस्वभावस्तावदितितदायुर्नियतिस्वभावःपरिगृह्यते ॥५॥ केशचंद्रादिदर्शनमित्यत्रकेशदर्शनंस्पष्टयति ॥ तिमिरेति ॥ तथाभ्रांत्यैवस्थितः ॥६॥ नद्यादीनांनिम्नवा हित्वस्वभावादविपरीतस्वभावोपिचेत्क्वचिच्चिताभास्येततर्ह्यस्तीत्येवप्रतिपत्तिःस्यान्ननास्तीतियथास्वमेइत्याह ॥ ऊर्ध्वमिति ॥ तासामधस्तादधोमुखज्वालोहुताशनश्चितिचे त्सर्गादौभातितत्प्रतीतंवैपरीत्यमिदानीमपिस्थितमेवभवेन्नास्थितम् ॥ ७ ॥ अतएववादिनांभूमेरजस्रपतनोर्ध्वगमनभ्रमणप्लवनादिकल्पनादितत्तद्बुद्ध्यवच्छिन्नचित्सत्तयासत्यै

श्रीरामउवाच॥ ॥भगवन्कथयैतन्मेकथंभूगोलकंस्थितम्॥ कथमृक्षगणोयातिलोकालोकःकथंगिरिः॥१॥ ॥श्रीवसिष्ठउवाच॥ यथासंकल्परचिताशिशोर्व्योमनितिष्ठति॥ वीटाचिन्मात्रबालेनकल्पिताभूस्तथांबरे॥२॥ यथातिमिरिकाक्षाणांकेशचंद्रादिदर्शनम्॥ चिदाकाशस्यसर्गादौतथापृथ्व्यादिदर्शनम्॥ ३॥ यथासंकल्पनगरंधार्यमाणंनदृश्यते॥ धार्यतेधार्यतेमाचतथोर्व्यनुभवश्चितेः॥४॥ यद्यथायावदाभातिचितिचित्त्वात्स्वभावतः॥ तत्तथातावदाभातितत्रतत्रतदात्मकम्॥ ५॥ तिमिराक्रांतनेत्रस्यकेशोंड्रकमिवांबरे॥ चिन्मात्रस्यमहीगोलोयोभातःसतथास्थितः॥ ६॥ ऊर्ध्वंवहंत्यःसरितस्तदधस्ताद्धुताशनः॥ चितिचेत्स्वप्नवद्भातितत्तथातत्स्थितंभवेत् ॥७॥ तस्मात्पतंतीभूर्भातापतत्येवानिशंजगत्॥ उत्पतंतीतुचिद्भातातथानानात्मिकाभवेत्॥८॥

वेत्याशयेनोपसंहरति ॥ तस्मादिति ॥ तथाहि ॥ वादिनःकेचिद्गुरुत्वादजस्रंमहाकाशेपतत्येवभूः ॥ आकाशस्याधोदेशावध्यभावाच्चनक्वचिदस्याःपतनंविश्राम्यतिविपुल तरत्वाच्चतत्पतनमस्माभिर्नविभाव्यते ॥ ज्योतिश्चक्रंचोभयतोमेरुसंलग्नध्रुवद्वयेबद्धंसहैवपततितच्चलघुतरत्वात्पतनवशादेवानादिकालाद्भ्रमतीतिमन्यंते ॥ अन्येतुयोप्सुनावंप्र तिष्ठितांवेदप्रत्येवतिष्ठतीतिश्रुतेर्भूम्याधारोऽर्णवोस्तितत्रानिबद्धानौरिवभ्रमंत्येवास्तेभूःप्रलयेचतत्रैवनिमज्जतिसर्गकालेचजलतुंबिकान्यायेनोर्ध्वमायातीति ॥ अन्येतुमन्यंते ॥ उपर्यधस्तात्परितश्चभूमेरपरिच्छिन्नंजलमेवास्ति॥ तत्रांतश्छिद्रेषुभूमेःसप्तलोकाःपवनपूर्णांतरालाःसंति ॥ तत्रांतरस्यवायोर्लाघवातिशयबलाज्जलमग्नतुंबीफलमिवसततमूर्ध्वं गच्छतीति॥अपरेतुमन्यंतेभूगोलात्परितआकाशएव ॥ तस्यचानंत्याद्गुरुत्वान्मेरुसंलग्नदेवदृशादक्षिणभागस्यैवाधोभागत्वाद्दक्षिणतएवसदापततीति ॥ अन्येत्वासुरावादिनःपा तालमेवोर्ध्वदेशंमन्यमानादेवाभिमतामूर्ध्वदिशमधइतिकल्पयंतउत्तरतएवगुरुत्वाद्भूःपततीतिमन्यंते ॥ अनयैवरीत्याप्राच्यपाश्चात्याअपिस्वस्वदेशमेवोर्ध्वंमन्यमानाःप्राचीप्रती च्योरपिपतनंमन्यंते ॥ अन्येतुज्योतिश्चक्रंनभ्रमतिकिंतुभूरेवस्वस्थानेभ्रमतितद्द्वयमविभावयंतोनौस्थास्तरुचलनमिवज्योतिश्चक्रंभ्रमत्पश्यामइति ॥ अपरेतुभूमिरेवसर्वतोधस्त

स्याःपरितःस्थितानांजनानांदृष्ट्यातत्तच्छिरोदेशोपलक्षिताःसर्वाएवोर्ध्वंदिशः ॥ तत्रगुरुत्वाद्यस्यामधोदिशिपृथिव्याःपतनंसंभाव्येतसैवनिर्धारितरूपानास्तीतिविनिगमनाविरहात्क्वापिनपततीतिस्वस्थानेस्थिरैवास्तेइति ॥ तेषांतेषांवादिनांस्वस्वबुद्ध्यवच्छिन्नचित्सत्तयासर्वंसत्यंस्वतस्तुनकिंचिदपिसत्यमितिभावः ॥ तथातत्तद्ध्यानानुसारेणविरुद्धनानात्मिकैवभवेत् ॥८॥ स्तब्धानिश्चलेतिभातास्तब्धैव ॥ दिवारात्रंयेप्राणिनोऽप्रतिहतचक्षुषस्तद्दृष्ट्यासदैवसालोकाप्रकाशवती ॥ एवंनिरालोकलोकानांजात्यंधानांदृशासदैवनिरालोका ॥ आत्मनिबुद्ध्यवच्छिन्नचिति ॥९॥ एवंसदसद्वादिनांचिद्ध्यानानुसारेणतथापितारा चक्रंमहीचतथैवभवतीत्याह ॥ चिद्ध्यानेति ॥१०॥ प्रश्नद्वयोत्तरेसमाप्तेतृतीयप्रश्नोत्तरमारभते ॥ आलोकालोकमिति ॥ इयंभूःआलोकालोकंलोकालोकमभिव्याप्यस्थितातावत्येव ॥ अथतदनंतरंनभोरूपंखातंगर्त्तोवलयाकारस्तत्रचमहत्तमस्तत्रैकार्णवा

स्तब्धभातास्थितास्तब्धासालोकातुप्रकाशिनी॥ निरालोकानिरालोकलोकानामात्मनिस्थिता॥ ९॥ चिद्ध्यानैकानुसारेणताराचक्रंतथामही॥ असदेवसदेवेदंभातीदमविखंडितम्॥ १०॥ आलोकालोकमेवाथनभःखातंततोमहत्॥ तमएकार्णवाकारंस्थितंतत्रक्वचित्क्वचित्॥ ११॥ दूरत्वादृक्षचक्रस्यकरालत्वान्महागिरेः ॥ क्वचित्तमःक्वचित्तेजस्तत्रैवाचत्वरेपिच॥ १२॥ लोकालोकगिरेःपारेस्थितादाकाशमंडलात्॥ दशदिक्कंसुदूरेणऋक्षचक्रंविवर्त्तते॥ १३॥ आपातालदिवानद्धमृक्षचक्रंतदंबरे॥दशदिक्कंप्रसरतिपतदूर्ध्वादितेभितः॥ १४॥ भूलोकमेवपातालयुतंनक्षत्रमंडलम् ॥ पर्येतिलोकालोकांतेनान्यच्चित्कल्पनाच्चतत्॥ १५॥ सलोकालोकभूलोकद्विगुणात्खादनंतरम्॥ पक्वाक्षोटस्यभिस्सेवस्थितंनक्षत्रमंडलम् ॥ १६॥ द्विगुणानभसस्तस्मादृक्षचक्रस्यपुष्टता॥ दशदिक्कंविसरतोविल्वत्वक्सदृशास्थितेः॥ १७॥ संविद्घनस्यकचनंयादृशंकल्पनात्मकम्॥ यदित्थंसंनिवेशेनन्वियंजागतीस्थितिः॥ १८॥ नक्षत्रचक्राद्द्विगुणंततोन्यद्द्विघतेनभः॥ तच्चक्वचित्प्रकाशाढ्यंक्वचित्सांद्रतमोमयम्॥ १९॥

कारम् ॥ क्वचित्क्वचिदित्युक्त्यातच्छृंगद्वयांतरालद्वंयस्तौरालोकप्रवेशोप्यस्तीतिगम्यते ॥११॥ तस्यलोकालोकनामप्रवृत्तौनिमित्तमाह ॥ दूरत्वादिति ॥ ऋक्षचक्रस्यनक्षत्रचक्रस्यचातात्परतःपरिवर्त्तिनःअतिदूरत्वात्गिरेश्चकरालत्वात्क्वचिदेकभागेतमः ॥ चत्वरशब्देनाधित्यकागौण्यावृत्त्योच्यते ॥ आचत्वरेधित्यकापर्यंतेक्वचिद्भागेतेजोपिचेतिसलोकालोकाख्यइत्यर्थः ॥ १२ ॥ दूरत्वमेवदर्शयति ॥ लोकालोकेति ॥ विवर्त्ततेपरिभ्रमति ॥ १३ ॥ अधऊर्ध्वंचकियद्विस्तृतंतत्राह ॥ आपातालदिवइति ॥ सर्वोर्ध्वात्ध्रुवान्नक्षत्रेअन्यत्सर्वंपतत्भ्रमत् ॥ १४ ॥ इदंनक्षत्रमंडलंपातालसहितंकृत्स्नंभूलोकंपर्येतिप्रदक्षिणीकरोति तच्चचित्कल्पनादन्यन्न ॥ १५ ॥ पक्वस्याक्षोटफलस्यभिस्सावीजसारावरणभागइव ॥ १६ ॥ तस्माद्भूलोकद्विगुणान्नभसःऋक्षचक्रस्यद्विगुणापुष्टताअंतर्दलविस्तारः ॥ १७ ॥ संविद्घनस्यशबलब्रह्मणःसत्यसंकल्पात्मकंयादृशंकचनंतदेवेत्थंसंनिवेशेनब्रह्मांडतदवयवरूपेणजागतीस्थितिरित्यर्थः ॥ १८ ॥ ततःपरतःपूर्वोक्तनभसोन्यन्नभोविद्यते ॥ १९ ॥

॥ २० ॥ तदंतर्दलपरिमाणमाह ॥ योजनानामिति ॥ संवेदनमयंकल्पनामात्ररूपंपरमार्थतोव्योमविकारपंचीकृतभूतकार्यभूतंव्योमचिदाकाशमेव ॥ २१ ॥ महागोलाकारे नभसिस्वर्कंतारकंज्योतिश्चक्रंसर्वदिक्कंतिष्ठति ॥ एवंसतिकिमत्रअस्मिन्ज्योतिश्चक्रेकिमूर्ध्वंकिमधःस्यात्यदिस्यात्तर्हिसर्वमूर्ध्वंसर्वंचाधः चशब्दात्सर्वंदक्षिणोत्तरपूर्वपश्चात्तो पिवास्यादित्यर्थः ॥ २२ ॥ सर्ववस्तूनांपतनंउत्पतनंतिर्यग्गमनंस्थितं एकत्रावस्थानंयद्भातितच्चितःप्रत्यगात्मनःस्फुरितंप्रतिभानमात्रमेव ॥ वस्तुतस्तुनपतनमस्तिनचोत्पतनमस्ति नवागमनमागमनंस्थितमवस्थितंकिंचिदित्यप्यस्ति ॥ अद्वयत्वविरोधादित्यर्थः ॥ २३ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनि॰उ॰सप्तविंशत्युत्तरशततमःसर्गः ॥१२७॥ तमःश्वभ्रंसमुत्तीर्यंब्रह्मांडावरणानिच ॥ विपश्चितोत्रभ्रमणमविद्यायामुदीर्यते ॥ १ ॥ इदंज्योतिश्चक्रतत्परिमाणादिकंत्वयाकेनप्रमाणेनावगतंतत्राह ॥ अस्मदादेरिति ॥ जन

पर्यंतेतस्यनभसःस्थितंब्रह्मांडखर्परम् ॥ एकमूर्ध्वेपरमधोगगनंमध्यमेतयोः ॥ २० ॥ योजनानांकोटिशतंपुष्टंवज्रदृढंचतत् ॥ स्थितंसंवेदनमयंव्योम्निव्योममयात्मकम् ॥ २१ ॥ सर्वदिक्कंमहागोलेनभसिस्वर्कंतारकम् ॥ किमत्रोर्ध्वमधःकिंस्यात्सर्वमूर्ध्वमधश्चवा ॥ २२ ॥ पतनमुत्पतनंगमनंस्थितंचितइतिस्फुरितंनतुवस्तुतत् ॥ पतनमस्तिनचोत्पतनंनवागमनमागमनंस्थितमित्यपि ॥ २३ ॥ ॥इ॰वा॰म॰वा॰दे॰मो॰नि॰उ॰अ॰वि॰भूगोलकनिर्णयोनामसप्तविंशाधिकशततमःसर्गः ॥ १२७ ॥ ॥ ६५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अस्मदादेर्जनस्यैतत्प्रत्यक्षंनानुमानिकम् ॥ शुद्धबोधशरीरेणनाधिभौतिकरूपिणा ॥ १ ॥ एतदस्मज्जगत्स्वप्नेनान्येपुकथितंमया ॥ अन्येष्वस्तिजगत्स्वप्नेष्वेवमन्यापिचस्थितिः ॥ २ ॥ जगत्स्वप्नेपुचान्येपुसंस्थानकथनेनकिम् ॥ नह्युपयोगिकादन्याकथाभवतिधीमताम् ॥ ३ ॥ सर्वेपामुत्तरेमेरुर्लोकालोकश्चदक्षिणे ॥ येषामित्यनुमाशेषभूतौघेतेनपंडिताः ॥ ४ ॥ प्रत्यक्षमेतदन्येपांयत्रतेन्येजगद्भ्रमाः ॥ नास्माकंविपयेतंहितथासंस्थानशोभिनः ॥ ५ ॥ सर्वेपामुत्तरेमेरुर्लोकालोकश्चदक्षिणे ॥ सप्तद्वीपनिवासानांनान्येषामितिनिश्चयः ॥ ६ ॥ प्रकृतंशृणुहेरामतद्ब्रह्मांडकवाटकम् ॥ यत्प्रमाणंततोवारिवाद्येदशगुणंस्थितम् ॥ ७ ॥

एतस्यब्रह्मांडस्य... ॥ १ ॥ — अस्मदादेरिति ॥ ...शुद्धबोधशरीरेणनत्वाधिभौतिकस्थूलरूपेणेत्यर्थः ॥ १ ॥ एतद्यन्मयालोस्ययोगिजनस्ययोगज्ञानाभ्यासशोधितत्वाच्छुद्धोयस्तत्त्वबोधःसर्वजगत्तत्त्वसाक्षात्कारस्तत्प्रधानेनातिवाहिकशरीरेणनत्वाधिभौतिकस्थूलरूपेणेत्यर्थः

स्ययोगिजनस्ययोगज्ञानाभ्यासशोधितत्वाच्छुद्धोयस्तत्त्वबोधःसर्वजगत्तत्त्वसाक्षात्कारस्तत्प्रधानेनातिवाहिकशरीरेणनत्वाधिभौतिकस्थूलरूपेणेत्यर्थः ॥ १ ॥ एतद्यन्मयालोकालोकज्योतिश्चक्रादिसंस्थानंकथितंतदस्मद्दृष्टेजगत्स्वप्नेप्रसिद्धंकथितमन्येपुतुनकथितम् ॥ अन्येपुब्रह्मांडांतरलक्षणेषुजगत्स्वप्नेष्वप्येवमेवोत्सर्गतःस्थितिःक्वचिदन्यादृश्यपीत्यर्थः ॥ २ ॥ तर्हिनदपिवदतत्राह ॥ जगदिति ॥ ३ ॥ हेपंडिताःतेनउत्सर्गेणतुसर्वेषांब्रह्मांडानांमध्येसर्वद्वीपसमुद्राणामुत्तरेमेरुर्लोकालोकस्तुदक्षिणेइतिअशेषभूतौघेयेषांजिज्ञासातेषामनुमानमनुमाप्रवर्ततामित्यर्थः ॥ ४ ॥ येत्ववांतरविशेषास्तेतत्रत्यानामेवप्रत्यक्षानात्रत्यानामित्याह ॥ प्रत्यक्षमिति ॥ ५ ॥ अन्येषांब्रह्मांडाद्बहिर्गतानाम् ॥ ६ ॥ ब्रह्मांडस्यकवाटकंप्रागुक्तखर्परद्वयंयत्प्रमाणंप्रागुक्तशतकोटियोजनप्रमाणंततःपरंवाह्येदशगुणंवारिजलावरणंस्थितम् ॥ ७ ॥

---

१ बहुषुपुस्तकेपुस्वर्गतारकमितिपाठोमूलेटीकायांचदृश्यतेसविचारणीयः

ननुतस्यंकआधारस्तत्राह ॥ तदिति ॥ तद्ब्रह्मांडकवाटमेवपार्थिवभागतयाआकर्षणशक्त्यातद्धारिधत्ते ॥ यथातृणमणिस्तृणचुंबकमणिविशेषस्तृणमाकर्षणशक्तिरूपस्वभावे नधत्ते ॥ यथावाकल्पवृक्षोऽर्थिवांछितानिरत्नानिधत्तेतद्वदित्यर्थः ॥ ८ ॥ तर्हिमेघनिर्मुक्तजलकरकादयःसमुद्रनद्यादिपुनपतेयुर्जलेआकर्षणशक्त्यभावात्किंतुदूरादपितीरभूमिमेवोपसृत्यतत्रपतेयुस्तत्राह ॥ सर्वेषामिति ॥ एतेवृष्टिजलादयः ॥ ९ ॥ प्रागुक्ताद्ब्रह्मांडावरणजलाद्वाह्ये ॥ १० ॥ ११ ॥ ब्रह्माकाशमविद्याशबलब्रह्माकाशम् ॥ चिद्घनंप्रज्ञानघनंसुषुप्तिकल्पम् ॥ १२ ॥ अयोघनवदच्छिद्रनिर्वाणरूपिणि ॥ १३ ॥ कचंत्युद्भवंति ॥ उपरमंतिप्रलीयंते ॥ १४ ॥ किंतत्कारणंयद्ब्रह्मांडलक्षाणिकचयतितत्राह ॥ नकिंचिदिति ॥ किंतुतद्ब्रह्मैवालनिअविद्ययातादृग्रूपमेवावस्थितम् ॥ १५ ॥ प्रश्नोत्तरमुपसंहृत्यप्रकृतंश्रावयति ॥ एषइति ॥ १६ ॥ सुष्ठुअभ्यस्तःपूर्वोदिगंतदर्शनोद्योगसंस्कारोयेनत

तद्ब्रह्मांडकवाटंतुतृणंतृणमणिर्यथा ॥ धत्तेवारिस्वभावेननित्यंकल्पकरत्नवत् ॥ ८ ॥ सर्वेषामेवभावानांस्थितःकल्पकरत्नवत् ॥ सर्वदापार्थिवोभागस्तेनात्रैतेपतंत्यलम् ॥ ९ ॥ जलाद्दशगुणंबाह्येस्थितंतेजोनिरिंधनम् ॥ आकाशविशदंशांतस्तब्धज्वालोदरोपमम् ॥ १० ॥ तस्माद्दशगुणोबाह्येसंस्थितोवायुरायतः ॥ वायोर्दशगुणंबाह्येव्योमतिष्ठतिनिर्मलम् ॥ ११ ॥ ततःपरतरंशांतंब्रह्माकाशमनंतकम् ॥ नप्रकाशंनचतमोमहाचिद्घनमव्ययम् ॥ १२ ॥ अनादिमध्यपर्यंतेतस्मिन्ब्रह्ममहांबरे ॥ महाचिन्मात्रेसर्वात्मन्ययोनिर्वाणरूपिणि ॥ १३ ॥ ब्रह्मांडानांतादृशानांदूरेदूरेपुनःपुनः ॥ मिथोलक्षाणिलक्षाणिकचंत्युपरमंतिच ॥ १४ ॥ नकिंचित्कचयत्यत्रसमेकचनरूपिणि ॥ तादृग्रूपंतथारूपंतदात्मन्येवसंस्थितम् ॥ १५ ॥ एषतेकथितःसर्वोदृश्यानुभवनक्रमः ॥ अधुनाशृणुकिंवृत्तंलोकालोकेविपश्चितः ॥ १६ ॥ स्वभ्यस्तपूर्वसंस्कारोविलसन्निश्चयेरितः ॥ लोकालोकगिरेर्मूर्ध्नस्तमःश्वभ्रंपपातसः ॥ १७ ॥ ददर्शतत्रशिखरप्रतिमैर्विहगैर्वपुः ॥ विकर्त्तितंमनोदेहंप्रस्तंचस्वंचितिते ॥ १८ ॥ देशस्यतस्यपुण्यत्वाद्देहंतच्चातिवाहिकम् ॥ आधिभौतिकताबोधंनानयन्निर्मलाशयः ॥ १९ ॥ तावन्मात्रप्रबोधोसौनाधिकंबोधमागतः ॥ चिंतयित्वासितंकार्यंबभूवप्रकृतेर्हितः ॥ २० ॥

थाविधनिश्चयेनेरितोविपश्चित्तस्यलोकालोकगिरेर्मूर्ध्नःशिखरात्परतःप्रागुक्तंतमःश्वभ्रंपपातविवेश ॥ १७ ॥ तत्रचनिजंस्वंदेववपुःपर्वतशिखरप्रतिमैर्महत्तरैर्विहगैर्गृध्रादिभिर्विकर्त्तितंविच्छिद्यभक्षितंददर्श ॥ तदनंतरंचस्वांचितिते दिगंतदर्शनेमनोदेहमेवप्रवृत्तंददर्श ॥ १८ ॥ तस्यमरणप्रदेशस्यपुण्यत्वात्स्थूलदेहभावगोचरसंस्कारोद्बोधकचतुर्विधभूतग्रामादिशून्यत्वादितियावत् ॥ तन्महिम्नातदातिवाहिकंदेहमाधिभौतिकताबोधंनअनयत् ॥ आतिवाहिकभावंनविसस्मारेतियावत् ॥ १९ ॥ तावन्मात्रःस्थूलदेहातिरिक्तात्ममात्रगोचरःप्रबोधोयस्यतथाविधोऽसौविपश्चित्ततोधिकंदेहत्रयातिरिक्तशुद्धचिन्मात्रात्ममात्रगोचरंबोधंनागतः ॥ ततोदिगंतदर्शनलक्षणंकार्यमसितमपर्यवसितंचिंतयित्वाप्रकृतेरुपसर्पणस्वभावस्यहितःअनुकूलोबभूवनोपरतइत्यर्थः ॥ २० ॥

नन्वदेहंचित्तंबहिःकथंप्रसरतिगच्छति ॥ तदभ्युपगमेपिपूर्वंदेवशरीरेणापिनभोवर्त्मन्यप्रतिहतगतिःसआसीत्ततस्तन्नाशेपिमनोदेहेननभोमार्गेगच्छतस्तस्यपूर्वदेहान्मनोमात्रमय देहस्यकोविशेषोभूदितिरामःपृच्छति ॥ अदेहमिति ॥ २१ ॥ तत्राद्यप्रश्नस्योत्तरमाह ॥ संकल्पेत्यादिना ॥ नहिसंकल्पस्यपथिप्रसरोदेहप्रसरमपेक्षतेइत्यर्थः ॥ २२ ॥ २३ ॥ द्वितीयस्योत्तरमाह ॥ पततीति ॥ तुशब्दआधिभौतिकापेक्षयाविशेषद्योतनार्थः ॥ यस्मिंस्तुदेहेतेभ्रमस्वप्नमनोराज्यादयःपततिप्रसरंतितच्छरीरमातिवाहिकमित्यर्थः ॥ अत्रा तिवाहिकेदेहएवतद्भावविस्मृत्याआधिभौतिकताबुद्धिरुदेतीतिप्रागुक्तस्यानुवादोविशेषप्रदर्शनार्थः ॥ २४ ॥ कदातर्हिआधिभौतिकभावनिवृत्त्याआतिवाहिकपरिशेषस्तत्रा ह ॥ तेतदेति ॥ तेइतिपदंपूर्वश्लोकान्वयि ॥ विचारेणआधिभौतिकविभ्रमेअंतर्धिमायातेसतितदाआतिवाहिकःशिष्यते ॥ २५ ॥ आतिवाहिकदेहनिवृत्त्याचिन्मात्रपरिशे षेपिविचारएवोपायइत्याशयेनाह ॥ आतिवाहिकइति ॥ निपुणंतेजसासोम्यशुंगेनसन्मूलमन्विच्छेतिश्रुतिदर्शिततत्त्वदर्शनोपायेन ॥ २६ ॥ निर्विषयचिन्मात्राप्रसिद्धिस्तु

श्रीरामउवाच ॥ ॥ अदेहंप्रसरत्येतच्चित्तंकार्येकथंमुने॥ आतिवाहिकसंवित्तेर्बोधःस्यात्कीदृशोधिकः॥ २१॥ ॥श्रीवसिष्ठउवाच॥ संकल्पपथिकत्वेनयथांतःपुरवासिनः॥ इदंमनःप्रसरतितथास्यप्रसृतंमनः॥ २२ ॥ भ्रमेस्वप्नेमनोराज्येमिथ्याज्ञानेकथाश्रुतौ॥ यथा मनःप्रसरतितथातत्प्रसृतंमनः॥ २३॥ पततितुशरीरंतदातिवाहिकमुच्यते॥ आधिभौतिकधीर्भ्रांतिविस्मृत्यात्रैवकालतः॥ २४॥ तेत दांतर्धिमायातेसर्परज्जुभ्रमोपमे॥ आधिभौतिकदेहेस्मिन्नूछिष्यतेत्वातिवाहिकः॥ २५॥ आतिवाहिकएषोंगनिपुणंप्रविचार्यताम्॥ चिन्मात्रव्यतिरेकेणयावदत्रान्यदस्तिनो॥ २६॥ देशाद्देशांतरप्राप्तौयन्मध्येसंविदोवपुः॥ चिन्मात्रस्यास्यतद्रूपमनंतस्यैकरूपिणः॥ २७॥ क्वद्वैतंक्वचवाद्वेषःक्वरागादितुकथ्यताम् ॥ सर्वंशिवमनाद्यंतंपरोबोधइतिस्मृतः॥ २८॥ निर्मनोमननंशांतमासितंबोधउत्तमः॥ आति वाहिकदेहस्थोनतंबोधमुपागतः॥ २९॥ विपश्चित्तद्विबोधोसौददर्शविसरन्मनः॥ आतिवाहिकबोधेनगर्भवासोपमंतमः॥ ३०॥ तम सोंतेविरिंचांडकवाटच्छेदभूतलम्॥ वज्रसारंहेममयंकोटियोजनविस्तृतम्॥ ३१॥ तदंतेप्रापसलिलंतस्माद्दशगुणंततः॥ कपाटभूम्यै वसमंस्थितमर्णवपृष्ठवत्॥ ३२॥ तमतीत्यततःप्रापतेजोर्कगणभीषणम् ॥ प्रलयाग्निघनज्वालापिंडकोटरभास्वरम्॥ ३३॥ दाहशो कादिमुक्तेनवपुषामानसेनतत्॥ तत्रगच्छन्सबुबुधेवहनंपूर्ववासितम्॥ ३४॥

प्राग्बहुशोवारितैवेत्याशयेनप्राग्बहुशःपठितमेवश्लोका र्द्धंपुनःपठति ॥ देशादिति ॥ तद्रूपंप्रसिद्धमेवेतिशेषः ॥ २७ ॥ तत्रचद्वैतरूपस्यविषयस्यतत्प्रयुक्तरागद्वेषादेश्चप्रसक्तिरेवनास्तीत्याह ॥ क्वेति ॥ २८ ॥ यन्निर्गतमनोमननमासि तमवस्थानंसएवोत्तमोबोधः ॥ आतिवाहिकदेहस्थोविपश्चित्तुतंबोधंनोपागतःकिंतुतद्विबोधःआतिवाहिकदेहमात्रात्मबोधवान् ॥ अतएवायंविसरन्मनोददर्शेतिपरेणान्वयः ॥ २९ ॥ गर्भवासोपमंतमश्चददर्श ॥ ३० ॥ विरिंचांडस्यकपाटप्रायोयश्छेदःखंडस्तद्रूपंभूतलंसंपुटविभागसंधिभूतमितियावत् ॥ ३१ ॥ तदुत्तरंतदावरणप्राप्तिमाह ॥ तदंते इति ॥ कवाटभूम्यैवसमंतुल्यतयाद्वीपांतेअर्णवपृष्ठवत्स्थितम् ॥ जलस्यनिराधारावस्थानायोगाद्दंडकपालखंडमाश्रित्यतद्वदेवविभज्यस्थितमितिभावः ॥ ३२ ॥ तैजसावत्र रणस्यतुनजलवदाधारापेक्षेतिसंधिविभागाभावात्पिंडकोटरमिवभास्वरमित्युक्तिः ॥ ३३ ॥ तत्रतैजसावरणेगच्छन्सविपश्चित्तदुत्तरंवाय्वावरणेवहनंबुबुधे ॥ ३४ ॥

तच्चतस्यस्वमकल्पनाप्रायंनवास्तवमितिबुबुधेइतिपदस्यतात्पर्यमित्याह ॥ उह्यमानइति ॥ ३५ ॥ तादृशवेदनबलादेववाय्वावरणतरणंतस्येत्याह ॥ इतीति ॥ ३६ ॥ ब्रह्माकाशमविद्याशबलब्रह्माकाशम् ॥ ३७ ॥ दृष्टसंस्कारवशादितिभावः ॥ ३८ ॥ पुनर्नरादृष्टाइतिविपरिणामेनानुषज्जते ॥ ३९ ॥ निष्ठितंघनंनिर्घनम् ॥ ४० ॥ अनिष्ठिताअव्यवस्थिताः ॥ ४१ ॥ निश्चयाज्जगत्सत्यतानिश्चयात् ॥ सत्यतासत्यस्वभावःपर्यालोचितश्चेत्साब्रह्मैव ॥ ४२ ॥ तत्कुतस्तत्राह ॥ वस्तुतइति ॥ ४३ ॥ यद्ब्रह्मजाग्रतिस्वप्नेचयथायादृशवासनोद्भवेनप्राग्दृष्टंसांप्रतंपश्यस्यग्रेपिद्रक्ष्यसितद्ब्रह्मतथैवासीदस्तिभविष्यतिच ॥ ४४ ॥ अतएवेदंजगत्सदसद्विलक्षणमनिर्वचनीयमेवेत्याह ॥ घनतमइति ॥ इदंआसीदस्तिभविष्यतीतिक्रमयुक्तंजगत्प्रतिभानंघनंतमःअविद्यामात्रमेवप्रमीलितयोर्विलोचनयोस्तैमिरिकंचक्रकमिवमहद्भाति ॥ तच्चपरश्चिन्मात्रात्मातत्तयानसत्प्रतिभात्मतया

उह्यमानोविवेदासावात्मानंवातिवाहिकम् ॥ चित्तमात्रात्मनःस्वस्यकिमिवोह्यतइत्यपि ॥ ३५ ॥ इतिबोधेनधीरात्मातंततारानिलार्णवम् ॥ प्रापतद्वितंव्योमतस्माद्दशगुणंस्थितम् ॥ ३६ ॥ तदतिक्रम्यसप्रापब्रह्माकाशमनंतकम् ॥ यत्रसर्वंयतःसर्वंयन्नकिंचिच्चकिंचन ॥ ३७ ॥ मनसाप्रभ्रमंस्तत्रदूराद्दूरतरंययौ ॥ तेनदृष्टंचपृथ्व्यापस्तेजोवायुस्तथाजगत् ॥ ३८ ॥ पुनःसंसाररचनाःपुनःसर्गाःपुनर्दिशः ॥ पुनर्मही धराव्योमपुनर्देवाःपुनर्नराः ॥ ३९ ॥ पुनःपंचमहाभूतपर्यंतेब्रह्मनिर्घनम् ॥ पुनस्तत्रजगंत्युच्चैःपुनःसर्गाःपुनर्दिशः ॥ ४० ॥ ब्रह्माकाशस्ततःसर्गाःपुनरन्येत्वनिष्ठिताः ॥ इत्यसौविहरन्दीर्घकालमद्यापिसंस्थितः ॥ ४१ ॥ स्वनिश्चयाच्चिराभ्यस्तान्नासौविरतिमेतिहि ॥ अंतोनैवास्त्यविद्यायाःसाहिब्रह्मैवसत्यता ॥ ४२ ॥ वस्तुतोनास्त्यविद्येहब्रह्मण्यविकलात्मनि ॥ इदंदृश्यमविद्येयमित्यात्मैपविकासितः ॥ ४३ ॥ यद्यथाजाग्रतिस्वप्नेदृष्टंद्रक्ष्यसिपश्यसि ॥ तत्तथाब्रह्मसच्छांतमासीदस्तिभविष्यति ॥ ४४ ॥ घनतमःप्रविलोकनचक्रकंक्रमजगत्प्रतिभानमिदंमहत् ॥ परतयाप्रतिभात्मतयानयानचसदंगनवाप्यसदाकृति ॥ ४५ ॥ तेष्वेवतेष्विवचतेपुतनूतरेपुब्रह्मोदरेपुचिरदूरतरंजगत्सु ॥ सोद्याप्यसंविदिततत्त्वतयातयोच्चैःखंडेपुरंकुरिवराघवबंभ्रमीति ॥ ४६ ॥ ॥ इ० वा० महारामायणवा० दे० मो० नि० उ० अ० विप० ब्रह्मगीतासुब्रह्माकाशविपश्चिज्जगच्चंद्रदर्शनंनामाष्टाविंशत्युत्तरशततमःसर्गः ॥ १२८ ॥ ॥ ७ ॥ ॥ श्रीराम उवाच ॥ तयोर्द्वयोर्मुनिश्रेष्ठसंपन्नंकिमतःपरम् ॥ पश्चाद्विपश्चितोस्तस्यरुद्धयोर्वैविपश्चितोः ॥ १ ॥

अनयाअज्ञदृष्टिप्रसिद्धयातुनअसदाकृति ॥ अतउभयदृष्टिप्रामाण्येअनिर्वचनीयमेवेत्यर्थः ॥ ४५ ॥ हेराघवसविपश्चित्अद्यापिअसंविदिततत्त्वतयातेषुपूर्वदृष्टेष्वेवतेष्विवधतत्सदृशेष्वन्येपुचवासनागाग्रत्वात्तनूतरेपुब्रह्मणांविराजामुदरेपुप्रसिद्धेपुजगत्सुवनखंडपुरंकुर्म्मृगविशेपइवउच्चैःस्ववासनोन्नत्येनवंभ्रमीतिपुनःपुनर्भ्रमति ॥ भ्रमेर्यङ्लुकिअभ्यासस्यनुक् ॥ ४६ ॥ ॥ इतिश्रीवा० ता० नि० उ० अष्टाविंशत्युत्तरशततमःसर्गः ॥ १२८ ॥ ॥ ७ ॥ ॥ विपश्चितोरुदंतोप्यवर्ण्यंतेह्यवशिष्टयोः ॥ तत्रैकस्यमृगत्वंतत्तथारामसमागमः ॥ १ ॥ एकोविपश्चिद्विष्णुप्रसादाज्ज्ञानंप्राप्यमुक्तोद्वितीयस्त्वद्याप्यविद्यायांबंभ्रमीतीतिश्रुत्वाअवशिष्टयोर्द्वयोःसमाचारंरामःपृच्छति ॥ तयोरिति ॥ चंद्रलोकेशाल्मलिद्वीपराज्येचभोगैर्निरुद्धयोर्विपश्चितोर्भोगासारत्वाज्ञियोस्तयोर्द्वयोःपूर्वदक्षिणविपश्चितोःपश्चादनंतरंअतःप्रागुक्तात्परमन्यत्तस्यदिगंतदर्शनवरस्यसंबंधिकिंचरित्रंसंपन्नमितिप्रश्नः ॥ १ ॥

तामुत्तरविपश्चितःपदवींब्रह्मांडावरणलंघनेनशबलेब्रह्मणिसंसारलक्षकोटिषुभ्रमणलक्षणामेवपदवींदक्षिणोविपश्चिद्गतइत्यर्थः ॥२॥ तथैवेत्यादिरुक्तस्यैवप्रपंचः ॥३॥ द्वितीयः पूर्वोविपश्चित्स्वेनचंद्रसन्निधावभ्यस्ताच्चंद्रमृगस्नेहातिशयलक्षणात्आसंगतेरासंगस्यवशात्चंद्रेणसहप्रतिमासमुद्भूतैःप्रभ्रमद्देहैरुपलक्षितस्तानित्यक्तवान्सन्अघशैलेमृगोभूत्वास्थितः ॥ ४ ॥ एकरूपायावासनायाअंतःकरणस्यदेहस्यचचतुर्धाभावेपिवासनाविभागस्यहीनोत्तमफलभेदस्यवाऽसंभवंरामःशंकते ॥ एकैवेति ॥५॥ तत्राद्यप्रश्नस्योत्तरमाह ॥ स्वभ्यस्तेति ॥ तनुदार्ढ्यांकोमला ॥ घनदार्ढ्यांअतिपरिपाकदृढीभूता ॥ अन्यतांविभागम् ॥६॥ वासनानामेकीभावेविभागेवाकोहेतुस्तत्राह ॥ देशेति ॥ यदाभोग्यफलानुकूलानांदेशकालकर्मप्रयत्नसामग्रीणामेकतातदातदनुकूलसमानविषयवासनानामप्येकतासंपद्यते ॥ यदातुभेदस्तदाविभागः ॥ यदातुसमानदेशकालक्रियाफलाका

॥श्रीवसिष्ठउवाच॥ ॥तयोरेकश्चिराभ्यस्तवासनाविवशीकृतः॥ भ्रमन्द्वीपेषुदेहौघैस्तामेवपदवींगतः ॥ २ ॥ तथैवावरणांस्त्यक्त्वा परमाकाशकोटरे॥ पश्यन्संसारलक्षाणितथैवाद्यापिसंस्थितः॥ ३ ॥ तयोर्द्वितीयःस्वाभ्यस्तादादावासंगतेर्वशात्॥ त्यक्तवान्प्रभ्रमद्देहैरघशैलेमृगःस्थितः॥४॥ ॥श्रीरामउवाच॥ ॥एकैववासनाब्रह्मन्याचतुर्णांसदोदिता॥ नानातांसाकथंप्राप्ताहीनोत्तमफलप्रदाम् ॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥स्वभ्यस्तावासनाजंतोर्देशकालक्रियावशात्॥ तनुदार्ढ्यान्यतामेतिघनदार्ढ्यैतिनान्यताम्॥६॥ देशकालक्रियाद्येतदेकतावासनैकता ॥ तयोर्यदेवबलवत्तदेवजयतिक्षणात्॥ ७॥ एवंविभागेनैतेत्रचत्वारःसमवस्थिताः॥ रूष्यंतेद्वावविद्यार्थमन्योमुक्तोमृगोपरः॥८॥ नाद्यापितैरविद्यायालब्धोंतोभ्रांतिबुद्धिभिः॥ अनंतेयमविद्येयमज्ञानपरिबृंहिता॥ ९॥ क्षिप्रेणशांताभवतिविज्ञानालोकआगते॥ अमूलमेवगलतितिमिरश्रीरिवोदये॥ १० ॥ कालेनान्यजगज्जातंशृणुवृत्तंविपश्चितः॥ तस्मिन्दूरतरेदेशेकस्मिंश्चित्संस्थितिभ्रमे॥११॥ क्वचिद्ब्रह्ममहाव्योम्निकस्मिंश्चिद्दृश्यमंडले॥ तस्यदृश्यात्मनाप्राप्तेवस्तुतोब्रह्मरूपिणि॥१२॥ सएकःशुभसंगत्याविदुषांमध्यमागतः॥ दृश्यंयथावद्विज्ञायब्रह्मतामलमागतः ॥ १३ ॥

चिद्वासनातद्भिन्नदेशकालक्रियाफलाचापरावासनाद्वेउद्भूनेतदातयोर्मध्येयदेवबलवत्तदेवजयति ॥ बलवत्ताचफलानुमेयेतिभावः ॥ ७ ॥ एवमनयारीत्याएतेविपश्चितोयुगपदुद्भूतविरुद्धदेशादिभोग्यवासनाविभागप्रयुक्तेनाश्रयविभागेनचत्वारःसंतःसमवस्थिताः ॥ तत्राद्यावविद्यार्थमपरोमृगइतित्रयोपिकृष्यंतेवासनाभिः ॥ अन्यएकस्तुमुक्तः ॥८॥ तैस्त्रिभिः ॥ अज्ञानैर्भ्रांतिसहस्रैःपरितोबृंहितावर्द्धिता ॥ ९ ॥ अमूलंनिःशेषमेवगलति ॥ १० ॥ क्षिप्रेणकालेनेतिपूर्वश्लोकान्वयि ॥ इदानींपश्चिमविपश्चितोयेनवृत्तेनमुक्तिर्जातातत्पुनःश्रावयति ॥ अन्येति ॥ अन्यस्मिन्स्ववासनाकल्पितेजगतिब्रह्मांडेजातम् तस्मिन्ब्रह्मांडे ॥ दूरतरेस्वादूदधिपरभागस्थस्वर्णभूदेशे ॥ ११ ॥ ब्रह्ममहाव्योम्निक्वचिदध्यस्तेकस्मिंश्चिद्दृश्यमंडले ॥ किंवास्तवेनेत्याह ॥ तस्येति ॥ १२ ॥ शुभस्यशांतिदांतिभगवद्भक्त्यादिगुणौघस्यसंगत्यासपश्चिमोविपश्चिदेकोविदुषांजीवन्मुक्तानाम ॥ १३ ॥

१ क्वचित्पुस्तकेसमूलमेवेतिपाठोमूलेटीकायांचदृश्यते

तस्यसाजगदाकाराअविद्यासदेहश्चमोक्षोत्तरंकगतौतत्राह ॥ तत्रैवेति ॥ आशांतिवाधमागतौयतस्तौरागःकामस्तत्तंत्रितौतदधीनस्थितिकौ ॥ तथाचश्रुतिः ॥ यदासर्वेप्रमुच्यंतेकामायेस्यहृदिश्रिताः ॥ अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुतइति ॥ १४ ॥ प्रकृतकथामुपसंहरति ॥ इतीति ॥ इयमविद्याकार्याविद्यासर्वदिक्षुव्यापितैरंतादर्शनादनंताकारणब्रह्मवत् ॥ १५ ॥ तत्कल्पकाज्ञातचितआनंत्यादेवतदानंत्यमितिब्रह्मवदितिदृष्टांतोक्तेस्तात्पर्यमित्याह ॥ येनेति ॥ १६ ॥ तन्मयीत्युक्तेरपितात्पर्यमाह ॥ तदेवेति ॥ तद्ब्रह्मैव ॥ १७॥ नन्वविद्येतिब्रह्मेतिचभेदसतिकथंनदेवतत्राह ॥ भेदइति ॥ अयंभेदोनभेदोयतोयंतन्मयःअविद्यामयएवसाचब्रह्मैवेति ॥ चिद्भास्यत्वादपिभेदोनचितोन्यइत्याह ॥ तदिति ॥ १८ ॥ ज्ञानशून्येनोत्तरविपश्चितानुयुगशतेनाप्यविद्यायाअंतोनलब्धइत्याह ॥ ब्रह्मांडेति ॥ इतिउक्तरीत्याभ्रमताअविपश्चिताअविदुषाविपश्चितातुअविद्यायाअंतो

तत्रैवाशुपरिज्ञानात्साऽविद्यासचदेहकः॥ मृगतृष्णांबिवाशांतिमागतौरागतंत्रितौ॥१४॥इतितेसर्वमाख्यातंविपश्चिच्चेष्टितंस्फुटम्॥
अनंतैवमविद्येयंब्रह्मवत्तन्मयीयतः ॥ १५ ॥ येनयत्रैववर्षाणांलक्षलक्षाणिगम्यते ॥ तत्रतत्रस्वभावेनचिताकिमपिलक्ष्यते॥ १६॥
तदेवाश्वपरिज्ञातंमिथ्याविद्येतिकथ्यते॥ परिज्ञातंतुतद्भ्रांतंतथाब्रह्मेतिकथ्यते॥ १७॥ भेदोनभेदस्तत्रायंभेदोयंयन्मयःकिल॥ तद्ब्रह्मैवचिदाभासंचिद्रूपैवहिभिन्नता ॥ १८ ॥ ब्रह्मांडमंडपस्यास्यभ्रमतत्यविपश्चिता ॥ लब्धोयुगशतैरंतोनाविद्यायाविपश्चिता॥ १९॥
॥श्रीरामउवाच॥ ॥सब्रह्मांडकपाटःकिंनसंप्राप्तोविपश्चिता॥ त्वयैतत्कथितंब्रह्मन्नकथंवदतांवर॥२०॥ ॥श्रीवसिष्ठउवाच॥
जातेनैवविरिंचेनपुराब्रह्मांडमंडलम् ॥ द्वाभ्यामधस्तादूर्ध्वात्स्वभुजाभ्यांप्रविदारितम्॥ २१॥ भागस्तेनोर्ध्वतस्तस्मादतिदूरतरंगतः॥
अतोभागोगतोधस्तादतिदूरतरांतरम्॥२२॥ताविवाश्रित्यतिष्ठंतिजलाद्यावरणास्ततः॥ तएवचतदाधारालंबंतेसंस्थितास्तयोः॥२३॥
एतयोर्मध्यमाकाशंविदुरंडकपाटयोः॥अपारावारमानीलमिदमालक्ष्यतेतुयत्॥२४॥ जलाद्यावरणास्तत्रनलगंतिनसंतिच॥तद्धिनिर्मलमाशून्यमालानंकल्पकूपिभिः॥२५॥ तेनमार्गेणयातोसौविपश्चिद्दक्षचक्रवत्॥अविद्यायाःपरीक्षार्थमामोक्षमतिदीक्षितः॥२६॥

युगशतैरपिनलब्धः ॥ १९ ॥ उत्तरविपश्चितोब्रह्मांडकवाटसंध्याकाशमार्गेणनिर्गमनंकथंब्रह्मांडभंगकारणानुक्त्यासंध्याकाशस्यैवासंभावनादित्याशयेनरामःशंकते ॥ सइति ॥ ब्रह्मांडकपाटएवकिंनसंप्राप्तःतथाचतंभित्त्वायथासवहिर्गतःएतत्त्वयाकथंनकथितम् ॥ २० ॥ वसिष्ठोब्रह्मांडकपाटद्वयविभागेकारणंप्राक्पाषाणाख्यानेउक्तमेवस्मारयति ॥ जातेनेति ॥ २१ ॥ अन्यदतिदूरतरंअतिदूरतरांतरम् ॥ अतिदूरतरमंतरंमर्वाधगतइतिवा ॥ २२ ॥ जलाद्यावरणास्तौभागाविवविभक्तास्तावेवाश्रित्यतिष्ठंति ॥ आश्रित्यस्थितिःसाधारणीविभक्ततातुजलावरणमात्रस्येतिप्रागुपपादितमेव ॥ २३ ॥ २४ ॥ तत्रआकाशेअपारत्वोक्तिरितरभूतापेक्षयावैपुल्यख्यापनाय ॥ अन्यथावास्याकाशावरणस्यपूर्वावरणदशगुणपरिमाणत्वानुपपत्तेः तदपेब्रह्माकाशवर्णनायोगाच्च ॥ आलानमितरभूतानामाधारः ॥ यावत्प्रलयंकल्पकालकल्पनैः ॥ २५ ॥ अविद्यायाःपरितईक्षार्थमतिशयेनदीक्षितोगृहीतदीक्षइव ॥ २६ ॥

तर्हिसदृढतरपुरुषप्रयत्नाविच्छेदादविद्यांतंकुतोनददर्शेतिचेत्तस्यावस्तुतोऽनंतब्रह्मात्मकत्वादेवेत्याह ॥ ब्रह्मैवेति ॥ तर्हितत्त्वज्ञैस्तदंतःकथंदृश्यतेतत्राह ॥ परिज्ञातेति ॥ २७ ॥ अविद्यायाजगल्लक्षणेपुरूपेषुकेषुचित् ॥ २८ ॥ २९ ॥ रामप्रश्नाःस्पष्टाः ॥ ३० ॥ ३१ ॥ स्वमदृष्टोऽपूर्वोयामइतःकियद्दूरेस्तीतिप्रश्नवद्रामप्रश्नोयंयोजनसंख्योत्त्यानसमाधातुंयोग्यइतिमत्त्वावसिष्ठस्तदपरिज्ञानोक्तिच्छलेनस्वाशयंसूचयन्नुत्तरमाह ॥ स्थिताविति ॥ यत्नतःपर्यालोचनेप्यस्माकंतेजगतीगोचरंबुद्धिविषयतांनोयाते ॥ ३२ ॥ सब्रह्मांडस्तदंतर्गतसंसारैःसहितःससंसारोनोगोचरेबुद्धिविषयभावेऽवतिष्ठते ॥ ३३ ॥ ३४ ॥ ३५ ॥ पूर्वतनविपश्चिज्जन्मदेशाद्दूराद्दूरेव्यवस्थितम् ॥ ३६ ॥ तांदिगंतदर्शनगतिंगतः

ब्रह्मैवानंतरूपेयमविद्यातन्मयीयतः ॥ अतोस्तिसाऽपरिज्ञातापरिज्ञातानविद्यते ॥ २७ ॥ विपश्चितइतिप्राप्यदूराद्दूरंपरेंबरे ॥ जगद्रूपेष्वविद्याया भ्रमंत्यन्येषुकेषुचित् ॥ २८ ॥ कश्चिन्मुक्तोम्रगःकश्चित्कौचिद्यापितौक्वचित् ॥ भ्रमतःप्राक्तनानल्पसंस्कारविवशीकृतौ ॥ ॥ २९ ॥ ॥ श्रीरामउवाच ॥ ॥ कीदृशेषुक्वदूरेषुतेजगत्सुविपश्चितः ॥ भ्रमंतीतिमुनेब्रूहिमयिचेज्जायतेकृपा ॥ ३० ॥ कियत्यध्वनिसंसारास्तेजातायेषुतेमुने ॥ महदेतदिहाश्चर्यमस्माकंकथितंत्वया ॥ ३१ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ स्थितौविपश्चितौरामतावुभौजगतोर्योः ॥ तेस्माकंगोचरंयातेजगतीयत्नतोपिनो ॥ ३२ ॥ तृतीयोम्रगतांयातोविपश्चिद्यत्रतिष्ठति ॥ सकदाचित्ससंसारोगोचरेनोवतिष्ठते ॥ ३३ ॥ ॥ श्रीरामउवाच ॥ ॥ विपश्चिन्मृगतांयातोयस्मिन्जगतिसंस्थितः ॥ तज्जगत्क्वमहाबुद्धेयथावत्कथयेतिमे ॥ ३४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ दूराद्दूरतरंगत्वापरब्रह्ममहांबरे ॥ म्रगोविपश्चिज्जगतिसयस्मिंस्तज्जगच्छृणु ॥ ३५ ॥ तदिदंविद्धित्रिजगदिहासौसंस्थितोम्रगः ॥ इदंतत्परमाकाशंदूराद्दूरेजगत्स्थितम् ॥ ३६ ॥ ॥ श्रीरामउवाच ॥ ॥ विपश्चिदस्मादेवासौजगतस्तांगतिंगतः ॥ इहैवाद्यम्रगोजातःकथमेतत्समंजसम् ॥ ३७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अवयवानवयवीनित्यंवेत्तियथाखिलान् ॥ तथासर्वानहंवेद्मिब्रह्मण्यात्मन्यवस्थितान् ॥ ३८ ॥ अनिष्ठितान्ससंहारान्नानाकारानुतान्वहून् ॥ मिथःप्रोतान्मिथोदृश्यान्स्वरूपानिवपार्थिवान् ॥ ३९ ॥

सन्इहैवमृगोजातइतिकथंसमंजसम् ॥ परावृत्त्यागमनंविनाइहमृगजन्मासंभवादित्यर्थः ॥ ३७ ॥ दूरंदूरतरंचेत्यादिसर्वंपरिच्छिन्नात्मदर्शिनामेवभवति अपरिच्छिन्नात्मदर्शिनांत्ववयविनामवयवाइवसर्वंसंनिहिततरमेवेतिस्वानुभवेनेयमुक्तिरित्याशयेनोत्तरमाह ॥ अवयवानिति ॥ सर्वान्ब्रह्मांडानितिशेषः ॥ ३८ ॥ अन्यदृशाअतीततराणामपिब्रह्मदृशासांप्रतंसन्निहिततरत्वमेवेतिकालतोपिनकस्यचिद्दूरतास्तीत्याशयेनतान्विशिनष्टि ॥ अनिष्ठितानिति ॥ चिरकालोत्तरभावित्वात्सांप्रतमनिष्ठितान्असंजातान्तथाससंहारान्पूर्वकालनिष्पन्नसंहारसहितान्नानाकारान्विचित्रान्मिथःपरस्परमदृश्यानपिएकत्रचित्यध्यासात्परस्परप्रोतान्पार्थिवान्पृथ्वीविकारभूतपटतंत्वादिस्वरूपानिवस्थितान् ॥ ३९ ॥

तत्रब्रह्मांडेषुकस्मिंश्चिदन्यस्मिन्मार्गेअस्मिन्नेतद्ब्रह्मांडस्थेमार्गेइवतिष्ठतिसतियद्वृत्तंतन्मयाभवतएतद्ब्रह्मांडइवकृत्वाअत्रैवविपश्चिज्जन्मराज्यादीतिकथितंतत्त्वतःप्रकारतश्चभेदा
भावादित्यर्थः ॥ ४० ॥ तान्पूर्वोक्तान्दिगंतरान्स्वस्ववासनाकल्पितेअन्यान्यसंसारेतादृशैरेवदेहैर्वस्तुतोभ्रांताःनैकस्मिंस्तत्रपूर्वोविपश्चिदिहैवहरिणोजातइत्युत्तरत्रान्वयः
॥ ४१ ॥ ४२ ॥ व्योम्निब्रह्माकाशे ॥ ४३ ॥ ककुभिदिशि ॥ ४४ ॥ उर्वरासस्याढ्याभूमिस्तदास्पदःजरठंजरयेवशिथिलंज्ञानमस्यास्तीतिजरठज्ञानीसमृगस्तांप्राक्तनींजातिं

तत्रकस्मिंश्चिदन्यस्मिन्मार्गेस्मिन्निवतिष्ठति॥यद्वृत्तंकथितंरामतदेतद्भवतेमया॥४०॥ विपश्चितोन्यसंसारेदेहैर्भ्रांतादिगंतरान्॥ तान
नंतांबरेव्योम्नितावत्कालमखिन्नधीः॥४१॥ इहैवहरिणोजातःकस्मिंश्चिद्गिरिकंदरे॥ काकतालीययोगेनभ्रांत्वाभूरिजगद्भ्रमम्॥४२॥
सजगंतिभ्रमन्दूरेयस्मिन्सर्गेमृगःस्थितः॥ ससर्गोयमितिव्योम्निकाकतालीयवत्स्थितम्॥४३॥ ॥श्रीरामउवाच॥ ॥एवंचेत्तद्
दब्रह्मन्कस्यांककुभिमंडले॥ कस्मिन्कस्मिश्चशैलेसौवनेकस्मिन्मृगःस्थितः॥४४॥ किंकरोतिकथंदूर्वाश्चर्वयत्युर्वरास्पदः॥जातिंतां
जरठज्ञानीकदोदारांस्मरिष्यति॥४५॥ ॥श्रीवसिष्ठउवाच॥ ॥योसौत्रिगर्त्तनाथेनदत्तःक्रीडामृगस्तव॥ स्थितःक्रीडामृगागारेवि
द्धितंत्वंविपश्चितम्॥४६॥ ॥श्रीवाल्मीकिरुवाच॥ ॥श्रुत्वेतिराघवस्तस्यांसभायांविस्मयान्वितः॥ बालकान्मृगमानेतुंप्रेषयामा
सभूरिशः॥४७॥ अथानीतोमृगोमुग्धःसभांस्फारांविवेशसः॥ सर्वैःसभ्यगणैर्दृष्टःपुष्टिमांस्तुष्टिमानपि॥४८॥ ताराबिंदुयुतंदेहंबिंदु
भिःखंविडंबयन्॥ दृष्टिपातोत्पलासारैःसुंदरीःपरितर्जयन्॥४९॥ आदृतानादृतसभैर्नीलामरकतत्विषः॥ धावंस्तृणेच्छयालोलंमुग्धै
श्चकितवीक्षितैः॥५०॥ उत्कर्णोन्नयनाग्रीवंक्षणभंगावलस्थितैः॥ उत्कर्णनयनोग्रीवैःसभ्यानाकुलयन्जवैः॥५१॥ मृगमालोक्य
तंलोकाःसराजमुनिमंत्रिणः॥ अनंतावतमायेतिचिरमासन्स्मयाकुलाः॥५२॥

स्थितोस्तितंमृगंत्वंविपश्चितंविद्धि
विपश्चिज्जन्मकदासंस्मरिष्यति ॥ ४५ ॥ त्रिगर्त्तदेशविशेषास्तेषांनाथेनराज्ञातवउपायनत्वेनयःक्रीडामृगोदत्तःसद्दानींक्रीडामृगबंधनागारे
॥ ४६ ॥ ॥ ४७ ॥ ४८ ॥ देहगतैर्बिंदुभिःपृषद्भिस्ताराबिंदुयुतंखंविडंबयन्ननुकुर्वन् ॥ ४९ ॥ आदृतादर्शनादरवत्यपिअनादृतासभायैस्तथाविधैश्चकितवीक्षणैःसभयकटाक्षैः
नीलवर्णाःसभास्तंभादिखचितमरकतत्विषोहरिततृणभ्रांतिप्रयुक्तयाइच्छयाआदातुंधावन् ॥ ५० ॥ ऊर्ध्वीकृतकर्णनयनग्रीवंयथास्यात्तथाक्षणभंगैरस्थैरैरवलैरनिवार्यैः
स्थितैरवस्थानैस्तथाविधैर्जवैश्चसभ्यान्सभागनान्जनान्दर्शनोत्कंठयाआस्कंदनशंकयाचआकुलयन् ॥ ५१ ॥ स्मयोविस्मयस्तदाकुलाआसन् ॥ ५२ ॥

सर्वेषांसभ्यासदामवलोकनलक्षणैर्घनैर्निबिडैरुत्पलवर्षैः कृष्णंनीलवर्णीकृतमिवस्थितंनानाविधरत्नानामंशुजालैः कांतिसमूहैरचितंपरिष्कृतंतंमृगमीक्षमाणासभाआश्चर्यस्याद्भु तरसस्ययच्चर्वणंविगलितवेद्यांतरतयाअंतरास्वादनंतेनसुविस्मिताविस्मयजडीकृताः सर्वैलोकायस्यांतथाविधासतीलिपिनिर्मिताचित्रलिखिताकमलिनीपद्मवनीवआसीत ५३ ॥ इ॰वासिष्ठम॰तात्प॰नि॰उ॰एकोनत्रिंशाधिकशततमःसर्गः ॥ १२९ ॥ ॥ ७ ॥ ॥ वसिष्ठध्यानजेवह्नौमृगस्यात्रप्रवेशनम् ॥ विपश्चिद्देहलाभेनप्राक्स्मृतिश्चात्रवर्ण्यते ॥१॥ प्राक्तनआत्माविपश्चिद्देहस्तस्योदयात्पुनराविर्भावात्ज्ञानेनवास्तवात्माविर्भावाच्चइतिरामउवाचेत्यन्वयः॥१॥यस्यपुरुषस्ययेनैवचिरोपासितेनदैवतेनगतिःपुनःपुनरभिल षितसिद्धिःप्रागभ्युदितातस्यपुरुषस्यतेनदैवतेनविनाअन्येपिगतिरभिलषितसिद्धिर्नजायतेजातापिनशोभतेशोभितापिपरिणामेनसुखदाकथंचित्सुखप्राप्तावपिपरलोकहिताक

आश्चर्यचर्वणसुविस्मितसर्वलोकासर्वावलोकनघनोत्पलवर्षकृष्णम् ॥ रत्नांशुजालकचितंमृगमीक्षमाणासासीत्सभाकमलिनीलि पिनिर्मितेव॥५३॥ ॥इत्यार्षेवा॰वा॰दे॰मो॰नि॰उ॰अवि॰विप॰विपश्चिन्मृगलाभोनामैकोनत्रिंशाधिकशततमःसर्गः॥१२९॥ श्रीवाल्मीकिरुवाच ॥ ॥ अथरामउवाचास्यमुनेकेनविपश्चितः ॥ स्याद्भुपायेनदुःखांतः प्राक्तनात्मोदयादिति ॥ १ ॥ ॥श्रीवसिष्ठउ वाच॥ ॥येनैवाभ्युदितायस्यतस्यतेनविनागतिः ॥ नशोभतेनसुखदानहितायनसत्फला ॥ २ ॥ विपश्चितोग्निःशरणंतत्प्रवेशादयंमृ गः॥ पूर्वरूपमवाप्नोतिनिर्मलंकनकंयथा ॥३॥ करोम्येतदहंसर्वंदृश्यतांदर्शयामिवः॥ अग्निप्रवेशंहरिणःकरोत्येषोधुनापुरः॥४॥ ॥वा ल्मीकिरुवाच॥ ॥इत्युक्त्वासमुनिस्तत्रवसिष्ठःश्रेष्ठचेष्टितः॥उपस्पृश्ययथान्यायंस्वकमंडलुवारिणा॥५॥ दध्यावनिंधनंवह्निंज्वालापुं जमयात्मकम् ॥ तद्ध्यानेनसभामध्याज्ज्वालाजालंसमुद्ययौ ॥ ६ ॥ अंगाररहिताकारमिंधनेनविवर्जितम् ॥ स्वच्छंधमधमायंतमधू ममपकज्जलम् ॥ ७ ॥ मुग्धमुग्धकचत्कांतिहेममंदिरसुंदरम् ॥ उत्फुल्लकिंशुकाकारंसंध्यांबुदवदुत्थितम् ॥ ८ ॥ दूरापसृतसभ्यंतज्ज्वा लाजालंविलोकयन् ॥ मृगःप्राग्भक्तिभावेनप्रोल्ललासविलोकितैः ॥ ९ ॥ तंसमालोकयन्वह्निंविविक्षुःक्षीणदुष्कृतः ॥ पश्चादुपससारा शुदूरंसिंहइवोत्पतन् ॥ १० ॥ एतस्मिन्नंतरेध्यानेविचार्यमुनिपुंगवः॥ मृगंविलोकितैःक्षीणपापंकुर्वन्नुवाचह ॥ ११ ॥ संस्मृत्यप्राक्तनीं भक्तिंभगवन्हव्यवाहन ॥ कुरुकारुण्यतःकांतंमृगमेनंविपश्चितम् ॥ १२ ॥

दाचननभवति ॥ तथाचश्रुतिः ॥ यःस्वांदेवतामतियजतिप्रस्वायैदेवतायैच्यवतेनपरांप्राप्नोतिपापीयान्भवतीति ॥ अभियुक्ताश्चाहुः ॥ त्वामतियजेतभगवन्यःकुलदैवंद्विजाति कुलजातः ॥ उभयभ्रष्टोनश्येदभ्युदयोपांशुयाजवत्सजडइति ॥ २ ॥ शरणंइष्टार्थप्रदानेनरक्षिता ॥ पूर्वरूपंप्राक्तनविपश्चिद्देहम् ॥३॥ ४ ॥ उपस्पृश्यआचम्य ॥ यथान्यायं शिरश्चक्षुर्षीनासिकेश्रोत्रेहृदयमालभ्येतिश्रुत्युक्तन्यायमनतिक्रम्य ॥५ ॥ दशरथसभामध्यप्रदेशात् ॥६॥ धमधमायंतमित्यव्यक्तानुकरणाड्डाचिडाचिवद्बहुलंद्वभवतइतिद्वित्वे लोहितादिडाज्भ्यःक्यषितिक्यषंताल्लटःशत्रादेशः ॥ अपकज्जलमकज्जलमितियावत् ॥ ७ ॥ मुग्धमुग्धंकचंतीकांतिर्यस्यतथाविधंहेममंदिरमिवसुंदरम् ॥ ८ ॥ दूरादपगताः सभ्यायस्मात्तथाविधंतज्ज्वालाजालंविलोकयन्सन्समृगःप्राक्तनेनभक्तिभावेनविलोकितैःसादरदर्शनैःप्रोल्लुलासजहर्ष ॥ ९ ॥१०॥ उवाचवह्निप्रतीतिशेषः ॥ ११ ॥ १२॥

॥ १३ ॥ दृष्टोजनैरितिशेषः ॥ १४ ॥ नरतांमनुष्याकारम् ॥ नभसिमृगरूपोभ्रलवः ॥ रूपांतरंमनुष्यरूपंयथातथा ॥ १५॥ कांतैःकांतिमद्भिरवयवैःसुंदरः ॥ १६ ॥ अर्कबिंबइवेत्याद्युपमामाला ॥ १७॥ चक्षुरित्यादिमालितोपमा॥ चक्षुःकनीनिकाकोशादौप्रतिबिंबइवआधारःपावकोयस्यतथाविधोभक्तिरेवनापुरुषभूतेवस्थितः ॥ अर्काभःपुरुषः अदृश्यतेतिपूर्वत्रान्वयः ॥१८॥ अनंतरंतज्ज्वालाजालंवातैराहतोदीपइवक्वापियथौउपशशामेतियावत् ॥१९॥ देवालयकुड्याःकुड्येषुभग्नेपुसत्सुनदंतर्गतआमरःविष्ण्वाद्यमरा

वदत्येवंमुनौदूराद्धाविल्वान्नृपसंसदि॥ मृगोग्निवेगनिर्मुक्तःशरोलक्ष्यमिवाविशत्॥१३॥ ज्वालाजालंप्रविष्टोसावादर्शइवबिंबितः॥संध्याभ्रइवविश्रांतोदृष्टस्पष्टशरीरकः॥१४॥ सपश्चात्त्वेवसभ्येषुमृगोथनरतामगात्॥ ज्वालोदरेनभस्यभ्रलवोरूपांतरंयथा॥१५॥अदृश्यताथज्वालायामंतःकनककांतिमान्॥ पुरुषःपावनाकारःकांतावयवसुंदरः॥१६॥ अर्कबिंबइवादित्यश्चंद्रबिंबइवोडुपः॥ महांभसीववरुणःसंध्याभ्रइववाशशी॥ १७॥ चक्षुःकनीनिकाकोशेमुकुरेसलिलेमणौ ॥ प्रतिबिंबइवार्काभोभक्तिनाधारपावकः॥ १८॥ अनंतरंसभामध्याद्वातैर्दीपइवाहतः॥ ज्वालाजालंययौक्वापिसंध्यांबुदइवांबरात्॥ १९ ॥ कुटीकुड्येषुभग्नेषुप्रतिबिंबइवामरः॥ अतिष्ठत्पुरुषस्तत्रपटान्नटइवोद्गतः॥ २० ॥ अक्षमालाधरःशांतोहेमयज्ञोपवीतवान्॥ अग्निशौचांबरच्छन्नःसद्यश्चंद्रइवोदितः॥ २१ ॥अहोभाइतिसभ्योक्त्यातस्यवेषस्यभासनात्॥ भास्वानिवविशालाभोभासइत्येपशब्दितः ॥ २२ ॥ असौमूर्त्तइवाभासोभासनाम्नाभविष्यति॥ सभास्थैःकैश्चिदित्युक्तंतेनभासःसउच्यते॥२३॥ अथोपविश्यतत्रैवसभासोध्यानसंस्थितः॥ आत्मोदंतमशेषेणसस्मारप्राक्तनंतनौ॥ २४॥ सभालोकेगतस्पंदेस्मयेनात्मनितिष्ठति॥ भासोमुहूर्त्तमात्रेणदृष्ट्वास्वोदंतमक्षतम्॥२५॥ आययौपूर्वजन्मभ्योध्यानालोकाद्धबुद्ध्यत॥ सभामालोकयामाससमुत्थाययथाक्रमम् ॥ २६ ॥ सचागत्यवसिष्ठायप्रणाममकरोन्मुदा॥ ज्ञानार्कप्राणदब्रह्मन्नमस्तेस्त्वित्युदाहरत् ॥ २७ ॥तमुवाचवसिष्ठोपिहस्तेनशिरसिस्पृशन् ॥ अद्यतेसुचिराद्राजन्नविद्यायाःक्षयोस्त्विति ॥ २८ ॥रामंजयतिजल्पंतंनतंदशरथोयतम्॥ आसनात्किंचिदुत्तिष्ठन्समुवाचहसन्निव॥२९॥

कारःप्रतिबिंबःप्रतिमेव ॥ पटात्तिरस्करणीवस्त्रादुद्गतोनटइव ॥ २० ॥ अग्निदाहेनैवशौचंनैर्मल्यंयस्यतथाविधैरंबरैश्छन्नः ॥ २१ ॥ एषभासइतिनाम्नाशब्दितोजनैरुक्तः ॥ २२ ॥ २३ ॥ आत्मनःस्वस्यप्राक्तनमुदंतंवृत्तांतम् ॥ २४ ॥ स्मयेनविस्मयेन ॥ दृष्ट्वास्मृत्वा ॥ २५ ॥ आययौइत्यस्यध्यानालोकाद्धबुध्यनेतिविवरणम् ॥ यथाक्रमंमुनिराजसामंतादिक्रमेण ॥ २६ ॥ सभासाख्योविपश्चित् ॥ उदाहरदुक्तवान् ॥ २७ ॥ सुचिरात्दृश्यमानायास्तअविद्यायाअपक्षयोस्त्विति ॥ २८ ॥ रामंप्रतिजयेतिजल्पंतंव्यक्तंवदंतम् ॥ नतंनमस्कुर्वाणंतंभासम् ॥ २९ ॥

॥ ३० ॥ विष्टरेआसने ॥ वृक्षासनयोर्विष्टरइतिपत्वम् ॥ ३१ ॥ आलानेनवंधनस्तंभेनेव ॥ ३२ ॥ ३३ ॥ विपश्चितावितताल्मनिकियंतिविभ्रांतानि ॥ इदमाश्चर्यम् ॥ ३४ ॥ चिदात्मवृत्तेर्मायास्वभावरूपस्यास्यविभवस्यवस्तुतोव्योमात्मनःशून्यस्याप्ययंमहिमाकीदृक् ॥ अहोइत्याश्चर्येनुइतिवितर्के ॥ योमहिमाशून्यएवसन्नंबरवदसंगेशून्येएवपरमात्मघनेअंतःएवंविधानिप्रागुक्तप्रकाराणिविविधानिविचित्राणिजगंतिभूत्वाभाति ॥ इदमत्याश्चर्यमित्यर्थः ॥ ३५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०त्रिंशदुत्तरशततमःसर्गः ॥ १३० ॥ ॥ ६ ॥ ॥ वटधानाराजपुत्रकथामुक्त्वाप्रचोदितः ॥ कौशिकेनविपश्चित्त्वांभ्रांतिविस्तरतोब्रवीत् ॥ १ ॥ अयंविपश्चिदवि

श्रीदशरथउवाच ॥ ॥स्वागतंतेस्तुभोराजन्निदमासनमास्यताम् ॥ अनेकभवसंभारभ्रांतविश्रम्यतामिह ॥ ३० ॥ ॥श्रीवाल्मीकिरुवाच ॥ ॥वदत्येवंदशरथेविपश्चिद्धासनामभृत् ॥ विवेशविष्टरेविश्वामित्रादीन्प्रणमन्मुनीन् ॥ ३१ ॥ ॥दशरथउवाच ॥ ॥अहोवतचिरंकालमालानेनेवदंतिना ॥ वन्येनाविद्ययाडुःखमनुभूतंविपश्चिता ॥ ३२ ॥ असम्यग्बोधदुर्दृष्टेरहोनुविषमागतिः ॥ व्योम्न्येवदर्शयत्येषासर्गाडंबरसंभ्रमम् ॥ ३३ ॥ कियंत्याश्चर्यमेतानिजगंतिविततात्मनि ॥ संततानिचिरंतानिविभ्रांतानिविपश्चिता ॥ ३४ ॥ व्योमात्मनोपिमहिमायमहोनुकीदृगस्यस्वभावविभवस्यचिदात्मवृत्तेः ॥ यःशून्यएवपरमात्मघनेंबरेंतरेवंविधानिविविधानिजगंतिभाति ॥ ३५ ॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०अ०वि०मृगवह्निप्रवेशोनामत्रिंशदुत्तरशततमःसर्गः ॥ १३० ॥ ॥ ६ ॥

श्रीदशरथउवाच ॥ ॥क्लिष्टोयंयदविद्यार्थंविपश्चिदविपश्चितः ॥ तदहंचेष्टितंमन्येकष्टोऽवस्तुनिकिंग्रहः ॥ १ ॥ ॥श्रीवाल्मीकिरुवाच ॥ अस्मिन्नवसरेतत्रराज्ञःपार्श्वेव्यवस्थितः ॥ प्रसंगपतितंवाक्यंविश्वामित्रोभ्युवाचह ॥ २ ॥ अप्राप्तोत्तमबोधानांबोधवेद्याविलक्षणाः ॥ भवंत्येवंविधाराजन्बहूनांवहवोभृशम् ॥ ३ ॥ अद्यसप्तदशंवर्षलक्षमक्षीणनिश्चयाः ॥ एवमेवभ्रमंतोस्यांवटधानाभुविस्थिताः ॥ ४ ॥ भूमेरंतावलोकार्थमद्याप्युद्वेगवर्जितम् ॥ प्रवृत्तानननिवर्त्ततेवहनात्सरितोयथा ॥ ५ ॥

द्यार्थंदिगंतदर्शनलक्षणामपुरुषार्थरूपामविद्यामुद्दिश्ययत्क्लिष्टःक्लेशाननुभूतवांस्तत्सर्वमहमविपश्चितःअज्ञस्यआत्मज्ञानशून्यस्यास्यभ्रांतिरूपंवृथाचेष्टितंमन्ये ॥ यतःअवस्तुनिमिथ्याभूतेदिगंतदर्शनादिकौतुकेकुत्सितोग्रहःकिंग्रहोऽवश्यंसाधयामीतिदुराग्रहःकष्टःक्लेशफलइत्यर्थः ॥ १ ॥ राजवाक्यश्रवणादुद्बुद्धवटधानाराजपुत्रकथासंस्कारोविश्वामित्रःप्रस्तुतविपश्चिद्वृत्तांतवर्णनप्रयोजनदार्ढ्यहेतुत्वादुपेक्षानर्हांतांकथामाहेतिवाल्मीकिराह ॥ अस्मिन्निति ॥ २ ॥ हेराजन्त्वयासम्यगेवोक्तंयतोनप्राप्तउत्तमबोधस्तत्त्वज्ञानंयैस्तथाविधानांबहूनामेवंविधाविलक्षणाविचित्रावहवोभ्रांतिरूपाबोधास्तद्वेद्यावासनामयाअनंतकोटिजगद्रूपाअर्थाश्चभृशंभवंतीतिवक्ष्यमाणकथापीठिकारचनम् ॥ ३ ॥ तत्रकथांप्रस्तौति ॥ अद्येत्यादिना ॥ वक्ष्यमाणायांभुविवटधानाख्याराजपुत्राअपिएवंविपश्चिद्वदेवाद्यपर्यंतंसप्तदशंवर्षलक्षंभ्रमंतःस्थितावर्त्तंते ॥ ४ ॥ ५ ॥

तामेवभुवंवर्णयितुंप्रस्तौति ॥ अयमिति ॥ अयंप्रसिद्धःपातालभूम्यादिचतुर्दशलोकघटितत्वान्महान्लोकोभुवनसमष्टिः ॥ भूवदेववर्त्तुलैरंतरिक्षादिलोकैर्वर्त्तुलःसन्भूमेःपरितो व्योम्निसंस्थितः सचब्राह्मोहैरण्यगर्भःसंकल्पनिश्चयएवनान्योनिरूपयितुंशक्यःअयंभूगोललक्षणोमहांतोलोकाश्चतुर्दशभुवनाश्रिताजनायस्मिन्यदाधारास्तथाविधःखलु ज्योतिःशास्त्रप्रसिद्धोव्योम्निआकाशेवालसंकल्पतरुवत्संस्थितोयतोयमपिब्राह्मःसंकल्पनिश्चयएवेत्यर्थः ॥६॥ तस्यनिराधारस्यकथंजनाधारत्वंतचाह ॥ कंदुकेइति ॥ यथाम ध्यक्तेकंदुकेदशदिक्कंपिपीलिकाभ्रमंतिइत्थमेवंतस्मिन्परितस्तदुपजीवीनिभूतानिदशदिक्कंभ्रमंतीत्यर्थः ॥७॥ यानिभूगोलकस्याधोभागगतानियानिचऊर्ध्वंवत्युपरितनानितदंगा नितान्याविश्यययदायत्रयानिभूतानितिष्ठंतितदातानितत्रभ्रमंतिच ॥८॥ अंतरिक्षवहामंदाकिन्यादिसरितोज्योतिश्चक्ररूपमृक्षमंडलंचतंभूगोलमेवदूरेणवायुबंधनवशादाश्रित्यअ संस्पर्शाउच्चैर्भ्रमंति ॥ स्त्रीशेषश्छांदसः ॥ ९ ॥ तांसज्योतिश्चक्रांभुवमावेष्ट्ययौरिहअस्यामेवभुविव्यवस्थिता ॥ तत्रचखंसर्वासुदिक्षुऊर्ध्वमेवमहीतलंचसर्वाधस्तादेवेत्यर्थः

**अयंखलुमहालोकोवर्त्तुलोव्योम्निसंस्थितः॥ बालसंकल्पतरुवद्ब्राह्मसंकल्पनिश्चयः॥ ६ ॥ कंदुकेव्योम्निसंरुद्धेदशदिक्कंपिपीलिकाः॥ इत्थंभ्रमंतिभूतानितदाधाराणिनित्यदा॥ ७ ॥ भूगोलकाधोभागानितदंगान्यूर्ध्ववंति॥ तदाभूतानितिष्ठंतितान्याविश्यभ्रमंतिच ॥ ८ ॥ तमेवाविश्यदूरेणसरितश्चर्क्षमंडलम्॥ असंस्पर्शाभ्रमंत्युच्चैःसचंद्रार्कादिसंततम् ॥ ९ ॥ इहैवसर्वदिक्कंद्यौस्तामावेष्ट्यव्यवस्थिता॥ सर्वदिक्कंखमत्यूर्ध्वंतस्याधस्तान्महीतलम् ॥ १० ॥ भावाःपतंतोधावंतितस्याधःसर्वतोंगकम्॥ यत्रोत्पतंतोगच्छंतितदूर्ध्वमितिशब्दितम् ॥ ११ ॥ तत्रैकदेशेविद्यंतेवटधानाभिधानकाः॥ जातास्तेषांत्रयोराजन्राजपुत्राःपुराभवन् ॥ १२ ॥ तेत्वेवमेकसंकल्पाभूम्यादेर्द्रष्टुमवर्त्मनः॥ कोंतःस्यादितिनिर्यातांविहर्त्तुंदृढनिश्चयाः॥ १३ ॥ पुनर्वारिपुनर्भूमिस्तेषामाक्रमतांचिरम्॥ नवलब्धशरीराणांदीर्घकालाव्यवर्त्तत ॥ १४ ॥ स्वच्छकंदुकवम्रीकन्यायेनानिशमत्रते॥ भ्रमंतोनाप्नुवत्यंतमन्यत्वंसंविदंतिच ॥ १५ ॥**

॥ १० ॥ ननुभूगोलाधस्तनस्यखस्यकथमूर्ध्वत्वंतदपेक्षयामहीतलस्यकथमधस्त्वंतत्राह ॥ भावाइति ॥ तस्यमहीतलस्याधोयेभावाःपदार्थाःसंचरंतितेतस्यसर्वतोंगकमवय वंतत्तद्देशेपतंतःप्राप्नुवंतएवगच्छंतिसंचरंति ॥ यत्रयस्मिन्नत्रासिपक्ष्यादयउत्पतंतोगच्छंतितत्तत्रऊर्ध्वमित्येवशब्दितंनत्वधइतितिर्यगितिवेत्यर्थः ॥ ११ ॥ तत्रतस्मिन्भूगोल केएकदेशेकश्चिद्वटधानाभिधानकादेशावातदधीश्वराःक्षत्रियाश्चविद्यंते ॥ तेषांकुलेत्रयोराजपुत्राःपुराजाताअभवन् ॥ १२ ॥ तेराजपुत्राएवंविपश्चिद्वदेवदृश्यवर्त्मनोभूम्या देर्जगतःकोंतःस्यात्तंद्रक्ष्यामइत्येकसंकल्पादृढनिश्चयाश्चसंतस्तद्दर्शनायनिर्याताः ॥ १३ ॥ द्वीपसमुद्रभेदेपुपुनःपुनर्वारिपुनर्भूमिरितिक्रमेणआक्रमतांमध्येमध्येमरणेननवा निलब्धानिशरीराणियैस्तथाविधानांतेषांदीर्घकालोव्यवर्त्ततेत्यर्थः ॥ १४ ॥ स्वच्छेकंदुकेसंलग्नायेवम्रीकीटास्तन्न्यायेनभ्रमंतस्ते ॥ वल्मीकन्यायेनेतिपाठेवल्मीकपदेनतन्नि लीनावम्रीकीटाएवलक्ष्यंते ॥ अन्यत्वंदेशांतरत्वम ॥ १५ ॥

॥१६॥ यंयमधस्तनंपार्श्वगतंवाआसादयंति ॥ दिशःपश्यंतीतिशेषः॥१७॥इतोघतैःप्राप्तोयोगैः ॥१८॥ कथामुपसंहृत्यप्रकृतेयोजयति ॥ इत्थमिति ॥१९॥ संकल्पकल्पनस्य चिदधिष्ठानकत्वाच्चिन्मात्रंतत्त्वमितिव्यतिहारेणद्रढयति ॥ कल्पनमिति ॥२०॥ जलस्यवाहःप्रवाहस्तत्रत्यावर्त्ततरंगबुद्बुदादिविवर्त्तवत् ॥ आवर्त्तादीनांनाभीकुहरादिसादृश्यात्क थंचिदन्याभतापिभवेदिहनुसदृशस्यविसदृशस्यचान्यस्यात्यंतासंभवादन्याभमपिकथंभवेदित्यर्थः ॥२१॥ इदंजगत्सर्गस्यादौअभावःअतःखंशून्यमेवेतितदापरमांबरंब्रह्माका शएवेतितावदविवादम् ॥ तथाचतदेवस्वयमिदानीमपिजगदिवाभातीतिदृष्टौप्रलयसर्गकौअन्यन्न ॥ २२ ॥ तच्चचिद्रूपंकामकर्मवासनानुसारेणयथायथाकपतिकल्पनामालिंग

व्योमस्थकंदुकभ्रांतपिपीलिकवदाकुलम् ॥ अद्यापिसंस्थिताराजन्नचखेदंव्रजंतिते ॥१६॥ देशंभूगोलकस्यास्ययंयमासादयंतिच ॥ इहेवतत्रतत्रोच्चैरधश्चोर्ध्वंतथादिशः ॥ १७ ॥ तेवदंतिमहाराजयद्यस्माभिरितोघतैः ॥ नतावदंतःसंप्राप्तःसंचरामइतःपरम् ॥ १८ ॥ इत्थं नकिंचिदेवेदंब्रह्मसंकल्पडंबरम् ॥ किंचित्संकल्पमज्ञानमनंतंस्वप्नदृश्यवत् ॥१९॥ कल्पनंतत्परंब्रह्मपरंब्रह्मैवकल्पनम् ॥ चिद्रूपंनानयो र्भेदःशून्यत्वाकाशयोरिव ॥२०॥ चिन्मात्रंयद्यदाभातंजलवाहविवर्त्तवत् ॥ तत्तादृक्कथमन्याभमन्यस्यासंभवाद्भवेत् ॥ २१ ॥ अभावः खेचखमिदंसर्गादौपरमांबरम् ॥ स्वयंजगदिवाभातिनान्यत्प्रलयसर्गकौ ॥ २२ ॥ यथाकपतिचिद्रूपंतथैवरतिमित्यतत् ॥ दृष्टादृष्टैःस्वसं सारैश्चिरमास्तेयथाचिरम् ॥ २३ ॥ दृश्यात्मकंरूपमेकमेकमस्यैवमक्षयम् ॥ स्वयमेवमजंभातियन्नभातीवकिंचन ॥ २४ ॥ चिदणो रुदरेसंतिसमस्तानुभवाणवः ॥ शिलाःशैलोदरइवस्वच्छाःखात्मनिखात्मिकाः॥२५॥ स्वभावनिष्ठास्तिष्ठंतितेयदव्याकृतात्मनि ॥ माति ष्ठंतितुवैतेयदव्यावृत्ताःपरेपदे ॥ २६ ॥ तदेवजगदित्युक्तंब्रह्मभारूपमाततम् ॥ पूर्वापरपरामर्शान्निपुणंनिपुणाशयाः ॥ २७ ॥ अत्या श्चर्यमनष्टोयंपरमात्सदनात्स्वयम् ॥ नानात्वबुद्ध्यानानैवजीवोहमितिताम्यति ॥ २८ ॥

तितथैवतत्ररतिमासक्तिमेत्यदृष्टादृष्टैर्वेद्यावेद्यैर्जडचिद्रूपैरन्योन्यतादात्म्याध्यस्तैःस्वसंसारैर्यथाप्राक्चिरमासीत्तथायेपिचिरमास्ते ॥ २३ ॥ दृष्टादृष्टरूपतेतयोर्विदणवनूद्वितीय स्याक्षयत्वंदर्शयति ॥ दृश्यात्मकमिति ॥ २४ ॥ चिदणोरुदरेतत्तदाकारवासनावच्छिन्नाजगदनुभवाणवस्तिष्ठंतीत्याह ॥ चिदणोरिति ॥ २५ ॥ किंशुद्धचिदणोरुदरेनेत्याह ॥ स्वभावेति ॥ स्वभावआत्मनात्मस्वरूपंतद्भूताः ॥ परेपदेनिरविषयेचैतन्येतुमातिष्ठंतिनसंत्येवयतस्तत्रव्यावर्त्यरूपांतराप्रसिद्धेरव्यावृत्ताअत्यंताभिन्नाएवस्युरित्यर्थः ॥ २६ ॥ य तस्तत्राव्यावृत्तास्ततस्तदेवजगन्नेतरदितिनिपुणंपूर्वापरपरामर्शान्मयोक्तंहेनिपुणाशयाः ॥ २७ ॥ एवंशुद्धचिदैक्येपरमात्सदनान्ननष्टःअप्रच्युतोऽप्ययंजीवोनानात्वबुध्याजी वोहमितियत्ताम्यतिग्लायतेतदत्याश्चर्यमित्यन्वयः ॥ २८ ॥

१ अत्रटीकानुरोधेनस्वभावभूताइतिपाठोपेक्षितइतिभाति

इत्थंवसिष्ठोक्तंविपश्चिच्चरितंस्वोक्त्यासंवाद्यभासमुखोक्त्यापिसंवादयितुंविश्वामित्रउवाच ॥ उच्यतामिति ॥ हेविपश्चिदपराख्यहेभासत्वयाकियदृश्यंदृष्टंकियच्चभ्रांतंतत्रार्कं
चत्वास्मरसितत्किंचित्संक्षिप्यउच्यताम् ॥ २९ ॥ ३० ॥ तन्महांबरमव्याकृताकाशमासाद्य ॥ ३१ ॥ मयाकृशानोर्वरात्दिगंतदर्शनविषयेदृढैकचित्तेनजन्मांतरावर्त्तेषुविवर्त्त
नानितत्रानंतानिदृश्यान्यनुभूतानीत्यनुषज्जते ॥ ३२ ॥ अहंजगत्प्रतिप्रतिब्रह्मांडंदेहेनदेहेननानादेहभेदेनभ्रमन्नपिप्राक्तनदृढनिश्चयस्तेनैहेतोर्दृश्यात्मकोर्व्यादिस्वरूपायाअविद्या
दृशःअंतपरीक्षणायजवेनघनयत्नंयथास्यात्तथाआसंअभवमित्यर्थः ॥ ३३ ॥ ततःअहंतस्यचित्तस्यतरसाम्मृतिकालेतरुदर्शनप्रयुक्तसंस्कारवेगेनअंगेदेहग्रहणेरागोयस्यत
थाविधःसन्सहस्रंसमाःविटपः ॥ अकारोमत्वर्थीयः ॥ विटपीआसम् ॥ सकीदृशः ॥ बहिःप्रवृत्तिनिमित्तप्राणचेष्टानाविष्करणादंतरेवमनोयस्य ॥ चेतनेनवृक्षदेहाभिमानिजीवे

उच्यतांभासभोराजन्विपश्चिदपराख्यहे ॥ कियद्दृष्टंकियद्भ्रांतंदृश्यंस्मरसिकिंचवा ॥ २९ ॥ ॥भासउवाच॥ ॥ ॥बहुदृष्टंमयादृश्यंबहुभ्रां
तमखेदिना ॥ वह्नेवबहुधानूनमनुभूतंस्मराम्यहम् ॥ ३० ॥ मयानुभूतानिमहांतिराजंश्चिरंसुदूरेविविधैःशरीरैः ॥ सुखानिदुःखानिजगं
त्यनंतान्यनंतमासाद्यमहांबरंतत् ॥ ३१ ॥ विचित्रदेहैर्वरशापयोगाद्दृश्यान्यनंतानिमयामहात्मन् ॥ जन्मांतरावर्त्तविवर्त्तनानिदृढैकचि
त्तेनवरात्कृशानोः ॥ ३२ ॥ दृश्यात्मकोर्वीवपुषस्त्वविद्यादृशोजवेनांतपरीक्षणाय ॥ देहेनदेहेनजगत्प्रतिप्राक्स्मृतेःसदाहंघनयत्नमा
सम् ॥ ३३ ॥ समाःसहस्रंविटपोहमासमंतर्मनाश्चेतनभुक्तदुःखः ॥ चित्तंविनापुष्पफलप्रतानेवाकंदवत्तत्तरसांगरागः ॥ ३४ ॥ समाः
शतंमेरुमृगोहमासंसुवर्णवर्णस्तरुपर्णकर्णः ॥ दूर्वांकुरास्वादनगीतिनिष्ठअहन्कनिष्ठोवनवासिमध्ये ॥ ३५ ॥ पादाष्टकैरावलितात्म
पृष्ठोमृतेभ्रसःक्लेशकृतात्ममृत्युः ॥ समाःशतार्द्धंशरभोहमासंक्रौंचाचलेकांचनकंदरासु ॥ ३६ ॥ कालागुरुद्रुमलतावलितानिलेनवि
द्याधरीसुरतधर्मकलामृतानि ॥ पीतानिमेमलयसानुनिमंदरेचमंदारचंदनकदंबलतागृहेषु ॥ ३७ ॥

नभुक्तंदुःखंयत्र ॥ तथापूर्वापरपरामर्शहेतुंचित्तंविनापुष्पफलादीनांप्रतानेजननविस्तारेवाकंदः कंदविशेषस्तद्वद्भौमरसकालादितंत्रइत्यर्थः ॥ ३४ ॥ दूर्वांकुराणामास्वादनेगीतिषु
चनिष्ठादृढासक्तिर्यस्य ॥ वनजातानांमृगाणांमध्येकनिष्ठःअल्पदेहोऽल्पबलश्च ॥ अतएवकमपिअहन्अहिंसन् ॥ ३५ ॥ शरभजातेःपृष्ठेनोपिपादचतुष्टयेनसंचारादिसामर्थ्येउ
दरप्रदेशस्यापिपृष्ठत्वसंभवात्पादाष्टकैरावलितेआत्मनःपृष्ठेयस्य ॥ मृतेमरणेप्रसक्तेतुगर्जन्मेघनिर्गतात्करकांभसोनिमित्तान्मेघेनसहयोद्धुंगिरिशिखरादुत्पतनपतनादिक्लेशेनैवकृ
तआत्ममृत्युर्यस्य ॥ ३६ ॥ ततोभेदइतिकर्त्तुःशेषत्वेषष्ठी ॥ विद्याधरजन्मप्राप्तेनमयामलयसानुनिमंदरेचकालागुरुद्रुमाणांलताभिर्वलितेनालिंगितेनअतएवशीतमंदसुरभिणा
अनिलेनसहविद्याधरीणांसुरतधर्मेषुतदीयकलालक्षणान्यमृतानिपीतान्यनुभूतानि ॥ ३७ ॥

विरिंचहंसस्यतनयेनपुत्रजन्मप्राप्तेनमयामेरोरुपरिनिर्झरिण्यामंदाकिन्यास्तीरांतरेषुरमताहेमारविंदानांमकरंदैःपिशंगितानिपिंगलवर्णीकृतानिपयांसिपीतानि ॥ ३८ ॥ ३९ ॥ ततोऽहंकालंजरेगिरौकरंजगुंजाप्रचुरेवनेजंबुकतांसृगालजन्मगतःप्राप्तः ॥ तत्रापिगजेनपिष्टेसंचूर्णितेस्वदेहेसत्यर्द्धमृतेनमयाअसौमत्पेष्टाहस्तीहरिणासिंहेनहतोदृष्टः ॥ ४० ॥ अथसंतानकानांकल्पवृक्षभेदानांप्रकरैर्हासिनिहासवतीवशोभमानेसह्यगिरेःसानौअहमिंदुमुखीसुरस्त्रीकृतयुगस्यार्द्धंसिद्धशापादासम् ॥ ४१ ॥ ततोमयाअद्रींद्रस्यसन्निधानात्सह्यस्यकच्छेजलप्रायेप्ररूढानांकरवीराणांलताःशाखास्तदंतरप्रदेशेषुविरावीसंदैवरवणशीलोवाल्मीकनामापक्षिजातिभेदस्तद्वपुषासमानांशतंनीतम् ॥ ततःकरवीरवनेसहभार्यापुत्रादिभिरुच्छिन्नेसतिअन्यत्रदूरस्थेजगतिइंद्रगिरौमहेंद्रपर्वतेभृशंवियोगार्त्तेनैककेनशेषंवयोनीतम् ॥ ४२ ॥ एवंजन्मद्वयेनसिद्धशापमोक्षानंतरंसिद्धानुग्रहादेवसिद्धभूतेन

हेमारविंदमकरंदपिशंगितानिपीतानिपंचदशवर्षशतानिमेरौ॥वैरिंचहंसतनयेनमयापयांसितीरांतरेषुरमतोपरिनिर्झरिण्याः॥ ३८ क्षीरोदवेलावनगंधवाहविलोलनीलालकवल्लरीणाम् ॥ समाःशतंशोकजरापहारिगीतंश्रुतंमाधवसुंदरीणाम् ॥ ३९ ॥ कालंजरेमंजरितेकरंजगुंजावनेजंबुकतांगतोहम् ॥ गजेनपिष्टेहरिणाहतोसौहस्तीमयात्रार्द्धमृतेनदृष्टः ॥ ४० ॥ संतानकप्रकरहासिनिसह्यसानौकस्मिंश्चिदन्यजगतींदुमुखीसुरस्त्री ॥ एकाकिनीकृतयुगार्द्धमथाहमासंकल्पद्रुमस्तवकसद्मनिसिद्धशापात् ॥ ४१ ॥ अद्रींद्रकच्छकरवीरलतालयेषुनीतंसमाशतमशंकधियामयान्यत् ॥ अन्यत्रदूरजगतींद्रगिरौविराविवाल्मीकपक्षिवपुषानिशमेककेन ॥ ४२ ॥ अन्यत्रसानुनिमयापरिलंबमानाःसच्छायचंदनवनावलितेलतानाम् ॥ दृष्टाःस्त्रियःफलमिवावलिताविलासैर्भुक्ताश्चता अपहृताअपिसिद्धपांथैः ॥ ४३ ॥ अन्यत्रपर्वतनितंबकदंबकच्छेनीतानितापसतयोत्तमयादिनानि ॥ प्राप्यैकवस्त्वभिनिवेशविषूचिकार्त्तचित्तेनतांतमतिनाऽमतिनामयांतः॥ ४४ ॥ ब्रह्मांडसंपूरितमन्यदस्तिजलेचराशेषदिगंतभूतम्॥ संदिग्धतेजोंबरवातसत्तंजलस्थभूताकृतिमात्रभूमि॥ ४५॥

तद्मयामहेंद्रगिरेरेवसच्छायचंदनवनावलितेअन्यत्रसानुनिलतानांदोलासुतत्फलमिवपरिलंबनाविलासैरावलिताःस्त्रियोदृष्टाःसिद्धपांथैरपहृताअपिताभुक्ताश्च ॥ ४३ ॥ तदनंतरममतिनाअविवेकेनएकवस्तुनिअविद्यांतदर्शनलक्षणेयोऽभिनिवेशस्तल्लक्षणयाविषूचिकयाआर्त्तंवशीकृतंचित्तंयस्यतथाविधेनअतएवतांताग्लानामतिर्यस्यतथाविधेनमयाअंतर्निर्वेदंप्राप्यअन्यत्रपर्वतनितंबकदंबकच्छेतापसतयादिनानिनीतानि ॥ ४४ ॥ इत्थंस्वजन्मपरंपरावर्णनांतरालेवलात्स्मृतान्यत्याश्चर्याणिकानिचिदुत्कंठयावक्तुमारभते ॥ ब्रह्मांडेत्यादिना ॥ हेमुनेअन्यदेकमत्याश्चर्यमस्तितच्छृणु ॥ कीदृशंतत् ॥ ब्रह्मांडैरनंतैःसंपूरितम् ॥ जलेचराइवाशेषदिगंतस्थितानिभूतानियत्रतथाविधम् ॥ जलेचराइवेतिदृष्टांततात्पर्यंविवृण्वन्विशिनष्टि ॥ संदिग्धेति ॥ संदिग्धातेजोंबरवाताख्यानांत्रयाणांमहाभूतानांसत्तायस्मिन् ॥ जलस्थंजलेप्रतिबिंबितंभूतमिवाकृतिर्यस्यास्तथाविधाकृतिमात्राभूमिर्यस्मिन् ॥ तदिदमीषद्व्याकृतनामरूपावस्थंब्रह्मैवात्याश्चर्यमस्तीत्यर्थः ॥ ४५ ॥

तच्चाश्चर्यंकलधौतशिलान्यायेनवनिताशरीरादिसर्वपदार्थेष्वपिसर्वजगद्गर्भंप्रत्येकंपर्याप्तमस्तीत्येतत्तत्राश्चर्यांतरंमयादृष्टमितिवक्तुंकांचिद्वनितामुदाहरति ॥ एकत्रेति ॥ तस्या
वनितायाःशरीरेसुदर्पणेअंतःप्रतिबिंबितानीवआकाशशैलादिसहितदिक्कालप्राण्यादिमंतित्रिजगंतिभांतितदत्यंतमाश्चर्यमित्यर्थः ॥ ४६ ॥ अथसावनितामयापृष्टा ॥ हेवरगा
त्रित्वंकासि ॥ तेएतच्छरीरमीदृशंत्रिजगद्घटितंकिमिति ॥ ततस्तयामांप्रत्युक्तं हेअंगइहास्मिन्वस्तुजातेयाशुद्धाचित्सर्वावभासिकासाहमस्मि इमानिचमहाजगंतिममअंगंमू
र्त्तामूर्त्तात्मकंशरीरम् द्वेवावब्रह्मणोरूपेमूर्त्तंचैवामूर्त्तंच यस्यसर्वाणिभूतानिशरीरमित्यादिश्रुतेरितिभावः ॥ ४७ ॥ हेअंगइयंत्वद्दृष्टाअहंयथाजगद्घटितत्वात्स्मयोविस्मयआ
श्चर्यंतद्योग्यदेहवतीतथाइदंसर्वमेतत्स्तंभकुंभादिवस्तुजातमपिसर्वजगद्घटितत्वाद्धिचित्रमत्याश्चर्यभूतमेव ॥ तर्हिअन्यैःपृथग्जनैरपिसर्वंवस्तुइत्थंकुतोनदृश्यतेतत्राह ॥ अन्यै
रिति ॥ यदाइत्थंस्वभावःप्रतिवस्तुनविदितस्तदाइत्थंनपश्यंति ॥ यदात्वातिवाहिकमात्रभावदृढीकारेविदितोभविष्यतितदाद्रक्ष्यंत्येवतेपीतिभावः ॥ ४८ ॥ नन्विदमसमंजसं म
यास्वदेहस्यसर्वजगद्घटितत्वेनाननुभवाद्देहांतश्चक्षुराद्यप्रवेशेनयदितत्रजगद्दर्शनंब्रूषेतर्हितत्रत्यवेदशास्त्रादेःश्रोत्रेणश्रवणंस्यादेवेतिममाऽसंभावनांलिंगैरुपलक्ष्यतत्संभावना

एकत्रदृष्टावनितामयैकातस्याःशरीरेत्रिजगंतिभांति ॥ प्रतिबिंबितानीवसुदर्पणेंतराकाशशैलादिदिगादिमंति ॥ ४६ ॥ पृष्टामयासौवर
गात्रिकासिशरीरमेतचकिमीदृशंते ॥ तयोक्तमंगेहचिदस्मिशुद्धाममांगमेतानिमहाजगंति ॥ ४७ ॥ यथाहमेवंस्मयदेहिकेयंसर्वंतथै
वांगनचित्रमेतत् ॥ अन्यैःस्वभावोविदितोनशुद्धोयदानपश्यंतितदेत्थमंग ॥ ४८ ॥ अवेदशास्त्रेणजगत्यशेषैर्भूतैःस्वदेहालयभित्तिभा
गात् ॥ एतद्विधेयंनविधेयमेतद्ध्वनिःस्वतःश्रूयतएवनित्यम् ॥ ४९ ॥ ईदृक्स्वभावैवपदार्थसत्तासातत्रयद्भित्त्यचलादयोपि ॥ स्वप्नादिमा
यास्विवमेवदंतिवाचंनयुष्मास्वसमंजसंतत् ॥ ५० ॥ अस्त्रीकसंसारगतेनदृष्टंमयाक्वचिद्यावदनन्यकामम् ॥ भूतानिनिर्यांतिवहूनिभूता
द्विशंतिभूतानिवहूनिभूतम् ॥ ५१ ॥

र्थंसामामाह ॥ अवेदेतिद्वाभ्याम् ॥ त्वदादिभिरशेषैरपिभूतैःप्राणिभिःअवेदशास्त्रत्वेनाऽभिमतेपिवाह्याद्न्यस्मिन्देहांतर्गतेजगतिस्वदेहालयभित्तेर्भागातएकदेशभूतात्स्वस्वकर्ण
शष्कुलीप्रदेशान्नित्यमनाहतध्वनिःसर्ववेदशास्त्रादिशब्दसामान्यरूपनादात्मकःस्वतःश्रूयतएव सएवहिएतन्नित्यंनैमित्तिकंकर्मशमदमादिज्ञानसाधनंचविधेयमवश्यमनुष्ठेय
मितिसर्वविधिगर्भः एतत्कलंजभक्षणादिनविधेयमितिसर्वनिषेधवेदशास्त्रगर्भश्चेतितच्छ्रवणेनैवतंदतर्गतंविधिनिषेधशास्त्रमिवतदर्थभूतंजगदपिदेहेस्तीतिसंभावयेतिभावः ॥ ४९ ॥
उक्तन्यायेनस्तंभकुंभादिष्वपिसर्वजगत्सद्भावःसंभावनीयइत्याशयेनाह ॥ ईदृगिति ॥ सर्वपदार्थेष्वनुगतासत्तापियादृक्शब्दसामान्यस्वभावोऽनाहतध्वनिःईदृक्स्वभावैवसर्व
जगद्घटितसामान्यस्वभावैव ॥ यद्यस्मात्कारणादत्रजगतिप्रसिद्धाभित्त्यचलादयोपिसात्रह्मसत्त्वैव ॥ नचभित्त्यादयोवाचंनवदंतीत्यचेतनाएवेतिभ्रमितव्यम् ॥ यतस्तेस्वप्नादिप्रसि
द्धमायास्विवइदानीमपिमेपुरतःवाचंवदंति ॥ यदाअत्यंतजडत्वेनप्रसिद्धेष्वपिकुड्यादिपुसर्वजगद्घटितचेतनत्वंनासमंजसंतदाचेतनप्रायेषुयुष्मासुयुष्मदादिदेहेषुतरांतन्नासमंज
समित्यर्थः ॥ ५० ॥ वनितासंवादलक्षणमाश्चर्यंस्वदृष्टमुपवर्ण्याश्चर्यांतरंतादृशंवर्णयति ॥ अस्त्रीकेति ॥ क्वचिद्देशेकालेचनविद्यंतेस्त्रियोयत्रतथाविधोयःसंसारोजगत्तद्गतेनम
यायावत्सकलंप्राणिजातंनविद्यतेअन्यस्याःकामोव्यतिकराभिलापोयस्यतथाविधंदृष्टम् ॥ तर्हितत्रकथंपुत्रपौत्रादिसंततिःपूर्वेषांमरणंवातत्राह ॥ भूतानीति ॥ ५१ ॥

आश्चर्यांतरमाह ॥ एकानीति ॥ आंजसानिउत्पातादिनिमित्तनिरपेक्षाणि एकानिअन्यानिअभ्राणिखेदृष्टानि ॥ तानिचगर्जनैःशस्त्रसंघट्टनध्वनिसाम्येनसंजातझणज्झणानि ॥ तेभ्योवृष्ट्यायानिविद्युदादीनिजलवन्निपतंतितानिखंडैःस्वशकलैर्जनानामायुधानिभवंति ॥ ५२ ॥ अन्यत्रआश्चर्यांतरंदृष्टम् ॥ किंतत् ॥ इहास्मिन्जगतियावत्यावंतिग्राम गृहाणिसंतितावंतिअंधयातिमिराद्युपहतदृष्ट्येवगगनेनआकाशमार्गेणयांति ॥ अमुत्रदूरेदिगंतेविशंतिसचयोग्रामःइहअभवत् ॥ सएवमयाअन्यतोन्यत्रैवलब्धइत्याश्चर्यमि त्यर्थः ॥ ५३ ॥ अन्यत्रदृष्टमाश्चर्यांतरमाह ॥ नरेति ॥ एतेनराएतेअमराएतेअहयइतिलोकत्रयवासिनांयेअवांतरप्रविभागास्तैर्मुक्तानिअतएवसमानि ॥ ५४ ॥ अन्यत्रा श्चर्यांतरमाह ॥ अचंद्रेति ॥ अनंधकारत्वेहेतुःस्वयंप्रकाशेति ॥ ५५ ॥ आश्चर्यांतरमाह ॥ अपूर्वेति ॥ प्रसिद्धसंस्थानव्यवहारवैलक्षण्यमपूर्वता ॥ ५६ ॥ किंबहुना ॥ मया

एकानिदृष्टानिमयांजसानिखेऽभ्राण्यदभ्रांगझणज्झणानि ॥ वृष्ट्यासमंतान्निपतंतिखंडैर्भवंतितीक्ष्णानिजनायुधानि ॥ ५२ ॥ अन्यत्रदृष्टंगगनेनयावदिहांधयाग्रामगृहाणियांति ॥ विशंत्यमुत्रांतइहाभवद्योग्रामःसएवान्यतएवलब्धः ॥ ५३ ॥ नरामराहिप्रविभागमुक्तान्यन्यत्रभूतानिसमानिसंति ॥ खादेवसर्वाणिसमुद्भवंतितत्रैवकालेनलयंप्रयांति ॥ ५४ ॥ अचंद्रतारार्कमनंधकारंस्वयंप्रकाशाखिलभूतजातम् ॥ स्मरामिकिंचिज्जगदेककांतंज्वालोदराभंदिनरात्रिमुक्तम् ॥ ५५ ॥ अपूर्वदैत्याहिनरामरादिभूतान्यपूर्वद्रुमपत्तनानि ॥ अपूर्वलोकांतरकार्यवंतिस्मराम्यनंतानिमहाजगंति ॥ ५६ ॥ दिगस्तिसानोविहृतंनयस्यांनसोस्तिदेशःखलुयोनदृष्टः ॥ यन्नानुभूतंनतदस्तिकार्यमन्याश्रयंनापरमस्तिमर्शात् ॥ ५७ ॥ क्षीरोदकभ्रमितमंदररत्नशृंगधाराग्रनिर्द्दलनजातझणज्झणानाम् ॥ एकत्रसंयुतमुपेंद्रभुजांगदानांशब्दंस्मरामिघनगर्जितशंकितेन ॥ ५८ ॥ ॥ इ॰ वा॰ रामायणेवा॰ दे॰ मो॰ नि॰ उ॰ अ॰ वि॰ भाससंसारवर्णनंनामएकत्रिंशाधिकशततमःसर्गः ॥ १३१ ॥ ॥ ७ ॥ ॥ भासउवाच ॥ ॥ मंदरेमृदुमंदारमंदिरेमंदराभिधाम् ॥ आलिंग्याप्सरसंसुप्तंसरित्तृणमिवानयत् ॥ १ ॥

यस्यांदिशिनविहृतंसादिङ्नास्ति ॥ योदेशोनदृष्टःसोपिनास्ति ॥ यत्कार्यंकौतुकंनानुभूतंतदपिनास्ति ॥ मदीयान्मर्शाद्विमर्शादनुभवरूपात्सर्वसाक्षिणःसकाशादन्याश्रयमन्या धिष्ठानकमपरंतद्व्यतिरिक्तंचयत्स्यात्तदपिनास्ति ॥ ५७ ॥ क्षीरोदकेसमुद्रेमथनार्थंभ्रमितोयोमंदरगिरिस्तदीयरत्नमयशृंगाणांतीक्ष्णैःशाणप्रायैर्धाराग्रैर्निर्दलनेनिशातनेजातझ णज्झणानांसिंजितानामुपेंद्रस्यभगवतोभुजांगदानांघनगर्जितशंकितेनमेघगर्जनशंकयाजनैःश्रुतमत्याश्चर्यभूतंशब्दंस्मरामीत्याश्चर्योक्तीनामुपसंहारः ॥ ५८ ॥ ॥ इतिश्रीवा सिष्ठम॰तात्पर्यप्रकाशेनि॰उ॰एकत्रिंशदुत्तरशततमःसर्गः ॥ १३१ ॥ ॥ ७ ॥ ॥ वर्ण्यंतेत्रापिभासेनभूयोजन्मपरिभ्रमाः ॥ आश्चर्याणिचभूरीणिनिःसारत्वंच संसृतेः ॥ १ ॥ आश्चर्योपवर्णनैरंतरितांस्वजन्मपरंपरावर्णनकथांपुनरनुसंधत्ते ॥ मंदरेइत्यादिना ॥ पर्वतनितंबकदंबकच्छेतापसभावानुभवेनबहुदिनयापनेनप्राप्तसिद्धिअत एवमंदरपर्वतेमृदुनिमंदारकुंजमंदिरेमंदराभिधामप्सरसमालिंग्यसुप्तंमांवक्ष्यमाणासरित्स्वप्रवाहपतितंतृणमिवानयत्प्रवाहितवतीत्यर्थः ॥ १ ॥

मामितिपूर्वान्वयि ॥ अथानंतरंजलेनआकुलाव्याकुलाअसौअप्सराःमयासमाश्वास्यपृष्टा ॥ हेबालेइदमाकस्मिकंनद्यामावयोःप्रवहणंकिंनिमित्तमिति ॥ ततोभयाच्चपलने
त्रयातयाउक्तम् ॥ २ ॥ किमुक्तंतदाह ॥ इहेति ॥ हेकांतइहाऽस्मिन्प्रदेशेचंद्रोदयेसतिचंद्रकांतशिलामयानांकटानामद्रिकटकानांप्रजाःसंतानभूताएतानद्योमाद्यंतिप्रस्रवजलै
र्वर्द्धंते ॥ यथानिशागमेसेष्टाःइष्टेनप्रियतमागमनेनसहितावनिताःकामेनमाद्यंतितद्वत् ॥ ३ ॥ तर्हिनिद्रागमात्प्रागेवायमर्थस्त्वयामह्यंकुतोननिवेदितस्तत्राह ॥ त्वत्संगमेति ॥ न
नुइतिकोमलामंत्रणे विस्मृतंमयेतिशेषः ॥ यथागंगाकनकपंकजेस्थिताविहगीसहचरंभृंगमुपादायखमुड्डीनातथासामामुपादायखमुड्डीनेतिपरेणसहान्वयः ॥ ४ ॥ तेनजले
नच्छिन्नोहंतदनंतरमकर्दमाप्लुतेनिर्मलेमंदरशृंगेसप्तसमास्तयासहआसम ॥ ५ ॥ ततोजन्मांतरेसाश्चर्यंजगदंतरदर्शनमाह ॥ अन्यदिति ॥ ऋक्षचक्रेणज्योतिश्चक्रेणविवर्जितम्॥

मामथासौमयापृष्टासमाश्वास्यजलाकुला ॥ बालेकिमिदमित्युक्तंतयाचपलनेत्रया॥२॥इहचंद्रोदयेप्वेताश्चंद्रकांतकटप्रजाः॥ नद्यो
माद्यंतिवनिताःसेष्टाइवनिशागमे ॥ ३ ॥ त्वत्संगमरसावेशवशात्तन्ननुविस्मृतम् ॥ इत्युक्त्वामामुपादायसोड्डीनाविहगीवखे॥४॥ शृंगं
शृंगवतःशृंगेगंगाकनकपंकजे ॥ अहमासंसमाःसप्ततच्छिन्नोऽकर्दमाप्लुते॥५॥ अन्यन्मयाजगद्दृष्टमृक्षचक्रविवर्जितम्॥ गर्भगर्भ
स्थैकजातिस्वप्रकाशजनावृतम्॥६॥ नदिग्विभागोनदिनानियत्रनचैवशास्त्राणिनवेदवादाः ॥ नचैवदैत्यादिसुरादिभेदोजगन्मया
तादृगथात्मदीप्तम्॥७॥ विद्याधरामरविहारविमानभूमावभ्रंलिहाचलनितंबकदंबकच्छे ॥ आसंसमाःसमरसामरसोमनामासप्ता
न्यसप्तससमुद्रतटेतपस्वी॥८॥ पवनवहनसंनिवेशनानासुहयपयोधरदेहकैरनेकैः॥ गजहरिणमृगेंद्रवृक्षवल्लीमृगनगपन्नगपक्षिभिः
परीतम् ॥ ९ ॥ गगनमवनितःसमेत्यवङ्क्षैर्वरविभवेनजगत्यनंतकोशम् ॥ क्वचिदहमभितोदिदृक्षुरग्रेस्ततउरगाशनवद्बलादविद्याम्
॥ १० ॥ क्वचिदहंजगतःपरिनिर्गतःपतितएकमहार्णवविस्तृते ॥ नभसितत्रनिवासिनिभेसितःसमयमन्वभवंपतनंतथा ॥ ११ ॥

कदलीत्वचइवगर्भस्यगर्भेस्थिताएकजातयःस्वप्रकाशाश्चयेजनास्तैरावृतम् ॥ ६ ॥ तर्हितत्रकथंलौकिकवैदिकव्यवहारप्रवृत्तिस्तत्राह ॥ नेति ॥ आत्मनैवदीप्तंप्रकाशमान
म् ॥ ७ ॥ ततोजन्मांतरमाह ॥ विद्याधरेति ॥ समुद्रतटेसमुद्रतटसंनिहितेअभ्रंलिहानामत्युन्नतानामचलानांनितंबकदंबकच्छेअहंअमरसोमनामाविद्याधरःसप्तअन्यत्सप्त
चतुर्दशसमास्तपस्वीआसम् ॥ ८ ॥ ततोऽहंवङ्क्षैर्वरविभवेनजगतिअभितःअविद्यांदिदृक्षुःसन्क्वचित्पवनवद्वहनंप्रवाहरूपेणगमनंतद्युक्तक्रमसंन्निवेशैर्नानाविधायेसुहयाजा
त्यश्वाःपयोधरामेघाइवचदेहायेषांतथाविधैर्जनैर्गजैर्हरिणैर्मृगेंद्रैर्वृक्षैर्वल्लीभिरन्यैश्चमृगैर्नगैःपर्वतैःपन्नगैःपक्षिभिश्चपरीतमनंतकोशंगगनमवनितःसमेत्यउरगाशनोगरुडस्तद्वद्ब
लात्वेगेनापेस्ततःअस्तइतिद्वयोरन्वयः ॥ ९ ॥ १० ॥ तस्माज्जगतःपरिनिर्गतोहंक्वचिदेकमहार्णववद्विस्तृतेनभसिपतितः ॥ तत्रनिवासिनिभेनक्षत्रगणेसितोबद्धःसन्दिनरात्रिमा
सत्वादिसमयमन्वभवंतथादिक्षुपतनंगमनंचान्वभवम् ॥ ११ ॥

वर्णितेनप्रकारेणआकाशकोशेपतनस्यगमनस्यानुभवनमेवैकामुख्यावृत्तिर्यस्यतथाचिरपतनेनश्रांतस्यमेअथानंतरंनिद्रयाअंतर्द्धिपदंस्थानमकारि ॥ तादृशासर्वजनप्रसिद्धे नसुषुप्तवपुषास्थितेनमयाअथअनंतरंप्रवृत्तेस्वप्नात्मकेजाग्रतितदातत्रअंतरेवआत्मनिस्वस्मिन्विश्वमुपलब्धंदृष्टम् ॥ १२ ॥ तत्रापिभूयोदिगंतभुवनादिसंसारेणचंचलतयाअ क्षीणवातवलयालतयापक्षीवपरिचाल्यमानोहंतासुपूर्वसंकल्पितासुतेषांदृश्यानांमानानिमाःइयत्तयापरिच्छेदास्तल्लक्षणासुजगद्गुहासुपतितः ॥ १३ ॥ दृशश्चक्षुषोयावत्पर्यंतं विषयाशाप्रसृताअहंतावत्प्रदेशपर्यंतंक्षणाद्यातःपुनरपितथैवपश्यन्स्तंस्तद्दर्शनकौतुकेनपुनःपुनर्दृश्यंयातोस्मीत्यर्थः ॥ १४ ॥ इतिएवंरीत्याजागरेषुस्वप्नेषुचद्रष्टुंशक्यंदृश्यंतद्भिन्न मदृश्यंचविषयमुद्दिश्यगम्यमगम्यंचदेशंवेगाल्लंघयतोममवर्षगणावहवोगताः ॥ १५ ॥ १६ ॥ यद्यपिमयानेदंसत्नेदंसदितिविचारानुभवेस्थितंतथापिइदंसत्यमिदंचसत्यमिति

आकाशकोशपतनानुभवैकवृत्तेःश्रांतस्यमेपदमकार्यथनिद्रयांतः ॥ तादृक्सुषुप्तवपुषाथमयोपलब्धंस्वप्नात्मजाग्रतितदात्मनितत्र विश्वम् ॥ १२ ॥ भूयोदिगंतभुवनामरमंदराद्रिसंसारचंचलतयालतयेवपक्षी ॥ अक्षीणवातवलयापरिचाल्यमानस्तन्मासुतासुप तितोहिजगद्गुहासु ॥ १३ ॥ विषयाशादृशोयावत्तावद्यातःक्षणादहम् ॥ पुनस्तथैवपश्यंस्तुदृश्यंयातःपुनःपुनः ॥ १४ ॥ इतिदृश्यमदृश्यंच गम्यंचागम्यमेवच ॥ वेगाल्लंघयतोदेशंममवर्षगणागताः ॥ १५ ॥ दृश्याख्यायाअविद्यायानंत्वंतंप्राप्तवानहम् ॥ मिथ्यैवदृढरूढायाः पिशाच्याइववालकः ॥ १६ ॥ नेदंनेदंसदित्येवविचारानुभवेस्थितम् ॥ तथापीदमिदंचेतिदुर्दृष्टिर्ननिवर्त्तते ॥ १७ ॥ प्रतिक्षणंसुखैर्दुःखै र्देशकालैःसमागमैः ॥ सरिद्वारिवदालोलानवमायांतियांतिच ॥ १८ ॥ तालीतमालबकुलातुलतुंगशृंगमुन्नादवातजवमेकमहंस्मरा मि ॥ सूर्यादिभिर्विरहितंप्रकटंस्वकांत्यासस्थावराद्रितटजंगममेवविश्वम् ॥ १९ ॥ यदेतदेकांतविहारहारिस्वच्छंदमेकामितमस्तशंक म् ॥ क्वचिन्मयाचारुजगत्सुदृष्टंतुल्यानतस्यामरराजलक्ष्मीः ॥ २० ॥ ॥इत्यार्षे०वा०म०वा०दे०मो०नि०उ०अ०वि०भासव र्णितस्वजन्मपरंपरानामद्वात्रिंशोत्तरशततमःसर्गः ॥ १३२ ॥

प्रतिविषयंदुर्दृष्टिर्ननिवर्त्ततेचिराभ्यस्तद्वैतसत्यतासंस्कारस्यप्रबलत्वादितिभावः ॥ १७ ॥ विचारेणनिरस्ताअपिदुर्दृष्टयःप्रतिक्षणंप्रसक्तैःसुखैर्दुःखैर्देशकालभेदैरिष्टानिष्टजनस मागमैश्चसरिद्वारिवत्नवंनवमायांति ॥ १८ ॥ तत्रैकमाश्चर्यस्मृतमाह ॥ तालीति ॥ तच्चशृंगंसूर्यादिभिर्विरहितमपिस्वकांत्याप्रकटंभासमानम् ॥ विश्वंतुतस्यशृंगस्यस्थावरैर द्रितटैर्जंगमैश्चसहितंयत्सानुतत्स्थानीयमितिसर्वाधिष्ठानंब्रह्मैवात्राश्चर्यशृंगंनिर्दिष्टम् ॥ १९ ॥ यदेतच्छृंगमेकांतेविहारोयेषांतत्त्वविदांतेषांहारिमनोहरंस्वच्छंदमेकममितमस्त विकारशंकंचेतित्रिविधपरिच्छेदशून्यंतच्चक्वचिच्चारुजगत्सुब्रह्मविन्मंडलीषुदृष्टम् ॥ अमरराजस्येंद्रस्यहिरण्यगर्भस्यचलक्ष्मीस्तस्यतुलयासंमितातुल्यान ॥ हैरण्यगर्भांतानां दानांपरिमितत्वादितिभावः ॥ २० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०द्वात्रिंशदुत्तरशततमःसर्गः ॥ १३२ ॥ ॥ ५ ॥ ॥ ५ ॥

अत्याश्चर्यंकचिद्दृष्टंभासेनात्रोपवर्ण्यते ॥ सप्तद्वीपप्रमाणस्यशवस्यपतनंदिवः ॥ १ ॥ अविद्याख्यानेस्मिन्नत्याश्चर्यवर्णनप्रसंगेनशवोपाख्यानंभासमुखेनवर्णयितुंप्रस्तौति ॥ कस्मिंश्चिदिति ॥ हेमुनेअस्माज्जगतोऽन्यत्रकस्मिंश्चिदपूर्वेजगतिमयाइदंवक्ष्यमाणंविचित्रमत्याश्चर्यंदृष्टंतच्छृणु ॥ यन्महाघानांब्रह्महत्यादीनांफलभूतरौरवादिनरकवृत्तांतदशासमानमतिर्बीभत्समप्यविद्ययाअंधेनमयावह्निवरप्रार्थनाबलात्कृतंसंपादितमनुभूतमितियावत् ॥ १ ॥ भवतामगम्येगंतुमशक्येकचिद्व्योम्निजगततत्रचज्वलंत्याचंद्रसूर्यादिदीप्त्याविचित्रःसर्गोऽस्ति ॥ तच्चसन्निवेशतएतादृगेतद्ब्रह्मांडसदृशमप्यंबरतएतद्दृष्ट्याशून्यत्वतोहेतोरस्मादन्यदेव ॥ तत्रदृष्टांतः ॥ यथास्वामंत्वमदृष्टंपुरंजाग्रद्दृष्टपुरसदृशमपिजाग्रद्दृष्ट्याशून्यत्वादन्यदेवचेतसिभातंतद्वदित्यर्थः ॥ २ ॥ तस्मिन्जगतिनिवसतामयात्हृदयस्थंस्वाभिलपितमर्थंदिगंतेष्वन्वेष्टुंककुभांमुखेषुअक्षिनिहितंप्रेरितमितियावत् ॥ ते

॥ विपश्चिदुवाच॥ ॥ कस्मिंश्चिदन्यत्रजगत्यपूर्वंदृष्टंमयेदंशृणुकिंविचित्रम् ॥ महाघवृत्तांतदशासमानमविद्ययांधेनबलात्कृतंयत् ॥ १ ॥ अस्तिक्कचित्खेभवतामगम्येजगज्ज्वलद्दीप्तिविचित्रसर्गः ॥ एतादृगप्यंबरतस्तदन्यत्स्वाप्नंपुरंजाग्रतिचेतसीव ॥ २ ॥ तस्मिन्मयाविहरताहृदयस्थमर्थमन्वेष्टुमक्षिनिहितंककुभांमुखेषु ॥ पश्यामियावदचलप्रतिमाधरायांछायालिजालमलिनापरिवंभ्रमीति ॥ ३ ॥ आश्चर्यमात्रमुचितंकिमिदंनिमेपादित्यक्षिवैजगतियावदहंत्यजामि ॥ खात्तावदद्रिमतुलंपुरुषाकृतिंद्रागावर्त्तवृत्तिभिरपश्यमहंपतंतम् ॥ ४ ॥ कःस्यादयंगिरिगुरुःपुरुषोविराड्वापर्यस्तपर्वतवदाशुपतच्छरीरः ॥ आकाशपूरकवपुःपरमांबरोपियोनैवभातिपिहिताखिलवासरश्रीः ॥५॥ एवंविधांहृदिमनाक्कलयामियावत्तावत्स्यपातसहसानभसोविवस्वान् ॥ कल्पांतवातपरिवृत्तपितामहांडपृष्ठावपातघनघोषजुषाजवेन ॥ ६ ॥ तस्मिन्पततिभीमात्मन्यपारावारदेहिनि ॥ सप्तद्वीपांवसुमतींपरिपूरयतिक्षणात् ॥ ७॥ स्वात्मनोनाशमाशंक्यसद्वीपभुवनैःसह ॥ अवश्यभाविपार्श्वस्थमहमग्निमथाविशम् ॥ ८ ॥

पुयावत्कौतुकंपश्यामितावद्धरायांअलिजालमलिनाअचलप्रतिमामहतीछायाबंभ्रमीतिभृशंभ्रमति ॥ ३ ॥ ततःअतिमहत्वादाश्चर्यमात्रमिदंछायाकरंकिमुचितमितिविमृशन्यावदक्षिजगतिऊर्ध्वभागेत्यजामिप्रेरयामितावदद्रीणांमानंपरिमाणंअद्रिमासातुलायस्यतथाविधंखादावर्त्तवृत्तिभिःपतंतंपुरुषाकृतिमहंद्रागपश्यम् ॥ ४ ॥ गिरिरिवगुरुःआकाशपूरकवपुःपतच्छरीरोयंपुरुषःकोब्रह्मावास्याद्विराड्ब्रह्मांडशरीरोवास्यादितिवितर्के ॥ येनपरमांबरोपियःप्रसिद्धःसूर्यःपिहिताखिलवासरश्रीःसन्नैवभाति ॥ ५ ॥ अहमेवंविधांचिंतांयावन्मनाक्कलयामितावत्सहसानभसोविवस्वान्सूर्यःकल्पांतवातैःपरिवृत्तस्यपरावर्तितस्यपितामहांडपृष्ठस्यब्रह्मांडोर्ध्वकपालस्यअवपातइवघनघोषवताजवेनवेगेनपपात ॥ ६ ॥ तदात्वंकिमकार्षीस्तत्राह ॥ तस्मिन्निितिद्वाभ्याम् ॥ भीमात्मनिभयानकस्वरूपेपुरुषाकारेवस्तुनिपततिसतिअहंस्वात्मनःशरीरस्यतद्रूपमर्दाद्वश्यभाविनाशमाशंक्यअथपार्श्वस्थमग्निमविशमितिद्वयोरन्वयः ॥ ७ ॥ ८ ॥

सभगवान्जन्मांतरशतार्चितोजातवेदाइंदुशीतलःसन्मांमाभैषीरित्याह ॥ ९ ॥ तदानींस्वकृतामग्निप्रार्थनामाह ॥ जयेति ॥ जातःप्रसक्तः ॥ १० ॥ हेअनघमल्लोकमग्निलोकंगच्छावस्त्वमागच्छइतिचप्रोक्तम् ॥ ११ ॥ स्ववाहनशुकपृष्ठेमामारोप्यतत्प्रागुक्तंपातोस्यास्तीतिपातिभूतंशवंदेहैकदेशेदग्ध्वाछिद्रीकृत्यनभःप्लुतः ॥ १२ ॥ १३ ॥ तस्मिन्महाशवेजवेनपतितेसतिअंभोध्यादिसहितावसुधाचचाल ॥ अयानजलाःनिरुद्धोदकप्रवाहाःस्रवंत्योनद्योयस्यांतथाविधासतीगिरिनदीनांकूलद्वयेमार्गांतरेणजलस्रवणात्भृगुद्वयंजलप्रपातद्वयंचक्रे ॥ पतंतिजलानिभीमाकृतीन्भयंकराकारान्अदेहविभेदान्मनुष्यादिदेहकृतभूविदारणजन्यवापीकूपादिविलक्षणान्गर्त्तान्व्यधुश्चक्रुः ॥ विधुरदेहविभे

सजातवेदाभगवान्जन्मांतरशतार्चितः॥ माभैषीरितिदेहनमामुवाचेंदुशीतलः॥९॥जयदेवत्वमस्माकंप्रतिजन्मपरायणम्॥ अकालएवकल्पांतोजातोतःपाहिमांप्रभो ॥ १० ॥ इत्युक्तेनाग्निनाप्रोक्तंमाभैषीरितितत्पुनः ॥ उत्तिष्ठागच्छगच्छावोमल्लोकमितिचानघ ॥ ११॥ इत्युक्त्वाशुकपृष्ठेसावारोप्यभगवांस्ततः॥ देहैकदेशेतत्पातिभूतंदग्ध्वानभःप्लुतः॥१२॥ अनंतरंनभःप्राप्यदृष्टःकष्टाकृतिर्मया॥ सताद्दग्भूतसंपातमहोत्पातोभयप्रदः॥१३॥ तस्मिन्जवेनपतितेवसुधाचचालसांभोधिशैलवनपत्तनजंगलौघा॥ चक्रेभृगुद्वयमयानजलस्रवंतीभीमाकृतीन्व्यधुरदेहविभेदगर्तान्॥ १४ ॥ उर्वीररासककुबुत्तरतोररासपूर्वाररासविररासचदक्षिणादिक्॥ द्यौरारराँसविररासससशैलभूतंसर्वंजगत्प्रलयसंभ्रमभीतमुच्चैः ॥ १५॥ उर्वीररासधरणेसविरावरंहःसंरंभतर्जितसमस्तदिगंतरोसा ॥ व्योमापिघुंघुममलंघ्यमलंचकारनागारिवृंदभयविद्रवणप्रचंडम् ॥ १६ ॥ निर्घातशब्दउदभूदभितोभयायभीमायभूधरदरीदृढदारणोत्थः ॥ उत्पातभीमजवजालयुगांतवातसंरब्धकल्पघनघोषवितीर्णतर्जः॥१७॥ तस्मिन्जवेनपतितेवसुधाररासरावदिङ्मुखतयाशतवेधमागात्॥ तत्रास्फुटन्कुलगिरींद्रमहातटानिपातालदेशमविशन्हिमवच्छिरांसि॥ १८॥

दकर्तानितिपाठेवसुधाविधुरेणविसंष्ठुलेनस्वदेहविभेदेनकर्त्तान्वप्रादिकर्त्तनानिचक्रेइत्यर्थः ॥ १४ ॥ पुनःकिमासीत्तदाह ॥ उर्वीति ॥ उर्वीभूःउत्तरतःककुप्उत्तरादिक्तथापूर्वादक्षिणाचकारात्पश्चिमाचककुभ्द्यौःशैलैर्भूतैश्चसहितंसर्वंजगच्चप्रलयसंभ्रमेणभीतंसत्उच्चैःररासदध्वानरुरोदच ॥ धात्वावृत्तिस्तत्तच्छब्दवैलक्षण्यद्योतनाय ॥ १५ ॥ उक्तमेवस्पष्टंपुनराह ॥ उर्वीति ॥ धरणेपतितस्यशवस्यधारणे ॥ तारत्वाधिक्येनशब्दांतरैरलंघ्यंघुंघुमंध्वनिमलमत्यर्थंचकार ॥ नागारीणांगरुडानांभयेनविद्रवणइवप्रचंडंदुःसहम् ॥ १६ ॥ भूधरदरीणांदृढदारणादुत्थउत्थितोनिर्घातआस्फालनंतन्निमित्तःशब्दोभयायभीमायभयहेतवेश्रोत्रहृदयादिभेदनायचउदभूत् ॥ सकीदृक् ॥ उत्पातैर्भीमजवत्वाज्जालवदाकर्षिणोयेयुगांतवातास्तैःसंरब्धायेकल्पघनाःप्रलयांबुदास्तद्घोषेभ्योवितीर्णाविश्राणितातर्जाभर्त्सनायेनतथाविधः ॥ १७॥ तस्मिन्शवे ॥ शतगुणंवेधमभिघातमागात्प्राप ॥ तत्रतस्मिन्वेधे ॥ १८ ॥

१ रासोध्वनिः

तस्यशवस्यतत्तादृशंपतनमासीत् ॥ कीदृशंतदाह ॥ दलनमित्यादि ॥ १९ ॥ भूतलेअर्पणंसमीकरणसाधनमितियावत् ॥ प्रलयार्थिनांरुद्रगणानाम् ॥ २० ॥ स्थगनमाच्छाद नम् ॥ २१ ॥ आकृत्यामूर्त्ताकारेण ॥ २२ ॥ २३ ॥ २४ ॥ मांसमयोदेहःकथंपतितः ॥ तेनसार्द्धंसप्रसिद्धोर्कश्चकथंपतितइत्यावृत्त्यायोज्यम् ॥ २५ ॥ प्रतिपालयप्रतीक्ष स्व ॥ अयमेतत्पतनदोषोयावन्नसाकल्येनशाम्यतु ॥ २६ ॥ गगनजमखिलंवस्त्रभूषणमाल्यादियेषाम् ॥ २७ ॥ तेनभश्वराःकेकेतानाह ॥ सिद्धेति ॥ २८ ॥ २९ ॥ यादेवीम

आसीत्तत्पतनंतस्यमेरुशैलशिलाकृतेः ॥ दलनंशैलशृंगाणांविदारणकरंभुवः ॥ १९ ॥ क्षोभणंजलराशीनामद्रीणांभूतलार्पणम् ॥ पीडनंसर्वभूतानांक्रीडनंप्रलयार्थिनाम् ॥ २० ॥ पातनंभूतलेभानोःस्थगनंद्वीपपद्धतेः ॥ चूर्णीकरणमद्रीणांदलनंमंडलावनेः ॥ २१ ॥ द्वितीयमिवभूपीठंब्रह्मांडार्द्धमिवापरम् ॥ पतितंखमिवाकृत्यातदपश्यन्नभश्वराः ॥ २२ ॥ अथपश्याम्यहंयावदसौमांसमयोचलः ॥ नमातिसमद्वीपायांभुवितस्यांगमेककम् ॥ २३ ॥ तमालोक्यमयादेवःप्रसादेसमवस्थितः ॥ संपृष्टोभगवान्वह्निःप्रभोकिमिदमित्यथ ॥ २४ ॥ कथंमांसमयःसार्द्धंसचार्कःपतितोदिवः ॥ सनमातिहिभूपीठेसपर्वतवनांबुधौ ॥ २५ ॥ ॥ अग्निरुवाच ॥ ॥ प्रतिपालयपुत्रत्वंक्षणमेकंगतत्वरः ॥ यावच्छाम्यतुदोषोयंकथयिष्यामितेततः ॥ २६ ॥ अथतस्मिन्वदत्येवंसमाजग्मुर्नभश्वराः ॥ तज्जगज्जालजातीयादिग्भ्योगगनजाखिलाः ॥ २७ ॥ सिद्धसाध्याप्सरोदैत्यगंधर्वोरगकिन्नराः ॥ ऋषयोमुनयोयक्षाःपितरोमातरोमराः ॥ २८ ॥ अथसर्वेश्वरींदेवींशरण्यांतेनभश्वराः ॥ भक्तिनम्रशिरःकायाःकालरात्रिंप्रतुष्टुवुः ॥ २९ ॥ ॥ नभश्वराऊचुः ॥ ॥ बद्धाखट्वांगशृंगेकपिलमुरुजटामंडलंपद्मयोनेःकृत्वादैत्योत्तमांगैःस्रजमुरसिशिरःशेखरंतार्क्ष्यपक्षैः ॥ यादेवीभुक्तविश्वापिबतिजगदिदंसाद्रिभूपीठभूतंसादेवीनिष्कलंकाकलिततनुलतापातुनःपालनीयान् ॥ ३० ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० अ० वि० शवोपाख्यानेमहाशववर्णनंनामत्रयस्त्रिंशदधिकशततमःसर्गः ॥ १३३ ॥

हाकल्पांतेसंहृतस्यपद्मयोनेःकपिलमुरुजटामंडलंखट्वांगशृंगेबद्धातथादैत्यानामुत्तमांगैःशिरोभिःउरसिस्रजंकृत्वासंहृतस्यतार्क्ष्यस्यगरुडस्यपक्षैःशिरःशेखरमवतंसंचकृत्वाभुक्तविश्वंप्राणिजातंययातथाविधासतीसाद्रिभूपीठभूतमिदंजगत्पिबति ॥ एवंसर्वजगत्संहारेपिदोषलेशेनाप्यलिप्तत्वान्निष्कलंकाशुद्धचिन्मात्रस्वभावाप्यस्मदनुग्रहायकलिततनुलतास्वीकृतशरीरासतीअवश्यपालनीयान्नः अस्मान्पातुरक्षतु ॥ ३१ ॥ ॥ इतिश्रीवा[illegible]० तात्पर्यप्रकाशेनि० उ० त्रयस्त्रिंशदुत्तरशततमःसर्गः ॥ १३३ ॥ ॥ ५ ॥

देव्यास्तदाविर्भूतायाःशरीरमिहवर्ण्यते ॥ तस्मीतरक्तकुणपखादनंचगणैरथ ॥ १ ॥ एतस्मिन्नंतरेदेवारब्धदेवीस्तुतिकालेसप्राग्वर्णितःपतन्पुरुषोमयास्थगितमाच्छादितमखिलं भूपीठंयेनतथाविधःशवरूपोनिर्जीवोविलोकितःपरिज्ञातः ॥ १ ॥ येनशवभागेनसप्तद्वीपापिभूःपिहितासोस्यसंपूर्णभूमौयावत्साकल्येनअमातुर्मानमप्राप्नुवतःशवस्यशैलोपमोमहानुदराभिख्यःकुक्षिसंज्ञकोभागःसएवमयादृष्टइत्यर्थः ॥२॥ तर्हितद्भुजोरुशिरस्त्वयादूरस्थंकथंज्ञातंतत्राह ॥ वह्निनेति ॥ तत्तर्हिक्वपतितंतत्राह ॥ लोकालोकादिति ॥३॥ सास्वयंशुष्कानीरक्तैवभवति ॥ नुइतिवितर्के ॥ ४ ॥ कीदृशीसातदाह ॥ प्रेतवृंदैरित्यादिना ॥ तारकितंसंजाततारकमिवकृतमंबरंयया ॥ ५ ॥ शिरालैःशिरावद्भिर्दीर्घैर्दोर्दंडैर्वन

विपश्चिदुवाच ॥ ॥एतस्मिन्नंतरेव्योम्नःसपतन्पुरुषोमया ॥ स्थगिताखिलभूपीठःशवरूपोविलोकितः ॥ १ ॥ सयावद्धुदराभिख्योदेहभागोस्ययेनभूः ॥ सप्तद्वीपापिपिहितामातुःशैलोपमोमहान् ॥ २ ॥ वह्निनोक्तमनंतंतत्तद्भुजोरुशिरश्वमे ॥ लोकालोकात्परंपारंप्राप्तमंध्यविषयेनृणाम् ॥ ३ ॥ व्योमवासिचयेदेवीमथस्तुवतिसादरम् ॥ व्योम्नःप्रकटतामागाच्छुष्कानुभवतिस्वयम् ॥ ४ ॥ प्रेतवृंदैरनुगतामातृमंडललालिता ॥ कुंभांडयक्षवेतालजालतारकितांबरा ॥५॥ शिरालदीर्घदोर्दंडवनीकृतनभस्तला ॥ किरंतीकीर्णदिग्दाहैर्दृष्टिपातैर्दिवाकरान् ॥ ६ ॥ स्फुरन्नानायुधाकारकचज्झणझणध्वनि ॥ शतखंडंखगानीकंकुर्वाणाव्योमकोटरे ॥ ७ ॥ देहज्वालेक्षणोष्माढ्यैःशरीरावयवैस्त्विषः ॥ दीर्घवेणुवनाकाराःकिरंतीकोटियोजनाः ॥ ८ ॥ दंतकांतींदुविद्योतदुग्धस्नपितदिङ्मुखा ॥ कृशातिदीर्घविस्तीर्णशरीरापूरितांबरा ॥ ९ ॥ निरालंबास्पदासांध्याविततेवाभ्रमालिका ॥ प्रेतासनसमारूढारूढापरमेपदे ॥ १० ॥ स्फुरंतीप्रज्वलद्रूपासंध्याजलधरारुणा ॥ दधानागगनांभोधौवाडवज्वलनश्रियम् ॥ ११ ॥ शवैःशवांगैर्मुसलैःप्रासतोमरमुद्गरैः ॥ बृसिकोलूखलहलैःकिरंतीचंचलास्रजः ॥ १२ ॥ प्रजांकटकटाटोपैर्वहंतीगगनांगणे ॥ दृषदांघर्घरारावैःप्रावृड्भिरिरिवाचले ॥ १३ ॥ देवाऊचुरयंदेविउपहारीकृतोंविके ॥ सार्द्धंस्वपरिवारेणशीघ्रमाक्रियतामिति ॥ १४ ॥

मिवसंपद्यमानंकृतंनभस्तलंयया दृष्टिपातैर्दिवाकरान्किरंतीविक्षिपंती ॥ ६ ॥ स्फुरतांनानायुधानामाकारैःकचज्झणझणध्वनियथास्यात्तथाव्योमकोटरेखगानीकंपक्षिसमूहं शतखंडंकुर्वाणा ॥ ७ ॥ देहज्वालाभिरीक्षणोष्मभिर्नेत्राग्न्यौष्ण्यैश्चाढ्यैःसंपन्नैःशरीरावयवैर्दीर्घवेणुवनाकाराःकोटियोजनपरिमितास्त्विषःकिरंतीविक्षिपंती ॥ ८ ॥ ९ ॥ निर्गतेआलंबास्पदेयस्याः ॥ अभ्रमालिकापक्षेनिरालंबमंबरमास्पदंयस्याः ॥ परमेपदेब्रह्मणिसुष्ठुरूढाप्रादुर्भूता ॥ १० ॥ वाडवज्वलनोवडवानलस्तच्छ्रियंदधाना ॥ ११ ॥ बृसिकाःआसनानि ॥ १२ ॥ कटकटेतिदंतध्वन्यनुकरणंतदाटोपैस्तदाडंबरैःप्रजांजनशरीरमालांगगनांगणेवहंती ॥ यथाप्रावृड्भिरिर्दृषदांमालांघर्घरारावैर्निर्झरैरचलेस्वदेहेवहतितद्वत ॥ १३ ॥ देवास्तांदेवीमूचुः ॥ किमूचुः ॥ हेअंबिकेअयंशवस्तेउपहारीकृतोस्माभिःस्वपरिवारेणसार्द्धंशीघ्रमाक्रियतांभुज्यतामित्यूचुः ॥ १४ ॥

देवीस्वयंसर्वप्राणशक्तित्वात्प्राणानांरक्ताधारत्वात्प्राणवायुनैवतद्रक्तसारमाक्रष्टुंप्रववृते ॥ १५ ॥ १६ ॥ प्राक्शुष्कासतीतृप्ताभूत्वापश्चात्पीनापुष्टाभूत्वास्थिता ॥ १७ ॥ यथावर्षाकालेतडित्तरललोचनारक्तवर्णाअभ्रमालास्थितातद्वत् ॥ १८ ॥ १९ ॥ स्वशरीरेणार्द्धपूरितेव्योम्निनर्तनमारेभेउपचक्रमे पर्यंतगिरिर्लोकालोकपर्वतस्तदीयशिखरमालापेषुस्थितैरमरैर्निरीक्षिता ॥ २० ॥ २१ ॥ उदरात्उदरमारभ्य ॥ यक्षैस्तुल्यीयकुंजरदंतविक्षतैःपरिशिष्टैःपार्श्वपृष्ठभागैर्गृहीतः ॥ २२ ॥ ननुभुजोरुकंधरादिभागेकुतोनगृहीतस्तत्राह ॥ भुजोर्विति ॥

वदत्येवंसुरानीकेतंशवंप्राणवायुना ॥ देवीप्रववृतेरक्तसारमाक्रष्टुमंजसा ॥ १५ ॥ प्राणेनाकृष्यमाणंतद्रक्तंभगवतीमुखे ॥ आविशत्सांध्यमेघौघइवमेरोर्गुहांतरम् ॥ १६ ॥ तावद्रक्तंतयापीतंप्राणाकृष्टंनभःस्थया ॥ यावच्छुष्कासतीतृप्तापीनासाचंडिकास्थिता ॥ १७ ॥ ततोबभूवसारक्तपरिपीनशरीरिणी ॥ रक्तावर्षाभ्रमालेवतडित्तरललोचना ॥ १८ ॥ लंबोदराभगवतीविषमाहिविभूषणा ॥ रक्तासवमदक्षीबासमस्तायुधधारिणी ॥ १९ ॥ व्योम्निनर्त्तनमारेभेस्वशरीरार्द्धपूरिते ॥ पर्यंतगिरिमालाग्रस्थितामरनिरीक्षिता ॥ २० ॥ ततःपिशाचकुंभांडरूपिकादिमहागणाः ॥ शवमावारयांचक्रुर्महाचलमिवांबुदाः ॥ २१ ॥ शवशैलोगृहीतोसौकुंभांडैःकटिभागतः ॥ उदराद्रूपिकावृंदैर्यक्षैःकुंजरविक्षतैः ॥ २२ ॥ भुजोरुकंधराद्यास्तेतस्यान्येवयवायतः ॥ ब्रह्मांडस्यपरंपारंप्राप्ताःपरमविस्तृताः ॥ २३ ॥ ततस्तैर्भूतसंघातैःस्थितादूरेदिगंतरे ॥ नप्राप्तावैहितत्रैवकालेनकलिताःस्वयम् ॥ २४ ॥ नृत्यंत्यांचंडिकायांखेभूतवृंदेशवाकुले ॥ देवेष्वद्रिपुतिप्रस्तुवभूवभुवनंतदा ॥ २५ ॥ पिंडाहार्यामदुर्गंधिगुंठीकृतककुब्गणम् ॥ रक्तगर्भाभ्रनिर्व्यूहैःखादिरज्वलनोज्वलम् ॥ २६ ॥ मांसचर्वणसंरंभप्रोद्यच्छवशवस्वनम् ॥ लतास्थिखंडनोड्डीनबृहत्कटकटारवम् ॥ २७ ॥ भूतसंघट्टविश्लेषवशाद्भीषणनिःस्वनम् ॥ हिमवद्विंध्यशैलाद्रिप्रमाणास्थ्यचलावृतम् ॥ २८ ॥ देवीमुखानलज्वालापक्वमांसाक्तभूतलम् ॥ रक्तसीकरनीहारसिंदूरितककुब्गणम् ॥ २९ ॥ सर्वतःप्रेक्षकैर्देवैःसप्राकारदिगंतरम् ॥ रुधिरैकार्णवीभूतसप्तद्वीपवसुंधरम् ॥ ३० ॥

यतस्तेब्रह्मांडखर्परस्यपरंपारंजलाद्यावरणदेशंप्राप्तास्ततोहेतोस्तैर्भूतसंघातैर्दूरेदिगंतरेस्थितास्तेनप्राप्ताःकिंतुतत्रैवकालेनस्वयमेवकलितागलिताइतिद्वयोरन्वयः ॥ २३ ॥ २४ ॥ २५ ॥ कीदृशंबभूवतदाह ॥ पिंडेत्यादिना ॥ पिंडशआहार्यैर्भक्ष्यमाणैर्नीयमानैश्चआमदुर्गंधिभिर्मांसवसादिभिर्गुंठीकृताअवगुंठिताव्याप्ताःककुब्गणायत्रतथाविधम् ॥ २६ ॥ शवशवेतिचर्वणध्वन्यनुकरणम् ॥ बीभत्सोरसः ॥ लतानामिवशिराणामस्थीनांचखंडनादुड्डीनआकाशेप्रसृतोबृहत्कटकटारवोयत्र ॥ २७ ॥ २८ ॥ २९ ॥ सप्राकारंवरणवेष्टितमिवदिगंतरंयत्र ॥ ३० ॥

अत्यंतमंतर्हितंभूप्रवेशादस्थ्याद्याच्छादनाच्चतिरोधानंप्राप्तमशेषंसमस्तंशिखरसहितमचलमंडलंयत्र ॥ रक्तप्रभारंजितैरभ्रसंभारैःरक्तवस्त्रावृताइवदिगंगनायत्र ॥ ३१ ॥ हेतिभिर्दैवीतद्रूणायुधैश्छन्नंनभस्तलंयत्र ॥ ३२ ॥ संपन्नःअनंतानांकुंभांडरूपिकादीनामेवैकःसंगमःसमाजोयत्र ॥३३॥ नृत्तेप्रसक्तायेलोकाभूतगणास्तेषांयेअभिनयकराकारास्तल्लक्षणानांखगानामावलनायबंधनायप्रसारितैर्जालकैरिवनभसिअन्यज्जगद्रचयतोविधेर्मानसूत्रैरिवचस्थितैर्भूमेरारभ्यआअर्कगतंसूर्यमार्गपर्यंतमूर्ध्वमधश्चदशदिग्लक्षणैः कुंजैस्तिर्यक्चपिशाचैराताननविताताभ्यांनीतैरांत्रलक्षणैस्तंतुभिर्जगद्ब्रह्मांडोदरंमिमानमिवतदाभुवनंत्रैलोक्यंबभूवेतिद्वयोरन्वयेनोपक्रमेणसंबंधः ॥ ३४ ॥ ३५ ॥ पूर्वंभूतेभूतपूर्वेमहीपीठेस्थितिर्येषांतथाविधैरक्तैरर्णवीकृतम् ॥ अतएवउद्रक्तेनउद्गतेनोपप्लवेनाप्लुतमास्कंदितंजगदालोक्यद्वीपसप्तकपर्यंतेतस्यशवस्यांगकैःकुत्सितैरंगैरनाक्रांतेलोकालोकाद्रेर्मूर्द्धनिस्थितासुराःखिन्नतराआसन्नितिद्वयोरन्वयः ॥

अत्यंतांतर्हिताशेषसमस्ताचलमंडलम् ॥ रक्तप्रभाभ्रसंभारवस्त्रावृतदिगंगनम् ॥ ३१ ॥ वृत्तालोलभुजभ्रांतहेतिच्छन्ननभस्तलम् ॥ दूरस्मृतिपथप्राप्तपुरपत्तनमंडलम् ॥ ३२ ॥ अत्यंतासंभवद्रूपसर्वस्थावरजंगमम् ॥ संपन्नानंतकुंभांडरूपिकाद्येकसंगमम् ॥ ३३ ॥ नृत्तलोककराकारखगावलनजालकैः ॥ मानसूत्रैरिवविधेरन्यद्रचयतोजगत् ॥ ३४ ॥ भूमेरार्कगतंनीतैःपिशाचैरांत्रतंतुभिः ॥ मिमानमिवदिक्कुंजैस्तिर्यगूर्ध्वमधोजगत् ॥ ३५ ॥ जगदालोक्यतत्तादृगुद्रक्तोपप्लवाप्लुतम् ॥ भूतपूर्वमहीपीठस्थितिरक्तार्णवीकृतम् ॥ ३६ ॥ द्वीपसप्तकपर्यंतेलोकालोकाद्रिमूर्द्धनि ॥ तदंगकैरनाक्रांतेस्थिताःखिन्नतराःसुराः ॥ ३७ ॥ ॥ श्रीरामउवाच ॥ ॥ ब्रह्मांडादपिनिर्गत्ययस्यतेवयवागताः ॥ लोकालोकाचलस्तेनब्रह्मन्नस्थगितःकथम् ॥ ३८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ द्वीपसप्तकमध्येस्मिन्रामतस्योदरंस्थितम् ॥ शिरःखुरभुजाद्यंगंब्रह्मांडात्परतःस्थितम् ॥ ३९ ॥ पार्श्वाभ्यामूरुमध्याच्चकटिपार्श्वद्वयात्तथा ॥ शिरोंसद्वयमध्याभ्यांलोकालोकःसलक्ष्यते ॥ ४० ॥ तत्रोपविष्टास्तेदेवालक्ष्यंतेशृंगमूर्द्धसु ॥ सुशुद्धकांतयस्तापादजलाजलदाइव ॥ ४१ ॥ प्रसारितांगकमधोवक्त्रं तत्पतितंशवम् ॥ संभक्षयतिभूतौघेप्रनृत्यंतीषुमातृषु ॥ ४२ ॥

कालोकाद्रेर्मूर्द्धनिस्थितासुराःखिन्नतराआसन्नितिद्वयोरन्वयः ॥ ३६ ॥ ३७ ॥ यस्यशवस्यतेअतिदीर्घाहस्तपादाद्यवयवाब्रह्मांडादपिबहिर्निर्गत्यगतास्तेनतादृशेनमहाशवेनलोकालोकाचलःकथंनस्थगितोनाच्छादितइतिरामेणसर्वज्ञोवसिष्ठएवपृष्टोनभासः तस्यलोकालोकपर्यंतंदृष्ट्यप्रसरेणतदनभिज्ञत्वनिश्चयादितिभावः ॥ ३८ ॥ अतएववसिष्ठएवतदुत्तरमाह ॥ द्वीपेत्यादिना ॥ हेरामतस्यउदरंउदरोपलक्षितंमध्यशरीरंद्वीपसप्तकमध्येस्थितम् ॥ शिरःखुरोपलक्षितौपादौभुजाद्यंगंचब्रह्मांडात्परतःस्थितमितिभासोक्तंसत्यमेव ॥ ३९ ॥ तथापिशवस्यपार्श्वाभ्यांऊर्वोर्मध्यात्कटिपार्श्वद्वयात्तथाशिरोंसद्वयमध्याभ्यांचशृंगाणामनाच्छादनात्सलोकालोकपर्वतऊर्ध्वंलक्ष्यतेदृश्यतएवेत्यर्थः ॥ ४० ॥ एवंप्रश्नोत्तरमुक्त्वाकथाशेषमपिभासेनापरिज्ञातंवसिष्ठएवाह ॥ तत्रेत्यादिना ॥ तापादंतःसंतापाच्छरदर्कातपाच्च ॥ ४१ ॥ अधोवक्त्रंतच्छवंभूतौघेसंभक्षयतिसति ॥ ४२ ॥

इदंवक्ष्यमाणंचितयामासुः ॥ ४३ ॥ तदेवाह ॥ हाकष्टमित्यादिना ॥ ४४ ॥ पुष्पराशीनांमंडपइवस्थितोमलयः ॥ ४५ ॥ रुधिरेणकर्त्रांहिमकृतेशौक्ल्येविपर्येरुपाक्रोधेनेव तदभिभवायआत्मपंकतांस्वीयकर्द्दमभावम् ॥ ४६ ॥ क्रौंचनाम्नोद्वीपस्यतलेक्रौंचगिरौयःकल्पद्रुमोभूत् ॥ ४७ ॥ पारिजातानांकमलायाश्चंद्रस्याऽमृतस्यचोत्पादकत्वात्प तेस्वामिन्हेक्षीरार्णव नावनीतानवनीतभरितायेशिखरिणस्तेपुप्रोद्भूतंवेलावनंयस्यतथाविधहेदध्यर्णव वेलास्थेनालिकेरप्रधानेअनुकंप्येगिरौगिरिकेयोगेश्वर्यासेवितहेमध्वर्ण व हाभवतांप्रत्येकंशोच्यतेत्यर्थः ॥ इदानींकसमुपैष्यथस्फटिकादिरत्नशिलाभिर्वनितानांदेवस्त्रीणांदिशांचदर्पणत्वंक्कवागताः ॥ ४८ ॥ कल्पद्रुमेणकांचनीभिरमलाभिर्लताभि श्चनिःसंधिर्निरुपाधिर्बंधःसंबंधोयस्यतथाविधःक्रौंचाचलोयस्मिंस्तथाविधहेक्रौंचद्वीपत्वम् तथाविरिंचिहंसैर्नलिनीभिश्चनीरंध्रंनिबिडितंदिग्जालंयस्यतथाविध तथाकदंब

वहत्स्वस्तकूप्रवाहेपुमेदोगंधेविजृंभिते॥ दुःखिताश्चिंतयामासुःप्रत्येकममराइदम्॥ ४३॥ हाकष्टंक्कगतापृथ्वीक्कगताजलराशयः॥ क्क गताजनसंघाताःक्कगताधरणीधराः ॥ ४४ ॥ तादृक्कंदनमंदारकदंबवनमंडितः॥ मंडपःपुष्पराशीनांकष्टंक्कमलयोगतः॥ ४५॥ उच्चाव दाताविपुलाहिमवद्भूमयोपिताः ॥ नीताःशौक्ल्यविरुपेवाशुरुधिरेणात्मपंकताम् ॥ ४६ ॥ क्रौंचद्वीपतलेक्रौंचेयोभूत्कल्पद्रुमोमहान् ॥ ब्रह्मलोकलसच्छायःसोपिचूर्णत्वमागतः ॥ ४७ ॥ हाक्षीरार्णवपारिजातकमलाचंद्रामृतानांपतेहादध्यर्णवनावनीतशिखरिप्रोद्भूत वेलावन॥ हामध्वर्णवनालिकेरगिरिकेयोगेश्वरीसेवितक्केदानींसमुपैष्यथक्कवनितादिग्दर्पणत्वंगताः॥ ४८ ॥ हाकल्पद्रुमकांचनाम ललतानिःसंधिबंधाचलक्रौंचद्वीपविरिंचहंसनलिनीनीरंध्रदिग्जालक ॥ यातःक्केहकदंबकाननदरीविश्रांतविद्याधरीक्रीडाकोविदना गरामरगृहत्वंपुष्करद्वीपक॥ ४९ ॥ स्वादूदोदग्रतापावलकुसुममहीपावनानांवनानांगोमेधद्वीपकल्पद्रुमकनकलतासुंदरीणांदरीणा म्॥ शाकद्वीपाचलानाममरतरुवनैर्दर्शितानांसितानांस्मृत्यैवोदेतिपुण्यंसुरपदसुखदंमानवानांनवानाम् ॥ ५० ॥ मंदानिलावलित पल्लववालवल्लीसंतानभासितसमस्तदिगंतराणि ॥ ध्वस्तानितानिसकलानिवनानिकष्टमाश्वासमेष्यतिकथंजनतानजाने ॥ ५१ ॥

काननदरीपुविश्रांतानांविद्याधरीणांरतिक्रीडासुकोविदानांनागराणाममराणांचगृहभूतहेपुष्करद्वीपकत्वंचेतियुवांइहकयातःक्कगतौ ॥ ४९ ॥ स्वादूदस्यसमुद्रस्यतदीयानांउद यतापंआवलयंतिनिरुंधंतितथाविधानांकुसुमच्छन्नमहीपावनानांवनानाम् ॥ तथागोमेधद्वीपस्यतदीयकल्पद्रुमाणांतत्रत्यकनकलतानांताभिःसुंदरीणांदरीणांतथाअमरतरूणां कल्पवृक्षाणांवनैर्दर्शितानांकंचुकितानांतत्पुष्पैःसितानांक्रौंचद्वीपसहितानांतदचलानांचेतिनवानांपदार्थानांस्मृत्यैवमानवानांसुरपदंस्वर्गस्तत्सुखदंपुण्यमुदेति ॥ ५० ॥ मंदानिलै रावलितपल्लवायावालवल्लयस्तयुक्तैःसंतानैःकल्पवृक्षभेदैर्भासितानिसमस्तदिगंतराणियेषांतानितादृशानिसकलानिवनानिध्वस्तानिभग्नानि ॥ कष्टमितिखेदे ॥ अतःपरमस्मदा दिजनताआश्वासंविश्रामंचित्तसमाधानंचकथमेष्यतिनजानेइतितत्रकस्यचिदुक्तिः ॥ ५१ ॥

इक्षुरसाब्धेस्तीरेखंडःशिलीभूतशर्करातन्मयैरचलैर्भूषितासुमहीपुतानिप्रसिद्धमाधुर्याणिगुडमोदकानिकदानुद्रक्ष्येमपश्येमद्रक्ष्यामइतिवा ॥ छांदसोविकरणव्यत्ययः ॥ तथा शर्करायाःकुमाराणिक्रीडार्थाःपुत्रिकाअपिकदाद्रक्ष्यामः ॥ ५२ ॥ तालीतमालीभिःसवनस्यतदचलस्यकदंबैःकल्पद्रुमैश्वशीतलेषुकनकालयेषूपविष्टाःसंतस्तत्राप्सरसांनृत्तंचंदनलिप्तानांसुंदरीणामप्सरसांनृत्तंचंदनलतालक्षणानांसुंदरीणांनृत्तंवाकदानुपश्येम ॥ आशंसायांलिङ् ॥ ५३ ॥ जंबूद्रुमस्यतानिगजप्रमाणत्वेनामृतरसत्वेनजांबूनदस्वर्णहेतुत्वेनचप्रसिद्धान्यग्रफलानिस्मरणीयरूपतांगतानिकष्टमितिखेदे ॥ येषांफलानांरसांबुभिःप्रभवांनदींद्वीपाःसमुद्राश्वमेखलायस्यास्तथाविधाअसौजंबुमतीजंबूद्वीपरूपामहीवहति ॥ ५४ ॥ तथाशिलींध्रैर्नीरंध्राणांनिरवकाशीकृतानांमहीध्राणांरंध्रेषुगुहासुक्षीवाभिर्मधुमत्ताभिरमरस्त्रीभिःकृतंगीतसहितंनृत्यंयस्मिंस्तथाविधंसुरोदस्यसमुद्रस्यतीरंपुनःपुनःसंस्मृत्यप्राक्प्रातःकालेअब्जंपद्ममिवसंप्रतिउर्वीवचअहंहृदाअवदीर्येविदारणंप्राप्नोमीत्यर्थः ॥ ५५ ॥ हेमित्रअस्तप्रक्तमंभोयस्यतथाविधेनवस्यअभिनवस्यार्णवस्यमूर्ध्नि

कदानुतानीक्षुरसाब्धितीरेवनानिखंडाचलभूमिकासु ॥ द्रक्ष्येमभूयोगुडमोदकानितथाकुमाराण्यपिशर्करायाः ॥ ५२ ॥ कदंबकल्पद्रुमशीतलेपुतालीतमालीसवनाचलस्य ॥ कदानुतच्चंदनसुंदरीणांपश्येमनृत्तंकनकालयेषु ॥ ५३ ॥ गतानिकष्टंस्मरणीयरूपतांजंबूद्रुमस्याग्रफलानितान्यपि ॥ येषांनदींद्वीपसमुद्रमेखलावहत्यसौजंबुमतीरसांबुभिः ॥ ५४ ॥ शिलींध्रनीरंध्रमहीध्ररंध्रक्षीवामरस्त्रीकृतगीतनृत्यम् ॥ संस्मृत्यसंस्मृत्यसुरोदतीरंप्रागब्जमुर्वीवहृदावदीर्ये ॥ ५५ ॥ पश्यास्तगंभसिनवार्णवमूर्ध्निभासासौवर्णपर्वतशताग्रशिखाःकचंति ॥ संध्यारुणाउदयनास्तमयावनीनांस्तोकोदितेंदुकलिकाइवदिङ्मुखेषु ॥ ५६ ॥ तादृक्सागरवारिराशिवलयाद्वीपांतरालंकृताप्रोच्चाद्रींद्रनिविष्टवारिदघटानीलोत्पलानांस्थली ॥ स्रोतोजंगलकाननोग्रनगरग्रामाग्रहारांबरानोजानेतरुपल्लवांकुरवतीकष्टंक्वयातामही ॥ ५७ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० अ० वि० शवोपाख्यानेदेवपरिदेवनवर्णनंनामचतुस्त्रिंशदुत्तरशततमःसर्गः ॥ १३४ ॥ ॥ ७१ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ मत्तेनभूतवृंदेनकिंचिच्छेषीकृतेशवे ॥ इदमूचुःपुनर्दिक्षुगिरौदेवाःसवासवाः ॥ १ ॥

उपरिभागेसौवर्णानांमेर्वादीनांपर्वतशतानामग्रशिखाःशृंगाणिउत्तरादिदिङ्मुखेषुउदयास्तमयावनीनांसूर्योदयास्तमयसंनिहितभूमीनांसंध्याभ्यामरुणाःस्तोकोदिताइंदुकलिकाइवभासाकचंतिदीप्यंतेत्वंपश्य ॥ ५६ ॥ तादृशावर्णितप्रकाराःसागररूपायेवारिराशयोजलसमूहास्तेवलयाइवयस्याः द्वीपांतरैर्द्वीपभेदैरलंकृता प्रोच्चेष्वद्रींद्रेषुअर्थात्स्तनप्रायेषुनिविष्टानामंबुदघटालक्षणानांनीलोत्पलमालानांस्थलीआधारभूतातद्भूषितेतियावत् ॥ स्रोतांसिनद्योजंगलानिकाननानिभंटरुयाणिनगराणिग्रामाअग्रहाराब्राह्मणग्रामाश्वांबराणियस्याः तरुपल्लवांकुरादिभूषणवतीमहीसंप्रतिक्कयातानोजानेकष्टमितिखेदे ॥ ५७ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० चतुस्त्रिंशदुत्तरशततमःसर्गः ॥ १३४ ॥

भुक्तेमांसेत्रभूतौघैःपीतेरक्तेचभूःकृता ॥ मेदसामेदिनीरक्तशेषेणमदिरार्णवः ॥ १ ॥ दिक्षुस्थितेलोकालोकगिरौस्थितादेवाइदंवक्ष्यमाणमूचुः ॥ १ ॥

विद्याधराणाममराणांचविहारार्थानांविमानानांसंचारभूमौनभस्यप्यशिशिरीकरणायभूतैर्देवीगणैर्मेदःप्रचुराणिपवनप्रस्तैरमलैरभ्रखंडैरचितेनांबरेणसमानिउरूणिआंत्रजालकानिआस्तृतानि ॥ २ ॥ दृश्यतांदर्शनयोग्यताम ॥ ३ ॥ मोदनासर्वप्राणिप्रमोदप्रदाभूःसंप्रतिमेदःपटरावलिताखिलांगीसतीस्थिताकष्टम ॥ वनानिचमेदोमयैःशारदमेघजालैःसकंबलानिधूसरकंबलसंवीतानीवभांति ॥ ४ ॥ तस्यशवस्यास्थीनि ॥ ५ ॥ सभूतौघोदेवीगणस्तमःसनूइमांपीतशिष्टमेदोजालैर्मेदिनींमेदोलिप्तांकृत्वामत्तःसन्व्योम्निनन्र्त्त ॥ हेतिप्रसिद्धौ ॥ ६ ॥ एकप्रवाहेणसंकल्पकृतेनसमानांमध्येएकस्मिन्मकरालयेसमुद्रेनिक्षिप्तम् ॥ ७ ॥ तमेवैनंसमुद्रंसंकल्पंविधायसुरार्णवंविदधुः ॥ ८ ॥ तांतत्रत्यांम

विद्याधरामरविहारविमानभूमावप्यास्तृतान्यशिशिरीकरणायभूतैः ॥ मेदोमयानिपवनप्रस्तृतामलाभ्रखंडांचितांबरसमान्युरुजालकानि ॥ २ ॥ द्वीपेपुसप्तस्वपिपश्यमेदोजलानिभूतैःप्रविसारितानि ॥ भुक्तंचमांसंरुधिरंचपीतंकिंचिद्गतासंप्रतिदृश्यतांभूः ॥ ३ ॥ मेदःपटैरावलिताखिलांगीकष्टंस्थितासंप्रतिमोदनाभूः ॥ मेदोमयैःशारदमेघजालैःसकंबलानीववनानिभांति ॥ ४ ॥ पश्यैतानितदस्थीनिसंपन्नानिमहाद्रयः ॥ हिमाद्रिशिखराणीवस्थितान्यावार्यदिक्तटम् ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ देवेपुकथयत्स्वेवंकृत्वेमांमेदिनींधराम् ॥ मेदोजालैःसभूतौघोमत्तोव्योम्निननर्त्तह ॥ ६ ॥ नृत्यत्सुभूतवृंदेषुशिष्टंरक्तंसुरैर्भुवः ॥ एकप्रवाहेणकस्मिन्निक्षिप्तंमकरालये ॥ ७ ॥ सुरार्णवंतमेवैनंसंकल्प्यविदधुःसुराः ॥ ततःप्रभृतिसोद्यापिसंपन्नोमदिरार्णवः ॥ ८ ॥ भूतानिनृत्तमाकाशेतानिकृत्वापिबंतिताम् ॥ मदिरांपुनराकाशेनृत्यंत्यानंदमंदिरं ॥ ९ ॥ पिबंत्यद्यापितानीवमदिरांमदिरार्णवात् ॥ खेनृत्यंतिचभूतानिसहयोगेश्वरीगणैः ॥ १० ॥ तेषांतान्यथभूतानांमेदोजालानिभूतले ॥ विस्तृतान्यवशुष्काणिस्थितातोमेदिनीमही ॥ ११ ॥ इतिक्रमाच्छांतिमुपागतेशवेपुनःप्रवृत्तेदिनयामिनीक्रमे ॥ प्रजांससर्जाथनवांप्रजापतिःपुनःससर्गोभवदत्रपूर्ववत् ॥ १२ ॥ ॥ इ० वा० महारामायणवा० दे० मो० नि० उ० अ० वि० शवो० शवोपशमोनामपंचत्रिंशदुत्तरशततमःसर्गः ॥ १३५ ॥ ॥ ७ ॥ ॥ भासउवाच ॥ ॥ अथाहंतंमहादेवंपावकंपृष्टवानिदम् ॥ शुकपक्षतिकोणस्थःश्रूयतामवनीश्वर ॥ १ ॥

दिरांपिबंति ॥ ९ ॥ तानिभूतानीवअद्यापिइदानींतनान्यपिभूतानितस्मान्मदिरार्णवान्मदिरांपिबंतिखेनृत्यंतिच ॥ १० ॥ तेषांभूतानांतानिपीतशिष्टानिमेदोजालानिभूतलेशुष्काणिअतोहेतोर्महीमेदिनीनाम्नास्थिता ॥ ११ ॥ एवमादित्योपिदेवैःपूर्ववत्स्वपदमारोपितःपर्वतादयश्चपूर्ववत्कूर्माइतिसूचयन्नाह ॥ इतीति ॥ इतिउक्तानुक्रमाच्छवेशांतिक्षयमुपागतेसतिसूर्यस्यस्वस्थानारोपणान्मेर्वादीनांचोद्धरणाद्दिनयामिनीक्रमेपुनःप्रवृत्तेसतिअथप्रजापतिर्नवाःप्रजाःससर्ज ॥ अत्रभूतलेसःसर्गःपूर्ववदभवत् ॥ १२ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० पंचत्रिंशदुत्तरशततमःसर्गः ॥ १३५ ॥ ॥ ७ ॥ ॥ अग्निर्भासेनपृष्टोत्रशववृत्तांतमादितः ॥ असुरोमशकश्चैणोव्याधश्चेत्याद्यवर्णयत् ॥ १ ॥ अग्निवाहनस्यशुकस्यपक्षतिःपक्षमूलंतत्कोणस्थः ॥ हेअवनीश्वरदशरथ ॥ १ ॥

यदिदमिदानींशवंनामसंपन्नेतत्पूर्वंकिंकिनिमित्तंचतथासंपन्नमितिद्वौप्रश्नौ ॥ २ ॥ तत्राद्यप्रश्नस्योत्तरंवह्निःश्रावयति ॥ श्रूयतामित्यादिना ॥ ३ ॥ तत्रादौवक्ष्यमाणसंवेदनभावाद्यध्यासानांपरममूलंब्रह्मैवेतिदर्शयति ॥ अस्तीति ॥ अपसंख्यान्यपगतसंख्यानि ॥ ४ ॥ संवेदनंविषयाकारंज्ञानंतन्मयी ॥ ५ ॥ साचस्वविषयतयातेजःपरमाणुभावंस्वस्यवेदनास्वभाववशादेवापश्यत् ॥ यथात्वंपांथंभावयन्सुप्तःस्वस्यैवपांथतांपश्यसितद्वत् ॥ ६ ॥ असंवित्त्वादज्ञानावृतचित्त्वात्परमाणुःपद्मोत्पन्नरजस्तुल्यांभास्वतींस्फुटंभासमानाम् ॥ ७ ॥ साचभास्वत्यणुतावद्भास्वोच्छूनतांभावयंतीसतीअन्यच्चक्षुरादीनींद्रियाणिअन्वभवदनुभूतवती ॥ ततस्तानिवपुषिसंलग्नानीत्यन्वभवत् ॥ ८ ॥ चक्षुरादिच

भगवन्सर्वयज्ञेशस्वाहाधिपहुताशन ॥ किमिदंनामसंपन्नंकथ्यतांकिमिदंशवम् ॥ २ ॥ ॥ वह्निरुवाच ॥ ॥ श्रूयतामखिलंराजन्यथा वद्वर्णयामिते ॥ त्रैलोक्यभासुरानंतशववृत्तांतमक्षतम् ॥ ३ ॥ अस्त्यनंतमनाकारंपरमंव्योमचिन्मयम् ॥ यत्रेमान्यपसंख्यानिजगंति परमाणवः ॥ ४ ॥ शुद्धचिन्मात्रनभसितस्मिन्सर्वगतेक्वचित् ॥ सर्वात्मन्युदभूत्संवित्संवेदनमयीस्वयम् ॥ ५ ॥ सातेजःपरमाणुत्वमपश्यद्वेदनावशात् ॥ भावितार्थात्मकतयास्वप्नेत्वम्भिवपांथताम् ॥ ६ ॥ परमाणुरसंवित्त्वादपश्यदणुतांस्वयम् ॥ भास्वतींपद्मजरजस्तुल्यांसंकल्पनात्मिकाम् ॥ ७ ॥ सोच्छूनतांभावयंतीपुनरप्यभवत्स्वयम् ॥ चक्षुरादीनींद्रियाणिवपुष्यन्वभवत्स्वतः ॥ ८ ॥ अपश्यदग्रेचजगच्चक्षुरादिस्वभावतः ॥ आधाराधेयवद्भूतमयंब्रह्मपुरंयथा ॥ ९ ॥ असुरोनामतत्रासीत्प्राणीमानीबभूवह ॥ असत्यप्रतिभासात्मपितृमातृपितामहः ॥ १० ॥ दर्पोत्सिक्ततयातत्रकस्यांचित्समहामुनेः ॥ यदाम्र्दितवानासीदाश्रमंशर्मभाजनम् ॥ ११ ॥ मुनिःशापमदात्तस्यमहाकारतयाश्रमः ॥ त्वयायन्नाशितोमृत्वाभक्षत्वंमशकोधमः ॥ १२ ॥ सतच्छापहुताशोथतस्मिन्नेवतदाक्षणे ॥ असुरंभस्मसाच्चक्रे जलमौर्वइवानलः ॥ १३ ॥ निराकारंनिराधारमाकाशवलयोपमम् ॥ चित्तंकिंचिदिवाचेत्यमासीच्चेतनमासुरम् ॥ १४ ॥ तदेकत्वंययौ साम्याद्भूताकाशेनचेतनम् ॥ तदास्पदेनतत्राथवायुनाचैकतांययौ ॥ १५ ॥

अग्रेशब्दस्पर्शादिगुणाधाराधेयवद्भूतमयंजगदपश्यत् ॥ ९ ॥ द्वितीयप्रश्नविषयंनिमित्तपरंपरांवर्णयितुमुपक्रमते ॥ असुरइति ॥ तत्रवेदनादिविपर्यांताध्यारोपरूपकार्यकरणसंघातानांमध्येअसुरोनामजातिविशेषवान्कश्चित्प्राणीआसीत् ॥ सचअसुरत्वभावादेवमानीअभिमानवान्बभूवहकिल ॥ तस्यपितृमातृपितामहाःकिंनासन् आसन्नेवकिंतुतेविदूरथपित्रादिवदसत्यप्रतिभासात्मानोयस्यतथाविधइत्यर्थः ॥ १० ॥ असुरत्वादेवदर्पेणोत्सिक्ततयाआर्द्रीकृतचकणकवदुच्छूनतया ॥ ११ ॥ महाकारतयाअतिस्थूलशरीरतया ॥ अधमःअतिक्षुद्रः ॥ १२ ॥ १३ ॥ तदातदासुरंचेतनंकिमासीत्तत्राह ॥ निराकारमिति ॥ अचेत्यंचित्तंसुषुप्तमूर्छितमिवासीत् ॥ १४ ॥ तदव्याकृतरूपंचेतनंभूताकाशेनैकत्वंययौ ॥ तद्भूताकाशंचस्वास्पदेनवायुनैकतांययौ ॥ १५ ॥

चेतनवातःप्राणस्तदात्मासएवदेहलाभेप्राणिनामकोभविष्यत् ॥ रजःपार्थिवोभागस्तदादिभूतचतुष्टयव्याप्तः ॥ अणुनाअपंचीकृतेन ॥ १६ ॥ तत्रक्रियाशक्त्याविर्भावमाह ॥ सइति ॥ १७ ॥ स्पंदैर्लिंगदेहेज्ञानशक्त्याविर्भावमाह ॥ अथेति ॥ वर्षादिकालःप्राच्योनिलोवर्षादिजलंचेत्येतैरंकुरकृद्बीजंयथाउच्छूनभावेनव्यबुध्यततद्वत् ॥ १८ ॥ शुद्धस्यमुनेःशापंवेत्तीतिशुद्धशापवित्प्राणांतस्थितास्वमशकत्वविदारूपाअस्यासुरस्यचिन्तत्संस्कारवेधितासतीमशकांगानिपक्षपादादीनिविदित्वास्वयमेवमशकोभवत् ॥ १९ ॥ किंयोनिःकियत्कालंतस्यजीवनंतदाह ॥ स्वेदजस्येति ॥ निःश्वासमात्रेणापिनिपतत्युड्डीयतेतनुर्यस्य ॥ द्वेदिनेजीवितंपरमायुरभवदित्यनुषंगः ॥ २० ॥ स्वप्नवदेवजाग्रदित्यस्य कृद्भगवतोक्तम् स्वप्नदेहस्यचनयोनितउद्भवोदृश्यतेजाग्रद्देहस्यतुदृश्यतेतद्दृष्टांतेनजाग्रद्देहवदेवसर्वत्रयोनितएवोद्भवोस्तुउतान्यथापीतिसंदिहानोरामःप्रसंगाद्वसिष्ठंपृच्छति ॥

आसीच्चेतनवानात्माभविष्यत्प्राणिनामकः॥रजसापयसाव्याप्तस्तेजसानभसाणुना॥१६॥सपंचतन्मात्रमयश्चिन्मात्रलवकोणुकः॥ स्पंदमापस्वभावेनव्योम्निवातलवोयथा॥१७॥ अथतस्यानिलांतस्थंचेतनंतद्व्यबुध्यत॥ कालानिलजलैर्भूमौबीजमंकुरकृद्यथा॥१८॥ शुद्धशापविदंतस्यामशकत्वविदास्यचित्॥ वेधितामशकांगानिविदित्वामशकोभवत्॥ १९॥ स्वेदजस्याल्पदेहस्यनिःश्वासनिपतत्तनोः॥ द्वेतस्यमशकस्येहदिनेभवतिजीवितम्॥२०॥ ॥श्रीरामउवाच॥ ॥प्राणिनामिहसर्वेषांयोन्यंतरजएवकिम्॥ समुद्भवः संभवतिकिमुतान्योपिवाप्रभो॥२१॥ ॥श्रीवसिष्ठउवाच॥ ॥ब्रह्मादीनांतृणांतानांद्विधाभवतिसंभवः॥एकोब्रह्ममयोन्यस्तुभ्रांतिजस्ताविमौशृणु॥२२॥पूर्वरूढजगद्भ्रांतिभूततन्मात्ररंजनात्॥भूतानांसंभवःप्रोक्तोभ्रांतिजोदृश्यसंगतः॥२३॥अभातायांजगद्भ्रांतौभूतभावःस्वयंभवन्॥ यःसब्रह्ममयःप्रोक्तःसंभवोनसयोनिजः॥२४॥एवंस्थितेसमशकोजगद्भ्रांतिवशोत्थितः॥ नतुब्राह्मोत्थितस्तस्यरामचेष्टाक्रमंशृणु॥२५॥क्षमेक्षुशष्पकक्षादिपुंजगुंजेषुगुंजता॥स्वायुषोर्द्धंदिनंतेनसर्वंभुक्तंविवल्गता॥२६॥शाद्वलोदरदोलायांदोलनंबाललीलया॥ चिरमारब्धमेतेनसार्द्धंमशिकयास्वयम्॥२७॥

प्राणिनामिति ॥ विवर्तोपादानांशेब्रह्ममयः ॥ परिणाम्युपादानांशेयोनिजः ॥ २१ ॥ २२ ॥ तत्रद्वितीयंलक्षयति ॥ पूर्वेति ॥ पूर्वंतद्योन्यनुभवरूढयातद्देहतादात्म्यदृढभ्रांत्या तत्तद्भूततन्मात्राणांरंजनात्तदाकारेणभूतानांप्राणिनांयःसंभवःसभ्रांतिजः ॥ एतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यति यद्यद्भवंतितदाभवंतीत्यादिश्रुतेरितिभावः ॥ २३ ॥ नित्यमुक्तब्रह्मणःकदाप्यभातायामेवजगद्भ्रांतौस्वयमेवविवर्ततयासर्गादौजीवभावेनभवन्यश्चतुर्विधभूतभावःसब्रह्ममयइत्यर्थः ॥ २४ ॥ सचआजानसिद्धैःकपिलसनकादिभिरेवानुभूयतेनान्यैर्मशकादिभिरितिभ्रांतिजएवप्रकृतोमशकसंभवइत्याशयेनाह ॥ एवमिति ॥ प्रासंगिकांतकथाशेषंवसिष्ठःस्वयमेवोत्साहाच्छ्रावयति ॥ तस्येति ॥ २५ ॥ क्षमायांभूमौइक्षुगुल्मेषुशष्पेषुबालतृणेषुकाशमुंजादिकक्षादिपुंजेषुचगुंजंतिअव्यक्तध्वनिंकुर्वंतियेमशकास्तेषुस्वयमपिगुंजतातथाध्वनताविवल्गताक्रीडतातेनमशकेनदिनद्वयात्मकस्यस्वायुषोऽर्धमेकंदिनंसर्वंभुक्तम् ॥ २६ ॥ ततोद्वितीयदिनचेष्टामाह ॥ शाद्वलेति ॥ मशिकयाभार्ययासार्द्धम् ॥ २७ ॥

हरिणपादाग्रमेवमशकदृष्ट्या गिरिस्तत्पातेन ॥ २८ ॥ आननग्रहणेनसंपूर्णोहरिणाकारोलक्ष्यते ॥ तस्ययःसंदर्शःसम्यङ्मरणकालेभावनंतेनत्यक्तःप्राणोयेनतत्तया ॥ पूर्वंमश
कदेहग्रहणेउक्तोयःक्रमस्तेनैवक्रमेणगृहीतान्यक्षाणिबाह्यांतःकरणानियेन ॥ २९ ॥ ३० ॥ संगात्सत्संगलाभभाग्यात् ॥ ३१ ॥ किंप्रतिबोधितस्तदाह ॥ भ्रांतइत्यादिना ॥
तंत्रंमहाफलामहिंसाभयदानादिशास्त्रमर्यादांकस्मान्नपासि ॥ ३२ ॥ व्याधकुलाचारप्राप्ताजीविकामृगवधस्तत्त्यागेकथंजीवनंकथंवाभोगसिद्धिस्तत्राह ॥ आयुरिति ॥
नजीवनंभोगावापुरुषार्थः ॥ हिंसादिनातत्संपादनेअनंतकालभोग्यस्यपारलौकिकानर्थस्यावश्यंभावात् ॥ आयुषोनस्त्रभंगुरत्वमस्तियेनतदप्रसक्तिः ॥ यतआयुर्वायुविघट्टि
तास्वभ्रपटलीषुलोलंयदंबुतद्वद्भंगुरम् ॥ तत्रभोगास्तुमेघवितानस्यमध्येविलसंतीयासौदामनीविद्युत्तद्वच्चंचलाः ॥ तद्योग्यायौवनलालनायौवनविलासास्तुजलस्यरयोवेगइव

दोलाश्रमार्तस्तत्रासौयावद्विश्राम्यतिकिंचित् ॥ तावद्धरिणपादाग्रगिरिपातेनचूर्णितः ॥ २८ ॥ हरिणाननसंदर्शत्यक्तप्राणतयातया ॥
पूर्वक्रमगृहीताक्षःसजातोहरिणस्ततः ॥ २९ ॥ विहरन्हरिणोरण्येव्याधेनधनुषाहतः ॥ व्याधाननगदृष्टित्वात्संजातोव्याधएवसः ॥ ३० ॥
व्याधोवनेषुविहरन्संयातोमुनिकाननम् ॥ तत्रविश्रांतवान्संगान्मुनिनाप्रतिबोधितः ॥ ३१ ॥ भ्रांतःकिमिदमादीर्घदुःखायधनुषामृ
गान् ॥ हंसिपासिनकस्मात्त्वंतंत्रंजगतिभंगुरे ॥ ३२ ॥ आयुर्वायुविघट्टिताभ्रपटलीलंबांबुवद्भंगुरंभोगामेघवितानमध्यविलसत्सौ
दामनीचंचलाः ॥ लोलायौवनलालनाजलरयःकायःक्षणापायवान्पुत्रत्रासमुपेत्यसंसृतिवशान्निर्वाणमन्विष्यताम् ॥ ३३ ॥ ॥ इ०
वा० महारामायणेवा० दे० मो० निर्वाणप्र० उ० अ० विप० श० मशकव्याधबोधनंनामषट्त्रिंशदुत्तरशततमःसर्गः ॥ १३६ ॥ ॥ ७ ॥
॥ व्याधउवाच ॥ ॥ एवंचेत्तन्मुनेब्रूहिकीदृग्दुःखपरिक्षये ॥ नकर्कशोनचमृदुर्व्यवहारक्रमोभवेत् ॥ १ ॥ ॥ मुनिरुवाच ॥ ॥ इदानीमे
वसंत्यज्यधनुषासहसायकान् ॥ मौनमाचारमाश्रित्यशांतदुःखमिहास्यताम् ॥ २ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिसंबोधितस्तेनपरि
त्यज्यधनुःशरान् ॥ आसीन्मुनिसमाचारस्तत्रैवायाचिताशनः ॥ ३ ॥

लोलाः ॥ कायोभोगायतनंचक्षणेअपायवान्संभावितापायः ॥ हेपुत्रअतोहेतोःपारलौकिकभाव्यनर्थपरंपरालक्षणसंसृतिवशात्त्रासमुपेत्यअभयदानाहिंसाद्युपायैरात्यंतिका
नर्थनिवृत्त्युपलक्षितनित्यनिरतिशयानंदरूपंनिर्वाणंब्रह्मअन्विष्यतांगुरुशास्त्रोपायेनेत्यर्थः ॥ ३३ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउ० षट्त्रिंशदुत्तरश
ततमःसर्गः ॥ १३६ ॥ ॥ ७ ॥ ॥ व्याधेनपृष्टोत्रमुनिर्धारणाभ्यासतःस्वयम् ॥ परकायप्रवेशेनतत्त्वमंदृष्टमब्रवीत् ॥ १ ॥ एवंहिंसादिव्यवहारोदुःखहेतुश्चेत्तर्हिदुःखप
रिक्षयेहेतुभूतोव्यवहारक्रमःकीदृग्भवेत्तद्ब्रूहि ॥ १ ॥ मुनीनामाचारक्रमएवदुःखक्षयहेतुस्तत्सहवासेनशिक्षणीयइत्याशयेनोत्तरंमुनिराह ॥ इदानीमेवेति ॥ मौनंमुनिप्रसि
द्धंयमनियमविचाराद्याचारमाश्रित्य ॥ २ ॥ तत्रतस्मिन्नाश्रमएव ॥ ३ ॥

ततःसत्संगाच्छास्त्रप्रसिद्धांसारासारविवेकशीलतांविवेश॥ यथापुष्पंमुकुलपरिपाकविकासादिक्रमोद्भवेनामोदेननराणामाशयंहृदयंह्लादयद्विशतितद्वत्॥ ४ ॥ एवंसंजातविवे
कःसव्याधःकदाचित्तंमुनिशार्दूलमपृच्छत्॥ हेअरिंदमेतिदशरथसंबोधनम्॥ किमपृच्छत्तदाह॥ भगवन्निति॥ हेभगवन्प्राणिनामंतःस्थितःस्वप्नोजाग्रदिववहिःकथंदृश्यते॥
वहिःस्थितश्चप्रपंचःस्वप्नःसन्कथमंतर्दृश्यते॥ प्राण्यंतर्गतःस्वप्नःकथंकेनोपायेनदृश्यते॥ एवमंतर्वहिश्चस्थितःप्रपंचःस्वप्नःकथंदृश्यते॥स्वप्नएवचेत्प्रपंचस्तर्हिअंतर्वहिरितिद्विधा
स्थितःकथंदृश्यते॥ इत्यनेकसंदेहसंपिडितापंचतंत्रेणप्रश्नाः॥ ५ ॥ बहुतरवितर्कगर्भितंप्रश्नंश्रुत्वामुनिःस्वस्याप्येतादृशोवितर्कःकोमलविवेकदशायामभूत्सचमयाधारणा
भ्यासेनस्वयमेवपरकायप्रवेशेनतदीयस्वप्नादिपुनःपुनरवलोक्यान्वयव्यतिरेकाभ्यांचिरंपरीक्षणेनतत्त्वमवगम्यसमाहितइतिकथांविस्तरेणतृतीयप्रश्नोत्तरमुखेनवक्तुंमुनिरुपक्र
मते॥ ममापीत्यादिना॥ ६ ॥ अभ्यस्तापरकायप्रवेशानुकूलावहिःकुंभकधारणायेन तस्यांसर्वजनानामात्मत्वेनप्रसिद्धायांसंविद्येवस्थिरोभवम्॥ ७ ॥ तत्रतस्यांसंविदिस्थि

विवेशमनसामौनीततःशास्त्रविवेकिताम्॥ दिनैरेवयथापुष्पमामोदेननराशयम्॥४॥ अपृच्छन्मुनिशार्दूलंकदाचित्तमरिंदम॥ भग
वन्दृश्यतेस्वप्नःकथमंतर्वहिःस्थितः॥५॥ ॥मुनिरुवाच॥ ॥ममापिसाधोप्रथममेषएवविवेकिनः॥पुराचित्तेवितर्कोभूत्कुतोप्यभ्र
मिवांबरे॥६॥ततएतद्दिदृक्षार्थमहमभ्यस्तधारणः॥ बद्धपद्मासनस्तस्यांसंविद्येवाभवंस्थिरः॥७॥तत्रस्थोदूरविक्षिप्तंतयैवाहृतवा
नहम्॥ चेतःस्वर्हृदयंसायंरुचेवरविरातपम्॥८॥ वेदनेरणयाप्राणस्ततश्चित्तान्वितोमया॥ शरीराद्रेचितोवाह्येसौरभंकुसुमादिव
॥९॥ व्योमस्थचित्तवलितःसप्राणपवनोमया॥ अग्रस्थस्यमुखाग्रस्थेजंतोःप्राणेनियोजितः॥१०॥ यःप्राणवलितःप्राणस्तेननीतो
हृदंतरम्॥ स्वेहयास्वंस्वकःसर्पःकरभेणेवहिंसितः॥११॥ ततोहंहृदयंतस्यप्रविष्टःप्राणवाजिना॥ संकटस्थःस्वयाबुद्ध्यातावेवानुसरों
तरम्॥१२॥ स्वरद्रसाभिर्वक्रीभिर्नाडीभिरभितोवृतम्॥ कुल्याभिःस्थूलतन्वीभिर्वाह्यदेशमिवाखिलम्॥१३॥

तोऽहंदूरविक्षिप्तंचेतस्तयैवसंविदाप्रत्याहृतवान्॥ यथासायंरविःस्वरुचामंडलकांत्यैवातपंप्रत्याहरतितद्वत्॥ ८ ॥ वेदनंप्राणांतर्गताचित्तदीरणयाजीवस्यप्राणेनसहवहिर्निर्गम
नानुकूलेनयोगशास्त्रप्रसिद्धप्रयत्नेनचित्तंजीवोपाधिस्तदन्वितःप्राणःशरीराद्वाह्येदेशेरेचितोरेचकेननिःसारितः॥ ९ ॥ ततःपरकायप्रवेशोपायंस्वकृतमाह॥ व्योमस्थेति॥ वा
ह्यव्योमस्थेनचित्तेनजीवोपाधिनासंवलितःसप्राणपवनोमयाअग्रेपुरोभागेस्थितस्यकस्यचिज्जंतोश्छात्रस्यप्राणेनियोजितोमेलितः॥ १० ॥ मदीयप्राणवलितोयस्तस्यजंतोः
प्राणस्तेनतदीयंहृदंतरमहंनीतः ॥ यथाकरभेणभल्लूकेनविलेमुखंनिवेश्यवलान्मुखवायुनाआकर्षणलक्षणयास्वेहयास्वचेष्टयास्वकःस्वाहारभूतःसर्पःस्वमुखंप्रवेश्यहिंसितः
सन्स्वहृदयंनीतस्तद्वत्॥ ११ ॥ तदीयप्राणलक्षणेनवाजिनाअश्वेन॥ तौपरस्परसंवलितौप्राणावेवानुसरतीत्यनुसरोऽहमंतरंतद्देहमध्यंप्रविश्यस्वयाबुद्ध्यावक्ष्यमाणसंकटस्थः
अभवमितिशेषः॥ १२ ॥ १३ ॥

संकटतांप्रपंचयति ॥ पर्शुकेत्यादिना ॥ पर्शुकाःपार्श्वास्थीनितल्लक्षणेपंजरेप्लीहयकृतीमांसविशेषौ ॥ डिंबकैःपिंडकैः ॥ जीवस्यसदनंगृहभूतंतच्छरीरम् ॥ १४ ॥ शलशलेति जाठरानलक्कथनध्वन्यनुकरणम् ॥ १५ ॥ पुनःकीदृशंतज्जीवसदनम् ॥ जीवनायचेतसाप्राणादिवातैश्चानारतमुन्नीतम् ॥ तत्रबहिःस्थस्यसौमात्मकस्यापानस्यनासायादंतःप्रवेशे नवंनवमंतःप्रविशद्बहिःशैत्यंयस्य ॥ अतएवचेतनात्मकम् ॥१६॥ रक्तंकुट्टंतिनाडीमार्गेभ्योविच्छिंदंतितथाविधायेन्नरसाःश्लेष्मादयश्चतेषांनिःस्रावैःपिच्छिलम् ॥ १७॥ रक्त रसश्लष्मेपित्तानांद्वासप्ततिसहस्रनाडीभेदेषुक्वचिदुदयैःक्वचिदवयवेषुआश्लेषैश्चक्वचित्संचारसौकर्यात्स्पष्टानांक्वचिन्मार्गनिरोधादस्पष्टानांचप्राणादिमरुतांरतैःक्रीडितैःसमधा तुस्थितानामंतानांतन्नाशानांचवैषम्यादागामिनांगदानांरोगाणांस्वमादिषुसूचकम् ॥१८॥ दरंतिसरभसानियान्यपानादिच्छिद्राणितेष्वावातेननिर्गतेनवातेनशब्दितंसंजातशब्दं हृदयपद्मनालस्यप्रणालंछिद्रंतदंतर्ज्वलन्अर्णववाडवइवजाठराग्निर्यस्मिन् ॥ तथाचोक्तंमहोपनिषदि ॥ पद्मकोशप्रतीकाशंहृदयंचाप्यधोमुखमित्युपक्रम्यतस्यांतेसुषिरंसूक्ष्मं

पर्शुकापंजरप्लीहयकृद्रक्तादिडिंबकैः॥ संकटंजीवसदनंभांडोपस्करणैरिव ॥ १४ ॥ सर्वैःशलशलायद्भिरुष्णैरवयवैर्वृतम्॥ निदाघता पसंतप्तैरूर्मिजालैरिवार्णवम्॥ १५ ॥ नवंनवंबहिःशैत्यंनासाग्राच्चेतनात्मकम् ॥ जीवनायानिशंचेतोवातोन्नीतमनारतम्॥ १६ ॥ र क्तकुट्टरसश्लेष्मवसानिःस्रावपिच्छिलम् ॥ घनांधकारमुष्णंचसंकटंनरकोपमम् ॥ १७ ॥ उदयावयवाश्लेषस्पष्टास्पष्टमरुद्रतैः॥ स्थित्यंतानांतुवैषम्यादागामिगदसूचकम् ॥ १८ ॥ दरत्सरभसच्छिद्रावातवातेनशब्दितम्॥ पद्मनालप्रणालांतर्ज्वलदर्णववाडवम् ॥ १९ ॥ मिलत्पदार्थनीरंध्रंसितमच्छंसवायुभिः॥ क्वचित्सौम्यंक्वचित्क्षुब्धंचोरैरिवपुरंनिशि ॥ २० ॥ रसनादपरैर्नाडीमार्गविद्याधरा ध्वगैः॥ संचरद्भिर्वृतंवातैराकारार्द्धार्द्धगीतिभिः॥२१॥तदहंहृदयंजंतोराविशंविषमांतरम्॥नरोवयवसंबाधंनरवृंदमिवाधिकः॥२२॥ अनंतरमहंप्राप्तस्तेजोधातुंहृदंतरे॥ दूरस्थमिवयत्नेनरात्राविंदुमिवार्करुक् ॥ २३ ॥ यस्मात्त्रिभुवनादर्शोदीपस्त्रैलोक्यवस्तुषु॥ सत्ता सर्वपदार्थानांजीवस्तत्रावतिष्ठते॥ २४ ॥

तस्मिन्सर्वंप्रतिष्ठितम् ॥ तस्यमध्येवह्निशिखाअणीयोर्ध्वाव्यवस्थिताइति ॥ १९ ॥ मिलद्भिर्वासनामयैःपदार्थैर्नीरंध्रंनिबिडितम् ॥ सवायुभिरिंद्रियैःसितंबद्धम् ॥ साक्ष्यात्मस्व भावेनतुअच्छम् ॥ चित्तवृत्तिभेदैःप्रदेशभेदैश्चक्वचित्सौम्यंक्वचित्क्षुब्धम् ॥ २० ॥ कोष्ठगतानामन्नरसानांनादेध्वननेतत्परैरतएवनाडीमार्गेषुगायद्भिर्विद्याधराध्वगप्रायैःसंचरद्भि र्वातैर्वृतम् ॥ द्विमात्रआकारस्तदर्द्धमेकमात्रस्तदर्द्धोर्द्धमात्रश्चगीतिषुयेषाम् ॥ गीतिमात्रस्यवातसाध्यत्वादितिभावः ॥ २१ ॥ यथाअधिकःश्रेष्ठोनरोनरावयवैःसंबाधंनिरव काशंनरवृंदंविशतितद्वत् ॥ २२ ॥ तेजोधातुंजठराग्निलक्षणस्यतेजसःसारंतेजोरूपोहंयत्नेनप्राप्तः यतःसमीपस्थमपिबहुतरनाडीमार्गप्राप्यत्वाद्दूरस्थमिव ॥ यथेंदुंरात्रौअर्करु क्प्राप्नोतितद्वत् ॥ तथाचश्रुतिः ॥ एतद्धिब्रह्मदीप्यतेयदादित्योदृश्यते ॥ अथैतन्म्रियतेयन्नदृश्यते ॥ तस्यचंद्रमसमेवतेजोगच्छतीति ॥२३॥ तस्यतेजःसारत्वंकुतस्तत्राह ॥ य स्मादिति ॥ यस्माद्धेतोस्त्रिभुवनस्याप्यंतर्भानादादर्शभूतस्त्रैलोक्यवस्तुषुदीपवत्प्रकाशकोजीवस्तद्वेषःपरमात्मातत्रतस्मिंस्तेजस्यत्रतिष्ठते ॥ तथाचश्रुतिः ॥ तस्यमध्येवह्निशिखा अणीयोर्ध्वाव्यवस्थिता ॥ तस्याःशिखायामध्येपरमात्माव्यवस्थितः ॥ सब्रह्मसशिवःसोक्षरःपरमःस्वराडिति ॥ २४ ॥

ननुसएपदइहप्रविष्टआनखाग्रेभ्यइत्यादिश्रुतिषुसर्वदेहगतोजीवःश्रूयतेतत्कथंतेजोधातावेवसोवतिष्ठतेतत्राह ॥ कायेइति ॥ यद्यपिसर्वगतआत्माजीवःसन्कायेआनखाग्रंप्रविष्ट स्तथापिओजसितेजोधातौविशेषतोवतिष्ठते ॥ यथाविवस्वताविकासितेकुसुमेसर्वगतोपिस्वामोदःशैत्यंचाकिंजल्कैरुपलक्षितेतन्मुखेविशेषतोवतिष्ठतेतद्वदित्यर्थः ॥ २५ ॥ परितःप्राणैःकरणाभिमानिभिर्देवैःपरितश्चतुर्ष्वपिद्वार्षुरक्षितम् ॥ यथाघटादिप्रच्छादनंदीपज्योतिःसूक्ष्मघटच्छिद्रप्रविष्टैर्वातैरक्ष्यतेतद्वत् ॥ आत्यंतिकच्छिद्रपिधानेदीपनाशदर्शनादितिभावः ॥ २६ ॥ ततोहंअंजःसाक्षात्तज्जीवोपाधिभूतंमनोमयविज्ञानमयकोशसंवलितमानंदमयकोशंसंप्रविष्टः ॥ तद्दृष्टांतानाह ॥ आमोदइवेत्यादिना ॥२७॥ तत्रस्वतएवस्नेहानंदयोर्दर्शनान्नवनीतगुडप्रख्ये ॥२८॥ पूर्वस्थानेष्विवप्रवेशप्रयुक्तयाव्यग्रयाश्रांत्याउज्झितःसन्स्वस्यत्वदिस्थितेओजसीवस्वस्थोवसन्स्वीयस्वप्नइवतदीयस्वप्नरूपमखंडितंविश्वंपश्यामि ॥ २९ ॥ तद्विश्वमेवविशिनष्टि ॥ सार्कमित्यादिना ॥ ३० ॥ ३१ ॥ स्थिरमनादिप्रवाहस्थितमेवप्रसिद्धजगत्समंस्थितम ॥ अहंनिद्रांतिजागरेअतिशयेनवसाम्येव ॥ यतोनिद्राअंतेजाग्रदवसानेनागतैव ॥ ३२ ॥ तथापिस्वप्नंकिंपश्यामिइतिपरिचिंतयताहेव्याधततस्तदनंतरंविबोधिनाप्रबोधवतामयाइदंवक्ष्यमाणंज्ञातम् ॥ ३३ ॥ किंज्ञातंतदाह ॥ नन्विति ॥ नामेतिविवेकिप्रसिद्धौ ॥ अस्यचिद्धातोःप्रत्यगात्मनइदमैश्वरंरूपम् ॥ कीदृशम् ॥ एषईश्वरःअंबरात्मकंखंघटइतिवापटइतिवाजगदितिवाजीवइतिवायथादृशनामरूपंव्यपदिशतिस्वयंतत्तज्जगन्नाम्नाभवति ॥ ३४ ॥ किंतात्त्विकंरूपंविहायनेत्याह ॥ व्योमतामिति ॥ अत्यजदेव ॥ ३५ ॥ इदमेवस्वप्नइतिजनैःकथ्यतइतिअद्यआज्ञातंअहो ॥ आइतिस्मरणेअह्नि ॥ ३६ ॥

कायेसर्वगतोजीवःस्वामोदःकुसुमेयथा ॥ तथाप्योजसिकिंजल्कैर्मुखेशैत्यंविवस्वता ॥ २५ ॥ तज्जीवाधारमोजस्तुप्रविष्टोहमलक्षितम् ॥ रक्षितंपरितःप्राणैर्वातैःप्रच्छादनंयथा ॥ २६ ॥ ततोंजःसंप्रविष्टोहमामोदइवमारुतम् ॥ उष्णांशुरिवशीतांशुंस्वत्पात्रमिववापयः ॥२७॥ द्वितीयेंदंशुसंकाशेशुक्लाभ्रलवपेलवे ॥ नवनीतगुडप्रख्येक्षीरबुद्बुदसुंदरे ॥२८॥ तत्रपश्याम्यहंतिष्ठन्प्रवेशव्यग्रयोज्झितः ॥ स्वौजसीववसन्स्वप्नइवविश्वमखंडितम् ॥२९॥ सार्कंसपर्वतंसाब्धिससुरासुरमानवम् ॥ सपत्तनवनाभोगंसलोकांतरदिङ्मुखम् ॥३०॥ सद्वीपसागरांभोधिसकालकरणक्रमम् ॥ सकल्पक्षणसर्वर्तुसहस्थावरजंगमम् ॥ ३१ ॥ तत्स्वप्नदर्शनंतत्रस्थिरमेवसमंस्थितम् ॥ वसाम्यत्येवनिद्रांतेनिद्रांतेनागतायतः ॥३२॥ अनिद्रएवकिंस्वप्नंपश्यामीतिमयाततः ॥ परिचिंतयताज्ञातमिदंव्याधविबोधिना ॥३३॥ ननुनामास्यचिद्धातोःस्वरूपमिदमैश्वरम् ॥ स्वयंव्यपदिशत्येषजगन्नाम्नांबरात्मकम् ॥३४॥ चिद्धातुर्यंत्रयत्रास्तेतत्रतत्रनिजंवपुः ॥ पश्यत्येषजगद्रूपंव्योमतामेवचात्यजत् ॥ ३५ ॥ अहोत्वद्येदमाज्ञातंयदित्थंदृश्यतेजगत् ॥ तत्कथ्यतेस्वप्नइतिस्वाचिल्कचनमात्रकम् ॥ ३६ ॥

१ गुडोगोलः

जाग्रदपितत्त्वतोविमृष्टमिदमेवपर्यवस्यतीत्याह ॥ चिद्धातोरिति ॥ ३७ ॥ अनयोःपरस्परदृशास्वप्नत्वमेवस्वस्वदृशातुजागरत्वमेवेत्याह ॥ स्वप्नइति ॥ स्वप्नेतुजागराएषःस्वप्न एव ॥ स्वप्नस्तुस्वदृष्ट्याजागरैवेतियदास्वदृष्ट्यादृश्यतेतदाजागरैवद्विधास्थितेतिपर्यवसन्नमित्यर्थः ॥३८॥ ननुमरणंतर्हिस्वप्नजागराभ्यामतिरिक्तंकिस्यात्तत्राह ॥ चेतनमिति ॥ नास्त्येवमरणंनामकिंचित् ॥ यतःपुरुषश्चेतनम् ॥ भावेल्युट् ॥ चिन्मात्रमेव ॥ सचानेकशतेषुशरीरेषुमृतेष्वपिकदामृतःकस्यमृतःकथंमृतस्तेधापितदप्रसिद्धेरित्यर्थः ॥३९॥ अभ्युपेत्यशरीरंतन्मरणंचेदमुक्तं वस्तुतस्तुतदुभयमपिनास्तीत्याह ॥ तदिति ॥ प्रतिहन्यतइतिप्रतिघामूर्त्ताकारस्तद्विलक्षणस्त्वप्रतिघातदालकंचभ्रांत्येवेत्यर्थः ॥४०॥तत्रअप्रतिघात्मतास्वभावस्तादृगात्मनश्चिदाख्यस्यपरमाणोर्मज्जासारएवभ्रांत्यादेहवज्जगदित्यपिस्मृतः ॥ ४१ ॥ मज्जात्वमेवोपपादयति ॥ चिद्योम्नइति ॥ जगद्भ्रांत्यनुभवलक्षणाअणवः

चिद्धातोर्यत्त्वकचनंतत्किंचित्स्वप्नउच्यते॥ किंचिच्चजाग्रदित्युक्तंजाग्रत्स्वप्नौतुनद्विधा॥३७॥ स्वप्नःस्वप्नोजागरायामेषस्वप्नेतुजागरा॥ स्वप्नस्तुजागरैवेतिजागरैवस्थिताद्विधा ॥३८॥ चेतनंनामपुरुषःसमृतेषुशतेष्वपि॥ शरीरेषुमहाबुद्धेकथंकस्यकदामृतः॥ ३९ ॥ तच्चेतनंखमेवास्तिस्थितंतद्देहवत्क्वचत् ॥ अनंतमविभागात्मप्रतिघाप्रतिघात्मकम् ॥४०॥ स्वभावस्याप्रतिघस्यनित्यानंतोदितात्मनः॥ परमाणोश्चिदाख्यस्यमज्जाजगदितिस्मृतः॥४१॥चिद्व्योम्नउदरेभांतिसमस्तानुभवाणवः॥तथायथावयविनोविचित्रावयवाणवः॥४२॥ निवृत्तोबाह्यतोजीवोजीवाधारेहृदिस्थितः॥ रूपंस्वंस्वप्नसर्गोयमितिवेत्तिचिदाकचान् ॥४३॥ बाह्योन्मुखंबहिर्जाग्रच्छब्दितंकचितं स्वकम् ॥ रूपंपश्यतिजीवोयमंतस्थंस्वप्नइत्यपि ॥ ४४ ॥ द्यौःक्ष्मावायुराकाशंपर्वताःसरितोदिशः॥ प्रसृतोजीवइत्यंतर्बहिश्चैकात्मकः स्थितः॥ ४५॥ अर्कोर्कबिंबसंस्थोपियथेहापिस्थितस्त्विषा॥ तथाजीवोजगद्रूपोबहिरंतश्चसंस्थितः॥ ४६ ॥ अंतःस्वप्नोबहिर्जाग्रदहमेवेतिवेत्तिचेत् ॥ चिदात्मकोयथाभूतंमुच्यतेतदवासनः॥ ४७॥ अच्छेद्योयमदाह्योयमपिजीवोन्यथावदन्॥ द्वैतसंकल्पयक्षेणमुह्यत्येवशिशुर्यथा॥४८॥ अंतर्मुखोंतरात्मानंबहिःपश्यन्बहिर्मुखः ॥ आस्तेजीवोजगद्रूपंयत्स्वंतेस्वप्नजाग्रती॥ ४९ ॥ इतिचिंतयतःकिंस्यात्सुषुप्तमितिमेमतिः॥ जातातेनसुषुप्तांशमन्वेष्टुमहमुद्यतः॥ ५० ॥

॥४२॥ प्रथमतृतीयप्रश्नौसमाहितौद्वितीयंप्रश्नंसमाधत्ते ॥ निवृत्तइति ॥ बाह्यतोजागरतोजाग्रद्भोगप्रदकर्मोपरमेनिवृत्तःसन्स्वंरूपमेवबाह्यसंस्कारानुरोधेनबाह्यःस्वप्नस्वर्गोऽयमितिचिदाकचान्चिद्विवर्तानेववेत्ति ॥४३॥ यदाचित्तंबाह्योन्मुखंतदास्वकंरूपंजाग्रच्छब्दितंकचितम् ॥ यदाअंतस्थंचित्तंतदाअयंजीवःस्वकंरूपंस्वप्नइत्यपिपश्यति ॥४४॥ चतुर्थपंचमप्रश्नयोरुत्तरमाह ॥ द्यौरिति ॥ एकात्मकएवजीवोबहिरंतश्चद्यौःक्ष्मेत्याद्यात्मकःप्रसृतः ॥४५॥४६॥ अतएवसर्वात्मतायाएवतात्त्विकत्वात्तथापरिज्ञानादेवमुच्यतइत्याह ॥ अंतरिति ॥ यथाभूतंयथार्थम् ॥ भूमिकाभेदपरिपाकक्रमेणावासनःसन्मुच्यते ॥ ४७ ॥ ४८ ॥ अंतरात्मानंस्वमंतर्जगद्रूपंपश्यन्स्वप्न एवंबहिर्जगद्रूपंपश्यन्जाग्रच्चस्वयमेवास्तेतेएवास्यस्वप्नजाग्रती ॥४९॥ प्रसंगात्सुषुप्तितुरीयतत्त्वमपृष्टमप्याह ॥ इतीति ॥ इतिजाग्रत्स्वप्नतत्त्वतश्चिंतयतोमेसुषुप्तंकिंस्यादितिचिंतालक्षणामतिर्जाता ॥५०॥

दृश्यदृष्ट्यामर्मकिंअहंचिरंतूष्णींनिश्चित्तस्तिष्ठामि इतिअंतर्यावत्संवित्तिःशमाशमरूपातावत्सुषुप्तकंतदन्यत्रेत्यर्थः ॥ ५१ ॥ चित्तव्याप्त्यभावेचिदनभिव्यक्तौघटादिवज्जडत्व
माशंक्यविशेषतोहंतयाअविदितत्वेपिनखकेशादिवत्सामान्यतोविदितत्वाद्विदिताविदितात्मकं तत्सुषुप्तंनजडंजडंचैवचेतनात्मनितत्साक्षिणिस्फुरतीत्याह ॥ नखेति ॥ ५२ ॥
जाग्रत्स्वप्नभ्रमणेनश्रमार्त्तोस्मिममविशेषसंवित्त्याकिंकंचित्कालंशांतमासेइतिसंकल्पेवगाढनिद्राकारैकपरिणामत्वमेवसुषुप्तकंनान्यदस्तीत्यर्थः ॥ ५३ ॥ जाग्रत्यपिपुरुषेएत
त्सुषुप्तकंचिंतापरित्यागदशायांसंभवतीत्याह ॥ एतदिति ॥ ५४ ॥ नितरांदृढानिद्रेतिव्युत्पत्त्यासुषुप्तिरेवनिद्राशब्देनोच्यते ॥ तन्वीईषद्विक्षेपाकारेणशिथिलातुस्वप्नशब्देनेत्यर्थः

यावत्किंदृश्यदृष्ट्यांतस्तूष्णींतिष्ठाम्यहंचिरम् ॥ निश्चित्तइतिसंवित्तिःशमानान्यत्सुषुप्तकम् ॥५१॥ नखकेशादिदेहेस्मिन्विदिताविदितं
यथा ॥ नजडंचजडंचैवसुषुप्तंचेतनात्मनि ॥ ५२ ॥ संवित्त्याकिंश्रमार्तोस्मिशांतमासेविमानसम् ॥ इत्येकपरिणामत्वान्नान्यदस्तिसु
षुप्तकम् ॥ ५३ ॥ एतन्निद्राघनंजाग्रत्यपिसंभवतिस्वतः ॥ नकिंचिच्चिंतयाम्यासेशांतइत्येकरूपकम् ॥ ५४ ॥ एषावस्थायदायातिघन
तामुच्यतेतदा ॥ निद्राशब्देनतन्वीतुस्वप्नशब्देनकथ्यते ॥ ५५ ॥ सुषुप्तमितिनिश्चित्यतुरीयान्वेषणामहम् ॥ प्रवृत्तःकर्तुमुद्युक्तोयुक्तःपर
मयाधिया ॥ ५६ ॥ यावद्रूपंतुरीयस्यकिंचनापिनलभ्यते ॥ सम्यग्बोधादृतेशुद्धात्प्रकाशस्तमसोयथा ॥ ५७ ॥ यथास्थितमिदंविश्वंस
म्यग्बोधाद्विलीयते ॥ यथास्थितंचभवतिनचकिंचिद्विलीयते ॥ ५८ ॥ अतःस्वप्नोजागराच्चसुषुप्तंचतुरीयकं ॥ सयथास्थितमस्त्यादनूनं
नास्तिचकिंचन ॥ ५९ ॥ कारणाज्जगदुत्पन्नंनब्रह्मेत्थमवस्थितम् ॥ जगत्तयाशांतमजंबोधइत्यवतुर्यता ॥६०॥ असंभवात्संभवकार
णानांनजायतेकिंचननामसर्गः ॥ चिच्चेतनेनैवहिसर्गसंवित्स्वयंगृहीताद्रवतांबुनेव ॥ ६१ ॥ ॥इ०वा०वा०दे०मो०नि०उ०अ०
वि०श०जाग्रत्स्वप्नसुषुप्ततुरीयवर्णनंनामसप्तत्रिंशदुत्तरशततमःसर्गः ॥ १३७ ॥ ॥ ५ ॥

॥५५॥५६॥ तुरीयस्ययावत्पूर्णरूपंतुसम्यग्बोधादृतेनलभ्यते ॥ ५७ ॥ अतःसम्यग्बोधएवतुरीयं तत्रहिविलीनस्यविश्वस्यआत्यंतिकमविलीनत्वंयथास्थितंभवतीत्याह ॥ य
थास्थितमिति ॥५८॥ अतएवावस्थात्रयंतत्रांतर्भूतमित्याह ॥ अतइति ॥ यथास्थितेनजगतासहितंसयथास्थितम् ॥५९॥ जगत्कारणान्नोत्पन्नंकिंतुब्रह्मैवेत्थंजगत्तयावस्थित
मितिबोधएवसदातुर्यमित्यर्थः ॥ ६० ॥ तदेवपुनर्वर्णयन्नुपसंहरति ॥ असंभवादिति ॥ संभवोजन्मतत्कारणानामद्वयेब्रह्मण्यसंभवात्सर्गःकिंचनद्वितीयंनजायतेकिंतुचितोजग
दाकारचेतनेनैवसर्गसंवित्स्वयमेवगृहीता ॥ यथाअंबुनाद्रवतागृहीतातद्वदित्यर्थः ॥ ६१ ॥ ॥ इतिश्रीवासिष्ठमहारामायणेतात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेसप्तत्रिंश
दुत्तरशततमःसर्गः ॥ १३७ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

मेलनेद्विगुणंविश्वंप्राणिजीवस्वजीवयोः ॥ ऐक्येत्वेकंमयादृष्टमित्यादिमुनिनोच्यते ॥ १ ॥ एवंजाग्रदादितुर्यातावस्थातत्त्वंविचार्यततस्तदनंतरमहंतस्यप्राणिनःसंविदाचिदाभा सलक्षणजीवेनसहैकतामेकीभावंगंतुंप्रवृत्तःयथाचौतंपुष्पितसहकारसंबंधिसौरभंवायुनापद्माकरेनीतंआजेनअब्जोद्भवेनवायुस्थसौरभेणैकतांगंतुंप्रवर्ततेतद्वदित्यर्थः ॥ १ ॥अ हंतस्यप्राणिनश्चेतनंचिदाभासंप्रवेष्टुंतंप्रागुक्तमोजोधातुंयावदत्यजंतावन्मध्येमदीययासमस्तेंद्रियलक्षणयासंविदाबाह्यसंवित्तौबहिर्मुखव्यापारेबलात्प्रवृत्तमित्यर्थः ॥ २ ॥ त तोहंताःबाह्येप्रवृत्ताइंद्रियसंविदःअंतःप्रवणयाप्रयत्नसंविदाबलान्निगृह्णन्सन्क्षणादंतरपिप्रसृतवान् ॥ कथंप्रसृतवांस्तत्रदृष्टांतमाह ॥ तैलबिंदुरिति ॥ ३ ॥ एवमुपाधिव्याप्ति द्वाराअहंयावत्तस्यप्राणिनश्चिदाभाससंविदिमेलनेनपरिणमामितावत्कालमध्येसर्वंभुवनंतद्वासनामद्वासनोभयांतःप्रतिभासाद्विगुणितंस्थितंदृष्टवान् ॥ ४ ॥ द्विगुणितत्त्वमेवप्र

तापसउवाच ॥ ॥ गंतुमेवंविचार्याहंततस्तत्संविदैकताम् ॥ प्रवृत्तश्चौतमाजेनसौरभेणेवसौरभम् ॥ १ ॥ यावत्तच्चेतनंतस्यतमोजो धातुमत्यजम् ॥ प्रवृत्तंबाह्यसंवित्तौसमस्तेंद्रियसंविदा ॥ २ ॥ संविदंसंविदागृह्णंस्तान्बाह्येंतरपिक्षणात् ॥ अहंप्रसृतवांस्तत्रतैलबिंदु रिवांभसि ॥ ३ ॥ तत्संविदितथैवाथयावत्परिणमाम्यहम् ॥ भुवनंदृष्टवांस्तावत्सर्वंद्विगुणितंस्थितम् ॥ ४ ॥ दिशोद्विगुणतांयातास्तपतस्त पनावुभौ ॥ भूमंडलेद्वेसंपन्नेद्वेवैद्यावौसमुत्थिते ॥ ५ ॥ वदनप्रतिबिंबेद्वेदर्पणप्रतिबिंबिते ॥ यथाभातस्तथाभातेमिश्रितेतेजगच्चितम् ॥ ६ ॥ तैलवद्भातिकोशस्थंयच्चेतनतिलद्वये ॥ तस्मिन्जगद्द्वयंतत्तत्तथाभातिविमिश्रितम् ॥ ७ ॥ संविद्द्वितयकोशस्थेमिश्रितेअप्यमिश्रि ते ॥ तेउभेजगतीभातेसमेक्षीरजलेयथा ॥ ८ ॥ निमेषादृष्टमात्रेणसातत्संविन्मयाततः ॥ सकलैवात्मतांनीतापरिमित्येवसंविदा ॥ ९ ॥ ऋतुरर्क्षत्वंतरेणेवसरितेवाल्पिकासरित् ॥ वातेनामोदलेखेवधूमलेखेववार्मुचा ॥ १० ॥ एकत्वेनाशुसंवित्तेर्ययौमेजगदेकताम् ॥ दुर्दृष्टे द्विवपुश्चंद्रःसुदृष्टेरेकतामिव ॥ ११ ॥ ततोमेतच्चितिस्थस्यस्वंविवेकमनुज्झतः ॥ अल्पीभूतःस्वसंकल्पस्तत्संकल्पस्थितिंगतः ॥ १२ ॥ त च्चित्तवृत्त्यैवततोबाह्यमालोकयंस्ततः ॥ अभुंजितद्दिनाचारंतत्तद्धृदयमत्यजन् ॥ १३ ॥

पंचयति ॥ दिशइत्यादिना ॥ ५ ॥ तेचमिश्रितेतेनजगत्चितंद्वैगुण्येनोपचितम ॥ ६ ॥ यच्चेतनतिलद्वयेतैलवद्बुद्धिकोशस्थंभातितस्मिन्संवलितोपाधिस्थचिदाभासद्वयेद्विगुणीभू तंतत्तज्जगत्तथाविमिश्रितंभाति ॥ ७ ॥ वासनानाममिश्रणादमिश्रिते ॥ ८ ॥ सातत्प्राणिचिदाभाससंवित्स्वसंविदापरिमित्यपरिच्छिद्येवआत्मतामेकात्मतांनीताउपाधिद्वये क्यापादनेनेत्यर्थः ॥ ९ ॥ आत्मतानयनेदृष्टांतानाह ॥ ऋतुरिति ॥ १० ॥ तत्रवासनानामप्येकीकारेणसंवित्तेरात्यंतिकैकत्वेनप्राग्द्विगुणीभूतंजगदप्येकतांययौ ॥ ११ ॥ स्वं विवेकंपूर्वापरविमर्शम् ॥ तस्यप्राणिनःसंकल्पानुसारिणींस्थितिंगतःप्राप्तः ॥ १२ ॥ अहंतत्रतच्चित्तवृत्त्यैवतद्भोग्यंबाह्यंशब्दादिविषयमालोकयंस्तद्धृदयमत्यजन्नेवतस्यजाग्रद्व्य वहारलक्षणंदिनाचारंअभुंजिअभुनजंअन्वभवमितियावत् ॥ कर्तरिचिण्छांदसः ॥ १३ ॥

ततःअसौप्राणीअन्नंभुक्त्वापयआपीयउद्भूतश्रमःसन्यदृच्छयैवनिद्राकुलोऽभवत ॥ १४ ॥ निद्रारंभेतत्प्राणःकिमकरोत्तत्राह ॥ प्रस्तुतमिति ॥ १५ ॥ ततःकिमासीत्तदाह ॥ सहेति ॥ १६ ॥ चक्षुरादयोमुद्रिताःसंतोहृदयपद्माकाराआसन् ॥ मृतौमरणेआईपदिवलोष्टरूपालिपिकर्मार्पिताइवचनिर्व्यापाराआसन् ॥ १७ ॥ अहमपितच्चित्तानुविधायित्वात्तच्चित्तवृत्त्यैवसहतदिंद्रियगोलकानित्यक्त्वातत्तन्नाडीमार्गेणतद्धृदयमाविशम् ॥ १८ ॥ तल्पवत्कोमलेओजसिप्रागुक्ततेजोंतस्थेआनंदमयकोशे ॥ १९ ॥ तदानींयदासमानाख्योवायुःसुषिरासुसच्छिद्रास्वपिनाडीषुक्रमेणान्नपानरसविकारैर्बहुलैस्तत्रतत्रनिरुध्यमानोबहिर्ननिर्यात्येवतथापिसूक्ष्मतरयागत्यायातिसंचरतिच ॥ २० ॥ यदैवंसुषुप्तिर्भवतितदायंप्राणःसेंद्रियंचित्तंकिंकरोतितदाह ॥ यदेति ॥ यदैवंभवतितदाप्राणस्तदात्मकोयएकःअद्वैतःसंप्रसन्नआत्मातन्मात्रपरःसन्हृदिपुरीततिप्रविश्यसहस्थितमेतच्चि

ततोयदृच्छयैवासौशनैर्निद्राकुलोभवत् ॥ पद्मःसायमिवापीयपयोभुक्त्वान्नमुद्धमः ॥ १४ ॥ प्रस्तुतंदिग्निकुंजेपुरूपालोकक्रियाकरम् ॥ संजहारवहिश्चित्तंसायमर्कोरुचिंयथा ॥ १५ ॥ सहचित्तेनतास्तस्यसमस्तेंद्रियवृत्तयः ॥ हृत्कोशमविशञ्छन्नाःकूर्मस्येवांगसंधयः ॥ १६ ॥ मुद्रिताहृदयाकारास्तआसंश्चक्षुरादयः ॥ लोष्टरूपामृतावेवलिपिकर्मार्पिताइव ॥ १७ ॥ अहंतच्चित्तवृत्त्यैवसहसोन्नम्यतत्स्थितः ॥ तच्चित्तानुविधायित्वात्तत्तद्धृदयमाविशम् ॥ १८ ॥ संहृत्यवात्यानुभवमंतरेवतदोजसि ॥ क्षणमन्वभवंशून्यंसुषुप्तंतल्पकोमले ॥ १९ ॥ क्रमान्नपानबहुलैर्निविडास्वतिनाडिषु ॥ सुषिरास्वेववावायुर्ननिर्यात्येवयातिच ॥ २० ॥ यदातदात्मकात्मैकपरोहृदिसहस्थितम् ॥ अप्रधानीकरोत्येतच्चित्तंस्वार्थस्वभावतः ॥ २१ ॥ स्वार्थमात्रोद्यतस्यांतःपरकृत्यंनकस्यचित् ॥ कचतिस्वार्थसत्तायामेतदेववपुर्यतः ॥ २२ ॥ ॥ श्रीरामउवाच ॥ ॥ मनःप्राणवशादेवमनुतेकिंमहामुने ॥ स्वरूपंमनसोनास्तितस्मात्तत्केवलंचकिम् ॥ २३ ॥

त्तंग्रसित्वाअप्रधानीकरोतिस्वाधीनीकरोति ॥ तत्कुतः ॥ स्वार्थस्वभावतःस्वःप्रत्यगात्मासएवार्थःपरमार्थःपुरुषार्थश्चतत्स्वभावतः ॥ तत्स्वभावमात्रेणपरिशेषलक्षणसुखविश्रांतौप्रसक्तत्वादित्यर्थः ॥ २१ ॥ अस्तुस्वार्थप्रसक्तस्तथापिमनइंद्रियादिपरकार्यमपिकुतोनकरोतितत्राह ॥ स्वार्थेति ॥ यतोनिरतिशयानंदरूपस्वार्थसत्तारूपायांसुषुप्तौएतदेवनिरतिशयानंदवपुःकचतिनविक्षेपदुःखलेशोपीत्यर्थः ॥ २२ ॥ प्राणश्चित्तंग्रसित्वाअप्रधानीकरोतीतियदुक्तंतत्ररामःशंकते ॥ मनइति ॥ मनश्चित्तमित्येकमेव ॥ हेमहामुने मनइदानीमपिप्राणवशादेवमननादिव्यापारान्करोति ॥ तथाचतद्यदिप्राणेनाप्रधानीकृतंनमनुतेतर्हिइदानीमपिकिंमनुते ॥ यस्मात्प्राणात्पृथक्कृतंमनसःस्वरूपंनास्तितस्मात्केवलंप्राणविनिर्मुक्तंकिंनकिंचिदित्यर्थः ॥ चकारःपूर्वप्रश्नसमुच्चयार्थः ॥ २३ ॥

अधिष्ठानसन्मात्रात्पृथक्करणेदेहप्राणादिजगद्रूपंकिमपिनास्ति ॥ तदपृथक्करणेतुतत्सत्तयासर्वमस्त्येव तत्रप्राणपृथक्कृतंमनएकंनास्तीत्यल्पमिदंत्वयाशंकितमित्याशयेनवसिष्ठ उत्तरमाह ॥ देहइत्यादिना ॥ यतोमनसःकल्पनात्मेदंवपुःअतोमनःपृथक्कृतंवपुर्नास्तीत्यर्थः ॥ २४ ॥ एवंचित्तस्यापिचेत्यार्थनिरूप्यत्वाच्चेत्यार्थाभावेतत्पृथक्कृतंस्वरूपंनास्ती त्यपिसुवचमित्याह ॥ तदिति ॥ पूर्वपूर्वंचेत्यंतन्निरूपकमितिचेत्तत्राप्याह ॥ सर्गादाविति ॥ २५ ॥ ब्रह्मणःसर्वात्मकत्वात्तत्सत्तयासत्त्वोक्तौतुमनआदिसर्ववस्तुअस्त्येवेत्याह ॥ अतइति ॥ २६ ॥ चित्तदेहादिसर्वमस्तियतस्तत्तद्विदांतद्ब्रह्मैव ॥ अब्रह्मविदांतुएतच्चित्तदेहादियादृकूतदस्माकंतत्त्वविदांविषयेन ॥ २७ ॥ हेराजपुत्ररामयथाइदंत्रिजगद्ब्रह्म

श्रीवसिष्ठउवाच ॥ ॥देहएवेहनास्त्येवस्वानुभूतोप्ययंनिजः ॥ मनसःकल्पनात्मेदंवपुःस्वप्नेगिरिर्यथा ॥ २४ ॥ तच्चित्तमपिनास्त्येवचे त्यार्थाभावयोगतः ॥ सर्गादौकारणाभावाद्दृश्यानुत्पत्तिहेतुतः ॥ २५ ॥ अतःसर्वमिदंब्रह्मतच्चसर्वात्मकंयदा ॥ तदाविश्वमिदंविष्वग स्त्येवचयथास्थितम् ॥ २६ ॥ अस्तिचित्तादिदेहादितद्ब्रह्मैवचतद्विदाम् ॥ यादृक्तत्तद्विदामेतदस्माकंविषयेनतत् ॥ २७ ॥ यथेदंत्रिजगद्ब्र ह्मयथेतिविविधात्मकम् ॥ अत्रेमंराजपुत्रत्वंवर्ण्यमानंक्रमंशृणु ॥ २८ ॥ अस्तिचिन्मात्रममलमनंताकाशरूपियत् ॥ सर्वदासर्वरूपा त्मनजगन्नचदृश्यता ॥ २९ ॥ सर्ववित्त्वात्तुतेनेदंमनस्त्वंचेतितंस्वतः ॥ रूपमत्यजताशुद्धंबुद्धमाधिविवर्जितम् ॥ ३० ॥ मनसाकल्पितंतेन यद्बैसरणमात्मनः ॥ तदेतत्प्राणपवनंविद्धिवेद्यविदांवर ॥ ३१ ॥ प्राणतैषायथातेनकल्पितेवानुभूयते ॥ तथैवेंद्रियदेहादिदिक्कालकल नादिच ॥ ३२ ॥ इतिविश्वमिदंविष्वक्चित्तमात्रमखंडितम् ॥ चित्तंतुचित्परंब्रह्मतस्माद्ब्रह्मेदमाततम् ॥ ३३ ॥ अनाकारमनाद्यंतमना भासमनामयम् ॥ शांतंचिन्मात्रसन्मात्रंब्रह्मैवेदंजगद्वपुः ॥ ३४ ॥ सर्वशक्तिपरंब्रह्ममनःशक्त्यायथास्थितम् ॥ यत्रतत्रतथारूपंस्वमेवा नुभवत्यलम् ॥ ३५ ॥ संकल्पात्ममनोब्रह्मसंकल्पयतियद्यथा ॥ तत्तथैवानुभवतिसिद्धमाबालमीदृशम् ॥ ३६ ॥ प्राणीकृतःस्वयमयं ननुचेतसात्मादेहीकृतस्त्रिभुवनीकृतएवनाद्यः ॥ देहीकृतःखवपुरेवगिरीकृतश्चस्वप्नेपुकल्पितपुरीष्वनुभूतमेतत् ॥ ३७ ॥ ॥इ०वा०महा रामायणेवा०दे०मो०नि०उ०अ०वि०श०चित्तसर्वात्मकताप्रतिपादनंनामाष्टत्रिंशदुत्तरशततमःसर्गः ॥ १३८ ॥ ॥ ७ ॥

वतथावर्ण्यमानमध्यारोपादिक्रमंशृण्वित्यर्थः ॥ २८ ॥ तत्राधिष्ठानमादौनिर्दिशति ॥ अस्तीति ॥ २९ ॥ तेनेदंमनस्त्वंप्रथमंचेतितमध्यारोपितम् ॥ तेनचाधिष्ठानस्यनान्य थाभावइत्याह ॥ रूपमिति ॥ ३० ॥ सरणंसंचरणम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ यतःसर्वशक्तिअतःप्राथमिक्यामनःशक्त्यायथास्थितंपूर्वसिद्धमेवेतियत्रतत्रजागरेस्वप्नेत्रास्वमे वतथास्वरूपंजगद्भूतमनुभवति ॥ ३५ ॥ संकल्पात्मकंमनएवकार्यब्रह्मतद्यथाभूरादिलोकानन्यच्चसंकल्पयतितत्तथैवानुभवति ॥ इदंचाबालंबालानभिव्याप्यईदृशंसिद्धम् ॥ ३६ ॥ ननुहेरामखवपुरेवचेतनात्माआद्योनापुरुषःप्रथमंप्राणीप्राणवान्चेतसैवकृतस्तथादेहीकृतस्तथात्रिभुवनीकृतएव ॥ एतत्सर्वंकल्पितपुरीषुस्वस्वदेहेषुसर्वैरपिस्वमेप्व नुभूतंतदेवनिदर्शनीकार्यमित्यर्थः ॥ ३७ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०अष्टत्रिंशदुत्तरशततमःसर्गः ॥ १३८ ॥ ॥ ७ ॥

प्राणादपिहिचित्तस्यप्राधान्यमिहवर्ण्यते ॥ मुनेःसुषुप्तात्स्वप्नात्प्रलयेक्षाचविस्तरात् ॥ १ ॥ चित्तस्यसर्वत्रप्राणाधीनत्वमभ्युपेत्याध्यारोपक्रमेप्राथम्यमात्रेणजाग्रत्स्वप्न
योरुभयप्राधान्यंसुषुप्तौतुप्राणस्यैवेत्याशयेनरामप्रश्नःसमाहितःइदानींप्राणादिसर्वंजगन्निर्माणेचित्तस्यैवस्वातंत्र्यात्प्राधान्यंसुषुप्त्यारंभकालेतुश्रांतत्वाद्व्यापरितुमसमर्थमिति
स्वविश्रांत्यर्थमेवचित्तंप्राणप्राधान्यमंगीकरोतीत्याशयेनतत्समाधानमुपक्रमते ॥ चित्तमेवेत्यादिना ॥ असत्अलीकम् ॥ सत्व्यावहारिकम् ॥ सदसत्प्रातिभासिकम् ॥
तस्यचित्तात्मनः ॥ १ ॥ गतिर्मदीयसर्वव्यवहारनिर्वाहकः ॥ तेनप्राणेनविनानभवामिनतिष्ठामिइत्यपिकल्पितंतेनहेतुनातच्चित्तंतत्परायणंप्राणाधीनमुच्यते ॥ २ ॥ स्वप्नमनो
राज्यादिप्रसिद्धदेहप्राणाभावेपिमनोव्यापारदर्शनाद्विनातेननभवामीतिसंकल्पस्यव्यभिचारमाशंक्याह ॥ अहमिति ॥ ३ ॥ यत्रयत्रतेनमनसाप्राणेनसहवपुःकल्पितंतत्रैतत्

श्रीवसिष्ठउवाच ॥ ॥ चित्तमेवजगत्कर्त्तृसंकल्पयतियद्यथा ॥ असत्सत्सदसच्चैवतत्तथातस्यतिष्ठति ॥ १ ॥ तेनसंकल्पितःप्राणःप्राणो
मेगतिरित्यपि ॥ नभवामिविनानेनतेनतत्तत्परायणम् ॥ २ ॥ अहंकतिपयंकालंननुप्राणविनाकृतः ॥ नभवामिपुनर्नूनंभवाम्येवेतिक
ल्पितम् ॥ ३ ॥ यत्रतेनांगतत्रैतत्प्राणेनाशुक्षणाद्वपुः ॥ उदितंपश्यतिमनोमायापुरमिवाततम् ॥ ४ ॥ नभवाम्येवभूयोहंप्राणदेहविना
कृतः ॥ दृढनिश्चयभागित्थंचितोभवतिनोपुनः ॥ ५ ॥ दोलायितंतुसंदेहाद्दुःखमास्तेकुनिश्चयम् ॥ विकल्पेनैवमस्यैतज्ज्ञानान्नाल्पेनया
स्यति ॥ ६ ॥ यस्यायमहमित्यस्तितस्यतन्नोपशाम्यति ॥ वर्जयित्वात्मविज्ञानंकेनचिन्नामहेतुना ॥ ७ ॥ नान्यत्रप्रथतज्ज्ञानंमोक्षोपाय
विचारणात् ॥ क्वतेतस्मात्प्रयत्नेनमोक्षोपायोविचार्यताम् ॥ ८ ॥ किलाहमिदमित्येवनाविद्याविद्यतेक्वचित् ॥ मोक्षोपायादृतेनैतत्कुत
श्चिदयतेन्यतः ॥ ९ ॥ एवंयन्मनसाभ्यस्तमुपलब्धंतथैवतत् ॥ तेनमेजीवितंप्राणाइतिप्राणेमनःस्थितम् ॥ १० ॥ देहसौम्येस्थितेप्राणेम
नोमननवद्भवेत् ॥ क्षुब्धेप्राणगतंक्षोभंपश्यन्नान्यत्प्रपश्यति ॥ ११ ॥ यदास्वकर्मणिस्पंदेव्यग्रःप्राणोभृशंभवेत् ॥ तदातदीहितव्यग्रःप्रा
णोनात्मोद्यमीभवेत् ॥ १२ ॥

क्षणादुदितंपश्यति ॥ ४ ॥ प्राणदेहकल्पनानंतरमहंभूयःकदापिप्राणदेहाभ्यांविनाकृतोनभवाम्येवेत्यत्यंतदृढनिश्चयवान्जीवोभवतिचितश्चिन्मात्रस्वभावस्यतुदृढनिश्चयवा
न्नोभवति ॥ ५ ॥ अतएवाल्पविचारजात्संदेहप्रायाज्ज्ञानान्ननिस्तारः विपरीतदृढनिश्चयस्ययथार्थदृढनिश्चयंविनाअनिवृत्तेरित्याह ॥ दोलायितमिति ॥ एवंदृढतरमेनद्भ्रां
तिज्ञानंतत्त्वज्ञानादल्पेनविकल्पेननयास्यति ॥ ६ ॥ ७ ॥ दृढतरतत्त्वज्ञानेतत्प्रयत्नएवोपायइत्याह ॥ नान्यत्रेति ॥ ८ ॥ अहमिदमितिद्विविधाविद्याविद्यते ॥ अन्यतोशेषः ॥
अयतेअपगच्छति ॥ ९ ॥ मेममप्राणाएवजीवितंपरमप्रेमविषयंरूपमित्येवंयन्मनसादृढमभ्यस्तमित्येतस्माद्धेतोःप्राणेप्राणाधीनतयामनःस्थितम् ॥ १० ॥ एवंदेहाधीनता
मनसोस्तीत्याह ॥ देहेइति ॥ देहेक्षुब्धेतुतत्क्षोभंप्राणगतंप्रपश्यन्मनःअन्यदात्मतत्त्वविवेकंवानप्रपश्यति ॥ ११ ॥ अतएवप्राणोनिरोधाभ्यासंविनानात्मज्ञानोन्मुखीभवतीत्या
ह ॥ यदेति ॥ तस्यमनसईहितेपुव्यग्रः ॥ १२ ॥

तत्कुतस्तत्राह ॥ एतेइति ॥ १३ ॥ तदपिकुतस्तत्राह ॥ इतीति ॥ इतिएवंपरस्परानुवृत्तिस्वभावेप्राणमनोरूपेणपरमात्मनाआदिसर्गेआत्माचेतितःसंकल्पितः ॥ १४ ॥ परेप देअरूढानामव्युत्पन्नानांमनःप्राणशरीरिणांदेहेषुदेशकालक्रियाद्रव्यैरधिगताव्यवहाराःप्रयांतिप्रवर्त्तंते ॥ १५ ॥ तत्रप्राणमनसीयावत्कालंसाम्यात्स्वंकर्मकुर्वतीतिष्ठतस्तावत्समोव्यवहारोजाग्रदाख्यःप्रवर्तते ॥ यदाप्राणइंद्रियप्रवर्त्तनादुपरतोवैषम्यंभजतेतदाविषमंस्वप्नाख्यमेकंकेवलमानसंव्यवहरणंप्रवर्तते ॥ शांतेचमनसिसर्वविक्षेपशांत्युपलक्षितासुषुप्ततप्रवर्ततइत्यर्थः ॥ १६ ॥ कदापुनर्मनःशांतंभवतितदाह ॥ यदेति ॥ आहारैरन्नरसैरादिपदात्पित्तादिभिश्चनाडीषुरुद्धासुसतीषुपिंडितःप्राणोयदाजडोमंदसंचारोभूत्वा क्वाप्यास्तेतदामनःशांत्यासुषुप्ततोदेति ॥ १७ ॥ क्षुधितादीनामपिश्रमात्सुषुप्तौनिमित्तमाह ॥ क्षीणासुवेति ॥ १८ ॥ मर्दनादिनानाडीमार्दवमपिसुषुप्तिनिमित्तमित्याह ॥ नाडीनामिति ॥ एवंशरक्षतव्रणरुधिरादिपूर्णतापितन्निमित्तमित्याह ॥ पूर्णत्वादिति ॥ १९ ॥ एवंरामप्रश्नोत्तरप्रासंगिकंसमाप्यवसिष्ठःप्रस्तुततापसोक्तिमेवावलंबते ॥ अथेत्यादिना ॥ सप्राणीआहारपरितृप्तिमान्सन्सुषुप्तघननिद्रालुरभवदितिप्रागुक्तानुवादः ॥ २० ॥ गुणीभूतस्त्यक्तस्वातंत्र्यः ॥ २१ ॥ ततःअस्यप्राणिनउदरस्थेअंधसिअन्नेजीर्णेजातेसतिप्राकृतेनैसर्गिकेनाडीमार्गेप्राणेस्पंदितेस्पंदमानेसति ॥ गत्यर्थाकर्मकेतिकर्त्तरिक्तः ॥ तनुतामल्पताम् ॥ २२ ॥ ततस्तदीयस्वप्नप्रपंचोमयादृष्टइत्याह ॥ सुषुप्तेइति ॥ २३ ॥ तच्चभुवनंप्रलयकालक्षुब्धार्णवेभ्यउदितेनमहांभसापूर्यमाणमपश्यम् ॥ तदंभएवविशिनष्टि ॥ विमुक्तेनेवेति ॥ कल्पाभ्रैर्मुसलप्रमाणधारावृष्ट्याविमुक्तेनअधस्त्यक्तेन ॥ इवशब्दोमिथ्यात्वद्योतीसर्वत्रानुवर्त्तनीयः ॥ २४ ॥

एतेहिप्राणमनसीत्वन्योन्यंरथसारथी॥ केनामनानुवर्त्ततेरथसारथिनौमिथः॥१३॥इत्यादिसर्गेस्वात्मैवचेतितःपरमात्मना॥तेनैषाद्यापिनियतिर्नावुधानांनिवर्त्तते॥१४॥देशकालक्रियाद्रव्यैर्मनःप्राणशरीरिणाम्॥ प्रयांत्यधिगतादेहेष्वरूढानांपरेपदे ॥ १५ ॥ स्वंप्राणमनसीसाम्यात्कुर्वतीकर्मतिष्ठतः॥ वैषम्याद्विषमंचैकंशांतेशांतासुषुप्तता॥१६॥यदाहारादिरुद्धासुनाडीषुक्वापिपिंडितः॥शांतमास्तेजडःप्राणस्तदोदेतिसुषुप्तता॥१७॥नाडीष्वन्नावपूर्णासुतथाक्षीणासुवाक्रमात्॥ निःस्पंदस्तिष्ठतिप्राणस्तदोदेतिसुषुप्तता॥१८॥नाडीनांमृदुरूपत्वात्पूर्णत्वाद्वाव्रणोदरे॥क्वापिप्राणेस्थितेलीनेनिःस्पंदास्तेसुषुप्तता ॥ १९ ॥ ॥तापसउवाच॥ ॥अथयस्यप्रविष्टोहंहृदयेसोभवन्निशि॥सुषुप्तघननिद्रालुराहारपरितृप्तिमान्॥२०॥ तेनसार्धमहंतत्रतच्चित्तेनैकतांगतः॥सुषुप्तनिद्रांसुघनांगुणीभूतोनुभूतवान् ॥ २१ ॥ ततोंधस्यस्यजीर्णेतर्नाडीमार्गेस्फुटेस्थिते ॥ प्राकृतेस्पंदितेप्राणेसुषुप्तंतनुतांययौ ॥ २२ ॥ सुषुप्तेतनुतांयातेत्वद्धृदयादिवनिर्गतम् ॥अपश्यमहमत्रैवभुवनंभास्करादिमत् ॥ २३ ॥ तच्चक्षुब्धार्णवोत्थेनपूर्यमाणंमहांभसा॥ विमुक्तेनेवकल्पाभ्रैरभ्रंकपतरंगिणा ॥ २४ ॥

वहंतीयावनालीतल्लक्षणायातृण्यातृणसमूहस्तदाढ्यैःपर्वतैर्व्यासेन ॥ तृणाद्यैर्व्यासेनेतिपाठेस्पष्टम् ॥ उन्मूलिताअगावृक्षाःपर्वताश्चययातथाविधयावात्यययावह्निज्वालयाच पूर्वमेवावदग्धायास्त्रिलोक्याःखंडखंडकैःपूर्णेनेत्युत्तरत्रान्वयः ॥ २५ ॥ खेप्रसिद्धानिदेवासुरादिपुराणितदादिमयैः ॥ २६ ॥ तदाचअहंकस्मिंश्चिदास्पदेदेशेतत्रकस्यांचित्पुरित त्रापिकस्मिंश्चिद्गृहेवध्वाभार्ययासहस्थितोस्मीतिस्वंपश्यामीत्यर्थः ॥ २७ ॥ ईदृशश्चाहंनेनप्रलयांभसापहृतःप्रवाहितः ॥ २८ ॥ तदवस्थंतद्गृहंतन्नगरंचवर्णयति ॥ उह्यमान मिति ॥ क्षयांभोभिःप्रलयजलैः ॥ द्रुमाकारैस्तरंगैः ॥ २९ ॥ वास्तुनिवेश्मभूमौभवावास्तव्याजनाः ॥ ३० ॥ वृत्तिभिर्जलप्रवृत्तिभिर्व्यूढंप्रवाहितम् ॥ जंबालैःपंकैश्चभीष

प्रोद्यत्पर्वतपूरेणमहावर्त्तविराविणा॥ वहद्बनालीतृण्याढ्यैर्व्यासेनोन्मूलितागया॥ २५॥ पूर्वमेवावदग्धायास्त्रिलोक्याःखंडखंडकैः॥
पूर्णेनपरितःप्रौढैःखपुराद्रिमहीमयैः ॥ २६ ॥ अहंतत्रैवपश्यामियावत्कस्मिंश्चिदास्पदे ॥ कस्यांचित्पुरिकस्मिंश्चिद्गृहेवध्वापुरेस्थितः
॥ २७॥ सदारःसहभृत्योहंसपुत्रःसहबांधवः॥ सहभांडोपस्करणःसगृहोपहृतोंभसा॥ २८॥ उह्यमानंक्षयांभोभिस्तद्गृहंतच्चपत्तनम्॥
लंघ्यमानंद्रुमाकारैःपूर्यमाणंचवारिभिः॥ २९ ॥ बृहत्कलकलारावंजंतुमब्धिमिवोद्यतम् ॥ अतिक्षुभितवास्तव्यमनपेक्षितपुत्रकम्
॥ ३०॥ आवर्ततरलाढ्याभिर्वृत्तिभिर्व्यूढमाकुलम्॥ साक्रंदोरस्ताडनोत्कजनजंबालभीषणम्॥ ३१॥ स्फुटत्कुड्यत्रुटत्काष्ठरटच्छंकुकु
तोद्भटम्॥ प्रपतच्छादनच्छत्रगवाक्षस्थांगनामुखम्॥ ३२ ॥ इतियावत्क्षणंपश्यन्नहंतद्भावमागतः॥ परिरोदिमिदीनात्मातावत्तत्स
कलंगृहम्॥ ३३॥ चतुर्द्वाभित्तिभेदेनवृद्धबालांगनान्वितम्॥ जगामशतधावीच्यांशिलायामिवनिर्झरः॥ ३४॥ उह्यमानोहमभवं
ततःप्रलयवारिणि ॥ त्यक्तसर्वकलत्रादिचित्तःप्राणपरायणः ॥ ३५ ॥ क्षिप्तस्तरंगजालेनयोजनाद्योजनव्रजे॥ उह्यमानद्रुमशिखा
ज्वालांतरितजर्जरः॥ ३६॥ काष्ठकुड्यतटीपीठकटुसंघट्टघट्टितः॥ आवर्तनृत्यपातालतलेगत्वोत्थितश्चिरात्॥ ३७॥ चलाचलागमा
पायवलद्गुलगुलारवे॥ जलेवहुलकल्लोलेमग्नोन्मग्नःपुनःपुनः॥ ३८ ॥ संघट्टभग्नशैलेंद्रपंकिलेसलिलेक्षणम्॥ पल्वलेवारणइवमग्नः
सत्पयसोद्धृतः॥ ३९॥ यावदाश्वसिमिक्षिप्रंडिंडीरेचाद्रिखंडके॥ तावदेत्याहतोवेगाद्वैरिणेवातिवारिणा॥ ४०॥ नानावलनकल्लोलज
लजालजुपातदा॥ नतदस्तिनयद्दृष्टंदुःखंदुःखात्मनामया ॥ ४१ ॥

णम् ॥ ३१ ॥ त्रुटद्भिःशंकुभिःकृतउत्कटोरटोध्वनिर्यत्र ॥ ३२ ॥ ३३ ॥ भित्तीनांभेदेनविदारणेन ॥ ३४ ॥ ३५ ॥ उह्यमानायेद्रुमास्तत्रत्यप्रलयवह्निशिखाज्वालातदंतःस्थै र्गमनैर्जर्जरः ॥ अंतरितैरंतरायैरितिवा ॥ ३६ ॥ काष्ठादीनांकटुभिर्दुःसहैःसंघट्टैर्घट्टितआस्फालितः ॥ आवर्त्तनृत्येषुभ्रमणेषुपातालतलेगत्वाचिरादुत्थितः ॥ ३७ ॥ ३८ ॥ म ग्नोभूवम् ॥ तत्रदैवादागतेनसत्पयसापुनरुद्धृतः ॥ ३९ ॥ डिंडीरेफेनपुंजेअद्रिखंडकेचयावदाश्वसिमिविश्रांतिलभेतावदतिवारिणामहातरंगेणहतः ॥ ४० ॥ किंबहुनातदासर्वं दुःखंमयानुभूतमित्याह ॥ नानेति ॥ ४१ ॥

एतस्मिन्नंतरेमयातत्प्राक्तनंस्वंसमाधिमयंरूपंसंस्मृतमितिपरेणसंबंधः ॥ तामरसेक्षणेतिपाठेमुनिवाक्यमनुवदतोवसिष्ठस्यरामसंबोधनम् ॥ ४२ ॥ स्मृतिमेवविडंबयन्नाह ॥ आअहोइत्यादिना ॥ स्मृतावनाङ्कुत्वान्निपातएकाजनाङ्कितिप्रगृह्यता ॥ ४३ ॥ अयमहमितिप्रत्यभिज्ञायाम् ॥ ४४ ॥ वर्त्तमानोयःस्वप्नप्रपंचदृढाभ्यासस्तत्प्रयुक्तमिथ्याज्ञानमयेआत्मनिदेहेकल्लोलैरुह्यमानोप्यहंततस्तत्स्मरणानंतरम् ॥४५॥ वक्ष्यमाणविशेषणाःप्रलयाब्धिविवर्तनाइदंप्रसिद्धंयन्मरुमरीचिवारितत्तयामिथ्यात्वेनेतियावत् ॥४६॥४७॥ ॥४८॥ किमचिंतयस्तदाह ॥ चित्रमिति ॥ अत्रमायामहार्णवेत्रीण्यवस्थात्रयलक्षणानिनेत्राणियस्यतथाविधईश्वरोपिजीवोभूत्वाजीर्णंतृणमिवोह्यते ॥ चित्रमाश्चर्यम् ॥ हतस्यविधेर्दैवस्य ॥ ४९ ॥ यथाप्रातरप्सुरवेःप्रभाःविकसंतिपद्मानिदर्शयंतितथागृहाण्यपिचतुर्धाभित्तिविदारणेनप्रकटाशयताशोभंयथास्यात्तथादर्शयंति ॥ ५० ॥ एताश्चभूरिभिर्भ्रमैरावर्त्तैर्विभ्रमैश्चोपलक्षिताःपरागधवलभ्रमरपंक्तिलक्षणंहारंवहंत्यःपद्मिन्यःमुखकरपादादिपद्मवत्योङ्गदिन्योनद्यएवप्रसिद्धाङ्गदिन्योनसकलाअमलानापिजंगमाख्याःएतास्तुतद्विपरीताः ॥ अतएवतरंगवलनासुचित्रंसमुल्लसंतीचेत्यन्वयः ॥ ५१ ॥ विद्याधरीणांभुजलतावलितेपुइंदुकांतेषुकक्ष्याविभागाइवभासमानामणिजालगवाक्षलक्ष्म्योयेषुतथाविधादेवासुरोरगमहागृहाणांभित्तिभागाःप्रलयांबुभरेसौवर्णनौकागणवद्भ्रमंति ॥ ५२ ॥ संशीर्यमाणमणिगेहगतःशक्रःअत्रास्मिन्प्रलयांबुभरेलग्नःसन्कुंकुमांकमत्तेभकुंभवत्परिणाहिनिविशालेशच्याःपौलोम्याःपयोधरभरेरतिप्रयुक्तेनखेदेनखिन्नःश्रांतःसंस्तदपनयनायजलक्रीडासुखात् ॥ ल्यब्लोपेपंचमी ॥ जलक्रीडासुखमुद्दिश्येवतरंगदोलाःकरोति ॥ ५३ ॥

एतस्मिन्नंतरेतत्रतदातत्तामरसेक्षण ॥ यावज्जीवचिराभ्यासाद्विषादित्वात्सचेतसः ॥ ४२ ॥ प्राक्तनंसंस्मृतंरूपंस्वंसमाधिमयंमया ॥ आअहोनुजगत्यन्यरूपेहंतापसःस्थितः ॥ ४३ ॥ अहंकस्यचिदन्यस्यस्वप्नदृष्टिदिदृक्षया ॥ प्रविष्टोहमयंस्वप्नेपश्यामीमंभ्रमंत्विति ॥ ४४ ॥ वर्त्तमानदृढाभ्यासमिथ्याज्ञानमयात्मनि ॥ कल्लोलैरुह्यमानोपिततोहंसुखितःस्थितः ॥ ४५ ॥ इदंवारितयापश्यंप्रलयाब्धिविवर्त्तनाः ॥ उह्यमानाद्रिनगरग्रामोर्वीखंडपादपाः ॥ ४६ ॥ उह्यमानामराहींद्रनारीनरनभश्चराः ॥ उह्यमानमहारंभलोकपालपुरालयाः ॥ ४७ ॥ अथाहमद्रिमिश्रांबुकल्लोलाद्रिविघट्टनाः ॥ मुहुःपश्यन्जगन्नाशमनंतरमचिंतयम् ॥ ४८ ॥ चित्रमेषत्रिनेत्रोपिजीर्णंतृणमिवार्णवे ॥ उह्यतेहाहतविधेर्नाऽकार्यंनामविद्यते ॥ ४९ ॥ चतुर्धाभित्तिभेदेनप्रकटाशयतामहम् ॥ पद्मानीवगृहाण्यप्सुदर्शयंतिरवेःप्रभाः ॥ ५० ॥ चित्रंतरंगवलनासुसमुल्लसंतिगंधर्वकिंनरनरामरनागनार्यः ॥ भूरिभ्रमैर्भ्रमरहारमिवाङ्गदिन्यःपद्मिन्यएवसकलामलजंगमाख्याः ॥ ५१ ॥ विद्याधरीभुजलतावलितेंदुकांतकक्ष्याविभागमणिजालगवाक्षलक्ष्म्यः ॥ देवासुरोरगमहागृहभित्तिभागाःसौवर्णनौगणवदंबुभरेभ्रमंति ॥ ५२ ॥ मत्तेभकुंभपरिणाहिनिकुंकुमांकेशच्याःपयोधरभरेरतिखेदखिन्नः ॥ लग्नःसुखादिवकरोतितरंगदोलाःसंशीर्यमाणमणिगेहगतोत्रशक्रः ॥ ५३ ॥

१ मूलस्थमहशब्दस्यफलितार्थः

२ तापसस्यव्याधंप्रतिसंबोधनम्

वारीणांवलनैर्वेष्टनैरावलितमंतरिक्षंयस्मिन्कर्मणितथा तथाऋक्षाणिनक्षत्राणितल्लक्षणानवधूतान्कुसुमप्रकरान्किरंतोविक्षिपंतोवाताः पतंतिविबुधमंदिराणिविमानानियत्रत थाविधेरत्नसानौमेरावुद्यानस्यकोटरेगताःप्रविष्टामंगलार्थंसाक्षतेनकुसुमवर्षेणकिरंतोजनाइववांति ॥ हाइतिखेदे ॥५४॥ खेआकाशेक्षुब्धानामद्रिवद्भीमानांभयानकानांजल वीचीनांशिखाभिरीरितमुत्क्षिप्तमेतत् ॥ यंत्रोत्क्षिप्तेनहेमदृषदासदृशमंबुनोरूपंदिविभ्रस्तलोकेदलैःपत्रैरावृतंकर्णिकास्थस्यध्यानैकनिष्ठस्यपरमेष्ठिनआसनभूतंसरोजंप्राप्यव्या वर्त्ततेपरावर्ततेनांतरालेइत्यर्थः ॥५५॥ गजवाज्यादितुल्यदेहाअतिघनघुंघुमघोषभीमाःकनकमयदेवासुरपत्तनान्येवविद्युतोयेषुतथाविधाअमीवीचीचयामेघाइवव्योम्निभ्रमं

हावांतिवारिवलनावलितांतरिक्षमृक्षावधूतकुसुमप्रकरान्किरंतः ॥ वाताःपतद्विबुधमंदिररत्नसानावुद्यानकोटरगताइवसाक्षतेन ॥ ५४ ॥ यंत्रोत्थहेमदृषदासदृशांबुरूपंक्षुब्धाद्रिभीमजलवीचिशिखेरितंखे ॥ व्यावर्त्ततेदिविदलावृतकर्णिकास्थध्यानैकनिष्ठपरमेष्ठि सरोजमेतत् ॥ ५५ ॥ मेघाइवातिघनघुंघुमघोषभीमावीचीचयाःकनकपत्तनविद्युतोमी ॥ व्योम्निभ्रमंतिगजवाजिमृगेंद्रनागवृक्षाद्रि काननमहीतलतुल्यदेहाः ॥५६॥ उह्यमानोदभूर्वीच्यामतसीकुसुमश्रियाम् ॥ यमोप्ययंयमेनेववारिपूरेणनीयते ॥ ५७ ॥ एतेबुडंतिस लिलेखिललोकपालानागानगैश्चनगरैःसहलक्षसंख्याः ॥ लक्ष्म्याकरोदरगुहागतवारिपूरव्यावर्त्तनागुडगुडैरभिलक्ष्यपूराः ॥५८॥ दुर्वा रवारिवलनापरिपूरितेषुपातालभूतलनभस्तलदिक्तटेषु ॥ मत्स्याइवेंद्रयमयक्षसुरासुरौघाःसग्रामपत्तनविमाननगाभ्रमंति ॥ ५९ ॥ उह्यमानस्यकृष्णस्यतनुरेवांबुरूपिणी ॥ मातृजंघेववत्सस्यकर्षबंधनतांगता ॥ ६० ॥ अन्योन्यमावलयतामहोबुडबुडारवः ॥ श्रूय तेदेवदैत्यानांस्वस्त्रीहलहलाकुलः ॥ ६१ ॥ कोलाहलाकुलपुरोत्तमवेगपातविक्षुब्धवारिपटलीवलितांबरासु ॥ दिक्षुभ्रमज्जलदजालघ नास्विवैषसंलक्ष्यतेजलमयःस्फुटकुड्यबंधः ॥ ६२ ॥

नि ॥ ५६ ॥ अतसीकुसुमसदृशश्रियांउह्यमानोदेप्रलयार्णवेभवतीत्युह्यमानोदभूस्तथाविधायांवीच्यांवारिपूरेणायंयमोपियमांतरेणनीयतइवलक्ष्यतइत्यर्थः ॥५७॥ अखिला लोकपालानागाश्चस्वाश्रयैर्मेर्वादिनगैर्नगरैश्चसहबुडंतिमज्जंति ॥ तत्रनिधानादिलक्ष्म्याकरेषुपर्वतोदरगुहासुगतस्यप्रविष्टस्यवारिपूरस्यव्यावर्त्तनार्थंनिर्गच्छतोवायोर्गुडगुडश ब्दैरभिलक्ष्यःपूरःपूर्णंयेषांतथाविधाःसंतः ॥ ५८ ॥ स्पष्टम् ॥ ५९ ॥ दोहनकालेवत्सानामार्भारैर्मातृजंघायांबंधनादितिभावः ॥ ६० ॥ स्वार्थइवरूयर्थइववाहलहलाध्वनि भिराकुलः ॥ ६१ ॥ कोलाहलैराकुलानांदेवदानवपुरोत्तमानांवेगेनपातैर्विक्षुब्धाभिर्वारिपटलीभिर्वलितांतरासुदिक्षुभ्रमद्भिर्जलदजालैर्घनास्विवजलमयःस्फुटकुड्यबंधःसं लक्ष्यते ॥ ६२ ॥

एषसर्वजनप्रसिद्धःसूर्यआवर्तवृत्तिपरिवर्तनयासुष्ठुअधस्तादपनीतः ॥ विधुराजीवनासमर्थाः ॥ ६३ ॥ तेनतादृशेनब्रह्मेंद्रादिपुराणांखंडकैःसंकटस्यांबुनःसंघट्टनेनकटुकुट्टनंप
श्यंतीतिकटुकुट्टनदृशस्तेषुमध्येयेप्राज्ञास्तत्त्वविदस्तेप्रशांतंमृतंअतएवजडंस्वदेहमिहजलेउह्यमानंमानस्तदहंभावस्तदुज्झिताःसंतःशवतयैववहंति ॥ अतोनतेछेदभेदाभिघाता
दिदुःखैर्लिप्यंतइतिभावः ॥ ६४ ॥ कुजडंकौपृथ्व्यांजडमतिमूर्खत्वेनप्रसिद्धमेनंस्त्रीगणंत्रातुंकःसमर्थः ॥ जनताजनसमूहः ॥ ६५॥ पर्वतान्प्रतिघ्नंतिविदारयंतीतिपर्वतप्रतिघाः
सर्पवत्सर्पणंगमनंयेषांतथाविधाविपुलाजलोच्चयाःकल्लोलाःसंसरंति ॥ तेषुकल्लोलेषुदेवपत्तनानिप्रथमंस्ववपुर्नावइवउन्नमय्यनदनंतरमाशुअधोयांतिमज्जंतीतियावत् ॥ ६६॥
त्रिभुवनंकालेननिर्मूलितंसद्वारिविलोडितैर्द्वीपैरद्रींद्रैःसुरैरसुरैरुरगैर्नरैर्नागैर्गजैरप्सरोभिश्चारणैश्चआलूनमूलैःसरसिजैरिवव्याप्तमेकांभोधिलक्षणंसरोभूत्वास्थितम् ॥ कष्टमिति

हाकष्टमेषतरसापयसापनीतआवर्तवृत्तिपरिवर्तनयास्त्वधस्तात् ॥ एतेकुबेरयमनारदवासवाद्याःप्राणान्[illegible]योऽभ्रपटलैर्विधुरास्त्यजंति
॥६३॥ प्राज्ञाःप्रशांतजडदेहमिहोह्यमानंमानोज्झिताःशवतयैवचतद्वहंति॥ ब्रह्मेंद्रविष्णुपुरखंडकसंकटांबुसंघट्टनेनकटुकुट्टनदृक्षुतेन
॥ ६४ ॥ स्त्रीणांगणोर्धपरिपिष्टइहैतिकष्टंकस्त्रातुमेनमपरःकुजडंसमर्थः ॥ नत्यंतकस्यदशनैरभिचर्व्यमाणात्रातुंपरस्परमियंजनता
समर्था॥ ६५॥ पर्वतप्रतिघसर्पसर्पणाःसंसरंतिविपुलाजलोच्चयाः॥ तेषुनावइवदेवपत्तनान्युन्नमय्यवपुराशुयांत्यधः॥६६॥ द्वीपा
द्रींद्रसुरासुरोरगनरैर्नागाप्सरश्चारणैर्व्याप्तंवारिविलोलितैःसरसिजैरालूनमूलैरिव ॥ एकांभोधिसरःस्थितंत्रिभुवनंकालेननिर्मूलितं
कष्टंतेक्वगतामहर्द्धिविभवादेवाजगन्नायकाः॥६७॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०अ०वि०श०जगन्नाशवर्ण
नंनामैकोनचत्वारिंशदुत्तरशततमःसर्गः॥१३९॥ ॥७॥ ॥ व्याधउवाच ॥ ॥ भगवंस्त्वादृशस्तांतामवस्थांचकथंगतः॥
कथंध्यानप्रयोगेणतदानोपशमंगतः॥१॥ मुनिरुवाच॥ ॥ कल्पांतेषुविनश्यंतिनाशैर्नानाविधात्मभिः॥ जगंतिभ्रांतिरूपाणिनभ
स्याभासरूपिभिः॥ २॥ कदाचित्क्रमशोनाशःकल्पांतेसंप्रवर्त्तते ॥ अशंकितंकदाचिद्वागेकधादिग्विकारतः॥ ३॥

खेदे ॥ महांतःऋद्धिविभवायेषांतेजगन्नायकाइंद्रादिदेवाःक्वगताः ॥ ६७ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकोनचत्वारिंशदुत्तरशततमःसर्गः
॥ १३९ ॥ ॥ ७ ॥ ॥ प्रलयाब्धेरपगमोयामेद्विजतयास्थितिः ॥ मुनेप्राणितनोर्वाह्यनिर्गमाद्यत्रवर्ण्यते ॥ १ ॥ अप्यर्थेचकारः ॥ त्वादृशोज्ञानयोगसिद्धोपितां
तांप्राग्वर्णितबहुप्रकारांप्रलयजलप्लवनादिनानाभ्रांत्यवस्थांकथंगतः ॥ ध्यानलक्षणयोगांगप्रयोगेणातीतानागतसर्वदर्शनोपायेनतदासर्वभ्रांत्युपशमंकथंनगतोनप्राप्तः ॥ १ ॥
॥ २ ॥ क्रमिकेप्रलयेयोगेनभूतभाव्यर्थपर्यालोचनावकाशःस्यात् आकस्मिकेतुनतदवकाशोमयालब्धइत्युत्तरमभिप्रेत्यप्रलयद्वैविध्यंदर्शयति ॥ कदाचिदिति ॥ समानांसमु
द्राणांयुगपदेकधाभावादिलक्षणाद्विकारतः ॥ ३ ॥

आद्यंहिरण्यगर्भंप्रतिनिवेदयितुंसुरायावत्सरंतिजिगमिषंतितावज्जलैर्नीताः ॥ तथाचसुराणामपियत्रप्रमादस्तत्रममकाकथेत्यर्थः ॥ ४ ॥ कालप्राबल्याद्बोतदाममध्यानधारणा नस्फूर्त्तेत्याह ॥ अन्यच्चेति ॥ विपिनाधीशहेव्याधसर्वंकपतिनाशयतीतिसर्वंकषःयचकालेयदवश्यंभावितत्तथाभवतीत्यर्थः ॥ ५ ॥ तदेवप्रपंचयति ॥ बलमिति ॥ ६ ॥ किं चेदंस्वभेपरचित्तानुवर्त्तिनामयादृष्टंतत्रचविवेकाप्रसरोमहतामपिप्रसिद्धइतिपरिहारांतरमाह ॥ अन्यच्चेति ॥ इहसर्वजनेकिमप्रसिद्धमिदमित्यर्थः ॥ ७ ॥ स्वप्नसंभ्रमोमात्राउप मानंयस्यतत्स्वप्नसंभ्रममात्रकम् ॥ तर्त्तर्हिएतेनमांप्रतिकथितेनकिंप्रयोजनम् ॥ हेकल्याणकोविदेतिनिरर्थकवाक्यवक्तृतात्वयिनसंभाव्येतिद्योतनायसंबोधनम् ॥८॥ कल्याण

तदाद्यागित्येवयदाविकृतंवारितत्तथा ॥ तेनयावत्सरंत्याद्यंतावन्नीताजलैःसुराः ॥ ४ ॥ अन्यच्चविपिनाधीशकालःसर्वंकपोव्ययम् ॥
यत्रकालेततस्तस्मिंस्त्ववश्यंभावितत्तथा ॥ ५ ॥ बलंबुद्धिश्चतेजश्चक्षयकालउपस्थिते ॥ विपर्यस्यतिसर्वत्रसर्वथामहतामपि ॥ ६ ॥
अन्यच्चविपिनाधीशमयैतत्तववर्णितम् ॥ स्वप्नदृष्टंकिलस्वप्नेकिंनसंभवतीहकिम् ॥ ७ ॥ ॥ व्याधउवाच ॥ ॥ असदेतद्यदिविभोस्वप्न
संभ्रममात्रकम् ॥ कथितेनतदैतेनकोर्थःकल्याणकोविद ॥ ८ ॥ ॥ मुनिरुवाच ॥ ॥ त्वद्बोधनात्मकंकार्यंमहदस्त्यत्रबुद्धिमन् ॥
एतद्भ्रमात्मकंवेत्तिभवान्सत्यंतुमेशृणु ॥ ९ ॥ अनंतरमहंतस्मिन्मत्तेकार्णवरंहसि ॥ जंतारोजःस्थितःस्वप्नेभ्रांतंभ्रांतोव्यलोकयम् ॥ १० ॥ यावत्ससकलंवारिक्वापिनिर्गंतुमुद्यतम् ॥ विक्षुब्धवज्रवित्रस्तसपक्षाद्रींद्रवृंदवत् ॥ ११ ॥ लब्धवानुह्यमानोहंकंचिद्दैववशा
त्तटम् ॥ अवसंतमवष्टभ्यशिखरप्रांतसंनिभम् ॥ १२ ॥ अथक्षणेनसलिलंतदशेषेणनिर्ययौ ॥ वीच्यग्रस्फुटिताकारैर्दिवैस्तारकितांब
रम् ॥ १३ ॥ तारागणैश्चपातालगतैर्मणिमयोदरम् ॥ आवर्त्तपुपरावर्त्तैःस्फारमद्रिजरत्तृणैः ॥ १४ ॥ हेमद्वीपोपमैर्व्याप्तंगीर्वाणपुरमंदि
रैः ॥ भ्रमत्सुरांगनालीननलिनीजालमालितम् ॥ १५ ॥ मध्यात्यमानकल्पाभ्रनीलशैवालजालकम् ॥ विद्युद्गोरोचनांभोदनीलनीरज
निर्भरम् ॥ १६ ॥

कोविदत्वंप्रकटयन्मुनिरुत्तरमाह ॥ त्वद्बोधनात्मकमिति ॥ मोक्षपर्यवसायित्वान्महत् ॥ यतोभवान्वर्णितप्रपंचसाम्यावगमादेतत्परिदृश्यमानमपिभ्रमात्मकंवेत्ति ॥ दृश्यमात्र स्यभ्रमात्मकत्वेसत्यंतुदृग्रूपोभवानेवपरिशिष्यते ॥ अतइममन्वयव्यतिरेकाभ्यामन्यशोधनोपायंकथाशेषंमेमत्तःशृण्वित्यर्थः ॥ ९ ॥ १० ॥ कियत्कालंभ्रांतित्वंव्यलोकय त्तत्राह ॥ यावदिति ॥ सकलैरावर्तकल्लोलादिभिःसहवर्त्तमानंससकलम् ॥ ११ ॥ तंतटमवष्टभ्यआश्रित्यअवसम् ॥ १२ ॥ तत्सलिलंवर्णयति ॥ वीच्यग्रेत्यादिना ॥ वीच्यग्र स्फुटितजलकणाकारैर्महनक्षत्रादिदिवैस्तारकितंसंजाततारकमंबरंयेन ॥ १३ ॥ कैश्चित्तारागणैःपातालगतैर्मणिमयोदरमिव ॥ १४ ॥ सुरांगनालक्षणैर्लीनैर्नलिनीजालैर्मा लितम् ॥ १५ ॥ कल्पाभ्रवन्नीलंशैवालजालकंयत्रविद्युतएवगोरोचनातुल्याःपरागायत्रतथाविधैरंभोदलक्षणैर्नीलनीरजैर्निर्भरमतिशयितम् ॥ १६ ॥

स्फुरत्सीकरैर्नीहारैर्मेघैरद्रिभिश्चकृतंदिक्षुतटंयस्य ॥ १७ ॥ एकार्णवखातमपिवर्णयति ॥ शुष्केत्यादिना ॥ संशीकःशीर्णत्वादयंमंदरोन्योवेतिसंशययोग्योमंदरोयत्र ॥१८॥ ॥ १९ ॥ पंकजैरिवविश्रांतैरुधिरकृदैःपाटलः ॥ २० ॥ स्वमइवमृतैरिभाभैर्याम्यैर्यमवाहनैरुपमहिषैरावृतः ॥ २१ ॥ सन्नोमहाकायगरुडलक्षणोऽमरपर्वतोयत्र ॥ भूजुषाभूमौपतितेनयमदंडेनमत्तइवजलनिरोधाक्षमोमहासेतुर्यत्र ॥ २२ ॥ २३ ॥ सानुंतटगिरेःप्रस्थदेशम् ॥ कस्यचिन्मुनेराश्रमेयदाविश्रांतोस्मितदामांभृशंनिद्राआजगम ॥ २४ ॥ ॥ २५ ॥ अस्यप्राणिनोहृदिस्थितंसानुमहंदृष्टवान् ॥ २६ ॥ २७ ॥ चेतसोमनसःसुषुप्तोत्तरकालप्रवृत्तनिद्रांतस्तादृक्प्राण्योजोंतर्दृष्टसदृशमेवस्वौजसिस्थितोहमपश्यम ॥

स्फुरत्सीकरनीहारमेघाद्रिकृतदिक्तटम्॥ उल्लोलद्वीचिसंदिग्धवहत्कल्पद्रुमव्रजम्॥ १७ ॥ अथैकार्णवखातोसावभवच्छुष्ककोटरः॥ क्वचिद्दलितसत्थ्याद्रिःक्वचित्संशीकमंदरः॥१८॥क्वचित्पंकनिमग्नेंदुयमवासवतक्षकः॥ क्वचित्पंकनिमग्नाधःशाखकल्पद्रुमोत्करः॥१९॥ क्वचित्कमलवत्कीर्णलोकपालशिरःकरः॥ क्वचित्पंकजविश्रांतरुधिरकृदपाटलः ॥ २० ॥ क्वचिदाकंठनिर्मग्नक्वणद्विद्याधरीगणः॥ क्वचित्स्वप्नमृतेभाभयाम्योग्रमहिषावृतः॥२१॥ क्वचित्सन्नमहाकायगरुडामरपर्वतः॥ क्वचिन्मत्तमहासेतुर्यमदंडेनभूजुषा॥ २२ ॥ क्वचित्स्मृतवैरिंचहंससस्मितपंकभूः॥ क्वचित्पंकविनिर्मग्नदेहाधर्मामरवारणः॥ २३ ॥ एतस्मिन्नंतरेतत्रसानुंप्राप्याश्रमेश्रमात्॥ विश्रांतोस्मियदातेनभृशंनिद्राऽऽजगाममाम्॥ २४ ॥ ततःसुषुप्तनिद्रांतस्तयावासनयान्वितः॥ तंतादृगेवकल्पांतमपश्यंस्वौजसिस्थितः॥ २५॥ हृदिस्थितम् ॥ २६ ॥ अथतत्रद्वितीयेह्निभास्करोदयसुंदरम्॥ सस्मृतद्विगुणंदुःखंचिरेणात्राहमाकुलः॥ प्रबुद्धोदृष्टवान्सानुंतमेवास्य लोकाकाशभूशैलंभुवनंदृष्टवानहम् ॥२७॥ द्यौःक्ष्मावायुराकाशंपर्वताःसरितोदिशः॥ इतिमेचेतसोजातंपत्रादिविटपादिव॥ २८॥ जातस्यमेघवर्षाणिषोडशैषपितामम॥ इयंमाततस्तस्मिंस्तथादृष्टेभूतलेतैःपदार्थकैः॥ व्यवहारंप्रवृत्तोहंकिंचिद्विस्मृतधीरितः॥ २९॥ तास्पदंचेदमितिमेप्रतिभोदभूत्॥३०॥ अपश्यंग्रामकंकंचित्कंचिच्चब्राह्मणाश्रमम्॥ किंचिद्बंहंतथाकश्चिद्बंधुःकस्मिंश्चिदाश्रमे॥३१॥ अथमेतिष्ठतःसार्द्धंबंधुभिर्ग्राममंदिरे॥ अहोरात्रेषुगच्छत्सुजाग्रदादींस्तदेवसत्॥ ३२ ॥ ततःकालवशात्तत्रप्राक्तनीबोधधीर्मम॥ विस्मृताताहृशाभ्यासादहोतस्येवमत्स्यता॥३३॥इत्यहंग्रामवास्तव्यःसंपन्नोब्राह्मणस्तदा॥ देहमात्रकबद्धास्थोदूरीकृतविवेकभूः॥३४॥

विस्मृतधियाईरितइतिवा ॥ २९ ॥ तत्रचापूर्वाकाशादेवविटपाच्छाखातःपत्रादीवजातमुत्पन्नम् ॥ २८ ॥ प्रवृत्तःकर्तुमितिशेषः ॥ इतःपूर्वानुभूतविषयेकिंचिद्विस्मृतधीः काचित्सिद्धवत्कारेणव्यवहारप्रतिभास्वस्योदभूदित्याह ॥ जातस्येति ॥ आस्पदंगृहम् ॥३०॥ तत्रकश्चिद्बंधुरभूदितिशेषः ॥ ३१॥ जाग्रदादीनवस्थाभेदाननुभवतइतिशेषः॥ तदेवग्रामादिसत्यथार्थमिवाभवत ॥ ३२ ॥ तस्यप्राग्दामव्यालकटाख्यानेउक्तस्यनिर्वासनस्यापिकटस्यमत्स्यसहवासाभ्यासात्पूर्वबोधविस्मरणेनमत्स्यतेवग्रामवास्तव्यतामसंपन्नेत्यर्थः ॥ ३३ ॥ तामेवप्रपंचयति ॥ इतीत्यादिना ॥ ३४ ॥

वासनामात्रसारःआत्मास्वभावोदेहोवायस्य ॥ ३५ ॥ गृहांगणेसंरोपितानिष्पावादिलतावृतिर्येन ॥ संचिताःअग्निश्चअवनिःक्षेत्रादिभूश्चपश्वादिप्राणिनश्चयेन ॥ नलोपश्छां
दसः ॥३६ ॥ चलेष्वल्पकालजीविपुतुलस्यादिवृक्षकेपुवद्धास्थः लोकानामाचारेपुजनपदग्रामधर्मेपुरतः गृहपार्श्वगतासुआनीलशाद्वलासुस्थलिकासुस्थितिर्यस्य ॥ ३७ ॥
शाकानांशाकैरायतानामारामाणांचरचनापरिष्कारस्तयानीतावासरायेन ॥ सरोंतानांद्वंद्वैकवद्भावः ॥३८॥ इष्टाइष्टकाः ॥ गोमयादीनांकष्टेनसंचयनशीलः ॥ ३९ ॥ आ
त्मवानात्मज्ञः ॥४०॥४१॥ कस्मिंश्चित्कथाप्रसंगेतेनाहंइतिवोधितइतिव्यवहितेनसंबंधः ॥४२॥४३ ॥ तंप्राक्तनप्राणिशरीरप्रवेशादिस्ववृत्तांतम् ॥४४॥ तंप्राणिनंसर्वजगज्जठर

शरीरमात्रात्मवपुर्दारमात्रानुरंजितः॥ वासनामात्रसारात्माधनमात्रैकतत्परः॥ ३५॥जीर्णगोमात्रकधनःसंरोपितलतावृतिः॥ संचि
ताग्न्यवनिप्राणिरुपार्जितकमंडलुः॥३६॥ चलवृक्षकबद्धास्थोलोकाचाररतःसदा॥ गृहपार्श्वगतानीलशाद्वलस्थलिकास्थितिः॥ ३७॥
शाकशाकायतारामरचनानीतवासरः॥सरित्ध्रदनदीतीर्थसरसिस्नानतत्परः॥३८॥गोमयान्नजलांवुग्निकाष्ठेष्टाकष्टसंचयी॥ इदंकार्य
मिदंनेतिपाशाभ्यांविवशीकृतः ॥ ३९ ॥ इतिमेजीवतस्तत्रसंवत्सरशतंगतम्॥ एकदाभ्यागतोदूरात्तापसोतिथिरात्मवान्॥ ४० ॥ पू
जितोसौविश्रामामद्गृहेस्नानपूर्वकम् ॥ भुक्तवाञ्छयनेस्थित्वारात्रौवर्णितवान्कथाम्॥ ४१ ॥ नानादिग्देशशैलोर्वीव्यवहारमनोह
रे॥ कथाप्रसंगेकस्मिंश्चिन्नानाविधरसाश्रये॥ ४२॥ सर्वंचिन्मात्रमेवेदमनंतमविकारिच॥ जगत्तयेवकचतियथास्थितमपिस्थितम्
॥ ४३ ॥ इत्यहंवोधितस्तेनवोधैकघनतांगतः ॥ स्मृतवांस्तमशेपेणवृत्तांतंधारणावशात्॥ ४४ ॥ स्मृतवानात्मवृत्तांतंयस्याहमुदरेस्थि
तः॥ तंविराड्रूपमाशंक्यतस्मान्निर्गंतुमुद्यतः॥ ४५॥ तदास्यंनिर्गमद्वारमथजानामिनोयदा॥ विस्तीर्णेभुवनेयस्मिन्भूम्यव्ध्यद्रिसरिद्दि
ते॥ ४६ ॥ तदातमत्यजन्नेवदेशंवंधुजनावृतम्॥ तस्यप्राणंप्रविष्टोहंनिर्गंतुंपवनंवहिः॥ ४७॥ इहस्थस्यविराजोस्यवाह्यमाभ्यंतरंत
था॥ अन्यजंसर्वमीक्षेहमितितिनिर्णीयतादृशम्॥ ४८ ॥ धारणांसंविदावद्धाप्रदेशंस्वंतमत्यजम्॥ तत्प्राणैःसहनिर्यातआमोदःकुसुमा
दिव ॥ ४९ ॥ पवनस्कंधमासाद्यप्राप्यतन्मुखकोटरम् ॥ वहिर्वातरथेनाहंनिर्गतोदृष्टवान्पुरः॥ ५० ॥ यावत्तथैवमदेहोवद्धपद्मासनः
स्थितः॥ क्वापिमुन्याश्रमःशिष्यैःपालितोगिरिकंदरे॥ ५१ ॥पुरोमेतिष्ठतांतपांमत्संरक्षणकर्मणाम् ॥ मुहूर्तमात्रंचगतःकालश्चांतेनि
वासिनाम्॥५२॥ हृदयंसंप्रविष्टोसौयस्याहंसपुमानपि॥ पृष्ठेनोत्सवलब्धेनशेतेतृप्तोंधसासुखम् ॥५३॥

त्वाद्विराड्रूपमाशंक्यतस्मात्तदुदरात्॥४५॥ यस्मिन्प्राण्युदरेविस्तीर्णेभुवनेभ्रमन्नहंयदानिगमद्वारंतदास्यंनजानामितदातंदेशमत्यजन्नेवतस्यप्राणंपवनंवहिर्निर्गंतुंप्रविष्टइतिपरेण
सहान्वयः ॥ ४६॥४७ ॥ इहस्थस्यविराजोऽस्यप्राणिनोवाह्यमन्यजंविराडंतरोत्पन्नमाभ्यंतरंचेतिसर्वमीक्षेइतिवुद्ध्यातादृशंतदनुकूलांतत्प्राणाहंतावधारणांवद्धातंप्रदेशमत्यज
मितिपरेणान्वयः ॥ ४८ ॥ ४९ ॥ वातलक्षणेनरथेनवहिर्निर्गतःसन्पुरोवक्ष्यमाणंदृष्टवान् ॥ ५० ॥ वाह्येक्वापिगिरिकंदरेमुन्याश्रमोस्तितत्रमद्देहोयावत्सकलस्तथाप्रागनुभूतव
देवबद्धपद्मासनःस्थितः॥ ५१ ॥ ५२ ॥ सप्राणीअंतेवासीपुमान्ग्रामेकचिदुत्सवेलब्धेनअंधसामृष्टान्नेनतृप्तःसन्उत्तानःपृष्ठेनसुखंशेते ॥ ५३ ॥

॥ ५४ ॥ तंप्रागनुभूतमोजःप्रदेशमानंदमयादिकोशत्रयप्रदेशंयावत्प्राप्तोस्मितावत्तत्रयुगस्यांतःसंप्रवृत्तइतिपरेणान्वयः ॥ ५५ ॥ संस्थयाधर्माधर्मव्यवस्थयासहविपर्यासमागतंप्राप्तम् ॥ ५६ ॥ भुवनविपर्यासमेवप्रपंचयति ॥ अन्यइति ॥ ५७ ॥ व्यूह्यसंकाल्य ॥ ५८ ॥ यावत्कृत्स्नम् ॥ ५९॥ शीतेनआश्यानंघनीभूतंयदंबुतद्गलितुंप्रवृत्ताः ॥६०॥ ॥ ६१ ॥ पुरोदिशिस्थिताउत्थिताः ॥ ६२ ॥ प्रथमंपातालतस्ततोभूतलतोऽथानंतरंदिग्भ्योज्वालाविनिर्गंतुंप्रवृत्ताः ॥ विश्वमाशुएकमेवज्वालामयंमंडलंसत्संध्याभ्रवदारक्तंबभूव ॥ ६३ ॥ तस्मिन्ज्वालामयेसद्मनिहेमपद्मकोशेभ्रमद्भृंगइवप्रविष्टोहंशलभक्रमेणप्रसक्तमपिदाहविकारदुःखंनैवाप्तवान् ॥ आतिवाहिकदेहमात्रनिश्चयादितिभावः॥६४॥

तदाश्चर्यंमयादृष्ट्वानोक्तंकिंचनकस्यचित् ॥ पुनस्तस्यैवहृदयंप्रविष्टःकौतुकादहम् ॥५४॥ प्राप्तोस्म्योजःप्रदेशंतंतस्यतस्मिन्हृदंतरे ॥ अवेक्षितुंस्वबंधूंस्तान्व्याप्तोवासनयातया ॥५५॥ यावत्तत्रयुगस्यांतःसंप्रवृत्तोतिदारुणः ॥ भुवनंतद्विपर्यासमागतंसहसंस्थया ॥५६॥ अन्यएवाचलास्तत्रवसुधान्याचसंस्थिता ॥ अन्यएवककुब्भेदस्तथान्याभुवनस्थितिः ॥५७॥ तेबंधवःसचग्रामःसभूभागःसदिक्तटः ॥ नजानेक्वगतंसर्वंव्यूह्यनीतमिवानिलैः ॥५८॥ तदापश्यामिभुवनंयावदन्यदवस्थितम् ॥ अपूर्वसंनिवेशंतज्जगदन्यदिवोदितम् ॥ ५९॥ तपंतिद्वादशादित्याःप्रज्वलंतिदिशोदश ॥ शीताश्यानांबुवच्छैलाःप्रवृत्तागलितुंबलात् ॥६०॥ अद्रावद्रौदिशिदिशिज्वलंतिवनपंक्तयः ॥ दग्धाःस्मृतिपदंयाताःसमस्तारत्नभूतयः ॥६१॥ सर्वएवाब्धयःशुष्कामहावाताःपुरःस्थिताः ॥ अंगारराशितांयातंभूमंडलमशेषतः ॥६२ पातालतोभूतलतोथदिग्भ्योज्वालाविनिर्गंतुमनुप्रवृत्ताः ॥ संध्याभ्रवच्चाशुबभूवविश्वंज्वालामयंमंडलमेकमेव ॥ ६३ ॥ ज्वालामयेसद्मनिहेमपद्मकोशेभ्रमद्भृंगइवप्रविष्टः ॥ ततोहमाराच्छलभक्रमेणनचाप्तवान्दाहविकारदुःखम् ॥ ६४ ॥ ज्वालामयेसाधुमहांबुवाहेभ्रमाम्यहंविद्युदिवानिलात्मा ॥ ज्वालापरिस्पंदविलोलवर्ष्मास्थलाब्जखंडभ्रमरोपमश्रीः ॥ ६५ ॥ ॥इ०वा०वा०दे०मो०नि०उ०अ०वि०श०हृदयकल्पनावर्णनंनामचत्वारिंशदुत्तरशततमःसर्गः ॥ १४० ॥ ॥७॥ ॥ मुनिरुवाच ॥ तत्रदंदह्यमानोपिनाभवंदुःखभागहम् ॥ स्वप्नेस्वप्नोयमित्येपजानन्नग्नावपिच्युतः ॥ १ ॥ ज्वालाजालनवोड्डीतिमंडलैरखिलैर्नभः ॥ अलातचक्रवच्चारुकेवलंभ्रांतवानहम् ॥ २॥ तंदवाग्निमहंयावत्तत्ववित्त्वादखिन्नधीः ॥ विचारयाम्याखिन्नात्मामारुतस्तावदाययौ ॥ ३ ॥

अनिलधारणयाअनिलात्मावायुप्रायोहंतस्मिन्ज्वालामयेमहांबुवाहेविद्युदिवसाधुभ्रमामि ॥ ज्वालापरिस्पंदेषुविलोलंवर्ष्मयस्यतथाविधःसन्स्थलाब्जखंडेषुभ्रमंतोयेभ्रमरास्तदुपमश्रीःसंवृत्तइत्यर्थः ॥ ६५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०चत्वारिंशदुत्तरशततमःसर्गः ॥ १४० ॥ ॥७॥ ॥ वह्निज्वालाकुलेलोकेवायोश्चंडस्यनिर्गमः ॥ विक्षिप्तांगारवर्षाढ्यज्वालामेघोत्रवर्ण्यते ॥ १ ॥ दंदह्यमानःसर्वतोदहनव्याप्तोपि ॥ १ ॥ ज्वालाजालानांनवैःउड्डीतीनामुड्डयनानांमंडलैरहमखिलंनभःअलातचक्रवद्भ्रांतवान् ॥ २ ॥ भ्रमणैराखिन्नात्माईषच्छ्रांतमनाः ॥ ३ ॥

तमेवमारुतंवर्णयति ॥ सील्कारेत्यादिना ॥ सील्कारमग्निफूल्कारोपमंध्वनिविशेषम् ॥ उह्यमानैःशिलोल्मुकरजोभस्मादिभिर्जगत्पदार्थैःपरावृतोव्याप्तः ॥ ४ ॥ व्यूढैःप्रवाहितैरा
वृत्तिभिःपरिवर्त्तमानैःसूर्यैर्द्वादशादित्यैःसहविमिश्राणिअलातचक्राणियेन ॥ ५॥ ज्वालालक्षणैःसंध्याभ्रनिवहैःप्रवर्तितानिबृहंत्यग्निनदीशतानियेन ॥ शैलेभ्योपिद्विगुणानिभू
खंडालोटानिदानवामराणांपत्तनानिचयस्मिन् ॥ ६ ॥ अंबरकुक्षिषुभ्रांतैर्भूतैर्द्विगुणिताःप्रागुक्तनदीशतपात्रौघायेन ॥ ७ ॥ द्विगुणाअग्निशिखाएवज्वालासंध्याभ्रजललवायस्मिन् ॥ पतदंगारलक्षणैस्तदीयैर्जलधारौघैरग्निकणलक्षणसीकरैश्चदंतुरउन्नतदंतइवस्थितः ॥ ८ ॥ पूतानांनिरस्तभस्मनामंगाराणामुग्रामंडल्योयासुतथाविधास्तदीयाअलात
विद्युतोधुन्वन्कंपयन् ॥ स्थगयन्नाच्छादयन् ॥ ९ ॥ भूमेःसकाशात्तथाव्योम्नोदिङ्मुखेभ्यश्चतेवर्णितप्रकाराज्ज्वालालक्षणाःसंध्यावारिदानिर्गताः ॥ यैर्वारिदैर्व्योमौकोभि
र्देवादिभिःसहितासव्योमौकाःसमानांलोकानांसमाहारःसप्तलोकीज्वालाशैलसंपिंडमात्रंभूत्वासंस्थिता ॥ १० ॥ सप्राग्वर्णितश्चंडमारुतस्तदाहरःकालाग्निरुद्रवन्नृत्यलीलाःक

सील्कारमतिगंभीरंदधन्मेघरवोपमम् ॥ जगत्पदार्थैरावृत्तैरुह्यमानैःपरावृतः ॥ ४ ॥ बृहद्भिर्घुंघुमावेगैर्वनेद्विगुणितांबुदः ॥ सूर्यैरावृत्तिभिर्व्यूढैर्विमिश्रालातचक्रकः ॥ ५ ॥ ज्वालासंध्याभ्रनिवहैर्बृहदग्निनदीशतः ॥ शैलद्विगुणभूखंडदानवामरपत्तनः ॥ ६ ॥ भूतैर्द्विगुणपात्रौघोभ्रांतैरंबरकुक्षिषु ॥ दग्धादग्धाभिरप्यर्द्धदग्धाभिरितरेतरम् ॥ ७ ॥ पतंतीभिःसुरस्त्रीभिर्द्विगुणाग्निशिखालवः ॥ पतदंगारधारौघकणसीकरदंतुरः ॥ ८ ॥ अलातविद्युतोधुन्वन्पूतांगाराग्रमंडलीः ॥ धूमांधकारैःस्थगयन्म्लानमूर्ध्वंदिशोमुखम् ॥ ९ ॥ भूमेर्व्योम्नोदिङ्मुखेभ्यःसमंताज्ज्वालासंध्यावारिदानिर्गतास्ते ॥ यैस्तैर्ज्वालाशैलसंपिंडमात्रंसव्योमौकाःसंस्थितासप्तलोकी ॥ १० ॥ क्वापिप्रोत्फालकीर्णानलकणकपिलप्रोल्लसन्मूर्द्धजालिःक्वापिप्रोड्डीनकुड्यःकटुरटनपटुर्भस्मसंपिंडपांडुः ॥ क्वापिज्वालापटालींपरिदधदभितःसंपतंतींगृहीतांरौद्रःकर्तुंप्रवृत्तोहरइवसतदामारुतोनृत्यलीलाः ॥ ११ ॥ ॥इ० वा० वा० दे० मो० नि० उ० अ० वि० श० कल्पांतवर्णनंनामैकचत्वारिंशदुत्तरशततमःसर्गः ॥ १४१ ॥ ॥ ५ ॥ ॥मुनिरुवाच॥ ॥ वर्त्तमानेतदातास्मिन्कष्टेसंभ्रांतसंभ्रमे ॥ उह्यमानोहमत्यंतंखेदमभ्यागताभवम् ॥ १ ॥ अचिंतयंतत्स्वप्नोयंपरस्यहृदयेमम ॥ तदतःपरिनिर्वामिदुःखंपश्यामिकिंमुधा ॥ २ ॥ ॥व्याधउवाच॥ किंस्वित्स्यात्स्वप्नइत्येवकिलसंदेहशांतये ॥ प्रविष्टोहृदयंतस्यकिंतंनिर्णीतवानसि ॥ ३ ॥ किमेतद्भवताहृष्टंहृदयेक्कमहार्णवः ॥ जठरकल्पवातःकिंहृदिकल्पानलःकथम् ॥ ४ ॥

र्त्तुंप्रवृत्तः ॥ कीदृशःसन् ॥ क्वापिऊर्ध्वदेशेप्रोत्फालैरुच्छलनैःकीर्णानलकणाएवकपिलाःप्रोल्लसंत्योमूर्द्धजाना
मालयोयस्य ॥ क्वाप्यधोभागेपादाघातेनेवप्रोड्डीनानिकुड्यानियेन ॥ कटुदुःसहंयद्रटनंतत्रपटुः भस्मभिःसंपिंडितान्यवगुंठितान्यंगानियस्य क्वापिमध्यभागेअभितःसंपतंतीं
ज्वालापटालीमुपसंगृहीतांपरिदधत्ववसानइत्येवंविधःसन्नित्यर्थः ॥ विशेषणान्युभयत्रयोज्यानि ॥ ११ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएक
चत्वारिंशदुत्तरशततमःसर्गः ॥ १४१ ॥ ॥ ५ ॥ ॥ इहस्वमादिजगतस्तत्त्वंब्रह्मेतिकीर्त्यते ॥ तत्त्वदृष्ट्याजगद्बीजकर्माभावश्चसाध्यते ॥ १ ॥ खेदंश्रमप्रयुक्तंदैन्यम् ॥ १ ॥ तत्ततःखेदादचिंतयम् ॥ मुधाडुःस्वमदुःखंकिंपश्यामि ॥ अतःपरित्यज्यैतद्दर्शनंजागरणेननिर्वामिनिर्वृतिंलभेयेत्यर्थः ॥ २ ॥ स्वमस्यतत्त्वंकिंस्यादितिनिर्णयायपरस्य
मंद्रष्टुंपरकायेप्रविष्टस्त्वंकिंनिर्णीयतद्दर्शनान्निवृत्तोभूरितिव्याधःपृच्छति ॥ किंस्विदिति ॥ तंस्वमंतस्वतःकिंनिर्णीतवानसि ॥ ३ ॥ परहृदयेदृष्टामहार्णवादयःकिम् ॥ ४ ॥

त्वदिजगन्नामकथंसंभवतीत्येतस्ययथास्थितंतत्त्वंस्वनिर्णीतंकथयेत्यर्थः ॥ ५ ॥ एवंस्वपरस्वमादिदर्शनेनान्वयव्यतिरेकाभ्यांपरीक्षितस्यशब्दार्थरूपस्यजगतोबाधदृशाचैका
लिकासत्वमेवतत्त्वम् परिशिष्टाधिष्ठानब्रह्मदृशातुतदेवतत्त्वमित्याशयेनमुनिरुत्तरमाह ॥ अकारणत्वादित्यादिना ॥ अकारणत्वादसंभवत्कारणकत्वात् ॥ तथाहि ॥ कूटस्थं
वाकारणंविकारिवा॥ नतावत्कूटस्थम्॥अकुर्वतःकारकत्वायोगेनकार्यसंगानर्हत्वेनउदासीनव्यावृत्तरूपानिरूपणेनस्वभावांतरानुपजननेनचकारणत्वासंभवात्॥ विकारिणश्चा
निर्णीतनानांशघटितस्यकोंशःकारणंस्यात् ॥ मृत्पिंडेहिघटादिविकारिणिकिमपयन्पिंडाकारःकारणमुतोपयन्घटाकारउतोभयानुगतोमृदाद्याकारः ॥ नाद्यः ॥ स्वत्राणेप्यस
मर्थस्यकार्यकालास्थायिनःकार्यार्थव्यापारानाधारस्यचतस्यकारणत्वसंभवनायोगात् ॥ नद्वितीयः ॥ कार्यस्यान्यस्यानिरूपणात् ॥ नतृतीयः ॥ तस्याकुर्वद्रूपत्वेकौट
स्थ्यात्कुर्वद्रूपत्वेघटानंत्यप्रसंगात्समर्थस्यक्षेपायोगेनयुगपत्सर्वकार्यप्रसंगात्पिंडघटकपालचूर्णादियौगपद्यापत्तेः ॥ सहकार्यंतरसंबंधव्यवस्थयाव्यवस्थेतिचेन्न ॥ तत्संबंधस्य
मृत्कार्यत्वेतदानीमेवापाद्यमानत्वादन्यकार्यत्वेतत्रापिसर्वतत्कार्ययौगपद्यापादनेसंबंधस्यापितदाआपादनात्तृतीयसहकार्युक्तौतत्राप्येतद्दोषानिर्मोक्षाद्विनिगमनाविरहेणयुगप

द्यौःक्षमावायुराकाशंपर्वताःसरितोदिशः॥ कथंत्वदिजगन्नामकथयेतियथास्थितम्॥५॥ ॥मुनिरुवाच॥ ॥अकारणत्वात्सर्गा
दावेवानुत्पादतःस्फुटात्॥ अज्ञातौसर्गशब्दार्थावेवनस्तोमनागपि॥६॥ तच्चैतौसर्गशब्दार्थौत्वज्ञातौपरमात्मनि॥ यतस्तत्पदमज्ञान
ज्ञानात्मकमनामयम्॥७॥ अतःसुभगसिद्धांतेत्वत्पक्षेबोधमागते॥ मौर्ख्यशांतावनाद्यंतेपदेपरमपावने॥८॥ वच्मीदंमूढसंवित्तौ
यदिदंतन्नवेद्म्यहम्॥ वस्त्ववस्तुजमाभातंबोधमात्रमिदंततम्॥९॥ क्वशरीरंक्वहृदयंक्वस्वप्नःक्वजलादि च ॥ क्वबोधोबोधविच्छित्तिः
क्वजन्ममरणादि च॥१०॥ स्वच्छंचिन्मात्रमस्तीहतन्नामयदपेक्षया॥ स्थूलमेवखमप्यद्रिरणूनांनिकटेयथा॥११॥ स्वभावात्सचिदा
काशःकिंचिच्चेततिचिंतया[1]॥ खमेववपुराकाशंयत्तद्वेत्तिजगत्तया॥१२॥ यथास्वप्नेपुरतयाचिदेवाभातिकेवला॥ नतुकिंचित्पुराद्येवं
जगच्चिन्मात्रमेवखे ॥ १३॥ इदंशांतमनाभातमनन्यन्नैतदात्मनि॥ चितिदृशौतमसिखेचक्रकादीवभातिते ॥ १४॥

त्सर्वोत्पादस्यपरस्परप्रतिबंधेनकस्याप्यनुत्पादस्यवाप्रसंगात् ॥ तस्मात्सर्गादेरकारणपक्षस्यैवपरिशेषात्सर्गशब्दार्थौमनागपिनस्तएवेतितत्त्वंनिर्णीतमित्यर्थः ॥ ६॥ कथंतर्हिलो
केसर्गशब्दार्थौप्रसिद्धौतत्राह ॥ तच्चैताविति ॥ एतौसर्गशब्दार्थौपरमात्मनितत्त्वतोज्ञातावेवप्रसिद्धौ तदज्ञातंपरमात्मरूपंह्येतौ ॥ नन्वज्ञातौचेदप्रसिद्धावेवेतिस्यान्नतुप्रसिद्धावि
तितत्राह ॥ यतइति ॥ भवेदेतदेवंयद्यज्ञानमात्रंजगत्स्यात् यतस्तुतदज्ञातमात्मपदंशबलत्वादज्ञानज्ञानात्मकम् ॥ तत्राज्ञानांशमादायाज्ञातौज्ञानांशमादायप्रसिद्धौचस्तुवचा
वित्यर्थः ॥ ७॥ यदिप्रसिद्धौतर्हिसर्गशब्दार्थावेवनस्तइतिकथंवक्षितत्राह ॥ अतइति ॥ हेसुभगत्वत्पक्षेत्वदभिप्रेतेस्वमादिजगत्तत्त्वेबोधमागतेसतिमौर्ख्यस्याज्ञानस्यशांतौसत्यां
परमसिद्धांतेपरमपावनेपदेस्थित्वाइदंसर्गशब्दार्थावेवनस्तइतिवाक्यंवच्मि ॥ मूढानांसंवित्तौयदिदंशब्दार्थसत्त्वंतदहमत्यंतासंभवान्नवेद्मीत्युत्तरत्रान्वयः ॥ ८ ॥ ९ ॥ सिद्धांते
तुशरीरादिप्रसिद्धिरेवनास्तीत्याह ॥ क्वेति ॥ १० ॥ किंतर्ह्यस्तितदाह ॥ स्वच्छमिति ॥ ११ ॥ ईश्वरस्यतत्त्वविदांचजगद्दर्शनंकीदृशंतत्राह ॥ स्वभावादिति ॥ १२ ॥ १३ ॥
व्याधदृशातर्हिकथंभातितदाह ॥ चितीति ॥ चितिचिद्रूपायांदृशौचक्षुषितमसिअज्ञानलक्षणतिमिररोगेसतिखेचक्रकादियथाभासतेतद्वत्तेभातीत्यर्थः ॥ १४ ॥

---

1 चितयइतिक्वचित्पाठः

स्वदृशात्वाह ॥ अस्माकमिति ॥ असत्प्रातिभासिकंसत्व्यावहारिकंखंशून्यंकेवलंचिद्व्योमभातीत्यनुवर्त्तते ॥ १५ ॥ येनहेतुनाअकारणकवद्भातितत्केवलस्त्रिपुटीशून्यःशुद्धो द्रष्टैवतिस्वप्नेनिर्णीतंतेनकारणेनअत्रजाग्रत्यपिकारणाभावःप्रागुपपादितइतिद्रष्ट्रादित्रिपुटीनास्त्येवेत्यर्थः ॥ १६ ॥ स्वेनानुभूतमपिकुमारीसुखवदवाच्यंवक्तुमशक्यम् ॥ १७ ॥ द्वैतैक्यवर्जितस्यद्वैतैक्यात्मनास्थितिःकदृष्टांतत्राह ॥ एकइति॥कल्पःप्रलयःप्रकाशःसर्गश्चेत्युभयात्मकोयथा ॥ यथावाबीजमंकुरकांडवृक्षशाखापल्लवफलपुष्पांतंस्वयमेवाव तिष्ठतेतथाब्रह्मसर्वात्मकमित्यर्थः ॥ १८ ॥ तर्हिब्रह्मद्वैतैक्यवदेवनतुतद्वर्जितंतत्राह ॥ यदिति ॥ यदिपरमार्थतोद्वैतैक्यवत्स्यात्तर्हिसर्वान्प्रतितथास्यान्नतुतथासर्वैर्दृश्यतइतिभावः ॥ १९ ॥ यथाआत्माचिन्मात्रखमेवसन्स्वप्नेजाग्रदिवभातितथाजाग्रन्मयेस्वप्नेपिभातिनत्वणुमात्रमपिस्वमाज्जाग्रत्यन्यथाभातीतितदेवेदानीमपितस्याद्वयत्वमेवेत्यर्थः॥२०॥

अस्माकंतुनचाभानंनचासन्नचसन्नखम् ॥ अनाकारमनाद्यंतमेकंचिद्व्योमकेवलम् ॥ १५ ॥ भात्यकारणकंस्वप्नेशुद्धोद्रष्टैवकेवलः ॥ तेनात्रकारणाभावोनद्रष्टास्तिनदर्शनम् ॥ १६ ॥ शुद्धंकिमपितद्भातिस्वानुभूतमपिस्फुटम् ॥ यदवाच्यमनाद्यंतमेकंद्वैतैक्यवर्जितम् ॥ १७ ॥ एकःकालोयथाकल्पःप्रकाशश्चोभयात्मकः ॥ बीजंवाफलपुष्पांतंब्रह्मसर्वात्मकंतथा ॥ १८ ॥ यदन्यस्यमहत्कुड्यंतदन्यस्यामलं नभः ॥ दृष्टमेतत्स्थिरस्वप्नसंकल्पभ्रमभूमिषु ॥ १९ ॥ स्वच्छंतदातदात्मैकंभातिचिन्मात्रखंयथा ॥ स्वप्नेजागृतिवत्तद्वज्जाग्रत्स्वप्नेपिनान्य था ॥ २० ॥ अदृश्येपवनेयद्वद्दृश्यंसौरभंस्थितम् ॥ चिन्मात्रेऽप्रतिघेतद्वज्जगदप्रतिघंस्थितम् ॥ २१ ॥ समस्तमननत्यागेयोसिसोसिनि रामयः ॥ बहिरंतरनंतात्मासुस्थितोपिनिरंतरम् ॥ २२ ॥ ॥ व्याधउवाच ॥ ॥ भगवन्प्राक्तनंकर्मकेषामिहहिविद्यते ॥ केषांनविद्यतेतद्वद्विनापिभवतःकथम् ॥ २३ ॥ ॥ मुनिरुवाच ॥ ॥ सर्गादिषुस्वयंभांतिब्रह्माद्यायेस्वयंभुवः ॥ विज्ञप्तिमात्रदेहास्ते नतेषांजन्मकर्मणी ॥ २४ ॥

ननुप्रलयसुषुप्त्योरस्यजगन्नस्थितमितिकथंसदैकस्वभावोयमित्याशंक्यनादर्शनमात्रेणजगत्तदानस्थितमितिनिर्णेतुंशक्यमित्याशयेनाह ॥ अदृश्येइति ॥ चक्षुरदृश्येपिपवने नादृशंसौरभंस्थितमितियथाघ्राणजानुभवेननिर्णीयतेतथासुषुप्तप्रलयानुभविपुरुषादृश्यमपिजगत्सुरूपांतरदृशास्थितमेवेत्यर्थः ॥ २१ ॥ मनोमननत्यागेनदर्शनेनुकदापिकापि जगन्नासीदस्तिभविष्यतीतिनिरंतरमेवात्माअद्वयःसुस्थितइत्याह ॥ समस्तेति ॥ २२ ॥ तर्हिप्राक्तनकर्मानुसारेणैवमनोमनुतेनान्यथेतिकर्मैवसंसृतिबंधबीजंपर्यवसन्नंतथेषांनिः शेषंनष्टंतेषांसमस्तमननत्यागःसिद्ध्यतीतिमन्यमानोव्याधस्तत्केषामस्तिकेषांनास्तीतिपृच्छति ॥ भगवन्निति ॥ येषांनास्तितेषांतत्कर्मविनापिमननतत्त्यागेकथंभवतः ॥ २३ ॥ येषामधिकारप्रापकोपासनाफलांतर्भावेणैवसहसिद्धंचतुष्टयमितिन्यायेनौत्पत्तिकंतत्त्वज्ञानंतेषांकर्मनास्तीतिमुनिरुत्तरमाह ॥ सर्गादिष्विति ॥ आदिपदात्सनककपिलाद यः ॥ जन्मग्रहणंदग्धपटन्यायेनदेहस्थितिप्रदर्शनार्थम् ॥ २४ ॥

आत्मत्वादेवसर्वात्मानः ॥ २५ ॥ कर्मशून्यास्तेकथंकर्मवतामात्मानइत्याशंक्यतद्दृशाकर्मंकस्यापिनास्तीत्याह ॥ सर्गादाविति ॥ २६ ॥ २७ ॥ केषांदृशातर्हिकर्मविद्यतेता नाह ॥ किंत्विति ॥ येतुअबोधाअज्ञानावृताःसंतःस्वस्यब्रह्मत्वंनबुध्यंतेकिंनुनाहंब्रह्मेतिब्रह्मणोऽन्यत्वंबुध्यंतेअसात्विकात्केवलसत्वपरिणामविलक्षणरजस्तमोमिश्रसत्वपरि णामादुद्भवोयेषांतथाविधाजीवास्तेअचिदाख्यमिदंद्वैतंसत्यमितिबुद्धातद्वासनावासिताएवप्राङ्मृतास्तेषांकर्मभिःसहितंजन्मउत्तरकालंदृश्यतइतिपरेणान्वयः ॥ २८ ॥ यतस्तैः स्वयमेवतथाअचिद्देहाद्यात्मभूतैःपरमार्थवस्तुविस्मृत्यअवस्तुत्वमाश्रितमित्यर्थः ॥ २९ ॥ यैस्तुकदापिनबुद्धंतेनिरवद्याःकर्मबंधलक्षणावद्यरहिताः ॥ ३० ॥ अच्छत्वंस्वाभावि

तेषामस्तिनसंसारोनद्वैतंनचकल्पनाः ॥ विशुद्धज्ञानदेहास्तेसर्वात्मानःसदास्थिताः ॥ २५ ॥ सर्गादौप्राक्तनंकर्मविद्यतेनेहकस्यचित् ॥ सर्गादौसर्गरूपेणब्रह्मैवेत्थंविजृंभते ॥ २६ ॥ यथाब्रह्मादयोभांतिसर्गादौब्रह्मरूपिणः ॥ भांतिजीवास्तथान्येपिशतशोथसहस्रशः ॥ २७ ॥ किंतुयेब्रह्मणोन्यत्वंबुद्धंतेसात्विकोद्भवाः ॥ अबोधायेत्वचिदाख्यंबुद्धाद्वैतमिदंस्वयम् ॥ २८ ॥ तेषामुत्तरकालंतत्कर्मभिर्जन्मदृश्यते ॥ स्वयमेवतथाभूतैस्तैरवस्तुत्वमाश्रितम् ॥ २९ ॥ यैस्तुनब्रह्मणोन्यत्वंबुद्धंबोधमहात्मनि ॥ निरवद्यास्तएतेत्रब्रह्मविष्णुहरादयः ॥ ३० ॥ सर्वात्मसंविदोऽच्छत्वंब्रह्मात्मन्येवसंस्थितम् ॥ तत्क्वचिज्जीववद्भानंस्वयमात्मनिपश्यति ॥ ३१ ॥ यत्रवेत्तितुजीवत्वंतत्राविद्येतितिष्ठति ॥ तत्रसंसृतिनाम्नात्माधत्तेरूपंतथास्थितम् ॥ ३२ ॥ स्वयमेवहिकालेनबुद्धास्वंरूपमात्मनः ॥ स्वयमेवस्वरूपस्थंब्रह्मैवभवतिस्वयम् ॥ ३३ ॥ यथाद्रवत्वादंभ्वंतरेतिचावर्त्ततामिव ॥ ब्रह्मचित्त्वात्तथैतीवसर्गतामस्यसर्गकम् ॥ ३४ ॥ ब्रह्मभानमयंसर्गोनस्वप्नोनचजागरः ॥ कास्यकान्यत्रकर्माणिकीदृशानिकियंतिवा ॥ ३५ ॥ वस्तुतःकर्मनास्त्येवनाविद्यास्तिनसर्गधीः ॥ स्वसंवेदनतःसर्वमसदेवप्रवर्त्तते ॥ ३६ ॥ ब्रह्मैवसर्गोभूतात्माकर्मजन्मेतिकल्पनाः ॥ स्वयंकुर्वदिदंभातिविभुत्वात्कल्पितार्थभाक् ॥ ३७ ॥ नसंभवतिजीवस्यसर्गादौकर्मकस्यचित् ॥ पश्चात्स्वकर्मनिर्मायभुंक्तेकल्पनयासचित् ॥ ३८ ॥ जलावर्त्तस्यकोदेहःकानिकर्माणिचोच्यताम् ॥ यथांबुमात्रमावर्त्तोब्रह्ममात्रंतथाजगत् ॥ ३९ ॥

कमितिशेषः ॥ यतोब्रह्मआत्मनिस्वस्वभावेएवसंस्थितम् ॥ क्वचित्गलिनोपाधौ ॥ ३१ ॥ अविद्यापिजीवोपाध्यवच्छेदेनैवास्तेनशुद्धइत्याह ॥ यत्रेति ॥ ३२ ॥ स्वयमेवेति ॥ ब्रह्मवाइदमग्रआसीत्तदात्मानमेकोवेदहंब्रह्मास्मीतितस्मात्तत्सर्वमभवत् ब्रह्मवेदब्रह्मैवभवतीत्यादिश्रुतेरितिभावः ॥ ३३ ॥ अज्ञातब्रह्मणःसर्गताभ्रांतिःस्वभावएवेत्याह ॥ यथेति ॥ अस्यसर्गकंस्वभावइतिशेषः ॥ ३४ ॥ काअस्यसर्गतेतिशेषः ॥ ३५ ॥ प्रवर्त्ततेप्रथते ॥ ३६ ॥ विभुत्वात्सर्वशक्तिमत्त्वात्सत्यसंकल्पत्वात् ॥ ३७ ॥ पश्चात्अविद्यांतःस्थितिकल्पनोत्तरम् ॥ निर्मायदेहादिनानिष्पाद्य ॥ ३८ ॥ ब्रह्मभावदर्शनेतुनकर्मसंभावनापीत्याह ॥ जलेति ॥ ३९ ॥

आदिसर्गेषुशुद्धसात्विकदेहेषु ॥४०॥ कुतोनतत्राह ॥ सर्गेइति ॥ तेषांसर्गतयारूढध्यभावादेवेतिभावः ॥ ४१ ॥ ४२ ॥ तथाचनकर्मप्रयुक्तोबंधःकिंत्वज्ञानप्रयुक्तएवेतितदेवक
र्मबीजमितिकार्मव्यपदिश्यतांनान्यदित्याह ॥ अपरिज्ञानमात्रमिति ॥ ४३ ॥ अतएवकर्माण्यविद्यात्वादेवयथायथाज्ञानप्रकर्षस्तथातथाअपक्षीयतइत्याह ॥ यावदिति
॥ ४४ ॥ ननुज्ञानमात्रात्कथंवस्तुनाशइत्याशंक्यवस्तुत्वमेवकर्मणोनास्तीत्याह ॥ यन्नामेति ॥ ४५ ॥ अतएवपांडित्यार्थमेवयत्नःकार्यस्तद्विनाभयाशांतिरित्युपसंहरति ॥ ता
वदिति ॥ यावत्पंडितत्वंनास्तितावत्कालमेवमायाभवभयकरी ॥ मेघर्त्तिभयेपुकृञइतिखशोविपर्ययोऽयंन ग्रहणवताप्रातिपदिकेनतदंतविधिप्रतिषेधात् ॥ तदेवपांडित्यंयेनपुनः
संसारचक्रेनपतसि ॥ ननुशुष्कतर्कादिपांडित्यमत्रोपयुज्यतइत्यर्थः ॥ अतःकारणादविरतममलज्ञानोदारपंडितत्वेश्रवणादियत्नंकुर्यात् ॥ इतरथाउपायांतरेणवोभयशांतिर्नेति ॥

यथास्वप्नेषुदृष्टानांनप्राक्कर्मनृणांभवेत् ॥ आदिसर्गेषुजीवानांतथाचिन्मात्ररूपिणाम् ॥४०॥ सर्गेसर्गतयारूढेभवेत्प्राक्कर्मकल्पना ॥ प
श्चाज्जीवाभ्रमंतीमेकर्मपाशवशीकृताः ॥४१॥ सर्गएवनसर्गोयंब्रह्मेत्थंकिलतिष्ठति ॥ यत्रतत्रक्वकर्माणिकानिवाकस्यतानिवा ॥४२॥
अपरिज्ञानमात्रंयत्स्वयंवैपरमात्मनः ॥ तदेतत्कर्मबंधायतत्तज्ज्ञस्योपशाम्यति ॥ ४३ ॥ यावद्यावत्परिज्ञानंपंडितस्यप्रवर्त्तते ॥ ताव
त्तावत्तदैवास्यकर्मशाम्यतिबंधदम् ॥ ४४ ॥ यन्नामकिलनास्त्येवतद्भ्रांतौकाकदर्थना ॥ परमार्थादृतेबंधःकिंचिन्नामनविद्यते ॥४५॥
तावन्मायाभवभयकरीपंडितत्वंनयावत्तत्पांडित्यंपतसिनपुनर्येनसंसारचक्रे ॥ यत्नंकुर्यादविरतमतःपंडितत्वेमलात्मज्ञानोदारेभय
मितरथानैववःशांतिमेति ॥ ४६ ॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०अ०वि०श०कर्मनिर्णयोनामद्विचत्वारिंशदुत्तर
शततमःसर्गः ॥ १४२ ॥ ॥ ७ ॥ ॥ मुनिरुवाच ॥ ॥ सर्वेषामेवधर्माणांकर्मणांशर्मणामपि ॥ पंडितःपुंडरीकाणांमार्त्तंडइवमंड
नम् ॥ १ ॥ आत्मज्ञानविदोयांतियांगतिंगतिकोविदाः ॥ पंडितास्तत्रशक्रश्रीर्जरत्तृणलवायते ॥ २ ॥ पातालेभूतलेस्वर्गेसुखमैश्वर्यमेव
वा ॥ नतत्पश्यामियन्नामपांडित्यादतिरिच्यते ॥ ३ ॥ पंडितस्ययथाभूतावस्तुदृष्टिःप्रसीदति ॥ दृगिवेंदौनिरंभोदसकलामलमंडले ॥४॥

सएनमविदितोनभुनक्ति उदरमंतरंकुरुतेअथतस्यभयंभवतीत्यादिश्रुतेरितिभावः ॥ ४६ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उ०द्विचत्वारिंशदुत्तरशततमःसर्गः ॥ १४२ ॥
पांडित्यस्यप्रशंसात्रतच्चचिन्मात्रदर्शनम् ॥ चिदेवजगदित्येतद्भूयोयुक्त्यासमर्थ्यते ॥ १ ॥ सर्वेषामेवधर्माणांनिर्णयेधर्माविरुद्धलौकिककर्मणांनिर्णयेतदुभयफलैहिकामुष्मिकश
र्मणांतारतम्यनिर्णयेचसंदेहपंथिभेदनेनश्रोतृणांबुद्धिविकासनःपंडितएवसभामंडनम् ॥ यथापुंडरीकाणांविकासेमार्त्तंडोनभोमंडनंतद्वदित्यर्थः ॥ १ ॥ आमुष्मिकसुखमपिसर्व
पंडितप्राप्यात्मसुखवारिधौसीकरादपिलघुतरमित्याह ॥ आत्मज्ञानेति ॥ २ ॥ पांडित्यात्पांडित्यफलादानंदात ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेरिति
भावः ॥ ३ ॥ पंडितस्यसच्छास्त्रविचारजन्यज्ञानवतःपरमार्थवस्तुरूपादृष्टिःस्वात्मन्येवप्रसीदतिआह्लादते ॥ सकलामलमंडलेशरत्पूर्णेंदौदृक्चक्षुरिव ॥ ४ ॥

२५२

वुधस्यपंडितस्यस्रग्दामनिकल्पितसर्पत्वमिवदेहसर्गादिदृश्यजातंबोधाच्छाम्यति॥५॥तर्हिदेहसर्गादिशांतिर्ब्रह्मस्वभावादन्याउत्पद्यतेनेत्याह ॥ यदिति॥ब्रह्मस्वतस्त्वज्ञानेनब्रह्मणि स्वस्वभावेयत्स्थितंतस्यैवतेनैवस्वभावैकात्मिकादेहसर्गक्षयादिकाःसंज्ञाःकृताइतिसत्यतापरमार्थइत्यर्थः ॥६॥ कुतएवमितिचेत्परिशिष्टब्रह्मणोदृश्यक्षयाख्यधर्मकर्मशून्यत्वादि त्याह ॥ सर्गइति ॥ अक्षरमालिकातद्बोधकपदवाक्यादिरूपाचनैव ॥७॥ त्रैकालिकासत्वादेवदृश्यस्यसकारणकत्वंनिरस्तमित्याह ॥ पृथ्व्यादीति ॥८॥ प्रतिभानंप्रतिभासः॥ नहिप्रातिभासिकेघटेदंडचक्रादिकारणापेक्षास्तीतिभावः ॥ ९ ॥ पूर्वंकामयतेइतिपूर्वकामंपित्रादिकारणंकाल्पनिकमस्तिनवास्तवंयथातथाजाग्रद्रूपेस्वप्नेपीत्यर्थः ॥ १० ॥ पि

इदंदृश्यमविद्यात्मब्रह्मसंपद्यतेक्षणात् ॥ बुधस्यबोधात्स्रग्दामसर्पत्वमिवशाम्यति ॥ ५ ॥ यत्स्थितंब्रह्मणिब्रह्मकृतास्तेनैवसत्यता ॥ स्वभावैकात्मिकाःसंज्ञादेहसर्गक्षयादिकाः ॥६॥ सर्गोविद्यतएवायंनयत्रकिलकिंचन ॥ तस्यधर्माणिकर्माणिनचैवाक्षरमालिका॥७॥ पृथ्व्यादिसंभवतिचेत्तत्सकारणमस्तुतत् ॥ तदेवयत्रनास्त्येवतत्रकिंतस्यकारणम्॥८॥ब्रह्मणःप्रतिभानंयत्तदिदंजगदुच्यते॥ तेनैवकुतए तानिपृथ्व्यादीनिककारणम् ॥ ९ ॥ स्वप्नद्रष्टुर्दृश्यनृणामस्तिकाल्पनिकंयथा ॥ नवास्तवंपूर्वकामंजाग्रत्स्वप्नेतथानृणाम् ॥ १० ॥ यथा प्राक्कर्मपुंस्त्वेचस्वप्नेपुंसांनविद्यते॥ इहजाग्रत्स्वप्ननृणांभातानामपिनोतथा ॥ ११ ॥ जीवःसर्वेषुसर्गेषुस्वप्नार्थान्निखिलान्मिथः॥ प्राक्कर्मसत्वंमिथ्यात्मयथावासनमेषुच ॥ १२ ॥ सर्गादावथदेहांतेभांतिस्वप्नार्थवन्मिथः॥ यथासंवेदनंजीवाःसंतोसंतश्वतेनते॥ १३ ॥ यथासंवेदनंसर्वेभांतिभावयतस्ततः॥ तेसंत्यात्मन्यपिस्वप्नेजाग्रतीवार्थदामिथः॥ १४ ॥ संकल्पसंविदग्रस्थवस्तुनिष्ठतयास्फुटम्॥ फलंचाप्नोतितेस्वप्नेलोकनिष्ठतयास्फुटः॥१५॥ शुद्धासंवित्स्वभावस्यायत्स्वयंभातिभास्वरा ॥ तस्याभानस्यतस्यास्यजाग्रत्स्वप्नाभिधाः कृताः॥ १६ ॥ सर्गादावथदेहांतेभातंयद्वेदनंयथा ॥ तत्तथाऽऽमोक्षमेवास्तेतदिदंसर्गउच्यते ॥ १७॥

त्रादिवत्कर्माप्यवास्तवमेवेत्याह ॥ यथेति ॥ पुंस्त्वेपुरुषादिभावे ॥११॥ मिथःपश्यतीतिशेषः ॥ एषुचसर्गेषुयथावासनंमिथ्याभूतसर्वव्यवहारेप्राक्कर्मसत्वमपियथावासनंमिथ्यात्मैवेत्यर्थः ॥ १२ ॥ जीवाःसर्गोभूतभुवनादिसर्गस्तत्प्रभृतिकेदेहसिद्ध्यंतेसंसारेस्वप्नार्थवदेवयथासंवेदनंस्वस्वसंवेदनान्यनतिक्रम्यभांतितेनस्वप्नार्थाइवसंवेदनांशेसंतोविद्यमानाइतरांशेअसंतश्वेत्यर्थः ॥ १३ ॥ यतोयथाभावनंभांतिअतःस्वप्नेपिसंति ॥ मिथःपरस्परमर्थदाअर्थक्रियासमर्थाः ॥ १४ ॥ तेतवस्वप्नेयथाविनापिवाह्यार्थंभोजनादिसंकल्पसंविदेवपाकादिसंविक्रमेणायस्थपासादिवस्तुनिष्ठायस्यास्तथाविधात्वेनतृप्त्यादिफलंप्राप्नोतितथाजाग्रत्संकल्पसंविदपि ॥ अस्फुटःस्वप्नःस्फुटाजाग्रदित्येतावानेवविशेषइत्यर्थः ॥१५॥ स्फुटमस्फुटंवायदेवभूत्वास्वयंभातितस्यास्तस्यास्यभानस्यजाग्रत्स्वप्नौइत्यभिधालोकेकृताः ॥ १६ ॥ आमोक्षंमोक्षपर्यंतंतत्तथैवास्तेप्रवाहरूपेणेत्यर्थः ॥ १७ ॥

जाग्रत्स्वप्नयोर्येअर्थाःप्रसिद्धास्तेषामप्रतिघरूपायास्तत्संविदश्चातोनभिन्नतेत्यर्थः ॥ १८ ॥ आवीचिवीचीनभिव्याप्यस्थितयोर्द्रवांभसोरिववा ॥ १९ ॥ अप्रतिघममूर्त्तंचि
द्रूपत्वात्प्रतिघातासहम् ॥ इत्थमधिष्ठानचित्स्वभावत्वप्रकारेणतुसन्मयमेवास्ति ॥ नेतिनेतीतिश्रुत्यानिषिध्यमानत्वान्नास्त्यर्थेननञ्ज्ञातदर्थेनवाप्रतियोगिभावेनसंयुतंच ॥ २० ॥
ब्रह्मजगदात्मनाप्रोद्भूयप्रलयात्मनामृत्वाचदृश्यानुभवरूपित्वात्तदननुभवरूपंचसार्वात्म्यव्यवहारे परमार्थेतुएकमेवाचलंस्थितम् ॥ २१ ॥ नगर्यंतर्मृत्कुड्यादीनामर्थानांपुरुषे
णेवगगनपवनादीनांकार्यकारणताब्रह्मणायायथाकल्पितासातथैवास्ते ॥ ननियतिभंगायेदंशास्त्रंकिंतुतत्सत्यताभेदादिभंगायेत्यर्थः ॥ २२ ॥ तत्सत्यताभंगेत्वामवस्तुनियतिव
च्चिन्मात्रमेवपर्यवस्यतीत्याह ॥ ब्रह्मणइति ॥ अभिहितात्वामीयथातथा ॥ २३ ॥ यथाऊहितासर्गादौसंकल्पिता ॥ २४ ॥ त्वयापिस्वकीयसंकल्पपत्तनेस्वेच्छानुसारिकार्यकार

जाग्रत्स्वप्नार्थसार्थस्यसंविदश्चनभिन्नता ॥ अस्त्यप्रतिघरूपायाःप्रकाशालोकयोरिव ॥ १८ ॥ अग्नौष्ण्ययोरिवतथावातस्पंदनयोरिव ॥ द्रवांभसोरिवावीचिवाशैत्यानिलयोरिव ॥ १९ ॥ सर्वमप्रतिघंशांतंजगज्ज्ञातमसन्मयम् ॥ इत्थंसन्मयमेवास्तिनास्त्यर्थेनचसंयुतम् ॥ २० ॥ ब्रह्मप्रोद्भूयमृत्वाचदृश्यानुभवरूपिच ॥ चिन्मात्रमजरंशांतमेकमेवामलंस्थितम् ॥ २१ ॥ कार्यकारणतार्थानांयायथा त्वदिकल्पिता ॥ ब्रह्मणापुरुषेणेवनगर्यंतस्तथैवसा ॥ २२ ॥ ब्रह्मणोत्वदिसर्गोयंत्वदितेस्वप्नपूर्यथा ॥ कार्यकारणतातत्रतथास्तेभिहिता यथा ॥ २३ ॥ संविद्घनोदरेसर्गेकार्यकारणतास्थिता ॥ तथाययोहितातेनत्वयावाकल्पनापुरम् ॥ २४ ॥ चितासंकल्परूपिण्यासर्गेसंकल्पपत्तने ॥ त्वयैवस्थापितासंस्थाकार्यकारणरूपिणी ॥ २५ ॥ आकाशएवकचनंयच्चित्तेस्वात्मरूपिणी ॥ नियतंसंनिवेशत्वात्तदंतःसर्गउच्यते ॥ २६ ॥ यासंविद्व्यवस्थास्तेत्वदिसंकल्पपत्तने ॥ सैषास्वभावसंसिद्धिःकार्यकारणतार्थजा ॥ २७ ॥ प्रथमंयद्यथाभातिचित्त्वमस्तितथैहतत् ॥ तस्यैवनियतिःकालोदेशादीत्यभिधाकृता ॥ २८ ॥ यानामाशुयथाभातिचेतनाकाशशून्यता ॥ तयातथावस्तुतया कार्यकारणताश्रिता ॥ २९ ॥

णरूपिणीव्यवस्थामुस्थापेतिसिद्धवत्कृत्याह ॥ चितेति ॥ २५ ॥ संकल्पनगरतदंतर्गतव्यवस्थयोश्चचिदाकाशमात्रकचनत्वंस्वानुभवसिद्धं अयंदृश्यमानसर्गोपिहिरण्यगर्भसं
कल्पजत्वात्संकल्पसर्गांतर्गतएवोच्यतेश्रुतिपुराणादौनतद्बहिर्भूतइत्यर्थः ॥ २६ ॥ तत्त्वदिसंकल्पपत्तनेयासंविद्व्यवस्थिरादित्यस्यस्वप्रकाशतालक्षणाअवस्थासदैवआस्तेसैषैवका
र्यकारणतार्थजास्वभावसंसिद्धेतिनततोऽणुमात्रमप्यन्येत्यर्थः ॥ २७ ॥ तदेवोपपादयति ॥ प्रथममिति ॥ सभूरितिव्याहरत्सभुवमसृजतेत्यादिश्रुतेर्हिरण्यगर्भहार्दचितिसर्गारंभे
यत्पृथिव्यादिपथागंधकाठिन्यादिप्रकारेणचित्त्वंभातिस्फुरतितदिदानीमपितथैवास्ति तस्यैवतथास्थितस्यपृथिव्यागंधकाठिन्यनियतिरपांद्रवत्वनियतिस्तेजसउष्णप्रकाशनि
यतिर्वायोःस्पंदसौक्ष्म्यनियतिरित्यादिरूपेणअतीतानागतादिकालरूपेणप्राचीप्रतीच्यादिदेशादिरूपेणचस्थितस्यतथातथाअभिधाकृतेत्यर्थः ॥ २८ ॥ एवंगोघटादिपुसर्वत्रबो
ध्यमित्याह ॥ यानामेति ॥ यथागौःपयसःकारणंघटस्तद्धारणस्य ॥ २९ ॥

यद्धिमनसाध्यायतितद्वाचावदतीतिश्रुतेर्मनसिप्रथमंरूपकल्पनापश्चान्नामकल्पनेत्याह ॥ चिच्चमत्कारेति ॥ भावोभावनासंकल्पस्तद्रूपिणि ॥ ३० ॥ यत्रयाकल्पनासाशून्या पितन्मात्ररूपेतिदृष्टांतेनदर्शयति ॥ शून्यताइति ॥ यथापवनस्यस्पंदसत्तातद्यतिरिक्तस्वरूपशून्यातदनन्यातथाचिद्योमनित्रिजगद्रूपाःशून्यताअपीत्यर्थः ॥ ३१ ॥ तथाचचि द्वनतैवभ्रांतदृशाजगदात्मनास्फुरतीत्याह ॥ व्योम्नीति ॥ सौषिर्यनैविद्यमिति ॥ धूमधूल्यादिव्याप्तेनभसिनैल्यादर्शनादितिभावः ॥ ३२ ॥ कदापुनर्ब्रह्मणिविसर्गताबुध्यतेतदा ह ॥ आभातइति ॥ सर्गेआभातेत्रिविधपरिच्छेदशून्यचिन्मात्रस्वभावतोभातेसतीत्यर्थः ॥ कृच्छ्रात्साधनाभ्यासक्लेशात् ॥ ३३ ॥ ऐहलौकिकइवपारलौकिकःसर्गोप्येतादृगे वेत्याह ॥ मृतइति ॥ तच्चतदन्यत्तदुत्तरपारलौकिकंचइदंचएतदन्यदेहिकंचसर्वमप्रतिघममूर्त्तंचिदंवरमेव ॥ ३४ ॥ एतद्देहपातात्परतःअन्योदेहःकथंसंपद्यते ॥ हेतुरुपादानम् ॥ हेतवोनिमित्तानि ॥ ३५ ॥ येधर्माधर्माएवस्वभोगार्थंसर्वंकुर्वंतीतिमन्यंतेतेषांकर्मनिर्मितस्यज्ञानेननिवृत्त्यदर्शनादनिर्मोक्षप्रसंगइत्याह ॥ कुर्वंतीति ॥ प्रतिघरूपिणातेनदेहादि

**चिच्चमत्कारमात्रेस्मिन्सर्गाभेभावरूपिणि ॥ पूर्वंभावाःप्रवर्त्तंतेपश्चात्सर्गाभिधाविदः ॥ ३० ॥ शून्यतास्त्रिजगद्रूपास्तथाचिद्योमनि स्थिताः ॥ अनन्याःपवनेसौम्येस्पंदसत्तायथानिजाः ॥ ३१ ॥ व्योम्निसौषिर्यनैविद्यंयथानीलमितिस्थितम् ॥ चितिचेतननैविद्यंतथा सर्गउपस्थितम् ॥ ३२ ॥ आभातएवभातेस्मिन्कृच्छ्रात्सर्गेविसर्गता ॥ बुद्ध्यतेरज्जुभुजगेरज्जुरूपंयथापुनः ॥ ३३ ॥ मृतःसस्वप्नवत्सर्वः संपश्यतिपृथग्जगत् ॥ तच्चान्यदिदमन्यच्चनित्याप्रतिघमंवरम् ॥ ३४ ॥ ॥ व्याधउवाच ॥ ॥ परतःसुखदुःखार्थंदेहःसंपद्यतेकथम् ॥ किमस्यहेतुःकेवास्यहेतवःसहकारिणः ॥ ३५ ॥ कुर्वंतिधर्माधर्माश्चेत्तेनप्रतिघरूपिणा ॥ तदस्याप्रतिघंरूपंकुर्वंतीत्यसमंजसम् ॥ ३६ ॥ ॥ मुनिरुवाच ॥ ॥ धर्माधर्मौवासनाचकर्मात्माजीवइत्यपि ॥ पर्यायशब्दभारोत्रकल्प्यतेनतुवास्तवः ॥ ३७ ॥ चित्त्वात्कल्पितचि त्त्वेनस्वयंचिन्नभसात्मनि ॥ कृतानिनामान्येतानिकश्चिद्दस्तीतिचेतसा ॥ ३८ ॥ संविदात्मास्वयंचित्त्वाद्देहंवेत्तिखमेवखे ॥ मृत्वासं तंसंतमिवसंकल्पस्वप्नयोरिव ॥ ३९ ॥ स्वयंस्वप्नइवाभातिमृतस्यपरलोकधीः ॥ तमेवपश्यतिचिरंनतत्राप्यस्तिसत्यता ॥ ४० ॥**

भावेनस्थितस्यास्याप्रतिघंनित्यंतन्मोक्षाख्यंरूपंकर्माणिकुर्वंतीत्यसमंजसम् ॥ कृतकस्यानित्यत्वावर्जनादितिभावः ॥ ३६ ॥ विहितनिषिद्धाचरणेसंस्काररूपेणस्थितेधर्मा धर्मावित्युच्येतेताहृशसंस्कारपुंजात्मकमेवमनस्तदेवचिदाभासव्याप्तंजीवःसचप्राणादिचेष्टाप्रधानत्वात्कर्मात्मासएवस्ववासनानुसारिदेहादिसंकल्पयंस्तदात्मासंपद्यतइवेतिचि तएवैतेसर्वेप्रतिभासविशेषास्तच्चकामंयथेच्छंकल्पयंतुफलतोनभेदइत्याशयेनद्वितीयप्रश्नस्यप्रथमंमुनिरुत्तरमाह ॥ धर्माधर्मावित्यादिना ॥ शब्दभारःशब्दराशिः ॥ वास्तवो ऽर्थंभेदस्तुनत्वस्तीत्यर्थः ॥ ३७ ॥ कश्चिद्दृश्यदेहादिप्रपंचोप्यस्तीतिचेतसाकल्पितेनचित्त्वेनचिदाभासरूपेणचिन्नभःस्वरूपेआत्मनिस्वयंस्वेनैवएतानिधर्माधर्मादीनितत्फलंसुख दुःखादीनिचनामानिकृतानि ॥ सर्वाणिरूपाणिविचित्यधीरोनामानिकृत्वाभिवदन्यदास्तेइत्यादिश्रुतेरितिभावः ॥ ३८ ॥ प्रथमप्रश्नंसमाधत्ते ॥ संविदात्मेति ॥ ३९ ॥ मरणो त्तरकालंदेहादिकल्पनमपिस्वप्नवदेवेत्याह ॥ स्वयमिति ॥ ४० ॥

पित्रादिरीश्वरोवामृतंपुनर्निर्मातीतिभ्रमंवारयति ॥ मृतमिति ॥ अन्यश्चेन्निर्मातितदासएवासौकथंस्यात् ॥ तत्सृष्ट्वातदेवानुप्राविशदितिनिर्मातुरेवप्रवेशश्रवणात् तस्यचस्वात्म
त्वात् ॥ इष्टापत्तावस्यस्तन्यपानादिप्रवृत्त्यनुकूलास्मृतिःकथंवाभवेत् ॥ तमेवपूर्वसिद्धमात्मानमाश्रित्यजातस्यचेतनत्वंयन्निरूढंतदपिस्वंशून्यमेवस्यादित्यर्थः ॥ ४१ ॥ प्रथम
प्रश्नोत्तरमुक्तमनुवदन्नुपसंहरति ॥ मृताविति ॥ नजायतेजन्मनलभतेकिंनुचेतसैवकेवलमिहायमित्थंजातोस्मीतिमृषैवस्वेजन्मादिविक्रियाशून्येआत्मनिकल्पनयावेत्ति॥४२॥
तस्यैवभावस्याभ्यासात्स्फुटप्रत्ययतयाजन्मादिव्यवहारोलोकवेदयोर्नवस्तुतइत्याह ॥ स्वमेवेति ॥ ४३ ॥ आहरन्अध्यस्यन् ॥ ४४ ॥ प्रत्येकंव्यष्टिभावमास्थितःसन्पश्यति
स्वसंनिधिमात्रेणस्वाध्यस्तकार्यकारणानिविषयेष्वाचारयतिप्रवर्त्तयति ॥ जाग्रत्स्वप्नयोःसुषुप्तिप्रलयमोक्षेष्वत्तिच ॥ परमार्थतस्तुनांकिंचित्कस्यचिद्दर्नीयंनापिकश्चिद्दत्ती

मृतंनिर्मातिचेदन्यःकथंवास्यस्मृतिर्भवेत्॥ कथंवास्यात्सएवासौचेतनत्वंतमेवस्वम्॥ ४१ ॥ मृतौनजायतेतस्माच्चेतसैवसकेवलम्॥ इहायमित्थमित्येववेत्तिस्वेवासनात्मकम् ॥ ४२ ॥ स्वमेवभावमभ्यस्तमात्मसोनुभवंश्चिरम् ॥ स्फुटप्रत्ययवांस्तत्रसत्यमित्येववेत्त्यलम्॥ ४३ ॥ स्वात्मास्वमेवतत्रैवस्वप्नाभंदृश्यमाहरन् ॥ पुनःस्वमरणंवेत्तिपुनर्जन्मपुनर्जगत् ॥ ४४ ॥ अलोकजालमेवंस्वेपश्यन्प्रत्येकमास्थितः॥ पश्यत्याचारयत्यत्तिकिंचित्क्वचिन्नकस्यचित्॥४५॥ इत्येवंजगतांसंतिकोटीनांकोटिकोटयः॥ परिज्ञातास्तुताब्रह्मकेवलंदृश्यमन्यथा॥४६॥ ताभिर्नकस्यचित्किंचिदावृतंनचसंतिताः॥ तासांचवेत्तिप्रत्येकमिदमेवजगत्त्विति॥४७॥ भूतानितासांप्रत्येकंतथैवान्योन्यमास्थिते॥ सत्यान्येवासत्यदृष्ट्यासत्यदृष्ट्यात्वजंपदम्॥४८॥ सद्यद्विदितवेद्यस्यतदज्ञस्यासदक्षयम् ॥ असद्यत्संप्रबुद्धस्यतत्सदज्ञस्यसुस्फुटम्॥ ४९ ॥ चितेर्यद्यद्यथाभानंतत्तत्सत्यंयथायतः ॥ सद्रूपाणिसमग्राणिभूतानीमान्यतोमिथः॥ ५० ॥ नित्यमन्योन्यसत्यानितानितान्येववाप्यतः॥ किलसंविद्विनिर्णेयंरूपमप्रतिघंयतः॥ ५१॥ संविन्मात्रविनिर्णेयंकान्यतानान्यताकथा॥ यथासंवेदनंभातेवस्त्वोघेक्वद्वितैकते ॥ ५२ ॥

त्यर्थः ॥ ४५ ॥ अन्यथाअपरिज्ञातास्तुकेवलंदृश्यमेव ॥ सएनमविदितोनभुनक्तीतिश्रुतेरितिभावः ॥ ४६ ॥ ताभिर्जगत्कोटिकोटिभिः ॥ किंत्वयमात्मातासांमध्येप्रत्येकमे
कैकोजीवएकंजगदिदमेवजगन्नान्यदितिवेत्ति ॥ ४७ ॥ तासांजगत्कोटीनांपृथिव्यादिपंचभूतानिचतुर्विधभूतग्रामाश्चप्रत्येकमास्थितेतत्तज्जीवाभिमतेजगतितथैवनविसदृ
शानीत्यर्थः ॥ तानिचाऽसत्ययाव्यवहारदृष्ट्यासत्यानि सत्ययापरमार्थदृष्ट्यात्वजंब्रह्मपदमेवेत्यर्थः ॥ ४८ ॥ अतएवज्ञाज्ञयोःसत्यासत्येपरस्परविपरीतेइत्याह ॥ सद्यदिति
॥ ४९ ॥ अथवापरमार्थसत्यचितिभानरूपत्वात्सर्वंसत्यमेवेत्यवैपरीत्यमेवेत्याह ॥ चितेरिति ॥ ५० ॥ अथवायंप्रतियदायज्जगद्भातितंप्रतितदानत्सत्यमितिव्यवस्थितंसत्यत्व
मित्याह ॥ नित्यमिति ॥ यतोजगद्रूपंसत्यमसत्यमितिवासत्यसंविदैवविनिर्णेयंसाचेद्भगवतीसंवित्सत्यमेवेतिनिर्णयति ॥ कस्तद्विपरीत्यंतदन्यःसाधयेदितिभावः ॥ अप्रतिघंकेना
पिप्रतिहंतुमशक्यम् ॥ ५१ ॥ अन्यतानान्यतेअतथात्वतथात्वेतयोःकथाका ॥ अयंन्यायोवस्तुभेदाभेदद्वित्वैकत्वादौयोज्यइत्याह ॥ यथासंवेदनमिति ॥ ५२ ॥

अस्त्वेवं किंततो भवति तत्राह॥ तदेवेति॥ इदं ज्ञेयं तत्तज्ज्ञानमेवेति ज्ञानज्ञेयाभेदज्ञमेर्वशादिदं दृश्यजातं तज्ज्ञानमेव भवति ॥ तावतैव सर्वं दृश्यपासाच्चिदद्वैतं सिद्धमितिभावः ॥ ननु ज्ञानापलापेनेत्थं ज्ञेयमात्रपरिशेष एव किं न स्यात्तत्राह ॥ तदद्वैतदिति ॥ तत्तज्ञानमेतज्ज्ञेयमेव तथा च तद्दृश्यमेव परिशिष्टमित्येतत्तु ज्ञप्तेरसत्यत्वाद्भवेन्न संभाव्येत ॥ तथासति निर्ज्ञप्तिकाज्ञेयसिद्धिरेव न स्यादितिभावः ॥ ५३ ॥ अतःपरिशेषाज्ज्ञानमेवार्थश्चेदयं प्रपंचस्तस्याज्ञप्तेःपृथक् न स्थितः ॥ एवं सर्वस्मिन्नर्थे ज्ञस्यात्मनि स्थितेसति अयं द्रष्टा अज्ञस्यातदज्ञानेनैव ततो ज्ञप्तिस्वभावाद्व्रजेत्प्रच्यवेत न वस्तुत इत्यर्थः ॥५४॥ तथा चाज्ञानज्ञानमेवज्ञेयजगदात्मतामात्मनैव तनोतीति फलितमित्याह ॥ ज्ञानमिति ॥५५॥ तथा च पृथगसतो ज्ञस्यात्मनासत एव सर्गान्पश्यतो ज्ञस्य तत्त्वविदः पश्यंतो गृह्णंतश्चक्षुरादिसर्गास्तैर्मिलंतो रूपादिसर्गा अपि ज्ञप्तिव्यतिरिक्तान किंचनेतितत्त्वम् ॥ मूर्खं ज्ञातांस्तु सर्गानहं नो वेद्मि ॥ ५६ ॥ चिज्जडात्मनामज्ञ

तदेवेदमिदं ज्ञप्तेस्तदेवेदं भवत्यलम् ॥ तदद्वैतत्तदेवेति भवेज्ज्ञप्तेरसत्यतः ॥ ५३ ॥ तच्चेदर्थस्ततोज्ञप्तेर्नायं तस्याःपृथक्स्थितः॥ स्थितेज्ञस्यात्मनित्वर्थेत्वज्ञस्यायं ततो व्रजेत् ॥ ५४ ॥ ज्ञानं यदेव तज्ज्ञेयं ज्ञेयस्यासंभवात्पृथक् ॥ यथाज्ञानमतोज्ञेयं तनोत्यात्मानमात्मना ॥ ५५ ॥ पश्यंतोपि मिलंतोपि पृथक्सर्गान किंचन॥ सत एवासतोज्ञस्य मूर्खं ज्ञातांस्तु वेद्मिनो ॥ ५६॥ एकं प्रबोधतःसर्वं चिन्मात्रं तावदात्मखम् ॥ तदेवानेकसंवित्त्यासहस्रं चिज्जडात्मनाम् ॥ ५७॥ एकं तथा च चिन्मात्रं स्वप्नेलक्षात्मतिष्ठति ॥ पुनर्लक्षात्मतत्स्वप्नादेकमास्तेसुषुप्तके॥ ५८ ॥ चिद्व्योम्निस्वप्नसंवित्तिर्यासैव जगदुच्यते ॥ सुषुप्तं प्रलयःप्रोक्तस्तस्माद्ध्यायोयमेवसन्॥ ५९॥ एकैवसंविन्नानात्वं नलक्षत्वं च गच्छति ॥ शून्यत्वं च तथार्थत्वं स्वप्नसंकल्पयोरिव ॥ ६० ॥ इदमप्रतिघं सर्वं किलवेदनमात्रकम्॥ शुद्धं तद्वद्यथा यत्र भाति तत्र तथाभवेत्॥ ६१ ॥ एकैव संवित्सर्गादौ भवत्यम्ब्यंबुखादिकम् ॥ पृथ्व्यादितावत्सर्गार्थं स्वप्नसंकल्पयोरिव ॥ ६२ ॥ संविदाकाशरूपैवभातिपृथ्व्यादिनामिका॥ यत्तदेवखमेवेदं जगदित्येवभासते ॥ ६३॥ संवित्सप्रतिघं भाति भाति चाप्रतिघं तथा॥ न वस्तुतस्तु प्रतिघासंवित्सांतेनिवर्त्तते॥ ६४॥ यासि पूर्वांपश्चिमां च दिशं वेत्सि चिरं विदन्॥ प्रतिघं नाम तेनास्ति न च सप्रतिघाक्वचित्॥ ६५॥

जीवानाम ॥५७॥ एकस्यैव चिदात्मनःस्वप्नेलक्षकोट्यात्मत्वं सुषुप्तावेकात्मत्वं च प्रसिद्धमित्याह ॥ एकमिति ॥५८॥ स्वप्नसुषुप्त्योरुक्तोन्यायःसर्गप्रलययोरपि समानस्तयोस्तदभेदादित्याह ॥ चिद्व्योम्नीति ॥ ५९ ॥ भोग्यात्मनानानात्वं भोक्त्रात्मनान्नलक्षत्वं च ॥ ६० ॥ ६१ ॥ सर्गार्थं सर्गसिद्ध्यर्थं पृथ्व्यादितावद्भवति ॥ वत्करणमविकारिताद्योतनार्थम् ॥ ६२ ॥ तदेवस्पष्टमाह ॥ संविदिति ॥ ६३ ॥ सप्रतिघं नश्वरं मूर्त्तमिव अप्रतिघं नित्यममूर्त्तमिव च ॥ वस्तुतस्तु प्रतिघानाश एव नास्ति यतः साप्रतिघाप्यंते निवर्त्तने निवृत्ता च संविदेव परिशिष्यते ॥ ६४ ॥ अप्रतिघत्वमेव संविदः समर्थयति ॥ यासीति ॥ त्वं मनसा पूर्वां पश्चिमां च दिशं चिरं यासि तत्र तत्र च दृष्टश्रुतानुमितादीनर्थान्विदन्स्वं वेत्सि ॥ तत्र संविद्रूपस्य ते प्रतिघं नाम नास्त्येवाऽतःक्वचिदपि संवित्सप्रतिघा नेति सिद्धमित्यर्थः ॥ ६५ ॥

ननुजीवचित्संकल्पानांबहूनांमोघतादृश्यतेसैवतस्याःप्रतिघातइतिसप्रतिघत्वमितिचेत्तत्राह ॥ दृष्टमिति ॥ दृष्टंप्रमाणसिद्धंसंकल्पितमर्थंयःपुरुषःसहनैरंतर्येणचिरमभ्यस्यतिसोऽवश्यंतदवाप्नोति ॥ तथाचसंकल्पस्यादार्ढ्यादेवमोघता ॥ नह्यदृढःकार्याक्षमइत्येतावताचितःसप्रतिघत्वंम सर्वत्रतत्प्रसंगादितिभावः ॥६६॥ अथवाअदृढःसंकल्पःअदृढमेवमानोरथिकंदिगंतरगमनंतत्रत्यपदार्थदर्शनादिकरोति दृढस्तुदृढमितिनतस्यापिमोघत्वमित्याशयेनाह ॥ यासीति ॥ त्वंमनसापूर्वांपश्चिमांचदिशंयासितत्रतांस्तान्पदार्थांश्चिरंविदन्यःसंकल्पयिताआस्तेसतत्तांस्वसंकल्पितदिगंतगमनतत्रत्यपदार्थाद्यात्मतांस्वसंकल्पानुसारेणयाति॥ यतःअन्यःपुरुषस्तुसंकल्पंत्यक्त्वाइतरांदिशंमनसापिनयाति॥ अनेनैवविशेषेणतत्रचिदप्रतिघेत्यर्थः ॥६७॥ ऐंदवादेःसंकल्पिनार्थोहंस्यामितिसंकल्पादचलसंविदोद्वयंप्रथमंप्रातिभासिकःसंकल्पदार्ढ्यैर्व्यावहारिकश्चेतिद्वयंभवेदित्ययमर्थोदृष्टः॥अन्यस्यासंकल्पयितुःपुरुषांतरस्यस्वात्मनिविषयांतरेवाअचलसंविदोपितद्द्वयमपिनश्यतिनदृश्यतइत्यर्थः॥६८॥एवंदक्षिणाद्देशादुत्तरामन्यांवाआशांयामीत्यचलसंविदोमानसंशारी

दृष्टंसंकल्पितंचार्थंसहाभ्यस्यतियश्चिरम्॥ सोवश्यंतदवाप्नोतिनचेच्छ्रांतोनिवर्त्तते॥६६॥ यासिपूर्वांपश्चिमांचदिशंवेत्तिचिरंविदन्॥ यआस्तेयात्यसौतत्तामन्यस्त्यक्त्वातुनेतराम्॥६७॥ दृष्टःसंकल्पितश्चार्थःस्यामित्यचलसंविदः॥द्वयंभवेद्द्वयंनश्यत्यन्यस्याचलसंविदः॥६८॥दक्षिणादुत्तरांवाशांयामीत्यचलसंविदः॥द्वयंभवेद्द्वयंनश्यत्यन्यस्याचलसंविदः॥६९॥ खेपुरंस्यांभुविमृगःस्यामित्यचलसंविदः॥ द्वयंभवेद्द्वयंनश्यत्यन्यदन्यत्तुतज्जगत्॥७०॥ एकंप्रबोधतःसर्वंचिन्मात्रंतावदात्मखम्॥ तद्देवानेकसंवित्त्यासहस्रंचिज्जडात्मनाम्॥७१॥शरीरमस्त्वप्रतिघमथसप्रतिघंचवा॥ स्वप्नात्मकोयंसंसारोजीवस्येहपरत्रच॥ ७२ ॥ एतन्म्लेच्छादिदेशेषुमृतानांदर्शनात्पुनः॥स्मृतिपूर्वंचकथनात्प्रत्यक्षमनुभूयते॥ ७३ ॥ येमृताभस्मसाज्जाताम्लेच्छदेशेषुतेपुनः॥ आगत्यकथयित्वार्थंगच्छंत्यप्रतिघात्मकाः॥ ७४ ॥ एषचेज्जीवतोधर्मस्तद्देशांतरगेजने॥ मृतइत्येववुद्धेर्थेकस्मान्नैवप्रवर्त्तते॥ ७५॥

रंचेतिद्वयंभवेत् ॥ पूर्वपश्चिमगमनद्वयंचनश्यति॥६९॥७०॥ तत्रप्रबोधतःसर्वमेकमेवचिन्मात्रंतदेवाप्रबोधतोऽनेकसंवित्त्यासहस्रंचिज्जडात्मनांजीवानांभवतीत्यर्थः ॥७१॥ ननुचिदेवचेच्छरीराद्याकारेणास्तेतर्हितस्यसप्रतिघत्वाच्चितोपिसप्रतिघताप्रसक्तातत्राह ॥ शरीरमिति ॥ चिद्रूपेणशरीरमप्रतिघमेवास्तुअथवाअन्यरूपेणसप्रतिघंवास्तुनैतावताकश्चिद्दोषोमिथ्यार्थगतगुणदोषैरधिष्ठानादूषणादितिभावः ॥ ७२ ॥ शरीरनाशेनेनसहजीवोननष्टइत्येतत्कथंज्ञायतइतिचेत्प्रत्यक्षाच्छब्दाच्चेत्याह ॥ एतदिति ॥ म्लेच्छादिदेशेषुमृतानांपिशाचदेहेनेहागतानांभूतविद्याज्ञैःप्रत्यक्षंदर्शनात्पूर्वतनस्वीयगृहव्यापारादीनांतैःस्मृतिपूर्वंकंकथनाच्चजीवचित्सत्वंप्रत्यक्षमनुभूयते ॥ ७३ ॥ ७४ ॥ जीवतोभूतवैद्यादेरेवैषपिशाचदर्शनसंभाषणादिधर्मोनमृतस्यागमनंसंभाषणंवेतिचार्वाककल्पनांप्रत्याचष्टे ॥ एषइति ॥ वस्तुतोऽमृतेमृतइतिभ्रांत्याबुद्धेर्थेपिएवंदर्शनसंभाषणादिव्यवहारः कस्मान्नप्रवर्त्तते ॥ ७५ ॥

किंचजीवधर्मःसोपिभ्रमःसंश्वेन्मृतस्यसंभाषणादिःकिंनसन् ॥ अर्थसिद्धावनुभवशरणानामस्मिन्जीवतियादृगनुभवःसम्मृतेपिसमः ॥ एवंन्यायद्वयेसमेसतिकोविशेषइत्यर्थः ॥ ७६ ॥ एवमनुभवस्यार्थसाधकत्वेजाग्रत्स्वप्नानुभवयोरपियावद्बाधंतुल्यमर्थसाधकत्वंप्रबोधेनानुभवमात्रपरिशेषश्चेतिस्वप्नवदेवजगदाभानमितियत्प्रतिज्ञातमेतदखंडितंदृढीभूतम् ॥ अनेनचविद्वदनुभवानाम तस्यत्रयआवसथास्त्रयःस्वप्नाः वाचारंभणंविकारोनामधेयम् नेहनानास्तिकिंचनेत्यादिशास्त्राणांचानेनैकवाक्यतापरस्परसंवादेनैकार्थनिष्ठताअस्तिउपपन्नेतियावत् ॥ ७७ ॥ इंदुमंदिरेचंद्रबिंबेपश्यतांजनौघानांदृष्टिजालंयादृगप्रतिघंपरस्परप्रतिघातशून्यंसदसदात्मकंकस्यचित्सत्कस्यचिदसदित्येवमात्मकंजगदपितादृगप्रतिघमित्यर्थः ॥ ७८ ॥ यावत्संसर्वसत्त्वेनगृह्यमाणंसन्मात्रस्यैवमात्राःअंशभेदाननुविधत्ते ॥ यादृकंचअच्छानुभवमात्रकम् ॥ नचसन्मात्रमभासमानंसिद्ध्यतीतित

जीवधर्मःसोपिसंश्वेन्मृतधर्मोपिकिंनसन् ॥ यादृगनुभवस्त्वस्मिन्समन्यायद्वयेस्थिते ॥ ७६ ॥ स्वप्नवज्जगदाभानमित्येवंसत्यखंडितम् ॥ आर्यानुभवशास्त्राणामनेनास्त्येकवाक्यता ॥ ७७ ॥ दृष्टिजालंजनौघानांपश्यतामिंदुमंदिरे ॥ यादृगप्रतिघंतादृग्जगत्सदसदात्मकम् ॥ ७८ ॥ सन्मात्रमात्रानुविधमच्छानुभवमात्रकम् ॥ चिन्मात्रंभानमात्रात्मसर्वार्थात्मार्थवर्ज्जितम् ॥ ७९ ॥ सर्वमप्रतिघंशांतंजगदेकंचिदंबरे ॥ अनिंगनमनाभासमात्मन्येवात्मनास्यताम् ॥ ८० ॥ अचलासंविदेवास्तेस्थिरंकृत्वायथायथा ॥ तथातथाभवत्याशु किमसत्किंचवापिसत् ॥ ८१ ॥ शरीराण्यथकर्माणिदुःखानिचसुखानिच ॥ यथास्थितान्युपायांतुयांतुवाकस्यकिंग्रहः ॥ ८२ ॥ इत्थमस्तुसदथान्यथास्तुवामैवभूद्भवतुकोत्रसंभ्रमः ॥ मुंचफल्गुनिफलेफलावहंबुद्धवानसिकृतंपरिभ्रमैः ॥ ८३ ॥ ॥ इ०वा०वा०दे०मो०नि०उ०अ० विपश्चिदुपाख्यानांतर्गतश०निर्वाणवोधोपदेशोनामत्रिचत्वारिंशदुत्तरशततमःसर्गः ॥ १४३ ॥ ॥ ७ ॥

मुनिरुवाच ॥ ॥ सर्वथाभावभावेषुस्वप्नसंवेदनात्मसु ॥ नित्याप्रतिघरूपेषुकिंबद्धंकिंविमुच्यते ॥ १ ॥ खेदृष्टिभासांस्फुरणंयादृशंतादृशंजगत् ॥ विपर्यस्यत्यविरतमबोधाल्लक्ष्यतेस्थिरम् ॥ २ ॥

तदेव तदेवचार्थवर्जितमपिसर्वार्थात्मकंस्फुरतीतिसर्वमप्रतिघंशांतंचेत्यर्थः ॥ ७९ ॥ उक्तमर्थमनुभावयितुमुपायमुपदिशति ॥ अनिंगनमिति ॥ ८० ॥ यथायथामनःस्थिरंकृत्वाआस्तेतथातथाआशुभवतीतिपरेणान्वयः ॥ ८१ ॥ कस्यकिंविपर्ययोग्रहउपादानम् ॥ ८२ ॥ फलावहमवश्यफलदंयत्नंमुंच ॥ ८३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेचतुश्चत्वारिंशदुत्तरशततमःसर्गः ॥ १४४ ॥ ॥ ७ ॥ ॥ चिदेवजगदाभातिजगदेवचचिद्यथा ॥ युक्त्योचतथाब्रह्मसर्वशक्तिसमर्थ्यते ॥ १ ॥ दृश्यस्यचिन्मात्रत्वेबंधमोक्षचिंताप्यपगतैवेत्याह ॥ सर्वथेति ॥ १ ॥ दृष्टिभासांदृक्किरणानांखेयादृशंसंपतद्वटरकमुक्ताकेशोंड्रकाद्यात्मनास्फुरणंतादृशंजगदविरतंपरिणामेन विपर्यस्यतिअधिष्ठानविवेकावोधात्तत्स्थैर्येणस्थिरंलक्ष्यते ॥ २ ॥

१ इदमधिकंदृश्यते ॥ सर्वपुस्तकेषुपरेणेत्यस्यसत्वात्पूर्वश्चैकमर्द्धंपतितमितिवामंतव्यम्

विपर्यासमेवानुभावयति ॥ यदिति ॥ यत्प्रसिद्धंपुरसंस्थानंयथाचिरैरन्यतांसंस्थानांतरताम् ॥ ३ ॥ यस्मिन्नेवकालेभवतितस्मिन्नेवक्षणलवत्रुट्याद्यवयवोदंतैर्युगकल्पाद्यभि
धाविद्वद्भिःकृताः ॥४॥ यज्जगन्नास्तीत्यपलप्यतेचेदशेषंचिदेवकचति ॥५॥नः अस्माकंप्रसिद्धमिदंजगद्यद्यथास्तितद्वत्खेजगतांशतानांशतान्ययुतानिअन्येषांनृणांसंतीतिपश्यं
तुसंभावयंतु ॥ तेषांप्रत्यक्षमन्योन्यमनुभूतयस्तुनअयोग्यत्वादित्यर्थः ॥ ६ ॥ सरआदिशब्दैस्तद्गताजंतवोगृह्यंते ॥ अन्यांस्वस्वास्पदातिरिक्ताम् ॥ ७ ॥ एकेनानुभूयमानत्वा
दसंतिनो ॥ अन्यैरननुभूयमानत्वात्संतिनो ॥ ८ ॥ तदेवस्फुटमाह ॥ कचंतीति ॥ ९ ॥ स्वात्मनःअंगमवयवभूतमिव ॥ एकस्यसरूपमेवापरस्यनीरूपम् ॥ एकस्याप्येकदास
रूपमेवान्यदानीरूपम् ॥ तत्त्वदृशातुसर्वंदैवनीरूपमित्यर्थः ॥ एवंसकारणमप्यकारणम् ॥१०॥ तत्रैतेजीवानांजगत्संस्काराःकिंदेहेसंतिउतचितिं ॥ यदिचितितर्हिसर्वेषांदृश्याः

यद्यथापुरसंस्थानंचिरैरेतितदन्यताम् ॥ जगदप्येवमनिशंवार्यावर्त्तविवर्त्तवत् ॥ ३ ॥ भूम्यंब्वंबरशैलादिभवत्यसदिदंक्षणात् ॥ तस्मि
न्नेवक्षणोदंतैर्युगकल्पाभिधाःकृताः ॥ ४ ॥ जगत्स्वप्नइवाशेषमसदप्यनुभूयते ॥ यन्नास्तिचेत्तन्निःशेषंचिदेवेत्थंकचत्यलम् ॥ ५ ॥ यथे
दंनोजगत्तद्वत्खेशतानांखेशतानिहि ॥ नृणांपश्यंतुतेषांतुनान्योन्यमनुभूतयः ॥ ६ ॥ सरोब्धिकूपभेकानांदृष्टाःप्रत्येकमास्पदे ॥ नतेन्योन्यं
विदंत्यन्यांदृश्यादिनियतिंक्वचित् ॥ ७ ॥ यथाजनशतस्वप्ननगराण्येकमंदिरे ॥ तथाजगंतिखेभांतिखानिनोसंत्यसंतिनो ॥ ८ ॥ कचंति
नृशतस्वाप्नपुराण्येकगृहेयथा ॥ नचनामकचंत्येवंसंत्यसंतिजगंतिखे ॥ ९ ॥ चिच्चमत्कारमात्रंस्वंस्वात्मांगंदृश्यमद्वयम् ॥ सरूपमेवनी
रूपंसकारणमकारणम् ॥ १० ॥ दधत्याश्चित्स्वभावायाःसंस्काराद्यभिधाःकृताः ॥ प्रतिमायाःप्रभाविन्यानसंस्कारादयःपृथक् ॥ ११ ॥
अपूर्वत्वात्स्मृतिःस्वप्नःसंकल्पार्थानुभूतिषु ॥ स्वस्मृत्यनुभवाद्यास्तुदृष्टार्थसदृशीषु च ॥ १२ ॥ इदंसर्गात्मसर्गादौप्रतिभैवविजृंभते ॥ चिद्रामा
त्रात्मिकास्वच्छानान्यन्नामोपपद्यते ॥ १३ ॥ ब्रह्मैवभातिजगदित्युक्तमुक्त्यानयाभवेत् ॥ नचभातंनवंतच्चब्रह्मैवेदमतःस्थितम् ॥ १४ ॥

स्युः ॥ यदिदेहेतर्हिदेहापगमेउच्छिद्येरन्नित्याशंक्याह ॥ दधत्याइति ॥ नकेवलंचितोनापिदेहप्रतिमायाःकिंतुतत्तद्दृश्याकारपरिणामंदधत्याश्चिदाभासव्याप्यायाचित्स्वभावाया
बुद्धेरेवसंस्काराद्यभिधाःकृताः ॥ प्रभाविन्याबुद्धिप्रभावेणैवप्रभाववत्याः ॥११॥ यदिजगत्संस्कारधारिण्याबुद्धेरेवपरिणामोजगत्तर्हिसंकल्पार्थानुभूतिषुस्मृतित्वमेवस्यात्तत्रा
ह ॥ अपूर्वत्वादिति ॥ पूर्वदृष्टार्थसदृशीष्वपिसंकल्पार्थानुभूतिषुस्मृतिरेवअपूर्वत्वात्पूर्वानुभूततत्तांशप्रमोषात्स्वप्नोभवतितत्रस्वस्मृत्यनुभवाद्यास्तुइहजन्मन्यननुभूताअपिजन्मां
तरेअनुभूताएवेतितत्संस्कारवत्येवाध्यस्यंतेइतिविशेषइत्यर्थः ॥ १२ ॥ इदंजाग्रत्सर्गात्मजगदपिस्वप्नप्रतिभैवसर्गादौविजृंभते ॥ १३ ॥ सर्वथाभावभावेष्वित्याद्युक्तिभंगीभेदा
नांपर्यवसितंतात्पर्यंपिंडीकृत्याह ॥ ब्रह्मैवेति ॥ तच्चनवंभातंनप्राग्भातमितिनकिंत्वनादिभारूपंतदैक्यापन्नंचेदंजगदनादिब्रह्मैवेतितात्पर्यंस्थितंपर्यवसन्नमित्यर्थः ॥१४॥

सपरमात्मैवकारणंकार्यमितिचोक्तः ॥ यतःसएवपूर्वःपूर्वंचकारणंसामान्यरूपम् ॥ सएवविशिष्यतेविशेषरूपंचकार्यम् ॥ कार्यसंस्काराधारोहिबीजंकारणंसम्यक्करोतिकार्यमि
तिव्युत्पत्तेस्तेनैषआत्मैवसंस्कारइत्युक्तः॥ तत्रकृतिःकार्यानुकूलोयत्नःकृधात्वर्थः ॥ सम्यक्करणंसंस्कारइतिव्युत्पत्त्याकृतिलक्षणःसंस्कारोप्येषआत्मैवोच्यते ॥१५॥ तत्तत्र
स्वप्नादौअपूर्वोजाग्रदर्थविलक्षणोयोर्थोजाग्रदर्थदृष्टांतइतिभातिसएवसूक्ष्मार्थत्वात्संस्कारोवासनारागोद्वेषइच्छेत्यादिनाम्नाउक्तोनकश्चिद्वाह्योर्थोन्यश्चेतसिसंस्कारनामानि
विष्टोस्तीत्यर्थः ॥ १६ ॥ तच्चसंस्काराख्यंवस्तुस्वप्नेदृष्टंजागरेअदृष्टम् ॥ नचादर्शनमात्रेणनास्तीतिमंतव्यम् ॥ यतश्चित्ताकाशेचेतनेवसंदेवास्ते ॥ तच्चस्वात्मापिसाक्षिस्वभावा
त्स्वप्नेभातिजाग्रद्दृष्टपदार्थवच्चातितरांजृंभतेविस्तीर्यते ॥ १७ ॥ तदेवसाधनसंपत्तिसहितश्रवणावधारिताद्वितीयप्रत्यग्ब्रह्मलक्षणवेदांतार्थात्मसत् ॥ पूर्वप्रसिद्धद्वैतसर्गबाधात्म

सकारणंकार्यमित्युक्तःसपूर्वःसविशिष्यते॥ संस्कारइतितेनैषसंस्कारःकृतिरुच्यते ॥ १५ ॥ तत्स्वप्नादावपूर्वोर्थोदृष्टांतइतिभातियः ॥ स
संस्कारादिनाम्नोक्तोनबाह्योर्थोस्तिचेतसि ॥ १६ ॥ वस्तुदृष्टंनदृष्टंचसच्चास्तेचेतनेवखे ॥ स्वभावाद्भातिखात्मापिदृष्टवच्चातिजृंभते
॥ १७॥ वेदांतार्थात्मकंपूर्वसर्गाभावंप्रवर्तते॥ ततोवेद्यव्यवस्थाज्ञैःक्रियतेस्वार्थसिद्धये॥ १८॥ स्वप्नेतुजाग्रत्संस्कारोयस्तज्जाग्रत्कृतं
नवम्॥ अजाग्रज्जाग्रदाभासंकृतमित्येवतद्विदः॥ १९॥ ततोवायाविवाऽऽस्पंदाश्चित्तेभावाःस्थितास्वतः॥ तेस्वतःसंप्रवर्त्ततेकात्रसं
स्कारकर्तृता॥ २०॥ एकंतथाचचिन्मात्रंस्वप्नेलक्षात्मतिष्ठति॥ पुनर्लक्षाद्यतःस्वप्नएकमास्तेसुषुप्तकम्॥ २१॥ चिद्व्योम्निस्वप्नसंवित्ति
र्यासैवजगदुच्यते॥ सुषुप्तंप्रलयःप्रोक्तस्तस्मान्न्यायोयमेवसन्॥ २२॥ एकमेवचिदाकाशंसाकारत्वमनेककम्॥ स्वरूपमजहद्धत्ते
यत्स्वप्नइवतज्जगत्॥ २३॥ एवंचित्परमाण्वंतर्जगद्भावमिदंस्थितम्॥ तदनन्यात्मचाभोगिस्वप्नादर्शतलेष्विव ॥ २४॥ चिद्व्योमसंवि
न्मात्रंयत्परमाणुवदाततम्॥ अनादिमध्यपर्यंतंतदेवजगदुच्यते॥ २५॥ तस्माद्यत्रचिदाकाशमनंतंसततंस्थितम्॥ तत्रास्तीतिजग
द्भानंतदंगानन्यरूपियत्॥ २६॥

कंसत्यथास्थितेस्वभावेप्रवर्त्ततेएतादृशंतत्स्वभावंनिश्चित्यज्ञैःपंडितैःस्वार्थस्यपरमपुरुषार्थस्यशिष्येष्वपिसिद्धयेप्रागज्ञातआत्मैवजगत्संसारः सम्यग्विचार्यज्ञातस्तुअद्वयंब्रह्मै
वमोक्षश्चेतिव्यवस्थाशास्त्रेषुक्रियतइत्यर्थः ॥ १८ ॥ इदानीमन्यकृतंस्वप्नदर्शनप्रकारमनूद्यदूषयति ॥ स्वप्नेत्वित्यादिना ॥ स्वप्नेयोजाग्रत्संस्कारस्तज्जाग्रत्कृतंनवमपूर्वरूपंतच्च
अजाग्रदेवजाग्रदाभासंजाग्रदनुभवेनकृतमितितद्विदःकेचिन्मन्यंतइत्यर्थः ॥ १९ ॥ तन्न यतोवायावास्पंदाइवस्वप्नाद्यात्मनाभावाःस्वतएवस्थिताः ॥ तेचस्वतएवस्वप्नाकारे
णप्रवर्त्ततेतत्रजाग्रतःसंस्कारकर्तृताकेत्यर्थः ॥ २० ॥ चित्तेसर्वेभावाःस्थिताइतिकुतोज्ञायतेतत्राह ॥ एकमिति ॥ २१ ॥ २२ ॥ २३ ॥ एवमुक्तयोपपत्त्यातत्त्वचितःअनन्या
त्मयथास्वप्नेषुयथावाआदर्शतलेषुदृष्टंमुखवनपर्वतादिअनन्यात्मतद्वदित्यर्थः ॥ २४ ॥ परमाणुवत्परमसूक्ष्ममाततंविस्तीर्णंचकालतोप्यनादिमध्यपर्यंतम् ॥ २५ ॥ तस्यांगमि
वअनन्यरूपि ॥ अंगेतिसंबोधनंवा ॥ २६ ॥

न्यायाद्गुरुशास्त्रोक्तयुक्तिकलापात्परिज्ञानात्जगत्पराणूदरेपियातिस्थूलतांपरित्यज्यपरमसूक्ष्मचिन्मात्रतामापद्यतइतियावत् ॥ २७ ॥ कीदृशंतद्गुरुशास्त्रोक्तन्यायैःपरिज्ञानं तत्स्वानुभवाभिलापेनदर्शयति ॥ तस्मादिति ॥ २८ ॥ २९ ॥ चित्परमाण्वात्माशोधितत्वंपदार्थरूपोहंतेनचित्परमाणुनाशोधिततत्पदार्थेनब्रह्मणासहतदीक्षणादेकतामागतः ॥ तथाचश्रुतिः ॥ यथाजलंजलेक्षिप्तंक्षीरेक्षीरंघृतेघृतम् ॥ अविशेषोभवेत्तद्वज्जीवात्मापरमात्मनीति ॥ ३० ॥ एवंप्रश्नोत्तरप्रसंगेनात्मज्ञानरहस्यमुक्त्वाप्रस्तुतकथामवलंब्याप्या ह ॥ तदोजइत्यादिना ॥ तदनुभूतिस्तस्याण्योजोंतर्गतवासनामयजगदनुभवस्तद्वदितिप्राक्तनकथाशेषानुसंधानोक्तिः ॥ यथाआम्रेअंकुरेसूक्ष्मरूपेणस्थितंभाविबीजमंतस्थभा विवेचिन्त्यसहस्रगर्भंतद्वदित्यर्थः ॥ ३१ ॥ तत्रमेअंतरेवात्मनितदीयंमदीयमन्यदीयंचसर्वंवासनामयंत्रिजगद्रूपमात्मनिप्रत्यक्चैतन्येकचितम् ॥ तज्जगद्रूपंकिंचिदपिबाह्येनविद्य

चिन्मात्रएवभुवनंत्वमहंचिन्मयंजगत् ॥ इतिन्यायाज्जगद्यातिपरमाणूदरेप्यजम् ॥ २७ ॥ तस्मादहंपराण्वात्मासमस्तजगदाकृतिः ॥ सर्वत्रैवचतिष्ठामिपरमाणूदरेपिच ॥ २८ ॥ चिन्मात्रपरमाणुःसन्जगदात्माप्ययंनभः ॥ यत्रतिष्ठाम्यहंतत्रपश्यामिभुवनत्रयम् ॥ २९ ॥ अहंचित्परमाण्वात्मातेनचित्परमाणुना ॥ एकतामागतोवारिवारिणेवतदीक्षणात् ॥ ३० ॥ तदोजःसंप्रविश्याहंस्थितस्तदनुभूतिवत् अंतस्थत्रिजगद्रूपोयथाम्रेबीजमंकुरे ॥ ३१ ॥ तत्रमेत्रिजगद्रूपमंतःकचितमात्मनि ॥ तथातन्नतुतद्बाह्येविद्यतेकेनचित्क्वचित् ॥ ३२ ॥ यत्रयत्रयदाभातिस्वप्नेजाग्रदितीहवा ॥ सबाह्याभ्यंतरंदृश्यंनिजंचिद्भानमेवतत् ॥ ३३ ॥ भातिस्वप्नेयदाजंतोर्जगदानंदमाततम् ॥ चिद् णोरिवतद्भानमात्मनस्तत्पदात्मना ॥ ३४ ॥ ॥ व्याधउवाच ॥ ॥ अकारणंचेद्दृश्यंततत्कथमेतत्प्रसिध्यति ॥ सकारणंचेद्दृश्यंतत्स्वप्नेसर्गा दिधीःकुतः ॥ ३५ ॥ ॥ मुनिरुवाच ॥ ॥ अकारणकएवायंसर्गआदौप्रवर्त्तते ॥ समस्तकारणाभावाद्यतःसर्गात्मचिन्नभः ॥ ३६ ॥ अ कारणानांभावानामत्यंतासंभवादिह ॥ क्वचित्सप्रतिघःसर्गोनसंभवतिकश्चन ॥ ३७ ॥ ब्रह्मेदमित्थमाभातिभास्वरंचित्स्वभावतः ॥ स र्गादिशब्दपर्यायमाद्यंतपरिवर्जितम् ॥ ३८ ॥ इत्यकारणकेसर्गेकचतिब्रह्मरूपिणि ॥ परस्यावयवाभासेनित्यात्मावयवात्मना ॥ ३९ ॥

ते ॥ तद्बहिर्देशस्यैवात्यंताप्रसिद्धेरितिभावः ॥ ३२ ॥ ३३ ॥ तत्पदात्मनास्वप्नस्थानात्मना ॥ ३४ ॥ कथंप्रसिद्ध्यति ॥ अकारणकस्यशशशृंगादेःस्वरूपासिद्ध्यदर्शनात् ॥ यदि सकारणंतर्हिस्वप्नेघटादिसर्गकारणदंडचक्रादीनामभावात्सर्गादिधीःकुतःकारणादितिसंदिहानस्यप्रश्नः ॥ ३५ ॥ अकारणकपक्षमेवब्रह्माद्वैतपर्यवसानेनसमर्थयन्मुनिरुत्तरमा ह ॥ अकारणकएवेति ॥ ३६ ॥ अकारणकःसप्रतिघःस्थूलसर्गोनसंभवति ॥ प्रातिभासिकेतुमिथ्याभूतेनसकारणकत्वनियमइतिभावः ॥ ३७ ॥ ॥ ३८ ॥ इतिउक्तरीत्यास र्गेअकारणकेअत्यंतमसंभाविते सतिब्रह्मरूपिणिपरस्यअवयवाभासेमायाप्रतिबिंबचैतन्येनित्यस्यात्मनऔपाधिकावयवात्मनाअनानात्वेपिनानात्वेअत्यंतमयुक्तेब्रह्मण्यब्रह्मरू पिणिअनाकारेपिसाकारेअप्रतिघंप्रतिकचतिप्रतिभातेसतिनिराकारंतद्ब्रह्मैवचिद्रूपत्वात्स्फुरद्वपुःसाकारमिवभातात्मभूत्वादेवर्षिमुनिभारूपंस्थावरंजंगमंक्रमात्सर्वांनियतिंविधि प्रतिषेधादींश्चकरोतीतिफलितमितिचतुर्णामन्वयः ॥ ३९ ॥

॥ ४० ॥ ४१॥४२॥ ब्रह्मकृतत्वादेवभावाभावाद्यर्थव्यभिचारेपिनतन्नियतेर्व्यभिचारइत्याह ॥ भावेति ॥ आअखिलास्ततःसर्वास्तमयलक्षणंमोक्षंमर्यादीकृत्येत्यर्थः॥४३॥ ततोनियतिकल्पनातःप्रभृतिनियतिविशेषरूपांकार्यकारणतांविनाभावानांसंभवोनास्ति ॥ ४४ ॥ तस्यब्रह्मणोनियतिस्तत्कल्पकोनायकोभोक्ताजीवश्चेतिकरद्वयसदृशमंगं ब्रह्मतआत्मनास्वेनैवप्रवृत्तम् ॥ तद्ब्रह्मतेनैकेनस्वांगेनापरंकरेणापरंकरमिवसंयमयतिनियच्छति ॥ ४५ ॥ अतएवजीवस्यैवमेवजाग्रत्स्वप्नलक्षणःसर्गःअबुद्धिपूर्वमनिच्छंचका कतालीयवत्प्रवर्त्तते ॥ ४६ ॥ कारणप्रयुक्तःकार्येसन्निवेशविशेषनियमएवनियतिस्तांसंनिवेशनियतिंविनाक्षणमप्यज्ञातंब्रह्मस्थातंनशक्नोति ॥ यथामृच्चूर्णपिंडघटकपाला द्यन्यतमसन्निवेशंविनानतिष्ठतितद्वदितिभावः ॥ तच्चसन्निवेशधारणंज्ञानेनसर्वात्मतैवात्यंतिकःक्षयोयस्यतथाविधमामोक्षमनुवर्त्ततइत्यर्थः ॥ ४७ ॥ एवंनियतिकल्पनातःस

अनानात्वेपिनानात्वेब्रह्मण्यब्रह्मरूपिणि॥ अनाकारेपिसाकारेकचत्यप्रतिघंप्रति ॥ ४० ॥ तद्ब्रह्मैवनिराकारंचिद्रूपत्वात्स्फुरद्वपुः॥ साकारमिवभातात्मभूत्वास्थावरजंगमम्॥ ४१ ॥ देवर्षिमुनिभारूपंकरोतिनियतिंक्रमात्॥ विधींश्चप्रतिषेधांश्चदेशकालक्रियादिकान् ॥ ४२ ॥ भावाभावग्रहोत्सर्गस्थूलसूक्ष्मचराचराः॥ अर्थाव्यभिचरंत्येतेनियतिर्नाखिलास्ततः॥ ४३॥ ततःप्रभृतिभावानांसकारणकतांविना॥ सैकतादिवतैलानांनसंभवतिसंभवः॥ ४४ ॥ नियतिर्नायकश्चैवब्रह्मतश्चांगमात्मना ॥ स्वांगेनसंयमयतिकरेणेवनिजंकरम्॥ ४५॥ अबुद्धिपूर्वंचानिच्छमेवमेवप्रवर्त्तते॥ काकतालीयवत्स्पंदादावर्त्ताइववारिणि ॥ ४६ ॥ संनिवेशोहिनियतिस्तांविनाप्रतिघोदयम्॥ ब्रह्मस्थातुंनशक्नोतितच्चसर्वात्मताक्षयम्॥ ४७॥ एवंसकारणंसर्वंसर्वदादृश्यमंडलम् ॥ यस्यसर्गेयतःकालात्ततःप्रभृतितंप्रति॥ ४८ ॥ भात्यकारणकंब्रह्मसर्गात्माप्यबुधंप्रति॥ तंप्रत्येवचभात्येषकार्यकारणदृग्भ्रमः ॥ ४९॥ काकतालीयवत्सर्गस्थितेत्वात्त्विवत्तिवत्॥ इदमित्थमिदंनेत्थमितीयंनियतिःस्थिता ॥५० ॥ सकारणत्वंभावानामवश्यंभाविनिक्रमे ॥ जाग्रत्स्वप्नदृशोनेहसंभवंत्यपकारणाः॥ ५१ ॥

वंसकारणंयंप्रतियतःकालात्प्रभृतिनियतिर्यस्यसर्गेप्रवृत्तातंप्रत्येवनपुरुषांतरंकालांतरभाविपदार्थंचप्रतीत्यर्थः ॥ ४८ ॥ अकारणकंब्रह्मअबुधमज्ञंप्रतिसर्गात्मापिभाति ॥ ४९॥ विवेकिदृशाकाकतालीयवत्सर्गेस्थितेसतिपूर्वापरीभावनियममात्रदर्शनादिदंघटादिइत्थंदंडचक्रमृदादिसामग्रीतोजातंइदंपटादितुरीवेमादितइत्थंविधंजातमितिपर्यालोचनेननि त्यवेदस्यपदवाक्यव्याकरणनियतिरिवस्थितेत्यर्थः ॥ ५० ॥ जन्यभावानामवश्यंभाविनिपौर्वापर्यक्रमेसकारणकत्वमेवेतियोमन्यतेतस्यजाग्रत्स्वप्नदृशःअकारणानसंभवंति ॥ नहिस्वप्नसुषुप्त्यन्यतरानंतरंजाग्रत्प्रपंचोत्पत्तौकारणानिसंति ॥ एवंजाग्रत्सुषुप्त्यन्यतरानंतरंस्वप्नप्रपंचोत्पत्तावपिकारणानिनिरूपयितुंनशक्यंतेइतिसोपिनसंभवति ॥ नच जाग्रदंतरितःस्वप्नप्रपंचस्तथैवास्तेयेनस्रष्टिनापेक्षेत ॥ एवंस्वप्नसुषुप्त्यंतरितोजाग्रत्प्रपंचोपीत्यर्थः ॥ ५१ ॥

यथामयैवप्राण्योजसिस्वमेदृष्टाःअखिलांभुवमभिव्याप्यांवुसंक्षोभात्प्रलयभ्रमास्तत्रकिंकारणंत्वयादृश्यतेकिंवातत्रश्रुतिनोपिश्रूयतांप्रमाणांतरेणवाऽनुभूयताम् ॥ संभावनायांलोट् ॥ नकिंचित्संभावितमित्यर्थः ॥ ५२ ॥ उक्तप्रकाराब्रह्मप्रपंचैक्यप्रतिपादिकायुक्तयोऽनुक्तेष्वपिसर्ववस्तुपुबुद्धिमतांस्वतएवकचंतिस्फुरंति ॥ यथास्फटिकमणयःशुक्तयोवासतिप्रकाशेस्वचाकचक्येनस्वतएवकचंतितद्वत् ॥ तत्तस्मात्सर्वत्रनिर्णयेशास्त्रानुसारियुक्तिभावनानुभवएवसप्रसिद्धःस्वयंसर्वतत्त्वनिर्णयशक्तिमान्सर्वप्रमाणजीवितात्मकोजयतिसर्वोत्कर्षेणवर्त्ततइत्यर्थः ॥ ५३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेचतुश्चत्वारिंशदुत्तरशततमःसर्गः ॥ १४४ ॥ ॥ ७ ॥ ॥ श्लेष्मपित्तानिलापूर्णजीवस्यौजसिकल्पिताः॥स्वप्नभेदाइहोच्यंतेतथाक्षैर्वाह्यविभ्रमाः ॥१॥ अयंजीवोबहिर्ष्ठैरिंद्रियैर्वाह्यमेवस्वप्नंवेत्ति ॥ अंतस्थैरिंद्रियैरंतःस्वप्नंवेत्ति ॥ वाह्यांतरद्वयस्थैरुभयत्रव्यापारसिद्ध्यर्थमतितीव्रसंवेगितैरिंद्रियैस्तुद्वयमपिवेत्ति ॥ १ ॥ तर्हिवहिर्ष्ठैरिंद्रियैर्यदावहिर्व्यवहरतितदाकिमांतरव्यवहारोनास्त्येवनेत्याह ॥ यदेति ॥ अस्त्येव

यथास्वप्नेखिलामंवुसंक्षोभात्प्रलयभ्रमाः॥ दृश्यतेकारणंतत्रश्रूयतामनुभूयताम् ॥ ५२ ॥ सर्ववस्तुपुकचंतिसर्वदायुक्तयःस्फटिकशुक्तयोयथा॥ भावनानुभवएवसस्वयंशक्तिमान्जयतिजीवितात्मकः॥५३॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०अ०वि०श०पदार्थविचारोनामचतुश्चत्वारिंशदुत्तरशततमःसर्गः॥ १४४ ॥ ॥ ७॥ ॥मुनिरुवाच॥ ॥वहिष्ठैर्वाह्यमेवांतरंतस्थैःस्वप्नमिंद्रियैः॥जीवोवेत्तिद्वयस्यातितीव्रसंवेगिभिर्द्वयम्॥ १ ॥ यदेंद्रियाणितिष्ठंतिवाह्यतश्चसमाकुलम्॥ तदाम्लानानुभवनःसंकल्पार्थोनुभूयते॥ २ ॥ यदात्वंतर्मुखान्येवसंत्यक्षाणितदाजगत्॥ अणुमात्रंस्ववपुपिजीवस्तेनातिवेत्तितत्॥३॥ जगत्सप्रतिघंनास्तिकिंचिदेवकदाचन॥ जीवेक्षणानामक्षाणांदृष्टिरप्रतिघाजगत्॥ ४॥ जीवनेत्राणींद्रियाणियदावाह्यमयान्यलम्॥ तदावाह्यात्मकंवेत्तिचितिजीवोजगद्वपुः॥ ५॥ श्रोत्रंत्वगीक्षणंघ्राणंजिह्वाचेतीहितात्मकः॥ संघातःप्रोच्यतेजीवश्चिद्रूपोनिलमूर्त्तिमान्॥ ६॥ सर्वत्रसर्वदाजीवःसर्वेंद्रियमयःस्थितः॥ चिद्व्योमाव्ययस्तेनसर्वंसर्वत्रपश्यति ॥ ७॥

किंतुमनोराज्यकल्पःससंकल्पार्थोम्लानमनुभवनंयस्यतथाविधोनुभूयतेनस्वप्नवत्स्फुटानुभवनइत्यर्थः ॥ २ ॥ अणुमात्रंवासनामात्रत्वादतिसूक्ष्ममपिस्वाभंजगदतिवेत्तिस्थूलमिवपश्यतिसएवतस्यअम्लानानुभवइत्यर्थः ॥ ३ ॥ वाह्यमांतरंवाजगत्सप्रतिघंस्थूलंवस्तुतोनास्ति ॥ जीवस्यईक्षणानांदर्शनकरणभूतानामक्षाणामिंद्रियाणांस्थौल्यकल्पनेअप्रतिघानिष्प्रतिघातायादृष्टिःसैवस्थूलंजगदित्यर्थः ॥ ४ ॥ अतएववहिरंतर्वायत्रैवेंद्रियप्रसरस्तत्रैवस्थूलवज्जगद्दर्शनमित्याह ॥ जीवेति ॥ ५ ॥ श्रोत्रादिपहणंवागादीनामप्युपलक्षणम् ॥ अनिलमूर्त्तिमान्पंचप्राणघटितः ॥ ईहितमिच्छाप्रधानमंतःकरणचतुष्टयंतदात्मकःसंघातआतिवाहिकदेहःसएवकूटस्थचिदाभाससंवलनाच्चिद्रूपोजीवःप्रोच्यतइत्यर्थः ॥ ६ ॥ तादृशोजीवःस्ववासनामयंजगदंतःपश्यतुनाम वहिस्तुवासनाभावात्कथंतन्मयंजगत्पश्यतितत्राह ॥ सर्वत्रेति ॥ तत्रकूटस्थचिदेवचिदाभासःसमष्टिव्योममयःसन्सर्वत्रसर्वदासर्वेंद्रियमयःस्थितस्तस्मिन्सर्ववासनाधिष्ठानेवाह्यजगदध्यासउपपन्नएवेतिभावः ॥ ७ ॥

तत्रांतःस्वप्नविशेषवैचित्र्यदर्शने ओजसि प्रविष्टस्य जीवस्य श्लेष्माद्यन्नरसविशेषपूर्णनाडीप्रवेश एव निमित्तमित्येतत्प्रपंचयति ॥ श्लेष्मात्मनेत्यादिना ॥ यदा उपसंहृतकरणविस्तारः सन्नणुरूपः सहस्रधा विदीर्णकेशभागप्रमाणसूक्ष्मनाड्यंतःसंचारयोग्यस्तेतव जीवो नाड्यंतर्गतेन श्लेष्मात्मना अन्नरसेन आपूर्यते तदा तत्तदक्षाणुकेतत्रैव नाड्यंतर्वक्ष्यमाणप्रकारान्स्वाप्नभ्रमान्विदतीत्यर्थः ॥ ८ ॥ स्वयं क्षीरार्णवे उड्डीन इव भूत्वा चंद्रोदयान्वितं नभो विंदतीति सर्वत्रानुषंगः ॥ ९ ॥ पुष्पमयानां दिव्याभ्राणां प्रतिधानानि प्रतिनिधिभूतानि सरांसि वसंतराजस्यांतःपुरभूतान्युद्यानानि खे जीवाकाशे उदितानि ॥ १० ॥ ११ ॥ तरलाः शफर्यस्तल्लक्षणतरलेक्षणाः ॥ १२ ॥ इंदुमयैस्तलैः कुट्टिमैः कृतानीव सौधानि ॥ १३ ॥

श्लेष्मात्मना रसेनांतर्जीव आपूर्य्यते यदा ॥ तेक्षाणुकेणुरूपात्मा तदा तत्रैव विंदति ॥८॥ क्षीरार्णवइवोड्डीनो नभश्चंद्रोदयान्वितम् ॥ सरांसि फुल्लपद्मानि कह्लारवलितानि च ॥९॥ पुष्पाभ्रप्रतिधानानि परिगीतानि षट्पदैः ॥ वसंतांतःपुराण्यंतरुद्यानान्युदितानि खे ॥१०॥ उत्सवान्मंगलाकीर्णाँल्लीलालोलांगनागणान् ॥ भक्ष्यभोज्यान्नपानश्रीपरिपूर्णगृहाजिरान् ॥११॥ सपुष्पाः फेनहसनास्तरलातरलेक्षणाः ॥ विलासेनांबुधिं यांति सरितो मत्तयौवनाः ॥ १२ ॥ हिमवच्छुभ्रशृंगाणि सौधानि शिशिराण्यलम् ॥ सुधावधौतभित्तीनि कृतानींदुतलैरिव ॥ १३ ॥ शिशिरासारहेमंतप्रावृण्मेघवृतानि च ॥ स्थलानि नीलनलिनीलताशाद्वलवंति च ॥ १४ ॥ पुष्पप्रकरसंछन्ना विश्रांतहरिणाध्वगाः ॥ स्निग्धपत्रतरुच्छायाः पुरोपवनभूमिकाः ॥ १५ ॥ कदंबकुंदमंदारमकरंदेंदुकांतिभिः ॥ भासमानासनस्थानसंस्थानाः कुसुमस्थलीः ॥ १६ ॥ नलिनीजालिनीर्नीलाः पुष्पकस्थलधारिणीः ॥ वनावलीर्विलीनाभ्रनिर्मलाकाशकोमलाः ॥ १७ ॥ कदलीकंदलीकुंदकदंबकृतशेखराः ॥ गिरिमालाश्चलच्चारुलीलापल्लवपेलवाः ॥ १८ ॥ हेलावलितधम्मिलमुक्तमालतिकालताः ॥ इव बालांगना नृत्यंत्वानास्तनुगात्रिकाः ॥ १९ ॥ उत्फुल्लश्वेतनलिनीनिभा नरपतेः सभाः ॥ चारुचामरभृंगारवितानकशतावृताः ॥ २० ॥ वल्लीवलयविन्यासविलासवलितांगिकाः ॥ वनमालाविलोलांबुप्रणालीकाकलीकलाः ॥ २१ ॥ धराभरकरालांगधाराधरधराधराः ॥ दिशः सीकरनीहारहारोदरधरा दश ॥ २२ ॥

॥ १४ ॥ विश्रांता हरिणा अध्वगाश्च यत्र ॥ १५ ॥ भासमानमासनस्थानस्येव संस्थानं यासां ताः ॥ १६ ॥ विलीनाभ्रो निर्मलः शरदाकाश इव कोमलाः स्निग्धाः ॥ १७ ॥ कदली कंदली च मृगभेदास्तरुगुल्मभेदाश्च ॥ गिरिमालाः पर्वतपंक्तीः ॥ १८ ॥ हेलावलितैर्धम्मिल्लैर्मुक्ताः प्रसृतसंवलितशाखा मालतिकालता इव स्थिता नृत्यंतन्वाना बालांगना विंदति ॥ १९ ॥ २० ॥ वनमाला वनपंक्तीः ॥ विलोलांबूनां प्रणालीषु कुल्यासु पक्षिकाकलीभिः कला गंभीराः ॥ २१ ॥ धराया भरे भरणे वर्षैः पूरणविषये करालांगा ये धाराधरास्तद्युक्ता धराधराः पर्वता यासु तथाविधा दश दिशः ॥ २२ ॥

श्लेष्मपूर्णनाडीदृश्यान्स्वप्नविशेषान्प्रपंच्यपित्तरसपूर्णनाडीदृश्यांस्तानाह ॥ पित्तात्मनेत्यादिना ॥ २३ ॥ ज्वालालींविंदतिपश्यतीतियावत् ॥ २४ ॥ ज्वालालीरेवविशिनष्टि ॥ संतप्तेति ॥ संतप्तसिकतानांसेकैःसनीहाराःसबाष्पाःसरिल्लक्षणाःशिरायाभ्यः ॥ २५ ॥ चक्रधाराइवशितानिशितास्त्विषोयेषाम् ॥ विपरीताविशेषतोव्याप्तारसाकराजलाशयायेभ्यः ॥ २६ ॥ स्वेदंसार्द्रोष्माणम् ॥ स्विन्नंस्वेदनार्द्रम् ॥ प्रतद्दौवृक्षगुल्मतृणादीनामतिनैविड्यंतयुक्तानिगहनान्यरण्यान्यपि ॥ २७ ॥ प्रतरत्सुप्रवहत्सुमृगतृष्णांबुपूरसत्सारसैरूपिशोभमानम् ॥ २८ ॥ संभ्रमोभयंतद्वशादध्वगमध्वसुधावंतंस्वंपश्यति ॥ अमृतवद्दृष्टंदर्शनात्संभावितम् ॥ २९ ॥ ३० ॥ गृहादिव्योमांतेपुअग्निकाःज्वलद

पित्तात्मनारसेनांतर्ज्जीवआपूर्यतेयदा ॥ ओजोंतरणुमात्रात्मातदातत्रैवविंदति ॥ २३ ॥ पवनस्पंदसंशुष्ककिंशुकद्रुमशोभनाः ॥ ज्वालालीरुज्वलांभोजदलपल्लवपेलवाः ॥ २४ ॥ संतप्तसिकतासेकसनीहारसरिच्छिराः ॥ दावानलशिखाश्यामधूमश्यामलदिङ्मुखाः ॥ २५ ॥ कृशानुकर्कशानर्कांश्चक्रधाराशितत्विषः ॥ दावदाहविपावेशविपरीतरसाकरान् ॥ २६ ॥ स्वेदमुष्णीकृताब्धिंवास्विन्नंत्रैलोक्यमंडलम् ॥ क्षरत्क्षाराण्यरण्यानिप्रतद्दंगहनान्यपि ॥ २७ ॥ प्रतरन्मृगतृष्णांबुसरत्सारसरूपिच ॥ स्थलान्यदृष्टपूर्वाणिभूतपूर्वतरूणिच ॥ २८ ॥ अध्वगंसंभ्रमवशात्तप्तधूलिविधूसरम् ॥ दूरादमृतवद्दृष्टंस्निग्धच्छायाध्वपादपम् ॥ २९ ॥ ज्वरज्वालितमाकारंभुवनंतप्तमग्निवत् ॥ पांसूपहतदेशानिदिङ्मुखानिचखानिच ॥ ३० ॥ ग्रहग्रामार्णवाद्र्यब्धिवनव्योमाग्निकादिशः ॥ तुहिनाहारहानंतासंख्यांबुदघटोद्भटान् ॥ ३१ ॥ शरद्ग्रीष्मवसंतांश्वतापानातपदायिनः ॥ तृणपत्रलतौघाभ्रराश्यूष्मपिहितावनीः ॥ ३२ ॥ सौवर्णमंबरतलंभूतलंदिक्तटानिच ॥ तप्तान्यदभ्रसरसीहिमशैलस्थलानिच ॥ ३३ ॥ रसानुरिक्तेवातेनजीवआपूर्यतेयदा ॥ ओजोंतरणुमात्रात्मातदातत्रैवविंदते ॥ ३४ ॥ वातविक्षुब्धसंवित्त्वादपूर्ववसुधातलम् ॥ अपूर्वानगरग्रामशैलाब्धिवनमंडलीः ॥ ३५ ॥ उड्डीयमानमात्मानंशिलाःशैलस्थलानिव ॥ घनघुंघुमसारावानचक्रभ्रमणादिच ॥ ३६ ॥ हयोष्ट्रगरुडांभोदहंसयानावरोहणम् ॥ यक्षविद्याधरादीनांगत्यागमनसंचरम् ॥ ३७ ॥

ग्निमत्योदिशःपश्यति ॥ तुहिनंशीतंआहरतिभक्षयतीतितुहिनाहारोग्निस्तंजहतिमुंचंतिवर्षंतितथाविधाअनंतसंख्यायेअंबुदास्तद्घटोद्भटान्शरद्ग्रीष्मवसंतानितिपरेणान्वयः ॥ ३१ ॥ तृणैःपत्रैर्लतौघैरभ्रराशिभिरूष्मभिश्चपिहिताआच्छादिताअवनीर्भूप्रदेशान् ॥ ३२ ॥ अदभ्रावहुलाःसरसीःहिमशैलस्यस्थलानिप्रदेशभेदांश्वतप्तान्पश्यति ॥ ३३ ॥ रसैरन्नरसैःश्लेष्मपित्तादिभिरनुसृत्यरिक्तेकेवलवायुनैवपूर्णेनाडीप्रदेशेप्रविष्टोऽणुमात्रात्माजीवोयदावातेनआपूर्यतेतदातत्रप्रागुक्तेओजोंतरेववक्ष्यमाणंस्वप्नंविंदते ॥ ३४ ॥ अपूर्वंपूर्वदृष्टविलक्षणम् ॥ ३५ ॥ घनानांघुंघुमैर्गर्जनैःसारावान्सशब्दान्देशान् ॥ विनैवकुलालचक्रंघटानांभ्रमणादिच ॥ ३६ ॥ हंसानैर्यानंगमनंतदवरोहणंच ॥ गतयश्चआगमनानिचदूरतःस्वस्थानेसंचरणंच ॥ गत्येतिपृथक्पदंवा ॥ ३७ ॥

४५७

अद्रिभिर्दिवा उर्व्यां नदीशैलैश्च सहितानां वने भवंतीति वनभुवो वृक्षादयस्तेषां ग्रामाणां पुरां दिशां च भयोन्मुखांगानां मनुष्यादीनां च कंपम् ॥ ३८ ॥ खं मिनोति परिच्छिनत्त्याभासं स्थानशोभायस्य तथाविधं पादपं गिरिं च ॥ ३९ ॥ श्लेष्माद्यैकैकपूरितनाडीभागदृश्यान्स्वप्नानुक्त्वा त्रियपूरितनाडीदृश्यांस्तानाह ॥ वातेत्यादिना ॥ ४० ॥ स्फुटतां महानां सौधानां गिरिकटकानां चारावैः सह भ्रमत्पादपमंडलम् ॥ ४१ ॥ सिंहैर्वारणैर्वर्षाभैश्च निरंतरं दिगंतरं दिङ्मध्यम् ॥ ४२ ॥ तदेव दिगंतरं विशिनष्टि ॥ तालीति ॥ ४३ ॥ दलनेदुर्वारो योमिथः संघट्टस्तेन घट्टितां दरीं पश्यति ॥ ४४ ॥ गिरिशृंगद्वयमध्ये प्रवाहध्वनिभिः शृंगद्वयसंघट्टनसदृशाः चक्रवाकादिकेंकारोत्करैः कर्कशाः मुक्तालतावदापतनैः स्रग्दामसहितमिव नभस्थलं याभिस्ता नदीः पश्यति ॥ ४५ ॥ स्वदृष्टः प्रलयार्णवादिदर्शनस्वप्नोप्येतस्मादेव निमित्तादिति सूचयन्नाह ॥ शिलाशकलेति ॥ शिलाशकलपूर्णैरर्णोभिर्जलैः पू

साद्रिर्वीनदीशानां वनभूग्रामपूर्दिशाम् ॥ कंपं भयोन्मुखांगानां बुद्बुदानामिवार्णवे ॥ ३८ ॥ अंधकूपे निपतितं विपुले संकटेऽथवा ॥ अथवारूढमात्मानं खमाभं पादपं गिरिम् ॥ ३९ ॥ वातपित्तश्लेष्मयुक्तो जीव आपूर्य्यते यदा ॥ भागैर्वातवशं प्राप्तैरार्त्तो सौ विंदते तदा ॥ ४० ॥ पतंतीं पार्वतीं वृष्टिं सुशिलावृष्टिसंकटम् ॥ स्फुटाट्टकटकारावभ्रमत्पादपमंडलम् ॥ ४१ ॥ भ्रमद्रिर्वनविन्यासैः संदिग्धांभोधरोत्कटम् ॥ सिंहवारणवर्षाभ्रनिरंतरदिगंतरम् ॥ ४२ ॥ तालीतमालहिंतालमालाज्वलनसंकुलम् ॥ गुहाघुंघुमनिर्ह्रादभांकारघनघर्घरम् ॥ ४३ ॥ मंद्रमंदरमंथानशब्दसंदर्भसुंदरीम् ॥ दरींदलनदुर्वारमिथः संघट्टघट्टिताम् ॥ ४४ ॥ शृंगसंघट्टसदृशाः केंकारोत्करकर्कशाः ॥ नदीर्मुक्तालतापातसस्रग्दामनभस्तलाः ॥ ४५ ॥ शिलाशकलपूर्णार्णपूर्णांबरमहार्णवम् ॥ वहद्वनघनोद्घातघट्टितब्रह्ममंडलम् ॥ ४६ ॥ परस्परविनिर्मृष्टदशदर्शनदंतुरम् ॥ चटत्कटकटारावस्फुटत्कटकटंकितम् ॥ ४७ ॥ खपातपवनाधूतवनवातलतोदयम् ॥ रणदात्मदृषच्चूर्णकर्बुरांबुजधारिणम् ॥ ४८ ॥ प्राग्भटोद्भटभेदोत्थैर्मंद्रैर्मरमरारवैः ॥ क्रूराक्रंदैरिवाभातिविराजितजगत्त्रयम् ॥ ४९ ॥ इतितैः काष्ठपाषाणमृद्घुग्वातभटैर्वृतः ॥ परिपीडित एवास्ते यदा जीवो जडीकृतः ॥ ५० ॥

र्णांबरं महार्णवं पश्यति ॥ तमेव वर्णयति ॥ वहदित्यादिना ॥ वहतां वनानां घनानां चोद्घातैर्घट्टितमास्फालितं ब्रह्ममंडलं सप्तर्षिलोकोयेन ॥ ४६ ॥ परस्परं तरंगसेकैर्विनिर्मृष्टानां धौतानां दशानां दिशां दर्शनेन दंतुरं हसंतमिव स्थितम् ॥ चटन्दिशआवृण्वन्यः कटकटारावस्तेन स्फुटद्भिरद्रिकटकैष्टंकितं संजातटंकाघातध्वनिमिव स्थितम् ॥ ४७ ॥ खं पततीति खपातो यः पवनस्तेनाधूतं कंपितं यद्वनं तत्र वातानुसारिलतोदयो लतालास्यं यस्मिन् ॥ रणद्भिरात्मकृतैर्दृषच्चूर्णैः कर्बुरवर्णानियान्यंबुजातानि शैवालादीनि धारयतीति तच्छीलम् ॥ ४८ ॥ समुद्राक्रमणात्प्राग्युगांतिप्रवृत्तैर्भटोद्भटानां शूराणां भेदेषु परस्परविदारणेष्विवोत्थितैर्मंद्रैस्तालीवनादिमरमरारवैः क्रूराणां प्राणिनामाक्रंदैरिव विराजितं जगत्त्रयं तदा भातीत्यर्थः ॥ ४९ ॥ त्रिधातुपूर्णनाडीषु इति वर्णितप्रकारैस्तैः सर्वजनप्रसिद्धैः काष्ठैः पाषाणैर्मृद्युतैर्वातैर्भटैर्वावृतः सन्स्वप्ने जडीकृतो जीवः परिपीडित एवास्ते ॥ ५० ॥

मृदंतर्गतकीटादिवत्तादृशपाषाणादिकवच्चानुभवतीतितृतीयेसर्वेषांसंबंधः ॥ ५१ ॥ ५२ ॥ सुषुप्तंतर्हिकदाकेननिमित्तेनानुभवतितदाह ॥ सौषिर्येति ॥ यदायंजीवःपुरीततिना डीपंजरेसर्वपार्श्वास्थ्यपघटितहृदयास्थिपंध्युपलक्षितेप्रविष्टोभवतितदाअग्रेसंचारार्थंसौषिर्यासंभवाद्यस्मिन्प्रदेशेप्राणपवनप्रयुक्तेनस्पंदेनवर्जितःसन्प्रोन्नमतापर्शूनांपार्श्वा स्थीनांपूरेणग्रंथिनाशिलापूरेणबिलेनिरुद्धइववर्जितोव्यापारासमर्थःकृतोभवतितदाप्रागुक्तनिबिडतरौजःशब्दिततेजोंतरेवशैलकोशःशिलाजठरंतदाभमज्ञानगाढत्वादंधकूपो दरोपमंसुषुप्तमनुभवतीतिद्वयोरन्वयः ॥ ५३ ॥ ५४ ॥ ततःपुनःस्वप्नेकथमायातितत्राह ॥ यदेति ॥ भुक्तमन्नंयदापाकेनपरिणतंयदाचाऽन्नरसकृतप्रवेशमार्गनिरोधापग मात्पुनःसौषिर्यमागतंतदाततोनिर्गमनयत्नंप्राणसंचारेणप्राप्यपुनर्जीवःप्राणेनावबोधितःसन्स्वप्नंवेत्ति ॥ ५५ ॥ यदादेहेपरिणमंतस्तेन्नरसायस्मिन्प्रदेशेजीवेनसहनाडीभागे

मृदंतःकीटकणवच्छिलांतर्गतभेकवत् ॥ गर्भस्थापक्वशिशुवत्फलांतर्गतबीजवत् ॥ ५१ ॥ बीजोदरस्थांकुरवद्द्रव्यपिंडोदराणुवत् ॥ अ श्रांतस्तंयकोशस्यदारुपुत्रकदेहवत् ॥ ५२ ॥ सौषिर्यासंभवात्प्राणपवनस्पंदवर्जितः ॥ प्रोन्नमत्पर्शुपूरणशिलापूरेणतर्जितः ॥ ५३ ॥ तदानिबिडतेजोंतरेवानुभवतिस्वयम् ॥ सुषुप्तंशैलकोशाभमंधकूपोदरोपमम् ॥ ५४ ॥ यदापरिणतंयत्नंपुनःसौषिर्यमागतम् ॥ पुनर्वे त्तितदाजीवःस्वप्नंप्राणाववोधितः ॥ ५५ ॥ यदातस्मिन्प्रदेशेंतर्भागभागान्पतंतिते ॥ देहेपरिणमंतोंतस्तदेवात्यद्रिवर्षणम् ॥ ५६ ॥ वह्नेववह्निवद्भुनास्वल्पेनाल्पंप्रपश्यति ॥ वातपित्तादियोगेनबहिरंतश्चसंभ्रमम् ॥ ५७ ॥ पश्यत्येतद्यथैवांतरेषजीवोवशीकृतः ॥ वात पित्तादिवलितोबहिर्वेत्त्येवमेतिवा ॥ ५८ ॥ क्षुब्धैरंतर्बहिश्चैवस्वल्पैःस्वल्पंप्रपश्यति ॥ समैःसममिदंदृश्यंवातपित्तकफादिना ॥ ५९ ॥ ब हिःपश्यत्ययंजीवःकुपितैरेभिरावृतः ॥ स्पंदंभूम्यद्रिनभसांज्वलनंवानलोच्चयैः ॥ ६० ॥ आकाशगमनंचैवचंद्रोदयहिमाचलान् ॥ गह नंवृक्षशैलानांनभःप्लवनमर्णसाम् ॥ ६१ ॥ मज्जनोन्मज्जनंवाब्धौसुरतंसुरसद्मसु ॥ शैलोपवनशुभ्राभ्रपीठविश्रमणोच्चयम् ॥ ६२ ॥

भ्योभागांतराणिपतंतितदाओजोंतरद्रिवर्षणंवेत्ति ॥ ५६ ॥ वह्निवद्भुनावह्नुनरजाठराग्निव्याप्तेनवातपित्तादियोगेनबहिरंतश्चवह्वेवसंभ्रमंपश्यतीतिबहिरपिभ्रांतिदर्शनंवर्णयितुं पीठिकारचनम् ॥ ५७ ॥ तदेववर्णयितुमुपक्रमते ॥ पश्यतीति ॥ ज्ञानेंद्रियैर्वेत्तिकर्मेंद्रियैरेतिवा ॥ ५८ ॥ वातपित्तकफादिनाक्षुब्धैःस्वल्पैरन्नरसैरंतर्बहिश्चैवस्वल्पंदृश्यंभ्रांत्या प्रपश्यति समैःसमंदृश्यंप्रपश्यति अतिक्षुब्धैस्त्वतिशयितभ्रांतिदृश्यानिप्रपश्यतीत्यर्थाद्गम्यते ॥ ५९ ॥ कुपितैरेभिःसन्निपातमदमणिमंत्रौषधादिनिमित्तेषु ॥ ६० ॥ बहिर्भ्रांति दृश्यानिप्रपंचयति ॥ आकाशगमनमित्यादिना ॥ ६१ ॥ शुभ्राभ्राणांपीठेषुविश्रमणमुपवेशनंशुभ्राभ्रोच्चयंच ॥ ६२ ॥

१ एतदपिमांत्रिकस्थत्रृतीयेइत्यर्थः ॥

॥ ६३ ॥ ६४ ॥ निशिअर्कीवभास्करालोकम् ॥ ६५ ॥ घनेकुड्यबंधेविकुड्यंविशालंस्थलम् ॥ ६६ ॥ ६७ ॥ श्वेतस्फटिकरजतादिमयान् ॥ ६८ ॥ ६९ ॥ एताभ्रांतीरंतर्नि
द्रानिमीलिताइंद्रियवृत्तयःपश्यंति ॥ जागरोन्मीलितास्तुवहिरिंद्रजालादौपश्यंति ॥ ७० ॥ असमावातादिधातवोयेषांपुरुषाणांते ॥ ७१ ॥ ७२ ॥ इमांप्रसिद्धांलौकिकशा



वृहत्क्रकचनिष्पेषंनरकानुभवभ्रमम् ॥ तालीतमालहिंतालमालावलनमंवरे ॥ ६३ ॥ चक्रवृत्तैश्चपतनंझगित्युत्पतनंदिवि ॥ शून्येपि
जनतावृंदंस्थलेप्यब्धिनिमज्जनम् ॥ ६४ ॥ विचित्रंविपरीतंचव्यवहारंमहानिशि ॥ अर्कीवभास्करालोकंदुर्भेद्यंचाह्निवातमः ॥ ६५ ॥
सादिभूतलमाकाशेकुड्यवंधेघनेस्थलम् ॥ कुडयवंधांश्चगगनेमित्रभावंचविद्विषि ॥ ६६ ॥ स्वजनेपरताबुद्धिंसुजनत्वंचदुर्जने ॥ सुस
मस्थलतांश्वभ्रेश्वभ्रत्वंसुसमेस्थले ॥ ६७ ॥ उद्गीतालापमसृणान्सुधाधौतान्सुचित्रितान् ॥ अद्रीन्छ्वेतमयान्वापिनवनीतमयांश्च
वा ॥ ६८ ॥ कदंबनीपजंवीरपत्रस्तवकसद्मसु ॥ सुखविश्रमणंस्त्रीभिःसाकंपद्मेष्विवालिनः ॥ ६९ ॥ अंतर्निमीलिताह्येताःपश्यंत्युन्मी
लितावहिः ॥ धातूनामितिवैषम्याद्भ्रांतिमिंद्रियवृत्तयः ॥ ७० ॥ एवंविधान्यनेकानिपश्यंत्यनुभवंतिच ॥ वहिरेवयथास्वप्नेवस्तुन्यसमधा
तवः ॥ ७१ ॥ वहिश्चांतश्चदृश्यंतेविपरीतान्यनेकशः ॥ कार्याण्यतिकरालानिजीवैरसमधातुभिः ॥ ७२ ॥ समेषुधातुष्वेषोंतर्जीवोनुभव
तिस्वयम् ॥ तेजोंतर्गतएवेमांव्यवहारस्थितिंसमाम् ॥ ७३ ॥ यथास्थितांपुरग्रामपत्तनारण्यसंततिम् ॥ सौम्यवारितरुच्छायादेशाध्व
गगमागमम् ॥ ७४ ॥ सुखातपमयेंद्वर्कताराहोरात्रमंडितम् ॥ एवमेतदसद्भूतंसद्भूतमिवभासते ॥ ७५ ॥ दृश्योपलंभंचित्तत्त्वेस्पंदनंपव
नेयथा ॥ असदेवसदाभासमभिन्नंभिन्नवत्स्थितम् ॥ ७६ ॥ शांतादुदेतिसकलंजगदंबरात्मशांतंनकिंचननामसदित्युदेति ॥ तद्व्यो
मनीदृशमनंतचितेःशरीरेभामात्रमाततमनंतवपुर्विभाति ॥ ७७ ॥ ॥ इ० वा० वा० दे० मो० नि० उ० अ० वि० श० जाग्रत्स्वप्नसुषुप्त
वर्णनंनामपंचचत्वारिंशदुत्तरशततमःसर्गः ॥ १४५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

स्त्रीयव्यवहारस्थितिम् ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ शांतान्निष्प्रपंचादेवब्रह्मणःसकाशात्सकलंजगदुदेतिशांतंचनकिंचनान्यद्भवति ॥ यतःसदितिपरिदृश्यमानजन्यरूपेणनो
देतिनामनहिसमुत्पद्यते ॥ तत्तस्माद्धेतोर्व्योमन्याकाशकल्पेअनंतायाश्चितेःशरीरेभामात्रंप्रतिभासमात्रंजगदित्यनंतवपुर्विभातिनवस्त्वन्यदित्यर्थः ॥ ७७ ॥ ॥ इतिश्रीवासि
ष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेपंचचत्वारिंशदुत्तरशततमःसर्गः ॥ १४५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

प्रस्तुतस्वप्नवीक्षांतेसुषुप्तिःस्वस्यवर्ण्यते ॥ पुनःस्वप्नप्रसंगेनब्रह्माद्वैतंचविस्तरात् ॥ १ ॥ प्रासंगिकंश्रुत्वापुनःपूर्वकथाशेषमेवव्याधःपृच्छति ॥ अनंतरमिति ॥ भ्रांतिरूपिणिनाम तस्तस्यप्राणिनओजसिस्थितस्यतत्रापिकिंकीदृशंस्वप्नदर्शनादिवृत्तंसंपन्नम ॥ १ ॥ तज्जीवेनआवलिताभिश्रिताआकृतिर्लिंगदेहोयस्यमे ॥ २ ॥ ३ ॥ ४ ॥ यदामयातस्यप्रा ण्योजसोंतस्तज्जीवात्मनापरिणतंतदातत्रसंप्राप्तंतदेवशैलवर्षणमहमपश्यम् ॥ ५ ॥ तेनतत्प्राणिनाड्यंतर्गतेनान्नरसांतर्गतान्नलवलक्षणेनशैलोच्चपूरेणप्रतिपिंडितःपिंडीकृताकृति र्निश्चेष्टःसंपन्नःसन्नहमज्ञानलक्षणयाअंधतयामिश्रंसंवलितंसुषुप्तमन्वभवम् ॥ ६ ॥ यदानिर्गमनमार्गनिरोधकोन्नरसोजीर्णस्तदाउपसिपद्माकरइवबोधोन्मुखोऽभवम् ॥ ७ ॥

व्याधउवाच॥ ॥अनंतरंमुनिश्रेष्ठतस्मिन्हृदितदोजसि॥ स्थितस्यतवकिंवृत्तंनामतोभ्रांतिरूपिणि॥ १॥ ॥मुनिरुवाच॥ ॥अनंतरंतदातत्रशृणुकिंवृत्तमंगमे॥ तेजोधातुनिपण्णस्यतज्जीवावलिताकृतेः॥२॥तस्मिंस्तदावर्त्तमानेघोरेकल्पांतसंभ्रमे॥ तृणवत्प्रौढशैलेंद्रंवहतिप्रलयानिले॥३॥ गिरिवृष्टिर्झटित्येवकुतोपिसमुपाययौ॥ उह्यमानवनाभोगशिखरग्रामपत्तना॥४॥ तस्यांतस्तत्रसंप्राप्तंतदापरिणतंयदा॥ तदातदेवसूक्ष्मोहमपश्यंशैलवर्षणम्॥५॥ तेनान्नलवशैलोच्चपूरेणप्रतिपिंडितः॥ सुषुप्तमंधतामिस्त्रमहमन्वभवंघनम्॥६॥ अथकंचित्तदाकालमनुभूयसुषुप्तताम्॥ तदापद्माकरइवशनैर्बोधोन्मुखोभवम्॥ ७॥ यथादृष्टिश्चिराद्ध्वांतेभातिचक्रकरूपिणी॥ सुषुप्तमेवतत्रासीत्तथास्वप्नत्वमागतम्॥ ८॥ तथासुषुप्तविश्रांतेःस्वप्नंनिद्रामहंविशम्॥ अपश्यंदृश्यमोजोंतःस्वमूर्मित्वमिवार्णवः॥ ९॥ संवित्कोशात्मकंदृश्यंतत्तथामामुपागतम्॥ अस्पंदस्यानिलस्यांतरनन्यत्स्पंदनंयथा॥ १०॥ अग्न्यादौचयथौष्ण्यत्वंजलादौद्रवतायथा॥ मरिचादौयथातैक्ष्ण्यंचिद्व्योम्नश्चजगत्तथा॥ ११॥चित्स्वभावैकरूपत्वाज्जगद्दृश्यंतदाततम्॥ तत्सुषुप्तात्मनोदृश्यात्प्रसूतंबालपुत्रवत्॥ १२॥ ॥व्याधउवाच॥ ॥तत्सुषुप्तात्मनोदृश्यादितितद्व्यपदेशतः॥ सुषुप्तदृश्यंकिंवक्षिवदमेवदतांवर॥ १३॥

ध्वांतेनिमीलितादृष्टिर्यथाचिरात्तेजश्चक्राभासरूपिणीभातितथासुषुप्तमेवात्मरूपंस्वप्नत्वमागतमासीदित्यर्थः ॥ ८ ॥ सुषुप्तिविश्रांतेःसकाशादहंस्वप्ननिद्रामविशम् ॥ अहमा यश्छांदसः ॥ यथाअर्णवःस्वमूर्मित्वंतरंगादिसहस्त्रविक्षेपसंकुलांस्वमूर्त्तिंपश्यतितथाहमपितदोजोंतर्विक्षेपसहस्त्रमपश्यमित्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ तत्स्वात्मंजगत्तत्सुषुप्ता त्मनोदृश्यान्मातुरुदराद्बालपुत्रवत्प्रसृतम् ॥ १२ ॥ सर्वदृश्यविलयेहिसुषुप्तिःप्रसिद्धातत्रतत्सुषुप्तात्मनोदृश्यादितिसुषुप्तावपिदृश्यसद्भावमुक्तंश्रुत्वातदसंभावयन्व्याधःपृच्छति ॥ तद्विति ॥ तत्सुषुप्तात्मनइतितच्छब्देनदृश्यपदेनचव्यपदेशात्सुषुप्तदृश्यंकिंचिदस्तीत्यभिप्रेत्यत्वंवक्षितन्मेवदेत्यर्थः ॥ १३ ॥

किंचतस्यप्राणिनःसुषुप्तात्मनस्त्वत्सुषुप्तात्मनश्चापिसकाशाज्जन्यंजगद्रूपंदृश्यमन्यत्किंजायते ॥ अन्यताप्रयोजकंजन्मकिंअथसर्वदृश्यलयेअन्यसुषुप्ततावाकिम् ॥ १४ ॥ किं दृश्यतज्जन्मादिपरमार्थतःकिमितिपृच्छसिउतव्यवहारतः ॥ आद्ये अवस्तुरूपत्वान्नकिंचिदित्युत्तरंमुनिराह ॥ जायतइत्यादिना ॥ द्वैतोपतप्तानांमूर्खाणांकल्पनात्मकःप्रलापो मयानूदितोनतत्त्ववादोयमित्यर्थः ॥ १५ ॥ पंडितविचारेतुजातादिशब्दानांसन्मात्रमेवार्थोनान्यइत्याह ॥ जातशब्दइति ॥ कथंसन्मात्रपर्यायस्तच्छ्रूयतामुपपादयामीत्यर्थः ॥ जनिर्द्धातुर्जनीप्रादुर्भावेइतिपाणिन्यादिभिःप्रादुर्भावार्थेउक्तः ॥ तत्रप्रादुरित्यव्ययंप्रकटतांधात्वर्थस्यद्योतयन्नप्रधानंभूधातुरेवतुतस्यवपुःप्रधानंशरीरमित्यर्थः ॥ १६ ॥ अस्त्वेवंकिंततस्तत्राह ॥ सत्तार्थइति ॥ भूर्धातुस्तुभूसत्तायामितिपाणिन्यादिभिःप्रोक्तस्तस्मात्प्रादुरुपसर्गसहिताद्भावशब्दात्संजातःप्रकटःसन्नर्थउच्यते ॥ सचनित्यसिद्धस्वप्रकाशचिदात्मैवेत्यर्थः ॥ यदिप्रादुःशब्दस्यसर्गतइत्यर्थस्तदापिनकाचित्क्षतिः यतःसर्गशब्दस्यापिसृजधातोर्भावेघञिघञर्थेसत्तारूपेभावेसृज्यर्थस्याभेदेनान्वयेसन्नेवसर्गइति

तत्सुषुप्तात्मनोदृश्यात्त्वत्सुषुप्तात्मनोपिच ॥ किमन्यज्जायतेजन्यमथवान्यसुषुप्तता ॥ १४ ॥ ॥मुनिरुवाच॥ ॥जायतेभातिकचति घटादिजगदादिच ॥ इतिद्वैतोपतप्तानांप्रलापःकल्पनात्मकः ॥ १५ ॥ जातशब्दोहिसन्मात्रपर्यायःश्रूयतांकथम् ॥ प्रादुर्भावेजनिस्तूक्तः प्रादुर्भावस्यभूर्वपुः ॥ १६ ॥ सत्तार्थएवभूःप्रोक्तस्तस्मात्संजातमुच्यते ॥ सर्गतोजातइत्युक्तेसन्सर्गइतिशब्दितम् ॥ १७ ॥ बुधानामस्मदादीनांनकिंचिन्नामजायते ॥ नचनश्यतिवाकिंचित्सर्वंशांतमजंचसत् ॥ १८ ॥ सर्वसत्तात्मकंब्रह्मसर्वंसत्तात्मकंजगत् ॥ विधयःप्रतिषेधाश्चवदतत्रलगंतिके ॥ १९ ॥ यानामशक्तिःकाचित्सातत्रैवास्तिचनास्तिच ॥ यस्मात्तदात्मतद्ब्रह्मतथैवात्मतदात्मकम् ॥ २० ॥ जाग्रत्स्वप्नसुषुप्तादिपरमार्थविदांविदाम् ॥ नविद्यतेकिंचिदपियथास्थितमवस्थितम् ॥ २१ ॥ स्वप्नसंकल्पपुरयोर्नास्त्यप्यनुभवस्थयोः ॥ मनागपियथारूपंसर्गादौजगतस्तथा ॥ २२ ॥ द्रष्टास्याःस्वप्नदृष्टेस्तुजीवःसंभवतीहहि ॥ चिद्चेत्यातुसर्गादौभात्यच्छागगनादपि ॥ २३ ॥

शब्दितंनान्यदित्यर्थः ॥ १७ ॥ एवंसतिपंडितदृशानाज्ञजनप्रसिद्धजन्मादिकस्यचित्प्रसिद्ध्यतीत्याह ॥ बुधानामिति ॥ १८ ॥ एवंसर्वसत्तात्मकेब्रह्मणिअस्तिनास्तीतिवावस्तूनांविधिप्रतिषेधयोरप्यनवकाशइत्याह ॥ सर्वेति ॥ १९ ॥ तर्ह्यस्तिनास्तीतिलोकप्रसिद्धव्यवहारस्यकोविषयस्तंदर्शयन्द्वितीयेप्राह ॥ यानामेति ॥ यामायाशक्तिः ॥ यस्मात्तद्ब्रह्मतच्छबलत्वादज्ञानांतदात्म ॥ तदात्मेतिपदंव्याचष्टे ॥ तथैवेति ॥ यथायथामायाशक्तिर्विजृंभतेतथैवात्मासर्वशक्तिघटितंस्वरूपंयस्यतत्तदात्मकंतदात्मशब्दार्थइत्यर्थः ॥ २० ॥ तत्त्वविदांतुसदातुरीयपदेप्रतिष्ठितानांजाग्रदाद्यवस्थाएवनसंतिदूरेविधिप्रतिषेधाइत्याह ॥ जाग्रदिति ॥ विदांपंडितानाम् ॥ २१ ॥ प्रत्यक्षमनुभवस्थानामपलापोदुर्घटइतिशंकांदृष्टांताभ्यांवारयति ॥ स्वप्नेति ॥ २२ ॥ तर्हिस्वप्नमनोरथयोर्द्रष्टाप्राणादिमान्जीवइवसर्गादावपिप्राणादिमदेवब्रह्मसिद्ध्येन्ननिर्विशेषंतत्राह ॥ द्रष्टेति ॥ जीवोपाधिसर्गोत्तरकालत्वात्तयोःप्राणादिमान्जीवस्तद्द्रष्टाप्राणाद्युत्पत्तेःप्राक्तुशुद्धएवतत्सर्गादिद्रष्टास्थितइतिसंभावयेत्यर्थः ॥ २३ ॥

१ उपसर्गसादृश्याउपसर्गत्वमस्य

अभ्युपेत्यसर्गेतद्वद्दुःशुद्धत्वमुक्तम् वस्तुतस्तुत्रिपुटीसर्वापीहैवशुद्धेनिवर्त्ततइत्याह ॥ नेहेति ॥ तादृशंचिदेकरसम् ॥ २४ ॥ सर्गादावपिचिदेवसर्गात्मनाकचितायावत्प्रलयंतथै वास्तइवेत्याह ॥ सर्गादाविति ॥ २५ ॥ तथाउक्तप्रकारेणचेतनादात्मभूतादेवद्वैतादज्ञतायामन्यताभ्रांत्याबिभेतितत्त्वबोधेनविभेति ॥ वाशब्दोऽव्यवस्थितविकल्पार्थः ॥ यथाबालःस्वांगेलिखिताद्व्याघ्रसर्पादिचित्राद्बिभेतिप्रौढस्तुनबिभेतितद्वदित्यर्थः ॥ २६ ॥ तत्त्वतोनादिमध्यांतमत्यच्छंब्रह्मैवभ्रांत्याअतिविकारिनानाचभूत्वाभातियथास्थितम् ॥ अशांतमपीदंजगत्तत्त्वतःपरिशांतमेवप्रबोधेनेत्यर्थः ॥ २७ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेषट्चत्वारिंशदुत्तरशततमःसर्गः ॥ १४६ ॥ ॥ ७॥

नेहद्रष्टास्तिनोभोक्तासर्वमस्तीहतादृशम् ॥ यन्नकिंचिच्चकिंचिच्चमौनमेवातिवागपि ॥ २४ ॥ सर्गादौकारणाभावाद्यथाकचितं चितौ ॥ तत्तथास्तेचिरंरूपंस्वप्नसंकल्पपूर्यथा ॥ २५ ॥ तथास्माच्चेतनाद्द्वैताद्बिभेतिनविभेतिवा ॥ अंगसंस्थाद्यथाचित्रात्स्वरूपात्पुरुषः स्वयम् ॥ २६ ॥ अनादिमध्यांतमनंतमेकमत्यच्छमेवातिविकारिनाना ॥ यथास्थितंभास्वरमप्यशांतमिदंसमस्तंपरिशांतमेव ॥ २७॥ ॥ इ० वा० महारामायणेवा० दे० मो० निर्वाणप्रकरणेउत्तरार्द्धेअ० वि० शवोपाख्यानेसुपुप्तविचारोनामषट्चत्वारिंशदुत्तरशततमः सर्गः ॥ १४६ ॥ ॥ ७ ॥ ॥ मुनिरुवाच ॥ ॥ अनंतरंमहाबाहोसुपुप्तान्निर्गतस्यमे ॥ स्वप्नेजगद्दृश्यमिदंसागरादिवनिर्गतम् ॥ १ ॥ आकाशांगादिवोत्कीर्णमुत्कीर्णमवनेरिव ॥ उत्कीर्णमिववाचित्ताद्दुत्कीर्णमिववादृशः ॥ २ ॥ प्रफुल्लमिववृक्षेभ्यःसर्गःपूर्वमिवो त्थितः ॥ तरंगजालंरोधोब्धेरिववाकचनंदृशाम् ॥ ३ ॥ नभस्तलादिवायातंककुभ्यइवचागतम् ॥ पर्वतेभ्यइवोत्कीर्णंभूमेरिवसमुत्थि तम् ॥ ४ ॥ हृदयादिवनिष्क्रांतंसंप्रविष्टमिवांबुदैः ॥ प्रसूतमिववृक्षेभ्योजातंवासस्यवद्भुवः ॥ ५ ॥ अंगेभ्यइवनिर्यातंसमुत्कीर्णमिवें द्रियैः ॥ पटादिवप्रकटितंमंदिरादिवनिर्गतम् ॥ ६ ॥ कुतोप्यागत्यपतितमुड्डीयगगनादिव ॥ उपायनंपरेलोकेगृहीतमिववाभुवः ॥ ७ ॥

सुपुप्तादप्रदृष्टांतैःस्वप्ननिर्गमनक्रमः ॥ तत्रपूर्वंकुटुंबादिवीक्षातत्त्वंचवर्ण्यते ॥ १ ॥ सागरात्तरंगमणिमुक्तादिकमिवनिर्गतम् ॥ अत्रसर्वत्रसंभवेउपमाअसंभवेउत्प्रेक्षावोध्याः ॥ १ ॥ उत्कीर्णंटंकच्छेदादिनाशिलाप्रतिमावत्प्रकटितम् ॥ २ ॥ पूर्वमुत्थितःपूर्वसिद्धएवनतदानीमुत्पन्नइतिभातइत्यर्थः ॥ रोधःकूलंतत्संनिहिताद्ब्धेस्तरंगजालमिव ॥ दृशांनेत्राणांकिशोंद्रकद्विचंद्रादिभावेनकचनमिववा ॥ ३ ॥ भूमेःसमुत्थितंकुड्यवल्मीकादीव ॥ ४ ॥ अंबुदैर्नभसिसंप्रविष्टमिव ॥ सस्यवद्विरूपपरिणामेन ॥ ५ ॥ टंकस्थानीयैरिंद्रियैर्दिक्षुसमुत्कीर्णंउल्लेखनेननिष्पादितमिवप्रसारितमिववा ॥ पटात्प्रकटितंचित्रमिव ॥ ६ ॥ राज्ञांप्रजाभिराहृतमुपायनमिव ॥ इहलोकेसंचितंपुण्यंपरलोकेफलभावेनोपस्थितमिव ॥ भुवःखननाद्युपायैर्गृहीतंनिधानमिववा ॥ ७ ॥

४६२

ब्रह्मलक्षणस्यवृक्षस्यप्रसूनमिवकालेनोपनीतम् ॥ उत्किरणंविनैवप्रकटनंयस्यास्तथाविधाशालभंजिका ॥ ८ ॥ आकाशलक्षणमृद्विकारभूतमनंतमसंख्यातंकुड्यम् ॥ मनसो मतंगजमयोविलासः ॥ जीवितंसर्वस्वम् ॥ ९ ॥ शंबरंमायातत्रईशस्यसमर्थस्यअविद्याख्यस्यकस्यचिदैंद्रजालिकस्यमायासर्वस्वम् ॥ १० ॥ देशकालसौक्ष्म्येपिविस्तारचिर त्वदर्शनाद्देशकालविवर्जितम् ॥ ११ ॥ यन्भ्रांतमपिजागरायामुपलभ्यतेरज्जुसर्पमृगतृष्णोदकादितेनापिसममित्यनुषज्जते ॥१२॥१३॥ सुरासुराद्युपलक्षितत्रैलोक्याधारैर्गर्भै स्तद्गर्भैश्वकदलीस्तंभवन्मनोहरम् ॥ तत्राप्यवांतरगर्भेष्वनंतब्रह्मांडकल्पनसत्वात्पृथक्कोष्ठस्थबीजौघैःसंपूर्णंदाडिमफलमिवस्थितम् ॥१४॥ तदेवप्रपंचयति ॥ नदीति ॥ कलधौत शिलान्यायेनेतिभावः ॥ १५ ॥ तंपूर्वप्रवेशस्वभदृष्टंग्रामंतत्रप्राक्तनमास्पदंगृहंचपश्यामिअपश्यम् ॥ यावत्पुरानिपातयोर्लट् ॥ १६ ॥ तथासंस्थानंप्रागनुभूतवयोवस्थासन्नि

प्रसूनंब्रह्मवृक्षस्यतरंगमिववांबुधेः ॥ अनुत्कीर्णप्रकटनाच्चित्स्तंभचारुपुत्रिका ॥ ८ ॥ आकाशमृन्मयानंतकुड्यमाकाशपत्तनम् ॥ मनोमत्तोगजमयोमिथ्याजीवस्यजीवितम् ॥ ९ ॥ अभित्तिकमरंगंचविचित्रंचित्रमंबरे ॥ शंबरेशस्यसर्वस्वमविद्याख्यस्यकस्यचित् ॥ १० ॥ महारंभंस्थिरमपिदेशकालविवर्जितम् ॥ नानाढ्यमपिचाद्वैतंनानात्मापिनिर्किंचन ॥ ११ ॥ गंधर्वपुरदृष्टांतस्याप्यवस्तुतयासमम् ॥ जागरायांहिकिलतद्भ्रांतमप्युपलभ्यते ॥ १२ ॥ चिद्भामात्रमनारब्धमप्यारब्धमिवास्थितम् ॥ देशकालक्रियाद्रव्यसर्गसंहारसंयुतम् ॥ १३ ॥ सुरासुरनराधारगर्भगर्भमनोहरम् ॥ पृथक्कोष्ठस्थबीजौघसंपूर्णमिवदाडिमम् ॥ १४ ॥ नदीशैलवनादिस्थव्योमताराभ्रसंकुलम् ॥ गीताब्धिरणपाठाढ्यपवनारावघर्घरम् ॥१५॥ ततोविलोकितंतत्रतन्मयादृश्यमंडलम् ॥ यावत्तमेवपश्यामिग्रामंप्राक्तनमास्पदम् ॥ १६ ॥ तानेवसकलान्बंधूंस्तथासंस्थानसंस्थितान् ॥ तान्पुत्रांस्तांमहेलांचतदेवचतदागृहम् ॥ १७ ॥ तांदृष्ट्वाप्राक्तनींग्राम्यामाहरद्वासनांबलात् ॥ तटस्थंमुह्यमानांगमिववीचिर्महार्णवे ॥ १८ ॥ अथाहमभवंतत्रतदालिंगननिर्वृतः ॥ गृहीतवासनोनूनंविस्मृतप्राक्तनस्मृतिः ॥ १९ ॥ बिंबंतत्तदुपादत्तेयद्यदग्रेवतिष्ठति ॥ यथादर्शश्चिदादर्शस्तथैवायंस्वभावतः ॥ २० ॥ यस्तुचिन्मात्रगगनंसर्वमित्येवबोधवान् ॥ द्वैतेनबोध्यतेनेहसोंगतिष्ठतिकेवलः ॥ २१ ॥

वेशस्तेनसंस्थितान् ॥ महेलांभार्याम् ॥१७॥ महार्णववीचिःप्राक्तनंतटस्थंमुह्यमानंव्याकुलंस्वांगमिवस्थितांप्राक्तनींग्राम्यांगृहक्षेत्रपुत्रबंध्वाद्यभिमानवासनांबलादाहरत्आन यदितिबंधुपुत्रमहेलागृहविशेषणम् तत्रनपुंसकमनपुंसकेनेतिनपुंसकशेषेएकवद्भावः ॥ १८ ॥ तेषांबंधुपुत्रमहेलानामालिंगनेननिर्वृतःसुखितः ॥ १९ ॥ प्रसंगादविमृष्टविमृष्टचितोःस्वभावान्प्रपंचयति ॥ बिंबमित्यादिना ॥ यथाप्रसिद्धआदर्शोयद्यदग्रेऽवतिष्ठतेतत्तत्प्रतिबिंबंस्वयमप्युपादत्तेतथाचिदादर्शोवासनोपस्थापितंयद्यत्पूर्वमवतिष्ठतेतत्तदाकाराभासमुत्तरत्रगृह्णातीत्यर्थः ॥ २० ॥ विमृष्टचितस्तुनायंस्वभावइत्याह ॥ यस्त्विति ॥ सःवासनामयेनद्वैतेनप्रतिबिंबग्रहणादिनानैवबोध्यते ॥ यस्यांजाग्रतिभूतानिसाग्निशापश्यतोमुनेरितिभगवदुक्तन्यायादितिभावः ॥ बाध्यतइतिवापाठः ॥ २१ ॥

तदेवाह ॥ नेति ॥ २२ ॥ यावोधधीरुदिता चेत्पुनःस्वोदयंन विस्मरत्येवसंदेवब्रह्मानुसंधानात्मनाआस्तेइत्यर्थः ॥ २३ ॥ तर्हितत्त्वविस्त्वंकथंतदाव्यामूढस्तत्राह ॥ अप्रौढेति ॥ याअप्रौढाधीस्तयावंध्यादिवासनयाहृता ॥ तर्हिदानीमपितवोधधीरप्रौढैवनेत्याह ॥ अद्येति ॥ दुर्ग्रहोदुर्वासनाप्रचयः ॥ २४ ॥ हेव्याधतववुद्धिरपिसत्संगवर्जितेतिहेतोर्नेदानीमेवशांतिमेतिकिंतुवक्ष्यमाणतपःकायवृद्धिमरणजन्मांतरराज्यादिनाकष्टेनद्वैतवोधेनकृच्छ्रात्साधनाभ्यासपरिश्रमाज्ज्ञानमासाद्यशांतिमुपैष्यति ॥ २५ ॥ मुन्युक्तमनुमोदमानोव्याधउवाच ॥ एवमेतदिति ॥ २६ ॥ २७ ॥ अविद्यमानैवेतिसदाशांतैवनशाम्यति ॥ २८ ॥ सत्संगवर्जितेतियदुक्तंतदप्यनुमोदमानआह ॥ सत्संगतैरिति ॥ सच्छास्त्रसंन्क्रमोगुरुसंप्रदायोविचारश्चेत्यादिनामनोहरांगैःसत्संगमैःप्रसूतायापदपदार्थविवेकवुद्धिस्तदभ्यासतश्चोत्पन्नात्तत्त्ववोधाद्भूमिकाक्रमेणायंजगद्भ्रमःप्रशममेति ॥ अन्येनकेनचि

ननश्यतिस्मृतिर्यस्यविमलावोधशालिनी ॥ अयंद्वैतपिशाचस्तंमनागपिनवाधते ॥ २२ ॥ येषामभ्यासयोगेनसाधुसच्छास्त्रसंगमैः ॥ उदेतिवोधधीर्भूयोयाविस्मरतिनोदयम् ॥ २३ ॥ अप्रौढामेतदासासीद्वोधधीर्यातयाहृता ॥ अद्यशक्नोतिमेवुद्धिंहंतुंकइवदुर्ग्रहः ॥ २४ ॥ तवापिव्याधविद्धीदंवुद्धिःसत्संगवर्जिता ॥ द्वैतवोधेनकष्टेनकृच्छ्राच्छांतिमुपैष्यति ॥ २५ ॥ ॥ व्याधउवाच ॥ ॥ एवमेतन्मुनेसत्यंपावनैस्त्वद्विवोधनैः ॥ ईदृशैरपिमेवुद्धिर्नविश्राम्यतिसत्पदे ॥ २६ ॥ स्यादीदृशमथोनस्यादितिसंदेहजालिका ॥ नैतस्मिन्स्वानुभूतेपिवस्तुन्यद्यापिशाम्यति ॥ २७ ॥ अहोवतदुरंतेयमभ्याससुदृढीकृता ॥ अविद्याविद्यमानैवयाशांतैवनशाम्यति ॥ २८ ॥ सत्संगतैःपदपदार्थविवुद्धवुद्धेःसच्छास्त्रसत्क्रमविचारमनोहरांगैः ॥ अभ्यासतःप्रशममेतिजगद्भ्रमोयंनान्येनकेनचिदपीतिविनिश्चितिर्मे ॥ २९ ॥ ॥ इ० वा०वा०दे०मो०नि०उ०अ०वि०श०स्वप्नोपलंभनंनामसप्तचत्वारिंशदुत्तरशततमःसर्गः ॥ १४७ ॥ ॥ ७ ॥ ॥ व्याधउवाच ॥ ॥ एवंचेत्तन्मुनिश्रेष्ठसत्यतासत्यताकथम् ॥ स्थितःस्वप्नदशाचैषसुमहान्संशयोमम ॥ १ ॥

दपिनप्रशममेतीतिमेविनिश्चितिर्निश्चयइत्यर्थः ॥ २९ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उत्तरार्द्धेसप्तचत्वारिंशदुत्तरशततमःसर्गः ॥ १४७ ॥ ॥ ७ ॥ ॥ स्वमासत्यत्वसत्यत्वहेतुरत्रनिरूप्यते ॥ जाग्रत्स्वप्नसुषुप्त्यैक्यंचित्सार्वात्म्यैक्यशुद्धियुक् ॥ १ ॥ यदिवासनानुसारिचिद्वेदनमेवस्वप्नोजाग्रच्चस्वप्नविशेषएवेत्येवंचेत्सिद्धांतस्तर्हिकश्चित्स्वप्नउपासिदृष्टगजारोहणादिर्लाभादिफलसूचकत्वात्सत्यः ॥ अन्यस्तुअरण्यगमनभ्रमणादिःफलादर्शनादसत्यइतिस्वप्नदशोसत्यतासत्यतेकथमुपपद्येते ॥ एवंहैरण्यगर्भमानोरथिकःसर्गोऽर्थक्रियासमर्थत्वात्सत्यःअस्मदीयस्त्वसत्यइतिजाग्रज्जगत्यपिएषसंशयःसुमहान्ममस्थितः ॥ अधिष्ठानचित्सत्यतयाध्यस्तेसत्यतास्यतस्त्वसत्यताचोभयत्रापितुल्यैवचेद्वैषम्येकोहेतुरितिभावः ॥ १ ॥

यास्वप्नसंवित्स्वप्नेश्वरीसान्निध्यादिदेशेप्रत्यूषादिकालेदेवताराधनतपोव्रतादिक्रियाभिर्हविष्यकुशास्तरणादिद्रव्यैश्चशास्त्रादिप्रमाणैरवश्यमीदृशस्वप्नस्येदृशंफलंभवत्येवेतिनि श्चिताउदेतिसासंवित्काकतालीयफलकशकुनादिवदवश्यमुत्तरकालेफललाभात्सत्यस्वप्ननामिकाभवति ॥२॥ मणिमंत्रादिनिमित्तैर्जायमानातुतद्योग्येपुरुषेअव्यभिचारिणी अयोग्येतुसव्यभिचारापिशास्त्रमर्यादानतिलंघनादुभयत्रापिसत्यस्वप्नाभिधैवस्मृतेत्यर्थः ॥ ३ ॥ तत्रोभयत्रापिकाकतालीयन्यायएवशरणंनदृष्टंनियामकंकिंचिन्निरूपयितुंश क्यमित्याशयेनाह ॥ सत्येति ॥ ४ ॥ हिरण्यगर्भादिसंवित्तुप्राक्तनोपासनापरिपाकजत्वात्सत्यसंकल्परूपदृढनिश्चयासतीयंयंनिश्चयमादत्तेतथातथाभवत्येवेत्याह ॥ यंयमि ति ॥ प्राक्तनोपासनफलप्रयुक्तस्वभावतः ॥ ५ ॥ सापिअन्यदीयतद्विरुद्धसत्यसंकल्पेनकुतोनप्रतिहन्यतेतत्राह ॥ तमेवेति ॥ तस्यास्तंसर्गादिनिश्चयमन्यःप्रतिनिहंतिचेत्तत्रप्रा

मुनिरुवाच॥ ॥देशकालक्रियाद्रव्यैर्यासंविन्निश्चितोदिता॥ काकतालीयवद्भातिसासत्यस्वप्ननामिका ॥ २ ॥ मणिमंत्रौषधिद्रव्यैः क्वचिदव्यभिचारिणी॥ क्वचित्सव्यभिचाराचित्सत्यस्वप्नाभिधास्मृता ॥ ३ ॥ सत्यस्वप्नस्थितिर्लोकेष्वीदृग्रूपायदास्थिता॥ तदैषाकाक तालीयन्यायादन्यानलभ्यते॥ ४॥ यंयंनिश्चयमादत्तेसंवित्स्वदृढनिश्चया ॥ तथातथाभवत्येषाफलयुक्तस्वभावतः ॥५॥ तमेवनिश्च यंत्वस्याअन्यःप्रतिनिहंतिचेत्॥ तत्रासौनिश्चयःप्रौढःसकथंलक्ष्यभाग्भवेत् ॥ ६॥ नवहिर्नांतरेसंतिपदार्थाःकेचनक्वचित्॥ संविदेका जगद्रूपैर्यथेच्छतितथास्थिता॥ ७॥ स्वप्नोयंसत्यइत्यंतर्निश्चयेनतथोदिता॥ तथैवाशुभवत्येषासंशयात्संशयंव्रजेत्॥ ८॥ अन्यतोपि फलंप्राप्तंस्वप्नसत्यत्वकल्पनात्॥ स्वप्नेनसूचितमिदंफलमित्येववेत्त्ययम्॥ ९॥ सर्वएवनिजयाजगत्त्रयेसंविदातिशयितादृढाअपि॥ कालतोव्यभिचरंतिदेशतोयत्नतश्चचिरतोऽचिरेणवा ॥ १० ॥ सर्गादावेवचिद्व्योमभानमप्रतिघंजगत्॥ वस्तुसत्तांचिदेवातोयथेष्टं तनुतेतनुः॥ ११ ॥

क्तनोपासनकालेप्रौढोजगत्स्रष्टाहमितिनिश्चयःप्रयाणकालउद्भूतस्तद्धैतल्लोकजिदेवेत्यादिश्रुतिसिद्धस्वलक्ष्यफलभाक्कथंभवेत् ॥ अतस्तदविरोधेनैवान्येषांसिद्धानांसंकल्प उदेतिनतद्विरुद्धइतिभावः ॥ ६ ॥ तथाचसंवित्स्वातंत्र्यमप्रतिहतमेवेत्याह ॥ नेति ॥ ७॥ शास्त्रादिप्रमाणकृतनिश्चयेन ॥ शास्त्रादिप्रमाणसंशयात्तुफलसंशयंप्राप्नुयात् ॥ ८ ॥ काकतालीयवदितियदुक्तंतदुपपादयति ॥ अन्यतइति ॥ ९ ॥ एवंजाग्रत्प्रसिद्धघटादिसंविदोपिकाकतालीयाएव तद्विषयेष्वपिदेशकालभेदेनान्यथाभावदर्शनादित्याह ॥ सर्वएवेति ॥ निजयातत्तत्पुरुषसंविदाअतिशयिताश्चिरपरिशीलिताअर्थक्रियादिनादृढीकृतघटादिस्वभावाअपिसर्वएवभावादेशतःकालतश्चमुद्गरप्रहारादियत्नतश्चान्यथाभा वमापद्यमानाःपूर्वनिश्चितंस्वभावंव्यभिचरंति ॥ १० ॥ चित्तुस्वस्वभावंनव्यभिचरतीत्यव्यभिचार्यप्रतिघस्वभावासैवसत्याअसत्यसप्रतिघजगद्रूपंधत्तइतिराद्धांतइत्याह ॥ सर्गादाविति ॥ ११ ॥.

अतएवचिन्मात्रंसत्यैकनियतमन्यत्त्वनियतसत्वमित्याह ॥ चिन्मात्रमिति ॥ १२ ॥ यस्मात्सद्ब्रह्मैकमेवसर्वात्मकंतस्मात्तदतिरिक्तंसत्यमसत्यंवाकिंभावयेत् ॥ नकिंचिदित्यर्थः ॥ १३ ॥ एवंविचारेस्वमोपिक्वचित्कदाचित्सत्यःक्वचित्कदाचिदसत्योपिसंविदात्मनासत्यस्तदन्यरूपेणासत्यश्चेत्याह ॥ अतइति ॥ १४ ॥ स्वरूपिणीआकारवती ॥ निश्चिताय थार्था ॥ १५॥ चित्तंभूत्वेतिशेषः ॥ यच्चिमचिमायतेसाभासंस्पंदनेतदेवेदंजगत् ॥१६॥ जाग्रत्स्वमसुषुप्तयोघनेपद्द्रुतघृतवदभिन्नाएवेत्युपपादयितुंभूमिकांरचयति ॥ यथेति ॥ निद्रास्वमः ॥ १७ ॥ अस्त्वेवंकिंततस्तत्राह ॥ अतइति ॥ यथाघनंघृनमेवेपद्विलीनमीषद्विलीनमेवपुनर्घनतामापद्यतइतिघृताभेदःप्रत्यभिज्ञानात्तद्वदित्यर्थः ॥ १८ ॥ एवंचा विद्यावृतचिन्मात्ररूपासुषुप्तिरेवैकाघृतवत्सर्वदाद्रष्टव्या तस्याएवसर्वेनामरूपभेदाःपर्यायरचनाइतिफलितमित्याह ॥ व्योमैवेति ॥ १९ ॥ स्वमादेःफलनियत्यनियतीअपिनत

चिन्मात्रंवर्जयित्वैकंब्रह्मान्यत्सर्वदाखिलम् ॥ विद्धिसत्यमसत्यंचनियतानियतंस्थितम् ॥ १२ ॥ यस्माद्ब्रह्मैवसर्वात्मसदेकमेवनेतरत् ॥ तस्मात्किंनामतत्सत्यंकिमसत्यंचवाभवेत् ॥ १३ ॥ अतःस्वप्नःक्वचित्सत्यःक्वचिच्चासत्यएववा ॥ अबुद्धानांप्रबुद्धानांनासद्रूपोनसन्मयः ॥ १४ ॥ संविद्भ्रांतिरियंभातिजगन्नाम्नीस्वरूपिणी ॥ स्वयंचभ्रांतिरस्मीतिवादिनीकात्रनिश्चिता ॥ १५ ॥ चितिरेवचिरायेदंचित्तंचिमचिमायते ॥ यदात्मन्येवसलिलंद्रववत्तदिदंजगत् ॥ १६ ॥ यथास्वप्नंसमालोक्यसुषुप्तमनुभूयते ॥ तथाजाग्रत्समालोक्यनिद्रासमनुभूयते ॥ १७ ॥ अतस्त्वंजाग्रदेवेदंस्वप्नंविद्धिमहामते ॥ स्वप्नंचविद्धिजाग्रत्त्वमेकमेतदजंद्वयम् ॥ १८ ॥ व्योमैवाचेत्यचिन्मात्रभानमेकमिदंततम् ॥ जाग्रत्स्वप्नसुषुप्त्याख्याःपर्यायरचनाइह ॥ १९ ॥ नेहनामास्तिनियतिर्नचानियतिरस्तिच ॥ नियत्यनियतीब्रूहिकीदृशेस्वप्नसंविदि ॥ २० ॥ यावद्ज्ञानंकिलस्वप्नेतावत्सैवनियंत्रणा ॥ सएवसंविद्ज्ञानस्यकुर्यान्नियमनंमुनिः ॥ २१ ॥ स्वच्छंदंवातलेखायाःस्फुरंत्याःसंविदस्तथा ॥ अकारणकमेवांगनियतिःक्वकीदृशी ॥ २२ ॥

तःपृथक्कृतइत्याह ॥ नेहेति ॥ मिथ्यात्वादपितेपृथक्कृतइत्याह ॥ नियत्यनियतीइति ॥ २० ॥ अज्ञानावृताचिदनियंत्रिताजाग्रत्स्वमौ ॥ श्रमादिनिमित्तनियंत्रितासुषुप्तिः ॥ प्रयत्ननियंत्रितातुसमाधिः॥ अज्ञाननाशेसैवमुक्तिः ॥ एवंसतिजाग्रन्निरोधेनमनोव्यापारमात्ररूपेस्वमेयावत्कालंभानंतावत्सैवचितोबाह्यप्रवृत्तिनियंत्रणाशोकांतरम् यावच्चसंविद्ज्ञानस्यनियंत्रणातावत्सुषुप्तौसआत्मैवसर्वशोकांतरम् ॥ एवंज्ञात्वामुनिर्विशोकसमाधिसुखविश्रांत्यर्थीनियमनमेवकुर्यादित्यर्थः ॥ २१ ॥ ननुनसंविन्नियंतुंशक्यातस्यावात लेखायाइवस्वमाद्याकारस्फुरणनियतेरित्याशंक्याह ॥ स्वच्छंदमिति ॥ नतावद्विषयाकारस्फुरणंसंविदःस्वभावः ॥ सुषुप्तावदर्शनात् ॥ नचस्वमेतथास्फुरणेकारणांतरंनिरूपयितुंशक्यंयन्निबंधनानियतिःस्यादितिकानियतिःक्वादृशीवेत्यर्थः ॥ २२ ॥

ननुवाह्यघटपटाद्याकारएवस्वसंबंधेसंविदःस्वाकारतायांकारणंकल्प्यतेतत्राह ॥ अथेति ॥ भवेदेवंयदिसर्गेकिंचिदन्यत्कारणंनिरूपयितुंशक्येत ॥ यदातुप्रागुक्तयुक्तेःसर्गःअकारणकस्तदाचितेरनन्यदाकारादिचितेःकारणंनस्यादेवेत्यर्थः ॥ २३ ॥ तर्हिकिंसर्वापिनियतिर्भग्नानेत्याह ॥ एतावत्येवेति ॥ याचितिर्यदायथास्फुरतितद्वस्तुतदातथापारमार्थिकंव्यावहारिकंप्रातिभासिकंवेतिनियतिर्यावद्व्यवहारमस्त्येवेत्यर्थः ॥ २४ ॥ स्वप्नसत्यतानियतिस्तुयथाशास्त्रत्वेनसर्वत्रेतिकाकतालीयवदित्युक्तमेवेत्याह ॥ कदाचिदिति ॥२५॥ मणिमंत्रौषधात्मनाप्रयुक्तसत्यतानियतिस्तुजाग्रत्प्रत्ययेपिसमेत्याह ॥ यदिति ॥ २६ ॥ अतएवजाग्रत्स्वप्नयोश्चिन्मात्रत्वादभेदउक्तइत्याह ॥ जाग्रदिति ॥ तयोर्वैद्यस्वरूपंवेदनस्वरूपंवानुभवतस्तुल्यमेवेत्याह ॥ जाग्रतीति ॥ २७ ॥ अतएवनिर्निद्रआत्मनिद्वयोरपिव्यभिचारादसत्वमेवेत्याह ॥ जाग्रदितिद्वाभ्याम् ॥ २८ ॥ २९ ॥ एवंसतिनिर्निद्रस्यसुषुप्तिरपिनास्त्येवेत्याशयेनाह ॥ जाग्रदिति ॥ एवमात्यंतिकदृश्यादर्शनरूपाआत्मोच्छेदादिरूपावामृतिरपिनास्त्येवेत्याह ॥ दृश्यमिति ॥ सत्ताअविपरिलुप्तचित्सत्ता ॥ ३० ॥ अभवत्दिग्भ्रमेआशादिशस्तद्वच्चअनन्यास्तएवअन्यवत्स्फुरंति ॥ अनन्याइतिबहुव्रीहिः ॥ ३१ ॥ ३२ ॥ इदमात्मस्वरूपंजाग्रत्स्वप्नसुषुप्तवपुस्तद्विरुद्धतुर्यकवपुश्चतथासाकारतावर्जितंसर्वाकारमपिव्यतीतकालकलनंसर्गात्मककालपरिच्छिन्नशरीरंदधदपिशून्येनैवानेनचिद्वपुषाशून्येनैवदृश्यात्मनाखात्मकमेवसुषिरंशून्यंव्याप्तंतथापिपुनरिदंचिन्मात्रंखमाकाशात्मकंनभोमात्राद्रूपान्मनागपिभिन्नंनेत्यर्थः ॥ ३३ ॥

अथाकारादियन्नामकल्प्यतेकारणंविदः॥ तदकारणकंसर्गःस्यादनन्यन्नवैचितेः ॥ २३ ॥ एतावत्येवनियतिरत्रयन्नामयद्यथा॥ यावत्स्फुरितंभानंतत्तथानतदन्यथा॥२४॥ कदाचित्सत्यतास्वप्नेकदाचिच्चाप्यसत्यता॥ अभावान्नियतेरेवकाकतालीयमेवतत्॥ २५॥ यत्स्वेनैवात्मनाभातिमणिमंत्रौषधात्मना॥ यन्नामनियतंतत्तुजाग्रत्यपिहिदृश्यते॥२६॥ जाग्रत्स्वप्नश्चचिद्भानमात्रमेवान्यतात्रका॥ जाग्रतिस्वप्ननगरेवेदनात्सदृशात्मकम्॥२७॥ जाग्रन्नसंभवत्येवयज्जाग्रदितिशब्दितम्॥स्वप्नएवजगद्रूपंनिर्निद्रस्यैवचात्मनः॥२८॥ स्वप्नोवानामनास्त्येवयःस्वप्नइवशब्दितः ॥ सुप्तासुप्तैकरूपस्यब्रह्मणोबोधरूपता ॥ २९ ॥ जाग्रत्स्वप्नादयोवैतेनकेचनकदाचन ॥ दृश्यंपश्यतिसत्ताशुद्धतिभ्रांतेरनंतरम्॥ ३० ॥ यथानवरतंकालमनंतंसीकरोर्मयः ॥ तएवान्यवदभ्राशावदनन्याःस्फुरंत्यलम् ॥ ३१ ॥ तथानन्येपरेसर्गाःस्फुरंत्यस्फुरिताअपि॥ शिलाकोशांतलेखावज्जाग्रत्स्वापादितत्रकिम्॥ ३२॥ जाग्रत्स्वप्नसुषुप्ततुर्यकवपुःसाकारतावर्जितंसर्वाकारमपिव्यतीतकलनंसर्गंशरीरंदधत् ॥ व्याप्तंचिद्वपुषातथापिसुषिरंशून्येनदृश्यात्मनाचिन्मात्रंखमिदंमनागपिनभोमात्रान्नभिन्नंपुनः॥ ३३ ॥

किंचसकलमाकाशादिभूतभौतिकसहितंदृश्यंजगत्सर्गादावपिकारणस्यान्यस्यप्रमाणैरननुभवात्केवलंहैरण्यगर्भंचित्तात्मकम् ॥ तथाचचित्तात्मकस्यमनोराज्यगतस्यनाम रूपाभावान्नाम्नावर्जितमेव ॥ बोधवपुषामनःसाक्षिणासंयुक्तमेव ॥ अंततोमनोविलयेशुद्धंवेदनमात्रमेवनवस्त्वंतरमित्यर्थः ॥ ३४ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशे नि० उ० अष्टचत्वारिंशदुत्तरशततमःसर्गः ॥ १४८ ॥ ॥ ५ ॥ ॥ इहतत्स्वप्नवृत्तांतिगृहागतमुनेर्मुखात् ॥ बहूनांतुल्यदुःखादिनिमित्तंश्रुतमीर्यते ॥ १ ॥ हेमुनेप्राणिदेहेप्रलयादिभिरुरुवृत्तांतशतैःसहनिर्वाणाःसंस्तुतयोयस्यतथाविधस्यतेगृहेभार्यावंध्यादिसहवासानंतरंतत्रानुभूयमानस्यजागतस्यवृत्तांतस्यसंबंधिकिंवृत्तंतत्त्वंब्रूहीत्यन्व

साकाशानिलवह्निवारिधरणीलोकांतरांभोधरंसर्गादावपिकारणाननुभवाच्चित्तात्मकंकेवलम् ॥ नाम्नावर्जितमेवबोधवपुषासंयुक्तमेवांततःशुद्धंवेदनमात्रमेवसकलंदृश्यंनवस्त्वंतरम् ॥ ३४ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० अ० वि० श० स्वप्ननिर्णयोनामाष्टचत्वारिंशदुत्तरशततमःसर्गः ॥ १४८ ॥ ॥ ५ ॥ ॥ व्याधउवाच ॥ ॥ अनंतरंमुनेब्रूहितत्त्वंजागतस्यते ॥ किंवृत्तमुरुवृत्तांतशतनिर्वाणसंस्तुतेः ॥ १ ॥ ॥ मुनिरुवाच ॥ ॥ ततःशृणुतदासाधोतस्मिंस्त्वद्धृदयौजसि ॥ अपूर्वएववृत्तांतःकोवृत्तोवृत्तस्पृह ॥ २ ॥ तथाममचतत्रस्यविस्मृतात्मचमत्कृतेः ॥ अभ्यवर्त्ततवैकालऋतुसंवत्सरात्मकः ॥ ३ ॥ कलत्ररंजितमतेर्ममवर्षाणिषोडश ॥ तत्रतानिव्यतीतानिगृहस्थाश्रमताऽमतेः ॥ ४ ॥ कदाचिच्चाजगामाथगृहमुग्रतपाममम ॥ मुनिर्मान्योमहाबोधोबुधोतिथितयातथा ॥ ५ ॥ ससोत्रसंपूजितस्तुष्टःसुप्तवान्भुक्तवांस्ततः ॥ इदमंगमयापृष्टोविमृश्यजनताक्रमम् ॥ ६ ॥ भगवन्भूरिबोधोसिजानासिजगतोगतीः ॥ यस्मादृष्टक्रोधोसिसुखेगृद्धासिनोरतिम् ॥ ७ ॥ सुखदुःखान्युपायांतिकर्मभिःकर्मशालिनाम् ॥ शुभाशुभैःशरत्कालेसस्यानीवफलार्थिनाम् ॥ ८ ॥ सममेवाशुभंकर्मकिमिमाःसकलाःप्रजाः ॥ कुर्वत्यासांयदायांतिदोषाःसर्वादयःसमम् ॥ ९ ॥ दुर्भिक्षावग्रहोत्पातसंवादिसममेवकिम् ॥ जनजालस्यफलतिसमानाकस्यदुष्क्रिया ॥ १० ॥ इत्याकर्ण्यसमालोक्यस्मयमानइवोन्मनाः ॥ सउवाचवचोवंद्यममृतस्यंदसुंदरम् ॥ ११ ॥

यः ॥ १ ॥ हेवृत्तसस्पृहहेसाधोततःपरंतस्यप्राणिनोत्त्वद्धृदयौजसिअपूर्वएवयोवृत्तांतोवृत्तस्तंशृणु ॥ यद्वत्यर्थैकइतिप्रयोगःप्रश्नानुवादार्थः ॥ २ ॥ ३ ॥ अमतेःआत्ममननशून्यस्य ॥ ४ ॥ कदाचिद्बुधोमुनिरतिथितयाममगृहमाजगाम ॥ तथेत्युत्तरान्वयि ॥ ५ ॥ आर्थाकमात्पूर्वंभुक्तवांस्ततःसुप्तवान् ॥ जनताजनसमूहस्तस्याःसमानसुखदुःखागमक्रमंविमृश्यविचिंत्य ॥ ६ ॥ सुखेविषयसुखलवे ॥ रतिमासक्तिम ॥ ७ ॥ ८ ॥ आसांजनतानांसर्वान्भक्ष्याभक्ष्यान्आदयंतिभोजयंतीतिसर्वादयोदुर्भिक्षादिदोषाःसममेवयदायांतितत्रनिमित्तभूतमशुभंकर्मकिंसममेवकुर्वंति ॥ ९ ॥ यत्सममेवप्रवर्त्ततेतत्किंकस्यदुर्क्रियासमाना ॥ सर्वेषांयुगपत्तदनुकूलदुष्कर्माचरणाप्रसिद्धेरित्यर्थः ॥ १० ॥ स्मयमानोविस्मयवानिवोन्मनाईषद्धसन्निति वा ॥ ११ ॥

नास्यसंशयःसर्वसंशयबीजमज्ञानमनिरस्यसमाधातुंशक्यइत्यभिप्रेत्यतदर्थमात्मतत्त्वंदृश्यमिथ्यात्वंचव्युत्पादयितुंसमुनिर्मांपप्रच्छ ॥ साधोइति ॥ हेसाधो विविक्तेचिदचिद्विवे कवत्यंतःकरणेसतिअस्यदृश्यस्यतुयत्कारणंसद्वाअसद्वासाधुजानासितत्कस्माज्ज्ञानासिकथ्यतांत्वया ॥ जानासीतिनिर्दिष्टात्प्रमातुःपृथक्कृत्यसाक्षिणःशुद्धस्यप्रश्नविषयत्वद्योत नार्थंकस्मादितिहेतुपंचम्यानिर्देशः ॥ १२ ॥ तत्रविवेकासामर्थ्यात्तूष्णींभूतंमांनिरीक्ष्यसःप्राक्तनसर्ववृत्तांतैःसहतत्साक्षिणमात्मानंस्मरेत्याह ॥ संस्मरेति ॥ किंचित्तुच्छमसारमे वचकिम् ॥ १३ ॥ असारतामेवप्रकटयति ॥ स्वप्नमात्रमिति ॥ यद्यस्माद्विभोः ॥ १४ ॥ काचकच्यंकांतिविशेषः ॥१५॥ तत्राकृत्रिमंचिन्मात्ररूपंस्वाध्यस्तेयथावेदनंसत्वा दिनिर्वाहयतीत्याह ॥ रूपमिति ॥ १६ ॥ अतएवसर्ववस्तूनांसकारणकत्वादिवादाअपितत्कल्पनानुसारेणव्यवस्थिताइत्याह ॥ सकारणत्वेति ॥ १७ ॥ समष्टिव्यष्टिभावक

अन्यमुनिरुवाच॥ ॥साधोसाधुविविक्तांतःकरणेयत्तुकारणम्॥ सद्वासद्वास्यदृश्यस्यकस्माज्ज्ञानासिकथ्यताम् ॥ १२ ॥ संस्मरात्मानमखिलंकस्त्वंक्वेहस्थितोसिच॥ क्वाहंवाकिमिदंदृश्यंकिंसारंकिंचिदेवच॥१३॥ स्वप्नमात्रमिदंभातिकिलकस्मान्नवेत्सिभो॥ अहंस्वप्ननरोयत्तत्वंस्वप्नपुरुषोपमं॥१४॥ अनाकारमनाख्येयमनाद्यमपकल्पनम्॥ इदंचिन्मात्रकाचस्यकाचकच्यंजगत्स्थितम्॥१५॥ रूपमीदृशमेवास्यचिन्मात्रस्यास्यकृत्रिमम्॥ सर्वगस्ययदेतद्यद्यत्रवेत्यस्तितत्रतत्॥ १६॥ सकारणत्वकलनात्सर्वमस्यसकारणम्॥ अकारणत्वकलनादस्यसर्वमकारणम् ॥ १७॥ ॥आसांप्रजानांत्वस्माकंविराडात्मासआततः॥ वयंत्वदिस्थितायस्यसचास्मच्चिद्दृशादितः॥ १८॥ भविष्यत्यपरोन्यासांविराडात्मासएवच॥ कारणंसुखदुःखानांभावाभावात्मकर्मणाम्॥ १९॥ विराड्धातुविकारेणविषमस्पंदनादिना॥ तदंगावयवस्यास्यजनजालस्यवैसमम्॥ २०॥ दुर्भिक्षावग्रहातीतमायातिशममेतिवा॥ यस्माद्विराजोयासत्तासासर्गस्यास्यसर्गता॥ २१॥ काकतालीयवत्साधोकेपुचिद्दुष्टकर्मसु॥ समंपततिदुःखादिपादपेष्वशनिर्यथा॥ २२॥ कर्मकल्पनयासंवित्स्वकर्मफलभागिनी॥ कर्मकल्पनयोन्मुक्तानकर्मफलभागिनी॥ २३॥

ल्पनाप्यस्माकमस्मच्चिदर्धनैवेत्याह ॥ आसामिति ॥ यस्यप्राणिनोहृदिओजसिवयंस्थिताःसोस्माकंविराडात्मा ॥ सचअस्मच्चित्कल्पनावशादेवविराड्भावमितः ॥ स्वकल्पन यात्वन्यसाधारणोव्यष्टिरेवेत्यर्थः ॥ १८ ॥ एतत्प्राणिवदपरोपिप्राणीअन्यासांप्रजानांविराडात्माभविष्यतीतिसंभाव्यते ॥ तस्मिंस्तुदेहेसएवसुखदुःखादीनांभोक्तृतयाकारणं नान्योन्यत्रेतिव्यवस्थितमित्यर्थः ॥ भावाःसंपदः अभावाविपदः कर्माणिसुकृतदुष्कृतानितेषाम् ॥ १९ ॥ जनानांदुर्भिक्षावग्रहादिसाधारणदुःखेतुयोयस्यस्थूलसमष्टिरूपो विराट्तदीयधातुविकारभेदएवनिमित्तमित्याह ॥ विराडितिद्वाभ्याम् ॥ २० ॥ दुर्भिक्षंचअवग्रहश्चअतीतमत्ययःप्रलयश्चएतेषांसमाहारोयथायोगमायातिशममेतिवा ॥ त त्कुतस्तत्राह ॥ यस्मादिति ॥ २१ ॥ तेषांप्राणिनांसमानकालपरिपक्वदुष्टकर्मापितत्रास्त्येवेत्याह ॥ काकतालीयेति ॥ २२ ॥ तादृशंकर्मापिचित्तैवप्राक्कल्पितंचेत्सातत्फलभा गिर्नानान्यथेत्याह ॥ कर्मेति ॥ २३ ॥

१ ममेतिक्वचित्पाठः

सहेतुककल्पनासहेतुकमेवास्तेअहेतुककल्पनात्वहेतुकमेववास्ते ॥ २४ ॥ नचसहेतुकत्वकल्पनामात्रेणस्वप्नेसहेतुकताघटादेरस्तीतिनिर्हेतुकजगदसिद्धेश्चिन्मात्रमेवब्रह्मपरमा र्थतोस्तीत्याह ॥ नास्त्येवेति ॥ २५ ॥ यतःसदसदात्मकःअतएवशून्योमिथ्याभूतः ॥ २६ ॥ स्वप्नोक्तोन्यायोजाग्रज्जगत्यपितुल्योपलंभत्वादेवबोध्यइत्याह ॥ काकतालीये ति ॥ चितःस्वप्नाद्वाअन्यन्न ॥ २७ ॥ सकारणत्वाकारणत्वप्रसिद्धिरप्यत्रस्वप्नवदेवव्यवस्थितेत्याह ॥ सकारणतयेति ॥ २८ ॥ स्वप्नेकार्यकारणमयक्रमोदितंयत्स्वभावकंचि तिभानमात्रकमेवेतिएषनिर्णयोजाग्रदाख्यस्यमहतःस्थूलप्रपंचस्यापितुल्यइतिशेषः ॥ तेनहेतुनाअखिलंशांतंपरमेवेतिविदुर्ब्रह्मविदइत्यर्थः ॥ २९ ॥ ननुसर्वभावानांसत्यंब्रह्मै वकारणमस्तु सत्यकारणकत्वाच्चतेपिसत्याःसंतु तथाचकथंसर्वंब्रह्मैवकथंवासत्याद्वैतंतत्राह ॥ सत्यकारणकाइति ॥ हेमहामतेअस्यांशंकायामुत्तरंतेहंवदामित्वंशृणु ॥ केते

यायायत्रयथोदेतिकल्पनात्साथबाधिका॥सासातत्रतथैवास्तेसहेतुकमहेतुकम्॥२४॥नास्त्येवस्वप्नमयेकारणसहकारिकारणादि पुरे॥तस्मात्तदनादिशिवंचेतनमजरंपरंब्रह्म॥२५॥एषस्वप्नभ्रमोनामभातिकश्चिदकारणम्॥कश्चित्सकारणोभातिशून्यःसदसदा त्मकः॥२६॥काकतालीयवद्भ्रांतिस्वाप्नाःसकलसंविदः॥ताभ्यस्तुल्योपलंभत्वान्नान्यज्जगदिदंततम्॥२७॥सकारणतयारूढमिह यत्तत्सकारणम्॥अकारणतयारूढमिहयत्तदकारणम्॥२८॥कार्यकारणमयक्रमोदितंस्वप्नएषचितिभानमात्रकम्॥जाग्रदाख्य महतःस्वभावकंतेनशांतमखिलंपरंविदुः॥२९॥सत्यकारणकाभावाःकेतेशृणुमहामते॥कारणंकिंस्वभावानांकिमिहाकाशकारण म्॥३०॥पृथ्व्यादेर्घनपिंडत्वसर्गादःकिंचकारणम्॥किंकारणमविद्यायाःकारणंकिंस्वयंभुवः॥३१॥सर्गादौकारणंकिंस्याद्वायू नांतेजसांचकिम्॥किमपांवेदनामात्ररूपाणांगगनात्मकम्॥३२॥पिंडग्रहेदेहलाभेमृतानांकिंचकारणम्॥एवमेवप्रवर्त्तंतेसर्गाः प्रथमतोखिलाः॥३३॥एवमेवप्रवर्तंतेजगत्यावलयंतिच॥चक्रकाणीवनभसिचिरसंप्रेक्षणादृशा॥३४॥एवमेवप्रवृत्तेनसर्गे णब्रह्मरूपिणा॥पश्चात्स्वस्यैवरूपस्यसंज्ञाःपृथ्व्यादिकाःकृताः॥३५॥

भावाआयुष्मतःसत्यकारणकाअभिमताः ॥ किंस्वभावानांसत्यंकारणम् किंसत्यस्वभावानांसत्यंकारणमुतमिथ्यास्वभावानांकिंसजातीयानामुतविजातीयानाम् ॥ आद्य योर्ब्रह्मणोब्रह्मैवोत्पद्येतनजगत् ॥ द्वितीययोर्नब्रह्मजस्यसत्यतासिद्धिरित्यकारणत्वमेवफलतइतिकित्वयासाधितंस्यात् ॥ किंचसर्वेषुकल्पेषुपृच्छामः ॥ किमिहाकाशस्यकार णम् ॥ आद्यकल्पयोराकाशपदवाच्यतावच्छेदकवैलक्षण्यासिद्धिर्द्वितीययोस्तत्सत्यत्वासिद्धिरित्यर्थः ॥ ३० ॥ अयंन्यायःपृथ्व्यादावपियोज्यइत्याह ॥ पृथ्व्यादेरिति ॥ ॥ ३१ ॥ वेदनातिरेकेणतत्स्वरूपानिरूपणाद्वेदनामात्ररूपाणांसाधकाभावादेवासिद्धेर्गगनात्मकंशून्यम् ॥ ३२ ॥ ३३ ॥ तस्मात्परिशेषादकारणकाभ्रांतिमात्ररूपाइतिसिद्ध मित्याह ॥ एवमेवेति ॥ चिरसंप्रेक्षणाचिरकालमनुभवस्तत्प्रयुक्तभ्रांतिदृशा ॥ ३४ ॥ ब्रह्मरूपिणाहिरण्यगर्भाकृतिनापृथ्व्यादिरूपस्यस्वस्यैवपृथ्व्यादिसंज्ञाःकृताः ॥ ३५ ॥

अतएवप्रथमंमनोराज्यवदतिसूक्ष्माश्चिराभ्यासेनस्थूलीभूतादेहकर्मादिकारणकल्पनाःकुर्वंति ॥ ३६ ॥ तत्राद्यकल्पनेयद्यथाकल्प्यतेतत्तथावपुर्नियतिःसंपद्यते ॥ इदंचस्वेन संकल्पितपदार्थेष्वस्वानुभवसिद्धमित्याह ॥ कल्पितायाइति ॥ ३७ ॥ चितासर्गानुकूलहैरण्यगर्भचिता ॥ ३८ ॥ आद्यकल्पनायाअन्यथाभावस्तुमहतामपिमहद्भिर्यत्नैःकदा चिदेवभवतीत्याह ॥ पुनरिति ॥ यथानंदिर्नहुषादेःसुरसर्पादिभावमितिभावः ॥३९॥ क्वचिद्दुग्धादौदध्यादिभावायातंचनकालोष्मादिकारणंकल्प्यते वाय्वादेर्घनद्रवादिभावा यतत्कल्पनमप्यशक्यमित्याह ॥ कल्प्यतइति ॥ ४० ॥ तत्रचितःअचित्वतिभासोनकार्यैकितुज्ञेयंप्राथमिकत्वात्तुइदानीमप्यनुवर्त्ततइत्याह ॥ वात्यावर्त्तवदिति ॥ ४१॥ यत्तु मयापृष्टंसममेवाशुभंकर्मकिमिमाःसकलाःप्रजाः कुर्वंतिकिमितितस्योत्तरंवदन्नुपसंहरति ॥ संभूयेति ॥ केचनजीवाःसंभूयापिशुभाशुभंकर्मकुर्वंतितस्यफलमपिसंभूयैवप्राप्नु

वातस्पंदवदाभांतिसर्गाःपूर्वंचिदंबरे॥ स्वयमेवचकुर्वंतिदेहकारणकल्पनाः॥ ३६॥ यद्यथाकल्प्यतेधत्तेतत्तथानियतिर्वपुः॥ कल्पिता याश्चितेर्यस्मादेवमेतन्निजंवपुः॥ ३७॥ यद्यद्भानात्मकंरूपंप्रथमंचेतितंचिता॥ स्वतोहमेवचित्येवतदद्यापितथास्थितम्॥ ३८॥ पुन रन्येनयत्नेनतदुत्कृष्टेनसैवचित्॥ शक्तातदन्यथाकर्त्तुंयत्नेनमहतापुनः॥ ३९॥ कल्प्यतेकारणंयत्रतत्रकारणसारता॥ नकल्प्यतेविदा यत्रकारणंतदकारणम्॥ ४०॥ वात्यावर्त्तवदाभातमिदंप्रथममाततम्॥ असदेवयथाभातंतथैवाद्यापिसंस्थितम्॥ ४१॥ संभूयके चनशुभाशुभमात्मकर्मकुर्वंतितस्यसदृशंफलमाप्नुवंति॥ संप्राप्नुवंतिचशिलाशनिवच्चकेचिद्दुःखंत्वकारणकमेवसहस्रसंख्याः॥४२॥ इ०वा०महारामायणेवा०दे०मो०निर्वाण०उ०अ०वि०श०कारणविचारोनामैकोनपंचाशदुत्तरशततमःसर्गः॥१४९॥ ॥ ॥ मुनिरुवाच॥ ॥एवंप्रकारयायुक्त्यातेनायंमुनिनातदा॥ तथाहंबोधितोयेनगतोविदितवेद्यताम्॥ १॥ ततोसौनमयात्यक्तश्चिरप्रार्थ नयातया॥ अवसत्तेनतत्रासौम्हतस्यापितथैवच॥ २॥ येनैतन्मुनिनाप्रोक्तमिदंहृदयशुभंवचः॥ सोयंपश्यमुनिश्रेष्ठस्तवपार्श्वेव्यवस्थि तः॥ ३॥ अनेनोक्तमनुक्तेनममैतन्मोहघातिना॥ दृश्यपूर्वापरज्ञेनयज्ञेनेवात्तमूर्त्तिना॥ ४॥

वंति ॥ केचित्तुकर्तृत्वाभिमानरहितत्वादकर्त्तारोपिसहस्रसंख्याअकारणकमेवदुःखंसंप्राप्नुवंतिजीवन्मुक्ताः ॥ यथागिरिशिखरशिलादुष्कृतमकुर्वाणापिअशनिपातमनुभवति तद्वदित्यर्थः ॥ ४२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वा०उ०एकोनपंचाशदुत्तरशततमःसर्गः ॥ १४९ ॥ ॥ ७ ॥ ॥ तद्वाक्यैःस्वात्मबोधोत्रतत्सहस्थितिरा त्मनः ॥ प्रगृह्देहगमनाशक्तेःप्रश्नेदाह्यादिचोच्यते ॥ १ ॥ अयमर्हतेनमुनिनाएवंप्रागुक्तप्रकारयायुक्त्यातथाबोधितोयथातेनबोधनेनतदैवविदितवेद्यतांतत्त्वज्ञतांगतः ॥ १ ॥ चिरप्रार्थनयातयाभक्त्याअनुवृत्त्यासेवयातेनविनयादिगुणकदंबेनचवशीकृतोसौम्हतस्यआत्मविचारशून्यत्वात्प्राङ्मृतप्रायस्यापिममतत्रगृहेतथैवअवसत् ॥ तथाचोक्तंवृद्धैः ॥ गच्छतस्तिष्ठतोवापिजाग्रतःस्वपतोपिवा ॥ नविचारपरंचेतोयस्यासौम्हतउच्यतइति ॥ २ ॥ तथाविधोदयालुर्मदुपदेष्टामुनिरिदानींत्वत्पार्श्वेतएवास्तीतितंदर्शयति ॥ येनेति ॥ ३ ॥ आत्तमूर्त्तिनाधृतशरीरेणयज्ञेनमदीययज्ञादिसुकृतेनेवस्थितेन ॥ ४ ॥

तन्मुनेर्वचआकर्ण्यव्याधःस्वप्नसर्गस्तदुपदेष्टामुनिरिदानींमत्प्रत्यक्षःकिंसंभावितइतिअसंभावनयाविस्मयात्खिन्नइवअभवत ॥ ५ ॥ असंभावनामेवसस्पष्टमाह ॥ अहोइति ॥ ६ ॥ किंतच्चित्रंमयाकथितंतदाह ॥ यदिति ॥ स्वप्नेस्वोपदेष्टृत्वेनकथितस्यमुनेरिदानींजाग्रत्प्रत्यक्षतायदुच्यतेमयाचप्रत्यक्षमुपलभ्यतेतदहंचित्रंवेदेत्यर्थः ॥ ७ ॥ भूतोवेतालः ॥ ८ ॥ एवंविधमाश्चर्यमिदमाख्यानंमेयथाक्रमंसंपूर्णमुच्यताम् ॥ इदंस्वप्नपुरुषस्येदानींदर्शनंकुतोनिमित्तात्कस्यवेदंदर्शनंकिंवास्वप्नभोजापद्वा ॥ ९ ॥ १० ॥ अनेनत्वत्पार्श्वस्थेनमुनिना ॥ ११ ॥ पूर्वःअनादिसिद्धसन्मात्रस्वभावः ॥ तपात्ययेमाघमासात्ययेहिमात्ययइतियावत् ॥ १२ ॥ ततोमेपूर्वंमुनिभावोपिस्मृतिमागतइत्याह ॥ अहोइति ॥

॥ अग्निरुवाच ॥ ॥ तदाकर्ण्यवचस्तस्यमुनेर्व्याधोभवत्तदा ॥ प्रत्यक्षःस्वप्नसर्गःकिमितिखिन्नइवस्मयात् ॥ ५ ॥ ॥ व्याधउवाच ॥ ॥ अहोमहच्चित्रमिदंमुनेमनसिद्धःसहम् ॥ कथितंमेद्यभवताभवतापापहारिणा ॥ ६ ॥ यत्स्वप्नकथितस्येयंजाग्रत्प्रत्यक्षतोच्यते ॥ लभ्यतेपिचतन्नामवेदच्चित्रमिदंमुने ॥ ७ ॥ कथमेषमहान्स्वप्नपुरुषःसमुनीश्वर ॥ जाग्रत्यपिस्थिरीभूतोभूतोबालमतेरिव ॥ ८ ॥ एवमाश्चर्यमाख्यानमुच्यतांमेयथाक्रमम् ॥ कुतःकस्यकिमेतद्वापरमोहिसविस्मयः ॥ ९ ॥ ॥ मुनिरुवाच ॥ ॥ ततःशृणुमहाभागवृत्तंचित्रंकिमत्रमे ॥ कथयामिसमासेनसहसामाकुरुत्वराम् ॥ १० ॥ अनेनैतत्तदात्रवर्णितंबोधनायमे ॥ बुधोहमभवंचाशुमहतोस्यतयागिरा ॥ ११ ॥ ततएतद्गिरापूर्वःस्वस्वभावःस्मृतोमया ॥ अवदातोवदातेननभसेवतपात्यये ॥ १२ ॥ अहोनुसोहमभवंमुनिरित्युदिताशयम् ॥ अहमासंद्रुदास्फीतात्स्नातोवस्थितविस्मयात् ॥ १३ ॥ इमांभोगास्थयावस्थांप्राप्तोस्म्यज्ञइवाध्वगः ॥ धावञ्छ्रमार्त्तिरव्यर्थीव्यर्थयामृगतृष्णया ॥ १४ ॥ कष्टंदृश्योपलंभेनभ्रांतिमात्रात्मनासता ॥ बालोवेतालकेनेवप्राज्ञोपिच्छलितोस्म्यहो ॥ १५ ॥ अहोनुचित्रमेतेनमिथ्याज्ञानेनवल्गता ॥ नीतःसर्वार्थशून्येनपदवींकामिमामहम् ॥ १६ ॥ अथवायःसोहमपिभ्रांतिमात्रंनसन्मयः ॥ तथापिचित्रशततायन्नामासद्विडंब्यते ॥ १७ ॥ नाहमस्मिनचैवेयमिदंनायमपिभ्रमः ॥ चित्रंसर्वमिदंमिथ्यासर्वंचसदिवस्थितम् ॥ १८ ॥ किमिदानींमयाकार्यमिहबंधभिदांतरः ॥ विद्यतेमेंकुरश्छेद्यंतत्तावत्संत्यजाम्यहम् ॥ १९ ॥

अवस्थिताद्विस्मयाद्रुद्रात्स्नातइवार्द्रीकृतआसम् ॥ १३ ॥ तामवस्थामनुशोचति ॥ इमामित्यादिना ॥ श्रमप्रयुक्ताआर्तिर्यस्यतथाविधोऽध्वगःपुरुषोऽव्यर्थीसन्व्यर्थयामृगतृष्णयेवभोगास्थयाअहमिमामवस्थांप्राप्तोस्मि ॥ १४ ॥ १५ ॥ १६ ॥ अथवायःसोहमितिप्रत्यभिज्ञाविषयस्तत्ताहंतादिःसोपिभ्रांतिमात्रम् ॥ तथाचकस्यचित्रमितिनोवाच्यम् ॥ तथापियत्साक्षिणाअसद्रूपंविडंब्यतेतच्चित्रशतताअस्त्येवेत्यर्थः ॥ १७ ॥ १८ ॥ बंधंभिनत्तीतिबंधभित्आंतरोयोब्रह्माकारवृत्तिविशेषःसोंकुरोविद्यतेतदपिच्छेद्यमेवेतितत्तावत्संत्यजामि ॥ १९ ॥

---

१ नायमस्मीत्यपिक्वचित्पाठः

जगद्भ्रांतिस्तु अविद्यात्वाद्विद्यावस्थैवोच्छिन्नैवेतिनसेदानींत्याज्येत्याह ॥ आस्तामिति ॥ २० ॥ अयमुपदेष्टामुनिरपिअहंशिष्यइवब्रह्मैवतथाआभातीतिनत्यक्तव्यांतरमस्ती त्यर्थः ॥ दिवावादृष्टाभ्रपुरुषवत् ॥ २१ ॥ उदितंज्ञानंयस्मात्तंगुरुंमहामुनिंएवंवक्ष्यमाणंस्वाभिप्रायंवक्ष्ये ॥ २२ ॥ नतुआश्रमस्थंनिजंमुनिशरीरंयच्चेदंप्राणिशरीरंद्रष्टुंप्रवृत्तो स्मितदपिईक्षितुंबहिर्गच्छामीत्यर्थः ॥ २३ ॥ तौदेहौकुतोभवतःस्तः ॥ यतस्तौदाहेनभस्मीभावात्सुदूरनरंगताविति भावः ॥ २४ ॥ आत्मनास्वयमेवगत्वातद्वृत्तांतंपश्यवा ॥ २५ ॥ इतितेनोक्तेसतीतिशेषः ॥ अहंतंप्राक्तनंदेहंसंचिंत्यतत्रगंतुकामेनमयास्वसंविदस्वाभूसत्तयाआंस्मिकंपार्थिवशरीरमेवाहमस्मीतिकल्पितंरूपंत्यक्त्वाप्राणोपहितचिदात्मास्वजी

आस्तामेतदविद्यैषाव्यर्थरूपाकिमेतया॥भ्रांत्याभ्रांतिरसद्रूपात्यक्तैवैषामयाधुना॥२०॥ उपदेष्टामुनिरयमेषोत्रभ्रांतिमात्रकम्॥ब्रह्मैवाहमिवाभातिरूपमेतद्दिवाभ्रवत्॥२१॥ तदेवंतावदुदितज्ञानंवक्ष्येमहामुनिम्॥ इतिसंचिंत्यसमुनिस्तत्रप्रोक्तइदंमया॥ २२॥ मुनिनायकगच्छामितच्छरीरमिदंनिजम्॥ द्रष्टुंयच्चप्रवृत्तोस्मिशरीरंतदपीक्षितुम्॥२३॥ इत्याकर्ण्यसमामाहहसन्मुनिवरस्तदा॥ कुतस्तौभवतोदेहौतौसुदूरतरंगतौ॥ २४॥ गच्छात्मनैववापश्यवृत्तांतंवृत्तकोविद ॥ पश्यतावद्यथावृत्तंहृष्ट्वांतंज्ञास्यसिस्वयम्॥ २५॥ इतिसंचिंत्यतंदेहंविदंभूसत्तयास्मिकम्॥ त्यक्त्वाचिदात्मातत्प्राणात्पवनेयोजितोमया॥२६॥ प्राक्तनंदेहमालोक्ययावदायाम्यहंमुने॥ इहैवतावत्स्थातव्यमित्युक्त्वाहंगतोनिलम्॥ २७॥ अथवातरथारूढोगगनंभ्रांतवानहम् ॥ पुष्पामोदइवानंतंगत्वाचत्वरयाचिरम्॥ २८॥ ततश्चिरमपिभ्रांत्वायदागलविलंचलन् ॥ अहंनप्राप्तवांस्तस्यकिंचिदस्याशयस्थितः॥ २९ ॥ तदाखेदमुपायातःपरमंपुनरागतः॥ इदमेवजगज्जालमहमालानमात्मनः॥ ३० ॥ इहेमंलब्धवानग्रेततोमुनिमनुत्तमम्॥ पृष्टवानहमेकाग्रस्ततएवमिदंगृहे॥ ३१॥ किमेतद्भगवन्ब्रूहिपूर्वापरविदांवर॥ त्वंपश्यसियथावृत्तमुत्तमज्ञानचक्षुषा॥ ३२॥ यस्यदेहंप्रविष्टोहंसचमद्वपुरेवच॥ क्वतावुभौगतौदेहौनलब्धौकेनहेतुना॥३३॥ मयातिचिरमाभोगिभ्रांतंसंसारमंडलम्॥ स्थावरादात्मनःकस्मात्प्राप्तंगलविलंनतत्॥३४॥ गत्वेतिपृष्टःसमुनिःसमुवाचमहाशयः ॥ जानासितत्स्वयंकस्मादितितामरसेक्षण ॥ ३५॥

वस्तत्प्राणात्द्वारभूतात्पवनस्कंधेयोजितः ॥ २६ ॥ मुनिंप्रतिकिमुक्त्वात्वमनिलंप्रविष्टस्तदाह ॥ प्राक्तनमिति ॥ गतःप्रविष्टः ॥ २७ ॥ २८ ॥ ततोहंचिरमपिभ्रांत्वाबहिर्निर्गमनद्वारंतस्यप्राणिनोगलविलंकिंचिदन्यदपिद्वारंनप्राप्तवांस्तदावाताशयस्थितोहंखेदमुपायातइतिपरेणान्वयः ॥ २९ ॥ ततःपरममिदमेवात्मनआलानंबंधनस्तंभभूतंस्वगृहंपुनरागतःसन्निहेममनुत्तमंमुनिंस्वगुरुमग्रेउपलब्धवानितिपरेणान्वयः ॥ ३० ॥ इदंवक्ष्यमाणम् ॥ ३१ ॥ ३२ ॥ सचप्राणी ॥ ३३ ॥ आआत्मनइतिच्छेदः ॥ आस्थावरादात्मनआभोगिविशालंसंसारमंडलंभ्रांतमित्यन्वयः ॥ ३४ ॥ किमुवाचतदाह ॥ जानासीति ॥ तत्पूर्वंस्वशरीरादिवृत्तंमदुक्तोपायंविनास्वयंस्वबुध्यैवकस्माज्जानासि ॥ तामरसेक्षणेतिसंबोधनात्चाक्षिसौंदर्यमात्रेणतद्द्रष्टुंशक्यमितिसूच्यते ॥ ३५ ॥

तर्हितद्दर्शनेकउपायस्तत्राह ॥ एतदिति ॥ योगैकाप्रयासंविदाआलोकयसिचेत्तर्हिज्ञानचक्षुषाएतन्निःशेषंसमग्रंपश्यस्येव ॥ ३६ ॥ यदिमद्वचनेनैवश्रोतुमिच्छानद्रष्टुमिच्छा तर्हियथावृत्तंवक्ष्यामिशृणु ॥ ३७ ॥ तत्रस्वजीवतत्त्वंप्रथमंबुध्यस्वततस्तेपूर्वदेहवृत्तांतंकथयिष्यामीतिमन्यमानोव्यष्टिजीवभावमिथ्यात्वंसमष्टिभावस्यैवसत्यत्वंत्रीणिरूपाणी त्येवसत्यमितिश्रुतिदर्शितन्यायमाश्रित्याह ॥ तपइति ॥ भवान्अयंत्वयानुभूयमानव्यष्टिजीवविशेषरूपोनास्ति ॥ किंतुसर्वप्राणितपस्तामरसानांसुकृतानांज्ञानांफलदानेनविका सनेनोष्णांशुःसूर्यभूतःसर्वकल्याणानांमानुपानंदादिप्राजापत्यानंदांतानांसुखानांकमलाकरइवसमष्टिभूतोहरेर्ज्ञानस्वरूपस्यनाभ्यब्जस्यनाभिःकर्णिकातदधिरूढसर्वजीवसम ष्ट्यात्माहिरण्यगर्भएवासि ॥ ३८ ॥ तर्हिममकथंव्यष्टिभावस्तत्रैतेभ्रांतिविशेषाश्चागतास्तत्राह ॥ सत्वमिति ॥ व्यष्टिभावस्वप्नदिदृक्षयातपसिमनोराज्यरूपेआलोचनेस्थित आश्रमेतापसोभूः ॥ तत्रपुष्टयाव्यष्टिभावसंविदापरशरीरांतःस्वप्नादिकौतुकदिदृक्षयाकस्यचिज्जंतोर्हृदयंप्रविष्टः ॥ ३९ ॥ ४० ॥ इत्यनयारीत्यात्वयिचिरंपरशरीरांतर्गतस्वप्न

एतदालोकयसिचेत्स्वयंयोगैकसंविदा ॥ तत्पश्यस्येवनिःशेषंयथाकरतलांबुजम् ॥ ३६ ॥ तथापियदिशुश्रूषातवास्तिवचसामम ॥ त दिदंशृणुवक्ष्यामियथावृत्तमखंडितम् ॥ ३७ ॥ तपस्तामरसोष्णांशुःकल्याणकमलाकरः ॥ ज्ञानाब्जस्यहरेर्नाभिर्नास्तितावदयंभवान् ॥ ३८ ॥ सत्वंकदाचित्तपसिस्थितःस्वप्नदिदृक्षया ॥ कस्यचिद्धृदयंजंतोःप्रविष्टःपुष्टसंविदा ॥ ३९ ॥ यत्त्वंप्रविष्टोहृदयंतत्रेदंभुवनत्रय म् ॥ दृष्टवानसिविस्तीर्णरोदसीविपुलोदरम् ॥ ४० ॥ इतित्वयिचिरंव्यग्रेदेहस्तस्यतथापिच ॥ ससंसुप्ताकृतिर्यत्रस्थितस्तत्रमहावने ॥ ४१ ॥ लग्नोग्निर्धूमधूम्राभ्रसांबरांबरडंबरः ॥ वेलद्दलचलालातचक्रसूर्येंदुमंडलः ॥ ४२ ॥ दग्धाभ्रभस्मसंपूर्णधूमाभ्रासितकंबलैः ॥ आनी लाकाशदलैःपरिवसंछादितांबरः ॥ ४३ ॥ दरीगृहविनिष्क्रांतसिंहनिर्ह्रादतर्जितैः ॥ स्फुटैश्चटचटास्फोटैर्जडीकृतदिगंतरः ॥ ४४ ॥ ताली तमालमालानांगतानामग्निवक्षताम् ॥ पातैरुत्पातवह्न्यभ्रकवल्करकरैर्घनः ॥ ४५ ॥ दूरदेशगतैर्दृष्टस्थिरसौदामनीधिया ॥ द्रवत्कन कनिष्पंदकुट्टिमंव्योमदर्शयन् ॥ ४६ ॥ कर्णैस्तारागणंकांतैर्व्योम्निद्विगुणतांनयन् ॥ वक्षःस्थबालवनितानयनानंदनंदनः ॥ ४७ ॥ ज्वा लाधमधमाशब्दप्रध्मातगगनोदरः ॥ दरीगृहविनिष्क्रांतभ्रांतोन्निद्रवनेचरः ॥ ४८ ॥

दर्शनव्यग्रेसतिनवदेहस्तथातत्रमहावनेसुप्ताकृतिस्त्वदुपविष्टःसप्राणोस्थितस्तस्यदेहोपिचसयुष्मदाश्रमोयुष्मदाश्रमकुटीसहितस्तेनाग्निनादग्धइतिदशमश्लोकेनान्वयः ॥ ४१ ॥ त त्रमहावनेअग्निर्लग्नः ॥ तमेवाग्निंवर्णयति ॥ धूमधूम्राभ्रेत्यादिना ॥ स्फुरद्भिर्वलाद्वलद्भिरलातचक्रैःसंपादितानिसूर्यमंडलानींदुमंडलानिचयेन ॥ ४२ ॥ दग्धाभ्रेपुभस्मसंपूर्णैर्धू माभ्रलक्षणैरसितकंबलैरानीलान्याकाशदलानिदिशआवरणेनपांतितथाविधैःसंछादितांबरः ॥ ४३ ॥ जडीकृतदिगंतरोबधिरीकृतदिगंतरालजनः ॥ ४४ ॥ सर्वतोग्निव्याप्त्याऽग्नि वक्षतांगतानांतालीतमालमालानांपातैःस्फुटतामुत्पातवह्निवदुत्पाताभ्रचक्रवतांध्वनतांकरकैःकलकलैर्घनोनिबिडितः ॥ ४५ ॥ व्योमद्रवत्कनकनिष्पंदलिप्तंकुट्टिममिवरू त्वाप्रदर्शयन् ॥ ४६ ॥ कर्णैर्विस्फुलिंगैस्तारागणंद्विगुणतांनयंस्तैरेवकर्णैर्व्योम्निवक्षस्थायाज्वालालक्षणायाबालवनितायानयनानंदनैःकटाक्षैर्नंदनआनंदयन् ॥ ४७ ॥ ४८ ॥

१ टीकानुरोधात्स्फुरद्भिरितिपाठोपेक्षितइतिभाति

रंधिताःपाचिताउपावनेचराव्याधव्याघ्रादयोजलचराश्चयेन ॥ ४९ ॥ ५० ॥ तेनवर्णितप्रकारेणवनवह्निनासयुष्मदाश्रमोयुष्मदाश्रमसहितःसतेदेहस्तस्यप्राणिनोदेहश्चदग्धः ॥ ५१ ॥ कोहेतुःप्राकृतःप्रसक्तः ॥ तेवटुवरास्त्वद्विष्टब्रह्मचार्यादिदेहाः ॥ सहयुगपत्सर्वंकथंनष्टम् ॥ ५२ ॥ संकल्पादिक्षयोदयेयथासंकल्पकपुरुषमनःस्पंदोहेतुस्तथा त्रिजगत्संकल्पकस्यविधातुरचिरात्प्रवृत्तोमनःस्पंदएवत्रिजगदितितत्क्षयोदयेपितथातन्मनःस्पंदएवहेतुरित्यर्थः ॥ ५३ ॥ यथाहृदयेभयादिनाक्षोभाक्षोभेपुअचिरात्स्पंदोहे तुस्तथात्रिजगतांवनांतेचक्षोभाक्षोभेपुंसएवहेतुरित्यर्थः ॥ ५४ ॥ ५५ ॥ अस्यजगतोब्रह्मादिमानसोमनःसमष्टिहेतुःसोप्यन्यत्रान्यमानसेचिदंबरेकल्पितःसोप्यन्यत्रसोप्य

अर्द्धदग्धद्रवत्सिंहमृगव्याधविहंगमः ॥ क्वथत्सरःसरित्स्रोतोरंधितोग्रवनेचरः ॥ ४९ ॥ वलज्ज्वालाज्वलद्वालचमरीचारुचंचुरः ॥ दह्य मानवनप्राणिमेदोगंधावृतांबुदः ॥ ५० ॥ तेनकल्पाग्निकल्पेनवल्गतावनवह्निना ॥ सयुष्मदाश्रमोदग्धःसर्पेणेवप्रसर्पता ॥ ५१ ॥ व्याधउवाच ॥ ॥ तत्रतस्याग्निदाहस्यहेतुःकःप्राकृतोमुने ॥ तद्वनंतेवटुवराःसर्वंनष्टंकथंसह ॥ ५२ ॥ ॥ मुनिरुवाच ॥ ॥ संकल्पकम नस्पंदःसंकल्पादिक्षयोदये ॥ यथाहेतुर्निरास्पंदोचिराद्धित्रिजगत्तथा ॥ ५३ ॥ हृदयेचवनांतेचक्षोभाक्षोभेपुकारणम् ॥ यथास्पंदोऽ चिरात्स्पंदस्तथात्रिजगतामिह ॥ ५४ ॥ धातुःसंकल्पनगरंजगत्तत्स्पंदनंत्विह ॥ प्रजोदयक्षयक्षोभवर्षावर्षादिकारणम् ॥ ५५ ॥ ब्रह्मा दिमानसोप्यस्यसोप्यन्यत्रचिदंबरे ॥ इत्यपर्यवसानेयंशांतैकाचिन्नभोगतिः ॥ ५६ ॥ चितिनभसिचिन्नभःश्रीःकचतीतिनिरामयावि दुपाम् ॥ मूर्खाणांतुयथैषायादृग्वातन्मयीहनसत् ॥ ५७ ॥ ॥इ०वा०वा०दे०मो०नि०उ०अ०वि०श०परमोपदेशोनामपंचाशदु त्तरशततमःसर्गः ॥ १५० ॥ ॥ ७ ॥ ॥ अन्यमुनिरुवाच ॥ ॥ तत्रतेनगरंतानिगृहाणितरवश्चते ॥ क्षिप्रेणशुष्कतृणवन्नृस वैंभस्मत्वमागतम् ॥ १ ॥ तत्रैवंभस्मतांप्राप्तेसुप्तेतेभवतस्तव ॥ तनूतथातिसंतापविदारितमहाशिले ॥ २ ॥ सशशामशनैर्वह्निर्निःशेषी कृतकाननः ॥ परिपीतार्णवोगस्त्यइवास्तंसमुपाययौ ॥ ३ ॥ तस्मिन्नस्तंगतेवह्नौतद्भस्मेद्धंसुशीतलम् ॥ ढुधावकणशोवायुरशेषंपुष्प राशिवत् ॥ ४ ॥ ततोनज्ञायतेनासीत्क्वाश्रमःक्वतनूतथा ॥ क्वपेटकंवहूनांतत्स्वप्नपूर्जाग्रतोयथा ॥ ५ ॥ अभावमुपयातेतेयदेवंभवतस्त नू ॥ स्वपतस्तेभ्रमवतःसंविदेवविजृंभते ॥ ६ ॥

न्यत्रेत्येपामायाशवलस्यचिन्नभसोगतिःकल्पनापरंपराअपर्यवसानाअनवस्थितैवेत्यर्थः ॥ ५६ ॥ निष्कृष्टदर्शनेतुचितिनभसिचिन्नभःश्रीरेवकचतीतिनिरामयाविदुपांदृष्टिः ॥ मूर्खाणांत्वापातदर्शनरूपाएपादृष्टिर्यादृग्वाभासतेतन्मय्येवइहपरमार्थेतुनसत् ॥ अलीकैवसेत्यर्थः ॥ ५७ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्र०नि०प्रक०उत्तरार्द्धेपंचाशदु त्तरशततमःसर्गः ॥ १५० ॥ दग्धाश्रमतनोर्वह्नेःप्रशमोभस्मनोनिलैः ॥ वर्ण्यतेऽयंनयस्तस्मात्त्वमेजागरितस्थितिः ॥ १ ॥ नकेवलमाश्रमादिकमेवकिंतुनगरादिसर्वंभस्मत्वमागतम् ॥ १ ॥ तथाअतिसंतापविदारितमहाशिलेतत्राश्रमेभवतोवर्त्तमानस्यतवसुप्तेतेद्वेतनूशरीरेएवमुक्तप्रकारेणभस्मतांप्राप्तेइत्यन्वयः ॥ २ ॥ परिपीतार्णवोगस्त्यइवआदावंगारमात्र शेषेणशशामततोस्तमदर्शनंसमाययौ ॥ ३ ॥ आदौइद्धंपश्चात्सुशीतलम् ॥ वायुर्दुधावव्यधूनयत् ॥ ४ ॥ वहूनांजनानांपेटकंकरंडभूतंतन्नगरम् ॥ ५ ॥ ६ ॥

देहदाहेपितदोजःपरिशेषमाशंक्याह ॥ सौजस्कइति ॥ ओजःसहितस्यैवतस्यमुप्तस्यसौजस्कएवदेहकोदग्धः ॥ ७ ॥ स्वप्नसंसारात्मकेजाग्रत्यवतिष्ठसे ॥ ८ ॥ तथाचजाग्रत्स्वप्नयोर्भेदोनास्तीतियत्प्रागुक्तंतदिदंनिदर्शितमित्याशयेनाह ॥ तदेवमिति ॥ ९ ॥ सर्वदाअवस्थात्रयेप्यात्मनिअद्वयस्वस्वभावे ॥ १० ॥ प्राक्स्वप्ननरोभवन्नपिभवांस्ततःप्रभृतिजाग्रन्नरःसंपन्नोगार्हस्थ्येसुसंस्थितः ॥ ११ ॥ संदेहेत्वमपिध्यानेनएतन्मदुक्तंसर्वंपश्यसिद्रक्ष्यसि ॥ वर्त्तमानसामीप्येवर्त्तमानवत् ॥ १२ ॥ खेकांचनमयस्तापआतपस्तद्वत्यःकचतितत्कालःस्वकचनशक्त्युत्कालस्तेनलोलवपुःसंश्चिन्मयात्माआत्मनिदुष्कर्मफलभूतैरसितैःसत्कर्मफलभूतैःसितैश्चान्मिश्रकर्मफलभूतैर्मिश्रैश्चविकसितैःसर्गात्मभिर्भावैःसंविद्घनएवकचतिनान्यइत्यर्थः ॥ १३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकपंचाशदुत्तरशततमःसर्गः ॥ १५१ ॥ ॥ ७ ॥ ॥ स्व

तस्मात्कृतद्रुलबिलंविराडात्मासचक्रते ॥ दग्धोदग्धस्यसौजस्कःसौजस्कस्यैवदेहकः ॥ ७ ॥ लब्धवानसिनोतस्माद्धेतोर्देहद्वयंमुने ॥ अनंतेस्वप्नसंसारजाग्रतीहावतिष्ठसे ॥ ८ ॥ तदेवंस्वप्नएवायंजाग्रद्भावमुपागतः ॥ सर्वेवयमिहस्वप्नपुरुषास्त्वमसुव्रत ॥ ९ ॥ अस्माकंत्वंस्वप्ननरस्त्वस्वप्ननरावयम् ॥ अयमेवचिदाकाशःसर्वदात्मात्मनिस्थितः ॥ १० ॥ ततःप्रभृतिसंपन्नोभवान्स्वप्ननरोभवन् ॥ जाग्रत्मत्यवान्जाग्रन्नरोगार्हस्थ्यसुस्थितः ॥ ११ ॥ एतत्तेकथितंसर्वंयथावृत्तमशेषतः ॥ अनुभूतंसुदृश्यंचध्यानेनैतच्चपश्यसि ॥ १२ ॥ इत्यादिमध्यरहितोयमनंतरूपःसंविद्घनःकचतिकांचनतापवत्खे ॥ तत्काललोलवपुरात्मनिचिन्मयात्मासर्गात्मभिर्विकसितैरसितैःसितैश्च ॥ १३ ॥ ॥ इ०वा०महारामायणेवा०दे०मो०नि०उ०अ०वि०श०अभावदर्शनंनामैकपंचाशदुत्तरशततमःसर्गः ॥ १५१ ॥ मुनिरुवाच ॥ ॥ इत्युक्त्वासमुनिस्तत्रतूष्णींस्वशयनेनिशि ॥ आसीद्विस्मयतश्चाहमथासंप्रोत्थमानवत् ॥ १ ॥ ततश्चिरेणकालेनमयोक्तंस्यसन्मुने ॥ एवंस्वप्नोविभासर्वःसद्रूपइतिमेमतिः ॥ २ ॥ ॥ अन्यमुनिरुवाच ॥ ॥ सत्संभवतियत्रान्यत्तत्रेदंसदितिस्मयः ॥ युक्तोयत्रत्वेतदेवसत्तात्पंतत्रकाप्रमा ॥ ३ ॥ यथास्वप्नस्तथैवायमादौसर्गोविभासते ॥ पृथ्व्यादिरहितोप्येषपृथ्व्यादिभिरवस्थितः ॥ ४ ॥ इत्यमघतनात्स्वप्नात्सर्गस्वप्नोमलात्मकः ॥ शृणुपुष्करपत्राक्षमुनेव्याधमहागुरो ॥ ५ ॥

मेमतिरित्युक्त्याअसंभाव्यार्थसत्यताशंकांनिवार्यान्यमुनिर्मुनेः ॥ इहव्याधगुरुत्वस्यहेतूक्तिमुपचक्रमे ॥ १ ॥ अथअहंवात्ययाप्रोत्थमानवत्आसम ॥ १ ॥ सद्रूपोयथार्थः ॥ मेमतिरित्युक्त्याअसंभावनयाविस्मयोद्योतितः ॥ २ ॥ यत्रयदिअन्यज्जाग्रद्वस्तुसत्संभवतिसंभवेत्तत्रतर्हिइदंस्वप्नादिसदितिस्मयोविस्मयोयुक्तःस्यात् ॥ यत्रतुएतज्जाग्रद्दृश्यमेवसत्तयाअल्पंसत्तात्पंमिथ्याभूतंतत्रस्वप्नेसत्यतायाःकाप्रमासुतरांमिथ्यात्वमेवेत्यर्थः ॥ ३ ॥ ४ ॥ इत्थंपरिदृश्यमानादद्यतनादस्मदीयस्वप्नादपिजाग्रत्त्वेनप्रसिद्धःसर्गस्वप्नःअमलचैतन्यमात्रात्मकः ॥ इयत्यपिसत्तातस्यदुर्लभेत्यर्थः ॥ हेव्याधमहागुरोहेपुष्करपत्राक्षमुनेअत्रोपपत्तिंशृणु ॥ त्वदपेक्षयापिमंदमतेर्व्याधस्यबोधनकालेत्वयाउपपादनश्रमोन्नास्यतेइतिद्योतनायतथासंबोधनम् ॥ पुष्करपत्राक्षेतिसंबोधनतात्पर्यंप्रागुक्तमेव ॥ ५ ॥

वक्तुंप्रतिज्ञातामुपपत्तिमाह ॥ अद्येति ॥ अद्यजाग्रतिदृष्टाभ्यांपदतदर्थाभ्यांबुद्धौस्वसंस्काराधानात्स्वमवतस्तवरात्रौस्वमेशब्दोऽर्थश्चाभवदितिसंस्कारादिसामग्रीसत्वात्सत्यः संभाव्येतापि ॥ सृष्ट्यादिकालेप्रसिद्धःसर्गस्वमस्तुप्राग्दृष्टःअर्थोयस्यतथाविधएवखेचिदाकाशेविराजते ॥ तत्रचचिरप्रलयकालेनव्यवधानेपूर्वानुभवसंस्कारादेरुच्छिन्नत्वा दद्यतनस्वमापेक्षयापितुच्छएवसंभाव्यतेनसमसत्ताकोपीत्युपपत्तिरित्यर्थः ॥६॥ एवंजाग्रत्प्रपंचस्याधिकमिथ्यात्वेसतिस्वमोविभ्रमोसर्वःसद्रूपइतिमेमतिरितिमतिपदेनसंदिग्धमि वसूचयन्किंवक्षि ॥ स्फुटमप्यनुभूतंसदिदंस्वगृहंमदुपदेशाद्यनुभूयपुनःस्वमध्यानेतवोद्यमःकथंजातः ॥ नहिस्वमदर्शीकश्चित्स्वमोयंमिथ्येतितदानींपश्यतीतिभावः ॥ ७ ॥ किं चसदेवजगदनुभवतस्तेअसत्त्वसंदेहेबीजमपिनास्तीत्याह ॥ इदमिति ॥ ८ ॥ आक्षिप्तवान्प्रश्नांतरकरणेननिरुद्धवान् ॥ ९ ॥ १० ॥ अहंयावत्त्वंव्याधगुरुर्भवितातावदिहैवा

अद्यदृष्टपदार्थाभ्यांस्वप्नेस्वप्नवतोभवत् ॥ सर्गस्वप्नस्तुदृष्टार्थएवादौखेविराजते ॥ ६ ॥ एवंसत्स्वप्नइत्येवसंदिग्धमिववक्षिकिम् ॥ स्फुट मप्यनुभूतंसत्स्वप्नध्यानोद्यमःकथम् ॥ ७ ॥ इदमित्थंयदाभोगिस्फुटंस्वप्नजगन्मुने ॥ सदेवानुभवत्येवतत्रसंदिग्धताकथम् ॥ ८ ॥ अ थैवंवादिनस्तस्यवाक्यमाक्षिप्तवानहम् ॥ पृष्टवान्व्याधगुरुताकासौमेकथ्यतामिति ॥ ९ ॥ ॥ अन्यमुनिरुवाच ॥ ॥ श्रूयतामिदमा ख्यानमपरंकथयामिते ॥ संक्षेपेणमहाप्राज्ञनास्यंतोविस्तरस्यमे ॥ १० ॥ अस्त्यहंतावदादीर्घतपास्त्वमतिधार्मिकः ॥ श्रुत्वेदंमद्वचःस त्यमिहैवरतिमेष्यसि ॥ ११ ॥ इहस्थंमामिमंत्वंचनत्यक्ष्यसिसपर्यया ॥ अहंभवद्भिःसहितोनिवत्स्यामीतिनिश्चयः ॥ १२ ॥ साधोयातेषु वर्षेषुततःकतिपयेष्विह ॥ सर्वबंधुविनाशस्तेदुर्भिक्षेणभविष्यति ॥ १३ ॥ मत्तसीमांतसामंतविग्रहेणतदैवच ॥ सर्वोग्रहात्तनुप्राणिग्रा मकोयंविनंक्ष्यति ॥ १४ ॥ ततोदुःखमजानंतौचिरमाश्वसितौमिथः ॥ शांतौविदितवेद्यत्वात्समौसर्वार्थनिस्पृहौ ॥ १५ ॥ इहैवैकत्रक स्मिंश्चित्तरुखंडकजालके ॥ समाचारौनिवत्स्यावःशून्येचंद्ररवीयथा ॥ १६ ॥ उत्पत्स्यतेत्वरण्येस्मिन्कालेनवनमुत्तमम् ॥ शालता लतताजालवलिताखिलभूतलम् ॥ १७ ॥ तालीतमालदलतांडवमंडिताशंव्याकोशपद्मवनवंद्यविकासिवृक्षम् ॥ कूजच्चकोरचयचा रुलतानिकुंजमुद्भासिनंदनमिवागतमंतरिक्षात् ॥ १८ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० अ० वि० श० मुनिरात्रिसंक थावर्णनंनामद्विपंचाशदुत्तरशततमःसर्गः ॥ १५२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

स्मि ॥ हेमुनिनायकत्वमपिइदंमद्वचःश्रुत्वाइहैवत्वद्गृहेरतिमेष्यसि ॥ ११ ॥ इहस्थंमांचत्वंनत्यक्ष्यसि ॥ १२ ॥ १३ ॥ वैरबलादिनामत्तानांसीमांतस्थानांसामंतानांक्षुद्रभू पानांविग्रहेणपरस्परयुद्धप्रसंगेनततनवोऽल्पीभूताःप्राणिनोयत्रतथाविधःसन्नयंग्रामकोग्रहाद्विनंक्ष्यतिपलायिष्यति ॥ १४ ॥ तदाआवांकिंकरिष्यावस्तदाह ॥ ततइतिद्वा भ्याम् ॥ १५ ॥ १६ ॥ अस्मन्निवासादरण्येउत्तमंवनंवृक्षनिकुरंबमुत्पत्स्यते ॥ उत्तमत्वमेवप्रपंचयति ॥ शालेत्यादिसार्द्धेन ॥ १७ ॥ व्याकोशैःपद्मवनैरधश्चरणाश्रयणाद्वं द्यावंद्यमानाइवपुष्पैर्विकासिनोवृक्षायत्र ॥ अंतरिक्षात्स्वर्गादागतंनंदनमिवस्थास्नुवनमुत्पत्स्यतइतिपूर्वत्रान्वयः ॥ १८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकर णेउत्तरार्द्धेद्विपंचाशदुत्तरशततमःसर्गः ॥ १५२ ॥ ॥ ७ ॥ ॥ ७ ॥

दृढव्याधागमायुक्त्यातद्गुरुत्वसमर्थनम् ॥ कालेविवेकाद्विज्ञानंसर्वैकात्म्यंचवर्ण्यते ॥ १ ॥ तस्मिन्वर्णितगुणेवने ॥ १ ॥ २ ॥ तपस्विचर्याणामभ्यासाच्छांतिदांत्यादिसाध
नसंपत्त्यनंतरंसव्याधआत्मज्ञानबुभुत्सयामध्येतदुपोद्घाततयास्वमजिज्ञासुःसन्स्वमसंकथांप्रक्ष्यति ॥ ३ ॥ ततस्त्वंस्वमाख्येनप्रसंगेनआत्मज्ञानंकथयिष्यसि ॥ ४ ॥ तेनहेतु
ना ॥ ५ ॥ पृष्टस्योत्तरंसमाप्यप्राक्तनमुपसंहरति ॥ इतीति ॥ ६ ॥ एतत्तृदृश्यजातम् ॥ ७ ॥ रतिंप्रीतिम् ॥ ८ ॥ तस्मिन्वनस्थेगृहेतथातस्मिन्प्राक्तनेग्रामगृहेच ॥ कृतभावौब

अन्यमुनिरुवाच ॥ ॥ आवयोश्चरतोस्तस्मिन्वनेचिरतरंतपः ॥ मृगानुसरणश्रांतोमृगव्याधउपैष्यति ॥ १ ॥ तंत्वंस्वभावपुण्याभिःक
थाभिर्बोधयिष्यसि ॥ तपस्तत्रैवविपिनेसविरक्तश्चरिष्यति ॥ २ ॥ ततस्तपस्विचर्याणामात्मज्ञानबुभुत्सया ॥ मध्येसस्वप्नजिज्ञासुःप्रक्ष्य
तिस्वप्नसंकथाम् ॥ ३ ॥ कथयिष्यसितस्मैत्वमात्मज्ञानमखंडितम् ॥ स्वप्नाख्येनप्रसंगेनसोतोयोग्योभविष्यति ॥ ४ ॥ इत्यनेनप्रका
रेणगुरुस्तस्यभविष्यसि ॥ तेनतातमयोक्तोसिगिराव्याधगुरोइति ॥ ५ ॥ इतितेसर्वमाख्यातंयथायंसंस्थितिभ्रमः ॥ यथाहंयादृशश्चत्व
मिहयत्तेभविष्यति ॥ ६ ॥ इतितेनाहमुक्तःसन्विस्मयाकुलयाधिया ॥ तेनसार्धंविमृश्यैतत्परंविस्मयमागतः ॥ ७ ॥ अथराज्यांव्यतीता
यांसप्रभातेमहामुनिः ॥ तथासंपूजितोयेनतत्रैवरतिमाप्तवान् ॥ ८ ॥ अनंतरंगृहेतस्मिंस्तस्मिन्ग्रामगृहेतथा ॥ स्थितावावांस्थिरमतीकृ
तभावौपरस्परम् ॥ ९ ॥ ततोवहतिकालोयमृतुसंवत्सरात्मकः ॥ स्थितोहमागतान्भावांस्त्यजन्गृह्णन्गिरिर्यथा ॥ १० ॥ नाभिवांछा
मिमरणंनाभिवांछामिजीवितम् ॥ यथास्थितोस्मितिष्ठामितथैवविगतज्वरम् ॥ ११ ॥ ततोविचारितंतत्रतन्मयादृश्यमंडलम् ॥ किं
कारणमिदंतुस्यात्किमयंवेत्तिचेतसा ॥ १२ ॥ कोयंपदार्थसंघातःकिंनामैतस्यकारणम् ॥ अस्त्यस्मिन्स्वप्नसंदर्शेचिद्व्योमैकस्वरूपिणि
॥ १३ ॥ द्यौःक्ष्मावायुराकाशंपर्वताःसरितोदिशः ॥ चिन्मात्रनभएवैतत्कचत्यात्मन्यवस्थितम् ॥ १४ ॥ चिच्चंद्रिकाचतुर्दिक्कमवभासंन
नोतियत् ॥ तदिदंजगदाभातिचित्रमप्रतिघात्मखे ॥ १५ ॥ नेमेद्रयोनचेयंभूर्नेदंखंनायमप्यहम् ॥ चिन्मात्रव्योमकचनमिदमाभातिके
वलम् ॥ १६ ॥ पदार्थजातस्यास्यस्यात्किंनामवतकारणम् ॥ पिंडग्रहेहेतुनातुविनाकोप्यर्थसंभवः ॥ १७ ॥ भ्रांतिमात्रमिदंचेत्स्याद्भ्रां
तेःकिंनामकारणम् ॥ द्रष्टामंताचकोभ्रांतेःकारणंवाक्वकीदृशम् ॥ १८ ॥

द्धप्रीती ॥ ९ ॥ भावान्अनिष्टेष्टमिश्रान् ॥ गिरिपक्षेदवाग्निवृष्ट्यादीन् ॥ १० ॥ ११ ॥ १२ ॥ एतस्यकारणंनिमित्तंकिमस्ति ॥ १३ ॥ आत्मनिचिदेकघनस्वभावेअवस्थितं
चिन्मात्रनभएव ॥ १४ ॥ खेचिदाकाशेअप्रतिघात्मस्थौल्याभावात्प्रतिघाताऽयोग्यस्वभावम् ॥ १५ ॥ नन्वद्र्यादयःसप्रतिघाःकथमप्रतिघाःस्युस्तत्राह ॥ नेमइति ॥ १६ ॥ यदा
चिन्मात्रकचनंतर्हिकारणमेवनास्तिपिंडग्रहतद्धेत्वोरप्रसिद्धेरित्याह ॥ पदार्थेति ॥ १७ ॥ तर्हिभ्रांतिरेवेयमस्त्वित्याशंक्यतत्रापिनिमित्तद्रष्ट्रादिदुर्वचमित्याह ॥ भ्रांतीति ॥ १८ ॥

संविन्मात्रकमहंयस्यदेहेप्रविष्टःसन्हृदयौजस्यवसमसौप्राणीमयामद्देहेनसहभस्मसाद्गतः ॥ १९ ॥ तस्मात्त्वद्देहमद्देहादीनामसत्त्वादिदंसर्वंचिदाभामात्रमंबरमेव ॥ २० ॥ घटावटपटाद्यतआकारतोभवितुंस्फुटंरूपंकुतइवअकारिनकुतश्चिदित्यर्थः ॥ २१ ॥ चिन्मात्रकचनमितिबुद्धिरपिराहोःशिरइतिवद्विकल्पमात्रम् षष्ठीतत्पुरुषप्रयोजकयोर्भेदसंबंधयोरप्रसिद्धेरित्याशयेनाह ॥ नापीति ॥ २२ ॥ फेनइवफेनः ॥ २३ ॥ सदेवबृंहितचिद्घनंब्रह्म ॥ २४ ॥ कालतआद्यंतवर्जितंदेशतोप्यनादिमध्यंवस्तुतएकमतएवविगतकार

यस्याहमवसंसंविन्मात्रकंहृदयौजसि ॥ असौमयासहगतःकिलाशेषेणभस्मसात् ॥ १९॥ तस्मादिदमनाद्यंतंचिदाभामात्रमंवरम्॥ अकर्तृकर्मकरणंरूपंचिद्घनमक्रमम्॥ २० ॥ इदंचिद्व्योमकचनंघटावटपटादिकम् ॥ स्फुटंकुतइवाकारिघटावटपटाद्यतः॥ २१ ॥ नापि चिन्मात्रकचनंचिन्मात्रंव्योमकेवलम्॥ तस्यकिंकचनंकीदृक्कथंकचतिकिंनभः॥ २२ ॥ अयंफेनश्चिदंभोधेःकिमस्यकचनंनवम्॥ कचत्स्वभावएवायमनंतश्चिद्घनःस्थितः॥ २३॥ चिन्मात्रकचनंशुद्धंब्रह्मबृंहितचिद्घनम् ॥इदंजगदिवाभातिक्वदृश्यंद्रष्टृताकुतः॥ २४॥ आद्यंतवर्जितममेयमनादिमध्यमेकंविभुंविगतकारणकार्यसत्त्वम् ॥ सत्तामयंभुवनशैलदिगंतनानानानात्मकंकिमपिचेतनमेवसर्वम्॥२५॥ ॥इ०वा०रामायणेवा०दे०मो०नि०उ०अ०वि०श०सर्वैकात्म्यप्रतिपादनंनामत्रिपंचाशदुत्तरशततमःसर्गः॥१५३॥

मुनिरुवाच॥ ॥इतिनिर्णीयदृश्येस्मिन्स्थितोस्मिविगतज्वरः॥ वीतरागोनिराशंकोनिर्वाणोनिरहंकृतिः ॥ १ ॥ निराधारोनिराधेयोनिर्मानोनिरुपाश्रयः॥ स्वभावस्थःस्वयंशांतःसर्गात्मासर्वथोदितः॥ २ ॥ यथाप्राप्तस्यकर्त्तास्मिनकर्त्तास्मिकदाचन ॥ स्वयमेवहि योव्योमकर्तृतातस्यकीदृशी॥ ३ ॥ द्यौःक्ष्मावायुराकाशंपर्वताःसरितोदिशः॥ इत्येकात्मनभःसर्वंभूतजालैकचिद्वपुः॥ ४ ॥ शाम्यामिपरिनिर्वामिसुखमासेचकेवलम्॥ नविधिप्रतिषेधौमेनमेवात्र्यंनमेंतरम् ॥ ५ ॥ इतिमेतिष्ठतइहयथासंस्थानसंस्थितेः ॥ अद्यायं त्वमनुप्राप्तःकाकतालीयवत्पुरः॥ ६ ॥

णंविगतकार्यंविगततदधीनसत्वकंचस्वतःसत्ताप्रधानंस्वसत्तयैवभुवनादिसत्तानिर्वाहकत्वान्नानाऽनानात्मकमिवकिमपिवाङ्मनसागोचरंयच्चेतनंतदेवसर्वंनतद्व्यतिरिक्तमणुमात्रमप्यस्तीत्यर्थः ॥ २५॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वा०उत्तरार्द्धेत्रिपंचाशदुत्तरशततमःसर्गः ॥ १५३ ॥ ॥ ७ ॥ ॥ विचारजानिजाजीवन्मुक्तस्थितिरिहोदिता ॥ मुनिनाऽभ्यासहीनस्यव्याधस्यत्वनवस्थितिः ॥ १ ॥ स्वकृतविचारफलंस्वजीवन्मुक्तिस्थितिंमुनिःप्रपंचयति ॥ इतीत्यादिना ॥ १ ॥ निर्मानोविगताभिमानः ॥ २ ॥ यःस्वयमेवव्योमनिष्क्रियंतस्य ॥ ३ ॥ एकात्मसत्नभश्चिदाकाशमेव ॥ ४ ॥ ५ ॥ हेव्याधअयंत्वमद्यानुप्राप्तः ॥ ६ ॥



१ पुंस्त्वमार्षम

एवमनुप्राप्तायपृच्छतेतेइतियथावर्णितप्रकारंसर्वम् ॥ तदेवप्रपंचयति ॥ यथास्वप्नइत्यादिना ॥ सर्वत्रतथाव्याख्यातमितिसंबध्यते ॥ ७ ॥ त्वंद्रष्टाचयादृक् ॥ इदंदेहेंद्रियाद्या
ध्यात्मिकमांतरंदृश्यंयथा ॥ इदंपुरोदृश्यमाधिभौतिकंचदृश्यंयथा ॥ तेषुचरागद्वेषहानोपादानादिभावायथा ॥ ८ ॥ हेलुब्धकलुब्धकेत्यादराद्विर्वचनम् ॥ भवानेतत्सर्वंमिथ्या
इतिबुद्ध्वाशांतोभवतु ॥ यतइयमात्मसत्ताशांतैवस्वयंनिर्वाणाआभातिनाशांता ॥ ९ ॥ शांतिस्वरूपमेवदर्शयति ॥ नैवेति ॥ आत्यंतिकदृश्याभानमेवतच्छांतिरित्यर्थः ॥ स्फु
टतरस्यनरदेवतिर्यक्स्थावरादेःस्वप्नप्रायत्वमसंभावितमितिकाकाध्वनयन्लुब्धकआह ॥ एवंचेदिति ॥ १० ॥ संतएवासन्मयाःस्युरितिशेषः ॥ इष्टापत्त्यामुनिरुत्तरमाह ॥
एवमेतदिति ॥ ११ ॥ आत्मनिसत्अन्येष्वसच्च ॥ तथैवसर्वानुभवादित्यर्थः ॥ बोधानुसारिव्यवस्थत्वादपितत्तथेत्याह ॥ दृश्यमिति ॥ १२ ॥ यतोनानैकंवस्तु ॥ यथैकोघ

इतितेसर्वमाख्यातंयथास्वप्नोयथावयम् ॥ यथाजगद्यथाचत्वंयथादृश्यमिदंतथा ॥ ७ ॥ त्वंचयादृग्दृश्यमिदंयथादृश्यमिदंपुरः ॥ यथा
भावायथाब्रह्मयथेमाजनताःपुरः ॥ ८ ॥ एतद्बुद्ध्वाभवाञ्छांतोमिथ्यालुब्धकलुब्धक ॥ शांतैवैवमियंसत्ताचिन्मात्रव्योमरूपिणी ॥ ९ ॥
स्वयमाभातिनिर्वाणानैववाभातिकिंचन ॥ ॥ लुब्धकउवाच ॥ ॥ एवंचेत्तदहंत्वंचसर्वैवाविबुधादयः ॥ १० ॥ सर्वएवमिथःस्वप्नपुरु
षाःसदसन्मयाः ॥ ॥ मुनिरुवाच ॥ ॥ एवमेतदिदंसर्वमन्योन्यंस्वप्नवत्स्थितम् ॥ ११ ॥ अन्योन्यमात्मनितथासदसच्चानुभूयते ॥ दृश्यं
येनयथाबुद्धंतथातेनानुभूयते ॥ १२ ॥ नानैकंवस्त्वतोनेकंनसन्नासन्नमध्यगम् ॥ जाग्रतिस्वप्ननगरमिववेदनमात्रकम् ॥ १३ ॥ अदृ
ष्टपूर्वंदूरस्थदृश्यमानपुरोपमम् ॥ इतितेसर्वमाख्यातंबोधितोसिनिरंतरम् ॥ १४ ॥ स्वयंप्राज्ञोसिजानासियथेच्छसितथाकुरु ॥ एवंप्र
बोधितस्यापितवव्याधमतेमतिः ॥ १५ ॥ क्षणंप्रबोधविश्रांतानविश्रांतापरेपदे ॥ नाभ्यासेनविनाबोधएपयातिमनोहृदि ॥ १६ ॥ प
रांपरिणतिंप्राज्ञदारुणीवांबुधारणे ॥ अभ्यासाद्बोधविश्रांतौगुरुशास्त्रैकसेवनात् ॥ द्वैताद्वैतदृशोःशांत्यानिर्वाणंचित्तमुच्यते ॥ १७ ॥

टोनानाकपालकपालिकातदवयवपरंपरापरमाण्वंतनानावस्त्वात्मकएकत्वप्रतीतेरेकवस्त्वात्मकश्च ॥ तत्रनानात्वदर्शिनामेकमसत् एकत्वदर्शिनांनानात्वमसत् उभयदर्शिना
मुभयंसदसच्चपाक्षिकम् तत्त्वविदांतुवेदनमात्रकमितिनैकमपीत्यनुभवसिद्धमितिभावः ॥ मध्यगंसदसत् ॥ १३ ॥ १४ ॥ मतेस्वाभिमतेजगत्सत्यत्वभ्रमेएवमतिर्विश्रांतापरेपदे
तुनविश्रांतेतिपरेणान्वयः ॥ १५ ॥ तत्कुतस्तत्राह ॥ नेति ॥ एषबोधोऽभ्यासेनपरांपरिणतिंविनामनोहृदिमनोंतर्नयातिनप्रविशति ॥ यथाअंबुधारणेकार्येदारुणिपरांकमंड
ल्वाद्याकारांकर्त्तनादिनिर्मितांपरिणतिंविनातदंतरंबुनप्रविशतितद्वदितिपरेणान्वयः ॥ १६ ॥ अभ्यासेनबोधस्यांतर्विश्रांतौसिद्धायांतच्चित्तमेवनिर्वाणमितितदनुभविभिरुच्य
तइत्याह ॥ अभ्यासादिति ॥ १७ ॥

उक्तेर्थे भगवद्वचनसंमतिं दर्शयति॥ निर्मानेति॥ अंतर्निर्मानमोहाः बहिर्जितसंगदोषाः अंतर्बहिश्चाध्यात्मनित्याः सर्वतःपूर्णानंदात्मलाभाद्विनिवृत्तकामाः सुखदुःखयोःसम्यग्ज्ञानसंज्ञायेभ्यस्तथाविधैःप्रियादिद्वंद्वैर्विमुक्ताअमूढास्तत्त्वविदस्तद्विष्णोःपरमंपदंनिर्वाणाख्यंगच्छंत्यनुभवंतीत्यर्थः ॥ १८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेचतुष्पंचाशदुत्तरशततमःसर्गः ॥ १५४ ॥ ॥ ७ ॥ ॥ व्याधस्यमूढतपसाचिरक्लेशाद्विधेर्वरात् ॥ नत्तोगतिःकायवृद्धिर्मृतिश्चमुनिनोच्यते ॥ १ ॥ चित्रकृतआकारःप्रतिमेवविस्मयेनमंथरोजडीकृतः ॥ १ ॥ नविशश्रामविश्रांतिनलेभे ॥ २ ॥ केनचित्सिद्धेनतपसास्वीयतपोबलेनचक्रेणचक्रवातेनेवल्हनइव ॥ ३ ॥ ४ ॥ यत

निर्मानमोहाजितसंगदोषाअध्यात्मनित्याविनिवृत्तकामाः॥ द्वंद्वैर्विमुक्ताःसुखदुःखसंज्ञैर्गच्छंत्यमूढाःपदमव्ययंतत्॥१८॥ ॥इ०वा० महारामायणेवा०दे०मो० निर्वाणप्रकरणेउ० अ० वि०श० यथाभूतार्थवर्णनंनामचतुष्पंचाशदुत्तरशततमःसर्गः॥ १५४॥ ॥७॥

॥अग्निरुवाच॥ ॥इत्याकर्ण्याथसव्याधस्तदातस्मिन्वनांतरे॥ आसीच्चित्रकृताकारइवविस्मयमंथरः॥ १॥ नविशश्रामचेतोस्यस्वाभ्यासेनविनापदे॥ आसीदुद्भ्रांतइवसप्रोह्यमानइवार्णवे॥ २॥ आरूढइववाचक्रेचक्रेणतपसाहृतः॥ नक्रेणेवसमाक्रांतःपराक्रमविवर्जितः॥ ३॥ किमेतत्स्याद्भुतान्यत्स्यान्निर्वाणमितिसंशयात्॥ नाध्यगच्छदसौशांतिंमूर्खोयौवनवानिव॥ ४॥ अविद्याकृतमेवेदंदृश्यमित्येवचिंतयन्॥ अविद्याजगदित्येषानायातिनिपुणंहृदि॥ ५॥ कियदंतमिदंदृश्यंस्यात्पश्याम्येतदादितः॥ दूरतोर्द्ध्वप्रमाणेनतपोलब्धशरीरकः॥ ६॥ भावाभावात्मनोनित्यमस्यांतेस्थीयतेसुखम्॥ तस्मादाकाशमप्यस्तियत्रनोतत्रयाम्यहम्॥ ७॥ इतिनिर्णीयहृदयेमूर्खएववभूवसः॥ गतंतादृशमप्युक्तंविनाभ्यासेनभस्मनि॥८॥ ततस्ततःप्रभृत्येवतेनैवमुनिभिःसह॥ लुब्धकत्वंपरित्यज्यतपश्चरितुमुद्यतः॥९॥ तस्मिन्जगतितैर्भावैस्तैःसमंनिवसन्सदा॥ बहून्यब्दसहस्राणिचकारसुमहत्तपः॥ १०॥ तपःकुर्वन्कदाचित्सपुनःपप्रच्छतंमुनिम्॥ कदास्यादात्मविश्रांतिर्ममेत्याहमुनिस्ततः॥११॥ ॥मुनिरुवाच॥ ॥ज्ञानंतदुपदिष्टंतेजीर्णदार्वल्पकाग्निवत्॥ संस्थितंहृदयेकिंतुदाढ्यमाक्रम्यनोचितम्॥ १२॥

इदंजगदविद्यैवेत्यर्थोहृदिनायातिअतइदंजगदविद्याख्ययाब्रह्मशक्त्याकृतमुत्पादितंसत्यमेवेतिचिंतयन्सन् ॥ ५ ॥ इदंदृश्यंकियदंतंकियद्दूरावधिकंस्यादेतत्तपोलब्धशरीरकःसन्नादितःपृथिवीमारभ्यदूरतयाऊर्ध्वप्रमाणेनदेहेनगत्वापश्यामिद्रक्ष्यामि ॥ ६ ॥ भावाभावात्मनोऽस्यदृश्यस्यांतेअसंसारप्रदेशेनित्यंसुखंस्थीयतेस्थास्यतेमया ॥ ७ ॥ तादृशमतिविस्तीर्णसदृष्टांतोपपत्तिकमपिमुन्युक्तमभ्यासेनविनाभस्मनिहुतमिववृथागतमित्यर्थः ॥ ८ ॥ तेनैवनिर्णयेन ॥ ९ ॥ तैस्तपस्विपुप्रसिद्धैर्भावैर्लक्षणैः ॥ १० ॥ ममनिरुपप्लवेआत्मनिविश्रांतिःकदास्यादितिपप्रच्छ ॥ ततोमुनिस्तंप्रत्याह ॥ ११ ॥ जीर्णदार्वल्पकाग्निवत्संस्थितमित्युक्त्याजन्मांतरेउद्बोधमेष्यतीतिसूचितम् ॥ सांप्रतंदग्धुमुचितंदार्ढ्यंदग्धुंशक्यमपिदृश्यानर्थमाक्रम्यनसंस्थितम् ॥ १२ ॥

कालेनचिरेण ॥ १३ ॥ भूतलेकेनापिमनसाप्यसंभावनादत्यद्भुतम् ॥ १४ ॥ संस्तुतोज्ञातुंप्रस्तुतःतयाविद्वत्प्रसिद्ध्याज्ञानसारतयाअनववुद्धश्चात्मायेनतथाविधोऽतएवदोलायमानसंवित्त्वम् ॥ असमर्थसमासश्छांदसः ॥ १५ ॥ आत्मविकल्पेनस्वमनोरथकल्पनामात्रेण ॥ १६ ॥ इत्थमनेनैवसांप्रतंक्रियमाणप्रकारेण ॥ युगशतंव्याधस्यजीवनासंभवादर्थादनेकजन्मभिः ॥ १७ ॥ वरदस्यतस्यविधेःसन्निधौउद्दामदौरात्म्यान्निजंमनोरथकल्पितंवरंमार्गयिष्यसिप्रार्थयिष्यसीतियावत् ॥ १८ ॥ यत्प्रार्थयिष्यसितच्छृणित्याह ॥ देवेति ॥ हेदेवविधेअस्मिन्दृश्यरूपेदृष्टेअविद्याभ्रमेसतिआदर्शवत्स्थितेब्रह्मणिप्रतिबिंबमलेनोज्झितःप्रदेशोनास्तियत्रगतस्यमेनिर्विक्षेपस्थितिःस्यादित्यर्थः ॥ १९ ॥

नाभ्यासेनविनाज्ञानेशिवेविश्रांतवानसि ॥ अभ्यासेनतुकालेनभृशंविश्रांतिमेष्यसि ॥ १३ ॥ भविष्यदिदमात्मीयमथाकर्णयनिर्णयम् ॥ ममवर्णयतःकर्णभूषणंभूतलाद्भुतम् ॥ १४ ॥ संस्तुतानववुद्धात्माज्ञानसारतयानया ॥ दोलायमानसंवित्त्वंमूर्खोनचपंडितः ॥ १५ ॥ अविद्यारूपमाभोगिकिंप्रमाणमिदंजगत् ॥ स्यादित्यात्मविकल्पेनतपस्त्वंकर्तुमुद्यतः ॥ १६ ॥ इत्थंतपस्त्वयाघोरंकार्यंयुगशतंपृथु ॥ परमेष्ठीततस्तुष्टस्त्वामुपैष्यतिसामरः ॥ १७ ॥ मार्गयिष्यसितस्यत्वंवरदस्यवरंवर ॥ इदंमुद्दामदौरात्म्यान्निजंसंदेहसंशयम् ॥ १८ ॥ देवायंदृश्यरूपेऽस्मिन्दृष्टाविद्याभ्रमेसति ॥ क्वचिदादर्शवन्नास्तिप्रतिबिंबमलोज्झितः ॥ १९ ॥ चिद्व्योमदर्पणस्यास्यपरमाण्वाकृतेरपि ॥ अंतस्थस्यैववायत्रतत्रेदंप्रतिबिंबति ॥ २० ॥ तस्मात्कियदनंतंस्यादिदंदृश्यमनर्थकृत् ॥ तस्यपारेकियद्वास्यादाकाशंदृश्यमेवतत् ॥ २१ ॥ एवमर्थमहंज्ञातुमिमंसंप्रार्थयेवरम् ॥ शृणुदेवेश्वराविघ्नंतच्चैवाशुप्रयच्छमे ॥ २२ ॥ इयंस्वच्छंदमृत्युर्मेनीरोगास्तुतनुश्चिरम् ॥ गारुडेनचवेगेनसंयुताव्योमगामिनी ॥ २३ ॥ प्रतिनाडीकमेपातुर्वृद्धिंगच्छतुयोजनम् ॥ क्रमेणजगतोबाह्येभवत्वाकाशरूपिणी ॥ २४ ॥

कुतोनास्तितत्राह ॥ चिद्व्योमदर्पणस्येति ॥ यतःपरमाण्वाकृतेरप्यंतःस्थितस्यास्यचिद्व्योमदर्पणस्ययत्रतत्रइदंजगद्रूपंप्रतिबिंबति ॥ २० ॥ हेविधेयस्मात्साविद्यचितेरियंस्थितिस्तस्मादिदमविद्याप्रयुक्तंदृश्यंकियद्दूरमिदमनर्थकृद्दृश्यंस्यात् ॥ तस्यदृश्यस्यपारेअनंतंनिरविषयंब्रह्मकियद्दूरंवास्यादाकाशवत्संसारशून्यंब्रह्मतन्मयादृश्यमवश्यंगत्वाद्रष्टव्यमेव ॥ आवश्यकेकृत्यः ॥ २१ ॥ एवंरूपमर्थंज्ञातुंप्रत्यक्षमनुभवितुमिमंवक्ष्यमाणंवरंसंप्रार्थये ॥ २२ ॥ इयंमेतनुःस्वच्छंदमृत्युर्नीरोगागारुडेनगरुडवेगसदृशेनवेगेनसंयुताव्योमगामिनीचास्तु ॥ २३ ॥ तुपुनःप्रतिनाडीकंप्रतिक्षणंप्रत्यवयवंचयोजनमेपामेतनुर्वृद्धिंगच्छतु ॥ कालक्रमेणजगतोलोकत्रयाद्बाह्येभवतुबहिर्गच्छतु ॥ आकाशवद्विशालरूपिणी ॥ २४ ॥

---

१ स्वजातिसिद्धहिंसादिपरित्यागेनतपसिप्रवृत्तत्वाल्लुब्धकसंबोधनंवरेति. २ नपुंसकत्वमार्षमिदमितिपाठोवा ३ संदेहस्यअविद्यारूपमित्यादिनानुपदोक्तस्यसम्यक्शयःशयनंनिवृत्तिरितियावत् सयस्मिन्निनिसंदेहसंशयस्तथाविधमितिवरविशेषणम

अहंसाकाशस्यास्यदृश्यवर्गस्यांतंलभेय ॥ २५ ॥ २६ ॥ महतिदेवेवेधसि ॥ त्रिमूर्त्तिनामभेदाद्वामहादेवे ॥ चंद्रस्यकांतिरिवकांतिर्यस्यतथाविधोभविष्यति ॥ २७ ॥ सभवा नृव्योम्नितस्मिन्वरप्राप्युत्तरक्षणएवततोमदाश्रमात्प्लुतिमूर्ध्वमुड्डयनमेष्यति ॥ २८ ॥ २९ ॥ वहन्नूगच्छन्नूसन्नूसरितामंतइवजगतस्त्रैलोक्यस्यांतेतववपुर्वर्द्धिष्यतेइतिपरेणान्वयः ॥ ३० ॥ निष्पारस्याप्यंबरस्यपूरणंनिरवकाशतासंपादकम् ॥ ३१ ॥ निरर्गलमप्रतिबंधमेवाधारभूतंयदनंतंगगनंतस्यक्रमादाक्रमणात् ॥ ३२ ॥ सर्गानेवविशिनष्टि ॥ परमार्थे त्यादिना॥ परमार्थमहाकाशस्यशून्यताप्रयुक्तान्वातचक्रकान्वात्याइवस्थितान् स्वभावःअज्ञाततास्वभावस्तल्लक्षणद्रवतायाउद्देशादुल्लेकादाविर्भूतांश्चिदर्णवतरंगकान्॥ ३३॥

साकाशस्यास्यदृश्यस्यलभेयपरमेश्वर ॥ अंतमित्थमनंतस्यपरमोस्त्वितिमेवरः ॥ २५॥ इतिसाधोत्वयाप्रोक्तेदेवदेवोवरंप्रभुः॥ एव मस्तुतवेत्युक्त्वायास्यत्यंतर्द्धिमीश्वरः ॥ २६ ॥ गतेतस्मिन्महादेवेदेवैःसहदिवस्पतौ ॥ तपसातेकृशोदेहश्चंद्रकांतिर्भविष्यति॥ २७॥ मामापृच्छन्नमस्कृत्यतस्मिन्नेवक्षणेततः॥ प्लुतिमेष्यतिसव्योम्निचित्तस्यार्थदिदृक्षया ॥२८॥ द्वितीयइवशीतांशुर्द्वितीयइवभास्करः॥ द्वितीयइववौर्वाग्निश्चंद्रार्कस्पर्धयोत्थितः॥ २९॥ ततोगरुडवेगेनदृश्यस्यनभसस्तथा॥ अंतंप्राप्तुंवहन्वेगाज्जगतःसरितामिव ॥ ३० ॥ जगतोंतेततोजस्रंततोवर्द्धिष्यतेवपुः॥ कल्पांतमत्तार्णववन्निष्पारांबरपूरणम्॥ ३१ ॥ द्रक्ष्यस्यथमहाव्योम्निवर्द्धमानोबृहद्वपुः॥ सर्गा न्निरर्गलाधारनिरंतगगनक्रमात् ॥ ३२ ॥ परमार्थमहाकाशशून्यतावातचक्रकान्॥ स्वभावद्रवतोद्देशाच्चिदर्णवतरंगकान्॥ ३३॥ संविद्घनेयथास्वप्नेपुराद्याभ्रांतिखात्मकाः॥ तथातदातवैष्यंतिसर्गवर्गानिरर्गलाः॥ ३४॥ विस्फुरंतिमहाव्योम्निपर्णौघाःक्षुभितानिलैः॥ तथासर्गाननंतांस्त्वंद्रक्ष्यस्यक्षीणनिश्चयः॥ ३५॥ सभासत्येक्षणरुचांयथाजालंसदप्यसत्॥ जगदात्मतथाकाशसंविदांखेसदप्यस त्॥ ३६॥ सर्वोर्वीजनदृष्टानांलग्नानामिंदुमंडले ॥ यादृग्जालंजगत्तादृक्स्थितेनन्यत्वमात्मनः ॥ ३७॥ पुनःसर्गःपुनर्व्योमपुनःसर्गःपु नर्नभः॥ इत्येवंपश्यतस्तेत्रदीर्घकालःप्रयास्यति॥३८॥अथदीर्घेणकालेनप्रस्फुरन्सर्गपर्णके॥ उद्वेगमेष्यसिव्योम्निमहामहिमनिस्वयम् ॥ ३९ ॥ उद्वेगमेष्यसिततस्तपसोनुभवन्फलम्॥ निर्दक्ष्यसितदादेहमनंतांबरपूरकम् ॥ ४० ॥

एष्यंतिदृष्टिपथमितिशेषः ॥ ३४ ॥ यथाविस्फुरंतितथाविस्फुरितानितिशेषः ॥ ३५ ॥ यथासौधस्थस्त्रीजनानांविचित्रवातायनजालेनबहिर्दृत्यसभासत्येक्षणंरोचतेनान्यथे पांतथाविधानांविचित्रवातायनजालंसदप्यसत्प्रायंतथाचिदाकाशसंविदांतस्वविदांजगदात्मकंवैचित्र्यंतत्रसदप्यसत्प्रायमेवेत्यर्थः ॥ ३६ ॥ सर्वैरुर्वीस्थैर्जनैरिंदुमंडलसंलग्नत यादृष्टानांधूमनीहारधूल्यादीनांजालमिंदुमंडलस्थजनदृशायादृगत्यंतासत्जगदपिआत्मनःअनन्यत्वंप्राप्यस्थितेतत्वविदितादृक्अत्यंतासदेवेत्यर्थः॥ ३७ ॥ ३८ ॥ प्रस्फुरन्सं चरन् ॥ व्योम्नयव्यक्ताकाशे ॥ ३९ ॥ निर्दक्ष्यसिद्रक्ष्यसिवक्ष्यसिच ॥ ४० ॥

तदेवाह ॥ किमिदमित्यादिना ॥ ४१ ॥ अप्रमाणःअपरिमितः ॥ यद्वावितन्नैवउपगम्यतेज्ञायते ॥ ४२ ॥ इयंदृश्यरूपा ॥ प्रमीयतेअनुभूयते ॥ मीयतेइयत्तयापरिच्छिद्यतेहिं स्यतेवा ॥ ४३ ॥ अनेनातिप्रवृद्धदेहेनसाधुसच्छास्त्रसंगममन्यद्वामोक्षसाधनंकिंचिन्नाप्नोमि ॥ ४४ ॥ सुदुष्प्रापःआर्याणांतत्त्वविदांसंगमोयेन ॥ ४५ ॥ प्राणरेचयतिशरीराद्व हिर्नयतितच्छीलांधारणांकृत्वा ॥ यथाखगःपक्षीसंभुक्तात्फलाद्दाडिमादेःशुष्कंनीरसंबीजत्वगादिभागंत्यजतितद्वत् ॥ ४६ ॥ ४७ ॥ तत्रतस्मिन्जगति ॥ ४८ ॥ शुष्कानी रक्ताप्राग्वर्णितासमातृमंडलाभगवतीकालीतद्देहंप्राग्वर्णितप्रकारेणगणैःसहभक्षयिष्यति ॥ ४९ ॥ ५० ॥ इदंभाविस्वदृढसंकल्पफलंश्रुत्वाततोनिर्विण्णोव्याधस्तत्परिहारो

किमिदंकुशरीरंमेभारभूतमिवस्थितम् ॥ मेर्वादिभूभृतांलक्षमपियस्मिंस्तृणायते ॥ ४१ ॥ देहोममाप्रमाणोयंव्याप्तंव्योममयाखिलम् ॥ पूरयामिखमद्यापिभाविनैवोपगम्यते ॥ ४२ ॥ अविद्यावतघोरेयमनंताचप्रमीयते ॥ मीयतेनचकेनापिब्रह्मज्ञानंसमंविना ॥ ४३ ॥ तमिमंसंत्यजाम्येवदेहमावित्ततांतरम् ॥ नानेनकिंचिदाप्नोमिसाधुसच्छास्त्रसंगमम् ॥ ४४ ॥ अनंतापारपर्यंतंनिरालंबांबरास्पदम् ॥ किंनामेदंशरीरंमेसुदुष्प्रापार्यसंगमम् ॥ ४५ ॥ इतिसंचिंत्यतंदेहंधारणांप्राणरेचनीम् ॥ कृत्वात्यक्ष्यसिसंभुक्तात्फलाच्छुष्कंयथाखगः ॥ ४६ ॥ कृत्वादेहपरित्यागंजीवःप्राणसमन्वितः ॥ व्योम्निस्थास्यतितेतस्मिन्वातात्सूक्ष्मोपिवातवत् ॥ ४७ ॥ छिन्नपक्षोमहामेरुरिवदेहःपतिष्यति ॥ तत्रभूलोकशैलादिसर्वंचूर्णीकरिष्यति ॥ ४८ ॥ शुष्काभगवतीदेहंतत्तदाभक्षयिष्यति ॥ समातृमंडलातेननिर्दोषाभूर्भविष्यति ॥ ४९ ॥ इत्यात्मोदंतमखिलंश्रुतवानसिसुव्रत ॥ तपस्तालीवनेकृत्वायथेच्छसितथाकुरु ॥ ५० ॥ ॥ व्याधउवाच ॥ ॥ अहोनु भगवन्दुःखंपरिभोक्तव्यमक्षयम् ॥ मयाव्यर्थमनर्थाययदर्थेनदुरर्थितम् ॥ ५१ ॥ विद्यतेकिंविभोकाचिद्युक्तिःसैपास्थितिर्वर ॥ अन्यथाभवितव्योर्थोयदिनास्तितदुच्यताम् ॥ ५२ ॥ ॥ मुनिरुवाच ॥ ॥ अवश्यंभवितव्योर्थोनकदाचनकेनचित् ॥ विधातुमन्यथाशक्यस्तन्नक्षरतियत्नतः ॥ ५३ ॥ वामावामशिरःपादविपर्ययविधौयथा ॥ पुंसोनविद्यतेशक्तिस्तथाभावान्यथास्थितौ ॥ ५४ ॥ ज्योतिःशास्त्रार्थविज्ञानैरिहभाव्यर्थवेदनम् ॥ भवत्यन्यदपूर्वंतुनकिंचनकदाचन ॥ ५५ ॥

पायोस्तिवानवेतिपृच्छति ॥ अहोइत्यादिना ॥ यद्यस्माद्धेतोःअर्थेनपुरुषार्थभ्रमेणदुःखमेवार्थितंसंकल्पेनसमर्थितम् ॥ ५१ ॥ हेवरश्रेष्ठभगवन्सैपाभाव्यर्थस्थितिस्त्वयोक्ता ॥ अयंभवितव्योऽर्थोययायुक्त्याऽन्यथास्यात्तथाविधाकाचिद्युक्तिर्विद्यतेयदिवानास्तितत्त्वयाउच्यताम् ॥ ५२ ॥ यतस्तत्तुइदानींतनयत्नतोनक्षरतिननश्यति ॥ ५३ ॥ यथापुंसःस्वदेहेपिवामावामभागयोःशिरःपादयोर्वाविपर्ययविधौव्यत्यासकरणेशक्तिर्नविद्यतेतथाभाव्यर्थानामप्यन्यथास्थितौस्थापने ॥ ५४ ॥ तस्यपरिज्ञानमात्रंतुशास्त्रीयोपायैर्भवतिनान्यथात्वमित्याह ॥ ज्योतिःशास्त्रेति ॥ ५५ ॥

तर्हिप्राक्तनदृढसंकल्पकर्मणामानंत्यादनिर्मोक्षप्रसंगइत्याशंक्याह ॥ जयंतीति ॥ यैःपुरुषधौरेयैःप्राकृतैःसुकृतैरघतनानिशमदमादिसाधनान्युपेत्यसंविन्नयैर्ब्रह्मसंविदापकैः श्रवणाद्युपायैस्तत्त्वज्ञानंप्राप्यब्रह्मतयैवसुप्तंनजगद्दर्शनेनजागरितंतेपुरुषश्रेष्ठाःप्राक्तनानिसर्वकर्माणिदुःसंकल्पवेदनानिचात्यंतदृढतराण्यपिमूलोच्छेदेनजयंतिनान्येइत्यर्थः ॥ ५६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेपंचपंचाशदुत्तरशततमःसर्गः ॥ १५५ ॥ ॥ ७ ॥ ॥ वायौस्थितोव्याधजीवःसिंधुर्भूत्वाविदूरथम् ॥ हत्वामंत्रिमुखात्श्रोतास्वतत्त्वमिहवर्ण्यते ॥ १ ॥ कृत्वादेहपरित्यागंजीवःप्राणसमन्वितः ॥ व्योम्निस्थास्यतितेतस्मिन्वातात्सूक्ष्मोपिवातवदितियदुक्तंतत्श्रुत्वाव्याध

जयंतिकर्माणिहिवेदनानियैःप्राकृतैरघतनान्युपेत्य॥शरीरदाहैरपिनिर्विकारसंविन्नयैर्ब्रह्मतयैवसुप्तम्॥५६॥ ॥इ०वा०रामायणे वा०दे०मो०नि०उ०अ०वि०श०भाविसंपत्तिवर्णनंनामपंचपंचाशदुत्तरशततमःसर्गः॥१५५॥ ॥७॥ ॥व्याध उवाच॥ ॥अनंतरंहेभगवन्विततकाशवासिनः॥किंभविष्यतिमेतत्रदेहेधःपातिनिक्षितौ॥१॥ ॥मुनिरुवाच॥ ॥श्रृणुष्वावहितस्तस्मिन्देहेतवपरिक्षते॥किंभविष्यतिभव्यात्मंस्तस्मिन्परमकांबरे॥२॥देहेतस्मिन्परिभ्रष्टेजीवस्तुप्राणसंयुतः॥भविष्यत्यंबरेवातलवोव्याततरूपिणि॥३॥ तस्मिन्वातलवेचेतोहृश्यंहृत्स्थंस्थितंपुरः॥ स्फारंद्रक्ष्यतिभूपीठंभवान्स्वप्नेजगद्यथा॥४॥ महत्त्वाच्चित्तवृत्तेस्तुजीवोद्रक्ष्यतितेततः॥राजाहमस्मिभूपीठइतिसंकल्पितार्थभाक्॥५॥तत्रास्यसहसैवाशुप्रतिभोदेष्यतिस्वयम्॥अहमस्मिनृपःश्रीमान्सिंधुर्नाम्नातिमानितः॥६॥अष्टवर्षायमेराज्यंगतेपितरिकाननम्॥भुवश्चतुःसमुद्रायाःपित्रादत्तमुपागतम्॥७॥सीमांतेभूपतिःशत्रुर्विदूरथइतिश्रुतः॥विद्यतेयःप्रयत्नेनविनानामनजीयते॥८॥इदंमेकुर्वतोराज्यंसंवत्सरशतंगतम्॥अहोभृत्यकलत्रौघैःसहभुक्तंमयासुखम्॥९॥कष्टमेषप्रवृद्धोमेसीमांतवसुधाधिपः॥ अनेनसहसंग्रामोदारुणःसमुपस्थितः॥१०॥इतिचिंतयतस्तत्रविदूरथमहीभुजा॥भविष्यतिमहद्युद्धंचतुरंगबलक्षयि॥११॥महतातेनयुद्धेनहनिष्यसिविदूरथम्॥करवाललतालूनजंघंत्वंविरथोपिसन्॥१२॥चतुःसागरपर्यंतेभूतलेभूपतिस्ततः॥भविष्यसिभयाक्रांतदिक्पालादृतशासनः॥१३॥सत्वंसिंधुर्भवन्प्राप्तसकलावनिमंडलः॥पंडितैर्मंत्रिभिःसार्द्धंकरिष्यसिकथाइमाः॥१४॥

स्तदुत्तरंस्वभविष्यंपृच्छति ॥ अनंतरमिति ॥ १ ॥ परिक्षतेनष्टेसति ॥ परमकांबरेअव्याकृताकाशे ॥ २ ॥ ३ ॥ तस्मिन्नेववातलवेतेचेतोहृत्संस्थितंस्वांतस्थंवासनामयंभूपीठं तदुपलक्षितंस्फारंजगतद्रक्ष्यति ॥ ४ ॥ चित्तवृत्तेरेवजगदाकारेणमहत्त्वात्तेजीवस्तत्रराजाहमस्मीतिद्रक्ष्यति ॥ ५ ॥ अतिशयेनसामंतैर्मानितःपूजितः ॥ ६ ॥ चतुःसमुद्रांतायाभुवोराज्यंमेपित्रादत्तमुपागतम् ॥ ७ ॥ यःशत्रुर्विद्यतेसप्रयत्नेनविनानजीयते ॥ ८ ॥ ९ ॥ १० ॥ विदूरथमहीभुजासहयुद्धंभविष्यति ॥ ११ ॥ त्वंविदूरथंहनिष्यसि ॥ १२ ॥ भयाक्रांतैर्दिक्पालैरप्यादृतंशासनंयस्य ॥ १३ ॥ पंडितैःशास्त्रतत्त्वविद्भिः ॥ इमावक्ष्यमाणाः ॥ १४ ॥

तत्रनत्त्वविल्कश्चिन्मंत्रीवदिष्यति ॥ अत्याश्चर्यमिति ॥ १५ ॥ सधनत्वादेवसेनयास्वबाहुबलेनचकल्पांतार्णवरंहसोममविदूरथोराजाकिमर्थंकेनबलेनदुःसहोजातस्तद्वदेत्यर्थः ॥ १६ ॥ माताअर्जितामातृभावेनस्वाधीनीकृतेत्यर्थः ॥ १७ ॥ तदेवाह ॥ गृहीतायाइति ॥ सासरस्वतीसुतात्वेनगृहीतायाअस्यालीलायामोक्षादीन्यपिकार्याणिसंसाधयति ॥ १८ ॥ तस्याभवतांनाशेपरिभवेकदर्थनाक्लेशरूपाअशक्तिःकैव ॥ १९ ॥ युक्तमुपपन्नंकथितम् ॥ यद्येवंतर्हिसविदूरथोजेतुमशक्यएवातएतस्यसमरेवधोयोजातःसआ

मंत्रीवदिष्यति ॥ ॥ अत्याश्चर्यमिदंदेवयदेवंसविदूरथः ॥ देवेनविजितोयुद्धेनीतश्चयमसादनम् ॥ १५ ॥ ॥ त्वंवक्ष्यसि ॥ ॥ भोः साधोसधनस्यास्यकल्पांतार्णवरंहसः ॥ वैरीविदूरथोराजाकिमर्थंवदढुःसह ॥ १६ ॥ ॥ मंत्रीवदिष्यति ॥ ॥ लीलानामास्यभार्यास्ति तयातितपसार्जिता ॥ मातासरस्वतीदेवीजगद्धात्रीनिरंजना ॥ १७ ॥ गृहीतायाःसुतात्वेनसास्याभुवनभाविनी ॥ संसाधयतिकार्याणिमोक्षादीन्यपिहेलया ॥ १८ ॥ वरेणशब्दमात्रेणजगदप्यजगत्क्षणात् ॥ करोतिसाभवन्नाशेतस्याःकैवकदर्थना ॥ १९ ॥ ॥ सिंधुर्वदिष्यति ॥ ॥ त्वयावैयुक्तंकथितंयद्येवंतद्विदूरथः ॥ अशक्योजेतुमाश्चर्यंएतस्यसमरेवधः ॥ २० ॥ तदेवंसंप्रसादेनभगवत्यासमन्वितः ॥ किमित्यंस्मिन्रणेतस्मिन्जयंराजानलब्धवान् ॥ २१ ॥ ॥ मंत्रीवदिष्यति ॥ ॥ तेनसंप्रार्थितादेवीसर्वकालमखेदिना ॥ मोक्षोस्तुममसंसारादितितामरसेक्षण ॥ २२ ॥ तयातेनंविभोतस्यसएवावंध्यसंविदा ॥ संपादितस्तेनैतदाश्रितआजौपराजयः ॥ २३ ॥ ॥ सिंधुर्वदिष्यति ॥ ॥ यद्येवंतन्मयादेवीसदैवैपाप्रपूज्यते ॥ मोक्षंकिमितिमेनैषादददातिपरमेश्वरी ॥ २४ ॥ ॥ मंत्रीवदिष्यति ॥ ॥ एषाहिज्ञप्तिरान्तःसर्वस्यहृदयेसदा ॥ संविद्रूपाभगवतीसैवप्रोक्तासरस्वती ॥ २५ ॥ येनयेनयथात्मीयाप्रार्थ्यतेस्वयमेवसा ॥ प्रयच्छतितथैवाशुतस्माच्चिदनुभूयते ॥ २६ ॥ नप्रार्थितैषाभवतामोक्षार्थमरिमर्दन ॥ प्रार्थितैवत्वयासंविदात्मीयाशत्रुशांतये ॥ २७ ॥ ॥ सिंधुर्वदिष्यति ॥ ॥ नप्रार्थितामयाकस्मादनेनैषासरस्वती ॥ संविच्छुद्धामयाकस्मान्नप्रार्थितानेहमुक्तये ॥ २८ ॥

श्चर्यःअसंभाव्यइत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ अवंध्यसंविदासत्यसंकल्पयातयादेव्यासमोक्षएवसंपादितः ॥ तेनस्वतएवपराजयआश्रितः ॥ २३ ॥ २४ ॥ ज्ञप्तिःपराख्यावैखर्यंतसर्वशब्दबीजभूता ॥ २५ ॥ आत्मीयास्वात्महिता ॥ तस्मात्प्रदानात्तदीयसत्यसंकल्पचिदेववरफलात्मनाअनुभूयते ॥ २६ ॥ २७ ॥ मयेवअनेनविदूरथेनराज्यार्थंकस्मान्नसंप्रार्थिता ॥ मयावाअनेनेवमुक्तयेकस्मान्नप्रार्थितेतिइवशब्दाध्याहारेणयोज्यम् ॥ २८ ॥

१ तस्मिंश्चस्मिन्रणेइतिसंबंधः

२ हेतुना

३ राज्ञाविदूरथेन

तवस्वेच्छानुसारिप्रवृत्तौ मांप्रतिप्रश्नोयमयुक्तइत्याशंक्यतत्तात्पर्यंप्रकाशयति ॥ मदाशयेति ॥ आशयश्चित्तंतद्गतामदालम्भूताप्येषाममोक्षेच्छालक्षणांज्ञांमिदत्वासाधनसंपत्तिद्वारेणमन्मोक्षायकुतोनचेष्टतइत्याशयइत्यर्थः ॥ २९ ॥ नत्वानमस्कृत्य ॥ ३० ॥ नत्वातंध्येणदेवाअनुगृह्णंतिकिंतुभक्तचित्तानुसारेणैवेत्यर्थेयच्चित्तस्तन्मयोभवतिगुह्यमेनत्सनातनमितिश्रुतिःप्रमाणमित्याशयेनाह ॥ यच्चित्तइति ॥ नचैतल्लोकेप्यप्रसिद्धमित्याह ॥ आबालमिति ॥ ३१ ॥ येनपुरुषेणअमलयाविदाज्ञस्याअंतःस्वचित्तेअमलात्मरूपंयदेवराज्यंमोक्षोऽन्यद्वाअभ्यासमयंदृढाभ्यासप्रचुरंयदेवकृत्वासंवेद्यतेतत्सत्तदानींविद्यमानमसत्तद्विलक्षणंवास्तुतदेवसर्वेतरवासनोपमर्देनसपुरुषःअविघ्नंस्वयमेवावश्यंभवतिनान्यःकश्चित्तत्फलभूतोस्तीत्यर्थः ॥ ३२ ॥ ॥ इतिश्रीवा॰तात्पर्यप्रकाशेनि॰उ॰षट्पंचाशदुत्तरशततमःसर्गः ॥ १५६ ॥ ॥ ७ ॥ ॥ वर्ण्यतेसिंधुजीवस्यजातिस्तामसता

मदाशयगताप्येषाज्ञमिंदत्वासरस्वती॥ मन्मोक्षायकिमित्यंगसद्रूपापिनचेष्टते॥ २९॥ ॥मंत्रीवदिष्यति॥ ॥अशुभःप्राक्तनोभ्यासस्तवास्तिरिपुघातिनः॥ तेनैषामुक्तयेनत्वात्वयानप्रार्थिताविभो॥ ३०॥ यच्चित्तस्तन्मयोजंतुर्भवतीत्याजगत्स्थितेः॥ आबालमेवसंसिद्धंकर्तुंशक्नोतिकोन्यथा॥ ३१॥ यदेवयेनामलयामलात्मसंवेद्यतेभ्यासमयंविदांतः॥ सर्वोपमर्देनतदेवसोंगसदस्त्वसद्वास्तुभवत्यविघ्नम्॥ ३२॥ ॥इ॰वा॰रामायणेवा॰दे॰मो॰निर्वाणप्रकरणेउ॰अ॰वि॰श॰सिंधुसंबोधनंनामषट्पंचाशदुत्तरशततमःसर्गः॥ ॥१५६॥ ॥अथसिंधुर्वदिष्यति॥ ॥आर्यानार्यवपुःकोहमभवंविमतिःपुरा॥ यद्वशान्मेकुसंस्कारःप्राक्तनोस्तिभवप्रदः॥१॥ मंत्रीवदिष्यति॥ ॥रहस्यंशृणुभोराजन्सावधानपरःक्षणम्॥ चोदितःसंदधासीदमद्यमांद्यविनाशनम्॥ २॥ किमप्याद्यंतरहितमस्तीहसदनामयम्॥ स्थितंत्वमहमित्यादिरूपेणब्रह्मशब्दितम्॥३॥तद्ब्रह्मस्वयमेवाहंचिच्चेतामीतिसंविदम्॥ जीवतामिवगत्वास्तेचित्तीभूयात्यजद्वपुः॥ ४॥ चित्तंतुगगनाच्छात्मवपुर्विद्ध्यातिवाहिकम्॥ तदेववास्तिनेहान्यदाधिभौतिकतादिकम्॥५॥ चित्तमेतदनाकारमपिसाकारवत्स्थितम्॥ संकल्पैःपरलोकाद्यैःस्वप्नाद्यैरेतदेवसत्॥६॥ अनाकारमपिस्फारंचित्तंजगदिदंविदुः॥ यएवपवनोनामसएवस्पंदनंयथा॥ ७॥ यथागगनशून्यत्वेजगच्चित्तेतथैककम्॥ अत्राप्रतिघरूपेस्तिनमनागपिभिन्नता॥ ८॥

मसी ॥ सिंधोश्चत्यजतोराज्यंविवेकान्मुक्तिरंततः ॥ १ ॥ हेआर्येतिमंत्रिसंबोधनम् ॥ १ ॥ अवधानपरेणचित्तेनसहितःसावधानपरः ॥ अद्यमयात्वंचोदितःप्रेरितःसन्मांद्यस्य अज्ञानस्यविनाशनमिदंमद्वचनंत्वंदधासिधारयिष्यसि ॥ २ ॥ पृष्टांसिंधुजीवप्राक्तनस्थितिंवक्तुंब्रह्मणएवोपाधिसंबंधाज्जीवभावविवक्षयाआद्यांब्रह्मस्वरूपस्थितिंदर्शयति ॥ किमपीति ॥ तस्यैवसार्वात्म्यमाह ॥ स्थितमिति ॥३ ॥ अहंचित्अतश्चेतामीतिसंकल्पसंविदंप्राप्यसमष्टिव्यष्टिचित्तीभूयतदुपाधौजीवतामिवगत्वाआस्ते ॥ वपुरुपाधिमत्यजत् ॥ ४ ॥ किंतद्वपुर्यदत्यजज्जीवतांगतंतदेवाह ॥ चित्तंत्विति ॥ स्थूलमिदंवपुस्तर्हिकिंतत्राह ॥ तदेवेति ॥५॥ तच्चित्तमेवपरलोकेहलोकाद्यैःस्वप्नजाग्रज्जीवमरणभोगमोक्षाद्यैः संकल्पैरनाकारमपिसाकारजगद्वत्स्थितम ॥ ६ ॥ इदंरहस्यंतत्त्वविदोविदुर्नान्येइत्याह ॥ अनाकारमिति ॥७॥ अप्रतिघरूपेजगदाकारकल्पनेनिरंकुशसामर्थ्येअत्रचित्ते ॥८॥

मिथ्यात्वान्नकिंचिद्धृदयस्थंवासनारूपमेवजगज्जालंबहिरिवकिंचिदिवास्थितम ॥ ९ ॥ पूर्वंप्राथमिकसर्गेसात्विकदेवताघटितरूपत्वात्सत्वमेवहैरण्यगर्भाख्यंसमष्टिवपुर्ब्रह्मणः पदादुदितम ॥ अयंसमष्टिरेवव्यष्टिभावेनामसविषयासंगेनोत्पत्तिप्रकरणोक्तरीत्याराजससात्विकादित्रयोदशधाविभागक्रमेणसनेजीवोद्यतामसतामसःसंपन्नः ॥१०॥ प्रश्नःस्पष्टः ॥ ११ ॥ अपरिच्छिन्नस्यैवात्मनोहिरण्यगर्भभावेनपरिच्छिन्नत्वेमाययाकृतेहिरण्यगर्भएवसर्वाःसंज्ञाःकरोतीत्याशयेनोत्तरमाह ॥ जंतोरिति ॥ एवंतथा ॥ १२ ॥ आत्मनित्वव्यष्टिर्जीवेपुससमष्ट्यात्मैवसंज्ञाःकरिष्यति ॥ सैवात्मेनिसोचिलोपेचेत्पादपूरणमितिसलोपः ॥ तथाआतिवाहिकेसमष्टिस्वदेहेपंचीकरणेनआधिभौतिकनानाम्निकृतेनदवयवेपुपृथ्व्याद्याःसंज्ञाःकरिष्यति ॥ १३ ॥ एवंनामरूपेकल्पयित्वाव्यष्टिभावेनस्वयमेवव्यवहरिष्यति ॥ १४ ॥ तत्रनवंव्यष्टिभावकल्पनेत्वामुद्दिश्ययत्स्वष्टिसंकल्पेनयद्यष्टिभावेनहिरण्यगर्भोयत्महातमस्कोयमितिस्फुरितवान् तत्तस्माद्धेतोस्तवातिवाहिकाकाराजातिस्तामसतामसीमहानमस्केत्यभिधाकृतेत्यर्थः ॥ १५ ॥ नेयमेकैवाभिधाकिंतुब्र

हृदयस्थंजगज्जालंनकिंचित्किंचिदास्थितम् ॥ जगद्विद्धिनिराकारंचित्तमेवनवास्तवम् ॥९॥ सत्वमेववपुःपूर्वमुदितंब्रह्मणःपदात् ॥ अयमेवससंपन्नोयोद्यतामसतामसः ॥१०॥ ॥सिंधुर्वक्ष्यति ॥ ॥ किमुच्यतेमहाभागवदतामसतामसः ॥ क्रियंतपूर्वमेवैताःकेनसंज्ञाः परेपदे ॥११॥ ॥मंत्रीवदिष्यति ॥ ॥ जंतोःसावयवस्येहहस्ताद्यवयवायथा ॥ तथानवयवस्यैवमातिवाहिकतात्मनः ॥१२॥ पश्चादात्मनिसैवात्मानानासंज्ञाःकरिष्यति ॥ आधिभौतिकतानाम्निपृथ्व्याद्याआतिवाहिके ॥१३॥ स्वप्नाभेस्मिन्जगद्भानेसंकल्पेनात्मरूपिणा ॥ संज्ञात्मनात्मरूपेणस्वयंव्यवहरिष्यति ॥ १४ ॥ त्वामातिवाहिकाकारायत्तत्स्फुरितवान्नवम् ॥ जातिर्महातमस्कोयमितितत्राभिधाकृता ॥ १५ ॥ ब्रह्मणोनिर्विकारस्यविकारिणइवप्रभो ॥ जातयोजीवतापत्तौकलिताविविधाभिधाः ॥ १६ ॥ प्राथम्येनैवयद्ब्रह्मजीवतामिवगच्छति ॥ तदैवबुद्ध्याभोक्तातज्जातिःसात्विकसात्विकी ॥ १७ ॥ वर्त्तमानेभवेभव्यगुणैर्युक्तातुमानद ॥ केवलासात्विकीप्रोक्ता जातिर्जातिविदांवरैः ॥ १८ ॥ नवाभवैश्चेद्बहुभिर्भोगमोक्षैकभागिनी ॥ जातिस्तस्प्रोच्यतेतज्ज्ञैःसद्भीराजसराजसी ॥ १९ ॥ वर्त्तमानेभवेभव्यगुणैर्मुक्तातुमानद ॥ केवलाराजसीप्रोक्ताजातिःस्वल्पभवेभवेत् ॥ २० ॥

ह्मणोजीवभावेतत्तदुपाधिगुणानुसारेणराजससात्विकादयस्त्रयोदशाभिधाःकृताइत्याह ॥ ब्रह्मणइति ॥ १६ ॥ तत्रमोक्षशैघ्र्यविलंबप्रयोजकचित्तगुणदोषैरेवजीवानांजातिभेदकल्पनेतिदर्शयंस्तासुपंचजातीर्विभज्यलक्षयति ॥ प्राथम्येनेत्यादिना ॥ यद्यदिकल्पादौप्राथम्येनैवजीवतामिवगच्छतिब्रह्मणितदातस्मिन्नेवजन्मनिऔत्पत्तिकज्ञानैश्वर्ययुक्तयाबुद्ध्याविषयभोक्तातस्मिन्नेवजन्मनिमुच्यतइतियावत्तज्जातिःसात्विकसात्विकी यथासनकादीनाम ॥ १७ ॥ कंचित्कालंभवेभवहेतावज्ञानेवर्त्तमानेसतितस्मिन्नेवजन्मनिज्ञानैश्वर्यादिभिर्भव्यगुणैर्युक्ताचेद्भूत्वामुच्यतेतदाकेवलसात्विकीप्रोक्तेत्यर्थः ॥ १८ ॥ याजातिःकल्पादौनवाअभिनवनयाभिव्यक्तापिबहुभिर्जन्मभिर्भोगपुरःस्पुक्रमेणमोक्षैकभागिनीचेद्भवतितदाराजसराजसीत्यर्थः ॥ १९ ॥ स्वल्पभवेदशपंचजन्मोत्तरकालमपितस्मिन्कल्पेभव्यैर्विवेकादिगुणैर्मुक्तारहिताबहुतरजन्मपरंपरोत्तरंभव्यगुणान्लभतेचेत्केवलराजसीत्यर्थः ॥ २० ॥

प्रथमाकल्पादिमारभ्य अत्यंतबहुभिः स्थावरकीटकिरातादिभिर्रतैर्मोक्षभागिनीचेत्तामसतामसीत्यर्थः ॥ २१ ॥ सामान्येनानुत्कृष्टेनरक्षःपिशाचशूद्रादिजन्मभिर्बहुभिर्मोक्षभा गिनीचेत्केवलतामसी ॥ २२ ॥ तासांजातीनांमध्येत्वंतामसतामस्यांजातौजातोसि ॥ २३ ॥ भवान्नोजानाति ॥ २४ ॥ २५ ॥ इतिशब्दःप्रश्नोत्तरसमाप्तौ ॥ २६ ॥ प्राक्तनीअधमातामसनामसीजीवजातिःकेनोपायेनजीयतेअभिभूयते हेआर्यतमुपायमुदाहर ॥ तत्तादृशंपावनंशोधनंस्याच्चेद्यावद्देहंतथैववर्तनैवत्वदुक्तप्रकारेणतिष्ठामिस्थास्यामितद्वद ॥ २७ ॥ पौरुषेणपुरुषप्रयत्नेन ॥ २८ ॥ अद्यैवसत्क्रियया ह्यस्तनीदुःक्रियायथाशोभांशोभनतामभ्येतितथातस्माद्देवयत्नात्प्राक्तनीं जित्वासत्कार्यवान्भव ॥ २९ ॥

प्रथमात्यंतबहुभिर्भवैश्चेन्मोक्षगामिनी॥ जातिस्तत्प्रोच्यतेतज्ज्ञैःसद्भिस्तामसतामसी ॥ २१ ॥ सामान्यैनैववहुभिर्जन्मभिर्मोक्षभागिनी॥ केवलातामसीप्रोक्ताजातिर्जातिविशारदैः॥२२॥ क्रमेणानेनजातीनांविविधाभेदकल्पना॥ तासांतामसतामस्यांजातौजातोसिमानद॥ २३॥ बहूनितवजन्मानिसमतीतानितान्यहम् ॥ विविधानिविचित्राणिवीरजानामिनोभवान्॥ २४॥ विशेषेणत्वनेनैपव्यर्थंकालोतिवाहितः॥ महाशवशरीरेणत्वयानंतखगामिना ॥ २५ ॥ एवंतामसतामस्याजात्यासिजनितोयदा॥ तदादुर्लभमोक्षस्त्वंसंसारकुहरादिति॥ २६॥ ॥सिंधुर्वदिष्यति॥ ॥आर्योदाहरकेनैषाप्राग्जातिर्ज्जीयतेधमा ॥ यावत्तथैवतिष्ठामिस्याच्चेत्तद्वदपावनम्॥ २७॥ ॥मंत्रीवदिष्यति॥ ॥नकिंचनमहाबुद्धेतदस्तीहजगत्त्रये॥ यदनुद्वेगिनानामपौरुषेणनलभ्यते॥ २८॥ ह्यस्तनीदुष्क्रियाभ्येतिशोभांसत्क्रिययायथा ॥ अद्यैवप्राक्तनींतस्माद्यत्नात्सत्कार्यवान्भव ॥ २९॥ योयमर्थंप्रार्थयतेतदर्थंयततेतथा॥ सोवश्यंतदवाप्नोतिनचेच्छ्रांतोनिवर्त्तते॥ ३०॥ नायथायततेनित्यंयद्भावयतियन्मयः॥ यादृगिच्छेच्चभवितुंतादृग्भवतिनान्यथा॥ ३१॥मुनिरुवाच॥ ॥एवमुक्तःसतेनाथसिंधुरुद्धुरयाधिया॥ तदातत्रतथानामराष्ट्रंत्यक्ष्यत्यशेषतः॥३२॥ गमिष्यतिवनंदूरंप्रार्थितोपिहिमंत्रिभिः॥ नाश्रयिष्यतितद्भूयोराज्यमुच्छिन्नशात्रवम्॥ ३३ ॥ तिष्ठतःसाधुमध्येस्यतद्विवेककथावशात्॥ पुष्पसंगादिवामोदोविवेकःसमुदेष्यति॥३४॥ ततःकथमिदंजन्मकुतःसंसारआगतः॥ इत्थंविचारसांतत्यात्सयास्यतिविमुक्तताम्॥३५॥ नित्यंविचारणपरोथभवन्सासिंधुःसत्संगमेनपदमाप्स्यतिपावनंसः॥ तद्यत्रपत्रमिववातविधूयमानंनोवस्तुतांव्रजतिकाचननामलक्ष्मीः॥ ३६॥ ॥इ०वा० वा०दे०मो०नि०उ०अ०वि०श०सिंधुनिर्वाणंनामसप्तपंचाशदुत्तरशततमःसर्गः॥ १५७॥ ॥७॥

॥३०॥ नापुरुषः ॥३१॥ तेनमंत्रिणाएवमुक्तःसन् ॥ उद्धुरयाउत्सृष्टराज्यभारया ॥३२॥ नाश्रयिष्यतिनस्वीकरिष्यति ॥३३॥ पुष्पसंगात्तिलादिष्वामोदइवविवेकःसमुदेष्यति ॥३४॥ विमुक्ततांजीवन्मुक्तताम् ॥३५॥ ससिंधुःराजासत्संगमेननित्यंविचारणपरःसन्अथपावनंतत्तादृशंमोक्षाख्यंपदमेष्यति ॥ यत्रमोक्षपदेकाचनहिरण्यगर्भैश्वर्यपर्यंतापिलक्ष्मीर्वातविधूयमानंशुष्कपत्रमिववस्तुतामुपादेयतांनोव्रजतिकिंतुतुच्छैवभवतीत्यर्थः॥३६॥ ॥इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उ०सप्तपंचाशदुत्तरशततमःसर्गः॥१५७॥

श्रुत्वामुनिवचोव्याधस्तपःकृत्वावराद्विधेः ॥ खमाप्लुतःशवीभूतःपपातेत्यादिवर्ण्यते ॥ १ ॥ भूतवत्अतीतकथावत् ॥ १ ॥ क्षणंस्थित्वाविमृश्येतियावत् ॥ २ ॥ ३ ॥ अल्पेनैवकालेनेतिमुनेःसमाधौबहुतरस्यापिकालस्याल्पतापर्तीतिरित्याशयः ॥ यद्यप्यत्रयथाश्रुतपंथात्पूर्वंमुनेर्देहत्यागःपश्चाच्चिरकालोत्तरंव्याधस्यकामनांदातुंपद्मजागमनंप्रतीयते तथापिपूर्वंमुनेर्भविष्यत्कथनपंथेव्याधस्यवरलाभानंतरंमामापृच्छन्नमस्कृत्यतस्मिन्नेवक्षणेततः पुतिमेष्यसिसव्योम्निचित्तस्थार्थदिदृक्षयेतिमुनिनोक्तत्वाद्व्याधस्योर्ध्वगमनकालेमुनेर्जीवनंस्थितमेवेतिपश्चादेवदेहत्यागइतिबोध्यम् ॥ अपदेशस्यनिर्दिष्टस्यआयुर्षोंते ॥४॥५॥ पूर्वंमुनिनाव्यर्थत्वेनवर्णितंवरंजानन्नपिसमयाचत ॥ ६ ॥ ७ ॥ जगत्या

मुनिरुवाच ॥ ॥ एतत्तेकथितंसर्वंभविष्यद्भूतवत्तव ॥ यथेच्छसितथेदानींव्याधसाधुविधीयताम् ॥ १ ॥ ॥ अग्निरुवाच ॥ ॥ इतितस्य वचःश्रुत्वाविस्मयाकुलचेतनः ॥ क्षणंस्थित्वाजगामाशुस्नातुंव्याधस्तथामुनिः ॥ २ ॥ इतितौचेरतुस्तत्रतपःशास्त्रविचारणैः ॥ अकारण सुहृद्भूतावुभौव्याधमहामुनी ॥ ३ ॥ अथाल्पेनैवकालेनमुनिर्निर्वाणमाययौ ॥ देहंत्यक्त्वापदेशांतेपरेपरिणतिंगतः ॥ ४ ॥ कालेनबहु नान्येनततोयुगशतात्मना ॥ व्याधस्यकामनांदातुंपद्मजन्मासमाययौ ॥ ५ ॥ व्याधःस्ववासनावेशंनिवारयितुमक्षमः ॥ जानन्नपिवरं पूर्ववर्णितंसमयाचत ॥ ६ ॥ ब्रह्मैवमस्त्वितिप्रोच्ययययावभिमतांदिशम् ॥ व्याधस्तपःफलंभोक्तुंखगवद्व्योमपुप्लुवे ॥ ७ ॥ वर्द्धमानेनदेहेन जगत्पारेमहानभः ॥ वेगादगणितंकालंपूरयामासशैलवत् ॥ ८ ॥ महागरुडवेगेनतिर्यगूर्द्धमधस्तथा ॥ व्योमपूरयतस्तस्यकालोबहुतरोययौ ॥ ९ ॥ अथदीर्घेणकालेनयदाविद्याभ्रमस्यसः ॥ अंतंनसमवाप्नोतितत्रोद्वेगमुपाययौ ॥ १० ॥ उद्वेगादथबद्धासौप्राणरेचनधारणाम् ॥ प्राणांस्तत्याजनभसिशवीभूतमधोवपुः ॥ ११ ॥ चित्तंप्राणान्वितंव्योम्निययौतत्रैवसिंधुताम् ॥ विदूरथारिरूपांतामखिलावनिपालिनीम् ॥ १२ ॥ देहोमेरुशताकारमहाशवइवाभवत् ॥ द्वितीयोर्वीनिभोव्योम्नःपपाताशनिवज्जवत् ॥ १३ ॥ पिधानमिवकस्योर्वीवीथीकस्मिंश्चिदंबरे ॥ केशोंड्रुकवदाभातेकस्मिंश्चिज्जागतेभ्रमे ॥ १४ ॥ आकारपूरिताशेषवसुधाचलमंडलः ॥ विपश्चिच्छ्रेष्ठ कथितमेतत्तेतन्महाशवम् ॥ १५ ॥ यस्मिञ्छवंसंपतितंजगत्यवनिमंडले ॥ तदिदंजगदाभातमस्माकंस्वप्नपूर्यथा ॥ १६ ॥ तदेतच्छव मास्वाद्यशुष्कापूर्णामहोदरी ॥ संपन्नाचंडिकादेवीरक्तारक्तांत्रपूरिता ॥ १७ ॥

रैर्वैलोक्यादूर्ध्वम् ॥ महानभःअव्याकृताकाशम् ॥ ८ ॥ ९ ॥ उद्वेगंतत्पयुक्तनिर्वेदम् ॥ १० ॥ ११ ॥ सिंधुतांसिंधुदेशराजताम् ॥ विदूरथस्यअरिःशत्रुस्तद्रूपाम् ॥ १२ ॥ त्यक्तदेहस्तुव्योममार्गेपपात ॥ १३ ॥ कस्यब्रह्मणःकस्मिंश्चिज्जागतेभ्रमेकेशोंड्रुकवदाभातेतत्रकस्मिंश्चिदंबरेउर्वीवीथीविशालंपिधानमिवस्थितः ॥ १४ ॥ हेश्रेष्ठहेविपश्चित् तेएतन्महाशवंसवृत्तांतंयथावन्मयाकथितम् ॥ १५ ॥ अस्माकंचित्तेआभातंप्रत्यक्षंस्फुरितम् ॥ १६ ॥ रक्तेनआंत्रैश्चपूरितासतीरक्तारक्तवर्णासंपन्ना ॥ १७ ॥

---

१ अधोभुवीतिपाठेवपुरित्यध्याहार्यम् २ पतनाद्यागुर्वीवीथीपृथ्व्यवतरणमार्गइवपतनोत्तरंचविशालंपिधानमिवस्थितइत्यर्थः

अपूर्वरूपेणआश्चर्यभूतेन ॥१८ ॥१९॥ पूर्ववनादीनांशवेननाशनाद्भूयोवनानिप्रजातानि ॥ ग्रामाश्चभूयःकृताः ॥ तेचूर्णिताःशैलाश्चभूयःपातालतःसाधुयथापूर्वंसमुत्थिताः॥ ततोजनानांव्यवहारलक्ष्मीःप्रवृत्तेत्यर्थः ॥ २०॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०ऽष्टपंचाशदुत्तरशततमःसर्गः ॥१५८॥ ॥७॥ ॥ इहाग्नेरुद्गमनमुपदिश्य विपश्चिते ॥ आश्चर्याणिबहून्यंतेब्रह्मतत्त्वंचवर्ण्यते ॥ १ ॥ श्रेष्ठज्ञोविपश्चिन्त्वंस्थिरंभूयःप्रकृतव्यवहारवद्भूमंडलंप्राप्यअभिमतांदिशंगच्छ ॥ १ ॥ शक्रोदिवियज्ञंयष्टुंप्रवृत्तः॥ अहंतत्राहूतोस्मिगच्छामि ॥ २ ॥ मूर्त्याकारेणांतरधीयत ॥ अग्न्याकारेणनुवैद्युताग्निवद्गगनेयाति ॥ ३ ॥ प्राक्तनानविद्यांतदर्शनविषयकसंस्कारान्वहन्सन्स्वंदिगंतोपसर्पण

मेदिनीमेदिनीजाताशवस्यैतस्यमेदसा॥ पूरिताऽपूर्वरूपेणहिमवद्गिरिरूपिणा॥ १८॥ तदेवैतन्महामेदोमृद्धातुत्वमुपागतम्॥ कालेन वसुधाभूयोभूत्वामृन्मयतांगता॥ १९॥ भूयःप्रजातानिवनानिभूमौग्रामाःकृताःपत्तनसंयुताश्च॥ पातालतःसाधुसमुत्थितास्तेशैलाः प्रवृत्ताव्यवहारलक्ष्मीः॥ २०॥ ॥इ०वा०वा०दे०मो०नि०उ०अ०वि०श०शवनिर्णयोनामाष्टपंचाशदुत्तरशततमःसर्गः॥१५८॥ अग्निरुवाच॥ ॥विपश्चिच्छ्रेष्ठभोसाधोत्वंगच्छाभिमतांदिशम्॥ स्थिरंभूमंडलंभूयःप्रकृतव्यवहारवत्॥ १॥ यज्ञंयष्टुंप्रजौघस्यश क्रःशततमंदिवि॥ तत्राहूतोस्मिमंत्रेणगच्छामिगतिकोविद॥ २॥ ॥भासउवाच॥ ॥इत्युक्त्वाभगवानग्निस्तत्रैवांतरधीयत॥ गगने निर्मलेयातिअनलोवैद्युतोयथा ॥ ३ ॥ तथाहमपिचित्तेनप्राक्तनांश्चस्वयंवहन्॥ पुनःस्वकर्मनिर्णेतुंभ्रमन्व्योमनिसंस्थितः॥ ४॥ भू योपिदृष्टवानस्मिजगंत्यगणितानिखे ॥ नानाचारविचाराणिनानासंस्थानवंतिच ॥ ५ ॥ क्वचिच्छत्रमयांगानिएकीभूतानिभूपते ॥ भांतिचेतंतिचोपंतिहृदयानिहरंतिच ॥ ६ ॥ क्वचिन्मृन्मयदेहानिसर्वभूतानिराघव॥ भांतिचेतंतिचोपंतिपर्वतप्रतिमानिच॥ ७॥ क्वचिं द्दारुमयांगानिभांतिभूतानिकुत्रचित् ॥ क्वचित्पाषाणदेहानिसंतिभूतानिभूरिशः ॥ ८ ॥ क्वचिदाजीवमेकत्रस्थितान्युपलदेहवत्॥ वा ङ्मात्रव्यवहाराणिभूतान्यालोकितानिखे ॥ ९ ॥ इत्यहंसुचिरंकालंपश्यन्भ्रमन्मनस्तया ॥ अविद्यांतमपश्यंश्चतत्रोद्विग्नोभवंदशाम् ॥ १०॥ तपःकर्तुंसमुद्युक्तःकस्मिंश्चिन्मोक्षसिद्धये॥ प्राहेंद्रोममचैवेदंमृगयोन्यंतरंहिखे ॥ ११॥

कर्मनिर्णेतुंनिष्पादयितुम् ॥ ४ ॥ ५ ॥ तान्येवस्वदृष्टानिजगंतिवर्णयति ॥ क्वचिदित्यादिना ॥ एकीभूतानिपरस्परसंलग्नानि ॥ भूपतेइतिदशरथसंबोधनम् ॥ चोपंतिमंदंगच्छं ति ॥ दृष्टॄणांहृदयानिमनांसिहरंतिच ॥ ६ ॥ ७ कुत्रचिज्जगति ॥ ८ ॥ आजीवंयावज्जीवम् ॥ उपलदेहवत्प्रतिमावत् ॥परस्परंसंभाषणादिनावाङ्मात्रव्यवहाराणिनगमनादा नादिव्यवहारवंति ॥ खेस्वचित्ताकाशे ॥ ९ ॥ मनस्तयास्वमङ्वमनोमात्रदेहतया ॥ तत्रअविद्यायांदृशांदृश्यवर्गाणांविषयेउद्विग्नःअभवम् ॥ १० ॥ एवंसमुद्विग्नोहंकस्मिंश्चि द्रहसिउपविश्यमोक्षसिद्धयेतपआत्मतत्त्वालोचनंकर्तुंसमुद्युक्तोऽभवम् ॥ ततोमामिंद्रःप्राह ॥ किंप्राह ॥ हेविपश्चित ॥ खेचित्ताकाशेममचतवचइदंमृगयोन्यंतरमुपस्थितम स्तिततोनायमात्मतत्त्वालोचनकालइत्यर्थः ॥ ११ ॥

ननुममाऽल्पपुण्यस्यकदाचिन्मृगयोनिप्रापकंदुष्कृतादिसंभाव्येततवतुमहापुण्यस्यकुतस्तत्संभावनातत्राह ॥ प्रवृत्तइति ॥ अहमपिस्वर्गभोगयुक्तेसंमोहेदुर्वासोपराधेप्रवृत्तः ॥ कुतेतत्प्रवृत्तिस्तत्राह ॥ मंदारेति ॥ १२ ॥ तेनइंद्रेणइत्युक्तेसति ॥ १३ ॥ किमुवाचतदाह ॥ विशुद्धेति ॥ शीघ्रंमुक्तिस्तुअरूपःअवस्थात्रयरूपेणमूर्त्तामूर्त्तरूपेणचरहितोविशुद्धआत्मैवाहमितितत्त्वज्ञानादेवभवति ॥ तत्तुत्वयाप्राग्व्याधमुनिसंवादवर्णनप्रसंगेनहुताशनाच्छ्रुतमेवेतिशेषः ॥ ततस्त्वमन्यंवरंगृहाणेतींद्रेणोक्तेसतिमयासःअन्यंमृगत्वेस्वस्य

प्रवृत्तःस्वर्गसंमोहेपूर्वाभ्यासवशीकृतः॥ मंदारकाननेतत्रभ्रमतोवैममांबरे॥ १२ ॥ तेनेत्युक्तेमयाप्रोक्तंदेवखिन्नोस्मिसंसृतेः॥ मुच्येयंशीघ्रमित्युक्तःश्रुत्वोवाचततोमम॥ १३ ॥ विशुद्धात्मात्वरूपोहमितिचैवहुताशनात्॥ वरंगृहाणेत्युक्तेसततोन्यंयाचितोमया॥ १४ ॥ इंद्रउवाच॥ ॥ तवेयंमृगयोन्यंतश्चिरंसंसरतेचितिः॥ अवश्यंभवितव्योर्थइतिदृष्टोमयातव॥ १५ ॥ मृगोभूत्वामहापुण्यांतांसभांसमवाप्तवान्॥ यस्यांतदहतंज्ञानंमदुक्तंबोधमेष्यति॥ १६ ॥ तदेवंतत्रहरिणोभवतिस्त्वंभवावनौ॥ आत्मोदंतमिदंवंध्यंसकलंसंस्मरिष्यसि॥ १७॥ स्वप्नभ्रममिवाशेषसंकल्परचितोपमम्॥ परलोकानुभूतार्थकथायातार्थसंनिभम्॥ १८ ॥ यदातुमृगतोन्मुक्तःपुरुषस्त्वंभविष्यसि॥ ज्ञानाग्निदग्धदेहांतेतदात्वत्स्थंस्फुरिष्यति ॥ १९ ॥ तेनतांत्वमविद्याख्यांभ्रांतिंत्यक्त्वाचिरंस्थिताम्॥ भविष्यसिविनिर्वाणोगतस्पंदइवानिलः॥ २० ॥ इत्युक्तेतेनदेवेनतदैवप्रतिभोदभूत्॥ ममायंहरिणोस्मीतिवनेस्मिन्निति निश्चिता ॥ २१ ॥ ततःप्रभृतिसंपन्नस्तत्रैवांतरकोणके॥ हरिणोहंगिरिविरत्वणदूर्वांकुराशनः॥ २२ ॥ ततःसीमांतसामंतमागतंमृगयार्थिनम्॥ दृष्ट्वाहमेकदाभीतःपलायनपरोभवम्॥ २३॥ ततस्तेनसमाक्रम्यगृहंनीत्वादिनत्रयम्॥ संस्थाप्यतवलीलार्थमिहानीतोरघूद्वह॥ २४॥ एषतेकथितःसर्वआत्मोदंतोमयानघ॥ संसारमायाप्रतिमोनानाश्चर्यरसान्वितः॥ २५॥ अविद्यैवमनंतेयंशाखाप्रसरशालिनी॥ आत्मज्ञानादृतेनैवकेनचिन्नामशाम्यति॥ २६॥

किमपेक्षविष्यतीत्येतत्परिज्ञानरूपंवरंयाचितः ॥ १४ ॥ संसरतेसंसर्तुमिच्छति ॥ १५ ॥ तांदाशरर्थीसभाम् ॥ मदुक्तंविशुद्धात्मात्वरूपोहमित्येवंरूपम् ॥ १६ ॥ हरिणःसंस्तदेवंक्रमेणसभांप्राप्यवसिष्ठप्रसादात्सकलमात्मोदंतंस्ववृत्तांतम् ॥ १७ ॥ वंध्यत्वमेवदृष्टांतैर्विवृणोति ॥ स्वप्नेति ॥ १८ ॥ किंमृगदेहेनैवसंस्मरिष्यामीनेत्याह ॥ यदेति ॥ १९ ॥ तेनआत्मतत्त्वस्फुरणेन ॥ विनिर्वाणोमुक्तः ॥ २० ॥ इतितेनदेवेनेंद्रेणोक्तेसतिसापूर्वामानसीहरिणोस्मीतिप्रतिभानिश्चितान्यवहारार्थक्रियासमर्थाउदभूत् ॥ २१ ॥ तत्रैवमंदारवनांतरकोणके ॥ २२ ॥ २३ ॥ २४ ॥ संसारप्रसिद्धैंद्रजालिकमायाप्रतिमः ॥ २५ ॥ २६ ॥

इदंवक्ष्यमाणम् ॥ २७ ॥ अन्यसंकल्परूपोयंमृगश्चेदस्माकंदृश्यतांयातः एवंसतिअसंकल्पोपिपुरुषोऽन्यसंकल्पसर्गेस्थितंवस्तुजातंपश्यतीतिफलितम् इदंतुकथमुपपद्यतेवदेत्य र्थः ॥ २८ ॥ महामुनिर्देवतादिवरशापादिनाअन्यसंकल्पकल्पितोप्यर्थोऽन्येषामसंकल्पानामपिदर्शनादिव्यवहारयोग्योभवतीत्युत्तरंवक्तुंप्रागुक्तशवपतनमेवनिमित्तांतरेणव र्णयितुंविपश्चिदस्तौति॥ महाशवमित्यादिना ॥ पूर्वंशवपतनात्पूर्वकालेतांभुवंप्रतिमंदारवनेस्वकृतयज्ञप्रयुक्तयजमानतागर्वेणांधवद्गच्छताइंद्रेणमुनिरयमित्यविज्ञानाद्गतासुरय मित्यवज्ञयाचदुर्वासाःपादेनाभिहतः ॥ २९ ॥ ३० ॥ शक्रशक्रेतिवाक्यादेरामंत्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेष्वितिकोपादिषुद्विर्वचनम् ॥ तवगंनुमिष्टमवनितलंचूर्णी करिष्यति ॥३१॥ ३२ ॥ तेनमुनिनादुर्वाससाविपश्चितासहशक्रस्यमृगभावार्थमपितथादेवमृगश्चत्वंतुल्यकालंविपश्चितेतिवाक्येनयथाविपश्चितोमनःसंकल्पिनमपिमृगत्वंसत्

श्रीवाल्मीकिरुवाच॥ ॥ यदाविपश्चिदित्युक्त्वातत्रतूष्णींस्थितःक्षणात् ॥ समवोचत्तदारामस्तमनिंद्यमतिस्त्विदम्॥ २७॥ ॥श्रीरा मउवाच॥ ॥एवंपश्यत्यसंकल्पोयोन्यसंकल्पआत्मनि ॥मृगश्चेद्दृश्यतांयातःकथंसर्गेवदप्रभो॥ २८॥ ॥विपश्चिदुवाच॥ ॥महा शवंयत्पतितंयस्मिन्जगतिभूतले॥ तांभुवंपूर्वमिंद्रेणयज्ञगर्वेणगच्छता॥ २९॥ पादेनाभिहतोव्योम्निदुर्वासाध्यानसंस्थितः ॥गता सुरित्यविज्ञानात्तेनासौकुपितोऽशपत्॥ ३०॥ शक्रशक्रावनितलंब्रह्मांडप्रतिमंशवम्॥ अचिरेणमहाघोरंतवचूर्णीकरिष्यति॥ ३१॥ मामिमंशवबुद्ध्यात्वंयदतिक्रांतवानतः ॥ शापेनममतांपृथ्वींशीघ्रमासादयिष्यसि ॥ ३२॥ मृगार्थंतेनमुनिनातथादेवेतिसद्यथा॥ त त्तयाकथयायातंतद्दैवविपर्यंदृशाम्॥३३॥वस्तुतस्तुनचैकंसन्नद्वितीयंनचाप्यसत्॥सातथाप्रतिभोदेतिकिंसत्किमथवाप्यसत्॥३४॥ अन्यच्चराघवेमांतांयुक्तिंत्वमपरांशृणु॥ एतस्मिन्नयसंदर्भेसुस्फुटप्रतिपत्तये॥३५॥ यस्मिन्सर्वंयतःसर्वंयत्सर्वंसर्वतश्चयत्॥ब्रह्मत स्मिन्महाभागकिंनसंभवतीहहि॥ ३६॥ संकल्पजातंनान्योन्यंमिलतीत्युपपद्यते ॥ संकल्पजातमन्योन्यंमिलतीत्युपपद्यते॥ ३७॥ सं कल्पजातमन्योन्यंमिलतीत्यवगम्यते॥ सर्वात्मनिहियत्रैवच्छायातत्रैवचातपः॥ ३८॥

अन्यदर्शनाद्यर्थक्रियासमर्थंभवतितथासशप्तइतिशेषः ॥ तत्तस्मात्तयाइंद्रशापकथयैवमुनिवाक्यबलात्सांकल्पिकमपिविपश्चितोमृगत्वंभवदादिदृशांसदैवविषयंविषयत्वमा यातम् ॥ ३३ ॥ एवंजगत्प्रसिद्धदृशारामप्रश्नंसमाधायतत्त्वदृशासमाधत्ते ॥ वस्तुतस्त्विति ॥ वस्तुतोविचारेएकंव्यावहारिकंजगत्सत्इत्यपिन द्वितीयंसांकल्पिकंवाअसदित्य पिन द्वयोरपितुल्यत्वादित्याह ॥ सेति ॥ ३४ ॥ ब्रह्मणःसर्वशक्तिसर्वात्मकत्वादपिनकोपिविरोधइत्याह ॥ अन्यच्चेत्यादिना ॥ नयायुक्तयस्तासांसंदर्भे ॥ ३५ ॥ ३६ ॥ सं कल्पजातंपरस्परंनमिलतिमिलतीतिचद्वयमपिसर्वशक्तावुपपद्यतेइत्यर्थः ॥ ३७ ॥ अवगम्यतेप्रत्यक्षंमृगदर्शनादौ ॥ उपपत्तिश्चात्रास्तीत्याह ॥ सर्वात्मनीति ॥ ३८ ॥

यदिविरुद्धमेकत्रनसंभवतितदासर्वात्मत्वमेवब्रह्मणोव्याहन्येतेत्याह ॥ नेति ॥ इदंचसर्वंप्राग्बहुशोव्याख्यातप्रायम ॥ ३९ ॥ ४० ॥ मायायाअघटितघटनासमर्थत्वेनात्याश्चर्यरूपत्वादपिसर्वंघटतइत्याह ॥ अहोइति ॥ ४१ ॥ नमायायाएवब्रह्मसत्तायाअप्येवंमाहात्म्यमित्याह ॥ ईदृशीति ॥ ४२ ॥ तयाब्रह्मसत्तया ॥ ४३ ॥ ४४ ॥ स्वभावकचनमात्रादृतेजगन्नान्यत् ॥ वेदांतादिशास्त्राणिविद्वदनुभवालोकप्रसिद्धदृष्टांताश्चयेपांमूर्खाणांप्रमाणंनतैःसतांअलंसंभाषणेनेत्यर्थः ॥ ४५ ॥ प्रशस्तैर्विरोधिलक्षणयानिंद्यैः

नसंभवतिचेत्तत्कथंसर्वात्मतामियात् ॥ कस्मात्संकल्पनगरंनमिथःश्लिष्यतीतिसत् ॥ ३९ ॥ मिथश्चश्लिष्यतीत्येवमपिसत्सर्वरूपिणि ॥ नतदस्तिनयत्सत्यंनतदस्तिनयन्मृषा ॥ ४० ॥ सर्वत्रसर्वथासर्वंसर्वदासर्वरूपिणि ॥ अहोनुविषमामायामनोमोहविधायिनी ॥ ४१ ॥ विधयःप्रतिषेधाश्चयदेकत्रस्थितिंगताः ॥ ईदृशीब्रह्मसत्तैषायदेवात्मानमात्मना ॥ ४२ ॥ तयाअनादिःसादिश्चेत्यविद्येत्यनुभूयते ॥ नज्ञप्तिमात्रकचनंयदिस्याद्भुवनत्रयम् ॥ ४३ ॥ तन्महाकल्पनष्टानांसृष्टिःस्यात्कथमंजसा ॥ कथमग्नेःकथंवायोःसत्ताभूमेःकथंभवेत् ॥ ४४ ॥ तस्मात्स्वभावकचनमात्रान्नान्यदृतेजगत् ॥ शास्त्राण्यनुभवालोकाआमहाकल्पवादिनाम् ॥ ४५ ॥ येषांप्रमाणंनोसर्वंप्रशस्तैस्तैरलंसताम् ॥ ज्ञप्तिदृष्ट्यानयासर्वंप्रमाणीभवतिक्षणात् ॥ ४६ ॥ नान्ययातनुतेनैवमेवसारंविदुर्बुधाः ॥ शुद्धाज्ञप्तिर्ब्रह्मसत्तात्वविद्यास्मीतिचेतनात् ॥ ४७ ॥ स्फुरतीयंजगद्रूपावातश्रीःस्पंदनादिव ॥ नकश्चनेहम्रियतेजायतेनचकश्चन ॥ ४८ ॥ मृतोहमिदमस्तीतिप्रतिभैवचिदात्मिका ॥ मृतिरत्यंतनाशश्चेत्तत्सानिद्रासुखोपमा ॥ ४९ ॥ पुनर्दृश्योपलंभश्चेन्ननुजीवितमेवतत् ॥ तस्मान्नेहास्तिमरणंतन्नैवेहास्तिजीवितम् ॥ ५० ॥ कस्मिंश्चिन्मात्रकचनेद्वयंवाप्यस्तिनैववा ॥ चेतितंद्वयमप्यस्तिनास्तिद्वयमचेतितम् ॥ ५१ ॥ चेतितंचैकमेवास्तिस्वस्त्यनंतमतश्चितः ॥ चिन्मात्रव्यतिरेकेणकिंनामवदजीवनम् ॥ ५२ ॥ अदुःखमक्षयत्वात्तदतोदुःखंककस्यचित् ॥ वाच्यंसवाचकंसर्वंयत्रचिद्व्योममात्रकम् ॥ ५३ ॥ तदन्यत्तदनन्यच्चकेतेतत्रैकताद्विते ॥ आवर्त्तादियथातोयेशरीरादितथापरे ॥ ५४ ॥

ज्ञप्तिदृष्ट्याचिद्विलासदृष्ट्या ॥ ४६ ॥ अन्ययादृष्ट्यातुनप्रमाणीभवतिकिंतुतनुफल्गुभवति ॥ तेनहेतुनाबुधाएवमेवज्ञानदृष्टिसिद्धमेवसारंविदुः ॥ कथंविदुस्तदाह ॥ शुद्धेति ॥ ४७ ॥ ४८ ॥ अत्यंतनाशोदृश्यादर्शनंचेत्सानिद्रासुषुप्तिस्तत्सुखोपमा ॥ ४९ ॥ ५० ॥ कस्मिन्एकस्मिन् ॥ एकारलोपश्छांदसः ॥ नैववेत्यत्रोपपत्तिमाह ॥ चेतितमिति ॥ ५१ ॥ अतश्चितोद्वैतसत्वासत्वसाक्षिण्याःस्वस्तिक्षेमःसदैवेत्यर्थः ॥ अदुःखंजीवनंहिसर्वाभिलपितंसुखंतच्चचिन्मात्रमेवेतितदेवपरपुरुषार्थइत्याह ॥ चिन्मात्रेति ॥ ५२ ॥ वाच्यंरूपंवाचकनामसहितंसर्वंयत्रयस्यांतत्त्वदृष्टौ ॥ ५३ ॥ ननुशरीराद्येवदुःखमस्तीत्याशंक्याह ॥ आवर्त्तादीति ॥ ५४ ॥

कारणानन्यत्वात्सर्वकारणखात्मकमेव ॥ अप्रतिघमघनम् ॥ ५५ ॥ यत्सुघनंव्यग्रंद्रव्यंसप्रतिघंचस्थितंतदेवाश्चर्यम ॥ यथाइतेअतीतेभूतेःप्रतीतेर्भूर्विषयोनास्तितथावर्त्तमाने पिअनुभूतौभवतीत्यनुभूतिभूर्विषयोनास्ति ॥ ५६ ॥ तत्रवर्त्तमानानुभूतौअयंखात्माशून्यात्मैवदृश्यपिशाचोभूत्वाभातीतिविबुध्यताम् ॥ यथाएतत्परिदृश्यमानंखंतथाएतच्चिदा काशरूपंखम् ॥ यतएतच्चिदाकाशमेवखमितिप्रतीतंखंशून्यंभूत्वास्थितम् ॥ ५७ ॥ तथाइतःअधःप्रदेशेभूःइतःप्रदेशांतरेवाय्वाकाशादिभूतंइतःदिक्षुविदिक्षुचान्यदित्यनेका कारःपरंखमेवभातिनान्यदित्यर्थः ॥५८॥५९॥ पूर्णदृष्टौज्ञताज्ञताभेदोप्यपैतीत्याह ॥ तज्ज्ञतेति ॥६०॥ एवंचदृश्यंसर्वंब्रह्मतयैवसंपन्नमित्याह ॥ यदिति ॥६१॥६२॥ सर्वत्रस र्गाःसंतीत्याह ॥ सर्गाद्याइति ॥ इदंचप्राग्वसिष्ठेनविस्तरेणोपपादितम् ॥६३॥ उत्तरोत्तरंसूक्ष्मतराःसिद्धलोकाःस्वंस्वरूपंप्राप्ययत्रब्रह्मणिसंगताः ॥ एतच्चबृहदारण्यकेगार्गीप्रश्ने

तत्सत्तासन्निवेशात्मकारणानन्यखात्मच ॥ चिद्घानमात्रमव्यग्रंखमेवाप्रतिघंजगत् ॥ ५५ ॥ आश्चर्यंसुघनंव्यग्रंद्रव्यंसप्रतिघंस्थि तम् ॥ तथेतेभूतिभूर्नास्तिवर्त्तमानानुभूतिभूः ॥ ५६ ॥ तत्रभ्रांत्यापिशाचोयंभातिखात्मेतिबुध्यताम् ॥ यथैतत्खंतथैतत्खमेतत्खमिति खंस्थितम् ॥ ५७ ॥ तथेतोभूरितोभूतमितोन्यदितिखंपरम् ॥ यैवचिद्घाजगत्सैवनैकतात्रनचद्विता ॥ ५८ ॥ नचप्रतिघताकाचिन्नचाप्र तिघरूपता ॥ सर्वमप्रतिघंदृश्यंयथाभूतार्थदर्शिनः ॥ ५९ ॥ तज्ज्ञतातज्ज्ञतेचेहनसतीनाप्यसत्स्थिती ॥ सत्येसदसतीचैकंकाष्ठमौनम तोखिलम् ॥ ६० ॥ यद्दृश्यंब्रह्मतानंतंतदेवपरमंपदम् ॥ इदंसर्वंपरंब्रह्ममात्रमित्येवसंस्थितम् ॥ ६१ ॥ एवंनामैषचिद्धातुःकचत्येवंयदात्म नि ॥ यस्येदंकचनंव्योम्नोरूपमप्रतिघंजगत् ॥ ६२ ॥ सर्गाद्यास्तजीवानांसर्वत्रैवांगुलेंगुले ॥ असंख्याःसंत्यसंख्यानामदृश्याप्रतिघामि थः ॥ ६३ ॥ अन्योन्यंसिद्धलोकास्तेस्वंयत्रप्राप्यसंगताः ॥ परस्परंनपश्यंतिमिथःप्रोताअपिस्थिताः ॥ ६४ ॥ भवत्याकाशएवैषादृश्यश्री र्गगनात्मिका ॥ अनन्यदृष्टाचिद्रूपास्वप्नवत्स्वात्मद्रष्टृका ॥ ६५ ॥ एषाहिसंपरिज्ञातातिष्ठत्यपियथास्थितम् ॥ भामात्ररूपनिर्वाणानि शांताप्रतिभाकृतिः ॥ ६६ ॥ शांताशेषविशेषात्मयथास्थितमवस्थितम् ॥ सदसद्वाजगज्जालंपरिज्ञानेनशाम्यति ॥ ६७ ॥ यथाब्धिजल बिंदूनांक्षणंविश्लेषसंगमम् ॥ चिदणूनांतथाब्रह्मवारिधौस्फुरतांमिथः ॥ ६८ ॥

वर्णितम् ॥ यदिदंसर्वमप्स्वोतंचप्रोतंचेतिकस्मिन्नुखल्वापओताश्चप्रोताश्चेतिवायौगार्गीति कस्मिन्नुखलुवायुरोतश्चप्रोतश्चेत्यंतरिक्षलोकेषुगार्गीत्यादिना ॥ ६४ ॥ वस्तुतस्तुआ त्मातिरिक्तद्रष्टृकत्वमेवाप्रसिद्धमित्याशयेनाह ॥ भवतीति ॥ यतइयंदृश्यश्रीरात्माकाशएवभवतिततःअनन्यदृष्टा ॥ ६५ ॥ चिद्गगनात्मकत्वादेवपरिज्ञातमात्रातदाकृतिःसंप द्यतइत्याह ॥ एषाहीति ॥ निशायाअंतेप्रभातेअप्रतिभायाअंधकारस्याकृतिरिवाकृतिर्यस्याः ॥ ६६ ॥ यथास्थितंचेच्छांताशेषविशेषात्मकमवस्थितंतदाज्ञानबाध्यंजगत्सद सद्वाऽस्तुनकाचित्क्षतिरित्याह ॥ शांतेति ॥ ६७ ॥ अस्त्वित्थंजगज्जालंतन्निबद्धजीवानांब्रह्मणिकीदृशीस्थितिस्तामाह ॥ यथेति ॥ यावदज्ञानमंशांशिभावेनेत्यर्थः ॥ ६८ ॥

१ समाहारद्वंद्वः

तेषांसर्गादौसर्गश्रीःकथंभातितदाह ॥ स्वप्नवदिति ॥ ६९ ॥ मयाअनंतविभवानिजगंतिदृष्टानि ॥ कार्याणांस्वकर्मणांपरिणामविजृंभितानिसुखदुःखफलानिभुक्तानि ॥ वहूनि युगानिदिशोभ्रांताः ॥ यावत्साकल्येन ॥ ज्ञानादृतेदृश्यदोषःक्षयंनोपैतीत्यर्थः ॥ ७० ॥ ॥ इति॰वासि॰ता॰प्र॰निर्वा॰प्र॰उत्त॰एकोनषष्ट्युत्तरशततमःसर्गः ॥ १५९ ॥ इहसायंसभोत्थानंपरेद्युःपुनरागमः ॥ भासस्यजीवन्मुक्तत्वमविद्याचोपवर्ण्यते ॥ १ ॥ श्रुतंतस्यभासस्यपूर्ववृत्तांतंप्रत्यक्षमवेक्षितुमिवपादैःकिरणचरणैः ॥ १ ॥ आशादि

स्वप्नवद्भातिसर्गश्रीःसर्गादौचिन्नभोमयी ॥ अतःसर्वमिदंब्रह्मशांतमित्युपपद्यते ॥ ६९ ॥ दृष्टान्यनंतविभवानिमयाजगंतिभुक्तानिकार्यपरिणामविजृंभितानि ॥ भ्रांतादिशोदशवहूनियुगानियावज्ज्ञानादृतेक्षयमुपैतिनदृश्यदोषः ॥ ७० ॥ ॥ इ॰वा॰महारामायणे वा॰दे॰मो॰नि॰उ॰अ॰वि॰श॰विपश्चित्संसारभ्रमवर्णनंनामैकोनषष्ट्युत्तरशततमःसर्गः ॥ १५९ ॥ ॥ ७ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ विपश्चितिवदत्येवंतद्वृत्तांतमवेक्षितुम् ॥ इवलोकांतरंभानुःपादैर्दूरायतैर्ययौ ॥ १ ॥ उदभूत्पूरयन्नाशादिनपर्यंतदुंदुभिः ॥ तुष्टाभिरिवनिर्मुक्तोदिग्भिर्जयजयारवः ॥ २ ॥ विपश्चितेदशरथोगृहदारधनादिकम् ॥ राज्यानुरूपंविभवंप्रोत्तस्थौकल्पयन्क्रमात् ॥ ३ ॥ राजरामवसिष्ठाद्यामिथःकृत्वाविसर्जनम् ॥ यथाक्रमंपूजनंचप्रययुःस्वास्पदानितं ॥ ४ ॥ स्नात्वाभुक्त्वानिशांनीत्वाप्रभातेपुनरायुयुः ॥ तेनैवसंनिवेशेनसासभासंस्थिताभवत् ॥ ५ ॥ क्रमान्मुनिरुवाचाथतांयथाप्रस्तुतांकथाम् ॥ शशीवामृतमाह्लादमुद्गिरन्मुखदीप्तिभिः ॥ ६ ॥ राजन्नेयमविद्येयमसत्येवसतीस्थिता ॥ नेदृशेनापियत्नेननिर्णीतैषाविपश्चिता ॥ ७ ॥ अविद्यैवमविज्ञाताचिरानंतावभासते ॥ परिज्ञातातुनास्त्येवमृगतृष्णानदीयथा ॥ ८ ॥ मंत्रिणस्तेमहाबुद्धेभासस्यास्यविपश्चितः ॥ इतिवृत्तंत्वमित्यस्यस्वयमेवहिदृष्टवान् ॥ ९ ॥ सदृशोयमितस्त्वाभिःकथाभिर्ज्ञाततत्पदः ॥ अविद्यायांप्रशांतायांजीवन्मुक्तोभविष्यति ॥ १० ॥ अविद्येतिधृतासंविद्ब्रह्मणात्मनिसत्तया ॥ तत्क्रमेणासदप्यस्याःसद्रूपमिवलक्ष्यते ॥ ११ ॥

शः ॥ दिनपर्यंतः ॥ सायंकालस्तत्सूचकोदुंदुभिः ॥ तुष्टाभिरितितत्रोत्प्रेक्षा ॥ २ ॥ कल्पयन्समर्थयन् ॥ ३ ॥ स्वास्पदानिस्वस्वगृहाणि ॥ ४ ॥ तेनप्राक्तनेनैवसन्निवेशेनक्रमेण ॥ ५ ॥ शशीअमृतमिवमुखदीप्तिभिराह्लादयतीत्याह्लादंवचनमुद्गिरन् ॥ ६ ॥ एवंविपश्चिदुपवर्णनप्रकारैर्दृश्यभ्रांतिरूपाअविद्याननिर्णीताअंतवत्तयेत्यर्थः ॥ ७ ॥ अधिष्ठानब्रह्ममात्रतयाअविज्ञातासर्वाकालतश्चिरादेशतोवस्तुतश्चानंता ॥ ८ ॥ तेमंत्रिणोदृष्टवंतइतिचिपरिणामेनापकृष्यते ॥ ९ ॥ इतःपरमाभिःकथाभिर्ज्ञाततत्त्वोऽयमविद्यायांप्रशांतायांसत्यांयुष्माभिःसदृशोजीवन्मुक्तोभविष्यति ॥ १० ॥ ब्रह्मणायद्यस्मादविद्येतिसंविद्धृतातत्तस्मात्क्रमेणैवास्याअसदपिरूपंसद्रूपमिवलक्ष्यते ॥ ११ ॥

इत्थंचास्याब्रह्मातिरिक्तस्वरूपाभावाद्यावदपरिज्ञानंसत्तापरिज्ञानमात्रेणनिवृत्तिश्चोपपद्यतइत्याह ॥ यदेति ॥ १२ ॥ तामेवाविद्यांवर्णयति ॥ अविद्येत्यादिना ॥ सर्वत्रविशेषणान्युभयत्रयोज्यानि ॥ रसमयीआसक्तिकरी ॥ मोहलक्षणेमाधवेवसंतेप्रफुल्लामंजरी ॥ १३ ॥ आपातदृष्ट्याश्लक्ष्णाअनुभवकालेतुस्वंकुराःसर्वेकंटकायस्याः ॥ वनवेणौजातावनवैणवीलताशाखेव ॥ १४ ॥ मुधैवफलमस्तीत्याशंकायस्याम् ॥ श्रेयसाप्रशस्यतरेणाभिज्ञजनेननाभिनंदिताऔत्पात्तिकीअकालपुष्पमालेव ॥ १५ ॥ भूतैःप्राणिभिःपिशाचैश्चाकुला ॥ तमोमयीरात्रिरिव ॥ १६ ॥ १७ ॥ विगुणागुणहीनाज्याहीनाच ॥ शक्रचापलतापक्षेजडस्पंदोजलस्पंदोवृष्टिस्तस्योत्पाताःसूचकाविकृताःसूर्यकिरणास्तन्मयी ॥ १८ ॥ १९ ॥ शवभूःश्मशानभूमिरिव ॥ २० ॥ चरन्भ्रमन् ॥ २१ ॥ त्यक्ताएकत्रदृश्यजालेप्रपंचेस्थितादेहायैस्तथाविधानांजीवानांमरणकालेएतज्जगदाकारदृढचेतसांदृढीभूतानियानिसंकल्पजालानितान्येवैतज्जगद्देहाद्याकारेणप्रतिष्ठांस्थितिमागतानि ॥ २२ ॥ २३ ॥ अदृष्टान्यपिसंति ॥ सूपलब्धानिसम्यग्दृष्टान्यपिअसंति ॥ सिद्धसद्मानिसिद्धलोकाः ॥ २४ ॥ तानिसिद्धसद्मान्येववर्णयति ॥ सुवर्णेत्यादिना ॥ २५ ॥ रसायनंचंद्रस्तन्मयाकारवनिताभिर्वलितानि ॥ २६ ॥

यदाब्रह्मात्मिकैवेयमविद्यानेतरात्मिका ॥ तदास्त्येषाऽपरिज्ञातापरिज्ञातानभिद्यते ॥ १२ ॥ अविद्यैवमनंतेयंनानाप्रसवशालिनी ॥ जडाद्यारसमयीमोहमाधवमंजरी ॥ १३ ॥ अंतःशून्याग्रंथिमतीश्लक्ष्णास्वंकुरकंटका ॥ जडारसमयीदीर्घालतेववनवैणवी ॥ १४ ॥ फलाशंकामुधैवातिनिष्फलाचित्तहारिणी ॥ अकालपुष्पमालेवश्रेयसानाभिनंदिता ॥ १५ ॥ नकिंचिद्रूपिणीपीनानानाभुवनपूरिणी ॥ भूताकुलानिरालोकासुदीर्घैवतमोमयी ॥ १६ ॥ केशोंड्रकभ्रांतिरिवविचित्रग्रंथिवेष्टना ॥ मिथ्यैवदृश्यमानाखेदृश्यमानानकिंचन ॥ १७ ॥ विचित्रवर्णाविगुणाशून्येचवितताकृतिः ॥ जडस्पंदोत्पातमयीशक्रचापलतेवखे ॥ १८ ॥ जडकल्लोलवहुलाकलुषोल्लासफेनिला ॥ चक्रावर्त्ताक्षयमयीप्रावृषीवतरंगिणी ॥ १९ ॥ अनारतवहच्छून्यजगन्मृगनदीशता ॥ रजोराशिमयीरूक्षाशवभूरिवदुर्भगा ॥ २० ॥ अंतंप्राप्नोतिनयथाचिरंस्वप्नपुरेचरन् ॥ जाग्रदाख्येस्वप्नपुरेतथैवास्मिंश्चिरंचरन् ॥ २१ ॥ यानिसंकल्पजालानिप्रतिष्ठामागतान्यलम् ॥ त्यक्तैकदृश्यजालस्थदेहानांदृढचेतसाम् ॥ २२ ॥ स्थितानितानिचिद्व्योमकोशरत्नान्यसंकटम् ॥ विमानपुरभूम्यादिरूपेणेत्थंस्थितात्मना ॥ २३ ॥ तान्येवसिद्धसद्मानिव्योम्निभांतिपरस्परम् ॥ अदृष्टान्यप्यसंख्यानिसूपलब्धान्यसंत्यपि ॥ २४ ॥ सुवर्णमणिमाणिक्यमुक्तावनिमयानिच ॥ भक्ष्यभोज्यान्नपानाढ्यरसायनसरांसिच ॥ २५ ॥ मधुमद्यदधिक्षीरघृतकुल्याकुलानिच ॥ रसायनमयाकारवनितावलितानिच ॥ २६ ॥

१ स्थिरात्मनेतिक्वचित्पाठः

सर्वर्त्तुपुप्रसिद्धपुष्पफलपल्लवनदीप्रवाहादिमंति ॥ संकल्पेति ॥ सयदिपितृलोककामोभवतिसंकल्पादेवास्यपितरःसमुत्तिष्ठंतेतेनपितृलोकेनसंपन्नोमहीयतइत्यादिश्रुतेरितिभाव: ॥ २७ ॥ सुवर्णमिवामृतमिववेषायेषांतथाविधान्यंबुमयानिचभूतानियेषु ॥ २८ ॥ वायुनायथाभिलषितदेशंनीयमानानि ॥ २९ ॥ उत्पत्तिविनाशाविच्छयादर्शनादर्शने ॥ ३० ॥ ३१ ॥ कल्याणकारतःशास्त्रीयसत्कर्मोपासनातस्तत्फलाकाराणांतत्तल्लोकतद्भोग्याकारेणस्थिराणांतन्मनसांपरिणतिः ॥ सातुएवंविधास्थूलाभित्तिःकथंभवेत् ॥ ३२ ॥ मनःपरिणामास्तुमनोरथादौचिन्मात्रसत्ताकाएवदृष्टाइतिब्रह्ममात्रमयात्मनिजगतिसतिएतन्मदुक्तंसर्वंसोपपत्तिकंसंभवति ॥ हेअंगप्रकारांतरमस्तिचेदिदंजगत्किंमयंतदुच्यतां

सर्वर्तुपुष्पफलपल्लवपूरवंतिलीलाविलोलललनाकुलितालयानि ॥ संकल्पमात्ररचनेनचसर्वकालंसंपन्नसर्वविभवोल्करसंकुलानि ॥ २७ ॥ सहस्रचंद्रबिंबानिशतसूर्याणिकानिचित् ॥ सुवर्णामृतवेपांबुमयभूतानिकानिचित् ॥ २८ ॥ स्वेच्छातमःप्रकाशानिनित्यानंदमयानिच ॥ कानिचिन्नीयमानानितनुतूललघूनिच ॥ २९ ॥ क्षणोत्पत्तिविनाशानिकानिचित्कलनावशात् ॥ अनंतस्वन्नपानानिनिर्जरामरणानिच ॥ ३० ॥ विचित्रसन्निवेशानिविचित्रविभवानिच ॥ सर्वर्तुगुणरम्याणिसर्वकाममयानिच ॥ ३१ ॥ तानिसंकल्पजालानिकिलकल्याणकारतः ॥ स्थिराणांमनसांभित्तिःकथमेवंभवेत्तुसा ३२ ॥ नान्यत्किंचननामेहब्रह्ममात्रमयात्मनि ॥ संभवत्यंगतेनैतदुच्यतामस्तुकिंमयम् ॥ ३३ ॥ सर्गादावेवसर्गादिकिंचिन्नापीदमस्तिनो ॥ कारणाभावतस्तेनजगत्किंमयमस्त्विदम् ॥ ३४ ॥ संकल्प्यंतनिरंतानिकिलतानियथायथा ॥ चितौतथातथाभांतिकेवात्रवदच्चित्रता ॥ ३५ ॥ इदानीमपिहेसाधोत्वमप्यन्येपिकेपिवा ॥ तीव्रसंवेगसंकल्पनगराण्येवमेवखे ॥ ३६ ॥ कुर्वंत्येकरसाभ्यासाद्यदिनामयदृच्छया ॥ तत्तानीदंवपुस्त्यक्त्वाप्राप्नुवंत्यचिरेणखे ॥ ३७ ॥ यस्त्विदंकल्पितंचेद्द्ववस्तुनीअनुवर्त्तते ॥ स्वर्गादिविदवाप्नोतिप्राप्नोत्येवैकमेकधीः ॥ ३८ ॥

वादिभिरित्यर्थः ॥ ३३ ॥ यद्यपीदानींभूतमयंभौतिकमित्युत्प्रेक्षितुंशक्यंतथापिसर्गादिकालेसदेवसोम्येदमग्रआसीदेकमेवाद्वितीयमित्यादिश्रुतेर्नान्यत्कारणंसंभावयितुंशक्यमित्यकारणंजगद्ब्रह्मत्वेअत्यंतासदेवेत्याह ॥ सर्गादावेवेति ॥ ३४ ॥ यद्यत्यंतासत्तर्हिकथंजगंतिभांतितत्राह ॥ संकल्प्यंतइति ॥ अत्यंतासतामपिशशशृंगखपुष्पादीनांसंकल्पनेज्ञानदर्शनादितिभावः ॥ ३५ ॥ तर्हिस्मत्संकल्पादेर्वंध्यत्वंकुतइतिचेत्तीव्रसंवेगत्वाभावादेव तीव्रसंवेगेनतुत्वंवाअन्येपिकेपिवाखेपिनगराणिकुर्वंत्येव तानिचैकरसाभ्यासादेदेवन्यायेनप्राप्नुवंतिचेत्याह ॥ इदानीमितिद्वाभ्याम् ॥ ३६ ॥ ३७ ॥ इदंपूर्वंसिद्धमुपासनादिनास्वकल्पितंचेतिद्वेप्रपंचेदृढसंकल्पेनावश्यमस्त्येवेतिबुद्ध्यायोऽनुवर्त्ततेसपुरुषोयथायज्ञादिकारीस्वर्गाद्यवश्यमाप्नोतितथाक्रमेणद्वेअप्यवाप्नोति यस्त्वनयोरेकंसत्यमितिदृढधीःसएकमेवाप्नोतीत्यर्थः ॥ ३८ ॥

सिद्धलोकेषूक्तोन्यायोनरकादिपापफलकल्पनास्वपिसमानइत्याह ॥ सिद्धाइति ॥ एतावांस्तुविशेषः ॥ उपासनाफलंयत्नेनतत्सत्यतादृढाभ्यासेसत्येवभवति पुण्यफलंत्वास्तिक्यानुष्ठानयोःसतोर्विनापितदभ्यासंसत्यमित्येवदृढंभवति ॥ पापफलंतुआस्तिक्याभ्यासयोरभावेपिपापाचरणमात्रेणसत्यमित्येवदृढकल्पनंभवतीतिभावः ॥ ३९ ॥ संवेदनानुसारित्वंतुसर्वत्रसमानमित्याह ॥ यद्यदिति ॥ देहएव कात्स्न्र्येएवकारः ॥ सर्वोपिदेहइत्यर्थः ॥४० ॥ अतएवमनोनुसारेणैवैकंदेहंत्यक्त्वाअपरंदेहंजीवोगृह्णातीत्याह ॥ जीवइति ॥ तत्रैवाकाशे ॥ ४१ ॥ शुभाकृतपुण्या ॥ अशुभाकृतपापाजीवसंवित् ॥ ४२ ॥ यातुकर्मोपासनशुद्धासासूक्ष्मतमानिसिद्धपुराण्येवपरेपांपश्यतिस्वान्यनुभवत्यपि ॥ अ

सिद्धाःसदाविभांत्येवंयथांतःकल्पनावशात् ॥ नरकादीनिदुःखानितथैवाभांतिकल्पनात् ॥ ३९ ॥ यद्यत्संवेद्यतेकिंचित्तत्तथाप्यनुभूयते ॥ सतिवासतिदेहेस्मिन्देहएवमनोमयः ॥ ४० ॥ जीवस्त्यजतियद्भावेएकांदेहमयींधियम् ॥ तद्भावैकमयीमन्यामाशुतत्रैवपश्यति ॥ ४१ ॥ शुभासंविच्छुभाँल्लोकान्संपश्यत्यशुभाऽशुभान् ॥ खात्मिकाखात्मकानेवचिरंवानुभवत्यपि ॥ ४२ ॥ शुद्धासिद्धपुराण्येवपश्यत्यनुभवत्यपि ॥ चिदशुद्धानिरूपाणिदुःखानिनरकेष्वति ॥ ४३ ॥ घूर्णत्पाषाणयमलगिरिचक्रकपेषणम् ॥ तत्रांधकूपपतनंपुनरुद्धारवर्जितम् ॥ ४४ ॥ दारुणेनातिशीतेनदेहंपाषाणतांगतम् ॥ भूतांगारमयानंतमरुमार्गास्पदंवपुः ॥ ४५ ॥ पूतांगारमयांभोदसरदंगारवर्षणम् ॥ तप्तनाराचनिकरपरुषासारदारुणम् ॥ ४६ ॥ वहत्पाषाणचक्रासिसरिदाकाशसंचरम् ॥ वक्षोमुक्तांबुदाकारकुठाराघातभेदनम् ॥ ४७ ॥ तप्तायःपरुषाश्लेषच्छमिच्छमितिमज्जनम् ॥ वृहत्कटकटाशब्दशस्त्रयंत्रनिपीडनम् ॥ ४८ ॥ चक्रवज्रगदाप्रासशूलासिशरवर्षणम् ॥ शाल्मलीग्रहणंपाशंकुशक्तिशततोदनम् ॥ ४९ ॥ तप्तसैकतसंभारपातपातालमज्जनम् ॥ दीपच्छन्नानलभयंवृहद्दायसचर्वणम् ॥ ५० ॥ निर्निर्गमाकृशांगारमहांगारप्रवेशनम् ॥ शरशक्तिगदाप्रासभुशुंडीचक्रवंधनम् ॥ ५१ ॥ क्षुत्क्षोभपरुषप्रेतव्रातान्योन्यांगचर्वणम् ॥ तालोत्तालातिपरुषशिलातलनिपातनम् ॥ ५२ ॥

तिदुःखानिपश्यत्यनुभवत्यपि ॥ ४३ ॥ नारकेयानिपश्यत्यनुभवतिचतानिप्रपंचयति ॥ घूर्णदित्यादिना ॥ घूर्णत्पाषाणेयेयमलगिरिचक्रकेगिरिद्वयचक्रकेगोधूमपेषणपाषाणयंत्राकारेताभ्यांपेषणम् ॥ तत्रनरके ॥ ४४ ॥ भूतैःपिशाचैरंगारैश्चप्रचुरःअनंतोयोमरुर्निर्जलोमार्गस्तदास्पदंतत्रपांथभूतंस्वंपरंवपुः ॥ ४५ ॥ पूतानिरस्तभस्मानोयेंगारास्तन्मयांभोदेभ्यःसरतांपततामंगाराणांवर्षणम् ॥ ४६ ॥ वहंत्यःपाषाणादिसरितोयत्रतथाविधेआकाशेसंचरसंचारम् ॥ वक्षःसुमुक्तानांपातितानामंबुदाकारकुठाराणामाघातेनवक्षोभेदनम् ॥ वृष्ट्याआमुक्तानामितिपाठांतरेविग्रहः ॥ ४७ ॥ तप्तायःसूर्मिशूलादीनामाश्लेषंसशब्दंमज्जनंच ॥ ४८ ॥ शाल्मल्याःसकंटकायाग्रहणमाश्लेषणम् ॥ ४९ ॥ दीपवेषेणप्रच्छन्नोयउल्कानलस्तस्माद्भयम् ॥ बृहद्भिर्वायसैश्चर्वणंतोदनम् ॥ ५० ॥ ५१ ॥ तालादप्युत्तालादुन्नतप्रदेशादतिपरुषशिलातलेषुनिपातनम् ॥ ५२ ॥

---

१ पाशवंधनम्

॥ ५३ ॥ श्वभ्राभेषुदेशेषूलूकैर्लिखितंदेहविदारणम् ॥ शिरःकरपादादीनांखंडनंखंडस्तत्रोत्कमुत्कंठितंगृध्रमंडलंयत्र ॥ ५४ ॥ भावनात्शास्त्रतोनिर्णयात्प्राग्बहुशएवंविधदेशेष्वनुभवेनदृढात् ॥ स्वात्मैवतत्तन्नरकात्मनाविस्तृतःसन्नित्यर्थः ॥ ५५ ॥ उक्तंसंगृह्योपसंहरति ॥ यन्नामेति ॥ यन्नामकिंचनचेतनदेहादिकदाचनखेचित्ताकाशेभातम् ॥ अथवाभाविनोपिस्वप्नेदर्शनान्नभातम् वाअपूर्वमेवयत्तदपिसंकल्पभ्रांतिरूपात्कल्पनाद्भाति तत्सर्वंतन्मयंमनोमयमेव ॥ तस्माद्भावाच्चचिरमनुभूतायदृच्छयैवचलतिनप्रयत्नशतैरपीतिसिद्धमित्यर्थः ॥ ५६ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेषष्ट्युत्तरशततमःसर्गः ॥ १६० ॥ ॥ ७ ॥ ॥ अनन्यकारणंचित्रंचिन्मात्रप्रतिभात्मकम् ॥ अबोधाज्जगदाभातिबोधेब्रह्मेतिवर्ण्यते ॥ मुनिव्याधयोरेतद्भासवर्णितंसुखदुःखादिदशाशतंयद्वृत्तंतत्किंप्रत्यहंदृश्यमानस्वप्नादिवदनन्यकारणंकिं

रुधिरामेध्यपंकांकपूयनद्यादिसंकटम् ॥ शिलाशस्त्रमयाश्वेभपादपाषाणपेषणम् ॥ ५३ ॥ श्वभ्राभोलूकलिखितंजनौघमुसलाहतिम् ॥ शिरःकरखुरस्कंधखंडोत्कगृध्रमंडलम् ॥ ५४ ॥ एतस्मात्कुकृतादेतत्फलमित्येवभावनात् ॥ पश्यत्येवंदेशदृढादविसंवादिविस्तृतः ॥ ५५ ॥ यन्नामकिंचनकदाचनचेतनंखेभातंनभातमथवायदपूर्वमेव ॥ तत्कल्पनाद्भवतितन्मयमेवतद्धितस्माच्चिरंचचलतीतियदृच्छयैव ॥ ५६ ॥ ॥ इ०वा०वा०दे०मो०नि०उ०अ०वि०श०स्वर्गनरकोपलंभवर्णनंनामषष्ट्युत्तरशततमःसर्गः ॥ १६० ॥ ॥ ७ ॥

श्रीरामउवाच ॥ ॥ यन्मुनिव्याधयोरेतद्वृत्तंनानादशाशतम् ॥ अन्यकारणकंकिंस्यादेतत्किंवास्वभावजम् ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ईदृशाःप्रतिभावर्त्ताःपरमात्ममहांबुधौ ॥ अनारतंप्रवर्त्तंतेस्वतःस्वात्मनिखात्मकाः ॥ २ ॥ यथास्पंदात्मनोवायोरजस्रंस्पंदलेखिकाः ॥ उद्यंत्येवसतश्चित्त्वाच्चिद्ब्रह्मप्रतिभायुताः ॥ ३ ॥ यायथास्वांगभूतास्माद्दुदिताप्रतिभाप्रभा ॥ तावत्सेहतथैवास्तेनहतायावदन्यया ॥ ४ ॥ नानावयववानेकएवेहावयवीयथा ॥ चिद्ब्रह्मैकमिदंव्योमतथैवंप्रतिभात्मकम् ॥ ५ ॥ ब्रह्मकाश्चित्स्थिराःकाश्चिदस्थिराःप्रतिभार्थवत् ॥ देहावस्थाइवात्मस्थाःस्थितमात्मनिखात्मनि ॥ ६ ॥

वालवणगाधिप्रभृतीनांचंडालभावादिकमैंद्रजालिकभगवद्वरादिनिमित्तादिर्वानिमित्तांतरस्वभावजमितिरामप्रश्नार्थः ॥ १ ॥ तत्रनिमित्तांतरमस्तुमावा अज्ञातात्मनियावन्मोक्षमीदृशाभ्रमाःसदैवप्रवर्त्तंतइतिवसिष्ठउत्तरमाह ॥ ईदृशाइत्यादिना ॥ २ ॥ यथाव्यजनादिनिमित्तांतरेसत्यसतिचवायावल्पाल्पतराःस्पंदलेखिकाःस्पंदलवाःसदैवोद्यंतितद्वदित्यर्थः ॥ प्रतिभाअर्थाकारप्रथा ॥ ३ ॥ अन्ययाआकारांतरप्रतिभयायावन्नहतानविनाशिता ॥ यथामृदःपिंडाद्याकारोघटाद्याकारांतरपरिणतिविनाश्यस्तद्वदितिभावः ॥ ४ ॥ तेषुचानंतेषुप्रतिभासेष्वधिष्ठानसन्मात्रात्मकंब्रह्मशाखादिषुवृक्षइवानुगतंतिष्ठतीत्याह ॥ नानेति ॥ तत्रकाश्चिद्भूम्यंतरिक्षदिगाद्यवस्थाश्चिरकालावस्थानात्स्थिराः अन्याअस्थिराःअल्पकालस्थायिन्यः ॥ यथादेहस्यापिदेहहस्तपादाद्याकारावस्थानिमेषोन्मेषाद्यवस्थाश्चेत्यर्थः ॥ ६ ॥

तामुसारासारत्वादिपह्नोवृथैवमूढानामित्याह ॥ स्वात्मनीति ॥ ७ ॥ यावद्यदाभवद्भिरज्ञैर्बुद्धंतु ॥८ ॥ यथासंस्थानंयथास्थितंस्वरूपमालंब्यआस्थिततिष्ठत ॥ छांदसस्तिङ्व्यत्ययः ॥ ९ ॥ स्वतःस्वात्मनःसकाशात्कार्यकरणदृक्तयाप्रतिभाकृताःप्रतिभाकाराःसमुद्यंति ॥ १० ॥ यत्स्वसंकल्पवत्स्वसर्गवच्चस्फारंप्रतिभानंतदेवतेनजगदितिबुद्धम् ॥ ११ ॥ तज्जगत् ॥ स्वतःनकारणांतरतः ॥ १२ ॥ इहचिद्घनेनैवघनतानान्येनपृथ्व्यादिरूपेण ॥ प्रौढिर्भूमिकाभ्यासेनदृढीभावः ॥ १३ ॥ शून्यतायाआकाशतायारूपंनैल्यमिवस्थितमज्ञानमालंब्येतिशेषः ॥ आभासोभ्रमः ॥ १४ ॥ एतच्चध्यायिनामनुभवसिद्धमित्याह ॥ ध्यायिनइति ॥ निर्विकल्पसमाधिप्रतिष्ठयाक्षीणदेहस्यउच्छिन्नदेहभावस्य ॥ दृ

स्वात्मनिस्वप्नपुरवद्भानंचितिचमत्कृतिः॥ किंसारंकिमसारंवाकिंसत्किंवाप्यसद्भवेत्॥ ७॥ परिज्ञातमिदंयावत्सर्वंचिद्व्योममात्रकम्॥ दृश्यंजगद्भवद्भिर्नसन्नासत्किमुच्यते॥ ८॥ चिद्व्योममात्रकचनंसंसारेसर्वतःशिवे॥ आस्थानास्थादिकिंतज्ज्ञायथासंस्थानमास्थित ॥ ९॥ समुद्यंतिस्वतोंभोधेर्वीचिवत्प्रतिभाकृताः॥ स्वात्मिकाःस्वात्मनोदेवाःकार्यकारणदृक्तया॥ १०॥ स्फारंयत्परमंव्योम्नःस्वसंकल्पस्वसर्गवत्॥ तत्तेनैवजगद्बुद्धंकुतःपृथ्व्यादयोत्रके ॥ ११ ॥ भात्येवमयमाभासोनैवभातिचकिंचन॥ ब्रह्मण्येवस्थितंब्रह्मतदविद्याभिधंस्वतः॥ १२॥ घनताचिद्घनेनेहचिद्व्योमैवाखिलंजगत् ॥ इत्येवपरमोबोधएतत्प्रौढिस्तुमुक्तता॥ १३॥ चिद्व्योमशून्यतारूपमात्रमाभासआततः॥ इदमप्रतिघंशांतंजगदित्येवभासते॥ १४॥ ध्यायिनःक्षीणदेहस्यध्यानेदृक्क्षणंस्थिते॥ चिन्मात्रव्यतिरेकेणशक्तत्वंस्यात्किमुच्यताम्॥ १५॥ चिद्धातुव्योमभागोयोभातियत्रयथायथा ॥ तथातथासतत्रास्तेयावदित्थंस्वभावतः ॥ १६॥ अविचारवतोह्यभ्रांतिर्गगनमप्यपि॥ जातितैमिरिकस्यैंदुदोषवन्नोपशाम्यति ॥ १७॥ यदिदंदृश्यतेकिंचित्तद्ब्रह्मैवनिरामयम्॥ चिदाकाशमनाद्यंतंतत्कथंकिंप्रशाम्यति ॥ १८॥ स्वमसंत्यजतोरूपंस्वच्छसंवेदनात्मकम् ॥ स्वप्नवत्कचनंस्वस्ययन्नामतदिदंजगत्॥ १९॥ शास्त्रार्थैस्तीक्ष्णयाबुध्यामिथोयत्नविकल्पनैः॥ कृत्वासुप्तमिवात्मानंकिंचिद्बुद्धेनबोध्यते ॥ २० ॥ रूढायेयमविद्येतिसंविदव्यभिचारिणी॥ भवतांननुनास्त्येवसासरित्स्विवपांसुभूः॥ २१ ॥

क्षेसाक्षिचिन्मात्ररूपत्वे ॥ शक्तत्वंजगद्दर्शनसामर्थ्यंकिंस्यात् ॥ तस्माद्ध्यानदृशैवतत्सामर्थ्यंपरिशेषादितिभावः ॥ १५ ॥ तथाचब्रह्मैवाज्ञचित्तोपाधौजगदात्मनाभात्यन्यत्रचिन्मात्रस्वभावेनेतिव्यवस्थेत्याह ॥ चिद्धात्विति ॥ बोधाबोधस्वभावतः ॥ १६ ॥ जातितैमिरिकस्यजन्मप्रभृतितिमिररोगदुष्टचक्षुषःपुरुषस्य ॥ १७ ॥ ब्रह्मभावापन्नंतुजगन्नश्यतीत्याह ॥ यदिदमिति ॥ १८ ॥ तथाचाज्ञदशायामपिस्वमचिद्विवर्त्तमात्रंजगदित्याह ॥ स्वमिति ॥ अविकृतस्यान्यथाप्रतिभासोविवर्त्तइतितल्लक्षणयोगादितिभावः ॥ १९ ॥ २० ॥ याभवतांजगदाकारेणरूढासास्माकंनास्त्येव ॥ २१ ॥

---

१ द्योतमानात्

नन्वनुभवः कथमुपलभ्यतेतत्राह ॥ यथेति ॥ २२ ॥ रूपाद्यर्थवत्तत्प्रकाशकानलवच्चयथास्वप्नेचिद्व्योमैवभासते ॥ स्वस्यजाग्रत्साक्षिणः अनलमपूर्णस्वप्रकाशरूपमेवतथा लक्ष्यतइत्यर्थः ॥ २३ ॥ याभिन्नताभासतेअनुभूतितःसमयोस्तयोःसानास्त्येवेत्यर्थः ॥ २४ ॥ अमुत्रशरीरांतरेप्रबुद्धस्यगर्भस्थस्यजातिस्मरस्यजाग्रतिप्रसिद्धःप्रत्ययोपितथा नैतदेवमितिबाधितोभवतीत्यर्थः ॥ २५ ॥ कथंतर्हिसाम्यप्रत्ययोजनानामितिचेत्कालाल्पत्वमहत्त्वाभ्यांनानुभवतइत्याह ॥ कालेति ॥ २६ ॥ नचबाह्येजाग्रदंतःस्वप्नइति भेदः ॥ स्वप्नेपिबाह्ये तत्स्वाप्नमेवंजाग्रद्वदेवसर्वमितिसर्ववस्तुपूभयत्रगुणसाम्यानुभवेननैकतरज्यायस्त्वमित्यर्थः ॥ २७ ॥ धीर्वाधधीः ॥ २८ ॥ अनिर्वाणस्यजीवस्यमहत्यबो

यथास्वप्नेवनिर्नास्तिस्वानुभूतापिकुत्रचित् ॥ तथेयंदृश्यतानास्तिस्वानुभूताप्यसन्मयी ॥ २२ ॥ चिद्व्योममात्रमेवार्थानलवद्भासतेयथा ॥ स्वप्नेतथैवजाग्रत्त्वेऽनलंस्वस्यैवलक्ष्यते ॥ २३ ॥ इदंजाग्रदयंस्वप्नइतिनास्त्येवभिन्नता ॥ सत्येवस्तुनिनिःशेषसमयोर्यानुभूतितः ॥ २४ ॥ नैतदेवमितिस्वप्नप्रबोधात्प्रत्ययोयथा ॥ मृत्वामुत्रप्रबुद्धस्यजाग्रतिप्रत्ययस्तथा ॥ २५ ॥ कालमल्पमनल्पंचस्वप्नजाग्रदितीहधीः ॥ वर्त्तमानानुभवनसाम्यात्तुल्येतयोर्द्वयोः ॥ २६ ॥ बाह्येतदेवमित्यादिगुणसाम्यादशेषतः ॥ नजाग्रत्स्वप्नयोर्ज्यायानेकोपियमयोरिव ॥ २७ ॥ यदेवजाग्रत्स्वप्नोयंयःस्वप्नोजाग्रदेवतत् ॥ नैतदेवंकिलेत्यस्तिधीःकालेनोभयोरपि ॥ २८ ॥ आजीवितांतंस्वप्नानांशतान्यनियतंयथा ॥ अनिर्वाणमहाबोधेतथाजाग्रच्छतान्यपि ॥ २९ ॥ उत्पन्नध्वंसिनःस्वप्नाःस्मर्यंतेबहवोयथा ॥ तथैवबुद्धैःस्मर्यंतेसिद्धैर्जन्मशतान्यपि ॥ ३० ॥ एवंसमस्तसाधर्म्येसमस्तानुभवात्मनि ॥ क्वतिस्वप्नवज्जाग्रज्जाग्रद्वत्स्वप्नवेदनम् ॥ ३१ ॥ यथादृश्यंजगच्चेतिनित्यमेकार्थतांगतौ ॥ उभौशब्दौतथैवैतज्जाग्रत्स्वप्नात्मकौस्मृतौ ॥ ३२ ॥ एवंस्वप्नपुरंस्फारंयथाव्योमैवचिन्मयम् ॥ तथैवेदंजगदतःक्वाविद्यादृश्यतेकुतः ॥ ३३ ॥ तदेवाकाशमात्रात्मयद्यविद्येतिकथ्यते ॥ तद्यदास्तेतदेवाहंबंधःस्वकलनात्मकः ॥ ३४ ॥ तन्मैवंक्रियतामेतदबंधस्यैवबंधनम् ॥ कान्यताअमलव्योम्नश्चिन्मयस्यनिराकृतेः ॥ ३५ ॥

धेस्वापे ॥ २९ ॥ बुद्धैःप्रबुद्धैःसिद्धैर्जातिस्मरणानुकूलयोगसिद्धिमद्भिः ॥ ३० ॥ ३१ ॥ कथंतर्हिनामभेदस्तत्राह ॥ यथेति ॥ ३२ ॥ स्वप्नसाम्यप्रतिपादनस्यप्रयोजनंदर्शयति ॥ एवमिति ॥ ३३ ॥ सहिस्वप्नोभूत्वेत्यादिश्रुतौस्वप्नशब्देनेवाविद्याशब्देनापितद्ब्रह्मैवयदिकथ्यतेतर्हिनशब्देवयंविवदामहेकिंतुसर्वभ्रमशांतौयदेवास्तेतदेवाहम् प्राक्स्वकल्पनात्मकएवबंधइत्येतावदस्मदभिमतंतच्चसिद्धमेवेतिभावः ॥ ३४ ॥ यदेवंतदानित्यमुक्तस्यात्मनोबंधनभ्रांतिरेवनकार्येत्याह ॥ तदिति ॥ अमलस्यव्योम्नोनिराकृतेश्चिन्मयस्यचकाअन्यताकिंवैलक्षण्यंयेनव्योमनबध्यतेचिदात्मातुबध्यतइतिवाचोयुक्तिःप्रसरेत ॥ द्वयोरप्यमूर्त्तत्वालेपकत्वसूक्ष्मतमत्वादिनाअत्यंतसाम्यादितिभावः ॥ ३५ ॥

अस्मिन्दृश्यनामन्यविद्याख्येचिन्मयाकाशकचनेसतिबंधोवामोक्षोवाकुतोहेतोःस्यादित्यर्थः ॥ ३६ ॥ यदाअविद्यानामनविद्यतेतदाबंधोबंधोन तथामोक्षोपिमोक्षोन ॥ यतोब्रह्मातिरिक्तमस्तिनास्तीतिव्यवहारयोग्यमेवदुर्लभमित्यर्थः ॥ ३७ ॥ स्वप्नइवचिद्देवसर्गाकारस्वदेहिनीभूत्वाकचति ॥ ३८ ॥ मध्येयन्निर्विषयंसंविदःस्वरूपंप्रसिद्धंतदेव जाग्रत्स्वप्नप्रसिद्धदृश्यस्यपारमार्थिकंरूपमित्येवनिश्चयःकार्यः ॥ ३९ ॥ बाह्येदृश्येआभ्यंतरेचदृश्येइंद्रियमनस्तद्विकारादौप्रकाशनायसदाजागरूकस्यस्वयंज्योतिरात्मनोयद्वपुःस्वरूपम् ॥ असुप्तःसुप्तानभिचाकशीतीतिश्रुतेः ॥ तदेवजाग्रत्स्वप्नदृशांतात्त्विकंरूपमित्यर्थः ॥ ४० ॥ अतएवजाग्रत्स्वप्नभेदवेदनमित्यपिकल्पनंतद्रूपंतद्रूपत्रयसाक्षिरूपमेव विद्धिनचिद्भेदवेदनम ॥ यतःअवस्थात्रयानुगतायाःसाक्षिचितेरंतमन्यःकआगतोदृष्टवान्यश्चितिभेदंपश्येदित्यर्थः ॥ ४१ ॥ तथासतीतिशेषः ॥ ४२ ॥ यथाब्रह्मणःसच्चिदानंदांशेषुसदंशोबोधमयोबोधपाद्मयश्चेत्युभयत्राऽभिन्नस्तथाद्वैतंतद्वेदनंचैककमितिचिदंशोप्यभिन्नः ॥ यतोयएवदृष्टादृशांविपर्यीकृतास्तएवदृश्यमित्युच्यंते ॥ नचविषयवि

चिन्मयाकाशकचनेक्वास्मिन्किलनिराकृतेः ॥ दृश्यनामन्यविद्याख्येबंधोमोक्षोथवाकुतः ॥ ३६ ॥ नाविद्याविद्यतेनामबंधोबंधोनकस्यचित् ॥ मोक्षोनकस्यचिन्मोक्षश्चास्तिनास्तीतिनास्त्यलम् ॥ ३७ ॥ नास्त्येवविद्याविद्यावाचिद्देवेयंकचत्यजा ॥ खएवखाकृतिःस्वप्नइवसर्गस्वदेहिनी ॥ ३८ ॥ देशाद्देशांतरप्राप्तौयन्मध्येसंविदोवपुः ॥ तज्जाग्रत्स्वप्नदृश्यस्यरूपमित्येवनिश्चयः ॥ ३९ ॥ सबाह्याभ्यंतरेदृश्येशांतनिद्रस्ययद्वपुः ॥ एकस्यनिशितद्रूपंजाग्रत्स्वप्नदृशामिह ॥ ४० ॥ विद्धितद्रूपमेवेदंभेदवेदनमित्यपि ॥ चित्यंतमागतःकोन्योनामस्याद्भेदवेदने ॥ ४१ ॥ चिद्व्योमैवाभेदबुद्धिश्चिद्व्योमैवचभेदधीः ॥ द्वैताद्वैतंचैकमेवतथाशांतमखंडितम् ॥ ४२ ॥ सदंशोबोधतद्वाद्यमयएवयथातथा ॥ दृष्टायएवदृश्यंतद्वैतवेदनमेककम् ॥ ४३ ॥ तद्ब्रह्मखंविदुर्द्वैतमद्वैताद्वैतमेवच ॥ सर्गएवपरंब्रह्मद्वैतमद्वैतमेवसत् ॥ ४४ ॥ नेतिनेतिविनिर्णीयसर्वतोभिभवत्यपि ॥ पश्चात्त्यक्त्वाचिदाकाशेशिलांकृत्वास्यतामिह ॥ ४५ ॥ यथाक्रमंसुभगयथास्थितस्थितियथोदयंव्रजपिबभुंक्ष्वभोजय ॥ अभीप्सितंगतमननोनिरिंगनःसुचिन्मयेपरमपदोपलंभवान् ॥ ४६ ॥ ॥इ०वा०महारामायणेवा० दे०मो० निर्वाणप्रकरणेउत्तरार्द्धेअ० निर्वाणवर्णनंनामैकषष्ट्युत्तरशततमःसर्गः ॥ १६१ ॥ ॥ ७ ॥ ॥ ७ ॥

पयिभावश्चित्तादात्म्यातिरिक्तःकेनचिन्निरूपयितुंशक्यस्तत्तस्माद्धेतोरित्यर्थः ॥४३॥ एकस्यसद्वस्तुनएवसर्वद्वैतात्मनायदाप्रतिभासस्तदाब्रह्मैवद्वैताद्वैतमद्वैताऽभिन्नंच ॥ नतद्यतिरिक्तंकिंचित्प्रसिद्ध्यतीत्यर्थः ॥ ४४ ॥ तर्हिकिंद्वैताद्वैतसमुच्चयात्मकमेवब्रह्मबोद्धव्यंनेत्याह ॥ नेतीति ॥ पूर्वंसर्गएवपरंब्रह्मद्वैतमद्वैतमेवचेतिमूर्त्तामूर्त्तप्रपंचस्यब्रह्मरूपतांविनिर्णीयपश्चान्नेतिनेतिसर्वद्वैतनिषेधेनसर्वतःकृत्स्नंद्वैतंत्यक्त्वाअभितोभवत्याविर्भूतेपिइहप्रत्यगात्मनिचिदाकाशेउत्तरोत्तरभूमिकाभ्यासेनसैंधवघनवदानंदैकरसघनांशिलांकृत्वा आस्यताम् ॥ ४५ ॥ हेसुभगएवंसुचिन्मयेब्रह्मणिपरमपदोपलंभूतोभवान्यथाक्रमंस्ववर्णाश्रमोचितक्रममनतिक्रम्ययथास्थितंलोकस्थितिंचानतिक्रम्ययथोदयंस्वविभवानुसारेणाभीप्सितंदेशंविषयंचव्रजविहरपिबभुंक्ष्वद्विजसुहृद्वर्गान्भोजयच ॥ अनीप्सितमितिपाठेनिरिच्छंयथास्यात्तथा ॥ ४६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशे निर्वाणप्रकरणेउत्तरार्द्धेएकषष्ट्युत्तरशततमःसर्गः ॥ १६१ ॥ ॥ ७ ॥ ॥ ७ ॥

दृहद्वैतस्यकृत्स्नस्यब्रह्ममात्रत्ववर्णनैः ॥ हितोक्तिभिरविद्याया निरास उपपाद्यते ॥१॥ सर्वस्यदृश्यस्यचिद्व्योमार्थमेवस्फुरणादपितन्मात्रतापरिशेषइत्याह ॥ चिद्व्योमेति ॥ अर्थानांविषयाणांबाह्यरूपालोकनेनआंतरमननेनचसहितंबाह्यमाभ्यंतरंचदृश्यजातंगवाद्यर्थंतृणादिगवाद्यात्मनेचिद्व्योमोपभोग्यंचिद्व्योमैवकेवलंपरिशिष्यतइत्यर्थः ॥१॥ चिद्भोग्यस्यचिन्मात्रपरिशेषत्वंकेनदृष्टांतेनसाध्यतेतत्राह ॥ स्वप्नेति ॥ यस्माद्धेतोःस्वप्नेपुरभोकृत्र्याश्रितएवपुररूपत्वादन्यन्नविद्यतेतस्माज्जाग्रज्जगदपिनभइवशांतम् ॥ उक्तानुमानेश्रुतिसंमतिंदर्शयति ॥ नेहनानास्तिकिंचनेति ॥२॥ यदिनानानास्तितर्हिकिंतद्यन्नानेवपरिलक्ष्यतेतत्राह ॥ चिदाभानमिति ॥ यन्नानातदनात्मैवनिःस्वरूपमेवस्वसाक्षिणाआत्मनात्मानंस्वंदर्शयति ॥ यथास्वप्नपुरेष्वाकाशपुरेषुगंधर्वनगरेषुचपदार्थस्तद्वदित्यर्थः ॥३॥ तत्साम्यमेवस्फुटयति ॥ सर्गादाविति ॥ सर्गस्यआदौप्रलयकालइवेदानीमपिजगत्स्वप्नाकाशपुरवत्आभातमेवासत्यंचेतिसाम्यमित्यर्थः ॥ ४ ॥ चंद्रप्रादेशिकत्ववत्तज्ज्ञाज्ञानुभवविसंवादादपिजगत्तथेत्याह ॥ तज्ज्ञेति ॥ उभयत्रआज्ञातइतिच्छेदः ॥ अथवानमूर्खाणां

॥ श्रीवसिष्ठउवाच ॥ ॥ चिद्व्योमार्थतयार्थानांयथास्थितमिदंजगत् ॥ सरूपालोकमननमपिचिद्व्योमकेवलम् ॥१॥ स्वप्नचित्पुररूपत्वादन्यद्यस्मान्नविद्यते ॥ जगत्तस्मान्नभःशांतंनेहनानास्तिकिंचन ॥ २ ॥ चिदाभानमनानैवनानेवपरिलक्ष्यते ॥ अनात्मैवात्मनात्मानंस्वप्नाकाशपुरेष्विव ॥ ३ ॥ सर्गादाविवचिद्व्योमस्वप्नाकाशपुरंजगत् ॥ आभातमेवासत्यंचनूनंसत्यमिवास्थितम् ॥ ४ ॥ तज्ज्ञाज्ञातोनमूर्खाणामज्ञाज्ञातोनतद्विदाम् ॥ विद्यतेसर्गशब्दार्थःसत्यासत्यमयात्मकः ॥ ५ ॥ तज्ज्ञाज्ञयोस्तयोरंतःप्रतिपत्तौतुयत्स्थितम् ॥ नवोद्धुंनचवक्तुंतेजानीतस्तौपरस्परम् ॥ ६ ॥ स्वबुद्धौसर्गशब्दार्थोमिथोंतस्त्किलानयोः ॥ स्थैर्यास्थैर्येजाग्रतोद्वेअक्षीवक्षीबयोरिव ॥ ७ ॥ द्रवस्थितिमितायद्वत्सरिद्वारिणिवीचयः ॥ चितौस्थितिमितास्तद्वच्चेतनात्सर्गवीचयः ॥ ८ ॥ चिद्रूपंयन्नकिंचित्तदिदंकिंचिदवास्थितम् ॥ भातिदृश्यमिवादृश्यमपिस्वप्नपुरेष्विव ॥ ९ ॥ चिच्छायेयंप्रकचतिजगदित्यभिशब्दिता ॥ नन्वमूर्तैवमूर्तेवद्द्रव्यच्छायेववैतता ॥ १० ॥

तद्विदांवाअनुभवमनुसृत्यप्रपंचोव्यवस्थापयितुंशक्यःपरस्परविसंवादादुभाभ्यामप्यज्ञानत्वादित्यर्थः ॥५॥ तत्कुतस्तत्राह ॥ तज्ज्ञाज्ञयोरिति ॥ यतःकेवलांतर्दृष्टयस्तज्ज्ञाःकेवलबाह्यदृष्टयोऽज्ञाः ॥ प्रपंचरूपंत्वंतःप्रतिपत्तौबुद्धिवृत्तौअंतरालेस्थितमुभावपिवोद्धुंतेनुभ्यंपरस्परंवावक्तुंचनजानीतोनशक्नुतः ॥६॥ उक्तमेवोपपादयति ॥ स्वबुद्धाविति ॥ सर्गशब्दार्थस्तावत्स्वस्वबुद्धौस्थितएवस्फुरतिनान्यइत्यविवादंतत्राक्षीवक्षीबयोरिवाभ्रांताभ्रांतयोरनयोर्मिथःपरस्परंतत्त्वप्रपंचरूपमांतरबुद्धिस्थत्वादंतःस्थम् ॥ किलेतियौक्तिकप्रसिद्धौ ॥ तत्रविदुषोबुद्धिःसदैवस्थैर्येजागर्त्तीतिसस्थिरमात्मतत्त्वमेवपश्यति ॥ अविद्वद्बुद्धिरस्थैर्येजागर्तीतिसोऽस्थिरंबाह्यमेवपश्यति ॥ बुद्धिगतंतुप्रपंचस्वरूपंनात्यंतमांतरंनात्यंतंबाह्यमितिनोभयोरपितत्परिज्ञानमस्तीत्यर्थः ॥ ७ ॥ यद्युभाभ्यामपिद्रष्टुमशक्यःप्रपंचस्तर्हिकथंस्थितिंप्राप्तस्तत्राह ॥ द्रवेति ॥ अज्ञातचित्स्वभावमेवावलंब्यजलद्रवतयातरंगाइवात्मसत्तयैवांतरालेस्थितिंप्राप्ताइत्यर्थः ॥ ८ ॥ अतएवचिच्चमत्कारमात्रंजगदित्याह ॥ चिद्रूपमिति ॥ ९ ॥ अथवामायायांयश्चित्प्रतिबिंबःसएवजीवजगदाकारेणस्फुरतीत्याह ॥ चिच्छायेति ॥ दर्पणेघटपटादिद्रव्यच्छायेव ॥ १० ॥

तत्रदेहात्मताभ्रांतिरेवसर्वायासमूलमित्याह ॥ कायेति ॥ ११ ॥ देहएवात्मास्त्वितिभ्रमंवारयति ॥ द्वाभ्यामिति ॥ प्राग्वर्णिताभ्यांद्वाभ्यांविद्वद्विद्वदनुभूतिभ्यामपिविमृश्यमानं यदसत्तत्रकाआत्मताप्रसक्तिरित्यर्थः ॥१२॥ कथंतर्हिरामोहंवसिष्ठस्त्वमित्यादिदेहात्मव्यवहारशब्दार्थास्तत्राह ॥ विदार्येति ॥ यथापृथिव्यांस्थूलवंशदारुविदारणेतदंतःस्थितः शब्दोबहिर्निःसरतीवप्रतिभातिनचतदंतःशब्दःस्थितोनिःसृतोवातथाजलेतरंगेभ्यःअग्नौज्वालादिभ्यःखेप्रतिध्वनिशब्दाःपवनाच्चकंठताल्वादिप्रदेशेवर्णपदवाक्यस्फोटानिर्गताइवभांतिनचतेप्राक्तदंतःसंतितद्वद्वासनामयाअप्यर्थाअग्निविस्फुलिंगवज्जाग्रत्स्वप्नयोरात्मनोनिर्गताइवभांतिनचतत्रसंतीत्यर्थः ॥ १३ ॥ स्वपरिभास्वात्मचित् ॥ १४ ॥ अन्याद्द

कायमात्रकमेवेदंभ्रांतिमात्रमसन्मयम् ॥ पिशाचविभ्रमालोकप्रायमायासनंददम् ॥ ११ ॥ मनोराज्यमिवासत्यंलोलंलंवांबुबिंदुवत् ॥ द्वाभ्यामित्यनुभूतिभ्यांयदसत्तत्रकात्मता ॥ १२ ॥ विदार्यदारुरववत्तरंगानिलशव्दवत् ॥ खेशव्दाःपवनस्फोटाभांत्यर्थावासनोदयाः ॥ १३ ॥ सर्गादितःस्वपरिभाकचतिस्वप्नशैलवत् ॥ वस्तुतस्तुनशव्दोस्तिनार्थोस्तिनचदृश्यता ॥ १४ ॥ यदिदंचास्तिचाभातितत्सर्वंपरमार्थसत् ॥ अन्यादृक्कारणाभावात्सर्गादावेवनोदितम् ॥ १५ ॥ निरस्तशव्दभेदार्थमनिरस्ताखिलार्थकम् ॥ शाम्यामिपरिनिर्वामिव्योमैवास्मीतिबुध्यताम् ॥ ॥ १६ ॥ त्यज्यतामात्मविश्रांत्याशुद्धवोधैकरूपया ॥ जीवेजवंजवीभावस्त्वसदुत्थितआत्मना ॥ १७ ॥ आत्मैवह्यात्मनोवंधुरात्मैवरिपुरात्मनः ॥ आत्मात्मनानचेत्त्रातस्तदुपायोस्तिनेतरः ॥ १८ ॥ तरतारुण्यमस्तीदंयावत्तेतावदंबुधेः ॥ ननुसंसारनाम्नोस्माद्बुद्ध्यानावाविशुद्धया ॥ १९ ॥ अथैवकुरुयच्छ्रेयोवृद्धःसन्किंकरिष्यसि ॥ स्वगात्राण्यपिभारायभवंतिहिविपर्यये ॥ २० ॥ शैशवंवार्द्धकंज्ञेयंतिर्यक्त्वंस्मृतिरेवच ॥ तारुण्यमेवजीवस्यजीवितंतद्विवेकिचेत् ॥ २१ ॥ संसारमिममासाद्यविद्युत्संपातचंचलम् ॥ सच्छास्त्रसाधुसंपर्कैःकर्दमात्सारमुद्धरेत् ॥ २२ ॥ अहोवतनराःक्रूरागतिःकैषांभविष्यति ॥ कुर्वंतिकर्दमोन्मग्नेनात्मन्यपिनिजोदयम् ॥ २३ ॥ यथामृन्मयवेतालसभाग्राम्यस्यभंगदा ॥ यथाभूतार्थविज्ञानान्मृन्मय्येवनभंगदा ॥ २४ ॥

कूसद्व्यतिरिक्तरूपंतुसर्गादावेवकारणाभावान्नोदितंनोत्पन्नमेव ॥ १५ ॥ अतःसदैवैकरूपंसद्योमैवाहमितिपरमशांतनिर्वृतिरूपंबुध्यतामित्याह ॥ निरस्तेति ॥ १६ ॥ जीवेप्रसिद्धोजवंजवीभावोमनोविक्षेपः ॥ १७ ॥ अतएवस्वविवेकेनैवात्मानमुद्धरेत्याह ॥ आत्मैवेति ॥ १८ ॥ यावत्तारुण्यमस्तितावदेवबुद्ध्यानावासंसारनाम्नोंबुधेस्तरपरतीरंव्रज ॥ १९ ॥ वयसोविपर्ययेवृद्धत्वे ॥ २० ॥ शैशवंवार्धकंचतिर्यक्त्ववज्ज्ञानासाधकंज्ञेयम् ॥ विवेकिचेदिति ॥ अविवेकित्वेतुतत्तिर्यक्त्वादप्यधममितिभावः ॥ २१ ॥ कर्दमात् मोहकर्दमात् ॥ सारमात्मानम् ॥ २२ ॥ येकर्दमोन्मग्नेप्यात्मनिशास्त्रोपायैर्निजोदयमुद्धारोपायंनकुर्वंतिएषांकागतिर्भविष्यतीत्यनुशोचतिवसिष्ठः ॥ २३ ॥ ग्राम्यस्यमृन्मयत्वानभिज्ञस्यसत्यवेतालासभामयादृष्टेतिभ्रांतिमतइतियावत् ॥ भंगदाभयज्वरादिदुःखदा ॥ २४ ॥

॥ २५ ॥ कुतोनभंगदातत्राह ॥ शाम्यतीति ॥ २६ ॥ ननुस्फुटानुभवनत्वात्सत्यपदंगतस्यजगतःकथंज्ञानमात्रादसत्त्वापत्तिस्तत्राह ॥ स्फुटेति ॥ यथास्वप्नकालेस्फुटानुभवनस्यापिस्वाप्नजगतःपरिज्ञानात्प्रबोधात् ॥ तथाअनुभूयमानाअतएवसत्यपदंगतापिसर्गसंवेदनेतिपरेणान्वयः ॥२७॥ २८ ॥ तत्तुज्ञानंसमनस्केंद्रियजयंविनानलभ्यतइतिदर्शयन्नुपसंहरति ॥ जातीति ॥ जातिज्वरैर्जन्मज्वरभूतैःकामक्रोधादिदवाग्निभिर्ज्वलितेषुदीप्तेषुजीवितजंगलेषुवातहरिणानांवातमृगाणांयस्तृणपर्णाद्याहरणक्रमःकदाचिल्लभ्यतेकदाचिन्नेत्येवंरूपस्तेनजीर्णानिशिथिलीभूतानिमाद्यतोमनसःप्राणपवनस्यचयःपातोबहिःसंचारस्तेनयुतान्यमूनींद्रियाणिजित्वाज्ञानेनाविद्याजयमेहिप्राप्नुहि॥ तेनचमुक्तःसन्पुनर्जन्मजहीहित्यजनिवारयेतियावत् ॥ २९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेद्विषष्ट्युत्तरशततमःसर्गः ॥ १६२ ॥ ॥ ७ ॥ ॥ इहेंद्रियजयो

तथाब्रह्ममयींदृश्यलक्ष्मीरज्ञस्यभंगदा॥ यथाभूतार्थविज्ञानेब्रह्मैवास्तेनभंगदा॥ २५ ॥शाम्यत्यशांतमेवेदंस्थितमेवविलीयते॥ दृश्यंतत्त्वपरिज्ञानाद्दृश्यमानंनदृश्यते॥ २६॥ स्फुटानुभवनस्यापिस्वप्नकालेनिजेयथा॥ परिज्ञानादसत्यत्वमेवसत्यपदंगता ॥ २७॥ तथानुभूयमानापिसर्गसंवेदनांबरे॥ चिन्मयेतत्त्वविज्ञानाच्छून्यंतैवावशिष्यते॥ २८ ॥ जातिज्वरज्वलितजीवितजंगलेषुजीर्णानिवातहरिणाहरणक्रमेण॥ माद्यन्मनःपवनपातयुतान्यमूनिजित्वेंद्रियाणिजयमेहिजहीहिजन्म ॥ २९ ॥ ॥ इ०वा०महारामायणेवा०दे०मो०नि०उ०अ०अविद्यानिरसनोनामद्विषष्ट्युत्तरशततमःसर्गः॥१६२॥ ॥७॥ ॥श्रीरामउवाच॥ ॥विनेंद्रियजयेनेदंनाज्ञत्वमुपशाम्यति॥ तदिंद्रियाणिजीयंतेकथंकथयमेमुने॥१॥ ॥श्रीवसिष्ठउवाच॥ ॥नचप्रभूतभोगेपुनपुंस्त्वेनचजीविते॥ नचेंद्रियजयोन्मुक्तौदीपस्तनुदृशोयथा॥ २॥ तदिंद्रियजयेयुक्तिमिमामविकलांशृणु॥ सिद्धिमेतिस्वयत्नेनसुखेनतनुरेतया॥ ३॥ चिन्मात्रंपुरुषंविद्धिचेतनाज्जीवनामकम्॥ यच्चेततिसजीवोंतस्तन्मयोभवतिक्षणात्॥ ४ ॥ संविद्प्रयत्नसंबोधनिशितांकुशकर्षणैः॥ मनोमतंगजंमत्तंजित्वाजयतिनान्यथा॥ ५ ॥

पायश्चित्तरोधश्चिदद्वये ॥ अभ्यासश्चास्यशास्त्रस्यकीर्त्तिताबोधहेतवः ॥ १ ॥ जित्वेंद्रियाणिजयमेहिजहीहिजन्मेतियदिंद्रियजयस्यावश्यकत्वंवसिष्ठेनोक्तंतत्रोपायंरामःपृच्छति ॥ विनेति ॥ १ ॥ स्थानेत्वयाप्रश्नःकृतइत्यनुमोदमानोवसिष्ठःप्रश्नंपुष्णाति ॥ नचेति॥ यथातनुदृशोमंदचक्षुषःपुरुषस्यप्रज्वलन्नपिदीपोनसूक्ष्मार्थदर्शनेउपयुज्यतेतथानप्रभूतभोगेष्वासक्तस्यनापिपुंस्त्वेस्वोत्कर्षसंपादनेआसक्तस्यनापिजीवितेजीवनोपायेधनार्जनादावासक्तस्यशास्त्रादिसाधनंब्रह्मदर्शनउपयुज्यते ॥ तथाइंद्रियजयोन्मुक्तावपितन्नोपयुज्यतइत्यर्थः ॥२॥ तत्तस्मादिंद्रियजयस्यावश्यकत्वादेतयामदुक्तयुक्त्यातनुरल्पापिसाधनसंपत्स्वयत्नेनसिद्धिंमोक्षफलसिद्धिमेतिप्राप्नोति ॥ ३ ॥ चेतनात्चित्तोपनीतार्थप्रकाशकत्वाच्चित्ताधीनत्वादितियावत् ॥ यच्चेततिचिसवृत्त्याव्याप्यप्रथयतितन्मयोभवतितत्रासज्जते॥ स्तंभमयोजालमइतिवत्॥४॥ एवंसतिचित्तस्यप्रत्याहारप्रयत्नेनांतराकर्षणेनबाह्याकारतांनिरुध्यब्रह्माकारताप्रबोधनाभ्यासेस्वतःपंगूनींद्रियाण्यर्थादेवजितानिभवंतीतियुक्तिमाह ॥ संविदिति ॥ ५ ॥

तत्कुतस्तत्राह ॥ चित्तमिति ॥ नायकंस्वामिभावेनप्रवर्त्तकंनिरोधकंच ॥ पादमात्रावरणेनसर्वकंटकजयइवचित्तमात्रावरणेनसर्वेंद्रियजयइत्याशयेनाह ॥ उपानदिति ॥ ६ ॥ मनःशांतौतर्हिकउपायस्तमाह ॥ संविदमिति ॥ संविदंचित्तावच्छिन्नसंविदंजीवंसंविदाकाशेब्रह्मणिसंरोप्यएकीकृत्य ॥ ७ ॥ स्वसंविदोजीवसंविदोयत्नेनब्रह्मणिसंरोधादुक्तरूपात् ॥ ८ ॥ संवेद्यतेबलात्स्मर्यतेतत्तत्तदधिष्ठानब्रह्मसंविदिप्रविलापनसंविदानूनंनिश्चयेनविस्मार्यतेतत्संस्कारोच्छेदेनपुनःस्मरणायोग्यंक्रियते ॥ तत्तेनोपायेनभोगानांभोगहेतूनांविषयाणांइतिएवंजयः ॥ ९॥ संरोधितासंविच्चेत्तत्तेनोपायेनवैबुधंविबुधानांतत्त्वविदामनुभवसिद्धंस्वाराज्यपदंप्राप्तम् ॥ १०॥ एवंस्वधर्मैकनिष्ठतादार्ढ्यमपिवैतृष्ण्यसिद्धिद्वा

चित्तमिंद्रियसेनायानायकंतज्जयाज्जयः॥ उपानद्गूढपादस्यननुचर्मावृतैवभूः ॥ ६॥ संविदंसंविदाकाशेसंरोप्यदृढतिष्ठतः॥ स्वयमेवमनःशाम्येन्नीहारइवशारदः॥ ७॥ स्वसंविद्यत्नसंरोधाद्यथाचेतःप्रशाम्यति॥ नतथांगतपस्तीर्थविद्यायज्ञक्रियागणैः॥ ८॥ यच्चसंवेद्यतेकिंचित्तत्तत्संविदिसंविदा॥ नूनंविस्मार्यतेयत्नाद्भोगानामितितज्जयः॥ ९॥ स्वसंवेदनयत्नेनविषयामिषतोनिशम्॥ किंचित्संरोधितासंवित्तत्प्राप्तंवैबुधंपदम्॥ १०॥ स्वधर्मव्यवहारेणयदायातितदेवमे॥ रोचतेनान्यदित्येवपदेवज्ज्ञदृढीभव॥ ११॥ संविस्फुर्द्वृत्तिमर्थेषुविरुद्धेषुविवर्जयन्॥ अर्जयच्छमसंतोषौयःस्थितःसजितेंद्रियः॥ १२॥ संविद्रसिकतास्वंतस्तथानीरसतासुच॥ यस्यनोद्वेगमायातिमनस्तस्योपशाम्यति॥ १३॥ संविद्यत्नसंरोधान्मनःस्वायनमुञ्झति॥ चेतश्चपलतोन्मुक्तंविवेकमनुधावति॥ १४॥ विवेकवानुदारात्माविजितेंद्रियउच्यते॥ वासनावीचिवेगेनभवाब्धौनसमुह्यते॥ १५॥ साधुसंपर्कसच्छास्त्रसमालोकनतोनिशम्॥ जितेंद्रियोयथावस्तुजगत्सत्यंप्रपश्यति॥ १६॥ सत्यावलोकनाच्छांतिमेतिसंसारसंभ्रमः॥ मराविवजलज्ञानंमिथ्यापतनदुःखदम्॥ १७॥ अचेत्यमेवचिन्मात्रमिदंजगदितिस्थितम्॥ इत्येवंसत्यबोधस्यबंधमोक्षदृशौकुतः॥ १८॥ अनाकारंयथावारिक्षीणंवहतिनोपुनः॥ अकारणंतथाहंस्वंज्ञानाच्छिन्नंनरोहति॥ १९॥ वेदनंव्योममात्रंत्वमहमित्यादिरूपधृक्॥ वर्जयित्वैतदन्यत्स्यादहमित्यादिकंजगत्॥ २०॥ अविद्यामात्रमेवेदमहमित्यादिकंजगत्॥ चिद्व्योम्न्येवस्थितंशांतंशून्यमात्रशरीरकम्॥ २१॥

राइंद्रियजयहेतुरित्याह ॥ स्वधर्मेति ॥ ११ ॥ विरुद्धेषुस्वधर्मविरुद्धेष्वर्थेषुदेहयात्राहेतुष्वन्नादिषुसंवित्स्फूर्त्तिमिच्छाम् ॥ १२ ॥ यस्यमनःअंतःसंविद्रसिकतासुबहिर्नीरसतासुचाभ्यस्यमानासुनिर्वेदमरतिंनायातितस्यतदुपशाम्यति ॥ १३ ॥ अयनंविषयानुधावनदुर्व्यसनम् सैवास्यचपलतातदुन्मुक्तंसत् ॥ १४ ॥ १५॥ एवंजितेंद्रियःसन्जगद्यथावस्तुसत्यंब्रह्ममात्रंप्रपश्यति ॥ १६ ॥ मिथ्यावस्तुषुपतनेनधावनेनदुःखदम् ॥ १७॥ १८॥ अनाकारंशोषणेनोच्छिन्नमूर्त्ताकारम् ॥ १९ ॥ यतोव्योममात्ररूपंवेदनमेवस्वाविद्ययात्वमहमित्यादिरूपधृगतःस्वाध्यस्तमहमित्यादिकमेतज्जगज्ज्ञानेनवर्जयित्वाविमृज्यअध्यस्तादन्यदधिष्ठानमात्रंस्यात् ॥ २० ॥ शांतंमिथ्यात्वात्स्वतएवशांतमितिचिद्व्योम्न्येवतात्त्विकेरूपेस्थितम् ॥ २१ ॥

असौचिच्चजगच्छून्याशून्येनापिशून्येत्येवनिश्चयःसिद्धांतः ॥ २२ ॥ उभयशून्यताकप्रसिद्धेतिचेत्स्वप्नदर्शनेइत्याह ॥ स्वप्नेति ॥ असन्मयइतिशून्यताअनुभूतइतिशून्यशून्यताच ॥ अनुभूतस्यासन्मयत्वेपिसएवदृष्टांतइत्याह ॥ स्वानुभूतोपीति ॥ २३ ॥ हेअंगस्वस्वप्नसंवित्तिमात्रमात्मास्वरूपंयस्यतथाविधोयद्यद्राज्यंवैभवंभूत्वामहीयतेतत्तच्चितेरेवरूपम् यतस्तत्कर्तृकर्मकरणादिकारकनिरपेक्षंरूपम् ॥ तद्वज्जाग्रज्जगदपिबोध्यमित्यर्थः ॥ २४ ॥ यद्यत्कर्तृकर्मकरणादिनिरपेक्षंतत्तच्चिद्घनमात्रकमहमेव ॥ इदंजगच्चसर्गादौकर्त्रादिमत्तयानिर्देष्टुमशक्यमितिप्रागुपपादितम ॥ अतोमदीयस्वप्रकाशात्मस्वरूपमेवेत्यर्थः॥ २५॥ तथाचस्वाप्नस्वमरणमरुजलवत्प्रतीतितोविद्यमानापिअविद्याज्ञानबाधितत्वान्नविद्यतइत्याह ॥ यथेति ॥ जलेच्छापदेनजलभ्रांतिर्लक्ष्यते ॥ २६ ॥ व्योम्निस्वात्मनिचेतितंसंकल्पितम् ॥ २७ ॥ इदंजगद्यस्माच्चित्प्रकाशान्निमित्ताद्भासुरमपरोक्षंप्रथमानमास्तेतदेवनित्यापरोक्षंपरमंपदंविदुरित्यर्थः ॥ २८ ॥ २९ ॥ अवयवावयविभावकल्पनद्वारावाजीवादेर्ब्रह्मैक्यंप्रतिपत्तव्यमित्याह ॥ यथेति ॥ ३० ॥ स्फटिकशिलांतर्वनगिरिनद्याद्याभासवद्वाब्रह्मणिजगद्बोध्यमित्याह ॥ आभासमात्रमिति ॥ तथाचतत्स्वच्छतास्वभावएवजगदात्मनाभासतइत्याशयेनाह ॥ स्वभावेइति ॥ किंविचार्यतइत्यन्वयः ॥ ३१ ॥ नआदिरंतंचनाप्यंतःमध्यप्रदेशानांकलनाःकाश्चित्संति ॥ ३२ ॥ स्वप्नजागरान्वयव्यतिरेकेणपरिशोधनेनवाशुद्धंजीवजगत्तत्त्वंज्ञेयमित्याह ॥ जीवइति ॥ प्रबोधाप्रबोधयोर्भानैकरूपतया ॥ ३३ ॥ सुषुप्तमज्ञानावृतआत्मातुर्यःशुद्धात्माचभ्रांतिकृतसर्पांतःअज्ञानरज्जुकेवलरज्जूइवस्वप्नजाग्रतोरंतःस्थिते ॥ ३४ ॥

इदंचिद्व्योम्निचिच्छायाजगदित्येवभासते ॥ शून्यशून्यैवचिच्चासौशून्याचेत्येवनिश्चयः ॥ २२ ॥ स्वप्नदर्शनदृष्टांतःकेननामात्रखंड्यते॥ असन्मयोनुभूतश्चस्वानुभूतोप्यसन्मयः॥ २३ ॥ सोंगसंवित्तिमात्रात्मायद्यद्राज्यंमहीयते॥ नकर्तृकर्मकरणंरूपंतद्वज्जगच्चितेः॥ २४॥ अकर्तृकर्मकरणमहंचिद्घनमात्रकम्॥ जगच्चेदमनिर्देश्यंस्वसंवेदनलक्षणम्॥ २५॥ यथास्वप्नेपुमरणमनुभूतंनविद्यते॥मरौजलेच्छाविद्येयंविद्यमानानविद्यते॥ २६ ॥ चिद्व्योम्नाकाचकच्यंस्वंसर्गादौव्योम्निचेतितम्॥ जगदित्येवनिर्मूलंकाकतालीयवत्स्वयम्॥ २७॥ निर्मूलमेवभातीदमभातमपिभातवत्॥ तस्माद्यद्भासुरमिदंतत्तदेवपदंविदुः॥ २८ ॥ जीवादिकचनंत्वत्रयद्भातीदंतदेवतत्॥ शून्यतेवभवेद्व्योमवार्य्येवावर्त्तवत्त्वयः॥ २९॥ यथावयविनोरूपमेकंसावयवंभवेत्॥ एकंजीवाद्यवयवंब्रह्मानवयवंतथा॥ ३० ॥ आभासमात्रंदृश्यात्मचिन्मात्रंशांतमव्ययम्॥ स्थितमोस्याःकिमेतस्मिन्स्वभावेस्वेविचार्यते॥ ३१ ॥ नाद्यंतमंतःकलनाःकाश्चित्संतिपरेपदे॥ तद्रूपमेवाविद्येयंनाविद्यात्विहविद्यते॥३२॥ जीवःस्वप्नाद्विशञ्जाग्रज्जाग्रतःस्वप्नमाविशन्॥ प्रबुद्धोवास्त्वबुद्धोवाप्येकरूपतयास्थितः॥ ३३॥ स्थितःसुषुप्ततुर्यद्वंसदास्वप्नेथजाग्रति॥ जाग्रत्स्वप्नावेकमेवतुर्यंवेत्तितुबुद्धधीः॥ ३४॥

1 स्थितमच्छमितिपाठोपेक्षितइतिभाति

प्रवोधिनस्तत्त्ववोधवतः ॥ एवकारोभिन्नक्रमः ॥ सद्वयस्थोप्यद्वयएवेति ॥ ३५ ॥ इत्यपिकापिकलनानिरविद्यस्यकुतस्तयाअंवरंशून्यंचकुतः ॥ ३६ ॥ अवुद्धाअप्रवुद्धाःशिशवोवालाःक्रीडंति ॥ ३७ ॥ प्रवुद्धाअपिशास्त्रेपुकथंद्वैतविवादानिच्छंतितत्राह ॥ द्वैतेति ॥ हृदयाकाशेअध्यारोपिताशिष्यप्रवोधफलामंजरी ॥ ३८ ॥ अतएवमयापिसुहृद्भावेनाभ्युपगम्यद्वैताद्वैतविचारणाकृताकृतकार्यागेहमार्जनीवनिरसिष्यतइत्याह ॥ सुहृदिति ॥ ३९ ॥ अविद्याभस्मनिमार्जितेसतिअधिकारिणस्तच्चित्ताब्रह्मचित्ताब्रह्मगतप्राणाःपरस्परंवोधयंतस्तुष्यंतिरमंतिच ॥ ४० ॥ एवंभजतांतेपांसततंविचारयुक्तानामसौमदुपदिष्टोवुद्धियोगःकालेनदृढोजायते येनासौतदात्मातत्पदंमोक्षाख्यंयाति ॥ ४१ ॥ सततयुक्तानामितिप्रयत्नातिशयापेक्षोक्तेस्तात्पर्यमुद्धाटयति ॥ किलेति ॥ तृणमात्रस्यापिजलवह्निपश्वादिभ्योवगोपनेरक्षणेयत्नात्साधितएवोपायउपकुरुतेनहेलयासाधितः ॥

जाग्रत्स्वप्नःसुषुप्तंचसर्वंतुर्यंप्रवोधिनः॥नाविद्याविद्यतेतस्यद्वयस्योप्येवसोद्वयः॥ ३५ ॥द्वैतमद्वैतमित्येतदहंत्वमिदमित्यपि ॥ निरविद्यस्यकलनाकुतःकाप्यंवरंकुतः॥ ३६ ॥ द्वैताद्वैतसमुद्भेदैर्वाक्यसंदर्भविभ्रमैः॥ क्रीडंत्यवुद्धाःशिशवोवोधवृद्धाहसंतितान्॥ ३७॥ द्वैताद्वैतविवादेहाद्धृदयाकाशमंजरी॥ विनैतयेहनोदेतिप्रवोधाकाशमार्जनम्॥३८॥सुहृद्भूत्वाविवादेनद्वैताद्वैतविचारणा॥ कृताहृदयगेहेंतरविद्याभस्ममार्जनी॥ ३९ ॥ तच्चित्तास्तद्गतप्राणावोधयंतःपरस्परम्॥ कथयंतश्चतन्नित्यंतुष्यंतिचरमंतिच॥४०॥ तेषांसततयुक्तानांभजतांप्रीतिपूर्वकम्॥ जायतेवुद्धियोगोसौयेनंतेयांतितत्पदम् ॥ ४१ ॥ किलोपकुरुतेयत्नात्तृणमात्रावगोपने॥ कथंसिध्यत्ययत्नेनत्रैलोक्यगणगोपनम्॥ ४२ ॥ अध्यात्मव्यसनोन्मुक्तंततंत्वस्याधमाऽप्रभु॥ उपहासास्पदंयस्याजगदप्युत्तमस्थितेः॥ ४३॥ किंनामेदंकिलसुखंयद्राज्यादिमनोंकुरम्॥ तत्त्वज्ञानैकविश्रांतौदेवराजपदंतृणम्॥ ४४ ॥ सुप्ताःप्रवुद्धाःपश्यंतिदृश्यंदृश्येरतायथा॥तथादृश्येऽरताःशांताःसंतःपश्यंतितत्पदम्॥ ४५॥ विनायत्नभरेणेदंनकदाचनसिद्ध्यति॥ महतोभ्यासवृक्षस्यफलंविद्धिपरंपदम्॥ ४६ ॥

त्रैलोक्यगणस्यब्रह्मीभावापादनेनगोपनमात्यंतिकपरिरक्षणरूपंतत्त्वज्ञानमयत्नेनकथंसिद्ध्यति ॥ ४२ ॥ यस्यानिरतिशयानंदलक्षणायाउत्तमस्थितेर्मानुपानंदमारभ्यहैरण्यगर्भानंदपर्यंतमुत्तरोत्तरंशतशतगुणोत्कृष्टसुखोपभोगायचतुर्दशभुवनभेदेपुततंविस्तृतंत्वत्स्थस्यअधमस्यकामस्यजयेअप्रभुअसमर्थंकामोपहतमितियावत् ॥ जगदपि कात्स्न्र्ये अपिशब्दः कृत्स्नंजगज्जीवजातंतुच्छभोगासक्तत्वादुपहासास्पदंसातादृशीसर्वोत्तमास्थितिःकथंनयत्नमर्हतीत्यर्थः ॥ ४३ ॥ भोगानांतुच्छतामवयुत्योदाहरणेनदर्शयति ॥ किंनामेति ॥ ४४ ॥ अज्ञाननिद्रासुप्तादृश्येविपयभोगेरताजनायथादृश्यमत्यासक्त्यापश्यंतितथाशांताःसंतस्तत्त्वविदोदृश्येअरताःप्रसुप्तप्रायास्तन्निरतिशयानंदंपदंप्रवुद्धाःपश्यंतीत्यर्थः ॥ तथाचोक्तंभगवता ॥ यानिशासर्वभूतानांतस्यांजागर्त्तिसंयमी ॥ यस्यांजाग्रतिभूतानिसानिशापश्यतोमुनेरिति ॥ ४५ ॥ ईदृशंनित्यापरोक्षनिरतिशयानंदरूपंमोक्षपदंयत्नभरेणविनाकथंसिद्ध्येदित्यभ्यासावश्यकतामाह ॥ विनेति ॥ ४६ ॥



1 टीकानुरोधेनयेनासौयातितत्पदमितिपाठोपेक्षितइतिभाति

अतएवमयाभवतामभ्यासदार्ढ्यंभवत्विति पुनःपुनर्भंग्यंतरेणयुक्त्यंतरेणकथाख्यानादिविस्तरेणचेदमेवबहुवारमुक्तम् ॥ भवद्भिश्चपुनःपुनस्तदेवभगवतोच्यतेबहूक्तेनपुनरुक्तस हस्रविस्तारितैर्नैतेनग्रंथेनएतेनाभ्यासश्रमेणचकिंप्रयोजनमित्यश्रद्धालक्षणादुर्मतिर्नंग्राह्या ॥ सुज्ञस्यातिकुशलबुद्धेःकस्यचिदेवनाभ्यासापेक्षा ॥ अज्ञधीस्तुएतावताविस्तृते नाप्युक्तेनोपदेशवाक्येनइदमतिदुरूहमात्मतत्त्वंस्वदिनादत्ते ॥ अतस्तस्यावृत्त्यादिलक्षणोऽभ्यासआवश्यकइत्यर्थः ॥ तथाचभगवतोबादरायणस्यसूत्रम् ॥ आवृत्तिरसकृदुप देशादिति ॥ ४७ ॥ अतएवायंग्रंथोमंदमध्यमाधिकारिभिर्यावज्ज्ञानोदयंपुनःपुनःश्रवणाद्यावर्त्तनेनास्वादनीयइत्याह ॥ भूयोभूयइति ॥ इदंमदुक्तंशास्त्रम् ॥ अज्ञेनापिएतदा वर्तनोपायेनावश्यंतज्ज्ञेनभूयतेनात्रसंदेहइत्यर्थः ॥ ४८ ॥ अनभ्यासपरस्यतुनैतत्फलावाप्तिरितितंनिंदति ॥ यस्त्विति ॥ शास्त्रेभ्यःअनध्यात्मशास्त्रेभ्यः ॥ ४९ ॥ ५० ॥ प्रत्य

इदंबहूक्तमेतेनकिमेतेनेतिदुर्मतिः॥ नग्राह्यैतावताप्युक्तेनादत्तेनेदमज्ञधीः॥ ४७ ॥ भूयोभूयःपरावृत्त्याचिरमास्वाद्यतेयदि ॥ श्रूयतेक थ्यतेचेदंतज्ज्ञैनाज्ञेनभूयते॥ ४८ ॥ यस्त्वेकवारमालोक्यदृष्टमित्येवसंत्यजेत् ॥ इदंसनामशास्त्रेभ्योभस्माप्याप्नोतिनाधमः॥ ४९॥ इद मुत्तममाख्यानमध्येयंवेदवत्सदा॥ व्याख्येयंपूजनीयंचपुरुषार्थफलप्रदम्॥ ५० ॥ यदस्मात्प्राप्यतेशास्त्रात्तत्तद्वेदादवाप्यते ॥ अस्मि न्ज्ञातेक्रियाज्ञानंद्वयंयातिपवित्रताम् ॥ ५१ ॥ वेदांततर्कसिद्धांतस्त्वस्मिन्ज्ञातेचबुध्यते ॥ इदमुत्तममाख्यानंव्याख्यातंशास्त्रदृष्टिषु ॥ ५२ ॥ कारुण्याद्भवतामेतदहंवच्मिनमायया॥ भवंतस्त्ववगच्छंतिमायामेतद्विचार्यताम् ॥ ५३ ॥ अस्माच्छास्त्रवराद्बोधाजायंतेये विचारितात्॥ लवणैर्व्यंजनानीवभांतिशास्त्रांतराणितैः॥ ५४ ॥ अनार्यमिदमाख्यानमित्यनादृत्यदृश्यधीः ॥ माभवंत्वात्महंतारोभवं तोभवभागिनः॥ ५५॥

क्षवेदोपबृंहणत्वादस्यकांडद्वयफलसर्वस्वसाधनत्वादतिप्रशस्ततरत्वंदर्शयति ॥ यदिति ॥ क्रियापूर्वकांडार्थः ज्ञानमुत्तरकांडार्थः द्वयमपिपवित्रतामात्यंतिकाशुद्धिनिरासफल ताम् ॥ ५१ ॥ चकारोभिन्नक्रमः ॥ वेदांतेषुयेबादरायणादिभिर्दर्शितास्तात्पर्यनिर्णयानुकूलोपक्रमादिलिंगकतर्कास्तैर्व्यवस्थापितःसिद्धांतःसचास्मिन्ज्ञातेबुध्यतइतिविशेष द्योतनार्थस्तुशब्दः ॥ शास्त्रदृष्टिषुमध्येविशिष्टत्वेनाख्यातंव्याख्यातंश्रेष्ठतयाख्यातमित्यर्थः ॥ ५२॥ माययाकितवेननवच्मिकिंतुकारुण्यात् भवंतस्त्वस्माच्छास्त्रवराद्विचारिता दतद्दृश्यजातंमायांमिथ्येत्यवगच्छंत्यतएतच्छास्त्रंविचार्यताम् ॥ ५३ ॥ अस्माच्छास्त्रवराद्विचारितायेबोधाजायंतेतैर्बोधैःशास्त्रांतराणिलवणैर्व्यंजनानीवरुचिराणिभांतीतीदं सर्वशास्त्रोपजीव्यमित्यर्थः ॥ ५४ ॥ अनार्यकाव्यत्वादपूज्यम् ॥ दृश्येषुभोगेष्वासक्ताधीर्येषाम् ॥ सुपांसुलुगितिछांदसःपूर्वसवर्णदीर्घःसुब्व्यत्ययोवा ॥ आत्मनःपुनःपुनर्मृ त्युपरंपराप्राप्तिहेतुमोहगर्तपातिनः ॥ ततश्चपुनः पुनर्भवभागिनोजन्मभाजोमाभवंतु ॥ ५५ ॥

१ मूलस्यात्महंतारइत्यस्यायमर्थः

नन्वस्मत्कुलेपूर्वजैस्तपःकर्मादिनिष्ठैवाश्रितानब्रह्मनिष्ठा अस्मदीयाःपूर्वजाःकर्ममीमांसकाअस्मदीयापूर्वजास्तार्किकाअस्मदीयाःपूर्वजाःसांख्याअस्मदीयाःपूर्वजास्तांत्रिका मंत्रसिद्धायोगसिद्धाऔषधरसायनादिसिद्धावाअभूवन्नतोवयमपितद्वंश्यास्तत्तदनुसृतमेवमार्गमाश्रयिष्यामोनाध्यात्मशास्त्रमितिब्रुवाणान्जनानुपहसन्मुमुक्षूणांतन्मार्गप्रवृत्तिवारयति ॥ तातस्येति ॥ कापुरुषाःदुरभिमानेनसंनिहितमपिजाह्नवीजलमनादृत्ययथाक्षारंजलंपिबंतितथाभवंतोप्यज्ञतास्पैपुनःपुनर्जन्मपरंपरासुमौर्ख्यास्पैमौर्ख्यस्यैवलाभायअनिशंविरुद्धविविधविचारवंतोमाभवतेत्यर्थः ॥ ५६ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्धेत्रिषष्ट्युत्तरशततमःसर्गः ॥ १६३ ॥ ॥ ७ ॥ ॥ ब्रह्मभावोद्भवाज्जीवजगद्भावविमार्जनैः ॥ इहजीवजगद्ब्रह्मसामरस्यंप्रसाध्यते ॥ १ ॥ तत्रादौजीवभावंविमार्ष्टुमारभते जीवाणवइत्यादिना ॥ सर्वतःपरिपूर्णस्यचिदादित्यस्य मंडलेअंतःस्फुरतियत्रजगतितेप्रसिद्धाजीवाणवस्तेनचिदादित्येनतुल्याअग्निविस्फुलिंगवत्समानप्रकाशस्वभावास्तेनहेतुनाअनवयवात्मताचिदादित्यस्यसिद्धा ॥ हस्तपादाद्यवयवानांपरस्परविलक्षणाकारादिस्वभावत्वदर्शनादवयविनश्चतेभ्योभिन्नाकारसंस्थानादिदर्शनात्तत्रभेदोवयवावयविभावश्चलोकेप्रसिद्धोनचात्यंततुल्यत्वेइतिभावः ॥ १ ॥

तातस्यकूपोयमितिब्रुवाणाःक्षारंजलंकापुरुषाःपिबंति॥ यथाभवंतोविविचारवंतस्तथानिशंमाभवताज्ञतास्पै॥५६॥ ॥इ०वा० महारामायणेवा०दे०मो०नि०उ०इंद्रियजयोपायशास्त्रवर्णनंनामत्रिषष्ट्युत्तरशततमःसर्गः॥१६३॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥जीवाणवोजगत्यंतश्चिदादित्यांशुमंडले॥ यत्रतेवयवास्तुल्यास्तेनानवयवात्मता ॥ १ ॥ सर्वंप्राप्यपरंबोधंवस्तुस्वंरूपमुज्झति॥ पुनस्तदेकवाक्यत्वान्नकिंचिद्वापरंभवेत् ॥ २ ॥ सर्वास्वेवास्ववस्थासुतत्त्वज्ञविषयंतुतत् ॥ परमेवामलंब्रह्मनान्यत्किंचित्कदाचन॥ ३ ॥ यच्चातत्त्वज्ञविषयंतज्ज्ञानातिसएवतत्॥ वयंतुविघ्नोनाहंत्वंनातत्त्वज्ञंनवस्तुतत्॥ ४ ॥ अयंसोहमयंचाज्ञःसत्योयमितिबुद्धयः॥ संभवंतिनतत्त्वज्ञेकमेरौमृगतृष्णिका॥५॥

नन्वेवंनक्षत्राणामपिनभसिसमानप्रकाशस्वभावदर्शनात्परस्पराभेदोनिरवयवत्वंचतेजसःकिनस्याद्भिन्नदेशत्वेनप्रकाशतारतम्येनचपरिहारस्तुजीवेष्वपितुल्यइत्याशंक्याह ॥ सर्वमिति ॥ ननक्षत्रभेदवज्जीवानांभेदःकिंतुघटकरकाद्याकाशभेदवदौपाधिकः ॥ तच्चभेदकमंतःकरणाद्युपाधिवस्तुसर्वपरमखंडाकारमपरोक्षमहंब्रह्मास्मीतिबोधंप्राप्यस्वमुपाधिरूपंस्वकृतंभेदरूपंचोज्झतिउत्सृजति ॥ अपगतेचोपाधिभेदेप्रतिज्ञासिद्धिरित्यर्थः ॥ अथवापूर्वंजीवानामविद्ययापरस्परविरुद्धधर्मतांप्रदर्श्यब्रह्मैकवाक्यताविच्छेदाद्भेदइवबंधइवानर्थइवाभूत् ॥ इदानींविद्ययाअविद्यांनिरस्यविरुद्धधर्मनिरासेनपुनर्ब्रह्मैकवाक्यतासंपादनादवयवावयविभावादिनाभेदकमपरंकिंभवेदित्यर्थः ॥ २ ॥ तर्हिकिमविद्यांतःकरणदेहभेदाद्यवस्थासुपूर्वंजीवाभिन्नाएवइदानींविद्ययाब्रह्मैक्यंप्रापितानेत्याह ॥ सर्वास्वेवेति ॥ तत्त्वज्ञविषयंतुयद्ब्रह्मतत्आसुसर्वास्वेवावस्थासुभेदादिमलशून्यमेकरसमेव ॥ नकदाचिदपिकिंचिद्वैतमलंतत्रास्तीत्यर्थः ॥ ३ ॥ कथंतर्हिपूर्वमहंत्वादिमलदर्शनंतत्राह ॥ यच्चेति ॥ तन्मलिनंवस्तुचनविद्मः ॥ ४ ॥ कुतोनविद्मस्तत्राह ॥ अयमिति ॥ पिपासितश्रांतदृशाहिमृगतृष्णाप्रसिद्धिः ॥ नचस्वर्गभूतेमेरौपिपासाश्रमादयःकस्यचित्संतीतितदप्रसिद्धिरितिभावः ॥ ५ ॥

यथास्थाणुरेवशुक्तिरेवेत्येकद्रव्यनिष्ठेएकरूपद्रव्यतत्त्वनिश्चयवतिपुरुषेअन्यास्तद्विरुद्धाःस्थाणुर्वापुरुषोवेतिसंशयसंविदइदंरजतमितिभ्रांतिसंविदश्चनभवंतितद्वत्परेतत्त्वेनिश्चितेअन्याभेदभ्रमसंविदोनतिष्ठंति ॥ ६ ॥ इत्थंजीवभावंविमृज्यतथैवजगद्भावमपिविमार्ष्टुमारभते ॥ इदमिति ॥ इत्थंमार्जनेजगद्ब्रह्मैवभूत्वावस्थितम् ॥ ७ ॥ एवंमार्जनेजगत्त्वेनगृहीतंचिन्नभःकाचकच्यंस्वात्मन्येवशुद्धब्रह्मभावेऽवतिष्ठते ॥ तत्रतस्यांदशायांजीवन्मुक्तैस्तदेवजगदितितज्ज्ञानेनैवचेत्यतेनजडंकिंचिदित्यर्थः ॥ ८ ॥ यथास्वप्नेषुमनोराज्यकल्पितपुरेषुचअमलंचिन्मात्रमेकंवर्जयित्वाअन्यन्नास्तितथासंप्रतिजाग्रदाख्येपिजगतिचिन्मात्रंविनानकिंचनाप्युपाधिस्वरूपमस्ति ॥ एवमुपाधिमार्जनेनारूपकेषुजीवेषुनचरूपांतरमस्तीतिचिदेकरस्यंसिद्धमित्यर्थः ॥ ९ ॥ सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयमितिश्रुतेर्यत्रसर्गात्पूर्वंनोकारणंपरिणाम्युपादानंनापिसहकारिनिमित्तकारणंचकिलास्तितस्माज्जगद्भवतीतीयमुक्तिःका ॥ अतःकिंचनेदंनोद्भवतियच्चोद्भूतमिवावभातितदनादिब्रह्मखमेवचित्स्वभावात्स्वयमेवतथावभातीतिसिद्धमित्यर्थः ॥ १० ॥ अमुमेवार्थं

## यथैकद्रव्यनिष्ठेहिचित्तेन्यद्रव्यसंविदः॥ नभवंतिपरेतद्वन्नान्यास्तिष्ठंतिसंविदः ॥ ६ ॥ इदंनासीन्नचोत्पन्नंनचास्तिनभविष्यति ॥ जगद्ब्रह्मैवसद्रूपमिदमित्थमवस्थितम्॥ ७॥ चिन्नभःकाचकच्यंचस्वात्मन्येवावतिष्ठते ॥ जगदित्येवतत्तत्रतज्ज्ञानेनैवचेत्यते॥ ८ ॥ स्वप्नेषुकल्पनपुरेषुयथान्यदस्तिचिन्मात्रमच्छगगनंननुवर्जयित्वा॥ नोकिंचनापिनचरूपमरूपकेपुरूपंतथाजगतिसंप्रतिजाग्रदाख्ये॥९॥ पूर्वंकिलोद्भवतिकिंचननामनेदंतच्चावभातितदनादिखमेवचित्त्वात्॥ नोकारणंनसहकारिकिलास्तियत्रतस्मात्स्वयंभवतिवस्त्वितिकेयमुक्तिः॥ १० ॥ तस्मात्स्वयंभवतिनेहहिकश्चिदादौब्रह्मादयोज्ञविदितानचनामसंति ॥ व्योमेदमाततमयंसइतःस्वयंभूरित्यादिचिद्गगनमेवचिताविभाति॥ ११॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०जगत्परमात्मनोरैक्ययोगोपदेशोनामचतुःषष्ट्युत्तरशततमःसर्गः॥ १६४॥ ॥ ५ ॥ ॥श्रीवसिष्ठउवाच॥ ॥जाग्रत्स्वप्नेस्वप्नएवजाग्रत्त्वमनुगच्छति॥ स्वप्नजाग्रतिजाग्रत्तुस्वप्नतामुपगच्छति ॥ १ ॥

दृढीकुर्वन्पुनःस्पष्टमाह ॥ तस्मादिति ॥ अज्ञैर्विदिताब्रह्मादयोव्यष्टिसमष्टिजीवतदुपाधयोनैवसंति ॥ किंतुसस्वयंभूरयंप्रपंचश्चइतोब्रह्मणःसकाशाद्व्योमशून्यमेवेदमाततंचिद्गगनमेवस्वचिनातथाविभातीतिसिद्धमित्यर्थः ॥ ११ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०चतुःषष्ट्युत्तरशततमःसर्गः ॥ १६४ ॥ ॥ ५ ॥ ॥ परस्परानुप्रवेशात्परस्परसमुद्भवात् ॥ चिन्मात्रत्वंदृढीकर्तुंजाग्रत्स्वप्नैक्यमीर्यते ॥ १ ॥ जाग्रत्स्वप्नसुषुप्तयःपरस्परानुप्रवेशेनप्रत्येकंत्रिविधाः ॥ जाग्रज्जाग्रत् जाग्रत्स्वप्नः जाग्रत्सुषुप्तिः स्वप्नजाग्रत् स्वप्नस्वप्नः स्वप्नसुषुप्तिः सुषुप्तिजाग्रत् सुषुप्तिस्वप्नः सुषुप्तिसुषुप्तिरिति ॥ एतेहिसुरेश्वरवार्त्तिकेप्रागुत्पत्तिप्रकरणेचोदाहरणभेदैरुपपादिताइहसिद्धवदुपादीयते ॥ तत्रजाग्रत्स्वप्नेमनोराज्येइंद्रियव्यापारनिरपेक्षत्वात्केवलमनोमयत्वाच्चार्थानांस्वप्नसाम्येनस्वप्नएवजाग्रत्त्वमुपगच्छति ॥ एवंस्वप्नेपिएतावत्कालमहंसुप्तइदानींजागर्मीतिप्रतीतिदर्शनात्प्रसिद्धेस्वप्नजाग्रतितुस्वानुभवसिद्धाजाग्रदेवस्वप्नत्वमुपगच्छतीत्यर्थः ॥ १ ॥

परस्परानुप्रवेशवदनयोःपरस्परनिमित्ततावास्तीत्याह ॥ स्वप्नइति ॥ स्वप्नरूपादेवजाग्रतःप्रबुद्धःसन्जाग्रद्रूपमेवस्वप्नंप्रविशत्यात्मेतिपरस्परनिमित्ततापिदृश्यतइत्यर्थः ॥ २ ॥ अनयोर्व्यपदेशसांकर्यमपिदृश्यतइत्याह ॥ जाग्रदिति ॥ स्वप्नस्वप्नोजाग्रज्जाग्रदित्युभयत्रवीप्सयाद्विर्वचनम् ॥३॥ तत्रस्वप्नेपिजाग्रत्इहजाग्रतीवअनुभवतोजाग्रदेवनतुस्वप्नः ॥ एवंजाग्रत्स्वप्नेमनोराज्येजाग्रत्स्वप्नएवानुभवतोनतुजाग्रदित्यर्थः ॥४॥ स्वप्नस्याल्पकालताजाग्रतोदीर्घकालताचपरस्परानुप्रवेशेविपरीतेत्याह ॥ लघुकालात्मकइति ॥ ५ ॥ एवंपरस्परसांकर्येयत्सिद्धंतदाह ॥ नेति ॥ द्वयोरप्यन्यत्रएकस्यावसरःपरस्परानुप्रवेशोयुक्त्यासन्मयोन ॥ ६ ॥ ननुस्वप्नःप्रबोधेप्रशाम्यति स्वाप्नार्थाश्चजागरेशून्याएवाव तिष्ठंते नैवंजाग्रत्प्रशाम्यति नाप्यर्थाअसंतोदृश्यंतइतिस्वप्नवैधर्म्यशंकांनिरस्यति ॥ मृतीति ॥ अयंजाग्रल्लक्षणोपिस्वप्नोमृतिकालेयःपरलोकप्रबोधआत्यंतिकाद्वैतमृतिलक्षण

स्वप्नोजाग्रत्प्रविशतिजाग्रत्स्वप्नात्प्रबुध्यते॥ जाग्रत्स्वप्नंप्रविशतिप्रबुद्धःस्वप्नजाग्रतः ॥ २ ॥ जाग्रत्स्वप्नवतास्वप्नःस्वप्नइत्यभिधीयते॥ स्वप्नजाग्रद्वताजाग्रज्जाग्रदित्यभिधीयते ॥ ३ ॥ तज्जाग्रज्जाग्रतीवेहनतुस्वप्नःकदाचन ॥ स्वप्नेस्वप्नोजाग्रदेवनतुजाग्रत्कदाचन॥ ४॥ लघुकालात्मकःस्वप्नःसर्वदैवहिजाग्रति॥ लघुकालात्मकंजाग्रत्स्वप्नकालेसदैवच ॥ ५॥ नजाग्रत्स्वप्नयोर्भेदःकश्चनास्तिकदाचन॥ एकस्यावसरोन्यत्रद्वयोरपिनसन्मयः॥ ६ ॥ मृतिप्रबोधसमयेजाग्रत्स्वप्नःप्रशाम्यति॥ स्वप्नानुभवबोधेचशून्यएवातिभास्वरः॥ ७॥ जीवतःस्वप्नसमयेमृतिबोधोदयंविना॥ परलोकात्मकंजाग्रत्किंचनापिनदृश्यते ॥ ८॥ स्थितंजीवितबोधेस्मिञ्छून्येनानामयात्मनि॥ परलोकात्मकःस्वप्नःकश्चनापिनदृश्यते॥ ९ ॥ चिच्चमत्कृतिमात्रात्मयथास्वप्नेजगत्त्रयम्॥ हृदिसर्गात्प्रभृत्येवतथैवाभातिजाग्रति॥ १०॥ सत्येवासत्यभूतानिस्फारापिपरमार्थतः ॥ नास्त्येवाकारवत्त्वेयंस्वप्नोर्व्यामिवजाग्रति॥ ११ ॥ नानात्मभासुरमपिस्वप्नेशून्यंयथाजगत्॥ तथैवजाग्रत्यखिलंव्योमैवेदंचिदात्मकम्॥ १२ ॥ चिद्व्योम्नोहिस्वभावोयंयदिदंजगदंबरे॥ कचतीत्यमिहस्फारमालोकइवतेजसः ॥ १३ ॥ चितेश्चमत्कृतिरियंजगन्नाम्नीचकास्त्यलम्॥ सहजागगनेकुड्येपरमाणौस्थलेजले॥ १४॥

स्तत्त्वप्रबोधश्चतत्समयेप्रशाम्यत्येव ॥ प्रत्यहंस्वप्नानुभवलक्षणेस्वाप्नार्थबोधकालेचकारात्सुषुप्तिकालेचशून्यएवावतिष्ठतइतिसाधर्म्यमेवनवैधर्म्यमित्यर्थः ॥ ७ ॥ नन्वद्यतन स्वाप्नार्थाःश्वस्तनस्वप्नेअसंतएव अद्यतनजाग्रदर्थास्तुश्वस्तनजाग्रत्यनुवर्तंतइतिवैधर्म्यमित्याशंकांजन्मभेदेष्वननुवृत्तिप्रदर्शनेनपरिहरति ॥ जीवतइति ॥ मृतिबोधोदयंविनाम रणोत्तरप्रबोधदृश्यानामभवात्परलोकात्मकंजाग्रत्किंचनापिनदृश्यते ॥८॥ एवंस्थितेअस्मिन्नद्यतनस्वप्नंजीवनादिसर्वस्वाप्नपदार्थशून्येभ्रांत्यैवनानामयात्मनिजीवामीतिजी वितबोधेसतिश्वस्तनःपूर्वेद्युस्तनश्चस्वप्नःपरलोकात्मकप्रायइतिकश्चनापितत्रत्यपदार्थोत्रानुवर्तमानोनदृश्यतइत्यर्थः ॥ ९ ॥ चिच्चमत्कारमात्रात्मत्वंचद्वयोरपितुल्यमित्याह ॥ चिदिति ॥ हृदिअंतःकरणे ॥ १० ॥ स्वप्नैक्येजाग्रतस्तत्रत्योर्व्यादीनांस्वाप्नार्थवन्निराकारत्वमसत्यत्वंचस्फुटमित्याह ॥ सत्येवेति ॥ ११ ॥ ततश्चिन्मात्रपरिशेषोपिसिद्धइ त्याह ॥ नानात्मेति ॥ १२ ॥ तेजसःसूर्यादेरालोकःप्रभेव ॥ १३ ॥ सहजास्वाभाविकी ॥ १४ ॥

एनांजगद्भ्रांतिप्रतिपद्दआग्रहःकः अनुचितएवेत्यर्थः ॥१५॥ ग्रहीत्रादित्रिपुटीजगद्रूपमाशून्यमसदेव ॥ स्वर्थेचः ॥ अधिष्ठानसत्तयासदस्तुअथवाअसदेवास्तुअत्रास्मिन्विष येपद्दएकतरपक्षव्यवस्थापनदुराग्रहःकिंप्रयोजनइत्यर्थः ॥ १६ ॥ अबोधादेकतरपक्षाभिमानसंभ्रमःस्यात् इदानींभवद्भिस्तत्त्वतोबुद्धमेवेतिअत्रैतदंतर्गतभोगलक्षणेएतत्सत्य ताप्रतिष्ठापनेनेतरजलक्षणेचफल्गुनिफलेकःफलत्वग्रहः अनुचितएवेत्यर्थः ॥ १७ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०पंचषष्ट्युत्तरशततमःसर्गः ॥१६५॥ ॥श्री॥ आत्मख्यातिविशेषोत्रतथाख्यात्यंतरस्थितिः ॥ ब्रह्मनीलशिलाख्यानंचोक्तंप्रश्नोत्तरान्वितम् ॥ १ ॥ चितेश्चमत्कृतिरियंजगन्नाम्नाचकास्त्यलमितियदुक्तंतत्रअख्यात्यसत्ख्या त्यन्यथाख्यात्यात्मख्यात्याख्यासुचतसृषुवादिभेदसंमतासुख्यातिषुकयाख्यात्यासविदुषांचकास्तीतिरामस्यजिज्ञासांमुनिर्लिंगरुपलक्ष्यतत्रविद्वद्दृशावादिभेदकल्पितानांचतसृ णामपिशशशृंगप्रायतेतिनिरस्यप्यन्विद्वत्संमतांपंचमीमलौकिकीमात्मख्यातिंव्युत्पादयितुमारभते ॥ सार्थकेनेत्यादिना ॥ सार्थकेनवाच्यार्थसहितेन ॥ तथाचाखंडार्थकपदद्व

भ्रांतावसत्यरूपायांस्थितायांसत्यवस्तुवत् ॥ आकाशमात्रदेहायांकइवैनांप्रतिग्रहः ॥ १५ ॥ ग्रहीतृग्रहणग्राह्यरूपमाशून्यमेवच ॥ सदस्त्वेवासदेवास्तुजगदत्रांगकिंग्रहः ॥ १६ ॥ इत्थमस्त्विदमथान्यथास्तुवामैवभूद्भवतुकोत्रसंभ्रमः ॥ कोत्रफल्गुनिफलेफलग्रहोबु द्धमेवतदलंविकल्पनैः ॥ १७ ॥ ॥ इ०वा०महारामायणेवा०दे०मो०नि०उ०जाग्रत्स्वप्नैक्योपदेशोनामपंचषष्ट्युत्तरशततमःसर्गः ॥ १६५ ॥ ॥ श्री ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ सार्थकेनात्मशब्देनख्यातिशब्देनचोज्झिताम् ॥ आत्मख्यातिमिमांविद्धिशिलाजठ रनिर्घनाम् ॥ १ ॥ आदिसर्गात्प्रभृत्येवचिद्व्योमैवेत्थमाततम् ॥ कचत्यात्मनियत्तस्यबुद्धातेनैवसर्गता ॥ २ ॥ नवहंतीहसरितोनेहोन्मज्ज नमज्जने ॥ व्योमव्योम्न्येवचिद्रूपंकचत्येवमनिंगितम् ॥ ३ ॥ कचनोक्त्यातुरहितांसमग्रेणास्तकल्पनाम् ॥ विनोत्तरपदार्थेनत्वात्मख्या तिमिमांविदुः ॥ ४ ॥ आत्मैवेदंजगत्सर्वंख्यातिर्यत्रनकिंचन ॥ आख्यातोनामनख्यात्याकदाचित्ख्यापितःक्वचित् ॥ ५ ॥

यत्लक्ष्यामित्यर्थः ॥ वक्ष्यमाणशिलाजठरमिवनिरंतरंघनाम् ॥ १ ॥ आत्मैवख्यातिरितिपदद्वयस्यसामानाधिकरण्येनान्वयेकआत्मासाचकिंविषयिणीख्यातिरितिजिज्ञासाया माह ॥ आदिसर्गादिति ॥ यद्यस्मात्तेनात्मनाआत्मन्येवसर्गताबुद्धास्वचैतन्यबलेनख्यापितातत्तस्मादयमात्मैवसर्गताविषयिणीख्यातिरित्यर्थः ॥ २ ॥ तत्रात्मशब्दव्याख्या नपरेचिद्व्योमशब्दे व्योमशब्दस्यप्रपंचशून्यैतवार्थः अतःप्रपंचस्तत्ख्यातिश्चात्मैवेत्येवकारार्थइतिदर्शयति ॥ नवहंतीत्यादिना ॥ कचतिख्यायते ॥ अनिंगितंनिष्क्रियम् ॥ ३ ॥ कचनोक्त्याकचनवाचकेनख्यातिशब्देन ॥ उत्तरपदंख्यातिशब्दस्तेनतदर्थेनचविनास्वप्रकाशमात्मानमेवस्वात्मकसर्गप्रख्यानात्मकत्वादात्मख्यातिविदुर्विद्वांसइत्यर्थः ॥ ४ ॥ एवंचिन्मात्ररूपेसर्गेवाद्यभिमतार्थानामख्यात्यादिशब्दानामसंगतिरित्याह ॥ आत्मैवेति ॥ यदाइदंजगत्सर्वमात्मैवसचस्वप्रकाशात्मैवसकदापिस्वातिरिक्तयाख्यात्यानख्यापि तइतिअख्यातइतिवाचोयुक्तिस्तत्रस्यात् ॥ नत्वख्यातिरितिभावार्थकक्तिन्नंतपदंतत्रघटयितुंशक्यमित्यर्थः ॥ ५ ॥

कुतोनशक्यंतत्राह ॥ ख्यातिरिति ॥ ख्याधातोर्हिप्रथाअर्थःप्रत्ययस्यभावःसचसत्ता ॥ तथाचख्यानात्मिकासत्ताख्यातिशब्दार्थः ॥ तथाविधश्चायमात्माख्यातिरेवेतिनननञ र्थेनसंबध्यतइत्यख्यातिरितिपराभिमतावाचोयुक्तिस्तत्रावास्तवीत्यर्थः ॥ अस्तुतर्हिहेतुमण्यंतादत्रक्तिन् ॥ तत्रापिणेरनिटीतिणिलोपेख्यातिरितिरूपसिद्धेस्तथाचनविद्यतेख्या तिःख्यापनंयत्रसाअख्यातिरितिव्युत्पत्त्यापराभिमतोर्थस्तत्रसेत्स्यतीत्याशंक्याह ॥ किंतत्रेति ॥ जडेहिसर्गेभ्युपगतेतत्रान्यकृतंख्यापनमख्यापनंचोपयुज्यते यदातुस्वप्रकाश आत्मैवसर्गस्तदादीपेदीपांतरेणेवतत्रख्यापनमख्यापनंचाकिनकिंचिदितिसर्वथापराभिमतंनघटतइत्यर्थः ॥ एतेनासत्ख्यात्यन्यथाख्यातीअपिवाद्यंतराभिमतेप्रत्याख्याते ॥ नञर्थवदसदन्यथाशब्दार्थयोरपिख्यातिपदार्थेनसहअन्वयायोग्यत्वादितिभावः ॥ ६ ॥ यदितुस्वप्नमनोराज्यादिदृश्यांतरतुल्याःकल्पनामात्ररूपाअख्यात्यादयश्चिच्चमत्कारा एवेत्यभ्युपगच्छथतर्हितथास्तुनकाचिन्नःक्षतिरित्याह ॥ अख्यातिरिति ॥ ७ ॥ चिदंशवःअग्निविस्फुलिंगवत्कल्पितचिद्भागाः ॥ ८ ॥ तथासतिभवदभिमतास्तेमदीयात्मख्या

ख्यातिरख्यातिरित्यत्रवाचोयुक्तिरवास्तवी ॥ किंतत्रख्यापनंनामस्याद्वाप्यख्यापनंचकिम् ॥ ६ ॥ अख्यातिरन्यथाख्यातिरसत्ख्याति रितीतरा ॥ दृश्याश्चिन्मात्ररूपस्यभासश्चित्त्वचमत्कृताः ॥ ७ ॥ यथायथायदायेयेचिन्मात्रव्योमभास्वतः ॥ चिदंशवःकचंत्यच्छास्तदा तेतेतथातथा ॥ ८ ॥ आत्मख्यातिरसत्ख्यातिरख्यातिःख्यातिरन्यथा ॥ इत्येताश्चिच्चमत्कृत्या आत्मख्यातेर्विभूतयः ॥ ९ ॥ आत्मख्याति पदस्यार्थआत्मख्यातिपदोज्झितः ॥ अनाद्यंतोनिरुल्लेखःसोयमेकघनःस्थितः ॥ १० ॥ तत्रेदंमहदाख्यानंशृणुश्रवणभूषणम् ॥ दूषणंद्वै तदृष्टीनांद्योतनंबोधभास्वतः ॥ ११ ॥ अस्तियोजनकोटीनांसहस्राणिप्रमाणतः ॥ आनीलकुड्यकठिनाविमलाविपुलाशिला ॥ १२ ॥ न संधिवंधानिविडावज्रसाराविसारिणी ॥ अत्यंतपुष्टकठिनजठराकाशनिर्मला ॥ १३ ॥ असंख्यकल्पनिचयमविनाशाघनांगिका ॥ कां तांगीनिर्मलत्वेनव्योमरूपैवलक्ष्यते ॥ १४ ॥ जातिस्तुज्ञायतेतस्याविशिष्टानैवकेनचित् ॥ कथंकुत्रकदाचेतिनविज्ञातासदैवसा ॥ १५ ॥ अंतस्तस्यास्तुहृदयेभूतधातुविवर्जिते ॥ निविडानंतकठिनावज्रसाराऽविनाशिनी ॥ १६ ॥ लेखामयानिविद्यंतेस्वांगभूतानिभूरिशः ॥ प द्मजालानिशंखाश्चगदाश्चक्रादयस्तथा ॥ १७ ॥

तेर्विभूतयएवेत्याह ॥ आत्मख्यातिरिति ॥ ९ ॥ वर्णितामात्मख्या तिमुपसंहरन्शिलाजठरनिर्घनामितिपदंशिलोपाख्यानेनव्याख्यातुमुपक्रमते ॥ आत्मख्यातिपदस्येति ॥ १० ॥ तत्रएकघनःस्थितइतिपदसूचितेशिलाजठरनिर्घनपदव्याख्या नेविषये ॥ ११ ॥ आसमंतान्नीलमाकाशमेवयद्किुड्यंस्यात्तद्विवकठिनाविमलाविपुलाच ॥ १२ ॥ नविद्यंतेसंधिबंधाअवयवसंश्लेषघटनायस्याम् ॥ नशब्दोयंनतुनञ् ॥ विसारिणीविस्तारवती ॥ १३ ॥ कल्पनिचयमितिकालाध्वनोरत्यंतसंयोगेद्वितीयाक्रोशंगिरिरितिवत् ॥ १४ ॥ सजातीयवस्त्वंतराप्रसिद्धेस्तस्याविशिष्टाविजातीयाद्व्यावृत्ता जातिःकेनचिन्नैवज्ञायते ॥ एवंतस्यादेशकालप्रकाराअप्यत्यंताऽप्रसिद्धाइत्याह ॥ कथमिति ॥ १५ ॥ भूतधातुभिर्महाभूतैश्चतुर्विधभूतग्रामैश्चविवर्जितेतस्याअंतर्जठरेले खामयानिस्फटिकशिलांतर्लेखाप्रायाणिपद्मजालादीनिविद्यंतइतिपरेणान्वयः ॥ १६ ॥ आदिपदात्खड्गखट्वांगादिपरिग्रहः ॥ १७ ॥

तत्रशिलाजठरेखंवायुरित्यादिजगन्नासीदेवकिंतुतथालक्ष्यमाणानांस्वलेखानामेवखंवायुरित्याद्यभिधातयाशिलयाकृता ॥ स्वस्याश्चतयाजीवइत्येवाभिधादेहलेखासुकृते त्यर्थः ॥ १८ ॥ नन्वसौशिलाशिलात्वादेवअचेतना ॥ नामेतिलोकप्रसिद्धौ ॥ तस्याश्चचेतनंसंज्ञानंकुतः ॥ यद्यचेतनैवसातर्हिसास्वलेखानांखंवायुरित्यादिनामकथंकरोति ॥ नामकरणस्यचेतनकर्तृकत्वप्रसिद्धेरितिरामःशंकते ॥ शिलेति ॥ १९ ॥ जातिस्तुज्ञायतेतस्याविशिष्टानैवकेनचिदितिप्राक्तनोक्त्यैवायंप्रश्नोदत्तोत्तरइतिवसिष्ठःसमाधत्ते ॥ नेत्यादिना ॥ अन्यश्चकोविद्यतेयस्तज्जातिजानीयादित्यर्थः ॥ २० ॥ यदितत्रान्योनविद्यतेतर्हिताःखंवायुरित्याद्याकारास्त्वदुक्तास्तज्जठरस्थितालेखाःकःपश्यति केनवासांतर्वि

खंवायुःसलिलंतेजोवसुधेत्यभिधाकृता ॥ नासीत्तत्रस्वलेखानांजीवइत्येववैतया ॥ १८ ॥ ॥ श्रीरामउवाच ॥ ॥ शिलासौचेतनंतस्याः कुतइत्युच्यतांमम ॥ अचेतनाशिलानामकथंनामकरोतिच ॥ १९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ नचेतनानचजडासाशिलाविपुलोज्वला ॥ जातिंजानातिकस्तस्याःकस्तत्रान्यश्चविद्यते ॥ २० ॥ ॥ श्रीरामउवाच ॥ ॥ तस्याःपश्यतितालेखाःकःकथंजठरस्थिताः ॥ कथंवाकेनसाभग्नाकदानामेतिमेवद ॥ २१ ॥ श्रीवसिष्ठउवाच ॥ ॥ नभेत्तुंयुज्यतेसोग्रानचभेत्ताचविद्यते ॥ तथैवापारपर्यंतदेहिन्यासर्वमावृतम् ॥ २२ ॥ लेखामयानिविद्यंतेतत्रानंतानिकोटरे ॥ वृक्षपर्वतजालानिनगराणिपुराणिच ॥ २३ ॥ तत्रलेखामयाःसंतिदेवदानवनामकाः ॥ सूक्ष्मासूक्ष्मानिराकाराःसाकाराइवपुत्रिकाः ॥ २४ ॥ आकाशनाम्नीतत्रास्तिलेखावैपुल्यशालिनी ॥ उपलेखाश्चसंत्यस्यामध्ये चंद्रार्कनामिकाः ॥ २५ ॥ ॥ श्रीरामउवाच ॥ ॥ केनदृष्टावदब्रह्मँल्लेखास्तास्तत्रकिंविधाः ॥ कथंवावदद्रक्ष्यंतेनिर्पिंडोपलकोशगाः ॥ २६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ मयाराघवतादृष्टास्तादृश्यस्तत्रलेखिकाः ॥ तवापीच्छायदिभवेत्तत्तास्त्वमपिपश्यसि ॥ २७ ॥ ॥ श्रीरामउवाच ॥ तादृशीवज्रसारासाशिलाभंक्तुंनयुज्यते ॥ तथापिभवतादृष्टालेखास्तत्कोशगाःकथम् ॥ २८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एतस्याजठरे रामलेखाहंजठरेस्थितः ॥ तेनपश्यामितत्रस्थोलेखाजालंतदक्षतम् ॥ २९ ॥ कोसौशक्तोन्यथाभंक्तुंतांशिलामहमंतरे ॥ तत्सर्वंदृष्टवांस्तस्याअहंतत्रांतरस्थितः ॥ ३० ॥

चिचरेखाकारेणभग्नाटंकैर्लिखिता ॥ अंतष्टंकप्रवेशाद्ययोगात्कथंवाभग्ना ॥ कदानामभग्नेतिवदेतिरामप्रश्नःस्पष्टः ॥ २१ ॥ पृष्टानामपक्षवेनैवोत्तरमाह ॥ नेत्यादिना ॥ उपाअतिदृढा ॥ आवृतंव्याप्तम् ॥ नेनेनकिंचनानावृतंनेनेनेनकिंचनासंवृतमितिश्रुतेरितिभावः ॥ २२ ॥ २३ ॥ सूक्ष्माअसूक्ष्माश्चपुत्रिकाःप्रतिमाः ॥ २४ ॥ २५ ॥ नितरांपिंडोनिर्पिंडःअतिघनोयउपलकोशस्तद्गताः ॥ २६ ॥ पश्यसिसमाधिनाद्रक्ष्यसि ॥ २७॥२८॥ अहंवसिष्ठदेहोपिएतस्याजठरेस्थितोरेखैवतेनहेतुना ॥ २९ ॥ तस्याअंतरवस्थितोऽहमंतरेविद्यमानंतत्सर्वलेखावृंदंदृष्टवान् ॥ ३० ॥

इदानींतत्त्वतस्तांशिलांवसिष्ठंचरामोजिज्ञासुःपृच्छति ॥ कासाविति ॥ एतत्शिलाख्यांकिंवदसि ॥ ३१ ॥ अनयाशिलाख्यानवचोभंग्या ॥ ३२ ॥ तच्छिलायामांसमिवमांसं स्वरूपभूताएवेतियावत् ॥ इमेवयम ॥ ३३ ॥ सर्वंजगत्तच्छिलांगमेवेतिप्रपंचयति ॥ तच्छिलांगमिति ॥ सदागतिर्वायुः ॥ पंचभूतोपलक्षणमेतत् ॥ एवंक्रियाशब्दग्रहणमपिवा य्वाकाशादिसर्वभूतभौतिकधर्मोपलक्षणम् ॥ वासनामनोधर्मोपलक्षणम् ॥ ३४ ॥ उक्तमेवपुनःस्पष्टमाह ॥ भूमिरिति ॥ ३५ ॥ अन्येइतिनुभांत्याविग्रहे ॥ ३६ ॥ एतस्या व्यतिरेकेणांकिंचिदस्तिचेत्तत्कास्तितच्चकिमस्तितदुभयमुच्यताम् ॥ ३७ ॥ ननुभूतलघटावटपटादिकमेवतद्यतिरिक्तंप्रसिद्धंनेत्याह ॥ शुद्धमिति ॥ नैतत्किमपितद्यतिरेकेणास्ती

॥ श्रीरामउवाच ॥ ॥ कासौशिलाथकश्चत्वंवदमेक्कासिसंस्थितः ॥ किमेतद्वदसिब्रूहिकिमेतद्दृष्टवानसि ॥ ३१ ॥ ॥ श्रीवसिष्ठउवाच ॥ परमात्ममहासत्ताकथितैषामयातव ॥ अनयैववचोभंग्यानत्वेषाविपुलाशिला ॥ ३२ ॥ परमात्ममहासत्ताशिलायाजठरेवयम् ॥ तच्छिलामांसमेवेमेसौपिर्यपरिवर्जिते ॥ ३३ ॥ तच्छिलांगंनभोविद्धितच्छिलांगंसदागतिः ॥ तच्छिलांगंक्रियाशब्दावासनाकालकल्पना ॥ ३४ ॥ भूमिरापोनलोवायुःखंमनोबुद्धिरेवच ॥ अहंकारइतीदंतत्तच्छिलांगमुदाहृतम् ॥ ३५ ॥ परमात्ममहासत्ताशिलामांसमिमेव यम् ॥ सर्वएवततोनन्येप्यन्येत्वितिचविग्रहे ॥ ३६ ॥ चिन्मात्रैकात्मिकायेयंकिलातिमहतीशिला ॥ एतस्याव्यतिरेकेणक्कतदस्तिकिमुच्यताम् ॥ ३७ ॥ शुद्धंवेदनमेवेदंघटावटपटादिकम् ॥ यथास्वप्नेतथाभातिजलमूर्मितयायथा ॥ ३८ ॥ इदंब्रह्मघनंसर्वंचिन्मात्रघनमाततम् ॥ परमार्थघनंशांतंसर्वमेकघनंविदुः ॥ ३९ ॥ एकंमहाचितिशिलोदरमेवसर्वंसौपिर्यवर्जितमपारमनादिमध्यम् ॥ तेनात्मनैवक लिताकलनात्मनेयंसर्गोजगद्भुवनमित्यपिदृश्यनाम्नी ॥ ४० ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० शिलोपाख्यानंनाम षट्पष्ट्युत्तरशततमःसर्गः ॥ १६६ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ आत्मख्यातिरसत्ख्यातिःख्यातिरख्यातिरन्यथा ॥ शब्दार्थदृष्टयस्तज्ज्ञंप्रत्येताःशशशृंगवत् ॥ १ ॥ कदाचनापिनामांगसंभवंतिनकाश्चन ॥ शांतमव्यपदेश्यात्माज्ञआस्तेस्तंगतेंगनः ॥ २ ॥ एताउ घंतिचिन्मात्रादात्मख्यात्यादिकादृशः ॥ तच्चशुद्धतरंव्योमतन्मय्येवचदृश्यते ॥ ३ ॥

त्यर्थः ॥ ३८ ॥ ३९ ॥ सर्वंजगदेकंब्रह्मशिलोदरमेव ॥ तच्चसौपिर्येणच्छिद्रभावेनवर्जितमपारमनंतंतथाअनादिमध्यंच ॥ तेनतथाविधेनब्रह्मात्मनाआत्मनास्वेनैवसर्गोजगद्भुव नमित्यपिपर्यायनामभिःप्रसिद्धादृश्यनाम्नीकलनाकलितास्वीकृतेत्यर्थः ॥ ४० ॥ ॥ इतिश्रीवासि० ता० प्र० निर्वा० उत्तरार्द्धेषट्पष्ट्युत्तरशततमःसर्गः ॥ १६६ ॥ ॥ ७ ॥ इहतज्ज्ञदृशोदस्यवादिख्यातिचतुष्टयम् ॥ अवस्थात्रयनिर्मुक्तमात्मतत्त्वंनिरूप्यते ॥ १ ॥ अन्यथाख्यातिरितिव्यवहितपूर्वपदेनसंबंधः ॥ १ ॥ जगत्ख्यातिसत्वेहिसाकिमात्म ख्यातिरुतासत्ख्यातिरित्यादिविकल्पानामवसरःस्यात्सैवनास्तिचेत्कस्याश्चातुर्विध्यमित्याशयेनाह ॥ कदाचनेति ॥ अस्तंगतेंगनःख्यात्यादिकल्पनामूलचित्तचेष्टाशून्यः ॥ २ ॥ दृशोभ्रांतिदृष्टयः ॥ तच्चचिन्मात्रंपरमार्थतःशुद्धतरंसर्वकल्पनाशून्यंव्योम ॥ सर्वापिकल्पनातन्मय्येवदृश्यतेमया ॥ तद्यदिदंमयोदोमयःसर्वमयइतिश्रुतेरित्यर्थः ॥ ३ ॥

शब्दंत्यक्त्वेति ॥ अतएवास्माभिःसार्थकेनात्मशब्देनख्यातिशब्देनचोज्झितामित्युक्तमितिभावः ॥ अर्थभाक्परमार्थभाक् ॥४॥ गच्छंस्तिष्ठन्निति च्छांदसोलिंगव्यत्ययः ॥ अतोऽस्मादर्थदर्शनाद्गच्छत्तिष्ठत्अदद्भक्षयदपिजगद्प्रवृत्तिमत्सर्वंप्रवृत्तिशून्यंभातीत्यर्थः ॥५॥ इदमेवविशदयति ॥ नानेत्यादिना ॥६॥७॥८॥ आकाशमात्रमतिशून्यम् ॥ ९ ॥ ॥१०॥ यद्यविद्यमानमेवजाग्रत्स्वप्नात्मकंजगद्वासनामात्राद्दृश्यतेतर्हिस्मृत्यैवदृश्यतांइतिमन्ये ॥ इहजगत्प्रतिभानेस्मृतिरेवकारणंनभ्रांतिः ॥ यतःसाअधिष्ठानदोषसादृश्यसंप्रयो

अयमात्माखियंख्यातिरित्यंतःकलनाभ्रमः ॥ नसंभवत्यतश्चैनंशब्दंत्यक्त्वाभवार्थभाक् ॥ ४ ॥ गच्छंस्तिष्ठन्नददपिसर्वंशांतमतोजगत् ॥ आकाशमौनमेवाच्छमच्छिन्नंवाप्रवृत्तिमत् ॥ ५ ॥ नानामहाशब्दमपिशिलामौनमवस्थितम् ॥ अनारतंगच्छदपिव्योमवच्छैलवत्स्थितम् ॥ ६ ॥ नानाविधारंभमपिमहाशून्यमनंकितम् ॥ पंचभूतात्मकमपिखमिवालब्धपंचकम् ॥ ७ ॥ पदार्थसंकुलमपिशून्यंसंवित्तिमात्रकम् ॥ स्वप्नेमहापुरमिवदृष्टमप्यच्छचिन्मयम् ॥ ८ ॥ सारंभमप्यनारंभंसंकल्पनगरंयथा ॥ आकाशमात्रंभ्रांत्यात्मस्वप्नस्त्रीसंगमोपमम् ॥ ९ ॥ अनुभूतमपिव्यर्थंप्रतिबिंबांगनासमम् ॥ नानानुभवनिर्माणंवस्तुशून्यंतुवस्तुतः ॥ १० ॥ ॥ श्रीरामउवाच ॥ ॥ जाग्रत्स्वप्नात्मकमिदंमन्येस्मृत्यैवदृश्यते ॥ सद्रूपवात्यार्थकृतास्मृतिरेवेहकारणम् ॥ ११ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यत्तच्चित्काचकच्येन काकतालीयवद्वपुः ॥ व्योमात्माभातिभावानांसत्तामात्रमभित्तिमत् ॥ १२ ॥ तदेतदविनाशात्मसर्वत्रपरमात्मनि ॥ सर्वदाविद्यतेशांतेपयसीवतरंगकाः ॥ १३ ॥ निर्निमित्तंस्वरूपात्मतदेतत्परमात्मनि ॥ सर्वात्मन्यपिनिर्वाणेव्योमात्मनिनिरात्मनि ॥ १४ ॥ यदायदावभात्यंतर्येनतेनयथातथा ॥ सर्वदानकदाचिद्वायत्रतत्रनकिंचन ॥ १५ ॥ तस्यैवब्रह्मभानस्यतेनैवब्रह्मणात्मना ॥ स्वच्छस्यैवस्वभावस्यस्वस्वभावमनुज्झता ॥ १६ ॥ इदंजाग्रदयंस्वप्नःसुषुप्तंतुर्यमित्यपि ॥ कृतंनामस्वयंचित्त्वाद्ब्रह्मवात्मेतिचात्मनि ॥ १७ ॥ वस्तुतस्त्वस्तिनस्वप्नोनजाग्रन्नसुषुप्तता ॥ नतुर्यंनततोतीतंसर्वंशांतंपरंनभः ॥ १८ ॥

गादिनिमित्तशून्यासद्रूपवात्या अविद्यमानायेअर्थास्तत्कृतातन्मात्रगोचरेतिरामप्रश्नार्थः ॥ ११ ॥ अविद्यानिद्रादिदोषजत्वात्स्वप्रकाशचितिसंप्रयोगानुपपत्तेश्चतदधिष्ठानाभ्रांतिरेवेयंनस्मृतिः ॥ पूर्वपूर्वानुभवेष्वपिसांप्रतिकतुल्यतयास्मृतित्वापत्त्यातन्मूलानुभवाप्रसिद्धिप्रसंगादित्याशयेनवसिष्ठःसमाधत्ते ॥ यत्तदित्यादिना ॥ तत्राधिष्ठानसद्भावंदर्शयति ॥ यत्तदिति ॥ यत्तद्व्योमात्मसत्तामात्रंकाचकच्येनाभातितदेवेदंजगदित्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ आविद्यकेनियतदोषाद्यपेक्षानास्ति अनियतदोषास्तुसंभवंत्येवेत्याशयेनयेनतेनेत्याद्युक्तिः ॥ १५ ॥ तर्हिकस्येयंभ्रांतिःकेनजगदादिनामानिकृतानितत्राह ॥ तस्यैवेतिद्वाभ्याम् ॥ १६ ॥ १७ ॥ ततःअतीतमतिरिक्तम् ॥ १८ ॥

चितः कदापिलोपाभावात्सर्वदैवजाग्रद्रूपम् ॥ भ्रांतिमात्रत्वात्सर्वदैवस्वप्नोवा ॥ अविद्यावरणमात्रत्वात्सर्वदैवसुषुप्तम् ॥ १९ ॥ स्वेनैवसर्वदैवत्र्यवस्थात्रयातिक्रमणात्सर्वदैवतुर्यमित्येववावक्तुंशक्यमित्यर्थः ॥ त्रयाप्रसिद्धेस्तस्यतुर्यत्वस्यांतःअसत्वंवा ॥ निर्विकल्पेतदिदंवेत्यादिविकल्पंचनविद्मः ॥ २० ॥ २१ ॥ कल्पनावेदनदृशातुयेनयथायदासंवेद्यतेतस्यतदातथैत्येवसंतोष्टव्यमित्याह ॥ यथेति ॥ २२ ॥ २३ ॥ यतःसंविदेवजगदतोनास्तमेतिनोदेतिच ॥ २४ ॥ महाप्रलयसर्गाद्याःकालविभागास्तत्रमहाप्रलयलक्षणाराात्रयः

अथवासर्वमेवेदंजाग्रद्रूपंसदैवच ॥ सर्वदैवचवास्वप्नःसुषुप्तंसर्वदैवच ॥ १९ ॥ सर्वदैवचवातुर्यंतदंतःसर्वदैववा ॥ तदिदंवानयद्विप्रोवयमाशांतरूपिणः ॥ २० ॥ इदंफेनोनकिंचिद्वावुद्बुदोवानकश्चन ॥ शून्यतांभसिचिद्व्योममहार्णवमहोदरे ॥ २१ ॥ यथासंवेद्यतेयद्यत्तथातदनुभूयते ॥ सद्वासद्वाभवत्स्वप्नेव्योम्नीवसदसच्चतत् ॥ २२ ॥ संवित्कचनमेवेदंयथाभानंविभासते ॥ व्योमव्योमनिचिद्रूपंचिद्रूपेविततात्मनि ॥ २३ ॥ संविच्चचिन्नभोमज्ञासैवंरूपैवसर्वदा ॥ नास्तमेतिनचोदेतितस्याःस्वांगमिदंजगत् ॥ २४ ॥ महाप्रलयसर्गाद्यामहाप्रलयरात्रयः ॥ तस्याएवावयवतांयाताःकेशनखादिवत् ॥ २५ ॥ तस्याभानमभानंतद्भास्वरंजिह्ममेववा ॥ नान्यत्स्वभाववत्स्पंदइववायोर्महाचितेः ॥ २६ ॥ तस्मात्किंनामजाग्रत्स्यात्कःस्वप्नःकासुषुप्तता ॥ किंतुर्यकास्मृतिःकेच्छातुच्छाएताःकुदृष्टयः ॥ २७ ॥ अंतःसंवेदनंभातिस्वंबाह्यार्थतयायतः ॥ क्वद्वैतंक्वचवार्थश्रीःस्मृतिरेवमतःकुतः ॥ २८ ॥ तदिदंभातिनिर्भित्तितत्स्वभानंयदात्मना ॥ भानोर्नभसिभारूपमेवभूतविवर्जितम् ॥ २९ ॥ सद्रूपोयदिबाह्योर्थोविद्यतेतत्तदुत्थिता ॥ स्मृतिःकारणतामेतुनामाद्यजगतःस्थितेः ॥ ३० ॥ किंतुनास्वंपबाह्योर्थोभूतानामत्यसंभवात् ॥ पंचानामादिसर्गादौकारणानामभावतः ॥ ३१ ॥ शशशृंगंयथानास्तियथानास्तिखपादपः ॥ यथावंध्यासुतोनास्तियथानास्त्यसितःशशी ॥ ३२ ॥ तथाज्ञप्रतिभातोर्थोजगदाद्यहमादिकः ॥ अप्रेक्षितोस्तिनास्त्येवप्रेक्षितःसन्नकश्चन ॥ ३३ ॥ यथास्तीदंमहाकारंनकिंचिद्रूपमेववा ॥ तत्त्वज्ञविपर्यंरामतथास्तीदमखंडितम् ॥ ३४ ॥

सर्गलक्षणदिनानिचेत्युपलक्षणीयम् ॥ २५ ॥ भास्वरंचिद्रूपंजिह्मंमायारूपंवा ॥ २६ ॥ उपसंहरति ॥ तस्मादिति ॥ २७ ॥ एवंसतिस्मृतिश्चकुतः ॥ २८ ॥ निर्भित्तिनिर्भेदंयदात्मनाभातितत्स्वभानंस्वात्मकमेवभानंनत्वभिन्नम् ॥ यथाभानोर्नभसिनिराश्रयेभारूपमेवभानंनभास्यसापेक्षंनद्वदित्यर्थः ॥ २९ ॥ तदुत्थितातदनुभवहेतुकाएतुनाम ॥ आद्यायाःसर्गादिकालिक्याजगतःस्थितेः ॥ ३० ॥ ३१ ॥ ३२ ॥ जगदादौसर्गादिकालेअज्ञानप्रतिभातोऽहमादिकोर्थस्तत्त्वतोऽप्रेक्षितश्चेदस्तिप्रेक्षितस्तुनास्ति ॥ ३३ ॥ तत्त्वज्ञविपर्यंनकिंचिद्रूपंमूर्तामूर्तरूपरहितंचिन्मात्रैकघनंत्वखंडितमस्त्येवेत्यर्थः ॥ ३४ ॥

नित्योदितापिव्यवहारेउपचारेणकल्पितास्तमयोदया ॥ ३५ ॥ व्योम्न्येवाज्ञोमुधापृथ्व्यादितयायदायदावेत्तितदातदापृथ्व्यादिकल्पनांधत्ते ॥ ३६ ॥ महाचितिःस्वभाममेव पृथ्व्यादिव्यपदेशेनपृथ्व्यादिनाम्नापश्चाद्व्यपदिशतिव्यवहरति ॥ ३७ ॥ अव्ययंचिन्मात्रमाकाशकल्पेस्वात्मन्येवपृथ्वीयमितिस्वसंविदंधत्ते ॥ ३८ ॥ चिन्मात्रमेवचेत्तस्यज गदाकारंभानंकिंअभानंवाकिंस्यादितितुतन्नविकल्प्यते ॥ नविकल्पनीयम यतस्तस्याणशक्त्यास्पंदस्वभावंचिच्छक्त्याअस्पंदस्वभावमितिविद्धि ॥ ३९ ॥ यथायथावासनो द्भवेनभातिस्फुरतितथातथाइदंजगदित्यवभासते ॥ ४० ॥ तद्यथाभातितथातद्भानुनाम ॥ भानमपितच्चिदाकाशरूपत्वादलंनसन्नाप्यसदिति ॥ तत्प्रपंचरूपंकिंचिदपिनकिंतु किंचनानिर्वचनीयमेवेत्यर्थः ॥ ४१ ॥ ४२ ॥ यतःसप्राज्ञएवसर्वैपांहृदयाकाशेआत्मतयाआस्तेअतस्तद्रूपयैवकचंत्यादृश्यसंविदाइदमांतरंशरीरमिदंबाह्यंब्रह्मांडमित्यादिभे

संविद्घननभोमज्ञायथोदेतियदायदा ॥ नित्योदितोपचारेणकल्पितास्तमयोदया ॥ ३५ ॥ मुधाव्योम्न्येवपृथ्व्यादितयावेत्तितदातदा ॥ स्वस्यैवतस्यभानस्यधत्तेपृथ्व्यादिकल्पनाम् ॥ ३६ ॥ स्वमेवभानमाकाशमात्रमेवमहाचितिः ॥ पृथ्व्यादिव्यपदेशेनपश्चाद्व्यपदिशत्यजा ॥ ३७ ॥ आकाशएवपृथ्वीयमितिधत्तेस्वसंविदम् ॥ मनोराज्यपुरंवालइवचिन्मात्रमव्ययम् ॥ ३८ ॥ किंभानंकिमभानंस्यात्तस्येतिन विकल्प्यते ॥ स्पंदास्पंदस्वभावंतद्विद्धिवातमिवांवरे ॥ ३९ ॥ यथाभातिचिदाकाशंतथेदमवभासते ॥ व्योमव्योम्न्येवनीरूपंनेदंपृथ्व्या दिसत्क्वचित् ॥ ४० ॥ यथाभातिचिदाकाशरूपत्वाद्भातमप्यलम् ॥ नसन्नासदितिकिंचित्तन्नकिंचिन्नकिंचन ॥ ४१ ॥ इदमित्थमनि त्थंचसद्वाऽसद्वायथास्थितम् ॥ लोकपर्यायवृत्तांतंप्राज्ञोजानातिनेतरः ॥ ४२ ॥ सएवहृदयाकाशेकचंत्यादृश्यसंविदा ॥ बाह्यंब्रह्मांड मित्यादिकृतंनाममहाचिता ॥ ४३ ॥ किमत्रबाह्यंकिंवांतःकिंदृश्यंकास्यदृश्यता ॥ शिवंशांतमशांतंचसर्वमोमितिशाम्यताम् ॥ ४४ ॥ नो वाच्यवाचकदृशारहितोविचारःसंपद्यतेसचविकल्पमयेनसिद्धौ ॥ सिद्धिश्चसंभवतितेनविनानकाचिद्दीपंविनानिशियथानयनोपलं भः ॥ ४५ ॥ तस्मादपास्यपरयामलयाधियांतःसंकल्पकल्पनमनल्पविकल्पजालम् ॥ कृत्वामनःसकलशास्त्रमहार्थनिष्ठमुड्डीयगच्छपद मुत्तममेकनिष्ठः ॥ ४६ ॥ ॥इ० वा० वा० दे० मो० नि० उ० जाग्रत्स्वप्नसुषुप्त्यभावप्रतिपादनंनामसप्तषष्ट्युत्तरशततमः सर्गः ॥ १६७ ॥

दकल्पनयानामकृतमित्यर्थः ॥ ४३ ॥ सर्वंओमितिप्रणवमात्राऽभेदकल्पनयाप्रविलाप्यशाम्यताम् ॥ मामेतिपाठेमामाइतिनिषेधवीप्सयानिरस्येत्यर्थः ॥ ४४ ॥ यावद्विचारं त्वसदपिवाच्यवाचकविकल्पंयथालोकमभ्युपगम्यैवश्रवणादिविधयःप्रवर्त्तंतइत्याशयेनाह ॥ नोइति ॥ वाच्यवाचकदृशारहितःशास्त्रार्थविचारोनोसंपद्यते ॥ सचविचारोवि कल्पमयेन विषयोविशयश्चैवपूर्वपक्षस्तथोत्तरम् प्रयोजनंचपंचांगंशास्त्रेधिकरणंविदुरितिप्रसिद्धेनपंचांगेनकृतःसिद्धौभवति ॥ तेनविचारेणविनासिद्धिर्नसंभवत्येव ॥ यथादी पंविनाचाक्षुषप्रत्यक्षंनिशिनभवतितद्वदित्यर्थः ॥ ४५ ॥ तस्मात्सम्यग्विचारामलयाधियाअंतःसंकल्पनलक्षणमनल्पविकल्पजालमपास्यमनःसकलशास्त्रनिष्कर्षसिद्धमहा र्थःसच्चिदानंदाद्वयात्मातन्निष्ठंकृत्वातदेकनिष्ठःसन्नस्मात्संसारादुड्डीयोत्तमंमोक्षाख्यंपदंगच्छेत्यर्थः ॥ ४६ ॥ ॥इतिश्रीवा० तात्पर्यप्र० नि० उ० सप्तषष्ट्युत्तरशततमः सर्गः ॥ १६७ ॥

अबुद्धिपूर्वकःसर्गस्याध्यारोपोत्रवर्ण्यते ॥ चिन्मात्रात्मा चसचितोऽविकारित्वादपोद्यते ॥१॥ मिथ्यात्वसिद्धयेसर्गस्याबुद्धिपूर्वकत्वंदृष्टांतैःसमर्थयति ॥ अबुद्धिपूर्वमित्यादिना॥ अगोवृक्षोयथाअबुद्धिपूर्वंअहंशाखावैचित्र्यंकरोमीतिबुद्धिपूर्वकतांविना ॥ अजोजन्मादिविक्रियाशून्यःपरमात्माखेआकाशकल्पेस्वात्मनिखंशून्यात्मिकाश्चित्राविचित्राः सर्गाभासःप्रपंचाध्यासान्करोति ॥ ननुसऐक्षतलोकान्नुसृजाइतिसोकामयतबहुस्यांप्रजायेयेति ॥ स.पे.तप्यत सतपस्तप्त्वा इदंसर्वमसृजत तपसाचीयतेब्रह्मततोन्नमुपजाय तइत्यादिश्रुतिषुबुद्धिपूर्वकएवसर्गउद्धोष्यतेतत्कथमत्राबुद्धिपूर्वकःसर्गइतिप्रत्यक्षश्रुतिविरुद्धमुच्यतइतिचेत्शृणु ॥ भवेदेतदेवंयदिश्रुतेःसर्गादिप्रतिपादनेतात्पर्यंस्यात्॥नतुतदस्ति॥ प्रयोजनाभावात् ॥ नहिसर्गादिज्ञानेर्नाकिंचित्प्रयोजनंश्रुतम् ॥ अद्वितीयब्रह्मात्मताज्ञानंहिप्रयोजनवदुपक्रांतंसर्वश्रुतिषु ॥ तस्यफलवतःसन्निधौश्रुतमफलंसर्गादिकैमर्थक्या कांक्षायांतदंगतांप्रतिपद्यते ॥ साचास्यशांडिल्यविद्यांगशमविधिपरेसर्वंखल्विदंब्रह्मतज्जलानितिशांतउपासीतेतिवाक्येयतइदंसर्वंजगत्तस्माज्जायतइतितज्जम् तस्मिन्लीयत इतितल्लम् तेनानितिप्राणितिजीवतीतितदन् उत्पत्तिस्थितिप्रलयेषुतदधीनसत्ताकमतःसर्वंखल्विदंतद्ब्रह्मैवेतिब्रह्माद्वैतव्युत्पादनोपायतयासर्गादिज्ञानांगभावस्यश्रुत्यैवसिद्धवत्की र्त्तनात्प्रकारांतरेणतद्घटनायोगात्तदनन्यत्वमारंभणशब्दादिभ्यइत्यादिसूत्रभाष्यादिव्युत्पादितयुक्तिसहस्रेभ्यःस्मृतिपुराणाद्युपबृंहणसहस्रेभ्यश्चाध्यारोपापवादाभ्यांनिष्प्रपंचब्र ह्मात्मतत्त्वव्युत्पादनेसर्गश्रुतीनांतात्पर्यैनिश्चितेरज्जुसर्पशुक्तिरजतमरुमरीचिकास्वमाद्यध्यारोपेष्वबुद्धिपूर्वकत्वमेवदृष्टंनक्वचिदारोपेबुद्धिपूर्वकतालोकेदृश्यतइतिभगवतावसिष्ठ

श्रीवसिष्ठउवाच॥ ॥अबुद्धिपूर्वमेवागोयथाशाखाविचित्रताम् ॥ करोत्येवमजश्चित्राःसर्गाभासःखएवखम् ॥ १ ॥ यथाकरोत्यबुद्ध्यादिरावर्त्तादिपयोनिधिः ॥ तथाकरोतिखेखात्मासर्वेशःसर्ववेदनाः ॥२ ॥ तासांस्वसंविदामेवततःसकुरुतेस्वयम् ॥ मनोबुद्धिरहंकार इत्याद्याविविधाभिधाः ॥ ३ ॥ अबुद्धिपूर्वमारंभोदृश्यरूपःस्वतश्चितेः ॥ संकल्प्यमानोबुद्ध्यादिस्तरंगादिर्यथांबुधेः ॥ ४ ॥ चिन्मात्रात्संप्रवर्त्ततेमनोबुद्ध्यादयस्तथा ॥ आवर्त्तकणकल्लोलवीचयोवारिधेर्यथा ॥ ५ ॥ भित्तिमात्रंयथाचित्तंजगदालोकमात्रकम् ॥ चितिचिद्व्योममात्रात्मतथैवाभासमात्रकम् ॥ ६ ॥

नात्रानारोपितत्वशंकाकस्यचित्सर्गेमाभूदित्यबुद्धिपूर्वकताप्रसाध्यते ॥ श्रुतिषुईक्षणादिपूर्वकत्वकीर्त्तनंतुब्रह्मणःसर्वज्ञत्वचिदेकरसत्वादिलाभेनसांख्याद्यभिमताचेतनप्रधानाद्युपादानकत्वनिरासेपर्यवसास्यति ॥ ईक्षतेर्नाशब्दमित्यादिसूत्रैस्तथैवश्रुतितात्पर्यवर्णनात् ॥ तस्यत्रयआवसथास्त्रयःस्वप्नाःयथासतःपुरुषात्केशलोमानितथाक्षरात्संभवतीहविश्वमित्यादिश्रुतिदृष्टांतानुगुण्यात् ॥ भगवदीक्षणकामसंकल्पादीनांबुद्धितत्त्वोत्पत्तेः पूर्वभाविनांमायावृत्तिमात्रत्वेनतत्पूर्वकत्वेपिकामसंकल्पादिधर्मिबुद्धिपूर्वकत्वाभावोपपत्तेः ॥ अध्यारोपस्यत्वंपदार्थनिष्ठस्यैवचापवादेननिरासस्यतन्मुक्तिफलत्वोपपत्तेस्तत्पदार्थेजगदध्यारोपप्रतिपादनेप्रयोजनाभावात्प्रपंचस्यस्वनिष्ठाविद्याकार्यत्वेस्वविद्ययानिरासोपपत्तेःस्वस्मिंश्चाबुद्धिपूर्वकस्यैवावस्थात्रयाध्यारोपस्यानुभवाच्चेत्याद्याशयेनेहमुनिनाअबुद्धिपूर्वकत्वसमर्थनमितिबोध्यम ॥ १॥ अबुद्ध्यादिःअबुद्धिपूर्वःसन् ॥ सर्ववेदनाःजगत्प्रतिभासान् ॥ २ ॥ तासांजगदाकाराणांस्वसंविदांस्वयमेवमनोबुद्धिरित्याद्यभिधानामानिसर्गादौयथाश्रुतिकुरुतेइत्यर्थः ॥ ३ ॥ चितेर्बुद्ध्यादिसिद्धिपर्यंतमबुद्धिपूर्वस्वतएवारंभः ॥ यस्तुबुद्धिसिद्ध्यनंतरंसंकल्प्यमानआरंभःसबुद्ध्यादिर्बुद्धिपूर्वः ॥ तरंगादिरित्युभयत्रदृष्टांतः ॥ ४ ॥ ५ ॥ आलोक्यतइत्यालोकस्तन्मात्रकंचित्रलिखितंजगद्यथाभित्तिमात्रंतथाचितिआभास्यतइत्याभासस्तन्मात्रकमिदंजगच्चिद्व्योममात्रात्मैव ॥ ६ ॥

वृत्तेप्रागुक्तवृक्षपयोनिध्यादिचरित्रेयथाअबुद्धिपूर्वंप्रवृत्तोपिशाखावर्ताद्यारंभोनियत्यातुल्यसंनिवेशवान्संपद्यतेतथाचितिसर्गाकारोप्यारंभस्तुल्यसन्निवेशवान्भविष्यतीतिन तदर्थमपिबुद्धिपूर्वकत्वापेक्षेत्यर्थः ॥ ७ ॥ समष्टिबुद्ध्याद्युत्तरकालिकंचिद्वृक्षपुष्पादिप्रायपृथ्व्यादितुचिदन्यबुद्धिसमष्ट्यात्महिरण्यगर्भादिनाविहिताभिधंकृतनामधेयंबोध्य म् ॥ ८ ॥ अनन्यत्अभिन्नम् ॥ ९ ॥ अन्योन्यष्टिर्जीवद्दवभूत्वास्वपुत्रादिपुकार्यांतरेपुचसर्वेपुविविधाअभिधानामानिकरोति ॥ १० ॥ एवंनामरूपाध्यारोपंप्रपंच्येदानीमप वादमारभते ॥ चित्तरोरित्यादिना ॥ सचित्तरुरेव ॥ ११ ॥ यदिसर्गादिनास्येवर्तर्हिचिताअमुत्रपरलोकेव्यर्थंतदनुभूयतइत्यापतति ॥ तत्तुनयुक्तम् ॥ विहितनिषिद्धकर्मफल

अबुद्धिपूर्वमारंभोनियत्यासंनिवेशवान् ॥ यथासंपद्यतेवृत्तेतथासर्गात्मकश्चितिः ॥ ७ ॥ तरौगुलुच्छकादीनांयथान्यःकुरुतेऽभिधाः ॥ तथाचिद्वृक्षपुष्पादिपृथ्व्यादिविहिताभिधम् ॥ ८ ॥ अनन्यत्पुष्पपत्रादियथानाममहातरोः ॥ तथैवानन्यदेवेदंचिद्व्योम्नःपरमात्मनः ॥ ९ ॥ तराववयवेष्वन्यःकरोतिविविधाभिधाः ॥ चिद्व्योमात्मनिसर्वेपुभूत्वान्यइवस्वात्मसु ॥ १० ॥ चित्तरोःपल्लवाःसर्गाश्चित्त्वादेवनसंत्यलम् ॥ कार्यकारणवद्भातिसएवस्वप्नवत्स्वयम् ॥ ११ ॥ वक्षिचेत्कथमेतस्माद्व्यर्थंतदनुभूयते ॥ सर्गाद्यमुत्रस्वप्नादिष्वेपुकोपद्रवंभजेत् ॥ १२ ॥ तरावाकारवत्येषाकल्पनारचितायथा ॥ चितेराकाशमात्रायास्तथैषाकल्पनाकृता ॥ १३ ॥ यथागंधादयःपुष्पेगगनेशून्यतादयः ॥ यथास्पंदादयोवायौतथाबुद्ध्यादयःपरे ॥ १४ ॥ यथागंधादयःपुष्पेगगनेशून्यतादयः ॥ यथास्पंदादयोवायौतथेमाःसृष्टयश्चितिः ॥ १५ ॥ यथाखानिलपुष्पाणांशून्यतास्पंदगंधदृक् ॥ शून्यरूपानुभूताचतथासर्गस्थितिश्चितिः ॥ १६ ॥ नपृथक्शून्यताव्योम्नोनपृथग्द्रवतांभसः ॥ नपृथक्कुसुमाद्गंधोनानिलात्स्पंदनंपृथक् ॥ १७ ॥ अग्नेर्नपृथगुष्णत्वंपृथक्शैत्यंचनोहिमात् ॥ चिद्व्योमैकात्मनःस्वच्छान्नजगत्पृथगीश्वरात् ॥ १८ ॥ सर्गादावेवयद्व्योम्निस्वप्नाद्युदिचदृश्यते ॥ अकारणंतच्चिद्व्योम्नःकथमन्यद्भवेत्किल ॥ १९ ॥ स्वप्नएवात्रदृष्टांतोनित्यदृष्टो विचार्यताम् ॥ चिन्मात्रव्यतिरेकेणसारंकिंतत्रकथ्यताम् ॥ २० ॥

त्वायोगप्रसंगादितिहेतोरेतत्कथंस्यादितित्वंवक्षिआक्षिपसिचेत्तर्हिस्वमादिष्वेपुप्रसिद्धरज्जुसर्पमृगतृष्णिकाद्यनुभवेषुमध्येकोवैयर्थ्यापद्रवंभजेत् ॥ तस्यापिस्वाप्नभोगप्रदकर्म फलत्वाविशेषात् ॥ यदिचभोगाभासमात्रविभावनेनतत्रकर्मसाफल्यंप्रूपेतर्हिप्रकृतेऽपिसममितिभावः ॥ १२ ॥ एतावांस्तुसाकाराध्यासेपुतर्वादिष्वश्चितेर्विशेषोयत्साकारे साकाराध्यासात्से चितितुनिराकारेजगदध्यासइत्याशयेनाह ॥ तराविति ॥ १३ ॥ १४ ॥ सृष्टयःपृथ्व्यादयोपि ॥ १५ ॥ खस्यशून्यतादृगनिलस्यस्पंददृक्पुष्पाणांगंधदृक्चयथा अनुभूतापितद्व्यतिरेकशून्यरूपातथाचितिसर्गस्थितिरपीत्यर्थः ॥ १६ ॥ तदेवस्पष्टमाह ॥ नेत्यादिना ॥ १७ ॥ १८ ॥ कुतोनपृथक्तत्राह ॥ सर्गादावेवेति ॥ यतःअकारणंततो नपृथगित्यर्थः ॥ विनाकारणंकूटस्थाचित्कथमन्याभवेत् ॥ वदंत्वित्यर्थः ॥ किलेतिप्रश्ने ॥ १९ ॥ २० ॥

ननुस्वमःस्मृतिरेव ॥ इतरस्मृतिषुसंस्कारजासुविषयशून्यासुतत्ताभासते इहतुनिद्रादोषवशादिदंतागोचरत्वांशेपिसंस्कारोद्बोधात्तत्तांशभ्रमोपादिदंताभासतइतितदिदंबुद्धिजन्य संस्कारदृश्यमुभयत्राप्येकंवस्त्वित्यादिकाशंकातुनसंभवति यद्यस्मात्तत्त्वंतत्ताइदंइदंताकथंभवेत् ॥ अपरोक्षेहिइदंताप्रसिद्धास्मृतौत्वसन्निकृष्टंवस्तुपरोक्षमेव ॥ अतःकथमिदं घटनेकथयेत्यर्थः ॥ २१ ॥ ननुस्वामस्मृतिकालेतत्रारण्यादौदृष्टंव्याघ्रादिइहस्वभ्रप्रदेशेनिद्रयासन्निधाप्यतेइतियदिइदंतातत्रभवेत्तर्हितत्रारण्येतद्घ्राघायन्यैस्तदानानुभूयेत नि द्रयाएकएवव्याघ्रोद्विधास्थाप्यतइतिचेत्तत्राह ॥ कैवेति ॥ २२ ॥ तस्मात्स्वामबोधस्यानुभवत्वानपह्नवाद्दृष्टांतोस्स्वेवेतिस्वोक्तंसिद्धमित्युपसंहरति ॥ तस्मादिति ॥ पश्चाज्जा ग्रत्स्वमानुभवसिद्धनंतरम् ॥ २३ ॥ २४ ॥ यतःअजातमितिच्छेदः ॥ २५ ॥ ब्रह्मसत्त्वैवजगद्दृशांसन्निवेशेनवेषणस्फुरतीतिशेषः ॥ २६ ॥ यथाकथंचिदनिर्वचनीयमायाका

तदिदंबुद्धिसंस्कारदृश्यमित्यादिकास्मृतिः ॥ नसंभवतियत्तत्त्वंकथयेदंकथंभवेत् ॥ २१ ॥ यत्तत्रदृष्टंतदिहस्मृतिकालेभवेद्यदि ॥ नानुभूयेततत्तत्रकैवैकस्यद्विधास्थितिः ॥ २२ ॥ तस्मादावर्त्तवत्त्वेदंकाकतालीयवज्जगत् ॥ चितियद्भातितत्रैषापश्चात्स्वप्नादिकल्पना ॥ २३ ॥ अबुद्धिपूर्वंसंपन्नेसर्गेवीच्याद्योयथा ॥ संनिवेशःस्थितिःपश्चात्स्वयंसंपद्यतेतथा ॥ २४ ॥ जातमेवनतज्जातंजातंयत्कारणंविना ॥ यतोऽजातंतदेवाद्यंतत्समंसंस्थितंतथा ॥ २५ ॥ अबुद्धिपूर्वंसंजातारत्नादीनांयथार्चिषः ॥ सत्तैवसन्निवेशेनतथैवासांजगद्दशाम् ॥ ॥ २६ ॥ यथाकथंचिदेवेदमादौसंपद्यतेजगत् ॥ पश्चाद्भातिनियतिमावर्त्तोब्धाविवात्मनि ॥ २७ ॥ चिद्व्योम्निस्वप्नजालानिचिज्जगंत्यपकारणम् ॥ प्रवर्त्ततेनिवर्त्ततेशून्यशून्यात्मकान्यपि ॥ २८ ॥ यावत्सर्वमथान्योन्यंयातिकारणतांचिरम् ॥ तेषांशून्यात्मकाएवपदार्थाईश्वरादयः ॥ २९ ॥ जायतेशून्यमेवेदंशून्यमेवचवर्द्धते ॥ ननुशून्यतयात्यंतंशून्यमेवविनश्यति ॥ ३० ॥ शून्यंकचत्यशून्याभंदृष्टांतंस्वप्नमत्रयः ॥ अपह्नुतेनुभूतंसपशुभर्त्तृकुकंकुधीः ॥ ३१ ॥ असदेवेदमाभातिभ्रांतिमात्रंसुकृत्रिमम् ॥ चिच्चमत्कारमात्रात्मज्ञेसन्मात्रमकृत्रिमम् ॥ ३२ ॥ अयंचिरस्यसंकल्पःसर्गप्रलयविभ्रमः ॥ ज्ञानंस्वभावकचनमज्ञानंभ्रांतिजृंभणम् ॥ ३३ ॥ झटित्युदेतिब्रह्मात्मदृश्यंदृष्टमकारणम् ॥ खेसुषुप्तादिवस्वप्नःपश्चान्नियतिमृच्छति ॥ ३४ ॥

रणबलादेव ॥ नियतिमर्थक्रियानियतिलक्षणांसत्यताम् ॥ २७ ॥ २८ ॥ ईश्वरादयइति ॥ ईश्वरत्वस्यापिमायासापेक्षरूपत्वादितिभावः ॥ २९ ॥ शून्यमविद्यमानम् ॥ ३० ॥ अत्रअसतोपिकचनेदृष्टांतभूतस्वमंस्वानुभूतंयोऽपह्नुतेअपलपतिसकुधीर्मेषपालःसन्पशुभर्त्तुर्महामेषस्यसाक्षात्स्वयंदृष्टंकुकंकोकनंकुकः ॥ कुकआदानेइत्यस्माद्घञर्थेकः ॥ द ककर्तृकमादानंतमप्यपह्नुयादित्यर्थः ॥ ३१ ॥ चितोमायाविन्याश्चमत्कारएवात्मास्वरूपंयस्यतदेवज्ञेअकृत्रिमंसन्मात्रंजगदित्यर्थः ॥ ३२ ॥ अयंप्रपंचधातुश्चिरस्थसंकल्पात्मकएवसर्गप्रलयविभ्रमोनान्यः ॥ तस्यतात्त्विकस्वभावकचनंतत्त्वज्ञानंभ्रांत्याकारेणजृंभणंत्वज्ञानमितिबोध्यमित्यर्थः ॥ ३३ ॥ मायोपहितब्रह्मात्मझटित्येवदृश्यंभूत्वाअकारणमेवोदेतीतिदृष्टम ॥ यथादृश्यशून्येआत्मनिसुषुप्तादनंतरंस्वमोदृष्टस्तद्वत्पश्चादर्थक्रियाव्यवस्थयाकार्यकारणभावादिनियतिंऋच्छतिगच्छति ॥ ३४ ॥

अकस्माद्दृश्यस्फुरणेनिमित्तापेक्षानास्तीत्याह ॥ काकतालीयवदिति ॥ स्वभावस्थंचिरस्वभावमात्रनिबंधनम् ॥ ३५ ॥ स्वभावमेवविशदयति ॥ ईदृशइति ॥ ३६ ॥ प्रथम मबुद्धिपूर्वदृश्याकारप्रतिभासाद्दृश्यभूतेनतेनचिदात्मनापश्चादात्मनिअतीतमितिभातेस्मृत्यादिकलनात्मिकाःवर्तमानमितिभातेचपृथ्व्यादितद्बुद्ध्यादिकलनात्मिकाःसंज्ञाःकल्पि तास्तथाचसर्वोप्ययंतात्कालिकप्रतिभासेअविभक्तेबुद्ध्यादिविभागःकल्पनामात्रमित्यर्थः ॥ ३७ ॥ यदितात्कालिकप्रतिभासेष्वेवविभागसंज्ञाभेदकल्पनामात्रंजगत्तर्हिप्रतिभा सक्षणमात्रस्थायिजगत्प्रतिभासकालेनास्त्येवेतिफलितम् ॥ तथाचप्रतिभासस्योत्तरक्षणेनाशेजगतोपिनाशात्क्षणभंगवादप्रसंगः ॥ अस्तुनामतथामायामयेजगतिस्थायित्व व्यवस्थापनस्यापिब्रह्मविदःप्रयोजनाभावादितिचेन्न ॥ लोकेस्मृतिप्रत्यभिज्ञादेःपूर्वानुभूतगोचरत्वनियमाधीनवेदशास्त्रादिप्रामाण्यभंगापत्त्याब्रह्मवादस्यमूलशैथिल्यापत्तेरि त्याशयेनरामःशंकते ॥ एवंस्थितेइति ॥ एवंत्वदुक्तरीत्यातात्कालिककल्पनामात्रत्वेजगतःस्थितेपूर्वोत्पन्नबुद्धेःप्रामाणिकादनुभवाज्जातात्संस्कारतःस्मृतिःप्रत्यभिज्ञाचेतिसर्व शिष्टानुभवसिद्धोनियमःकिंप्राप्यतेकथंलभ्यते ॥ यदिस्मृतिःप्रत्यभिज्ञाचसंबुद्धाप्रागनुभूतविषयिणीनाभ्युपगम्यते ॥ अत्रोत्तरंब्रूहीत्यर्थः ॥ ३८ ॥ तत्रभगवान्वसिष्ठआक्षेपं

काकतालीयवच्चित्त्वाच्चितिदृश्यंप्रकाशते ॥ स्वयमेवस्वभावस्यमावर्त्तादिर्यथांबुधौ ॥ ३५ ॥ ईदृशोनामचिद्धातुरयमाकाशमात्रकः ॥ यदित्थंनामकचतिजगद्रूपेणचिद्वपुः ॥ ३६ ॥ तेनचिद्रूपिणापश्चाद्दृश्येनात्मनिकल्पिताः ॥ संज्ञाःस्मृत्यादिपृथ्व्यादिबुद्ध्यादिकलनात्मि काः ॥ ३७ ॥ ॥श्रीरामउवाच ॥ ॥एवंस्थितेहेभगवन्बुद्धिसंस्कारतःस्मृतिः ॥ इतिकिंप्राप्यतेब्रूहिसंबुद्धायदिनस्मृतिः ॥ ३८ ॥ ॥श्री वसिष्ठउवाच ॥ ॥शृणुरामभिनद्म्येनंप्रश्नंसिंहइवेभकम् ॥ अभेदंस्थापयाम्येकमालोकमिवभास्करः ॥ ३९ ॥ विद्यतेजगदात्मेदंदृश्यं चिन्मात्रकोटरे ॥ अनुत्कीर्णायथावृक्षेवनस्याशालभंजिका ॥ ४० ॥ उद्धरेद्वृक्षतस्तक्षाकदाचिच्छालभंजिकाम् ॥ अद्वितीयाच्चितिस्तं भादुत्कीर्णांकःकरोतिताम् ॥ ४१ ॥ स्तंभेजडेनसाव्यक्तिमनुत्कीर्णेहगच्छति ॥ चितित्वंतर्गताचित्त्वादेवात्मन्येवभात्यलम् ॥ ४२ ॥

बहुमन्यमानःसमाधानंप्रतिजानीते ॥ शृण्विति ॥ प्रश्नमाक्षेपंभिनद्मियुक्त्याविदारयामि ॥ अभेदमद्वैतमात्मतत्त्वम् ॥ ३९ ॥ भवेदयंदोषोयदिप्रागसदेवजगत्क्षणिकप्रतिभा सेनसहोत्पद्यतइतिबौद्धराद्धांताभ्युपगमे नतुतथावयमभ्युपगच्छामःकिंतुनित्यब्रह्मसत्तात्मकमेवजगन्नित्यचिदात्मकेनैवप्रतिभासेनसदाभिव्यक्तियोग्यमपिअविद्यावरणविक्षे पशक्तिवैचित्र्यचमत्कारेणकदाचिदाविर्भूतमिवतिरोभूतमिवघटपटाद्याकारविशेषइवच्छिन्नमिवभिन्नमिवकारणैरुत्पादितमिवापरोक्षमिवैकमिवनानेवभिन्नाभिन्नमिवक्षणि कमिवस्थायीवातीतंवर्त्तमानंभविष्यदिवेत्यादिनानाचमत्कारैर्नियतैश्चानियतैःसदृशैर्विसदृशैश्चावभासतइति ॥ तत्रचस्मृतिप्रत्यभिज्ञादिकंसर्वमुपपद्यतएवेत्याशयेनसमाधानु मारभते ॥ विद्यतेइत्यादिना ॥ वनस्थेत्यानंत्यद्योतनाय ॥ ४० ॥ उद्धरेत्तदावरककाष्ठावयवनिरसनेनयथाप्रकटयेत्तथाअद्वितीयात्कर्त्रादिकारकशून्याच्चितिस्तंभात्तांजग च्छालभंजिकांसम्यगुत्कीर्णांकस्तदन्यःकरोतीत्यकारकत्वंचत्वाद्दारुप्रतिमावत्तदभिव्यक्तिर्नभवतीत्यर्थः ॥ ४१ ॥ तर्हिसाकथंव्यक्तिंगच्छतितत्राह ॥ चितित्विति ॥ तदधिष्ठा नचित्यावरणनिवृत्तौतादृशचिद्बलादेवचंद्रांतर्गतोराहुरिवआत्मनिचिदात्मन्येवअलंभातिव्यक्तिंगच्छतीत्यर्थः ॥ ४२ ॥

तर्हिसाप्रलयसुषुप्त्योरपिकिंनभातीतिचेत्सत्तासामान्यात्मनाभात्येवेत्याह ॥ भासमानात्विति ॥ तुशब्दःसर्गकालाद्विशेषद्योतनार्थः ॥ ४३ ॥ सर्गादावपिसाचित्प्रथमंप्रागुक्त निर्विकल्पकलनावतीसतीपश्चाद्बीजकादृष्टानुसारेणोद्भूतैर्मनोविकल्पैर्विचित्राःसर्गकलनाःकरोति ॥ यथास्वप्नेअद्योदितांकलनामिवहृदयेसंकल्पयतीतिपरेणसंबंधः ॥ ४४ ॥ ॥ ४५ ॥ कथंकथंविशेषविभागान्सर्गादौसंकल्पयतितत्प्रपंचयति ॥ इयमित्यादिना ॥ इयंब्रह्मकलासत्तासामान्यरूपाजगद्बीजभूता ॥ इहास्यांब्रह्मकलायामेवसेयंचिन्मात्रकलनासदाअनाद्यनस्वभावात्प्रतिबिंबचितिरियम् ॥ इयमेवप्राणादिसंवलिताजीवः ॥ असावभिमानवृत्तिप्रधानस्तुअहंकारः ॥ ४६॥ अध्यवसानप्रधानाबुद्धिरित्यादूह्यम्

भासमानात्वनुत्कीर्णदेहेवापिचखात्मिका ॥ स्वरूपादच्युताचैवचिन्मात्रादात्मनिस्थिता ॥ ४३ ॥ सर्गादौसर्गकलनाःकरोतिकलनावती ॥ साचित्स्वभावतःस्वप्नेखात्मन्यद्योदितामिव ॥ ४४ ॥ आकाशएवहृदयेपरमाकाशरूपिणी ॥ संकल्पयतिचिच्छालभंजिकाःस्वात्मनात्मनि ॥ ४५ ॥ इयंब्रह्मकलासेहचिन्मात्रकलनात्वियम् ॥ इयंचितिरियंजीवस्त्वहंकारस्त्वसाविति ॥ ४६ ॥ इयंबुद्धिरियंचित्तमयंकालइदंनभः ॥ अयंसोहंक्रियाचेयमिदंतन्मात्रपंचकम् ॥ ४७॥ इंद्रियाणामिदंवृंदंपुर्यष्टकमिदंस्मृतम् ॥ इहातिवाहिकोदेहस्तथायंचाधिभौतिकः ॥ ४८ ॥ ब्रह्माहंशंकरश्चाहमुपेंद्रोहमहंरविः ॥ इदंबाह्यमिदंचांतरयंसर्गइदंजगत् ॥ ४९ ॥ इत्यादिकलनाजालंचिद्व्योमैवातिनिर्मलम् ॥ तस्मात्कैतेपदार्थौघाःक्वस्मृतिःक्वहृद्यैकते ॥५० ॥ अकारणकमेवेतिजगदाभोगिखंडकः ॥ सर्गादौस्वप्नवद्भातिखेखात्मैवविकारिवत् ॥ ५१ ॥ व्योम्न्येवकचतिव्योमचिन्मयेचिन्मयंहियत् ॥ बुद्धंतदेवतेनैवजगद्बोधात्कृतज्जगत् ॥ ५२ ॥ क्वस्मृतिःक्वचवास्वप्नःक्वकालाःकलनाश्चकाः ॥ चिदाभानमिदंभातिशांतंशून्यमिवांबरे ॥ ५३ ॥ यदंतश्चिद्घनस्यास्तितद्बहिर्भूततांगतम् ॥ वस्तुतस्तुनतद्बाह्यंनांतःसन्मात्रकादृते ॥ ५४ ॥ निरस्तावयवाच्छांतादनाख्याद्यत्प्रवर्त्तते ॥ अकारणंभवेद्भूतंतदंधाःकथमन्यथा ॥ ५५ ॥ तस्माद्यादृक्परंब्रह्मतादृगूदृश्यमिदंपरम् ॥ यदेवचिन्नभःस्वप्नेतदेवस्वप्नपत्तनम् ॥ ५६॥

॥ ४७ ॥ इहएतत्संघाते ॥ अयंपंचीकृतभूतमयः ॥ ४८ ॥ ४९ ॥ इत्यादिसर्वंकलनाजालमतिनिर्मलंचिद्व्योमैवनततोन्यदणुमात्रमपीत्यर्थः ॥ तस्मादज्ञकल्पिताजडपदार्थौघाएतेक्वतिष्ठंतीत्यर्थः ॥ ५० ॥ इतिअनयारीत्या ॥ ५१ ॥ ५२ ॥ यदेकमेवचिद्व्योमतदाप्रपंचितविभागानसंत्येवेतिफलितमित्याह ॥ क्वेति ॥५३ ॥ अंतर्यदस्तिअंतर्गतायासत्तेत्यर्थः ॥ ५४ ॥ हेअंधाःवादिनःअकारणंतद्भूतमुत्पन्नंकथंभवेत् ॥ तत्कूटस्थंचअन्यथासविकारंकथम् ॥ ५५ ॥ तस्मात्स्वभ्रांतिगृहीतंजगतोजाड्यादिस्वभावंपरित्यज्यशुद्धचिन्मात्रस्वभावोंगीक्रियतामित्याह ॥ तस्मादिति ॥ ५६ ॥

रजश्चिज्जलानाद्रमणुमात्रम ॥ ५७ ॥ यतःअचेत्यकमतोऽकचत्अप्रकाशयदेवस्वमात्रप्रकाशंसद्यत्रस्थितम् ॥५८॥ उक्तेर्थेपूर्णमदःपूर्णमिदमितिश्रुतिंस्मारयति॥पूर्णादिति ॥ परमात्मैवपरमात्मकम् ॥५९॥ एतावद्भिस्तूनेनान्वहमावर्त्तितेनाप्युपदेशेनकांश्चिन्मंदाधिकारिजनानप्रबुद्धान्लिंगैरुपलक्ष्यभगवांस्ताननुशोचन्नाह ॥ इत्थमिति ॥ मयिस्वयमनुभूयमानमात्मतत्त्वमित्थंविशदतरंपुनःपुनरत्युच्चकैःप्रकथयतिसत्यपिमंदाधिकारिजनस्यांतर्गताविमूढतास्वप्नप्राये जगद्वपुषिइयंजाग्रत्सत्यमेवेतिप्रतीतिमद्यापिनसंत्यजति ॥ बतेतिखेदे ॥ विदन्नप्यधिकारीप्राक्झटितितांनत्यजति ॥ नामेतिमोहप्राबल्यप्रसिद्धौ ॥ ६० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०अष्टषष्ट्युत्तरशततमःसर्गः ॥ ॥ १६८ ॥ ॥ ७ ॥ ॥ भूयोविश्रांतचित्तस्यजीवन्मुक्तस्यभूरिशः ॥ लक्षणान्यभिधीयंतेमुमिश्चात्मवतःसदा ॥ १ ॥ यद्यबोधोमंदाधिकारिणांत्वयालिंगैरुपल

नकिंचित्किंचनापीदंदृश्यमस्तिमनागपि ॥ करजःपूर्णजलधौकदृश्यंपरमांबरे ॥ ५७ ॥ तच्चेदंभातिवाकिंचित्तच्चिन्मात्रमचेत्यकम् ॥ अकचत्त्वेवसंशांतमात्मनीत्थमवस्थितम् ॥ ५८ ॥ पूर्णाद्धिब्रह्मणःपूर्णमप्यनुद्धृतमुद्धृतम् ॥ इवेदंभातिभारूपमाभानंपरमात्मकम् ॥ ५९ ॥ इत्थंमयिप्रकथयत्यनुभूयमानमप्युच्चकैर्बतजनस्यविमूढतांतः ॥ स्वप्नेजगद्वपुषिजाग्रदितिप्रतीतिंनाद्यापियत्त्यजतिनामविदन्नपिद्राक् ॥ ६० ॥ ॥ इ०वा०महारामायणेवा०दे०मो०नि०उ०शालभंजिकोपदेशोनामाष्टषष्ट्युत्तरशततमःसर्गः ॥ १६८ ॥ ॥ ७ ॥

श्रीवसिष्ठउवाच ॥ ॥ नसुखायसुखंयस्यदुःखंदुःखाययस्यनो ॥ अंतर्मुखमतेर्नित्यंसमुक्तइतिकथ्यते ॥ १ ॥ यस्यनस्फुरतिप्रज्ञाचिद्व्योमन्यचलस्थितेः ॥ प्रसक्तेष्विवभोगेषुसमुक्तइतिकथ्यते ॥ २ ॥ चिन्मात्रात्मनिविश्रांतंयस्यचित्तमचंचलम् ॥ तत्रैवरतिमायातंसजीवन्मुक्तउच्यते ॥ ३ ॥ परमात्मनिविश्रांतंयस्यव्यावृत्त्यनोमनः ॥ रमतेस्मिन्पुनर्दृश्येसजीवन्मुक्तउच्यते ॥ ४ ॥ ॥ श्रीरामउवाच ॥ ॥ नसुखायसुखंयस्यदुःखंदुःखाययस्यनो ॥ जडमेवमुनेमन्येमानवंतमचेतनम् ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ चिद्व्योमैकांतनिष्ठत्वात्प्रयत्नेनविनासुखम् ॥ नवेत्तिशुद्धबोधात्मायःसविश्रांतउच्यते ॥ ६ ॥

क्षितस्तत्संबोधापगमःकैर्लिंगैर्ज्ञायतेइतिमुक्तलक्षणजिज्ञासून्रामादीन्प्रतितानिभगवान्वसिष्ठआह ॥ नसुखायेत्यादिना ॥ सुखंसुखसाधनविषयजातम् ॥ अंतर्मुखीप्रत्यगात्मासक्तामतिर्यस्य ॥ १ ॥ नस्फुरतिनसंचलति ॥ प्रज्ञाबुद्धिः ॥ यथाअज्ञानांबुद्धिःप्रसक्तेपुभोगेष्वासक्ताततोनचलतितद्वदित्यर्थः ॥ २ ॥ श्लोकद्वयार्थंस्फुटमाह ॥ चिन्मात्रात्मनीति ॥ ३ ॥ तत्रैवेत्येवकारार्थंविवृणोति ॥ परमात्मनीति ॥ ४ ॥ आद्यश्लोकोक्तलक्षणस्यजडोन्मत्तमूर्च्छितेपुरामोव्यभिचारंशंकते ॥ नसुखायेति ॥ ५ ॥ अंतर्मुखमतेरिति तत्रविशेषणेनैवव्यभिचारस्यनिवारितत्वान्नकश्चिद्दोषइत्याशयेनवसिष्ठस्तत्तात्पर्यंविशदयन्नुत्तरमाह ॥ चिद्व्योमेति ॥ नसुखायेत्यत्राप्रयत्नेनविनेतिविशेषणीयमित्याशयेनाह ॥ प्रयत्नेनेति ॥ ६ ॥

लक्षणांतराण्याह ॥ सर्वएवेत्यादिना ॥ सर्वार्थेष्विति ॥ सर्वसंदेहानामज्ञानमूलत्वान्मूलाज्ञानक्षयेणसर्वसंदेहक्षयोपपत्तेरितिभावः ॥ तथाचश्रुतिः ॥ भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरेइति ॥ ७ ॥ रसिकतारागवत्ता ॥ ८ ॥९॥ चित्त्वाच्चिन्मात्रत्वदर्शनात् ॥ १०॥ धावित्वाचिरंभ्रमित्वाधावनश्रमनिवारणायसुप्ताइवलक्ष्यंते ॥ तथाचविषयेष्वधावनमेवस्पष्टंतल्लक्षणमितिभावः ॥ ११ ॥ चेत्यचिदाभासौदृश्यद्रष्टारौतदुभयशून्येनभसिस्वचित्ताकाशेभामयाःशुद्धचिद्रूपाभास्कराउदिताभांति ॥ इहसंसारे ॥ १२ ॥ प्रक्षीणाविदेहाइवलक्ष्यंते ॥ जडाभामुग्धसदृशाः ॥ १३ ॥ सुप्ताइतिपदतात्पर्यंविवृणोति ॥ सुप्ताइवेत्यादिनाआसर्गसमाप्तेः ॥ जडतांनिद्रापरवशताम् ॥ १४॥ केनांशेनतर्हिसुप्तसाम्यमितिचेद्विश्रांतिमौनाभ्यामित्याह ॥ दीर्घेति॥ परिभ्रमणाद्विश्रांतोनिवृत्तः ॥ विश्रांतोगतश्रमःसन्योनददातिनोच्चारयतिबहिर्मुखेभ्यः ॥ १५ ॥ उलूकप्रायाणामविद्यांधकारेव्यवहरतांसर्वभूतानांयातदस्तमयात्मिकानिशासपरोबोधः ॥ समंएकरसम् ॥ १६ ॥ सुप्तइत्यस्यविवरणंतन्नपश्यतीति ॥ तथाचभगवतागीतासुयानिशेतिश्लोकेलक्षणद्वयंदर्शितमितिभावः ॥ १७ ॥ सर्वकर्मसंन्यासोपितल्लक्षणमित्याह ॥ यइति ॥ १८॥ १९ ॥ धावित्वायेचिरंकालमितिश्लोकार्थंप्रपंचयति॥दीर्घाध्वनीत्यादिना॥वंचनचतुरैर्विषयैश्चिरंडामरैर्देशोपप्लवैर्भोगसामग्रीलुंठनैरिवप्रोत्थितःप्रस्थितः॥२०॥जरालक्षणहिमाशनिभिर्जडीकृतोव्यवहाराक्षमःकृतः॥२१॥

सर्वएवपरिक्षीणाःसंदेहायस्यवस्तुतः॥ सर्वार्थेषुविवेकेनसविश्रांतःपरेपदे॥ ७॥ यस्यकस्मिंश्चिदप्यर्थेक्वचिद्रसिकतास्तिनो॥ व्यवहारवतोप्यंतःसविश्रांतउदाहृतः॥ ८॥ यस्यसर्वेसमारंभाःकामसंकल्पवर्जिताः॥ यथाप्राप्तंविहरतःसविश्रांतइतिस्मृतः॥ ९॥ अविश्रामेनिरालंबेदीर्घेसंसारवर्त्मनि॥ चित्त्वादात्मनिविश्रांतिःप्राप्तायेनजयत्यसौ॥ १०॥ धावित्वायेचिरंकालंप्राप्तविश्रांतयःस्थिताः॥ तेसुप्ताइवलक्ष्यंतेव्यवहारपराअपि ॥ ११ ॥ तेहिचेत्यचिदाभासनभस्याभांतिभामयाः॥ भास्कराउदितानित्यंनेहतिष्ठंतितेक्वचित्॥ १२॥ संदेहाव्यवहारस्थाअपिसुप्ताइवोत्तमाः॥ प्रक्षीणाइवलक्ष्यंतेजडाभानतुतेजडाः॥ १३ ॥ सुप्ताइवेहशय्यासुयेस्वप्ननगरेस्थिताः॥ सुप्ताइतितउच्यंतेनतुतेजडतांगताः॥ १४॥ दीर्घाध्वपरिविश्रांतोविश्रांतोनददातियः॥ वाक्यंससुखमौनस्थःप्रोच्यतेनजडाकृतिः॥ १५॥ यानिशासर्वभूतानामविद्यास्तमयात्मिका॥ परोबोधःपराशांतिस्तत्रासौसममास्थितः॥ १६॥ यस्मिन्जाग्रतिभूतानिदृश्येस्मिन्दुःखदायिनि॥ तत्रासौसततंसुप्तस्तंनपश्यत्यसौसुखी ॥ १७॥ यःकर्मौघमनादृत्यस्वात्मन्येवावतिष्ठते॥ सआत्मारामइत्युक्तोनजडोसौरघूद्वह॥ १८॥ दुःखादतिगतःसोस्मात्प्राप्तःपारंभवांबुधेः॥ तिष्ठत्यनुभवन्भव्योविश्रांतिसुखमात्मनि॥ १९॥ दीर्घाध्वनिपरिश्रांतोविषयैश्चतुरैश्चिरम् ॥ भोगभावातुरःक्रूरैःप्रोत्थितःपथिडामरैः॥ २० ॥ जरातुषाराशनिभिर्भूयोभूयोजडीकृतः॥ जन्मजंगलसारंगोव्यर्थव्यग्रविहारवान्॥ २१ ॥

परंआत्मनास्वेनैवासहायेनपरिक्रांतश्चलितः ॥ २२॥ दुष्कृतैःपापार्जितधनैः ॥ पदेपदेक्षीणःपतितःसन्लुठन् ॥२३॥ एवंश्रांतोयंदैवात्साधनसंपत्त्यासच्छास्त्रसद्गुरुप्रसादादतिप्र मयातत्त्वसाक्षात्कारेणप्रबुद्धःसन्संसारजलधेःपारंप्राप्यसआत्मवानशय्यःशय्यारहितोऽपिसुखंशेतेइतिसर्वेषामन्वयः ॥२४॥ शयनार्थिभिःसर्प्यंतेउपसर्प्यंतेइतिसर्पाणिगृहा पवरकप्रासादपर्यंकादीनितद्रहितंयथास्यात्तथानिरस्नेहंप्राणादिचेष्टारहितंयथास्यात्तथाप्रबुद्धमात्मस्वरूपेजागरूकतायथास्यात्तथास्वरूपबहिर्भूतनिद्राख्यवस्त्वंतररहितंच यथास्यात्तथाशेते ॥ हाइत्याश्चर्ये ॥ २५ ॥ जात्यश्वोऽश्नन्गच्छंस्तिष्ठंश्वसंदैवनिद्रातिसमरेएवकेवलंजागर्त्तीतिलोकप्रतिद्धेर्जात्यश्ववदित्युक्तिः ॥ २६ ॥ अपूर्वाअलौकि

परमात्मपरिक्रांतोदुःखकंटकसंकटे॥ सुदुष्प्रापसुखच्छायेपांथःसंसारवर्त्मनि॥ २२॥ दुष्कृतैःकृतपाथेयोलुठन्क्षीणःपदेपदे॥ अर्था नर्थमयैर्मार्गैःसंकटैर्विवशीकृतः॥ २३॥ संसारजलधेःपारंप्राप्यभूतविवर्जितम्॥ अशय्योतिप्रमावुद्धःसशेतेसुखमात्मवान्॥२४॥ अपसर्पनिरस्नेहमस्वप्नमसुपुप्तकम्॥ प्रवुद्धमवहिर्निद्रंहाशेतेसुखमात्मवान्॥ २५॥ जात्यश्ववदिहाजातिरश्नन्गच्छन्श्वसन्वदन्॥ लोकमध्येमहारण्येहाशेतेसुखमात्मवान्॥ २६॥अपूर्वैवघनानिद्राकापिसातत्त्वदर्शिनाम्॥ यानशाम्यतिकल्पाभ्रवैर्नागविकर्त्तनैः ॥ २७॥अपूर्वैवघनानिद्राकापिसातत्त्वदर्शिनाम् ॥ प्रवुद्धानामपिह्रियानिमीलयतिदृग्दृशौ॥ २८॥ अनिमीलितनेत्रस्ययस्यविश्वंप्र लीयते॥ सक्षीवःपरमार्थेनहाशेतेसुखमात्मवान्॥ २९॥ विनिगीर्यजगत्सर्वंपरमांपूर्णतांगतः॥ आतृप्तेरमृतंपीत्वाहाशेतेसुखमात्म वान्॥ ३०॥ निरानंदमहानंदीसुखमद्वैतमक्षयम्॥निरालोकमहालोकोहाशेतेसुखमात्मवान्॥३१॥ लोभांधकारोपरमोलोकलंपट तांगतः॥ अघनत्वघनाभोगोहाशेतेसुखमात्मवान्॥ ३२॥ अनंतदुःखमाशांतमशांतंजनतास्थितौ॥ अवहिर्मुखमाभोगिहाशेतेसु खमात्मवान्॥ ३३॥ अणीयसामणीयांसंस्थविष्ठंचस्थवीयसाम्॥ कृत्वात्मानंनभःशय्यंहाशेतेसुखमात्मवान्॥ ३४॥ परमाणौपर माणौजगत्कोटिशतान्यपि॥ अणौस्थूलेदधद्देहेहाशेतेसुखमात्मवान ॥ ३५॥ कुर्वन्संहारसर्गौघानकुर्वंश्चकथंचन ॥ परमालोकश य्यायांहाशेतेसुखमात्मवान्॥ ३६॥

की ॥ तत्रोपपत्तिर्येति ॥ २७ ॥ दृग्दृशौचिन्मात्रदर्शनेप्रबुद्धानामपियाप्रमीलयतिवाह्येंद्रियाणीत्यर्थः ॥ अथवाव्यवहारेप्रबुद्धानामपियादृशांवाह्येंद्रियाणांदृशिःरूपादिदर्श नंतद्विषयेप्रमीलयतिसंवृणोति ॥ २८ ॥ परमार्थेनसक्षीवोनतुमदेनक्षीवः ॥ २९॥ अमृतमपरिच्छिन्नानंदरसम् ॥ ३०॥ निरालोकेआलोकांतराभास्येस्वात्मनिमहानालोकः प्रकाशोयस्य ॥ ३१ ॥ अघनत्वेअमूर्त्तानंदरसेघनआभोगआस्वादोयस्य ॥ ३२ ॥ दुःखमादुःखानुभवस्तद्विषयेशांतमुपरतम् ॥ जनतास्थितौवर्णाश्रमोचितव्यवहारेलोक संग्रहार्थमशांतमनुपरतम् ॥ अवहिर्मुखंवाह्यार्थानासक्तम् ॥ आंतरसुखाभोगि ॥ क्रियाविशेषणानिसर्वाणि ॥ ३३ ॥ नभश्चिदाकाशएवशय्यायस्यतथाविधंकृत्वा ॥ ३४ ॥ सौक्ष्म्यादणौविभुनयास्थूलेचचिद्देहे ॥ प्रतिपरमाणुजगत्कोटिशतान्यनंतानिजगंतिदधत्धारयन् ॥ ३५॥ ३६ ॥

पूर्णप्रकाशेनप्रकटादिशइवदीर्घामपरिच्छिन्नामितियावत् ॥ ३७ ॥ सद्रूपेणसर्वत्रानुगमात्सत्तासामान्यताम् ॥ आकाशादिति ॥ ज्यायानाकाशादितिश्रुतेरितिभावः ॥ ३८ ॥ आदौप्रविलापनेनांबरीकृतमाकाशतांनीतंजगत्अच्छादव्याकृताकाशादप्यच्छंचिदंबरंकृत्वाशांतौशब्दश्वपरश्वासःप्रश्वासश्वयस्मिन्कर्मणितथा ॥ अंबरमास्तरणवस्त्रमच्छादच्छंकृत्वाअंबरीकृतंप्रावारीकृतंजगदप्याच्छाद्यशांतघुर्घुराशब्दप्रश्वासंशेतेइत्युत्तानार्थः ॥ ३९ ॥ स्वयंप्रत्यगात्मभूतोयश्चिदाकाशस्तत्कोणकेस्वप्नमिवइदंजगत्स्वप्राभासमिवपश्यन् ॥ ४० ॥ व्यवहारलक्षणेमनोरमेतृणानांसमूहस्तृण्याकटस्तदास्तरणेविश्रांतइत्येतत्पर्यंतंसमस्तमेकंपदम् ॥ ४१ ॥ यथाजागरूकस्यनिद्रानुभूतस्वप्नस्यपरमेणप्रयत्नेनानुसंधानात्स्मृतियोग्यस्वरूपतातथाकथंचित्परमेणप्रयत्नेनस्वपरप्रयत्नेनचित्तमीपद्बहिर्मुखीकृत्यबाह्यव्यवहारपरिज्ञानादापाततःस्वरूपवतादेहादिनाजीवन् ॥ यथानिरवकाशेस्थातुमशक्तःखंखात्मकेनैवद्वितीयमिवकल्पितेनलब्धावकाशंखेआकाशस्वरूपेजीवगिसत्तांलभतेतद्वदित्यर्थः ॥ ४२ ॥ आकाशकल्पेनस्वरूपज्ञानेनअत्यंतासत्त्वाद्गगनसन्नि

संसारनिचयस्वप्नंपरिज्ञायसुषुप्ततताम् ॥ नयन्प्रकटदिग्दीर्घांहाशेतेसुखमात्मवान् ॥ ३७॥ सर्वेषांजगदर्थानांसत्तासामान्यतांगतः॥ आकाशादधिकोव्यापीहाशेतेसुखमात्मवान् ॥ ३८ ॥ अच्छाच्छमंबरंकृत्वाजगदप्यंबरीकृतम् ॥ शांतशब्दपरश्वासंहाशेतेसुखमात्मवान्॥ ३९ ॥इदमस्मज्जगत्पश्यन्स्वयमाकाशकोणके ॥ विशदाकाशकोशात्माहाशेतेसुखमात्मवान् ॥ ४० ॥ यथाप्रवाहसंप्राप्तव्यवहारमनोरम॥ तृण्यास्तरणविश्रांतोहाशेतेसुखमात्मवान् ॥ ४१ ॥ परमेणस्वयत्नेनपरिज्ञानात्स्वरूपिणा ॥ स्वप्नसंदर्शनेनैवजीवन्खमिवखेनखे॥ ४२ ॥ ज्ञानेनाकाशकल्पेनधर्मान्गगनसंनिभान्॥ ज्ञेनयत्नेनसंबुद्धःपरमांबरतांगतः॥ ४३ ॥ प्रबुद्धःसुप्तःसुप्तोपिप्रबुद्धोरमतेनिशम्॥ सुषुप्तोभूत्ततोजाग्रत्स्वप्नार्थंसुहृदासह॥ ४४॥ जन्मांतरैकसहवाससमाशयेनचित्तानुवृत्तिमधुरेणचिरंतनेन॥ मित्रेणसार्द्धमखिलानिदिनानिनीत्वाविश्रांतिमेष्यतिपदेपरमेचिरंसः॥ ४५॥ ॥ इ०वा०महारामायणवा०दे०मो०नि०उत्तरार्द्धेविश्रांतचित्तवर्णनंनामैकोनसप्तत्युत्तरशततमःसर्गः॥ १६९॥ ॥ ७॥ ॥ ७॥

भान्जीवजगल्लक्षणान्धर्मान्यत्नेनज्ञेनप्रयत्नापादितज्ञातृभावेनस्वस्यैवयःसंबुद्धःसम्यग्बुद्धवान् ॥ मतिबुद्धीतिकर्त्तरिक्तः ॥ ४३ ॥ एवंजीवन्मुक्तस्याज्ञविपयेस्वापमुपवर्ण्यपरमार्थेसदाप्रबुद्धतामाह ॥ प्रबुद्धसुप्तइति ॥ प्रबुद्धस्तत्त्ववित्एवंरीत्यासदासुप्तोपिलोकप्रसिद्धयोःप्रवोधस्वापयोर्लोकवदेवप्रबुद्धःसुप्तश्वसन्जायत्स्वमार्थभोगेसहायभूतेनवक्ष्यमाणेनसुहृदासहअनिशंरमते ॥ ततःसुषुप्तस्तुसंस्तेनसहैवसुषुप्तोभूदित्यर्थः ॥ ४४ ॥ यावत्प्रारब्धभोगंतेनसुहृदासहक्रीडित्वातस्यतदंतेविदेहमुक्तिमाह ॥ जन्मांतरेति ॥ सजीवन्मुक्तोजन्मांतरेषुएकतयाचिरसहवासप्रयुक्तस्नेहातिशयादिवसर्वस्ववैषम्यंपरित्यज्यसमाशयेनसमचित्तेनअतएवचित्राभिःशमदमतितिक्षाज्ञानवैराग्यसंतोषाद्यनुवृत्तिभिर्मधुरेणउत्तरत्रवक्ष्यमाणेनचिरंतनेनमित्रेणसार्द्धमखिलान्यायुःशेपदिनानिवक्ष्यमाणरमणेननीत्वापरमेनिरतिशयानंदेविदेहकैवल्यपदेविश्रांतिमेष्यतिप्राप्स्यति ॥ ४५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकोनसप्तत्युत्तरशततमःसर्गः ॥ १६९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

१ स्थितस्येतिशेषः

सुहृत्स्वकर्मनामात्रपुत्रस्त्रीभृत्यसंयुतः ॥ तद्गुणाश्चोपवर्ण्यैनेरमणंचसुखोदयम् ॥ १ ॥ अस्यजीवन्मुक्तस्यतेनसुहृदासहयद्रमणंतत्किंस्वभावःस्वात्मस्वरूपावस्थितिरेववास्या
द्भुतरतिःरम्येषुभोगस्थानेषुविहारप्रयुक्ताप्रीतिस्तदात्मकमित्यर्थः ॥ १ ॥ प्रवाहेहितंसहजंकर्मप्रायेहितंलोकसंग्रहार्थंशास्त्रीयंकर्मस्वप्रयत्नाभ्यस्तंसच्छास्त्राभ्यासविचारसत्संग
शमदमतितिक्षोपरमशौचसंतोषेश्वरप्रणिधानसंयमादिस्वकर्मेतित्रिविधमनिषद्धंकर्मैकमेवत्रिभिर्नामभिरुपाधिभेदाद्व्यपदिश्यते ॥ अतएवैकंमित्रमित्युक्तिः ॥ २ ॥ त
स्यसुहृदोगुणानाह ॥ पितृवदित्यादिना ॥ अकार्यविषयेलज्जानियंत्रणमव्यभिचारिच ॥ ३ ॥ वितीर्णमावर्जनंसान्त्वासमाधानंतल्लक्षणममृतंयेन ॥ ४ ॥ एवंदुर्गेषुदुर्गमेषुमार्गे

॥ श्रीरामउवाच ॥ ॥ ब्रह्मन्कोस्यसुहृद्ब्रूहियेनासौरमतेसह ॥ रमणंकिंस्वभावंस्याद्धुतरत्यात्मवास्यतत् ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥
स्वप्रवाहेहितंनामस्वप्रायेहितनामच ॥ स्वकर्मनामचास्यास्तेमित्रमेकमकृत्रिमम् ॥ २ ॥ पितृवद्विहिताश्वासंदाराइवनियंत्रणम् ॥
संकटेषुदुरंतेषुनित्यमव्यभिचारिच ॥ ३ ॥ अशंकितोपचरणंसुसंपादितनिर्वृति ॥ कोपेष्वकोपनतयावितीर्णावर्जनामृतम् ॥ ४ ॥ दुर्गदु
र्गमदुर्वारदोषोद्धरणतत्परम् ॥ सर्वविश्वासरत्नानांकोशआशैशवोपितम् ॥ ५ ॥ सहपांसुरुताक्रीडमाबाल्यादेवसंगतम् ॥ विनिवारि
तदुश्चेष्टंपितृवद्रक्षणोन्मुखम् ॥ ६ ॥ वह्नेरिवौष्ण्यंसौगंध्यंकुसुमस्येवसर्वदा ॥ अविनाभाविविमलंरवेरिवचवासरम् ॥ ७ ॥ लालनै
करतंनित्यंपालनैकपरायणम् ॥ सर्वसंकटसंघट्टरक्षणैकसमुद्यतम् ॥ ८ ॥ हेम्नोऽग्निरिवदेहस्यसर्वावस्थस्यशुद्धिदम् ॥ इदंहेयमुपादेयमि
तिदर्शनतत्परम् ॥ ९ ॥ आह्लादकमनिंद्याभिःकथाभिरिवनागरम् ॥ सच्चेष्टामणिमाणिक्यभांडसंभारमंदिरम् ॥ १० ॥ सूर्यस्तमइवा
जस्रमप्रदर्शयदप्रियम् ॥ अनुरक्तामहेलेवप्रियमेवप्रदर्शयत् ॥ ११ ॥ जनंप्रियंवदंकुर्वत्प्रियमेवसमाचरत् ॥ पेशलंमधुरंस्निग्धमक्षुब्ध
मुदिताशयम् ॥ १२ ॥ लोकोपचारकंपूज्यंस्मितपूर्वाभिभाषणम् ॥ कामोपशांतंसद्रूपंपरमार्थैककारणम् ॥ १३ ॥ रणेऽज्ञानसमुद्भूते
पूर्वंप्रहरणोद्यतम् ॥ अपूर्वनर्मनिर्माणलीलाललनलालकम् ॥ १४ ॥

षुदुर्वारवैरकलहादिदोषेषुचमज्जनेप्रसक्तेउद्धरणतत्परम् ॥ अनेकजन्माभ्यासानुवृत्तत्वादाशैशवोपितम् ॥ ५ ॥ तदेवाभिप्रेत्याह ॥ सहेत्यादिना ॥ ६ ॥ ७ ॥ ८ ॥ सर्वावस्थ
स्यअशुचिस्पर्शभक्षणादिनाअशुद्ध्याद्यवस्थस्यापि ॥ दर्शनेविविच्यप्रदर्शनेतत्परम् ॥ ९ ॥ नागरंनगराभिजनंचतुरमिवेतियावत् ॥ सच्चेष्टाःशुभावाङ्मनःकायचेष्टास्तल्लक्षणा
नांमणिमाणिक्यानांभांडसंभारमंदिरंकोशगृहम् ॥ १० ॥ अप्रदर्शयत्दूरतोनिरस्यदित्यर्थः ॥ महेलामहिलेव ॥ ११ ॥ उदिताशयमप्रमादि ॥ १२ ॥ लोकानांसंगतसज्जनाना
मुपचारकंशुश्रूषकम् ॥ कामेभ्यउपशांतमतएवसतांरूपमिवरूपंयस्यसद्रूपम् ॥ १३ ॥ अज्ञानेभ्योजनेभ्योदैवात्समुद्भूतेरणेसंप्रहारेपूर्वंप्रहरणेउद्यतमतिशूरमितियावत् ॥ अपूर्वै
र्लोकोत्तरैर्नर्मनिर्माणैःक्रीडाहास्यादिकौतूहलनिर्माणैर्लीलयाललनैश्चलालकंविलासयितृ ॥ १४ ॥

अमृतवदुज्जीवनमौषधमिवरोगहरंच ॥ १५ ॥ विशेषतोविद्यावैदग्ध्येनपांडित्येनवादैश्ववंद्यानामुत्कृष्टानांप्रभुगुरुमान्यादीनांविनोदनंकौतुकावहम् ॥ क्वचित्समानकुलशील त्वाद्विभागेनद्विधाभावेस्थितमिव ॥ १६ ॥ नृपादीननुरक्तानूकृत्वावदान्यानूदानशौंडानूकारयत् ॥ सदेतिदेहलीदीपकन्यायेनोभयत्रसंबध्यते ॥ १७॥ उत्तमैःश्लाघ्यैर्महद्भिः सहसंगतिर्येन ॥ १८ ॥ १९ ॥ स्वभावेनसहजवत्स्यैवनतुकेनचिदीरितःप्रेरितःसन्नित्यर्थः ॥ २० ॥ कलत्रंस्त्रीपुत्रादिपोष्यवर्गः ॥ तत्सहितस्यतदीयस्यमित्रस्यतत्कलत्रंकिंतच्च

पालकंशीलसाराणांदाराणांचकुलस्यच॥ आधिव्याधिपरीतस्यचेतसोमृतमौषधम्॥१५॥विशेषविद्यावैदग्ध्यवादवंद्यविनोदनम्॥ समानकुलशीलत्वाद्विधाभावइवस्थितम्॥१६॥ अनुरक्तान्नृपान्साधून्वदान्यान्कारयत्सदा ॥ यज्ञदानतपस्तीर्थन्यायार्थप्रेरणोन्मुखम्॥ १७॥ पुत्रदारद्विजातिस्त्रीभृत्यबंधुजनैःसह॥ शुभभोजनपानार्हमुत्तमश्लाघ्यसंगति॥ १८॥ भोगादिवद्धतृष्णत्वंदुःखदंविनिवारयत्॥ सुस्निग्धसंकथोदारंसमाश्वासोत्तमास्पदम्॥ १९॥ ईदृशेनात्ममित्रेणसकलत्रेणसंयुतः॥ स्वकर्मनाम्नारमतेस्वभावेनैवनेरितः॥२०॥ ॥श्रीरामउवाच॥ ॥ कलत्रमस्यमित्रस्यतदीयस्यमुनीश्वर॥ किंतत्किंरूपमेवस्यात्समासेनैवमेवद॥२१॥ ॥श्रीवसिष्ठउवाच॥ ॥स्नानदानतपोध्याननामानोस्यमहामते॥ संतिपुत्रामहात्मानःस्वनुरक्ताखिलप्रजाः॥ २२॥ चंद्रलेखेवलोकस्यदृष्ट्यैवाह्लाददायिनी ॥ अविनाभाविनीभार्यामुदितास्यानुरागिणी ॥ २३॥ करुणाकारणाकीर्णधनाहृदयहारिणी ॥ आनंदजननीचास्यवयस्याऽव्यभिचारिणी॥२४॥ समतास्यमतानित्यमास्तेहृदयवल्लभा॥ प्रतीहारीपुरःप्रह्वासंमुखंसुखदायिनी॥२५॥धैर्येधर्मेचधीःसाधोनित्यमाधीयतेचया॥ सास्यधीरस्यधुर्यस्यपुरोधन्यस्यधावति॥ २६॥ अस्यसन्नासमंस्कंधेसर्वदैवमहौजसः॥ विषयारिजयेराज्ञोमैत्रीमंत्रप्रदायिनी॥ २७॥ कार्याणामार्यमर्यादाचर्याचातुर्यशालिनी ॥ सर्वेषामस्यमान्यस्यसत्यतास्वार्थदायिनी॥ २८॥

किंरूपंकीदृशगुणवदित्यर्थः ॥ २१ ॥ तत्रादौपुत्रानाह ॥ स्नानेति ॥ गुणैःस्वनुरक्ताअखिलाःप्रजायेषाम् ॥ २२ ॥ तस्यभार्यांगुणैःसहवर्णयति ॥ चंद्रलेखेवेति ॥ मुदितानित्यसंतुष्टा ॥ २३ ॥ करुणादयातत्कारणात्आसमंतात्कीर्णंविक्षिप्तंविकीर्णंधनंयया ॥ २४ ॥ समतानाम्नीहृदयवल्लभाप्रियाभार्या ॥ प्रतीहारीद्वारपालिका ॥ २५॥ धैर्येधर्मेचविषयेयाधीःसा ॥ २६ ॥ अस्यराज्ञःसुहृदोविषयारिजयेविषयेमंत्रप्रदायिनीमैत्रीनामापराभार्यासमतयासमंसर्वदैवस्कंधेसन्नासक्ता ॥ २७ ॥ आर्यमर्यादाकार्याणांविषयेअस्यआचार्याउपदेष्ट्री ॥ अस्यसत्यतास्वार्थदायिनीधनाध्यक्षा ॥ २८ ॥

एवंविधःपरिवारःपोष्यवर्गोयस्यतथाविधेनमंत्रिणासुहृदास्वकर्मणासर्वत्रव्यवहरन्जीवन्मुक्तोलाभालाभयोर्नहृष्यतिनकुप्यति ॥ २९ ॥ चित्रार्पितोयोद्धेवयुद्धादिनाव्यवह
रन्नपियथास्थितमेवास्ते ॥ ३० ॥ शैलमयःशिलाप्रतिमारूपइव ॥ ३१ ॥ शवंमृतकल्पः ॥ ३२ ॥ जिह्मानांस्वपरकौटिल्यादिदोषाणांप्रतिभानवान् ॥ वस्तुनोदुरूहस्यापिसं
देहपदस्यनिर्णीयवक्ता ॥ ३३ ॥ ३४ ॥ एषवर्णितोगुणगणःप्रबुद्धधियांस्वभावएवभवेत् ॥ तेप्रयत्नेनईदृशाईदृग्गुणानभवंति ॥ इंद्वर्कहुताशनाद्याःपरप्रेरणयाप्रकाशंतइतिप्र
काशानभवंतिकिंतुस्वभावतएवतद्वदित्यर्थः ॥ ३५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०सप्तत्युत्तरशततमःसर्गः ॥ १७० ॥ ॥ ७ ॥ ॥ जीवन्मुक्ति

इत्येवंपरिवारेणमित्रेणसहमंत्रिणा॥स्वकर्मणाव्यवहरन्नहृष्यतिनकुप्यति॥ २९ ॥सयथास्थितमेवास्तेविनिर्वाणमनामुनिः॥चित्रा
र्पितइवाजस्रंलोकेव्यवहरन्नपि॥ ३० ॥वस्तुशून्येषुवादेषुमूकःशैलमयोयथा॥निष्प्रयोजनशब्देषुपरंबाधिर्यमागतः॥ ३१ ॥लोका
चारविरुद्धेषुशवंसकलकर्मसु॥आर्याचारविचारेषुवाग्मुकिर्वावृहस्पतिः॥ ३२ ॥प्रवृत्तवाक्पुण्यकथोजिह्मानांप्रतिभानवान॥निमे
षेणैवनिर्णेतावक्ताशुवद्गुवस्तुनः॥ ३३ ॥समदृष्टिरुदारात्मावदान्यःसंविभागवान्॥पेशलस्निग्धमधुरःसुंदरःपुण्यकीर्त्तनः॥ ३४॥
स्वभावएषैवभवेत्प्रबुद्धधियांप्रयत्नेनतुनेदृशास्ते॥भवंतिनेंद्वर्कहुताशनाद्याःक्वचित्परप्रेरणयाप्रकाशाः॥ ३५॥ ॥इ०वा०वा०दे०
मो०नि०उ०तत्त्वज्ञव्यवहारवर्णनंनामसप्तत्यधिकशततमःसर्गः॥१७०॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥संविदाका
शकचनमिदंभातिजगत्तया॥वस्तुतोनजगन्नाभानशून्यंनचसंविदः॥ १ ॥ यदिदंभातिचिद्व्योमजगदाख्यंनतत्ततः॥आकाशादिव
शून्यत्वमन्यदन्यदपिस्थितम्॥ २॥देशाद्देशांतरप्राप्तौमध्येयत्संविदोवपुः॥तदृश्यमितिभातीदंदृश्यमन्यन्नविद्यते॥ ३॥महाप्रलयसं
पत्तावादिसर्गःपुनःकिल॥परस्मात्कारणाभावेकुतोदृश्यस्यसंभवः॥ ४ ॥ तदाणुमात्रमपिहिदृश्यबीजंनविद्यते॥किलयस्मादिदंच
क्वंपुनर्मूर्त्तंप्रवर्त्तते॥५॥

प्रतिष्ठार्थंसर्वसंदेहशांतये ॥ भूयस्तत्त्वोपदेशेनक्रियतेदृश्यमार्जनम् ॥ १ ॥ वस्तुतस्तुनजगन्नापिजगतआभानमाभानापिशून्यंनापिवृत्तिसंविदः ॥ १ ॥ अज्ञदृष्ट्याअन्यत
स्थितमपिततश्चिद्व्योम्नोऽन्यन्न ॥ यथाशून्यत्वमाकाशादन्यन्नतद्वत् ॥ २ ॥ तथाचनिर्विषयमेवचैतन्यंयदेकविषयादपरविषयप्राप्तावंतरालेप्रसिद्धंतदेवदृश्यमितिभातीत्यर्थः
॥ ३ ॥ सदेवसोम्येदमग्रआसीत् ॥ यदातमस्तन्नदिवानरात्रिर्नसन्नचासन्शिवएवकेवलइत्यादिश्रुतिषुसन्मात्रपरिशेषलक्षणमहाप्रलयसंपत्तौप्राक्सत्यांतदुत्तरंपुनरादिसर्गःकि
लभवतीतिश्रुतम् ॥ तत्रसदेवेत्यवधारणादविकारात्परस्मादन्यस्यकारणस्याभावेकुतोस्यदृश्यस्यसंभवः ॥ ४ ॥ तत्रश्रुतिविरोधात्परमाण्वादिकारणांतरकल्पनायाअनवकाश
इत्याह ॥ तदेति ॥ प्रवर्त्ततेप्रवर्त्तेत ॥ ५ ॥

किंततस्तत्राह ॥ उत्पन्नमेवेति ॥ अनुत्पत्तिप्रतिपादनेएवसृष्टिश्रुतीनांतात्पर्यमित्यर्थः॥६॥प्रत्यक्षंदृश्यभानस्यकागतिस्तत्राह ॥ यच्चेदमिति ॥ विदुःश्रुतितात्पर्यविदइत्यर्थः॥७॥ चिन्मात्रस्यदृश्याकारेणभानंसुषुप्तात्स्वप्नगमनेप्रसिद्धमित्याह ॥ यथेति ॥ ८ ॥ सुषुप्तात्स्वप्नगमनवत्प्रलयात्सर्गगमनमपितथाबोध्यमित्याह ॥ सर्गस्येति ॥९॥१०॥ यथाअनिलःस्पंदःसन्नात्मनिस्वस्मिन्नेवचक्रावर्त्तवद्वात्यावदीहतेतथाचिन्नभोप्यज्ञातमात्मन्येवदृश्यमित्येवतिष्ठति ॥११॥ अतएवज्ञातंचेद्दृश्यंजगत्त्रयमनाभातमेवपरंब्रह्मैवभाति ॥१२॥ अज्ञदृशाज्ञदृशावामूर्तममूर्त्तंवाअस्तुब्रह्मैवतथाविराजतइतिनुनिष्कर्षइत्यर्थः ॥ १३ ॥ प्रबोधोजागरणंतत्काले ॥ प्रबोधेआत्मप्रबोधे ॥ १४ ॥ धीमंतोश्चितयंतोपिअप्रबोधनं

उत्पन्नमेवनैवातोमूर्त्तंदृश्यमिदंजगत् ॥ वंध्यापुत्रइवात्यंतमतोस्त्येवनदृश्यधीः ॥ ६ ॥ यच्चेदंकिंचिदाभातिदृश्यमित्यभितःस्थितम् ॥ तच्चिन्मात्रंखमेवाच्छंपरमेवपदंविदुः ॥ ७ ॥ यथासुषुप्तात्स्वप्नत्वंगच्छत्यात्यनवस्थितिम् ॥ चिन्मात्रमजहत्स्वच्छंनिजंरूपमनामयम् ॥ ८ ॥ सर्गस्यादौतथैवेदमात्मैवस्वात्मनात्मनि ॥ व्योमात्मैवचिदाभासंदृश्यमित्यवभासते ॥ ९ ॥ यथापुरतयाभातिमनःसंकल्पमंथरम् ॥ तथादृश्यमिवाभातिसर्गादौचिन्नभःपरम् ॥ १० ॥ यथात्मन्यनिलःस्पंदश्चक्रावर्त्तवदीहते ॥ सर्गादौचिन्नभःस्थित्वादृश्यमित्येवतिष्ठति ॥ ११ ॥ अतोज्ञातमनाभातमेवदृश्यंजगत्त्रयम् ॥ ब्रह्मैवेदंपरंभातिस्वात्मनीत्थमवस्थितम् ॥ १२ ॥ नास्त्येवमूर्त्तंपृथ्व्यादिकिंचनापिकदाचन ॥ अस्तुमूर्त्तममूर्त्तंवाब्रह्मैवेदंविराजते ॥ १३ ॥ प्रबोधकालेस्वप्नाद्रिर्यथाव्योमैवनिर्वपुः ॥ तथेदंशांतचिन्मात्रंखंप्रबोधेजगत्त्रयम् ॥ १४ ॥ प्रबुद्धानांपरंब्रह्मनिर्विभागमिदंजगत् ॥ धीमंतोपिनतद्विद्मोयदिदंत्वप्रबोधनम् ॥ १५ ॥ देशाद्देशांतरप्राप्तौयन्मध्येसंविदोवपुः ॥ स्वस्वभावाहिभूतानांतत्पदंपरमात्मकम् ॥ १६ ॥ देशाद्देशांतरप्राप्तौयन्मध्येसंविदोवपुः ॥ एतत्तत्परमाकाशमत्रसर्वंप्रतिष्ठितम् ॥ १७ ॥ यादृगेतत्पदंतादृगिदंसदसदात्मकम् ॥ येनार्थपंचकादन्यत्किंचनापिनविद्यते ॥ १८ ॥ रूपालोकमनस्काराएतदेवपदंविदुः ॥ ऐतेतेद्रवतावर्त्ताःपदस्यास्यमहांभसः ॥ १९ ॥ देशाद्देशांतरप्राप्तौयन्मध्येसंविदोवपुः ॥ एतस्याव्यतिरेकेणजगत्तानास्तिकाचन ॥ २० ॥ रागद्वेषादयोभावाभावाभावदृशस्तथा ॥ एतद्रूपममुंचंतएतस्यावयवाःस्थिताः ॥ २१ ॥

कीदृशमितिनविद्मः ॥ १५ ॥ सर्वभूतानांनिर्विषयचिन्मात्रमेवस्वस्वभावइत्याह ॥ देशादिति ॥ १६ ॥ अत्रेति ॥ सर्वाधिष्ठानमपिनिर्विषयचिदेवेत्यर्थः ॥ १७ ॥ अधिष्ठानानुरूपोयमध्यासइत्याह ॥ यादृगिति ॥ केनांशेनसादृश्यंतदाह ॥ येनेति ॥ येनहेतुनाअर्थपंचकात्पंचभूतेभ्योन्यत्किंचिन्नविद्यते ॥ तथाचस्वातिरिक्तस्वकार्यशून्यत्वमेवास्यब्रह्मसादृश्यमित्यर्थः ॥ १८ ॥ बाह्येंद्रियजन्यविषयाभासारूपालोकाआभ्यंतरमनोधीनास्तुमनस्काराएतेसर्वेप्येतत्पदमेव ॥ १९ ॥ तथाचनिर्विषयचिन्मात्रव्यतिरेकेणजगत्तानास्तीतिप्रसिद्धमित्याह ॥ देशादिति ॥ जगत्ताजगद्भावः ॥ २० ॥ एतद्रूपंसद्रूपंभानरूपंच ॥ २१ ॥

शाखाचंद्रदर्शनेपूर्वाकोटिःशाखाअपराकोटिश्चंद्रस्तौत्यक्त्वामध्येयत्संविदोनिर्विषयंवपुःप्रसिद्धंसतस्याःस्वभावःसएवजगल्लक्षणमरुमरीचिकापयस्यधिष्ठानसंज्ञितइत्यर्थः ॥ २२ ॥ एतदेवाभिप्रेत्यमयापुनःपुनर्निर्विषयविस्तृतापरोक्षचैतन्यस्यसकलजनसाधारणप्रसिद्धिप्रदर्शकोदेशाद्देशांतरमितिश्लोकउद्घुष्यतइत्याशयेनाह ॥ देशादिति ॥ कूटस्थत्वादेवस्वरूपादप्रच्युतात्मनः ॥ जाग्रद्देशात्स्वप्नदेशप्राप्तौमध्येसुषुप्तिदशायांयत्संविदोवपुःपूर्वसर्गदेशात्पुनःसर्गप्राप्तौमध्येप्रलयेयत्संविदोवपुःइहलोकदेशात्परलोकदेशप्राप्तौमध्येमूर्छावस्थायांयत्संविदोवपुस्तदेवतथैवसर्वदाआस्तेतस्यैवजगदित्यपरंनामाज्ञैःकल्पितमित्यर्थः ॥ २३ ॥ तथासतियत्फलितंतदाह ॥ आदिसर्गादिति ॥ जगन्मायालक्षणस्यशंबरस्यैंद्रजालिकस्याडंबरमात्रमितिफलितमितिभावः ॥ २४ ॥ तथाचमूढानामभाग्यवशादेवमणिर्नास्तिकाचोस्तीतिभ्रांतिवद्विपरीत्यभ्रमःसंपन्नोयमित्याह ॥ कष्टमिति ॥

त्यक्त्वापूर्वापरेकोट्यौमध्येयत्संविदोवपुः॥ सस्वभावःपरोज्ञेयोजगत्पयसिसंज्ञितः॥ २२॥ देशाद्देशांतरप्राप्तौविद्धिमध्यमसंविदः॥ जगदित्यपरंनामस्वरूपादच्युतात्मनः॥ २३॥ आदिसर्गात्प्रभृत्येवदृश्यमुत्पन्नमेवनो॥ यन्नामतदिहास्तीतिमायाशंवरडंवरः॥ २४॥ कष्टंनास्त्येवयद्दृश्यंतदप्यस्तीतिसंस्थितम्॥ यदप्यस्तिपरंब्रह्मकष्टंनास्तीतितत्स्थितम्॥ २५॥ अब्रह्मण्यंकगच्छामिविपरीतमतोजगत्॥ असद्दृश्यंसदित्युक्तंब्रह्मैवंनावगम्यते॥ २६॥ नचोत्पन्नंनचाभातिदृश्यंकिंचनकुत्रचित्॥ यदिदंभातितद्ब्रह्मव्योमैवकचतिस्वयम्॥ २७॥ यथामणिःप्रकचतिस्वभासाऽव्यतिरिक्तया॥ आत्मनोनन्ययास्वच्छ्याचिद्व्योमकचितंतथा॥ २८॥ तस्मिन्नेवपदेशांततपत्येषदिवाकरः॥ तस्यैवावयवश्चैवनानामान्योस्तिभास्करः॥ २९॥ स्थितोपितत्रनतपत्यर्कोनचनिशाकरः॥ प्रकाशयतिदिवोसावर्केनार्कस्तमीश्वरम्॥ ३०॥ तस्यभासाविभातीदंतदहोदृश्यमंडलम्॥ सर्वचंद्रार्कवह्नीनांपदार्थानांसदीपकः॥ ३१॥ ससाकारोनिराकारइतिशब्दार्थकल्पना॥ खपुष्पवदसद्रूपानसंभवतितद्विदाम्॥ ३२॥ स्वांगभूतोयथैकोणुर्भातिजीवार्कतेजसि॥ नभांतिभांतिवातत्रतथासूर्यादयोणवः॥ ३३॥

ष्टमिति ॥ खेदेकष्टशब्दौ ॥ २५ ॥ अहंतुअब्रह्मण्यंब्रह्मभावशून्यमतोविपरीतंजगत्क्वगच्छामिक्वलभे ॥ मूढैस्तुअसद्दृश्यंसदित्युक्तंतैरपिब्रह्मैवंनामगम्यतेनदृश्यम ॥ असतोगंतुमशक्यत्वादित्यर्थः ॥ २६ ॥ २७ ॥ अव्यतिरिक्तयेत्यस्यदार्ष्टांतिकेविवरणंस्वात्मनोऽनन्ययेति ॥ २८ ॥ कथमिदंप्रत्येयमितिचेद्दिवाकरादिजगतःसद्रूपेणैवसत्तासामान्यैकदेशप्रायतयाअनुभूयमानत्वादित्याह ॥ तस्मिन्नेवेत्यादिना ॥ २९ ॥ यथाअर्कादयस्तदधीनप्रकाशानतथाब्रह्मअर्काद्यधीनप्रकाशमित्याह ॥ स्थितोपीति ॥ तपतिप्रकाशयति ॥ तथाचश्रुतिः ॥ नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोऽयमग्निः॥ तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीति ॥ ३० ॥ ३१ ॥ विषयासत्वादेवासद्रूपा ॥ ३२ ॥ जीवभूतस्यजगत्पश्यतोस्यार्कस्यतेजसिजालांतरेयथाएकोणुर्भातितथाअपरिच्छिन्नचिदाकाशेब्रह्मणिएतेअर्कादयोभांतिनभांतिवेत्यनादरोक्तिः ॥ ३३ ॥

नहिरत्नात्तद्भासोऽतिरिक्ताः ॥ ३४ ॥ अचिदप्रसिद्धौव्यावर्त्याभावाच्चिन्मात्रेणापिरहितम् ॥ ३५ ॥ ३६ ॥ अवयवद्वयघटनप्रयुक्तंस्थौल्यमत्यजंतएवतत्रचित्प्रकाशेएतेसू र्यादयःपरमानिरवयवाअणवः ॥ स्वरूपंसत्ताम् ॥ ३७ ॥ किंचिदिति ॥ व्यवहारमात्रस्यनिरासेविरोधाविरोधयोरपितत्रनिरासादितिभावः ॥ ३८ ॥ ३९ ॥ देशाद्देशांतरमि तिश्लोकस्यतात्पर्यंतत्रसाधकत्वेनवर्णयति ॥ एकमिति ॥ ४० ॥ चितिर्जीवचैतन्यमिव ॥ तथाचबादरायणस्यभगवतःसूत्रम् ॥ आत्मनिचैवंविचित्राश्चहीति ॥ ४१ ॥ तथा चसुषुप्तात्स्वप्नइवप्रलयात्सर्गात्मनाचिदेवभातीत्याह ॥ सुषुप्तादिति ॥ ४२ ॥ तदेवस्पष्टयति ॥ यादृगिति ॥ ४३ ॥ तत्त्वविदांगोत्रंब्रह्मविद्यासंप्रदायस्तद्विषयेमूढस्तुपामरोय

चिन्मात्राकाशरत्नस्यस्त्वष्टयोर्कादिसंयुताः ॥ याभासस्ताःकथंतस्माद्व्यतिरिक्ताःस्युरुच्यताम् ॥ ३४ ॥ चिन्मात्रेणापिरहितंशून्यत्वेनापि वर्जितम् ॥ पदंसर्वात्मरिक्तंतत्सर्वार्थैश्वसमन्वितम् ॥ ३५ ॥ पृथ्व्यादीन्यपिसंत्येवतत्रसंतिनकानिचित् ॥ जीवंतोपिनविद्यंतेजीवास्तत्र चकेनच ॥ ३६ ॥ अत्यजंतोद्वयस्थौल्यंतत्रैतेपरमाणवः ॥ स्वरूपमत्यजद्द्वैतमैक्यंवात्रनकिंचन ॥ ३७ ॥ किंचिदत्रनकिंचिद्वैनकिंचिच्च नकिंचन ॥ किंचिन्नकिंचिदित्येषाकलनात्रातिदूरगा ॥ ३८ ॥ एकानिरंतरानंतानित्यमत्याततात्मना ॥ चिन्मात्रव्योमसत्तैवजगन्नाम्ना त्मनिस्थिता ॥ ३९ ॥ एकंचेत्यंत्यक्तवत्याअप्रामायाश्रितोपरम् ॥ यद्रूपंजगतोरूपमस्यनानात्मनोपितत् ॥ ४० ॥ नानेवेदमनानैवचिद्व्यो मैवेदमाततम् ॥ भूतपंचकरूपेणस्वप्नेचितिरिवस्थितम् ॥ ४१ ॥ सुषुप्ताद्विशतःस्वप्नंसुषुप्तस्यैवचिद्यथा ॥ यथास्थितैवस्वप्नत्वमेत्येवंसर्ग तामिमाम् ॥ ४२ ॥ यादृक्सुषुप्तंस्वप्नस्तुतादृगेवतथैवच ॥ जाग्रत्तुर्यंतथैवेदमतोव्योमसमंजगत् ॥ ४३ ॥ जाग्रत्स्वप्नःसुषुप्तंचतुर्यमेवा खिलंस्थितम् ॥ तत्त्वविद्गोत्रमूढस्तुयद्वेत्तिनवेद्मितत् ॥ ४४ ॥ जडानामजडानांयःसर्वार्थानामनारतम् ॥ दुर्लक्ष्यपरिणामोंतर्मनोबु द्ध्यादिवर्जितः ॥ ४५ ॥ सुशुद्धायाश्रितोरूपंपदार्थास्तन्मयाश्चते ॥ तेवसंतिनसद्रूपास्तदेवहितथास्थितम् ॥ ४६ ॥ परिणामादिशब्दा र्थदृशामतइहानघ ॥ उपदेशार्थमुक्तीनांगंधोप्येवंनविद्यते ॥ ४७ ॥ आदिसर्गात्प्रभृत्येवमहासत्तात्मनात्मनि ॥ चिन्मात्रपरमाकाशं स्थितमेकंमहात्मनः ॥ ४८ ॥

द्वेत्तितदहंनवेद्मि ॥ ४४ ॥ जडानांजगतामजडानांजीवानांचांतःस्थित्वायोंतर्यामितयादुर्लक्ष्यमेवयथास्यात्तथाजगत्परिणामयतीतिदुर्लक्ष्यपरिणामईश्वरःसएवशोधिता याजीवचितेःपारमार्थिकंरूपम् जगत्पदार्थाश्चतन्मयाएवेतितदेवजगदाकारेणस्थितमितिनिष्कर्षइतिद्वयोरर्थः ॥ ४५ ॥ ४६ ॥ ननुयदिपृथिव्यादिपदार्थाश्चिद्रूपाएवनचिद्रूपा त्पृथक्संतितर्ह्यंतर्यामितयातत्परिणामयितृत्वंकथंतत्राह ॥ परिणामादीति ॥ उपदेशार्थंपरिणामंलौकिकमंगीकृत्यप्रवृत्तानामुक्तीनांनपरमार्थतःपरिणामपरतेत्यर्थः ॥ ४७ ॥ कुत्रतर्हितात्पर्यंतदाह ॥ आदिसर्गादिति ॥ महात्मनस्तत्त्वविदःप्रपूर्णैकात्मनिप्रख्याअनुभूतिरत्रप्रमाणमित्युत्तरान्वयि ॥ ४८ ॥

अभिधाःअज्ञान्मतिकृताः ॥ ४९ ॥ तथाचप्रबोधेयादृशआत्मापरिशिष्यतेतदंगीकाराद्यद्यज्जगत्कौतुकमनुभूतंतत्सर्वंसुखंसुखमेवभवतिअप्रबोधेतदनंगीकारेतुसदुःखंयद्यदनुभूयतेजन्ममरणजरामयादितत्सर्वंदुःखमेवभवति स्वप्नप्रबोधाप्रबोधवदित्याह ॥ परिज्ञातेइति ॥ ५० ॥ अतएवतद्विदोदुःखविक्षेपाभावान्नित्यंसमाधानसुखमेवेत्याह ॥ गच्छतइति ॥ ५१ ॥ बहिःसंसारेसतोप्यंतर्मुक्तत्वात्तत्रासतएव ॥ अन्यत्किंसाध्यंपरिहरणीयंवाअवशिष्यते ॥ ५२ ॥ बहिःकार्यैर्व्यवहरन्नपिहृदयेनांकिंचिन्नसंत्यजतिनादत्तेचाकत्वकार्येब्रह्मण्येवावतिष्ठते ॥ ५३ ॥ एवंस्थितिश्चास्यस्वभावएवनतुयत्नेनआहार्यःसंपाद्योगुणः ॥ ५४ ॥ प्रकृतेतराआत्मातिरिक्तविषयिणी ॥ ५५ ॥ योनिरावरणोविद्वान्सआश्वस्तांतःकरणःसदासमाहितचित्तःप्रक्षीणशत्रुमित्रादिविकल्पःस्वात्मसुखसारप्रचुरःपरमेणशमामृतेनसदैवतृप्तस्तिष्ठति ॥ ५६ ॥ ॥इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०

प्रपूर्णैकात्मनिप्रख्यासासर्वव्यापिनीचितिः॥ स्थितातयात्मन्येवांतर्जगदित्यभिधाःकृताः॥४९॥परिज्ञातेयथास्वप्नेस्वांगीकारात्सुखंसुखम्॥ अनंगीकारतोदुःखंसदुःखंभवतिक्षणात्॥५०॥गच्छतस्तिष्ठतश्चैवजाग्रतःस्वपतस्तथा॥ नित्यमेकंसमाधानंस्थितंशांतस्यतद्विदः॥५१॥ भेदेप्यभेदनिष्ठस्यदुःखेपिहिसुखस्थितेः॥ सतोप्येवासतोज्ञस्यकिमन्यदवशिष्यते॥५२॥ नसंत्यजतिनादत्तेकिंचिद्व्यवहरन्नपि॥ हृदयेनबहिःकार्येऽकार्यएवावतिष्ठते॥५३॥ यथाहिमस्यशीतत्वंवह्नेरौष्ण्यंतथेदृशः॥ स्वभावोस्यभवेन्नित्यंनत्वाहार्योगुणोस्यसः॥५४॥ यस्यत्वेषस्वभावःस्यान्ननामनसतत्त्ववित्॥ एतदेवाज्ञताचिह्नंयदिच्छाप्रकृतेतरा ॥ ५५ ॥ आश्वस्तांतःकरणःक्षीणविकल्पःस्वरूपसारमयः॥ परमशमामृततृप्तस्तिष्ठतिविद्वान्निरावरणः॥५६॥ ॥इ०वा०महारामायणेवा०दे०मो०निर्वाण०उ०द्वैतैक्यनिरामययोगोपदेशोनामैकसप्तत्युत्तरशततमःसर्गः॥१७१॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥एवंपृथ्व्यादिरहितःखमेवाद्यःप्रजापतिः॥ मनोमात्रमहंमन्येसंकल्पविटपीयथा॥१॥ मनइत्यभिधानेनपश्चादास्याप्रकल्पिता॥ वार्यावर्त्तविवर्त्तेनप्रोत्थायावर्त्तता यथा॥२॥ सत्तामात्रात्मनस्तस्यकुतोबुद्ध्यादयःकिल॥ अविद्यमानेपृथ्व्यादौखस्यानंतस्यकिंरजः॥ ३॥

उ०एकसप्तत्युत्तरशततमःसर्गः ॥ १७१ ॥ ॥ ७ ॥ ॥ मनोमात्रंविधाताप्रतत्संकल्पोजगद्द्रुमः ॥ नदेहोस्यस्मृतिर्वैतिस्मृतितत्त्वंचकीर्त्यते ॥१॥ ननुविधातृसृष्टंजगच्छ्रूयतेसूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥दिवंचपृथिवींचांतरिक्षमथोस्वरितितत्कथंचिन्मात्रकचनंस्वप्नवदितिवर्णितमित्याशंकांवारयितुंतत्संकल्पानांतन्मयजगतश्चचिन्मात्रत्वमेवेतिवर्णयितुमुपक्रमते ॥ एवमिति ॥ एवमनादिर्जीवन्मुक्तत्वादेवप्रजापतिर्विराडपिपृथ्व्यादिरहितोनिरावरणंखंचिदाकाशमेव ॥ तंचमनःसमष्टिहिरण्यगर्भमात्रमहंमन्ये ॥ मनश्चसंकल्पविटपीवचित्कचनमात्रंप्रसिद्धमितिचिन्मात्रत्वसिद्धिस्तस्येतिभावः ॥ १ ॥ कथंप्रसिद्धंतत्राह ॥ मनइति ॥ मननाकारकल्पनात्प्राक्चिन्मात्रमेवपश्चान्मननाकारकल्पनानंतरंमनइत्यभिधानेनतस्यास्थाचित्तादात्म्याध्यासःप्रकल्पिता ॥ यथावारिण्येवआवर्त्तविवर्त्ताकारेणस्वयंप्रोत्थायआवर्त्ततानेनकल्पितातद्वत् ॥ २ ॥ अतएवतस्यबुद्ध्यादयोपिचिद्व्यतिरेकेणनसंतीत्याह ॥ सत्तेति ॥ ३ ॥

एवंदेहादयोपिनसंतीत्याह ॥ नतस्येति ॥ व्यवहाराभासनिर्वाहार्थमापाततःसदपिपरमार्थतोनकिंचिदपिविद्यते ॥ ४ ॥ कुतोनविद्यतेइतिचेदादिसर्गादौकारणाभावात् नचप्राक्तनःप्रजापतिरेवोत्तरस्यकारणम् तस्यप्राक्तनद्विपरार्धावसानेमुक्तत्वादित्याह ॥ प्राक्तनस्येति ॥ कारणाभावाद्भूयोदेहबुद्ध्यादिपद्दणेकारणाभावात् ॥ तस्मादभिनवस्यप्रजापतेर्जगद्रचनानुकूलास्मृतिस्तस्यसंभवउत्पत्तिश्चयतोनसंभवतीत्यर्थः ॥ ५ ॥ संसारेसतामावर्त्तानांपरिवृत्तिपराणांजीवानामिवमुक्तानांविदेहमुक्तानांसंसारस्मृतिःपुनर्देहोदयश्चनभवत्येव ॥ देशांतरेकालांतरेवापुनरावर्त्तत्वंयतोनास्ति ॥ इमंमानवमावर्त्तंनावर्त्तंते नसपुनरावर्त्ततेइत्यादिश्रुतेरितिभावः ॥ ६ ॥ यदिवापितस्यप्रजापतेःपूर्वकल्पकृतोवासनाजन्यहिरण्यगर्भाहंभावगोचरसंस्कारवलात्तथैवस्मृत्यातद्देहादिकिंचित्संभवेत्तत्केवलोपासनात्मकमनःकल्पनासंस्कारजत्वात्केवलमानसमपृथ्व्यादिभिरुत्पन्नंतनुअतितुच्छंसंकल्पनगरप्रायंमिथ्याभूतमेवभवेत्तत्तुसत्यमित्यस्मत्सिद्धांतसिद्धिरित्यर्थः ॥ ७ ॥ ननुपृथ्व्यादिघटितत्वेनदृश्यमानस्यब्रह्मांडात्मकस्यास्यविराट्शरीरस्यकथंतद्रहिततातत्राह ॥ यथेति ॥ ८ ॥ ननुप्रागुदाहृतश्रुतौदिवंचपृथिवींचांतरिक्षमथोस्वरितिपृथ्व्यादिघटितमेवतद्रूपंश्रुतंतच्चधातायथापूर्वमकल्पयदितिपूर्वतनस्मृतिपूर्वकमेवनिर्मितंगम्यतेतत्राह ॥

## नतस्यदेहचित्तादिनेंद्रियाणिनवासनाः ॥ सदप्येतत्सदातस्यनकिंचिदपिविद्यते ॥ ४ ॥ प्राक्तनस्यप्रजेशस्यमुक्तत्वात्कथमेवच ॥ भूयःसंभवतिप्राज्ञनस्मृतिर्नचसंभवः ॥ ५ ॥ नभवत्येवमुक्तानांस्मृतिर्देहोदयःपुनः ॥ नदेशकालावर्त्तत्वमावर्त्तानांसतामिव ॥ ६ ॥ यदिवापिभवेत्किंचित्स्मृत्यादेहादितस्यतत् ॥ तदपृथ्व्यादिभिःशांतंसंकल्पनगरंतनु ॥ ७ ॥ यथासंकल्पशैलस्यदृश्यमानमपिस्फुटम् ॥ पृथ्व्यादिरहितंरूपंतद्विराड्वपुषस्तथा ॥ ८ ॥ स्मृतिश्चसंभवत्येवनकदाचनकाचन ॥ एषालौकिकबुद्ध्यायासासद्बुद्ध्यानविद्यते ॥ ९ ॥ ॥श्रीरामउवाच ॥ ॥कथंनसंभवत्येषांस्मृतिःस्मृतिमतांवर ॥ स्मृतेश्चासंभवेकस्माद्गुणोगुणगणाकर ॥ १० ॥ ॥श्रीवसिष्ठउवाच ॥ ॥दृश्येहिसंभवत्येषाकार्यकारणतात्मनि ॥ तद्भावाभावसंपन्नानतुसंभवतिस्मृतिः ॥ ११ ॥

स्मृतिश्चेति ॥ अस्यप्रजापतेरादिसर्गेपूर्वानुभवाभावात्स्मृतिर्नसंभवत्येव ॥ याचेयंश्रुतिवलाद्गम्यतेएषालौकिकानांजगत्सत्यतादर्शिनामज्ञानांबुद्ध्याअनादिसिद्धकर्ममार्गप्रवाहप्रवर्तनार्थंश्रुत्यापरबुद्ध्यनुसारेणैवबोधनात् ॥ तस्यतत्त्वविदःप्रजापतेबुद्ध्यातुसास्मृतिर्नविद्यते ॥ ९ ॥ नन्वस्यप्रजापतेःपूर्वकल्पेउपासकतादशायांपृथ्व्याद्यनुभवोस्त्येव तदभावेपृथ्व्यादिघटितविराट्शरीरोहमितिकथमुपासीत ततश्चासौतद्बलादेतत्कल्पादौपृथ्व्यादिस्मृतेस्तद्घटितविराट्शरीरमुपासनवललब्धविरचनसामर्थ्यस्तत्स्मृत्यैवनिर्मास्यतिअस्त्यैवनिर्माणेधातायथापूर्वमकल्पयदितिश्रुतिबोधितःपूर्वकल्पीयब्रह्मांडगुणःसर्वोस्मिन्ब्रह्मांडेकथंसिद्ध्येदितिरामःशंकते ॥ कथमिति ॥ हेगुणगणाकरेतिवसिष्ठसंबोधनम् ॥ १० ॥ नवयंकल्पनाभ्रांतिसंस्कारजामर्थशून्यांस्मृतिंप्रत्याचक्ष्महेकिंतुसत्यार्थानुभवजन्यसंस्कारजाम् ॥ तस्यांहिसत्यांपूर्वानुभवगोचरसत्यार्थजातस्यस्वगोचरानुभवसंस्कारस्मृतिद्वाराएतत्कल्पीयार्थान्प्रत्यन्वयव्यतिरेककल्पनात्कार्यकारणभावसिद्धौस्वकारकसत्तालब्धसत्ताकस्यास्यजगतःसत्यत्वब्रह्माद्वैतसिद्धांतोपरोधःस्यादितिपूर्वकल्पीयेपृथ्व्यादिदृश्येपरमार्थतःसतितद्भावाभावौतदन्वयव्यतिरेकौतद्वशात्संपन्नास्मृतिद्वारिकाएपालौकिकन्यायप्रसिद्धाकार्यकारणतासंभवतिसाद्वारभूतास्मृतिरेवतुनसंभवति ॥ ११ ॥

---

१ अयमवतरणस्यकारणाभावादित्यस्यटिप्पणीरूपेणकेनचिल्लिखितोर्थोलेखकप्रमाददवशान्मध्येपतितइतिभाति ॥ मूलश्लोकेतत्पदाभावात् ॥

कुतोनसंभवतितत्राह ॥ आब्रह्मेति ॥ नेहनानास्तिकिंचन एकमेवाद्वितीयम् अथातआदेशोनेतिनेति यत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमा तदेतद्ब्रह्मापूर्वमनपरमनंतरमवाह्यमयमात्माब्रह्मसर्वानुभूः वाचारंभणंविकारोनामधेयमित्यादिश्रुतिभिःसर्वदृश्यप्रतिषेधात्तथैवविदुषामनुभवाच्च॥तथाचसहसिद्धंचतुष्टयमितिस्मृतिदर्शितदिशासहजतस्तत्त्वविदुषोविराजस्तत्त्वज्ञानबाधितःप्राक्तनःप्रपंचोमिथ्यैवसंपन्नोनतस्ययथार्थस्मृतिमाधातुंतद्द्वारासत्यसर्गप्रतिकारणीभवितुंचसमर्थइतिभावः ॥ १२ ॥ भूत्वापरमार्थतउत्पद्यभावेविद्यमानत्वेसतिप्रमाणैस्तदनुभूयकालांतरेस्मरणंहिस्मृतिःशास्त्रज्ञैरुच्यते नत्वसतोभ्रांतिकल्पितस्यतत्त्वबोधबाधितस्यचस्मृतिरस्तीत्यर्थः ॥ १३ ॥१४॥ उक्तमेवाभिप्रायंसूचयन्समाधानमुपसंहरति ॥ स्मृतिरिति ॥ १५ ॥ पूर्वजन्मन्युपासनात्मिकायास्तस्यजगच्छरीरत्वभावनातद्वशतस्तुउपासनाफलसिद्धयेजगच्छरीरोहमितितेनावश्यंस्मर्त्तव्यम् ॥ यातुलोकेविदितासामेमातासामेदुहितेत्यादिस्मृतिरिवार्थप्रमाजन्यासातस्यनास्त्येव ॥ अन्यदीयोलौकिकःस्मृत्यर्थस्तुमातृदुहित्रादिर्गृहेऽस्ति उपासनाविषयस्तुमनोराज्यकल्पोनास्तीतिवैषम्यमित्यर्थः ॥ कथंनास्तिइममर्थंत्वंशृणु ॥ १६ ॥ भूतस्यातीतस्यापिपदार्थस्यसंस्कारवशादंतःस्मरणंस्मृतिरितिलोकेउच्यते प्रजापतेस्तुकल्पादौवर्त्तमानोपिपदार्थोनास्तिनभूतोस्तिनापिकश्चिद्भविष्यतियत्स्मृतिःस्यादित्यर्थः ॥ तथाचोक्तंसुरेश्वरवार्त्तिके ॥ तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ॥ अविद्यासहकार्येणनासीदस्तिभविष्यतीति ॥ तदेतद्ब्रह्मापूर्वमनपरमनंतरमवाह्यमितिचश्रुतिः ॥ १७ ॥ अचलंकूटस्थम् ॥ १८ ॥ यदिसर्वात्मत्वात्स्मृत्यात्मापिब्रह्मभवतीतिसर्वात्मदृशाउच्येततर्हिसस्तुनामेत्याह ॥ सर्वात्मत्वादिति ॥ एतदेवाभिप्रेत्यमयापियदिवापिभवेत्किंचित्स्मृत्यादेहादितस्यतदित्युक्तमित्याह ॥ व्यवहारेपीति ॥ १९ ॥ अज्ञातब्रह्मस्वभावस्यपरोक्षतयैवकचनंतेनोपासनात्मनापुनःपुनरभ्यस्तःसन्ब्रह्मात्मैवोपासनाफलीभूतबाह्यार्थइवोपासनाकल्पिताकारसादृश्यादवभासते ॥ २० ॥

आब्रह्मस्तंबपर्यंतंदृश्यंकिंचिन्नविद्यते॥ यत्रतत्रकथंकीदृक्कुतःस्यात्संभवस्मृतेः ॥ १२ ॥ भूत्वाभावेहिदृश्यस्यस्मरणंस्मृतिरुच्यते॥ दृश्यमेवनयत्रास्तितत्रैताःकलनाःकुतः ॥ १३ ॥ अत्यंताभावएवास्यदृश्यस्यकिलसर्वदा ॥ सर्वंब्रह्मेतिसत्यार्थास्तत्स्मृतेःकलनाःकुतः ॥ १४ ॥ स्मृतिर्नसंभवत्येवतस्मादाद्यप्रजापतेः॥ आकारवत्त्वमेवास्यशुद्धज्ञानात्मनःकुतः ॥ १५ ॥ स्मर्त्तव्यंभाववशतःस्मृतिर्नास्त्येवलौकिकी॥ स्मृत्यर्थस्त्वन्यदीयोस्तिसत्यात्मात्वमिमंशृणु॥ १६॥ भूतस्यांतःपदार्थस्यस्मरणंस्मृतिरुच्यते ॥ पदार्थस्तुनचैवास्तिनभूतोनभविष्यति॥ १७॥ एवंहिखल्विदंब्रह्मपरमेवाचलंयतः॥ अनादिमध्यपर्यंतंकुतःस्मृत्यादयस्ततः ॥ १८ ॥ सर्वात्मत्वात्पदार्थात्मचिद्व्योमकचनंतुयत्॥ व्यवहारेप्यलंशांतंस्मृत्यातच्छब्दितंमया ॥ १९॥ तदेतत्स्मरणंनामस्वभावकचनंहितत्॥ तेनाभ्यस्तोथबाह्यार्थःसादृश्यादवभासते॥ २०॥

१ अन्नयदितिपाठोपेक्षितइतिभाति

अज्ञानोपहितंब्रह्मजीवेनयद्यत्संवेद्यतेभ्रांत्यास्मृतिपरंपरयावातत्स्वभावमेवावलंब्यस्वंस्वभावंयत्सत्तेनाकारेणकालांतरेणयत्सत्तालिंगितइवार्थोवभासतेतस्यस्मृतिरित्यभिधा स्वस्मिन्नेवतेनकृतेत्यर्थः ॥ २१ ॥ यथाभ्रांतानुभवेअविद्यमानंदृश्यंभातीवतथास्मृतावपिस्थितिर्बोध्या ॥ २२ ॥ भ्रांताभ्यासेनसत्यतएवरूढार्थाभ्रांत्यनुभवेनसमानविषयत्व लक्षणात्सादृश्यात्स्मृतयःस्मृताः ॥ २३ ॥ काकतालीयवदाकस्मिकोद्बोधकवशेनयाःसंविदोभांति स्वांगभूताश्चिदवयवभूताइवविषयतःपारोक्ष्यादवस्थाअपिस्वतआपरो क्ष्यात्स्वस्थाअविकृताः ॥ २४ ॥ अनुभवेयद्यत्कचतितेनाभ्यस्तार्थेनसमानाकारतयासादृश्यात् ॥ २५ ॥ हेतौउद्बोधकेलब्धेअलब्धेपिवा ॥ यथापवनस्पंदोव्यजनादिहेतौ लब्धेप्यलब्धेपिभवतितद्वत् ॥ ताअनुभववृत्त्युपलक्षिताएवविदःकालांतरेस्मृतयःकृताः ॥ २६ ॥ यदिसंविदोवयवभूतास्तर्हितद्वत्सदैवकुतोनकचंतितत्राह ॥ काकतालीयवदि ति ॥ उद्बोधकसमवधानस्यकादाचित्कत्वेनेतिभावः ॥ अव यवाहस्तपादादयोयथामनसस्तत्प्रवणत्वेकचंत्यन्यप्रवणत्वेनकचंतितद्वदित्यर्थः ॥ २७ ॥ स्वप्नेंद्रजालादौयथाघटपटादयोमिथ्याज्ञानमयास्तादृशभ्रमस्यस्मृतिपदार्थस्यकिं मूलंविचार्यतइत्यन्वयः ॥२८॥ अतएवाभ्रांतस्यज्ञस्यप्रजापतेःस्मृतिर्नास्त्येव ॥२९॥ सतत्त्ववित्तथैवयथापूर्वंनिर्विकारएवास्ते ॥ जगत्स्थितेस्तद्दृशाचिद्व्योममात्रत्वादित्यर्थः ॥ अज्ञस्यतुतद्वैपरीत्यमित्याह ॥ यथास्थितमिति ॥ ३० ॥ तत्कुतस्तत्राह ॥ नेति ॥ तस्यतत्त्वविदःस्थितिम् ॥ अतएवसदैवात्साधनचतुष्टयंप्राप्यसंदेहाद्यावज्जिज्ञासुरिवभवति तावन्मोक्षकथातस्मैगुरुणोच्यते ॥ ३१ ॥ यथाअज्ञास्तत्त्वज्ञस्थितिंनजानंतितथावयंतत्त्वज्ञाअपिअज्ञनिश्चयंनजानीमइत्याह ॥ अविद्यायाइति ॥ ३२ ॥ ३३ ॥

यद्यत्संवेद्यतेकिंचित्तत्स्वभावंस्वभावयन्॥तेनावभासतेयोर्थस्तस्यस्मृत्यभिधाकृता॥२१॥अविद्यमानंभातीवयथादृश्यंतथास्थितिः॥ भातैवाविद्यमानैवम्गतृष्णायथोद्यता॥ २२॥ सर्वात्मनिस्थिताःसत्यया:कचंतिसुसंविदः॥ ताएवाभ्यासरूढार्थाःसादृश्यात्स्मृतयः स्मृताः॥ २३॥ काकतालीयवद्भांतिसर्वात्मनिसुसंविदः॥ स्वांगभूताःस्वतःस्वस्थास्ताएवस्मृतयःकृताः॥ २४॥ यद्यत्कचतिसद्रूपंस्वांगं सर्वात्मनःस्वतः॥ तदभ्यस्तार्थसादृश्यात्स्मृतिरित्युच्यतेबुधैः॥२५॥ हेतौलब्धेप्यलब्धेवापवनस्पंदवद्विदः॥ ताएवाभ्यासरूढार्थाःसादृ श्यात्स्मृतयःकृताः॥ २६॥ काकतालीयवद्भांतियास्ताःस्मृत्यभिधाःकृताः॥ यथातवैतेऽवयवाःकचंतिनकचंतिच॥ २७॥ स्थिताएवा त्मनितथासर्वाःसर्वात्मिकाविदः॥ मिथ्याज्ञानमयायद्वदर्थाघटपटादयः॥ २८॥ तद्वत्स्मृतिपदार्थस्यकिंभ्रमस्यविचार्यते॥ दृश्यस्या संभवाज्ज्ञस्यस्मृतिर्नास्त्येवतत्त्वतः ॥ २९ ॥ सतथैकघनत्वाच्चचिद्व्योमत्वाज्जगत्स्थितेः॥ यथास्थितमिदंदृश्यमस्त्येवाज्ञस्यसंप्रति ॥ ३०॥ नमोक्षोपायकथनंनचजानामितत्स्थितिम्॥ संदेहादिवजिज्ञासुस्तावन्मोक्षकथोच्यते॥ ३१ ॥ यावद्दृश्यंस्मृतिश्चैवसंस्मृति श्चास्यशाम्यति॥ अविद्यायास्तुमौर्ख्यस्यविमोहस्यात्यसंभवात्॥३२॥अज्ञस्योनिश्चयोस्माकंनकदाचनगोचरः॥ यच्चयद्विषयेनास्ति तन्नैवानुभवत्यसौ ॥३३॥

१ चिद्रूपमित्यपिक्वचित्पाठः

इदानींस्मृतिहेतुसंस्कारंप्रमार्ष्टुंतत्स्वरूपमाह ॥ भातमिति ॥ अंतःकरणोपहितचिन्मात्रेबाह्यवस्तुस्वरूपालयत्किंचिदेवभातंतच्चेत्पुनःपुनर्व्यवहारेणाभ्यस्तंतादृशार्थसादृश्याद्वा सितंचित्तंतत्संस्कारइतिस्मृतमित्यर्थः ॥ ३४ ॥ तत्रपरिकल्प्यानांसर्वेषांबाह्यार्थानांतत्त्वज्ञानेनात्मस्वभावभूतानांबाधितानुवृत्त्यादग्धपटन्यायेनाभासेपिवस्तुतोऽनवस्थितेस्त त्सादृश्यस्यचित्तेमार्जनान्नसंस्कारस्तत्त्वविदांसंभवतीतिशेषः ॥ ३५ ॥ तथाचयत्फलितंतदाह ॥ एवमिति ॥ ३६ ॥ तथाचप्रतिज्ञातंसिद्धमित्याह ॥ यदात्विति ॥ अयमर्थःसि द्धइतिशेषः ॥ ३७ ॥ ३८ ॥ आत्मनाआत्मनिइत्थमाभातमितिपूर्वत्रान्वयः ॥ अथवामिथ्याकचदिवस्थितंजगद्रूपंचासद्रूपंब्रह्मभूत्वास्थितम् ॥ ३९ ॥ ४० ॥ ननुस्मृत्यात्मक

रजन्यनुभवोभानोर्भवत्यंगकथंवद ॥ भातंवस्तुस्वरूपात्मचिन्मात्रेकिंचिदेवयत् ॥ ३४ ॥ तदभ्यस्तार्थसादृश्यात्तत्संस्कारइतिस्मृतम् ॥ आत्मास्वभावभूतानामपिचिद्व्योमरूपिणाम् ॥ ३५ ॥ सर्वेषांपरिकल्प्यानामाभासेप्यनवस्थितेः ॥ एवंनसंभवत्येवजगत्किंचित्कदा चन ॥ ३६ ॥ दृष्टंन्वगतपेवांबुनतुतत्परमार्थतः ॥ यदात्वयंतदास्वप्नेसर्गादौचावभासते ॥ ३७ ॥ चिद्व्योमैवपरंसर्गपर्यायंस्वात्मनिस्थि तम् ॥ चिद्व्योमैवेत्थमाभातंनच्युतंसत्स्वरूपतः ॥ ३८ ॥ आत्मनात्मनिरूपंवासद्रूपमिवसंस्थितम् ॥ सर्गादावेवकचितंमिथ्याकचदपि स्थितम् ॥ ३९ ॥ अतःकुतःक्वचिन्नामहेयादेयादिभासनम् ॥ नेदमाकारवत्किंचिन्नापिस्मृत्यात्मकंक्वचित् ॥ ४० ॥ कारणाभावतोभा तिस्वरूपंपरमात्मनः ॥ आकारवत्त्वेयद्दुःखंभवेत्स्मृत्यांतदेवच ॥ ४१ ॥ द्वयमेतदसत्तस्माद्बंधोनामनविद्यते ॥ चिद्व्योम्निभूतव्योमाभेशू न्यएवयथास्थितम् ॥ ४२ ॥ स्थितंस्वरूपमजहद्भुवनार्काचलादिकम् ॥ यथास्थितोग्रदिक्कालंजगत्स्वंरूपमत्यजत् ॥ ४३ ॥ स्वमेवात्यज तोरूपंचिद्व्योम्नउदरेस्थितम् ॥ स्वानुभूत्येकमात्रात्मप्रमातृस्वाप्नपत्तनम् ॥ ४४ ॥ अपृथ्व्यादिकुतस्तत्रकिलपृथ्व्यादयोवद ॥ तद्भातिके वलंशांतंचिदाकाशंतथात्मनि ॥ ४५ ॥ सर्वादौस्वप्नकालेचपृथ्व्यादेःसंभवःकुतः ॥ उद्भूयेवजगद्रूपाद्ब्रह्मसत्तात्मनात्मनि ॥ ४६ ॥ करो तिपृथ्व्याद्यभिधाःपश्चात्सत्यार्थदाइव ॥ नस्मृत्यात्मनसाकारंपृथ्व्यादीनामसंभवात् ॥ नभ्रांतिर्नविवर्त्तादिजगद्ब्रह्मात्मकेवलम् ॥ ४७ ॥ ब्रह्मेदमाकचतिचारुजगत्स्वरूपंतच्चैकमेवकचनाकचनात्मनिघ्नम् ॥ दृश्याभमप्यमलमेवनभःप्रशांतंनित्योदितंप्रलयसर्गमयोदयात्म ॥ ४८ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० निर्वा० उ० जगतोब्रह्मत्वप्रतिपादनंनामद्विसप्तत्युत्तरशततमःसर्गः ॥ १७२ ॥

त्माप्यस्यकिमर्थंप्रत्याख्यायतेतत्राह ॥ आकारवत्त्वेइति ॥ स्मृतेनापिभार्यापुत्रादिमरणेनदुःखदर्शनादितिभावः ॥ ४१ ॥ यथास्थितंजीवन्मुक्तानांयावज्जीवंव्यवहारक्षमंस्थि तमित्युत्तरत्रान्वयः ॥ ४२ ॥ ४३ ॥ स्वप्नप्रपंचदृष्टांतोप्यत्रसुसदृशइत्याह ॥ स्वमेवेति ॥ ४४ ॥ साम्यमेवोपपादयति ॥ अपृथ्व्यादीति ॥ ४५ ॥ ४६ ॥ ४७ ॥ इदंब्रह्मैव चारुजगत्स्वरूपमाकचतितच्चकचनाकचनयोःसर्गप्रलययोरात्मन्यविकृतस्वभावनिघ्नंतदेकरूपमेवदृश्याभंभातमप्यमलंनभएवनित्यमनादिकालतःप्रलयसर्गमयोदयात्मकमु दितमज्ञानामित्यर्थः ॥ ४८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेद्विसप्तत्युत्तरशततमःसर्गः ॥ १७२ ॥ ॥ ७ ॥ ॥ ७ ॥

३०।

यथाचितोपिदेहादिजडभावक्रियाग्रहः ॥ यथासर्वात्मकत्वंचतथेहप्रतिपाद्यते ॥ १ ॥ यदिंस्वप्रकाशचिच्चमत्कारएवजगत्तर्हिचितःसर्वत्रतुल्यतयाअहंभावग्रहोयुक्तः ॥ ग्रह आग्रहोऽभिनिवेशः ॥ देहेएवातिशयेनाहंभावाग्रहोऽन्यत्रनेतिनियमःकुतइत्येकःप्रश्नः ॥ १ ॥ एवंचितःअचिद्रूपपाषाणकाष्ठादिभावाग्रहश्चकुतः ॥ चिद्भावस्यहातुमशक्यत्वात् ॥ अचिद्रूपस्यस्वीकर्त्तुमशक्यत्वाच्चेतिद्वितीयः ॥ एवंचितएवसार्वात्म्येइदंपाषाणकाष्ठादिनास्तित्वंकथमापद्यते चितोऽपह्नवासंभवात् ॥ एवंसर्वात्मकचिद्विरुद्धमचिद्रूपंपाषाणकाष्ठाद्यस्तिवाकथम् येनसार्वात्म्यंस्यादितिद्वौप्रश्नौ ॥ २ ॥ सर्वशरीरस्याहंतयाप्रथायांतुल्यायांहस्तेएवहस्तत्वंपादेएवपादत्वंनेतरत्रेतिजातिकर्मसंस्थानादीनांयथाव्यवस्थाग्रहःअनादितत्तदाकारसंस्कारव्यवस्थयैवनान्येनहेतुनातथादेहेदेहतायामहंतादौचाग्रहोबोध्यइत्याशयेनदृष्टांतप्रपंचनेनाद्यौप्रश्नौसमाधत्ते ॥ शरीरिणइत्यादिना ॥ देहतावृक्षतादिशब्दास्तत्तदहंतापराः ॥ अत्रसर्वत्रविषयाध्यासेविषयाध्यासोज्ञानाध्यासेज्ञानाध्यासोदृष्टांतइतिद्वौद्वौयथातथाशब्दौप्रयुक्ताविितिबोध्यम् ॥ ३ ॥ वृक्षाकाशादावप्यभि

श्रीरामउवाच ॥ ॥ सर्वानुभवरूपस्यतथासर्वात्मनोप्ययम् ॥ अनंतस्यात्मतत्त्वस्यदेहेपिकिमहंग्रहः ॥ १ ॥ चितःपाषाणकाष्ठत्वंस्वप्नादिपुकथंभवेत् ॥ इदंपाषाणकाष्ठादिकथंनास्त्यस्तिवाकथम् ॥ २ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शरीरिणोयथाहस्तेहस्ततायांयथाग्रहः ॥ सर्वात्मनस्तथादेहेदेहतायांतथाग्रहः ॥ ३ ॥ पादपस्ययथापत्रेपत्रतायांयथाग्रहः ॥ सर्वात्मनस्तथावृक्षेवृक्षतायांतथाग्रहः ॥ ४ ॥ आकाशस्ययथाशून्येशून्यतायांयथाग्रहः ॥ सर्वात्मनस्तथाद्रव्येद्रव्यतायांतथाग्रहः ॥ ५ ॥ स्वप्नेचितःस्वप्नपुरेरूपतायांयथाग्रहः ॥ सर्वात्मनस्तथास्वप्नजाग्रदादौतथाग्रहः ॥ ६ ॥ यथागेंद्रेदृषद्वृक्षवार्यादौसतथाग्रहः ॥ तथासर्वात्मनोगेंद्रपुरतायांतथाग्रहः ॥ ७ ॥ शरीरस्ययथाकेशनखादिपुयथाग्रहः ॥ सर्वात्मनस्तथाकाष्ठदृषदादौतथाग्रहः ॥ ८ ॥ चितएवयथास्वप्नेभवेत्काष्ठोपलादिता ॥ चिदाकाशस्यसर्गादौतथैवावयवादिता ॥ ९ ॥ चेतनाचेतनात्मैकंपुरुषस्ययथावपुः ॥ नखकेशजलाकाशधर्ममाकारभासुरम् ॥ १० ॥

मानिर्जीवसत्वात्तत्तद्दृशाध्यासाउदाहृताः ॥ ४ ॥ द्रव्येमणिमुक्तास्वर्णादिधने ॥ द्रव्यतायांप्रयत्नोपार्ज्यतालक्षणभव्यतायाम् ॥ ५ ॥ अरूपचित्तोपादानकत्वादरूपत्वेनभवितुमुचितेस्वप्नपुरेरूपतायांसाकारतायांयथाआग्रहःस्वप्नभुजः ॥ स्वप्नजागरादौअवस्थात्रये ॥ ६ ॥ अगेंद्रेपुरेचविद्यमानेदृषदादौसतथाप्रसिद्धआग्रहोयथेत्यर्थः ॥ अद्रितायांपुरतायांचतदभिमानिनआग्रहः ॥ ७ ॥ अंत्यौप्रश्नावपिसमाधत्ते ॥ शरीरस्येत्यादिना ॥ यथाचेतनत्वेनाभिमतस्यापिशरीरस्यकेशनखादिपुयथाअचेतनत्वाग्रहस्तथाचिद्रूपस्यापिसर्वात्मनःकाष्ठदृषदादौतथाग्रहःअचेतनत्वाग्रहः ॥ चिताचित्त्वस्यहातुमशक्यत्वमचित्त्वस्यस्वीकर्त्तुमशक्यत्वंचमायागतावरणविक्षेपशक्तिभ्यामघटितस्यापिघटनात्परिहर्त्तव्यमितिभावः ॥ ८ ॥ चितस्तद्विरुद्धमचित्त्वमिवनिरवयवायाःसावयवत्वमपिस्वप्नानुभवबलादेवभवतीतिस्वीकार्यमित्याह ॥ चितएवेति ॥ चितःसकाशादेव ॥ ९ ॥ किंचमायाशबलस्यचेतनाचेतनोभयात्मैकैकवस्तुत्वादप्युभयव्यवहारप्रवर्त्तकत्वानविरुद्धेत्याशयेनाह ॥ चेतनेति ॥ नचविरोधः ॥ १० ॥

॥११॥अतएवतत्त्वतस्तज्ज्ञानात्सर्वेविरुद्धधर्माःशाम्यंतीत्याह ॥ यथास्थितमिति ॥ १२ ॥ स्वप्नद्रष्टुर्यासाप्रातःप्रसिद्धाप्रबुद्धतासैवनद्रष्टास्तिनदृश्यताकिंत्विदंसर्वंचिन्मात्राकाशमेवेतिनिश्चयेअलंसमर्थेत्यर्थः ॥१३॥ सहस्रकोटिशोप्यागतैरीदृशाध्यासैर्नाधिष्ठानैकरूप्यक्षतिरित्याह ॥ कल्पकोटीति ॥ १४ ॥ करोतिसलिलमितिशेषः ॥ निजेचेतनेमायाशबलचिति ॥१५॥१६॥ तरंगेन ॥ प्रातिपदिकांतनुम्विभक्तिषुचेत्यत्रापिपूर्वपदात्संज्ञायामितिसूत्रादगइत्यनुवृत्तेर्नणत्वम् ॥ अचेतनस्यापिचेतनत्वारोपादियमुक्तिः ॥१७॥

चेतनाचेतनात्मैकंतथासर्वात्मनोवपुः॥ जंगमंस्थावरमयंकिंतुनित्यमनाकृति ॥ ११ ॥ यथास्थितंशाम्यतीदंसम्यग्ज्ञानवतोजगत्॥ स्वप्नेस्वप्नपरिज्ञातुर्यथादृष्टार्थसंभ्रमः॥ १२ ॥ चिन्मात्राकाशमेवेदंनद्रष्टास्तिनदृश्यता॥ इतिमौनमलंस्वप्नद्रष्टुर्यत्साप्रबुद्धता॥१३॥ कल्पकोटिसहस्राणिसर्गाआयांतियांतिच ॥ तएवान्येचचिद्व्योम्निजलावर्त्ताइवार्णवे॥ १४॥ करोत्यब्धौयथोर्म्यादौनानाकचकचंवपुः॥ चित्करोतितथासंज्ञाःसर्गाद्याश्चेतनेनिजे॥१५॥यथास्थितमिदंविश्वंब्रह्मैवानामयंसदा॥ तत्त्वज्ञंप्रत्यतत्त्वज्ञजनतानिश्चयाहृते॥१६॥ नाहंतरंगःसलिलमहमित्येवयुक्तितः॥ वुद्धंयेनतरंगेनकुतस्तस्यतरंगता॥ १७॥ ब्रह्मणोस्यतरंगत्वमिवाभानंयतस्ततः॥ तरंगत्वातरंगत्वेब्राह्म्यौशक्तीस्थितिंगते॥१८॥ चिद्व्योम्नोऽत्यजतोरूपंस्वप्नवद्व्यस्तवेदनम्॥ तदिदंहिमनोरामब्रह्मेत्युक्तःपितामहः॥१९॥ एवमाद्यःप्रजानाथोनिराकारोनिरामयः॥ चिन्मात्ररूपसंकल्पपुरवत्कारणोज्झितः॥ २० ॥ येनांगदत्वंनास्तीतिवुद्धंहेमांगदेनवै॥ अंगदत्वंकुतस्तस्यतस्यशुद्धैवहेमता॥ २१ ॥ अजेसंकल्पमात्रात्मचिन्मात्रव्योमदेहिनि॥ अहंत्वंजगदित्यादियद्विभातंतदेवतत्॥ २२ ॥ चिच्चमत्कृतयोभांतियाश्चिद्व्योमनिशून्यताः॥ एतास्ताःसर्गसंहारस्थितिसंरंभसंविदः॥ २३॥ अच्छंचिन्मात्रनभसःकचनंस्वयमेवतत्॥ स्वप्नाभंचित्ततामात्रंसएषप्रपितामहः ॥ २४ ॥ यथातरंगस्तेनैवरूपेणान्येनवानिशम्॥ स्फुरत्येवमनाद्यंतःसर्गप्रलयविभ्रमः॥ २५॥ चिद्व्योम्नःकचनंकांतंयद्विराडितिशब्दितम्॥ भवेत्संकल्पपुरवत्तस्यकुर्यान्मनोपिवै ॥ २६ ॥

तरंगशब्दास्तत्सदृशजगत्पराः ॥ १८ ॥ व्यस्तवेदनमन्योन्यधर्मविनिमयेनव्यत्यस्तचेतनभावंमनःसमष्ट्युपहितंयद्रूपंतदिदंमनोब्रह्मेतिशब्दैःपितामहउक्तः ॥ १९॥२०॥२१ ॥ समष्टेश्चिन्मात्रत्वेतद्व्यष्टीनामस्मदादीनांतदनुक्तमपिसिद्धमित्याह ॥ अजेइति ॥ २२ ॥ २३ ॥ प्रपितामहोहिरण्यगर्भः ॥ २४ ॥ २५ ॥ विराडपितादृगेवेत्याह ॥ चिद्व्योम्नइति ॥ तस्यविराजोमनोहिरण्यगर्भोपियत्कुर्याद्भुवनभूतग्रामादितदपिसंकल्पपुरवदित्यर्थः ॥ २६ ॥

१ अत्रापिपूर्वपदादित्यनुवृत्तेरत्रोदाहरणेअस्यकथंप्रवृत्तिरितिविचारणीयम्

तथाचसविराडेवसर्गःसएवस्वप्नःस्वप्नएवजापद्यष्टिसमष्टिदेहःसंपन्नः ॥ यथाघनंसुषुप्तंनिद्रातिशयलक्षणंतैमिर्यात्स्वप्नसंवेदनंभवेत्तथाप्रलयेअविद्यातिमिरावृतआत्मैवजगत्सं वेदनंभवेदित्यर्थः॥२७॥ जगत्सर्वंविराजोंगतयावर्णयति ॥ तस्येत्यादिना ॥तस्यविराड्रूपस्यपरमात्मनःकल्पांताअवांतरप्रलयास्तद्रूपाचतुर्मुखस्यरजनीशिरोरुहतयाकेशतयाउ दिताप्राथमिकत्वात् ॥ प्रकाशतमसीदिनरात्रीअंगसंधयः ॥२८॥ दिशौंप्राचीप्रतीच्यौश्रोत्रेइत्यनयारीत्यामनःकल्पनैवविराडाकारेणविजृंभिता ॥२९॥ तथाचास्मत्स्वप्नतुल्य तातस्यसिद्धेतिनिष्प्रपंचतैवपरमार्थइत्याह ॥ एवमिति ॥ ३० ॥ यच्चेतत्चेतनात्मकजीवभावापन्नंसत्स्वयंकचकचायतेअतिशयेनदीप्यते ॥ दीप्त्यर्थात्कचेःपचाद्यचिड्डाचि द्विर्वेडाजंतस्यापिभृशादित्वकल्पनात्क्यङ् ॥ ३१ ॥ चिन्मयमाततमाकाशमेवएवंरीत्याविराडात्माभाति ॥ एवंरीत्यादर्शनेविराडात्मचिन्मयमाकाशमेवभातीतिवा ॥ ३२ ॥ अनुभविताचिदात्मैवस्वस्वरूपमनुभवैकरसंसत्यंस्वात्मानमपिमायावरणादसंतमिवकृत्वाइयत्वेनपरिच्छिन्नप्रपंचभावेनानुभवतियथास्वप्नप्राप्तोनटःस्वात्मानमेवस्वातिरिक्तना

सर्गःस्वप्नःस्वप्नएवजाग्रद्देहःसएवच॥घनंसुषुप्तंतैमिर्याद्यथासंवेदनंभवेत्॥२७॥तस्यकल्पांतरजनीशिरोरुहतयोदिता॥ प्रकाशतमसी कालक्रियाख्याःस्वांगसंधयः॥२८॥ तस्याग्निरास्यंद्यौर्मूर्धाखंनाभिश्चरणौक्षितिः॥ चंद्रार्कौदृग्दिशौश्रोत्रेकल्पनेतिविजृंभिता॥२९॥ एवंसम्यग्दृश्यमानोव्योमात्माविततात्कृतिः॥ अस्मत्संकल्पशैलाभोविराड्स्वप्नाकृतिस्थितः॥ ३० ॥ यच्चचेतच्चिदाकाशेस्वयंकचकचा यते॥ तदेतज्जगदित्येवंतेनात्मैवानुभूयते॥ ३१ ॥ विराडात्मैवमाकाशंभातिचिन्मयमाततम्॥ स्वभावस्वप्ननगरंनगनागमयात्मकम् ॥ ३२ ॥ अनुभवितैवानुभवंसत्यंस्वात्मानमप्यसंतमिव ॥ अनुभवतीयत्त्वेनस्वप्ननटःस्वप्नदेशमिव ॥ ३३ ॥ वेदांतार्हतसांख्यसौगत गुरुत्र्यक्षादिसूक्तादृशोब्रह्मैवस्फुरितंतथात्मकलयास्तादात्मनित्यंयतः ॥ तेषांचात्मविदोनुरूपमखिलंस्वर्गफलंतद्भवत्यस्यब्रह्मणईदृगे वमहिमासर्वात्मयत्तद्वपुः॥ ३४॥ ॥इ० वा० महारामायणेवा०दे० मो० नि०उ०ब्रह्मगीतासुपरमार्थोपदेशोनामत्रिसप्तत्युत्तरशत तमःसर्गः ॥ १७३॥ ॥ ६ ॥

ट्यद्रष्टृसमाजपूर्णस्वप्नदेशंकल्पयित्वातत्रस्वनाट्यंस्वयमेवानुभवतितद्वदित्यर्थः ॥३३॥ अस्मिन्नर्थेसर्ववादिसिद्धांताविरोधःसर्वाभिलषितफलसिद्धिश्चेतएवेत्याह ॥ वेदांतेति ॥ वेदांताःशुद्धब्रह्मपराःसर्वज्ञेश्वरपराउपासनापराश्च आर्हतादिगंबराः सांख्याःकापिलायोगिनश्च सौगताःसौत्रांतिकवैभाषिकयोगाचारमाध्यमिकाः एतेषांयेगुरवोव्यासार्हत्क पिलपतंजलिबुद्धाः ॥ त्र्यक्षःपशुपतिर्भैरवोवाआगमशास्त्रभेदनिर्माता ॥ आदिपदाद्वैष्णवहिरण्यगर्भाद्याआगमनिर्मातारोविष्ण्वादयोगृह्यंते ॥ तैःसुष्ठुउक्ता स्वस्वागमेषुप्रतिपा दितायायादृशस्ताःसर्वाभूत्वाअस्मदभिमतंब्रह्मैवतत्तद्वासनालक्षणतदात्मकतयास्फुरितम् ॥ तेषांचवादिनामात्मविदःस्वस्वनिश्चयस्यानुरूपंस्वर्गंपारलौकिकसुखरूपमखिलमै हलौकिकंचसर्वंफलंतद्ब्रह्मैवभवतियतस्तदात्मरूपमेवतैस्तैस्तथातथाफलंस्तादित्याशास्यतेइत्यर्थः ॥ अस्यब्रह्मणईदृगेवमहिमाप्रसिद्धोयद्यस्माद्ब्रह्मएवंवपुर्मायाशबलस्वरूपंस र्वात्मकमित्यर्थः ॥ ३४ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उ०त्रिसप्तत्युत्तरशततमःसर्गः ॥ १७३ ॥

स्वमस्येवप्रबोधेनकृतेदृश्यस्यमार्जने ॥ परिशिष्टश्चिदात्मैकोवर्ण्यतेत्रपरंपदम् ॥ १ ॥ यतःसर्गादौकेवलाचिदेवस्वमवित्संवित्त्याजगदित्यवभासेवभातीतिप्रसाधितमतोजगत्त्रयं ब्रह्मैवेतिप्रबोधेकैवल्यंसिद्धमित्यर्थः ॥ १ ॥ अज्ञप्रसिद्धोदुःखात्मकःसर्गोबोधेनप्रमार्जितः ॥ यत्तुतदनंतरमपिजीवन्मुक्तानांव्यवहारायजगत्प्रसिद्धंतदानंदसच्चिदेकरसत्वात्स र्गांतरमेवतत्त्वद्वैतैक्यादीतरन्नअसुखरूपंकुतोनिमित्तात्स्यादित्यर्थः ॥ २ ॥ तेषांतादृशसर्गेणैकरस्याविघातेअज्ञदृशाप्रसिद्धतरंदृष्टांतमाह ॥ यथेति ॥ यथास्वमेसुषुप्तिस्वमगे दाभासेपिनिद्रैकरस्यंनविहन्यतेतद्वद्विदेहमुक्तिजीवन्मुक्तिभेदप्रतिभासेपिसुखैकरस्यंनविहन्यतइत्यर्थः ॥ ३ ॥ कुतोनदुःखमितिचेद्बाधितेविषयेविदुषआस्थाभावादित्याह ॥ जाग्रतीति ॥४॥ यादृशंयथाबाधितम् ॥५॥ दग्धपटवद्वासनामात्रेणस्थितिस्तुनदुःखसमर्थेत्याशयेनाह ॥ जाग्रतीति ॥ जाग्रत्योजाग्रतोभोगाभासार्थमाविर्भूताः ॥ ६ ॥ ननु जगतोभ्रांतिमात्रत्वेतत्त्वबोधेनतन्मूलाज्ञानोच्छेदाद्बाधःस्यात् प्रधानपरमाण्वादिकारणांतरैरन्यथोपपत्त्याभ्रांतित्वाकल्पनेतुनबाधप्रसक्तिरितिततोदुःखंस्यादेवेत्याशंक्याह ॥

श्रीवसिष्ठउवाच ॥ सर्गादौस्वप्नसंवित्त्याचिदेवाभातिकेवला ॥ जगदित्यवभासेवब्रह्मैवातोजगत्त्रयम् ॥ १ ॥ सर्गास्तरंगाब्रह्माब्धेस्तेपु संवेदनंद्रवः ॥ सर्गांतरंसुखाद्यात्मद्वैतैक्यादीतरत्कुतः ॥ २ ॥ यथास्वप्नसुषुप्तात्मनिद्रारूपकमेवखम् ॥ दृश्याद्दृश्यांशमेकात्मरूपंचिन्नभस स्तथा ॥ ३ ॥ जाग्रतिस्वप्ननगरंयादृक्तादृगिदंजगत् ॥ परिज्ञातंभवेदत्रकथमास्थाविवेकिनः ॥ ४ ॥ सर्गादौसर्गसंवित्तेर्यथाभूतार्थवेद नात् ॥ जाग्रतिस्वाप्ननगरंयादृशंतादृशंजगत् ॥ ५ ॥ जाग्रतिस्वप्ननगरवासनाविविधायथा ॥ सत्याअपिनसत्यास्ताजाग्रत्योवासना स्तथा ॥ ६ ॥ अन्यथोपप्रपद्येहकल्प्यतेयदिकारणम् ॥ तत्किंनेदीयसीनात्रभ्रांतताकल्प्यतेतथा ॥ ७ ॥ स्वानुभूयतएवेयंभ्रांतिःस्वप्नज गत्स्विव ॥ कारणंत्वनुमासाध्यंक्वानुमानुभवाधिका ॥ ८ ॥ दृष्टमप्यस्तियन्नेशेनचात्मनिविचारितम् ॥ अन्यथानुपपत्त्यांतभ्रांत्या त्मस्वप्नशैलवत् ॥ ९ ॥

अन्यथेति ॥ उपप्रपद्यउपपाद्य ॥ स्वाप्नेजगतिप्रसिद्धतरत्वाल्लाघवाद्वाचारंभणंविकारोनामधेयम् तस्यत्रयआवसथास्त्रयःस्वप्नाः मायांतुप्रकृतिंविद्यात् भूयश्चांतेविश्वमाया निवृत्तिरित्यादिश्रुतिबोधितत्वाच्चकल्पनांतरेभ्योनेदीयसीशीघ्रोपस्थितिकत्वेनसन्निहिततराभ्रांतिमात्रतैवजगतःकिंनकल्प्यतइत्यर्थः ॥ ७ ॥ किंचवाचारंभणश्रुतिदर्शितन्याये नपर्यालोचनेमृत्तत्वाद्व्यतिरिक्तघटपटाद्यदर्शनात्तद्विषयेस्वार्थीयाइयंभ्रांतिरितिप्रत्यक्षमनुभूयतएव ॥ प्रत्यक्षानुभवापेक्षयाअधिकाबलवत्तराअनुमाक्वदृष्टायद्बलात्प्रधान परमाण्वादयःसिद्ध्येरन्नित्यर्थः ॥ ८ ॥ किंचजगत्स्वप्नशैलवदंतर्भ्रांत्यात्मेत्यत्रदृष्टंप्रत्यक्षंलिंगमप्यस्तियद्यस्मात्कारणादयंजनआत्मनिदृष्टमेवस्रष्टुमनिष्टंसर्गनिवारयितुंचनईशे नेष्टे ॥ छांदसःपुरुषव्यत्ययः ॥ अहंनईशेइत्यनुभवतीतिवाअध्याहार्यम् ॥ नचतेनप्राग्विचारितंनिश्चितमेवदृश्यते अकस्मादेवयत्किंचिदर्थदर्शनात् ॥ सर्गस्यकारणांतराधीनत्वे हितादृशाकारणसंपत्तिसाध्यंजनादृष्टमेवसृजेयुरनिष्टंचवारयेयुराकस्मिकंचदृश्यंनपश्येयुः ॥ तल्लिंगत्रयान्यथानुपपत्त्यास्वप्नशैलवद्भ्रांतिरित्येवसिद्धमित्यर्थः ॥ ९ ॥

अतएवध्यानमात्रेणनिर्विकल्पसमाधिपर्यंतेनजगद्बाधंविनैवनिस्तारंमन्यमानायोगिनोपिनिरस्ताइत्याह ॥ निर्विकल्पमिति ॥ योगिनांह्यात्माअनानंदचिद्रूपःसाक्षादनुभूतोप्य पुरुषार्थइतितत्साक्षात्कारकल्पनेप्रयोजनाभावान्नित्यानुमेयेतस्मिन्भाट्टज्ञानकल्पेनित्यपरोक्षेजडतैवपरिशिष्यते तत्रचित्तस्यनिर्विकल्पंसमाधानंसंपन्नमपिपरंजाड्यमेव ॥ सविकल्पंतुसंपन्नंसंस्तृतिःसंसारएव ॥ तेनहेतुनातद्ध्यानंतेनसमाधानंचसंपन्नमपिकिंचनपुरुषार्थरूपंनसंभवतीत्यर्थः ॥ १० ॥ तदेवस्पष्टयति ॥ सचेत्यमिति ॥ पराभिमतमनानंदरूपंमोक्षेपरिशिष्यमाणंयत्ज्ञानंतन्मोक्षःपुरुषार्थविशेषोन ॥ एतेनात्मनोज्ञानस्वभावतामनभ्युपगच्छतांवैशेषिकादीनामभिमतोपिमोक्षोनितरांनिरस्तः ॥ विकल्पात्मकं सचेत्यंतुततोपिमोक्षोनबंधाविशेषादित्यर्थः ॥ ११ ॥ योगिसंमतसमाध्यभ्यासेनभवदभिमतमोक्षएवकिंनलभ्यतेतत्राह ॥ नचनामेति ॥ अन्यत्सांख्याभिमतान्यदस्मदभिम

**निर्विकल्पंपरंजाड्यंसविकल्पंतुसंस्तृतिः॥ ध्यानंतेनसमाधानंनसंभवतिकिंचन ॥ १० ॥ सचेत्यंसंस्तृतिर्ध्यानमचेत्यंतूपलस्थिति॥ मोक्षोनोपलवद्भानंनविकल्पात्मकंततः ॥ ११ ॥ नचनामोपलाभेननिर्विकल्पसमाधिना ॥ अन्यदासाद्यतेकिंचिल्लभ्यतेकिंस्वनिद्रया ॥ १२ ॥ तस्मात्सम्यक्परिज्ञानाद्भ्रांतिमात्रंविवेकिनः॥सर्गात्यंतासंभवतोयोजीवन्मुक्ततोदयः॥ १३ ॥ निर्विकल्पंसमाधानंतदनंतमिहोच्यते ॥ यथास्थितमविक्षुब्धमासनंसर्वभासनम्॥ १४॥ तदनंतसुषुप्ताख्यंतत्तुरीयमितिस्मृतम्॥ तन्निर्वाणमितिप्रोक्तंतन्मोक्षइतिशब्दितम्॥ १५॥ सम्यग्बोधैकघनतायासौध्यानमितिस्मृतम्॥ दृश्यात्यंतासंभवात्मबोधमाहुःपरंपदम् ॥ १६ ॥ तच्चनोपलवज्जाड्यंनसुषुप्तोपमंभवेत्॥ ननिर्विकल्पंनचवासविकल्पंनवाप्यसत्॥ १७॥ दृश्यात्यंतासंभवात्मतदेवाद्यंहिवेदनम्॥ तत्सर्वंतन्नकिंचिच्चतद्देवांगवेत्तितत् ॥ १८॥ सम्यक्प्रबोधान्निर्वाणंपरंतत्समुदाहृतम्॥ यथास्थितमिदंविश्वंतत्रालंप्रलयंगतम्॥ १९॥**

तम् ॥ यदिलभ्येततर्हिस्वनिद्रयापिलभ्येत चित्तचांचल्यनिवृत्तेरज्ञानावरणानिवृत्तेश्चोभयत्रापिसाम्यादितिभावः ॥ १२ ॥ तस्मात्परोक्तपक्षेष्वनिर्मोक्षदोषान्निर्मोक्षाद्भ्रांतिमात्रंजगत् निरतिशयानंदसच्चिदेकरसएवात्मा तत्त्वज्ञानेनभ्रांतिहेत्वज्ञानावरणक्षयेणभ्रांतिक्षयेपरिशिष्यमाणःपरमपुरुषार्थइत्यस्मत्पक्षएवसर्वेषांशरणमित्युपसंहरति ॥ तस्मादित्यादिना ॥ योजीवन्मुक्ततोदयःसएवनिर्विकल्पसमाधानंतदेववानंतंनिर्वाणमित्युत्तरेणान्वयः ॥ १३ ॥ १४ ॥ १५ ॥ आहुर्यत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमेत्यादिश्रुतयस्तत्त्वविदश्चेत्यर्थः ॥ १६ ॥ तच्चगौतमकणादाभ्युपगतमुक्तिरिवोपलवज्जाड्यंन ॥ हैरण्यगर्भोपगतप्रकृतिप्रलयवत्सुषुप्तोपमंन ॥ पांतजलोपगतमुक्तिवन्निर्विकल्पतामात्रंन ॥ पाशुपतपांचरात्राद्यभिमतमुक्तिवत्सविकल्पंन ॥ बौद्धाभिमतमुक्तिवदसन्नैरात्म्यलक्षणंशून्यमपिन ॥ १७ ॥ किंतर्हितदाह ॥ दृश्येति ॥ तदेवसर्वम् ॥ ब्रह्मवाइदमग्रआसीत्तदात्मानमेवावेदहंब्रह्मास्मीति तस्मात्तत्सर्वमभवदितिश्रुतेरितिभावः ॥ यत्रनान्यत्पश्यतिनान्यच्छृणोतीत्यादिश्रुतेर्नकिंचिच्च ॥ १८ ॥ सर्वत्वेनकिंचित्त्वे चोपपत्तिमाह ॥ यथास्थितमिति ॥ १९ ॥



१ तदेवाच्छमित्यपिक्वचित्पाठः

सीमांतइति ॥ यथापटःसन्नसन्निति चकल्पनायाःसीमातंतुःतंतुःसन्नसन्निति कल्पनायाःसीमाकार्पासम् कार्पासंसदसदिति कल्पनायाःसीमांतस्तद्बीजम् बीजंसदसद्वेति कल्प नायाःसीमामृद्दालिकापृथिवी सासतीअसतीवेति कल्पनायाःसीमाआपस्तासांतेजस्तस्यवायुस्तस्याकाशंतस्याव्याकृतंतस्यसदसद्भावकल्पनायाःसीमाकेवलश्चिदात्मैवेतिस सीमांतइत्यर्थः ॥ २० ॥ यन्निर्वाणंसर्वविक्षेपरहितंनिरतिशयानंदात्मनाआसितमवस्थानंतदेवपरमंपदंपरमपुरुषार्थंविद्धि ॥ २१ ॥ तत्प्राप्तौचायंमोक्षोपायाख्योग्रंथउपायइ त्याह ॥ सचेति ॥ २२ ॥ बुद्धिरध्यात्मशास्त्रजन्यज्ञानंतल्लक्षणेनोपायेन ॥ अन्येनोपायांतरेणकेनचिदपिनप्राप्यते ॥ ज्ञात्वातंमृत्युमत्येतिनान्यःपंथाविमुक्तयेइत्यादिश्रुतेरिति

नतत्रनानानानानानचकिंचिन्नकिंचन ॥ समस्तसदसद्भावसीमांतःसउदाहृतः ॥ २० ॥ अत्यंतासंभवंदृश्यंयद्वैनिर्वाणमासितम् ॥ शु द्धबोधोदयंशांतंतद्विद्धिपरमंपदम् ॥ २१ ॥ सचसंप्राप्यतेशुद्धोबोधोध्यानमनुत्तमम् ॥ शास्त्रात्पदपदार्थज्ञबोधि[1]नोत्पन्नबुद्धिना ॥ २२ ॥ मोक्षोपायाभिधंशास्त्रमिदंवाचयतानिशम् ॥ बुद्ध्युपायेनशुद्धेनपुंसानान्येनकेनचित् ॥ २३ ॥ नतीर्थेननदानेननस्नानेननविद्यया ॥ नध्यानेननयोगेननतपोभिर्नचाध्वरैः ॥ २४ ॥ भ्रांतिमात्रंकिलेदंसदसत्सदिवलक्ष्यते ॥ व्योमैवजगदाकारंस्वप्नोऽनिद्रेचिदंबरे ॥ २५ ॥ नशाम्यतितपस्तीर्थैर्भ्रांतिर्नामकदाचन ॥ तपस्तीर्थादिनास्वर्गाःप्राप्यंतेनतुमुक्तता ॥ २६ ॥ भ्रांतिःशाम्यतिशास्त्रार्थात्सम्यग्बुद्ध्यावलो कितात् ॥ आत्मज्ञानमयान्मोक्षोपायादेवेहनान्यतः ॥ २७ ॥ आलोककारिणात्यर्थंशास्त्रार्थेनैवशाम्यति ॥ अमलेनाखिलाभ्रांतिःप्र काशेनैवतामसी ॥ २८ ॥ सर्गसंहारसंस्थानांभासोभांतिचिदंबरे ॥ स्पंदनानीवमरुतिद्रवत्वानीववारिणि ॥ २९ ॥ द्रव्यस्यत्त्वद्यवचम त्कृतिर्निजानभस्वतःस्पंदइवानिशंयथा ॥ यथास्थितास्वृष्टिरियंतथास्तितालयंनभस्यंतरनन्यरूपिणी ॥ ३० ॥ इ० वा० महारामायणे वा० दे० मो० नि० उ० ब्रह्मगीतासुनिर्वाणोपदेशोनामचतुःसप्तत्यधिकशततमःसर्गः ॥ १७४ ॥

भावः ॥ २३ ॥ तदेवप्रपंचयति ॥ नेत्यादिना ॥ विद्ययाब्रह्मविद्यातिरिक्तविद्यया ॥ २४ ॥ कुतोनतत्राह ॥ भ्रांतिमात्रमित्यादिना ॥ यतोभ्रांतिमात्रमतस्तपस्तीर्थैर्नशाम्यतीति परेणान्वयः ॥ २५ ॥ २६ ॥ २७ ॥ प्रकाशेनसूर्योदयेन ॥ तामसीकृष्णरात्रिरिव ॥ २८ ॥ संस्थास्थितिः ॥ भासःप्रतिभासाः ॥ २९ ॥ यथावटबीजादिद्रव्यस्यवृद्धिवटा कारधारणचमत्कृतिर्नभस्वतोवायोःस्पंदचमत्कृतिरिवस्थितातथामायाशबलचिन्नभस्यंतःइयंयथास्थिताजगतःसृष्टिस्तस्याअस्तितास्थितिश्चअनन्यरूपिणीआस्तेलयंचग मिष्यतीतिशेषः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेचतुःसप्तत्यधिकशततमःसर्गः ॥ १७४ ॥ ॥ ५ ॥

[1] बोधनोत्पन्नबुद्धिनेतिपाठोपेक्षितइतिभाति

यावन्मौर्ख्यंजगदिवचिदेवाभात्यकारणम् ॥ शास्त्रेणमौर्ख्येपहृतेसामुक्तेतीहवर्ण्यते ॥ १ ॥ इयंसृष्टिस्तदृस्तिताचानन्यरूपिणीत्युक्तेचितःसर्गःशरीरमेवेत्याशंकांप्रसक्तांनिराकरोति ॥ स्वप्नाभमिति ॥ आद्यंहिचिद्व्योमस्वाविद्ययास्वप्नाभंभूत्वाजीवभावेनसंसरद्देवोहंमनुष्योहमित्यादितत्तद्देहतादात्म्याध्यासानांकामकर्मवासनादिद्वाराकारणंजीवोपाधिसिद्धेःपूर्वंमहाप्रलयेस्वप्नाभत्वप्राप्तौतुदृश्यान्यताऽसंभवतोनिमित्तासिद्धेस्तत्सर्गरूपंदृश्यंतस्यचिद्व्योम्नोवपुःशरीरंकुतोनिमित्ताद्भवेदित्यर्थः ॥ १ ॥ स्वप्नसंवित्तिरूपेणैवजीवभावसमकालात्सर्गादिसिद्धिर्ननिमित्तांतरादित्याह ॥ सर्गादाविति ॥ २ ॥ नापिचिद्व्योम्नोवास्तवोजीवभावोजगद्भावोवास्तियेनजगत्तस्यशरीरंभवेदित्याह ॥ असदेवेति ॥ अनुभवतीत्यनुभूरनुभवैकरसश्चिदात्माइत्थमसदेवजगद्भूत्वास्वाविद्ययाभासते ॥ ३ ॥ तर्हिकिमनुभूतिरप्यसतीनेत्याह ॥ एवंनामेति ॥ योजगदित्यवभातिसजगच्छून्यात्मैवाच्छरूपश्चिद्धातुरस्ति ॥ ४ ॥ एषपरमात्मैवयावदपरिज्ञातस्तावन्मलःअविद्यैव ॥ तत्रसंसरन्जीवइवपृथगिवभवति ॥ परिज्ञातस्तुपरंनिर्मलंब्रह्मैवभवेत् ॥ सयोहवैतत्परमंब्रह्मवेदब्रह्मैवभवतीत्यादिश्रुतेरितिभावः ॥ ब्रह्मभावेत्वस्यमलप्रसक्तिरेवनास्तीत्याह ॥ कुतइति ॥ प्रबोधेनस्वप्नस्येवबाधादितिभावः ॥ ५ ॥ स्वप्नसाम्यंतुकारणासंभवाद्बहुशःप्रसाधितमेवपुनर्दृढीकारायानुवदति ॥ यदित्यादिना ॥ ६ ॥ ७ ॥ ८ ॥ पश्चाज्जगद्भानानंतरंजीवभावेनतदनुप्रविश्यहिरण्यगर्भोहंभुवनस्रष्टेत्यैश्वर्यशंसिनाबुद्ध्यादिपृथ्व्यादिनामरूपव्याकरणलक्षणंकल्पनंकृतम् ॥ सदसन्मयंमूर्तामूर्तप्रचुरम् ॥ सत्यानृतमिथुनीकरणरूपंवा ॥ ९ ॥ अच्छादप्यच्छायेयंमहाचितिःसास्वयमेवजगद्रूपेणकचतीतिजगच्चिन्नभएवनेतरत् ॥ १० ॥ अनयापर्यालोचनयाहेअंगनकिंचनकचति ॥ चिन्मात्रलक्षणंयदेकमेवैकंतत्कलनमेववेत्थमात्मनिततम ॥ ११ ॥ स्वंअलंपूर्णवपुःस्वरूपम् अज्ञातंतदेवस्वप्नमलंवपुरितिवा ॥ चित्तमिवतद्दृश्यमिवच ॥ १२ ॥

श्रीवसिष्ठउवाच ॥ ॥ स्वप्नाभमाद्यंचिद्व्योमकारणंदहसंविदाम् ॥ दृश्यान्यतासंभवतश्चिद्व्योम्नस्तत्कुतोवपुः ॥ १ ॥ सर्गादौस्वप्नसंवित्तिरूपंसर्वंविनानघ ॥ नसर्गोनपरोलोकोदृश्यमानोपिसिध्यति ॥ २ ॥ असदेवानुभूरित्थमेवेदंभासतजगत् ॥ स्वप्नांगनासंगइवशांतंचिद्व्योमकेवलम् ॥ ३ ॥ एवंनामास्तिचिद्धातुरनादिनिधनोमलः ॥ शून्यात्मैवाच्छरूपोपिजगदित्यवभातियः ॥ ४ ॥ मलस्त्वेषोऽपरिज्ञातःपरिज्ञातःपरंभवेत् ॥ कुतःकिलपरेव्योमन्यनादिनिधनेमलः ॥ ५ ॥ यदेतद्देदनंशुद्धंतदेवस्वप्नपत्तनम् ॥ जगत्तदेवसर्गादौपृथ्व्यादेःसंभवःकुतः ॥ ६ ॥ चिद्व्योमात्मावभासस्यनभसःसर्गरूपिणी ॥ कृतापृथ्व्यादिकलनामनोबुद्ध्यादितातथा ॥ ७ ॥ वार्यावर्तइवाभातिपवनस्पंदवच्चयत् ॥ अबुद्धिपूर्वंचिद्व्योम्निजगद्भानमभित्तिमत् ॥ ८ ॥ पश्चात्तस्यैवतेनैवस्वयमैश्वर्यशंसिना ॥ कृतंबुद्ध्यादिपृथ्व्यादिकल्पनंसदसन्मयम् ॥ ९ ॥ स्वयमेवकचत्यच्छाच्छायेयंस्वामहाचितिः ॥ सर्गाभिधानमस्यैवनभएवेहनेतरत् ॥ १० ॥ नचकिंचननामांगकचत्यच्छैवसास्मृता ॥ चिन्मात्रैकैककलनंततमेवात्मनात्मनि ॥ ११ ॥ चिदाकाशश्चिदाकाशेतदिदंस्वमलंवपुः ॥ चित्तंदृश्यमिवाभातियथास्वप्नेतयास्थितम् ॥ १२ ॥

अन्यथानुपपत्त्याप्रकारांतरेणवादिसहस्रैरपिसर्गोपपादनासंभवात्परिशेषात् ॥ १३ ॥ उपपादितंजगद्वपुष्ठनिरासमुपसंहृत्यशिष्टमत्रधारयति ॥ तस्मादिति ॥ चिद्व्योमचिद्व्यो मेतिअवधारणार्थवीप्सा ॥ १४ ॥ १५ ॥ उक्तमेवनिष्कृष्यपुनरनूयदृष्टांतरमाह ॥ स्वप्नेइत्यादिना ॥ १६ ॥ १७ ॥ तच्चमनःसमष्टिरूपेणइदंसर्वंतनोतीव ॥ १८ ॥ ब्रह्माहि रण्यगर्भः ॥ १९ ॥ पृथ्व्यादिरहितःसमनोरूपोब्रह्माअंगवर्जितस्वत्वेनयस्यजगतोदृदिस्वयंस्थितस्तस्मादन्यद्वात्रिजगद्भूत्वास्वयंभाति ॥ २० ॥ स्वाविद्ययापूर्णभावपराभवं प्राप्यतन्मनएवाहमाकारेणदेहजगद्रूपैरनंतालभूत्वाबोधाबोधरूपंतिष्ठतीत्याह ॥ देहेति ॥ २१ ॥ २२ ॥ वर्णितदृष्टांतरमुपसंहरन्प्रकृतेयोजयति ॥ विचार्येति ॥ नितरांघनं

अन्यथानुपपत्त्यार्थकारणाभावतःस्वतः ॥ सर्गादावेवस्वात्मैवदृश्यंचिद्व्योमपश्यति ॥ १३ ॥ स्वप्नवत्तच्चनिर्दृमंमनागपिनभिद्यते ॥ त स्माच्चिद्व्योमचिद्व्योमशून्यत्वंगगनादिवत् ॥ १४ ॥ यदेवतत्परंब्रह्मसर्वरूपविवर्जितम् ॥ तदेवैकंतथारूपमेवंसर्वतयास्थितम् ॥ १५ ॥ स्वप्नेनुभूयतेचैतत्स्वप्नेऽत्यात्मैवभासते ॥ नानाबोधमनानैवब्रह्मैवामलमेवतत् ॥ १६ ॥ ब्रह्मैवात्मनिचिद्व्रावाज्जीवत्वमिवकल्पयत् ॥ रूपमत्यजदेवाच्छंमनस्तामिवगच्छति ॥ १७ ॥ इदंसर्वंतनोतीवतच्चखात्मकमेवखम् ॥ भवतीवजगद्रूपंविकारीवाविकार्यपि ॥ १८ ॥ मनएवस्वयंब्रह्मासस्सर्गस्यत्वहृदिस्थितः ॥ करोत्यविरतंसर्वमजस्रंसंहरत्यपि ॥ १९ ॥ पृथ्व्यादिरहितोयस्मिन्मनोत्वद्यंगवर्जिते ॥ अन्यद्वा त्रिजगद्भातियथास्वप्नेनिराकृति ॥ २० ॥ देहरूपजगद्रूपैरहमेकमनाकृति ॥ मनस्तिष्ठाम्यनंतात्मबोधाबोधंपराभवम् ॥ २१ ॥ नेहपृ थ्व्यादिनोदेहोनचैवान्यास्तिदृश्यता ॥ जगत्तयाकेवलंखंमनःकचकचायते ॥ २२ ॥ विचार्यदृष्ट्येनदपिनकिंचिदपिविद्यते ॥ केवलंभाति चिन्मात्रमात्मनात्मनिनिर्घनम् ॥ २३ ॥ यतोवाचोनिवर्त्तंतेतूष्णींभावोवशिष्यते ॥ व्यवहार्यपिखात्मैवतद्वत्तिष्ठतिमूकवत् ॥ २४ ॥ अनं तापारपर्यंताचिन्मात्रपरमेष्ठका ॥ तूष्णींभूत्वाभवत्येपप्रबुद्धःपुरुषोत्तमः ॥ २५ ॥ अबुद्धिपूर्वंद्रवतोयथावर्त्तादयोंभसि ॥ क्रियंतेब्रह्म णातद्वच्चित्तबुद्ध्यादयोजडाः ॥ २६ ॥ अबुद्धिपूर्वंवातेनक्रियतेस्पंदनंयथा ॥ अनन्यदेवंबुद्ध्यादिक्रियतेपरमात्मना ॥ २७ ॥ अनन्यदा त्मनोवायोर्यथास्पंदनमव्ययम् ॥ अनन्यदात्मनस्तद्वच्चिन्मात्रंपरमात्मनः ॥ २८ ॥

निर्घनम् ॥ २३ ॥ वाङ्मनसागोचरनिरतिशयानंदलाभेनतूष्णींभावोनिश्चलता ॥ सानिश्चलताव्यवहारकालेऽपिनापैतीत्याह ॥ व्यवहार्यपीति ॥ २४ ॥ चिन्मात्रलक्षणापरमा इष्टैवेष्टकापरमप्रेमास्पदीभूतनिरतिशयानंदघनतास्वयंभवतीत्यर्थः ॥ ज्ञानाग्निपरिपाकेनदृढीभावाद्ब्रह्मभूतएवेष्टकेतिवा ॥ २५ ॥ एवंमुक्तस्यपुनःकालांतरेसर्गादिनाबंधप्रस क्तिंवारयितुंसर्गस्याज्ञानपूर्वकत्वंदर्शयति ॥ अबुद्धिपूर्वमिति ॥ अबुद्धिर्बोधनाश्यमज्ञानंतत्पूर्वम् ॥ अविद्यावृतब्रह्मचैतन्यस्यैवजलादिभावेनावर्त्तादिविकल्पभाक्त्वाज्जलोदृष्टां टांतता ॥ २६ ॥ २७ ॥ चिन्मात्रंसर्वेचिदाभासलक्षणाजीवाआत्मनःप्रत्यग्रूपात्परमात्मनोऽनन्यत् ॥ २८ ॥

१ अर्थस्यसत्यस्यकारणांतरस्याभावतश्चेत्यर्थः

अतएवजीवानामपिब्रह्मपर्यायात्मतामतेत्याशयेनाह चिद्व्योमेति ॥ २९ ॥ अविद्यावृतंहिब्रह्मचक्षुरिवउन्मेषनिमेषात्मवातवत्स्पंदास्पंदात्मवा ॥ अस्ययादृगेवप्रलयात्मको निमेषस्तादृगेवसर्गात्मकउन्मेषोजगदित्यर्थः ॥ ३० ॥ यथाउन्मेषनिमेषयोःसाधारणंचक्षुर्गोलकमेकंतत्रैवोन्मेषनिमेषयोरुपक्षयात्तथाब्रह्मापीत्याह ॥ एकमेतदिति ॥ ३१ ॥ अतश्चितेःसकाशादेवदृश्यस्यास्तिनास्तीतिस्फुरणाद्दृश्यंसदसच्चचितिस्तुसदासत्तैकरूपैवेत्यर्थः ॥ ३२ ॥ उन्मेषनिमेषावपितद्धेतुपक्ष्मसहितचक्षुःस्थानीयशबलब्रह्मात्मनापरस्पराभिन्नावेवेत्याह ॥ निमेषइति ॥ ३३ ॥ अनयादृष्ट्यायत्सिद्धंतदाह ॥ तदिति ॥ समेननिमेषोन्मेषसाधारणब्रह्मरूपेणसममेकरसम् ॥ ३४ ॥ यथाव्योमस्वाध्यस्तनै

चिद्व्योमब्रह्मचिन्मात्रमात्माचितिमहानिति ॥ परमात्मेतिपर्यायाज्ञेयाज्ञानवतांवर ॥ २९ ॥ ब्रह्मोन्मेषनिमेषात्मस्पंदास्पंदात्मवातवत् ॥ निमेषोयादृगेवास्यसमुन्मेषस्तथाजगत् ॥ ३० ॥ दृश्यमस्यसमुन्मेषोदृश्याभावोनिमेषणम् ॥ एकमेतन्निराकारंतद्द्वयोरप्युपक्षयात् ॥ ३१ ॥ निमेषोन्मेषयोरेकरूपमेवपरंमतम् ॥ अतोस्तिदृश्यंनास्तीतिसदसच्चसदाचितिः ॥ ३२ ॥ निमेषोनान्यउन्मेषान्नोन्मेषोपिनिमेषतः ॥ ब्रह्मणःसर्गवपुषोनिमेषोन्मेषरूपिणः ॥ ३३ ॥ तद्यथास्थितमेवेदंविद्धिशांतमशेषतः ॥ अजातमजरंव्योमसौम्यंसमसमंजगत् ॥ ३४ ॥ चिदचित्यात्मकंव्योमरूपंकचकचायते ॥ चिन्नामतदिदंभातिजगदित्येवतद्वपुः ॥ ३५ ॥ ननश्यतिनचोत्पन्नंदृश्यंनाप्यनुभूयते ॥ स्वयंचमत्करोत्यंतःकेवलंकेवलैवचित् ॥ ३६ ॥ महाचिद्व्योममणिभादृश्यनाम्नीनिजाकरात् ॥ अनन्यान्येवभातापिभानुभासइवोष्णता ॥ ३७ ॥ सुषुप्तंस्वप्नवद्भातिभातिब्रह्मैवसर्गवत् ॥ सर्वमेकंशिवंशांतंनानेवापिस्थितंस्फुरत् ॥ ३८ ॥ यद्यत्संवेद्यतेयादृक्सद्वासद्वायथायदा ॥ तथानुभूयतेतादृक्तत्सदस्त्वसदस्तुवा ॥ ३९ ॥ अन्यथानुपपत्त्याचेत्कारणंपरिकल्प्यते ॥ तत्स्वप्नाभोजगद्भावादन्यथानोपपद्यते ॥ ४० ॥ प्रमातीतात्पराद्विश्वमनन्यदुदितंयतः ॥ प्रमातीतमिदंचैवकिंचिन्नाभ्युदितंततः ॥ ४१ ॥

ल्यरूपंकचकचायतेतथाचिदपिअचित्यात्मकमिवकचकचायते ॥ ३५ ॥ ३६ ॥ महाचिद्व्योममणेर्भाप्रभानिजाकरान्मणेःसकाशादनन्या ॥ ३७ ॥ ३८ ॥ सत्भावरूपंवायद्वाच्चितायथासंवेद्यतेप्रकाश्यतेतथाचिदाभासेनानुभूयते ॥ ३९ ॥ जगतोजडत्वान्यथानुपपत्त्यातदनुरूपंप्रधानपरमाण्वादिकारणंपरिकल्प्यतेचेत्तर्हिस्वप्नेआभातीतिस्वप्नाभःप्रपंचःप्रधानपरमाण्वादिभिर्निर्वोढुमशक्यत्वादात्मनएवजगद्भावंविहायनोपपद्यतइत्यर्थः ॥ तत्रात्मनएवजगद्भावाभ्युपगमेतन्न्यायेनसर्गादावपिब्रह्मैवजगद्वपुंकरिष्यतीतितेनप्रधानपरमाण्वादिकल्पनंविरुद्धमितिभावः ॥ ४० ॥ एवंचसतिजगतःप्रमाणाविषयेब्रह्मण्यध्यासात्स्वप्नवदनिर्वचनीयतालक्षणाप्रमाणानिर्धार्यरूपतापिसेत्स्यतीत्यद्वैताविरोधादपरमनुकूलमित्याह ॥ प्रमातीतादिति ॥ ४१ ॥

अतएवब्रह्मरसिकानांचित्तंजमद्ब्रह्मैवपश्यतीतितदनुभवानुसारोपिजातइत्याह ॥ यस्येति ॥ ४२ ॥ ४३ ॥ ४४ ॥ यस्यजंतोश्चित्तंदृढनिश्चयेनयत्रविश्रांतंतस्यतदेवपरमार्थसत् ॥ अतएवब्रह्मविन्नास्तिकश्चस्वनिश्चितान्यथागदानादिकरोतितत्केवलंलोकसंग्रहार्थंव्यवहृत्यैअतद्रसमनिच्छमेवबलादिवकरोतीत्यर्थः ॥ ४५ ॥ इतएतस्मान्मदुक्तोपायतश्चेज्जगदवलोक्यतेतदाइदंसर्वंसत्तामात्रम् ॥ इयंदृगेव ॥ द्वित्वैकत्वकलनाइहकाचननविद्यते ॥ ४६ ॥ अदृश्यंब्रह्मैवदृश्यंसदसन्मूर्त्तममूर्त्तंचेतिदृग्येपांतेपांइहकर्त्ताभोक्तावाजीवोनैवास्तिनापिनास्त्येव ॥ तस्यैवब्रह्मतयापरिशेषादित्यर्थः ॥ ४७ ॥ अज्ञानांपांथानांचोरसंदेहभ्रांत्यादियोग्येकांताराध्वनिस्थाणुरिवस्थितम् ॥ ४८ ॥ बुद्ध्यादिबुद्धिसमष्टि

यस्ययद्रसिकंचित्तंतत्तथातस्यगच्छति ॥ ब्रह्मैकरसिकंतेनमनस्तत्तांसमश्नुते ॥ ४२ ॥ यच्चित्तोयद्गतप्राणोजनोभवतिसर्वदा ॥ तत्तेनवस्त्वितिज्ञातंजानातितदसौस्फुटम् ॥ ४३ ॥ ब्रह्मैकरसिकंयत्स्यान्मनस्तत्तद्भवेत्क्षणात् ॥ यस्ययद्रसिकंचेतोबुद्धंतेनतदेवसत् ॥ ४४ ॥ विश्रांतंयस्यवैचित्तंजंतोस्तत्परमार्थसत् ॥ व्यवहृत्यैकरोत्यन्यत्सदाचारादतद्रसम् ॥ ४५ ॥ द्वित्वैकत्वादिकलनानेहकाचनविद्यते ॥ सत्तामात्रंचदृगियमितश्चेदलमीक्ष्यते ॥ ४६ ॥ अदृश्यदृश्यसदसन्मूर्त्तामूर्त्तदृशामिह ॥ नैवास्तिनचनास्त्येवकर्त्ताभोक्ताथवाक्वचित् ॥ ४७ ॥ इदमित्थमनाद्यंतंजगत्पर्यायमात्मनि ॥ ब्रह्मैकघनमाशांतंस्थितंस्थाणुरिवाध्वनि ॥ ४८ ॥ यदेवब्रह्मबुद्ध्यादितदेवैतन्निरंजनम् ॥ यदेवगगनंशांतंशून्यंविद्धितदेवतत् ॥ ४९ ॥ केशोंड्रकादयोव्योम्नियथासदसदात्मकाः ॥ द्वितामिवागताभांतिपरेबुद्ध्यादयस्तथा ॥ ५० ॥ तथाबुद्ध्यादिदेहादिवेदनादिपरापरे ॥ अनेकान्यप्यनन्यानिशून्यत्वानियथांबरे ॥ ५१ ॥ सुपुप्ताद्विशतःस्वप्नमेकनिद्रात्मनोयथा ॥ सर्गस्थस्यापिनद्वित्वंनैकत्वंब्रह्मणस्तथा ॥ ५२ ॥ एवमेवकचत्यच्छाछायेयंस्वामहाचितेः ॥ नचकिंचननामांगकचत्यच्छैवमास्थिता ॥ ५३ ॥ चिद्व्योम्निहिचिदाकाशमेवस्वममलंवपुः ॥ चेत्यंदृश्यमिवाभातिस्वप्नेष्विवयथास्थितम् ॥ ५४ ॥ अन्यथानुपपत्त्यार्थकारणाभावतःस्वतः ॥ चिद्व्योमात्मानमेवादौदृश्यमित्येवपश्यति ॥ ५५ ॥ सर्गादावेवखात्मैवदृश्यंभातिनिराकृति ॥ संभ्रमःस्वप्नसंकल्पमिथ्याज्ञानेष्विवाभितः ॥ ५६ ॥ स्वप्नवत्तच्चनिर्धर्ममनागपिनभिद्यते ॥ विकार्य्यपिसधर्मापिचिद्व्योम्नोवस्तुनोमलात् ॥ ५७ ॥

हिरण्यगर्भादिजगत् ॥ ४९ ॥ ५० ॥ परापरेसर्वसामान्यात्मकेब्रह्मणिशून्यत्वानिघटपटाद्यभावाःसर्वे ॥ ५१ ॥ सर्गस्थस्यस्वाप्नसर्गस्थस्यापिस्वस्यनद्वित्वंनाप्येकत्वंव्यावर्त्यांप्रसिद्धेः ॥ ५२ ॥ छायाकांतिरविद्यावा ॥ ५३ ॥ ५४ ॥ अन्यथानुपपत्त्यावादिसहस्रैरपिसद्वस्त्वतिरिक्तस्योपपादयितुमशक्त्याअर्थस्यसत्यस्यकारणांतरस्याभावतश्चचिद्व्योमस्वतःआत्मानमेवसर्गादौदृश्यमितिपश्यतीत्येवपक्षोनिरूढइत्यर्थः ॥ ५५ ॥ निराकृतिमूर्त्ताकारतद्विशेषशून्यम् ॥ तच्चभानमभितःसम्यग्भ्रमःसंभ्रमः ॥ ५६ ॥ तच्चदृश्यंस्वप्नवन्निर्धर्मसर्वधर्मशून्यंचिद्व्योमैव ॥ यतस्तत्रमनागपिधर्मोनविद्यते ॥ वस्तुनःपरमार्थभूतस्यचिद्व्योम्नोविकारोसधर्माप्याकारोऽविद्यामलात्प्रतीयतइत्यर्थः ॥ ५७ ॥

प्रतीतितःसधर्मापिअसधर्मकम् ॥ शिवादधिष्ठानसन्मात्रादनन्यमेवअज्ञदृशाइत्थंजगदाकारेणनिरंतरमेवस्थितम् ॥ ५८ ॥ नभिद्यतेस्वाधिष्ठानात् ॥ तस्माच्चिद्व्योममात्रत्वेन परिशिष्टस्यचिद्व्योम्नोगगनादपिशून्यत्वमतिसूक्ष्मत्वंसिद्धमित्यर्थः ॥ ५९ ॥ ६० ॥ ननुस्वप्नकालेसत्सत्यंपुरादिर्जीवेनरचितमस्तु अथरथान्रथयोगान्पथःसृजतेसहिकर्तेति श्रुतेरित्याशंक्याह ॥ नत्विति ॥ नतत्ररथारथयोगाःपंथानोभवंति मायामात्रंतुकात्स्न्र्येनानभिव्यक्तस्वरूपत्वादित्यादिश्रुतिसूत्रैःस्वप्नेसृष्टिप्रतिषेधान्मायामात्रत्वप्रतिपादनाच्चेति भावः॥६१॥ननुसएवायंदेवदत्तस्तदिदंपूर्वदृष्टमेवमद्गृहमित्याद्यबाधितप्रत्यभिज्ञादिनास्वप्नेपिपदार्थाःसत्याःसंतुतत्राह ॥ स्वप्नेचेति ॥ तदिदमितिप्रत्यभिज्ञायमानस्यगृहाद्यर्थस्य हृदयकंठनाडीच्छिद्रादिदेशेअत्यंतमसंभवेनप्रत्यभिज्ञायाअसंभवात् ॥ अर्थासंभवेतद्गोचरसंस्कारस्मृत्योरप्यसंभवःस्पष्टएवेतिभावः ॥६२॥ तस्मादसंभवादेवप्रसिद्धस्मृत्यादि कंत्यक्त्वाब्रह्मसंविदएवनिद्रादोषाद्यदन्यथाभानंतस्यैवजाग्रद्दृष्टार्थसादृश्यंकल्पयित्वाअनुभवव्यवहाराभासइवस्मृत्यादिसादृश्यमपिकल्पयित्वास्मृत्यादितापिमूढैरूहितेत्यभ्युपे

तत्स्वप्ननगराकारंसधर्माप्यसधर्मकम् ॥ शिवादनन्यमेवेत्थंस्थितमेवनिरंतरम् ॥ ५८ ॥ दृश्यंस्वज्ञाद्रिवत्स्वच्छंमनागपिनभिद्यते ॥ तस्माच्चिद्व्योमचिद्व्योम्नःशून्यत्वंगगनादिव ॥ ५९ ॥ यदेवतत्परंब्रह्मसर्वरूपविवर्जितम् ॥ तदेवेदंतथाभूतमेवसर्गतयास्थितम् ॥ ६० ॥ स्वप्नेनुभूयतेचैतत्स्वप्नेद्यात्मैवभासते ॥ पुरादित्वेननतुसत्पुरादिरचितंतदा ॥ ६१ ॥ स्वप्नेचप्रत्यभिज्ञायाःसंस्कारस्यस्मृतेस्तथा ॥ नस त्तातदिदंदृष्टमित्यर्थस्यात्यसंभवात् ॥ ६२ ॥ तस्मादेतत्रयंत्यक्त्वायद्भानंब्रह्मसंविदः ॥ तस्यदृष्टार्थसादृश्यान्मूढैःस्मृत्यादितोहिता ॥ ६३ ॥ यथायत्रैवलहरीवारिण्येतिपुनःपुनः ॥ तत्रैवैतितथातद्वदनन्याखेपरेजगत् ॥ ६४ ॥ विधयःप्रतिषेधाश्चसर्वएवसदैवच ॥ विभक्ताश्च विमिश्राश्चपरेसंतिनसंतिच ॥ ६५ ॥ तस्मात्सद्ब्रह्मसर्वात्मकिमिवात्रनविद्यते ॥ सैवसत्तैवसर्वात्मचैतदप्येतदात्मकम् ॥ ६६ ॥ भ्रांत स्यभ्रमणंभूमेर्नभूर्भ्रांतैववागणैः ॥ नशाम्यतिज्ञातुरपितथाभ्यासंविनात्रदृक् ॥ ६७ ॥

यमितिशेषः ॥ ६३ ॥ सादृश्यादपिसैवेयंलहरीसैवेयंदीपज्वालेत्यादिप्रत्यभिज्ञाभ्रमालोकेप्रसिद्धाःसंतीत्याह ॥ यथेति ॥ कल्पनाधिष्ठानेखेचिदाकाशविषयेअनन्यानतुकल्प नाविषयेपितथास्वप्नेपि ॥ तद्वत्सर्गादौजगदपिबोध्यमित्यर्थः ॥ ६४ ॥ कल्पनामात्रत्वादेवब्रह्मणिसदाधारपृथिवींद्यामुतेमाम् यस्मिन्द्यौःपृथिवीचांतरिक्षमोतंमनःसहप्राणै श्चसर्वैस्तमेवैकंजानथआत्मानमित्यादिजगद्विधयोनेहनानास्तिकिंचनेत्यादिजगत्प्रतिषेधाश्चाविरोधेनसमावेशंलभंतइत्याह ॥ विधयइति ॥ ६५ ॥ सैवसत्ताब्रह्मसत्तैवसर्वा त्मेत्येतत्सर्वमप्येतदात्मकंसदात्मकंसर्वात्मकंच ॥ ६६ ॥ अतएवतत्रसर्वेषांवादिनांसर्वकल्पनानामप्यविरोधेनसमावेशस्त्यक्तकल्पनस्यमोक्षश्चोपपद्यतइत्याशयेनाह ॥ भ्रांतस्ये ति ॥ क्रीडार्थंभ्रांतस्यभ्रमतोबालस्यवृक्षगिरिनद्यादिगणैःसहभूमेर्भ्रमणमन्येषांतुभूर्नभ्रांतैवेत्युभयमपिसदात्मकम् ॥ भ्रमत्वेबालस्यभूर्नभ्रमतीतिज्ञातुरपिस्थैर्याभ्यासंविनाउपा त्ताभ्रमणदृक्नशाम्यतितद्वज्जगद्भ्रांतिदृगपीतिभावः ॥ ६७ ॥

दृश्यभ्रांतिशांत्युपयुक्तःप्रकृतेकस्यकोवाभ्यासःकार्यस्तमाह ॥ शास्त्रस्येति ॥ अस्यमोक्षोपायस्यशास्त्रस्ययत्तत्त्वज्ञंगुरुंसेवादिनावशीकृत्यवादनंव्याख्यापनंतत्पूर्वकश्रवणा भ्यासंविनाअपरःअन्यः ॥ ६८ ॥ ननुकिमेतच्छास्त्राभ्यासेनयोगशास्त्रप्रसिद्धचित्तनिरोधादेवदृश्यादर्शनलक्षणेष्टसिद्धिरित्याशंक्याह ॥नेति ॥ भवेदेतदेवंयदिचित्तनिरोधःसि द्ध्येत् तत्तुचित्तंसंसृत्यविनाभाविस्वरूपत्वाज्ज्ञापरत्वमाभ्यांजीवन्मुपुमौविलयान्मृतंवायत्नेनापिनिरुद्ध्यमानंरोधंनायातिकिंत्वेतच्छास्त्राभ्यासाधीनाद्बोधादेवबाधितमेतत्संसृति नपश्यतीत्येतदभ्यासएवोपायइत्यर्थः ॥ ६९ ॥ यथाचित्तंसंसृत्यविनाभाविएवंदृश्यरूपासंसृतिरपिचित्तशरीरोभयाविनाभाविनी ॥ तेचदृश्यशरीरेएतच्छास्त्राभ्यासादस्तति प्रतिबंधेइहजन्मन्येवतत्त्वबोधाच्छाम्यतः ॥ सतितुप्रतिबंधेअमुत्रजन्मांतरेवाप्रतिबंधक्षयेबोधोदयाच्छाम्यतः ॥ तथाचभगवतोबादरायणस्यसूत्रम् ॥ ऐहिकमप्रस्तुतप्रतिबंधे

शास्त्रस्यास्यतुयन्नामवादनंतद्विनापरः ॥ अभ्यासोदृश्यसंशांत्यैनभूतोनभविष्यति ॥ ६८ ॥ नजीवन्नमृतंचित्तंरोधमायातिसंसृतेः ॥ अविनाभाविदेहत्वाद्बोधात्त्वेतन्नपश्यति ॥ ६९ ॥ सर्वदैवाविनाभाविचित्तंदृश्यशरीरयोः ॥ इहचामुत्रचैतस्यबोधांतेशाम्यतःस्वयम् ॥ ७० ॥ चित्तदृश्यशरीराणित्रीणिशाम्यंतिबोधतः ॥ पवनस्पंदसैन्यानिकारणाभावतोयथा ॥ ७१ ॥ कारणंमौर्ख्यमेवास्यतच्चास्माद्वशास्त्रतः ॥ किंचित्संस्कृतबुद्धीनांवाचितादेवशाम्यति ॥ ७२ ॥ अबुद्धमुत्तरग्रंथात्पूर्वंपूर्वंहिबुध्यते ॥ ग्रंथंपदपदार्थज्ञःखेदवान्ननिवर्त्तते ॥ ७३ ॥ उपायमिदमेवातोविद्धिशास्त्रंभ्रमक्षये ॥ अनन्यसाधारणतांगतमित्यनुभूयते ॥ ७४ ॥ तस्मादस्मान्महाशास्त्राद्यथाशक्तिविचारयेत् ॥ भागौद्वौभागमेकंवातेनदुःखक्षयोभवेत् ॥ ७५ ॥ आरुषेयमिदमितिप्रमादाच्चेन्नरोचते ॥ तदन्यदात्मविज्ञानशास्त्रंकिंचिद्विचारयेत् ॥ ७६ ॥ अनर्थेनाविचारेणवयःकुर्यान्नभस्मसात् ॥ बोधेनज्ञानसारेणदृश्यंकर्त्तव्यमात्मसात् ॥ ७७ ॥ आयुषःक्षणएकोपिसर्वरत्नैर्नलभ्यते ॥ नीयतेतद्वृथायेनप्रमादःसुमहानहो ॥ ७८ ॥

तद्दर्शनादिति ॥ ७० ॥ पवनस्पंदोतत्प्रयुक्तमेघसैन्यानिचयथातत्प्रयोजकशुक्रास्तोदयादिकारणापायाच्छाम्यंतितद्वदित्यर्थः ॥ ७१ ॥ किंतत्संत्रचित्तादित्रिकस्यकारणंतदाह ॥ कारणमिति ॥ मौर्ख्यंब्रह्मात्मभावावरिकाअविद्या ॥ ७२ ॥ ननुवाचनमात्रेणकथमस्यार्थःसर्वोबुध्यतेतत्राह ॥ अबुद्धमिति ॥ ननिवर्त्ततेयदीतिशेषः ॥ ७३ ॥ ७४ ॥ भाग मेकमर्द्धंपंथंवा ॥ ७५ ॥ ऋषिणाकृतमिदंशास्त्रंस्मृतिरूपंस्मृतेश्चश्रुतिर्मूलमितिश्रुतिमेवविचारयिष्यामइतिबुद्ध्याप्रमादवशादिदंशास्त्रंनरोचतेनत्तर्हिअन्यच्छ्रुतिरूपमुपनिषद्भा ष्यादिरूपमात्मज्ञानशास्त्रमेवविचारयेन्नत्वात्मशास्त्रविमुखोभवेदित्यत्रनस्तात्पर्यंनत्वत्रैवाग्रहइत्यर्थः ॥ ७६ ॥ ज्ञानसारेणश्रवणाद्युपायेनयथाकथंचित्तत्त्वबोधेनसर्वंदृश्यमा त्मनैवेयमात्मसात्कर्त्तव्यंबाधमुखेनात्मनायमनात्मकर्त्तव्यमितियावत् ॥ देयेत्राचेतिसातिप्रत्ययः ॥ ब्राह्मणसादिदमन्नंकर्त्तव्यमितिवत् ॥ ७७ ॥ तत्रालसानुयोजयति ॥ आ युषइति ॥ स्वर्णादिराशिसहितैःसर्वरत्नैरपि ॥ प्रमादस्तस्येतिशेषः ॥ ७८ ॥

१ बहुपुस्तकेषुआरुषेयमितिपाठउपलभ्यते ॥ उभयथाप्यार्षत्वंसमानम्

इदंदृश्यंप्रत्यक्षमनुभूतमपिद्रष्ट्रा अंतःकरणोपहितेनजीवेनसहितमपिस्वप्नेदैवाद्दृष्टेनिजमरणेपरितोबांधवैःकृतंरोदनमिवसदिवकचितमपिनोसत्मिथ्यैवेतिब्रह्माद्वैतदिग्विजयडिंडि मइत्यर्थः ॥ ७९ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेपंचसप्तत्युत्तरशततमःसर्गः ॥ १७५ ॥ ॥ ७ ॥ ॥ स्वप्नवद्भ्रांतिसर्गादौब्रह्मांडाश्वि दृणाविति ॥ अत्रार्थेब्रह्मणाप्रोक्तंब्रह्मांडाख्यानमीर्यते ॥ १ ॥ यदिदृश्यमसदितिदृश्यबाधेनचिन्मात्रपरिशेषएवपुरुषार्थस्तर्हिसमूलस्यवर्त्तमानस्यैवदृश्यस्य जगतोबंधतयात न्मार्जनमेवोपयुज्यतेनत्वतीतानागतानामप्रतीयमानानामवर्त्तमानजगतामपि ॥ तेषामप्रतीत्यैवबंधत्वाप्रसक्तेस्तथाचतदुपन्यासःशास्त्रेव्यर्थएवेत्याशयेनरामःशंकते ॥ जगंती ति ॥ १ ॥ वर्त्तमानदृश्यमात्रमेवोपन्यासार्हंनातीतंभविष्यद्वाकिंचिदपीतित्वदाक्षेपोनिष्कर्षेफलति तत्तुनयुक्तंपदपदार्थसंबंधस्यव्याप्तिग्रहस्यचदृष्टांतसिद्धादीनांचातीतव्यव हाराधीनत्वेनतदुपन्यासंविनाविचारात्मकशास्त्रप्रवृत्त्ययोगात् तस्मादतीतानागतब्रह्मांडावर्तमानब्रह्मांडांतराणिचशब्दार्थसंबंधग्रहादावनुपयोगान्नोपन्यसनीयाइत्येतावाना

अनुभूतमपिचनोसद्दृश्यमिदंद्रष्टृसहितमपि ॥ स्वप्ननिजमरणबांधवरोदनमिवसदिवकचितमपि ॥ ७९ ॥ ॥ इ०वा०महारामायणे वा०दे०मो०नि०उ०परमार्थगीतास्वद्वैतयुक्तिर्नामपंचसप्तत्युत्तरशततमःसर्गः ॥ १७५ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ जगंतिसंत्यसंख्यानिभविष्यंतिगतानिच ॥ तत्कथाभिःकथंब्रह्मन्प्रबोधयसिमामिमम् ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ जगत्स्वप्नेषुश ब्दार्थसंबंधोवगतस्त्वया ॥ ननामनचलोकेनव्यर्थंतत्कथनंततः ॥ २ ॥ याकथावगतात्मभ्यांशब्दार्थाभ्यांनिगद्यते ॥ बुद्ध्यतेसेतरानांतः सैवहव्यवहारिणी ॥ ३ ॥ यदाविदितवेद्यःसंस्त्रिकालामलदर्शनः ॥ भविष्यसितदातानिप्रत्यक्षेणैवभोत्स्यसे ॥ ४ ॥ स्वप्नेचिन्मात्रमेवा द्यंस्वयंभातिजगत्तया ॥ यथातथैवसर्गादौनात्रान्यदुपपद्यते ॥ ५ ॥ अणावणावसंख्यानितेनसंतिजगंतिखे ॥ तेषांतान्व्यवहारौघा न्संख्यातुंकइवक्षमः ॥ ६ ॥

क्षेपःकर्त्तुंयुक्तश्चेदस्तुनामेत्यनास्थयाअभ्युपगच्छन्निवभगवान्वसिष्ठउत्तरमाह ॥ जगत्स्वप्नेष्वित्यादिना ॥ लोकेनएतच्छास्त्रार्थश्रवणाधिकृतजनेन ॥ २ ॥ अवगतात्मभ्यां निश्चितवाच्यवाचकभावाभ्यांव्यवहारिणीव्यवहारोपयुक्तानान्येतिकेवललौकिकबुद्ध्यनुसारेणपर्यालोचनेत्वयासम्यगाक्षिप्तमित्यर्थः ॥ ३ ॥ तत्त्वज्ञेषुप्रसिद्धंत्रिकालामल दर्शनंयदिपर्यालोचयिष्यसितदासर्वत्रस्वस्यैवद्रष्टृत्वादतीतानागतव्यवहितविप्रकृष्टानंतब्रह्मांडानांवर्त्तमानस्यास्यब्रह्मांडस्यचविशेषलेशस्याप्यभावान्नायंतवाक्षेपउत्थातुम र्हतीत्याशयेनाह ॥ यदेति ॥ वर्त्तमानायाअपितत्त्वदृष्टेरपर्यालोचनेनवृथात्वापादनात्परिहासेनभविष्यसिभोत्स्यसेइतिचभविष्यत्त्वारोपेणोक्तिः ॥ ४ ॥ तत्त्वविदोवर्त्तमान ब्रह्मांडांतरेषुभविष्यद्ब्रह्मांडेषुचपुनरावृत्तिशंकावारणायतेषामपिस्वप्नप्रपंचसाम्येनमूलाज्ञानबोधेनबाधप्रतिपादनायतेपिशास्त्रेअवश्यमुदाहरणीयाएवेत्याशयेनाह ॥ स्वप्नेइति ॥ सर्गादौअतीतानागतादिसर्वसर्गादौइत्येतावानंशस्तत्राप्युपयुज्यतेनान्यत्तद्वैचित्र्यंप्रकृतोपयुक्तमत्रोपपद्यतइत्यर्थः ॥ ५ ॥ तत्कुतइतिचेदसंख्यत्वेनतद्वैचित्र्येयत्तायाःशास्त्रेवर्ण यितुमशक्यत्वादित्याशयेनाह ॥ अणावणाविति ॥ ६ ॥

अत्र अणावणावसंख्यानीत्युक्तेऽर्थेपद्मरेणुमतापद्मपरागकीर्णदेहेनमत्पित्राऽऽख्यानंमेप्रोक्तंतच्छृणु ॥ ७ ॥ ८ ॥ ९ ॥ तस्यआख्यानस्यद्वेनामनीआह ॥ ब्रह्मांडपिंडइति ॥
अन्वर्थनाम्नाउक्तंप्रसिद्धम् ॥ १० ॥ तदेववक्तुमारभते ॥ अस्तीत्यादिना ॥ अनिलेशुद्धःस्पंदइवस्वसत्तामात्रेणजगच्चेष्टाहेतुः ॥ ११ ॥ सचिद्व्योमपरमाणुकःस्वतत्त्वादर्शननि
द्रावशात्स्वप्नइवात्मनोजीवत्वंसमष्टिजीवत्वमपश्यत् ॥ यथावस्तुभूतमेवाकाशंस्वमसद्देवशून्यत्वंपश्येत्तद्वत् ॥ यथावापवनःस्वंस्पंदनंपश्येत्तद्वच्च ॥ १२ ॥ तर्हिसांकिपरिणा
मीनेत्याह ॥ आकाशरूपमिति ॥ आकाशरूपमविकारितामसंगतांपूर्णतांसूक्ष्मतांच ॥ आकाशरूपकमाकाशप्रतिममहमित्येवजीवःस्वंरूपमपश्यत् ॥ १३ ॥ सःअहंकाररू

अत्रैवमेपुराप्रोक्तंमत्पित्रापद्मजन्मना॥ पद्मरेणुमताख्यानंशृणुतत्कथयामिते॥ ७॥ पुरापृष्टोमयाब्रह्माजगज्जालमिदंकियत्॥ कवा
भातीतिवदमेब्रह्मोवाचततःसमाम्॥ ८॥ ॥श्रीब्रह्मोवाच॥ ॥ब्रह्मैवेदंमुनेसर्वंजगदित्यवभासते॥ सतामनंतसत्वेनजगत्वेनासता
मपि॥ ९॥ श्रुतंममेदमाख्यानंशृणुश्रवणभूषणम्॥ ब्रह्मांडपिंडइत्युक्तंब्रह्मांडाख्यानमेवच॥ १०॥ अस्तिखेखादनन्यात्माचिद्व्योमप
रमाणुकः॥ शून्यरूपमिवाकाशंशुद्धःस्पंदइवानिले॥ ११॥ सोपश्यदात्मनास्वप्नइवजीवत्वमात्मनि॥ शून्यरूपमिवाकाशंपवनःस्पं
दनंयथा॥ १२॥ आकाशरूपमजहद्देवजीवस्ततःस्वयम्॥ अपश्यदहमित्येवरूपमाकाशरूपकम्॥ १३॥ अहंकारस्त्वहंबुद्धिरित्येवाप
श्यदात्मनि॥ एकनिश्चयनिर्माणमयीमायानुरूपिणी॥ १४॥ बुद्धिर्मनोहमित्येवंस्वप्नेपश्यदसन्मयम्॥ नमयंत्यात्मनात्मानमविक
ल्पंविकल्पनैः॥ १५॥ अपश्यत्तन्मनःस्वप्नेदेहंपंचेंद्रियंततः॥ अनाकारंघनाकारंस्वप्नाद्रित्वमिवाज्ञधीः॥ १६॥ ददर्शसमनोदेहोवपुस्त्रिभु
वनात्मकम्॥ खात्माखात्मैवनिर्भित्तिभित्तिभासुरमाततम्॥ १७॥ अनेकभूतवलितंनानास्थावरजंगमम्॥ कलनाकालकलितंक
ल्पितान्योन्यसंगमम्॥ १८॥ स्वप्नेप्रत्येकमेवात्रपश्यत्यादर्शबिंबितम्॥ इवत्रैलोक्यनगरंनवरंगमनोहरम्॥ १९॥ अथप्रत्येकमत्रा
पिनवरंगमनोहरम्॥ त्रिजगद्दीप्तिहृदयस्वादर्शइवबिंबितम्॥ २०॥ परमाणोःपरमाणोरितिसंततितनूदरे॥ अतनूनिजगंत्युच्चैर्घनानी
वचतान्यपि॥ २१॥

पस्त्वहमात्मनिबुद्धिरित्येवरूपमपश्यत् ॥ साचबुद्धिरेकनिश्चयनिर्माणमयीमायायाश्चानुरूपिणीअसदर्थभ्रमदायित्वादित्यर्थः ॥ १४ ॥ विकल्पनैर्विकल्पाभासारोपणैरात्मना
आत्मानंनमयंतीन्यग्भावयंती ॥ १५ ॥ १६ ॥ सचिद्व्योमपरमाणुकइत्थंमनोदेहसमष्ट्यात्मासंस्त्रिभुवनात्मकंविराड्वपुर्ददर्श ॥ १७ ॥ विराड्वपुर्वर्णयति ॥ अनेकेति ॥ १८ ॥
व्यष्टिजीवभेदकल्पनेनप्रत्येकंत्रैलोक्यद्रष्टृतायांदृष्टांतमाह ॥ स्वप्नइति ॥ नवरंगाःद्रष्टादृश्यंदृष्टिर्भोक्ताभोग्यंभोगःकर्ताकार्यंक्रियेतितिस्रस्त्रिपुट्यस्तैर्मनोहरम् ॥ १९ ॥ तद्दा
र्ष्टांतिकमाह ॥ अथेति ॥ प्रत्येकंप्रतिजीवम् ॥ २० ॥ एवंजीवभेदेनविविक्तस्यचित्परमाणोःसर्वस्यापितनूनिअतिसूक्ष्मेप्युदरेइतिवर्णितरीत्याकल्पितानिअतनूनिमहांतिजगं
तिसंति ॥ तान्यपिउच्चैर्जीवघनैःपृथ्व्यादिघनैश्चघनानीव ॥ २१ ॥

इयंचसर्वास्वतत्वाज्ञानलक्षणाअविद्यैव ॥ साज्ञानेननिवारिताचेद्ब्रह्मनिर्मलम ॥ २२ ॥ ब्रह्मत्वेनदृष्टेसतियोजगत्स्वप्नजालंद्रष्टासोपिनकिंचन ॥ २३ ॥ निर्भित्तिनिर्भेदंब्रह्म आत्मनिस्वस्वरूपेस्थितम् ॥ २४ ॥ तथाचपरमात्मनियावदज्ञाननिद्रास्तितावत्परमात्मनिब्रह्मांडलक्षनिचयाइतिवर्णितप्रकारेणनित्यमनन्येअपिअन्यवत्स्थिताः ॥ यथावारिणिसमुद्रेएतेअवारितविसारितरंगवेगान्निमित्ताह्लोलंस्थितस्यांबुनःपरमाणुचयाअसंख्याताःस्थितास्तद्वदित्यर्थः ॥ २५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेषट्सप्तत्युत्तरशततमःसर्गः ॥ १७६ ॥ ॥ ७ ॥ ॥ सकारणंकल्पनयावस्तुवृत्त्यात्वकारणम ॥ जगत्स्वप्नसमंमोहाद्बोधाद्ब्रह्मेतिवर्ण्यते ॥ १ ॥ अकारणकएवस्वप्नसमोयंसर्गइतिबहुशोयद्वर्णितंतत्ररामःसस्यधान्यादिकार्यस्यापितर्हिकृषिवृष्ट्यादिकारणंविनैवोत्पत्तिःस्यादित्युत्पत्तिप्रसंगंशंकते ॥ अकारणकमितिद्वाभ्याम् ॥ १ ॥ तर्त्तर्हि

अविद्येयमनंतयमविद्यात्वेनचेतिता ॥ ब्रह्मत्वेनपरिज्ञाताभवतिब्रह्मनिर्मलम् ॥ २२ ॥ एवंद्रष्टापियःस्वप्नजालंदृष्टेनकिंचन ॥ कोत्रद्रष्टा कुतोदृश्यंकद्वैतंक्वचकारणम् ॥ २३ ॥ सर्वंनिःशांतमाभातंखात्मनिर्भित्तिकेवलम् ॥ ब्रह्मात्मनिस्थितंस्वच्छमाद्यंतपरिवर्जितम् ॥ २४ ॥ ब्रह्मांडलक्षनिचयाःपरमात्मनीतिनित्यंस्थितानिपुणमन्यवदप्यनन्यं ॥ वारिण्यवारितविसारितरंगवेगाह्लोलंस्थितांबुपरमाणुचयाय थैते ॥ २५ ॥ ॥ इ०वा०महारामायणेवा०दे०मो०नि०उ०ब्रह्मगीतासुब्रह्मांडोपाख्यानंनामषट्सप्तत्युत्तरशततमःसर्गः ॥ १७६ ॥ श्रीरामउवाच ॥ ॥ अकारणकमेवेदंजगद्ब्रह्मपरात्पदात् ॥ यदिप्रवर्त्ततेनामस्वप्नसंकल्पनादिवत् ॥ १ ॥ तदकारणतःसिद्धेःसंभवेन्यदकारणम् ॥ कथंनजायतेवस्तुक्वचित्किंचित्कदाचन ॥ २ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यद्यथाकल्पितंयेनससंपश्यतितत्तथा ॥ कल्पनैवान्यथानस्यात्ताद्दक्कारणविच्युतेः ॥ ३ ॥ यथेदंकल्पितंदृश्यंमनसायेनतत्तथा ॥ वेत्त्यसौयादृगन्येनकल्पितंवेत्त्यसौतथा ॥ ४ ॥

अकारणतएवसर्वाभिलपितसिद्धेःसंभवेअन्यत्सस्यधान्यादिकमपिवस्तुकृषीवलानामकारणकंकृषिवृष्टिबीजवापादिकारणंविनैवकथंनजायतेइत्यर्थः ॥ २ ॥ नवयंव्यवहारव्यवस्थापकंकाल्पनिकंकार्यकारणभावंबीजांकुरादेर्वारयामःकिंतुजगत्सत्यत्वप्रसंजनेनतत्त्वज्ञानवैयर्थ्यापादकंब्रह्मातिरिक्तंप्रधानपरमाण्वाद्यश्रौतंवादिभिःकल्पितंकारणंनिराचक्ष्महे ॥ जगतोब्रह्मविवर्त्तमात्रत्वप्रसिद्ध्यातत्त्वज्ञानेनबाधेकैवल्यसिद्धिर्यथास्यादितीत्याशयेनवसिष्ठःसमाधत्ते ॥ यद्यथेति ॥ अनादिव्यवहारेयेनयद्यद्यथादृढाभ्यासेनकल्पितंसतत्तथाकार्यंकारणंवासर्वंपश्यति ॥ अन्यथाव्यवहारेपिव्यावहारिकनियमापलापेकापिकल्पनानस्यादित्यनभ्यासेनैवसर्वमुक्तिप्रसंगइत्यर्थः ॥ ३ ॥ अतएवकल्पकबुद्ध्यनुसारेणव्यवस्थितमेववस्तुअनुभूयतइत्याह ॥ यथेदमिति ॥ तथाचनिरालंबनवादनिष्कर्षेभट्टवार्त्तिकेउदाहृतम् ॥ परिव्राट्कामुकशुनामेकस्यांप्रमदातनौ ॥ कुणपःकामिनीभक्ष्यमितितिस्रोविकल्पनाइति ॥ ४ ॥

१ सतुपातुपत्वाभ्यांसस्यधान्ययोर्भेदः

तर्हिकिंनिरालंबनैवकल्पनानेत्याह ॥ कल्पनाकल्पनात्मेति ॥ तच्चाचिदंशःकल्पनात्माचिदंशस्त्वकल्पनात्माउभयघटितमिदंजगत् ॥ यथाजंतुश्चेतनःपुरुषःकेशनखाद्यचेतनघटितःप्रतीयतेतद्वदित्यर्थः ॥५॥ अतएववस्तुतस्तद्दृशाअकारणपदार्थत्वंकल्पनादृशासकारणपदार्थतेतिब्रह्मणिद्वयमप्यविरोधेनास्ति॥६॥यद्युभयात्मकंब्रह्मतर्हिकथमकारणकत्वपक्षएवत्वयाप्रतिष्ठापितस्तत्राह ॥ यतइति ॥ तत्त्वज्ञानस्यैवसप्रयोजनत्वात्तत्तदृष्टिमात्रपक्षपातेनसप्रतिष्ठापितइतिभावः ॥७॥८॥९॥ वास्तवमकारणकत्वंकल्पितकार्यानुत्पत्तितद्रूपत्योर्द्वयोरप्यविरोधीत्याह ॥ किंकस्येति ॥१०॥ शून्याशून्याद्युभयविधमात्रशून्यत्वान्महाशून्ये ॥ ननेतिननेतिचेतितदुल्लेखः ॥ ११ ॥ सर्वस्यापिब्रह्मैकरस्यादेवशून्यतानशून्यैकरस्याद्वित्याह ॥ इदमिति ॥ यद्यस्माद्धेतोस्तद्ब्रह्मअध्यारोपेसर्वानुगतत्वात्तथैवअपवादेसर्वतोव्यावृत्तत्वादतथैवच ॥ १२ ॥ नन्वतत्त्वज्ञविषयायथाअध्यारो

कल्पनाकल्पनात्मैकंतत्त्वब्रह्मस्वभावतः॥ कल्पनात्मेदृशंजंतुर्यथाकेशनखादिमान् ॥५॥ अकारणपदार्थत्वंसकारणपदार्थता॥ ब्रह्मणिद्वयमप्यस्तिसर्वशक्त्यात्मतद्यतः॥६॥ यतःस्याद्ब्रह्मणस्त्वन्यत्क्वचित्किंचित्कदाचन॥ तत्कारणविकल्पेनसंयोगस्तस्ययुज्यते॥७॥ यत्रसर्वमनाद्यंतंनानानानात्मभासते॥ ब्रह्मैवशांतमेकात्मतत्रकिंकस्यकारणम्॥८॥ नेहप्रवर्त्ततेकिंचिन्नचनामनिवर्त्तते॥ स्थितमेकमनाद्यंतंब्रह्मैवब्रह्मखात्मकम्॥९॥ किंकस्यकारणंकेनकिमर्थंभवतुक्वा॥ किंकस्यकारणंकेनकिमर्थंमास्तुवाक्वचित्॥१०॥ नेहशून्यंनवाशून्यंनसन्नासन्नमध्यता॥ विद्यतेनमहाशून्येननेतिननेतिच॥११॥ इदंनकिंचित्किंचिद्वायन्नामास्त्यथनास्तिवा॥ सर्वत्रैवतद्विद्धियत्तथैवातथैवतत्॥१२॥ ॥श्रीरामउवाच॥ ॥अतज्ज्ञविषयेब्रह्मन्कार्यकारणसंभवे॥ किमकारणतात्मस्यात्कथंवेत्तिवदप्रभो॥१३॥ ॥श्रीवसिष्ठउवाच॥ ॥अतज्ज्ञोनामनास्त्येवतावत्तज्ज्ञजनंप्रति॥ असतोव्योमवृक्षस्यविचारःकीदृशस्ततः॥१४॥ एकबोधमयाःशांतविज्ञानघनरूपिणः॥ तज्ज्ञास्तेषामसद्रूपेकथमर्थविचारणा॥१५॥

पापवादौतत्त्वज्ञैस्तद्बोधनायाभ्युपगम्यतेतथाप्रधानपरमाण्वादिप्रयुक्तकार्यकारणसंभवोपिकुतोनाभ्युपगम्यतेइतिरामःशंकते ॥ अतज्ज्ञेति ॥ पृथिव्यप्तेजोवायुलक्षणेकार्येतदवयवपरंपरासौक्ष्म्यावधीनांपरमाणूनांसत्वादिगुणानांकारणानांवासंभवोकिजन्यद्रव्यमकारणंतत्स्यात्कथंवाअद्वितीयब्रह्मपरिशेषइत्यर्थः॥१३॥ भवेदेवंयदिब्रह्मातिरिक्तःप्रधानपरमाण्वादिकल्पकोऽतज्ज्ञःप्रसिद्ध्येत् ॥ यदातुब्रह्मवाइदमग्रआसीत्तदात्मानमेवावेदहंब्रह्मास्मीतितस्मात्तत्सर्वमभवदितिश्रुतिदर्शितदिशाब्रह्मैवस्वाज्ञानादतज्ज्ञंतस्यैवतत्त्वज्ञानोपयुक्तंशास्त्रंतदातदध्यारोपापवादन्यायेनैवतत्त्वज्ञानेउपयुज्यतेनप्राधानपरमाण्वादिकल्पनयेतिवैषम्यमित्याशयेनवसिष्ठःसमाधत्ते ॥ अतज्ज्ञइति ॥ १४ ॥ कुतोनास्तितत्राह ॥ एकबोधमयाइति ॥ तद्यथासैंधवघनोनंतरोऽबाह्यःकृत्स्नोरसघनएवंवाअरेअयमात्माविज्ञानघनएवप्रज्ञानघनएवेतिश्रुतेरितिभावः ॥ १५ ॥

ननुब्रह्मातिरिक्तःअतज्ज्ञोनास्तीतिकथंसंभाव्यते तार्किकैःपामरैश्चनाहंब्रह्मनाहंब्रह्मज्ञश्चेतिस्वात्मन्यतत्त्वज्ञत्वाब्रह्मत्वयोःप्रत्यक्षमनुभवादित्याशंक्यतादृशानुभवबलेनैवतदात्मनामपिब्रह्मत्वंसमर्थयति ॥ अतज्ज्ञत्वमिति ॥ अज्ञानादिसर्वजगदारोपाधिष्ठानचिन्मात्रत्वंहिब्रह्मत्वम् तच्चाहमज्ञइत्यनुभवितरितार्किकात्मनिदुर्वारम् ॥ यतःअज्ञत्वंप्रबोधरूपेआत्मन्यंतरवभाति ॥ यदिचवैशेषिककल्पितोजडोयमात्मास्यात्कथमात्मन्यज्ञानमनुभवेत् ॥ अतःअज्ञानाधिष्ठानचिद्रूपत्वमस्मादेवानुभवात्सिद्धम् ॥ जगच्चकेवलमज्ञानात्मैवयतस्तदंगतांगतम् ॥ यथास्वप्नसुषुप्तेनिद्रांतर्निद्रांगतांगतेकेवलंनिद्रैवननिद्राव्यतिरिक्तंतयोःस्वरूपमस्तितद्वत् ॥ नचज्ञानस्वभावेआत्मनिस्वभावविरुद्धमज्ञानमारोपमंतरेणभवितुमर्हतीत्यज्ञानादिजगदारोपाधिष्ठानत्वस्यास्मादेवानुभवात्सिद्धेरित्यर्थः ॥ १६ ॥ नन्वज्ञानादिजगदधिष्ठानत्वरूपंसर्वात्मत्वंब्रह्मलक्षणंचेज्ज्ञानेनतदपायेतद्ब्रह्मत्वंनस्यादित्याशंक्याह ॥ तथापीति ॥ मूर्खप्रतिबोधनार्थंमूर्खबुद्धिमनुसृत्यशुद्धब्रह्मव्युत्पादनार्थमयेदंब्रह्मणस्तटस्थलक्षणमुच्यते ॥ स्वरूपलक्षणंतुतस्यशुद्धनिरामयानंदैकरसत्वंनाज्ञानुभवपथमवतरतीत्यर्थः ॥ १७ ॥ तथाचाज्ञबुद्ध्यनुसारेणजगदन्यदिवकृत्वाब्रह्मकल्पादौकारणमितिस्वीकारेपियक्षानुरूपोवलिरितिन्यायेनमिथ्याभूतस्यप्रपंचस्यतादृशीमायैवकार

अतज्ज्ञत्वंचबोधेंतरवभातितदंगता ॥ गतेस्वप्नसुषुप्तेंतरिवनिद्रात्मकेवलम् ॥ १६ ॥ तथाप्यभ्युपगम्यापिमूर्खनिश्चयउच्यते ॥ मयेदमणुसर्वात्मयस्माद्ब्रह्मनिरामयम् ॥ १७ ॥ संत्यकारणकाएवसंतिकारणजास्तथा ॥ भावाःसंविद्यथायस्मात्कल्प्यतेलभ्यतेतथा ॥ १८ ॥ सर्वकारणसंशांतौसर्वानुभवशालिनाम् ॥ सर्गस्यकारणंनास्तितेनसर्गस्त्वकारणः ॥ १९ ॥ हृदयंगमतात्यक्तमीश्वरादिप्रकल्प्यते ॥ यदत्रकिंचिद्दुःस्वादुव्यर्थवाग्जालमेवतत् ॥ २० ॥ अन्यथानुपपत्त्यैवस्वप्नाभाकलनादृते ॥ स्थूलाकारात्मिकाकाचिन्नास्तिदृश्यस्यदृश्यता ॥ २१ ॥ स्वप्नपृथ्व्याद्यनुभवेकिमबुद्धस्यकारणम् ॥ चित्स्वभावादृतेब्रूहिस्वप्नार्थोनामकीदृशः ॥ २२ ॥ स्वप्नार्थोद्यपरिज्ञातोमहामोहभरप्रदः ॥ परिज्ञातोनमोहाययथासर्गास्तथैवच ॥ २३ ॥ शुष्कतर्कहठावेशाद्यद्याप्यनुभवोज्झितम् ॥ कल्प्यतेकारणंकिंचित्सामौर्ख्याभिनिवेशिता ॥ २४ ॥

णंतथापिनवास्तवाद्वैतक्षतिरित्याशयेनाह ॥ संतीति ॥ अकारणकाःशुक्तिरजतमरुनदीरज्जुसर्पादयः ॥ तत्रसंविदाकारणजत्वेनकल्पिताःसकारणकाअन्यथाकल्पितास्त्वकारणकाइतिमृन्मयगौरीगणपत्योर्मातृपुत्रतावत्कल्पनानुसारेणैवतद्व्यवस्थेत्याह ॥ संविदिति ॥ १८ ॥ तत्त्वदृशात्वखंडाद्वयचिन्मात्रमेवसदानाणुमात्रमपिकदाचिद्विपर्यासदृतिनसर्गकारणंकेनचिदपिनिरूपयितुंशक्यमित्याह ॥ सर्वेति ॥ सर्वेषामनुभवशालिनांतत्त्वविदाम् ॥ १९ ॥ अत्रईदृशेस्वप्नगंधर्वनगरमरुमरीचिकाप्रायेजगतिसत्यत्वसाधनाभिनिवेशेनयद्वैशेषिकादिभिर्मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरमित्यादिश्रुतिप्रसिद्धमायोपहितब्रह्मातिरिक्ततटस्थेश्वरप्रधानपरमाण्वादिकिंचित्कारणंप्रकल्प्यतेतत्प्रत्यक्षश्रुतिविद्वदनुभवविरोधाद्वेदांतशास्त्रप्रसिद्धयुक्तिपराहतत्वाच्चदुःस्वादुतिक्तंस्रष्टुरीश्वरस्यभोक्तुर्जीवस्यवापुरुषार्थापर्यवसायित्वाद्व्यर्थंमतएवाभिज्ञानांहृदयंगमतयात्यक्तमहृदयंगममिनिद्रथाकंठशोषंवाग्जालमेवतदित्यर्थः ॥ २० ॥ प्रबोधबाध्यत्वान्यथानुपपत्त्यापिजगत्स्वप्नमात्रमेवेतितदर्थंनकारणकल्पनावकाशइत्याह ॥ अन्यथानुपपत्त्येति ॥ २१ ॥ तदेवविशदयति ॥ स्वप्नेति ॥ अबुद्धस्यअप्रबुद्धस्य ॥ २२ ॥ २३ ॥ २४ ॥

यद्यवश्यंकारणमपेक्षितंतर्ह्यज्ञातब्रह्मस्वभावएवतथास्त्वित्याशयेनाह ॥ अग्नेरिति ॥ अवुद्धस्याज्ञानोपहितस्यात्मनःस्वभावोवाकारणमितिशेषः ॥ २५ ॥ मनोरथकल्पितन गरवद्ध्यातृभेदेनव्यवस्थिताकारत्वादपिनसर्वसाधारणमेकंकारणंसुत्रचमित्याशयेनाह ॥ किमिति ॥ २६ ॥ धर्माधर्मयोस्तुअमूर्त्तत्वादेवमूर्त्तदेहाद्युपादानकारणतानसंभवती तिकर्ममीमांसककल्पमपिनिराचष्टे ॥ धर्मादीति ॥ अमुत्रपरलोके ॥ २७ ॥ विज्ञानवादिमतेप्यमूर्त्तस्यक्षणिकस्यचविज्ञानस्यमूर्त्ताक्षणिकोपादानतादुर्वचेत्याह ॥ भित्तीति ॥ भित्तयःस्थूलकुड्यादयःअभित्तयस्तद्विलक्षणाःपरमाणवः ॥ उत्पन्नध्वंसिनामित्युक्त्याकार्यानुकूलव्यापारस्यकार्यसंवंधस्यचक्षणिकेष्वसंभवःसूचितः ॥ २८ ॥ स्वभाववा दिनश्चार्वाकस्यमतंनिरस्यति ॥ स्वभावस्येति ॥ अंकुरादिस्वभावस्यकालक्षेत्रजलादिसहितवीजादिस्वभावोसौकारणमितिचार्वाकैर्यदुच्यतेसाउक्तिरपिवीजस्वभावपदयो

अग्नेरौष्ण्यमपांशैत्यंप्राकाश्यंसर्वतेजसाम् ॥ स्वभावोवाखिलार्थानांकिमवुद्धस्यकारणम् ॥ २५ ॥ किंध्यातृशतलब्धस्यध्येयस्यैक स्यकारणम् ॥ किंचगंधर्वनगरेपुरेभित्तिपुकारणम् ॥ २६ ॥ धर्माद्यमुत्रामूर्त्तत्वान्मूर्त्तदेहेनकारणम् ॥ देहस्यकारणंकिंस्यात्तत्रसर्गादि भोगिनः ॥ २७ ॥ भित्त्यभित्त्यादिरूपाणांज्ञानस्यज्ञानवादिनः ॥ किंकारणमनंतानामुत्पन्नध्वंसिनांमुहुः ॥ २८ ॥ स्वभावस्यस्वभावोसौ किलकारणमित्यपि ॥ यदुच्यतेस्वभावस्यसापर्यायोक्तिकल्पना ॥ २९ ॥ तस्मादकारणाभ्रांतिर्भावाभांतिचकारणम् ॥ अज्ञेज्ञेत्वखि लंकार्यंकारणाद्भवतिस्थितम् ॥ ३० ॥ यद्वत्स्वप्नपरिज्ञानात्स्वप्नेद्रव्यापहारिभिः ॥ नदुःखाकरणंतद्वज्जीवितंतत्त्वदर्शनात् ॥ ३१ ॥ सर्गा दावेवनोत्पन्नंदृश्यंचिद्गगनंत्विदम् ॥ स्वरूपंस्वप्नवद्भातिनान्यदत्रोपपद्यते ॥ ३२ ॥ अन्यानकाचित्कलनादृश्यतेसोपपत्तिका ॥ अस्मा न्न्यायादृतेकस्माद्ब्रह्मैवैपानुभूतिभूः ॥ ३३ ॥ ऊर्म्यावर्त्तद्रवत्वादिशुद्धेजलघनेयथा ॥ तथेदंसर्गपर्यायंब्रह्मणिब्रह्मभासते ॥ ३४ ॥ स्पंदा वर्तविवर्तादिनिर्मलेपवनेयथा ॥ तथायंब्रह्मपवनेसर्गस्पंदोवभासते ॥ ३५ ॥

रर्थभेदानिरूपणादंकुरस्वभावस्येत्यत्रत्यस्वभावपदेपष्ठ्यर्थसंवंधस्यापिदौर्लभ्यान्नानार्थत्वेउभयत्रापिपर्यायतयासहप्रयोगानापत्तेःसकलसाधारणस्वभावत्वसामान्याप्रसि द्धेःप्रातिस्विकरूपापरामर्शप्रसंगाच्चैकार्थ्यांघटनाच्चनिरर्थिकोक्तिःसेत्यर्थः ॥ २९ ॥ अतःपरिशेषात्स्वाभिमतंसिद्धंदर्शयति ॥ तस्मादिति ॥ तस्मात्सर्वेभावास्तत्कारणंचेत्य खिलमज्ञेअकारणाभ्रांतिरेवज्ञेतुसन्मात्रात्मनास्थितमेवकार्यंकारणात्तस्मादेवचिच्चमत्काररूपेणाविर्भवतितिरोभवतिचनतद्व्यतिरिक्तमणुमात्रमप्यस्तीत्यर्थः ॥ ३० ॥ अत एवज्ञस्याज्ञकृतैरपराधकोटिभिरप्यंतर्दुःखंनजायतइत्याह ॥ यद्वदिति ॥ स्वप्नेद्रव्यापहारिभिश्चौरैःकृतंताडनवंधनादिकंप्रवुद्धस्यस्वप्नमिथ्यात्वपरिज्ञानाद्यद्वद्दुःखाकरणंपीडा संपादकंनतद्वत्तत्त्वदर्शनोत्तरंजीवनमपिदुःखाकरणंनेत्यर्थः ॥ सुखदुःखतत्क्रियायामितिडाच् ॥ ३१ ॥ अन्यद्दुःखंतन्निमित्तंच ॥ ३२ ॥ अस्मान्न्यायादृतेअन्याकलनाअन्या दृशीवादिनांकल्पनाअतएपाजगत्कलनाब्रह्मानुभूतिभूरेवेत्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥

आसन्नोबोधात्मायेनतथाविधंसत्सप्रसिद्धःसन्आकाशएवतथेत्यर्थः ॥ नसन्निेतिपाठेस्पष्टम् ॥ ३६ ॥ कुतःसन्नेवतत्राह ॥ एष्विति ॥ यतःसदनन्यात्मकाइत्यर्थः ॥ ३७ ॥ ॥ ३८ ॥ अजःजन्मादिशून्यःपरमात्मास्वयमेवसर्गात्सर्गांतरात्मनाआस्ते ॥ ३९ ॥ ४० ॥ पश्यंत्यांसांप्रतिकसर्वदर्शनात्मनि ॥ जाताःपूर्वतनाअजाताभविष्यंतः ॥ ४१ ॥ यदाअनन्येतदाशब्दास्तदर्थभूतसर्गाश्चब्रह्मणिसंतीत्युक्तिःपश्यंत्यामेवपश्यंतीतिष्ठतीत्यभिन्नायामेवभेदोपचारेणौपचारिकेआधाराधेयभावेपर्यवस्यतीत्याह ॥ पश्यंत्यामेवेति ॥ ४२ ॥ यदाशब्दाःसर्गाश्चचिन्मयाएवतदातत्रकृतकार्यंशास्त्रमपिशास्याभावान्मोक्षफलस्यपृथगसत्वान्निरसनीयप्रपंचबंधाभावाच्चनिवर्त्ततइत्याह ॥ किमिति ॥ शास्त्रमेव शास्त्रकंतत्रकिम् ॥ तत्रत्यकथाविचारैश्चकिम् ॥ यतःशास्त्रफलंनिर्वासनंजीवितमेवमोक्षःसिद्धः ॥ एवंवर्णितरीत्याअकारणत्वात्सर्गेअसतिनानाप्रपंचरचनाप्रत्यक्षंसत्येवका

यथानंतत्वसौषिर्यशून्यत्वादिमहांबरे॥ ससन्नासन्नबोधात्मतथासर्गःपरापरः॥ ३६॥ एषुनिद्रादिकेष्वेतेसूपलब्धाअपिस्फुटम्॥ भावाअसन्मयाएवमेतेनन्यात्मकायतः॥३७॥ सर्गप्रलयसंस्थानान्येवमात्मनिचिद्घने॥ सौम्येस्वप्नसुषुप्ताभाशुद्धेनिद्राघनेयथा॥३८॥ स्वप्नात्स्वप्नांतराण्यास्तेनिद्रायांमानवोयथा॥ सर्गात्सर्गांतराण्यास्तेस्वसत्तायामजस्तथा॥३९॥ पृथ्व्यादिरहितोप्येषब्रह्माकाशोनिरामयः॥ अतद्वांस्तद्वदाभातियथास्वप्नानुभूतिषु॥४०॥ स्थितायथास्यांपश्यंत्यांशब्दाघटपटादयः॥ जाताजाताःस्थिताःसर्गास्तथानन्येमहाचिति॥४१॥ पश्यंत्यामेवपश्यंतीयथाभातितथैवच॥ यथाशब्दास्तथासर्गाश्चितैवचितिचिन्मयाः॥४२॥ किंशास्त्रकंतत्रकथाविचारैर्निर्वासनंजीवितमेवमोक्षः॥ सर्गेत्वसत्येवमकारणत्वात्सत्येवनास्त्येवननामकाचित्॥ ४३॥ एषाचसिद्धेहहिवासनेतिसाबोधसत्तैवनिरंतरैका॥ नानात्वनानारहितैवभातिस्वप्नेचिदेवेहपुरादिरूपा॥ ४४॥ ॥इ०वा० महारामायणेवा०दे०मो०नि०उ०ब्रह्मगीतासुसत्यवर्णनंनामसप्तसप्तत्युत्तरशततमःसर्गः॥१७७॥ ॥श्रीरामउवाच॥ ॥पदार्थाद्विविधाःसंतिमूर्त्तामूर्त्ताजगत्त्रये॥ यत्रसप्रतिघाःकेचित्केचिदप्रतिघाअपि॥ १॥

च्चिन्नचनास्त्येवेतिनिःशेषंमार्जितेत्यर्थः ॥ ४३ ॥ याचैषावासनेतीहप्रपंचबीजतयाभातिसानानात्वेननानात्वरहिताबोधसत्तैवभाति ॥ यथाइहप्रत्यक्षेस्वप्नेचिदेवपुरादिरूपाभानितद्वदित्यर्थः ॥ ४४ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेसप्तसप्तत्युत्तरशततमःसर्गः ॥ १७७ ॥ ॥ ६ ॥ ॥ इहामूर्त्तचितामूर्त्तचालनेयुक्तिरुच्यते ॥ जगच्चामूर्त्तचिन्मात्रमैंदवाख्यानतःस्फुटम् ॥ १ ॥ धर्माद्यमुत्रामूर्त्तत्वान्मूर्त्तेदेहेनकारणमित्युक्तिश्रुत्वाअमूर्त्तेनचिदात्मनामूर्त्तस्यदेहादेश्चालनेउपपत्तिजिज्ञासमानोरामस्तदनुपपत्तिंदर्शयितुंभूमिकांरचयति ॥ पदार्थाइत्यादिना ॥ मूर्त्तामूर्त्तब्राह्मणदर्शितोविभागइहनाभिप्रेतःकिंतुप्रतिघातयोग्यतातदयोग्यतोपाधिभेदकृतइत्याशयेनविशिनष्टि ॥ यत्रेति ॥ १ ॥

१ तरात्मास्तेइत्यपिक्वचित्पाठः

कुसुमकार्पासनवनीतादिमृदुतरपदार्थानांकठिनशिलादिवत्प्रतिघायोग्यत्वादमूर्त्तत्वमुक्तंमाभूदितिविशेषणतात्पर्यंलक्षणाभ्यामुद्घाटयति ॥ तानिति ॥ वेल्लयंतिसंश्लिष्यंति ॥ २ ॥ तदेवलोकप्रसिद्ध्याविशदयति ॥ इहेति ॥ ३ ॥ अस्त्वेवंप्रस्तुतेकितत्राह ॥ तत्रेति ॥ तत्रसंवेदनंनामेदंयत्प्रसिद्धंतदप्रतिघमेव ॥ यद्यस्माद्धेतोश्चंद्रंपश्यतःपुरुषस्यइतःअस्मात्प्रदेशान्नयनरश्म्यनुसारिचित्तेनसहतदवच्छिन्नसंवेदनानिचंद्रमंडलेअप्रतिघानिःसंश्लेषमेवपतंतिअतोऽमूर्त्तानीतिसर्वेणापिचंद्रदर्शिनास्वयमनुभूयतइत्यर्थः ॥ ४ ॥ नन्वयमाक्षेपस्तेप्रबुद्धदशाअप्रबुद्धदशावा आद्येमूर्त्तमेवाप्रसिद्धम् द्वितीयेअमूर्त्ताचिद्देहादिप्रवर्त्तयतीत्यप्रसिद्धम् ॥ देहाद्यहंकारांतानांसंपिंडितानामेवलौकिकरात्मत्वानुभवादित्याशंक्याह ॥ अर्द्धेति ॥ अर्द्धप्रबुद्धानांतृतीयचतुर्थभूमिकांतरालस्थानांसंकल्पविकल्पद्वैतेनकल्पितमिदंजगदभ्युपगम्यवदाम्याक्षिपामि ॥ बोधदशास्थितंपरिशिष्टंचिन्मात्रमभ्युपगम्यतुनाक्षिपामीत्यर्थः ॥ ५ ॥ यद्यपिमूर्त्तःप्राणमारुतएवप्रवेशनिर्गमवृत्तिभेदेनक्षुब्धोदेहंप्रवर्त्तयतीतिमुवचंतथापितस्यप्राणमारुतस्यक्षोभंकोजनयति ॥ ६ ॥ ननुजीवात्मकश्चिदाभास

तानिहाप्रतिघानाद्धुर्नान्योन्यंवेल्लयंतिये ॥ तांश्चसप्रतिघानाद्धुरन्योन्यंवेल्लयंतिये ॥ २ ॥ इहसप्रतिघानांतुदृष्टमन्योन्यवेल्लनम् ॥ नत्वप्रतिघरूपाणांकेषांचिदपिकिंचन ॥ ३ ॥ तत्रसंवेदनंनामयदिदंचंद्रमंडले ॥ इतःपतत्यप्रतिघंतत्सर्वेणानुभूयते ॥ ४ ॥ अर्द्धप्रबुद्धसंकल्पविकल्पाद्वैतकल्पितम् ॥ वदाम्यभ्युपगम्येदंनतुबोधदशास्थितम् ॥ ५ ॥ कःप्राणमारुतःक्षोभंजनयत्वाशयस्थितः ॥ प्रवेशनिर्गममयंकथंवावदमेप्रभो ॥ ६ ॥ कथमप्रतिघंनामवेदनंप्रतिघात्मकम् ॥ इमंदेहंचालयतिभारंभारहरोयथा ॥ ७ ॥ यदिसप्रतिघंवस्तुवेल्लत्यप्रतिघात्मकम् ॥ कथंसंवित्तिमात्रेणपुंसःशैलोनवल्गति ॥ ८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ विकासमथसंकोचमत्रनालीहृदिस्थिता ॥ यदायातितदाप्राणश्छेदैरायातियातिच ॥ ९ ॥ बाह्योपस्करभस्त्रायांयथाकाशास्पदात्मकः ॥ वायुर्यात्यपिचायातितथात्रस्पंदनंहृदि ॥ १० ॥ ॥ श्रीरामउवाच ॥ ॥ वहिर्भस्त्रामयस्कारःसंकोचनविकासनैः ॥ योजयत्यांतरंनाडींकश्चालयतिचालकः ॥ ११ ॥

एवंतंजनयिष्यतितत्राह ॥ कथमिति ॥ देहंप्राणादिदेहांतम् ॥ ७ ॥ यदिअप्रतिघात्मकमपिसंवित्तिमात्रंप्राणादिदेहांतंसप्रतिघंवेल्लतिविष्टभ्यचालयतितर्हिशैलश्चलत्वितिपुंसःसंकल्पसंवित्तिमात्रेणशैलःकुतोनचाल्यते ॥ बाह्यशैलादेर्देहादेश्चकोविशेषइत्यर्थः ॥ ८ ॥ यथाबाह्यस्यवायोरयस्कारभस्त्रायांप्रवेशनिर्गमाभ्यांतच्चालकत्वंतथाप्राणवायोरपिकंठादिनालीबिलाकाशसंकोचविकासानुमितप्रवेशनिर्गमाभ्यांदेहादिचालकत्वंप्रत्यक्षमेव हृदयादिप्रवेशेष्वप्येवमेवबोध्यमित्युत्तानोक्त्यागूढाशयेनवसिष्ठःसमाधत्ते ॥ विकासमितिद्वाभ्याम ॥ छेदैश्छिद्रैः ॥ ९ ॥ आकाशश्छिद्रंतदास्पदः ॥ तदाश्रयसर्वद्रव्यांतःसंचारस्वभावोवायुर्यथाबाह्यायामयस्कारोपस्करभस्त्रायांयातिप्रविशतिआयातिनिर्गच्छति ॥ १० ॥ सत्यंवायुश्चालयतितथाप्ययस्कारादिचेतनाधिष्ठितभस्त्रायामेवतथचालयतिनान्यत्रेतिचेतनमेवाचेतनस्यनियतव्यवहारचेष्टानिमित्तमवश्यंवाच्यम तत्रनाडींआंतरंप्रविश्यकश्चेतनश्चालयतीत्यर्थः ॥ ११ ॥

ननुशतंचैकाचहृदयस्यनाड्यइतिश्रुतौविष्वङ्ङ्प्रसृताःशतंनाड्यःश्रूयंते तत्रैकशतंनाडीनांतासांद्वासप्ततिर्द्वासप्ततिःप्रतिशाखंनाडीसहस्राणिभवंत्यासुव्यानःसंचरतीतिच तत्रस र्वनाडीषुव्यानसंचारस्यदेहादिचलननिमित्तत्वेसदैवसर्वांगचलनंस्यान्नैकैकहस्तपादाद्युद्यमनंनियतम् यद्युच्येतएकैकांगोद्यमनेउपस्थितेनाडीनांशतमपितदंगेएकंभवतिसर्वांग चलनेउपस्थितेत्वेकमपिसर्वांगव्यापिनाडीशतंभवतीति तत्राप्याह ॥ शतमिति ॥ किंचामूर्त्तचैतन्यस्यसंश्लेषोदेहेपिनास्ति आध्यासिकसंबंधस्तुकाष्ठलोष्टादिष्वपितुल्यइति तेपिसचेतनावाच्यास्तत्त्वकथमित्यर्थः ॥ १२ ॥ तथास्थावरंवृक्षलताकाष्ठपाषाणादिवस्तुचेतनंचेत्प्रस्पंदिकस्मान्न देहवद्भोगोपयोगेनचमत्कृतमपिकस्मान्नमात्रानियंत्राकुला लादिनाअधिष्ठितंचक्रादीवनियतकालस्पंदिकिम् ॥ १३ ॥ कार्यकारणस्वामिन्याभोक्तृर्जीवसंविदोयत्रानादिप्रवाहोपनीतकामकर्मवासनाप्रयुक्तस्तादात्म्याध्यासस्तत्त्वालने आध्यासिकस्वतादात्म्यशालिप्राणसंश्लेषद्वारास्वातंत्र्यमन्यत्रपारतंत्र्यमितिव्यवस्थेतिगूढाभिसंधिनैववसिष्ठउत्तरमाह ॥ अंतरिति ॥ आंत्रवेष्टनंनाडीसमूहम् ॥ तदनुसारेणैव

**शतंकथंभवेदेकंकथमेकंशतंभवेत्॥ कथंसचेतनाएतेकाष्ठलोष्टोपलादयः॥१२॥ कस्मान्नस्थावरंवस्तुप्रस्पंद्यपिचमत्कृतम्॥ वस्तुजं गममेवेहस्पंदिमात्रेवकिंवद ॥१३॥ ॥श्रीवसिष्ठउवाच॥ ॥अंतःसंवेदनंनामचालयत्यांत्रवेष्टनम्॥ वहिर्भस्त्रामयस्कारइवलोके नुचेष्टनम्॥१४॥ ॥श्रीरामउवाच॥ ॥वाय्वंत्रादिशरीरस्थंसर्वंसप्रतिघंमुने॥ कथमप्रतिघासंविच्चालयेदितिमेवद ॥ १५॥ संवि दप्रतिघाकारायदिसप्रतिघात्मकम्॥ चालयेदचलिष्यत्तद्दूरंमंभोयदिच्छया॥१६॥ सप्रतिघाप्रतिघयोर्मिथोयदिपदार्थयोः॥ वेल्लनं स्यात्तदिच्छैवकर्त्तृकर्मेंद्रियैःक्ककिम्॥१७॥ सप्रतिघाप्रतिघयोःश्लेषोनास्तिवहिर्यथा॥ तथैवांतरहंमन्येशेषंकथयमेमुने॥१८॥ अं तःस्वयंयोगिनावायथैतदनुभूयते॥ अमूर्त्तस्यैवमूर्त्तेनवेल्लनंतद्वदाशुमे॥ १९ ॥ ॥श्रीवसिष्ठउवाच॥ ॥सर्वसंदेहवृक्षाणांमूलकाप मिदंवचः॥सर्वैकतानुभूत्यर्थंशृणुश्रवणभूषणम्॥ २०॥**

लोकेसर्वोपिवहिश्चेष्टनंकरोतीतिशेषः ॥ १४ ॥ उत्तानार्थेनगूढाभिसंहितेनचस्वशंकाबीजंनपरिहृतमितिगूढाभिसंधिरेवरामःपुनःस्वशंकामनुवदति ॥ वाय्विति ॥ १५ ॥ वि पर्ययेदोषमाह ॥ संविदिति ॥ तर्हिदूरंदूरस्थमप्यंभःयातीतियन्तृषितःपांथस्तदिच्छयाअचलिष्यत्स्वयमेवागमिष्यत् ॥ १६ ॥ तथाचवाह्यव्यवहारेसर्वप्राणिनामिच्छयैव सर्वकार्यसिद्धेःकर्मेंद्रियघटाद्युपकरणवैयर्थ्यंचस्यादित्याह ॥ सप्रतिघेति ॥ तर्हिइच्छैववहिर्वचनादानविहरणोत्सर्गादिकंकरिष्यतीतिशेषः ॥ १७ ॥ वहिःश्लेषाभावेप्यंतः श्लेषोस्तुतत्राह ॥ सप्रतिघेति ॥ एवंत्वत्समाधानयुक्तिषुनिरस्तासुशेषंयुक्त्यंतरंकथयननुनिरस्तमेवपुनःपुनःकथयेत्यर्थः ॥१८॥ अथवायोगिनात्वयास्वयंयथाएतत्अमूर्त्तस्यै वमूर्तेनवेल्लनंलोकेअत्यंताप्रसिद्धमपियोगवलेनांतर्यथायेनोपायेनानुभूयतेतद्वदेत्यर्थः ॥ १९ ॥ एवमाक्षिप्तोवसिष्ठःप्रागुक्तगूढाभिसंध्युत्तरमपिवासनानांवाह्याध्यात्मिकपरि च्छेदभ्रांतिमात्रमूलत्वादनवस्थापस्तंनिष्कर्षासहंरामेणज्ञातमुद्घाटितमपिरामःखंडयिष्यत्येवेतिमन्यमानस्तदुपेक्ष्यसिद्धांतावलंवनेनैवैकोक्त्यासर्वंसमाधत्ते ॥ सर्वेति ॥ सर्वेषां संदेहानांतत्त्वाज्ञानमूलकत्वात्सर्वैकतानुभवलक्षणतत्त्वसाक्षात्कारानुभूत्यर्थमिदंवक्ष्यमाणंशृण्वित्यर्थः ॥ २० ॥

१ अंत्रस्येदमांत्रमंत्रसंवंधिवेष्टनम्

त्त्वेदयंत्वदाक्षेपनिवहःसर्वोपिसप्रतिघयथार्थप्रपंचाभ्युपगमे यदात्वप्रतिघाचिदेववाह्याध्यात्मिकवस्तुभेदभ्रांत्यात्मनाअविद्यावशाद्विवर्त्ततेतदायथादर्शनमेवप्राणादिदेहांतसं घातेआंतरचैतन्यमात्राधीनश्चलनाद्यध्यासोवाह्येघटादौतुकरावष्टंभाद्यधीनइतिव्यवस्थितएवाभ्युपगम्यतेनसंकीर्णइतिसमुदिताभिप्रायः ॥ २१ ॥ २२ ॥ २३ ॥ अतएव तत्त्वविदोमहता विवेकवैराग्यत्यागश्रवणमननिदिध्यासनादिप्रयत्नसाध्यकारणौघेनमूर्त्ताकारंसवासनंनिर्मृज्यद्यौःक्षमावायुरित्यादिसर्वंजगदप्रतिघंबोधमात्रमितिविदुरित्य र्थः ॥ २४ ॥ चेतनमितिभावेल्युट् ॥ २५ ॥ चिन्मात्रमेवसर्वंजगन्नमूर्तंकिंचिदस्तीत्यर्थंप्रागुक्तमैंदवाख्यानंपुनःश्रावयितुंप्रतिजानीते ॥ तत्रैति ॥ पूर्वंमनोमात्रंजगदित्युत्पत्ति

नेहकिंचिन्ननामास्तिवस्तुसप्रतिघंक्वचित् ॥ सर्वदासर्वमेवेदंशांतमप्रतिघंततम् ॥ २१ ॥ शुद्धंसंविन्मयंसर्वंशांतमप्रतिघात्मकम् ॥ पदार्थजातंपृथ्व्यादिस्वप्नसंकल्पयोरिव ॥ २२ ॥ आदावंतेचनास्तीदंकारणाभावतोखिलम् ॥ भ्रांत्यात्मावर्त्तमानापिभातिचित्स्वप्नगाथा ॥ २३ ॥ द्यौःक्षमावायुराकाशंपर्वताःसरितोदिशः ॥ महताकारणौघेनबोधमप्रतिघंविदुः ॥ २४ ॥ अंतःकरणभूतादिमृत्काष्ठदृषदादिवा ॥ सर्वंशून्यमशून्यंचचेतनंविद्धिनेतरत् ॥ २५ ॥ तत्रैवमैंदवाख्यानंशृणुश्रवणभूषणम् ॥ मयाचपूर्वमुक्तंतत्किंचान्यदभिवर्ण्यते ॥ २६ ॥ तथापिवर्त्तमानोक्तप्रश्नबोधायतच्छृणु ॥ यथेदंसर्वमद्र्यादिचिदित्येवतुभोत्स्यते ॥ २७ ॥ कस्मिंश्चित्प्राक्तनेनैवजगज्जालेभवद्द्विजः ॥ तपोवेदक्रियाधारोब्रह्मन्निन्दुरितिस्मृतः ॥ २८ ॥ दशतस्याभवन्पुत्राजगतोदिक्तटाइव ॥ महाशयामहात्मानोमहतामास्पदंसताम् ॥ २९ ॥ सतेषांकालवशतःपितांतार्धिमुपाययौ ॥ दशानांभगवान्रुद्रएकादशइवक्षये ॥ ३० ॥ तस्यानुगमनंचक्रेभार्यावैधव्यभीतिभिः ॥ अनुरक्तादिनस्येवसंध्याताराविलोचना ॥ ३१ ॥ तयोस्तेतनयादुःखकलिताविपिनंगताः ॥ कृतौर्ध्वदेहिकास्त्यक्त्वाव्यवहारंसमाधये ॥ ३२ ॥ धारणानांसमस्तानांकास्यादुत्तमसिद्धिदा ॥ धारणायन्मयाःसंतःस्यामःसर्वेश्वरावयम् ॥ ३३ ॥ इतितेतत्रसंचिंत्यबद्धपद्मासनादश ॥ इदंसंचिंतयामासुर्निर्विघ्नेकंदरोदरे ॥ ३४ ॥

प्रदर्शनायोक्तमिहत्वन्यच्चिन्मात्रमेवजगदितिनिर्वाणनिष्कर्षार्थमभिवर्ण्यतइत्यर्थः ॥ २६ ॥ प्रस्तुतप्रश्नसमाधानप्रयोजनभेदादपिपौनरुक्त्यमदोषायेत्याह ॥ तथापीति ॥ अमूर्त्ताचिदित्येवप्रश्नसमाधानंत्वयाभोत्स्यते ॥ कर्मणिलृटिस्येभप्भावः ॥ २७ ॥ प्राक्तनेनोत्पत्तिप्रकरणवर्णितप्रकारेणविशिष्टेजगज्जाले ॥ २८ ॥ जगतोब्रह्मांडोदराकाशस्यदशदिक्तटाइव ॥ आस्पदंप्रतिष्ठा ॥ २९ ॥ क्षयेमहाप्रलये ॥ ३० ॥ ३१ ॥ दुःखेनवियोगदुःखेनकल्पिताव्याप्ताः ॥ ३२ ॥ धारणानांविषयविशेषाकारितमनःस्थैर्यलक्षणानांमध्येकाकिंविषयिणीउत्तमधारणास्यादित्यर्थः ॥ सर्वेश्वराहिरण्यगर्भभूताः ॥ ३३ ॥ निर्विघ्नेश्वापदाद्युपघातरहिते ॥ ३४ ॥

912

पद्मजेनचतुर्मुखेनाधिष्ठितंयदशेषंजगद्ब्रह्मांडंतदेवाहमितिस्थितानिश्चलाःसंतः ॥ ३५ ॥ ३६ ॥ अच्युतामनसोऽप्यंतरधारणेनप्रच्युतिमप्राप्ताः ॥ ३७ ॥ कंकालतांशवताम् ॥ ३८ ॥ जगच्चेदमहम् ॥ संपश्यतांध्यायताम् ॥ ३९ ॥ दशचित्तानिदशदेहानिदशब्रह्मांडरूपाणिजगंत्येवध्यानपरिपाकेनसंपन्नानितक्रतुन्यायेनेत्यर्थः ॥ ४० ॥ चिदेवेच्छा भूत्वाजगत्संपन्ना ॥ किंचित्स्वभावहानेन नेत्याह ॥ अत्यंतेति ॥ ४१ ॥ तथाचप्रतिज्ञातंसिद्धमित्याह ॥ संविन्मयत्वादिति ॥ ४२ ॥ नोचेत्तेषांकिलदशविधंत्रिजगज्जालंत

पद्मजाधिष्ठिताशेषजगद्धारणयास्थिताः॥ भवामःपद्मजोपेतंजगद्रूपमविघ्नतः॥३५॥इतिसंचिंत्यसब्रह्मजगद्धारणयाचिरम्॥ निमीलितदृशस्तस्थुस्तेचित्ररचिताइव॥३६॥ अथैतद्धारणाबद्धचित्तास्तेतावदच्युताः॥ आसन्मासान्दशाष्टौचयावत्तेतत्रदेहकाः॥३७॥ शुष्काःकंकालतांयाताःक्रव्यादैश्चविंतांगकाः॥ नाशमभ्याययुस्तत्रच्छायाभागाइवातपैः॥३८॥ अहंब्रह्माजगच्चेदंसर्गोयंभुवनान्वितः॥ इतिसंपश्यतांतेषांदीर्घकालोभ्यवर्त्तत॥३९॥ तानिचित्तान्यदेहानिदशैकध्यानतस्ततः॥ संपन्नानिजगंत्येवदशदेहानिवैपृथक्॥४०॥इतितेषांचिदिच्छासासंपन्नासकलंजगत्॥ अत्यंतस्वच्छरूपैवस्थिताचाकारवर्जिता॥४१॥ संविन्मयत्वाज्जगतांतेषांभूम्यचलादितत्॥ सर्वंचिदात्मकंविद्धिनोचेदन्यत्किमुच्यताम्॥४२॥ किलयत्रिजगज्जालंतेषांकिमात्मतत्तथा॥ संविदाकाशशून्यत्वमात्रमेवेतरन्नतत्॥४३॥ विद्यतेनयथाकिंचित्तरंगःसलिलादृते॥ संवित्त्वादृतेतद्वद्विद्यतेचलनादिकम्॥४४॥ ऐंदवानियथैतानिचिन्मयानिजगंतिखे॥ तथाचिन्मयमेतेषुकाष्ठलोष्टोपलाद्यपि॥४५॥ यथैवैंदवसंकल्पास्तेजगत्त्वमुपागताः॥ तथैवाब्जजसंकल्पोजगत्त्वमयमागतः॥४६॥ तस्मादिहेमेगिरयोवसुधापादपाघनाः॥ महाभूतानिसर्वंचचिन्मात्रमयमाततम्॥४७॥ चिद्वृक्षाश्चिन्महीचिद्द्यौश्चिदाकाशंचिदद्रयः॥नाचित्क्वचित्संभवतितेष्वैंदवजगत्स्विव॥४८॥ चिन्मात्रखकुलालेनस्वदेहचलचक्रके॥ स्वशरीरस्थदासर्गःकुतोयंक्रियतेनिशम्॥४९॥ संकल्पनिर्मितेसर्गेदृषदश्चेन्नचेतनाः॥ तदत्रलोष्टशैलादिकिमेतदितिकथ्यताम्॥५०॥

त्किमात्मवातत्त्वयाउच्यतामितिपूर्वत्रान्वयः ॥ त्वयाकिमुच्यतेतदाह ॥ संविदिति ॥ ४३ ॥ चलनादिकंनविद्यतइत्यनुकृष्यान्वयः ॥ ४४ ॥ ऐंदवजगत्साम्यंप्रस्तुतेपिजगतिबोध्यमित्याह ॥ ऐंदवानीति ॥ ४५ ॥ तुल्यत्वमेवदर्शयति ॥ यथेति ॥ ४६ ॥ ४७ ॥ ४८ ॥ कुतइत्यसंभावनोक्तिर्मिथ्यात्वद्योतनाय ॥ ४९ ॥ एतेनकथंसचेतनाएतेकाष्ठलोष्टोपलादयइतिप्रश्नोपिसमाहितइत्याशयेनाह ॥ संकल्पेति ॥ ५० ॥

कलनमनुभवःस्मृतिस्तज्जनकसंस्काराश्चकारादिच्छाकृतयइत्येतेहिसंविद्विशेषाअर्थगोचराः एतेषांसंतरर्थाःप्रथंते ॥ एतेचस्वोदरेअभिव्यक्तचिन्मात्रमेवदधतिनजडमर्थंमतो प्यर्थाश्चिद्रूपाएवेत्याह ॥ कलनेति ॥ तत्कुतस्तत्राह ॥ प्रागिति ॥ यतइदंप्रागेवास्माभिर्विमृष्टंयत्कल्पनादीनामर्थशून्यानामन्यैवस्थितिः अर्थकलावतांतत्त्वावगाहनचम त्कारशालिनामन्यैवचमत्कृतिरिति ॥ अथवा ॥ ननुलोष्टादिकलनस्मृतिसंस्कारैकरूप्येणलोष्टाद्यचिद्रूपमेवनिश्चित्तंकथंतत्सचेतनमित्युपवर्ण्यतेतत्राह ॥ कलनेति ॥ कलना दयोलोष्टशैलादिनत्त्वंचिन्मात्रमुदरेणदधतिनावगाहितुंशक्नुवंतियतस्तदर्थकलावतांकल्पनादीनामुत्थानात्प्रागेवास्तीतिमृष्टंपरामृष्टम् ॥ अज्ञातविषयेहिचक्षुरादिनाकलनंज्ञात विषयेहिस्मृतिसंस्कारौज्ञानसमानविषयौ ॥ अतस्तेभ्यःपूर्वमज्ञातविषयसिद्धिरवश्यंवाच्येतिभावः ॥ नचाचिद्रूपंतृणकाष्ठशैलाद्यज्ञातंवक्तुंशक्यम ॥ जडेष्वज्ञानावरणप्रयोज नाभावात् ॥ अतोजडेभ्यांन्यैवब्रह्मसत्तातृणादीनांतत्त्वंसैवान्यथाकलनस्मृतिसंस्कारैर्जडत्वेनभ्रांत्याविमृश्यतइत्यर्थः ॥ ५१ ॥ इतश्चकाष्ठलोष्टादयश्चेतनाइत्याह ॥ तदिति॥

कलनस्मृतिसंस्काराद्धत्यर्थंचनोदरे॥ प्राङ्मृष्टंकल्पनादीनामन्यैवार्थकलावताम्॥५१॥तद्धामसंविदोनाम्निमणिराशौमणिर्यथा॥ सर्वात्मनितथाचित्तकश्चिदर्थंउदेत्यलम् ॥ ५२ ॥ अकार्यकरणस्यार्थोनभिन्नोब्रह्मणःक्वचित् ॥ स्वभावइतितेनेदंसर्वंब्रह्मेतिनिश्चयः ॥ ५३ ॥ यथाप्रवृत्तंचिद्वारिवहत्यावर्त्ततेवनौ ॥ स्वयत्नेनातितीव्रेणपरात्मीयात्मनाविना ॥ ५४ ॥ पद्मलीलाजगदिवप्रकचंतिजगंति यत् ॥ चिन्मात्राद्ब्रह्मणःस्वस्मादन्यानिनमनागपि॥ ५५॥ अजातमनिरुद्धंचसन्मात्रंब्रह्मखात्मकम् । शांतंसदसतोर्मध्यंचिद्धामात्र मिदंजगत्॥ ५६ ॥ यत्संविन्मयमब्ज्यादिसंकल्पजगतिस्थितम्॥ तदसंविन्मयमितिवक्ताऽज्ञोज्ञैर्विहस्यते॥ ५७॥ जगंत्यात्मेवसंकल्प मयान्येतानिवेत्तिखे ॥ खात्मकानितथेदंचब्रह्मसंकल्पजंजगत् ॥ ५८ ॥ यावद्यावदियंदृष्टिःशीघ्रंशीघ्रंविलोक्यते ॥ तावत्तावदिदंदुःखंशीघ्रंशीघ्रंविलीयते ॥५९॥

यतस्तत्परमंचिद्धामैवसर्वात्मनिसंविदोधाम्निसमष्टिव्यष्टिचित्तेमणिराशौमणिरिवदेदीप्यमानमंतःस्थित्वाकश्चित्तृणकाष्ठशैलाद्यर्थंद्रवउदेति ॥ तदनुप्रविश्य सच्चत्यच्चाभवदिति श्रुतेरितिभावः ॥ ५२ ॥ इतश्चतृणकाष्ठादिश्चेतनोयतोयमकार्यकरणस्यतस्यसृष्टिः ॥ यथासूर्यस्यप्रभातत्स्वभावएवनाप्रकाशरूपातद्वदिदंसर्वंचेतनंब्रह्मैवेत्यर्थः ॥ ५३ ॥ य थानिम्नावनौःप्रवृत्तंवारिपरात्मीयात्मनाकारणांतरेणविनास्वयत्नेनस्वतएवआवर्त्तप्रवाहतरंगादिवैचित्र्येणावर्त्ततेतथाचिदपीत्यन्वयः ॥ ५४ ॥ यथापद्मेकल्पेभगवन्नाभिप द्मलीलाएवजगदिवकचंतितद्वच्चिन्मात्राद्ब्रह्मणःसकाशाज्जगंतिप्रकचंतियत्ततोपिमनागपिततोनान्यानि ॥ ५५॥ अनन्यत्वेयत्फलितंतदाह॥ अजातमिति ॥ सदसतोर्भावाभा वयोर्द्वयोरपिमार्जनान्मध्यम ॥ ५६ ॥ अतएवतृणशैलकाष्ठादयःअचेतनाइतिद्रष्टारोमूढाविद्वद्भिरुपहस्यंतइत्याह ॥ यदिति ॥ वक्ताअज्ञइतिच्छेदः ॥ ५७ ॥ ब्रह्माचतुर्मुख स्तत्संकल्पजत्वादपिस्वमनोराज्यवच्चिन्मात्रत्वमनुमेयमित्याह ॥ जगंतीति ॥ आत्मास्वयमिव ॥ ५८ ॥ किमर्थमियमेवदृष्टिर्भंग्यंतरैःपुनःपुनःसमर्थ्यतेतत्राह ॥ यावदिति ॥ इयं प्रपंचदृष्टिर्दृढीकृतयाचिद्दृष्ट्यायावद्यावद्विलोक्यतेतावत्तावदिदंदुःखंविलीयते ॥ ५९ ॥

॥ ६० ॥ ६१ ॥ अतोमहाफलत्वादियमेवदृष्टिर्दृढीकार्येत्युपसंहरति ॥ नेहेति ॥ इहजगत्याकृत्यादयोविकल्पानसंति ॥ सत्ताद्वितीयोभावविकारः असत्तातदभावः आत्मनि परमार्थचित्स्वभावेइत्थंकचति ॥ अथवाब्रह्मातिरिक्तंकचनमप्यलमत्यंतंनास्ति ॥ कचधातुप्रवृत्तिनिमित्ताभावादित्यर्थः ॥ ६२ ॥ कचनस्याप्यभावेब्रह्मकीदृक्स्थितंतदाह ॥ आद्यंतेति ॥ तद्ब्रह्मस्फटिकस्तंभवदंतस्थनिर्गगनसर्गकपुत्रिकौघमपिअलभ्याजगल्लतास्तदग्राणितन्मूलानितन्निर्माणानितन्मूलानांमूलेभूमौपरिवेशाःप्रवेशाश्चयस्मिंस्तथाविध माद्यंतवर्जितंकालतोप्यजन्मनाशमशेषमच्छमतिस्वच्छंचिदानंदैकघनंनित्यंस्थितंकैवल्यमित्यर्थः ॥ ६३ ॥ इदमेवामुक्तरूपंयदातदाअंतररहितमसंख्यमखिलंविश्वतोव्याप्तंह

यावद्यावदियंदृष्टिःप्रेक्ष्यतेनचिराच्चिता ॥ तावत्तावदिदंदुःखंभवेत्प्रतिघनंघनम् ॥६०॥ दीर्घदुष्कृतमूढानामिमांदृष्टिमपश्यताम् ॥ संसृतिर्वज्रसारेयंनकदाचित्प्रशाम्यति ॥ ६१ ॥ नेहाकृतिर्नचभवाभवजन्मनाशाःसत्तानचैवनचनामतथास्त्यसत्ता ॥ शांतंपरंकचतिकेवलमात्मनीत्थंब्रह्माथवाकचनमप्यलमत्रनास्ति ॥ ६२ ॥ आद्यंतवर्जितमलभ्यलताग्रमूलनिर्माणमूलपरिवेशमशेषमच्छम् ॥ अंतस्थनिर्गगनसर्गकपुत्रकौघंनित्यंस्थितंननुघनंगतजन्मनाशम् ॥ ६३ ॥ सन्मात्रमंतरहिताखिलहस्तजातंपर्यंतहीनगणनांगममुक्तरूपम् ॥ आत्मांबरात्मकमहंत्विदमेवसर्वंसुस्तंभरूपमजमौनमलंविकल्पैः ॥ ६४ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० निर्वा० उ० ब्रह्मगीतास्वैंदवोपाख्यानंनामाष्टसप्तत्युत्तरशततमःसर्गः ॥ १७८ ॥ ॥ ७९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवंचिन्मात्रमेवैकंशुद्धंसत्त्वंजगत्त्रयम् ॥ संभवंतीहभूतानिनाज्ञबुद्धानिकानिचित् ॥ १ ॥ तस्मात्कुतःशरीरादिवस्तुसप्रतिघंकुतः ॥ यदिदंदृश्यतेकिंचित्तदप्रतिघमाततम् ॥ २ ॥ स्थितंचिद्व्योमचिद्व्योम्निशांतेशांतंसमंस्थितम् ॥ स्थितमाकाशमाकाशेज्ञमिज्ञौविजृंभते ॥ ३ ॥ सर्वंसंविन्मयंशांतंसत्स्वप्नइवजाग्रति ॥ स्थितमप्रतिघाकारंक्वासौसप्रतिघास्थितिः ॥ ४ ॥ क्वदेहावयवाःक्वांत्रवेष्टनीक्वास्थिपंजरम् ॥ व्योमेवाप्रतिघंविद्धिदेहंसप्रतिघोपमम् ॥ ५ ॥

स्तजातंपर्यंतेष्वपिहीनगणनान्यसंख्यानिचक्षुःश्रोत्रशिरःकंठोदरपादाद्यंगानिचयस्यतथाविधमिदमेवसर्वमासीत् ॥ मुक्तरूपंत्वात्मांबरात्मकंसुस्तंभरूपंसन्मात्रंअजमौनंवर्णित स्फाटिकसुस्तंभरूपमिदमहमेवसंपन्नमितिपुनर्विकल्पैरलंप्रयोजनंनास्तीत्यर्थः ॥ ६४ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० अष्टसप्तत्युत्तरशततमःसर्गः ॥ १७८ ॥ चिन्मात्रमखिलंविश्वंस्थितमप्रतिघंयतः ॥ ततःप्रागुक्तशंकायाःकःप्रसंगइतीर्यते ॥ १ ॥ अज्ञैःसप्रतिघत्वेनमूर्तत्वेनचबुद्धानिभूतानिनेहसंभवंति ॥ १ ॥ अप्रतिघंब्रह्मैवाततम् ॥ २ ॥ समंसर्ववैषम्यनिर्मुक्तम् ॥ ३ ॥ सप्रतिघाअसौत्वदुक्तास्थितिःक्वास्तियत्रतेशंकाप्रसरेदित्यर्थः ॥ ४ ॥ देहतदवयवादिकंनुत्वमदेहवच्चिन्मात्रमेवप्रबुद्धदृशेतितत्राज्ञदृशेवशंकानतत्त्वदृशेत्याह ॥ क्वेति ॥ सप्रतिघत्वमदेहोपममितिकथंचिद्व्याख्येयंसप्रतिघाप्रसिद्धेः ॥ ५ ॥

॥ ६ ॥ प्रत्यक्षादिसिद्धस्यमूर्त्तस्यदेहादेरपलापःसाहसमितितुनमंतव्यमित्याह ॥ ब्रह्मव्योम्नइति ॥ सहेतुकंप्रत्यक्षादिप्रमाणसिद्धमप्यहेतुकमप्रमाणकंसकारणकमप्यकारणकंच ॥ तस्यत्रयआवसथास्त्रयःस्वप्नाः नेहनानास्तिकिंचन यत्रनान्यत्पश्यतिनान्यच्छृणोति अथातआदेशोनेतिनेतीत्यादिश्रुत्यैवजगदपलापादितिभावः॥७॥ब्रह्मणोनिर्विकाराद्वयत्वाज्जगतःकारणांतरस्याभावादनुत्पत्तिरेवेत्यपलापउपपद्यतेतत्त्वदृशा भ्रांतिदृशात्वनादित्वात्कारणपरंपरासंभवाद्ब्रह्माप्रसिद्धेश्चोत्पत्त्यादिसर्वमुपपद्यतइतिस्वस्वनिर्णयानुसारेणोभयोपपत्तेरित्यर्थः ॥८॥ यौक्तिकदृशातुकारणेनविनोत्पन्नंसंविदात्मत्वेनलब्धंचेदंजगन्नात्यंतमसन्नाप्यत्यंतंसत्किंतुसद्वदित्युपपद्यतेइत्याह ॥ कारणेनेत्यादिना ॥९॥

संवित्करौशिरःसंवित्संविदिंद्रियवृंदकम् ॥ शांतमप्रतिघंसर्वंनसप्रतिघमस्तिहि ॥ ६ ॥ ब्रह्मव्योम्नःस्वप्नरूपस्वभावत्वाज्जगत्स्थितेः ॥ इदंसर्वंसंभवतिसहेतुकमहेतुकम् ॥ ७ ॥ नकारणंविनाकार्यंभवतीत्युपपद्यते ॥ यद्यथायेननिर्णीतंतत्तथातेनलक्ष्यते ॥ ८ ॥ कारणेनविनाकार्यंसद्वदित्युपपद्यते ॥ यथाभावितमेवार्थंसंविदाप्नोत्यसंशयम् ॥ ९ ॥ यथासंभवतिस्वप्नेसर्वंसर्वत्रसर्वथा ॥ चिन्मयत्वात्तथाजाग्रत्यस्तिसर्वात्मरूपता ॥ १० ॥ सर्वात्मनिब्रह्मपदेनानानानात्मनिस्थिता ॥ अस्यकारणकार्याणांसत्ताकारणजापिच ॥ ११ ॥ एकःसहस्रंभवतियथाख्येतेकिलेंद्रवाः ॥ प्रयाताभूतलक्षत्वंसंकल्पजगतांगणैः ॥ १२ ॥ सहस्रमेकंभवतिसंविदांचतथाहियत् ॥ सायुज्येचक्रपाण्यादेःसर्गैरेकंभवेद्वपुः ॥ १३ ॥ एकएवभवत्यब्धिःस्रवंतीनांशतैरपि ॥ एकएवभवेत्कालऋतुसंवत्सरोत्करैः ॥ १४ ॥ संविदाकाशएवायंदेहःस्वप्नइवोदितः ॥ स्वप्नाद्रिवन्निराकारःस्वानुभूतिस्फुटोपिच ॥ १५ ॥ संवित्तिरेवानुभवात्सैवाननुभवात्मिका ॥ द्रष्टृदृश्यदृशाभातिचिद्व्योमैकमतोजगत् ॥ १६ ॥ वेदनावेदनात्मैकंनिद्रास्वप्नसुषुप्तवत् ॥ वातस्पंदाविवाभिन्नौचिद्व्योमैकमतोजगत् ॥ १७ ॥ द्रष्टादृश्यंदर्शनंचचिद्व्योमैकमतोजगत् ॥ १८ ॥ जगत्त्वमसदेवेशेभ्रांत्याप्रथमसर्गतः ॥ स्वप्नेभयमिवाशेषंपरिज्ञातंप्रशाम्यति ॥ १९ ॥ एकस्याःसंविदःस्वप्नेयथाभानमनेकधा ॥ नानापदार्थरूपेणसर्गादौगगनेतथा ॥ २० ॥

॥ १० ॥ मायावादेतुसर्वमविरुद्धमित्याह ॥ सर्वात्मनीति ॥ ११ ॥ १२ ॥ चक्रपाणेरादिपदाद्ब्रह्मरुद्रेंद्रचंद्रसूर्यादेःसायुज्येविपश्चिदुपाख्याननिष्कर्षोक्तदिशाउपाधिमेलनद्वारैक्यापत्तौ ॥ इंद्रस्यैवसायुज्यंसलोकतामाप्नोतीत्यादिश्रुतेरितिभावः ॥ १३ ॥ भिन्नसत्तयोःसत्तैक्यप्राप्तिस्तुलोकेपिप्रसिद्धेत्याह ॥ एकएवेति ॥ ऋतुसंवत्सरोत्करैर्भिन्नोपि ॥ १४ ॥ तथाएकएवात्माभ्रांत्यादेहादिनानात्वंप्राप्तइवभातीत्याह ॥ संविदाकाशइति ॥ १५ ॥ द्रष्टृदृश्यदृशाभ्रांतविभागदृशा ॥ १६ ॥ यथाएकैवनिद्रास्वप्नेवेदनात्मासुषुप्तौअवेदनात्मेतिद्वैविध्येप्येकातद्वत् ॥ १७ ॥ १८ ॥ यतोजगत्त्वमसदेवातःस्वप्नेप्रसक्तंव्याघ्रादिभयमिवपरिज्ञानमात्रंप्रशाम्यति ॥ १९ ॥ गगनेब्रह्मणि ॥ २० ॥

अनेकदीपप्रभाणामेकवद्भानमिवएकस्याअपिमायाशक्तेरनेकधाभानंसंभावनीयमित्याह ॥ वहुदीपेइति ॥ छायाःकांतयः ॥ २१ ॥ व्योम्निभांत्यावृक्षनिकरस्फुरणमिवशिवाख्येअंबुधौयत्सीकरस्फुरणंसएवायंसर्गः ॥ एतावांस्तुविशेषः ॥ यद्व्योम्निवृक्षनिकरोव्योमधर्मशून्यतानुविद्धत्वेनास्फुरणादत्यंतव्यतिरिक्तरूपः ब्रह्मांबुधौस्फुरन्सर्गविंदुस्तुमनागपिव्यतिरिक्तरूपोनेत्यर्थः ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०एकोनाशीत्युत्तरशततमःसर्गः ॥ १७९ ॥ ॥ ७ ॥ ॥ इहरामोदितेकुंददंताख्यानेगिरौतरौ ॥ प्रलंबिनस्तापसस्यवरलाभांतमीर्यते ॥ १ ॥ स्वयंप्रवुद्धोरामश्चिरंतत्त्वजिज्ञासयास्वमाश्रितस्यकुंददंताख्यद्विजस्यप्रस्तुतोपदेशश्रवणात्तत्त्वप्रबोधोभून्नवे

वहुदीपेगृहेच्छायावद्व्योभांत्येकवद्यथा ॥ सर्वशक्तेस्तथैवैकाभातिशक्तिरनेकधा ॥ २१ ॥ यत्सीकरस्फुरणमंबुनिधौशिवाख्येव्योम्नीव वृक्षनिकरस्फुरणंससर्गः ॥ व्योम्न्येषवृक्षनिकरोव्यतिरिक्तरूपोब्रह्मांबुधौनतुमनागपिसर्गविंदुः ॥ २२ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० ब्रह्म० ब्रह्ममयत्वप्रतिपादनंनामैकोनाशीत्युत्तरशततमःसर्गः ॥ १७९ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ इमंमेसंशयं छिंधिभगवन्भास्करंतमः ॥ भुवनस्येवभावानांसम्यग्रूपानुभूतये ॥ १ ॥ कदाचिदहमेकाग्रोविद्यागेहेविपश्चिताम् ॥ संसदिस्थितवान्यावत्तापसःकश्चिदागतः ॥ २ ॥ विद्वान्द्विजवरःश्रीमान्विदेहजनमंडलात् ॥ महातपाःकांतियुतोदुर्वासाइवदुःसहः ॥ ३ ॥ सप्रविश्याभिवाद्याशुसभामाभास्वरद्युतिम् ॥ उपविश्यासनेतिष्ठन्नस्माभिरभिवादितः ॥ ४ ॥ वेदांतसांख्यसिद्धांतवादान्संहृत्यसत्तमम् ॥ सुखोपविष्टंविश्रांतंतमहंपृष्टवानिदम् ॥ ५ ॥ दीर्घाध्वनापरिश्रांतःसयत्नइवलक्ष्यसे ॥ वदाद्यवदतांश्रेष्ठकुतआगमनंकृतम् ॥ ६ ॥ ब्राह्मणउवाच ॥ एवमेतन्महाभागसुमहायत्नवानहम् ॥ यदर्थमागतोस्मीहतस्याकर्णयनिर्णयम् ॥ ७ ॥ वैदेहोनामदेशोस्तिसर्वसौभाग्यसंयुतः ॥ स्वर्गस्यांवरसंस्थस्यप्रतिविंबमिवावनौ ॥ ८ ॥ तत्राहंब्राह्मणोजातःप्राप्तविद्यश्चसंस्थितः ॥ कुंदावदातदंतत्वात्कुंददंतइतिश्रुतः ॥ ९ ॥ अथाहंजातवैराग्यःप्रविहर्तुंप्रवृत्तवान् ॥ देवद्विजमुनींद्राणांसंभ्रमाच्छ्रमशांतये ॥ १० ॥ श्रीपर्वतमखंडेहंकदाचित्प्राप्तवानहम् ॥ तत्रावसंचिरंकालंमृदुदीर्घंतपश्चरन् ॥ ११ ॥ तत्रास्त्यरण्यंविदितंमुक्तंतृणवनादिभिः ॥ त्यक्ततेजस्तमोभ्रादिभूमाविवनभस्तलम् ॥ १२ ॥

तिस्वसंदेहंगुरुमुखेनतंपृष्ट्वाविमार्ष्टुकामोवसिष्ठंप्रत्यत्याश्चर्यभूतंतदाख्यानंवक्तुंभूमिकांरचयंस्तंगुरुंप्रार्थयते ॥ इममिति ॥ इममाख्यानांतेवक्ष्यमाणम् ॥ यथाभास्करंज्योतिर्भुवनस्यजगतःसर्वभावानांसम्यग्रूपानुभूतयेतमश्छिनत्तितद्वदित्यर्थः ॥ १ ॥ संशयबीजंदर्शयितुमाख्यानमारभते ॥ कदाचिदित्यादिना ॥ यावत्स्थितस्तावत्तस्मिन्कालेइतियावत् ॥ २ ॥ ३ ॥ सभांद्विजसभाम् ॥ ४ ॥ तत्रअहंस्वाधीयमानान्वेदांतसांख्यसिद्धांतवादानुपसंहृत्यतंतापसमिदंवक्ष्यमाणंपृष्टवान् ॥ ५ ॥ सयत्नःकंचिदर्थंलब्धुंबोद्धुंवायत्नवानिवलक्ष्यसे ॥ ६ ॥ निर्णयंत्वत्संदेहनिवारणंमद्वाक्यमित्यर्थः ॥ ७ ॥ अवनौस्फटिकावनौ ॥ ८ ॥ तत्रविदेहेषु ॥ ९ ॥ देवद्विजमुनींद्राणांस्थानानीतिशेषः ॥ १० ॥ अखंडेहमितिपूर्वान्वयि ॥ अखंडेहंतत्रावसमितिवा ॥ मृदुअनुद्वंदीर्घकालत्वाद्दीर्घम् ॥ ११ ॥ शून्यत्वांशेननभस्तलदृष्टांतः ॥ १२ ॥

विटपीबहुशाखोवृक्षः ॥ १३ ॥ भानुःसूर्यःभानौस्वरश्मा विवरश्मिगृहीतोरज्जुबद्धपादःपादबंधनरज्वाधारइतियावत् ॥१४॥ तदेवस्पष्टमाह ॥ मौंजेति ॥ अष्ठीलत्वंप्रलंबपर्व पंथिभावंदधदिव ॥ १५ ॥ विचारितोमनसाविमृष्टः ॥ १६ ॥ तंविचारमेवस्फुटमाह ॥ यावदिति ॥ वितर्कैयावच्छब्दः ॥ नूनंजीवतियनोनिःश्वसितीत्यर्थः ॥१७॥ एकोऽसौ लंबमानोनापुरुषोमयाबहून्दिवसान्दिवसातपखेदसहनेनोपचर्यशनैर्विस्रंभेविश्वासेपातितः ॥ १८ ॥ चिरेणोच्छ्वसनाल्लक्ष्यालक्ष्यात्मजीवितः ॥ १९ ॥ अनेनमत्कुलदेशतपः प्रयोजनादिपरिज्ञानेनतेकोऽर्थःकिंप्रयोजनम् ॥ नहिनिष्प्रयोजनेर्थेजिज्ञासासंभवतीत्यर्थः ॥ २० ॥ इत्युक्तवान्सतापसोमयायदाप्रयत्नेनप्रणयानुबंधेनचपृष्टस्तदातेनममेदंव

तत्रास्तिमध्येविटपीलघुःपेलवपल्लवः॥ स्थितएषोंबरेशून्येमंदरश्मिरिवांशुमान्॥ १३॥ लंबतेतस्यशाखायांपुरुषःपावनाकृतिः॥ भानुर्भानाविवरश्मिगृहीतोग्रथिताकृतिः॥ १४॥ मौंजदामनिबद्धोर्ध्वपादोनित्यमवाक्शिराः॥ अष्ठीलत्वंदधदिवमहाष्ठीलस्यशाल्मलेः॥ १५॥ दृष्टःप्राप्तेनतंदेशंसकदाचिन्मयापुमान्॥ विचारितोनिकटतोवक्षःस्थांजलिसंपुटः॥ १६॥ यावज्जीवत्यसौविप्रोनिःश्वसित्यहताकृतिः॥ शीतवातातपस्पर्शान्सर्वान्वेत्तिचकालजान्॥ १७॥ अनंतरमसावेकोनोपचर्यमयाबहून्॥ दिवसातपखेदेनविश्रंभेपातितःशनैः॥ १८॥ पृष्टश्चकोसिभगवन्किमर्थंदारुणंतपः॥ करोषीदंविशालाक्षलक्ष्यालक्ष्यात्मजीवितः॥ १९॥ अथतेनोक्तमर्थस्तेकइवानेनतापस॥ अर्थेनातिविचित्राहिभवंतीच्छाःशरीरिणाम् ॥ २०॥ इत्युक्तवान्प्रयत्नेनसोनुबंधेनवैमया ॥ यदापृष्टस्तदातेनमोक्तमिदमुत्तरम्॥ २१॥ मथुरायामहंजातोवृद्धियातःपितुर्गृहे॥ बाल्ययौवनयोर्मध्येस्थितःपदपदार्थवित्॥ २२॥ समग्रसुखसंभारकोशोभवतिभूमिपः॥ इत्यहंश्रुतवांस्तत्रभोगार्थीनवयौवनः॥ २३॥ अथसप्तमहाद्वीपविस्तीर्णायाभुवःपतिः ॥ स्यामित्यहमुदारात्मापरिविंवितवांश्चिरम्॥ २४॥ इत्यर्थेनसमागत्यदेशमित्थमहंस्थितः॥ अत्रद्वादशवर्षाणिसमतीतानिमानद॥ २५॥ तदकारणमित्रत्वंगच्छेष्टंदेशमाशुगः॥ अहंचाभिमतप्राप्तेरित्थमेवदृढस्थितिः॥ २६॥ इतितेनाहमुक्तःसंस्तमिच्छंप्रोक्तवाञ्छृणु ॥ आश्चर्यंश्रवणेचेतःखेदमेतिनधीमतः॥ २७॥ साधोयावत्त्वयाप्राप्तोननामाभिमतोवरः ॥ त्वद्रक्षापरिचर्यार्थमिहतावदहंस्थितः॥ २८॥

क्ष्यमाणमुक्तम् ॥ २१ ॥ पदानिशब्दशास्त्रंपदार्थाअर्थशास्त्राणिचवेत्तीतिपदपदार्थवित् ॥ २२॥ भूमिपोराजासमग्राणांसुखसंभाराणांभोगसामग्रीणांकोशइवाश्रयोभवतीति अहंतत्रश्रुतवान् ॥ २३ ॥ अथतच्छ्रवणानंतरमहंसप्तमहाद्वीपविस्तीर्णायाभुवःपतिस्तथाउदारात्माअर्थिनामभिलषितपूरणसमर्थःस्यामितिचिरंपरिविंवितवान्इच्छांकृतवानितियावत् ॥ २४ ॥ इतिएवंरूपेणअर्थेनप्रयोजनेनइमंश्रीशैलदेशमागत्यस्थितः ॥ २५ ॥ हेअकारणमित्रत्वंतस्मात्पृष्टार्थस्यमयोक्तत्वात्त्वमिष्टंदेशमाशुगःशीघ्रगामीभूत्वागच्छ ॥ मंदगमनेदूरस्थग्रामनगराद्यप्राप्त्याअरण्येनिशाप्रसक्तेरितिभावः ॥ आअभिमतप्राप्तेरहंतुइत्थमेवतपसिदृढस्थितिः ॥ २६ ॥ २७ ॥ तावत्कालमहमपितवरक्षार्थंपरिचर्यासेवानदर्थंचस्थितोभविष्यामीत्यर्थः ॥ २८ ॥

क्षीणस्यमृतस्यरूपमिवरूपंयस्य यतोबहिरकलनः ॥ २९ ॥ कालकृतान्शीतोष्णादिवेगान्सहन्सन् ॥ ३० ॥ तस्मिन्प्रदेशांतरेतस्यतापसस्यपुरोदेशेआगत्यस्थितंभानुभास्वरंपुरुषम् ॥ ३१ ॥ सपुरुषस्तेनतापसेनमयासहयावत्पूज्यतेतावदुवाच ॥ ३२ ॥ त्वंतपःउपसंहरसम्यक्हारिमनोहरमभिमतंवरंगृहाण ॥ ३३ ॥ अनेनदेहेनकृतात्तपोधर्मतोनत्वनेनदेहेनपालयिष्यसीति ॥ उत्तरग्रंथविरोधात् ॥ ३४ ॥ यतःस्वयंप्रोदितोनिर्गतस्तमेवार्करूपमब्धिमस्तमदर्शनंगंतुमविशत् ॥ ३५ ॥ शाखेयःश्रुतःसएवप्रत्यक्षंदृष्टोवरदानव्यवहारेणानुभूतश्चाग्र्यःश्रेष्ठोवरदआदित्यपुरुषोयेनतस्यशाखातपस्विनः ॥ ३६ ॥ हेब्रह्मंस्त्वतरुशाखावलंबनरूपंयत्तपस्तत्संप्रतिसंप्राप्तमभिमतंयस्मात्तथाविधंसंपन्नमत

मयेत्युक्तेसपाषाणमौनवानभवच्छमी॥ निमीलितेक्षणःक्षीणरूपस्त्वकलनोबहिः॥ २९॥ तथाहंपुरतस्तस्यकाष्ठमौनवतोवसम्॥ षण्मासान्विगतोद्वेगंवेगान्कालकृतान्सहन्॥ ३०॥ अर्कबिंबाद्विनिष्क्रम्यतत्प्रदेशांतरेस्थितम् ॥ एकदादृष्टवानस्मिपुरुषंभानुभास्वरम् ॥ ३१ ॥ सतेनपूज्यतेयावन्मनसाकर्मणामया॥ उवाचतावद्वचनममृतस्यंदसुंदरम्॥ ३२॥ शाखाप्रलंबनपरहेब्रह्मन्दीर्घतापस॥ तपःसंहरसंहारिगृहाणाभिमतंवरम्॥३३॥ सप्ताब्धिद्वीपवलयांपालयिष्यसिमेदिनीम्॥ सप्तवर्षसहस्राणिदेहेनानेनधर्मतः॥३४॥ एवंसमीहितंदत्वासद्वितीयोदिवाकरः॥ गंतुमस्तमथार्काब्धिमविशत्प्रोदितोयतः॥३५॥ तस्मिन्यातेमयाप्रोक्तंतस्यशाखातपस्विनः॥ श्रुतदृष्टानुभूताग्र्यवरदस्यविवेकिनः॥३६॥ संप्राप्ताभिमतंब्रह्मंस्तरुशाखावलंबनम्॥ तपस्त्यक्त्वायथाप्राप्तंव्यवहारंसमाचर॥ ३७॥ एवमंगीकृतवतःपादौतस्यमयाततः॥ मुक्तौविटपिनस्तस्मादालानात्कालभाविव॥३८॥ स्नातःपवित्रहस्तोसौचक्रेजप्याघमर्षणम्॥ फलेनपुण्यलब्धेनविटपाद्व्रतपारणम्॥ ३९॥ तत्पुण्यवशतःप्राप्तैःस्वादुभिस्तैस्तरोःफलैः॥ समाश्वस्तावसंक्षुब्धावावांतत्रदिनत्रयम्॥४०॥ सप्तद्वीपसमुद्रमुद्रितदिशंभोक्तुंसमग्रांमहींविप्रःपादपलंबितेनवपुषातप्त्वोर्ध्वपादस्तपः ॥ संप्राप्याभिमतंवरंदिनकृतोविश्वस्यचाह्नांत्रयंसार्धमत्सुहृदास्वमेवसदनंगंतुंप्रवृत्तोभवत्॥ ४१॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०ब्रह्मगीतासुतापसोपाख्यानंनामाशीत्युत्तरशततमःसर्गः॥ १८० ॥ ७॥ ॥

इदानींत्वंतपस्त्यक्त्वायथाप्राप्तंस्वगृहगमनादिव्यवहारंसमाचर ॥ ३७॥ कालभौकलभसंबंधिनौ ॥ आलानात्तद्बंधनस्तंभादिव ॥ ३८ ॥ पुण्येनतपःसिद्धिबलेनतस्मादेवविटपाल्लब्धेनफलेनमयासहव्रतपारणंचक्रे ॥ ३९ ॥ ४० ॥ उक्तामेवकथांसंक्षेपोक्त्योपसंहरति ॥ सप्तद्वीपेति ॥ दिनकृतःसूर्यपुरुषात्सकाशादभिमतंवरंसंप्राप्यतदनंतरंतरुतलेअह्नांत्रयंविश्वस्यविश्रम्यपादपीडानिवृत्त्यनंतरंमयासुहृदासार्द्धंस्वमेवमथुरास्थंभवनंगंतुंप्रवृत्तोभवत् ॥ ४१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेअशीत्युत्तरशततमःसर्गः ॥ १८० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

गच्छतोर्मथुरांमार्गभ्रंशाद्वीरीवनागमः ॥ तत्रतापसवृद्धेनसंवादश्चात्रवर्ण्यते ॥ १ ॥ यथाचंद्रसूर्याविंद्रपुरींप्राच्यांप्रसिद्धामावासंगंतुंसायंकालेप्रवृत्तौतद्वदावामपिआसायंच लित्वाअंतरेआवासंगंतुंप्रवृत्तौ ॥ १ ॥ आवासस्थानान्येवक्रमेणाह ॥ प्राप्येत्यादिना ॥ आम्रवणप्रचुरेअचले ॥ २ ॥ ३ ॥ द्वितीयेअहनिआवांशीतान्यंबूनिस्निग्धच्छाया वनद्रुमाश्चयास्तुतथाविधाःश्वभ्रानूपस्थलावनीःसमुल्लंघ्येतिचतुर्थेसंबंधः ॥ ३ ॥ ताएवावनीर्विशिनष्टि ॥ नदीतीरेत्यादिना ॥ गायनमितिअशित्यात्वाकरणंछांदसम् ॥ ४ ॥ ५ ॥ क्वचिज्जंगलभूताःक्वचिदद्रिप्रायाःक्वचित्पुरग्रामभूताःक्वचिच्छ्वभ्रभूताःक्वचिदनूपभूतस्थलाश्चावनीः ॥ ६ ॥ ७ ॥ अज्ञषंडैर्गुल्मपंडकैश्चमंडितम् ॥ तृणकाष्ठादिहारिजनकर्तृक

कुंददंतउवाच॥ ॥आवासमंतरेगंतुंप्रवृत्तौमुदिताकृती ॥ मथुरानगरींचंद्रसूर्याविंद्रपुरीमिव ॥ १ ॥ प्राप्यरोधाभिधंग्रामंविश्रम्याम्र वणाचले ॥ उषितौद्वेदिनेतस्मिन्सालीसेनगरेसुखम् ॥ २ ॥ अध्वानंदितचित्ताभ्यामावाभ्यामतिवाहितः ॥ द्वितीयेहनिशीतांबुस्निग्ध च्छायावनद्रुमाः ॥ ३ ॥ नदीतीरलतोन्मुक्तपुष्पप्रकरपांडुराः ॥ तरत्तरंगझांकारगायनानंदिताध्वगाः ॥ ४ ॥ स्निग्धद्रुमवनच्छायरणन्मृ गविहंगमाः ॥ स्थूलशाद्वलशाखाग्रप्रोतावश्यायमौक्तिकाः ॥ ५ ॥ जंगलाद्रिपुरग्रामश्वभ्रानूपस्थलावनीः ॥ समुल्लंघ्यदिनेतस्मिन्स रित्स्रोतःसरांसिच ॥ ६ ॥ नीतवंतौनिशामावांकदलीकाननेघने ॥ तुषारशिशिरेश्रांतौकदलीदलतल्पके ॥ ७ ॥ प्रामावावांतृतीयेह्निपंड पंडकमंडितम् ॥ जंगलंजनविच्छेदविभक्तंखमिवाकृतम् ॥ ८ ॥ तत्रसप्रकृतंमार्गंपरित्यज्यवनांतरम् ॥ प्रविशन्समुवाचेदमकार्यकर णंवचः ॥ ९ ॥ गच्छावोत्राश्रमेगौर्यांमुनिमंडलमंडिते ॥ भ्रातरोमेस्थिताःसप्तवनेष्वेवमिवार्थिनः ॥ १० ॥ भ्रातरोष्टौवयमिमेजाताने कतयातया ॥ एकसंविन्मयाजाताएकसंकल्पनिश्चयाः ॥ ११ ॥ तेनतेप्यत्रतपसेस्वनिश्चयसमाश्रयाः ॥ स्थिताआगत्यविविधैस्तपो भिःक्षपितैनसः ॥ १२ ॥ तैःसार्द्धंभ्रातृभिःपूर्वमागत्याहमिहावसम् ॥ षण्मासानाश्रमेगौर्यास्तेनदृष्टोमयैषसः ॥ १३ ॥ पुष्पखंडतरुच्छा यासुप्तमुग्धमृगार्भकः ॥ पर्णोटजाग्रविश्रांतशुकोद्ग्राहितशास्त्रदृक् ॥ १४ ॥ तद्ब्रह्मलोकसंकाशमेहिमुन्याश्रमंश्रिये ॥ गच्छावोच्छतरंत त्रचेतःपुण्यैर्भविष्यति ॥ १५ ॥

च्छेदैर्विभक्तम् ॥ मेघविच्छेदैर्विभक्तंखमिवआसमंतात्कृतम् ॥ ८ ॥ इदानींदिदृक्षितानांभ्रातृमुनिप्रभृतीनांगौर्याश्रमेअभावान्भ्राताभ्रातरंगच्छेदन्वेषणपरःक्वचिदितिनिषिद्ध त्वाच्चवृथाकालविलंबेनप्रकृतस्वगृहगमनकार्यविच्छेदित्वादकार्यकरणंवचः ॥ ९ ॥ १० ॥ एवमिवार्थिनइत्युक्तिविशदयति ॥ भ्रातरइत्यादिना ॥ तयाप्राग्वर्णितयासप्तद्वीप राज्यभोगेच्छयाजाताअनेकेमनोरथायेषांतद्भावेनवयमष्टावपिभ्रातरस्तपसेएकसंविन्मयाएकरूपदृढनिश्चयप्रधानाजाताः ॥ ११ ॥ १२ ॥ इहगौर्याश्रमे ॥ तेनहेतुनायःप्रा गदृष्टःसएवैषपुरोदृश्यतेइतिप्रत्यभिज्ञाभिलापः ॥ १३ ॥ तमेवाश्रमंवर्णयति ॥ पुष्पेति ॥ उटजाग्रेषुविश्रांतैःशुकैरपिउद्ग्राहिताउपन्यस्तानानाशास्त्रदृशोयत्र ॥ १४ ॥ तत्र आवयोश्चेतःसर्वदोषक्षयादच्छतरंभविष्यति ॥ १५ ॥

अलंबुद्धयस्त्वदर्शनेनपूर्णमनसोयेमुनयस्तेषांविलोकनेविदुषामपिपुंसांमनस्त्वरतेकिंपुनरावयोरित्यर्थः॥१६॥ अंतःसंहारस्तस्यरूपेणैवरूपिणमाश्रमंशून्यमितियावत् ॥१७॥ इहशून्यारण्ये ॥ २५ ॥ हेभगव
तदेवाह ॥ नवृक्षमित्यादिना ॥ १८ ॥ १९ ॥ तस्मिन्मत्सहायेतापसे ॥ २० ॥ २१ ॥ २२ ॥ चापलात्चपलस्वभावात् ॥ २३ ॥ २४ ॥ इहशून्यारण्ये ॥ २५ ॥ हेभगव
न्नीदृशंत्वत्पृष्टमावांनकिंचिज्जानीवइतिशेषः ॥ अतस्त्वमेवविद्धिबुद्धःसर्वज्ञोपित्वंयोगबलात्कस्मात्स्वयंनजानासि ॥ २६ ॥ २७ ॥ २८ ॥ इमंमदास्पदंत्वावासभूतम् अतए

विदुषामपिधीराणामपितत्त्वविदामपि ॥ त्वरतेहिमनःपुंसामलंबुद्धिविलोकने॥ १६ ॥तेनेत्युक्तेचतावावांप्राप्तौमुन्याश्रमंचतम्॥ यावत्तत्रमहारण्येपश्यावश्रांतरूपिणम् ॥ १७॥ नवृक्षंनोटजंकिंचिन्नगुल्मंनचमानवम् ॥ नमुनिंनार्भकंनान्यन्नवेदिंनचवाद्विजम् ॥ १८॥ केवलंशून्यमेवातितदरण्यमनंतकम् ॥ तापोपतप्तमभितोभूमौस्थितमिवांबरम् ॥ १९॥ हाकष्टंकिमिदंजातमितितस्मिन्वद त्यथ॥ आवाभ्यांसुचिरंभ्रांत्वादृष्टएकत्रवृक्षकः॥ २० ॥ स्निग्धच्छविर्घनच्छायःशीतलोंबुधरोपमः॥ तलेतस्यसमाधानेसंस्थितोवृद्ध तापसः॥ २१ ॥ आवामग्रेमुनेस्तस्यच्छायायांशाद्वलस्थले॥ उपविष्टौचिरंयावन्नासौध्यानान्निवर्त्तते॥२२॥ ततश्चिरेणकालेनमयो द्वेगेनचापलात्॥ उक्तंमुनेप्रबुध्यस्वध्यानादित्युच्चकैर्वचः॥ २३ ॥ शब्देनोच्चैर्मदीयेनसंप्रबुद्धोभवन्मुनिः॥ सिंहोंबुदरवेणेवजृंभांकृत्वा भ्युवाचच॥ २४ ॥ कौभवंताविमौसाधूक्वासौगौर्याश्रमोगतः॥ केनवाहमिहानीतःकालोयंकश्चवर्त्तते ॥२५॥ तेनेत्युक्तेमयाप्युक्तंभग वन्विद्धिईदृशम्॥ नकिंचिदावांबुद्धोपिकस्माज्ज्ञानासिनस्वयम्॥ २६ ॥ इतिश्रुत्वासभगवान्पुनर्ध्यानमयोभवत्॥ददर्शोदंतमखिल मस्माकंस्वात्मनस्तथा॥ २७॥ मुहूर्त्तमात्रेणोवाचप्रबुध्यध्यानतोमुनिः ॥ श्रूयतामिदमाश्चर्यमार्यौहिकार्यवेदिनौ॥ २८ ॥ यमिमंप श्यथःसाधूकदंवतरुपुत्रकम्॥ मदास्पदमरण्यान्याधम्मिल्लमिवपुष्पितम् ॥ २९ ॥ केनापिकारणेनास्मिन्सतीवागीश्वरीसती॥ अव सद्दशवर्षाणिसमस्तर्तुनिषेविता॥ ३० ॥ तदातेनेहविस्तीर्णमभवद्वनकाननम्॥ गौरीवनमितिख्यातंभूषितंकुसुमर्तुभिः॥ ३१ ॥ भृंगां गनाजनमनोहरहारिगीतलीलाविलोककलकंठविहंगमंग॥पुष्पांबुवाहशतचंद्रनभोवितानंराजीवरेणुकणकीर्णदिगंतरालम्॥३२॥

वानुकंप्यत्वात्पुत्रकमित्युक्तिः ॥ २९ ॥ सतीगौरीवागीश्वरीसतीसरस्वतीभूत्वाअत्रअवसत् ॥ ३० ॥ कुसुमप्रधानैःसर्वर्तुभिर्भूषितमलंकृतम् ॥ तदातस्मिन्काले ॥ तेनकार
णेन ॥ ३१ ॥ कीदृशमभवत्तदेववर्णयति ॥ भृंगांगनेत्यादिना ॥ हेअंगेत्युभयोःसंबोधनम् ॥ भृंगांगनाजनानांमनोहरगीतलीलाभिर्विलोलाःकलकंठविहंगाःकोकिलायत्र
तथापुष्पवर्षिभिरंबुवाहप्रायैस्तरुभिःशतचंद्रनभोवितानंयत्र ॥ ३२ ॥

मंदाराणांकुंदानांचमकरंदैःसुगंधिताआशादिशोयेन ॥ समंतात्सुष्ठुउच्छ्वसत्सुविकसत्सुकुसुमराशिलक्षणेषुशशांकबिंबेषुनिष्ठाशोभापर्याप्तिर्यत्र ॥ ३३ ॥ पुष्पाकरस्यवसंतस्य नगरमिवस्थितम् ॥ भृंगांगनायुक्तैःकुसुमखंडकमंडपैराढ्यम् ॥ चंद्रांशुजालवत्परितःकोमलासुपुष्पदोलासुदोलायमानाःसुरसिद्धवधूसमूहायत्र ॥ ३४ ॥ हारीतादिपक्षिकुलै राकुलान्यंगानियस्य ॥ हेमचूडास्तित्तिरयः ॥ राढाःपक्षिभेदाः ॥ ३५ ॥ गंधर्वयक्षादीनांकिरीटैर्घृष्टेपादाब्जकर्णिकेयस्यास्तथाविधाकदंबसरस्वतीयस्मिन् ॥ सुरभिवातानामयनमतएवकनकमिवकोमलेभ्यश्चंपकौघेभ्यस्ताराम्बुधराभ्यांगृहीतोगंधोयस्य ॥ ३६ ॥ मंदानिलास्खलितपल्लवानांबालवल्लीनांविन्यासैःप्रसारैर्गुप्तेषुकुंजेषुनिरुद्धैर्दिवसा

मंदारकुंदमकरंदसुगंधिताशंसंसूच्छ्वसत्कुसुमराशिशशांकनिष्ठम् ॥ संतानकस्तबकहासविकासकांतमामोदिमारुतसमस्तलतांगनौघम्॥३३॥पुष्पाकरस्यनगरंनवगीतभृंगभृंगांगनाकुसुमखंडकमंडपाढ्यम्॥चंद्रांशुजालपरिकोमलपुष्पदोलादोलायमानसुरसिद्धवधूसमूहम्॥३४॥ हारीतहंसशुककोकिलकोककाकचक्राह्वभासकलविंककुलाकुलांगम् ॥ भेरुंडकुक्कुटकपिंजलहेमचूडराढामयूरवककल्पितकेलिरम्यम् ॥३५॥ गंधर्वयक्षसुरसिद्धकिरीटघृष्टपादाब्जकर्णिककदंबसरस्वतीकम्॥वातायनंकनककोमलचंपकौघताराम्बुधरपूरगृहीतगंधम् ॥३६॥मंदानिलस्खलितपल्लवबालवल्लीविन्यासगुप्तदिवसाधिपरश्मिशीतम् ॥ पीतंकदंबकरवीरकनालिकेरतालीतमालकुलपुष्पपरागपूरैः॥३७॥ कह्लारकीर्णकुमुदोत्पलपद्मखंडवल्गच्चकोरबककोककदंबहंसम् ॥ तालीसगुग्गुलकचंदनपारिभद्रभद्रद्रुमोदरविहारिविचित्रशक्ति ॥ ३८ ॥ तस्मिन्वनेचिरमुवासहरार्धदेहाकेनापिकारणवशेनचिरायगौरी ॥ भूत्वाप्रसन्नशशिबिंबमुखीकदंबवागीश्वरीशशिकलेवशिवस्यमूर्ध्नि॥ ३९॥ ॥इ०वा०वा०दे०मो०नि०उ०ब्रह्मगीतासुतापसोपा० गौर्याश्रमवर्णनंनामैकाशीत्युत्तरशततमःसर्गः॥ १८१ ॥ ॥ ७ ॥ ॥ वृद्धतापसउवाच ॥ ॥ तस्मिन्नेवकदंबेस्मिन्वर्षाणिस्वेच्छयादश ॥ स्थित्वागौरीजगामाथहरवामार्धमंदिरम् ॥ १ ॥ तत्स्पर्शामृतसिक्तोयंकदंबतरुपुत्रकः॥ उत्संगइवचासीनोनयात्येवपुराणताम्॥२॥

धिपरश्मिभिरंतःशीतम् ॥ तथाकदंबादीनांकुलस्यपुष्पपरागपूरैःपीतंपीतवर्णम् ॥ ३७ ॥ कह्लारैःपद्मैःकीर्णानिमिश्राणिकुमुदोत्पलानियेषुतथाविधेषुपद्मखंडेषुपद्माकरेषुवल्गंतश्चकोरादिकदंबसहिताहंसायत्र ॥ तालीप्रभृतिद्रुमोदरेषुविहारिणीविचित्रासर्वाभिलषितार्थपूरणशक्तिर्यस्मिन् ॥ ३८ ॥ सकलवनसंपत्तिषुयत्कारणंतदाह ॥ तस्मिन्निति ॥ तस्मिन्वनेहरार्धदेहागौरीकेनापिकारणवशेनकदंबवागीश्वरीभूत्वाचिरमुवास ॥ तदेववनसंपदांकारणमित्यर्थः ॥ ३९ ॥ ॥ इतिश्रीवासिष्ठ० तात्पर्यप्रकाशेनि० उ० एकाशीत्युत्तरशततमःसर्गः ॥ १८१ ॥ ॥ ७ ॥ ॥ कदंबतापसेनाथतद्भ्रातॄणांसमागमः ॥ ग्रहेषुवरशापानांहेतुसिद्धिश्चवर्ण्यते ॥ १ ॥ तस्मिन्वर्णितगुणेअस्मिन्नेवमदास्पदेकदंबे ॥ १ ॥ उत्संगेआसीनोबालइवपुराणतांजरांनयात्येव ॥ २ ॥

जनवृंदैस्तृणकाष्ठफलपुष्पाद्युपहारेणोपजीवितंसदिनरवनसाधारणतांयातम् ॥ ३ ॥ इदानींमुनिःस्ववृत्तांतमाह ॥ मालवइत्यादिना ॥ ४ ॥ ५ ॥ ६ ॥ अष्टौतेतपस्विनस्तद्वात थातेनप्रकारेणतपस्विनोभूत्वाअवसन् यथाअन्येयेतपस्विनःतेषामपिमान्याःपूज्यास्तेऽभवन्नित्यर्थः ॥ ७॥ अनंतरंकेनचित्कालेनतेषांमध्येअसौत्वमेकःश्रीपर्वतंगतः ॥ एवंच योन्येपि ॥ ८ ॥ ९ ॥ १० ॥ वरैःश्रेष्ठैर्वरैः ॥ ११ ॥ तेतपतस्तपस्येवतिष्ठतः ॥ षष्ठीचानादरेइतिभावलक्षणेषष्ठी ॥ धर्मप्रधानंकृतयुगंभूमौभुक्त्वाअनुभूयतदंतेवेधाश्चतुर्मुखो

ततोगौर्यांप्रयातायांतद्वनंतादृशंमहत् ॥ सामान्यवनतांयातंजनवृंदोपजीवितम् ॥३॥ मालवोनामदेशोस्तितत्राहंपृथिवीपतिः ॥ कदा चित्त्यक्तराज्यश्रीर्मुनीनामाश्रमान्भ्रमन् ॥ ४ ॥ इयंदेशमनुप्राप्तइहचाश्रमवासिभिः ॥ पूजितोस्यकदंबस्यध्याननिघ्नस्तलेस्थितः ॥५॥ केनचित्त्वथकालेनभ्रातृभिःसप्तभिःसह ॥ भवानभ्यागतःपूर्वंतपोर्थमिममाश्रमम् ॥ ६ ॥ तपस्विनोष्टाविहतेतथानामतदावसन् ॥ य थातपस्विनोन्येतेतेषांमान्यास्तपस्विनः ॥ ७ ॥ कालेनानंतरमसावेकःश्रीपर्वतंगतः ॥ स्वामिनंकार्त्तिकेयंचद्वितीयस्तपसेगतः ॥ ८ ॥ वा राणसींतृतीयस्तुचतुर्थोगाद्धिमाचलम् ॥ इहैवतेपरेधीराश्चत्वारोन्येपरंतपन् ॥ ९ ॥ सर्वेषामेवचैतेषांप्रत्येकंत्वेतदीप्सितम् ॥ यथासम स्तद्वीपायाभुवोस्याःस्यांमहीपतिः ॥ १० ॥ अथसंपादितंतेषांसर्वेषामेतदीप्सितम् ॥ तपस्तुष्टाभिरिष्टाभिर्देवताभिर्वरैर्वरैः ॥ ११ ॥ तप तस्तेततोयाताभ्रातरःसदनंनिजम् ॥ भूमौधर्मयुगंभुक्त्वावेधाब्रह्मपुरीमिव ॥ १२ ॥ तैर्भवद्भ्रातृभिर्भव्यवरदानविधौतदा ॥ इदंवरोद्यता यत्नात्प्रार्थिताःस्वेष्टदेवताः ॥ १३ ॥ देव्यस्माकमिमेसर्वेसप्तद्वीपेश्वरास्थितौ ॥ सत्याःप्रकृतयःसंतुसर्वआश्रमवासिनः ॥ १४ ॥ तमिष्ट देवतासार्थमुररीकृत्यसादरम् ॥ तेषामस्त्वेवमित्युक्त्वाजगामांतर्द्धिमीश्वरी ॥ १५ ॥ तेततःसदनंयातास्तेषामाश्रमवासिनः ॥ सर्वएव गताःपश्चादेकएवास्मिनागतः ॥ १६ ॥ अहंकेवलमेकांतेध्यानैकगतमानसः ॥ वागीश्वरीकदंबस्यतलेतिष्ठामिशैलवत् ॥ १७ ॥ अथ कालेवहत्यस्मिन्नृतुसंवत्सरात्मनि ॥ इदंसर्ववनंछिन्नंजनैःपर्यंतवासिभिः ॥ १८ ॥ इदंकदंबमम्लानंजनताःपूजयंत्यलम् ॥ वागीश्व रीगृहमितिमांचैवैकसमाधिगम् ॥ १९ ॥

ब्रह्मपुरींब्रह्मलोकमिव ॥ १२ ॥ हेभव्यइदंवक्ष्यमाणंवरंप्रार्थिताः ॥ १३ ॥ सप्तद्वीपेश्वरेतिभावप्रधानोनिर्देशः ॥ प्रकृतयःप्रजाभूताःसर्वेजनाःसत्याःपरित्यक्तानृताःसंतु ॥ तथासर्वेपिसप्तद्वीपवासिनःस्वस्वाश्रमधर्मेणसंतु ॥ इदंचवर्णधर्मप्रार्थनायाअप्युपलक्षणम् ॥ १४ ॥ साइष्टदेवतातंतत्प्रार्थितमर्थमुररीकृत्यअंगीकृत्य ॥ १५ ॥ एकएवाहं नोगतः ॥ १६ ॥ तत्कृतस्तत्राह ॥ अहमिति ॥ १७ ॥ १८ ॥ मांचैवपूजयंति ॥ १९ ॥

१ परमत्यंतमतपन्तपश्चक्रुरित्यर्थः ॥ अडभावआर्षः  २ अयंचासौकदंबश्चेतिविग्रहः

॥ २० ॥ इहागतौयुवांगृहंगच्छतम् ॥ तेभ्रातरःपूर्वमेवदारबंधुभिःसंगताः ॥ २१ ॥ भवतामष्टानामपिसंगमोभविष्यति ॥ वसूनामष्टानाम् ॥ ब्रह्मलोकेदेवलोके ॥ २२ ॥ हे आर्याइतिरामसभासंबोधनम ॥ २३ ॥ २४ ॥ एतावदेवासमंजसमसंबद्धमितिनो यावद्यतइदमन्यदप्यसंबद्धतरमत्यंतमसमंजसंमयोच्यतेउदाह्रियतेतन्ममत्तःश्रूयतामि त्यर्थः ॥ २५ ॥ श्लोकद्वयमुत्तरविवक्षयापूर्वोक्तानुवादः ॥ २६ ॥ २७ ॥ दिगंतराणांप्राच्यादीनांताराष्टकमिवेत्यौत्प्रेक्षिकीउपमा ॥ २८ ॥ यद्यस्माद्धेतोःपतिवियोगःअहि

अथैनंदेशमायातौभवंतौदीर्घतापसौ ॥ एतत्तत्कथितंसर्वंध्यानदृष्टंमयाखिलम् ॥ २० ॥ तस्माद्दुत्थायहेसाधूगच्छतंगृहमागतौ ॥ तत्र तेभ्रातरःसर्वेसंगतादारबंधुभिः ॥ २१ ॥ अष्टानांभवतांभव्यंसदनेस्वेभविष्यति ॥ महात्मनांब्रह्मलोकेवसूनामिवसंगमः ॥ २२ ॥ इत्यु क्तेतेनसमयापृष्टःपरमतापसः ॥ संदेहादिदमाश्चर्यमार्यास्तद्वर्णयाम्यहम् ॥ २३ ॥ एकैवसप्तद्वीपास्तिभगवन्भूरियंकिल ॥ तुल्यकालंभ वंत्यष्टौसप्तद्वीपेश्वराःकथं ॥ २४ ॥ ॥ कदंबतापसउवाच ॥ ॥ असमंजसमेतावदेवनोयावदुच्यते ॥ इदमन्यदसंबद्धतरंसंश्रूयतांमम ॥ २५ ॥ एतेष्टौभ्रातरस्तत्रतापसादेहसंक्षये ॥ सप्तद्वीपेश्वराःसर्वेभविष्यंतिगृहोदरे ॥ २६ ॥ अष्टौत्वेतेमहीपीठेत्वेतेष्वेतपुसद्मसु ॥ सप्त द्वीपेश्वराभूपाभविष्यंतीहमेशृणु ॥ २७ ॥ अस्त्येतेषांकिलाष्टानांभार्याष्टकमनिंदितम् ॥ दिगंतराणांनियतंताराष्टकमिवोज्वलम् ॥ २८ ॥ तद्भार्याष्टकमेतेषुयातेष्ठुतपसेचिरम् ॥ बभूवदुःखितंस्त्रीणांयद्वियोगोहिदुःसहः ॥ २९ ॥ दुःखिताःप्रत्ययेतेषांचक्रुस्तादारुणंतपः ॥ शत चांद्रायणंतासांतुष्टाभूत्तेनपार्वती ॥ ३० ॥ अदृश्योवाचसातासांवचोंतःपुरमंदिरे ॥ देवीसपर्यावसरेप्रत्येकंपृथगीश्वरी ॥ ३१ ॥ ॥ दे व्युवाच ॥ ॥ भर्त्रर्थमथचात्मार्थंगृह्यतांवालिकेवरः ॥ चिरंक्लिष्टासितपसानिदाघेनेवमंजरी ॥ ३२ ॥ इत्याकर्ण्यवचोदेव्यादत्तपुष्पा चिरंटिका ॥ स्ववासनानुसारेणकुर्वाणेवेश्वरीस्तवम् ॥ ३३ ॥ आनंदमंथरोवाचवचनंमृदुभाषिणी ॥ आकाशसंस्थितांदेवींमयूरीवा भ्रमालिकाम् ॥ ३४ ॥ ॥ चिरंटिकोवाच ॥ ॥ देविदेवाधिदेवेनयथातेप्रेमशंभुना ॥ भर्त्रांममतथाप्रेमसभर्तास्तुममामरः ॥ ३५ ॥ ॥ देव्युवाच ॥ ॥ आसृष्टेर्नियतेर्दार्ढ्यादमरत्वंनलभ्यते ॥ तपोदानैरतोन्यंत्वंवरंवरयसुव्रते ॥ ३६ ॥

रिवदुःसहः ॥ २९ ॥ तेषांपतीनांप्रत्ययेपुनःपुनःस्मरणेसतिताढुःखिताःसत्योदारुणंतपश्चक्रुः ॥ किंनामकंतत्तपस्तदाह ॥ शतचांद्रायणमिति ॥ ३० ॥ ३१ ॥ निदाघेनग्रीष्मे ण ॥ ३२ ॥ दत्तपुष्पागौरीपादयोःसमर्पितपुष्पांजलिश्चिरंटिकासुवासिनी ॥ ३३ ॥ आनंदमंथरागद्गदस्वरा ज्येष्ठायानामधेयंवा ॥ ३४ ॥ अमरोमृत्युरहितोस्तु ॥ ३५ ॥ आ सृष्टेरादिसर्गमारभ्यप्रवृत्तायानियतेरीश्वराज्ञायाःदार्ढ्यात्भंक्तुमशक्यत्वात् ॥ ३६ ॥

क्षणादपिशब्दाच्चिरादपि ॥ ३७ ॥ ३८ ॥ मूर्खायास्तस्याःसमीचीनवरयाचनाकुशलतांबुद्ध्वादेवीस्वयमेववरांतरंददाति ॥ त्वंचेति ॥ लोकांतरेसप्तद्वीपाधिपत्ये ॥ ३९ ॥ निरवद्यंनिर्दोषंजगदानंदायसमुद्यता ॥ ४० ॥ ककुब्भ्योदिग्भ्यः ॥ ४१ ॥ ४२ ॥ असमंजसांतरमप्युदाहरति ॥ इदमिति ॥ आर्यकार्याणांसत्कर्मफलानामुपरोधकम ॥ ४३ ॥ तावधूभिःस्नुषाभिर्युतौसहितौ ॥ ४४ ॥ शरीरपदेनतद्भोग्यसुखंलक्ष्यतेतन्नैरपेक्ष्येण ॥ तंप्रसिद्धंकलापग्रामाख्यंतीर्थम् ॥ ४५ ॥ वर्णतःकपिलंकृत्स्नंपुरुषंमार्गेददृशतुः ॥ ४६ ॥

चिरंटिकोवाच ॥ ॥ अलभ्यमेतन्मेदेवितन्मद्भर्त्तुर्गृहांतरात् ॥ मृतस्यमाविनिर्यातुजीवोवाद्यमपिक्षणात् ॥ ३७ ॥ देहपातश्चमेभर्तुर्यदास्यादात्ममंदिरे ॥ तदेतदस्त्वितिवरोदीयतामंबिकेमम ॥ ३८ ॥ ॥ देव्युवाच ॥ ॥ एवमस्तुसुतेत्वंचपत्यौलोकांतरास्थिते ॥ भविष्यसिप्रियाभार्यादेहांतेनात्रसंशयः ॥ ३९ ॥ इत्युक्त्वाविररामासौगौर्यागीर्गगनोदरे ॥ मेघमालाध्वनिरिवनिरवद्यसमुद्यता ॥ ४० ॥ देव्यांगतायांभर्त्तारस्तासांकालेनकेनचित् ॥ तेककुब्भ्यःसमाजग्मुःसर्वेप्राप्तमहावराः ॥ ४१ ॥ अद्यायमपिसंयातुभार्यायानिकटंपतिः ॥ भ्रातॄणांबांधवानांचभवत्वन्योन्यसंगमः ॥ ४२ ॥ इदमन्यदथैतेषामसमंजसमाकुलम् ॥ शृणुकिंवृत्तमाश्चर्यमार्यकार्योपरोधकम् ॥ ४३ ॥ तप्यतांतपएतेषांपितरौतौवधूयुतौ ॥ तीर्थमुन्याश्रमश्रेणींद्रष्टुंदुःखान्वितौगतौ ॥ ४४ ॥ शरीरनैरपेक्ष्येणपुत्राणांहितकाम्यया ॥ गंतुंकलापग्रामंतंयत्नवंतौबभूवतुः ॥ ४५ ॥ तौप्रयातौमुनिग्राममार्गेददृशतुःसितम् ॥ पुरुषंकपिलंकृत्स्नंभस्मांगंचोर्ध्वमूर्द्धजम् ॥ ४६ ॥ सवधूकमहामूर्खंतीर्थार्थीदारसंयुतः ॥ मांद्रुवांधुलीलवमनादृत्यतंजरत्पांथशंकया ॥ यदातौजग्मतुस्तेनसउवाचान्वितःक्रुधा ॥ ४७ ॥ ससमुल्लंघ्यगच्छस्यविहितानतिः ॥ ४८ ॥ वधूनांतेसुतानांचगच्छतस्तपसार्जिताः ॥ विपरीताभविष्यंतिलब्धाअपिमहावराः ॥ ४९ ॥ इत्युक्तवंतंतंयावत्सदारोथवधूयुतः ॥ सन्मानंकुरुतेतावन्मुनिरंतर्द्धिमाययौ ॥ ५० ॥ अथतौपितरौतेषांसवधूकौसुदुःखितौ ॥ कृशीभूतौदीनमुखौनिराशौगृहमागतौ ॥ ५१ ॥ अतोवदाम्यहंतेषांनैकंनामासमंजसम् ॥ असमंजसलक्षाणिगंडेस्फोटाःस्फुटाइव ॥ ५२ ॥

वष्टानांमातापितरौजरत्पांथःकश्चिदसाविंतिशंकयातंमुनिमनादृत्यनमस्कारपूजास्तवनाद्यादरमकृत्वाप्रत्युतगमनत्वरयातदुपरिधूलीलवमुद्धूनयंतौसंतौयदाजग्मतुस्तदातेनापराधेनक्रुधान्वितःसमुनिरुवाच ॥ ४७ ॥ किमुवाचतदाह ॥ सवधूकेति ॥ अविहितानतिरकृतनमस्कारः ॥ ४८ ॥ तपसार्जितावराविपरीताडुःखफलाभविष्यंति ॥ ४९ ॥ ५० ॥ निराशौसंतौपरावृत्यस्वगृहमेवागतौ ॥ ५१ ॥ अतोऽहंवदामितेषांनैकमेवासमंजसंकिंतुअसमंजसलक्षाणिगृहमध्येसप्तद्वीपराज्यकल्पनेतदंतर्गतगिरिपर्वताद्यसमंजसलक्षाणांकल्पनायानांतरीयकतयाप्रसक्तेरितिभावः ॥ यथागलेगंडस्तत्रस्फोटास्तेचस्फुटाःस्फुटिताश्चेदनिष्टोपर्यनिष्टंतत्राप्यनिष्टांतरंतद्वदित्यर्थः ॥ ५२ ॥

एवमन्यत्राप्यस्मिन्मायामयेजगत्यसमंजसलक्षाणिसंभवंतीत्याह ॥ चिद्व्योमेति ॥ अस्मिन्जगद्रूपेचिद्व्योमसंकल्परचितेमहापुरेइत्थंविचित्राण्यसमंजसानिकोटिशःसंभवंति ॥ यथाव्योमनिउत्पातवशाद्गंधर्वनगरधूमकेतुकबंधोल्कादिदृश्यजृंभाःसंभवंतितद्वदित्यर्थः ॥ ५३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०द्व्यशीत्युत्तरशततमःसर्गः ॥ १८२ ॥ ॥ ७ ॥ ॥ विरुद्धवरशापानांचतुराननवाक्यतः ॥ मिथोजयोंतःसाराणामिहसम्यङ्निरूप्यते ॥ १ ॥ तापेनग्रीष्मसंशुष्कंपरस्परग्रथितंचदर्भाग्रमिवजराजर्जरामूर्द्धजायस्य ॥ १ ॥ किंपृष्टस्तदाह ॥ एकैवेति ॥ २ ॥ द्वितीयंपृष्टमाह ॥ यस्येति ॥ ३ ॥ तृतीयंपृष्टमाह ॥ यैरिति ॥ शीतलच्छायास्तापतांग्रीष्मातपतांकथंगच्छंति

चिद्व्योमसंकल्पमहापुरेस्मिन्नित्थंविचित्राण्यसमंजसानि ॥ निःशून्यरूपेपिहिसंभवंतिदृश्येयथाव्योमनिदृश्यजृंभाः ॥ ५३ ॥ ॥ इ० वा० महारामायणेवा०दे०मो०निर्वा०उ०ब्रह्मगीतासुतापसोपाख्यानांतर्गतसप्तद्वीपेश्वरोपाख्यानेसप्तद्वीपेश्वरवर्णनंनामद्व्यशीत्युत्तरशततमःसर्गः ॥ १८२ ॥ ॥ ७ ॥ ॥ कुंददंतउवाच ॥ ॥ ततःपृष्टोमयातत्रसगौर्याश्रमतापसः ॥ तापसंशुष्कदर्भाग्रजराजर्जरमूर्धजः ॥ १ ॥ एकैवसप्तद्वीपास्तिवसुधायत्रतत्रतत् ॥ सप्तद्वीपेश्वराअष्टौभवंतिकथमुत्तमाः ॥ २ ॥ यस्यजीवस्यसदनान्नास्तिनिर्गमनंबहिः ॥ सकरोतिकथंसप्तद्वीपेशत्वेनदिग्जयम् ॥ ३ ॥ यैर्वरावरदैर्दत्ताःशापैस्तेतद्विरुद्धताम् ॥ कथंगच्छंतिगच्छंतिकथंछायाहितापताम् ॥ ४ ॥ मिथोशक्यांकथंधर्मौस्थितिमेकत्रगच्छतः ॥ आधारएवाधेयत्वंकरोतिकथमात्मनि ॥ ५ ॥ ॥ गौर्याश्रमतापसउवाच ॥ स्वसंपश्यसिकिमेतेषांभोसाधोशृणुवनंतरम् ॥ अष्टमेस्मिन्सुसंप्राप्तेतंप्रदेशंसबांधवम् ॥ ६ ॥ इतोभवंतौतंदेशमासाद्यसुखसंस्थितौ ॥ स्वबंधुसुखसंस्थानौकंचित्कालंभविष्यतः ॥ ७ ॥ ततस्तेष्टौमरिष्यंतिभ्रातरःक्रमशोगृहे ॥ बंधवोथकरिष्यंतितेषांदेहांस्तदग्निसात् ॥ ८ ॥ तेषांतेसंविदाकाशाःपृथक्पृथगवस्थिताः ॥ मुहूर्तमात्रंस्थास्यंतिसुषुप्तस्थाजडाइव ॥ ९ ॥ एतस्मिन्नंतरेतेषांतानिकर्माणिधर्मतः ॥ एकत्रसंघटिष्यंतिवरशापात्मकानिखे ॥ १० ॥

॥ ४ ॥ एकस्यैवफलस्यवरशापोभयफलत्वमशक्यत्वाद्दुष्करमित्याह ॥ मिथइति ॥ विरुद्धौवरशापफलतावच्छेदकौशुभत्वाशुभत्वधर्मावेकत्रैवधर्मिण्यशक्यांस्थितिंकथंगच्छतः ॥ एकधर्म्याश्रितत्वासंभवेपितयोर्धर्मयोःपरस्पराश्रितत्वमस्तुतत्राह ॥ आधारएवेति ॥ ५ ॥ सर्वेषांप्रश्नानांकथाशेषवर्णनमुखेनैवोत्तरंकदंबतापसउवाच ॥ संपश्यसीति ॥ हेसाधोएतेषांकिंविरुद्धमसमंजसंपश्यसि अनंतरंयद्वृत्तंतच्छृणु ॥ तेनैवतेसमाधानंभविष्यतीतिभावः ॥ अद्यतनवासरादष्टमेअस्मिन्नेववासरेसंप्राप्तेसतिभवंतौतंमथुराप्रदेशंस्वबांधवसहितंप्राप्स्यतइतिशेषः ॥ ६ ॥ ७ ॥ तदग्निसात्तैस्तैराहितायेऽग्नयस्तदधीनान् ॥ अंत्येष्टिभिस्तत्तदग्निपुदाहेनसंस्करिष्यंतीतियावत् ॥ ८ ॥ संविदाकाशाजीवाः ॥ ९ ॥ कर्मणांविरोधपरिहारंवक्तुमुपक्रमते ॥ एतस्मिन्निति ॥ धर्मतःफलावश्यंभावस्वभावतःएकत्रखेतत्तच्चित्तावच्छिन्नाकाशे ॥ १० ॥

तानिकर्माणिअधिष्ठातारस्तत्तत्फलप्रदादेवास्तद्रूपाणिभूत्वापेटकंस्वस्वानुकूलसमूहघटिनंसंपुटंपृथक्पृथक्करिष्यंति ॥ एवंसंपुटीभूतावराःशापाश्चपृथक्पृथक्शरीराणिकरिष्यंति ॥ ११ ॥ तेषांवेषभेदमाह ॥ वराइति ॥ गमिष्यंतिप्राप्स्यंति ॥१२॥ दुर्वाससोरुद्रांशत्वेनतदीयत्वाद्दुष्कर्मफलदानोन्मुखत्वेनघोररूपत्वाच्चत्रिनेत्राःशूलपाणयः ॥१३॥ ऋतूनांवसंतादीनामिव ॥१४॥१५॥ तत्रवरामूलाधिक्यात्स्वाधिक्यंदर्शयंति ॥ भवंतइति ॥ यतोभगवंतस्तुर्थंमुनिभ्यःपुराधाताअसृजदितिशेषः ॥१६॥१७॥ इत्युक्त्वाप्रोद्यना

कर्माणितान्यधिष्ठात्द्देवरूपाणिपेटकम् ॥ वरशापशरीराणिकरिष्यंतिपृथक्पृथक् ॥ ११ ॥ वरास्तेत्रगमिष्यंतिसुभगाःपद्मपाणयः ॥ ब्रह्मदंडायुधाश्चंद्रधवलांगाश्चतुर्भुजाः ॥ १२ ॥ शापास्तत्रभविष्यंतित्रिनेत्राःशूलपाणयः ॥ भीषणाःकृष्णमेघाभाद्विभुजाभ्रुकुटीमुखाः ॥ १३ ॥ ॥ वरावदिष्यंति ॥ ॥ सुदूरंगम्यतांशापाःकालोस्माकमुपागतः ॥ ऋतूनामिवतन्नामकःसमर्थोतिवर्त्तितुम् ॥ १४ ॥ शापावदिष्यंति ॥ ॥ गम्यतांहिवरादूरंकालोस्माकमुपागतः ॥ ऋतूनामिवतन्नामकःसमर्थोतिवर्त्तितुम् ॥ १५ ॥ ॥ वरावदिष्यंति ॥ कृताभवंतोमुनिनावयंदिनकृताकृताः ॥ मुनीनांचाधिकोदेवोभगवंतंपुरायतः ॥ १६ ॥ प्रवदत्सुवरेष्वेवंशापाःक्रुद्धधियोवरान् ॥ विवस्वताकृतायूयंवयंरुद्रांशतःकृताः ॥ १७ ॥ देवानामधिकोरुद्रोरुद्रांशप्रभवोमुनिः ॥ इत्युक्त्वाप्रोद्यतातेषांचक्रुःशृंगाण्यगाइव ॥ १८ ॥ शापेपूद्यतशृंगेषुवराइदमरातिषु ॥ विहसंतःप्रवक्ष्यंतिप्रमेयीकृतनिश्चयम् ॥ १९ ॥ हेशापाःपापतांत्यक्त्वाकार्यस्यांतोविचार्यताम् ॥ यत्कार्यं कलहस्यांतेतदेवादौविचार्यताम् ॥ २० ॥ पितामहपुरींगत्वाकलहांतेविनिर्णयः ॥ कर्तव्योस्माभिरेतत्किमादौनेहविधीयते ॥ २१ ॥ शापैर्वरोक्तमाकर्ण्यवाढमित्युररीकृतम् ॥ कोनगृह्णातिमूढोपिवाक्यंयुक्तिसमन्वितम् ॥ २२ ॥ ततःशापावरैःसार्द्धंयास्यंतिब्रह्मणःपुरम् ॥ महानुभावाहिगतिःसदासंदेहनाशने ॥ २३ ॥ प्रणामपूर्वंतत्सर्वंयथावृत्तंपरस्परम् ॥ ब्रह्मणेकथयिष्यंतिश्रुत्वातेपांसवक्ष्यति ॥ २४ ॥ ब्रह्मोवाच ॥ ॥ वरशापाधिपाभोभोयेंतःसाराजयंतिते ॥ केंतःसाराइतिमिथोनूनमन्विष्यतांस्वयम् ॥ २५ ॥ इतिश्रुत्वाप्रविष्टास्तेसारतांसमवेक्षितुम् ॥ वराणांहृदयंशापाःशापानांहृदयंवराः ॥ २६ ॥

प्रोद्यतानि ॥ सुपांसुलुगितिनिच्छांदसोडादेशस्तातापिडानामितिवत् ॥ शृंगाणित्रिशूलाग्राणि ॥ १८ ॥ अंतःप्रमाणपूर्वकसम्यग्विचारेणप्रमेयीकृतस्याध्यवसितस्वार्थस्यनिश्चयम् ॥ १९ ॥ पापतामनुचितकारिताम् ॥ तदेवादौकर्त्तव्यमितिशेषः ॥ २० ॥ २१ ॥ २२ ॥ गतिःशरणम् ॥ २३ ॥ २४ ॥ शास्त्रानुसारदृढाभ्यासोभयकृतंयदाकोरसंविद्दार्ढ्यंतेअंतःसारास्तेजयंति ॥ अन्विष्यतांपर्यालोच्यनाम ॥ २५ ॥ उदरंप्रविष्टाइतिकल्पनोक्तिः ॥ परस्परांतःपर्यालोचितवंतइतियावत् ॥ २६ ॥

१ पूर्वप्रक्रमानुरोधेनब्रह्मावदिष्यतीत्यपेक्षितंएवमुत्तरत्रापीतिभाति

२ येषामाकारदार्ढ्यं

समवायेनपरस्परैकमत्यलक्षणेनमिलनेन ॥ २७ ॥ २८ ॥ तत्रसंविदोदृढाभ्यासेनयदाकारदार्ढ्येनपांप्राबल्यमितिवक्तुंमूलसंविदंदर्शयंति ॥ वयंकिलेति ॥ देहःस्वरूपम् ॥ २९ ॥ तदेवोपपादयंति ॥ वरदस्येत्यादिना ॥ ३० ॥ वरस्यहिफलंसुखभोगायतनंदेहंतच्चविज्ञप्तिमात्रस्यकलनात्मकंकचनम् ॥ ततःसंवविज्ञप्तिर्देहाकाराभूत्वादेशकालादिकल्पनाशतभ्रमैस्तत्तद्भोग्यार्थान्पश्यतिअनुभवतितच्चादनीयमत्ति ॥ ३१ ॥ तत्रशास्त्रीयतपःकालिकदृढसंकल्पवशीकृताद्वरदात्संविदात्मनोगृहीतत्वाद्वरकल्पनाचित्कालांतरेफलावस्थायांसम्यक्भूतापुष्टायदातदासैवांतःसारा ॥ ३२ ॥ ३३ ॥ तत्कृतस्तत्राह ॥ यदेवेति ॥ ३४ ॥ तत्रापिशास्त्रीयत्वेनशुद्धत्वेप्राबल्याधिक्यमित्याहुः ॥ शुद्धानामिति ॥ संविदामितिनिर्धारणेषष्ठी ॥ अतःफलेपिसाम्यंनविद्यते ॥ ३५ ॥ ज्येष्ठत्वादपिवरसंविदःप्राबल्यमस्तीत्याहुः ॥ क्षणांशेनापीति ॥ ज्येष्ठस्यासंजातविरोधित्वेनसम्यङ्निरूढत्वादितिभावः ॥ अप्रमाणजस्यहिज्येष्ठत्वंबाध्यत्वेतंत्रम् यथारजतभ्रमस्यप्रमाणदृढीकृतेतत्वर्थेअनपेक्षितस्यज्ञानस्यज्येष्ठत्वंबाध्यत्वेतंत्रमितिप्रसिद्धम् ॥ न्यायांतरंनकिंचिन्मदंशा

तेपरस्परमन्विष्यस्वयंहृदयसारताम् ॥ ज्ञात्वाचसमवायेनप्रवक्ष्यंतिपितामहम् ॥ २७ ॥ ॥शापावक्ष्यंति ॥ ॥ जिताःप्रजानाथवयं नांतःसारावयंयतः ॥ अंतःसारावराएववज्रस्तंभाइवाचलाः ॥ २८ ॥ वयंकिलमेभगवन्वराःशापाश्चसर्वदा ॥ ननुसंविन्मयाएवदेहोन्योस्माकमस्तिनो ॥ २९ ॥ वरदस्यहियासंविद्वरोदत्तइतिस्थिता ॥ सैवार्थिनिमयालब्धोवरोयमितितिष्ठति ॥ ३० ॥ विज्ञप्तिमात्रकचनंदेहंसैवफलंततः ॥ पश्यत्यनुभवत्यत्तिदेशकालशतभ्रमैः ॥ ३१ ॥ वरदात्मागृहीतत्वाच्चित्कालांतरसंभृता ॥ यदातदांतःसारासौदुर्जयानतुशापजा ॥ ३२ ॥ वरप्रदानंवरदैर्वरदानांवरार्थिभिः ॥ यदासुचिरमभ्यस्तंवराणांसारतातदा ॥ ३३ ॥ यदेवसुचिरंसंविदभ्यस्यतितदेवसा ॥ सारमेवाशुभवतिभवत्याशुचतन्मयी ॥ ३४ ॥ शुद्धानामतिशुद्धैवसंविज्जयतिसंविदाम् ॥ अशुद्धानांत्वशुद्धैवकालात्साम्यंनविद्यते ॥ ३५ ॥ क्षणांशेनापियोज्येष्ठोन्यायस्तेनावपूर्यते ॥ नार्थेन्यायांतरंकिंचित्कर्तुमुत्सहतेमदम् ॥ ३६ ॥ समेनोभयकोटिस्थंमिश्रंवस्तुभवेत्समम् ॥ वरशापविलासेनक्षीरमिश्रंयथापयः ॥ ३७ ॥ समाभ्यांवरशापाभ्यामथवाचिद्द्विरूपताम् ॥ स्वयमेवानुभवतिस्वप्नेष्विवपुरात्मिका ॥ ३८ ॥ शिक्षितंत्वत्तएवेतियत्तद्देवतवप्रभो ॥ पुनःप्रतीपंपठितंशीघ्रंयामोनमोस्तुते ॥ ३९ ॥ इत्युक्त्वासस्वयंशापःक्वापिशापगणोययौ ॥ प्रशांतेतिमिरेदृष्टेव्योम्निकेशोंड्रकंयथा ॥ ४० ॥

समेनेति ॥ शुभाशुभोभयकोटिपक्षप्राबल्यंकर्तुमुत्सहतेइत्यर्थः ॥ ३६ ॥ अतएवयत्रविरुद्धकर्मणोर्वरशापयोर्वाप्रमाणाभ्यासादिसाम्यंतत्रोभयमिश्रमेवफलंभवतीत्याह ॥ समेनेति ॥ शुभाशुभोभयकोटि पक्षप्राबल्यंकर्तुमुत्सहतेइत्यर्थः ॥ ३६ ॥ अतएवयत्रविरुद्धकर्मणोर्वरशापयोर्वाप्रमाणाभ्यासादिसाम्यंतत्रोभयमिश्रमेवफलंभवतीत्याह ॥ यत्रैककालेभिन्नदेशभोग्यौसमौवरशापौतत्रविपश्चिदुपाख्यानोक्तन्यायेनोपाधिविभागेनैकैवजीवचिद्युगपद्देहभेदेनद्विरूपतामापद्यतइत्यम ॥ यथामनुष्यदेहः ॥ ३७ ॥ यत्रैककालेभिन्नदेशभोग्यौसमौवरशापौतत्रविपश्चिदुपाख्यानोक्तन्यायेनोपाधिविभागेनैकैवजीवचिद्युगपद्देहभेदेनद्विरूपतामापद्यतइत्याह ॥ समाभ्यामिति ॥ यथास्वप्नेषुपुरात्मिकाचित्पुरवासिजनदेहभेदेनविभागमिवापद्यतेतद्वत् ॥ ३८ ॥ धातुःपुरतःस्वेपांतत्त्वोद्गारधार्ष्ट्यमनुचितमनुचित्याहुः ॥ शिक्षितमिति ॥ यत्त्वत्तएवशिक्षितंतत्तवैवपुरःपुनःपठितंधार्ष्ट्यावहत्वात्प्रतीपंप्रतिकूलमितिनोधार्ष्ट्यापराधंक्षमस्व अतस्तेनमोस्तु वयंशीघ्रंस्वस्थानंयामः ॥ ३९ ॥ स्वयमेवस्वंयथाभ्यासकारिणंस्वमौर्ख्यव्यापकंलज्जयाशपतीतिस्वयंशापस्तथाविधःसन्क्वापिययौ ॥ यथादृष्टेस्तिमिररोगेप्रशांतेसतिव्योम्निभ्रांतिकृतंकेशोंड्रकंक्वापियातितद्वत् ॥ ४० ॥

एवंदुर्वासःशापेषुगतेषुअथअन्यःसप्तद्वीपाधिपत्यविरुद्धस्तेषांगृहान्निर्गमस्यरोधकःअन्यस्तद्भार्याभ्योदत्तोगौरीवरपूगोवैयाकरणप्रक्रियायामादेशःस्थानिस्थानमिवसूर्यवरैः सहविवादार्थंशापस्थानमभ्यपूरयत् ॥ यतःसोपिसमानःअर्थस्तुल्यकालंविरुद्धंफलंयस्यतथाविधः ॥४१॥ शापस्थानेनिविष्टाःशापस्थानकाःपत्नीवराब्रह्माणंप्रतिवदिष्यंति ॥ किंतदाह ॥ सप्तद्वीपेशेति ॥ हेदेवेशभाविसप्तद्वीपेशत्वेनाभिमतानामेतेषांजीवानांशवसद्मनोबहिर्निर्याणंवयंनविद्मः ॥ अस्माभिस्तन्निरोधादित्यर्थः ॥ अंधकूपाच्छून्यकूपात् ॥ ४२ ॥ ४३ ॥ नःशिवायसफलत्वाययदादेश्यंतदादिशआज्ञापयेत्यर्थः ॥ ४४ ॥ भवतांसर्वेषांकामःसंपन्नएव ॥ ४५ ॥ कथंसंपन्नस्तत्राह ॥ व्रजतेति ॥ यूयमेतत्परस्परापे

अथान्योवरपूगोत्रगृहनिर्गमरोधकः॥ स्थानिस्थानमिवादेशःसमानार्थोभ्यपूरयत्॥ ४१॥ ॥शापस्थानकावदिष्यंति॥ ॥सप्तद्वीपेशजीवानांनिर्याणंशवसद्मनः॥ देवेशविद्मोनवयमंधकूपादिवांभसाम्॥ ४२॥ सप्तद्वीपेश्वरानेतानिमेद्वीपेषुसद्मसु॥ कारयंतिवरावर्यावीरादिग्विजयंरणे॥४३॥तदेवमनिवार्येस्मिन्विरोधेविबुधेश्वर॥ यदनुष्ठेयमस्माभिस्तदादिशशिवायनः॥४४॥ ॥ब्रह्मोवाच ॥ व्रजतैतदपेक्षत्वंयावन्नेष्टावपिक्षणात्॥ चिरंचिरायसप्तद्वीपेश्वरवरागृहरोधवराश्वहे ॥ कामःसंपन्नएवेहभवतांभवतामपि॥ ४५॥ सर्वेवरावदिष्यंति॥ ॥सप्तद्वीपेश्वराःसर्वेसंपन्नाःपरमंवराः॥ ४७॥ सदनेसप्तद्वीपेश्वराःस्थिताः ॥ ४६ ॥ समनंतरमेवैतेदेहपातात्स्वसद्मसु॥ कुतोभूमंडलान्यष्टौसप्तद्वीपानिभूतयः॥ एकमेवेहभूपीठंश्रुतंदृष्टंचनेतरत्॥४८॥ कथंचैतानितिष्ठंतिकस्मिंश्चिद्गृहकोशके॥ पद्माक्षकोशकेसूक्ष्मेकथंमांतिमतंगजाः॥ ४९॥ ॥ब्रह्मोवाच॥ ॥ युक्तंयुष्माभिरस्माभिःसर्वंव्योमात्मकंजगत्॥ स्थितंचित्परमाण्वंतरंतःस्वप्नोनुभूयते॥ ५०॥ मातियत्परमस्याणोरंतस्थस्वगृहोदरे॥ स्फुरितंतत्किमाश्चर्यंकःस्मयःप्रकृतेःक्रमे ॥ ५१॥ मृतेरनंतरंभातियथास्थितमिदंजगत्॥ शून्यात्मैवघनाकारंतस्मिन्नेवक्षणेचितः॥ ५२॥ अणावपिजगन्मातियत्रतत्रगृहोदरे ॥ सप्तद्वीपावसुमतीकचतीतिकिमद्भुतम्॥ ५३॥

क्षत्वंव्रजत ॥ यावत्यतोभवतांचिरंनेष्टौपरस्परेच्छाविरहेपितेऽष्टौभ्रातरोमरणोत्तरक्षणादेवचिरायस्वसदनएवसप्तद्वीपेश्वराभूत्वास्थिताः ॥४६॥ तदेवस्पष्टमाह ॥ समनंतरमिति ॥ ४७ ॥ भूतयस्तत्तदैश्वर्याणिचकुतः ॥ श्रुतंश्रुतिपुप्रसिद्धंदृष्टंलोकेपिप्रसिद्धम् ॥ ४८ ॥ ४९ ॥ स्वप्नवदेवाविरुद्धमेतदित्युत्तरमाह ॥ युक्तमिति ॥ यतोयुष्माभिरस्माभिश्चव्यष्टिसमष्टिभिर्युक्तंसर्वंजगद्व्योमात्मकंसच्चित्परमाण्वंतःस्थितमंतःस्वप्नएवानुभूयतेअतस्तत्परमाणोरप्यंतस्थेस्वगृहोदरेभातीतिपरेणान्वयः ॥ ५०॥ तत्किमाश्चर्यमपूर्वम् ॥ कःस्मयोविस्मयः ॥ ५१ ॥ स्वप्नसाम्यमेवदर्शयन्नुक्तंस्फुटयति ॥ मृतेरित्यादिना ॥ ५२ ॥ ५३ ॥

यदिदंजगत्त्वंभातितत्त्वंचिदेव ॥ यतश्चिन्मात्रमेवतद्भातिअतोनकचिज्जगन्मूर्त्तमस्तियद्वहेनमायादित्यर्थः ॥५४॥ तान्प्राक्कल्पितानाधिभौतिकभ्रांतिमयान्देहकांस्तत्त्वविचारेणसंत्यज्यआतिवाहिकदेहिनःसंतःअजंप्रणम्यअविरोधात्समंसाकंतत्तन्मनःकल्पितेसप्तद्वीपेतत्तद्देवानांगृहकोशान्जग्मुरितिपरेणान्वयः ॥५५॥ ५६ ॥ यावदितिसाकल्ये ॥ तेऽष्टौभ्रातरस्तत्रगृहेइष्टैर्यज्ञादिसत्कर्मभिर्बंधुजनैश्चआपुष्टानांजगदष्टकभेदेनब्रह्म दिनाष्टकेआदिमहीभुजांस्वायंभुवमनूनांकुलेइतिशेषः ॥ सप्तद्वीपाधिनायकाःसंपन्नाइत्यर्थः

यद्भातीदंचचित्तत्त्वंजगत्त्वंनजगत्क्वचित् ॥ चिन्मात्रमेवतद्भातिशून्यत्वेनयथांबरम् ॥ ५४ ॥ इतितेब्रह्मणाप्रोक्तावरदेनवरास्ततः ॥ तानाधिभौतिकभ्रांतिमयान्संत्यज्यदेहकान् ॥ ५५ ॥ प्रणम्याजंसमंजग्मुरातिवाहिकदेहिनः ॥ सप्तद्वीपेचदेवानांगृहकोशान्कचज्जनात् ॥ ५६ ॥ यावत्तेतत्रसंपन्नाःसप्तद्वीपाधिनायकाः ॥ अष्टावपीष्टापुष्टानांदिनाष्टकमहीभुजाम् ॥ ५७ ॥ तेपरस्परमज्ञाताअज्ञाश्चान्योन्यबंधवः ॥ अन्योन्यभूमंडलगाअन्योन्याभिमतेहिताः ॥ ५८ ॥ तेषांकश्चिद्गृहस्यांतरेवतारुण्यसुंदरः ॥ उज्जयिन्यांमहापुर्यांराजधान्यांसुखेस्थितः ॥ ५९ ॥ शाकद्वीपास्पदःकश्चिन्नागलोकजिगीषया ॥ विचरत्यब्धिजठरेसर्वदिग्विजयोद्यतः ॥ ६० ॥ कुशद्वीपराजधान्यांनिराधिःसकलप्रजाः ॥ कृतदिग्विजयःकश्चित्सुप्तःकांतावलंबितः ॥ ६१ ॥ शाल्मलिद्वीपशैलेंद्रशिरःपुर्याःसरोवरे ॥ जललीलारतःकश्चित्सहविद्याधरीगणैः ॥ ६२ ॥ क्रौंचद्वीपेहेमपुरेसप्तद्वीपविवर्धिते ॥ प्रवृत्तोवाजिमेधेनकश्चिद्यष्टुंदिनाष्टकम् ॥ ६३ ॥ उद्यतःशाल्मलिद्वीपेकश्चिद्द्वीपांतचारिणा ॥ योद्धुमुद्धृतदिग्दंतिदंतारूढकुलाचलः ॥ ६४ ॥ गोमेदद्वीपकःकश्चित्पुष्करद्वीपराट्सुताम् ॥ समानेतुंवशाद्यातिकषत्सेनोष्टमोभवत् ॥ ६५ ॥ पुष्करद्वीपकःकश्चिल्लोकालोकाद्रिभूभुजः ॥ दूतेनसहनिर्यातोधनभूमिदिदृक्षया ॥ ६६ ॥ प्रत्येकमित्थमेतेषांद्वीपद्वीपाधिनाथताम् ॥ कुर्वतांस्वगृहाकाशेदृष्ट्वास्वप्रतिभोचिताम् ॥ ६७ ॥

॥ ५७ ॥ प्रत्येकंभ्रातृसहितत्वकल्पनादन्योन्यबंधवः ॥ राज्यभेदेनसर्वैषामाधिपत्यांशेत्वज्ञाः ॥ अतएवान्योन्याभिमतेहितानतुविरुद्धचेष्टाः ॥ ५८ ॥ तेषांप्रत्येकंचरित्रभेदकल्पनामाह ॥ तेषामित्यादिना ॥ ५९ ॥ ६० ॥ ६१ ॥ शैलेंद्रस्यशिरःशिखरंतद्गतायाःपुर्याःक्रीडासरोवरे ॥ ६२ ॥ सप्तद्वीपाद्धृतमहर्धिभिर्विवर्धिते ॥ ६३ ॥ द्वीपांतचारिणाराज्ञासहयोद्धुमुद्यतः ॥ उद्धृतैरुत्पाटितैर्दिग्दंतिदंतैरारूढाःकुलाचलावर्षपर्वतायेनतथाविधःसन् ॥ ६४ ॥ गोमेदद्वीपकस्तद्वसतिः ॥ समानेतुंजित्वापरिणेतुम् ॥ वशात्कामवशात् ॥ कषंतीशत्रुदेशान्बाधमानासेनायस्य ॥ यःप्रागुभ्रातॄणामष्टमोऽभवत्सः ॥ ६५ ॥ धनभूमिर्निधानस्थानंतद्दिदृक्षया ॥ ६६ ॥ ६७ ॥

त्यक्तःआभिमानिकाकारआतिवाहिकदेहाकारेपियैस्तथाविधाः संतस्तेषामष्टानांजीवसंविद्भिरेकतांयास्यंतीतिपरेणान्वयः ॥ ६८ ॥ तुष्टिमत्राज्यंप्राप्येत्यर्थः ॥ ६९ ॥ उक्तंसंगृह्योपसंहरति ॥ इतीति ॥ इतिउक्तप्रकारंसप्तद्वीपाधिपत्यंतपोभिःप्रविकसितःपूर्वोदितवरःक्रियार्थोयेषांतथाविधाएतेष्टौभ्रातरःप्राप्स्यंति ॥ विदःप्रत्यक्चैतन्यस्यअंतर्दृढनिश्चयात्मनायत्स्फुरतितदेवबाह्येतदुचिततपोजपादिकर्मभिःकैर्नाम्नम् ॥ किलेतिप्रसिद्धौ ॥ ७० ॥ ॥ इति०वासिष्ठम०ता०प्र०नि०उ०त्र्यशीत्युत्तरशततमःसर्गः ॥१८३॥ गृहस्यांतर्जगंत्यष्टौसंभवंत्यपिकोटिशः ॥ यतोऽप्रबुद्धचिन्मात्रंतथाभातीतिवर्ण्यते॥ १॥गृहेषुअल्पावकाशेताःप्रत्येकंपंचाशत्कोटियोजनविस्तीर्णाभुवःकथंभाताइतिमयापृष्टो

त्यक्ताभिमानिकाकाराद्द्विविधास्तेवरास्ततः॥ तत्संविद्भिर्गृहेष्वंतरेकतांखानिखैरिव॥ ६८॥ यास्यंतितेभविष्यंतिसंप्राप्ताभिमताश्चिरम्॥ सप्तद्वीपेश्वरास्तुंष्टानन्वष्टावपितुष्टिमत्॥ ६९॥ इत्येतेप्रविकसितोदितक्रियार्थाःप्राप्स्यंतिप्रविततबुद्धयस्तपोभिः॥ अंतर्यत्स्फुरतिविदस्तदेवबाह्येनाम्नकैस्तदुचितकर्मभिःकिलेति॥ ७०॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०अ०ताप०द्वीपसप्तकाष्टकवर्णनंनामत्र्यशीत्युत्तरशततमःसर्गः॥ १८३॥ ॥ ७५॥ ॥कुंददंतउवाच॥ ॥इत्युक्तवानसौपृष्टःकदंबतलतापसः॥ सप्तद्वीपाभुवोष्टौताःकथंभातागृहेष्विति॥ १॥ ॥कदंबतापसउवाच॥ ॥चिद्धातुरीदृगेवायंयदेषव्योमरूप्यपि॥ सर्वगोयत्रयत्रास्तेतत्रतत्रात्मनिस्वयम्॥ २॥ आत्मानमित्थंत्रैलोक्यरूपेणान्येनवानिजम्॥ परिपश्यतिरूपंस्वमत्यजन्नेवखात्मकम्॥ ३॥ ॥कुंददंतउवाच॥ ॥एकस्मिन्विमलेशांतेशिवेपरमकारणे॥कथंस्वभावसंसिद्धानानातावास्तवीस्थिता॥४॥ ॥कदंबतापसउवाच॥ ॥सर्वंशांतंचिदाकाशंनानास्तीहनकिंचन॥ दृश्यमानमपिस्फारमावर्त्तात्मायथांभसि॥ ५॥ असत्स्वेपुपदार्थेषुपदार्थाइतिभ्रांतियत्॥ चित्त्वंस्वप्नसुषुप्तात्मतत्त्स्याच्छंनिजंवपुः॥ ६॥ सस्पंदोपिहिनिःस्पंदःपर्वतोपिनपर्वतः॥ यथास्वप्नेपुचिद्भावःस्वभावोर्थगतस्तथा॥ ७॥ नस्वभावानचैवार्थाःसंतिसर्वात्मकोचिते॥ सर्गादौकचितंरूपंयद्यथातत्तथास्थितम्॥ ८॥ नचनामपरंरूपंकचनाकचनात्मकम्॥ द्रव्यात्माचिच्चचिद्व्योमस्थितमित्थंहिकेवलम्॥ ९॥

ऽसौकदंबतलतापसइतिवक्ष्यमाणमुत्तरमुक्तवान् ॥ १ ॥ व्योमरूपीप्रपंचशून्योपिआत्मानंत्रैलोक्यरूपेणअन्येनसुषुप्ततुर्यरूपेणवास्वंरूपमत्यजदेवपरिपश्यतीतिद्वयोरन्वयः ॥ २ ॥ ३ ॥ एकत्रनानाताविरुद्धेतिशंकार्थः ॥ ४ ॥ नवास्तवीयंनानाताकिंतुभ्रांतिकृता ॥ साचैकस्मिन्नपिचंद्रेद्वित्ववदविरुद्धेत्याशयेनोत्तरमाह ॥ सर्वमिति ॥ ५॥ स्वप्नसुषुप्तवद्भिस्तनयथार्थस्वभावात्मनिजमज्ञातंवपुःस्वरूपमेव ॥ ६ ॥ अतोनविरोधइतिदर्शयति ॥ सस्पंदइति ॥ स्वभावःसन्मात्रात्माकल्पितार्थगतोपितथैवबोध्यइत्यर्थः ॥ ७ ॥ सर्वात्मकस्यउचितेवास्तवेरूपेणसर्गादिस्वभावानापितत्कृताअर्थाः ॥ ८ ॥ नचद्रव्यात्मनाप्यचिच्च ॥ ९ ॥

॥ १० ॥ ११ ॥ स्वप्नेअसत्यपिवह्नौस्वप्नचिदेवयथाउष्णत्वंभासते ॥ १२ ॥ १३ ॥ कथंतर्ह्यर्थक्रियानियतिस्तत्राह ॥ आदिसर्गेइति ॥ १४ ॥ तथाअपरंजगत् ॥ १५ ॥ सर्गसंविदःसर्गप्रतिभासाः ॥ १६ ॥ १७ ॥ १८ ॥ कथमेकंतत्राह ॥ संकल्पस्येति ॥ १९ ॥ सर्वशब्दानांतन्मात्रनिष्ठत्वान्नन्निवर्त्ततएववा ॥२०॥ सदेवासदाभासम् ॥ तदेजतितन्नैजतीत्यादिश्रुतेरितिभावः ॥ २१ ॥ प्रवृत्तिःसर्गः ॥ निवृत्तिःप्रलयः ॥ २२ ॥ २३ ॥ मूलकाबीजभूताःप्रलयाःसर्गकाश्च ॥ २४ ॥ कथंभातितदाह ॥ द्रव्येइति ॥ यद्यथाद

एकैवचिद्यथास्वप्नेसेनायांजनलक्षताम् ॥ गतेवाच्छैवकचतितथैवास्याःपदार्थता ॥ १० ॥ यत्स्वतःस्वात्मनिस्वच्छेचित्त्वंकचकचायते ॥ तत्तेनैवतदाकारंजगदित्यनुभूयते ॥ ११ ॥ असत्यपियथावह्नावुष्णसंविद्विभासते ॥ संविन्मात्रात्मकेव्योम्नितथार्थःस्वस्वभासकः ॥ १२ ॥ असत्यपियथास्तंभेस्वप्नेखेस्तंभताविदः ॥ तथेदमस्यानानात्वमनन्यदपिचान्यवत् ॥ १३ ॥ आदिसर्गेपदार्थत्वंतत्स्वभावाद्धमेवच ॥ चिद्व्योम्नायद्यथाबुद्धंतत्तथाद्यापिविंदति ॥ १४ ॥ पुष्पपत्रेफलेस्तंभेतरुरेवयथाततः ॥ सर्वंसर्वत्रसर्वात्मपरमेवतथाऽपरम् ॥ १५ ॥ परमार्थांबरांभोधावापःसर्गपरंपरा ॥ परमार्थमहाकाशेशून्यतासर्गसंविदः ॥ १६ ॥ परमार्थश्चसर्गश्चपर्यायौतरुवृक्षवत् ॥ बोधादेतदबोधात्तुद्वैतंदुःखायकेवलम् ॥ १७ ॥ परमार्थोजगच्चेदमेकमित्येवनिश्चयः ॥ अध्यात्मशास्त्रबोधेनभवेत्सैषाहिमुक्तता ॥ १८ ॥ संकल्पस्यवपुर्ब्रह्मसंकल्पकचिदाकृतेः ॥ तदेवजगतोरूपंतस्माद्ब्रह्मात्मकंजगत् ॥ १९ ॥ यतोवाचोनिवर्त्तंतेननिवर्त्ततएववा ॥ विधयःप्रतिषेधाश्चभावाभावदृशस्तथा ॥ २० ॥ अमौनमौनंजीवात्मयत्पाषाणवदासनम् ॥ यत्सदेवासदाभासंतद्ब्रह्माभिधमुच्यते ॥ २१ ॥ सर्वस्मिन्नेकमुघनेब्रह्मण्येवनिरामये ॥ काप्रवृत्तिर्निवृत्तिःकाभावाभावादिवस्तुनः ॥ २२ ॥ एकस्यामेवनिद्रायांसुषुप्तस्वप्नविभ्रमाः ॥ यदाभांत्यविचित्रायांचित्राइवनिरंतराः ॥ २३ ॥ एतस्यांचित्स्वसत्तायांतथामूलकसर्गकाः ॥ बहवोभांत्यचित्रायांचित्राइवनिरंतराः ॥ २४ ॥ द्रव्येद्रव्यांतरंश्लिष्टंयत्कार्यांतरमाक्षिपेत् ॥ तद्वदंतस्तथाभूतचित्सारंस्फुरणंमिथः ॥ २५ ॥ सर्वेपदार्थाश्चित्सारमात्रमप्रतिघाःसदा ॥ यथाभांतितथाभांतिचिन्मात्रैकात्मतावशात् ॥ २६ ॥

ध्यादिद्रव्येशर्करादिद्रव्यांतरंश्लिष्टंमिलितंसत्प्रत्येककार्यापेक्षयाकार्यांतरंरुचिपुष्टिपित्तोपशमादिकार्यांतरमाक्षिपेत्तथाभूतानांप्राणिनामंतःकरणेअभिव्यक्तंप्रमातृचित्सारंबाह्येचक्षुरादिद्वारानिर्गत्यघटाद्याकारवृत्तिश्लेषात्श्लिष्टंघटपटादितत्तद्विषयांतरधिष्ठानचिदावरणभंगेनमिथस्त्रिपुटीस्फुरणमाक्षिपेदित्यर्थः ॥ २५ ॥ अतएवघटाद्यर्थाअपिस्वाधिष्ठानचिदधीनसत्तास्फूर्तिकत्वात्तत्सारमात्रमित्याह ॥ सर्वेइति ॥ यथासर्गादौभांतितथाद्यइदानीमपिभांति ॥ २६ ॥

स्थितिरपितेषांयथासंवेदनमेव ॥ निस्पंदचिदधिष्ठानकत्वादेवसर्वाद्रव्यशक्तयोपिस्वाश्रयान्नचलंतिनक्षसंतिचेत्याह ॥ निःस्पंदाइति ॥ मनस्कारोमानसोद्वैताकारप्रहस्तद्रहिताः ॥ २७ ॥ इत्थंचजगत्प्रातिभासिकमेवप्रतिभासमात्राधीनसर्वस्वत्वादित्याशयेनाह ॥ अविद्यमानमेवेति ॥ २८ ॥ खलुयतःस्वप्नवदेवहर्षामर्षविषादोत्थाविचित्राःस्पंदरीतयो दृश्यंते ॥ २९ ॥ स्वभावःअज्ञातस्वरूपनिष्ठाविक्षेपशक्तिस्तन्मात्रेणवायुनाआधूतस्य जगज्जालाकाराचमत्कृतिर्यस्यतथाविधस्य चिल्लक्षणसत्वगुणात्मनाप्रकाशेनमरीचेः रजोगुणात्मनापांसुपटलस्य तमोगुणात्मनाआवरणजाड्यप्राधान्येनअभ्रनीहारस्वरूपनप्रसिविसारितावि स्तारशालिता ॥ हाइतिखेदे ॥ कीदृशजननमरणाद्यनर्थसहस्रको

चिन्मात्रैकात्मसारत्वाद्यथासंवेदनंस्थिताः॥ निःस्पंदानिर्मनस्काराःस्फुरंतिद्रव्यशक्तयः॥ २७॥ अविद्यमानमेवेदंदृश्यतेथानुभूयते॥ जगत्स्वप्नइवाशेषंसरुद्रोपेंद्रपद्मजम्॥ २८॥ विचित्राःखलुदृश्यंतेचिज्जलेस्पंदरीतयः॥ हर्षामर्षविषादोत्थजंगमस्थावरात्मनि॥ २९॥ स्वभाववाताधूतस्यजगज्जालचमत्कृतेः॥ हाचिन्मरीचिपांश्वभ्रनीहारस्यविसारिता ॥ ३० ॥ यथाकेशोंड्रकंव्योम्निभातिव्यामलचक्षुषः॥ तथैवेयंजगद्भ्रांतिर्भात्यनात्मविदोंवरे॥३१॥यावत्संकल्पितंतावद्यथासंकल्पितंतथा॥ यथासंकल्पनगरंकचतीदंजगत्तथा॥३२॥ संकल्पनगरेयावत्संकल्पसकलास्थितिः ॥ भवत्येवाप्यसद्रूपासतीवानुभवेस्थिता ॥ ३३ ॥ प्रवहत्येवनियतिर्नियतार्थप्रदायिनी॥ स्थावरंजंगमंचैवतिष्ठत्येवयथाक्रमम् ॥ ३४ ॥ जायतेजंगमंजीवात्स्थावरंस्थावरादपि ॥ नियत्याधोवहत्यंबुगच्छत्यूर्ध्वमथानलः ॥ ३५॥ वहंतिदेहयंत्राणिज्योतींपिप्रतपंतिच॥ वायवोनित्यगतयःस्थिताःशैलादयःस्थिराः॥ ३६॥ ज्योतिर्मयंविवृत्तंतुधारासारांवरीकृतम्॥ युगसंवत्सराद्यात्मकालचक्रंप्रवर्त्तते ॥ ३७ ॥ भूतलैकांतराब्ध्यद्रिसंनिवेशःस्थितायते॥ भावाभावग्रहोत्सर्गद्रव्यशक्तिश्च तिष्ठति॥ ३८॥

ट्यात्मनासंपन्नेत्यर्थः ॥ पांसुरेवपांशुः ॥ तालव्याअपिदंत्याश्चशंवशूकरपांशवइतिकोशप्रसिद्धेः ॥ ३० ॥ अनात्मविदःअज्ञानावृतचिद्दृष्टेः ॥ अंबरेस्वात्माकाशे ॥ ३१ ॥ तस्याश्चकालप्रकारव्यवस्थासंकल्पानुसारेणैवेत्याह ॥ यावदिति ॥ यथायेनयेनप्रकारेण ॥ ३२ ॥ दृष्टांतेतांप्रकटयति ॥ संकल्पनगरेइति ॥ असद्रूपापिसतीवस्थिता ॥३३ ॥ सैवधातुःसंकल्परूपानियतिरद्यापिप्रवहत्यग्रेपिप्रवहत्येवतयैवस्थावरादिप्राणिजातंयथाक्रमंनियतमेवतिष्ठति ॥ ३४ ॥ तेषांजन्मकर्मस्वभावादिव्यवस्थापितयैवेत्याह ॥ जायतेइति ॥ जीवात्स्फुटजीवनाज्जंगमात् ॥ ३५ ॥ ३६ ॥ ज्योतिर्मयंकालचक्रंदक्षिणायनात्मनाविवृत्तंवर्पर्त्तौधारासारव्याप्तांबरीकृतम् ॥ तयैवनियत्या ॥ ३७ ॥ भूतलेचद्वीपभेदैरेकांतराणामब्धीनामद्रीणांचसंनिवेशःस्थितवदाचरतिस्थितायते ॥ ३८ ॥

१ प्रसरेत्यपिक्वचित्पाठः

नन्वस्मदादिसर्वजनव्यवहारोधातृसंकल्परूपनियत्याव्यवस्थितोस्तु धातुःसंकल्पव्यवस्थैवतुपूर्वानुभवजन्यसंस्कारातिरिक्तहेत्वसंभवादादिसर्गेचपूर्वानुभवाप्रसिद्धेःकथंसिध्य
तीतिकुंददंतःशंकते ॥ प्राग्दृष्टमिति ॥ तत्ततस्तदनुसारिस्वसंकल्पनानिभवंति ॥ अतएभ्यःस्वसंकल्पनेभ्योनियतःसर्गोभाति ॥ इदंतुद्वितीयादिकल्पसर्गेउपपद्यते ॥ प्रथमसर्गेतु
कस्यप्राक्सर्गभासनंप्रसिद्धम् यंपृच्छेत्स्वयंवास्मरेदित्यर्थः ॥ ३९ ॥ नस्मरणाधीनोधातुःसंकल्पःकिंतुदिव्यज्ञानेनातीतानागतसर्ववस्तुदर्शनाधीनः ॥ सऐक्षतलोकान्नुसृजाइ
ति सइमाँल्लोकानसृजतेत्यादिश्रुतेः ॥ तस्मिंश्चक्षणेसर्वमतीतानागतंजगदपूर्वमेवदृश्यतेदृष्टानुसारिणीचचिद्विवर्तरूपासांकल्पिकीसृष्टिःप्रवर्त्तते ॥ तत्रैवेदंमयाप्राग्दृष्टमित्यप्य
ध्यस्यतेक्वचिदितितापसःसमाधत्ते ॥ अपूर्वमित्यादिना ॥ ४० ॥ यतःकदाचिद्भातंकदाचिदभातम् ॥ ४१ ॥ दर्शनासामर्थ्येहिस्मृतःकल्प्येत स्वमेकल्पनामात्रेणदर्शनसमर्था

कुंददंतउवाच ॥ ॥ प्राग्दृष्टंस्मृतिमायातितत्स्वसंकल्पनान्यतः ॥ भातिप्रथमसर्गेतुकस्यप्राग्दृष्टभासनम् ॥ ३९ ॥ ॥ तापसउवाच ॥ अपूर्वंदृश्यतेसर्वंस्वप्नेस्वमरणंयथा ॥ प्राग्दृष्टंदृष्टमित्येवतत्रैवाभ्यासतःस्मृतिः ॥ ४० ॥ चित्त्वाच्चिद्व्योम्निकचतिजगत्संकल्पपत्तनम् ॥ नसन्नासदिदंतस्माद्भाताभातंयतःस्वतः ॥ ४१ ॥ चित्प्रसादेनसंकल्पस्वप्नाद्यद्यानुभूयते ॥ शुद्धंचिद्व्योमसंकल्पपुरंमास्मर्यतांकथम् ॥ ४२ ॥ चिद्व्योमात्म हर्षामर्षविनिर्मुक्तंदुःखेनचसुखेनच ॥ प्रकृतेनैवमार्गेणज्ञैश्चक्रैरिवगम्यते ॥ ४३ ॥ निद्राव्यपगमेस्वप्ननगरंयादृशंस्मृतौ ॥ चिद्व्योमात्म परंविद्धितादृशंत्रिजगद्भ्रमम् ॥ ४४ ॥ संविदाभासमात्रंयज्जगदित्यभिशब्दितम् ॥ तत्संविद्व्योमसंशांतंकेवलंविद्धिनेतरत् ॥ ४५ ॥ यस्मि न्सर्वंयतःसर्वंयत्सर्वंसर्वतश्चयत् ॥ सर्वंसर्वतयासर्वंतत्सर्वंसर्वदास्थितम् ॥ ४६ ॥ यथेयंसंस्थितिर्ब्राह्मीभवतोयद्भविष्यति ॥ यथाभा नंचदृश्यस्यतदेतत्कथितंमया ॥ ४७ ॥ उत्तिष्ठतंव्रजतमास्पदमङ्गिपद्मंभृंगाविवाभिमतमाशुविधीयतांस्वम् ॥ तिष्ठामिदुःखमलमत्तस माधिसंस्थंभूयःसमाधिमहमंगचिरंविशामि ॥ ४८ ॥ ॥ इ० वा० वा० दे० मो० नि० उ० व्र० ता० कुंददंतोपदेशोनामचतुरशीत्युत्तरश ततमःसर्गः ॥ १८४ ॥ ॥ ५ ॥ ॥ कुंददंतउवाच ॥ ॥ जरन्मुनिरपीत्युक्त्वाध्यानमीलितलोचनः ॥ आसीदस्पंदितप्राणम नाश्चित्रइवार्पितः ॥ १ ॥

याश्चितःस्मृतिकल्पनादर्शनादित्याह ॥ चित्प्रसादेनेति ॥ ४२ ॥ अतएवगुणदोषाद्यस्मरणाद्धर्षामर्षरहितैस्तत्त्वज्ञैःकुलालचक्रवत्प्रारब्धवेगेनैवभ्रम्यतइत्याह ॥ हर्षेति ॥ ४३ ॥
बाधितस्मृतिश्चनस्मृतिःकिंत्वधिष्ठानमात्रपरिशेषदर्शनमित्याह ॥ निद्रेति ॥ ४४ ॥ तत्संशांतंव्योमैवतादृशंत्वंविद्धि ॥ ४५ ॥ यतश्चिदेवसंशांतासर्वमित्याह ॥ यस्मिन्निति
॥ ४६ ॥ तदेतत्सर्वंमयाभवतःकथितमित्युपसंहारः ॥ ४७ ॥ अंगहेद्विजौयुवांउत्तिष्ठतंअङ्गिप्रातःपद्मंभृंगाविवआस्पदंगृहंव्रजतम् ॥ तत्राभिमतंसत्कर्मविधीयताम् ॥ अहमि
दानीमत्तसमाधिसंस्थमलमत्यंतंदुःखंयथास्यात्तथातिष्ठामि ॥ अतस्तत्परिहारायभूयःअलंसमाधिंविशामीत्यर्थः ॥ ४८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ०
चतुरशीत्युत्तरशततमःसर्गः ॥ १८४ ॥ ॥ ५ ॥ ॥ तयोर्गृहागमस्तत्रभ्रातॄणांक्रमशःक्षयः ॥ कुंददंतस्यरामास्यामोहोच्छित्तिश्चवर्ण्यते ॥ १ ॥ अस्पंदितप्राणमनसीयस्य ॥ १ ॥

प्रणयोदारैर्वाक्यैरावाभ्यांप्रार्थितोपिवचोनदत्तवान् ॥ यतोवासवस्त्युपरमात्संसारमविदन्ननुसंदधानइत्यर्थः ॥ २ ॥ मुनिवियोगादुत्सुकौ ॥ ३ ॥ तत्रगृहेकुलदेवताराधनमु वासिनीब्राह्मणभोजनाद्युत्सवंकृत्वा ॥ ४ ॥ प्रलयेपुप्रलयारंभेद्वादशादित्यतापात्समार्णवाइव ॥ ५ ॥ समस्तखः अष्टमोपि ॥ वैधुर्यंसखिजनवियोगम् ॥ ६ ॥ तत्प्राक्तेनोक्त

आवाभ्यांप्रणयोदारैःप्रार्थितोपिपुनःपुनः ॥ वाक्यैःसंसारमविदन्नवचोदत्तवान्पुनः ॥ २॥ आवांप्रदेशतस्तस्माच्चलित्वामंदमुत्सुकौ॥ दिनैःकतिपयैःप्राप्तौगृहंमुदितबांधवम् ॥ ३॥ अथतत्रोत्सवंकृत्वाकथाःप्रोच्यचिरंतनीः ॥ स्थितास्तावद्वयंयावत्समापिभ्रातरोथते॥ ४॥ क्रमेणविलयंप्राप्ताःप्रलयेप्वर्णवाइव ॥ मुक्तोसौमेसखैवैकएकार्णवइवाष्टकः ॥ ५ ॥ ततःकालेनसोप्यस्तंदिनांतेर्कइवागतः॥ अहंदुःखपरीतात्मापरंवैधुर्यमागतः ॥ ६ ॥ ततोहंदुःखितोभूयःकदंबतरुतापसम् ॥ गतोदुःखोपघातायतज्ज्ञानंप्रष्टुमादृतः ॥ ७॥ तत्रमासत्रयेणासौसमाधिविरतोभवत् ॥ प्रणतेनमयापृष्टःसन्निदंप्रोक्तवानथ ॥ ८ ॥ ॥ कदंबतापसउवाच ॥ ॥ अहंसमाधिविरतःस्यातुंशक्तोमिनक्षणम्॥समाधिमेवप्रविशाम्यहमाशुकृतत्वरः॥ ९॥परमार्थोपदेशस्तेनाभ्यासेनविनानघ॥ लगत्यत्रपरांयुक्तिमिमांशृणुततःकुरु ॥ १० ॥ अयोध्यानामपूरस्तितत्रास्तिवसुधाधिपः॥ नाम्नादशरथस्तस्यपुत्रोरामइतिश्रुतः ॥ ११ ॥ सकाशंतत्रगच्छत्वंतस्मैकुलगुरुःकिल ॥ वसिष्ठाख्योमुनिश्रेष्ठःकथयिष्यतिसंसदि ॥ १२ ॥ मोक्षोपायकथांदिव्यांतांश्रुत्वात्सुचिरंद्विज ॥ विश्रांतिमेष्यसिपरेपदेहमिवपावने ॥ १३ ॥ इत्युक्त्वाससमाधानरसायनमहार्णवम् ॥ विवेशाहमिमंदेशंत्वत्सकाशमुपागतः ॥ १४ ॥ एषोहमेतद्वृत्तंमेसर्वंकथितवानहम् ॥ यथावृत्तंयथादृष्टंयथाश्रुतमखंडितम् ॥ १५ ॥ ॥ श्रीरामउवाच ॥ ॥ सकुंददंतइत्यादिकथाकथनकोविदः ॥ स्थितस्ततःप्रभृत्येवमत्समीपगतःसदा ॥ १६ ॥ सएपकुंददंताख्योद्विजःपार्श्वेसमास्थितः ॥ श्रुतवान्संहितामेतांमोक्षोपायाभिधामिह ॥ १७ ॥ सएषकुंददंताख्योममपार्श्वगतोद्विजः ॥ अद्यनिःसंशयोजातोनवेतिपरिपृच्छ्यताम् ॥ १८ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इत्युक्तेराघवेणाथप्रोवाचवदतांवरः ॥ सवसिष्ठोमुनिश्रेष्ठःकुंददंतंविलोकयन् ॥ १९ ॥

मात्मज्ञानम् ॥ ७ ॥ ८ ॥ ९ ॥ इदानींमयाकृतोपितेनलगति ॥ परामन्यांयुक्तिंज्ञानप्राप्त्युपायम् ॥ १० ॥ ११ ॥ मोक्षोपायकथांकथयिष्यति ॥ १२ ॥ १३ ॥ त्वत्सकाशमितिरामंप्रत्युक्तिः ॥ १४ ॥ अखंडितमखिलम् ॥ १५ ॥ १६ ॥ इहअस्यांसभायाम् ॥ १७ ॥ एवंप्रश्नोपोद्घातमुपवर्ण्यप्रष्टव्यांशमाह ॥ सइति ॥ १८ ॥ १९ ॥

॥२०॥ सर्वसंदेहविच्छेदोजातइतिशेषः ॥ यतोऽवश्यज्ञेयमखंडितंप्रत्यग्भेदलक्षणखंडितशून्यंब्रह्मतत्त्वंज्ञातम् ॥ २१ ॥ ज्ञानमात्रेणमोहनिवृत्त्याज्ञातव्यांतरस्यद्रष्टव्यांतरस्यल
ब्धव्यांतरस्यचापरिशेषात्कृतकृत्यतामाह ॥ ज्ञातमिति ॥२२॥ त्वत्त्वत्तद्दयमात्मचिन्मयाबुद्धा ॥ कथंबुद्धातदाह ॥ इदंसर्वमित्यादि ॥ २३ ॥ २४ ॥ सिद्धार्थःश्वेतसर्षपस्त
दीयकणकोटरेपिअधिष्ठानचितःसर्वकल्पनाशक्तिसंभृतायाःसत्वात्तदंतर्मायादृशाजगंतिसंभवंति परमार्थदृशातुक्वापिनसंभवंतिच ॥ २५ ॥ २६ ॥ तत्रसमायंब्रह्मतत्त्वंनिष्क
प्योपसंहरति ॥ यद्यदिति ॥ सर्वंघनआत्मैवसर्वजनसार्वकालिकबोधविषयसर्वभावेनास्तेनाणुमात्रमपिततोन्यत्केनचित्कदाचिदप्यनुभूयतइतिनिष्कर्षइतिभावः ॥ २७ ॥

श्रीवसिष्ठउवाच॥ ॥कुंददंतद्विजवरकथ्यतांकिंत्वयानघ॥ बुद्धंश्रुतवताज्ञेयंमद्युक्तंमोक्षदंपरम्॥२०॥ ॥कुंददंतउवाच॥ ॥सर्वसं
शयविच्छेदिचेतएवजयायमे॥ सर्वसंशयविच्छेदोज्ञातंज्ञेयमखंडितम्॥२१॥ ज्ञातंज्ञातव्यममलंदृष्टंद्रष्टव्यमक्षतम्॥ प्राप्तंप्राप्तव्यम
खिलंविश्रांतोस्मिपरेपदे॥ २२॥ बुद्धेयंत्वदिदंसर्वंपरमार्थघनंघनम्॥ अनन्येनात्मनोव्योम्निजगद्रूपेणजृंभितम् ॥ २३ ॥ सर्वात्मक
तयासर्वरूपिणःसर्वगात्मनः॥ सर्वंसर्वेणसर्वत्रसर्वदासंभवत्यलम्॥ २४॥ संभवंतिजगंत्यंतःसिद्धार्थकणकोटरे॥ नसंभवंतिचयथा
ज्ञातमेतदशेषतः॥ २५॥ गृहेंतःसंभवत्येवसप्तद्वीपावसुंधरा॥ गेहंचशून्यमेवास्तेसत्यमेतदसंशयम्॥ २६॥ यद्यद्यदावस्तुयथोदिता
त्मभातीहभूतैरनुभूयतेच॥ तत्तत्तदासर्वंघनस्तथास्तेब्रह्मेत्यमाद्यंतविमुक्तमस्ति॥ २७॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०
उ०ब्र०ता०कुंददंतप्रबोधोनामपंचाशीत्युत्तरशततमःसर्गः॥१८५॥ ॥७॥ ॥श्रीवाल्मीकिरुवाच॥ ॥कुंददंतेवदत्येवंवसि
ष्ठोभगवान्मुनिः॥ उवाचेदमनिंद्यात्मापरमार्थोचितंवचः॥ १॥ ॥श्रीवसिष्ठउवाच॥ ॥बतविज्ञानविश्रांतिरस्यजातामहात्मनः॥
करामलकवद्विश्वंब्रह्मेतिपरिपश्यति॥ २॥ किलेदंभ्रांतिमात्रात्मविश्वंब्रह्मेतिभात्यजम्॥ भ्रांतिर्ब्रह्मैवचब्रह्मशांतमेकमनामयम्॥३॥
यद्यथायेनयत्रास्तियादृग्यावद्यदायतः॥ तत्तथातेनतत्रास्तितादृक्तावत्तदाततः॥४॥ शिवंशांतमजंमौनममौनमजरंततम्॥ सुशून्या
शून्यमभवमनादिनिधनंध्रुवम्॥५॥ यस्यायस्यास्त्ववस्थायाःक्रियतेसंविदाभरः॥ सासासहस्रशाखत्वमेतिसेकैर्यथालता॥६॥

॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेपंचाशीत्युत्तरशततमःसर्गः ॥ १८५ ॥ ॥ ७ ॥ ॥ सर्वब्रह्मेतिसिद्धांतोयुक्तिभिःक्रियतेऽचलः ॥ वरशापार्थ
सिद्धिश्चधातुःसंकल्पतश्चितः ॥ १ ॥ कुंददंतवर्णितंमायाशबलब्रह्मतत्त्वंप्रथमतोदृढीकृत्यनिर्मायंशुद्धंतद्वर्णयितुंश्रीवसिष्ठःप्रवृत्तइत्याह ॥ कुंददंतेइति ॥ १ ॥ बतेत्यनुकंपा
याम ॥ ज्ञातेतिपाठेज्ञातेनसाक्षात्कारज्ञानफलेनविज्ञानस्यशास्त्रश्रवणजन्यज्ञानस्यविश्रांतिःपूर्णता ॥ करामलकवदितितस्यैवस्फुटमभिनयः ॥ २ ॥ भ्रांतिरन्यथाप्रहस्तन्मा
त्रात्मकंविश्वंब्रह्मेत्यस्यभातियतोभ्रांतिरपिब्रह्मैवेत्यस्यभाति ॥ ३ ॥ शबलब्रह्मनिष्कर्षदृशानेनयद्वर्णितंतदपिसम्यगेवेत्याह ॥ यदिति ॥ ४ ॥ तच्चशुद्धाविरुद्धं मायायाविकारं
विनंववैचित्र्यप्रकटनादित्याशयेनाह ॥ शिवमिति ॥ ५ ॥ संविदामायाशबलचिता ॥ भरःसंकल्पातिशयः ॥ ६ ॥

ब्रह्मांडमेवपरोऽणुःपरमाणुः ॥ एवंपरमाणुरेवब्रह्मांडंयतोंतःस्थितजगत् ॥ ७ ॥ जगद्ब्रह्मैवचेद्यत्फलितंतदाह ॥ तस्मादिति ॥ असंगतोजातिःशरीरादिवैचित्र्यंतद्रूपोबंधोयस्यत थाविधःसन्यथास्थितंब्रह्मैवभूत्वातिष्ठ ॥ ८ ॥ व्यवहारेतुब्रह्मस्वयमेवदृश्यादिवेपेणसंस्थितम् परमार्थतस्तुतत्आत्मन्यद्वितीयस्वप्रकाशानंदैकरसात्मन्येवसंस्थितम् ॥ ९ ॥ यत्र यद्वासनयायथासंपद्यतेतच्चतथास्थितमित्यनुकर्षः ॥ १० ॥ ब्रह्ममाययादृश्यंजगत्संपन्नमित्येतावतांद्वैतंनकदाचिन्मंतव्यंयतोयथास्थितमविकृतमेवास्ते ॥ ११ ॥ १२ ॥ प्र तीयमानादेहाद्याकृतिःकथमपलप्यतेतत्राह ॥ यादृगिति ॥ १३ ॥ संविदोपिजडस्थावरभावेदृष्टांतमाह ॥ संविन्मयइति ॥ १४ ॥ तस्याःस्थावरभावोत्तरंजंगमभावेचिदभि

परोब्रह्मांडमेवाणुश्चिद्व्योम्नोंतःस्थितोयतः ॥ परमाणुरेवब्रह्मांडमंतःस्थितजगद्यतः ॥ ७ ॥ तस्माच्चिदाकाशमनादिमध्यमखंडितंसौम्यमिदंसमस्तम् ॥ निर्वाणमस्तंगतजातिबंधोयथास्थितंतिष्ठनिरामयात्मा ॥ ८ ॥ स्वयंदृश्यंस्वयंद्रष्टास्वयंचित्त्वंस्वयंजडम् ॥ स्वयंकिंचिन्नकिंचिच्चब्रह्मात्मन्येवसंस्थितम् ॥ ९ ॥ यथायत्रजगत्येतत्स्वयंब्रह्मखमात्मनि ॥ स्वरूपमजहच्छांतंयत्रसंपद्यतेतथा ॥ १० ॥ ब्रह्मदृश्यमितिद्वैतंनकदाचिद्यथास्थितम् ॥ एकत्वमेतयोर्विद्धिशून्यत्वाकाशयोरिव ॥ ११ ॥ दृश्यमेवपरंब्रह्मपरंब्रह्मैवदृश्यता ॥ एतन्नशांतंनाशांतंनानाकारंनचाकृतिः ॥ १२ ॥ यादृक्प्रबोधेस्वप्नादिस्तादृग्देहोनिराकृतिः ॥ संविन्मात्रात्माप्रतिघःस्वानुभूतोप्यसन्मयः ॥ १३ ॥ संविन्मयोयथाजंतुर्निद्रात्मास्तेजडोभवत् ॥ जडीभूतातथैषास्तेसंवित्स्थावरनामिका ॥ १४ ॥ स्थावरत्वाज्जडाच्चित्त्वंजंगमात्मप्रयातिचित् ॥ जीवःसुपुप्तात्मास्वप्नंजाग्रच्चैवजगच्छतैः ॥ १५ ॥ आमोक्षमेषाजीवस्यभुव्यंभस्यनिलेऽनले ॥ खेखात्मभिर्जगल्लक्षैःस्वप्नाभैर्भासतेस्थितिः ॥ १६ ॥ चिच्चिनोतितथाजाड्यंनरोनिद्रास्थितिर्यथा ॥ चिनोतिजडतांचित्त्वंननामजडतावशात् ॥ १७ ॥ चितावेदनवेत्तारंस्थावरंक्रियतेवपुः ॥ चितावेदनवेत्तारंजंगमंक्रियतेवपुः ॥ १८ ॥ यथापुंसोनखाःपादावेकमेवशरीरकम् ॥ तथैकमेवाप्रतिघंचितःस्थावरजंगमम् ॥ १९ ॥ आदिसर्गेस्वप्नइवयत्प्रथामागतंस्थितम् ॥ चितोरूपंजगदितितत्तथैवांतउच्यते ॥ २० ॥

व्यक्तौदृष्टांतमाह ॥ स्थावरत्वादिति ॥ यथासुपुप्तात्माजीवःस्वप्नंजाग्रच्चैवजगच्छतकल्पैर्गच्छतितद्वदित्यर्थः ॥ १५ ॥ कियत्कालंस्थावरजंगमादिभावस्थितिस्तत्राह ॥ आ मोक्षमिति ॥ १६ ॥ चिनोतिअध्यस्यति ॥ तथाप्यस्याश्चित्त्वमव्याहतमित्याह ॥ चिनोतीति ॥ अध्यस्तजडतावशाज्जडतांनचिनोतिवस्तुतोजडतांननामभजते ॥ १७ ॥ यथे जाड्यवेदनवेत्तारंजीवंप्रतिस्थावरंवपुःक्रियतेतथाजंगममपि ॥ १८ ॥ तथाकृतेपिनचिद्भेदःकिंतुमहाचितःस्वाध्यस्तंसर्वमचेतनंचेतनंचनखपादादिवदवयवभूतमेवेत्याह ॥ यथे ति ॥ १९ ॥ आदिसर्गेहिरण्यगर्भस्यप्राथमिकसर्गहेतौसंकल्पेयथायद्रूपंप्रथामागतंतत्तथैवाधुनापिस्थितम् ॥ एवंचिराज्जडरूपेणस्थितमपिचिन्मयत्वादप्रतिघंशांतमित्यादि तदपवादेनसर्गस्यांतउच्यतेइतिपरेणान्वयः ॥ २० ॥

यथास्वाप्नप्रपंचस्यसुपुप्ततादिप्रबोधांततापि ॥ अयमिति ॥ यथास्वाप्नप्रपंचस्यसुपुप्ततादिप्रबोधांततापि
यतोनासीदतःअप्रथितंकदापीत्येवहितम ॥ २१ ॥ एवंसर्गमात्रस्यत्रैकालिकासत्वेआद्यंतकल्पनापिमिथ्यैवेत्याह ॥ अयमिति ॥ यथास्वाप्नप्रपंचस्यसुपुप्ततादिप्रबोधांततापि ॥ २३ ॥ २४ ॥ यथाचित्रकृताक
निद्राकोष्ठांतरेवकल्प्यतेनप्रबोधकोष्ठांतस्तद्वदित्यर्थः ॥ २२ ॥ तत्कुतस्तत्राह ॥ स्थितइति ॥ सांप्रवृद्धंप्रतिनामापिनास्तिदूरेरूपमित्यर्थः ॥ २३ ॥ २४ ॥ यथाचित्रकृताक
र्त्तव्याचित्रसेनाअस्मात्तद्बुद्धिस्थाच्चित्रान्नभिद्यतेतथाप्रतिघामूर्त्तासर्गतापिस्रष्टुश्चित्तत्वेनानाप्यनानैव ॥ २५ ॥ विभागहीनयापिचिद्घननिद्रयाअविद्ययासुपुप्तादेवावरणाद्वा
स्लवस्वरूपभूतोपिमोक्षइतिप्रसिद्धोभागोमुच्यतेचोर्यतेअपलप्यते तुप्रत्युतचित्तकंभूत्वाएपजाग्रद्भागःस्वप्नश्चप्रदर्श्यतेइतिशेषः ॥ सुपुप्तात्सोद्यतेमोक्षइतिपाठेनुसोद्यतेश्रवणम
ननाद्युद्योगसहितेपुरुषेमोक्षइतिविभागःप्रदर्श्यतेअन्यस्मिंस्तुचित्तकंभूत्वाद्विविधःस्वप्नःप्रदर्श्यतइतिव्याख्येयम ॥ २६ ॥ घनोजागरःप्रज्ञानघनतारूपसुपुप्तिकस्यचित्सहस्ररु

चित्तच्चैवाप्रतिघंशांतंयथास्थितमवस्थितम् ॥ नप्रथामागतंकिंचिन्नासीदप्रथितंहितम् ॥ २१ ॥ अयमादिरयंचांतःसर्गस्येत्यवभासते ॥ चि
तःसुघननिद्रायाःसुपुप्तस्वप्नकोष्ठतः ॥ २२ ॥ स्थितएकोद्यनाद्यंतःपरमार्थघनोयतः ॥ प्रलयस्थितिसर्गाणांननामाप्यस्तिसांप्रति ॥ २३ ॥
प्रलयस्थितिसर्गादिदृश्यमानंनविद्यते ॥ एतन्नचात्मनश्चान्यच्चित्रेचित्रवधूर्यथा ॥ २४ ॥ कर्त्तव्यचित्रसेनास्माद्यथाचित्रान्नभिद्यते ॥
नानानानैवप्रतिघाचित्तत्वेसर्गतातथा ॥ २५ ॥ विभागहीनयाप्येषभागश्चिद्घननिद्रया ॥ सुपुप्तान्मुच्यतेमोक्षइतिस्वप्नस्तुचित्तकम् ॥ २६ ॥
प्रलयोयमियंस्रष्टिरयंस्वप्नोघनस्त्वयम् ॥ भासोप्रतिघरूपस्यचित्सहस्ररुचेरिति ॥ २७ ॥ चिन्निद्रायाःस्वप्नमयोभागश्चित्तमुदाहृतम् ॥
तदेवमुच्यतेभूतंजीवोदेवासुरादिदृक् ॥ २८ ॥ एषएवपरिज्ञातःसुपुप्तिर्भवतिस्वयम् ॥ यदातदामोक्षइतिप्रोच्यतेमोक्षकांक्षिभिः ॥ २९ ॥
श्रीरामउवाच ॥ ॥ चित्तंदेवासुराद्यात्मचिन्निद्रास्वात्मदर्शनम् ॥ कियत्प्रमाणंभगवन्कथमस्योदरेजगत् ॥ ३० ॥ श्रीवसिष्ठउवाच ॥
विद्धिचित्तंनरंदेवमसुरंस्थावरंस्त्रियम् ॥ नागंनगंपिशाचादिखगकीटादिराक्षसम् ॥ ३१ ॥ प्रमाणंतस्यचानंतंविद्धितद्यत्त्रेणुताम् ॥
आब्रह्मस्तंबपर्यंतंजगद्यातिसहस्रशः ॥ ३२ ॥ यदेतदादित्यपथादूर्ध्वंसंयातिवेदनम् ॥ एतच्चित्तंभूतमेतदपर्यंतामलाकृति ॥ ३३ ॥

चेरात्मसूर्यस्यइतिएवंरूपाभासःप्रकाशभेदाः ॥ २७ ॥ तत्रयउद्भूतवासनात्मास्वप्नभागःसएवउपाध्यंशप्राधान्येनचित्तंचिदंशप्राधान्येनजीवःसएवदेवासुरमनुष्याद्यधिकारिश
रीरदृक्संस्तत्त्वज्ञानेननिद्रांविधूयमुच्यते ॥ २८ ॥ तदेवाह ॥ एषएवेति ॥ चतुर्थपंचमभूमिकयोःपरिज्ञातःषष्ठभूमिकायांसुपुप्तिर्भवति ॥ सप्तमभूमिकायांमोक्षइतिप्रोच्यते
॥ २९ ॥ चित्तंदेवासुरादिभेदेनकियत्प्रमाणंकियत्संस्थानंचभवतिचिन्निद्रातस्योदरेजगच्चकियत्प्रमाणंकियत्कालंभवतीतिप्रश्नार्थः ॥ ३० ॥ तत्राद्यस्योत्तरमाह ॥ विद्धीत्या
दिना ॥ ३१ ॥ रेणुतांपरमाणुतामवधीकृत्य ॥ ३२ ॥ वैपुल्योत्कर्षमप्यनुभवमारोहयति ॥ यदेतदिति ॥ ऊर्ध्वंचक्षुःप्रेरणेयदेतदादित्यपथादूर्ध्वदेशोध्रुवांधकारादिप्रदेशोपिचा
क्षुषंवेदनंसंयातितदेतावत्प्रमाणंभूतंचित्तमपर्यंतममलाकृतिचसर्वानुभवसिद्धमित्यर्थः ॥ ३३ ॥

दुःसहसंसारदुःखबहुलत्वादुपम् ॥ अस्यैवसमष्ट्यात्मनोंतर्भुवनर्द्धयोयदाब्रह्मांडादिकल्पनयाआयांतितदासर्गःसचास्माभिश्चित्तादागतइत्युच्यते ॥ ३४ ॥ आद्यंतविवर्जितंवि
भु अतएवसर्वदेहेषुआस्तेव्यष्टिरूपेणदेहादुत्क्रमणान्नास्तेचधातुरिच्छयेत्यर्थः ॥ ३५ ॥ तत्रशरीरग्रहणत्यागयोर्दृष्टांतमाह ॥ निम्नेति ॥ हेंग ॥ ३६ ॥ ३७ ॥ एवंसर्वजगद्गर्भि
तस्यमनसःपरमाणुरूपतैवेत्याह ॥ जगतीति ॥ यत्रजालसूर्यमरीच्यादौसर्वतःसूक्ष्मोणुर्यत्प्रमाणःप्रसिद्धस्तच्चेतसःप्रमाणंपरिमाणम्॥तदेवचपुमान्जीवः ॥ वालाग्रशतभागस्यश
तधाकल्पितस्यच ॥ भागोजीवःसविज्ञेयःसचानंत्यायकल्पतेइतिश्रुतेरितिभावः ॥३८॥ एवंचजीवजगद्भेदोप्यपमृष्टइत्याह ॥यावदिति॥ ३९॥ जीवजगद्भेदेचिन्मात्रतापिजग
तःसिद्धेत्याह ॥ चिदेवेति ॥ अन्यस्मिंश्चिद्भिन्नेऽभ्युपगम्यमानेसत्तास्फुरणयोरलाभाद्दर्लीकतापत्त्याव्यतिरिक्तापदार्थतैवनास्तिनसिद्ध्यतीत्यर्थः ॥ ४० ॥ यथाअंबुधिलक्षणेए

एतदुग्रंचितोरूपमस्यांतर्भुवनर्द्धयः ॥ यदायांतितदासर्गश्चित्तादागतउच्यते ॥ ३४ ॥ चित्तमेवविदुर्जीवंतदाद्यंतविवर्जितम् ॥ खंघटे
ष्विवदेहेषुचास्तेनास्तेतदिच्छया ॥३५॥ निम्नोन्नतान्भुवोभागान्गृह्णातिचजहातिच ॥ सरित्प्रवाहोंगयथाशरीराणितथामनः ॥३६॥
अस्यत्वात्मपरिज्ञानादेषदेहादिसंभ्रमः ॥ शाम्यत्याश्ववबोधेनमरुवाःप्रत्ययोयथा ॥३७॥ जगत्यंतरणुर्यत्रतत्प्रमाणंहिचेतसः ॥ सदेव
चपुमांस्तस्मात्पुंसामंतःस्थितंजगत् ॥३८॥ यावत्किंचिदिदंदृश्यंतच्चित्तंस्वप्नभूष्विव ॥ तदेवचपुमांस्तस्मात्कोभेदोजगदात्मनोः ॥३९॥
चिदेवायंपदार्थौघोनास्त्यन्यस्मिन्पदार्थता ॥ व्यतिरिक्तास्वप्नइवहेम्नीवकटकादिता ॥ ४० ॥ यथैकदेशेसर्वत्रस्फुरंत्यापोंबुधौपृथक् ॥
ब्रह्मण्यनन्यानित्यस्याश्चितोदृश्यात्मिकास्तथा ॥ ४१ ॥ यथाद्रवत्वमंभोधावापोजठरकोशगाः ॥ स्फुरंत्येवंविदानन्याःपदार्थौघास्त
थापरे ॥ ४२ ॥ यथास्थितंजगच्छालभंजिकाकाशरूपधृक् ॥ चित्स्तंभोयमपस्पंदःस्थितआद्यंतवर्जितः ॥ ४३ ॥ यथास्थितमिदंविश्वं
संविद्योम्निव्यवस्थितम् ॥ स्वरूपमत्यजच्छांतंस्वप्नभूमाविवाखिलम् ॥ ४४ ॥ समतासत्यतासत्ताचैकतानिर्विकारिता ॥ आधाराधे
यतान्योन्यंचैतयोर्विश्वसंविदोः ॥ ४५ ॥ स्वप्नसंकल्पसंसारवरशापदृशामिह ॥ सरोब्धिसरिदंबूनामिवान्यत्वंनवाथवा ॥ ४६ ॥
श्रीरामउवाच ॥ ॥ वरशापार्थसंवित्तौकार्यकारणताकथम् ॥ उपादानंविनाकार्यंनास्त्येवकिलकथ्यताम् ॥ ४७ ॥

कदेशेएकीभूयस्थिताएवापःपृथक्स्फुरंतितद्वद्ब्रह्मण्यपिदृश्यात्मिकास्ताइत्यर्थः ॥ ४१ ॥ अनन्यत्वेतद्द्रवत्वदृष्टांतमाह ॥ यथेति ॥ ४२ ॥ एवंचयथास्थितजगल्लक्षणःशाल
भंजिकानांयदाकाशरूपमात्यंतिकशून्यतातद्रूपधृक्चित्स्तंभएवनिस्पंदोऽचलःस्थितः ॥ ४३ ॥ ४४ ॥ कथंशांतंकथंचस्वरूपमत्यजत्तदाह ॥ समतेति ॥ पंचभिःप्रकारैर्भेदा
विभावनाच्छांतमाधाराधेयभावेनस्तंभशालभंजिकावद्व्यवहारेईषद्भेदप्रतिभासात्स्वरूपमत्यजदित्यर्थः ॥ ४५ ॥ तत्प्रातिभासिकोभेदोवस्तुतस्तुतदभावइत्याह ॥ स्वमेति ॥
वरशापाभ्यांनंदिनहुषयोर्देवसर्पभावप्रतिभासदृशामिवव्यवहारसमर्थमन्यत्वंपरमार्थतस्तुनवा ॥ ४६ ॥ नंदिनोमनुष्यशरीरेदेवशरीरोपादानंचंद्रामृतभागोनास्तिएवंचंद्रामृतप
रिणामेनहुषस्यदेवशरीरेसर्पशरीरोपादानंतदंडादिनास्ति ॥ उपादानंविनालोकेकार्यंचक्वापिनास्तितत्रोभयत्रकथंदेवसर्पशरीरसिद्धिरितिरामप्रश्नार्थः ॥ ४७ ॥

निरावरणविज्ञानस्यभगवतोरुद्रस्यागस्त्यादीनांचसत्यसंकल्पावच्छिन्नाचिद्देवसुरसर्पशरीरात्मनातत्रविवर्त्ततइतिविवर्त्तवादेनास्याक्षेपस्यप्रसरइत्युत्तरंवसिष्ठोवक्तुंभूमिकांरचयति ॥ स्ववदातेत्यादिना ॥ स्ववदातस्तत्त्वज्ञानविमृष्टत्वादतिनिर्मलोयश्चिदाकाशस्तस्यसत्यसंकल्पानुसारिकचनंतदित्यसकृन्मयोच्यते ॥ ४८ ॥ विधातुःस्वात्मचितिजगद्भावाश्चिदात्मकाएवाकस्माद्भांतितेषांभानानांसोकामयत तदैक्षत समकृपतांद्यावापृथिवीइत्यादिश्रुतयोमनीषिणःऋषयश्चसंकल्पादीनिनामान्याहुः ॥ ४९ ॥ तत्रनिरावरणविज्ञानानांयद्भावार्थस्फुरणंसएवसत्यसंकल्पइतिदर्शयितुंतादृशविज्ञानकारणान्याह ॥ कालेनेत्यादिना ॥ कालेनकर्कट्यादेः ॥ समेनशत्रुमित्रादिषुसमदर्शनेन ॥ देवानांतुजातेःसात्विकत्वेन ॥ ५० ॥ ५१ ॥ ५२ ॥ सोयंनिरावरणविज्ञानःपुरुषोयावत्संकल्पमात्रंपश्यतितत्सर्वंपरमार्थतःअनन्यत्पश्यतीतितत्संकल्पस्यसत्यतायामुपपत्तिः ॥ ५३ ॥ अस्य

श्रीवसिष्ठउवाच॥ ॥स्ववदातचिदाकाशकचनंजगदुच्यते॥ स्फुरणंपयसामब्धावावर्त्तचलनंयथा॥४८॥ ध्वनंतोब्धिजलानीवभांतिभावाश्चिदात्मकाः॥ संकल्पादीनिनामानितेषामाहुर्मनीषिणः॥४९॥ कालेनाभ्यासयोगेनविचारेणसमेनच ॥ जातेर्वासात्विकत्वेनसात्त्विकेनामलात्मना॥५०॥ सम्यग्ज्ञानवतोज्ञस्ययथाभूतार्थदर्शिनः॥ बुद्धिर्भवतिचिन्मात्ररूपाद्वैतैक्यवर्जिता॥५१॥ निरावरणविज्ञानमयीचिद्ब्रह्मरूपिणी॥ संविस्वकाशमात्रैकदेहादेहविवर्जिता ॥५२॥ सोयंपश्यत्यशेषेणयावत्संकल्पमात्रकम् ॥ स्वमात्मकचनंशांतमनन्यत्परमार्थतः॥५३॥ अस्याइदंहिसंकल्पमात्रमेवाखिलंजगत्॥ यथासंकल्पनगरंयथास्वप्नमहापुरम्॥५४॥ आत्मास्वसंकल्पवरःस्ववदातोयथायथा ॥ यद्यथासंकल्पयतितथाभवतितस्यतत्॥५५॥ संकल्पनगरेबालःशिलाप्रोड्डयनंयथा॥ सत्यंवेत्त्यनुभूयाशुस्वविधेयनियंत्रणम्॥५६॥ स्वसंकल्पात्मभूतेस्मिन्परमात्माजगत्त्रये॥ वरशापादिकंसत्यंवेत्त्यनन्यत्तथात्मनः॥५७॥ स्वसंकल्पपुरेतैलंयथासिद्ध्यतिसैकतात्॥ कल्पनात्सर्गसंकल्पैर्वरादीहतथात्मनः ॥५८॥ अनिरावरणज्ञस्तुयतःशांतानभेदधीः॥ ततःसंकल्पनाद्द्वैताद्वराद्यस्यनसिद्ध्यति ॥ ५९ ॥ यायथाकलनारूढातावत्साद्यापिसंस्थिता ॥ नपरावर्तितायावद्यत्नात्कल्पनयान्यया ॥६०॥ ब्रह्मण्यवयवोन्मुक्तेद्वितैकत्वेतथास्थिरे॥ यथासावयवेतत्त्वेविचित्रावयवक्रमः॥६१॥

आइदमितिच्छेदः ॥ अस्यैवंविधस्यहिरण्यगर्भस्यआसमंतादृश्यमानमिदंजगत्संकल्पमात्रमेवेत्यर्थः ॥ ५४॥ एवमन्योपिस्वसंकल्पवरोनिरावरणात्मैवेतियथायथायत्संकल्पमात्रंपश्यतितत्तथातथाभवति ॥ ५५ ॥ स्वविधेयंस्वाधीनंनियंत्रणंनियमनंयत्र ॥ ५६ ॥ तत्रवरशापात्मकंयत्फलंतत्हिरण्यगर्भाद्यनावरणविज्ञानात्माआत्मनोनन्यत्सत्यंवेत्ति ॥ ५७ ॥ जगतश्चतदीयसंकल्पात्मकत्वात्स्वसंकल्पपुरेबालस्यसिकताभ्यस्तैलमिवहिरण्यगर्भाद्यात्मनोपिवरशापाद्यर्थोनिरुपादानोपिसिद्ध्यति ॥ ५८ ॥ निरावरणेतिविशेषणस्यप्रयोजनंदर्शयति ॥ अनिरावरणेति ॥ अस्यअज्ञपुरुषस्यवरादिनसिद्ध्यति ॥ ५९ ॥ निरावरणज्ञानानांकल्पनातादृशकल्पनांतरोदयपर्यंतंननिवर्त्ततइत्याह ॥ येति॥६०॥ निरवयवेनिरावरणज्ञानात्मनितद्विरुद्धवरशापादिकल्पनाकथंतिष्ठतितत्राह ॥ ब्रह्मणीति ॥ ६१ ॥

१ सकल्पयतिइतिक्वचित्पाठः

तर्ह्यनिरावरणज्ञानानांकेवलोयतापसानांवरशापादिमोघंस्यादित्याशयेनरामःपृच्छति ॥ अनिरावरणेति ॥ ६२ ॥ तदीयवरशापादेरपिसत्यतास्त्वितिसर्गादौधातुःसंकल्पादेवनत न्मोघतेत्युत्तरंवक्तुंभूमिकांवसिष्ठोरचयति ॥ संकल्पेत्यादिना ॥ इतरत्तन्नप्रतिबंधकंनास्ति ॥ ६३ ॥ धातुस्तुसत्यसंकल्पतासत्यब्रह्मात्मवेदितृत्वादेवसिद्धेत्याशयेनाह ॥ ब्रह्मेति ॥ सप्रजापतिर्धातायद्यस्मात्कारणाद्ब्रह्मवेत्तितस्माद्धेतोरयंब्रह्मैव ॥ तद्योयोदेवानांप्रत्यबुध्यतसएवतदभवदित्यादिश्रुतेरितिभावः ॥ ६४ ॥ ६५ ॥ कीदृशंतत्कल्पनंतदाह ॥ निरा धारमिति ॥ ६६ ॥ तेनप्रजापतिना ॥ चत्वारोवेदाःस्मृतयश्चेतिपंच त्रयीसांख्यंयोगःपशुपतिमतंवैष्णवमितिवापंच ज्ञानोपदेशनाः ॥ प्यंताद्युच् ॥ ६७ ॥ अथतेनप्रजापति नाइतिकल्पितंसंकल्पितम् ॥ किमिति ॥ वेदविदस्तपस्विनोवादैश्वकारात्सहजवस्यावायद्ब्रूयुस्तत्तदवश्यंस्यादिति ॥ ६८ ॥ एवंसर्ववस्तुस्वभावभेदाअपितेनैवकल्पिताइत्या

॥श्रीरामउवाच॥ ॥अनिरावरणाज्ज्ञानात्केवलंधर्मचारिणः॥शापादीन्संप्रयच्छंतियथाब्रह्मंस्तथावद॥६२॥ ॥श्रीवसिष्ठउवाच॥ संकल्पयतियन्नामसर्गादौब्रह्मब्रह्मणि॥तत्तदेवानुभवतियस्मात्तत्तास्तिनेतरत्॥६३॥ब्रह्मवेत्तियदात्मानंसब्रह्मायंप्रजापतिः॥सच नोब्रह्मणोभिन्नंद्रवत्वमिववारिणः॥६४॥संकल्पयतियन्नामप्रथमोसौप्रजापतिः॥ तत्तदेवाशुभवतितस्येदंकल्पनंजगत्॥६५॥ निराधारंनिरालंबंव्योमात्मव्योम्निभासते ॥ दुर्दृष्टेरिवकेशोंड्रंदृष्टमुक्तावलीवच ॥ ६६ ॥ संकल्पिताःप्रजास्तेनधर्मादानंतपोगुणाः॥ वेदाःशास्त्राणिभूतानिपंचज्ञानोपदेशनाः॥ ६७॥ तपस्विनोथवादैश्वयद्ब्रूयुरविलंबितम्॥ यद्यद्वेदविदस्तत्स्यादितितेनाथकल्पितम् ॥६८॥ इदंचिद्ब्रह्मच्छिद्रंखंवायुश्चेष्टाग्निरुष्णता॥द्रवोंभःकठिनंभूमिरितितेनाथकल्पिताः ॥ ६९ ॥ चिद्धातुरीदृशोवासौयद्यत्स्वात्मा पिचेतति॥तत्तथानुभवत्याशुत्वमहंसइवाखिलम् ॥७०॥ यद्यथावेत्तिचिद्व्योमतत्तथातद्भवत्यलम् ॥ स्वप्नेत्वमहमादीवसदात्माप्य सदात्मकम्॥७१॥शिलानृत्तंयथासत्यंसंकल्पनगरेतथा॥ जगत्संकल्पनगरेसत्यंब्रह्मणईप्सितम्॥७२॥ चित्स्वभावेनशुद्धेनयद्बद्धं यद्ययादृशम्॥तदशुद्धोन्यथाकर्तुंनशक्तःकीटकोयथा ॥७३॥ अभ्यस्तंबहुलंसंवित्पश्यतीतरदल्पकम्॥ स्वप्नेजाग्रत्स्वरूपेचवर्त्तमा नेखिलंचसत्॥७४॥ सदाचिद्व्योमचिद्व्योम्निकचदेकमिदंनिजम्॥द्रष्टृदृश्यात्मकंरूपंपश्यदाभातिनेतरत्॥७५॥

ह ॥ इदमिति ॥ इदंब्रह्मचिज्जडव्यावृत्तस्वभावम् ॥ खंछिद्रस्वभावम् वायुश्चेष्टास्वभावः अग्निरुष्णतास्वभावइत्यादि ॥६९॥ एवमियंसर्वाकल्पनाप्रजापतिवपस्यचिद्धातोरेव कल्पनेत्याह ॥ चिद्धातुरिति ॥ अनुभवतिसत्यसंकल्पत्वादितिभावः ॥ ७० ॥ ७१ ॥ तत्रसदात्मतांदृष्टांतेनस्फुटयति ॥ शिलेति ॥ ब्रह्मणःप्रजापतेरधिकारप्रारब्धभोगार्थेप्सि तम् ॥ ७२ ॥ वरसंकल्पजंवरशापादिस्वसंकल्पेनतद्विरुद्धेनजनैःकुतोनान्यथाक्रियतेतत्राह ॥ चित्स्वभावेनेति ॥ ७३ ॥ अशुद्धानामस्वतंत्रकल्पनाभ्यासदार्ढ्यादपिनतद्विरु द्धकल्पनस्वातंत्र्यमित्याशयेनाह । अभ्यस्तमिति ॥ शृंखलाबद्धोहमितिदृढतरजाग्रत्संस्कारवतःस्वप्नेपिशृंखलाबंधपारतंत्र्यस्यैवानुभवादितिभावः ॥ ७४ ॥ एवंकल्पितत्रि पुटीवेषेणकचनेपिचितउदासीनसाक्षिस्वभावेनापिसदैवकचनमस्त्येवेत्याह ॥ सदेति ॥ द्रष्टृदृश्यपदृणंत्रिपुट्युपलक्षणम् ॥ ७५ ॥

साक्षिचितस्त्रिपुटीव्याप्तिबलादेवतत्सत्तासंपादकत्वमित्याह ॥ एकमिति ॥ एकचित्सत्तोपजीवित्वादेकम् ॥ ७६ ॥ धातृसाक्ष्यधीनसत्तास्फूर्तिकत्वात्तद्गगतमेवेदं जगदिति सदृष्टांतमाह ॥ वाय्विति ॥ ब्रह्मत्वंजगदाकारबृंहणहेतुमायाशक्तिमत्त्वंचयथातथेत्यर्थः ॥ अजस्यविराजः ॥ ७७ ॥ पूर्वंब्रह्मण्यध्यस्तंजगदित्यसकृदुक्तमिदानींकथमजस्यां गगमित्युच्यतेतत्राह ॥ ब्रह्मैवेति ॥ ७८ ॥ प्रपातेपर्वतापाद्गंगादीनामधःपतनस्थाने ॥ ७९ ॥ एकयैवधारयाआकल्पंनिपतत्यकणसहस्रकोटिभेदविभक्ताःपुनरेकतामापद्यआ त्मनःस्वस्यैकप्रवाहात्मन्येवभांतितथायाविचित्राब्रह्मसंविदोजगद्भेदाअपिबोध्याइत्यर्थः ॥ ८० ॥ एतावांस्तुविशेषोयत्कणपंक्तयोमनोबुद्ध्यादिवर्जिताः ताभिर्ब्रह्मसंविद्भिस्तु स्वदेहेपुस्वयंमनोबुद्ध्यादिकल्पनाःकृत्वासर्गश्रीर्भोग्यत्वेनोररीकृतेति ॥ ८१ ॥ मनोबुद्ध्यादिकल्पनात्यागेतुअज्ञानमात्रंजगत्पर्यवस्यतीत्याशयेनाह ॥ तदेवमिति ॥ मनोबुद्ध्या

एकंद्रष्टाचदृश्यंचचिन्नभःसर्वगंयतः ॥ तस्माद्यथेष्टंयद्यत्रदृष्टंतत्तत्रसत्सदा ॥ ७६ ॥ वाय्वंगगस्पंदनवज्जलांगद्रवभाववत् ॥ यथात्र ह्मणिब्रह्मत्वंतथाजस्यांगगंजगत् ॥ ७७ ॥ ब्रह्मैवाहंविराडात्माविराडात्मवपुर्जगत् ॥ भेदोनब्रह्मजगतोःशून्यत्वांबरयोरिव ॥ ७८ ॥ य थाप्रपातेपयसोविचित्राःकणपंक्तयः ॥ विचित्रदेशकालांतानिपतंत्युत्पतंतिच ॥ ७९ ॥ निपत्यैवैकयाकल्पंमनोबुद्ध्यादिवर्जिताः ॥ आत्मन्येवात्मनोभांतितथायाब्रह्मसंविदः ॥ ८० ॥ ताभिःस्वयंस्वदेहेपुबुद्ध्यादिपरिकल्पनाः ॥ कृत्वोररीकृतासर्गश्रीरद्भिर्द्रवतायथा ॥ ८१ ॥ तदेवंजगदित्यस्तिदुर्बोधेनममत्विदम् ॥ अकारणकमद्वैतमजातंकर्मकेवलम् ॥ ८२ ॥ अस्तस्थितिःशरीरेऽस्मिन्यादृग्रूपानुभू यते ॥ उपलादौजडासत्तातादृशीपरमात्मनः ॥ ८३ ॥ यथैकस्यांसुनिद्रायांसुषुप्तस्वप्नकौस्थितौ ॥ तथैतेसर्गसंहारभासौब्रह्मणिसंस्थि ते ॥ ८४ ॥ सुषुप्तस्वप्नयोर्भातःप्रकाशतमसीयथा ॥ एकस्यामेवनिद्रायांसर्गासर्गौतथापरे ॥ ८५ ॥ यथानरोनुभवतिनिद्रायांदृपदः स्थितिम् ॥ परमात्मानुभवतितथैतज्जडसंस्थितिम् ॥ ८६ ॥ अंगुष्ठस्याथवांगुल्यावाताद्यस्पर्शनेसति ॥ योन्यचित्तस्यानुभवोदृप दादौसआत्मनः ॥ ८७ ॥

दिविक्षिप्ताज्ञानलक्षणेनदुर्बोधेन ॥ ममदुर्बोधइतिस्यदृशात्विदंमनोबुद्ध्यादिसर्वंजगत्कर्मकालत्रयेप्यजातमेव ॥ ८२ ॥ अस्मिन्शरीरेअस्तस्थितिर्मृतावस्थायादृग्रूपामनोबु द्ध्यादिरहितानुभूयते उपलादौजडासत्ताचयादृग्रूपातादृशीपरमात्मनोपिमनोबुद्ध्यादिरहितैवनिर्विक्षेपसत्ताबोध्येत्यर्थः ॥ ८३ ॥ एवंचसृष्टिप्रलयौद्वावप्यज्ञाननिद्रावांतरावि शेषावेवेत्याह ॥ यथेति ॥ ८४ ॥ ननुसर्गेसूर्यादिप्रकाशास्तिहितमोरूपप्रलयविलक्षणाःकथंतत्राह ॥ सुषुप्तेति ॥ ८५ ॥ चित्येवजडाजडभेदकल्पनेपिस्वप्नएवदृष्टांतइत्याह ॥ यथेति ॥ ८६ ॥ चेतनेजाड्यानुभवाप्रसिद्धिंवारयति ॥ अंगुष्ठस्येति ॥ अन्यत्रविषयांतरेव्यासक्तचित्तस्यपुरुषस्यांगुष्ठस्यांगुल्यंतरस्यचवातातपधूल्यादिस्पर्शनेजातेसतियो जातोप्यजातप्रायोनुभवःप्रसिद्धःसतादृशएवदृपदादौविद्यमानोप्यविद्यमानप्रायोजाड्यमित्यर्थः ॥ ८७ ॥

एवंजडस्यापिचेतनभावानुभवप्रसिद्धिमाह ॥ व्योमेति ॥ देहेविराड्देहभावेतत्तदधिष्ठातृदेवतादेहभावेवायथाअनुभूतयस्तथाप्रलयेअचित्तानामस्माकमद्यसर्गकालेसचित्त्वलाभेनानुभूतयः ॥ तवास्माकमितिपाठेत्यदादीनिसर्वैर्नित्यं त्यदादीनांमिथःसहोक्तौयत्परंतच्छिष्यतइत्येकशेषाभावश्छांदसः ॥८८॥ अखंडकालेब्रह्मदिनभेदरूपेषुकल्पेषुयथाऽस्माकमहोरात्रसंविदोभांतितथाअसंख्याःपरमात्मनिसर्गसंहारसंविदोभांति ॥ ८९ ॥ यथावारिघनेउदकैकस्वभावेसमुद्रेस्वभावादेवआवर्त्तवीचिवलयादिस्फुरतितथाआलोकनमालोकस्तद्विषयरूपंतन्मननंतस्यभोगलक्षणोऽनुभवस्तदेषणारागस्ततःपुनस्तत्प्राप्तीच्छेत्यादिविक्षेपविनिर्मुक्तात्मनिअतएवशांतेपरेपदेअयंसंद्धतिसर्गपूगःस्वभावतएवस्फुरतिनप्रमाणतस्तत्त्वदर्शनेसतीत्यर्थः ॥ ९० ॥ ॥ इश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउ०षडशीत्युत्तरशततमःसर्गः ॥ १८६ ॥ ॥ ७ ॥ ॥ सर्व

व्योमोपलजलादीनांयथादेहानुभूतयः॥ तथास्माकमचित्तानामद्यनानानुभूतयः॥८८॥ कालेकल्पेषुभांत्येतायथाहोरात्रसंविदः॥ तथासंख्याःपरेभांतिसर्गसंहारसंविदः॥८९॥ आलोकरूपमननानुभवैषणेच्छामुक्तात्मनिस्फुरतिवारिघनेस्वभावात्॥ आवर्त्तवीचिवलयादियथातथायंशांतेपरेस्फुरतिसंद्धतिसर्गपूगः॥९०॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०ब्रह्मगीतासुसर्वंखल्विदंब्रह्मेतिप्रतिपादनयोगोपदेशोनामषडशीत्युत्तरशततमःसर्गः॥१८६॥ ॥७॥ ॥श्रीरामउवाच॥ ॥विचित्राणामसंख्यानांभावानांनियतिःकुतः॥ कथंस्वभावोभावानामेकरूपःस्थितोऽचलः॥१॥ सत्स्वसंख्येषुदेवेषुसूर्यएवोग्रभाःकथम्॥ दीर्घत्वमथह्रस्वत्वंदिवसानांतुकिंकृतम्॥ २॥ ॥श्रीवसिष्ठउवाच॥ ॥काकतालीयवद्भानंयत्परेनियतंस्वतः॥ यथास्थितंयथारूपंस्थितेतज्जगदुच्यते॥ ३॥ सर्वशक्तेर्यथायद्यद्भातितत्तत्तथैवसत्॥ संवित्सारतयायायात्कथंभातमभातताम्॥ ४॥ यथास्थितंयथाभातिचित्त्वाद्ब्रह्मचिराययत्॥ तस्यभानमभानाभंनियत्यभिधमेवतत् ॥ ५ ॥

भावस्वभावोत्रनियतिश्चोपवर्ण्यते ॥ उत्पत्तिर्जीवताप्राप्तिहेतूनांब्रह्मशुद्धता ॥ १ ॥ नियतिःकार्यकारणभावादिनियमः अग्निजलादेरौष्ण्यद्रवत्वादिःस्वभावश्चअचलःअव्यभिचरितःकथंकेनहेतुनाजगतिस्थितः ॥ स्वाप्नमानोरथिकादिमिथ्यार्थांतरेष्वदर्शनादितिभावः ॥ १ ॥ केनकृतंकिंकृतम् ॥ २ ॥ आदिसर्गेयद्यत्काकतालीयन्यायेनधातुर्यथायथाभातंतत्तथैवार्थक्रियादिनानियतंस्थितंतत्रधातुरिच्छैवतदव्यभिचारेहेतुरेवंवस्तुस्वभावेपिबोध्यमित्याशयेनाद्यप्रश्नयोर्वसिष्ठउत्तरमाह ॥ काकतालीयेत्यादिना ॥ परेविधातरियत्काकतालीयवन्नियतंसर्गादौभानंतद्यथारूपंयथाचकार्यकारणभावेनस्थितंतथैवाद्यापिजगदुच्यतइत्यर्थः ॥ ३ ॥ नियतायाईश्वरशक्तेरन्यथाभावायोगाद्वानियतिरव्यभिचरितेत्याशयेनाह ॥ सर्वशक्तेरिति ॥ संवित्सारतयासत्यसंकल्पसंविदःअस्मदादिस्वप्नमनोरथसंविद्वदसारत्वाभावादित्यर्थः ॥ ४ ॥ मायोदरेस्थितस्यैवसर्गकालेभानंप्रलयकालेसौक्ष्म्यापत्त्यातदेवाभानाभंभवतीत्यनादिरेवसर्ववस्तूनामर्थक्रियाशक्तिरितितदेवनियतिनामकमितिवाबोध्यमित्याह ॥ यथास्थितमिति ॥ ५ ॥

ब्रह्मैवनियतसर्वार्थक्रियासमर्थंजगदाकारतांधत्तेइतिवानियतिप्रतिष्ठासिद्धिरित्याह ॥ इदमिति ॥ ६ ॥ अवस्थात्रयस्याज्ञातात्मस्वभावत्वाद्वायथादृष्टनियत्यव्यभिचारसिद्धिरित्याह ॥ जाग्रदिति ॥ ७ ॥ तस्यतत्स्वभावतांदृष्टांतैःसमर्थयति ॥ यथेति ॥ ८ ॥ एकप्रवाहानन्यसत्तयाबीजांकुरन्यायेनसर्गप्रलयप्रवाहानादितयाचिन्मात्रगगनात्मकेएकब्रह्मात्मन्येवयनस्तिष्ठतिनतोपिनियतार्थक्रियासिद्धिरित्यर्थः ॥ ९ ॥ अतएवचित्कचनानुसारेणैवसर्वनियमव्यवस्था क्षणस्यापिकल्पोयमितिचित्कचनेअकल्पत्वसाधकांतराभावादित्याशयेनाह ॥ सर्गोयमिति ॥१०॥ अतएवकालक्रियादेशद्रव्यादिवस्तुभेदात्मनाचित्कचनमेवसर्ववस्तुस्वभावोनियतिश्चेत्याह ॥ तदित्यादिना ॥११॥१२॥ इत्येवंकचितमप्याकाशरूपकमेवनसत्यमित्यर्थः ॥ १३ ॥ इदानींकथंस्वभावोभावानामितिप्रश्नंसमाधत्ते ॥ आकल्पाख्यमिति ॥ कल्पाख्यंब्रह्मनिमेषमभिव्याप्यभावानांयदेकरूपंक

**इदमित्यमिदंचेत्थंस्वयंब्रह्मेतिभातियत्॥ तन्नियत्यभिधंप्रोक्तंसर्गसंहाररूपधृक्॥ ६ ॥जाग्रत्स्वप्नसुषुप्ताख्यंयत्स्वतःकचनंचिति॥ तत्तोनन्यदेकाच्छंद्रवत्वमिववारिणि॥ ७॥ यथाशून्यत्वमाकाशेकर्पूरेसौरभंयथा॥ यथौष्ण्यमातपेनान्यज्जाग्रदादितथाचिति॥८॥ सर्गप्रलयनाम्न्येकप्रवाहानन्यसत्तया॥ चिन्मात्रगगनात्मैकब्रह्मात्मन्येवसंस्थितम्॥ ९॥ सर्गोयमितितद्बुद्धंक्षणंयत्कचनंचितः॥ कल्पोयमितितद्बुद्धंक्षणंतत्कचनंचितः॥ १० ॥ तत्कालस्तत्क्रियातत्खंदेशद्रव्योदयादितत्॥ यत्स्वप्नइवचिन्मात्रकचनंस्वस्वभावतः॥ ११ ॥ रूपालोकमनस्कारदेशकालक्रियादितत् ॥ चित्त्वंकचतिचिद्योम्नियन्नामानाकृतिस्वतः॥ १२ ॥ यद्यथाकचितंकालंयत्किंचित्कल्पितंतथा॥ तेनैवेयंहिनियतिरित्यप्याकाशरूपकम्॥ १३॥ आकल्पाख्यंनिमेषंयत्कचनंचैकरूपकम्॥ स्वाभाविकाःस्वभावंतंप्राहुःप्रस्तुतबुद्धयः॥ १४॥ एकस्यसंविन्मात्रस्यपदार्थशततातथा ॥ यथेदंसंविदंशस्यरूपंस्वंस्वमनुज्झतः॥ १५॥ संविन्मयेसंविदोयाःकचंतीवपरेतथा॥ ताभिस्तेषांस्वदेहानांयासांसाकलनाकृता॥१६॥चिदुर्वीसलिलंतेजःस्पंदःशून्यत्वमेवच॥ प्रत्येकमाकरस्तेषांतानिस्वप्नइवांवरम्॥ १७॥**

चनंतमेवप्रतिवस्तुनियतस्वभावंप्राहुःस्वाभाविकाःस्वभावतत्त्वविदः ॥ १४ ॥ एकस्यैवपक्ष्यादिवस्तुनोदेशकालभेदेनानेकधाभूतस्यापिस्वरूपमनुज्झतोयदेकमनुगतमौष्ण्यप्रकाशरूपंसएवतद्भेदेष्वनुगतस्वभावः यथासंविदंशस्यजीवस्यसर्वानुगतंचित्स्वरूपमेवस्वभावस्तद्वदित्यर्थः ॥ १५ ॥ संविन्मयेचुरेद्वृत्तिभेदेपियाश्चिदाभाससंविदःकचंतीवताःस्वभावः ॥ परेतद्विषयेउर्वीसलिलतेजोवाय्वादौताभिर्वस्त्वाभाससंविद्भिःस्वदेहप्रायाणांतेषांवृत्तिभेदानांमध्येयासांयासांवृत्तीनांयद्यदाकारकलनायायाकृतासआकारःस्वभाववदित्यर्थः ॥ १६ ॥ नानाकारभेदानेवोदाहृत्यतेषामधिष्ठानचिदाकाशएवपारमार्थिकःस्वभावइतिदर्शयति ॥ चिदिति ॥ तान्युर्व्यादीनिप्रत्येकंस्वकार्याणामाकरःखनिः ॥ उर्वीपार्थिवानांसर्ववस्तूनामनुगतःस्वभावएवंसलिलादयोपि ॥ तेषांचचिदंबरंमायाशवलंब्रह्मैवाकरइत्यर्थः ॥ १७ ॥

उक्तमेवप्रपंचयति ॥ तत्रेत्यादिना ॥ राजेवजीवनप्रदः ॥ १८ ॥ प्रधानानांगंगादीनामब्ध्यादीनांचजगद्गतंसर्वस्वस्वविशेषेष्वनुगतम् ॥ नपुंसकैकशेषेएकवद्भावः ॥ १९ ॥ तेपामंबरमित्यंशंविशदयति ॥ पंचेति ॥ तानिपंचमहाभूतानिब्राह्म्यःसंवित्तयएवतथोदिताइतिब्रह्मैवतदनुगतःसत्स्वभावइत्यर्थः ॥ एतेनसत्स्वसंख्येषुदेवेषुसूर्यएवोपप्रभाःकथमितिप्रश्नोपिसमाहितइत्याशयेनाह ॥ प्रश्नइति ॥ स्वभावप्रश्नोत्तरेणैवसमाहितत्वात्पृथक्प्रश्नोनभवतीत्यर्थः ॥ २० ॥ बुधासर्वावभासकत्वात्सर्वज्ञासैवसर्वरूपिणीतिस्वप्रकाशतालक्षणस्वमहिम्नैवसर्वत्रपरमःस्वभावपरमाकारःपरमानियतिरितिचसर्वैरेवाभिज्ञैरवगम्यते ॥ २१ ॥ अयंचतुर्मुखाख्योब्रह्मबालःस्वात्मभूतसंवित्स्फुरणंव्योमात्मकंक्षौमंप्रावरणंयस्यास्तथाविधांभूनाम्नींस्वयंब्रह्मात्मत्वाद्ब्रह्मांबराकृतिरेवसन्स्वस्मिन्स्फारांकरोतिस्फारयतिविस्तारयति ॥ नामधातुःस्फुरतेर्वाचित्स्फुरोर्णावित्यात्वम् ॥ २२ ॥ यदासामायाशबलासर्वज्ञसंविदजस्यचतुर्मुखस्यसंविदासहतत्स्थूलमेतत्सूक्ष्मंचप्रपंचमत्तिस्वात्मन्युपसंहरतितदातदंगस्यचतुर्मुखसंविदंगस्यार्कादेश्चंचलंभ्रमणस्वभावंरूपंनोत्पा

तत्रसप्रतिघस्यास्यकठिनस्याकरोमहान् ॥ भूपीठंजनताधारोराजन्राजेवराजते ॥ १८ ॥ अपामब्धिःप्रधानानांतेजसामेषभास्करः ॥ स्पंदस्यपवनोव्योमशून्यतायाजगद्गतम् ॥ १९ ॥ पंचानामितिभूतानामाकरत्वेनसंविदः ॥ पंचतान्युचिताब्राह्म्यःप्रश्नःकिंभास्करंप्रति ॥ २० ॥ बुधासंविच्चिदित्युक्तासर्वगासर्वरूपिणी ॥ सर्वत्रस्वमहिम्नैषासर्वेणैवानुभूयते ॥ २१ ॥ ब्रह्मात्माब्रह्मबालोयंस्वसंवित्स्फुरणामिमाम् ॥ व्योमात्मक्षौमभूनाम्नींस्फारयत्यंबराकृतिः ॥ २२ ॥ सायदैतत्तथैतच्चचिरमत्त्यजसंविदा ॥ तदातदंगस्यार्कादेर्नातोनात्यादिचंचलम् ॥ २३ ॥ संकल्पपूर्वमशकजालवद्धिष्ण्यचक्रकम् ॥ आवर्त्तवर्त्तिनाभातिचिद्व्योमेदंचदृश्यवत् ॥ २४ ॥ तत्रप्रभास्वराःकेचित्केचिदप्यल्पभास्वराः ॥ केचिच्चाभास्वराभाताःपदार्थाश्चित्ररूपिणः ॥ २५ ॥ पदार्थजातंत्वेतावन्नजातंनचदृश्यते ॥ ज्ञस्याजातमिदंभातिखमात्मास्वप्नदृश्यवत् ॥ २६ ॥ चिन्मात्रमात्मासर्वेशःसर्वंएवातिदृश्यवत् ॥ नश्यतीवविदेहेस्वेनचभातिननश्यति ॥ २७ ॥ स्वप्नदर्शनवद्भातियच्चिद्व्योमचिदंबरे ॥ चिद्व्योमत्वादृतेरूपंतदस्यजगतःकुतः ॥ २८ ॥

दि ॥ यतस्ततअतःअस्मादुपसंहारादत्तानापुरुषएवसंपद्यतइत्यर्थः ॥ तथाचश्रुतिः ॥ अथततऊर्ध्वउदेत्यनैवोदेतानास्तमेताएकलएवमध्येस्थातेति ॥ २३ ॥ दीर्घत्वमथह्रस्वत्वंदिवसानांतुकिंकृतमितिप्रश्नस्तुज्योतिश्चक्रेसूर्यस्यदक्षिणोत्तरमार्गगतिभेदप्रसिद्धैवदत्तोत्तरइतिसूचयन्ज्योतिश्चक्रंदर्शयति ॥ संकल्पेति ॥ लूताकीटेनसंकल्पपूर्वकंबाह्यसाधननिरपेक्षतयैवविरचितमशकबंधनजालवद्धात्रासंकल्पजालमात्रनिर्मितंग्रहनक्षत्रादिधिष्ण्यभूतंशिशुमारचक्रकंज्योतिःशास्त्रादौप्रसिद्धमेव ॥ तदेवदक्षिणोत्तरायणमार्गावर्त्तवर्त्तिनासूर्येणनिमित्तेनेदंत्वरपृष्टंदिवसानांह्रस्वदीर्घत्वंतत्तदावर्त्तवद्दृश्यवन्नियतंभातीत्यर्थः ॥ २४ ॥ सत्स्वसंख्येषुदेवेषुसूर्यएवोपप्रभाःकथमितिप्रश्नेयेअनेकेदेवाउक्तास्तान्ज्योतिश्चक्रेनक्षत्रादिरूपेणस्थितान्दर्शयति ॥ तत्रेति ॥ अभास्वराराह्वादयःआगुक्तामसनक्षत्राणिच ॥ २५ ॥ एवंप्रश्नान्समाधायप्रकृतमेवालंब्याह ॥ पदार्थजातमिति ॥ २६ ॥ त्वमहंसर्वंएवअनिदृश्यवत्प्रसिद्धोभाति ॥ विदेहेमृतेपुरुषेनश्यतीव ॥ २७ ॥ रूपंपारमार्थिकस्वरूपम् ॥ २८ ॥

तत्पारमार्थिकसद्रूपमेवाध्यस्तेयावत्कालंघटादेर्विद्यमानतातावत्तत्तादात्म्येनस्फुरद्वपुरास्तेतदेवस्वभावनियत्यादिशब्दैर्निगद्यते ॥२९॥ तत्रसाब्रह्मसत्तागगनरूपस्यप्रथमजस्य
स्वांगस्यांतःशब्दतन्मात्रकल्पयास्थित्याकुसूलांतर्गतेषुवीजेष्वनाविर्भूतांकुरशक्तिवद्वाय्वादिजगद्वीजशक्तितयाआशांतरूपिणीअनाविर्भूतातिष्ठति ॥ ३० ॥ ततस्तस्याःस
काशादिदंवायुतेजोंबुधरालक्षणभूतभौतिकात्मकंजगत्क्रमेणसंपद्यतेइतिदयंकल्पनासंमुग्धानामज्ञानांतत्त्वबोधायजगद्विरचनप्रतिपादनेच्छयाश्रुतिभिर्मुनिभिश्चकृतानसृष्टिरे
वतात्त्विकीतिप्रतिपादनाय ॥ तथात्वेमूर्खैरेवेयंसृष्टिकथाविरचितामुधैवस्यात् ॥ नहिवास्तवीसृष्टिरितिपरिज्ञानेकस्यचित्किंचित्प्रयोजनंदृष्टंश्रुतंवास्तीतिभावः ॥ ३१ ॥ यत
स्तत्तात्त्विकंब्रह्मरूपंनास्तमेतिनोदेतिच ॥ ततइदंप्रपंचरूपंपरसत्तयासदपिस्वतःअसदित्यर्थः ॥ ३२ ॥ अपृथक्सत्ताकत्वेब्रह्मांतर्जगदवयवप्रायमुदयास्तमयरहितमेवपर्यंतस्य

यद्यथास्फुरितंतस्ययावत्सत्तंस्फुरद्वपुः ॥ तत्स्वभावनियत्याख्यैःशब्दैरिहनिगद्यते ॥ २९ ॥ गगनांगस्यसत्तांतःशब्दतन्मात्रकल्पया ॥ कुशूलवीजांकुरवत्तिष्ठत्याशांतरूपिणी ॥ ३० ॥ संपद्यतेततइदमितीयंरचनेहया ॥ कृतासामुग्धबोधायमूर्खैर्विरचितामुधा ॥ ३१ ॥ नास्तमेतीहनोदेतितत्कदाचनकिंचन ॥ शिलाजठरवच्छांतमिदंनित्यंसदप्यसत् ॥ ३२ ॥ यथावयविनोनांतःसदैवावयवाणवः ॥ नास्तंयांतिनचोद्यंतिजगंत्यात्मपदेतथा ॥ ३३ ॥ ब्रह्मव्योम्निजगद्व्योमव्योमव्योम्नीवविद्यते ॥ तत्कथंकिलसंशुद्धमस्तमायात्युदेतिवा ॥ ३४ ॥ तस्यानंतप्रकाशात्मरूपस्याततचिन्मणेः ॥ सत्तामात्रात्मकचनंयदजस्रंस्वभावतः ॥ ३५ ॥ तदात्मनास्वयंकिंचिच्चेत्यतामिवगच्छति ॥ अगृहीतात्मकंसंविदूहामर्शनसूचकम् ॥ ३६ ॥ भाविनामार्थकलनैःकिंचिदूहितरूपकम् ॥ आकाशादणुशुद्धंचसर्वस्मिन्भाविबोधनम् ॥ ३७ ॥ ततःसापरमासत्तासतीतच्चेतनोन्मुखी ॥ चिन्नामयोग्याभवतिकिंचिल्लभ्यतयातया ॥ ३८ ॥ घनसंवेदनापश्चाद्भाविजीवादिनामिका ॥ साभवत्यात्मकलनायद्भवंतीपरंपदम् ॥ ३९ ॥ गर्भीकृत्यस्थितानाख्याचिदाकाशापिधानताम् ॥ संप्रतित्वतिशुद्धस्यपदस्यानन्यरूपिणी ॥ ४० ॥

ब्रह्मसत्तातिरिक्तजगत्सत्तापलापेजगच्छुद्धंब्रह्मैवपर्यवस्यतीत्यस्तोदयादिवैचित्र्यमस्यगतमित्याह ॥ ब्रह्म
तीत्याह ॥ यथेति ॥ आद्योनकारःपृथक्सत्तानिरासार्थः ॥ ३३ ॥ ब्रह्मसत्तातिरिक्तजगत्सत्तापलापेजगच्छुद्धंब्रह्मैवपर्यवस्यतीत्यस्तोदयादिवैचित्र्यमस्यगतमित्याह ॥ ब्रह्म
व्योम्नीति ॥ ३४ ॥ एवंजगतस्तत्त्वपर्यालोचनेब्रह्ममात्रतांप्रतिपाद्यब्रह्मणएवस्वतात्त्विकरूपविस्मरणेजगद्रूपापत्तिंवक्तुमुपक्रमते ॥ तस्येत्यादिना ॥ ३५ ॥ अगृहीतात्मकम
ज्ञातमतएवप्रथममन्यथाभावादूहामर्शनसूचकम ॥ ३६ ॥ ततऊहितरूपकंभाविप्रपंचपर्यालोचनात्तस्योद्बोधनम ॥ ३७ ॥ तस्यपर्यालोचितार्थस्यसम्यक्चेतनोन्मुखीसती
चेतयतीतिचिदितिव्युत्पत्त्यवसरलाभाच्चिन्नामयोग्याभवति ॥ ३८ ॥ तदुत्तरंयद्भवतितदाह ॥ घनेति ॥ यद्भवंतीसतीअधिकारिजन्मलाभेपुनःपरंपदंभवति ॥ ३९ ॥ ननुसा
सदैवपरंपदम् वचनेनतस्याअधिकारिदेहज्ञानलाभेनकोतिशयस्तत्राह ॥ गर्भीकृत्येति ॥ यतःसाजीवत्वेचिदाकाशाच्छादिकामविद्यांगर्भीकृत्यस्थिताअतःअनाख्याअप्र
ख्यायमानपरपदस्वभावाज्ञानलाभेसंप्रतिशुद्धस्यपदस्यानन्यरूपिणीलब्धाखंडैक्यैवसंपद्यतइत्यर्थः ॥ ४० ॥

तदाआवततादशायांस्वताआत्मतादात्म्याध्यासस्तदेकभावनामात्रसारेणदेहेंद्रियादिनासंसरणोन्मुखीसतीविनाभावःस्वरूपवियोगस्तत्कृतास्तामिमाः तमुग्लानौतमनंतामस्त न्निमित्तकर्माणितामिमाअनुतिष्ठति ॥ ताभिमाइतिपाठेताःप्रसिद्धाःअभिमानान्यभिमाः ॥ संधिरार्षः ॥ ४१ ॥ सास्वसत्ताएवैकेववस्त्वंतरशून्यरूपेवशब्दादिगुणगर्भिणीसविक ल्पचिद्भावनाभ्रांत्याअभिसंपन्ना ॥ भविष्यंतीनामाकाशादिपंचभूताभिधानामर्थताप्रवृत्तिनिमित्तभूतासूक्ष्मभूतात्मिकेतियावत् ॥ ४२ ॥ तयाअहंकारप्रधानलिंगदेहकल्प नामाह ॥ अहंतेति ॥ लिंगदेहघटकप्राणक्रियाप्रयुक्तकालसत्तया ॥ तेऽहंताकालसत्ते ॥ ४३ ॥ तत्रजीवचिदभिव्यक्त्यातत्रजगद्भ्रांतिरित्याह ॥ चितिशक्तेरिति ॥ ४४ ॥

स्वतैकभावनामात्रसारसंसरणोन्मुखी ॥ तदाविनाभावकृताअनुतिष्ठंतितामिमाः ॥ ४१ ॥ शून्यरूपास्वसत्तैकाशब्दादिगुणगर्भिणी ॥ चिद्भावनाभिसंपन्नाभविष्यदभिधार्थता ॥ ४२ ॥ अहंतोदेतितदनुसहवैकालसत्तया ॥ भविष्यदभिधार्थैतेबीजंमुख्यंजगत्स्थितेः ॥ ४३ ॥ चितिशक्तेःपरायास्तुस्वसंवेदनमात्रकम् ॥ जगज्जालमसद्रूपंचेतनात्सदिवस्थितम् ॥ ४४ ॥ एवंप्रायात्मिकासाचिद्बीजंसंकल्पशाखिनः ॥ अहंतांभावयत्यंतःसैवेहभवतिक्षणात् ॥ ४५ ॥ जीवाभिधानासैपाद्यभावाभावप्लवभ्रमैः ॥ भ्रमत्यात्मपदेवीचिरूपैर्वारीववारिणि ॥ ४६ ॥ चिदेवंभावनवतीव्योमतन्मात्रभावनाम् ॥ स्वतोघनीभूयशनैःखतन्मात्रंप्रचेतति ॥ ४७ ॥ भाविनामार्थरूपंतद्बीजंशब्दौघशाखिनः ॥ पदवाक्यप्रमाणाढ्यवेदार्थादिविकारिच ॥ ४८ ॥ तस्माद्रुदेष्यत्यखिलाजगच्छ्रीःशब्दतत्त्वतः ॥ शब्दौघनिर्मितार्थौघपरिणामविसारिणी ॥ ४९ ॥ चिदेवंव्यवसायासाजीवशब्देनकथ्यते ॥ भाविशब्दार्थजालेनबीजंभूतौघशाखिनः ॥ ५० ॥ चतुर्दशविधंभूतजातमावलितांबरम् ॥ जगज्जठरकर्णौघंतस्मात्संप्रसरिष्यति ॥ ५१ ॥ असंप्राप्ताभिधाचाराजीवत्वाच्चेतनेनचित् ॥ काकतालीयवत्स्पंदचिन्मात्रंचेततिस्वयम् ॥ ५२ ॥ पवनस्कंधरूपस्यबीजंत्वक्स्पर्शशाखिनः ॥ सर्वभूतक्रियास्पंदस्तस्मात्संप्रसरिष्यति ॥ ५३ ॥ तत्रयच्चिद्विलासस्यप्रकाशानुभवोभवेत् ॥ रूपतन्मात्रकंतद्भविष्यदभिधार्थदम् ॥ ५४ ॥

॥ ४५ ॥ आत्मपदेमायाशबलब्रह्मणि ॥ ४६ ॥ तस्याःसमष्टिहिरण्यगर्भरूपेणस्थूलपंचभूतकल्पनामाह ॥ चिदिति ॥ सूक्ष्मांव्योमतन्मात्रभावनांघनीभूयघनीभाव्य ॥ खतन्मात्रंस्थूलाकाशम् ॥ ४७ ॥ ४८ ॥ तस्मादिति ॥ सभूरितिव्याहरत्भुवमसृजत एतइतिवैप्रजापतिर्देवानसृजत असृग्रमितिमनुष्यान् इंदवइतिपितॄनित्यादिश्रुतेरितिभावः ॥ ४९ ॥ एवंव्यवसायाईदृशविचित्रसंकल्पवतीब्रह्मचिदेवजीवशब्देनकथ्यतेनान्येत्यर्थः ॥ ५० ॥ ५१ ॥ तस्याःस्वसृष्टभूतभौतिकभोगायसमष्टित्वगादींद्रियकल्पनाप्रकारमाह ॥ असंप्राप्तेत्यादिना ॥ नसंप्राप्तौअभिधाशब्दोव्यवहारःआचारःशरीरादिनाव्यवहारश्चययातथाविधासतीतदर्थंवक्ष्यमाणंचेततिकल्पयति ॥ ५२ ॥ ५३ ॥ ५४ ॥

प्रकाशानुभवस्यैवरूपतन्मात्रत्वमुक्तमुपपादयति ॥ प्रकाशचेतनमिति ॥ एवंस्पर्शाद्यपिबोध्यमित्याह ॥ स्पर्शेत्यादिना ॥ ५५ ॥ यथाखंखेनस्वेनैवस्वात्मकेकोशेअवकाशं प्राप्यतिष्ठतिनान्येनतथासंवेदनमपिस्वात्मकेनैवशब्देनशब्दकृत्शब्दग्राहकंनान्यदस्तीत्यर्थः ॥ ५६ ॥ सर्गादौसमष्टाविवेदानींव्यष्टावपितत्तत्संविदेवस्वस्यांतत्तदर्थाकारमध्य स्यजगद्रूपेणभासतेनान्यदितिबोध्यमित्याह ॥ किलेति ॥ तदायथातथाअद्यापि ॥ अवश्यंचेदंसर्वैर्वादिभिरभ्युपगंतव्यम् ॥ अन्यथासंविदांविषयव्यवस्थासिद्धेः ॥ संवित्ता दात्म्यमेवहिविषयाणांविषयतानत्वन्यावादिकोटिसहस्रैरप्युपपादयितुंशक्या ॥ नचशब्दादीनामसंविद्रूपेसंविदैक्यलक्षणंतादात्म्यंघटतेइत्याशयेनाह ॥ द्वैतैक्यस्येति ॥५७॥

प्रकाशचेतनंतेजोनतेजोन्यकृतंभवेत् ॥ स्पर्शसंवेदनंस्पर्शोनेतरस्पर्शसंभवः ॥ ५५ ॥ शब्दसंवेदनंशब्दःस्वतएवानुभूयते ॥ खंखेनेव स्वयंकोशेनान्यच्छब्दकृदस्तिहि ॥ ५६ ॥ किलतस्यामवस्थायांकोपरःशब्दकृद्भवेत् ॥ यथातथातदाद्यापिद्वैतैक्यस्यात्यसंभवात् ॥५७॥ एवंहिरसतन्मात्रंगंधतन्मात्रमेवच ॥ असत्यमेवसदिवस्वप्नाभमिवचेत्यते ॥ ५८ ॥ तेजःसूर्यादिजृंभाभिर्बीजमालोकशाखिनः ॥ तस्मा द्रूपविभेदेनसंसारःप्रसरिष्यति ॥ ५९ ॥ भविष्यदभिधस्याथखतःस्वतइवासतः ॥ स्वदनंतस्यसंघस्यरसतन्मात्रमुच्यते ॥ ६० ॥ भविष्य द्रूपसंकल्पनामासौसकलोगणः ॥ संकल्पात्माथतन्मात्रंगंधाद्यमनुचेतति ॥ ६१ ॥ भाविभूगोलकत्वेनबीजमाकृतिशाखिनः ॥ सर्वा धारात्मनस्तस्मात्संसारःप्रसरिष्यति ॥ ६२ ॥ अजातएवसंजातस्तन्मात्राणांगणस्त्विति ॥ अनाकारोपिसाकारःसंपन्नःकल्पनावशा त् ॥ ६३ ॥ एषतन्मात्रकगणःकाकतालीयवत्स्वयम् ॥ रूपंयेनप्रदेशेनवेत्त्यक्षीतितदुच्यते ॥ ६४ ॥ शब्दंयेनप्रदेशेनवेत्तिश्रोत्रंतदुच्यते ॥ स्पर्शंयेनप्रदेशेनवेत्तितत्तुत्वगिंद्रियम् ॥ ६५ ॥ रसंयेनप्रदेशेनवेत्तितद्रसनेंद्रियम् ॥ गंधंयेनप्रदेशेनवेत्तिघ्राणेंद्रियंतुतत् ॥ ६६ ॥ दिक्का लभेदान्[1]जीवोयंनियतामाकृतिंगतः ॥ सर्वेणांगेननोसर्ववेत्त्यसर्वात्मतावशात् ॥ ६७ ॥

शब्देदर्शितोन्यायोरसादिष्वपिबोध्यइत्याह ॥ एवंहीति ॥ ५८ ॥ प्रासंगिकंपरिसमाप्यप्रस्तुतमेवाह ॥ तेजइति ॥ अक्षिणीनिरभिद्येतांअक्षिभ्यांचक्षुश्चक्षुषआदित्यइत्यादिश्रु तेः ॥ ५९ ॥ असतःविकारशून्यात्स्वतआकाशतइव ॥ स्वदनंमाधुर्यसंवित् ॥ तस्यसंघस्यपंचीकृतस्यान्नपानादेः ॥ ६० ॥ अयंसकलोगणःकार्यकारणसमुदायात्माजीवः ॥ ६१ ॥ ६२ ॥ ६३ ॥ चक्षुरादिगोलकस्थानकल्पनामाह ॥ एषइत्यादिना ॥ ६४ ॥ ६५ ॥ ६६ ॥ द्विविधपरिच्छेदवत्पिंडाहंभावप्रयुक्तामस्यदिक्कालभेदकल्पनामाह ॥ दिगिति ॥ दिक्कालकलनांकरोतीतिशेषः ॥ किंचसर्वेणांगेनचक्षुःश्रोत्रादिनारसगंधादिसर्वंनवेत्तिएवंव्यष्टिभूतःसर्वशरीरेणसर्वंभोग्यंनवेत्ति ॥ असर्वात्मतादोषादित्यर्थः ॥६७॥

---

१ टीकानुरोधेनदिक्कालकलनांजीवोनियतामितिपाठोपेक्षितइतिभाति

तच्चानंतंकलनमात्मनोऽनन्यदात्मभूतमेव ॥ अत इतिअनयारीत्याअनुक्तमप्यनंतंसांसारिकंकलनंप्रतिजीवमात्मनोंतर्गतमनुमेयमानंत्याद्व्यप्रातिस्विकरूपेणवक्तुमशक्यम् ॥
स्तत्परमार्थतोनोदयमुपैतिनाप्यस्तंनाशमेतिकिंतूपलोदरवत्सच्चिदानंदैकघनंनिर्व्यापारमेवस्थितमित्यर्थः ॥ ६८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धे सप्ताशीत्युत्तरशततमःसर्गः ॥ १८७ ॥ जीवोब्रह्मैवतस्येयमुत्पत्तिरुपचारतः ॥ लिंगदेहस्यविभ्रांत्येत्यत्रस्पष्टंनिरूप्यते ॥ १ ॥ घनसंवेदनात्पश्चाद्भाविजीवादिनामिकेत्यादिना जीवोत्पत्तिरुपपादितासाचनयुक्ता ॥ अभिनवोत्पन्नजीवस्यसंसारहेतुकामकर्मवासनाद्यभावेनसंसारासिद्धेर्घटपटादिवन्मिथ्यात्वापत्त्याब्रह्मात्मभावायोगान्मोक्षासिद्धेश्चेत्या शंकारामस्यमाभूदितितत्तात्पर्यंभगवान्स्वयमेवाह ॥ आदिमत्वमिति ॥ कलनस्यचिदाभासात्मकजीवस्य ॥ तत्कलनंपरस्माद्ब्रह्मणःअद्वितीयमभिन्नमितित्वद्बोधायनतुवास्त वमुत्पत्त्यादिर्जीवस्यास्तीत्याशयेनेत्यर्थः ॥ १ ॥ कयारीत्यापरस्माद्द्वितीयमितिबोधनायतदाह ॥ एवंविधमिति ॥ तत्कलनमात्मनोब्रह्मणएवंविधमौपाधिकमंगमवयवःअत

इतिकलनमनंतमात्मनोंतर्गतमनुमेयमनन्यदात्मभूतम् ॥ नतदुदयमुपैतिनास्तमेतिस्थितमुपलोदरवद्घनंसुमौनम् ॥ ६८ ॥ ॥ इ० वा० वा० दे० मो० नि० उ० जीवत्वसंस्थितिप्रतिपादनंनामसप्ताशीत्युत्तरशततमःसर्गः ॥ १८७ ॥ ॥ ६९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ आदिमत्त्वमिदंप्रोक्तमेतस्यकलनस्ययत् ॥ परस्माद्द्वितीयंतत्त्वद्बोधायनवास्तवम् ॥ १ ॥ एवंविधंतत्कलनमात्मनोंगमकृत्रिमम् ॥ चेत्योन्मुखचिदाभासंजीवशब्देनकथ्यते ॥ २ ॥ कलनस्यास्यनामानिबहूनिरघुनंदन ॥ शृणुतानिविचित्राणिचेत्योन्मुखचिदात्मनः ॥ ३ ॥ जीवनाच्चेतनाज्जीवोजीवइत्येवकथ्यते ॥ चेत्योन्मुखतयाचित्तंचिदित्येवनिगद्यते ॥ ४ ॥ इदमित्थमितिस्पष्टबोधाद्बुद्धिरिहोच्यते ॥ कल्पनान्मननज्ञत्वान्मनइत्यभिधीयते ॥ ५ ॥ अस्मीतिप्रत्ययादंतरहंकारश्चकथ्यते ॥ चेतनाद्यस्ततंचित्तमितिशास्त्रविचारिभिः ॥ ६ ॥ प्रौढसंकल्पजालात्सपुर्यष्टकमितिस्मृतम् ॥ संसृतेःप्रकृतत्वेनप्राथम्यात्प्रकृतिःस्मृता ॥ ७ ॥ बोधादविद्यमानत्वादविद्येत्युच्यते बुधैः ॥ इत्यादिकलनस्यास्यनामानिकथितानिते ॥ ८ ॥ एततूकलनमाद्यंतमनाकारमनामयम् ॥ आतिवाहिकदेहोक्त्यासमुदाह्रियतेबुधैः ॥ ९ ॥ इत्येवंस्वप्नसंकल्पपुरवत्रिजगद्भ्रमः ॥ भात्यर्थकार्यप्यवपुःशून्यमप्रतिघात्मकम् ॥ १० ॥

तदा एवाकृत्रिमम् ॥ चेत्योन्मुखेतिप्रागुक्तस्यानुवादः ॥ तथाचौपाधिकएवपृथग्भावस्तत्प्रयुक्तजीवादिनामभेदश्चपरस्यैवघटाकाशमठाकाशादिरूपनामभेदआकाशस्येवेतिभावः ॥ २ ॥ औपाधिकप्रवृत्तिनिमित्ततद्भेदनिमित्तान्नामभेदान्जीवस्यश्रावयति ॥ कलनस्येत्यादिना ॥ ३ ॥ जीवनान्मुख्यप्राणस्यकर्मेंद्रियाणांचधारणात् चेतनाज्ज्ञानेंद्रियाणांधारणाच्चजीवः पूर्वानुभूतातीतानागतचेत्योन्मुखतयाहेतुनाचित्तमिति सन्निकृष्टचेत्योन्मुखतयाचिदितिचनिगद्यते ॥ ४ ॥ कल्पनात्संकल्पनात् ॥ मननमूहापोहादितज्ज्ञत्वाच्चमनइत्यभिधीयते ॥ ५ ॥ अस्मीत्यभिमानोल्लेखः ॥ पामरसाधारणव्युत्पत्त्याप्राक्चित्तनामव्याख्यातम् पंडितप्रसिद्धातुचितीसंज्ञानेइतिधातुव्युत्पत्तेःस्वतत्त्वचेतनाद्यंकृतंपरमार्थवस्तुआत्मैवचित्तपदवाच्यंमुख्यमितिशास्त्रविचारिभिरुक्तमित्यर्थः ॥ ६ ॥ सजीवःसंकल्पादिभिःपूर्यतइतिपुर्यस्तासामष्टकमितिव्युत्पत्तेरितिभावः ॥ प्रकृतत्वेनसर्गादिकालेप्रस्तुतत्वेनततःप्राथम्यात् ॥ ७ ॥ बोधात्तत्त्वदर्शनादौपाधिकरूपेणाविद्यमानत्वात् ॥ ८ ॥ ९ ॥ अर्थोभोगमोक्षौतत्कार्यपिअवपुर्निःस्वरूपम् ॥ १० ॥

॥ ११ ॥ कियत्कालंसतिष्ठतितत्राह ॥ आमोक्षसंविदइति ॥ भूतसर्गस्यचित्तरूपाभूःप्ररोहस्थानम् ॥ १२ ॥ १३ ॥ अंतर्बहिरपिजगंतिआदर्शःप्रतिबिंबमिवधत्तेतथापिस्वंशू
न्यएवेत्यर्थः ॥ १४ ॥ कदाप्रभृत्ययंजगंतिधत्तेइत्यत्राह ॥ महाकल्पस्येति ॥ प्राकृतप्रलयस्यपर्यंतेचरमक्षणे ॥ १५ ॥ अचित्वाच्चिदावरकाज्ञानान्निमित्तात् ॥ अनेनप्रागु
क्तेनक्रमेण ॥ १६ ॥ सजीवएवातिवाहिकोदेहस्तस्ययोजगदालोकनात्मकआलोकस्तेनप्रवर्तितःकश्चिद्भागोब्रह्माचतुर्मुखोहमितिकथितःशास्त्रेषु ॥ १७ ॥ सनातनपदेनस
नकादीनांब्रह्मपुत्राणामुपलक्षणम् ॥ १८ ॥ यत्रभागेपंचस्वेंद्रियसंविदोभातास्तत्रतत्रतथार्थाःस्थिताः ॥ १९ ॥ ततंविस्तीर्णमात्मतत्त्वंयतःसर्वंदृश्यशून्यम् ॥ २० ॥ सतआति

च इत्यातिवाहिकःप्रोक्तोदेहोदेहभृतांवर ॥ चिन्नभश्चित्तदेहोसौशून्यआकाशतोपिच॥ ११ ॥नास्तमेतिनचोदेतिजगत्यामोक्षसंविदः॥ चतुर्दशविधस्यैकाभूतसर्गस्यचित्तभूः॥ १२ ॥ अत्रसंसारलक्षाणिभविष्यंतिभवंतिच ॥ भूतानिचफलानीवयथाकालव्यवस्थया ॥ १३ ॥ एषचित्तमयोदेहोजगंत्यंतर्बहिस्त्वपि ॥ प्रतिबिंबमिवादर्शःशून्यएवनभोयथा ॥ १४ ॥ महाकल्पस्यपर्यंतेसर्वनाशेस्थिरेस्थिते ॥ महाशून्यपदेप्रौढब्रह्मात्मनिनिरामये ॥ १५ ॥ स्वतश्चितिघनोचित्त्वाच्चिद्भानमिदमात्मनः॥ आतिवाहिकदेहाभंक्रमेणानेनचेतति॥ १६ ॥ सआतिवाहिकोदेहस्तदालोकप्रवर्तितः॥ कैश्चिद्ब्रह्मेतिकथितःस्मृतःकैश्चिद्विराडिति ॥ १७ ॥ कश्चित्सनातनाभिख्यःकश्चिन्नारायणाभिधः॥ कश्चिदीशइतिख्यातःकश्चिदुक्तःप्रजापतिः॥ १८ ॥ काकतालीयवद्भाताःपंचस्वेंद्रियसंविदः॥ यत्रयत्रयथातेपांस्थितास्तत्रतथास्थिताः ॥ १९ ॥ एवमत्यंतविततेसंपन्नेदृश्यविभ्रमे ॥ नकिंचिदपिसंपन्नंसर्वंशून्यंततंयतः ॥ २० ॥ अनादिमत्परंब्रह्मनसद्यन्नासदुच्यते ॥ तदेवेदमनाद्यंतंतथास्थितमवेदनम् ॥ २१ ॥ आतिवाहिकदेहस्यतस्यानुभवतःस्वयम् ॥ यातिव्यसनिनःस्वप्नःकांतवपरिपुष्टताम् ॥ २२ ॥ भवत्यर्थंकरोत्युच्चैस्तच्चित्स्वस्वप्नवस्तुवत् ॥ शून्योप्यनाकृतिरपिघटाकारोनुभूयते ॥ सप्नसंकल्पयोःस्वस्यदेहस्यजगतोयथा ॥ २३ ॥ अनाकारोपिशून्योपिस्वप्नाभोसन्नपिस्थिआकाशात्मकएवोग्रःपदार्थइवभासते॥ २४ ॥ आतिवाहिकदेहोसौस्वतोनुभवतिक्रमात् ॥ जन्मकर्मेहितस्यानंपरिणातः॥ २५ ॥ चेतत्यस्थिगणःस्थूलंकराद्यवयवावलिम् ॥ त्रिकलोमशिरास्नायुसंनिवेशतयास्थितम् ॥ २६ ॥ शून्यमवयःस्थितम् ॥ देशकालक्रमाभोगभावार्थायोद्भवभ्रमम् ॥ २७ ॥

भूतम् ॥ असततिरोभूतम् ॥ यत
स्तदेवअवेदनंस्वरूपसाक्षात्काररहितंसत्तथासदसदाकारेणस्थितम् ॥ २१ ॥ अयंप्रपंचःकांतानुसंधानव्यसनिनोविधुरस्यस्वप्नकांतिवपरिपुष्टतांयाति ॥ २२ ॥ जगच्छून्यस्यैव
जगदात्मनाभानेदृष्टांतांतरमाह ॥ शून्योपीति ॥ स्वतएवस्वदेहस्यजगतश्चासतोभानेयथादृष्टांतइत्यर्थः ॥ २३ ॥ तादृशस्याप्यर्थक्रियासामर्थ्यंतथैवप्रसिद्धमित्याह ॥ भवतीति ॥ उग्रःकठिनः ॥ २४ ॥ २५ ॥ सचातिवाहिकदेहरूपोजीवःअस्थिगणःस्थूलंत्रिकस्यपृष्ठवंशस्यलोम्नांआतानवितानत्वभेदान्मांसास्थिवेष्टनत्वोपाधिभेदाद्वाशिरास्नाय्वो
भेदस्तासांसंनिवेशात्मतयास्थितंस्थूलशरीरंदेशकालक्रमासनशब्दादिविषयभोगार्थायचेततीत्यन्वयः ॥ २६ ॥ तस्मिंश्चदेहेउद्भवोजन्मतद्भ्रमंचेतति ॥ २७ ॥

तथाजरामरणंगुणदोषाद्याधानंदशदिङ्मंडलेपुक्रमणंक्रमोभ्रमणंज्ञानादित्रिपुटीसर्वभावानामादिमध्यांतवेदनंचचेतति ॥ २८ ॥ एवमातिवाहिकदेहभूतःपुरातनःपुरुषःस्वकल्पितादेवव्यष्टिसमष्टिस्थूलवपुषोनिमित्तात्स्वयमेवक्षित्यादिशिखरांतात्मासन्स्वस्यपृथ्व्यादयआधाराःस्वयंतुतदाधेयइतिभ्रांतिमयंसंसारस्वमंपश्यतीत्यर्थः ॥ २९ ॥ ॥ इतिश्रीवासिष्ठ॰तात्पर्यप्रकाशेनिर्वाणप्रकरणेउ॰ष्टाशीत्युत्तरशततमःसर्गः ॥ १८८ ॥ ॥ ७ ॥ ॥ आतिवाहिकदेहात्मप्रजापतिमनोरथे ॥ आधिभौतिकताभ्रांतिर्जगत्यत्रोपवर्ण्यते ॥ १ ॥ कश्चिद्ब्रह्मेतिकथितःस्मृतःकश्चिद्विराडितीत्यादिप्रपंचितप्रकारेणयद्यद्यथाचेततितत्तत्तथास्थितिमायातीतिपरेणान्वयः ॥१॥ संवित्सत्यसंकल्पसंवित्तत्स्वभावतइ

जरामरणमाधानदशदिङ्मंडलक्रमम् ॥ ज्ञानज्ञेयज्ञातृभावमादिमध्यांतवेदनम् ॥ २८ ॥ क्षितिजलगगनदिवाकरजनताव्यवहारनगशिखरात्मा ॥ स्वाधाराधेयमयंपश्यतिवपुषःपुरातनःपुरुषः ॥ २९ ॥ ॥ इ॰वा॰महारामायणेवा॰दे॰मो॰नि॰उ॰जीवरूपवर्णनंनामाष्टाशीत्युत्तरशततमःसर्गः ॥ १८८ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ आतिवाहिकदेहोसौतस्याद्यस्यप्रजापतेः ॥ काकतालीयवच्चित्वाद्यद्यथेत्यादिचेतति ॥ १ ॥ तत्तथास्थितिमायातिचिरंसंवित्स्वभावतः ॥ बतविश्वमिदंभातमत्रासत्येकुतःस्मयः ॥ २ ॥ द्रष्टाऽसत्यमसत्यंदृगसत्यंदर्शनंततम् ॥ सत्यमेवाथवासर्वंब्रह्मैवात्मतयातया ॥ ३ ॥ ॥ श्रीरामउवाच ॥ ॥ इत्यातिवाहिकालोकःसतस्याद्यप्रजापतेः ॥ कठिनत्वंकथंयातःकथंस्वप्नस्यसत्यता ॥ ४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ आतिवाहिकआलोकःस्वतएवानुभूयते ॥ सदानवरतंतेनसएवाभातिपुष्टवत् ॥ ५ ॥ यथास्वप्नस्यपुष्टत्वंचिरानुभवनोचितम् ॥ अतिसत्यमिवाभातिस्वातिवाहिकतातथा ॥ ६ ॥ आतिवाहिकदेहस्यचिरस्वानुभवोदये ॥ आधिभौतिकताबुद्धिरुदेतिमृगवारिवत् ॥ ७ ॥ जगत्स्वप्नभ्रमाभासंमृगतृष्णांबुवत्स्थितम् ॥ असदेवेदमाभातिसत्यप्रत्ययकार्यपि ॥ ८ ॥ आतिवाहिकरूपाणामाधिभौतिकतास्वयम् ॥ असतीसत्यवद्दूरमर्वाग्दर्शिभिरर्थिता ॥ ९ ॥ अयंसोहमिदंतन्मइमागिरिनभोदिशः ॥ इतिमिथ्याभ्रमोभातिभास्वरस्वप्नशैलवत् ॥ १० ॥ आतिवाहिकदेहोसौस्रष्टुराद्यस्यभावितः ॥ आधिभौतिकतांचैतत्पिंडाकारंप्रपश्यति ॥ ११ ॥

दंविश्वंभातंबतेतिखेदे ॥ २ ॥ अतोभ्रांतिमात्रत्वाद्द्रष्ट्रादित्रिपुटीअसत्यादृश्यतइतिदृक्दृश्यम् ॥ दर्शनंवृत्तिः ॥ ३ ॥ इतिअनयारीत्याआतिवाहिकआलोकनमालोकोभ्रांतिदर्शनमात्रंचेत्सकठिनत्वंशिलादिभावम् ॥ सत्यतापारलौकिकफलाद्यर्थक्रियासमर्थता ॥ ४ ॥ सदानैरंतर्येण ॥ तथाचिराभ्यासात्पुष्टवत्घनीभूतइवाभाति ॥ ५ ॥ यथाहरिश्चंद्रादेःस्वप्नस्यचिरानुभवनोचितंपुष्टत्वंतथेत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥ अर्वाग्दर्शिभिरविवेकिभिः ॥ अर्थिताआसक्त्यास्वीकृता ॥ ९ ॥ १० ॥ एतत्पृथिवीशरीरादिरूपंपिंडाकारम् ॥ ११ ॥

ब्रह्माहमितियथार्थंचेतनंत्यक्त्वाअयंदेहोमनुष्यादिरहंअयंपृथ्व्यादिर्ममाधारइतिपश्यतितत्रचभावनामास्थांबध्नाति ॥१२॥ अनुधावत्यनुसरति ॥१३॥ प्रथमंवैदिकलौकिक शब्दान्करोतिसृजति ॥ तेषांचतत्तदुपाधिमतिअर्थेसंकेतंकरोतिसंकेतेनसंज्ञाःकरोति ॥ शब्दकरणप्रकारमाह ॥ ओमित्युक्तेइति ॥१४॥१५॥ यन्मयोयदासक्तः ॥ स्वांमयोजा त्मइतिवत् ॥ १६ ॥ आब्रह्मणआमशकात्इत्यनयारीत्याआधिभौतिकताकाठिन्यादिस्वभावताउच्चितवनानुच्चिता ॥ १७ ॥ एतामाधिभौतिकभावनाम् ॥ १८ ॥ मूलभूता द्ब्रह्मणःस्रष्टुःसकाशादेवएवंरूपोमोहोयमायातइतिहेतोरेषजगद्दर्शनरूपोभ्रमोमहात्मनांतत्त्वविदामपियावत्प्रारब्धक्षयमस्तीत्यर्थः ॥ १९ ॥ चिदेकरसस्यब्रह्मणएवंरूपाइत्थंदु

चिन्नभश्चेतनंत्यक्त्वाब्रह्माहमितिपश्यति ॥ अयंदेहोयमाधारइतिबध्नातिभावनाम् ॥ १२ ॥ असत्येसत्यबुद्ध्यैवबद्धोभवतिभावनात् ॥ बहुशोभावयत्यंतर्नानात्वमनुधावति ॥ १३ ॥ शब्दान्करोतिसंकेतंसंज्ञाश्चस्पंदनानिच ॥ ओमित्युक्तेततोवेदाञ्छब्दराशीन्प्रगायति ॥ १४ ॥ तैरेवकल्पयत्याशुव्यवहारमितस्ततः ॥ मनोत्यसौकल्पयतियच्चेततितदेवहि ॥ १५ ॥ योहियन्मयएवासौसनपश्यतितत्कथम् असत्यैवजगद्भ्रांतिरेवंप्रौढिमुपागता ॥ १६ ॥ आब्रह्मणोमुधाभातिचिरस्वप्नेंद्रजालवत् ॥ इत्यातिवाहिकस्येयमाधिभौतिकतोचिता ॥ १७ ॥ आधिभौतिकतानास्तिकाचित्किंचिदपिक्वचित् ॥ आतिवाहिकतैवैनामभ्यासाद्यातिभावनाम् ॥ १८ ॥ मूलादेवैवमायातोमिथ्यानुभवनात्मकः ॥ मोहोब्रह्मणएवायमित्यस्येषमहात्मनाम् ॥ १९ ॥ एवमित्थंदशारामपिंडबंधःक्वविद्यते ॥ भ्रांतिरेवेदमखिलंब्रह्मैवाभातमेववा ॥ २० ॥ नशाश्वतादन्यदिहास्तिकारणान्नकारणंतत्खलुकार्यतांविना ॥ नकार्यताकारणतादिसंभवोस्यनामयेतत्किमपीदमाततम् ॥ २१ ॥ ॥ इत्यार्षेवा० महारामायणेवा० दे० मो० निर्वाणप्रकरणेउ० ब्रह्मैकताप्रतिपादनंनामैकोननवत्युत्तरशततमः सर्गः ॥ १८९ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ ज्ञानस्यज्ञेयतापत्तिर्बंधइत्यभिधीयते ॥ तस्यैवज्ञेयताशांतिर्मोक्षइत्यभिधीयते ॥ १ ॥

दृशाक्वविद्यतेकिंत्विदमखिलंसंसारदुर्दशादिभ्रांतिरेव ॥ अथवाब्रह्मैवकौतुकवशाज्जगज्जीवाद्याकारेणाभातम् ॥ नहिस्वाकारःस्वस्यदुर्दशेत्यर्थः ॥ अंतेबंधमोक्षविभागनिष्क र्षप्रदर्शनंचैतत् ॥ २० ॥ शाश्वताद्ब्रह्मणोन्यत्कारणंजगतोनास्ति ॥ तच्चकार्यतांविनाकारणंन ॥ अनामयेकूटस्थचिदानंदाद्वयेब्रह्मणिकार्यताकारणतादिसंभवएवनास्तिनत्तस्मा द्धेतोरिदंजगदाकारंकिमपिभ्रांतिमात्रमाततंविस्तृतंनवस्तुसदितिनिष्कर्षइत्यर्थः ॥ २१ ॥ ॥ इतिश्रीवासिष्ठ० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकोननवत्युत्तरशततमः सर्गः ॥ १८९ ॥ ॥ ५ ॥ ॥ अतीतानागताःशंकाःसर्वाःसंमृज्ययुक्तिभिः ॥ ज्ञानस्यज्ञेयताशांतिर्मुक्तिरत्रोपपाद्यते ॥ १ ॥ भ्रांतिरेवेदमखिलंब्रह्मैवाभातमेववेति बंधमोक्षनिष्कर्षप्रदर्शनमंतेयत्कृतंतत्परिष्कृत्याह ॥ ज्ञानस्येति ॥ १ ॥

अत्ररामःसर्वेषामुपकारायप्राक्समाहिताअपिशंकाःप्रश्नोत्तरमालिकाक्रमेणोद्दाव्यसमाधानक्रमप्रख्यापनकामस्तदुपायंप्रथमंपृच्छति ॥ ज्ञानस्येति ॥ रूढादृढाभ्यस्ता ॥ क थंकेनोपायेन ॥ २ ॥ शमदमादिसाधनसहितदृढाभ्यस्तसम्यग्ज्ञानलक्षणेनप्रबोधेनमंदबुद्धिर्भ्रांतिर्निवर्त्तते ॥ अपगतेचभ्रांतिस्त्वमेएवंविधाज्ञेयताशांतिरूपामुक्तिर्भूमिकापरि पाकक्रमेणप्रवर्त्तते ॥ ३ ॥ अनेकविशेषवतोरत्नादेःकतिपयविशेषेपुज्ञातेष्वपिविशेषांतरज्ञानायपुनःपुनःपर्यालोचनजन्यंसम्यग्ज्ञानमन्यत्स्यात् ॥ निर्विशेषेतुवस्तुन्यापातज्ञा नापेक्षयासम्यग्ज्ञानमन्यत्किंस्याद्येनास्यबंधोनिवर्त्ततइतिशंकार्थः ॥ ४ ॥ अधिष्ठानचिन्मात्ररूपस्यज्ञेयताकालत्रयेपिनास्तीतिसर्वदृश्यबाधपर्यवसितएवतत्त्वसाक्षात्का रः ॥ आपाततोज्ञानंतुनतथेत्युत्तरार्थः ॥५॥ चिदेकरसस्यात्मनोंतस्तद्भिन्नाज्ञेयताका ॥ तथायंज्ञानशब्दःकिंभावेउत्पाद्योव्युत्पादनीयःअर्थांकिंकरणेव्युत्पादनीयइतिप्रश्नार्थः

श्रीरामउवाच॥ ॥ज्ञानस्यज्ञेयताशांतिःकथंब्रह्मन्प्रवर्त्तते॥सारूढाबंधताबुद्धिःकथंवात्रनिवर्त्तते॥ २॥ ॥श्रीवसिष्ठउवाच॥ ॥ सम्यग्ज्ञानेनबोधेनमंदबुद्धिर्निवर्त्तते॥ निराकारानिजाशांतामुक्तिरेवंप्रवर्त्तते॥ ३॥ ॥श्रीरामउवाच॥ ॥बोधःकेवलतारूपःसम्य ग्ज्ञानंकिमुच्यते॥ येनबंधादयंजंतुरशेषेणविमुच्यते॥ ४॥ ॥श्रीवसिष्ठउवाच॥ ॥ज्ञानस्यज्ञेयतानास्तिकेवलंज्ञानमव्ययम्॥ अ वाच्यमितिबोधोंतःसम्यग्ज्ञानमितिस्मृतम्॥५॥ ॥श्रीरामउवाच॥ ॥ज्ञानस्यज्ञेयताभिन्नात्वंतःकेतिमुनेवद॥ उत्पाद्योज्ञानशब्द श्चभावेवाकरणेथकिम्॥६॥ ॥श्रीवसिष्ठउवाच॥ ॥बोधमात्रंभवेज्ज्ञानंभावसाधनमात्रकम्॥ नज्ञानज्ञेययोर्भेदःपवनस्पंदयोरि व॥ ७॥ ॥श्रीरामउवाच॥ ॥एवंचेत्तत्कथमयंज्ञानज्ञेयादिविभ्रमः॥ सिद्धःशशविषाणाभोभविष्यद्भूतभव्यशः॥ ८॥ ॥श्रीवसि ष्ठउवाच॥ ॥बाह्यार्थभ्रांतितोज्ञेयाभ्रमबुद्धिरिहोदिता॥ बाह्यश्चाभ्यंतरश्चार्थोनसंभवतिकश्चन॥ ९॥ ॥श्रीरामउवाच॥ ॥यो यंप्रत्यक्षदृश्योर्थोमुनेत्वमहमादिकः॥ भूतादिरनुभूतात्मासकथंनास्तिमेवद॥ १०॥ ॥श्रीवसिष्ठउवाच॥ ॥आदिसर्गविधावेव विराडात्मादिकोनघ॥ जातोनकश्चिदेवार्थोज्ञेयस्यातोनसंभवः॥ ११॥

॥ ६ ॥ भावेएवज्ञानशब्दोव्युत्पाद्यः ॥ ज्ञेयजगद्रूपताचज्ञानस्यैवमायिकोविकल्पोनैकरस्यविघातकइत्युत्तरार्थः ॥ ७ ॥ एवंचेत्तत्तर्हिसविकल्पःशशविषाणकल्पःकथंप्रत्य क्षादिभिर्भूतभव्यभविष्यद्विभागैर्व्यवहारक्षमोभासतेइतिप्रश्नार्थः ॥ ८ ॥ नासत्वमभानेअर्थक्रियासामर्थ्येवाप्रयोजकम् स्वमभ्रांतिज्ञानेअसत्सहस्रस्यापितद्दर्शनात् किंतु बाधस्तत्प्रयोजकः सचात्रविचारवतांयौक्तिकस्तत्त्वविदामपरोक्षश्चास्त्येवेत्युत्तरार्थः ॥ ९ ॥ लौकिकप्रत्यक्षादिमानसिद्धस्यकथमपलापइतिप्रश्नार्थः ॥ १० ॥ आदिसर्गेजग तोमायातिरिक्तसामग्र्याद्दुर्वचत्वाद्भ्रांतिमात्रत्वेअवश्यंवक्तव्येसंप्रत्यपितथैववाच्यमितिव्यवहारमात्राविसंवादेनचरितार्थानिलौकिकप्रत्यक्षादीनितत्त्वगोचरयुक्तिभिःश्रुतिभि श्चबाध्यंतइत्युत्तराशयः ॥ तथाचश्रुतिः ॥ ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकः ॥ नमुमुक्षुर्नवैमुक्तिरित्येषापरमार्थतेति ॥ ११ ॥

भूतभविष्यदाद्यनंतवस्तुगोचराणामनंतानांसर्वजनीनानांप्रत्यक्षादीनामेकेनतत्त्वज्ञानेनकथंबाधइतिशंकार्थः ॥ १२ ॥ तादृशानामपित्वामज्ञानानामेकेनजागरेणबाधदर्शना
दित्युत्तरार्थः ॥ १३ ॥ कयायुक्त्याबाधइतिप्रश्नार्थः ॥ १४ ॥ कारणाभावयुक्त्येत्युत्तरार्थः ॥ १५ ॥ ब्रह्मैवकारणंकिंनस्यादितिप्रश्नार्थः ॥ १६ ॥ ब्रह्मणश्चिदेकरसत्वेनतत्र
गद्बीजशक्त्ययोगादित्युत्तरार्थः ॥ १७ ॥ तर्हिसांख्याभिमतगुणेष्विवब्रह्मणिसूक्ष्मरूपेणतदाजगदस्तुइतिप्रश्नार्थः ॥ १८ ॥ तत्सत्तायाःसाधकाभावादेकरस्यश्रुतिबाधितत्वा
च्चाभ्युपगंतुमशक्यत्वादित्युत्तराशयः ॥ १९ ॥ तर्हिज्ञस्यैकरसतयैवतदात्वप्रकाशात्तत्सत्तास्तुनमायाकाशात्मिका तस्याःशून्यतापर्यवसानेनअसतःसदात्मनासर्गेआगमनायो

श्रीरामउवाच॥ ॥भविष्यद्भूतभव्यस्थाजगद्दृष्टिरियंमुने॥ नित्यानुभूयमानापिनजातेतिकिमुच्यते॥१२॥ ॥श्रीवसिष्ठउवाच॥ ॥स्व
प्नार्थमृगतृष्णांबुद्वींदुसंकल्पितार्थवत्॥ मिथ्याजगदहंत्वंचभातिकेशोंड्रकंयथा ॥ १३ ॥ ॥श्रीरामउवाच॥ ॥अहंत्वमयमित्यादि
जगज्जठरमप्यलम्॥ कथंनजातंभगवन्सर्गादावनुभूतिमत् ॥ १४ ॥ ॥श्रीवसिष्ठउवाच॥ ॥कारणाज्जायतेकार्यंनान्यथेत्येवनि
श्चयः॥ सर्वोपशांतौजगतामुत्पत्तौनास्तिकारणम्॥ १५॥ ॥श्रीरामउवाच॥ ॥ महाप्रलयसंपत्तौशिष्टंयदजमव्ययम्॥ तत्कथंना
मसर्गस्यनभवेत्कारणंमुने॥ १६॥ ॥श्रीवसिष्ठउवाच॥ ॥यदस्तिकारणेकार्यंतत्तस्मात्संप्रवर्त्तते॥ नत्वसज्जायतेरामनघटाज्जाय
तेपटः॥ १७॥ ॥श्रीरामउवाच॥ ॥ जगत्सूक्ष्मेणरूपेणमहाप्रलयआगते ॥ आस्तेब्रह्मणितत्तस्मात्पुनरेवप्रवर्त्तते॥ १८॥ ॥श्रीव
सिष्ठउवाच॥ ॥महाप्रलयपर्यंतेकेनसर्गास्तितानघ॥ अनुभूतामहाबुद्धेतत्रस्थासाचकीदृशी॥ १९॥ ॥श्रीरामउवाच॥ ॥ज्ञस्या
त्मिकाश्रीस्तत्रस्थातादृशैरनुभूयते ॥ व्योमात्मिकातुनभवेन्नसत्तामसदेतिहि॥ २०॥ ॥श्रीवसिष्ठउवाच॥ ॥एवंचेत्तन्महाबाहोज्ञ
प्तिरेवजगत्त्रयम्॥ विशुद्धज्ञानदेहस्यकुतोमरणजन्मनी ॥ २१ ॥ ॥श्रीरामउवाच॥ ॥तदेवमादितोनास्तिसर्गस्तदियमागता॥ कु
तःकथमिवभ्रांतिरिरितिमेभगवन्वद॥२२॥ ॥श्रीवसिष्ठउवाच॥ ॥कार्यकारणताभावाद्भावाभावौस्तएवनो॥ इदंचचेत्यतेयद्यत्स्वा
त्माचेततिचेतितम्॥२३॥ ॥श्रीरामउवाच॥ ॥चेतिताचेततियंत्रंद्रष्टादृश्यस्त्वमीश्वरः॥ कथमेतिकथंवह्निर्दहेत्काष्ठंकदाकिल॥२४॥

गादितिप्रश्नार्थः ॥ हियस्मादसतःसत्तांनेति ॥ २० ॥ एवंचेच्चिदेकरसमेवततोजगत्स्यात्तथाचभेदकाभावेकोजगच्छब्दार्थइत्युत्तराशयः ॥ २१ ॥ तर्हिजगद्भ्रांतेःकिंकारणमि
तिप्रश्नार्थः ॥२२॥ नवास्तवंकारणंतत्कार्यंभावात्मकंजगद्वाअस्तिमाययातुब्रह्मैवतत्तत्त्रिपुटीवपुःधत्तेइत्युत्तरार्थः ॥ यद्यच्चेत्यतेयच्चेतितंयच्चचेततितत्त्रयमपिस्वात्मैवेत्यर्थः॥२३॥
नन्विदंविपरीतम्॥यंत्रसदृशःकार्यकारणसंघातःअचिद्रूपश्चेतिताद्रूपत्वात्सर्वद्रष्टाचेश्वरोजडरूपंदृश्यत्वमेतीतिकाष्ठंदग्धृभूत्वावह्निदाहंकृत्वाकदाकिलदहेदितिशंकार्थः॥२४॥

नद्रष्टादृश्यत्वंयातीतिवयंप्रतिपादयामःकिंतुदृश्यादित्रिपुटीद्रष्टृकैवल्यरूपदृङ्मात्रमेवैकघनाकृतिःस्वयंभातीतिनाकिंचिद्विपरीतंकिंतुसर्ववैपरीत्यनिवृत्तिरेवेत्युत्तराशयः ॥२५॥ सर्गादावचेतितजगत्प्रतिभासासिद्धेःशुद्धचिन्मात्रमेवतदाचेत्यंचेतयतेइत्यवश्यंवाच्यम् ॥ तत्रचेत्यस्यकुतःसंभवस्तद्वदेतिप्रश्नार्थः ॥२६॥ चेत्यंचेत्सर्गादौसंभूतंस्यात्तदातत्कुतःसंभूतमितिप्रश्नावसरःस्यात् अत्यंतासंभूतस्यवंध्यापुत्रकल्पस्यकिमुपपत्तिजिज्ञासयेतिनित्यमुक्तएवात्माप्रतिपत्तव्यइत्युत्तरार्थः ॥ अवाच्यतावक्तुमनर्हता ॥ २७ ॥ नित्यमुक्तत्वंचेदहंतादिप्रतिभासएवकदापिनस्यादितिगुरुशास्त्रादिवैफल्यमितिशंकाशयः ॥ २८ ॥ नोत्पन्नमेवकिंचिदितिनित्यमुक्तताप्रतिबोधनेनजगद्बंधविभ्रमशांतिरेवशास्त्रादिफलमित्युत्तराशयः ॥ २९ ॥ अत्रमेब्रूह्युत्तरमितिशेषः ॥ विगतोल्लेखेवागगम्येसकृद्विभातेसदास्वप्रकाशेनित्यमुक्तेब्रह्मणिविभ्रमएवकस्यकुतोवानिमित्तात्कीदृशःकिंप्रकारश्च ॥

श्रीवसिष्ठउवाच॥ ॥द्रष्टानयातिदृश्यत्वंदृश्यस्यासंभवादतः॥ द्रष्टैवकेवलोभातिसर्वात्मैकघनाकृतिः॥ २५॥ ॥श्रीरामउवाच॥ चिन्मात्रंतदनाद्यंतंचेत्यंचेतयतेतदा॥ तदिदंजगदाभानंकुतःस्याच्चेत्यसंभवः॥ २६॥ ॥श्रीवसिष्ठउवाच॥ ॥चेत्यंहिकारणाभावान्नसंभवतिकिंचन॥ चेत्याभावाच्चेतनस्यमुक्तताऽवाच्यतासदा॥ २७॥ ॥श्रीरामउवाच॥ ॥ एवंचेत्तदहंतादिचेत्यंकथमिदंकुतः॥ कथंजगद्वेदनंचकथंस्पंदादिवेदनम्॥ २८॥ ॥श्रीवसिष्ठउवाच॥ ॥कारणासंभवादादावेवोत्पन्नंनकिंचन॥ कुतश्चेत्यमतःशांतंसर्वंसर्गस्तुविभ्रमः २९ ॥श्रीरामउवाच॥ ॥ अत्रमेविगतोल्लेखेनिश्चेत्यचलनादिके॥ सकृद्विभातेविमलेविभ्रमःकस्यकीदृशः॥ ३०॥ ॥श्रीवसिष्ठउवाच॥ ॥कारणाभावतोरामनास्त्येवखलुविभ्रमः॥ सर्वंत्वमहमित्यादिशांतमेकमनामयम्॥ ३१॥ ॥श्रीरामउवाच॥ ॥ब्रह्मन्भ्रममिवापन्नःप्रष्टुंजानामिनाधिकम्॥ नात्यंतंचप्रबुद्धोस्मिपृच्छामिकिमिहाधुना॥ ३२॥ ॥श्रीवसिष्ठउवाच॥ ॥कारणस्यैवनिकषंपृच्छमाकारणक्षयात्॥ परेस्वभावेनिर्वाच्येस्वयंविश्रांतिमेष्यसि॥ ३३॥ ॥श्रीरामउवाच॥ ॥मन्येहंकारणाभावात्पूर्वमेवनसर्गता॥ उदितातेनकस्यायंचेत्यचेतनविभ्रमः॥ ३४॥ ॥श्रीवसिष्ठउवाच॥ ॥अकारणत्वात्सर्वत्रशांतत्वाद्भ्रांतिरस्तिनो॥ अनभ्यासवशादेवनविश्राम्यतिकेवलम्॥ ३५॥

नैतावताकृतकार्यंशास्त्रंविफलमित्युत्तराशयः ॥ ३१ ॥ एवंनिरुद्ध्येनद्वैतलेशस्याप्यसहनादितिप्रश्नार्थः ॥ ३० ॥ अस्तुशास्त्राधिगताद्वितीयब्रह्मतत्त्वदृशाविभ्रमोप्यनुपपन्नः नैतावताकृतकार्यंशास्त्रंविफलमित्युत्तराशयः ॥ ३१ ॥ एवंनिरुत्तरीकृतोरामःप्रबोधदार्ढ्याभावादनिवृत्तसंशयःप्रश्नाशक्तिमेवस्वस्यदर्शयति ॥ ब्रह्मन्निति ॥ ३२ ॥ हेरामननिरुत्तरीकरणादप्रतिभामात्रेणप्रश्नादुपरमस्त्वंकिंतुप्रश्नकारणस्यसंशयबीजस्यनिकषोपलवत्सारासारतापरीक्षास्थानंमामांआकारणक्षयाद्यावदाशंकंपृच्छ ॥ ततःक्रमेणप्रश्नकारणसंशयानांतत्कारणस्याज्ञानस्यचनिःशेषंक्षयात्परेस्वभावेविश्रांतिमेष्यसि ॥ ३३ ॥ कारणाभावात्पूर्वंसर्गादावेवसर्गतानोदितेतित्वदुक्तंसिद्धांतमहंमन्येअवगच्छाम्येवतथापिममाऽयंचेत्यचेतनविभ्रमःकस्येतिसंशयोनापगच्छतितत्रकोहेतुरितिप्रश्नाशयः ॥ ३४ ॥ यदिमदुक्तंसिद्धांतंजानासितर्हिअनभ्यासवशात्तज्ज्ञानादार्ढ्यादविश्रांतिरेवतेद्वथानानासंशयहेतुरित्युत्तराशयः ॥ ३५ ॥

यत्रजगद्भ्रांतिरपिकारणंनास्तितत्राभ्यासात्मिकाभ्रांतिःकुतोहेतोरुपस्थितास्यादितिप्रश्नार्थः ॥ ३६ ॥ मास्तुकापिभ्रांतिस्तथापिजीवन्मुक्तानांचिद्घनात्मकसर्ववस्तुभिर्व्यवहार
प्रवृत्तिवत्तवाप्यभ्यासप्रवृत्तिरस्त्वित्याशयेनोत्तरमाह ॥ अनंतत्वादिति ॥३७॥जीवन्मुक्तानांभवदादीनांसर्वस्मिन्जगद्भ्रमेशांततांगतेसतिअनयाऽध्यात्मशास्त्ररूपयाशब्दसंपदा
उपदेशार्हाणामस्मदादीनामुपदेशकायप्रवेशशक्तिपातादिनाप्रबोधनव्यवहारेकिमन्यत्कारणंस्यादितिप्रश्नः ॥३८॥ तेषामुपदेशादिसर्वव्यवहारात्मनाब्रह्मैवब्रह्मणिसंस्थितम् अ
न्यादृशानांबंधमोक्षतदुपायानांतत्त्वदृशाअत्यंताप्रसिद्धेरित्युत्तराशयः ॥३९॥ अज्ञदृष्टिप्रसिद्धाजगत्सत्तातर्हिकेनहेतुनोपस्थितेतिप्रश्नः ॥४०॥ अज्ञानहेतुनैवेत्युत्तरम् ॥ यतो
जीवन्मुक्तेःपुराअन्यातदनुभवसिद्धाजगत्सत्तानो ॥४१॥ तत्त्वदृशांद्वैतैक्यासंभवेसतिबोध्यबोधकभावापत्तेरप्यभावात्तत्त्वबोधस्यबोधनावाकथंनसकर्मकोबोधशब्दोलोकेप्र

॥श्रीरामउवाच॥ ॥कुतोभवेदनभ्यासोभवेदभ्यसनंकुतः॥ कुतोभ्यासात्मिकाभ्रांतिरेषापुनरुपस्थिता॥३६॥ ॥श्रीवसिष्ठउवाच॥
अनंतत्वादनंतस्यभ्रांतिर्नास्तिचसंप्रति॥ अभ्यासभ्रांतिरखिलंमहाचिद्घनमक्षतम्॥३७॥ ॥श्रीरामउवाच॥ ॥उपदेश्योपदेशादा
वनयाशब्दसंपदा॥ किमन्यद्वदमेब्रह्मन्सर्वास्मिञ्छांततांगते॥३८॥ ॥श्रीवसिष्ठउवाच॥ ॥उपदेश्योपदेशात्मब्रह्मब्रह्मणिसंस्थि
तम्॥ बोधात्मनिनमोक्षोस्तिनबंधोस्तीतिनिश्चयः॥३९॥ ॥श्रीरामउवाच॥ ॥देशकालक्रियाद्रव्यभेदवेदनचेतसाम्॥ सर्वस्यासं
भवेसर्वसत्ताकथमुपस्थिता॥४०॥ ॥श्रीवसिष्ठउवाच॥ ॥देशकालक्रियाद्रव्यभेदवेदनचेतसाम्॥ अज्ञानमात्रादितरासत्ता
नान्यास्तिनोपुरा॥४१॥ ॥श्रीरामउवाच॥ ॥बोध्यबोधकतापत्तेरभावाद्बोधताकथम्॥ द्वैतैक्यासंभवेब्रह्मन्कारणासंभवेसति
॥४२॥ ॥श्रीवसिष्ठउवाच॥ ॥बोधेनबोधतामेतिबोधशब्दस्तुबोध्यताम्॥ भवद्विषयमेवायमुचितोनास्मदादिषु॥४३॥ ॥श्री
रामउवाच॥ ॥बोधएवयदाहंत्वमेतिबोधान्यतातदा॥ कुतएषापरेनंतेनासावतिजलेमले॥४४॥ ॥श्रीवसिष्ठउवाच॥ ॥यत्तद्बोध
स्यबोधत्वंतदेवाहंत्वमुच्यते॥ द्वित्वमत्रानिलस्पंददृशोरिवनिगद्यते॥४५॥

सिद्धोस्तीतिप्रश्नार्थः ॥ ४२ ॥ अबुद्धंहिब्रह्मबोधेनस्वाज्ञानक्षयफलाश्रयत्वेनबोध्यतांबोधकर्मतामेति ॥ तेनैवतुबोधशब्दोपिबोध्यतांबोधफलवत्तालक्षणसकर्मकतामेति ॥
इदंसर्वमज्ञानवद्भवद्विषयमेव ॥ जीवन्मुक्तेष्वस्मदादिषुत्वज्ञानाभावान्नबोधस्यसकर्मकतानिरूपयितुंशक्येत्यर्थः ॥ ४३ ॥ नास्मदादिष्विति वदताभवताजीवन्मुक्तेष्वप्यस्मच्छ
ब्दप्रवृत्तिनिमित्तभूताअहंतादर्शिता साचनाबोधकार्यम् तेष्वबोधाप्रसिद्धेः ॥ अतःपरिशेषाद्बोधएवअहंतालक्षणंपरिणाममेतीतिवाच्यम् ॥ तदाचबोधान्यतातस्यदुर्वाराअ
सावहंताहिनाजीवाख्यःपुरुषः ॥ एषाचपरेअनंतेत्रिविधपरिच्छेदशून्येअतएवजलमतिक्रांतेअतिजलेजलादप्यतिशयितेअमलेचिन्मात्रेत्वयिकुतः ॥ ४४ ॥ बोधैकरसस्या
स्मदादेर्यद्बोधत्वंस्वरूपभूतंतदेवानिलस्पंदवद्विकल्पिकव्यपदेशेनाहंत्वमस्माभिरुच्यतेनाज्ञवदभिमानप्रधानेनजीवपुरुषेणेत्युत्तरार्थः ॥ ४५ ॥

एवंचेत्समुद्रतरंगन्यायेनजीवन्मुक्तानांचिन्मयमेवाहंतादिजगत्बोध्यबोधादित्रिपुटीचेतिपर्यवसन्नमितिप्रश्नाशयः ॥ ४६ ॥ यद्येवंस्थितिरेवतत्त्वंतर्हितयाद्वैतेक्यासंभवेब्रह्मन्कारणासंभवेसतीतित्वदुद्भावितोद्वित्वादिप्रसक्तितोयःअद्वैतहानिलक्षणोदोषःसकथंस्यात्कश्चस्यात्तस्मान्नैवंमंतव्यमितिशुद्धाद्वैतमेवावलंबस्वेत्यर्थः ॥ ४७ ॥ तर्हिशुद्धाद्वैतपक्षेअनिलस्पंदवदहंत्वविकल्पंकल्पयित्वाकोव्यवहारंभुंक्ते जगद्भ्रांतिविकल्पस्यापितथैवावर्जनेपुनर्बंधमोक्षकल्पनापिस्यादितिप्रश्नार्थः ॥ ४८ ॥ ज्ञेयार्थसत्यत्वाभिनिवेशेहिपुनर्बंधनंप्रसज्जेत ॥ तत्त्वविदांतुसज्ज्ञेयंअलंअत्यंतंनास्ति ॥तत्त्वज्ञानेनबाधात् ॥ ज्ञप्तिरेवहितेषांप्रारब्धशेषभोगायसर्वार्थाकारेणभासतेनातःपुनर्बंधादिकल्पनाप्रसक्तिरित्युत्तरार्थः ॥ ४९ ॥ ननुनज्ञप्तिःसर्वार्थरूपा यतोदीपात्प्रकाशकान्नीलपीतादिरूपस्थितिरिवज्ञप्तेर्वशाद्बाह्यघटपटाद्यर्थस्थितिःप्रवर्ततेप्रथांलभते ॥ तथाचदृष्टोपलंभतःप्रत्यक्षादिसि

॥श्रीरामउवाच॥ ॥सौम्याब्ध्यंतस्तरंगादिर्यथादत्तेयथास्थितम् ॥ तथास्वरूपमात्रात्मबोध्यंबोधोवबुद्धवान् ॥४६॥ ॥श्रीवसिष्ठउवाच॥ ॥एवंचेत्तत्कथंकःस्याद्दोषोद्वित्वादिदोषतः ॥ अनंतेस्थितएकास्मिञ्छांतेपूर्णेपरेपदे ॥४७॥ ॥श्रीरामउवाच॥ ॥कोत्रकल्पयिताहंत्वंभुंक्तेभोक्ताचकश्चवा ॥ यन्मूलंयज्जगद्भ्रांतिरनंताप्रविजृंभते ॥४८॥ ॥श्रीवसिष्ठउवाच॥ ॥ज्ञेयसत्तावबोधेहिबंधनंसच्चनात्यलम् ॥ ज्ञप्तेःसर्वार्थरूपत्वाद्बंधमोक्षावतःकुतः ॥४९॥ ॥श्रीरामउवाच॥ ॥ज्ञप्तेर्बाह्यार्थतादीपान्नीलादीवप्रवर्त्तते ॥ बाह्यस्त्वर्थोस्तिसद्रूपोननुदृष्टोपलंभतः ॥५०॥ ॥श्रीवसिष्ठउवाच॥ ॥अकारणस्यकार्यस्यबाह्यस्यार्थस्यसत्यता ॥ येयंसाभ्रांतिमात्रात्मरूपिणीनेतरांगिका ॥५१॥ ॥श्रीरामउवाच॥ ॥स्वप्नःसत्योस्त्वसत्योवादुःखंतावत्प्रयच्छति ॥ तथैवेयंजगद्भ्रांतिःकउपायोत्रकथ्यताम् ॥५२॥ ॥श्रीवसिष्ठउवाच॥ ॥एवंतावद्यथास्वप्नस्तथेयंचेज्जगत्स्थितिः ॥ तत्पिंडग्रहतार्थानांसर्वैवभ्रांतितोदिता ॥५३॥ ॥श्रीरामउवाच॥ ॥किमेतावतिसंपन्नेसंपन्नंभवतिप्रियम् ॥ कथंचशाम्यत्यर्थानांस्वप्नादौपिंडरूपता ॥५४॥ ॥श्रीवसिष्ठउवाच॥ पूर्वापरपरामर्शात्पिंडतार्थेषुशाम्यति ॥ स्वप्नेप्येवंस्थितेस्थूलाभावनाविनिवर्तते ॥५५॥

द्धोबाह्योर्थःसद्रूपोज्ञप्तिबलादेवसिद्धःकथंतयैवापलपितुंशक्यइतिशंकार्थः ॥ ५० ॥ यदाबाह्यार्थस्याकारणकत्वाद्वंध्यापुत्रसदृशत्वंप्राक्साधितंतदातस्ययेयमापातदर्शनप्रसिद्धासत्यतासाशुक्तिरजतसत्यतेवभ्रांतिमात्रात्मरूपिणीनतुइतरद्यथार्थबुद्धिरंगंसाधकंयस्यास्तथाविधा ॥ तत्त्वविदांतुभ्रांतिमूलाज्ञाननाशात्तत्प्रसक्तिरेवनास्तीत्युत्तरार्थः ॥५१॥ तात्कालिकार्थक्रियासामर्थ्यात्सत्योस्तुप्रबोधबाध्यत्वादसत्योवाऽस्तुअत्रतच्चिकित्सायांकउपायइतिप्रश्नःस्पष्टः ॥ ५२ ॥ स्वप्नसाम्येसिद्धेतत्त्वबोधेनतत्पिंडग्रहताबाधएवसर्वदुःखशांत्युपायइत्युत्तराशयः ॥ तर्हिसर्वैवअर्थानांपिंडग्रहताभ्रांतितैवेतिअर्थादुदितैव ॥ ५३ ॥ आशयमप्रतिपद्यप्रश्नःस्पष्टः ॥ ५४ ॥ एवंपूर्वापरपरामर्शेनस्थितेअवश्यंप्रबोधोदयेस्थूलास्वप्नभावनाविनिवर्त्तते ॥ ५५ ॥

यस्यपूर्वापरविमर्शेनजगत्स्थौल्यभावनातनुतांयातासजीवन्मुक्तोजगत्किंकीदृशंप्रपश्यतीतिप्रश्नः ॥ ५६ ॥ उत्तरंस्पष्टम् ॥ ५७ ॥ ततस्तदनंतरम् ॥ ५८ ॥ उत्तरोत्तरभूमिका
परिपाकक्रमात् ॥ ५९ ॥ ६० ॥ भ्रांतिमात्रात्मनिअस्मिन्दृश्यचक्रेयथाभूतार्थविज्ञानात्पिंडग्रहविमुक्तेदग्धपटन्यायेनस्थितेसतिप्रारब्धशेषभोगक्रमात्तस्यापिक्षयइत्यर्थः
॥ ६१ ॥ अपरंकिनिर्विक्षेपतासाधकंसंपद्यतेइतिप्रश्नः ॥ ६२ ॥ भोगास्थाशांतिःपरवैराग्याख्यासंपद्यतइत्युत्तरम् ॥ ६३ ॥ बालसंकल्परूपेअतिपेलवतयास्थितेपिजगति

श्रीरामउवाच॥ ॥भावनातनुतांयातायस्यासौकिंप्रपश्यति॥ कथंशाम्यतितस्यायंसंसारकुहरभ्रमः॥५६॥ ॥श्रीवसिष्ठउवाच॥
उद्ध्वस्तमसदाभासमुत्पन्ननगरोपमम्॥ वर्षप्रोन्मृष्टचित्राभंजगत्पश्यत्यवासनः॥५७॥ ॥श्रीरामउवाच॥ ॥ततःकिंतस्यभवतिवा
सनातानवेस्थिते॥ पिंडग्रहेगतेर्थानांस्वप्नोपमजगत्स्थितेः॥५८॥ ॥श्रीवसिष्ठउवाच॥ ॥संकल्परूपजगतःक्रमात्सापिविलीयते॥
वासनातस्यतेनाशुसनिर्वातिविवासनः॥५९॥ ॥श्रीरामउवाच॥ ॥अनेकजन्मसंरूढाशाखाप्रसवशालिनी॥ भवबंधकरीघोराक
थंशाम्यतिवासना॥६०॥ ॥श्रीवसिष्ठउवाच॥ ॥यथाभूतार्थविज्ञानाद्भ्रांतिमात्रात्मनिस्थिते॥ पिंडग्रहवियुक्तेस्मिन्दृश्यचक्रेक्रमात्
क्षयः॥६१॥ ॥श्रीरामउवाच॥ ॥पिंडग्रहविमुक्तेस्मिन्दृश्यचक्रेक्रमान्मुने॥संपद्यतेकिमपरंकथंशांतिःप्रजायते॥६२॥ ॥श्रीवसिष्ठउ
वाच॥ ॥पिंडग्रहभ्रमेशांतेचित्तमात्रात्मतांगते॥ निरोधगौरवोन्मुक्तेजगत्यास्थोपशाम्यति॥६३॥ ॥श्रीरामउवाच॥ ॥बालसं
कल्परूपेस्मिन्स्थितेजगतिभासुरे॥ कथमास्थोपशमनंतादृग्दुःखायकिंनरः॥६४॥ ॥श्रीवसिष्ठउवाच॥ ॥संकल्पमात्रसंपन्नेनदृ
दुःखंकथंभवेत्॥ संकल्पचित्तमात्रंयत्तत्तावत्सविचार्यताम्॥६५॥ ॥श्रीरामउवाच॥ ॥कीदृशंभगवंश्चित्तंकथंतत्सविचार्यते॥ किंच
संपद्यतेब्रूहितस्मिन्सम्यग्विचारिते॥६६॥ ॥श्रीवसिष्ठउवाच॥ ॥चितश्चेत्योन्मुखत्वंयत्तच्चित्तमितिकथ्यते॥ विचारएषएवास्यवा
सनानेनशाम्यति॥६७॥ ॥श्रीरामउवाच॥ ॥कियन्नामभवेद्ब्रह्मन्नचेत्योन्मुखताचितेः॥ चित्तस्याचित्ततोदेतिकथंनिर्वाणकारिणी
॥६८॥ ॥श्रीवसिष्ठउवाच॥ ॥चेत्यंनसंभवत्येवचित्किंचेतयतेकुतः॥ चेत्यासंभवतश्चित्तसत्तानास्तिततश्चिरम्॥६९॥

दुःखहेतुत्वास्योपशमनंकथम् तर्हिताहृगत्यंतपेलवसंकल्पःशिशुरपिनरोदुःखायकिम ॥ दुःखमनुभवन्कथंदृश्यतेइत्यर्थः ॥ ६४ ॥ अविचारेणपेलवत्वापरिज्ञानादेवशिशोरपि
दुःखम् विचारेणतत्परिज्ञानेनुनतन्नाशादिनादुःखमितित्वमपिविचारयेत्युत्तरमाह ॥ संकल्पेति ॥ ६५ ॥ प्रश्नःस्पष्टः ॥ ६६ ॥ एषःसांप्रतंत्वयामांपुरस्कृत्यक्रियमाणोमहा
रामायणश्रवणरूपएव ॥ ६७ ॥ चित्तेजीवतिसतितन्निरोधसाध्याचितेरचेत्योन्मुखताकियत्कालंस्थास्यति ॥ अतश्चित्तनाशोपायमेववदेतिप्रश्नार्थः ॥ ६८ ॥ चेत्यस्यासं
भवदर्शनेनमार्जनमेवचित्तनाशोपायइत्युत्तरार्थः ॥ ६९ ॥

चेत्यंसर्वथानसंभवतिचेत्तदनुभवस्यकोविषयइतिप्रश्नतात्पर्यार्थः ॥ ७० ॥ अज्ञपरिज्ञातस्यापक्वत्वेअर्थात्तस्यतत्त्वबित्परिज्ञातनामरूपातीतवस्त्वेवविषयइत्युत्तरार्थः ॥ ७१ ॥
प्रश्नःस्पष्टः ॥ ७२ ॥ आद्यंतौदेशकालकृतपरिच्छेदौद्वैतंवस्तुकृतपरिच्छेदश्चयस्मिंस्तथाविधंतत्तादृशंजगत्तज्ज्ञानांसांप्रतंनविद्यतेआदिनश्चनसंभवतीतिनित्यानुत्पन्नंशशवि
षाणवंध्यापुत्रप्रायमित्यर्थः ॥ ७३ ॥ अत्यंताऽसच्चेत्कथमर्थक्रियासमर्थमनुभूयतइतिप्रश्नः ॥ ७४ ॥ एवंविधापिजाग्रत्स्वप्नवदनुभूयतइत्युत्तरम् ॥ ७५ ॥ कल्पनादौमनोरा
ज्यवितर्कादौ ॥ अनुष्ठानंजाग्रद्व्यवहारस्तदनुभवतःप्रसूतात्तद्रूपसंस्कारादित्यर्थः ॥ ७६ ॥ संस्कारात्स्वप्नेकिंजाग्रत्प्रसिद्धएवार्थोनुभूयतेउतान्यइतिमेवदेतिप्रश्नार्थः ॥ ७७ ॥

श्रीरामउवाच ॥ ॥ कथंनसंभवत्येतच्चेत्यंयदनुभूयते ॥ अपक्वश्चानुभवेक्रियतेकथमीदृशः ॥ ७० ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यादृ
क्स्यादज्ञविषयंजगत्तस्यनसत्यता ॥ यादृक्कतज्ज्ञविषयंतदनाख्यंयदद्वयम् ॥ ७१ ॥ ॥ श्रीरामउवाच ॥ ॥ त्रिजगत्कीदृगज्ञानांकथं
तस्यनसत्यता ॥ तज्ज्ञानांतुजगद्यादृक्तदृक्कुंकिंनयुज्यते ॥ ७२ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ आद्यंतद्वैतमज्ञानांतज्ज्ञानांतन्नविद्यते ॥ जग
च्चनोसंभवतिनित्यानुत्पन्नमादितः ॥ ७३ ॥ ॥ श्रीरामउवाच ॥ ॥ आदितोयदनुत्पन्नंनसंभवतिकर्हिचित् ॥ असद्रूपमनाभासंकथंत
दनुभूयते ॥ ७४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ असदेवसदाभासमनुत्पन्नमकारणम् ॥ जाग्रत्स्वप्नवदुद्भूतमर्थकृच्चानुभूयते ॥ ७५ ॥ ॥
श्रीरामउवाच ॥ ॥ स्वप्नादौकल्पनादौचयद्दृश्यमनुभूयते ॥ तज्जाग्रद्रूपसंस्कारादनुष्ठानानुभूतितः ॥ ७६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ किं
जाग्रद्रूपमाहोस्विदन्यत्स्वप्नेनुभूयते ॥ संकल्पेचमनोराज्येइतिमेवदराघव ॥ ७७ ॥ ॥ श्रीरामउवाच ॥ ॥ स्वप्नेषुकल्पनाद्येषुजाग्रदेवाव
भासते ॥ संस्कारात्मतयानित्यंमनोराज्यभ्रमेषुच ॥ ७८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ तदेवजाग्रत्संस्कारात्स्वप्नश्चेदवभासते ॥ तत्स्वप्नेलु
ठितंगेहंकथंप्रातरवाप्यते ॥ ७९ ॥ ॥ श्रीरामउवाच ॥ ॥ नजाग्रद्राजतेस्वप्नेतद्ब्रह्मान्यत्तदेवहि ॥ बुद्धमेतत्कथंत्वन्यदपूर्वमिवभासते
॥ ८० ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ नानुभूतोनुभूतश्चचेतस्यर्थोवभासते ॥ सर्गाद्यंतादिमध्येषुस्वभ्यस्तस्त्विविभासते ॥ ८१ ॥

तत्राद्यकल्पंरामःपरिगृह्योत्तरमाह ॥ स्वप्नेष्विति ॥ जाग्रत्जाग्रत्प्रसिद्धोर्थएव ॥ ७८ ॥ लुठितंपातितंगेहंगृहम् ॥ अर्थाभेदेस्वाप्नपातनस्यजाग्रत्पातनरूपत्वादितिभावः
॥ ७९ ॥ आद्यकल्पपरिग्रहेदूषितेरामोद्वितीयकल्पमवलंबते ॥ नेति ॥ जाग्रदर्थःस्वप्नेनराजतेनभासतेकिंत्वन्यत् तच्चब्रह्मैवेत्येतत्त्वदभिप्रेतंमयाबुद्धम् ॥ एतावांस्तुसंदेहःपरि
शिष्टः तदन्यद्ब्रह्मअपूर्वंजगदिवभासतेइति ॥ ८० ॥ नापूर्वमिवभासतइत्येवनियमःकिंतुकश्चिदर्थोनानुभूतोऽपूर्वइतिकश्चित्तुप्रागनुभूतोनापूर्वइतिचावभासतेऽसौचयेनयेना
कारेणसर्गाद्यंतादिमध्येष्वनुभवोभ्यस्तःसइतितेनतेनाकारेणभासते ॥ तत्रब्रह्माकारताभ्यासेस्वभ्यस्तेतथैवभासिष्यतइतिभावः ॥ ८१ ॥

॥ ८२ ॥ कारणपरीक्षणेनसचिकित्सनीयइत्या
एवंत्वयावोधितोहंजात्पज्जगदपिस्वप्नात्मकमेवभातीत्येववुद्धवान् ॥ तथाविधोप्ययंजगद्यक्षोग्रहवद्बाधतेअतःकथंचिकित्स्यते ॥ ८२ ॥ कारणपरीक्षणेनसचिकित्सनीयइत्या
शयेनवसिष्ठस्तत्कारणंपृच्छति ॥ योयमिति ॥ ८३ ॥ उत्तरंस्पष्टम् ॥ ८४ ॥ चित्तंचचेत्योन्मुखीचिदेवेत्यसकृदुक्तमेवेतितच्चित्तंमहाचिद्घनमेव ॥ तथाचतदेवजगदाकारमि
वस्थितमितिसिद्धमित्यर्थः ॥ ८५ ॥ तर्हिवृक्षशाखान्यायेनभेदाभेदेनब्रह्मणिजगत्स्थितमित्येवकुतोनोच्यतेनस्वप्नादिकिंचनास्तीतिकुतोनिषिध्यतेइतिरामःशंकते ॥ अवयवे
ति ॥ यथाअवयवानांशाखादीनामवयविनोवृक्षस्यचतादात्म्यलक्षणएकीभावोभिन्नोभेदसहिष्णुस्तथाचित्तजगतोरप्यस्तु ॥ तत्रजगदादिनासमष्टिचित्तेनअनवयवेब्रह्मण्ये
कतास्त्वित्यर्थः ॥ ८६ ॥ परिहरति ॥ एवमिति ॥ एवंकल्पनानसंभवत्येव ॥ यतआदितोविमर्शेब्रह्मणिकारणाभावाज्जगन्नित्यानुत्पन्नम् ॥ नहिमायिककल्पनामात्रेणावयवाव
यविभावोभेदाभेदोवाभवति ॥ मरुनदीगंधर्वनगरादेरपिमरीचिनभःप्रभृत्यवयवताप्रसंगादितिभावः ॥ अवेधितमच्छिद्रितमखंडितमितियावत् ॥ ८७ ॥ एवंसमाहितोरामःपरि

॥ श्रीरामउवाच ॥ ॥ एवंस्वप्नात्मकंभातिजगदित्येववुद्धवान् ॥ ग्रहवत्स्वप्नयक्षोयंकथंब्रह्मंश्चिकित्स्यते ॥ ८२ ॥ ॥ श्रीवसिष्ठउवाच ॥
॥ चित्तंस्वप्नोपलंभानां हेतुस्तस्मात्तदेवते ॥ विश्वंचाद्यंतरहितमनासारमनामयम् ॥ ८४ ॥ ॥ श्रीरामउवाच ॥
योयंसंसरणस्वप्नःसकिंकारणकोभवेत् ॥ कार्यान्नकारणंभिन्नमितिदृष्टंविचारय ॥ ८३ ॥ ॥ श्रीरामउवाच ॥
॥ अवयवावयविनोर्यथाभिन्नस्तथासहि ॥ तत्रानवयवेब्रह्मण्येकताजगदादिना ॥ ८६ ॥ ॥ श्रीवसिष्ठउवाच ॥
॥ एवंचित्तंमहाबुद्धमहाचिद्घनमेवतत् ॥ तथास्थितंनस्वप्नादिकिंचनास्तीतरात्मकम् ॥ ८५ ॥ ॥ श्रीवसिष्ठउवाच ॥
॥ एवंनसंभवत्येवनित्यानुत्पन्नमादितः ॥ जगत्तेनाजरंशांतमजंसर्वमवेधितम् ॥ ८७ ॥ ॥ श्रीरामउवाच ॥
॥ काकतालीयवन्मन्येसर्गाद्यंतादयोभ्रमाः ॥ भ्रांतिद्रष्टृत्वभोक्तृत्वसहिताःपरमेपदे ॥ ८८ ॥ ॥ श्रीवसिष्ठउवाच ॥
॥ यान्यापारवतीरसाद्रसविदांकाचित्कवीनांनवादृष्टिर्यापरिनिष्ठितार्थविषयोन्मेषाचवैपश्चिती ॥ तद्द्वेअप्यवलंब्यविश्वमखिलंनिर्वर्णितंनिर्वर्तंयावद्दृष्टिदृशोनसंतिकलितानोशून्यतानोभ्रमः ॥ ८९ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० रामविश्रांतिर्नाम नवत्युत्तरशततमःसर्गः ॥ १९० ॥ ॥ ७ ॥

शिष्टांसिद्धांतिकींस्थितिमेवावलंब्याह ॥ काकतालीयवदिति ॥ ८८ ॥ एवंजगद्भ्रांतिमात्रमेवेतितन्निश्चित
वंतरामंप्रतिसापिभ्रांतिर्दृष्टिद्वयमूलकेनशास्त्रीयविचारेणमयानिराकृतेतिवसिष्ठउपसंहरति ॥ येति ॥ त्रिविधाहिप्रसिद्धादृष्टिः पामरदृष्टिर्यौक्तिकदृष्टिस्तत्त्वदृष्टिश्चेति ॥ तत्रा
द्यैप्रथमाउत्तराभ्यांद्वाभ्यांनिराकार्याद्वितीयात्वतेतृतीययेत्याशयेनउत्तरेद्वेदृष्टीअवलंब्यमयेदमखिलंविश्वंतत्त्वतोनिर्वर्णितम् ॥ केतेद्वे ॥ रसाद्रसविदांसारादपिसारंनिर्मथ्यवो
द्धुंसमर्थानांकवीनांप्रमाणप्रमेयतत्त्वपरीक्षाकुशलानांपटुनरविचारव्यापारवतीअतिनिष्कर्षरूपत्वादभिनवायाकाचिद्दृष्टिःसैका ॥ याचापरासर्वविचारशास्त्रश्रवणमनननिदि
ध्यासनपरिपाकपरिनिष्ठितोयःपरमतत्त्वरूपोर्थस्तन्मात्ररूपस्यविषयस्यउन्मेषःअपरोक्षतयास्फुरणंयस्यांचरमसाक्षात्कारवृत्तौतादृशीवैपश्चितीविपश्चित्सुजीवन्मुक्तेषुप्रसिद्धा
साच ॥ तेद्वेदृष्टीअवलंब्यास्मिन्शास्त्रेकियत्पर्यंतंविश्वंनिर्वर्णितंतदाह ॥ यावदिति ॥ यावद्दृष्टयश्चतद्दृशोजीवाश्चकालत्रयेपिनसंति ॥ जगतःशून्यतापिनकलिताभ्रमश्चनकलि
तस्तावन्नित्यापरोक्षपरमानंदब्रह्मालैकवस्तुस्थितिपर्यंतमितियावत् ॥ ८९ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० उ० नवत्युत्तरशततमःसर्गः ॥ १९० ॥ ॥ ७ ॥

ब्रह्मैवजगदाकारंयथाभात्यप्रबोधतः ॥ प्रबुद्धमात्रनिर्वाणंतत्सम्यगिहवर्ण्यते ॥ १ ॥ एवंप्रतिबोधितोरामःसैद्धांतिकंपक्षंप्रतिपद्याभिलपति ॥ एवंचेदित्यादिना ॥ परमार्थमयं परतत्त्वविवर्त्तः ॥१॥ भ्रांतिर्विक्षेपशक्तिप्रधानाअविद्यायौक्तिकदृशातत्त्वदृशातुसापिनैव ॥२॥ श्रीरामोक्तमनुमोदमानोवसिष्ठस्तदेवाह ॥ काकतालीयवदिति ॥ काकतालीयवदतर्क्ययाअविद्ययाआत्मनाजीवभूतेनतेनैवब्रह्मणा॥३॥ महाप्रलयकालेस्वालंबनदिग्विभागादिशून्यमपरिच्छिन्नचित्प्रकाशमसंभावयन्निवसविस्मयंरामःपृच्छति ॥ कथमिति ॥ अदिक्कंदिग्भागंविनासर्गस्यादौप्रलयकालेपरत्रमोक्षेचकथंतपतिप्रकाशते ॥ अहोइत्याश्चर्ये ॥ भित्त्याआलंबनेन ॥ तथाचविनालंबनंप्रभायाइवचिदात्मनोपिप्रथा असंभाव्येत्यर्थः ॥ ४ ॥ अन्यत्रादृष्टमत्याश्चर्यमप्येतत्प्रमाणानुभवबलादेवसंभावनीयमितिसमाधत्ते ॥ इत्थंरूपमिति ॥ इदमित्थंरूपमत्याश्चर्यमेव ॥ विभुंचिदानंदमरूपमद्व

॥श्रीरामउवाच॥ ॥एवंचेत्तन्मुनिश्रेष्ठपरमार्थमयंजगत् ॥ सर्वदासर्वभावात्मानोदेतिनचशाम्यति॥ १ ॥ भ्रांतिरेवेयमाभातिजगदाभासरूपिणी॥भ्रांतिरेवापिवानैवब्रह्मसत्तैवकेवला॥ २॥ ॥श्रीवसिष्ठउवाच॥ ॥काकतालीयवद्ब्रह्मयद्भातीवात्मनात्मनि॥ सतेनैवात्मनात्मैवजगदित्यवबुध्यते॥ ३॥ ॥श्रीरामउवाच॥ ॥ कथंतपत्यहोदिक्कंसर्गस्यादौपरत्रच ॥ कथंभित्त्याविनाभातिवददीपप्रभामुने॥४॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्थंरूपमिदंभातिचितिरूपप्रभाप्रभा॥पश्यसैवात्मनास्तेयत्प्रकाशादिभिरेवच॥ ५॥ भित्तौप्रकाशोभातीवतत्कुड्यंभासनंचतत् ॥ दृश्यस्यासंभवादादौवक्ताद्रष्टाप्रदृश्यताम्॥ ६॥ तस्माद्द्रष्टास्तिनोदृश्यंनैवास्तीदमनामयम् ॥ चित्प्रभैवात्मनाभित्तिर्भवत्याभासनंतथा॥ ७॥ द्रष्टृदृश्यात्मिकैकैवस्वात्मनैवविराजते॥स्वप्नादिषुयथेहाद्यद्रष्टृदृश्यात्मिकासती॥८॥ चिद्भात्येवहिसर्गादौकचंतीभातिसर्गवत् ॥ भासनीयंचभानंचरूपंयत्रस्वयंप्रभा ॥ ९ ॥ एकैवचित्त्रयंभूत्वासर्गादौभातिसर्गवत् ॥ एषएवस्वभावोस्यायदेवंभातिभासुरा ॥ १० ॥ एतत्तुस्वप्नसंकल्पनगरेष्वनुभूयते ॥ इत्थंनामतपत्येषाचिद्दीप्तिःप्रथमोदिता॥ ११ ॥ नभस्येवनभोरूपायदिदंभासतेजगत्॥ अनाद्यंतमिदंतस्याःसर्गाःसर्गात्मभासनम् ॥ १२ ॥

तमितिश्रुतेः ॥ आश्चर्यवत्पश्यतिकश्चिदेनमितिभगवद्वचनाच्च ॥ तथापिनासंभावनाकार्या ॥ अन्वयव्यतिरेकाभ्यांपरीक्ष्यत्वंपश्य ॥ यद्यस्मात्सैवचितिरूपासूर्यादिप्रभायाअपिप्रभाअंधकारकालेआत्मनैवप्रथमानाआस्ते सूर्योदयाद्यनंतरंप्रकाशादिभिःसहाप्यास्ते ॥ ५ ॥ सूर्यादिप्रकाशोपिभित्त्यादिनिरपेक्षप्रकाशस्वभावएवसन्भित्तौभातीव ॥ नहितस्यप्रकाशताभित्तिप्रयुक्ता ॥ प्रत्युतकुड्यंतद्भासनंचततःस्वप्रकाशतावलादेवसंपद्यते ॥ प्रकाशैकरस्येनैवकुड्यप्रथनात् ॥ तत्रयथाकुड्यादिसंबंधात्प्राङ्गभसिप्रकाशोदृश्यते तथासर्गस्यादौप्रलयेपिवक्ताश्रोताचायमात्मानिर्विषयोदृश्यतामित्यर्थः ॥ ६ ॥ एवंनिरालंबनचित्संभावनसिद्धेःसैवसर्गादौजगदाकारेणसंपन्नेतिसंभावयेत्याह ॥ तस्मादिति ॥ भित्तिर्मूर्त्तमालंबनमाभासनंसूर्यादिप्रभायथातथैव ॥७ ॥ एकस्याएवचितस्त्रिपुटीभावःस्वप्नादिष्वपिप्रसिद्धएवेत्याह ॥ द्रष्टिति ॥ ८ ॥ यत्रयस्मिन्सर्गादिकाले ॥ ९ ॥ स्वभावोमायाशक्तिः ॥ १० ॥ तपतिप्रकाशते ॥ ११ ॥ तस्याःसर्गात्मनाभासनंभानमेवसर्गाः ॥ १२ ॥

अज्ञानामेवेदमाश्चर्यंवद्भातिनास्माकमित्याह ॥ स्वभावभूतमिति ॥ अकस्मात्प्रतिभामितापिझटित्येवतत्त्वानुसंधानेननश्यति ॥ १३ ॥ कथंतत्त्वानुसंधानंतदाह ॥ तदात्विति ॥ १४ ॥ भासकश्चिदात्मातुननास्तिअवश्यमस्त्येव ॥ वाशब्दःसमुच्चये ॥ १५ ॥ १६ ॥ सर्गादौजगद्भानस्यजाग्रदाद्यवस्थात्रयानंतर्भावादपितुर्यचिदेवेत्थंप्रकाशतइत्याह ॥ अभावादिति ॥ १७ ॥ १८ ॥ विकासनमित्युत्तरान्वयि ॥ १९ ॥ शून्यत्वांबरयोर्भेदविकल्पविकासनम ॥ २० ॥ वर्णितंतत्त्वानुसंधानप्रकारमुपसंहरति ॥ बुद्धेति ॥ एतन्मदुक्ततत्त्वानुसंधानोपायेनतत्त्वंबुद्ध्वायावद्भूमिकापरिपाकक्रमेणेदंस्वनुभूतियुक्तंदृढंभवतितावद्विकल्पमुक्तंयथास्यात्तथापाषाणमौनंनिरुद्धवागादिव्यापारंनिर्विकल्पसमाधौ स्थातव्यम ॥ अज्ञेनस्वेनपरेणचअनादौसंसारेपुनःपुनर्मुक्तंवैराग्यातिशयेनसांप्रतंमुक्तंत्यक्तंबाह्यविषयजातंतुकुजनेनभुंक्ष्वेत्युक्तमपिनग्राह्यम ॥ विषयग्रहणस्यभोगलांपट्यहेतु

स्वभावभूतमस्माकंविदंभातिमहात्मनाम्॥ भास्यभासकसंवित्तिर्नश्यतिप्रतिभामिता॥ १३॥ तदातुनामसर्गादौनासीद्भास्योनभासकः॥ मिथ्याज्ञानवशादेवस्थाणौपुंप्रत्ययोयथा॥ १४॥ तथात्मनिद्वितांभानाचित्तद्वैतविभासनम्॥ सर्गादौनचभास्योस्तिनचवा नास्तिभासकः॥ १५॥ कारणाभावतोद्वैतंचिद्व्योमाभातिकेवलम्॥ किंनामकारणंब्रूहिसर्गादौचितिवस्तुतः॥ १६॥ अभावादर्थदृष्टीनांचिदेवेत्थंप्रकाशते॥ जगद्भानमिदंयत्तन्नजाग्रन्नसुषुप्तकम्॥ १७॥ नस्वप्नोसंभवद्दृश्यंकेवलंब्रह्मभासते॥ चिन्मात्रव्योमसर्गादा वित्थंकचकचायते॥ १८॥ यत्स्वमेववपुर्वेत्तिजगदित्यजगन्मयम्॥ चिन्मात्रव्योमसर्गादावित्थंभातिविकासनम्॥ १९॥ यदिदंजगदित्येवशून्यत्वांबरयोरिव ॥ २० ॥ बुद्धाचयावत्स्वनुभूतियुक्तंस्थातव्यमेतेनविकल्पमुक्तम् ॥ पाषाणमौनंकुजनेनतूक्तंनग्राह्यमज्ञेनहिभुक्तमुक्तम्॥ २१॥ ॥इ०वा०म०वा०दे०मो०नि०उ०महावादबोधनंनामैकनवत्युत्तरशततमःसर्गः॥ १९१॥ ॥७॥ श्रीरामउवाच॥ ॥अहोनुसुचिरंकालंसंभ्रांतावयमंतरे॥ अपरिज्ञातमात्रेणसंसारपरमांबरे॥ १॥ बुद्धेयावदियंनामजगद्भ्रांतिर्नकिंचन॥ नचाभून्नचवास्तीयंनचनामभविष्यति॥ २॥

नयासमाधिसुखविघातकत्वादितिभावः ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०एकनवत्युत्तरशततमःसर्गः ॥ १९१ ॥ ॥७॥ ॥ इहप्रबुद्धोरामःस्वंप्रबोधंगुरुसन्निधौ ॥ यथाचिन्मात्रमेवेदंतथाविस्तरतोब्रवीत् ॥ १ ॥ सर्वसंदेहनिवृत्त्यासम्यक्प्रबुद्धोरामःसुप्तोत्थितःस्वप्नभ्रांतिमिवसंसारभ्रांतिमाश्चर्यतयास्मरन्नाह ॥ अहोइत्यादिना ॥ संसारलक्षणेपरमेनिरवधौअंबरेतत्राप्यंतरेएतद्ब्रह्मांडैकदेशेसुचिरंकालंवयमपरिज्ञातमात्रेणात्मतत्त्वेनसंभ्रांताः ॥ १ ॥ बुद्धेआत्मतत्त्वेतु ॥ यावदितिसाकल्ये ॥ तथाचोक्तंसुरेश्वरवार्त्तिके ॥ तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ॥ अविद्यासहकार्येणनासीदस्तिभविष्यतीति ॥ २ ॥

१ पक्षांतरेइत्यपिपाठःक्वचित

२ महावाक्यतत्त्वानुसंधानप्रकारः

यतःअपकल्पनमतएवतद्रंजनाभावान्नीरागम् ॥ ३ ॥ ४ ॥ ५ ॥ कल्पनाकाव्यरचनाआदिपदान्मनोराज्यपरिग्रहः ॥ ६ ॥ मतिर्भ्रांतिः ॥ तत्तस्याभ्रांतेर्वशात्तस्यपुंसोनरकस्य अंतोबंधः ॥ अतिबंधनेघञ् ॥ ७ ॥ चित्चिदाभासः ॥ ८ ॥ भ्रांतेरसद्रूपत्वात्तत्कारणचिंताप्ययुक्तैवेत्याह ॥ कुतइति ॥ दृश्यतेआलोच्यते ॥ ९ ॥ ज्ञातातत्त्वज्ञानंतत्पदे ॥ १० ॥ निरंतरेअंतरालशून्येशैलोदरेस्फटिकशिलागर्भेवा ॥ ११ ॥ १२ ॥ द्वींदुविभ्रमोयथेतिशेषः ॥ १३ ॥ जागरणंजाप्रः ॥ घञर्थेकः ॥ जागरेप्रत्यक्षदृष्टापिनविद्यानयथार्था

सर्वंशांतंनिरालंबंविज्ञानंकेवलंस्थितम् ॥ अनंतंचिद्घनंव्योमनीरागमपकल्पनम् ॥ ३ ॥ परमाकाशमेवेदमपरिज्ञातमात्रकम् ॥ संसारतामिवास्माकंगतंचित्रमहोनुभोः ॥ ४ ॥ इत्थंद्वैतमिदंभातमिमेलोकाइमेऽद्रयः ॥ परमाकाशमित्यच्छमेवानच्छमिवस्थितम् ॥ ५ ॥ सर्गादौपरलोकादौस्वप्नादौकल्पनादिके ॥ चिदेवचेत्यवद्भातिकुतोन्याकिलदृश्यधीः ॥ ६ ॥ स्वर्गेवानरकेवापिस्थितोस्मीतिमतिर्यदि ॥ तत्तस्यानरकस्यांतोदृश्यंसंविन्मयात्मकम् ॥ ७ ॥ नेदंदृश्यंनचद्रष्टानसर्गोनजगन्नचित् ॥ नजाग्रत्स्वप्नसिद्धादिकिमपीदंतदप्यसत् ॥ ८ ॥ कुतोस्याःसंभवोभ्रांतेरितिचेद्दृश्यतेमुने ॥ तदेतदपिनोयुक्तंभ्रांत्यभावानुभूतितः ॥ ९ ॥ भ्रांतिर्नसंभवत्येवनिर्विकारेज्ञतापदे ॥ यत्त्विदंभ्रांतिताज्ञानंतत्तदेवेतरन्नतत् ॥ १० ॥ निरंतरेनिराद्यंतेव्योम्निशैलोदरेथवा ॥ कुतोन्यताकल्पकंस्याज्ज्ञपदेचाविकारिणि ॥ ११ ॥ मिथ्यैवानुभवोभ्रांतःस्वप्नेस्वमरणोपमः ॥ यदनालोकनंनामशाम्यतीदंविलोकनात् ॥ १२ ॥ मृगतृष्णांबुगंधर्वनगरद्वींदुविभ्रमः ॥ तथाविद्याभ्रमश्चायंविचारान्नोपलभ्यते ॥ १३ ॥ वालवेतालवद्भ्रांतिर्नविद्याजाग्रगापिहि ॥ अविचारेणसंरूढाविचारेणोपशाम्यति ॥ १४ ॥ कुतआसीदितिमुनेनात्रप्रश्नोविराजते ॥ सतएवविचारेणलाभोभवतिनासतः ॥ १५ ॥ प्रामाणिकविचारेणप्रेक्षितंयन्नलभ्यते ॥ तदेतदसदेवादितत्तथ्यंनुभवोभ्रमः ॥ १६ ॥ यन्नास्तीतिपरिच्छिन्नंप्रमाणैःसुविचारितम् ॥ खपुष्पशशशृंगाभंतत्कथंलभ्यतेसतः ॥ १७ ॥ सर्वतःप्रेक्ष्यमाणोपियःकुतश्चिन्नलभ्यते ॥ तस्यस्यात्कीदृशीसत्तावंध्यातनयरूपिणः ॥ १८ ॥ भ्रांतिर्नसंभवत्येवतस्मात्काचित्कदाचन ॥ निरावरणविज्ञानघनमेवेदमाततम् ॥ १९ ॥

॥ १४ ॥ इयंभ्रांतिःकुतोनिमित्तादासीदितिप्रश्नोप्यत्रनविराजते ॥ विचारार्थंहिप्रश्नःसचात्रनिष्फलः ॥ तन्मूलस्याज्ञानस्यासतोनिर्णेयत्वायोगादित्यर्थः ॥ १५ ॥ अज्ञानस्यासत्त्वंप्रमाणपूर्वकविचारालभ्यत्वादेवेत्याह ॥ प्रामाणिकेति ॥ आदिजगन्मूलमज्ञानम् ॥ तत्तस्मात्कारणादेवहितदनुभवाद्भ्रमः ॥ १६ ॥ अज्ञानंतत्कार्यंचसन्मूलकमेवकिंनस्यात्तत्राह ॥ यदिति ॥ प्रमाणैर्वाचारंभणेत्यादिश्रुतिभिः ॥ १७ ॥ तर्हिजगदपिसदेवकिंनस्यात्तत्राह ॥ सर्वतइति ॥ कुतश्चित्कारणात्प्रमाणाच्च ॥ १८ ॥ १९ ॥



१ वाचारंभणश्रुत्यादिभिरितिक्वचित्पाठः

परेणनिरतिशयानंदेनआपूर्णेपरेब्रह्मस्वरूपेपरंतदेवस्वेमहिम्न्यवतिष्ठते ॥ २० ॥ २१ ॥ कीदृशंतत्पदमवतिष्ठतेतदाह ॥ अजमिति ॥ अहार्यंपरैरपहर्तुमशक्यम् ॥ आर्यैर्विद्वद्भि जुंष्टंसमंतात्पूर्णमहमेवनिरहंसत्वोधादुदितम् ॥ आवरणपरिच्छेदभंगात्सर्वतोविकासि ॥ २२ ॥ ॥ इति० वा० ता० प्र० नि० उत्तरार्द्धेद्विनवत्युत्तरशततमःसर्गः ॥ १९२ ॥ इहरामःप्रबोधेनाऽज्ञाननिद्राक्षयेक्षणात् ॥ निर्मृष्टनिखिलद्वैतनित्यात्मस्थितिमब्रवीत् ॥ १ ॥ देवाःकर्मोपासनसिद्धाः ॥ ऋषयस्तपोयोगसिद्धाः ॥ अथवाचक्षुरादिबाह्यांतःकर णान्येवात्रदेवाऋषयश्च ॥ तेहदेवाउद्गीथमाजह्रुः ॥ इमावेवगौतमभरद्वाजावित्यादिश्रुतेः ॥ १ ॥ द्वैताद्वैतयोरनुसंधानेयोमनसिसमुद्भेदस्तत्प्रयुक्तैर्वाक्यव्यवहारैःसंदेहैर्विभ्रमै

यत्किंचिज्जगदद्यात्रभातीदंपरमेवतत् ॥ परंपरेपरापूर्णेपूर्णमेवावतिष्ठते ॥ २० ॥ नभातंनचनाभातमिहकिंचित्कदाचन ॥ इदमित्थं स्थितंस्वच्छंशांतमेवजगद्वपुः ॥ २१ ॥ अजममरमहार्यमार्यजुष्टंपरमविकारिनिरामयंसमंतात् ॥ पदमहमुदितंततंहिशुद्धंनिरहमनेक मथाद्वयंविकासि ॥ २२ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० विश्रांत्युपगमवर्णनंनामद्विनवत्युत्तरशततमःसर्गः ॥ १९२ ॥

॥ श्रीरामउवाच ॥ ॥ अनादिमध्यपर्यंतंनदेवानर्षयोविदुः ॥ यत्पदंतदिदंभातिकजगत्कचदस्यता ॥ १ ॥ द्वैताद्वैतसमुद्भेदवाक्यसंदेहवि भ्रमैः ॥ अलमस्माकमाशांतमाद्यंरूपमनामयम् ॥ २ ॥ व्योमनिव्योमभावानांप्रशांतंयादृगासितम् ॥ तादृक्छिव्योमनिस्फारत्रिजग द्व्योमभासनम् ॥ ३ ॥ यथाव्योमनिव्योमत्वंद्रूपत्वंद्रूपदिस्थितम् ॥ जलत्वंचजलस्यांतर्जगत्त्वंचिद्घनेतथा ॥ ४ ॥ साहंतादिजगद्दृश्यमाशा काशविसार्यपि ॥ महाचिद्गुदरंविद्धिखंशांतंशून्यतोदितम् ॥ ५ ॥ जीवस्यास्मिन्विमूढस्यपरेपरिमितोदये ॥ प्रस्फुरंश्चापिसंसारपिशा चउपशाम्यति ॥ ६ ॥ भेदोपलब्धिर्गलतिव्यवहारवतोप्यलम् ॥ जडस्येवाजडस्यैववीचेरिवजलोदरे ॥ ७ ॥ क्वाप्यज्ञानरवौयातेप्रता पाद्याकरेभृशम् ॥ संसारसत्तादिवसोयात्यस्तंसनिशागमः ॥ ८ ॥ भावाभावेषुकार्येषुजरामरणजन्मसु ॥ ज्ञआजवंजवीभावेति ष्ठन्नपिनतिष्ठति ॥ ९ ॥

णान्येवात्रदेवाऋषयश्च ... संप्रतिजगज्ज्ञानंकीदृक्संपन्नंत श्चास्माकंअलंप्रयोजनंनास्तीत्यर्थः ॥ आद्यंसर्वादौसदेवसौम्येदमग्रआसीदेकमेवाद्वितीयमितिश्रुतिसिद्धंयद्रूपंतदिदंसर्वंभातीत्यनुकम्प्यते ॥ २ ॥ संप्रतिजगज्ज्ञानंकीदृक्संपन्नंत दाह ॥ व्योमनीति ॥ व्योमभावानांकेशोंड्रकमुक्तावलीगंधर्वनगरादीनाम् ॥ ३ ॥ व्योमादौव्योमत्वादिर्यथाअभेदेनसामान्यरूपेणतद्भावेनचस्थितंतथेत्यर्थः ॥ ४ ॥ आशासु दिक्षुआकाशंचविसारिअसंख्येयतयाविस्तृतमपिशून्यतयाउदितंशून्यतोदितम् ॥ ५ ॥ अपरिमितोदयेअस्मिन्परेब्रह्मणिदृष्टमात्रेजीवस्यसंसारपिशाचउपशाम्यति ॥ ६ ॥ क थमुपशाम्यतितदाह ॥ भेदोपलब्धिरिति ॥ लहयोरभेदाज्जलस्यापीत्यपिर्वीचिपक्षे ॥ ७ ॥ प्रतापआध्यात्मिकादित्रिविधसंतापआदिपदाद्विषयतृष्णातदाकरे ॥ अस्तमदर्शनं यातिसमोक्षसुखविश्रांतिहेतुर्निशागमः ॥ ८ ॥ आजवंजवीभावेव्यवहारविक्षेपेच ॥ ९ ॥

॥ १० ॥ अस्माकंतत्त्वविदाम् ॥ ११ ॥ समंसर्वद्वैतवैषम्यरहितम् ॥ १२ ॥ नाहंकश्चित्प्रागधुनाप्यन्यःकिंतुब्रह्मैवप्रागज्ञातआत्मायेनतथाविधमभवत् ॥ अधुनातुज्ञातेआत्मनिस्वस्वभावेस्थितम् ॥ १३ ॥ अनिर्भासंस्वातिरिक्तज्ञानाज्ञाननिर्भासशून्यम् ॥ यथानीलत्वशून्यत्वेनीलत्वेचनभएकंतद्वदित्यर्थः ॥ १४ ॥ तत्तस्मात्प्रबोधान्निर्वाणमेवसन्नहमासे ॥ अज्ञाननिवृत्त्यैवसर्वशंकानिवृत्तेर्गतशंकमासे ॥ सुसुखंनिर्विक्षेपात्मसुखंतत्रैवेहधारावाहिकचित्तवृत्तिर्यथास्यात्तथाआसे ॥ एवंप्रबुद्धोहंसमासेसमस्तात्मनिब्रह्मणिनकथमासे ॥ तद्भावप्रच्युतिहेतूनांबाधादित्यर्थः ॥ १५ ॥ सदैवसर्वमहंअथवाअतिशांतःसर्वोपप्लवरहितोनकिंचिच्च एकंसदहमेवास्मि अथवादेशकालाधाराप्रसिद्धेःक्वापिनास्मिच ॥ इतिइयंनिर्वाणाख्याइयंसर्वशांतिरहोअस्याश्चर्यरूपेत्यर्थः ॥ १६ ॥ अधिगंतुंज्ञातुंयोग्यमधिगम्यंपरमपुरुषार्थरूपमधिगतंज्ञातम् ॥ अन्यैरज्ञैरगम्यंदुष्प्रापंमोक्षसुखंप्राप्तम् ॥ इदंसंसारानर्थरूपंवस्तुजातंसमस्तमस्तंगतम् ॥ चरमसाक्षात्कारोदितप्रबोधंतादृशंनिजस्वरूपंममउदितम् ॥ यत्रस्वरूपेभूयः अस्तमयसमुदयानांमरणतिरोधा

नाविद्यास्तीहनभ्रांतिर्नदुःखंनसुखोदयः॥ विद्याविद्यासुखंदुःखमितिब्रह्मैवनिर्मलम् ॥ १० ॥ परिज्ञातंसदेतत्तुयावद्ब्रह्मैवनिर्मलम्॥ अपरिज्ञातमस्माकमब्रह्मात्मनविद्यते॥ ११॥ प्रबुद्धोस्मिप्रशांतामेसर्वाएवकुदृष्टयः॥ शांतंसमंसोहमिदंखंपश्यामिजगत्त्रयम्॥ १२॥ सम्यग्ज्ञातंयावदिदंजगद्ब्रह्मैवकेवलम्॥ अज्ञातात्माभवद्ब्रह्मज्ञातात्मन्यधुनास्थितम्॥ १३॥ ज्ञाताज्ञातमनिर्भासंब्रह्मैकमजरंतथा ॥ शून्यत्वैकत्वनीलत्वरूपमेकंनभोयथा ॥ १४॥ निर्वाणमासेगतशंकमासेनिरीहमासेसुसुखेहमासे॥ यथास्थितंनित्यमनंतमासेतदेवमासेनकथंसमासे॥ १५॥ सर्वंसदेवाहमनंतमेकंनकिंचिदेवाप्यथवातिशांतः॥ सर्वंनकिंचिच्चसदेकमस्मिनचास्मिचेतीयमहोनुशांतिः॥ १६॥ अधिगतमधिगम्यंप्राप्तमप्राप्तमन्यैर्गतमिदमलमस्तंवस्तुजातंसमस्तम्॥ उदितमुदितबोधंतादृशंयत्रभूयोस्तमयसमुदयानांनामनामापिनास्ति॥ १७॥ ॥इ० वा० महारामायणेवा० दे० मो० निर्वाणप्रकरणउ० विश्रांतिकथनंनामत्रिनवत्युत्तरशततमःसर्गः॥ १९३॥श्रीरामउवाच॥ ॥सर्वात्मसर्वभावेषुयेनयेनयदायदा ॥ यथाभातिस्वयंबोधस्तथानुभवतिस्वयम् ॥ १ ॥स्वभावएवतिष्ठंतिसर्गाःसंमिलिताअपि॥ अत्रापिस्वीकृताएवनानारत्नांशवोयथा॥ २॥

नदुःखाद्यनर्थानांनामापिनास्ति नामेतिविद्वत्प्रसिद्धौ ॥ १७॥ ॥ इतिश्रीवासिष्ठ० तात्पर्यप्रकाशेनि० उ० त्रिनवत्युत्तरशततमःसर्गः ॥ १९३ ॥ ॥ ७ ॥ ॥ आत्मतत्त्वंजगत्तत्त्वंयथानिर्वाणसाधनम् ॥इहरामःस्वयंबुद्धंगुरवेप्रत्यवेदयत् ॥ १ ॥ तत्राज्ञातपरमात्मस्वभावमाह ॥ सर्वात्मेति ॥ सर्वेषामात्मनांजीवानांसर्वेषुभावेषुमनोवृत्तिभेदेषुयदायदायेनयेनभोगनिमित्तेनयथास्वयंबोधःस्वप्रकाशचिदात्माभातिविवर्त्ततेतथास्वयमेवभोक्तृनानाजीवभावेनअनुभवति ॥ स्वयमेवत्रिपुटीभावेनस्वमाययाविवर्त्ततइत्यर्थः ॥१॥ एकस्मिन्नेवनिरवयवेपरमसूक्ष्मेब्रह्मणिसर्वैर्जीवैर्युगपदध्यासात्संमिलिताअपिअनंताःसर्गाःप्रत्येकंब्रह्मांडभुवनादिभेदविस्तीर्णेस्वभावेएवपरस्परमसंलग्नास्तिष्ठंति ॥ यतस्तेअत्रईदृशेनिरवयवेपिब्रह्मणितादात्म्याध्यासेनस्वीकृताआत्मीकृताःपरमसूक्ष्मीकृताः ॥ नत्वात्मनिकस्यचिदनवकाशताअवरोधोवास्तीत्यर्थः ॥ यथासूक्ष्मानानारत्नानामंशवःकिरणाएकस्मिन्गृहेमिलिताअप्यसंबंधाअसंकीर्णास्तिष्ठंतितद्वदित्यर्थः ॥ २ ॥

तदेवविशदयति ॥ अत्रेति॥ दृष्टंसंनिहितंप्रत्यक्षमदृष्टंदेशकालव्यवधानात्परोक्षंचजगद्रश्मिघनमत्रास्मिन्परमात्मनिमिथोऽन्योन्यमसंबाधंसमाविशतिगच्छतिसंचरतिच ॥ ना
नारत्नानांघनंरश्मिजालंयथातथा ॥ ३ ॥ तत्रयेषांजीवानांसमानकर्मवासनानिमित्तोध्यासस्तेषांपरस्परमनुभवोस्तितद्भिन्नानांतुनास्तीत्याशयेनाह ॥ केषांचिदिति ॥ दीप
पक्षेचक्षुष्मतामंधानांच ॥ ४ ॥ आवर्तानांरमणावनौक्रीडास्थानेअंभोधौअप्स्वप्सुप्रतिजलावयवंरसोलवणादिरसइव ॥ परमार्थतस्तुनसर्गास्तत्क्रमोपि ॥ ५ ॥ अंबुवेदनंजल
परमाणुरसइव ॥ ६ ॥ ७ ॥ एकस्यात्मनएवमाययानंतरूपस्यजगतआदिरधिष्ठानंतत्स्वभावत्वान्नोदेतिनाप्यस्तमायाति ॥ ८ ॥ तपंतीस्फुरंती ॥ समालोकंघटपटादिप्रकाश
म् ॥ ९ ॥ कदानींहसाअध्यासव्यसनंजहातिकेनोपायेनचतत्राह ॥ वैतृष्ण्यादिति ॥ सर्वेषांभावानांतत्त्वज्ञानेनबाधात्समास्यैवस्वयमक्षयंक्षयिष्णुदेहादितादात्म्याध्यासोन्मुक्तं
संपद्यते ॥ यत्तत्तादृशंस्वरूपंतदेवसर्वविक्षेपहेतुक्षयात्समाधानंनिर्वृतित्वान्निर्वाणमुच्यतइत्यर्थः ॥ १० ॥ अध्यासपरंपरासमास्यैवस्वयंस्वस्यपरमपुरुषार्थःपरिशिष्यतइतिकुतः

अत्रदृष्टमदृष्टंचमिथोविशतिगच्छति ॥ जगद्रश्मिघनंरत्नंनानारत्नघनंयथा ॥ ३ ॥ दीपानामिवसर्गाणांवहूनांज्वलतांपरम् ॥ केषांचि
दस्त्यनुभवोमिथःकेषांचिदेवनो ॥ ४ ॥ अप्स्वप्स्विवरसोंभोधावावर्त्तरमणावनौ ॥ सर्गेस्तिप्रत्यणुंतस्मिन्नापिसर्गास्तथाक्रमः ॥ ५ ॥
सर्वत्रसर्वतोनित्यंचिद्घनस्यांबुवेदनम् ॥ संख्यातुंकेनशक्यंतेसर्गाधारपरंपराः ॥ ६ ॥ यथावयविताभिन्नानैवावयविनःक्वचित् ॥ शब्द
भेदादृतेभिन्नानतथासर्गतापरे ॥ ७ ॥ एकस्यानंतरूपस्यकारणाभावतःस्वयम् ॥ नोदेतिनचयात्यस्तंजगदादिःस्वभावतः ॥ ८ ॥ तपंती
ज्ञप्तिरेवेयमखंडज्ञेयतामिमाम् ॥ करोत्यकर्तृरूपैवसमालोकमिवार्कभाः ॥ ९ ॥ वैतृष्ण्यात्सर्वभावानांसमास्यैवाक्षयंस्वयम् ॥ संपद्य
तेसमाधानंयत्तन्निर्वाणमुच्यते ॥ १० ॥ नबुद्ध्याबुध्यतेबोधोबोधाबुद्धेर्नबोध्यते ॥ नबुध्यतेवातेनापिबोध्योबोधःकथंभवेत् ॥ ११ ॥

बुद्ध्यानुभूयमानस्यैवपुरुषार्थत्वादननुभूयमानस्यतस्यपुरुषार्थत्वादर्शनात्तस्मात्पुरुषार्थताप्रयोजिकाचरमसाक्षात्कारबुद्धिर्मुक्तावावश्यकीतिनसर्वभावानांसमाप्तिरभ्युपगंतुंयु
क्तेत्याशंक्याह ॥ नेति ॥ परमपुरुषार्थरूपोबोधःपरमात्मबुद्ध्याचरमसाक्षात्कारवृत्त्यानबुध्यते ॥ जडायास्तस्याबोधशक्त्यभावात् बोधस्यबुद्धिविषयत्वायोगाच्च ॥ तर्हिबोध
शक्तिमान्परमात्मासुप्तोराजावंदिभिरिवप्रबोध्यतांतत्राह ॥ बोधाबुद्धेरिति ॥ नबोध्यतेपि ॥ कुतः बोधाबुद्धेः सुप्तंराजानंबुद्ध्वातद्बोधनायवंदिनःप्रवर्त्तंते बुद्ध्यातुसुप्तोबोधे
नबुद्धइतिकथंतद्बोधनेसाप्रवर्त्तेतेत्यर्थः ॥ तर्हिबोधेनैवबोधोबुध्यतांतत्राह ॥ नेति ॥ तेनबोधेनापिबोधोनबुद्ध्यते ॥ कुतस्तत्राह ॥ बोध्यइति ॥ बोधःस्वयंबोध्योबोधकर्मकथं
भवेत् ॥ क्रियाजन्यातिशयाधारोहिकर्म ॥ नहिबोधेक्रियातज्जन्यातिशयस्तदाधारतावासंभवति ॥ निष्क्रियत्वान्निर्विकारत्वात्स्वात्मनिक्रियाविरोधाच्चेतिभावः ॥ ११ ॥

तस्मादध्यासपरंपराचरमसाक्षात्कारबुद्ध्यंतपरिणामपरंपरयास्वयमेवसमाप्यते तस्यांचसमाप्तायांस्वप्रकाशत्वात्प्रबुद्धएवात्मानीहारागमात्तुमप्रायनांप्राप्तोमध्याह्नेनिःशेषनी हारापगमेनसवितेवतदातपइवचप्रबुध्यतइव सएवास्यनित्यप्राप्तनिरतिशयानंदाभिव्यक्तिलक्षणःपरमपुरुषार्थइत्याशयेनाह ॥ प्रबुद्धएवेति ॥ १२ ॥ कर्मपदेनऐहिकामुष्मि कफलंलक्ष्यते ॥ १३ ॥ मोहनिद्रातःप्रबुद्धोबोधश्चिदात्मायस्य ॥ ध्यानस्थोनिरुद्धबाह्यवृत्तिः ॥ १४ ॥ व्युत्थानकालेसतर्हिकथमास्तेनदाह ॥ यइति ॥ मनोमननवानपिविष येष्वासंगाभावादमनोमानमननःअतएवदीपवत्प्रकाशयन्नपिअक्रियः ॥ १५ ॥ १६ ॥ योव्युत्थितोनिरुद्धःसमाध्यारूढश्चाभिन्नबोधोयःसद्रूपस्वरूपानुभवस्तत्रैवस्थितः सन्निरोधव्युत्थानेउदासीनवत्स्थापश्यतिसएवसंसारविक्षेपाच्छाम्यतिनान्यः ॥ १७ ॥ कीदृशीसातादृशसद्रूपानुभवेस्थितिस्तामाह ॥ जगदिति ॥ बोधमात्रमेवएकानिष्ठाय

प्रबुद्धएवसुप्ताभःस्वयंबोधोविबुध्यते ॥ देशकालाद्यभावेपिमध्याह्नेर्कातपोयथा ॥ १२ ॥ सर्वकर्मवितृष्णानांशांतेच्छानांप्रबोधतः ॥ सतामनिच्छतामेवनिर्वाणंसंप्रवर्त्तते ॥ १३ ॥ प्रबुद्धबोधोध्यानस्थःस्वभावेकेवलेस्थितः ॥ नकिंचिदपिगृह्णातिनकिंचिदपिचोज्झति ॥ १४ ॥ योयथास्थितएवास्तेपश्यन्दीपइवाक्रियः ॥ अमनोमानमननोमनोमननवानपि ॥ १५ ॥ व्युत्थानेविश्वरूपाख्यमन्यत्रब्रह्म संज्ञितम् ॥ सर्गासर्गात्मचिन्मात्रंसत्यंसर्वत्रभासते ॥ १६ ॥ अभिन्नबोधसद्रूपस्वरूपानुभवेस्थितः ॥ व्युत्थितःसन्निरुद्धश्चयःपश्यति सशाम्यति ॥ १७ ॥ जगत्पदार्थसार्थानांबोधमात्रैकनिष्ठताम् ॥ विनानास्त्यपरासत्ताव्योम्नःशून्येतरायथा ॥ १८ ॥ शिष्यतेस्फोतबो धानांकेवलानंतबोधता ॥ सापिस्वपरिणामेनपरेणायात्यवाच्यताम् ॥ १९ ॥ तद्विश्रांतौपरासत्ताशिष्यतेवानशिष्यते ॥ याकाप्यत्यंत शांतानांनवाग्गोचरमेतिसा ॥ २० ॥ यासमस्यपराकाष्ठासैवबोधस्यसन्मयी ॥ सर्गस्तन्मयएवातःसकलंशांतमव्ययम् ॥ २१ ॥ निर्वा णायवितृष्णायस्वच्छशीतलसंविदे ॥ स्पृहयंतिसदासत्तांब्रह्मविष्णुहराअपि ॥ २२ ॥

थार्थरूपंयेपांतद्भावंविनाअपरासत्तावस्तुस्थितिर्नास्तीत्येवंरूपासेत्यर्थः ॥ १८ ॥ अपरासत्ताकुतोनास्तीतिचेत्तत्त्वसाक्षात्कारेणजगद्रूपबाधेतत्साक्षिचिन्मात्रसत्तायाएवपरि शेषादित्याशयेनाह ॥ शिष्यतइति ॥ स्फीतबोधानामपरिच्छिन्नब्रह्मावगाहनानुकूलस्फारताशालिबोधवताम् ॥ सातादृशप्रत्यगात्मरूपाबोधतापिस्वस्याःब्रह्मसन्मात्रपरिशे पलक्षणाखंडाकारवाक्यार्थलक्षणेनपरेणपरिणामेनअवाच्यतामखंडार्थकवाक्यलक्ष्यताम् ॥ १९ ॥ तद्विश्रांतौतद्भावेनस्थितौसत्यांशिष्यतेनशिष्यतेवेत्युभयविधावाचामपि गोचरतांसादशानैति ॥ २० ॥ समस्यसत्तासामान्यस्यपराकाष्ठापरमावधिःशोधिततत्पदार्थरूपासैवबोधस्यापिशोधितत्वंपदार्थरूपापराकाष्ठा ॥ वियदादिलक्षणःअवस्था त्रयलक्षणश्चसर्गःअस्तिभातीतिसर्वानुभवात्सत्ताबोधमयएव ॥ एवंसतियत्फलितंतदाह ॥ सकलमिति ॥ २१ ॥ तदेवब्रह्मादीनामपिप्रेयस्तमत्वान्निरतिशयानंदरूपंनिर्वाणमि त्याह ॥ निर्वाणायेति ॥ सदैवाहंस्यांमाकदाचिन्माभूवमितिसदैवतत्सत्तांस्पृहयंति ॥ अपिशब्दात्सर्वप्राणिनोपि ॥ २२ ॥

सर्वेषांसार्वकालिकस्पृहास्पदमेववस्तुसर्वदेशेसर्वकालेसर्ववस्त्वात्मनाउदितंचेतनंस्वतःस्फुरद्रूपंशुद्धंतदेवेतितस्यनाशःअदर्शनंक्षणमपिनोपपद्यते ॥ २३ ॥ तमोनिरतिशयदुःखरूपः ॥ अतिशीतलमात्यंतिकदुःखोपशमः ॥२४॥ यथाशिल्पिबुद्धावनुत्कीर्णाःशिलांतस्थाःशालभंजिकायथेच्छंसंचेतंतिसंस्फुरंतितथाभावोपहितमखंडितमविच्छिन्नमेवब्रह्म इदंजगद्रूपंचेततिस्फुरतीत्यर्थः ॥ २५ ॥ सौम्यांबुकोशोजलाशयस्तत्स्थम् ॥ कोशोऽन्नमयादिस्तत्स्थंब्रह्मांडकोशस्थंचचेत्यंस्वयमेवभूत्वाचेततिस्फुरति ॥२६॥ अवोधःअज्ञानात्तोयआत्मातद्भावेनमंथरैर्जडप्रायैःपरमार्थांबरस्यसन्मात्रस्यआभोगैःकृत्रिमवपैः ॥ इत्थंभावेतृतीया ॥ यैर्यैर्जीवैर्यथायथाभावितस्तथाचेततितदितिपरेणान्वयः ॥ २७ ॥

सर्वार्थात्मैवसर्वत्रसर्वदासर्वथोदितम्॥ चेतनंशुद्धमेवास्तिनाशोनास्योपपद्यते ॥ २३ ॥ अत्यंततमःसंसारोनिर्वाणमतिशीतलम्॥ अतिशीतलमेवास्तितमस्त्वेवनविद्यते॥ २४ ॥ संचेतंतिशिलांतस्थायथालंशालभंजिकाः॥ अनुत्कीर्णास्तस्थाब्रह्मचेततीदमखंडितम्॥ २५॥ यथाचेततिसौम्यांबुकोशस्थंवीचिमंडलम्॥ तथाचेततिकोशस्थंमहाचिच्चेत्यमव्ययम्॥ २६॥ अविभक्तोविभागस्थैरिव शांतैरनंतकैः॥ परमार्थांवराभोगैस्त्ववोधात्मत्वमंथरैः॥२७॥ यैर्यैर्यथास्वआत्मांतर्भावितश्चेततिश्चिरम्॥ भोगमोक्षप्रभेदेषुतेषांतथोदितः॥२८॥ मृतेवाप्यमृतेबंधौस्वप्नेस्वप्नविवोधिनः॥ नयथोदेतिसत्याख्यातथादृश्येषुतद्विदः॥२९॥ यदिदंकिलदृश्यादितच्छांतमखिलंशिवम्॥ भाविते ऽवगतेप्यंतरितिभ्रांतिःकउद्भवः॥ ३० ॥ सर्वथादेहसंख्येषुवैतृष्ण्यमुपजायते॥ सम्यग्बोधेसतिस्वप्नइवापिस्वार्थकादिषु॥ ३१ ॥ वैतृष्ण्याद्वर्धतेबोधोबोधाद्वैतृष्ण्यवर्धनम्॥ परस्परेणप्रकटेएतेकुड्यप्रकाशवत् ॥ ३२ ॥ येनबोधेनवैतृष्ण्यंधनदारसुतादिवा॥ स्वनूनमपिसंपन्नंजाड्यंतत्संस्थितंतथा॥ ३३ ॥ एतावदेवबोधस्यबोधत्वंयद्वितृष्णता॥ पांडित्यंनामतन्मौर्ख्यंयत्रनास्तिवितृष्णता । ३४॥ नतुवैतृष्ण्यबोधाढ्यौनपरस्परवर्धितौ ॥ असत्यावेवतौनामनष्टौचित्रहुताशवत्॥ ३५॥

स्वप्नाद्विवोधिनःप्रबुद्धस्यपुरुषस्यस्वप्नेस्वबंधौमृतेअमृतेजीवत्यपिवायथासत्याख्यासत्यताबुद्धिर्नोदेतितथातत्त्वविदःसर्वेषुदृश्येष्वितिनहर्षशोकप्रसक्तिरित्यर्थः॥ २९॥ ॥२८॥ स्वप्नाद्विवोधिनःप्रबुद्धस्यपुरुषस्यस्वप्नेस्वबंधौमृतेअमृतेजीवत्यपिवायथासत्याख्यासत्यताबुद्धिर्नोदेतितथातत्त्वविदःसर्वेषुदृश्येष्वितिनहर्षशोकप्रसक्तिरित्यर्थः ॥ अवगमेसतिकेनक्रमेणभ्रांतिरनुद्भवस्तमाह ॥ सर्वथेत्यादिना ॥ यद्दृश्यादित्रिपुटीरूपंतदखिलंशांतंशिवमित्यंतर्भाविते सम्यगवगतेपिसतिभ्रांतेःपश्चात्कउद्भवइत्यन्वयः ॥ ३० ॥ अवगमेसतिकेनक्रमेणभ्रांतिरनुद्भवस्तमाह ॥ सर्वथेत्यादिना ॥ देहसम्यक्ख्यायंतदतिदेहसंख्यास्तथाविधेषुस्वार्थकादिषुभोगतदुपायेषु ॥ ३१ ॥ अस्त्वेवंततःकिंतत्राह ॥ वैतृष्ण्यादिति ॥ ३२ ॥ तत्कृतस्तत्राह ॥ येनेति ॥ येनहेतुनावैतृष्ण्यंवाधनदारादिवातत्त्वाभिनिवेशलक्षणेनबोधेनैवसुतुअनूनंस्वनूनमुपचितंसंपन्नंतद्विरोधितदनुकूलंवाजाड्यमपितथातत्तदभिनिवेशानुसारेणैवसंस्थितमित्यर्थः ॥ ३३ ॥ ॥ ३४ ॥ परस्परवर्द्धितावपितावसत्यावेवेतिचित्रहुताशवत्कार्याक्षमावेवनष्टावितिनतुमंतव्यमित्यर्थः ॥ ३५ ॥

कुतोनमंतव्यंतत्राह ॥ परमेति ॥ यतोबोधवैतृष्ण्ययोःपरमानिरतिशयासंपत्तिरेवनिरतिशयानंदरूपत्वादात्यंतिकदुःखहेतुक्षयरूपत्वाच्चमोक्षउच्यते ॥ अबोधएवहिबंधमूलंतृ
ष्णैवचबंधस्तदुभयक्षयरूपोहिमोक्षइत्युपपत्तेरित्यर्थः ॥ ३६ ॥ अतस्ताभ्यामेववर्धिताभ्यांकृतकृत्योहंवृत्तइत्याह ॥ गतमित्यादिना ॥ गम्यंनिरसनीयंगतंनिरस्तम् ॥ ३७ ॥
॥ ३८ ॥ तृष्णामोहबंधभेत्तारःशूराविरलाइत्याह ॥ सहस्रेभ्यइति ॥ यतमानानांमध्येइत्यर्थः ॥ ३९ ॥ प्राप्तःज्योतिषआत्मनःसूर्यादीनांचबोधोज्ञानंप्रकाशातिशयश्चयेन ॥
नीहारोजाड्यवासनाभागःप्रसिद्धश्च ॥ ४० ॥ संकल्पानतिशेतेअतिक्रमत्याशयोयस्य ॥ अवासनोजीवन्मुक्तःस्पंदतेव्यवहरतिनवाव्यवहरति ॥ समाधावेवविश्राम्यतीत्यर्थः
॥ ४१ ॥ सर्वत्रसर्ववस्तुपुमनस्कारैस्तत्त्वमननैर्द्धीरातस्थिरीभूताद्भ्रांतिमात्रैकनिश्चयाद्यःखवद्भावआसीत्तदेवअवासनमासितमवस्थानमित्यर्थः ॥ ४२ ॥ उदारसत्वेशुद्धांतःक

परमाबोधवैतृष्ण्यसंपत्तिर्मोक्षउच्यते ॥ तत्रानंतेपदेशांतेवसताचनशोच्यते ॥३६॥ गतंगम्यंकृतंकार्यंदृष्टंदृश्यमशेषतः ॥ यावत्सर्वंशि
वंशांतमेकमाद्यमनामयम् ॥ ३७ ॥ आत्मारामस्यशांतस्यवैतृष्ण्यस्यानहंकृतेः ॥ असंकल्पैवभवतिस्थितिःखस्येवनिर्मला ॥ ३८ ॥
सहस्रेभ्यःसहस्रेभ्यःकश्चिदुत्थायवीर्यवान् ॥ भिनत्तिवासनाजालंपंजरंकेसरीयथा ॥ ३९ ॥ प्राप्तज्योतिर्बोधशुद्धिःपरमंतःप्रकाशवा
न् ॥ नीहारःशरदीवाशुस्वयमेवोपशाम्यति ॥४०॥ ज्ञातज्ञेयस्त्वसंकल्पःसंकल्पातिशयाशयः ॥ अवासनोव्यवहृतौवातवत्स्पंदतेनवा
॥४१॥ आसीद्धीरान्मनस्कारैर्भ्रांतिमात्रैकनिश्चयात् ॥ यःसर्वत्रखवद्भावस्तदवासनमासितम् ॥ ४२ ॥ निर्वासनेभावउदारसत्वेब्रह्मा
खिलंदृश्यमितिप्रबुद्धे ॥ स्थिरैकनिर्वाणमतावनंतोमोक्षाभिधानःप्रशमोभ्युदेति ॥ ४३ ॥ ॥इ० वा० म० वा० दे० मो० नि० उ० रामवि
श्रांत्युपगमोनामचतुर्नवतितमःसर्गः ॥ १९४ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अहोनुसंप्रबुद्धोसिराघवाघविघातिनी ॥ वा
गियंतवसंपन्नाप्रबुद्धेष्ववहासिनी ॥ १ ॥ विभातीवासदेवेदमसंकल्पेनशाम्यति ॥ एतच्छांतिस्तुनिर्वाणमित्येवपरमार्थता ॥ २ ॥

रणेपुंसिवर्णितरूपेनिर्वासनेभावेउदितेसतिअखिलंदृश्यंब्रह्मैवेतिप्रबुद्धेसतिस्थिरैकनिर्वाणमतौतस्मिन्पुंसिअनंतोमोक्षइत्यभिधानंयस्यतथाविधःसर्वसंसारप्रशमःअभ्युदेतिस्वय
मेवप्रकटीभवतीत्यर्थः ॥ ४३ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेचतुर्नवत्युत्तरशततमःसर्गः ॥ १९४ ॥ ॥ ७ ॥ ॥ शुभाःप्रबुद्धरामो
क्तीःप्रशस्यगुरुणास्वयम् ॥ परीक्षार्थंकृताःप्रश्नारामेणात्रसमाहिताः ॥ १ ॥ तत्रादौयथोपवर्णिताःप्रबुद्धरामोक्तीरनुमोदमानोवसिष्ठःप्रशंसति ॥ अहोइत्यादिना ॥ हेरामइयं
तववाक्अप्रबुद्धानामघविघातिनी प्रबुद्धेषुत्वनुभवसिद्धार्थानुवादत्वाद्युक्तियुक्तत्वाच्चअवहासिनीप्रहर्षस्मेरवदनताकारिणीसंपन्ना ॥ १ ॥ असदेवेदंजगत्बोधप्रयुक्तसंकल्प
विभातीवेतिबंधनिष्कर्षः ॥ असंकल्पदार्ढ्यपर्यवसितेनतत्त्वज्ञानेनशाम्यतीतिमुक्तिसाधननिष्कर्षः ॥ एतच्छांतिरेवनिर्वाणमितिमोक्षनिष्कर्षः ॥ सैवपरमार्थतेत्यर्थः ॥ २ ॥

१ स्वार्थेप्यञिवितृष्णस्येत्यर्थः ॥ वितृष्णस्येतिवापाठःकल्प्यइतिभाति

२ अत्रपाठोभ्रष्टइतिटीकानुरोधेनभाति

कल्पनाकल्पनेइति ॥३॥ शांतौसमाधौ ॥ ४ ॥ एतत्पदस्थितिरेवास्म
तथाचकल्पनाकल्पनरूपवंधमोक्षौअप्रबुद्धस्यप्रबुद्धस्यचब्रह्मणएवरूपमितिनिष्कर्षोपिफलितइत्याह ॥ दादिजीवन्मुक्तानांसमाधिव्युत्थानयोस्तुल्यरूपस्थितिरित्याह ॥ वयमिति ॥ ५ ॥ ज्ञरूपिणःप्रबुद्धाः ॥ ६ ॥ शैलोदरमिवनिर्विक्षेपस्थितिमतामस्माकमेतत्पदंत्वयाप्येवमस्म दादिवदेवतदालभ्यइहजीवन्मुक्तौउप्यताम् ॥ अद्यप्रभृतीत्यर्थः ॥ ७ ॥ एवंवसिष्ठोक्त्याजीवन्मुक्तिपदेप्रतिष्ठितोरामोजीवन्मुक्तानांयादृशंजगद्भासतेतदभिलपति ॥ ब्रह्मणीति द्वाभ्याम् ॥ अनुत्पन्नत्वादेवाभासुरंपृथगप्रथमानम् ॥ ८ ॥ ९ ॥ इदानींवसिष्ठोरामंजीवन्मुक्तिप्रतिष्ठाख्यापनाययोगपट्टन्यायेनवक्तृपदेस्थापयित्वास्वयंशिष्यवत्पृच्छामिस्वसं

कल्पनाकल्पनेरूपंपरस्यैवेतरस्यनो ॥ स्पंदनास्पंदनेवायोर्यथानात्रैकताद्विते॥३॥ प्रबुद्धस्यैवयापुंसःशिलाजठरवत्स्थितिः॥ शांतौव्य वहृतौवापिसामलामुक्ततोच्यते॥ ४॥ वयमस्मिन्पदेस्थित्वाराघवाघविघातिनि॥ शांतत्वेव्यवहारेचसममित्थमवस्थिताः॥ ५॥ अ स्मिन्नेवपदेनित्यंब्रह्मविष्णुहरादयः ॥ तिष्ठंतिव्यवहारस्थाअपिशांताज्ञरूपिणः ॥ ६॥ शैलोदरस्थितिमतांप्रबुद्धानामनामयम् ॥ अ स्माकंपदमेवंतदालभ्यैतदिहोप्यताम्॥ ७॥ ॥श्रीरामउवाच॥ ॥ब्रह्मण्येवमसद्रूपमनुत्पन्नमभासुरम् ॥ अनारंभमनाकारमेवेदं भासतेजगत्॥ ८॥ मृगतृष्णांवुसदृशंतरंगावर्त्तिवारिवत्॥ रुचकादीवकनकेस्वप्नसंकल्पशैलवत्॥ ९॥ ॥श्रीवसिष्ठउवाच॥ ॥ बु द्धवानसिचेद्रामतत्त्वबोधविवृद्धये॥ कुरुसंशयविच्छेदंपृच्छतःप्रच्छकस्यमे॥ १०॥ इत्थंनित्यानुभूतोपिशिरस्योप्यतिभासुरः॥ जग दाख्योयमाभासःकथंनामनविद्यते॥ ११ ॥ ॥श्रीरामउवाच॥ ॥पूर्वमेवेदमुत्पन्नंनकिंचनकदाचन॥ तेनवंध्यासुतस्यास्यनसत्ता कल्पनादृते॥ १२॥ किमिवास्याजगद्भ्रांतेःकारणंप्रोत्थितायतः॥ नकारणंविनाकार्यंकिंचित्संभवतिक्वचित्॥ १३॥ नचाविकारमज रंसविकारंक्षयादृते॥ कारणंक्वचिदेवेहकिंचिद्भवितुमर्हति ॥ १४ ॥ ब्रह्मैवेदमनाख्यात्मकारणंप्रविजृंभते॥ तत्ककस्यकथंनामजग च्छब्दार्थसंविदः॥ १५॥

॥ ११ ॥ नचप्राग्गुरुणोक्ताभिरेवयुक्तिभिः शयविच्छेदंकुर्वित्याह ॥ बुद्धवानसीति ॥ १० ॥ प्रत्यक्षादिप्रमाणदृढीकृतत्वादर्थक्रियाऽविसंवादाच्चसत्यतयाशिरःस्थितप्रायोपि श्रीरामःसमाधत्ते ॥ पूर्वमेवेत्यादिना ॥ नोत्पन्नंकारणाभावादित्यर्थः ॥ कल्पनात्भ्रमादृतेविना ॥ १२ ॥ कारणाभावमेवदर्शयति ॥ किमिवेत्यादिना ॥ यतःप्रोत्थितास्यात् ॥ १३ ॥ ब्रह्मणःकारणताप्रसक्तिरेवनास्तीत्याह ॥ नचेति ॥ पूर्वावस्थाक्षयादृतेसविकारंनचाकिंचित्प्रसिद्धमित्यर्थः ॥ १४ ॥ यदिनिर्विकारमेवविवर्त्तोपादानकारणंसन्माय याजगदाकारेणविजृंभतइत्युच्येततर्हिजगच्छब्दार्थःसत्योनलभ्यतइत्याह ॥ कारणमिति ॥ संविदोयथार्थप्रत्ययाः ॥ १५ ॥

प्रथमंचेतनंहिरण्यगर्भाख्यंद्विपरार्धपरिमितंकंचित्काललवंविवर्त्तरूपमातिवाहिकदेहभृत्तिष्ठतीवेतिजगद्भ्रांतिःसविपयःपर्यवस्यतीत्यर्थः ॥ १६ ॥ तत्प्रथमचेतनमेवक्षणेवत्सरादिकालविस्ताररभ्रमंपश्यति ॥ यथात्वंस्वप्नेतथापश्यसि ॥ १७ ॥ १८ ॥ तद्भूतभुवनादिसर्गसमाचारम् ॥ १९ ॥ सएवस्वकल्पितेभुवनभेदेव्यष्टिजीवात्मनादुष्कृतादिफलभोगायाधस्तादूर्ध्वंचआयातिभ्रमन्नीव ॥ यदितस्यसंकल्पस्यकाकतालीयवद्यथापूर्वंस्थितिस्तथैवाद्यापिस्थितिरभूत्तर्हिततएवप्रत्यभिज्ञायजगतिसुस्थिरांस्थितिंआत्तवान्भ्रांत्यागृहीतवान् ॥ २१ ॥ एवंभ्रांत्याइत्थमुपस्थितमिदंमिथ्याजगत्शिलाकामिनीभूत्वावंध्यासुतस्यकांतस्यमुखेललाटेव्योमचूर्णेनतिलकंविरच्यरंजनंशोभातिशयंकरोतीत्या

तदनाख्येपदेशांतेचिरात्प्रथमचेतनम् ॥ कंचित्काललवंतिष्ठत्यातिवाहिकदेहभृत् ॥ १६ ॥ क्षणेवत्सरसंवित्तिंस्वप्नेत्वमिवचेतति ॥ काकतालीयवत्तत्रचंद्रार्कादींश्चपश्यति ॥ १७ ॥ संकल्पैकात्मनस्तस्यदेशकालक्रियान्वितम् ॥ अत्यंतमेवव्योम्न्येवभुवनंभासतेस्वयम् ॥ १८ ॥ तस्मिन्मिथ्योपसंपन्नेसमिथ्यापुरुषस्ततः ॥ मिथ्यैवतत्समाचारंकुर्वन्विपरिवर्त्तते ॥ १९ ॥ अधस्तादूर्ध्वमायातिपुनरूर्ध्वाद्व्रजत्यधः ॥ कल्पितानंतसंभारपदार्थानर्थसंभ्रमः ॥ २० ॥ काकतालीयवत्तस्यसंकल्पस्यभवेद्यदि ॥ यद्यथातत्तथाद्यापिसुस्थिरामात्तवान्स्थितिम् ॥ २१ ॥ शिलावंध्यासुतमुखेव्योमचूर्णेनरंजनम् ॥ करोतीत्यादिवदिदंमिथ्याजगदुपस्थितम् ॥ २२ ॥ सत्यमेवेदमथवामिथ्यात्वंतुकुतःकिल ॥ नमिथ्यात्वंनसत्यत्वंकिमपीदमजंततम् ॥ २३ ॥ आकाशकोशवत्स्वच्छंशिलाजठरवद्घनम् ॥ पाषाणमौनवच्चेदंशांतमेवाक्षयंजगत् ॥ २४ ॥ चिन्मात्रेसर्वसंकल्पेविराडात्मातिवाहिके ॥ देहसंवेदनंव्योमजगदित्यवभासते ॥ २५ ॥ एवंब्रह्ममहाकाशमेवेदंकजगत्कथा ॥ शांतंसमसमाभोगमेकमाद्यंतवर्जितम् ॥ २६ ॥ ययापयसिवीचीनामुन्मज्जननिमज्जनैः ॥ नजलान्यत्वमेवंहिभावाभावैःपरैःपरे ॥ २७ ॥ परावरविदःकेचिदंतस्मिन्परमेपदे ॥ शुद्धेपरिणमंत्यंतर्वारिबिंदुरिवांभसि ॥ २८ ॥ परेऽपरमिदंभातिपरस्यैवपरात्मकम् ॥ संभवंत्यमलेशांतेनजगंतिनतत्क्रियाः ॥ २९ ॥

दिवाक्यार्थवद्विकल्पमात्रमित्यर्थः ॥ २२ ॥ यदित्वत्यंतासतिमिथ्यात्वाख्यधर्मस्याप्यप्रसिद्धिःपर्यालोच्येततर्ह्यधिष्ठानमात्रत्वात्सत्यमेवेत्याह ॥ सत्यमेवेति ॥ यदितुव्यावर्त्त्यनीयमिथ्यात्वाप्रसिद्ध्याव्यावर्त्तकसत्यत्वकल्पनमपितत्रनघटतेइतिविचार्यतेतदानिर्वचनवागप्रसरात्किमपीदम ॥ २३ ॥ २४ ॥ चिदात्मनोमायिकोयःसर्वाकारसंकल्पस्तद्रूपविराडात्मन्यातिवाहिकेदेहेसंवेदनरूपंयद्व्योमतदेवजगदितिभासतइत्यर्थः ॥ २५ ॥ एवंसतियत्फलितंतदाह ॥ एवमिति ॥ समेभ्योपिसमआत्यंतिकवैषम्यशून्यआभोगोयस्य ॥ २६ ॥ परेब्रह्मणि ॥ २७ ॥ परावरविदःसारासारविवेकिनःपरिणमंत्यैकरस्यंगच्छंति ॥ २८ ॥ परस्यब्रह्मणोवेषइवकार्यमिवअवयवइववाअपरमिदंजगज्जीवरूपंभाति ॥ तत्त्वतस्ततोविचारेपरमेवसंभवति ॥ जगंतितत्क्रियाःव्यवहाराश्चनसंभवंति ॥ २९ ॥

मृगांबुनिपरत्वेनअन्यत्वेनऊषरभूमात्रत्वेनपरिज्ञातेसतिभावनांपुनस्तत्सत्यतावुद्धिकोभावयति ॥ ३० ॥ अन्यस्याशुचिप्रपंचस्याऽन्यंभोगरसंनजानातिप्रबुद्धः ॥ यथाद्विजोत्रा लणःसीधुस्वादुंमद्यमाधुर्यंनजानातितद्वदित्यर्थः ॥ ३१ ॥ अयंनिजआत्मावाह्यदृष्टेःपरावृत्यचेत्योन्मुखत्वमुत्सृज्यसमाधौनिर्वायचरमसाक्षात्कारवृत्त्याविलोकितःसन्शांति शिवेनित्यमुक्तेआत्मनितिष्ठेत् ॥ कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नितिश्रुतेः ॥ ३२ ॥ एवंसमाहितोवसिष्ठःपुनर्बीजांकुरन्यायेनब्रह्मणिजगत्सत्यतांशंकते ॥ दृश्यमिति ॥ ३३ ॥ समाधत्ते ॥ बीजइति ॥ यद्यंकुरःसत्यस्तर्हिबीजोदरेसंस्थितएववहिर्बीजपुटंभित्वानिर्गच्छतीतिस्यात्तत्तुन ॥ यतोबीजभेदनेतदुदरेअंकुरतयासंश्रितोऽकु रोनोपलभ्यते ॥ यातुबीजोदरेसूक्ष्मभागानांसत्तासाबीजमेवभवेन्नांकुरइत्यर्थः ॥ ३४ ॥ ब्रह्मणोंतर्जगत्सत्तानतथाकिंतुजगत्त्वैवोपलभ्यतइतिवैषम्यंप्रलयकालेतथैवास्तीतिचेत्त

स्वप्नेस्वप्नइतिज्ञातेदृश्येब्रह्मतयापिच ॥ मृगांबुनिपरत्वेनकोभावयतिभावनाम् ॥ ३० ॥ परमार्थचमत्कारमंतःस्यानुभवंविना ॥ अन्य स्यान्यंनजानातिसीधुस्वादुमिवद्विजः ॥ ३१ ॥ निर्वायनिजआत्मायंपरिवृत्यावलोकितः ॥ चेत्योन्मुखत्वमुत्सृज्यसंतिष्ठेच्छांतआत्म नि ॥ ३२ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ दृश्यंबीजांकुरइवस्थितंब्रह्मणिकारणे ॥ इतिसर्गादिसद्भावःकस्मान्नेहोपपद्यते ॥ ३३ ॥ ॥ श्रीराम उवाच ॥ ॥ बीजेंकुरोंकुरतयासंश्रितोनोपलभ्यते ॥ बीजोदरेतुयासत्ताबीजमेवहिसाभवेत् ॥ ३४ ॥ ब्रह्मणोंतर्जगत्त्वैवंजगत्त्वैवोपलभ्य ते ॥ अस्तिचेत्तद्भवेन्नित्यंसाब्रह्मैवाविकारितत् ॥ ३५ ॥ अविकारादनाकाराद्विकार्याकृतिभासुरम् ॥ उदेतीतिकिलास्माभिर्नैवदृष्टंनचश्रु तम् ॥ ३६ ॥ अनाकृतावाकृतिमन्नचैतत्स्यातुमर्हति ॥ परमाणौनचैवांतरविसंभ्रांतिमेरवः ॥ ३७ ॥ समुद्गकेरत्नमिवजगद्ब्रह्मणितिष्ठति ॥ महाकारंनिराकारइत्युन्मत्तवचोभवेत् ॥ ३८ ॥ शांतंपरंचसाकारस्याधारइतिराजते ॥ नवकुंराजतेकेवसाकारस्याविनाशिता ॥ ३९ ॥ बोधएवायमाकारइतिकल्पनयापिधीः ॥ अपूर्वैःस्वप्नवद्दृढैःसंसारैर्नोपलभ्यते ॥ ४० ॥ अपूर्वएवस्वप्नोयंयद्दृसर्गोनुभूयते ॥ स्वप्नःकिला नुभूतार्थःस्वभ्यस्तइवदृश्यते ॥ ४१ ॥

र्हिसाब्रह्मैवभवेद्यतस्तद्ब्रह्मअविकारीतिनर्बीजांकुरन्यायस्यात्रोपपत्तिरित्यर्थः ॥ ३५ ॥ अस्तुब्रह्मअविकारंकिंततस्तत्राह ॥ अविकारादिति ॥ अविकाराद्विकार्यमुदेति अनाकारादाकृतिभासुरमुदेतीतिचनदृष्टंनश्रुतंचक्कापीत्यन्वयः ॥ ३६ ॥ एवमनाकारेनिरवयवेचसाकारस्यसावयवस्यचस्थूलस्यावस्थानमपिसर्वप्रमाणविरुद्धमित्याह ॥ अ नाकृतादिति ॥ ३७ ॥ समुद्गकेसंपुटे ॥ ३८ ॥ शांतंसर्वोपरमरूपंपरंब्रह्मसाकारस्यतादात्म्येनाधारइतिवक्तुंनराजते ॥ ३९ ॥ एवंसतिअपूर्वैःस्वप्नवद्दृढैराकारैर्बोधएवक्षणिक: साकारउत्पद्यतइतिबौद्धकल्पनाप्यनुपपन्नेत्याह ॥ बोधएवेति ॥ ४० ॥ कुतोनोपपद्यतइतितत्राह ॥ अपूर्वइति ॥ यतोऽयंसर्गःस्वप्नःअपूर्वःप्रागननुभूतार्थएवचक्षुरादिप्रमाणै रनुभूयते ॥ स्वप्नस्तुजाग्रदनुभूतार्थःसंस्कारमात्रेणभासमानार्थोजायतिस्वभ्यस्तएवार्थःस्वप्नेदृश्यतेकिलेतिसर्वजनप्रसिद्धौ ॥ ४१ ॥

१ आकारैरितिपाठोपेक्षितइतिभाति टीकानुरोधात्

अतएवबौद्धानांजाग्रत्स्वप्नभेदाभावोक्तिरपितेषामसंगतेत्याह ॥ यदेवेति ॥ स्वप्नेमृतःश्मशानंनीत्वाप्रदग्धःपुरुषः॥ तस्माच्चचितःसाकारत्वक्षणिकत्वादिकल्पनयाप्रपंचस्यस्वप्न साम्यंसर्वप्रमाणविरुद्धंसिध्यतीतिकूटस्थेब्रह्मण्यध्यस्तत्वादेवबाध्यत्वेनस्वप्नसाम्यंसिद्धमितिभावः ॥ ४२ ॥ तत्रचार्वाककृतमाक्षेपंसमाधत्ते ॥ अशरीरस्येति ॥ स्थूलशरीर शून्यस्यस्वप्नोनदृष्टइत्यशरीरेप्रतीच्यवस्थात्रयस्वप्नारोपइत्युक्तिर्नयुक्तेत्याक्षेपांशार्थः ॥ शिष्टंस्पष्टम् ॥ ४३ ॥ अतःपरिशेषान्निर्दोषःस्वपक्षएवस्थितइत्याह ॥ तस्मादितिसा र्द्धेन ॥ निराकृतिर्निराकारःपरमात्मैवविवर्त्तरूपाभिःसर्गादिनानाकृतिभिःस्थितइतिसिद्धांतःप्रतिष्ठितइत्यर्थः ॥ ४४ ॥ प्रपंचस्यब्रह्मात्मैकत्वप्रबोधेस्वप्नवदेवबाधात्सत्वासत्वा

यदेवजाग्रत्तत्स्वप्नइतिनात्रोपपद्यते॥ स्वप्नेप्रदग्धःपुरुषःकथंप्रातर्विलोक्यते॥ ४२॥ अशरीरस्यनस्वप्नइत्येतदपिनोचितम् ॥ संभवं तिपिशाचाद्यास्तेषांचस्वप्नवत्स्थितिः॥ ४३ ॥ तस्मात्स्वप्नवदाभासःसंविदात्मनिसंस्थितः ॥ सर्गादिनानाकृतिनापरमात्मानिराकृतिः ॥ ४४ ॥ स्वप्नेचिदेवशैलादिरूपेणात्मनितिष्ठति॥ ब्रह्मात्माखिलमुक्तोसावन्येनासौकृतोयदि॥ ४५॥ नेहास्तित्वंननास्तित्वमुपलब्ध्येनु भूयते॥ नैवानुभवितृत्वंचनचानुभवनक्रमः॥ ४६॥ किमपीदमनाख्येयंबुद्धेनैवानुभूयते॥ स्वसंवेदनसंवेद्यंसत्तासत्ताविजृंभितम्॥ ॥ ४७॥ अभावरूपिणोभावाअभावाभावरूपिणः॥ सर्वदासर्वथासर्वेभांतिभासुरतांगताः॥ ४८ ॥ बृंहतिब्रह्मणिब्रह्मव्योमव्योमनि वर्द्धते॥ नचोपपद्यतेकिंचिद्ब्रह्मव्योम्निविबृंहणम्॥ ४९॥ द्रष्टृदृश्यदृगात्मायमहंसर्गादिविभ्रमः॥ शांतचिद्व्योमविस्तारोनकुड्याद्युपपद्य ते॥ ५०॥ यथानसन्नकुड्यादिस्वसंकल्पनपत्तनम्॥ तथैवायंजगदितिशांतमेकमनामयम्॥ ५१॥ पूर्णंहिपरमंशांतमिदंसर्वमखंडि तम्॥ अनिंगनमनाभासमनाद्यंतमचेतितम्॥ ५२॥ अजन्ममरणंशांतमनादिनिधनंमहत् ॥ अनुपाधिनिराकारंस्वपदंबुद्धवानहम् ॥ ५३॥ यासंविदंतःस्फुरतिसैवोपायातिवाक्यताम्॥ यद्बीजंलीनमवनौतद्यात्यंकुरतांकिल ॥ ५४ ॥ शुद्धज्ञानामयैकात्माद्वैतैक्यपरि वर्जितः॥ मनागपिनजानामिद्वैतैक्यकलनाकलाम्॥ ५५॥

भ्यांवक्तुमयोग्यात्तुच्छैतैवपरिशिष्यतइत्याह ॥ ब्रह्मात्मेति ॥ असौप्रत्यगात्माअखिलबंधमुक्तोब्रह्मैव असौचप्रपंचःअन्येनाज्ञानेनैवस्वप्नवत्कृतइतिसिद्धांततथाविधेब्रह्मात्म न्युपलब्धेसतिदृहप्रपंचेअस्तित्वनास्तित्वादिकंनैवानुभूयतइतितुच्छैतैवपरिशिष्यतइतिपरेणान्वयः ॥ ४५ ॥ ४६ ॥ बुद्धेसतिनैवानुभूयते अबुद्धतादशायामप्यनिर्वचनीयमे वजगदित्याह ॥ स्वसंवेदनेत्यादिना ॥ ४७ ॥ ४८ ॥ विबृंहणंजगदाकारेणवर्द्धनंब्रह्मव्योम्निनोपपद्यते ॥ ४९ ॥ ५० ॥ यथास्वसंकल्पनपत्तनंनसत्तत्रचकुड्यादिसुतरांनसत् ॥ ५१ ॥ ५२ ॥ ५३ ॥ ममेदंवाक्यंसत्यमेवनासत्यमनुभवमूलकत्वादितिसयुक्तिकमाह ॥ येति ॥ ५४ ॥ द्वैतैक्यकलनायाःकलांलेशमपिमनागपिनजानामि ॥ ५५ ॥

सर्वेइमेजनाःस्वाज्ञानेनजीवंतोपिमदृशाब्रह्ममात्रत्वान्नित्यमुक्ताःखेखभावःशून्यतेवस्थिताः ॥ ५६ ॥ तथातद्भोग्यंजगदपिस्पर्शमहारंभत्वात्त्वगादींद्रियवेद्यत्वाच्चित्रंविलक्षण
मपिभित्तौचित्रमिवाभासमात्रंस्थितम ॥ ५७ ॥ उत्कीर्णप्रतिमादिसमम् ॥ ५८ ॥ यत्किलसर्गादावेवअभित्तिकंनिरालंबनंभातिअस्यकेवसत्यता ॥ ५९ ॥ तथाचदृष्टिभेदेन
चतुर्धाजगत्संपन्नमित्याह ॥ जगदिति ॥ इदंजगज्जगद्बुद्धावज्ञदृष्टौसत्यम ॥ परिज्ञानवतांविवेकिनोदृष्टौमृषा ॥ ब्रह्मात्मकंपश्यतोब्रह्म ॥ भूमिकाभेदारोहणक्रमेणशांतिपुरुषेत्वं
धकारवत्क्रमेणशांतंसत्परमंवरंशून्यमेवपर्यवस्यतीत्यर्थः ॥ ६० ॥ तत्रचतुर्थरूपंतत्त्वज्ञविषयमित्याह ॥ सर्वएवेति ॥ ६१ ॥ हेगुरोत्वंमदुक्तपरीक्षार्थमेकाकाशरूपतांभज
॥ ६२ ॥ तंतादृशंब्रह्माकाशभावेस्थितंद्विपदांवरंत्वामहमाकाशकल्पेनस्वरूपज्ञानेनसर्वात्मगगनोपमंज्ञेयपूर्णानंदैकब्रह्माभेदेनसंबोधाद्धेतेनमस्करोमि ॥ ६३ ॥ सर्वात्मगगनो

जगत्स्पर्शमहारंभमपितूष्णीमिदंस्थितम् ॥ चित्रंभित्ताविवकृतंमनोराज्यइवोदितम् ॥ ५७ ॥ शैलादिवोत्कीर्णसमंकथायामिववर्णितम् ॥ किलस्वप्नवदेवेदंसर्गादावेवभातियत् ॥ ५८ ॥ अभित्तिकंनिष्प्रतिघंजगत्केवास्यसत्यता ॥ ५९ ॥ जगद्बुद्धाविदंसत्यंपरिज्ञानवतामृषा ॥ ब्रह्मात्मकइदंब्रह्मशांतेशांतंपरांवरम् ॥ ६० ॥

सर्वेतूष्णींमयाएवजीवन्मुक्ताइमेजनाः ॥ संशांतसर्वसंरंभाःखेखभावइवस्थिताः ॥ ५६ ॥ सर्वएवइमेभावाःसहस्थावरजंगमाः ॥ अस्मदादयआकाशंजगज्ज्ञविषयंतथा ॥ ६१ ॥ खमहंखंभवांश्चित्त्वंजगत्खंखंखमेवच ॥ चिदाकाशैकतामेत्यभजैकाकाशरूपताम् ॥ ६२ ॥ ज्ञानेनाकाशकल्पेनसर्वात्मगगनोपमम् ॥ ज्ञेयाभिन्नेनसंबोधात्त्वंवंदेद्विपदांवरम् ॥ ६३ ॥ चिद्रूपत्वादुदेतीदंजगत्तत्रैवलीयते ॥ अकारणकमेवांतःपरंव्योमैवनिर्मलम् ॥ ६४ ॥ एतत्सर्वंपदातीतंसर्वशास्त्रकलातिगम् ॥ पदमासाद्यनिर्द्वंद्वंत्वमाकाशात्मकोभवः ॥ ६५ ॥ अहंजगच्चनोपादपाण्यादिनघटादिच ॥ सर्वमाकाशमाकाशमेवाच्छंसूक्ष्मचिद्भवेत् ॥ ६६ ॥ सर्वापह्नवएवायंमयायोदर्शितस्तव ॥ सन्निर्घोवादिनांवादेप्वात्मज्ञानेपुराजते ॥ ६७ ॥ काष्ठमौनात्मकोवादेनसर्वापह्नवोयदा ॥ क्रियतेतेनवादेपुनात्मज्ञानंप्रसीदति ॥ ६८ ॥

पमंचेत्यंतद्विप्रतिपिद्धमितिशंकांवारयन्नाह ॥ चिद्रूपत्वादिति ॥ ६४ ॥ सर्वाःशास्त्रकलाःशास्त्रयुक्तीरतिक्रम्यगच्छतीतिसर्वशास्त्रकलातिगंतत्पदमासाद्यत्वमप्याकाशोब्रह्माका
शस्तदात्मकःअभवःसंदेवासीः ॥ भवशून्यइतिवा ॥ ६५ ॥ अहंरामस्तदवयवपादपाण्यादिनह्यास्यघटादिचेतिप्रसिद्धंजगच्चनोनास्त्येव ॥ यतःसर्वमाकाशमेव ॥ ६६ ॥ अयंच
सर्वापह्नवोयद्यपिममतावंध्याममसुखेजिह्वानास्तीतिवाक्यवद्व्याघातवैतंडिकत्वादिदोषापादकत्वाद्वादिनांतार्किकादीनांवादेपुनयद्दतितत्सभायांनराजतेतथाप्यात्मज्ञानेपुव
द्भिर्वादिभिर्बद्धधोपन्यस्तेपुमध्येपरमपुरुषार्थपर्यवसितंकिज्ञानंस्यादितिपरीक्षकाणांसभायांराजते ॥ नहिसर्वापह्नवमंतरेणात्यंतिकानर्थनिवृत्त्युपलक्षितनिरतिशयानंदप्रतिष्ठा
सिध्यतीतिभावः ॥ ६७ ॥ यतइत्यर्थेयदाशब्दः ॥ यतःकाष्ठमौनपर्यवसितत्वात्काष्ठमौनात्मकःसर्वापह्नवोवादेनसंभवत्यतोवेतिनक्रियते ॥ तेनतदकरणेननिर्विशेषात्मापरिचया
द्वादेष्वात्मज्ञानंनप्रसीदतिनोदेतीत्यर्थः ॥ ६८ ॥

कुतोनोदेतितत्राह ॥ प्रत्यक्षेति ॥ ६९ ॥ उक्तंसारतःसंक्षिप्योपसंहरति ॥ सर्वेति ॥ सर्वेयेआगमाःशास्त्रभेदास्तदर्थेभ्यःसमतीतमनुभूतिर्मात्रप्रमाणंयत्रतथाविधमचिह्नमतएव शांताभिधानकलनंशुद्धम् चिदात्मकमेकंब्रह्माकाशमेवास्तिनान्यदणुमात्रमपीतितत्रमलशंकयाअलंपर्याप्तंप्रयोजनंनास्तीत्यर्थः ॥ ७० ॥ ॥ इतिश्रीवासिष्ठम०ता०नि०उ० पंचनवत्युत्तरशततमःसर्गः ॥ १९५ ॥ ॥ ७ ॥ ॥ गुरुशास्त्राद्युपायेनयथाब्रह्मेहलभ्यते ॥ दारुवैवधिकाख्यानंतथासंक्षिप्यवर्ण्यते ॥ १ ॥ हेमहाबुद्धेइतिभरद्वाजस्यारिष्टनेमेर्वासंबोधनम् ॥ १ ॥ लीलया गुरुमुखेनश्रवणकौतूहलेन ॥ २ ॥ ३ ॥ करिष्यमाणप्रश्नंपूर्वेणसंगमयितुंपूर्वोक्तमनुवदति ॥ एवमिति ॥४॥ अवाच्यम् यतोवाचोनिवर्त्ततेअप्रा

प्रत्यक्षादिप्रमाणानांयदगम्यमचिह्नितम् ॥ स्वानुभूतिभवंब्रह्मवादैस्तल्लभ्यतेकथम् ॥ ६९ ॥ सर्वागमार्थसमतीतमचिह्नमच्छमाकाशमेकमजमाद्यमनामरूपम् ॥ शुद्धंचिदात्मकमिहास्त्यनुभूतिमात्रंशांताभिधानकलनंमलशंकयालम् ॥ ७० ॥ ॥ इ० वा० महारामायणेवा०दे०मो०नि०उ० बोधप्रकाशीकरणयोगोपदेशोनामपंचनवत्युत्तरशततमःसर्गः ॥ १९५ ॥ ॥ ७ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ एवमुक्त्वामहाबुद्धेरामोराजीवलोचनः ॥ मुहूर्त्तमात्रंविश्रम्यतूष्णींस्थित्वापरेपदे ॥ १ ॥ परमांतृप्तिमापन्नोविश्रांतःपरमात्मनि ॥ मुनिंपुनरपृच्छत्तंजानन्नपिहिलीलया ॥ २ ॥ ॥ श्रीरामउवाच ॥ ॥ भगवन्संशयांभोदशरत्कालमुनीश्वर ॥ इदानींसंशयोयंमेजातोमनसिपेलवः ॥ ३ ॥ एवमेतन्महाज्ञानंसंसारार्णवतारणम् ॥ समस्तमेववाग्जालंसमतीत्यावतिष्ठते ॥ ४ ॥ यदिदंकिलसद्ब्रह्मस्वसंविन्मात्रनिश्चयम् ॥ तदवाच्यंकिलगिरांमहतामपिमानद ॥ ५ ॥ एवंस्थितेपरंज्ञेयंसर्वसंकल्पनोज्झितम् ॥ स्वसंवित्तुर्यतन्मात्रलभ्यंदुर्गमतांगतम् ॥ ६ ॥ प्रतियोगिव्यवच्छेदसंख्याभेदैषिणांकिल ॥ कथंशास्त्रपदैस्तुच्छैःसविकल्पैरवाप्यते ॥ ७ ॥ विकल्पसारशब्दाद्यैर्ज्ञानंशास्त्रैर्नलभ्यते ॥ तत्किमर्थमनर्थायगुरुशास्त्रादिकल्पितम् ॥ ८ ॥ गुरुशास्त्रादिविज्ञानेकारणंवास्त्यकारणम् ॥ तदत्रनिश्चयंब्रह्मन्ब्रूहिमेवदतांवर ॥ ९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवमेतन्महाबाहोनशास्त्रंज्ञानकारणम् ॥ नानाशब्दमयंशास्त्रमनामचपरंपदम् ॥ १० ॥ तथापिराघवश्रेष्ठयथैतद्धेतुतांगतम् ॥ शास्त्राद्युत्तमबोधस्यतत्समासेनमेशृणु ॥ ११ ॥

प्यमनसासहेतिश्रुतेःशब्दप्रवृत्तिनिमित्तधर्मशून्यत्वाच्चेत्यर्थः ॥ ५ ॥ स्वसंविद्रूपंयत्तुर्यमवस्थात्रयातीतंस्वप्रकाशवस्तुतन्मात्रलभ्यमतएवजाग्रदवस्थांतर्गतगुरुशास्त्राद्यगम्यत्वाद्दुर्गमतांगतम् ॥ ६ ॥ तुच्छैःक्षुद्रतरप्रतियोगिव्यवच्छेदादिसापेक्षत्वात्तद्बोधनासमर्थैः ॥ ७ ॥ विकल्पसहस्रानुसंधानभ्रांतिपरंपरानर्थाय ॥ ८ ॥ तत्तस्मात्तत्त्वविज्ञानेगुरुशास्त्रादिकंकारणमस्तिभवतिअकारणंवा अत्रास्मिन्संशयेनिश्चयंब्रूहीत्यर्थः ॥ ९ ॥ रामशंकामनुमोदमानोवसिष्ठःसमाधत्ते ॥ एवमेतदित्यादिना ॥ अनामेति ॥ शब्दप्रवृत्तिनिमित्तधर्मशून्यत्वादसंस्पृष्टत्वाच्चपरंपदंनपदार्थोनवाक्यार्थश्चेत्यर्थः ॥ १० ॥ यद्यप्येवंतथाप्येतच्छास्त्रादिउत्तमबोधस्यतत्फलस्यमोक्षस्यचयथायेनप्रकारेणहेतुतांगतंतच्छृणुवक्ष्यमाणकाष्ठवैवधिकाख्यानदृष्टांतेनेत्यर्थः ॥ ११ ॥

तदेवाह ॥ संतीत्यादिना ॥ विवधवीवधशब्दावुभयतोबद्धशिक्येस्कंधवाह्येकाष्ठविशेपेवर्त्तेतेतद्वहंतीतिवैवधिकाःकीरकाःशूद्रजातिभेदादेशविशेषजावा ॥ शोषंकार्श्यम् ॥ ॥ १२ ॥ कंथापटच्चरमथितातयैवप्रावरणसंस्थानकारिणा ॥ कथासंस्थानेतिपाठेपूर्वानुभूतान्नवस्त्रादिकथामात्रावस्थानकारिणेत्यर्थः ॥ तटाकभंगान्निर्गतेनवारिणापद्मा इवदीनाननाशयाः ॥ १३ ॥ दौर्गत्येनदारिद्र्येणाभितप्ताः ॥ १४ ॥ दिनंप्रतिप्रतिदिनम् ॥ दिनांतेनदिनावसानांतश्रमसाध्येनेतियावत् ॥ इतिसंस्थितानिश्चिताः ॥ १५ ॥ १६ ॥ भवचारिणःतत्तद्दिनप्राप्तान्नभक्षणशीलाः ॥ १७ ॥ गुप्तान्यगुप्तानिप्रकटानिचरत्नादीनि ॥ १८ ॥ केचित्भाग्यवंतः ॥ १९ ॥ पुष्पाणिकेतकीचंपकादीनि ॥ चिरकीरकाः

संतिकश्चिद्वैवधिकाःकीरकाश्चिरदुर्भगाः ॥ दुःखेनाभ्यागताःशोषंग्रीष्मेणेवजरद्द्रुमाः ॥ १२ ॥ दारिद्र्येणदुरंतेनकंथासंस्थानकारिणा ॥ दीनाननाशयाःपद्मानिर्गतेनेववारिणा ॥ १३ ॥ दौर्गत्यपरितप्तास्तेजीवितार्थमचिंतयन् ॥ जठरस्यकयायुक्त्यावयंकुर्मःप्रपूरणम् ॥ १४ ॥ इतिसंचिंत्यविधिनादिनांतेनदिनंप्रति ॥ दारुभारेणजीवामोविक्रीतेनेतिसंस्थिताः ॥ १५ ॥ इतिसंचिंत्यतेजग्मुर्दार्वर्थंविपिनांतरम् ॥ यैवाजीव्यतेयुक्त्यासैवापदिविराजते ॥ १६ ॥ इतितेप्रत्यहंगत्वाकाननंभवचारिणः ॥ दारूण्यानीयविक्रीयचक्रुर्देहस्यधारणम् ॥ १७ ॥ यत्प्रयांतिवनांतंतेतस्मिन्संत्यखिलानिहि ॥ गुप्तागुप्तानिरत्नानिदारूणिकनकानिच ॥ १८ ॥ तेषांभारभृतांमध्यात्कैश्चित्कतिपयैर्वनात् ॥ जातरूपाणिरत्नानितानिसंप्राप्तवंतिहि ॥ १९ ॥ केचिच्चंदनदारूणिकेचित्पुष्पाणिमानद ॥ केचित्फलानिविक्रीयजीवंतिचिरकीरकाः ॥ २० ॥ केचित्सर्वमनासाद्यदुर्दारूण्येवदुर्धियः ॥ नीत्वाविक्रीयजीवंतिवनवीथ्युपजीविनः ॥ २१ ॥ दार्वर्थमुद्यताःसर्वेतेसंप्राप्यमहावनम् ॥ केचित्प्राप्यस्थिताःसर्वेझटित्येवंगतज्वरम् ॥ २२ ॥ इतियावदजस्रंतेसेवंतेतन्महावनम् ॥ प्रदेशात्तावदेकस्मात्प्राप्तश्चिंतामणिर्मणिः ॥ २३ ॥ तस्माच्चिंतामणेःप्राप्ताःसमग्राविभवश्रियः ॥ परमंसुखमायातास्तत्रतेसंस्थिताःसुखम् ॥ २४ ॥ दार्वर्थमुद्यताःसंतःप्राप्यसर्वार्थदंमणिम् ॥ सुखंतिष्ठंतिनिर्द्वंद्वादिविदेववराइव ॥ २५ ॥ सर्वार्थसारपरिपूर्णतयातयातेकाष्ठोद्यमाधिगतसन्मणयोमहांतः ॥ तिष्ठंतिशांतभयमोहविषाददुःखमानंदमंथरधियःसमतामुपेताः ॥ २६ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० काष्ठवैवधिकोपाख्यानेचिंतामणिलाभोनामषण्णवत्युत्तरशततमःसर्गः ॥ १९६ ॥ ॥ ७ ॥ ॥ ७ ॥

चिराभ्यासदृढीभूतकीरकवृत्तयः ॥ २० ॥ केचिद्भाग्यहीनादुर्बुद्धयःसारान्वेषणाकुशलबुद्धयोदुर्दारूण्येवनीत्वा ॥ २१ ॥ केचिद्रत्नादीनिप्राप्यगतदारिद्र्यज्वरंयथास्यात्त थास्थिताः ॥ २२ ॥ चिंतामण्याख्योमणिर्दैवात्प्राप्तः ॥ २३ ॥ २४ ॥ निर्द्वंद्वानिरस्तशीतोष्णक्षुत्तृषादिदुःखाः ॥ २५ ॥ आख्यानमुपसंहरति ॥ सर्वार्थेति ॥ तेकीरकाःका ष्ठोद्यमेनैवअधिगतःप्राप्तःसन्मणिश्चिंतामणिर्यैस्तथाविधाःसंतस्तयाउक्तयासर्वैरर्थसारैरुत्तमधनैःपरिपूर्णतयाशांतभयमोहविषाददुःखंयथास्यात्तथाआनंदमंथरधियोभूत्वा इतरलाभालाभादिषुसमतामुपेताःसंतस्तिष्ठंति ॥ २६ ॥ ॥ इतिश्रीवासिष्ठ० तात्पर्यप्रकाशेनिर्वा० उ० षण्णवत्युत्तरशततमःसर्गः ॥ १९६ ॥ ॥ ७ ॥

स्फुटंवैवधिकाख्यानतात्पर्यविहत्तिक्रमात् ॥ हेतुत्वंगुरुशास्त्रादेरात्मज्ञानेत्रवर्ण्यते ॥ १ ॥ यथाअहमवगच्छामितात्पर्यतस्तथाकुरुविवरणमितिशेषः ॥ १ ॥ येवैवधिकामयो क्तास्तेसादृश्यादेतेमानवावोध्याः ॥ एवमग्रेपिसर्वत्र ॥ यद्दारिद्र्यदुःखंमयोक्तंतत्तेषामज्ञानंतत्प्रयुक्तश्चमहान्आतपस्त्रिविधसंतापः ॥ तत्तुदानंमहातपइतिपाठेदानतपःप्रयोजि काऐहिकामुष्मिकभोगाशालक्षणयोच्यते ॥ भोगार्थिनःसंतस्तदुपायेषूद्यताइत्यत्रतात्पर्यमित्यर्थः ॥ ३ ॥ ममभोगौघाःसिद्धिमायांत्वितिनितरांकृपणःकार्पण्यवान्जनोमा नवःअनपेक्षिताइतरकार्यार्थायेनतथाविधःसन्शास्त्रादौशास्त्रमूलकेतदुपाये ॥ ४ ॥ यद्यप्ययंभोगेच्छयैवशास्त्रेप्रवृत्तस्तथापितच्छास्त्रंगुडजिह्विकान्यायेनैनंप्रथमंफलास्वादनैः प्रलोभ्यांतिस्वतात्पर्यविषयेपरमेपदेनयत्येवेत्याह ॥ भोगार्थमिति ॥ शास्त्रतःप्रथमंभोगफललाभेनतद्विश्वासदार्ढ्यक्रमात्तदुक्तसाधनाभ्यासतोभूमिकाभेदारोहणक्रमाच्चितितं

॥ श्रीरामउवाच ॥ ॥ तथाकुरुमुनिश्रेष्ठयथावैवधिकक्रमम् ॥ असंदेहमिमंसम्यगवगच्छामिमानद ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ येतेवैवधिकारामतएतेमानवाभुवि ॥ तेषांदारिद्र्यदुःखंयत्तदज्ञानंमहातपः ॥ २ ॥ यत्तन्महावनंप्रोक्तंगुरुशास्त्रक्रमादितत् ॥ यदुद्यता स्तेग्रासार्थंजनाभोगार्थिनोहिते ॥ ३ ॥ भोगौघाःसिद्धिमायांतुममनिष्कृपणोजनः ॥ अनपेक्षितकार्यार्थःशास्त्रादौसंप्रवर्त्तते ॥ ४ ॥ भो गार्थंसंप्रवृत्तोपिप्राप्नोत्यभ्यासतःक्रमात् ॥ जंतुश्चिंतितमेवाद्यपदंपरवशोपिसन् ॥ ५ ॥ दार्वर्थमुद्यतोभावीयथासंप्राप्तवान्मणिम् ॥ भोगार्थमात्तशास्त्रोयंतथाप्नोतिजनःपदम् ॥ ६ ॥ किंस्याच्छास्त्रविचाराभ्यामितिसंदेहलीलया ॥ कश्चित्प्रवर्त्ततेपश्चादाप्नोतिपदमुत्त मम् ॥ ७ ॥ अदृष्टोत्तमतत्त्वार्थःशास्त्रादौसंप्रवर्त्तते ॥ संदेहेनार्थभोगार्थंजनःप्राप्नोतितत्पदम् ॥ ८ ॥ अन्यथासंप्रवर्त्ततेशास्त्रैर्वासनया जनाः ॥ अन्यदासादयंत्याद्यंमणिंवैवधिकाइव ॥ ९ ॥ परोपकारेविरतंस्वभावेनप्रवर्त्तते ॥ यःससाधुरितिप्रोक्तःप्रमाणंत्वस्यचेष्टितम् ॥ १० ॥ साध्वाचारवशाल्लोकोभोगसंप्राप्तिशंकया ॥ संदेहश्चाप्यतत्त्वज्ञःशास्त्रादौसंप्रवर्त्तते ॥ ११ ॥ भोगार्थंसंप्रवृत्तोसौभोगमोक्षा वुभावपि ॥ तस्मात्प्राप्नोतिदार्वर्थीवनाच्चिंतामणिंयथा ॥ १२ ॥ केचिच्चंदनदारूणिकेचिच्चिंतामणिंमणिम् ॥ केचित्सामान्यरत्नानि प्राप्नुवंतियथावनात् ॥ १३ ॥ केचित्कामंकेचिदर्थंकेचिद्धर्मंत्रयंतुवा ॥ केचिन्मोक्षमशेषंचलभंतेशास्त्रतस्तथा ॥ १४ ॥

शास्त्रपरमंतात्पर्यविषयमाद्यपदंमोक्षाख्यंब्रह्म ॥ ५ ॥ भावःसारासारविचारान्वेषणादिःसोस्यास्तीतिभावीवैवधिकः ॥ ६ ॥ संदेहप्रयुक्तयालीलयाकौतूहलेन ॥ ७ ॥ अर्थ्यं तइत्यर्थोविषयस्तद्भोगार्थम् ॥ ८ ॥ स्वस्ववासनानुसारेणान्यादृशंशास्त्रफलंसंभावयंतोजनास्तत्रप्रवर्त्तंते ॥ अन्यत्वाङ्मनसागोचरंनिर्विषयनिरतिशयसुखमासादयंतीत्यंशेवै वधिकाख्यानदृष्टांतोपन्यासइत्यर्थः ॥ ९ ॥ सर्वजनानामुत्सर्गतःसन्मार्गप्रवृत्तौसाध्वाचारदर्शनमेवमूलमितिसाधुलक्षणप्रदर्शनपूर्वकमाह ॥ परोपकारेइति ॥ प्रमाणंसर्वलो कस्येतिशेषः ॥ १० ॥ अस्तुप्रमाणंकिंततस्तत्राह ॥ साध्विति ॥ अतत्त्वज्ञोलोकःशास्त्रफलेसंदिग्धेइतिसंदेहःसंदिहानोपिभोगसंप्राप्तिसंभावनयासंप्रवर्त्तते ॥ ११ ॥ १२ ॥ गुप्तागुप्तानीत्याद्युक्तेस्तात्पर्यमाह ॥ केचिदित्यादिना ॥ १३ ॥ १४ ॥

वर्गत्रयंधर्मकामार्थास्तस्योपदेशोमुख्यवृत्त्यैवास्ति ॥ तच्छासनेपुब्रह्मतत्परेषुशास्त्रेष्वपिपदवाक्यमुख्यवृत्त्याब्रह्मप्राप्तिर्ब्रह्मबोधः॥१५॥ वसंतादिकालश्रीःप्रसवेनतत्तदार्त्तवफल
पुष्पादिजन्मनेवध्वन्यमानासूच्यमाना ॥ आलंकारिकसमयेव्यंजनाख्यवृत्त्यंतरेणइतरसमयेलक्षणयेतियावत्॥१६॥ मुख्यवृत्त्याबोधनेअसामर्थ्येपिशास्त्रस्यलक्षणाद्युपायैर्बो
धनेसामर्थ्यमस्त्येवेतितेनअधिकारिणांब्रह्मवेदनमस्त्येवेतिनवैयर्थ्यमित्याह ॥ सर्वार्थेति ॥ सर्वान्अर्थान्दृश्यवर्गांस्त्रिवर्गान्वाअतिक्रम्यउत्कर्षकाष्ठांगतम् ॥ मणिदर्पणचंद्रादिसर्व
गतसौंदर्याण्यतिगतंलावण्यंयोषितिस्त्रीरत्नेऽस्तितद्वदित्यर्थः ॥१७॥ साक्षान्नसंप्राप्यतइत्यर्थः ॥१८॥ चित्तशुद्ध्यादिसाधनपरंपरोपचयद्वाराकारणत्वंगतानि ॥ १९ ॥ अनिच्छ

केवलंसर्ववाक्यार्थैर्ध्वन्यमानावग वर्गत्रयोपदेशोहिशास्त्रादिष्वस्तिराघव ॥ ब्रह्मप्राप्तिस्त्ववाच्यत्वान्नास्तितच्छासनेष्वपि ॥ १५ ॥ म्यते ॥ कालश्रीःप्रसवेनेवस्वयंस्वानुभवेनसा ॥ १६ ॥ सर्वार्थातिगतंशास्त्रेविद्यतेब्रह्मवेदनम् ॥ सर्वगातिगतंस्वच्छंलावण्यमिवयो पिति ॥ १७ ॥ नशास्त्रान्नगुरोर्वाक्यान्नदानान्नेश्वरार्चनात् ॥ एषसर्वपदातीतोबोधःसंप्राप्यतेपरः॥ १८॥ एतान्यकारणान्येवकार णत्वंगतान्यलम्॥ परमात्मैकविश्रांतौयथाराघवतच्छृणु ॥ १९॥ शास्त्रादभ्यासयोगेनचित्तंयातंविशुद्धताम् ॥ अनिच्छदेवमेवाशु पदंपश्यतिपावनम् ॥ २० ॥ एतच्छास्त्रादविद्यायाःसात्विकोभागउच्यते॥ तामसःसात्विकेनास्याभागेनायातिसंक्षयम् ॥ २१ ॥ नूनं मलंप्रधानेनक्षालयच्छास्त्ररूपिणा॥ पुरुषःशुद्धतामेतिपरमांवस्तुशक्तितः॥ २२॥ अनिच्छयोरेवयथासप्तसप्तिसमुद्रयोः॥ प्रागदृश्यं तृतीयत्वंस्वभाववशतःस्वतः॥२३॥ स्वसन्निधानमात्रेणविदितप्रतिभासनम्॥ सदसन्मयमाभोगिप्रतिबिंबंप्रवर्त्तते ॥ २४॥ मुमुक्षु शास्त्रयोरेवंमिथःसंबंधमात्रतः ॥ सर्वसंवित्पदातीतमात्मज्ञानंप्रवर्त्तते॥ २५॥ अनयोःप्रेक्षणाद्देहविवेकोजायतेयथा ॥ तथास्वभा वतःशास्त्रविवेकाज्ज्ञेयवेदनम्॥ २६॥ लोष्टेनलोष्टंसलिलेक्षालयन्बालकोयथा॥ क्षयेणलोष्टयोर्हस्तनैर्मल्यंलभतेपरम्॥ २७॥

न्सर्वभोगेच्छानिर्मुक्तंएवमेवप्रतिदिनमंतर्मुखतयाप्रत्यक्प्रवणंचित्तंतत्पदंब्रह्मपश्यति ॥ २० ॥ उच्यतेउत्कर्षंनीयते ॥ उच्चशब्दात्तत्करोतीतिणिचिकर्मणिलटियकिणिलोपः
॥ २१ ॥ शास्त्ररूपिणाप्रधानेनजलेनक्षालयन्सन् ॥ वस्तुशक्तितःअचिंत्याच्छास्त्रादिप्रभावात्तद्बोध्यनित्यशुद्धात्मवस्तुसामर्थ्याच्च ॥ २२ ॥ यथासप्तसप्तेःसूर्यस्यसमुद्रस्य
चसंनिधानेप्रागदृश्यमपिप्रतिबिंबंस्वच्छप्रकाशत्वभाववशतस्तृतीयंसंप्रवर्त्तते एवंमुमुक्षुशास्त्रयोरपिमिथःसंबंधमात्रतआत्मज्ञानंप्रवर्त्ततइतित्रयाणामन्वयः ॥ २३॥ विदितमनु
भवसिद्धंप्रतिभासनंसम्यक्स्फुरणंयस्यतथाविधम् ॥ २४ ॥ २५ ॥ अनयोःसवितृसमुद्रयोःप्रेक्षणाद्यथाअत्यंतवैधर्म्यादिबोधलक्षणोविवेकोजायतेतथाशास्त्रकृताद्विवेकाद
पिदेहेसर्वोपाध्यसंसृष्टाद्वितीयज्ञेयवेदनंजायते ॥ २६ ॥ शास्त्रकृतैर्विचारविकल्पैर्भ्रांतिकृतविकल्पानांक्षालनेनात्मनैर्मल्यप्राप्तावपिदृष्टांतमाह ॥ लोष्टेनेति ॥ २७ ॥

१ तृतीयंतुस्वभाववशतइतिपाठष्टीकानुरोधात्प्रतिभाति

चेतनात्पुनःपुनरात्मतत्त्वपरीक्षणात्क्षालयन्सन् ॥२८॥ केनप्रमाणेनकथंपरीक्षणात्तत्राह ॥ महावाक्येति॥ शास्त्रादेःसूत्रभाष्यतद्व्याख्यामहारामायणादिशास्त्राद्गुरुवचनादेश्चो पायात्तत्त्वमस्यादिमहावाक्यार्थस्यनिष्यंदंतत्त्वंपदवाच्यार्थद्वयपरिशोधनलब्धरसभूतमखंडवाक्यार्थापरोक्षानुभवरूपंस्वात्मज्ञानमवाप्यते ॥ यथायंत्रादिनिपीडनोपायान्निः सारितेक्षुरसतःस्वादुमाधुर्यास्वादनंस्वानुभूतितःअवाप्यतेतद्वदित्यर्थः ॥ २९ ॥ यथानभसिप्रसृतोप्यालोकःप्रभाभित्त्योःसमासंगादभिव्यक्तःस्फुटमनुभूयतेतथानित्यस्वप्रकाश रूपमप्यात्मज्ञानंश्रवणतदधिकारिणोर्मेलनात्स्फुटमनुभूयतइत्यर्थः ॥ ३० ॥ तत्रशास्त्रांतरश्रवणंतत्पांडित्यंवानोपयुज्यतएवेत्याह ॥ त्रिवर्गेति ॥ विपुलश्रुताबहुश्रुतास्तत्त्वविद स्तेषांतत्त्वबोधोपायचर्चास्रुतच्छ्रुतमश्रुतंमौर्ख्यमेव यतोमिथ्याविषयफलत्वात्तुच्छंतदित्यर्थः ॥ ३१॥ अतोनिर्विकल्पस्वरूपस्थितिपर्यवसितमेवश्रुतमुपादेयमित्याशयेनप्रशंस

तथाशास्त्रविकल्पौघैर्विकल्पांश्चेतनाद्बुधः ॥ क्षालयन्स्वविचारेणपरमांयातिशुद्धताम् ॥ २८॥ महावाक्यार्थनिष्यंदंस्वात्मज्ञानमवाप्यते॥ शास्त्रादेरिक्षुरसतःस्वाद्विवस्वानुभूतितः॥ २९॥ प्रभाभित्त्योःसमासंगाद्यथालोकोनुभूयते॥ श्रुतश्रुतवतोःसंगादात्मज्ञानंतथा भवेत्॥ ३० ॥ त्रिवर्गमात्रसिद्ध्यैयन्नमोक्षायचतच्छ्रुतम् ॥ विपुलश्रुतचर्चासुतुच्छमश्रुतमेवतत्॥ ३१ ॥ तच्छ्रुतंयत्किलज्ञस्यैसाज्ञ्यिःसमतायया॥ तत्साम्यंयत्रसौषुप्तीस्थितिर्जाग्रतिजायते॥ ३२॥ एवंहिसर्वमेतत्तच्छास्त्रादेःसमवाप्यते॥ तस्मात्सर्वप्रयत्नेनशास्त्राद्यभ्यासमाहरेत् ॥ ३३॥ शास्त्रार्थभावनवशेनगिरागुरूणांसत्संगमेननियमेनशमेनराम ॥ तत्राप्यतेसकलविश्वपदादतीतंसर्वेश्वरंपरममाद्यमनादिशर्म्म ॥ ३४ ॥ ॥ इ०वा०महारामायणेवा०दे०मो०नि०उ०शास्त्रमाहात्म्यंनामसप्तनवत्युत्तरशततमःसर्गः ॥१९७॥ ॥९॥ ॥श्रीवसिष्ठउवाच॥ ॥भूयोनिपुणबोधायशृणुकिंचिद्रघूद्वह॥ पुनःपुनर्यत्कथितंतदज्ञेप्यवतिष्ठते॥ १ ॥ राघवप्रथमंप्रोक्तंस्थितिप्रकरणंमया ॥ येनेदमित्थमुत्पन्नमितिविज्ञायतेजगत् ॥ २॥ ततोजगतिजातेनपरोपशमशालिना ॥ भवितव्यमितिप्रोक्तंमयोपशमयुक्तिभिः ॥ ३ ॥

ति ॥ तदिति ॥ यत्रजाग्रत्यपिसौषुप्तीनिर्विकल्पास्वरूपस्थितिर्जायते ॥ ३२ ॥ इदंसर्वंशास्त्राधीनमितितदावश्यकमित्याह ॥ एवमिति ॥ ३३ ॥ हेरामतत्सकलविश्वपदाद्ब्रह्मलो कांतैश्वर्यसुखादप्यतीतमतिशयितंपावनंसर्वेश्वरंमोक्षाख्यमनादिसुखंगुरूणांगिराशास्त्रार्थबोधनवशेनैवप्राप्यतेतत्त्वसत्संगमादिनेत्यर्थः ॥ ३४ ॥ ॥ इतिश्रीवासिष्ठम०तात्प र्यप्रकाशेनि०उ०सप्तनवत्युत्तरशततमःसर्गः ॥ १९७॥ ॥९॥ ॥ वर्ण्यतेत्रप्रबुद्धानांनिर्विक्षेपसुखस्थितौ ॥ हेतुःसेतुरिवांबूनांसर्वत्रसमदर्शनम् ॥ १ ॥ निपुणबोधायबो धदार्ढ्यहेतुनिर्विक्षेपतासिद्धयेकिंचिद्वर्ण्यमानंरहस्यमुपशमप्रकरणादौकथितमेवपुनःकिमर्थमुच्यतेइत्यनास्थावारणायाह ॥ पुनःपुनरिति ॥ १ ॥ उत्पत्तिस्थितिप्रकरणाभ्या मुत्पन्नंजगदित्थंभ्रांतिमात्रमितिविज्ञातेसतिसमदर्शनप्रतिष्ठयाउपशमप्रकरणेसमदर्शनंवर्णितंतदेवात्रजीवन्निर्वाणसुखप्रतिष्ठार्थंपुनर्वर्ण्यतइत्याह ॥ राघवेत्यादिना ॥२॥३॥

इहएतत्प्रकरणप्रतिपाद्येनिर्वाणसुखे ॥ ४ ॥ संसारदृष्टिषुव्यवहारेषुयथायेनप्रकारेणविहर्त्तव्यंतत्किंचिद्रहस्यंनःअस्मन्मुखात्तेश्रोतव्यमस्तितदुच्यतइत्यर्थः ॥ ५ ॥ बाल्येत्वद्द यस्यैवजगत्स्थितिंबुद्ध्वावक्ष्यमाणरीत्यानिर्विक्षेपंवस्तव्यम् ॥ ६ ॥ समतांवक्ष्यमाणांसर्वभूतेष्वैकात्म्यदर्शनाद्गुणदोपदर्शनलक्षणवैषम्यशून्यतांस्वदेहसमानसुखदुःखदृष्टितां सर्ववैषम्यरहितब्रह्मदृष्टिंच ॥ अलंदृढम ॥ ७ ॥ फलंसर्वभूतमैत्रीरूपम् ॥ संपदोबाह्याःसौभाग्यानिसुभगभावाःकल्याणगुणाइतिभेदः ॥ ८ ॥ तदेवद्विविधंफलंप्रकटयति ॥ समतेतिद्वाभ्याम ॥ समतयासुभगासर्वभूतहिताईहाचेष्टायेषाम् ॥ ९ ॥ १० ॥ सर्वदुःखतद्धेतुप्रशमोपितयासिद्ध्यतीत्याह ॥ द्वंद्वेति ॥ ११ ॥ १२ ॥ साम्यामृतमयइतिपदता

उपशांतिप्रकरणेप्रोक्तैरुपशमक्रमैः॥ परमोपशमंगत्वावस्तव्यमिहविज्वरम् ॥ ४ ॥ प्राप्तप्राप्येनतज्ज्ञेनयथासंसारदृष्टिषु ॥ विहर्त्तव्यं हिनःकिंचित्स्वल्पंश्रोतव्यमस्तिते ॥ ५ ॥ जन्मसंप्राप्यजगतिबाल्यएवजगत्स्थितिम् ॥ यथाभूतामिमांबुद्ध्वावस्तव्यमिहविज्वरम् ॥ ६ ॥ सर्वसौहार्दजननींसर्वस्याश्वासकारिणीम् ॥ समतामलमाश्रित्यविहर्त्तव्यमिहानघ ॥ ७ ॥ सर्वसंपत्तिसुभगंसर्वसौभाग्यवर्द्धनम् ॥ समतासुलतायास्तुफलंभवतिपावनम् ॥ ८ ॥ समतासुभगेहानांकुर्वतांप्रकृतंक्रमम् ॥ सर्वैर्वैयंजगल्लक्ष्मीर्भृत्यतामेतिराघव ॥ ९ ॥ न तदासाद्यतेराज्यान्नकांताजनसंगमात् ॥ अनपायिसुखंसारंसमत्वाद्यदवाप्यते ॥ १० ॥ द्वंद्वोपशमसीमांतंसंरंभज्वरनाशनम् ॥ सर्व दुःखातपांभोदंसमत्वंविद्धिराघव ॥ ११ ॥ मित्रीभूताखिलरिपुर्यथाभूतार्थदर्शनः ॥ दुर्लभोजगतांमध्येसाम्यामृतमयोजनः ॥ १२ ॥ प्रबुद्धस्यस्वचित्तेंदोर्निष्यंदममृताधिकम् ॥ साम्यमास्वाद्यजीवंतिसर्वेवैजनकादयः ॥ १३ ॥ साम्यमभ्यस्यतोजंतोःस्वदोषोपिगुणाय ते ॥ दुःखंसुखायतेनित्यंमरणंजीवतायते ॥ १४ ॥ साम्यसौंदर्यसुभगंवनितामुदितादिकाः ॥ आलिंगंतिमहात्मानंनित्यंव्यसनिताइव ॥ १५ ॥ समःसमुदितोनित्यंसमोनुदितधीःसदा ॥ नकाश्चिद्धिहताःसंतियाःसमस्यहिनर्द्धयः ॥ १६ ॥ सर्वकार्यसमंसाधुंप्रकृतव्यवहारि णम् ॥ चिंतामणिमिवोदारंप्रवांछंतिनरामराः ॥ १७ ॥ सम्यक्कारिणमुद्दाममुदितंसमचेतसम् ॥ नदहंत्यग्नयोरामनापःसिंचंतिमान वम् ॥ १८ ॥

त्स्यैवर्णयंस्तादृशजनानुदाहरति ॥ प्रबुद्धस्येति ॥ आस्वाद्यजीवंति उपजीवंति ॥ १३ ॥ स्वदोषःक्रोधलोभादिःक्रमेणशांत्यौदार्यादिभावेनपरिणम्यगुणवदाचरतिगुणायते ॥ १४ ॥ मुदिताद्यामैत्रीकरुणोपेक्षादयोयोगशास्त्रप्रसिद्धाः ॥ व्यसनिताःकामुकीत्वाद्भर्तृसमागमव्यसनवत्यइव ॥ १५ ॥ समुदितःकल्याणगुणैःसर्वसंपद्भिश्चसम्यगभ्युदयं प्राप्तःसमुदायतांप्राप्तश्च ॥ नउदिताधीर्श्वितायस्य ॥ ऋद्धयःसंपदः ॥ १६ ॥ सर्वकार्येस्वकार्येपरकार्येचसमंपुरुषम् साधुमपराधिषुक्षमावंतम् उदारंत्यागिनम् नराअमराश्च प्रवांछंति ॥ १७ ॥ सम्यक्कारिणंसदाचारसर्वजनहितकर्त्तारम ॥ सिंचंतिक्लेदंदुःखंकुर्वंति ॥ १८ ॥

यद्यथाकर्त्तुमुचितंतत्तथायेनक्रियतेआनंदोद्वेगौहर्षामर्षौतन्मुक्तेनसर्वंकृतंसमतयायेनदृश्यते ॥ १९ ॥ २० ॥ २१॥ कीदृशास्तत्त्वज्ञाः ॥ अनिंदितानपिसर्वाननुपादेयान्पौरेरुपा दातुमिष्टान्गृहक्षेत्रादिभावांस्त्यक्त्वाउत्तमांनिर्लोभसंतोषलक्षणांवृत्तिंदधानाः ॥ २२ ॥ जीवयंतिविवेकोपदेशादिनाउज्जीवयंति ॥ २३ ॥ समाशयोजनःपरहितार्थंप्रकृतक्रम संप्राप्तंमुखेंदौकोपंधारयतिचेत्तदप्यमृतवदेवस्यान्नोद्वेगकरंकस्यचिदित्यर्थः ॥ २४ ॥ यत्कर्मअनुचितमितिनिंदति ॥ जनस्तत्परिहरंस्तदस्यसच्चरित्रंसर्वंस्तौति ॥ २५ ॥ अशु भंप्रमादकृतमपराधमपिचिरेणकृतमद्यकृतंवातदप्यभिनंदति ॥ २६ ॥ सुखदुःखेषुभीमेषुघोरेषुसंततेषुचिरानुवृत्तेषुवैरस्यंचित्तोद्वेगम् ॥ २७.॥ इदानींमहत्स्वपिदुःखेषुसमदृ

यद्यथातत्तथायेनक्रियतेदृश्यतेतथा ॥ आनंदोद्वेगमुक्तेनकस्तंतोलयितुंक्षमः॥ १९ ॥ मित्राणिबंधुरिपवोराजानोव्यवहारिणः॥ सम्य क्कारिणितत्त्वज्ञेविश्वसंतिमहाधियः॥ २० ॥ नानिष्टाप्रपलायंतेनेष्टादायांतितुष्टताम्॥ प्रकृतक्रमसंप्राप्तास्तत्त्वज्ञाःसमदर्शिनः॥ २१ ॥ त्यक्त्वासर्वानुपादेयान्रामभावाननिंदितान्॥ समतायामदुःखायांदधानावृत्तिमुत्तमाम्॥ २२॥ विहसंतिजगज्जालंजीवयंतिनिराम याः॥ पूज्यंतेविबुधैःसर्वैःसमतामुदिताशयाः॥ २३॥ प्रकृतक्रमसंप्राप्तंमुखेंदौकोपमेवयः॥ समाशयोधारयतिस्यात्सौम्यामृतवज्जनः ॥ २४ ॥ यत्करोतियदश्नातियदाक्रामतिनिंदति॥ समदृष्टिस्तदस्येयंस्तौतिनित्यंजनावलिः ॥ २५॥ यच्छुभंवाशुभंयच्चयच्चिरेणयदद्य वा॥ समदृष्टिकृतंसम्यगभिनंदतितज्जनः॥ २६ ॥ सुखदुःखेषुभीमेषुसंततेषुमहत्स्वपि॥ मनागपिनवैरस्यंप्रयांतिसमदृष्टयः॥ २७॥ शि बिर्भूपःकपोतायमांसमंगविकर्त्तनम्॥ ददौमुदितयाबुद्ध्यासमदृष्टितयानया॥ २८॥ प्राणेभ्योपिप्रियतमांकांतामग्रेविकालिताम्॥ दृष्ट्वाप्यंगमहीपालोनमुमोहसमाशयः॥२९ ॥ मनोरथशतप्राप्तंतनयंसमयाधिया॥ राक्षसायत्रिगर्त्तेशोददौस्वपणहारितम्॥ ३०॥ न्यायतःपरिविक्रीतंसाल्वराट्समदर्शनः॥ स्व नगर्यांदह्यमानायांभूषितायांतथोत्सवे॥ समएवमहीपालोजनकोभूभृतांवरः॥ ३१ ॥ न्यायतःपरिविक्रीतंसाल्वराट्समदर्शनः॥ स्व मेवविचकर्त्तांशुशिरःपद्मदलंयथा॥ ३२ ॥ कुंदप्रकरनिर्भासंयज्ञेपांडुमिवाचलम्॥ जहौजरत्तृणमिवसौवीरःसमयाधिया॥ ३३॥ स मयैवधियानित्यंनिजमभ्याहरन्क्रमम्॥ मातंगःकुंडपोनामप्रापवैमानिकस्थितिम्॥ ३४॥

टिधीरानुदाहरति ॥ शिबिरित्यादिना ॥ कपोतायशरणागतकपोतप्राणरक्षणायतन्मांसप्रतिनिधितयाअंगविकर्त्तनंस्वमांसंददौ ॥ तच्चमहाभारतादौप्रसिद्धम् ॥ एवमग्रेप्यूह्यम् ॥२८॥ अग्रेस्वपुरोभागेविकालितांशत्रुभिःक्लेशिताम् ॥२९॥ स्वस्यपणेवाग्द्यूतेहारितंराक्षसेनजितम् ॥३०॥३१ ॥ परिविक्रीतंऐन्द्रिकींदक्षिणांतेदास्यामीतिप्रतिज्ञयाब्राह्मणा यविक्रीतप्रायम् ॥ विचकर्त्तछित्त्वाददौ ॥ ३२ ॥ पांडुमचलंकैलासमिवस्थितमैरावतमिंद्रजयेनलब्धंपुनर्यज्ञेऋत्विजांवचनाद्विप्रायजहौददौ ॥ ३३ ॥ निजंदेहयात्रानिमित्तं क्रमंव्यवहारंसमयैवधियाआहरन्आचरन्कुंडपोनाममातंगएकांगांवेतनीकृत्यब्राह्मणस्यपंचपंकमग्नागाःसमुद्धृत्यस्ववेतनीकृतांगांपुष्करेसमयाधियातस्मैब्राह्मणायदत्वासद्यः समागतंविमानमारुह्यवैमानिकस्थितिंदेवत्वंप्राप ॥ ३४ ॥

॥ ३५ ॥ जडोजडभरतः ॥ न्यायप्राप्तंभिक्षापात्रेभैक्ष्यन्यायेनप्राप्तम् ॥ ३६ ॥ ३७ ॥ कपर्दननामाराजर्षिः पुरुषः पुंस्त्वात्सुरस्त्रीभोगसमर्थोपिप्रणयिनीपुस्त्वस्मिन्सानुरागास्व
पिनलुलुभेकामवशोनाभूदित्यर्थः ॥ ३८ ॥ सएवराज्यंत्यक्त्वाविंध्यकांतारकच्छेपुकरंजगहनेष्वपिअस्पंदःसंश्चिरमवसत् ॥ ३९ ॥ व्रतेपुतपःक्लेशेपुऋद्धिपुभोगेपुचसमदृष्टि
तयानोद्विग्नाः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ समतयाकलितागुणाअगुणादोषाश्चएकभावाएकीभूताइवयस्य ॥ परोपतापांचितइतिपाठेपरैःकृताउपतापास्तैरयुक्तांचिता

सर्वभूतक्षयकरींसाम्याभ्यासेनभूरिणा ॥ तत्याजराक्षसींवृत्तिंकदंववनराक्षसः ॥ ३५ ॥ वालचंद्राभिजातोपिसमबुद्धितयाजडः ॥ गुडमोदकवन्न्यायप्राप्तमग्निमभक्षयत् ॥ ३६ ॥ समबुद्धितयाक्रूरव्यवहारपरोपिसन् ॥ धर्मव्याधस्तनुंत्यक्त्वाजगामपरमंपदम् ॥ ३७ ॥ नंदनोद्यानसंस्थोपिपुरुषोपिकपर्दनः ॥ लुलुभेनसुरस्त्रीपुनूनंप्रणयिनीष्वपि ॥ ३८ ॥ समचित्ततयाऽस्पंदःकरंजगहनेष्वपि ॥ विंध्यकांतारकच्छेपुराज्यंत्यक्त्वावसच्चिरम् ॥ ३९ ॥ ऋषयोमुनयश्चैवयेसिद्धाःसुरपूजिताः ॥ समदृष्टितयोद्विग्नानतेतासुव्रताधिपु ॥ ४० ॥ राजानःप्राकृताश्चैवधर्मव्याधादयोपरे ॥ समदृष्टिपदाभ्यासान्महतांपूज्यतांगताः ॥ ४१ ॥ इहामुत्रचसिद्ध्यर्थंपुरुषार्थप्रवृत्तये ॥ समदृष्टितयानित्यंविचरंतिसुबुद्धयः ॥ ४२ ॥ अभिवांछेन्नमरणमभिवांछेन्नजीवितम् ॥ यथाप्राप्तसमाचारोविचरेदविहिंसकः ॥ ४३ ॥ समकलितगुणागुणैकभावःसमसुखदुःखपरावरोविलासी ॥ प्रविचरतिसमावमानमानःप्रकृतवरव्यवहारपूतमूर्तिः ॥ ४४ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० समदृष्टिप्रशंसानामाष्टनवत्युत्तरशततमःसर्गः ॥ १९८ ॥ ॥ ५ ॥ ॥ श्रीरामउवाच ॥ ॥ ॥ नित्यंज्ञानैकनिष्ठत्वादात्मारामतयातथा ॥ मुक्तैःकर्मपरित्यागःकस्मान्नक्रियतेमुने ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ हेयोपादेयदृष्टीद्वेयस्यक्षीणेहितस्यवै ॥ क्रियात्यागेनकोर्थःस्यात्क्रियासंश्रयणेनवा ॥ २ ॥ नतदस्तीहयत्त्याज्यंज्ञस्योद्वेगकरंभवेत् ॥ नवास्तियदुपादेयंतज्ज्ञसंश्रेयतांगतम् ॥ ३ ॥ ज्ञस्यनार्थःकर्मत्यागैर्नार्थःकर्मसमाश्रयैः ॥ तेनस्थितंयथायद्यत्तत्तथैवकरोत्यसौ ॥ ४ ॥

श्वसमंतयाकलितायेन ॥ तथासमेसुखदुःखेपराउत्कृष्टयोनयोऽवरानिकृष्टयोनयश्चयस्य ॥ तथासमाःअवमानामानाश्चयस्यतथाविधोजीवन्मुक्तःप्रकृतव्यवहारेष्वप्यासक्त्य
भावात्पूतमूर्त्तिरतएवविलासीविलसनशीलःसन्लोकानुग्रहायदेशान्प्रविचरतिसंचरतीत्यर्थः ॥ ४४ ॥ ॥ इतिश्रीवासिष्ठ० तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेऽष्टनवत्युत्त
रशततमःसर्गः ॥ १९८ ॥ ॥ ५ ॥ ॥ मुक्तानांनकृतैरर्थोनाकृतैःकर्मभिःक्षतिः ॥ तथापितेनुवर्ततेसत्कर्माणीतिवर्ण्यते ॥ १ ॥ मुक्तैर्जीवन्मुक्तैः ॥ १ ॥ स्वभ्यस्त
स्यकरणेश्रमाभावात्त्यागेप्रयोजनाभावाल्लोकानुग्रहवशाच्चतैःकर्मत्यागोनक्रियतइत्युत्सर्गइत्याशयेनोत्तरमाह ॥ हेयेत्यादिना ॥ २ ॥ संश्रेयतामवश्यानुष्ठेयताम् ॥ ३ ॥ य
द्यद्वर्णाश्रमोचितत्वेनयथास्थितंतत्तत्तथैवकरोति ॥ ४ ॥

जीवद्देहस्यस्पंदनावश्यंभावेस्वभ्यस्तसदाचाररूपमेवस्पंदनंतद्देहेप्रवर्त्ततइत्याह ॥ यावदायुरिति ॥ अपरेणस्पंदत्यागेनान्यथास्पंदनेनच ॥ ५॥ शास्त्रीयाशास्त्रीयक्रिययोःक्रमे समानेपिशास्त्रीयेसक्रमेसदाचारेकोदोषोयेननिजंक्रमंत्यक्त्वाअन्यथाचरणंस्यादित्यर्थः ॥ अन्यत्रेतिदृष्टांतार्थम् ॥ यथास्वगृहेनिर्दोषेअन्यत्रावस्थानेप्रयोजनंनास्तितद्वदिति ॥ ६ ॥ समयासिद्ध्यसिद्ध्योस्तुल्यया ॥ ७ ॥ यद्यपिकर्मसुप्रवृत्तानांद्रव्यार्जनकृत्विगावर्जनादिषुअनुष्ठेयार्थनिर्णयेषुचश्रमसाध्यत्वाद्बहुदोषप्रसक्तिरस्तितथापिसानैःसमदर्शनताविचक्षणताबलादेवसुपरिहरेत्याशयेनाह ॥ इहेति ॥ बहुदृष्टयःसर्वशास्त्रलोकरहस्यदर्शिनःप्रपंचयिष्यमाणबहुदृष्टयश्वसमदर्शनबलाल्लोकसंपद्देपिविचक्षणाः ॥ ८ ॥

यावदायुरियंरामनिश्चितंस्पंदतेतनुः॥ तद्यथाप्राप्तमव्यग्रंस्पंदतामपरेणकिम्॥५॥ अन्यथान्यत्रचेत्कार्याक्रियात्यक्त्वानिजंक्रमम्॥ समानेहिक्रियास्पंदेकोदोषःसक्रमेकिल॥६॥ समयास्वच्छयाबुद्ध्यासततंनिर्विकारया॥ यथायत्क्रियतेरामतद्दोषायसर्वदा॥७॥ इहमत्त्यांमहाबाहोबहवोबहुदृष्टयः॥ बहुधाबहुदोषेषुविहरंतिविचक्षणाः॥८॥ गतसंगतयाबुद्ध्याविहरंतियथास्थितेः॥ गृहस्थारंभिणःकेचिज्जीवन्मुक्ताःस्थिताभुवि॥९॥ तज्ज्ञाराजर्षयश्चान्येवीतरागाभवादृशाः॥ असंसक्तधियोराज्यंकुर्वंतिविगतज्वराः॥१०॥ केचित्प्रकृतवेदार्थव्यवहारानुसारिणः॥ यज्ञशिशाशिनोनित्यमग्निहोत्रेव्यवस्थिताः॥११॥ केचिच्चतुर्षुवर्णेषुध्यानदेवार्चनादिकाम्॥ स्वक्रियामनुतिष्ठंतःस्थिताविविधयेहया॥१२॥ केचित्सर्वपरित्यागमंतःकृत्वामहाशयाः॥ सर्वकर्मपरानित्यंतज्ज्ञाएवाज्ञवस्थिताः॥१३॥ स्वप्नेप्यदृष्टलोकासुमुग्धमुग्धमृगासुच॥ वनावनीषुशून्यासुकेचिद्ध्यानपरायणाः॥१४॥ पुण्यवद्भिःसदाजुष्टेपुण्योपचयकारिणि॥ शमशालिसमाचारेकेचिदायतनेस्थिताः॥१५॥ रागद्वेषप्रहाणार्थंत्यक्त्वादेशंसमाशयाः॥ केचिदन्यत्रदेशेचपदमालंब्यसंस्थिताः॥१६॥ वनाद्वनंपुराद्ग्रामंस्थानात्स्थानंगिरेर्गिरिम्॥ भ्रमंतःसंस्थिताःकेचित्संसारोच्छित्तयेबुधाः॥१७॥ वाराणस्यांमहापुर्यांप्रयागेचैवपावने॥ श्रीपर्वतेसिद्धपुरेबदर्याश्रमकेतथा॥१८॥ शालग्रामेमहापुण्येकलापग्रामकोटरे॥ मथुरायांचपुण्यायांतथा कालंजरेगिरौ॥१९॥

बहुधेत्युक्तिप्रपंचयति ॥ गतसंगतयेत्यादिना ॥ यथास्थितेःयथाप्राप्तानुवृत्तेः ॥ ९ ॥ भवादृशाइतिभाविनींवृत्तिमाश्रित्यरामंप्रत्युक्तिः ॥ १० ॥ ११ ॥ स्वक्रियांस्वस्ववर्णाश्रमोचितंकर्मतत्रध्यानंचतुर्थाश्रमोचितम् ॥ ईहयाचेष्टया ॥ १२ ॥ सर्वपरित्यागंफलासंगत्यागम् ॥ १३ ॥ स्वप्नेपिनदृष्टालोकाजनायत्रेत्यनिशयोक्तिः ॥ १४ ॥ आयतनेपुण्यतीर्थमुन्याश्रमादौ ॥ १५ ॥ बंधुजनसमागमेरागद्वेषादिविक्षेपसहस्रावर्जनात्तत्प्रहाणार्थम् ॥ पदंस्थानम् ॥ १६ ॥ संसारोच्छित्तयेसंपद्दोषपरिहारार्थम् ॥ १७॥ पूर्वोक्तानिपुण्यायतनानिप्रपंचयति ॥ वाराणस्यामित्यादिना ॥ महापुर्यामित्यनेनतस्याःसर्वपुण्यायतनोत्कृष्टतासूचिता ॥ १८ ॥ १९ ॥

॥ २० ॥ कच्छेपुजलप्रायदेशेपु ॥ ऋक्षवतःकुहरेपुदरीपु ॥ २१ ॥ बहुदृष्टयोबहुविधप्रारब्धभोगानुकूलदृष्टयः ॥ २२ ॥ संन्यासविधिनात्यक्तनिजाचाराः ॥ क्रमाब्रह्मचर्याद्याश्रमधर्मास्तत्संस्थिताः ॥ २३ ॥ एकस्थानेस्वगृहएवरताःप्रीतिमंतःसर्वजनानुकूल्येनविक्षेपशून्याइतियावत् ॥ २४ ॥ ऊर्ध्वाधोलोकेष्वपिदेवदैत्यादयोजीवन्मुक्ताबहवःसंतीत्याशयेनाह ॥ एतेषामिति ॥ एतेषांमध्येकेचित्प्रबुद्धमतयइत्याद्युत्तरत्रान्वयः ॥ २५ ॥ २६ ॥ अप्रबुद्धधियोऽल्पप्रबुद्धधियः ॥ अतएवदोलांदोलितचेतसः ॥ २७ ॥ ज्ञानावलेपस्तत्त्वज्ञोहंममकिंनिपिद्धाचरणंकरिष्यतीतिगर्वतः ॥ २८ ॥ जनानीकेजनसमूहे ॥ २९ ॥ तर्हिकिंतत्कृतावनवासादयोपिसंसारोत्तरणहेतवोनेत्याह ॥ संसारेति

महेंद्रवनगुल्मेपुगंधमादनसानुपु॥ दर्दुराचलवप्रेपुसह्यकाचलभूमिपु ॥ २० ॥ विंध्यशैलस्यकच्छेपुमलयस्योदरेपुच॥ कैलासवनजालेपुऋक्षवत्कुहरेपुच॥ २१ ॥ एतेष्वन्येपुचान्येपुवनेष्वायतनेपुच॥ तपस्विनस्तथारामबहवोबहुदृष्टयः॥२२॥ केचित्त्यक्तनिजाचाराःकेचिच्चक्रमसंस्थिताः॥ केचित्प्रबुद्धमतयोनित्यमुन्मत्तचेष्टिताः॥२३॥ केचित्स्वदेशरहिताःकेचित्त्यक्तनिजास्पदाः॥ एकस्थानरताःकेचिद्भ्रमंतःकेचिदास्थिताः॥२४॥ एतेषांमहतांमध्येनभस्तलनिवासिनाम्॥पातालनिरतानांचदैत्यादीनांमहामते॥२५॥ विज्ञातलोकपर्यायाःसम्यग्दर्शननिर्मलाः॥ केचित्प्रबुद्धमतयोदृष्टदृश्यपरावराः ॥ २६ ॥ अप्रबुद्धधियःकेचिद्दोलांदोलितचेतसः॥ निवृत्ताःपापकाचारात्सुजनानुगताःस्थिताः॥ २७॥ अर्द्धप्रबुद्धमतयःकेचिज्ज्ञानावलेपतः॥ परित्यक्तक्रियाचाराउभयभ्रष्टतांगताः॥ २८॥ इत्थमस्मिन्जनानीकेजन्मसंतरणार्थिनः॥ बहवःसंस्थितारामबहुधाबहुदृष्टयः ॥ २९ ॥ संसारोत्तरणेतत्रनहेतुर्वनवासिता॥ नापिस्वदेशवासित्वंनचकष्टतपःक्रियाः॥ ३०॥ नक्रियायाःपरित्यागोनक्रियायाःसमाश्रयः॥ नाचारेपुसमारंभविचित्रफलपालयः॥३१॥ स्वभावःकारणंनामसंसारोत्तरणंप्रति ॥ असंसक्तंमनोयस्यसतीर्णोभवसागरात्॥ ३२॥ शुभाशुभाःक्रियानित्यंकुर्वन्परिहरन्नपि॥ पुनरेतिनसंसारमसंसक्तमनामुनिः॥ ३३॥ शुभाशुभाःक्रियानित्यमकुर्वन्नपिदुर्मतिः॥ निमज्जत्येवसंसारेपरित्यक्तमनाःशठः॥ ३४॥ मक्षिकेवांतःसारज्ञादुःखादुःखप्रदायिनी॥ ननिवारयितुंशक्यानचमारयितुंमतिः॥ ३५॥

॥ ३० ॥ आचारेपुसत्कर्माचरणेपुसमारभ्यंतइतिसमारंभाअनुनिष्पादिनःख्यातिलाभैश्वर्यवरशापसामर्थ्यादिरूपाविचित्रफलसमूहाः ॥ ३१ ॥ स्वभावोयथार्थस्वरूपेणाभिनिष्पत्तिस्तत्त्वज्ञानरूपाकारणंसचमनसाआत्यंतिकसक्तिपरिहारलभ्यइत्याह ॥ असंसक्तमिति ॥ ३२ ॥ अतएवजीवन्मुक्तानांशुभाशुभकर्माचरणेप्यसंसक्तिवशादेवतदलेपइत्याह ॥ शुभेति ॥ ३३ ॥ परित्यक्तंविपयेपुविसृष्टंमनोयेन ॥ शठःस्वात्मवंचकः ॥ ३४ ॥ तर्हिमनएवविषयेभ्योनिवार्यतांमार्यतांचकितत्त्वज्ञानेनेत्याह ॥ मक्षिकेवेति ॥ अंतःसारज्ञाआस्वादितविषयरसामतिर्मधुकुंभप्रसक्तामक्षिकेवननिवारयितुंमारयितुंवाशक्या ॥ ३५ ॥

कदाचिद्भाग्यवशात्साधनचतुष्टयप्राप्तौश्रवणाद्युपायैरात्मावलोकनेस्वयमेवप्रवृत्तिर्जायते ॥ ३६ ॥ तत्रनैर्मल्यमागतंचित्तमवलोकनतस्तत्त्वंलब्ध्वा निर्द्वंद्वमतएवानासक्तमनामयंचब्रह्मैवभवति ॥ ३७ ॥ पराकाशरूपोयश्चित्तादिसर्वप्रपंचाधिष्ठानांशस्तद्रूपभृत्संस्तिष्ठ ॥ ३८ ॥ हेमहात्मन्रघुतनयत्वमधिगतःपरमार्थोयेनतथाविधस्त्यक्तारागादिदोषायेन ॥ उदितआत्मायस्यतथाविधःसममतिःसन्नेकोविशोकोमहात्माभूत्वानिःशंकंतिष्ठ ॥ यतोजननमरणमुक्तंपावनंतद्ब्रह्मपदंत्वमेवेत्यर्थः ॥ ३९॥ किंचविमलब्रह्मरूपेजगतिप्रकृतिरूपंमलरूपंविकाररूपमुपाधिरूपंतद्बोधरूपंतदिच्छाप्रयत्नहानोपादानभोगादिरूपंचकिंचिदपिक्वचिच्चनास्तिकिंतुअकृतकंचिद्धामब्रह्मास्ति ॥ तच्चस्वयंस्वानुभवेनैवअहमितिमत्वाएकोनिःशंकस्तिष्ठेत्यर्थः ॥ ४० ॥ अंगहेसुजगतवज्ञानसंबोधनायअन्यदितोव्यतिरिक्तअधिकवचनगम्यंशुभमुपदेश्यंनास्ति ॥ यतस्तवआद्यंज्ञानसारमखिल

काकतालीययोगेनकदाचित्स्वस्यचेतसः॥ प्रवृत्तिर्जायतेसिद्धौस्वयमात्मावलोकने ॥ ३६ ॥ अवलोकनतोलब्ध्वातत्त्वंनैर्मल्यमागतम् ॥ चेतोभवतिनिर्द्वंद्वमसंसक्तमनामयम् ॥ ३७ ॥ अचित्तत्वंप्रयातेनसत्त्वरूपेणचेतसा ॥ समोभूत्वासुखंतिष्ठपराकाशांशरूपभृत् ॥ ३८ ॥ अधिगतपरमार्थस्त्यक्तरागादिदोषःसममतिरुदितात्मात्वंमहात्मामहात्मन् ॥ रघुतनयविशोकस्तिष्ठनिःशंकमेकोजननमरणमुक्तंपावनंतत्पदंत्वम् ॥ ३९ ॥ प्रकृतिमलविकारोपाधिबोधादिरूपंजगतिविमलरूपेनास्तिकिंचित्क्वचिच्च ॥ स्फुटमकृतकमस्तिब्रह्मचिद्धामतच्चस्वयमहमितिमत्वातिष्ठनिःशंकमेकः ॥ ४० ॥ अधिकवचनगम्यंनान्यदस्त्यंगकिंचित्तवशुभमुपदेश्यंज्ञानसंबोधनाय ॥ उदितमखिलमाद्यंज्ञानसारंसमग्रंविदितसकलवेद्योराघवत्वंहिजातः ॥ ४१ ॥ ॥श्रीवाल्मीकिरुवाच॥ ॥इत्युक्त्वामुनिनायकोव्यपगताशेषैषणेराघवेसर्वस्मिंश्चसभाजनेस्थितवतिध्यानैकतानोपमे ॥ प्राप्तेब्रह्मपदंधियाधवलयातूष्णीमभूत्षट्पदःकृत्वेवारणितंसरोजपटलेपातुंप्रवृत्तोरसम् ॥ ४२ ॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०मुक्तपुरुषस्थितिवर्णनंनामनवनवत्युत्तरशततमःसर्गः ॥ १९९ ॥ ॥ ७ ॥ ॥श्रीवाल्मीकिरुवाच॥ ॥निर्वाणवाक्यसंदर्भसमाप्तौमुनिनायके॥ पाश्चात्यवाक्यविरतिंकुर्वतिक्रमपालिताम् ॥ १ ॥

मक्षतंसमग्रमुदितम् ॥ हियस्मात्त्वंसांप्रतंविदितसकलवेद्योजातइत्यर्थः ॥४१॥ मुनिनायकोवसिष्ठःइतिएवमंतेउक्त्वाराघवेधवलयाधियाब्रह्मपदंप्राप्तेअतएवव्यपगताशेषैषणेजातेसतितथासर्वस्मिन्सभाजनेचध्यानैकतानोपमेस्थितवतिसतितस्यांसभायांस्वयंब्रह्मरसायनास्वादपरस्तूष्णीमभूत् ॥ यथाषट्पदःसरोजपटलेआरणितंगुंजाध्वनिंकृत्वारसंमकरंदंपातुंप्रवृत्तःसंस्तूष्णींभवतितद्वदित्यर्थः ॥ ४२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेनवनवत्युत्तरशततमःसर्गः ॥ १९९ ॥ ॥ ७ ॥ ॥ सिद्धानांसाधुवादोत्रपुष्पवृष्टिःसदुंदुभिः ॥ वर्ण्यतेप्रकृतःसर्वैर्गुरुपूजामहोत्सवः ॥ १ ॥ निर्वाणप्रकरणांतमात्मोपदेशंश्रुत्वाकृतार्थानांसिद्धविमानवानांतस्यांसभायांवसिष्ठपूजामहोत्सवंवर्णयिष्यन्श्रीवाल्मीकिरुवाच ॥ निर्वाणेति ॥ सर्वेषांसभ्यानांतानांषष्ठश्लोकेकोलाहलःसमुदभूदित्यत्रान्वयः ॥ एतत्प्रकरणरूपस्यनिर्वाणवाक्यसंदर्भस्यसमाप्तौसत्यांमुनिनायकेवसिष्ठेक्रमपालितांक्रमप्राप्तांपाश्चात्यवाक्यविरतिंकुर्वतिसति ॥ १ ॥

सर्वस्मिन्सभागतेजनेचान्तभोगतदेवादिजनेचमुनिवाक्यश्रवणान्निर्विकल्पसमाधानेनसमतांब्रह्मैकरसतांसमागतेसति ॥२ ॥ निर्विकल्पसमाधिक्रमेणसंवित्तत्त्वेप्रतीचिसत्त्वको टिसन्मात्रकाष्ठानांसमारूढेअतएवपरांपावनतांगतेसति ॥ ३ ॥ व्योमकोटरवासिनांपूर्वमुक्तधियांसनकादीनांअंबरंहरतिव्यामोनीत्यंवरहृत्तथाविधेनसाधुवादेनप्रशंसावाक्यं न ॥ ४ ॥ तथासभायांस्थितानांगाधेयोविश्वामित्रस्तत्प्रमुखानांमुनीनामुच्चयासाधुवादगिराचझटित्येवभूरिपूरितदिङ्मुखोमधुरःकोलाहलःसमुदभूदितिपरेणसंबंधः ॥ ५ ॥ प वनेआत्तानांव्याप्तानांपूर्णरंध्राणांकीचकानांवेणुभेदानामारवइव ॥ ६ ॥ प्रतिश्रुद्भिःप्रतिध्वनिभिःपूरिताअचलाभूरचलाःपर्वताश्चयैः ॥ ७ ॥ तुषाराणामासारइवसुंदरीशुभ्रा स्थगितान्याच्छादितानिदिक्चक्राणियया ॥ ८ ॥ पुष्पौघादिभिश्चतुर्भिःपूरितंसभास्थानादिचतुष्टयंयत्रतथाविधःसाधुवादशब्दादित्रयस्यससमवायःसमूहोरराजेतिद्वयोरर्थः

निर्विकल्पसमाधानसमतांसमुपागते ॥ शांतस्वच्छमनोवृत्तौसर्वस्मिंश्चसभाजने ॥ २ ॥ सत्त्वकोटिमुपारूढेपरांपावनतांगते ॥ संवि त्तत्त्वेसमग्रस्यजनस्यश्रुतशालिनः ॥ ३ ॥ झटित्येवांबरहृतापूर्वमुक्तधियांमुखात् ॥ सिद्धानांसाधुवादेनव्योमकोटरवासिनाम् ॥ ४ ॥ तथासभास्थितानांचमुनीनांभावितात्मनाम् ॥ गाधेयप्रमुखानांचसाधुवादगिरोच्चया ॥५॥ कोलाहलःसमुदभूद्भूरिपूरितदिङ्मुखः ॥ मधुरःपवनात्तानांकीचकानामिवारवः ॥ ६ ॥ सिद्धानांसाधुवादेनसहवैसहसाततः ॥ देवदुंदुभयोनेदुःप्रतिश्रुत्पूरिताचलाः ॥ ७ ॥ देवदुंदुभिभिःसार्द्धंतुषारासारसुंदरी ॥ दिग्भ्यःस्थगितदिक्चक्रापुष्पवृष्टिःपपातह ॥ ८ ॥ पुष्पौघपूरितस्थानःशब्दापूरितकंदरः ॥ रजःसंर जिताकाशोगंधरंजितमारुतः ॥ ९ ॥ ससाधुवादशब्दस्यदेवतूर्यरवस्यच ॥ कुसुमासारघोषस्यसमवायोरराजह ॥ १० ॥ उन्मुखाखि लसभ्याक्षिरश्मिश्यामलितांतरः ॥ उत्कर्णमृगमातंगहयपक्षिपशुश्रुतः ॥ ११ ॥ सविस्मयभयोन्नेत्रबालकांताजनेक्षितः ॥ विस्मयस्मे रवदनराजलोकावलोकितः ॥ १२ ॥ कुसुमासारसारेणशब्दशोभातिशायिना ॥ संरंभेणजगामाशुरोदोरंध्रमपूर्वताम् ॥ १३ ॥ पुष्पवर्ष सुधाधौतंरटद्भूतसुघुंघुमम् ॥ समतांसदनेनागात्ध्मातशंखशतंनखम् ॥ १४ ॥ भुवनंभूरिभांकारभासुरंसुरचारणैः ॥ वृतंमत्तोत्सवं रेजेसमंकुसुममंडितम् ॥ १५ ॥ शनैर्दुंदुभिसिद्धौघवाक्यपुष्पभरःसमम् ॥ प्रययौरोदसीरंध्रंवेलाचलमिवांबुधौ ॥ १६ ॥ तस्मिन्विबुध संरंभक्षणेनसमयागते ॥ वाक्यानीमानिसिद्धानामभिव्यक्तिमुपाययुः ॥ १७ ॥

॥ ९ ॥ १० ॥ तमेवसमवायं वर्णयति ॥ उन्मुखेत्यादिद्वाभ्याम् ॥ ११ ॥ सविस्मयैःसभयैश्चअतएवउन्नेत्रैर्बालैःकांताजनैश्चईक्षितः ॥ १२ ॥ रोदोरंध्रंद्यावाभूम्यंतरालम् ॥ अपूर्वतामलौकिकचमत्कारिताम् ॥ १३ ॥ पुष्पवर्षेणसुधाभिर्मकरंदैर्धौतंक्षालितम् ॥ रटद्भिर्भूतैःप्राणिभिःसुघुंघुमंपुण्यशब्दम् ॥ ध्माताःशंखायस्मिंस्तथाविधंखमाकाशंसदनेनदशरथगृहेणसमतामागात् ॥ १४ ॥ भुवनंजगदपिमत्तउपचितउत्सवोयत्रतथाविधंसत्अर्थाद्दशरथगृहेणसमंतुल्यरूपंरेजे ॥ १५ ॥ दुंदुभिपदेनतच्छब्दालक्ष्यंते ॥ तेषांसिद्धौघवाक्यानांपुष्पाणांचभरःसमंतुल्य कालंरोदस्योःरंध्रविवरेशनैःप्रययौयथाअंबुधौकल्लोलोवेलाचलंयातितद्वत् ॥ १६ ॥ विबुधानांसंरंभेपुष्पवर्षोद्योगकोलाहले ॥ इमानिवक्ष्यमाणानि ॥ १७ ॥

अस्माभिर्व्याख्याताअन्येभ्यश्चश्रुताःईदृशाएतद्ग्रंथसदृशाः ॥ १८ ॥ अत्रयोगुणातिशयत्वमाहुः ॥ तिर्यञ्चइति ॥ मुनेर्वसिष्ठस्यैतद्ग्रंथरूपेणवाक्यविलासेनश्रुतेन ॥ १९ ॥ भगवतोवसिष्ठस्यश्रीरामेमुख्याधिकारिणिस्नेहातिशयंप्रशंसंति ॥ दृष्टांतैरिति ॥ २० ॥ तिर्यञ्चःपशुपक्ष्यादयोपि ॥ भुविनराःकेनाममुक्तानोभविष्यंतियदिशृण्वंतीत्यर्थः ॥ २१ ॥ ॥ २२ ॥ लोकःअयोध्याजनःइतिएवंविधानिसिद्धवाक्यानिशृण्वन्सन्तांसभांराजीवानांपद्मादीनांकुसुमासारैःसंपूर्णांददर्श ॥ २३ ॥ पारिभद्रलताकल्पलताभेदः ॥ मंदारादीनिपं चदेवतरुभेदपुष्पाणि ॥ २४ ॥ २५ ॥ वारिपूरैःप्रलंबैरभैस्तुल्यंप्रलंबाभ्रवत्पुष्पभारालंबिनोवितानकायस्याम् ॥ २६ ॥ तेनतेननत्कालोचितप्रशंसावाक्येनतथा ॥ उद्यतउद्यु

॥ सिद्धाऊचुः ॥ ॥ आकल्पंसिद्धसंघेषुमोक्षोपायाःसहस्रशः ॥ व्याख्याताश्चश्रुताश्चालमीदृशास्तुनकेचन ॥ १८ ॥ तिर्यञ्चोवनितावाला व्यालाश्चानेननिर्वृतिम् ॥ मुनेर्वाक्यविलासेनयांतिनास्त्यत्रसंशयः ॥ १९ ॥ दृष्टांतैर्हेतुभिर्युक्त्यायथारामोवबोधितः ॥ तथाचारुंधतीसाक्षा त्त्वंबोधयतिवानवा ॥ २० ॥ अनेनमोक्षोपायेनतिर्यञ्चोपिगतामयाः ॥ स्थितामुक्ताभविष्यंतिकेनामभुविनोनराः ॥ २१ ॥ श्रवणांज लिभिःपीत्वाज्ञानामृतमिदंवयम् ॥ परांपूर्णनवीभूतसिद्धयःश्रियमागताः ॥ २२ ॥ इतिशृण्वन्सभांलोकोविस्मयोत्फुल्ललोचनः ॥ कुसु मासारसंपूर्णांराजीवानांददर्शताम् ॥ २३ ॥ मंदारादिमहापुष्पच्छन्नच्छादनसंचयाम्[1] ॥ पारिभद्रलतागुच्छनीरंध्राजिरभूमिकाम् ॥ २४ ॥ पारिजातप्रसूनाढ्यमहीतलविराजिताम् ॥ संतानकमहांभोदव्याप्तसभ्यशिरःकराम् ॥ २५ ॥ मौलिरत्नविटंकाग्रविश्रांतहरिचं दनाम् ॥ वारिपूरप्रलंबाभ्रवदालंबिवितानकाम् ॥ २६ ॥ इतिपश्यन्सभांलोकःसाधुवादेनभूरिणा ॥ तत्कालोचितवाक्येनतेनतेनतथो द्यतः ॥ २७ ॥ वसिष्ठंपूजयामाससर्वेंद्रियगणानतः ॥ कुसुमांजलिमिश्रेणप्रणामसहितेनच ॥ २८ ॥ नृपप्रणाममालासुकिंचिच्छांता सुतास्वथ ॥ मुनिमापूजयन्नाहसार्घ्यपात्रकरोनृपः ॥ २९ ॥ ॥ दशरथउवाच ॥ ॥ क्षयातिशयमुक्तेनपरमेणात्मवस्तुना ॥ परांतःपूर्ण तोत्पन्नाबोधनारुंधतीपते ॥ ३० ॥ नतदस्तिमहीपीठेदिविदेवेषुवापिच ॥ महत्किंचिद्यदप्राप्तंतवपूज्यस्यपूजनम् ॥ ३१ ॥ तथाप्यात्मक्र मंब्रह्मन्निमंनेतुमवंध्यताम् ॥ अहंवच्मियथाप्राप्तंनकोपंकर्तुमर्हसि ॥ ३२ ॥

क्तःसन्वसिष्ठंपूजयामासेतिसंबंधः ॥ २७ ॥ सर्वैरिंद्रियगणैरानतःप्रह्वीभूतः ॥ २८ ॥ अर्घ्यपात्रेणसहितःसार्घ्यपात्रःकरोयस्य ॥ नृपोदशरथः ॥ २९ ॥ हेअरुंधतीपतेत्वदुपदे शलब्धेनबोधेनपरमेणनिरतिशयानंदरूपेणात्मवस्तुनाअंतःपरासर्वोत्कृष्टापूर्णताउत्पन्ना ॥ ३० ॥ एवमीदृशपरमपुरुषार्थदातुस्तवपूजनंयोग्यंयत्स्यात्तत्तादृशंवस्तुमहीपीठेम नुष्येषुदिविदेवेषुअपिचपातालेवानास्ति ॥ ३१ ॥ तथाप्यहमात्मनःस्वस्यअवश्यकर्तव्यमिमंशास्त्रलोकप्रसिद्धंयथाप्राप्तंगुरुपूजनक्रममवंध्यतांसफलतांनेतुंकिंचिद्वच्मिप्रा र्थयामि ॥ ३२ ॥

[1] घनच्छादनेतिक्वचित्पाठः

लोकद्वयेभुविस्वर्गेचभोगार्थंयन्मयासंचितंशुभंसुकृतंतेन ॥ अखिलाःसामंताभृत्यायस्मिंस्तथाविधेनराज्येन ॥ अखिलभृत्यवर्गेणेतिपृथग्वा ॥ भवतेसमर्पितेनेतिशेषः ॥ ३३ ॥ मयातुभ्यंदत्तमेतत्सर्वंतवस्वायत्तम् त्वंनियोजयस्वामीभूत्वाआज्ञापय ॥ ३४ ॥ सप्रणामोभवताकृतएवेत्यन्वयः ॥ ३५ ॥ पातुंरक्षयितुम् ॥ ३६ ॥ अत्रअस्मिन्परमपुरुषार्थस्वरूपमोक्षदानोपकारेप्रत्युपकारतयाराज्यंप्रकर्षेणकियन्मात्रंस्यात् ॥ मानुषानंदपरमावधिर्हिनिष्कंटकवित्तपूर्णनिरामयसप्तद्वीपाधिपत्यम् तदपेक्षयाशतगुणोमनुष्यगंधर्वाणामानंदस्तदपेक्षयापिदेवगंधर्वाणांसशतगुणइत्येवंक्रमेणोत्कृष्यमाणविषयानंदानांहैरण्यगर्भानंदःपरमावधिःसोपियस्मिन्मोक्षानंदसमुद्रेसीकरप्रायस्तत्रेदंकियन्मात्रंकगण

आत्मनासकलत्रेणलोकद्वयशुभेनच ॥ राज्येनाखिलभृत्येनभवंतंपूजयाम्यहम् ॥ ३३ ॥ एतत्सर्वंतवविभोस्वायत्तंस्वइवाश्रमः ॥ नियोजययथादेशंयथाभिमतयेच्छया ॥ ३४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ प्रणाममात्रसंतुष्टाब्राह्मणाभूपतेवयम् ॥ प्रणामेनैवतुष्यामःसएवभवताकृतः ॥ ३५ ॥ पातुंत्वमेवजानासिराज्यंभ्रातितवैवच ॥ भवत्वेतत्तवैवेहब्राह्मणाःक्षमहीभृतः ॥ ३६ ॥ ॥ दशरथउवाच ॥ ॥ किंयन्मात्रंतुराज्यंस्यादितिलज्जामहेमुने ॥ प्रकर्षेणात्रतेनेशयथाजानासितत्कुरु ॥ ३७ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इत्युक्तवतिभूपालेरामःपुष्पांजलिंददत् ॥ उवाचप्रणतोवाक्यंपुरस्तस्यमहागुरोः ॥ ३८ ॥ निरुत्तरीकृतमहाराजब्रह्मन्प्रणौमिते ॥ प्रणाममात्रसारोहंरामःपादाविमौप्रभो ॥ ३९ ॥ इत्युक्त्वापादयोस्तस्यशिरोवंदनपूर्वकम् ॥ तत्याजांजलिपुष्पाणिहिमानीववनंगिरेः ॥ ४० ॥ आनंदबाष्पसंपूर्णनयनोनयकोविदः ॥ गुरुंपरमयाभक्त्याप्रणनामपुनःपुनः ॥ ४१ ॥ शत्रुघ्नोलक्ष्मणश्चैवतथान्येतत्समाश्रये ॥ निकटस्थास्तथैवाशुतेप्रणेमुर्मुनीश्वरम् ॥ ४२ ॥ दूरप्रणामैर्दूरस्थाःपुष्पांजलिसमीरणैः ॥ राजानोराजपुत्राश्चप्रणेमुर्मुनयश्चतम् ॥ ४३ ॥ अस्मिन्नवसरेतत्रकुसुमांजलिवर्षणैः ॥ हिमैरिवहिमाद्रींद्रोमुनिरंतर्धिमाययौ ॥ ४४ ॥ अथशांतेसभाक्षोभेप्रणामनिवहेतथा ॥ संस्मरञ्छासनंकिंचित्सत्येकृष्णसिताशयम् ॥ ४५ ॥ मुनिःकुसुमराशिंतंबाहुभ्यांप्रविचाल्यसः ॥ मुखंसंदर्शयामाससिताभ्रादिवचंद्रमाः ॥ ४६ ॥ शांतेसिद्धवचोराशौतथादुंदुभिनिःस्वने ॥ नभःकुसुमवर्षेचसभाकलकलेतथा ॥ ४७ ॥

नार्हस्यादित्यर्थः ॥ ३७ ॥ तस्यमहागुरोःपादयोःपुष्पांजलिंददत्सन् ॥ ३८ ॥ प्रणामेनैवतुष्यामइतित्वद्वचनात्प्रणाममात्रंसारःसर्वोत्कृष्टतयाआवश्यकोयस्य ॥ ३९ ॥ यथावनंगिरेःपादयोर्हिमानिपल्लवसक्तान्यवश्यायजलानित्यजतितद्वत् ॥ ४० ॥ ४१ ॥ तत्समाःशत्रुघ्नलक्ष्मणसदृशारामसखाः ॥ ४२ ॥ दूरस्थयोग्यैःप्रणामैः ॥ ४३ ॥ अंतर्धिमाच्छादनम् ॥ ४४ ॥ मुनीनांमान्यानांपुरतःस्वकृतंशासनमुपदेशात्मकंशास्त्रंसत्येवस्तुनिविषयेकृष्णाशयंबुद्धिमालिन्यप्रयुक्तंसदोषंसिताशयंस्वच्छबुद्धिप्रयुक्तनिर्दोषंवास्यादितिसंदिहानइवस्वचरित्रेणजनस्यविनयंशिक्षयितुंकिंचिन्मुनिपुवक्ष्यमाणप्रकारेणप्रष्टव्यंसंस्मरन्सन्मुखंसंदर्शयामासेतिसंबंधः ॥ ४५ ॥ सिताभान्सिताभाणिनिरस्य ॥ ल्यब्लोपेपंचमी ॥ चंद्रमाइव ॥ ४६ ॥ ४७ ॥

स्वसभाजयतिपूजयतीतिस्वसभाजनेजनेसौम्यत्वमव्ययतामागतेसति ॥ ४८ ॥ ४९ ॥ गाधिकुलस्ययशःसौरभजनकत्वाद्गाधिकुलांभोजहेविश्वामित्र ॥ ५० ॥ भासोविप श्चिदन्योवा ॥ हेमुनयःभवद्भिर्मान्यैरेतन्मद्वचनंतुच्छंसदोषत्वात्क्षुद्रमनुपादेयम् ॥ नुइतिवितर्के ॥ एवंसंभावयामीत्यर्थः ॥ ५१ ॥ अतोत्रयत्किंचिदनुचितंदुरर्थंविगतार्थंनिर र्थकंवासंभावितंतदधुनास्वशिष्येमय्यनुग्रहतोमेकथयंत्वितिभगवतोविनयोक्तिर्लोकेविनयशिक्षणार्थंमहर्षिवचनेनग्रंथस्यनिर्दोषताख्यापनार्थंच ॥ ५२ ॥ सभ्याःसंबोधिता गाधिसुताद्याःमुनयऊचुः ॥ जगतिक्वाप्यप्रसिद्धत्वान्नैवगीर्वाणीश्रुता ॥ ५३ ॥ ५४ ॥ ब्रह्मणिबृंहितयाविस्तारितया ॥ इंदुदीप्तिपक्षेब्रह्मसदृशेआकाशेविस्तारितया ॥ ५५ ॥

प्रणामानंतरंतस्मिन्रामाद्यैःस्वसभाजने॥शांतवातइवांभोदेजनेसौम्यत्वमागते॥ ४८ ॥ आकर्णयन्साधुवादंविश्वामित्रंमृदुस्वनम्॥उवाचेदमनिंद्यात्मावसिष्ठोमुनिनायकः॥ ४९ ॥ मुनेगाधिकुलांभोजवामदेवनिमेक्रतो॥भरद्वाजपुलस्त्यात्रेघृष्टेनारदशांडिले ॥ ५० ॥ हेभासभृगुभारंडवत्सवात्स्यायनादयः॥ मुनयस्तुच्छमेतत्तुभवद्भिर्मद्वचःश्रुतम्॥ ५१ ॥ यदत्रानुदितंकिंचित्तदनुग्रहतोधुना॥ दुरर्थंविगतार्थंवाभवंतःकथयंतुमे॥ ५२॥ ॥सभ्याऊचुः॥ ॥वसिष्ठवचनेब्रह्मन्परमार्थैकशालिनि॥दुरर्थाभवतीत्यद्यनवैवखलु गीःश्रुता॥ ५३॥ यत्संभृतमनंतेनजन्मदोषेणनोमलम् ॥ तन्मृष्टंत्वयेहाद्यहेम्नामिवहविर्भुजा॥ ५४॥ब्रह्मबृंहितयावाचाविभोविकसितावयम्॥ कुमुदानींदुदीप्त्येवपरमामृतशीतया॥ ५५ ॥ सर्वसत्वमहाबोधदायिनंमुनिनायकम् ॥ भवंतमेकांतगुरुंप्रणमामइमे वयम्॥ ५६॥ ॥श्रीवाल्मीकिरुवाच॥ ॥इत्युक्त्वामुनिनाथायनमस्तइतितेपुनः॥ वदंतएकशब्देनतारेणाब्दरवौजसा॥ ५७॥ अर्वाक्पुष्पांजलिव्रातैःखात्सिद्धैःसममुज्झितैः॥ वसिष्ठंपूरयामासुर्हिमैरब्दाइवाचलम्॥ ५८ ॥ इत्थंदशरथंभूपंशशंसुश्चाथराघवम्॥ माधवंचतुरात्मानंराघवोदंतकोविदाः॥ ५९॥ ॥सिद्धाऊचुः॥ ॥नमामचतुरात्मानंनारायणमिवापरम्॥ रामंसभ्रातरंजीवन्मुक्तंराजकुमारकम्॥ ६०॥ चतुरब्धिनिखातांतधरावलयपालकम्॥ त्रिकालस्थमहीपालचिह्नंदशरथंनृपम्॥ ६१ ॥ मुनिसेनाधिपंभूपंभास्करंभूरितेजसम्॥ वसिष्ठंसुप्रवादाढ्यंविश्वामित्रंतपोनिधिम् ॥ ६२ ॥

एकांतोनियमः ॥ गुरुमेवननुकुतश्चिद्गुरुमितिअपरविद्यागुरुभ्योस्योत्कर्षकाष्ठासूचिता ॥ ५६॥ तेपुनर्नमस्तेइतिवदंतःसंतःखादाकाशात्सिद्धैःसमंस्वयमप्युज्झितैरर्वाक्पुष्पांज लिव्रातैर्वसिष्ठंपुनःपूरयामासुः ॥ अचलंहिमवंतमिव ॥ ५७॥ ५८॥ अथदशरथप्रशंसानंतरंचतुरात्मानंमाधवंराघवंप्रशशंसुर्यतस्तेराघवस्यविष्णववतारत्ववृत्तांतकोविदाइत्यर्थः ॥ ५९ ॥ ६० ॥ त्रिकालस्थानिकदाप्यनपायीनिमहीपालचिह्नानिराजलक्षणानियस्मिंस्तथाविधंदशरथंनृपंश्रीरामजनकत्वात्त्वंधन्यतमोसीतिपुनःप्रशशंसुः ॥ ६१ ॥ मुनि सेनायाःअधिपंस्वामिनंभूरितेजसंभास्करमिवस्थितंवसिष्ठंतत्संनिहितंविश्वामित्रंचप्रशशंसुः ॥ ६२ ॥

एतेषांप्रशंसायांकोहेतुस्तमाह ॥ एषामेवेति ॥ भ्रांतिसंरंभनाशिनींवसिष्ठवाणीमितिशेषः ॥ ६३ ॥ ६४ ॥ तान्सिद्धान्घनस्तवंबहुस्तवसहितंयथास्यात्तथासमानर्चुः ॥ ६५ ॥ नभश्चरामहर्षयोविबुधगणाधरणिचराद्विजानृपाउभयचरामुनीश्वराश्चतेइतिवर्णितप्रकारेणओजसास्वस्वसामर्थ्यानुसारेणप्रतिजनंसहकुसुमार्घ्यदानयाउच्चयागिरा अपूजयन् ॥ ६६ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेद्विशततमःसर्गः ॥ २०० ॥ ॥ ७ ॥ ॥ अत्ररामेणभूयोपिपृष्टेनगुरुणादरात् ॥ पूर्णानंदपदे

एषामेवप्रभावेनज्ञानयुक्तिपरामिमाम् ॥ श्रुतवंतोवयंसर्वेभ्रांतिसंरंभनाशिनीम् ॥ ६३ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इत्युक्तागगनात्सिद्धाभूयःपुष्पाणिचिक्षिपुः ॥ सभायामथतूर्णींचतस्थुर्मुदितचेतसः ॥ ६४ ॥ तथैवव्योमगाःसिद्धाःशशंसुस्तंजनंपुनः ॥ तथैवसभ्यास्तांस्तत्रसमानर्चुर्घनस्तवम् ॥ ६५ ॥ नभश्चराधरणिचरामुनीश्वरामहर्षयोविबुधगणाद्विजानृपाः ॥ अपूजयन्नितिजनमोजसैवतगिरोच्चयासहकुसुमार्घ्यदानया ॥ ६६ ॥ ॥ इ०वा०म०वा०दे०मो०नि०उ०साधुवादसपर्यादिवर्णनंनामद्विशततमःसर्गः ॥ २०० ॥ श्रीवाल्मीकिरुवाच ॥ ॥ अथार्वाक्साधुवादेषुप्रशांतेषुशनैःशनैः ॥ ज्ञानोपदेशमासाद्यप्रोल्लसत्स्विवराजसु ॥ १ ॥ प्रशांतसंसृतिभ्रांतौजनेचरितमात्मनः ॥ स्वयंहसतिचित्तेनसत्यंसमनुधावता ॥ २ ॥ वलच्चित्तकलंज्ञानसमास्वादनतत्परे ॥ विवेकिनिसभालोकेशांतेध्यानमिवास्थिते ॥ ३ ॥ बद्धपद्मासनेरामेसभ्रातरिगुरोःपुरः ॥ स्थितेकृतांजलौदीर्घगुरुवक्त्रगतेक्षणे ॥ ४ ॥ पार्थिवेकिमपिध्यानमिवास्वादयतिस्थितिम् ॥ जीवन्मुक्तात्मिकामंतरादिमध्यांतपावनीम् ॥ ५ ॥ ग्रहीतुमर्चांभक्तानांमानितार्थजनोमुनिः ॥ तूर्णींक्षणमिवस्थित्वाप्रोवाचानाकुलाक्षरम् ॥ ६ ॥ स्वकुलाकाशशीतांशोरामराजीवलोचन ॥ किमन्यदिच्छसिश्रोतुंकथयाभिमतंच्छया ॥ ७ ॥ स्थितिंचकीदृशीमेनामद्यानुभवसिस्वयम् ॥ किंरूपमिदमाभासंजागतंवदपश्यसि ॥ ८ ॥ इत्युक्तेमुनिनातेनप्राहराजकुमारकः ॥ अविह्वलंन्दुस्पष्टंगुरोरालोकयन्मुखम् ॥ ९ ॥ ॥ श्रीरामउवाच ॥ ॥ त्वत्प्रसादेनयातोस्मिपरांनिर्मलतांप्रभो ॥ शांताशेषकलंकांकंशरदीवनभस्तलम् ॥ १० ॥

स्वस्यविश्रांतिःप्रकटीकृता ॥ १ ॥ अर्वाक्अधःसभाप्रदेशे ॥ १ ॥ आत्मनःस्वस्यचरितमज्ञदशाचरित्रंस्वयमेवसत्यंतत्त्वंसमनुधावतासम्यक्पश्यताचित्तेनहसतिसति ॥ २ ॥ दीर्घंशोभमानसभागतेलोकेजनेवलंतीपरावृत्ताप्रत्यक्प्रवणाचित्तकलाचित्तवृत्तिर्यस्मिन्कर्मणितद्यथास्यात्तथाज्ञानस्यचिदेकरसानंदस्यसम्यगास्वादनतत्परेजानेसति ॥ ३ ॥ दीर्घंशोभमानंयद्गुरुवक्त्रंतद्गतेक्षणे ॥ ४ ॥ पार्थिवेदशरथेध्यानमिवालंब्यजीवन्मुक्तात्मिकांस्थितिमास्वादयतिसति ॥ ५ ॥ मुनिर्वसिष्ठोभक्तानांराजादीनामर्चांपूजांग्रहीतुंपूर्वोक्तरीत्याक्षणंतूर्णीमिवस्थित्वातदनंतरंप्रोवाच ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ शांताशेषकलंकःपूर्णचंद्रःअंकश्चिह्नंयस्मिंस्तथाविधंनभस्तलमिव ॥ १० ॥

॥ ११ ॥ स्फटिकालयमध्यस्थस्फटिकइवब्रह्मभावविशुद्धेजगतितथोविधाधीर्यस्य ॥ १२ ॥ आहर्त्तुंसंपादयितुंचेत्यर्थः ॥ १३ ॥ परामर्शोविषयस्मरणंतद्भोगेकौतुकंतद र्थाःसंकल्पाइतिभेदः ॥१४॥ अस्वप्नंमानसविषयालोचनरहितंअपुनर्बोधंजाग्रदैंद्रियकविषयालोचनरहितंचस्वपिमीव ॥ इवशब्दःसुषुप्तभानस्यापिमिथ्यात्वात्तुरीयावस्थिति द्योतनार्थः ॥ १५ ॥ आशाभिर्विधुरितांविह्वलितांप्राक्तनींतनौदेहेआत्मवुद्ध्यास्थितिंप्रविहस्यस्फुरद्भिर्भवत्सूक्तैरुपदेशवाक्यैःसांप्रतंस्वस्थस्तिष्ठामि ॥ १६ ॥ अधुनाममउपदे शेनअर्थेनतत्प्रयुक्तप्रयोजनांतरेण ॥ एतेषांसर्वेषांत्यागेनचकारणंप्रयोजनंनास्ति ॥ १७ ॥ मच्चित्तांप्रत्यगात्ममात्रप्रतिष्ठितचित्तामनपायिनींनित्यांजीवन्मुक्तस्थितिंव्योम्निस्व

सर्वाएवोपशांतामेभ्रांतयोभवभंगदाः॥ स्वरूपेणावदातेनतिष्ठाम्यच्छमिवांबरम्॥ ११ ॥ स्थितोहंगलितग्रंथिःशांताशेषविशेषणः॥ स्फटिकालयमध्यस्थस्फटिकामलधीरहम्॥ १२ ॥ अन्यच्छ्रोतुमथाहर्त्तुंशांतंनेच्छतिमेमनः ॥ परांतृप्तिमुपायांतंसुषुप्तमिवसंस्थितम् ॥ १३ ॥ शांताशेषपरामर्शंविगताशेषकौतुकम्॥ संत्यक्ताशेषसंकल्पंशांतंममममुनेमनः॥ १४ ॥ परिनिर्वामिशाम्यामिजाग्रदेवजगत्स्थितौ॥ अस्वप्नमपुनर्बोधंस्वपिमीवनिरामयम्॥ १५॥ आशाविधुरितामात्मसंस्थितिंप्राक्तनींतनौ॥ प्रविहस्यस्फुरत्सूक्तैःस्वस्थस्तिष्ठाम्यसंशयम्॥ १६ ॥ नोपदेशेननार्थेननशास्त्रैर्नचबंधुभिः॥ त्यागेनचनचैतेषामधुनाममकारणम्॥ १७॥ साम्राज्यस्याथवाव्योम्नियास्थितिःक्षोभवर्जिता॥ तामेवानुभवाम्यत्रमच्चित्तामनपायिनीम्॥ १८॥ खादप्यतितरामच्छंचिदाकाशांशमात्रकम्॥ जगदित्येवपश्यामिलोचनाद्यंगंकांगतः॥ १९ ॥ आकाशमात्रमेवेदंजगदित्येकनिश्चयः॥ दृश्यनाम्निनभस्यस्मिन्क्षयेजागर्मिचाक्षयः॥ २०॥ यथाकामंयथाप्राप्तंयथास्थितमिवस्थितम्॥ यद्व्यक्तितदविघ्नेनकरोम्यपगतैषणम्॥ २१ ॥ नतुष्यामिनरुष्यामिनपुष्यामिनरोदिमि॥ कार्यंकार्यंकरोम्येकोभ्रांतिर्दूरंगताामम॥ २२॥

र्गेसाम्राज्यस्यअसुरादिक्षोभवर्जितायास्थितिस्तामेवानुभवामीतिलोकदृशोक्तिः ॥ १८ ॥ अहंवहिर्दृशालोचनाद्यंगकादंगतांगतोपिजगत्खादप्यतितरामच्छंचिन्मात्रमित्येव पश्यामिनाज्ञवज्जडमित्यर्थः ॥ १९ ॥ अस्मिन्जगतिक्षयेमोहनिद्रयासहवाधितेसतिअक्षयोहंसदैवजागर्मि ॥ २० ॥ भाविकार्यंयथाकामंवर्त्तमानकार्यंयथाप्राप्तंप्रागवस्थितंकार्यंतुयथास्थितंयद्भवान्वक्तितदहमपगतैषणंफलाभिसंधिरहितंगुरुशास्त्राज्ञानुसारेणकरोमि ॥ पाठांतरेस्वकार्यविषयेयथाकामंयथारंभम् ॥ परकार्यविषयेयथाप्राप्तंयथास्थितम ॥ २१ ॥ नतुष्याम्यंतर्मनसि ॥ नरुष्यामिनपुष्यामिवहिर्देहेइष्टप्राप्त्या ॥ एवमनिष्टप्राप्त्यानरोदिमि ॥ कार्यमवश्यकर्त्तव्यंलौकिकंवैदिकंचकार्यंकरोमि ॥ २२ ॥

---

१ ब्रह्मभावविशुद्धेत्यर्थः २ बहिर्दृशालोचनादीन्यंगानियस्यांतादृशीस्थितिंगतोपीत्यर्थः ॥ लोचनाद्यंगतामितिपाठोवा ॥ लोचनादान्यंगानियस्यतद्भावंगतोपीत्यर्थः ॥ ३ यथाकामंयथारंभंयथाप्राप्तंयथास्थितमित्येवंरूपे

जगत्स्वरूपंस्वतःशून्यरूपमपिनसत्स्वरूपंचनकिंतुब्रह्माभिधंचैतन्यमेवजगत्स्वरूपंभाति ॥ तच्च अज्ञानवशादेवानर्थभूतंपरिज्ञातवतस्तुशिवात्मपरमकल्याणनिरतिशयानंदात्मक मेवेत्यर्थः ॥ ३८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेसप्तोत्तरद्विशततमःसर्गः ॥ २०७ ॥ ॥ ७ ॥ ॥ दूरदेशगतैर्यत्नैरन्यत्रापिप्रजाफलम् ॥ यथाप्राप्नोतितादृक्षाधातुरिच्छात्रवर्ण्यते ॥ १ ॥ अनिच्छतेहितैर्दूरदेशांतरगतैःफलम् प्रजाप्राप्नोत्यसंबद्धैरमूर्त्तैरत्रकःक्रमइतिप्रश्नस्योत्तरंश्रावयितुंप्रतिजानीते ॥ शुभाशुभ मिति ॥ अप्रतिघैरमूर्त्तैः ॥ १ ॥ यद्यस्माद्धेतोर्ब्रह्मैवाज्ञानाद्दृश्यबोधेनदृश्यंब्रह्मबोधतश्चब्रह्मैवभवतितस्मादिदंजगत्ब्रह्मसंकल्पनगरमितितावत्स्थितम् ॥ २ ॥ किततस्तत्रा ह ॥ यद्यदिति ॥ ३ ॥ ततोपिकिंतत्राह ॥ एवमिति ॥ यथातेतवअस्मिन्संकल्पमयेगृहेयेयंप्रजाएवंत्वत्संकल्पानुसारिणीसंपन्नातथैवब्रह्मसंकल्पसंपन्नेजगत्यपिइयंप्रजाब्रह्म

नशून्यरूपंनचसत्स्वरूपंब्रह्माभिधंभातिजगत्स्वरूपम् ॥ तच्चापरिज्ञानवशादनर्थभूतंपरिज्ञातवतःशिवात्म ॥ ३८ ॥ ॥ इ०वा०महा रामायणेवा०दे०मो०नि०उ०महाप्रश्नोत्तरंनामसप्तोत्तरद्विशततमःसर्गः ॥ २०७ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शुभा शुभंयथोदेतिप्रजानांगृहसंगमे ॥ असंबद्धैरप्रतिघैर्दूरस्थैस्तदिदंशृणु ॥ १ ॥ ब्रह्मसंकल्पनगरंजगत्तावदिदंस्थितम् ॥ यद्दृश्यंदृश्यबोधे नब्रह्मैवब्रह्मबोधतः ॥ २ ॥ यद्यत्संकल्पनगरेयदासंकल्प्यतेयथा ॥ तथानुभूयतेतत्तत्तादृग्विरचनंतदा ॥ ३ ॥ एवमस्मिन्गृहेयातेसंपन्नै वमियंप्रजा ॥ एवंसंकल्पसंपन्नेजगत्येवंभवत्यलम् ॥ ४ ॥ एतत्त्वसंकल्पपुरेयादृशंतेतथास्थितम् ॥ यथासंकल्पयसियत्तत्तथाकिलप श्यसि ॥ ५ ॥ यथैववरशापाभ्यांशुद्धसंविदवाप्यते ॥ संवित्तथैवभवतिब्राह्ममेवेतिकल्पनम् ॥ ६ ॥ प्रजाविधिनिषेधाभ्यामेकयास्था व्यवस्थया ॥ तथैवफलमाप्नोतिब्राह्ममेवेतिकल्पनम् ॥ ७ ॥ देहिनोयेजगत्यस्मिंस्तान्प्रत्यनुपलंभतः ॥ असदासीज्जगत्पूर्वंसत्यमित्युप लभ्यते ॥ ८ ॥ चिद्रूपब्रह्मसंकल्पवशादेवैतदंगसत् ॥ चिदुन्मेषनिमेषौयौतावेतौप्रलयोदयौ ॥ ९ ॥ ॥ राजोवाच ॥ ॥ किंनोपलभ्यते पूर्वंकिंपश्चादुपलभ्यते ॥ जगच्चलद्वपुरिदंसुस्थिरारंभभास्वरम् ॥ १० ॥

संकल्पानुसारिण्येवभवतीत्यर्थः ॥ ४ ॥ तदेवस्पष्टमाह ॥ एतदिति ॥ ५ ॥ यत्तुजगत्यस्मत्संकल्पनगरवैलक्षण्यमनुभूयतेतत्रवरशापसंकल्पसिद्धवद्बोध्यमित्याशयेनाह ॥ य थैवेति ॥ मुनीनांयमनियमादिनिषेवणशुद्धासंविद्वरशापाभ्यांयथाव्यवहारक्षमाअवाप्यतेब्रह्मसंविदपितथैवभवतीत्यर्थः ॥ यद्वरशापाभ्यांभवतितदपिब्रह्मणैवतपस्विनांवर शापाःसिद्धांत्वितिकल्पनाद्ब्राह्ममेवसत्यसंकल्पनंबोध्यमित्यर्थः ॥ ६ ॥ प्रकृतेप्रजाविधिनिषेधशास्त्राभ्यांबोधितयोर्धर्माधर्मयोर्मध्येएकयाआस्थाव्यवस्थयातत्फलंयदाप्नोतितद पिब्राह्ममेवेत्येवंविधंसंकल्पनमित्यर्थः ॥ ७ ॥ ८ ॥ असतोजगतःकिंचित्कालंसत्वेनभानमपिब्रह्मसंकल्पवशादेवेत्याह ॥ चिद्रूपेति ॥ हेअंगएतज्जगत ॥ ९ ॥ यदिजगत्ब्रह्मसं कल्पवशात्सत्तर्हिपूर्वंसुषुप्तिप्रलयोःकिंकुतोनोपलभ्यते पश्चाज्जाग्रत्सर्गकालयोःकिमर्थमुपलभ्यतेचलद्वपुःसदाविक्रियमाणमिदंजगत्सुस्थिरारंभवद्भास्वरंज्ञासमानंकिमथ मित्यर्थः ॥ १० ॥

352

मायिकस्यास्यस्वभावएवेदृशइत्युत्तरमाह ॥ अस्मिन्निति ॥ सर्गेस्वप्नजायतोर्भूत्वाप्रलयसुषुप्तिमोक्षेपुनर्भवत्येवेतियदसावीदृशोभावःस्वभावएव ॥ ११ ॥ बालसंकल्पपुरादौ यावत्संकल्पभ्रांतिकालमात्रावस्थाननियमदर्शनेनसदसद्रूपत्वावधारणाद्वातस्यतथात्वमित्याह ॥ बालेति ॥ १२ ॥ जगत्संकल्पयित्रैवतत्प्रलयस्यापिसंकल्पनाद्वातथात्वमित्याह ॥ त्वमिति ॥ अन्यसंविद्वशतस्तत्प्रलयसंकल्पवशतआकारांतरसंकल्पवशतश्चयथायंतेस्वःस्वभावस्तथाचिद्व्योमसंकल्पपुरेतस्यब्रह्मणोविमलंस्वभावकचनमितिपरेणान्वयः ॥ १३ ॥ १४ ॥ अतस्त्रिजगन्नभःसंविद्घनमात्रंसदनाद्यंतंव्योमब्रह्माकाशमेवयतःस्वयमेवजगत्तेनहेतुनाअसौपरमेश्वरोयद्यच्चेततिकरोत्यपिचतत्सर्वमनावरणस्यास्यसत्यसंकल्पबलाद्योजनानांशतेष्वपिबहुभिर्युगैरपिव्यवहितंपुण्यपापादिकर्मपरलोकादिषुसमीपेवर्त्तमानवत्स्वर्गनरकभोगैश्वर्यादिकार्यकृद्भवतीत्यर्थः ॥ १५ ॥ १६ ॥ बहिर्देशकालव्य

श्रीवसिष्ठउवाच ॥ ॥ अस्मिंश्चिद्व्योमसंकल्पपुरस्थेभावईदृशः ॥ यद्भूत्वानभवत्येवपुनर्भवतिचक्षणात् ॥ ११ ॥ बालसंकल्पपुरवद्व्योमकेशोंडूकादिवत् ॥ किलैतेसदसद्रूपाभांतिसर्गाश्चिदात्मनि ॥ १२ ॥ त्वंसंकल्पपुरंकृत्वाविनाशयसितत्क्षणात् ॥ स्वतोन्यसंविद्वशतःस्वस्वभावःसतेयथा ॥ १३ ॥ चिद्व्योमकल्पनपुरेयदुन्मज्जनमज्जनम् ॥ स्वभावकचनंतस्यतद्विद्धिविमलंतथा ॥ १४ ॥ संविद्घनस्त्वनाद्यंतव्योमैवत्रिजगन्नभः ॥ तेनासावद्ययन्नामकरोत्यपिचचेतति ॥ १५ ॥ तदनावरणस्यास्ययोजनानांशतेष्वपि ॥ युगैरपिस्वप्नइवकार्यकृद्वर्तमानवत् ॥ १६ ॥ किलदेशांतरेनित्यमथलोकांतरेपिच ॥ निरावृतोयएकात्मासकिंनामनचेतति ॥ १७ ॥ यथामणौप्रकचतिप्रोन्मज्जननिमज्जने ॥ परावर्त्तःस्वभासास्यचिन्मणौजगतांतथा ॥ १८ ॥ विधीनांप्रतिषेधानांलोकसंस्थाप्रयोजनम् ॥ सैवसंविदिरूढत्वात्प्रेत्यापिफलदास्थिता ॥ १९ ॥ नकदाचनयात्यस्तमुदेतिनकदाचन ॥ ब्रह्मब्रह्मविदाभानंसर्वदात्मन्यवस्थितम् ॥ २० ॥ यथातुद्रष्टृदृश्यत्वात्कल्पनाकल्पनापुरम् ॥ स्वयंजगदिवाभातिजातमित्युच्यतेतथा ॥ २१ ॥ यदास्वभावात्कचनंसंहृत्यात्मनितिष्ठति ॥ ब्रह्मचिद्गगनैकात्माशांतइत्युच्यतेतदा ॥ २२ ॥ कचनाकचनेयस्यस्वभावोनिर्मलोक्षयः ॥ यथैतावात्मनोनान्यौस्पंदास्पंदौनभस्वतः ॥ २३ ॥

वधानेकर्मतत्फलोभयाध्यासाधिष्ठानभूतोनिरावरणोयएकात्मातत्रोभयोःसदैवसन्निधानात्किंनामकर्मफलंसजीवोनचेततिसर्वंचेतत्येवेत्यर्थः ॥ १७ ॥ यथाप्रकचतिमणौस्वभासैवकांतिविशेषस्यप्रोन्मज्जननिमज्जनेअनुभूयेतेतथाचिन्मणौजगतांसृष्टिप्रलयात्मकोनानाकर्मफलवैचित्र्यभोगात्मकश्चस्वभासास्यपरावर्त्तनंपरावर्त्तोनुभूयतइत्यर्थः ॥ १८ ॥ विधिप्रतिषेधशास्त्रसाफल्यप्रयोजिकालोकसंस्थैवब्रह्मणिनिरूढत्वाद्दूरस्थकर्मणामपिफलंकल्पयतीत्याह ॥ विधीनामिति ॥ प्रेत्यमृत्वापरलोकंगत्वास्थितस्येतिशेषः ॥ १९ ॥ वस्तुतस्तुजन्ममरणेएवात्मनोनस्तःकिंत्वस्यस्वात्मनैवभ्रांत्यातत्कल्पनमित्याह ॥ नकदाचनेति ॥ २० ॥ तथाजातंजन्मापिउच्यतेवाचाव्यपदिश्यतेनतुवस्तुतइत्यर्थः ॥ २१ ॥ तथामरणमपिपूर्वदेहादिभ्रांतिकचनोपसंहारएवनान्यदित्याह ॥ यदेति ॥ शांतोमृतइत्युच्यतेजीवइत्यर्थः ॥ २२ ॥ दृश्याकारकचनाकचनेचाज्ञानोपहितचितःस्वभावएवेत्याह ॥ कचनेति ॥ २३ ॥

एवंस्थितस्यममाज्ञाभिमतैर्बंधुधनराज्यादिनाशैर्दशाविनिमयैर्वानानर्थप्राप्तिशंकास्तीत्याशयेनाह ॥ अन्यतामिति ॥ सौम्यःसोममार्गवच्छून्योवाभवतु ॥ स्वस्थोनिर्विक्षेपः ॥ ॥ २३ ॥ विलक्ष्योबाह्येंद्रियैरलक्ष्यः ॥ मनसापिदुर्लक्ष्यः ॥ आशाभिस्तृष्णाभिः ॥ २४ ॥ देहेअभिव्यक्तस्यदेहमतीत्यावस्थानेदृष्टांतमाह ॥ यथेति ॥ समःअस्यपुष्पस्यदेहस्यवायमितिविशेषयितुमशक्यत्वात्साधारणः ॥ २५ ॥ तर्हित्वमपेकथंकइवव्यवहरिष्यसितत्राह ॥ यथैवेति ॥ २६ ॥ अप्रबुद्धेभ्योविशेषमाह ॥ शांतेति ॥ २७ ॥ सर्वस्यविषयैश्वर्यानंदस्योपरिब्रह्मानंदेनाहंसुखी ॥ अतएवमेदेहेविषयसुखंनेहामिनेच्छामि ॥ नियोजयस्वसेवादिविषयेआज्ञापय ॥ २८ ॥ अहंयावद्देहंबालःस्ववयोनुरूपांलीलांक्रीडामिवयथाप्राप्तांसंसारसंस्थितिंपालयामि ॥२९॥३०॥ यत्रपदेस्थितैर्नशोच्यते ॥ भावेलः ॥३१॥३२॥ लोकद्वयेइहलोकेपरलोकेचदृष्टादृष्टश्रुतानर्थशंका ॥३३॥ तनयेतिप्रीत्यतिशयेनसंबोधनम् ॥ सम्यग्ज्ञानार्तातिसंज्ञआत्मतत्त्ववित्सन्रघूणांभूतभव्यभविष्यस्थांकुलसंततिंबोधेनपावितवानसि ॥३४॥ अर्थितांयज्ञविघ्नपरिहारार्थिताम् ॥ पित्रासहेतिजीवत्येवपितरितदाज्ञयाराक्षसवधेनमहींपालयित्वेत्याशयः ॥ ३५ ॥ हेसुभगत्वयाअन्विताःसंगताःसतनयाःपुत्रपौत्रसहिताभृत्यबांधवाश्वसरथगजाश्वमंडलाः पदातयश्चेतिद्विविधाअपिजनानिरामयाःशरीरेविगतभयाश्चित्तेसदोदयागृहेप्रभवंत्वित्याशीःप्रार्थनावा ॥ ३६ ॥ ॥ इ० वा० ता० नि० उ० एकोत्तरद्विशततमःसर्गः ॥ २०१॥

अन्यतामेतुसर्गोयंवातुवाप्रलयानिलः॥ सौम्योभवतुवादेशःस्वस्थोहंस्वात्मनिस्थितः ॥२३॥ विश्रांतोस्मिविलक्ष्योस्मिदुर्लक्ष्योस्मि निरामयः॥ नाशाभिर्बंधमाप्नोमिमुनेखमिवमुष्टिभिः॥२४॥ यथातरुगतात्पुष्पाद्गंधःप्राप्यनभःपदम्॥ तिष्ठत्येवमहंदेहादतीतःसंस्थितःसमः॥ २५॥ यथैवसर्वेराजानोविहरंतियथासुखम्॥ अप्रबुद्धाःप्रबुद्धाश्चराज्येषुवद्गुकर्मसु ॥ २६॥ शांतहर्षविषादाशःस्थिरैकसमदर्शनः॥ स्थितआत्मनिनिःशंकंतथैवविहराम्यहम्॥२७॥ सर्वस्योपर्यपिसुखीसुखंनेहामिमेप्रभो॥ जनसाम्येनतिष्ठामियथेच्छंमां नियोजय॥२८॥बालोलीलामिवत्यक्तशंकंसंसारसंस्थितिम्॥ यावद्देहमिमांसाधोपालयाम्यमलैकदृक्॥२९॥ भुंजे[1]पिबामितिष्ठामि पालयामिनिजक्रियाम्॥ जातोहंविगताशंकस्त्वत्प्रसादान्मुनीश्वर॥ ३०॥ ॥श्रीवसिष्ठउवाच॥ ॥अहोबतमहापुण्यंपदमासादितंत्वया॥ अनादिमध्यपर्यंतमिदंयत्रनशोच्यते॥ ३१॥ सम्यक्समसमाभोगेशीतलेस्वात्मनिस्वयम्॥ नभसीवनभःशांतेविश्रांतिमसिलब्धवान्॥ ३२॥ दिष्ट्याजातोविशोकस्त्वंदिष्ट्यासम्यगवस्थितः॥ दिष्ट्यालोकद्वयेनर्थशंकातेशममागता॥ ३३॥ दिष्ट्यारघूणांतनयसंज्ञःपावितवानसि॥ भूतभव्यभविष्यस्थांबोधेनकुलसंततिम्॥३४॥ अधुनामुनिनाथस्यविश्वामित्रस्यराघव॥ पूरयित्वार्थितां भुक्तांपित्रासहमहीमिमाम्॥३५॥त्वयान्विताःसतनयभृत्यबांधवाः[2]पदातयःसरथगजाश्वमंडलाः॥निरामयाविगतभयाःस्थिरश्रियः सदोदयाःसुभगभवंतुराघवाः॥ ३६॥ ॥इ० वा० वा० दे० मो० नि० उ० विश्रांतिप्रकटीकरणंनामैकोत्तरद्विशततमोध्यायः॥ २०१॥

१ तिष्ठेतिशेषः

२ रघुकुलसंबंधिनोभृत्यादयः

॥ ११ ॥ स्फटिकालयमध्यस्थस्फटिकइवब्रह्मभावविशुद्धे जगतितथाविधाधीर्यस्य ॥ १२ ॥ आहर्तुंसंपादयितुंचेत्यर्थः ॥ १३ ॥ परामर्शोविषयस्मरणंतद्भोगेकौतुकंतद र्थाःसंकल्पाइतिभेदः ॥१४॥ अस्वप्नंमानसविषयालोचनरहितंअपुनर्बोधंजाग्रदैंद्रियकविषयालोचनरहितंचस्वपिमीव ॥ इवशब्दःसुषुप्तभानस्यापिमिथ्यात्वात्तुरीयावस्थिति द्योतनार्थः ॥ १५ ॥ आशाभिर्विधुरितांविह्वलितांप्राक्तनींतनौदेहेआत्मबुद्ध्यास्थितिंप्रविहस्यस्फुरद्भिर्भवत्सूक्तैरुपदेशवाक्यैःसांप्रतंस्वस्थस्तिष्ठामि ॥ १६ ॥ अधुनाममउपदे शेनअर्थेनतत्प्रयुक्तप्रयोजनांतरेण ॥ एतेषांसर्वेषांत्यागेनचकारणंप्रयोजनंनास्ति ॥ १७ ॥ मच्चित्तांप्रत्यगात्ममात्रप्रतिष्ठितचित्तामनपायिनींनित्यांजीवन्मुक्तस्थितिंव्योम्निस्व

सर्वाएवोपशांतामेभ्रांतयोभवभंगदाः ॥ स्वरूपेणावदातेनतिष्ठाम्यच्छमिवांबरम् ॥ ११ ॥ स्थितोहंगलितग्रंथिःशांताशेषविशेषणः ॥ स्फटिकालयमध्यस्थस्फटिकामलधीरहम् ॥ १२ ॥ अन्यच्छ्रोतुमथाहर्तुंशांतंनेच्छतिमेमनः ॥ परांद्रष्टिमुपायांतंसुषुप्तमिवसंस्थितम् ॥ १३ ॥ शांताशेषपरामर्शंविगताशेषकौतुकम् ॥ संत्यक्ताशेषसंकल्पंशांतंममममुनेमनः ॥ १४ ॥ परिनिर्वामिशाम्यामिजाग्रदेवजग त्स्थितौ ॥ अस्वप्नमपुनर्बोधंस्वपिमीवनिरामयम् ॥ १५ ॥ आशाविधुरितामात्मसंस्थितिंप्राक्तनींतनौ ॥ प्रविहस्यस्फुरत्सूक्तैःस्वस्थस्ति ष्ठाम्यसंशयम् ॥ १६ ॥ नोपदेशेननार्थेननशास्त्रैर्नचबंधुभिः ॥ त्यागेनचनचैतेषामधुनाममकारणम् ॥ १७ ॥ साम्राज्यस्याथवाव्योम्नि यास्थितिःक्षोभवर्जिता ॥ तामेवानुभवाम्यत्रमच्चित्तामनपायिनीम् ॥ १८ ॥ खादप्यतितरामच्छंचिदाकाशांशमात्रकम् ॥ जगदित्ये वपश्यामिलोचनाद्यंगकांगतः ॥ १९ ॥ आकाशमात्रमेवेदंजगदित्येकनिश्चयः ॥ दृश्यनाम्निनभस्यस्मिन्क्षयेजागर्मिचाक्षयः ॥ २० ॥ यथाकामंयथाप्राप्तंयथास्थितमिवस्थितम् ॥ यद्वक्तितदविघ्नेनकरोम्यपगतैषणम् ॥ २१ ॥ नतुष्यामिनद्वष्यामिनपुष्यामिनरोदिमि ॥ कार्यकार्यंकरोम्येकोभ्रांतिर्दूरंगताम्मम ॥ २२ ॥

र्गेसाम्राज्यस्यअसुरादिक्षोभवर्जितायास्थितिस्तामेवानुभवामीतिलोकदृशोक्तिः ॥ १८ ॥ अहंबहिर्दृशालोचनाद्यंगकादंगतांगतोपिजगत्खादप्यतितरामच्छंचिन्मात्रमित्येव पश्यामिनाज्ञवज्जडमित्यर्थः ॥ १९ ॥ अस्मिन्जगतिक्षयेमोहनिद्रयासहबाधितेसतिअक्षयोहंसदैवजागर्मि ॥ २० ॥ भाविकार्यंयथाकामंवर्त्तमानकार्यंयथाप्राप्तंप्रागवस्थि तंकार्यंतुयथास्थितंयद्भवान्वक्तितदहमपगतैषणंफलाभिसंधिरहितंगुरुशास्त्राज्ञानुसारेणकरोमि ॥ पाठांतरेस्वकार्यविषयेयथाकामंयथारंभम् ॥ परकार्यंविषयेयथाप्राप्तंयथा स्थितम् ॥ २१ ॥ नतुष्याम्यंतर्मनसि ॥ नद्वेष्यामिनपुष्यामिबहिर्देहेइष्टप्राप्त्या ॥ एवमनिष्टप्राप्त्यानरोदिमि ॥ कार्यमवश्यकर्त्तव्यंलौकिकंवैदिकंचकार्यंकरोमि ॥ २२ ॥

---

१ ब्रह्मभावविशुद्धेत्यर्थः  २ बहिर्दृशालोचनादीन्यंगानियस्यांतादृशीस्थितिंगतोपीत्यर्थः ॥ लोचनाद्यंगतामितिपाठोवा ॥ लोचनादान्यंगानियस्यतद्भावंगतो पीत्यर्थः ॥  ३ यथाकामंयथारंभंयथाप्राप्तंयथास्थितमित्येवंरूपे

एवंस्थितस्यममाज्ञाभिर्मतैर्वंधुधनराज्यादिनाशैर्देशाविनिमयैर्वानानर्थप्राप्तिशंकास्तीत्याशयेनाह ॥ अन्यतामिति ॥ सौम्यःसोममार्गवच्छून्योवाभवतु ॥ स्वस्थोनिर्विक्षेपः ॥ ॥ २३ ॥ विलक्ष्योवाह्येंद्रियैरलक्ष्यः ॥ मनसापिदुर्लक्ष्यः ॥ आशाभिस्तृष्णाभिः ॥ २४ ॥ देहेअभिव्यक्तस्यदेहमतीत्यावस्थानेदृष्टांतमाह ॥ यथेति ॥ समःअस्यपुष्पस्यदे हस्यवायमितिविशेषयितुमशक्यत्वात्साधारणः ॥ २५ ॥ तर्हित्वमपेकथंकइवव्यवहरिप्यसितत्राह ॥ यथैवेति ॥ २६ ॥ अप्रवुद्धेभ्योविशेषमाह ॥ शांतेति ॥ २७ ॥ सर्व स्यविषयैश्वर्यानंदस्योपरिब्रह्मानंदेनाहंसुखी ॥ अतएवमेदेहेविषयसुखेनेहामिनेच्छामि ॥ नियोजयस्वसेवादिविषयेआज्ञापय ॥ २८ ॥ अहंयावद्देहंवालःस्ववयोनुरूपांली

अन्यतामेतुसर्गोयंवातुवाप्रलयानिलः ॥ सौम्योभवतुवादेशःस्वस्थोहंस्वात्मनिस्थितः ॥२३॥ विश्रांतोस्मिविलक्ष्योस्मिदुर्लक्ष्योस्मि निरामयः ॥ नाशाभिर्वंधमाप्नोमिमुनेखमिवमुष्टिभिः ॥२४॥ यथातरुगतात्पुष्पाद्गंधःप्राप्यनभःपदम् ॥ तिष्ठत्येवमहंदेहादतीतःसंस्थि तःसमः ॥ २५ ॥ यथैवसर्वेराजानोविहरंतियथासुखम् ॥ अप्रवुद्धाःप्रवुद्धाश्चराज्येषुवहुकर्मसु ॥ २६ ॥ शांतहर्षविषादाशःस्थिरैकस मदर्शनः ॥ स्थितआत्मनिनिःशंकंतथैवविहराम्यहम् ॥२७॥ सर्वस्योपर्यपिसुखीसुखेनेहामिमेप्रभो ॥ जनसाम्येनतिष्ठामियथेच्छंमां नियोजय ॥२८॥ वालोलीलामिवत्यक्तशंकंसंसारसंस्थितिम् ॥ यावद्देहमिमांसाधोपालयाम्यमलैकदृक् ॥२९॥ भुंजेपिवामितिष्ठामि पालयामिनिजक्रियाम् ॥ जातोहंविगताशंकस्त्वत्प्रसादान्मुनीश्वर ॥ ३० ॥ ॥श्रीवसिष्ठउवाच ॥ ॥अहोवतमहापुण्यंपदमासादि तंत्वया ॥ अनादिमध्यपर्यंतमिदंयत्रनशोच्यते ॥ ३१ ॥ सम्यक्समसमाभोगेशीतलेस्वात्मनिस्वयम् ॥ नभसीवनभःशांतिविश्रांतिम सिलब्धवान् ॥ ३२ ॥ दिष्ट्याजातोविशोकस्त्वंदिष्ट्यासम्यगवस्थितः ॥ दिष्ट्यालोकद्वयेनर्थशंकातेशममागता ॥ ३३ ॥ दिष्ट्यारघूणांत नयसंज्ञःपावितवानसि ॥ भूतभव्यभविष्यस्थांवोधेनकुलसंततिम् ॥३४॥ अधुनामुनिनाथस्यविश्वामित्रस्यराघव ॥ पूरयित्वार्थितां भुक्तांपित्रासहमहीमिमाम् ॥३५॥ त्वयान्विताःसतनयभृत्यवांधवाःपदातयःसरथगजाश्वमंडलाः ॥ निरामयाविगतभयाःस्थिरश्रियः सदोदयाःसुभगभवंतुराघवाः ॥ ३६ ॥ ॥इ०वा०वा०दे०मो०नि०उ०विश्रांतिप्रकटीकरणंनामैकोत्तरद्विशततमोध्यायः ॥ २०१ ॥

लांक्रीडामिवयथाप्राप्तांसंसारसंस्थितिपालयामि ॥२९॥३०॥ यत्रपदंस्थितैर्नशोच्यते ॥ भाविलः ॥३१॥३२॥ लोकद्वयेइहलोकेपरलोकेचदृष्टादृष्टश्रुतानर्थशंका ॥३३॥ त नये तिप्रीत्यतिशयेनसंवोधनम् ॥ सम्यग्जानातीतिसंज्ञआत्मतत्त्वविसत्त्वरघूणांभूतभव्यभविष्यस्थांकुलसंततिवोधेनपावितवानसि ॥३४॥ अर्थितांयज्ञविघ्नपरिहारार्थिताम् ॥ पित्रासहेतिर्जीवत्येवपितरिरतदाज्ञयाराक्षसवधेनमहींपालयित्वेत्याशयः ॥ ३५ ॥ हेसुभगत्वयाअन्विताःसंगताःसतनयाःपुत्रपौत्रसहिताभृत्यवांधवाश्वसरथगजाश्वमंडलाः पदातयश्चेतिद्विविधाअपिजनानिरामयाःशरीरेविगतभयाश्चित्तेसदोदयागृहेपुभवंत्वित्याशीःप्रार्थनावा ॥ ३६ ॥ ॥इ०वा०ता०नि०उ०एकोत्तरद्विशततमःसर्गः ॥ २०१॥

१ तिष्ठेतिशेषः

२ रघुकुलसंबंधिनोभृत्यादयः

प्रवोधहृष्टाराजानोरामश्चात्रोपवर्णिताः ॥ रामेणचस्थितिःस्वीयानिर्मृष्टाज्ञाननिर्मला ॥१॥ पार्थिवग्रहणंसर्वजनोपलक्षणम् ॥ १ ॥ सुधाभिःपूर्यतइतिसुधापूरःपूर्णचंद्रस्तेनों दितनक्षीरोदइव ॥ २ ॥ अहोआश्चर्यभूतमुक्तम् ॥ ३ ॥ तुष्ट्यासंतोषातिशयेनसंप्रहृष्टांगोरोमांचितगात्रः ॥ ४ ॥ वहुषुसाधुवादकथासुप्रवृत्तासुसतीषु ॥ ५ ॥ मलमज्ञानम् ॥ ६ ॥ कायमात्रदृशोदेहपरिच्छिन्नात्मदृष्टयः ॥ विश्वावलोकिनःसर्वात्मदर्शिनः ॥ ७ ॥ सर्वःसन्संपूर्णः ॥ ८ ॥ ममशाश्वतस्यार्थस्यपरमपुरुषार्थस्यउदयआविर्भावोऽभू

श्रीवाल्मीकिरुवाच॥ ॥एतच्छ्रुत्वावसिष्ठस्यवचःसंसदिपार्थिवाः॥ सिक्ताइवामृतापूरैरंतःशीतलतांययुः ॥ १ ॥ रामःकमलपत्राक्षोरराजवदनेंदुना॥ क्षीरोदइवसंपूर्णःसुधापूरेणचारुणा ॥ २ ॥ वामदेवादयःसर्वेतत्त्वज्ञानविशारदाः॥ अहोभगवताज्ञानमुक्तमित्यूचुरादरात्॥ ३ ॥ शांतांतःकरणोराजामुदादशरथोवभौ॥ तुष्ट्यैवसंप्रहृष्टांगोनवांद्युतिमुपागतः॥ ४ ॥ ज्ञातज्ञेयेषुवहुषुसाधुवादकथास्वथ॥ उवाचगलिताज्ञानोरामोवाक्यमिदंपुनः॥ ५ ॥ ॥श्रीरामउवाच॥ ॥भगवन्भूतभव्येशत्वयास्माकमलंमलम् ॥ संप्रमृष्टमिदंहेम्नःश्यामत्वमिववह्निना॥ ६ ॥ अभूमवयमात्मीयकायमात्रदृशःपुरा॥ प्रभोसंप्रतिसंपन्नाविष्वग्विश्वावलोकिनः॥ ७ ॥ स्थितोस्मिसर्वसंपूर्णःसंपन्नोस्मिनिरामयः॥ जातोस्मिविगताशंकोवुधोजागर्मिसंप्रति ॥ ८ ॥ आनंदितोस्म्यखेदायसुखितोस्मिविरायच॥ स्थितोनस्तमयायैवशाश्वतार्थोदयोमम॥ ९ ॥ अहोवतपवित्रेणशीतेनज्ञानवारिणा॥ त्वयासिक्तोस्मिहृष्यामिपद्मवच्छरदयेस्वयम्॥ १० ॥ इयमद्यमयालब्धापदवीत्वत्प्रसादतः॥ यस्यांस्थितस्यमेसर्वममृतत्वंगतंजगत् ॥ ११ ॥ अंतःप्रसन्नमतिरस्तसमस्तशोकःशोभांगतोहममलाशयएवशांत्या॥ आनंदमात्मनिगतःस्वयमात्मनैवनैर्मल्यमभ्युपगतोस्मिनमोस्तुमह्यम्॥ १२ ॥ ॥इ०वा० महारामायणेवा०दे०मो०नि०उ०आत्मविश्रामांगीकरणंनामद्व्युत्तरद्विशततमःसर्गः॥ २०२ ॥ ॥श्रीवाल्मीकिरुवाच॥ ॥इत्थंविचारपरयोर्मुनिराघवयोस्तयोः॥ भास्करःश्रवणायेवव्योममध्यमुपाययौ॥ १ ॥ तीक्ष्णतामाजगामाशुसर्वदिक्कमथातपः॥ पदार्थौघविकासार्थंरामस्येवमहामतिः॥ २ ॥

दितिशेषः ॥ ९ ॥ पद्मवच्छारदाब्जवत ॥ १० ॥ पदवीसाम्राज्यपदवी ॥ ११ ॥ अंतःप्रसन्नामतिर्यस्य ॥ अतएवास्तसमस्तशोकः ॥ यतोहंशांत्यासकार्यमूलाज्ञाननाशेनामलाशयएवात्मनिआनंदंगतः ॥ आत्मनैवसम्यक्परीक्ष्यदृष्टेनस्वतःसिद्धनैर्मल्यमभ्युपगतोस्मि ॥ अतोमह्यमेवनमोस्त्वित्यर्थः ॥ १२ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि० उ०द्व्युत्तरद्विशततमःसर्गः ॥ २०२ ॥ ॥ ७ ॥ ॥ मध्याह्नतूर्यघोषोत्रदिनकृत्यंनिशाक्रमः ॥ प्रातःसभायांरामस्यनिःसंदेहश्चवर्ण्यते ॥ १ ॥ इत्थंविचारपरयोः सतोः ॥ भावलक्षणेसप्तमीद्विवचनम् ॥ अर्थात्तदुभयविचारश्रवणायेवेत्युत्प्रेक्षा ॥ १ ॥ सर्वासुदिक्ष्वितिसर्वदिक्कम् ॥ पदार्थौघस्यविकासःस्फुटदर्शनम् ॥ २ ॥

लीलापद्माकराउद्यानतटाकाः ॥ तत्रस्थास्तत्सभास्थाः ॥ पार्थिवग्रहणंसर्वजनोपलक्षणम् ॥ ३ ॥ मुक्ताकलापाअनंतराअव्यवधानखचितायस्मिंस्तथाविधंस्फटिकवा
तायनजालकंप्रतिबिंबभावेनाक्रांतःसंक्रांतोभास्करोयस्मिंस्तथाविधंसद्दीप्त्यतिशयेनव्योमतरत्प्लवमानमिवसत्ननर्त्तेव ॥ वसिष्ठोपदिष्टविज्ञानश्रवणाद्योमब्रह्माकाशंतरदिवे
त्यनुभवचमत्कारिणीउत्प्रेक्षा ॥ ४ ॥ पद्मरागेपुलग्नस्याऽर्कस्यतरुणत्विषोभासःप्रतिबिंबकांतयः ॥ यथास्वच्छायाधियउपदेशज्ञानकलाःस्फुरंतितद्वत् ॥ ५ ॥ मुनींद्रवदनस्य
आलोकयोगात्कैरवविकासकत्वाच्चानुक्तापिचंद्रतागम्यते ॥ ६ ॥ और्वोपमेवडवाग्निसदृशे ॥ तत्साम्यमेवविशेषणैरुपपाद्यते ॥७॥ एवंनभसोनीलोत्पलत्वमपिविशेषणैरुपपा

उत्फुल्लहृद्यांभोजस्फाराकारतयातदा॥ लीलापद्माकरारेजुस्तत्रस्थाःपार्थिवाइव॥ ३॥ जालंमुक्ताकलापानंतरमाक्रांतभास्करम्॥ न
नर्त्तेवतरद्योमविज्ञानश्रवणादिव ॥४॥ पुस्फुरुःपद्मरागेपुलग्नार्कतरुणत्विषः॥ भासोव्योमतलोड्डीनाधियोज्ञानकलाइव ॥५॥ एवंनि
र्वृतिमायातेरामेस्वकुलकैरवे॥ मुनींद्रवदनालोकात्सविकासमिवस्थिते ॥६॥ रवावौर्वोपमेव्योममहाब्धेर्नाभितांगते॥ तेजःपुंजलस
ज्ज्वालेसमग्ररसपायिनि॥ ७॥ नभोनीलोत्पलेनीलेगलद्रजसिराजति॥ घर्मांशुकर्णिकाकांतेस्फुरत्किरणकेसरे॥ ८॥ अवतंसेजगल्ल
क्ष्म्यास्त्रिलोकीकर्णकुंडले॥ अंतर्लीनस्फुरत्ताराररत्नराजिविराजिते॥ ९ ॥ दिग्वधूभिर्बृहच्छृंगपाणिभिर्मुकुरेष्विव॥ धृतेपुतापभिन्नेपुम
हाभ्रेपुनिरंबुपु॥ १० ॥ सूर्यकांतवरोत्थेनवह्निनेवसमेधिते ॥ द्विगुणंप्रज्वलत्यर्कंशून्येगगनधामनि॥ ११ ॥ विनेदुर्मेदुरोद्दाममुखमा
रुतपूरिताः॥ मध्याह्नशंखाःकल्पांतवातपूर्णाइवार्णवाः॥ १२ ॥ प्रालेयश्रीरिवाब्जेषुघर्मश्रीर्वदनेष्विव॥ चकारपदमाकीर्णशुद्धमुक्ता
फलोपमा॥ १३॥ गृहभित्तिपरावृत्तासत्वसंरंभमांसला॥ शब्दश्रीःपूरयामासकर्णमर्णइवार्णवम्॥ १४॥ पुरंध्रीभिर्निदाघौघशांतये
समुदीरिता॥ उल्ललासनवापांडुकर्पूरजलदावलिः॥ १५॥ सराजासहसामंतःसभूपःसपरिच्छदः॥ सवसिष्ठःसमुत्तस्थौसहरामःससं
सदः॥ १६॥ राजानोराजपुत्राश्चमंत्रिणोमुनयस्तथा॥ अन्योन्यंपूजिताजग्मुर्मुदिताःस्वंनिवेशनम्॥ १७॥

द्यते नभइत्यादिना ॥ घर्मांशुःसूर्यस्तल्लक्षणयाकर्णिकयाकांते ॥ ८ ॥ अवतंसेइत्यंतमुत्पलोत्प्रेक्षा ॥ त्रिलोकीकर्णकुंडलेइत्युत्प्रेक्षांतरम् ॥ अंतर्लीनेतितदुपपादकम् ॥ ९ ॥
दिग्वधूभिर्बृहद्भिरिशृंगलक्षणैःपाणिभिर्महाभ्रेपुमुकुरेष्विवधृतेपुसत्सुतापैरातपैर्भिन्नेपुसंभिन्नेपुविभक्तेपुवा ॥ १० ॥ अर्कशून्येपिगगनधामनिसूर्यकांतश्रेष्ठेभ्यःउत्थितेनव
ह्निनासमेधितेअर्कापेक्षयाद्विगुणमिवप्रज्वलतिसति ॥ ११ ॥ १२ ॥ घर्मश्रीःस्वेदबिंदुशोभाजनानांवदनेपुपदंचकार ॥ १३ ॥ गृहभित्तिप्वभिघातात्प्रतिध्वन्यात्मनापरावृ
त्ता ॥ सत्वानांप्राणिनांकार्यत्वराशब्दसंरंभैर्मांसलापुष्टा ॥ अर्णोवृष्टिनदीजलमर्णवमिवकर्णंपूरयामास ॥ १४ ॥ सकर्पूरजलसेकलक्षणाजलदावलिः ॥ १५ ॥ मंडलदेशा
धिपत्यभेदात्सामंतभूपयोर्भेदः ॥ संसदःसभायाः ॥ १६ ॥ १७ ॥

गृहाग्रेषुगृहमुखेषु ॥ १८ ॥ स्फूर्जतिअभिघातेनवर्द्धमाने ॥ १९ ॥ २० ॥ गुरूपदेशवेदांतादिशास्त्रस्वानुभवानामविसंवादायैकार्थनिष्ठतालक्षणाएकवाक्यताकार्येत्याह ॥ यथेति ॥ २१ ॥ २२ ॥ प्रष्टव्यंप्रश्नार्हमस्तिचेत्तप्रातरवश्यंप्रष्टव्यंनोपेक्षितव्यमित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ कांश्चिन्मणिमुक्तागणनिष्क्रयभूतेनार्थेनधनेन ॥ कांश्चित्तुप्रत्यक्षमणिमुक्ताप्रदानेन ॥ २६ ॥ कन्यादिप्रदानेन ॥ २७ ॥ २८ ॥ सभयासभास्थेनजनेनसह ॥२९॥ ससंरंभःसत्वरःससभायाउत्थानसमयः सभोत्थानसमयसहितःससंरंभइतिवा ॥३०॥ तमेववर्णयति ॥ संघट्टेत्यादिना ॥ संघट्टोघर्षणंआघट्टःपरस्परमाघातस्ताभ्यांकेयूररत्नचूर्णैःअरुणावनिः ॥ छिन्नहारेभ्यःस्फुरंतीभिर्मुक्ताताराभिर्जितंनिशाकाल

अंतःपुरगृहाग्रेषुतालवृंतानिलाहतैः॥ कर्पूरधूलिभिरभून्नवैवांबुदमालिका॥ १८ ॥ अथमध्याह्नतूर्याणांरवेस्फूर्जतिभित्तिषु॥ उवाच वचनंवाक्यकोविदोमुनिनायकः॥ १९॥ सर्वमेवश्रुतंश्राव्यंज्ञेयंज्ञातमशेषतः॥ त्वयाराघवभोनास्तिज्ञातव्यमपरंवरम्॥ २०॥ यथा मयोपदिष्टोसियथापश्यसिशास्त्रतः॥ यथानुभवसिश्रेष्ठमेकवाक्यंतथाकुरु॥ २१॥ उत्तिष्ठतावत्कार्यायवयंस्नातुंमहामते॥ मध्याह्नस मयोस्माकमयमंगातिवर्त्तते ॥ २२॥ अपरंयत्त्वयाभद्रस्वाकांक्षाविनिवृत्तये॥ प्रष्टव्यंतच्छुभंप्रातःप्रष्टव्यंभवतापुनः॥ २३॥ ॥श्री वाल्मीकिरुवाच॥ ॥इत्युक्तेमुनिनाथेनराजादशरथःस्वयम्॥ पूजयामासतान्सभ्यान्सर्वान्साधून्सपर्यया॥ २४॥ सहरामेणधर्मा त्मामुनिविप्रान्नृपांश्चसः॥ वसिष्ठाद्युपदिष्टेनक्रमेणव्योमगांस्तथा॥ २५॥ मणिमुक्तागणार्थेनदिव्येनकुसुमेनच॥ मणिरत्नप्रदानेन मुक्ताहारार्पणेनच॥२६॥ प्रणयेनप्रणामेनप्रदानेनार्थशालिना॥ वस्त्रासनान्नपानेनकनकेनतथाभुवा॥ २७॥ धूपेनगंधमाल्याभ्यां यथोदितमनिंदितः॥ पूर्वान्संपूजयामाससर्वानेवमहीपतिः॥२८॥ अथोत्तस्थौसभामध्यात्सभयासहमानदः॥ सवसिष्ठादिदेवर्षिःसा यमिंदुरिवांबरात्॥२९॥ ससभोत्थानसमयःससंरंभोव्यराजत॥ जानुदघ्नसुरोन्मुक्तपुष्पसंजातकर्दमः॥ ३०॥ संघट्टाघट्टकेयूररत्नचू र्णारुणावनिः॥ छिन्नहारस्फुरन्मुक्ताताराजितनिशांबरः॥ ३१॥ देवर्षिमुनिविप्रेंद्रपार्थिवस्पंदसंकुलः॥ व्यग्रभृत्यांगनाहस्तकेशचंच लचामरः॥ ३२॥ ज्ञानप्रमेयीकरणस्पंदमानोनदारुणः॥ शिरःकरत्रिनयनजिह्वेष्वेवविराजितः॥ ३३॥

प्रसिद्धंसनक्षत्रमंबरंयेन ॥३१॥३२॥ तर्हिकिंसर्वजनानांस्वार्थप्रवृत्तित्वरयादुर्बलपरोपमर्दाद्दारुणोनेत्याह ॥ ज्ञानेति ॥ वसिष्ठोपदिष्टस्यज्ञानस्यमननादिनाभूमिकाक्रमेणप्रमेयीकरणार्थमेवस्पंदमानोनान्यस्वार्थत्वरयेतिहेतोर्नदारुणः ॥ किंचकदाचिदीषदंगघट्टनेपिपरस्परक्षमापणार्थंशिरःकराःशिरसिबद्धांजलयोयेपुरतःपार्श्वयोश्चेतित्रिषुभागेषुअवलोकनायक्षमापणायचप्रवृत्तंनयनजिह्वंयेषांतथाविधास्तेष्वेवसर्वजनेषुविराजितोनप्रमत्तनिष्ठुरजनविसंष्ठुलइतिनतत्रपरपीडादिदोषलेशस्यापिप्रसक्तिरित्यर्थः ॥ ३३ ॥

पेशलामृदुमधुराउक्तयोयेषाम् ॥३४॥ मिथःपरस्परंगुणस्पृहयातुष्टःस्निग्धःस्नेहयुक्तश्चआशयोयेषाम ॥ शक्रपुराद्देवाइवायोध्यातोलोकसप्तकवास्तव्याजग्मुः ॥३५॥ दिन क्रियामाह्निकम ॥ ३६ ॥ ३७ ॥ दैवसींदिवससंबंधिनीम ॥ ३८ ॥ प्रबोधोजागरणंतद्वशतः ॥३९॥ प्रातर्गृहसंमार्जनेनेवउत्सारितास्तमःपांसवस्ताराकुसुमनिर्भराश्चयस्मिंस्त

परस्परमथापृच्छ्यपूजिताःपेशलोक्तयः॥ राजानोमुनयश्चैवसर्वेदशरथादयः॥३४॥स्वाश्रमान्साधवोजग्मुस्तुष्टस्निग्धाशयामिथः॥ लोकसप्तकवास्तव्यादेवाःशक्रपुरादिव॥३५॥ अन्योन्यंप्रणयात्सर्वेपूजयित्वायथाक्रमम्॥ तद्विसृष्टाःस्वमागत्यगृहंचक्रुर्दिनक्रियाम् ॥ ३६॥ अथसर्वेवसिष्ठाद्यास्तथादशरथादयः॥ चक्रुर्दिवसकार्याणिराजानोमुनयस्तथा॥ ३७॥ यथाप्राप्तंक्रियांतेपुरुतवत्स्वथदैवसीम्॥ क्रमेणाकाशपथिकोभास्करोस्तमुपाययौ॥ ३८॥ तयैवकथयातेषांरामस्यचमहामतेः॥ प्रबोधवशतःशीघ्रंसाव्यतीयायशर्वरी॥ ३९॥ उत्सारिततमःपांसुताराकुसुमनिर्भरम्॥ भुवनंभवनीकुर्वन्नाजगामदिवाकरः॥ ४०॥ करवीरकुसुंभाभैःकरैररुणयन्दिशः॥ विवेशगगनांभोधिमथबालदिवाकरः॥ ४१॥ राजानोराजपुत्राश्चमंत्रिणोमुनयस्तथा॥ वसिष्ठाद्याःसमाजग्मुःपुनर्दाशरथींसभाम्॥ ४२॥ यथाक्रमंयथासंस्थंयथादेशंयथासनम्॥ साविवेशसभातत्रधिष्ण्यश्रीरंबरेयथा॥४३॥ ततोदशरथाद्येषुसुमंत्रादिषुवाप्यलम्॥ वसिष्ठंसंप्रशंसत्सुमुनिमासनसंस्थितम्॥ ४४॥ वसिष्ठस्यपितुश्चाग्रेराजीवदललोचनः॥ उवाचराघवोधीमान्मृदुवर्णमिदंवचः॥४५॥ ॥श्रीरामउवाच॥ ॥भगवन्सर्वधर्मज्ञसर्वज्ञानमहार्णव॥ सर्वसंदेहपरशोपरशोकभयापह॥४६॥ श्रोतव्यमपरंकिंमेविद्यतेवेद्यमेववा॥ श्रोतव्यंविद्यतेयद्वातत्सर्ववक्तुमर्हसि॥ ४७॥ ॥श्रीवसिष्ठउवाच॥ ॥रामसंप्राप्तबुद्धिस्त्वंश्रोतव्यंतेनविद्यते॥ कृतकृत्यातवैषाधीःप्राप्तप्राप्यास्थितात्मनि ॥ ४८॥ त्वमेवतावत्कथयप्रविचार्यधियात्मना॥ कीदृशोद्यभवानंतःकिंशेषंश्राव्यमस्तिते॥ ४९॥ ॥श्रीरामउवाच॥ ॥ब्रह्मन्नेवमहंमन्येयथाहंकृतकृत्यधीः॥ निर्वाणोस्मिप्रशांतोस्मिनाकांक्षाममविद्यते ॥५०॥ वक्तव्यमुक्तंभवताज्ञातंज्ञेयंमयाखिलम्॥ तवविश्रांतिमायातुकृतकृत्यासरस्वती॥ ५१॥

थाविधंभुवनंजगद्भवनंगृहमिवपरिष्कुर्वन् ॥ ४० ॥ ४१ ॥ ४२ ॥ धिष्ण्यश्रीर्देवधिष्ण्यभूतनक्षत्रशोभा ॥ ४३ ॥ वसिष्ठंसंप्रशंसत्सुस्तुवत्सु ॥ ४४ ॥ ४५ ॥ परेषांशत्रूणामपि शोकभयापह ॥ ४६ ॥ यदिविद्यतेतर्हितद्वक्तुमर्हसि ॥ ४७ ॥ ४८ ॥ अद्यभवान्स्वानुभवेनकीदृशः ॥ तेशिष्यतइतिशेषंश्राव्यमवश्यश्रोतव्यंकिमस्तीतित्वमेववदेत्यर्थः ॥ ४९ ॥ ५० ॥ विश्रांतिमुपरमम ॥ सरस्वतीवाणी ॥ ५१ ॥

अखिलंजगदैक्यंब्रह्मैकरस्यंविशेषेणगतंविगतम् ॥ द्वैतंजीवब्रह्मभेदः ॥ यतस्तदुपाधिभूतंदृश्यभेदावभानंपरिगलितम् ॥ तदपिकुतस्तत्राह ॥ नन्विति ॥ यतोमयासंसारिता स्थानिपुणंविचार्यअपास्तात्यक्तेत्यर्थः ॥ ५२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०त्र्युत्तरद्विशततमःसर्गः ॥ २०३ ॥ ॥ ७ ॥ ॥ निष्कृष्टयुक्त्याभूयोत्रदृश्यं चितिविमार्ज्यते ॥ वसिष्ठेनचरामेणचिदात्मपरिशुद्धये ॥ १ ॥ परमंयुक्तिसंक्षेपेणस्फुटंदृश्यमार्जनोपायोपदेशित्वादुत्कृष्टम् ॥ १ ॥ रूपंनामचेतिहिद्विविधंदृश्यंतत्राद्यमार्जनो पायमाह ॥ अर्थइति ॥ जातिगुणक्रियासंस्थानानिहिचतुर्विधानांशब्दानामर्थः ॥ यथागौर्नीलाचपलाभद्राख्येति ॥ तेचैकस्मिन्नेवार्थेव्यावर्त्यभेदाधीनभेदकल्पनरूपाःशब्द भेदप्रवृत्तिनिमित्ततयाकल्पिताभ्रांतिवेदनसंकेताएवनवास्तवाः ॥ नहित्तद्वस्तुचतुष्टयमस्तीत्यर्थमार्जनमित्यर्थः ॥ द्वितीयमार्जनोपायमाह ॥ शब्दइति ॥ अर्थेमार्जितेनिरर्थ

अधिगतमधिगम्यंज्ञेयमाप्तुंमयेदंविगतमखिलमैक्यंद्वैतमस्तंप्रयातम् ॥ परिगलितमशेषंदृश्यभेदावभानंननुनिपुणमपास्ताशेषसंसा रितास्या ॥ ५२ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० नि० उ० निर्वाणवर्णनंनामत्र्युत्तरद्विशततमःसर्गः ॥ २०३ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ भूयएवमहाबाहोश्रृणुमेपरमंवचः ॥ आदर्शोराजतेत्यर्थंपौनःपुन्येनमार्जितः ॥ १ ॥ आर्थोविदनसंकेतःशब्दो जलरवोपमः ॥ दृश्यमेतच्चिदाभानंस्वप्नवत्काभवज्जगत् ॥ २ ॥ जाग्रद्वैस्वप्नसंदृष्टःस्मरणात्मस्थितंपुरः ॥ संविद्वेदनमात्रंसत्तदन्याकार वत्ततम् ॥ ३ ॥ यथाच्छंसंविदाकाशंमयिस्वप्नपुरात्मकम् ॥ सरूपमपिनीरूपंतथेदंभुवनत्रयम् ॥ ४ ॥ ॥ श्रीरामउवाच ॥ ॥ संपन्नेयं कथंभूमिःसंपन्नागिरयःकथम् ॥ कथंसंपन्नमंभश्चसंपन्नाउपलाःकथम् ॥ ५ ॥ कथंचतेजःसंपन्नंसंपन्नाचकथंक्रिया ॥ कथंचकालः संपन्नःसंपन्नःपवनःकथम् ॥ ६ ॥ कथंचशून्यंसंपन्नंसंपन्नंचिन्नभःकथम् ॥ इतिज्ञातंमयाभूयोबोधायवदमेप्रभो ॥ ७ ॥ ॥ श्रीवसिष्ठ उवाच ॥ ॥ ब्रूहिराघवतत्त्वेनस्वप्नदृष्टमहापुरे ॥ संपन्नाभूःकथमिवसंपन्नंकथमंबरम् ॥ ८ ॥ कथंवारिचसंपन्नंसंपन्नाउपलाःकथम् ॥ कथंचतेजःसंपन्नंसंपन्नाश्चकथंदिशः ॥ ९ ॥ संपन्नश्चकथंकालःसंपन्नाचकथंक्रिया ॥ कथमेतन्निमित्तादिसर्वंसंपन्नमुच्यताम् ॥ १० ॥ केनेदंनिर्मितंदग्धमानीतंरचितंचितम् ॥ उत्पादितंप्रकटितंकिमाचारंकिमात्मकम् ॥ ११ ॥

कःशब्दोजलध्वनिसदृशःसन्नामतांत्यजन्नर्थतामेवापन्नस्तन्मार्जनेनैवमार्जितइत्येतद्विविधमपिदृश्यंचिदाभानमात्रंस्वप्नवदितिसिद्धमित्यर्थः ॥ २ ॥ यदाजाग्रदेवमिथ्यातदास्वै वस्वप्नसंदृष्टार्थःसंस्कारमुखेनसंपद्यतेतच्चस्मरणमिवआत्माअर्थशून्यरूपंपुरःस्थितमितिसंविद्वेदनमात्रमेवसत्तदन्याकारवत्ततंनतत्रापिसंविद्यतिरिक्तंकिंचिदस्तीत्यर्थः ॥ ३ ॥ त थाचोभयोस्तुल्यतयाचिदाकाशमात्रत्वमित्याह ॥ यथेति ॥ मयिप्रत्यक्षिति ॥ ४ ॥ चितिजाड्यंतत्रभूम्यादिवैचित्र्यंचकथंसंपन्नमितिप्रश्नः ॥ ५ ॥ ६ ॥ इत्येतत्सर्वंप्राक्त्वद्वच नाज्ज्ञातमपिपुनरसंभावनाशांत्याबोधाभिवृद्धयेवद ॥ ७ ॥ स्वप्नवदेवसर्वंसंभावनीयमित्याशयेनप्रतिबंधेवस्वयंप्रश्नव्याजेनवसिष्ठउत्तरमाह ॥ ब्रूहीत्यादिना ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

१ नियत्यादीतिक्वचित्पाठः

दृष्टांतवदेवदार्ष्टांतिकेपिपृथ्व्यादिसंपत्तिसंभावयन्रामःस्वयमपिजगतोमिथ्यात्वंप्रपंचयति ॥ आत्मास्येत्यादिना ॥ अस्यजगतआत्मास्वरूपंकेवलंव्योमैव ॥ १२ ॥ तर्हिकिं
शून्यरूपमेवनेत्याह ॥ आत्मैवेति ॥ कारणंप्रयोजनम् ॥१३॥ अभ्युपेत्यपृथ्व्याद्याकारसंपत्तिमिदमुक्तंवस्तुतस्तुतत्संपत्तिरपिनास्त्येवेत्याह ॥ नकिंचिदिति ॥ एतज्जगदाकारंचि
त्कचनंस्वप्नवन्मनएवतथास्थितंनान्यत् ॥ १४ ॥ मनसश्चचित्स्फुरणमात्रत्वात्तदेवसर्वमित्याह ॥ दिक्कालेत्यादिना ॥ तद्विदःसर्वंतत्त्वविदः ॥ १५ ॥ १६ ॥ १७ ॥ स्वयस्यप्र
सन्नस्याब्धेरंबुद्रवत्वादेवयथातरंगफेनावर्त्तादिनानात्वस्यात्मनाअनानैवनानासंभवेत्तथाचिद्व्योमापीत्यर्थः ॥ १८ ॥१९ ॥ चित्आत्मनिद्रवत्ववेदनाद्वारिवेत्ति ॥ एवंस्पंदतया

श्रीरामउवाच॥ ॥ आत्मास्यकेवलंव्योमनसद्भूम्यचलादिकम्॥ जगतःस्वप्नरूपस्यनिराकारोनिरास्पदः॥ १२॥ आत्मैवव्योमरूपो
स्यनिराधारोनिराकृतिः॥ विनाकृतेर्वाव्योम्नोस्यकिमाधारेणकारणम्॥ १३॥ नकिंचिदेतत्संपन्नंसद्यथैतन्नसंविदः॥ एतच्चित्कचनंना
ममनएवतथास्थितम्॥ १४॥ दिक्कालाद्यत्रचिद्भानंचिद्भानमचलादिकम्॥ चिज्जलादितथाबोधाच्चित्खंवाय्वादितद्विदः॥१५॥ संवि
देवकिलव्योमतिष्ठतिव्योमतामिता॥ दृषत्तयास्तंकाठिन्याद्द्रवाज्जलमिवस्थिता॥ १६॥ वस्तुतस्तुनभूम्यादिकिंचित्तन्नचदृश्यता॥ चि
दाकाशमनंतंतत्सर्वमेकंतदात्मकम्॥१७॥ द्रवत्वादंबुदधाब्धेर्नानावृत्तितयायथा॥ अनानैवभवेन्नानाचिद्व्योमात्मनिवैतथा॥१८॥
काठिन्यवेदनादुर्वीगिरितामागतेवचित्॥ शून्यतावेदनाच्छून्यंवेत्तिव्योमेवचिद्वपुः॥१९॥द्रवत्ववेदनाद्वेत्तिवारिस्पंदतयानिलम्॥ औ
ष्ण्यसंवित्ततोवह्निमत्यजंतीनिजंवपुः॥ २०॥ एवंस्वभावएवायंचिद्धातुर्गगनात्मकः॥ यदेवंनामकचतिनिष्कारणगुणक्रमम्॥ २१॥
नचैतद्व्यतिरेकेणकिंचिन्नापीहविद्यते॥ अन्यच्छून्यत्ववारिभ्यामृतेखार्णवयोरिव॥ २२॥ नतुचिद्गगनादन्यन्नसंभवतिकिंचन॥इदंत्व
महमित्यादितस्मादाशांतमास्यताम्॥ २३॥ त्वंयथास्मिन्गृहेकुर्वन्नग्निशैलादिकांविदम्॥ तदेवपश्यस्यवपुरेवंचिद्गगनंतथा॥२४॥
चिद्व्योमभातिदेहाभसर्गादौनतुदेहकः॥ अकारणत्वादसतश्चिदुदेतीतिचिंत्यताम्॥ २५॥ मनोबुद्धिरहंकारोभूतानिगिरयोदिशः॥
शिलाजठरवन्मौनमयंसर्वंयथास्थितम्॥ २६॥

वेदनादनिलंवेत्ति ॥ निजंवपुरधिष्ठानचिद्रूपमत्यजंतीतिविवर्त्ततादर्शिता ॥ २० ॥ निष्कारणगुणक्रममितिदृष्टसृष्टिसिद्धांतःप्रकटितः ॥ २१ ॥ यथाअर्णवस्यवारित्वादृतेअ
न्यत्तत्वंनास्ति खस्यचशून्यत्वादृते तथाएतस्माच्चिदात्मनोव्यतिरेकेणकिंचिज्जगतस्तत्त्वंनविद्यते ॥ २२ ॥ इदंत्वमहमित्यादिजगच्चिद्गगनादन्यन्नतु ॥ यतःकिंचनतद्भिन्नानसं
भवति ॥ २३ ॥ कुर्वन्स्वप्नमनोरथादिनारचयन् ॥ २४॥ यदादेहकोनास्तितदाअकारणत्वादसतोऽज्ञानाद्देहाकाराचिदुदेतिनतत्त्वतइतिचिंत्यतांविचार्यतामभिज्ञैरित्यर्थः॥२५॥
मौनमयमनिर्वाच्यमेवेत्यर्थः ॥ २६ ॥

॥ २७ ॥ स्वरूपस्यप्रकर्षेणविजृंभणंबृंहणम् ॥ २८ ॥ यथार्थसंदर्शिनिनप्रबुद्धदृष्ट्याइदंजगद्भावेनभानमप्यभानमेवचिद्व्योमैवपरमार्थः ॥ अबुद्धबुद्धेर्मूर्खस्यतुयथातथास्तु कितद्विचारेणेत्यर्थः ॥ २९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०चतुरुत्तरद्विशततमःसर्गः ॥ २०४ ॥ ॥ ७ ॥ ॥ विवर्त्तमात्ररूपेयंस्वप्नतुल्या जगत्स्थितिः ॥ नोद्भूतानस्थितानास्ताचिन्मात्रमितिवर्ण्यते ॥ १ ॥ एवंजगतःस्वप्नवद्विवर्त्तमात्रत्वंयथोक्तमभ्युपगम्यकूटस्थाद्वयचिन्मात्रेविवर्त्तोप्यसंभावितएवहेत्वभावादि तिरामःपृच्छति ॥ एवमितिद्वाभ्याम् ॥ १ ॥ २ ॥ हेत्वभावाद्धित्वयाविवर्त्तस्यानुत्पत्तिरनुत्पन्नस्यनस्थितिःस्यादितिशून्यतैवस्यादित्यापादनीयंतच्चेष्टमेवतस्येतिनिरुपपत्तिक त्वेप्रश्नहेतुःसंदेहइतिभगवानुत्तरमाह ॥ दृश्यमित्यादिना ॥ यतःस्वजंहेतुशून्यादुत्पन्नमतःशून्याधारंशून्यात्मकमेवस्यादित्यापादनीयम् ॥ खंशून्यंचपरंब्रह्मैवनान्यत् ॥ अतउ

एवंनकिंचिदुत्पन्नंनष्टंनचनकिंचन ॥ यथास्थितंजगद्रूपंचिद्ब्रह्मात्मनितिष्ठति॥२७॥ चितौयत्कचनंनामस्वरूपप्रविजृंभणम् ॥ तदेतज्ज गदित्युक्तंद्रवएवयथाजलम् ॥ २८ ॥ इदंजगद्भानमभानमेवचिद्व्योमशून्यंपरमार्थएव ॥ यथार्थसंदर्शनबुद्धबुद्धेरबुद्धबुद्धेस्तुयथात थास्तु॥२९॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०चिदाकाशैकताप्रतिपादनंनामचतुरुत्तरद्विशततमःसर्गः॥२०४॥ ॥७॥ श्रीरामउवाच॥ ॥एवंयथैतद्भगवन्स्वप्नेदृश्यंपरंनभः॥ तथैवजाग्रतीत्यत्रनचेत्संदेहजालिका॥१॥ इदंमेभगवन्ब्रूहिमहाप्रश्नमनुत्त मम्॥ कथंभवत्यदेहाचिज्जाग्रत्स्वप्नेसदेहवत्॥ २ ॥ ॥श्रीवसिष्ठउवाच॥ ॥ दृश्यंजाग्रत्यथस्वप्नेखाधारंखात्मकंखजम्॥ खंचनान्य त्परंजातुसंदेहोस्त्युपपत्तितः॥३॥ समस्तकारणाकारप्रत्यस्तमयरूपिणि॥ सर्गादावेवभूतानिसंभवंतिनकानिचित् ॥ ४॥ पृथ्व्यादिनि यतस्तेनदेहोयंनास्तिकिंचन॥ भूतान्येवकिलैतानिदेहस्तानिनसंत्यलम्॥ ५ ॥ तेनस्वप्नवदाभासमिदंपश्यतिचिन्नभः॥ स्वरूपमात्रक चनमाकारवदिवाकुलम्॥ ६ ॥ भानमाभानमात्रत्वमिदंयत्तच्चिदात्मना ॥ नभसास्वप्नशब्देनकथ्यतेजगदाकृतिः ॥ ७ ॥ यदेतद्वेदनं नामचिद्व्योमव्योमनिर्मलम्॥ एतदंतश्चितोरूपंस्वप्नोजगदितिस्थितम् ॥ ८ ॥ एतस्मिन्नेवतेनाथस्वभावकचनेतते ॥ चिद्रूपेणकृताः संज्ञाःपृथक्पृथ्व्यादिकाइमाः॥ ९ ॥

त्पत्त्यादिशून्येब्रह्माद्वैताविरोधिनिविवर्त्तेअनुपपत्तिसंदेहोनोपपद्यतइत्यर्थः ॥ ३ ॥ अनुत्पत्तिमेवोपपादयति ॥ समस्तेत्यादिना ॥ ४ ॥ कथंभवत्यदेहाचिज्जाग्रत्स्वप्नेसदेहवदि तिप्रश्नोप्यनुपपन्नः पृथ्व्याद्यभावेचतुर्विधभूतग्रामरूपदेहानामप्यसत्वादित्याह ॥ पृथ्व्यादीति ॥ ५ ॥ अतोविवर्त्तपक्षोनिर्दोषइत्याह ॥ तेनेति ॥ आकुलंमायागुणविक्षुब्ध म् ॥ ६ ॥ यत्तदाभानमात्रत्वंतदेवस्वप्नभानंसैवजगदाकृतिर्नभसाचिदाकाशरूपेणैवस्वप्नविवर्त्तंजगदादिशब्देनकथ्यते ॥ ७ ॥ तथाचवेदनांतर्भासमानंजगद्रूपंसौक्ष्म्येस्वप्नइति स्थौल्येजगदितिवेदनमेवतथास्थितमित्यर्थः ॥ ८ ॥ एवंरूपप्रपंचस्यवेदनमात्रत्वेनामप्रपंचोपिवेदनस्यैवनामभेदइतिपर्यवस्यतीत्याह ॥ एतस्मिन्नेवेति ॥ तेनरूपभेदकल्पकेन चिद्रूपेणचिदात्मना ॥ अथअनंतरम् ॥ ९ ॥

अतएवस्वप्नादिशांताव पितत्तत्त्वंभानंकदापिनशाम्यतीत्याह ॥ चिद्वानमेवेति ॥ स्वभावस्तत्त्वम् ॥१०॥ तत्सद्भावादेवतत्रबहवोविवर्त्ताःप्रवृत्ताइत्याह ॥ बाह्मइति ॥११॥ कौतु
कादेतद्ब्रह्मांडस्वरूपंश्रोतुकामोरामःप्रश्नपीठिकांरचयति ॥ सर्गाणामित्यादिना ॥ प्रोक्ताःलीलोपाख्यानभुशुंडाख्यानादौ ताउक्ताएवानुवदति ॥ काश्चिदित्यादिना ॥ एतेश्लो
काःप्राग्व्याख्याताः ॥ १२ ॥ १३ ॥ व्योमस्थगोलकाकारभूपीठाः ॥ ऊर्ध्वाधस्थानांपिपीलिकावद्भूगोलसंलग्नानांदेवासुरादीनांवयमेवोर्ध्वंवयमेवोर्ध्वमितिविविधानिश्चया
यत्र ॥ तदेवस्पष्टमाह ॥ बुघ्नाकाशादिति ॥ यतःसर्वेपांदृशाभूमेरधोदेशेप्रजाःबुघ्नाकाशात्भूमिमूलाकाशादूर्ध्वंखुराऊर्ध्वपादाःअधःशीर्षाः ॥ एवमूर्ध्वमूलाधःशाखशिखरत्वा
लंबमानानीववनान्यचलाश्चयेषु ॥१४॥ वातात्मानोवायुशरीराभूतौघाःप्राणिसमूहायासु ॥ तमोधराःसांधकाराः ॥ व्योमेवप्राणिदेहसंस्थानंयासु ॥१५॥ सकुंडाःसभांडाये

चिद्वानमेवतत्स्वप्नजगच्छब्दैःप्रकथ्यते ॥ भानंचास्याःस्वभावःखंतत्कदाचिन्नशाम्यति ॥ १० ॥ बह्व्यःसर्गदृशोभिन्नाब्रह्मैवब्रह्मखेच
ताः ॥ शून्यतानभसीवातस्तिष्ठंतिचविशंतिच ॥ ११ ॥ ॥ श्रीरामउवाच ॥ ॥ सर्गाणांकोटयःप्रोक्ताभगवन्भवताकिल ॥ काश्चिद्ब्र
ह्मांडकोशस्थाःकाश्चिदंडविवर्जिताः ॥ १२ ॥ काश्चिन्महीकोशगताःकाश्चिदाकाशसंस्थिताः ॥ तेजःकोशगताःकाश्चित्काश्चित्पवन
कोशगाः ॥ १३ ॥ काश्चिद्व्योमस्थभूपीठाऊर्ध्वाधस्थविनिश्चयाः ॥ बुघ्नाकाशादूर्ध्वखुरालंबमानवनाचलाः ॥ १४ ॥ काश्चिद्वातात्मभू
तौघाःकाश्चिन्नित्यंतमोधराः ॥ व्योमसंस्थानकाःकाश्चित्काश्चित्क्रिमिकुलाकुलाः ॥ १५ ॥ काश्चिदाकाशकोशस्थाःकाश्चिच्चोपलको
शगाः ॥ काश्चित्सकुंडकोशस्थाःकाश्चित्खेखगवत्स्थिताः ॥ १६ ॥ तासांमध्येयथाहीदंब्रह्मांडंयादृशंस्थितम् ॥ अस्माकंभगवंस्तन्मेब्रू
हितत्त्वविदांवर ॥ १७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यदपूर्वमदृष्टंवानानुभूतंनवाश्रुतम् ॥ तद्वर्ण्यतेसुदृष्टांतैर्गृह्यतेचतदुच्यते ॥ १८ ॥ इदं
तुरामब्रह्मांडमागमैर्मुनिभिःसुरैः ॥ शतशोवर्णितंतच्चज्ञातमेतत्त्वयाखिलम् ॥ १९ ॥ यथेदंभवताज्ञातमागमैर्वर्णितंयथा ॥ स्थितंतद
तदखिलंकिमन्यदिहवर्ण्यते ॥ २० ॥ ॥ श्रीरामउवाच ॥ ॥ कथमेतदिदंब्रह्मन्संपन्नंचिन्महानभः ॥ कियत्प्रमाणमेतद्वाकियत्का
लंचवास्थितम् ॥ २१ ॥

गृहमंडपादिकोशास्तत्स्थाः ॥ यथामंडपोपाख्यानेदर्शिताः ॥ १६ ॥ इदमस्माकमाश्रयभूतमिवब्रह्मांडंयादृशंस्थितंतन्मेब्रूहीतिप्रश्नः ॥ १७ ॥ नायंतत्त्वविषयस्तत्स्वज्ञानोप
योगीत्वात्प्रश्नोनापिप्रयोजनवान्प्रकृतोपयुक्तोऽपूर्वोवानापिनियतार्थः ॥ मुनिभिर्ज्योतिषसिद्धांतभेदेषुभूमिभुवनादिस्थितेरन्यथान्यथावर्णनात् ॥ तच्चोपदर्शितमेवपुरस्तादतो
मायामयेस्वप्नोपमेस्मिन्नेकतरपक्षपातेनसिद्धांतकथनेकिंचित्प्रयोजनंप्रमाणंवाऽस्तीतिमन्यमानोवसिष्ठःशास्त्रांतरस्यविषयोयंततस्त्वयाज्ञातएवेतिनप्रश्नार्हइत्येवोत्त्यासमाध
त्ते ॥ यदिति ॥ अपूर्वमानांतराविषयः ॥ तस्यैवप्रपंचोनदृष्टंनानुभूतंनवाश्रुतमितिप्रत्यक्षानुमानागमार्थत्वपरम् ॥ तदेवगुरुणासुदृष्टांतैर्वर्ण्यतेशिष्येणचश्रवणेनगृह्यतेमननेनोह्य
तेनेतरदित्यर्थः ॥ १८ ॥ शतशःअनेकधाअनेकप्रकारेणच ॥ १९ ॥ त्वज्ज्ञातप्रकारस्यैवत्वांप्रतिवर्णनंनापूर्वमितिनयुक्तमित्याह ॥ यथेति ॥ २० ॥ तर्हिब्रह्मकथंब्रह्मांडाकारं
संपन्नंकियत्कालंवाएवंस्थास्यतितद्वदेतिरामःपृच्छति ॥ कथमिति ॥ २१ ॥

नब्रह्मकदापिसाकारंसंपन्नंनापितस्यकालिकपरिच्छेदोस्तिकिंतुयावदप्रबोधंसुप्तइवस्वात्मानमेवजगदाकारमिवपश्यतीत्याशयेनोत्तरमाह ॥ अनादीत्यादिना ॥ २२ ॥ २३ ॥ तेनस्वयमेवविश्वमितिउक्तंतच्चमृषा ॥ २४ ॥ २५ ॥ चिदेकस्वभावेब्रह्मणितद्विरुद्धागिरिकाठिन्यादिस्वभावाःकथंसत्याःस्युरित्याह ॥ कठिनाइति ॥ २६ ॥ तथाचचिदेवभां तिचेतनेनतथातथास्थितेवनवस्तुतइत्याह ॥ यदिति ॥ २७ ॥ एवकारोभिन्नक्रमः ॥ अनभएवयथानभइति ॥२८ ॥ उक्तंशतशोमयेत्यर्थः ॥२९॥३०॥३१॥ प्रयातंप्रलयेन

॥श्रीवसिष्ठउवाच॥ ॥अनादिनिधनंब्रह्मनित्यमस्त्येतदव्ययम्॥ आदिमध्यांततानास्तिनाकाराःपरमांबरे ॥ २२ ॥ ब्रह्माकाशमनाद्यंतमेतदव्ययमाततम्॥ एतन्मयमिदंविश्वंविष्वगाद्यंतवर्जितम्॥ २३॥ परमस्यास्यचिद्व्योम्नःस्वयंयद्भानमात्मनि ॥ तदेतद्विश्वमित्युक्तंस्वयंतेनैवतन्मृषा॥ २४॥ पुरुषस्ययथास्वप्नपुरसंदर्शनंतथा ॥ तत्तस्यभानंपुरवत्तदिदंविश्वमुच्यते॥ २५॥ कठिनानेहगिरयोनद्रवाणिजलानिच॥ नशून्यमेतदाकाशंकालोनकलनात्मकः ॥ २६॥ यद्यथाअव्ययंयत्रस्वतःसंचेतितंचिता ॥ तत्तथातत्रचित्तत्वेअलंशैलादिवत्स्थितम्॥ २७॥ अशिलैवशिलास्वप्नेनभएवानभोयथा ॥ भवेत्तथेहसर्गादिस्वप्नेदृश्यस्थितिश्चितौ ॥ २८ ॥ अनाकारैवचिच्छांतास्वप्नवद्यत्स्वचेतनम्॥ वेत्तितज्जगदित्युक्तंतच्चानाकारमेवसत् ॥ २९॥ वायोःस्पंदोयथातस्योवातएवनिरंतरः ॥ तथेदंब्रह्मणिब्रह्मनचोदेतिनशाम्यति॥ ३०॥ द्रवत्वमंभसियथाशून्यत्वंनभसोयथा ॥ यथावस्तुनिवस्तुत्वंब्रह्मणीदंजगत्तथा ॥ ३१ ॥ नप्रयातंनवायातमकारणमकारणात्॥ नचनास्तिनवास्तीदंभिन्नंब्रह्मपदेजगत् ॥ ३२॥ नचानादिनिराभासंनिराकारंचिदंबरम् ॥ दृशःकारणमन्यस्याःक्वचिद्भवितुमर्हति ॥ ३३॥ तस्माद्यथावयविनोवयवाःस्वात्ममात्रकाः॥ तथानवयवेब्रह्मव्योम्निव्योमजगत्स्थितम्॥ ३४॥ सर्वशांतंनिरालंबंज्ञप्तिमात्रमनामयम्॥ नेहसत्तानवासत्तानचनानास्तिकिंचन॥ ३५॥ संकल्पस्वप्ननगरनृत्तवत्सर्वमाततम्॥ स्थितमेवसमंशांतमाकाशमजमव्ययम् ॥ ३६ ॥ परमचिदंबरहृदयंचित्वाद्यत्कचतिकांतममलमलम् ॥ तदिदंजगदितिकलितंतेनैवतदात्मरूपमाकल्पम्॥३७॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०सर्गकारणनिरासोनामपंचोत्तरद्विशततमःसर्गः॥२०५॥

तिरोभूतम् ॥ आयातमाविर्भूतम् ॥ ३२ ॥ ब्रह्मतुकारणत्वादियोग्यंनभवत्येवेत्याह ॥ नचेति ॥ अन्यस्याःसर्गदृशः ॥ ३३ ॥ स्वात्ममात्रकाःपृथगसंतः ॥ ३४ ॥ सर्वापलापे नेहनानेतिश्रुतिःप्रमाणमितिभावः ॥ ३५ ॥ तथाविधस्यापिप्रतिभासेदृष्टांतमाह ॥ संकल्पेति ॥ ३६ ॥ अमलंस्वच्छंकांतंस्फुरद्रूपंपरमस्यचिदंबरस्यहृदयंसारभूतंस्वरूपमेव चित्स्वभावाद्यद्यदाकारंभ्रांत्याअलंसमर्थंकचतितदेवस्वकल्पितमात्मरूपमाकल्पमाप्रलयंतेनैवजगदितिकलितंबुद्धंनान्यदित्यर्थः ॥ ३७॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेपंचोत्तरद्विशततमःसर्गः ॥ २०५॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

ब्रह्मैवसज्जगन्नास्तीत्येतन्निर्णयहेतवः ॥ कुशद्वीपेश्वरप्रोक्ताःप्रश्नाइहनिरूपिताः ॥१॥ परमार्थोब्रह्मैवपरमार्थेनस्थितः ॥ अकारणकंयज्जगद्भानंभातितत्किंचनापिनैवास्तिइति पूर्वग्रंथफलितार्थउत्तरग्रंथावतारायोपन्यस्तः ॥ १ ॥ अत्रास्मिन्नर्थेसम्यग्बोधस्यपुष्ट्यर्थमिमंवक्ष्यमाणंमहाप्रश्नंपरमन्यंशृणु ॥ २ ॥ अब्धिभ्यांसुरोदघृतोदाभ्यामुभयतोवल यवद्यामम ॥ ३ ॥ पूर्वोत्तरयोरंतरालेदिग्भागे ॥ दिङ्नामान्यंतरालेतिबहुव्रीहिः ॥ दीप्तिलक्षणज्वालावलिस्तंभैःप्रोतेअवनिनभस्तलेयत्र ॥ ४ ॥ तस्यांपुरिपूर्वेभागे ॥ ५ ॥ ज्योतिश्चक्राच्च्युतःप्रलयकालेऽर्कइव ॥ ६ ॥ ७ ॥ शून्यतयाततेविस्तीर्णेनामप्रवृत्तिनिमित्तजात्यादिरूपचतुष्टयाभावादवाच्येसर्वकारणानांबीजादीनांपृथ्व्यादीनांचसंक्षये जातेसति ॥ ८ ॥ मूलकारणमुपादानम् ॥ सहकारीणिनिमित्तकारणानि ॥ तानियदिसंतितर्हिकुतउपादानादेःकथंकेनोपायेनजातानि ॥ ९ ॥ उत्पन्नंजगच्चतत्त्वतःकिम् ॥

॥ श्रीवसिष्ठउवाच ॥ ॥ यदकारणकंभातिभानंतन्नैवकिंचन ॥ तत्तथापरमार्थेनपरमार्थस्थितोनघ ॥ १ ॥ अत्रेमंकेनचित्पृष्टोयमहं तंमहामते ॥ सम्यग्बोधस्यपुष्ट्यर्थंमहाप्रश्नंपरंशृणु ॥ २ ॥ अस्त्यब्धिभ्यामुभयतोव्यासंख्यातंजगत्त्रये ॥ कुशद्वीपमितिद्वीपंभूमौवल यवस्थितम् ॥ ३ ॥ तत्रास्तीलावतीनामहैमीपूर्वोत्तरेपुरी ॥ दीप्तिज्वालामयस्तंभप्रोतावनिनभस्तला ॥ ४ ॥ पूर्वंतस्यामभूद्राजाप्रज्ञप्ति रितिविश्रुतः ॥ अनुरक्तजगद्भूतःशक्रःस्वर्गइवापरः ॥ ५ ॥ केनचित्कारणेनाहंकदाचित्तस्यभूपतेः ॥ प्राप्तःसमीपंनभसःप्रलयार्कइव च्युतः ॥ ६ ॥ पुष्पार्घ्याचमनीयैर्मांपूजयित्वोपविश्यसः ॥ मध्येकथायांकस्यांचिदपृच्छत्प्रणयादिदम् ॥ ७ ॥ भगवन्सर्वसंहारेजातेशू न्यततेस्थिते ॥ अवाच्येपरमेव्योम्निसर्वकारणसंक्षये ॥ ८ ॥ सर्गारंभस्यभूयःस्याद्यदकिंमूलकारणम् ॥ कानिवासहकारीणिकारणा निकुतःकथम् ॥ ९ ॥ किंजगत्किंचसर्गादिकाश्चिन्नित्यंतमोधराः ॥ व्योमसंस्थार्णवाःकाश्चित्काश्चित्कृमिकुलाकुलाः ॥ १० ॥ काश्चि दाकाशकोशस्थाःकाश्चिच्चोपलकोशगाः ॥ किंचवाभूतभूतादिकुतोबुद्ध्यादयःकथम् ॥ ११ ॥ कःकर्ताकोथवाद्रष्टाकाधाराधेयता कथम् ॥ नकदाचिन्महानाशोजगतामितिनिश्चयः ॥ १२ ॥

तस्यसर्गादिप्रलयांताविकाराश्चकिम् ॥ तत्रापिकाश्चिद्भूमयोनित्यंतमोधराः ॥ काश्चिद्ब्रह्मलोकादयोव्योमसंस्थार्णवाः ॥ अरश्चण्यश्चार्णवावितिश्रुतेः ॥ काश्चिन्नरकादिभूम यःकृमिकुलैराकुलाइत्यादिवैचित्र्यंचकिम् ॥ १० ॥ आकाशकोशस्थाअंतरिक्षादिलोकाः ॥ उपलकोशगाःशिलोदरगतादैत्यदानवादिनगर्यः ॥ भूतानिपृथिव्यादीनितद्गतच तुर्विधभूतग्रामादिचतत्त्वतःकिम् ॥ तेषामाध्यात्मिकाबुद्ध्यादयश्चकिंकथंवा ॥ ११ ॥ एतेषांसर्वेषांकर्तानिर्माताकः ॥ अथकोवाद्रष्टा ॥ यदितुकर्मब्रह्मोभयकांडात्मकसम स्तवेदशास्त्रार्थाविरोधायजगतांकदाचिदपिमहानाशःप्रलयोनास्तिकिंतुतत्तत्प्राणिकर्मानुसारेणसदैवव्यवहाराःप्रवर्तंतेनकदाचिदनीदृशंजगदितिनिश्चयःसमर्थितस्तर्हियथासं वेदनंतथैवानुभूतस्यइतिप्रसिद्धेःसंवेदनंदेहादिहेतुरित्युच्येतउतान्यत् ॥ तत्राद्यपक्षेतत्संवेदनंकिमनाशंशाश्वतंकिंवाअसन्मयंनश्वरमिति ॥ यद्यनाशंतर्हिकूटस्थमेवेतिनदेहादिवि कारंस्यात् ॥ यद्विनश्वरंतर्हिनदुत्पत्तौकारणंवाच्यंतच्चदुर्वचंविनासंवेदनंतस्यासिद्धेरितिविरोधादित्युत्तरश्लोकाभ्यांसहान्वयः ॥ १२ ॥

॥ १३ ॥ द्वितीयेपिशंकते ॥ अन्यच्चेत्यादिना ॥ १४ ॥ इहकुशद्वीपादौवादेहनाशवताम् ॥ विदेहेदेहोत्पादकमातापित्रादिशून्यप्रदेशेदेहंप्रतिउपादानकारणंसहकारीणिनिमित्तकारणानिवाकानि ॥ १५ ॥ ननुधर्माधर्मावेवदेहाद्याकारेणपरिणंस्येतेतत्राह ॥ धर्माधर्माविति ॥ तस्यअमूर्त्तस्यद्वयस्यमूर्त्तताअसमंजसेत्यपकृष्यसंबंधः ॥ १६ ॥ किंचनिर्द्रव्यंअद्रव्यंद्रव्यभिन्नंतदुभयंद्रव्यैःपार्थिवादिभागैर्देहादिनिर्माणंकुरुतेइतियुक्तिरप्यसमंजसा ॥ निर्बीजत्वादप्यसमंजसमित्याह ॥ मातापित्रादीति ॥ १७ ॥ तर्ह्यस्तु नास्तिकपक्षस्तत्राह ॥ परलोकइति ॥ अस्यधर्माधर्मादिकर्त्तुःपरलोकोनास्तीतिचअसमंजसम् ॥ अस्यैवजन्मनःपूर्वजन्मापेक्षयापरलोकत्वात् अस्यचयथासंवेदनंस्थितेः ॥ १८ ॥ समस्तलोकवेदादिविरोधप्रसंगाच्चनास्तिकपक्षोनयाह्यइत्याह ॥ समस्तेति ॥ किंचेयंप्रजास्वेच्छाचेष्टाद्यविषयैरपिदेशांतरगतैरतएवासंबंधैरमूर्त्तैरपिराजाज्ञादिभि

समस्तवेदशास्त्रार्थाविरोधायसमर्थितः ॥ यथासंवेदनंनामतथानामानुभूतयः ॥ १३ ॥ यतस्ततोवेदनंस्याल्किमनाशमसन्मयम् ॥
अन्यच्चजंबूद्वीपादौदेशेद्यमुनिनायक ॥ १४ ॥ मृतानामग्निदग्धानामिहवादेहनाशिनाम् ॥ नरकस्वर्गभोगायविदेहेदेहकारणम् ॥ १५ ॥
किंतत्स्यात्सहकारीणिकारणान्यथकानिवा ॥ धर्माधर्मावमूर्त्तौद्वौतस्यामूर्त्तस्यमूर्त्तता ॥ १६ ॥ निर्द्रव्यंकुरुतेद्रव्यैर्युक्तिरित्यसमंजसा ॥
मातापित्राद्यभावोहिबीजंकिंतत्रकारणम् ॥ १७ ॥ अन्येवाहेतवःकेस्युःकथंद्रव्यादिसंभवः ॥ परलोकोस्यनास्तीतियथासंवेदनंस्थितेः ॥ १८ ॥ समस्तलोकवेदादिविरोधाच्चासमंजसम् ॥ अनिच्छितेहितैर्दूरदेशांतरगतैःफलम् ॥ १९ ॥ प्रजाप्राप्नोत्यसंबंधैरमूर्त्तैरत्र कःक्रमः ॥ स्तंभोवरेणसौवर्णोविनाहेमगमागमैः ॥ २० ॥ क्षणात्संपद्यतेतत्रसंपत्तिःकथमुच्यताम् ॥ विधीनांप्रतिषेधानांनिर्निमित्तं विवल्गताम् ॥ २१ ॥ रूढानामप्यरूढानांकिंप्रयोजनमुच्यताम् ॥ असदासीज्जगत्पूर्वंसत्संपन्नमनंतरम् ॥ २२ ॥ इतिश्रुतेःकथंब्रह्मन् कथ्यतांसंगतार्थता ॥ अयंभवेत्कथंब्रह्माभवेच्चेत्तन्महामुने ॥ २३ ॥ एवंप्रभावान्नभसःकिंसर्वस्मान्नजायते ॥ ओषधीनामथार्थानां सर्वेषांवास्थितिंगताः ॥ २४ ॥

र्वधवंधदंडादिफलंप्राप्नोतितत्रचकःक्रमःकाउपपत्तिः ॥ १९ ॥ २० ॥ किंचशिलादिमयःस्तंभोदेवमुन्यादिवरेणहेम्नःअर्जनार्थंगमनागमनैर्विनापियत्रसौवर्णःस्तंभःक्षणात्संपद्यतेतत्रापिसासंपत्तिःकथंकयाउपपत्त्या ॥ निर्निमित्तंअचेतनत्वात्प्रयोजनसिद्धिरूपंनिमित्तंविनैवप्रवल्गतांप्रवर्तमानानांविधिप्रतिषेधशास्त्राणांलोकेप्रचारेणनिरूढानांकैरप्यननुष्ठानादरूढानामपिकिंप्रयोजनम् ॥ २१ ॥ तथाअसद्वाइदमग्रआसीत्ततोवैसदजायत असदेवेदमग्रआसीत् सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयम् नासदासीन्नोसदासीत्तदानीमित्यादिश्रुतेःकथंपरस्परंसंगतार्थता ॥ २२ ॥ किंचसर्गादौशून्यान्नभसःसकाशादयंब्रह्माहिरण्यगर्भःकथंभवेत् ॥ यदिनभसएवंप्रभावताअस्तीत्युच्येततर्ह्येवंप्रभावात्सर्वस्मात्सर्वप्रदेशभिन्नात्सर्वत्रब्रह्माकुतोन्योनजायते ॥ २३ ॥ ओषधीनांस्वस्वपूर्वबीजादिजननस्वभावाअथान्येषांवह्न्यादीनामौष्ण्यादिस्वभावाश्चकथंतत्कथय ॥ २४ ॥

किंचैकस्यैवपुंसःसुहृदाद्विपाचयुगपज्जीवितंमरणंचप्रयागादौकामप्रदेक्षेत्रेमृत्वायदाअर्थितमर्थयित्वामृतम् ॥ मरणकालेतदुत्तरकालंचकामवासनानुवृत्तेर्मुखंव्यादायस्वपि
तानिवदौत्तरकालिकांशापेक्षयाकथंचिन्मरणस्यपूर्वभावंप्रकल्प्यक्त्वाप्रयोगः ॥ तत्कथंसंपद्यते ॥ २५ ॥ किंचअहंखेनभसिपूर्णेंदुःस्यामितिकामनयाचंद्रभावप्रापकोपासन
विध्यनुसारेणध्यायिभिर्बहुभिरुपासकैश्चिंतरवश्यभावित्वेनसंचिंतिस्तुल्यकालमनुप्राप्तैश्चंद्रभावफलैर्नभोयुगपत्सहस्रेंदुअनेकचंद्रसहितंकिंनजायते ॥ २६ ॥ २७ ॥ तेषांसर्वे
षांचजायाकथंसंपन्नासाचतेषांभिन्नदेशगृहेएकाकथंस्थिता ॥ साचस्वतपसापराब्रह्मचारिणीतेषांप्रत्येकंतपसासाध्वीबहुभोग्यत्वादसाध्वीचकथंसंपन्ना ॥ २८ ॥ अहंगृ
हादनिर्गच्छंनिर्गमनंविनैवआकल्पंद्वीपसप्तकेनृपःसन्गृहेतिष्ठयमितिचविरुद्धंयत्रवराच्छापाद्वासंपादितंतत्रगृहांतर्भोग्यंवरस्यवरत्वंक्वतिष्ठतिकथमुपपद्यतइत्यर्थः ॥ २९ ॥ किं

कथंस्वभावाःकथययथाबोधंमुनीश्वरः ॥ एकस्यजीवितंपुंसःसुहृदामरणंद्विपा ॥ २५ ॥ मृत्वार्थितंप्रयागादौक्षेत्रेतत्कथमुच्यताम् ॥
खेस्यामक्षयपूर्णेंदुरितिध्यायिचिंतैःफलैः ॥ २६ ॥ तुल्यकालमनुप्राप्तैःसहस्रेंदुनकिंनभः ॥ अन्यच्चध्यायिनांलक्ष्यैर्ध्यातैकास्त्रीयथाक्रमम्
॥ २७ ॥ जायात्वेनसमंकालंलब्धंध्यानफलंचतैः ॥ साध्व्यसाध्वीगृहेभर्त्तुःसंस्थितातपसापरा ॥ २८ ॥ तेषांचजायासंपन्नाकथमेतन्महा
मुने ॥ गृहानिर्गच्छमाकल्पंनृपःसद्वीपसप्तके ॥ २९ ॥ वरत्वंवरशापाभ्यामितिअंतःक्वतिष्ठति ॥ दानधर्मादितपसामौर्ध्वदैहिककर्मणाम्
॥ ३० ॥ इहस्थानाममूर्त्तानांमूर्त्तिर्गत्यास्तिसत्फलम् ॥ व्यवहर्त्तानमूर्त्तोत्रविद्यतेलोकयोर्द्वयोः ॥ ३१ ॥ देशांतरेभृशंजीवोभृशंकालां
तरेपिवा ॥ फलंसंभवतीयत्तद्विनानुभवनंमुने ॥ ३२ ॥ असमंजसमेवातिकथंस्यात्सुसमंजसम् ॥ इत्यादिसंशयगणंगिराशीतावदा
तया ॥ छिंधिमेऽभ्युदितंभासासांध्यमांध्यमिवोडुपः ॥ ३३ ॥ परमवस्तुनिसंशयनाशनाद्भवभयलोकहितंभवतिस्फुटम् ॥ तदिहमेकुरु
साधुसमागमस्तनुफलोभवतीहनकस्यचित् ॥ ३४ ॥ ॥ इ० वा० महारामायणेवा० दे० मो० निर्वा० उ० महाप्रश्नोनामषडुत्तरद्वि
शततमःसर्गः ॥ २०६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

चदानधर्मादितपसामौर्ध्वदैहिकश्राद्धादिकर्मणांचादृष्टंक्रियोत्पत्तिप्रदेशेयद्युत्पद्येतनर्हिइहस्थानांपरलोकेनच्छन्यदेशेकथंफलम् ॥ किंचादृष्टंमूर्त्तदेहादौप्रीतिजननेनसत्फलं
वाच्यम् ॥ नचतत्रत्येमूर्त्तेदेहेतत्सत्वमस्तीत्यर्थः ॥ ३० ॥ यदिब्रूयाव्यवहर्त्ताजीवस्तत्समवेतंतददृष्टंयत्रतस्यभोगस्तत्रास्तीति ॥ तन्न ॥ यतोद्वयोरपिइहलोकपरलोकयोर्व्य
वहर्त्ताजीवोमूर्त्तोनविद्यते ॥ नचात्रत्यादेहादिमूर्त्तादेशांतरेकालांतरेचविद्यते यदाश्रयेणास्यभृशंफलंसंभवतीत्यर्थः ॥ ३१ ॥ ३२ ॥ इत्याद्यसमंजसंसर्वंकथंसमंजसंस्या
त् ॥ इत्यादिसंशयगणंशीतावदातयागिराउडुपश्चंद्रःसंध्यायांभवंसांध्यमांध्यंतमइवछिंधि ॥ ३३ ॥ हेभगवन्परमवस्तुनिपरमात्मनिविषयेउपदेशेनसर्वसंशयनाशनाद्भवभय
लोकहितंविरुद्धसहस्रफलमप्यविरुद्धंस्फुटंभवतिअतस्तत्परमवस्तुबोधनंमेकुरु ॥ ननुमहाफलमिदंकथंसहसैवमयाकार्यंतत्राह ॥ साध्विति ॥ भवत्सदृशमहत्समागमस्तनुफ
लस्तुच्छफलःकस्यचिन्मादृशस्यापिनभवतीत्यर्थः ॥ ३४ ॥ ॥ इतिश्रीवासिष्ठम० ता० प्रकाशेनि० उ० षडुत्तरद्विशततमःसर्गः ॥ २०६ ॥ ॥ ७ ॥

क्रमव्युत्क्रमतःप्रश्नाःकेचिदप्रसमाहिताः ॥ समाधास्यत्यथान्यांश्चसर्गैस्त्रिभिरुदारधीः ॥ १ ॥ तत्रैकविज्ञानेनैवसर्वविज्ञानात्सर्वसंशयानांमूलोच्छेदेनपरिहारात्सामान्यतःसर्वप्रश्नसमाधानंकरिष्यामीतिप्रतिजानीते ॥ शृण्विति ॥ स्पष्टंकरतलामलकवत्स्फुटमेतदात्मतत्त्वंकथयामि ॥ १ ॥ तत्रादौस्वतःप्रमाणस्वसंवेदनानुसारिणामर्थतत्त्वव्यवस्थायांकोपिक्कापिसंशयोनुपपन्नइत्याह ॥ सर्वइति ॥ यत्रयदस्तीतिप्रत्ययोयत्रचनास्तीतितत्रोभयत्रापिसंविदैवभगवत्यातदुभयरूपसमर्थनादितिभावः ॥ २ ॥ यत्रविषयेइदंवस्तुनीलंपीतंघटःपटःअस्तिनास्तीतिवाइत्थमेवेतिअवधारणेनसंवित्तिःश्रोताव्याप्नोहेअंगतस्यविषयस्यतद्रूपमवश्यंभवत्येवतत्तुसद्वाअसदेववास्तुनतत्राग्रहइत्यर्थः ॥ ३ ॥ तत्कुतइतिचेत्संवित्तेर्यथाप्रतिभासमर्थसाधकस्वभावादित्याह ॥ ईदृगिति ॥ तथाचनरकस्वर्गभोगायविदेहेदेहकारणम् किंतत्स्यादितिप्रश्नःसमाहितइत्याह ॥ तयेति ॥ तयासंवित्त्यादेहएकएवस्वरूपेणआत्मभावेनप्रथमंविभाव्यते ॥ तेनदेहेनतस्याःसंविदोविदाअभिव्यक्तिश्चविभाव्यतेदेहस्यात्मतासंविदोदेहधर्मताचेतिवैपरीत्यमध्यस्यतइतियावत् ॥ ४ ॥

॥श्रीवसिष्ठउवाच॥ ॥शृणुराजन्यथास्पष्टमेतत्तेकथयाम्यहम् ॥ येनतेसर्वसंदेहायास्यंत्यलममूलताम् ॥ १ ॥ सर्वेतावज्जगद्भावा असद्रूपाःसदेवहि॥ सद्रूपाश्चसदैवेमेयथासंवेदनंस्थितेः॥ २॥ इदमित्थमितिप्रोतायत्रसंवित्तदेवतत् ॥ भवत्यवश्यंतत्त्वंगसदेवास्त्वसदेववा ॥ ३॥ ईदृक्स्वभावासंवित्तिस्तयादेहोविभाव्यते ॥ एकएवस्वरूपेणतस्यास्तेनचतद्विदा॥ ४॥ विदमेवविदुर्देहंस्वप्नादावितरेतरा॥ संवित्काचित्संभवतिनचान्यास्तिशरीरता॥ ५॥ आश्रितस्वप्नसंदर्शस्त्वथेदंभासतेजगत् ॥ समस्तकारणाभावात्सर्गादावन्यतात्रका॥ ६॥ एवंयदेवविमलंवेदनंब्रह्मसंज्ञितम् ॥ तदेवेदंजगद्भातितत्क्वेवजगतोन्यता॥ ७॥ एवंपूर्वापरंशुद्धमविकार्यंजगत्स्थितेः॥ लोकवेदमहाशास्त्रैरनुभूतमुदाहृतम्॥ ८॥ अपलाप्यैवयेमूढाअंधकूपकमेकवत्॥ समस्तभूतसंवित्तौरूढपूर्णमहात्मभिः॥ ९॥ वर्त्तमानानुभवनमात्रमोहप्रमाणकाः॥ शरीरकारणासंविदितिमोहमुपागताः॥ १०॥

अतएवहिजनाःस्वप्नमजाग्रतोदेहंवेत्तीतिवित्तथाविधंचेतयितारमेवविदुरनुभवंति ॥ इतरासंवित्तुइतराचेतयितुर्धर्मोनस्वयंचेतयित्रीतिविदुः ॥ अतःकाचिद्भ्रांतिरूपासंविदेवशरीरतासंभवतितदन्याशरीरतानास्तीत्यर्थः ॥ ५ ॥ आद्यप्रश्नत्रयमप्यनयैवदिशासमाधेयंजगतोपिसंवेदनबलादेवसिद्धेरित्याशयेनाह ॥ आश्रितेति ॥ सर्गादौजगदपिसमस्तकारणाभावादवश्याश्रयणीयःस्वप्नंसंपश्यतीतिस्वप्नसंदर्शःसंविदात्मैवेत्थंभासते ॥ अत्रजगतिअन्यतास्वप्नवैधर्म्यरूपाकानकाचिदपि ॥ अथवाअस्तिभातीतिप्रत्यगात्मस्वभावेनैवजगदनुभवात्तदन्यताकानकाचिदपीत्यर्थः ॥ ६ ॥ तदेवाह ॥ एवमिति ॥ ७॥ एवमविकार्यस्यब्रह्मणएवजगद्रूपेणस्थितेर्विद्वल्लोकैर्वेदैरध्यात्मशास्त्रैश्चप्रमाणैरेवमेवास्माभिरनुभूतंतद्देवोदाहृतंनान्यदित्यर्थः ॥ ८ ॥ समस्तानांभूतानांप्राणिनांसंवित्तौरूढंदृढानुभवसिद्धंसत्तात्मनासर्वत्रपूर्णंचमहात्मभिरुक्तंजगतोनित्यसंविन्मात्रत्वमपलाप्यैवयेमूढाआपातवर्तमाननामरूपमात्रानुभवनमात्रप्रमाणकाःसंतःसंविन्ननित्यास्तिकिंतुशरीरमेवकारणंयस्यास्तथाविधाजडोपादानिकाजडात्मनोगुणइतिमोहमुपागतास्तेअज्ञानैयायिकचार्वाकादयउन्मत्ताएवेतित्रयाणामन्वयः ॥ ९ ॥ १० ॥

कुतोनयोग्यास्तत्राह ॥ अक्षीवेति ॥ ११ ॥ यस्तुमूढाआस्थाबुद्धिर्यस्यनथाविधश्चार्वाकःअसौप्रपंचःप्रत्यक्षमात्रंनिष्ठाप्रमाणंयस्यतथाविधोनाप्रत्यक्षप्रमाणमस्तीतिश्रुत्यादिसि द्धंनप्राह्ममितिवक्तिसतेननिर्युक्तिनोक्ते नसर्वविरुद्धंनअभिज्ञजनकर्णकठोरत्वाच्छिलासदृशवृत्तिनास्वोक्तेनैवनिमित्तेनसर्वैर्विद्वद्भिरज्ञःकूपांधदर्दुरइतिप्रोक्तः ॥ यतोसौपूर्वापरवि चारधियंत्यक्त्वावर्त्तमानमात्रगोचरेप्रत्यक्षेस्वमत्यापशुवत्स्थितइतिद्वयोरन्वयः ॥१२॥१३॥१४॥ नचचार्वाकाद्युक्त्यासंशयानश्यंति अनुमानादिप्रमाणानभ्युपगमेनतदुक्तेर्नि र्युक्तित्वात् वेदादयस्तुगुरुमुखेनपृष्टाःसर्वसंशयोच्छेदनपुरुषार्थसिद्धिक्षमाः यतस्तेस्वानुभवान्वितांइमांमदुक्तांदृशंवदंतीत्याह ॥ वेदाइति ॥ लोकास्तत्त्वज्ञजनाः ॥ १५ ॥

उन्मत्ताएवतेज्ञास्तेयोग्यानास्मत्कथासुते ॥ अक्षीवक्षीवयोर्मूढबुद्धयोःकैवसंकथा ॥ ११ ॥ ययाविपश्चित्कथयासर्वसंशयसंक्षयः ॥ नसंवेत्त्रिपुलोकेपुज्ञेयामूर्खंकथैवसा ॥१२॥ प्रत्यक्षमात्रनिष्ठोसौमूढास्थइतिवक्तियत् ॥ तेननिर्युक्तिनोक्तेनशिलासदृशवृत्तिना ॥१३॥ प्रोक्तःसर्वविरुद्धेनसोज्ञःकूपांधदर्दुरः ॥ पूर्वापरधियंत्यक्त्वावर्त्तमानेमतिस्थितः ॥ १४ ॥ वेदालोकादयश्चैतेपृष्टाःस्वानुभवान्विताम् ॥ वदंतीमांदृशंसर्वेयथानश्यंतिसंशयाः ॥ १५ ॥ संविदेवशरीरंचेच्छवंकस्मान्नचेतति ॥ इतियस्यमतिस्तस्मैमूढायेदमिहोच्यते ॥ १६ ॥ ब्रह्मणोब्रह्मरूपस्यसंकल्पनगरंततम् ॥ इदंतावज्जगद्भानंतवस्वप्नपुरंयथा ॥ १७ ॥ तत्समस्तंसदैवेदंचिन्मात्रात्मनिरंतरम् ॥ भवत्यत्रन तेभ्रांतिःस्वेस्वप्ननगरेयथा ॥ १८ ॥ तत्रतावद्दिशःशैलाःपृथ्व्यादिनगरादिच ॥ सर्वंचिन्मयमाकाशमितितेस्वानुभूतिमत् ॥ १९ ॥ संवि द्व्योमघनंब्रह्मतत्संकल्पपुरंविराट् ॥ शुद्धसंविन्मयोब्रह्मातदिदंजगदुच्यते ॥२०॥ ब्राह्मेसंकल्पनगरेयद्यत्संकल्पितंयथा ॥ तथानुभूयतेतत तत्त्वत्संकल्पपुरेयथा ॥ २१ ॥ संकल्पनगरेयद्यद्यथासंकल्प्यतेतथा ॥ तत्तथास्त्येवचतदात्वत्संकल्पपुरेयथा ॥२२॥ तस्माद्देहस्यनियतौ यथैतौब्रह्मणाचिता ॥ स्पंदास्पंदौकल्पितौद्वौसतथैवानुभूतवान् ॥ २३ ॥ महाप्रलयपर्यंतेपुनःसर्गःप्रवर्त्तते ॥ समस्तकारणाभावाद्द्रव्यं तावन्नविद्यते ॥ २४ ॥

यदिप्रत्यगात्मसंविदेवदेहादिजगत्तर्हिशवंमृतशरीरमपिसंवित्त्वात्कुतोनचेततीतिमतिःशंकायस्यतस्मैमूढायशुश्रूषवेइदमुच्यतेशृणु ॥ १६ ॥ ब्रह्मरूपस्यहिरण्यगर्भवपुषस्यब्रह्मण इदंजगद्रूपंभानंसंकल्पनगरंततंविस्तृतम् ॥ १७ ॥ तद्वस्तुतोनिरंतरंचिन्मात्रात्मैवतथापिअत्रतेस्वेस्वप्ननगरेचेतनभ्रांतिर्यथानतथाशवादिजडेपिनेतिबोध्यमित्यर्थः ॥ १८ ॥ त त्स्वस्वप्नेस्वानुभूतिमत्विचारेस्वानुभवसिद्धम् ॥ १९ ॥ तद्वज्जगत्यपिचिन्मयत्वंसंभावनीयमित्याह ॥ संविदिति ॥ ब्रह्माहिरण्यगर्भः ॥ विराड्ब्रह्मांडशरीरम् ॥ तत्तादृशमेवेदं जगच्छुद्धसंविन्मयमित्यर्थः ॥ २० ॥२१॥ २२ ॥ देहस्यजीवतएवस्पंदोमृतस्यत्वस्पंदइतिनियतौस्पंदास्पंदौब्रह्मणाहिरण्यगर्भरूपयाचितायथाकल्पितौतथैवसत्यमनुभूतया त्वंविपरीत्येनेतिशवेनचेतनताव्यंजकस्पंदप्रसक्तिरित्यर्थः ॥ २३ ॥ निर्द्रव्यंकुरुतेद्रव्यैर्युक्तिरित्यसमंजसेतिप्रश्नंसमाधातुंतदाशयंपरिष्करोति ॥ महाप्रलयेतिसार्द्धेन ॥ २४ ॥

ननुपूर्वप्रजापतिनिर्मितंद्रव्यमत्रोपयोक्ष्यतेतत्राह ॥ विमुक्तत्वादिति ॥ पूर्वप्रलयात्पूर्वमेवपूर्वप्रजेशस्यविमुक्तत्वात्तत्कृतजगतोनिःशेषप्रलयादित्यर्थः ॥ अतस्तत्प्रकारस्मृत्यादिनिमित्तकारणान्यपिनसंतीतित्वदाशयइतिभावः ॥ अयंचत्वदाशयोस्मत्सिद्धांतसिद्धावनुकूलएवेतिसमाधत्ते ॥ ब्रह्मैवेति ॥ दीप्तिःस्वयंज्योतिर्ब्रह्मैवजगदितिभासतेनद्रव्यरूपंजगदन्यदस्तीत्यर्थः ॥ २५ ॥ तदेवस्पष्टयन्नुपसंहरति ॥ तस्मादिति ॥ ब्रह्मणाप्रथमंआद्योहिरण्यगर्भस्तदात्मनाभातम् ॥ भावेक्तः ॥ ततस्तेनस्वयमेवसंकल्पनगरंजगद्बुद्धंच ॥ २६ ॥ २७ ॥ एतेनमातापित्राद्यभावेपीतिप्रश्नोपिसमाहितइत्याह ॥ शरीरमिति ॥ २८ ॥ मरणानंतरंजगद्दर्शनेप्ययमेवन्यायोवोध्यइत्याह ॥ तस्मादिति ॥ २९ ॥ आप्र

विमुक्तत्वात्प्रजेशस्यनचसंभवतिस्मृतिः ॥ ब्रह्मैवेयमतोदीप्तिर्जगदित्येवभासते ॥ २५ ॥ तस्मादाद्यात्मनाभातंस्वमेवब्रह्मणास्वतः॥ जगत्संकल्पनगरमितिबुद्धंचखेनखम् ॥ २६ ॥ यथासंकल्पनगरंचिन्मात्रंभातिकेवलम्॥ तथैवाकारणंभातिचिन्मात्रोन्मेषणंजगत् ॥ २७॥ शरीरमस्तुवामास्तुयत्रयत्रास्तिचिन्नभः॥ वेत्त्यात्मानंतत्रतत्रद्वैताद्वैतमयंजगत् ॥ २८ ॥ तस्माद्यथास्वप्नपुरंयथासंकल्पपत्तनम्॥ तथापश्यतिचिद्व्योममरणानंतरंजगत् ॥ २९ ॥ अपृथ्व्यादिमयंभातिपृथ्व्यादिमयवज्जगत्॥ यथेदमाप्रथमतोमृतस्याप्यखिलं तथा॥ ३० ॥ देशकालौनसर्गेणप्रबुद्धस्येवतौयथा॥ अणुमात्रमपिव्याप्तौतथैवपरलोकिनः ॥ ३१ ॥ इदंप्रबुद्धविपर्येस्वानुभूतमपि स्फुटम्॥ जगन्नविद्यतेकिंचित्कारणंगगनेयथा॥ ३२॥ अप्रबुद्धस्यासदेवयथेदंभातिभासुरम् ॥ तथैवसर्गवद्भातिव्योमैवपरलोकिनः॥ ३३॥ ध्रुधराद्रियमाद्याढ्यंखमेवपरलोकिनः॥ अभूतपूर्वमाभातिभूतपूर्ववदाततम् ॥ ३४ ॥ मृतोयंपुनरुत्पन्नोयमलोकेशुभाशुभम्॥ भुंजेहमित्यतिघनंमृतोभ्रांतिंप्रपश्यति॥ ३५॥ मोक्षोपायानादरिणामेषमोहोनशाम्यति॥ बोधादवासनत्वेनमोहएषप्रशाम्यति॥ ३६॥ अप्रबुद्धस्ययासंवित्साधर्माधर्मवासना॥ खएवखात्मिकाभातियत्तदेवजगत्स्थितम् ॥ ३७॥

थमतःआदिसर्गे ॥ ३० ॥ यथाप्रबुद्धस्यतत्त्वविदःस्वमात्प्रबुद्धस्यवास्वाप्नदेशकालौजाग्रत्सर्गेणअणुमात्रमपिनव्याप्तौतथापरलोकप्राप्तस्यापिनैहिकदेशकालौतत्रव्याप्तुतइत्यर्थः ॥ ३१ ॥ एवंतत्त्वविद्विपर्येजगदपिनव्याप्नोतीत्याह ॥ इदमिति ॥ ३२ ॥ अप्रबुद्धस्यनिद्राणस्य ॥ व्योमचिद्व्योमैव ॥ ३३ ॥ भूतपूर्ववत्पूर्वसिद्धवत् ॥ ३४ ॥ अयमहंमृतःपुनर्नारकिभावेनोत्पन्नोयमलोकेआगतस्तत्रशुभाशुभंभुंजेइत्यादिभ्रांतिम् ॥ ३५ ॥ साभ्रांतिर्निःशेषंमोक्षोपायसेवनादेवनश्यतिनान्यथेत्याह ॥ मोक्षेति ॥ ३६ ॥ एतेनधर्माधर्मावेवजगदाकारेणपरिणमेतेइत्यास्तिकपक्षोप्यनुगृहीतइत्याशयेनाह ॥ अप्रबुद्धस्येति ॥ संविद्विहितनिषिद्धाचरणानुभवरूपाः ॥ ३७ ॥

जगत्स्वरूपंस्वतःशून्यरूपमपिनसत्स्वरूपंचनकिंतुब्रह्माभिधंचैतन्यमेवजगत्स्वरूपंभाति ॥ तच्च अज्ञानवशादेवानर्थंभूतंपरिज्ञातवतस्तुशिवात्मपरमकल्याणनिरतिशयानंदात्मक
मेवेत्यर्थः ॥ ३८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेसप्तोत्तरद्विशततमःसर्गः ॥ २०७ ॥ ॥ ७ ॥ ॥ दूरदेशगतैर्यत्तैरन्यत्रापिप्रजाफलम् ॥
यथाप्राप्नोतितादृक्षाधातुरिच्छात्रवर्ण्यते ॥ १ ॥ अनिच्छतेहितैर्दूरदेशांतरगतैःफलम् प्रजाप्राप्नोत्यसंबद्धैरमूर्त्तैरन्यकःक्रमइतिप्रश्नस्योत्तरंश्रावयितुंप्रतिजानीते ॥ शुभाशुभ
मिति ॥ अप्रतिघैरमूर्त्तैः ॥ १ ॥ यद्यस्माद्धेतोर्ब्रह्मैवाज्ञानादृश्यबोधेनदृश्यंब्रह्मबोधतश्चब्रह्मैवभवतितस्मादिदंजगत्ब्रह्मसंकल्पनगरमितितावत्स्थितम् ॥ २ ॥ किंततस्तत्रा
ह ॥ यद्यदिति ॥ ३ ॥ ततोपिकितत्राह ॥ एवमिति ॥ यथातेतवअस्मिन्संकल्पमयेगृहेयेयंप्रजाएवंत्वत्संकल्पानुसारिणीसंपन्नातथैवब्रह्मसंकल्पसंपन्नेजगत्यपिइयंप्रजाब्रह्म

नशून्यरूपंनचसत्स्वरूपंब्रह्माभिधंभातिजगत्स्वरूपम् ॥ तच्चापरिज्ञानवशादनर्थंभूतंपरिज्ञातवतःशिवात्म ॥ ३८ ॥ ॥ इ०वा०महा
रामायणेवा०दे०मो०नि०उ०महाप्रश्नोत्तरंनामसप्तोत्तरद्विशततमःसर्गः ॥ २०७ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शुभा
शुभंयथोदेतिप्रजानांगृहसंगमे ॥ असंबद्धैरप्रतिघैर्दूरस्थैस्तदिदंशृणु ॥ १ ॥ ब्रह्मसंकल्पनगरंजगत्तावदिदंस्थितम् ॥ यदृश्यंदृश्यबोधे
नब्रह्मैवब्रह्मबोधतः ॥ २ ॥ यद्यत्संकल्पनगरेयदासंकल्प्यतेयथा ॥ तथानुभूयतेतत्तत्तादृग्विरचनंतदा ॥ ३ ॥ एवमस्मिन्गृहेयातेसंपन्नै
वमियंप्रजा ॥ एवंसंकल्पसंपन्नेजगत्येवंभवत्यलम् ॥ ४ ॥ एतत्त्वसंकल्पपुरेयादृशंतेतथास्थितम् ॥ यथासंकल्पयसियत्तत्तथाकिलप
श्यसि ॥ ५ ॥ यथैववरशापाभ्यांशुद्धसंविदवाप्यते ॥ संवित्तथैवभवतिब्राह्ममेवेतिकल्पनम् ॥ ६ ॥ प्रजाविधिनिषेधाभ्यामेकयास्था
व्यवस्थया ॥ तथैवफलमाप्नोतिब्राह्ममेवेतिकल्पनम् ॥ ७ ॥ देहिनोयेजगत्यस्मिंस्तान्प्रत्यनुपलंभतः ॥ असदासीज्जगत्पूर्वंसत्यमित्युप
लभ्यते ॥ ८ ॥ चिद्रूपब्रह्मसंकल्पवशादेवैतदंगसत् ॥ चिदुन्मेषनिमेषौयौतावेतौप्रलयोदयौ ॥ ९ ॥ ॥ राजोवाच ॥ ॥ किंनोपलभ्यते
पूर्वंकिंपश्चादुपलभ्यते ॥ जगच्चलद्वपुरिदंसुस्थिरारंभभास्वरम् ॥ १० ॥

संकल्पानुसारिण्येवभवतीत्यर्थः ॥ ४ ॥ तदेवस्पष्टमाह ॥ एतदिति ॥ ५ ॥ यत्तुजगत्यस्मत्संकल्पनगरवैलक्षण्यमनुभूयतेतत्रवरशापसंकल्पसिद्धवद्बोध्यमित्याशयेनाह ॥ य
थैवेति ॥ मुनीनांयमनियमादिनिषेवणशुद्धासंविद्वरशापाभ्यांयथाव्यवहारक्षमाअवाप्यतेब्रह्मसंविदपितथैवभवतीत्यर्थः ॥ यद्वरशापाभ्यांभवतितदपिब्रह्मणैवतपस्विनांवर
शापाःसिद्धंत्विति कल्पनाद्ब्राह्ममेवसत्यसंकल्पनंबोध्यमित्यर्थः ॥ ६ ॥ प्रकृतेप्रजाविधिनिषेधशास्त्राभ्यांबोधितयोर्धर्माधर्मयोर्मध्येएकयाआस्थाव्यवस्थयातत्फलंयदाप्नोतितद
पिब्राह्ममेवेत्येवंविधंसंकल्पनमित्यर्थः ॥ ७ ॥ ८ ॥ असतोजगतःकिंचित्कालंसत्वेनभानमपिब्रह्मसंकल्पवशादेवेत्याह ॥ चिद्रूपेति ॥ हेअंगएतज्जगत् ॥ ९ ॥ यदिजगत्ब्रह्मसं
कल्पवशात्सत्तर्हिपूर्वंसुषुप्तिप्रलयोःकिंकुतोनोपलभ्यते पश्चाज्जाग्रत्सर्गकालयोःकिमर्थमुपलभ्यतेचलद्वपुःसदाविक्रियमाणमिदंजगत्सुस्थिरारंभवद्भास्वरंभासमानंकिंकथ
मित्यर्थः ॥ १० ॥

मायिकस्यास्यस्वभावएवेदृशइत्युत्तरमाह ॥ अस्मिन्निति ॥ सर्गेस्वप्नजाग्रतोर्भूत्वाप्रलयसुषुप्तिमोक्षेपुनर्भवत्येवेतियदसावीदृशोभावःस्वभावएव ॥ ११ ॥ बालसंकल्पपुरादौ यावत्संकल्पभ्रांतिकालमात्रावस्थाननियमदर्शनेनसदसद्रूपत्वावधारणाद्वातस्यतथात्वमित्याह ॥ बालेति ॥ १२ ॥ जगत्संकल्पयिर्ब्रह्मवतत्प्रलयस्यापिसंकल्पनाद्वातथात्वमित्याह ॥ त्वमिति ॥ अन्यसंविद्वशतस्तत्प्रलयसंकल्पवशतआकारांतरसंकल्पवशतश्चयथायंतेस्वःस्वभावस्तथाचिद्व्योमसंकल्पपुरेतस्यब्रह्मणोविमलंस्वभावकचनमितिपरेणान्वयः ॥ १३ ॥ १४ ॥ अतस्त्रिजगन्नभःसंविद्घनमात्रंसदनाद्यंतंव्योमब्रह्माकाशमेवयतःस्वयमेवजगत्तेनहेतुनाअसौपरमेश्वरोयद्यच्चेततिकरोत्यपिचतत्सर्वमनावरणस्यास्यसत्यसंकल्पबलाद्योजनानांशतेष्वपिबहुभिर्युगैरपिव्यवहितंपुण्यपापादिकर्मपरलोकादिषुसमीपेवर्त्तमानवत्स्वर्गनरकभोगैश्वर्यादिकार्यकृद्भवतीत्यर्थः ॥ १५ ॥ १६ ॥ बहिर्देशकालव्य

श्रीवसिष्ठउवाच ॥ ॥ अस्मिंश्चिद्व्योमसंकल्पपुरस्थेभावईदृशः ॥ यद्भूत्वानभवत्येवपुनर्भवतिचक्षणात् ॥ ११ ॥ बालसंकल्पपुरवद्व्योमकेशोंड्रकादिवत् ॥ किलैतेसदसद्रूपाभ्रांतिसर्गाश्चिदात्मनि ॥ १२ ॥ त्वंसंकल्पपुरंकृत्वाविनाशयसितत्क्षणात् ॥ स्वतोन्यसंविद्वशतः स्वस्वभावःसतेयथा ॥ १३ ॥ चिद्व्योमकल्पनपुरेयदुन्मज्जनमज्जनम् ॥ स्वभावकचनंतस्यतद्विद्धिविमलंतथा ॥ १४ ॥ संविद्घनस्त्वनाद्यंतव्योमैवत्रिजगन्नभः ॥ तेनासावद्ययन्नामकरोत्यपिचचेतति ॥ १५ ॥ तदनावरणस्यास्ययोजनानांशतेष्वपि ॥ युगैरपिस्वप्नइवकार्यकृद्वर्तमानवत् ॥ १६ ॥ किलदेशांतरेनित्यमथलोकांतरेपिच ॥ निरावृतोयएकात्मासकिंनामनचेतति ॥ १७ ॥ यथामणौप्रकचतिप्रोन्मज्जननिमज्जने ॥ परावर्त्तःस्वभासास्यचिन्मणौजगतांतथा ॥ १८ ॥ विधीनांप्रतिषेधानांलोकसंस्थाप्रयोजनम् ॥ सैवसंविदिरूढत्वात्प्रेत्यापिफलदास्थिता ॥ १९ ॥ नकदाचनयात्यस्तमुदेतिनकदाचन ॥ ब्रह्मब्रह्मचिदाभानंसर्वदात्मन्यवस्थितम् ॥ २० ॥ यथातुद्रष्टृदृश्यत्वात्कल्पनाकल्पनापुरम् ॥ स्वयंजगदिवाभातिजातमित्युच्यतेतथा ॥ २१ ॥ यदास्वभावात्कचनंसंहृत्यात्मनितिष्ठति ॥ ब्रह्मचिद्गगनैकात्माशांतइत्युच्यतेतदा ॥ २२ ॥ कचनाकचनेयस्यस्वभावोनिर्मलोक्षयः ॥ यथैतावात्मनोनान्यौस्पंदास्पंदौनभस्वतः ॥ २३ ॥

वधानेकर्मतत्फलोभयाध्यासाधिष्ठानभूतोनिरावरणोयएकात्मातत्रोभयोःसदैवसन्निधानात्किंनामकर्मफलंसजीवोनचेततिसर्वंचेतत्येवेत्यर्थः ॥ १७ ॥ यथाप्रकचतिमणौस्वभासैवकांतिविशेषस्यप्रोन्मज्जननिमज्जनेअनुभूयेतेतथाचिन्मणौजगतांसृष्टिप्रलयात्मकोनानाकर्मफलवैचित्र्यभोगात्मकश्चस्वभासास्यपरावर्त्तनंपरावर्त्तोनुभूयतइत्यर्थः ॥ १८ ॥ विधिप्रतिषेधशास्त्रसाफल्यप्रयोजिकालोकसंस्थैवब्रह्मणिनिरूढत्वाद्दूरस्थकर्मणामपिफलंकल्पयतीत्याह ॥ विधीनामिति ॥ प्रेत्यमृत्वापरलोकंगत्वास्थितस्येतिशेषः ॥ १९ ॥ वस्तुतस्तुजन्ममरणेएवात्मनोनस्तःकिंत्वस्यस्वात्मनैवभ्रांत्यातत्कल्पनमित्याह ॥ नकदाचनेति ॥ २० ॥ तथाजातंजन्मापिउच्यतेवाचाव्यपदिश्यतेनतुवस्तुतइत्यर्थः ॥ २१ ॥ तथामरणमपिपूर्वदेहादिभ्रांतिकचनोपसंहारएवनान्यदित्याह ॥ यदेति ॥ शांतोमृतइत्युच्यतेजीवइत्यर्थः ॥ २२ ॥ दृश्याकारकचनाकचनेचाज्ञानोपहितचितःस्वभावएवेत्याह ॥ कचनेति ॥ २३ ॥

मणिमंत्रौपधीनांप्रभावविशेषाअपिब्रह्मणःसत्यसंकल्पस्वभावाएवतथोदिताइतिसदृष्टांतमाह ॥ जरेतिद्वाभ्याम ॥ २४ ॥ २५ ॥ तर्हिकिमीश्वरःप्रतिक्षणंप्रतिवस्तुशक्तिकार्या दिभेदान्संकल्पयिताकल्प्यतेनेत्याह ॥ नसंकल्पयितेति ॥ प्रतिवस्तुप्रतिक्षणमीश्वरोनसंकल्पयिताकल्प्यतेकिंनुबालःक्रीडनकान्यंत्रविशेषानिवसकृदेवसंकल्पयत्येतज्जातीयमे तज्जातीयकार्यकृद्भवतुतच्चतज्जातीयमित्थमुत्पद्यतामिति ॥ तद्वशादेवबीजांकुरादिक्रमेणपूर्वंपूर्वंतृणमुत्तरोत्तरतृणंकल्पयति ॥ २६ ॥ आशुक्षणेनैवयद्यत्संकल्पयतितत्रतेतेपदा र्थाःसदवयवाः ॥ शक्तिकार्यादिभेदाअपिशब्दात्कार्यपरंपराश्वसकृत्संकल्पादेवसिद्धांतील्येपांचिद्घनस्यस्वभावः ॥ २७ ॥ तेसंकल्पकल्पितपदार्थाआत्मनास्वभावेननानात्मकत यास्थिताअपिप्रथमानस्वभावंचिदेकात्मतयाभांतिएवंस्वतोनानाकारस्वभावाअपिसद्रूपेणएकसारास्तिष्ठंति ॥ २८ ॥ तत्रतेपुपदार्थेपुप्रत्येकमात्मनिब्रह्मचिन्मात्रताअस्ति य तःसैवचित्सर्वात्मिकायत्रयथाआस्तेतत्रतथाभातीत्यर्थः ॥२९॥ एवमनादिमध्यांतमनंतवीर्यमपरिच्छेद्यशक्तिकंब्रह्मकिंचिन्नकिंचिच्चस्थितमसत्यंसदपिस्थितम् ॥ सत्यंचानृतं

जरांमरणहंतृणिक्षणान्यत्रपृथक्पृथक् ॥ भवंत्वितियथैतानिसंतित्वत्कल्पनापुरे ॥ २४ ॥ ब्रह्मसंकल्पनगरेस्वभावाउदितास्तथा ॥ ओ षधीनांपदार्थानांसर्वेपांचजगत्त्रये ॥ २५ ॥ नसंकल्पयिताराजन्संकल्पनगरेस्वयम् ॥ तृणंतृणंकल्पयतिबालःक्रीडनकानिव ॥ २६ ॥ स्वयंस्वभावएवैपचिद्घनस्यास्यसुस्फुटम् ॥ यद्यत्संकल्पयत्याशुतत्रतेऽवयवाअपि ॥ २७ ॥ चिदात्मकतयाभांतिनानात्मकतयात्मना ॥ अप्येकसारास्तिष्ठंतिनानाकारस्वभावगाः ॥ २८ ॥ प्रत्येकंकिलतत्रास्तिब्रह्मचिन्मात्रतात्मनि ॥ सर्वात्मिकासायत्रास्तेयथातंभातित त्तथा ॥ २९ ॥ अनादिमध्यांतमनंतवीर्यंकिंचिन्नकिंचिच्चसदप्यसत्यम् ॥ स्थितंयथायत्रतदात्मतत्रसर्वात्मभूर्भूततृणादिजातौ ॥ ३० ॥ इ॰ वा॰ महारामायणेवा॰ दे॰ मो॰ नि॰ उ॰ महाप्रश्नमोक्षणेअष्टोत्तरद्विशततमःसर्गः ॥ २०८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एकस्यजी वितंपुंसःसुहृदामरणंद्विपा ॥ मृत्वार्थितंप्रयागादौक्षेत्रेयत्तदिदंशृणु ॥ १ ॥ क्षेत्राणामर्थधर्माणांसर्वेपांप्रतितंफलम् ॥ ब्रह्मणाकल्पि तंसर्गेस्वकेसंकल्पपत्तने ॥ २ ॥ यत्रपुण्यंयदर्थंचक्षेत्रंताभ्यांतथाकृतम् ॥ यदितद्विनियोज्यस्यतस्यान्नमतिनिष्कृतान् ॥ ३ ॥

चसत्यमभवदितिश्रुतेः ॥ यतस्तत्सर्वात्मभवतीतिसर्वात्मभूःअतोभूतेपुप्राणिपुतृणादिजातौचयत्रयद्वस्तुयदात्मयत्स्वभावंप्रसिद्धंतत्रस्वयमेवतत्स्वभावंभूत्वास्थितमित्यर्थः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम॰ तात्पर्यप्रकाशेनि॰ उ॰ अष्टोत्तरद्विशततमःसर्गः ॥ २०८ ॥ ॥ ५ ॥ ॥ युगपद्भोगसंप्राप्तौविरुद्धफलकर्मणाम ॥ अविरोधेनसाफल्यमिह युक्त्याप्रसाध्यते ॥ १ ॥ प्रश्नश्लोकमेवप्रश्नानुवादार्थमुच्चार्यतेपामक्षराणांविनिमयेनतत्समाधिंश्रावयति ॥ एकस्येति ॥ १ ॥ तंवक्ष्यमाणमधिकारिणंप्रतिक्षेत्रादीनांसर्वेपांफ लंब्रह्मणाकल्पितंसंकल्पेनसमर्थितमादिसर्गे ॥ २ ॥ यत्रसंकल्पपत्तनेयदर्थंयस्याधिकारिणोवांछितार्थसिद्ध्यर्थंकामप्रदंप्रयागादिक्षेत्रंतत्रानुष्ठितंस्नानदानतपोयज्ञादिपुण्यंतथा ताभ्यांकृतंसंस्कृतंशरीरंचयदिशास्त्रविनियोज्यस्यपुरुषस्यास्तितदातस्यपुरुषस्यनिष्कृतादवश्यमत्रमदिष्टंफलंभविष्यतीतिनिश्चित्यकृतास्ययागमरणादेःसकाशात्तत्कामितंफल मुन्नमत्याविर्भवत्येवेत्यर्थः ॥ ३ ॥

अस्तुकृतपुण्यस्यैवंपातकिनस्तुश्रद्धावतःप्रयागमरणादिपुण्यंकिंकरोतितत्राह ॥ तदिति ॥ तस्मात्प्रयागादिमरणादुत्पन्नंततोमहतोब्रह्महत्यादेःपापादेकभागमखिलंसंपूर्णमेनःपापंवाक्षेत्रमाहात्म्यतारतम्यानुसारेणपरिभ्राम्यनिरस्यस्वयमप्युपशाम्यति ॥ धर्मेणपापमपनुदतीत्यादिश्रुतेरितिभावः ॥ ४ ॥ विनेयस्यशास्यस्यपुंसःपापमल्पंचेत्ततःक्षेत्रार्जितोधर्मोऽधिकश्चेन्निःशेषंतत्पापंनाशयित्वातच्छब्देश्रुत्यादिप्रतिपादितेफलेअंशेनविवल्गति ॥ काम्यफलमपिकिंचित्साधयत्येवेत्यर्थः ॥ यत्रतुविनेयस्यशास्यस्यपुंसःक्षेत्रार्जितेनधर्मेणसमबलंपापमस्तितत्रतुल्यबलत्वादेवतेनधर्मेणअपनेतुमशक्यस्यास्यपापस्यपुण्यस्यचभोगायद्वेशरीरेतयोश्चद्वेविदौचिदाभासौभ्रांतिप्रतिभात्मिकेकचतः ॥ ६ ॥ यद्यथाब्रह्मसंकल्पकचितंतत्तत्तथैवव्यवस्थितमित्यर्थः ॥ ७ ॥ ब्रह्मसंकल्पकचितमित्यर्चाकितद्ब्रह्मकथंवातत्संकल्पकचितंजगत्तदाह ॥ ब्रह्मेति ॥ सएवाजजादिसमष्टिजीवाअहमादिव्यष्टिजीवाश्च सयथासंकल्पयन्नास्तेव्यष्टिसमष्ट्युपाधौतस्यसंकल्पनंजगदपितत्तथास्तेइत्यर्थः ॥ ८ ॥ धातुःसंकल्पानुसारेणैवविनेयस्यक्षेत्रार्जितपुण्यानुसारेणत

तत्तस्मान्महतःपापाद्भागमेनोखिलंचवा ॥ चितिशक्त्यात्मतत्पुण्यंपरिभ्राम्योपशाम्यति॥४॥ विनेयपापमल्पंचेत्क्षेत्रधर्मोधिकस्ततः॥
तत्पापंनाशयित्वातच्छब्दएवविवल्गति ॥ ५ ॥ क्षेत्रधर्मेणतेनास्यविनेयस्यमहीपते ॥ द्वेशरीरेविदौसम्यक्कचतःप्रतिभात्मिके ॥ ६॥
इत्येवमादिपापानांपुण्यानांचफलंमहत् ॥ ब्रह्मसंकल्पकचितंयथायद्यत्तथैवतत् ॥ ७ ॥ ब्रह्मोच्यतेसौचिद्धातुःसोब्जजाद्यहमादिच ॥
सयथास्तेतथातत्तत्तस्यसंकल्पनंजगत् ॥ ८ ॥ प्रतिभैवविनेयस्यक्षेत्रपुण्येनतादृशी ॥ तथैवोदेतिसाधातुर्विपरीतवतोयथा ॥ ९ ॥
एकात्मनाहमद्यैषमृतोमीममबंधवः॥ रुदंतीमेपरंलोकंप्राप्तोयमहमेककः॥ १०॥ बंधूनामपितत्रैवतद्देवास्यतथैवच ॥ प्रतिभातादृशी
वेतिधातुक्षोभवतामिव ॥ ११ ॥ अत्युग्रैःपुण्यपापैःस्वैर्वामहात्मभिरीक्षिते ॥ लक्ष्याण्यप्यन्यथासंतिनृणांचित्कल्पनावशात् ॥ १२ ॥
अचेतनंशवीभूतंतेपिपश्यंतितंमृतम् ॥ रुदंतितंचदहनेक्षिपंतिसहबांधवैः॥ १३॥ विनेयःसयथान्येनसंविद्रूपेणदेहिना ॥ जरामरण
मात्मानंवेत्तिस्थितमदुःखितम्॥१४॥

रफलभोगात्मिकाप्रतिभैवस्वमवदुदेति ॥ यथापुण्यविपरीतपापवतोनरकादिप्रतिभोदेतितद्वत् ॥ ९ ॥ कीदृशीकीदृशीप्रतिभोदेतितामुल्लिख्यदर्शयति ॥ एकात्मनेति ॥ अहमद्यएकएवात्मनामृतः अमीममबंधवःसर्वेजीवंतिमदर्थेरुदंतीमे ॥१०॥ एतदीयंमरणमिवबंधूनामपिअस्यतत्रप्रसिद्धंरोदनशवनिर्हरणश्मशानगमनदाहादिकंसर्वमपिधातुक्षोभवतांसन्निपातक्षुब्धवातपित्तादिधातुमतांपुंसामिवतादृशीप्रतिभैवेतिबोध्यम् ॥ तादृशाइतिकन्तांतादाप्छांदसः ॥ ११ ॥ यदात्वत्युत्कटानिपुण्यानिपापानिवास्यसंतितदातैःस्वैरवक्षुब्धैर्महात्मभिर्निग्रहानुग्रहदृष्ट्याईक्षितेसतिवाक्षुब्धैःपरैर्लक्ष्याणिअन्यथापरैरलक्ष्याण्यपिवातत्फलानिशरीरादीनिचित्कलनावशात्संतिभवंतीत्यर्थः ॥ १२ ॥ तेजनाअपिकेचिदत्युत्कटैःपुण्यपापैस्तंविनेयंमृतंपश्यंति ॥ १३ ॥ एकस्यजीवितंपुंसःसुहृदामरणंद्विधा मृत्वार्थितंप्रयागादौक्षेत्रेतत्कथमुच्यतामितिप्रश्नंसमाधत्ते ॥ विनेयइत्यादिना ॥ देहिनाअजरामरणमितिच्छेदः ॥ सःसुहृद्द्विषोःकर्मभ्यांविनेयएकःपुरुषःअन्येनस्नेहसंविद्रूपेणदेहिनासुहृदायथाप्रार्थितंतथास्थितमजरामरणमात्मानमदुःखितंवेत्ति ॥ १४ ॥

किदेहांतरेणनेत्याह ॥ यथास्थितेनेति ॥ तर्हिकथंतद्द्विषोमनोरथसिद्धिस्तत्राह ॥ मृतिमिति ॥ सुहृत्स्वजनैरदृश्येनान्येनदेहेनमृतिंवेत्ति ॥ क्षेत्रेप्रयागादौशत्रुमरणानुकूलपुण्यकृ ताद्विपाईरितोवलान्मरणायप्रेरितःसन्नित्यर्थः ॥ १५ ॥ तत्रद्विपत्कृनाभिचारादिप्रतीकारशून्ययाविनेयविदाक्षणात्तत्कालमेवमरणादिकंवेद्यतेअनुभूयते ॥ सन्नद्धगात्रस्यद्विषोव मांयुधादिनाअसन्नद्धगात्रस्यविश्वस्तस्यशरखड्गादिनाभेदनेनहिक्लेशः ॥ १६ ॥ १७ ॥ अनेनैवन्यायेनसर्वेविरुद्धप्रश्नाःसमाहितावोध्याइत्याशयेनाह ॥ इदमिति ॥ भ्रांतौ कोवाभ्रांतिविपर्ययः एकभ्रमविरुद्धोऽपरोभ्रमःकोवानसंभवति स्वप्नसन्निपातादौविरुद्धसहस्रस्यापिसहभावदर्शनादित्यर्थः ॥ १८ ॥ तदेवाह ॥ संकल्पेति ॥ १९ ॥ धर्माध

यथास्थितेनदेहेनवेत्त्यसौजीवितस्थितम् ॥ मृतिंत्वदृश्येनान्येनक्षेत्रपुण्यविदेरितः ॥ १५ ॥ आविलासंविदासंविच्छून्ययावेद्यतेक्षणात् ॥ नहिसन्नद्धगात्रस्यक्लेशोसन्नद्धभेदने ॥ १६ ॥ पश्यंतिवंधवोप्येनंतथैवामरतांगतम् ॥ द्वयमित्येपलभतेजीवितंमरणंसमम् ॥ १७ ॥ इदमप्रतिघारंभंभ्रांतिमात्रंजगत्त्रयम् ॥ नसंभवतिकोनामभ्रांतौभ्रांतिविपर्ययः ॥ १८ ॥ संकल्पस्वप्नपुरयोर्याभ्रांतिरनुभूयते ॥ ततोधिकोयंनन्यूनाज्जाग्रत्स्वप्नेनुभूयते[१] ॥ १९ ॥ ॥ राजोवाच ॥ ॥ धर्माधर्मौकथंब्रह्मन्कारणंदेहसंविदः ॥ तस्यामूर्त्तौकथंचैकोद्विशरीरत्वमृच्छति ॥ २० ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ संकल्पनगरेब्राह्मेजगत्यस्मिन्महामते ॥ किंनामनोसंभवतिसत्यंवाप्यसमंजसम् ॥ २१ ॥ यथैवसंकल्पपुरेयन्नसंभवतीहहि ॥ तन्नास्त्येवतदेतस्मिन्किंवास्तुब्रह्मकल्पने ॥ २२ ॥ स्वप्नसंकल्पपुरयोरेकोगच्छतिलक्षताम् ॥ तथाचैकैवचित्स्वप्नेसेनात्वमुपगच्छति ॥ २३ ॥ सहस्राण्येकतांयांतितथासैवसुपुप्तकम् ॥ अन्यथास्वप्नसंकल्पसेनानुभवसंस्मृतौ ॥ २४ ॥ संकल्पस्वप्नपुरयोरितिकोनानुभूतवान् ॥ संविदाकाशमात्रेस्मिञ्जगत्यनुभवात्मनि ॥ २५ ॥ तस्मादस्मिंश्चिदाकाशसंकल्पजगदात्मनि ॥ नसंभवतिकिंनामतत्संभवतिवापिकिम् ॥ २६ ॥ एवमेवमियंभ्रांतिर्भातिभास्वन्नभोमयम् ॥ नेहकिंचनसन्नासन्नवाऽऽसदिहकिंचन ॥ २७ ॥ यथानुभूयतेयद्यत्तत्तथातत्त्वदर्शिनः ॥ प्रवुद्धस्यात्रकिंनामतत्सएवांगतेत्यलम् ॥ २८ ॥

र्मावमूर्त्तौद्वावितिप्रश्नमेवप्रकृतकथाक्षेपानुगुण्येनपरिष्कृत्यराजापुनःपृच्छति ॥ धर्माधर्माविति ॥ तस्यधर्मस्यअधर्मस्यचामूर्त्तौमूर्त्तत्वाभावेद्विशरीरत्वंद्वितीयशरीरभावंकृच्छति प्राप्नोति ॥ २० ॥ धातुःसत्यसंकल्पःअमूर्तस्यापिमूर्त्ततांघटयितुंसमर्थइत्याशयेनोत्तरमाह ॥ संकल्पनगरेइति ॥ २१ ॥ २२ ॥ २३ ॥ सास्वप्नसेनैवैकंसुपुप्तकंभवतिस्वप्नसंकल्पानुभूतसेनायाःस्मृतौसमूहरूपतयाएकाकारेइदमितिस्थानेतदितिकल्पनेनचान्यथानुभवनंभवतीतिसर्वानुभवसिद्धमित्यर्थः ॥ २४ ॥ २५ ॥ उपसंहरति ॥ तस्मादिति ॥ २६ ॥ नवाआसतईपत्सत्सदसदित्यर्थः ॥ २७ ॥ प्रवुद्धस्यअर्चाकिनामअसमंजसमितिशेपः ॥ २८ ॥

---

१ ततोधिकेयंनन्यूनाजाग्रदितिपाठोपेक्षितइतिभाति

धर्माधर्मानुष्ठायिनोपिजनाःशास्त्रकृतस्वस्वनिश्चयानुसारिस्वर्गानेवप्राप्नुवंतीत्याह॥ इहचेदिति॥ अमृतादेवास्तदुपभोग्याःअमृतरसनिर्झरकृद्दफलपुष्पादिपूर्णाश्चपर्वताःस्वर्गेस्थिताःसंतीतिशास्त्रतोवगम्यतदनुसारिसंकल्पेसतितत्रगत्वातादृशगिरीन्प्राप्तवान्स्वात्मानंकस्मान्नानुभवतीत्यर्थः ॥ २९ ॥ यदितुमिथ्यात्वादसमंजसमितितेबुद्धिस्तर्ह्ययंलोकस्तत्रधर्माद्यनुष्ठानंतेनपरलोकस्तत्रभोगश्चेत्येतत्सर्वमेवजगदसमंजसमेवेत्याह ॥ इहेति ॥ इहजगति ॥ ३० ॥ यदिजगतिकिंचिद्भूतभुवनादिवस्तुसुस्थिरंसत्यंस्यात्तत्रायंविरोधोदृश्यकोभवेत्तदाएषइदंसमंजसमिदमसमंजसमित्येषन्यायोखिलःअकुंठितःस्यात्किंतुसर्वोपिद्रष्टासंविस्त्वात्स्वस्वकंसंकल्पनमेवदृश्यकःस्थितोनवास्तवमित्यर्थः ॥ ३१ ॥ इत्येषोऽस्माभिरासमंजस्यपरिहारन्यायोपिस्वमसंकल्पसिद्धासुकल्पनासुआनुभवःसर्वानुभवानुसारीस्थितोजगत्स्वपियोज्यःयतोजगत्यपिब्रह्मस्वरूपतःस्थितायाश्रितःसंकल्पएव

इहचेद्विहितोधर्मस्तत्स्वर्गेमृतपर्वताः ॥ स्थिताइतीहसंकल्पेकस्मान्नप्राप्तवान्गिरीन् ॥ २९ ॥ इहयत्क्रियतेकर्मतत्परत्रोपभुज्यते॥ इतीहसंकल्पपुरेसर्वमेवासमंजसम्॥ ३० ॥ यदिस्यात्सुस्थिरंकिंचिद्वस्तुतद्दृश्यकोभवेत् ॥ न्यायएषोखिलःकिंतुसंवित्वात्स्वस्वकंस्थितः ॥ ३१ ॥ इत्येषकथितोन्यायःसिद्धास्वानुभवस्ततः॥ यतोजगंतिसंकल्पश्रितोब्रह्मस्वरूपतः ॥ ३२ ॥ तवसंकल्पनगरेनास्त्येवासंभवोयथा॥ सर्वार्थानांतथाब्राह्मेसंकल्पेनास्त्यसंभवः॥ ३३ ॥ यद्यथाकल्पितंतत्रयावत्संकल्पमेवतत् ॥ स्वभावेनतथैवास्तियतस्तत्सन्निवेशवत्॥ ३४॥ ततःसंप्रेक्षणमिहसंकरोनप्रवर्त्तते॥ विनान्यच्चित्प्रयत्नेनभवत्यर्थस्तुनान्यथा॥ ३५॥ आकल्पमजसंकल्पेयथाभातंजगत्स्थितम्॥ पुनरन्येनसंकल्परूपेणान्यदुपैष्यति॥ ३६॥ संकल्पात्मस्वयंभातिकल्पेकल्पेजगत्तथा॥ प्रतिजीवंचितिस्वप्नेस्वप्नेस्वाप्नपुरंयथा॥ ३७ ॥ संकल्पपत्तनतनोर्नतदस्तिकिंचिद्यद्यन्नसंभवतितच्चचिदात्मनोस्मात् ॥ नान्यत्प्रकल्पयितुराद्यपरस्वरूपाद्ब्रह्मैवतेनसकलंजगदंगविद्धि॥ ३८॥ ॥इ०वा०महारामायणेवा०दे०मो०नि०उ०महाप्रश्नोत्तरेसर्वास्तित्वानुभूतिदर्शनंनामनवोत्तरद्विशततमःसर्गः॥२०९॥ ॥श्रीवसिष्ठउवाच॥ ॥फलेक्षयेंदुभारूपेप्राप्तेध्यात्वशतैर्नभः॥ यथानशतपूर्णेंदुतथेदंकथनंशृणु ॥ १ ॥

॥ ३२ ॥ तदेवाह ॥ तवेति ॥ ३३ ॥ यद्यद्यथातत्रब्राह्मसंकल्पेकल्पितंतत्तादृशसन्निवेशवत्तथास्वभावेनास्ति ॥ ३४ ॥ ततस्तादृशसंनिवेशस्वभावनियमादेवज्ञानेंद्रियैःसर्ववस्तूनांसम्यगविसंवादितयाप्रेक्षणंप्रवर्त्तते कर्मेंद्रियव्यवहारेसंकरश्चनप्रवर्त्तते पूर्वचित्प्रयत्नकृतनियतसन्निवेशोर्थःअन्यचित्प्रयत्नेनविनाअन्यथाचनभवति ॥ चार्थेतुः ॥ ३५ ॥ आकल्पमाप्रलयंयथाअजसंकल्पेभातंतथैवस्थितंपुनःप्रलयानंतरमन्यत्ब्रह्मांडांतरम् ॥ ३६ ॥ ३७ ॥ संकल्पपत्तनतनोरस्यजगतोयन्नसंभवतीतिमन्यसेतन्नास्तिसर्वसंभवत्वेवतच्चप्रकल्पयितुरस्माच्चिदात्मनोनान्यत्तेनहेतुनाजगद्ब्रह्मैवविद्धीत्यर्थः ॥ ३८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्र०उत्तरार्द्धेनवोत्तरद्विशततमःसर्गः ॥ २०९ ॥ इहवसिष्ठप्रश्नानांसमाधानंनिरूप्यते ॥ तथादेहादिजगतःसुदृष्ट्याब्रह्ममात्रता ॥ १ ॥ खेस्यामक्षयपूर्णेंदुरितिध्यायिचितैःफलैः तुल्यकालमनुप्राप्तैःसहस्रेंदुर्नकिनभइतिप्रश्नस्योत्तरंतत्रप्रथमंश्रावयति ॥ फलेइत्यादिना ॥ १ ॥

सत्यचंद्रबिंबस्याहंभावेनध्यातारःप्राप्तव्येचंद्रभावेचिरध्यानेनान्यभावविस्मरणादैंदवन्यायेनसुस्थिताःसंतश्चंद्रभावंप्राप्ताएवतथापिनेदंनभस्तलंप्राप्तानाप्येनंशशिनंश्रिताःप्रवि
ष्टाइत्यर्थः ॥ २ ॥ कुतोनप्राप्तास्तत्राह ॥ क्वेति ॥ अन्यसंकल्पपुरमन्यःप्राप्नोतीत्येतत्क्वेवकुत्रदृष्टंदृष्टांतीकृत्यप्रकृतेशंक्यते ॥ तज्जंनैतस्मिन्संकल्पयितृजीवेएवनपरजीवां
तरेदृष्टा ॥ ३ ॥ क्वतर्हितेस्थितास्तत्राह ॥ पृथगिति ॥ ४ ॥ ५ ॥ अस्मिन्नेवचंद्रेतेसर्वेलाघवात्कुतोनप्रविष्टास्तत्राह ॥ अहमिति ॥ तैस्तुनतथाध्यातंकिंतुत्वत्प्रश्नानुसारात्स्वे
स्यामक्षयपूर्णेंदुरितिकामनयाध्यातमितिभावः ॥ ६ ॥ अन्यथाध्यानेऽन्यथाफलंकुतोनभवतितत्राह ॥ यथेति ॥ यथायंस्वभावमयमनुसंधत्तेदृढसंकल्पेनध्यायतितंस्वभावम
व्ययासाक्षिसंवित्तथैवानुभवतिनवैपरीत्येनेत्यर्थः ॥ ७ ॥ अन्यच्चध्यायिनांलक्ष्मीर्ध्यातैकार्त्वायथाक्रमम जायात्वेनसमंकालमितिप्रश्नोप्यनेनैवयुक्त्यासमाधेयइत्यतिदिशति॥

चंद्रबिंबस्यध्यातारःप्राप्ताःप्राप्तव्यसुस्थिताः॥ नेदंनभस्तलंप्राप्तानचेमंशशिनंश्रिताः॥ २॥ क्वेवान्यसंकल्पपुरमन्यःप्राप्नोतिकथ्यताम्॥ संकल्पपुर्यामर्थास्मिस्तज्जंतावेवनापरे॥ ३॥ पृथक्पृथक्स्वसंकल्पसर्गखप्वेवतेस्थिताः॥ चंद्रास्तपंतितत्रैवकलाक्षयविवर्जिताः॥ ४॥ विशेयमस्मिन्नेवेंदावितिध्यातानिशाकरे ॥ अस्मिन्नेवविशत्यंतरात्मबुद्धिसुखोज्झितः ॥ ५ ॥ अहमिंदुंप्रविष्टःस्याभिंदुबिंबसुखान्वितः॥ ध्यातेतितादृक्सुखभाग्भवतीतिविनिश्चयः॥ ६॥ यथायमनुसंधत्तेस्वभावंसंविदव्यया ॥ तंतथैवानुभवतिभवेच्चेद्दृढनिश्चयः ॥७॥ यथेंदुत्वंस्वसंकल्पात्सर्वध्यातुःपृथक्पृथक्॥ भात्येवमेववनितालाभःकाल्पनिकःस्वतः॥८॥ याध्यानेध्यातृलक्ष्माणांसाध्वीभार्यात्वमागता॥ तत्कल्पनानुभवनंतेपांसत्वात्मनिस्थितम्॥ ९॥ गृहादनिर्गतोजीवःसप्तद्वीपपरःस्थितः॥ तस्यापितत्काल्पनिकंराज्यंव्योम्निस्वमंदिरे॥ १०॥ समस्तंकल्पनामात्रमिदमाद्यजन्मनः॥ शून्यमप्रतिघंशांतंतेष्वपिस्यात्किमन्यथा॥ ११॥ दानौर्ध्वदेहिकतपोजपादीनांपरत्रयत्॥ अमूर्तानांफलंमूर्त्तंतदिदंकथ्यतेशृणु॥ १२॥ दानादिचिह्नितधियःपरत्रस्वप्नवत्फलम्॥ पश्यंत्यमूर्त्तामूर्त्ताभमजंचिन्मूर्त्तिकल्पनात्॥ १३॥ वेदनावेदनाकारास्पंदास्पंदात्मवैपुनः॥ चिन्मात्रस्यास्यतद्भ्रांतिशांतौशांतात्मनिर्मलम्॥ १४॥

यथेति ॥ स्वतःस्वस्यकाल्पनिकःकल्पनासिद्धः ॥ ८ ॥ साध्व्यसाध्वीगृहेभर्त्तुःसंस्थितातपसापरेतिप्रश्नांशोप्ययमेवसमाधिरित्याह ॥ येति ॥ सत्वात्मनिअंतःकरणोपहितेसाक्षि
णि ॥ ९ ॥ गृहान्निर्गच्छमाकल्पंनृपःसप्तद्वीपसम्राडितिप्रश्नोप्यनेनसमाहितइत्याह ॥ गृहादिति ॥ स्वमंदिरेव्योम्निस्वचित्ताकाशे ॥ १० ॥ यदाद्यमस्मदादिदृश्यंजगदपिसम
स्तमाद्यस्यब्रह्मजन्मनऔत्पत्तिकसार्वज्ञ्यवतोहिरण्यगर्भस्यकल्पनामात्रंतदातेषुउपासककल्पितजगत्सुकिमन्यथाअन्यादृशंसत्यंस्यायेनासमंजसतास्यादित्यर्थः ॥ ११ ॥ दान
धर्मादितपसामौर्ध्वदेहिककर्मणाम् इहस्थानाममूर्त्तानांमूर्त्तंप्रेत्यास्तिकिंफलमितिप्रश्नमनूद्यतत्समाधानंवक्तुंप्रतिजानीते ॥ दानेति ॥ १२ ॥ चिंतैवमूर्त्ताकारकल्पनात् ॥ १३॥
मनोज्ञानेंद्रियैर्वेदनावेदनाकाराभ्रांतिस्तयाभ्रांत्याविषयप्राप्तयेतच्चिन्मात्रंसमनस्कैःकर्मेंद्रियैःस्पंदास्पंदात्मसंपद्यते तद्भ्रांतिशांतौतुनिर्मलंशांतात्मैवावतिष्ठते ॥ १४ ॥

363

इतइहानुष्ठिताद्दानादमुत्रपरलोकेचिन्मात्राभंचित्प्रतिभासात्मकंतत्तत्फलमात्तमुपनीतंतत्संकल्पात्माजीवःअवाप्नुयादितिकवयोवदंतीतिशेषः ॥ १५ ॥ इतोदानाददानाद्वाअकृत्रिमःसंकल्पएवदानफलंभोगैश्वर्याद्यदानफलंदारिद्र्यादिवापरलोकेऽस्तुनकश्चिद्विरोधइतिसर्वासमंजसपरिहारइत्यर्थः ॥ १६ ॥ सर्वान्प्रश्नान्कंठतोऽर्थाच्चसमाधायजगतोब्रह्मैवतत्त्वमित्युपसंहरति ॥ एतदिति ॥ १७ ॥ देहेएवचिदभिव्यक्तिदर्शनादनभिव्यक्तचितिभ्रांत्याद्यदर्शनात्सर्गादौभ्रांतिसिद्धौदेहसिद्धिस्तत्सिद्धाचभ्रांतिसिद्धिरित्यन्योन्याश्रयंमन्यमानोराजापृच्छति ॥ सर्गादाविति ॥ चिन्मात्रंदेहशून्यंचैतन्यंतत्कृतंदेहकल्पनंकथंभाति देहंविनाचित्प्रथायाएवादर्शनात्कुड्याद्यनाश्रितदीपप्रभाप्रायत्वात्तदाचैतन्यस्येत्यर्थः ॥ १८ ॥ नजडोदेहश्चिदभिव्यंजकइतितत्त्वज्ञपक्षः तद्दृष्टौजडस्यैवाप्रसिद्धेः ब्रह्मतुसर्वज्ञत्वात्संदेवाभिव्यक्तचैतन्यंदेहादिसर्वंकल्पयतीत्याशयेनोत्तरमाह ॥ त्वयेत्यादि

चिन्मात्राभमितोदानादमुत्रात्तमवाप्नुयात् ॥ संकल्पात्मेतिकवयःकथंतन्नोपलभ्यते ॥ १५ ॥ कल्पनात्मनिसंसारेसंकल्पोऽकृत्रिमंफलम् ॥ चिन्मात्रमभितोऽदानाद्दानाद्वास्तुयथोदितः ॥ १६ ॥ एतत्तेकथितंसर्वंयथापृष्टंमहीपते ॥ जगद्प्रतिघंसर्वमिदंचिन्मात्रकल्पनम् ॥ १७ ॥ ॥ राजोवाच ॥ ॥ सर्गादौभगवन्देहमिदंचिन्मात्रकल्पनम् ॥ कथंभातिकथंकुड्यंविनादीपःप्रकाशते ॥ १८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ त्वयार्थोदेहशब्दस्ययोबुद्धःसमहामते ॥ तत्त्वज्ञंप्रतिनास्त्येवशिलान्तृत्तमिवांबरे ॥ १९ ॥ यएवब्रह्मशब्दार्थोदेहशब्दार्थएवसः ॥ नार्थयोरनयोर्भेदोविद्यतेंब्वंभसोरिव ॥ २० ॥ यदेवब्रह्मदेहोसौस्वप्नाभःस्वप्नएषतु ॥ त्वद्बोधायोच्यतेयुक्तिर्नतुतत्स्वप्नएवतु ॥ २१ ॥ स्वप्नस्त्वयानुभूतार्थस्तेनातस्त्वंप्रबोध्यसे ॥ नतुसर्गेचिदाभातेसादृश्यंस्वप्नभस्मना ॥ २२ ॥ कस्त्वंनामदेहोयंकस्यैतेस्वप्नधीःक्व वा ॥ स्वप्नेनज्ञाववुद्धंनभ्रमेणाज्ञोवबोध्यते ॥ २३ ॥ तत्रजाग्रन्नचस्वप्नोनसुषुप्तंनचेतरत् ॥ किमपीत्थमिदंभानंखमात्रंमौनमोमलम् ॥ २४ ॥ अभातमेवभातीवयद्येत्थमिदंतुतत् ॥ प्राग्विभातंतथात्यच्छंजाग्रत्स्वप्नादिनोयथा ॥ २५ ॥ देशाद्देशांतरप्राप्तौयन्मध्यंसंविदोवपुः ॥ तन्मयंसर्वमेवेदंद्वैतमद्वैतमेवच ॥ २६ ॥ अन्यत्रचिन्मयंस्वप्नंद्वैताद्वैतंशुभाशुभम् ॥ निरावरणचिन्मात्रनभसैवोपमीयते ॥ २७ ॥ शून्यमर्थोपलंभश्चभानंचाभानमेवच ॥ द्वैतमैक्यमसत्सच्चसर्वंचिद्गगनंपरम् ॥ २८ ॥

ना ॥ १९ ॥ अंब्वंभसोरिवेतिशब्दद्वयानुकरणत्वान्नविरूपाणामपिसमानार्थानामित्येकशेषोऽसहप्रयोगोऽद्वंद्वोवा ॥ २० ॥ स्वप्नाभोसौदेहोयद्ब्रह्मतदेव ॥ ननुस्वप्नेप्यस्यन्यायस्यसाम्याद्ब्रह्मत्वेस्वप्नाभइतिभेदंसिद्धवत्कृत्यदृष्टांतोक्तिःकथंतत्राह ॥ त्वद्बोधायेति ॥ २१ ॥ कथमस्यमद्बोधोपयोगस्तत्राह ॥ स्वप्नइति ॥ स्वप्नलक्षणेनभस्मनाबाधितार्थेनसहचिदात्मनाआभातेसर्गेसादृश्यंनत्वस्तीत्यर्थः ॥ २२ ॥ कस्यैतेस्वामार्थाः ॥ २३ ॥ ओमितिविराड्ढादिपादत्रयप्रविलयावशिष्टतुरीयोपदेशः ॥ अलमितितत्रसर्वसाधनपुरुषार्थपर्याप्तिदर्शनम् ॥ २४ ॥ यद्येत्थंभातीवतदभातमेव ॥ प्राग्विभातमपितथा ॥ तथाचकदापिजाग्रत्स्वप्नादियथानोनास्त्येवतथाअत्यच्छंब्रह्मास्ति ॥ २५ ॥ देशादितिव्याख्यातम् ॥ निर्विषयचिन्मात्रमयमित्यर्थः ॥ २६ ॥ अज्ञदृष्टेरन्यत्रज्ञदृष्टौस्वप्नादिसर्वंचिन्मात्रनभसैवोपमीयते ॥ २७ ॥ २८ ॥

स्फटिकशिलायाआबद्धंघनंयदुदरंमध्यंतदुपमम् ॥ २९ ॥ उचितंस्थातुमितिशेषः ॥ ३० ॥ ब्रह्मैवब्रह्ममयम् ॥ ३१ ॥ ३२ ॥ अर्थिनांपुरुषार्थेच्छूनांश्रोतॄणांपुरतइतिशेषः ॥ ३३ ॥ मद्यमाणयुक्त्यनुभवसिद्धंतत्सिद्धमेवनहातुंशक्यम ॥ तथाचसदितिवेदादिसिद्धंब्रह्मतथैवाभ्युपगंतव्यमसदितिसिद्धंद्वैतंतथैवाभ्युपगंतव्यमित्यर्थः ॥ ३४ ॥ तत्पूर्वमत्र ब्रह्मेतिगृहीतंविश्वमित्थंपरिज्ञातंब्रह्मतामुपगच्छति ॥ कदा यदातेनचरमसाक्षात्कारवृत्तिरूपेणज्ञानेनसमंस्थितमेवविलीयतेतदा ॥ ३५ ॥ त्वयार्थोदेहशब्दस्येत्यादिनाएतदंतेनम दुक्तेनन्यायेनसर्जीवन्मुक्तत्वंजीवन्मुक्तिसहितंलोकवेदादिसर्वंजगदेतद्ब्रह्मैवसिध्यतितस्मादेपएवमदुक्तोन्यायःपरमपुरुषार्थोपायत्वादुपादातुमुचितइत्यर्थः ॥ ३६ ॥ अस्मिन्अ

पूर्णात्पूर्णंप्रसरतिपूर्णमेवस्थितंजगत् ॥ नचभातंनचाभातंशिलावद्धोदरोपमम् ॥ २९ ॥ यतोजगच्चिदुन्मेपोव्योमात्माप्रतिघंततः ॥ चिन्मात्रंयत्रयत्रास्तितत्रतत्रोचितंजगत् ॥ ३० ॥ चिद्व्योमचास्तिसर्वत्रसर्वंचैतज्जगन्मयम् ॥ सर्वंब्रह्ममयंशांतंजगदित्यपिशब्दितम् ॥ ३१ ॥ यथास्थितमिदंविश्वंतथासंस्थमनामयम् ॥ ब्रह्मैवनिरवद्यात्मचित्संकल्पपुराकृति ॥ ३२ ॥ असंभवादन्ययुक्तेर्युक्तिरेपैवशोभना ॥ अयुक्त्यनुभवंतूक्तंनार्थिनामिहशोभते ॥ ३३ ॥ लोकेशास्त्रेथवेदादौयत्सिद्धंसिद्धमेवतत् ॥ सदस्त्वसद्वात्मनितद्धातुंशक्यंनवाक्चित् ॥ ३४ ॥ तदेवेत्थंपरिज्ञातंब्रह्मतामुपगच्छति ॥ यदातेनसमंविश्वंस्थितमेवविलीयते ॥ ३५ ॥ न्यायेनैतदिहोक्तेनलोकवेदादिसिद्ध्यति ॥ सर्वंसजीवन्मुक्तत्वमेपएवोचितस्ततः ॥ ३६ ॥ परिज्ञातंचिदाकाशमपरिज्ञातपादपे ॥ सोहंत्रिजगदित्येवबंधमोक्षविनिर्णयः ॥ ३७ ॥ यथास्थितमिदंदृश्यंपरिज्ञानाद्विलीयते ॥ तज्ज्ञस्यास्तंगतस्यैवशिलामौनंतुशिष्यते ॥ ३८ ॥ लोकेशास्त्रेचवेदेचयत्सिद्धंसिद्धमेवतत् ॥ संवेद्यतेतदेवातस्तदेवंफलतिस्फुटम् ॥ ३९ ॥ सकलार्थनिरासेनयद्यत्संवेद्यतेचिरम् ॥ तदेवप्राप्यतेवस्त्वंसर्वत्रैवान्यभावितम् ॥ ४० ॥ यथानुभूतंयत्तत्तत्तथानामानुभूयते ॥ तत्सत्यमस्त्वसत्यंवायावद्वाभातंथानुतत् ॥ ४१ ॥

परिज्ञातात्ममात्ररूपसंसारलक्षणेपादपेऽश्वत्थवृक्षेपरिज्ञातंचिदाकाशमेवनततोन्यदणुमात्रमप्यस्तिसःअपरिज्ञातःपरिज्ञातश्च चिदाकाशोऽहमेवत्रिजगत्बंधोमोक्षश्चपर्यायेणेति विनिर्णयइत्यर्थः ॥ ३७ ॥ परिज्ञातमात्रत्वंकथंमोक्षस्तत्राह ॥ यथास्थितमिति ॥ तज्ज्ञस्यस्वरूपमितिशेषः ॥ दृश्यात्मनाअस्तंगतस्यदृश्याचवागाद्यगम्यमवशिष्यतइत्यर्थः ॥ ३८ ॥ लोकेजीवन्मुक्तजनेयत्सिद्धंविचारशतैःपरिनिष्ठितंतदेवस्वानुभवेनापिसंवेद्यते ॥ अतस्तदेवंपरमपुरुषार्थभावेनफलति ॥ ३९ ॥ ॥ तत्प्राप्ताविर्तरार्थमात्रत्यागेनतदेक निष्ठतैवोपायस्तेनवावश्यंतत्प्राप्यतइत्याह ॥ सकलार्थेति ॥ सर्वत्रलौकिकेपिकार्येअन्यदपिभावितंतथैवेत्यर्थः ॥ ४० ॥ तत्रलौकिककार्यमसत्यंमोक्षाख्यंतुसत्यमित्यत्रांतर वैलक्षण्यमस्तुनामसाधनोद्योगतत्फलानुभवेचनविशेषइत्याशयेनाह ॥ यथेति ॥ ४१ ॥

हेमतिमन्हेमहात्मन्इत्थंमयातेमहाप्रश्नानांविचारणंविचारफलनिर्णयरूपंसमाधानमुक्तम् त्वमनेनपथेनगच्छतेन आशुमनसिनिराधिर्देहेनिरामयइंद्रियेपुनिर्व्यसनोभूत्वाउच्चैः सर्वोत्कृष्टोभवेत्यर्थः ॥ ४२ ॥ ॥ इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उ०दशोत्तरद्विशततमःसर्गः ॥ २१० ॥ ॥ ७ ॥ ॥ सिद्धसाध्यादिलोकौघदर्शनोपायसंयुतम् ॥ वर्ण्यतेऽत्रपुनःस्पष्टंब्रह्मैवसकलंजगत् ॥ १ ॥ तत्रकुशद्वीपेइलावत्याख्यायांपुरि ॥ तेनप्रज्ञप्त्याख्येनभूभुजा ॥ स्वंप्रयोजनंतदनुपद्दलक्षणम् ॥ १ ॥ अथएतस्यामयोध्यायांभवताविद्यमानेनमया ॥ २ ॥ निर्नामनिःशब्दंनभएव ॥ ३ ॥ ब्रह्मेत्यपिकल्पनयाकलिताभिधंनवस्तुतःकूटस्थबृहधात्वर्थवृद्ध्यादेरयोगादित्यर्थः ॥ ४ ॥ लोकास्तत्रत्याजनास्तेषांधराआधारभूताः ॥ कथंकेनोपायेनदृश्यंते ॥ ५ ॥ ६ ॥ आलोकयन्चूडालोपाख्यानोक्तधारणाविशेषैःपश्यन्सन्पश्यसिद्रक्ष्यसि ॥ ७ ॥ द्विविधाहिसिद्ध

इत्थंमहाप्रश्नविचारणंतेमयेदमुक्तंमतिमन्महात्मन् ॥ अनेनगच्छाशुपथानिराधिर्निरामयोनिर्व्यसनोभवोच्चैः ॥ ४२ ॥ ॥ इ०वा० महारामायणेवा०दे०मो०नि०उ०द्वैतैक्योपलंभनिरासेनमहाप्रश्नोत्तरवाक्यसमाप्तिर्नामदशोत्तरद्विशततमःसर्गः ॥ २१० ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतितत्रोपविश्याहंपूजितस्तेनभूभुजा ॥ प्रयोजनंस्वंसंपाद्यस्वर्गंतुंगगनंप्लुतः ॥ १ ॥ अथैतद्भवताप्रोक्तंमयामतिमतांवर ॥ अनयासुदृशाशांतमनाःस्वात्माभविष्यसि ॥ २ ॥ ब्रह्मैवतदिदंसर्वंनिर्नामैवामलंनभः ॥ किमप्येवाजमाशांतमादिमध्यांतवर्जितम् ॥ ३ ॥ चिद्घानमात्रमित्युक्तंब्रह्मेतिकलिताभिधम् ॥ परात्परमितिप्रोक्तंतत्तुनिर्नामकंपदम् ॥ ४ ॥ ॥ श्रीरामउवाच ॥ ॥ सिद्धसाध्ययमब्रह्मविद्याधरदिवौकसाम् ॥ ब्रह्मन्कथयदृश्यंतेलोकालोकधराःकथम् ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ सिद्धसाध्ययमब्रह्मविद्याधरदिवौकसाम् ॥ अन्येषामपिभूतानामपूर्वाणांमहात्मनाम् ॥ ६ ॥ प्रतिरात्रंप्रतिदिनंपुरःपश्चादुपर्यधः ॥ पश्यस्यालोकयँल्लोकानपश्यंश्चनपश्यसि ॥ ७ ॥ एतेलोकाःकिलैतेषांनाभ्यासःस्यान्नदूरगाः ॥ एतेसंकल्पलोकाख्याव्याप्तमेभिःकिलाखिलम् ॥ ८ ॥ यथैतेकल्पनालोकाअयंलोकस्तथैवनः ॥ यथाकाल्पनिकोवातोलोकालोकास्तथैवते ॥ ९ ॥ संकल्पस्वप्नलोकायेतवभांतिदिवानिशम् ॥ तएवतादृशाश्चान्येसंकल्पान्नैःस्थिरीकृताः ॥ १० ॥

लोकायएतेमहर्जनस्तपःसत्याख्यास्तेस्थानतोदूरगाः ॥ यत्वेतेसर्वत्रसंचरतांसिद्धानाम् सयदिपितृलोककामोभवतिसंकल्पादेवास्यपितरःसमुत्तिष्ठंतितेनपितृलोकेनसंपन्नोमहीयतेइत्यादिश्रुतिसिद्धाःसंकल्पलोकाख्याएभिरखिलंविश्वंव्याप्तंसर्वत्रसंति ॥ द्विविधानामपिदर्शनेधारणाभ्यासःकारणंसचतेनास्तीत्यर्थः ॥ ८ ॥ तर्हिकिंमयातद्दर्शनायधारणाभ्यासःकार्यःनकार्यस्तेषामसारत्वादितिदर्शयति ॥ यथेत्यादिना ॥ यथैवतेपांतेकल्पनात्मकालोकास्तथैवायंनोस्माकमयंलोकःकल्पनामात्रसिद्धः ॥ यथाकाल्पनिकोपिवातःसर्वत्रभ्रमतितथातेभ्रमंतिअयंतुनतथेत्येतावानेवविशेषइत्यर्थः ॥ ९ ॥ तवसंकल्पस्वप्नलोकायेभांतितएवतेसिद्धलोकाःप्रसिद्धास्तादृशाअन्येचलोकास्तैर्निर्माायसंकल्पैनैवस्थिरीकृताः ॥ १० ॥

एवंचत्वमपियद्योगधारणास्थिरीकृतेनध्यानेनइतान्स्वसंकल्पग्रामान्लोकान्स्थिरतांनयसितदाएतेपिस्थिरतांयांति ॥ ११ ॥ एवमन्योपिदृढतरध्यातृसंकल्पभावेनवलितश्चे
त्सोपिसिद्धवद्देवतान्स्थिरान्पश्यति ॥ १२ ॥ किंत्वेतावान्विशेषः ॥ तैःसिद्धैःस्वःस्वर्गान्सिद्धलोकान्यांतियया तथाविधयाप्राक्तनधर्मसंपदातेलोकाःस्थिरतांनीताइत्यनायास
सिद्धास्तेतेषाम् ॥ यैस्त्वन्यैरनित्यैरिदानींतनधारणाभ्यासैर्ध्यानविश्रांतौयत्यत्नैःदुःखैःश्रमैरमीलोकाःस्थिरीकृताःस्युरिति ॥ १३ ॥ संविदितंनिश्चितम् ॥ १४ ॥ यतस्तत्रासं
विदितेअस्तिनास्तीतिवाचोद्यतातर्कविषयतानास्ति ॥ १५ ॥ कुतःशून्यमप्रतिघंचतत्तत्राह ॥ चित्स्वभावतयेति ॥ यद्दृढसंवेदनेनभातंतच्चित्स्वभावतयाभारूपमिवभासमानंदृ

ध्यानेनत्वमपीतांश्चेत्स्थिरतांसुस्थिरात्मना ॥ नयस्याशुतदैवैतेस्थिरतांयांत्यविघ्नतः ॥ ११ ॥ यथाभिमतविस्तारायथाभिमतसंपदः ॥
संकल्पभाववलितोजनःपश्यतिसिद्धवत् ॥ १२ ॥ किंतुतेस्थिरतांनीताःसिद्धैःस्वर्यानसंपदा ॥ अस्थिरैर्ध्यानविश्रांतौतैर्दुःखैस्तदमीकृताः
॥ १३ ॥ जगदप्रतिघंसर्वंशांतचिद्व्योमसर्वदा ॥ यथादृढंसंविदितंतथैवाभातिनान्यथा ॥ १४ ॥ नभात्येवासंविदितमस्तिनास्तिनचोद्य
ता ॥ शून्यंत्वप्रतिघंचैतत्पराकाशमरोधकम् ॥ १५ ॥ चित्स्वभावतयाभातंभारूपमिवदृश्यते ॥ अस्मिंश्चिदभिमानश्चविद्यतेनस्वभाव
तः ॥ १६ ॥ कार्यकारणभावाच्चेत्कथैवात्रनविद्यते ॥ व्योम्नोनंतस्यसिद्धस्यकिंकथंकिलजायते ॥ १७ ॥ यच्चजातमिवाभातिव्योम्निव्यो
मैवतत्तथा ॥ तत्रैकद्वित्वकलनाकीदृशीस्याददूरूपिणी ॥ १८ ॥ तद्धियादृशमेवासीत्तादृगेवावतिष्ठते ॥ निर्विकारंयथास्वप्नेव्योमैवाच
लवद्भवेत् ॥ १९ ॥ संकल्पेचित्तमाकारंयथोदेत्यद्रिलीलया ॥ नचसोद्रिर्नतद्व्योमतथाब्रह्मजगत्स्थितिः ॥ २० ॥ काष्ठवन्मौनमास्थायर
ढंतोपिमहाधियः ॥ इहव्यवहरंत्येतेबुधादारुनराइव ॥ २१ ॥ यथावारिणिवर्त्तंतेतरंगावर्त्तवृत्तयः ॥ अनन्याःपरिवर्त्ततेतथाब्रह्मणिसृष्ट
ष्टयः ॥ २२ ॥ यथावायौपरिस्पंदायथाव्योमनिशून्यता ॥ अनन्याश्चाप्यमूर्त्ताश्चतथाब्रह्मणिसृष्टयः ॥ २३ ॥ यथासंकल्पनगरंशून्यमेव
पुरंस्थितम् ॥ साकारमप्यनाकारंब्रह्मणीदंतथाजगत् ॥ २४ ॥ चिरानुभूतमप्यर्थकार्यपीदंजगत्त्रयम् ॥ शून्यमेवनिराकारंसंकल्पनग
रंयथा ॥ २५ ॥ यदेवचित्तसंकल्पस्तदेवनगरंयथा ॥ तदातथायंब्रह्माच्छंतदेवजगदुच्यते ॥ २६ ॥

श्यते अस्मिंस्त्वसंविदितेस्वभावतश्चिदभिमानश्चित्सत्तास्फूर्त्तिव्याप्तिर्यतोनविद्यतेइत्यर्थः ॥ १६ ॥ कारणसत्तावलादेवतत्सत्तान्याभविष्यतीतितुनशंक्यमेवनिरस्तत्वादित्याह ॥
कार्येति ॥ सर्गादौप्रलयत्वाद्व्योम्नः ॥ १७ ॥ यच्चजातमिवाभातिभूनभुवनादितत्तुव्योम्निव्योमैवजातमिवाभातीतितत्रैकत्वद्वित्वकलनापिदुर्लभादूरेकार्यकारणभावइत्यर्थः
॥ १८ ॥ तर्हिब्रह्मैवकारणमस्तुतत्राह ॥ तद्धीति ॥ विवर्त्ताधिष्ठानमेवनविकारीतिनकारणमित्यर्थः ॥ १९ ॥ आकारंकल्पयित्वेतिशेषः ॥ २० ॥ अतएवतत्त्वदृष्ट्यानिर्व्यापारा
एवजीवन्मुक्ताव्यवहरंतइवभांतिनवस्तुतइत्याह ॥ काष्ठवदिति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ अर्थकारिलौकिकवैदिककार्यसमर्थमपि ॥ २५ ॥ तदासंकल्पनगरव्यवहार
काले ॥ तथाअयंपरिदृश्यमानःसंसारोपि ॥ २६ ॥

३६९

॥ २७ ॥ २८ ॥ यत्परमन्यद्ब्रह्मादिपराभिधानंसर्पाद्यभिधानगोचरोभवतितत्परमार्थतःसन्न ॥ २९ ॥ हेरामसिद्धलोकभोगादिफलमित्थंमद्वर्णितप्रकारेणैवकल्पनामात्रमस्तु यदिवाअन्यथाअन्यैर्मुनिभिर्वर्णितप्रकारेणान्यादृशमेववास्तुमैववाभूत्तथापितेजीवन्मुक्तस्यअत्रकःसंभ्रमआदरः ॥ फल्गुनिसिद्ध्यादिफलेफलग्रहंपुरुषार्थताबुद्धिंमुंच ॥ यतस्त्वंब्रह्मतत्त्वंबुद्धवानसिअतस्तेमायामात्ररूपसिद्धलोकवैभवपरिज्ञानश्रमैःकृतंअलंसाध्यंनास्तीत्यर्थः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेउत्तरार्द्धेएकादशोत्तरद्विशततमःसर्गः ॥ २११ ॥ ॥ ७ ॥ ॥ ब्रह्माहंभावकलनापरमेष्ठीजगत्त्रयम् ॥ तत्संकल्पमयंतस्माद्ब्रह्मैवेत्यत्रवर्ण्यते ॥ १ ॥ ब्रह्मणिप्रथमंसमष्ट्यहंकारात्माहिरण्यगर्भइवकल्पनात्तदुदरेचव्यष्टिजीवजगत्कल्पनेतिसर्वंब्रह्मविवर्त्तमात्रमापातदर्शनसिद्धंपरमार्थदृष्टौनहिरण्यगर्भोजीवोजगद्वाकिंचिदस्तिब्रह्मैवकेवलंनि

चिरंनित्यानुभूतोपिजगदर्थोनकिंचन ॥ विद्यतेपुरुषस्येहस्वप्नेस्वमरणंयथा ॥ २७॥ स्वप्नेपुंसाम्रनेनापिस्वदाहोदृश्यतेयथा ॥ असदेव सदाभासंजगद्दृष्टंपरेतथा ॥ २८ ॥ जगत्ताचाजगत्ताचपरस्यैवामलंवपुः ॥ पराभिधानंचपरंनचसत्परमार्थतः ॥ २९ ॥ इत्थमस्तुयदिवान्यथास्तुवामैवभूद्भवतुकोत्रसंभ्रमः ॥ मुंचफल्गुनिफलेफलग्रहंबुद्धवानसिकृतंपरिश्रमैः ॥ ३० ॥ ॥ इ०वा०महारामायणेवा० दे०मो०नि०उ०परमार्थोपदेशोनामैकादशोत्तरद्विशततमःसर्गः ॥ २११ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ चित्त्वाद्ब्रह्मखमेवाहमितिवेत्तीवयत्स्वयम् ॥ तदेवपरमेष्ठित्वंतस्योदरमिदंजगत् ॥ १ ॥ एवंस्थितेनचब्रह्मानचजातंजगत्स्थितम् ॥ स्थितं यथास्थितमजंपरंब्रह्मैवपूर्ववत् ॥ २ ॥ संवित्तौतुजगद्रूपंभासतेप्येवमेवतत् ॥ मृगतृष्णेवमिथ्यैवदृश्यमानमपित्वसत् ॥ ३ ॥ अतः प्रभृतिशून्येयंभ्रांतिरभ्युदितानवा ॥ कुतःकेवकिलभ्रांतिर्ब्रह्मैवतदनामयम् ॥ ४ ॥ जगद्ब्रह्मजलावर्त्तौद्वित्वैकत्वेकिलात्रके ॥ क्वावर्त्त पयसोर्द्वित्वंद्वित्वाभावात्क्वचैकता ॥ ५ ॥ तद्ब्रह्मघनमाशांतंचित्त्वाच्चेतत्यहंविदत् ॥ निजंशून्यत्वमंतस्थंव्योमेववितताम्बरम् ॥ ६ ॥ पवनः स्पंदनमिवहुताशनइवोष्णताम् ॥ स्वशैत्यमिवपूर्णेंदुःसत्तामर्थइवात्मनः ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ एतद्ब्रह्मन्कदानामतन्नचेतितवन्मुने ॥ निरावृतमनाद्यंतंकिमिदानींप्रचेतति ॥ ८ ॥

त्यनिर्मलसच्चिदानंदैकरसंपूर्णमवतिष्ठतइतिसर्ववेदांतनिष्कृष्टार्थमंतेवर्णयितुमुपक्रमते ॥ चित्त्वादिति ॥ ब्रह्मखंस्वयमेवप्रथममहमित्यहंकारसमष्ट्यात्मानंवेत्तीवतत्तादृशवेदनमेवास्यपरमेष्ठित्वंहिरण्यगर्भता ॥ १ ॥ नचमायिकेनतावन्मात्रापराधेनब्रह्मअब्रह्मभवतीतिहिरण्यगर्भादिकिंचिदन्यन्नासीदेवेत्याह ॥ एवंस्थितेइति ॥ २ ॥ यदिनासीदेवतर्हिसंवित्तौकथंभासतेतत्राह ॥ संवित्ताविति ॥ एवमेवप्रातिभासिकमेवसतनपरमार्थसत् ॥ ३ ॥ अतःसर्गकालात्प्रभृतिभ्रांतिरभ्युदिताअथवासापिनाभ्युदितैव ॥ ४ ॥ अस्तुनामजगदनिर्वचनीयोब्रह्मधर्मस्तथापिनक्षतिरित्याह ॥ जगदिति ॥ ५ ॥ चित्त्वात्परप्रथास्वभावात् ॥ अहमित्यहंकारसमष्ट्यात्मतांविदत् ॥ ६ ॥ ब्रह्मैवात्मनाअर्थइवसत्तांचेतति ॥ ७ ॥ यदिस्वरूपचैतन्यमेवाभिप्रेत्यअर्थइवचेततीत्युच्यतेतर्हितत्सदैवास्तीतीदानींप्रचेततीतिकिमुच्यतेइतिरामःपृच्छति ॥ एतदिति ॥ एतदहमादिकदानचेतितवत् ॥ यतः सदैवनिरावृतंनिरावरणमनाद्यंतंनित्यंचतदिदानींसर्गादिकालमारभ्यप्रचेततीतिकिमुच्यतइत्यर्थः ॥ ८ ॥

सत्यंयौक्तिकदृशासदैववाहमादित्वनत्त्वंचप्रचेतति तथाचसर्गासर्गोभयरूपंब्रह्मदृष्टिद्वयप्रामाण्येपर्यवस्यतितथापिदृष्टिद्वयेविषयसत्त्वासत्त्वकृतमंतरमस्तीतिप्रामाण्येनतुल्यमि त्याशयेनाभ्युपगम्येवोत्तरमाह ॥ एवमेतदित्यादिना ॥ स्वसंविदास्वरूपचैतन्येनविद्ययास्वरूपस्फूर्त्तावविद्ययाअहमादिस्फूर्त्तौचाऽन्यापेक्षायतोनास्तीत्यर्थः ॥९॥ यतःकदाचि दपिअविद्यादृष्टौनेदंज्ञातंविद्यादृष्टौनेदंचकिंचन॥१०॥ मिश्रदृष्टौतर्हिकीदृशंचेततितदाह ॥ पवनेति॥११ ॥ सर्वंदेवेति ॥ विपश्चिदुपाख्यानोक्तन्यायेनसर्वजीवसंसारोच्छेदका लाप्रसिद्धेरितिभावः ॥१२ ॥ इमांमिश्रदृष्टिमपितवबोधानुवृत्तिपर्यंतमेवशब्दश्रवणादिव्यवहारसिद्धयेत्वमभ्युपैपिचेदभ्युपगच्छनपरमार्थतइत्याह ॥ केवलमिति ॥ त्वमद्वयेब्र ह्मबोधेजातेप्यबुद्धत्वादबोधमभ्युपेत्य ॥ त्यब्लोपेपंचमी ॥ मदुपदेशशब्दश्रवणेबोधितआसक्तचित्तःसन्मिश्रदृष्टिलब्धांद्वितांसप्रपंचनिष्प्रपंचोभयरूपतामभ्युपगच्छसिनतत्त्वदृ

॥श्रीवसिष्ठउवाच॥ ॥एवमेतत्सदैवैतदहमाद्यपिचेतति॥ नत्वनादेरजस्यास्यकाप्यपेक्षास्वसंविदा॥ ९॥ सर्गासर्गनभोरूपंब्रह्मसर्वत्रसर्वदा॥ नकदाचिदिदंनेदंज्ञातंनेदंचकिंचन॥ १०॥ पवनस्पंदनंचंद्रशैत्यंशून्यत्वमंबरम्॥ ब्रह्माहंत्वमनन्यात्मनकदाचिन्नचेतति॥ ११॥ सर्वदेवेदृशीसत्तानकदाचिदनीदृशी॥ जगद्यस्मादनाद्यंतंब्रह्मात्मैवनिरामयम्॥ १२॥ केवलंत्वमबुद्धत्वाच्छब्दश्रवणवेधितः॥ अद्वयेब्रह्मबोधेस्मिन्द्वितामभ्युपगच्छसि॥ १३॥ नकश्चित्किंचिदेवेहनकदाचिन्नचेतति॥ नकश्चिच्चतदन्यात्मानकदाचिच्चचेतति॥ १४॥ इदंत्रिभुवनाभासमीदृशंभातिसर्वदा॥ शांतंरामसमंब्रह्मनेहनानास्तिकिंचन॥ १५॥ नकदाचनजायंतेनभसःपादपाद्रयः॥ ब्रह्मणश्चजगंतीतिमत्वाशांतिपरांव्रज॥ १६॥ उपदेश्योपदेशार्थसंदेहावसरेल्पधीः॥ यावन्नबुद्धस्तावत्त्वंभेदमभ्युपगच्छसि॥ १७॥ बोधस्यतुविबुद्धस्यनशास्त्रादिनशब्दधीः॥ नभेदबुद्धिर्नोभेदःकिमप्येपप्रजापतेः॥ १८॥ ॥श्रीरामउवाच॥ ॥बुद्धमेतन्मयाब्रह्मन्प्रकृतंतदुदाहर॥ वचोमदवबोधार्थंयदुदाहृतवानसि॥ १९॥

शेत्यर्थः ॥१३॥ मिश्रदृष्टौहिसर्वात्मकंब्रह्मतत्रसर्वांतर्गतःकश्चिज्जीवःकिंचिच्चेतत्येवचेत्तद्ब्रह्मैवतदात्मनाचेततीतितदात्मनासर्वःसर्वदासर्वंचेतति ॥ निःशेषब्रह्मात्मनाचकश्चित्किं चिदपिनकदाचनचेतति ॥१४॥ तथाचबद्धदृष्ट्यात्रिभुवनाभासमेवसर्वदाब्रह्मभाति मुक्तदृष्ट्यानेहनानास्तिकिंचनेतिनकिंचिद्भातीत्यर्थः ॥ १५॥ तत्रबद्धदृष्टेर्बाधितार्थत्वान्मु क्तदृष्टिरेवत्वयाआश्रयणीयेत्याह ॥ नकदाचनेति ॥१६ ॥ यावदुपदेशप्रवृत्तिमिश्रदृष्टिरभ्यनुज्ञातामयेत्याह ॥ उपदेश्येति ॥ अभ्युपगच्छसिअभ्युपगच्छ ॥[illegible]॥ तदुत्तरकालं त्वहंकारतत्संकल्पजगदात्मनःप्रजापतेर्भेदबुद्धिस्तदभावबुद्धिश्चतत्रनभविष्यत्येवेत्यर्थः ॥ १८ ॥ एतद्ब्रह्मन्कदानामेत्यादियन्मयापृष्टंएतन्मयात्वदुक्त्याबुद्धम ॥ प्रकृतंसमष्ट्यहं काराद्यध्यासंनिरूपयितुंप्रस्तुतंयन्मदवबोधार्थंवचस्तदुदाहरनिरूपयेत्यर्थः ॥ १९ ॥

तदेवस्मारयन्पृच्छति ॥ किमिति ॥ तस्मिन्परेपदेअहंत्वेचेतितेसतिअर्थोकिंसंपद्यते ॥ त्वंसर्वज्ञत्वात्सर्वंबुद्धवानसि ॥ अहंचत्वद्वचनशुश्रूषुर्नतृप्तिमुपैमिअतोवदेत्यर्थः ॥ २० ॥ व्योमसत्ताआकाशाध्यासः ॥ भेदसत्तात्रिविधपरिच्छेदाध्यासः ॥ २१ ॥ अहंकाराध्यासस्यपरिच्छेदाध्यासहेतुतामुपपादयति ॥ यदेति ॥ यदाअस्यइहदेहादौअहमितिभातितदादेहशून्यस्थलेअत्रनाहमित्यप्यवश्यंभाति सदेशकृतपरिच्छेदः ॥ इत्यनयारीत्यानानाविधःकालकृतपरिच्छेदोवस्तुकृतपरिच्छेदश्चेतिस्वात्मैवअक्रमंद्वैतंभूत्वाउदेति॥२२॥ ततःपरस्परव्यावर्त्तकजातिगुणक्रियादिप्रवृत्तिनिमित्तभेदकल्पनाप्रयुक्तोनामभेदाध्यासोभविष्यतीत्याह ॥ व्योमात्मिकानामिति ॥ एतासामुक्तानांपदार्थभेदसत्तानामभिधानधीर्वाचकशब्दाध्यासः ॥ २३ ॥ तत्राहंकारावच्छेदेनजीवसाक्षिभेदेप्यावरणाभावात्स्वाभाविकचिदभिव्यक्तौतत्राध्यस्तजगदाकारेणब्रह्मैवअब्रह्मेवभास्यतीत्याह ॥ एत

किंतस्मिंश्चेतितेऽहंत्वेपदेसंपद्यतेपरे ॥ बुद्धवानसिशुश्रूषुर्नाहंतृप्तिमुपैमिहि ॥ २० ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अहंत्वेसत्यथैतस्मिन्व्योमसत्ताप्रवर्त्तते ॥ दिक्सत्ताकालसत्ताचभेदसत्ताभ्युदेतिच ॥ २१ ॥ यदाकिलेहाहमितितदानात्राहमित्यपि ॥ भातीत्युदेतिनानाखेस्वात्मैवद्वैतमक्रमम् ॥ २२ ॥ व्योमात्मिकानामेतासांसत्तानामभिधानधीः ॥ भविष्यत्युत्तरंकालंतदात्वाकाशमेवतत् ॥ २३ ॥ एतस्मिन्परिसंपन्नेदिक्कालकलनात्मनि ॥ अहंभावेनिराकारेव्योमतन्मात्रवेदिनि ॥ २४ ॥ इदमाभातिभारूपंवेदनंदृश्यनामयत् ॥ भूत्वाब्रह्मैवनिर्बाधमब्रह्मेवविराजते ॥ २५ ॥ ब्रह्मैवशांतमजमेकमनादिमध्यंव्योमैवजीवकलनामिवभावयित्वा ॥ व्योम्न्येवपश्यतिनिरावरणेविसारिदृश्यंस्वरूपमपिचान्यदिवात्मवित्त्वात् ॥ २६ ॥ ॥ इ०वा०महारामायणेवा०दे०मो०नि०उ०परमार्थनिरूपणंनामद्वादशोत्तरद्विशततमःसर्गः ॥ २१२ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यथायत्पृष्टवानद्यत्वंमामरिनिषूदन ॥ शिष्येणैवसतापूर्वमहंपृष्टोगुरुस्त्वया ॥ १ ॥

स्मिन्नित्यादिद्वाभ्याम् ॥ २४ ॥ २५ ॥ तदेवस्पष्टमाह ॥ ब्रह्मैवेति ॥ व्योमजीवजगद्भावशून्यंब्रह्मैवजीवकलनामिवभावयित्वाअध्यस्यनिरावरणेजीवसाक्ष्याकाशेएवविसारिविस्तृततरंदृश्यंपश्यतिस्वरूपमपिब्रह्मअन्यदिवपश्यति आआत्मवित्वात्तत्त्वज्ञानोदयंमर्यादीकृत्येत्यर्थः ॥ २६ ॥ ॥ इतिश्रीवासिष्ठम०ता०नि०उ०द्वादशोत्तरद्विशततमः सर्गः ॥ २१२ ॥ ॥ ७ ॥ ॥ वर्ण्यतेपूर्वसंवादइहरामवसिष्ठयोः ॥ गुरुशिष्याख्यायिकयासर्वंब्रह्मेतिनिश्चितः ॥ १ ॥ विस्तरेणोपदेशात्करतलामलकवत्साक्षात्कारितमप्यात्मतत्त्वंरामस्यजन्मांतरीयस्वोपदिष्टार्थएवतेपुनरुपदिष्टइतिस्मारणेनस्थूणानिखननन्यायेनदृढीचिकीर्षुर्भगवान्वसिष्ठःसर्वजगदुपकारायसर्वशास्त्रार्थसंग्रहरूपांगुरुशिष्याख्यायिकांशास्त्रांतेपरममंगलरूपामुपदेष्टुमारभते ॥ यथेत्यादिना ॥ हेरामत्वमद्यमांप्रतियज्जगत्तत्त्वमात्मतत्त्वंचयथापृष्टवांस्तथापूर्वमन्यस्मिन्रामजन्मन्यपिअहंगुरुःशिष्येणैवसतात्वयापृष्टः ॥ १ ॥

संक्षिप्योक्तं विस्तरेणाह ॥ पुरेति ॥ तज्जगत्तत्र त्वं रामः आत्मा अहं वसिष्ठः आदिपदात्तव निर्वेदो मदभिगमनं प्रश्नश्चेत्येवमादिका इयं चित्प्रतिभा कस्मिंश्चिद्वने गुरुशिष्यात्मना इदानीमिव आसीदित्यर्थः ॥ २ ॥ इदं वक्ष्यमाणं पृष्टवानसि ॥ ३ ॥ सर्वस्य जगतो विषये मम मे मुच्यमानमतिशयितं संशयमतिसंशयम् ॥ ४ ॥ हे पुत्र यथा स्वप्नपुरं सौपुप्तीं स्थितिमीयुष आत्मनस्त न्मात्रशेषमशेषेण विनश्यति तथा जगद्दृश्यमपि प्रलये विनश्यतीत्यर्थः ॥ ५ ॥ ६ ॥ सर्वं जगदाभाससहितं व्योमाप्यव्याकृते लयात्परिणश्यति उपलभ्यस्य भोग्यस्य भोक्तृर्धानस्थि तिकत्वात्प्रलयकाले उपलब्धुर्भोक्तुरसंभवात् ॥ ७ ॥ ब्रह्मादय एव तदा तद्भोक्तारः स्थास्यंतीत्याशंकावारणायाह ॥ ब्रह्मेति ॥ अतिशयितकल्पांतप्राकृतैवंज्ञानिके च प्रलये ॥ ८ ॥

पुराकल्पेहि कस्मिंश्चित्तत्त्वमात्मादिकात्मिका ॥ आसीदियं चित्प्रतिभा गुरुशिष्यात्मना वने ॥ २ ॥ गुरुस्तत्राहमभवं शिष्यस्त्वमभवस्तदा ॥ पृष्टवान्मां त्वमग्रस्थ इदमुद्दामधीरधीः ॥ ३ ॥ ॥ शिष्य उवाच ॥ ॥ सर्वस्य भगवञ्छिंधि मम मे मतिसंशयम् ॥ किं नश्यति महाकल्पे किं वस्तु न विनश्यति ॥ ४ ॥ ॥ गुरुरुवाच ॥ ॥ पुत्राशेषमशेषेण दृश्यमाशु विनश्यति ॥ यथा तथा स्वप्नपुरं सौपुप्तीं स्थितिमीयुषः ॥ ५ ॥ निर्विशेषेण नश्यंति भुवः शैला दिशो दश ॥ क्रियाकालः क्रमश्चैव न किंचिदवशिष्यते ॥ ६ ॥ नश्यंति सर्वभूतानि व्योमापि परिणश्यति ॥ ससर्वजगदाभासमुपलब्धुरसंभवात् ॥ ७ ॥ ब्रह्मविष्णुविद्ररुद्राद्या ये हि कारणकारणम् ॥ तेषामप्यतिकल्पांते नामापीह न विद्यते ॥ ८ ॥ शिष्यते हि चिदाकाशमव्ययस्यानुमीयते ॥ तत्कालशेषतानेन सर्गानुभवहेतुना ॥ ९ ॥ ॥ शिष्य उवाच ॥ ॥ नासतो विद्यते भावो नाभा वो विद्यते सतः ॥ इदं तत्कथमाभोगि विद्यमानं क्व गच्छति ॥ १० ॥ ॥ गुरुरुवाच ॥ ॥ न विनश्यत एवेदं ततः पुत्र न विद्यते ॥ नासतो विद्य ते भावो नाभावो विद्यते सतः ॥ ११ ॥ यत्तु वस्तुत एवास्ति न कदाचन किंचन ॥ तदभावात्मतद्राम कथं नाम विनश्यति ॥ १२ ॥

आत्मशेषं विनश्यतीति यदुक्तं तदुपपादयति ॥ शिष्यते हीति ॥ अव्ययस्य चिद्वस्तुनो विवर्ते नष्टे चिदाकाशं शिष्यते इत्यनुमीयते ॥ हि यस्मात्कारणात्स्वाध्यस्तसर्गानुभवहेतुना अने न चिदात्मनैव सर्वप्रपंचशून्यतत्कालशेषता सिध्यति ॥ तस्यापि नाशे निःसाक्षिकः प्रलय एव न सिध्येदित्यर्थः ॥ ९ ॥ सतो जगतः असत्तालक्षणो नाश एव न सिध्यतीति शिष्यः शंकते ॥ नासत इति ॥ १० ॥ श्रुतिप्रत्यक्षानुमानस्मृत्यादिसिद्धो जगतो नाशो नापह्नोतुं शक्यइति तद्बलेन सत्यमेवापातदर्शनप्रसक्तमपह्नूयत इति न दोष इत्याशयेन गुरुः समाधत्ते ॥ नेति ॥ न त्वदुक्तं युक्तम् यत इदं जगद्विनश्यत्येव प्रत्यक्षादिभिः सावयवे पुनाशप्रसिद्धेः अतो न विद्यत एवेत्यसतोस्य भावो नास्तीत्यनुकूलमेतत्त्वयोक्तमित्यर्थः ॥ ११ ॥ यद्वस्तुतोस्त्येव तत्किं चन अभावात्म असत् न ॥ तद्भावः सद्भावः कथं नाम विनश्यत्यसत्त्वमापद्यते ॥ १२ ॥

आपातदर्शनमात्रेण जगतःसत्तानावधारयितुंशक्या बहूनांतथादृष्टानांसत्वादर्शनादित्याह ॥ क्वेति ॥ स्थिरःअर्थप्रतिष्ठः ॥ १३ ॥१४॥ बाध्यत्वसाधनेजाग्रत्स्वप्नयोःपरस्परंदृष्टांतभावःप्रसिद्धइत्याह ॥ शाम्यतीति ॥ १५॥ बाधितंतुक्वगच्छतिक्वतिष्ठतीतियोगिभिरप्यदर्शनादसत्त्वमेवतस्यशरणमित्याशयेनाह ॥ यथेति ॥१६॥ यदिनास्त्येवदृश्यंतर्हिदृश्यत्वेषणकंचित्कालंपरमार्थतःकिंवस्तुभातिनदेवबोधोत्तरंपुनस्तथानविभातिचकिमर्थमित्यर्थः ॥ १७ ॥ कचकचायतेशुक्तिरिवस्वचाकचक्येनरजतमिवस्फुरति ॥ १८ ॥ अस्यैतदिति ॥ द्वेवावब्रह्मणोरूपेमूर्तंचैवामूर्त्तंचेत्यादिश्रुतेरितिभावः ॥ १९ ॥ यथाअवयविनोवपुःस्वरूपमवयवभेदभिन्नमिवतद्वच्चेत्यर्थः ॥ २० ॥ यथाअयंप्रसिद्धस्त्वंसितो

क्वस्थितंमृगतृष्णांवुक्वास्थिरोद्वींदुविभ्रमः॥ क्वस्थिराकेशदृग्व्योम्निक्वभ्रांत्यनुभवःस्थिरः॥१३॥सर्वंदृश्यमिदंपुत्रभ्रांतिमात्रमसन्मयम्॥
स्वप्नपुरमिवाभातिकथमेतन्नशाम्यति॥१४॥ शाम्यतीदमशेषेणतथासर्वत्रसर्वदा॥ यथाजाग्रद्द्विधीःस्वप्नःस्वप्नेवाजागरोयथा॥१५॥
यथास्वप्नपुरंशांतंनजानेक्वाशुगच्छति॥ शांतंतथाजगद्दृश्यंनजानेक्वाशुगच्छति॥१६॥ ॥शिष्यउवाच॥ ॥किमिदंभातिभगवन्न
विभातिचकिंपुनः॥ कस्येदंवस्तुनोरूपंचिद्व्योम्नोविततात्कृतेः॥१७॥ ॥गुरुरुवाच॥ ॥चिदाकाशमिदंपुत्रस्वच्छंकचकचायते॥
यन्नामतज्जगद्भातिजगदन्यन्नविद्यते॥१८॥ अस्यैतद्वस्तुनोरूपंचिद्व्योम्नोविततात्कृतेः॥ रूपमत्यजदेवाच्छंयदित्थमवभासते॥ १९॥
कचनाकचनंसर्गक्षयात्मास्यनिजंवपुः॥ व्योमात्मशुक्लकृष्णंस्याद्यथावयविनोवपुः॥ २०॥ यथायंत्वंसितोदांतरेकएवादितःकचैः॥त
थाब्रह्मैवमच्छात्मसर्गेसर्गक्षयेऽक्षयम्॥२१॥यथास्वप्नेसुषुप्तेचनिद्रैकैवाक्षयानिशम्॥ सर्गेस्मिन्प्रलयेचैवब्रह्मैकंचितिरव्ययम्॥२२॥
यथास्वप्नेजगद्द्रष्टुःशांतंशाम्यत्यशेषतः॥ तद्वदस्मज्जगदिदंशांतंशाम्यत्यशेषतः॥२३॥तदन्यत्रास्तिखेखाख्यंतथेत्यंगनविद्महे॥ अशंक्यं
परखेत्वेतदस्मच्चिद्व्योम्निसंभवात्॥ २४॥ यथेहास्मच्चिदाकाशकचनंसर्गसंक्षये ॥ तथान्यत्संविदाकाशंनैवमित्यत्रकाप्रमा॥ २५॥

दस्यस्वच्छोदकस्यकूदस्यांतःप्रविष्टोबिंबप्रतिबिंबभेदक्षयादेकएव आदितोकूदप्रवेशात्पूर्वमपिबिंबप्रतिबिंबभावादिभेदकचनैरप्येकएवाक्षयोदयस्तथाब्रह्मापिसर्गेसर्गक्षयेचाक्षयोदयमेकमेवेत्यर्थः ॥ २१ ॥ चितिःचित्स्वभावमव्ययमविकारि ॥ २२ ॥ यथास्वप्नेप्रसिद्धंजगज्जाग्रत्सुषुप्त्योःशांतमेवशाम्यति ॥ २३ ॥ बाधितमतएवखाख्यंशून्याख्यंतत्स्थानंजगदन्यत्रदेशांतरेतथैवविद्यतेइतितुबोधदृष्ट्यानविद्महे ॥ परेषांपुरुषांतराणांखेजीवाकाशेस्थास्यतीतितुअशंक्यंशंकानर्हम् कुतः अस्मच्चिद्व्योम्न्येवास्मद्वासनामयस्यसंभवाद्बाधितदशायामपिपरचिद्व्योम्निप्रसक्त्यभावादित्यर्थः ॥२४ ॥ यद्यस्मदनुभवसिद्धसर्गःप्रबोधबाधितःपरसंविदाकाशंविशेत्तदापरस्यप्रबोधेनशुद्धचिदाकाशकचनंनास्त्येवकल्प्यंस्यात्तत्रचकल्पकंप्रमाणंनास्तीत्याह॥ यथेति ॥ २५ ॥

एवमुक्तरीत्यास्मत्संविद्विपयःपरसंविदिनभातिचेत्स्वप्नद्रष्टुरन्योजाग्रत्पुरुषोयथासदृश्यधीर्विद्यतेतद्वदन्यत्रप्रलयकालेपिअन्यत्रपुरुषांतरेजगदादिधीरस्तीतिमन्येसंभावये॥ २६
अभ्युपगमेनगुरुरुत्तरमाह ॥ एवमेतदिति ॥ अतएवप्रलयेप्यैंद्ववजगत्सद्भावदर्शनंधातुःप्राग्वर्णितमितिभावः ॥ यदिजगच्चितःस्वरूपंस्यात्तदासर्वसाधारणंस्यात्तत्तुनकिंतुचित्य
ध्यस्तंभातितद्द्रष्टृणामन्येषांतद्वदेवनभातिचेतितत्तदनुसारेणव्यवस्थितंतत्स्वरूपमित्यर्थः ॥ २७ ॥ साधारणंनभातीत्यतएवतन्नकिंचित्तुच्छंनतुकिंचिदेवसत्किंतुतत्तज्जीवचिदा
काशकचनमात्रंतत्रसदसद्दृशौके ॥ २८ ॥ यदितुचिदाकाशरूपेणविद्यतेइत्युच्येततदातज्जगत्सर्वेणप्रकारेणसर्वत्रसर्वदाविद्यतेस्वरूपेणतुनकिंचित्कुत्रचित्कदाचिदपिविद्यतइत्य

॥ शिष्यउवाच ॥ ॥ एवंचेत्तद्यथास्वप्नेद्रष्टुरन्यःसदृश्यधीः ॥ विद्यतेतद्वदन्यत्रमन्येस्तिजगदादिधीः ॥ २६ ॥ ॥ गुरुरुवाच ॥ ॥ एवमे
तन्महाप्राज्ञस्वरूपंतुनतज्जगत् ॥ चितिभातिस्वरूपंतत्तद्वदेवनभातिच ॥ २७ ॥ नभातिनचतत्किंचिन्नचतत्किंचिदेवसत् ॥ तच्चिदाका
शकचनंकेतत्रसदसद्दृशौ ॥ २८ ॥ विद्यतेतद्धिसर्वत्रसर्वंसर्वेणसर्वदा ॥ नविद्यतेचतत्किंचित्सर्वंसर्वत्रसर्वदा ॥ २९ ॥ तत्सत्तत्सर्वदा
सर्वमसच्चासद्विवाखिलम् ॥ तन्मयंतच्चिदाकाशंननाशिनचनाशितत् ॥ ३० ॥ यन्नामसच्चिदाकाशंसर्गप्रलयरूपितत् ॥ तद्दुःखायाप
रिज्ञातंपरिज्ञातंपरःशमः ॥ ३१ ॥ विद्यतेसर्वथैवेदंसर्वंसर्वत्रसर्वदा ॥ नविद्यतेसर्वथाचसर्वंसर्वत्रसर्वदा ॥ ३२ ॥ एषदेवोघटःशैलःपटः
स्फोटस्तटोवटः ॥ तृणमग्निःस्थावरंचजंगमंसर्वमेवच ॥ ३३ ॥ अस्तिनास्तिचशून्यंचक्रियाकालोनभोमही ॥ भावाभावौभवोभूतिर्ना
शाःपाशाःशुभाशुभाः ॥ ३४ ॥ तन्नास्त्येवनयन्नामनित्यमेकस्तथावहिः ॥ आदिमध्यमथांतंतुकालत्रितयमेवच ॥ ३५ ॥ सर्वंसर्वेण
सर्वत्रसर्वदैवात्रविद्यते ॥ सर्वंसर्वेणसर्वत्रसर्वदात्रनविद्यते ॥ ३६ ॥ यदैवंरामसर्वात्मसर्वमेवास्तिसर्वदा ॥ ब्रह्मात्मत्वात्स्वप्नसंवित्पुर
न्यायेनवैतदा ॥ ३७ ॥ तृणंकर्तृतृणंभोक्तृब्रह्मात्मत्वात्तृणंविभुः ॥ घटःकर्त्ताघटोभोक्ताघटःसर्वेश्वरेश्वरः ॥ ३८ ॥ पटःकर्त्तापटोभोक्तापटः
सर्वेश्वरेश्वरः ॥ दृशिःकर्त्तादृशिर्भोक्तादृशिःसर्वेश्वरेश्वरः ॥ ३९ ॥

र्थः ॥ २९ ॥ यतस्तद्ब्रह्मैवसदसच्चअतोजगदपिसदसच्चभाति ॥ यतश्चिदाकाशंननाशिअतस्तन्मयंजगच्चननाशि ॥ ३० ॥ यद्यस्मात्तच्चिदाकाशमेवसर्गप्रलयरूपि ॥ तदेवाप
रिज्ञातंदुःखायपरिज्ञातंतुपरःशमःसर्वदुःखक्षयइत्यर्थः ॥ ३१ ॥ तच्चयथापरिज्ञानंज्ञाज्ञयोःसर्वंचसर्वदाविद्यतेनविद्यतेच ॥ ३२ ॥ तस्यैवसर्वरूपेणसर्वत्रविद्यमानतांप्रपंचयति ॥
एषदेवइत्यादिना ॥ ३३ ॥ भवोजन्म ॥ ३४ ॥ ३५ ॥ ३६ ॥ ब्रह्मभावेनदर्शनेतृणादयःसर्वेपदार्थाःप्रत्येकंसर्वकर्तारःसर्वभोक्तारःसर्वेश्वराश्चेत्येतदपिप्रपंचयति ॥ ब्रह्मात्मत्वा
दित्यादिना ॥ ३७ ॥ सर्वेषामीश्वराणामिंद्रादीनामीश्वरः ॥ ३८ ॥ ३९ ॥

३८१

॥ ४० ॥ सर्ववस्तूनांप्रत्येकमेकंवस्तुकर्त्ताभोक्तापरात्परःश्रेष्ठादपिश्रेष्ठः ॥ ४१ ॥ स्वयाप्रत्यगात्मरूपया ॥ यद्यस्मिन्रूपेक्षयोदयौविभातस्तादृशंसर्वरूपमेवंरूपाविभुनैवस्थिता ॥ ४२ ॥ उक्तेर्थेवादिनामनुभवंसंवादयति ॥ बाह्योर्थइति ॥ येषांबाह्योविज्ञानातिरिक्तोर्थोस्तितेषांसएवकर्त्ताभोक्ताच ॥ यथावैशेषिकसौत्रांतिकादीनाम् ॥ येषांतुवादिनांविज्ञानमात्रमेवास्तितथाविदांतेषांतदेवकर्तृभोक्तृच ॥ ४३ ॥ शून्यवादिनांतुतदेवेत्याह ॥ नकश्चिदिति ॥ पाशुपतादीनांकश्चित्तत्प्रक्रियाप्रसिद्धईश्वरएवकर्त्ताभोक्ताच ॥४४॥एवंमतभेदेपिनवादिनांमध्येकस्यचिदप्यसंभवदर्थवादित्वंयतस्तस्मिन्नुत्तमोत्तमेसर्वत्रसर्वशक्तिमतिसर्वात्मकेपदेसर्वमपिसंभवति ॥ तस्मिन्पदेसर्वतत्तद्वाद्यभिमताःपरस्परविलक्षणाःपदार्थप्रक्रियासाधनानुष्ठानफलादिविधयःपरस्परकृतास्तत्प्रतिषेधाश्चसर्वैप्यविरोधेनासंकीर्णाःसंभवंति ॥ तत्तद्बुद्ध्यवच्छिन्नचैतन्येवरशापन्यायेनयथास्वसंकल्पनं

गिरिःकर्त्तागिरिर्भोक्तागिरिःसर्वेश्वरेश्वरः ॥ नरःकर्त्तानरोभोक्तानरःसर्वेश्वरेश्वरः ॥ ४० ॥ प्रत्येकंसर्ववस्तूनांकर्त्ताभोक्तापरात्परः ॥ अनादिनिधनोधातासर्वब्रह्मात्मकंयतः ॥ ४१ ॥ तृणकुंभादयस्त्वेतेस्वयाविभुतयाविभुः ॥ एवंरूपास्थितारूपंयद्विभातःक्षयोदयौ ॥ ४२ ॥ बाह्योर्थोस्तिसएवेहकर्त्ताभोक्तातथाविधः ॥ विज्ञानमात्रमेवास्तिकर्तृभोक्तृतथाविदाम् ॥ ४३ ॥ नकश्चिच्चैवकर्त्तेहनचभोक्तातथाविदाम् ॥ कश्चिदीश्वरएवेहकर्त्ताभोक्तातथाविदाम् ॥ ४४ ॥ सर्वमेवपदेतस्मिन्संभवत्युत्तमोत्तमे ॥ विधयःप्रतिषेधाश्चकेतेसंतिनसंतिके ॥ ४५ ॥ शुद्धेद्रष्टेवचिद्व्योमदृश्यतामिवभासयत् ॥ स्वमात्मानंजगदितिपश्यंस्तिष्ठेदनामयम् ॥ ४६ ॥ सर्वादृशोविधिनिषेधदृशश्चसर्वाःसंकल्पवेदनविशेषसशेषपूर्वाः ॥ सत्यात्मिकाःसततमेवनचैवसत्यारूपंयथानुभवमत्रयतःस्वरूपम् ॥ ४७ ॥ इतित्वयाशिष्यतयामदंतिकाच्छ्रुतंपुरातेननचासिबुद्धवान् ॥ ततोनुभूयान्यजगद्भवाद्भवानिहाद्यजातोसितदेवपृच्छसि ॥ ४८ ॥

व्यवस्थितविवर्त्तसंभवात् ॥ ४५ ॥ तत्रतत्रचिद्व्योमशुद्धेस्वात्मनितत्तद्वासनानुसारिदृश्यतामिवभावयस्तद्द्रष्टेवभूत्वास्वमात्मानंतादृशंजगदितिपश्यत्तत्रतत्रवस्तुतोऽनामयमेवतिष्ठेत्स्थातुंशक्तमित्यर्थः ॥ ४६ ॥ हेरामसर्वेषांजीवानांसर्वाःस्वस्वानुभवसिद्धाःपदार्थादिदृशःसर्वाःपरस्परविलक्षणविधिनिषेधदृशश्चयस्मात्तत्तत्संकल्पतत्तद्वेदनविशेषतत्तदनुभवशेषवासनासहिततत्तत्कामकर्मपूर्विकास्तस्मात्तत्तद्व्यवहारेसततमेवतत्तदर्थक्रियासमर्थत्वात्सत्यात्मिकाःपरदृशातुप्रतीतेरेवाभावान्नचैवसत्याःशशशृंगकल्पाः यतःप्रत्यगात्मरूपंयथानुभवमेवजगद्रूपंधत्तेइतिशेषः ॥ ४७ ॥ हेरामपुरापूर्वयुगेत्वयाशिष्यतयास्थित्वागुरोर्ममअंतिकात्इतिएवंवर्णितरूपमुपदेशनंश्रुतंतेनोपदेशेनत्वंतदानचासिबुद्धवान् ॥ ततस्तदनंतरमबोधदोषादेवपुनर्भवान्पुनर्भवादन्यजगदनुभूयअद्यास्मिंस्त्रेतायुगेइहदशरथगृहेजातोसि ॥ तदेवप्राङ्मांप्रतिपृष्टमद्यापिमांपृच्छसि ॥ ४८ ॥

अत्रापित्वयामदुपदिष्टमुत्तमंसत्परमार्थवस्तुगोचरमतएवसंसारलक्षणायादीर्घरजन्यास्तापतमोनिवर्त्तकत्वात्सितरश्मेःपूर्णचंद्रस्यबिंबमिवस्थितंज्ञानमखिलंसमग्रंश्रुतंतेनत्वंमो
हमज्ञानमुत्सार्यनिरतिशयानंदरूपपरमपुरुषार्थलाभाभ्युदयवान्अमलैकबोधरूपोजातःएवंकृतकृत्यस्त्वमतःपरंयथागतंव्यवहारपरंपराप्राप्तंस्वराज्यपरिपालनादिकमनुतिष्ठ
॥ ४९ ॥ हेरामत्वंविमलस्वभावेतपतिसर्वतःप्रकाशमानेसर्वात्मकेआत्मनिसर्वदृश्यपदार्थमुक्तस्तिष्ठन्सन्निर्वाणोनिरतिशयानंदमग्नोऽतएवशांतामतिर्यस्यतथाविधःसन्नंबरको
शमिवकांतोमनोहरस्तीर्णतृष्णःसन्धर्मेणराज्यमनुपालयेत्यंतेमंगलार्थमाशीः ॥ ५० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०उ०त्रयोदशोत्तरद्विशततमःसर्गः ॥ २१३॥
उपदेशप्रशंसाचश्रोतॄणांकृतकृत्यता ॥ दिव्यश्चमानुषश्चांतेवर्ण्यतेसुमहोत्सवः ॥ १ ॥ महतःशास्त्रस्यांतेदेवैर्मनुष्यैश्चकृतंगुरुद्विजसुरपितृसज्जनपूजनमहोत्सवलक्षणंमंगलंवर्ण

939

ज्ञानंसदेतदखिलंश्रुतमुत्तमंचित्संसारदीर्घरजनीसितरश्मिबिंबम् ॥ जातस्त्वमभ्युदयवानमलैकबोधउत्सार्यमोहमनुतिष्ठयथागतं
त्वम् ॥ ४९ ॥ तिष्ठंस्तदात्मनिपरेविमलस्वभावेसर्वात्मकेतपतिसर्वपदार्थमुक्तः ॥ निर्वाणशांतमतिरंबरकोशकांतोधर्मेणराज्यमनुपा
लयतीर्णतृष्णः ॥५०॥ ॥इ०वा०म०वा०दे०मो०नि०उ०प्राक्तनरामशिष्यत्वोपाख्यानंनामत्रयोदशोत्तरद्विशततमःसर्गः॥२१३॥
श्रीवाल्मीकिरुवाच॥ ॥इत्युक्तवत्यथमुनौनभसोननादवर्षामृताभ्रमिवदुंदुभिरामरोद्राक्॥ शुक्लीकृताखिलककुब्वदनातुषारवर्षो
पमाभुविपपातचपुष्पवृष्टिः॥ १ ॥ किंजल्कजालदिवसांतघनांगरागावातावधूतसितकेसरगौरहारा॥ पुष्पोदरोत्थमृदुसीकरशीतलां
गाप्राप्तास्वयंसुरपुरादिवपुण्यलक्ष्मीः॥ २॥ कल्पांतकालकपिकंपितशुष्कशाखात्स्वर्गद्रुमात्पतितमाशुविडंबयंती ॥ तारागणंप्रथित
भासमनल्पहासमाशामुखप्रसृतभैरवमंबरस्था ॥ ३ ॥

यिष्यन्वाल्मीकिरुवाच ॥ इतीत्यादिना ॥ मुनौवसिष्ठेइतिवाक्यमुक्तवतिसतिअथआमरःअमरसंबंधीदुंदुभिर्वर्षार्थममृतेनपूर्णमभ्रमिवननाद ॥ द्राक्सद्यःशुक्लीकृतान्यखिला
निककुब्वदनानिदिङ्मुखानिययाअतएवतुषारवर्षोपमापुष्पवृष्टिश्चभुविपपात ॥ १ ॥ साचपुष्पवृष्टिःकिंजल्कजालान्येवदिवसांतघनाइवशोणःअंगरागोयस्याः तथापुष्पोद
रोत्थामृदवःसीकराएवशीतलान्यंगानियस्याः वातावधूताःसिताःकेसराएवगौराहाराःयस्यास्तथाविधा सुरपुरात्स्वयमेवोत्सवदर्शनायभुवंप्राप्तापुण्यलक्ष्मीरिवस्थितेत्युत्प्रेक्षा
॥ २ ॥ पुनःकीदृशीसापुष्पवृष्टिः ॥ कल्पांतकाललक्षणोयःकपिर्मर्कटस्तेनकंपिताःशुष्काःकल्पद्रुमशाखादिक्पालपुरलोकभेदरूपशाखाश्चयस्यतथाविधात्स्वर्गरूपात्द्रुमा
दाशुपतितंआशामुखेषुझटितिपातनायप्रसृतोभैरवःसंहाररुद्रोयस्यतथाविधंप्रथितभासंतारागणमंबरस्थांसतीत्यनल्पहासंयथास्यात्तथाविडंबयंतीतारागणप्रथितहासंभैरवंच
विडंबयंतीतिवाउत्प्रेक्षा ॥ ३ ॥

दुंदुभिनादैर्गर्जंन्(किजल्कपुंजलक्षणोजलदोमेघोयस्यास्तथाविधाहिमवत्हारिणामनोहरणपुष्पपूरेणपुष्पप्रवाहेणआपूरिताअखिलासभाययातथांविधाअतएवईक्षणेनदर्शने नकौतुकविकासस्यआनंदविस्तारस्यकरीसापुष्पवृष्टिःअथशममाजगाम ईक्षणेनद्रष्टृजननेत्रेणसहकौतुकविकासकरीतिवाक्षणेनशममाजगामेतिवायोज्यम् ॥ ४ ॥ यथा स्थानमिति ॥ सर्वोन्नतस्थानेवसिष्ठस्तत्संनिहितेमुनयस्तत्सन्निहितेदशरथरामादयस्तत्सन्निहितेमंत्रिसामंतास्तदर्वाङ्निगमाःप्रजाश्चेत्येवंक्रमेणाधःस्थिताःसभ्यास्तानिदिव्यानिपु ष्पाण्युपादायवसिष्ठचरणेपुष्पांजलिंदत्वावसिष्ठायनमस्कृत्यपुष्पसौरभशैत्यादिसंपर्कात्स्वेददौर्गंध्यादिसंशोकितांरोगक्षुत्तृषाश्रमादिप्रयुक्तशोकवत्तांजन्ममरणादिसर्वशोकव त्तांचजहुस्तत्यजुः ॥ ५ ॥ संसारलक्षणाद्विततकृतेरतिदीर्घात्कांताराच्चिरंश्रांतावयंत्वदनुपहोपदेशात्सुविशःसुखेनप्रवेष्टुंशक्यआत्मायेषांतथाविधाःसंतस्तस्मिन्नेवात्मनिचिरं

सापुष्पवृष्टिरथदुंदुभिनादगर्जत्किंजल्कपुंजजलदाशममाजगाम॥ आपूरिताखिलसभाहिमहारिपुष्पपूरेणकौतुकविकासकरीक्षणेन ॥ ४ ॥ तानिदिव्यानिपुष्पाणियथास्थानमधःस्थिताः ॥ वसिष्ठायनमस्कृत्वासभ्याःसंशोकितांजहुः॥ ५॥ ॥दशरथउवाच॥ ॥अहो नुसुविशात्मानःसंसारविततकृतेः॥ विश्रांतास्मश्चिरंश्रांताःशुद्धामेघाइवाचले॥६॥ कर्मणामवधिःपूर्णोदृष्टःसीमांतआपदाम्॥ज्ञातं ज्ञेयमशेषेणविश्रांताःस्मःपरेपदे॥ ७॥ ध्यानलब्धपरव्योमचिरानुभवनभ्रमैः ॥ धारणाधारविश्रांत्यादेहसंत्यजनक्रमैः॥ ८॥ संकल्प नवनिर्माणैःस्वप्नदृष्टिजगज्ज्वरैः॥शुक्तिरूप्यानुभवनैःस्वप्नात्मस्मृतिदर्शनैः॥ ९ ॥ अनन्यैःपवनस्पंदैरनन्यैःसलिलद्रवैः॥ इंद्रजालपुरापूरैर्गंधर्वनगरोत्करैः॥ १० ॥ मायापूर्णपुराभोगैर्मृगतृष्णानदीरयैः ॥ आयतौपवनस्पर्शैर्द्विचंद्रानुभवोदयैः॥ ११ ॥

विश्रांताःस्मःअहोइत्याश्चर्ये॥ यथाशुद्धाजाड्यकार्ष्ण्यनिर्मुक्ताःशरन्मेघाअचलेहिमवदादौविश्राम्यंतितद्वत् ॥ ६ ॥ किंचास्माकंकर्मणांपुरुषार्थसिद्धयेअवश्यकर्त्तव्यानामव धिःपूर्णःकृतकृत्यतासंपन्नेत्यर्थः ॥ आपदांचसीमांतःपरमावधिर्दृष्टः ॥ तत्कुतस्तत्राह ॥ ज्ञातमिति ॥ ७ ॥ सर्वेषांतृतीयांतपदानांषष्ठश्लोकेएवमादिभिरन्यैश्चदृष्टैर्नैर्दृश्यदृष्टि र्मांजितेत्यत्रान्वयः ॥ ध्यानेनलब्धंकल्पितंपरमन्यद्व्योमतत्रचिरंविहाराद्यनुभवनभ्रमैर्लीलोपाख्यानादौप्रदर्शितैःधारणयासर्वाधारेब्रह्मणिविश्रांत्यादेहसंत्यजनक्रमोपिली लायावर्णितएव ॥ ८ ॥ स्वप्नेआत्मनःस्वस्यस्मृतिदर्शनैर्हरिश्चंद्रादौप्रसिद्धैः ॥ ९ ॥ १० ॥ माययाप्रदर्शितजलपूर्णपुराभोगैः ॥ आयतौसर्वोत्तरकालेप्रलयेवर्णितैश्चं द्रपवनस्पर्शैः ॥ ११ ॥



१ टीकानुरोधाद्ब्रस्तत्वमार्षंपूराभोगैरितिवापाठःकल्प्यः

मदाद्विवेकभ्रंशेप्रतीयमानैःपुरस्पंदैः ॥ मुधाउत्पातादिनाशुभाशुभसूचनंविनैवभ्रांत्याप्रतीतैरवनिकंपनैः खेकेशोंड्रकदर्शनैः ॥१२॥१३॥ सत्यंब्रह्मैवसंपन्नः ॥१४॥१५॥ अर्हितः पूजितः ॥ अपिचेत्यनेनापमानितश्चसमदर्शनेनहर्षविषादानुदयाच्छांतोप्यहंलक्ष्यामीव॥१६॥यथापूर्वंव्यवहारेस्थितोस्मितथैवसांप्रतंतिष्ठामि ॥ विगतज्वरोव्यवहारप्रसक्तसंतापशून्यः ॥१७॥ तेनत्वद्वचनेनयादृशोविश्रांत्युपायोलब्धस्तथाउपायस्तुकोन्यःस्याद्दृष्टिर्वाअन्याकीदृशीस्यात् ॥ अहोनुवितताअपरिच्छिन्नाविश्रांतिसुखभूमिर्मयाआसादिता ॥ एतादृशीजन्ममरणाद्यनंतानर्थसंकुलसंसारदशाअहोनुकष्टंप्राणिनामित्यर्थः ॥१८॥ ममतुदुःखनिमित्तानिकान्यपिनसंतीत्याह ॥ नशत्रुरिति ॥ क्षेत्रंशरीरंवाश्चंच ॥ जनः सुजनः ॥ एषास्वात्मचिदेवयावद्दुर्बोधातावत्क्षुब्धादुःखदाजगदभूत्इदानींतुबाधात्शांतासर्वार्थसुंदरीसंपन्नेत्यर्थः ॥१९॥ हेभगवन्त्वदनुग्रहंविनाएतांदृष्टिंजनःकथंवेत्ति ॥२०॥

मदभ्रंशपुरस्पंदैर्मुधात्ववनिकंपनैः॥ बालयक्षाद्यनुभवैःखकेशोंड्रकदर्शनैः ॥ १२ ॥ एवमादिभिरन्यैश्चदृष्टांतैःस्वानुभूतिदैः ॥ अहोनुमार्जितादृस्यदृष्टिर्भगवतामम॥ १३॥ ॥श्रीरामउवाच॥ ॥नष्टोमोहःपदंप्राप्तंत्वत्प्रसादान्मुनीश्वर॥ संपन्नोहमहंसत्यमत्यंतमवदातधीः॥ १४ ॥ स्थितोस्मिगतसंदेहःस्वभावेब्रह्मरूपिणि॥ निरावरणविज्ञानःकरिष्येवचनंतव॥१५॥ स्मृत्वास्मृत्वाऽद्यतासेकसौख्यदंवचनंतव॥ अर्हितोपिचशांतोपिलक्ष्यामीवमुहुर्मुहुः॥ १६॥ नैवमेयकृतेनार्थोनाकृतेनेहकश्चन॥ यथास्थितोस्मितिष्ठामितथैवविगतज्वरः॥ १७॥ उपायस्तुतथातेनदृष्टिर्वास्तीहकीदृशी॥ अहोनुवितताभूमिःकष्टमेतादृशीदशा ॥ १८॥ नशत्रुर्नचमित्रंमेनक्षेत्रंद्रुजंनोजनः॥ दुर्बोधैषाजगत्क्षुब्धाशांतासर्वार्थसुंदरी॥ १९॥ कथमेतांजनोवेत्तिविनाभवदनुग्रहम् ॥ विनैवसेतुंपोतंवाबालोब्धिंलंघयेत्कथम्॥ २०॥ ॥लक्ष्मणउवाच॥ ॥जन्मांतरोपचितसंशयनाशनेनजन्मांतरोपचितपुण्यशतोदितेन ॥ जातोद्यमेमुनिवचःपरिबोधनेनजातोद्यमेमनसिचंद्रइवप्रकाशः॥२१॥ईदृश्यांदृश्यमानायांदृशिदोषदशाशतैः॥ काष्ठवद्दृश्यतेलोकःस्वदुर्भगतयातया॥२२॥ ॥विश्वामित्रउवाच॥ ॥अहोवतमहत्पुण्यंश्रुतंज्ञानंमुनेर्मुखात्॥ येनगंगासहस्रेणस्नाताइववयंस्थिताः ॥ २३॥

जन्मांतरेष्वनंतजन्मसूपचितदुर्वासनाप्रयुक्तसंशयानांनाशनेनतथाजन्मांतरोपचितानांपुण्यशतानामुदयोबोधफलोन्मुखतायेनतथाविधेनमुनिवचःकृतेनप्रतिबोधनेनजातोविचारोद्यमोयस्मिंस्तथाविधेमेमनसिअद्यचंद्रइवपरमाह्लादकारीपरमात्मप्रकाशोजातइत्यर्थः ॥ २१ ॥ ईदृश्यांनिरतिशयानंदप्रकाशरूपायामात्मदृशिभवादृशमहानुभावोपदेशान्नित्यापरोक्षतयादृश्यमानायामप्ययंलोकोजनस्तयाप्रसिद्धयास्वदुर्भगतयादौर्भाग्यवशेनमहत्सेवाशुश्रूषादिहीनःसन्रागद्वेषाहंकारजन्ममरणादिदोषदशाशतैःकाष्ठवद्दृश्यतेतदाश्चर्यमित्यर्थः ॥ २२ ॥ वतेतिहर्षे ॥ स्नाःमनोवतेतिवत् ॥ २३ ॥

संपदामुत्कर्षेसीमांतआत्मा निरतिशयानंदरूपत्वात् ॥ दृष्टीनांसीमांतआत्मदृष्टिरेकविज्ञानेनसर्वविज्ञानात् ॥ शास्त्राणांसीमांतोऽध्यात्मशास्त्रंचरमप्रमाणत्वात् ॥ पशुपुत्रधनादि नाशलक्षणानामापदांसर्वसंसारनाशःसीमांतोयदुत्तरमन्योनाशोनास्ति ॥ काव्यरसालंकारादिशालिनीनांगिरांवसिष्ठोक्तिःसीमांतः ॥ दृष्टानांसुखविश्रांतिहेतूनांप्रासादाराम गिरिनदीपुलिनादिदेशानांपरमात्मदेशःपरमविश्रांतिहेतुत्वात्सीमांतोदृष्टइत्यर्थः ॥ सर्वत्रपरमात्मैववापरमसीमांतइत्यर्थः ॥ २४ ॥ २५ ॥ परमंप्रसिद्धभान्वपेक्षयाउत्कृष्टंभानुत्व म् ॥ २६ ॥ २७ ॥ नःअस्मभ्यंतत्परमपावनंवस्तुशास्त्रंवाकथितवान्येनपावनतांगतावयमितिशेषः ॥ २८ ॥ २९ ॥ इदानींश्रीवसिष्ठोमंगलादीनिमंगलमध्यानिमंगलांतानिशास्त्राणि प्रथंतेवीरपुरुषकाण्यायुष्मत्पुरुषकाणिचभवंतिअध्येतारश्चमंगलयुक्तायथास्युरितिमहाभाष्येभगवत्पतंजलिनोदाहृतांश्रुतिमनुसृत्य निर्विघ्नंसमाप्तस्यमहतःशास्त्रस्यशास्त्रोक्त

॥ श्रीरामउवाच ॥ ॥ संपदामथदृष्टीनांशास्त्राणामापदांगिराम् ॥ देशानामथदृष्टानांदृष्टःसीमांतउत्तमः ॥ २४ ॥ ॥ नारदउवाच ॥ ॥ यन्नश्रुतंब्रह्मलोकेस्वर्गेभूमितलेतथा ॥ कर्णौतज्ज्ञानमाकर्ण्ययातौमेघपवित्रताम् ॥ २५ ॥ ॥ लक्ष्मणउवाच ॥ ॥ हार्दंवात्यंचतिमि रमपमृष्टवतात्वया ॥ मुनेपरमभानुत्वंनूनंनःसंप्रदर्शिताम् ॥ २६ ॥ ॥ शत्रुघ्नउवाच ॥ ॥ निर्वृतोस्मिप्रशांतोस्मिप्राप्तोस्मिपरमंपद म् ॥ चिरायपरिपूर्णोस्मिसुखमासेचकेवलम् ॥ २७ ॥ ॥ दशरथउवाच ॥ ॥ बहुजन्मोपलब्धेनपुण्येनायंमुनीश्वरः ॥ धीरःकथितवान्नस्त द्येनपावनतांगताः ॥ २८ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इतितेषुवदत्स्वत्रसभ्येषुसहभूभृता ॥ वसिष्ठःसउवाचेदंज्ञानपावनयागिरा ॥ २९ ॥ राजन्रघुकुलेकेंदोयदहंवच्मितत्कुरु ॥ इतिहासकथांतेहिपूजनीयाद्विजातयः ॥ ३० ॥ तदद्यब्राह्मणौघांस्त्वंसर्वकामैःप्रपूरय ॥ वेदार्थं समनुष्ठानफलंप्राप्स्यसिशाश्वतम् ॥ ३१ ॥ मोक्षोपायकथावस्तुसमाप्तौद्विजपूजनम् ॥ शक्तितःकीटकेनापिकार्यंकिमुमहीभृता ॥ ३२ ॥ इतिमौनंवचःश्रुत्वासहस्राणिनृपोदश ॥ दूतैराकारयामासद्विजानांवेदवादिनाम् ॥ ३३ ॥ मथुरायांसुराष्ट्रेषुगौडेषुचवसंतिये ॥ ते भ्यःकुलेभ्यःसोभ्यर्च्यसमानीयद्विजन्मनाम् ॥ ३४ ॥ अधिकात्यधिकज्ञानप्रकृतद्विजभोजनः ॥ तदादशसहस्राणिभोजयामासभूप तिः ॥ ३५ ॥ यथाभिमतभोज्यान्नदानदक्षिणयातया ॥ एवंसंपूज्यताान्विप्रान्पितॄन्देवान्नृपांस्तथा ॥ ३६ ॥ पौरामात्यांस्तथाभृत्यान्दीनां धकृपणांश्चतान् ॥ तस्मिन्दशरथोराजादिनेसहसुहृज्जनैः ॥ ३७ ॥

फलसिद्धयेब्राह्मणदेवपितृसुजनपूजोत्सवादिमंगलमौचित्यज्ञापनमुखेनाज्ञापयति ॥ राजन्नित्यादिना ॥ पूजनीयाइतिविध्यौचित्ययोःकृत्यः ॥ ३० ॥ वेदार्थःप्रकृतेश्रवणवि ध्यर्थस्तस्यसम्यगनुष्ठानंसांगतयानिष्पादनम् ॥ श्रवणविधेःकाम्यविधितयासांगानुष्ठानादेवफलसिद्धेरितिभावः ॥ ३१ ॥ कीटकेनकीटकवदनादरार्हेणदरिद्रेणापिकार्यमित्य र्थः ॥ ३२ ॥ मुनिनाप्रोक्तंमौनंवचः ॥ गुर्वाज्ञायाःशिरसाधारणीयत्वान्मौनंनिरुत्तरंयथास्यात्तथाश्रुत्वेतिवा ॥ ३३ ॥ कुलेभ्यःकुलश्रेष्ठेभ्यःपृथक्पृथक्समुदितेभ्यश्च ॥ ३४ ॥ अधिकेभ्योप्यत्यधिकंज्ञानंयेषांतत्प्रकृतंतानुपक्रम्यप्रवृत्तंद्विजभोजनंयेन ॥ ३५ ॥ पितॄन्श्राद्धादिना ॥ देवान्माल्यमोदकोपहारादिनाइष्ट्यादिनाच ॥ नृपान्यानरत्नादिना ॥ ३६ ॥ सुहृज्जनैःसहउत्सवंचकारेत्युत्तरत्रान्वयः ॥ ३७ ॥

लब्धःसंस्तुतिसीमांतोयेन ॥ अत्रापिसहसुहृज्जनैरितियोजनीयम् ॥३८॥ गीर्वाणनगोमेरुःकल्पद्रुमश्चतद्वत्सुंदरे ॥३९॥ वंशलतात्रमुरली ॥ क्रियाविशेषणेद्वे ॥ तानर्त्तकीर्वर्णयति ॥ अन्योन्येत्यादिना॥ अन्योन्येतरंपरस्परविलक्षणंयथास्यात्तथाचिकुरबंधनालंकारभेदादिनारचिताःशेखरायासाम्॥४०॥क्षुब्धीकृतानामितस्ततश्चालितानामापणानां विविधाभिनयव्यवहारवतांकराणांभ्रांतिभिःपरितःपल्लवितमिवांबरमाकाशंवस्त्रंचयासाम॥हास्यरसाभिनयेमुग्धैरट्टहासैर्विक्षिप्ताःपरितःप्रक्षिप्तादंतेंदुकिरणच्छटायाभिः॥४१॥ वीररसाभिनयेमदाकलितहुंकाराः ॥ करुणाद्भुतादिरसाभिनयलीलासुतरलस्वराः ॥ शृंगारमानाद्यभिनयेएकपादतलाघातेनहेलयाहतंताडितंधरातलंयाभिस्ताः ॥ ४२ ॥ शृंगारकोपाद्यभिनयेस्रग्दामविधूननेनतारैर्नक्षत्रैरिवविगलद्भिःकुसुमासारैःपांडुराजलधाराइवपातितायेविच्छिन्नाःहारास्तेषुदैवात्पदन्यासैःस्खलत्पदाः ॥ ४३ ॥ लोलैराभरणैः

लब्धसंस्तुतिसीमांतश्चकारोत्सवमुत्तमम् ॥ तथानृपगृहेतस्मिन्कौशेयमणिकांचने ॥ ३८ ॥ भूषितेनगरेचैवगीर्वाणनगसुंदरे ॥ ननृतुर्मत्तकामिन्योविलासिन्योगृहेगृहे ॥ ३९ ॥ लसद्वंशलताकांस्यवीणामुरजमर्द्दलम् ॥ तांडवेनोद्धतारावमन्योन्येतरशेखराः ॥ ४० ॥ क्षुब्धीकृतापणकरभ्रांतिपल्लवितांबराः ॥ मुग्धाट्टहासविक्षिप्तदंतेंदुकिरणच्छटाः ॥ ४१ ॥ मदाकुलितहुंकारालीलासुतरलस्वराः ॥ एकपादतलाघातहेलाहतधरातलाः ॥ ४२ ॥ स्रग्दामतारविगलत्कुसुमासारपांडुराः ॥ धारापातितविच्छिन्नहारमुक्तास्खलत्पदाः ॥ ४३ ॥ लोलाभरणसाकारंकामंननृतुरंगनाः ॥ पेठुःस्फुटपदंविप्रावंदिनोप्यंगनाश्चताः ॥ ४४ ॥ पपुरुत्तांडवंपानंपानपामदशालिनः ॥ भोज्यंबुभुजिरेचित्रंभूपिताभोजनार्थिनः ॥ ४५ ॥ सुधादिपरिलेपेनरंजितागृहभित्तयः ॥ रेजूरामेंदुभानेनपुष्पधूपविलेपनैः ॥ ४६ ॥ वासांसिवसिताश्चित्राण्युत्तमस्रग्विभूषणाः ॥ चेरुःपरिचराश्चेव्यश्चारुगंधान्नृपाध्वरे ॥ ४७ ॥ देहयष्टिपुसंयोज्यवनितायक्षकर्दमम् ॥ जग्मुस्तांडवनर्त्तक्यःशृंगारात्मांगणांतरम् ॥ ४८ ॥ भवबहुलनिशावसानहर्षादितिघनमुत्सवमेवसप्तरात्रम् ॥ दशरथनृपतिःसदानभोगश्रियमकरोत्पदमक्षयंसमेतः ॥ ४९ ॥ ॥इ०वा०म०वा०दे०मो०नि०उ०महोत्सववर्णनंनामचतुर्दशोत्तरद्विशततमःसर्गः॥२१४॥

साकारंकामंदर्शयंत्यइवेतिशेषः ॥ साकारंकृत्रिमाकारसहितंयथास्यात्तथाकामंयथेच्छंननृतुरितिवा ॥ पेठुर्यथाक्रमंवेदस्तवगीतानि ॥ ४४ ॥ तेपुपानपाअविप्राःपानंमध्वासवंपपुः ॥ विप्रादयस्तुभोजनार्थिनोभोज्यंभोजनार्हंचित्रंनानाभक्ष्यादिवैचित्र्ययुक्तंचतुर्विधमन्नंबुभुजिरे ॥ ४५ ॥ रामलक्ष्मणस्येंदोर्भानेनदेहप्रभाचंद्रिकयापुष्पधूपविलेपनैश्चरेजुः ॥ ४६ ॥ नृपस्यअध्वरेउत्सवयज्ञे ॥ ४७ ॥ कर्पूरागुरुकस्तूरीकंकोलैःसमंघृष्टंचंदनंयक्षकर्दमस्तंदेहयष्टिपुसंयोज्यविलिप्यतांडवनर्त्तक्योवनिताःशृंगारात्मअलंकृतमंगणांतरंराजसभांगणमध्यंजग्मुः ॥ ४८ ॥ दशरथनृपतिःअक्षयंब्रह्मपदंप्रपन्नःसन्भवःसंसारस्तल्लक्षणायाबहुलनिशाकृष्णपक्षरात्रिस्तस्यअवसानंबोधसूर्योदयेननाशस्तत्प्रयुक्तान्हर्षात्सप्तरात्रंइतिवर्णितप्रकारंसदानभोगश्रियंदानभोगशोभासहितंघनमुपचितमुत्सवमेवाकरोत् ॥ ४९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणे उत्तरार्द्धेचतुर्दशोत्तरद्विशततमःसर्गः ॥ २१४ ॥

॥ ७ ॥ ॥ ७ ॥

रामादिवत्प्रबुद्धस्त्वंजीवन्मुक्तःसुखीवस ॥ इतिवाल्मीकिनाशिष्योभरद्वाजोत्रशिष्यते ॥ १ ॥ इतिअनयावर्णितयारीत्यारामादयोनिःशोकतांगताःप्राप्ताः ॥ १ ॥ त्वमपिएता मेवपूर्णब्रह्मात्मदृशमवष्टभ्यदृढमाश्रित्यतिष्ठ ॥ २ ॥ इदंचमदुपदिष्टंज्ञानंदुःसंगेनभोगासंगाभ्यासेनचयथाननश्यतितथारक्षेत्याशयेनाह ॥ धीरिति ॥ ३ ॥ दशरथादयोराजा नः ॥ सुपांसुलुगितिजसश्छांदसोडादेशः ॥ ४ ॥ स्वयंत्वविचारेणैवरामवत्पूर्वंमुक्तधीरसि अद्यतुइमांमोक्षसंहितांश्रुत्वामुक्ततरोसि ॥ संभावितसर्वशंकापंकक्षालनादितिभा वः ॥ ५ ॥ दृष्टपरमपुरुषार्थफलत्वादस्यशास्त्रस्यसर्वशास्त्रेभ्योभ्यर्हिततमत्वंमंदाधिकारिष्वप्यभ्यासेफलोपधानसमर्थत्वंचदर्शयति ॥ मोक्षोपायानिति ॥ त्वादृशेमुख्याधि कारिणिफलोपधानेकाकथा ॥ ६ ॥ हेसाधोयथावसिष्ठवाक्यानांत्वदिप्रसरेणसर्वसंशयसहिताऽज्ञाननाशान्महानुभावारघवोरामादयःपुण्यंजीवन्मुक्तपदमनुप्रयाताःसंतोवि शोकाःसंपन्नाएवमेवत्वयाप्याद्यंनित्यसिद्धब्रह्मभावलक्षणंजीवन्मुक्तपदंगतव्यंविशोकेनचभाव्यमित्यर्थः ॥ ७ ॥ तत्प्राप्तावन्येषामपिसत्संगसेवाप्रश्नादिरेवोपायइत्याह ॥ स

श्रीवाल्मीकिरुवाच॥ ॥भरद्वाजमहाबुद्धेममशिष्याधिनायक ॥इतिरामादयोज्ञातज्ञेयानिःशोकतांगताः॥ १ ॥एतामेवदृशंकांता मवष्टभ्ययथासुखम्॥नीरागस्तिष्ठनिःशंकोजीवन्मुक्तःप्रशांतधीः ॥ २ ॥ धीरनभ्यस्तसंगाहिरामादीनामिवानघ॥घनमोहनिमग्ना पिविमूढापिनमुह्यति॥ ३ ॥ एवमेतेमहासत्वाजीवन्मुक्तपदंगताः॥ राजपुत्राराघवाद्याराजादशरथादयः॥ ४ ॥ त्वंचपुत्रभरद्वाजस्व यमेवासिमुक्तधीः॥सत्यंमुक्ततरोस्यद्यश्रुत्वेमांमोक्षसंहिताम्॥५॥ मोक्षोपायानिमान्पुण्यान्प्रत्यक्षानुभवार्थदान्॥बालोप्याकर्ण्य तज्ज्ञत्वंयातिकात्वादृशेकथा॥ ६ ॥ यथापदंपुण्यमनुप्रयातामहानुभावारघवोविशोकाः॥वसिष्ठवाक्यप्रसरेणसाधोगंतव्यमाद्यंप दमेवमेव॥ ७ ॥ सतांनयेनोत्तमसेवयाचप्रश्नेनचोदारकथागतेन॥ विंदंतिवेद्यंसुधियोऽप्रमत्तावसिष्ठसंगादिवराघवाद्याः॥ ८ ॥ तृ ष्णावरत्राद्दृढबंधबद्धायेग्रंथयोज्ञस्यहृदिप्ररूढाः ॥ सर्वेहितेमोक्षकथाविचाराद्बालास्त्वबालाइवयांत्यभेदम्॥ ९ ॥ मोक्षाभ्युपायान्सु महानुभावान्ज्ञास्यंतियेतत्त्वविदांवरिष्ठाः॥पुनःसमेष्यंतिनसंसृतिंतेकोर्थःसुतान्येनबहूदितेन॥ १० ॥

तामिति ॥ नयेनशिक्षणेनउत्तमयालोभालस्यनिद्रादित्यागसहितयासप्रेमनिरंतरसेवया ॥ उदाराभिर्बोधोपायभूताभिःकथाभिराख्यायिकाभिःसंगतेनतदुपदेशेनसुधियोऽधि कारिणोवेद्यमात्मतत्त्वंविंदंतिलभंते ॥ अप्रमत्तास्तदेकासक्ताश्चेत् ॥ यथावसिष्ठसंगाद्राघवाद्याअविदंस्तद्वदित्यर्थः ॥ ८ ॥ तृष्णालक्षणायावरत्रायाश्चर्मरज्जुर्दृढबंधैर्बद्धाअ ज्ञस्यहृदिप्ररूढायेदेहेंद्रियादिनादात्म्यसंसर्गाध्यासरूपायंथयोयेचगृहपुत्रदारादिषुममताभिनिवेशलक्षणाःसर्वभूतेष्वैकात्म्यानुभवैकरस्याभावाद्रागद्वेषादिहेतवोपंथयस्तेसर्वे हिअस्मान्मोक्षकथाविचारात्यथाबालाःस्त्रियःपूर्वंबाल्यात्क्रीडार्थाभिनिवेशाद्रसानभिज्ञत्वाच्चभर्तृभिर्वैरस्ययुक्ताअपिकालेनअबालाःप्रौढाःसत्योभर्तृभिरभेदमैकरस्यंयांतित द्वत्सर्वभूतेष्वभेदमैकरस्यंयांतीत्यर्थः ॥ ९ ॥ हेसुतपुत्रवदनुकंप्यभरद्वाजमंदाधिकारिणामपिश्रवणाभ्यासेअज्ञाननिवर्हणसमर्थत्वात्सुमहानुभावानिमान्मोक्षाभ्युपायान्गुरुपू र्वंश्रवणेनयेज्ञास्यंतितेतत्त्वविदांवरिष्ठाःसंतःपुनःसंसृतिंनसमेष्यंति ॥ इयंममसंक्षिप्तपरमरहस्योक्तिः ॥ अन्येनबहुनाउदितेनउक्तेनकोर्थःकिंप्रयोजनमित्यर्थः ॥ १० ॥

इदानींवक्तॄणामपिगुरुमुखाद्विचार्यैवसंप्रदायतोऽर्थंसम्यग्ज्ञात्वाअन्येभ्यःश्रावयतामेवबोधफलावाप्तिर्नान्येषामितिनियमंसूचयन्नाह ॥ बहुश्रुतायेइति ॥ अमुंग्रंथंमेसंतोबहुश्रुतानांगुरूणामपेस्वयंसम्यक्प्रविचार्यतत्संवादकथयाग्रंथेसम्यक्प्रबोधितार्थैःसतिपुनःपश्चात्स्वयमपिशुश्रूषवेजनायसंप्रदायतोवदिष्यंतितेशिशुत्वंमौर्ख्यंपुनर्जन्मवानप्रयास्यंति ॥ अवश्यंतत्त्वज्ञानफलंप्राप्स्यंतीत्यर्थः ॥ अन्यैःसंप्रदायतोनधिगतैर्वाक्यैःश्रुतैःश्रावितैर्वाकिंकिंप्रयोजनमित्यर्थः ॥ ११ ॥ इदानीमर्थावगमंविनापिग्रंथपारायणस्यपुस्तकलेखनस्यवाचकवृत्तिकल्पनेनव्याख्यापनस्यचफलमाह ॥ येवाचयिष्यंतीतिद्वाभ्याम् ॥ अनपेक्षितार्थाःव्युत्पत्त्यभावादर्थापेक्षारहिताअपिपारायणदक्षिणाद्रव्यानपेक्षानिलोभाश्चयेपुस्तकंवालेखयिष्यंति येवृत्तिकल्पनेनव्याख्यातृपुरुषयुक्तंकेवलंवाचकंवाकारयिष्यंतितेसकामाश्चेद्राजसूयस्ययज्ञस्यफलेनयुक्ताःसंतोमुहुर्मुहुःस्वर्गंप्रयास्यंति उदारसत्वानिष्कामास्तूत्तमजन्मसद्गुरुसच्छास्त्रश्रवणादिकंप्राप्यतृतीयजन्मलाभेनमोक्षंप्रयास्यंति ॥ लक्ष्मीमिवेत्युभयत्रदृष्टांतः ॥१२॥१३॥ ईदृशमहाफलत्वमस्यग्रंथस्यकुत

बहुश्रुतायेप्रविचार्यसम्यक्प्रबोधितार्थैकथयाजनाय॥ संतोवदिष्यंतिपुनःशिशुत्वंनतेप्रयास्यंतिकिमन्यवाक्यैः॥११॥ येवाचयिष्यंत्यनपेक्षितार्थायेलेखयिष्यंतिचपुस्तकंवा॥ येकारयिष्यंत्यपिवाचकंवाव्याख्यातृयुक्तंशुभमार्यदेशे॥१२॥ तेराजसूयस्यफलेनयुक्तामुहुर्मुहुःस्वर्गमुदारसत्वाः॥ मोक्षंप्रयास्यंतितृतीयजन्मलाभेनलक्ष्मीमिवपुण्यवंतः॥ १३ ॥ इमांपुरामोक्षमयींविचार्यसुसंहितांसद्वचनाद्विरिंचः॥ प्रयुक्तवानेतदचिंत्यरूपोभवंत्वसत्याश्चनतस्यवाचः॥१४॥ मोक्षाभ्युपायाख्यकथाप्रबंधेयातेसमाप्तिंसुधियाप्रयत्नात्॥ सुवेश्मदत्वाभिमतान्नपानदानेनविप्राःपरिपूजनीयाः॥१५॥ देयंचतेभ्यःखलुदक्षिणादिचित्तेप्सितंस्वस्यधनस्यशक्त्या॥ मत्वानुरूपंकृतमेवसंगपुण्यंयथाशास्त्रमुपैत्यसौतत्॥१६॥एतत्तेकथितंकथाक्रमशतैर्बोधायबुद्धेर्बृहच्छास्त्रंबृंहितब्रह्मतत्त्वममलंदृष्टांतयुक्त्यांचितम्॥ श्रुत्वैतच्चिरनिर्वृतिंभजभृशंजीवद्विमुक्ताशयोलक्ष्मींज्ञानतपःक्रियाक्रमयुतांभुक्त्वाक्षयामक्षयः॥ १७॥ ॥इ०वा०म०वा० दे०मो०वालकांडेद्वात्रिंशत्साहस्र्यांसंहितायांनि०प्रकरणेउ०ग्रंथप्रशंसातद्वाचनादिविधिर्नामपंचदशोत्तरद्विशततमःसर्गः॥२१५॥

स्तयाह ॥ इमामिति ॥ मयाकृतामिमांमोक्षमयींसुसंहितांपुरापूर्वकालेअचिंत्यरूपोविरिंचःसतांमुनीनांसमाजेआमूलाग्रंस्वयंविचार्यएतद्वाक्यंसर्वांप्रयुक्तवान् ॥ किमेतत् ॥ एतत्सत्यवाचोवाल्मीकेर्वसिष्ठस्यस्वस्यचगिरःअसत्यानभवंतीति ॥ तथाचपूर्वरामायणेमहंसस्वस्यवरदानं नतेवागनृताकाव्येकाचिदत्रभविष्यतीतिसूचनार्थश्चकारः ॥ १४ ॥ एतच्छास्त्रसमाप्तौगृहान्नधनादिदानंविप्रादिभ्योऽवश्यंकर्त्तव्यमित्याह ॥ मोक्षेति ॥ विप्रावाचकाद्याः ॥ उपलक्षणमेतन्मित्रभृत्यादीनांधकृपणानामपि ॥ १५ ॥ स्वधनस्यमध्येतेषांचित्तेप्सितादक्षिणायथाशक्त्यादेया ॥ असौकर्त्तानरस्स्वकृतमेवअवश्यंसज्जतइतिसंगंपुण्यंफलात्मनायथाशास्त्रमुपैत्येवेतिमत्वाविचिंत्येत्यर्थः ॥ १६ ॥ हेभरद्वाजतेतवबुद्धेर्बोधायकथाक्रमशतैर्बृंहितंब्रह्मतत्त्वंदृष्टांतयुक्त्याअंचितमेतच्छास्त्रंमयाकथितम् ॥ एतच्छ्रुत्वाजीवन्नेवविमुक्ताशयःसन्लोकानुपहायज्ञानतपःक्रियाफलयुतांप्रारब्धभोगसत्कर्मफलभूतांयोगज्ञानसिद्ध्यैश्वर्यंलक्ष्मीमक्षयांचिरस्थायिनींभुक्त्वासदेहोविदेहश्चचिरंनिर्वृतिंनित्यनिरतिशयानंदरूपांमुक्तिंभृशंभजेत्याशीरंतमंगलार्था ॥ १७ ॥ ॥ इति श्रीवासिष्ठ०तात्पर्यप्रकाशेनि०उ०पंचदशोत्तरद्विशततमःसर्गः ॥ २१५ ॥

॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

अरिष्टनेमिसुरुचिकारुण्यादिकृतार्थता ॥ वर्ण्यतेत्रगुरुभ्यश्चशिष्यैरात्मनिवेदनम् ॥ १ ॥ कुंभयोनेर्वसिष्ठस्यागस्त्यस्यचरामादीन्सुतीक्ष्णंप्रतिचसुभाषितम् ॥ अमुनाएतद्ग्रंथरूपेण ॥ १ ॥ राजाअरिष्टनेमिरुवाचवाल्मीकिंप्रति ॥ दृष्टिःकृपाकटाक्षः ॥ २ ॥ ३ ॥ मैत्रंमित्रभावःसप्तभिःपदैरनुगतैर्लभ्यतइतिसाप्तपदम ॥ शैषिकोण् ॥ इतियत्सद्भिरुक्तंतत्त्वयासत्यंकृतमित्यर्थः ॥ ४ ॥ सर्वतापोपशमेननिर्वृतोनिरतिशयानंदलाभेनमुदितः ॥ ५ ॥ इतिराज्ञाअहमुक्तःसंस्तद्विनयादिगुणसंपदापरंविस्मयमागतः ॥ ६ ॥ स्वस्यापिसत्संगवशेनश्रवणलाभात्कृतार्थताजातेत्याह ॥ नश्रुतमिति ॥ पूर्वंकदापिनश्रुतमपूर्वमेवैतज्ज्ञानसारंसत्संगान्मयाश्रुतम् ॥ ७ ॥ त्वदंतिकेत्वामुपदेष्टुमित्यर्थः ॥ अनघेइतिसंबोधनेननिष्पापत्वादधिकारसंपत्तित्वयिदृष्ट्वाएतत्सर्वंतेतुभ्यमाख्यातमितिसूचितम ॥ ८ ॥ परांनिर्वृतिसुखविश्रांतिमागताअहमितिशेषः ॥ ९ ॥ १० ॥ तमुपदिष्टंब्रह्मात्मैक्यलक्षणमेवार्थम् ॥ ११ ॥ तत्सर्वमिति ॥ मोक्षस्यकारणंकर्मज्ञानंवामोक्षसाधनमितित्वदीयसंदेहस्यतदवधारणेमूलापगमादेवोच्छेदसिद्धेरितिभावः ॥ १२ ॥ अतएवस्वस्यसमूलसर्वसंशयविपर्ययबाधाद्बाधितानुवृत्तिमात्रेणयथाप्राप्तानुवर्त्तनमेवजीवन्मुक्तस्यपरिशिष्यतइतिकारुण्यउवाच ॥ स्मृतिरित्यादिना ॥ अतीतानागतेअसन्निकृष्टेचविषयेस्मृतिःपरोक्षधीर्वाग्व्यवहारश्चवर्त्तमानविषयेदृष्टिसत्ताप्रत्यक्षंचममसांप्रतंतत्त्वज्ञानात्त्वमेप्रतीतेवंध्यासुतविषयेयथानिर्विषयास्तथानिर्विषयाःसंपन्नाः ॥ सर्वापिचसांसारिकीस्थितिःअजलेमरुदेशेमरीचिकायथातद्वत्संपन्नेतिक्वापिविषयेनकश्चिदपिसंदेहःपरिशिष्टइत्यर्थः ॥ १३ ॥ रामादिवदेवयथाप्राप्तेनवर्णाश्रमोचितव्यवहारेणतिष्ठामिस्थास्यामि ॥ अकर्मणिबलात्कर्मत्यागे ॥ १४ ॥

श्रीवाल्मीकिरुवाच॥ ॥एतत्तेकथितंराजन्कुंभयोनेःसुभाषितम्॥ अमुनातत्त्वमार्गेणतत्पदंप्राप्स्यसिध्रुवम्॥ १॥ ॥राजोवाच॥ भगवन्भवतोदृष्टिर्भववंधविनाशनी॥ आलोकितोययाचाहमुत्तीर्णोस्मिभवांबुधेः॥ २॥ ॥श्रीदेवदूतउवाच॥ ॥इत्युक्त्वासौततोराजाविस्मयोत्फुल्ललोचनः॥ उवाचवचनंमांतुमधुरंश्लक्ष्णयागिरा॥ ३॥ ॥राजोवाच॥ ॥देवदूतनमस्तुभ्यंकुशलंचास्तुतेविभो॥ सतांसाप्तपदंमैत्रमित्युक्तंतत्त्वयाकृतम्॥ ४॥ इदानींगच्छभद्रंतेदेवराजनिवेशनम्॥ अनेनश्रवणेनाहंनिर्वृतोमुदितोपिच ॥ ५ ॥ श्रुतार्थंचिंतयन्नत्रस्थास्यामिविगतज्वरः॥ इत्युक्तोहंततोभद्रेपरंविस्मयमागतः॥ ६ ॥ नश्रुतंपूर्वमेवैतज्ज्ञानसारंश्रुतंमया॥ तेनैवमुदितश्चांतःपीतामृतइवाधुना॥ ७॥ ततोवाल्मीकिमापृच्छ्यआगतोस्मित्वदंतिके॥ एतत्तेसर्वमाख्यातंत्वयापृष्टंममानघे॥ इतःपरंगमिष्यामिशक्रस्यसदनंप्रति॥ ८॥ ॥अप्सराउवाच॥ ॥नमोस्तुतेमहाभागदेवदूतत्वयामम ॥ श्रावितादर्थविज्ञानात्परांनिर्वृतिमागता॥ ९ ॥ कृतार्थावीतशोकास्मिस्थास्यामिविगतज्वरा॥ इदानींगच्छभद्रंतेयथेच्छंशक्रसन्निधौ॥ १०॥ ॥अग्निवेश्यउवाच॥ ॥ ततःसासुरुचिःश्रेष्ठातमेवार्थमचिंतयत्॥ स्थितासाहिमवत्पृष्ठेसमीपेगंधमादने ॥ ११ ॥ कच्चिदेतत्त्वश्रुतंपुत्रवसिष्ठस्योपदेशनम्॥ तत्सर्वमवधार्याथयथेच्छसितथाकुरु॥ १२॥ ॥कारुण्यउवाच॥ ॥स्मृतिर्वाग्दृष्टिसत्ताचस्वप्नेवंध्यासुतेऽजले॥ मरीचिकायथातद्वज्ज्ञानात्सांसारिकीस्थितिः॥ १३॥ ममनास्तिकृतेनार्थोनाकृतेनेहकश्चन॥ यथाप्राप्तेनतिष्ठामिह्यकर्मणिकआग्रहः॥ १४॥

प्राप्तकर्माविवाहेनप्राप्तकर्माधिकारःसन्कालेकालेयथोचितकालेस्नानदानाग्निहोत्रातिथिसपर्यादिकर्मउपाहरत्अनुष्ठितवानित्यर्थः ॥ नामेतिकिलार्थे ॥ १५ ॥ हेसुतीक्ष्ण ज्ञानकर्मणिज्ञानोत्तरंकर्मानुष्ठानविषयेकर्मबंधायभविष्यतीतिसंदेहोनकर्त्तव्यः ॥ १६ ॥ अनेकेषांसंदेहविषयविरुद्धानेककोट्यात्मकानांसांसारिकार्थानांपारमार्थिकब्रह्मत स्वात्मनासर्वविरोधत्यागेनैक्यबोधनंमुनेरगस्त्यस्यैतद्वाक्यंश्रुत्वा ॥ अंतिकेसमीपे ॥ १७ ॥ यस्मिन्सर्वसाक्षिणिपरमात्मनिस्वयंज्योतिष्ट्वादेवनित्यस्फुरिताभासेध्रुवेनिष्क्रियेस्थि तेसतिनाट्यशालायांदीपेस्थितेसतितत्प्रकाशमुपजीव्यनटनर्त्तकादीनांक्रियाइवसर्वाःस्पंदमूर्त्तयश्चित्तेहालौकिकवैदिकक्रियाःप्रवर्त्तंते ॥ यस्माच्चकटकादिभेदैःकांचनमिवप

॥ अगस्तिरुवाच ॥ ॥ इत्युक्त्वानामकारुण्यअग्निवेश्यसुतःकृती ॥ प्राप्तकर्मायथान्यायंकालेकालेत्युपाहरत् ॥ १५ ॥ संदेहोत्रनकर्त्तव्यः सुतीक्ष्णज्ञानकर्मणि ॥ संशयाद्भस्यतेस्वार्थात्संशयात्माविनश्यति ॥ १६ ॥ एतच्छ्रुत्वामुनेर्वाक्यमनेकार्थैक्यबोधनम् ॥ नमस्कृत्यगुरुं प्राहअंतिकेविनयान्वितः ॥ १७ ॥ ॥ सुतीक्ष्णउवाच ॥ ॥ नष्टमज्ञानतत्कार्यंप्राप्तंज्ञानमनुत्तमम् ॥ साक्षिणिस्फुरिताभासेध्रुवेदीपइव क्रियाः ॥ १८ ॥ सतियस्मिन्प्रवर्त्तंतेचित्तेहाःस्पंदपूर्विकाः[1] ॥ कटकांगदकेयूरनूपुरैरिवकांचनम् ॥ १९ ॥ पयसीवतरंगालीयस्मात्स्फुर तिदृश्यभूः ॥ तदेवेदंजगत्सर्वंपूर्णंपूर्णंव्यवस्थितम् ॥ २० ॥ यथाप्राप्तोनुवर्त्तामिकोलंघयतिसद्वचः ॥ भगवंस्त्वत्प्रसादेनज्ञातज्ञेयोस्मिसं स्थितः ॥ २१ ॥ कृतार्थोहंनमस्तेस्तुदंडवत्पतितोभुवि ॥ गुरोरुत्तीर्णताकेनशिष्याणामस्तिकर्मणा ॥ २२ ॥ कायवाङ्मनसातस्माच्छि ष्यैरात्मनिवेदनम् ॥ गुरोरुत्तीर्णतासैवनान्याकेनापिकर्मणा ॥ २३ ॥ स्वामिंस्तवप्रसादेनउत्तीर्णोहंभवांबुधेः ॥ आपूरितजगज्जालं स्थितोस्मिगतसंशयः ॥ २४ ॥

यसितरंगालीवदृश्यभूःस्फुरति ॥ इदंजगत्सर्वंतदेवनाणुमात्रमपितदन्यक्रियाकारकफलादिपृथग्निरूपयितुंशक्यतइतिनिश्चित्ययथायस्मिन्नाश्रमेप्राप्तस्तद्व्यवहारमनुवर्त्ताम्यनु वर्त्ते ॥ छांदसःपदव्यत्ययः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ इदानींश्रीगुरुकृतस्यपरमपुरुषार्थप्रापकज्ञानदानोपकारस्यजगतिप्रत्युपकारोपायमपश्यंस्तच्चरणयोर्नमस्कृत्यात्मा नम् यावज्जीवंदास्यायनिवेदयति ॥ कृतार्थोहमित्यादिना ॥ २२ ॥ अन्येनकेनापिकर्मणागुरोरुपकारादुत्तीर्णतान ॥ २३ ॥ हेस्वामिन्नहंतवप्रसादेनभवांबुधेरुत्तीर्णःसन्पू र्णानंदभावेनआपूरितजगज्जालंयथास्यात्तथास्थितोस्मिनात्रसंशयइत्यर्थः ॥ २४ ॥

---

[1] स्पंदमूर्त्तयइतिपाठष्टीकानुरोधादपेक्षितः

॥ श्रीगणेशायनमः ॥ ॥ शिवमभयमनाद्यनंतमध्यंपरमसुखाद्वयबोधमात्रसारम् ॥ उपरतसकलभ्रमंविशुद्धंनिजमहसास्फुरदात्मतत्त्वमीडे ॥ १ ॥ उत्पत्तिस्थित्युपशमाख्यैस्त्रि
भिःप्रकरणैर्जगज्जन्मस्थितिलयबोधकानांअथातआदेशोनेतिनेतीत्यादिसर्वप्रपंचनिषेधकानांचवेदांतवाक्यानामध्यारोपापवादन्यायेनात्मतत्त्वव्युत्पादकतयावासनाक्षयम
नोनाशपर्यंतज्ञानेनपरमपुरुषार्थेतात्पर्यपर्यवसानंदर्शितम् ॥ अथेदानींयत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमायोवैभूमातत्सुखम् यतोवाचोनिवर्त्ततेअप्राप्यम
नसासह आनंदंब्रह्मणोविद्वान्नविभेतिकुतश्चन तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्मसर्वानुभूः निष्कलंनिष्क्रियंशांतंनिरवद्यंनिरंजनम् अमृतस्यपरंसेतुंदग्धेंधनमिवान
लमित्यादिश्रुतितात्पर्यंसिद्धंप्रागुक्तसर्वसाधनसाध्यसाक्षात्कारज्ञानफलंनिर्वाणंव्युत्पादयितुंनिर्वाणाख्यमिदंप्रकरणंश्रावयितुंभगवान्श्रीवाल्मीकिरुवाच ॥ तत्राद्यसर्गे ॥ मुनि
वाक्यादिहोत्थानंश्रोतॄणामाह्निकक्रिया ॥ श्रुतार्थचिंतानिद्राभ्यांरात्रियापनमीर्यते ॥ १ ॥ तत्रादौपूर्वोत्तरप्रकरणयोर्हेतुनासंगतिंसूचयन्वक्तव्यंप्रतिजानीते ॥ उपशमेति ॥
जगज्जन्मस्थितिभंगहेतुत्वरूपश्रुत्युक्ततटस्थलक्षणस्यमृल्लोहविस्फुलिंगादिदृष्टांतैर्वाचारंभणंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यमितिश्रुतिप्रदर्शितन्यायैर्नवान्नेनसोम्यशुंगे

॥ श्रीगणेशायनमः ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ उपशमप्रकरणादनंतरमिदंशृणु ॥ त्वंनिर्वाणप्रकरणंज्ञातंनिर्वाणदायियत् ॥ १ ॥
कथयत्येवमुद्दामवचनेमुनिनायके ॥ श्रवणैकरसेमौनस्थितेराजकुमारके ॥ २ ॥ मुनिवागर्थनिक्षिप्तमनस्यस्ततपःक्रिये ॥ राजलोके
गतस्पंदेचित्रार्पितइवस्थिते ॥ ३ ॥ वसिष्ठवचसामर्थंविचारयतिसादरम् ॥ लसदंगुलिभंगेनमुनिसार्थेस्फुरद्भ्रुवि ॥ ४ ॥ विस्मयालोक
नोल्लासप्रोत्फुल्लनयनालिनि ॥ पुरंध्रिवर्गेगंभीरतरुमंजरितांगते ॥ ५ ॥ खेवासरचतुर्भागदेशेदिनकरेस्थिते ॥ किंचिज्ज्ञानोदयात्सौम्ये
किंचिद्धममुपेयुषि ॥ ६ ॥

नापोमूलमन्विच्छाद्भिःसोम्यशुंगेनतेजोमूलमन्विच्छतेजसासोम्यशुंगेनसन्मूलमन्विच्छसन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाःसयएषोणिमैतदात्म्यमिदंसर्वंतत्सत्यं
सआत्मेतिश्रुतितात्पर्यविषयेऐकात्म्येपर्यवसानव्युत्पादनपरप्रकरणत्रयानंतरंतत्फलीभूतस्यसत्यंज्ञानमनंतंब्रह्म नित्यंविज्ञानमानंदंब्रह्म आनंदोब्रह्मेतिव्यजानादित्यादिश्रुतिद
र्शितस्वरूपलक्षणस्य तत्त्वमसिश्वेतकेतो अयमात्माब्रह्मसर्वानुभूरित्यादिमहावाक्यार्थस्यतद्बोधफलनिर्वाणस्वरूपस्यचव्युत्पादकत्वान्निर्वाणाख्यंप्रकरणंशृण्वित्यर्थः ॥ १ ॥
प्रतिज्ञातमर्थंप्रस्तुतकथामेवावलंब्यवर्णयिष्यन्नुपशमप्रकरणोपदेशातिदशरथसभायांयद्वृत्तंतदाह ॥ कथयतीत्यादिना ॥ सर्वेषांसम्म्यंतानांभेरीपटहशंखानांध्वनिरासीदिति
षोडशस्थेनान्वयः ॥ मुनिनायकेवसिष्ठे ॥ राजकुमारकेरामे ॥ २ ॥ अस्तात्यक्तातपोमानसबाह्यार्थालोचनंक्रियाशरीरचेष्टाचयेन ॥ तदेवाह ॥ गतस्पंदइति ॥ ३ ॥ अंगुलि
भंगेनउत्क्षिप्ततर्जनीचेष्टाभिनयेन ॥ स्फुरद्भ्रुविसभ्रूभंगमितियावत् ॥ ४ ॥ विस्मयःपरमाश्चर्यरूपप्रत्यगात्मातदालोकनोल्लासेनगंभीरामकरंदास्वादनासक्तभ्रमरैर्निष्कंपशब्दाया
तरुमंजरीतद्भावमिवगते ॥ ५ ॥ यत्रवासरस्यचतुर्थभागमात्रावशेषोलक्ष्यतेतस्मिन्देशेप्रदेशेश्रवणायैवस्थिते अतएवकिंचिज्ज्ञानोदयादिवसौम्येदृष्टिप्रियेकिंचित्तापोपशममुपे
युषीत्युत्तरादनुकृष्यान्वयः ॥ ६ ॥

श्रवणायेवसंशांतेइत्येतद्देहलीदीपन्यायेनमरुतीत्यत्रापिसंबध्यते ॥ कुसुमवितानस्पंदेनमालितेस्रग्विणि ॥ अतएवमंदारमधुरामोददायिनि ॥ ७ ॥ ८ ॥ मुक्तामयानांजालक लापानांजालाकारवापीवरणानांअंतर्गतासुअंतरभूमिपुमध्यस्थवापीप्रदेशेपुश्रोतुमास्थितेसोत्कंठइवअपगतस्पंदंनिश्चलंकचतिमुक्तादिप्रभाभिर्द्दीप्यमानेसति ॥ ९ ॥ अंशुपुर विरश्मिपुशीतलंगृहांतरंश्रवणशालामध्यंविश्रामार्थमिवप्रविष्टेपु ॥ देशतःकालतश्चआदीर्घंनभसिपांथेपुचिरदूरप्रचारश्रांतेष्वितियावत ॥ १० ॥ शाम्यतोदिनस्यदेहभूते मुक्ताजालकानांप्रभाजाललक्षणेनभस्मनाउद्धूलितात्मनितदंतःप्रविष्टदिवातपेतपस्विलक्षणेनस्वात्मनिशमंशांतिगुणंशंसतिसूचयतीवसति ॥ ११ ॥ भूभृतांराज्ञांकरेपाणौशे खरेपुशिरस्सुचस्थितेपुलीलासरोजेपुशोभनारसायस्मिंस्तत्सुरसंवसिष्ठोपदेशंश्रुत्वाआमोदादानंदाविर्भावात्तेपांमनःस्विवअवृत्तिपुनिमीलनोन्मुखेपुसत्सु ॥ १२ ॥ लीलापक्षि

श्रवणायेवसंशांतेवितानस्पंदमालिते ॥ मौनंमरुतिमंदारमधुरामोददायिनि ॥ ७ ॥ पुष्पदामसुपुप्तासुमहाभ्रमरपंक्तिपु ॥ ज्ञातज्ञेयत यानूनंसम्यग्ध्यानवतीष्विव ॥ ८ ॥ मुक्ताजालकलापांतर्गतास्वंतरभूमिपु ॥ कचत्यपगतस्पंदंतोयेश्रोतुमिवास्थिते ॥ ९ ॥ गृहांतरंप्रवि ष्टेपुगवाक्षेदूरमंशुपु ॥ विश्रामार्थमिवादीर्घंनभःपांथेपुशीतलम् ॥ १० ॥ मुक्ताजालप्रभाजालभस्मनोद्धूलितात्मनि ॥ शंसतीवशमं शाम्यद्दिनदेहेदिवातपे ॥ ११ ॥ करेलीलासरोजेपुशेखरेपुचभूभृताम् ॥ श्रुत्वासुरसमामोदादवृत्तिपुमनःस्विव ॥ १२ ॥ बालकेष्वङ्गलो केपुलीलापक्षिपुसादरम् ॥ भोजनार्थंवधूलोकमुपरुंधत्स्वनारतम् ॥ १३ ॥ भ्रमद्भ्रमरपक्षोत्थवातधूतरजस्यलम् ॥ कौमुदेपरिविश्रांते चामरेष्वक्षिपक्ष्मसु ॥ १४ ॥ रश्मिष्वगगुहोन्मुक्तच्छायाजालभयादिव ॥ गवाक्षादिष्विवोड्डीयप्रविष्टेपुगृहांतरम् ॥ १५ ॥ आसीद्दिन चतुर्भागसत्तावेदनतत्परः ॥ भेरीपटहशंखानांदिङ्मुखापूरकोध्वनिः ॥ १६ ॥ तेनतत्तारमप्याशुवचोंतर्द्धानमाययौ ॥ मौनंजलदनादे नमायूरइवनिस्वनः ॥ १७ ॥ आक्षुब्धाक्षुब्धपक्षालिःपंजरस्थाखगावली ॥ भूकंपेतरसातालीपल्लवेववनावली ॥ १८ ॥ आययुर्भयवि त्रस्तावालाधात्रीकुचांतरम् ॥ सारवंप्रावृषीवाब्दाःप्रोन्नतंशृंगकोटरम् ॥ १९ ॥ उत्तस्थुरवतंसेभ्योभूभृतांभ्रमरस्रजः ॥ ईपत्करालवा हाभ्यःसरिद्भ्योंबुकणाइव ॥ २० ॥

पुपंजरस्थशुकादिपु ॥ उपरुंधत्सुत्वरयत्स्वितियावत् ॥ १३ ॥ कौमुदेईपद्विकाशोन्मुखकुमुदसंबंधिनिभ्रमद्भ्रमराणांपक्षोत्थैर्वातैरुद्धूतेरजसिचामरेष्वक्षिपक्ष्मसुचपरितोविश्रांतेसति ॥ १४ ॥ सूर्यरश्मिपुअगानांमेर्वादिपर्वतानांगुहाभ्यउन्मुक्ताच्छायासमूहात्मकात्तमसोभयादिवउड्डीयपलाय्यगवाक्षादिपुद्वारेपुनिलयनायगृहांतरंगृहमध्यंप्रविष्टेष्विव ॥ १५ ॥ तरसाजवेनआक्षुब्धासंचलिताजातेत्य दिनचतुर्थभागस्यसत्तापरिशेपस्तस्यावेदनेतत्परः ॥ १६ ॥ तेनध्वनिनातत्तारमपिमुनेरिदंमौनंवासिष्ठंवचःअंतर्धानमाययौ ॥ १७ ॥ र्थः ॥ आतालीपल्लवाआकंपिततालीदलावनावलीव ॥ १८ ॥ सारवंरोदनशब्दसहितंयथास्यात्तथाशृंगकोटरंशृंगद्वयमध्यमिव ॥ १९ ॥ ईपत्करालःक्षुब्धोवाहःप्रवाहोया सांताभ्यः ॥ भ्रमराणांरजोगौरत्वद्योतनायांबुकणदृष्टांतः ॥ २० ॥

१ वरणंवृतिराच्छादनंवा

वासरस्यवृद्धत्वेचतुर्थेवयसिप्राप्तेसति ॥ २१ ॥ प्रस्तुतंवस्तुवक्तव्यार्थंसंहरन्नुपसंहरन् ॥२२॥ क्रोडीकृत्यहृदिरुध्वेतियावत् ॥ २३ ॥ अक्षीणःअक्षयोमद्गिरामर्थः ॥ हंसेनअंभसःअंभःपरित्यज्येतिल्यब्लोपेपंचमी ॥ २४ ॥ अनेनवासनाक्षयमनोनाशप्राणसंरोधज्ञानाभ्यासपथा ॥ २५ ॥ २६ ॥ यथाअंधस्त्यक्तदीपोवापुरुषोऽवटेगर्त्तेपततितद्वत् ॥ २७ ॥ अस्यमदुक्तार्थस्यसिद्धयेयथाप्राप्तोव्यवहारःअसंगेनकार्यइत्येवंसर्वशास्त्रपरमतात्पर्यविषयंसिद्धांतमादायमनसिकृत्यउदारवानपरिच्छिन्नात्मबोधवान्भवेत्यर्थः

एवंप्रक्षुभितेतस्मिन्गृहेदाशरथेतदा ॥ प्राप्तेवासरवृद्धत्वेशांतशंखस्वनेशनैः ॥ २१ ॥ संहरन्प्रस्तुतंवस्तुवचोमधुरवृत्तिमत् ॥ उवाचमुनिशार्दूलःसभामध्येरघूद्वहम् ॥ २२ ॥ राघवानघवाग्जालंमयैतत्प्रविसारितम् ॥ तेनचित्तखगंवध्वाक्रोडीकृत्यात्मतांनय ॥ २३ ॥ कच्चिद्गृहीतोभवतामद्गिरामर्थईदृशः ॥ त्यक्त्वादुर्बोधमक्षीणोहंसेनेवांभसःपयः ॥ २४ ॥ विचार्यैतदशेषेणस्वधियैवंपुनःपुनः ॥ अनेनैवपथासाधोगंतव्यंभवताधुना ॥ २५ ॥ अनयैवधियारामविहरन्नैवबध्यसे ॥ अन्यथाधःपतस्याशुविंध्यखातेयथागजः ॥ २६ ॥ सुगृहीतंधियाराममद्वचोनकरोषिचेत् ॥ तत्पतस्यवटेत्यक्तदीपोवांधोनिशास्विव ॥ २७ ॥ असंगेनयथाप्राप्तोव्यवहारोस्यसिद्धये ॥ इत्येवशास्त्रसिद्धांतमादायोदारवान्भव ॥ २८ ॥ हंसभ्याहेमहाराजरामलक्ष्मणभूमिपाः ॥ सर्वएवभवंतोद्यतावद्यापारमाह्निकम् ॥ २९ ॥ कुर्वंत्वयंहिदिवसःप्रायःपरिणताकृतिः ॥ शेषंविचारयिष्यामोविचार्यंप्रातरागताः ॥ ३० ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इत्युक्तामुनिनातेनसासवैंवतदासभा ॥ प्रोत्तस्थौपद्मवदनासविकासेवपद्मिनी ॥ ३१ ॥ राजानःस्तुतराजानःकृतराघववंदनाः ॥ परिष्टुतंवसिष्ठंतेजग्मुरात्मनिवेशनम् ॥ ३२ ॥ विश्वामित्रेणसहितोवसिष्ठोगंतुमाश्रमम् ॥ उत्तस्थावासनाच्छ्रीमान्नमस्कृतनभश्चरः ॥ ३३ ॥ दशरथप्रभृतयोराजानोमुनयस्तथा ॥ यथानुरूपंवक्तारमनुगम्यमुनिंचिरम् ॥ ३४ ॥ आपृच्छ्यकेचिद्गगनंययुःकेचिद्वनांतरम् ॥ केचिद्राजगृहंसंतोभृंगाःपद्मोत्थिताइव ॥ ३५ ॥ वसिष्ठपादयोस्त्यक्त्वापुष्पांजलिमनाविलम् ॥ दारैरनुगतोराजाप्रविवेशगृहांतरम् ॥ ३६ ॥ रामलक्ष्मणशत्रुघ्नाःप्राप्तस्यस्वाश्रमंगुरोः ॥ अभ्यर्च्यचरणौभक्त्यात्वाजग्मुर्नृपमंदिरम् ॥ ३७ ॥

॥ २८ ॥ २९ ॥ प्रातःश्वःसभायामागताःसंतः ॥ धातुसंबंधेप्रत्ययाइतिभविष्यतिक्तः ॥ ३० ॥ इतिउक्ताआज्ञप्ता ॥ पद्मानीवपद्मान्येवचवदनानियस्याः ॥ ३१ ॥ स्तुतोराजादशरथोयैस्तेस्तुतराजानः ॥ वसिष्ठेपरिष्टुतेसर्वैःप्रणम्यप्रशंसितेसति ॥ ३२ ॥ नमस्कृतानभश्चरादेवायेन ॥ ३३ ॥ वक्तारमुपदेष्टारम् ॥ चिरमाश्रमांतमनुगम्य ॥ ३४ ॥ ॥ ३५ ॥ अनाविलंनिर्मलम् ॥ ३६ ॥ ३७ ॥

देवान्पितॄंश्चआनर्चुः ॥ विप्रान्अतिथीन्अभ्येयुः ॥ अभिमुखंआईयुरभिगमनादिनापूजनायस्वीचक्रुरित्यर्थः ॥ अभ्येतुरितिपाठेतुअभ्येतुरतिथिवर्गस्यमध्येविप्रानानर्चुरित्ये वंयोज्यम् ॥ ३८ ॥ परिच्छदैःपरिवारैःसह ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ भाविशुभसूचकत्वादुत्कृष्टस्वप्नैःसुंदरींरमणीयाम् ॥ तथाचश्रुतिरथयत्रदेवइवराजेवअहमेवेदंसर्वो स्मीतिमन्यतेसोस्यपरमोलोकइतिस्वाप्नसार्वात्म्यदर्शनस्यभाविमोक्षफलसूचकतांदर्शयति ॥ दिनार्थिनोरात्र्यतिक्रमणकामाइतियावत् ॥ ४३ ॥ ४४ ॥ ४५ ॥ अधिगतसा रतयाआत्मतत्त्वप्रबोधेनउदितःसविकासआशयोयेषांरामादीनाम् ॥ त्रियामारात्रिः ॥ विरतिमुपरमंअभजतप्राप ॥ अतएवारुणकिरणव्याप्त्यामलिनोनिशाकरएववक्त्रंय

सदनानिसमासाद्यश्रोतारःसर्वएवते ॥ सस्नुरानर्चुरभ्येयुर्देवान्विप्रान्पितॄंस्तथा ॥ ३८ ॥ यथाक्रमंस्वभृत्यांतैर्विप्राद्यैश्चपरिच्छदैः॥समं बुभुजिरेभोज्यंवर्णधर्मक्रमोदितम् ॥ ३९ ॥ अस्तंगतेदिनकरेसमंदिवसकर्मभिः ॥ अभ्यागतेरात्रिकरेसमंरजनिकर्मभिः ॥ ४० ॥ स्थि त्वातल्पेषुकौशेयशयनेष्वासनेषुच ॥ भूचरामुनिराजानोराजपुत्रामहर्षयः ॥ ४१ ॥ संसारोत्तरणोपायंवसिष्ठवदनेरितम् ॥ यथावदे काग्रधियश्चिंतयामासुराहताः ॥ ४२ ॥ ततःप्रहरमात्रेणनिद्रामामुद्रितानना: ॥ उत्स्वप्नसुंदरीमीयुःपद्माइवदिनार्थिनः ॥ ४३ ॥ रामल क्ष्मणशत्रुघ्नाःप्रहरत्रयमेवतत् ॥ वासिष्ठमुपदेशंतेचिंतयामासुरक्षतम् ॥ ४४ ॥ प्रहरस्यार्द्धमात्रंतेततआमुद्रितेक्षणाः ॥ उत्स्वप्नमाययु र्निद्रांक्षणाद्विद्रावितश्रमाम् ॥ ४५ ॥ इतिशुभमनसांविवेकभाजामधिगतसारतयोदिताशयानाम् ॥ अभजतविरतिंतदात्रियामाम लिननिशाकरवक्त्रतांजगाम ॥ ४६ ॥ ॥इत्यार्षेवासिष्ठमहारामायणेवाल्मीकीयेदेवदूतोक्तेद्वात्रिंशत्साहस्र्यांसंहितायांमोक्षोपायेषुनि र्वाणप्रकरणेदिवसव्यवहारवर्णनंनामप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ततःक्लिन्नेंदुवदनापर्या कुलतमःपदा ॥ क्षीयमाणात्रभौस्यामाविवेकइववासना ॥ १ ॥ पूर्वेध्वस्ततयालोकंदृश्यमानेपरेचले ॥ शयालीकावतंसाभंतापको निकरोदधौ ॥ २ ॥ अवश्यायकणाकर्षीपरामृष्टेंदुमंडलः ॥ ज्योत्स्नाकवलनालोकोवभौप्राभातिकोनिलः ॥ ३ ॥

स्यास्तद्भावंजगाम ॥ ४६ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥ ॥ इहरामादिभिःप्रातर्वसिष्ठस्यसभानयः ॥ उक्तार्थस्मरणात्तत्त्वेविश्रामश्चोपवर्ण्यते ॥ १ ॥ क्लिन्नोम्लानइंदुरेववदनंयस्याः ॥ क्षीयमाणामरणोन्मुखी ॥ १ ॥ ततोनिकरोनिर्गच्छत्किरणस्तापकःसूर्यःप्राङ्मुखैर्जनैर्दृश्य मानेपूर्वेपूर्वदिक्स्थेअचलेश्रृंगभेदैर्ध्वस्ततयाप्रतिबद्धतयातत्तदंतरालनिर्गतमालोकंशयाःप्रसारितहस्तास्तदाभंदधौ ॥प्रत्यङ्मुखैर्जनैर्दृश्यमानेपरेपश्चिमदिक्स्थेअचलेतुअलीको मिथ्याकल्पितोवतंसःकिरीटादिशिरोभूषणंतदाभमालोकंदधावितिद्वंद्वेविभज्यान्वयः ॥ २ ॥ ज्योत्स्नानांकवलनायआलोकश्चक्षुःप्रसारइवसौरालोकोयस्येति ॥ सूर्यस्यत दीयचक्षुस्त्वारोपादियमुक्तिः ॥ अनेनक्षुत्तृषार्त्तइवेत्युत्प्रेक्षागम्यते ॥ ३ ॥

अस्नातानांश्रवणानधिकारात्स्नात्वावंदितसंध्याः ॥ एवमपेपि ॥ ४ ॥ निर्गतस्यनिर्गमिष्यतः ॥ ५ ॥ नीरंध्रतांनिरवकाशताम् ॥ ६ ॥ ७ ॥ गृहप्रवेशात्पूर्वमेवसंबध्नातिमेलय तीतिपूर्वसंबंधस्त्वरोत्साहोयस्यतथाविधोमहीपतिर्दशरथः ॥ ८ ॥ विष्टरालिषुआसनपंक्तिषु ॥ वृक्षासनयोर्विष्टरइतिषत्वम् ॥ ९ ॥ ह्यस्तनाःपूर्वेद्युर्भवाः ॥ १० ॥ राज्ञासम आभोगःसंस्थानस्थितिर्यस्याः ॥ राजानंयतवाक्कायचेष्टंदृष्ट्वासर्वैपितथाआसन्निति भावः ॥ ११ ॥ तद्देशयोगेपुसभाप्रदेशप्रविष्टेषुविप्रादिषुयथाप्रदेशंप्रात्यहिकक्लृप्तप्रदेशानु

रामलक्ष्मणशत्रुघ्नाउत्थायानुचरैःसह॥ ययुर्वंदितसंध्यास्तेपुण्यंवासिष्ठमाश्रमम्॥ ४ ॥ तत्रवंदितसंध्यस्यनिर्गतस्यापिसद्मतः ॥ मुने र्ववंदिरेपादौपदोर्दत्वार्घ्यसंततिम्॥ ५॥ क्षणात्तत्सदनंमौनंमुनिब्राह्मणराजभिः॥ हस्त्यश्वरथयानैश्चशनैर्नीरंध्रतांययौ ॥ ६ ॥ अथा सौमुनिशार्दूलस्तयैवसहसेनया॥ गृहंदाशरथंकालेरामाद्यनुगतोययौ॥ ७॥ तत्रैनंपूर्वसंबंधःकृतसंध्योमहीपतिः॥ दूरमार्गविनिर्गत्य पूजयामाससादरम्॥ ८॥ पुष्पमुक्तामणिव्रातैर्भूयोत्यधिकभूपिताम्॥ सभांप्रविश्यतेसर्वेविविशुर्विष्टरालिषु॥ ९॥ अथतस्मिन्नवस रेत्यस्तनाःसर्वएवते॥ श्रोतारस्समुपाजग्मुर्नभश्चरमहीचराः ॥ १० ॥ विवेशसासभासौम्याकृतान्योन्याभिवंदना ॥ वभौराजसमा भोगाशांतवातेवपद्मिनी॥ ११ ॥ यथाप्रदेशमेवाशुनिविष्टेषुयथासुखम्॥ तेषुतद्देशयोगेषुविप्रेष्वपिमुनिराजसु॥ १२॥ मृदुनिस्वागतर वेशनैःशममुपागते॥ सभाकोणोपविष्टेषुशांतशब्देषुवंदिषु॥ १३॥ तरसैवोदितेष्वाशुश्रोतुमभ्यागतेष्विव॥ गवाक्षादिवजालेषुप्रवि ष्टेष्वर्करश्मिषु॥ १४॥ सत्वरप्रविशच्छ्रोतृहस्तस्पर्शघटोद्भवे॥ मुक्ताजालझणत्कारेनिद्रायामिवशाम्यति ॥ १५॥ कुमारःशंकरस्येव कचोदेवगुरोरिव॥ प्रह्लादइवशुक्रस्यसुपर्णइवशार्ङ्गिणः॥ १६ ॥ वसिष्ठस्याननेरामःशनैर्दृष्टिंन्यवेशयत्॥ भ्रमंतीमंवरोपांतफुल्लपद्म इवालिनीम्॥ १७॥ मुनिस्त्वनुज्झितेनाथतेनैवरघुनंदनम् ॥ क्रमेणोवाचवाक्यज्ञोवाक्यंवाक्यार्थकोविदम्॥ १८॥ ॥श्रीवसिष्ठउ वाच॥ ॥कच्चित्स्मरसियत्प्रोक्तंह्योमयारघुनंदन॥ वाक्यमत्यंतगुर्वर्थंपरमार्थाववोधनम्॥१९॥इदानीमववोधार्थमन्यच्चरिपुमर्दन॥ उच्यमानंमयेदंचशृणुशाश्वतसिद्धये॥ २० ॥

क्रमेणनिविष्टेषूपविष्टेषुसत्सु ॥१२॥ मृदुनिपरस्परस्वागतप्रश्नरवे ॥१३॥ उदितेष्वर्करश्मिषुश्रोतुमिवतरसैवाभ्यागतेषुगवाक्षाद्गवाक्षंप्राप्येवतज्जालच्छिद्रेषुप्रविष्टेषुसत्सु ॥१४॥ सत्वरंसभांप्रविशतांश्रोतॄणांहस्तस्पर्शैरंगघट्टनैश्चोद्भवोयस्यतथाविधेमुक्ताजालकभूषणादिझणत्कारेनिद्रायामिवनिस्पंदभावाच्छाम्यतिसति ॥ १५ ॥ दृष्टेर्भक्तिगौरवोत्कंठाय तिशयद्योतनायबहून्युपमानानि ॥१६॥ अंबरेभ्रमंतीमलिनींभ्रमरींफुल्लेपद्मेउदयादिकालोनिवेशयतितद्वत् ॥ १७ ॥ तेनप्रागनुक्रांतेनैवक्रमेण ॥ १८ ॥ ह्यःपूर्वेद्युः॥१९॥२०॥

१ अभिवादनेतिक्वचित्पाठः

प्रागुक्तक्रममेवानुक्रम्यदर्शयति ॥ वैराग्येत्यादिना ॥ २१ ॥ २२ ॥ दिक्कालाद्यनवच्छिन्नंत्रिविधपरिच्छेदशून्यम् ॥ तस्यैवविवरणं अदृष्टेति ॥ नदृष्टेदेशतःकालतोवाउभेको टीपूर्वापरावधीद्वैतंचयस्य ॥ उभशब्दस्यसमासेद्विवचनलुकिउभयोन्यत्रेत्ययचू ॥ २३ ॥ समेषुसाधारणेषुगोत्वादिष्वप्यनुगतत्वात्समसमासत्तातत्परिशेषेणप्रथमानम् ॥ २४ ॥ इतिउक्तब्रह्मस्वभावंमत्वानिश्चित्यअहमित्यभिमानंमुक्त्वास्वात्मैवसुशोभनंखमाकाशमानंदोवायस्यतथाविधोभव ॥ २५ ॥ स्वाःकलनाःकल्पनाः ॥ २६ ॥ संपदोभोग्याः ॥ दृश स्तद्भोगवृत्तयः ॥ चितस्तत्प्रतिफलितचिदाभासाःस्मृतयोवा ॥ तेषांभोगानामेषणाःस्पृहाः ॥ २७ ॥ पातालादिदेशभेदेतृणादिवस्तुभेदेचकाराद्भूतादिकालभेदेचतदेवसर्वंदृश्या

वैराग्याभ्यासवशतस्तथातत्त्वावबोधनात् ॥ संसारस्तीर्यतेतेनतेष्वेवाभ्यासमाहर ॥ २१ ॥ सम्यक्तत्त्वावबोधेनदुर्बोधेक्षयमागते ॥ गलितेवासनावेशेविशोकंप्राप्यतेपदम् ॥ २२ ॥ दिक्कालाद्यनवच्छिन्नमदृष्टोभयकोटिकम् ॥ एकंब्रह्मैवहिजगत्स्थितंद्वित्वमुपागतम् ॥ २३ ॥ सर्वभावानवच्छिन्नंयत्रब्रह्मैवविद्यते ॥ शांतंसमसमाभासंतत्रान्यत्वंकथंभवेत् ॥ २४ ॥ इतिमत्वाहमित्यंतमुक्त्वामुक्तवपुर्महान् ॥ एकरूपःप्रशांतात्मासाक्षात्स्वात्मसुखोभव ॥ २५ ॥ नास्तिचित्तंनचाविद्यानमनोनचजीवकः ॥ एताःस्वकलनारामकृताब्रह्मणएवताः ॥ २६ ॥ यास्संपदोयाश्चदृशोयाश्चितोयास्तदेषणाः ॥ ब्रह्मैवतदनाद्यंतमब्धिवत्प्रविजृंभते ॥ २७ ॥ पातालेभूतलेस्वर्गेतृणेप्राण्यंवरेपिच ॥ दृश्यतेतत्परंब्रह्मचिद्रूपंनान्यदस्तिहि ॥ २८ ॥ उपेक्ष्यहेयोपादेयबंधवोविभवावपुः ॥ ब्रह्मैवविगताद्यंतमब्धिवत्प्रविजृंभते ॥ २९ ॥ यावदज्ञानकलनायावदब्रह्मभावना ॥ यावदास्थाजगज्जालेतावच्चित्ताहिकल्पना ॥ ३० ॥ देहेयावदहंभावोदृश्येस्मिन्यावदात्मना ॥ यावन्ममेदमित्यास्थातावच्चित्तादिविभ्रमः ॥ ३१ ॥ यावन्नोदितमुच्चैस्त्वंसज्जनासंगसंगतः ॥ यावन्मौर्ख्यंनसंक्षीणंतावच्चित्तादिनिम्नता ॥ ३२ ॥ यावच्छिथिलतांयातंनेदंभुवनभावनम् ॥ सम्यग्दर्शनशक्त्यांतस्तावच्चित्तादयःस्फुटाः ॥ ३३ ॥ यावदज्ञत्वमंधत्वंवैवश्यंविपयाशया ॥ मौर्ख्यान्मोहसमुच्छ्रायस्तावच्चित्तादिकल्पना ॥ ३४ ॥ यावदाशाविषामोदःपरिस्फुरतिहृद्वने ॥ प्रविचारचकोरोंतर्नतावत्प्रविशत्यलम् ॥ ३५ ॥ भोगेष्वनास्थमनसःशीतलामलनिर्वृतेः ॥ छिन्नाशापाशजालस्यक्षीयतेचित्तविभ्रमः ॥ ३६ ॥

त्मनादृश्यतेनान्यदित्यर्थः ॥ २८ ॥ उपेक्ष्याःहेयाउपादेयाइतिसामान्यतः ॥ तत्राप्युत्तरोत्तरमुपादेयतमावंधवोविभवावपुरित्येवंप्रकारेणेत्यर्थः ॥ २९ ॥ किंसदैवतथाविजृंभतेनेत्याह ॥ यावदित्यादिना ॥ ३० ॥ आत्मनास्वेनममेदमित्यास्थाक्रियतइतिशेषः ॥ ३१ ॥ उच्चैस्त्वंपूर्णता ॥ चित्तादिप्रयुक्तानिम्नतानीचता ॥ ३२ ॥ ३३ ॥ अज्ञत्वरूपमंधत्वम् ॥ ३४ ॥ आशालक्षणोविषगंधः ॥ तावत्प्रकृष्टालविचारलक्षणश्चकोरोंतर्नप्रविशति ॥ ३५ ॥ ३६ ॥

१ संसारात्तीर्यतइत्यपिपाठः      २ अत्रैकोयावच्छदोवधारणार्थःसाकल्यार्थोवा ॥ सकलेदृश्येइतिममैवेदमितिवान्वयः ॥

अनास्थयात्यक्ताचित्तभूःप्रबुद्धाप्रबोधफलवतीभवतिनात्यक्तेत्यर्थः ॥३७॥ चित्तानुदयएवतत्त्यागइत्याशयेनाह ॥ असंस्तुतमिति ॥ असंस्तुतमनुपयुक्तंदूरस्थमवस्तुअतएवा
संतमभ्रपुरुषाकारमिवस्वंदेहमनास्थंपरिपश्यतश्चित्तस्यभवनंचित्तभूःकुतः ॥३८॥ भावितंश्रवणमनननिदिध्यासनसाक्षात्कारैःपरिष्कृतमनंतचिन्मात्ररूपंसंसारप्रसिद्धरूपाद्रूपां
तरमात्मायस्य ॥ स्वांतेमनसिअवलीनंजगद्यस्य ॥३९॥ असम्यग्दर्शनेसम्यग्दर्शनविरोधिनिअज्ञानेमिथ्याभ्रमान्करोतितथाविधस्वभावेनष्टेसति ॥४०॥४१ ॥ चित्ताभावेकथं
व्यवहारस्तत्राह ॥ जीवन्मुक्ताइत्यादिना ॥ चित्तपदवीजलेशुष्केसिकतासुजलरेखेवचित्तप्रचाररेखा॥४२॥४३॥ भ्रमंतिव्यवहरंति ॥ सत्त्वसंस्थितिप्रयुक्तयाहेलयाअनास्थ

तृष्णामोहपरित्यागान्नित्यशीतलसंविदः ॥ पुंसःप्रशांतचित्तस्यप्रबुद्धात्यक्तचित्तभूः ॥ ३७ ॥ असंस्तुतमिवानास्थमवस्तुपरिपश्यतः ॥
दूरस्थमिवदेहंस्वमसंतंचित्तभूःकुतः ॥ ३८ ॥ भावितानंतचित्तत्त्वरूपरूपांतरात्मनः ॥ स्वांतावलीनजगतःशांतोजीवादिविभ्रमः ॥ ३९ ॥
असम्यग्दर्शनेशांतेमिथ्याभ्रमकरात्मनि ॥ उदितेपरमादित्येपरमार्थैकदर्शने ॥ ४० ॥ अपुनर्दर्शनायैवदग्धसंशुष्कपर्णवत् ॥ चित्तंवि
गलितंविद्धिवह्नौघृतलवंयथा ॥ ४१ ॥ जीवन्मुक्तामहात्मानोयेपरावरदर्शिनः ॥ तेषांयाचित्तपदवीसासत्त्वमितिकथ्यते ॥ ४२ ॥ जीव
न्मुक्तशरीरेषुवासनाव्यवहारिणी ॥ नचित्तनाम्नीभवतिसाहिसत्त्वपदंगता ॥४३॥ निश्चेतसोहितत्त्वज्ञानित्यंसमपदेस्थिताः ॥ लीलयाप्र
भ्रमंतीहसत्त्वसंस्थितिहेलया ॥ ४४ ॥ शांताव्यवहरंतोपिसत्त्वस्थाःसंयतेंद्रियाः ॥ नित्यंपश्यंतितज्ज्योतिर्नद्वैतैक्येनवासना ॥ ४५ ॥ अंत
र्मुखतयासर्वंचिद्वह्नौत्रिजगत्तृणम् ॥ जुह्वतोंतर्निवर्त्तंतेमुनेश्चित्तादिविभ्रमाः ॥ ४६ ॥ विवेकविशदंचेतःसत्वमित्यभिधीयते ॥ भूयःफ
लतिनोमोहंदग्धबीजमिवांकुरम् ॥ ४७ ॥ यावत्सत्वंविमूढांतःपुनर्जननधर्मिणी ॥ चित्तशब्दाभिधानोक्ताविपर्यस्यतिबोधतः ॥ ४८ ॥
प्राप्तप्राप्योभवान्नामसत्वभावमुपागतम् ॥ चित्तंज्ञानाग्निनादग्धंनभूयःपरिरोहति ॥ ४९ ॥ संरोहतीषणाविद्धंयथापरशुनाग्निना ॥ न
तुज्ञानाग्निनिर्दग्धंप्रबोधविशदंमनः ॥ ५० ॥

या ॥ ४४ ॥ तर्हिकिंतेषांवासनयाव्यवहारपरमार्थोभयदर्शनात्द्वैतैक्येनेत्याह ॥ शांताइति ॥ तदद्वयंज्योतिर्नित्यंपश्यंतितद्बाधितेद्वैतैक्येतद्वासनावानसंभवतीत्यर्थः ॥ ४५ ॥ त
देवस्पष्टमाह ॥ अंतर्मुखतयेति ॥ ४६ ॥ अतएवाज्ञचित्तात्सत्वस्यवैलक्षण्यमित्याशयेनाह ॥ विवेकेति ॥ ४७ ॥ विमूढानांजनानामंतश्चित्तशब्दाभिधानोक्तासाभवतिताव
देवपुनर्जननधर्मिणी ॥ बोधतस्तुसासत्वंसतीविपर्यस्यतिजन्मनिवृत्तिलक्षणंविपरीतकार्यंकरोतीत्यर्थः ॥ ४८ ॥ चित्तंनवेतिशेषः ॥ ४९ ॥ कीदृशंतर्हिभूयःसंरोहतितदाह ॥
संरोहतीति ॥ ईषणाएषणावित्तपुत्रलोकविषयास्ताभिराविद्धंखचितम् ॥ यथापरशुनाच्छिन्नमग्निनादग्धमपितृणादिअंतर्बीजशक्त्याविद्धंभूयःप्ररोहतितद्वत् ॥ निर्दग्धंनिर्दग्धे
षणाबीजशक्तिकम् ॥ ५० ॥

ज्ञानाग्निनाकुतोजगद्बीजशक्तिदाहस्तत्राह ॥ ब्रह्मेति ॥ हियस्माज्जगद्ब्रह्मणएवमोहाद्बृंहाआरोपितरूपेणवृद्धिः यस्माच्चज्ञानाज्जगदपिवास्तवब्रह्मस्वभावाभिवृद्धिकं यतश्च अनयोर्ब्रह्मजगतोरज्ञानमात्रकृतोभेदस्तन्नाशेनविद्यतेअतोनप्ररोहतीत्यर्थः ॥ ५१ ॥ त्रिजगच्चिदंतश्चिद्रूपेणैवास्तियथातीक्ष्णतैकरसेमरिचेतीक्ष्णतातद्वत् ॥ अतस्तत्त्वदृशाचिज्ज गतीनभिन्ने ॥ तस्मात्सदसतीवस्तुप्ररोहप्रलयौमुधामायाप्रयुक्तभ्रांतिरेवेत्यर्थः ॥५२॥ तर्हिअसद्वाइदमग्रआसीत्ततोवैसदजायतेत्यादिश्रौताः घटोस्तिघटोनास्तीत्यादिलौकिका श्चसदसच्छब्दाःकिंनिरर्थकानेत्याह ॥ शब्देति ॥ इहश्रौतलौकिकव्यवहारेपरस्परव्यावृत्ताःशब्दाव्यावृत्तेष्वर्थेषुसंकेतिताइतिवक्तृश्रोतृवासनैवव्यावृत्त्याकारेणभासते तेदंश शब्दकृतासंविदाप्रमान अवस्तुभूतायाव्यावृत्तेःशब्दार्थत्वाभावात् ॥ एवंव्यावृत्त्यपगमेउभेसदसच्छब्दवाच्येअव्यावृत्ताननुगतचिद्व्योमत्वादेवपरमार्थतोभातइतितेदंवपरमार्थ वस्तुशब्दार्थइत्यर्थः ॥ ५३॥ एवंसदसद्विकल्पत्यागेनचिन्मात्रदर्शनेदेहाद्यात्मताभ्रमप्रयुक्तजननमरणाद्यनर्थप्राप्तिप्रयुक्तरोदनस्यापिनप्रसक्तिरित्याह ॥ अचिन्मयत्वादिति ॥

ब्रह्मबृंहैवहिजगज्जगच्चब्रह्मबृंहणम् ॥ विद्यतेनानयोर्भेदश्चिद्घनब्रह्मणोरिव ॥ ५१ ॥ चिदंतरस्तित्रिजगन्मरिचेतीक्ष्णतायथा ॥ नातश्चि ज्जगतीभिन्नेतस्मात्सदसतीमुधा ॥ ५२ ॥ शब्दशब्दार्थसंकेतवासनेहनसंविदा ॥ चिद्व्योमत्वादुभेभातस्यजातःसदसन्मती ॥ ५३ ॥ अचिन्मयत्वान्नासित्वंस्वात्माकिमिवरोदिषि ॥ अचिन्मयत्वेजगतामभावेकल्पनंकुतः ॥५४॥ चिन्मयंचेत्सदासर्वंतच्चित्त्वंप्रविचारय ॥ शुद्धंसत्वमनाद्यंतंतत्रांगकल्पनाकुतः ॥ ५५ ॥ चिदात्मासिनिरंशोसिपारावारविवर्जितः ॥ रूपंस्मरनिजंस्फारंमाऽस्मृत्यासंमितोभव ॥ ५६ ॥ तांस्वसत्तांगतःसर्वमसर्वंभावयोदयी ॥ तादृग्रूपोसिशांतोसिचिदसिब्रह्मरूप्यसि ॥ ५७ ॥ चिच्छिलोदरमेवासिनासिनानास्य थाप्यसि ॥ योसिसोसिनसोसीवसदस्यसदसिस्वभाः ॥ ५८ ॥ यःपदार्थविशेषोंतर्नत्वंनस्येवसोस्तिते ॥ तदस्यतदसिस्वस्थश्चिद्घनात्मन्न मोस्तुते ॥ ५९ ॥

त्वंत्वमितिव्यवह्रियमाणंरामाभिधंसदसत्स्वभावंशरीरमात्मास्वयंनासि अचिन्मय त्वात् ॥ सर्वस्यजगतःअचिन्मयत्वेअभावेचावगतेदेहादिकल्पनैवतवकुतइत्यर्थः ॥ ५४ ॥ यदितुचिद्व्यावृत्तिलक्षणजाड्यमात्रपरित्यागाच्चिन्मयमेवजगदितिमन्यसेतदाचित्त्वंचि त्स्वभावंप्रविचारय ॥ तच्चसम्यग्विचार्यमाणंशुद्धंत्रिविधपरिच्छेदशून्यमेकरसम् ॥ तत्रदेहाद्यनर्थकलनाकुतइत्यर्थः ॥ ५५ ॥ अस्मृत्याचित्स्वरूपविस्मरणेनसंमितःपरिच्छि न्नः ॥ ५६ ॥ तांसत्तांपूर्णचित्स्वभावस्थितिंगतःसन्उदयीनिरतिशयानंदलाभाद्युदयवान्भूत्वाअसर्वंपरिच्छिन्नंजगत्सर्वंपूर्णस्वभावंभावयसंपादय ॥ ५७ ॥ नानासिनानाभावे नआस्तेतच्छीलःनासिअथापितद्बाधावधित्वादसिपरिशिष्यसे ॥ तत्रसर्ववाङ्मनसप्रवृत्तिनिमित्तापगमाद्योसिसोसि ॥ तर्हिकिमत्यंतपरोक्षोनेत्याह ॥ नेति ॥ नसःपरोक्षोसीव यतःस्वभाःस्वप्रकाशः ॥ ५८ ॥ सदस्यसदसीत्यंशंविवृणोति ॥ यइति ॥ यःसर्वपदार्थानांविशेषोव्यावृत्तिलक्षणोंऽतःपरिच्छेदःसएवअलीकत्वादसच्छब्दार्थः ॥ सत्वंनभवसी तिसदसीत्यस्यार्थः ॥ सएवतद्व्यावृत्तसद्धर्मत्वेनकल्प्यमानोव्यावहारिकैःसत्तेतिव्यपदिश्यतेसतेनास्त्येवेत्यसदसीत्यस्यार्थः ॥ इत्याशयेनसदस्यसदसीत्युक्तइत्यर्थः ॥ ५९ ॥

१ सदसच्छब्दकृताइत्यपिपाठः

आद्यंतवर्जितंविशालंस्फटिकशिलांतरालमिवसंपीडंनिबिडंयच्चिद्घनंतद्वपुस्तत्स्वभावस्त्वंनदुःखादिविक्रियाभागितिमत्वास्वस्थोभव ॥ आसमंताद्विस्तीर्णेत्वदीयचिच्छिलाजठरेप्रतिबिंबितपल्लवकोशइवकल्पितायामायायारेखासदृशवासनाभेदेपुमनोलीलयास्थितान्यखिलानिजगंतियस्मिंस्तथाविधहेरामतेनादृशायनमइत्यर्थः ॥ ६० ॥ ॥ इतिश्रीवासिष्ठमहारामा॰तात्पर्यप्रकाशेनिर्वाणप्रकरणेद्वितीयःसर्गः ॥ २ ॥ ॥ ७ ॥ ॥ ब्रह्मजीवमनोदेहजगतामैक्यदर्शनात् ॥ सर्वद्वैतभ्रमेशांतेपूर्णैकस्थितिरुच्यते ॥ १ ॥ तत्रादौसर्वकल्पनाप्रतिभासनिमित्तंचित्स्वरूपमात्मेतिपरिचाययति ॥ भावीति ॥ अंबुधौभाविनांजायमानानांभूरितरंगभेदकल्पनानामास्पदंपयोवृंदंजलसामान्यमिवयाचित् अनंतानिजगंतिवहतिसाउइतिसंभावनायांसैवात्मेतिसंभावयेत्यर्थः ॥ १ ॥ तत्संभावनोत्तरंद्वैतभावनात्यागमात्रेणनिष्प्रपंचंनिर्वासनंचतत्स्वरूपमनुभावयति ॥ भवेति॥ २ ॥ त

आद्यंतवर्जितविशालशिलांतरालसंपीडचिद्घनवपुर्गगनामलस्त्वम् ॥ स्वस्थोभवाजठरपल्लवकोशलेखालीलास्थिताखिलजगज्जयतेनमस्ते ॥ ६० ॥ ॥इ॰वा॰वा॰दे॰मो॰निर्वाणप्रकरणेविश्रांतिसुदृढीकरणंनामद्वितीयःसर्गः॥ २ ॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥भाविभूरितरंगाणांपयोवृंदमिवांबुधौ॥ याचिद्वहत्यनंतानिजगंत्यनघसोभवान्॥ १ ॥ भवभावनयामुक्तोभावाभावविवर्जितः॥ चिदात्मन्संस्थिताःक्वैववदंतेवासनादयः ॥ २ ॥ जीवोयंवासनादीदमितिचित्कचतिस्वतः ॥ इतरोक्त्यर्थयोरत्रकःप्रसंगोंगकथ्यताम्॥ ३ ॥ महातरंगगंभीरभासुरात्मचिदर्णवः ॥ रामाभिधोर्मिस्तिमितःसमसौम्योसिव्योमवत् ॥ ४ ॥ यथानभिन्नमनलादौष्ण्यंसौगंध्यमंबुजात्॥ कार्ष्ण्यंकज्जलतःशौक्ल्यंहिमान्माधुर्यमिक्षुतः ॥ ५ ॥ आलोकश्चप्रकाशांगादनुभूतिस्तथाचितेः॥ जलाद्वीचिर्यथाऽभिन्नाचित्स्वभावात्तथाजगत्॥ ६॥ चितोनभिन्नोनुभवोभिन्नोनानुभवादहम्॥ नमत्तोभिद्यतेजीवोनजीवाद्भिद्यतेमनः॥७॥ मनसोनेंद्रियंभिन्नंपृथग्देहश्चनेंद्रियात्॥ नशरीराज्जगद्भिन्नंजगतोनान्यदस्तिहि॥८॥ एवंप्रवर्त्तितमिदंमहच्चक्रमिदंचिरम् ॥ नचप्रवर्त्तितंकिंचिन्नचशीघ्रंचनोचिरम्॥ ९ ॥ स्वसंवेदनमनंतंचसर्वमेवमखंडितम् ॥ विद्यतेव्योमनिव्योमनकस्मिंश्चिन्नकिंचन॥ १० ॥

स्वरूपेपरिचितेजीववासनाजगद्विभागाश्चितएवकचनभेदकल्पनानपृथक्संतीत्यनुभवितुंशक्यतइत्याह ॥ जीवइति ॥ इतरोक्तेरचिदर्थकशब्दस्यतदर्थस्यच ॥ अत्रएवंरूपेचिद्वस्तुनि ॥ ३ ॥ रमंतेयोगिनोयस्मिन्नित्यानंदेचिदात्मनि इतिरामपदेनासौपरंब्रह्माभिधीयतइतिव्युत्पादितान्वर्थरामाभिधानः ॥ ४ ॥ तत्रदृश्यस्यदृग्व्यतिरेकंदृग्धर्मत्वोपपादकदृष्टांतैःसाधयति ॥ यथेत्यादिना ॥ ५ ॥ प्रकाशांगात्तेजसः ॥ अनुभूतिर्वृत्तिप्रतिबिंबचैतन्यम् ॥ तथाशब्दःपूर्वदृष्टांतसमुच्चये ॥ यथाअभिन्नेतिच्छेदः ॥ ६ ॥ उक्तमेवार्थमध्यासक्रमोद्घाटनेनस्फुटंदर्शयति ॥ चितइत्यादिना ॥ चितोमूलाधिष्ठानब्रह्मचितः ॥ अनुभवोमायावृत्त्यारूढचिदाभासः ॥ अहंव्यष्टिसमष्ट्यहंकारः ॥ एवमग्रेपिशरीरांतेबोध्यम ॥ ७ ॥ नशरीरादिति॥समष्टिशरीरेजगतोंतर्भावादित्याशयः ॥ ८ ॥ इदंप्रस्तुतमिदंदृश्यमानंजगच्चक्रंचितेवस्वरूपमोहादध्यासपरंपरयाप्रवर्त्तितमित्यर्थः ॥ परमार्थदृशातुर्नाकिंचिदपिप्रवर्त्तितम ॥ ९ ॥ १० ॥

तस्यनिरतिशयपूर्णतामेवभंगिभेदैर्वर्णयति ॥ शून्यमिति ॥ ११ ॥ ज्ञस्यकर्तृतानैव ॥ १२ ॥ यत्उपादेयबुद्ध्याविषयजातमादीयतेतदेवतेदुःखायसुखायचभवति ॥ भावउपादेयताबुद्धिस्तदभावेनतुनकिंचिदादेयंनामभवति अनात्तंचसुखदुःखयोरकर्तृप्रसिद्धमितिनदुःखादिप्रसक्तिरित्यर्थः ॥ अथवाभावानांदृश्यानामभावेनअसत्वेननादेयंकिंचिदस्तीतितत्सुखदुःखयोरकर्त्रित्यर्थः ॥१३॥ नानात्वेनप्रतीयमानानांभावानांकथमभावस्तत्राह ॥ यथेति ॥ १४ ॥ काष्ठलोष्टसमस्थितिर्भवेतिशेषः ॥१५॥ शत्रुशरीरेपिस्वस्यैवात्मत्वात्स्वशरीरइवतत्राप्यकृत्रिमप्रीतिरात्मदर्शिनोभवतीत्याह ॥ यएवेति ॥ मित्रंप्रियतमम् ॥१६॥ ततएवहर्षामर्षदोषनिवृत्तिरित्याह ॥ समूलेति ॥ योनदीस्वतटेविद्यमानंद्रुममिवसौहृदंमत्सरंचसमूलकापंकषतिसमूलमुन्मूलयतिसएवहर्षामर्षदोषाणांहंताभवतीत्यर्थः ॥ समूलोपपदात्कषेर्णमुलिकषादिषुयथाविध्यनुप्रयोगः ॥ १७॥ रागद्वेषयो

शून्यंशून्येसमुच्छूनंब्रह्मब्रह्मणिबृंहितम् ॥ सत्यंविजृंभतेसत्येपूर्णंपूर्णमिवस्थितम् ॥११॥ रूपालोकमनस्कारान्कुर्वन्नपिनकिंचन ॥ ज्ञःकरोत्यनुपादेयान्नज्ञस्यैवहिकर्तृता ॥१२॥ यदुपादेयबुद्ध्याचतद्दुःखायसुखायते ॥ भावाभावेननादेयमकर्तृसुखदुःखयोः ॥१३॥ यथानानाप्यनानैवखंखेखानीतिवाग्गणः ॥ सार्थकोप्यतिशून्यात्मातथात्मजगतोःक्रमः ॥१४॥ अंतर्व्योमामलोबाह्येसम्यगाचारचंचुरः ॥ हर्षामर्षविकारेषुकाष्ठलोष्टसमस्थितिः ॥ १५॥ यएवातितरांशत्रुःसत्वरंमारणोद्यतः ॥ तमेवाकृत्रिमंमित्रंयःपश्यतिसपश्यति ॥१६॥ समूलकापंकषतिनदीतटइवद्रुमम् ॥ यःसौहृदंमत्सरंचसहर्षामर्षदोषहा ॥१७॥ रागद्वेषविचाराणांस्वरूपंचेन्नभाव्यते ॥ ततःसंतोप्यसद्रूपाःसेविताअप्यसेविताः ॥ १८ ॥ यस्यनाहंकृतोभावोबुद्धिर्यस्यनलिप्यते ॥ हत्वापिसइमाँल्लोकान्नहंतिननिबध्यते ॥ १९ ॥ यन्नास्तितस्यसद्भावप्रतिपत्तिरुदाहृता ॥ मायेतिसापरिज्ञानादेवनश्यत्यसंशयम् ॥ २० ॥ निःस्नेहदीपवच्छांतोयस्यांतर्वासनाभरः ॥ तेनचित्रकृतेनेवजितंज्ञेनाविकारिणा ॥ २१ ॥

स्तत्कार्यविकाराणांचस्वरूपंतत्त्वंचेन्नभाव्यतेनविचार्यतेततस्तर्हिसंतःअरागद्वेषत्वेनप्रसिद्धाअपिजनाअसद्रूपाः ॥ रागद्वेषतत्त्वापरिज्ञानेतन्मूलोच्छेदासंभवेनपुनस्तेषांरागद्वेषप्ररोहापरिहारात् ॥ अतस्तेसेविताअपिव्यर्थेत्यर्थः ॥ १८ ॥ किंतर्हितत्त्वंतयोरितिचेदहंकारएव अतस्तत्परित्यागेआत्यंतिकरागद्वेषनिवृत्तिरित्याशयेनगीतावाक्यमुदाहरति ॥ यस्येति ॥ १९ ॥ अहंकारस्यतुतत्त्वमज्ञानमेवतन्निवृत्तिस्तुस्वात्मपरिज्ञानादित्याशयेनतत्रमायाशब्दार्थप्रसिद्धिंदर्शयन्नाह ॥ यदिति ॥ २० ॥ यस्यवासनाभरःशांतस्तेनजितम् ॥ सकिंजयःसत्योनेत्याह ॥ चित्रकृतेनेति ॥ यथाचित्रकृतेनराज्ञाचित्रलिखितशत्रुशिरश्छिंदताजितमिवतथानित्यनिरस्तसंसारनिरासबोधान्नित्यसिद्धाद्वितीयपूर्णात्मनाजितमित्यर्थः ॥ २१ ॥

यस्यपुरुषधौरेयस्यइदंसमस्तंभोग्यपदार्थजातंसदसद्दशासुआविर्भावतिरोभावावस्थासुवैभवदारिद्र्यदशासुआरोपापवाददशासुवामिथ्यात्वात्तत्त्वतआत्मतयानित्यलब्धत्वा
द्वाअनुपादेयंसत्तद्वियोगसंयोगप्रयुक्तायदुःखदाहायसुखायचनभवतिकिंनुदेहसजीवोजीवन्नपिमुक्तएवेत्यर्थः ॥२२॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाण०तृतीयः
सर्गः ॥ ३ ॥ ॥ ७ ॥ ॥ निरस्यान्याःपराग्दृष्टीर्वसिष्ठेनेहराघवः ॥ प्रत्यग्दृष्टौस्थिरीकृत्यपृष्टःसंशयशांतये ॥ १ ॥ रामस्यप्रत्यग्दृष्टिमुद्घाटयिष्यन्वसिष्ठःप्रथ
ममाध्यात्मिकेपुमनआदिभेदेष्वनुगताखंडचिदैक्यंदर्शयन्जीवादिभेदबाधमनुभावयति ॥ मनइति ॥ १ ॥ तत्रोपपत्तिमाह ॥ एकेनेति ॥ दत्तास्वसत्तासंसर्गाध्यासेनप्रापिता ॥
॥ २ ॥ मनआद्यनुगतप्रत्यक्तत्त्वदर्शनादेवतत्रविश्रांतस्यबाह्यार्थभोगतृष्णाक्षयेबाह्यसर्ववस्त्वनुगतसन्मात्रस्यापिप्रत्यगभेदेनस्वतएवभानाद्बाह्याध्यासनिमित्तमप्यज्ञानंक्षीयतइ

यस्यानुपादेयमिदंसमस्तंपदार्थजातंसदसद्दशासु ॥ नदुःखदाहायसुखायनैवविमुक्तएवेहसजीवएव॥ २२॥ ॥इ०वा०वा०दे०
मोक्षोपायेपुनिर्वाणप्रकरणेब्रह्मैक्यप्रतिपादनंनामतृतीयःसर्गः॥ ३॥ ॥ ७॥ ॥ ७॥ ॥श्रीवसिष्ठउवाच॥ ॥मनोबुद्धिरहं
कारइंद्रियादितथानघ॥ अचेत्यचिन्मयंसर्वंकृतेजीवादयःस्थिताः॥ १ ॥एकेनैवात्मनादत्तानानातेयंमहात्मना॥ यथैकेनैवचंद्रेणति
मिराप्यात्रदर्पणैः॥२॥ भोगतृष्णाविषावेशोयंदैवोपशमंगतः॥ तदैवमस्तमज्ञानमांध्यंध्वांतक्षयादिव ॥ ३॥ अध्यात्मशास्त्रमंत्रेणतृ
ष्णाविषविषूचिका॥क्षीयतेभावितेनांतःशरदामिहिकायथा॥४॥मौर्ख्यंक्षीणेक्षतंविद्धिचित्तंरामसबांधवम् ॥ विलीनांबुधरेव्योम्निजा
ड्यंशाम्यत्यविग्रतः॥ ५॥ अचित्तत्वंगतेचित्तेक्षीयतेवासनाभ्रमः॥ हारमुक्तासमावेशश्छिन्नेतंताविवानघ॥ ६॥ रघुनाथविघाताय
शास्त्रार्थंभावयंतिये॥ कृमिकीटत्वयोग्यायचेतसासंमिलंतिते ॥ ७॥ नवतामरसाकारकांतलोचनलोलता ॥ शांतमौर्ख्यंक्षतावानेच
लतासरसोयथा॥ ८॥ स्थिरतामुपयातोसिभावाभावविवर्जितः॥ पदेपरमविस्तारेनभसीवप्रभंजनः॥९॥ मन्येमद्वचनैर्बोधमागतो
सिरघूद्वह॥ विगताज्ञाननिद्रोंतर्नृपतिःपटहैरिव॥ १०॥

त्याशयेनाह॥भोगेति ॥ एवमुक्तरीत्याप्रत्यक्तत्त्वदर्शनेनभोगतृष्णाविषावेशोयंदैवोपशमंगतस्तदैवाज्ञानमस्तंनिरस्तमित्यर्थः ॥ आंध्यंचक्षुषोविषयप्रथनासामर्थ्यम् ॥ ३ ॥ अं
तर्भावितेनसम्यग्विचारितेन ॥ ४ ॥ मौर्ख्यमज्ञानम् ॥ जाड्यंशैत्यम् ॥ ५ ॥ ६ ॥ एवंसर्ववेदांतशास्त्ररहस्यभूतांप्रत्यग्दृष्टिसम्यगुद्घाट्यतद्विपरीतदर्शनंशास्त्रार्थविघातकंनिंदति ॥
रघुनाथेति ॥ ॥ दर्शितंशास्त्रार्थंशास्त्ररहस्यंउपेक्ष्येतिशेषः ॥ येतद्विघातायान्यथाभावयंतितेकृमिकीटत्वयोग्यायपापायचेतसारागादिहेतुदुर्बुद्ध्यामिलंति ॥ ७ ॥ तांदुर्बुद्धिव्य
वहितसर्गैप्रपंचयिष्यमाणांप्रतीकेनोदाहरन्मौर्ख्यक्षयात्तत्क्षयंदर्शयति ॥ नवेति ॥ रूपादिपिंडेषुदुर्बुद्धिकल्पितेतिशेषः ॥८॥इदानींरामस्यदर्शितप्रत्यग्दृष्टौस्थिरीभावंलिंगैरुपल
क्ष्याह ॥ स्थिरतामिति ॥ प्रभंजनोवायुः ॥ ९ ॥ पटहैर्वैतालिकानांप्रबोधनवाद्यभेदैः ॥ १० ॥

१ नेत्ररोगविशेषः

इदानींस्वकृतस्योपदेशस्यसाफल्यंदर्शनाद्रामंस्वंचप्रशंसन्नाह ॥ सामान्येइति ॥ लगंतिबोधजननफलेनयुज्यंते ॥ ११ ॥ यत्रमयित्वयाउपादेयवाक्यत्वमाप्ततमत्वंभावितंचि तितमतोमद्वचस्तवांतर्हृदिविशति ॥ १२ ॥ इदानींफलपर्यवसितस्वोपदिष्टार्थस्यापिस्मरणेनधारणंस्वस्यकुलपूज्यत्वान्माननीयशासनत्वख्यापनेनविधत्ते ॥ वयमिति ॥ भव तांसर्वेषामिक्ष्वाकूणांविशेषतश्चरघूद्वहानांवयंकुलगुरवइतिहेतोस्त्वयामदुदितमिदंशुभवचनंधार्यंपुनःपुनश्चिंतनेनदृढीकुत्येत्यर्थः ॥ १३ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्य प्रकाशेनिर्वाण॰चतुर्थःसर्गः ॥ ४ ॥ ॥ ५ ॥ ॥ इहप्रबुद्धःश्रीरामोविश्रांतःपरमेसुखे ॥ गुरोःपुरःस्वानुभवंवर्णयामासविस्तरात् ॥ १ ॥ चिरचंचिदेकरसपूर्णात्मभा

सामान्येचलगंत्येवजनेकुलगुरोर्गिरः ॥ अत्युदारमतौरामनलगंतिकथंत्वयि ॥ ११ ॥ यत्रोपादेयवाक्यत्वंभावितंस्वेनचेतसा ॥ मद्वचों तर्विशत्युच्चैस्तत्क्षेत्रेयथापयः ॥ १२ ॥ वयमिहहिमहानुभावनित्यंकुलगुरवोभवतांरघूद्वहानाम् ॥ मदुदितमिदमाशुधार्यमार्यशुभ वचनंहृदिहारवत्त्वयेति ॥ १३ ॥ ॥इ॰वा॰वा॰दे॰ मोक्षोपायेषुनिर्वाणप्रकरणेचित्ताभावप्रतिपादनंनामचतुर्थःसर्गः ॥ ४ ॥ ॥ ५ ॥ ॥श्रीरामउवाच ॥ ॥ अहोअहंगतश्चित्त्वंभवद्वाक्यार्थभावनात् ॥ शांतंजगज्जालमिदमग्रस्थमपिनाथमे ॥ १ ॥ परामंतःप्रयातोस्मि परमात्मनिनिर्वृतिम् ॥ दीर्घावग्रहसंतप्तंवृष्ट्येववसुधातलम् ॥ २ ॥ शाम्यामिशीतलाकारःसुखंतिष्ठामिकेवलम् ॥ प्रसादमनुयातोहंस रोनिर्वारणंयथा ॥ ३ ॥ सम्यक्प्रसन्नमखिलंदिङ्मंडलमिदंमुने ॥ यथाभूतंप्रपश्यामिनिर्नीहारमिवाधुना ॥ ४ ॥ जातोस्मिगतसंदे हःशांताशामृगतृष्णिकः ॥ रागनीरागनिर्मुक्तोमृष्टजंगलशीतलः ॥ ५ ॥ आत्मनैवांतरानंदंतत्प्राप्तोस्म्यंतवर्जितम् ॥ रसायनरसास्वादो यत्रनाथतृणायते ॥ ६ ॥ अद्याहंप्रकृतिस्थोस्मिस्वस्थोस्मिमुदितोस्मिच ॥ लोकारामोस्मिरामोस्मिनमोमह्यंनमोस्तुते ॥ ७ ॥ तेसंश यास्ताःकलनाःसर्वमस्तंगतंमम ॥ रात्रिवेतालसंसारःप्रभातइवभास्करे ॥ ८ ॥ निर्मलेहृदिविस्तीर्णेसंपन्नेहिमशीतले ॥ मनोनिर्वृति मायातंसरसीशरदीवमे ॥ ९ ॥

वम् ॥ १ ॥ दीर्घेणचिरकालानुवृत्तेनावग्रहेणवृष्टिप्रतिबंधेनसंतप्तम् ॥ २ ॥ निर्वारणंनिर्गतगजंनिर्विक्षोभनिमित्तमितियावत् ॥ ३ ॥ यथाभूतंयथार्थभूतसन्मात्रस्वभावम् ॥ ४ ॥ रागैर्विषयरंजनैर्नीरागैस्तद्विरोधिवैराग्यादिवृत्तिभिश्चनिर्मुक्तः ॥ मृष्टंनिर्मृष्टनीहाररजस्कंशरत्कालजंगलमिवशीतलः ॥ ५ ॥ रसायनममृतंतद्रसास्वादोपियत्रयस्मिन्नानंदेतृ णायतेतृणवन्नीरसीभवतिउपेक्ष्योभवतिवा ॥ ६ ॥ प्रकृतिःपारमार्थिकस्वभावस्तत्स्थः ॥ लोकाआरमंतेविश्राम्यंतियस्मिन्सुखेतदहमस्मिएतस्यैवानंदस्यान्यानिभूतानिमात्रा मुपजीवंतीतिश्रुतेः ॥ अतएवरमंतेयोगिनोयत्रेतिप्राग्दर्शितव्युत्पत्त्यारामोस्मि ॥ स्वनामसार्थक्यंममाद्यसंपन्नमित्यर्थः ॥ तादृशायमह्यंतत्प्रदर्शकायतेतुभ्यंचनमः ॥ ७ ॥ कल नाभ्रमाः ॥ रात्रौबालभ्रांतिकल्पितोवेतालस्यसंसारःसंचारःकुटुंबंवा ॥ ८ ॥ मनःशरदिसरसीमहासरइवनिर्वृतिंनिर्विक्षेपविश्रांतिमायातंप्राप्तम् ॥ ९ ॥

चिदेकरसस्यात्मनःअज्ञानादिकलंकःकस्मान्निमित्तादागतः कथंस्वप्रकाशेतिष्ठतिसःअसंगमपरिच्छिन्नंचतंकथमाच्छादयति कथंचकूटस्थस्यसांसारिकविकारानुभवइत्या
दिसंशयःसर्वसंशयमूलभूताज्ञानापगमान्निर्मूलतांयातः ॥ १० ॥ भाविताकृतिःस्फुरदाकारः ॥११॥ अहंसांप्रतंविकासवान्सन्ननुभूयमानमशनायाद्यतीतमात्मानमंतराविनैव
प्राक्तृष्णानिगडयंत्रितःकःअभवमितिविहसामि ॥ १२ ॥ आइतिस्मरणद्योतकोनिपातः ॥ निपातएकाजनाङितिप्रगृह्यत्वादसंधिः ॥ त्वद्वागमृतापूरस्नातेनमयाअयमहंयोय
थापरमार्थतःस्थितएषसकलश्चास्मितथाइदानींस्मृतमित्यन्वयः ॥ १३ ॥ अहमिहस्थएवसन्कांचिद्विततामपरिच्छिन्नांब्रह्मलोकभूमिमधिरूढोस्मि यत्रयस्यांभूमावर्कःसूर्यः
पातालमास्थितइवात्यंतमधोदेशस्थितोपिनभवति कार्यब्रह्मलोकाद्धिसोऽधःस्थितोनपरब्रह्मलोकात् ॥ नतत्रसूर्योभातिनचंद्रतारकमित्यादिश्रुतेरितिभावः ॥ १४ ॥ भावा
भावभवार्णवात् ल्यब्लोपेपंचमी ॥ भावाभावलक्षणंभवार्णवंनिस्तीर्यतत्सारभूतांतदधिष्ठानसन्मात्रतामुपेतायेत्यर्थः॥यतोहमात्मनाआत्मनिस्वेमहिम्निजयामिसर्वोत्कर्षेणवर्त्ते

कलंकआत्मनःकस्मात्कथंचेत्यादिसंशयः ॥ नूनंनिर्मूलतांयातोमृगांकाग्रेयथातमः ॥ १० ॥ सर्वमात्मैवसर्वत्रसर्वदाभाविताकृतिः ॥ इदमन्यदिदंचान्यदित्यसत्कलनाकुतः ॥ ११ ॥ कोभवंप्रागहंताहृक्तृष्णानिगडयंत्रितः ॥ अंतरात्मानमेवेतिविहसामिविकासवान् ॥१२॥ आइदानींस्मृतंसम्यग्यथैषसकलोस्म्यसौ॥यस्त्वद्वागमृतापूरस्नातेनायमहंस्थितः॥१३॥ अहोनुविततांभूमिमधिरूढोस्मिपावनीम्॥इहस्थएवयत्रार्कोनपातालमिवस्थितः॥१४॥ सत्यंसत्तामुपेतायभावाभावभवार्णवात्॥नमोनित्यंनमस्यायजयाम्यात्मात्मनात्मनि॥१५॥ अनुभववशतोद्यदब्जकोशेस्फुटमलितांसमुपागतेननाथ॥ तववरवचसेहवीतशोकांचिरमुदितांचदशामुपागतोस्मि॥१६॥ ॥इ० वा० वा० दे० मोक्षोपायेपुनिर्वाणप्रकरणेराघवविश्रांतिवर्णनंनामपंचमःसर्गः॥५॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ भूयएवमहाबाहोशृणुमेपरमंवचः ॥ यत्तेहंप्रीयमाणायवक्ष्यामिहितकाम्यया ॥ १ ॥ भेदमभ्युपगम्यापिशृणुबुद्धिविवृद्धये ॥ भवेदल्पप्रबुद्धानामपिनोदुःखितायथा ॥ २ ॥

अतःसर्वैर्नित्यंसर्वदानमस्यायनमस्कर्तुमर्हायेत्यर्थः ॥ १५ ॥ हेनाथअहंत्वदब्जकोशेस्फुटमलितांभ्रमरवत्स्थिरतामुपागतेनतववरवचसाइहअस्मिन्देशेकालेचस्वानुभववश
तोवीतशोकांचिरंसदोदितांमुदितांवाजीवन्मुक्तदशामुपागतोस्मीत्यर्थः ॥ १६ ॥ ॥ इतिश्रीवासिष्ठमहा० तात्पर्यप्रकाशेनिर्वाण० पंचमःसर्गः ॥ ५ ॥ ॥ ७ ॥ ॥ देहा
त्मप्रविवेकोत्रदुःखंदेहात्मदर्शनात् ॥ मूढानामंगनासंगान्मोहवृद्धिश्चवर्ण्यते ॥ १ ॥ इत्थंश्रीरामेसम्यक्प्रबुद्धेप्यन्येषांश्रोतॄणांतथैवप्रबोधजननायप्रवर्त्तमानोभगवान्वसिष्ठो
वक्ष्यमाणदेहात्मविवेकादिश्रवणेराममप्यनुकूलयन्नाह ॥ भूयएवेत्यादिना ॥ प्रीयमाणायउपदेशतात्पर्यगोचरनिरतिशयानंदात्मानुभवलक्षणप्रीतिभाजनायतेसर्वजनहित
काम्ययायद्वक्ष्यामितच्छृण्वित्यर्थः ॥१॥ ननुश्रोतृश्रावयितृश्रोतव्यादिभेदानांबाधितत्वात्कथंमेश्रवणेप्रवृत्तिःकिंवातत्फलंतत्राह ॥ भेदमिति ॥ बाधितानुवृत्त्याभेदाभ्युपगमे
नश्रवणेप्रवृत्तिसिद्धिस्तत्त्वबोधाभिवृद्धिरल्पप्रबुद्धोद्धारश्चतत्फलमित्यर्थः ॥ २ ॥

तत्रादौश्रोतॄणामिंद्रियजयासामर्थ्यात्तैराकृष्यमाणस्यमनसःपूर्णात्मनिप्रतिष्ठाकथंस्यादितिजिज्ञासांलिंगैरुपलक्ष्य यस्त्वविज्ञानवान्भवत्ययुक्तेनमनसासदा ॥ तस्येंद्रियाण्यवश्यानिदुष्टाश्वाइवसारथेः ॥ यस्तुविज्ञानवान्भवतियुक्तेनमनसासदा ॥ तस्येंद्रियाणिवश्यानिसदश्वाइवसारथेरितिश्रुतिद्वयोक्तदिशैवतांक्रमेणपरिहरति ॥ यस्येतिद्वाभ्याम् ॥ इत्येतस्मादेवासदात्मभावेनापराधादतिरुषाअक्षाणिरिपवःशत्रवोभूत्वातमज्ञमभिभवंतिपराभावयंति ॥ ३ ॥ संतुष्ट्यासत्यात्मदर्शनोपकारजनितसंतोषेणेवअक्षाणिसुहृदोमित्राणिभूत्वानघ्नंतिकिंतुज्ञानाभिवृद्ध्यनुकूलाचरणेनपालयंतीत्यर्थः ॥ ४ ॥ स्फुरतोव्यवहरतोयस्यपुंसोभोग्यपदार्थेसदैवदोषदर्शनान्निंदनादृतेकुत्सनंविनास्तुतिःप्रशस्ततावुद्धिर्नभवत्येवसपुमान्देहसंबंधिदुःखार्थंदेहंकेनहेतुनाआत्मतयाआदत्ते ॥ तत्रहेतुर्नास्तीत्यर्थः ॥ ५ ॥ इदानींदेहात्मैक्यभ्रमवारणाययुक्तीःप्रस्तौति ॥ नात्मेत्यादिना ॥ जडचित्वाभ्यांविरुद्धयोर्देहात्मनोराधाराधेयभावादिसंबंधोपिदुर्लभस्तादात्म्यंतुदूरनिरस्तमित्याशयः ॥ ६ ॥ एवंनिर्विकारत्वसविकारत्वादिकृतविरोधादपिनतत्प्रसक्तिरित्याह ॥ सर्वैरिति

यस्याज्ञानात्मनोज्ञस्यदेहएवात्मभावना ॥ उदितेतिरुषैवाक्षरिपवोभिभवंतितम् ॥ ३ ॥ यस्यज्ञानात्मनोज्ञस्यसत्येवात्मनिसंस्थितिः ॥ संतुष्ट्यैवाक्षसुहृदोनघ्नंतितमनिंदितम् ॥ ४ ॥ पदार्थेस्फुरतोयस्यनस्तुतिर्निंदनादृते ॥ सदेहंदेहदुःखार्थमादत्तेकेनहेतुना ॥ ५ ॥ नात्माशरीरसंबंधीशरीरमपिनात्मनि ॥ मिथोविलक्षणावेतौप्रकाशतमसीयथा ॥ ६ ॥ सर्वैर्भावविकारैस्तुनित्योन्मुक्तस्त्वलेपकः ॥ नात्मास्तमेतिभगवान्नचोदेतिसदोदितः ॥ ७ ॥ जडस्याज्ञस्यतुच्छस्यकृतघ्नस्यविनाशिनः ॥ शरीरकोपलस्यास्ययद्भवत्यस्तुतत्तथा ॥ ८ ॥ आदत्तेतत्कथंनित्यंचिन्मयत्वंसदोदितम् ॥ ययोरेकपरिज्ञानेजडतैवापरस्थिता ॥ ९ ॥ तयोःकीदृग्विधाभूतासमानसुखदुःखता ॥ यौसमौसमधर्माणौनकदाचनतौकथम् ॥ १० ॥ यावप्यसक्तावन्योन्यंमिथःसंनमितौकथम् ॥ कथंस्थूलोणुरूपःस्यादणुःस्थूलःकथंभवेत् ॥ ११ ॥ एकोदयेद्वितीयस्यनसत्तादिनरात्र्योः ॥ ज्ञानंनाज्ञानतामेतिच्छायानायातितापताम् ॥ १२ ॥ सद्ब्रह्मनासद्भवतिविचित्रास्वपिदृष्टिपु ॥ मनागपिनसंश्लेपःसर्वगस्यापिदेहिनः ॥ १३ ॥

॥ ७ ॥ आत्माधीनंस्वप्रथोपकारंप्राप्यात्मनएवदुःखभोजकत्वात्कृतघ्नस्य ॥ ८ ॥ ननुचिन्मयत्वमपिदेहस्यैवधर्मोस्तुतथाचनकोपिविरोधइत्याशंक्याह ॥ आदत्तेइति ॥ जडव्यावृत्तंचित्स्वरूपमपरिचीयनदेहस्यचिन्मयत्वंज्ञातुंशक्यंतत्परिचयेचजडतैवअपरस्यदेहस्यस्थितेतितत्स्वभावविरुद्धंचिन्मयत्वंकथमादत्तेइत्यर्थः ॥ ९ ॥ नन्वात्मनोमानसदुःखभोगेनदेहेकार्श्यंजायमानंदृश्यतेदेहेचताडनादिनाआत्मनोदुःखभोगइतितयोःसमानसुखदुःखतादर्शनात्तादात्म्यंकिंनस्यात्तत्राह ॥ तयोरिति ॥ यौआत्मदेहौवह्न्ययःपिंडाविवसमौअविविक्तौपरस्परधर्मविनिमयात्समधर्माणौभासेते विविक्तौतुतौनकदाचनतथाभासेते तयोःकीदृग्विधाकथंचसमानसुखदुःखताभूतापरमार्थसत्यावक्तुंशक्येत्यर्थः ॥ १० ॥ किंच असंगेनपरमसूक्ष्मेणआत्मनास्थूलस्यदेहस्यसंगमएवदुर्लभोदूरेऐक्यमित्याह ॥ यावपीति ॥ ११ ॥ परस्परोपघातिस्वभावत्वादपिनैक्यप्रसक्तिरित्याह ॥ एकेति ॥ १२ ॥ सद्ब्रह्मअसद्देहादिरूपंनभवति ॥ सतश्चदेहिनोदेहाधिष्ठानप्रतीचःस्वाध्यस्तेनदेहादिनामनागपिनसंश्लेपः ॥ १३ ॥

१ समासांतश्छांदसः

उक्तमेवदृष्टांतोपदर्शनायपुनराह ॥ देहेनेति ॥ कुतोनसंश्लेपस्तत्राह ॥ देहसत्तयेति ॥ देहकल्पनाधिष्ठानसन्मात्रस्वरूपतयेत्यर्थः ॥ तथाचोक्तंभगवत्पादैर्यत्रहियदध्यासस्तत्कृते नगुणेनदोषेणवाअणुमात्रेणापिसनसंबध्यतइति ॥ १४ ॥ अतद्वृत्तेःअलेपकत्वात्तद्विलक्षणस्वभावस्यांबरस्यवायुतोयथाशोपकंपरजोलेपादयोदोषानसंतितद्वद्देहादितआत्म नोजराद्योमनागपिनसंतीत्यर्थः ॥ १५ ॥ देहतयादेहात्मदृष्ट्यास्थितोऽपिमरणजन्मादिभ्रमोब्रह्मात्मदृष्ट्याब्रह्मणिअप्सुवीचिचयइवभ्रममात्रोदृश्यतेइत्यर्थः ॥ १६ ॥ १७॥ यथापयःस्वसत्तयैवस्थितमूर्मित्वमनुभवतीवतद्वत ॥ यथाप्रतिबिंबस्यआधारस्पंदनेनहेतुनाक्षोभेसतिसूर्यादेर्मनागपिक्षोभोनास्तितथादेहेनचिदाभासक्षोभेपिदेहिनोदेहसाक्षिण इत्यर्थः ॥ १८ ॥ सम्यग्दृष्टेतुवस्तुन्येवस्थितिरभिजायतेदेहमयोऽज्ञानविभ्रमश्चलयमेति ॥ १९ ॥ यथाभूतार्थयोर्विमर्शेनिष्कृष्टपरमार्थस्वभावयोर्देहतत्साक्षिणोर्ज्ञानादेह

देहेनदेहगस्यापिकमलस्येववारिणा ॥ मनागपिनसंश्लेषोब्रह्मणोदेहसत्तया ॥ १४ ॥ तद्वत्तस्याप्यतद्वृत्तेरंबरस्येववायुतः ॥ जरामरण मापच्चसुखदुःखेभवाभवौ ॥ १५ ॥ मनागपिनसंतीहतस्मात्त्वंनिर्वृतोभव ॥ स्थितोदेहतयाप्युच्चैःपातोत्पातमयोभ्रमः ॥ १६ ॥ दृश्यते केवलंब्रह्मण्यप्सुवीचिचयोयथा ॥ आत्मसत्तोपजीवित्वादात्मानुभवतीहहि ॥ १७ ॥ देहयंत्रंपयःसत्तामात्राद्रूर्मिमिवस्थितम् ॥ आ धारस्पंदनेनांगयथाक्षोभोनवाभवः ॥ १८ ॥ सूर्यादेःप्रतिबिंबस्यतथादेहेनदेहिनः ॥ सम्यग्दृष्टेयथाभूतेवस्तुन्यवाभिजायते ॥ १९ ॥ स्थितिर्देहमयोज्ञानविभ्रमोलयमेतिच ॥ देहदेहवतोर्ज्ञानाद्यथाभूतार्थयोःस्थितिः ॥ २० ॥ सत्तासत्तात्मिकोदेतिदीपाद्दीपपदार्थयोः ॥ अ सम्यग्दर्शिनोदेहस्यावर्त्तपरिवर्त्तनैः ॥ २१ ॥ अंतःशून्याःस्फुरंतीहतेमोहार्जुनपादपाः ॥ अपर्यालोचितात्मार्थाअपरामृष्टसंविदः ॥ २२ ॥ स्पंदंतेचेतितोन्मुक्तास्तृणवन्मूढबुद्धयः ॥ अनास्वादितचित्तत्वाज्जडाःसर्वेखवायुभिः ॥ २३ ॥

न्यामसत्तात्मिकातत्साक्षिणश्चसत्तात्मिकास्थितिरुदेतिप्रकटीभवति ॥ २० ॥ दीपनाद्यतेप्रस्यतइतिदीपात्तमःप्रदीपश्चतादृशयोःपरस्परोत्थितिस्वभावपदार्थभूतयोरित्यर्थः ॥ इदानीमज्ञस्यजगद्दर्शनप्रकारंनिंदितुंप्रपंचयति ॥ असम्यग्दर्शिनइत्यादिना ॥ २१ ॥ २२ ॥ चेतिताचेतननातयोन्मुक्ताः ॥ भावेघञंताच्चितेर्मत्वर्थेइनिस्ततस्तल् ॥ नन्वचे तनदेहात्मभूताश्चेतनाइतिवक्तुंयोग्याइतिभावः ॥ यदितेअचेतनास्तर्हिकथंवदंतितृणकाष्ठाहरणादिनाव्यवहरंतिचतत्राह ॥ अनास्वादितेत्यादिना॥तेसर्वेजडाअपिखेमुखनासि कादिच्छिद्रैस्तत्संचारिभिर्वायुभिश्चयत्रयत्रप्रदेशेर्कीचकवद्ध्वनितेननोदनेनआक्रांतास्तत्ररटंतिप्रस्फुरंतिसंचरंतिचेतिपरेणान्वयः ॥ २३ ॥

---

१ देहिनःक्वापीतिपाठः      २ महाभ्रमइत्यपिपाठः      ३ इदमधंपूर्वान्वयि      ४ सर्वपुस्तकेषुमूलेअसम्यग्ज्ञानिनइतिपाठोदृश्यते

॥ २४ ॥ शब्दस्पर्शसहितरूपादिविषयलाभैर्नैवआढ्याःकृतार्थंमन्याः ॥ स्फारोरसोभोगाभिनिवेशएवआसवमिवोन्मादकोयेषाम् ॥ २५ ॥ यथानद्यादिमहौघाअचेतना अपिविहारागमापायादिचेष्टासहितास्तद्वद्दुर्धियोपिकिमेषामालचिन्तास्त्वेव न किंतुविद्यमानाप्यवोधाद्यर्थाऽसंपन्नेत्याह ॥ सर्वेषामिति ॥ २६ ॥ अज्ञात्मूर्खात् ॥ निःसरं त्यद्तिशेषः ॥ २७ ॥ जंठराग्निस्पंदमात्रार्थम् ॥ एवंमूढान्निष्पद्यमानंपरतर्जनंगर्जनंचनचेतनतालिंगंमरणाद्यनर्थमात्रहेतुत्वाद्धनुर्गुणविस्फारवदित्याह ॥ तर्जनमिति ॥ २८॥

यत्रतत्रोदिताक्रांतारटंतिप्रस्फुरंतिच ॥ तृणकाष्ठादिकंसर्वमाहरंतित्यजंतिच ॥ २४ ॥ सशब्दस्पर्शरूपाढ्यास्तरंगतरलांगकाः ॥ जडाः संतःस्फुरद्रूपाभ्रंशस्फाररसासवाः ॥ २५ ॥ सविहारागमापायामहौघाइवदुर्द्धियः ॥ सर्वेषामेवचैतेषांस्थितैवैषाचिदव्यया ॥ २६॥ किंत्ववोधवशादस्याःपरांरूपणतांगता॥ श्वाससंततयोत्यज्ञाल्लोहकारदृतेर्यथा॥ २७॥ स्पंदमात्रार्थमेवाशुदृश्यंतेनार्थकारिणः॥तर्जनंगर्जनंमूढाद्धनुर्दंडगुणादिव॥२८॥ श्रूयतेमरणायैवविद्बोधपरिवर्जितम्॥ फलभोगोपियोमूढात्तदरण्यतरोरिव॥२९॥ तस्मिन्विश्रमणंयत्तच्छिलाफलहकेयथा ॥ तेनयत्संगमःसस्यात्स्थाणुनाभुविजंगले ॥ ३० ॥ तदर्थंयत्कृतंकिंचित्तद्व्योमलकुटैर्हतम्॥ तस्मिन्यदधमेदत्तंतत्त्यक्तंकिंनकर्दमे ॥ ३१ ॥ तेनसार्द्धंकथायत्तत्कौलेयाक्रानमंवरे॥ अज्ञानमापदांनिष्ठाकाहिनापदजानतः ॥ ३२ ॥ इयंसंसारसरणिर्वहत्यज्ञप्रमादतः॥ अज्ञस्योग्राणिदुःखानिसुखान्यपिदृढानिच ॥ ३३॥ पुनःपुनर्निवर्ततेयुगंप्रत्यचलाइव ॥ शरीरधनदारादावास्थांसमनुवध्नतः॥ ३४॥ इदंदुर्दुःखमज्ञस्यनकदाचनशाम्यति॥ अनात्मनिशठेदेहेआत्मभावमुपेयुषि॥ ३५॥ असद्बोधमयीमाया कथंनामापिनश्यति ॥ दुर्भावस्वंचितधियोवस्तुन्यंधस्यदुर्मतेः ॥ ३६ ॥ अवस्तुनिसनेत्रस्यलुठतश्चपदेपदे ॥ विषमुत्पद्यतेचंद्रादामोदःकुसुमादिव॥३७॥

फलभोगःफललाभः ॥ २९ ॥ शिलाफलहकेतत्प्रशिलाफलकेयथातथा ॥ स्थाणुनाछिन्नतरुमूलेन ॥ ३० ॥ कृतमुपकृतंस्वेनतत् ॥ लकुटैर्दंडैः ॥ हतंताडितम् ॥ ३१ ॥कौलेयःश्वा ॥ कुलकुक्षीत्यादिनाविहितस्यढकञःकलोपश्छांदसः ॥ इदमज्ञानिंदनमज्ञानस्यहेयताप्रदर्शनार्थंदययानत्वज्ञेपुद्वेषादित्याशयेनाह ॥ अज्ञानमिति ॥ ३२ ॥ ३३ ॥ युगंयुगोपलक्षितंलांगलंरथंवाप्रतिअचलाइवदृढानिदुरुल्लंघनानिच ॥ ३४ ॥ ३५ ॥ दुष्टैर्भावैःसुष्ठुअंचिताव्याप्ताधीर्यस्य ॥ ३६ ॥ अवस्तुन्यसद्वस्तुनिसनेत्रस्यपश्यतइति यावत् ॥ ३७ ॥

१ प्रसादतइत्यपिक्वचित्पाठः

पयसः क्षीरात्कंटकश्च एति आगच्छति उत्पद्यत इति यावत् ॥ देहलक्षणस्य शाल्मलेः कोटरे निवसंत्यो भोगिन्यः सर्पिणीभूता आशाः प्रसूयंते रागलोभदैन्यादिसर्पान् ॥ अथवा मनो मातंगस्य शृंखलाभूता आशा दुःखानि प्रसूयंत इति आंतरबाह्यविषयभेदेनाशाभेदं प्रकल्प्य रूपकद्वयं योज्यम् ॥ ३८ ॥ सुकृष्टात्क्षेत्रात् ॥ न विद्यते ज्ञानं यस्य सः अज्ञानः तं नरकश्रीः परिपालयति प्रतीक्षते ॥ ३९ ॥ ४० ॥ हृदि मनोलक्षणायां सद्भूमौ ॥ ४१ ॥ तरुच्छदः पल्लवस्तत्स्थानापन्नयोः स्फुरदोष्ठयोर्लसंतो निःश्वासधूमा यस्य ॥ शस्त्रजालमिव कटकटायमाना रदा दंता एवोल्मुका यस्य ॥ द्वेप एव दावाग्निर्यस्य ॥ हृन्मनस्तल्लक्षणे मरौ निर्जलारण्ये ज्वलति भस्मीभवतीव ॥ ४२ ॥ मात्सर्यजलपर्णे मनसि मानसे ॥ मात्सर्यमान

कंटकश्चैति पयसो दूर्वांकुर इव स्थलात् ॥ देहशाल्मलिभोगिन्यो मनोमातंगशृंखलाः ॥ ३८ ॥ अज्ञस्याशाः प्रसूयंते सुकृष्टादिव शालयः ॥ नरकश्रीरिहाज्ञानं दुष्कृतव्यालवेष्टितम् ॥ ३९ ॥ परिपालयति प्रीता मयूरी वारिदं यथा ॥ नेत्रलोलालिनी लोलास्फुरिताधरपल्लवा ॥ ४० ॥ मूर्खार्थमेव विकसत्यंगनाविषवल्लरी ॥ अज्ञस्य हृदि सद्भूमावेव पेलवपल्लवा ॥ ४१ ॥ विद्यते पतगच्छायो रागविद्रुमदुर्द्रुमः ॥ तरुच्छदलसद्धूमः शस्त्रजालरदोल्मुकः ॥ ४२ ॥ ज्वलति द्वेषदावाग्निर्हृन्मरौ कायतापदः ॥ अज्ञमात्सर्यमनसि परापवदनच्छदा ॥ ४३ ॥ ईर्ष्यांकमलिनी चिंताषट्पदा विलसत्यलम् ॥ प्रतिजन्मप्रसृष्टोग्रदुःखकल्लोलविभ्रमम् ॥ ४४ ॥ जडमेव समभ्येति पुनर्मरणवाडवः ॥ जन्मबाल्यं व्रजत्येतद्यौवनं युवता जराम् ॥ ४५ ॥ जरामरणमभ्येति मूढस्यैव पुनः पुनः ॥ जगज्जीर्णारघट्टेऽस्मिन्नज्ञ्वा संस्थितिरूपया ॥ ४६ ॥ मज्जनोन्मज्जनैरज्ञो यंत्रे कलशतां गतः ॥ यदेव गोष्पदापूरं ज्ञधियः पेलवं जगत् ॥ ४७ ॥ तदेवापारपर्यंतमगाधममहात्मनः ॥ धियो दृशइवाज्ञस्य दीर्घं जठरकोटरात् ॥ ४८ ॥ न प्रयांत्यपरं पारं विहंग्यः पंजरादिव ॥ भावमात्रपरावृत्तवासनाभारनाभयः ॥ ४९ ॥

सेऽज्ञस्येति पाठः साधुः ॥ ४३ ॥ प्रसृष्टानां नाप्रतीकारोपायवेलोपसर्पणेन मार्जिता उग्रदुःखकल्लोल विभ्रमा यत्र तं जडमज्ञं जलमयं समुद्रं च मरणलक्षणो वाडवो वडवानलः ॥ ४४ ॥ जन्मादीनामुत्तरोत्तरमनर्थप्रापकत्वमेवेत्याह ॥ जन्मेति ॥ ४५ ॥ आरघट्टे यंत्रे घटी यंत्रे ॥ ४६ ॥ गोष्पदमापूरयतीति गोष्पदापूरम् अल्पजलप्रायमित्यर्थः ॥ ४७ ॥ अमहात्मनः परिच्छिन्नदेहात्मदर्शिनः अपारपर्यंतमगाधं च भवति अतः अदृशः अंधस्येव अज्ञस्य धियो जठरकोटरादुदरभरणासक्तिबंधनवशाद्दपरं दीर्घं संसाराब्धिपारं न प्रयांतीत्यन्वयः ॥ ४८ ॥ कुतो न प्रयांति तत्राह ॥ भावेत्यादिना ॥ परांचि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नांतरात्मन्निति श्रुतेर्बाह्येषु विषयमात्रेषु परावृत्तवासनाभाराक्रांतहृदयनाभयः सत्योपि पयःपंकेषु मग्ना जन्मचक्रस्य नेमयो नेमिस्थानीयेंद्रियगणा उद्धृत्य स्पष्टीकर्तुं शोधयितुं न शक्यंते ॥ ४९ ॥

गृध्रपदेनमृगयोपयोगिनःश्येनामासाः ॥ तनुःस्वदेहपरंपरा ॥ दूराद्दूरदेशकालयोरपिसर्वदासर्वत्रेतियावत् ॥ रागान्मृगयाव्यसनात ॥ ५० ॥ आमिषपिंडवदितिवतिप्रयोगोभ्रां तिदृशाभेदाभावेसादृश्याभावादित्याशयेनाह ॥ भूतेति ॥ भूतमयीमनुष्यपश्वादिप्राणिप्रचुराहिमवान्विंध्योमलयइत्यादिशैलप्रचुराचदृष्टिर्वस्तुतोमांसलवमात्रिकामृल्लवमा त्रिकाचेतिविभज्यव्युत्क्रमेणसंबंधः ॥ मोहात्तत्त्वापर्यालोचनादेवगौरश्वःपुरुषोमाताभ्राताहिमवान्मलयइत्यादिकल्पनयासंलक्ष्यतइत्यर्थः ॥ ५१ ॥ अतएवचित्रैःपदैरर्थैश्च अनंतानिरंजनानियस्यतथाविधोऽनल्पसंकल्पकलनालक्षणःकल्पपादपोजयति ॥ अत्यंतासद्भिरपिपदार्थैःसर्वकामपूरणसमर्थत्वात्सर्वोत्कर्षेणवर्ततइत्यर्थः ॥ ५२ ॥ इदानीं तादृशकल्पवृक्षकोटिव्याप्तंसंसारवनखंडंवर्णयति ॥ अज्ञानादित्यादिना ॥ ५३ ॥ पर्णानिपल्लवाः ॥ कोरकंकलिका ॥ छांदसीक्लीवता ॥ ५४ ॥ योषिल्लक्षणाओषधयोलता

स्पर्ष्टीकर्तुंनशक्यंतेजन्मचक्रस्यनेमयः॥ अज्ञेनेंद्रियगृध्रार्थैरागान्मृगयुणातनुः ॥ ५० ॥ संसारारण्यआस्तीर्णादूरादामिषपिंडवत्॥ भूतशैलमयीदृष्टिर्मृन्मांसलवमात्रिका॥५१॥ मोहात्संलक्ष्यतेचित्रपदार्थानंतरंजनः॥जयत्यनल्पसंकल्पकल्पनाकल्पपादपः॥५२॥ अज्ञानात्प्रसृतायस्माज्जगत्पर्णपरंपराः॥ यस्मिंस्तिष्ठंतिराजंतेविशंतिविलसंतिच॥५३॥ विचित्ररचनोपेताभूरिभोगिविहंगमाः॥ यत्रजन्मानिपर्णानिकर्मजालंचकोरकम् ॥ ५४ ॥ फलानिपुण्यपापानिमंजर्योविभवश्रियः॥ अज्ञानेंदूदयेनैतायोषिदोषधयःस्फुटम्॥५५॥ संसारवनखंडेस्मिन्परांशोभामुपागताः॥ जन्मजालकलापूर्णस्तमःकालकृतोदयः॥ ५६ ॥ शून्योदितात्मादोषेशोजयत्यज्ञानचंद्रमाः॥ अज्ञानेंदोःप्रसादेनवासनामृतशालिना॥ ५७ ॥ तर्पिताशाचकोरेणचित्तरत्नरसैषिणा॥ राजहंसविलासिन्यःप्रालेयशिशिरांगिकाः॥५८॥ भ्रांतिकांताकुमुद्वत्योलोललोचनषट्पदाः॥ धम्मिल्लतिमिरोल्लासालसत्पांडुपयोधराः॥५९॥ रामारजन्योराजंतेतन्मौर्ख्येणविजृंभितम्॥६०॥आपातमात्रमधुरत्वमनर्थसत्त्वमाद्यंतवत्त्वमखिलस्थितिभंगुरत्वम्॥अज्ञानशाखिनइतिप्रसृतानिरामनानाकृतीनिविपुलानिफलानितानि॥६१॥ ॥इत्यार्षेवासिष्ठम०वा०दे०मो०निर्वाण०मोहमाहात्म्यंनामषष्ठःसर्गः॥६॥ ॥७॥

अस्मिन्वर्णितलक्षणेसंसारवनखंडेपरांशोभामुपागताः ॥५५॥ अज्ञानस्येंदुत्वमुक्तमुपपादयति ॥ जन्मेति ॥ तमःकालेविवेकसूर्यास्तमयकाले ॥ शून्येनिष्प्रपंचेब्रह्मणिनभसि चउदितात्माप्रकाशमानः ॥ दोषायारात्रेर्दोषाणांचेशः ॥ ५६ ॥ ५७ ॥ तर्पिताःपोषिताआशालक्षणाश्चकोरायेन ॥ चित्तलक्षणंयद्रत्नंद्युमणिस्तदीयोरसोविषयास्वादनामृतं तदेषिणा ॥ सूर्यमंडलांतर्गतेनैवामृतेनशुक्लपक्षेचंद्रपूर्त्तेरितिभावः ॥ ५८ ॥ ५९ ॥ रामालक्षणारजन्योरात्रयोयद्राजंतेतद्द्रष्टॄणांमौर्ख्येणैवविजृंभितम् ॥ तच्छोभाकारेणपरि णतंनतत्रशोभनंकिंचिद्वस्तुनोस्तीतिभावः ॥ ६० ॥ अज्ञानमेवसर्वानर्थहेतुरितिदर्शयन्नुपसंहरति ॥ आपातेति ॥ हेरामयद्विषयेषुप्रसिद्धमापातमात्रमधुरत्वमनर्थपर्यवसान त्वमाद्यंतवत्त्वंदेशतःपरिच्छिन्नत्वमखिलस्थितिषुभंगुरत्वंनश्वरत्वंचतत्सर्वमज्ञानलक्षणस्यशाखिनोवृक्षस्यइतिएवंविधानिनानाकृतीनिफलानिबीजांकुरपरंपरयाजगदाकारेण प्रसृतानि ॥ तस्मादज्ञानमेवतन्मूलमुच्छेद्यमितिभावः ॥ ६१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेषष्ठःसर्गः ॥ ६ ॥ ॥ ७ ॥

कामादिभिरनर्थादिष्वर्थतारम्यतावहाः ॥ विस्तरेणात्रवर्ण्यंतेअज्ञानस्यविभूतयः ॥ १ ॥ तत्रसर्वविवेकापहारिण्यःसद्योनर्थगर्तपातिन्यःप्रस्तुताःस्त्रियएवाज्ञानस्यकामस्यच महाविभूतयइत्याशयेनताएवप्रथमंवर्णयति ॥ यदित्यादिना ॥ अस्ययच्छब्दस्यसर्वेषुश्लोकेषुप्रतिवाक्यंसंबध्यमानस्यसमपष्टितमेसर्गोपांत्यश्लोकार्धेतदज्ञानविजृंभितमि त्यत्रसंबंधः ॥ मदलक्षणेइंदौउदितेसतियोषितःक्षुब्धस्यकामक्षीरार्णवस्योर्मयइवयद्भांतितदज्ञानस्यविजृंभितंविभूतिरितिप्रतिवाक्यंयोज्यम् ॥ १ ॥ यद्धारयंतितदप्यज्ञानविजृं भितम् ॥ २ ॥ मधौवसंतेवनखंडषुतरुषुभूमौच ॥ मनोभुवोदासाआज्ञाप्याइव ॥ कृतमदाःकामिनांजनितोन्मादाः ॥ ३ ॥ क्रव्यादाःक्रव्यमात्राहाराव्याघ्रादयः ॥ गृध्र गोमाय्वादयस्तुलाभेअन्नाद्यप्यश्नंतीतिपुनर्ग्रहणम् ॥ ४ ॥ रक्तपूतिगंधएवसुगंधोयस्यास्तथाविधास्त्रीणांस्तनश्रेणिःसौवर्णकलशादिवद्यद्दृश्यतेतदज्ञानविजृंभितम् ॥ ५ ॥ इं

॥श्रीवसिष्ठउवाच॥ ॥यन्मुक्तावलितारत्नभूषिताभांतियोषितः॥ मदेंदावुदितेक्षुब्धकामक्षीरार्णवोर्मयः॥ १ ॥सौवर्णांभोजकोश स्थलोलालिपटलश्रियम्॥ धारयंतिदृशःस्त्रीणांकपोलतलदोलिताः॥ २ ॥ उद्यानवनखंडेषुभूमौकृतमदामधौ॥ दृष्याःसुमनसोभांति दासाइवमनोभुवः॥ ३ ॥ क्रव्यादगृध्रगोमायुकौलेयकवलांगिकाः॥ स्त्रियःसमुपमीयंतेचंद्रचंदनपंकजैः ॥ ४ ॥ सौवर्णकलशांभोज कलिकामातुलुंगवत्॥ दृश्यतेस्त्रीस्तनश्रेणीरक्तपूतिसुगंधिका ॥ ५ ॥ रसायनेंदुनिस्यंदमधुविवासवद्रवैः॥ ओष्ठाभिधोमांसलवोला लाक्तउपमीयते॥ ६ ॥ अल्पाल्पाष्ठीवदाकाराभुजाक्रूरास्थिशंकवः॥ महाबाहुलताशब्दैर्वर्ण्यंतेकविभिःशुभैः ॥ ७ ॥ कदलीस्तंभसं भारसुंदरीभिस्तथाभृता॥ कुचशोभोचितानंदातोरणालिर्विराजते॥ ८ ॥ आपातमंदमधुरामध्येद्वंद्वानुबंधिनी॥ शीघ्रावसानविरला लक्ष्मीरप्यभिवांछ्यते॥ ९ ॥ समुपैतिमतिर्दुःखंसुखंचशतशाखताम्॥ दुःखशाखास्तुजायंतेनानाकर्मफलाःश्रियः॥ १० ॥

दुनिस्यंदोऽमृतम् ॥ ६ ॥ प्रत्येकंविभज्यदर्शनेअल्पाल्पाअष्ठीवंतःपर्वाणितदाकाराश्चभुजाशब्दवाच्याःक्रूराअस्थिशंकवः ॥ ७ ॥ तथाकदलीस्तंभावेवसंभारउरुसामग्रीयासां तथाविधाभिःसुंदरीभिर्भृता कुचकलशशोभायाउचितोद्दृष्टेनयानंदोयस्याःसकाशात्तथाविधातोरणालिर्मन्मथागारतोरणस्वरूपभूताकांचीयद्विराजतेतदप्यज्ञानविजृंभितमिति प्राग्वत् ॥ ८ ॥ आपातेआरंभेमंदानांमधुराआपाततोल्पमधुरावा ॥ मध्येव्ययकालेरागद्वेषादिद्वंद्वानुपातिनी ॥ शीघ्रमवसानंक्षयोयस्याः ॥ कतिपयजनेषुदृश्यत्वाद्विरला ॥ ईदृशीलक्ष्मीरपियदभिवांछ्यतेतदितिप्राग्वत् ॥ ९ ॥ यन्मतिर्दुःखंसमुपैति यच्चसुखंशतशाखतांसमुपैति यच्चनानाकर्मफलाःश्रियोदुःखान्येवशाखायासांतथाविधाजायंते तदपीतिप्राग्वत् ॥ १० ॥

---

१ समपष्टितमंयत्सर्गोपांत्यश्लोकार्धंतस्मिन्

श्रीणामज्ञानविजृंभितत्वेतत्फलककाम्यकर्मसुप्रवर्त्तकानांकर्मकांडवचसांसुतरांतथात्वमित्याशयेनाह ॥ बद्धेति ॥ प्रतानानिकाम्यकर्मविस्तारास्तल्लक्षणेगहनेअरण्येस्थिता लताइवबद्धैर्नानाफलकामजालैर्घनाकारानिबिडाकाराअतएवदेवादिकर्मिणांकारागृहरक्षणार्थारज्जवइवस्थिताः ॥ दतांदंतानांछदावोष्ठौतत्सदृशारागचापलप्रधाना इतियावत् ॥ ईदृशाःकर्मकांडवाचोप्यविद्याविजृंभितमित्यर्थः ॥ छदशब्दस्यसमासेविभक्तेरलुग्विसर्गश्चच्छांदसः ॥ इदंचयामिमांपुष्पितांवाचमित्यादिनाभगवतागीतासुस्फु टीकृतम ॥ ११ ॥ मोहवशात्स्वतएवकाम्येषुप्रवृत्तानांपुनःशास्त्रेणापिप्रवर्त्तनमंधोन्मत्तस्यस्वतःकूपेपततोबलात्पातनमिवानुचितमित्याशयेनमोहात्स्वतःप्रवृत्तिंदर्शयति ॥ संतते ति ॥ कार्याणिप्रवृत्तयस्तल्लक्षणैरासारैर्विसारिणीविस्तीर्णामोहलक्षणामिहिकास्वतःश्यामलाप्रावृषिरजसाचकलुपातत्रापिनिशितिमिरेणात्यंतश्यामलायमुनायथाएतिप्रवह तितद्वत्स्वतएवैति ॥ पुरुषमंधीकृत्यविषयेषुप्रवर्त्तयतीत्यर्थः ॥ १२ ॥ भोगेप्रवृत्तस्यचविषयेषुपुत्रपौत्रादिषुचरागोभिवर्द्धतइत्याह ॥ कट्विति ॥ आपाततोनानासुखविशारदःप रिणामेदुःखपर्यवसानाद्वेषमात्सर्यचिंतादिजननाच्चगतस्नेहंयथास्यात्तथाकटूकृतांतःकरणोजन्मलक्षणायाःप्रतिविषायाविषवल्ल्यारसइवपल्लवोपचयप्रदोरागोवर्धते ॥ १३ ॥

बद्धजालघनाकाराःकारार्थमिवरज्जवः॥ दच्छदःसदृशावाचःप्रतानगहनेस्थिताः॥ ११॥ संततामोहमिहिकाकार्यासारविसारिणी॥ यमुनाप्रावृषीवैतितिमिरश्यामलाचिरम् ॥ १२॥ कटूकृतांतःकरणोनानासुखविशारदः॥ वर्द्धतेहिगतस्नेहंजन्मप्रतिविषारसः॥ १३॥ व्याधूतजर्जराकीर्णजनतापर्णराजयः॥ स्वकर्मपवनावांतिनानावकररेणवः॥ १४॥ कालःकवलितानंतजगत्पक्वफलोप्ययम् ॥ घस्म राचारजठरःकल्पैरपिनतृप्यति॥ १५॥ मोहमारुतमापीयत्वचाविषमचारिणः॥ स्फुरंतीहाहयश्चित्राःशीतलाचलदीप्तयः॥ १६॥ चिं तापिशाचोपहताविवेकेंदूदयंविना ॥ तमसेवनिरालोकायातियौवनयामिनी ॥ १७ ॥ जिह्वाजर्जरतामेतिप्राकृतानुनयज्वरैः ॥ प द्मकोटरकोणस्थमपिसूत्रंहिमैरिव॥ १८॥

ततश्चक्रमात्पुत्रादीनांमरणेतद्वियोगदुःखपरंपराभवतीत्याशयेनाह ॥ व्याधूतेति ॥ व्याधूताःपातिताव्याध्यादिजर्जराआकीर्णजनताःपुत्रादिपरिजनसमूहाएवपर्णराजयोयैस्त थाविधानानाविधाअवकररेणवइवविवेकदृष्टिहारिणोविक्षेपभेदायेषुतथाविधाःस्वदुष्कर्मपरिपाकलक्षणाःपवनावांति ॥ १४ ॥ ततःस्वस्यापिमृत्युरितिसंदैवेवंजन्मपरंपरयामृ त्युमुखेप्रवेशइत्याह ॥ कालइति ॥ १५ ॥ एवंपरिवर्त्तमानानज्ञजीवानहित्वेनोत्प्रेक्षते ॥ मोहेति ॥ शीतलस्यत्रिविधतापशून्यस्याचलस्यचब्रह्मणोदीप्तयःप्रकाशायमानाजी वाइहसंसारेचित्राअहयःसर्पाएव ॥ तत्कृतः ॥ यतएतेमोहलक्षणंमारुतमापीयांतःपूरयित्वास्थिताःपुनर्वियुज्यमानयानानादेहलक्षणयात्वचाचोपलक्षिताविषमचारिणःकु टिलगतयःस्फुरंतिसंचलंतीत्यर्थः ॥ १६ ॥ तैःप्रतिजन्मप्राप्यमाणंयौवनमपिमोक्षसाधनेषुविवेकवैराग्यश्रवणादिष्वनुपयोजनाद्व्यर्थैवेत्याशयेनाह ॥ चिंतेति ॥ यातितेषामिति शेषः ॥ १७॥ एवंतदीयजिह्वादीनामपिवैयर्थ्यानर्थार्थतेदर्शयति ॥ जिह्वेत्यादिना ॥ प्राकृतानांपामराणांस्त्रीपुत्रादीनामनुनयःकोपापनयनंतत्प्रयुक्तैर्ज्वरैःसंतापैः ॥ जिह्वोपमान त्वोपपत्तयेसूत्रपदेनतद्दृढावष्टब्धमंतर्दलंलक्ष्यते ॥ उक्तोन्यायश्चक्षुराद्यंगेष्वपिज्ञेयः ॥ १८ ॥

अष्ठीलाग्रंथयः ॥ १९ ॥ सत्यवस्त्वनवलंबनादंतःशून्यःसकोटरश्चस्वोन्नतिभारेण भुग्नश्चित्तलक्षणश्चैत्यवृक्षस्तत्रकृतालयः ॥ मायालक्षणायांबहुलयामिन्यांकृष्णपक्षनिशाया म् ॥ २० ॥ पूर्वमारंभकालेकर्णाभ्यांकर्णसन्निहितकपोलयोर्गृहीत्वा ॥ २१ ॥ अज्ञानादेवपुनस्सृष्टिप्रसरंदर्शयति ॥ निस्सारेत्यादिना ॥ क्रमशःक्रांतारचयितुमुपक्रांताधराधराणां धराधरद्ववचसमुन्नतिर्यया ॥ डिंडीरस्यफेनस्यपिंडिकातादृशीप्रसिद्धास्सृष्टिर्जगद्दृष्टिः ॥ २२ ॥ आभासश्चिदाभासप्रकाशस्तल्लक्षणपुष्पैर्धवलाउज्ज्वला सत्ताव्यावहारिक सत्यतालक्षणालता ॥ २३ ॥ सुराचलोपलक्षितपर्वताएवमहांतःस्थूणाःस्तंभायस्य ॥ गगनमेवाच्छादनंछदिर्यस्य ॥ २४ ॥ स्फारेविस्तीर्णेसंसारसरसिजातेपुशरीरपुष्करेपुअंतःस्थ चिद्रूपरसपानशीलाःप्राणषट्पदाश्चरंति ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति आनंदेनजातानिजीवंतीत्यादिश्रुतेरितिभावः ॥ २५ ॥ नभोमार्गलक्षणेमहतिनीलमणिनि

दुःखशोकमहाष्ठीलःकष्टकंटकसंकटः ॥ सहस्रशाखतांयातिदारिद्र्यदृढशाल्मलिः ॥ १९ ॥ अंतःशून्योन्नतिध्वस्तचित्तचैत्यकृतालयः ॥ मायाबहुलयामिन्यांलोभोलूकोविवल्गति ॥ २० ॥ पूर्वंगृहीत्वाकर्णाभ्यांस्फुरंतीपरिनिश्चयम् ॥ जराजर्जरमार्जारीयौवनाखुंनिकृंत ति ॥ २१ ॥ निःसाराक्रमशःक्रांतधराधरसमुन्नतिः ॥ डिंडीरपिंडिकेवेयंसृष्टिरायातिपुष्टताम् ॥ २२ ॥ आभासपुष्पधवलाजगत्पल्लव शालिनी ॥ सत्तालताविकसिताधर्मार्थफलधारिणी ॥ २३ ॥ सुराचलमहास्थूणंचंद्रसूर्यगवाक्षकम् ॥ गगनाच्छादनंचारुध्रियतेत्रिज गद्गृहम् ॥ २४ ॥ संसारसरसिस्फारेचरंतिप्राणषट्पदाः ॥ शरीरपुष्करेष्वंतश्चिद्रूपरसपायिनः ॥ २५ ॥ नभोमार्गमहानीलकुट्टिमैकांतशा लिनी ॥ भुवनोदररम्यांतःस्फुरत्यादित्यदीपिका ॥ २६ ॥ आशातंतुनिबद्धांगीजागतीजीर्णपक्षिणी ॥ स्ववासनाशलाकेंतर्निबद्धेंद्रियपं जरे ॥ २७ ॥ अनारतपतज्जालभूतपर्णपरंपरा ॥ स्पंदतेमरुतामृष्टासंसृतिव्रततिश्चिरम् ॥ २८ ॥ सृष्टेःकतिपयंकालंप्रदृष्टाःकुलशालिनः ॥ अधःकृतोग्रनरकपंकाःशंकोज्झिताःक्षणम् ॥ २९ ॥ मुक्तेंदुखंडकणिकानीलनीरदशैवले ॥ स्वर्गमार्गसरस्यंतःस्फुरंतिसुरसारसाः ॥ ३० ॥ नानाफलालिमलिनावासनाजालमालिता ॥ स्पंदामोदमयीस्फीताक्रियाविकसिताब्जिनी ॥ ३१ ॥

मितेकुट्टिमेकृत्रिमभूभागेएकांतंशालिनीशोभमाना भुवनोदरेरमणीयतराआदित्यदीपिकास्फुरतिदीप्यतेयत्तदप्यविद्याविजृंभितमितिसर्वत्र ॥ २६ ॥ जागतीजगदंतर्गतजीवरा शिलक्षणाजीर्णपक्षिणीस्ववासनाशलाकेइंद्रियपंजरेदेहेयन्निबद्धातदपि ॥ २७ ॥ मरुताप्राणेनआमृष्टाकंपिता ॥ २८ ॥ अधःपातालेस्पष्टंप्रदर्शनायधात्राकृतोपनरकपंकाः संतोपितत्पतनशंकोज्झिताःसंतोयत्प्रदृष्टास्तदपीतिप्राग्वत् ॥ अथवास्वालतादात्म्याध्यासेनअधःकृतास्तिरस्कृताद्दवउपारक्तमांसमलमूत्रादिदेहनरकपंकायैस्तथाविधास्तच्छं कोज्झिताःसंतोवयंकुलशालिनोमहाशयाइत्याद्यभिमानैर्यत्प्रदृष्टास्तदित्यर्थः ॥ २९ ॥ स्वर्गलक्षणेव्योममार्गस्थसरसिसुरादेवास्तद्रूपाःसारसपक्षिणोयत्स्फुरंतितदपि ॥ ३० ॥ य चनानाकाम्यफललक्षणैरलिभिर्मलिनाक्रियालक्षणाअब्जिनीविकसितातदपि ॥ ३१ ॥

शफरीप्रोष्ठ्याख्याक्षुद्रमत्स्यजातिः ॥ ३२ ॥ श्वःश्वःअपराप्रतिदिनंभिन्नपरिमाणाइंदुलेखेव ॥ ३३ ॥ क्षणभंगानिअचिरनश्वराणि ॥ ३४ ॥ कल्पानिसर्वव्यवहारसमर्थानि ॥ अचलेपदेब्रह्मणि ॥ युगवह्निनायुगांताग्निना ॥ ३५ ॥ वैपरीत्यंविपरिणामम् ॥ ३६ ॥ एतादृशानर्थपरंपरादर्शनेप्यज्ञानांकुतोननिर्वेदोदयस्तत्राह ॥ क्षुब्धैरिति ॥ वासनाशृंखलाभिःउंभितापूरिताअबुद्धानांमौर्ख्यदार्ढ्यलक्षणाधीरतायतोनकैश्चिदपिभग्नेत्यर्थः ॥ ३७ ॥ यावासनाज्ञानेनाज्ञानबाधेप्यधिकारप्रारब्धबलाद्विद्वादिशरीरंमन्वंतरकालपर्यंतंधत्तेतस्याःकेनान्येनभंगप्रसक्तिरित्याशयेनोदाहरति ॥ शतशइति ॥ स्वपराक्रमेणशतशोविद्रुतानप्यरीन्पुनःपुनर्युद्धाभिकांक्षयाधारयंतिपालयंतीतिविद्रुतारिधास्तथाविधैर्दनुपुत्रैरप्यभिद्रुतांभवेपुनर्जन्मादिविषयेभग्नस्तयोर्वेगोयस्यास्तथाविधामपिऐंद्रींतनुंवासनायद्वहतियावदधिकारंधारयतितदपीत्यर्थः ॥ ३८ ॥ भूतसर्गएवपांसुपरंपरायस्यांतथाविधानियतिलक्षणावात्याकाललक्षणस्यव्यालस्यगलांतरंयद्विशतितदपि ॥ सर्पाणांवायुभक्षकत्वप्रसिद्धेरुत्प्रेक्षा ॥ ३९ ॥ अभावोनाशस्तल्लक्षणेवडवाग्निमुखे

वराकीस्तृष्टिशफरीस्फुरंतीभवपल्वले॥ कृतांतवृद्धगृध्रेणशठेनविनिगृत्यते[1] ॥ ३२ ॥ तरंगफेनमालेवसैवान्येवचभंगुरा॥ श्वःश्वोपरेंदुलेखेवसमुदेतिविचित्रता॥ ३३ ॥ भूरिभूतशरावाणिक्षणभंगानिकुर्वता॥ इदंकालकुलालेनचक्रंसंपरिवर्त्यते ॥ ३४ ॥ असंख्यातानिकल्पानिसंजातान्यचलेपदे॥ जगज्जंगलजालानिदग्धानियुगवह्निना ॥ ३५ ॥ भावाभावैरपर्यंतैःसुखदुःखदशाशतैः॥ वैपरीत्यंप्रयात्येवमजस्रंजागतीस्थितिः॥ ३६॥ क्षुब्धैर्युगपरावर्तैर्वासनाशृंखलोंभिता॥ महाशनिनिपातैश्चनभग्नाबुद्धधीरता॥ ३७॥ शतशोविद्रुतारिधैर्दनुपुत्रैरभिद्रुताम्॥ भवभग्नतयामैंद्रींतनुंवहतिवासना[2] ॥ ३८ ॥ विशत्यविरतंभूतसर्गपांसुपरंपरा॥ नित्यंनियतिवात्येयंकालव्यालगलांतरम्॥ ३९ ॥ पदार्थांभसिसर्वाणिफलफेनानिसर्वतः॥ पतंत्यविरतापातमभाववडवामुखे ॥ ४० ॥ स्फुरंत्याकस्मिकोद्भूताविचित्रद्रव्यशक्तयः॥ स्वभावमात्रसंपन्नाःस्पंदश्रियइवांभसः॥४१॥ भूतमौक्तिकसंपूर्णान्बृहतःसुबहूनपि॥ जगत्कलभकानत्तिकृतांतोद्रिक्तकेसरी॥ ४२॥ कुलशैलफलामेघपक्षपुंजाःफलाम्रजः ॥ जायंतेचम्रियंतेचध्रियंतेचजगत्खगाः॥ ४३॥

यत्पतंतितदपि ॥ ४० ॥ स्वभावःअधिष्ठानसत्तातावन्मात्रेणसंपन्नालब्धस्वरूपाआकस्मिकेनातर्क्येणवासनवैचित्र्येणोद्भूताश्चालितायत्स्फुरंतिप्रसरंतितदपि ॥ ४१ ॥ कलभकान्मत्तगजान्यदत्तितदपि ॥ ४२ ॥ कुलशैलाहिमवदादयउपभोग्यत्वान्महत्त्वाच्चफलानियेषाम् ॥ मेघाएवनभोगत्याकारसादृश्याभ्यांपक्षपुंजायेषाम् ॥ फलानिआम्रजंतिसर्वतःपरिशोधयंतिविचिन्वंतीतिफलाम्रजः ॥ मृजेर्बाहुलकात्कः ॥ गच्छंतिउत्तरायणदक्षिणायनादिमार्गेणसदाभ्रमंतीतिजगंतिजीवास्तल्लक्षणाःखगाःपक्षिणोयज्जायंतेयन्म्रियंतेयद्ध्रियंतेयावन्मरणंजीवंतितदप्यज्ञानविजृंभितमित्यर्थः ॥ अत्रकुलाचलानांमूलमध्याग्रभागानांनागमर्त्यदेवैरुपभोग्यत्वात्फलत्वोत्प्रेक्षामेघानांचदक्षिणायनमार्गपर्वसुधूमत्वेनाभ्रमेघत्वादिनाचोर्ध्वाधोगतिनिर्वाहकत्वात्पक्षत्वोत्प्रेक्षाबोध्या ॥ ४३ ॥

---

१ विनिगीर्यतइत्यपिपाठः  २ पुस्तकांतरेभवभग्नरयामितिमूलेपाठस्तथैवटीकायांव्याख्यानंच ॥ अत्रत्यपाठेतुतयइतितयगतावित्यस्यरूपम्

दृष्टिसृष्टिपक्षमवलंब्याह ॥ चिदिति॥स्पंदैश्चाक्षुषादिवृत्तिव्याप्तिभिर्निरस्तावरणस्पष्टत्वाच्छुभायाम् ॥ रंगैरंगद्रव्यस्थानीयैःपंचभिर्बहिरिंद्रियैर्विदधातिदृष्टिमात्रेणसृजतीतिविधिर्द्रष्टासएवचित्रकृत ॥ ४४ ॥ तस्यांदृष्टिसृष्टौस्थावरजंगमयोरनुभवेयोविशेषस्तंप्रथमंस्थावरेषुदर्शयति॥ अजस्रेतिद्वाभ्याम् ॥ स्थावरजातयःस्वस्यात्मनःसमुत्थानंजगदाकारेणविवर्त्तस्तत्कारिणीमजस्रगत्वरत्वादिविशेषणविशिष्टांसूक्ष्मांकालस्यकलनांध्यानेनैवांतरेणबहिःस्फुटव्यवहाराक्षमेणानुभवेनअन्ववेक्ष्यस्थिताइतिद्वयोरर्थः ॥ ४५ ॥४६॥ ततोजंगमेषुविशेषंदर्शयति ॥ रागेति ॥ ४७ ॥ तेष्वपिकृमिकीटादीनांदुःखानुभवातिशयंतन्निमित्तंदर्शयति ॥ सुदुष्कृतेति ॥ सुष्ठुअतिशयेनदुष्कृतोत्तमैस्तत्फलभोगानुसारिध्यानान्येवचरितुंशीलंयासांतथाविधाः ॥ ४८ ॥ सयद्यदेवासृजततत्तदत्तुमध्रियतेतिश्रुतेःकालकवलनीयत्वंस्थावरजंगमानांसमानमित्याह ॥ क्षणेनेति ॥ ४९ ॥ एवंस्थाव

चिद्भित्तौस्पंदशुभ्रायांरंगैःपंचभिरिंद्रियैः ॥ उन्मीलयतिसंसारचित्राणिविधिचित्रकृत् ॥ ४४ ॥ अजस्रगत्वरींसर्वपरिवर्त्तविधायिनीम् ॥ निमेषशतभागांगीमसहुःसाधितांकुराम् ॥ ४५ ॥ सूक्ष्मांकालस्यकलनांस्वसमुत्थानकारिणीम् ॥ ध्यानेनैवान्ववेक्ष्यैताःस्थिताःस्थावरजातयः ॥ ४६ ॥ रागद्वेषसमुत्थेनभावाभावमयेनच ॥ जरामरणरोगेणजीर्णाजंगमजातयः ॥ ४७ ॥ सुदुष्कृतोत्तमध्यानचारिण्योधरणीतले ॥ नियत्यानियतंकालंपीड्यंतेकीटपंक्तयः ॥ ४८ ॥ क्षणेनादृश्यएवेदंनिगिरत्यखिलंसुखी ॥ सुदुर्लक्ष्यबिलःकालव्यालोविपुलभोगवान् ॥ ४९ ॥ कालेनकिंचिदालक्ष्यस्वशरीराकुलीकृताः ॥ शीतवातातपप्रौढाःप्रोल्लसत्पुष्पदीप्तयः ॥ ५० ॥ फलप्रदाश्चरंतीहशीलिनःश्वभ्रविग्रहाः ॥ पयःपटलविश्रांतत्रैलोक्यांभोजकोटरे ॥ ५१ ॥ करोतिघुंघुमंभूरिभूतभ्रमरपेटिका ॥ ब्रह्मांडभैक्ष्यभांडेयंकालीभगवतीक्रिया ॥ ५२ ॥

रेषुनियतकालंफलपुष्पादिपरिणामशालित्वमनिवार्यशीतवातातपादिसहत्वंचविशेषइतिदर्शयति ॥ कालेनेतिसार्धेन ॥ श्वभ्रंभूबिलंतत्रप्रविष्टाविग्रहःशरीरमूलभागोयेषांतथाविधाःस्थावराःकिंचिद्वीजकंस्वपरादृष्टमालक्ष्यनिमित्तीकृत्यमनुष्यपक्षिसर्पादिभिःस्वशरीरेआकुलीकृताःपीडितावसंतादिकालभेदेनप्रोल्लसत्पुष्पदीप्तयःफलप्रदाश्चअतएवशीलिनस्तपःशमदमतितिक्षौदार्यादिशीलवंतइवचरंतिकालंनयंति ॥ ५० ॥ इदानींलोकत्रयमंभोजत्रयत्वेनकल्पयित्वातत्रत्यचरप्राणिनिकायंभ्रमरसमूहत्वेनोत्प्रेक्षते ॥ पयइत्यर्द्धाभ्याम् ॥ यद्यपिपृथिव्येवपद्मपत्रवज्जलेप्रतिष्ठितापुराणादिप्रसिद्धानांतरिक्षद्युलोकौतथापितयोरपित्रिवृत्कृतजलकार्यत्वाज्जलभागप्रतिष्ठितत्वमस्त्येवेतिसूचनायपटलपदम् ॥ ५१ ॥ घुंघुमंगुंजाध्वनिम ॥ भ्रमरपेटिकाभ्रमरसमूहः ॥ इदानींफलनियतांप्राणिक्रियांकालीत्वेनब्रह्मांडंचतदीयभिक्षापात्रत्वेनचतुर्विधभूतग्रामंचतदीयभैक्ष्यभावेनोत्प्रेक्षते ॥ ब्रह्मांडेति ॥ कालस्यस्त्रीकालीपूर्वंगृहीतांभूतभिक्षांस्वभर्त्रेकालायदत्त्वादत्त्वापुनःपुनर्दत्वाअन्यामन्यांभूतभिक्षांजिघृक्षतीत्यर्थः ॥ ५२ ॥

इदानींक्रियाफलभूतांत्रिलोकींवृद्धकामिनीत्वेनवर्णयति ॥ तिमिरेत्यादिना ॥ अलीकपदंव्याजार्थे ॥ ५३ ॥ ब्रह्मोपेंद्रमहेंद्रादिकाआंतरचेतनस्वभावेन ॥ धरागिरिवरादिका बाह्यस्थूलदेहस्थानीयजडस्वभावेन ॥ ब्रह्मतत्त्वमेवैकंस्तदिविस्फोटइववंधनैःपिधायसदागोप्यंयस्याः ॥ ५४ ॥ चिच्छक्तिश्चिदाभासःसैवमातेवपोषयित्रीयस्याअतएवस्थूला ॥ ५५ ॥ समस्ताःपद्मिन्योविसलताहस्तायस्याः ॥ नीलमंबरंनभस्तदेवांबरमुत्तरीयंतेनपरीवृता ॥ रुजःक्षिपिनहितिवृधीत्यादिनापरेदीर्घः ॥ आपंचैवहलंतानामितिभागुरिमतेटाप् ॥ ५६ ॥ ५७ ॥ इदानींकालंमहार्णवत्वेनवर्णयति ॥ मग्नमिति ॥ निष्ठाद्वयंभावे ॥ ५८ ॥ कल्पाएवक्षणाः ॥ वीप्सायामव्ययीभावः ॥ अगाधःरसस्यंदोभांतिसह

स्वयंदत्वैवदत्वैवभूतभिक्षांजिघृक्षति॥तिमिरालीककबरीइंद्वर्कचपलेक्षणा॥५३॥ब्रह्मोपेंद्रमहेंद्रादिधरागिरिवरादिका॥ब्रह्मतत्त्वैकपिटकालंबमानपयोधरा॥५४॥ चिच्छक्तिमातृकास्थूलातरलाघनचापला॥ तारकाजालदशनासंध्यारुणतराधरा॥५५॥ समस्तपद्मिनीहस्ताशतक्रतुपुरानना॥ सप्ताब्धिमुक्तालतिकानीलांबरपरीवृता ॥५६॥ जंबूद्वीपमहानाभिर्वनश्रीरोमराजिका॥ भूत्वाभूत्वाविनश्यंतीत्रिलोकीवृद्धकामिनी॥५७॥ असकृज्जायतेनष्टाभूरिविभ्रमकारिणी॥ मग्नमग्नैरथोन्मग्नंभीमेकालमहार्णवे॥५८॥ प्रतिकल्पक्षणंक्षीणैर्ब्रह्मांडस्फुटबुद्बुदैः॥ कालेऽगाधरसस्यंदेस्थित्वास्थित्वापुनःपुनः॥५९॥कल्पमात्रनिमेषेणोड्डीनाःकारणसारसाः॥ उत्पत्त्योत्पत्त्यनाशिन्यःसंतप्ताःसृष्टिविद्युतः॥६०॥ कालमेघस्फुरंत्येताश्चित्प्रकाशवनोद्यमाः ॥ प्रपतद्भूतविहगाःपतंत्यविरतभ्रमाः॥ ६१ ॥ कालतालात्किलोत्तालाद्ब्रह्मांडफलपालयः॥ उन्मेषकृतवैरिंचसृष्टयोदेवनायकाः ॥ ६२ ॥ निमेषकृतसंहाराःसंतिकेचनकुत्रचित् ॥ निमेषोन्मेषसंक्षीणकल्पजालाःसहस्रशः॥६३॥ रुद्राःकेचनविद्यंतेतस्मिंश्चित्परमेपुनः॥ तेपियस्यनिमेषेणभवंतिनभवंतिच॥६४॥ तादृशोप्यस्तिदेवेशोह्यनंतेयंक्रियास्थितिः॥ अनंतसंकल्पमयेशून्येचब्रह्मणःपदे॥६५॥

स्तृष्णाजलस्यंदोयस्मिन् ॥ ५९ ॥ कारणभूतहिरण्यगर्भसारसाः ॥ सारससंबंधात्कालस्यनदत्वकल्पनागम्यते ॥ मेघत्वेनतंकल्पयति ॥ उत्पत्त्योत्पत्त्येति ॥ ६० ॥ चित्प्रकाशस्यवननंवनःसंभजनंतेनउद्यमःप्रकाशशक्तिर्यासाम् ॥ तस्यभासासर्वमिदंविभातीतिश्रुतेः ॥६१॥ उत्तालादत्युन्नतात्काललक्षणात्तालवृक्षात्प्रपतंतोभूतानिप्राणिनस्तल्लक्षणा विहगाःकाकायेभ्यस्तथाविधाः ॥ ब्रह्मांडलक्षणानांफलानांपालयःपंक्तयःप्रपतंति ॥ अतर्कितहेतुकत्वसूचनात्काकतालीयन्यायोत्रोत्प्रेक्षितः॥ देवनायकाविष्णुरुद्रेश्वरसदाशिवाख्याः ॥ ६२ ॥ ६३ ॥ चिद्रूपेपरमेपरमकारणे ॥ तेरुद्राअपि ॥ ६४ ॥ इयंरुद्रांताक्रियास्थितिःकर्मोपासनफलभावस्थितिरनंताअसंख्याता ॥ नन्विदंकथंसंभाव्यतइतिचेन्मायायांसर्वसंभवान्नात्रासंभावनायुक्तेत्याशयेनाह ॥ अनंतेति ॥ ६५ ॥

चित्रस्यआश्चर्यसहस्रस्यपूरकाः॥अज्ञानविभूतिप्रपंचनमुपसंहरति ॥ एवमिति ॥ ६६ ॥ ६७ ॥ उक्तमेवार्थंसंक्षिप्यस्पष्टमाह ॥ याःसंपदइति ॥ ताःसर्वाअज्ञानलक्षणस्यतीव्र स्यगाढस्यतिमिरस्यविभूतयः ॥ एतद्विशेषणत्वादेवताइतिपदेनपुंसकमनपुंसकेनेतिनपुंसकैकशेषस्याप्रवृत्तिः ॥ अद्वंद्वतत्पुरुषविशेषणानामितिवाच्यमितितन्निषेधात् ॥ ६८ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाण०सप्तमःसर्गः ॥ ७ ॥ ॥ ७ ॥ ॥ वर्णिताकारणाविद्याजगद्यस्याविभूतयः ॥ कार्याविद्याभवारण्येलतात्वेनेहवर्ण्यते ॥ १ ॥ तत्रा दौविषयंनिर्दिश्यवर्णनप्रकारंप्रस्तौति ॥ संसारेति ॥ कूटस्थत्वाच्चिदेवपर्वतस्तत्तटेस्थिता ॥ कारणाविद्याव्यावृत्तयेस्तष्टयविद्याख्येति ॥ कदाकीदृशीतिकालभेदेनविकासवैचि त्र्यद्योतनार्थम्॥तद्वर्णयामःश्रूयतामितिशेषः ॥१॥ बृहंतोमेर्वादयःपर्वताएवपर्वाणिकांडसंधयस्तैराढ्या ॥ ब्रह्मांडपदेनतदावरणानिगृह्यंतेतल्लक्षणत्वग्भिःसमावृता ॥ लोकैर्जनैः

नसंभवतिकानामशक्तयश्चित्रपूरकाः॥ एवमक्षीणसंकल्पलब्धार्थभरभासुरा ॥ जागतीकल्पनायेयंतदज्ञानविजृंभितम् ॥ ६६ ॥ याः संपदोयद्दुतसंततमापदश्चयद्बाल्ययौवनजरामरणोपतापाः॥यन्मज्जनंचसुखदुःखपरंपराभिरज्ञानतीव्रतिमिरस्यविभूतयस्ताः॥६७॥

॥इ०वा०वा०दे०मो०नि० अज्ञानमाहात्म्यंनामसप्तमःसर्गः॥ ७ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥संसारवनखंडेस्मिंश्चित्पर्व ततटस्थिता ॥ कीदृशीस्त्यविद्याख्यालताविकसिताकदा ॥ १ ॥ बृहत्पर्वतपर्वाढ्याब्रह्मांडत्वक्समावृता ॥ देहयष्टिरियंयस्यास्त्रिलो कीलोककासिनी ॥ २ ॥ सुखंदुःखंभवोभावोज्ञानमज्ञानमेवच ॥ अत्रैतान्युरुवृत्तानिमूलानिचफलानिच ॥ ३ ॥ सुखादविद्योदेत्युच्चै स्तदेवांतेप्रयच्छति ॥ दुःखादविद्योदेत्युच्चैस्तदेवैपाफलत्यलम् ॥ ४ ॥ भवादविद्योदेत्येपातमेवफलतिस्फुटम् ॥ भावात्सत्तामवाप्नोतित मेवफलतिक्षणम् ॥ ५ ॥ अज्ञानाद्वृद्धिमायातितदेवस्यात्फलंस्फुटम् ॥ ज्ञानेनायातिसंवित्तिस्तामेवांतेप्रयच्छति ॥ ६ ॥ नानाविधोल्ला सवतीवासनामोदशालिनी ॥ घनप्रवालतरलातनुरस्याविजृंभते ॥ ७ ॥ दिवसव्यूहकुसुमायामिनीलोलषट्पदा ॥ अजस्रंस्पंदमानै षाप्रपतद्भूतपल्लवा ॥ ८ ॥

कासिनीपत्रांकुरादिविकासवतीइयंत्रिलोकीयस्यादेहयष्टिःसंस्थानम् ॥२॥ भवोजन्म ॥ भावःस्थितिः ॥ अत्रअविद्यालतायाम् ॥ उरुवृत्तानिप्रतिदिनंवृद्धिस्वभावानि ॥ ३ ॥ मूलत्वंफलत्वंचसुखादेरुपपादयति ॥ सुखादित्यादिना ॥ भुज्यमानात्संपत्त्यादिसुखादयेपिमेइतोधिकासंपद्भूयादितिरागलक्षणाअविद्योदेतिसाचयज्ञदानादिधर्मद्वारासुखंफल ति ॥ दारिद्र्यादिदुःखाच्चधनतृष्णादिलक्षणाअविद्योदेतिसाचपापवासनयादुष्प्रतिग्रहचौर्याद्यधर्मप्रवृत्तिंद्वारापुनस्ततोधिकंदुःखंफलतीत्यादिसर्वत्रोह्यम् ॥ एवकारःसर्वत्राभि न्नक्रमः ॥ फलत्येवेतियोज्यम् ॥ ४ ॥ ५ ॥ ज्ञानेनप्रत्यक्तत्त्वविमर्शेनसंवित्तिरुत्तरोत्तरभूमिकाधिरोहलक्षणाज्ञानवृद्धिः ॥ अंतेसप्तमभूमिकायाम् ॥ ६ ॥ प्रासंगिकमुपपाद्य प्रस्तुतांलतामेववर्णयति ॥ नानाविधेति ॥ ७ ॥ नानाविधोल्लासवतीत्येतत्प्रपंचयति ॥ दिवसेत्यादिना ॥ रागादिनाप्रपतंतिप्रधावमानानिभूतानिप्राणिनएवपल्लवायस्याः ॥ ८ ॥

१ इत्वाभावश्छांदसः

आगत्यागत्यकर्मवायुनापुनःपुनर्भ्रमित्वाक्वचितकस्मिंश्चिदधिकारिभूतपल्लवांशेविवेकलक्षणांकरिणीप्रतिपततितयाचकदाचिद्विचारशुंडायेणतदालंबनविषयतरुविश्लेषणेन विधूयतेकंप्यते ॥ धूतरजाःनिरस्तदुर्वासनापरागापिदैवात्तत्कराच्युतापुनर्विषयतरुणाप्रसक्तिमेति ॥ ९॥ जायमानैर्मित्रपश्वादिप्रवालैराढ्या ॥ संजातैःपुत्रपौत्राद्यंकुरैश्चदंतुरा आनंदस्मितास्या ॥ १० ॥ जन्मलक्षणेषुपर्वसुदुःखरोगाद्यहिभिर्नीरंध्रानिरवकाशा ॥ विनाशामरणानितल्लक्षणेषुशाखासंधिच्छिद्रेषुबलाद्विदीर्यमाणेवचंचुराव्याकुला ॥ भोगानांविषयाणामाभोगोनुभवस्तद्विषयेणरसेनरागमकरंदेनापूर्णा ॥ ११ ॥ सर्वर्तुकुसुमोपेतेतियदुक्तंतद्विवृणोति ॥ विकसंत्यइति ॥ यहानवपहरूपाः ॥ चंद्रार्कसहिताआवल

आगत्यागत्यपततिविवेककरिणींक्वचित्॥ विधूयतेधूतरजाःप्रसक्तिंपुनरेतिच॥ ९॥ जायमानप्रवालाढ्यासंजातांकुरदंतुरा॥ सर्वर्तुकुसुमोपेतासमग्ररसशालिनी॥ १०॥ जन्मपर्वाहिनीरंध्राविनाशच्छिद्रचंचुरा॥ भोगाभोगरसापूर्णाविचारैकघुणक्षता॥ ११॥ विकसंत्यःप्रतिदिनंचंद्रार्कावलयोभितः॥व्योम्निवातविलोलानिपुष्पाण्यस्याःकिलग्रहाः॥ १२॥अस्याःप्रस्फुरिताकाराःकोरकत्वमुपागताः॥ पूरिताकाशकोशायास्तारकारघुनंदन॥ १३॥चंद्रार्कदहनालोकायस्यास्तत्कौसुमंरजः॥ अनेनेयंहिगौरांगीस्त्रीवचेतांसिकर्षति॥ १४॥ मनोमातंगविधुतासंकल्पकलकोकिला॥ इंद्रियव्यालसंबाधातृष्णात्वगुपरंजिता॥ १५॥ नीलाकाशतमालांगसंश्रयेणोन्नतिंगता॥ रोदसीजानुसुस्तंभाभुवनोद्यानभूषिता॥ १६॥अधोब्रह्मांडखंडेपुस्वालवालेनजालिता॥विधृताशेषजलधिजलक्षीरादिसेचना॥ १७॥ त्रयीविलोलभ्रमरारमणीपुष्पपुंजिका॥ चित्स्पंदवातचलिताक्रियाविमलपुत्तिका॥ १८॥

योज्योतिःपंक्तयः ॥ १२ ॥ १३ ॥ चंद्रार्कदहनानामालोकाःप्रकाशायस्यास्तत्प्रसिद्धंकौसुमंकुसुमसंबंधिरजः ॥ अनेनरजसाचेतांसिकर्षतिमनोहराभातीतियावत् ॥ १४ ॥ ॥ १५ ॥ नीलाकाशलक्षणस्यतमालवृक्षस्यांगसंश्रयेणोन्नतिविस्तारंगता ॥ रोदस्यौद्यावापृथिव्यौतेएवसंकुचितजान्वाकाराःसुस्तंभाःपरितोमूलावष्टंभायस्याः ॥ १६ ॥ सप्ताब्धिखातलक्षणेनशोभनेनालवालेनविधृताशेषजलधिजलक्षीरादिसेचनासतीअधोभुवनखंडेपुमूलसंतानैर्जालिता ॥ १७ ॥ त्रयीकाम्यकर्मकांडलक्षणावेदत्रयीतयाविलोला ॥ रागिजनाएवभ्रमरायस्याअतएवतदुपभोग्यारमण्यःस्त्रियःपुष्पपुंजानियस्याः ॥ क्रियाशब्देनस्वाभाविकप्रवृत्तिपराजनालक्ष्यंते तएवविपुलाबहुलामूलपत्रकांडादिपुभ्रमंत्यःपुत्तिकाःसूक्ष्मकीटजातयोयस्याम् ॥ १८ ॥

१ भूस्थितेत्यपिपाठः २ टीकानुरोधादधोभुवनखंडेष्वितिपाठोभाति

कुकर्मशास्त्रनिषिद्धक्रिया ॥ जीवानांजीवनैर्जीवनोपायैर्नीरंध्रापूर्णा ॥ तस्याःप्रसिद्धलताविलक्षणान्यपिबहुविधवैचित्र्याणिदर्शयति ॥ नानेत्यादिना ॥ नानाविधैरामोदै र्विषयवासनागंधैर्मदप्रदामूढानाम् ॥ १९ ॥ विवेकिनांतुनानोपशमवैचित्र्यलक्षणनानाकुसुमभासिनी ॥ वर्षेणपुष्पफलमकरंदरजोवर्षेणविकासिनी ॥ २० ॥ २१ ॥ २२ ॥ नित्यंप्रवाहरूपेणाच्छेदिनी ॥ २३ ॥ नित्यमभीक्ष्णम् ॥ तरुणीपल्लविता ॥ २४ ॥ परामृष्टाविचारितासतीविनश्यति ॥ २५ ॥ तस्यविचारयितुःस्फीतेपूर्णात्मनिअंतर्गलितावा

कुकर्माजगरव्याप्तास्वर्गश्रीपुष्पमंडपा ॥ जीवजीवननीरंध्रानानामोदमदप्रदा ॥ १९ ॥ नानोपशमवैचित्र्यनानाकुसुमभासिनी ॥ नानाफलावलीव्याप्तानानावर्षविकासिनी ॥ २० ॥ नानालवालवलयानानाविहगधारिणी ॥ नानापरागपरुपानानाभूधरजालिका ॥ २१ ॥ नानाकलाकुड्मलिनीनानावनगणोत्थिता ॥ नानागिरितटारूढानानादलनिरंतरा ॥ २२ ॥ जाताचजायमानाचम्रियमाणातथामृता ॥ अर्द्धच्छिन्नातथाछिन्नानित्यमच्छेदिनीतथा ॥ २३ ॥ अतीतावर्तमानाचसत्येवासत्यवत्सदा ॥ नित्यमत्यंततरुणीनित्यंशोपमुपेयुषी ॥ २४ ॥ महाविपलतैपाहिसंसारविषमूर्छनाम् ॥ ददातिरभसाश्लिष्टापरामृष्टाविनश्यति ॥ २५ ॥ स्फीतेंतर्गलितातस्य अज्ञेंतःसंस्थितान्विता ॥ इतोजलमितःशैलाइतोनागाःसुराइतः ॥ २६ ॥ इतःपृथ्वीत्वमायातातथेतोद्युतयास्थिता ॥ इतश्चंद्रार्कतांप्राप्तातथेतस्तारकाकृतिः ॥ २७ ॥ इतस्तमइतस्तेजइतःखमितउर्वरा ॥ इतःशास्त्रमितोवेदाइतोद्वयविवर्जिता ॥ २८ ॥ क्वचित्खगतयोड्डीनाक्वचिद्देवतयोत्थिता ॥ क्वचित्स्थाणुतयारूढाक्वचित्पवनतांगता ॥ २९ ॥ क्वचिन्नरकसंलीनाक्वचित्स्वर्गविलासिनी ॥ क्वचित्सुरपदंप्राप्ताक्वचित्क्रमितयास्थिता ॥ ३० ॥ क्वचिद्विष्णुःक्वचिद्ब्रह्माक्वचिद्रुद्रःक्वचिद्रविः ॥ क्वचिदग्निःक्वचिद्वायुःक्वचिच्चंद्रःक्वचिद्यमः ॥ ३१ ॥ यत्किंचनांगभुवनेंपुमहामहिम्नाव्याप्तंजरत्तृणलवत्वमुपागतंवा ॥ दृश्यंस्फुरन्ननुहराद्यपितामविद्यांविद्धिक्षयायनदतीततयात्मलाभः ॥ ३२ ॥ ॥ इ० वा० वा० दे० मो० नि० अविद्यालताविलासोपदेशोनामाष्टमःसर्गः ॥ ८ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

धिता ॥ अज्ञेतुअंतःअन्वितासर्वतोनुवृत्तेवसंस्थिता ॥ तदनुवृत्तिमेवप्रपंचयति ॥ इतइत्यादिना ॥ २६ ॥ २७ ॥ उर्वरासस्याढ्याभूः ॥ इतःप्रलयमुपुप्त्योर्द्वयविवर्जिता ॥ २८ ॥ ॥ २९ ॥ नरकात्मनापातालकुहरेसंलीना ॥ ३० ॥ ३१ ॥ महामहिम्नाप्रभावोत्कर्षेणाव्याप्तंहरादिसर्वसंहार्यव्याकृतांतंप्रभावाल्पतयाजरत्तृणलवत्वमुपागतंवायत्किंचनदृश्यं स्फुरदस्तितांसर्वामविद्यांतत्त्वबोधेनक्षयायवाधायविद्धि ॥ तदतीततयातद्बाधेनआत्मनोलाभोमोक्षइत्यर्थः ॥ ३२ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेऽष्टमःसर्गः ॥ ८ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

गुणत्रयविभागोत्रहरादेःशुद्धसत्वता ॥ विद्याविद्यास्वरूपंचतद्दतीतंचवर्ण्यते ॥ १॥ दृश्यंस्फुरन्ननुहराद्यपितामविद्यांविद्धीतियदुक्तंतत्रहरादिशरीरस्य ऋतंसत्यंपरंब्रह्मपुरुषंकृ ष्णपिंगलम् ॥ ऊर्ध्वरेतंविरूपाक्षंविश्वरूपायवैनमोनमः घृतरीतिघनीभूतसच्चिदानंदविग्रहइत्यादिश्रुतिस्मृतिषुपरब्रह्मत्वसच्चिदानंदरूपत्वप्रसिद्धेरीशानःसर्वविद्यानामीश्वरःसर्वभू तानामित्यादिश्रुतिप्रसिद्धसर्वविद्याधिपत्यविरोधाद्वासुदेवमूर्त्तेःपुराणेषुतुरीयत्वपरब्रह्मत्वादिप्रसिद्धेश्चाविद्यात्वमसंभावयन्प्रसंगात्तद्रहस्यमपिजिज्ञासमानोरामःपृच्छति ॥ आ कारेति ॥ उदितंत्वयाउक्तम् ॥ भ्रममिवमिथ्याभ्रांतिमागतस्तमपनयेतिशेषः ॥ १ ॥ तत्रनिर्विकारशुद्धचितोघृतवत्स्वतोघनीभावस्यमूर्त्ताकारस्यचाघटनान्मायाधीनविवर्त्त प्रयुक्तत्वेसिद्धेश्रुतस्यपरब्रह्मत्वस्याविरोधायतत्प्रयोजकोमायांशःस्वच्छसूक्ष्मतमस्वरूपानावरकःकल्प्यःसएवशुद्धसत्त्वमित्युच्यतेतस्यचस्वच्छतमत्वाच्चित्प्रतिबिंबग्राहितयास र्वविद्योद्दीपकत्वात्स्वरूपानावरकत्वाच्चनसर्वविद्याधिपत्यविरोधः॥ यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत् ॥ भूयश्चांतेविश्वमायानिवृत्तिरित्यादिश्रुत्याअस्मदीयतत्त्वज्ञानवा

॥श्रीरामउवाच॥ ॥आकारजातमुदितंशुद्धंहरिहराद्यपि ॥ अविद्यैवेत्यहंश्रुत्वाब्रह्मन्भ्रममिवागतः॥ १॥ ॥श्रीवसिष्ठउवाच॥ ॥ संवेद्येनापरामृष्टंशांतंसर्वात्मकंचयत् ॥ तत्सच्चिदाभासमयमस्तीहकलनोज्झितम् ॥ २॥ समुदेतिस्वतस्तस्मात्कलाकलनरूपिणी ॥ जलादावर्त्तलेखेवस्फुरज्जलतयोदिता ॥३॥ सूक्ष्मामध्यातथास्थूलाचेतिसाकल्प्यतेत्रिधा ॥ पश्चान्मनस्तयातेनज्ञातैववपुषापुनः॥४॥ तिष्ठत्येतास्ववस्थासुभेदतःकल्प्यतेत्रिधा ॥ सत्वंरजस्तमइतिएषैवप्रकृतिःस्मृता ॥ ५॥ अविद्यांप्रकृतिंविद्धिगुणत्रितयधर्मिणीम्॥ एषैवसंसृतिर्जंतोरस्याःपारंपरंपदम् ॥ ६ ॥ अत्रतेयेत्रयःप्रोक्तागुणास्तेपित्रिधास्मृताः ॥ सत्वंरजस्तमइतिप्रत्येकंभिद्यतेगुणः॥ ७॥ नवधैवंविभक्तेयमविद्यागुणभेदतः ॥ यावत्किंचिदिदंदृश्यमनयैवतदाश्रितम्॥८॥ ऋषयोमुनयःसिद्धानागाविद्याधराःसुराः॥ इति भागमविद्यायाःसात्विकंविद्धिराघव॥ ९ ॥

ध्यत्वाच्चाविद्यात्वमितिनात्रासंभावनायुक्तेत्याशयेनोत्तरंवक्तुकामोवसिष्ठस्तत्कल्पनाक्रममनुक्रमिष्यन्नधिष्ठानंप्रथमंदर्शयति ॥ संवेद्येनेति ॥ संवेद्येनजगदाकारेणपरामृष्टंस र्वजगत्संस्कारसंभृतमायाशबलत्वात्सर्वात्मकमतएवसच्चित्प्रकाशप्रचुरंसन्मात्रमस्तिसर्गात्प्रागित्यर्थः ॥ २ ॥ कलनंजगत्संस्कारोद्बोधस्तल्लक्षणाकलाचिदाभासस्फूर्त्तिःसर्गा दिकालेसमुदेतिस्वसत्तयास्थितैवईषत्पृथगिवगुणिगुणभेदव्यवहारयोग्यतयाआविर्भवति ॥ अतएवतदनुरूपोदृष्टांतआवर्त्तलेखेवेति ॥ ३ ॥ साचकलासूर्यात्पृथक्प्रौढातपमं दातपच्छायाभेदपुतेजोपकर्षइवसूक्ष्मामध्यास्थूलाचेतित्रिधाकल्प्यतइत्यर्थः ॥ सूक्ष्मकल्पनात्पश्चात्तेनकल्पयित्रामनस्तयाहिरण्यगर्भतयामध्याज्ञातापुनस्तदनंतरंवपुषास्थू लविराडाकारेणज्ञातातथैवतिष्ठतीतिपरेणान्वयः ॥ ४ ॥ यतएषाअव्याकृतोपाधिप्रकृतिरेवत्रिधास्थिताअतएवासुसूक्ष्माद्यवस्थास्वपित्रिधाकल्प्यतइत्यन्वयः ॥ ५ ॥ प्रश्नो त्तरानुगुण्यायप्रकृतेरविद्यात्वमाह ॥ अविद्यामिति ॥ ६ ॥ कार्यकारणाविद्यासाधारण्येनैकैकस्यगुणस्यावांतरत्रैविध्यमाह ॥ अत्रेति ॥ ७॥ ८ ॥ तत्रप्रथमविभागेसत्वांशमु दाहरति ॥ ऋषयइति ॥ ९ ॥

तदवांतरविभागेत्रीनप्युदाहरति ॥ सात्विकस्येति॥१०॥हरादीनांसत्वगुणांतर्गतशुद्धसत्वदेहत्वेउपपत्तिमाह॥सत्वजाताविति ॥ निर्मलंकदाप्यविद्यावरणशून्यंस्वात्मपदंस्वाभावि क्यैवविद्ययासंदेवायाताअतस्तेशुद्धसत्वमित्यर्थः ॥ एतेनविधिहरयोराजसतामसशरीरत्वेनमूढजनप्रसिद्धिर्निरस्ता ॥ सत्वंरजस्तमइतिप्रकृतेर्गुणास्तैर्युक्तःपरःपुरुषएकइहास्य धत्ते ॥ स्थित्यादयेहरिविरिंचिहरेतिसंज्ञाःश्रेयांसितत्रखलुसत्वतनोर्नृणांस्युरितिभागवतादिवाक्यानि तथायस्यतमःसाक्षाच्छरीरंसात्विकोगुणः ॥ पालनायत्रिमूर्त्तीनांसविष्णुः स्यान्नाचापरइतिस्कांदवचनंचसृष्ट्याद्युपकरणेशरीरत्वोपचारेणद्वाभ्यामेकस्यवरगोष्ठीन्यायेनप्रशंसार्थानिनेतरयोरपकृष्टतापराणि ॥ सर्वज्ञत्वसत्यसंकल्पतास्वभक्तप्रबोधक त्वनिःश्रेयसहेतुत्वानांत्रिमूर्त्तिष्वपिश्रुतिस्मृतिपुराणेषुप्रसिद्धतमत्वात् ॥ अयंपरस्त्वयंनेतिसंरंभाभिनिवेशिनः ॥ यातुधानाश्चजायंतेपिशाचाश्चनसंशयइत्यपकर्षदर्शनस्यनिंदि तत्वात्त्रिमूर्त्तीनामीश्वरकोटित्वेनैकतयाअपकर्षायोग्यत्वात्सर्वोत्कर्षप्रयोजकशुद्धसत्वशरीरत्वमेवोचितमितिभावः ॥ ११ ॥ अतएवतदुपासकानामपिज्ञानप्राप्त्यापुनर्जन्मनि

सात्विकस्यास्यभागस्यनागविद्याधरास्तमः॥ रजस्तुमुनयःसिद्धाःसत्वंदेवाहरादयः॥१०॥ सत्वजातौदेवयोनावविद्याप्राकृतैर्गुणैः॥ निर्मलंपदमायाताःसत्वंहरिहरादयः॥११॥ सात्विकःप्राकृतोभागोरामतज्ज्ञोहियोभवेत्॥नसमुत्पद्यतेभूयस्तेनासौमुक्तउच्यते॥१२॥ तेनरुद्रादयोल्येतेसत्वभागामहामते॥ तिष्ठंतिमुक्ताःपुरुषायावद्देहंजगत्स्थितौ ॥ १३ ॥ यावद्देहंमहात्मानोजीवन्मुक्ताव्यवस्थिताः ॥ विदेहमुक्तादेहांतेस्थास्यंतिपरमेश्वरे॥१४॥भागएषत्वविद्यायाएवंविद्यात्वमागतः॥बीजंफलत्वमायातिफलमायातिबीजताम्॥१५॥ उदेत्यविद्याविद्यायाःसलिलादिवबुद्बुदः॥ विद्यायांलीयतेविद्यापयसीवहिबुद्बुदः ॥ १६ ॥ पयस्तरंगयोर्द्वित्वभावनादेवभिन्नता ॥ वि द्याविद्यादृशोर्भेदभावनादेवभिन्नता॥१७॥ पयस्तरंगयोरैक्यंयथैवपरमार्थतः॥ नाविद्यात्वंनविद्यात्वमिहाकिंचनविद्यते॥१८॥ वि द्याविद्यादृशौत्यक्त्वायदस्तीहतदस्तिहि॥ प्रतियोगिव्यवच्छेदवशादेतद्गृहद्गृह ॥ १९ ॥ विद्याविद्यादृशौनस्तःशेषेपद्भवदोभव॥नाविद्या स्तिनविद्यास्तिकृतंकल्पनयानया॥२०॥किंचिदस्तिनकिंचिद्यच्चित्संविदितितत्स्थितम्॥ तदेवाविदिताभासंसदविद्येत्युदाहृतम्॥२१॥

वृत्तिःप्रसिद्धेत्याह ॥ सात्विकइति ॥ त्रिमूर्त्त्यात्मकःप्राकृतोभागःसात्विकः अतस्तज्ज्ञस्तदुपासकःअतएवत्रिमूर्तीनामावरणाभावादनागंतुकीजीवन्मुक्ततेत्याह ॥ तेनेति ॥ अ सौहरिहरादिः ॥ १२ ॥ १३ ॥ परमेश्वरेशुद्धब्रह्मस्वभावे ॥ १४॥ प्रश्नसमाधानमुपसंहृत्यप्रस्तुतमेवप्रस्तौति ॥ भागइति ॥ कार्याविद्याफलंतत्प्रलयेबीजतांकारणाविद्यात्वमा याति ॥ १५॥ कार्याविद्योदयलयाधारत्वादपिविद्याशरीराणांतेषामविद्यात्वमेवेत्याह ॥ उदेतीति ॥ कारणाविद्यांतर्गतशुद्धसत्वभागोविद्यातस्याःसकाशात्कार्याविद्यालक्षण सृष्टिरुदेतितत्रैवप्रलयेलीयते ॥ १६ ॥ एवंचविद्याविद्याभेदोपिकल्पितएवेतिसिद्धमित्याह ॥ पयइति ॥ १७ ॥ किंचविद्यादृशाविद्याविद्योभयबाधेसुतरांतद्भेदप्रसक्तिर्नास्ती त्याशयेनाह ॥ नाविद्यात्वमिति ॥ १८ ॥ विद्याविद्यादृशौतद्भेदविरोधाद्दिदृष्टी ॥ ननुअविद्यादृशोबाध्यत्वादस्तुत्यागोविद्यादृशस्तुबाधिकायाःकेनत्यागस्तत्राह ॥ प्रतियोगी ति ॥बाधेनाविद्यायाअसत्त्वापत्तौतन्निरूपितबाधकतायाअसिद्धेर्व्यावृत्तिप्रसिद्धेर्व्यावर्त्यप्रतियोगिप्रसिद्ध्यधीनत्वाच्चेत्यर्थः ॥ १९॥ शेषेपरिशिष्टचिन्मात्रे ॥ २० ॥ कोसौशे षस्तंदर्शयंस्तदेवप्राग्बोधादविद्येतिकल्पितमित्याह ॥ किंचिदिति ॥ नास्तिकिंचिस्त्वातिरिक्तंयद्यतन्नाकिंचित् ॥ २१ ॥

॥ २२ ॥ स्वांतेमनसिमिथःअन्योन्यंछायातपनयोरिवविरुद्धयोस्तयोर्विद्याविद्ययोर्मध्येअविद्यायामंतःअंतरेचितिबाधेनविलीनायांसत्याम् ॥ २३ ॥ अवाप्यंविद्याफलमभिव्यक्तंपूर्णानंदरूपम् ॥ ननुविद्यापिनिराबाधत्वात्कुतोनपरिशिष्यतेतत्राह ॥ अविद्यासंक्षयादिति ॥ इंधनसंक्षयादग्निरिवेतिभावः ॥ २४ ॥ सर्वबाधात्मकत्वान्नकिंचित्परमार्थसद्रूपत्वात्किंचित् ॥ अतएवतद्दर्शनमेवतत्त्वतःसर्वदर्शनंसर्वबाधदर्शनंचेत्याह ॥ तत्रैवमिति ॥ एवमुक्तेनतात्त्विकरूपेण ॥ मायिकरूपेणतुनकिंचिदपिदृश्यते ॥ २५ ॥ अज्ञानावृतदशायामपितस्यैवाकिंचित्त्वेपिवटबीजवद्व्याकृताव्याकृतावस्थयोःस्थूलसूक्ष्मीभूतसर्वात्मकतालक्षणंकिंचित्त्वंप्रसिद्धमित्याह ॥ वटश्चेत्यादिना ॥ २६ ॥ २७ ॥ तत्रसत्त्वादेवदेशकालक्रमोदयेतस्मान्निर्यांतीतिपरेणान्वयः ॥ अतएवाग्निविस्फुलिंगादिन्यायेनजीवानामुपाधिभिःसहततोनिर्गमनंश्रुतिषुप्रसिद्धमित्याशयेनाह ॥ यथेत्यादिना

विदितंसत्तदेवेदमविद्याक्षयसंज्ञितम्॥विद्याभावादविद्याख्यामिथ्यैवोदेतिकल्पना॥२२॥मिथःस्वांतेतयोरंतश्छायातपनयोरिव॥अविद्यायांविलीनायांक्षीणेद्वेएवकल्पने॥२३॥ एतेराघवलीयेतेअवाप्यंपरिशिष्यते॥अविद्यासंक्षयात्क्षीणोविद्यापक्षोपिराघव॥२४॥ यच्छिष्टंतन्नकिंचिद्वाकिंचिद्वापीदमाततम्॥ तत्रैवंदृश्यतेसर्वंनकिंचनचदृश्यते॥ २५॥ वटश्चवटधानायामिवपुष्पफलादिमान् ॥ सर्वशक्तिर्हिकिंचित्त्वंसर्वशक्तिसमुद्गकम् ॥ २६॥ नभसोप्यधिकंशून्यंनचशून्यंचिदात्मकम् ॥ सूर्यकांतेयथावह्निर्यथाक्षीरेघृतंतथा॥ ॥ २७॥ तत्रेदंसंस्थितंसर्वंदेशकालक्रमोदये॥ यथास्फुलिंगाअनलाद्यथाभासोदिवाकरात्॥२८॥ तस्मात्तथेमानिर्यातिस्फुरंत्याःसंविदश्चितः॥ यथांभोधिस्तरंगाणांयथामलमणिस्त्विषाम्॥ २९॥ कोशोनित्यमनंतानांतथातत्संविदांत्विषाम्॥सबाह्याभ्यंतरेसर्ववस्तुन्यस्त्येववस्तुसत्॥ ३०॥ सर्वदैवाविनाशात्मकुंभानांगगनंयथा ॥ यथामणेरयःस्पंदेअयस्कांतस्यकर्तृता ॥ ३१ ॥ अकर्तुरेवहितथाकर्तृतातस्यकथ्यते॥ मणिसन्निधिमात्रेणयथायःस्पंदतेजडम्॥ तत्सत्तयातथैवायंदेहश्चेतत्यचिद्वपुः॥ ३२॥

॥ २८ ॥ तस्मात्तत्रस्थितत्वादेवब्रह्मसंविदःसकाशादिमाःप्रसिद्धाजीवचितोनिर्यांति ॥ अतएवतद्ब्रह्मसर्वजीवसंविदांकोशइत्याह ॥ यथेति ॥ २९ ॥ त्विषांभमस्थानीयानाम् ॥ निर्गमनावधित्वोक्तेर्मणिप्रभादृष्टांताच्चजीवजगतोर्ब्रह्मणोबहिरवस्थानप्रसक्तिंवारयन्नाह ॥ सबाह्याभ्यंतरमिति ॥ वस्तुन्येवास्तीतिसंबंधः ॥ यतोवस्तुसन्वस्त्वधीनसत्ताकम् ॥ ३० ॥ वस्तुचसर्वदैवअविनाशात्मत्रिविधपरिच्छेदरहितमितियावत् ॥ तथाचजीवनिर्गमनंकुंभाकाशोदरेकुंभनिर्गमनात्कुंभाकाशनिर्गमनमिवौपचारिकंसंपन्नमित्याशयेनाह ॥ कुंभानामिति ॥ एवंजीवस्यकर्तृत्वमप्यौपचारिकमेवेत्याह ॥ यथेति ॥ ३१ ॥ ३२ ॥

१ इदंसप्तम्यंतमधिकमितिभाति

उक्तमर्थंसंक्षिप्योपसंहरति ॥ तत्रेति ॥ तत्रअज्ञातेब्रह्मणिपूर्वपूर्वसंविदितजगत्कल्पितवासनाप्रयुक्तेनोत्तरोत्तरकल्पनेनेदंजगत्स्थितम् ॥ यत्रयस्मिन्ज्ञातेखादाकाशादप्यरूपिणिमूर्त्तामूर्त्तरूपशून्येनान्यत्किंचिदस्तीत्यर्थः ॥ ३३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेनवमःसर्गः ॥ ९ ॥ ॥ ७ ॥ ॥ अविद्याबंधविभ्रांतिःस्थावरेषुमनःस्थितिः ॥ बुद्धिपूर्वाद्विचाराच्चबंधमोक्षःप्रपंच्यते ॥ १ ॥ तस्माज्जगज्जीवभेदस्याज्ञातब्रह्ममात्रत्वाज्ज्ञातेतस्मिन्निदंनकिंचिदेवेत्यर्थः ॥ १ ॥ इदंजीवादिसर्वंयत्रभावाभावमयात्मिकाकाचित्कलनानास्तितत्तादृशंब्रह्मैव ॥ एवंचव्यर्थंकिमीहसेदच्छसि ॥ २ ॥ संबंधोदेहेबाह्यभोग्येचाहंममतालक्षणः ॥ नतंलभामहेविमर्शेनेतिशेषः ॥ ३ ॥ भ्रमतांजगद्भ्रांतिम् ॥ ४ ॥ चेत्यबीजभूतंमलंस्वसत्तारोपेणाश्रिता ॥ एतिविद्ययेतिशेषः ॥ ५ ॥ एवमविद्यास्वरूपमुक्त्वातत्कार्योपाधिनाआत्मनोबंधभ्रमंदर्शयति ॥ चित्तमात्र

तत्रस्थितंजगदिदंजगदेकबीजेचिन्मात्रसंविदितकल्पितकल्पनेन ॥ लोलोर्मिजालमिववारिणिचित्ररूपंखादप्यरूपवतियत्रनकिंचिदस्ति ॥ ३३ ॥ ॥ इत्यार्षेवा०वा०दे०मोक्षोपायेपुनिर्वाणप्रकरणेविद्यानिराकरणंनामनवमःसर्गः ॥ ९ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ तस्मान्नकिंचिदेवेदंजगत्स्थावरजंगमम् ॥ नकिंचिद्भूततांप्राप्तंयत्किंचिदितिविद्धिहे ॥ १ ॥ यत्रकाचिन्नकलनाभावाभावमयात्मिका ॥ तदिदंरामजीवादिसर्वंव्यर्थंकिमीहसे ॥ २ ॥ संबंधोयमसावंतर्द्वंदियोव्यपदिश्यते ॥ नतंलभामहेसर्परज्जुसर्पभ्रमादिव ॥ ३ ॥ अपरिज्ञातआत्मैवभ्रमतांसमुपागतः ॥ ज्ञातआत्मत्वमायातिसीमांतःसर्वसंविदाम् ॥ ४ ॥ अविद्येत्युच्यतेलोकेचिच्चेत्यमलमाश्रिता ॥ चेत्यातीतात्मतामेतिसर्वोपाधिविवर्जिता ॥ ५ ॥ चित्तमात्रंहिपुरुषस्तस्मिन्नष्टेचनश्यति ॥ स्थितेतिष्ठतिचात्मायंघटेसतिघटांबरम् ॥ ६ ॥ गच्छन्पश्यतिगच्छंतंस्थितंतिष्ठन्छिशुर्यथा ॥ भ्रांतमेवमिदंचेतःपश्यत्यात्मानमाकुलम् ॥ ७ ॥ कोशकारवदात्मानंवासनातनुतंतुभिः ॥ वेष्टयच्चैवचेतोंतर्बालत्वान्नावबुध्यते ॥ ८ ॥ ॥ श्रीरामउवाच ॥ ॥ मौर्ख्यमत्यंतघनतामागतंसमवस्थितम् ॥ स्थावरादितनुप्राप्तंकीदृशंभवतिप्रभो ॥ ९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अमनस्त्वमसंप्राप्तंमनस्त्वादपिचच्युतम् ॥ तटस्थंरूपमाश्रित्यस्थितैषास्थावरेषुचित् ॥ १० ॥

मित्यादिना ॥ चित्तमात्रंचित्ततादात्म्याध्यासाच्चित्तप्रायः ॥ अतएवचित्तेनष्टेनश्यतीव ॥ एतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतिविनाशमेवापीतोभवतीत्यादिश्रुतेः ॥ घटांबरंयथेतिशेषः ॥ ६ ॥ एवंगत्यादिकमपिचित्तधर्मंस्वात्मन्यारोपयतीत्याह ॥ गच्छन्निति ॥ अयमात्माएवंभ्रांतमिदंचेतश्चित्तमेवआकुलमात्मानंपश्यति ॥ ७ ॥ अतएवतद्घनवासनाभिःस्वंबध्नातीत्याह ॥ कोशेति ॥ कोशकारःकृमिविशेषः ॥ बालत्वात्विवेकशून्यत्वात् ॥ ८ ॥ बालपदोक्ताविवेकप्रसंगादविवेकपरमावधीनांस्थावराणांचित्तस्थितिंजिज्ञासुःश्रीरामःपृच्छति ॥ मौर्ख्यमिति ॥ समवस्थितमवलंबितम् ॥ ९ ॥ अमनस्त्वंसुषुप्ताविवसुखदुःखसंवेदनायोग्यतापादकंमनोलयम् ॥ पूर्वापरपरामर्शक्षममननयोग्यतालक्षणंमनस्त्वादपिच्युतम् ॥ तटस्थंमुग्धतालक्षणंरूपमाश्रित्य ॥ चित्जीवचित् ॥ १० ॥

सुप्तं विवेकाक्षमम् ॥ पुर्यष्टकपदेनतदंतर्गतंवाह्यांतःकरणजातंलक्ष्यते ॥ अतएवदुःखप्रतीकाराक्षमत्वाद्धृदुःखदायिनी ॥ मूकपदेनकर्मेंद्रियशून्यता अंधपदेनज्ञानेंद्रियप्रचारशून्यता जडपदेनमानसप्रसारणशून्यतोपलक्ष्यते ॥ ११ ॥ ज्ञानकर्मेंद्रियव्यापारशून्यतयासत्तामात्रेणचित्स्थिताचेत्तादृशस्थितौयोगिनामिवशीघ्रमेववासनाक्षयमनोनाशसंभवाददूरस्थितामुक्तिरुचितेतिदूरस्थितामुक्तिरितिवदतस्तवकोभिप्रायइत्याशयेनरामःपृच्छति ॥ सत्तेति ॥ १२ ॥ शास्त्रविहितकर्मानुष्ठानकृतचित्तशुद्धिसाधनचतुष्टयसंपत्तिसहकृतश्रवणमननिदिध्यासनजन्यतत्वसाक्षात्कारकृतसमूलवासनाक्षयमनोनाशाभ्यांसत्तासामान्यस्थितिर्हिमोक्षःसचानंतदुष्कृतदुर्वासनावीजसंभृतानांनारकिप्रायाणां

तत्रदूरस्थितामुक्तिर्मन्येवेद्यविदांवर ॥ सुप्तपुर्यष्टकायत्रचित्स्थितादुःखदायिनी ॥ मूकांधजडवत्तत्रसत्तामात्रेणतिष्ठति ॥ ११ ॥ ॥ श्रीरामउवाच ॥ ॥ सत्ताद्वैततयायत्रसंस्थितास्थावरेषुचित् ॥ तत्रादूरस्थितामुक्तिर्मन्येवेद्यविदांवर ॥ १२ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ बुद्धिपूर्वंविचार्येदंयथावस्त्ववलोकनात् ॥ सत्तासामान्यबोधोयःसमोक्षश्चेदनंतकः ॥ १३ ॥ परिज्ञायपरित्यागोवासनानांयउत्तमः ॥ सत्तासामान्यरूपत्वंतत्कैवल्यपदंविदुः ॥ १४ ॥ विचार्यार्यैःसहालोक्यशास्त्राण्यध्यात्मभावनात् ॥ सत्तासामान्यनिष्ठत्वंयत्तद्ब्रह्मपरंविदुः ॥ १५ ॥ अंतःसुप्तास्थितामंदायत्रवीजइवांकुरः ॥ वासनातत्सुषुप्तत्वंविद्धिजन्मप्रदंपुनः ॥ १६ ॥ अंतःसंलीनमननंपरितःसुप्तवासनम् ॥ सुषुप्तंजडधर्मापिजन्मदुःखशतप्रदम् ॥ १७ ॥ स्थावरादयएतेर्हिसमस्ताजडधर्मिणः ॥ सुषुप्तपदमारूढाजन्मयोग्याःपुनःपुनः ॥ १८ ॥ यथावीजेषुपुष्पादिम्दोराशौघटोयथा ॥ तथांतःसंस्थितासाधोस्थावरेषुस्ववासना ॥ १९ ॥ यत्रास्तिवासनावीजंतत्सुषुप्तंनसिद्धये ॥ निर्वीजावासनायत्रतत्तुर्यंसिद्धिदंस्मृतम् ॥ २० ॥ वासनायास्तथावह्नेर्ऋणव्याधिद्विषामपि ॥ स्नेहवैरविषाणांयःशेषःस्वल्पोपिबाधते ॥ २१ ॥ निर्दग्धवासनावीजसत्तासामान्यरूपवान् ॥ सदेहोवाविदेहोवानभूयोदुःखभाग्भवेत् ॥ २२ ॥

स्थावराणांशास्त्राधिकारिजन्मदौर्लभ्याद्दुर्लभतरइतिश्रीवसिष्ठःस्वोक्तेरभिप्रायंवर्णयति ॥ बुद्धिपूर्वमित्यादिना ॥ १३ ॥ परिज्ञायात्मतत्त्वमितिशेषः ॥ १४ ॥ शास्त्राणिआर्यैर्गुरुसतीर्थ्यादिभिःसहविचार्यअध्यात्मभावनान्मननपूर्वकनिदिध्यासनात्तत्वमालोक्य ॥ १५ ॥ स्थावरेषुतद्दूरतरमित्युपपादयति ॥ अंतरित्यादिना ॥ सुषुप्तत्वमिवसुषुप्तत्वम् ॥ १६ ॥ जडधर्मापिपाषाणादिभाववद्वृत्तिशून्यमपि ॥ १७ ॥ १८ ॥ स्थावरेषुवासनैवनास्तीतिमंदाशंकांपरिहरति ॥ यथेति ॥ पुष्पादीतिव्युत्क्रमादुक्तिः ॥ अंकुरादिपुष्पांतमित्यर्थः ॥ १९ ॥ निर्बीजाज्ञानाग्निभर्जितवीजशक्तिः ॥ २० ॥ अतएवाल्पापिवासनापरिशिष्टावह्न्यादिशेषवत्क्रमादभिवृद्धामहानर्थहेतुर्भवतीतिनिःशेषंतत्क्षयःकार्यइत्याशयेनाह ॥ वासनायाइति ॥ २१ ॥ २२ ॥

चिच्छक्तिरावृतचिद्रूपावासनाबीजशक्तिःरसतयाबीजेअंकुरशक्तिलक्षणोभर्जननाश्योरसइव ॥ २३ ॥ सैवबीजादिसर्वकारणेषुनानारूपेणस्थितेत्याह ॥ बीजेष्वित्यादिना ॥ उल्लासोभूजलयोगादुत्फुल्लतातेनलिंगेनरूप्यतेअनुभूयतेइत्युल्लासरूपमंकुरजननशक्तिस्तदात्मनाद्रव्येषुधनरत्नादिषुद्रव्यभावेनस्पृहणीयताप्रयोजकभव्यभावेन ॥ द्रव्यंचभव्ये इत्यनुशासनात् ॥ इतरेषुशिलादिषु ॥ बालेनकुलमितिवदन्वयः ॥ २४ ॥ भस्मनिपांसुष्वप्यनित्यरूपापूर्वतनकाष्ठलोष्टादिध्वंसरूपा ॥ अणुरूपिण्यप्यसितेषुमलिनेष्व क्षाधारेचासितस्थित्यामालिन्यमार्द्दवरूपयास्थित्याअसिषुखड्गादिषुसितधारतयातीक्ष्णधारतया ॥ २५ ॥ घटपटादिषुसर्वत्रसर्ववस्तुष्वात्मैवसत्तासामान्यरूपंगृहीत्वाज लाहरणशीतनिवारणादिनानाशक्तिःसंस्तिष्ठतीत्यर्थः ॥ २६ ॥ घटामेघजालमेवपटआच्छादकोयस्यास्तथाविधाप्रावृट्रूवर्पर्त्तुः ॥ २७ ॥ अस्याअज्ञानावृतचिच्छक्तेः ॥ अ

चिच्छक्तिर्वासनाबीजरूपिणीस्वापधर्मिणी ॥ स्थितारसतयानित्यंस्थावरादिषुवस्तुषु ॥ २३ ॥ बीजेपूल्लासरूपेणजाड्येनजडरूपिषु ॥ द्रव्येषुद्रव्यभावेनकाठिन्येनेतरेषुच ॥ २४ ॥ भस्मन्यथानित्यरूपापांसुष्वप्यणुरूपिणी ॥ असितेष्वसितस्थित्यासितधारतयासिषु ॥ २५ ॥ आत्माशक्तिःपदार्थेषुतथाघटपटादिषु ॥ सर्वत्रसत्तासामान्यरूपमाश्रित्यतिष्ठति ॥ २६ ॥ इतीयमखिलादृश्यदशामापूर्यसंस्थिता ॥ यथाघटापटाप्रावृडंबरालंबिनीतथा ॥ २७ ॥ स्वरूपमस्याश्चैवैतत्कथितंप्रविचारितम् ॥ असर्वसर्वतोव्यापिसदिवासन्मयात्मकम् ॥ २८ ॥ आत्मदृष्टिरदृष्टैपासंसारभ्रमदायिनी ॥ दृष्टासतीसमग्राणांदुःखानांक्षयकारिणी ॥ २९ ॥ अस्यास्त्वदर्शनंयत्तदविद्येत्युच्यतेबु धैः ॥ अविद्याहिजगद्धेतुस्ततःसर्वंप्रवर्त्तते ॥ ३० ॥ अविद्यारूपरहितायावद्देवावलोक्यते ॥ तावदेवगलत्याशुतुहिनाणुर्यथातपे ॥ ३१ ॥ य थानरोगलन्निद्रोयावत्कलनयामनाक् ॥ विमृशत्याशयंतावन्निद्रातस्यविलीयते ॥ ३२ ॥ यथाकीदृगवस्त्वंतदितियावद्विकल्प्यते ॥ अविद्याक्षीयतेतावदालोकेनांधतायथा ॥ ३३ ॥ दीपहस्तोयथाभ्येतितमोरूपदिदृक्षया ॥ तथाविलीयतेसर्वंतमस्तापैर्घृतंयथा ॥ ३४ ॥ नचसंलक्ष्यतेदीपेतमसोरूपनिश्चयः ॥ उदेतिकेवलंध्वांतध्वंसोविमलमूर्त्तिमान् ॥ ३५ ॥

सन्मयात्मकमसत्यमायाविकारतादात्म्यापन्नम् ॥ २८ ॥ २९ ॥ अस्याआत्मदृष्टेरदर्शनंदर्शनविरोध्यावरणरूपम् ॥ ३० ॥ रूपरहितास्वरूपशून्या ॥ ३१ ॥ दृष्टांतांतरा ण्यप्याह ॥ यथेत्यादिना ॥ आशयंस्वचित्तवृत्तांतम् ॥ ३२ ॥ तत्त्वपर्यालोचनेसर्पादिभ्रमनिर्वृत्तिरप्यत्रदृष्टांतइत्याशयेनाह ॥ यथेति ॥ अवस्तुसर्पादिकींदृक् किंवास्तवमुत मद्भ्रांतिकल्पितमितियावद्विकल्प्यतेविमृश्यते ॥ अंधतातमःकृतदर्शनशक्तिप्रतिबंधः ॥ ३३ ॥ अभ्येतिचेदितिशेषः ॥ यथातमोविलीयतेतथासर्वंसाविद्यंजगत् ॥ ३४ ॥ तमो रूपादर्शननिदर्शनंविवृणोति ॥ नचेति ॥ दीपेआनीयमानेसतीतिशेषः ॥ ३५ ॥

१ पापेनेत्यपिपाठः

मंदमालोक्यमानामंदंयातिसम्यगालोक्यमानापलायते ॥ ३६ ॥ कुतस्तस्याअवस्तुत्वमितिचेत्स्वप्रतीतिबलादेवेत्याह ॥ आलोकइति ॥ आलोकेआगतेसतितत्तमोयादृक् असद्रूपंदृश्यतेतथायाअविद्याप्यसतीदृश्यते ॥ ननुतमसआलोकेनबाधः ॥ त्रैकालिकत्वाप्रतीतेः ॥ किंतुऔष्ण्येनजलशैत्यस्येवंतिरोभावमात्रम् आलोकापगमेपुनस्तद्दर्शनादिति ॥ तमसोवस्तुत्वेतुअस्तुतत्तथा ॥ अविद्यायास्त्ववस्तुत्वंत्रैकालिकबाधानुभवेनप्रतीयतएवेत्यर्थः ॥ ३७ ॥ किंचिच्छुक्तिरज्ज्वाद्यपिवारजतसर्पाद्यपिवायावद्विचार्यनालोक्यतेतावत्तत्त्वतोनदृश्यते ॥ आलोकितेतुयथायावत्स्वभावाअविद्यायथाचवस्तुतत्त्वंवर्त्ततेतत्तथैवप्रतिपद्यतइत्यर्थः ॥ ३८ ॥ कथंविमृश्यालोकनंकार्यंतदाह ॥ रक्तेति ॥ ३९ ॥ एवंविचारवतात्वदामनसाआद्यंतयोरसद्रूपेसर्वस्मिन्दृश्येपरिह्रतेसतियःशिष्यतेइतिशेषश्चिदात्मा ॥ अध्यस्तबाधस्याधिष्ठानाव्यतिरेकादितिभावः ॥ ४० ॥ ४१ ॥

एवमालोक्यमानैषाक्कापियातिपलायते॥ असद्रूपात्यवस्तुत्वाद्दृश्यतेत्यविचारणात्॥३६॥ आलोकआगतेयादृक्तमस्तद्दृश्यतेतथा॥ यावस्तुत्वेत्वविद्यायास्त्ववस्तुत्वंप्रतीयते ॥ ३७॥ यावन्नालोक्यतेतावन्नकिंचिदपिदृश्यते ॥ आलोकितेयथाविद्यातत्तथाप्रतिपद्यते ॥ ३८ ॥ रक्तमांसास्थियंत्रेस्मिन्कःस्यामहमितिस्वयम्॥ यावद्विचार्यतेतावत्सर्वमाशुविलीयते ॥ ३९ ॥ आद्यंतयोरसद्रूपेनूनंपरिह्रतेत्वदा॥ सर्वस्मिन्नेवयःशेषस्तमविद्याक्षयंविदुः॥ ४० ॥ तन्नकिंचिच्चकिंचिद्वातत्सद्ब्रह्मैवशाश्वतम्॥ तद्वस्तुतदुपादेयंयदविद्यानिवर्त्तते॥ ४१ ॥ रूपंस्वनाम्नएवास्याज्ञायतेनिःस्वभावकम्॥ नहिजिह्वागतस्वाद्यस्वादोन्यस्मात्प्रतीयते॥ ४२ ॥ नाविद्याक्वचिदप्यस्तिब्रह्मैवेदमखंडितम्॥ सदसत्कलनास्फारमशेषंयेनमंडितम्॥ ४३॥ एतावदेवाविद्यायानेदंब्रह्मेतिनिश्चयः॥ एतदेवक्षयोयस्याब्रह्मेदमितिनिश्चयः॥ ४४ ॥ घटपटशकटावभासजालंनविभुरितीत्युदितहसात्वविद्या ॥ घटपटशकटावभासजालंविभुरितिचेद्गलितैवसात्वविद्या ॥ ४५॥ ॥इ०वा०वा०दे०मो०नि०पू०अविद्याचिकित्सानामदशमःसर्गः॥ १०॥ ॥ ५॥ ॥श्रीवसिष्ठउवाच॥ ॥पुनःपुनरिदंरामप्रबोधार्थंमयोच्यते॥ अभ्यासेनविनासाधोनाभ्युदेत्यात्मभावना॥ १॥

बाध्यस्यनिःस्वरूपत्वेतद्बाधस्यालमात्रत्वेवानप्रमाणांतरंमृग्यं मायाअविद्यादिनाम्नस्तादृशस्वाभाव्यार्थेष्वेवरूढत्वादित्याह ॥ रूपमिति ॥ ४२ ॥ ४३ ॥ एवंसतिफलितंनिष्कृष्टमविद्यातत्क्षययोःस्वरूपमाह ॥ एतावदिति ॥ अविद्यायाःस्वरूपमितिशेषः ॥ ४४ ॥ तदेवविद्वण्वन्नुपसंहरति ॥ घटेति ॥ घटःपटःशकटंचेत्याद्यवभासमानंजगज्जालंविभुरपरिच्छिन्नसच्चिदात्मानकिंत्वन्यदित्यादिरारोपितदृष्टिरेवाविद्यातदपवादेनापरिच्छिन्नसन्मात्रदृष्टिरेवतत्क्षयइत्यर्थः ॥ ४५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू० दशमःसर्गः ॥ १० ॥ ॥ ५ ॥ ॥ जीवन्मुक्तायययादृष्ट्यास्थिताहरिहरादयः ॥ सर्वंब्रह्मेतिसादृष्टीरामायात्रोपदिश्यते ॥ १ ॥ उपदिष्टस्यैवार्थस्यपुनःपुनर्भंग्यंतरेणोपदेशउपदेश्यार्थव्युत्पत्तिदार्ढ्यार्थः दृष्टफलाहिश्रवणादयोऽघातादिवद्यावत्फलोदयमावर्त्तनीयास्तथाहिभगवतोबादरायणस्यसूत्रमावृत्तिरसकृदुपदेशादितीतिरहस्यंजामितादोषपरिहारेणोत्साहजननायोद्घाटयन्प्रकृतामविद्याक्षयेपरिशिष्टांदृष्टिंश्रोतुंराममभिमुखीकरोति ॥ पुनःपुनरिति ॥ १ ॥

कुतोनाभ्युदेतितत्राह ॥ अज्ञानमिति ॥ सहस्रपदमानंत्यपरम् ॥ तथाचानंतकोटिजन्माभ्यस्तद्वैतवासनास्थिरीकृतत्वान्नसकृदुपदेशात्समूच्छेदमित्यर्थः ॥ २ ॥ चक्षुरादिप्रबल तरबाह्याभ्यंतरबहुप्रमाणप्रासद्वैतरूपत्वाच्चप्राबल्यमित्याह ॥ सबाह्याभ्यंतरमिति ॥ देहस्यभावेजीवनजागराद्यवस्थासुइंद्रियैः अभावेमरणप्रलयाद्यवस्थासुसाक्षिणासदानु भूयते ॥ अतिघनतामतिप्राबल्यम् ॥ ३ ॥ ज्ञानस्यचसामग्र्यादौर्लभ्यंदर्शयति ॥ आत्मेतिद्वाभ्याम् ॥ ४ ॥ प्रोल्लंघ्यअतिक्रम्य ॥ ५ ॥ अतएवपुनःपुनरुपदेशस्यमननाद्यभ्या सस्यचाविद्यालतानानाप्रतानच्छेदनेनसार्थक्यमित्याशयेनोपसंहरति ॥ त्वमिति ॥ ६ ॥ ७ ॥ अयंमदनुभवानुसारीनिश्चयःकार्येणबहिर्व्यवहारेणअकार्येणसमाधिनाचवि

अज्ञानमेतद्बलवदविद्येतरनामकम् ॥ जन्मांतरसहस्रोत्थंघनंस्थितिमुपागतम् ॥ २ ॥ सबाह्याभ्यंतरंसर्वैरिंद्रियैरनुभूयते ॥ भावाभा वेपुदेहस्यंतेनातिघनतांगतम् ॥ ३ ॥ आत्मज्ञानंतुसर्वेषामिंद्रियाणामगोचरम् ॥ सत्तांकेवलमायातिमनःषष्ठेंद्रियक्षये ॥ ४ ॥ प्रोल्लंघ्यें द्रियजांवृत्तिंयत्स्थितंतत्कथंकिल ॥ यातिप्रत्यक्षतांजंतोःप्रत्यक्षातीतवृत्तिमत् ॥ ५ ॥ त्वमविद्यालतामेतांप्ररूढांहृदयद्रुमे ॥ ज्ञानाभ्या सविलासासिपातैश्छिंधिस्वसिद्धये ॥ ६ ॥ यथाविहरतिज्ञातज्ञेयोजनकभूपतिः ॥ आत्मज्ञानाभ्यासपरस्तथाविहरराघव ॥ ७ ॥ निश्च योयमभूत्तस्यकार्याकार्यविहारिणः ॥ जाग्रतस्तिष्ठतोवापितज्ज्ञानांतेनसत्यता ॥ ८ ॥ निश्चयेनहरिर्येनविविधाचारकारिणा ॥ योनि प्ववतरत्युर्व्यांतत्तज्ज्ञत्वमुदाहृतम् ॥ ९ ॥ निश्चयोयस्त्रिनेत्रस्यकांतयासहतिष्ठतः ॥ ब्रह्मणोवाप्यरागस्यसतेभवतुराघव ॥ १० ॥ योनि श्चयःसुरगुरोर्वाक्पतेर्भार्गवस्यच ॥ दिवाकरस्यशशिनःपवनस्यानलस्यच ॥ ११ ॥ नारदस्यपुलस्त्यस्यममचांगिरसस्तथा ॥ प्रचेतसो भृगोश्चैवक्रतोरत्रेःशुकस्यच ॥ १२ ॥ अन्येषामेवविप्रेंद्रराजर्षीणांचराघव ॥ योनिश्चयोविमुक्तानांजीवतांतेभवत्वसौ ॥ १३ ॥ ॥श्री रामउवाच ॥ ॥ येनैतेभगवन्धीरानिश्चयेनमहाधियः ॥ विशोकाःसंस्थितास्तन्मेब्रह्मन्ब्रूहितत्त्वतः ॥ १४ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥रा जपुत्रमहाबाहोविदिताखिलवेद्यहे ॥ स्फुटंशृणुयथापृष्टमयमेषांहिनिश्चयः ॥ १५ ॥ यदिदंकिंचिदाभोगिजगज्जालंप्रदृश्यते ॥ तत्सर्वम मलंब्रह्मभवत्येतद्व्यवस्थितम् ॥ १६ ॥ ब्रह्मचिद्ब्रह्मभुवनंब्रह्मभूतपरंपराः ॥ ब्रह्माहंब्रह्ममच्छत्रुर्ब्रह्मसन्मित्रबांधवाः ॥ १७ ॥ ब्रह्मकालत्र यंतच्चब्रह्मण्येवव्यवस्थितम् ॥ तरंगमालयांभोधिर्यथात्मनिविवर्द्धते ॥ १८ ॥

हारिणस्तस्याभूत् ॥ तदेवाभ्यासफलंज्ञानंतेनज्ञानेनैवाभिव्यक्तस्यस्वरूपस्यसत्यतानापानज्ञानेनेत्यर्थः ॥ ८ ॥ योनिपुगर्भवासादिकृच्छ्रेष्ववतरति ॥ अवतरन्नपितत्प्रयुक्तदुःखैः स्पृश्यतइत्यर्थः ॥ एवमुत्तरेष्वप्यूह्यम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ एवकारोजीवतामित्यनेनसंबध्यते ॥ १३ ॥ प्रश्नःस्पष्टः ॥ १४ ॥ अयंवक्ष्यमाणप्रकारः ॥ १५ ॥ तमेवाह ॥ यदिद मित्यादिना ॥ व्यवस्थितं मायिकाव्यवस्थितरूपत्यागेनपारमार्थिकस्वरूपेस्थितम् ॥ १६ ॥ संक्षिप्योक्तमेवविस्तराद्विशिष्यदर्शयति ॥ ब्रह्मेति ॥ १७ ॥ विवर्द्धतेविजृंभते ॥ १८ ॥

सर्वक्रियाकारकफलानांब्रह्मतैवेत्याशयेनाह ॥ गृह्यतइति ॥ १९ ॥ ब्रह्मशक्त्यामायया ॥ बृंहाभिर्विवर्तैः ॥ बृंहतिवर्द्धतइव ॥ अनयादृशानकचिद्वेपरागादिप्रसक्तिरित्याशयेनाह ॥ ब्रह्मेति ॥ अप्रियकृदनिष्टकर्तृ ॥ २० ॥ तर्त्तीह ॥ २१ ॥ अत्रब्रह्मणि ॥ सर्वस्मिन्पूर्णे ॥ चरणस्पंदनंगमनंतदादिकम ॥ २२ ॥ यतःसकलंब्रह्मसुखैकरसंस्फुरत्यतोदुःखितादिकुतः ॥ २३ ॥ २४ ॥ अनयादृशाआत्यंतिकीमभयप्राप्तिमाह ॥ मरणेति ॥ २५ ॥ एवमात्यंतिकीभोगरागनिवृत्तिरपिसिध्यतीत्याह ॥ संभोगेति ॥ २६ ॥ कलनाइच्छा ॥ स्पंदवतोःसतोरंबुनोऽन्ययथार्थाकिंचिदपिनास्तितथेत्यर्थः ॥ २७ ॥ स्पंदोरागद्वेषादिनाचलनंतद्रूपिणितत्प्रयोजकेइतियावत् ॥ आवर्त्तस्यमृतेनाशे ॥ २८ ॥ तथा

तथापदार्थलक्ष्म्येत्थमिदंब्रह्मविवर्द्धते ॥ गृह्यतेब्रह्मणाब्रह्मभुज्यतेब्रह्मब्रह्मणा ॥ १९ ॥ ब्रह्मब्रह्मणिबृंहाभिर्ब्रह्मशक्त्येवबृंहति ॥ ब्रह्मम्ब्छत्रुरूपंमेब्रह्मणोऽप्रियकृद्यदि ॥ २० ॥ तद्ब्रह्मणिब्रह्मनिष्ठंकिमन्यत्कस्यचित्कृतम् ॥ रागादीनामवस्थानंकल्पितानांखवृक्षवत् ॥ २१ ॥ असंकल्पेननष्टानांकःप्रसंगोत्रवर्द्धते ॥ ब्रह्मण्येवहिसर्वस्मिंश्चरणस्पंदनादिकम् ॥ २२ ॥ स्फुरतिब्रह्मसकलंसुखितादुःखितेकुतः ॥ ब्रह्मब्रह्मणिसंतप्तंब्रह्मब्रह्मणिसंस्थितम् ॥ २३ ॥ स्फुरतिब्रह्मणिब्रह्मनाहमस्मीतरात्मकः ॥ घटोब्रह्मपटोब्रह्मब्रह्माहमिदमाततम् ॥ २४ ॥ अतोरागविरागाणांमृषेवकलनेहका ॥ मरणब्रह्मणिस्वैरंदेहब्रह्मणिसंगते ॥ २५ ॥ दुःखितानामकैवस्याद्रज्जुसर्पभ्रमोपमा ॥ संभोगादौसुखंब्रह्मण्यास्थितेदेहब्रह्मणि ॥ २६ ॥ संपन्नमेतन्मइतिमुधास्यात्कलनाकुतः ॥ वीच्यंभसोःस्पंदवतोर्नत्वन्यदंबुनोयथा ॥ २७ ॥ त्वत्तामत्तेतथानस्तोब्रह्मणिस्पंदरूपिणि ॥ यथावर्त्तमृतेतोयेनकिंचिन्म्रियतेक्कचित् ॥ २८ ॥ मृतिब्रह्मत्वमायातेदेहब्रह्मणिवैतथा ॥ यथाचलाचलेतोयेत्वत्तामत्तेनतिष्ठतः ॥ २९ ॥ तथाजडाजडेरूपेनस्थितेपरमात्मनि ॥ कटकत्वंयथाहेम्नोयथावर्त्तोजलस्यच ॥ ३० ॥ तदतद्भावरूपेयंतथाप्रकृतिरात्मनः ॥ इदंहिजीवभूतात्मजडरूपमिदंभवेत् ॥ ३१ ॥ इत्यज्ञानात्मनोमोहोनचज्ञानात्मनःक्कचित् ॥ अज्ञस्यदुःखौघमयंज्ञस्यानंदमयंजगत् ॥ ३२ ॥ अंधंभुवनमंधस्यप्रकाशंतुसचक्षुषः ॥ जगदेकात्मकंज्ञस्यमूर्खस्यातीवदुःखदम् ॥ ३३ ॥ शिशोरिवस्फुरद्यक्षानिशापुंसस्तुकेवला ॥ अस्मिन्ब्रह्मघटेनित्यमेकस्मिन्सर्वतःस्थिते ॥ ३४ ॥ नकिंचिन्म्रियतेनामनचकिंचनजीवति ॥ यथोल्लासविलासेपुनर्नश्यतिनजायते ॥ ३५ ॥

देहब्रह्मणिमृतिब्रह्मत्वमायातेपिनकिंचिन्म्रियतेइत्यर्थः ॥ जडरूपापरित्यागेनैवसर्वपर्यायेपुब्रह्मतामायाहीतितन्निषेधति ॥ यथेति ॥ चलाचलेचंचलेचलेअचलेचेतिवा ॥ २९ ॥ जडरूपाभावेप्रतियोग्यप्रसिद्धावजडमितितद्व्यावृत्तरूपस्याप्यप्रसक्तेरितिभावः ॥ ३० ॥ तस्यैवअतद्विभावोययातथारूपाप्रकृतिर्मायिकःस्वभावस्तद्वशादेवजीवजडरूपभेदकल्पनेत्याह ॥ इदमिति ॥ ३१ ॥ अतएवतत्त्वविदःसर्वंजगदानंदैकरसमेवेत्याह ॥ अज्ञस्येति ॥ ३२ ॥ ३३ ॥ यथानिशारात्रिःशिशोर्बालस्यदृशास्फुरन्स्वभ्रांतिपरिकल्पितोयक्षोयस्यांतथाविधा ॥ पुंसोयुववृद्धपुरुषस्यकेवलानिर्यक्षा ॥ ब्रह्मलक्षणेपूर्णामृतघटे ॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ शक्तिर्मायास्फटिकस्यांशुरनेकप्रतिबिंबग्रहणयोग्यतापादकस्वच्छतासैवयथानानाप्रतिबिंबतत्तद्गुणक्रियादिवैचित्र्यात्मनाअंतःस्फुरतितद्वत्साजगदात्मनातत्तत्पदार्थ
शक्त्यात्मनाचस्फुरतिप्रथतेसाचप्रथाआत्मैवतच्चब्रह्मस्वात्मन्येवाद्वयेसंस्थितम् ॥ ३७ ॥ अतएवशरीरनाशेननात्मनाशइतिदृष्टांतेनोपपादयतिचतुर्भिः ॥ ३८ ॥ ३९ ॥ ४० ॥
कलनाइंद्रियव्यापारः ॥ दृश्यंभोग्यम् ॥ क्षयाक्षयौविपत्संपदौ ॥ भावाहर्षविषादादयस्तद्रचना ॥ अर्थःपुरुषार्थभोगः ॥ ४१ ॥ ४२ ॥ ४३ ॥ यथाएकएवशब्दःअद्रौपर्व
तसन्निधौप्रतिश्रवेणप्रतिध्वन्यात्मनाद्विरुक्तइवजृंभतेतथादेहचित्तबाह्यार्थादिरूपनामभेदेनात्मैवजृंभतइत्यर्थः ॥ ४४ ॥ अज्ञत्वंजीवजगद्भावम ॥ तत्रात्मनिचैवविचित्राश्चही

तरंगादिमहांभोधौभूतवृंदंतथात्मनि ॥ इदंनास्तीदमस्तीतिभ्रांतिर्नामात्मनात्मनि ॥ ३६ ॥ शक्तिर्निर्हेतुकैवांतःस्फुरतिस्फटिकांशुवत् ॥ ज
गच्छक्त्यात्मनात्मैवब्रह्मस्वात्मनिसंस्थितम् ॥ ३७ ॥ तरंगकणजालेनपयसीवपयोघनम् ॥ शरीरनाशनंकथंब्रह्मणोमृतधीर्भवेत् ॥ ३८ ॥
ब्रह्मणोव्यतिरिक्तंहिनशरीरादिविद्यते ॥ पयसोव्यतिरेकेणतरंगादिमहार्णवे ॥ ३९ ॥ यःकणोयाचकणिकायावीचिर्यस्तरंगकः ॥ यःफे
नोयाचलहरीतद्यथावारिवारिणि ॥ ४० ॥ योदेहोयाचकलनायद्दृश्यंयौक्षयाक्षयौ ॥ याभावरचनायोर्थस्तयातद्ब्रह्मब्रह्मणि ॥ ४१ ॥ सं
स्थानरचनाचित्राब्रह्मणःकनकादिव ॥ नान्यरूपाविमूढानांमृषैवद्वित्वभावना ॥ ४२ ॥ मनोबुद्धिरहंकारस्तन्मात्राणींद्रियाणिच ॥ ब्र
ह्मैवसर्वंनानात्मसुखंदुःखंनविद्यते ॥ ४३ ॥ अयंसोहमिदंचित्तमित्याद्यर्थोत्थयागिरा ॥ शब्दप्रतिश्रवेणाद्राविवात्मात्मनिजृंभते ॥ ४४ ॥
ब्रह्मैवाज्ञातमज्ञत्वमभ्यागतमिवस्थितम् ॥ तथाहिदृश्यतेस्वप्नेचेतसात्मात्मनात्मनः ॥ ४५ ॥ अभावितंब्रह्मतयाब्रह्माज्ञानमलंभवेत् ॥
अभावितंहेमतयायथाहेमचमृद्भवेत् ॥ ४६ ॥ स्वयंप्रभुर्महात्मैवब्रह्मब्रह्मविदोविदुः ॥ अपरिज्ञातमज्ञानमज्ञानामितिकथ्यते ॥ ४७ ॥
ज्ञातंब्रह्मतयाब्रह्मब्रह्मैवभवतिक्षणात् ॥ ज्ञातंहेमतयाहेमहेमैवभवतिक्षणात् ॥ ४८ ॥ ब्रह्मात्मासर्वशक्तिर्हितथाभावयत्यलम् ॥ निर्हे
तुकःस्वयंशक्त्यातत्तथाशुप्रपश्यति ॥ ४९ ॥ अकर्मकर्तृकरणमकारणमनामयम् ॥ स्वयंप्रभुंमहात्मानंब्रह्मब्रह्मविदोविदुः ॥ ५० ॥ अप
रिज्ञातमज्ञानामज्ञानमितिकथ्यते ॥ परिज्ञातंभवेज्ज्ञानमज्ञानपरिनाशनम् ॥ ५१ ॥ बंधुरेवापरिज्ञातोत्यबंधुरितिकथ्यते ॥ परिज्ञातो
भवेद्बंधुरबंधुभ्रमनाशनात् ॥ ५२ ॥ इदंत्वयुक्तमित्यंतर्ज्ञातेसोदेतिभावना ॥ यस्मादयुक्ताद्वैरस्याद्ययाकिलविरज्यते ॥ ५३ ॥

तिवादरायणोक्तंस्वप्नदृष्टांतमाह ॥ तथाहीति ॥ ४५ ॥ अज्ञानस्यात्यंतविरुद्धासंभावितकारितालोकेप्रसिद्धैवेत्याह ॥ अभावितमिति ॥ ४६ ॥ अतएवतदज्ञदृशैवाज्ञानरूपं
नतत्त्वज्ञदृशेत्याह ॥ स्वयंप्रभुरिति ॥ ४७ ॥ ४८ ॥ आत्मास्वयंब्रह्मयथाजीवजगद्रूपेणतात्त्विकब्रह्मरूपेणवाभावयति ॥ ४९ ॥ अतएवतत्त्वविदोनजीवजगद्भावेनपश्यंती
त्याह ॥ अकर्मेति ॥ स्वबोधास्वभावेस्वयंप्रभवतीतिस्वयंप्रभुस्तम् ॥ ५० ॥ ५१ ॥ ५२ ॥ तर्हिजीवजगतोर्ब्रह्ममात्रताभावनासहसैवसर्वेषांकुतोनोदेतिवैराग्याभावादितिचे
त्तद्वैनवएवतन्मुच्यंतांतत्याह ॥ इदंत्वित्यादिना ॥ इदंजीवजगद्रूपमयुक्तंविचारासहमितिज्ञातेसतिसाब्रह्मभावनाउदेति ॥ यस्माद्धेतोरयुक्ताच्छुक्तिरजतादेर्वैरस्यप्रसिद्धेर्ययावि
चारणयाजगतइवभोग्यवर्गादपिविरज्यतेपुरुषइत्यर्थः ॥ ५३ ॥

उक्ताविचारणाजगद्विषयेतत्पदार्थशोधनतयापर्यवस्यतीत्याशयेनजगदंशेउक्तमेवस्फुटमाह ॥ द्वैतमिति ॥ ५४ ॥ जीवांशेपिसात्वंपदार्थशोधनतयापर्यवस्यतीत्याशयेनतदंशेप्युक्तंस्फुटयति ॥ अयमिति ॥ अयंदेहादिकार्यकारणसंघातोनाहमितिज्ञातेसति ॥ ५५ ॥ पदार्थशोधफलभूताखंडवाक्यार्थबोधतयापिसापर्यवस्यतीत्याशयेनतस्मिन्जीवजगद्भावयोर्बाधलक्षणंलयंस्फुटयति ॥ ब्रह्मैवेति ॥ ५६ ॥ अखंडाकारबोधेसतिस्थितमपिजगत्सदेकरसंब्रह्मैवनपूर्ववद्दुःखरूपमित्याशयेनाह ॥ सतीतिद्वाभ्याम् ॥ तस्मिन्नखं

द्वैतंत्वसत्यमित्यंतर्ज्ञातेसोदेतिभावना॥ तस्माद्वैताच्चवैरस्यात्तयाकिलविरज्यते॥ ५४॥ अयंनाहमितिज्ञातेस्फुटेसोदेतिभावना ॥ मिथ्याहंकारतातस्मात्तयानूनंविरज्यते॥५५॥ ब्रह्मैवाहमितिज्ञानेसत्येसोदेतिभावना॥ तस्मिन्सत्येनिजेरूपेयथांतःपरिलीयते॥५६॥ सतिविस्तारजेतस्मिन्ब्रह्मेदमितिवेद्म्यहम्॥त्वमहंत्वादिवाधेतत्सदित्यादिजगद्गतम्॥५७॥ सत्यंसर्वप्रकाराढ्यंब्रह्मेदमितिवेद्म्यहम्॥ नमेदुःखंनकर्माणिनमेमोहोनवांछितम्॥ ५८॥ समःस्वस्थोविशोकोस्मिब्रह्माहमितिसत्यता॥ कलाकलंकमुक्तोस्मिसर्वमस्मिनिरामयः॥५९॥ नत्यजामिनवांछामिब्रह्माहमितिसत्यता॥ अहंरक्तमहंमांसमहमस्थीन्यहंवपुः॥६०॥चिदहंचेतनंचाहंब्रह्माहमितिसत्यता॥ द्यौरहंखमहंसार्कमहमाशाभुवोप्यहम् ॥६१॥ अहंघटपटाकारोब्रह्माहमितिसत्यता॥ अहंतृणमहंचोर्वीगुल्मोहंकाननाद्यहम्॥६२॥ शैलसागरसार्थोहंब्रह्मैकत्वंकिलस्थितम्॥ आदानदानसंकोचपूर्विकाभूतशक्तयः॥६३॥ सर्वमेवचिदात्मास्मिब्रह्मण्याततरूपधृक्॥ लतागुल्मांकुरादीनामहंसंभवनैषिणाम्॥६४॥चिदात्मांतर्गतंशांतंपरंब्रह्मरसात्मकम्॥यस्मिन्सर्वंयतःसर्वंयत्सर्वंसर्वतश्चयत्॥६५॥ योमतःसर्वएकात्मापरंब्रह्मेतिनिश्चयः॥चिदात्माब्रह्मसत्सत्यमृतंज्ञइतिनामभिः॥६६॥ प्रोच्यतेसर्वगंतत्त्वंचिन्मात्रंचेत्यवर्जितम्॥ आभासमात्रममलंसर्वभूतात्मबोधकम्॥ ६७॥ सर्वत्रावस्थितंशांतंचिद्ब्रह्मेत्यनुभूयते॥ मनोबुद्धींद्रियव्रातसमस्तकलनान्वितम् ६८॥

डवाक्यार्थेविस्तारजेअपरिच्छिन्नस्वभावेनाविर्भूतेसतित्वंत्वमहंत्वमादिपदादिदंत्वंचतेषांबाधेसतितस्याकूप्रसिद्धंसत्आदिपदाद्भातिप्रियंनामरूपमितिपंचरूपमिदंजगद्गतंवस्तुजातंब्रह्मैवेतिवेद्मीत्यर्थः ॥ ५७ ॥ ५८ ॥ तत्स्वभावस्थितमेवपरमपुरुपार्थतयावर्णयति ॥ समइत्यादिना ॥ ५९ ॥ त्वंतत्पदार्थशोधनमपिपरिच्छेदपारोक्ष्यनिरासायैवतन्निरासेनसार्वात्म्यलाभेतुरक्तमांसादिरूपदेहादिरप्यात्मैवेतिननिरासाहमित्याशयेनाह ॥ अहंरक्तमित्यादिना ॥ ६०॥६१॥६२॥ शैलाःसागराःसार्थःप्राणिसंघश्चाहम ॥ भूतशक्तयःप्राणिधर्माः ॥ ६३ ॥ संभवनमंकुरकांडप्रतानशाखाद्याविर्भावस्तदेपिणाम् ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ अनुभूयतेब्रह्मविद्भिरितिशेषः ॥ ननुप्रतिपुरुषंमनोबुद्धींद्रियवृत्तिभेदेनचितिभेदानुभवात्कथंसाब्रह्मस्यात्तत्राह ॥ मनइत्यादिना ॥ समस्तासुकलनासुवृत्तिष्वन्वितमनुगतम् ॥ ६८ ॥

स्वंप्रत्यक्स्वरूपमेवमाप्रमातदाभासंस्वप्रकाशम ॥ शब्दादीनांतत्कारणानामाकाशादीनांतत्कृतजगत्स्थितेश्चतत्त्वावकाशकंसत्ताप्रथास्वरूपम ॥६९॥ समस्तकलनान्वितत्वमु
पपादयन्नुक्तमेवस्फुटमाह ॥ अनारतेति॥अग्निविस्फुलिंगधारावद्वृत्त्युपाधिधाराभिरनारतंगलंत्योनिःसरंत्योयाश्चिद्धारास्तासांगहनात्मकमाकरस्थानीयंप्रत्यगात्मरूपम॥७०॥
सुमनसांयोगिनांमौनमनुभूयमानमप्यभिलपितुमशक्यम् ॥ अमृतंपरंनिरतिशयानंदरूपम् ॥ एतदपिपूर्ववदुपपादयन्नुक्तमेवाह ॥ अनारतेति ॥ अहंकारलक्षणानिनिःशेषाणि
समस्तानिभोक्तृचक्राणिप्रतितत्तद्भोगवृत्तिधारोपाधिभिर्मधुधारावदनारतगलद्रूपंकूटस्थनित्यानुभवानंदैकरसंचिद्ब्रह्माहमित्यन्वयः ॥ ७१ ॥ नित्यंचानुभवामृतमित्येतत्समाधि
निष्ठानुभवेनोपपादयन्नाह ॥ सुपुप्तेति ॥७२॥ संभोगामानुषानंदादिर्हैरण्यगर्भांतविषयसुखानितेभ्योप्युत्तमम् ॥ आभासंसर्वतःप्रकाशमानम् ॥ संभोगोत्तममितियदुक्तंतदुपपा

ष्येदंत्यक्त्वास्वमाभासंचिद्ब्रह्माहमनामयम् ॥ शब्दादीनामशेषाणांकारणानांजगत्स्थितेः ॥६९॥ तत्त्वावकाशकंस्वच्छंचिद्ब्रह्मास्मिनमे
क्षयः ॥ अनारतगलत्स्वच्छचिद्धारागहनात्मकम् ॥ ७० ॥ आलोकःसुमनोमौनंचिद्ब्रह्मास्म्यमृतंपरम् ॥ अनारतगलद्रूपंनित्यंचानुभ
वामृतम् ॥ ७१ ॥ अहंनिःशेषचक्राणिचिद्ब्रह्माहमलेपकम् ॥ सुपुप्तसदृशंशांतमालोकविमलात्मकम् ॥ ७२ ॥ संभोगोत्तममाभासंचि
द्ब्रह्मास्म्यपवासनम् ॥ खंडादिस्वादुसंवित्तिरीपन्मात्रातुतिष्ठति ॥ ७३ ॥ चित्तादिष्ववबुद्धेपुतद्विब्रह्माहमच्युतः ॥ कांतासंसक्तचित्तस्यचं
द्रेसमुदितेसति ॥ ७४ ॥ चंद्रप्रत्ययसत्वात्मचिद्ब्रह्माहमनामयम् ॥ भूमिभ्रनरदृष्टीनांलग्नानांखेनिशाकरे ॥ ७५ ॥ यात्वस्यानानुचिच्छ
क्तिस्तच्चिद्ब्रह्मास्तिनिर्मलम् ॥ सुखदुःखादिकलनाविकलोनिर्मलस्तथा ॥ ७६ ॥ सत्यानुभवरूपात्मचिद्ब्रह्मात्मास्मिशाश्वतः ॥ असंस्तु
ताध्वगालोकेमनस्यन्यत्रसंस्थिते ॥ ७७ ॥

यानुभावयति ॥ खंडादीति ॥ रसनादिभिरिंद्रियैःखंडशर्करादिस्वादुसंवित्तिरीपन्मात्राखंडरसस्यजिह्वातःकंठोपसर्पणपर्यंतात्पतरदेशकालपरिच्छिन्नातिष्ठतिसैवतुत्स्यपरिच्छे
दहेतुषुचित्तचैत्यचेतयितृपुस्वप्रकाशानंदैकरसतयाववुद्धेपुसत्सुपरिच्छेदोपाधिच्युतावपिच्युतिरहितात्मानदेवनिरतिशयानंदंब्रह्माहमित्यन्वयः ॥ ७३ ॥ ननुज्ञानस्यविषयोपा
धिनिर्मुक्तास्थितिरेवाप्रसिद्धेत्याशंक्यतत्प्रसिद्धिंदर्शयति ॥ कांतेति ॥ निशिकांतासंसक्तचित्तस्यचंद्रोदयेसतिचंद्रकांतोभयदर्शनेअंतरालेदेशेचितोविच्छेदाननुभवाच्चंद्राकारप्र
त्ययपर्यंतमविच्छिन्नसत्तात्मकंनिर्विषयंचिद्ब्रह्मप्रसिद्धंतदेवाहमित्यर्थः ॥ ७४ ॥ भूमिष्ठेतितस्यैवस्फुटीकरणम् ॥ ७५ ॥ खस्थाआंतरालिकनभःप्रदेशस्था ॥ उदासीनानांसु
खदुःखाद्याकारवृत्त्यंतरशून्यतादशायांनिर्विषयस्वात्मप्रथाप्रसिद्धैवेत्याशयेनाह ॥ सुखेति ॥ ७६ ॥ एवमिहस्थस्यपुंसोऽन्यत्रदूरस्थेविषयेनसंस्तुतःसंपादितोऽध्वगानामंतरा
लमार्गस्थानांपदार्थानामालोकोयेनतथाविधेमनसिसंस्थितेसतिअंतरालेदेशेअनागस्काविषयसंस्पर्शापराधशून्यायाप्रतीतिश्चिन्मात्रंतदित्यर्थः ॥ ७७ ॥

संबंधेमेलनेसतिअंकुरलक्षणेषुकर्मसुकार्येषुउद्गमनीयाबहिर्निर्गमनानुकूलायाचिच्छक्तिस्तद्ब्रह्मेत्यर्थः ॥ ७८ ॥ खर्जूरादीनांफलानामात्मनिस्वीयेजडस्वभावेतिष्ठतांरसभेदानांस्वयमंतर्लीनारासनादिवृत्त्यभिव्यक्ताप्रथारूपायास्वादसत्तातदेवब्रह्मेत्यर्थः ॥ ७९ ॥ किंचयैवसंवित्तिरिष्टलाभालाभयोःखेदानंदवतीप्रसिद्धासैवशास्त्रानुसारिमननोदयविशोधितासतीखेदानंदविनिर्मुक्ताचेत्तदेवब्रह्मेत्याह ॥ खेदेति ॥ ८० ॥ भूमिष्ठस्यादित्यंपश्यतःपुंसोयावद्भूम्यर्कंभूमिमारभ्यार्कपर्यंतंयत्दृष्टिश्चक्षुस्तल्लक्षणंसूत्रमाततंविस्तीर्णम

याप्रतीतिरनागस्कातच्चिद्ब्रह्मास्मिसर्वगः ॥ भूवार्यनिलबीजानांसंबंधेंकुरकर्मसु ॥ ७८ ॥ शक्तिरुद्गमनीयांतस्तच्चिद्ब्रह्माहमाततम् ॥ खर्जूरनिंबबिंबानांस्वयमात्मनितिष्ठताम् ॥ ७९ ॥ यास्वादसत्तालीनांतस्तद्ब्रह्मचिदहंसमः ॥ खेदानंदविमुक्तांतःसंवित्तिर्मननोदया ॥ ८० ॥ लाभालाभविधौतुल्याचिद्ब्रह्मास्मिनिरामयम् ॥ यावद्भूम्यर्कमेतावद्दृष्टिसूत्रंयदाततम् ॥ ८१ ॥ तन्मध्यसदृशंशांतंनिर्मलंचिदहंततम् ॥ जाग्रत्यपिसुषुप्तेपितत्स्वप्नेपितथोदितम् ॥ ८२ ॥ तुर्यरूपमनाद्यंतंचिद्ब्रह्माहमनामयम् ॥ पुंसांक्षेत्रशतोत्थानामिक्षूणांस्वादुवत्स्थितम् ॥ ८३ ॥ सर्वेषामेकरूपंतच्चिद्ब्रह्मास्मिसमःस्थितः ॥ सर्वगाप्रकृतास्वच्छरूपाभानोरिवप्रभा ॥ ८४ ॥ आलोककारिणीकांताचिद्ब्रह्मेदमहंततम् ॥ संभोगानंदलववदमृतास्वादशक्तिवत् ॥ ८५ ॥ स्वानुभूत्येकमात्रंयच्चिद्ब्रह्मास्मितदव्ययम् ॥ प्रोतांगमपिगुप्तास्यंदेहेतंतुर्बिसेयथा ॥ ८६ ॥ छेदभेदस्फुरद्रूपंचिद्ब्रह्माहमनामयम् ॥ आक्रांतभुवनाप्यभ्रमालेवस्पंदशालिनी ॥ ८७ ॥ दुर्लक्ष्याणुमयाकाराचिच्छक्तिरहमातता ॥ अनुभूतिमयांतस्थस्नेहमात्रोपलक्षिता ॥ ८८ ॥ क्षीराद्धृतस्यसत्तेवचिदहंक्षयवर्जिता ॥ कटकांगदकेयूररचनातदतन्मयी ॥ ८९ ॥ हेम्नीवसंस्थितादेहेचिद्ब्रह्मात्मास्मिसर्वगः ॥ पदार्थौघस्यशैलादेर्बहिरंतश्चसर्वदा ॥ ९० ॥ सत्तासामान्यरूपेणयाचित्सोहमलेपकः ॥ सर्वासामनुभूतीनामादर्शोयोत्यकृत्रिमः ॥ ९१ ॥ अगम्योमललेखानांतच्चित्तत्त्वमहंमहत् ॥ सर्वसंकल्पफलदंसर्वतेजःप्रकाशकम् ॥ ९२ ॥

स्तितस्ययन्मध्यंनेत्रसूर्योभयासंलग्नभागस्तत्सदृशंविषयप्रकाशनसमर्थमपितद्विनिर्मुक्तमित्यर्थः ॥ ८१ ॥ एवमवस्थात्रयसाक्षिरूपमेवतत्परित्यागेतुर्यभूतंब्रह्मेत्याह ॥ जाग्रदिति ॥ ८२ ॥ सर्वेषांपुंसामंतःएकरूपंस्थितम् ॥ ८३ ॥ ८४ ॥ ८५ ॥ तस्यआनखाग्रसर्वांगव्याप्तिंदेहच्छेदादावच्छेद्यतांचाह ॥ प्रोतांगमपीति ॥ बिसतंतुपक्षेस्पष्टोन्वयः ॥ ८६ ॥ भुवनानिलोकाजलानिच ॥ वृत्तिवायूपाधिस्पंदास्पंदशालिनि ॥ ८७ ॥ दुर्लक्ष्याअणवःसूक्ष्माजीवाजलकणाश्चतन्मयःकल्पिताकारोयस्याः ॥ अनुभूतिमयोऽनुभवमात्रगम्योंऽतस्थःसारोयस्याः ॥ स्नेहश्चिक्कणतापरप्रेमाचतन्मात्रोपलक्षिता ॥ ८८ ॥ तदतन्मयीहेम्निहेमसत्तेवेतिशेषः ॥ ८९ ॥ ९० ॥ अनुभूतीनामनुभववृत्तिभेदानाम् ॥ ९१ ॥ ९२ ॥

सर्वेषामुपादेयानामुपादानस्यात्मार्थत्वात्तत्सीमांतम् ॥ ९३ ॥ घटपटादौ सद्रूपेण स्थितम् ॥ तनौ चतुर्विधदेहे स्पंदमानं स्फुरद्रूपं चेष्टानिमित्तभूतं वा ॥ जाग्रदवस्थायामपि सुषुप्तमिव परमार्थतो निर्विशेषतया स्थितम् ॥ ९४ ॥ अग्न्यौष्ण्यादिसत्तालनामपि चितएव स्फुरणात्परमार्थतः सैवतानीत्याशयेनाह ॥ उष्णमिति ॥ मृष्टं माधुर्यम् ॥ शितं निशितम् ॥ तैक्ष्ण्यमित्यर्थः ॥ ९५ ॥ ९६ ॥ प्रत्यगात्मत्वाददूरमप्यज्ञानाद्दूरस्थम् ॥ ९७ ॥ गतमिति पूर्वान्वयि ॥ ९८ ॥ कौतुकं कामः ॥ ९९ ॥ संरंभः क्रोधः ॥ कौतुकं भोगोत्कंठा ॥ आरंभो यत्नः ॥ ईहा चेष्टा ॥ सर्वं निरवशेषम् ॥ १०० ॥ १०१ ॥ अपर्यंतानां प्रतिबिंबचितां आरंभाय स्मात्तम् ॥ त्रैलोक्यस्थानां देहलक्षणानां मुक्तानां तंतुम् ॥ १०२ ॥ प्रचारा

सर्वोपादेयसीमांतं चिदात्मानमुपास्महे ॥ सर्वावयवविश्रांतं समस्तावयवातिगम् ॥ ९३ ॥ अनारतकचद्रूपं चिदात्मानमुपास्महे ॥ घटे पटे तटे कूपे स्पंदमानं सदातनौ ॥ ९४ ॥ जाग्रत्यपि सुषुप्तस्थं चिदात्मानमुपास्महे ॥ उष्णमग्नौ हिमे शीतं मृष्टमन्ने शितं क्षुरे ॥ ९५ ॥ कृष्णं ध्वांते सितं चंद्रे चिदात्मानमुपास्महे ॥ आलोकं बहिरंतस्थं स्थितं च स्वात्मवस्तुनि ॥ ९६ ॥ अदूरमपि दूरस्थं चिदात्मानमुपास्महे ॥ माधुर्यादिषु माधुर्यं तीक्ष्णादिषु च तीक्ष्णताम् ॥ ९७ ॥ गतं पदार्थजातेषु चिदात्मानमुपास्महे ॥ जाग्रत्स्वप्नसुषुप्तेषु तुर्यातुर्यातिगे पदे ॥ ९८ ॥ समं संदेव सर्वत्र चिदात्मानमुपास्महे ॥ प्रशांतसर्वसंकल्पं विगताखिलकौतुकम् ॥ ९९ ॥ विगताशेषसंरंभं चिदात्मानमुपास्महे ॥ निष्कौतुकं निरारंभं निरीहं सर्वमेव च ॥ १०० ॥ निरंशं निरहंकारं चिदात्मानमुपास्महे ॥ सर्वस्यांतःस्थितं सर्वमप्यपरैकरूपिणम् ॥ १०१ ॥ अपर्यंतचिदारंभं चिदात्मानमुपागतः ॥ त्रैलोक्यदेहमुक्तानां तंतुमुन्नतमाततम् ॥ १०२ ॥ प्रचारसंकोचकरं चिदात्मानमुपागतः ॥ लीनमंतर्बहिः स्वामान् क्रोडीकृत्य जगत्खगान् ॥ १०३ ॥ चित्रं बृहज्जालमिव चिदात्मानमुपागतः ॥ सर्वं यत्रेदमस्त्येव नास्त्येव च मनागपि ॥ १०४ ॥ सदसद्रूपमेकं तं चिदात्मानमुपागतः ॥ परमप्रत्ययं पूर्णमास्पदं सर्वसंपदाम् ॥ १०५ ॥ सर्वाकारविहारस्थं चिदात्मानमुपागतः ॥ स्नेहाधारमथोऽशांतं जडवाताहतिभ्रमैः ॥ १०६ ॥ युक्तंमुक्तं च चिद्दीपं बहिरंतरुपास्महे ॥ हृत्सरःपद्मिनीकंदं तंतुं सर्वांगसुंदरम् ॥ १०७ ॥

चारौ जापरत्वमौ संकोचः सुषुप्तिस्तत्करम् ॥ अंतर्बहिश्च स्वेन आत्मानं व्याप्यमान् जगल्लक्षणान् खगान्पक्षिणः क्रोडीकृत्यांतर्भाव्य लीनं प्रच्छन्नतया स्थितम् ॥ १०३ ॥ १०४ ॥ सर्गे सर्वसत्तानिर्वाहकत्वात्सद्रूपं प्रलये सर्वासत्तानिर्वाहकत्वादसद्रूपमिति भावः ॥ परमप्रत्ययमत्यंतविश्वासार्हं चिदेकरसं वा ॥ सर्वासां संपदां सुखलवानामास्पदं प्रतिष्ठाम् ॥ १०५ ॥ स्नेहस्तैलं निरुपाधिप्रेमा च तदाधारम् ॥ जडानां देहादीनां वातानां प्राणानां दृष्टिवातानां चाहतिरभ्यासोऽभिघातश्च तद्युक्तैर्भ्रमैरशांतमविनष्टम् ॥ भ्रांतदृशा तैर्युक्तं तत्त्वदृशा तु मुक्तं च ॥ १०६ ॥ हृत्सरसि पद्मिनीकंदवन्निगूढम् ॥ सर्वेषां हस्तपादाद्यंगानां सुंदरं दृढविष्टंभकं तंतुं रज्जुवदाधारम् ॥ १०७ ॥

---

१ कृतैकशेषद्विवचनांतप्रचारशब्देन द्वंद्वस्तेन प्रचारशब्दाज्जापरत्वमयोर्लाभः ॥ प्रचाराचाराविल्यत्र प्रचाराविल्येवापेक्षितमिति भाति  २ प्रकृतिभावाभावश्छांदसः

प्रसिद्धामृतवैलक्षण्यमाह ॥ अक्षीराणवेति ॥ १०८॥ अहार्यंगरुडादिभिरपहर्तुमशक्यम ॥ आभासंअभिव्यक्तिम्॥ १०९ ॥ रंजनंस्वव्याप्याअभिव्यंजकम ॥ ११०॥ १११॥
तादात्म्याध्यारोपदृशाअखिलमहं संसर्गाध्यारोपदृशातुममैवसर्वं अपवाददृशातुअहंत्वारोपनिमित्तमहंकारोपिनाहं इतरत्तुसुतरांनाहंइत्यध्यारोपापवादभ्यांतत्त्वंविदितवतो
मेममजगत्कृतंकृत्रिमंमायामयंवाअस्तुअथवास्थिरमकृत्रिममात्मैववास्तुउभयथाप्यहंगतज्वरोभवामीत्यर्थः ॥ ११२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०ए
कादशःसर्गः ॥ ११ ॥ ॥ ५ ॥ ॥ बहिर्नीरागनिःसंगामंतःस्वच्छात्मभास्वराम् ॥ जनकादिस्थितिंरामोगुरुप्रोक्तामिहाग्रहीत् ॥ १ ॥ तेजनकादयोजीवन्मुक्ताअंतःसत्येपदे



जनताजीवनोपायंचिदात्मानमुपागतः॥ अक्षीरार्णवसंभूतमशशांकमुपस्थितम्॥ १०८॥ अहार्यममृतंसत्यंचिदात्मानमुपास्महे॥
शब्दरूपरसस्पर्शगंधैराभासमागतम्॥१०९॥तैरेवरहितंशांतंचिदात्मानमुपागतः॥आकाशकोशविशदंसर्वलोकस्यरंजनम्॥११०॥
नरंजनंनचाकाशंचिदात्मानमुपागतः॥ महामहिम्नासहितंरहितंसर्वभूतिभिः॥ कर्तृत्वेवाप्यकर्त्तारंचिदात्मानमुपागतः॥१११॥ अखि
लमिदमहंममैवसर्वंत्वहमपिनाहमथेतरच्चनाहम्॥ इतिविदितवतोजगत्कृतंमेस्थिरमथवास्तुगतज्वरोभवामि॥ ११२॥ ॥इ०वा०
वा०दे०मो०नि०पू०जीवन्मुक्तनिश्चययोगोपदेशोनामएकादशःसर्गः॥ ११॥ ॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिनिश्चयवंत
स्तेमहांतोविगतैनसः॥ सत्याःसत्येपदेशांतेसमेसुखमवस्थिताः ॥ १ ॥इतिपूर्णधियोधीराःसमनीरागचेतसः॥ ननिंदंतिननंदंतिजी
वितंमरणंतथा॥२॥ इत्यलक्ष्यचमत्कारानारायणभुजाइव॥ ऋजवःस्खलिताकाराअपराइवमेरवः॥३॥ रेमिरेवनखंडेषुद्वीपेषुनगरे
षुच॥ देवोपवनमालासुस्वर्गेषुचसुराइव॥ ४॥ भ्रेमुःकुसुमपूर्णासुदोलांदोलचलासुच॥ विचित्रवनलेखासुमेरुशृंगशिखासुच॥५॥
चक्रुर्विजितशत्रूणिचामरच्छत्रवंतिच ॥ विचित्रार्थानिराज्यानिचित्राचारमयानिच ॥ ६॥ अनुजग्मुरिमान्सर्वान्नानाचारविचेष्टि
तान्॥श्रुतिस्मृत्युदितारंभामितिकर्त्तव्यतामिति॥७॥ईदृशीरमणीयेषुललनाहास्यहारिषु॥ विहाराहाररम्येषुभोगाभोगेषुभूपिताः॥८॥

शोधिततत्पदार्थेव्यवस्थिताः ॥ १ ॥ बहिःपूर्णाधीःशोधितत्वंपदार्थोयेषाम् ॥ अतएवांतर्बहिश्चसमनीरागचेतसः ॥ २ ॥ अलक्ष्येसूक्ष्मतमेपिलक्ष्येवेधनचमत्कारोयेषाम् ॥ अ
तएवनारायणभुजाइवस्थिताः ॥ स्खलिताकारानम्रस्वभावाःअपरामेरवइवस्थिराः ॥ ३ ॥ तेषांसमदृष्ट्याविहारंप्रपंचयति ॥ रेमिरेइत्यादिना ॥ ४ ॥ दोलानामांदोलनैश्च
लासु ॥ ५ ॥ विचित्राअर्थास्त्रिवर्गायेषुतानि ॥ ६ ॥ नानाचारावहुविधशिष्टाचारास्तैर्विचेष्टितानर्नुष्ठितान्धर्माननुजग्मुः ॥ स्वयमप्यनुष्ठितवंतइत्यर्थः ॥ इतिइत्थमेवश्रुतिस्मृ
त्युदिताआरंभाःप्रयत्नायस्यास्तथाविधामितिकर्त्तव्यतांसांगंयागादीतियावत् ॥ अनुजग्मुः ॥ ७ ॥ ईदृशीभिर्दृष्टादृष्टसाधनसंपद्भिःरमणीयेषुभोगानामाभोगेषुकलापेषु ॥ ८ ॥

विविशुर्नविविशुः ॥ ९ ॥ चराचरभूतैःसहितेषुसर्वभुवनेषु विश्रांताःसुखिताअखिलाजंतवोयैस्तथाविधेषुयज्ञक्रियाकलापेषुगार्हस्थ्येषुच ॥ अयंवाआत्मासर्वेषांभूतानांलोकः ॥ यथैवक्षुधिताबालामातरंपर्युपासते एवंसर्वाणिभूतान्यग्निहोत्रमुपासतेइत्यादिश्रुतेरितिभावः ॥ १० ॥ तेरुर्निस्तेरुः ॥ ११ ॥ परुषाणिक्रूराणिक्लेशसहानिचित्तानियासुस्तनवित्तैःशत्रुभिरुद्धतासुपरिभूतासु द्वंद्वरीतिषुविपत्स्वितियावत् ॥ १२ ॥ १३ ॥ महदापिऐश्वर्यमितिशेषः ॥ कुलशैलाहिमवदादयः ॥१४॥ जलराशिरितिव्यतिरेकेदृष्टांतः ॥

विविशुश्चारुचूतासुमंदारवलितासुच ॥ अप्सरोगीतपूर्णासुनंदनोद्यानभूमिषु ॥ ९ ॥ सचराचरभूतेषुविश्रांताखिलजंतुषु ॥ यज्ञक्रियाकलापेषुगार्हस्थ्येषुयथाक्रमम् ॥ १० ॥ तेरुर्हतगजेंद्रासुभ्रांतभूरिशिवासुच ॥ भेरीभांकारभीमासुसंग्रामार्णववीथिषु ॥ ११ ॥ तस्थुःपरुषचित्तासुद्धतवित्तोद्धतासुच ॥ संरंभक्षोभरौद्रीषुसर्वासुद्वंद्वरीतिषु ॥ १२ ॥ मनस्तेषांतुनीरागमनुपाधिगतभ्रमम् ॥ असक्तमुक्तमाशांतंपरंसत्त्वपदंगतम् ॥ १३ ॥ नममज्जुःक्वचिदपिसंकटेषुमहत्स्वपि ॥ महदप्युपयातेषुकुलशैलाःसरःस्विव ॥ १४ ॥ नोल्लासविलासिन्याश्रियापरमकांतया ॥ परिपूर्णेंदुलक्ष्म्येवजलराशीरघूद्वह ॥ १५ ॥ नमम्लौदुःखशोकेनग्रीष्मेणेववनस्थलम् ॥ जहर्षुर्नभोगौघैरवश्यायैरिवौषधी ॥ १६ ॥ तेहिकेवलमव्यग्राःकुर्वंतःकाममंजरीः ॥ इष्टानिष्टफलंरामनाभिलेषुर्नतत्यजुः ॥ १७ ॥ नोदगुःकार्यसंपत्तावाक्रांतानास्तमाययुः ॥ जहुर्नसुखप्राप्तौमम्लुर्नैवचसंकटे ॥ १८ ॥ मुमुहुर्नविमोहेषुनममज्जुर्विपत्क्रमैः ॥ नजहर्षुःशुभैःशोकैरुरुद्धुर्नभवानिव ॥ १९ ॥ प्राकृताचारसंप्राप्तेकुर्वंतःकर्मकेवलम् ॥ स्थिताविगतसंरंभमपराइवमेरवः ॥ २० ॥ तांत्वंदृष्टिमवष्टभ्यराघवाघविनाशिनीम् ॥ अनहंकृत्यहंकारोविहरस्वयथाक्रमम् ॥ २१ ॥ यथाभूतामिमामेवपश्यन्सर्गपरंपराम् ॥ मेरुस्थितोब्धिगंभीरःसममास्वगतभ्रमः ॥ २२ ॥ चिन्मात्रंसर्वमेवेदमित्थमाभासतांगतम् ॥ नेहसत्यमसत्यंवाक्वचिदस्तिनकिंचन ॥ २३ ॥ महत्तामलमालंब्यत्यक्तेदमवहेलया ॥ असक्तबुद्धिःसर्वत्रभवभव्यभवक्षयी ॥ २४ ॥ किंरोदिषिघनोद्वेगंमूढवच्चानुशोचसि ॥ भ्रमस्युद्भ्रांतचित्तश्चसौम्यावर्त्ततृणंयथा ॥ २५ ॥

दुल्लोपेइतिदीर्घः ॥ १५ ॥ १६ ॥ अव्यग्राःकर्तृत्वाभिनिवेशरहिताः ॥ काम्यंतइतिकामाभोगास्तल्लक्षणामंजरीःकुर्वंतोऽनुभवंतः ॥ १७ ॥ शत्रुजयादिकार्यसंपत्तौसत्यांनउदगुरुत्कर्षंप्रापुः ॥ शत्रुभिराक्रांताश्चअस्तमपकर्षंनाययुः ॥ १८ ॥ विमोहेषुविमोहहेतुपुत्रकृच्छ्रेषु ॥ विपदांक्रमैराक्रमणैः ॥ १९ ॥ प्रकृतएवप्राकृतःस्वस्ववर्णोचितआचारस्तेनसंप्राप्तेविषये ॥ २० ॥ अनहंकृत्वाअहंकारनिष्कृष्टशुद्धचिन्मात्रेअहंकारआत्मबुद्धिर्यस्यतथाविधःसन् ॥ २१ ॥ यथाभूतांयथास्थिताम् ॥ मेरुरिवस्थितःस्थिरः ॥ २२ ॥ कीदृशींतथाभूतदर्शनंदाह ॥ चिन्मात्रमिति ॥ २३ ॥ महत्तांब्रह्मताम् ॥ २४ ॥ २५ ॥

रामवाक्यानिस्पष्टानि ॥ २६ ॥ २७ ॥ नविद्यतेसुखंयस्मात्तदसुखंबद्धात्मताभ्रमम् ॥ एकांतबुद्ध्यानिश्चितबुद्ध्यायत्इहअस्मिन्उपदिष्टार्थविषयेदार्ढ्यसाधनंअन्यद्वाराज्यपरिपालनादिकर्त्तव्यतयावदसितत्अविशंकंकरिष्ये ॥ २८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेद्वादशःसर्गः ॥ १२ ॥ ॥ ७ ॥ ॥ वर्णितस्तत्त्वबोधेनवासनाविलयक्रमः ॥ प्राणरोधेनतंवक्तुंपीठिकात्रोपरच्यते ॥ १ ॥ उपशमप्रकरणेदर्शितयोर्वासनाक्षयहेत्वोर्ज्ञानयोगक्रमयोर्मध्येउत्तमाधिकारिविषयेणज्ञानविलासेनवासनाविलयफलंप्राप्यकृतार्थोपिरामोमंदमध्यमाधिकारिणामुपकाराययोगक्रमेणापिवासनानाशप्रकारंजिज्ञासमानःपृच्छति ॥ सम्यगितिद्वाभ्याम् ॥ १ ॥ २ ॥ पृष्टस्योत्त

श्रीरामउवाच ॥ ॥ अहोनुभगवन्नूनंसम्यग्जातमलक्षयः ॥ त्वत्प्रसादात्प्रबुद्धोस्मिसूर्यसंगादिवांबुजम् ॥२६॥ भ्रांतिरस्तंगतानूनंमिहिकाशरदीवमे ॥ संशांताखिलसंदेहःकरिष्येवचनंतव ॥ २७ ॥ व्यपगतमदमोहोमानमात्सर्यमुक्तश्चिरतरमुदितात्माशांतशोकश्चिरेण ॥ पुनरसुखमगच्छन्स्वच्छयैकांतबुद्ध्यायदिहवदसिसाधोतत्करिष्येविशंकम् ॥२८॥ ॥इ०वा०वा०दे०मो०नि०पू०जीवन्मुक्तसंशयनिरूपणंनामद्वादशःसर्गः ॥ १२ ॥ ॥७॥ ॥श्रीरामउवाच ॥ ॥सम्यग्ज्ञानविलासेनवासनाविलयोदये ॥ जीवन्मुक्तपदेब्रह्मन्नूनंविश्रांतवानहम् ॥ १ ॥ प्राणस्पंदनिरोधेनवासनाविलयोदये ॥ जीवन्मुक्तपदेब्रह्मन्वदविश्रम्यतेकथम् ॥ २ ॥ ॥श्रीवसिष्ठउवाच ॥ संसारोत्तरणेयुक्तिर्योगशब्देनकथ्यते ॥ तांविद्धिद्विप्रकारांत्वंचित्तोपशमधर्मिणीम् ॥ ३ ॥ आत्मज्ञानंप्रकारोस्याएकःप्रकटितोभुवि ॥ द्वितीयःप्राणसंरोधःशृणुयोयंमयोच्यते ॥४॥ ॥श्रीरामउवाच ॥ ॥सुलभत्वाददुःखत्वात्कतरःशोभनोनयोः ॥ येनावगतमात्रेणभूयःक्षोभोनबाधते ॥५॥ ॥श्रीवसिष्ठउवाच ॥ ॥प्रकारौद्वावपिप्रोक्तौयोगशब्देनयद्यपि ॥ तथापिरूढिमायातःप्राणयुक्तावसौभृशम् ॥६ एकोयोगस्तथाज्ञानंसंसारोत्तरणक्रमे ॥ समावुपायौद्वावेवप्रोक्तावेकफलप्रदौ ॥७॥ असाध्यःकस्यचिद्योगःकस्यचिज्ज्ञाननिश्चयः ॥ ममत्वभिमतःसाधोसुसाध्योज्ञाननिश्चयः ॥ ८ ॥ अज्ञानंपुनरज्ञातंस्वप्नेष्वपिनतद्भवेत् ॥ ज्ञानंसर्वास्ववस्थासुनित्यमेवप्रवर्त्तते ॥९॥

रंवक्तुंवसिष्ठोपिउपशमप्रकरणोक्तमेवराजयोगहठयोगप्रकारद्वयंस्मारयन्प्रतिजानीते ॥ संसारेतिद्वाभ्याम् ॥ ३ ॥४॥ तत्रप्रथमंतयोःकतरस्यसुकरत्वमितिविशेषंपृच्छति ॥सुलभत्वादिति ॥ क्षोभोविक्षेपः ॥ ५ ॥ प्राणयुक्तौप्राणनिरोधे ॥ असौयोगशब्दः ॥ ६ ॥ ७॥ कस्यचित्सुकुमारचित्तस्यप्राणसंरोधदुःखासहिष्णोर्हठयोगोऽसाध्यः ॥ कठोरचित्तस्यविचाराकुशलस्यज्ञाननिश्चयोऽसाध्यः ॥ ममशुद्धचित्तस्यविचारकुशलस्यज्ञाननिश्चयःसुसाध्योऽभिमतइत्यर्थः ॥ ८ ॥ विचाराकुशलताहिज्ञानाज्ञानस्वरूपविवेकासामर्थ्यंस्यात् तत्तुप्रमाणकुशलस्यस्वप्नेप्यसंभावितमित्याशयेनाह ॥ अज्ञानमिति ॥ प्रवर्त्ततेस्वतएवप्रथते ॥ तथाचाज्ञानस्यसदैवसाक्षिणाप्रसिद्धत्वाज्ज्ञानस्यचस्वप्रकाशतयास्वतःप्रसिद्धेर्वैधर्म्यस्यचानुभवादेवप्रसिद्धेर्विवेकसंभवाज्ज्ञानंसुकरंयोगस्तुनतथेतिदुष्करइतिभावः ॥ ९ ॥

प्रशस्तदेशकालविषयादिबाह्यहेतुसापेक्षत्वादपियोगोदुष्करइत्याह ॥ धारणेति ॥ धारणादेशोबाह्योगिरिकूटचंद्रतारादिर्हृदयकंठतालुमूलभ्रूमध्यादिश्च ॥ आसनदेशस्तु समेशुचौशर्करवह्निवालुकाविवर्जितेशब्दजलाश्रयादिभिः ॥ मनोनुकूलेनतुचक्षुपीडनेगुहानिरुद्धाश्रयणेप्रयोजयेदितिश्रुतिस्मृतिशास्त्रप्रसिद्धस्तत्साध्यत्वेनयोगःसुसाध्यतां नायाति ॥ निरुत्साहानांमंदमतीनांमूर्खाणांपुरुपापसदानामिवनधीरस्यसमर्थस्ययतमानस्याधिकारिणःशास्त्रीयेसाधनेसुसाध्यत्वकष्टसाध्यत्वविकल्पांचितायुक्तेत्याह ॥ अथवेति ॥ १० ॥ एवमवांतरप्रश्नंनिरस्यपूर्वप्रश्नोत्तरंवक्तुमुपक्रमते ॥ द्वावित्यादिना ॥ ११ ॥ प्राणापानतयाप्राणापानयोःसमतासंपत्तिरूपेणरूढःप्रसिद्धःसिद्धिकामानांखेचरत्वाद्यनंतसिद्धिदः ॥ ज्ञानकामानांतुबुद्धिदःसाक्षात्कारहेतुः ॥ अनस्तंश्रृण्वित्यर्थः ॥ १२ ॥ तमेवसमाधिसुखविश्रांतिफलकीर्तनेनापिप्ररोचयन्नाह ॥ मुखेति ॥ हेनृपसुत त्वंचेतसाउद्युक्तचित्तेनमुखानिलस्यप्राणस्ययत्स्फुरणंसंचरणंतन्निरोधेनसंभवतिसिद्ध्यतितथाविधांस्थितिंप्रतिष्ठांगतःसन्इहप्रत्यग्रूपेअक्षयेपरेपदेयोगश्चित्तवृत्तिनिरोधस्तद

धारणासनदेशादिसाध्यत्वेनसुसाध्यताम्॥ नायातियोगोत्यथवाविकल्पोनैवशोभनः ॥ १० ॥ द्वावेवकिलशास्त्रोक्तौज्ञानयोगौरघूद्वह॥तत्रोक्तंभवतेज्ञानमंतस्यंज्ञेयनिर्मलम्॥११॥प्राणापानतयारूढोहृढदेहगुहाशयः॥अनंतसिद्धिदःसाधोयोगोयंबुद्धिदःश्रृणु॥१२॥ मुखानिलस्फुरणनिरोधसंभवस्थितिंगतोनृपसुतचेतसाक्षये॥समाहितस्थितिरिहयोगयुक्तितःपरेपदप्रगलितगीर्निवत्स्यसि॥१३॥ इत्यार्षेवा०वा०दे०मो०नि०पू०ज्ञानविचारयोगोपदेशोनामत्रयोदशःसर्गः॥१३॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥ अस्तितावदनंतस्यतस्यक्वचिदयंकिल॥जगद्रूपःपरिस्पंदोमृगतृष्णामराविव॥१॥तत्रकारणतांयातोब्रह्माकमलसंभवः॥ स्थितःपितामहत्वेनसृष्टभूतभरभ्रमः॥२॥तस्याहंमानसःपुत्रोवसिष्ठःश्रेष्ठचेष्टितः॥ऋक्षचक्रेध्रुवघृतेनिवसामियुगंप्रति॥ ३॥सोहंकदाचिदास्थानेस्वर्गेतिष्ठञ्छतक्रतोः॥ श्रुतवान्नारदादिभ्यःकथांसुचिरजीविनाम् ॥ ४ ॥कथाप्रसंगेकस्मिंश्चिदथतत्राभ्युवाचह॥शातातपोनाममुनिर्मौनीमानीमहामतिः॥५॥मेरोरीशानकोणस्थेपद्मरागमयेदिवि ॥ अस्तिकल्पतरुःश्रीमाञ्छृंगेचूतइतिश्रुतः॥६॥

भ्यासयुक्तितःसमाहितस्थितिःसन्विगलितगीर्वाग्गोचरनिरतिशयानंदरूपोभूत्वानिवत्स्यसिस्थास्यसि ॥ १३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० त्रयोदशःसर्गः ॥ १३ ॥ ॥ ७ ॥ ॥ सुरसंसच्छ्रुतस्यात्रभुशुंडस्यदिदृक्षया ॥ वसिष्ठगमनंमेरुस्तच्छृंगंचात्रवर्ण्यते ॥ १ ॥ प्रस्तुतंप्राणायामादियोगक्रमंभुशुंडोक्तिप्रपंचनेनविस्तराद्वर्णयिष्यन्भुशुंडाख्यायिकामारभते ॥ अस्तीत्यादिना ॥ तस्ययोगिविश्रांतिस्थानत्वेनवर्णितस्यपरमपदस्यक्वचिदविद्यावृतप्रदेशेपादोस्यविश्वाभूतानीतिश्रुतेर्जगद्रूपोब्रह्मांडाकारःपरिस्पंदोविवर्त्तः ॥ १ ॥ तत्रब्रह्मांडेमनुप्रजापतिप्रभृतीनांकारणतांयातः ॥ २॥ ऋक्षचक्रेनक्षत्रचक्रेसमीपेलोके ॥ युगशब्देनयुगसमूहोवैवस्वतमन्वंतरंलक्ष्यते ॥ ३ ॥ शतक्रतोरिंद्रस्यआस्थानेसभायाम ॥ ४ ॥ मौनीअल्पभाषिता ॥ मानीमाननार्हःप्रमाणकुशलश्च ॥ ५ ॥ यदुवाचतदाह ॥ मेरोरित्यादिना ॥ पद्मरागमयेशृंगेदिविनभोदेशेचूतइतिश्रुतोविश्रुतःकल्पतरुरस्ति ॥ ६ ॥

कलधौतेहेमरूप्येतन्मयीभिःकल्पलताभिःप्रोते ॥७॥८॥९॥ यतोविश्रांतमतिरतएवशांतः ॥ १० ॥ तत्तथाविधंदीर्घंजीवितंसाधनदशायांपुण्यंफलदशायामुदयंपरमपुरुषार्थाभ्युदययुक्तंचभवेत् ॥ संभावनायांलिङ् ॥ ११ ॥ भूयोपिमयापृष्टेनतेनशातातपेनइतिउक्तप्रकारेणैवभुशुंडोवर्णितः ॥ तदुक्तेःप्रशंसामात्रत्वशंकांवारयति ॥ सत्यमुक्तवानिति ॥ १२॥१३॥१४॥ तदेवशृंगंवर्णयति ॥ रत्नेत्यादिना ॥ रत्नैर्गैरिकैश्चकांतेन ॥ मध्वासवप्रयुक्तेनरसेनमदेनेवककुभांदिशांगणंरंजयत्लोहितीकुर्वत् ॥ क्षीबाहिलोहितायमानाःप्रसिद्धाः ॥१५॥ कल्पांतज्वलनादुद्गतानांज्वालानांपिंडएवाद्रिःसंपन्नइवेत्युत्प्रेक्षा॥ संचितंशोभोपचितम् ॥ इंद्रनीलानांशिखाइवऊर्ध्वप्रसृताःप्रभाएवधूमायस्येत्युत्प्रेक्षायामुपमा

तस्यकल्पतरोर्मूर्ध्निदक्षिणस्कंधकोटरे॥ कलधौतलताप्रोतेविद्यतेविहगालयः॥ ७॥ तस्मिन्निवसतिश्रीमान्भुशुंडोनामवायसः॥ वीतरागोबृहत्कोशेब्रह्मेवनिजपंकजे॥ ८॥ सयथाजगतांकोशेजीवतीहसुराश्चिरम्॥ चिरंजीवीतथास्वर्गेनभूतोनभविष्यति॥ ९॥ सदीर्घायुःसनीरागःसश्रीमान्समहामतिः॥ सविश्रांतमतिःशांतःसकांतःकालकोविदः॥ १० ॥ सयथाजीवतिखगस्तथेहयदिजीव्यते॥ तद्भवेज्जीवितंपुण्यंदीर्घंचोदयमेवच॥११॥इतितेनभुशुंडोसौभूयःपृष्टेनवर्णितः॥यथावदेवदेवानांसभायांसत्यमुक्तवान्॥१२॥कथावसरसंशातावथयातेसुरव्रजे॥ भुशुंडंविहगंद्रष्टुमहंयातःकुतूहलात्॥ १३ ॥ भुशुंडःसंस्थितोयत्रमेरोःशृंगंतदुत्तमम्॥ संप्रामवान्क्षणेनाहंपद्मरागमयंबृहत्॥ १४॥ रत्नगैरिककांतेनतेजसावह्निवर्चसा ॥ मध्वासवरसेनेवरंजयत्ककुभांगणम् ॥ १५ ॥ कल्पांतज्वलनोज्ज्वालापिंडाद्रिमिवसंचितम्॥ इंद्रनीलशिखाधूममालोकारुणितांवरम्॥ १६॥ सर्वेषामेवरागाणांराशिमद्राविवस्थितम्॥ सर्वसंध्याभ्रजालानांघनमेकमिवाकरम्॥ १७॥ उत्क्रांतिंकुर्वतोमेरोर्ब्रह्मनाड्येवनिर्गतम्॥ मूर्धानमागतंकांतंवाडवंजठरानलम् ॥ १८ ॥ सुमेरुवनदेव्येवनवालक्तकरंजितम्॥लीलयादातुमिंदुंखेनीतंहस्तशिखांगुलिम्॥१९॥ज्वालाभिरिवमालाभिररुणाभिःपयोमुखम्॥ खंगंतुमिवसस्पंदंशैलस्थमिववाडवम्॥ २०॥

त्तिः ॥ १६ ॥ सर्वेषांरागाणांलौहित्यानांसर्वेषांप्राणिनांरागाणांदर्शनेच्छानांवा ॥ १७ ॥ ब्रह्मनाड्यासुषुम्नयाउत्क्रांतियोगेनब्रह्मरंध्रंभित्त्वानिर्गमनंकुर्वतश्चिकीर्षतोमेरोर्जठरान्निर्गतंमूर्धानंशिरःप्रदेशमागतंवाडवंवडवाग्निकल्पंजठरानलमिवस्थितमित्युत्प्रेक्षा ॥ १८ ॥ सुमेरुवनदेव्यालीलयाक्रीडाकौतुकेनइंदुमादातुंग्रहीतुंखेनीतंप्रसारितमलक्तकरसरंजितंहस्तस्यशिखावत्संहतमंगुलिजातमिव ॥ १९ ॥ मालाभिरिवग्रथिताभिर्ज्वालाभिःखंगंतुमिवसस्पंदंचलितमतएवशैलस्थंपर्वतमारूढंहव्यवाहकत्वादग्निहोत्राद्याहुतिपयोमुखेयस्यतथाविधंवाडवंब्राह्मणसंबंधिनमध्वराग्निमिवस्थितम् ॥ शृंगपक्षेपयोनिर्झरोदकंमुखेअग्रभागेयस्य ॥ २० ॥

कचद्रलांशुरवाग्राभिस्त्रिभिः शृंगाग्रांगुलिभिस्ताराअश्विन्यादीः स्प्रष्टुंस्पृष्ट्वागणयितुमिवआकाशंपरिचुंबत्व्यामुवदिवउन्नतम् ॥ २१ ॥ मुरजावाद्यभेदाः ॥ भुवावनभूम्याभृतानांपुष्टानांवनलक्ष्मीणांनृत्यमंडपमिवस्थितम ॥ ध्वनत्षट्पदपेटकंभ्रमरसमूहोयस्मिन् ॥ २२ ॥ दंतपंक्तिवद्विकसंत्यातालपत्राणामावल्ल्याःपंक्त्या ॥ उदारौमदमन्मथौसर्वप्राणिनांयस्मिन् ॥ २३ ॥ तापसत्वेनोत्प्रेक्षते ॥ वरेति ॥ २४ ॥ २५ ॥ २६ ॥ पारंऊर्ध्वावधिम् ॥ २७ ॥ सितहरितादिवर्णैर्वनकुसुमराशिलक्षणैःप्रतिदिनंनवैरंगैरंजकद्रव्यैर्दिविव्योम्नि विहितानिलिखितानीवअमलानिचित्राणियेनतथाविधममरयुवतिवर्गस्यलीलाचलंक्रीडापर्वतभूतंमेरवंशिरःशृंगमहंसंप्राप्तवानितिप्राक्तनचतुर्दशश्लोकेसर्वेषामन्वयः ॥ २८ ॥

ताराःस्प्रष्टुमिवाकाशमंगुलीभिरिवत्रिभिः ॥ कचद्रंशुनखाग्राभिःपरिचुंबद्दिवोन्नतम् ॥ २१ ॥ गर्जज्जीमूतमुरजंभूभृतानांतुमंडपम् ॥ हसत्कुसुमगुच्छाढ्यंध्वनत्षट्पदपेटकम् ॥ २२ ॥ दंततालदलावल्ल्यापरिहासादिवस्फुरत् ॥ दोलालोलाप्सरोवृंदमुदारमदमन्मथम् ॥ २३ ॥ शिलाविश्रांतविबुधमिथुनाश्रितकंदरम् ॥ वरांबराजिनंशुभ्रगंगायज्ञोपवीतिच ॥ २४ ॥ तापसंपिंगलमिववेणुदंडधरंस्थितम् ॥ गंगानिर्झरनिर्ह्रादिलतागृहगतामरम् ॥ २५ ॥ गंधर्वगीतसुभगमामोदमधुरानिलम् ॥ फुल्लहेमांबुजोत्तंसंताराररत्नविभूषितम् ॥ २६ ॥ व्योम्नःपारमिवप्राप्तंपिंगलंमेरवंशिरः ॥ २७ ॥ सितहरितपीतपाटलधवलैर्वनकुसुमराशिनवरंगैः ॥ द्विविविहितामलचित्रंलीलाचलममरयुवतिवर्गस्य ॥ २८ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० भुशुंडोपाख्यानेमेरुशिखरवर्णनंनामचतुर्दशःसर्गः ॥ १४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ कुसुमापूर्णकल्पाभ्रकुंतलेतस्यमूर्द्धनि ॥ कल्पांगमहमद्राक्षंशाखाचक्रमिवस्थितम् ॥ १ ॥ पुष्परेणवभ्रवलितंरत्नस्तबकदंतुरम् ॥ उत्सेधनिर्जिताकाशंशृंगेशृंगमिवार्पितम् ॥ २ ॥ ताराद्विगुणपुष्पौघंमेघद्विगुणपल्लवम् ॥ रश्मिद्विगुणरेणुभ्रांतडिद्द्विगुणमंजरीम् ॥ ३ ॥ स्कंधेपुकिन्नरीगीतद्विगुणभ्रमरस्वनम् ॥ दोलालोलाप्सरोलोकद्विगुणीकृतपल्लवम् ॥ ४ ॥

इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० चतुर्दशःसर्गः ॥ १४ ॥ ॥ ५ ॥ ॥ शृंगेकल्पतरुश्चूतःपुष्पपक्ष्यादिसंपदः ॥ स्कंधेकाककुलंतत्रभुशुंडश्चेहवर्ण्यते ॥ १ ॥ कुसुमापूर्णानिकल्पाभ्राण्येवकुंतलाःकेशायस्मिंस्तथाविधेतस्यशृंगस्यमूर्धनिशिरोदेशेप्राणिनामभिलपितार्थपूरणायकल्पंतइतिकल्पान्यंगानिशाखाद्यवयवायस्यतथाविधंपरितःसमप्रसृतशाखापंक्तित्वाच्छाखाचक्रमिवस्थितम् परंवैचित्र्यमागतमित्यंतद्वादशश्लोकोक्तविशेषणविशिष्टमर्थान्शातातपोक्तंचूततरुमहमद्राक्षमितिसंबंधः ॥ १ ॥ पुष्परेणुलक्षणैरभ्रैर्वलितंव्याप्तम् ॥ उत्सेधऔन्नत्यम् ॥ शृंगप्राग्वर्णितमेरुशृंगे ॥ २ ॥ नकेवलमुत्सेधेनैवनिर्जिताकाशांकिंतुताराादिद्विगुणपुष्पौघादिनापीत्याह ॥ तारेति ॥ तडिद्द्विगुणमंजरीमितिनपूंसकत्वेतिकपिनकपीतिह्रस्वनिषेधश्छांदसःकपोलोपः ॥ ३ ॥ दोलालोलाप्सरोलोकानामोष्ठकरपदपल्लवैर्द्विगुणीकृतपल्लवम् ॥ ४ ॥

कामरूपत्वात्स्वैरविहारार्थंकृतविहंगमवेषैः सिद्धगंधर्वसंघातैर्द्विगुणं यथास्यात्तथाउत्था निष्पन्ना विहंगमा यस्मिन् ॥ रत्नकांतिलक्षणयाअच्छनीहारद्विगुणयात्वचावृतांशुकंपरिहितवस्त्रमिवस्थितम् ॥ ५ ॥ औन्नत्यातिशयेनचंद्रबिंबसमाश्लेपादमृतरसपूर्त्यैवद्विगुणांगानिअतएवबृहंतिफलानियस्य ॥ स्कंधमूलेषुसंलीनैःकल्पाभ्रैर्द्विगुणीकृतानीवपर्वाणियस्य ॥ ६ ॥ ७ ॥ अप्सरोलक्षणभ्रमरीभिर्वलयस्वनैःकटककंकणैर्भृंगानुत्सार्यगृहीताःकुसुमानामांतरामकरंदाःयस्य ॥ चकारःप्राक्तनविशेषणैरस्यसमुच्चयार्थः ॥ ८ ॥ जगज्जालंब्रह्मांडमिवस्थितम् ॥ अनंतानामनवधीनांदशानामाशानांदिशांपरिपूरकम् ॥ ९ ॥ १० ॥ अंशुकैर्दिव्यवस्त्रैरत्नैश्चाढ्यमिवार्थिकामप्रपूरकम् ॥ लतानांविलसनं

सिद्धगंधर्वसंघातद्विगुणोत्थविहंगमम् ॥ रत्नकांत्यच्छनीहारद्विगुणत्वग्वृतांशुकम् ॥ ५ ॥ चंद्रबिंबसमाश्लेषद्विगुणांगबृहत्फलम् ॥ मूलसंलीनकल्पाभ्रद्विगुणीकृतपर्वकम् ॥ ६ ॥ सुरसंवलितस्कंधपत्रविश्रांतकिन्नरम् ॥ निकुंजकुंजजीमूतकच्छसुप्तसुरादिकम् ॥ ७ ॥ स्वाकारविपुलं भृंगानुत्सार्य वलयस्वनैः ॥ अप्सरोभ्रमरीभिश्च गृहीतकुसुमांतरम् ॥ ८ ॥ सुरकिंनरगंधर्वविद्याधरवरान्वितम् ॥ जगज्जालमिवानंतदशाशाकाशपूरकम् ॥ ९ ॥ नीरंध्रकलिकाजालं नीरंध्रमृदुपल्लवम् ॥ नीरंध्रविकसत्पुष्पं नीरंध्रवनमालितम् ॥ १० ॥ नीरंध्रमंजरीपुंजं नीरंध्रमणिगुच्छकम् ॥ नीरंध्रांशुकरत्नाढ्यं लताविलसनाकुलम् ॥ ११ ॥ सर्वत्रकुसुमापूरैः सर्वत्रफलपल्लवैः ॥ सर्वामोदरजःपुंजैः परं वैचित्र्यमागतम् ॥ १२ ॥ तस्य कक्षेषु कुंजेषु लतापत्रेषु पर्वसु ॥ पुष्पेष्वालयसंलीनान्विहगान्दृष्टवानहम् ॥ १३ ॥ निशानाथकलाखंडमृणालशकलैधितान् ॥ अर्जुनांभोजिनीकंदकवलान्ब्रह्मसारसान् ॥ १४ ॥ विरंचेरथहंसानां पोतकान्सामगायिनः ॥ ॐकारवेदसुहृदो ब्रह्मविद्यानुशासनान् ॥ १५ ॥ उद्गीर्णमंत्रनिचयान्स्वाहाकारनिभस्वनान् ॥ अस्थिनैकतडित्पुंजनीलमेघसमोपमान् ॥ १६ ॥ दर्वीनिरीक्षितान्नित्यं यज्ञवेदिलतादलान् ॥ शुकान्कार्शानवाञ्छ्यामाञ्छिशूञ्छिखिशिखाशिखान् ॥ १७ ॥ गौरीरक्षितबर्हौघान्कौमारान्वरबर्हिणः ॥ स्कंदोपन्यस्तनिःशेषशैवविज्ञानकोविदान् ॥ १८ ॥

लास्यम् ॥ ११ ॥ १२ ॥ कक्षेषुस्कंधशाखासंधिषु ॥ कुंजेषुलताघनशाखाग्रेषु ॥ १३ ॥ विहगेषुविशेषमाह ॥ निशानाथेति ॥ निशाकरकलानांखंडाम्रृणालशकलानीवतैरेधितान्वर्धितान् तथाअर्जुनाःशुभ्राअंभोजिनीकंदाअपिकवलानिग्रासायेषांतथाविधान् ब्रह्मवाहनभूतान्सारसान्हंसान् ॥ १४ ॥ ॐकारस्यवेदानांचरहस्यार्थालोचनसहायत्वात्सुहृदोमित्रभूतान्परापरब्रह्मविद्यास्वनुशासनंगुरुमुखाद्विधिनाध्ययनंयेषाम् ॥ १५ ॥ अग्निवाहान्शुकांस्तत्रवर्णयति ॥ उद्गीर्णेत्यादिना ॥ अस्थिशंखःनैकान्यनेकानितडित्पुंजानिर्नीलमेघाश्चवर्णतःसमाउपमायेषाम् ॥ १६ ॥ यज्ञवेदिषुआस्तीर्णानांहरितकुशलतानांदलानीवश्यामान्हरितान्कृशानुरग्निस्तद्वाहनभूतान्शुकानहंदृष्टवानितिसर्वत्रानुषज्यते ॥ मयूरपोतान्वर्णयति ॥ शिशूनित्यादिना ॥ शिखिनःअग्नेःशिखेवभास्वराःशिखायेषाम् ॥ १७ ॥ १८ ॥

व्योम्नैवजातानांतत्रैवनष्टानांमरणपर्यंतंभूमावनवतरतांअतएवबलाधिक्यान्महतामतएवव्योमपक्षिनाम्नाप्रसिद्धानांपक्षिजातिभेदानांनित्यंक्रीडासहायत्वाद्बंधून् आबद्धनि
लयान्कृतनीडान् ॥ १९ ॥ २० ॥ २१ ॥ भूतौघंप्राणिजातम् ॥ तत्रतस्मिन्वृक्षे ॥ २२ ॥ पुष्टानिघनानिपत्राणियस्याः ॥ २३ ॥ कालेदक्षिणशाखादर्शनानंतरकालेकाको
लाद्रोणकाकाख्याःकाकजातिभेदास्तेषांवलयंमंडलम् ॥ कल्पाभ्राणिसंवर्तमेघास्तदोघमिवस्थितम् ॥ २४ ॥ २५ ॥ पुण्यकृतांजनानांयोषितांभोग्यानामप्सरसांस्वर्गेरति
सुखभोगयोग्येस्कंधकोटरइतिपूर्वेणान्वयः ॥ शांत्यादिगुणशालित्वादपरिक्षुभिताकाराः ॥ २६ ॥ मेघावातेनवायुनासमेनसमभागेनविभेद्यच्छित्त्वाअपसारिताःकोटरेप्रवेशि

व्योम्नैवजातनष्टानांमहतांव्योमपक्षिणाम् ॥ बंधूनाबद्धनिलयाञ्छरदभ्रसमाकृतीन् ॥ १९ ॥ विरंचिहंसजानन्यानन्यानग्निशुकोद्भ
वान् ॥ कौमारबर्हिजानन्यानन्यानंबरपक्षिजान् ॥ २० ॥ द्वितुंडांश्चभरद्वाजान्हेमचूडान्विहंगमान् ॥ कलविंकबलान्गृध्रान्कोकिलान्
क्रौंचकुक्कुटान् ॥ २१ ॥ भासचापबलाकादीन्बहूनन्यांश्चराघव ॥ भूतौघंजगतीवाहंदृष्टवांस्तत्रपक्षिणः ॥ २२ ॥ दक्षिणस्कंधशाखा
यांस्थितायांवदवीयसि ॥ अथाहंदृष्टवान्पुष्टपत्रायामंबरस्थितः ॥ २३ ॥ कालेकाकोलवलयंमंजरीजालमालितम् ॥ लोकालोकाचले
रण्येकल्पाभ्रौघमिवस्थितम् ॥ २४ ॥ तत्रपश्याम्यहंयावदेकांतेस्कंधकोटरे ॥ विचित्रकुसुमास्तीर्णेविविधामोदशालिनि ॥ २५ ॥ पुण्य
कृद्योषितांस्वर्गेप्रियस्तबकवासिताः ॥ अपरिक्षुभिताकाराःसभायांवायसाःस्थिताः ॥ २६ ॥ विभेद्यमेघावातेनसमेनेवापसारिताः ॥ तेषां
मध्येस्थितःश्रीमान्भुशुंडःप्रोन्नताकृतिः ॥ २७ ॥ मध्येचकाचखंडानामिंद्रनीलइवोन्नतः ॥ परिपूर्णमनामानीसमःसर्वांगसुंदरः ॥ २८ ॥
प्राणस्पंदावधानेननित्यमंतर्मुखःसुखी ॥ चिरजीवीतिविख्यातश्चिरजीवितयातया ॥ २९ ॥ जगद्विदितदीर्घायुर्भुशुंडइतिविश्रुतः ॥ यु
गागमापायदशादर्शनप्रौढमानसः ॥ ३० ॥ प्रतिकल्पंचगणयन्खिन्नश्चक्रपरंपराम् ॥ जन्मनांलोकपालानांशर्वशक्रमरुत्वताम् ॥ ३१ ॥
संस्मर्तासमतीतानांसुरासुरमहीभृताम् ॥ प्रसन्नगंभीरमनाःपेशलःस्निग्धमुग्धवाक् ॥ ३२ ॥ अव्यक्तवक्ताविज्ञातानिर्ममोनिरहंकृ
तिः ॥ सुहृद्बंधुस्तथामित्रंभृत्युपुत्रोगुरुप्रभुः ॥ सर्वदासर्वथासत्यंसर्वसर्वस्यसंस्तवे ॥ ३३ ॥

ताइव ॥ २७ ॥ मानीमान्यः ॥ २८ ॥ प्राणस्पंदस्याऽवधानेननिरोधेन ॥ तयाप्रसिद्धतमया ॥ २९ ॥ ३० ॥ लोकपालप्रायपाठात्शर्वाईशानाःशक्राइंद्राःमरुत्वंतोमरुत्त
स्वाश्चप्रयस्तेषांजन्मनांचक्रपरंपरांगणयन्खिन्नोनिर्विण्णः ॥ ३१ ॥ पेशलश्चतुरः ॥ ३२ ॥ अव्यक्तानामस्फुटानांसूक्ष्मतमार्थानांस्फुटीकृत्यवक्ता ॥ यतस्तेषांविज्ञातामृत्योः
पुत्रइवपरमप्रियः ॥ बुद्ध्यागुरोर्बृहस्पतेरपिप्रभुःसमर्थः ॥ कुतोयंसर्वेषांसुहृदादिस्तत्राह ॥ सर्वदेति ॥ यतोयंसर्वस्यप्राणिजातस्यसर्वारोपाधिष्ठानत्वात्सर्वथासर्वप्रकारेणापिस
र्वदासत्यंसर्वस्यसंस्तवेवर्णनप्रसंगेचसर्वमतइत्यर्थः ॥ ३३ ॥

पक्षद्वयेपिविशेषणानिस्पष्टानि ॥ हृत्पुंडरीकस्यकुहरंदहराकाशरूपइत्यर्थः ॥ तस्यभूताकाशशंकावारणायाह ॥ व्यवहारवेत्तेति ॥ सरःपक्षेल्हदिमध्येपुंडरीकाणामाधारभूतंकुहरंनिखातंयस्य ॥ वयःपक्षिणस्तेषामवहारोविश्रांतिस्तद्वेत्ता ॥ निर्मलतमत्वात्प्रकटाशयश्रीः ॥ ३४ ॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०पंचदशःसर्गः ॥ १५ ॥ पुरःप्राप्तवसिष्ठेनपूजितेनासनादिभिः ॥ भुशुंडजन्मकर्मादेःकृतःप्रश्नोत्रवर्ण्यते ॥ १ ॥ अथअहंतस्यभुशुंडस्यपुरःखात्अचलेनक्षत्रमिवअपतंअवातरम् ॥ १ ॥ किंचिद्विक्षोभितसभइत्येतद्विवृणोति ॥ चुक्षोभेति ॥ वायसानामास्थानंसभा ॥ २ ॥ अशंकितमवितर्कितासंभावितागमनमपिमांप्राप्तम् ॥ अवबुद्धवान्त्रिकालदर्शित्वादेवेतिभावः ॥ ३ ॥

सौम्यःप्रसन्नमधुरोरसवान्महात्मात्द्धदःसरोवरइवांतरखंडशैत्यः ॥ हृत्पुंडरीककुहरंव्यवहारवेत्तागांभीर्यमच्छमजहत्प्रकटाशयश्रीः ॥ ३४ ॥ ॥इ०वा०वा०दे०मोक्षोपायेषुनि०पू०भुशुंडोपाख्यानेभुशुंडदर्शनंनामपंचदशःसर्गः ॥ १५ ॥ ॥ ६५ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥अथतस्याहमपतंदीप्यमानवपुःपुरः ॥ किंचिद्विक्षोभितसभःखान्नक्षत्रमिवाचले ॥ १ ॥ चुक्षोभवायसास्थानंनीलोत्पलसरःसमम् ॥ मत्पातमंदवातेनभूकंपेनेवसागरः ॥ २ ॥ अशंकितमपिप्राप्तंदर्शनान्मामनंतरम् ॥ भुशुंडस्तुवसिष्ठोयंप्राप्तइत्यवबुद्धवान् ॥ ३ ॥ पत्रपुंजात्समुत्तस्थौमेघशावइवाचलात् ॥ हेमुनेस्वागतमितिप्रोवाचमधुराक्षरम् ॥ ४ ॥ संकल्पमात्रजाताभ्यांकराभ्यांकुसुमांजलिम् ॥ मत्यमाशुतदैवादान्मेघोहैममिवोत्करम् ॥ ५ ॥ इदमासनमित्युक्त्वानवंकल्पतरुच्छदम् ॥ उपानीतवतित्यक्तभृत्येवायसनायके ॥ ६ ॥ भुशुंडउत्थितेस्वीयकलापक्षेपुपक्षिषु ॥ उपविष्टंमुनिंदृष्ट्वास्वासनोन्मुखदृष्टिषु ॥ ७ ॥ समंतात्खगवृंदेनभुशुंडेनसमंततः ॥ तस्मिन्कल्पलतापुंजेष्युपविष्टोहमासने ॥ ८ ॥ अर्घ्यपाद्यादिसंपाद्यभुशुंडस्तुष्टमानसः ॥ मामुवाचमहातेजाःसौहृदान्मधुराक्षरम् ॥ ९ ॥ ॥भुशुंडउवाच ॥ ॥ अहोभगवतास्माकंप्रसादोदर्शितश्चिरात् ॥ दर्शनामृतसेकेनयत्सिक्ताःसद्रुमावयम् ॥ १० ॥ मत्पुण्यचिरसंभारप्रेरितेनत्वयाधुना ॥ मुनेमान्यैकमान्येनकुतश्चागमनंकृतम् ॥ ११ ॥ कच्चिदस्मिन्महामोहेचिरंविहरतस्तव ॥ अखंडितैवसमतास्थिताचेतसिपावने ॥ १२ ॥ किमर्थमद्यागमनक्लेशेनात्माकदर्थितः ॥ वचनश्रवणोत्कानामाज्ञांनोवक्तुमर्हसि ॥ १३ ॥

मेघशावःसूक्ष्मोमेघइवेतियावत् ॥ ४ ॥ तदैवस्वागतोक्तिकालएव ॥ हिममेवहैमंशिशिरमासारोत्करमिव ॥ ५ ॥ त्यक्तभृत्येभृत्यद्वाराआसनानयनमकृत्वास्वयमेवासनमादरादुपानीतवतीत्यर्थः ॥ ६ ॥ उत्थितांतंपूर्वान्वयि ॥ स्वीयाःकलाःकांतयइवप्रसरंतःपक्षायेषांतथाविधेषुपक्षिपुतत्सभावायसेषु ॥ ७ ॥ ततस्तदनंतरमहंभुशुंडेनसममुपविष्टः ॥ ८ ॥ ९ ॥ प्रसादोनुग्रहः ॥ सद्रुमाःपुण्यवृक्षायमाणाःकल्पवृक्षसहितावा ॥ वयमितिनिकृष्टजातिताद्योतनायजात्याख्यायामितिबहुवचनम् ॥ १० ॥ कुतःकस्मात्देशात् ॥ ११ ॥ महामोहेमूलाज्ञानकार्येजगति ॥ १२ ॥ आज्ञापनवचनश्रवणेउत्कानामुत्कंठितानांनः ॥ आज्ञांआज्ञाप्यमर्थम् ॥ १३ ॥

॥ १४ ॥ सर्वज्ञातमितियदुक्तंतदेवस्फुटयति ॥ चिरमिति ॥ चिरंजीवितंयेषांतद्विषयाभिश्चर्चाभिर्विचारणाभिरिद्रसभायांजाताभिः ॥ १५ ॥ यदिज्ञातस्तर्हिकिमर्थंपृच्छसि तत्राह ॥ भवद्वाक्येति ॥ १६ ॥ १७ ॥ १८ ॥ पतितःप्रविष्टः ॥ १९ ॥ भगवन् उत्पत्तिचविनाशंचभूतानामगतिंगतिम् ॥ वेत्तिविद्यामविद्यांचसवाच्योभगवानितीत्युक्तज्ञान संपन्न ॥ २० ॥ वृत्तमतिक्रांतकल्पांतचरित्रम् ॥ अयंएतद्वृक्षरूपोनिवसत्यस्मिन्निति निवासः ॥ २१ ॥ श्राव्याश्रोतव्या ॥ २२ ॥ यंवृत्तांतंयुष्मद्विधाआकर्णयंतितेनवृत्तांतेन प्रकथितेनवक्तॄणामन्येषांचश्रोतॄणामशुभंविनाशमेति ॥ यथामेघास्पदेनदृष्टिच्छायावनादिविभवेनार्कतापोविनाशमेतितद्वत ॥२३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि

त्वत्पाददर्शनादेवसर्वज्ञातंमयामुने॥ त्वदागमनपुण्येनवयमायोजितास्त्वया ॥ १४॥ चिरंजीवितचर्चाभिर्वयंवःस्मृतिमागताः॥ ते नेदमास्पदंपादैस्त्वंपवित्रितवानयम्॥१५॥ज्ञातत्वदागमोप्येवंत्वांपृच्छामीहयन्मुने॥ भवद्वाक्यामृतास्वादवांछितंप्रविजृंभते॥१६॥ इत्युक्तवानसौपक्षीभुशुंडश्चिरजीवितः॥ त्रिकालामलसंवेदीतत्रप्रोक्तमिदंमया॥ १७॥ ॥श्रीवसिष्ठउवाच॥ ॥विहंगममहाराज सत्यमेतत्त्वयोच्यते॥ द्रष्टुमभ्यागतोस्म्यद्यत्वामेवचिरजीवितम्॥ १८॥ आशीतलांतःकरणोदिष्ट्याकुशलवानसि॥ पतितोसिनबुद्ध्या त्माभीषणांभववागुराम्॥ १९॥ तदेतंसंशयंछिंधिभगवन्ममसत्यतः॥ कस्मिन्कुलेभवान्जातोज्ञातज्ञेयःकथंभवान्॥ २० ॥ किय दायुश्चतेसाधोवृत्तंस्मरसिकिंचवा॥ केनायंवानिवासस्तेनिर्दिष्टोदीर्घदर्शिनः॥ २१॥ ॥भुशुंडउवाच॥ ॥यत्पृच्छसिमुनेसर्वंतदिदं वर्णयाम्यहम्॥ अनुद्वेगितयायत्नात्कथाश्राव्यामहात्मना॥२२॥ युष्मद्विधास्त्रिभुवनप्रभुपूज्यरूपाआकर्णयंतियमुदारधियोमहांतः॥ तेनाशुभंप्रकथितेनविनाशमेतिमेघास्पदेनविभवेनयथार्कतापः॥२३॥ ॥इत्यार्षेवा०वा०दे०मोक्षोपायेपुनिर्वाणप्रकरणेपू०वसि ष्ठभुशुंडसमायोगोनामषोडशःसर्गः॥१६॥ ॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥अथरामभुशुंडोसौनप्रदृष्टोनवक्रधीः॥ सर्वांगसुंदरः श्यामःप्रावृषीवपयोधरः॥१॥स्निग्धगंभीरवचनःस्मितपूर्वाभिभाषणः॥ करस्थबिल्वफलवत्प्रतोलितजगत्त्रयः॥२॥ तृणवद्दृष्टसकलः प्रमेयीकृतसंसृतिः॥ लोकाजवंजवीभावेदृष्टज्ञानपरावरः॥ ३॥ धीरस्थिरमहाकारोविश्रांतिंगतमंदरः॥ परिपूर्णमनाःशुद्धःक्षीरार्णव इवागतः॥४॥

र्वाणप्रकरणेपू०षोडशःसर्गः ॥ १६ ॥ ॥ ५ ॥ ॥ उपवर्ण्यभुशुंडोग्रजीवन्मुक्तोचितैर्गुणैः ॥ पृष्टार्थविस्तराद्वक्तुंप्रवृत्तइतिकथ्यते ॥ १ ॥ अथभुशुंडइदमाहेतिसर्गा त्यश्लोकेनसंबध्यते ॥ दृष्टइष्टलाभप्रयुक्तहर्षवान् ॥ वक्रधीःअनृजुबुद्धिः ॥ १ ॥ प्रतोलितंतुलयेवदृष्टयत्तयानिश्चितंजगत्त्रयंयेन ॥ २ ॥ तृणवद्दृष्टंसकलंभोगवृंदंयेन ॥ लो कानांआजवंजवीभावेकामानुधावनेविषयेसम्यग्विचार्यप्रमेयीकृताफलत्वेननिश्चिताजन्ममरणादिसंसृतिर्येन ॥ दृष्टंज्ञानेनपरमवरंचब्रह्मयेन ॥ ३ ॥ अमृतोत्पादनानंतरंगतो मंदरोयस्मात्तथाविधःक्षीरार्णवइवविश्रांतिमागतः ॥ ४ ॥

बहिःपरिविश्रांतधीःअंतःपरमानंदघूर्णितः ॥ संसारेजन्मयेषांतथाविधानांसर्ववस्तूनामाविर्भावतिरोभावौतत्तन्निमित्तंमायातत्त्वमात्मतत्त्वंच जानातीतिआविर्भावतिरोभावत ज्ज्ञः ॥ ५ ॥ प्रियंमधुरंचश्रवणोचितंवीणागानमिवहृद्यंवाक्यंयस्य साक्षात्कारमात्रात्सकलभयापहरंस्वयंब्रह्मेवजगदुद्धारायनवंशरीरमाश्रितः अतएवसहजानंदप्रहर्षयुक्तो भुशुंडःप्रश्नोत्तरकथनायसरभसेनसोद्योगेनवदनेनाभिरामरूपःसन्निदमाहेतिपरेणान्वयः ॥ ६ ॥ सभुशुंडोमामांप्रतिशुद्धममृतमखिलंनिजस्वरूपमनुज्झितसंभ्रमेणात्यक्तवि नयोपचारोत्साहादिपरिष्कारेणक्रमेणकथयितुममलगिराइदंवक्ष्यमाणवृत्तांतमाह ॥ यथामुग्धःसुंदरोमेघःस्तनितेनस्वगर्जितरवेणमधुपंमकरंदपानरसिकंभ्रमरंप्रतितद्वेवाहतद्व त् ॥ तथाचप्रागेवप्रबुद्धब्रह्मानंदरसिकेमयितदुक्तिर्नोपदेशःकिंत्वनुवादमात्रमितिभावः ॥ ७ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्य० निर्वा०पू०सप्तदशःसर्गः ॥ १७ ॥ ॥ ५ ॥ स्वजन्मवक्तुमत्रादौहरस्तद्गणमातृकाः ॥ तासांपानोत्सवोन्मादाभुशुंडेनात्रवर्णिताः ॥ १ ॥ तत्रकस्मिन्कुलेभवान्जातइतिप्रथमप्रश्नस्योत्तरंवक्तुंभूमिकांरचयति ॥ अस्तीत्या

परिविश्रांतधीःशांतःपरमानंदघूर्णितः॥ आविर्भावतिरोभावतज्ज्ञःसंसारजन्मनाम्॥५॥ सरभसवदनाभिरामरूपःप्रियमधुरोचित गानहृद्यवाक्यः॥ स्वयमिवनवमाश्रितःशरीरंसकलभयापहरंप्रहर्षयुक्तः॥६॥ इदममलगिरासमाहशुद्धममृतमनुज्झितसंभ्रमक्रमे ण॥ कथयितुमखिलंनिजंस्वरूपंमधुपमिवस्तनितेनमुग्धमेघः॥ ७॥ ॥इ० वा० वा० दे० मो० नि० पू० भुशुंडोपाख्यानेभुशुंडस्वरूपव र्णनंनामसप्तदशःसर्गः॥ १७॥ ॥५॥ ॥भुशुंडउवाच॥ ॥अस्त्यस्मिञ्जगतिश्रेष्ठःसर्वनाकनिवासिनाम्॥ देवदेवोहरोनामदेवदेवा भिवंदितः ॥ १ ॥ षट्पदश्रेणिनयनायस्योच्चस्तवकस्तनी॥ विलासिनीशरीरार्धेलताचूततरोरिव॥ २॥ हिमहारसितायस्यलहरीस्तब कोंभिता॥ आवेष्टितजटाजूटागंगाकुसुममालिका॥ ३॥ क्षीरसागरसंभूतःप्रसृतामृतनिर्झरः॥ प्रतिबिंबकरःश्रीमान्यस्यचूडामणिः शशी॥ ४॥ अनारतशिरश्चंद्रप्रस्रवेणामृतीकृतः॥ यस्येंद्रनीलवत्कालकूटःकंठेविभूषणम्॥ ५॥ धूलिलेखामहावर्त्तस्वच्छपावकसंभ वम्॥ परमाणुमयंभस्मयस्यज्ञानजलंसितम्॥ ६॥

दिना ॥ सर्वेषांनाकनिवासिनांमध्येश्रेष्ठोज्ञानैश्वर्यबलादिगुणैरुत्कृष्टतमोदेवानामपिदेवइज्यउपास्यश्चदेवानांदेवैर्ब्रह्मादिभिरप्यभितःसर्वतःसदाचवंदितोनमस्कृतस्तुतश्चेतित्रि भिर्विशेषणैःसर्वांशेपितस्यैवोत्कर्षपरमावधित्वमितिदर्शितम्॥ अनेनार्थाद्वक्ष्यमाणब्रह्मविचारंभेमंगलमपिकृतंबोध्यम् ॥ १ ॥ षट्पदानांश्रेणिरिवनयनानियस्याः ॥ २ ॥ हि ममिवहारइवचसितालहरीलक्षणैस्तवकैरुंभितापूरितागुंफितेतियावत् ॥ ३ ॥ प्रतिबिंबकरोदर्पणभूतश्चूडामणिः ॥ ४ ॥ अनारतंशिरश्चंद्रस्यामृतप्रस्रवेणनिरस्तविषशक्तिरा हितसंजीवनशक्तिश्चेत्यमृतीकृतः ॥ ५॥ तथायस्यस्वच्छात्स्वाक्षिपावकाज्जगत्प्रलयहेतोःसंभवतीतितथाविधंधूलिलेखाधूलिश्रेणिरूपामहांतःप्रलयवात्यावर्त्तायस्मात्तथावि धं स्थूलभूतानांसूक्ष्मसूक्ष्मप्रवेशक्रमेणपरमसूक्ष्माव्यक्तमात्रपरिशेषात्परमाणुमयं सितंशुभ्रं तत्साक्षिचिन्मात्रलक्षणजलप्लावितत्वाज्ज्ञानजलंमायालक्षणंभस्मयस्यमायाश बलब्रह्मणोविभूषणमित्यनुषज्जते ॥ हरःसंक्षुभ्यैनंभजतिभसितोद्धूलनविधिमितिभगवत्पादाः ॥ ६ ॥

मृष्टानिशाणोल्लेखनेनमणिवच्छोधितानि ॥ अतएवमालायाकारेणघटितानि ॥ देहेषुकांतानिमनोरमाणिब्रह्मादिशरीराणितन्मयानितद्विकारभूतानीत्यर्थः ॥ ७ ॥ निलानीरदामेघाएवपल्लवानिदशायस्य ॥ अंबरमाकाशंदिशइतियावत् ॥ अंबरंवस्त्रम् ॥ ८ ॥ भ्रमंतीभिःशिवांगनाभिःक्रोष्ट्रीभिःपक्वैर्महामांसैर्नरामिषैर्बल्योदनैश्चआकुलम् ॥ ग्रामनगरादिभ्योवहिर्भूतम् ॥ भ्रमंतीभिःशिवाभिःकल्याणवेषाभिरंगनाभिःपक्वैर्महद्भिर्मृष्टतमत्वात्प्रशस्यैर्मांसौदनादिभोज्यैश्चाकुलंव्याप्तंसर्वदोषेभ्योवहिर्भूतमित्यपिश्लेषादारोप्यते ॥ ९॥ मातरोवक्ष्यमाणाः प्रेम्णावध्नंतीतिबंधवःसदाक्रीडासहायाः ॥ १० ॥ चरंतःपर्यायेणतत्तदंगभूषणायप्रसर्पंतः ॥ मसृणांगकाःस्निग्धसर्वांगाः ॥ दीप्यमानस्वर्णकांतयः ॥ ११ ॥ यस्यभैरवंभीषणमाचरितंचरित्रम् ॥ तदेवावयुत्योदाहरति दृक्पातेत्यादिविशेषणैः ॥ १२ ॥ सत्यसंकल्पत्वात्कल्याणचिंतनेनैवस्वस्थीकृतंजगज्जातंयेनतथाविधमतएवस्वव्यापारःसमाधिस्तत्स्थंचेतोयस्यतथाविधस्ययस्ययदृच्छयासमाधिभंगेयःकरस्पंदःसोप्यासुराणिपुराणिक्षिणोत्यसुरैस्सहनाशयतीत्यासुरपुरक्षयस्तथाविधोभवतीतिवि

निर्मलानिजितेंदूनिमृष्टानिघटितानिच ॥ यस्यास्थीन्येवरत्नानिदेहकांतमयानिच ॥७॥ सुधाकरसुधाधौतंनीलनीरदपल्लवम् ॥ तारकाबिंदुशवलंयस्यचांबरमंबरम् ॥ ८ ॥ भ्रमच्छिवांगनापक्वमहामांसौदनाकुलम् ॥ बहिर्भूतंगृहंयस्यश्मशानंहिमपांडुरम् ॥ ९ ॥ कपालमालाभरणाःपीतरक्तवसासवाः ॥ आंत्रस्रग्दामवलिताबंधवोयस्यमातरः ॥ १० ॥ प्रस्फुरन्मूर्धमणयश्चरंतोमसृणांगकाः ॥ भुजगावलयायस्यप्रकचत्कनकत्विषः ॥ ११ ॥ दृक्पातदग्धशैलेंद्रंजगत्कवललालसम् ॥ भैरवाचरितंयस्यलीलासंत्रासितासुरम् ॥ १२ ॥ स्वस्थीकृतजगज्जातस्वव्यापारस्यचेतसः ॥ यदृच्छयाकरस्पंदोयस्यासुरपुरक्षयः ॥ १३ ॥ एकाग्रमूर्त्तयःस्नेहरागद्वेषविवर्जिताः ॥ स्वशनायस्यतेशैलाःसरसाअपिनीरसाः ॥ १४ ॥ शिरःखुराःखुरकराःकरदंतमुखोदराः ॥ ऋक्षोष्ट्राजाहिवक्त्राश्चप्रमथायस्यलालकाः ॥ १५ ॥ तस्यनेत्रत्रयोद्भासिवदनस्यामलप्रभाः ॥ यथागणास्तथैवान्याःपरिवारोहिमातरः ॥ १६ ॥ नृत्यंतिमातरस्तस्यपुरोभूतगणानताः ॥ चतुर्दशविधानंतभूतजातैकभोजनाः ॥ १७ ॥

शेषः ॥ १३ ॥ यस्यसमाधिकालेप्रसिद्धमैकाग्र्यंपृथिवीशैलरूपतन्मूर्त्तिषुप्रत्यक्षंदृश्यतइत्याशयेनाह ॥ एकाग्रेति ॥ स्नेहरागद्वेषादिसर्वदोषविवर्जिताःरसापृथिवीरसोजलंचतत्सहिताइतिसरसाअपिस्वशनाःशोभनाशनतृमाइवनीरसाअशनायापिपासादितृष्णाशून्यास्तेप्रसिद्धामेरुहिमवदादयःशैलायस्यहरस्यएकाग्रभूताध्यानमूर्त्तयःप्रसिद्धाइत्यर्थः ॥ १४ ॥ इदानींतस्यगणान्सर्वांगेषुसर्वशक्तिमतोवर्णयति ॥ शिरइति ॥ शिरांसिखुराधावनखंडनादिखुरशक्तिमंतियेषाम् ॥ तथाखुराश्वकराविचित्रशिल्पादिकरशक्तिमंतोयेषाम् ॥ तथाकराश्चदंतमुखोदरंचर्वणभक्षणावपनादिशक्तिमंतोयेषाम् ऋक्षाभल्लूकाउष्ट्राअजाअहयःसर्पास्तेषामिववक्त्राणियेषांतथाविधाःप्रमथायस्यलालकाःक्रीडासहायाइत्यर्थः ॥ यथागणास्तथैवसर्वांगेषुसर्वशक्तिमत्योनानाकाराननाश्चमातरस्तस्यपरिवारः ॥ १६ ॥ भुवनसंख्ययाचतुर्दशविधानिस्वसंख्ययाअनंतानिभूतजातान्येकंमुख्यभोजनमन्नंयासाम् ॥ १७ ॥

रक्तमेदोवसाःआसवइवसदापेयायासाम् ॥ शरीरावयवाःशवहस्तपादादयःस्रजोयासाम् ॥ १८ ॥ १९ ॥ तत्कल्पस्थानांतासांनामान्याह ॥ जयाचेत्यादिना ॥ देवतामातृदेव्यः ॥ २० ॥ ननुशतकोट्यस्तुचामुंडाइत्यादिबहुसंख्यत्वेतासांप्रसिद्धेकथमष्टावित्युच्यतेतत्राह ॥ सर्वासामेवेति ॥२१ ॥ तासांमध्येसप्तमीयाविद्यतेतस्यास्तुवाहनंचंडाख्यःकाकोविद्यतइतिपरेणान्वयः ॥ २२ ॥ २३ ॥ इतिउक्तलक्षणामातरः ॥ कनापिविहारहेतुना ॥ २४ ॥ चित्तैकाग्र्यद्वारासमाधौपरमार्थभूतस्वात्मतत्त्वप्रकाशकंपानोत्सवम्॥ वामस्रोतोवाममार्गेणपरशक्त्याराधनप्रकारस्तद्गतास्तुंबुरुनामानंरुद्रमूर्त्तिभेदमाराध्यत्वेनाश्रिताः ॥ तुंबुरुरुद्रंवामस्रोतोवामभागस्तद्गताःसत्यआश्रिताइतिवा ॥ २५ ॥ २६ ॥

खरोष्ट्राकारवदनारक्तमेदोवसासवाः ॥ दिगंतरविहारिण्यःशरीरावयवस्रजः ॥ १८ ॥ वसंतगिरिकूटेषुव्योम्निलोकांतरेषुच ॥ अवटेषु श्मशानेषुशरीरेषुचदेहिनाम् ॥ १९ ॥ जयाचविजयाचैवजयंतीचापराजिता ॥ सिद्धारक्तालंबुसाचउत्पलाचेतिदेवताः ॥ २० ॥ सर्वासामेवमातृणामष्टावेतास्तुनायिकाः ॥ आसामनुगतास्त्वन्यास्तासामनुगताःपराः ॥ २१ ॥ तासांमध्येमहार्हाणांमातॄणांमुनिनायक ॥ अलंबुसेतिविख्यातामातामानदविद्यते ॥ २२ ॥ वज्रास्थितुंडश्चंडाख्यइंद्रनीलाचलोपमः ॥ तस्यास्तुवाहनंकाकोवैष्णव्यागरुडोयथा ॥ २३ ॥ इत्यष्टैश्वर्ययुक्तास्तामातरोरौद्रचेष्टिताः ॥ कदाचिन्मिलिताव्योम्निसर्वाःकेनापिहेतुना ॥ २४ ॥ उत्सवंपरमंचक्रुःपरमार्थप्रकाशकम् ॥ वामस्रोतोगताएतास्तुंबुरुंरुद्रमाश्रिताः ॥ २५ ॥ पूजयित्वाजगत्पूज्यौदेवौतुंबुरुभैरवौ ॥ विचित्रार्थाःकथाश्चक्रुर्मदिरामदतोषिताः ॥ २६ ॥ अथेयमाययौतासांकथावसरतःकथा ॥ अस्मानुमापतिर्देवःकिंपश्यत्यवहेलया ॥ २७ ॥ प्रभावंदर्शयामोस्यपुनर्नास्मांस्त्वसौयथा ॥ दृष्टमात्रमहाशक्तिःकरिष्यत्यवधीरणम् ॥ २८ ॥ इतिनिश्चित्यतादेव्योविवर्णवदनांगिकाम् ॥ उमामेववशीकृत्यप्रोक्षयामासुराहृताः ॥ २९ ॥ माययापहृतांभर्तुरंगाद्रंगमुपागताम् ॥ तामालोलकचांदेव्यःशंपुरोदनतांगताम् ॥ ३० ॥ पार्वतीप्रोक्षणदिनेतस्मिंस्तत्रमहोत्सवः ॥ बभूवतासांसर्वासांनृत्यगेयमनोहरः ॥ ३१ ॥ अत्यानंदमनुद्दामरवमेवांबरंबभौ ॥ दीर्घावयवविक्षेपविकासिजघनोदराः ॥ ३२ ॥ अन्याजहसुरुद्दामतालक्ष्वेडाघनारवम् ॥ लसदंगविकारंचध्वनत्सगिरिकानना ॥ ३३ ॥

कथावसरतःपरस्परसंवादकथाप्रयुक्तरुद्रकृतमात्रवहेलनप्रसंगेनकथावाक्आययौ ॥ तामेवदर्शयति ॥ अस्मानिति ॥ २७ ॥ अथासौउमापतिर्दृष्टमात्रामहतीशक्तिरस्मत्प्रभावोयेनतथाभूतःसन्अस्मानुद्दिश्ययथापुनःअवधीरणमवहेलनांनकरिष्यतितथाअस्यप्रभावंदर्शयामइत्यन्वयः ॥ २८ ॥ उमांरुद्रशक्तित्वशीकृत्यस्वमूर्त्यंतरत्वात्स्वाधीनांकृत्वायज्ञेपशुमिवसमंत्रेणांभसाप्रोक्षयामासुः ॥ विवर्णवदनांगिकामित्यनेनवदनाद्यंगानांवर्णांतरापादनेनसहसापत्याउमाप्रोक्षितेतिपरिज्ञातुमशक्यत्वापादनंसूच्यते ॥ २९ ॥ रंगंमातृमंडलमध्यम ॥ ओदनतांगतांकर्त्तुंशेपुरिव ॥ मातृणामुमामूर्त्यंतरत्वेनस्वात्मनिमुख्यशापायोगात्परिहासक्रीडात्वाच्चनस्वमूर्त्यवहेलनादोषोपि ॥ ओदनतांओदनादिसर्वभक्ष्यभोज्यलेह्यपेयात्मतांगतांकर्तुमितिशेषः ॥ ३० ॥ ३१ ॥ ३२ ॥ तालःकरतालःक्ष्वेडासिंहनादस्ताभ्यांघनारवंयथास्यात्तथाजहसुः ॥ ३३ ॥

ध्वनंतःशैलागृहाश्चयस्मिन्कर्मणितद्यथाभवतितथा ॥ चंद्रोदयरागेणरंजत्रववत्ध्वनच्चसमुद्रवारीवजगर्जुः ॥ ३४ ॥ चंदनादिनारक्तवसासवादिनावाचर्चितान्यनुलिप्तानिपुटान्यंगानिशिरआदिखुरपर्यंतानियथास्युस्तथापानंपपुः ॥ ३५ ॥ तासामुन्मत्तवृत्तान्येवकानिचिदभिलपन्नुपसंहरति ॥ पपुरिति ॥ पपुःपेयानि ॥ अपुःपरस्परंररक्षुः ॥ परस्परमुखेअग्रीवाअह्वीपुः ॥ अपवृत्तंपरिवृत्तंस्वाचारशिक्षयाअपगतसद्वृत्तंवा ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०अष्टादशःसर्गः ॥ १८ ॥ ॥ ७ ॥ ब्राह्मीहंस्यांचंडयोगात्स्वजन्मभ्रातृभिःसह ॥ ब्राह्म्याःप्रसादाज्ज्ञानाप्तिःपितुःस्थानाप्तिरुच्यते ॥ १ ॥ तासांमातृणाम् ॥ वाहावाहनभूताश्चंडादयः ॥ १ ॥ तत्रतस्मिन्नुत्सवे

अन्याजगुर्ध्वनच्छैलगृहमापानतोपिताः ॥ वारीवरववद्रंजज्जगर्न्मंडलकोटरे ॥ ३४ ॥ अन्याःपानंपपुःपुष्टचर्चितांगशिरःखुरम् ॥ लीलाघुरघुरारावरणदाकाशकोटरे ॥ ३५ ॥ पपुरुदगुरथोच्चैःसत्वराजग्मुरूचुर्जहसुरपुरह्वीपुःपेतुरुच्चैर्ववल्गुः ॥ ननृतुरनिशमाद्धःस्वादुमांसंचदध्युस्त्रिभुवनमपवृत्तंचक्रुरुन्मत्तवृत्ताः ॥ ३६ ॥ ॥ इ०वा०वा०दे०मो०नि०पू०भु०मातृव्यवहारवर्णनंनामाष्टादशःसर्गः ॥ १८ ॥ भुशुंडउवाच ॥ ॥ इत्युत्सवेवर्त्तमानेतासांवाहास्तउत्तमाः ॥ तथैवमत्ताजहसुर्ननृतुःपपुरप्यसृक् ॥ १ ॥ तत्रैकत्रासवोन्मत्ताःकाश्चिन्ननृतुरंबरे ॥ रथहंस्यःस्थितात्राह्म्यःकाकश्चालंबुसारथः ॥ २ ॥ नृत्यंतीनांचहंसीनांपिबंतीनामथासवम् ॥ तलेचाब्धितटानांतुरतिःसम्यगजायत ॥ ३ ॥ संजातरतयोमत्ताःसर्वाहंस्यःक्रमेणताः ॥ रेमिरेसहकाकेनाप्यथमत्तास्तदाकिल ॥ ४ ॥ सप्तानांकुलहंसीनांदयितोवायसस्त्वसौ ॥ क्रमेणारमतैकत्रयावदन्योन्यमीप्सितम् ॥ ५ ॥ अथतागर्भधारिण्योबभूवुरतितोपिताः ॥ देव्यश्चकृतनृत्यास्ताःसुप्रशांतमथाययुः ॥ ६ ॥ ददुरोदनतांमालामीश्वरायप्रियामुमाम् ॥ भोजनायमहामायादेव्यस्ताःशूलपाणये ॥ ७ ॥ प्रियामेभोजनेदत्तेत्येवंचशशिशेखरः ॥ बुद्ध्वाबभूवरुषितोयदामातृगणंप्रति ॥ ८ ॥ तदातास्तांसमुत्पाद्यस्वांगदानेनवैपुनः ॥ ददुर्भूयोविवाहेनपार्वतीमिंदुमौलये ॥ ९ ॥ ततोदेव्योहरश्चैवपरिवारस्तथैतयोः ॥ सर्वेसंतुष्टमनसःस्वांस्वामुपययुर्दिशम् ॥ १० ॥

ब्राह्म्योब्रह्माणीसंबंधिन्योरथहंस्यःअलंबुसायारथोवाहनभूतश्चंडाख्यःकाकश्चएकत्रस्थितानननृतुः ॥ २ ॥ अब्धितटानांबिलानांतलेसमभूप्रदेशेइतिउद्दीपनविभावोक्तिः ॥ रतिरनुरागः ॥ ३ ॥ मत्तत्वादेवोत्कृष्टजातीनामपिहंसीनांनिकृष्टजातीयेनापिकाकेनसहरतिरनुचितापिसंपन्नेतिसूचनायापिशब्दः ॥ ४ ॥ एकत्रेतिर्वीप्सितम ॥ एकैकस्यांहंस्यांयावदन्योन्यमीप्सितमिच्छापूर्त्तिस्तावदरमतेत्यर्थः ॥ अथकृतोत्सवकृत्यास्तादेव्योमातरश्चस्वमायाचेष्टाविमर्शात्सुप्रशांतमकुर्व्यंतरुद्रंययुः ॥ ६ ॥ अतएवओदनतांयातामुमांतस्मैईश्वरायभोजनायददुः ॥ ७ ॥ यदाशशिशेखरोमेप्रियाभोजनेदत्तेतिबुद्ध्वामातृगणंप्रतिरुषितोबभूवतदातामातरस्तांपार्वतींस्वांगदानेनस्वस्वांगैःशिरआद्येकैकावयवकल्पनेनपुनरुत्पाद्यभूयोविवाहेनपाणिग्रहणविधिनाददुरितिद्वयोरन्वयः ॥ ८ ॥ ९ ॥ एतयोर्देवीहरयोः ॥ मातृणांदेव्यंशत्वेनैकीकारादेकशेषेद्विवचनम ॥ १० ॥

अंतर्वत्न्योगर्भिण्यः ॥११॥ वत्सवत्योगर्भिण्यः ॥१२॥ इतिउक्तातदनुमहायसंचारंविहायनिर्विकल्पाख्येसमाधानेसमाधौ ॥१३॥अजस्यविष्णोर्नाभिसरोजस्यांतेमूलेवैरिंच स्यकमलस्याकरेउत्पत्तिस्थानेविचेरुः ॥१४॥ नाभिकमलस्यपल्लवेकिसलयप्रदेशे ॥१५॥ गर्भाक्रांत्यापरिपक्वगर्भपादविक्षेपेणद्विधाजग्मुःअभिद्यंत ॥ यथासारवत्नसारवंति ॥ व्यत्ययेनैकवचनम् ॥ ब्रह्मांडानिस्वर्णरजतखर्पराभ्यामभिद्यंततद्वत् ॥ १६ ॥ १७ ॥ १८ ॥ ॥ ज्ञातज्ञेयःकथंभवानित्यस्यप्रश्नस्योत्तरंवक्तुमुपक्रमते ॥ मातृभिरितिमातृभिःस हचिरमाराधिताअस्माभिरितिशेषः ॥ १९ ॥ तथाताहृशेनतत्त्वसाक्षात्कारफलेनअनुगृहीताःस्मः ॥ २० ॥ तिष्ठामःस्थास्यामइतिनिश्चित्यपितुःपार्श्वेविंध्यकच्छे ॥ २१ ॥ पू

अंतर्वत्न्योबभूवुस्ताब्राह्म्योहंस्योमुनीश्वर ॥ वृत्तांतंकथयामासुर्ब्राह्म्यादेव्यायथास्थितम् ॥११॥ ॥ब्राह्म्युवाच॥ ॥हेवत्स्यःसांप्रतं वत्सवत्योमेरथकर्मणि ॥ नसमर्थाभवंत्योहिस्वैरंचरतसांप्रतम् ॥ १२ ॥ इतिगर्भालसाहंसीरुक्तादेवीदयापरा ॥ निर्विकल्पसमाधाने ब्राह्मीतस्थौयथासुखम् ॥ १३ ॥ अजनाभिसरोजांतवैरिंचकमलाकरे ॥ गर्भालसाविचेरुस्ताराजहंस्योमुनीश्वर ॥ १४ ॥ एवंविपक्वग र्भास्तानाभीकमलपल्लवे ॥ सुवतेस्मच्छून्यंडान्यथवल्ल्यइवांकुरान् ॥ १५ ॥ तानिकालंसमासाद्यततोंडान्येकविंशतिः ॥ गर्भाक्रांत्याद्वि धाजग्मुर्ब्रह्मांडानीवसारवत् ॥ १६ ॥ अंडेभ्यस्तेभ्यएवंहिजातावयमिमेमुने ॥ भ्रातरश्चंडतनयावायसाएकविंशतिः ॥ १७ ॥ तेसंजा तागताद्वृद्धिंतस्मिन्कमलपल्लवे ॥ संजातपक्षाःसंपन्नागगनोड्डयनेक्षमाः ॥ १८ ॥ मातृभिःसहहंसीभिर्ब्राह्मीभगवतीततः ॥ चिरमारा धितासम्यक्समाधिविरतासती ॥ १९ ॥ प्रसादपरयाकालेभगवत्याततःस्वयम् ॥ तथांगानुगृहीताःस्मोयेनमुक्तावयंस्थिताः ॥ २० ॥ संशांतमनसःशांताएकांतेध्यानसंस्थितौ ॥ तिष्ठामइतिनिश्चित्यपितुःपार्श्वेवयंगताः ॥ २१ ॥ आलिंगितास्ततःपित्रापूजितालंबुसावय म् ॥ तयादृष्टाःप्रसादेनसंस्थितास्तत्रसंयताः ॥ २२ ॥ ॥चंडउवाच॥ ॥पुत्राःकच्चिदपर्यंतवासनातंतुगुंठितात् ॥ भवंतोनिर्गतानूनम स्मात्संसारजालकात् ॥२३॥ नोचेद्वयंभगवतींतदिमांभृत्यवत्सलाम् ॥ प्रार्थयामोयथायूयंभवथज्ञानपारगाः ॥२४॥ ॥काकाऊचुः॥ तातज्ञातमलंज्ञेयंब्राह्म्यादेव्याःप्रसादतः ॥ किंत्वेकांतस्थितेःस्थानमभिवांछामउत्तमम् ॥ २५ ॥ ॥चंडउवाच॥ ॥सर्वरत्नगणाधारः समस्तसुरसंश्रयः ॥ अस्तित्थेवमहोत्सेधोमेरुर्नाममहीधरः ॥ २६ ॥ लसच्चंद्रार्कदीपस्यभूतवृंदकलत्रिणः ॥ ब्रह्मांडमंडपस्यांतस्तंभःक नकनिर्मितः ॥ २७ ॥ सौवर्णचंद्रपीठाढ्योरत्नाढ्यशिखरांगुलिः ॥ ध्वनद्वीपाब्धिवलयोभुवेवोन्नमितोभुजः ॥ २८ ॥

जिताअलंबुसाद्यैः ॥ संयताःविनयादिगुणयंत्रिताः ॥ २२ ॥ संसारलक्षणाज्जालकात्पक्षिबंधनानायान्निर्गताःकच्चिदितीष्टप्रश्ने ॥२३॥ तत्तदर्थम् ॥ भवथभविष्यथ ॥२४॥ एकांतेस्थितेरवस्थानस्ययोग्यंस्थानंनिवासमभिवांछामः ॥ २५ ॥ २६ ॥ मेरुमेववर्णयति ॥ लसदित्यादिना ॥ भूतवृंदैःप्राणिसमूहैःकलत्रिणःकुटुंबिनोब्रह्मांडलक्षणस्यमंडप स्यगृहस्यअंतःस्तंभोमध्यस्तंभः ॥ २७ ॥ सौवर्णेनचंद्राकारेणपीठेनमूलबंधांगसदृशेनकिंपुरुषादिवर्षगणेनआढ्यःसंपन्नःरत्नमयैरंगुलीयकैराढ्याःशिखराण्येवांगुलयोयस्य ध्वनंतोद्वीपाअब्धयश्चवलयायस्य ॥ ईदृशोभुवाउन्नमितऊर्ध्वीकृतोभुजइवस्थितः ॥ २८ ॥

तमेवराजत्वेनवर्णयति ॥ वृतइत्यादिभिः ॥ जंबूद्वीपलक्षणेआसनेसिंहासनेराजाशैलानामितिशेषः ॥ अतएवशैलसंसदिचंद्रार्कलक्षणेनयनेभ्रमयन् ॥२९॥ तारौघाएवमालतीमाल्यानियस्य ॥ दिशएवदशायस्यतथाविधमेकमंबरमाकाशमेवांबरंवस्त्रंयस्य ॥ नागशब्दार्थभूतस्यसर्पगजजातिद्वयस्यआधारः ॥ नाकनायकाइंद्रादयएवभूपणानियस्य ॥ ३० ॥ घनामेघास्तल्लक्षणैर्नीलश्वेतादिचामरैः ॥३१॥३२॥ पूज्यतेसेव्यते ॥ ३३ ॥ ब्रह्मर्पयोदेवर्पयोराजर्पयोदेवाःपितरोगंधर्वाःकिन्नराअप्सरसोविद्याधरायक्षारक्षांसिप्रमथागुह्यकानागाश्चेतिचतुर्दशविधानिभूतान्यतिविस्तीर्णत्वान्मिथोनदृष्टानिपुराणिआस्पदानिस्थानानियथयत्रतद्यथास्यात्तथाउपजीवंति ॥ ३४ ॥ ३५ ॥ शिखरलक्षणेवि

वृतःकुलाद्रिसामंतैर्जंबूद्वीपासनेस्थितः॥ राजाचंद्रार्कनयनेभ्रमयञ्छैलसंसदि॥२९॥ तारौघमालतीमाल्योदिग्दशैकांबरांबरः॥नागजातिद्वयस्यात्मानाकनायकभूपणः॥३०॥ दिगंगनाभिरभितोरम्याभिःपुरभूपणैः॥ एपनिस्यंदिभिःशीतैर्वीजितोघनचामरैः॥३१॥ षोडशास्यसहस्राणियोजनानामधःक्षितौ॥ स्थिताःपादाःप्रपूज्यंतेनागासुरमहोरगैः॥ ३२ ॥ अशीतिश्चसहस्राणिदेहोस्यार्केंदुलोचनः॥ पूज्यतेनाकसदनेसुरगंधर्वकिन्नरैः॥३३॥ चतुर्दशविधान्यनंगृहस्थमिवबांधवाः॥उपजीवंतिभूतानिमिथोदृष्टपुरास्पदम्॥३४॥ अस्यत्वीशानदिग्भागेपद्मरागमयंबृहत्॥ वियतेश्टंगमपरोदिवाकरइवोदितः॥३५॥ अस्यास्तिपृष्ठभूतौघवृतःकल्पतरुर्महान्॥जगतःशिखरादर्शेप्रतिबिंबमिवस्थितः॥ ३६ ॥ तस्यास्तिदक्षिणस्कंधेशाखाकनकपल्लवा॥ रत्नस्तबकनीरंध्राचंद्रबिंबोल्लसत्फला॥ ३७ ॥ तत्रपूर्वंमयानीडंकृतमासीत्स्फुरन्मणि॥ देव्यांध्याननिषण्णायांयस्मिन्किलरमेसुताः॥ ३८ ॥ रत्नपुष्पदलच्छन्नंरसायनफलान्वितम्॥ चिंतामणिशलाकाभिर्विहितालिंदसंस्थिति॥३९॥बुद्धिपूर्वसमाचारैःसंपूर्णंकाकपुत्रकैः॥शीतलाभ्यंतरंत्वग्रंपूरितंकुसुमोत्करैः॥४०॥ तद्गच्छतसुतानीडंदुर्गंनाकवतामपि॥भोगंमोक्षंचतत्रस्थानिर्विघ्नमलमाप्स्यथ॥४१॥ इत्युक्त्वास्मान्पितातत्रचुचुंबाभ्यालिलिंगच॥ददौदेव्यायदानीतमस्मभ्यंचतदामिषम्॥४२॥ तद्भुक्त्वाचरणौदेव्याःपितुश्चैवाभिवाद्यच॥ विंध्यकच्छाद्वयंतस्मात्स्थानादालंबुसात्पुताः॥४३॥ क्रमेणाकाशमुल्लंघ्यनिर्गत्यांबुदकोटरैः॥ पवनस्कंधमासाद्यवंदितव्योमचारिणः॥४४॥

द्रुमादर्शेजगतःप्रतिबिंबमिवस्थितःकल्पतरुः ॥ ३६ ॥ चंद्रबिंबानीवोल्लसंतिफलानियस्याम् ॥ ३७ ॥ स्फुरंतोमणयोयस्मिंस्तथाविधंनीडम् ॥ ३८ ॥ चिंतामणिशलाकाभिर्विहिताअलिंदसंस्थितिर्बहिर्द्वारप्रकोष्ठरचनायस्मिन् ॥ ३९ ॥ बुद्धिपूर्वसमाचारैर्विचारपूर्वव्यवहारशीलैः ॥४०॥ नाकवतांदेवानामपिदुर्गम् ॥ ४१ ॥ आमिषंमांसम् ॥४२॥ आलंबुसादलंबुसानिवासात् ॥ ४३ ॥ वंदिताव्योमचारिणोदेवाद्यैः ॥ ४४ ॥

---

१ नागजातिद्वयस्यस्थाःस्थितिर्यस्मिन्नेवंविधआत्मास्वरूपंयस्यतिसमासेफलितोयमर्थः ॥ स्थाइत्यत्रभावेक्विप्

अस्माल्लोकाल्लोकांतरंस्वर्गस्तत्पुरममरावतीम ॥ ४५॥ तत्रब्रह्मलोके ॥४६॥ गच्छतेतिआज्ञयाआज्ञादानेनाशिषाचएधितावर्धिताः ॥४७॥ तपनवद्भास्वराः ॥४८॥ मौनंयथा स्यात्तथाअवस्थिताःसदासमाधिपराइतियावत् ॥ ४९ ॥ उक्तमुपसंहरति ॥ जाताइति ॥ हेमहानुभाववयंजाताः ॥ यथाचयथावद्बोधंसंप्राप्यस्थितिमेतत्स्थाननिवासमाग ताश्चेत्येतत्प्रश्नत्रयोत्तरंसर्वमविखंडंयथास्यात्तथातेतुभ्यमुक्तम ॥ अतःपरंशेषेणावशिष्टेनकियदायुश्चतेसाधोवृत्तंस्मरसिंकिंचवेतिप्रश्नद्वयोत्तरेणान्येनवक्तव्यनिमित्तेनमांसम्य गनुशाधिआज्ञापयतदपितुभ्यंवदिष्यामीत्यर्थः ॥ ५० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०एकोनविंशतितमःसर्गः ॥ १९॥ ॥ ७ ॥ ॥ प्रतिकल्पं जगत्साम्यंभ्रातृणांनिधनंतथा ॥ प्रलयेपिभुशुंडोत्रस्वचित्तस्थैर्यमुक्तवान् ॥ १॥ तत्रवृत्तंस्मरसिंकिंचवेतिप्रश्नस्यविस्तरेणोत्तरंवक्तुकामोवक्ष्यमाणवहुकल्पस्वजीवनोक्तेरिमंक

परिहृत्यदिनाधीशंलोकांतरपुरंगताः॥ स्वर्गमुल्लंघ्ययाताःस्मोब्रह्मलोकंमुनीश्वर॥ ४५॥ प्रणामपूर्वंतत्रैतद्यथावत्तत्पितुर्वचः॥ मात्रेच भगवत्यैचब्राह्म्यैचाशुनिवेदितम्॥४६॥ ताभ्यांसस्नेहमालिंग्यगच्छतेत्याज्ञयैधिताः॥ वयंकृतनमस्काराब्रह्मलोकाद्विनिर्गताः॥४७॥ उल्लंघ्यलोकपालानांपुरीस्तपनभास्वराः॥ आकाशगामिनोलोलाःपवनस्कंधचारिणः॥ ४८॥ इमंकल्पतरुंप्राप्यनिजंनीडंप्रविश्यच॥ दूरस्थबाधास्तिष्ठामोमुनेमौनमवस्थिताः॥ ४९॥ जातायथावयमिमेस्थितिमागताश्चसंप्राप्यबोधमुपशांतधियोयथावत्॥ एतत्तदु क्तमविखंडमलंमयातेशेषेणमांसमनुशाधिमहानुभाव॥५०॥ ॥इ०वा०वा०दे०मो०नि०पू०भु०आलयलाभोनामएकोनविंशति तमःसर्गः॥ १९॥ ॥ ७॥ ॥भुशुंडउवाच॥ ॥आसीत्किंचित्पुराकल्पेजगद्यच्चिरमास्थितम्॥ सन्निवेशेनचैतद्वद्द्यापिचन दूरगम्॥ १ ॥ तदेतद्वृत्तमभ्यासाद्वर्तमानेनवर्णितम्॥ मयामुनींद्रबोधायप्राग्जन्मसाम्यदर्शिना॥ २॥ अद्यमेफलितंपुण्यैश्चिरकालो पसंभृतैः॥ निर्विघ्नमेवपश्यामियद्भवंतंमुनेततः॥ ३॥ इदंनीडमिमांशाखामहंचायमयंद्रुमः॥ अद्यपावनतांप्राप्तान्येतानितवदर्शनात् ॥ ४॥ इदमर्घ्यमिदंपाद्यंगृहीत्वाविहगार्पितम्॥ नूनंपावनतांनीत्वाशेषेणादिशचाशुभोः॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥इदमर्घ्यंचपा द्यंचभूयादत्तवतिस्वयम्॥ भुशुंडविहगेतस्मिन्निदंरामाहमुक्तवान्॥ ६॥

ल्पतरुंप्राप्यनिजंनीडंप्रविश्यचेत्याद्युक्तेश्चपूर्वोत्तरविरोधाशंकामाभूदितिकल्पवृक्षमेर्वादीनांप्रतिकल्पंसंस्थानसाम्यादैक्यवादइत्याशयंदर्शयति ॥ आसीदित्यादिना ॥ पुरा अस्मज्जन्महेतौकल्पेयत्किंचिज्जगत्पदार्थवृंदंचिरमास्थितंतत्सन्निवेशेनअवयवसंस्थानाकृत्यादिनाएतद्वत्एतत्कल्पीयपदार्थवदेवआसीत् ॥ अतस्तदद्यापिनदूरगंअभेदारोपा त्सन्निहितमेवेतिवुद्ध्याइमंकल्पतरुमित्यादिनिर्देशइत्यर्थः ॥ १ ॥ तत्तस्माद्वृत्तमतीतमपिजगद्भ्रांत्यभ्यासाद्वर्तमानेनजगताऐक्येनवर्णितम ॥ २ ॥ तत्रदीर्घकथाप्रस्तावेपूजावि लंवोमाभूदितिप्रथमंपूजास्वीकारंप्रार्थयितुंस्तुत्याअभिमुखीकरोति ॥ अद्येतिद्वाभ्याम ॥ ३ ॥ इमांशाखामनुगतमिदंनीडम ॥ एतानीतिनपुंसकमनपुंसकेनेतिनपुंकैकशेषः ॥ ॥ ४ ॥ शेषेणावशिष्टसेवाविपर्ययेणनिमित्तेनआदिशप्रश्नान्वक्तुमित्यर्थः ॥ ५ ॥ भूयःद्वितीयवारम् ॥ उक्तवान्पृष्टवान् ॥ ६ ॥

॥ ७ ॥ ८ ॥ तनूःशरीराणि ॥ ९ ॥ अकलितात्मनाअलक्षितस्वरूपेण ॥ १० ॥ स्कंधेपुमालेवव्यूढाअर्कांद्वादशादित्याःशशिनश्चयैस्तथाविधेपुवातस्कंधप्रवहादिमरुदति कामिपुप्रलयवायुभेदेपु ॥ ११ ॥ १२ ॥ पाषाणवद्घनीकृतानिवारीणियैस्तथाविधैरिंदोःकरैरासन्नप्रलयांबुदकरकापातैश्च ॥ १३ ॥ इहमेरुशिखरेविश्रांतैःपरशूनपिच्छिदंति क्षतधारान्कुर्वंतिशिलीभूतानीहारायेभ्यस्तैः ॥ १४ ॥ १५ ॥ कृच्छ्रकालेपुमहतामपिखेदःसंभावितःकिंपुनर्विहगाधमयोनिजातस्यममतथापिविवेकप्रभावान्नखेदप्रसक्तिरि तिवक्तुंस्वयोनिर्जीविकायाइतरजीविकापेक्षयाफल्गुतामाह ॥ निरालंबेति ॥ निरालंबआकाशस्तदास्पदा ॥ १६ ॥ ईदृशेपुफल्गुष्वपिभूतेपुयोनिपु ॥ धात्राआस्थयाप्रीत्या

भ्रातरस्तेविहंगेशताद्दक्सत्वामहाधियः॥ इहकस्मान्नदृश्यंतेत्वमेवैकोहिदृश्यसे॥ ७॥ ॥ भुशुंडउवाच॥ ॥ तिष्ठतामिहनःकालोमहा नतिगतोमुने॥ युगानांपंक्तयःक्षीणादिवसानामिवानघ॥ ८॥ एतावताथकालेनसर्वएवममानुजाः॥ तनूस्तृणमिवत्यक्त्वाशिवेपरि णताःपदे॥ ९॥ दीर्घायुषोमहांतोपिसंतोपिबलिनोपिच॥ सर्वएवनिगीर्यंतेकालेनाकलितात्मना॥ १०॥ ॥ श्रीवसिष्ठउवाच॥ ॥ स्कंधव्यूढार्कशशिषुवहत्स्वविरतंजवात्॥ वातस्कंधातिवातेपुकच्चित्तातनखिद्यसे॥ ११॥ दग्धोदयास्तशैलेंद्रवनव्यूहैरवेःकरैः॥ चिरम त्यंतमासन्नैःकच्चित्तातनखिद्यसे॥ १२॥ इंदोरश्मकरैःशीतैःपाषाणीकृतवारिभिः॥ आसन्नकरकापातैःकच्चित्तातनखिद्यसे॥ १३॥ अज स्रमिहविश्रांतैःकल्पजीमूतमंडलैः॥ परशुच्छेदनीहारैःकच्चित्तातनखिद्यसे॥ १४॥ विषमैर्जागतैःक्षोभैरुच्चैस्तरपदस्थितः॥ कथंनक्षो भमायातिकल्पवृक्षोयमुन्नतः॥ १५॥ ॥ भुशुंडउवाच॥ ॥ निरालंबास्पदाब्रह्मन्सर्वलोकावहेलिता॥ तुच्छेयंसर्वभूतानांमध्येविहग जीविका॥ १६॥ ईदृशेषुचभूतेपुनिर्जरेपुवनेपुच॥ कल्पितास्यास्थितिर्धात्राशून्येवाव्योमवर्त्मनि॥ १७॥ कथमस्यांप्रभोजातोजात स्यचिरजीविनः॥ आशापाशनिबद्धस्यविहगस्यविशोकिता॥ १८॥ वयंतुभगवन्नित्यमात्मसंतोषमास्थिताः॥ नकदाचनर्नीरूपंमु त्वामोजातविभ्रमैः॥ १९॥ स्वभावमात्रसंतुष्टाःकष्टैर्मुक्ताविचेष्टितैः॥ क्षिपामःकेवलंकालमस्मिन्ब्रह्मन्निजालये॥ २०॥ नजीविता न्नमरणात्कर्मदेहस्यरोधनम्॥ यथास्थितेननिष्ठामस्तथैवास्तंगतेहिताः॥ २१॥ आलोकितालोकदशादृष्टादृष्टांतदृष्टयः॥ नूनंसंत्यक्तम स्माकंमनसाचंचलंवपुः॥ २२॥ अनारतनिजालोकेनित्यंचापरितापिनि॥ कल्पागस्योपरिसदावेद्मिकालकलागतिम्॥ २३॥

स्थितिर्जीविकाकल्पिनातच्चित्रमित्यर्थः ॥ इवार्थेवाशब्दः ॥ १७ ॥ १८ ॥ नीरूपेनिःस्वरूपे ॥ १९ ॥ कष्टैःक्लेशफलैःपरपीडादिविचेष्टितैर्मुक्ताः ॥ २० ॥ जीविताज्जीवनात् देहस्यकर्मऐहिकामुष्मिकफलार्थांक्रियाम् ॥ नापिमरणाद्देहस्यरोधनंनाशंवांछामेत्युभयत्रशेषः ॥ यथाइदानींस्थितेननित्यसिद्धनिरतिशयानंदात्मस्वभावेननिष्ठामस्तथैवाबा पितेनैवास्तंगतेहिताःपूर्णकामाःस्थास्यामइत्यर्थः ॥ २१ ॥ लोकानांदशाजन्ममरणाद्यनर्थदशा ॥ मिथ्यात्वनिर्णायिकाःस्वमादिदृष्टांतदृष्टयोदृष्टाः ॥ २२ ॥ तत्रतावत्कल्पां तपर्यंतंकल्पवृक्षप्रभावादेवनास्माकंखेदप्रसक्तिरित्याह ॥ आनारतेत्यादिना ॥ कल्पागस्यकल्पवृक्षस्य ॥ २३ ॥

१ जीर्णपुस्तकेनिर्जनेष्वित्यपिपाठोदृश्यतेअयमेवयुक्तइतिभाति

प्रकाशबहुलत्वादविज्ञेयदिनरात्रिविभागेत्रकथंकालकलागतिर्वेत्सितत्राह ॥ रत्नेति ॥ प्राणापानप्रवाहेणस्वरोदयशास्त्रप्रसिद्धोपायेनेत्यर्थः ॥ २४ ॥ २५ ॥ मनःस्थैर्यवलादपिनमेखेदप्रसक्तिरित्याशयेनाह ॥ सारेति ॥ २६ ॥ उद्गारध्वनिप्रायैरल्पध्वनिभिःप्राकृतोभूकाकइवनाहंवैवश्यंभयंव्रजामि ॥ २७॥ धीरत्वादपिनास्माकंखेदप्रसक्तिरित्याह॥ परेति ॥ २८ ॥ दशाक्रममनुसृत्यभीमास्वपिदशासुसंप्राप्तासुविनिर्मलोपलःस्फटिकादिस्तदाकारास्तत्सदृशाः ॥ २९ ॥ जगत्तत्त्वस्यभूयोविमर्शवलादपिनखेदप्रसक्तिरित्याह॥ इयमिति ॥३०॥ जातस्यहिध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यचेतिभगवद्दर्शितदिशासर्वसाधारणेदुःखेअपरिहार्यतानिश्चयाद्वानभयप्रसक्तिरित्याह ॥ सर्वाणीति ॥ वाअथवानवाप्रयां

रत्नगुच्छप्रकाशाढ्येब्रह्मन्कल्पलतागृहे ॥ प्राणापानप्रवाहेणवेद्मिकल्पमखंडितम्॥ २४॥ अविज्ञातदिवारात्रौत्यस्मिन्नुच्चैःशिलोच्चये॥ जानामिनिजयाबुद्ध्यालोककालक्रमस्थितिम्॥२५॥ सारासारपरिच्छेदिबोधाद्विश्रांतिमागतम्॥ निरस्तचापलंशांतंसुस्थिरंमेमुनेमनः॥ २६॥ संसारव्यवहारोत्थैराशापाशैरसन्मयैः॥ उद्गारैरिवभूकाकोनवैवश्यंव्रजाम्यहम्॥ २७॥ परोपशमधर्मिण्यावयमालोकशीतया॥ पश्यंतोजागतींमायांधियाधैर्यमुपागताः॥ २८॥ भीमास्वपिमहाबुद्धेदशास्वचलबुद्धयः॥ विनिर्मलोपलाकाराःसंप्राप्तासुयथाक्रमम्॥ २९॥ इयमारंभसुभगातरलाजागतीस्थितिः॥ भूयोभूयःपरामृष्टानचकिंचनबाधते॥ ३०॥ सर्वाण्येवप्रयांत्येवसमायांतिचवानवा॥ भगवन्भूतजालानिभयमस्माकमत्रकिम्॥३१॥ भूतजालतरंगिण्याविशंत्याःकालसागरे॥ वयंसंसारसरितस्तटस्थाअप्यनादृताः॥ ३२॥ नाज्ञ्झामोनचगृह्णीमस्तिष्ठामोनेहचस्थिताः॥ मृदुपादादृशाक्रूरावयमस्मिन्द्रुमेस्थिताः॥ ३३॥ वीतशोकभयायासैस्त्वादृशैःपुरुषोत्तमैः॥ तुष्टैरनुगृहीताःस्मःसंस्थिताविगतामयाः॥ ३४॥ ततस्ततश्चपर्यस्तंलुठितंनचवृत्तिषु॥ नापरामृष्टतत्त्वार्थमस्माकंभगवन्मनः॥ ३५॥ निर्विकारंगतक्षोभंचात्मन्युपशमंगते॥ चित्तरंगाःप्रबुद्धास्मःपर्वणीवमहाब्धयः॥ ३६॥ भवदागमनाद्ब्रह्मन्निदानींमुदिताशयाः॥ मंदरोद्धूतसर्वांगःक्षीरोदोयेनतन्यते॥ ३७॥ नातःपरतरंकिंचिन्मन्येकुशलमात्मनः॥ संतोयदनुगम्यंतेसंत्यक्तसकलैषणाः॥ ३८॥

तिनवासमायांतिपरमार्थदृशेत्यर्थः ॥३१॥तत्त्वज्ञस्यस्वस्यतटस्थतयासर्वभूतसंसारद्रष्टृत्वात्तत्रादराभावाच्चनभयप्रसक्तिरित्याह ॥ भूतेति ॥३२॥ व्यवहारमात्रसिद्धयेसकंटकभुवीवसावधानतयासंसारेक्रमणान्मृदुपादाः ॥ तत्त्वदृशासंसारोच्छेदित्वात्क्रूराः ॥ ३३ ॥ महतामनुग्रहादपिननःखेदप्रसक्तिरित्याह ॥ वीतेति ॥ ३४ ॥ व्यवहारमात्रसिद्धयेततस्ततःपर्यस्तमपिरागादिवृत्तिपुनलुठितम् ॥ ३५ ॥ चितःसर्वतोब्रह्माकारवृत्तिचंद्रोदयोद्रिक्तबोधाएवतरंगायेषांतथाविधाःसंतः ॥ पर्वणिमहाब्धयइवप्रबुद्धाःस्मः ॥ ३६ ॥ तादृशावयंइदानींभवदागमनाद्धेतोः ॥ येनोद्देशेनक्षीरोदःक्षीरसागरोमंदरोद्धूतसर्वांगोनिर्मथ्यमानस्तन्यतेतेनामृतेनमुदिताशयाःसंपन्नाइत्यर्थः ॥ खन्यतेइतिपाठेप्यवदार्यतेमथ्यतइत्येवार्थः ॥ ३७ ॥ ३८ ॥

सर्वसारं ज्ञानम् ॥ ३९ ॥ ४० ॥ भवदवलोकनेनशांतदुष्कृतंदुष्टप्रारब्धंयस्यतथाविधस्यममजन्मअद्यसफलंनिरतिशयानंदफलयुक्तमभूदित्यर्थः ॥ ४१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० विंशतितमःसर्गः ॥ २० ॥ ॥ ५ ॥ ॥ कल्पवृक्षस्यमाहात्म्यंप्रलयेधारणास्थितिः ॥ नियतिर्भूरिचित्रार्थस्तुतिश्चात्रोपवर्ण्यते ॥१॥ स्वाश्रयकल्पवृक्षमाहात्म्योपवर्णनेयुगांतोत्पातादिषुस्वस्यखेदाप्रसक्तिप्रपंचनमुखेनवृत्तंस्मरसिकिंचवेतिप्रश्नोतरंवक्तुमुपक्रमते ॥ युगक्षोभेष्वित्यादिना ॥ १ ॥ २ ॥ यद्यपिधरयासहकल्पवृक्षस्यापिहरणंविद्यतएवतथापिदिव्यप्रभावबलान्नाकंपतेत्याशयः ॥ ३ ॥ सर्वतोदत्ताःसाम्यायस्तंभोपष्टंभशिलावदद्रयोयस्यतथाविधोऽमरपर्वतः ॥ अर्थाद्वरा

आपातमात्ररम्येभ्योभोगेभ्यःकिमवाप्यते ॥ सत्संगचिंतामणितःसर्वसारमवाप्यते ॥ ३९ ॥ स्निग्धगंभीरमसृणमधुरोदारधीरवाक् ॥ त्रैलोक्यपद्मकोशेऽस्मिंस्त्वमेकःषट्पदायसे ॥ ४० ॥ अधिगतपरमात्मनोपिमन्येभवदवलोकनशांतदुष्कृतस्य ॥ ममसफलमिहाग्रजन्मसाधोसकलभयापहरोहिसाधुसंगः ॥ ४१ ॥ ॥ इत्यार्षेवा० वा० दे० मोक्षोपायेपुनिर्वा० पू० भु० भुशुंडस्वरूपनिरूपणंनामविंशतितमःसर्गः ॥ २० ॥ ॥ ५ ॥ ॥ भुशुंडउवाच ॥ ॥ युगक्षोभेषुघोरेषुवात्यासुविषमासुच ॥ सुस्थिरःकल्पवृक्षोयंनकदाचनकंपते ॥ १ ॥ अगम्योयंसमग्राणांलोकांतरविहारिणाम् ॥ भूतानांतेनतिष्ठामइहसाधोसुखेनवै ॥ २ ॥ हिरण्याक्षोधरापीठंद्वीपसप्तकवेष्टितम् ॥ यदाजहारतरसानाकंपततदातरुः ॥ ३ ॥ यदालोलायितवपुर्बभूवामरपर्वतः ॥ सर्वतोदत्तसाम्याद्रिस्तदानाकंपतद्रुमः ॥ ४ ॥ भुजावष्टंभविनमन्मेरुर्नारायणोयदा ॥ मंदरंप्रोद्दधाराद्रिंतदानाकंपतद्रुमः ॥ ५ ॥ यदासुरासुरक्षोभपतच्चंद्रार्कमंडलम् ॥ आसीज्जगदतिक्षुब्धंतदानाकंपतद्रुमः ॥ ६ ॥ उन्मूलिताद्रींद्रशिलायदोत्पातानिलाववुः ॥ आधूतमेरुतरवस्तदानाकंपतद्रुमः ॥ ७ ॥ यदाक्षीरोदलोलाद्रिकंदरानिलकंपिताः ॥ कल्पाभ्रपंक्तयश्चेरुस्तदानाकंपतद्रुमः ॥ ८ ॥ यदासमंततोमेरुःकालनेमिभुजांतरे ॥ किंचिदुन्मूलितोतिष्ठत्तदानाकंपतद्रुमः ॥ ९ ॥ पक्षीशपक्षपवनाअमृताक्रांतिसंगरे ॥ यदाववुःपतत्सिद्धास्तदायंनापतद्रुमः ॥ १० ॥ यदाशेषाकृतिंरुद्रोनसमाप्तैकचेष्टिताम् ॥ ययौगरुत्मान्ब्रह्मांडंतदानाकंपतद्रुमः ॥ ११ ॥

हेणपुनर्भूमिप्रतिष्ठापनदशायामितिगम्यते ॥ ४ ॥ भुजेति ॥ अत्रापिचतुर्भुजोद्वाभ्यांभुजाभ्यांमेरुमवष्टभ्येतराभ्यांमंदरंप्रोद्दधारेतिगम्यते ॥ ५ ॥ सुरासुरयोःक्षोभस्तीव्रसंग्रामस्तेनपतच्चंद्रार्कमंडलम् ॥६॥७॥ क्षीराब्धौलोलस्यमंदराद्रेःकंदरानिलैरिवकंपिताः ॥ ८ ॥ कालनेमिभुजांतरेप्रकंपितस्तारकामयेसंग्रामेप्रसिद्धः ॥ ९ ॥ अमृताक्रांतिरमृताहरणंतदर्थेसंगरे ॥ पततःसिद्धायेभ्यः ॥ १० ॥ गरुडस्यजातमात्रस्यसर्वेलोकाःप्रकंपिताः प्रकंपितामहीसर्वासमद्रीपाश्चकंपिताः तदुत्पातान्निमज्जंतींभुवंनावमिवांभसि दधौसहस्रैःशिरसांसंकर्षणवपुर्हरइतिकथामनुसृत्याह ॥ यदेति ॥ रुद्रःसंकर्षणरुद्रः ॥ अद्यापिनससमाप्तंएकंभूमिधारणलक्षणंचेष्टितंचरित्रंयस्यास्तथाविधांशेषाकृतियदाययौ यदाचोत्प्लुत्यगरुत्मान्ब्रह्मांडंययौतदापिनाकंपतेत्यर्थः ॥ ११ ॥

शैलानामब्धीनांसकलानांप्राणिनांचोल्बणाडुःसहाःकल्पानलशिखाःफणाभिर्मुखैस्त्यत्याजउज्जगार ॥ संकर्षणमुखाग्निनैवांतेप्रलयस्यपुराणेषुप्रसिद्धेः ॥ १२ ॥ दौःस्थित्ये नदुष्टस्थाननिवासेन ॥ १३ ॥ इंदौभेषुनक्षत्रेष्वर्केषुचप्रपतत्सु ॥ तथाचतदानींप्रलयेभूलोकांतस्यदाहान्मेरुकल्पवृक्षादिभिस्त्राणप्रत्याशेतिभावः ॥ १४ ॥ कल्पांतेसहस्रम हायुगपर्यंते ॥ १५ ॥ स्तब्धप्रकृतीनिनिश्चलस्वभावानिसर्वांगानियस्य ॥ १६ ॥ सामान्यतउक्तामाकाशेस्थितिंधारणाभेदैर्विशिष्यप्रपंचयति ॥ प्रतपंतीति ॥ अत्यंतशीतल सर्वदिग्मंडलव्याप्यपरिच्छेद्यजलात्मावरुणएवाहमस्मीतिचित्तेनिरंतरंधारणंवारुणीधारणेत्युच्यते ॥ तयाहिवरुणमात्मानंसदामन्यतइति ॥ पार्वत्यादिधारणाअप्येवमेवोह्याः ॥ पृथिव्यादिपंचभूतधारणाप्रकारंवसिष्ठःस्वयमेवोत्तरार्धेविस्तरेणवक्ष्यति ॥ १७ ॥ अचलमितिक्रियाविशेषणम् ॥ १८ ॥ चलेवायावेवात्मधीर्यस्यतथाविधस्सन्नूनभसिसंप्लु

यदाकल्पानलशिखाःशैलाब्धिसकलोल्बणः ॥ शेषःफणाभिस्त्यत्याजतदानाकंपतद्रुमः ॥ १२ ॥ एवंरूपेद्रुमवरेतिष्ठतामापदःकुतः ॥ अस्माकंमुनिशार्दूलदौःस्थित्येनकिलापदः ॥ १३ ॥ ॥श्रीवसिष्ठउवाच॥ ॥कल्पांतेषुमहाबुद्धेवहत्सूत्पातवायुषु॥ प्रपतत्स्विंदुभार्केषुकथंतिष्ठसिविज्वरः॥ १४॥ ॥श्रीभुशुंडउवाच ॥ ॥ यदापपातकल्पांतेव्यवहारोजगत्स्थितौ॥ कृतघ्नइवसन्मित्रंतदानीडंत्यजाम्यहम्॥ १५॥ आकाशएवतिष्ठामिविगताखिलकल्पनः॥ स्तब्धप्रकृतिसर्वांगोमनोनिर्वासनंयथा ॥ १६॥ प्रतपंतियदादित्याःशकलीकृतभूधराः॥ वारुणींधारणांबध्वातदातिष्ठामिधीरधीः॥१७॥ यदाशकलिताद्रींद्रावांतिप्रलयवायवः॥पार्वतींधारणांबध्वाखेतिष्ठाम्यचलंतदा॥१८॥ जगद्गलितमेर्वादियात्येकार्णवतांयदा॥ वायवींधारणांबध्वासंप्लुवेऽचलधीस्तदा॥१९॥ब्रह्मांडपारमासाद्यतत्त्वांतेविमलेपदे॥ सुषुप्तावस्थयातावत्तिष्ठाम्यचलरूपया॥ २०॥ यावत्पुनःकमलजःसृष्टिकर्मणितिष्ठति ॥ तत्रप्रविश्यब्रह्मांडंतिष्ठामिविहगालये॥२१॥ ॥श्रीवसिष्ठउवाच॥ ॥यथातिष्ठसिपक्षींद्रधारणाभिरखंडितः॥ कल्पांतेषुतथाकस्मान्नान्येतिष्ठंतियोगिनः॥२२॥ ॥भुशुंडउवाच॥ ॥ब्रह्मन्नियतिरेषाहिदुर्लंघ्यापारमेश्वरी॥ मयेदृशेनवैभाव्यंभाव्यमन्यैस्तुतादृशैः॥२३॥ नशक्यतेतोलयितुमवश्यंभवितव्यता॥ यद्यथातत्तथैतद्धिस्वभावस्यैषनिश्चयः ॥ २४॥

वे ॥ १९ ॥ कियत्कालंतथासंप्लवसेतत्राह ॥ ब्रह्मांडेति ॥ ब्रह्मांडस्यस्थूलसूक्ष्मसमष्टेःपारंपरमावधिभूतमव्याकृतमासाद्यतत्त्वानांचतुर्विंशतीनांषड्विंशतीनांषट्त्रिंशतांवानादिप्राणांतानांवाअंतेभूमाख्येपदेसुषुप्तवदेकरसनिर्विकल्पसमाध्यवस्थया ॥ २० ॥ कियत्कालंतादृशसमाधौस्थितिरितिचेत्तत्राह ॥ यावदिति ॥ तत्रपुनःसृष्टिकर्मणिविहगानामस्माकमालयेएतत्कल्पवृक्षस्थानापन्नेतिष्ठामि ॥ २१ ॥ अन्येपियोगिनस्तथाकस्मान्नतिष्ठंतिकिमर्थमाधिकारिकशरीरांतरंमुक्तिंवागच्छंतितेनैवशरीरेणत्वामिवकुतोनतिष्ठंतीत्यर्थः ॥ २२ ॥ अत्रतत्तत्प्रबलप्रारब्धानुसारिणीसत्यसंकल्परूपाईश्वरनियतिरेवव्यवस्थाहेतुर्नान्येत्याह ॥ ब्रह्मन्निति ॥ २३ ॥ तोलयितुंइदमित्थमेवेतिबुद्ध्यापरिच्छेत्तुम् ॥ यथायादृशप्रारब्धोपनतंतत्तथैव ॥ स्वभावस्यनियतेः ॥ २४ ॥

प्रतिकल्पमेतत्तरुनिर्माणेपिभोजकादृष्टमूलभूतमत्संकल्पएवनिमित्तमित्याह ॥ मदिति ॥ २५ ॥ मोक्षइवदीर्घमपरिच्छेद्यमायुर्यस्यमोक्षेणजीवन्मुक्त्यावाउपलक्षितंदीर्घमायुर्यस्य अतएवचिरंतनार्थानांनिर्देशविषयेनायकःश्रेष्ठः ॥ २६ ॥ दृष्टाःप्रत्येकमनेकविधाअनल्पावहवःसर्गाणांसंगास्थितयोगमाःप्रलयाआगमाउत्पत्तयश्चयेन ॥ अत्रास्मिंस्त्वदृष्टेजगत्क्रमेचित्रमाश्चर्यभूतंकिंकिंस्मरसितद्वदेत्यर्थः ॥ २७ ॥ हेबृहत्तर ॥ मेरोरधः ॥ २८ ॥ २९ ॥ दिवाधीशःसूर्यःमेरुप्रभाभिरविभक्तःअपृथग्भूतःपृथगसन्निति यावत् ॥ दिवालोकोदिनहेतुःप्रकाशः॥३०॥ अर्धप्रकटंसप्रकाशंकोटरंयस्य अतएवलोकालोकमिवस्थितम् ॥ आढ्याःक्वचित्प्रकाशसंपन्नाअद्रयोयस्मिंस्तथाविधंभुवनम्॥३१॥

मत्संकल्पवशेनैवकल्पेकल्पेपुनःपुनः॥ अस्मिन्नेवगिरेःशृंगेतरुरित्थंभवत्ययम्॥ २५॥ ॥श्रीवसिष्ठउवाच॥ ॥अत्यंतमोक्षदीर्घायुर्भवान्निर्देशनायकः॥ ज्ञानविज्ञानवान्धीरोयोगयोग्यमनोगतिः॥२६॥ दृष्टानेकविधानल्पसर्गसंगगमागमः ॥ किंकिंस्मरसिकल्याणचित्रमस्मिञ्जगत्क्रमे ॥ २७॥ ॥भुशुंडउवाच॥ ॥बृहत्तराशिलावृक्षामजाततृणवीरुधम्॥ अशैलवनवृक्षौघांस्मरामीमांधरामधः॥ २८॥ दशवर्षसहस्राणिदशवर्षशतानिच ॥भस्मसारभरापूर्णांसंस्मरामिधरामधः॥ २९ ॥ अनुत्पन्नदिवाधीशामज्ञातशशिमंडलाम्॥ अविभक्तदिवालोकांसंस्मरामिधरामधः॥ ३०॥ मेरुरत्नतलोद्योतैरर्धप्रकटकोटरम् ॥ लोकालोकमिवाढ्याद्रिभुवनंसंस्मराम्यहम्॥ ३१॥ प्रवृद्धासुरसंग्रामेक्षीयमाणांतरामिह॥पलायमानामभितःसंस्मरामिधरामिमाम् ॥ ३२ ॥ चतुर्युगानिचाक्रांतामसुरैर्मत्तकाशिभिः ॥ दैत्यांतःपुरतांप्राप्तांसंस्मरामिधरामिमाम् ॥ ३३ ॥ अत्यंतांतरितांतांतसमस्तापरमंडलाम् ॥ अजदेवत्रयीशेषांसंस्मरामिजगत्कुटीम्॥ ३४॥ चतुर्युगार्धमपरंनीरंध्रांवनपादपैः॥अदृष्टेतरनिर्माणांसंस्मरामिधरामिमाम्॥ ३५॥एवंचतुर्युगंसाग्रंनीरंध्रैरचलैर्वृताम्॥ अप्रवृत्तजनाचारांसंस्मरामिधरामिमाम॥ ३६ ॥दशवर्षसहस्राणिमृतदैत्यास्थिपर्वतैः॥ आकीर्णापरितःपूर्णांसंस्मरामिधरामिमाम्॥ ३७॥ भयादंतर्हिताशेषवैमानिकनभश्चराम्॥ द्यांचनिर्वृक्षनिःशेषांसंस्मरामितमोमयीम्॥ ३८ ॥ अनगस्यामगस्त्याशामेकपर्वततांगताम्॥ मत्तविंध्यमहाशैलेसंस्मरामिजगत्कुटीम्॥ ३९॥

पलायमानांलक्षणयापलायमानजनाकीर्णाम् ॥ ३२ ॥ चतुर्युगानीतिकालवाचित्वादत्यंतसंयोगेद्वितीया ॥३३॥ अत्यंतमंतरितानिसमुद्रेणाच्छादितान्यंतानिक्रमेणसमस्तान्यपरमंडलानिमेर्वतिरिक्तदेशायस्याम् ॥ मेरौत्रअजाब्रह्मविष्णुरुद्राख्यादेवत्रयीशिष्यतइतिशेषोयस्याम् ॥ ३४ ॥ चतुर्युगानामर्धयुगद्वयपर्यंतंनदृष्टंवृक्षेतरनिर्माणंयस्याम ॥ ३५ ॥ सापंचतुर्थांशाधिकंचतुर्युगंनीरंध्रैर्निबिडैरचलैःपर्वतैर्वृताम् ॥ पृथुचक्रवर्तिनाहिधनुष्कोट्यापर्वतानुत्सार्यपश्चाद्भूमिःसमीकृतेतिपुराणेषुप्रसिद्धम् ॥ ३६ ॥ ३७ ॥ द्यांअंतरिक्षादिलोकान्चकाराद्धरांचनिर्वृक्षनिःशेषाम् ॥ निर्ऋक्षेतिपाठेदिवएवविशेषणम् ॥ ऋक्षाणिताराः ॥ तमोमयींतमःप्रचुरामित्यप्युभयविशेषणम् ॥ ३८ ॥ मलयदर्दुरसह्यादिविभाजकाभावादेकपर्वततांगताम् ॥ मत्तेमेरुस्पर्धयाअभिवृद्धेसति ॥ ३९ ॥

॥ ४० ॥ संरंभैः प्रभावातिशयैर्बहुलान् ॥ ४१ ॥ आश्चर्यांतरमाह ॥ एकमेवेति ॥ यदाविराड्ब्रह्मांडशरीरउत्पन्नमात्रःस्वात्मतत्त्वंपर्यालोचयितुंकंचित्कालंसमाहितचित्तोभू त्तावस्थात्रोच्यते ॥ पुरुषैःसुरादिभिरसुरैश्चवर्जितम् ॥ आलोकानांप्रकाशस्वभावानांतैजसानामेकंनिचयंसमष्टिंचतदात्मकंब्रह्मांडम् ॥ ४२॥ कलियुगसर्गस्थितिंस्मरन्नाह ॥ सुरापेति ॥ सुरापाब्राह्मणायस्मिन् ॥ निषिद्धानिंदिताःसुरादेवायैस्तथाविधाःशूद्रकाअसच्छूद्रायस्मिन् ॥ बहुनाथाअनेकभर्तृकाःसत्यःस्त्रियोयस्मिन् ॥ ४३ ॥ आश्चर्यांतरमाह ॥ वृक्षेति ॥ समुद्रनिर्मातुःप्रियव्रतस्योत्पत्तेःप्रागवस्थायामिदंप्रसिद्धम् ॥ स्त्रीपुंससंगंविनामानस्यास्त्रष्टुःस्वयमेवसंजाताभृग्वादिपुरुषायस्मिन् ॥४४ ॥ भुविजलेमग्नायांजन लोकादिप्रकाशवहललोकव्यवहारमात्रोपलक्षितेकालेयास्थितिस्तांस्मरन्नाह॥अपर्वतमिति॥व्योमस्थाअमरादेवामानवायोगसिद्धाश्चयस्मिन् ॥४५॥ नविद्यंतेमध्यस्थाअध

एतांश्चान्यांश्चवृत्तांतान्संस्मरामिवहूनपि॥ किंतेनवहुनोक्तेनसारंसंक्षेपतःशृणु ॥ ४० ॥ असंख्यातान्मनून्ब्रह्मन्स्मरामिशतशोगता न्॥ सर्वान्संरंभवहुलांश्चतुर्युगशतानिच ॥ ४१ ॥ एकमेवस्वयंशुद्धंपुरुषासुरवर्जितम् ॥ आलोकनिचयंचैकंकंचित्सर्गंस्मराम्यहम् ॥ ४२ ॥ सुरापंब्राह्मणंमत्तंनिषिद्धसुरशूद्रकम्॥ वहुनाथसतीकंचकंचित्सर्गंस्मराम्यहम् ॥ ४३॥ वृक्षनीरंध्रभूपीठमकल्पितमहार्णव म्॥ स्वयंसंजातपुरुषंकंचित्सर्गंस्मराम्यहम् ॥ ४४ ॥ अपर्वतमभूमिंचव्योमस्थामरमानवम् ॥ अचंद्रार्कप्रकाशाढ्यंकंचित्सर्गंस्मरा म्यहम्॥ ४५॥ अनिंद्रममहीपालममध्यस्थाधमोत्तमम्॥ सममंधककुप्चक्रंकंचित्सर्गंस्मराम्यहम्॥ ४६॥ सर्गप्रारंभकलनाविभा गोभुवनत्रये॥ कुलपर्वतसंस्थानंजंवूद्वीपंपृथक्स्थितम् ॥ ४७ ॥ वर्णधर्मधियांसृष्टिविभागोमंडलावनेः॥ ऋक्षचक्रकसंस्थानंध्रुव निर्माणमेवच॥ ४८॥ जन्मेंदुभास्करादीनामिंद्रोपेंद्रव्यवस्थितिम् ॥ हिरण्याक्षापहरणंवराहोद्धरणंक्षितेः॥४९॥ कल्पनंपार्थिवानां चवेदानयनमेवच॥ मंदरोन्मूलनंचाब्धेरमृतार्थंचमंथनम् ॥ ५० ॥ अजातपक्षोगरुडःसागराणांचसंभवः॥इत्यादिकायाःस्मृतयः स्वल्पातीतजगत्क्रमाः॥ वालैरपिहितास्तातस्मर्यंतेतासुकोग्रहः॥ ५१॥

माउत्तमाश्चयस्मिन् ॥ अतएवसमंअंधानिककुभांदिशांचक्राणियस्मिन्निति पूर्वकल्पांत्यमन्वंतरांतदशोपलक्षितजगत्स्थित्युक्तिः॥ ४६ ॥ एतत्कल्पवृत्तांतस्मरणंतुएतत्कल्पायु षांवहूनामस्तीतिप्रपंचयन्नाह ॥ सर्गप्रारंभेत्यादिना ॥ सर्वेषांप्रथमांतपदानांपष्ठश्लोकस्थेवालैरपिहितास्तातस्मर्यंतेइत्यत्रान्वयः॥ आदौसर्गप्रारंभार्थंकलनास्रष्टुःसंकल्पस्ततो भुवनत्रयेद्वीपाद्यवांतरप्रदेशभेदानांविभजनंविभागस्ततःकुलपर्वतानांसंस्थानंयथायोग्यप्रदेशकल्पनंततःपृथक्स्थितंजंवूद्वीपंप्रविश्यब्राह्मणादिवर्णानांतद्धर्माणांधियांतत्तद्यो ग्यविद्याभेदानांचसृष्टिरितियथायोगंक्रमोबोध्यः ॥ ४७ ॥ ४८ ॥ क्षितेर्वराहेणोद्धरणम् ॥ ४९ ॥ देवदानवमनुष्यादिषुप्रत्येकंपार्थिवानांकल्पनम् ॥ मत्स्यावतारेवेदानयन म् ॥ ५० ॥ स्मर्यंतइतिस्मृतयःअवश्यस्मर्तव्यार्थाःमद्दृष्टानेककल्पापेक्षयाएतत्कल्पमात्रनिष्पन्नत्वात्स्वल्पाअतीतजगत्क्रमाः ॥ वालैर्मदपेक्षयाअत्यल्पवयस्कैरेतत्कल्पजैरपि भवदादिभिःस्मर्यंतएवेत्यर्थः ॥ ५१ ॥

कल्पांतरेषुस्वदृष्टान्याश्चर्यांतराण्यपिवदन्नुपसंहरति ॥ गरुडवाहनमिति ॥ कलितंप्राप्तंजीवितंदीर्घायुर्येनतथाविधःअहंएतत्कल्पेप्रसिद्धंगरुडवाहनंविहगोविहगोत्तमोहंसस्त
द्वाहनंचतुर्मुखीभूयदेवदैत्यादिसर्गाधिकारंनिष्पादयंतंकलितवान्दृष्टवान् ॥ तथाविहगवाहनब्रह्माणंवृषभवाहनंरुद्रीभूयसंहाराधिकारंकुर्वाणंकल्पितवान् ॥ एवंवृषभवाहनंरु
द्रंचगरुडवाहनंविष्णुशरीरंधृत्वापालनाधिकारंकुर्वाणंकलितवानितिमहदाश्चर्यरहस्यमेतदित्यर्थः ॥ ५२ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाण० पूर्वा० एकविंशः
सर्गः ॥ २१ ॥ ॥ ७ ॥ ॥ वसिष्ठस्याष्टजन्मादिसमार्धसमसर्गकाः ॥ क्षीरोदमथनाद्याश्चभूयोदृष्टाइहोदिताः ॥ १ ॥ ततस्तदनंतरंकिंचिद्दूरेष्वतीतकालेषुतथाअद्यतनसर्गे
षुजातेषुयुष्मदादिषुभगीरथशुकाद्यंतेषुस्मरणेकैवगणनेतिसप्तमेसर्वेषांसप्तम्यंतानांसंबंधः ॥ १ ॥ सनत्कुमारांतेषुब्रह्मर्षिषु भृग्वंगिरःप्रभृतिषुसिद्धर्षिषु ॥ स्कंदेभवदनादिषुशिव

गरुडवाहनंविहगवाहनंविहगवाहनंवृषभवाहनम् ॥ वृषभवाहनंगरुडवाहनंकलितवानहंकलितजीवितः ॥ ५२ ॥ . ॥ इ० वा० वा०
दे० मो० नि० पू० भु० चिरजीवितवृत्तांतकथनंनाम एकविंशःसर्गः ॥ २१ ॥ ॥ भुशुंडउवाच ॥ ॥ ततोजगतिजातेषुभगवन्युष्मदादिषु ॥
भरद्वाजपुलस्त्यात्रिनारदेंद्रमरीचिषु ॥ १ ॥ पुलहोद्दालकाद्येषुक्रतुभृग्वंगिरस्सुच ॥ सनत्कुमारभृंगीशस्कंदेभवदनादिषु ॥ २ ॥ गौरीस
रस्वतीलक्ष्मीगायत्र्याद्यासुभूरिषु ॥ मेरुमंदरकैलासहिमवद्दर्दुरादिषु ॥ ३ ॥ हयग्रीवहिरण्याक्षकालनेमिबलादिषु ॥ हिरण्यकशिपुक्रा
थबलिप्रह्लादकादिषु ॥ ४ ॥ शिबिन्यंकुपृथूलाख्यवैन्यनाभागकेलिषु ॥ नलमांधातृसगरदिलीपनहुषादिषु ॥ ५ ॥ आत्रेयव्यासवाल्मी
किशुकवात्स्यायनादिषु ॥ उपमन्युमणीमंकीभगीरथशुकादिषु ॥ ६ ॥ अल्पकातीतकालेषुकिंचिद्दूरेषुकेषुचित् ॥ तथाद्यतनसर्गेषुस्मर
णेगणनैवका ॥ ७ ॥ मुनेतेब्रह्मपुत्रस्यजन्माष्टकमिदंकिल ॥ संस्मराम्यष्टमेसर्गेतस्मिंस्त्वंममसंगतः ॥ ८ ॥ कदाचिज्जायसेव्योम्नःकदा
चिज्जायसेजलात् ॥ कदाचिद्वायुतःशैलात्कदाचिज्जायसेऽनलात् ॥ ९ ॥ यादृशोयादृशाचारोयादृक्संस्थानदिग्गणः ॥ सर्गोयंतादृशाने
वत्रीन्सर्गान्संस्मराम्यहम् ॥ १० ॥ एकरूपाखिलाचारसन्निवेशधरामरान् ॥ समकालान्स्थिरस्थैर्यान्दशसर्गान्स्मराम्यहम् ॥ ११ ॥
अंतर्धानंगताधात्रीवारपंचकमुद्धृता ॥ मुनेपंचसुसर्गेषुकूर्मेणैवपयोनिधेः ॥ १२ ॥ मंदराकर्षणावेगपर्याकुलसुरासुरम् ॥ स्मरामिद्वा
दशंचेदममृतांभोधिमंथनम् ॥ १३ ॥

पार्षदेषु ॥ २ ॥ गौर्यादिषुतच्छक्तिषु ॥ मेर्वादिषुगिरिषु ॥ ३ ॥ हयग्रीवादिषुदानवेषु ॥ हिरण्याक्षादिषुदैत्येषु
॥ ४ ॥ शिबिप्रभृतिषुराजसु ॥ ५ ॥ आत्रेयादिषुमुनिषु ॥ ६ ॥ गणनैवकेतिनतत्रविस्मरसंभावनाप्यस्तीतिभावः ॥ ७ ॥ अष्टमेसर्गेजन्मनिकल्पेवाममसंगतोमयासहमिलितः
अभूः ॥ ८ ॥ किमष्टस्वपिजन्मसुब्रह्मपुत्रएवनेत्याह ॥ कदाचिदिति ॥ ९ ॥ सर्वेषुकल्पेषुतत्तदधिकारिपुरुषाणांसमाननामरूपत्वेपिनसर्वेषांपदार्थानांसर्वसन्निवेशाचारसाम्य
नियमःकिंतुकाकतालीयन्यायेनकदाचित्साम्यमित्याशयेनाह ॥ यादृशइति ॥ १० ॥ समकालान्तुल्यायुषः ॥ स्थिराणिअसुरैरविचालितानिस्थैर्याणिनियतकालतत्तत्पदाव
स्थानानिदेवानांयेषु ॥ ११ ॥ आचारसाम्यमुक्त्वातद्वैषम्यमाह ॥ अंतर्धानमिति ॥ अंतर्धानंजलेनिमज्जनेनतिरोधानम् ॥ धात्रीभूः ॥ कूर्मेणैवनवराहेण ॥ १२ ॥ १३ ॥

दिवःसर्गाद्बलिकरंगृह्णातीतिबलिग्राहःकरदीकृतसर्वदेवगणइतियावत् ॥ अधःपातालम् ॥ १४॥ बहुभिःपरशुरामावतारशून्यैःसर्गैरंतरेणव्यवधानेनापि ॥ १५ ॥ शौकःकीकटदेशविशेषस्तद्राजतयाशुद्धोदनाख्यतद्राजपुत्रतयेतियावत् ॥ १६ ॥ त्रिंशत्सुकल्पेषुत्रिंशत्संख्याकांस्त्रिपुराणांविक्षोभानुद्दाहान् ॥ प्रतिकल्पंस्वायंभुवेंतरेचाक्षुषेचप्रसिद्धौ द्वौदक्षाध्वरसंक्षयौ ॥ दशानांशक्राणांचंद्रमौलेःकृतापराधानांपदात्प्रच्याव्यगिरिगुहासुनिरोधलक्षणान्सवज्रभुजस्तंभलक्षणान्वाविघातान्दंडान् ॥ १७ ॥ ज्वराणांमाहेश्वरवैष्णवाख्यज्वरभेदानांप्रमथानांचमंत्रकान्आमंत्रयितॄन्शौर्योत्साहजननेनप्रवर्त्तकानितियावत् ॥ क्षुरप्रमथमंत्रकानितिपाठेतुक्षुरप्रान्बाणविशेषान्मंत्रंतिछिंदंतीतिक्षुरप्रम

सर्वौषधिरसोपेतांबलिग्राहस्तदादिव ॥ वारत्रयहिरण्याक्षोनीतवान्वसुधामधः ॥ १४ ॥ रेणुकात्मजतांगत्वाषष्ठवारमिमंहरिः ॥ बहुसर्गांतरेणापिचकारक्षत्रियक्षयम् ॥ १५ ॥ शतंकलियुगानांचहरेर्बुद्धदशाशतम् ॥ शौकराजतयैवाग्रंस्मरामिमुनिनायक ॥ १६ ॥ त्रिंशत्त्रिपुरविक्षोभान्द्वौदक्षाध्वरसंक्षयौ ॥ दशशक्रविघातांश्चचंद्रमौलेःस्मराम्यहम् ॥ १७ ॥ बाणार्थमष्टौसंग्रामान्ज्वरप्रमथमंत्रकान् ॥ विक्षोभितसुरानीकान्स्मरामिहरिशर्वयोः ॥ १८ ॥ युगंप्रतिधियांपुंसांन्यूनाधिकतयामुने ॥ क्रियांगपाठवैचित्र्ययुक्तान्वेदान्स्मराम्यहम् ॥ १९ ॥ एकार्थानिसमग्राणिबहुपाठानिमेनघ ॥ पुराणानिप्रवर्तंतेप्रस्तुतानियुगंप्रति ॥ २० ॥ पुनस्तानेवतानेवमन्यानपियुगेयुगे ॥ वेदादिविरचितानितिहासान्स्मराम्यहम् ॥ २१ ॥ इतिहासंमहाश्चर्यमन्यंरामायणाभिधम् ॥ ग्रंथलक्षप्रमाणंचज्ञानशास्त्रंस्मराम्यहम् ॥ २२ ॥ रामवद्व्यवहर्तव्यंनरावणविलासवत् ॥ इतियत्रधियांज्ञानंहस्तेफलमिवार्पितम् ॥ २३ ॥ कृतंवाल्मीकिनाचैतदधुनायत्करिष्यति ॥ अन्यच्चप्रकटंलोकेस्थितंज्ञास्यसिकालतः ॥ २४ ॥ वाल्मीकिनाम्नाजीवेनतेनैवान्येनवाकृतम् ॥ एतच्चद्वादशंवारंक्रियतेविस्मृतिंगतम् ॥ २५ ॥ द्वितीयमेतस्यसमंभारतंनामनामतः ॥ स्मरामिप्राक्तनव्यासकृतंजगतिविस्मृतम् ॥ २६ ॥ व्यासाभिधेनजीवेनतेनैवान्येनवाकृतम् ॥ एतत्तुसप्तमंवारंक्रियतेविस्मृतिंगतम् ॥ २७ ॥

थास्तथाविधामंत्रकामंत्रास्त्राणियेष्वित्यर्थः ॥ १८ ॥ युगंप्रतियुगेयुगे ॥ कर्मप्रवचनीयेनप्रतिनावीप्साद्योत्यते ॥ पुंसामध्येनृपुरुषाणांधियांबुद्धीनांन्यूनाधिकतयाब्रह्मचर्यगुरुशुश्रूषाभूमिशयनादिक्रियाणांशिक्षाद्यंगानांसावधानस्वरवर्णाद्युच्चारणलक्षणपाठानांचन्यूनाधिकताकृतप्रभाववैचित्र्यैर्युक्तान् ॥ १९ ॥ प्रतिद्वापरांतनिर्मातृभेदाद्बहुपाठानि ॥ २० ॥ वेदादिविद्भिर्व्यासवाल्मीकिप्रभृतिभिःप्ररचितान्पुनःपुनस्तानेवभारतरामायणादीनितिहासान् ॥ २१ ॥ महारामायणाभिधंब्रह्मणावसिष्ठविश्वामित्रादिभ्यउपदिष्टंज्ञानशास्त्रम् ॥ २२ ॥ २३ ॥ यदन्यच्चवसिष्ठरामसंवादरूपंमहारामायणंद्वात्रिंशत्सहस्रमितंकरिष्यतितदपिदिव्यज्ञानबलादनुभूतंस्मरामित्वमपिकालतोज्ञास्यसि ॥ २४ ॥ एतद्वसिष्ठरामसंवादरूपंतेनपूर्वकल्पीयेनान्येनवावाल्मीकिनाम्नाजीवेनप्राकृतमेवविस्मृतिव्यवहर्तृपरंपरोच्छेदेनोच्छेदंगतंसांप्रतंद्वादशानांपूरणंद्वादशंवारंक्रियते ॥ २५ ॥ २६ ॥ २७ ॥

॥ २८ ॥ २९ ॥ अधुनासंनिहितत्रेतायुगे ॥ ३० ॥ ३१ ॥ अधुनाएतच्चतुर्युगांतर्गतद्वापरांते ॥ ३२ ॥ बहिरिदंजायतइतिभ्रांतिरेवेत्याशयेनाह ॥ जगन्मयीति ॥ ३३ ॥
॥ ३४ ॥ प्रतिसर्गलोकादीनांसन्निवेशादिसाम्यनियमोप्यौत्सर्गिकइत्याह ॥ समेति ॥ ३५ ॥ मन्वाद्यधिकारिपुरुषसन्निवेशचारित्र्यादिष्वपिसाम्यमौत्सर्गिकमेवेत्याह ॥ ता
न्येवेति ॥ ३६ ॥ संश्रुतेप्रख्याते ॥ ३७ ॥ अन्यएवसमाश्रयानिवासाः ॥ ३८ ॥ समाश्रयभेदमेवप्रपंचयति ॥ कदाचिदित्यादिना ॥ ३९ ॥ मलयेअचलःस्थिरः ॥ ४० ॥ प्रा

आख्यानकानिशास्त्राणिनिवृत्तानियुगंप्रति ॥ विचित्रसंनिवेशानिसंस्मरामिमुनीश्वर ॥ २८ ॥ भूयस्तान्येवतान्येवतथान्यानियुगेयु
गे ॥ साधोपदार्थजालानिप्रपश्यामिस्मरामिवै ॥ २९ ॥ राक्षसक्षतयेविष्णोर्महीमवतरिष्यतः ॥ अधुनैकादशंजन्मरामनाम्नोभविष्य
ति ॥ ३० ॥ नारसिंहेनवपुपाहिरण्यकशिपुंहरिः ॥ जघानवारत्रितयंमृगेंद्रइववारणम् ॥ ३१ ॥ वसुदेवगृहेविष्णोर्भुवोभारनिवृत्तये ॥ अ
धुनाषोडशंजन्मभविष्यतिमुनीश्वर ॥ ३२ ॥ जगन्मयीभ्रांतिरियंनकदाचनविद्यते ॥ विद्यतेतुकदाचिच्चजलबुद्बुदवत्स्थिता ॥ ३३ ॥ दृ
श्यभ्रांतिरनित्येयमंतस्थासंविदात्मनि ॥ जायतेलीयतेचाशुलोलावीचिरिवांभसि ॥ ३४ ॥ समैकसन्निवेशानिवहूनिविषमाणिच ॥ त
थार्धसमरूपाणित्रिजगंतिस्मराम्यहम् ॥ ३५ ॥ तान्येवतादृक्कर्माणितथान्याचरणानिच ॥ तत्कर्माणितथान्यानिभूतानीहस्मराम्यहम्
॥ ३६ ॥ प्रतिमन्वंतरंब्रह्मन्विपर्यस्तेजगत्क्रमे ॥ सन्निवेशेन्यथाजातेप्रयातेसंश्रुतेजने ॥ ३७ ॥ ममान्यान्येवमित्राणिअन्यएवचबांधवाः ॥
अन्यएवनवाभृत्यास्त्वन्यएवसमाश्रयाः ॥ ३८ ॥ कदाचिदहमेकांतेविंध्यकच्छकृतालयः ॥ कदाचित्सह्यनिलयःकदाचिद्दर्दुरालयः ॥ ३९ ॥
कदाचिद्धिमवद्वासीकदाचिन्मलयाचलः ॥ कदाचित्प्राक्तनेनैवसन्निवेशेनभूधरम् ॥ ४० ॥ चूतवृक्षेचशाखायांप्राप्यनीडंकरोम्यहम् ॥
अनाद्यंतेपुयातेपुयुगेपुमुनिनायक ॥ ४१ ॥ प्राक्तनेनैवजातोयंसन्निवेशेनपादपः ॥ देहंत्यक्त्वासुखंसाधोनातःपरिणतिंगतः ॥ ४२ ॥
तदीयेनैवजातोयंसन्निवेशेनपादपः ॥ तातेजीवतियैवाभूच्छोभास्यसुतरांस्तथा ॥ ४३ ॥ कृतप्राक्सन्निवेशोयमहंस्थितिमिहागतः ॥
नेहाभूदुत्तरापूर्वककुन्नायंचभूधरः ॥ ४४ ॥ दिगुत्तराभूदन्येयंपूर्वमेवमहीधरः ॥ एकैकदेहसंस्थानवीतब्रह्मनिशागमः ॥ ४५ ॥

प्येत्यस्यप्राक्तनेनभूधरमित्यनेनान्वयः ॥ अनाद्यंतेपुअसंख्येयेपु ॥ ४१ ॥ अतःप्राक्तनसन्निवेशात्परिणतिसन्निवेशांतरंनगतः ॥ तर्हित्वमिवपादपोपिकिंचिरजीवीनेत्याह ॥
देहंत्यक्त्वेति ॥ ४२ ॥ एवंचनपादपजीवैक्येपितात्पर्यंकिंतुशोभासन्निवेशसाम्यादभेदोपचारइतिसूचयन्नाह ॥ तदीयेनेति ॥ तातेचंडे ॥ ४३ ॥ एवंदिग्भूधरयोरैक्यप्रत्यभि
ज्ञापिसन्निवेशसाम्यादेवेत्याह ॥ नेहेति ॥ ४४ ॥ पूर्वउत्तरादिक्अन्यैवाभूदियमन्या ॥ एवंभूधरोप्यन्यएवाभूदित्यावृत्तिविपरिणामाभ्यामन्वयः ॥ तर्हित्वथैवत्वमपिप्रतिक
ल्पमन्यःसमानसन्निवेशश्चकिंनस्यात्तत्राह ॥ एकेति ॥ अहंएकश्चासौएकेनैवदेहसंस्थानेनवीताब्रह्मनिशागमायस्यतथाविधः ॥ ४५ ॥

तत्कुतस्तत्राह ॥ ध्यानांतइति ॥ यतःकल्पांतेप्रागुक्तधारणापूर्वकंस्थिरीकृतस्यध्यानस्यनिर्विकल्पकसमाधेरंतेअवसानेपुनर्जातमेनंसर्गमालोक्यसएवायंमेरुःसएवायंपादप इतिप्रत्यभिज्ञायमानेतत्त्वेएवएनंसर्गंवेद्मि ॥ यद्यहमन्यःस्यांतत्तावगाहिनीप्रत्यभिज्ञैवनस्यादितिभावः ॥ एवंपूर्वसंस्थानादन्यथासंस्थानताग्रहणादपितद्द्रष्टुर्ममनाशइत्याश यगर्भांदिगुत्तराभूदन्येयमित्युक्तिमुपपादयति ॥ अर्कादेरिति ॥ दिशःप्राच्यादयःअर्कसोमादेर्ऋक्षाणांनक्षत्राणामुदयास्तमयादिनियतसंचाराच्चनियतोत्तरदिक्स्थितमेर्वादि स्थानकाःप्रसिद्ध्यंति ॥ ४६ ॥ सर्गांतरेतुतादिशस्तस्मिन्मेरावेवान्यथाप्रकारांतरेणस्थितेसतिचित्रपटलिखितमेर्वाद्यधीनादिशस्तत्परिवर्त्तनइवअन्यथासंस्थानंव्यत्यस्तस्थिति यांतीत्यर्थः ॥ एवंदिशामनियतस्थित्यामिथ्यात्वेतदनुसारिनियतावयवसन्निवेशघटितस्यसर्वस्यापिजगतोऽनिर्वचनीयतालक्षणंमिथ्यात्वंप्रतिभातीत्याह ॥ नसदित्यादिना ॥ ॥ ४७ ॥ आत्मनःस्पंदचमत्कारोमायिकविक्षेपशक्तिस्तद्विभवः ॥ जागतेषुपदार्थेषुदिक्कृतव्यवस्थाव्यत्यासइवकालकृतव्यवस्थाव्यत्यासोपिदृश्यतइत्येतत्प्रपंचयन्दर्शयति ॥

ध्यानांतेतत्त्वएवैनंसर्गमालोक्यवेद्म्यहम्॥ अर्कादेर्ऋक्षसंचारान्मेर्वादिस्थानकादिशः॥ ४६॥ संस्थानमन्यथातस्मिन्स्थितेयांतिदि शोन्यथा॥ नसन्नासज्जगन्मन्येभ्रमयन्केवलंधियः॥ ४७॥ आत्मस्पंदचमत्कारविभवोयंविजृंभते॥पुत्रःपितृत्वमायातिमित्रंयात्यरि तांतथा॥४८॥स्त्रीत्वंचशतशोयातान्पुंसश्चैवस्मराम्यहम्॥ कलौकृतयुगाचारान्कृतेकलियुगस्थितिम्॥४९॥ त्रेतायांद्वापरेचैवसंस्मरा मिमुनीश्वर॥ अदृष्टवेदवेदार्थान्स्वसंकेतविहारिणः॥५०॥ सर्गान्निरर्गलाचारान्कचित्कांश्चित्स्मराम्यहम्॥ ध्यातरिब्रह्मणोब्रह्मन्ससु रासुरमानुषम्॥ ५१॥ चतुर्युगसहस्रांतेजगच्छून्यंस्मराम्यहम्॥ मनोमननिर्माणान्पार्थिवाकारवर्जितान्॥ व्याप्तान्वायुमयैर्भूतैर्द शसर्गान्स्मराम्यहम्॥५२॥ विचित्रसंस्थानविशेषदेशान्विचित्रकार्याकुलभूतकोशान्॥ विचित्रविन्यासविलासवेषान्स्मराम्यहंब्रह्म दिनेष्वशेषान्॥५३॥ ॥इत्यार्षेवा॰वा॰दे॰मोक्षोपायेषुनि॰पू॰भु॰चिरजीवितवर्णनंनामद्वाविंशःसर्गः॥ २२॥ ॥ ७॥ ॥श्री वसिष्ठउवाच॥ ॥अथासौवायसश्रेष्ठोजिज्ञासार्थमिदंमया॥ भूयःपृष्टोमहाबाहोकल्पवृक्षलताग्रके॥ १॥ चरतांजगतःकोशेव्यव हारवतामपि॥ कथंविहगराजेंद्रदेहंमृत्युर्नबाधते॥ २॥

पुत्रइत्यादिना॥ ४८ ॥ ४९ ॥ त्रेतायांद्वापरेचकृतयुगाचारान्कलियुगस्थितिंचेत्यनुकृष्यान्वयः ॥ कलियुगस्थितिमेवसंक्षिप्यविवृणोति ॥ अदृष्टेति ॥ ५० ॥ कचित्कृतयु गादावपि ॥ तथाहि ॥ कृतयुगेपिपुष्करेणनलस्यनिकृत्याद्यूतेजयोविनापराधमेकवस्त्रेणसभार्यस्यनिवासनंचप्रसिद्धम् ॥ ५१ ॥ हेब्रह्मन्चतुर्युगसहस्रस्यांतेअवसानेवेधसिज गद्रूपसंहारक्रमेणाप्सुशयित्वायोगनिद्राच्छलेनब्रह्मणःपरमात्मनोध्यातरिसतिससुरासुरमानुषंजगच्छून्यमसत्तामिवापन्नंस्मरामीत्यर्थः॥ एवंप्रलीनेपिजगत्यैंदवमनोमनननिर्मा णान्प्रागुक्तान्वातमयैर्वायुप्रायैर्भूतैःप्राणिभिर्व्याप्तान् ॥ ५२ ॥ उक्तंसर्वंसंक्षिप्योपसंहरति ॥ विचित्रेति ॥ अहंब्रह्मदिनेषुकल्पेषुविचित्रस्थानविशेषयुक्तादेशायेषुतथावि धान्विचित्रकार्याकुलभूतानांकोशभूतान्अशेषान्सर्वान्सर्गान्स्मरामीत्यर्थः ॥ ५३ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनि॰पू॰द्वाविंशतितमःसर्गः ॥ २२ ॥ ॥ ७ ॥ त्यक्तेषुयेषुदोषेषुनरंमृत्युर्नबाध्यते ॥ यत्परंचमनःकार्यंतत्सर्वमिहकीर्त्यते ॥ १ ॥ इदंवक्ष्यमाणम् ॥ प्रच्छेगौणेकर्मणिक्तः ॥ १ ॥ कथंकीदृशदोषत्यागगुणार्जनप्रकारेण ॥२॥

वाचालयंतिमुखरयंतिभृत्यवाक्पटुतांप्रश्नमुखेनख्यापयंतीतियावत् ॥ ३ ॥ ४ ॥ तत्रसर्वदोषाधारवासनानाशएवमुख्योमृत्युतरणोपायइत्याह ॥ दोषति ॥ यथात्यक्तहाराद्याभरणंचोरानजिघांसंतितद्वदित्यर्थाद्गम्यते ॥ ५॥ निःश्वासलक्षणादेहवृक्षच्छेदनाःक्रकचायेभ्यः सर्वासांदेहलतानांदेहवृक्षशाखाभूतहस्तपादादीनांघुणाःकाष्ठकीटभूताःआधयोमनोव्यथाः ॥ ६ ॥ शरीरतरोःकोटरस्थसर्पौघभूताःअतएवचिंतालक्षणाअर्पिताःशिरसिफणायैः ॥ नदहंतिअर्थात्स्वविषाग्निना ॥ ७ ॥ नभुंक्तेनदशति ॥ ८ ॥ शरीरांभोधेर्वाडवोवडवाग्निभूतः ॥ अतएवपीताशेषविवेकांबुः ॥ ९ ॥ आकुलंव्यग्रम् ॥ तिलानांराशिकर्मयंत्रंक्वचित्रिवउपमितिक्रियाविशेषणम् ॥ १० ॥ ब्रह्मात्मविश्रांतिरेवात्यंतिकमृत्युजयोपायइत्याशयेनाह ॥ एकस्मिन्निति ॥ ११ ॥ वपुर्लक्षणेपुष्पितवनखंडेअभिपतितःशाखामृगइवउदितमूर्जितम् ॥ छांदसंक्लीबत्वम् ॥ १२ ॥ दोषानुपसंहरंस्तज्जयहेतुगुणान्वक्तुंप्रथमंसमाधानमेवमुख्योगुणइत्याशयेनतंप्रशंसति ॥ एतेइत्यादिना ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ कर्माणिकुर्वत्रयथाशास्त्रंव्यवहरदपि ॥ १७ ॥ दुष्टाअर्थाअर्जनीयधनादयःआरभ्यंतइत्यारंभाःकृषिगृहधनादयः ॥ गुणारागद्वेषादयः उदात्ततामर्मप्रकाशनोक्तयः क्रमानीतयः नकृंतंतिदुष्टफलेननपरितापयंति ॥ १८ ॥ आभांतिप्रकाशमानानिविपुलार्थानिवहुलाभानिसर्वाण्येवसुखानीतिशेषः ॥ अनुधावंतिअनुसरंति ॥ १९ ॥

भुशुंडउवाच॥ ॥जानन्नपिहिसर्वज्ञब्रह्मन्जिज्ञासयेवमाम्॥ पृच्छसिप्रभवोनित्यंभृत्यंवाचालयंतिहि॥ ३॥ तथापियत्पृच्छसिमांतत्प्रकथयाम्यहम्॥आज्ञाचरणमेवाद्यंमुख्यमाराधनंसताम्॥४॥ दोषमुक्ताफलप्रोतावासनातंतुसंततिः॥ हृदिनग्रथितायस्यमृत्युस्तंनजिघांसति॥५॥ निःश्वासवृक्षक्रकचाःसर्वदेहलताघुणाः॥ आधयोयंनभिंदंतिमृत्युस्तंनजिघांसति॥६॥ शरीरतरुसर्पौघाश्चिंतार्पितशिरःफणाः॥ आशायंनदहंत्यंतर्मृत्युस्तंनजिघांसति॥ ७॥ रागद्वेषविषापूरःस्वमनोविलमंदिरः॥ लोभव्यालोनभुंक्तेयंमृत्युस्तंनजिघांसति॥ ८॥ पीताशेषविवेकांबुःशरीरांभोधिवाडवः॥ ननिर्दहतियंकोपस्तंमृत्युर्नजिघांसति॥ ९॥ यंत्रंतिलानांकठिनंराशिमुग्रमिवाकुलम्॥ यंपीडयतिनानंगस्तंमृत्युर्नजिघांसति॥ १०॥ एकस्मिन्निर्मलेयेनपदेपरमपावने॥ संश्रिताचित्तविश्रांतिस्तंमृत्युर्नजिघांसति॥ ११॥ वपुःखंडाभिपतितंशाखामृगमिवोदितम्॥ नचंचलंमनोयस्यतंमृत्युर्नजिघांसति॥ १२॥ एतेब्रह्मन्महादोषाःसंसारव्याधिहेतवः॥ मनागपिनलुंपंतिचित्तमेकंसमाहितम्॥ १३॥ आधिव्याधिसमुत्थानिचलितानिमहाभ्रमैः॥ नविलुंपंतिदुःखानिचित्तमेकंसमाहितम्॥ १४॥ नास्तमेतिनचोदेतिनसंस्मृतिर्नविस्मृतिः॥ नसुप्तंनचजाग्रत्स्याच्चित्तंयस्यसमाहितम्॥ १५॥ अंधीकृतहृदाकाशाःकामकोपविकारजाः॥ चिंतानपरिहिंसंतिचित्तंयस्यसमाहितम्॥१६॥ नददातिनचादत्तेनजहातिनयाचते॥ कुर्वदेवचकार्याणिचित्तंयस्यसमाहितम्॥ १७॥ येदुरर्थादुरारंभादुर्गुणादुरुदात्तताः॥ दुष्क्रमास्तेनकृंतंतिचित्तंयस्यसमाहितम्॥१८॥ आभांतिविपुलार्थानिमहांतिगुणवंतिच॥सर्वाण्येवानुधावंतिचित्तंयस्यसमाहितम्॥ १९॥

उदर्कऔत्तरकालिकंसुखंतस्मैहितम् ॥ दुरीहितदृशाभोगाभिलापदृष्ट्याउन्मुक्तंस्वात्मलाभलक्षणंतत्परम् ॥२०॥ चित्तस्यवैधुर्यंपुरुषार्थविधुरतातद्दायिना ॥ अनेकत्वंभेददृष्टिस्तल्लक्षणपिशाचेनयत्सौख्यंनदृष्टंतत्परम ॥ २१ ॥ आदौचारुसुखारंभंमध्येअर्धपरिपाकेपिमधुरम् अंतेपथ्यंसर्वदुःखनिवर्त्तकंज्ञानंतत्परम् ॥ २२ ॥ आद्यंतमध्यगंसर्वावस्थास्वनुगतमात्मसुखम् ॥ २३ ॥ नविद्यतेउत्तमंयस्मात्तथाविधंसौभाग्यंनित्यनिरतिशयानंदइत्यर्थः ॥ २४ ॥ अनुत्तमसौभाग्यत्वमेवेतरसुखानित्यतादिप्रपंचनेनसाधयति ॥ सामरेत्यादिना ॥ २५ ॥ २६ ॥ २७ ॥ एवंलोकत्रयस्याशुभतामुक्त्वातद्घटितजगतएवतदाह ॥ सस्वर्गइति ॥ २८ ॥ क्रियाशब्देनतत्फलानिलक्ष्यंते ॥ २९ ॥ चिंतापदमपिमानसक्रियामात्रपरंतत्फलोपलक्षकम् ॥ ३० ॥ त्वन्मनस्तल्लक्षणस्यक्षीरोदकस्यसंस्पंदेक्षोभणेमंदरायमाणेषु ॥ इदंमानसक्रियामात्रोपलक्षणम ॥ ३१ ॥ अतिचित्राकारासुअत्यद्भुतासु अतएवासिशिशिरास्वसिधाराशायासुइंद्रियादिचेष्टासु ॥३२॥एवमशाश्वतत्वात्तुच्छत्वाच्चनजागतंकिमपिसुखंविवेकिभिःस्पृहणीयमित्याह ॥ नवरमित्यादिना ॥ एकाअनन्यराजतासर्वमहीतलराजतानवरम् ॥ एवंविबुधाअभिज्ञतमायेअमराइंद्रबृहस्पत्यादयस्तद्रूपतास्वर्गराज्याद्यपीतियावत् ॥ धरण्यास्तलेपातालेसर्वधरणीधारणसमर्थाशेषनागतापातालराज्यमपीतियावत् ॥ यत्रसतांविवेकिनांमनःस्थितिंपूर्णकामतयाविश्रांतिमुपैतितथाविधंकिमपिनभवतीत्यर्थः ॥३३॥ एवंदुरूहत्वाद्विस्तृतत्वाच्चाकुलताहेतुनानाशास्त्राणांचतुर्दशविद्यास्थानानांविचारणंनिष्कर्षसामर्थ्यलक्षणंपांडित्यमपिनवरम् ॥ एवंपरेषांकार्याणांवृद्धिसौष्ठवाद्विचार्यविवेचनसामर्थ्यलक्षणंलोकानुरंजनसामर्थ्यमपिनवरम ॥ अग्र्याणांभारतादिकथानांक्रमस्यवर्णनादिसामर्थ्यमपिनवरमितिपूर्ववत् ॥३४॥

यद्धुदर्कहितंसत्यमनपायिगतभ्रमम् ॥ दुरीहितदृशोन्मुक्तंतत्परंकारयेन्मनः॥ २० ॥ यददृष्टमशुद्धेनचित्तवैधुर्यदायिना॥ अनेकत्वपिशाचेनतत्परंकारयेन्मनः॥ २१ ॥ आदौमध्येतथांतेचचिरायपरमोचितम्॥ यच्चारुमधुरंपथ्यंतत्परंकारयेन्मनः॥ २२ ॥ यदनंतंमनःपथ्यंतथ्यमाद्यंतमध्यगम्॥ समस्तसाधुभिर्जुष्टंतत्परंकारयेन्मनः॥ २३ ॥ यद्बुद्धेःपरमालोकमाद्यंयदमृतंपरम्॥ यदनुत्तमसौभाग्यंतत्परंकारयेन्मनः॥ २४ ॥ सामरासुरगंधर्वेसविद्याधरकिन्नरे॥ ससुरस्त्रीगणेस्वर्गेनकिंचित्सुस्थिरंशुभम्॥ २५ ॥ सतरौसनराधीशेसपर्वतपुरव्रजे॥ सांबुधौभूतलेतातनकिंचिच्छोभनंस्थिरम्॥ २६ ॥ सनागेसासुरव्यूहेसासुरस्त्रीगणेतथा॥ समस्तएवपातालेनकिंचिच्छोभनंस्थिरम्॥ २७ ॥ सस्वर्गेससुरालोकेसपातालेसदिक्तटे॥ जगत्यस्मिंस्तुसर्वस्मिन्नकिंचिच्छोभनंस्थिरम्॥ २८ ॥ आधिव्याधिविलोलासुदुःखौघवलितासुच॥ क्रियासुनित्यतुच्छासुनकिंचित्सुस्थिरंशुभम्॥ २९ ॥ तरलीकृतचित्तासुहृदयानंदिनीषुच॥ चिंतासुधीविकारासुनकिंचित्सुस्थिरंशुभम्॥ ३० ॥ त्वत्क्षीरोदकसंस्पंदमंदरेषुचलेष्वपि॥ स्वसंकल्पविकल्पेषुनकिंचित्सुस्थिरंशिवम्॥ ३१ ॥ अनारतागमापायपरास्वसिशिरास्वति॥ चित्राकारासुचेष्टासुनकिंचित्सुस्थिरंशुभम् ॥ ३२ ॥ नवरमेकमहीतलराजतानचवरंविबुधामररूपता॥ नचवरंधरणीतलनागतास्थितिमुपैतिहियत्रसतांमनः॥ ३३ ॥ नवरमाकुलशास्त्रविचारणंनचवरंपरकार्यविवेचनम्॥ नवरमग्र्यकथाक्रमवर्णनंस्थितिमुपैतिहियत्रसतांमनः॥ ३४ ॥

यदिआधिप्रचुरत्वाज्जीवितंनवरंतर्हिसर्वाधिनिवृत्तिमत्त्वान्मरणंवरंस्यात्तत्राह ॥ दृढमूढतेति ॥ सर्वदुःखनिदानमूढतादार्ढ्यात्तदपिनवरमित्यर्थः ॥ तर्हिभोगेनसर्वदुःखक्षयकर
त्वान्नरकोवरमस्त्विति चेन्नेत्याह ॥ नचेति ॥ नरकस्यापिपुनःपापजन्मावसानत्वान्नतत्रापिसर्वदुःखक्षयइतिभावः ॥ विष्टपंसर्वभुवनाधिपत्यम् ॥ ३५ ॥ नरस्यविवेकिनःपुरु
षस्यइतिअनेनप्रकारेणविचार्यमाणाविविधजगत्क्रमाःसमस्ताःसर्वेपिनरम्याः ॥ हियस्माद्धेतोस्तेजगत्क्रमाश्चलतरकलनयाअशाश्वतत्त्वबुद्ध्याआहितेगृहीतेपदार्थेमहांतःकथं
चिरस्थितिमात्यंतिकविश्रांतियांतीत्यर्थः ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाण०पू०त्रयोविंशःसर्गः ॥ २३ ॥ ॥ ७ ॥ ॥ देहनाडीक्रमोपेतापट्चक्रद
दयान्विता ॥ प्राणस्पंदविभागाढ्याप्राणचिंतेहवर्ण्यते ॥ १॥ यदिजगतिनकिंचिच्छोभनंस्थिरंतर्हिकितच्छोभनंस्थिरंचयत्रविवेकिनश्चित्तविश्रांतिस्तदाह ॥ एकैवेत्यादिना ॥

नवरमाधिमयंचिरजीवितंनचवरंमरणंदृढमूढता ॥ नचवरंनरकोनचविष्टपंस्थितिमुपैतिहिनक्वचिदाशयः ॥ ३५ ॥ इतिविविधजगत्क्रमाःसमस्ताःखलुमतिमूढतयानरस्यरम्याः ॥ चलतरकलनाहितेपदार्थेकथमुपयांतिचिरस्थितिंमहांतः ॥ ३६ ॥ ॥ इ०वा०वा०दे०मो०नि०पू०भुशुंडोपाख्यानेसमाधानसंकल्पनिराकरणंनामत्रयोविंशःसर्गः ॥ २३ ॥ ॥ भुशुंडउवाच ॥ ॥ एकैवकेवलादृष्टिर्निरापायागतभ्रमा ॥ विद्यतेसर्ववित्त्वेषुसर्वश्रेष्ठासमुन्नता ॥ १ ॥ आत्मचिंतासमस्तानांदुःखानामंतकारिणी ॥ चिरसंभृतदुःस्वप्नसंसारभ्रमहारिणी ॥ २ ॥ निष्कलंकमनोमार्गविपुलांगणचारिणी ॥ तथासमस्तदुःखानांचितानर्थविनाशिनी ॥ ३ ॥ ज्योत्स्नयेवांधकाराणामलमंतःप्रजायते ॥ सास्वात्मचिंताभगवन्सर्वसंकल्पवर्जिता ॥ ४ ॥ युष्मदादिषुसुप्रापादुष्प्रापैवास्मदादिषु ॥ समस्तकलनातीतंपरांकोटिमुपागतम् ॥ ५ ॥ पदमासादयंत्येतत्कथंसामान्यबुद्धयः ॥ आत्मचिंताविलासिन्यास्तस्याःसख्योमहामुने ॥ ६ ॥ किंचित्साम्यमुपायाताविज्ञानशशिशीतलाः ॥ आत्मचिंतासमानानांविविधानांमुनीश्वर ॥ ७ ॥ आत्मचिंतावयस्यानांमध्यादेकतमामया ॥ सर्वदुःखक्षयकरीसर्वसौभाग्यवर्धिनी ॥ ८ ॥ कारणंजीवितस्येहप्राणचिंतासमाश्रिता ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्युक्तवंतंविहगंभुशुंडंपुनरप्यहम् ॥ जानन्नपीदमव्यग्रःपृष्टवान्क्रीडयामुनिम् ॥ ९ ॥ सर्वसंशयविच्छेदिन्नत्यंतचिरजीवित ॥ यथार्थंब्रूहिमेसाधोप्राणचिंताकिमुच्यते ॥ १० ॥

सर्वेषुवित्त्वेषुज्ञानेषुमध्येसर्वांशेश्रेष्ठासमुन्नतासहसादुरारोहेतियावत् ॥ १ ॥ आत्मचिंतासाक्षात्कारपर्यंतआत्मविचारः ॥ चिरमनादिकालादारभ्यकामकर्मवासनासंभृतस्य
दुःस्वप्नकल्पस्यसंसारभ्रमस्यहरणशीला ॥ २ ॥ निरस्तमायादिकलंका प्रत्यक्प्रवणंमनएवमार्गोयत्रतथाविधेमनसोप्यमार्गेअगम्येवानिरतिशयभूमानंदलक्षणेप्रत्यगात्मां
गणेसंचरणशीला ॥ तथाउपस्थितसर्वदुःखानांभाविदुःखानुसंधानप्रयुक्तचिंतादिसर्वानर्थानांचविनाशिनी ॥ ३ ॥ अंधकाराणांतत्कार्यभ्रांतिभिःसहपरिगणनाद्बहुवचनम् ॥
अलमत्यंतमंतोनाशस्तयेतिशेषः ॥ ४ ॥ दुष्प्रापैवेत्यवधारणेहेतुमाह ॥ समस्तेत्यादिना ॥ ५ ॥ सामान्यबुद्धयःअविशुद्धप्राकृतबुद्धयः ॥ तर्हिसातवकथंसुलभाजातेतिचेत्त
त्सखीसमाश्रयणादित्याशयेनप्राणचिंतांवर्णयितुंपीठिकांरचयति ॥ आत्मचिंतेत्यादिना ॥ ६ ॥ ७ ॥ ८ ॥ क्रीडयाकौतुकेन ॥ ९ ॥ किंकीदृशी ॥ १० ॥

॥ ११ ॥ भवतांपूज्यानांयुष्मदादीनांसन्निधौइदंप्राणदर्शनंपरिशिक्षितुंविशेषतःपरिज्ञातुंपुनःप्रत्युत्तराणित्वत्प्रश्नस्यप्रत्युत्तरंवदानि॥लोडुत्तमः ॥ १२ ॥ देहगेहवर्णनक्रमेणवक्ष्यमाणम् ॥१३॥ वातपित्तकफलक्षणत्रिप्रकारामहांतःस्थूणाविष्टंभकाष्ठानियस्य ॥१४॥ पुर्यष्टकंप्राग्व्याख्यातम् ॥तत्पुर्यष्टकमात्रंस्वजनात्रांधवाश्चयस्य ॥१५॥ अंतःसाक्षिनयात्वंमयावर्ण्यमानदेहगेहंपश्यसिसाक्षादनुभवसि ॥ सत्यौकर्णशष्कुलीद्वयलक्षणेचंद्रशालिकेशिरोगृहेयस्मिन् ॥ शिरोरुहैःकेशैराच्छादनवत् ॥१६॥ भुजौपार्श्वेचउपमंदिराणिमंदिरपक्षभागायस्य ॥ दंतालिर्दंतपंक्तिस्तल्लक्षणकेसरमालाभिर्भूषितंप्रधानद्वारविलंयस्य ॥ १७ ॥ रूपरसग्रहणंसर्वबाह्यविषयोपलक्षणम् ॥ तान्स्पर्शयंतिअंतर्निवेदयंतियानिज्ञानेंद्रियाणितल्लक्षणद्वारपालवत् ॥ तत्रत्वचःसर्वांगव्याप्त्यासर्वद्वारपालत्वमितिअधोद्वारयोरपितद्वत्त्वंबोध्यम ॥ सर्वत्रसंकुलेनलिंगदेहव्याप्तिद्वाराव्याप्तेनआलोकेनवलितंव्याप्तम् ॥ विशेषतश्चजागरेतारेअक्ष्णोःकनीनिकेतल्लक्षणयोरलिंदयोरूर्ध्वतमद्वारप्रकोष्ठयोःकृतास्वामिस्थितिर्यस्मिन् ॥ इंधोहवैनामैषयोयंदक्षिणेक्षन्पुरुषः नेत्रस्थं

भुशुंडउवाच॥ ॥सर्ववेदांतवेत्तासिसर्वसंशयनाशकः॥ मामेतत्परिहासार्थंमुनेपृच्छसिवायसम्॥ ११ ॥ अथवाभवतामेवभगवन्परिशिक्षितुम्॥पुनःप्रत्युत्तराणीदंकामेक्षतिरुपस्थिता ॥ १२ ॥ भुशुंडजीवितकरंभुशुंडस्वात्मलाभदम्॥ शृणुप्राणसमाधानंवक्ष्यमाणमिदंमया॥१३॥पश्येदंभगवन्सर्वंदेहगेहंमनोरमम्॥ त्रिप्रकारमहास्थूणंनवद्वारसमावृतम्॥१४॥पुर्यष्टककलत्रेणतन्मात्रस्वजनेनच॥ अहंकारगृहस्थेनसर्वतःपरिपालितम् ॥ १५॥ अंतःपश्यसिसत्कर्णशष्कुलीचंद्रशालिकम्॥ शिरोरुहाच्छादनवद्विपुलाक्षिगवाक्षकम् ॥ १६ ॥आस्यप्रधानसुद्वारंभुजपार्श्वोपमंदिरम्॥ दंतालिकेसरस्रग्भिर्भूषितद्वारकोटरम्॥ १७॥ अनारतंरूपरसस्पर्शनद्वारपालवत्॥ संकुलालोकवलितंतारालिंदकृतस्थिति ॥१८॥ रक्तमांसवसादिग्धंस्नायुसंततिवेष्टितम्॥ स्थूलास्थिकाष्ठसंवद्धंसुकुड्यंसुसमाहितम्॥१९॥ इडाचपिंगलाचास्यदेहस्यमुनिनायक ॥ सुस्थितेकोमलेमध्येपार्श्वकोष्ठेनिमीलिते॥ २०॥ पद्मयुग्मत्रयंयंत्रमस्थिमांसमयंमृदु॥ऊर्ध्वाधोनालमन्योन्यमिलत्कोमलसद्दलम्॥ २१॥ सेकेनविकसत्पत्रंसकलाकाशचारिणा॥ चलंतितस्यपत्राणिमृदुव्याप्तानिवायुना॥ २२॥

जायतं विद्यादितिश्रुतेरितिभावः ॥ १८ ॥ रक्तमांसवसाभिर्वारिमृद्गोमयैरिवदिग्धमुपलेपेनोपचितम ॥ स्नायवःशिरास्तत्संततिभिर्वेष्टितंरुद्धम् अतएवसुकुड्यम् ॥ १९ ॥ अस्यदेहस्यमध्येइडापिंगलाचेतिद्वेकोमलेसूक्ष्मेनाड्यौवामदक्षिणपार्श्वकोष्ठेनिमीलितेअनभिव्यक्ते नासापुटयोःप्राणसंचारलिंगेनाभिव्यक्तेसुस्थिते ॥ २० ॥ तत्रसर्वप्राणशक्तीनामाश्रयभूतंद्वासप्ततिसहस्रसंख्याकनाडीप्रभेदमूलजालकंपुरीतन्नामकंसंपुटितसनालपद्मयुग्मत्रयाकारंत्वत्पद्मयंत्रत्रयंदर्शयति ॥ पद्मयुग्मेति ॥ अस्थिग्रहणाद्दृक्रिसंधिकीलप्रोतोर्ध्वनालतागम्यते ॥ अन्योन्यंसंपुटीभावेनमिलत्कोमलसद्दलमतएवयंत्रप्रत्येकंयंत्राकारम ॥ २१ ॥ नासाग्रादिपादांतसकलदेहाकाशचारिणाचंद्राख्यापानवायुनासेकेनविकसंतिपद्माणिदलानियस्यतत् ॥ एवंप्राणसंचारेणपत्राणिईषत्संकुचंतीत्यर्थाद्गम्यते ॥ अतएवतस्ययंत्रस्यपत्राणिप्राणापानवायुनाव्याप्तानिसंतिमृदुचलंतिप्रत्युच्छ्वासनिःश्वासमीषत्संकुचंतिविकसंतिचेत्यर्थः ॥ २२ ॥

किततस्तत्राह॥चलत्स्विति ॥ परिवर्धतेपरितःप्रसारात्पुरीतत्संबद्धसर्वनाडीच्छिद्रेषुप्रविश्यबहुलीभवतीत्यर्थः॥ यथाबहिररण्यादौलतापत्रजालेवातेनाहतेसतिवायुःपरितःप्रसरतितद्वदित्यर्थः॥ २३ ॥ एवंवर्द्धिनीतःसत्हृदयपायुनाभिकंठसर्वांगलक्षणमनेकधास्थानंकृत्वाकल्पयित्वाप्राणादिपंचसंज्ञःसन्ऊर्ध्वाधोवर्त्तमानासुद्विसप्ततिसहस्रप्रतिशाखासुएकोत्तरशतनाडीषुप्रविश्यदेहेप्रसरतीत्यर्थः ॥ २४ ॥ तदेवाह ॥ प्राणेति ॥ २५ ॥ तैःप्राणैःसहप्राणशक्तीनामपिसर्वांगेप्रसरंदर्शयति ॥ हृत्पद्मेति ॥ २६ ॥ तासामन्तरसस्यदेहव्यापनायनाडीषुव्यापारमाह ॥ यांतीति ॥ २७ ॥ हृदयमेवमुख्यस्थानंप्राणस्यैवमुख्यता अन्येतद्वृत्तिभेदास्तद्द्वारेणप्राणएवसर्वशरीरेंद्रियादिचेष्टाःशक्तिभेदैःकरोतीत्याह ॥ सएषइत्यादिना ॥ २८ ॥ २९ ॥ यंत्रेहांप्रतिमादियंत्रस्यनृत्यादिचेष्टाम् ॥ यांत्रिकोयंत्रसूत्रधारः ॥ ३० ॥ ऊर्ध्वगमनमधोगमनमितिद्विविधसंकेतवंतौ ॥ ३१ ॥ एवंसर्वमौपो

चलत्सुतेषुपत्रेषुसमरुत्परिवर्धते॥ वाताहतेलतापत्रजालेयद्वहिरिवाभितः॥ २३॥ वर्द्धिनीतःसनाडीषुकृत्वास्थानमनेकधा॥ ऊर्ध्वाधोवर्तमानासुदेहेस्मिन्प्रसरत्यथ॥२४॥ प्राणापानसमानाद्यैस्ततःसहृदयानिलः॥ संकेतैःप्रोच्यतेतज्ज्ञैर्विचित्राचारचेष्टितैः॥२५॥ हृत्पद्मयंत्रत्रितयंसमस्ताःप्राणशक्तयः॥ ऊर्ध्वाधःप्रसृतादेहेचंद्रबिंबादिवांशवः॥ २६॥ यांत्यायांतिविकर्षंतिहरंतिविहरंतिच॥ उत्पतंतिपतंत्याशुताएताःप्राणशक्तयः॥ २७॥ सएषहृत्पद्मगतःप्राणइत्युच्यतेबुधैः॥ अस्यकाचिन्मुनेशक्तिःप्रस्पंदयतिलोचने॥ २८॥ काचित्स्पर्शमुपादत्तेकाचिद्वहतिनासया॥ काचिदन्नंजरयतिकाचिद्वक्तिवचांसिच॥ २९॥ बहुनात्रकिमुक्तेनसर्वमेवशरीरके॥ करोतिभगवान्वायुर्यंत्रेहामिवयांत्रिकः॥३०॥ तत्रोर्ध्वाधोद्विसंकेतौप्रस्तुतावनिलौमुने॥ प्राणापानावितिख्यातौप्रकटौद्वौवरानिलौ॥३१॥ तयोरनुसरन्नित्यंमुनेगतिमहंस्थितः॥ शीतोष्णवपुषोर्नित्यंनित्यमंबरपांथयोः॥ ३२॥ कलेवरमहायंत्रवाहयोःश्रमहीनयोः॥ हृदाकाशार्कशशिनोस्त्वग्नीषोमस्वरूपयोः॥ ३३॥ शरीरपुरपालस्यमनसोरथचक्रयोः॥ अहंकारनृपस्यास्यप्रशस्यपृतुरंगयोः॥ ३४॥

दानिकमुपवर्ण्यस्वयंक्रियमाणांप्राणचिंतांदर्शयति ॥ तयोरिति ॥ तयोर्गत्यनुसरणंत्वाध्यात्मिकपरिच्छेदत्यागेनाधिदैविकसूत्रात्मरूपतदात्मभावधारणयाआसंगपाप्मदूषितसर्वेंद्रियव्रतपरित्यागेनतन्मात्रव्रताचरणंवागादींद्रियाणांहिवचनादिस्वस्वविषयव्यसनिताव्रतंतच्चासंगपाप्मदूषितमितिश्रमलक्षणेनमृत्युनाभग्नम ॥ प्राणस्यतुमुखनासिकादिस्थानेषुसंचरणमेवव्रतंतच्चनविषयासंगदूषितमितिनश्रमात्मनाभज्यतइतिप्राणएवैकोव्रतभंगशून्योमृत्युनानग्रस्यते अतस्तदात्मताधारणतद्व्रतमात्राचरणलक्षणात्प्राणचिंतनात्स्वस्यजितमृत्युतेत्याशयः॥ इयंचप्राणचिंताप्राणव्रतधारणसहिताबृहदारण्यकेअथातोव्रतमीमांसेत्यादिनातस्मादेकमेवव्रतंचरेत्प्राण्याच्चैवापान्याच्चनेत्पाप्मामृत्युराप्नुवदितियद्विचरेत्समापिपर्ययिषेत्तेनोएतस्यैदेवतायैसायुज्यंसलोकतांजयतीत्यंतेनग्रंथेनप्रपंचितातत एवावगंतव्या ॥ तयोरुपासनीयगुणांतराण्यप्याह ॥ शीतोष्णवपुषोरित्यादिना ॥ ३२ ॥ श्रमहीनयोरिति ॥ तानिमृत्युःश्रमोभूत्वोपयेमेअथेममेवनाप्नोद्योयंमध्यमःप्राणइतिश्रुतेरितिभावः ॥ ३३ ॥ ३४ ॥

आशरीरंयावज्जीवमरुद्वयोरविच्छिन्नोपासनयोः ॥ तथाचशाकृश्रुतिरुदाहृतायद्युच्चरेत्समापिपर्ययिपेदिति ॥ नविच्छिंद्यादितिहितदर्थः ॥ ३५ ॥ समरूपयोरिति ॥ अभ्यासा
तिशयेनबहिरंतश्चद्वादशषोडशांगुलप्रदेशमात्रपरिमितसंचारयोरित्यर्थः ॥ ३६ ॥ प्राणायामाभ्यासात्तयोःसूक्ष्मतमत्वापादनाच्चनोत्क्रमणादिप्रसक्तिरित्याशयेनाह ॥ सहस्रेति ॥
अथवानाड्यंतःसंचारोनयोर्मुखनासिकासंचारइवकुतोनलक्ष्यतेतत्राह ॥ सहस्रेति ॥ यथाकेशःसहस्रधाभिन्नस्तावताणिम्नातिष्ठंतीतिश्रुतेर्नाडीनामेवातिसूक्ष्मत्वाद्दुर्लक्षत्वेतदंत
रनयोर्गतिःसुतरांदुर्लक्षेत्याशयः ॥ ३७ ॥ वर्णितांप्राणचिंतांवर्णयिष्यमाणप्रकारप्रश्नस्यावसरंसूचयन्नुपसंहरति ॥ अविरतेति ॥ हृदिहृदयादिस्थानेष्वविरतंगतंसंचारोययो
स्तयोर्मरुतोःप्राणापानयोश्चोदितांनानाश्रुतिपुतत्त्वाणोपास्तिप्रकरणेअनेकधाविहितांनिर्दोषत्वगतश्रमत्वाभग्नव्रतत्वसंवर्गाद्यनेकगुणविशिष्टांगतिमनुसृत्यवक्ष्यमाणप्रकारेणो

तयोर्ममानुसरतःप्राणापानाभिधानयोः॥ गतिंशरीरमरुतोराशरीरमरुद्वयोः॥ ३५॥ जाग्रत्स्वप्नसुषुप्तेषुसदैवसमरूपयोः॥ सुषुप्तसं
स्थितस्येवब्रह्मन्गच्छंतिवासराः॥३६॥ सहस्रविनिकृत्तांगाद्बिसतंतुलवादपि॥ दुर्लक्ष्याविद्यमानापिगतिःसूक्ष्मतरानयोः॥ ३७॥ अ
विरतगतयोर्गतिंविदित्वाहृदिमरुतोरनुसृत्यचोदितांताम्॥ नपुनरिहहिजायतेमहात्मन्मुदितमनाःपुरुषःप्रणष्टपाशः॥ ३८॥ ॥इ॰
वा॰वा॰दे॰मो॰नि॰पू॰भु॰प्राणविचारणंनामचतुर्विंशतितमःसर्गः॥२४॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्थंसकथयन्पक्षीपृ
ष्टस्तत्रपुनर्मया॥ कीदृशीप्राणवातस्यगतिरित्येवराघव॥१॥ ॥भुशुंडउवाच॥ ॥जानन्नपिमुनेसर्वंकिंमांपृच्छसिलीलया॥ यथा
पृष्टमहंवच्मिशृणुतत्रापिमद्वचः॥ २॥ प्राणोयमनिशंब्रह्मन्स्पंदशक्तिःसदागतिः॥ सबाह्याभ्यंतरेदेहेप्राणोयमुपरिस्थितः॥ ३॥अ
पानोप्यनिशंब्रह्मन्स्पंदशक्तिःसदागतिः॥ सबाह्याभ्यंतरेदेहेत्वपानोयमवाक्स्थितः॥ ४॥ जाग्रतःस्वपतश्चैवप्राणायामोयमुत्तमः॥
प्रवर्त्ततेयतस्तज्ज्ञतत्तावच्छ्रेयसेशृणु॥ ५॥ बाह्योन्मुखत्वंप्राणानांयद्धृदंबुजकोटरात्॥ स्वरसेनास्तयत्नानांतंधीरारेचकंविदुः॥ ६॥
द्वादशांगुलपर्यंतंबाह्यमाक्रमतामधः॥ प्राणानामंगसंस्पर्शोयःसपूरकउच्यते॥ ७॥

पास्यप्रणष्टमृत्युपाशःसन्पुरुषस्तत्त्वज्ञानेनजीवन्मुक्तोभूत्वाइहसंसारेपुनर्नजायतइत्यर्थः ॥ हिशब्दःप्राणाद्युपास्तीनामपिनिष्कामानुष्ठितानांज्ञानद्वारामुक्तिहेतुत्वंश्रुतिपुप्रसि
द्धमितिद्योतनार्थः ॥ ३८ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनि॰पू॰चतुर्विंशतितमःसर्गः ॥ २४ ॥ ॥७॥ ॥ प्राणापानगतिष्वत्ररेचकादिप्रकल्पनम् ॥
प्राणापानोदयलयस्थानंब्रह्मचवर्ण्यते ॥ १ ॥ प्रश्नावसरप्रदानसूचितश्चिंतनीयप्राणगतिप्रकारभेदोमयापृष्टइत्याह ॥ इत्थमिति ॥ १ ॥ २ ॥ एकःप्राणशब्दोरूढःअपरस्तुप्राग
नितीतियौगिकस्तल्लक्षणपरः ॥ लक्षणानुसारेणैवोर्ध्वस्थानमभिनिर्णायदर्शयति ॥ अयमुपरिस्थितइति ॥ ३ ॥ एवमपानपदमप्येकंयौगिकंपूर्ववत्सर्वम् ॥ ४ ॥ एवंलक्षणतोभेदंप्र
दर्श्यतद्गतिष्वयत्नतःसदैवप्राणायामत्वसिद्धिंचितनंदर्शयति ॥ जाग्रतइत्यादिना ॥ ५ ॥ तत्रहृदयान्मूर्धपर्यंतंप्रश्वासगत्यर्धमांतररेचकत्वेनचिंतनीयम् ॥ मूर्धादिबहिर्द्वादशांगुल
पर्यंतंत्वर्धंबाह्यपूरकत्वेनेत्याह ॥ बाह्येतिद्वाभ्याम् ॥ ६ ॥ ७ ॥

१ विनिभक्तांगादित्यपिक्वचित्पाठः

एवंबाह्याद्देशादपानेअंतःपरापतति प्रविशतियोनासायादिमूर्धपर्यंतोयश्चमूर्धादिहृदयपर्यंतोवायोःस्पर्शस्तंद्विविधमप्यंतःपूरकंविदुरित्यर्थः ॥८ ॥ इदानीमंतःकुंभकंकल्पिताकल्पितसाधारण्येनलक्षयति ॥ अपानेइति ॥ अस्तंगतेप्रशांतेसति॥९॥बहिरपिचरेचकादीन्दर्शयितुमुपक्रमते॥ रेचकइत्यादिना॥ अपानस्योदयस्थानेनासाग्राद्बहिर्द्वादशांगुलपर्यंते ॥ १० ॥ स्वतएवभवंतीतिस्वभावायेरेचकादयःप्रोक्ताः ॥ ११ ॥ अभ्युदितःअभिमुखंस्थितः ॥ तस्यवातस्यतत्रबाह्यप्रदेशएवबाह्यपूरकादयश्चिंतनीयाइतिशेषः ॥१२ ॥ तत्रबाह्यवाय्वंतरपानस्यैकीभावेननिश्चलप्रायांस्थितिंकुंभकत्वेनकल्पयति ॥ मूर्दंतरस्थेतिसार्धेन ॥ १३॥ तस्यपूर्वप्राणभावेनहृदयादारभ्यनासाग्रपर्यंतायागतिस्तांबाह्यपूरक

बाह्यात्परापतत्यंतरपानेयत्नवर्जितः॥ योयंप्रपूरणःस्पर्शोविदुस्तमपिपूरकम्॥८॥ अपानेऽस्तंगतेप्राणोयावन्नाभ्युदितोहृदि॥ तावत्साकुंभकावस्थायोगिभिर्यानुभूयते॥९॥ रेचकःकुंभकश्चैवपूरकश्चत्रिधास्थितः॥ अपानस्योदयस्थानेद्वादशांतादधोबहिः॥१०॥ स्वभावाःसर्वकालस्थाःसम्यग्यत्नविवर्जिताः॥ येप्रोक्ताःस्फारमतिभिस्ताञ्छृणुत्वंमहामते॥११॥ द्वादशांगुलपर्यंताद्बाह्यादभ्युदितःप्रभो॥ योवानस्तस्यतत्रैवस्वभावात्पूरकादयः॥१२॥ मूर्दंतरस्थानिष्पन्नघटवद्यास्थितिर्बहिः॥ द्वादशांगुलपर्यंतनासाग्रसमसंमुखे॥१३॥ व्योम्निनित्यमपानस्यतंविदुःकुंभकंबुधाः॥ बाह्योन्मुखस्यवायोर्यानासिकाग्रावधिर्गतिः॥१४॥ तंबाह्यपूरकंत्वाद्यंविदुर्योगविदोजनाः॥ नासाग्रादपिनिर्गत्यद्वादशांतावधिर्गतिः॥१५॥यावायोस्तंविदुर्धीराअपरंबाह्यपूरकम्॥ बहिरस्तंगतेप्राणेयावन्नापानउद्गतः॥१६॥ तावत्पूर्णसमावस्थंबहिष्ठंकुंभकंविदुः॥ यत्तदंतर्मुखत्वंस्यादपानस्योदयंविना॥१७॥ तंबाह्यरेचकंविद्याच्चिंत्यमानंविमुक्तिदम्॥ द्वादशांताद्यदुत्थायरूपर्पावरतापरा॥१८॥ अपानस्यबहिष्ठंतमपरंपूरकंविदुः॥ बाह्यानाभ्यंतरांश्चैतान्कुंभकादीननारतम्॥१९॥ प्राणापानस्वभावांस्तान्बुध्वाभूयोनजायते॥ अष्टावेतेमहाबुद्धेरात्रिंदिवमनुस्मृताः॥२०॥ स्वभावादेहवायूनांकथितामुक्तिदामया॥ गच्छतस्तिष्ठतोवापिजाग्रतःस्वपतोपिवा॥२१॥

त्वेनापिकल्पयेदित्याह ॥ बाह्योन्मुखस्येति ॥ १४ ॥ ततोबहिर्गतिंबाह्यपूरकांतरतयाकल्पयति ॥ नासाग्रादिति ॥ १५ ॥ बहिरित्यादिःपूर्वोक्तानुवादः ॥ १६ ॥ बाह्यरेचकद्वयकल्पनप्रकारमाह ॥ यत्तदिति ॥ उदयंप्रस्पंदंविना ॥ तथाचप्रस्पंदपूर्वक्षणेयदंतर्मुखत्वंप्रस्पंदोन्मुखत्वंतमित्यर्थः ॥ १७ ॥ द्वादशांताद्बाह्यद्वादशांगुलचरमभागात् ॥ नासाग्रपर्यंतमपानस्यचलनेनस्वरूपाभिव्यक्त्यार्पावरता ॥ १८ ॥ १९ ॥ बुध्वाउपास्यभूयोनजायतइत्यवश्यंभाविज्ञानफलेनस्तुतिः ॥ अष्टाविति ॥ यद्यपिबहिरंतश्चरेचकपूरकयोःप्रत्येकंद्वैविध्यकथनात्कुंभकाभ्यांसहदशभवंतितथापिकुंभकयोःप्राधान्यादंगाष्टकाभिप्रायेणयमुक्तिः ॥ २० ॥ एतदभ्यासात्प्राणनिरोधोपिकालेभवतीत्याह ॥ गच्छतइति ॥ २१ ॥

कर्तृत्वभोक्तृत्वाभिमानोप्यनेननश्यतीत्याशयेनाह ॥ यत्करोतीति ॥ २२ ॥ बाह्यदृष्टिपरित्यागादंतरात्मदर्शनोदयेनपरमपदप्राप्तिरप्यनेनसिद्ध्यतीत्याह ॥ अव्यग्रमिति ॥ अस्मिन्प्राणचिंतनव्यापारेसंसक्तमतएवबाह्यमर्थंपरिजहत्त्यजत् ॥ २३ ॥ २४ ॥ श्वदृतौश्वचर्मभस्त्रायांतद्गतक्षीरादाविवितियावत् ॥ २५ ॥ २६ ॥ प्राणापानयोरनुसरणमनुसारंश्चिंतनंतेनप्राप्तबोधवतांपुंसांसंशांतमलमोहेनचित्तेनअंतर्हृदयस्थेइहप्रत्यगात्मनि ॥ २७ ॥ २८ ॥ प्राणस्याभ्युदयइत्यादिःपूर्वोक्तानुवादः ॥ २९ ॥ ३० ॥ हृदयसंस्थि

ऐतेनिरोधमायांतिप्रकृत्यातिचलानिलाः॥ यत्करोतियदश्नातिबुद्ध्यैवात्मनुस्मरन् ॥ २२ ॥ कुंभकादीन्नरःस्वांतस्तत्रकर्तानकिंचन ॥ अव्यग्रमस्मिन्व्यापारेबाह्यंपरिजहन्मनः॥ २३ ॥ दिनैःकतिपयैरेवपदमाप्नोतिकेवलम् ॥ एतदभ्यसतःपुंसोबाह्येविषयवृत्तिषु ॥ २४ ॥ नवध्नातिरतिंचेतःश्वदृतौब्राह्मणोयथा ॥ एतांदृष्टिमवष्टभ्ययेस्थिताःकृतबुद्धयः ॥ २५ ॥ प्राप्तप्राप्तव्यमखिलंतैरखिन्नास्तएवहि ॥ तिष्ठतागच्छतानित्यंस्वपताजाग्रतातथा ॥ २६ ॥ एषाचेत्प्रेक्ष्यतेदृष्टिस्तन्नबंधनमाप्यते ॥ प्राणापानानुसरणप्राप्तबोधवतामलम् ॥ २७ ॥ संशांतमलमोहेनस्वस्थेनांतरिहोष्यते ॥ सर्वारंभान्सदास्वच्छःकुर्वन्वापिबुधोजनः ॥ २८ ॥ प्राणापानगतिंप्राप्यसुस्वस्थःसुखमेधते ॥ प्राणस्याभ्युदयोब्रह्मन्पद्मपत्राद्धृदिस्थितात् ॥ २९ ॥ द्वादशांगुलपर्यंतेप्राणोस्तंयात्ययंबहिः ॥ अपानस्योदयोबाह्याद्द्वादशांतान्महामुने ॥ ३० ॥ अस्तंगतिरथांभोजमध्येहृदयसंस्थिते ॥ प्राणोयत्रसमायातिद्वादशांतेनभःपदे ॥ ३१ ॥ पदात्तस्मादपानोयंखादेतिसमनंतरम् बाह्याकाशोन्मुखःप्राणोवहत्यग्निशिखायथा ॥ ३२ ॥ हृदाकाशोन्मुखोपानोनिम्नेवहतिवारिवत् ॥ अपानश्चंद्रमादेहमाप्याययतिबाह्यतः ॥ ३३ ॥ प्राणःसूर्योग्निरथवापचत्यंतरिदंवपुः ॥ प्राणोहिहृदयाकाशंतापयित्वाप्रतिक्षणम् ॥ ३४ ॥ मुखाग्रगगनंपश्चात्तापयत्युत्तमोरविः ॥ अपानेंदुर्मुखाग्रंतुप्लावयित्वाहृदंबरम् ॥ ३५ ॥ पश्चादाप्याययत्येषनिमेषसमनंतरम् ॥ अपानशशिनोंतस्याकलाप्राणविवस्वता ॥ ३६ ॥ यत्रग्रस्तातदासाद्यपदंभूयोनशोच्यते ॥ प्राणार्कस्यतथांतस्थायत्रापानसितांशुना ॥ ३७ ॥ ग्रस्तातत्पदमासाद्यनभूयोजन्मभाग्नरः ॥ प्राणएवार्कतांयातिसबाह्याभ्यंतरेंबरे ॥ ३८ ॥ आप्यायनकरींपश्चाच्छशितामधितिष्ठति ॥ प्राणएवेंदुतांत्यक्त्वाशरीराप्यायकारिणीम् ॥ ३९ ॥

तेअंभोजमध्येअस्तंगतिरपानस्येतिशेषः ॥ प्राणोयत्रयस्मिन्नभःपदेसमायातिसमाप्यते ॥ ३० ॥ तस्मात्खात्पदात्अपानएतिउद्गच्छति ॥ प्राणापानयोरग्नीषोमात्मकत्वंयदुक्तंतदौष्ण्यशैत्योर्ध्वाधोमुखत्वप्रदर्शनेनोपपादयति ॥ बाह्येत्यादिना ॥ ३२ ॥ ३३ ॥ तयोःसूर्यचंद्रात्मकतावाचित्येत्याशयेनतामप्युपपादयति ॥ प्राणइत्यादिना ॥ ३४ ॥ ॥ ३५ ॥ कलाचरमोभागः ॥ यत्रयस्मिन्हार्देब्रह्मणिस्थित्वायस्तातद्ब्रह्मासाद्य ॥ ३६ ॥ यत्रयस्मिन्द्वादशांगुलपर्यंतबाह्याकाशोपलक्षितेब्रह्मणिविद्यमानेनापानेनयस्तातद्ब्रह्मपदमासाद्येत्यर्थः ॥ ३७ ॥ एकस्यैववायोःपर्यायेणशक्तिद्वयोदयश्चिंतनीयइत्याह ॥ प्राणएवेत्यादिना ॥ ३८ ॥ आप्यायनमाप्यायोह्लादनम् ॥ ३९ ॥

तत्रबहिर्द्वादशांगुलपर्यंतेप्रसृतःप्राणोयावदर्कतामौष्ण्यंपरित्यज्यचंद्रतांशैत्यंनगतःसाप्राणापानयोःसंध्यवस्थातस्यांदेहाद्बहिःप्राणलयादात्मनोनिर्देहत्वनिष्क्रियत्वनिर्मनस्त्वादयो वास्तवस्वभावाःसंभावयितुंशक्यत्वाद्विचार्यंते ॥ तत्रबाह्यकुंभकेदेहादिदेशपरिच्छेदाभावाच्चंद्रसूर्यात्मकप्राणापानक्रियाप्रयुक्तायुःकालपरिच्छेदाभावाच्चादेशकालेस्वात्मनि प्रतिष्ठितेनयोगिनानशोच्यतेइत्यर्थः ॥४०॥ एवमंतःकुंभकेपिहृदिप्राणापानसंधौप्रतिष्ठितस्यमनसोनिजाधिष्ठानपरमात्मतत्त्वबोधावश्यंभावान्नजन्मादिप्रसक्तिरित्याह ॥ हृदीति ॥४१॥ आत्मनोमनसःआधारमधिष्ठानंपरमात्मानम ॥ अथवाहृदयस्थःस्वात्मैवप्राणसूर्यःसएवापानात्मकचंद्रतयाउदयास्तमयनद्रश्मिभूतव्यानादिवृत्तिभेदाद्यात्मनाविवर्त्तेनेनतद्व्यतिरिक्तःकश्चिदस्तीत्युपासनंस्वात्मदर्शनेहेतुरित्याह ॥ सोदयास्तमयमिति ॥४२॥ ननुकिंहृद्यात्मसाक्षात्कारेणबाह्यतमसाबहिरेवापरिच्छिन्नस्यात्मनआवृतत्वात्तत्क्षयायबाह्यज्योतिरर्वाकिनान्विष्यतेतत्राह ॥ नेति ॥४३॥ हार्दंत्विति ॥ बाह्यध्वांतकल्पनापिहार्दध्वांतवशादेवेतितत्क्षयेतत्क्षयोर्थसिद्धइतिभावः ॥ बाह्यज्योतिषाबाह्यतमःक्षपणं

क्षणादायातिसूर्यत्वंसंशोषणकरंपदम् ॥ अर्कतांसंपरित्यज्यनयावच्चंद्रतांगतः ॥४०॥ प्राणस्तावद्विचार्यंतेऽदेशकालेनशोच्यते ॥ हृदि चंद्रार्कयोर्ज्ञात्वानित्यमस्तमयोदयम् ॥४१॥ आत्मनोनिजमाधारंनभूयोजायतेमनः ॥ सोदयास्तमयंसेंदुंसरश्मिंसगमागमम् ॥४२॥ हृदयेभास्करंदेवंयःपश्यतिसपश्यति ॥ नक्षीणंनापरिक्षीणंबहिष्ठंसिद्ध्यतेतमः ॥४३॥ हार्दंतुक्षपयेद्ध्वांतंयत्क्षयेसिद्धिरुत्तमा ॥ बाह्येतमसिसंक्षीणेलोकालोकःप्रजायते ॥ ४४ ॥ हार्देतुतमसिक्षीणेस्वालोकोजायतेमुने ॥ हार्दांधकारक्षयदंपरिज्ञातंविमुक्तिदम् ॥ ४५ ॥ सोदयास्तमयंयत्नात्प्राणार्कमवलोकयेत् ॥ अपानेंदुःप्रयात्यस्तंयत्रहृत्पद्मकोटरे ॥ ४६ ॥ पदात्तस्मादुदेत्यंतःप्राणार्कोबहिरुन्मुखः ॥ अपानेस्तंगतेप्राणःसमुदेतिहृदंबुजात् ॥ ४७ ॥ छायायांगलितांगायांतत्रैवाशुयथातपः ॥ प्राणेत्वस्तंगतेबाह्यादपानःप्रोदितःक्षणात् ॥ ४८ ॥ आतपेपरितेनष्टेछायेवानुपदंतथा ॥ प्राणजन्मावनौनष्टमपानंविद्धिसन्मते ॥ ४९ ॥ अपानजन्मभूमौचप्राणंनष्टमवेहिहि ॥ अस्तंगतवतिप्राणेत्वपानेभ्युदयोन्मुखे ॥५०॥ बहिःकुंभकमालंब्यचिरंभूयोनशोच्यते ॥ अपानेस्तंगतेप्राणेकिंचिदभ्युदयोन्मुखे ॥५१॥ अंतःकुंभकमालंब्यचिरंभूयोनशोच्यते ॥ प्राणरेचकमालंब्यअपानाद्दूरकोटिगम् ॥ ५२ ॥ स्वच्छंकुंभकमभ्यस्यनभूयःपरितप्यते ॥ अपानरेचकाधारंप्राणपूरांतरस्थितम् ॥५३॥ स्वसंस्थंपूरकंदृष्ट्वानभूयोजायतेनरः ॥ प्राणापानावुभावंतर्यत्रैतौविलयंगतौ ॥५४॥ तदालंब्यपदंशांतमात्मानंनानुतप्यते ॥ प्राणभक्षोन्मुखेपानेदेशंकालंचनिष्कलम् ॥ ५५ ॥

तुरूपादिदर्शनेहेतुरेवनबहिरात्मदर्शनेहेतुरित्याशयेनाह ॥ बाह्येइति ॥ लोक्यतइतिलोकोजगद्रूपम् ॥ ४४ ॥ ४५ ॥ उक्तेबाह्यांतःकुंभकप्रतिष्ठेप्ररोचनायप्रपंचयिष्यन्भूमिकांरचयति ॥ अपानेंदुरित्यादिना ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ उदयोन्मुखेतैवनिरोद्धव्येत्याशयः ॥ ५० ॥ ५१ ॥ अपानादपानोदयस्थानाद्द्वादशांगुलस्थानाद्दूरकोटिगंषोडशांगुलभागप्रसारिणमित्यर्थः ॥ ५२ ॥ निःशेषवायुरेचनात्स्वच्छम ॥ नासाविवरेणांतःप्रविशत्यपानेबाह्यरेचकाधारंप्राणस्यपूरणंप्राणपूरस्तदर्थमंतःआस्थितंप्रविष्टंस्वसंस्थंदेहांतर्गतंपूरकंदृष्ट्वाउपास्य ॥ ५३ ॥ यत्रहार्देब्रह्मणि ॥ ५४ ॥ इदानीमर्कतांसंपरित्यज्यनयावच्चंद्रतांगतइत्यत्रअदेशकालेनशोच्यतेइतियदुक्तंतद्विश्लेषणवन्बाह्यकुंभकोकस्यदेशकालबाधस्यांतकुंभकंप्यनूकर्यदर्शयति ॥ प्राणभक्षोन्मुखइत्यादिना ॥ बहिःप्राणलयाधिष्ठानचितिअंतःप्राणनिर्गमापादानचितिवाबाधेनदेशंकालंचात्तदंतर्वर्तिवस्तुजातंचनिष्कलंचिन्मात्रमेवेतिविचार्येत्यर्थः ॥ ५५ ॥

॥५६॥ ५७ ॥ देशकालौप्राणापानाभ्यांसहैवनिगीर्णावितिपश्येत्यर्थः ॥ तादृशावस्थाप्राणापानसंधिक्षणेसर्वप्राणिनामप्यस्तियोगिनस्तुतद्विदुर्नान्येइत्याह ॥ क्षणमित्यादिना ॥ ५८ ॥ विदुःयोगिनइतिशेषः ॥ ५९ ॥ ६० ॥ एवंक्रियाभेदभिन्नप्राणार्चिताप्रकारमुक्तातन्निरूढ्यनंतरंप्राणापानाद्यांतरतदधिष्ठानचिदात्मोपासनंकर्तव्यमित्याशयेनाह ॥ पुष्पस्यांतरित्यादिना ॥ सकिंप्राणोपहितएवोपास्योनेत्याह ॥ नसप्राणमिति ॥ तर्हिकिंप्राणलयोपलक्षितोऽपानात्मासनेत्याह ॥ नवापानमिति ॥ तथाचतत्परिचयार्थंप्राणस्यांतरवस्थितमित्युक्तंनतूपासनोपाधितयेतिभावः ॥ ६१ ॥ आस्वाद्यतइत्यास्वादोमाधुर्यमिव ॥ सप्राणंसजीवम् ॥ अप्राणंनिर्जीवम् ॥ ६२ ॥ ६३ ॥ प्राणस्येति ॥ सउप्रा

विचार्यबहिरंतर्वानभूयःपरिशोच्यते ॥ अपानभक्षणपरेप्राणेत्त्वदितथाबहिः॥५६॥ देशंकालंचसंप्रेक्ष्यनभूयोजायतेमनः॥ यत्रप्राणोत्यपानेनप्राणेनापानएवच॥५७॥ निगीर्णौबहिरंतश्चदेशकालौचपश्यतौ॥ क्षणमस्तंगतप्राणमपानोदयवर्जितम्॥५८॥ अयत्नसिद्धवाह्यस्थंकुंभकंतत्पदंविदुः॥ अयत्नसिद्धोत्यंतस्थकुंभकःपरमंपदम्॥५९॥ एतत्तदात्मनोरूपंशुद्धैषापरमैवचित्॥ एतत्तत्त्सदाभासमेतत्प्राप्यनशोच्यते॥६०॥ पुष्पस्यांतरिवामोदःप्राणस्यांतरवस्थितम्॥ नसप्राणंनवापानंचिदात्मानमुपास्महे॥६१॥ जलस्यांतरिवास्वादमपानस्यांतरस्थितम्॥ नसप्राणंनवाप्राणंचिदात्मानमुपास्महे॥६२॥ प्राणक्षयस्योपांतस्थमपानक्षयकोटिगम्॥ अपानप्राणयोर्मध्यंचिदात्मानमुपास्महे॥६३॥ प्राणस्यप्राणनंप्रोच्चैःपरंजीवस्यजीवनम्॥ देहस्यधारणंधुर्यंचिदात्मानमुपास्महे॥६४॥ मनसोमननंसत्यंबुद्धेरेकावबोधनम्॥ अहंकृतेरहंकारंचिदात्मानमुपास्महे॥६५॥ यस्मिन्सर्वंयतःसर्वंयत्सर्वंसर्वतश्चयत्॥ यच्चसर्वमयंनित्यंतच्चित्तत्त्वमुपास्महे॥६६॥ आलोकालोकनंपुण्यंसर्वपावनपावनम्॥ नचभावनमन्नूनंतच्चित्तत्त्वमुपास्महे॥६७॥ (अपानास्तंगतोयत्रप्राणोनाभ्युदितःक्षणम्॥ कलाकलंकरहितंतच्चित्तत्त्वमुपास्महे॥१॥) नापानोऽभ्युदितोयत्रप्राणश्चांतमुपागतः॥ नासाग्रगगनावर्त्तंतच्चित्तत्त्वमुपास्महे॥६८॥ यत्रप्राणोस्तमायातियत्रापानोस्तमेतिच॥ यत्रद्वावप्यनुत्पन्नौतच्चित्तत्त्वमुपास्महे॥६९॥ प्राणापानोद्भवस्थानेवाह्याभ्यंतरमास्थिते॥ येद्वेयोगिपदाधारस्तच्चित्तत्त्वमुपास्महे॥७०॥

णस्यप्राणइत्यादिश्रुतेः ॥ प्राणनादिव्यापारेनिमित्तमितिसर्वपर्यायार्थः ॥ ६४ ॥ ६५ ॥ ६६॥ आलोकालोकनंज्योतिषोज्योतिः ॥ भावैर्मनोबुद्ध्यादिविकारैर्नमत्नभीभवत्पूर्वस्वभावात्प्रच्यवतूनच ॥ नूनमितिनिश्चये ॥६७ ॥ नासाग्रोपलक्षितद्वादशांगुलप्रदेशगगनंआवर्त्तःप्राणापानप्रवाहसंधिर्यस्य ॥ विरुद्धप्रवाहद्वयसंधौह्यावर्त्ताभवंति॥६८॥ इदानींबाह्यांतःप्रदेशोपाधिभेदमपहाय यतश्चोदेतिसूर्योस्तंयत्रचगच्छति तदेवाश्चक्रिरेधर्मंसएवाद्यसउश्वएतद्वैतदितिश्रुत्यर्थंमनसिकृत्वाह ॥ यत्रप्राणइति ॥६९॥येद्वेप्राणापानोद्भवस्थानेयोगिभिःपर्यंतेगम्येतेइतिपदेतदाधारस्तदधिष्ठानंयच्चित्तत्त्वंतदित्यर्थः ॥ ७०॥

१ अयंश्लोकःकाश्मीरस्थपुस्तकेऽधिकोदृष्टः

यत्प्राणापानोपाधिरथारूढमनाततंपरिच्छिन्नंसन्प्राणापानसमाहारःप्राणनापाननशक्तिर्भवतिएवंकरणांतरशक्तीनामपियच्छक्तिरूपंभवतीत्यर्थः ॥ ७१ ॥ प्राणापानकुंभक भावेनतद्विसर्गरेचकादिभावेनचतदेवविवर्त्ततइतितदेवोपास्यमित्याह ॥ स्वदिति ॥ ७२ ॥ प्राणापानयोःपरामर्शश्चालनंतस्मिन्निमित्तभूतंतत्सत्तावोधरूपंचेत्यर्थः ॥ एवंप्राणोपास्तिफलमपितदेवेत्युपास्यमित्याह ॥ यत्प्राप्यमिति ॥ ७३ ॥ इंद्रियाणांविषयप्रदेशोपसर्पणंस्पंदस्तदुपभोगश्चानंदस्तयोःकारणम् ॥ ७४ ॥ अखिलकलनाकलंकहीनंपरमार्थतः ॥ आपातदर्शिदृशातुसदाजीवोपाधिभूतेनप्राणादिषोडशकलागणेनपरिवलितंवेष्टितम ॥ सम्यगनुभवःस्वनुभवःसएवविभवोनिरतिशयैश्वर्यंयस्यतथाविधंपरमात्मपदमु

प्राणापानरथारूढंप्राणापानमनाततम् ॥ यच्छक्तिरूपंशक्तीनांतच्चित्तत्त्वमुपास्महे ॥ ७१ ॥ स्वत्प्राणकुंभकंदेवंवहिश्चापानकुंभकम् ॥ पूरकांशविसृष्टंयत्तच्चित्तत्त्वमुपास्महे ॥ ७२ ॥ प्राणापानपरामर्शसत्तावोधंविरूपकम् ॥ यत्प्राप्यंप्राणमननात्तच्चित्तत्त्वमुपास्महे ॥ ७३ ॥ यत्प्राणपवनस्पंदोयत्स्पंदानंदकारकम् ॥ कारणंकारणानांयत्तच्चित्तत्त्वमुपास्महे ॥ ७४ ॥ यदखिलकलनाकलंकहीनंपरिवलितंचसदाकलागणेन ॥ स्वनुभवविभवंपदंतदग्र्यंसकलसुरप्रणतंपरंप्रपद्ये ॥ ७५ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपुनि० पू० भुशुंडोपाख्यानेसमाधिवर्णनंनामपंचविंशःसर्गः ॥ २५ ॥ ॥ भुशुंडउवाच ॥ ॥ एषाहिचित्तविश्रांतिर्मयाप्राणसमाधिना ॥ क्रमेणानेनसंप्राप्तास्वयमात्मनिनिर्मले ॥ १ ॥ एतांदृष्टिमवष्टभ्यसंस्थितोस्मिमहामुने ॥ नचलामिनिमेषांशमपिमेरुविचालतः ॥ २ ॥ गच्छतस्तिष्ठतोवापिजाग्रतःस्वपतोपिवा ॥ स्वप्नेपिनचलत्येषसुसमाधिर्ममात्मनि ॥ ३ ॥ नित्यानित्यासुलोलासुजगत्स्थितिषुसुस्थितः ॥ अंतर्मुखोस्मितिष्ठामिस्वकामेनात्मनात्मनि ॥ ४ ॥ अपिसंरुध्यतेवायुरपिवासलिलंगते ॥ नैतस्मात्सुसमाधानाद्विरुद्धंसंस्मराम्यहम् ॥ ५ ॥ प्राणापानानुसरणात्परमात्मावलोकनात् ॥ अशोकमनुजातोस्मिपदमाद्यंमहातपः ॥ ६ ॥ आमहाप्रलयाद्भूतंन्युन्मज्जननिमज्जनम् ॥ अहमद्यापिभूतानांपश्यञ्जीवामिधीरधीः ॥ ७ ॥ नभूतंनभविष्यंचचिंतयामिकदाचन ॥ दृष्टिमालंब्यतिष्ठामिवर्त्तमानामिहात्मना ॥ ८ ॥ यथाप्राप्तेषुकार्येषुपुरित्यक्तफलैषणः ॥ सुषुप्तसमयाबुद्ध्यापरितिष्ठामिकेवलम् ॥ ९ ॥

त्प्रकारेणप्रपद्येउपासेइत्यर्थः ॥ ७५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० पंचविंशतितमःसर्गः ॥ २५ ॥ ॥ ९ ॥ ॥ इत्थंस्वस्यात्मविज्ञानंनिरूप्यप्राणचिंतया ॥ भुशुंडेनात्रकथ्यंतेचिरजीवितहेतवः ॥ १ ॥ अनेनोक्तप्रकारेण ॥ १ ॥ मेरोर्विचलनंविचालस्तस्मादपि ॥ २ ॥ ३ ॥ जगत्स्थितिषुदृष्टानिष्टलक्षणासुसुस्थितोनिर्विक्षेपः ॥ स्वकामेनस्वच्छंदेन ॥ ४ ॥ वायुःप्रवहाख्योज्योतिश्चक्राधारः ॥ सलिलंमहानदीनाम ॥ गतेःप्रवहणात्संरुध्यतेसंरुध्येतापीत्यर्थः ॥ विरुद्धंव्युत्थापकंविषयजातम् ॥ ५ ॥ हेमहातपः ॥ ६ ॥ ७ ॥ वर्तमानांनित्यवर्तमानस्वभावांसाक्षिदृष्टिम् ॥ आत्मनामनसा ॥ ८ ॥ निरभिमानत्वेनसुषुप्तसमया ॥ ९ ॥

विमृश्यहेयतयानिश्चित्य ॥ तेनचिरंजीवामि ॥ १० ॥ समायोगःसंधिस्तत्समयंतत्रविभातंब्रह्मेतियावत् ॥ ११ ॥ १२ ॥ आत्मनःस्वस्यान्यस्यवाचेष्टितमितिशेषः ॥ शुभंप्रस्तावाज्जीवनम् ॥ १३ ॥ १४ ॥ परंसर्वद्वैतबाधलक्षणंत्यागम् ॥ जीवितंजीवनाभिनिवेशस्तदादि ॥ १५ ॥ १६ ॥ १७ ॥ संपन्नंप्राप्तम् ॥ १८ ॥ १९ ॥ अन्यतःअन्यस्य ॥ २० ॥ सर्वंचिदेव ॥ सर्वपदंनानावस्त्विवावभासतइतिसर्वपदाभासम् ॥ २१ ॥ आहरन्आददानः ॥ २२ ॥ संसारंभवंसांसारमारंभंकार्यम् ॥ २३ ॥ यथाकालंप्रारब्धोप

भावाभावमयींचिंतामीहितानीहितान्विताम् ॥ विमृश्यात्मनितिष्ठामिचिरंजीवाम्यनामयः ॥ १० ॥ प्राणापानसमायोगसमयंसमनुस्मरन् ॥ स्वयमात्मनितुष्यामिचिरंजीवाम्यनामयः ॥ ११ ॥ इदमद्यमयालब्धमिदंप्राप्स्यामिसुंदरम् ॥ इतिचिंतानमेतेनचिरंजीवाम्यनामयः ॥ १२ ॥ नस्तौमिनचनिंदामिक्वचित्किंचित्कदाचन ॥ आत्मनोन्यस्यवासाधोतेनाहंशुभमागतः ॥ १३ ॥ नतुष्यतिशुभप्राप्तौनाशुभेष्वपिखिद्यते ॥ मनोममसमंनित्यंतेनाहंशुभमागतः ॥ १४ ॥ परमंत्यागमालंब्यसर्वमेवसदैवहि ॥ जीवितादिमयात्यक्तंतेनाहंशुभमागतः ॥ १५ ॥ प्रशांतचापलंवीतशोकंस्वस्थंसमाहितम् ॥ मनोममसुनेशांतंतेनजीवाम्यनामयः ॥ १६ ॥ काष्ठंविलासिनींशैलंतृणमग्निंहिमंनभः ॥ समंसर्वत्रपश्यामितेनजीवाम्यनामयः ॥ १७ ॥ किमद्यममसंपन्नंप्रातर्वाभवितापुनः ॥ इतिचिंताज्वरोनास्तितेनजीवाम्यनामयः ॥ १८ ॥ जरामरणदुःखेषुराज्यलाभसुखेषुच ॥ नबिभेमिनहृष्यामितेनजीवाम्यनामयः ॥ १९ ॥ अयंबंधुःपरश्चायंममायमयमन्यतः ॥ इतिब्रह्मन्नजानामितेनजीवाम्यनामयः ॥ २० ॥ सर्वंसर्वपदाभासमनाद्यंतमनामयम् ॥ अहंचिदितिजानामितेनजीवाम्यनामयः ॥ २१ ॥ आहरन्विहरंस्तिष्ठन्नुत्तिष्ठन्नुच्छ्वसन्स्वपन् ॥ देहोहमितिनोवेद्मितेनास्मिचिरजीवितः ॥ २२ ॥ इमंसांसारमारंभंसुपुन्नपदवत्स्थितः ॥ असंतमिवजानामितेनजीवाम्यनामयः ॥ २३ ॥ यथाकालमुपायातावर्थानर्थौसमौमम ॥ हस्ताविवशरीरस्थौतेनजीवाम्यनामयः ॥ २४ ॥ अपरिचलयाशक्त्यासुदृशास्निग्धमुग्धया ॥ ऋजुपश्यामिसर्वत्रतेनजीवाम्यनामयः ॥ २५ ॥ आपादमस्तकांतस्मिन्नदेहेममताम्मम ॥ त्यक्ताहंकारपंकस्यतेनजीवाम्यनामयः ॥ २६ ॥ यत्करोमियदश्नामितत्त्यक्त्वातद्वतोपिमे ॥ मनोनैष्कर्म्यमादत्तेतेनजीवाम्यनामयः ॥ २७ ॥ यदायदामुनेकिंचिद्विजानामितदातदा ॥ मतिरायातिनौद्धत्यंतेनजीवाम्यनामयः ॥ २८ ॥

स्थापितभोगकालानुसारेणोपायातौप्राप्तौ ॥ २४ ॥ स्वरूपान्नपरिचलतीत्यपरिचलयामनःस्थैर्यशक्त्या ॥ सुदृशासर्वभूतेष्वात्मौपम्यदृष्ट्या ॥ ऋजुअकुटिलम् ॥ तथाचोक्तंभारते ॥ सर्वंजिह्मंमृत्युपदमार्जवंब्रह्मणःपदम् ॥ एतावान्ज्ञानविषयःप्रलापःकिंकरिष्यतीति ॥ २५ ॥ २६ ॥ तत्तदभिमानंत्यक्त्वाशरीरेणतद्वतोपिमेमनोनैष्कर्म्यमकर्तृभोक्तृत्वभावनामादत्तेस्वीकरोति ॥ २७ ॥ औद्धत्यमविनीततांनायाति ॥ २८ ॥

ईशःपरेषामाक्रमणसमर्थोप्याक्रांतिपरिभवंनकरोमि ॥ एवंपरकृतेपरितापेसहनशीलत्वान्नखेदवान् ॥ २९ ॥ पश्यद्रूपेचेतनप्रायेअस्मिन्शरीरेभासमानेप्यहंचिदास्पदश्चि न्मात्रदर्शी ॥ एवंचचिदात्मनःसर्वभूतेषुसाम्यात्सर्वभूतस्थात्मासन्भूतवृंदंस्वशरीरमिवपश्यामीत्यध्याहृत्ययोज्यम् ॥ ३० ॥ सर्वदासमाहितःसन्आशापाशविनुन्नायाश्चित्तवृ त्तेःअंतर्हृदिसंस्पर्शप्रवेशंनददामि ॥ ३१ ॥ बाह्यदृष्टिविषयेसुप्तःसन्जगतःअसत्तांपश्यामिअंतस्तुप्रबुद्धःसन्आत्मनःसत्तांकरबिल्ववत्पश्यामीत्यन्वयः ॥ ३२ ॥ श्लथंशिथि लावयवं क्षीणंकृशांगं क्षुब्धंव्यापृतावयवंक्षुण्णंसंचूर्णितावयवं सर्वमतीतानागतवर्त्तमानवस्तुनित्यनिर्विकारात्ममात्रत्वदृशानववत्पश्यामि ॥ ३३ ॥ ३४ ॥ भावाःकला नामिववित्तादीनामुपचयाअभावास्तत्क्षयाश्चतेपुनैवाभिनिविष्टोस्मि ॥ ३५ ॥ ३६ ॥ ३७ ॥ किंसर्वत्रजाड्यमनपोह्यैवाहंबुद्धिस्तेनेत्याह ॥ घटइति ॥ ३८ ॥ उपसंहरति ॥

करोमीशोपिनाक्रांतिंपरितापेनखेदवान् ॥ दरिद्रोपिनवांछामितेनजीवाम्यनामयः ॥ २९ ॥ पश्यद्रूपेशरीरेस्मिन्भूतस्थात्माचिदास्प दः ॥ भूतवृंदमहंसाम्यात्तेनजीवाम्यनामयः ॥ ३० ॥ आशापाशविनुन्नायाश्चित्तवृत्तेःसमाहितः ॥ संस्पर्शंनददाम्यंतस्तेनजीवाम्यना मयः ॥ ३१ ॥ असत्तांजगतःसत्तामात्मनःकरबिल्ववत् ॥ सुप्तःप्रबुद्धःपश्यामितेनास्मिचिरजीवितः ॥ ३२ ॥ जीर्णंभिन्नंश्लथंक्षीणंक्षु ब्धंक्षुण्णंक्षयंगतम् ॥ पश्यामिनववत्सर्वंतेनजीवाम्यनामयः ॥ ३३ ॥ सुखितोस्मिसुखापन्नेदुःखितोदुःखितेजने ॥ सर्वस्यप्रियमित्रंच तेनजीवाम्यनामयः ॥ ३४ ॥ आपद्यचलधीरोस्मिजगन्मित्रंचसंपदि ॥ भावाभावेपुनैवास्मितेनजीवाम्यनामयः ॥ ३५ ॥ नाहमस्मि नचान्योमेनाहमन्यस्यकस्यचित् ॥ इतिमेभावितंचित्तंतेनजीवाम्यनामयः ॥ ३६ ॥ अहंजगदहंव्योमदेशकालक्रमावहम् ॥ अहंक्रिये तिमेबुद्धिस्तेनजीवाम्यनामयः ॥ ३७ ॥ घटश्चिच्चित्पटश्चित्खंचिद्वनंशकटंचचित् ॥ चित्सर्वमितिमेभावस्तेनजीवाम्यनामयः ३८ ॥ इत्य हंमुनिशार्दूलत्रिलोककमलालिकः ॥ भुशुंडोनामकाकोलःकथितश्चिरजीवितः ॥ ३९ ॥ ब्रह्मार्णवेविलुलितंत्रिजगत्तरंगमुत्पादनाद्य भिभवेनविभिन्नरूपम् ॥ आलीनमुन्नमितमाकुलदृश्यदृश्यमालोकयन्प्रकलयंश्चचिरंस्थितोस्मि ॥ ४० ॥ ॥ इत्यार्षेवा० वा० दे० मो क्षोपायेपुनिर्वाणप्रकरणेपू० भुशुंडोपाख्यानेचिरजीवितहेतुकथनंनामषड्विंशःसर्गः ॥ २६ ॥ ॥ ७ ॥ ॥ भुशुंडउवाच ॥ ॥ एतत्ते कथितंब्रह्मन्यथास्मियदिहास्मिच ॥ त्वदाज्ञामात्रसिध्यर्थंधार्ष्ट्येनज्ञानपारग ॥ १ ॥

इतीति ॥ मेरुकर्णिकावासित्वात्श्यामत्वाच्चत्रिलोककमलस्यअलिरिवअलिकः ॥ ३९ ॥ उत्पादनानिसर्गाःआदिपदाद्वृद्धिविपरिणामापक्षयास्तल्लक्षणेनाभिभवेनपरस्परप्र तिघातेनविभिन्नानिवैचित्र्यंप्राप्तानिरूपाणियस्यतत् ॥ एवंरीत्यापुनःपुनरुन्नमितमालीनंचाकुलंपरिभ्रमत्साक्षिदृश्यबुद्धिमनइंद्रियाणांदृश्यंजगद्व्युत्थानकालेआलोकयन्समा धिकालेप्रकलयन्विलापयंश्चचिरंस्थितोस्मीत्यर्थः ॥ ४० ॥ ॥ इतिश्रीवा० तात्पर्य० नि० पू० षड्विंशःसर्गः ॥ २६ ॥ ॥ ७ ॥ ॥ भुशुंडस्यप्रशंसार्थयियासोस्तेनपूजनम् ॥ व सिष्ठस्यनभोगत्यास्वलोकाप्तिश्चवर्ण्यंते ॥ १ ॥ यथायेनप्रकारेणअस्मिचिरंजीवामि ॥ परमार्थतदृढकार्यकरणसंघातेयदस्मितच्चकथितमित्यर्थः ॥ धार्ष्ट्येनवैयात्येन ॥ १ ॥

आत्मोदंतःसुवृत्तांतः॥२॥३॥ येभवंतंप्रपश्यंतितेषांदृशोधन्याः॥ यावदद्येतिस्वदृशोश्चिरस्थितिसार्थक्याभिप्रायम् ॥४॥ विबुधानांदेवानांविदुषांचभूतयोज्ञानैश्वर्यसंपदोदृष्टाः ॥ ५ ॥ भ्रांत्वायत्नेनचिरमन्विष्यापिमहांस्त्वद्विधोजनःकथंचित्प्राप्यतेतत्रापिभवानिवनसुलभः ॥ ६ ॥ वंशखंडेवेणुवने ॥ वेणूनामप्यष्टसुमुक्ताकरेषुपरिगणनात् ॥ ७ ॥ ८ ॥ मध्याह्नपदेनमाध्याह्निकंकर्मलक्ष्यते ॥ सुरमंदिरंसप्तर्षिलोकंस्वगृहम् ॥ ९ ॥ १० ॥ मौक्तिकलक्षणेनार्घ्येणअर्घार्थजलेन ॥ ११ ॥ त्रिनेत्रमिवेत्युपमानान्नित्यंशिवपूजा

श्रीवसिष्ठउवाच॥ ॥अहोनुचित्रंभगवन्भवताभूषणंश्रुतेः॥ आत्मोदंतःप्रकथितःपरंविस्मयकारणम्॥ २॥ धन्यास्तेयेमहात्मानमत्यंतचिरजीवनम्॥ भवंतंपरिपश्यंतिद्वितीयमिवपद्मजम्॥ ३॥ यावदद्यदृशोधन्याःस्वात्मोदंतमखंडितम्॥ यथावत्पावनंबुद्धेःसर्वंकथितवानसि॥ ४॥ प्रभ्रांतंदिक्षुसर्वासुदृष्टाविबुधभूतयः॥ भवानिवजगत्यस्मिन्नमहानवलोकितः॥५॥ कथंचित्प्राप्यतेकश्चिद्भ्रांत्वेहहिमहाजनः॥ नभवानिवभव्यात्मासुलभोजगतिक्वचित्॥६॥ वंशखंडेहिकस्मिंश्चिज्जायतेमौक्तिकंयथा ॥ जगत्खंडेहिकस्मिंश्चिद्दृश्यतेत्वादृशस्तथा॥७॥ मयातुसुमहत्कार्यमद्यसंपादितंशुभम्॥ पुण्यदेहविमुक्तात्मायद्भवानवलोकितः॥८॥ तदस्तुतवकल्याणंप्रविशात्मगुहांशुभाम्॥ मध्याह्नसमयोयन्मेव्रजामिसुरमंदिरम्॥ ९॥ इत्याकर्ण्यभुशुंडोसौजग्राहोत्थायपादपात्॥ संकल्पिताभ्यांहस्ताभ्यामुपात्तंहेमपल्लवम्॥ १०॥ कल्पवृक्षलतापुष्पकेसरेणहिमत्विषा॥ तत्पात्रंमौक्तिकार्घ्येणपूरयामासपूर्णधीः ॥ ११॥ तेनार्घ्यपाद्यपुष्पेणत्रिनेत्रमिवमामसौ॥ आपादमस्तकंभक्त्यापूजयामासपूर्वजः ॥ १२ ॥ अनुव्रज्याकदर्थेनखगेंद्रालमितिब्रुवन् ॥ विप्रादहमुत्थायततःखगवदाप्लुतः॥ १३॥ व्योम्नियोजनमात्रंतुमदनुव्रज्ययागतः॥ करंकरेणावष्टभ्यबलात्संरोधितःखगः॥ १४ ॥ मयियातेक्षणेनैवगगनाध्वन्यदृश्यताम्॥ निवृत्तोसौविहंगेंद्रोदुस्त्यजासंगतिःसताम्॥ १५॥ अन्योन्यमपिकस्मिंश्चित्तरंगकइवांबुधौ॥ व्योमन्यदृश्यतांयातोखगस्मृत्यामुनीनहम्॥ १६॥ सप्तर्षिमंडलंप्राप्यजाययापरिपूजितः॥ यातेकृतयुगस्यादौपुरावर्षशतद्वये ॥ १७॥ संगतोहंभुशुंडेनमेरोःशृंगद्रुमेभवम्॥ अद्यरामकृतेक्षीणेत्रेतासंप्रतिवर्त्तते॥ १८॥ मध्येत्रेतायुगस्यास्यजातस्त्वंरिपुमर्दन॥ पुनरद्याष्टमेवर्षेतत्रैवोपरिभूभृतः॥ १९॥

परतापितस्यगम्यते ॥ पूर्वजश्चिरंतनः ॥ १२ ॥ हेखगेंद्रअनुव्रज्यालक्षणेनकदर्थेनश्रमेणअलमितिब्रुवन्नहमाप्लुतउड्डीनः ॥ १३ ॥ संरोधितोनिवर्त्तितः ॥ १४ ॥ १५ ॥ आवामन्योन्यमप्यदृश्यतांयातौ ॥ ततःअहंखगस्यभुशुंडस्यस्मृत्याअविच्छिन्नस्मरणेनोपलक्षितःसन्सप्तर्षिमंडलंप्राप्यमुनीन्दृष्टवानितिशेषः ॥ १६ ॥ जाययाअरुंधत्या ॥ उक्तायाभुशुंडसंगतेःकालमाह ॥ यातेइति ॥ १७ ॥ १८ ॥ भूभृतःमेरोः ॥ १९ ॥

उपसंहरति ॥ इतीति ॥ २० ॥ इतीति ॥ इतिइमांसुमतेर्भुशुंडस्यसत्कथांयःप्रविचारयिष्यतिसइहास्मिन्नेवशरीरेभवाजन्मादयस्तद्भयैर्बहुलाअतएवाकुलायेजीवास्तैरास्थितांइतिइमांप्रसिद्धामसत्सरितंमायानदींतरिष्यति ॥ प्रसभमितिपौरुषप्राधान्यद्योतनार्थम् ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०सप्तविंशतितमःसर्गः ॥ २७ ॥ ॥ ७ ॥ ॥ आख्यायिकाभिसंबंधोदेहानियतिवर्णनम् ॥ आपातभ्रांतिमात्रत्वंदेहादेश्चात्रवर्ण्यते ॥ १ ॥ वर्णितायाभुशुंडाख्यायिकायाः प्रकृतोपदेशसंबंधंदर्शयति ॥ एवमित्यादिना ॥ १ ॥ प्राणाभ्यासोऽत्रप्राणस्यनिरोधउपास्तिर्वातत्पूर्विकाम ॥ महार्णवइतिविपुलःसंसारोनिगीर्याप्यवसितः ॥ २ ॥ ३ ॥ प्राणापानावलोकि

मिलितोभृङ्गशुंडोमेतथैवाजररूपवान् ॥ इतिसंकथितंचित्रंभुशुंडोदंतमुत्तमम् ॥ श्रुत्वाविचार्यचैवांतर्यद्युक्तंतत्समाचर ॥२०॥ ॥श्रीवाल्मीकिरुवाच ॥ ॥इतिसुमतिभुशुंडसत्कथांयोविमलमतिःप्रविचारयिष्यतीह ॥ भवभयबहुलाकुलास्थितांसप्रसभमसत्सरितंतरिष्यतीति ॥ २१ ॥ ॥इत्यार्षेवा०वा०दे०मोक्षोपायेपुनि०पू०भुशुंडोपाख्यानसमाप्तिर्नामसप्तविंशतितमःसर्गः ॥ २७ ॥ ॥७॥ श्रीवसिष्ठउवाच ॥ ॥एवंभुशुंडवृत्तांतःकथितस्तेमयानघ ॥ अनयाप्रज्ञयातीर्णोभुशुंडोमोहसंकटात् ॥ १ ॥ एतांदृष्टिमवष्टभ्यस्वप्राणाभ्यासपूर्विकाम् ॥ भुशुंडवन्महाबाहोभवतीर्णमहार्णवः ॥ २ ॥ यथाज्ञानेनयोगेनसंतताभ्यासजन्मना ॥ भुशुंडःप्राप्तवान्प्राप्यंतथासादयतत्पदम् ॥ ३ ॥ असक्तबुद्धयःसर्वेभुशुंडवदवस्थितिम् ॥ प्राप्नुवंतिपरेतत्त्वेप्राणापानावलोकिनः ॥४॥ एताविचित्राभवताश्रुताविज्ञानदृष्टयः ॥ इदानींधियमालंब्ययथेच्छसितथाकुरु ॥ ५ ॥ ॥श्रीरामउवाच ॥ ॥ भगवन्भवताभूमिभास्वताज्ञानरश्मिभिः ॥ हार्दमुद्दामदौरात्म्यंप्रमृष्टमखिलंतमः ॥ ६ ॥ प्रबुद्धाःस्मःप्रहृष्टाःस्मःप्रविष्टाःस्मःस्वमास्पदम् ॥ स्थिताःस्मोज्ञातविज्ञेयाभवंतोऽन्यपराइव ॥ ७ ॥ अहोभुशुंडचरितंपरंविस्मयकारकम् ॥ भगवन्भवताप्रोक्तमुत्तमार्थावबोधनम् ॥८॥ भुशुंडचरितेब्रह्मन्नेतस्मिन्कथितेत्वया ॥ यच्छरीरगृहंप्रोक्तंमांसचर्मास्थिनिर्मितम् ॥ ९ ॥ तत्केननामरचितंकुतोवातत्समुत्थितम् ॥ कथंवास्थितिमायातंकोवातत्रावतिष्ठते ॥ १० ॥ श्रीवसिष्ठउवाच ॥ परमार्थावबोधायदोषापाकरणायच ॥ शृणुराघवतत्त्वेनवक्ष्यमाणमिदंमया ॥ ११ ॥ अस्थिस्थूणंनवद्वारंरक्तमांसावलेपनम् ॥ शरीरसदनंरामनकेनचिदिदंकृतम् ॥ १२ ॥

नःउक्तोपास्तिशीलाः ॥ ४ ॥ यथेच्छसियोगपूर्विकामुपास्तिपूर्विकांवास्वात्मप्रतिष्ठांतथाकुरु ॥ ५ ॥ त्वांयोगोपास्तीत्वदुपदेशश्रवणादेवस्वस्यतत्त्वबोधःसिद्धइतिसूचयन्रामःकथाप्रसंजितदेहगेहस्वरूपमेवजिज्ञासमानःपृच्छति ॥ भगवन्नित्यादिना ॥ भूमिभास्वताभूमाववतीर्णेनसूर्येण ॥ उद्दामानिदौरात्म्यानिअनात्मस्वात्मत्वदर्शनानितद्युक्तदुश्चेष्टितानिचयस्मात्तथाविधंहार्दंतमः ॥ ६ ॥ अपराद्वितीयाभवंतइव ॥ ७ ॥ ८ ॥ ९ ॥ कर्तुर्निमित्तस्यस्थितिप्रकारस्यतदंतःस्थस्यस्वामिनश्चप्रश्नाः ॥ १० ॥ ११ ॥ तत्रायस्योत्तरमाह ॥ अस्थीति ॥ १२ ॥

नन्वीश्वरोस्यदेहस्यनिर्माताश्रुतिपुराणाख्यायिकाप्रसिद्धः जीवस्तुस्वकर्मोपभोगायास्यनिर्मापकस्तौकथमपलप्येतेतत्राह ॥ आभासमात्रमिति ॥ इत्थमेवविनैवनिर्मातारमित्यर्थः॥नहिजलेचंद्राभासोनिर्मातारमपेक्षतेनापितैमिरिककल्पितद्वितीयचंद्रविभ्रमस्तद्वदित्यर्थः ॥ ईश्वरस्यनिर्मातृत्वंतुश्रौतंनमुख्यम् ॥ पुरुषनिःश्वसितदृष्टांतदर्शनात् ॥ जीवस्यनिर्मापयितृत्वमपितथा अबुद्धिपूर्वत्वादनिष्टनिर्मापणायोगाच्चेतिभावः ॥१३॥ देहस्यमिथ्यात्वंतुप्रतीतिकालमात्रस्थितिकत्वाच्चंद्रद्वित्ववदेवसिद्धमित्याह ॥ द्विचंद्रेति॥चंद्रद्वित्वंद्विचंद्रदर्शनस्यविधौसत्त्येवभवतिनान्यदा देहोपिहियस्मात्तथैव वस्तुतस्तुसदैवह्येकएवेंदुरित्यन्वयः ॥१४॥ उक्तमेवस्पष्टमाह ॥ देहेति ॥ परमार्थसदधिष्ठानकतयाउपचारात्सत् ॥ १५ ॥ असतःसत्त्वभ्रांतिःक्वदृष्टातत्राह ॥ स्वप्नइति ॥ मुधामिथ्यैव ॥ बुद्बुदविधौबुद्बुदप्रतीतिसत्त्वे ॥ इतरद्विधौशुद्धात्मदर्शनसत्वे ॥ जलंमृगतृष्णिकोदकम् ॥ १७ ॥

आभासमात्रमेवेदमित्थमेवावभासते॥ द्विचंद्रविभ्रमाकारंसदसच्चव्यवस्थितम्॥ १३ ॥ द्विचंद्रदर्शनविधौचंद्रद्वित्वंसदैवहि॥ वस्तुतश्चैकएवेंदुःस्थितोदेहस्तथैवहि॥ १४ ॥ देहप्रत्ययकालेहिदेहोयंसमवस्थितः ॥ असन्नेवचसत्तस्मात्प्रोक्तःसदसदात्मकः॥ १५ ॥ स्वप्नस्वप्नाववोधःसंस्त्वन्यदासमुधैवहि॥ बुद्बुदोबुद्बुदविधौसत्योमिथ्यैवचान्यदा॥ १६ ॥ देहोदेहविधौसत्योह्यसत्यइतरद्विधौ॥ प्रतिभासविधौतावज्जलंसदसदन्यदा॥ १७॥ प्रतिभासविधौदेहःसन्नसंश्चान्यदास्मृतः॥ आभासमात्रमेवेदमित्थंसंप्रतिभासते॥ १८ ॥ अयंनामाहमित्यंतर्गृहीतमननंस्थितम्॥ मांसास्थिमयनिर्माणदेहोहमितिविभ्रमम्॥ १९॥ त्यजसंकल्पनिर्माणदेहाःसंतिसहस्रशः॥ सुखतल्पगतोयेनस्वप्नदेहेनदिक्तटान्॥ २० ॥ परिभ्रमसिहेरामसदेहस्तेक्वसंस्थितः॥ जागरायांमनोराज्येयेनस्वर्गपुरांतरम्॥ २१ ॥ परिभ्रमसिमेरुवासदेहस्तेक्वसंस्थितः॥ स्वप्नेष्वपिचयःस्वप्नस्तत्रयेनमहीतटान् ॥ २२ ॥ परिभ्रमसिहेरामसदेहस्तेक्वसंस्थितः॥ मनोराज्यंमनोराज्येमहद्विभवभूमिषु॥ २३॥ परिभ्रमसियेनेहसदेहस्तेक्वसंस्थितः ॥ गतैर्देहैर्मनोराज्येयाविचित्राजगत्क्रियाः॥ २४॥ प्रकरोषिमहावाहोतेदेहास्तेक्वसंस्थिताः॥ विलासिन्यानुरागिण्यायेनसंकल्पकांतया॥ २५॥ निर्वर्तितंयासिदेहेनसदेहस्तेक्वसंस्थितः॥ एतेरामयथादेहामनसःसदसन्मयाः॥ २६॥

प्रतिभासविधावितिप्रसाधितार्थनिगमनत्वान्नपौनरुक्त्यम् ॥ १८ ॥ आभासमात्रतामुपपादयंस्तदभिमानंत्याजयति ॥ अयमिति ॥ प्राग्गृहीतदेहाकारंमननमेवसंस्कारदार्ढ्यात्पुनःपुनर्देहाकारेणस्थितम ॥ १९ ॥ त्यजेतिपूर्वान्वयि ॥ संकल्पनिर्माणदेहानेवोदाहृत्यतेषामसत्यतांदर्शयति ॥ सुखतल्पगतइत्यादिना ॥ २० ॥ जागरायांजागरे ॥ छांदसंस्त्रीत्वम ॥ २१ ॥ २२ ॥ मनोराज्यांतःकल्पितेमनोराज्यांतरेमहतीषुविभवभूमिषु ॥ आन्महतःसमानाधिकरणजातीययोरित्यात्वेकर्तव्येतदभावश्छांदसः ॥ महतामिंद्रचंद्रादीनांवाविभवभूमिषु ॥ २३ ॥ गतैःकल्पनाविलयमनुविलीनैः ॥ २४ ॥ २५ ॥ निर्वर्तितंसंभोगसुखंयासीतियोग्यतयावर्त्तमानकालोक्तिः ॥ एवंभविष्यत्स्वप्नमनोराज्यदेहा अप्युदाहार्याः॥ तेषुमिथ्यात्वसांकल्पिकत्वादेर्निश्चितत्वाद्वस्तुतदेहेपितथात्वंसाधयति ॥ एतेइति॥ २६ ॥

तादृशेपिपरमार्थेसतिजगत्संपत्तौदृष्टांतप्रदर्शकौश्लोकाववतारयति ॥ सत्येवसंपद्यतइति ॥ ४२ ॥ श्लोकौस्पष्टौ ॥ ४३ ॥ नसन्नासदिति ॥ अनिर्वचनीयमित्यर्थः ॥ ४४ ॥ एवंचत्वसन्निधिमात्राज्जायमानजगद्दोषैरलिप्यमानएवात्माजगतःकर्त्तैवहर्त्तैवनियंतेवनभइवतारकाकुसुमराशीनांभवतीत्याह ॥ निर्दोषवदेवेत्यादिना ॥ केवलेनभसितारकाःकुसुमराशयइवकदाचित्प्रकटास्तस्मिन्भवंतीतिसर्वत्रशेषः ॥ ४५॥ इत्थंचासतोजगतःअसत्तात्मकोनाशःस्वतएवसत्तात्मिकाउत्पत्तिःस्थितिश्चब्रह्मसत्तैवेतिविभागेफलितमाह ॥ नश्यतीत्यादिसार्द्धश्लोकद्वयेन ॥ ४६ ॥ जायतइत्येतत्स्थितेरप्युपलक्षणम् ॥ ४७ ॥ तर्हिकिमात्माजन्योनेत्याह ॥ कथमिति ॥ ४८ ॥ आत्मसत्तायाजगत्यध्यासोजगतोजन्मनात्मनोभेदाभावादित्याशयेनोक्तमुपसंहरति ॥ तस्मादिति ॥ सम्यग्ज्ञानवशात्परमार्थसत्यचित्स्वरूपबलात् ॥ आगमोवतारउत्पत्तिरितियावत् ॥ ४९ ॥ अस्तु

केवलमात्मतत्त्वेसाक्षिणिनिरामयेसमतयात्मनिनित्यमसंक्षुब्धेतिष्ठतिसत्येवंसंपद्यते॥४२॥सतिदीपइवालोकःसत्यर्कइववासरः॥सतिपुष्पइवामोदःस्वतःसंपद्यतेजगत्॥४३॥आभासमात्रमेवेदंपरिदृश्यतएवच॥स्पंदःसमीरणस्येवनसन्नासदवस्थितम्॥४४॥निर्दोषवदेवजागतीनांदृष्टीनांपरमार्थतोभगवान्स्थितोविनष्टानांपुनःकर्त्ताकृतानांवानाशयितासकेवलंकदाचित्प्रकटाःकदाचिदल्पप्रकटाःकदाचिदप्रकटास्तारकाइवकुसुमराशयः॥ ४५ ॥ नश्यतीहहितद्वस्तुनात्मभूतंयदात्मनः॥कथंनश्यतितद्वस्तुस्वात्मभूतंयदात्मनः॥४६॥जायतेनैवतद्वस्तुनात्मभूतंयदात्मनः॥जायतेचैवतद्वस्तुस्वात्मभूतंयदात्मनः॥ ४७ ॥ कथंतज्जायतेतस्मात्स्वात्मभूतंयदात्मनः॥४८॥तस्मात्सम्यग्ज्ञानवशाद्ब्रह्मणःसर्वपदार्थानामागमः॥ ४९ ॥ अवतीर्णानांचतेषामवतरणसमकालमेवाविद्योदेतितत्त्वज्ञानंदृढतामेतितदनुशतसहस्रस्कंधोविचित्रशुभाशुभफलभरफलितोभूरिशाखःस्फारतामेतिसंसारद्रुमः ॥५०॥ आशामंजरिताकृतिंविफलितंदुःखादिभिर्दारुणैर्भोगैःपल्लवितंजराकुसुमितंतृष्णालताभासुरम् ॥ संसाराभिधवृक्षमात्मनिगडंछित्त्वाविवेकासिनामुक्तस्त्वंविहरेहवारणपतिःस्तंभादिवोन्मोचितः॥५१॥ ॥इ०वा०वा०दे०मो०स्थि०सर्वैकत्वप्रतिपादनंनामैकोनचत्वारिंशःसर्गः॥३९॥

॥श्रीरामउवाच॥ ॥उत्पत्तिःकथमेतेषांजीवानांब्रह्मणःपदात्॥कियतीकीदृशीचेतिविस्तरेणवदप्रभो॥ १ ॥

पदार्थानामवतारस्तैरात्मनःकथंसंसारप्राप्तिरितितद्दर्शयति ॥ अवतीर्णानामिति ॥ अविद्यात्रतदभिमानः ॥ तत्तुअज्ञानंअभिमानलक्षणंकालेनदृढतामेति ॥ ५० ॥ संसारद्रुममेवनिर्वर्ण्यतदुच्छेदोपायमाह ॥ आशेति ॥ आशाभिर्मंजरितासंजातमंजरीकाआकृतिर्यस्यदुःखादिभिर्विविधंफलितम् ॥ प्रकृत्याचारुरित्यादिवदभेदेप्रकृत्यादिभ्यउपसंख्यानमितितृतीया ॥ लताःशाखाःवल्ल्यश्च ॥ आत्मनोनिगडंबंधस्थानम् ॥ शिष्टंस्पष्टम् ॥५१॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थि०एकोनचत्वारिंशःसर्गः ॥ ३९ ॥ वर्ण्यंतेजीवभेदानामिहोत्पत्तिरुपाधिभिः ॥ तेषांतदुपधीनांचब्रह्मभावश्चविस्तरात् ॥ १ ॥ प्रश्नःस्पष्टः ॥ यद्यपिजीवभेदानामुत्पत्तिरुत्पत्तिप्रकरणेविस्तरेणवर्णितेतिनपुनःप्रश्नार्हांतथापिकरिष्यमाणस्याक्षेपस्योत्थानायविशेषबुभुत्सयाचपुनःप्रश्नोबोध्यः ॥ १ ॥

अतएववसिष्ठःसंक्षिप्यतत्समाधिंप्रतिजानीते ॥ उत्पद्यंतेइत्यादिद्वाभ्याम् ॥ २ ॥ ३ ॥ कल्पनावीजप्राक्तनवासनोद्बोधस्यानियतरूपताप्रदर्शनाययदृच्छयेति ॥ भाविदेहाद्याकारस्येपत्स्फुरणमाकलनातदात्मकम् ॥ ४ ॥ तस्यैवसम्यगहंभावेनस्फुरणंघनतामेत्यप्राप्यसाधनंतैवमनोजीवोपाधिश्चेत्याशयेनाह ॥ मनइति ॥ ५ ॥ ब्राह्मींस्थितिंदृष्पूपतांदृश्याहंकारादिकल्पनयात्यजदिव ॥ ६ ॥ ततःकिंवृत्तंतदाह ॥ चित्स्वरूपमिति ॥ परितःकचत्स्वप्रकाशमपिचित्स्वरूपंपराग्दृष्ट्यादृश्यमानंशून्यंरिक्तघटोदरसदृशमेवावभासते ॥ तदवस्थयास्थितंतादृष्पूपमेवसर्वजनदृश्यंतत्प्रसिद्धमाकाशमित्युच्यतइत्यर्थः ॥ ७ ॥ तस्मिन्नाकाशेचतुर्मुखादिस्थूलदेहस्यभुवनानांचकल्पनांदर्शयति ॥ कृत्वेति ॥ प्रजा

श्रीवसिष्ठउवाच ॥ ॥ उत्पद्यंतेयथाचित्राब्रह्मणोभूतजातयः ॥ यथानाशंप्रयांत्येतायथामुक्ताभवंतिहि ॥ २ ॥ यथाचपरिवर्द्धंतेतिष्ठंत्यंतहिंतायथा ॥ संक्षेपेणमहाबाहोशृणुवक्ष्यामितेनघ ॥ ३ ॥ ब्राह्मीचिच्छक्तिरमलाकल्पयंतीयदृच्छया ॥ सर्वशक्तिःस्वयंचेत्यंभवत्याकलनात्मकम् ॥ ४ ॥ कलनाद्घनतामेत्ययत्किंचिदपिसास्वयम् ॥ संकल्पयतिपश्चात्तत्तत्तामेतिमनःपदम् ॥ ५ ॥ मनस्संकल्पमात्रेणगंधर्वपुरवत्क्षणात् ॥ तनोतीदमसद्दृश्यंब्राह्मींस्थितिमिवत्यजत् ॥ ६ ॥ चित्स्वरूपंपरिकचच्छून्यमेवावतिष्ठते ॥ यत्तद्दृश्यंस्थितंतत्स्याद्व्योमाकाशमेवतत् ॥ ७ ॥ कृत्वापद्मजसंकल्पंरूपंपश्यतिपद्मजम् ॥ ततोजगत्कल्पयतिसप्रजापतिपूर्वकम् ॥ ८ ॥ चतुर्दशविधानंतभूतजातसघुंघुमा ॥ सृष्टिरेवमियंरामचित्तनिर्मितिमागता ॥ ९ ॥ चित्तमात्रमयीशून्याव्योममात्रशरीरिका ॥ संकल्पमात्रनगरीभ्रांतिमात्रात्मिकासती ॥ १० ॥ इहकाश्चिन्महामोहाभूतानांजातयःस्थिताः ॥ काश्चिदभ्युदितज्ञानाःकाश्चिन्मध्येस्खलंतिहि ॥ ११ ॥ भुविसंबध्यमानानांयांत्येनामुपदेक्ष्यताम् ॥ सर्वासांभूतजातीनांयाएतानरजातयः ॥ १२ ॥ बद्धाधयोदुःखमयामोहद्वेषभयातुराः ॥ तासांसम्यक्प्रवक्ष्यामितावद्राजससात्विकीः ॥ १३ ॥ यत्तदप्यमृतंब्रह्मसर्वव्यापिनिरामयम् ॥ चिदाभासमनंताख्यमनादिविगतभ्रमम् ॥ १४ ॥

पतयोदक्षादयः ॥ ८ ॥ ९ ॥ इत्थंचोपाध्युत्पत्तेर्मिथ्यात्वेतत्प्रयुक्ताजीवोत्पत्तिःसुतरांमिथ्येत्याशयेनाह ॥ चित्तमात्रेति ॥ १० ॥ तत्रशास्त्राधिकारिदौर्लभ्यप्रदर्शनायजीवांस्त्रिधाविभजते ॥ इहेति ॥ इहभुवनेषु ॥ अभ्युदितज्ञानास्सनकादयः ॥ मध्येआंतरालिकदशायांस्थितामोक्षाययतमानाअपिपुनःपुनर्विघ्नैःस्खलंति ॥ वैराग्यदार्ढ्याभावादित्यर्थः ॥ ११ ॥ क्वतर्हिशास्त्राधिकारप्रयोजकंवैराग्यंसुलभंतानाह ॥ भुवीति ॥ निर्द्धारणेषष्ठ्यः ॥ एताभरतखंडस्थाः ॥ १२ ॥ तासांवैराग्यसंभवेहेतूनाह ॥ बद्धाधयइति ॥ तासांनरजातीनांमध्येतामसीनांशास्त्रानधिकाराद्दुपदेशयोग्याराजससात्विकीर्द्विचत्वारिंशेसर्गेजीवावतरणक्रमवर्णनेप्रवक्ष्यामीत्यर्थः ॥ १३ ॥ यदमृतंब्रह्मतच्चिदाभासंजीवरूपंयथाजातंतदपितत्रैववक्ष्यामीत्यर्थः ॥ १४ ॥

निस्पंदवपुषस्तस्यपरमात्मनः ॥ सौम्येनिश्चलेब्धौचलतांतरंगाणांचलताचांचल्यमिवसत्तैकदेशतोजीवभावेनस्पंदोयथाघनतामेतितथातदपितत्रैवप्रवक्ष्यामीत्यर्थः ॥ १५ ॥ स्पंदःसत्तैकदेशतइतियदुक्तंतदयुक्तं अखंडपूर्णसत्तैकरसेब्रह्मणिसत्तैकदेशस्यस्पंदस्यचासंभाव्यत्वादितिरामःशंकते ॥ अनंतस्येति ॥ १६ ॥ जीवब्रह्मैक्यस्यवास्तवस्यव्युत्पादनायायमुत्पत्त्येकदेशस्पंदादिव्यवहारःशास्त्रेकल्पितःअतोनवस्तुवृत्त्याश्रयेणतस्यांविरोधउद्भावनीयइत्याशयेनवसिष्ठउत्तरमाह ॥ तेनजातमित्यादिना ॥ तेननिमित्तेन ॥ तत उपादानात् ॥ १७ ॥ कुतोनपरमार्थतस्तत्राह ॥ विकारितेति ॥ देशताएकदेशता ॥ दृश्यमानोदयाःप्रत्यक्षेणोत्पद्यमानतयादृश्यमानाअपि ॥ १८ ॥ यद्वित्रनसंभवंतितर्हिजगतामन्यदेवमूलंकल्प्यतांतत्राह ॥ तंविनेति ॥ अन्यकल्पनायाअपिचित्प्रकाशंविनाऽयोगादित्यर्थः ॥ हेतुकार्यक्रमशब्दार्थौव्यवहारजाउक्तयश्चकुतस्त्याइतिविपरिणम्यते ॥

निस्पंदवपुषस्तस्यस्पंदःसत्तैकदेशतः ॥ घनतामेतिसौम्येब्धौचलताचलतामिव ॥ १५ ॥ ॥श्रीरामउवाच॥ ॥अनंतस्यात्मतत्त्वस्यएकदेशःकउच्यते ॥ कथंविकारितावास्यात्कथंवाद्वयविक्रमः ॥ १६ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥तेनजातंततोजातमितीयंरचनागिराम् ॥ शास्त्रसंव्यवहारार्थंनरामपरमार्थतः ॥ १७ ॥ विकारितावयवितादिक्सत्तादेशतादयः ॥ क्रमानसंभवंतीशेदृश्यमानोदयाअपि ॥ १८ ॥ तंविनाकल्पनैवान्यानास्तिनापिभविष्यति ॥ कुतस्त्यौक्रमशब्दार्थावुक्तयोव्यवहारजाः ॥ १९ ॥ यायेहकलनायोर्थोयःशब्दोयोगिरांगणः ॥ तज्ज्ञत्वात्तन्मयत्वाच्चतत्तत्पदमिवेप्यते ॥ २० ॥ तज्ज्ञःसएवभवतिवह्नेर्वह्निरिवोत्थितः ॥ जन्योयंजनकश्चायमित्युक्ताभेदकल्पना ॥ २१ ॥ अयमस्मात्समुत्पन्नइतीयंयाजगत्स्थितिः ॥ आधिक्यंतत्क्रियाशक्तौजन्यंजनकमेववा ॥ २२ ॥ इदमन्यदिदंचान्यदितिशब्दार्थविक्लवः ॥ उक्तावेवनदेवेस्तिप्रमितौभिन्नतायतः ॥ २३ ॥ तज्ज्ञयैवमनःशक्त्यास्वतस्संज्ञाप्रवर्त्तते ॥ दृढभावनयातस्मादिष्टोर्थःप्रतिपद्यते ॥ २४ ॥ अग्नेःशिखायाएकस्याद्वितीयाजनकेतिया ॥ उक्तिवैचिष्यमेवैतन्नान्यर्थेत्रास्तिसत्यता ॥ २५ ॥ नजन्यजनकाद्यास्ताःसंभवंत्युक्तयःपरे ॥ एकमेवस्त्यनंतत्वात्किंकथंजनयिष्यति ॥ २६ ॥ उक्तेरेवस्वभावोयमुक्तेरुक्तिरनंतरम् ॥ प्रतियोगिव्यवच्छेदसंख्याद्यर्थेनयुज्यते ॥ २७ ॥

॥ १९ ॥ शब्दोनामानि ॥ गिरांगणोवाक्यानि ॥ तन्मयत्वात्सन्मयत्वात् ॥ पदंसद्वस्त्विव ॥ २० ॥ एवंचसत्ताभेदाभावाद्भेदप्रत्ययोमिथ्यैवेत्याह ॥ तज्ज्ञइत्यादिना ॥ २१ ॥ कथं तर्हिदीपाद्दीपांतरमिदमुत्पन्नमितिव्यवहारस्तत्राह ॥ अयमिति ॥ एकस्यैवदीपस्यमाययाद्विधास्वरूपनिर्माणक्रियाशक्तौयदाधिक्यमतिशयस्तदेवजन्यंजनकमितिद्विधाभासनइत्यर्थः ॥ २२ ॥ शब्दार्थविक्लवोनामरूपव्यवहारश्रमःउक्तौवाङ्मात्रेस्तिनदेवेपरमात्मन्यस्ति ॥ वाचारंभणंविकारोनामधेयमितिश्रुतेः ॥ यतःप्रमितौपरिच्छेदेसतिभिन्नता स्यादित्यर्थः ॥ २३ ॥ तज्ज्ञयाक्रियाशक्तिजन्ययैवमनःशक्त्यास्वतःस्वभावतएवसंज्ञानामविभागोपिप्रवर्त्तते ॥ इष्टोर्थोव्यवहारःप्रतिपद्यतेसंपद्यते ॥ २४ ॥ उक्तमेवार्थमुदाहृत्यदर्शयति ॥ अग्नेरिति ॥ २५ ॥ २६ ॥ प्रतियोगीस्वाश्रयतादात्म्यविरोधी ॥ व्यवच्छेदोभेदः ॥ संख्याद्वित्वादिः ॥ २७ ॥

977

॥ २८ ॥ कर्त्तर्हिसिद्धांतस्तमाह ॥ ब्रह्मेत्यादिना ॥ चित्प्रत्यगात्माविज्ञानवस्तुबुद्धिवृत्तिभेदाः ॥ चित्ईश्वरःसाक्षीअर्थप्रथावा ॥ २९ ॥ ३० ॥ ३१ ॥ सिद्ध्यतिनित्यसिद्धकूटस्थे ॥ ३२ ॥ विकल्पतेभ्रांत्याप्रथते ॥ ३३ ॥ ३४ ॥ ३५॥ भविष्यतिबुद्धौप्रतिष्ठास्यति ॥ तत्रैवतदेव ॥ उदाहरिष्यामोनिर्वाणप्रकरणे ॥ ३६ ॥ इहअस्यांपरमार्थतायाम् ॥ अलंपूर्णब्रह्मभावेन ॥ एकस्याप्यज्ञानस्यसंशयभेदैःसहवहुत्वविवक्षयातत्तदज्ञानसंक्षयेइतिवीप्सोक्तिः ॥ ३७ ॥ दृश्यंचक्षुषादर्शनार्हम् ॥ जगत्स्थाण्वादि ॥ ३८ ॥ उक्तंसर्वमुपसंहरति ॥ यदिति ॥ कुदृष्ट्याअज्ञानदूषितदृष्ट्यायदिदमखिलंजगदाततंसर्वतोविस्तृतंभातितस्यसर्वस्यसहाज्ञानेननाशेसतिनिर्मलदर्पणाभेअवितथेपरमार्थभूतेपरमपदेनिर्मले

ऊर्मिजालमिवांभोधौपरेयःपरिदृश्यते॥ शब्दोर्थकलनाकारस्तद्ब्रह्मैवविदुर्बुधाः ॥ २८ ॥ ब्रह्मचिद्ब्रह्मचमनोब्रह्मविज्ञानवस्तुच ॥ ब्रह्मार्थोब्रह्मशब्दश्चब्रह्मचिद्ब्रह्मधातवः॥ २९ ॥ ब्रह्मसर्वमिदंविश्वंविश्वातीतंचतत्पदम् ॥ वस्तुतस्तुजगन्नास्तिसर्वंब्रह्मैवकेवलम् ॥ ३० ॥ अयमन्योयमन्योयंभागइत्यंवरात्मनि ॥ मिथ्याज्ञानविकल्पोक्तिर्वाचिसत्यार्थताब्रका॥ ३१ ॥ वह्नेःशिखेवजातेयंशिखेतिमनसोभिधा॥ चापलोत्थविकल्पश्रीर्वस्तुतःस्यान्नसिद्ध्यति॥ ३२ ॥ असत्यैवविकल्पोक्तिःसत्यभावोविकल्पते ॥ तमोपहतदृष्टित्वाद्द्विचंद्रज्ञानदोषवत्॥ ३३ ॥ सर्वस्मात्सर्वगात्तस्मादनंताद्ब्रह्मणःपदात्॥ नान्यत्किंचित्संभवतितदुत्थंयत्तदेवतत् ॥ ३४ ॥ ब्रह्मतत्त्वंविनानेहकिंचिद्वेवोपपद्यते ॥ सर्वंचखल्विदंब्रह्मेत्येषैवपरमार्थता॥ ३५ ॥ एवंप्रायश्चहेप्राज्ञसिद्धांतस्तेभविष्यति ॥ तत्रैवोदाहरिष्यामःसिद्धांतार्थोक्तिपंजरम् ॥ ३६ ॥ इहाविद्यादिकाःकेचिद्विद्यंतेनेतरक्रमाः॥ ज्ञास्यस्यलमशेषार्थास्तत्तदज्ञानसंक्षये॥ ३७॥ अवस्तुसंक्षयेवस्तुयथावस्तुप्रसीदति॥ यथाचदृश्यतेदृश्यंजगन्नैशतमःक्षये॥ ३८॥ यदिदमखिलमाततंकुदृष्ट्यातदुपशमेतवरामनिर्मलाभे॥ अवितथपदनिर्मलेभविष्यत्यवितथमेवनसंशयोत्रकश्चित् ॥ ३९ ॥ इ० वा० वा० दे० मो० स्थिति० ब्रह्मैवेदंसर्वंजगदितिप्रतिपादनंनामचत्वारिंशःसर्गः॥ ४० ॥ ॥ ७५॥ ॥श्रीरामउवाच॥ ॥क्षीरोदकुक्षितुल्याभिःशीतलामलदीप्तिभिः॥ तवोक्तिभिर्विचित्राभिर्गंभीराभिरिवाभितः ॥ १ ॥ क्षणमांध्यमिवाप्नोमिक्षणंयामिप्रकाशताम् ॥ शांतातपलवःप्रावृड्लोलाभ्रइववासरः ॥ २ ॥ अनंतस्याप्रमेयस्यसर्वस्यैकस्यभास्वतः॥ अनस्तमितसारस्यकलनाकथमागता॥ ३ ॥

अवितथंतदेवभविष्यतिस्थास्यति ॥ ३९ ॥ ॥ इ० वासिष्ठम० ता० स्थि० चत्वारिंशःसर्गः ॥ ४० ॥ ॥ ७५ ॥ ॥ कलनादिविशेषाणांमायामूलमिहोच्यते ॥ दुर्वचासाचिकित्स्यैवनविचित्याम्रपेत्यपि ॥ १ ॥ पूर्वसर्वत्रकलनैवमनआदिद्वैतकल्पनायामूलमित्युक्तमिदानींनिर्विकारेऽद्वयेकलनायानिमित्तमसंभावयंस्तत्पृष्टुकामोरामोगुरोरादरायप्राक्तनोक्तीःप्रशंसमानःप्रथमंस्वव्यामोहमुद्गिरति ॥ क्षीरोदेतिद्वाभ्याम् ॥ क्षीरोदस्यकुक्षिर्गर्भस्तेनतत्प्रसूतश्चंद्रोलक्ष्यते ॥ चंद्रतुल्याभिरित्यर्थः ॥ अतएवशीतलामलदीप्तिभिरितिविशेषणम् ॥ आंध्यंव्यामोहतमः ॥ प्रावृषिलोलान्यभ्राणियस्मिन् ॥ २ ॥ अनंतत्वादेवाप्रमेयस्यप्रमाणापरिच्छेद्यस्य ॥ सर्वस्यपूर्णस्य ॥ भास्वतःस्वतस्सदाप्रथमानस्य ॥ नअस्तमितःसारःपरमार्थस्वरूपप्रथायस्य ॥ तथाचप्रथमानेऽद्वितीयपूर्णस्वभावेपरिच्छिन्नकलनात्मकोविकारोवस्तुतःकल्पनयावानसंभाव्यइतितत्रहेतुर्वाच्यइत्यर्थः ॥ ३ ॥

तदायंव्यामोहोनमहावाक्यदोषात्किंतुतेतात्पर्यानवधानदोषादेवेतिदर्शयन्वसिष्ठःसमाधत्ते॥ यथाभूतेत्यादिना॥यथाभूतोयथास्थितोर्थएववाक्यार्थोयासाम् ॥ असामर्थ्यंपदानामाकांक्षायोग्यतासत्तिराहित्यम् ॥ वैरूप्यंतुअवांतरवाक्यानांमहावाक्यार्थापर्यवसानम् ॥ विरोधउपक्रमोपसंहारयोःपरस्परव्याघातस्तैर्वर्जिताइत्यर्थः ॥ ४ ॥ कदातर्हिममतात्पर्यावधानंस्यात्तत्राह ॥ ज्ञानदृष्टाविति ॥ महाचांतत्प्रयुक्तत्वदृष्टेश्चइतरवाग्दृष्ट्यपेक्षयाबलाबलंप्राबल्यम् ॥५॥ ननुयथात्वमातावंध्यात्वमुखेजिह्वानास्तिमूकोहमितिवाक्यंहेतुस्वसत्ताबाधितार्थकंतथानेहनानास्तिकिंचनएकमेवाद्वितीयमित्यादिश्रुतिशास्त्रंतद्वाक्यानिचेतिकथंविरोधपरिहारइतिचेत्तत्राह ॥ उपदेश्येति ॥ असत्यंस्यापित्वमादेःसत्यार्थप्रतिपत्त्युपायतादर्शनान्मिथ्याभूतशब्दार्थवाक्यरचनाभ्रमोपिसत्यशास्त्रार्थप्रतिपत्तिहेतुःसंभवतीतिव्यामूढतयातन्मयोभ्रममयोमाभवेत्यर्थः ॥ ६ ॥ कियत्कालंतर्हिशब्दार्थवाक्यरचनाभ्रमोनुसर्त्तव्यस्तत्राह ॥ यदेति ॥ यावद्वाक्यार्थापरोक्षोदयमितिभावः ॥ ७ ॥ तत्कुतस्तत्राह ॥ भेदेतिद्वाभ्याम् ॥ ८ ॥ ९ ॥ प्रागुक्ताकलनाचितश्चेत्यो

श्रीवसिष्ठउवाच॥ ॥यथाभूतार्थवाक्यार्थाःसर्वाएवममोक्तयः॥ नासमर्थाविरूपार्थाःपूर्वापरविरोधदाः ॥ ४॥ ज्ञानदृष्टौप्रसन्नायांप्रबोधेविततोदये॥यथावज्ज्ञास्यसित्वस्योमद्वाग्दृष्टिबलाबलम्॥५॥ उपदेश्योपदेशार्थशास्त्रार्थप्रतिपत्तये॥शब्दार्थवाक्यरचनाभ्रमोमातन्मयोभव ॥ ६ ॥ यदापुराज्ञास्यसितत्सत्यमत्यंतनिर्मलम् ॥ वाच्यवाचकशब्दार्थभेदंत्यक्ष्यसिवैतदा ॥ ७ ॥ भेदरूढाक्प्रपंचोयमुपदेश्येपुकल्पितः॥ उपदेश्योपदेशार्थशास्त्रार्थप्रतिपत्तये॥८॥ शब्दार्थवाक्प्रपंचोयमुपदेशेपुकल्पितः॥ सदाज्ञेपुनतज्ज्ञेपुविद्यतेपारमार्थिकः॥ ९ ॥ कलनामलमोहादिकिंचिन्नात्मनिविद्यते॥ नीरागंब्रह्मपरमंतदेवेदंजगत्स्थितम् ॥ १० ॥एतद्विचित्ररूपाभिर्युक्तिभिर्बहुशःपुनः ॥ विस्तरेणैववक्तव्यंसिद्धांतावसरेनघ ॥ ११ ॥ वाक्प्रपंचंविनात्वेतदज्ञानमतुलंतमः॥ भेत्तुमन्योन्यमुदितंयत्नंकर्त्तुंनशक्यते॥ १२ ॥ अविद्ययैवोत्तमयास्वात्मनाशोद्यमेच्छया॥ विद्यासाप्रार्थ्यतेरामसर्वदोषापहारिणी ॥ १३ ॥शाम्यतिव्यस्त्रमस्त्रेणमलेनक्षाल्यतेमलः॥शमंविषंविषेणैतिरिपुणाहन्यतेरिपुः॥ १४ ॥ईदृशीराममायेयंयास्वनाशेनहर्षदा ॥ नलक्ष्यतेस्वभावोस्याःप्रेक्ष्यमाणैवनश्यति॥ १५॥

न्मुखता ॥ तन्निमित्तेमलेपूर्वसंस्कारकर्मणी ॥ मोहोऽविद्या ॥ १० ॥ सिद्धांतावसरेअसंभावनोच्छेदानंतरंनिर्वाणप्रकरणे ॥ ११ ॥ तर्हीदानींतनोवाक्प्रपंचस्तेकिमर्थस्तत्राह ॥ वाक्प्रपंचमिति॥अज्ञानंसाधनाज्ञानंअतुलंतमोमूलाज्ञानंचान्योन्यंपरस्परसहायेनभ्रांतिसहस्रशाखाप्ररोहैरुदितंप्ररूढंभेत्तुंतत्साधनेपुयत्नंकर्त्तुंचनशक्यतइत्यर्थः॥१२॥तर्हिउपदेशवाक्प्रपंचस्यतज्जन्यविद्यायाश्चाविद्याकार्यत्वाविशेषात्कथमविद्याविरोधितात्वविरोधिविद्यांवाकथमविद्याप्रार्थयेदितिचेत्तत्राह ॥अविद्ययैवेति ॥ उत्तमयाबहुजन्मसंचितसुकृतविशुद्धांतःकरणाकारपरिणतया॥ तथाचस्वशरीरविरोधेपिस्वात्महितत्वाद्विवेकिन्याःपतिव्रतायाःपतिचितारोहणेनेवतत्प्रार्थनोपपत्तिरितिभावः॥१३॥ विरोधितामुपपादयति ॥ शाम्यतीति ॥ मलेनक्षारेण ॥ १४ ॥ तस्याःस्वनाशकत्वेकर्मकर्तृताविरोधमाशंक्यक्रियायांसविरोधोनज्ञानेनाज्ञानबाधेइत्याशयेनाह ॥ ईदृशीति ॥ १५ ॥

तस्याअसंभावितानंतकार्यदर्शनादपिनविरोधसंभावनेत्याशयेनाह ॥ विवेकमित्यादिना ॥१६॥१७॥१८॥ येनहेतुनाअसौअक्षराख्यामायातस्मिन्अत्यभिन्नपदेआत्मनिक्षरात्मकंआततंसर्वतोविस्तृतंतन्वानाआस्तेतेनहेतुनाअसौक्षराक्षरलक्षणपुरुषातीतआत्मापुरुषोत्तमइत्यर्थः ॥१९॥ एषामायापरमार्थेनवस्तुवृत्त्यातुनास्तिएवंभावनयाइद्धयाआचार्यश्रुतितर्कस्वानुभवाभ्यासप्रदीपितयात्वंज्ञस्तत्त्वविद्भूत्वाज्ञेयंस्वात्मवास्तवरूपंविस्मृतकंठचामीकरवत्संप्राप्तःसन्नस्यामदुक्तेराशयंज्ञास्यसिसंभावयिष्यसि ॥२०॥ इदानींतुमद्वचनविश्वासात्परोक्षकल्पएवमदुक्तोर्थोग्राह्यइत्याह ॥ यावदिति ॥ २१ ॥ निश्चयस्यनिश्चलतासंपादनेउपायमाह ॥ यदिदमिति ॥ मानसंमनोवृत्तिरूपंयदिदंदृश्यतांसाक्षिप्रत्ययवेद्यतांयातंसर्वव्यवहारबीजत्वान्महत्मननंअतीतानागतानेकार्थप्रतिसंधानंइदंअसन्मात्रंअसदेवेत्यर्थः ॥ तत्रहेतुमाह ॥ यस्मादिति ॥ २२ ॥ मननिरासेमनोनिरिंधनाग्नि

विवेकमाच्छादयतिजगंतिजनयत्यलम् ॥ नचविज्ञायतेकैषापश्याश्चर्यमिदंजगत् ॥१६॥ अप्रेक्ष्यमाणास्फुरतिप्रेक्षितातुविनश्यति ॥ मायेयमपरिज्ञायमानरूपैववल्गति॥१७॥अहोनुखलुचित्रेयंमायासंसारबंधनी॥असत्येवातिसत्येवस्वज्ञानंविहितंतया॥१८॥अत्यभिन्नपदेतस्मिंस्तन्वानाभेदमाततम् ॥ संसारमायायेनासौतेनासौपुरुषोत्तमः॥१९॥नास्त्येषापरमार्थेनत्वेवंभावनयेद्धया॥ज्ञोभूत्वाज्ञेयसंप्राप्तोज्ञास्यस्यस्यास्त्वमाशयम् ॥ २० ॥ यावत्तुनप्रबुद्धस्त्वंतावन्मद्वचसैवते ॥ निश्चयोभवतूद्दामोनास्त्यविद्येतिनिश्चलः॥२१॥ यदिदंदृश्यतांयातंमानसंमननंमहत् ॥ असन्मात्रमिदंयस्मान्मनोमात्रविजृंभितम् ॥ २२ ॥ सत्तद्ब्रह्मेतियस्यांतर्निश्चयःसोपिमोक्षभाक् ॥चलाचलाकृतिर्यायादृष्टिराबद्धभावना॥२३॥सासमग्रजगद्भूतखगबंधनवागुरा॥ यःस्वप्नभूमिवद्भ्रांतमसत्सद्ब्रह्मैकनिश्चयः॥२४॥ जगत्पश्यत्यसक्तात्मानसदुःखेनिमज्जति॥ यस्यैतास्वस्वरूपासुभावनास्वात्मभावना॥२५॥अस्वरूपस्यतस्यापिसात्यविद्यैवविद्यते॥ विकारिताद्ययोदोषानकेचनमहात्मनि ॥ २६ ॥ परमात्मनिविद्यंतेपयसीवेहपांसवः॥ भावनाशब्दशब्दार्थरंजनेयंजगद्गता ॥ २७॥

वत्स्वयमेवशाम्यतीतिब्रह्मसन्मात्रपरिशेषेप्रागुक्तनिश्चयनैश्चल्यात्पुरुषार्थसिद्धिरित्याशयेनाह ॥ सत्तदिति ॥ उक्तमर्थंस्थिरीकर्त्तुंबाह्यार्थमननदृष्टीनांबंधहेतुतामाह ॥ चलाचलेति ॥ २३ ॥ समस्तेजगतिभूतखगानांजीवपक्षिणाम् ॥ असतिअनागतातीतेसतिवर्त्तमानेचेतिद्विरूपेपिमननविषयेसदेवेदमसदेवेदमितिवाएकरूपोदृढनिश्चयोयस्यतथाविधोयोधिकारीजगत्स्वप्नभूमिवद्भ्रांतिमात्रमितिपश्यतिसननिमज्जतीत्यर्थः ॥ २४ ॥ कस्तर्हिनिमज्जतितमाह ॥ यस्येति ॥ अस्वरूपासुमिथ्याभूतासुदेहेंद्रियादिद्वैतभावनासुआत्मभावनाअहमितिबुद्धिः ॥ २५ ॥ मिथ्यात्मदर्शिनस्तस्यअविद्यामज्जनमेवदंडइत्याशयेनाह ॥ अस्वरूपस्येति ॥ २६ ॥ तर्हितत्त्वविदांपूर्वापरार्थभावनाभावाद्व्यवहारासिद्धिरित्याशंक्याह ॥ भावनेति ॥ शब्देषुनामसुशब्दार्थेषुरूपेषुचस्फटिकवद्रंजनातात्कालिकानुषंगः ॥ २७ ॥

॥ २८ ॥ यद्यविद्यादिनास्त्येवतर्हिकिमर्थंशास्त्रमितिचेत्तत्राह ॥उह्यमानइति ॥ अविद्यानद्यांउह्यमानःप्रवाह्यमाणआत्माआत्मज्ञानादृतेनैवोपलक्ष्यतेअनुभूयते ॥ २९॥ तच्च आत्मज्ञानंतु ॥ ३० ॥ नन्वियमविद्यापरमात्मनिकुतोजातातत्राह ॥ यतःकुतश्चिदिति ॥ ३१ ॥ ३२ ॥ तर्हीयमनादिरुतसादिः आद्येआत्मवन्नित्यास्यात्द्वितीयेतुहेतुर्वाच्यः एवंकिंसत्याउतासत्या आद्येऽज्ञानादनिवृत्तिःद्वितीयेसंवादिव्यवहारहेतुत्वानुपपत्तिरित्याद्याशंकासहस्रस्यापितन्नाशादेवनिवृत्तिरित्याशयेनाह ॥ अस्तंगतायामिति ॥ ३३ ॥ ॥ ३४ ॥ असतःसत्यवद्विमर्शःस्वामपुरुषगोऽर्चितावद्दृष्टैवेत्याशयेनाह ॥ असत्इति ॥ ३५ ॥ तर्हिस्वामपुरुषवधोद्योगवत्तन्निवृत्तौयत्नातिशयोव्यर्थइत्याशंक्यतद्विलक्षणमन

व्यवहारार्थमुत्पन्नाव्यतिरिक्ताचनात्मनः ॥ अनेनव्यवहारेणविनैताःशास्त्रदृष्टयः ॥ २८ ॥ संस्थितिंनाधिगच्छंतिपटाइववितंतवः ॥ उह्यमानोऽह्यविद्यायामात्मानेहोपलक्ष्यते ॥ २९ ॥ आत्मज्ञानादृतेतच्चशास्त्रार्थात्समवाप्यते ॥ अविद्यासरितःपारमात्मलाभादृतेकिल ॥ ३० ॥ रामनासाद्यतेतद्धिपदमक्षयमुच्यते ॥ यतःकुतश्चिज्जातेयमविद्यामलदायिनी ॥ ३१ ॥ नूनंस्थितिमुपायातासमासाद्यपदंस्थिता ॥ कुतोजातेयमितितेराममास्तुविचारणा ॥ ३२ ॥ इमांकथमहंहन्मीत्येपातेऽस्तुविचारणा ॥ अस्तंगतायांक्षीणायामस्यांज्ञास्यसिराघव ॥ ३३ ॥ यतएषायथाचैषायथानष्टेत्यखंडितम् ॥ वस्तुतःकिलनास्त्येषाविभात्येषानवेक्षिता ॥ ३४ ॥ असतोभ्रांततांसत्यरूपांजानातुकःकुतः ॥ जातेयंप्रौढिमापन्नादोषायैवाततारुतिः ॥ ३५ ॥ बलात्प्रणाशयत्वेनांपरिज्ञास्यसिवैततः ॥ अपिशूराअतिप्राज्ञास्तेनसंतिजगत्त्रये ॥ ३६ ॥ अविद्ययायेपुरुषाननामविवशीकृताः ॥ तदस्यारोगशीलायायत्नंकुरुविनाशने ॥ ३७ ॥ यथैषाजन्मदुःखेषुनभूयस्त्वांनियोक्ष्यति ॥ सर्वापदामेकसखीमज्ञानतरुमंजरीम् ॥ अनर्थसार्थजननीमविद्यामलमुद्धर ॥ ३८ ॥ भयविपादद्दुराधिविपत्प्रदांहृदयमोहमहापटलांकुराम् ॥ शमपास्यकुदृष्टिमिमांबलाद्भवभवार्णवपारमुपागतः ॥ ३९ ॥ ॥ इ० वा० वा० दे० मो० स्थि० अविद्याकथनंनामैकचत्वारिंशःसर्गः ॥ ४१ ॥ ॥ ६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ कुपितस्यासतोप्यस्यप्रेक्षामात्रविनाशिनः ॥ अविद्याविततव्याधेरौषधंशृणुराघव ॥ १ ॥

र्थप्राबल्यमाह ॥ अपीति ॥ ३६ ॥ ३७ ॥ ३८ ॥ उपसंहरति ॥ भयेति ॥ हृदयपदेनतत्स्थाआत्मदृष्टिरुपलक्ष्यते ॥ तस्यामोहलक्षणांध्यहेतूनांमहतांपटलत्वक्स्थानीयानां स्थूलदेहादीनामंकुरवत्कारणभूतांकुदृष्टिमविद्याम् ॥ ३९ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेस्थिति० एकचत्वारिंशःसर्गः ॥ ४१ ॥ ॥ ६ ॥ ॥ अनंतशक्तेश्चिद्धनोवासनाघनताक्रमात् ॥ वर्ण्यतेविस्तरेणात्रजीवावतरणक्रमः ॥ १ ॥ एवमविद्याव्याधिमुपवर्ण्यतच्चिकित्सोपायंबहुभिस्सर्गैर्वक्तुंप्रतिजानीते ॥ कुपितस्येति ॥ १ ॥

तदर्थंजीवावतरणक्रमंवर्णयितुंचत्वारिंशेसर्गे तासांसम्यक्प्रवक्ष्यामितावद्राजससात्विकीरितियत्प्रतिज्ञातंतच्छेषवर्णनमितिस्मारयति ॥ यांतामिति ॥ २ ॥ यत्तदपीतिश्लोकस्तत्रैवव्याख्यातः ॥ ३ ॥ स्पंदतइतिस्पंदश्चिदाभासःप्रदेशादौपाधिकैकदेशात् ॥ यथासौम्यएवाब्धिश्चलनात्तरंगादिघनतामेतितद्वत् ॥ ४ ॥ शक्तिवैचित्र्याणांसत्वादिगुणोपचयापचयमिश्रणतारतम्यकृतत्वादुपचयादेश्वराजसक्रियाशक्तिमूलकत्वात्प्रथमंक्रियाशक्त्युद्भवंदर्शयति ॥ अंतरब्धेरिति ॥५॥ स्वतःकूटस्थेप्याध्यासिकचलनाविरोधमाह ॥ आत्मन्येवेति ॥ ६ ॥ स्पंदशक्तेरस्पंदप्रकाशशक्त्याप्यविरोधेदृष्टांतमाह ॥ दीपइति ॥ सौम्योवाय्वाद्यविक्षिप्तः ॥ उन्नतमूर्ध्वंदेशमेति ॥ वल्गतिचलतिप्रकाशयतीतियावत् ॥ ७ ॥ शरदातपादिसंपर्कांल्लसतिस्फुरतिवारिप्रदेशेचंचलइवनसर्वतस्तद्वदितिकल्पितैकदेशेचलनारोपेदृष्टांतः ॥ ८ ॥ परमार्थतोन्यथैवसतःकल्पितरूपांतरेणस्फुरणेप्ययमेव

यांतांकथयितुंजातिंरामराजससात्विकीम् ॥ मनोवीर्यविचारार्थंप्रस्तुतोस्मीहतांश्रृणु ॥ २ ॥ यत्तदप्यमृतंब्रह्मसर्वव्यापिनिरामयम् ॥ चिदाभासमनंताख्यमनादिविगतभ्रमम् ॥ ३ ॥ चित्स्पंदवपुषस्तस्यस्पंदस्तस्माच्चिदेवहि ॥ प्रदेशाद्घनतामेतिसौम्योब्धिश्चलनादिव ॥ ४ ॥ अंतरब्धेर्जलंयद्वत्स्पंदास्पंदवदीहते ॥ सर्वशक्तिस्तथैकत्रगच्छतिस्पंदशक्तिताम् ॥ ५ ॥ आत्मन्येवात्मनाव्योम्नियथासरतिमारुतः ॥ तथेहात्मात्मशक्त्यैवस्वात्मन्येवैतिलोलताम् ॥ ६ ॥ स्वशिखास्पंदशक्त्यैवदीपःसौम्योयथोन्नतम् ॥ एतितद्वदसावात्मातत्स्वेवपुषिवल्गति ॥ ७ ॥ जलांतरेंबुधिर्यद्वल्लसद्वारीवचंचलः ॥ सर्वशक्तिर्वपुष्येवतथास्पंदविलासवान् ॥ ८ ॥ यथोल्लसतिभाश्चक्रैःक्वचन्कनकसागरः ॥ तथात्मनिपरिस्पंदैःस्फुरत्यक्षैश्चिदर्णवः ॥ ९ ॥ लक्ष्यतेमौक्तिकस्पंदोयथाव्योम्निदृशोऽदृशि ॥ तथाभातिलसद्रूपाचिच्छक्तिश्चिन्महांबरे ॥ १० ॥ किंचित्क्षुभितरूपासाचिच्छक्तिश्चिन्महार्णवे ॥ तन्मयीचित्स्फुरत्यच्छातत्रैवोर्मिरिवार्णवे ॥ ११ ॥ आत्मनोऽव्यतिरिक्तैवव्यतिरिक्तेवतिष्ठति ॥ आलोकश्रीरिवालोककोटरेयत्ततांगता ॥ १२ ॥ क्षणंस्फुरतिसादेवीसर्वशक्तितयातया ॥ चेततिस्वांस्वयंशक्तिंकलेंदोःशीततामिव ॥ १३ ॥ उदितैपाप्रकाशाख्याचिच्छक्तिःपरमात्मनः ॥ देशकालक्रियाशक्तीर्वयस्याःसंप्रकर्षति ॥ १४ ॥

दृष्टांतइत्याशयेनाह ॥ यथेति ॥ भासांशरदातपानांचक्रैःसमूहैःक्वचन्दीप्यन्द्रवीभूतकनकमिवसागरःस्फुरति ॥ अक्षैरैंद्रियकप्रकाशैः ॥ ९ ॥ अतींद्रियेऐंद्रियकरूपस्फुरणेपितमाह ॥ लक्ष्यतइति ॥ अदृशिअतींद्रिये ॥ १० ॥ ११ ॥ ऐंद्रियकचिच्छक्तिःपरमार्थचिदेवजन्यतारोपएवकेवलमौपाधिकइत्याशयेनाह ॥ आत्मनइति ॥ अव्यतिरिक्तैवेतिच्छेदः ॥ आलोककोटरेसूचीपाशादिकल्पितालोकच्छिद्रे ॥ यत्ततांउपाधिपारवश्यम् ॥ १२ ॥ अतएवतस्याःकालिकपरिच्छेदःशक्तिशक्तिमत्तादिभेदविभावनंचोपपन्नमित्याशयेनाह ॥ क्षणमिति ॥ १३ ॥ शक्त्यंतराणांचिच्छक्त्युदयाधीनैवप्रवृत्तिर्नस्वातंत्र्येणेत्याह ॥ उदितेति ॥ वयस्याःसखीः ॥ १४ ॥



१ अत्रनिस्पंदवपुषइतिपाठोपेक्षितइतिभाति

एवंस्वस्वभावंविदित्वाअनाद्यंतपदेस्थिताभवति ॥ अविभावितासतीएवमुक्तलक्षणंकल्पितरूपंभ्रांत्यास्वस्वभावंगृहीत्वापरिमितापरिच्छिन्नास्मीतिस्वात्मानंभावयतिदृढंवासयतीत्यर्थः ॥१५॥ नामेति ॥ तथाचश्रुतिः ॥ प्राणन्नेवप्राणोनामभवतिवदन्वाक्पश्यंश्चक्षुरिति ॥ संख्यारूपभेदाः ॥ आदिपदादिष्टानिष्टादिसर्वंजगत्कल्पनागृह्यंते ॥१६॥ एवंचचितिकल्पितस्यसर्वस्यचिन्मात्रेणैवपरमार्थरूपमितिफलितमित्याह ॥ चिदेवेत्यादिना ॥ आत्मनःसद्रूपाद्व्यतिरिक्ताकल्पनायतोवस्त्वेवभवतीतिशेषः ॥१७॥ आंशिकंअंशकल्पनाधीनंसर्वंजगद्रूपमित्यर्थः ॥१८॥ वर्त्तिकाद्युपाधिदेशेनदेशःतत्कालेनकालस्तत्कलाभिस्तदवयवैःकलाश्चेतितन्मात्रप्रयुक्तोभेदोनदीपाग्निस्वरूपेतथाचितेरपिउपाधिस्वभावादागतःस्वाभाविकः ॥ १९ ॥ दृष्टांतोक्तंचित्युपपादयति ॥ देशेति ॥ २० ॥ अतएवक्षेत्रोपाधिकल्पनाधीनंचितःक्षेत्रज्ञत्वंप्रसिद्धमित्याह ॥ विकल्पेति ॥ २१ ॥ २२ ॥ क्षे

स्वस्वभावंविदित्वैवमनाद्यंतपदेस्थिता ॥ रूपंपरिमितेवासौभावयत्यविभाविता ॥ १५ ॥ यदैवंभावितंरूपंतयापरमसत्तया ॥ तदैवैनामनुगतानामसंख्यादिकादृशः ॥ १६ ॥ चिदेवैतदवस्त्वेवव्यतिरिक्तातथात्मनः ॥ अनंतातद्गतैवाशुलहरीवमहार्णवात् ॥ १७ ॥ यथा कटककेयूरैर्भेदोहेम्नोविलक्षणः ॥ तथात्मनश्चितोरूपंभावयंत्यास्वमांशिकम् ॥ १८ ॥ यथादीपेनदीपानांजातानामात्मनांतथा ॥ देशकालकलामात्रभेदःस्वाभाविकश्चितेः ॥ १९ ॥ देशकालपरिस्पंदशक्तिसंदीपिताथचित् ॥ संकल्पमनुधावंतीप्रयातिकलनापदम् ॥ २० ॥ विकल्पकलिताकारंदेशकालक्रियास्पदम् ॥ चितोरूपंमहाबाहोक्षेत्रज्ञइतिकथ्यते ॥ २१ ॥ क्षेत्रंशरीरमित्याहुस्तदसौवेत्त्यखंडितम् ॥ सबाह्याभ्यंतरंतेनक्षेत्रज्ञइतिकथ्यते ॥ २२ ॥ वासनांकलयन्सोपियात्यहंकारतांपुनः ॥ अहंकारोपिनिर्णीताकलंकीबुद्धिरुच्यते ॥ २३ ॥ बुद्धिःसंकल्पकलिताप्रयातिमनसःपदम् ॥ मनोघनविकल्पंतुगच्छतींद्रियतांशनैः ॥ २४ ॥ पाणिपादमयंदेहमिंद्रियाणिविदुर्बुधाः ॥ देहासौ ज्ञायतेलोकेसूयतेपिचजीवति ॥ २५ ॥ एवंजीवोहिसंकल्पवासनारज्जुवेष्टितः ॥ दुःखजालपरीतात्माक्रमादायातिचित्तताम् ॥ २६ ॥ कर्मणपाकवशतःफलमेतियथान्यताम् ॥ अवस्थयैवनाकृत्याजीवोमलवशात्तथा ॥ २७ ॥ जीवोहंकारतांप्राप्तस्त्वहंकारश्चबुद्धिताम् ॥ संकल्पजालकलितांमनस्तांबुद्धिरागता ॥ २८ ॥ मनोहिसंकल्पमयंसंस्थाग्रहणतत्परम् ॥ प्रतियोगिव्यवच्छिन्नप्राप्तिसत्यैरपीहितैः ॥ २९ ॥

त्रकल्पनाक्रमंदर्शयति ॥ वासनामित्यादिना ॥ निर्णीताअध्यवसाता ॥ अतएवकल्पनांतरकलंकी ॥२३॥२४॥ देहंदेहतांगच्छंतीतिविपरिणम्यानुपज्जते ॥२५॥ चित्ततांबाह्यार्थचेतनसमर्थताम् ॥ २६ ॥ फलंबदरादि ॥ अन्यतांवैलक्षण्यम् ॥ अवस्थयारूपरसपरिणामादिगुणपरावृत्त्यैवनत्वाकृत्याबदरत्वादिजात्यातथाजीवःक्षेत्रज्ञोप्यविद्यामलपरिणामवशाद्वैलक्षण्यंयातिनापरिणामिचित्स्वभावेनेत्यर्थः ॥ २७ ॥ एवंक्षेत्रसिद्धिमुपवर्ण्यजीवस्याहंकारादिक्षेत्रतादात्म्यसंसर्गाध्यासलक्षणंबंधंक्रमेणाह ॥ जीवइत्यादिना ॥ २८ ॥ संस्थानंसंस्थास्त्रीपुत्रादिशरीराकारस्तस्यग्रहणेतदाकारवृत्तिद्वारासंस्कारात्मनाधारणेतत्परम् ॥सत्यैःसफलैरपिशब्दाद्विफलैरपिईहितैर्मनोरथैःप्रतियोगिभ्योवस्त्वंतरेभ्योव्यवच्छिन्नाव्यावृत्ताप्राप्तिरर्थपहोयस्य ॥ परिच्छिन्नतुच्छविषयासक्तंभवतीत्यर्थः ॥ २९ ॥

तदासक्तौतान्विषयान्पुनःपुनःस्मरच्चित्तभावापन्नंरागद्वेषादिदोषैरास्कंद्यतइत्याह ॥ इच्छाद्याइति ॥ अनुधावंत्यनुसरंति ॥ ३० ॥ इतिउक्तक्रमेणरागद्वेषादिशक्तिप्रचुरंचेतः शाखाप्ररोहशतकोटिभिरभिमानवृद्ध्याघनाहंकारतांगतंसत् ॥ ३१ ॥ पाशैर्बडिशजालादिपाशैःस्ववपुर्मृत्यवेनयन्मत्स्यादिरिव ॥ एत्यप्राप्य ॥ आत्मामनःप्रकृतत्वात् ॥ ३२ ॥ अस्मीतिकलयत्परमार्थसत्यमितिपश्यत् विद्यातत्त्वंपारमार्थिकमात्मरूपंजहत्त्यजत्स्वमेप्यविचारयदितियावत् ॥ अविद्यांजन्ममरणादिभ्रांतिपरंपराम् ॥ ३३ ॥ तन्मात्राणिशब्दादिविषयास्तदिंधनारागादिज्वालास्तदभ्यंतरवर्त्तिमनः ॥ चकारःपूर्वोक्ताविद्यांतसमुच्चयार्थः ॥ ३४ ॥ विचित्राणांविहितनिषिद्धनानारूपाणांकार्याणांकर्मणांकर्तृ

इच्छाद्याःशक्तयश्चेतोगावोवृषमिवोन्मदम् ॥ अनुधावंतिदोषायसरितःसागरंयथा ॥ ३० ॥ इतिशक्तिमयंचेतोघनाहंकारतांगतम् ॥ कोशकारक्रिमिरिवस्वेच्छयायातिबंधनम् ॥ ३१ ॥ स्वसंकल्पानुसंधानात्पाशैरिवनयन्वपुः ॥ कष्टमस्मिन्स्वयंबंधमेत्यात्मापरितप्यते ॥ ३२ ॥ बद्धमस्मीतिकलयद्विद्यातत्त्वंजहच्छनैः ॥ अविद्यांजनयत्यंतर्जगज्जंगलराक्षसीम् ॥ ३३ ॥ स्वसंकल्पिततन्मात्रज्वालाभ्यंतरवर्त्तिच ॥ परांविवशतामेतिशृंखलाबद्धसिंहवत् ॥ ३४ ॥ विचित्रकार्यकर्तृत्वमाहरद्वासनावशात् ॥ स्वेच्छामात्रानुरचितादशाश्चानुपतत्तथा ॥ ३५ ॥ क्वचिन्मनःक्वचिद्बुद्धिःक्वचिज्ज्ञानंक्वचिक्रियाः ॥ क्वचिदेतदहंकारःक्वचित्पुर्यष्टकंस्मृतम् ॥ ३६ ॥ क्वचित्प्रकृतिरित्युक्तंक्वचिन्मायेतिकल्पितम् ॥ क्वचिन्मलमितिप्रोक्तंक्वचित्कर्मेतिसंस्थितम् ॥ ३७ ॥ क्वचिद्बंधमितिख्यातंक्वचिच्चित्तमितिस्फुटम् ॥ प्रोक्तंक्वचिदविद्येतिक्वचिदिच्छेतिसंस्थितम् ॥ ३८ ॥ तदेतदावद्धमिहचित्तंराघवदुःखितम् ॥ तृष्णाशोकसमाविष्टंरागायतनमाततम् ॥ ३९ ॥ जराममरणमोहांतर्भवभावनयाहतम् ॥ ईहितानीहितैर्ग्रस्तमविद्यारागरंजितम् ॥ ४० ॥ इच्छासंक्षुभिताकारंकर्मवृक्षवनांकुरम् ॥ सुविस्मृतोत्पत्तिपदंकल्पितानर्थकल्पितम् ॥ ४१ ॥ कोशकारवदाबद्धंशोकाकारपदंगतम् ॥ तन्मात्रवृंदावयवमनंतनरकातपम् ॥ ४२ ॥ स्वदृश्यमपि शैलेंद्रसमभारभयावहम् ॥ जरामरणशाखाढ्यंसंसारविषदुर्द्रुमम् ॥ ४३ ॥ इमंसंसारमखिलमाशापाशविधायकम् ॥ दधदंतःफलैर्हीनंवटधानावटंयथा ॥ ४४ ॥

त्वमाहरद्यत्नैःसंपादयत् ॥ दशाःनानायोनिनरकादिदुर्दशाःवक्ष्यमाणमननादिदशाश्चअनुपतद्विवशतामेतीतिप्राक्तनेनान्वयः ॥ ३५ ॥ तस्यैवमननादिवृत्तिभेदैर्मनआदिशब्दभाक्त्वंनान्यस्येत्याह ॥ क्वचिदित्यादिना ॥ ३६ ॥ ३७ ॥ ३८ ॥ तथाचबद्धत्वमपितस्यैवनात्मनइतिप्रपंचयति ॥ तदेतदित्यादिना ॥ ३९ ॥ ४० ॥ सुष्ठुविस्मृतंस्वोत्पत्तिनिमित्तंपरमात्मपदंयेन ॥ ४१ ॥ ४२ ॥ स्वस्यात्मनोदृश्यमपिअनात्मत्वेनज्ञातुंयोग्यमपिदुर्विवेकत्वेनदुरुद्धरत्वाच्छैलेंद्रसमेनभारेणगौरवेणभयावहम् ॥ विषमयंदुर्द्रुमंदुष्टवृक्षम् ॥ ४३ ॥ फलैःपुरुषार्थैर्हीनम् ॥ ४४ ॥

विस्मृतःआत्मस्वरूपःपितामहोमूलकारणंयेन ॥ ४५ ॥ ४६ ॥ आत्मनःस्वस्यस्थानान्निवासभूताद्देहभेदान्मृत्युनापनयनेनतत्तद्देहाभिमानविच्छेदाच्छिन्नांगम ॥ अतएवतत्तद्देहविशेषासंगाद्दुःस्थितम् ॥ ४७ ॥ विषयेंद्रियदेहादिलक्षणेषुचित्ररूपेषुनानावैचित्र्यैःस्ववधोद्यतेषुशत्रुषुतद्विश्वासेनतन्मध्यस्थम् ॥ इतिप्रपंचितप्रकारास्वित्यर्थः ॥ ४८ ॥ स्वस्यबंधेबंधनहेतौतत्साधनदेहादौचआस्थास्नेहातिशयोयस्यतत् ॥ ४९ ॥ तत्त्वज्ञानतत्साधनादावनास्थानादरस्तद्रूपेब्ध्यावुह्यमानंप्लवमानंमनस्तदास्थोपोद्बलनेनोद्धर ॥ ५० ॥ चिरविषयभोगप्रयुक्तपुण्यक्षयेपरलोकगतिसाधनाभावादालूनशीर्णपादाद्यवयवप्रायम् ॥ बलीवर्दपक्षेस्पष्टम ॥ ५१ ॥ प्रागुक्तानास्थापरनिंदनेनोपसंहरति ॥ शुभाशुभेति ॥ शुभानांकाम्यसुकृतानामशुभानांनिषिद्धकर्मणांचप्रसरैःपराहतामलिनीकृताआकृतिर्यस्य ॥ ज्वलद्भिर्जरामरणविपाद्दैर्मूर्छिते ॥ ईदृशेस्वमनसिसतियस्यव्यथातदुद्धारफल

चिंतानलशिखादग्धंकोपाजगरचर्वितम् ॥ कामाब्धिकल्लोलहतंविस्मृतात्मपितामहम् ॥ ४५ ॥ मृगंयूथादिवभ्रष्टंशोकोपहतचेतनम् ॥ पतंगकमिवज्वालादग्धंविषयपावके ॥ ४६ ॥ छिन्नमूलमिवांभोजंपरमांम्लानिमागतम् ॥ छिन्नांगमात्मनःस्थानाद्विशेषासंगदुःस्थितम् ॥ ४७ ॥ विषयादिषुमध्यस्थंचित्ररूपेषुशत्रुषु ॥ दशास्वेतास्वनंतासुलुठितंसंकटास्विति ॥ ४८ ॥ दुःखेनिपतितंघोरेविहंगःसागरेयथा ॥ स्वबंधास्थंजगज्जालेशून्येगंधर्वपत्तने ॥ ४९ ॥ उह्यमानमनास्थाब्धौमनोविषयविद्रुतम् ॥ उद्धरामरसंकाशमातंगमिवकर्दमात् ॥ ५० ॥ बलीवर्दवदामग्नंमनोमदनपल्वले ॥ आलूनशीर्णावयवंबलाद्रामसमुद्धर ॥ ५१ ॥ शुभाशुभप्रसरपराहताकृतौज्वलज्जरामरणविपादमूर्छिते ॥ व्यथेहयस्यमनसिभोनजायतेनराकृतिर्जगतिसरामराक्षसः ॥ ५२ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेस्थिति० जीवावतरणंनामद्विचत्वारिंशःसर्गः ॥ ४२ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवंजीवाश्रितोभावाभवभावनयोहिताः ॥ ब्रह्मणःकल्पिताकाराल्लक्षशोप्यथकोटिशः ॥ १ ॥ असंख्याताःपुराजाताजायंतेचापिवाद्यभोः ॥ उत्पतिष्यंतिचैवांबुकणौघाइवनिर्झरात् ॥ २ ॥ स्ववासनादशावेशादाशाविवशतांगताः ॥ दशास्वतिविचित्रासुस्वयंनिगडिताशयाः ॥ ३ ॥ अनारतंप्रतिदिशंदेशेदेशेजलेस्थले ॥ जायंतेवाम्रियंतेवाबुद्बुदाइववारिणि ॥ ४ ॥

चिंताप्रयुक्तपीडानजायतेसपुमान्नराकृतिप्रतिच्छन्नोराक्षसएवेत्यर्थः ॥ ५२ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेस्थि० द्विचत्वारिंशःसर्गः ॥ ४२ ॥ ॥ ७ ॥ ॥ जीवानांकर्मगतयःप्रपंच्यंतेत्रविस्तरात् ॥ विवेकादेःसुदौर्लभ्यान्मुक्तिःकेषांचिदित्यपि ॥ १ ॥ एवंमनसःस्वबंधकत्वप्रकारमुपवर्ण्यतदुपहितचिद्रूपजीवानामामोक्षंसंसारस्थितिप्रकारवैचित्र्यंवर्णयिष्यंस्तत्संगतिप्रदर्शनायप्रागुक्तजीवोत्पत्तिप्रकारभेदैरनुवदति ॥ एवमित्यादिना ॥ चितःभावाऔपाधिकाविभावरूपाजीवाभवभावनयासंसारवासनयाउहिताःप्रवाहिताः ॥ दृट्छांदसः ॥ पूर्ववासनानुसारेणकल्पिताकाराद्ब्रह्मणःसकाशाज्जाताइत्यादिपरेणान्वयः ॥ १ ॥ अद्यसंप्रतिजायंते ॥ भोइतिरामसंबोधनम् ॥ २ ॥ ३ ॥ अनारतंसततम् ॥ वाशब्दौपर्यायार्थौ ॥ ४ ॥

प्रथमजन्मानःअस्मिन्कल्पेएकमेवजन्मप्राप्ताः ॥ नविद्यतेजन्मसंख्यायेषांतेअजन्मसंख्याकाः ॥ ५ ॥ भविष्यंतीजातिर्जन्मयेषांतेभविष्यज्जातयः ॥ अस्मिन्कल्पेअद्याप्यनुत्पन्नाइत्यर्थः ॥ भूताअतीताभवोद्भवायेषांजीवन्मुक्ताइतियावत् ॥ अभवतांविदेहमुक्तिम् ॥ ६ ॥ योनिंदेहजातिम् ॥ ७ ॥ महादुःखसहानारकाः ॥ अल्पोदयाअल्पसुखामर्त्याः ॥ अत्यंतमुदितादेवाः ॥ अर्कादिवोदिताःसत्यलोकगाः ॥ ८ ॥ त्र्यक्षादिग्रहणंत्र्यक्षादिसारूप्यप्राप्तजीवाभिप्रायम् ॥ ९ ॥ १० ॥ किरातावेशाःकिरातयोनिप्रविष्टास्त

केचित्प्रथमजन्मानःकेचिज्जन्मशताधिकाः ॥ केचिद्वाजन्मसंख्याकाःकेचिद्द्वित्रिभवांतराः ॥ ५ ॥ भविष्यज्जातयःकेचित्केचिद्भूतभवोद्भवाः ॥ वर्त्तमानभवाःकेचित्केचित्त्वभवतांगताः ॥ ६ ॥ केचित्कल्पसहस्राणिजायमानाःपुनःपुनः ॥ एकामेवास्थितायोनिंकेचिद्योन्यंतरंश्रिताः ॥ ७ ॥ केचिन्महादुःखसहाःकेचिदल्पोदयाःस्थिताः ॥ केचिदत्यंतमुदिताःकेचिदर्कादिवोदिताः ॥ ८ ॥ केचित्किंनरगंधर्वविद्याधरमहोरगाः ॥ केचिदर्केंद्रवरुणास्त्र्यक्षाधोक्षजपद्मजाः ॥ ९ ॥ केचित्कूश्मांडवेतालयक्षरक्षःपिशाचकाः ॥ केचिद्ब्राह्मणभूपालावैश्यशूद्रगणाःस्थिताः ॥ १० ॥ केचिच्छ्वपचचांडालकिरातावेशपुक्कसाः ॥ केचित्तृणौषधीकेचित्फलमूलपतंगकाः ॥ ११ ॥ केचिच्चित्रलतागुल्मतृणोपलदृशोभितः ॥ केचित्कदंबजंबीरशालतालतमालकाः ॥ १२ ॥ केचिद्विभवसंसारमंत्रिसामंतभूमिपाः ॥ केचिच्चीरांबराच्छन्नामुनिमौनमुपस्थिताः ॥ १३ ॥ केचिद्भुजंगगोनासकृमिकीटपिपीलिकाः ॥ केचिन्मृगेंद्रमहिषमृगाजचमरैणकाः ॥ १४ ॥ केचित्सारसचक्राह्वावलाकावककोकिलाः ॥ केचित्कमलकह्लारकुमुदोत्पलतांगताः ॥ १५ ॥ केचित्कलभमातंगवराहवृषगर्द्दभाः ॥ केचिद्द्विरेफमशकाःपुत्तिकादंशवंशजाः ॥ १६ ॥ केचिदापद्दलाक्रांताःकेचित्संपदमागताः ॥ केचित्स्थिताःस्वर्गपुरेकेचिन्नरकमास्थिताः ॥ १७ ॥ ऋक्षचक्रगताःकेचिद्वृक्षरंध्रगताःपरे ॥ वातभूताःस्थिताःकेचित्केचिद्व्योमपदेस्थिताः ॥ १८ ॥ सूर्यांशुषुस्थिताःकेचित्केचिदिंद्वंशुषुस्थिताः ॥ केचित्तृणलतागुल्मरसस्वादुष्ववस्थिताः ॥ १९ ॥ जीवन्मुक्ताभ्रमंतीहकेचित्कल्याणभाजनाः ॥ चिरमुक्ताःस्थिताःकेचिन्नूनंपरिणताःपरे ॥ २० ॥

एव ॥ तृणौपधीइतिजात्योर्द्विवचनम् ॥ फलमूलग्रहणंतदंतर्गतबीजावस्थजीवाभिप्रायेण ॥ ११ ॥ पुनस्तृणग्रहणंतदवांतरजातिप्रपंचार्थम् ॥ उपलंपश्यंतिस्वदेहतयेत्युपलदृशःपर्वतादयः ॥ १२ ॥ विभवैःसंसरंतिभ्रमंतीतिविभवसंसाराः ॥ अंबरदौर्लभ्यात्तपोर्थंवाचीरांबराच्छन्नाः ॥ १३ ॥ गोनासाअजगराः ॥ १४ ॥ १५ ॥ कलभःकरिशावः ॥ पुत्तिकापतंगिका ॥ १६ ॥ १७ ॥ ऋक्षचक्रंनक्षत्रचक्रंतद्गताः ॥ वातभूताआवहप्रवहादिवाय्वधिकारंप्राप्ताः ॥ व्योमपदेआकाशाधिकारे ॥ १८ ॥ सूर्यांशुपुरसादानाद्यधिकारे ॥ इंद्वंशुषुओषध्याद्याप्यायनाधिकारे ॥ तृणादीनांरसःस्वादुर्यत्रपश्वादियोग्येविषयलांपट्येइतियावत् ॥ १९ ॥ परेपरमात्मनिपरिणतास्तद्भावंप्राप्ताविदेहमुक्ताः ॥ २० ॥

चिद्भावाजीवाभोगलंपटास्संतःकेवलीभावंकैवल्यंद्विषंति ॥ २१ ॥ ककुभोदिग्देवताः ॥ २२ ॥ २३ ॥ एतेसर्वेपिसंसरणानर्थवासनावशादेवेतिसैवसमूलमुच्छेद्येत्याशयेनोपसंहरति ॥ जीवाइति ॥ उक्तानुक्तसर्वसंग्रहार्थमेतास्वेतास्वितिवीप्सा ॥ २४ ॥ विहरंतिभुवि ॥ निपतंतिनरके ॥ उत्पतंतिस्वर्गे ॥ अतएवकंदुकाइव ॥ २५ ॥ वासनारूपान्भावान्भाविदेहादीन्धारयंतितच्छीलाः ॥ २६ ॥ अनंतेषुविषयेषुअनंतसंकल्पकल्पनोत्पादनहेतुभूतयामाययाअविद्यया ॥ २७ ॥ आवर्त्तराशयइवेतिशेषः ॥२८॥ विवेकिनां

केचिच्चिरेणकालेनभविष्यन्मुक्तयःशिवाः ॥ केचिद्द्विषंतिचिद्भावाःकेवलीभावमात्मनः॥ २१ ॥ केचिद्विशालाःककुभःकेचिन्नद्योमहारयाः ॥ केचित्स्त्रियःकांतदृशःकेचित्पंडनपुंसकाः॥ २२॥ केचित्प्रबुद्धमतयःकेचिज्जडतराशयाः॥ केचिज्ज्ञानोपदेष्टारःकेचिदात्तसमाधयः॥ २३॥ जीवाःस्ववासनावेशविवशाशयतांगताः॥ एतास्वेतास्ववस्थासुसंस्थितावद्धभावनाः॥ २४॥ विहरंतिजगत्केचिन्निपतंत्युत्पतंतिच ॥ कंदुकाइवहस्तेनमृत्युनाविरतंहताः॥ २५॥ आशापाशशतावद्धावासनाभावधारिणः॥ कायात्कायमुपायांतिवृक्षाद्वृक्षमिवांडजाः ॥ २६॥ अनंतानंतसंकल्पकल्पनोत्पादमायया ॥ इंद्रजालंवितन्वानाजगन्मयमिदंमहत् ॥ २७॥ तावद्भ्रमंतिसंसारेवारिण्यावर्त्तराशयः॥ यावन्मूढानपश्यंतिस्वमात्मानमनिंदितम्॥२८॥ दृष्ट्वात्मानमसत्त्यक्त्वासत्यामासाद्यसंविदम् ॥ कालेनपदमागत्यजायंतेनेहतेपुनः ॥ २९ ॥ भुक्त्वाजन्मसहस्राणिभूयःसंसारसंकटे॥ पतंतिकेचिदवुधाःसंप्राप्यापिविवेकिताम् ॥३०॥ केचिच्छक्रत्वमप्युच्चैःप्राप्यतुच्छतयाधिया ॥ पुनस्तिर्यक्त्वमायांतितिर्यक्त्वान्नरकानपि ॥३१॥ केचिन्महाधियःसंतउत्पद्यब्रह्मणःपदात् ॥ तदैवजन्मनैकेनतत्रैवाशुविशंत्यलम् ॥ ३२ ॥ ब्रह्मांडेष्वितरेष्वन्येतेष्वन्येजीवराशयः॥ प्रयांतिपद्मोद्भवतामन्येचहरतामपि॥ ३३॥ अन्येप्रयांतितिर्यक्त्वमन्येचसुरतामपि ॥ अन्येपिनागतांरामयथैवेहतथैवहि॥३४॥ यथेदंहिजगत्स्फारंतथान्यानिजगंत्यपि॥ विद्यंतेसमतीतानिभविष्यंतिचभूरिशः॥ ३५ ॥

तत्सांत्यदर्शनात्कोलाभस्तमाह ॥ दृष्ट्वेति ॥ कालेनभूमिकादार्ढ्यक्रमेण ॥ २९ ॥ विवेकभ्रष्टानांयागतिस्तामाह ॥ भुक्त्वेति ॥३०॥ शक्रत्वंप्रशस्तजन्मदेशकालप्रतिभाविनयसत्त्वयागमादिसंपन्नताम् ॥ उच्चैर्देवगंधर्वब्राह्मणाद्युत्कृष्टसंपद्रूपम् ॥ तुच्छतयातुच्छविषयलंपटतयाधियास्वबुद्ध्यैव ॥ शक्रत्वमितिपाठेनक्रुषउदाहार्यः ॥ ३१ ॥ महाधियःसनकादयः ॥ तदैवतस्मिन्नेवकल्पे ॥ तत्रमोक्षाख्येब्रह्मपदे ॥ ३२ ॥ इतरेषुस्वोत्पत्तिब्रह्मांडांतरेषुयथैवंवाः ॥ तेषुस्वोत्पत्तिस्थानब्रह्मांडेषु ॥ हरतांहरसारूप्यम् ॥ ३३ ॥ नागतांसर्पतांगजतांवा ॥ यथैवेहब्रह्मांडेतथैवब्रह्मांडांतरेपीतिशेषः ॥ ३४ ॥ इदंजगत्ब्रह्मांडम् ॥ जगंतिब्रह्मांडानि ॥ ३५ ॥

902

आपतंत्याविर्भवंतिपतंतितिरोभवंतिच ॥३६॥ अत्रैवब्रह्मांडांतरेष्वपिकर्मवैचित्र्याज्जीवगतिर्विचित्रैवेत्याशयेनाह ॥ कश्चिदिति ॥३७॥ येनैवमनुष्यादियोग्यव्यवहारेण ॥ द्वीपांतरीयजनवत्सन्निवेशेनसंस्थानभेदेनपरंविलक्षणाः ॥ ३८ ॥ अस्त्वेवंतथापिकथंतेषामुत्तमाधमादिभावेनपरस्परस्नेहविरोधादिनाचसृष्टिपरिवृत्तिस्तत्राह ॥ स्वस्वभावेति ॥ सात्विकराजसतामसादिस्वस्वभाववशात्तत्तदनुकूलव्यवहाराभिनिवेशात्प्रवृत्तानामेकविषयेस्पर्द्धयाअन्योन्यपरिघट्टनैःसृष्टिपरिवृत्तिरित्यर्थः॥३९॥ तत्रापिहेतुमाह ॥ आविर्भावेति ॥रजसआविर्भावेसृष्टेरुन्मज्जनंसत्वतमसोर्निमज्जनंतमसआविर्भावेणरजसस्तिरोभावेसृष्टेर्निमज्जनमंतरासत्वाविर्भावेतावत्कालंपालनमितिहेतुपरिवृत्त्यापरिवर्त्तनइत्यर्थः ॥ ४० ॥ गुणाधीनांतःकरणादिसृष्ट्यातदुपाधिकजीवनिर्गमप्रसिद्धिरित्याशयेनाह ॥ निर्यांतीति ॥ तत्रपरस्मिन्नेवस्फुरंतिस्फुटंव्यवहरंतिच ॥४१॥ तत्रश्रुत्यादिप्रसिद्धदृष्टांतमाह ॥ दीपादिति ॥ ४२ ॥ शीतलास्तुषाराइव ॥ ४३ ॥ प्रलयेशांतिपदेबीजभूते ॥ निलयंनिलीनताम् ॥ ४४ ॥ उक्तंजीवजगत्सर्गंसंक्षिप्योपसंहरति ॥ अविरतमिति ॥ इ

अन्येनान्येनचित्रेणक्रमेणान्येनहेतुना ॥ विचित्राःसृष्टयस्तेषामापतंतिपतंतिच ॥३६॥ कश्चिद्गंधर्वतांयातिकश्चिद्गच्छतियक्षताम् ॥ कश्चित्प्रयातिसुरतांकश्चिदायातिदैत्यताम् ॥३७॥ येनैवव्यवहारेणब्रह्मांडेस्मिञ्जनाःस्थिताः ॥ तेनैवान्येषुतिष्ठंतिसन्निवेशविलक्षणाः ॥३८॥ स्वस्वभाववशावेशादन्योन्यपरिघट्टनैः ॥ सृष्टयःपरिवर्त्तंतेतरंगिण्याइवोर्मयः ॥ ३९ ॥ आविर्भावतिरोभावैरुन्मज्जननिमज्जनैः ॥ सृष्टयःपरिवर्त्तंतेतरंगिण्याइवोर्मयः ॥ ४० ॥ निर्यांत्यविरतंतस्मात्परस्माज्जीवराशयः ॥ अनिर्देश्याःस्वसंवेद्यास्तत्रैवाशुस्फुरंति च ॥ ४१ ॥ दीपादिवालोकदृशःसूर्यादिवमरीचयः ॥ कणास्तप्तायसइवस्फुलिंगाइवपावकात् ॥ ४२ ॥ कालादिवर्त्तवश्चित्राआमोदाः कुसुमादिव ॥ शीतलाइववर्षाणुपूरादब्धेरिवोर्मयः ॥ ४३ ॥ उत्पत्योत्पत्यकालेनभुक्त्वादेहपरंपराम् ॥ स्वतएवपदेयांतिनिलयंजीवराशयः ॥ ४४ ॥ अविरतमियमाततातथोच्चैर्भवतिविनश्यतिवर्धतेमुधैव ॥ त्रिभुवनरचनादिमोहमायापरमपदेलहरीववारिराशौ ॥ ४५ ॥ ॥ इ० वा० वा० दे० मो० स्थि० जीवनिचयस्थानोपदेशोनामत्रिचत्वारिंशःसर्गः ॥ ४३ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ क्रमेणानेनयेनात्मजीवेनस्थितिरात्मनः ॥ सकथंभगवन्देहंसमाधत्तेस्थिपंजरम् ॥ १ ॥

यंत्रिभुवनरचनाभ्रांतिलक्षणामायापरमपदेअविरतंसंततंमुधैवआततासर्गेणविस्तृतावर्द्धतेतथाउच्चैर्भवतिविपरिणमतेविनश्यतिच ॥ वारिराशौलहरीवेतिमुधात्वेदृष्टांतः ॥ ४५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेस्थि० त्रिचत्वारिंशःसर्गः ॥ ४३ ॥ ॥ ७ ॥ ॥ मुक्तिप्रलयसाम्येपिविशेषोत्रप्रकीर्त्यते ॥ तथाविरिंचिर्जीवस्यशरीरग्रहणक्रमः ॥ १ ॥ प्रलयेस्वतएवप्रदेशांतेर्जीवराशयोविलयंयांतीतियदुक्तंतत्रारामःशंकते ॥ क्रमेणेति ॥ अनेनउत्पत्योत्पत्यकालेनभुक्त्वादेहपरंपरामितित्वदुक्तेनक्रमेणयेनजीवेनप्रलयेस्वतएवपरमपदेआत्मनःस्थितिराप्तासमुक्तएवेतिपुनःकथंदेहमादत्ते ॥ परमपदंप्राप्तस्यपुनरावृत्तौमुक्तावप्यनाश्वासप्रसंगात् ॥ नचाज्ञानावृतस्यबीजभावकृतोविशेषः ॥ अबीजस्य शिलाशकलादेरज्ञानमात्रावरणेनांकुरादिबीजत्वादर्शनादित्यर्थः ॥ १ ॥

स्वसमसत्ताकंप्रतिबीजत्वादर्शनेपिआवरणसमसत्ताकसर्पादिकंप्रतिआवृतरज्वादेर्बीजत्वदर्शनान्मिथ्याबीजत्वमावरणमात्रकृतंविशेषेणानुक्तमपिस्वबुद्ध्यैवत्वयोहितुंशक्यमि तिनप्रश्नार्हमेतदित्याशयेनपरिहारमाह ॥ पूर्वमेवेति ॥ २ ॥ आभासोविवर्त्तस्तावन्मात्रम् ॥ ३ ॥ चिरस्थायिनांब्रह्मांडभुवनादीनांकथमाभासमात्रतातत्राह ॥ दीर्घेति ॥ ४॥ अज्ञानात्मनोबीजभावात्पुनःसंसारस्वप्नदर्शनेपिज्ञस्यनतत्प्रसक्तिरित्याशयेनाह ॥ प्रशांतेति ॥ जीवन्मुक्तव्यवहारार्हंपश्यन्नपिपरमार्थदृशानपश्यति ॥ ५ ॥ बीजभूतेअज्ञाना त्मनिभाविसंसारस्यामोक्षंसूक्ष्मरूपेणसत्वादपिपुनर्जन्मोपपत्तिरित्याशयेनाह ॥ स्वभावेति ॥ ६ ॥ जीवस्यांतरेतरलःकायोस्तियथापयसोंतरेआवर्त्तइत्यादिदृष्टांताः ॥ ७ ॥

श्रीवसिष्ठउवाच ॥ ॥ पूर्वमेवमयाप्रोक्तंरामकिंनावबुध्यसे ॥ पूर्वापरविचारार्हाशेमुषीक्वगतातव ॥ २ ॥ यदिदंहिशरीरादिजगत्स्थावर जंगमम् ॥ आभासमात्रमेवैतदसत्स्वप्नमिवोत्थितम् ॥ ३ ॥ दीर्घस्वप्नोह्ययंराममिथ्यैवानघदृश्यते ॥ द्विचंद्रविभ्रमाकारंभ्रमांतर्भ्रांत शैलवत् ॥ ४ ॥ प्रशांताज्ञाननिद्रस्तुनूनंगलितभावनः ॥ प्रबुद्धचेतास्संसारस्वप्नंपश्यन्नपश्यति ॥ ५ ॥ स्वभावकल्पितोरामजीवानांसर्व दैवहि ॥ आमोक्षपदसंप्राप्तिसंसारोस्त्यात्मनोंतरे ॥ ६ ॥ जीवस्यतरलःकाय आवर्त्तःपयसोयथा ॥ यथाबीजेंकुरःस्फारःपल्लवःस्वांकुरे यथा ॥ ७ ॥ पल्लवेचयथापुष्पंपुष्पकोशेफलंयथा ॥ यतःसकल्पनारूपोदेहोस्तिमनसोंतरे ॥ ८ ॥ बहुरूपतयारामयतोस्त्येकतमःस्फुटः ॥ सएवप्रतिभासोस्यमनसःकिलजायते ॥ ९ ॥ सएवाशुभवत्येतन्मृत्पिंडाघटकोपमः ॥ आदिसर्गेपुराकायःप्रतिभासोस्यचोत्तमः ॥ १० ॥ यस्मादेषविभुर्ब्रह्मापद्मकोशगृहस्थितः ॥ तत्संकल्पक्रमेणैवततःस्थितिमुपागता ॥ ११ ॥ इयंसृष्टिरपर्यंतामायेवघनमायया ॥ ॥ श्री रामउवाच ॥ ॥ जीवोमनःपदंप्राप्यवैरिंचंपदमागतः ॥ १२ ॥ यथाब्रह्मंस्तथासर्वंविस्तरेणवदाशुमे ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ ब्रह्मे शृणुमहाबाहोशरीरग्रहणेक्रमम् ॥ १३ ॥ निदर्शनंतेनैवजागतींज्ञास्यसिस्थितिम् ॥ दिक्कालाद्यनवच्छिन्नमात्मतत्त्वंस्वशक्तितः ॥ १४ ॥ लीलयैवयदादत्तेदिक्कालकलितंवपुः ॥ तदेवजीवपर्यायंवासनावेशतत्परम् ॥ १५ ॥ मनःसंपद्यतेलोलंकलनाकलनोन्मुखम् ॥ कलयं तीमनःशक्तिरादौभावयतिक्षणात् ॥ १६ ॥

कुतोजीवांतःकायोस्तितत्राह ॥ यतइति ॥ अंतरेमध्ये ॥ ८ ॥ तत्रापिदेहःकथंसंभाव्यतेतत्राह ॥ बहुरूपतयेति ॥ मनसोबहुरूपतयाप्रसिद्धेर्देहरूपस्यापिवासनात्मनातत्रसं भवादित्यर्थः ॥ तर्हिबहूनिशरीराणियुगपत्कुतोनजायंतेतत्राह ॥ यतइति ॥ यतोबहुषुवासनात्मनास्थितेषुयएवैकतमःपरिपक्वैःकर्मभिःस्फुटोऽभिव्यक्तःक्रियतेसएवप्रतिभासो स्वप्रायेणकालेजायतेनसर्वइत्यर्थः ॥ ९ ॥ एतन्मनःसएवदेहोभवति ॥ तत्रोत्तमकर्मपरिपाकेउत्तमएवदेहोभवतीत्येतदादिसर्गमारभ्यदर्शयति ॥ आदिसर्गइति ॥ १० ॥ ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ कलनाकलनोन्मुखमितियदुक्तंतद्विवृणोति ॥ कलयंतीत्यादिना ॥ पूर्वसर्गेआकाशादिक्रमाविर्भूतहिरण्यगर्भाहंपदोपासनसंस्कृतंम नस्तथैवाव्याकृतेलीनंमनःशक्तिरित्युच्यतेसानैवक्रमेणस्वाविर्भावंकल्पयंतीसतीत्यर्थः ॥ १६ ॥

शब्दानांबीजंशब्दतन्मात्रंरसःश्रोत्रेंद्रियम् ॥ तांतादृशाकाशभावनांप्राप्यघनतामुपचयंयातंमनः ॥ १७ ॥ अनिलात्मनास्पंदंईषच्चलनम् ॥ स्पर्शबीजेत्यादिप्राग्वत् ॥ अपंचीकृतत्वेनसूक्ष्मतमत्वान्मनोदृशामनोवच्छिन्नचैतन्यात्मनाजीवेनादृष्टाभ्याम् ॥ १८ ॥ संघातात्उपचयादभिघाताच्च ॥ अनलोरूपबीजरसात्मकः ॥ १९ ॥ तावद्गुणगतंताबद्भिराकाशवायुतेजोभिर्गुणनंगुणउपचयस्तंगतंप्राप्तम् ॥ २० ॥ अपांशैत्यंरसतन्मात्रंप्राप्यजलमितिसंवेद्यतइतिसंवित्प्रतीत्यर्हंभवेदित्यर्थः ॥ तादृशामुक्तप्रकाराणांचतुर्णांगुणंसंघातभावंगतम् ॥ २१ ॥ उदेष्यतीतिपूर्वभूतजन्मकालमपेक्ष्यभविष्यत्त्वविवक्षणाल्लृट् ॥ भूततन्मात्रवेष्टितमिदंपंचकंमिलितंसत्तनुतांसौक्ष्म्यंजहत्त्यजत् ॥ २२ ॥ यद्वपुःप

आकाशभावनामच्छांशब्दबीजरसोन्मुखीम् ॥ ततस्तांघनतांयातंघनस्पंदक्रमान्मनः ॥ १७ ॥ भावयत्यनिलस्पंदंस्पर्शबीजरसोन्मुखम् ॥ ताभ्यामाकाशवाताभ्यामदृष्टाभ्यांमनोदृशा ॥ १८ ॥ शब्दस्पर्शस्वरूपाभ्यांसंघाताज्जन्यतेनलः ॥ मनस्तद्घनतांप्राप्यततोभावयतिक्षणात् ॥ १९ ॥ प्राकाश्यममलालोकमालोकस्तेनवर्द्धते ॥ मनस्तावद्गुणगतंरसतन्मात्रवेदनम् ॥ २० ॥ क्षणार्द्धेनत्वपांशैत्यंजलसंवित्तोभवेत् ॥ ततस्तादृग्गुणगतंमनोभावयतिक्षणात् ॥ २१ ॥ स्वरूपंगंधवत्स्थूलंयेनोदेष्यतिमेदिनी ॥ अथेत्थंभूततन्मात्रवेष्टितंतनुतांजहत् ॥ २२ ॥ वपुर्वह्निकणाकारंस्फुरितंव्योम्निपश्यति ॥ अहंकारकलायुक्तंबुद्धिबीजसमन्वितम् ॥ २३ ॥ तत्पुर्यष्टकमित्युक्तंभूतहृत्पद्मषट्पदम् ॥ तस्मिंस्तुतीव्रसंवेगाद्भावयद्भास्वरंवपुः ॥ २४ ॥ स्थूलतामेतिपाकेनमनोबिल्वफलंयथा ॥ मूषास्थद्रुतहेमाभंस्फुरितंविमलांबरे ॥ २५ ॥ सन्निवेशमुपादत्तेतत्तेजःस्वस्वभावतः ॥ तस्मिन्स्वसन्निवेशेचतेजःपुंजमयेपुनः ॥ २६ ॥ भजतेभावनांस्फारांनिश्चितामाततांबराम् ॥ ऊर्ध्वंशिरःपीठमयीमधःपादमयींतथा ॥ २७ ॥ पार्श्वयोर्हस्तसंस्थानांमध्येचोदरधर्मिणीम् ॥ प्रकटावयवोबालोज्वालामालामलाकृतिः ॥ २८ ॥ मनोरथवशोपात्तवपुस्तिष्ठत्यसावथ ॥ एवंस्ववासनावेशात्कलितांगोमनोमुनिः ॥ २९ ॥ नयत्युपचयंदेहंस्वस्वभावमृतुर्यथा ॥ कालेनस्फुटतामेतिभवत्यमलविग्रहः ॥ ३० ॥

श्यतितल्लिंगाख्यंपुर्यष्टकमित्यन्वयः ॥ २३ ॥ कर्मज्ञानेंद्रियगणौभूतप्राणमनोगणाः ॥ अविद्याकामकर्माणिलिंगंपुर्यष्टकंविदुः ॥ वक्ष्यमाणदेहभावनयालिंगस्थैवबहिपंचीकरणेनघनत्वेस्थूलदेहताविभावनमित्याह ॥ तस्मिंस्त्विति ॥ २४ ॥ मूषाप्रतिमाकारनभोगर्भमृत्पिंडस्तदंतर्निषिक्तद्रुतहेमाभंबहिःस्थूलभास्वरमंतःसूक्ष्मभास्वरंस्थूलदेहसंवलितंवक्ष्यमाणसंन्निवेशमुपादत्तेतत्तेजोलिंगंकर्तृ ॥ २५ ॥ तत्रमनसोविशेषकल्पनाभिनिवेशशाखोपशाखाप्रचयइत्याह ॥ तस्मिन्नित्यादिना ॥ २६ ॥ आततांबरांव्याप्ताकाशांभूयसीमितियावत् ॥ तत्रक्रमाच्छिरआद्यवयवकल्पनामाह ॥ ऊर्ध्वमिति ॥ २७ ॥ अंगुल्यादिनिष्पत्त्याप्रकटावयवः ॥ २८ ॥ असौब्रह्मा ॥ मुनिःपूर्वोपासितप्रकारमननशीलः ॥ २९ ॥ ३० ॥

१ मनइत्यपिपाठः

ज्ञानमप्रतिघंयस्यवैराग्यंचजगत्पतेः ॥ ऐश्वर्यंचैवधर्मश्चसहसिद्धंचतुष्टयमितिस्मृतिप्रसिद्धविशेषणसिद्धिंतस्यदर्शयति ॥ बुद्धीति ॥ ३१ ॥ परमाकाशेब्रह्मण्यसौयथायादृश्या स्वसत्तयातिष्ठतितथातादृश्यैवव्यवहारक्षमसत्तयाआत्मनोमोहमज्ञानमेवचित्तलीलयापंचीकृतस्थूलव्योमादिवक्ष्यमाणरूपेणजनयतीत्यर्थः ॥ ३२ ॥ तस्यकालभेदेननाना विधाःकल्पनादर्शयति ॥ कदाचिदिति ॥ पारंपरावधिःआदिःपूर्वावधिःपर्यंतोपार्श्वतोवधिस्तदभावादेवमध्यमावधिरहितंचकेवलंव्योमकल्पयतीत्यर्थः ॥ ३३ ॥ दैनंदिनप्रलय कालेत्वमलंपयएवकल्पयति ॥ कदाचित्कल्पांतेदाहकाले ॥ ३४ ॥ कदाचित्पृथिवीसर्गोत्तरंभूतसर्गात्प्राक्कालेकृष्णमेवकार्ष्ण्यम् ॥ चातुर्वर्ण्यमितिवत्स्वार्थेष्यञ् ॥ हरितव र्णकाननंवृक्षव्याप्तांकृत्स्नांभुवमित्यर्थः ॥ कदाचित्पाद्मेकल्पेश्यामभूपद्मप्रकृतित्वात्कालंश्यामंविष्णुनाभ्युत्थंकमलकुड्मलम् ॥ अन्यान्यन्यानिभुवनार्णवजनादिरूपाण्यने

बुद्धिसत्वबलोत्साहविज्ञानैश्वर्यसंस्थितः॥ सएवभगवान्ब्रह्मासर्वलोकपितामहः॥३१॥ द्रवत्कनकसंकाशःपरमाकाशसंभवः॥ यथा सौपरमाकाशेतिष्ठत्यपररूपवान्॥ ३२॥ जनयत्यात्मनोमोहमात्मस्थंचित्तलीलया॥ कदाचित्केवलंव्योमपरमंपारवर्जितम्॥३३॥ अनादिमध्यपर्यंतंकदाचिदमलंपयः॥ कदाचित्कल्पकालाग्निज्वालाभास्वरमंडकम् ॥३४॥ कदाचित्काननंकार्ष्ण्यंकालंकमलकुड्म लम्॥ अन्यान्यन्यान्यनेकानिप्रतिजन्मावधिःप्रभुः॥३५॥ कल्पयन्पालयत्येषनानारूपाणिहेलया॥ तत्रेदंप्रथमत्वेनयदेपब्रह्मणःपदा त्॥ ३६॥ अवतीर्णस्तदाज्ञानात्तथैवसुखमस्मृतम्॥ गर्भनिद्राव्यपगमेवपुःपश्यतिभास्वरम्॥३७॥ प्राणापानप्रवाहाढ्यंद्रव्यैरिवविनिर्मितम्॥ रोमकोटिभिराकीर्णंद्वात्रिंशद्दशनान्वितम्॥ ३८॥ त्रिस्थूणंपंचदैवत्यमधश्चरणलांछितम्॥ पंचभागंनवद्वारंत्वग्लेपमस्त्र णांगकम्॥ ३९ ॥ युक्तमंगुलिविंशत्यानखविंशतिलांछितम्॥ द्विबाहुंद्विस्तनंत्र्यक्षंवक्षिभुजमेवच॥ ४० ॥ नीडंचित्तविहंगस्यनीडं मन्मथभोगिनः॥ तृष्णापिशाच्यानिलयंजीवकेसरिकंदरम्॥ ४१ ॥ अभिमानगजालानंमानसांभोजशोभितम्॥ अथालोच्यवपुर्ब्र ह्माकांतमात्मीयमुत्तमम्॥ ४२ ॥चिंतयामासभगवांस्त्रिकालामलदर्शनः॥ अस्मिन्नाकाशकुहरेततेमधुपलांछिते॥ ४३ ॥ अदृष्टपार पर्यंतेप्रथमंकिमभूदिति॥ इतिचिंतितवान्ब्रह्मासद्योजातोमलात्मदृक्॥ ४४॥

कानिसंस्थानानिकल्पयन्विष्ण्वादिरूपेणस्वयमेवपालयति ॥ ३५ ॥ तस्यप्रथमकल्पमारभ्यप्रतिदिनंसुप्तोत्थितस्यस्वदेहकल्पनाक्रमंदर्शयति ॥ तत्रेत्यादिना ॥ सर्वेषांब्रह्मांडा नांतदन्तर्गतानिब्रह्मणांचकालानवच्छिन्नब्रह्मपदादेवाविर्भावात्तद्दृशानपौर्वापर्यमस्तीतिप्राथम्यमेवत्यभिप्रेत्येदंप्रथमत्वेनेत्युच्यते ॥ ३६ ॥ यदावतीर्णस्तदाप्रभृतिब्रह्मांडगर्भेवि ष्णुकुक्षिगर्भेवासुखंसौषुप्तसुखोपलक्षितमस्मृतंप्राक्तनवास्तवरूपस्यदेहव्यवहारादेश्चास्मरणरूपंसुषुप्तमभूदितिशेषः ॥ ३७ ॥ द्रव्यैःपंचभूतस्वच्छभागैः ॥ ३८ ॥ सक्थिपृष्ठा स्थिभिस्त्रिस्थूणम् ॥ पंचभिःप्राणैःपंचदैवत्यम् ॥ पाणिपादशिरोवक्षःकुक्षिणापंचभागम् ॥ ३९ ॥ इच्छयाकदाचिद्बहुकुक्षिभुजमपि ॥४०॥४१॥४२॥ मधुपपदेनतत्सदृशश्याम ताल्लक्ष्यतेतयालांछिते ॥ ४३ ॥ प्रथमंमदुत्पत्तेःपूर्वम् ॥ इतिशब्दद्वयंवीप्सयासर्वपूर्वविशेषांचितालाभार्थम ॥ अमलानिर्मलत्वादतीतानागतदर्शनेक्षमाआत्मदृग्यस्य ॥४४॥

अथतत्कारणचिंतानंतरम् ॥ सकलान्सांगोपांगान् ॥ धर्मगणग्रहणमधर्माणामप्युपलक्षणम् ॥ ४५ ॥ अतएवतस्योत्तरकालेसर्गोपिवेदोक्तक्रमेणैवमुकरोभूदित्याशयेनाह ॥ लीलयेति ॥ ४६ ॥ ४७ ॥ मनसएवसर्वसृष्टिरितियत्प्रतिज्ञातंतदेवंरीत्यासमर्थितमित्युपसंहरति ॥ दृष्टिरिति ॥ ४८ ॥ हेरघुसुतरघुसंततेपरिदृश्यमानासर्गलक्ष्मीःकमलजरूपधरेणचेतसामनसैवस्वपरिकल्पनेनअतुलांसत्यतुच्छविलक्षणत्वादसदृशींस्थितिंनीतेत्यर्थः ॥ ४९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थितिप्रकरणेचतुश्चत्वारिंशःसर्गः ॥ ४४ ॥ ॥ ७ ॥ ॥ मनोरथादौदृष्टत्वान्मनःकार्यंनसत्क्कचित् ॥ असत्तस्माज्जगद्रूपंसत्स्वदेवेतिवर्ण्यते ॥ १ ॥ संपन्नंपरिनिष्ठितमेवसन्नकिंचिदेवसंपन्नम् ॥ यतोमनोविलसितंसर्वंभामात्रंप्रतिभासमात्रंस्थितम् ॥ तद्व्यतिरेकेणशून्यमेवेत्यर्थः ॥ १ ॥ कुतश्चप्रतिभासव्यतिरेकेणशून्यतातस्येतितत्राह ॥ नेति ॥ यतःप्रतिभासदेशकालौएतेन

अपश्यत्सर्गवृंदानिसमतीतान्यनेकशः॥ अथसस्मारसकलान्सर्वान्धर्मगणान्क्रमात् ॥ ४५ ॥ वसंतःकुसुमानीववेदानादायसंस्तुतान् ॥ लीलयाकल्पयामासचित्रसंकल्पजाःप्रजाः॥ ४६ ॥ नानाचारसमाचारंगंधर्वनगरेयथा ॥ तासांस्वर्गापवर्गार्थंधर्मकामार्थसिद्धये ॥ ४७ ॥ अनंतानिविचित्राणिशास्त्राणिसमकल्पयत् ॥ दृष्टिरेवमियंरामसर्गेस्मिन्स्थितिमागता ॥ विरिंचिरूपान्मनसःपुष्पलक्ष्मीर्मधोरिव ॥ ४८ ॥ विविधविरचनैःक्रियाविलासैःकमलजरूपधरेणचेतसैव ॥ रघुसुतपरिकल्पनेननीतास्थितिमतुलांजगतीहसर्गलक्ष्मीः ॥ ४९ ॥ ॥ इ०वा०वा०दे०मो० स्थितिप्रकरणेसंसारावतरणप्रतिपादनोपदेशोनामचतुश्चत्वारिंशःसर्गः॥ ४४ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच॥ ॥ जगत्संपन्नमेवेदंसंपन्नंकिंचिदेवन ॥ शून्यमेवचभामात्रंमनोविलसितंस्थितम् ॥ १ ॥ नदेशकालावेतेनब्रह्मांडेनाप्तौस्थितौ ॥ मनागपिमहारूपवताप्याकाशरूपिणा ॥ २ ॥ एतत्संकल्पमात्रात्मस्वप्नदृष्टपुरोपमम् ॥ यत्रैवतत्रतच्छून्यंकेवलंव्योमसंस्थितम् ॥ ३ ॥ अभित्तिरागरचनमपिदृष्टमसन्मयम् ॥ अकृतंकृतमेवैतद्व्योम्निचित्रंविचित्रकम् ॥ ४ ॥

परिच्छिन्नेनब्रह्मांडेननाप्तौनव्याप्तौ ॥ अतीतानागतबहिःस्थितब्रह्मांडकोटीनामपित्रसरेणूनामातपांतरिवप्रतिभासांतःस्फुरणदर्शनात् ॥ किंबहुना ॥ महारूपवतापरममहत्त्वेनप्रसिद्धेनाप्याकाशरूपिणाप्रथमभूतेनतस्यतौनव्याप्तौ ॥ ज्यायानाकाशादितिश्रुतेः ॥ अप्रतिभासमानेआकाशेज्यायस्त्वेमानाभावेनप्रतिभासांतरेवतस्यभानस्यावश्यवाच्यत्वेप्रतिभासमानानंतकोटिष्वेकतमभूतस्यतस्यनिरस्ताप्रतिभासदेशकालव्यापकतेतिसूचनायमनागपीत्युक्तिरितिबोध्यम् ॥ २ ॥ पूर्वोत्तरदेशकालाव्याप्तिरास्तांनामस्वाश्रययोर्देशकालयोरपिअध्यस्तेनाधिष्ठानासंस्पर्शान्नप्रतिभासव्याप्तिप्रसक्तिरित्याशयेनाह ॥ एतदिति ॥ यत्रैवदेशेकालेचजगच्चितिभासतेतत्रैवतदधिष्ठानंचित्जगच्छून्यंकेवलंव्योमेवसंस्थितमित्यर्थः ॥ ३ ॥ अतएवेदंगंधर्वनगरचित्रवदितिप्रागुक्तमित्याह ॥ अभित्तीति ॥ ४ ॥

किंचमनसःस्मृतिमात्रेहेतुत्वात्तद्रचितमिदंस्मृतितुल्यमितिनस्वकालेर्थरूपंसदित्याह ॥ मनसेति ॥ एतन्मनः ॥ ५ ॥ कुड्यादिजगतःसतःपृथक्कृत्यदर्शयितुमशक्यत्वादपिस द्व्यतिरेकेणासत्त्वमित्याह ॥ आभासेति ॥ ६ ॥ यथास्वात्मनःस्वयंकोशइवप्रकल्पितंतथैवइदंशरीरंस्वस्यवासनार्थंस्थित्यर्थंकृमिकोशप्रकारेणनीडभूतंकल्पितमित्यर्थः ॥ ७ ॥ चेतसःसंकल्पमात्रेणासद्रचनाप्राप्तिशक्तिप्रसिद्धेरप्युक्तार्थोपपत्तिरित्याह ॥ नतदिति ॥ यदितिसामान्येनपुंसकम् ॥ अंबरमर्थशून्यंसंकल्पंसंकल्परूपंयन्नकरोतिनाप्नोतिचेत्य न्वयः ॥ दुर्गंदुरापम् ॥ ८ ॥ याभिःशक्तिभिर्मनोगुहाअंतर्नाश्रियंतेताःशक्तयोदेवेजगदीश्वरेपिकानामसंभवंतीत्यन्वयः ॥ ९ ॥ यदिसदेवजगदसद्ब्रह्मसदेवसत्परस्परंचतयोः

मनसाकल्पितंसर्वंदेहादिभुवनत्रयम् ॥ संस्मृतौकारणंचैतच्चक्षुरालोकनेयथा ॥ ५ ॥ आभासमात्रंहिजगद्घटावटपटभ्रमैः ॥ आवर्त्तेनसद्रूपात्पृथक्कुड्यादयःस्थिताः ॥ ६ ॥ मनसेदंशरीरंहिवासनार्थंप्रकल्पितम् ॥ कृमिकोशप्रकारेणस्वात्मकोशइवस्वयम् ॥ ७ ॥ नतदस्तिचयन्नामचेतःसंकल्पमंबरम् ॥ नकरोतिनचाप्नोतिदुर्गमप्यतिदुष्करम् ॥ ८ ॥ सर्वशक्तिधरेदेवेकानामननुशक्तयः ॥ नसंभवंत्याश्रियंतेयाभिरंतर्मनोगुहाः ॥ ९ ॥ सत्तासत्तेपदार्थानांसर्वेषांसर्वदैवहि ॥ महाबाहोसंभवतःसर्वशक्तौविभौसति ॥ १० ॥ पश्यभावनयाप्राप्तंमनसैवात्मजंवपुः ॥ तस्मात्तत्कलनांरामसर्वशक्तियुतांविद्धि ॥ ११ ॥ स्वसंकल्पकृताःसर्वेदेवासुरनरादयः ॥ स्वसंकल्पोपशमनेशाम्यंत्यस्नेहदीपवत् ॥ १२ ॥ आकाशसदृशंसर्वंकलनामात्रजृंभितम् ॥ जगत्पश्यमहाबुद्धेसुदीर्घस्वप्नमुत्थितम् ॥ १३ ॥ नजायतेनम्रियतेइहकिंचित्कदाचन ॥ परमार्थेनसुमतेमिथ्यासर्वंतुविद्यते ॥ १४ ॥ नवृद्धिमेतिनोह्लासंयन्नकिंचित्कदाचन ॥ किंवातनुभवेत्तत्रकस्यकानामखंडना ॥ १५ ॥ भूमभूतंस्वकायोत्थमपश्यन्निपुणंदृशा ॥ राघवामहतास्वांतःकिमज्ञइवमुह्यसि ॥ १६ ॥ मृगतृष्णायथातापान्मनसोनिश्चयात्तथा ॥ असंतइवदृश्यंतेसर्वेब्रह्मादयोप्यमी ॥ १७ ॥ द्विचंद्रविभ्रमप्रख्यामनोरथवदुत्थिताः ॥ मिथ्याज्ञानघनाःसर्वेजगत्याकारराशयः ॥ १८ ॥

र्सदेवासंस्पर्शस्तर्हिकथंजगतिकादाचित्केसत्तासत्तेतत्राह ॥ सत्तासत्तेइति ॥ नकादाचित्केअपितुसदातने ॥ तयोःपरस्पराभिभवेनपर्यायेणावेशकल्पनमेवाचित्यंमायाशक्तिकृतमितिभावः ॥ १० ॥ सेयमैश्वरीसर्वशक्तिःस्वमनस्येवप्रत्यक्षंदृश्यतामित्याह ॥ पश्येति ॥ जगतिविचित्रपदार्थशक्तयोपिसर्वशक्तिमन्मनःकल्पनादेवेत्याह ॥ तस्मादिति ॥ कलनांकल्पनाम् ॥ ११ ॥ अतएवनदेवादिशक्तिभिरपिमुक्तिःप्रतिबद्धुंशक्येत्याशयेनाह ॥ स्वसंकल्पेति ॥ १२ ॥ १३ ॥ १४ ॥ नतुखंडनेनाल्पीकृतं नह्यखंडेखंडनमंतरेण परिच्छेदप्रसक्तिः नचखंडनंवासंभवतीत्यर्थः ॥ १५ ॥ बहोर्भावोभूमातथाभूतंअपरिच्छिन्नमितियावत् ॥ स्वकायादुत्थंमुंजेषीकावत्पृथक्कृतमपश्यन्अमहतापरिच्छिन्नात्मदर्शनेनकिंमुह्यसि ॥ १६ ॥ तापान्मरुमयूखात् ॥ निश्चयात्संकल्पात् ॥ १७ ॥ आकारराशयोदृश्याकारसमूहाः ॥ १८ ॥

॥ १९ ॥ नासदिवसत्यमिव ॥ २० ॥ अन्यतायाः भेदस्य ॥ चतुर्भिः किंवत्तैः प्रमाणप्रकारस्वरूपाधाराणांनिषेधः ॥ साअन्यता ॥ २१ ॥ उपचयावधिर्गिरिरपचयावधिःस्थाणुस्ताभ्यांसर्वेतदांतरालिकपरिच्छेदाडंबरविभ्रमाअप्युपलक्ष्यंते ॥ २२ ॥ प्रमत्तस्यविचारहीनस्यपुंसःसकामतृष्णामननमिदंजगत्प्रपंचेस्वर्गनरकतिर्यगादिजन्मसुपतनमारभतइतिप्रपंचपतनारंभंभवतीतिशेषः ॥ अतस्त्वंविवेकेनजगत्त्यक्त्वाअन्यत्निष्प्रपंचमात्मानंभावयेत्यर्थः ॥ २३ ॥ २४ ॥ दृश्यमानावस्थंमहाभोगंबहुविस्तीर्णंरमणीयमिव ॥ तेषुकतिपयानामेवग्रहीतुंशक्यत्वाद्गृहीतेष्वपिकदाचित्कस्यचिदेवोपभोगात्तदुत्तरक्षणएवक्षयाच्चअवस्तुकंतुच्छम् ॥ अभुक्तेषुपूर्वदृष्टेष्वदृष्टेषुचविषयेषुतृष्णाविषोत्कटानामाशाभुजंगानांकोशंवल्मीकमिवस्थितम् ॥ २५ ॥ कथंत्याज्यंतत्राह ॥ असदिति ॥ भावंरागम् ॥ २६ ॥ तदनुधावनेनर्थमाह ॥ स्वसंकल्पेति ॥ २७ ॥ नकेवलमनर्थप्राप्तिरेव

यथानौयायिनोमिथ्यास्थाणुस्पंदमतिस्तथा ॥ असत्यैवोत्थितानित्यमाकाराणांपरंपरा ॥ १९ ॥ इंद्रजालमिदंविद्धिमायारचितपंजरम् ॥ मनोमननिर्माणंनसन्नासदिवस्थितम् ॥ २० ॥ ब्रह्मैवेदंजगत्सर्वमन्यतायास्ततःकुतः ॥ प्रसंगःकीदृशःकोसौक्कवासापरितिष्ठति ॥ २१ ॥ अयंगिरिरयंस्थाणुरित्याडंबरविभ्रमः ॥ मनसोभावनादार्ढ्यादसन्सन्निवलक्ष्यते ॥ २२ ॥ प्रपंचपतनारंभंप्रमत्तस्यइदंजगत् ॥ सकामतृष्णामननंत्यक्त्वान्यद्रामभावय ॥ २३ ॥ यथास्वप्नोमहारंभोभ्रांतिरेवनवस्तुतः ॥ दीर्घस्वप्नंतथैवेदंविद्धिचित्तोपपादितम् ॥ २४ ॥ दृश्यमानमहाभोगंगृह्यमाणमवस्तुकम् ॥ कोशमाशाभुजंगानांसंसाराडंबरंत्यज ॥ २५ ॥ असदेतदितिज्ञात्वामात्रभावंनिवेशय ॥ अनुधावतिनप्राज्ञोविज्ञायमृगतृष्णिकाम् ॥ २६ ॥ स्वसंकल्पात्स्वरूपाढ्यांमनोरथमयींश्रियम् ॥ योनुगच्छतिमूढात्मादुःखस्यैवसभाजनम् ॥ २७ ॥ वस्तुन्यसतिलोकोयंयातुकाममवस्तुनि ॥ यस्तुवस्तुपरित्यज्ययात्यवस्तुसनश्यति ॥ २८ ॥ मनोव्यामोहएवेदंरज्ज्वामहिभयंयथा ॥ भावनामात्रवैचित्र्याच्चिरमावर्त्ततेजगत् ॥ २९ ॥ असदभ्युदितैर्भावैर्जलांतश्चंद्रवच्चलैः ॥ वंच्यतेबालएवेहनतत्त्वज्ञोभवादृशः ॥ ३० ॥ यइमंगुणसंघातंभावयन्सुखमीहते ॥ प्रमार्ष्टिसजडोजाड्यंवह्निभावनयास्वया ॥ ३१ ॥ असदेवेदमाभोगिदृश्यतेजलपंजरम् ॥ मनोमननिर्माणहृदयेनगरंयथा ॥ ३२ ॥ इदंचित्तेच्छयोदेतिलीयतेतदनिच्छया ॥ मिथ्यैवंदृश्यतेस्फीतंगंधर्वनगरंयथा ॥ ३३ ॥

किंत्वर्थनाशोपितस्यास्तीत्याह ॥ यस्त्विति ॥ नश्यतिपरमपुरुषार्थाद्भ्रश्यति ॥ २८ ॥ २९ ॥ ३० ॥ गुणानांशब्दादीनांसंघातंदेहादिभावयन्अहंममेत्यभिमन्यमानः ॥ जाड्यंशीतम् ॥ वह्निभावनयामनोरथकल्पितवह्निनेतियावत् ॥ ३१ ॥ जलपंजरंलडयोरभेदाज्जडसंघातभूतंदेहादि ॥ ३२ ॥ यदीदमैच्छिकसंकल्पवशादुदितंतर्हिऐच्छिकनिवृत्तिसंकल्पादेवकुतोननिवर्त्ततेतत्राह ॥ लीयतइति ॥ तस्यचित्रस्यानिच्छयारागक्षयमात्रेण ॥ एवंविधंलोकेमिथ्यैवदृश्यते ॥ गंधर्वनगरग्रहणंमनोरथकल्पितनगरोपलक्षणम् ॥ ३३ ॥

अतोनास्यनाशेसमृद्धौवाशोकहर्षौकार्याविल्याशयेनाह ॥ रामेत्यादिना ॥ युक्तेसमृद्धे ॥३४॥३५॥ क्रीडार्थेनपुत्रिकादिनावर्त्तनंपुत्रपश्वादिव्यवहाराभासकल्पनंयथानशो च्यतेइतिशेषः ॥३६॥३७॥ यदसदलीकंतदसदविद्यमानमेवचेत्स्यात्कस्यकिंक्षतंनकिंचिदितिशेषः ॥ इवार्थेवानकारः ॥ अतःसंसारेहर्षविषादानामास्पदंनकिंचिन्नामेत्यन्वयः ॥ ३८ ॥ इत्थंनाशाभ्युपगमेनशोकानर्हतामुक्त्वावस्तुतोनाशएवकस्यचिन्नास्तीतितामाह ॥ असदेवेति ॥ यद्यतोऽसदेवतस्मात्तनः ॥३९॥ अध्यस्तदृष्ट्यानाशासंभवमुपपाद्य अधिष्ठानदृष्ट्यापितमुपपादयति ॥ सदेवेति ॥ सुखदुःखेकिंनिमित्तमुत्थितेनोत्थितेएवेत्यर्थः ॥ ४० ॥ उत्पत्तिनिरासादेववृद्ध्यादिविकाराअपिनिरस्ताएवेतितन्निमित्तहर्षस्या प्ययुक्ततेत्याह ॥ असदिति ॥ वार्पाअवधारणे ॥ ४१॥ इष्टप्राप्तौहिहर्षःस्यादिष्टमेवमायामयेनास्तीत्याह ॥ सर्वत्रेति ॥ ४२ ॥ एवंसर्वमानंदैकरस्येनपश्यतोहेयमपिनास्तीत्या ह ॥ सर्वत्रेति ॥ ब्रह्मतत्त्वमये ॥ स्वार्थेमयट् ॥ परिहरंतुत्यजंतु ॥४३ ॥ तस्यपक्षद्वयेपिविनाशानर्हम्न्यपुत्रमित्रादेर्विनाशेनस्वभ्रांतिकल्पितेनदुःखितः ॥४४॥ इदानीमसत्सत्पक्ष

रामनष्टेजगत्यस्मिन्नकिंचिदपिनश्यति॥युक्तेपिचजगत्यस्मिन्नकिंचिदपियुज्यते॥३४॥ मनःप्रकल्पितेभग्नेत्हृदिविस्तीर्णपत्तने॥ वृद्धिं चोपगतेब्रूहिकिंवृद्धंकस्यकिंक्षतम्॥ ३५॥ क्रीडार्थेनयथोदेतिवालानांहृदिवर्त्तनम्॥ मनसातद्वदेवेदमुदेत्यविरतंजगत्॥३६॥ नकिं चित्कस्यचिन्नष्टमिंद्रजालजलेयथा॥भ्रष्टेनष्टेतथैवास्मिन्संसारेवितथोत्थिते॥३७॥ यदसत्तदसत्स्याच्चेन्नकिंकस्यकिलक्षतम्॥ ततो हर्षविषादानांसंसारेनामनास्पदम्॥३८॥ असदेवयदत्यंतंतस्मात्किंनामनश्यति॥ नाशाभावेहिदुःखस्यकःप्रसंगोमहामते॥३९॥ स देववायदत्यंतंतस्यकिंनामनश्यति॥ ब्रह्मैवेदंजगत्सर्वंसुखदुःखेकिमुत्थिते॥४०॥ असद्वापियदत्यंतंवृद्धिःस्यात्तस्यकीदृशी॥ वृद्धेरभा वेहर्षस्यकःप्रसंगोमहामते॥४१॥ सर्वत्रासत्यभूतेस्मिन्प्रपंचैकांतकारिणि॥ संसारेकिमुपादेयंप्राज्ञोयदभिवांछतु॥४२॥ सर्वत्रसत्य भूतेस्मिन्ब्रह्मतत्त्वमयेपिच॥ किंस्यात्त्रिभुवनेहेयंप्राज्ञाःपरिहरंतुयत्॥४३॥ असत्सद्वाजगद्यस्यतेनासौसुखदुःखयोः॥ अगम्यएवमूर्ख स्तुतद्विनाशेनदुःखितः॥४४॥ आदावंतेचयन्नास्तिवर्त्तमानेपितत्तथा॥ योभिवांछत्यसद्रामतस्यासत्त्वैवदृश्यते॥४५॥ आदावंतेचय त्सत्यंवर्त्तमानेसदेवतत्॥ यस्यसर्वंसदेवस्यात्तस्यसत्त्वैवदृश्यते॥४६॥

योस्तुल्येउपपत्तीदर्शयति ॥ आदावितिद्वाभ्याम् ॥ असद्वाइदमग्रआसीत् नैवेहकिंचनाग्रआसीत्इत्यादिश्रुतिभिर्गगनपवनभुवनादीनामाद्यंतयोरसत्वंश्रूयतेघटादेश्चप्रत्यक्षमनुभूयतेचिरंचोभयतश्चासत्त्वमचिरंसकृच्चसत्त्वंप्रतिव्यक्तिप्रसिद्धम् ॥ तेचपर स्परोच्छित्तिस्वभावेसत्वासत्वेनैकवस्तुन्येकतरप्रहाणमंतरेणनिविशेतेइत्यवश्यमेकतरस्मिन्प्रहातव्येआद्यंतयोश्चिरतरमसत्त्वप्रसिद्धेर्वर्त्तमानदशायामप्यसत्वमेवसर्वव्यक्तीना मितिअसत्वपक्षेच्छुनाअसत्वमेवश्रुतियुक्त्यनुभवैर्दृश्यतइत्यर्थः ॥ ४५ ॥ सदेवसोम्येदमग्रआसीत्कथमसतःसज्जायेतेत्यादिश्रुतिभिःसत्सदित्येवप्रमाणप्रवृत्तिकालेसर्ववस्त्वनुभ वादाद्यंतकालयोःसत्तानभिव्यक्तितिरोधानमात्रकल्पनेनाप्यसद्वाइदमग्रआसीदित्यादिश्रुतियुक्त्योरुपपत्तेःसत्त्वश्रुतियुक्त्योरन्यथोपपादयितुमशक्यत्वाच्चसदातनीसार्वत्रिकी चसर्ववस्तूनांसत्तालाघवादेकैवयुक्तेतिसत्त्वैक्येसिद्धेआदावंतेचकारणब्रह्मसत्तयैवसर्वस्यसत्यत्वाद्वर्त्तमानकालेतत्तथैवेतिसद्वादिनाअखंडब्रह्मसत्त्वेवसर्वत्रदृश्यतइत्यर्थः ॥४६॥

देशकालपरिच्छिन्नसत्ताकल्पनंपक्षद्वयबहिष्कृतंसर्वंश्रुतियुक्तिविरुद्धंमूर्खसहस्रैरंधपरंपरयापरिकल्पितंसर्वानर्थकारीतिबालिशानांतेषामेवोचितंनत्वेत्याशयेनाह ॥ असत्यभूतमित्यादिना ॥ ४७ ॥ वस्तुरिक्तैरर्थशून्यैः ॥ प्रयोजनैःसुखाभासैः ॥ ४८ ॥ माभवःमाभूः ॥ लुङ्विपर्ययेव्यत्ययेनलङ् ॥ ४९ ॥ इदानींदर्शितयोःसदसत्पक्षयोर्द्वारभेदेनैकप्रयोजनावसानेफलतःसमुच्चयंदर्शयन्नुपसंहरति ॥ असदिति ॥ मायामूढैरात्मत्वेनकल्पितेनाहंकारेणसमेतंसहितमिदमखिलंजगदसदेवेतिमत्त्वाश्रुतिगुरुयुक्तिस्वानुभवैरवधार्यपुत्रमित्रधनादिनाशेविषादिताशोकः ॥ विषमिवपरिणामदुःखदान्विषयानत्तुंभोक्तुंशीलमस्येतिविषादीरागीतद्भावोविषादितारागश्चमास्तु ॥ तथाचशोकरागादिनिरासद्वाराऐकात्म्यदर्शनेप्रपंचासत्ववादउपयुज्यतइतिभावः ॥ एवमन्यार्थेनासद्वादप्रस्तावेननिस्तत्त्वमेवजगदितिनमंतव्यंकिंनुसकलंसदेव ॥ सत्त्वस्याप्रसिद्धौतत्प्रतिक्षेपकस्यासत्त्वस्याप्रसिद्धेः ॥

असत्यभूतंतोयांतश्चंद्रव्योमतलादिकम् ॥ बालाएवाभिवांछंतिमनोमोहायनोत्तमाः ॥ ४७ ॥ बालोहिविततताकारैर्वस्तुरिक्तैःप्रयोजनैः ॥ संतोषमेत्यनंतायदुःखायनसुखायतु ॥ ४८ ॥ तस्मान्मात्वंभवोबालोरामराजीवलोचन ॥ अविनाशमिहालोक्यनित्यमाश्रयसुस्थिरम् ॥ ४९ ॥ असदिदमखिलंमयासमेतंत्विति विगणय्यविषादितास्तुमाते ॥ सदिहहिसकलंमयासमेतंत्वितिचविलोक्यविषादितास्तुमाते ॥ ५० ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इत्युक्तवत्यथमुनौदिवसोजगामसायंतनायविधयेस्तमिनोजगाम ॥ स्नातुंसभाकृतनमस्करणाजगामश्यामाक्षयेरविकरैश्चसहाजगाम ॥ ५१ ॥ ॥ इ० वा० वा० दे० मो० स्थि० यथाभूतार्थयोगोपदेशोनामपंचचत्वारिंशः सर्गः ॥ ४५ ॥ ॥ ७ ॥ ॥ दि० ९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ रम्येधनेषुदारादौशोकस्यावसरोहिकः[1] ॥ इंद्रजालेक्षणाद्दृष्टेनष्टेकापरिदेवना ॥ १ ॥

प्रसिद्धौचतत्प्रतिक्षिप्तत्वादेवासत्त्वासिद्धेः ॥ एवंसर्वत्रसत्तयाप्रतिक्षिप्तमसत्त्वंनिरास्पदंनक्वचित्कस्यचित्परिच्छेदायप्रभवतीत्यपरिच्छिन्नसदेकरस्येसिद्धेघटपटादिपरिच्छेदकाकारस्यपृथगनवशेषान्मयाशोधितचिन्मात्रैकरसेनप्रतीचाअखंडैक्येनसमेतंसदेवभूमाख्यमहमितिविलोक्यस्वात्मप्रतिष्ठस्यतेतत्रविषादितापुनःसांसारिकजन्ममरणादिविषादावाप्तिर्मास्तुकालत्रयेपिनसंभावितेत्यर्थः ॥ ५० ॥ ५१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेस्थिति० पंचचत्वारिंशःसर्गः ॥ ४५ ॥ ॥ ७ ॥ ॥ विहरन्नपिसंसारेयैर्गुणैर्ननिमज्जति ॥ तेरामायात्रकीर्त्यंतेजीवन्मुक्तेषुयेस्थिताः ॥ १ ॥ तत्रसर्ववस्तुष्वनास्थयानष्टोपेक्षणानागतावांछनलक्षणौगुणौप्रथममुपदिदिक्षुःपूर्वप्रस्तावस्यतदुपयोगंदर्शयितुमाह ॥ रम्येइत्यादिना ॥ रम्येइतिपदसंस्कारपक्षेएकवचनंवचनसर्वनामेत्यनुशासनादेकवचनंआवृत्त्योभयान्वयि ॥ १ ॥

---

[1] पुस्तकांतरे ( हर्षस्यावसरोहिकः ) इतिमूलपाठः ॥ टीकायांचउभयान्वयीत्यस्यानंतरं ( दारादाविंद्रजालेक्षणाद्दृष्टेसतिहर्षस्यावसरःकः तस्मिन्नष्टेवाकापरिदेवनेत्यन्वयः ) इतिपाठोधिकोदृश्यते ॥

क्रमणंक्रमःप्रसरः ॥ २ ॥ धनदारादौचसमृद्धेसतीतिशेषः ॥ आनंदोजलक्रीडादिसुखाधिक्यंकिम् ॥ ३ ॥ तद्वृद्धौसंसाररोगवृद्धिसंभावनयादुःखमेवकर्त्तुमुचितंनहर्षइत्याह ॥ धनेति ॥ ४ ॥ अधिकतांअभिवृद्धिआगतैः ॥ ५ ॥ नष्टेनश्वरस्वभावे ॥ पारावलोकिनःनश्वरतानरकहेतुत्वाद्युदर्ककटुकतादर्शिनः ॥ ६ ॥ यदर्थमयंप्रस्तावस्तंदर्शयति ॥ अतइति॥उपाहरउपयुंक्ष्व ॥ प्राप्तोपयोगोर्थप्राप्तत्वान्नविधेयोगुणः ॥७॥ गुणांतरमाह ॥ अनागतानामिति ॥८॥ अप्रमादलक्षणंगुणांतरमुपदिशति ॥ संसारेति ॥ संसारेसंभ्रमयतीतिसंसारसंभ्रमःकामस्तस्मिन्क्षणेच्छन्नात्मनिजिघांसयाप्रच्छन्नेआततेनविषशस्त्राग्न्यादिनाहंतुंअयनेउपगच्छतीत्याततायीशत्रुस्तस्मिन् ॥ तदुक्तम् ॥ उद्यतासिविषाग्निचशापोद्यतकरंतथा ॥ आथर्वणेनहंतारंपिशुनंराजसद्मसु ॥ भार्यातिक्रमिणंचैवविद्यात्सप्ताततायिनइति ॥ संबुद्धःप्रबोधेअप्रमत्तः ॥ ९॥ प्रपंचरहितेक्रम्यतइतिक्रमःपरमपदंतस्मिन्स

गंधर्वनगरस्यार्थेदूषितेभूषितेतथा॥ अविद्यांशेसुतादौवाकःक्रमःसुखदुःखयोः॥ २॥ रम्येधनेथदारादौहर्षस्यावसरोहिकः॥ वृद्धायां मृगतृष्णायांकिमानंदोजलार्थिनाम्॥ ३॥ धनदारेषुवृद्धेषुदुःखंयुक्तंनतुष्टयः॥ वृद्धायांमोहमायायांकःसमाश्वासवानिह ॥ ४॥ यैरेवजायतेरागोमूर्खस्याधिकतागतैः॥ तैरेवभोगैःप्राज्ञस्यविरागउपजायते॥ ५॥ नष्टेधनेथदारादौहर्षस्यावसरोहिकः॥ पारावलोकिनस्त्वेतैर्विरागंयांतिसाधवः॥ ६॥ अतोराघवतत्त्वज्ञोव्यवहारेषुसंस्तुतेः॥ नष्टंनष्टमुपेक्षस्वप्राप्तंप्राप्तमुपाहर॥ ७॥ अनागतानांभोगानामवांछनमकृत्रिमम्॥ आगतानांचसंभोगइतिपंडितलक्षणम्॥८॥ संसारसंभ्रमेत्वस्मिंश्छन्नात्मन्याततायिनि॥ तथाविहरसंबुद्धोयथानायासिमूढताम्॥ ९॥ संसाराडंबरस्यास्यप्रपंचरहितेक्रमे ॥ सम्यग्ज्ञानानुपश्यंतियेहतास्तेकुबुद्धयः॥ १० ॥ ययाकयाचिद्युक्त्यैवदृश्याद्यस्यगतारतिः॥ परिमज्जतितस्यास्थानक्वचिद्विमलामतिः ॥ ११ ॥ यस्यासदिदमित्यास्थानिवृत्तासर्ववस्तुषु॥ क्रोडीकरोतिसर्वज्ञंनाविद्यातमवास्तवी॥ १२॥ अहंजगच्चैकमिदंसर्वमेवेतियस्यधीः॥ आस्थानास्थेपरित्यज्यसंस्थितासनमज्जति॥ १३॥

म्यग्ज्ञाअपियेप्रमादादस्यसंसाराडंबरस्यवंचनांनानुपश्यंतितेकुबुद्धयःप्रमादेनहताइत्यर्थः॥अथवाप्रपंचरहितेब्रह्मणिविवेकवैराग्यप्रबोधाप्रमादादिगुणार्जनक्रमेयेसम्यग्ज्ञास्तेऽस्यसंसाराडंबरस्य ॥ कर्मणएवशेषत्वविवक्षयाषष्ठी ॥ इमंसंसाराडंबरंनानुपश्यंति ॥ येतुकुबुद्धयउक्तगुणहीनास्तेहताइत्यर्थः ॥ १० ॥ दृश्यदर्शनारतिलक्षणमपरंगुणमुपदिशति ॥ ययेति ॥ चित्तरंजनदृढवासनाधानस्वरूपप्रच्यावननरकाद्यनर्थहेतुत्वमिथ्यात्वानामन्यतमोपपादिकयाययाकयाचिद्युक्त्या ॥ गतानिवृत्ताआस्थापरमार्थाभिनिविष्टाविमलाविपापामतिर्नपरिमज्जतिमोहाब्धौ ॥ ११ ॥ एवंबाह्यार्थाभिनिवेशत्यागोपिगुणइत्याशयेनाह ॥ यस्येति ॥ असदिदमितिनिश्चयेनेतिशेषः ॥ आस्थाअभिनिवेशः ॥ १२ ॥ ऐक्यात्मदर्शनमपिगुणइत्याह ॥ अहमिति ॥ अनास्थापरित्यागोयथाप्राप्तानुवर्त्तनम् ॥ १३ ॥

उक्तमेवविवृणोति ॥ शुद्धमिति ॥ सदसतोर्व्यक्ताव्यक्तयोर्मध्यमनुगतम् शुद्धंसत्तामात्रम् पदंतदेवप्रत्यगात्मेत्यवलंब्य ॥ १४ ॥ उपरतिसंतोषानिकेतनत्वासंगत्वगुणानुपदिशति ॥ अत्यंतेति ॥१५॥ कथंनीरागःस्यात्कथंवाअसंगस्तत्राह ॥ यस्येति ॥१६॥ बाधितानुवृत्तिमात्रत्वेनामुख्यत्वाद्गौणंतवइंद्रियसहितंमनोदर्शनादीनिकरोतुनकरोतुवा॥१७॥ इंद्रियार्थेममतात्यागलक्षणंगुणमुपदिशन्मनास्थामुपपादयति ॥ ममेति ॥ अमग्नःसन्निति पुंस्त्वंछांदसम् ॥ त्वमज्ञःसन्निति पाठेतुत्वंमनःमानिमज्जयेत्यर्थः ॥ १८ ॥ स्वस्यजीवन्मुक्तताप्राप्तिप्रत्ययेलिंगमाह ॥ यदेति ॥ नस्वदतेअनर्थहेतुत्वाप्रतिसंधानेपिस्वतएवनरोचते॥१९॥ आअस्वादितेतिच्छेदः ॥ आसमंतात्ऐहलौकिकाःपारलौकिकाश्चअस्वा

शुद्धंसदसतोर्मध्यंपदंबुद्ध्यावलंब्यच॥सबाह्याभ्यंतरंदृश्यंमागृहाणविमुंचमा॥ १४॥ अत्यंतविरतःस्वस्थःसर्ववासविवर्जितः॥ व्योमवत्तिष्ठनीरागोरामकार्यपरोपिसन्॥ १५ ॥ यस्यनेच्छानवानिच्छाज्ञस्यकर्मणितिष्ठतः ॥ नतस्यलिप्यतेप्रज्ञापद्मपत्रमिवांबुभिः ॥ १६ ॥ दर्शनस्पर्शनादीनिमाकरोतुकरोतुच ॥ तवेंद्रियमनोगौणंत्वमनिच्छोभवात्मवान्॥ १७ ॥ ममेदमित्यसद्भूतमिंद्रियार्थेभवन्मनः॥ मानिमज्जत्वमग्नःसन्माकरोतुकरोतुवा ॥ १८॥ यदातेनेंद्रियार्थश्रीःस्वदतेहृदिराघव ॥ तदाविज्ञातविज्ञानःसमुत्तीर्णभवार्णवः॥ १९॥ आस्वादितेंद्रियार्थस्यसतनोरतनोरपि॥ अनिच्छतोपिसंपन्नामुक्तिरर्थवशात्तव॥ २० ॥ उच्चैःपदायपरयाप्रज्ञयावासनागणात्॥ पुष्पाद्गंधमिवोदारंचेतोरामपृथक्कुरु ॥ २१ ॥ संसारांबुनिधावस्मिन्वासनांबुपरिप्लुते ॥ येप्रज्ञानावमारूढास्तेतीर्णाबुडितापरे॥ २२॥ क्षुरधाराप्रमितयाधियापरमधीरया॥ प्रविचार्यात्मनस्तत्त्वंततःस्वपदमाविश॥ २३ ॥ यथातत्त्वविदःप्राज्ञाज्ञानबृंहितचेतसः॥ विहरंतितथारामविहर्त्तव्यंनमूढवत्॥ २४॥ जीवन्मुक्तामहात्मानोनित्यतृप्तामहाधियः॥ आचारैरनुगंतव्यानभोगकृपणाःशठाः॥ २५॥ नत्यजंतिनवांछंतिव्यवहारंजगद्गतम्॥ सर्वमेवानुवर्त्ततेपारावारविदोजनाः॥ २६॥ प्रभावस्याभिमानस्यगुणानांयशसःश्रियः॥ नकश्चित्कृपणालोकेमहांतस्तत्त्वदर्शिनः॥ २७॥

दिताःअरुचिविषयीकृताइंद्रियार्थाविषयायस्यधीरस्य सतनोर्व्युत्थानेदेहभानवतः॥ अतनोःसमाधिनातद्रहितस्यापि ॥ अर्थवशात्अनायासेनेतियावत्॥ २० ॥ तस्यांजीवन्मुक्तौवासनाभ्यश्चित्तस्यनिष्कर्षएवमुख्यंसाधनमित्याह ॥ उच्चैःपदायेति ॥ उदारंविवेकवैराग्योत्कृष्टंचेतोमनः॥ २१ ॥ बुडितानिमग्नाः ॥ २२ ॥ कीदृशीसाप्रज्ञानौस्तांदर्शयति ॥ क्षुरधारेति ॥ विवेकवैराग्यादितीक्ष्णीकृतयेत्यर्थः ॥ धीरयाद्वंद्वसहनेधैर्यवत्या ॥ २३ ॥ २४ ॥ शठाःस्वपरवंचकाः॥ २५ ॥ पारंब्रह्मतत्त्वमवारंजगत्तत्त्वंतद्विदः॥ २६ ॥ ननुविदुषामपिकश्चित्कार्पण्यंस्यान्नेत्याह ॥ प्रभावस्येति ॥ प्रभावोविद्यातपःपराक्रमाद्युत्कर्षः ॥ गुणादाक्ष्यकुलशीलादयः ॥ श्रियःसंपदः ॥ एतेषांहिविषयेलोकेकार्पण्यंप्रसिद्धम् ॥ तत्त्वदर्शिनःप्रभावादीनांमिथ्यात्वादपुरुषार्थतादर्शिनः॥ २७॥

सुशून्येसर्वनाशेपि ॥ देवोद्यानेसर्वकामसमृद्धनंदनादावपिनसंगिनोनासक्ताः ॥ नियतिंशास्त्रमर्यादाम् ॥ भास्करपक्षेसुशून्येआकाशे ॥ नियतिंस्वमार्गमर्यादाम् ॥ २८ ॥ समुन्नद्धाः विज्ञानसारथिर्यस्तुमनःप्रग्रहवान्नरइत्यादिश्रुत्युक्तसाधनसन्नद्धाः ॥ २९ ॥ मयितर्हितेगुणाःसंतिनवेतिसंदेहकातरंराममाश्वासयति ॥ त्वमपीति ॥ ३० ॥ ३१ ॥ दूराःआलोकनवासनाविषयकौतुकदर्शनेच्छायस्यतथाविधोभूत्वेत्यर्थः ॥ ३२ ॥ उपदिष्टार्थरहस्यानांरामस्यांतरुन्मेषादाविर्भावंवाल्मीकिराह ॥ इत्थमिति ॥ विमलाशयस्यमुनेर्वसिष्ठस्येत्थमुक्तप्रकारयागिरारामोमृष्टःपरिमार्जितोदर्पणइवआवभासे ॥ ज्ञानामृतेनविराजितांतःकरणःसम्पूर्णःशशांकइवशीतलतांतापत्रयोपशांतिंजगामप्राप ॥ ३३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थि०षट्चत्वारिंशःसर्गः ॥ ४६ ॥ ॥ ७ ॥ ॥ अतीताभाविनःसंतोब्रह्मब्रह्मांडकोटयः ॥ देवाद्याश्चात्रवर्ण्यंतेनियतानि

सुशून्येपिनखिद्यंतेदेवोद्यानेनसंगिनः॥ नियतिंचनमुंचंतिमहांतोभास्कराइव॥ २८॥ विगतेच्छायथाप्राप्तव्यवहारानुवर्त्तिनः॥ विचरंतिसमुन्नद्धाःस्वस्थादेहरथेस्थिताः॥ २९॥ त्वमपिप्राप्तवान्रामविवेकमिममाततम्॥ प्रज्ञाबलेनचानेनज्ञानेस्वस्थोसिसुंदर॥३०॥ स्पष्टांदृष्टिमवष्टभ्यनिर्मानोगतमत्सरः॥ विहरास्मिन्भुवःपीठेपरांसिद्धिमवाप्स्यसि॥३१॥ स्वस्थःसर्वेहितत्यागीदूरालोकनवांछनः॥ परांशीतलतामंतरादायविहरानघ॥ ३२॥ ॥ श्रीवाल्मीकिरुवाच॥ ॥ इत्थंगिराविमलयाविमलाशयस्यरामोमुनेःसपदिमृष्टइवावभासे॥ ज्ञानामृतेनमधुरेणविराजितांतःपूर्णःशशांकइवशीतलतांजगाम॥३३॥ ॥इ०वा०वा०दे०मो०स्थि०जीवन्मुक्तस्थितगुणवर्णनंनामषट्चत्वारिंशःसर्गः॥४६॥ ॥७॥ ॥श्रीरामउवाच॥ ॥भगवन्सर्वधर्मज्ञसर्ववेदांगपारग[1]॥ आश्वस्तइवतिष्ठामिशुद्धाभिर्भवदुक्तिभिः॥ १॥ उदाराणिविविक्तानिपेशलान्युदितानिच॥ श्रोतुंतृप्तिंनगच्छामिवचांसिवदतस्तव॥ २॥ जात्याराजससात्त्विक्याःकथनावसरांतरे॥ उत्पत्तिर्भवताप्रोक्ताशास्त्रैःकमलजन्मनः॥ ३॥ ॥श्रीवसिष्ठउवाच॥ ॥बहूनिब्रह्मलक्षाणिशंकरेंद्रशतानिच॥ नारायणसहस्राणिसमतीतानिराघव॥४॥अन्येषुचविचित्रेषुब्रह्मांडेषुचभूरिशः॥नानाचारविहाराणिविहरंतिसहस्रशः॥५॥

यतक्रमाः ॥ १ ॥ आश्वस्तःअपनीतभाराध्वक्लुच्छ्रमःपुरुषइव ॥ १ ॥ उदाराण्युत्तमभूर्यर्थप्रदानि ॥ विविक्तानिवर्णपदवाक्यप्रकरणभेदैर्व्यक्तानि ॥ पेशलानिविचित्रकथायुक्तिसंदर्भचतुराणि ॥ उदितानिआत्मतत्त्वप्रकाशकत्वेनहृदयपद्मविकासकत्वेनचसूर्यादिवदुद्गतानि ॥ २ ॥ एवंप्रशंसयागुरुमुत्साह्यप्रासंगिकंब्रह्मादिदेवतैश्वर्यतत्त्वंजिज्ञासुःपृच्छति ॥ जात्याइति ॥ राजससात्त्विक्याजात्याःजीवजातेःकथनावसरेभवताशास्त्रैर्नानाविधसृष्टिप्रतिपादकश्रुतिपुराणादिप्रमाणैःकमलजन्मनउत्पत्तिर्याप्रोक्ताप्रस्तुतानांस्फुटंवर्णयेतिशेषः ॥ ३ ॥ बहूनीत्यस्यसर्वत्रसंबंधाच्छतसहस्रादिपदान्यप्यनंतपराणि॥४॥ अन्येषुब्रह्मांडेषुचादस्मिन्नपिनानाचारविहाराणिसुरासुरादिशरीराणीतिशेषः॥५॥

[1] वेदवेदांगपारगेतिक्वचित्पाठः

॥ ६॥ विचित्रेइंद्रजालेअभ्युत्थिताइव ॥७॥ शार्व्योरुद्रपूर्वाः ॥ पद्मजादेवप्रथमजादुद्भवोयासांताः ॥ वैष्णव्योविष्णुपूर्वाः ॥ तथाचोक्तंपुराणे ॥ तपसातोपयित्वेशंब्रह्मविष्णु महेश्वराः ॥ परस्परस्माज्जायंतेपरस्परजयैषिणइति ॥ मुनिनिर्मिताइत्यवांतरसर्गाभिप्रायम् ॥८ ॥ ब्रह्मादीनामाविर्भावस्थानान्यप्यनियतानीत्याह ॥ कदाचिदिति ॥ पाद्मक ल्पेपद्मजः ॥ सलिलोद्भवःआपवाख्यः ॥ अंडोद्भवःप्रसिद्धः ॥ अंबरादिति ॥ तथाच आकाशप्रभवोब्रह्मेतिसूर्यवंशादिप्रस्तावेपूर्वरामायणेउक्तम् ॥ ९ ॥ एवमर्कादिपदाधि कारिष्वप्यनियमइत्याह ॥ कस्मिंश्चिदिति ॥ त्र्यक्षएवसर्वदेवताधिकारेष्वितिएवकारबलाल्लभ्यते ॥हिशब्दस्तस्यैवान्यत्रापिदेवतांतरभावकल्पनानान्यस्येतिद्योतनार्थः॥१०॥

तुल्यकालमनंतेषुकालांतरभवेषुच ॥ जगत्सुप्रोद्भविष्यंतिबहून्यन्यानिभूरिशः॥ ६ ॥ तेषामब्जोद्भवादीनांब्रह्मांडेषुदिवौकसाम् ॥ उत्प त्तयोमहाबाहोविचित्राभ्युत्थिताइव॥७॥कदाचित्स्रष्टयःशार्व्यःकदाचित्पद्मजोद्भवाः॥कदाचिदपिवैष्णव्यःकदाचिन्मुनिनिर्मिताः॥८॥ कदाचित्पद्मजोब्रह्माकदाचित्सलिलोद्भवः ॥ अंडोद्भवःकदाचित्तुकदाचिज्जायतेंबरात् ॥ ९ ॥ कस्मिंश्चिदंडेत्र्यक्षोर्कःकस्मिंश्चिदपिवा सवः॥ कस्मिंश्चित्पुंडरीकाक्षःकस्मिंश्चित्त्र्यक्षएवहि ॥ १० ॥ कस्यांचिद्भूरभूत्स्रष्टौनीरंध्रतरुसंकटा ॥ कस्यांचिन्नरनीरंध्राकस्यांचिद्भूध रावृता ॥ ११ ॥ भूरभून्मृन्मयीकाचित्काचिदासीदृषन्मयी ॥ आसीद्धेममयीकाचित्काचित्ताम्रमयीतथा ॥ १२ ॥ इहैवकानिचित्राणि जगंत्यन्यान्यथान्यथा ॥ अन्यान्यैकैकलोकानिनिर्महांस्यपिकानिचित् ॥ १३ ॥ अनंतानिजगंत्यस्मिन्ब्रह्मतत्त्वमहांबरे ॥ अंभोधिवी चिजलवन्निमज्जंत्युद्भवंतिच ॥ १४ ॥ यथातरंगाजलधौमृगतृष्णामरौयथा ॥ कुसुमानियथाचूतेतथाविश्वश्रियःपरे ॥ १५ ॥ भानो र्गणयितुंशक्यारश्मिषुत्रसरेणवः ॥ आलोलवपुषोब्रह्मतत्त्वेनजगतांगणाः ॥ १६ ॥ यथामशकजालानिवर्षादिष्वाकुलानितु ॥ उत्प त्योत्पत्यनश्यंतितथेमालोकसृष्टयः ॥ १७ ॥ नचविज्ञायतेकस्मात्कालात्प्रभृतिचागताः ॥ नित्यागमापायपराएताःसर्गपरंपराः ॥ १८ ॥ अनादिमत्योविरतंप्रस्फुरंतितरंगवत् ॥ पूर्वात्पूर्वंकिलाभूवंस्ततःपूर्वतरंयथा ॥ १९ ॥ भूत्वाभूत्वाप्रलीयंतेससुरासुरमानवाः ॥ सरित्तरं गभंग्यैवसमस्ताभूतजातयः ॥ २० ॥ यथेदमंडंवैरिंचंतथाब्रह्मांडपंक्तयः ॥ याःसहस्राःपरिक्षीणानाडिकावत्सरेष्विव ॥ २१ ॥

नीरंध्रतरुसंकटाप्रथममितिसर्वत्रशेषः ॥ ११ ॥ प्राचुर्येमयट् ॥ १२ ॥ इहास्मिन्ब्रह्मांडेएवकानिकियंतिचित्राण्याश्चर्याणि ॥ अथअन्यान्यपिजगंतिब्रह्मांडानिअन्यथाअ न्यैःप्रकारैः ॥ बह्वाश्चर्याणीत्यर्थः ॥ एकैकएवसूर्यादिवल्लोकआलोकःप्रकाशालायेषुनिर्महांसिनिष्प्रकाशानि ॥ १३ ॥ निमज्जंतिलीयंते ॥ १४ ॥ १५ ॥ आलोलवपुष श्चंचलाः ॥ १६ ॥ १७ ॥ तेषांसर्गाणांप्रवाहानादितामाह ॥ नचेत्यादिना ॥ नित्यमेवआगमापायावाविर्भावतिरोभावौतत्पराः ॥ १८ ॥ १९ ॥ सरित्तरंगाणांभंग्यारीत्या ॥ २० ॥ सहस्राःसहस्रशःनाडिकाघटिकाः ॥ २१ ॥

सर्वेषांब्रह्मांडानांलीलोपाख्यानोक्तरीत्याहृदयाकाशस्थेब्रह्मण्येवकल्पनमित्याह ॥ अन्याइति ॥ अन्याब्रह्मांडपंक्तयः ॥ संप्रतिइदानीमपि ॥ अस्यब्रह्मोपलब्धिस्थानत्वाद्ब्रह्मपुरस्यशरीरस्यप्रांतेहृदयपुंडरीकदेशेस्थितेविततेअत्यंतविस्तीर्णेब्रह्मणःपदेब्रह्मणिवर्त्तमानशरीरकाःपरिवर्त्तमानमूर्त्तयःसत्योविद्यंते ॥ अस्मिन्द्यावापृथिवीअंतरेवसमाहितेइतिश्रुतेरितिभावः ॥ २२ ॥ ब्रह्मपुरोपलक्षितहृदयाकाशस्यश्रियःशोभाभूताःब्राह्म्योब्रह्मनिर्मिताब्रह्मांडपंक्तयः ॥ यथागिरोध्वनिभेदाआकाशेभूत्वाभूत्वानश्यंतितद्वत् ॥२३॥ दृष्टांतांतरोक्त्यर्थमुक्तमेवाह ॥ ब्रह्मणीति ॥ २४ ॥ यावत्तत्त्वज्ञानेनप्रेक्ष्यमाणानकिंचनेतिबाधस्तावत्कालंभविष्यंतीत्यर्थः ॥ २५ ॥ जडारंभाःमूर्खैरध्यस्ताः ॥ वितन्वंत्योविस्तीर्यमाणाः ॥ खलताव्योमलताइव ॥ २६ ॥ सृष्टिराशीनांस्वांतर्गतसृष्टिसमष्टिभूतानांब्रह्मांडानांसृष्टयश्चित्राकाराणिविचेष्टितानितदंतर्गतप्राणिचेष्टायासांताः ॥ २७ ॥

अन्याःसंप्रतिविद्यंतेवर्त्तमानशरीरकाः ॥ प्रांतेब्रह्मपुरस्यास्यविततेब्रह्मणःपदे ॥२२॥ ब्रह्मण्यन्याभविष्यंतिब्राह्म्योब्रह्मपुरश्रियः ॥ पुनस्ताश्चविनंक्ष्यंतिभूत्वाभूत्वायथागिरः ॥ २३ ॥ ब्रह्मण्यन्याभविष्यंत्यःस्थिताःसर्गपरंपराः ॥ घटाइवमृदोराशावंकुरेपल्लवाइव ॥ २४ ॥ यावद्ब्रह्मचिदाकाशेतथात्रिभुवनश्रियः ॥ स्फाराकारविकाराढ्याःप्रेक्ष्यमाणानकिंचन ॥ २५ ॥ उन्मज्जंत्योनिमज्जंत्योनसत्यानाप्यसच्छ्रियः ॥ जडारंभावितन्वंत्यस्ताएवखलताइव ॥ २६ ॥ तरंगसमधर्मिण्योदृष्टनष्टशरीरकाः ॥ सर्वासांसृष्टिराशीनांचित्राकारविचेष्टिताः ॥ २७ ॥ चित्राकारविकाराश्चचित्ररूपाहिसृष्टयः ॥ व्यतिरिक्तानसर्वेषांसमस्ताःसृष्टिदृष्टयः ॥ २८ ॥ तत्त्वज्ञविपर्यरामसलिलादिववृष्टयः ॥ आयांतिसृष्टयोदेवाज्जलदादिववृष्टयः ॥ २९ ॥ व्यतिरिक्तानसर्वेषांसमस्ताःसृष्टिदृष्टयः ॥ व्यतिरिक्ताद्रवांभोधिस्वाष्ठीलाःशाल्मलेरिव ॥ ३० ॥ इहसृष्टिषुपुष्टासुनिकृष्टासुचराघव ॥ परमान्नभसोजातास्तन्मात्रमलमालिका ॥ ३१ ॥ कदाचित्प्रथमंव्योमप्रतिष्ठामधिगच्छति ॥ ततःप्रजायतेब्रह्माव्योमजोसौप्रजापतिः ॥ ३२ ॥ कदाचित्प्रथमंवायुःप्रतिष्ठामधिगच्छति ॥ ततःप्रजायतेब्रह्मावायुजोसौप्रजापतिः ॥ ३३ ॥ कदाचित्प्रथमंतेजःप्रतिष्ठामधिगच्छति ॥ ततःप्रजायतेकर्त्तातैजसोसौप्रजापतिः ॥ ३४ ॥

सर्वेषांब्रह्मांडानांसमस्ताःसृष्टिदृष्टयस्तत्त्वज्ञविपर्येसलिलादृष्टयइवनव्यतिरिक्ताइतिपरेणान्वयः ॥ २८ ॥ अतत्त्वज्ञदृष्ट्यातुजलदादृष्टयइवदेवात्तटस्थेश्वरादायांति ॥ २९ ॥ परमार्थतस्तुअज्ञानांतत्त्वविदांचसर्वेषांनव्यतिरिक्ताः ॥ मूलकृष्टानिद्रवरूपाणिभूमेरंभांसिधारयंतीतिद्रवांभोधयःशिरास्ताश्चस्वाःस्वीयास्त्वक्क्षीनाष्ठप्रादयश्चअष्ठीलादारुबीजादिग्रंथयश्चशाल्मलेर्वृक्षाद्यथानव्यतिरिक्तास्तद्वत् ॥ ३० ॥ पुष्टासुस्थूलभूताख्यासुदेहादिषुनिकृष्टासुसूक्ष्मभूताख्यास्विंद्रियादिषुचपरमान्नभसःअव्याकृताकाशाज्जाताःभूतसूक्ष्माख्यपंचतन्मात्रलक्षणस्यमायामलस्यसूत्रस्थानीयस्यस्फटिकरुद्राक्षग्रथितामालिकाइवसर्वभावादित्यर्थः ॥ ३१ ॥ कदाचित्पद्मजोब्रह्मेतियदुक्तंतत्रयथायोगंपंचीकरणोत्तरभाविस्थूलव्योमादीनांप्रथमाविर्भावक्रमोनियामकइत्याह ॥ कदाचिदित्यादिना ॥ प्रतिष्ठांस्थूलीभावेनस्थितिम् ॥ एवंसर्वत्र ॥ ३२ ॥ ३३ ॥ ३४ ॥

॥ ३५ ॥ ३६ ॥ इदानीमेकैकस्योक्तव्योमादेःप्रथममाविर्भावेयुक्तिमाह ॥ इदमिति॥ इदंस्वातिरिक्तंचत्वारिभूतचतुष्टयंसंपीड्यस्वांशोपबृंहणेनतिरोभूतमिवकृत्वापंचमंयदेवभूतंयदावर्द्धतेतदातज्जातएवैषब्रह्माजागर्तीतदुत्तरसृष्ट्यादिक्रियांकुरुतइत्यर्थः ॥ ३७ ॥ सर्वेषांपंचभूतकार्यतयापंचात्मकत्वेतदुद्भवस्यप्रजापतेःकथमेकैकजत्वव्यपदेशइतिचेद्वैशेष्यादितिन्यायेनेत्याह ॥ कदाचिदिति ॥ सुस्फारेअधिकभागवतिसतितदुपाधिःपुमान्प्रजापतिःप्रकृत्यापूर्वोपासनक्रमानुसारिस्वभावेनभावितोवासितःस्वयमेवआपवोवायुजस्तैजसइत्याद्याकारेणाकस्मात्संपद्यतइत्यर्थः ॥ ३८॥ तस्यदेहावयवेभ्यःसर्गप्रवृत्तिंदर्शयति ॥ तस्येति ॥ अथानंतरम् ॥ शब्दोनामरूपयोरप्युपलक्षणम् ॥ तथाचमुखाद्यवयवेभ्योब्राह्मणादिशब्दाःसहार्थैर्यथायोगंजायंते ॥ ब्राह्मणोस्यमुखमासीदित्यादिश्रुतेरित्यर्थः ॥ अंशात्पुरोभागात् ॥ पृष्ठात्पश्चाद्भागात् ॥ ३९ ॥ अस्यैवनारायणाख्यस्यपुरुषस्य ॥ तत्रतस्यैवपद्मेजन्मवशात्पद्मजाख्येत्याह ॥ तस्मिन्निति ॥ ४० ॥ सतस्ततएवतस्यकथंजन्मघटतामितिपर्यनुयुंजानंरामंप्रत्याह ॥ माययमिति ॥ ४१ ॥ यदिसतःपुरुषस्यस्वनाभिपद्मेजन्मनसंभवतितर्हिअस्यांअसंगाद्वितीयायांब्रह्मणितेतवकिमिवद्वितीयंजगद्रूपंसंभवतिकथंचसंभवतितद्वदेत्यर्थः ॥ तथाचतवपर्यनुयोगोबालमनोराज्यपर्यनुयोगसमएवेत्याह ॥ क्वचिदिति ॥ काकुः ॥ ४२ ॥ पद्मजोत्पत्तिवद्व्योमजोत्पत्तिमपिमनसोऽचित्यरचनाशक्तिमवलंब्यसमर्थयति ॥ कदाचिदिति ॥ ४३ ॥ पद्मंभूपद्मम् ॥ ४४ ॥ भास्करःप्राक्कल्पेसूर्याधिकारस्थोस्मिन्कल्पेब्रह्माभवति ॥ एवंवरुणादयोपि ॥ ४५ ॥

कदाचित्प्रथमंवारिप्रतिष्ठामधिगच्छति॥ ततःप्रजायतेब्रह्मावारिजोसौप्रजापतिः॥३५॥ कदाचित्प्रथमंपृथ्वीस्फारतामधिगच्छति॥ ततःप्रजायतेब्रह्मापार्थिवोसौप्रजापतिः॥ ३६॥ इदंचत्वारिसंपीड्यपंचमंवर्द्धतेयदा॥ तदातज्जातएवैषकुरुतेजागतींक्रियाम्॥ ३७॥ कदाचिदप्सुवायौवासुस्फारेवापितेजसि॥ स्वयंसंपद्यतेकस्मात्पुमान्प्रकृतिभावितः॥ ३८ ॥ तस्याथशब्दोवदनात्कदाचिज्जायतेपदात्॥ कदाचिदंशात्पृष्ठाद्वाकदाचिल्लोचनात्करात्॥ ३९॥ कदाचित्पुरुषस्यास्यनाभौपद्मंप्रजायते॥ तस्मिन्संवर्द्धतेब्रह्मापद्मजोसौप्रकीर्त्तितः॥४०॥ माययंस्वप्नवद्भ्रांतिर्मिथ्यारचितचक्रिका॥ मनोराज्यमिवालोलसलिलावर्त्तसुंदरी॥ ४१॥ किमिवास्यांवदज्ज्ञमौकथंसंभवतीहते॥ क्वचिद्बालमनोराज्यमिदंपर्यनुयुज्यते॥ ४२॥ कदाचिदंबरेशुद्धेमनस्तत्त्वानुरंजनात्॥ सौवर्णब्रह्मगर्भंचस्वयमंडंप्रवर्त्तते॥ ४३॥ कदाचिदेवपुरुषोवीर्यंसृजतिवारिणि॥ तस्मात्प्रजायतेपद्मंब्रह्मांडमथवामहत्॥ ४४॥ तस्मात्प्रजायतेब्रह्माकदाचिद्भास्करोप्यसौ॥ कदाचिद्वरुणोब्रह्माकदाचिद्वायुरंडजः॥ ४५॥

१ एषइतिक्वचित्पाठः

अंतःप्रत्यगात्मनि विहीनासु असतीषु ॥ ब्रह्मणःप्रस्तुतहिरण्यगर्भस्यविचित्राउत्पत्तयोगताः ॥ ब्रह्माणइतिपाठःस्पष्टः ॥ ४६ ॥ एकस्यैवंवर्णनमन्येषामपिस्थालीपुलाकन्याये ननिदर्शनार्थमित्याह ॥ निदर्शनेति ॥ ४७ ॥ संमतंसिद्धांतः ॥ तस्यसम्यग्बोधनाय ॥ ४८ ॥ पूर्ववर्णिताजीवजातिभेदाअपिनिदर्शनार्थमेवेत्याह ॥ सात्विकीति ॥ सृष्टिक्रम वर्णनमपिएतदर्थमेवेत्याह ॥ इतीति ॥ ४९ ॥ यावदेतन्मनःसमूलंनोन्मूल्यतेतावत्संसारपरंपरायाःकदाप्यनुपरमइतिदर्शयति ॥ पुनःसृष्टिरित्यादिना ॥ मोक्षदशोमोक्षास्तित्व कल्पनाः ॥ ५० ॥ अवीतेपुवर्त्तमानागामिप्रियेषुवीतेष्वतीतप्रियेषुस्नेहदृशः ॥५१॥ ननुदीपाअल्पकालस्थायिनोद्विपरार्द्धायुषांब्रह्मादिशरीराणांकथमुपमास्तत्राह ॥ देहोत्प

एवमंतर्विहीनासुविचित्रास्विहसृष्टिषु ॥ विचित्रोत्पत्तयोरामब्रह्मणोविविधागताः ॥ ४६ ॥ निदर्शनार्थंसृष्टेस्तुमयैकस्यप्रजापतेः ॥ भवतेकथितोत्पत्तिर्नतत्रनियमःक्वचित् ॥ ४७ ॥ मनोविजृंभणमिदंसंसारइतिसंमतम् ॥ संबोधनायभवतःसृष्टिक्रमउदाहृतः ॥ ४८ ॥ सात्विकीप्रभृतयोयाश्चजातयश्चेत्थमागताः ॥ इतितेकथनायैषसृष्टिक्रमउदाहृतः ॥ ४९ ॥ पुनःसृष्टिःपुनर्नाशःपुनर्दुःखंपुनःसुखम् ॥ पुनरज्ञःपुनस्तज्ज्ञोबंधमोक्षदृशःपुनः ॥ ५० ॥ पुनःसृष्टिकरावीतवीतस्नेहदृशःपुनः ॥ दीपाइवकृतालोकाःप्रशाम्यंत्युद्भवंतिच ॥ ५१ ॥ देहोत्पत्तौविनाशेचदीपानांब्रह्मणामपि ॥ कालेनाधिकतांत्यक्त्वानाशेभेदोनकश्चन ॥ ५२ ॥ पुनःकृतंपुनस्त्रेतापुनःसद्वापरःकलिः ॥ पुनरावर्त्ततेसर्वंचक्रावर्त्ततयाजगत् ॥ ५३ ॥ पुनर्मन्वंतरारंभाःपुनःकल्पपरंपराः ॥ पुनःपुनःकार्यदशाःप्रातःप्रातरहोयथा ॥ ५४ ॥ लोकालोककलाकालकलनाकलितांतरम् ॥ पुनःपुनरिदंसर्वंनकिंचनपुनःपुनः ॥ ५५ ॥ अनाहतेप्रतत्येयःपिंडेनलकणाइव ॥ इमेभावाःस्थितानित्यंचिदाकाशेस्वभावतः ॥ ५६ ॥ कदाचिदनभिव्यक्तंकदाचिद्व्यक्तिमागतम् ॥ इदमस्तिपरेतत्त्वेसर्वंवृक्षइवार्त्तवम् ॥ ५७ ॥ चित्स्पंदएवसर्वात्मासर्वदेवैदृशाकृतिः ॥ यदस्माज्जायतेसर्गोद्वींदुत्वमिवलोचनात् ॥ ५८ ॥ चितःसर्वाःसमायांतिसंततास्सृष्टिदृष्टयः ॥ तस्याएवाप्यतस्याभाश्चंद्रादिवमरीचयः ॥ ५९ ॥

त्ताविति ॥ दीपपक्षेदेहोत्पत्तिश्चंपककलिकाकारसंस्थाननिष्पत्तिः ॥ उत्पत्तिनाशौआद्यंतक्षणिकभावविकारौनाशस्त्वनाद्यंतयोःपूर्वोत्तरकालयोरसत्वमितिनपौनरुक्त्यम् ॥ ५२ ॥ चक्रमिवावर्ततइतिचक्रावर्त्तस्तद्भावेन ॥ ५३ ॥ ५४ ॥ लोकालोकौदिनरात्रीकलात्रिंशत्काष्ठात्मकोमुहूर्त्तद्वादशभागस्यक्षणस्त्रिंशोभागस्तद्घटिताभिःप्राण्यायुःकालकलनाभिःकलिताःपरिच्छिन्नाआंतराःसर्वपदार्थायस्मिन् ॥ ५५ ॥ अनाहतेशिलाद्याघातरहिते ॥ स्वभावतोमायाबीजस्वभावात् ॥ ५६ ॥ आर्त्तवंतत्तदृतुभवंफलपुष्पादीव ॥ ५७ ॥ चित्स्पंदश्चिद्विवर्त्तः ॥ द्वींदुत्वंमिदुद्वित्वम् ॥ ५८ ॥ ५९ ॥

असंसारशक्तिताअसंसारस्वभावताअसंगाद्वितीयस्वभावतेतियावत् ॥ विद्यतेपरमार्थतइतिशेषः ॥ ६० ॥ संसारशक्तिताजगद्बीजमर्यादा ॥ ६१ ॥ इद्धयाअधिष्ठानचैतन्य दीप्तयासंसारितयाकालेनचोपलक्षितस्संसारोमहाकल्पोवैज्ञानिकोमोक्षाख्यःप्रलयस्तदवधिर्विद्यतेअयेनभविष्यतीतिव्यवहारइदानींयुज्यतइत्यन्वयः ॥ ६२ ॥ संसारासत्त्व सत्त्वयोर्विरोधमाशंक्यदृष्टिभेदेनाविरोधमाह ॥ ज्ञदृष्ट्येत्यादिना ॥ ६३ ॥ ६४ ॥ अतएवकर्ममीमांसकानांनकदाचिदनीदृशंजगदितिजगत्प्रवाहनित्यताव्यवहारोप्युपपन्नइ त्याह ॥ पुनरिति ॥ इतिअनयादृष्ट्यानमृषा ॥ तदीप्सितकर्मकांडप्रामाण्योपपादकत्वादित्यर्थः ॥ ६५ ॥ अज्ञदृष्टीनांविचित्रत्वाद्बुद्धादिभिःस्वस्वप्रक्रियानिर्वाहायकल्पिताः

नकदाचनसंसारःकिलायंरामसत्सदा ॥ सर्वशक्तावसंसारशक्तिताविद्यतेयतः ॥ ६० ॥ नचैवेदंकदाचित्तुसाधोजगदनीदृशम् ॥ सर्वशक्तौहिसंसारशक्तिताविद्यतेयतः ॥ ६१ ॥ महाकल्पावधिःकालेनसंसारितयेद्धया ॥ नभविष्यतिसंसारइदानीमितियुज्यते ॥ ६२ ॥ ज्ञदृष्ट्यासर्वमेवेदंब्रह्मैवेतिमहामते ॥ नास्तिसंसारइत्येतदुपपद्यतएवच ॥ ६३ ॥ अज्ञदृष्ट्यात्वविच्छिन्नसंसारत्वादनारतम् ॥ नित्यासंसारमायेयंमिथ्यापीहोपपद्यते ॥ ६४ ॥ पुनःपुनश्चभावित्वान्नकदाचिदनीदृशम् ॥ जगदित्येतदित्युक्तंनमृषारघुनंदन ॥ ६५ ॥ अनारतपतद्रूपादिशोदृष्टाविनश्वराः ॥ विनाशीदंजगत्सर्वमितिकिंनोपपद्यते ॥ ६६ ॥ सर्वत्रोदितचंद्रार्कादिशोदृष्टाःस्थिराचलाः ॥ अविनाशिजगत्सर्वमित्यप्यवितथोपमम् ॥ ६७ ॥ नतदस्तिनयत्तस्मिन्नेकस्मिन्विततात्मनि ॥ संकल्पकलनाजालमनाख्येनोपपद्यते ॥ ६८ ॥ पुनःपुनरिदंसर्वंपुनर्मरणजन्मनी ॥ पुनःसुखंपुनर्दुःखंपुनःकरणकर्मणी ॥ ६९ ॥ पुनराशाःपुनर्व्योमपुनरंभोधयोद्रयः ॥ अभ्युदेतिपुनःसृष्टिःखववदर्कप्रभायथा ॥ ७० ॥ पुनर्दैत्याःपुनर्देवाःपुनर्लोकांतरक्रमाः ॥ पुनःस्वर्गापवर्गेहाःपुनरिंद्रःपुनःशशी ॥ ७१ ॥ पुनर्नारायणोदेवःपुनर्दनुसुतादयः ॥ पुनराशाचलच्चारुचंद्रार्कवरुणानिलाः ॥ ७२ ॥ सुमेरुकर्णिकाकांतासत्यकेसरशालिनी ॥ पूर्णास्फीतोदरोदेतिरोदसीनलिनीपुनः ॥ ७३ ॥

क्षणिकपरमाण्वादिव्यवहाराअपितद्दृष्ट्याउपपद्यंतएवेत्याह ॥ अनारतेति ॥ दिशोदिक्षूदिताविद्युदादयःअनारतंसदापतद्रूपाःक्षणप्रध्वंसिस्वभावादृष्टाः ॥ तथैवसर्वत्रकल्पना दित्यर्थः ॥ किमितिकाकुः ॥ ६६ ॥ एवंचंद्रार्कादिस्फीतालोकासुदिक्षुपर्वतभूम्यब्धीनांस्थिरतादर्शनात्सदैवस्वसत्तयासदेवजगदितिसांख्यादिकल्पनाप्युपपद्यतएवेत्याह ॥ सर्वत्रेति ॥ ६७ ॥ तथाचब्रह्मणितत्तत्संकल्पितेष्वर्थेष्वनुपपन्नंकिमपिनास्तिसंकल्पकलनाजालमेवपरंनोपपद्यतइत्याह ॥ नतदस्तीति ॥ ६८ ॥ प्रासंगिकंसर्वसंभवमुपपाद्यप्रस्तुतंसर्गपौनःपुन्यमेववर्णयति ॥ पुनरित्यादिना ॥ ६९ ॥ खवत्सुगवाक्षच्छिद्रवत्सुगृहेषुएकैवार्कप्रभायथानानात्वेनोदेतितथा ॥ ७० ॥ ७१ ॥ ७२ ॥ पूर्णाप्राणिपुण्यामोदैर्भोगमकरंदैश्चस्फीतोदराविशालकुक्षिः ॥ द्यावापृथिव्यौरोदस्यौतल्लक्षणानलिनी ॥ ७३ ॥

---

१ आशाश्चलदित्यपिक्वचित्पाठः

वल्गत्युद्गच्छति ॥ ७४ ॥ आह्लादिसर्वप्राणिसुखकरंअमृतंकरोत्युपचिनोति ॥ ७५ ॥ पुण्यानिकृंततिभोगैश्छिंदंतीतिपुण्यकृतःस्वर्गिणस्तल्लक्षणाःपुष्पराशयः ॥ ७६ ॥ पटपटं कृत्वा ॥ ननुअनुकरणंचानितिपरमितिगतिसंज्ञायांकुगतिप्रादयइतिनित्यंसमासेल्यपाभाव्यम् ॥ सत्यम् ॥ किंचिदितिविशेषणदर्शनात्सविशेषणानांवृत्तिर्नेतिमहाभाष्योक्तेर्न समासः ॥ कालःसृष्टिकालस्तल्लक्षणःकपिंजलःपक्षिविशेषः ॥ ७७ ॥ पूर्वैद्रलक्षणेअलिकेक्षुद्रभ्रमरेयातेनिवृत्ताधिकारेसति ॥ सज्जंनूतनतत्तन्मन्वंतराधिकारिदेवतागणांतर

व्योमकाननमाक्रम्यवल्गत्यंशुनखोत्करैः॥ तमःकरिघटाभेत्तुंपुनर्भास्करकेसरी॥ ७४॥ पुनरिंदुश्चलत्स्वच्छमंजरीसुंदरैःकरैः॥करोत्यमृतमाह्लादिदिग्वधूमुखमंडनम्॥ ७५॥पुनःस्वर्गतरोःपुण्यक्षयवातसमीरिताः॥ पतंतीहविनुन्नांगाःपुण्यकृत्पुष्पराशयः॥ ७६॥ पुनः कार्यक्रियापक्षैःसंसारारंभनामकम्॥ किंचित्पटपटंकृत्वायातिकालकपिंजलः॥७७॥ पुनरिंद्रालिकेयातेसज्जमास्थायकेवलम्॥आयात्यपरदेवेंद्रषट्पदःस्वर्गपंकजम्॥ ७८ ॥पुनःकालंकृतापूतंकलुषीकुरुतेकलिः॥ सचक्रिणमिवांभोधिंप्रवृद्धोवकरानिलः॥ ७९ ॥पुनःकालकुलालेनकृतभूतशरावकम्॥ चक्रमावर्त्यतेवेगादजस्रंकल्पनामकम्॥८०॥पुनर्नीरसतामेतिजगदस्तशुभस्थिति॥अभ्यासीभूतसंकल्पंसंशुष्कमिवकाननम्॥ ८१ ॥पुनरर्कगणेष्वग्निदग्धानंतकलेवरम्॥ सर्वभूतास्थिसंपूर्णंजगदेतिश्मशानताम्॥ ८२ ॥ पुनः कुलाचलाकारपुष्करावर्त्तवर्षणैः॥ नृत्यद्भववृहत्फेनांयात्येकार्णवतांजगत्॥८३॥ पुनःसंशांतवाय्वंबुरिक्तंसकलवस्तुभिः॥ तदपूर्वमिवाकाशंजगदायातिशून्यताम्॥८४॥पुनःकतिपयाभुक्त्वासमाःसमरसाशयः॥जीवितंजीर्णयातन्वापुनःस्वात्मनिलीयते॥ ८५॥ पुनरन्येनकालेनतथैवजगतांगणान्॥मनस्तनोतिवैशून्येगंधर्वनगरंयथा॥८६॥पुनःसर्गसमारंभःप्रलयेसर्वसंभवः॥सर्वंपुनरिदंरामचक्रवत्परिवर्त्तते॥ ८७॥ किमेतस्मिन्महामायाडंबरेदीर्घशंबरे॥ रामसत्यमसत्यंवानिर्णेयंयदिहोच्यते॥ ८८ ॥

सन्नद्धैरावतायास्थाय ॥ राज्यमितिपाठेस्पष्टम् ॥ केवलंपूर्वदेवगणशून्यम् ॥ ७८ ॥ कृतेनयुगेनआपूतंसर्वतःपूतम् ॥ कलिरधर्मः ॥ सचक्रिणंस्वांतःशयानविष्णुसहितम् ॥ अवकिरतिपांसूनित्यवकरोनिलःप्रलयवायुः ॥ ७९ ॥ कृताःप्राणिशरावायस्मिन् ॥ ८० ॥ नीरसतांधर्मरसहीनताम् ॥ अभ्यासीभूतसंकल्पंयस्ययद्विषयेपूर्वाभ्यासस्तदनुगुणीभूताःसंकल्पायस्मिन् ॥ ८१ ॥ ८२ ॥ नृत्यन्भवःसंहाररुद्रएवशुभ्रत्वाद्बृहन्फेनोयस्याम् ॥ ८३ ॥ ८४ ॥ जीवितंभुक्त्वाअनुभूय ॥ ८५ ॥ ८६ ॥ पुनःप्रलयेसतिसर्गसमारंभः ॥ ८७ ॥ दीर्घशंबरेदीर्घभ्रमेकिंनिर्णेयंविचार्येत्थमितिनिश्चेयंनकिंचिदित्यर्थः ॥ निर्णयमितिपाठेनिर्युक्तिकमित्यर्थः ॥ ८८

उक्तेर्थेदाशूराख्यायिकामुदाहरिष्यामीत्याशयेनाह ॥ दाशूरेति ॥ ८९ ॥ येनहेतुनाइदंजगदसतोऽज्ञानादुदितैर्विकल्पैरविरलमविच्छिन्नप्रवाहंयथास्यात्तथाआततंतथाअसताअविद्यमानेनैवकर्त्राविरचितमनुपन्नमनुस्यूतमधिष्ठानब्रह्मसत्यंयेनतथाविधंतेनहेतुनातेविमूढताकिमुत्थाकस्मान्निमित्ताज्जातायन्निमित्तंत्वंपश्यसितन्नास्त्येवयत्त्वस्तिपरमार्थतस्तदभयंब्रह्मैवेतिनतेनिर्निमित्तोमोहोयंयुक्तइत्युपसंहारः ॥ ९० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थिति०सप्तचत्वारिंशःसर्गः ॥ ४७ ॥ ॥ ७ ॥ ॥ भोगादिलिप्साकुत्सात्रदाशूरस्याथसंभवः ॥ प्रसन्नाच्चानलात्तस्यवरप्राप्त्यंतमीर्यते ॥ १ ॥ यदिदंयंसंसारचक्रिकाकल्पनामात्रंयदिचब्रह्मैवतत्त्वतोस्तितर्हितथाकिमितिमेधाप्रतिभाकौशलशालिष्वपिमहाजनेषुकोपिनपश्यतितत्रकोहेतुरितिचेत्तदनपेक्षातद्विरुद्धभोगैश्वर्याद्यभिनिवेशश्चहेतुरित्याह ॥ क्रियाविशेषेति ॥ ऐहिकामुष्मिकभोगैश्वर्योपायभूतै

दाशूराख्यायिकेवेयंरामसंसारचक्रिका ॥ कल्पनारचिताकारावस्तुशून्यानवस्तुतः ॥ ८९ ॥ अविरलमिदमाततंविकल्पैरसदुदितैरपि तैर्द्विचंद्रकल्पैः ॥ विरचितमसतानुपन्नसत्यंजगदिहतेनविमूढताकिमुत्था ॥ ९० ॥ ॥इ०वा०वा०दे०मो०स्थितिप्रकरणेजगद्वासनिर्णययोगोपदेशोनामसप्तचत्वारिंशःसर्गः ॥ ४७ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥ क्रियाविशेषबहुलाभोगैश्वर्यहताशयाः ॥ नापेक्षंतेयदासत्यंनपश्यंतिशठास्तदा ॥ १ ॥ येतुपारंगताबुद्धेरिंद्रियैर्नवशीकृताः ॥ तएनांजागतींमायांपश्यंतिकरबिल्ववत् ॥ २ ॥ तुच्छांतांजागतींमायांदृष्ट्वाजीवोविचारवान् ॥ अहंकारमयींमायांत्यजत्यहिरिवत्वचम् ॥ ३ ॥ असक्ततांततोभ्येत्यपुनारामनजायते ॥ क्षेत्रेष्वपिचिरंतिष्ठन्बीजंदग्धमिवाग्निना ॥ ४ ॥ आधिव्याधिपरीतायप्रातर्वाद्यविनाशिने ॥ प्रयतंतेशरीरायहितमज्ञास्तुनात्मने ॥ ५ ॥ त्वमप्यज्ञवदज्ञस्यशरीरस्यसमीहितम् ॥ मासंपादयदुःखायभवात्मैकपरायणः ॥ ६ ॥ ॥श्रीरामउवाच ॥ ॥ दाशूराख्यायिकेवेयंसुखसंसारचक्रिका ॥ कल्पनारचिताकारावस्तुशून्येतिकिंप्रभो ॥ ७ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥ जगन्मायास्वरूपस्यवर्णनाव्यपदेशतः ॥ दाशूराख्यायिकांरामवर्ण्यमानांमयाशृणु ॥ ८ ॥ अस्त्यस्मिन्वसुधापीठेविचित्रकुसुमद्रुमः ॥ मागधोनामविख्यातःश्रीमान्जनपदो महान् ॥ ९ ॥

लौकिकैर्वैदिकैश्चक्रियाविशेषैर्बहुलाउपचितकामाःशठाःस्वपरवंचकाः ॥ १ ॥ तर्हिकेपश्यंतितानाह ॥ येत्विति ॥ मायापहृणंसत्यस्याप्युपलक्षणम् ॥ २ ॥ जागतींबाह्यांममेत्यभिनिवेशहेतुभूताम् ॥ अहंकारमयीमांतरीमहमित्यभिनिवेशहेतुभूताम् ॥ ३ ॥ ४ ॥ भोगैश्वर्यप्रसक्तस्यकारागृहदार्ढ्यायेवदेहरक्षणायद्वथानर्थायचप्रयासंपरमपुरुषार्थोपेक्षांचात्यंतानुचितांदृष्ट्वातमनुशोचति ॥ आधीति ॥ प्रातःअद्यवाविनाशिने ॥ चतुर्थीतदर्थार्थेतिहितशब्दयोगेचतुर्थी ॥ ५ ॥ ६ ॥ प्राक्प्रस्तुतांदाशूराख्यायिकांशुश्रूषूरामःपृच्छति ॥ दाशूरेति ॥ विषयसुखार्थासंसारचक्रिकावस्तुशून्याइतियत्त्वयोक्तंतत्किंकीदृशम ॥ यादृशंतथावर्णयेत्यर्थः ॥ ७ ॥ वर्णनायाव्यपदेशतउदाहरणतयेत्यर्थः ॥ ८ ॥ मगधानांनिवासोजनपदोमागधः ॥ तस्यनिवासइत्यण् ॥ ९ ॥

॥ १० ॥ सस्यैःसंकटानिबिडिताःसीमांतायामसीमावधयोयस्मिन् ॥ ११ ॥ निशयाउपभुक्तैरिवम्लानोत्सृष्टैःकुसुमैर्नीरंध्राविशिखामन्मथशरायस्यांतथाविधाअवनिर्यस्मिन् ॥ १२ ॥ तत्रतस्मिन्जनपदे ॥ नीपैःकदंबैरन्यैश्चगुल्मैर्विराजिते ॥ १३ ॥ पुष्पपुञ्जौघैःप्रवाहैःस्फूर्जतोध्वनतोऽनिलायस्मिन् ॥ रसंतःसरसाःसानुरागाःसारसायस्मिन् ॥ १४ ॥ ॥ १५ ॥ तपःसहितेनयोगेन ॥ कदंबपृष्ठेकदंबाग्रेवसतीतिवास्तव्यः ॥ वसेस्तव्यत्कर्तरिणिच्चेत्यनुशासनात् ॥ १६ ॥ कथंकेनप्रभावेनप्रकारेणच ॥ १७ ॥ १८ ॥ जीवित

कदंबवनविस्तारलीलावलितजंगलः ॥ विचित्रविहगव्यूहसर्वाश्चर्यमनोहरः ॥ १० ॥ सस्यसंकटसीमांतःपुरोपवनमंडितः ॥ कमलोत्पलकह्लारपूर्णसर्वसरित्तटः ॥ ११ ॥ उद्यानदोलाविलसल्ललनागेयघुंघुमः ॥ निशोपभुक्तकुसुमनीरंध्रविशिखावनिः ॥ १२ ॥ तत्रैकस्मिन्गिरितटेकर्णिकारसमाकुले ॥ कदलीखंडनीरंध्रनीपगुल्मविराजिते ॥ १३ ॥ पुष्पौघस्फूर्जदनिलेकेसरारुणधूलिनि ॥ कारंडवरुतारावेरसत्सरससारसे ॥ १४ ॥ तस्मिन्नगवरेपुण्येविचित्रविहगद्रुमे ॥ कश्चित्परमधर्मात्मामुनिरासीन्महातपाः ॥ १५ ॥ दाशूरनामामहतातपोयोगेनसंयुतः ॥ कदंबपृष्ठवास्तव्योवीतरागोमहामतिः ॥ १६ ॥ ॥ श्रीरामउवाच ॥ ॥ असौतपस्वीभगवन्विपिनेकेनहेतुना ॥ कथंचाप्यवसत्पृष्ठेकदंबस्यमहातरोः ॥ १७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शरलोमेतिविख्यातःपितातस्यबभूवह ॥ रामापरइवब्रह्मातस्मिन्नेवावसद्गिरौ ॥ १८ ॥ तस्यासावेकपुत्रोभूत्कचोदेवगुरोरिव ॥ तेनसार्द्धंसपुत्रेणनीतवाञ्जीवितंवने ॥ १९ ॥ अथासौशरलोमात्रभुक्त्वायुगगणंययौ ॥ त्यक्तदेहःसुरागारंमुक्तनीडःखगोयथा ॥ २० ॥ एकएववनेतस्मिन्दाशूरःप्ररुरोदह ॥ दशापनीतपितृकःकरुणंकुररोयथा ॥ २१ ॥ मातापितृवियोगेनशोकसंतापिताशयः ॥ म्लानिमभ्याययौनूनंहेमंतइवपंकजम् ॥ २२ ॥ बालोसावतिदीनात्मावनदेवतयावने ॥ इत्थमाश्वासितोरामतदाऽदृश्यशरीरया ॥ २३ ॥ ऋषिपुत्रमहाप्राज्ञकिमज्ञइवरोदिषि ॥ संसारस्यनकस्मात्त्वंस्वरूपंवेत्सिचंचलम् ॥ २४ ॥ सर्वदैवेदृशीसाधोसंसारेसंस्थितिश्चला ॥ जायतेजीव्यतेपश्चादवश्यंचविनश्यति ॥ २५ ॥

मायुर्नीतवान् ॥ १९ ॥ युगगणंअयनयुगलात्मकवत्सरगणंसुखदुःखादिद्वंद्वगणंवाभुक्त्वाअनुभूय ॥ २० ॥ एकएवेत्युक्त्यामातापितरमन्वगादितिगम्यते ॥ दशयाचरमभावविकारेणमहद्दशाविशेषेणवाअपनीतःपितायस्य ॥ दशभिःप्राणैर्वादेहादपसृत्यनीतःपरलोकायपितायस्य ॥ कुररःपक्षिभेदः ॥ २१ ॥ २२ ॥ इत्थंवक्ष्यमाणप्रकारेण ॥ अदृश्यशरीरयाअंतर्हितयेतियावत् ॥ २३ ॥ चंचलमशाश्वतम् ॥ २४ ॥ जीव्यतेर्जीवति ॥ विकरणपदव्यत्ययश्छांदसः ॥ २५ ॥

दृश्यदृशिव्यवहारदृष्टौयर्यात्किंचिद्यसिद्धमितिशेषः ॥ गंतव्यःप्राप्तव्यः ॥ २६ ॥ तदर्थंतस्माद्धेतोः ॥ अहर्पतेःसूर्यस्य ॥ अहरादीनांपत्यादिषुवारेफोवक्तव्यइतिरत्वम् ॥ २७ ॥ स्तनितात्मेघगर्जितात् ॥ २८ ॥ आवश्यकंपुत्रेणावश्यंकर्त्तव्यंपितुरौर्ध्वदेहिकम् ॥ २९ ॥ अनंतसंकल्पमयंबहुतरशुद्ध्यशुद्ध्यादिकल्पनाप्रचुरम् ॥ श्रोत्रियत्वंवेदाध्ययनतदर्थविचारानुष्ठाननिष्ठत्वम् ॥ ३० ॥ नज्ञातमवश्यज्ञेयंब्रह्मययातथाविधाबुद्धिर्यस्य ॥ तयातयाशुद्ध्यशुद्ध्यादिकल्पनया ॥ ३१ ॥ क्वचिदेवेत्यप्यर्थेएवकारः ॥ ३२ ॥ ३३ ॥ तत्तदर्थम् ॥ खगवत्पक्षिवद्देववद्वास्थितिमवस्थानसामर्थ्यम् ॥ ३४ ॥ तपस्तप्स्येइतिसंकल्पदर्शनात्तपोनंतरंततःशीघ्रंसिद्ध्यदर्शनादयंहोमसाहसारंभइतिगम्यते ॥ ३५ ॥ अथभगवा

यद्यत्किंचिद्दृश्यदृशिब्रह्मादिकमिदंमुने ॥ गंतव्यस्तेनसर्वेणविनाशोनात्रसंशयः ॥ २६ ॥ तदर्थंमाकृथाव्यर्थंविषादंमरणेपितुः ॥ अवश्यभाव्यस्तमयोजातस्याहर्पतेरिव ॥ २७ ॥ अशरीरामितिश्रुत्वागिरमारक्तलोचनः ॥ धैर्यमासादयामासशिखंडीस्तनितादिव ॥ २८ ॥ उत्थायावश्यकंकृत्वापाश्चात्यंपितुरादरात् ॥ चकारतपसेबुद्धिंदृढामुत्तमसिद्धये ॥ २९ ॥ ब्राह्मेणकर्मणातस्यविपिनेचरतस्तपः ॥ अनंतसंकल्पमयंश्रोत्रियत्वंबभूवह ॥ ३० ॥ अज्ञातज्ञेयबुद्धेस्तुश्रोत्रियस्यतयातया ॥ नविशश्रामचेतोस्यपवित्रेपिधरातले ॥ ३१ ॥ केवलंसर्वमेवेदमपिशुद्धंधरातलम् ॥ अशुद्धमिवपश्यन्सनरेमेक्वचिदेवहि ॥ ३२ ॥ अथसंकल्पयामासस्वसंकल्पनयैवसः ॥ वृक्षाग्रमेवसंशुद्धंस्थितिस्त्वोचितामम ॥ ३३ ॥ तदिदानींतपस्तप्स्येतपसायेनशाखिषु ॥ खगवत्स्थितिमाप्नोमिशाखासुचदलेषुच ॥ ३४ ॥ इतिसंचिंत्यसंज्वाल्यहुताशमतिभास्वरम् ॥ जुहावतस्मिन्नात्मस्त्यमांसंस्वस्कंधभित्तितः ॥ ३५ ॥ अथगीर्वाणवृंदस्यसमग्रागलभित्तयः ॥ मन्मुखत्वेनमायांतुविप्रमांसेनभस्मताम् ॥ ३६ ॥ इतिसंचिंत्यभगवान्सप्तार्चिस्तस्यदेवता ॥ पुरोबभूवदीप्तांशुर्दीप्तांशुर्वाक्पतेरिव ॥ ३७ ॥ उवाचवचनंधीरंकुमाराभिमतंवरम् ॥ गृहाणस्थापितंसाधोकोशाकाशान्मणिंयथा ॥ ३८ ॥ इत्युक्तवंतमनलमर्घपुष्पेणशोभिना ॥ संपूज्यस्तुतिवादेनप्राहविप्रकुमारकः ॥ ३९ ॥ भगवन्भूतपूर्णायाभुवःपावनमंडलम् ॥ नाप्नोमितेनवृक्षाणामुपरिस्थितिरस्तुमे ॥ ४० ॥

न्सप्तार्चिःइतिसंचिंत्येतिपरेणान्वयः ॥ चिंताप्रकारमेवदर्शयति ॥ गीर्वाणवृंदस्येत्यादिना ॥ मन्मुखत्वेनअग्निमुखत्वेन ॥ अग्निमुखावैदेवाइतिश्रुतेः ॥ समग्रागलभित्तयःकंठदेशाविप्रमांसेनजग्धेनभस्मतांमायांतुनप्राप्नुवंत्वितिसंचिंत्येत्यन्वयः ॥ ३६ ॥ दीप्तांशुर्भास्वरप्रभोदीप्तांशुःसूर्योवाक्पतेर्बृहस्पतेरिव ॥ ३७ ॥ धीरेतिसाहसानुरूपसंबोधनम् ॥ स्थापितंत्वत्संकल्पसिद्धंत्वयिस्थितमेवगृहाण ॥ कोशाकाशात्कोशोदरान्मणिंयथातत्स्वामीगृह्णातितद्वत् ॥ ३८ ॥ ३९ ॥ विशुद्धिदूषकैःशूद्रचांडालश्वमार्जारादिभूतैःपूर्णायाः ॥ पावनमंडलंपवित्रप्रदेशम् ॥ ४० ॥

शिखीअग्निदेवः ॥ ४१ ॥ ४२ ॥ तन्मुखशोभामेववर्णयति ॥ अधिगतेति ॥ अधिगतेनप्राप्तेनाभिमतेनवरेणप्रयुक्तेनाननमंडलद्युतिभरेणसदाशूरःशशिनमंबुजंचजहासेत्युत्प्रेक्षा ॥ ४३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थिति० अष्टचत्वारिंशःसर्गः ॥ ४८ ॥ ॥ ७ ॥ ॥ शाखापल्लवपुष्पौघफलपक्षिमनोहरः ॥ इहोत्प्रेक्षाद्यलंकारैःकदंबउपवर्ण्यते ॥ १ ॥ मध्याह्नेखिन्नैरिवसूर्याश्वैःसेवितानिस्कंधमंडलानियस्य ॥ १ ॥ वितानमिवकुर्वाणमितिशेषः ॥ विटपवितानानायतोदेशःपरिशिष्टोन्योस्तिनवेतिपरितःककुभोदिशआलोकयंतम् ॥ २ ॥ वातेरवधूलितानिष्परागीकृताअनल्पाभ्रमद्भ्रमराएवकुंतलाःकेशायस्य ॥ आशानांदिक्कांतानाम् ॥ ३ ॥ कहिमजलंछयंतिबिंदुभावेनपरिच्छिंदंतीतिकच्छाःपल्लवप्रदेशास्तैः ॥ उरुभिर्गुडुच्छानांलताविशेषाणांअर्द्धैर्दनपंक्तिवत्स्थितैर्मंजरीपुंजैःकंजरैःकेसरितैः ॥ ४ ॥ लतानांविलसितेनशोभातिशयेनउल्लासैरु

इत्युक्तेमुनिपुत्रेणसर्वदेवमुखंशिखी ॥ एवमस्तुतवेत्युक्त्वाजगामांतर्द्धिमीश्वरः ॥ ४१ ॥ तस्मिन्नंतर्हितेदेवेक्षणात्सांध्यइवांबुजे ॥ पूर्णकामःकुमारोसौपूर्णेंदुरिवचावभौ ॥ ४२ ॥ अधिगताभिमताननमंडलद्युतिभरेणजहाससतुष्टिमान् ॥ शशिनमात्तकलाकुलमंबुजंविकसितंचसितस्मितशोभिना ॥ ४३ ॥ ॥ इ० वा० वा० दे० मो० स्थितिप्रकरणेदाशूरो०दाशूरवरप्रदानवर्णनंनामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अथकाननमध्यस्थंचुंबितांबुदमंडलम् ॥ मध्याह्नखिन्नसूर्याश्वसेवितस्कंधमंडलम् ॥ १ ॥ वितानमिवदिक्कुक्षिदीर्घविटपबाहुभिः ॥ आलोकयंतंककुभोविकासिकुसुमेक्षणैः ॥ २ ॥ वातावधूलितानल्पभ्रमद्भ्रमरकुंतलम् ॥ प्रमार्जयंतमाशानांमुखंपल्लवपाणिभिः ॥ ३ ॥ कच्छैरुरुगुडुच्छाच्छमंजरीपुंजकंजरैः ॥ आस्यैरिवसतांबूलैर्हसंतंवनमालिकाः ॥ ४ ॥ लताविलसितोल्लासैःपुष्पकेसरधूलिभिः ॥ आबद्धमंडलाभोगंपूर्णेंदुमिवदीप्तिभिः ॥ ५ ॥ संकटंविटपावल्याकुंजकूजच्चकोरया ॥ छन्नयासिद्धवीथ्येवजगदुच्चतयाश्रितम् ॥ ६ ॥ स्कंधपीठोपविष्टानांलंबमानैःकलापिनाम् ॥ कलापैःशोभितंव्योमसेंद्रचापैरिवांबुदैः ॥ ७ ॥ मग्नोन्मग्नैःप्रतिस्कंधमाश्रितैश्चभ्रमैरसितैः ॥ पूर्णमुद्दुरदृष्टनष्टैःसंवत्सरमिवेंदुभिः ॥ ८ ॥ कपिंजलकुलालापैःकलकोकिलकूजितैः ॥ जीवंजीवविरावैश्चप्रगायंतमिवोच्छ्रितैः ॥ ९ ॥

ल्लसद्भिःपुष्पकेसरनिविष्टपरागैराबद्धोमंडलाकारवेष्टोयेन ॥ ५ ॥ कुंजेषुलतापिहितप्रदेशेषुकूजंतश्चकोरायस्यांतथाविधयाविटपानांशाखानामावल्यापंक्त्यासंकटंनिबिडितम् ॥ महनक्षत्रताराविमानादिच्छन्नयासिद्धवीथ्यास्वातीपथवीथ्याउच्चतयाऊर्ध्वभावेनाश्रितंजगद्ब्रह्मांडमिवस्थितमित्यर्थः ॥ ६ ॥ कलापिनांमयूराणांकलापैर्बर्हैः ॥ ७ ॥ प्रतिस्कंधंप्रतिस्कंधकोटरमाश्रितैर्विश्रांतैरंतर्गतकायार्द्धैर्नमग्नैर्बहिर्निःसृतकायार्द्धैर्नोन्मग्नैःकैश्चित्प्रविष्टैःकैश्चिद्बहिष्ठैर्वाअतएवदृष्टनष्टैर्दृष्टादृष्टैश्चभ्रमरैर्भृंगभेदैः ॥ एतेनपरितोधःस्कंधानांबृहत्त्वंभूसंलग्नताचगम्यते ॥ इंदुपक्षेमग्नोन्मग्नैरस्तमितोदितैरतएवदृष्टनष्टैः ॥ ८ ॥ जीवंजीवाश्चकोराः ॥ ९ ॥

१ टीकायांसर्वेषुपुस्तकेष्वाश्रितैर्विश्रांतैरितिव्याख्यानदर्शनात्तथापाठःस्थापितः ॥ केषुचित्पुस्तकेष्वासीनैरितिआसीनैरितिचार्द्धद्वयमूलपाठोदृश्यते

कादंबकाः कलहंसाः ॥ कुलायेपुनीडेपुकृतकेलिभिः क्रीडद्भिः सिद्धैर्देवैरावृतंजगद्ब्रह्मांडमिवस्थितम् ॥ १० ॥ प्रवालेत्यादिविशेषणेअप्सरसांमंजरीणांचश्लेषात्साधारणेयोज्ये ॥ ११ ॥ कुमुदपदग्रहणंकुमुदनीलोत्पलकोकनदादिसदृशनानावर्णलतापुष्पोपलक्षणम् ॥ अतएवेंद्रचापविलाससहितेननद्रेणुनाउपलक्षितंस्वमंजरीभिश्चपिंजरंआसमंतात्पत्रैः श्यामम् ॥ विद्युत्वंतमितितसौमत्वर्थेइतिभत्वान्नजश्‌ ॥ १२ ॥ स्वंविश्वरूपंदर्शयंतंविष्णुमिवस्थितमित्यर्थः ॥ अथवाविश्वरूपंजगत्स्वरूपमिवस्थितमित्यर्थः ॥ १३ ॥ खमं डलंब्रह्मांडोदराकाशम् ॥ तदपिहितलेभूमेरधोनिपण्णानिविष्टानागेंद्राःशेषादयोदिग्गजाश्चयस्मिंस्तत् ॥ शिष्टंस्पष्टम् ॥ १४ ॥ पितामहपक्षेस्वसृष्टैरशेषैःप्राणिभिःशैलैःकाननै

कादंबककदंबैश्चकुलायकृतकेलिभिः ॥ स्वर्गकोटरविश्रांतैः सिद्धैर्जगदिवावृतम् ॥ १० ॥ प्रवालचलहस्ताभिरलिनेत्राभिराश्रितम् ॥ अप्सरोभिरिवस्वर्गेमंजरीभिरितस्ततः ॥ ११ ॥ सेंद्रचापविलासेनकुमुदोत्कररेणुना ॥ मंजरीपिंजराश्यामंविद्युत्वंतमिवांबुदम् ॥ १२ ॥ सहस्रभुजशाखाढ्यंपूरिताकाशकोटरम् ॥ विश्वरूपमिवोन्मत्तंचंद्रार्ककृतकुंडलम् ॥ १३ ॥ तलेनिपण्णनागेंद्रंव्योम्नितारागणाकुलम् ॥ लतापुष्पमयंमध्येखमंडलमिवापरम् ॥ १४ ॥ पितामहमिवाशेषशैलकाननशालिनम् ॥ फलपल्लवपुष्पाणांकोशमेकमिवावनौ ॥ १५ ॥ दधानंकलिकाजालंस्थगितंपुष्पधूलिभिः ॥ कच्छेष्वर्ककरच्छन्नताराजालमिवांबरम् ॥ १६ ॥ विलोलविहगैःस्कंधैःकुलायकुलसंकुलैः ॥ वलितंभूतलंलोकेपूर्णैर्जनपदैरिव ॥ १७ ॥ मंजरीसुपताकाढ्यंलतामंडलमंडितम् ॥ पुष्पमंकोलधवलंपुष्पप्रकरपूरितम् ॥ १८ ॥ कूजच्चकोरभ्रमरशुककोकिलसारिकम् ॥ घनस्तवकसंछन्नकुहरोग्रगवाक्षकम् ॥ १९ ॥ संचरत्पक्षिबहुलंजनमंथरकोटरम् ॥ सर्वासांवनदेवीनामंतःपुरमिवोत्तमम् ॥ २० ॥ कूजद्भृंगतरंगौघैःपुष्पकेसरराजिभिः ॥ राजमानंपतंतीभिःसरिद्भिरिवपर्वतम् ॥ २१ ॥ भ्रमद्भिःपुष्पपत्रौघैर्मंदवातविलासिभिः ॥ वर्द्धमानैर्वृतस्कंधंशुभ्राभ्रैरिवभूधरम् ॥ २२ ॥ मातंगकटघृष्टेनजानुस्तब्धेनपीठिना ॥ आभोगिनावद्धपदंतरुणेवमहाचलम् ॥ २३ ॥

श्चशालिनंशोभमानम् ॥ कदंबपक्षेअशेषैःशैलस्यकाननैःशोभमानमित्यर्थः ॥ १५ ॥ प्रागुक्तेषुकच्छेषुपुष्पधूलिभिःस्थगितमाच्छादितंकलिकाजालंकोरकसमूहंदधानम् ॥ १६ ॥ वलितंव्याप्तम् ॥ १७ ॥ अंतःपुरसाम्यमाह ॥ मंजरीत्यादित्रिभिः ॥ मंकोलंगृहलेपनचूर्णम् ॥ १८ ॥ अंतःपुरपक्षेघनैर्बहुभिःरत्नादिस्तवकैःसंछन्नकुहराःपूरितगर्भाः ॥ लोहार्गलत्वर्षवरगुप्तत्वादुग्राअप्रधृष्याःगवाक्षाःकुड्यापवरकाणियत्र ॥ वृक्षपक्षेसर्पगर्भत्वादुग्राः ॥ १९ ॥ वृक्षपक्षेछायोपसेविभिर्जनैर्मंथरकोटरंविलोडिततलम् ॥ २० ॥ ॥ २१ ॥ वर्द्धमानैःप्रत्यहमुपचीयमानैः ॥ २२ ॥ इदानींमूलबंधंवर्णयति ॥ मातंगेति ॥ मातंगकटघृष्टेनेत्यनेनमूलबंधस्यतावदौन्नत्यंगम्यते ॥ ऊर्ध्वज्ञुजानुवत्स्तब्धेनपीठिनापीठवत्प्रस्तेनआभोगिनाविस्तीर्णेनमूलबंधेनबद्धपदंअवष्टब्धस्थानम् ॥ तरुणाउपत्यकाप्ररूढतरुवृंदेन ॥ २३ ॥

भूतानांपार्षदानांवृंदेनेव ॥ २४ ॥ अभिनयानाट्यशास्त्रप्रसिद्धाभावव्यंजककरनेत्रादिचेष्टाविशेषास्तेषांक्रियांनिष्पादनप्रकारंदिशंतमुपदिशंतमिव ॥ २५ ॥ मूलकोटरस्कंधशाखापत्रपुष्पादिप्रदेशानांमध्येमेममकश्चिदेकएवअर्थिनांमनुष्यमृगपक्ष्यादीनांनिवासोन अन्यःसर्वोपिनिवासत्वेनोपयुक्तःकदाचित्कश्चिदेकःपरिशिष्यते अहोमेपरोपकारेसर्वांगसाफल्यमितितुष्टितोहर्षपारवश्येनहेतुना ॥ २६ ॥ लतालक्षणानांवल्लीनांकांतानामेककांतत्वाद्धेतोः ॥ काकल्याकलध्वनिना ॥ २७ ॥ आदरोन्मुक्तकुसुमंयथास्यात्तथा ॥ २८ ॥ प्रांतस्थानांपंचमहीरुहांवटोदुंबरप्लक्षाश्वपलाशाख्यानांपंचपुण्यवृक्षाणाम् ॥ उत्तरप्रांतस्थानांमंदारादिपंचकल्पतरूणांवा ॥ लताग्रुल्लासंहसंतमिव ॥ २९ ॥ अलमत्यर्थमुद्धतकंधरमुन्नमितग्रीवंयथास्यात्तथाव्योमांतराआकाशोदरेअभिधावंतमिव ॥ ३० ॥ घनपंक्तिभिर्निबिडश्रेणिभिः ॥ सहस्राक्षत्वंअसंख्यनेत्रत्वंप्राप्येतिशेषः ॥

विचित्रवर्णपक्षाणांस्कंधकोटरचारिणाम् ॥ वृतंखगानांवृंदेनभूतानामिवशार्ङ्गिणम् ॥ २४ ॥ स्तवकांगुलिजालेनलोलेनाभिनयक्रियाम् ॥ दिशंतमिववल्लीनांप्रनृत्तानांवनानिलैः ॥ २५ ॥ कश्चिदेवनिवासोमेनार्थिनामितितुष्टितः ॥ नृत्यंतमिवबाह्वाढ्यलतावलयवल्गनैः ॥ २६ ॥ लताकांतैककांतत्वाच्छृंगाररसनिर्भरम् ॥ काकल्येवप्रगायंतंमत्तालिनिजनिःस्वनैः ॥ २७ ॥ आदरोन्मुक्तकुसुमंसिद्धानांव्योमचारिणाम् ॥ स्वागतानीवकुर्वाणंकोकिलालिकुलारवैः ॥ २८ ॥ लतापुष्पफलोल्लासंप्रांतपंचमहीरुहाम् ॥ विहसंतमिवाच्छाभिःपुष्पकुड्मलदीप्तिभिः ॥ २९ ॥ पारिजातमिवाजेतुमूर्ध्वगैःखगमंडलैः ॥ व्योमांतराभिधावंतमलमुद्धतकंधरम् ॥ ३० ॥ मध्यभागस्फुरद्भृंगैःस्तवकैर्घनपंक्तिभिः ॥ सहस्राक्षत्वमतुलैर्जेतुमिंद्रमिवोद्यतम् ॥ ३१ ॥ क्वचित्कुसुमगुच्छाच्छफणामणिगणावृतम् ॥ पातालादुत्थितंशेषमिवव्योमदिदृक्षया ॥ ३२ ॥ रजसाधूलिताकारंद्वितीयमिवशंकरम् ॥ छाययाफलशालिन्यासमस्तजनशंकरम् ॥ ३३ ॥ निबिडदलनिवाहभिन्नकोशैःकुसुमलतानवमंडपैरुपेतम् ॥ पुरमिवगगनेकदंबवृक्षंखगकुलनागरसंकुलंददर्श ॥ ३४ ॥ ॥ इ० वा० वा० दे० मो० स्थि० दा० दाशूरकदंबवर्णनंनामैकोनपंचाशःसर्गः ॥ ४९ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ तमथासौतथाबुद्धिःफलपल्लवशालिनम् ॥ आनंदमंथरमनाःपुष्परूपाचलोपमम् ॥ १ ॥ कदंबंरोदसीस्तंभमारुरोहवनस्थितम् ॥ एकार्णवगतंशौरिर्वटवृक्षमिवोन्नतम् ॥ २ ॥

अतुलैःशोभयासंख्ययाचेंद्रनेत्रेभ्योधिकत्वात्तैस्तुलयितुमशक्यैः ॥ ३१ ॥ कुसुमगुच्छलक्षणैःकुसुमगुच्छसदृशैश्वअच्छफणामणिभिर्व्योमदिदृक्षयाहेतुनापातालादुत्थितंशेषमिवस्थितम् ॥ ३२ ॥ भगवांस्तुभक्तानामेवशंकरःअयंतुसमस्तजनशंकरइत्यतिशयः ॥ ३३ ॥ निबिडानांदलानांनिवाहानिवहास्तैःपुभिन्नकोशैर्विकासितमुकुलैर्निबिडदलनिवहभेदेनभिन्नसंस्थानैश्वकुसुमलतानांनवमंडपैरुपेतंघटितम् खगकुललक्षणैर्नागरैर्जनैःसंकुलम् गगनेरचितंपुरमिवस्थितंकदंबवृक्षंददर्शेत्यर्थः ॥ ३४ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेस्थि० एकोनपंचाशःसर्गः ॥ ४९ ॥ ॥ ७ ॥ ॥ तत्कदंबापसंस्थेनदाशूरेणविलोकिताः ॥ दिशोत्रवनिताकारावर्ण्यंतेगुणविस्तरैः ॥ १ ॥ असौदाशूरः ॥ तथाप्रागुक्तप्रकाराभूम्यरविचत्ताबुद्धिर्यस्य ॥ १ ॥ रोदस्योर्द्यावापृथिव्योःस्तंभमिववनेस्थितम् ॥ २ ॥

१ श्रांतिरितीत्यपिपाठः

विगतापाविध्यविक्षेपाशंकंयथास्यात्तथा ॥ ३ ॥ नवपल्लवकल्पितेविष्टरआसने ॥ कौतुकेनचंचलंचपलेक्षणंयथास्यात्तथा ॥ ४ ॥ अत्रसर्वत्रविशेषणान्युभयत्रयोज्यानि सरिल्लक्षणाभिरेकावलीभिर्हारभेदैःरम्याः ॥ ५ ॥ पुरुभूषणाबहुभूषणाः ॥ ६ ॥ नीलानांभ्रमरकोकिलादीनांघुंघुमाध्वनयएवकाकल्योमधुराव्यक्तभाषितानियासांताः ॥७॥ ॥ ८ ॥ शाल्यादिसस्यकंपैः ॥ संसाराःस्पंदमानाःकेदाराःक्षेत्रांगभक्तयोयासाम् ॥ चंदनस्थैश्चंदनाश्रितैरलिकैर्ललाटैरन्विताः ॥ पर्वतशिखरलक्षणेपूरसिजेषुस्तनेष्वासमंताल्लग्नानिहिममिवशुभ्राण्यंबुदांशुकानियासाम् ॥९॥ महार्णवानांपयःपूराएवनवमंडनदर्शनार्थादर्पणायासाम् ॥ ऋक्षौघानक्षत्रपंक्तयएवघर्मपुलकाःस्वेदबिंदवोयासाम् ॥ १० ॥

तत्रासौव्योमलग्नायाःशाखायाःप्रांतपल्लवे ॥ विवेशविगताशंकमेकाग्रंतपआस्थितः ॥ ३ ॥ अथोपविश्यमृदुनिनवपल्लवविष्टरे ॥ क्षणमालोकितास्तेनदिशःकौतुकचंचलम् ॥ ४ ॥ सरिदेकावलीरम्याःशैलेंद्रस्तनकुड्मलाः ॥ निर्मलाकाशकबरालोलनीलांबुदालकाः ॥ ५ ॥ नीलपल्लववसनाःपुष्पपूरावतंसिकाः ॥ गृहीतसागरापूर्णकलशाःपुरुभूषणाः ॥ ६ ॥ धृतप्रफुल्लपद्मिन्यःसुगंधिमुखमारुताः ॥ नीलघुंघुमकाकल्योनिर्झरारावनूपुराः ॥ ७ ॥ द्युमूर्द्धानोमहीपादावनालीरोमराजयः ॥ जंगलोरुनितंबिन्यश्चंद्रार्ककृतकुंडलाः ॥ ८ ॥ शालिसंसारकेदाराश्चंदनस्थालिकान्विताः ॥ शिखरोरसिजालग्नहिमशुभ्रांबुदांशुकाः ॥ ९ ॥ महार्णवपयःपूरनवमंडनदर्पणाः ॥ ऋक्षौघघर्मपुलकाभुवनांतःपुरांतराः ॥ १० ॥ आर्त्तवस्तनधारिण्योलग्नसूर्यांशुकुंकुमाः ॥ विचित्रकुसुमोपेताश्चंद्रांशुसितचंदनाः ॥ ११ ॥ गगनगतलतादलोपविष्टःप्रसृतवनावनिवारिवाहवेषाः ॥ त्रिभुवनवनितादृदर्शदृष्टःकुसुमनिरंतरमंडितादशाशाः ॥ १२ ॥ ॥ इ० वा० वा० दे० मो० स्थि० दा० दाशूरदिगवलोकनंनामपंचाशत्तमःसर्गः ॥ ५० ॥ ॥ ५१ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ ततःप्रभृतितत्रासौप्रसिद्धस्तापसाश्रमे ॥ कदंबदाशूरइतिशूरस्तपसिदारुणे ॥ १ ॥ तस्मिँल्लतादलेस्थित्वाविलोक्यककुभःक्षणात् ॥ दृढपद्मासनंबध्वादिग्भ्यःप्रत्याहृतात्मना ॥ २ ॥ अज्ञातपरमार्थेनक्रियामात्रेचतिष्ठता ॥ फलकार्पण्ययुक्तेनमनसासोकरोन्मखम् ॥ ३ ॥

आर्त्तवानितत्तदृतूत्पन्नकुसुमपल्लवादीन्येवस्तनधारिण्यःकूर्पासकायासाम् ॥ ११ ॥ गगनगतायालतायाःशाखायादलेपूपविष्टस्सन्प्रसृताविस्तीर्णावनानिअवनयोवारिवाहाश्चवेषाःकृत्रिमाकारभेदकालंकारायासांतथाविधास्त्रिभुवनस्थजनोपभोग्यत्वात्रिभुवनवनिताःदृशआशादिशोददर्शेत्यर्थः ॥ १२ ॥ ॥ इतिश्रीवासिष्ठ० ता० स्थि० पंचाशत्तमःसर्गः ॥ ५० ॥ ॥ ५१ ॥ ॥ मनोयज्ञैरात्मबोधोवनदेव्यांसुतोद्भवः ॥ दाशूरस्यात्रपुत्रायज्ञानदानंचकीर्त्यते ॥ १ ॥ दारुणेतपसिशूरःअपराङ्मुखःसदोद्युक्तइतियावत् ॥ ॥ १ ॥ ककुभोदिशः ॥ प्रत्याहृतात्मनापरावर्तितेन ॥ २ ॥ ३ ॥

नभोगतायालतायाःशाखायाःपत्रेपुस्थितेनतेनसर्वाआधानाद्यश्वमेधांताः ॥ ४ ॥ ५ ॥ अमलनांरागादिदोषशून्यताम् ॥ एवंप्रतिबंधक्षयेसतिबलात्प्राग्जन्मकृतश्रवणसंस्कारोद्बोधबलात् ॥ ६ ॥ ततोज्ञानाद्विशीर्णाज्ञानावरणः तदभ्यासाच्चविगलद्वासनामलोजीवन्मुक्तःसन्नित्यर्थः ॥ ७ ॥ ८ ॥ भक्तिप्रणामलज्जाभिर्विनताननाम् ॥ ९ ॥ कोकिलयाकुसुमापूरैश्चननताम् ॥ १० ॥ लतांअवष्टभ्येतिशेषः ॥ ११ ॥ १२ ॥ याज्ञयाप्रार्थनया ॥ १३ ॥ लताकुंजाएवलीलार्थाआलयायस्याः ॥ कात्वमितिप्रश्नस्योत्तरमुक्त्वा

नभोगतलतापत्रसंस्थितेनांतरात्मना ॥ सर्वाःस्वमनसातेनकृतायज्ञक्रियाःक्रमात् ॥४॥ तत्रासौदशवर्षाणिमनसैवायजत्सुरान् ॥ गवाश्वनरमेधाद्यैर्यज्ञैर्विपुलदक्षिणैः ॥ ५ ॥ कालेनामलतांयातेविततेतस्यचेतसि ॥ बलादवततारांतर्ज्ञानमात्मप्रसादजम् ॥६॥ ततोविशीर्णावरणोविगलद्वासनामलः ॥ सददर्शैकदातस्यांलतायामग्रतःस्थिताम् ॥ ७॥ वनदेवींविशालाक्षीमालोककुसुमांबराम् ॥ कामिनींकांतवदनांमदघूर्णितलोचनाम् ॥ ८ ॥ नीलोत्पलामोदवतीमतीवसुमनोहराम् ॥ तामुवाचानवद्यांगींसमुनिर्विनताननाम् ॥ ९ ॥ कोकिलाकुसुमापूरनतांवनलतामिव ॥ कात्वमुत्पलपत्राक्षिकांतिविक्षोभितस्मरा ॥ १० ॥ वयस्यामिवपुष्पाढ्यांलतांकिमिवतिष्ठसि ॥ इत्युक्तेमृगशावाक्षीगौरपीनपयोधरा ॥ ११ ॥ मुनिमाहमनोहारिमुग्धाक्षरमिदंवचः ॥ यानियानिदुरापानिवांछितानिमहीतले ॥ १२ ॥ प्राप्यंतेतानितान्याशुमहतामेवयाज्ञया ॥ अहमस्मिँल्लताकीर्णेत्वत्कदंबाभ्यलंकृते ॥ १३ ॥ लतालीलालयाब्रह्मन्विपिनेवनदेवता ॥ यश्चैत्रसितपक्षस्यत्रयोदश्यांस्मरोत्सवे ॥ १४ ॥ बभूववनदेवीनांसमाजोनंदनेवने ॥ तत्राहमगमंनाथत्रैलोक्यललनासदः ॥ १५ ॥ तत्रदृष्टामयासर्वावयस्यामदनोत्सवे ॥ अपुत्रयापुत्रयुतास्तेनाहंदुःखिताभृशम् ॥ १६ ॥ त्वयिसर्वार्थसार्थस्यबृहत्कल्पतरौस्थिते ॥ अनाथेवकथंनाथकिलशोचाम्यपुत्रिका ॥ १७ ॥ देहिमेभगवन्पुत्रनोचेद्दहमिहाग्नये ॥ प्रकरोम्याहुतिंपुत्रदुःखदाहोपशांतये[1] ॥ १८ ॥

स्वागमनप्रयोजनमाह ॥ यदित्यादिना ॥ स्मराराधनायप्रवर्तितेगीतवादित्रनाट्यबलिभोज्याद्युत्सवे ॥ १४ ॥ त्रैलोक्यस्थानांललनानांवनदेवीनांसदःसमाजम् ॥ १५ ॥ तेनापुत्रत्वेन ॥ १६ ॥ सर्वेषामर्थानांपुरुषार्थानांसार्थस्यसंघस्य ॥ अजंतुसंघेसार्थशब्दोगौणः ॥ १७ ॥ दाहोपशांतयइतिमानसदाहापेक्षयाशरीरदाहःसुखायतइतिभावः ॥ १८ ॥

१ दाहदुःखमल्पमितीत्यपिपाठः

दयान्वितोनतुधैर्याच्च्युतइतिभावः ॥ १९ ॥ पूजार्हंजगत्पूज्यम् ॥ २० ॥ कृच्छ्रंप्राणसंकटंसंप्राप्यमरणावेशआत्मघातसंकल्पस्तेनयायिन्याआगतयात्वयानःअस्मत्तो याचितस्तेनहेतुनाज्ञातातत्त्वज्ञः ॥ नत्वन्यवनदेवीपुत्रवदसौभोगलंपटइत्यर्थः ॥ २१ ॥ परिचर्यांसंगमसेवाद्युपचारम् ॥ २२ ॥ स्वात्मनासहेत्यसहायइतियावत् ॥ अवहत्अ तिचक्रमे ॥ २३ ॥ २४ ॥ अलिनीभ्रमरी ॥ २५ ॥ कलानांवेदादिसर्वविद्यानाम् ॥ २६ ॥ ज्ञानंब्रह्मविद्या ॥ २७ ॥ मौर्ख्येणेतिइतरविद्यानामतत्त्वविषयत्वादविद्यात्वमेवेति

तामित्युक्तवतींतन्वींविहस्यमुनिपुंगवः॥ प्राहहस्तगतंपुष्पंतस्यैदत्वादयान्वितः॥१९॥ गच्छतन्वंगिमासेनपूजार्हमलिलोचनम्॥ प्रसोष्यसेसुतंकांतंप्रसूनमिवसल्लता॥२०॥ किंत्वसौमरणावेशयायिन्यानस्त्वयासुतः॥ याचितःकृच्छ्रंसंप्राप्यज्ञातातेनभविष्यति॥२१॥ इत्युक्त्वासमुनिस्तन्वींप्रसन्नमुखमंडलाम्॥ परिचर्यांकरोमीतिप्रार्थनोत्कांव्यसर्जयत्॥ २२॥ साजगामात्मसदनंसोतिष्ठत्स्वात्मनासह॥ अवहत्क्रमशःकालऋतुसंवत्सरांकितः ॥ २३ ॥ अथदीर्घेणकालेनसैवोत्पलविलोचना॥ द्वादशाब्दमुपादायसुतंमुनिमुपाययौ ॥ २४ ॥ साप्रणम्योपविश्याग्रेमुनिमिंदुसमाननम्॥ उवाचकलयावाचाचूतद्रुममिवालिनी ॥ २५ ॥ अयंसभगवन्भव्यःकुमारःपुत्रआवयोः॥ कृतोमयासमग्राणांकलानांकिलकोविदः॥ २६ ॥ प्रभोकेवलमेतेनज्ञानंनाधिगतंशुभम्॥ येनसंसारचक्रेस्मिन्नपुनःपरिपीड्यते॥ २७॥ ज्ञानंत्वमेवास्यविभोकृपयोपदिशाधुना॥ कोहिनामकुलेजातंपुत्रंमौर्ख्येणयोजयेत्॥ २८॥ एवंवदंतींसमुनिःसच्छिष्यमवलेसुतम्॥ इहैवस्थापयैनंत्वमित्युक्त्वातांव्यसर्जयत् ॥ २९ ॥ तस्यांगतायांसपितुरंतेवासितयातया॥ अतिष्ठत्संयतोधीमानर्कस्येवारुणःपुरः॥३०॥ कदर्थःप्राप्यविज्ञानंततश्चित्राभिरुक्तिभिः॥ चिरकालमसौतत्रमुनिःपुत्रमवोधयत्॥३१॥ आख्यायिकाख्यानशतैर्दृष्टांतैर्दृष्टिकल्पितैः॥ तथेतिहासवृत्तांतैर्वेदवेदांतनिश्चयैः॥ ३२ ॥ अनुद्वेगितयानित्यंविस्तरेणकथाक्रमैः॥ अनुभूतिमुपारूढैरूढिमेतियथामयि॥ ३३ ॥

नमौर्ख्यंनिस्तारस्ताभिरितिभावः ॥ २८ ॥ सच्छिष्यमुत्तमशिष्यगुणसंपन्नम् ॥ २९ ॥ अंतेवासितयागुरुशुश्रूषणव्रतेनसंयतःस्थिरनियमःसन् ॥ अरुणोगरुडाग्रजः ॥३०॥ कदर्थःशुश्रूषाव्रतचर्यादिक्लेशैःकदर्थितःसन्विज्ञानंउपायभूतशास्त्रजन्यंपरोक्षज्ञानंप्राप्यस्थितइतिशेषः ॥ ततस्तदनंतरंतंपुत्रंचिरकालंअवोधयत् ॥ अपरोक्षीभावायोपदिदेशेत्यर्थः ॥ अथवापिताप्राक्तपःकदर्थितःसन्विज्ञानंप्राप्यपुत्रोप्येवंकदर्थितोमाभूदितिस्वयमवोधयदित्यर्थः ॥ ३१ ॥ स्वोपलब्धार्थकथानिबंधाआख्यायिकाः पराख्यानादिकथानिबंधाआख्यानानि तेषांशतैः ॥ दृष्टिकल्पितैःसाम्यदर्शनकल्पितैर्भारतादीतिहासप्रसिद्धैर्वृत्तांतैःनिश्चयैःसिद्धांतैः ॥ ३२ ॥ मयिप्रत्यगात्मनिरूढिंव्युत्पत्तिदार्ढ्यंयथाधियापुत्रएतिप्राप्नोतितथाइतिहासदृष्टांतादिभिरवोधयदितिपूर्वत्रान्वयः ॥ ३३ ॥

अनुभवःस्वात्मबोधचमत्कारस्तद्वशतःसर्वरसेभ्योऽतिरिक्तैरतिशयितैः उचितःपरमपुरुषार्थरूपत्वादवश्यबोधार्हैःअर्थोयेषांतथाविधैर्वचोगणैः ॥ जलदपक्षेअनुभववशतःश्र वणमात्रेणशिखंडिनांप्रीतिजननादन्यरसाधिकैः उचितःशिखंडिनीसहनृत्याद्यर्थोयेभ्यस्तथाविधैर्वचोगणैर्गर्जितसमूहैः ॥ अंबरेवक्षायेअंतरिक्षेच ॥ ३४ ॥ ॥ इतिवासिष्ठ म०तात्पर्यप्रकाशेस्थितिप्रकरणेएकपंचाशत्तमःसर्गः ॥ ५१ ॥ ॥ छ ॥ ॥ खोत्थस्यराज्ञश्चरितंकल्पयित्वेहवर्ण्यते ॥ संकल्पकल्पितंविश्वंमिथ्यैवेतिविवक्षया ॥ १ ॥ तेनदाशूरकदंबोपलक्षितेनमार्गेण ॥ कैलासवासिनींमंदाकिनीमितिशेषः ॥ १ ॥ सप्तर्षिमंडलंकोटरमिवैकदेशोयस्यतथाविधान्नभसोद्युलोकाकाशात् ॥ २ ॥ यावदि

अनुभववशतोरसातिरिक्तैरलमुचितार्थवचोगणैर्महात्मा॥ जलदइवशिखंडिनंपुरःस्थंतनयमबोधयदंबरेमहर्षिः॥३४॥ ॥इ०वा० वा०दे०मो०स्थि०दा०दाशूरसुतानुबोधनंनामैकपंचाशत्तमःसर्गः॥५१॥ ॥छ॥ ॥श्रीवसिष्ठउवाच॥ ॥कदाचिद थमार्गेणतेनकैलासवासिनीम्॥ अहंस्नातुमदृश्यात्माव्योमवीथीगतोगमम्॥१॥ निर्गत्यनभसःसप्तमुनिमंडलकोटरात्॥ रात्रौप्राप्तो स्मिसुमतेदाशूरतरुमुन्नतम्॥२॥ यावच्छृणोमिविटपकुहरात्काननेवचः॥ कुड्मलांभोजलग्नस्यषट्पदस्येवनिःस्वनम्॥३॥ शृणुपुत्र महाबुद्धेवस्तुतोस्यसमामिमाम्॥ वर्णयामिमहाश्चर्यामिकामाख्यायिकांतव॥४॥ अस्तिराजामहावीर्योविख्यातोभुवनत्रये॥ नाम्ना खोत्थइतिश्रीमाञ्जगदाक्रमणक्षमः॥५॥ अस्यानुशासनंसर्वेभुवनेष्वपिनायकाः॥ शिरोभिर्धारयंत्युच्चैश्चूडामणिमिवार्थिनः॥६॥ यःसाहसैकरसिकोनानाश्चर्यविहारवान्॥ केनचित्त्रिषुलोकेषुनमहात्मावशीकृतः॥७॥ यस्यारंभसहस्राणिसुखदुःखप्रदान्यलम्॥ सं ख्यातुंकेनशक्यंतेकल्लोलाजलधेरिव॥८॥ यस्यवीर्यंसुवीर्यस्यनशस्त्रेणनचपावकैः॥ केनचिद्भुवनेक्रांतमाकाशमिवमुष्टिना॥९॥ यदी यांविततारंभांलीलांनिर्माणभासुराम्॥ नमनागनुवर्त्ततेशक्रोपेंद्रहराअपि॥१०॥ त्रयस्तस्यमहाबाहोर्देहाविहरणक्षमाः॥ जगदा क्रम्यतिष्ठंतिह्युत्तमाधममध्यमाः॥११॥

तिसाकल्येनिपातः ॥ ३ ॥ यद्वचःश्रुतंतदेवाह ॥ शृणुपुत्रेत्यादिना ॥ अस्यसंसारस्यसमामुपमानभूताम् ॥ ४ ॥ खात्अव्याकृताकाशात्कालत्रयेपिजगच्छून्याद्ब्रह्माकाशाद्वा उत्थःउत्तरसर्गेऽस्यव्याख्यामूलेस्पष्टेतिनविस्तरेणात्रव्याख्यायते ॥ ५ ॥ नायकाईश्वराब्रह्मादयोपि अर्थिनोधनिनः ॥ ६ ॥ ७ ॥ ८ ॥ क्रांतमभिभूतमनुसृतंवा ॥ ९ ॥ अ ल्पेपिप्रयोजनेबहुतरकल्पनासहस्रसंकुलत्वाद्विततारंभाम् ॥ स्वप्नमनोरथादिनिर्माणभासुराम् ॥ अनुवर्ततेअनुकर्तुंशक्नुवंतीतियावत् ॥ १० ॥ सात्विकराजसतामसभेदात्त्रयः ॥ विहरणक्षमाःसर्वव्यवहारक्रीडासमर्थाः ॥ ११ ॥

---

१ मूलतइतिक्वचित्पाठः ॥ अत्रमूलतइतिसार्वविभक्तिकस्तसिः

व्योमन्यव्याकृताकाशे ॥ यथापक्षीव्योमन्येवांडपिंडगरुन्मयदेहत्रयात्मकःक्रमाज्जातःसर्वतःपरिभवशंकीनिस्सारपिप्पलादिफलास्वादलोलुपःशब्दमात्रादुत्पततिनत्वर्थतत्त्वं विमृशतितद्वदयमपिस्थूलसूक्ष्मकारणात्मकत्रिशरीरकोव्योमनिब्रह्माकाशेजातःसन्सर्वतोभीतस्तुच्छविषयासक्तोविधिनिषेधशब्दानुपातीभ्रमतीत्यर्थः ॥ १२ ॥ नगरंब्रह्मांडरूपंचतुर्दशलोकात्मकमहारथ्यंचतुर्दशविद्यात्मकरथ्यामार्गविभक्तंच ॥ एवंकर्मकरणव्युत्पत्तिभ्यांविभागत्रयेणत्रिलोकात्मनात्रय्यात्मनाचभूषितम् ॥ १३ ॥ वनानांनंदनादीनाम् ॥ शिखरिभिर्मेर्वादिभिः ॥ वापीसप्तकंसमुद्राः ॥ १४ ॥ दीपद्वयंचंद्रसूर्यौ ॥ शास्त्रीयैःकर्मभिरूर्ध्वगतिरशास्त्रीयैरधोगतिरित्येवंरूपेण ॥ १५ ॥ संसारिणोजंगमाः ॥ मुग्धाविषयव्यामूढाअपवरकवदात्माकाशपरिच्छेदकत्वादपवरकादेवमानुषादिदेहगणाः ॥ १६ ॥ १७ ॥ असितैश्छादनैःकेशतृणैश्छन्नाः ॥ बहुभिर्वातायनैरूर्ध्वच्छिद्रैः॥१८॥

व्योमन्येवातिविततेजातोसौत्रिशरीरकः॥ तत्रैवचस्थितिंयातःशब्दपातश्चपक्षिवत्॥ १२॥ तत्रैवापारगगनेनगरंतेननिर्मितम्॥ चतुर्दशमहारथ्यंविभागत्रयभूषितम्॥ १३॥ वनोपवनमालाढ्यंक्रीडाशिखरिसुंदरम्॥ मुक्तालताविवलितवापीसप्तकभूषितम् ॥ १४॥ शीतलोष्णात्मकाक्षीणदीपद्वयविराजितम्॥ ऊर्ध्वाधोगतिरूपेणवणिङ्मार्गेणसंकुलम्॥१५॥तस्मिन्नेवातिविपुलेपत्तनेतेनभूभृता॥ संसारिणोविरचितामुग्धापवरकागणाः॥ १६ ॥ ऊर्ध्वंकेचिदधःकेचित्केचिन्मध्येनियोजिताः॥ केचिच्चिरेणनश्यंतःकेचिच्छीघ्रविनाशिनः॥ १७॥ असितच्छादनच्छन्नानवद्वारविभूषिताः॥ अनारतवहद्वातावह्रुवातायनान्विताः॥१८॥दीपपंचकसालोकास्त्रिस्थूणाः शुक्लदारवः॥ मसृणालेपमृदवःप्रतोलीभुजसंकुलाः ॥ १९॥ माययारचितास्तेनराज्ञातेषुमहात्मना॥ रक्षितारोमहायक्षानित्यमालोकभीरवः॥ २०॥ अथापवरकौघेषुचलत्सुसमहीपतिः॥ करोतिविविधांक्रीडांनीडेष्विवविहंगमः॥ २१॥ त्रिशरीरशतेष्वंतस्तैर्यक्षैःसहपुत्रक॥ लीलावशमुषित्वातुपुनर्निर्गम्यगच्छति ॥ २२॥ तस्येच्छाजायतेवत्सकदाचिच्चलचेतसः॥ पुरंभविष्यन्निर्माणंकिंचिद्यामीतिनिश्चला॥ २३॥

दीपपंचकैर्ज्ञानेंद्रियैःसालोकाःसप्रकाशाः ऊरूकसे [1]रुकाचेतितिस्त्रःस्थूणाःस्तंभायेषाम् ॥ शुक्लान्यस्थीन्येववंशदारुस्थानीयानियेषु ॥ मसृणैःस्निग्धैरालेपमृत्तिकास्थानीयैश्चर्मभिः ॥ प्रतोल्योरथ्यास्तद्रूपैर्भुजैःसंकुलाः ॥ १९ ॥ तेषांअपवरकाणांअभिमानेनरक्षितारोयक्षाःकार्यकरणैःपूज्याःस्वामिभूताअहंकाराः ॥ आलोकादात्मविवेकाद्भीरवः ॥ ततस्तत्क्षयादित्यर्थः ॥ २० ॥ चलत्सुव्यवहारवत्सु ॥ समहीपतिःसंकल्पात्माजीवः ॥ २१ ॥ लीलाभिरवशमस्वाधीनंयथास्यात्तथेत्युषित्वानिर्गम्यचेत्युभयान्वयि ॥ २२ ॥ भविष्यन्निर्माणंअविद्यमानंस्वप्नादिजगत् ॥ निश्चलायावत्तद्भोगंस्थिरा ॥ २३ ॥

---

१ पृष्ठास्थि ॥ पृष्ठास्थ्निकुकसेरुकेत्यमरः

आवेगान्निद्राद्यावेशात् उत्थायजाग्रद्देहाद्यभिमानंत्यक्त्वाधावति ॥ सतत्रवुद्धांनेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिस्वमांतायैवेतिश्रुतेः ॥ गंधर्वैर्निर्मितंपुरंगंधर्वनगरमिवमिथ्याभूतमित्यर्थः ॥ २४ ॥ विनाशंसंकल्पलयावस्थांसुषुप्तिम् ॥ विनश्यतिकारणाविद्यायांकर्मबीजसंस्कारशेषंकरकवद्विलीयते ॥ २५ ॥ स्वात्मनापूर्वस्वभावेनैव ॥ सएवाहमितिसुषुप्तोत्थितस्यप्रत्यभिज्ञानुभवादितिभावः ॥ २६ ॥ परिभूयतेशत्रुरोगदारिद्र्यादिभिः ॥ २७ ॥ मुदंपूर्वानुभूतसुखमेत्यअतिक्रम्यस्मृत्यावा ॥ २८ ॥ हेसुतमहात्मासपूर्वोक्तोमहीपतिःसनिपराभिभवसामर्थ्येपरान्गच्छतिजयतिचसंपदःप्राप्यजृंभतेस्फुरतिसंचलतिभातिचजाग्रत्स्वप्नयोःसुषुप्तिप्रलयसमाधिमुक्तिषुनभातिच ॥ अंतर्गतेनात्मज्योतिषाभासुरः ॥ अतएवमहामहिमाअपांपतिःसमुद्रइव ॥ २९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थिति०द्विपंचाशत्तमःसर्गः ॥ ५२ ॥

भूताविष्टइवावेगात्ततउत्थायधावति॥ पुरंतदेप्यथाप्नोतिगंधर्वैरिवनिर्मितम्॥ २४॥ तस्येच्छाजायतेपुत्रकदाचिच्चलचेतसः॥ विनाशंसंप्रयामीतितेनाशुसविनश्यति॥ २५॥ पुनरुत्पद्यतेतूर्णंस्वात्मनोर्मिरिवांभसः॥ व्यवहारंतनोत्युच्चैःपुनरारंभमंथरम्॥ २६॥ स्वयैवव्यवस्त्याथकदाचित्परिभूयते॥ किंकरोम्यहमज्ञोस्मिदुःखितोस्मीतिशोचति॥ २७॥ मुदमेत्यकदाचिच्चस्वयमायातिदीनताम्॥ प्रावृट्पंकलोल्लासपूरादिवनदीरयः ॥ २८॥ जयतिगच्छतिवल्गतिजृंभतेस्फुरतिभातिनभातिचभासुरः॥ सुतमहामहिमासमहीपतिःपतिरपामिववातरयाकुलः॥ २९॥ ॥इ०वा०वा०दे०मो०स्थि०दा०खोत्थविभववर्णनंनामद्विपंचाशत्तमःसर्गः॥ ५२॥ ॥ ६॥

श्रीवसिष्ठउवाच॥ ॥अथापृच्छत्सुतस्तत्रजंबूद्वीपेमहानिशि॥ कदंबाग्रावचूडस्थंपितरंपावनाशयम्॥ १॥ ॥पुत्रउवाच॥ ॥कोसौखोत्थइतिख्यातोभूपस्तातोत्तमाकृतिः॥ कथितंचकिमेतन्मेत्वयेतिब्रूहितत्त्वतः॥ २॥ कथंभविष्यतिनिर्माणंवर्त्तमानेक्वगम्यता॥ उभयार्थविरुद्धत्वान्मन्मोहायवचस्तव॥ ३॥ ॥दाशूरउवाच॥ ॥शृणुपुत्रयथाभूतमेतत्तेकथयाम्यहम्॥ येनसंसारचक्रस्यतत्त्वमस्याववुध्यसे॥ ४॥ असदप्युत्थितारंभमवस्तुमयमाततम्॥ संसारसंस्थानमिदमेवमाकथितंमया॥ ५॥ परमान्नभसोजातःसंकल्पःखोत्थउच्यते॥ जायतेस्वयमेवासौस्वयमेवविलीयते॥ ६॥

खोत्थाख्यानस्यतात्पर्यंविस्तरेणेहवर्ण्यते ॥ संकल्पकल्पितंविश्वमित्युक्तार्थेनिदर्शनम् ॥ १॥

कदंबस्याग्रेअवचूडउत्तंसइवस्थितमित्युपमितसमासः ॥ १ ॥ २ ॥ यथाश्रुतार्थेतात्पर्यंनास्तिकिंतुअन्यत्रतात्पर्यमितित्वयाकुतोज्ञातमितिचेत्पुरंभविष्यन्निर्माणंकिंचिद्यामीनिनिश्चलेत्याद्युक्तौभविष्यत्त्ववर्त्तमानत्वयोर्यौगपद्यविरोधाद्यनन्वितार्थकत्वदर्शनादित्याह ॥ केति ॥ ३ ॥ अवबुध्यसेअवभोत्स्यसे ॥ ४ ॥ असतःपरमार्थसत्ताशून्यादेवाज्ञानादभ्युद्यतारंभंअतएवावस्तुमायातन्मयम ॥ एवमस्यार्थस्यबोधनायआकथितंपारोक्ष्येणवर्णितम् ॥ ५ ॥ संकल्पःसंकल्पप्रधानंमनः ॥ समष्टिव्यष्टिमनसोरेकीकारेणखाद्व्यक्ताकाशादुत्थइतिव्युत्पत्त्याखोत्थउच्यतइत्यर्थः ॥ स्वयमेवस्वसंकल्पजन्यप्रवृत्तिवासनोद्भवादेवजायतेनिवृत्तिवासनादार्ढ्याच्चस्वयमेवलीयतइत्यर्थः ॥ ६ ॥

---

१ तदायमाप्नोतिइतिक्वचित्पाठः

तत्स्वरूपंतत्परिणामः ॥ उक्तार्थंतदन्वयव्यतिरेकानुविधानप्रदर्शनेनद्रढयति ॥ जायतइति ॥ ७ ॥ ननुब्रह्मविष्ण्वादिभ्यःसकाशाज्जगदुत्पन्नमितिश्रुतंतत्कथमन्यस्मादुच्यतेतत्रा ह ॥ ब्रह्मेति ॥ विटपान्स्कंधान् ॥ ८ ॥ शून्येत्रैकालिकजगदभाववतिव्योमनिब्रह्मणि ॥ अचेतनस्यास्यकुतोनिर्माणशक्तिरितिचेदधिष्ठानचैतन्यानुग्रहेणचेतनविरिंच्याकार ताप्राप्तेरित्याह ॥ प्रतिभासेति ॥ ९ ॥ तदेवत्रिजगत्पुरंप्राग्वर्णितमित्याह ॥ यत्रेत्यादिना ॥ विततालोकाःसूर्यादिप्रभादीप्ताः ॥ प्रसिद्धवनोपवनमालायत्रउद्यानपरंपरावर्णिता इत्यर्थः ॥ १० ॥ अनलाकृतीदीप्यमानौ ॥ अनिलाक्षतावितिपाठेस्पष्टम् ॥ ११ ॥ मुक्तालताविवलितवापीसप्तकभूषितमित्युक्तेरर्थमाह ॥ सूर्येति ॥ तरंगाणांमुक्तासाम्ये उपपत्तिःसूर्यांशुकचदालोलत्वम् ॥ १२ ॥ मणिरत्नानिमणिश्रेष्ठाएवबिसांकुरायासु ॥ और्वानलावडवाग्नयएवअंबुजानियासु ॥ यत्रनगरे ॥ १३ ॥ ऊर्ध्वाधोगतिरूपेणवणि

तत्स्वरूपमिदंसर्वंजगदाभोगिविद्यते ॥ जायतेतत्रजातंतुतस्मिन्नष्टेविनश्यति ॥ ७ ॥ ब्रह्मविष्ण्विंद्ररुद्राद्यांस्तस्यैवावयवान्विदुः ॥ विट पानिववृक्षस्यश्रृंगाणीवमहीभृतः ॥ ८ ॥ शून्येव्योमनितेनेदंनिर्मितंत्रिजगत्पुरम् ॥ प्रतिभासानुसंधानमात्रेणैत्यविरिंचिताम् ॥ ९ ॥ यत्रेमेविततालोकालोककोशाश्चतुर्दश ॥ वनोपवनमालाश्चयत्रोद्यानपरंपराः ॥ १० ॥ क्रीडाशिखरिणोयत्रसह्यमंदरमेरवः ॥ शीतो ष्णदीप्तीचंद्रार्कौदीपौयत्रानलाकृती ॥ ११ ॥ सूर्यांशुकचदालोलतरंगोत्तुंगमौक्तिकाः ॥ वहंतिसरितोयत्रसन्मुक्तावलयश्चलाः ॥ १२ ॥ इक्षुक्षीरादिसलिलामणिरत्नबिसांकुराः ॥ और्वानलांबुजायत्रवाप्यःसप्तमहार्णवाः ॥ १३ ॥ अधउर्व्यांतथोर्ध्वेखेपुण्यापुण्यधनश्रि यः ॥ नरामरकिराटानांयत्रांतःक्रयविक्रयौ ॥ १४ ॥ तस्मिन्नेवजगत्यस्मिन्पुरेसंकल्पभूभृता ॥ क्रीडार्थमात्मनश्चित्रादेहापवरकाः कृताः ॥ १५ ॥ केचिद्गीर्वाणनामानऊर्ध्वएवनियोजिताः ॥ नरनागादयःकेचिदधएवनियोजिताः ॥ १६ ॥ वातयंत्रप्रवाहेणचलंतोमां सम्न्मयाः ॥ सितास्थिदारवश्चित्रास्त्वग्लेपमसृणामलाः ॥ १७ ॥ केचिच्चिरेणनश्यंतिकेचिच्छीघ्रविनाशिनः ॥ केचित्केशोलपोल्लासर चिताच्छादनश्रियः ॥ १८ ॥

ज्मार्गेणसंकुलमितियदुक्तंतस्यार्थमाह ॥ अधइति ॥ पुण्यान्यपुण्यानिपापानिचधनश्रियोयेषांतेषांनराणांकर्मोपासनाधिकारिणामार्याणाममराणांचदेवान्भावयतानेनतेदे वाभावयंतुवइतिभगवदुक्तन्यायेनपुण्यतत्फलक्रयविक्रयौ ॥ किराटानांप्रत्यंतदेशवासिनांकर्माधिकारबहिष्कृतानांपापतत्फलस्थावरतिर्यगादिभिःपरस्परोपकारबाहुल्यात्क यविक्रयौबोध्यौ ॥ १४ ॥ संसारिणोविरचितामुग्धापवरकागणाइत्युक्तेस्तात्पर्यमाह ॥ तस्मिन्नेवेत्यादिना ॥ १५ ॥ १६ ॥ वातयंत्राणिप्राणास्तत्प्रवाहेण ॥ मांसान्येवमृद स्तद्विकाराः ॥ सितान्यस्थीन्येवदारूणियत्र ॥ त्वचोलिप्यंतेयैस्तैलोद्वर्तनादिभिस्तेत्वग्लेपास्तैर्मसृणाश्चिक्कणाअमलाश्च ॥ १७ ॥ केशलक्षणानांउलपानांतृणविशेषाणां उल्लासेनरचिताआच्छादनश्रीर्येषामितिअसितच्छादनच्छन्नाइत्युक्तेर्विवरणम् ॥ १८ ॥

नवद्वारविभूषिताइत्युक्तिविवृणोति ॥ कर्णेति ॥ अनारतवहद्वानाइत्युक्तिविवृणोति ॥ अनारतेति ॥ प्राणस्योष्णत्वमपानस्यचशीतत्वंप्रत्यक्षसिद्धम् ॥ १९ ॥ बहुवातायनान्विताइत्यादिविवृणोति ॥ कर्णनासेत्यादिना ॥ कुदीपकेतिविवरणेनदीपपंचकेत्यत्रसंघार्थेजातःकन्तंत्रेणकुत्सामपिद्योतयतीतितात्पर्यंसूचितम् ॥ २० ॥ रक्षितारोमहायक्षाइत्येतद्विवृणोति ॥ माययेति ॥ परमालोकभीरवइत्यस्यपरमात्मदर्शनेनस्वहृदयपंथ्यात्मकाहंकारक्षयश्रुतेःपरमस्यालोकनाद्भीरवोबिभ्यतइतितात्पर्यमित्यर्थः ॥ २१ ॥ २२ ॥ ननुदेहएवाहंकारोनान्योनेत्याह ॥ यथेति ॥ २३ ॥ संक्रीडनप्रकारमाह ॥ क्षणमिति ॥ संकल्पस्यतरंगावृत्तयः ॥ २४ ॥ तस्येच्छाजायतेइत्यादेस्तात्पर्यंपुत्रोक्तविरोधपरिहारेणवर्णयति ॥ भविष्यदिति ॥ २५ ॥ तेनाशुसविनश्यतीत्यस्यतात्पर्यमाह ॥ असंकल्पनेति ॥ जाग्रत्स्वप्नावस्थयोःपरंअत्यंतंआयस्यभ्रमणप्रयुक्तमायासंप्राप्यश्रेयसे वि

कर्णाक्षिनासाप्रमुखैर्द्वारैर्नवभिरन्विताः॥ अनारतवहत्प्राणपवनेनोष्णशीतलाः॥१९॥ कर्णनासास्यताल्वादिवातायनगणान्विताः॥ भुजाद्यंगप्रतोलीकाःपंचेंद्रियकुदीपकाः॥२०॥ माययारचितास्तेपुसंकल्पेनमहामते॥ अहंकारमहायक्षाःपरमालोकभीरवः॥ २१ ॥ देहापवरकेष्वंतर्महाहंकारयक्षकैः॥ सहसंक्रीडतेत्यर्थंससदैवासदुत्थितैः ॥ २२ ॥ यथाकुसूलेमार्जारोभस्त्रायांभुजगोयथा॥ मुक्ताफलंयथावेणावहंकारस्तथातनौ॥ २३॥ क्षणमभ्युदयंयातिक्षणंशाम्यतिदीपवत्॥ देहगेहेपुसंकल्पतरंगाःसागरेष्विव ॥ २४ ॥ भविष्यन्नवनिर्माणंसव्याप्नोतितदापुरम्॥ यदासंकल्पितंवस्तुक्षणादेवप्रपश्यति ॥ २५॥ असंकल्पनमात्रेणस्वेनैवाशुविनश्यति॥ श्रेयसेपरमायस्यनाशत्वेनतुसंभवः॥ २६॥ स्वयंसंकल्पनामात्रंजायतेबालयक्षवत् ॥ अनंतायात्मदुःखायनानंदायकदाचन॥ २७॥ इदंस्फारंजगद्दुःखंप्रतनोत्यात्मसत्तया॥ असत्तयानाशयतिघनमांध्यंयथातमः॥२८॥ स्वयैवदुःखदायिन्याचेष्टयापरिरोदिति॥ काष्ठावष्टब्धवपणःकीलोत्पाटीकपिर्यथा ॥ २९ ॥ संकल्पितानंदलवस्तिष्ठत्युद्धरकंधरम् ॥ अकस्मात्प्रच्युतमधुबिंदुभुक्करभोयथा ॥ ३० ॥ क्षणंविरतिमायातिरतिमेतिक्षणंस्वयम्॥ क्षणंविकारमायातिसंकल्पेनैवबालवत्॥ ३१ ॥

श्रांतिसुखायअसंकल्पनमात्रेणसुषुप्तौनाशत्वेनप्रविलयेनकारणीभूताविद्यामात्रभावेनसंभवःसत्तेत्यर्थः ॥ अथवानानाजन्मकोटिष्वायस्यैवान्निर्विण्णःशास्त्राचार्यसमाध्यभ्यासादिबलादात्मतत्त्वसाक्षात्कारेसतिसंकल्पमूलोच्छेदादेवासंकल्पनमात्रेणश्रेयसेमोक्षायसंभवोनिर्वृतिः ॥ परमायास्येतिपाठेतुअस्यसंकल्पस्यनाशत्वेनवासनाक्षयप्रयुक्तशून्यभावेनसंभवःअभिनिष्पत्तिःपरमायश्रेयसेभवतीतिसर्वत्रशेषः ॥ २६ ॥ पुनरुत्पद्यतेइत्युक्तेस्तात्पर्यमाह ॥ स्वयमिति ॥ २७ ॥ २८ ॥ किंकरोमीत्यादिशोकोक्तेर्बीजमाह ॥ स्वयैवेति ॥ दुःखदायिन्यानिषिद्धाचरणाभिमानादिरूपया ॥ काष्ठावष्टब्धेत्युत्पत्तिप्रकरणेव्याख्यातम् ॥ २९ ॥ करभोगर्दभः ॥ अनेनविषयसुखमपिरासभस्यमधुलेहनवदतिदुर्लभंकिंपुनर्मोक्षसुखमितिध्वनितम् ॥ ३० ॥ ३१ ॥

स्वोत्थाख्यायिकावर्णनप्रयोजनमाह ॥ एनमिति ॥ सकलभावेभ्यःसर्वबाह्यवस्तुभ्यःपरावृत्त्यसमाध्यभ्यासेनतत्त्वज्ञानेनचनिर्मूलंनिर्वासनाऽज्ञानंकृत्वामतिःअंतःपदंप्रत्यगूभूतंब्रह्मयथायात्यवलंब्यविश्राम्यतितथाकुर्वित्यर्थः ॥ ३२ ॥ प्राग्येत्रयोदेहाउक्तास्तान्प्रपंचयति ॥ त्रयइति ॥ मतेःसंकल्पात्मनोमनसः ॥ ३३ ॥ प्राकृतचेष्टयास्वाभाविकप्रवृत्त्यापरांकृपणतांनरकेषुप्रसिद्धाम् ॥ कृमिकीटग्रहणंस्थावरादीनामप्युपलक्षणम् ॥ ३४ ॥ ज्ञानमत्रोपासनंशास्त्रीयप्रवृत्तिनियमइतियावत् ॥ अदूरकेवलीभावंसन्निहितमोक्षंस्वाराज्यंहैरण्यगर्भभावांतदेवतापदम् ॥ ३५ ॥ लोकसंव्यवहारोमनुष्यजन्मनातद्योग्यव्यवहारस्तद्वान् ॥ ३६ ॥ परंपदंमोक्षम् ॥ आत्मपरिक्षयेआत्यंतिकसंकल्पोच्छेदे

एनंसकलभावेभ्यःकृत्वानिर्मूलमादरात् ॥ मतिरंतःपदंयातियथापुत्रतथाकुरु ॥ ३२ ॥ त्रयस्तस्यामतेर्देहाअधमोत्तममध्यमाः ॥ तमःसत्वरजःसंज्ञाःकारणंजगतःस्थितेः ॥ ३३ ॥ तमोरूपोहिसंकल्पोनित्यंप्राकृतचेष्टया ॥ परांकृपणतामेत्यप्रयातिकृमिकीटताम् ॥ ३४ ॥ सत्वरूपोहिसंकल्पोधर्मज्ञानपरायणः ॥ अदूरकेवलीभावंस्वाराज्यमधितिष्ठति ॥ ३५ ॥ रजोरूपोहिसंकल्पोलोकसंव्यवहारवान् ॥ परितिष्ठतिसंसारेपुत्रदारानुरंजितः ॥ ३६ ॥ त्रिविधंतुपरित्यज्यरूपमेतन्महामते ॥ संकल्पःपरमायातिपदमात्मपरिक्षये ॥ ३७ ॥ सर्वादृष्टीःपरित्यज्यनियम्यमनसामनः ॥ सबाह्याभ्यंतरार्थस्यसंकल्पस्यक्षयंकुरु ॥ ३८ ॥ यदिवर्षसहस्राणितपश्चरसिदारुणम् ॥ यदिवाविलयात्मानंशिलायांचूर्णयस्यलम् ॥ ३९ ॥ यदिवाग्निंप्रविशसिवडवाग्निमथापिवा ॥ यदिवापतसिश्वभ्रेखड्गधाराजवेतथा ॥ ४० ॥ हरोयद्युपदेष्टातेहरिःकमलजोपिवा ॥ अत्यंतकरुणाक्रांतोलोकनाथोथवायतिः ॥ ४१ ॥ पातालस्थस्यभूस्थस्यस्वर्गस्थस्यापितत्तव ॥ नान्यःकश्चिदुपायोस्तिसंकल्पोपशमादृते ॥ ४२ ॥ अनाबाधेविकारेचसुखेपरमपावने ॥ संकल्पोपशमेयत्नंपौरुषेणपरंकुरु ॥ ४३ ॥ संकल्पतंतावखिलाभावाःप्रोताःकिलानघ ॥ छिन्नेतंतौनजानेतेक्वयांतिविशरारवः ॥ ४४ ॥

सति ॥ ३७ ॥ तर्हिसंकल्पक्षयेकउपायस्तमाह ॥ सर्वाइति ॥ दृष्टीर्बाह्यार्थदर्शनानिबाह्येंद्रियाणिवैराग्येणनिरुद्ध्येतियावत् ॥ ३८ ॥ ननुसंकल्पक्षयोदुष्करःअन्यएवोपायोमोक्षार्थमुपदिश्यतांनेत्याह ॥ यदिवेत्यादिना ॥ विलयस्वभावंआत्मानंस्वदेहम् ॥ ३९ ॥ ४० ॥ लोकनाथोयतिःश्रीदत्तात्रेयोदुर्वासावाअत्यंतकरुणाक्रांतःसन्नुपदेष्टास्यात् अथवाअत्यंतकरुणाक्रांतइतिविशेषणस्यारस्यादात्यंतिकाहिंसोपदेष्टाबुद्धोत्रयतिः ॥तस्यात्रग्रहणंत्ववैदिकमार्गेष्वपिमोक्षप्रत्याशावारणार्थम् ॥ ४१ ॥ ४२ ॥ सचसंकल्पोपशमोब्रह्मस्वरूपएवेत्याशयेनविशिनष्टि ॥ अनाबाधइत्यादि ॥ परंयत्नंसाधनचतुष्टयसंपत्तिश्रवणमनननिदिध्यासनलक्षणम् ॥ ४३ ॥ ननुसंकल्पमात्रोच्छेदेनसर्वजगद्बंधनिवृत्तिःकुतस्तत्राह ॥ संकल्पेति ॥ तर्हितेनष्टाभावाःक्वयांतितत्राह ॥ नजानेइति ॥ आरोपितभावानामधिष्ठानेबाधेऽन्यत्रगमनाप्रसिद्धेरितिभावः ॥ ४४ ॥

नन्वियंसंकल्पादिसर्वभावनिवृत्तिरसतीसतीसदसतीवा ॥ आद्येमोक्षासिद्धिर्द्वितीयेमोक्षेपिद्वैतापत्तिस्तृतीयेपाक्षिकबंधद्वैतयोरवारणमितिनमोक्षेनिर्व्रणतासिद्धिरित्यादिदोषग णानेकोक्त्यापरिहरति ॥ असदिति ॥ सदसत्वादयःसर्वेविकल्पाःसंकल्पादेवसहभावैरुत्पन्नाःसंकल्पमेवसदसच्चेत्येवंविकल्पितुंनशक्नुवंतिइहपरमार्थसत्यसंकल्पंब्रह्मनस्पृशंतीति किंवाच्यम् ॥ कार्याणांयत्रस्वसंगिनिकारणेप्यांतरेकुंठीभावस्तत्रकिंवाच्यमसंगेपरमात्मनीतिभावः ॥४५॥४६॥४७॥ ननुमोक्षसंपादनेकाक्षतिस्तत्राह ॥ उत्थायेति ॥ सत्यम यात्मकंसत्यैकस्वभावंब्रह्मअसत्यमायावशात्योन्यासुरनरतिर्यगादिचतुरशीतियोनिद्वारेणसत्वरूपेणतत्तत्प्राणिभेदरूपेणोत्थायव्यर्थमेवजगद्दुःखमनुभवति ॥ इदमात्मनःस्व स्यनसदृशंनयुक्तमित्यर्थः ॥४८॥ तेननानायोनिजन्मनानिमित्तेनदुःखायदुःखार्थंमृतेनपुनःपुनर्मरणेनचतवकिंफलम् ॥४९॥ तर्हिमयाकिंकार्यंतत्राह ॥ अधिगतेति ॥ त्वंअधि

असत्सत्सदसत्सर्वंसंकल्पादेवनान्यतः॥ संकल्पंसदसच्चैवमिहसत्यंकिमुच्यताम् ॥ ४५ ॥ संकल्प्यतेयथायद्यत्तत्तथाभवतिक्षणात्॥ माकिंचिदपितत्वज्ञसंकल्पयकदाचन॥ ४६॥ निःसंकल्पोयथाप्राप्तव्यवहारपरोभव॥चिद्चेत्योन्मुखत्वंहियातिसंकल्पसंक्षये॥४७॥ उत्थायसत्वरूपेणयोन्यासत्यमयात्मकम्॥ नतज्जगद्दुःखमिदंव्यर्थंसदृशमात्मनः॥ ४८॥ तेनदुःखायमहतेकिंमृतेनतवानघ॥ यद्दुः खायतत्प्राज्ञाःसंश्रयंतीहनेतरत्॥४९॥अधिगतपरमार्थतामुपेत्यप्रसभमपास्यविकल्पजालमुच्चैः॥ अधिगमयपदंतदद्वितीयंविततसु खायसुषुप्तचित्तवृत्तिः ॥५०॥ ॥इ०वा०वा०दे०मो०स्थि०दा०संसारनगरविकल्पयोगविचारोनामत्रिपंचाशत्तमःसर्गः॥ ५३॥ पुत्रउवाच॥ ॥कीदृशस्तातसंकल्पःकथमुत्पद्यतेप्रभो॥ कथंचवृद्धिमाप्नोतिकथंचैषविनश्यति॥ १॥ ॥दाशूरउवाच॥ ॥अनंतस्या त्मतत्त्वस्यसत्तासामान्यरूपिणः॥ चितश्चेत्योन्मुखत्वंयत्तत्संकल्पांकुरंविदुः॥२॥ लेशतःप्राप्तसत्ताकःसएवघनतांशनैः॥ यातिचित्तख मापूर्यदृढजाड्यायमेघवत्॥ ३॥ भावयंतीचितिश्चेत्यंव्यतिरिक्तमिवात्मनः॥ संकल्पतामुपायातिबीजमंकुरतामिव॥४॥

गतपरमार्थतांतत्त्वज्ञतामुपेत्यप्राप्यप्रसभंमूलोच्छेदबलाद्विकल्पजालमपास्ययदद्वितीयंपदंमोक्षाख्यंतद्विततसुखायनिरतिशयानंदावाप्तयेअधिगमयस्वप्रयत्नेनसाधयेत्यर्थः ॥सु खंव्यादायस्वपितीतिवत्पूर्वकालत्वारोपेणल्यप् ॥ ५० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थिति०त्रिपंचाशत्तमःसर्गः ॥ ५३ ॥ ॥ ७ ॥ ॥ संकल्पस्ययथोत्प त्तिर्यद्रूपंघनतायथा ॥ येनोपायेनचोच्छेदस्तत्सर्वमिहकीर्त्यते ॥ १ ॥ प्रश्नःस्पष्टः ॥ १ ॥ चेत्योन्मुखत्वंयत्प्राक्तनइतिव्याख्यातंतदेवसंकल्पवृक्षस्याविद्याबीजोद्भवंप्रथमांकुरं विदुरित्यर्थः ॥ चित्तखंतमेवचित्ताकाशंआपूर्यसर्वतोव्याप्यदृढजाड्यायअधिष्ठानचितश्चिरस्वभावतातिरोधानेनजडप्रपंचाकारसंपत्तयेइतियावत् ॥ ३॥ एवंसमष्टिसंकल्पा ज्जगदुद्भवमुक्त्वातथैवबुद्ध्यहंकारप्राणेंद्रियदेहाद्याकारव्यष्टिसंकल्पोत्पत्तिमाह ॥ भावयंतीति ॥ ४ ॥

९९

ततोमूलांकुराच्छाखांकुराणामिवबाह्यविषयाकारसंकल्पपरंपराभिर्वृद्धिदुःखांतामाह ॥ संकल्पेनेति ॥ ५ ॥ ६ ॥ ननुनिर्विकाराद्द्वयेवस्तुनिकथंनिर्बीजजगदुद्भवस्तत्राह ॥ काकतालीयेति ॥ विवर्त्तवादाश्रयेणचायंदोषःपरिहार्यइत्याशयेनाह ॥ मृगतृष्णेति ॥ पूर्वानुभूतविषयवासनोद्बोधाद्भ्रेयाजगद्भ्रांतिरित्याशयेनाह ॥ निगीर्णेति ॥ मातुलिंगंफलविशेषः ॥ तद्धिचाक्षुषंपित्तमुद्दीपयच्छुक्लेपीतभ्रमंजनयति ॥ ८ ॥ अस्मिन्मदुपदेशात्मकेविज्ञायतेअनेनेतिविज्ञानेशास्त्रे ॥ असौयोवेदांतेषुप्रसिद्धःपूर्णात्मासःअहमेवममइमेसुखदुःखमयाजन्मादिभावाव्यर्थंमिथ्यैवइत्यनास्थायेनाज्ञानेनहेतुनानास्तितेनपरितप्यसे ॥ १० ॥ अस्यजन्मादेःसंबंधीकदाप्यसन्नेवभ्रांत्याजातोसि विलासतस्तात्त्विक

संकल्पेनहिसंकल्पःस्वयमेवप्रजायते ॥ वर्द्धतेस्वयमेवाशुदुःखायनसुखायतु ॥ ५ ॥ संकल्पमात्रंहिजगज्जलमात्रंयथार्णवः ॥ ऋतेसंकल्पमन्यातेनास्तिसंसारदुःखिता ॥ ६ ॥ काकतालीययोगेनसंजातोस्तिमुधैवहि ॥ मृगतृष्णाद्विचंद्रत्वमिवासत्यंचवर्द्धते ॥ ७ ॥ निगीर्णमातुलिंगस्यकनकप्रत्ययोयथा ॥ स्वयमभ्येत्यसत्योंतःसंकल्पस्तेतथाहृदि ॥ ८ ॥ असत्यमेवजातस्त्वमसत्यमपिवर्त्तसे ॥ अस्मिन् ज्ञातेचविज्ञानेह्यसत्यंसंविलीयते ॥ ९ ॥ असौसोहमिमेभावाःसुखदुखमयाजमम ॥ व्यर्थमेवेतिनानास्थायेनांतःपरितप्यसे ॥ १० ॥ असन्नेवास्यजातोसिकुतोजन्मविलासतः॥व्यर्थमेवावमूढोसिसंकल्पवशतःस्वतः॥११॥ मासंकल्पयसंकल्पंभावंभावयमास्थितौ॥ एतावतैवभावेनभव्योभवतिभूतये ॥ १२ ॥ संकल्पनाशयत्नेननभयान्यनुगच्छति॥ भावनाभावमात्रेणसंकल्पःक्षीयतेस्वयम्॥१३॥ सुमनःपल्लवामर्देकिंचिद्व्यतिकरोभवेत् ॥ सुसाध्योभावमात्रेणनतुसंकल्पनाशने ॥ १४ ॥ पुष्पाक्रांतौकरस्पंदयत्नःपुत्रोपयुज्यते॥ तदप्युपकरोत्यस्मिन्नसंकल्पपरिक्षये ॥ १५ ॥ संकल्पोयेनहंतव्यस्तेनभावविपर्ययात्॥ अप्यर्द्धेननिमेषेणलीलयैवनिहन्यते ॥ १६ ॥

पूर्णतात्लक्षणस्वविलसनात्तुकुतोजन्म ॥ ११ ॥ तर्ह्यस्यभ्रमस्यनिवृत्तौकउपायस्तमाह ॥ मासंकल्पयेति ॥ पूर्वानुभूतंसुखदुःखादिभावंसांप्रतिकस्थितौमाभावयमास्मर ॥ स्मृतेहिपूर्वभावेतदुपादानहानाद्यर्थंसंकल्पोदयःस्यादेवेतिभावः ॥१२॥ तथाचसंकल्पक्षयात्सर्वभयक्षयःपूर्वभावाभावनाच्चसंकल्पक्षयइतिक्रमःसिद्धइत्याह ॥ संकल्पेति ॥ १३ ॥ अयमुपायोत्यंतसुकरइतिप्रशंसति ॥ सुमनइत्यादिना ॥ सुमनसांशिरीषादिपुष्पाणांपल्लवस्यदलस्यामर्दनेकश्चिच्चासौव्यतिकरश्चाकिंचिद्व्यतिकरःप्रयत्नःसुसाध्यःसुकरोपिभवेन्नसंभावितोनतुअभावोऽभावनातन्मात्रेणसाध्येसंकल्पनाशनेतत्संभावनेत्यर्थः ॥ १४ ॥ उक्तमेवव्याचष्टे ॥ पुष्पेति ॥ तदपिसोऽपितावानपीतियावत् ॥ नोपकरोति ॥ १५ ॥ भावोभावनास्मृतिस्तस्यविपर्ययादस्मरणात् ॥ १६ ॥

ननुसंकल्पक्षयाद्दुःखक्षयेपिनिरतिशयानंदावाप्तिःकेनोपायेनसाध्यातत्राह ॥ भावेति ॥ भावोभावनानिरंतरंस्वपूर्णानंदात्मतांचिंतनंतन्मात्रेणोपसंपन्नेप्राप्तेस्वात्मनिस्थितिंस्वरूपाप्रच्युतिमागतेसतियदसाध्यंतदपिसाध्यते ॥ नन्वसाध्यंसाध्यतइतिविप्रतिषिद्धंतत्राह ॥ कस्येति ॥ स्वतःसिद्धंतन्नापैतीत्याशयेनसाध्यंस्यादित्युक्तंनतूत्पद्यतइत्याशयेन ॥ भावानांह्यपगमोद्वेधा परेणापहारेणवानाशेनभावांतरताप्राप्त्यावा हेअंगतेतवआत्माअन्येनापक्रियमाणःकस्यस्यात् ॥ नह्यद्वितीयात्मनोऽन्यःप्रसिद्धः ॥ विनश्यन्वाकिमिवस्यात् ॥ घटोहिविनश्यन्कपालंभवति आत्मातुकिंस्यात् यत्स्यात्तन्नष्टेनद्रष्टुंशक्यम् नचात्मान्योद्रष्टास्ति तस्माद्वात्मनाशोनिःसाक्षिकोनसिध्यत्येवेत्यात्मरूपोमोक्षःस्वतःसिद्धोनापैष्यतीत्यर्थः ॥ १७ ॥ असंकल्पनसंकल्पेनैवसर्वसंकल्पंआत्मतत्त्वमननरूपेणमनसैवस्वमनश्छित्त्वेत्यर्थः ॥ १८ ॥ उक्तोपायद्वयेनमूलादप्युपशांतेसतिदुःखमपिमूलादुपशांतंभवेदित्यर्थः ॥ १९ ॥ ननुसंकल्पेउपशांतेपिजीवचित्तवासनादिवशाद्दुःखंस्यादेवेत्याशंक्यतेषांसंकल्पेंतर्भावमाह ॥ संकल्पइति ॥ २० ॥ २१ ॥ ननुसंकल्पस्यैवजीवजगदात्मकत्वेतत्क्षयेनैरात्म्यलक्षणशून्यतापत्तिः नहिजीवान्यआत्मानामास्तीत्याशंक्याह ॥ यथैवेति ॥ मरुमरीचिकाच्छेदेपिनमरुभूःशून्यात्मिकायथेदंनिदर्शनंतथाजगज्जीवादिदृश्यमात्रबाधेपिनद्रूपआत्माशून्यात्मकः ॥ एतेमरीचिकाजगतीउभेसमेततेआरोपणविस्तृते ॥ २२ ॥ ननुबाधितमपिभावनयापुनःस्यादित्याशंक्याह ॥ असिद्धमिति ॥ बाधितेर्थेभावनैवनावतरतीत्यर्थः ॥ २३ ॥ तस्माज्जगन्मिथ्यात्वदर्शनंभावनोच्छेदार्थिनाप्रथमंसाध्यमित्याशयेनाह ॥ भावनेति ॥ इद्धयाअभ्यासदृढीकृतया ॥ हेलया दृश्यावहेलनया ॥ तेनदृश्यावहेलनेनतनुभावनयादेहात्मताप्रतिसंधानेनप्रागुक्तैःसुखदुःखैः ॥ तनुसंबंधिपुत्रमित्राद्यप्यवस्त्वितिविज्ञायतेपुत्रस्नेहास्थाचनप्रवर्त्ततइत्यर्थः ॥ २५ ॥

भावमात्रोपसंपन्नेस्वात्मनिस्थितिमागते ॥ साध्यतेयदसाध्यंतत्कस्यस्यात्किमिवांगते ॥ १७ ॥ संकल्पेनैवसंकल्पंमनसास्वमनोमुने ॥
छित्त्वास्वात्मनितिष्ठत्वंकिमेतावतिदुष्करम् ॥ १८ ॥ उपशांतेहिसंकल्पेउपशांतमिदंभवेत् ॥ संसारदुःखमखिलंमूलादपिमहामते ॥ १९ ॥
संकल्पोहिमनोजीवश्चित्तंबुद्धिःसवासना ॥ नाम्नैवान्यत्वमेतेषांनार्थेनार्थविदांवर ॥ २० ॥ संकल्पनादृतेनेहकिंचिदेवास्तिकुत्रचित् ॥
तमेवत्वंदयाच्छिधिकिमेतत्परिशोचसि ॥ २१ ॥ यथैवेदंनभःशून्यंजगच्छून्यंतथैवहि ॥ असन्मयविकल्पोत्थेउभेएतेततेयतः ॥ २२ ॥
असिद्धंसर्वमेवैतदसिद्धेनैवसाधितम् ॥ संकल्पेनजगद्यस्माद्भावनाक्वावतिष्ठताम् ॥ २३ ॥ (सत्यास्थायामसत्यांतुकिंनिष्ठावासनाभवेत् ॥) भावनाक्षयतःसिद्धिस्ततःप्राप्यंनशिष्यते ॥ तस्मादसदिदंसर्वविज्ञेयंहेलयेद्धया ॥ २४ ॥ तनुभावनयातेनसुखदुःखैर्नलिप्यते ॥
अवस्त्वितिचनिर्णीयस्नेहास्थानप्रवर्त्तते ॥ २५ ॥

---

१ किमन्यदितिवापाठः

२ इदमर्धमधिकमेकस्मिन्पुस्तकेउपलब्धम्

॥ २६ ॥ मनएवचित्प्रतिबिंबाज्जीवःसन्जगल्लक्षणंमानसंनगरंपरिवर्त्तयन्रचयन्परिणमयन्विनाशयंश्चस्फुरतीत्यर्थः ॥ २७ ॥ कुतस्तथापरिवर्त्तयन्स्फुरतितत्राह ॥ वासनेति ॥ यतोऽस्यमनोविषयसंबंधात्तत्तद्वासनाभिरावलितमधिष्ठानचित्संबंधात्स्फुरणशक्तिकंचस्थितमतोमलिनश्चलश्चसन्स्वाशयेनकामेनइमांप्रागुक्तांरचनादिव्यवस्थांकरोतीत्यर्थः ॥ २८ ॥ तर्हीष्टमेवकुतोनकरोतिअनिष्टंचकुतःकरोतितत्राह ॥ आत्मनइति ॥ २९ ॥ कुतोस्यवृद्धिह्रासौतत्राह ॥ ग्रहीतुमिति ॥ नियंतुमित्यर्थः ॥ दृष्टाःविषयदर्शनोद्बुद्धाः ॥ विषयदर्शनस्मरणत्यागेतुसपरिवाराःक्षसंति ॥ ३० ॥ तृणमात्रेणंतृणसदृशेनाल्पेनापिविषयेणेतियावत् ॥ वह्निशेषोग्निकणः ॥ जगतीत्याद्युत्तरान्वयि ॥ ३१ ॥ भ्रमदाःस्थाण्वादौचोरादिभ्रांतिहेतवः ॥ जडेषुविषयेषुलड्योरभेदान्मेघजलेषुचसंस्थानंयेषाम् ॥ इत्थंकीदृशस्तातसंकल्पइत्यादिप्रश्नानामुत्तरमुपवर्ण्यकथंचैषविनश्यतीतिचरमप्रश्नस्योत्त

आस्थाक्षयेनजायंतेहर्षामर्षौभवाभवौ ॥ तस्मादसदिदंसर्वंसुखदुःखादिविभ्रमैः ॥ २६ ॥ मनोजीवःस्फुरत्युच्चैर्मानसंनगरंजगत् ॥ भविष्यद्वर्त्तमानंचभूतंचपरिवर्त्तयन् ॥ २७ ॥ वासनावलितंलोकेस्फुरच्छक्तिमनःस्थितम् ॥ करोतिस्वाशयेनेमांव्यवस्थांमलिनश्चलः ॥ २८ ॥ आत्मनःसदृशींलीलांजीवोद्वनमर्कटः ॥ दीर्घमाकारमादायनिमेषाद्यातिक्षस्वताम् ॥ २९ ॥ ग्रहीतुंचनशक्यंतेसंकल्पजलवीचयः ॥ मनाग्दृष्टाविवर्द्धंतेक्षसंतिसपरिच्छदाः ॥ ३० ॥ तृणमात्रेणदीप्यंतेसंकल्पावह्निशेषवत् ॥ जगत्यप्रकटाकाराःप्रदीप्ताःक्षणभंगुराः ॥ ३१ ॥ भ्रमदाजडसंस्थानाःसंकल्पास्तडिदभ्रयः ॥ यदेवासन्मयंपुत्रतदेवाशुचिकित्सितुम् ॥ ३२ ॥ शक्यतेनात्रसंदेहोनासत्सद्भवतिकिंचित् ॥ संस्थितोयदिसंकल्पोदुश्चिकित्स्यःस्वतोभवेत् ॥ ३३ ॥ किंत्वसद्भूतएवैषसुचिकित्स्यस्तदाभवेत् ॥ अकृत्रिमंचेत्संसारमलमंगारकार्ष्ण्यवत् ॥ ३४ ॥ तदेतत्क्षालनेसाधोकःप्रवर्त्तेतदुर्मतिः ॥ किंत्वेतत्तंडुलेष्वेवतुषकंचुकवत्स्थितम् ॥ ३५ ॥ यतस्ततःप्रयत्नेनपौरुषेणविनश्यति ॥ अकृत्रिममपिप्राप्तंभ्रशंपुत्रतथापुनः ॥ ३६ ॥

रंविवक्षुर्वर्णितस्यसंकल्पस्यसुचिकित्स्यतामाह ॥ यदेवेत्यादिना ॥ असन्मयंअसत्याज्ञानविकारभूतम् ॥ ३२ ॥ शक्यतेज्ञानेनेतिशेषः ॥ संस्थितःपरमार्थभूतोयदिभवेत् ॥ ३३ ॥ जगत्सत्यतापक्षेतुआत्मनोपिजगद्विशेषान्मलिनस्वभावत्वापत्तौज्ञानेनसत्यनिरासएवसर्वप्रमाणविरुद्धइत्यनिर्मोक्षप्रसंगः विरुद्धस्याप्यभ्युपगमेअंगारकार्ष्ण्यस्यसशेषक्षालनेमलिनस्यैवपरिशेषोनिःशेषक्षालनेतुशून्यावसानतेतिवत्पुरुषार्थापरिशेषश्चेत्याशयेनाह ॥ अकृत्रिममिति ॥ कृतिर्मिथ्याकल्पनातयानिर्वृत्तंकृत्रिमंतद्भिन्नमकृत्रिमंसत्यम् ॥ ३४ ॥ तुषकंचुकंयथाअतंडुलभूतमेवतंडुलेनिरस्यतेतद्वदसदेवसतिनिरस्यमित्यर्थः ॥ ३५ ॥ कृतिःकारणव्यापारस्तयानिर्वृत्तंकृत्रिमंतद्भिन्नंअनादिभूतमपीत्यर्थः ॥ डुकृञोक्तिःक्रेर्मम्नित्यमितिनिर्वृत्तार्थेमप् ॥ ३६ ॥

ज्ञस्यतत्त्वविदःसुखेनअनायासेनैवउच्छेद्यतयाउच्छेदार्हतयाआततंविस्तीर्णम् ॥ अनाद्यज्ञानजस्यातिविस्तीर्णस्यचरजतत्वमादिविभ्रमस्यप्रबोधमात्रेणोच्छेददर्शनादितिभावः ॥ असंभावनाविपरीतभावनादिमलंतुज्ञानभूमिकाभ्यासलक्षणपुरुषप्रयत्नेनापिनश्यतीत्याशयेनाह ॥ तंडुलस्येत्यादिना ॥३७॥ ३८ ॥ असत्कल्पैर्विकल्पैरुपलक्षितःसंसारोयदेतावंतंकालंत्वयानजितस्तन्मुधैवोपायापरिज्ञानादित्यर्थः ॥ ३९ ॥ असत्यांस्वव्यवस्थांस्वनिष्ठांबाधामितियावत् ॥ अंधस्यतमस्तिरोभूतचक्षुषोदीपालोकेसतिआंध्यमिवेतिशेषः ॥ ४० ॥ असौसंसारः ॥ हियस्मादसत्येसत्यवद्दृष्टेसतिईदृशःएतादृशस्यभावनापुनर्श्चितामास्मनखलुयुक्तेतिशेषः ॥ ४१ ॥ ममसंसारित्वभावस्यएतेगुरुभिर्महद्भिर्विभवैःसंपद्भिरुज्ज्वलादीप्यमानाभोगविलासाःसत्याःशाश्वताश्चेतिविभ्रमस्तवमास्तु ॥ त्वंसंसारीअपिचतेविलासाश्चकारादन्यदपिजननमरणादिदृश्यमात्रंतदात्मतत्त्वमेवतथाविलसतिनदृश्यरूपंसदन्यदस्तीत्यर्थः॥४२॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थिति०चतुष्पंचाशत्तमःसर्गः ॥ ५४ ॥ ॥ ७ ॥ ॥ दाशूरेणवसिष्ठस्यपूजितस्यमिथःकथाः ॥ कदंबशोभावीक्षाचप्रातर्यानंचवर्ण्यते ॥ १ ॥ आलपनंव्यक्तसंभाषणम् ॥ १ ॥ खात्तूर्णांनिःशब्दंपतितोऽवतीर्णः ॥ निर्वृष्टेनवृष्टिजलवेगेणमुक्तःअधोवतारितआत्मायेनतोयदेन ॥ २ ॥ ३ ॥ तापयंतंभासयंतम् ॥ ४ ॥ वितीर्णोविष्टरआसनंयस्मैतम् ॥ पत्रपदग्रहणंपुष्पफलादीनामप्युपलक्षणम् ॥ ५ ॥ पूर्वकथाःप्राक्प्रस्तुतब्रह्मचर्चाः ॥ तनयंसम्यग्बोधयंतीतितनयसंबोधाः ॥ कर्मण्यण् ॥ गतिकारकोपपदानांकृद्भिःसहसमासवचनेकृद्ग्रहणेगतिपूर्वकस्यापिग्रहणात्सोपसर्गेणसहसमासः ॥ ६ ॥

सुखोच्छेद्यतयाज्ञस्यसंसारमलमाततम्॥ तंडुलस्ययथाचर्मयथाताम्रस्यकालिमा॥ ३७॥ नश्यतिक्रिययापुत्रपुरुषस्यतथामलम्॥ नश्यत्येवनसंदेहस्तस्माद्उद्यमवान्भव॥ ३८॥ असत्कल्पैर्विकल्पैर्यत्संसारोनजितोमुधा॥ श्लोकेनाशुलयंयातिक्वासद्वस्तुचिरंस्थितम्॥ ३९॥ असत्यामेतिसंसारःस्वव्यवस्थांविचारतः॥ दीपालोकादिवांधस्यदृष्टिंध्वंस्वीक्षितादिव॥ ४०॥ नासौतवनचास्यत्वंभ्रांतिपुत्रपरित्यज॥ असत्येसत्यवद्दृष्टेभावनामास्महीदृशः॥ ४१॥ ममगुरुविभवोज्ज्वलाविलासाइतितवमास्तुवृथैवविभ्रमोंतः॥ त्वमपिचविततताश्चतेविलासाविलसतिसर्वमिदंतदात्मतत्त्वम्॥ ४२॥ ॥ इ०वा०वा०दे०मो०स्थि०दाशूरोपाख्यानेसंकल्पचिकित्सानामचतुष्पंचाशत्तमःसर्गः॥ ५४॥ ॥ ७॥ ॥ श्रीवसिष्ठउवाच॥ ॥इत्याकर्ण्यतदातत्रराघवालपनंद्वयोः॥ अहंरघुकुलाकाशशशांकरघुनंदन॥ १॥ पतितःखात्कदंबाग्रेपत्रपुष्पफलाकुले॥ तूर्णींनिर्वृष्टमुक्तात्माशृंगाग्रइवतोयदः॥ २॥ अपश्यंतत्रदाशूरंशूरमिंद्रियनिग्रहे॥ परेणतपसायुक्तंतेजसेवहुताशनम्॥ ३॥ तेजोभिर्देहनिष्क्रांतैःकांचनीकृतभूतलम्॥ तापयंतंप्रदेशंतंभुवनंभास्करोयथा॥ ४॥ मामथालोक्यसंप्राप्तंदाशूरोर्घसपर्यया॥ वितीर्णविष्टरंपत्रपूजयापर्यपूजयत्॥ ५॥ ततःपूर्वकथास्तेनसहदाशूरभास्वता॥ कृतास्तनयसंबोधाःसंसारोत्तरणक्षमाः॥ ६॥

अयतद्भिःअव्याकुलयद्भिरितियावत् ॥ ७ ॥ तंकदंबंवधूश्लिष्टवरवेषेणवर्णयति ॥ स्मितेनेत्यादिना ॥ यतःकोरकोत्तरकोटरंश्वसनस्फुरितपल्लवंच अतएवस्मितेनस्फुटमिवस्थितम् ॥ ८ ॥ लतानांकोटिषुशाखाग्रेषुगतैःसंक्रांतैश्चामरैश्चमरपुच्छैः ॥ ९ ॥ सर्वावयवंअभिव्याप्येतिशेषः ॥ १० ॥ समालब्धंलिप्तम् ॥ स्वस्यच्छदाभोगैःपल्लवविस्तारैर्विपुलारक्ताःशोणाअंबरपरिच्छदाअंतरीयोत्तरीयकंचुकोष्णीषादयोयस्य ॥ ११ ॥ १२ ॥ मुनिभिर्बद्धानामुटजानामाकारइवाकारोयेषांतैर्लतामंडपैर्मंडितम् ॥ पुरमहोत्सवेपताकाभिर्युक्तंअर्थात्पुरमिवेत्यनुपज्जते ॥ पुरमिवोत्सवेइतिपाठःसाधुः ॥ १३ ॥ मृगकंडूयनकंपेनध्वस्तैःस्खलितैःपुष्पधूलिभिर्विधूसरम् ॥ प्रोत्सारितंस्वोत्कर्षेणन्यग्भावितंउपांतवनंयेन ॥ वृषमल्लंवृषश्रेष्ठम् ॥१४॥ बर्हिभिर्मयूरैः ॥ अचलैःपर्वतैर्निक्षेपभूताःक्षिप्ताःस्थापिताःसंध्याभ्रपोतलक्षणावालाःस्वकेशायस्मिंस्तथाविधमिवेत्युत्प्रेक्षा ॥ १५॥

**दृष्टवांस्तमहंवृक्षंकोरकोत्तरकोटरम्॥ दाशूरस्येच्छयासर्वैरयतद्भिर्मृगव्रजैः॥ ७॥ सेव्यमानंवनमिवलतामंडलमंडितम्॥ स्मितेनविस्फुटमिवश्वसनस्फुरितच्छदम्॥ ८ ॥ लताकोटिगतैर्भ्रांतैश्चामरैरिंदुसुंदरैः॥ शुभ्राभ्रखंडनिकरैःशरन्नभइवावृतम्॥ ९ ॥ प्रालेयकणपद्धत्यामुक्तावल्याभ्यलंकृतम्॥ सर्वावयवमेवाच्छपुष्पपूरैःप्रपूरितम्॥ १० ॥ स्वरेणुचंदनालेपैःसमालब्धमखंडितम्॥ स्वच्छदाभोगविपुलरक्तांबरपरिच्छदम्॥ ११॥ विवाहायेववेषेणपुष्पभारातिभारिणा॥ लतांगनानुपक्तेननागरेणकृतोपमम्॥ १२ ॥ मुनिबद्धोटजाकारलतामंडपमंडितम्॥ मंजरीभिःपताकाभिर्युक्तंपुरमहोत्सवे॥ १३ ॥ मृगकंडूयनध्वस्तपुष्पधूलिविधूसरम्॥ प्रोत्सारितोपांतवनंवृषमल्लमिवोत्थितम्॥ १४ ॥ बर्हिभिःकुसुमोद्भ्रांतपरागपरिपाटलैः॥ निक्षेपक्षिप्तसंध्याभ्रवालवालमिवाचलैः॥ १५ ॥ प्रवालारुणहस्तेनकुसुमस्मितशोभिना॥ मधुनाघूर्णमानेनप्रांतेनपुलकत्विषा॥ १६ ॥ नीरंध्रपुष्पपूर्णेनघूर्णितेनवनानिलैः॥ निद्रालुकुड्मलदृशास्तवकस्तनधारिणा॥ १७॥ पुष्पजालरजःपुंजकुंकुमारुणवाससा॥ लतावितानिलयवातायननिषंगिणा॥ १८ ॥ नीलपुष्पलतादोलालीलालास्यविलासिना॥ आपादमस्तकप्रांतंसर्वतोनिर्मितालयम्॥ १९॥**

इदानीमलिनेत्रेणभासिनेत्यंतैःसाधारणैर्विशेषणैर्विलासिपुरुषरूपेणकदंबंवसंतंवनदेवीवृंदंवावर्णयंस्तदालयत्वेनतंवर्णयति ॥ प्रवालेत्यादिना ॥ तत्राद्यकल्पेस्वेनस्वदेहेनेतिवाविशेष्यमंतेऽध्याहार्यम् ॥ मधुनाश्लेषान्मकरंदेनमद्येनचमदेनेवघूर्णमानेन ॥ प्रांतेनार्थात्केसरपूर्णेनहेतुनापुलकशोभावता ॥१६॥नीरंध्रंनिरंतरंपुष्पैःपूर्णेन ॥ लतास्तवकस्तनानुधारिणापल्लवकरैःपरामृशता ॥ १७ ॥ लतारचितवितानलक्षणानांनिलयानांगृहाणांवातायनेपुप्रासादगवाक्षद्वारकेषुनिषंगिणाअनुरक्तेन ॥ १८ ॥ नीलासुस्निग्धहरितच्छदासुपुष्पयुक्तलतादोलासुलीलालास्यैकौतुकांदोलनविषयेविलासिपुरुषभूतेन ॥ कोकिलालापशालिनावनदेवीनांवृंदेनवृतेनेतिवापाठयोरन्यतरदध्याहार्यम् ॥ ईदृशेनस्वेनस्वदेहेनवाआपादमस्तकप्रांतंसर्वतःसर्वैर्वयवाःनिर्मिताआलयाःपुष्पफलपक्ष्यादिभूषणाश्रयायेनतम् ॥ द्वितीयेउक्तविशेषणगणवतामधुनावसंतेनसर्वतःसर्वदासर्वांगेनिर्मितालयमितियोज्यम् ॥ तृतीयेपिउक्तविशेषणगणवतावनदेवीनांवृंदेनसर्वतोनिर्मितालयमितिपरेणसहयोज्यमिति ॥ १९ ॥

अलीनांपर्यायेणलताकदंबमंजरीपुष्पवेशनात्किमेतानिलतानेत्राणिउतकदंबनेत्राणीतिसंदेहास्पदीभूतमंजरीजालयुक्तमित्यर्थः ॥ अथवावनदेवीनामलिसदृशनेत्रेणवृंदेनकिमेतानिवनदेवीनांनेत्राण्युतभ्रमरयुतामंजर्यइतिसंदिग्धमंजरीजालमितियोज्यम् ॥ २० ॥ पुष्पधूलिभिःसमालब्धैर्लिप्तैः ॥ मिथःअन्योन्यंरहसिचनिविडमाश्लिष्टैः ॥ २१ ॥ पुष्पस्यांतरोगर्भएवांतःपुरम् ॥ मत्तालीनांयुगलैर्मिथुनैः ॥ २२ ॥ आशांतेषुदिक्प्रदेशेषुचारुभिर्मधुरैर्ववर्णानांनीलमक्षिकाणांनिवेदकपुरुषस्थानीयानांटांकृतैर्ध्वनिभिःकाननोपांतलक्षणायाःस्वनगर्याघुंघुमस्यमृगपक्ष्याद्याक्रोशस्याकर्णनेच्छयाक्षणंउत्कर्णमुर्ध्वीकृतकर्णमिवस्थितमित्यर्थः ॥ २३ ॥ दलाग्रेषुपल्लवेषुउपधानस्थानीयेषुनिद्रावेशाच्चापलाच्चक्षणंविश्रांतानिमुग्धमुग्धानिदर्शनीयतमानिशिरांसियेषांतद्भावेन ॥ इंदुनाअंशुकवंतिकिरणपटैराच्छादितानिवनाद्यवयवजालानियस्यास्तथाविधामर्णवमेखलांभूमिंनिशापगमप्रतीक्षयापश्यद्भिः ॥ २४ ॥ वनस्थलीनांतनयैःपुत्रभूतैर्मुनिप्रभावान्मूर्त्तिमाश्रितैर्नयैर्विनयैरिवस्थितैःपत्रपुटेषुपर्णजालोदरेषुअंतर्लीनैर्मृगैःशाखामृगादिभिः

वृंदेनवनदेवीनांकोकिलालापशालिना ॥ संदिग्धमंजरीजालमलिनेत्रेणभासिना ॥ २० ॥ अवश्यायोपशमितरतिखेदैर्मदालसैः ॥ पुष्पधूलिसमालब्धैराश्लिष्टैर्निविडंमिथः ॥ २१ ॥ पुष्पांतरांतःपुरगैःकिमपिप्रणयोचितम् ॥ ध्वनद्भिरभितःस्वच्छमत्तालियुगलैर्वृतम् ॥ २२ ॥ काननोपांतनगरीघुंघुमाकर्णनेच्छया ॥ क्षणमुत्कर्णमाशांतचारुववर्णटांकृतैः ॥ २३ ॥ क्षणंदलाग्रविश्रांतमुग्धमुग्धशिरस्तया ॥ पश्यद्भिरिंद्वंशुकवज्जालामर्णवमेखलाम् ॥ २४ ॥ वनस्थलीनांतनयैर्नयैर्मूर्त्तिमिवास्थितैः ॥ शुभैःपत्रपुटेष्वंतर्मृगैःसारतलांतरम् ॥ २५ ॥ नीडश्वसत्सुविश्वस्तसुप्तमात्रकपक्षिणम् ॥ पाकच्युतफलोपांतभूतकंचुकमंडली ॥ २६ ॥ संदिग्धमूकभ्रमरंगुच्छैःपूजाक्षसूत्रकैः ॥ श्यामलीकृतपर्यंतंनीडैःपल्लवमंडितैः ॥ २७ ॥ सुगंधिताशेषवनंपुष्पमेघीकृतांवरम् ॥ धूलीकदंबशबलफलौघवलितंतले ॥ २८ ॥ बहुनात्रकिमुक्तेननकिंचिदपिविद्यते ॥ यत्रंयत्रतरौयत्रनोप्यतेवानयुज्यते ॥ २९ ॥ पत्रेपत्रेमृगाःसुप्ताविश्रांताश्चपदेपदे ॥ कच्छेकच्छेखगालीनास्तस्यभूरुहभूपतेः ॥ ३० ॥

साराःशोभमानाःसार्थकीभूताश्चतलमधोभूभागआंतराःशाखाद्यवयवाश्चयस्यतम् ॥ २५ ॥ नीडेषुश्वसंतःमुनिप्रभावनिर्भयत्वात्सुविश्वस्तंयथास्यात्तथासुप्तमात्रकाः ॥ अज्ञातेकन् ॥ सुप्तत्वादलक्ष्यमाणाइतियावत् ॥ पक्षिणोयत्रतम ॥ पूर्वंभ्रमराविष्टेषुदैवात्पाकवशादधश्च्युतेषुफलेषुउपांतस्थितमृगादिभूतैःकंचुकवत्सर्वतोव्याप्तमंडलीभ्योभक्षणोपमर्दादिशंकयासंदिग्धाःभयान्मूकाश्चभ्रमरकीटायस्यतमित्युत्तरेणसहसमासः ॥ २६ ॥ पूजापदेनतत्कालिकोजपोलक्ष्यते ॥ तदाक्षसूत्रकल्पैःलंबमानलतागुच्छैःसुगंधितंअशेषंवनंयेन ॥ २७ ॥ तलेमूलभुविधूलीकदंबशबलैःफलौघैर्वलितंव्याप्तम ॥ २८ ॥ यत्रतरौयत्रयस्मिन्पत्रेप्राणिभिर्नोप्यतेनयुज्यतेनोपयुज्यतेवाताद्दशंपत्रमपिकिंचिन्नविद्यतेकिवाच्यंशाखाफलपुष्पादीत्यहोस्यसर्वथापरोपकारेणजन्मसार्थक्यमितिभावः ॥ २९ ॥ पत्रेपत्रेअधोगलितपत्रेपुसर्वेष्वित्यर्थः ॥ कंअवश्यायजलंछ्यतिछिनत्तीतिकच्छःपत्रायधोदेशः ॥ छोछेदनेइत्यस्मादातोनुपसर्गेकः ॥ ३० ॥

दिव्यदृशासमालोकयतः॥तमस्विनीति ॥ यद्यपिप्राग्गदंशुकवज्जालामित्युक्तत्वाज्ज्योत्स्नावत्येवतथापिरात्रित्वमात्रविवक्षयैवमुक्तम् ॥ ३१॥ ३२ ॥ ममतस्यचआवयोः ॥ त्य दादीनिसर्वैर्नित्यमित्यस्मच्छब्दशेषः ॥ ३३ ॥ पुष्पर्द्धिघनजालप्रतिकृतौतारकानिकरे ॥ इवेप्रतिकृताविनिकन् ॥ ३४ ॥ उपयातमनुयातम् ॥ ओदकांतात्प्रियंपांथमनुव्रजे दितिस्मृतेः ॥ गृहंप्रतिविसृज्यनिवर्त्य ॥ ३५ ॥ ३६ ॥ ३७ ॥ आख्यायिकायाःप्रागुक्तांसंगतिंस्मारयति ॥ दाशूरेति ॥ ३८ ॥ दाशूरोपदिष्टसिद्धांतदृशा ॥ ३९ ॥ विकल्पंत द्धर्मिमनस्तद्धेतुभूतंमलमज्ञानंचनिर्धूय ॥ येनआसादनेनइज्यःपूज्योभविष्यसि ॥ ४० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थिति०पंचपंचाशःसर्गः ॥ ५५ ॥ ॥ ७ ॥

एवंगुणविशिष्टंतंसमालोकयतोमम॥महोत्सवेनसदृशीसावभूवतमस्विनी॥ ३१ ॥ ततःकथाभीरम्याभिःसतस्यतनयोमया॥ विज्ञा नालोकरम्याभिर्नीतोबोधंपरंपुनः॥ ३२ ॥ आवयोस्तत्रचित्राभिःकथाभिरितरेतरम्॥ शर्वरीसाव्यतीयायमुहूर्त्तइवकांतयोः॥ ३३ ॥ प्रातःप्रतनुतांयातेपुष्पर्द्धिघनजालके॥ स्वर्गांगनांगभोगाभेतारकानिकरेशनैः॥ ३४ ॥ आकदंवनभोभागमुपयातंसुतान्वितम्॥ अ हंविसृज्यदाशूरंततोमरनदींगतः॥ ३५ ॥ तत्राभिमतमासाद्यस्थानमेत्यनभस्तलम्॥ प्रविश्यखंमुनीनांचमध्यंस्वस्थइवस्थितः॥ ३६ ॥ दाशूराख्यायिकैषातेकथितारघुनंदन॥ जगतःप्रतिबिंबाभासत्याकाराप्यसन्मयी॥ ३७ ॥ दाशूराख्यायिकेवेयमित्येतत्कथितंमया॥ तुभ्यंराघवबोधायजगद्रूपनिरूपणे ॥ ३८ ॥ तस्मादवास्तवींत्यक्त्वावास्तवीमपिरंजनाम्॥ दाशूरसिद्धांतदृशासदोदारोभवात्मवान् ॥ ३९ ॥ तस्माद्विकल्पंमलमात्मनस्त्वंनिर्धूयपश्यामलमात्मतत्त्वम् ॥ आसादयिष्यस्यचिरात्पदंतद्भविष्यसीज्योभुवनेषुयेन ॥ ४० ॥ इ०वा०वा०दे०मो०स्थिति०दा०वसिष्ठदाशूरमेलनंनामपंचपंचाशःसर्गः॥ ५५ ॥ ॥ ७ ॥ दाशूरोपाख्यानंसमाप्तम्॥ ॥ श्री वसिष्ठउवाच॥ ॥ नास्तीदमितिनिर्णीयसर्वंतस्यजरंजनाम्॥ यन्नास्तितत्प्रतिकिलकेवास्थेहविचारिणाम्॥ १ ॥ दृश्यमानमथेदंचेद स्तिसत्तामुपागतम्॥ तिष्ठस्वात्मनिबध्नासित्वंकिमत्रकिलात्मताम् ॥ २ ॥ अथचेदस्तिनास्तीदमितितिनिश्चयवानसि ॥ तथापिभावना संगःकथंयुक्तश्चलाचले॥ ३ ॥ नेदमस्तिजगद्रामतवनास्तिमहामते॥ केवलंस्वच्छमेवेत्थमाततंमितमीदृशम्॥ ४ ॥

सत्तासत्तेजडस्यात्रकर्त्तृताकर्त्तृतेचितः ॥ विमृश्यसर्वथादृश्येरंजनास्थानिवार्यते ॥१॥ इदंजडंजगत् ॥ रंजनामहंममेतिसंसर्गतादात्म्याध्यासलक्षणामास्थाम् ॥ विचारिणांवि वेकिनाम् ॥१॥ किंदृश्यंसदथसदसत्उतासदेव पक्षत्रयेपितत्राहंतादिरंजनंनोचितमित्याह ॥ दृश्यमानमितित्रिभिः ॥ इदंदेहादित्वसत्तानिरपेक्षसत्तामुपागतंयद्यस्तीतिमन्यसेत र्हित्वमपितत्सत्तानिरपेक्षेअसंगोदासीनचिद्रूपेस्वात्मनितिष्ठ ॥ अत्रत्वंनिरपेक्षेदेहादौअध्यासेनात्मतांकिवध्नासि ॥ नचेदंतवोचितमित्यर्थः ॥ तिष्ठत्वात्मनीतिपाठेनुयदिसत्तामुपा गतमस्तितर्हिआत्मनिस्वीयजडस्वभावेतिष्ठतुनाम ॥ त्वमत्रेत्यादिप्राग्वत् ॥२॥ भावनासंगःप्रागुक्ताध्यासः॥ चलाचलेसत्वासत्वयोःपरस्परोच्छित्तिरूपत्वादनियतस्वभावे॥३॥ अथचेदित्यनुकृष्यते ॥ अथचेन्नेदंजगदस्तितर्हितवबंधोनास्त्येवकेवलंस्वच्छमेवात्मतत्त्वमित्थंरीत्याआततंसर्वतोविस्तीर्णमितंप्रमितमितिनान्यरंजनावकाशइत्यर्थः ॥४॥

१ मार्गमित्यपिक्वचित्पाठः

किंचेदंजगत्सकर्तृकमुताकर्तृकमथकर्त्रकर्तृसाधारणंउदासीनात्मसन्निधिमात्रलब्धस्वरूपम् त्रिष्वपिपक्षेपुनवतद्रंजनानयुक्तेत्याह ॥ नेदमितिद्वाभ्याम् ॥ ५ ॥ शबलंअन्यो न्यतादात्म्याध्यासादैक्यमिवापन्नंभावयन्देहाद्यात्मभावंपश्यंश्चेतसिबुद्ध्युपाधिपरिच्छेदेमाआस्वनतिष्ठेत्यर्थः ॥ ६ ॥ ननुयतोवाइमानिभूतानिजायंते विश्वस्यकर्त्ताभुवन स्यगोप्तेत्यादिश्रुतिविरुद्धोयमकर्तृकत्वपक्षःकथमुत्थितःकिमर्थंवात्वयोपन्यस्तस्तत्राह ॥ सर्वेति ॥ यत्तदद्रेश्यमग्राह्यमवर्णमचक्षुःश्रोत्रंतदपाणिपादंनित्यंविभुंसर्वगतंसुसूक्ष्मंत दव्ययंयद्भूतयोनिंपरिपश्यंतीत्यादिश्रुतिभिरसंगोदासीनत्वाज्जडपर्वताद्युपमआत्मामेरुःसूर्यंपरिवर्त्तयतीतिवत्कर्तृत्वोपचर्यंतेजगन्मिथ्यात्वव्युत्पादनायेतियदासर्वासांसकर्तृकत्व प्रतिपादकश्रुतीनांहृदयंज्ञातंतदेत्यर्थः॥७॥यत्किंचिदेवअनिर्वचनीयमेव॥ भावोहंताद्यभिमानस्तेनपुनःपुनरनुसंधानंस्मरणम् ॥ बालोबालिशः ॥८॥ अनिर्वचनीयत्वमेवयुक्त्या दर्शयति ॥ नेत्यादिना ॥ शांतमत्यंताभावात्मकशून्यस्वभावम् क्षयिप्रध्वंसप्रयुक्तशून्यस्वभावंचन ॥ शून्यस्यदर्शनायोग्यत्वाज्जगतश्चसदाप्रवाहरूपेणदृश्यमानत्वात्ध्वस्त

नेदंकर्तृकृतंकिंचिन्नवाकर्तृकृतक्रमम् ॥ स्वयमाभासतेचेदंकर्त्रकर्तृपदंगतम् ॥ ५ ॥ अकर्तृकंजगज्जालंभवत्वथसकर्तृकम् ॥ मात्वमे तेनशबलंभावयन्नास्वचेतसि ॥ ६ ॥ सर्वेंद्रियविहीनात्माकर्त्तेवसजडोपमः ॥ अकर्तृचतदामन्येकाकतालीयवज्जगत् ॥ ७ ॥ काकता लीययोगेनजातंयत्किंचिदेवतत् ॥ तस्मिन्भावानुसंधानंबालोबध्नातिनेतरः ॥ ८ ॥ नकदाचिदिदंशांतंजगद्रामनचक्षयि ॥ अजस्रंदृ श्यमानत्वाद्भावित्वाच्चपुनःपुनः ॥ ९ ॥ नकदाचिदिदंचास्तिजगद्रामनचक्षयि ॥ अजस्रंक्षीयमाणत्वान्नास्तित्वाच्चानुमानतः ॥ १० ॥ सर्वेंद्रियपदातीतोयदाकर्त्तेहविज्वरः ॥ कुर्वाणःसर्वदाखेदंनकदाचनगच्छति ॥ ११ ॥ तेनेयंनियतिःप्रौढाभावाभावदशामयी ॥ ईदृश्ये वस्थिरादीर्घामिथ्योत्थापिचदृश्यते ॥ १२ ॥ अपर्यंतस्यकालस्यकश्चिदंशःशरच्छतम् ॥ तावन्मात्रमहाश्चर्यःकिमर्थंसोनुधावति ॥ १३ ॥ स्थिराश्चेज्जगतांभावास्तत्त्वादास्थानशोभते ॥ कथमन्योन्यसंश्लेषोजडचेतनयोःकिल ॥ १४ ॥

स्योत्पत्तिविरोधाज्जगतश्चपुनःपुनरुत्पद्यमानत्वादित्यर्थः ॥ ९ ॥ तर्ह्यात्मवत्सदासत्स्वभावंक्षणिकसत्तास्वभावंवास्तुतत्राह ॥ नेति ॥ अस्तिनित्यसत्तास्वभावम् ॥ क्षयिक्षणि कसत्तास्वभावम् ॥ आद्येअजस्रंप्रतिक्षणंपरिणामभेदेनक्षीयमाणत्वानुभवविरोधात् ॥ द्वितीयेअनाद्यनंतयोःपूर्वोत्तरकालयोरसतोवर्त्तमानत्वाभिमतक्षणेप्यसतःसत्वायोगेना सत्त्वानुमानादित्यर्थः ॥ १० ॥ अस्तुवास्यनियतिप्रयुक्तसर्गादौसन्निधिमात्रेणकर्तृत्वंतथापितज्ज्याभिमानेनतत्रखेदोनयुक्तइत्याह ॥ सर्वेंद्रियेतिद्वाभ्याम् ॥ ११ ॥ १२ ॥ श रच्छतंमानुषदेहजीवनपरमावधिःकालः ॥ अनाद्यनंतयोःपूर्वोत्तरकालयोःकदाप्यसत्वादत्यंतासंभावितंतावत्कालमात्रंमहदतिदृढंमनुष्यदेहात्मतालक्षणमाश्चर्यंयस्यतथावि धःसन्नससर्वेंद्रियपदातीतआत्माकिमर्थमनुधावति ॥ सर्वथेदमनुचितमित्यर्थः ॥ १३ ॥ इदानीमकर्तृकत्वपक्षेस्थिरत्वाभ्युपगमेप्यास्थानोचितेत्याह ॥ स्थिराइति ॥ तत्त्वात् स्थिरत्वादेवहानोपादानायोग्यत्वादित्यर्थः ॥ असंगचितोजडसंबंधाघटनादपितत्रसाअनुचितेत्याशयेनाह ॥ कथमिति ॥ १४ ॥

इदानीमकर्तृकास्थिरत्वपक्षेप्यास्थानोचितेत्याह ॥ अस्थिराइति ॥ यतस्तेअस्थिरेआस्थांबध्नतःपयःफेनलक्षणस्याप्यस्थिरस्यांतेनाशेएषाआस्थाप्रसक्तासतीदुःखंददातिदा तुंप्रसज्जेतेतियावत् ॥ तथाचपयःफेनास्थयातन्नाशेशोकउचितश्चेद्देहाद्यास्थयातन्नाशेपिसउचितःस्यादितिभावः ॥ १५ ॥ आत्मनोजगद्भावत्वंजगत्स्वभावताजन्मनाशादि स्वभावतेतियावत् ॥ साचअन्योन्यतादात्म्यसंसर्गाध्यासलक्षणआस्थाबंधएवनतदन्योनिरूपयितुंशक्यः ॥ सचतत्त्वविमर्शेस्थिरास्थिरपक्षयोर्द्वयोरपिनराजतेनशोभतेइत्य र्थः ॥ अथवास्थिरास्थिरयोरात्मजगतोस्तादात्म्यलक्षणआस्थाबंधोनराजतेफेनशैलयोरिवेत्यर्थः ॥ १६ ॥ ननुकर्तृत्वपक्षेकथमनास्थोपपत्तिस्तत्राह ॥ सर्वेति ॥ अकर्त्ताशै लइव ॥ औदासीन्यांशेऽयंदृष्टांतः ॥ कार्यनिर्वाहात्तुकर्त्तेत्युच्यतइतिसदृष्टांतमाह ॥ तिष्ठतीत्यादिना ॥ १७ ॥ दिवाकार्यंसर्वप्राणिदिनकृत्यनिर्वाहम् ॥ १८ ॥ नन्वादित्योदि नकृत्यनिमित्तमात्रंकर्त्तारस्तुजनास्तद्भिन्नादृश्यंते जगन्निर्माणेतुनान्येकर्त्तारःसंतीतिवैषम्यमाशंक्याह ॥ अरुणेति ॥ अरुणाख्यानदीतस्यास्तीरंस्वभावतएवशिलाविषममुदा

अस्थिराश्चेज्जगद्भावास्तदाप्यास्थानशोभते ॥ पयःफेनास्थिरस्यांतेदुःखमेषाददातिते ॥ १५ ॥ आस्थाबंधोमहाबाहोजगद्भावत्वमा त्मनः ॥ नस्थिरास्थिरयोःफेनशैलयोरिवराजते ॥ १६ ॥ सर्वकर्त्ताप्यकर्त्तैवकरोत्यात्मानकिंचन ॥ तिष्ठत्येवमुदासीनआलोकंप्रतिदी पवत् ॥ १७ ॥ कुर्वन्नकिंचित्कुरुतेदिवाकार्यमिवांशुमान् ॥ गच्छन्नगच्छतिस्वस्थःस्वास्पदस्थोरविर्यथा ॥ १८ ॥ यतःकुतश्चिदेवेदंसं पन्नमिवलक्ष्यते ॥ अरुणातीरवद्वारिपूरावर्त्तवदाततम् ॥ १९ ॥ इतिचेद्भवतारामनैपुण्येनावधारितम् ॥ प्रमाणपरिशुद्धेनचेतसाचवि चारितम् ॥ २० ॥ तथापिभावनांसाधोपदार्थप्रतिनार्हसि ॥ आलातचक्रेस्वप्नेचभ्रमेवाकेवभावना ॥ २१ ॥ अकस्मादागतोजंतुःसौ हार्दस्यनभाजनम् ॥ भ्रमोद्भूतंजगज्जालमास्थायास्तन्नभाजनम् ॥ २२ ॥ औष्ण्येंदौशीतलेभानौमृगतृष्णाजलेतथा ॥ यथानभावय स्यास्थामेवंभावयमास्थितौ ॥ २३ ॥ संकल्पपुरुषस्वप्नजनद्वींदुत्वविभ्रमम् ॥ यथापश्यसिपश्यत्वंभावजातमिदंतथा ॥ २४ ॥ अंतरा स्थांपरित्यज्यभावश्रीभावनामयीम् ॥ योसिसोसिजगत्यस्मिँल्लीलयाविहरानघ ॥ २५ ॥ अकर्तृत्वपदंपीत्वापीच्छामपिकुर्वतः ॥ सर्व भावांतरस्थस्यसर्वातीतरयचात्मनः ॥ २६ ॥

सीनंच वारिपूरोपिनिम्नानुसारिस्वभावोनप्रवाहवैषम्यकर्त्ता ॥ द्वयोस्तयोःसन्निधानेजायमान आवर्तोयतःकुतश्चिदेवआकस्मिकःसंपन्नस्तद्वच्चिज्जडसन्निधौजगदपीतिनात्रकस्यचिच्छिरसितत्कर्तृताभारआरोपयितुंशक्यइतिभावः ॥ आद्योवतिरिवार्थेसप्तम्यंतात्द्वितीय स्तुतेनतुल्यमितितृतीयांतात ॥ १९ ॥ एवंविमर्शेतुसुतरांजगत्यास्थानोचितेत्याह ॥ इतीतित्रिभिः ॥ २० ॥ २१ ॥ सौहार्दस्यमैत्र्याः ॥ २२ ॥ अनृतत्वाच्चतत्रास्थानोचितेत्या ह ॥ औष्ण्येति ॥ यथाशीतार्त्तऔष्ण्यभ्रांतिगृहीतेइंदौ तापार्त्तोभ्रांतिकृतशीतलेभानौ तृषार्तश्चत्वंमृगतृष्णाजलेआस्थांनभावयसिएवंजगत्स्थितावपीत्यर्थः ॥ २३ ॥ २४ ॥ भावश्रीःस्यादिवस्तुसौंदर्यंतच्चिंतनप्रचुराम् ॥ २५ ॥ अकर्तृत्वपदंतदिच्छांअपिशब्दात्कर्तृत्वपदंतदिच्छांचपीत्वानिगीर्ययोसिपरिशिष्टःसोसीतिपूर्वेणाप्यन्वयः ॥ लीलयाविह रेतियदुक्तंतद्विवृणोति ॥ अकर्तृत्वपदमिति ॥ कुर्वतोव्यवहारेऔदासीन्येनकर्तृभूतस्यतेसन्निधिमात्रेणनिरिच्छैवनियतिःपरिजृंभतेव्यवहाराकारेणप्रथतेइतियावत् ॥ २६ ॥

तत्रदृष्टांतानाह ॥ दीपेति ॥ निरिच्छैवप्रभेतिशेषः ॥ २७ ॥ कुटजानिकुटजपुष्पाणि ॥ उभयत्रजायंतइतिशेषः ॥ २८ ॥ देवेपरमात्मनि ॥ २९ ॥ ३० ॥ कर्तृत्वाकर्तृत्वयो त्स्योर्बीजंदर्शयन्नुपसंहरति ॥ अतइति ॥ ३१ ॥ बीजांतरेचदर्शयति ॥ सर्वेति ॥ कर्त्ताभोक्ताचनअकर्त्ताअभोक्ताचेत्युक्तइत्यर्थः ॥ ३२ ॥ कर्तृताअकर्तृताचेत्यध्याहार्यम् ॥ ३३ ॥ द्वयोरपिश्रेयस्त्वंप्रत्येकंदर्शयति ॥ सर्वस्थइत्यादिना ॥ ३४ ॥ कथंनलिप्यतेतदाह ॥ यातीति ॥ नीरसतांविरागम् ॥ ३५ ॥ ३६ ॥ द्वितीयकल्पस्यापिश्रेयस्त्वंदर्शय

इयंसन्निधिमात्रेणनियतिःपरिजृंभते॥ दीपसन्निधिमात्रेणनिरिच्छैवप्रकाशते॥ २७॥ अभ्रसन्निधिमात्रेणकुटजानियथास्वयम्॥ आत्मसन्निधिमात्रेणत्रिजगंतितथास्वयम्॥ २८॥ सर्वेच्छारहितेभानौयथाव्योमनितिष्ठति ॥ जायतेव्यवहारश्चसतिदेवेतथाक्रिया ॥ २९॥ निरिच्छेसंस्थितेरत्नेयथालोकःप्रवर्त्तते ॥ सत्तामात्रेणदेवेतुतथैवायंजगद्गणः॥ ३० ॥ अतःस्वात्मनिकर्तृत्वमकर्तृत्वंचसंस्थितम्॥ निरिच्छत्वादकर्त्तासौकर्त्तासन्निधिमात्रतः॥ ३१ ॥ सर्वेंद्रियाद्यतीतत्वात्कर्त्ताभोक्तानसन्मयः॥ इंद्रियांतर्गतत्वात्तुकर्त्ताभोक्तासएवहि॥ ३२॥ द्वेएवात्मनिविद्येतेकर्तृताकर्तृतानघ ॥ ययैवपश्यसिश्रेयस्तामाश्रित्यस्थिरोभव॥ ३३॥ सर्वस्योहमकर्त्तेतिदृढभावनयानया॥ प्रवाहपतितंकार्यंकुर्वन्नपिनलिप्यते॥३४॥ यातिनीरसतांजंतुरप्रवृत्तेश्चचेतसः ॥ यस्याहंकिंचिदेवेहनकरोमीतिनिश्चयः ॥ ३५॥ भोगौघकामवांस्तत्रकःकरोतुजहातुवा ॥ तस्मान्नित्यमकर्त्ताहमितिभावनयेद्धया॥ ३६॥ परमामृतनाम्नीसासमतैवावशिष्यते॥ अथसर्वंकरोमीतिमहाकर्तृतयातया॥ ३७॥ यदीच्छसिस्थितिंरामतत्तामप्युत्तमांविदुः॥ अहोयन्नकरोमीमंसमग्रंजागतंभ्रमम्॥ ३८॥ रागद्वेषक्रमस्तत्रकुतोन्यस्यात्यसंभवात् ॥ यदन्येनशरीरंतुदग्धमन्येनलालितम्॥ ३९॥ सोस्मदारंभएवातःकःखेदोल्लासयोःक्रमः॥ मत्सुखासुखविस्तारेजगज्जालक्षयोदये ॥ ४० ॥ अहंकर्त्तेतिमत्वांतःकःखेदोल्लासयोःक्रमः॥ खेदोल्लासविलासेषुस्वात्मकर्तृतयैतया ॥ ४१ ॥ स्वयमेवलयंयातेसमतैवावशिष्यते॥ समतासर्वभूतेषुयासौसत्यापरास्थितिः॥ ४२॥ तस्यामवस्थितंचित्तंनभूयोजन्मभाङ्मनाक्॥ अथवासर्वकर्तृत्वमकर्तृत्वंचराघव ॥ ४३ ॥

ति ॥ अथेत्यादिना ॥ ३७ ॥ तत्तांतादृशींस्थितिमपि ॥ प्रथमकल्पेरागद्वेषाद्यप्रसक्तिंदर्शयति ॥ अहोइति ॥ ३८ ॥ क्रमःप्रसंगोममकुतः ॥ यतःस्यात्तस्यमदन्यस्यअत्यंतमसंभवादित्यर्थः ॥ अन्यसंभवादितिपाठेतुअकर्तुरन्यस्यकर्तुरेवान्यस्यरागादेःसंभवादित्यर्थः ॥ द्वितीयकल्पेपितदप्रसक्तिंदर्शयति ॥ यदिति ॥ ३९ ॥ अस्मदारंभोऽस्मत्कृतएवअतःखेदोल्लासयोर्दुःखहर्षयोः ॥ जगज्जालस्यक्षयेउदयेचअहंकर्त्ता ॥ ४० ॥ मत्वास्थितस्येतिशेषः ॥ अस्त्वेवंतथापिकथंसमतालाभस्तत्राह ॥ खेदेति ॥ ४१ ॥ लयंयातेयातेषु ॥ व्यत्ययेनैकवचनंछांदसम् ॥ ४२ ॥ अभ्यासदशादृष्टिंद्वेव्युत्पाद्यपरिनिष्ठितदृष्टिंदर्शयति ॥ अथवेति ॥ ४३ ॥

एतद्दृष्टिद्दशापूर्वदृष्ट्योरल्पतांदर्शयति ॥ अयमिति ॥ अयंएतद्देहेप्रसिद्धोहंसःसर्वदेहात्मकसमष्टिरूपइतिद्वितीयकल्पेसमष्टिपरिच्छेदस्यकर्तृत्वाभिमानस्यचानपगमादपूर्णता ॥ आद्यकल्पेतुइदंदेहेंद्रियाद्यहंनअतइदंकिंचिदपिनकरोमीत्यध्यात्मपरिच्छेदस्यकर्तृत्वादेश्चनिरासेनशोधितत्वंपदार्थमात्रनिष्ठत्वेपितत्पदार्थशोधस्यवाक्यार्थनिष्ठायाश्चालाभा दपूर्णतेतिदृष्टिद्वयमपितुष्टयेनेत्यर्थः ॥ ४४ ॥ यदितेनतुष्टयेतर्हिकिमर्थमुपन्यस्तेइतिचेत्सर्वानर्थमूलदेहाहंभावविमोचनोपायत्वेनोपन्यस्तेइत्याशयेनदेहाहंभावस्यानर्थरूपतां सर्वथात्याज्यतांचदर्शयति ॥ सेत्यादिना ॥ कालसूत्रावीच्यसिपत्रवनानिनरकभेदाः ॥ कार्यकारणयोरायुर्घृतमितिवदभेदारोपात्सामानाधिकरण्यम् ॥ ४५ ॥ ४६ ॥ श्वमांसेनसहितासश्वमांसा ॥ देहाहंमतेरपिश्वमांससदृशकामाद्यशुचिदूषितत्वादितिभावः ॥ विशुद्धात्मदृष्टौस्वाधिष्ठानेपटललेखावदावरणविक्षेपहेतुभूतयेतियावत् ॥ ४७ ॥ ४८ ॥

सर्वंत्यक्त्वामनःपीत्वायोसिसोसिस्थिरोभव ॥ अयंसोहमयंनाहंकरोमीदमिदंतुन ॥ ४४ ॥ इतिभावानुसंधानमयीदृष्टिर्नतुष्टये ॥ साकालसूत्रपदवीसामहावीचिवागुरा ॥ ४५ ॥ सासिपत्रवनश्रेणीयादेहोहमितिस्थितिः ॥ सात्याज्यासर्वयत्नेनसर्वनाशेप्युपस्थिते ॥ ४६ ॥ स्प्रष्टव्यासानभव्येनसश्वमांसेवपुल्कसी ॥ तयासुदूरोज्झितयादृष्टौपटललेखया ॥ ४७ ॥ उदेतिपरमादृष्टिर्ज्योत्स्नेवविगतांबुदा ॥ ययाभ्युदितयारामतीर्यतेभवसागरः ॥ ४८ ॥ कर्तानास्मिनचाहमस्मिसइतिज्ञात्वैवमंतःस्फुटंकर्ताचास्मिसमग्रमस्मितदितिज्ञात्वाथवानिश्चयम् ॥ कोप्येवास्मिनकिंचिदेवमितिवानिर्णीयसर्वोत्तमेतिष्ठत्वंस्वपदेस्थिताःपदविदोयत्रोत्तमाःसाधवः ॥ ४९ ॥ ॥इ०वा० वा०दे० मो० स्थि० कर्तृत्वविचारयोगोपदेशकरणंनामषट्पंचाशःसर्गः ॥ ५६ ॥ ॥ ९ ॥ ॥श्रीरामउवाच ॥ ॥सत्यमेतत्त्वयाब्रह्मन्यदुक्तंसूक्तिसुंदरम् ॥ अकर्तैवहिकर्तात्माभोक्ताभोक्तैवभूतकृत् ॥ १ ॥

इदानींदृष्टित्रयंसंगृह्णतासुस्वाधिकारानुरूपामैच्छिकींस्थितिमुपदिशन्नुपसंहरति ॥ कर्तेति ॥ सःकर्तृताप्रयोजकोदेहादिश्चाहंनास्मि ॥ समयमितिपदंतंत्रेणद्वितीयाप्रथमांतंदेहलीदीपन्यायेनपूर्वोत्तरयोःसंबध्यते ॥ तथाचसमयंसर्वैककर्ताअहमेवास्मि समयंसर्वंसमष्टिभूतंतद्ब्रह्मांडमप्यहमेवास्मीत्यर्थः ॥ एवंप्रसिद्धदृश्यरूपंनकिंचिदस्मिकिंतुकोप्येवलोकप्रसिद्धपरिच्छिन्नजडदुःखस्वभावात्मविलक्षणःपूर्णानंदचिदात्मास्मीत्यर्थः ॥ निर्णीयेत्यनेनपूर्वदृष्ट्योरप्येतत्पर्यवसानमावश्यकमितिध्वनितम् ॥ पदविदोब्रह्मविदः ॥ ४९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थिति०षट्पंचाशःसर्गः ॥ ५६ ॥ ॥ ९ ॥ ॥ रामप्रश्नानवसरोवासनावर्जनक्रमः ॥ तदेकोपायसिद्धानांप्रशंसाचात्रविस्तरात् ॥ १ ॥ वक्ष्यमाणप्रश्नकामोरामःप्रागुक्तार्थानामनुवादप्रशंसाभ्यांस्वस्यतदवबोधंदर्शयति ॥ सत्यमित्यादिना ॥ तुल्यन्यायेनानुक्तमस्याभोक्तृत्वंसर्वभोक्तृत्वंचेत्येतदपिमयावगतमितिसूचयति ॥ भोक्तेति ॥ १ ॥

तिष्ठंतिसर्वभूतान्यस्मिन्निति स्थानम् ॥ यथाभुविवपुश्चतुर्विधभूतग्रामशरीरंतिष्ठतितद्वदित्यध्याहृत्यकथंचिद्योज्यम् ॥ स्वयंचसर्वभूतांतरस्थितः ॥ २ ॥ तथाचसर्वभूतेषुचा त्मानंसर्वभूतानिचात्मनि संपश्यन्ब्रह्मपरमंयातिनान्येनहेतुनेतिश्रुत्युक्तार्थस्यापितुल्ययुक्त्यैवमयावगतत्वाद्ब्रह्मैवअनुभवपदमारूढमित्याह ॥ हृदयंगमतामिति ॥ यथाअंभोद धाराभिर्भूभृत्पर्वतोऽव्यथोनिरस्तग्रीष्मतापआस्तेतथात्वदुक्तिभिरिदानीमहमासेइतिशेषः ॥ ३ ॥ भोक्तृत्वाभोक्तृत्वयोरविरोधेपित्वदुक्तोपपत्तिस्तुल्येतिमयावगतमितिदर्श यति ॥ औदासीन्यादिति ॥ ४ ॥ अयंवक्ष्यमाणप्रकारः ॥ ५ ॥ प्रश्नोपयोगितयापूर्वसर्गोक्तंजगतःसत्वासत्वदृष्टिपक्षंव्यष्ट्यहंतापरित्यागेनसमष्ट्यहंभावपक्षंचानूद्यपृच्छति ॥ इदमिति ॥ इदंजगत्सत्तदिदमसद्वात्वदुक्तदिशा सोयंप्रसिद्धःसमष्टिरेवाहमिदंव्यष्टिदेहमात्रंतुनइत्येतद्वा अयंप्रपंचःसमष्टिदृशाएकोव्यष्टिदृशातुद्वितीयोनानावा इत्याद्यनियत बहुरूपकल्पनामयमेकस्मिन्नियतैकस्वभावेअध्वांतेस्वप्रकाशत्वादेवस्वतःपरिहृतमोहांधकारेअच्छेनिर्मलेआत्मनिभास्करेनीहारइवविरुद्धंकथंसांप्रतंविद्यते ॥ यदिद्भूयाःप्र

सर्वेश्वरःसर्वगश्चचिन्मात्रममलंपदम् ॥ स्थानंभुविवपुर्देवःसर्वभूतांतरास्थितः ॥ २ ॥ हृदयंगमतांप्राप्तमिदानींब्रह्ममेविभो ॥ त्वदुक्ति भिर्यथांभोदधाराभिर्भूभृदव्यथः ॥ ३ ॥ औदासीन्यादनिच्छत्वान्नभुंक्तेनकरोतिच ॥ समग्रालोककारित्वाद्भुंक्तेदेवःकरोतिच ॥ ४ ॥ किं त्वयंभगवन्स्फारःसंशयोमेहृदिस्थितः ॥ तंत्वंछिंधिगिराब्रह्मन्दीधित्येंदुर्यथातमः ॥ ५ ॥ इदंसत्तदिदंवासदयंसोहमिदंनतु ॥ अयमेको द्वितीयोयमित्यादिकलनामयम् ॥ ६ ॥ एकस्मिन्विद्यतेध्वांतेनीहारइवभास्करे ॥ इदंप्रथममेवाच्छेकथमात्मनिसंस्थितम् ॥ ७ ॥ ॥ श्री वसिष्ठउवाच ॥ ॥ सिद्धांतकालएवास्यसंप्रश्नस्योत्तरंस्थिरम् ॥ कथयिष्यामितेरामयेनज्ञास्यसितत्त्वतः ॥ ८ ॥ मोक्षोपायस्यसिद्धांत मसंप्राप्यनराघव ॥ श्रोतुंप्रश्नोत्तराण्येतान्यलंयोग्योभविष्यसि ॥ ९ ॥ कांतागीतगिरांरामतरुणोभाजनंयथा ॥ प्रश्नानामुत्तमोक्तीनां पुण्यकृद्भाजनंतथा ॥ १० ॥ वृथाभवतिबालेषुयथारागमयीकथा ॥ निरर्थकास्त्वबोधेषुतथोदारोदयाकथा ॥ ११ ॥ कस्मिंश्चिदेवसम येकिंचित्पुंसोविराजते ॥ फलमाभातिवृक्षस्यशरद्येवनमाधवे ॥ १२ ॥

थमंमायाशबलब्रह्मोदरेस्थितमिदंसांप्रतमभिव्यक्तंविद्यतइतितत्रापिपृच्छामि ॥ इदंप्रथममेववाकथंस्थितम् ॥ विरोधस्यतदानीमपितुल्यत्वादित्यर्थः ॥ ६ ॥ ७ ॥ रामवाक्यव त्वादेवरामस्यस्वप्रकाशप्रत्यगात्मदर्शनंतस्यसर्वशरीरेष्वेकताज्ञानंजगतोऽनिर्वचनीयताबोधश्चवृत्तोवासनाक्षयाभावात्तुसर्वसंशयमूलाविद्योच्छेदीप्रत्यगात्मब्रह्मैक्यलक्षणाखं डाकारानुभवोनवृत्तइतिनिश्चित्यवसिष्ठस्तदुपायतयावासनोच्छेदोपायान्विवक्षुरस्योत्तरंवक्तुंनायमवसरइत्याह ॥ सिद्धांतइत्यादिना ॥ सिद्धांतेनिर्वाणप्रकरणस्योत्तरार्द्धेपाषा णाख्यायिकादौ ॥ ८ ॥ मोक्षोपायस्योपदेशस्यसिद्धांतंपरिनिष्ठारूपमखंडाकारबोधम् ॥ ९ ॥ सांप्रतमुच्यमानमपिनतेचित्तमधिरोक्ष्यतीत्याशयेनाह ॥ कांतेति ॥ पुण्यकृ त्सर्वकर्मफलपरिनिष्ठात्मज्ञानवान् ॥ १० ॥ उदारउदयोनिःश्रेयसंयस्याःसकाशात्सा ॥ ११ ॥ तथाप्रश्नोप्ययंतदैवराजतेइत्याशयेनाह ॥ कस्मिंश्चिदिति ॥ वृक्षस्यनारंगपू गजंबीरादेः ॥ १२ ॥

उपदेशगिरोवैराग्योपदेशाःवृद्धेज्ञानवृद्धे विवेकिनिनतुरागिणिलगंतीत्यर्थः ॥ १३ ॥ भार्गवोपाख्यानांतिप्रागारब्धमप्यस्योत्तरमनधिकारमालोक्यैवोपेक्षितमित्याह ॥ प्रश्नस्येति ॥ १४ ॥ अखंडार्थबोधेजातेमदुक्तिविनाप्यस्योत्तरंत्वयमेवज्ञास्यसीत्याह ॥ यदीति ॥ स्वयंस्वयमेवजानासिज्ञास्यसि ॥ १५ ॥ तर्हित्वंकिमुपेक्षिप्यसेनेत्याह ॥ मयेति ॥ १६ ॥ मदुपदेशोद्धारप्रदर्शनमात्रंत्वयात्वात्मनैवात्माप्रणिधानेनद्रष्टव्यइत्याशयेनाह ॥ जानातीति ॥ संसारिणमप्यात्मानमात्मैवजानाति ॥ हियस्मादात्मनैवात्माअप्रसादात्तथाकृतःसआत्मैवात्मबोधात्संप्रसन्नःसन्वास्तवंपूर्णमात्मानंप्रतिपद्यतइत्यर्थः ॥ १७॥ कर्त्रकर्त्रात्मविचारणमपिमयातदेतदखंडब्रह्मबोधमुद्दिश्यैवकथितंकथितेपितामेताम खंडात्मतामज्ञातत्वान्नज्ञातवानित्यतस्तुनूनंभवानक्षीणवासनोभवेत् ॥ संभावनायांलिङ् ॥ वासनाक्षयस्त्वनजातइतिसंभावयामीत्यर्थः ॥ १८ ॥ इदानींबंधमोक्षरहस्यंदर्शयन्वासनोच्छेदोपायक्रममाह ॥ बद्धइत्यादिना ॥ १९ ॥ तत्रवासनाक्षयेप्रथमपीठिकावैराग्यदार्ढ्यमित्याह ॥ तामसीरिति ॥ तामसीःतमःप्रधानतिर्यग्योन्यादिगतिप्रदाः ॥

उपदेशगिरोवृद्धेरंजनानिर्मलेपटे॥ लगंत्युदारविज्ञानकथाचाधिगतात्मनि ॥ १३ ॥ प्रश्नस्यास्योत्तरंपूर्वंलेशतःकथितंमया॥ नविस्तरेणतेनैतन्नज्ञातंभवतास्फुटम्॥ १४ ॥ यदित्वमात्मनात्मानमधिगच्छसितंस्वयम् ॥ एतत्प्रश्नोत्तरंसाधुजानास्यत्रनसंशयः ॥ १५ ॥ मयासिद्धांतकालेतुप्राप्तबोधेत्वयिस्थिते॥ वक्तव्योविस्तरेणैवसाधोप्रश्नोत्तरक्रमः॥ १६ ॥ जानात्यात्मानमात्मैवकृतआत्मात्मनैवहि॥ आत्मैवसंप्रसन्नःसन्नात्मानंप्रतिपद्यते॥ १७॥ तदेतत्कथितंरामकर्त्रकर्तृविचारणम्॥ अज्ञातत्वात्तुतामेतामक्षीणवासनोभवेत्॥ १८॥ बद्धोहिवासनाबद्धोमोक्षःस्याद्वासनाक्षयः॥ वासनास्त्वंपरित्यज्यमोक्षार्थित्वमपित्यज ॥ १९ ॥ तामसीर्वासनाःपूर्वंत्यक्त्वाविषयवासिताः॥ मैत्र्यादिभावनानाम्नींगृहाणामलवासनाम् ॥ २० ॥ तामप्यंतःपरित्यज्यताभिर्व्यवहरन्नपि॥ अंतःशांतसमस्तेहोभवचिन्मात्रवासनः॥ २१ ॥ तामप्यथपरित्यज्यमनोबुद्धिसमन्विताम्॥ शेषेस्थिरसमाधानोयेनत्यजसितत्त्यज २२॥

राजसमनुष्यादिजन्मप्रदानामप्युपलक्षणमेतत् ॥ विषयैर्वासिताआहिताः ॥ मैत्रीकरुणामुदितोपेक्षामैत्र्यादयस्तद्भावनानाम्नीम् ॥ तथाचपातंजलसूत्रम् ॥ मैत्रीकरुणामुदितोपेक्षाणांसुखदुःखपुण्यापुण्यफलानांभावनातश्चित्तप्रसादनमिति ॥ २० ॥ अंतश्चिन्मात्रव्यतिरेकेणमैत्र्यादयोपिनसंतीतिदर्शनेनबहिस्ताभिर्मैत्र्यादिभिर्व्यवहरन्नपिचिन्मात्रमेवाहमितिसंप्रज्ञातसमाध्यभ्यासदृढीकृतवासनोभव ॥ २१ ॥ मनोबुद्धिग्रहणंचित्ततद्वृत्तीनामप्युपलक्षणम् ॥ शेषेआत्मत्वादेवत्यक्तुमशक्यत्वादवश्यंपरिशिष्यमाणेप्रत्यक्तत्वेस्थिरंसमाधानंविश्रांतिर्यस्यतथाविधोऽसंप्रज्ञातसमाधौविश्रांतइतियावत् ॥ येनकलनाख्येनद्वैतकल्पनामूलस्तंभभूतेनाहंकारेणप्रागुक्तंसर्वंत्यजसितदपित्यज ॥ सर्वस्यापिहित्यागस्तत्रतत्राहंममेत्यभिमानवर्जनमेव ॥ तच्चाहंकारेपिशुद्धचिन्मात्ररूपानहंभूतपूर्णात्मदर्शनेनमूलाज्ञानोच्छेदात्स्वयमेवभवतीतिनतत्रकारणांतरापेक्षेतिनानवस्थेतिभावः ॥ २२ ॥

प्राणस्पंदनपूर्वकंकलनाकालप्रकाशतिमिरादिकंवासनांवासितारंविषयंचकारात्तद्वाराणींद्रियाणिचसमूलमहंकारमपिचोन्मूल्यव्योमेवसौम्यानिर्मलाप्रशांतविक्षेपाचब्रह्मा त्मैकाकाराधीर्यस्यतथाविधःसन्यश्चिन्मयस्त्वंभवसिसंपद्यसेसएवपरमार्थरूपोभवानस्त्वितिपरेणसहान्वयः ॥ सत्कृतःसर्वपूजितः ॥ २३ ॥ २४ ॥ ईदृशींस्थितिंप्राप्तस्यपू ज्यतामेवप्रशंसाभिर्दर्शयति ॥ हृदयादित्यादिना ॥ गतोव्यपःसर्वविक्षेपहेतुरभिमानोयस्य ॥ २५ ॥ एवमभ्यासपरिपाकेनसप्तमींभूमिकामारूढस्यसिद्धस्यकृतकृत्यतैवनक र्तव्यांतरपरिशेषोस्तीत्याह ॥ समाधिमिति ॥ अस्तानिरस्ताःसर्वाआस्थाःप्रागुक्ताभिमानाध्यासायेनसः ॥ २६ ॥ २७ ॥ कतिपयकालानुष्ठितश्रवणमननध्यानैर्वासनाक्षया त्प्रागेवकृतकृत्यताभ्रमात्परावृत्तिंवारयन्नाह ॥ विचारितमिति ॥ मिथःपरस्परंविद्वद्भिःसहसंवादेनोद्ग्राहितंदृढमुपन्यासक्षमंकृतम् ॥ महतापरिश्रमेणसर्वविद्वत्संमत्याचेदमेवमो

चिन्मयःकलनाकालप्रकाशंतिमिरादिकम् ॥ वासनांवासितारंचप्राणस्पंदनपूर्वकम् ॥ २३ ॥ समूलमपिसंत्यक्त्वाव्योमसौम्यप्रशांत धीः ॥ यस्त्वंभवसिसद्बुद्धेसभवानस्तुसत्कृतः ॥ २४ ॥ हृदयात्संपरित्यज्यसर्वमेवमहामतिः ॥ यस्तिष्ठतिगतव्यग्रःसमुक्तःपरमेश्वरः ॥ २५ ॥ समाधिमथकर्माणिमाकरोतुकरोतुवा ॥ हृदयेनात्तसर्वास्थोमुक्तएवोत्तमाशयः ॥ २६ ॥ नैष्कर्म्येणनतस्यार्थोनतस्यार्थोस्तिक र्मभिः ॥ नसमाधानजप्याभ्यांयस्यनिर्वासनंमनः ॥ २७ ॥ विचारितमलंशास्त्रंचिरमुद्ग्राहितंमिथः ॥ संत्यक्तवासनान्मौनादृतेनास्त्युत्त त्तमंपदम् ॥ २८ ॥ दृष्टंद्रष्टव्यमखिलंभ्रांत्वाभ्रांत्वादिशोदश ॥ जनाःकतिपयाएवयथावस्त्ववलोकिनः ॥ २९ ॥ यद्यदालोक्यतेकिंचित्क श्चिद्यत्तन्नविद्यते ॥ ईप्सितानीप्सितादन्यन्नतत्रयततेजनः ॥ ३० ॥ येकेचनसमारंभायेजनस्यक्रियाक्रमाः ॥ तेसर्वेदेहमात्रार्थमात्मा र्थंनतुकिंचन ॥ ३१ ॥ पातालेब्रह्मलोकेचस्वर्गेचवसुधातले ॥ व्योम्निकतिपयाएवदृश्यंतेदृष्टदृष्टयः ॥ ३२ ॥

क्षशास्त्ररहस्यमितिनिर्णीतमित्यर्थः ॥ मौनाद्बाल्यपांडित्यशब्दवाच्यश्रवणमननपरिपाकजन्यप्रागुक्तनिर्विकल्पासंप्रज्ञातसमाधिपरिपाकांतान्मुनिभावादृतेपरंपदंब्राह्मणाख्यं परिनिष्ठिततत्त्वज्ञानंनास्तीतिनिर्णीतमित्यर्थः ॥ तथाचश्रुतिः ॥ तस्माद्ब्राह्मणःपांडित्यंनिर्विद्यबाल्येनतिष्ठासेद्बाल्यंचपांडित्यंनिर्विद्याथमुनिरमौनंचमौनंचनिर्विद्याथब्राह्मणइ ति एषनित्योमहिमाब्राह्मणस्येतिच ॥ २८ ॥ अतएवतत्त्वज्ञाविरलादुर्लभाश्चेत्याह ॥ दृष्टमिति ॥ २९ ॥ सर्वजनानांबहिर्मुखत्वाद्बहिश्चेप्सितानीप्सितयोरेवदर्शनात्तयोःप्राप्तिप रिहारोपायप्रवणतैवदृष्टानात्मप्रवणतेत्याह ॥ यद्यदिति ॥ यत्किंचिदालोक्यतेतत्तदीप्सितानीप्सितादन्यन्नविद्यतेतदन्ययद्विषयमात्मतत्त्वंतत्रतुकश्चिदपिजनोनयततेकिंत्वी प्सितानीप्सितयोरेवेत्यर्थः ॥ ३० ॥ सर्वानात्मविषयेयत्नोऽनात्मदेहमात्रार्थत्वात्पुनःपुनर्देहारंभानर्थहेतुरेवेत्याशयेनाह ॥ येकेचनेति ॥ समारंभालौकिकगृहप्रासादादिविष याः ॥ क्रियाक्रमावैदिकयज्ञादयः ॥ ३१ ॥ व्योम्निअंतरिक्षलोके ॥ दृष्टादृष्टिश्चिदेकरसंब्रह्मयैस्तेपुरुषाः ॥ ३२ ॥

---

१ अथसमूलंपरिसंत्यज्यसमूलंसंपरित्यज्यसमूलंपरिसंत्यक्त्वाइतिपाठत्रयंपुस्तकांतरेषुदृश्यते ॥ तत्रतृतीयेमूलस्थेचपाठेल्यबभावआर्षः ॥

असदुत्थितौस्वात्माज्ञानादुद्भूतौ ॥ ३२ ॥ ननुसंसारेप्युत्तमराज्यादिपदलाभेविश्रांतिर्दृश्यतेकिमात्मदर्शनेननेत्याह ॥ करोत्विति ॥ इंद्रपदलाभेनदृष्ट्यधिकारेअंभोदंविशतु वरुणपदलाभेनांबुवा योगसिद्धिभिर्वाभूतजयात्सर्वत्रविशतु ॥ ३४ ॥ तर्हिविश्रांत्यर्थिनाकेउपास्यास्तानाह ॥ येइति ॥ ३५ ॥ तदुपासनेनतत्त्वबोधेपिपुनर्भोगभूमिषुरतिःकेनवार्यतेतत्राह ॥ सर्वत्रेति ॥ अपागादग्नेरग्नित्वंत्रीणिरूपाणीत्येवसत्यमितिश्रुत्युक्तदिशासर्वभौतिकानांभूतमात्रतालक्षणमिथ्यात्वबोधेतेषुरत्यनुदयादितिभावः ॥ ३६ ॥ तर्हिभूतानामेवपरिशिष्टानामानंत्यात्तदुत्तरणासंभवइतिचेत्सत्यमिदमज्ञानामेवमेव तत्त्वविदांतुअन्नेनसोम्यशुंगेनापोमूलमन्विच्छेतिश्रुतिदर्शितयुक्त्यासर्वाधिष्ठानब्रह्मदर्शनेनभूतानामप्यनृतत्वनिश्चयात्तदुत्तरणंसुलभमेवेत्याशयेनाह ॥ युक्त्येति ॥ मत्ताणर्वःप्रलयार्णवः ॥ ३७ ॥ किंचापरिच्छिन्नात्मानंददृष्ट्याब्रह्मांडस्याल्पतरत्वदर्शनादपिकदंबगोलकमशकभोग्येष्विवतुच्छेषुधनदारादिषुनदानभोगादिवांछाप्रसक्तिरित्याह ॥ कदंबेति ॥ ३८ ॥ राज्यादिसुखंसमरायनर्थैर्योधद्वंद्वलक्षाणांक्षयावहत्वात्तत्त्वविदादयालुनाधिक्का

इदंहेयमुपादेयमिदमित्यसदुत्थितौ ॥ निश्चयौगलितौयस्यज्ञस्यासावतिदुर्लभः ॥ ३३ ॥ करोतुभुवनेराज्यंविशत्वंभोदमंबुवा ॥ नात्मलाभादृतेजंतुर्विश्रांतिमधिगच्छति ॥ ३४ ॥ येमहामतयःसंतःशूराश्चेंद्रियशत्रुषु ॥ जन्मज्वरविनाशायतउपास्यामहाधियः ॥ ३५ ॥ सर्वत्रपंचभूतानिषष्ठंकिंचिन्नविद्यते ॥ पातालेभूतलेस्वर्गेरतिमेतुकर्धारधीः ॥ ३६ ॥ युक्त्यावैचरतोज्ञस्यसंसारोगोष्पदाकृतिः ॥ दूरसंत्यक्तयुक्तेस्तुमहामत्तार्णवोपमः ॥ ३७ ॥ कदंबगोलकैस्तुल्यंब्रह्मांडंस्फारचेतसः ॥ किंप्रयच्छतिकिंभुंक्तेप्राप्तेस्मिन्सकलेपिसः ॥ ३८ ॥ एतदर्थमबुद्धीनांयन्महासमरक्रियाः ॥ तन्मन्येरामधिक्कार्यंद्वंद्वलक्षक्षयावहम् ॥ ३९ ॥ कल्पमात्रेणकालेनसुमहापेलवोदरे ॥ तस्मिन्नपिहियोनाशःसर्वाधिरमहाधियाम् ॥ ४० ॥ आत्मनोज्ञस्यसर्गादिर्यन्मनागपिनोद्गतम् ॥ तस्मिञ्जगत्त्रयेप्राप्तेकिंचिदात्मावलीभवेत् ॥ ४१ ॥ इतःशैलशतैर्व्याप्तमतथेतोजलराशिभिः ॥ कियानस्यभुवोदेहोयेनोदारंप्रपूरयेत् ॥ ४२ ॥ नतदस्तिजगत्यस्मिन्सपातालसुरालये ॥ यन्नामात्मवतोज्ञस्यकिंचित्कार्यतरंभवेत् ॥ ४३ ॥

र्यमेवनसत्कार्यमित्याह ॥ एतदर्थमिति ॥ यच्छब्दार्थेएतच्छब्दः ॥ अबुद्धीनांमूढानाम् ॥ तद्राज्यसुखमितिशेषः ॥ ३९ ॥ ननुमहाकल्पावसानचिरकालभोग्येब्राह्मेपदेतस्यरतिःस्यान्नेत्याह ॥ कल्पेति ॥ द्विपरार्द्धावधिनामहाकल्पांतमात्रेणकालेनापिशीर्यमाणत्वात्सुमहापेलवोदरेतस्मिन्नपिपदेसर्वप्राणिनांप्रलयनिमित्तत्वादाधिर्मानसव्यथानिमित्तभूतोनाशःसोऽमहाधियांमूढानामेवस्पृहणीयोनतत्त्वविदामित्यर्थः ॥ ४० ॥ किंचज्ञस्यतत्त्वविदोदृशायज्जगत्त्रयंसर्गादेरुपायान्मनागीषदपिनोद्गतंनोत्पन्नमेव ॥ ननिरोधोनचोत्पत्तिरित्यादिश्रुतेः ॥ तस्मिंस्तुच्छेवंध्यापुत्रप्रायेजगत्त्रयेप्राप्तेचिदात्माकिंबलीबलवान्भवेत ॥ येनतत्ररागःस्यादित्यर्थः ॥ ४१ ॥ असारबहुलत्वादुपयुक्तांशाल्पत्वादपिसार्वभौमादिपदस्यनस्पृहणीयतेत्याशयेनाह ॥ इतइति ॥ उदारंसर्वत्यागरिक्तविपुलाशयम् ॥ ४२ ॥ कार्यतरंअवश्यकर्त्तव्यम् ॥ सर्वकामावाप्त्याकृतकृत्यत्वादित्यर्थः ॥ ४३ ॥

यथामृगतृष्णासवितुःप्रकाशमपेक्ष्यसिद्ध्यंतीसवितारमपेक्षतेनतुसवितामृगतृष्णानिमित्तभूतोपितामपेक्षतेतथातत्त्वविदश्चित्प्रकाशमपेक्ष्यप्रसिद्ध्यज्जगदेवप्रत्युततत्त्वविदमपेक्षतां तत्त्ववित्तुपूर्णानंदारामःकटाक्षेणापिजगन्नपश्यतिदूरेतस्यतदपेक्षेत्याशयेनाह ॥ एकतामित्यादिना ॥अचेतसोनिर्मनस्कस्यात्मवतस्त्रिलोकीलक्षणाविपुलामृगतृष्णानदीतटीशां तसर्वसंसारसुभगासतीशून्यकोटराआकाशोदरनिभैवनमूर्त्तरूपास्तीत्यर्थः ॥ असतामपिबाधितानुवृत्त्यायावत्प्रारब्धक्षयंप्रतिभासनिर्वाहायविशिनष्टि ॥ शरीरजालनीहारेति ॥ ४४ ॥ ४५ ॥ जगतस्तत्त्वविदात्मप्रकाशापेक्षांप्रपंचयति ॥ स्फारेत्यादिना ॥ जलश्रियोनदीसमुद्रादयः ॥ ४६ ॥ शास्त्रदृष्टयःश्रौतस्मार्त्तधर्मब्रह्मादितत्त्वप्रतिभासाः ॥ यद्य पिलौकिकचाक्षुषादिदृष्टयोपिप्रकाशात्मकत्वाद्ब्रह्मांभोदवृष्टिकल्पाएवतथापिमुक्षेत्रेवृष्टिवच्छास्त्रदृष्टीनामेवपुरुषार्थोपयोगात्ताएवोपात्ताः ॥ ४७॥ अधिष्ठानत्वेनतदपेक्षामु

एकतामनुयातस्यव्योमवद्विततस्यच॥ स्वस्थस्यात्मवतोज्ञस्यस्थितस्यात्मन्यचेतसः ॥ ४४ ॥ शरीरजालनीहारधूसराशून्यकोटरा॥ शांतसंसारसुभगात्रिलोकीविपुलातटी॥४५॥ स्फारब्रह्मामलांभोधिफेनाःसर्वेकुलाचलाः॥ चिदादित्यमहाभासमृगतृष्णाजलश्रियः ॥ ४६ ॥ आत्मतत्त्वमहांभोधिर्वीचयःसर्गराजयः॥ अनुत्तमपदांभोदवृष्टयःशास्त्रदृष्टयः॥ ४७॥ चंद्राग्नितपनालोकाघटकाष्ठादिसन्नि भाः॥ प्रकाशनीयाश्चिद्रूपत्विषोमलकणास्तथा॥ ४८ ॥ विहरंतिस्वमात्मानःसंसारवनचारिणः ॥ कामभोगोलपग्रासमृगानरसुरासु राः॥४९॥ अस्थिखंडार्गलामूर्द्धपिधानाःस्नायुशृंखलाः॥ जगद्देहाजरज्जीवरक्तमांससमुद्गकाः॥५०॥

काजडानांप्रकाशार्थमपितदपेक्षामाह ॥ चंद्रेति ॥ यदानिर्मलाआदित्यादयोपितत्प्रकाशापेक्षास्तदाअत्यंतमलिनत्वान्मलकणप्रायाःपार्थिवादिधातवस्तमपेक्षंतइतिकिंवा च्यमित्याशयेनमलकणास्तथेत्युक्तम् ॥ ४८ ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेःसर्वप्राणिनांजीवनहेतुविषयानंदार्थमपितदपेक्षामाह ॥ विहरंतीति ॥ स्वोदेहस्तदात्मनामीयतेपरिच्छिद्यतेअनुभूयतेहिस्यतेवायःसस्वमस्तथाविधआत्मायेषांकामभोगलक्षणानांउलपानांतृणराजीनांग्रासेमृगाइवमृगाःभवंतीतिशेषः॥ ४९ ॥मृ गाणांवनेविहारेस्वातंत्र्यमस्ति नरसुरासुरजीवानांतुदेहपंजरेबद्धत्वादत्यंतपारतंत्र्यदुःखमेवेत्याशयेनाह ॥ अस्थीति ॥ जगतांसर्वेषांनरसुरासुरादिदेहाजरतामनादिसंसारकांता रेजीर्णानांजीवानांपर्यायेणबंधनार्थाः ॥ रक्तमांसनिर्मिताःसमुद्गकाःसंपुटकाःपंजराणीतियावत् ॥ कृताधात्रेतिशेषः ॥ पंजरसामग्रीमेवाह ॥ अस्थीति ॥ अस्थिखंडाएवअ र्गलाविष्कंभदारूणियेषाम् ॥ मूर्द्धैवपिधानमूर्ध्वफलकंयेषाम् ॥ स्नायवःशिराःशृंखलालोहबंधनानियेषाम् ॥ ५० ॥

एवंजीवाविष्टाश्चर्मपुत्रिकाएवसंसारवनमालामृगास्तएवमुग्धादेहविवेकशून्याबालानांस्वस्वबुद्धीनांभोगपल्लवपाशैर्विनोदायतत्तद्भोगभूमिलक्षणपुरसंचारसंस्थितौधात्रायोजिताइत्यर्थः ॥ ५१ ॥ तत्त्वविदोपिदेहदर्शनात्सोपिकितथानेत्याह ॥ नैवंविधेति ॥ उद्वारमनाःसर्वत्यागीप्रागुक्तमहामतिस्तुएवंविधोमनागपिन ॥ यलोपस्यासिद्धत्वात्संधिरार्षः ॥ दारेषुदारोपलक्षितभोगेषुमनोयस्यएवंविधोनेतिवा ॥ ५२ ॥ चंद्रार्कमंडलप्रदेशःपातालमिवपरिस्तनप्रकाशोपिनस्थितःकिंवाच्यंप्रकाशमानोनस्थितइति ॥ अथवा चंद्रार्कसंचारदेशोविपुलआकाशोपिपातालंभून्छिद्रमिवाल्पभावेनापिनस्थितइति ॥ तादृशमहापदेस्थितस्याकाशोदरैकदेशपरिच्छिन्नेषुपदेषुकातृष्णेत्यर्थः ॥ ५३ ॥ यस्य तत्त्वविदआलोकाच्चित्प्रकाशाल्लोकपालाब्रह्मादयःसमालोकाःसर्वजगत्साधारणप्रकाशाःसंतश्चक्षुरादिद्वाराबहिरंतर्बुद्ध्याचसुवेदिनःसम्यग्व्यवहारोचितबोधशालिनःसंतःक्षपार्णवेअज्ञानसमुद्रेमग्नाःपश्यन्मूढाअशरीरंस्वात्मानंविविच्यपश्यंतोपिमूढाःसंतःअयमज्ञजनइवशरीरात्मभावेनशरीरंपांतिरक्षंति ॥ दृढाभ्यस्तभोगवासनासहकृताधिकारिक

**वनमालामृगामुग्धाःपुरसंचारितास्थितौ॥ बालबुद्धिविनोदाययोजिताश्चर्मपुत्रिकाः॥५१॥ नैवंविधोदारमनामनागपिमहामतिः॥ नज्ञश्चलतिभोगौघैर्मंदवातैरिवाचलः॥५२॥तस्मिन्किलपदेरामज्ञस्तिष्ठतिमहोत्तमे॥यस्मिंश्चंद्रार्कदेशोपिनपातालमिवस्थितः॥५३॥ यस्यालोकाल्लोकपालाःसमालोकाःसुवेदिनः॥ शरीरंपांत्ययमिवपश्यन्मूढाःक्षपार्णवे॥ ५४॥ नकेचनजगद्भावास्तत्त्वज्ञंरंजयंत्यमी॥ अप्यभ्यासगताःस्फारहृदयंखमिवांबुदाः ॥ ५५ ॥ नकेचनजगद्भावास्तत्त्वज्ञंरंजयंत्यमी ॥ मर्कटाइवनृत्यंतोगौरीलास्यार्थिनंहरम् ॥ ५६ ॥ नकेचनजगद्भावास्तत्त्वज्ञंरंजयंत्यमी॥ प्राक्तनप्रतिबिंबश्रीरत्नकुंभगतंयथा॥ ५७॥ वज्रार्पितोपममसन्मयमंबुभंगतुंगंतरंगकृतबिंबमिवावलोक्य॥ लोलांतदीहितसुखेपुरतिंनयातितज्ज्ञःकुशैवललवेष्विवराजहंसः॥५८॥ ॥इ॰वा॰वा॰दे॰मो॰स्थि॰पूर्णाशयस्वरूपवर्णनंनामसप्तपंचाशःसर्गः॥५७॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥**

प्रारब्धप्राबल्यादित्यर्थः ॥ ५४ ॥ तत्त्वज्ञंतुवैराग्यदार्ढ्येनभोगवासनाक्षयात्स्फारहृदयंनिर्वासनशुद्धांतःकरणंकेचनलोकपालभोग्याअप्यमीत्रैलोक्यराज्यादिजगद्भावाअभ्यासगताःपुनःपुनःपरिशील्यमानाअपिनरंजयंतीत्यर्थः ॥ ५५ ॥ ५६ ॥ प्राक्तनीकुंभाद्बहिःस्थितिदशायांरत्नांतर्दृश्यमानास्तंभकुड्यादिप्रतिबिंबश्रीः ॥ ५७ ॥ उक्तमेवार्थंसंक्षिप्योपसंहरति ॥ वज्रेति ॥ तज्ज्ञस्तत्त्ववित् ॥ ब्रह्मलोकांतंसर्वंजगद्विभवमज्ञदृशाअतिदुर्भेदत्वाद्वज्रार्पितोपमम् ॥ विवेकदृशांबुभंगेषुजलविलासेषुतुंगमुच्छ्रितंतरंगेणस्वात्मेकृतंचंद्रादिप्रतिबिंबमिवानिर्वचनीयमस्थिरम् ॥ तत्त्वदृशात्वसन्मयंतुच्छमवलोक्यअज्ञइवनदीहितसुखेषुलोलांलौल्यवतींरतिंनयाति ॥ यथामद्रभोग्येषुकुत्सितशैवलखंडेषुराजहंसोरतिंनबध्नातितद्वदित्यर्थः ॥ ५८ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेस्थिति॰सप्तपंचाशत्तमःसर्गः ॥ ५७ ॥ ॥ ७ ॥ ॥ ७ ॥

१ टीकानुरोधेनात्र पुरसंचारसंस्थितावितिपाठोपेक्षितइतिभाति

आरूढस्यपदंपूर्णसार्वात्म्यस्थितिबोधिनी ॥ रामायात्रवसिष्ठेनकचगाथोपदिश्यते ॥ १ ॥ अत्रैवप्रागुक्तेवस्तुनिविषयेपूर्वंजाःपूर्वकालवृत्ताबार्हस्पत्येनबृहस्पतिपुत्रेण ॥ अनंतरापत्येपत्युत्तरपदलक्षणोण्यः ॥ १ ॥ अभ्यासवशात्श्रुतायाब्रह्मविद्यायामनननिदिध्यासनपरिपाकादितियावत् ॥ २ ॥ अमान्येअनादरार्हे ॥ ३ ॥ तेनदृश्यारमणेनसदात्मत्वात्कृतेविनासदेकात्म्यातिरिक्तंपदंवस्तुअपश्यन्एकमात्रपरिशेषान्निर्विण्णइवेत्युत्प्रेक्षा ॥ हर्षगद्गदयागिराइदंवक्ष्यमाणंसमुवाच ॥ ४ ॥ यदुवाचतदाह ॥ किंकरोमीत्यादिना ॥ ५ ॥ ननुजीवात्मनोयानिसुखसाधनानितानिकुरु यत्रतानिप्राप्यंतेतत्रगच्छ सुखंतत्साधनानिचगृहाण दुःखसाधनानिदुःखंचत्यजेतिचेत्तत्राह ॥ दुःखमिति ॥ दुःखंतदु

॥ श्रीवसिष्ठउवाच ॥ ॥ अत्रैववस्तुन्युदिताःशृणुराघवपूर्वजाः ॥ कचेनगाथायागीताबार्हस्पत्येनपावनाः ॥ १ ॥ कस्मिंश्चिन्मेरुगहनेतिष्ठन्सुरगुरोःसुतः ॥ कदाचिदभ्यासवशाद्विश्रांतिंप्रापचात्मनि ॥ २ ॥ सम्यग्ज्ञानामृतापूर्णामतिर्नारमतास्यसा ॥ पंचभूतमयेमान्येदृश्येस्मिन्पेलवात्मनि ॥ ३ ॥ सतेननिर्विण्णइवसदात्मत्वादृतेपदम् ॥ अपश्यन्समुवाचेदमेकोगद्गदयागिरा ॥ ४ ॥ किंकरोमिक्वगच्छामिकिंगृह्णामित्यजामिकिम् ॥ आत्मनापूरितंविश्वंमहाकल्पांबुनायथा ॥ ५ ॥ दुःखमात्मासुखंचैवखमाशासुमहत्तया ॥ सर्वमात्ममयंज्ञातंनष्टकष्टोहमात्मना ॥ ६ ॥ सबाह्याभ्यंतरेदेहेअधश्चोर्ध्वंचदिक्षुच ॥ इतआत्माततश्चात्मानास्त्यनात्ममयंक्वचित् ॥ ७ ॥ सर्वत्रैवस्थितोह्यात्मासर्वमात्ममयंस्थितम् ॥ सर्वमेवेदमात्मैवमात्मन्येवभवाम्यहम् ॥ ८ ॥ यन्नामनामतत्किंचित्सर्वमेवाहमांतरः ॥ आपूरितापारनभाःसर्वत्रसन्मयःस्थितः ॥ ९ ॥ पूर्णस्तिष्ठामिमोदात्मासुखमेकार्णवोपमः ॥ इत्येवंभावयंस्तत्रकनकाचलकुंजके ॥ १० ॥

पत्त्रोक्तात्माजीवस्तदभिलषणीयंसुखंचेत्यादिसर्वंजगन्मूलान्वेषणेखमाकाशमात्रंसदाशाभ्योदिग्भ्योमनोरथेभ्यश्चसुमहत्तयाआत्ममयम ॥ स्वार्थेमयट् ॥ आत्मैवेतिज्ञातमतस्तेनैवानंदैकरसेनात्मनानष्टसर्वदुःखोस्मीतिनहानोपादानप्रयोजनमस्तीत्यर्थः ॥ ६ ॥ बाह्यैराधिभौतिकादिभिराभ्यंतरैराध्यात्मिकैश्चसहितेउभयविभागनिमित्तभूतेदेहेअधःऊर्ध्वंप्राच्यादिदिक्षुतत्त्वतोदृश्यमानेष्वात्मैवसर्वमित्यर्थः ॥ तथाचश्रुतिः ॥ आत्मैवाधस्तादात्मोपरिष्टादात्मापश्चादात्मापुरस्तादात्मादक्षिणतआत्मोत्तरतआत्मैवेदंसर्वमिति ॥ ७ ॥ सर्वत्रैवाधिष्ठानभावेनस्थितोविवर्त्तात्मककल्पितविकारदर्शनेसर्वमात्ममयंतत्त्वदर्शनेतुसर्वमात्मैव ॥ एवमनयादृशाअहंपरमार्थात्मनिभवामिवर्त्तेसर्वदैवेत्यर्थः ॥ ८ ॥ यन्नामचेतनंप्रसिद्धंयत्किंचिदचेतनंचनामप्रसिद्धंतत्सर्वमित्यर्थः ॥ सन्मयइतिसदंशस्यसर्वानुगतत्वेनसर्वाधिष्ठानत्वादित्यर्थः ॥ ९ ॥ मोदात्मेत्यस्यविवरणंसुखमित्यादि ॥ १० ॥

इदंतेनकेनप्रमाणेनदृष्टंतदाह ॥ उच्चारयन्निति ॥ तथाचश्रुतिः ॥ प्रणवोधनुःशरोह्यात्माब्रह्मतल्लक्ष्यमुच्यते ॥ अप्रमत्तेनवेद्धव्यंशरवत्तन्मयोभवेदिति ॥ ॐकारेऽकारादिमात्राणांविराडादिवाचकत्वात्तुरीयंकेनांशेनदृष्टंतमाह ॥ ॐकारस्येति ॥ पूर्वपूर्वमात्राविराडादिस्वार्थैःसहोत्तरोत्तरत्रप्रविलाप्यवालःकेशइवोंकारस्यशिरसिलक्ष्यमाणंसूक्ष्मंकोमलंचपाश्चात्यमर्द्धमात्राख्यंकलामात्रंसर्वप्रविलयावधिभूततुरीयलक्षकंतुरीयात्मनैवभावयंस्तद्भावापन्नःसन्नांतरकारणस्थोनबाह्यकार्यस्थश्चवक्ष्यमाणरीत्यास्थितइत्यर्थः ॥ ११ ॥ तामेवस्थितिंदर्शयन्नुपसंहरति ॥ व्यपगतेति ॥ वातवृत्तिःप्राणस्पंदः ॥ साचकलनानिरोधेस्वतएवनिलीनेतिभावः ॥ गताघनामेघायस्मात्तथाविधोयःशरदाशयःशरदाकाशस्तदुपमानःस्थितइत्यर्थः ॥ १२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थितिप्रकरणेअष्टपंचाशःसर्गः ॥ ५८ ॥ ॥ ७ ॥ ॥ विषयासारताब्राह्मात्संकल्पाद्विश्वकल्पना॥धातुर्निर्वेदविश्रांतिःशास्त्रसर्गश्चकीर्त्यते ॥१ ॥ प्रासंगिकींकचगाथांसमाप्यप्रकृतंभोगजातस्यतत्त्वविद्वांछाययोग्यत्वोपपादनमेवानुवर्त्तमानोवसिष्ठोवैराग्योपदेशायविषयासारतांप्रपंचयति ॥

उच्चारयन्नोंकारंचघंटास्वनमिवक्रमात्॥ॐकारस्यकलामात्रंपाश्चात्यंवालकोमलम्॥नांतरस्थोनवाह्यस्थोभावयन्परमेत्त्हृदि॥११॥ व्यपगतकलनाकलंकशुद्धोत्हृदयनिरंतरलीनवातवृत्तिः ॥ गतघनशरदाशयोपमानःस्थितइतिरामकचःसगायमानः ॥ १२ ॥ ॥ इत्यार्षेवा०वा०दे०मो०स्थि०कचगाथानामाष्टपंचाशःसर्गः॥५८॥ ॥ ७॥ ॥श्रीवसिष्ठउवाच॥ ॥अन्नपानांगनासंगाहृतेनास्तीहकिंचन॥शुभमस्त्वितिसंवादिमहान्किमिववांछतु॥१॥ तिर्यंञ्चःपशवोमूढायेनतुष्यंत्यसाधवः॥भोगैःकृपणसर्वस्वैरादिमध्यांतपेलवैः॥ २ ॥ विश्वासंयांतियेलोकेतैरलंनरगर्दभैः॥इतःकेशाइतोरक्तमितीयंप्रमदातनुः॥ ३ ॥ एतयातोपमायांतिसारमेयानमानवाः॥मृन्महीदारुतरवोदेहामांसमयाअपि॥ ४ ॥ अधोभूरंबरंपृष्ठेकिमपूर्वंसुखायतु ॥ मात्रास्पर्शानुसारिण्योविवेकपदभंगुराः ॥ ५॥ मोहायैवापरामृष्टाःसकलालोकसंविदः॥ सर्वस्याएवपर्यंतेसुखाशायाश्चसंस्थितम् ॥ ६ ॥

पदेशायविषयासारतांप्रपंचयति ॥ अन्नपानेत्यादिना ॥ इहसंसारेअन्नपानांगनालक्षणैर्विषयैर्जिह्वोपस्थादींद्रियाणांयःसंगस्तस्मादृतेशुभंपुरुपार्थरूपमन्यन्नास्तिइतिश्रुतिस्मृत्याप्तोपदेशानुभवसंवादियथास्यात्तथानिश्चित्यमहान्परमपदारूढएतेपुभोगेपुकिमिववांछतु ॥ नकिंचित्तद्वांछायोग्यमत्रास्तीत्यर्थः ॥ १ ॥ ननुमोक्षइवकामोपिपुरुपार्थएवेतिसर्वैर्वांछनीयएवेतियेप्राहुस्तान्प्रत्याह ॥ तिर्यञ्चइत्यादि ॥ २ ॥ ३ ॥ सरमादेवशुनीतत्संततिजाःसारमेयाःशुनकाः सर्वामहीमृदेव सर्वेपितरवोदारुकाष्ठमेव सर्वेपिदेहामांसमयाएव ॥ ४ ॥ पृष्ठेऊर्ध्वभागेअंबरमाकाशमेव अपूर्वंसारभूतंकिमस्तियत्सुखायेत्यर्थः॥मिन्वंतिविषयानितिमात्राइंद्रियाणितत्स्पर्शानुसारिण्यः ॥ विवेकस्यपदेस्थानेतत्त्वेभंगुराबाध्यमानाः ॥ ५ ॥ अपरामृष्टाअविचाररमणीयाः ॥ लोकसंविदोजनव्यवहाराः ॥ सर्वस्याःसुखाशायाविषयलाभेनालाभेनवापर्यंते ॥ चस्त्वर्थे ॥ मालिन्यंपापविषयादिकालुष्यंवियोगविषादादिप्रयुक्तंदुःखमपिएवंसांप्रतिकसुखांतवदेवसंस्थितमितिपरेणसहान्वयः ॥ ६ ॥

इंद्रियशक्तिक्षयाद्विषयसंपत्क्षयाद्वा भोगक्षयोवश्यमापततीत्याशयेनाह ॥ आगमेति ॥ ७ ॥ संपदो विषयसंपदो नित्यमुपभुज्यमाना नागेंद्रमर्दितलताप्राया: सत्यो न धारयंति क्षीयंतइत्यर्थः ॥ नकेवलमनित्यत्वमेव कांतादिभोग्यस्याशुचिनरकरूपत्वमपीत्याह ॥ पुत्रिकेति ॥ अस्थिचये स्वदेहनाम्ना पुरुषेण रक्तमांसस्य पुत्रिका इयं कांता इति बुद्ध्या सादरं श्लिष्यते ॥ मोहकस्य कामस्यायं क्रमइत्यर्थः ॥ ८ ॥ अतएवाज्ञस्यैव भोगस्तुष्टये नज्ञस्येत्याह ॥ सर्वमिति ॥ ९ ॥ अस्थिरमेवास्थैर्यम् ॥ अभुक्तेअभोगेप्येषा भोगतृष्णा विषा याविषवन्मूर्छां प्रयच्छति किंपुनर्भुक्ते सतीत्यर्थः ॥ १० ॥ भोगवासनयैवात्मनः अनात्मदेहादिमयात्मभावनया यदा चित्तं स्थितिमुपागतं तदेत्यर्थः ॥ ११ ॥ ननु अस्मच्चित्तस्थित्यनुसारि देहादि जगज्जातमिति कथमुच्यते विरिंचिसंकल्पजातस्य तन्मनोनुसारित्वस्यैवौचित्यादित्याशंक्याह ॥ वासनेति ॥ ब्रह्मणो विरिंचेर्मनसा अस्मद्वासनाकर्मादिवशतस्तदनु

मालिन्यंदुःखमप्येवंज्वालायाइवकज्जलम् ॥ आगमापायिनोऽनित्यामनःषष्ठेंद्रियक्रियाः ॥ ७ ॥ लतानागेंद्रमर्दिताधारयंतिनसंपदः ॥ पुत्रिकारक्तमांसस्यकांतेयमितिसादरम् ॥ ८ ॥ स्वदेहनाम्नास्थिचयेश्लिष्यतेमोहकक्रमः ॥ सर्वंसत्यमिदंरामस्थिरमज्ञस्यतुष्टये ॥ ९ ॥ ज्ञस्यास्थैर्यमसत्यंचजगद्रामनतुष्टये ॥ अभुक्तेपिविषायैषाविषमूर्छांप्रयच्छति ॥ १० ॥ तांपरित्यज्यभोगास्थांस्वात्मैकत्वगतिंभज ॥ अनात्ममयभावेनचित्तंस्थितिमुपागतम् ॥ ११ ॥ यदातदैतदाजातंजगज्जालमसन्मयम् ॥ वासनावशतोब्रह्ममनसाकल्पितंवपुः ॥ १२ ॥ तेजसाश्रितकुड्येनहेमाभत्वमिवात्मनः ॥ ॥ श्रीरामउवाच ॥ ॥ वैरिंचपद्मासाद्यमनोब्रह्मन्महामते ॥ १३ ॥ इदंजगत्सुघनतांकथमानयतिक्रमात् ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ गर्भतल्पात्समुत्थायपद्मजःप्रथमःशिशुः ॥ १४ ॥ ब्रह्मेतिशब्दमकरोद्ब्रह्मातेनसउच्यते ॥ संकल्पजालरूपस्यमनसाकल्पिताकृतेः ॥ अकरोत्तस्यसंकल्पलक्ष्मीःपदमथोत्तरं ॥ १५ ॥

सारेणैव संकल्पाज्जगद्वपुः कल्पितमित्यर्थः ॥ १२ ॥ अन्यस्यान्यानुसारिरूपकल्पने दृष्टांतमाह ॥ तेजसेति ॥ यथा आश्रितहेमरजतेंद्रनीलादिकुड्येन तेजसा सूर्यादि आलोकेन तत्तदनुसारिस्वरूपं कल्पितं तद्वदित्यर्थः ॥ प्रसंगाद्रामो विरिंचिमनसो जगत्कल्पनाक्रमं पृच्छति ॥ वैरिंचेति ॥ पूर्वोपासकस्य मनः प्राक्तनं व्यष्टयभिमानं समष्ट्यात्मताभावनाप्रचयजन्यसंस्कारपरिपाकेन निरस्य समष्ट्यात्मनाभिनिष्पत्तिलक्षणं वैरिंचपदमासाद्य कार्यब्रह्मभूतं सत् इदं जगत्कथं क्रमात्सुघनतां चतुर्विधभूतग्रामनिबिडताम् ॥ अवांतरसर्गविषयोऽयं प्रश्नः ॥ आद्यसर्गक्रमस्य प्राग्बहुशउक्तत्वात् ॥ १३ ॥ गर्भः पद्मकोशस्तल्लक्षणात्तल्पात् ॥ संकल्पजालं सर्वसंकल्पात्मकमनः समष्टिस्तद्रूपस्य मनसा स्वेनैव कल्पितचतुर्मुखाकृतेः ॥ अथ उत्थानलक्षणजागरणकल्पनानंतरं उत्तरे सर्गे पदं व्यवसायमकरोत् ॥ १५ ॥

---

१ विषशब्दादर्श आद्यचि विषवतीत्यर्थः

सर्वव्यवहाराणामादित्याद्यालोकाधीनत्वात्प्रथममादित्यसर्गं विवक्षुस्तदुपादानसर्वनभोव्यापितेजःसर्गमुक्त्वातदेवतेजोवर्णयति ॥ ततइत्यादिना ॥ शरत्कालीनैर्हिमपांडुरैर्लताचक्रैरिवचक्रीकृतं दिगंतरालंयेन ॥ १६ ॥ पक्षप्रतिमनिप्रसारितपक्षिपक्षसदृशेपार्श्वद्वयेस्यूतकर्मणातंतुसंतानकरणेनअतिगुणंबहुतंतुकमिवअक्षरंक्षयधर्मवर्जितंशून्यात्मकमाकाशंयेन ॥ प्रसृतैस्तेजःपुंजैर्दिगंतगतचक्रवालगिरिशिखरचित्रधातुसंभेदात्पिंजरादिक्पर्यंतायेन ॥ हेमेवभास्वरमनावृतापरिच्छिन्नप्रकाशैकरसत्वाद्ब्रह्मज्ञाननिभंचांबरमाकाशंयेन ॥ १७ ॥ विकासायदलकोटरेषुप्रविष्टैःकिरणैर्जालेषुवातायनेषुकल्पितैर्हेमलताजालैरिवभास्वरैःकेसरैर्जटालंनिजमंदिरंवैरिंचपद्मंयेन ॥ एकार्णवतरंगेषुप्रतिफलनेनकचद्भिर्दीप्यमानैःप्रसरदुद्यानवनाकारैश्चकुंडलैःकिरणावर्त्तैर्मंडितम् ॥ १८ ॥ तस्मिंस्तेजसिहिरण्यगर्भस्यस्वसदृशमूर्त्यंतरकल्पनेनप्रवेशमाह ॥ तमिति ॥ ततस्तेजोमंडलसर्गानंतरंचतुर्मुखशरीराकारेणस्थितंप्रागुक्तंमनस्तस्मिंस्तेजसिभास्वरंतेजोमयंतंपुराणादिप्रसिद्धमात्माकारसमाकारंसमकल्पयत ॥ १९ ॥ सदेवस्ततस्तस्मात्तेजसःपिंडीभूताद्दिवाकरःसन्नद्या

ततःसंकल्पयामासपूर्वंतेजोमहाप्रभम् ॥ शरदंतेलताचक्रचक्रीकृतदिगंतरम् ॥ १६ ॥ पक्षप्रतिमनिस्यूतकर्मणातिगुणाक्षरम् ॥ पुंजपिंजरपर्यंतंहेमज्ञाननिभांवरम् ॥ १७ ॥ जालहेमलताजालजटालनिजमंदिरम् ॥ कचत्प्रसरदुद्यानाकारकुंडलमंडितम् ॥ १८ ॥ तंशरीरंमनस्तस्मिंस्ततस्तेजसिभास्वरे ॥ आत्माकारसमाकारंभास्वरंसमकल्पयत् ॥ १९ ॥ सततस्तेजसस्तस्मादभ्युदेतिदिवाकरः ॥ जालमंडलमध्यस्थोज्वलत्कनककुंडलः ॥ २० ॥ ज्वलज्जटाभारधरोपांतविस्फारपावकः ॥ ज्वालाविशालावयवःपूरिताकाशमंडलः ॥ २१ ॥ अथ ब्रह्मामहाबुद्धिरन्यास्तास्तेजसःकलाः ॥ अपाल्ययदसद्ब्रह्मातरंगानिवसागरः ॥ २२ ॥ तेपिसंकल्पसंप्राप्तसिद्धयःसमशक्तयः ॥ यथासंकल्पितंवस्तुक्षणाद्दृष्ट्वापुरग्रतः ॥ २३ ॥ संकल्पयंतोयान्यांस्तेनानाभूतगणान्बहून् ॥ भूतेष्वन्यांस्तुतेष्वन्यांस्तेष्वन्यान्विविधानपि ॥ २४ ॥

पिप्रत्यक्षमभ्युदेति ॥ प्रभाजालात्मकस्यमंडलस्यमध्यस्थः ॥ ज्वलतीकनककुंडलेयस्य ॥ अथवादिग्जाललक्षणस्यवधूमंडलस्यमध्यस्थःसाधारणः ॥ ज्वलन्प्रकाशमानःकनककुंडलभूतइत्यर्थः ॥ २० ॥ ज्वलंतोजटाभारधराज्वालावलीधारिणउपांतेषुविस्फाराःपावकायस्य ॥ २१ ॥ तदनंतरंमरीच्यादिप्रजापतिसर्गमाह ॥ अथेति ॥ ब्रह्माविश्ववृंहणकर्त्तामहाबुद्धिःसर्वज्ञःसमष्टिबुद्ध्यात्मावाब्रह्मासचतुर्मुखःअन्याआदित्यनिर्माणावशिष्टास्तेजसस्ताःकलाःअपाल्यअपवार्यविभज्येतियावत् ॥ यन्नवधाअसत्क्षिप्तवान् ॥ तेपितेजःखंडास्तत्संकल्पवशादेवसंप्राप्तसर्वसिद्धयस्तत्समानशक्तयःप्रजापतयःसंतोयथासंकल्पितंवस्तुक्षणादेवाग्रतोदृष्ट्वाआपुःप्रापुरितिपरेणान्वयः ॥ अपपूर्वाद्दलभूपणपर्याप्तिशक्तिवारणनिषेधेष्वितिधातोर्ल्यप् ॥ असुक्षेपणेइतिधातोरुदितोवेत्यङ्किआट्ट्युकोरभावश्छांदसः ॥ २२ ॥ २३ ॥ तेभ्योदेवदानवयक्षराक्षसमानवादिसर्गप्रवृत्तिरित्याह ॥ संकल्पयंतइति ॥ तेप्रजापतयोयान्यान्पुत्रपौत्रपरंपरयादेवदानवादिजातिभेदैर्नानाविधान्व्यक्तिभेदाच्चबहून्भूतगणान्संकल्पयंतोबभूवुस्तांस्तान्आपुरित्यनुषज्जते ॥ तेष्वपेमैथुनसृष्टिप्रवृत्तिंदर्शयति ॥ भूतेष्विति ॥ २४ ॥

संकल्पयंतआपुरित्यत्राप्यनुवर्त्तते ॥ ततोयज्ञादिकर्मप्रवृत्तिंदर्शयति ॥ संस्मृत्येति ॥ २५ ॥ २६ ॥ २७ ॥ शारीरैःसुखदुःखजराजन्ममरणैःस्वैर्मानसैश्चाधिभिःसर्वथाहेयोयंसंसारइतिबोधिताम् ॥ २८ ॥ ननुसर्वस्यव्यवहारस्यविरिंचिमनःकृतत्वेयज्ञादीनांशारीरत्वमुपासनादीनांमानसत्वमितिव्यवस्थायांकोहेतुस्तमाह ॥ मनोहस्तैरिति ॥ विरिंचोत्थैर्मनोवृत्तिभिर्हस्तैर्वायद्वस्तुयथाद्रष्टुंप्राप्तुंचयोग्यंपुराकल्पितंतत्तथैवाद्यापिव्यवस्थितंदृश्यतेप्राप्यतेच ॥ तत्कल्पनानुसारेणैवान्येषामपिकल्पनानियतेरित्यर्थः ॥ २९ ॥ समष्टिदृष्ट्यासर्वेषुभूतेषुव्यष्टिदृष्ट्याएकजीवपक्षेणवाकेषुचित्स्थितंमनःसंकल्पयतिचित्पश्यति ॥ अथवामनएवचित्स्थितंसंकल्पयतिपरंपश्यतिच ॥ ३० ॥ एवंमयउक्तप्रका

संस्मृत्यवेदांस्तदनुयज्ञक्रमगुणान्बहून् ॥ जगद्वहादयंब्रह्मामर्यादांसमकल्पयत् ॥ २५ ॥ ब्राह्मंरूपमुपादायमनोनाममहद्वपुः ॥ तनोतीत्यमिमांदृष्टिंभूतसंततिसंकुलाम् ॥ २६ ॥ समुद्राचलवक्षाढ्यांकृतलोकोत्तरक्रमाम् ॥ मेरुभूपीठदिक्कुंजजटालोदरमंडलाम् ॥ २७ ॥ सुखदुःखजराजन्ममरणस्वाधिबोधिताम् ॥ रागद्वेषभयोद्विग्नांगुणत्रयमयात्मिकाम् ॥ २८ ॥ मनोहस्तैर्विरिंचोत्थैर्यद्यथाकल्पितंपुरा ॥ तत्तथैवाखिलंद्रष्टुंदृश्यतेद्यापिमायया ॥ २९ ॥ इत्थंसर्वेषुभूतेषुकेषुचित्त्वथवापुनः ॥ संकल्पयतिसंसारंपरंपश्यतिचित्स्थितम् ॥ ३० ॥ मोहएवंमयोमिथ्याजागतःस्थिरतांगतः ॥ संकल्पनेनमनसाकल्पितोचिरतःस्वयम् ॥ ३१ ॥ संकल्पवशतःसर्वाःप्रसवंतिजगत्क्रियाः ॥ संकल्पवशतोदेवानिर्यांतिनियतिस्थिताः ॥ ३२ ॥ कोपितायाःप्रजानाथैर्जगत्स्रष्टुःकुलोद्भवः ॥ ब्रह्मासंचिंतयत्येपपद्मासनगतःप्रभुः ॥ ३३ ॥ मनःस्पंदनमात्रेणचित्रंचित्तंयदुत्थितम् ॥ सृष्टिर्वाभोगिनीस्फाराव्यवहारविकारिणी ॥ ३४ ॥ रुद्रोपेंद्रमहेंद्राद्याशैलसागरसंकुला ॥ पातालरोदोदिक्स्वर्गमार्गसंकटकोटरा ॥ ३५ ॥ संकल्पजालमत्यंतंमयेदमभितस्ततम् ॥ अधुनाविरतोस्म्यस्माद्विकल्पोल्लासनक्रमात् ॥ ३६ ॥ इतिनिश्चित्यविरतःकल्पनानर्थसंकटात् ॥ अनादिमत्परंब्रह्मस्मरत्यात्मानमात्मना ॥ ३७ ॥

रः ॥ अचिरतःशीघ्रमेवसंकल्पितः ॥ ३१ ॥ ३२ ॥ इत्थंसर्गविस्तारंप्रपंच्यतदुपरमेशास्त्रनिर्माणेचकारणंवक्तुंपीठिकांरचयति ॥ कोपितायाइति ॥ इंद्रविरोचनादिभिर्देवासुरप्रजानाथैःस्वस्वोत्कर्षायमनुष्यादिप्रजासुधर्माधर्माभिवृद्धयेयतमानैर्बलात्सात्विकराजसतामसवृत्तिषुप्रवर्त्तनाद्बधबंधजन्मजरामयादिक्लेशसहस्रैःकोपितायाअतिपीडितायाजगत्स्रष्टुःसकाशान्निर्विण्णःसर्वप्रजाकुलान्युद्भवंत्यस्मादितिकुलोद्भवएषप्रागुक्तोब्रह्मावक्ष्यमाणप्रकारेणसंचिंतयतीत्यर्थः ॥ ३३ ॥ मनःस्पंदनमात्रेणयच्चित्तंव्यष्टिजीवोपाधिभूतम् ॥ तदुपभोगार्थाभोगिनीस्फाराविस्तीर्णाभुवनादिसृष्टिर्वेतियदुत्थितंइदंसर्वंमयास्वसंकल्पजालमेवाभितस्ततमितिपरेणान्वयः ॥ ३४ ॥ ३५ ॥ ३६ ॥ विरतइतिशमंप्राप्तःसन् ॥ ३७ ॥

तंपरमात्मामंस्मृतिमात्रेणआसाद्यप्राप्यतदेवआसमंताद्भासतेयस्मिंस्तथाविधेगलितमानसेसप्तमभूमिकालक्षणेपदेसुखंतिष्ठतीत्यर्थः ॥ अधःसंवृतापवरकेकूमेतल्पेरहसीतियावत् ॥ ३८ ॥ ३९ ॥ बंधनात्एकाकारवृत्तिधारणानिर्बंधलक्षणात्ध्यानात् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ तत्प्रागुक्तंसप्तमभूमिकालक्षणंपरंपदम् ॥ सृष्टिविक्षेपलक्षणाभ्यआ पद्मोविनिर्गतः ॥ ४४ ॥ ४५ ॥ केवलमनुग्रहार्थमेवेत्यर्थः ॥ ४६ ॥ तर्हितस्यसमाधिकालेआर्जवंसर्गसंहारादिकालेतुतस्यसंत्यागोदेहादिसंग्रहःसर्गरूपेणनानात्वंव्युत्थानका



तमासाद्यतदाभासेपदेगलितमानसे ॥ सुखंतिष्ठतिशांतात्मातल्पेधःश्रमवानिव ॥ ३८ ॥ निर्ममोनिरहंकारःपरांशांतिमुपागतः ॥ अविक्षुब्धइवांभोधिरात्मनात्मनितिष्ठति ॥ ३९ ॥ ध्यानात्कदाचिद्भगवान्स्वयंविरमतिप्रभुः ॥ बंधनात्सलिलस्यंदात्सौम्यत्वादिववारिधिः ॥ ४० ॥ विचारयतिसंसारंसुखदुःखसमन्वितम् ॥ आशापाशशतैर्बद्धंरागद्वेषभयातुरम् ॥ ४१ ॥ ततःसकरुणाक्रांतमनाभूतविभूतये ॥ करोतीहमहार्थानिशास्त्राणिविविधानिच ॥ ४२ ॥ अध्यात्मज्ञानगर्भाणिवेदवेदांगसंग्रहम् ॥ पुराणादीनिचान्यानिमुक्तयेसर्वदेहिनाम् ॥ ४३ ॥ पुनस्तत्पदमालंब्यपरमापद्विनिर्गतः ॥ स्वस्थस्तिष्ठतिशांतात्मानिर्मंदरइवार्णवः ॥ ४४ ॥ अवलोक्यजगच्चेशंमर्यादांविनियोज्यच ॥ ब्रह्माकमलपीठस्थःपुनःस्वात्मनितिष्ठति ॥ ४५ ॥ कदाचित्केवलंसर्वसंकल्पपरिहीनया ॥ यदृच्छयानुग्रहार्थंलोकक्रमवदास्थितः ॥ ४६ ॥ नार्जवंनास्यसंत्यागोवपुषोनचसंग्रहः ॥ नानानचेतनंनेहनस्थितिर्नास्थितिःस्थिता ॥ ४७ ॥ सर्वभावसमारंभःसमःसर्वासुवृत्तिषु ॥ परिपूर्णार्णवाकारोमुक्तशेषोवतिष्ठते ॥ ४८ ॥ कदाचित्केवलंसर्वसंकल्पपरिहीनया ॥ यदृच्छयानुग्रहार्थंलोकानांप्रतिबुध्यते ॥ ४९ ॥ एषाब्राह्मीस्थितिःपुण्यायामयोक्तामहामते ॥ यातांविधिसुरानीकौतामेतांसात्विकीमपि ॥ ५० ॥

लेचेतनंपद्मेस्थितिरन्यत्रचास्थितिरितिनामाभावसमारंभेपुचित्तवृत्तिपुचाज्ञवदेववैषम्यंप्राप्तमित्याशंक्यक्रमात्परिहरति ॥ नार्जवमित्यादिना ॥ ४७ ॥ ४८ ॥ ४९ ॥ उपसंहरति ॥ एषेति ॥ इदानींमानसःप्रजापतीनांसर्गस्तेहिसंकल्पसंप्राप्तसिद्धयःस्वयंप्रज्ञातज्ञानयोगैश्वर्याःप्रथमोविध्यनीकः ॥ मैथुनसर्गेपिदेवगंधर्वयक्षादीनांसात्विकत्वात्सकृदुपदेशप्राप्तज्ञानैश्वर्यःसुरानीकोमध्यमः ॥ मनुष्यादिस्तुरजस्तमोपस्तःप्रयत्नसहस्रसाध्यज्ञानैश्वर्योनरानीकोधमइत्यनीकत्रयविभागंमनसिनिधायतेषांस्वकारणासादितचित्तशुद्ध्यनुरूपज्ञानोदयेनब्रह्मप्राप्तिविभज्यदर्शयति ॥ यातामित्यादिना ॥ तांवर्णितप्रकारांएतांसात्विकींसत्वोत्कर्षप्राप्यांब्राह्मींस्थितिविधिसुरानीकावपियातांप्राप्नुयाताम् ॥ ५० ॥

तद्यप्रथमानीकस्यंमानसोपासनाफलत्वान्मनोमात्रजन्यत्वेनसौक्ष्म्यात्तत्राग्नौविशेषमाह ॥ चित्सर्गेति ॥ यद्यस्मात्प्रथमोनीकश्चिद्रूपेसर्वसर्गोपरमरूपेब्रह्माकाशेब्रह्मणोविरि
चेर्मनःकल्पितंफलमिवमनःफलंसप्रथममुदेतिअतःसैवसएव ॥ सोचिलोपेचेत्पादपूरणमितिसुलोपः ॥ स्वतःसिद्धज्ञानैश्वर्येणप्रथमंसम्यगवगम्याश्नुतेइत्यर्थः ॥ ५१ ॥ द्विती
यानीकस्यौपधिपल्लवविकारभूततेमाज्यपयःसाध्यकर्मफलत्वेनतत्परिणामतयाप्राकृतापेक्षयास्थौल्यादुपदेशमात्रमपेक्ष्यब्रह्मप्राप्तिरितिविशेषंदर्शयति ॥ सर्गेइत्यादिना ॥
प्रजापतीनामोषध्यादीनांचसर्गेस्थितिंगतेसतियासुरानीकलक्षणान्याअपराप्रथमापेक्षयान्यूनाकल्पनोदेतिसाप्रथमंचंद्रकलालनाव्योमानिलंचाश्रित्यौपधिपल्लवान्प्रविश्यसो
माज्यपयोभावेनाग्नौहूयमानासूर्यमंडलेअमृताकारपरिणताप्रजापतिप्रभृतिभिरुपभुक्तातद्रेतोरूपपरिणतामैथुनद्वारेणेंद्रादिसुरत्वंकुबेरादियक्षादिदेवयोनितांचायातीतिपरेणा
न्वयः ॥ ५२ ॥ सैपासात्विकत्वान्मनुष्याद्यपेक्षयाप्रथमंप्रजापतीनामनुग्रहोपदेशादिनाज्ञानैश्वर्यसंपदाउदेतिअतःप्रथममेवब्रह्मत्वंसमवाश्नुतइत्यर्थः ॥ ५३ ॥ तर्हिकिंसर्वेषां

चित्सर्गोपरमाकाशेब्रह्मणोयन्मनःफलम् ॥ उदेतिप्रथमःसैवब्रह्मत्वंसमवाश्नुते ॥ ५१ ॥ सर्गेस्थितिंगतेत्वन्यायोदेतिकल्पनापरा ॥ सा
व्योमानिलमाश्रित्यप्रविश्यौपधिपल्लवान् ॥ ५२ ॥ काचित्सुरत्वमायातिकाचिदायातियक्षताम् ॥ उदेतिप्रथमंसैषाब्रह्मत्वंसमवाश्नुते
॥ ५३ ॥ यायत्सत्वंसमन्वेतिसातदेवाशुजायते ॥ जातासंसर्गवशतस्तस्मिन्नेवचजन्मनि ॥ बध्यतेमुच्यतेवासौस्वयमन्वारभेदतः ॥ ५४ ॥
इत्थंगतास्थितिरियंकिलरामभद्रसृष्टिःस्फुटप्रकटसंकटकर्मलब्ध्या ॥ आविर्भवेद्विविधवेगविहारभारसंरंभगर्भविधृताकलनापदेसा
॥ ५५ ॥ ॥ इ० वा० वा० दे० मो० स्थि० कमलजव्यवहारवर्णनंनामएकोनषष्टितमःसर्गः ॥ ५९ ॥ ॥ ७ ॥ ॥ ७ ॥

देवानांमुक्तिर्मेत्याह ॥ येति ॥ देवेषुमानवेषुवाजातायाव्यक्तिर्यत्सत्वंज्ञानवैराग्यसंपन्नंभोगलंपटंवामैत्र्यादिनासमन्वेतिसातत्संगत्याआशुतदेवजायतेतादृशगुणवतीभवतीत्य
र्थः ॥ भोगलंपटसंसर्गवशतःस्वयमपितथाभूतासतीबध्यतेतद्विपरीतसंगत्यास्वयमपिज्ञानवैराग्यसंपन्नामुच्यतइत्यर्थः ॥ तर्हितृतीयानीकैःकिंकार्यंतदाह ॥ स्वयमिति ॥ अतो
बंधमोक्षयोःसंगानुरूपत्वात्स्वयमेवपौरुषप्रयत्नेनसाधुसंगमसच्छास्त्रश्रवणादीनिंद्रियमनोजयोपायांश्चान्वारभेत् ॥ यावत्फलोदयमभ्यस्येदित्यर्थः ॥ ५४ ॥ उक्तंसर्वंसंक्षि
प्योपसंहरति ॥ इत्थमिति ॥ स्फुटानिप्रकाशबहुलानिउपासनानिप्रकटानिसर्वजनप्रसिद्धानियज्ञादीनिसंकटान्यनर्थफलानिकर्माणिनिषिद्धमिश्राणितैर्निमित्तैःक्रमाल्लब्ध्वा
विविधैःप्रारब्धवेगैर्विहारभारैःक्रीडाकौतुकैःसंरंभगर्भैःक्रोधलोभसंभृतैश्चव्यवहारैःक्रमाद्विधृताअवष्टब्धासतीकलनापदेसर्गोन्मुखेब्रह्मणिइत्थंप्रागुक्तसंकल्पकल्पनैर्थेयगता
प्राप्ताआस्थितिःसत्तायस्यातथाविधासेयंव्यनीकात्मिकासृष्टिराविर्भवेदित्यर्थः ॥ ५५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेस्थितिप्रकरणेएकोनषष्टितमःसर्गः ॥ ५९ ॥

ब्रह्मोत्थितानांजीवानामिहदेहग्रहक्रमः ॥ वर्ण्यंतेसात्विकानांचप्राधान्याद्बोधभागिनाम् ॥ १ ॥ प्रागुक्तव्यनीकस्रष्टिसाव्योमानिलमाश्रित्येतिसंक्षेपोक्तक्रमप्रपंचनेनवर्णयितुं भूमिकांरचयति ॥ अस्मिन्नित्यादिना ॥ ब्रह्मन्ब्रह्मणिपितामहे ॥ सुपांसुलुगितिसप्तम्यालुकिनङिसंबुध्योरितिनलोपनिषेधः ॥ चपलंपदंसमाधिव्युत्थानम् ॥ १ ॥ आरघट्टेघटीयंत्रेविप्रेतानांमृतानांभूतानांघटयासमूहलक्षणयाविप्रेतानिभूतान्येवघटायस्यांतथाविधयावाघटीमालारज्ज्वाजीवितंपुनर्देहग्रहणेनजीवनंजलंचतद्विषयतृष्णयाआरोहावरोहाभ्यांवहतिपरिवर्त्तमाने ॥२॥अन्येषुमनस्सुईश्वरस्यमायाशवलब्रह्मणोवालःपुत्रभूतंप्रथमजंयद्व्योमतन्मध्येविवर्त्तिनुभ्रमणशीलेषुसत्सु॥३॥ हेरामब्रह्मणिजीवौघाअनारतंसततंकेचनउपाधिविनिर्गमादग्निविस्फुलिंगवद्विनिर्यांति ॥ केचित्त्वन्येउपाधिविलयात्सुषुप्ताविवविश्रांतयेप्रविशंतीत्यर्थः ॥ ४ ॥ उत्पन्नाइत्यस्यव्याख्याकलनापदमागता

॥श्रीवसिष्ठउवाच॥ ॥अस्मिन्भगवतिब्रह्मंश्चपलंपदमाश्रिते ॥ पितामहेमहाबाहोकृतसर्गव्यवस्थितौ ॥ १ ॥ जगज्जीर्णारघट्टेस्मिन्वहतिस्वव्यवस्थया ॥ विप्रेतभूतघटयारज्ज्वाजीविततृष्णया ॥ २ ॥ ब्रह्मोत्थेषुचभूतेषुविशत्सुभवपंजरम् ॥ आवर्त्तेष्वीश्वरव्योमवालमध्यविवर्त्तिषु ॥ ३ ॥ मनःस्वन्येषुवातांतलोलाहतकणेष्विव ॥ अनारतंविनिर्यांतिविशंत्यन्येतथाभितः ॥ ४ ॥ रामब्रह्मणिजीवौघास्तरंगाइववारिधौ ॥ अनाद्यंतपदोत्पन्नाःकलनापदमागताः ॥ ५ ॥ भूताकाशंविशंत्येतेधूमश्रीरिवचांबुदम् ॥ एकतांयांतिजीवौघाब्रह्मण्याकाशमारुतैः ॥ ६ ॥ दिनंतन्मात्रवातेनतत्प्राणात्मतयायथा ॥ आक्रम्यंतेप्रचंडेनदैत्यौघेनामराइव ॥ ७ ॥ भूतप्राणानिलंतेनगंधवाहेनतेनच ॥ निविशंतिशरीरेषुजीवागच्छंतिवीर्यताम् ॥ ८ ॥ ततोजगतिजायंतेभवंतिप्राणिनोऽस्फुटाः ॥ अन्याधूमादिमाजातारामजीवपरंपरा ॥ ९ ॥

इति ॥ ५ ॥ तत्रपूर्वसर्गेनुक्तंतृतीयानीकोत्पत्तिक्रमंप्रथमंप्रपंचयति ॥ भूताकाशमित्यादिना ॥ ब्रह्मणिअध्यस्तैराकाशमारुतैःसहक्षीरोदकवदेकतांयांति ॥ ६ ॥ ततस्तेजोंबुभुवामुत्पत्तौसत्यांदिनंप्रकाशंप्राप्यशब्दस्पर्शरूपरसगंधलक्षणतन्मात्रसहितेनप्रागुक्तवायुनातथातदुपभोगहेत्वमुख्यमुख्योभयविधप्राणात्मतयाचआक्रम्यंतेवशीक्रियंते ॥ ७ ॥ एवंलिंगदेहतांप्राप्तास्तेनप्राणात्मभावेनतेनगंधवाहेनभूततन्मात्रसहितयायुनाचसहान्नोदकादिद्वाराचतुर्विधभूतग्रामाणांप्राणानिलमन्नपासकमपानवृत्तिभेदंप्राप्यशरीरेषुनिविशंति ॥ नेर्विशइतितङभावश्छांदसः ॥ वीर्यंतरेतोभावम् ॥ ८ ॥ अस्फुटाअनभिव्यक्तज्ञानैश्वर्याः ॥ तृतीयानीकस्यसर्गक्रममुक्त्वाद्वितीयानीकस्यतमाह ॥ अन्याइति ॥ अस्याअपिलिंगदेहप्राप्तिपर्यंतंप्रागुक्तएवक्रमः ॥ ओषधिवनस्पतिप्रवेशेनक्षीराज्यादिपरिणत्याग्नौहुताआहुतिर्धूमद्वारासूर्यमंडलंप्राप्यसूर्यकिरणद्वाराचंद्रानुप्रवेशेनवारंहत्यधिकरणन्यायेनाहुत्यप्परिवेष्टितयजमानप्राणानांधूमादिमार्गेणचंद्रमंडलानुप्रवेशाद्वाधूमादिमार्गेआजाताअनुप्रविष्टा ॥ ९ ॥

सापिचंद्रकलालतांप्राप्ताकल्पवृक्षफलेपुरसभावेनानुप्रवेशात्तदुपभोक्तृवीर्यभावपरिणामेनदेवगर्भेजायतेइतिक्रममभिप्रेत्याह॥ तन्मात्रवतीत्यादिना ॥ प्रागुक्ततन्मात्रात्मकलिंगदेहवति उद्दाममंडलःपूर्णोभगवानिंदुर्यावत्यावद्भीरश्मिभिर्जगद्भासयन्नुदेतितावद्भिर्लोलैःपांडुरूपवद्रश्मिभिरशून्येपूर्णेअतएवक्षीरांबुधेर्निधौआश्रयभूतेप्रतिनिधिभूतेवाअंवरकोटरेसातिष्ठतीतिशेषः ॥१०॥ ततस्तदनंतरंतेषुचंद्ररश्मिषुनंदनादिवनेसंपतन्सुसंपतत्सु ॥ छांदसस्तुपोलुक् ॥ रश्म्यनुसारेणसंपतंतीतस्मिन्वनेप्रेष्यादासीआंतरेषुगृहाभ्यंतरकृत्येष्विवलोलाव्ययाविहगीपक्षिणीप्रायाकरोतिप्रवेशमितिशेषः॥११॥ ततस्तस्मिन्वनेफलानितेभ्यश्चंद्ररश्मिभ्योऽपिशब्दाद्रविरश्मिभ्यश्चनिमित्तेभ्यःस्वरसेनैवपीवरतांक्रमादुपचयंमाधुर्यमपियांति ॥१२॥ एवंरसपूर्णेषुप्रागुक्ताजीवालीइंदुकरात्क्षताविभक्तासतीतेपुफलेपुपदंस्थितिंवध्नाति यथाशिशुर्मातुःस्तनभरेषुपदंवध्नातितद्वत् ॥१३॥ मरीचिभिःरविरश्मिभिः ॥ तेष्वेवफलेषुकश्यपादिभिरुपभुक्तेपुवीर्यंवीर्यतामागत्यप्राप्य ॥ अप्राप्तबोधिताःमूर्छितप्रायाः ॥१४॥ मूर्छितजीवानांप्रबुद्धपितृमातृगर्भस्थितौदृष्टांतमाह ॥ वी

तन्मात्रवतितावद्भिरशून्येंवरकोटरे ॥ उदेतियावद्भगवानिंदुरुद्दाममंडलः॥ १० ॥ क्षीरांबुधिनिधौलोलैःपांडुवद्रश्मिभिर्जगत् ॥ ततस्तेष्वतिरम्येषुचंद्ररश्मिषुसंपतत्॥ ११ ॥ करोतिविहगीलीलावनेप्रेष्यांतरेष्विव॥ तेभ्योपिस्वरसेनैवयांतिपीवरतामपि ॥१२॥ फलेषुतेषुवध्नातिपदमिंदुकरात्क्षता॥ जीवालीक्षीरपूर्णेषुमातुःस्तनभरेष्विव ॥ १३ ॥ ताःफलावलयःपक्काभविष्यंतिमरीचिभिः॥ तेष्वेववीर्यमागत्यतिष्ठंत्यप्राप्तबोधिताः ॥ १४ ॥ प्रसुप्तवासनाजालजीवतागर्भपंजरम् ॥ अधितिष्ठतिबीजश्रीःसुप्तपत्रायथावटम् १५ ॥ यथाकाष्ठेस्थितश्चाग्निर्यथाम्रदिघटाःस्थिताः ॥ अनेकक्रमयोगेनपरागत्यमहेश्वरात्॥ १६ ॥ अदृष्टान्यशरीरश्रीःक्रमतेयोनचोदति ॥ सहिसत्येवजातिःस्यादुदारव्यवहारवान्॥ १७॥ तेनैवमोक्षभागीचेज्जन्मनासतुसात्विकः॥ अथैतांयोनिमासाद्यकृत्यांजन्मपरंपराम् ॥१८

जश्रीरिति ॥ यथासुप्तपत्राअनाविर्भूतांकुरविटपपत्रावटबीजश्रीराविर्भूतविटपांकुरपत्रफलंवटमधिष्ठायप्रतिष्ठतितद्वदित्यर्थः ॥१५॥ नकेवलंगर्भएवमूर्छितानामन्यमाश्रित्यतिरोहितस्थितिःकिंतुमहेश्वरात्प्रलयेउपाधिप्रविलयेनप्राप्तादव्यक्तात्परागत्यनिर्गम्याकाशादिभावेर्लिंगारंभकालेचंद्ररश्म्याद्यनुप्रवेशकालेचअनेकक्रमयोगेनप्रवृत्तेस्तथैवस्थितिरित्यर्थः॥१६॥ एवंगर्भप्राप्तानांजन्मनिनिमित्तभेदाद्विशेषंदर्शयति॥अदृष्टेत्यादिना॥ प्राग्जन्मनिनदृष्टाअन्यस्यस्त्रीपुत्रादिशरीरस्यश्रीर्येनतथाविधःसर्वतोविरक्तःसन्योमरणांतंकालंक्रमतेयश्चरागादिभिर्बहुभिःकर्मकांडादिशास्त्रैश्चैहिकपारलौकिकभोगसाधनलौकिकवैदिककर्मसुचोद्यमानोपिनचोदतिनप्रवर्त्तते ॥ सहिधीरःपुरुषधौरेयःप्रागुक्तक्रमादेवगर्भेजायमानःसतीअत्यंतसात्विक्येवजातिस्संस्तब्रह्मज्ञानंप्राप्यउदारजीवन्मुक्तोचितव्यवहारवान्स्यादित्यर्थः ॥१७॥ देवपदाधिकारप्राप्त्यनुकूलकर्मोपासनानुष्ठायिनांत्वाह ॥ अथेति ॥ एतांदेवयोनिमासाद्यकृत्यांछेत्तुंशक्यामपिजन्मपरंपरांभोगलांपट्यादकृत्वास्वाधिकारभोगरक्षार्थमेवप्राप्तजन्माचेत्सतमोयुक्तोराजससात्विकइत्यर्थः ॥ १८ ॥

इदानींप्रथमानीकजानांकेवलसात्विकत्वमपुनर्जन्मतांचाह ॥ पाश्चात्येति ॥ पाश्चात्येनचरमेणजन्मनानरसुरानीकापेक्षयाप्राधान्येनप्राजापत्याधिकारेणसंसारमायातःकेवलसात्विकोविध्यनीकोयथामुच्यतेइतितथावक्ष्यामीत्यन्वयः ॥ १९ ॥ सप्रथमानीकजःपुमान्कश्चिदपिकदाचिदपिनपुनःसंभवतिमुच्यतएवेत्यर्थः ॥ २० ॥ केतर्हिसंभवंतितानाह ॥ संभवंतीति ॥ केवलसात्विकस्यपुनर्जन्माभावेकोहेतुस्तमाह ॥ प्रविचार्येति ॥ यतस्तेप्राग्जन्मन्यप्यात्मतत्त्वंश्रवणाद्युपायैःप्रविचार्यप्रतिबंधमात्रक्षयायतद्योग्यंसात्विकंजन्मसमायाताइहजन्मन्यपितेषांधियासदैवात्मतत्त्वमेवमंतव्यंमननेनपरिशीलनीयंतस्मादित्यर्थः ॥ २१ ॥ अतएवतेदुर्लभाइत्याह ॥ प्राधान्येनेति ॥ २२ ॥ येविविधिसुरनरानीकभ्योन्येरक्षःपिशाचादयस्तिर्यञ्चश्चतेषांस्थावरादितुल्यत्वाज्ज्ञानाधिकारकथायांविचारयोग्यतैवनास्तीतितेनोपन्यस्ताइत्याह ॥ येचान्येइति ॥ २३ ॥ तत्त्वदौर्लभ्यमेवोपपादयन्नुपसंहरति ॥ कतिपयाइति ॥ प्रकृतेक्रमेणप्राप्तेपिउत्तमजन्मनिकतिपयाएवनरासुराश्चभवभावनांसांसारिकभोगरुचिंनगताः॥तथाचवैराग्यमेवातिदुर्लभमि

रक्षार्थंप्राप्तजन्माचेत्तमोराजससात्विकः॥पाश्चात्यजन्मनापुंसोरामवक्ष्यामिचाधुना॥१९॥प्राधान्येनयथायातःसंसारमितिसात्विकः॥सकदाचिन्नकश्चिच्चसंभवत्यनघाकृते ॥ २० ॥ संभवंतीहपुरुषारामराजससात्विकाः॥प्रविचार्यसमायातामंतव्यंचेहतद्धिया ॥ २१ ॥प्राधान्येनसमायातायेयदापरमात्मनः॥ दुर्लभाःपुरुषारामतेमहागुणशालिनः ॥ २२॥ येचान्येविविधामूढामूकास्तामसजातयः॥ तेषांस्थावरतुल्यानांकिंचरामविचार्यते ॥ २३॥ कतिपयानगताभवभावनांनरसुराःप्रकृतक्रमजन्मनि॥ अहमिवप्रविचारणयोग्यतामनुगतोननुराजससात्विकः ॥ २४॥ स्थितस्यतेमहापदाविचार्ययैवमायता॥ विचारयत्वमंजसातदद्यचेहनद्वयम् ॥ २५॥ इ०वा०वा०दे०मो०स्थि० विचारपुरुषनिर्णयप्रसंगोपदेशजीवावतारोनामषष्टितमःसर्गः॥६०॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥येहिराजससात्विक्याजाताभुविमहागुणाः॥ तेनित्यमेवमुदिताःप्रकाशाःखइवेंदवः ॥ १ ॥

त्यर्थः ॥ किंबहुना ॥ अप्यर्थेननुशब्दः ॥ नेप्वहमिवजन्मप्रभृत्येवशमदमादिसर्वगुणसंपत्त्याप्रकर्षेणात्मविचारणयोग्यतामनुगतोपिनिरंतरसमाधिसुखविघ्नभूतराजकुलपौरोहित्याद्यधिकारप्रारब्धयोगाद्राजससात्विकईषद्रजोयुक्तसात्विकएवनशुद्धसात्विकइत्यतिदौर्लभ्यद्योतनायनिरभिमानादतिशयोक्तिः ॥ २४ ॥ ममेवतवापिवैराग्यशमदमादिसंपत्तिपूर्णत्वमस्त्येवकिंतुमहतःपरमात्मपदस्यअविचार्यया अविचारणयास्थितस्यैवमुक्तप्रकारासंसारभ्रांतिरायताविस्तीर्णा ॥ तत्पदंइहमत्पुरतःअद्यैवअंजसाशीघ्रंविचारयविचारमात्रेणत्वमेवचइहप्रत्यक्षंनद्वयमद्वयंतत्परमपदमसीत्यर्थः ॥ अविचार्ययामहतीआपदाआपत्तेआयताआयाताइतिवायोज्यम् ॥ २५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थितिप्रकरणेषष्टितमःसर्गः ॥ ६० ॥ ॥७॥ ॥ मुक्तियोग्याःप्रशस्यंतेजनाराजससात्विकाः ॥ तेषांविवेकवैराग्यक्रमश्चात्रोपदिश्यते ॥ १ ॥ येप्रविचारणयोग्यतामनुगताःपुरुषाराजससात्विक्याप्राक्तनकर्मोपासनयाभुविजाताः ॥ १ ॥

खेदंमानसंदुःखम् ॥ म्लानिशारीरंदुःखम् ॥२॥ यथास्थावरोवृक्षादिःप्रारब्धभोगादन्यन्नेहतेतद्वत्तेप्रकृतात्तज्ज्ञानतत्साधनसंपदोन्यन्नेहंते ॥ स्वार्थेभ्यःस्वीयपुष्पफलादिभ्योहेतुभ्यः ॥३॥ राजससत्वस्योक्तपुरुषस्यधीःशांत्यादिसुधायामुपचितायामापूर्यतामुपचेयतांयाति ॥ अतएवशुक्लपक्षेंदुरिवसुंदरी ॥४॥ शीततामिवस्थितांसौम्यतांशशिवन्नमुंचंति ॥ ५ ॥ नवैःस्तनकल्पैःस्तबकैर्भावःप्रेमातद्वत्त्यालतयेवनित्याश्लिष्टयागुणकांतयेतिपूर्वेणान्वयः ॥ साधुभ्योपिसाधवः ॥ ६ ॥ यतएवंगुणसंपन्नाअतस्तेषामापदामवासनमनधिकरणंयत्पदंतत्तुतदेवयथागंतव्यंतथेहजगतिअखेदिनामनसाविहर्त्तव्यमितिपरेणान्वयः ॥ ७ ॥ ८ ॥ अराजसारजःक्षयोपेनाःसात्विकाआत्मोदयाःस्वानंदलाभायथावर्द्धंतेतथाअचिंत्यगत्यामूर्द्धांचितनार्हविषयगतिपरित्यागेनपुनःपुनस्सच्छास्त्रंविचार्यंभवतीत्यर्थः ॥ ९ ॥ एवंभावतःअत्यादरेणसर्ववस्तूनांविविधानानानिमित्तोपपाद्याअनित्यतापि

नखेदमभिगच्छंतिव्योमभागोमलंयथा॥ नापदाम्लानिमायांतिनिशिहेमांबुजंयथा ॥ २ ॥ नेहंतेप्रकृतादन्यत्तेनान्यत्स्थावरोयथा ॥ रमंतेस्वसदाचारैःस्वार्थेभ्यःपादपायथा॥३॥ नित्यमापूर्यतांयातिसुधायामिंदुसुंदरी॥रामराजससत्वस्यमोक्षमायात्यसौयथा॥४॥ आपद्यपिनमुंचंतिशशिवच्छीततामिव॥ प्रकृत्यैवविराजंतेमैत्र्यादिगुणकांतया॥५॥ नवस्तबकभाविन्यालतयेववनद्रुमाः॥ समाःसमरसाःसौम्यास्सततंसाधुसाधवः॥ ६ ॥ अब्धिवद्धृतमर्यादाभवंतिभवतासमाः॥ अतस्तेषांमहाबाहोपदमापदवासनम्॥७॥सततंतत्तुगंतव्यंगंतव्यंनापदर्णवे॥ तथातथेहजगतिविहर्त्तव्यमखेदिना॥८॥ आत्मोदयाश्चवर्द्धंतेयथाराजससात्विकाः॥ अचिंत्यगत्यासच्छास्त्रंविचार्यंचपुनःपुनः॥९॥ अनित्यतास्वमनसाविविधैवाशुभावतः॥ आदावंतेचयांनित्यंक्रियांत्रैलोक्यवर्त्तिनीम्॥१०॥पदार्थानापदेवाशुभावयेन्नेतरत्सुधीः॥ असम्यग्दर्शनंत्यक्त्वाव्यर्थमज्ञानसंततिम् ॥ ११ ॥ स्मर्त्तव्यंसम्यगेवेदंज्ञानमर्थमनंतकम् ॥ कोहंकथमिदंजातंसंसाराडंबरंविभो॥ १२॥ प्रविचार्यंप्रयत्नेनप्राज्ञेनसहसाधुभिः ॥ नचकर्मसुमंक्तव्यंनानर्थेनसहावसेत् ॥ १३ ॥ द्रष्टव्यःसर्वविच्छेदःसंसारानुगतःसदा॥ साधुरेवानुगंतव्योमयूरेणांबुदोयथा॥ १४॥

आशुविचार्याभवतीतिविपरिणम्यते ॥ एतावंतंकालमुदारप्रशंसामुखेनरामायसद्गुणानुपदिश्येदानींसाक्षादेवोपदिशति ॥ आदावित्यादिना ॥ एवमनित्यतांविचारयन्सुधीर्विशुद्धबुद्धिःआदौऐहिकोपभोगायोपयुक्तांलौकिकींमंतेमरणोत्तरकालेउपयुक्तांपारलौकिकींचत्रैलोक्यवर्त्तिनींक्रियांतत्फलभूतान्पशुपुत्रधनस्वर्गविमानाप्सरःप्रभृतिपदार्थांश्चआपदेवेतिभावयेत्नइतरत्संपद्दियमितिभावयेदितिपरेणान्वयः ॥ १० ॥ ११ ॥ इदंवक्ष्यमाणप्रकारंविचारात्मकंज्ञानमनंतकमर्थंप्रामुमितिशेषः ॥ विधिवदुपगतेनसाधुभिस्सतीर्थ्यैस्सहप्रयत्नेनसेवादिनाप्रसादितेनप्राज्ञेनगुरुणाहेप्रभोकोहमित्यादिसविनयप्रश्नपूर्वकंविचार्यस्मर्त्तव्यमितिसंबंधः ॥ १२ ॥ श्रवणांगतयाकर्मसंन्यासमाह ॥ नचेति ॥ मंक्तव्यंमज्जनीयम् ॥ मरज्जेर्भावेतव्योमस्ज्जिनशोर्झलीतिनुम् ॥ १३ ॥ सर्वस्यप्रियस्यविच्छेदोवश्यंभावीतिद्रष्टव्यः ॥ १४ ॥

आंतरस्याहंकारस्यततोबाह्यस्यदेहस्यततोपिबाह्यस्यपुत्रमित्रादिसंसारस्यचाप्लवार्णवत्रयकल्पस्यप्लवभूतंस्वविचारंअलंपूर्णंभावावसानंकृत्वा॥१५॥ सत्यमेवावलोकयेदितिय
दुक्तंतचोपायमाह ॥ शरीरमिति ॥ अपिशब्दादहंकारमपिसंत्यक्त्वा ॥ ल्यबकरणंछांदसम् ॥ घनशोभनंअत्यंतंशुभम् ॥ वीताव्याप्तामुक्तावलीयेनतथाविधम् ॥ छांदसत्वाद्गुप
सर्जनह्रस्वाभावः ॥ भूतेतिपाठेस्पष्टम् ॥ तदंतर्गततंतुमिवसर्वदेहाहंकारसाधारणमंतर्गतंसाक्षिचिन्मात्रमित्यर्थः ॥१६॥ दृष्टांतसाम्यंदर्शयति ॥ तस्मिन्नित्यादिना ॥१७॥ १८॥
चिद्भेदाशंकांनिरस्यति ॥ कुंभेति ॥ शरीरसंस्थानांजीवानाम् ॥ चितौचिति ॥ १९॥ यथाएकपुरुषास्वादनीयतिक्तकट्वादिरसभेदेपिनानुभवभेदस्तद्वद्देहादिभेदेष्वपीत्याशयेना
ह ॥ सर्वेषामिति ॥ २० ॥ चेतनेषुचिद्भेदइवसर्ववस्तुषुसत्स्वरूपभेदोपिनास्तीत्याशयेनाह ॥ एकस्मिन्निति ॥ तेषांजातादिवस्तूनाम् ॥ तवइहमूढजनेषुप्रसिद्धार्थीर्नशास्त्रीयेत्य

अहंकारस्यदेहस्यसंसारस्याप्लुवस्यच ॥ स्वविचारमलंकृत्यसत्यमेवावलोकयेत् ॥१५॥ शरीरमस्थिरमपिसंत्यक्त्वाघनशोभनम् ॥ वी
तमुक्तावलीतंतुंचिन्मात्रमवलोकयेत् ॥ १६ ॥ तस्मिन्पदेनित्यततेसर्वगेसर्वभाविते ॥ शिवेसर्वमिदंप्रोतंसूत्रेमणिगणायथा ॥१७॥ यै
वचिद्भुवनाभोगभूषणेव्योम्निभास्करे ॥ धराविवरकोशस्थेसैवचित्कीटकोदरे ॥१८॥ कुंभव्योम्नांनभेदोस्तियथेहपरमार्थतः ॥ चितौश
रीरसंस्थानांनभेदोस्तितथानघ ॥ १९ ॥ सर्वेषामेवभूतानांतिक्तकट्वादि[1]भेदिनाम् ॥ एकत्वादनुभूतेर्हिकुतश्चिन्मात्रभिन्नता ॥ २० ॥ ए
कस्मिन्नेवसततंस्थितेसन्मात्रवस्तुनि ॥ जातोयमयमुत्पन्नइतितेषांतवेहधीः ॥ २१ ॥ नचतन्नामवस्त्वस्तियद्भूत्वासंप्रलीयते ॥ आभा
समात्रमेवेदंनसन्नासच्चराघव ॥ २२ ॥ उद्भूतेनाप्रशांतेनचेतसासपदिस्थितम् ॥ नेहमोहांतआमोक्षान्नेदंयत्तदवस्तुच ॥ २३ ॥ किंकि
लासतिरामेहमोहजालेसमुज्झति ॥ यत्किंचित्संगसंगत्याविमोहकारणंहितत् ॥ २४ ॥ ([2]असतिजगतिकिंकिलेहमोहःसतिचकिमंग
विमोहकारणंतत् ॥ जननमरणसंस्थितिष्वतस्त्वंभवखमिवातिसमःसदोपशांतः) ॥ २५॥ ॥इ०वा०वा०दे०मो०स्थि०जननमरण
संस्थितिर्नामैकषष्टितमःसर्गः॥६१॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥

र्थः ॥ २१ ॥ कीदृशीतर्हिशास्त्रीयधीस्तामाह ॥ नचेति ॥ २२ ॥ नसन्नासच्चेत्युक्तिमुपपादयति ॥ उद्भूतेनेति ॥ यतआमोक्षात्उद्भूतेनाभिव्यक्तेनअप्रशांतेनचचेतसास्फुटंगृ
ह्यमाणंसपदिस्वकालेस्थितंअतोनासत् ॥ मोहस्यांतेनिवृत्तौतुआमोक्षाप्रसिद्धेइहपूर्वकालेइदंनास्तिमोक्षकालेत्विदंसुतरांनास्तीत्यवस्तुचेतिनसदपीत्यर्थः ॥ २३ ॥ ज्ञानसाफ
ल्यपर्यालोचनेपिमोहादेरसत्त्वमत्यंतासत्त्वंवाद्गुर्वचमित्यनिर्वचनीयतैवफलितेत्याह ॥ किंकिलेति ॥ मोहजालेअत्यंतासतिज्ञानेनकिंकिलसमुज्झतिनिरस्यति ॥ निरस्याभावे
निरासकसाफल्यायोगात् ॥ एवमत्यंतसत्त्वेवाज्ञानेनकिंसमुज्झति ॥ सत्यस्यज्ञाननिरस्यत्वादर्शनात् ॥ तस्माद्यःकश्चिच्चासौसंगश्चयत्किंचित्संगोऽनिर्वचनीयाध्याससल्लक्षण
यासंगत्यारज्जुसर्पादीवतद्दृश्यजातंविमोहेकारणमितिपरिशेषात्सिद्धमित्यर्थः ॥ २४ ॥ २५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्र०स्थि०एकषष्टितमःसर्गः ॥ ६१ ॥ ॥ ७ ॥



---

१ वेदिनामित्यपिक्वचित्पाठः  २ अयंश्लोकोधिकएकस्मिन्पुस्तकेदृष्टः ॥ अयंचभिन्नवृत्तत्वात्सर्गांतेऽवश्यमपेक्षितइतिभाति ॥

रामस्यसर्वशास्त्रोक्तगुणसंपत्तिरुच्यते ॥ अवरस्यापिसत्संगपौरुषाभ्यांवरस्थितिः ॥ १ ॥ अचिंत्यगत्यासच्छास्त्रंविचार्यंचपुनःपुनरितिप्रागुक्तंतत्कथंविचार्यंतदाह ॥ धीरइति॥ धीरोबाह्याभ्यंतरद्वंद्वसहिष्णुः ॥ विचारवानूहापोहकुशलः ॥ साक्षात्स्वयमेवतद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिरित्यादिशास्त्रेणोपगतेनविदुषासुजनेनशिष्यापराधसहिष्णुनागुरुणासहशास्त्रमादौविचारयेदित्यर्थः ॥ १ ॥ सुजनेनशोभनाभिजनेन ॥ महायोगान्मनोनाशांतात्समाधेः ॥ २ ॥ शास्त्राणांवेदांतोपयोगिशास्त्रांतराणामर्थानांसत्कर्मसदाचारादीनांसुजनासंगवैराग्यादीनांचनिरंतराभ्यासैःसत्कृतःसंस्कृतोयःपुरुषस्त्वमिवाभातिसप्रकृतशास्त्रश्रवणेनिजस्यप्रत्यक्तत्त्वविषयस्वविज्ञानस्यभाजनमित्यर्थः॥अथवाअध्यात्मशास्त्रादिभिःसत्कृतोनिजविज्ञानभाजनंभूत्वात्वमिवाभातीतियोजना ॥३॥ उक्तगुणास्त्वयिसंत्येवेत्याह ॥ त्वमिति ॥ ४ ॥ इदानींरामस्यप्रबोधाज्जीवन्मुक्ततांसं

श्रीवसिष्ठउवाच॥ ॥ धीरोविचारवान्साक्षादादावेवमहाधिया॥ शास्त्रेणविदुषाशास्त्रंसुजनेनविचारयेत्॥ १॥ सुजनेनवितृष्णेनविदुषामहतासह॥ प्रविचार्यमहायोगात्पदमासाद्यतेपरम्॥ २ ॥ शास्त्रार्थसुजनासंगवैराग्याभ्यासससत्कृतः॥ पुरुषस्त्वमिवाभातिनिजविज्ञानभाजनम्॥ ३ ॥ त्वमुदारनिजाचारोधीरोगुणगणाकरः॥ अधितिष्ठसिनिर्दुःखंवीतसर्गमनोमलः॥ ४॥ नूनमुत्सृज्जिताभ्रेणशरद्व्योमासमोभवान् ॥ भवभावनयामुक्तोयुक्तउत्तमसंविदा ॥ ५ ॥ चिंतामुक्तकलावत्यामुक्तकल्पनयास्थितम्॥ मनोमुक्तविभागंचमुक्तमेवनसंशयः॥ ६॥ तवोत्तमानुभावस्यतइदानींनराभुवि॥ चेष्टामनुसरिष्यंतिरागद्वेषविहीनया॥ ७॥ बहिर्लोकोचिताचाराविहरिष्यंतियेजनाः॥ भवार्णवंतरिष्यंतिधीमंतःपोतकान्विताः॥ ८ ॥ तवतुल्यमतिर्यःस्यात्सुजनःसमदर्शनः॥ योग्योसौज्ञानदृष्टीनांमयोक्तानांसुदृष्टिमान्॥ ९ ॥ यावद्देहंधियातिष्ठरागद्वेषविहीनया॥ बहिर्लोकोचिताचारस्त्वंतस्त्यक्ताखिलैषणः॥ १० ॥ परांशांतिमुपागच्छयथान्येगुणशालिनः॥ अविचार्यास्तएवेहगोमायुशिशुधर्मकाः॥ ११ ॥ येस्वभावामहासत्त्वान्नृणांसात्त्विकजन्मनाम् ॥ तान्भजन्पुरुषोयातिपाश्चात्योदारजन्मताम्॥ १२॥

भावयन्नाह ॥ नूनमित्यादिना ॥ ५ ॥ तत्संभावनाबीजंमुक्तमनसोलक्षणमाह ॥ चिंतेति ॥ सर्वबाह्यार्थचिंताभिर्मुक्तयाअंतश्चपरमात्मनाक्षीरोदकवदेकीभावात्कलावत्याब्रह्माकारपरिणतिलक्षणकौशलवत्यामुक्तानामनुभवसिद्धयाकल्पनयास्थितंमनोमुक्तमेवनात्रसंशयइत्यर्थः॥ ६ ॥ एवंमुक्तमनसस्तवचेष्टांतिप्रागुक्ताजीवन्मुक्ताइदानींरागद्वेषविहीनयाप्रागुक्तकल्पनयाअनुसरिष्यंति ॥ ७ ॥ पोतकाज्ञानप्लवास्तैरन्विताः ॥ ८ ॥ ९ ॥ किंतर्हिजीवन्मुक्तस्यममशरीरत्यागोयथेष्टाचरणंवास्तुनेत्याह ॥ यावद्देहमिति ॥ लोकोचितोधर्मशास्त्रसद्वृत्तानुसारीआचारोयस्य ॥ १० ॥ गोमायुधर्मकाःस्वार्थकौशलेनपरवंचकाः ॥ शिशुधर्मकायथेष्टचारिणोमूढाः ॥ ११ ॥ शुद्धसात्त्विकजन्मनांजीवन्मुक्तानांयेस्वभावाःस्वाभाविकाःशमदमादिगुणास्तान्भजन्अर्जयन्साधारणोपिपुरुषःक्रमात्ज्ञानंप्राप्यपाश्चात्योदारजन्मतांचरमजीवन्मुक्तशरीरंप्राप्नोतीत्यर्थः ॥ १२ ॥

तत्कुतस्तत्राह ॥ यानेवेति ॥उत्कृष्टजातिगुणसेवनेउत्कृष्टजातौजन्मलभतेनिकृष्टजातिगुणसेवनेनिकृष्टमितिनियमादित्यर्थः॥१३॥ प्राक्तनानिति ॥ यंयंवापिस्मरन्भावमिति न्यायादित्यर्थः ॥ अवश्यंनिकृष्टतमेनापिमोक्षायैवयत्नःकार्यःपौरुषादनुपरतस्यफलसिद्धेरवश्यंभावादित्याशयेनाह ॥ पौरुषेणेति ॥ धराधरा राजानःपर्वताश्चतेषांमहाकुलाःसेनावनानिचनीतिशास्त्रानुसारिपौरुषेणच्छेदनादिनाचावजीयंतेलोके ॥१४॥ अभ्युद्धरेद्विषयेभ्योनिवर्त्तयेत् ॥ तामसींरक्षःपिशाचशूद्रादिरूपांजातियोनिंराजसींक्षत्रियवैश्यादिरूपामन्यांसत्वतमोमिश्रसर्पादिजातिमपिश्रितःप्राप्तःपुरुषः॥१५॥उक्तमेवप्रपंचयति ॥ स्वविवेकेत्यादिना॥चित्तमणौचित्तस्फटिके॥ नियोज्यतेआसज्यते ॥१६॥१७॥१८॥ ॥ १९ ॥ उक्तंसंक्षिप्योपसंहरति ॥ हितमिति ॥ सर्वप्राणिनामात्यंतिकदुःखोपशमोपलक्षितनिरतिशयानंदरूपत्वादत्यंतहितमिदमुपदिष्टमात्मतत्त्वंमहासत्वतयाविशुद्धसत्वगुणो

यानेवसेवतेजंतुरिहजातिगुणान्सदा॥ अथान्यजातिजातोपिजातिंभजतितांक्षणात्[1] ॥ १३॥ प्राक्तनानखिलान्भावान्यांतिकर्मवशंगताः॥ पौरुषेणावजीयंतेधराधरमहाकुलाः॥१४॥ धैर्येणाभ्युद्धरेद्बुद्धिंपंकान्मुग्धगवीमिव॥ तामसींराजसींचैवजातिमन्यामपिश्रितः ॥१५॥ स्वविवेकवशाद्यांतिसंतःसात्विकजातिताम् ॥अतश्चित्तमणौस्वच्छेयद्राघवनियोज्यते॥१६॥ तन्मयोविभवत्येवंतस्माद्भवति पौरुषम्॥ पौरुषेणप्रयत्नेनमहार्हगुणशालिनः॥१७॥ मुमुक्षवोभवंतीहपाश्चात्यशुभजातयः॥ नतदस्तिपृथिव्यांवादिविदेवेषुवाक्वचित्॥१८॥पौरुषेणप्रयत्नेनयन्नाप्नोतिगुणान्वितः॥ब्रह्मचर्येणधैर्येणवीर्यवैराग्यरंहसा॥युक्त्यायुक्तेनहिविनानप्राप्नोषितदीहितम्॥१९॥ हितंमहासत्वतयात्मतत्त्वंविधायबुद्ध्याभववीतशोकः॥तवक्रमेणैवततोजनोयंमुक्तोभविष्यत्यथवीतशोकः॥२०॥पाश्चात्यजन्मनिविवेकमहामहिम्नायुक्तेत्वयिप्रसृतसर्वगुणाभिरामे॥ सत्वस्थकर्मणिपदंकुरुरामभद्रमैषाकरोतुभवसंगविमोहचिंता ॥२१॥ ॥इत्यार्षेवासिष्ठमहारामायणेवाल्मीकीयेदेवदूतोक्तेद्वात्रिंशत्साहस्र्यांसंहितायांमोक्षोपायेषुस्थितिप्रकरणेद्विषष्टितमःसर्गः ॥६२॥ ॥७॥

॥स्थितिप्रकरणंसमाप्तम्॥

पचयोपायेप्रणिधानवत्याबुद्ध्याविधायआत्मभावेनस्थिरीकृत्यवीतशोकोभवेत्युपदेशआशीश्च ॥ तवोपदिष्टेनक्रमेणान्योप्ययमधिकारिजनोमुक्तोभविष्यतीत्यर्थः ॥२०॥ हेरामभद्रत्वंविवेकमहामहिम्नायुक्तेप्रसृतैःपल्लवितैःसर्वैःशांतिदांत्यादिगुणैरभिरामेऽस्मिन्पाश्चात्यजन्मनिप्राप्तेसतिसत्वस्थानांजीवन्मुक्तानांकर्मणिसप्तमभूमिकालक्षणेपदंस्थानंकुरु एषावैराग्यप्रकरणोपवर्णितासर्वजनप्रसिद्धाचभवसंगविमोहचिंतात्वयिपदंस्थानंमाकरोत्वित्यर्थः ॥ २१ ॥ ॥ इतिश्रीवासिष्ठमहारामायणतात्पर्यप्रकाशेस्थितिप्रकरणेद्विषष्टितमःसर्गः ॥ ६२ ॥ ॥७॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीसर्वज्ञसरस्वतीपूज्यपादशिष्यश्रीरामचंद्रसरस्वतीपूज्यपादशिष्यश्रीमद्गंगाधरेंद्रसरस्वतीपूज्यपादशिष्येणश्रीमदानंदबोधेंद्रसरस्वत्याख्यभिक्षुणाविरचितेवासिष्ठमहारामायणतात्पर्यप्रकाशेस्थितिप्रकरणंसमाप्तम् ॥ ॥७॥

[1] अथांत्यजातिजातोपीत्यपिक्वचित्पाठः

श्रीमन्महागणपतयेनमः ॥ ॥ भुवनरचनपालनोपशांतिप्रथितमहाविभवस्वभावपूर्णम् ॥ निगमहृदयसाक्षिनिष्प्रपंचंनिजसुखबोधघनंशिवंप्रपद्ये ॥१॥ उत्पत्तिप्रकरणेसर्वसृष्टिश्रुतितात्पर्योद्घाटनायमनोर्थानैवसर्वप्रपंचरचनेतिदर्शितम् ॥ स्थितिप्रकरणेचसर्वजगत्स्थितिप्रतिपादकश्रुतितात्पर्यप्रदर्शनायमनःस्थित्यर्थानैवसर्वप्रपंचस्थितिरितिदर्शितम् ॥ इदानींयथागार्ग्यमरीचयोर्कस्यास्तंगच्छतएतस्मिंस्तेजोमंडलएकीभवंति सुषुप्तिकालेसकलेविलीने यत्प्रयंत्यभिसंविशंति यथानद्यःस्यंदमानाःसमुद्रेस्तंगच्छंतिनामरूपेविहाय गताःकलाःपंचदशप्रतिष्ठाम् एवमेवास्यपरिद्रष्टुरिमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तंगच्छंतीत्यादीनांसुषुप्तिप्रलयसमाधिसाक्षात्कारविदेहकैवल्येषुप्रपंचोपशमाज्जीवस्यब्रह्मस्वभावताप्राप्तिप्रतिपादनेनप्रत्यग्ब्रह्मैकरसाखंडवस्तुलक्षकश्रुतीनामपिमनउपशमादेवसर्वप्रपंचोपशमेनस्वरूपप्रतिष्ठायांतात्पर्यमितिरहस्योद्घाटनायोपशमप्रकरणमारभमाणःपूर्वोत्तरप्रकरणयोःसंगतिंदर्शयन्विषयप्रयोजनेनिर्दिश्यशिष्यमवधानयन्प्रतिजानीते ॥ अथेति ॥ मध्याह्नशंखध्वनिनासभोत्थानमिहोच्यते ॥ वसिष्ठस्याह्निकंराघवैविश्वामित्रसहस्थितिः ॥ १ ॥ अथस्थितिप्रतिपादकश्रुतितात्पर्यवर्णनानंतरमुपसंहारबोधकश्रुतितात्पर्यवर्णनस्यावसरसंगतिरित्यर्थः ॥ ज्ञातंनिर्वाणकारीति ॥ तथाचपूर्वप्रकरणप्रयोजनमेवास्यापीत्येककार्यकारितासंगतिरपिदर्शिताबोध्या ॥ १ ॥ शरत्तारकितेत्यादिकथासंदर्भःसमयोचिताचारावश्यकत्वद्योतनार्थः ॥ शरदितारकितःसंजाततारकआकाशइवास्तिमितायाम् ॥ सर्वेषांसमभ्यंतपदानांमध्याह्नशंखानांस्वनउदभूदितिचतुर्दशेश्लोकेसंबंधः ॥ २ ॥ श्रवणार्थित्वेनमौनस्थाःपार्थिवायत्र ॥ संसदंतरेसभामध्ये ॥ ३ ॥ ४ ॥ संनिधानाद्विलासिनीनांकरांभोरुहेषुहंसायमानेषुचामरेषुश्रवणाच्छ्रुतार्थेसमाधिनालीनेष्विवेतिनिःस्पंदत्वदर्शनादुत्प्रेक्षा ॥ मुक्तघुर्घुरवादेषुत्यक्तकंकणकिंकिणीरवेषु ॥ वयांस्येववायसास्तेषु ॥ तराविवितिसदृसउपमा ॥ ५ ॥ तज्ज्ञेषुविचारज्ञेषु ॥ ६ ॥ तमसोभूमावेवघनत्वादुपरितनांबरपीठत्वेनोत्प्रेक्षा ॥ यथाआचार्यागमनेशिष्यउत्तिष्ठन्पीठंपरित्यजतितद्वत्सूर्यस्योदयेपरित्यक्ततमःपीठसतीत्यर्थः ॥ ७ ॥ रसात्प्रेमार्द्रभावात् ॥ तस्योपमामुक्तवर्षणादिति ॥ मुक्तवर्षणप्रयुक्तादार्द्रीभावादितियावत् ॥ ८ ॥

1018

श्रीपरमात्मनेनमः ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अथस्थितिप्रकरणादनंतरमिदंशृणु ॥ उपशमप्रकरणंज्ञातंनिर्वाणकारियत् ॥ १ ॥ श्रीवाल्मीकिरुवाच ॥ ॥शरत्तारकिताकाशस्तिमितायांसुसंसदि॥ कथयत्येवमाह्लादिवसिष्ठेपावनंवचः॥२॥ श्रवणार्थित्वमौनस्थपार्थिवेसंसदंतरे॥ निर्वातइवनिस्पंदकमलेकमलाकरे ॥ ३ ॥ विलासिनीषुसंशांतमदमोहबलासुच॥ शममंतःप्रयांतीषुचिरप्रव्रजितास्विव॥ ४॥ करांभोरुहहंसेषुलीनेषुश्रवणादिव॥ मुक्तघुर्घुरवादेषुवायसेषुतराविव॥ ५॥ नासाग्रपरिविश्रांततर्जन्यंगुलिकोटिषु ॥ विचारयत्सुविज्ञानकलांतज्ज्ञेषुराजसु॥ ६॥ रामेविकासमायातप्रभातइवपंकजे॥ परित्यक्ततमःपीठेसूर्योदयइवांबरे ॥ ७॥ आकर्णयतिवासिष्ठीर्गिरोदशरथेरसात्॥ कलापिनीवजीमूतनिर्ह्रादान्मुक्तवर्षणात्॥ ८॥

यत्नेनआहृत्यपरावर्त्यस्थिते ॥ ९ ॥ शिक्षावलविचक्षणत्वादेवविलसद्बुद्धिस्फुरल्लक्ष्यंब्रह्मयस्यतथाभूते ॥ १० ॥ अलंपूर्णमानंदमायातेप्राप्ते ॥ ११ ॥ सुमित्रेमंत्रिविशेषेदुः खशीलितेमानसेमित्रतांवश्यतांयातेसतिविकासिहृदयेजाते ॥ अंबुजपक्षेआप्रातर्मानसेसरसिमनसिचदुःखेनशीलितेचतितेशोभनेमित्रेसूर्येमित्रतामुदयेनप्रीतिकरतांयातेस तितत्कालेविकासिहृदयेजाते ॥ १२ ॥ प्रोल्लसत्स्विवजातेष्वितियथायोगंविपरिणामेनसर्वत्रानुषज्जते ॥ १३ ॥ आशादिशः ॥ कल्पाभ्ररवइवमांसलोबलवान् ॥ १४ ॥ मुने र्वसिष्ठस्य ॥ १५ ॥ अंतरयांचक्रेतिरोदधेउपसंजहारेतियावत् ॥ जितोऽभिभूतःसारोजनाह्लादकांशोयस्यतथाविधोगुणःकेनमहताअभिज्ञेनाभ्युदीर्यतेप्रकटीक्रियते ॥ १६॥

आहृत्यसर्वभोगेभ्योमनोमर्कटचंचलम् ॥ श्रवणंप्रतियत्नेनसारणेमंत्रिणिस्थिते ॥ ९ ॥ वसिष्ठोक्त्यापरिज्ञातस्वात्मनींदुकलामले॥ लक्ष्मणेविलसल्लक्ष्येशिक्षावलविचक्षणे ॥ १० ॥ शत्रुघ्नेशत्रुदलनेचेतसापूर्णतांगते॥ अलमानंदमायातेराकाचंद्रोपमेस्थिते ॥ ११ ॥ सुमित्रेमित्रतांयातेमानसेदुःखशीलिते ॥ विकासिहृदयेजातेतत्कालइवपंकजे ॥ १२ ॥ तत्रस्थेषुतथान्येषुतदामुनिपुराजसु ॥ सुधौत चित्तरत्नेषुप्रोल्लसत्स्विवचेतसा ॥ १३ ॥ उदभूत्पूरयन्नाशाःकल्पाभ्ररवमांसलः ॥ अथमध्याह्नशंखानामब्धिघोषसमःस्वनः ॥ १४ ॥ महतातेनशब्देनतिरोधानंमुनेर्गिरः ॥ ययुर्जलदनादेनकोकिलध्वनयोयथा ॥ १५ ॥ मुनिरंतरयांचक्रेस्वांवाचमथसंसदि ॥ जितसारो गुणःकेनमहतासमुदीर्यते ॥ १६ ॥ मुहूर्त्तमात्रंविश्रम्यश्रुत्वामध्याह्ननिःस्वनम् ॥ घनेकोलाहलेशांतेराममंमुनिरुवाचह ॥ १७ ॥ रामाद्य तनमेतावदाह्निकंकथितंमया ॥ प्रातरन्यत्तुवक्ष्यामोवक्तव्यमरिमर्दन ॥ १८ ॥ इदंनियतितःप्राप्तंकर्त्तव्यंतद्द्विजन्मनाम् ॥ मध्याह्नमुपप न्नंयत्कर्त्तव्यंनावसीदति ॥ १९ ॥ त्वमप्युत्तिष्ठसुभगसमस्ताचारसत्क्रियाम् ॥ आचराचारचतुरस्नानदानार्चनादिकाम् ॥ २० ॥ इत्यु क्त्वामुनिरुत्तस्थौसमंदशरथःप्रभुः ॥ ससदास्सेंदुरादित्यउदयाद्रितटादिव ॥ २१ ॥ तयोरुत्तिष्ठतोःसर्वासभोत्थातुमकंपत ॥ मंदवातप रामृष्टनलिनीवालिलोचना ॥ २२ ॥ उत्तस्थौसावतंसोत्थभृंगमंडलमंडिता ॥ करिसेनेवसंध्याद्रावालोलकरपुष्करा ॥ २३ ॥ परस्परां गसंघट्टचूर्णितांगदमंडली ॥ रत्नपूर्णारुणांभोदसंध्यासमयसूचनी ॥ २४ ॥

॥ १७ ॥ अह्नानिर्वृत्तमाह्निकम् ॥ वक्ष्यामोवयमितिशेषः ॥ १८ ॥ मध्याह्नंमध्याह्नेयदुपपन्नंयुक्तंद्विजन्मनांनियतितःप्राप्तंकर्त्तव्यंकर्मनावसीदतीतियत्तदिदंमयापिकर्त्तव्य मित्यन्वयः ॥ १९ ॥ २० ॥ मुनिनासमंससदाःसभास्थसर्वजनसहितोदशरथोप्युत्तस्थौ ॥ २१ ॥ अलिलोचनाइतिसभायाअपिविशेषणम् ॥ २२ ॥ अत्रत्यमध्याह्नकाले अस्ताचलेसूर्योदयकालःकरिणामुत्थानयोग्यइत्याशयेनसंध्याद्राविति ॥ विंध्याद्राविितिपाठेस्थानोपमा ॥ २३ ॥ यतोरत्नपूर्णाअतःसादृश्यादरुणांभोदसंध्यासमयस्यसूच नीस्मारिकेतियावत् ॥ २४ ॥

पतद्भिरुत्तंसविभ्रांतैर्भृंगैराहितघुंघुमा ॥ मुकुटानामुद्दामैर्नानामणिविद्योतैः शक्रचापीकृतमंबरमाकाशंवस्त्रजातंवाययासा ॥ २५ ॥ कांतालक्षणानांलतानांहस्तलक्षणेपुदलेपु
लवेपुचारुचामरलक्षणामंजर्योयस्यांतथाविधावनलेखेवेत्यर्थः ॥ २६ ॥ कचंतीभिः कटकभाभिः रक्तीकृतान्यन्योन्यमाकर्षणात्तताविस्तृतान्यंवराणियस्याम् ॥ २७ ॥
कर्पूरकणलक्षणैस्तत्सदृशैश्चनीहारैर्हिमकणैरुड्डीयमानैरचिताअमलाः शुभ्रावारिदायया ॥ अतएवनीहारकाशपुष्पादिभिर्व्याप्ताशेषभूमिकाशरद्दिक्तटमालेवस्थिता ॥ २८ ॥

पतदुत्तंसविभ्रांतभृंगोपहितघुंघुमा ॥ मुकुटोद्दामविद्योतशक्रचापीकृतांबरा ॥ २५ ॥ कांतालताहस्तदलचारुचामरमंजरी ॥ वनलेखे
वविक्षुब्धवरवारणमंडला ॥ २६ ॥ कचत्कटकभारक्तीकृतान्योन्यततांबरा ॥ वातव्याधूतपुष्पेवमंदारवनमालिका ॥ २७ ॥ कर्पूरकण
नीहाररचितामलवारिदा ॥ शरद्दिक्तटमालेवप्रसृताशेषभूमिका ॥ २८ ॥ लोलमौलिमणिप्रांतपाटलांबरकोटरा ॥ संध्येवाफुल्लनीला
ब्जाकार्यसंहारकारिणी ॥ २९ ॥ रत्नांशुसलिलापूरमुखपद्मनिरंतरा ॥ पद्मिनीवालिवलितानूपुरारवसारसा ॥ ३० ॥ संततासासभाप्त
स्थौभूभृच्छतसमाकुला ॥ भूतसंततिसंभ्रांतास्तृष्टिर्नवमिवोदिता ॥ ३१ ॥ प्रणम्याथनृपंभूपानिर्ययुर्नृपमंदिरात् ॥ शक्रचापीकृतारत्नैरं
बुधेरिववीचयः ॥ ३२ ॥ सुमंत्रोमंत्रिणश्चैववसिष्ठमथभूमिपम् ॥ प्रणम्यजग्मुःस्नानायरसविज्ञानकोविदाः ॥ ३३ ॥ वामदेवादय
श्चान्येविश्वामित्रादयस्तथा ॥ वसिष्ठंपुरतःकृत्वातस्थुरावर्जनोन्मुखाः ॥ ३४ ॥ राजादशरथस्तत्रपूजयित्वामुनिव्रजम् ॥ तद्दिसृष्टोज
गामाथस्वकार्यार्थमरिंदमः ॥ ३५ ॥ वनंवनास्पदाजग्मुर्व्योमव्योमनिवासिनः ॥ नगरंनागराश्चैवप्रातरागमनायते ॥ ३६ ॥ महीप
तिवसिष्ठाभ्यांप्रणयात्प्रार्थितःप्रभुः ॥ वसिष्ठसद्मनिनिशांविश्वामित्रोत्यवाहयत् ॥ ३७ ॥ वसिष्ठःसहविप्रेंद्रैःपार्थिवैर्मुनिभिस्तथा ॥ उ
पास्यमानोरामाद्यैःसर्वैर्दशरथात्मजैः ॥ ३८ ॥ जगामस्वाश्रमंश्रीमान्सर्वलोकनमस्कृतः ॥ अनुयातस्सुरौघेनब्रह्मलोकमिवाब्जजः
॥ ३९ ॥ तस्मात्प्रदेशाद्रामादीन्पुनर्दशरथात्मजान् ॥ सर्वान्विसर्जयामासपादोपांतेनतानसौ ॥ ४० ॥ नभश्चरान्धरणिचरानधश्चरा
न्विसृज्यसंस्तुतगुणगोचरांश्चतान् ॥ यथाक्रमंस्वगृहमुदारसत्ववांश्चकारतांद्विजजनवासरक्रियाम् ॥ ४१ ॥ ॥ इ० वा० वा० दे० मो० उ
पशमप्रकरणआह्निकवर्णनंनामप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

कार्याणांदिनकृत्यानामुपसंहारकारिणी ॥ २९ ॥ ३० ॥ भूभृतांराज्ञांपर्वतानांचशतैः ॥ ३१ ॥ ३२ ॥ रसेब्रह्मरसेजलेचविहारविज्ञानेकोविदाः ॥ ३३ ॥ आवर्जनमनुज्ञानतदु
न्मुखास्तत्प्रतीक्षाः ॥ ३४ ॥ ३५ ॥ वनास्पदावानप्रस्थाः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ तस्मादाश्रमप्रदेशात् ॥ ४० ॥ अधश्चरान्नागान् ॥ संस्तुतानांप्रशस्तानांगुणानांगो
चरानाश्रयानितियावत् ॥ यथाक्रमंविसृज्यस्वगृहंप्रविश्येतिशेषः ॥ द्विजजनानांवासरोचितांपंचयज्ञक्रियांचकारेत्यर्थः ॥ ४१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपश
मप्रकरणेप्रथमस्सर्गः ॥ १ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

इहाह्निकक्रियाराश्रीरामस्यश्रुतचिंतनम् ॥ बुद्धेःश्रुतार्थैस्थैर्यार्थंप्रार्थनाचोपवर्ण्यते ॥ १ ॥ दिनक्रममाह्निकम् ॥ १ ॥ इतिवक्ष्यमाणप्रकारेणचक्रुः ॥ स्वगृहेषुवीथिपुतथा बहिश्चयान्युचितानीत्यर्थः ॥ २ ॥ ३ ॥ ४ ॥ अमरसद्मसुदेवालयेषुस्वेषुस्वगृहेषुच ॥ ५ ॥ ६ ॥ दिवसस्तनुःसूक्ष्मोऽभवत् ॥ अष्टांगशेषत्वादष्टमभागशेषत्वात् ॥ ७॥ तत्कालोचितचेष्टयापुराणधर्मशास्त्रावलोकनादिरूपया ॥ ८ ॥ ९ ॥ ततइत्युपात्तस्यतदुत्तरकालस्यक्षीरोदः कामिन्याऐंद्रीदिक् कांतसंगमप्रयुक्तशोकहरणानंदस्यचंद्रसंगमप्रयुक्त

॥ श्रीवाल्मीकिरुवाच ॥ ॥ तेसमेत्यगृहंगत्वाराजपुत्राःशशित्विपः ॥ चक्रुस्सर्वमशेषेणस्वसद्मसुदिनक्रमम् ॥ १ ॥ वसिष्ठोराघवश्चैव राजानोमुनयोद्विजाः ॥ इतिचक्रुस्स्वकार्याणितथास्वगृहवीथिपु ॥ २॥ सस्नुःकमलकह्लारकुमुदोत्पलहारिपु ॥ जलाशयेपुचक्राह्वहंससारसराजिपु ॥ ३ ॥ गोभूतिलहिरण्यानिशयनान्यासनानिच ॥ ददुर्दानानिविप्रेभ्योभाजनान्यंशुकानिच ॥ ४ ॥ हेमरत्नविचित्रेपुस्वेपुचामरसद्मसु ॥ आनर्चुरच्युतेशानहुताशार्कादिकान्सुरान् ॥ ५ ॥ पुत्रपौत्रसुहृद्भृत्यबंधुमित्रगणैस्सह ॥ ततआस्वादयामासुर्भोजनान्युचितानिवै ॥ ६ ॥ एतस्मिन्समयेचास्मिन्नगरेदिवसोऽभवत् ॥ तनुरष्टांगशेपत्वाद्दृष्टोनचमनोहरः ॥ ७॥ सायंतनदिनांतंतेतत्कालोचितचेष्टया ॥ अनयन्नंशुभिस्सार्द्धंयावदस्तंययौरविः ॥ ८ ॥ संध्यांववंदिरेसुष्ठुजेपुश्चैवाघमर्षणम् ॥ पेठुःस्तोत्राणिपुण्यानिजगुर्गाथामनोहराः ॥ ९ ॥ ततश्चाभ्युदिताश्यामाकामिनीशोकहारिणी ॥ क्षीरोदादिवमाहेंद्रीचंद्रावश्यायदायिनी ॥ १० ॥ शनैरास्तीर्णपुष्पेपुकीर्णकर्पूरमुष्टिपु ॥ दीर्घेंदुबिंबरम्येपुतस्थुस्तल्पेपुराघवाः ॥ ११ ॥ अथरामादृतेन्येषांतत्रतद्व्यवहारिणी ॥ व्यतीयायशनैःश्यामामुहूर्त्तइवशोभना ॥ १२ ॥ तस्थौरामस्तुतामेववासिष्ठींवचनावलीम् ॥ चिंतयन्मधुरोदारांकरिणींकलभोयथा ॥ १३ ॥ किमिदंनामसंसारभ्रमणंकिमिमेजनाः ॥ भूतानिचविचित्राणिकिमायांतिप्रयांतिकिम् ॥ १४ ॥ मनसःकीदृशंरूपंकथंचैतत्प्रशाम्यति ॥ मायेयंसाकिमुत्थास्यात्कथंचैवनिवर्त्तते ॥ १५ ॥ निवृत्तयानयाकःस्याद्गुणोदोषोथवाभवेत् ॥ कथमात्मनिचैवायंततेसंकोचआगतः ॥ १६ ॥ किमुक्तंस्याद्भगवतामुनिनामनसःक्षये ॥ किंचेंद्रियजयेप्रोक्तंकिमुक्तमथवात्मनि ॥ १७॥

स्तापोपशमनोऽवश्यायइतिक्रमेणोपमानानि ॥ १० ॥ दीर्घीभूतमिंदुबिंबमिवरम्येषु ॥ ११ ॥ तद्व्यवहारिणीतत्कालोचितविषयभोगनिद्रादिव्यवहारवती ॥ १२ ॥ कलभःकरिशावःकरिणींमातरंयथा ॥ १३ ॥ चिंताप्रकारमेवप्रपंचयति ॥ किमित्यादिना ॥ १४ ॥ १५ ॥ सर्वभोग्यभोक्तृभोगनिवृत्तेर्दोषःपुरुषार्थविघातोभवेत् ॥ ततेआकाशादपिविस्तीर्णे ॥ १६ ॥ किंसाधनंफलंचोक्तंस्यात् ॥ आत्मनिविज्ञातेइतिशेषः ॥ १७ ॥

॥ १८ ॥ दुःखोपशांतिःसिद्ध्यतीतिशेषः ॥ एतानिमनोमायादिरूपाणि ॥ १९ ॥ भुज्यंतइतिभोगाविषयास्तएवसंस्कारात्मनाघनीभूयचित्ताकाशावरकत्वाद्दुःखसहस्रधारावर्षित्वाच्चाभ्राणितान्यनुसृत्यमालेववलयतिवेष्टयतीतिमालावलयांधीवृत्तिलक्षणांबलाकांबकींकथंपृथक्करोमिविवेकेनपरावर्त्तयामीतियावत् ॥ पयसोदुग्धस्यधारांभागमितियावत् ॥२० ॥ ननुकिंविमर्शैर्नत्यज्यंतांभोगास्तत्राह ॥ भोगाइति ॥ विपदांप्रतीकारेइतिशेषः॥ सर्वात्मनाभोगत्यागेजीवनासिद्धेस्तदर्थमल्पस्यापिभोगस्योपादानेवासनावृद्धेःसंकटमागतमित्यर्थः ॥ २१ ॥ संकटांतरमप्याह ॥ मनोमात्रमिति ॥ इदंप्राप्यमवश्यप्राप्तव्यमात्मतत्त्वंमनएवमीयतेप्रमीयतेऽनयेतिमात्राप्रमाणंयस्यतथाविधम् ॥ तच्चमनोनोऽस्माकमिदंबाह्यमेवविषयजातमेवप्रयुज्यतेयेनतत्प्रयोजनंनिष्पत्तिहेतुभूतंपुरुषार्थभूतंचयस्यतथाविधंसन्मौर्ख्याद्गिरितोपिगुरुदुरुद्धरंसंपन्नम् ॥ यथाशिशोर्मौर्ख्यात्क

जीवश्चित्तंमनोमायेत्येवमादिभिराततैः ॥ रूपैरात्मैवसंसारंतनोतीममसन्मयम् ॥ १८ ॥ एभिरेवंमनोमात्रतंतुबद्धैःक्षयंगतैः ॥ दुःखोपशांतिरेतानिसुचिकित्स्यानिनःकथम् ॥ १९ ॥ भोगाभ्रमालावलयांधीबलाकामिमांकथम् ॥ पृथक्करोमिपयसोधारांहंसइवांभसः ॥ २० ॥ भोगास्त्यक्तुंनशक्यंतेतत्त्यागेनविनावयम् ॥ प्रभवामोनविपदामहोसंकटमागतम् ॥ २१ ॥ मनोमात्रमिदंप्राप्यंतच्चैवेदंप्रयोजनम् ॥ संपन्नंनोगिरिगुरुमौर्ख्याद्यक्षःशिशोरिव ॥ २२ ॥ परमांशांतिमागत्यगतसंसारसंभ्रमा ॥ बालेवलब्धदयिताकंचिन्नाप्स्यतिनोमतिः ॥ २३ ॥ कदोपशांतसंरंभंविगताशेषकौतुकम् ॥ अपापमात्मविश्रांतंममस्यात्पावनंमनः ॥ २४ ॥ कलाकलापसंपूर्णाच्छशांकादपिशीतले ॥ पदेसुरूढंविश्रम्यभ्रमिष्यामिकदाजगत् ॥ २५ ॥ कलनापेलवंरूपमुत्सृज्यालीनमात्मनि ॥ कदैष्यतिमनःशांतिमंभसीवतरंगकः ॥ २६ ॥ तृष्णातरंगाकुलितमाशामकरमालिनम् ॥ कदासंसारजलधिंतीर्त्वास्यामहमज्वरः ॥ २७ ॥ कदोपशमशुद्धासुपदवीषुविचक्षणाः ॥ मुमुक्षूणांनिवत्स्यामोनिःशोकसमदर्शनाः ॥ २८ ॥ संतापितसमस्तांगःसर्वधातुभयंकरः ॥ संसृतिज्वरआदीर्घःकदानाशमुपैष्यति ॥ २९ ॥ निर्वातदीपलेखेवकदाचित्तंगतव्यथम् ॥ शममेष्यतिहृद्बुद्धेसुप्रकाशघनांतरम् ॥ ३० ॥

ल्पितोयक्षः ॥ तथाचविषयाधीनसिद्धिकंमनस्तेभ्योनिवर्त्तयितुमेवाशक्यंनिःस्वरूपतापत्तेस्तदनिवृत्तौतुनतत्त्वसाक्षात्कारेप्रमाणंतत्कर्त्तुंशक्यमितिसंकटांतरमित्यर्थः ॥ २२ ॥ यदितुनिर्वासनंसर्वविषयोपशमेपिब्रह्माकारतामात्रावलंबनेनमनोवस्थापयितुंशक्येततदास्यादभिलषितसिद्धिरितिचिंतयन्नाह ॥ परमामिति ॥ लब्धोदयितःकांतोययातथाविधाबालातरुणीवलब्धब्रह्माकारासतीकंचिदन्यंनोप्राप्स्यतिनस्मरिष्यतीत्यर्थः ॥ २३ ॥ तांदशांप्राप्तुमुत्कंठते ॥ कदेत्यादिना ॥ संरंभःक्रोधः ॥ कौतुकंकामः पापग्रहणंपुण्यतदुभयकार्याणामप्युपलक्षणम् ॥ २४ ॥ सप्तमभूमिकापर्यंतंसुरूढंयथास्यात्तथाविश्रम्यजीवन्मुक्तिसुखंप्राप्स्येतियावत् ॥ २५ ॥ आत्मनिआलीनंतिरोहितंसत् ॥ २६ ॥ ॥ २७ ॥ मुमुक्षूणांप्राप्यासुपदवीषुपदेषु॥२८॥अंगानिस्त्रीपुत्रपश्वादीनिहस्तपादादीनिच ॥ धातवस्स्वर्णरूप्यादयस्त्वगसृङ्मांसादयश्चतेभ्यःक्षीयमाणेभ्योभयंकरः॥२९॥३०॥

१ अपापपदेत्यपिपाठः

1020

विषयाभिमुखाकर्षणलक्षणदुरीहाभिर्दुश्चेष्टाभिर्दग्धोदेहोयैस्तथाविधानींद्रियाणिविषयहेलयाकदादुःखानिसंतरिष्यंतीत्यर्थः ॥ अथवाइंद्रियाणिकर्तॄणि ॥ दुरीहादुष्टविषयाभिलाषस्तत्प्रयुक्तानिदग्धदेहानिभाविनानाशरीराणिकर्मभूतानिविषयहेलयादुःखेभ्यःदुःखानिपरिहत्यकदातरिष्यंतीतियोजना ॥ दुःखेभ्यइतिसुखदुःखतक्रियायामितिचौरादिकाद्दुःखधातोर्भावेघञितुमर्थाच्चभाववचनादितिचतुर्थी ॥ ३१ ॥ पशुपुत्रधनान्नपानादीनामलाभवियोगादिनारुदतिमूढेमयिरोदननिमित्तभूतोऽयंदेहएवसप्रसिद्धआत्माअहंचेतिव्यर्थंपूर्वपूर्वदेहवासनाकामकर्मपरंपराहितोभ्रमःप्रबोधवैमल्येशरदिप्रवृत्तायांवार्षिकोऽसितोमेघइवकदानाशमुपैष्यतीत्यर्थः ॥ ३२ ॥ उत्कटयामुमुक्षयास्वर्गोपिस्वस्यतृणवद्भातीत्याह ॥ मंदारेति ॥ मतिःसुखानुभवः ॥ अहंयाचेवांछामीतियावत् ॥ वयमित्यस्मदोद्वयोश्चेतिबहुवचनम् ॥ ३३ ॥ इदानींमनआदीन्विवेकग्रहणायप्रार्थयते ॥ वीतरागेत्यादिना ॥ हेमनःत्वयिपदंस्थानंकच्चित्करिष्यंति ॥ ३४ ॥ अहंदुःखलक्षणानांभोगिनामजगराणांभोजनंभक्ष्यंसन्नासामाक्रंदगिरांपुनर्भाजनंमाभूवमित्यन्वयः

कदेंद्रियाणिदुःखेभ्यःसंतरिष्यंतिहेलया॥ दुरीहादग्धदेहानिगरुत्मंतइवार्णवान् ॥३१॥ अयंसोहंरुदन्मूढइतिव्यर्थाहितोभ्रमः॥ शरदीवासितोमेघःकदानाशमुपैष्यति॥३२॥ मंदारवनलेखासुयामतिस्सातृणायते ॥ याचेतत्पदमात्मीयंसंप्राप्स्यामःकदावयम्॥३३॥ वीतरागजनप्रोक्तानिर्मलाज्ञानदृष्टयः॥ कच्चित्पदंत्वयिमनःकरिष्यंतीतिमेवद॥३४॥ हाताततमातःपुत्रेतिगिरामासामहंपुनः॥ भाजनंचित्तमाभूवंभोजनंदुःखभोगिनाम् ॥ ३५ ॥ हेबुद्धेभगिनिभ्रातुरर्थितांपूरयाशुमे॥ आवयोर्दुःखमोक्षायविचारयमुनेर्गिरः॥३६॥ त्वांपादपतितःप्रीत्यायाचेसतिसुतेमते॥ तेनभव्येभवोच्छेदभूतयेसुस्थिराभव॥३७॥ वसिष्ठमुनिनाप्रोक्ताविरक्ताःप्रथमंगिरः॥ ततोमुमुक्षोराचारउत्पत्तीनांक्रमस्ततः॥३८॥ ततःस्थितिप्रकरणंसमंदृष्टांतसुंदरम्॥ विज्ञानगर्भंसुलभंयथावत्स्मरहेमते॥३९॥ कृतमतिशतशोविचारितंयद्यदितदुपैतिनमानसस्यबुद्धिः॥ भवतितदफलंशरद्घनाभंसततमतोमतिरेवकार्यसारः॥४०॥ ॥इ०वा०वा०दे०मोक्षोपायेपूपशमप्रकरणेउपदेशानुवर्णननंनामद्वितीयःसर्गः॥२॥ ॥छ॥ ॥छ॥ ॥छ॥

॥ ३५ ॥ जीवबुद्ध्योरेकाविद्योदरोद्भूतत्वाद्भगिनीतिसंबोधनम् ॥ मुनेर्वसिष्ठस्य ॥ ३६ ॥ सतिसाध्वि ॥ शास्त्रसज्जनप्रसादेनपश्चादुत्पन्नत्वात्सुतेपुत्रि ॥ मतेसन्मते ॥ तेनमत्प्रार्थनेन ॥ भवोच्छेदोपलक्षितपूर्णतासंपदे ॥ ३७ ॥ एवंप्रार्थनयास्थिरीकृतांमतिंवैराग्यप्रकरणादिप्रकरणचतुष्टयार्थस्मरणेक्रमान्नियुंक्ते ॥ वसिष्ठेति ॥ प्रोक्तामन्मुखेनवादिताःस्वयंप्रोक्ताश्चस्थितिप्रकरणांतागिरः ॥ ३८ ॥ विज्ञानगर्भंसुलभंसरलंच विज्ञानगर्भैरधिकारिभिराख्यानैर्वासुलभंसुबोधमितिवा ॥ ३९ ॥ ननुमनसःप्राक्प्रार्थितत्वात्ततएवप्रकरणचतुष्टयार्थावधारणसिद्धेःकिमर्थंतद्व्यतिरेकेणपुनर्मतिःप्रार्थ्यतेतत्राह ॥ कृतमतीति ॥ मानसस्यमनसःकृतमतिनिपुणंयथास्यात्तथाशतशोयद्वस्तुविचारितंभवतितद्बुद्धिरध्यवसानमतिर्यदिनोपैतिनांगीकरोतितर्हितत्तथाविचारितमप्यफलंशरद्घनवन्नश्यत्येवनस्थिरीभवतीत्यर्थः ॥ अतःश्रवणेनविचारितेपितत्त्वेमतिर्मननकृताध्यवसायबुद्धिरेवसततंकार्यैकर्त्तव्यार्थविषयेसारोमुख्याभवतीतिमननायपृथक्कृत्यप्रार्थनंयुक्तमेवेत्यर्थः ॥ ४० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्राकाशेउपशमप्रकरणेद्वितीयःसर्गः ॥ २ ॥

उपःस्नानगृहायातरामप्रभृतिभिस्सह ॥ वसिष्ठस्यसभायानंप्रस्तावश्चात्रकीर्त्यते ॥ १ ॥ तस्यरामस्य ॥ एवंप्राययाउक्तप्रकारया ॥ ततयाविस्तृतयाचिंतया ॥ १ ॥ तमोभिः कडारासुकपिशवर्णासु ॥२॥३ ॥ संपाद्यनिर्वर्त्यसंध्यावंदनादिकमित्यौचित्याद्गम्यते ॥ भ्रातृभिःप्रहितःप्रेपितःअल्पःपरीवारःपरिजनोयस्य ॥ भ्रातृभिस्सहप्रहितःआप्ततमोल्पः परीवारोयस्येतिवा ॥ ४ ॥ समाधिसंस्थमिति ॥ पूर्वमेवस्नात्वाप्रातःकृत्यंनिर्वर्त्यसमाधिसंस्थमितिगम्यते ॥ ५ ॥ तेरामादयोयावत्तमस्सम्यगालूनंछिन्नंभवतितावत्तस्थुः ॥६॥

श्रीवाल्मीकिरुवाच ॥ ॥ तस्यैवंप्राययातत्रततयोदारचिंतया ॥ साव्यतीयायरजनीपद्मस्येवार्ककांक्षिणः ॥ १ ॥ किंचित्तमःकडारासु किंचिद्प्यरुणासुच ॥ नभोविरलतारासुदिक्षुसंमार्जितास्विव ॥ २ ॥ प्रभाततूर्यघोषेणसममिंदुसमाननः ॥ उत्तस्थौराघवःश्रीमान्पद्मः पद्मकरादिव ॥ ३ ॥ प्रातःस्नानविधिंकृत्वासंपाद्यभ्रातृभिःपुनः ॥ प्रहिताल्पपरीवारोवसिष्ठसदनंययौ ॥ ४ ॥ समाधिसंस्थमेकांतेमुनि मात्मपरायणम् ॥ दूरएवाननामासौरामोविनतकंधरः ॥ ५ ॥ तंप्रणम्यांगणेतस्थुस्तस्मिंस्तेविनयान्विताः ॥ यावत्तमस्समालूनंव्यक्तंदि ङ्मुखमंडलम् ॥ ६ ॥ राजानोराजपुत्राश्चऋषयोब्राह्मणास्ततः ॥ आययुस्सदनंमौनंब्रह्मलोकमिवामराः ॥ ७ ॥ तद्वसिष्ठस्यसदनंवभू वजनसंकुलम् ॥ हस्त्यश्वरथसंबाधंपार्थिवाचारशोभनम् ॥ ८ ॥ क्षणाद्वसिष्ठोभगवान्विरराससमाधितः ॥ आचारेणोपचारेणज ग्राहप्रणतंजनम् ॥ ९ ॥ तथानुयातोमुनिभिर्विश्वामित्रान्वितोमुनिः ॥ आरुरोहरथंश्रीमान्सहसाब्जमिवाब्जजः ॥ १० ॥ ययौगृहंदा शरथंसैन्येनमहतावृतः ॥ ब्रह्मेवशक्रनगरंसमस्तसुरमालितः ॥ ११ ॥ विवेशावनतांतत्ररम्यांदाशरथींसभाम् ॥ हंसयूथानुवलितोरा जहंसइवाब्जिनीम् ॥ १२ ॥ त्रीणितत्रपदान्याशुतदादशरथोनृपः ॥ निर्जगाममहार्वारस्सिंहासनसमुत्थितः ॥ १३ ॥ विविशुस्तत्रतेसर्वे नृपादशरथादयः ॥ वसिष्ठाद्याश्चमुनयोऋषयोब्राह्मणास्तथा ॥ १४ ॥ मंत्रिणश्चसुमंत्राद्याःसौम्याद्याश्चविपश्चितः ॥ राजपुत्राश्चरामा द्यामंत्रिपुत्राःशुभादयः ॥ १५ ॥ अमात्याद्याःप्रकृतयःसुहृदोत्राद्याश्चनागराः ॥ मालवाद्यास्तथाभृत्याःपौराद्याश्चैवमालिनः ॥ १६ ॥ अ थतेपूपविष्टेषुस्वेपुस्वेष्वासनेपुच ॥ सर्वेष्वेवोपविष्टेपुवसिष्ठोन्मुखदृष्टिषु ॥ १७ ॥ सभाकलकलेशांतेमौनसंस्थेपुवंदिषु ॥ वृत्तासुस्थिति वार्त्तासुसौम्येतस्मिन्सभांतरे ॥ १८ ॥

मौनंनिःशब्दंयथास्यात्तथा ॥ ७ ॥ पार्थिवोचिताचारेपिपार्थिवसदनमिवशोभनंशो भमानम् ॥ ८ ॥ विनयाद्याचारेणप्रियवचनाद्युपचारेण ॥ ९ ॥ १० ॥ ११ ॥ अवनतांप्रणम्रजनाम् ॥ १२ ॥ निर्जगामअभिजगाम ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ तेपुमु निनृपमंत्रिप्रभृतिपुप्रथममुपविष्टेपुसत्सुपश्चादन्येष्वपिसर्वेपूपविष्टेष्वित्यर्थः ॥ सर्वेष्वेवेत्यादीनांसर्गसमाप्तिपर्यंतंसर्वेषांसमन्यंतानामुत्तरसर्गस्थेदंदशरथोवाक्यमुवाचेत्यत्रसंबं धः ॥ १७ ॥ सभायाःकलकलेकोलाहले ॥ स्थितिवार्त्तासुपरस्परंराज्ञिसुखावस्थितिप्रश्नप्रतिवचनवार्त्तासुवृत्तासुसतीपु ॥ १८ ॥

अंभोजकोटरान्निर्गत्यसभांविशत्स्वितिशेषः ॥ अतएवांभोजानांपरागेषुमुक्तादामसुचंचलंयथास्यात्तथाविलोलेषुलंपटेषु ॥ १९ ॥ २०॥ मृदुषुपर्यंकेषु ॥ २१ ॥ जालागतैरर्ककरैरवलोकनप्रतिघाताल्लोलानिविलोचनानियासाम् ॥ रत्नप्रभानिकरैःपिंगलासुकोमलासुसुकुमारीषुतासुप्रागुक्तासुसितचामरधारिणीषुसंत्यक्तचापललवंयथास्यात्तथामौनस्थितासु ॥ २२ ॥ नानारत्नखचितास्वजिरभूमिषुमुक्ताफलानांप्रतिफलानिप्रतिच्छायास्तत्प्रतिमाअर्करश्मिरागाउदरेयासांतथाविधासुनानापुष्पाकारचित्रासुजातासुअभिनवातपबिंबाएवेमेइतिभ्रांतिबुद्ध्याअलिकुलेपुष्पकौघंविकीर्णपुष्पसमूहंनासादयतिअलभमानेअतएवभूम्यस्पर्शान्नभसिमेघइवभ्रमतिसति ॥२३ ॥ तस्मिन्सत्संगमेसतांसमाजेआर्यलोकेबहुमतजनेप्राक्संचितैःपुण्यैर्यद्वसिष्ठवदनप्रसृतंवचनंश्रुतंतस्यसंतत्याऽऽदिविस्तारेणप्रसृतविस्मयमुद्भूताश्चर्यंयथास्यात्तथाअन्योन्यमीप्सितमभिमतमनल्पगुणाभि

स्फुरत्पवनमालासुविशत्स्वंभोजकोटरात् ॥ परागेषुविलोलेषुमुक्तादामसुचंचलम् ॥ १९ ॥ बृहत्कुसुमदोलाभ्यःप्रसृताभ्यःसमंततः ॥ वातिमांसलमामोदमादायमधुरानिले ॥ २० ॥ वातायनेषुमृदुषुकुसुमाकीर्णभूमिषु ॥ पर्यंकेषूपविष्टासुपश्यंतीषुपुरंध्रिषु ॥ २१ ॥ जालागतार्ककरलोलविलोचनासुरत्नप्रभानिकरपिंगलकोमलासु ॥ संत्यक्तचापललवंचपलासुतासुमौनस्थितासुसितचामरधारिणीषु ॥ २२ ॥ मुक्ताफलप्रतिफलप्रतिमार्करश्मिरागोदरास्वजिरभूमिषुपुष्पकौघम् ॥ नासादयत्यभिनवातपबिंबबुद्ध्याभ्रांतेभ्रमत्यलिकुलेनभसीवमेघे ॥ २३ ॥ पुण्यैर्वसिष्ठवदनप्रसृतंश्रुतंयत्तत्संततिप्रसृतविस्मयमार्यलोके ॥ सत्संगमेमृदुपदाक्षरमुग्धवाक्यमन्योन्यमीप्सितमनल्पगुणाभिरामम् ॥ २४ ॥ दिग्भ्यःपुराच्चगगनाच्चवनाच्चसिद्धविद्याधरार्यमुनिविप्रगणेवसिष्ठम् ॥ मौनप्रणाममभितःप्रविशत्यशब्दंसोपांशुगौरववतासहजातवाक्ये ॥ २५ ॥ उन्निद्रकोकनदकोमलकोशकृष्टभग्नालिजालमकरंदसुवर्णरागैः ॥ आपिंगलेमरुतिवातिविलोलघंटाटांकारगीतविनिपीतनिशांतगीते ॥ २६ ॥

राममृदुपदाक्षरमुग्धवाक्यंभाषमाणेसतीतिशेषः ॥ २४॥ वनाच्चसमागतेइतिशेषः ॥ विद्याधराणामार्यमुनीनामन्येषांचविप्राणांगणेवसिष्ठमभितोमौनप्रणामंमौनेनप्रणम्यअशब्दंपिहितास्यंयथास्यात्तथाप्रविशतिसति ॥ ततोगौरववतागरीयसाअवश्यसंभाष्येणसहसोपांशुअतिमंदस्वरंकर्णसन्निधौजातवाक्येसति ॥ वसिष्ठमभितइत्यभितःपरितःसमयानिकषाहाप्रतियोगेपीतिपष्ठ्यर्थेद्वितीया ॥ २५ ॥ उन्निद्राणांकोकनदानांरक्तकमलानांकोमलेभ्यःकोशेभ्यःकृष्टानांप्राक्तदंतर्मग्नानामलिजालानांमकरंदानांसुवर्णानांपरागाणांचरागैरंजनैरापिंगलेईषत्पिंगलवर्णेमरुतास्वाभिमर्शाद्विलोलानांगृहप्रांतघंटानांटांकारगीतैर्विनिपीतान्यभिभूतानिनिशांतानांगृहाणांगीतानियेनतथाविधेमरुतिवातिसति॥ घंटाजिह्वाग्रेपिप्पलपत्राकाररचनान्मंदवातैरपिगृहपटलघंटावलिध्वननंदक्षिणदेशेनेपालेचप्रसिद्धम् ॥ २६ ॥

चंदनामोदैर्मिश्रेचलकुसुमरजोभिरंक्यतइत्यंकस्तथाविधेअतएवसरसानांकुसुमदाम्नामुद्दामैर्गंधैरंकितानिसुरभितान्यभ्राणियेनतथाविधेअगुरुतगरनिर्यासधूमेतन्नीलिम्नाति रोहितवर्णत्वाच्छब्दैरेवविज्ञातानतुसाक्षाद्दृष्टाभृंगायस्मिन्कर्मणितद्यथास्यात्तथावितानबद्धानामंभोरुहाणामामोदलेशैःसहसरतिउर्ध्वंप्रवहतिसतीत्यर्थः ॥ २७ ॥ ॥ इति श्रीवासिष्ठम०तात्पर्यप्रकाशेउप०णेतृतीयःसर्गः ॥ ३ ॥ ॥ ७ ॥ ॥ राज्ञावसिष्ठवाक्यानांप्रशंसामुनिवाक्यतः ॥ रामेणचिंतितार्थानामनुवादश्चवर्ण्यते ॥ १ ॥ विश्रब्धैर्विश्वासातिशयप्रकाशकैःपदैस्सुंदरम् ॥ १ ॥ व्यस्तनेनपूर्वेद्युर्भवेनवाक्यसंदर्भोच्चारणजन्मनाखेदेनश्रमेण ॥ २ ॥ आनंदीश्रोत्रानंदनशीलः ॥ विविक्तोविशदः ॥ ३ ॥

अगुरुतगरधूमेचंदनामोदमिश्रेसरसकुसुमदामोद्दामगंधांकिताभ्रे ॥ सरतिसतिवितानांभोरुहामोदलेशैश्चलकुसुमरजोंकेशब्दविज्ञातभृंगम् ॥ २७ ॥ ॥ इ०वा०वा०दे०मोक्षोपायेपूपशमप्रकरणेसभासंस्थानवर्णनंनामतृतीयःसर्गः ॥ ३ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ मेघगंभीरयावाचाविश्रब्धपदसुंदरम् ॥ इदंदशरथोवाक्यमुवाचमुनिनायकम् ॥ १ ॥ भगवन्व्यस्तनेनत्वंवाक्यसंदर्भजन्मना ॥ कच्चिन्मुक्तोसिखेदेनतपःकार्श्यातिशायिना ॥ २ ॥ त्वयस्तनोक्तोयआनंदीविविक्तोवचसांगणः ॥ अमृतावर्षणेनेवतेनैवाश्वासितावयम् ॥ ३ ॥ चंद्रांशवइवोत्सार्यतमांस्यमृतनिर्मलाः ॥ अंतःशीतलयंत्येतामहतामम लागिरः ॥ ४ ॥ अपूर्वाह्लाददायिन्यउच्चैस्तरपदाश्रयाः ॥ अतिमोहापहारिण्यःसूक्तयोहिमहीयसाम् ॥ ५ ॥ आत्मरत्नावलोकैकदीपिकासरसात्मिका ॥ यस्माद्युक्तिलतोदेतिसवंद्यःसुजनद्रुमः ॥ ६ ॥ तदुरीहितंदुर्विहितंसर्वंसज्जनसूक्तयः ॥ प्रमार्जयंतिशीतांशोस्तमःकांडमिवांघ्रयः ॥ ७ ॥ तृष्णालोभादयोस्माकंसंसारनिगडामुने ॥ तवोक्त्यातनुतांयाताःशरदीवासितांबुदाः ॥ ८ ॥ संप्रवृत्तावयंद्रष्टुमात्मानमपकल्मषम् ॥ रसांजनानीतदृशोजात्यंधाइवकांचनम् ॥ ९ ॥ संसारवासनानाम्नीमिहिकात्दृदयांबरे ॥ प्रवृत्तातनुतांगंतुंत्वदुक्तिशरदेवनः ॥ १० ॥ मुनेमंदारमंजर्यस्तरंगावामृतांभसः ॥ नतथाह्लादयंत्यंतर्यथोदारधियांगिरः ॥ ११ ॥ यद्यद्राघवसंयातिमहाजनसपर्यया ॥ दिनंतदिहसालोकंशेषास्त्वंधादिनालयः ॥ १२ ॥

तमांसिअज्ञानान्यंधकारांश्च ॥ ४ ॥ इदानींचंद्रांशुभ्योप्युत्कर्षमाह ॥ अपूर्वेति ॥ अपूर्वःअनास्वादितपूर्वःकारणशून्यश्चानंदोब्रह्मसुखंप्रयोजनम् ॥ तदेवमानुषानंदादिहैरण्यगर्भानंदांतविषयसुखेभ्यउच्चैस्तरंपदंतदाश्रयास्तद्विषयाः ॥ अतिमोहापहारिण्यइत्यनर्थनिवृत्तिरूपंप्रयोजनांतरंतासामुक्तम् ॥ ५ ॥ युक्तिलक्षणाज्योतिर्लतायस्मादुदेतियमाश्रित्योदेति ॥ ६ ॥ दुरीहितंमानसदोषम् ॥ दुर्विहितंशारीरदोषम् ॥ सर्वंसमस्तेंद्रियदोषम् ॥ शीतांशोश्चंद्रस्यांघ्रयःकिरणाः ॥ ७ ॥ तानेवस्पष्टमाह ॥ तृष्णेति ॥ तनुतामल्पावशेषताम् ॥ ८ ॥ रसःसिद्धरसस्तद्रचितैःसिद्धांजनैरानीतदृशोब्रह्मरसाभ्यंजनेनानीतप्रत्यग्दृशश्च ॥ ९ ॥ हृदयांबरेस्थितेतिशेषः ॥ रूपकबलादेवांतर्भूतेइवार्थेगम्यमानेपुनरिवशब्दप्रयोगउत्प्रेक्षाद्योतनार्थः ॥ १० ॥ अमृतांभसःअमृतांभोधेः ॥ ११ ॥ यद्यद्दिनंमहतांजनानांब्रह्मविदांसपर्ययापूजयासंयात्यपयाति ॥ सालोकंसप्रकाशम् ॥ अंधास्तमोवृताः ॥ १२ ॥

1022

आबोधयपृच्छ ॥ १३ ॥ आस्थितउपविष्टः ॥ १४ ॥ १५ ॥ सर्वासांप्रागुक्तजीवजातीनाम् ॥ १६ ॥ सर्वंनटवन्माययाजगद्वेषेणस्थितंब्रह्म ॥ असर्वंनिष्प्रपंचम् ॥ सत्स्थूलमसत्सूक्ष्मंसत्यासत्यरूपंवामदुक्तंस्मरसित्वबुद्ध्यादृश्येभ्योविविक्तंवेत्स्येववा ॥ १७ ॥ विश्वेशात्सर्वशक्तिसंपन्नादीश्वराद्ब्रह्मणः ॥ एवकारःसांख्याद्यभिमतप्रधानादिकारणवादनिरासार्थः ॥ साधुवादाःप्रशंसाःसदुपदेशाश्च ॥ १८ ॥ बलात्कालबलात् ॥ संख्ययाअनंतंदेशकालादिनात्वंतवत ॥ १९ ॥ २० ॥ ह्यस्तनस्यविचारस्यश्रवणस्यविषयोवा

रामराजीवपत्राक्षप्रकृतार्थमिहाव्ययम् ॥ मुनिमाबोधयपुनःप्रसादेसमवस्थितम् ॥ १३ ॥ इत्युक्तोभूभृतातत्ररामाभिमुखमास्थितः ॥ उवाचेदमुदारात्मावसिष्ठोभगवान्मुनिः ॥ १४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ राघवस्वकुलैकेंदोयन्मयोक्तंमहामते ॥ कच्चित्स्मरसिवाक्यार्थंपूर्वापरविचारितम् ॥ १५ ॥ उत्पत्तीनांविचित्राणांसत्वादिगुणभेदतः ॥ कच्चित्स्मरसिसर्वासांविभागमरिमर्दन ॥ १६ ॥ कच्चित्त्सर्वमसर्वंचसदसच्चसदोदितम् ॥ रूपंस्मरसिवेत्स्येवविविक्तंपरमात्मनः ॥ १७ ॥ यथेदमुदितंविश्वंविश्वेशादेवचेश्वरात् ॥ कच्चित्स्मरसितत्साधोसाधुवादैकभाजन ॥ १८ ॥ रूपंकच्चिदविद्यायाबलाद्भंगुरमाततम् ॥ अनंतमंतवच्चैवसम्यक्स्मरसिसन्मते ॥ १९ ॥ चित्तमेवनरोनान्यदितियत्प्रतिपादितम् ॥ लक्षणादिविचारेणकच्चित्स्मरसिसाधुतत् ॥ २० ॥ वाक्यार्थश्चाखिलःकच्चित्त्वयारामविचारितः ॥ ह्यस्तनस्यविचारस्यरात्रौहृदिनिवेशितः ॥ २१ ॥ भूयोभूयःपरामृष्टंहृदयेसुनियोजितम् ॥ प्रयोजनंफलत्युच्चैर्नहेलाहतसंस्थितेः ॥ २२ ॥ भाजनंत्वंविविक्तानांवचसांशुद्धिशालिनाम् ॥ विविक्तहृदयःकंठेमुक्तानामिवराघव ॥ २३ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ कमलासनपुत्रेणमुनिनासमहौजसा ॥ एवंवितीर्णावसरोरामोवाक्यमुवाचह ॥ २४ ॥ ॥ श्रीरामउवाच ॥ ॥ भगवन्सर्वधर्मज्ञतवैवैतद्विजृंभितम् ॥ यदहंपरमोदारोबुद्धवान्वचनंतव ॥ २५ ॥ यदादिशसितत्सर्वंतथैवनतदन्यथा ॥ अपास्तनिद्रेणमयावाक्यार्थोहृदिचिंतितः ॥ २६ ॥ भवांधकारक्षतयेभवतोक्तिविवस्वता ॥ त्वःप्रसादितमाह्लादिवाग्रश्मिपटलंप्रभो ॥ २७ ॥ तदतीतमदीनात्मन्सर्वमंतःकृतंमया ॥ रम्यंपुण्यंपवित्रंचरत्नवृंदमिवान्वितम् ॥ २८ ॥

क्यार्थोविचारितोमननेनपरिष्कृतः ॥ २१ ॥ हेलयाअनादरेणहतासंस्थितिरुपदिष्टार्थधारणंयेनतथाविधस्यपुरुषाधमस्यनफलतीत्यर्थः ॥ २२ ॥ विविक्तहृदयोविवेकशालिमनाःविशालवक्षाश्च ॥ २३ ॥ २४ ॥ विजृंभितंप्रभाविस्तारः ॥ २५ ॥ तथैवकृतमितिशेषः ॥ तदेवस्पष्टमाह ॥ अपास्तेति ॥ २६ ॥ भवताकर्त्राउक्तिलक्षणेनविवस्वतासूर्येणकरणेन उक्तौउपदेशेनार्थप्रकाशनविषयेविवस्वतासूर्यभूतेनभवतेतिसामानाधिकरण्यंवा ॥ आह्लादिजाड्यशीतापनयसुखकरम् ॥ २७ ॥ अंतःकृतंहृदिकृतम् ॥ अन्वितंक्रमयुक्तम् ॥ २८ ॥

सर्वानिष्टहानानुबंधित्वान्मधुरतरत्वात्परमपुरुषार्थसाधनत्वादनुल्लंघ्यशासनत्वाच्चतववचनमवश्यंशिरसाप्रणम्यस्त्दिकार्यमित्याशयेनाह॥हितानुबंधीति ॥सिद्धैर्देवभेदैर्योगमंत्रा दिसिद्धैःस्वतःसिद्धैःसनकादिभिर्वाकैर्नंशिरसाध्रियते ॥२९॥ स्वस्मिन्नुपदेशस्यनैष्फल्यशंकांवारयन्नाह॥ प्रतिक्षिपंतइति॥ निरस्यंतइत्यर्थः॥ वर्षातिशरदि॥३०॥ उपदेशस्यका लत्रयेपिहितकारितामाह ॥ आपातेति ॥ आपातेश्रवणकाले ॥ मध्येमनननिदिध्यासनकाले ॥ सौभाग्यस्यअंतर्मुखताप्रयुक्तस्यशमादिसंपत्सुखस्य ॥ अनुत्तमंमोक्षाख्यं फलंयत्रतथाविधउदर्कउत्तरकालोयस्यतत् ॥ ३१ ॥ सितंस्वच्छंशुभंच ॥ आह्लादितानिआनंदैकरसीकृतानिशुभाशुभानिपुण्यपापानितत्फलानिचयेन॥ आह्लादिताःशुभादे वाअशुभाःसर्पादयश्चयेन ॥ त्वद्वचोलक्षणंकुसुमंकल्पवृक्षपुष्पम् ॥ ३२ ॥ इदानींगुरुंतीर्थत्वान्महाह्रदत्वेनरूपयन्संबोध्यपुनःशिष्टार्थोपदेशवाक्यप्रवाहंप्रार्थयते ॥ सकलेति ॥ देशकालशास्त्रविचारेषुविशारद हेप्रसृताचारपुण्यजलानामेकमहाह्रद विततव्रत मांप्रतिसंप्रतिप्रसृततांउपदेशवाक्यप्रसरंभजेत्यर्थः ॥ ह्रदपक्षेसकलशास्त्रलक्षणानांवीनांहंसा

हितानुबंधिह्रद्यंचपुण्यमानंदसाधनम्॥शिरसाध्रियतेकैर्नोसिद्धैस्त्वदनुशासनम्॥२९॥प्रतिक्षिपंतस्संसारमिहिकावरणंवयम्॥प्रस न्नास्त्वत्प्रसादेनवर्षांतइववासराः॥३०॥आपातमधुरारंभंमध्येसौभाग्यवर्द्धनम्॥अनुत्तमफलोदर्कंपुण्यंत्वदनुशासनम्॥३१॥वि कासिसितमम्लानमाह्लादितशुभाशुभम्॥त्वद्वचःकुसुमंनित्यंश्रीमत्फलदमस्तुनः॥३२॥सकलशास्त्रविचारविशारदप्रसृतपुण्यजलैक महाह्रद॥भजभृशंविततव्रतसंप्रतिप्रसृततांहतकिल्बिषसंततिम्॥३३॥ ॥इ०वा०वा०दे०मो०उपशमप्रकरणेराघवप्रश्नोनामचतु र्थःसर्गः॥४॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥इदमुत्तमसिद्धांतसुंदरंसुंदराकृते॥उपशांतिप्रकरणंशृणुष्वावहितोहित म्॥१॥दीर्घसंसारमायेयंरामराजसतामसैः॥धार्यतेजंतुभिर्नित्यंसुस्तंभैरिवमंडपः॥२॥सत्वस्यजातिभिर्धीरैस्त्वादृशैर्गुणबृंहितैः॥ हेलयात्यज्यतेपंक्तामायेयंत्वगिवोरगैः॥३॥

दिपक्षिणांचारैर्विशारदशोभमान॥ विततानिविस्तारितानिव्रतानिमुनिभिर्यत्र ॥ स्नातॄणांहतानिकिल्बिषाणियेन ॥ एवंविधहेप्रसृतपुण्यजलैकमहाह्रदत्वंसंप्रतिइदानींसंततिं वाक्यसंतानरूपांप्रसृततांप्रवाहंभजेत्यर्थः ॥ मांप्रतीत्यंतेपाठमद्विशुद्धयेइत्यर्थः ॥ ३३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउप०करणेचतुर्थःसर्गः ॥ ४ ॥ ॥७॥ ॥ अवि वेकयवच्छायामनोमात्रजगत्स्थितेः ॥ इहोपशमनोपायक्रमःसम्यगुदीर्यते ॥ १ ॥ अवहितःसावधानचित्तः ॥ १ ॥ प्रागुक्तमनूद्यप्रस्तुतेनसंगमयति ॥ दीर्घेति ॥ राजसतामसैः प्रागुक्तजीवैर्धार्यते ॥ पुरुषोवाअक्षितिःसहीदमन्नंधियाधियाजनयतेकर्मभिरित्यादिश्रुतेरितिभावः ॥२॥ प्रागुक्तलक्षणैःसत्वस्यजातिभिःराजससात्विकैःशुद्धसात्विकैश्च ॥३॥

---

१ देशकालेतिसकलशब्दार्थइतिभाति ॥ प्राचीनपुस्तकेतुसकलशास्त्रविचारेष्वित्येववर्त्तते ॥ २ संततिपदस्यायमर्थः रामस्यविद्यावंशत्वेनवासिष्ठसंतानत्वात् ॥ तथाचत्वसंततिमांप्रतीत्यर्थः॥ ३ तुच्छेतिक्वचित्पाठः

केनोपायेनत्यज्यतेतमाह ॥ येइति ॥ पूर्वपरंपरांमूलपरंपरांअन्नेनसोम्यशुंगेनापोमूलमन्विच्छेत्यादिश्रुतिदर्शिताम् ॥४॥ सत्कार्याणियज्ञोदानंतपश्चैवपावनानिमनीषिणामिति भगवदुक्तानि ॥ ५ ॥ स्वयमेवेति ॥ उद्धरेदात्मनात्मानमितिन्यायादितिभावः ॥ नाधिगतंनज्ञातम् ॥ अधिगम्यतेप्राप्यते ॥ ६ ॥ त्वयितुतत्प्राप्तियोग्यतास्त्येवेत्याह ॥ प्रज्ञाव तामिति ॥ नयवतांप्रमाणकुशलानाम् ॥ ७ ॥ आलोकयविचारेणपश्य ॥ ८ ॥ अस्तीतिसत्सदेवसत्यमसत्ताविरुद्धस्वभावंतद्विरुद्धनास्तिस्वभावंकथंसंभवेत् ॥ स्वभावविप र्यासायोगादितिभावः ॥ नित्यंनियतसत्स्वभावम् ॥ ९ ॥ आसज्जतेसत्यबुद्ध्यारज्यते ॥ १० ॥ मनोरथरचितप्रासादवन्मनोमात्रकार्यत्वादपिनसत्यताप्रसक्तिर्जगतइत्याशयेना

येसत्त्वजातयःप्राज्ञास्तथाराजससात्विकाः॥ विचारयंतितेसाधोजगत्पूर्वपरंपराम्॥४॥ शास्त्रसज्जनसत्कार्यसंगेनोपहतैनसाम्॥ सारावलोकिनीबुद्धिर्जायतेदीपिकोपमा॥५॥ स्वयमेवविचारेणविचार्यात्मानमात्मना॥ यावन्नाधिगतंज्ञेयंनतावदधिगम्यते॥६॥ प्रज्ञावतांनयवतांधीराणांकुलशालिनाम्॥ जात्याराजससत्वानांमुख्यस्त्वंरघुनंदन॥ ७॥ स्वयमालोकयप्राज्ञसंसारारंभदृष्टिषु॥ किंसत्यंकिमसत्यंवाभवसत्यपरायणः॥८॥ आदावंतेचयन्नास्तिकीदृशीतस्यसत्यता॥ आदावंतचयन्नित्यंतत्सत्यंनामनेतरत् ॥ ९॥ आद्यंतासन्मयेयस्यवस्तुन्यासज्जतेमनः॥ तस्यमुग्धपशोर्जंतोर्विवेकःकेनजन्यते॥ १०॥ जायतेमनएवेहमनएवविवर्द्धते॥ सम्यग्दर्शनदृष्ट्यातुमनएवहिमुच्यते॥११॥ ॥श्रीरामउवाच॥ ॥ज्ञातमेतन्मयाब्रह्मन्यथास्मिन्भुवनत्रये॥ मनएवहिसंसारिजरामरणभाजनम् ॥१२॥ यस्तस्योत्तरणोपायस्तन्मेब्रूहिसुनिश्चितम्॥ हार्दंतमस्त्वयार्केणराघवाणांविनाश्यते॥१३॥ ॥श्रीवसिष्ठउवाच॥ ॥पूर्वंराघवशास्त्रेणवैराग्येणपरेणच॥ तथासज्जनसंगेननीयतांपुण्यतांमनः॥१४॥ सौजन्योपहितंचेतोयदावैराग्यमागतम्॥ तदानुगम्यागुरवोविज्ञानगुरवोपिये॥१५॥ ततस्तस्योपदिष्टेनकृत्वाध्यानार्चनादिकम्॥ क्रमेणपदमाप्नोतितद्यत्परमपावनम्॥१६॥ विचारेणावदातेनपश्यत्यात्मानमात्मना॥ इंदुनाशीतलेनांतर्विश्वंखमिवतेजसा ॥ १७॥

ह ॥ जायतइति ॥ ११ ॥ प्रश्नःस्पष्टः ॥ १२ ॥ १३ ॥ प्रथमंशास्त्रसज्जनसंगाभ्यांवैराग्यादिसाधनचतुष्टयंसंपाद्यमित्याह ॥ पूर्वमिति ॥ पुण्यतांज्ञानोदययोग्यतापादिकां विशुद्धिम् ॥ १४ ॥ सौजन्यंनिरभिमानिता ॥ येगुरवोविज्ञानेनसर्वशास्त्ररहस्यज्ञानेनगुरवोगरीयांसोपिशब्दादुपदेशकौशलेनशिष्यबोधनसमर्थाश्चभवंतितेविधिनाअनुगम्याः ॥ १५ ॥ उमासहायंपरमेश्वरंप्रभुंत्रिलोचनंनीलकंठंप्रशांतम् ॥ ध्यात्वामुनिर्गच्छतिभूतयोनिंसमस्तसाक्षितमसःपरस्तादित्यादिश्रुतेःप्रथमंगुरूपदिष्टमार्गेणसगुणेश्वरध्यानार्चनादिकंकृत्वातदनुपश्चाद्वक्ष्यमाणविचारादिक्रमेणेत्यर्थः ॥ १६ ॥ विश्वंकृत्स्नंखमिंदुनातेजसापूर्णमिव ॥ १७ ॥

चेतसाबुद्धिप्लवेन विचारलक्षणेनतटेयावद्विश्रांतिस्थैर्यंनेति ॥ १८ ॥ आधीन्मानसदुःखानि ॥ अधःकरोतिनिरस्यतीतियावत् ॥ सौम्यंनिम्नप्रसन्नम ॥ १९ ॥ भस्मनिगूढंहेमअ न्यैर्विवेक्तुमशक्यमपियथाहेमज्ञानाल्मनःसदाहेमपरिशोधनेनतद्विवेककुशलात्मनोहेमकारस्यइदंरुक्ममिदंभस्मेतिस्फुटंपरिज्ञातमितिनतदलाभमोहस्यावसरस्तथाअयमज्ञद शास्त्रसिद्धोमनागात्मापरिच्छिन्नजीवश्चिरंविचारेणविविच्यस्वात्मनिअवगतेसतिअक्षयःकालादिपरिच्छेदशून्यःस्वतएवस्फुटंभवतीतिकुतोमोहस्यावसरइतिपरेणान्वयः ॥२०॥ ॥ २१ ॥ अपरिज्ञातसारेपुरुषे ॥ यदिमुह्यतितर्हिमुह्यतांनामेतिशेषः ॥ असतीअसंभाविंतवकिलेत्यर्थः ॥ २२ ॥ इदानीमनुक्रोशात्सर्वश्रोतृजनान्प्रत्याह ॥ हेजनाइति ॥ य दाह्येवैषएतस्मिन्नुदरमंतरंकुरुतेअथतस्यभयंभवतितत्त्वेवभयंविदुषोमन्वानस्येत्यादिश्रुतेरितिभावः ॥ परिज्ञातस्त्विति ॥ रसश्चेवायंलब्ध्वानंदीभवति सर्वान्कामानाम्वाप्तः

तावद्भवमहांभोधौजनस्तृणवदुह्यते ॥ विचारतटविश्रांतिमेतियावन्नचेतसा ॥ १८ ॥ विचारेणपरिज्ञातवस्तुनोस्यजनस्यधीः ॥ सर्वा नधःकरोत्याधीन्सौम्यांभइववालुकाः ॥ १९ ॥ इदंरुक्ममिदंभस्मपरिज्ञातमितिस्फुटम् ॥ नयथाहेमकारस्यहेमज्ञानात्मनस्तथा ॥ २० ॥ अक्षयोयंमनागात्मास्वात्मन्यवगतेचिरम् ॥ भवतीतिनरस्येहमोहस्यावसरःकुतः ॥ २१ ॥ अपरिज्ञातसारेहिमनोंतर्यदिमुह्यते ॥ ज्ञात सारेत्वसंदिग्धमसतीकिलमूढता ॥ २२ ॥ हेजनाअपरिज्ञातआत्मावोदुःखसिद्धये ॥ परिज्ञातस्त्वनंतायसुखायोपशमायच ॥ २३ ॥ मिश्रीभूतमिवानेनदेहेनोपहतात्मना ॥ व्यक्तीकृत्यस्वमात्मानंस्वस्थाभवतमाचिरम् ॥ २४ ॥ देहेनास्यनसंबंधोमनागेवामलात्मनः ॥ हेम्नःपंकलवेनेवतद्गतस्यापिमानवाः ॥ २५ ॥ पृथगात्मापृथग्देहोजलपद्मलवोपमौ ॥ ऊर्ध्वबाहुर्विरौम्येपनचकश्चिच्छृणोतिमे ॥ २६ ॥ जडधर्मिमनोयावद्गर्तकच्छपवत्स्थितम् ॥ भोगमार्गवदामूढंविस्मृतात्मविचारणम् ॥ २७ ॥ तावत्संसारतिमिरंसेंदुनापिसवह्निना ॥ अर्कद्वादशकेनापिमनागपिनभिद्यते ॥ २८ ॥ संप्रबुद्धेहिमनसिस्वांविवेचयतिस्थितिम् ॥ नैशमर्कोदयइवतमोहार्दंपलायते ॥ २९ ॥ नित्यमुत्तमबोधाययोगशय्यागतंमनः ॥ बोधयेद्भवभेदायभवोत्यत्यंतदुःखदः ॥ ३० ॥

समभवत् ज्ञात्वातंमृत्युमत्येति आनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चनेत्यादिश्रुतेरितिभावः ॥ २३ ॥ व्यक्तीकृत्यपंचकोशविवेकेनदृष्ट्वा ॥ २४ ॥ व्यक्तीकरणमेवस्फुटयति ॥ देहे नेत्यादिना ॥ अप्यर्थेएवकारः ॥ २५ ॥ आत्माब्रह्मदेहीजीवश्चयथापद्माधारमहाजलंपद्मपत्रनिविष्टजललवश्चोपाधितएवपृथङ्नवस्तुतस्तद्वदित्यर्थः ॥ ननुमहाजलस्यपद्म पत्रारोहपरिच्छेदादौवाय्वादिनिमित्तंप्रसिद्धं पूर्णात्मनःपरिच्छेदेनदेहारोहणेकिंनिमित्तमितिचेदसकृदुद्घोषितंपादिष्टंमनएव अतस्तन्नाशायैवयत्नःकार्यइत्याशयेनानुक्रोशा दाक्रोशति ॥ ऊर्ध्वबाहुरित्यादिना ॥ २६ ॥ दुर्वासनापंकगर्तेकच्छपवन्निलीनंकठोरंचभोगग्रामीमार्गवद्द्वारभूतैरिंद्रियैर्विषयेष्वामूढंमनोयावत्स्थितंतावत्संसारतिमिरंसेंदुनास वह्निनाअपिशब्दान्नक्षत्रमण्यादिसर्वतेजस्सहितेनअर्कद्वादशकेनापिमनाकूईपदपिनभिद्यतेइतिपरेणसहान्वयः ॥ २७ ॥ २८ ॥ स्वांपारमार्थिकींस्थितिविवेचयतिअनृताद्वि विच्यपश्यतिसति ॥ २९ ॥ योगांदेहादिनातात्म्याध्यासत्यक्षणायांशय्यायांगतंसुप्तंसमाधिविश्रांतिकृत्वेतिवा ॥ ३० ॥

कथंबोधयेत्तदाह ॥ यथेति ॥ ३१ ॥ हेमतादात्म्यापत्तिलक्षणांपरिणतिमंतर्वस्तुतोनयाति ॥ ३२ ॥ अनुभावित्वमनुसारित्वमनुभवितृत्वंच ॥ इत्यवबुध्यतेमूढइतिशेषः ॥ विद्रुतातयथावटरकाणिसंपतंतीवदृश्यंतइतिश्रुत्यनुभवसिद्धाविद्रुसहस्राकारता ॥ म्लानतामालिन्यम् ॥ ३३ ॥ यदिनात्मनःसुखदुःखेतर्हिकिंदेहस्यनेत्याह ॥ सुखदुःखेइति ॥ तर्हिकस्यतत्राह ॥ एतेइति ॥ अज्ञानमेवाज्ञानकंतस्यैव ॥ ३४ ॥ आत्ममयमात्मविवर्त्तम् ॥ शांतंनित्यप्रशांतम् ॥ ३५ ॥ विवर्त्ततांदृष्टांतेनदर्शयति ॥ इमाइति ॥ व्योम्निपिच्छंअर्द्धनिमीलिताक्षस्यसूर्याभिमुखंशयानस्यभ्रांत्याप्रसिद्धम् ॥ ३६ ॥ तेजोमयीरात्मच्छायाःस्वकांतीर्ददातिप्रसारयति ॥ अकारणमक्रियाव्यापृतइतियावत् ॥ प्रयच्छतिप्र

यथारजोभिर्गगनंयथाकमलमंबुभिः ॥ नलिप्यतेहिसंश्लिष्टैर्देहैरात्मातथैवच ॥ ३१ ॥ कर्दमादियथाहेम्नाश्लिष्टमेतिपृथक्स्थितम् ॥ नांतःपरिणतिंयातिजडोदेहस्तथात्मना ॥ ३२ ॥ सुखदुःखानुभावित्वमात्मनीत्यवबुध्यते ॥ असत्यमेवगगनेविंद्रुताम्लानतेयथा ॥ ३३ ॥ सुखदुःखेनदेहस्यसर्वातीतस्यनात्मनः ॥ एतेह्यज्ञानकस्यैवतस्मिन्नष्टेनकस्यचित् ॥ ३४ ॥ नकस्यचित्सुखंकिंचिद्दुःखंचनचकस्यचित् ॥ सर्वमात्ममयंशांतमनंतंपश्यराघव ॥ ३५ ॥ इमायाःपरिदृश्यंतेविततास्सृष्टिदृष्टयः ॥ पयसीवतरंगास्तेपिच्छंव्योम्नीवचात्मनि ॥ ३६ ॥ यथामणिर्ददात्यात्मच्छायाःस्वयमकारणम् ॥ तेजोमयीस्तथैवायमात्मास्सृष्टीःप्रयच्छति ॥ ३७ ॥ आत्माजगच्चसुमतेनैकंनद्वैतमप्यसत् ॥ आभासमात्रमेवेदमित्थंसंप्रतिजृंभते ॥ ३८ ॥ समस्तंखल्विदंब्रह्मसर्वमात्मैवमाततम् ॥ अहमन्यदिदंचान्यदितिभ्रांतिंत्यजानघ ॥ ३९ ॥ ततेब्रह्मघनेनित्येसंभवंतिनकल्पनाः ॥ विच्छित्तयःपयोराशौयथारामनसन्मयाः ॥ ४० ॥ एकस्मिन्नेवसर्वस्मिन्परमात्मनिवस्तुनि ॥ द्वितीयाकल्पनानास्तिवह्नौहिमकणोयथा ॥ ४१ ॥ भावयन्नात्मनात्मानंचिद्रूपेणैवचिन्मयम् ॥ ऋजूज्ज्वलमयेस्थात्मास्वयमात्मनिजृंभते ॥ ४२ ॥ नशोकोस्तिनमोहोस्तिनजन्मास्तिनजन्मवान् ॥ यदस्तीहतदेवास्तिविज्वरोभवराघव ॥ ४३ ॥

सारयति ॥ ३७ ॥ नैकंनाद्वयम् नद्वैतंननानापि यतोजगद्रूपमसत् ॥ नह्यसतासतोऽभेदोभेदोवानिरूपयितुंशक्यतइत्यर्थः ॥ संप्रत्यज्ञानकाले ॥ ३८ ॥ परमार्थतस्तुभ्रांतेरपिपृथग्दुर्निरूपत्वाद्ब्रह्मैवेदंसर्वमात्मैवेदंसर्वमितिश्रुत्युक्तदृशाब्रह्मैवसर्वमित्याह ॥ समस्तमिति ॥ ३९ ॥ ततेदैशिकपरिच्छेदरहिते ॥ ब्रह्मघनेवस्तुकृतपरिच्छेदरहिते ॥ नित्येकालिकपरिच्छेदशून्ये ॥ ४० ॥ वास्तवैकत्वविरोधादपिनद्वैतकल्पनासतीत्याह ॥ एकस्मिन्नेवेति ॥ ४१ ॥ इदानींतादृशात्मपरिचयेनतत्रविश्रांतयेसदातद्भावनाकार्येत्याह ॥ भावयन्निति ॥ तद्रूपेणक्षीरोदकवत्तद्रूपापन्नेनैवमनसा ॥ ऋजूज्ज्वलमयेमायाकौटिल्यमालिन्यरहितेइतियावत् ॥ ४२ ॥ तद्भावापन्नस्यजीवन्मुक्तिविश्रांतिंदर्शयति ॥ नशोकइत्यादिना ॥ ४३ ॥

निर्द्वंद्वःशीतोष्णादिशारीरद्वंद्वविक्षेपरहितः ॥ नित्यसत्त्वेस्थितत्वाद्रजस्तमःप्रयुक्तमानसविक्षेपरहितः ॥ अतएवतदुभयपरिहारोपाययोगक्षेमचिंतोज्झितः ॥ ४४ ॥ ४५ ॥ विविक्तःअविद्यातत्कार्यनिर्णिक्तः ॥ विजिताशयःस्वाधीनचित्तः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ धराधराणांशिरइवश्रेष्ठोमेरुःसइवधीरः ॥ ५० ॥५१॥ औदार्यमकार्पण्यंपूर्णकामतामितियावत् ॥ आह्लादंसर्वतापोपशमसुखम् ॥ ५२ ॥ उक्तमर्थंसंगृह्योपदिशन्नुपसंहरति ॥ विश्वेति ॥ स्पष्टोर्थः ॥ ५३ ॥ यदितज्ज्ञोऽसत्यंनानुधावतितर्हिंकिममराज्यादिनापारिव्राज्यमेवयुक्तमितिरामाशयमालक्ष्याह ॥ एकेति ॥ गुरुणापित्राउपदिष्टमाज्ञप्तमेकातपत्रंराज्यंसमस्तगुणरंजिताराजानोलोकाःप्रजाश्चयेनतथाविधःसन्समयाद्

निर्द्वंद्वोनित्यसत्त्वस्थोनिर्योगक्षेमआत्मवान् ॥ अद्वितीयोविशोकात्माविज्वरोभवराघव ॥ ४४ ॥ समःस्वस्थःस्थिरमतिःशांतशोकमनामुनिः ॥ मौनीवरमणिस्वच्छोविज्वरोभवराघव ॥ ४५ ॥ विविक्तःशांतसंकल्पोधीरधीर्विजिताशयः ॥ यथाप्राप्तानुवर्त्तीचविज्वरोभवराघव ॥ ४६ ॥ वीतरागोनिरायासोविमलोवीतकल्मषः ॥ नादातानपरित्यागीविज्वरोभवराघव ॥ ४७ ॥ विश्वातीतपदंप्राप्तःप्राप्तप्राप्तव्यपूरितः ॥ पूर्णार्णववदक्षुब्धोविज्वरोभवराघव ॥ ४८ ॥ विकल्पजालनिर्मुक्तोमायांजनविवर्जितः ॥ आत्मनात्मनितृप्तात्माविज्वरोभवराघव ॥ ४९ ॥ अनंतापारपर्यंतवपुरात्मविदांवर ॥ धराधरशिरोधीरोविज्वरोभवराघव ॥ ५० ॥ यथाप्राप्तानुभवनात्सर्वत्रानभिवांछनात् ॥ त्यागादानपरित्यागाद्विज्वरोभवराघव ॥ ५१ ॥ आत्मन्येवात्मनौदार्यंभजपूर्णइवार्णवः ॥ आत्मन्येवात्मनाह्लादंभजपूर्णेंदुबिंबवत् ॥ ५२ ॥ विश्वप्रपंचरचनेयमसत्यरूपानासत्यरूपमनुधावतिरामतज्ज्ञः ॥ तज्ज्ञोसिशांतकलनोसिनिरामयोसिनित्योदितोसिभवसुंदरशांतशोकः ॥ ५३ ॥ एकातपत्रमवनौगुरुणोपदिष्टंसम्यक्सुपालयचिरंसमयेहदृष्ट्या ॥ राज्यंसमस्तगुणरंजितराजलोकस्त्यागोनयुक्तइहकर्मसुनापिरागः ॥ ५४ ॥ ॥ इ० वा० वा० दे० मो० उपशमप्रकरणेप्रशमोपदेशोनामपंचमःसर्गः ॥ ५ ॥ ॥ ६५ ॥

॥ श्रीवसिष्ठउवाच ॥ ॥ इमंविश्वपरिस्पंदंकरोमीत्यस्तवासनम् ॥ प्रवर्त्ततेयःकार्येषुसमुक्तइतिमेमतिः ॥ १ ॥

स्याचिरंसम्यक्सुपालय ॥ प्रारब्धत्वादवश्यभोक्तव्येषुकर्मसुतत्फलेषुचत्यागोनयुक्तोनापिरागोयुक्तइत्यर्थः ॥ त्यक्त्वाकर्मफलासंगंनित्ययुक्तोनिराश्रयः ॥ कर्मण्यभिप्रवृत्तोपिनैवकिंचित्करोतिसइतिभगवद्वचनादितिभावः ॥ ५४ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउप० पंचमःसर्गः ॥ ५ ॥ ॥ ६५ ॥ ॥ इहकर्मगतीःपूर्वमुक्त्वाचरमजन्मनाम् ॥ जीवन्मुक्त्यैगुणावामीसामान्यक्रमईर्यंते ॥ १ ॥ गुणार्जनक्रमस्यवक्ष्यमाणस्यप्रकृतसंबंधंदर्शयितुंप्रस्तुतनिरासंगविहिताप्रतिषिद्धकार्यप्रवृत्त्याजीवन्मुक्तंलक्षयति ॥ इममिति ॥ विश्वंकृत्स्नंपरिस्पंदंश्रुतिस्मृतिसदाचारप्राप्तव्यवहारमयस्कांतवत्सन्निधिमात्रेणकरोमीत्यस्तवासनंप्रवर्त्ततेनत्वज्ञइवकर्तृत्वाभिनिवेशेनेत्यर्थः ॥ १ ॥

कर्मफलासंगादेवाज्ञानामनर्थप्राप्तिरितिदर्शयति ॥ पौरुषीमिति ॥ पौरुषींमानुषींतनुंदेहमाश्रित्यप्राप्यापिकेचिन्मूढाएतस्यांनिरासंगकर्मानुष्ठानलक्षणायांक्रियायामरताःकामात्मानःकाम्यकर्मभिःस्वर्गंभुक्त्वाततःकपूयकर्मानुशयावशेषेणनरकमायांति ॥२॥ अकर्मणिनिषिद्धकर्मणिरताः ॥ कर्मणःसत्कर्मणोविरताः ॥ तथाचस्मृतिः ॥ विहितस्याननुष्ठानान्निंदितस्यचसेवनात् ॥ अनिग्रहाच्चेंद्रियाणांनरःपतनमृच्छतीति ॥ ३ ॥ नरकोपभुक्तदुष्कर्मफलक्रमेणतिर्यग्योनिषुउदिताजाताः ॥ ४ ॥ राजसतामसानूशुद्धतामसांश्चोक्त्वाशुद्धसात्विकजीवानाह ॥ केचिदिति ॥ विचारितोमनोदृक्मनस्साक्ष्यात्मायैस्ते निष्केवलंपरमकैवल्यरूपंपदम् ॥ ५॥ राजससात्विकान्दर्शयति ॥ पुरेति ॥ कतिपया

पौरुषींतनुमाश्रित्यकेचिदेतत्क्रियारताः ॥ स्वर्गान्नरकमायांतिस्वर्गंचनरकात्पुनः॥ २ ॥ केचित्त्वकर्मणिरताविरताअपिकर्मणः ॥ नरकान्नरकंयांतिदुःखाद्दुःखंभयाद्भयम् ॥ ३ ॥ केचित्स्ववासनातंतुबद्धाःकर्मफलोदिताः॥ तिर्यक्त्वात्स्थावरतनुंयांतितिर्यक्तनुंततः॥ ४ ॥ केचिदात्मविदोधन्याविचारितमनोदृशः॥ विच्छिन्नतृष्णानिगडायांतिनिष्केवलंपदम्॥५॥ पुराकतिपयान्येवभुक्त्वाजन्मानिराघव॥ अस्मिन्जन्मनियोमुक्तस्तंस्माद्राजससात्विकः॥६॥ जातोसौवृद्धिमभ्येतिपार्वणश्चंद्रमाइव॥ कुटजंप्रावृषीवैनंसौभाग्यमनुगच्छति ॥ ७ ॥ यस्येदंजन्मपाश्चात्यंतमाश्वेवमहामते ॥ विशंतिविद्याविमलामुक्तावेणुमिवोत्तमम् ॥ ८ ॥ आर्यतात्द्युतामैत्रीसौम्यताकरुणाज्ञता ॥ समाश्रयंतितंनित्यमंतःपुरमिवांगनाः ॥ ९ ॥ यःकुर्वन्सर्वकार्याणिपुष्टेनष्टेथतत्फले ॥ समस्सन्सर्वकार्येपुनतुष्यतिनशोचति ॥ १० ॥ तमांसीवदिवायांतितत्रद्वंद्वानिसंक्षयम् ॥ शरदीवघनास्तत्रगुणागच्छंतिशुद्धताम् ॥ ११ ॥ पेशलाचारमधुरंसर्वेवांछंतितंजनाः॥वेणुंमधुरनिध्वानंवनेवनमृगाइव॥१२॥ नरंपाश्चात्यजन्मानमेवंप्रायागुणश्रियः॥ जातमेवानुधावंतिबलाकाइववारिदम्॥१३॥

न्युत्तरोत्तरोत्कृष्टानिमानुषजन्मानि ॥ ६ ॥ तस्यशांत्यादिगुणैरभिवृद्धिमाह ॥ जातइत्यादिना ॥ सौभाग्यंसाधनचतुष्टयम् ॥ कुटजपक्षेपुष्पश्रीः ॥ ७ ॥ विद्याब्रह्मविद्योपायसर्वविद्याः ॥ वेणुमिवेति ॥ वेणुविशेषस्यापिमुक्ताकरत्वप्रसिद्धेः ॥ ८ ॥ ज्ञतापरोक्षप्रायंज्ञानम् ॥ ९ ॥ तस्योपक्रमोक्तजीवन्मुक्तलक्षणोपक्रममाह ॥ यइति ॥ पुष्टेप्रवृद्धे ॥ १० ॥ द्वंद्वानिसुखदुःखादीनि ॥ प्राञ्जलिनाअपिधृतिश्रद्धाक्षीप्रभृतयोगुणाः ॥ ११ ॥ वेणुंकीचकम् ॥ मारुतपूर्णरंध्रत्वेनमधुरनिध्वानम् ॥ १२ ॥ जातमेवेतिबाल्यात्प्रभृत्येवेतियावत् ॥ १३ ॥



१ अत्रसस्याद्राजससात्विकइतिपाठश्चेद्धरामतिभाति

एवंगुणसंपत्तौगुरुमुखाच्छ्रवणाधिकारोनापक्वचित्तानामित्याशयेनाह ॥ ततइति ॥ एवंप्राज्ञमुक्तप्रकारेआत्मानात्मतत्त्वविवेकेउपायानुपदिश्यस्वबुद्ध्यापिकार्यमनननेनियोजयतीत्यर्थः ॥ १४ ॥ एवंगुणसंपन्नस्यैवगुरुपूर्वकश्रवणादिनासाक्षात्कारलाभंदर्शयति ॥विचारेति ॥ एकरूपमानंदैकरसम् ॥ १५ ॥ नियोजयतीत्यत्रसूचितंमननंविवृणोति॥तनोतीति ॥ १६ ॥ गुणहीनंनिर्गुणंब्रह्मैवयथाभवतितथाप्रबोधयंतीत्यर्थः ॥ १७ ॥ उक्तमर्थंसंक्षिप्योपसंहरति ॥ प्रथितेति ॥ तेउक्तगुणसंपन्नाश्चरमजन्मानोमानवाःप्रथितगुणान्प्रख्यातजीवन्मुक्तलक्षणगुणान्सुगुरून्यत्नान्निषेव्यतद्दर्शितयुक्तिभिरमलधियाचित्तांतर्गतंरत्नंप्रत्यगात्मानंप्रविचार्यरत्नपरीक्षावन्मननेनपरीक्ष्यचित्तांतःप्रकाशंपरंप्रत्यगभिन्नंब्रह्मचिरमवलोक्यसाक्षादनुभूयतत्साक्षात्कारमात्रेणतद्भावलाभलक्षणाममलांमायातत्कार्यसर्वमलनिर्मुक्तांपरमपुरुषार्थलक्षणांगतिमुपसमीपेस्वस्थानएवयांतिलभंतेनो

ततोसौगुणसंपूर्णोगुरुमेवानुगच्छति॥ सतमेवंविवेकेवैनियोजयतिपावने ॥ १४ ॥ विचारवैराग्यवताचेतसागुणशालिना॥ देवंपश्यत्यथात्मानमेकरूपमनामयम्॥ १५ ॥ तनोत्ययंविचारेणचारुणाशांतचेतसा॥ प्रबोधनायप्रथमंमनोमननमांतरम् ॥ १६ ॥ येहिपाश्चात्यजन्मानस्तेहिसुमंमनोगम्॥ प्रबोधयंतिप्रथमंगुणहीनंमहागुणाः ॥ १७ ॥ प्रथितगुणान्सुगुरून्निषेव्ययत्नादमलधियाप्रविचार्यचित्तरत्नम्॥ गतिममलामुपयांतिमानवास्तंपरमवलोक्यचिरंप्रकाशमंतः॥१८॥ ॥इ०वा०वा०दे० मोक्षोपायेपूपशमप्रकरणेप्रथमोपदेशोनामपष्ठःसर्गः ॥६॥ ॥७॥ ॥श्रीवसिष्ठउवाच ॥ ॥ एषतावत्क्रमःप्रोक्तःसामान्यःसर्वदेहिनाम्॥ इममन्यंविशेषंत्वंशृणुराजीवलोचन॥१॥अस्मिन्संसारसंरंभेजातानांदेहधारिणाम्॥ अपवर्गक्षमौरामद्वाविमावुत्तमौक्रमौ॥२॥एकस्तावद्गुरुप्रोक्तादनुष्ठानाच्छनैःशनैः॥ जन्मनाजन्मभिर्वापिसिद्धिदःसमुदाहृतः॥ ३॥ द्वितीयस्त्वात्मनैवाशुकिंचिद्व्युत्पन्नचेतसा॥ भवतिज्ञानसंप्राप्तिराकाशफलपातवत्॥ ४ ॥ नभःफलनिपाताभज्ञानसंप्रतिपत्तये॥तत्रेमंशृणुवृत्तांतंप्राक्तनंकथयामिते ॥५॥ शृणुसुभगकथांमहानुभावाव्यपगतपूर्वशुभाशुभार्गलौघाः॥ खपतितफलवत्परंविवेकंचरमभवाविमलंसमश्नुवंति ॥ ६ ॥ ॥ इत्यार्षेवा०वा०दे० मोक्षोपायेपूपशमप्रकरणेआकाशफलप्राप्तिवज्ज्ञानसंप्राप्तिक्रमसूचनंनामसप्तमःसर्गः॥ ७॥

पासकत्वदुष्कम्यलोकांतरंगत्वेत्यर्थः ॥१८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेपष्ठःसर्गः ॥ ६ ॥ ॥ ७ ॥ ॥ इहस्वेनविचारेणकिंचिद्व्युत्पन्नचेतसः ॥ वर्ण्यतेज्ञानसंप्राप्तिराकाशफलपातवत् ॥ १ ॥ उक्तंसामान्यक्रममनूद्यकस्यचिद्भाग्यवतोविनैवतदैवोपर्नातेनस्वविचारमात्रेणैवसहसासर्वगुणसंपत्सहितज्ञानोदयलक्षणंविशेषंदर्शयति ॥ एषइत्यादिना ॥ अपवर्गक्षमौमोक्षफलोपहितौ ॥ इमौउक्तवक्ष्यमाणौ ॥ २ ॥ एकेनजन्मनावहुभिर्वाजन्मभिःसिद्धिदोमोक्षप्रापकःसमुदाहृतःआगुक्तइत्यर्थः ॥ ३ ॥ आत्मनास्वेनैवदैवोपनीतजीवजगत्तत्वविचारवताज्ञानसंप्राप्तिर्भवतीत्यर्थः ॥ ४ ॥ द्वितीयेक्रमेजनकाख्यायिकामुदाहरिष्यन्भूमिकांरचयति ॥ नभःफलेति ॥५॥ हेसुभगचरमजन्मवाश्चरमजन्मानोमहानुभावाःपुरुषाःपरंविवेकंयथाखपतितफलवत्समश्नुवंतितथावक्ष्यमाणांकथांशृणिवत्यर्थः ॥ ६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेसप्तमःसर्गः ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

जनकेनवसंतेत्रवनेविहरताकचित् ॥ सिद्धगीताःशुभाःश्लोकाःश्रुताइत्युपवर्ण्यते ॥ १ ॥ विदेहानांजनपदानांमहीपालोराजा ॥ १ ॥ अर्थिसार्थानांयाचकजनसंघानाम् ॥ बंधुलक्षणानांपुष्पाणांमाधवोवसंतः ॥ २ ॥ भुवंविष्णुर्भवानिवआस्थितःपालनार्थमाश्रितः ॥ ३ ॥ प्रफुल्लावाललतिकायत्र ॥ अनुकंपायांकन् ॥ मत्तेमत्तवद्विजृंभमाणेअतएवकोकिलालापैर्लासिनिनृत्यतीवस्थितेमधौवसंते ॥ ४ ॥ सुविलासालताएवांगनालताअंगनाश्चवायत्र ॥ ५ ॥ केसरेषूद्दामारजःसौगंध्यमकरंदकणापहरणसमर्थानतुपांसुविकिरणादौ ॥ मंदसुरभिशीताइतियावत् ॥ तथाविधामारुतायत्र ॥ सानुकुंजेषुक्रीडाशैलप्रस्थप्ररूढेषुलतागृहेषु ॥ ६ ॥ अप्रदृश्यानामंतर्हितानाम् ॥ स्वप्रसंगात्स्वानुग्रहार्थमितियावत् ॥ ७ ॥ श्रुतिस्मृतिपुराणेतिहासैर्गीतमात्मानंश्रवणमात्रेणभावयंतियथास्वयमेवसाक्षाद्भवतितथाकुर्वंतीतिगीतात्मभावनाः ॥ गीताःस्मार्तोपनिषदःशुश्राव ॥८॥ द्रष्टुश्चक्षुरादिद्वाराविषयप्रमातुर्दृश्येनस्रक्चंदनवनितादिविषयेणसमायोगात्सन्निकर्षाज्जातेप्रत्ययेविषयाकारबुद्धिवृत्तौस्वयंप्रथमानोयआनंदरूपोनिश्चयस्तंतत्स्वभावमेवआ

**श्रीवसिष्ठउवाच॥ ॥अस्त्यस्तमितसर्वापदुद्यत्संपदुदारधीः॥ विदेहानांमहीपालोजनकोनामवीर्यवान्॥ १ ॥ कल्पवृक्षोर्थिसार्थानांमित्राब्जानांदिवाकरः॥ माधवोबंधुपुष्पाणांस्त्रीणांमकरकेतनः॥२॥ द्विजकैरवशीतांशुर्द्विपत्तिमिरभास्करः॥ सौजन्यरत्नजलधिर्भुवंविष्णुरिवास्थितः॥ ३ ॥ प्रफुल्लबाललतिकेमंजरीपुंजपिंजरे ॥ सकदाचिन्मधौमत्तकोकिलालापलासिनि ॥ ४ ॥ ययौकुसुमिताभोगंसुविलासलतांगनम्॥ लीलयोपवनंकांतंनंदनंवासवोयथा ॥ ५ ॥ तस्मिन्वरवनेहृद्येकेसरोद्दाममारुते॥ दूरस्थानुचरःसानुकुंजेषुविचचारह॥ ६ ॥ अथशुश्रावकस्मिंश्चित्तमालवनगुल्मके॥ सिद्धानामप्रदृश्यानांस्वप्रसंगादुदाहृताः ॥ ७ ॥ विविक्तवासिनांनित्यंशैलकंदरचारिणाम्॥ इमाःकमलपत्राक्षगीतागीतात्मभावनाः ॥ ८ ॥ ॥सिद्धाऊचुः॥ ॥द्रष्टृदृश्यसमायोगात्प्रत्ययानंदनिश्चयः॥ यस्तंस्वमात्मतत्त्वोत्थंनिःस्पंदंसमुपास्महे॥ ९ ॥**

त्मतत्त्वपरिशोधनेनउत्थंनिरतिशयभूमात्मनाविर्भूतंस्वमात्मानंनिःस्पंदंनिर्विकल्पसमाधिनिरस्तबाह्यांतःकरणस्पंदंयथास्यात्तथासमुपास्महेनिरंतरमनुभवामः ॥ अयंभावः॥ विषयाकारवृत्तौस्वयंप्रथमानआनंदोनविषयकोटौ जडत्वप्रसंगात् ॥ नापिकर्तृकरणवृत्तिकोटौ तेषांकारकत्वेनतच्छेषतानुभवविरोधात् ॥ तस्मात्साक्षिकोटावेव ॥ साक्ष्येवह्यविद्यावरणमंदीकृतचिदानंदस्वभावोन्यमहंकारात्मानंकल्पयित्वातच्छेषतामिवापन्नोविषयाकारवृत्त्याविर्भूतंस्वानंदंतच्छेषतामिवनयन्नूनस्वात्मानंनिरतिशयानंदंप्रतिबुद्ध्यतेऽतस्तमेवस्वतत्त्वविचारोत्थनिरतिशयानंदस्वभावंसमाहितेनमनसावयमुपास्महे ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेर्ब्रह्मानंदस्यैवाविद्ययाविषयाकारवृत्तिपरिच्छेदेनविषयानंदत्वविभावनादिति ॥ अथवाद्रष्टुःपुरुषस्यदृश्यस्यवियदादेश्चबाह्याध्यात्मिकवैषम्यप्रविलापनेनसमेपरिशिष्टसन्मात्रस्वभावेआत्यंतिकाभेदापत्तिलक्षणाद्यायोगान्मेलनाद्यारूढाद्योगादितिव्युत्पत्त्यानिर्विल्पकसमाधिपरिपाकाद्यःप्रत्ययःप्रत्येयःस्वानुभवादेवविश्वसनीयोभूमानंदनिश्चयोयस्तमात्मनस्तत्त्वेनयथार्थरूपेणोत्थं

प्रकटीभूतंस्वंनिस्पंदंसमुपास्महेइत्यर्थः ॥ अथवाद्रष्टुर्बुद्धेर्दृश्यानांविषयाणांचोपचयापचयजाड्यप्रियाप्रियादिरूपसाम्येनसमादायोगात्संबंधात्तदुभयांतरालिकस्तदुभयवि लक्षणत्वात्प्रत्ययएवानंदइतिनिश्चीयतइत्यानंदनिश्चयस्तंनिस्पंदंसक्रियवृत्त्युपाधिनिर्मुक्तमतएवात्मतत्त्वोत्थंस्वीययथार्थरूपेणाविर्भूतंचिदानंदैकरसंस्वंप्रत्यगात्मानंसमुपास्म हइत्यर्थः ॥अथवायआत्माअहमितिद्रष्टाइदंममेतिदृश्यैश्चान्योन्यतादात्म्यसंसर्गाध्यासलक्षणात्समायोगात्प्रतीयतेअनुभूयतेशुनकसूकरादिभिरपीतिप्रत्ययोविषयानंदएवपुरु पार्थइतिनिश्चयवान्संसरति ॥ स्वात्वीयायामाप्रमावेदांतजन्याखंडाकारवृत्तिस्तयाआत्मतत्त्वोत्थंस्वीयपारमार्थिकरूपेणाविर्भूतंकृत्वानिस्पंदंनिश्चलंसमुपास्महइत्यर्थः ॥ अथवायःप्रत्ययःस्वप्रकाशआनंदैकरसःस्वरूपनिश्चयोद्रष्टृदृश्यसमायःसन्द्रष्टृदृश्याकारमायासहितोभूत्वाअगात्स्वरूपप्रच्युतोऽभूत्तमानंदनिश्चयंचरमसाक्षात्कारवृत्त्यारू ढायास्वात्मभूतैवमातयाद्रष्टृदृश्यमायानिरासेनात्मतत्त्वेनोत्थमित्यादिप्राग्वत् ॥ अथवाद्रष्टृदृश्यसमाःयःअगादितिच्छेदः ॥ यआत्मातदेतत्प्रेयःपुत्रात्प्रेयोवित्तात्प्रेयोन्यस्मात्सर्व स्मादित्यादिश्रुत्यनुभवसिद्धात्परमप्रेमास्पदत्वप्रत्ययादानंदरूपत्वेननिश्चेतुंयोग्योपिविवेकविचारादिप्रत्ययाभावाद्द्रष्टृदृश्यसमाभोक्तृभोग्यप्रायाःसंसारदशाअगात्तंयस्तम्॥यत्तु प्रयत्नेक्तः ॥ विवेकवैराग्यश्रवणमननादिप्रयत्नैःसाक्षात्कृतंस्वेनैवमिर्मातेपरिच्छिन्नत्तिहिनास्तिवासर्वंद्रष्टृदृश्यंद्वैतजातमित्तिस्वमंयदात्मतत्त्वंतद्भावेनोत्थितंनिस्पंदंपुनःसंसारप्रसक्ति

॥ अन्येऊचुः ॥ ॥ द्रष्टृदर्शनदृश्यानित्यक्त्वावासनयासह ॥ दर्शनप्रथमाभासमात्मानंसमुपास्महे ॥ १० ॥

॥ अन्येऊचुः ॥ ॥ द्वयोर्मध्यगतंनित्यमस्तिनास्तीतिपक्षयोः ॥ प्रकाशनंप्रकाश्यानामात्मानंसमुपास्महे ॥ ११ ॥

शंकाशून्यंसम्यगुपेत्यसर्वसामीप्यावधिप्रत्यगात्मतयाप्राप्यआस्महेतिप्रामहइत्यर्थः ॥९॥ तमेवात्मानंनिष्कृष्यकरतलामलकवद्दर्शयंतइवान्येप्राहुः ॥ द्रष्टृदर्शनेति ॥ द्रष्टा दित्रिपुटीत्यागेनावस्थाद्वयनिरासः ॥ वासनयासहेत्यनेनतुतदुभयबीजवासनासंभृतसौषुप्ताज्ञानस्यापिनिरासउक्तः ॥ दर्शनाच्चाक्षुषमानसादिवृत्तेःप्रथमंपूर्वमेवतदुत्पत्तिसाक्षि तयाभासमानमित्यनेनपूर्वसिद्धस्त्रिपुटीसाक्षीसर्वानुभवसिद्धोविविच्यदर्शितः ॥ तमेवसर्वीजत्रिपुटीत्यागात्तुरीयमात्मानंसमुपास्महइत्यर्थः ॥ १० ॥ दर्शनप्रथमाभासेसाक्षि णियेअस्तिनास्तीतिविप्रतिपद्यंतेतान्प्रत्यपितदुभयपक्षाविरुद्धंसाक्षिणंदर्शयंतोन्येप्राहुः ॥ द्वयोरिति ॥ येतावदस्तिदर्शनप्रथमाभासःपरंतुसोपिजन्यएवननित्यइत्याहुस्तेषांपूर्वपू र्वतदाभासानांस्वप्रकाशत्वेस्वविषयत्वेवास्वमात्रभानपरिक्षीणत्वात्पूर्वोत्तरविज्ञानास्पर्शित्वाच्चनतदुत्पत्त्यादिसाक्षितानिर्वहतीतितत्साक्षीअन्यआवश्यकइतितत्पक्षमध्यगतंतद विरुद्धंयेपिनास्तीत्याहुस्तेषांनास्तितायाअपिनिःसाक्षिकायाअसिद्धेस्तत्पक्षसाधकत्वेनतन्मध्यगतमित्यर्थः ॥ अथवाजगतःअस्तित्वंआविर्भूतावस्थाकार्यम् ॥ नास्तित्वंतुति रोभावावस्थाकारणम् ॥ असद्वाइदमग्रआसीत्ततोवैसदजायतेतिश्रुतेः ॥ तयोरुभयोरयौगपद्यात्पक्षयोःपाक्षिकयोरनुगतसन्मात्ररूपेणमध्यगतमित्यर्थः॥ अथवाअस्तिनास्ती तिपक्षयोःकल्पितविरुद्धकोट्योर्द्वयोरप्यधिष्ठानतयामध्यगतमित्यर्थः ॥ अतएवकल्पितनास्तित्वस्याधिष्ठानास्पर्शान्नित्यंप्रकाश्यानांभावाभावानांप्रकाशकम् ॥ ११ ॥

यस्मिन्सर्वमिति ॥ यस्मैइदमितिच्छेदः ॥ सप्तमीविभक्तिमारभ्यव्युत्क्रमेणसर्वाविभक्तयःषण्णांकारकाणांसंबंधप्रातिपदिकार्थभेदस्यचप्रदर्शनायात्रनिर्दिष्टाः ॥ तथाचयद्ब्रह्मसर्वाधारत्वात्सर्वस्वामित्वादेःसर्वोपादाननिमित्तावधिभावात्सर्वपारार्थ्यसंप्रदानादिभावनिर्वाहकत्वात्सर्वकर्तृकरणादिभावाच्चमाययासर्वजगद्व्यवहारनिर्वाहकंसर्वात्मकंचभवतितत्सर्वाधिष्ठानंपरमार्थसत्यंप्रत्यगात्मैवेतिबोधेनसम्यगुपेत्यतद्रूपाआस्महेइत्यर्थः ॥ १२ ॥ अःशिरइवप्रथमोयस्यतमकारादिमित्यर्थः ॥ हकारोंतेयस्यतंहकारांतमहंपदमशेषवस्तुप्रकाशकवेदशास्त्रादिशब्दजालप्रकृतिभूतानामशेषवर्णानामक्षरसमाम्नायेअकारहकारांतरालनिवेशादशेषजगदाकारेसप्रपंचेब्रह्मणिनहन्यतेनहीयतेइतिव्युत्पत्त्याअहव्याप्ताविितिधातुनिष्पत्त्याचनशिष्यतेआकारोयस्मिन्नित्यशेषाकारेनिर्गुणेचसंस्थितंतात्पर्यनिष्ठांप्राप्तमजस्रंक्रियमाणेपुत्सव्यवहारेपुउच्चरंतंअहंकारोपाधिनिरासेनतंवर्णिताहंपदार्थंआत्मावाइदमेकएवाग्रआसीदित्यादिश्रुतिप्रसिद्धब्रह्मात्मानमुपास्महेनिरंतरंभावयामइत्यर्थः ॥ अथवाअशेषवस्त्वाकारसंस्थितंलंवरंयंहंइतिहकारांतंपंचवीजप्रतिपाद्यपंचमहाभूतात्मकंजगत्अशिरस्कंशिरोभूतमूलाज्ञानरहितंकर्तुमिवअस्यस्यतिवामायांतंजगदितिव्युत्पत्त्यास्मच्छब्दनिष्पन्नमकारशिरस्कहकारांतमहंपदमजस्रमुच्चरं

अन्येऊचुः॥ ॥यस्मिन्सर्वंयस्यसर्वंयतःसर्वंयस्मायिदम्॥ येनसर्वंयद्धिसर्वंतत्सत्यंसमुपास्महे॥ १२॥ ॥अन्येऊचुः॥ ॥अशिरस्कंहकारांतमशेषाकारसंस्थितम्॥ अजस्रमुच्चरंतंस्वंतमात्मानमुपास्महे॥ १३ ॥ ॥ अन्येऊचुः ॥ ॥संत्यज्यहृद्गुहेशानंदेवमन्यंप्रयांतिये॥ तेरत्नमभिवांछंतित्यक्तहस्तस्थकौस्तुभाः॥ १४॥ ॥अन्येऊचुः॥ ॥सर्वाशाःकिलसंत्यज्यफलमेतदवाप्यते॥ येनाशाविषवल्लीनांमूलमालाविलूयते॥ १५ ॥ ॥ अन्येऊचुः ॥ ॥बुद्ध्वाप्यत्यंतवैरस्यंयःपदार्थेषुदुर्मतिः॥ बध्नातिभावनांभूयोनरोनासौसगर्दभः॥ १६॥

तम् ॥ युष्यसिभ्यांमदिगित्यस्तेरस्यतेर्वास्मच्छब्दव्युत्पादनादित्यर्थः ॥ अथवाअशेषजगदाकारसंस्थितंनिष्प्रमाणकत्वेननिर्मूलत्वाच्छ्रुतिशिरोवाक्यत्वाच्चाशिरस्कंहकारांतंसोहंपरमार्थासंगचिदेकरसत्वादजस्रमुच्चरंतंउदस्यचरंतमुद्धृत्यभक्षयंतंवास्वंप्रत्यग्रूपमात्मानमुपास्महेइत्यर्थः ॥ संपहेतुसशिरस्कंहकारादिमितिपाठः ॥ तस्यचसुरनरतिर्यगाद्यशेषशरीराकारेषुसंस्थितंसशिरस्कंहकारादिहंसइतिमंत्रमजपागायत्रीरूपेणपट्शताधिकैकविंशतिसहस्रसंख्ययाअजस्रंप्रत्यहंश्वासोच्छ्वासच्छलेनोच्चरंतमित्यर्थः ॥ उदश्चरःसकर्मकादित्यात्मनेपदविषयेलटःशत्रादेशश्छांदसः ॥ अथवापूर्वरूपेणापहारान्नशिष्यतेअकारोयत्रतदशेषाकारंसोइतिपदंतत्रसंस्थितंअतएवअशिरस्कंशिरोभूतप्रथमवर्णरहितंहकारांतंहकारमात्रावशेषंअहंपदंसोहंमंत्रमितियावत् ॥ अजस्रमुच्चरंतमित्यादिप्राग्वत् ॥ १३ ॥ हृद्गुहेशानंअंगुष्ठमात्रःपुरुषोंतरात्मासदाजनानांहृदयेसन्निविष्टः अंगुष्ठमात्रःपुरुषोज्योतिरिवाधूमकः ईशानोभूतभव्यस्यसएवाद्यसउश्वइत्यादिश्रुतिप्रसिद्धमितिभावः ॥ १४ ॥ अन्येतत्प्राप्तौवैराग्यमेवमुख्यंसाधनमित्याहुः ॥ सर्वाशाइति ॥ एतत्हृदयस्थंज्ञानफलंब्रह्म ॥ अवाप्यतेलभ्यते ॥ येनतल्लाभेनमूलमालावासनाजालजटिलहृदयग्रंथिः ॥ रसोप्यस्यपरंदृष्ट्वानिवर्ततइतिभगवद्वचनादितिभावः ॥ १५ ॥ पदार्थेषुभोग्यविषयेषु ॥ भावनांभोगतृष्णाम् ॥ १६ ॥

अन्येइंद्रियनिग्रहएवमुख्यंसाधनमित्याशयेनाहुः ॥ उत्थितानिति ॥ हरिरिंद्रः ॥ तथाचब्रह्मवैवर्त्ते ॥ एकमेकंकालकूटमिंद्रियंनाशकत्पुनः ॥ तदेवशोधितंसाक्षाद्विषमप्यमृतं यथेति ॥ तथाचभारतेपि ॥ इंद्रियाण्येवतत्सर्वंयत्स्वर्गनरकावुभौ ॥ निगृहीतविसृष्टानिस्वर्गायनरकायच ॥ १७ ॥ अन्येतुउपशमएवमुख्यंसाधनमितरत्सर्वंतदर्थमित्याशये नोपसंहरंति ॥ उपशमेति ॥ उपशमोबाह्याभ्यंतरेंद्रियव्यापारोपरमस्तेनविक्षेपदुःखोपशमवदाविर्भूतमात्मसुखमाहरेत्संपादयेत् ॥ तद्भिन्नविषयसुखवद्दोषहेतुःकिंतुचित्तप्रसाद हेतुत्वात्पवित्रम् ॥ शमवशतोनिरिंधनाग्निवच्चेतःशममुपक्षयंप्रयाति ॥ एवंप्रशमितमनसःसुखेनिरतिशयानंदेस्वकेस्वीयेपरमार्थस्वरूपेस्थितिर्भूमिकापरंपरारोहणक्रमेणोत्तमा सप्तमभूमिकाप्रतिष्ठालक्षणाचिरायविदेहकैवल्यावधिभवतीत्यर्थः ॥ १८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेऽष्टमःसर्गः ॥ ८ ॥ ॥ ९ ॥ ॥ इह श्रुतवतोराज्ञोनिर्वेदाद्गृहमीयुषः ॥ विमर्शेनार्थमूलानांमनोनिर्णयईर्यते ॥ १ ॥ भीरुर्भयशीलः ॥ द्रुलोपेपूर्वस्यदीर्घोणः ॥ १ ॥ स्वंस्वीयंपरिवारम् ॥ २ ॥ स्वंस्वमालयंगृहंप्रति

अन्येऊचुः॥ ॥उत्थितानुत्थितानेतानिंद्रियाहीन्पुनःपुनः॥हन्याद्विवेकदंडेनवज्रेणेवहरिर्गिरीन्॥१७॥ ॥अन्येऊचुः॥ ॥उपशमसुखमाहरेत्पवित्रंशमवशतःशममेतिसाधुचेतः॥प्रशमितमनसःस्वकेस्वरूपेभवतिसुखेस्थितिरुत्तमाचिराय॥१८॥ ॥इ०वा०वा० दे०मो०उपशमप्रकरणेसिद्धगीतानामाष्टमःसर्गः॥८॥ ॥९॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिसिद्धगणोद्गीतागीताःश्रुत्वामहीपतिः॥ विषादमाजगामाशुभीरूरणरवादिव॥१॥जगामपरिवारंस्वमाकर्षन्स्वगृहंप्रति॥स्वतीरवृक्षानुगतःसरिदोघइवार्णवम्॥२॥ परिवारमशेषेणविसृज्यस्वंस्वमालयम्॥एकएवारुरोहाग्र्यंगृहमर्कइवाचलम्॥३॥ तत्रप्रोड्डयनालोलखगपक्षतिचंचलाः॥आलोकयँल्लोकगतीर्विललापेदमाकुलः॥४॥हाकष्टमतिकष्टासुलोकलोलदशास्वयम्॥पाषाणेष्विवपाषाणाआलुठामिवलादहम्॥५॥ अपर्यंतस्यकालस्यकोप्यंशोजीव्यतेमया॥तस्मिन्भावंनिबध्नामिधिङ्मामधमचेतनम्॥६॥कियन्मात्रमिदंनामराज्यमाजीवितंमम॥किमेतेनविनादुःखंतिष्ठामिहतधीर्यथा॥७॥आदावंतेप्यनंतोहंमध्येपेलवजीवितः॥बालश्चित्रेंदुनेवाहंकिंमुधाधृतिमास्थितः॥८॥

विसृज्य ॥ गृहंगृहप्रासादम् ॥ अचलमुदयाद्रिम् ॥ ३ ॥ प्रोड्डयनेआलोलाःखगानांपक्षतयःपक्षमूलानीवचंचलाःसोद्वेगंभंगुराइतियावत् ॥ लोकगतीर्देहादिदृश्यपदार्थस्थितीः ॥ इदंवक्ष्यमाणप्रकारंविललाप ॥ ४ ॥ लोकानांजीवानांलोलासुजन्मजराभयमरणादिनालोलासुदशासु ॥ पाषाणदृष्टांतोमौर्ख्यकठोरताद्योतनार्थः ॥ ५ ॥ जीवधातोरकर्मकत्वेपिकालभावाध्वगंतव्याःकर्मसंज्ञास्त्वकर्मणामितिकात्यायनवचनाज्जीव्यतेइतिकालेकर्मणिलः ॥ तस्मिंस्तादृशेऽपिजीवनेभावमाशाम् ॥ ६ ॥ आजीवितंजीवितावधिराज्यम् ॥ एतेनैतावन्मात्रेणसंतुष्टःसन्हतधीर्मूर्खइववदुःखंभाविदुःखप्रतीकारचिंतांविनाकिंतिष्ठामीत्यर्थः ॥ अथवाएतेनएतावन्मात्रेणहतधीर्विनष्टबुद्ध्युपाधिर्जीवन्मुक्तइवविनादुःखंनिर्दुःखंतिष्ठामिकिंइतिकाकायोज्यम् ॥ ७ ॥ ननुदेहएवात्मातस्यनाशेसंदेहवतेनसर्वदुःखनिवृत्तिःकिंनस्यान्नेत्याह ॥ आदाविति ॥ कामकर्मवासनाबीजमंतरेणभोगवैचित्र्यप्रयोजकजन्मासिद्धेर्विधिनिषेधमोक्षशास्त्रप्रामाण्यानुरोधाच्चानादिरनंतश्चाहंनदेहमात्रइत्यर्थः ॥ चित्रलिखितेनानिंदुनैवेंदुबुद्ध्यागृहीतेनबालइवानात्मनैवात्मतयागृहीतेनदेहेनेत्यर्थः ॥ धृतिमाश्वासम् ॥ ८ ॥

केनजालिनाऐंद्रजालिकेनपरिमोहितोस्मि ॥ ९ ॥ वसतीतिवस्तुसत्यं रम्यंसुखैकरूपं उदारमपरिच्छिन्नं अकृत्रिममजन्यंचतत्तादृशंकिंचिदपिइहजगतिनास्त्येव ॥ कस्मिन्
निष्ठाविश्रांतिर्यस्यास्साकिंनिष्ठाभवत्वितिशेषः ॥ १० ॥ ननुदूरदेशेतादृशंवस्तुप्रसिद्धंस्यान्नेत्याह ॥ दूरस्थमिति ॥ दूरस्थत्वेनप्रसिद्धमपियत्किंचिद्वस्तुअदूरस्थमेव ॥ कुतः ॥
यद्यस्मान्मेमनसिवर्त्तते नहिमनोदेहाद्बहिर्दूरंव्रजति तथासतिदूरेएवतत्त्वथानुभूयेतनत्वदि ॥ स्वप्येवहिसर्वेबाह्यवस्तुबोधमनुभवंति ॥ तस्माद्दूरादिकल्पनाप्यंतर्भासमानानवास्त
वीत्यनर्थएवेतितद्भावनात्याज्यैवनोपादेयेत्यर्थः ॥ ११ ॥ लोकानांजनानांभोगार्थंधनार्जनादिप्रवृत्तिरूपआजवंजवीभावःसलिलावर्त्तइवभंगुरोनश्वरफलोजन्ममरणादिदुः
खहेतुश्चबहुशोदृष्टः ॥ सुखंविषयसुखंप्रति ॥ १२ ॥ उक्तमेवप्रपंचयति ॥ प्रत्यब्दमित्यादिना ॥ दुःखपिंडानिदुःखनिबिडानि ॥ एवार्थेतुशब्दः ॥ १३ ॥ अत्रसंसारेतिष्ठतीत्य

प्रपंचरहितेनाहमिंद्रजालेनजालिना ॥ हाकष्टमतिमुग्धामिकेनास्मिपरिमोहितः ॥ ९ ॥ यद्वस्तुयच्चवारम्यंयदुदारमकृत्रिमम् ॥ किंचि
त्तदिहनास्त्येवकिंनिष्ठेहमतिर्मम ॥ १० ॥ दूरस्थमप्यदूरस्थंयन्मेमनसिवर्त्तते ॥ इतिनिश्चित्यवाह्यार्थभावनांसंत्यजाम्यहम् ॥ ११ ॥ लो
काजवंजवीभावःसलिलावर्त्तभंगुरः ॥ दृष्टोद्यापिहिदुःखायकेयमास्थासुखंप्रति ॥ १२ ॥ प्रत्यब्दंप्रतिमासंचप्रत्यहंचप्रतिक्षणम् ॥ सु
खानिदुःखपिंडानिदुःखानितुपुनःपुनः ॥ १३ ॥ परामृष्टंविशिष्टंहिदृष्टंनष्टंनभावितम् ॥ अत्रस्थंनतदस्तीहसतांयत्रास्तुसंस्थितिः ॥ १४ ॥
अद्ययेमहतांमूर्ध्निंतेदिनैर्निपतंत्यधः ॥ हतचित्तमहत्तायांकैषाविश्वस्ततावत ॥ १५ ॥ अरज्जुरेवबद्धोहमपंकोस्मिकलंकितः ॥ पतितो
स्म्युपरिस्थोपिहाममात्मन्हतास्थितिः ॥ १६ ॥ कस्मादकस्मान्मोहोयमागतोधीमतोपिमे ॥ असितःपिहितालोकोभास्कराग्रमिवांबु
दः ॥ १७ ॥ कइमेमेमहाभोगाःकइमेममबांधवाः ॥ बालोभूतमयेनेवसंकेतेनाहमाकुलः ॥ १८ ॥ स्वयमेवनिवध्नामिजरामरणरागि
णीम् ॥ किमिमामहमेतेषुधृतिमुद्वेगकारिणीम् ॥ १९ ॥ यातुतिष्ठतुवासम्यङ्ममैतांप्रतिकोग्रहः ॥ बुद्बुदश्रीरिवैषाहिमिथ्यैवेत्थमुपस्थि
ता ॥ २० ॥ तेमहाविभवाभोगास्तेसंतःस्निग्धबांधवाः ॥ सर्वंस्मृतिपथंप्राप्तंवर्त्तमानेपिकाधृतिः ॥ २१ ॥

त्रस्थंकिंचित्कालंदृष्टंसद्यएवनष्टंस्वराज्यादिपदंतुच्छत्वान्नभावितंनाचिंतितमेव हियतोविशिष्टंसर्वोत्कृष्टत्वेनप्रसिद्धमैंद्रप्राजापत्यादिपदमपिपरामृष्टंविचारितंसतांविवेकिनांसं
स्थितिरात्यंतिकविश्रांतिर्यत्रास्तुतादृशमिहनास्त्येवेत्यर्थः ॥ १४ ॥ हतेत्यधिक्षेपार्थंचित्तविशेषणम् ॥ महत्तायांराज्यादिवैभवोत्कर्षे ॥ हतचित्तमहंतायामितिपाठेतुहतचित्तंय
थास्यात्तथाअहंतायांराज्याभिमानेइतियोज्यम् ॥ १५ ॥ आत्मन्नितिसंबोधनं आत्मनिस्वस्वभावेस्थितिर्हतेतिसुबुकिसमम्यंतंवायोज्यम् ॥ १६ ॥ असितःश्यामः ॥ भास्कर
स्यअग्रंपुरोदेशम् ॥ १७ ॥ संकेतेनममतालक्षणसंबंधकल्पनेन ॥ १८ ॥ एतेषुभोगादिषुजरामरणयोःरागिणींप्रियसखीमिवानयित्रीम् ॥ धृतिंआस्थाम् ॥ १९ ॥ एतांभोगबां
धवादिसंपदंप्रतिकोग्रहआग्रहः ॥ २० ॥ तेचक्रवर्तिनांपृथुमरुत्तादीनांप्रसिद्धामहाविभवाः ॥ संतःसद्गुणाः ॥ सर्वमितिसामान्येनपुंसकम् ॥ काधृतिरास्था ॥ २१ ॥

ब्रह्मणःप्राक्तनहिरण्यगर्भस्य ॥ जगंतिभुवनानिकप्रयातानिममनिधनादिष्विति शेषः ॥२२॥ गलितानिकालेनेतिशेषः ॥ गलितानीतिवापाठः ॥ साधवोविवेकिनः॥२३॥ कोटिपहणमानंत्योपलक्षणं संसारस्यानादित्वात् ॥ धृतिरास्था ॥ २४ ॥ संसारएवरात्रिस्तमोमयत्वात्तत्रयेदुःस्वप्नभूतेदेहमयेदेहप्रचुरेअहंममताव्यवहारभ्रमेअस्थितिममर्यादामविवेकितामितियावत् ॥ २५ ॥ अयमितिदेहसंनिहितेअपरोक्षताकल्पनम्॥ सइतितद्विप्रकृष्टेपरोक्षताकल्पना ॥ अहमितिदेहेआत्मताकल्पना ॥ सात्रिविधापिअसत्स्वरूपिण्येव ॥ अतःअहंकारपिशाचेनमोहितइतिशेषः ॥ अहमज्ञवत्किकिमर्थंनिर्विचारएतावंतंकालंस्थितइत्यर्थः ॥ २६ ॥ सूक्ष्मयाक्षणलवमुहूर्त्तादिरूपयाकाललेखयाइदमायुर्हतंहतंप्रतिक्षणंमुहुर्मुहुश्छिन्नंपश्यन्नपिकस्मान्नपश्यामिनविमृशामीत्यर्थः ॥ २७ ॥ पादपीठेपादपीठवद्रचितेपुभुवनेपुकृताःप्रतिमावद्रचितानमितावाईशानाईश्वराब्रह्माद

क्वधनानिमहीपानांब्रह्मणःक्वजगंतिवा॥ प्राक्तनानिप्रयातानिकेयंविश्वस्ततामम॥ २२ ॥ गलितानींद्रलक्षाणिबुद्बुदानीववारिणि॥ मांजीवितनिबद्धास्थंविहसिष्यंतिसाधवः॥ २३ ॥ ब्रह्मणांकोटयोयातागताःसर्गपरंपराः ॥ प्रयाताःपांसुवद्भूपाःकाधृतिर्ममजीविते ॥ २४ ॥ संसाररात्रिदुःस्वप्नेचेत्येदेहमयेभ्रमे ॥ आस्थांचेदनुबध्नामितन्मेमांतुधिगस्थितिम् ॥ २५ ॥ अयंसोहमितिव्यर्थकल्पनाऽसत्स्वरूपिणी॥ अहंकारपिशाचेनकिमज्ञवदहंस्थितः॥२६॥ हतंहतमिदंकस्मादायुराततयानया॥ पश्यन्नपिनपश्यामिसूक्ष्मयाकाललेखया॥ २७॥ पादपीठकृतेशानाःशार्ङ्गिक्रीडनकंदुकाः॥ कालकापालिकाग्रस्ताःकिमास्थेमयिवल्गसि ॥ २८॥ अजस्रमुपयांत्येतेयांतिचाद्यापिवासराः॥ अविनष्टैकसद्वस्तुदृष्टोनाद्यापिवासरः॥ २९॥ सारसाःसरसीवैतेसर्वस्मिञ्जनचेतसि ॥ भोगाएवस्फुरंत्यंतर्नतुस्वपददृष्टयः॥ ३० ॥ कष्टात्कष्टतरंप्राप्तोदुःखाद्दुःखतरंगतः॥ अद्यापिनविरक्तोस्मिहाधिङ्मामधमाशयम् ॥ ३१ ॥ येषुयेषुदृढाबद्धाभावनाभव्यवस्तुषु॥ तानितानिविनष्टानिदृष्टानिकिमिहोत्तमम्॥ ३२॥ यन्मध्येयच्चपर्यंतेयदापातेमनोरमम्॥ सर्वमेवापवित्रंतद्विनाशामेध्यदूषितम्॥ ३३॥ येषुयेषुपदार्थेषुधृतिंबध्नातिमानवः॥ तेषुतेष्वेवतस्यायंदृष्टोनाशोदयोभृशम्॥ ३४ ॥

योपिये: ॥ शार्ङ्गिणोविष्ण्वादिदेहाःक्रीडनकंदुकाइवमुहुर्मुहुर्युद्धादिव्यवहारेपुनभस्युत्क्षिप्तायैः ॥ तथाविधामहाकल्पलक्षणकालरूपाब्रह्मकपालपाणित्वात्कापालिकारुद्रास्तेपिमहाकालेनग्रस्ताः ॥ आस्थेहेजीविताशेमयिकिंवल्गसिनृत्यसि ॥ २८ ॥ उपयांतिआगच्छंति ॥ अद्यास्मिन्नपिवयसियांतिव्यर्थैवापगच्छंति ॥ अविनष्टंनित्यमेकंसन्निदीपमानंदैकरसंवस्तुलब्ध्वंयस्मिंस्तथाविधोवासरोऽद्यापिअद्यतनकालावधिनदृष्टः ॥ २९ ॥ स्वंप्रत्यगात्मभूतंयत्परमंपदंतस्यदृष्टयःसाक्षात्काराः ॥ ३० ॥ रागलोभादिदूषितत्वादधमआशयोमनोयस्यतम् ॥ ३१ ॥ भावनाप्रीतिः ॥ भव्येपुरमणीयेषुवस्तुपुविषयेपु ॥ ३२ ॥ मध्येमनोरमंवयः ॥ पर्यंतेमनोरमोधर्मः ॥ आपातेमनोरमाविषयाः ॥ ३३ ॥ धृतिमास्थाम ॥ तस्यमानवस्य ॥ अयंप्रसिद्धः ॥ नाशोदयोदुःखप्रादुर्भावः ॥ ३४ ॥

१ चेत्यदेहमयेइत्यपिपाठः

अज्ञस्योत्तरकालेपिविश्रांतिप्रत्याशानास्तीत्याह ॥ श्वःश्वइति ॥ रागलोभाद्यभिवृद्ध्यापापीयसीम् ॥ हिंसादिप्रवृत्त्याक्रूरतराम् ॥ तत्फलकालेखेदकरीम् ॥ ३५ ॥ शेषेवयसि ॥ कलत्रंतदुपलक्षितंकुटुंबंतद्भरणादिचिंतयाआर्त्तः ॥ वित्तार्तइतिपाठेकलत्रवित्तादिक्षयेणार्त्तः ॥ कदाकिंस्वोद्धारसाधनंकरोतिनकदाचिदपीत्यर्थः ॥ ३६ ॥ आगमापायिआद्यंतयोरसत् ॥ भोगकालेपिविरसम् ॥ दारिद्र्यरोगवार्द्धकादिदशावैषम्यैर्दूषितम् ॥ असारमेवसारंसारबुद्ध्यागृहीतम् ॥ किंवृथापश्यति ॥ यत्पश्यतितत्किंनिमित्तमितिवार्थः ॥ ३७ ॥ ननुयन्नदुःखेनसंभिन्नमित्यादिश्रुत्युक्तलक्षणःस्वर्गःसारभूतःकिंनस्यात्तत्राह ॥ राजसूयेति ॥ महाकल्पांतंब्रह्मादिभोग्यमपिस्वर्गंमहाकालदृशाअंशंक्षणभोग्यप्रायमल्पमेवप्राप्नोतिनत्वधिकमपरिच्छिन्नमित्यसारएवसइत्यर्थः ॥ ३८ ॥ नहवैसशरीरस्यसतःप्रियाप्रिययोरपहतिरस्तीतिश्रुतेःस्वर्गिणामप्यसुरादिपीडाश्रुतेश्चनदुःखासंभि

श्वःश्वःपापीयसीमेषश्वःश्वःक्रूरतरामपि ॥ श्वःश्वःखेदकरीमेतिदशामिहजडोजनः ॥ ३५ ॥ अज्ञानैकहतोबाल्येयौवनेमदनाहतः ॥ शेषेकलत्रचिंतार्त्तःकिंकरोतिकदाजडः ॥ ३६ ॥ आगमापायिविरसंदशावैषम्यदूषितम् ॥ असारसारंसंसारंकिंतत्पश्यतिदुर्मतिः ॥ ३७ ॥ राजसूयाश्वमेधाद्यैरिष्ट्वायज्ञशतैरपि ॥ महाकल्पांतमप्यंशंस्वर्गंप्राप्नोतिनाधिकम् ॥ ३८ ॥ कोसौस्वर्गोस्तिभूमौवापातालेवाप्रदेशकः ॥ नयत्राभिभवंत्येताद्भुभ्रंमयंइवापदः ॥ ३९ ॥ निजचेतोबिलव्यालाःशरीरस्थलपल्लवाः ॥ आधयोव्याधयश्चैतेनिवार्यंतेकथंकिल ॥ ४० ॥ सतोसत्तास्थितामूर्ध्निमूर्ध्निरम्येष्वरम्यता ॥ सुखेषुमूर्ध्निदुःखानिकिमेकंसंश्रयाम्यहम् ॥ ४१ ॥ जायंतेचम्रियंतेचप्राकृताःक्षुद्रजंतवः ॥ धरातैरेवनीरंध्रादुर्लभाःसाधुसाधवः ॥ ४२ ॥ नीलोत्पलालिनयनाःपरमप्रेमभूषणाः ॥ हासायैवविलासिन्यःक्षणभंगितयास्थिताः ॥ ४३ ॥ येषांनिमेषणोन्मेषैर्जगतांप्रलयोदयौ ॥ तादृशाःपुरुषाःसंतिमादृशांगणनैवका ॥ ४४ ॥ संतिरम्यतराद्रम्याःसुस्थिराद्पिसुस्थिराः ॥ चिंतापर्यवसानेयंपदार्थश्रीःकिमीहसे ॥ ४५ ॥ संपदश्चविचित्रायास्ताश्चेच्चित्तेनसंमताः ॥ तत्ताअपिमहारंभाहंतमन्येमहापदः ॥ ४६ ॥ आपदोपिविचित्रायास्ताश्चेन्मनसिसंमताः ॥ तत्ताअपिमहारंभामन्येमनसिसंपदः ॥ ४७ ॥

न्नत्वमपितस्यसंभवतीत्याशयेनाह ॥ कोसाविति ॥ ३९ ॥ किंचदेहाभिमानेसत्याधिव्याध्योर्दुर्निवारत्वान्नकाप्यज्ञस्यविश्रांतिरस्तीत्याशयेनाह ॥ निजेति ॥ ४० ॥ भंगुरत्वदुःखपरत्वाभ्यांसर्वस्यामंगलतामेवप्रपंचयति ॥ सतइत्यादिना ॥ सतःवर्त्तमानकालदृश्यस्य ॥ असत्तानाशः ॥ ४१ ॥ प्राकृताःप्रकृतिःस्वाभाविकमज्ञानंतन्मोहिताः ॥ नीरंध्रानिबिडितेतियावत् ॥ ४२ ॥ हासायैवयोग्याइतिशेषः ॥ ४३ ॥ ननुराजत्वात्सर्वनियमनसमर्थस्योत्तमपुरुषस्यतवकुतोनाश्वासस्तत्राह ॥ येषामिति ॥ ४४ ॥ चिंताअर्जनरक्षणवियोगादिना ॥ चिंतैवपर्यवसानंफलंयस्यास्तथाविधेयंपदार्थश्रीरतस्तांकिमीहसेइच्छसि ॥ ४५ ॥ यानानारत्नगजवाजिधनदारादिभेदेनविचित्राःसंपदस्ताश्चेच्चित्तेनसंमतावहुमताःस्युस्तर्हिताअपिमहारंभावहुप्रयत्नलभ्यादुःखरक्ष्याअवश्यापायिन्यश्चेतिमहापदइत्येवमन्येइत्यर्थः ॥ ४६ ॥ एवंयादारिद्र्यबंधुराज्यादिनाशलक्षणाआपदोपियदिसाधुसंगतीर्थतपःप्रबोधादिप्रापणेनविचित्राःश्रेयएवेतिमनसिसंमताश्चेत्ताअपिविवेकवैराग्यादिमहारंभाःसंपदएवमन्येइत्यर्थः ॥ ४७ ॥

तस्मादसत्येजगतिममताभिवृद्धिरेवविपत् विवेकात्तत्परिक्षयएवसंपदित्याशयेनजगतोममतानर्हत्वंदर्शयति ॥ मनोमात्रेति ॥ अब्धौप्रतिबिंबितइंदुरिवभंगुरेभंगस्वभावेमिथ्याभूतेच ॥ अक्षरमालिकापदवाक्यात्मिकावर्णपंक्तिःकुतस्त्यानिरर्थिकेतियावत् ॥ ४८ ॥ काकतालीययोगेनकाकागमनमिवतच्छिरसितालपतनमिवाविचारमात्रकृतेनस्वसंबंधेन ॥ धूर्तेनभोगलंपटेनमनसा ॥ ४९ ॥ देशकालवस्तुकृतयाइयत्तयाआच्छिन्नासुपरिच्छिन्नासुत्रिविधतापग्रस्तत्वात्तप्तासु ॥ दीपाग्निशिखापक्षेस्पष्टम् ॥ ५० ॥ निरंतरदुःखभोगोऽभ्यासात्सह्योपिस्यात्सुखभोगविच्छिन्नाभ्यासोदुःखभोगोयंदुःसहएवेत्याशयेनाह ॥ वरमिति ॥ आलूनाविच्छिन्नाःसुखदुःखपरिवर्त्तायासु ॥ स्थितंस्थितिः ॥ भावेक्तः ॥ ५१ ॥ विषयसुखानांसुखतानास्त्येवकिंतुदुःखविशेषरूपतैवेतियुक्त्योपपादयति ॥ संसारइति ॥ ५२ ॥ कथंतर्हिसुखत्वानुभवस्तत्रयुक्तिमाह ॥ अकृत्रिमेति ॥ खड्गा

मनोमात्रविवर्त्तेस्मिञ्जगत्यब्धींदुभंगुरे॥ ममेदमित्यपूर्वेयंकुतस्त्याक्षरमालिका॥४८॥ काकतालीययोगेनसंपन्नायांजगत्स्थितौ॥ धूर्तेनकल्पिताव्यर्थैर्हेयोपादेयभावना ॥ ४९ ॥ इयत्ताच्छिन्नतप्तासुसुखनाम्नीषुदृष्टिषु॥ कास्वेतास्वनुरक्तोस्मिपतंगोग्निशिखास्विव ॥५०॥ वरमेकांतदाहेपुलुठनंरौरवाग्निषु॥ नत्वालूनविवर्त्तासुस्थितंसंसारवृत्तिषु ॥ ५१ ॥ संसारएवदुःखानांसीमांतइतिकथ्यते॥ तन्मध्यपतितेदेहेसुखमासाद्यतेकथम् ॥ ५२ ॥ अकृत्रिममहादुःखेसंसारेयेव्यवस्थिताः ॥ तएतेऽन्यानिदुःखानिजानतेमधुराण्यलम् ॥५३॥ अहमप्यधमोत्कृष्टकाष्ठलोष्टसमस्थितिः ॥ अज्ञैरेवागतःसाम्यंपरमाम्रष्टवस्तुभिः ॥ ५४ ॥ सहस्रांकुरशाखात्मफलपल्लवशालिनः॥ अस्यसंसारवृक्षस्यमनोमूलमहांकुरः ॥ ५५ ॥ संकल्पमेवतन्मन्येसंकल्पोपशमेनतत्॥ शोषयामियथाशोषमेतिसंसारपादपः॥ ५६ ॥ आकारमात्ररम्यासुमनोमर्कटवृत्तिषु॥ परिज्ञातास्विहाद्यैवनरमेनाशनीष्वहम्॥ ५७॥ आशापाशशतप्रोताःपातोत्पातोपतापदाः॥ संसारवृत्तयोभुक्ताइदानींविश्रमाम्यहम्॥ ५८ ॥ हाहतोस्मिविनष्टोस्मिमृतोस्मीतिपुनःपुनः॥ शोचितंगतमेवाहमिदानींनानुरोदिमि॥५९॥

घातानुभवात्कशाघातानुभवःसुखमितिवद्दुःखान्येवमधुराणिसुखानिजानतेमन्यंतइत्यर्थः ॥ ५३ ॥ श्रुतिस्मृत्यादिप्रमाणकुशलोमेधावीविचारपटुरप्यहंपरमत्यंतमेवनष्टानिनविचारितानिशास्त्रलोकप्रमाणवस्तूनियैस्तैरज्ञैर्मूर्खैःसाम्यमित्यर्थः ॥ ५४ ॥ इदानींस्वस्यप्रमाणकुशलतांसंसारमूलावधारणेनसफलयति ॥ सहस्रेति ॥ अंकुराःसंकल्पाःशाखादेहभुवनादयः आत्माशाखावयवयवीविराट् फलानिसुखदुःखे पल्लवारागलोभास्तैःशालिनःशोभमानस्य ॥ ५५ ॥ मनसोपिरहस्यंस्वेनज्ञातमेवेत्याह ॥ संकल्पमेवेति ॥ ५६ ॥ मनोमर्कटस्यवृत्तिषुचापलेषु ॥ अद्यैवअद्यप्रभृति ॥ ५७ ॥ पातोधोगतिः उत्पातऊर्ध्वगतिःअपकर्षोत्कर्षौवा उपतापोदुःखम् ॥ ५८ ॥ इतिमयायत्पुनःपुनःप्राक्शोचितंतद्गतमेव ॥ अहमिदानींनानुरोदिमिनशोचामीत्यर्थः ॥ ५९ ॥

कुतोनानुशोचसितत्राह ॥ प्रबुद्धोस्मीति ॥ आत्मनःस्वपारमार्थिकरूपधनस्यचोरोऽपहर्त्ता ॥ नकेवलंचोरत्वादेवनिहन्म्यपितुवैंरित्वादपीत्याह॥मनसेति ॥ ६० ॥ अविद्धमलक्षीकृतम् ॥ मुक्ताफलपक्षेअच्छिद्रितम् ॥ गुणंशमदमादिम ॥ मुक्तापक्षेसूत्रम ॥ ६१ ॥ चिरंअनादिब्रह्मतत्त्वंतत्रप्रवृत्तयेप्रतिष्ठार्थम ॥ तुषारकणिकापक्षेचिरप्रवृत्तिःसदागतिर्वायुस्तस्यात्मये ॥ यदावाआपउच्छुष्यंतिवायुमेवापियंतीतिश्रुतेरित्यर्थः ॥ ६२ ॥ विविधैरुपदेशैः ॥ सिद्धविशेषणंवा ॥ अनुगतिमात्रेणपरमानंदस्यस्वस्यैवसाधनम् ॥ अभेदेप्युपचारात्करणता ॥ ६३ ॥ अतःपरमात्मनिष्ठांकदापिनत्यक्ष्यामीत्याह ॥ आत्मानमिति ॥ अचलेहिमवदादौ ॥ ६४ ॥ इदानीमुक्तंसंक्षिप्योपसंहरन्विवेकगुरुंनमस्यति ॥ अयमिति ॥ अयंदेहोहमितिइदंधनराज्यादिममेतिस्फुरितमाततमसत्यरूपंज्ञानबलादपास्यसमाध्यभ्यासेनातिवलिनंमनोरिपुंनिःशेषंहत्वासप्तमभूमिकाविश्रांतिलक्षणंप्रशममु

प्रबुद्धोस्मिप्रहृष्टोस्मिदृष्टश्चोरोयमात्मनः॥ मनोनामनिहन्म्येनंमनसास्मिचिरंहतः ॥ ६० ॥ एतावंतमिमंकालंमनोमुक्ताफलंमम॥ अविद्धमासीदधुनाविद्धंतुगुणमर्हति ॥ ६१ ॥ मनस्तुषारकणिकाविवेकार्कातपेनमे॥ चिरप्रवृत्तयेनूनमचिराल्लयमेष्यति ॥ ६२ ॥ विविधैःसाधुभिःसिद्धैरहंसाधुप्रबोधितः ॥ आत्मानमनुगच्छामिपरमानंदसाधनम् ॥ ६३ ॥ आत्मानंमणिमेकांतेलब्ध्वैवालोकयन्सुखम्॥ तिष्ठाम्यस्तमितान्येहशरदीवाचलेंबुदः॥ ६४ ॥ अयमहमिदमाततंममेतिस्फुरितमपास्यबलादसत्यमंतः ॥ रिपुमतिवलिनंमनोनिहत्यप्रशममुपैमिनमोस्तुतेविवेक॥ ६५॥ ॥इ० वा० वा० दे० मो० उपशमप्रकरणेजनकवितर्कोनामनवमःसर्गः॥ ९॥ ॥ ९॥

श्रीवसिष्ठउवाच॥ ॥इतिचिंतयतस्तस्यपुरस्संप्रविवेशह॥ प्रतीहारःपरोभानोस्स्यंदनाग्रइवारुणः॥ १॥ ॥प्रतीहारउवाच॥ ॥देवदोःस्तंभविश्रांतसमस्तवसुधाभर॥ संपादयोत्तिष्ठदिनव्यापारंनृपतोचितम्॥ २ ॥एताःकुसुमकर्पूरकुंकुमांवुघटाःस्त्रियः॥ स्नानभूमौस्थिताःसज्जानद्योमूर्त्तियुताइव॥ ३॥ एताःकमलकह्लारकाननभ्रांतषट्पदाः॥ कृताःकमलिनीपाशरचितांशुकमंडपाः॥ ४॥ एताःकमलिनीतीरभुवश्छत्रैःप्रपूरिताः॥ सचामररथेभाश्वैःस्नानावसरसेविनाम्॥ ५॥ समग्रसुमनःपूर्णैरत्नौषधिपरिप्लुतैः॥ सज्जीकृताःपटलकैर्देवार्चनगृहास्तथा॥ ६॥

पैमिप्राप्नोमि ॥ ६५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्र० उपशमप्र० नवमःसर्गः ॥ ९ ॥ ॥ ९ ॥ ॥ द्वाःस्थेनप्रार्थितेप्यत्रमाध्याह्निकविधिक्रमे ॥ तूर्णींविचारोभूयोपिजनकस्योपवर्ण्यते ॥ १ ॥ प्रतीहारोद्वारपालः ॥ उपसर्गस्यघञ्यमनुष्येबहुलमितिदीर्घः ॥ १ ॥ दोःस्तंभयोर्विश्रांतःसमस्तवसुधाभरोयस्य ॥ नृपतायाउचितमनुरूपम् ॥ २ ॥ तत्रसामग्रीसिद्धिमाह ॥ एताइत्यादिना ॥ ३ ॥ कमलिनीपाशैःसपद्मविसरज्जुभीरचिताःपरितश्चारुनिर्मिताःकनकचित्रांशुकमंडपायासुतथाविधाअतएवएताःकर्बुरवर्णाःकमलिन्याःकमलवत्याःसरस्यास्तीरभुवइतिपरेणान्वयः ॥ ४ ॥ तथास्नानावसरेसेवंतेतच्छीलानांजनानांचामरैरथैरिभैरश्वैश्चसहितैश्छत्रैश्चप्रपूरिताः ॥ अनेनहंससारसनक्रपद्मादिसहितसरसीसाम्यापत्तिस्तीरभुवोर्थाद्गम्यते ॥ ५ ॥ समग्रैस्सुमनोभिःपुष्पैरात्मभृत्यैश्चपूर्णैः ॥ अन्यैःपंकैरोषधिभिर्यवांकुरादिभिश्चपरिप्लुतैःपरिष्कृतैः ॥ रत्नौषधीतिपाठेस्पष्टम् ॥ पटलकैःप्रांतभागैः ॥ हेदेवेतिसंबुद्धिः ॥ अर्चनगृहादेवब्राह्मणातिथिपूजागृहाः ॥ देवार्चनगृहाइत्येकपद्यंवा ॥ ६ ॥

तवस्नानकालेपरितोजप्याजपितव्याअघमर्षणमंत्रायेनअतएवदक्षिणार्हः ॥ ७ ॥ लेपनचंदनोदकसेकादिपरिष्कृतत्वाच्छीताःशीतलाः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ शंबरपदे नशांबरीमायालक्ष्यते ॥ मिथ्याशंबरंमृगतृष्णाजलंतत्सदृशंवा ॥ १२ ॥ १३ ॥ हेचित्तचातुर्यंसुखलवास्वादचतुरतांत्यज ॥ १४ ॥ यासुदशासुविषयाभिलाषतत्प्रयत्नतदुपभोगतदनुस्मरणादिरूपासु ॥ संभ्रमंसुखलवास्वादभ्रांतिमुत्साहंवा ॥ १५ ॥ भोगाशयाप्रवृत्तंसत्भोगशक्तिकुंठीभावाल्लोकशास्त्रादिभयाच्चनिवृत्तंसत् ॥ १६ ॥ ततःकृत्रिमसुखा

स्नातःपवित्रहस्तश्चपरिजप्याघमर्षणः॥ त्वामेवप्रेक्षतेदेवदक्षिणार्होद्विजव्रजः॥ ७ ॥ लसच्चामरहस्ताभिःपाल्यतेपरमेश्वर॥ सज्जीकृतास्तेकांताभिःशीताभोजनभूमयः॥ ८ ॥ शीघ्रमुत्तिष्ठभद्रंतेनियतंकार्यमाचर॥ नकालमतिवर्त्ततेमहांतःस्वेषुकर्मसु॥ ९ ॥ प्रतीहारपताविस्थमुक्तवत्यथपार्थिवः॥ तथैवचिंतयामासचित्रांसंसारसंस्थितिम्॥ १० ॥ कियन्मात्रमिदंनामराज्यंसुखमितिस्थितम्॥ नप्रयोजनमेतनममेहक्षणभंगिना॥ ११ ॥ सर्वमेवपरित्यज्यमिथ्याशंबरडंबरम्॥ एकांतएवतिष्ठामिसंशांतइववारिधिः॥ १२ ॥ अलमेभिरसत्प्रायैर्ममभोगविजृंभितैः॥ त्यक्त्वासर्वाणिकर्माणिसुखंतिष्ठामिकेवलम्॥ १३ ॥ चित्तचातुर्यमेतस्माद्भोगाभ्यासकुसंभ्रमात्॥ त्यजजन्मजराजाड्यजालजंबालशांतये॥ १४ ॥ दशासुयासुयास्वेवसंभ्रमंचित्तपश्यसि॥ ताभ्यएवाभिरचितंपरमंदुःखमेष्यसि॥ १५ ॥ प्रवृत्तंसन्निवृत्तंसद्भूयोभूयश्चिरंचिरम्॥ भोगभूमिषुसर्वासुचित्तंतृप्तिंनगच्छति॥ १६ ॥ तस्मात्पापालमनयातुच्छयाभोगचिंतया॥ प्रभवत्यकृत्रिमाहृप्तिर्येनाभिपततंततः॥ १७ ॥ इतिसंचिंत्यजनकस्तूष्णीमेवबभूवह॥ शांतचापलचेतस्त्वाल्लिपिकर्मार्पितोपमः॥ १८ ॥ प्रतीहारोपिनोवाचगौरवेणभयेनच॥ पुनर्वाक्यंमहीपानांचित्तवृत्तिषुशिक्षितः॥ १९ ॥ तूष्णीमथक्षणंस्थित्वाजनकोजनजीवितम्॥ पुनःसंचिंतयामासमनसाशमशालिना॥ २० ॥ किमुपादेयमस्तीहयत्नात्संसाधयाम्यहम्॥ कस्मिन्वस्तुनिबध्नामिधृतिंनाशविवर्जितं॥ २१ ॥ किंमेक्रियापरतयाकिंमेनिष्क्रियतयापिवा॥ नतदस्तिविनाशेनवर्जितंयत्किलोदितम्॥ २२ ॥ क्रियावानक्रियोवास्तुकायोयमसदुत्थितः॥ समस्थितस्यशुद्धस्यचितःकानाममेक्षतिः॥ २३ ॥ नाभिवांछाम्यसंप्राप्तंसंप्राप्तंनत्यजाम्यहम्॥ स्वस्थआत्मनितिष्ठामियन्ममास्तितदस्तुमे॥ २४ ॥

नामनर्थबीजत्वायेनहेतुनाअकृत्रिमाप्रीतिर्भवतितंहेतुंपतलभस्वेतियावत् ॥ १७ ॥ १८ ॥ चित्तवृत्तिषुचित्तानुवर्त्तनेषु ॥ १९ ॥ जनजीवितंप्राणिजीवननिदानम् ॥ येनजातानिजीवंतीतिश्रुतेः ॥ २० ॥ २१ ॥ अपिवाकार्यमितिशेषः ॥ यत्किलउदितंजन्मप्राप्तंतत्विनाशेनवर्जितंनास्ति ॥ जन्यभावस्यविनाशनियमादितिभावः ॥ २२ ॥ समस्थितस्यदेहचलनाचलनदशयोस्तुल्यरूपस्थितेः ॥ चितश्चिन्मात्रस्वभावस्य ॥ २३ ॥ यन्ममप्रारब्धोपनीतमस्तितदेवास्तुनान्यदित्यर्थः ॥ अथवायन्ममनिरतिशयानंदरूपमांतरमस्तितदेवास्तुनबाह्यंकिंचिदित्यर्थः ॥ २४ ॥

131

अकृतेनउपेक्षणेन ॥ कश्चनअनर्थंइतिशेषः ॥ अक्रिययाउपेक्षया ॥ प्राप्तंदुःखमसन्मयंमायामयंमिथ्यैवेतियावत् ॥२५॥ युक्ताःशास्त्रविहिताः ॥ अयुक्तालोकप्राप्ताः॥२६॥ पूर्वपूर्वव्यवहारक्रमप्राप्ताम् ॥ अस्पंदितांगस्त्वयंदेहःशुष्यतितत्किंसाधुआवश्यकंनेत्यर्थः ॥२७॥ कार्यौप्रारब्धकर्मोपनीतौ ॥ पुण्यपापानुदयलक्षणेफलेसमौ ॥२८॥ तत्कुतस्त त्राह ॥ कर्मजास्विति ॥ कृतमप्यकृतंभुक्तमप्यभुक्तमित्यपियोज्यम् ॥२९॥ पुरुषस्यांतर्यएवनिश्चयःकर्त्ताभोक्तेतिवाअसौपुरुषःसर्वासुदेहादिक्रियासुतन्मयतांस्वनिश्चितार्थ मयतामुपैतीतिवस्तुस्थितिः ॥ सांप्रतंतुमेममधीरनामयंकर्तृभोक्तृतारोगशून्यमात्मपदमाहृताआविद्धातद्दृढनिश्चयासंपन्नेत्यर्थः ॥ अतःअंतश्चित्तेकृताकृतफलावश्यंभावायपु

नममेहकृतेनार्थोनाकृतेनेहकश्चन ॥ क्रिययाऽक्रिययावापियत्प्राप्तंतदसन्मयम् ॥२५॥ अकुर्वतःकुर्वतोवायुक्तायुक्ताःक्रियामम ॥ नाभिवांछितमस्तीहयदुपादेयतांगतम् ॥२६॥ तदुत्थायक्रमप्राप्तांकार्योयंप्रकृतांक्रियाम् ॥ करोत्वस्पंदितांगस्तुकिमयंसाधुशुष्यति ॥२७॥ स्थितेमनसिनिष्कामेसमेविगतरंजने ॥ कायावयवजौकार्यौस्पंदास्पंदौफलेसमौ ॥ २८ ॥ कर्मजासुफलश्रीषुमनसाकर्तृभोक्तृते ॥ तस्मिन्प्रशांतिमायातेकृतमप्यकृतंनृणाम् ॥२९॥ योनिश्चयोंतःपुरुषस्यरूढःक्रियास्वसौतन्मयतामुपैति ॥ अनामयंमेपदमाहृताधीरधीरतामंतरलंत्यजामि ॥३०॥ ॥इ०वा०वा०दे०मो०उपशमप्रकरणेजनकनिश्चयोनामदशमःसर्गः ॥१०॥ ॥ ७॥ ॥श्रीवसिष्ठउवाच॥ ॥ इतिसंचिंत्यजनकोयथाप्राप्तांक्रियामसौ ॥ असक्तःकर्त्तुमुत्तस्थौदिनंदिनपतिर्यथा ॥१॥ इष्टानिष्टाःपरित्यज्यचेतसावासनाःस्वयम् ॥ यथाप्राप्तंचकारासौजाग्रत्येवसुषुप्तवत् ॥२॥ संपाद्यतदहःकार्यमार्यावर्जनपूर्वकम् ॥ अनयच्छर्वरीमेकस्तथैवध्यानलीलया ॥३॥ मनःसमरसंकृत्वासंशांतविषयभ्रमम् ॥ शर्वर्यांक्षीयमाणायामित्थंचित्तमबोधयत् ॥४॥ चित्तचंचलसंसारआत्मनोनसुखायते ॥ शममेहिशमाच्छांतंसुखंसारमवाप्यते ॥५॥ यथायथाविकल्पौघान्संकल्पयसिहेलया ॥ तथातथैतिस्फारत्वंसंसारस्तवचिंतया ॥६॥

नर्जन्मादिप्राप्तिशंकानिमित्तामिष्टानिष्टप्राप्तिविघातनिमित्तांचाधीरतामलमत्यंतमेवत्यजामीत्यर्थः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउप०दशमःसर्गः ॥ १० ॥ कृताह्निकस्यराज्ञोत्रनिशांतेवर्ण्यतेपुनः ॥ विवेकैर्बहुभिश्चित्रैःस्वचित्तस्यप्रबोधनम् ॥ १ ॥ असक्तःकर्तृत्वभोक्तृत्वाभिमानलक्षणासंगरहितः ॥ १ ॥ इदंमेइष्टमिदंमेऽनिष्टमिति कल्पनानिमित्तभूतावासनाः ॥ सुषुप्तवदिति ॥ स्थूलसूक्ष्मदेहाद्यभिमानाभावेजाग्रत्सुषुप्तयोर्विशेषाभावादितिभावः ॥ २ ॥ आर्याणांपूज्यानांदेवब्राह्मणादीनामावर्जनंपूजादानादिनासमाधानम् ॥ अहःकार्यमाह्निकम् ॥ ३ ॥ समरसंसमाहितंकृत्वा ॥ इत्थंवक्ष्यमाणदिशा ॥ ४ ॥ शांतंनिर्विक्षेपंसारभूतमात्मसुखम् ॥ ५ ॥ ६ ॥

१ मेकांतयैवेत्यपिपाठः

अनंताधित्वमसंख्यव्यथाशालितामायासिप्राप्नोषित्वम् ॥ ७ ॥ यतोजन्मसंसारसृष्टयोविपर्यांचनाजालविकल्पोत्थाइतिपूर्वेणान्वयः ॥ ८ ॥ हेसुंदरविवेकिन्इमांसंसारसृष्टिं शमसुखंचतुलयतुलामारोप्येवबुद्ध्याकःसारइतिपरीक्षस्व ॥ तरलामित्यनेननश्वरत्वाद्विक्षेपदुःखजटिलत्वाच्चनास्त्यत्रसारइतिसूचितम् ॥ ९ ॥ यस्मादियमसारातस्मादस्यामा स्थांपरित्यज्यएतदसारंदृश्यंदर्शनयोग्यमेतदितिदर्शनलालसात्वियंमागृहाण अप्रियंचदर्शनानर्हमितिद्वेषान्मामुंचकिंतुभयसाक्षिस्वात्ममात्रेच्छयाआत्मकामःसन्इच्छयास्वै रंविहर ॥ १० ॥ असत्यागविद्यमानंसुखदुःखसाधनमुदेतुसांप्रतंसद्विद्यमानमस्तंनाशमुपैतुवा मातदागमापायप्रयुक्तहर्षविषादलक्षणांविषमतांगच्छेत्यर्थः ॥ ११ ॥ ननुसतितत्सं बंधेकथंतत्प्रयुक्तवैषम्यवर्जनसंभवस्तत्राह ॥ मनागपीति ॥ १२ ॥ हेमनस्त्वमसत्एतद्दृश्यंचनसत् ॥ अप्यर्थेएवकारः ॥ अतोद्वयोरपिवंध्यापुत्रखपुष्पयोरिवासतोःसतोर्निःस्वरू पस्थितिकयोःसंबंधइत्यक्षरावलीउक्तिःअपूर्वाआश्चर्यैवेत्यर्थः ॥ १३ ॥ यदिमन्यसेनाहमसत्सत्यआत्मैवाहंदृश्यमेवासदितितथापिनसंबंधघटनेत्याह ॥ असदिति ॥ मर्त्यंजी

शतशाखत्वमायातिसेकेनविटपीयथा॥अनंताधित्वमायासिशठभोगेच्छयातथा॥७॥चिंताजालविलासोत्थाजन्मसंसारसृष्टयः॥त स्मात्त्यक्त्वाविचित्रांत्वंचिंतामुपशमंव्रज ॥८॥ संसारसृष्टितरलामिमांतुलयसुंदर ॥ अस्यांचेत्सारमाप्नोषितदेतामेवसंश्रय ॥ ९ ॥ आ स्थांयस्मात्परित्यज्यदृश्यदर्शनलालसात् ॥ मैतद्गृहाणमामुंचस्वेच्छयाविहरेच्छया ॥ १० ॥ इदंदृश्यमसत्सद्वाप्युदेत्वस्तमुपैतुवा॥ साधो विषमतांगच्छमैतदीयैर्गुणागुणैः ॥ ११ ॥ मनागपिनसंबंधस्तवदृश्येनवस्तुना ॥ अविद्यमानरूपेणसंबंधःकोयमीदृशः ॥ १२ ॥ असत्त्व मेतच्चनसद्द्वयोरेवासतोःसतोः ॥ संबंधइतिचित्रेयमपूर्वैवाक्षरावली ॥ १३ ॥ असदेतत्तुसच्चेत्त्वंतथापिकिलसुंदर ॥ संगःसदसतोःकीदृ ग्वदत्वंमर्त्यजीवयोः ॥ १४ ॥ चित्तत्वमथदृश्यंचद्वेएवयदिसन्मये ॥ सदास्थितेतत्प्रसरःकुतोहर्षविषादयोः ॥ १५ ॥ तस्मान्महाधिंमुंच त्वंमूकमुल्लासमाहर ॥ संक्षुब्धांबुधिमाविशांत्यजाभव्यामिमांस्थितिम् ॥ १६ ॥ कंदुकालातवद्व्यर्थमात्मनैवपरिज्वलन् ॥ मामोहमल मासाद्यमंदतांगच्छसन्मते ॥ १७ ॥ नतदिहास्तिसमुन्नतमुत्तमंव्रजसियेनपरांपरिपूर्णताम् ॥ तदवलंब्यबलादतिधीरतांजहिहिचंचल तांशठरेमनः ॥ १८ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेचित्तानुशासनंनामैकादशःसर्गः ॥ ११ ॥

वयोः सदामृतजीवतोः ॥ १४ ॥ द्वयोरपिसत्त्वमेवनासत्त्वंकस्यचिदपीतिकल्पेपिकदापीष्टवियोगाभावान्नहर्षविषादप्रसक्तिरित्याह ॥ चित्तेति ॥ हेचित्तत्वंइतिच्छेदः ॥ १५ ॥ महांतमाधिविषादंमूकंतूष्णींभूतंसदात्मस्वरूपस्थितावुल्लासमाहरसमाध्यभ्यासेनसंपादय ॥ संक्षुब्धंसंक्षोभोविक्षेपस्तल्लक्षणमंबुधिम् ॥ १६ ॥ कंदुकालातमुत्सवेषुजनकौतु कार्थमाग्नेयद्रव्यरचितंकंदुकाकारमलातयंत्रम् ॥ तद्विस्वतएवज्वलत्पुनःपुनरुच्छलति ॥ मोहंअलमितिवामोहलक्षणंमलमितिवा ॥ १७ ॥ इहदृश्यवर्गमध्येयेनलब्धेनत्वंप रिपूर्णतांव्रजसितत्तादृशंकिमपिनास्ति ॥ कथंतर्हिपूर्णतालाभस्तमुपायमाह ॥ तदिति ॥ तत्तस्मादभ्यासवैराग्यबलादतिधीरतामवलंब्यतद्बलावलंब्यातिधीरतांप्राप्येतिवा ॥ चंचलतांजहिहित्यज ॥ १८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउप० एकादशःसर्गः ॥ ११ ॥

---

१ टीकानुरोधेनविकल्पोत्थाइतिपाठःकल्पनीयोऽथवाटीकायांफलितार्थकथनंमंतव्यमितिभाति.

वर्ण्यतेजनकस्यात्रजीवन्मुक्ततयास्थितिः ॥ विचारप्रज्ञयोश्चित्रंमाहात्म्यमपिविस्तरात् ॥ १ ॥ नमुमोहअहंममताभ्यांपूर्ववदित्यर्थः ॥ १ ॥ आनंदवृत्तिषुहर्षस्थानेषु ॥ सुषुप्ताविवसंस्थानिर्विक्षेपस्थितिर्यस्मिन्नितिव्यवस्थितिक्रियाविशेषणम् ॥ २ ॥ वर्त्तमानेतत्कालोपस्थितेदृश्येव्यवस्थितःअलंबुद्ध्यास्थितः ॥ ३ ॥ अनारतविवेकेनसदाविचारवता ॥ सनातनंअनादिस्वभावप्राप्तम् ॥ कलंकमहंममाभिमानमालिन्यम् ॥ राजसंरजोगुणेनधूलिभिश्चप्रसंजितम् ॥ ४ ॥ अनंताप्तमपरिच्छिन्नब्रह्माकारम् ॥ ५ ॥ विक्षेपैर्मेघपटलैश्चअनामृष्टविकल्पाअसंपादितरंजनाभेदाअंशवःप्रकाशायस्य ॥ विगतादेहभेदनिरोधप्रयुक्ताआमयादुःखानियस्य ॥ ६ ॥ चिच्छक्तौचिदात्मनिसमवस्थितानध्यस्तान्अतएवपरमार्थदृशाआत्मभूतान् ॥ ७ ॥ प्रकृतेर्मायायाएवसर्वव्यवहाररूपत्वादसंगात्मासंस्पर्शदर्शनात्सममानसः ॥ ८ ॥ जरठज्ञानीज्ञानवृद्धइतियावत् ॥ ९ ॥ जनानांजीवितमिवप्रियइतियावत् ॥१०॥ मानसैर्गुणदोषविचेष्टितैरस्तंस्वरूपतिरोधानंउदयंपुनस्तदाविर्भावंचनैति ॥ बाह्यैश्चराज्योत्थैरर्थानर्थैर्नहृष्यतिनग्लायतीतिव्युत्क्रमेणान्वयः ॥ ११ ॥ नकिंचिदपिकरोतिअकर्त्रात्मभूतत्वादित्यर्थः ॥ तदेवाह ॥ सइति ॥ १२ ॥ भावनारागादिवासनाः ॥ १३ ॥ वासनाक्षयफलमाह ॥ भविष्यमिति ॥ वासनावशात्पूर्वोत्तरानुसंधानंतेनप्राक्तनानिष्टकारिषुद्वेषआगामिप्रियार्थेरागस्ततःप्रवृत्तिरितिसर्वानर्थप्रसक्तिः ॥ वर्त्तमानमात्रदर्शनंतुदुःखस्याप्युपेक्षयानाप्रियतानुसंधानमितिसहजानंदानुवृत्त्याहसन्नेवेत्यर्थः ॥ १४ ॥ आख्यानोपक्रमबीजंस्मारयन्नुपसंहरति ॥ स्वविचारेति ॥ अशेषेणनिरवशेषेणप्राप्तंज्ञानमात्रेणविस्मृतकंठचामीकरवल्लब्धम् ॥ तेनजनकेन ॥ १५ ॥ तथाचफलपर्यंतंविचारःकार्योनांतरानिर्वेदाद्धेयइत्याह ॥ तावदिति ॥ प्रविचार्यतेप्रविचारयेदित्यर्थः ॥ १६ ॥

श्रीवसिष्ठउवाच ॥ ॥एवंविचारयंस्तत्रस्वराज्येजनकोनृपः॥ चकाराखिलकार्याणिनमुमोहचधीरधीः ॥ १ ॥ नमनःप्रोल्लासास्यक्वचिदानंदवृत्तिषु॥ केवलंसुषुप्तसंस्थंसदैवव्यवतिष्ठत ॥ २ ॥ ततःप्रभृत्यसौहृस्थंनाजहारनवात्यजत्॥ केवलंविगताशंकंवर्त्तमानेव्यवस्थितः॥३॥ अनारतविवेकेनतेनसद्यःसनातनम्॥ पुनःकलंकंनैवाप्तमंबरेणेवराजसम्॥४॥ स्वविवेकानुसंधानादितितस्यमहीपतेः॥ सम्यग्ज्ञानमनंताप्तमलंविमलतांययौ ॥ ५॥ अनामृष्टविकल्पांशुश्चिदात्माविगतामयः॥ उदियायहृदाकाशेतस्यव्योम्नीवभास्करः ॥६॥ सददर्शाखिलान्भावांश्चिच्छक्तौसमवस्थितान्॥ आत्मभूताननंतात्मासर्वभूतात्मकोविदः॥ ७॥ प्रहृष्टोनबभूवासौक्वचिन्नचसुदुःखितः॥ प्रकृतेर्व्यवहारत्वात्सदैवसममानसः॥८॥ जीवन्मुक्तोबभूवासौततःप्रभृतिमानदः ॥ जनकोजरठज्ञानीज्ञातलोकपरावरः॥ ९॥ राज्यंकुर्वन्विदेहानांजनकोजनजीवितम्॥ नैवहर्षविषादाभ्यांसोवशःपरितप्यते॥ १०॥ नास्तमेतिनचोदेतिगुणदोषविचेष्टितैः॥ ११॥ अर्थानर्थैःसराज्योत्थैर्नग्लायतिनहृष्यति॥ कुर्वन्नपिकरोत्येषनकिंचिदपिकुत्रचित् ॥ सतिष्ठत्येवसततंसर्वदैवांतरेचितः ॥१२॥ सुषुप्तावस्थितस्यैवजनकस्यमहीपतेः॥ भावनाःसर्वभावेभ्यःसर्वथैवास्तमागताः॥ १३॥ भविष्यंनानुसंधत्तेनातीतंचिंतयत्यसौ॥ वर्त्तमाननिमेषंतुहसन्नेवानुवर्त्तते॥ १४ ॥ स्वविचारवशेनैवतेनतामरसेक्षण॥ प्राप्तंप्राप्यमशेषेणरामनेतरयेच्छया ॥ १५ ॥ तावत्तावत्स्वकेनैवचेतसाप्रविचार्यते॥ यावद्यावद्विचाराणांसीमांतःसमवाप्यते॥ १६॥

गुर्वादीनांसाधनानामसाधनत्ववादोविचारप्राधान्यबोधनार्थः ॥ अपशवोवाअन्येगोअश्वेभ्यःपशवोगोअश्वाइतिवत् ॥ १७ ॥ सुंदर्यासच्छास्त्रविवेकादिपरिष्कृतया ॥ ऊहापोहकुशलामतिःप्रज्ञातयावयस्ययासख्या ॥ १८ ॥ जाड्यमज्ञानंतल्लक्षणमांध्यंतमः ॥ १९ ॥ ताभ्योविपन्नदीभ्यःप्रज्ञयानावातीर्यंतेजनैरितिप्रसिद्धम् ॥ २० ॥ पेलवामृदुलाअनिलस्यकलालेशः ॥ उलपंतृणविशेषम् ॥ २१ ॥ असहायोगुर्वादिसहायशून्यः ॥ विशास्त्रःशास्त्रश्रवणशून्योपि ॥ इयमपिप्रशंसार्थमेवात्युक्तिः ॥ आचार्याद्धैवविद्याविदितासाधिष्ठंप्रापदित्यादिश्रुतिविरोधात् ॥ हेरामपेलवाज्ज्ञानमात्रबाध्यत्वेनातिकोमलात् ॥ २२ ॥ लोकेपिप्रज्ञावतोमंत्र्यादेर्बलांतरवज्ञःप्राबल्यंप्रसिद्धमित्याह ॥ प्रज्ञावानिति ॥ प्रधानंबहुतरसेनादिबलमुख्योपिसन्नश्यति ॥ अथवाप्रज्ञाचरमसाक्षात्कारवृत्तिस्तद्वानात्मासर्वेषांकार्यप्रपंचानामंतंबाधंसर्वेषामवश्यकर्त्तव्यपुरुषार्थानामंतमवधिपर

नतद्गुरोर्नशास्त्रार्थान्नपुण्यात्प्राप्यतेपदम् ॥ यत्साधुसंगाभ्युदिताद्विचारविशदाद्धृदः ॥ १७ ॥ सुंदर्यानिजयाबुद्ध्याप्रज्ञयेववयस्यया ॥ पदमासाद्यतेरामननामक्रिययान्यया ॥ १८ ॥ यस्योज्ज्वलतितीक्ष्णाग्रापूर्वापरविचारिणी ॥ प्रज्ञादीपशिखाजातुजाड्यांध्यंतंनबाधते ॥ १९ ॥ दुरुत्तरायाविपदोदुःखकल्लोलसंकुलाः ॥ तीर्यंतेप्रज्ञयाताभ्योनावापद्भ्योमहामते ॥ २० ॥ प्रज्ञाविरहितंमूढमापदल्पापिबाधते ॥ पेलवाचानिलकलासारहीनमिवोलपम् ॥ २१ ॥ प्रज्ञावानसहायोपिविशास्त्रोप्यरिमर्द्दन ॥ उत्तरत्येवसंसारसागराद्रामपेलवात् ॥ २२ ॥ प्रज्ञावानसहायोपिकार्यांतमधिगच्छति ॥ दुष्प्रज्ञःकार्यमासाद्यप्रधानमपिनश्यति ॥ २३ ॥ शास्त्रसज्जनसंसर्गैःप्रज्ञांपूर्वंविवर्द्धयेत् ॥ सेकसंरक्षणारंभैःफलप्राप्तौलतामिव ॥ २४ ॥ प्रज्ञाबालबृहन्मूलःकालेसत्कार्यपादपः ॥ फलंफलत्यतिस्वादुभासोबिंबमिवैंदवम् ॥ २५ ॥ यएवयत्नःक्रियतेबाह्यार्थोपार्जनेजनैः ॥ सएवयत्नःकर्त्तव्यःपूर्वंप्रज्ञाविवर्द्धने ॥ २६ ॥ सीमांतंसर्वदुःखानामापदांकोशमुत्तमम् ॥ बीजंसंसारवृक्षाणांप्रज्ञामांद्यंविनाशयेत् ॥ २७ ॥ स्वर्गाद्यद्यच्चपातालाद्राज्याद्यत्समवाप्यते ॥ तत्समासाद्यतेसर्वंप्रज्ञाकोशान्महात्मना ॥ २८ ॥ प्रज्ञयोत्तीर्यतेभीमात्तस्मात्संसारसागरात् ॥ नदानैर्नचवार्तार्थैस्तपसानचराघव ॥ २९ ॥

ज्ञाज्ञपक्षभेदेनवायोज्यम् ॥ २३ ॥ प्राप्तपुरुषार्थंचअधिगच्छति ॥ दुष्प्रज्ञोमोहस्तुसर्वप्रपंचसंतानलक्षणंकार्यजातमासाद्यतन्मूलत्वात्प्रधानंसदपिज्ञानमात्रेणनश्यतीत्यर्थः ॥ ज्ञातान्तर्हिकेनोपायेनलभ्यातत्राह ॥ शास्त्रेति ॥ २४ ॥ प्रज्ञाबलमेवबृहन्मूलंयस्यतथाविधः ॥ सत्कार्यंसत्कर्मप्राक्तनभाग्यंतल्लक्षणःपादपः ॥ भासःसूर्यप्रकाशःसयथाशुक्लपक्षेक्रमेणचंद्रमंडलंप्रविष्टःपूर्णममृतमयंचंद्रबिंबंफलतितद्वत् ॥ अथवाऐंदवंबिंबंकर्तृ ॥ तद्यथाजगत्तिमिरापहाभासश्चंद्रिकाःफलतितद्वन्मूलाज्ञाननिबर्हणक्षममात्मज्ञानंफलतीत्यर्थः ॥ २५ ॥ योयादृशः ॥ यत्नउद्योगः ॥ सतादृशः ॥ तथाचनाधिकःश्रमोस्तीत्यर्थः ॥ २६ ॥ सर्वेषांदुःखानांदुर्दशानांसीमांतंपरमावधिम् ॥ २७ ॥ एवंप्रज्ञाकोशस्यापिसर्वसंपदवधित्वमितिदर्शयति ॥ स्वर्गादिति ॥ यत्समवाप्यतेसुखमितिशेषः ॥ स्वर्लोकादपिरम्याणिपातालानीतिनारदः ॥ जगादद्युसदांमध्येपातालेभ्यःसमागतइतिपौराणिकवचनात्पातालेपिसुखातिशयःप्रसिद्धः ॥ २८ ॥ आत्यंतिकदुःखक्षयोपिप्रज्ञैकफलमित्याह ॥ प्रज्ञयेति ॥ दानतपःप्रभृतीनामल्पपापक्षयफलत्वादितिभावः ॥ २९ ॥

यच्चान्यत्स्वर्गादिदानादिकर्मणांफलंतदपिप्रज्ञाफलमेवेत्याह ॥ यदिति ॥ भूमिचराअपिनरादेवीनभश्वरत्वादिलक्षणांसंपदंप्राप्नाइतियत्तदपीत्यर्थः ॥ ३०॥३१॥३२ ॥ सुभटप्र ख्यान्वादशूरानितियावत् ॥३३॥३४॥ शिक्षितोनौकानयनशिक्षावान्कैवर्त्तः ॥३५॥ धीर्नौरिवसम्यग्विवेकवैराग्यादिसन्मार्गेयोजिताचेत्पारंनयति ॥ असम्यगूरागद्वेषलोभा द्यसन्मार्गेयोजितातुआपदंनयतिप्रापयतीत्यर्थः ॥३६॥ आशातृष्णातत्पक्षीयागणालोभमोहक्रोधचिंतादयस्तेभ्यउत्थितादोषाद्वेषचिंताविषादादयः ॥ संनद्धंवर्मनद्धम् ॥३७॥ सम्यक्गुणदोषतत्त्वविवेकेनदृश्यते ॥ सम्यगूदर्शनंयस्यतंसम्यग्दर्शनंपुरुषम् ॥ ३८ ॥ परमःपरमात्मातल्लक्षणस्यार्कस्यपिधानंतिरोधायकः ॥ लङयोरभेदादंबुदपक्षेजलात्मा ॥

यस्मात्पाःसंपदंदैवीमपिभूमिचरानराः ॥ प्रज्ञापुण्यलतायास्तत्फलंस्वादुसमुत्थितम् ॥ ३० ॥ प्रज्ञयानखरालूनमत्तवारणयूथपाः ॥ जंबुकैर्विजिताःसिंहाःसिंहैर्हरिणकाइव ॥ ३१ ॥ सामान्यैरपिभूपत्वंप्राप्तंप्रज्ञावशान्नरैः ॥ स्वर्गापवर्गयोग्यत्वंप्राज्ञस्यैवेहदृश्यते ॥ ३२ ॥ प्रज्ञयावादिनस्सर्वेस्वविकल्पविलासिनः ॥ जयंतिसुभटप्रख्यान्नरानप्यतिभीरवः ॥ ३३ ॥ चिंतामणिरियंप्रज्ञाहृत्कोशस्थाविवेकिनः ॥ फलंकल्पलतेवैषाचिंतितंसंप्रयच्छति ॥ ३४ ॥ भव्यस्तरतिसंसारंप्रज्ञयापोह्यतेधमः ॥ शिक्षितःपारमाप्नोतिनावानाप्नोत्यशिक्षितः ॥ ३५ ॥ धीस्सम्यग्योजितापारमसम्यग्योजितापदम् ॥ नरंनयतिसंसारेभ्रमंतीनौरिवार्णवे ॥ ३६ ॥ विवेकिनमसंमूढंप्राज्ञमाशागणोत्थिताः ॥ दोषानपरिबाधंतेसन्नद्धमिवसायकाः ॥ ३७ ॥ प्रज्ञयेहजगत्सर्वंसम्यगेवांगदृश्यते ॥ सम्यग्दर्शनमायांतिनापदोनचसंपदः ॥ ३८ ॥ पिधानंपरमार्कस्यजडात्माविततोसितः ॥ अहंकारांबुदोमत्तःप्रज्ञावातेनबाध्यते ॥ ३९ ॥ पदमतुलमुपैतुमिच्छतोच्चैःप्रथममियंमतिरेवलालनीया ॥ फलमभिलषताकृषीवलेनप्रथमतरंननुकृष्यतेधरैव ॥ ४० ॥ ॥ इ० वा० वा० दे० मो० उपशमप्रकरणेप्रज्ञामाहात्म्यंनामद्वादशःसर्गः ॥ १२ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवंजनकवद्रामविचार्यात्मानमात्मना ॥ पदंविदितवेद्यानामविघ्नेनाधिगच्छसि ॥ १ ॥ येहिपाश्चात्यजन्मानःप्राज्ञाराजससात्विकाः ॥ प्राप्नुवंतिस्वयंप्राप्यंतेजनाजनकाइव ॥ २ ॥ तावत्तावद्विजित्यारीनिंद्रियाख्यान्पुनःपुनः ॥ यावदात्मात्मनैवायमात्मन्येवप्रसीदति ॥ ३ ॥ प्रसन्नेसर्वगेदेवेदेवेशेपरमात्मनि ॥ स्वयमालोकितेसर्वाःक्षीयंतेदुःखदृष्टयः ॥ ४ ॥

विततोविस्तीर्णः ॥ असितोऽस्वच्छोनीलश्च ॥ ३९ ॥ लालनीयाबालइवक्रमाद्विवेकशिक्षणेनशोधनीया ॥ फलंकृषिफलंधान्याभिवृद्धिम् ॥ नन्वितिप्रसिद्धौ ॥४०॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउप० प्रकरणेद्वादशस्सर्गः ॥ १२॥ ॥ ५ ॥ ॥ जनकस्यविचारंतंदृष्टांतीकृत्य विस्तरात् ॥ चित्तप्रशमनोपायाःकीर्त्यंतइहयुक्तिभिः ॥ १ ॥ अविघ्नेनअसंभावनादिप्रतिबंधकनिरासेन ॥ १ ॥ रजसापुरुषप्रयत्नसंभवात्सत्वेनचचित्तप्रसादोपचयाद्राजससात्विकाएवस्वविवेकेनाकाशफलपातवज्ज्ञानप्राप्तावप्यधिकारिणइतिभावः ॥ २ ॥ तेकथंप्राप्नुवंतितदाह ॥ तावत्तावदिति ॥ सत्वोपचयाद्यावदात्माआत्मनिप्रसीदतितावत्तावद्रजसोविष्टंभशक्त्यादिंद्रियारीन्पुनःपुनर्विजित्येत्यर्थः ॥ ३ ॥ अध्यात्माधिकारात्सर्वेषांदेवानामिंद्रियाणामीशेवशिनिदेवेपरमात्मनिस्वयमालोकितेसति ॥ ४ ॥

मोहवीजानांदुर्वासनानांमुष्टयोमुष्टिवदंतर्दृढेसंग्राहकाश्चित्तक्षेत्रेउप्यमानाश्च ॥ विविधानामाध्यात्मिकादिभिन्नानामापदांदुःखानांवृष्टयोवृष्टिवदकस्मात्सर्वतःक्षारयित्र्यः ॥ कुदृष्टयोऽहंममतादिप्रत्ययलक्षणाहृदयग्रंथयः ॥ परामानुषानंदादिहैरण्यगर्भानंदांताःसुखोत्कर्षाअवरान्यूनायस्मात्तथाविधे ॥ तथाचश्रुतिः ॥ भिद्यतेहृदयग्रंथिश्छिद्यंते सर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरेइति ॥ ५ ॥ प्रज्ञयाविवेकवुद्ध्याआत्मानंस्वंसर्वारंभवत्सर्वजगदुत्पत्त्याद्यधिष्ठानंब्रह्मतदात्मनाआलक्ष्यसाक्षादनुभूयपरम पुरुषार्थलक्ष्मीवानुत्तमःसर्वोत्कृष्टोभवेत्यर्थः ॥ ६ ॥ इदानीमात्मप्रसादोपायेविचारएवमुख्यइत्याह ॥ नित्यमिति ॥ चंचलमनित्यंभ्रमणस्वभावंच ॥ ७ ॥ विचारस्यापिमूलं पुरुषप्रयत्नएवेत्याशयेनाह ॥ नेति ॥ ८ ॥ ननुदैववशात्स्वयमेवकालेनज्ञानंभविष्यतिकिमस्मत्प्रयत्नेनेतियेमन्यंतेतान्निंदति ॥ यइति ॥ कृतिर्यत्नः ॥ आदिपदाद्विवेकवैराग्यवि

मुष्टयोमोहवीजानांवृष्टयोविविधापदाम् ॥ कुदृष्टयःक्षयंयांतिदृष्टेतस्मिन्परावरे ॥५॥ सदाजनकवद्रामसर्वारंभवदात्मना ॥ प्रज्ञयात्मानमालक्ष्यलक्ष्मीवानुत्तमोभव ॥६॥ नित्यमंतर्विचारस्यपश्यतश्चंचलंजगत् ॥ जनकस्येवकालेनस्वयमात्माप्रसीदति ॥ ७॥ नदैवंनच कर्माणिनधनानिनबांधवाः ॥ शरणंभवभीतानांस्वप्रयत्नादृतेनृणाम् ॥ ८ ॥ येदैवनिष्ठाःकृत्यादौकुविकल्पपरायणाः ॥ तेषांमंदामतिस्तातनानुगम्याविनाशनी ॥ ९ ॥ विवेकंपरमाश्रित्यविलोक्यात्मानमात्मना ॥ धियाविरागोद्धुरयासंसारजलधिंतरेत् ॥ १० ॥ एषासा कथितारामनभःफलनिपातवत् ॥ सुखदाज्ञानसंप्राप्तिरज्ञानतरुशातनी ॥ ११ ॥ जनकस्येवसद्बुद्धेःस्वयमेवविलोकिनः ॥ विकासमेत्यदेहीदेवःप्रातरिवांबुजम् ॥ १२ ॥ संसारमननंचित्रंविचारेणविलीयते ॥ गलद्वशीकृतस्पर्शमातपेनहिमंयथा ॥ १३ ॥ अयमेवाहमित्यस्यानिशायाउदितेक्षये ॥ स्वयंसर्वगतःस्फारःस्वालोकःसंप्रवर्त्तते ॥ १४ ॥ अयमेवाहमित्यस्मिन्संकोचेविलयंगते ॥ अनंतभुवनव्यापीविस्तारउपजायते ॥ १५ ॥ जनकेनपरित्यक्तायथाहंकारवासना ॥ तथात्वमपिसद्बुद्धेविचार्यांतःपरित्यज ॥ १६ ॥ अहंकारांबुदेक्षीणेचिद्व्योम्निविमलेतते ॥ नूनंसंप्रौढतामेतिस्वालोकोभास्करःपरः ॥ १७ ॥ एतावदेवातितमोयदहंभावभावनम् ॥ तस्मिंश्चशममानीतेप्रकाशउपजायते ॥ १८ ॥ नाहमस्तिनचान्योस्तिनचनास्तीतिभावितम् ॥ मनःप्रशांतिमायातंनोपादेयेषुमज्जति ॥ १९ ॥

चारादयस्तेषु ॥ दैवेप्रतिकूलेकिंस्वप्रयत्नसहस्रेणसेत्स्यतिबहूनांयतमानानांदैवोपहतानांकाममन्युभिर्भ्रंशदर्शनादित्यादिकुविकल्पपरायणाः ॥ ९ ॥ १० ॥ एषाजनकाख्या यिकोदाहरणप्रपंचिता ॥ ११ ॥ देहीदेहांतर्हृदिस्थितोदेवःपरमात्मा ॥ १२ ॥ संसारस्यमननंविकल्पनांचितनंच ॥ वशीकृतस्पर्शमपहृतशैत्यम् ॥ १३ ॥ देहाहंभावत्यागएवपूर्णात्मदर्शनेमुख्यंसाधनमित्याह ॥ अयमिति ॥ १४ ॥ १५ ॥ १६ ॥ नूनंनिश्चयेनअवश्यमितियावत् ॥ स्वालोकात्माभास्करःसूर्यःसंप्रौढतांशरदीवस्फुटप्रकाशताम् ॥ १७ ॥ अतितमःतमसोमुख्यंवलमितियावत् ॥ १८ ॥ अहमहंतानास्ति ॥ अस्मच्छब्दार्थस्याप्यहंकारस्याप्रत्यक्त्वविवक्षणान्नतदभिधानायोत्तमपुरुषःकृतः ॥ अहमर्थस्यतदन्यस्य चनिषेधेशून्यताप्रसक्तिमाशंक्योक्तंनचनास्तीति ॥ उभयसाक्षिणःसत्त्वादितिभावः ॥ उपादेयेषुउपादानार्हेषुविषयेषु ॥ १९ ॥

उपादेयेषुरागोहेयेषुद्वेषश्चमानसःपुरुषस्यबंधोनान्यइत्याह ॥ उपादेयेति ॥ २० ॥ हेयादेयदृशौरागद्वेषात्मकवृत्ती ॥ शेषस्तत्साक्षीतटस्थस्तदेकनिष्ठःसन्स्वच्छतांविक्षेपकालुष्यशून्यताम् ॥ २१ ॥ इतिस्थितिरेवंरूपाव्यवस्थायेषांसर्वत्राहेयानुपादेयात्ममात्रतादर्शनाद्विलीनातेपुरुषाः ॥ २२ ॥ समताअविषमब्रह्मात्मता ॥ २३ ॥ अवस्तुअप्रशस्तंवस्तुअतोहेयंवस्तुप्रशस्तंवस्तुअतउपादेयमितियस्यमनःअंतर्लुलितंलोलतांगतमित्यर्थः ॥ शाखोटोवृक्षविशेषः ॥ महापुष्पफलपल्लवोनुपजीव्यच्छायःप्रसिद्धः ॥२४॥ युक्तमनुकूलमतइदंमेभूयादित्येषणालाभविलासिनी ॥ अयुक्तंप्रतिकूलमिदमतोमेकदापिमाभूदित्यरागविलासिनीएषणाइच्छाद्वेषश्चयत्रयस्मिन्पुरुषे ॥ २५ ॥ तत्रसमतास्वच्छतयोःसंभावनेकोविरोधस्तमाह ॥ एकस्मिन्निति ॥ नानाऽनानातयाभेदाभेदविकल्पनया ॥ यद्यसंगाद्वितीयानंदाअभिन्नास्तर्हिआत्मत्वादेवसर्वेप्यनुकूलाएव ॥ यदिभिन्नास्तथाप्यात्मास्पर्शान्नानुकूलानवाप्रतिकूलाइतिनतदापितयोरवकाशइतिभावः ॥ २६ ॥

उपादेयानुपतनंहेयैकांतविवर्जनम् ॥ यदेतन्मनसोरामतद्बंधंविद्धिनेतरत् ॥२०॥ माखेदंभजहेयेषुनोपादेयपरोभव ॥ हेयादेयदृशौत्यक्त्वाशेषस्थःस्वच्छतांव्रज ॥ २१ ॥ येषामिदमुपादेयमिदंहेयमितिस्थितिः ॥ विलीनातेनवांछंतिनत्यजंतीहकिंचन ॥ २२ ॥ हेयोपादेयकलनेक्षीणेयावन्नचेतसः ॥ नतावत्समताभातिसाभ्रेव्योम्नीवचंद्रिका ॥ २३॥ अवस्त्विदमिदंवस्तुयस्येतिलुलितंमनः ॥ तस्मिन्नोदेतिसमताशाखोटइवमंजरी ॥ २४ ॥ युक्तायुक्तैषणायत्रलाभालाभविलासिनी ॥ समतास्वच्छतातत्रकुतोवैराग्यभासिनी ॥ २५ ॥ एकस्मिन्ब्रह्मतत्त्वेस्मिन्विद्यमानेनिरामये ॥ नानाऽनानातयानित्यंकिमयुक्तंक्वयुक्तता ॥२६॥ ईप्सितानीप्सिताशंकेमर्कट्यौचित्तपादपे ॥ चंचलेस्फुरतोयस्मिन्कुतस्तस्येहसौम्यता ॥२७॥ निराशतानिर्भयतानित्यतासमताज्ञता ॥ निरीहतानिष्क्रियतासौम्यतानिर्विकल्पता ॥ २८ ॥ धृतिर्मैत्रीमतिस्तुष्टिर्मृदुतामृदुभाषिता ॥ हेयोपादेयनिर्मुक्तेज्ञेतिष्ठंत्यपवासनम् ॥ २९ ॥ धावमानमधोभागेचित्तंप्रत्याहरेद्बलात् ॥ प्रत्याहारेणपतितमधोवारीवसेतुना ॥ ३० ॥ बाह्यानर्थानिमांस्त्यक्त्वातिष्ठन्गच्छन्स्वपन्श्वसन् ॥ सर्वथासर्वदासर्वानांतरांश्चविचारय ॥ ३१ ॥

तस्यचित्तपादपस्य ॥ सौम्यतानिष्कंपता ॥ २७ ॥ इदानींजीवन्मुक्तलक्षणभूतान्पंचदशगुणानाह ॥ निराशतेतिद्वाभ्याम् ॥ निरीहतामनश्चापलाभावः ॥ निष्क्रियताशारीरकर्तृत्वाभिनिवेशाभावः ॥ सौम्यतासदाप्रसन्नता ॥ २८ ॥ मैत्रीसर्वभूतसुहृत्त्वम् ॥ मतिर्मननशीलता ॥ यदिगुणास्तिष्ठंतितर्हिंनद्वासनयैवतस्यबंधःस्यादित्याशंक्याह ॥ अपवासनमिति ॥ वासनाबीजस्याज्ञानस्यनष्टत्वादितिभावः ॥ २९ ॥ इदानींरामस्यतद्गुणार्जनेउपायमाह ॥ धावमानमित्यादिना ॥ अधोभागेनिकृष्टेषुविषयेषु ॥ प्रत्याहारेणविषयेभ्यःसर्वबाह्येंद्रियाणांपरावर्त्तनेन ॥ अधःपतितंप्रवाहोन्मुखंवारिसेतुनेव ॥ ३० ॥ बाह्येष्वर्थेष्वात्मताभ्रांत्यप्रसक्तेस्त्यागएवोपायः आंतरेषुतुतत्प्रसक्तेःसर्वदासर्वप्रकारेणतत्रस्तत्त्वपरीक्षावद्विचारःकार्यइत्याह ॥ बाह्यानिति ॥ तथाचाहुर्वृद्धाः ॥ गच्छतस्तिष्ठतोवापिजाग्रतःस्वपतोपिवा ॥ नविचारपरंचेतोयस्यासौमृतउच्यतइति ॥ ३१ ॥

१ मूलानुरोधेनात्रअलाभविलासिनीतिटीकानुरोधेनलाभारागविलासिनीतिमूलपाठोपेक्षितइतिभाति ॥ सर्वेषुपुस्तकेषुमूलटीकयोरेवंवैषम्यदर्शनेनैकस्यानिश्चयात्.

अनयामदुपदिष्टयाबुद्धिलक्षणयाशलाकयाकर्त्र्यावासनालक्षणंजालमानायंछिंधीतिपरेणान्वयः ॥ गृहीतास्तृष्णाशफर्योयेन मोहशैवालैराविलेमलिनम् ॥ संसारलक्षणे वारिणिप्रसृतंप्रसारितम् ॥ चितालक्षणैस्तंतुभिराततंनिर्मितम ॥ ३२ ॥ विततेविस्तीर्णंतरेपदेआकाशेब्रह्मणिचवहंत्येतिवात्याशलाकयोर्विशेषणम ॥ ३३ ॥ हेभव्यधीरेणचिराभ्यासदृढीकृतंनैकालस्थैर्यलक्षणेनचित्तधैर्येणसंपन्नयाअतएवोद्धुरयाअनादिकालनिमग्नात्मोद्धारसमर्थयाअपरोक्षसाक्षात्कारधियासंसारवृक्षस्यमूलंसवासनमज्ञानंछिधीत्यर्थः ॥ ३४ ॥ ननुसतिविक्षेपहेतौमनसिकथंमूलच्छेदस्तत्राह ॥ मनसैवेति ॥ यथाअपनिविष्टलोहनपादपावयवकाष्ठात्मनाकुठारेणपादपश्छिद्यतेतद्वदपनिवेशिनवृत्तीद्धब्रह्मचैतन्येनमनसैवमनश्छित्त्वेत्यर्थः ॥ ३५ ॥ ननुपूर्वसिद्धमनसउक्तोपायेनच्छेदनेपिभाविमनोवृत्तीनांवर्त्तमानब्रह्माकारमनोवृत्तेर्वाकथंछेदनंतत्राह ॥ विस्मृत्येति ॥ विस्मृतिर्वासनोच्छेदस्तयाचरममुत्तरकालप्रसक्तंवृत्तिरूपम ॥ असत्यांवासनायामपेपिवृत्त्यनुदयात् ॥ वर्त्तमानंकतकरेणुन्यायेनस्वेनैवस्वस्यनिरासाच्छित्त्वा ॥ ३६ ॥ नन्वेवमपितत्त्व

गृहीततृष्णाशफरिवासनाजालमाविलम् ॥ संसारवारिप्रसृतंचितातंतुभिराततम् ॥ ३२ ॥ अनयातीक्ष्णयातातच्छिंधिबुद्धिशलाकया ॥ वात्ययेवांबुदंकालेवहंत्याविततेपदे ॥ ३३ ॥ अस्यसंसारवृक्षस्यमूलंदोषांकुरास्पदम् ॥ भव्यधीरेणधैर्येणप्रोद्धरोद्धुरयाधिया ॥ ३४ ॥ मनसैवमनश्छित्त्वाकुठारेणेवपादपम् ॥ पदंपावनमासाद्यसद्यएवस्थिरोभव ॥ ३५ ॥ मनसैवमनश्छित्त्वाविस्मृत्याचरमंमनः ॥ वर्त्तमानमपिच्छित्त्वाच्छिन्नसंसारतांव्रज ॥ ३६ ॥ मोहोविस्मृत्यसंसारंनभूयःपरिरोहति ॥ चित्तंविस्मृत्यसंसारोनभूयःपरिरोहति ॥ ३७ ॥ तिष्ठन्गच्छन्स्वपञ्जाग्रन्निवसन्नुत्पतन्पतन् ॥ असदेवेदमित्यंतंनिश्चित्यास्थांपरित्यज ॥ ३८ ॥ समतामलमाश्रित्यसंप्राप्तंकार्यमाहरन् ॥ अचिंतयंस्तथाप्राप्तंविहरेहहिराघव ॥ ३९ ॥ यथाशर्वोपिलिंगानिनविभर्त्तिविभर्त्तिच ॥ त्वमेवमिहकार्याणिकुरुमाकुरुचानघ ॥ ४० ॥ त्वमेववेत्तात्वमजस्त्वमात्मात्वंमहेश्वरः ॥ आत्मनोव्यतिरिक्तःसंस्त्वयेत्थमिदमाततम् ॥ ४१ ॥

विदोजीवनसिद्धयेतदुपादानभूताविद्याख्योमोहोवश्यमभ्युपगंतव्यःसएवपुनस्संसारंप्ररोहयिष्यतीत्याशंक्याह ॥ मोहइति ॥ परिरोहतिप्ररोहति ॥ वासनाक्षयलक्षणेविस्मरणेसतितस्यबीजशक्त्यभावादितिभावः ॥ तर्हिसंसारस्तस्मिन्मोहक्षेत्रेस्वयमेवप्ररोहतुतत्राह ॥ चित्तमिति ॥ चित्तसंस्कारोच्छेदलक्षणेचित्तविस्मरणेसतिनचेत्यस्यप्ररोहःसंभवति ॥ चित्तसंस्कारस्यापिचेत्यारोपबीजत्वादितिभावः ॥ ३७ ॥ चित्तचेत्योभयविस्मरणेतदास्थात्यागएवोपायइत्याह ॥ तिष्ठन्निति ॥ ३८ ॥ आस्थापरित्यागेसमतापिसिद्ध्यतीत्याशयेनाह ॥ समतामिति ॥ तथाअप्राप्तमितिच्छेदः ॥ ३९ ॥ यथाशर्वोमहेश्वरःक्षित्याद्यष्टमूर्त्तिलक्षणानिलिंगानिशुद्धचिन्मात्रदृशानबिभर्त्तिजगदाकारविवर्त्तमायाधिष्ठानत्वात्सन्निधिमात्रेणबिभर्त्तिचतेनसर्वकर्त्ताचभवति एवंत्वमपिराज्यादिकार्याण्यनास्थयासन्निधिमात्रेणकुरु अकर्त्रात्मनिश्चयान्माकुरुचेत्यर्थः ॥ ४० ॥ किंचनान्योतोस्तिद्रष्टानान्योतोस्तिश्रोतेत्यादिश्रुतेःसर्वशरीरेषुत्वमेववेत्तावेदिता ॥ तृचभावश्छांदसः ॥ सत्तार्थाद्विद्यतेर्वातृच् ॥ परमार्थसन्नित्यर्थः ॥ अजोजन्मादिविक्रियाशून्यः ॥ सर्वस्यात्माप्रत्यक्चिद्रसः ॥ प्रागुक्तोमहेश्वरश्चत्वमेव ॥ आत्मनःस्वस्वभावादव्यतिरिक्तःअप्रच्युतस्वभावएवसन् ॥ एवंभूतेनत्वयास्वमोहादित्थमिदमाततंविस्तारितंनान्येनेत्यर्थः ॥ ४१ ॥

यदिमयैवेदमाततंतर्हिकथंममात्रहर्षामर्षदोषोदयस्तत्राह॥येनेति॥ येनतत्त्वविदाआत्मदृश्यस्यसद्भावात्परमार्थसन्मात्रताभावनादभितोन्यदितिभावनाउज्झितात्यक्तासनदोषैः संगृह्यतेअतस्त्वमप्युज्झेत्यर्थः॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५॥ इदंजगत्स्वयंच॥ भोगाभिमननंभोगचिंतासात्यक्तायेन॥ ४६॥ चित्सत्तामात्रमेवेदमितियदुक्तंतदुपपादयति॥ मनइत्यादिना॥ यतोजडंअतःस्वतःसिद्धंपरंसाधयितुंचासमर्थत्वात्स्वसिद्धयेस्वविषयसिद्धयेचस्वसाक्षिभूतंस्वप्रकाशचिद्रूपंतत्त्वंपारमार्थिकंवस्तुअनुधावत्यनुसरति॥ यथास्व जीवनायस्वपुत्रादिभरणायचमार्जारःसिंहमनुसरतितद्वदित्यर्थः॥ ४७॥ दृश्यंस्वंस्वविषयंचआश्रयतेउपजीवति॥४८॥ अस्त्वेवंकिततस्तत्राह॥ मनइति॥ एवंचसतिमनःअ सत्कल्पंशून्यप्रायंमिथ्येतिसिद्धमित्यर्थः॥ कथंजीवतितदाह॥ भावयन्निति॥ एकमद्वितीयमात्मानंविस्मृत्यविश्वंजगदाकारमेवभावयन्॥ छांदसोलिंगव्यत्ययः॥ कल्पय

येनात्मदृश्यसद्भावादभितोभावनोज्झिता॥ सनसंगृह्यतेदोषैर्हर्षामर्षविषादजैः॥ ४२ ॥ रागद्वेषविनिर्मुक्तःसमलोष्टाश्मकांचनः॥ युक्तइत्युच्यतेयोगीत्यक्तसंसारवासनः॥ ४३॥ सयत्करोतियद्भुंक्तेयद्ददातिनिहंतियत्॥ तत्रमुक्तधियस्तस्यसमतासुखदुःखयोः॥४४॥ प्राप्तंकर्तव्यमेवेतित्यक्तेष्टानिष्टभावनः॥ प्रवर्त्ततेयःकार्येषुनसमज्जतिकुत्रचित्॥ ४५॥ चित्सत्तामात्रमेवेदमितिनिश्चयवन्मनः॥ त्यक्तभोगाभिमननंशममेतिमहामते॥ ४६॥ मनःप्रकृत्यैवजडंचित्तत्त्वमनुधावति॥ मांसगर्द्धेनमार्जारोवनेमृगपतिंयथा॥ ४७॥ सिंहवीर्यवशाल्लब्धंमांसंभुंक्तेनुगोहरेः॥ चिद्वीर्यवशतःप्राप्तंदृश्यमाश्रयतेमनः॥ ४८॥ मनएवमसत्कल्पंचित्प्रसादेनजीवति॥ भावयन्विश्वमेवैकंचिंतामेत्यचिदप्युत॥४९॥ जडंयत्किलनिर्हीनंचितादीपिकयौजसा॥ तन्मनःशवसंकाशमविद्धुत्तिष्ठतेकथम्॥ ५०॥ चित्स्वभावपरामृष्टास्पंदशक्तिरसन्मयी॥ कल्पनाचित्तमित्युक्त्याकथ्यतेशास्त्रदृष्टिभिः॥५१॥ यश्चित्तफणिफूत्कारःसैवेयंकलनोच्यते॥ चिदेवाहमितिज्ञात्वासाचित्तामेवगच्छति॥ ५२॥ चेत्येनरहितायैषाचित्तद्ब्रह्मसनातनम्॥ चेत्येनसहितायैषाचित्सेयंकलनोच्यते॥ ५३॥ किंचिदामृष्टरूपंयद्ब्रह्मतच्चस्थिरंमनः॥ कल्पनासत्सदैवैतत्सदिवोपस्थितान्हृदि॥ ५४॥ चित्तमित्येवरूढेयंयदैवकलनोदिता॥ तदैवचित्त्वंविस्मृत्यसाजडेवव्यवस्थिता॥ ५५॥

त्सज्जगदाकारंभूत्वाजीवतीत्यर्थः॥ अतएवचिंतामात्मस्मृतिमेत्यप्राप्यउतपुनश्चिदतिभवतिमनस्त्वंजहातीत्यर्थः॥४९॥ मनसःप्रकाशशक्तिरिवस्पंदशक्तिरपिचिदधीनैवेत्याह॥ जडमिति॥ चिल्लक्षणयादीपिकयाओजसाबलेनचविना॥ उत्तिष्ठतेस्पंदते॥ ५०॥ अतएवचितिस्पंदकल्पनैवमनइतिविद्वत्प्रवादोप्यस्तीत्याह॥ चित्स्वभावेति॥ ५१॥ स्पंदशक्तेरेवविलासश्चित्तंतद्वृत्तयश्चेत्याह॥ यइति॥ फूत्कारग्रहणंविषस्याप्युपलक्षणम्॥ तथाचचित्तादित्रिपुटीदृश्याकारैवकलनेत्यर्थः॥ चित्तांशुद्धचिन्मात्रताम्॥ ५२॥ तथाचचितश्चेत्यत्यागएवब्रह्मतापर्यवसन्नेत्याह॥ चेत्येनेति॥ ५३॥ कलनैवमनननाम्नमनोभवतीत्याह॥ किंचिदिति॥ तद्ब्रह्मैवकिंचिदामृष्टरूपंकलनासत्सदैवहृदिसदिवउपस्थितासंकल्पविकल्पकल्पनाभूत्वास्थिरंएतत्प्रसिद्धंमनोभवतीत्यर्थः॥ ५४॥ नित्यानुभवस्वभावस्यस्वरूपविस्मरणेकलनैवस्थानित्वमापन्नाचित्ततांगच्छतीत्याह॥ चित्तमिति॥ तदापरोक्षतापत्तियोग्याजडताप्यस्याःसंपन्नेत्याह॥ जडेवेति॥ ५५॥

अतीतविषयाकारकल्पनेनचित्ततामिवअनागतविषयाकारकल्पनेनसंकल्पविकल्पानुविधानान्मनस्तामपिसाप्राप्तेत्याशयेनाह ॥ संपन्नेति ॥ एवमवच्छेदवतीद्विधापरिच्छि न्नासतीप्राक्तनेष्टानिष्टसाधनसाजात्यमध्यवस्यभावीष्टानिष्टसाधनतांसंकल्प्यहेयोपादेयधर्मिणीअयामुख्याचिदेवसंपन्नेत्यर्थः ॥ ५६ ॥ मनःप्रकृत्यैवेत्यादिनोपपादितंचि त्सत्तामात्रमेवेदमित्यंशांपिंडीकृत्योपसंहरति ॥ सैषेति ॥ स्वशक्तितःस्वीयमायाशक्तिवशात् ॥ गुरुशास्त्रस्वविचारैर्यावन्नसंप्रबोधितातावद्वास्तवंपूर्णानंदाद्वयरूपंनबुध्यतइत्यर्थः ॥ ५७ ॥ बोधयेज्जडाकारकलनालक्षणादवस्थात्रयस्वमाद्व्यावर्त्तयेदित्यर्थः ॥ ५८ ॥ विज्ञानेनशास्त्रजन्यज्ञानेन ॥ शमेनशमादिसाधनसहितमनननिदिध्यासनाभ्याम् ॥ इत रथाविज्ञानशमाभ्यामप्रबोधने ॥ ५९ ॥ व्यामोहोरागः ॥ आत्मनःअवेदनमज्ञानंनिद्रातेनसंसुप्ताम् ॥ ६० ॥ ननुकलनायदिसुप्ताकथंजगदवबुध्यते अवबोधेवातस्याःप्रसिद्ध चित्स्वभावात्कोतिशयस्तत्राह ॥ अप्रबुद्धेति ॥ यन्मन्यसेजगदवबुध्यतइतितन्नकिंचिदवबुध्यते ॥ जगतोऽनवबोधमात्रविलसितत्वात् ॥ यतोदृश्यमानापिजगत्स्थितिःसांक

संपन्नाकलनानाम्नीसंकल्पानुविधायिनी॥ अवच्छेदवतीवाग्राहेयोपादेयधर्मिणी ॥५६॥ सैषाचिदेवजगतामागतेवस्वशक्तितः॥ नसंप्रबोधितायावद्रूपंतावन्नबुध्यते॥ ५७॥ अतःशास्त्रविचारेणवैराग्येणपरेणच ॥ निग्रहेणेंद्रियाणांचबोधयेत्कलनांस्वयम्॥५८॥ कलनासर्वजंतूनांविज्ञानेनशमेनच ॥ प्रबुद्धाब्रह्मतामेतिभ्रमतीतरथाजगत्॥ ५९ ॥ व्यामोहमदिरामत्तांलुठितांविषयावटे ॥ आत्मा वेदनसंसुप्तांकलनामेवबोधयेत्॥ ६० ॥ अप्रबुद्धायदात्येषानकिंचिदवबुध्यते ॥ संकल्पकलनेवांतर्दृश्यमानाप्यसन्मयी ॥ ६१ ॥ तया परमयादृष्ट्याकलनैषांतरस्थया॥ मंजरीगंधशक्त्येवपदार्थेपुविराजते॥ ६२ ॥ तनुःसंकल्पितायैषाकलनेतिजगत्त्रये॥ साहिकिंचिद्वि जानातिनित्यंज्ञानैकधर्मिणी॥ ६३॥ चेतनेनजडारामकलनोपलरूपिणी॥ पद्मिनीवातपेनासौपरेणैवप्रबोध्यते॥ ६४॥ यथाशिला मयीकन्याचोदितापिननृत्यति॥ तथेयंकलनादेहनकिंचिदवबुध्यते ॥ ६५॥

ल्पिकभासादकलनेवअसन्मयीत्यर्थः ॥ ६१ ॥ विषयांशपरित्यागेऽवशिष्टाकलनैवात्मेत्युक्तेवृत्तिज्ञानमेवायमात्मेतिभायाद्दीतितत्साक्षिणींतदांतरींशुद्धचितंविविच्यदर्शयति ॥ तयेत्यादिना ॥ एषाचित्तवृत्तिरूपाकलनाअंतरस्थयातयासर्वसाक्षिण्यापरमयादृष्ट्याव्याभासतीपदार्थेपुस्वस्वविषयेपुविराजतेप्रकाशनसमर्थाभवतिनस्वतइत्यर्थः ॥ ६२ ॥ यदिसासर्वसाक्षिणीकुतस्तत्तदंतःकरणधर्माननिवप्रकाशयतिनसर्वंतत्राह ॥ तनुःसंकल्पितेति ॥ याएषाज्ञानैकधर्मिणीनित्यबोधस्वभावासाक्षिचित्सापरिच्छिन्नवृत्तिकलनोपाधि वशात्तनुरल्पैवेतिजगत्त्रयेपितैस्तैःप्राणिभिःसंकल्पिताअतःकिंचिदल्पमेवतत्तदंतःकरणादिविजानातीत्यर्थः ॥ ६३ ॥ वृत्तिरूपातुकलनाविवेकेउपलरूपिणीपाषाणकल्पाजडै वअतएवचेतनेनसाक्षिणाप्रबोध्यते ॥ ६४ ॥ येतुनैयायिकप्रभृतयोनित्यसाक्षिणमजानानाःपरप्रकाशस्यैवानित्यज्ञानस्यअर्थप्रकाशतांमन्यंतेतान्बहुभिर्दृष्टांतैरुपहसति ॥ यथेत्यादिना ॥ ६५ ॥

अचेतनस्यांतःकरणतद्वृत्त्यादेर्नित्यचित्संनिधानाभावे विषयोन्मुखप्रवृत्तिरेव दुर्लभा दूरे तत्प्रकाशकतेत्याशयेनाह ॥ लिपिकर्मेति ॥ लिपिकर्मभिश्चित्रलिखितैर्नृपैः ॥ प्रतिबोधिता आप्यायिताः ॥ ६६ ॥ परिवल्गितं धावितम् ॥ ६७ ॥ पुंसा विहितैः शिलादिना निर्मितैः ॥ ६८ ॥ ६९ ॥ नित्यचिदात्मानभ्युपगमे कलनाद्यध्यास एव न सिद्ध्येदित्याशयेनाह ॥ यथेति ॥ ७० ॥ चितः परिच्छेदस्पंदकल्पनैव मन इत्युक्तम् इदानीं सैव चिदचिदंशविवेके चिदंशस्यात्ममात्रत्वाज्जडांश एव परिशिष्यते तथाविधा तु स्पंदशक्तिः प्राण एवेति तन्निरोधे कृते न मनो नाम पृथङ्गिरोध्यमस्तीति वक्तुं भूमिकां रचयति ॥ यदेतदिति ॥ शठैः स्ववंचकैरज्ञैः ॥ अन्नमयांतः प्राणशरीरिणीं प्राणमयकोशात्मिकाम् ॥ ७१ ॥ सा प्राणशक्तिः संकल्पादुत्थिता निःसंकल्पानां योगिनां चिदात्मैव सा पृथगस्तीत्याह ॥ येषामिति ॥ न आक्षिप्तः कल्पितः रस्यंत इति रसा विषयास्तदाकारो यया ॥ ७२ ॥ सैव अहंममेत्याक्षिप्तरसा

लिपिकर्मनृपैर्युद्धं क्व कृतं घर्घरारवम् ॥ क्वचिन्न चंद्रकिरणैरोषध्यः प्रतिबोधिताः ॥ ६६ ॥ अस्तृगालिप्तगात्रैश्च शवैः क्व परिवल्गितम् ॥ क्व गीतं मधुरध्वानं वनपाषाणखंडकैः ॥ ६७ ॥ क्व पुंसा विहितैरर्कैः क्षपितं यामिनीतमः ॥ क्व संकल्पमयैश्छाया क्रियते व्योमकाननैः ॥ ६८ ॥ क्व जडैरुपलाकारैर्मिथ्याभ्रमभरोत्थितैः ॥ मृगतृष्णामयैरेभिर्मनोभिः क्रियते क्रिया ॥ ६९ ॥ यथा तपेक्षते स्फारे मृगतृष्णातरंगिणी ॥ कलनातद्वदेवेयं स्फुरत्यात्मनि सत्यलम् ॥ ७० ॥ यदेतत्स्पंदितं नाम तन्मनो धिगतं शठैः ॥ मरुतां विद्धि तां शक्तिमंतःप्राणशरीरिणीम् ॥ ७१ ॥ येषां संविदनाक्रांता संकल्पलवनिश्चयैः ॥ अनाक्षिप्तरसाकारा प्रभैषा पारमात्मिकी ॥ ७२ ॥ अयं सोहमिदं तन्म इतिया कलनाविला ॥ प्राणात्मतत्त्वयोस्तस्याः संज्ञा जीवेति कथ्यते ॥ ७३ ॥ धीश्चित्तं जीव इत्येताः संकल्पस्यासतो मताः ॥ संज्ञाः संकल्पितास्तज्ज्ञैर्न राम परमार्थतः ॥ ७४ ॥ मनो नो न मतिर्नापि धीरेपा न शरीरकम् ॥ अस्तीह परमार्थेन स्वात्मैवेहास्ति सर्वदा ॥ ७५ ॥ आत्मैवेदं जगत्सर्वमात्मा कालक्रमस्तथा ॥ स चाकाशादच्छतरो नास्तीवास्त्येव चामलः ॥ ७६ ॥ अच्छत्वादसदाभासः संविद्रूपतया तु सत् ॥ आत्मा सर्वपदातीतः स्वानुभूत्यानुभूयते ॥ ७७ ॥

कारा यदा तदा विनास्पंदं तदाक्षेपायोगात्स्पंदात्मकप्राणतत्त्वस्य चिदात्मकस्यात्मतत्त्वस्य च पृथगिव संजातस्याविवेकात्पुनरैक्याध्यासेनाविला जडसंवलितचिद्रूपा कलना जीवः प्राणधारण इति धात्वर्थानुगमाज्जीवतीति जीवेति संज्ञा कथ्यत इत्यर्थः ॥ ७३ ॥ एवमन्या अपि संज्ञास्तस्याः प्रसिद्धा इत्याह ॥ धीरिति ॥ ७४ ॥ कुतो न परमार्थतस्तत्राह ॥ मन इति ॥ यतः परमार्थेन मनश्चित्तं बुद्धिः शरीरमित्येतदुपलक्षितं दृश्यमात्रमिहात्मनि नास्ति ॥ अप्राणो ह्यमनाः शुभ्रः अकायमव्रणमस्नाविरम् अस्थूलमनण्वित्यादिश्रुतिशतेन विद्वदनुभवैर्युक्तिभिश्च बाधितत्वादिति भावः ॥ ७५ ॥ यद्यात्मैवास्ति तर्हि स कुतो न भाति जगद्रूपेण वा को भातीति तत्राह ॥ आत्मैवेति ॥ ७६ ॥ कुतो नास्तीव कुतश्चास्त्येवेति निश्चयस्तत्राह ॥ अच्छत्वादिति ॥ अच्छत्वाच्चक्षुरादियोग्यताप्रयोजकस्थौल्यनैल्याद्यभावादसन्निवाभासत इत्यसदाभासः ॥ चिद्रूपतया स्वपरप्रथानिर्वाहकत्वात्तु सत् ॥ अत एव स्वानुभूत्यैवानुभूयते न करणैरित्यर्थः ॥ ७७ ॥

स्थौल्याद्यभावात्करणांतराणितत्रनप्रवर्त्तंतांमनस्तुसूक्ष्मतयार्थनिर्णयनिमित्तत्वेनप्रसिद्धंकुतोनप्रवर्त्ततेतत्राह ॥ मनइति ॥ सत्यंतत्रमनःप्रवर्त्ततेयदितद्दर्शनकालेस्वयंननश्येत् ॥ मनसस्त्वज्ञानकार्यत्वात्तद्दर्शनवस्त्युदयसमकालमेवाविषयासहक्षयान्नतद्दर्शनशक्ततेत्यर्थः ॥ ७८ ॥ क्वतर्हिमनसःप्रवृत्तिशक्तिस्तदाह ॥ यत्रेति ॥ यत्रयस्यांदशायामच्छायाः स्वच्छतरायाआत्मरूपायाःसंविदःसंकल्पवशाद्बाह्यविषयाकारोत्थतयाबाह्यार्थाःप्रकाश्यत्वेनाभिमतास्तत्रपारमार्थिकस्यात्मनोविस्मरणंचित्तजन्मनोमिथ्यार्थस्यस्मरणंदर्शनमित्यादिप्रसिद्धमित्यर्थः ॥ ७९ ॥ स्वोद्भवप्रतिकूलत्वादपिनमनसआत्मदर्शनशक्तिरस्तीत्याह ॥ परस्येति ॥ संकल्पमयत्वाधीनोद्भवंमनःसर्वसंकल्पक्षयोपलक्षितेमोक्षात्मनिकथंप्रवर्त्ततेतिभावः ॥ ८० ॥ अतएवसंकल्पचित्तजन्मबीजमित्यसकृदावेदितमित्याह ॥ एतावदिति ॥ संकल्पोन्मुखतांयातोगच्छतआत्मनोयत्संविदश्चिरस्वभावाद्वाविकल्पनमीषदन्यथाभावलक्षणमेतावदेवचेतसोजन्मकिलेत्यन्वयः ॥ ८१ ॥ उक्तमेवस्फुटीकृत्याह ॥ निर्विकल्पादिति ॥ निर्विकल्पात्प्रच्युतेतिशेषः ॥ यथारूयादिसंकल्पकलनया

मनस्तत्रपरिक्षीणंयत्रसंवित्परात्मनः॥ अंधकारक्षयस्तत्रयत्रालोकःप्रवर्त्तते ॥७८॥ यत्रात्मसंविदोऽच्छायाःसंकल्पोत्थतयामताः॥ तत्रात्मनोविस्मरणंस्मरणंचित्तजन्मनः॥७९॥ परस्यपुंसःसंकल्पमयत्वंचित्तमुच्यते॥ अचित्तत्वमसंकल्पान्मोक्षस्तेनाभिजायते॥८०॥ एतावच्चेतसोजन्मबीजंसंसारभूतये॥ संकल्पोन्मुखतांयातःसंविदोवाकिलात्मनः॥८१॥ निर्विकल्पाच्चितःसत्तासंकल्पांककलंकिता॥ कलनेत्युच्यतेतेनपुंस्त्ववद्बुद्ध्यतेमनः॥८२॥ प्राणशक्तौनिरुद्धायांमनोरामविलीयते॥ द्रव्यच्छायानुतद्द्रव्यंप्राणरूपंहिमानसम् ॥८३॥ देशांतरानुभवनंप्राणोवेत्तिहृदिस्थितम्॥ स्पंदवेदनतोयत्तन्मनइत्यभिधीयते॥८४॥ वैराग्यात्कारणाभ्यासाद्युक्तितोव्यसनक्षयात्॥ परमार्थावबोधाच्चरोध्यंतेप्राणवायवः॥ ८५ ॥

पुंस्त्वंपुंव्यंजनंबुद्ध्यतेप्रजाप्रसवार्थमाविर्भवतितथामनोपिजगत्प्रसवार्थमित्यर्थः ॥ तथाचबादरायणस्यापिसूत्रम् पुंस्त्वादिवदपिहिलोकेइति ॥ ८२ ॥ यदेतत्स्पंदितंनामेत्यादिना यत्प्रस्तुतंतस्यप्रयोजनमाह ॥ प्राणशक्ताविति ॥ यथाद्रव्यस्यदर्पणादेःसंबंधिनीछायाप्रतिच्छायातस्मिन्द्रव्येविलीनेतद्द्रव्यमनुविलीयतेतद्वत् ॥ तत्कुतः ॥ यतोयथाप्रतिबिंबंदर्पणस्यैवकल्पितंरूपंतथामानसंमनोपिप्राणस्यैवरूपमित्यर्थः ॥ ८३ ॥ प्राणरूपंमानसमितिकुतोज्ञातंतत्राह ॥ देशांतरेति ॥ यतःप्राणोजीवन्पुरुषोदूरदेशांतरस्यानुभवनंमानसानुभवंहृदिस्थितंवेत्तिहृदिमेतस्यदेशस्यानुभवोस्तीत्यनुभवति ॥तत्रदेशांतरसंबंधस्यस्पंदमंतरेणासिद्धेर्वेदनांशस्यचित्तवलनमंतरेणायोगात्स्पंदवेदनोभयशक्तियोगात्प्राणएवमनइत्यभिधीयतइत्यर्थः ॥ ८४ ॥ इत्थंप्राणनिरोधेनमनोनिरोधसिद्धयेतयोरैक्यंव्युत्पाद्येदानींनिरोधोपायमाह ॥ वैराग्यादिति ॥ कारणंप्राणायामस्तस्याभ्यासात् ॥ योगोयुक्तिःसमाधिस्तस्मात् ॥ चित्तस्यबाह्यविषयोपसर्पणदुरभ्यासोव्यसनंतस्यक्षयात् ॥ ८५ ॥

इदानीमन्नमयंहिसोम्यमनआपोमयःप्राणइतिश्रुत्याभिन्नोपादानकयोःप्राणमनसोर्भेदइतिपक्षेपिमनसःस्वतःस्पंदशक्तेश्चिच्छक्तेश्चाभावात्प्राणचिदात्माधीनेएवतेइतिप्राणनिरोधेनिरोधोपपत्तिरित्याशयेनाह ॥ दृषदइति ॥ एधःशब्देनकाष्ठवाचिनातत्कार्यज्वलनशक्तिर्लक्ष्यते ॥ दृपदःशिलायाअपिकदाचिच्चलनशक्तिर्ज्वलनशक्तिश्चविद्यतेसंभवेत् नतुमनसांस्पंदविषयेअवबोधविषयेवाशक्तिरस्तीत्यर्थः ॥ ८६ ॥ कयोस्तर्हितेशक्तीतावाह ॥ स्पंदइति ॥ ८७॥ किंतर्हिमनस्तदाह ॥ चिच्छक्तेरिति ॥ ८८ ॥ अविद्याकार्याविद्या ॥ मायाविक्षेपशक्तिः ॥ एतन्मनएवाज्ञानसर्वस्वनिर्वाहकत्वादज्ञानम् ॥ ८९ ॥ संकल्पकल्पनंसंकल्पकल्पननिमित्तमितियावत् ॥ अतएवनिमित्ताजननेनैमित्तिकापायसिद्धिरित्याह ॥ नकृतंचेदिति ॥९०॥ वायोरितिवायुतः ॥ पञ्चयंतात्सार्वविभक्तिकस्तसिः ॥ ९१ ॥ नविद्यंतेखंडमंडलाकारस्पंदरूपाणियस्यांतथाविधाचिदेवयद्यस्मात्परमार्थइत्यर्थः ॥९२॥ साउक्ताखंडपूर्णतालक्षणाचित्ताचित्स्वभावतातदन्येनकेनसंबाध्यतेखंड्यते ॥ किलेतितदसंभावनाद्योतनार्थः ॥ किंतदधीनसिद्धिकेनउतान्येन अन्यस्याप्रसिद्धेः चिदधीनसिद्धिकस्यचिद्बाधनाशक्तेर्बाधस्यापिसिद्धेश्चित्सत्ताधीनत्वाच्चित्खंडनमंतरेणचिदंतरालेअचित्सिद्ध्ययोगाच्चेतिभावः ॥ तद्विदंतेइतिपाठेतुतांतादृशींचित्स्वभावतांस्वस्यवेत्तीतितद्वित्अंतेसकार्याविद्यानाशेसतिकेनसंबाध्यतेइतियोज्यम् ॥ इंद्रस्यदेवराजस्यपरमेश्वरस्यवा ॥ ९३ ॥ अतोऽचितश्चिद्विरोधायोगाद्विरोधेचित्सत्ताबाधितस्थितिकत्वाच्चकीदृशंमनः ॥ यदिजडमपिस्वसत्तायामन्यनिरपेक्षंस्वतःसिद्धमुच्येततथापितदनुभवितुस्तत्संबंधिनश्चेतनस्यान्यस्याभावाच्चित्संबंधेनविनातन्मनःकस्यसिद्धंकीदृशंवातत्स्यात् ॥ अनुभवानारोहेअलीकस्यतस्यचविशेषासिद्धेरितिभावः ॥ ९४ ॥ इत्थंचित्स्पंदयोर्भेदपक्षेमनसोलीकतामुक्त्वाएकतापक्षेतुसुतरांतथेत्याह ॥ चित्स्पंदयोरिति ॥ चित्स्पंदयोरेकताचिदपलापेनतावदशक्यावक्तुम ॥ स्पंदसाधकाभावप्रसंगात ॥ परिशेषात्स्पंदापलापेनैकत्वोक्तौराजातिरिक्तगजतुरगाद्यपलापेसेनास्वरूपासिद्धिवन्मनसःसुतरामसिद्धिरित्यर्थः ॥ ९५ ॥

दृपदोविद्यतेशक्तिःकदाचिच्चलनैधसाम् ॥ नपुनर्मनसामस्तिशक्तिःस्पंदावबोधने ॥ ८६ ॥ स्पंदःप्राणमरुच्छक्तिश्चलद्रूपैवसाजडा ॥ चिच्छक्तिःस्वात्मनःस्वच्छासर्वदासर्वगैवसा ॥ ८७ ॥ चिच्छक्तेःस्पंदशक्तेश्चसंबंधःकल्प्यतेमनः ॥ मिथ्यैवतत्समुत्पन्नंमिथ्याज्ञानंतदुच्यते ॥ ८८ ॥ एषाह्यविद्याकथितामायैषासानिगद्यते ॥ परमेतत्तदज्ञानंसंसारादिविषप्रदम् ॥ ८९ ॥ चिच्छक्तेःस्पंदशक्तेश्चसंगेसंकल्पकल्पनम् ॥ नकृतंचेत्परिक्षीणास्तदिमाभवभीतयः ॥ ९० ॥ वायुतःस्पंदशक्तिर्यासाचिताचेत्यतेयदा ॥ सचेत्याचित्तदैवांतःसंकल्पाद्यातिचित्तताम् ॥ ९१ ॥ चित्तैषाचितोमिथ्याकल्पितावालयक्षवत् ॥ अखंडमंडलाकारस्पंदरूपाचिदेवयत् ॥ ९२ ॥ सैषाचित्तातदन्येनकेनसंबाध्यतेकिल ॥ अखंडशक्तेरिंद्रस्यकेनस्यात्सहसंगरः ॥ ९३ ॥ अतःसंबंधिनोऽभावात्संबंधोत्रनविद्यते ॥ संबंधेनविनाकस्यसिद्धंतत्कीदृशंमनः ॥ ९४ ॥ चित्स्पंदयोरेकतायांकिंनाममनउच्यते ॥ कासेनाहयमातंगसंगसंघट्टनंविना ॥ ९५ ॥

तस्मात्पक्षद्वयेप्यसंभवाच्चित्तंमनोनास्त्येवतत्त्वज्ञानाच्चास्तीतिनिश्चयएवमनोनाशइत्यर्थः ॥ ९६ ॥ ९७ ॥ ९८ ॥ हृत्पदेनहृदयांतस्थप्रत्यगात्मोच्यते ॥ तल्लक्षणेमरौ ॥ असम्यग्ज्ञानेनसंभूता ॥ मुनेइतिरामसंबोधनंमननप्रवणताविधानार्थम् ॥ ९९ ॥ मरणंयदिचैतन्यनिवृत्तिर्यदिवानिःस्वरूपतापत्तिस्तदुभयमपिमनस्यस्तीतिनित्यमृतम् ॥ मौर्ख्यंचक्रिकाचक्रवत्परिवर्त्तमानामौर्ख्यपरंपरा ॥ १०० ॥ आत्मास्वरूपम् ॥ आकृतिरवयवसंस्थानंजातिर्वा ॥ १०१ ॥ सामर्थ्यंशस्त्रास्त्रदेहहस्तपादादियुद्धसामग्रीतेनहीनेन ॥ दलितमस्तकंतंइतिशेषः ॥ १०२ ॥ १०३ ॥ तेनअविद्यमानेनमनसाविद्यमानःशूरःशत्रुजयसर्वसामग्रीसंपन्नोपिलोकोमूढजनोभिभूयते ॥ विवेकिभिश्चवैराग्यादिभिर्महाप्रयत्नसंपाद्यैः

तस्मान्नास्त्येवदुष्टात्मचित्तंरामजगत्त्रये ॥ सैषासम्यक्परिज्ञानाच्चेतसोजायतेक्षतिः ॥ ९६ ॥ मुधामैवमनर्थायमनःसंकल्पयानघ ॥ मनोमिथ्यासमुदितंनास्त्यत्रपरमार्थतः ॥ ९७ ॥ मात्वमंतःक्वचित्किंचित्संकल्पयमहामते ॥ मनःसंकल्पकंरामयस्मान्नास्तीहकुत्रचित् ॥ ९८ ॥ असम्यग्ज्ञानसंभूताकल्पनामृगतृष्णिका ॥ हृन्मरौतवसंशांतासम्यगालोकनान्मुने ॥ ९९ ॥ जडत्वान्निःस्वरूपत्वात्सर्वदैवमृतंमनः ॥ मृतेनमार्यतेलोकश्चित्रेयंमौर्ख्यचक्रिका ॥ १०० ॥ यस्यनात्मानदेहोस्तिनाधारोनापिचाकृतिः ॥ तेनेदंभक्ष्यतेसर्वंचित्रेयंमौर्ख्यवागुरा ॥ १०१ ॥ सर्वसामर्थ्यहीनेनहन्यतेमनसापियः ॥ नीलोत्पलदलाघातैर्मन्येदलितमस्तकम् ॥ १०२ ॥ जडेनमूकेनांधेननिहतोमनसापियः ॥ मन्येसदह्यतेमूढःपूर्णचंद्रमरीचिभिः ॥ १०३ ॥ विद्यमानोपियःशूरोलोकस्तेनाभिभूयते ॥ अविद्यमानमेवेदंहन्यतेमुग्धतोदिता ॥ १०४ ॥ मिथ्यासंकल्पकलितंमिथ्यावस्थितिमागतम् ॥ अन्विष्टमपिनोदृष्टंकातस्यकिलशक्तता ॥ १०५ ॥ अहोनुखलुचित्रेयंमायामयविधायिनी ॥ चेतसाप्यतिलोलेनलोकोयमभिभूयते ॥ १०६ ॥ मौर्ख्यंयदाऽऽपदान्विष्टःकाहिनापदजानतः ॥ पश्चमौर्ख्यादियंसृष्टिरज्ञानेनैवजन्यते ॥ १०७ ॥

साधनैर्महतायोगध्यानसमाध्यभ्याससाक्षात्कारोपायेनाविद्यमानमेवहन्यतेइतीयंसर्वाविकल्पनामुग्धतैवोदितानपारमार्थिकीत्यर्थः ॥ तथाचाहुःस्वामिनः ॥ समसरमितिनिरविदमितिसमतरमितिचेहसहजसांद्रसुखे ॥ केवलचिद्गगनेमयिकेयमहोविफलबहुविकल्पलतेति ॥ १०४ ॥ शक्तताअभिभवितुमितिशेषः ॥ १०५ ॥ महामायाविलेनप्रसिद्धस्यमयस्यापिविधायिनीनिर्मात्री ॥ १०६ ॥ यदामौर्ख्यंतदासपुरुषःसर्वेणाप्यापदाअन्विष्टःपरिमृग्यआश्रितोनात्रविप्रतिपत्तिः ॥ हियस्मादजानतोमूर्खस्यकाआपन्नास्तिसर्वाप्यस्त्येवेत्यर्थः ॥ नविद्यतेज्ञानंयस्यसःअज्ञानःमूर्खात्मातेनमौर्ख्याद्दुष्कर्मादिद्वाराइयंसर्वापन्निधिभूतासृष्टिः ॥ आपदांनिधिरितिपाठेतुस्पष्टम् ॥ १०७ ॥

१ सर्वेणापीतिसर्वपुस्तकेषुपाठदर्शनात्तस्यचार्थाद्विशेषणत्वासंभवात्सर्वेणापिप्रकारेणेत्यर्थःकर्तव्यः ॥ सर्वयाप्यापदेतिचेद्वरमितिभाति.

इयंसृष्टिर्मनोदेहादिदुर्बुद्धेर्निमित्तान्मौर्ख्यस्यवशंगतामौर्ख्येणपीड्यमानाप्येतेनप्रसिद्धेनजीवेनाप्यसताअसन्मार्गानुवर्त्तनेनैवोत्तरोत्तरदुःखायोपपाद्यते ॥ तथाचांधस्येवजडस्य मनआदेःस्वाभाविकमौर्ख्यात्पीडितस्यपुनस्तद्दुःखाभिज्ञेनजीवेनापिपीडनंकष्टात्कष्टतरमनुचितमित्यर्थः ॥ १०८ ॥ अत्यंतपेलवाअविचारमात्रसिद्धत्वाद्विचारमात्रेणबाधितुंशक्येतियावत् ॥ तत्रतादृशान्विचारमात्रनिरस्यान्दृष्टांतानाह ॥ वारित्यादिना ॥ यथावाःवारिस्वकल्पितेनतरंगप्रवाहेणपिष्यमाणंकणशःपरिशीर्यतेइतिभ्रांतिवदित्यर्थः ॥ १०९ ॥ तदेववारियत्रावर्त्तस्तत्रनीलांजनवर्णेनआलवालेनमध्यच्छिद्रवतापेषणयंत्रेणैवविचूर्ण्यते ॥ तदेववारियत्रकंपतेतत्रआभोगेनमंडलेनपूर्णस्येंदोःकरस्पर्शेनमुह्यतिउन्मादपरवशतांगच्छतीतिचभ्रांतिर्यथातद्वदित्यर्थः ॥ ११० ॥ रिपुभिर्दृष्टोदृष्टमात्रःपुरुषोनयनोन्मुक्तैर्नेत्रसृष्टैःसूत्रैर्बध्यतइत्यादिभ्रांतिवदित्यर्थः ॥ अथवामन्येइत्यादिअसती

वास्तरंगप्रवाहेणकणशःपरिशीर्यते ॥ १०९ ॥ नीलांजनालवालेनयंत्रेणैवविचूर्ण्यते ॥ इंदोराभोगपूर्णस्यकरस्पर्शेनमुह्यति ॥ ११० ॥ रिपुभिर्नयनोन्मुक्तैर्दृष्टःसूत्रैर्निबध्यते ॥ संकल्पकृतयाशूरसेनयापरिभूयते ॥ १११ ॥ तस्मात्किलेयंमनसानस्थितेनैवकुत्रचित् ॥ कल्पितेनमुधान्येनकृपणेननिहन्यते ॥ ११२ ॥ मूर्खलोकमयीसृष्टिर्मनएवासदुत्थितम् ॥ यःशक्तोनवशीकर्त्तुंनासौरामोपदिश्यते ॥ ११३ ॥ अभिजातास्वरूपैषाप्रज्ञाक्षोदेपुनक्षमा ॥ नोपदेशगिरांयोग्यापरिपूर्णैवसंस्थिता ॥ ११४ ॥ बिभेत्येषापिवीणायास्तंत्रीगुणतनुध्वनेः ॥ वंधोरपिसनिद्रस्यविभेतिवदनद्युतेः ॥ ११५ ॥ असतोपिजनादुच्चैर्गीताद्वीतापलायते ॥ स्वेनैवमनसाप्यज्ञाकिलैषाविवशीकृता ॥ ११६ ॥

ह्याकष्टमपिदुर्बुद्धेःसृष्टिर्मौर्ख्यंवशंगता ॥ असतैवयदेतेनजीवेनाप्युपपाद्यते ॥ १०८ ॥ मन्येमौर्ख्यमयीसृष्टिरियमत्यंतपेलवा ॥

मृगतृष्णावास्तरंगप्रवाहादिनापीयंसृष्टिर्विनाशयितुंशक्यतेकिंपुनःशास्त्रीयोपायेनेतिमन्येइत्येवंयोज्यम् ॥ १११ ॥ तस्मादतिपेलवत्वादियंमूर्खलोकमयीसृष्टिर्निहन्यतइतिपरेणसहान्वयः ॥ ११२ ॥ तस्मान्मनोवशीकरणाशक्तोनाध्यात्मशास्त्राधिकारीत्याह ॥ मनएवेति ॥ ११३ ॥ कुतोनोपदिश्यतेतत्राह ॥ अभिजातेति ॥ यतस्तस्यैषाप्रज्ञा अभितोजाताअभिजातावाह्यविषयेष्वेवनिरूढातावतैवपरिपूर्णैवसंस्थितानमनोनियहोद्युक्ता ॥ अस्वरूपानविद्यतेआंतरंस्वरूपंयस्यास्तथाविधाप्रत्यक्प्रवणानभवतीत्यर्थः ॥ अतएवक्षोदेसूक्ष्मार्थविचारेपुनक्षमा ॥ ११४ ॥ अतएवधैर्यहेत्वभावात्सर्वतोबिभेतीत्याह ॥ बिभेतीति ॥ ११५ ॥ असतोपिशत्रुजनात्पतारकादिभिरायातस्तेशत्रुजनदत्युच्चैर्गीताद्भीतासतीपलायते ॥ किंबहुनास्वेनस्वीयेनैवमनसापिविवशीकृताभीषिताकिमन्येनेत्यर्थः ॥ ११६ ॥

इदानींसादुष्प्रज्ञाविभेतुनामतथापिनतद्वशेनपुरुषस्यव्यामोहोयुक्तइतिप्राक्प्रस्तुतमेवोपसंहरति ॥ सुखेति ॥ यतःसाप्रज्ञाविषसंपृक्तमोदकास्वादसुखलवप्रायेणविषयसुखलवेन मरणोन्मुखीवविवशा द्विपेवप्रहरनाद्धृदयगतेनचेतसैवतप्तासंतापिता विधुरिताशून्याधिषणाविवेकबुद्धिर्यस्यास्तथाविधा सत्यंतुसुतरांनवेत्तितत्तथाभूतयापितयापुरुषोमुधैवप रिमोहितःस्वच्छचित्तात्स्वजनासंतप्ताद्विवेकबुद्धिमनःसत्यस्वरहस्यवेदिनःशत्रोःसकाशान्मोहोयुक्तोननुतद्विपरीतायादुष्प्रज्ञायाःसकाशादितिभावः ॥ ११७ ॥ ॥ इतिश्रीवा सिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेत्रयोदशःसर्गः ॥ १३ ॥ ॥ ५ ॥ ॥ उपेक्ष्यानुपदेशार्हान्ज्ञानायोनिपुदुःखिनः ॥ मनोनिर्माजनोपायस्तदर्हेभ्योत्रवर्ण्यते ॥ ॥ १ ॥ तत्रादौमनएवासद्दुःस्थितम् यःशक्तोनवशीकर्तुंनासौरामोपदिश्यतइतिप्राक्प्रस्तुतानुपदेशानधिकारिजनानेवोपेक्षणीयतयावर्णयति ॥ संसारेत्यादिना ॥ संसारसागर

सुखलवविवशाद्विपेवतप्ताद्धृदयगतेननिजेनचेतसैव॥विधुरितधिषणानवेत्तिसत्यंतदपिकथंपरिमोहितोमुधैव॥११७॥ ॥इ०वा० वा०दे० मोक्षोपायेपूपशमप्रकरणेमनोविनिवारणंनामत्रयोदशःसर्गः॥ १३॥ ॥५॥ ॥ श्रीवसिष्ठउवाच॥ ॥संसार सागरासारकल्लोलैरुह्यमानया॥ मतेर्मानदमूकत्वंययाजनतयाञ्जितम्॥१॥ आत्मलाभमयोदारकलाभिरिहसामया॥ विचारोक्तिभिरेताभिःशास्त्रेस्मिन्नोपदिश्यते॥२॥ नपश्यत्येवयोत्यर्थंतस्यकःखलुदुर्मतिः॥ विचित्रमंजरीचित्रंसंदर्शयतिकाननम्॥३॥ कःकुष्ठघर्घरघ्राणंनानामोदविचारणे॥ मूर्खमात्मोपदेशेनप्रमाणीकुरुतेऽमतिः॥४॥ विपर्यस्तेंद्रियंमत्तंमदिराघूर्णितेक्षणम्॥ धर्मनिर्णयसाक्षित्वेकःप्रमाणीकरोत्यधीः॥५॥ कःशवंवाश्मशानस्थंसमवायकथाशतम्॥ परिपृच्छतिसंदेहंकश्चमूर्खंप्रशास्तिच॥६॥ येनाशयबिलस्थोपिमूकोंधोपिनिर्जितः॥ मनोव्यालःसदुर्बुद्धिःकथंनामोपदिश्यते॥७॥ जितमेवमनोविद्धिवस्तुतोयन्नविद्यते॥ निकटात्सा त्विरास्तैवयाशिलानैवविद्यते॥८॥ मनोनविजितंरामयेनासदपिदुर्धिया॥ तेनाग्रस्तविषेणैवम्रियतेविषमूर्छया॥९॥

स्यअसारकल्लोलभूतैर्विषयसुखाभिलाषैरुह्यमानयानिरंतरंप्रवर्त्यमानयाययाजनतयामनोनिग्रहविवेकवैराग्यादिविषयेअपेक्षाभावाद्विदुषःप्राप्यापिप्रश्नप्रार्थनाद्यकरणा न्मतेर्मूकत्वमेवाश्रितंसाजनतामयाआत्मलाभोपायप्रचुरोत्कृष्टकलाशालिभिर्विचारोक्तिभिरिहजगत्यस्मिन्शास्त्रेनोपदिश्यतेइतिद्वयोरन्वयः ॥ १ ॥ २ ॥ योंऽधइत्येववक्तव्ये नित्यंनपश्यतीत्युक्तिश्चक्षुष्मानपियोदुरदृष्टद्वेषादिनानपश्यतितस्यापितद्दर्शनमनुचितमितिसूचनार्थम् ॥ ३ ॥ कुष्ठरोगविशीर्णघर्घरस्वननादिघ्राणंयस्यतंपुरुषंकोऽमतिर्निर्बुद्धिर्नानामोदानांविचारणेपरीक्षणेप्रमाणीकुरुतेआमोदतत्त्वनिर्णेतृत्वेनाश्रयतीत्यर्थः ॥ ४ ॥ ५ ॥ समवायाजनसमूहास्तत्रत्यंकथाशतम् ॥ ६ ॥ आशेतेअस्मिन्नित्याशयोहृदयंतद्बिलस्थः ॥ ७ ॥ तर्हिकिंविवेकिनोपिमनोजयोऽशक्योनेत्याह ॥ जितमेवेति ॥ निकटात्स्वसन्निधेः ॥ अस्तादूरंनिरस्तैव ॥ ८ ॥ अपस्तविषेणेतिसर्पदंशाद्यभावस्याप्युपलक्षणम् ॥ ९ ॥

---

१ नित्यमितिपाठटीकानुरोधाज्ज्ञाति

वस्तुनोयन्नविद्यतेइत्येतदुपपादयति ॥ ज्ञइति ॥ किमर्थंप्रयार्थंमनउतस्पंदार्थंमुतज्ञानकर्मेंद्रियप्रयोजनसिद्धये ॥ तच्चयमपिप्राणप्रेरितैरिंद्रियैरुपनीतानामर्थानांसाक्षिणैवप्रथा संभवान्नमनसःकृत्यमस्तीतिभावः ॥ १० ॥ ननुसर्वशक्तिभिर्निबद्धंमनःकिंनस्यादितिचेन्नेयमुक्तिर्विवेकेघटते वीणामधुरध्वनिवत्समाजेनापिसमुदितव्यवहारसिद्धेरित्याशये नाह ॥ प्राणानामिति ॥ तथाचयथातैर्थिकसमाजस्नानदानगानस्तवनादिव्यवहारोनसर्वशक्तिमदेकप्रयुक्तस्तद्वदयमपीत्यर्थः ॥ ११ ॥ यदिकश्चिद्ब्रूयात्संघातस्यसंहतत्वपरार्थ त्वनियमादन्यापिकश्चिदपेक्षितइतितर्हितस्यापिसंघातस्यजगत्संघातांतःपातात्सर्वेषांसर्वाव्यवहारशक्तयःसर्वनिर्मातुरीश्वरस्यात्मनएवांशवइतितादर्थ्यमेवास्यापिसिद्धोन्याचेतन मनोर्थत्वमितिनप्रतिशरीरभिन्नाचेतनमनःसिद्धिरित्याशयेनाह ॥ सर्वाइति ॥ वाच्यतामनआदिशब्दवाच्यता ॥ १२ ॥ तर्हितस्तुजीवश्चेतनोस्याधिष्ठातासचनचित्ताख्यमनः प्रपहेणविनाइंद्रियाश्चानधिष्ठातुंशक्नोतीतिचित्तमपिसिद्धमेवेतिचेत्तत्राह ॥ किनामेति ॥ जीवइतिचित्तमेवचेतियच्चयोक्तंतदुभयंकिनाम ॥ किमात्मातिरिक्तंचेतनांतरमुता

ज्ञःपश्यतिसदैवात्मास्पंदनेप्राणशक्तयः॥इंद्रियाणिस्वधर्मेषुमनोरामकिमुच्यते॥१०॥प्राणानांस्पंदनीशक्तिर्ज्ञानशक्तिःपरात्मनः॥इंद्रियाणांनिजाशक्तिरेकःकोत्रनिबध्यते॥११॥सर्वास्तदंशवस्तस्यसर्वशक्तेःकिलात्मनः॥पृथक्तावाच्यताचेयंकुतोनामतवोत्थिता॥१२॥ किंनामजीवइत्युक्तंयेनेहांधीकृतंजगत्॥ चित्तंचैवासदेवत्वंविद्धिकातस्यशक्तता॥१३॥मनोनिर्दग्धदृष्टीनांदृष्ट्वादुःखपरंपराम्॥मतिर्मेकरुणाक्रांतारामसुग्धेवतप्यते ॥ १४ ॥ कःकिलात्रकुतःखेदोयन्मूर्खःपरितप्यते॥दुःखायैवहिजायंतेकरभाःप्राकृतास्तथा॥ १५॥ विनाशायैवजायंतेजडादेहेष्ववुद्बुदयः॥अनारतोदयाःपापाबुद्बुदाजलधेरिव ॥ १६॥ कियंतःपश्यपशवःप्रत्यहंप्रतिमंडलम्॥सूनावद्भिर्निहन्यंतेकैवात्रपरिदेवना॥ १७॥

चेतनम ॥ नाद्यः ॥ नान्योतोस्तिद्रष्टानान्योतोस्तिश्रोतेतिश्रुत्याब्रह्मातिरिक्तचेतनांतरस्यप्रतिषेधात् ॥ द्वितीयेत्वाह ॥ कातस्यशक्ततेति ॥ अचेतनस्यचेतनार्थत्वावश्यकतयाइं द्रियेभ्योविशेषाभावात्तदधिष्ठानशक्त्यभावात् ॥ अतस्त्वंतदुभयमसदेवविद्धीत्यर्थः ॥ १३ ॥ स्वकल्पितेनमनसानिर्दग्धापरमार्थदृष्टिर्येषाम् ॥ तद्दुःखनिवारणोपायस्यान्वेषणे वर्षकोटिभिरप्यलाभान्मुग्धाव्यामोहमिवापन्ना ॥ १४ ॥ सनिमित्तकंहिदुःखंनिमित्तनिवारणेनवारयितुंशक्यंमूर्खाणांतुनिर्निमित्तमेवदुःखमतोदुर्वारमेवेत्याशयेनाह ॥ कः किलेति ॥ करभागर्दभाःप्रकृतामूर्खाश्चअतःशोच्याएवेत्यर्थः ॥ अथवानैतेशोच्याः ईदृशांमूढयोनीनामसंख्यातानांदर्शनेनतद्वदेवोपेक्षार्हत्वादित्याशयेनइयमुक्तिः ॥ १५ ॥ उक्तार्थविवरणायनानायोनिभेददुःखिनउदाहर्तुंपीठिकांरचयति ॥ विनाशायैवेति ॥ पापाःयतःपापकारिणइत्यर्थः ॥ १६ ॥ आज्ञानांयोनिभेदेषुदुःखवैचित्र्याणिवैराग्यदा र्ढ्यायोदाहरति ॥ कियंतइत्यादिना ॥ प्रतिमंडलंप्रतिदेशम् ॥ सूनापशुहिंसास्थानंतद्वद्भिस्तदधिष्ठितैःपुरुषैः ॥ १७ ॥

---

१ सर्वास्ताअंशवइत्यपिपाठः

क्षमाजातेषुभूम्युद्भवजंतुषुमध्येअनिलोदंशानांमशकानांचार्बुदान्यसंख्यातानिहंति ॥ १८ ॥ दिशंप्रतिप्रतिदिशम् ॥ वीप्सायांद्विर्वचनस्याव्ययीभावारंभसामर्थ्याद्विकल्पितत्वेप्यन्यतरस्यावश्यकत्वादुभयाभावश्छांदसः ॥ १९ ॥ २० ॥ इदानींदुर्बलानांप्रबलैःपीडनंपरंपरयोपपादयति ॥ लिक्षेत्यादिना ॥ अणुकणवत्क्षामांलिक्षांवस्त्रयूकांमक्षिकाक्षुधाबुभुक्षयाखादति ॥ कोशकारऊर्णनाभिःकीटविशेषोवा ॥ दंशोवनमक्षिका ॥ २१ ॥ दर्दुरोभेकः ॥ खगोगरुडादिः ॥ बभ्रुर्नकुलश्वैनंसर्पम् ॥ २२ ॥ ऋक्षोभल्लूकः ॥ वरिच्छइतिपाठेश्वापदविशेषः ॥ २३ ॥ मत्तस्यगर्जतोमेघस्यविलंघनेस्वोपरिभागेगमनेप्रसक्तेतदसहनेनोत्पत्त्यशिलातलेनिपातान्नाशमायातीतिप्रसिद्धमित्यर्थः ॥ २४ ॥ वज्रेणनिष्पिष्टाःखंडिताः ॥ पविर्वज्रोपिशक्रस्यवशगःशक्रेणबलाद्वशीकृतइतियावत् ॥ २५ ॥ क्रियतेवशगइत्यनुवर्त्तते ॥ जंतुतांमत्स्यकूर्मवराहादितिर्यग्जंत्ववतारान् ॥ अने

अर्बुदान्यनिलोहंतिक्षमाजातेषुचान्वहम् ॥ दंशानांमशकानांचकैवात्रपरिदेवना ॥ १८ ॥ दिशंप्रतिगिरींद्रेषुपुलिंदाघ्नवनेवने ॥ निघ्नंतिमृगलक्षाणिकैवात्रपरिदेवना ॥ १९ ॥ जलेजलचरव्यूहान्सूक्ष्मान्स्थूलोनिकृंतति ॥ ग्रासार्थंनिर्दयोमत्स्यःकैवात्रपरिदेवना ॥ २० ॥ लिक्षामणुकणक्षामांक्षुधाखादतिमक्षिका ॥ तांकोशकारःक्षुधितोदंशस्तमपिचंचलम् ॥ २१ ॥ तंदंशंदर्दुरोभुंक्तेव्यालस्तमपिदर्दुरम् ॥ सर्पमुग्रंखगोहंतिबभ्रुश्चैनंनिकृंतति ॥ २२ ॥ बभ्रुंहिनस्तिमार्जारोमार्जारंश्वानिकृंतति ॥ ऋक्षःकौलेयकंहंतिऋक्षंव्याघ्रोनिकृंतति ॥ २३ ॥ सिंहोभिभवतिव्याघ्रंशरभःसिंहमत्तिच ॥ शरभोनाशमायातिमत्तमेघविलंघने ॥ २४ ॥ मेघावातैर्विधूयंतेवायवोगिरिभिर्जिताः ॥ गिरयोवज्रनिष्पिष्टाःशक्रस्यवशगःपविः ॥ २५ ॥ विष्णुनाक्रियतेशक्रोविष्णुर्गच्छतिजंतुताम् ॥ सुखदुःखदशामेतांजरामरणपालिताम् ॥ २६ ॥ जंतवोपिमहाकायाअपिविद्यायुधान्विताः ॥ लिक्षाभिरंगलग्नाभिरुपजीव्यंतएवहि ॥ २७ ॥ अजस्रमेवमालूनविशीर्णभूतजंगलम् ॥ परस्परमलंमोहादद्यतेरक्ष्यतेपिच ॥ २८ ॥ अनारतंविनश्यंतिविविधाभूतजातयः ॥ अनारतंचजायंतेलिक्षायूकापिपीलिकाः ॥ २९ ॥

नजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीतिसंकल्प्यजीवात्मनाविष्णोरेवप्रवेशात्जीवभावेनसर्वजंतुशरीरित्वात्सर्वजंत्वात्मकतांवा ॥ अतएवविशिनष्टि ॥ सुखदुःखेति ॥ जरामरणाभ्यांस्वभोज्यमन्नमिवयावदायुःपालिताम् ॥ २६ ॥ लिक्षाग्रहणंमशकमत्कुणमक्षिकाक्रव्यादाद्युपलक्षणम् ॥ उपजीव्यंतेभक्ष्यंते ॥ २७ ॥ आधिभौतिकैराल्लूनंआध्यात्मिकैराधिदैविकैश्चदुःखैर्विशीर्णंभूतजंगलंप्राणिवृंदम् ॥ अद्यतेभक्ष्यतेउत्तरकालेभक्षणायेदानींरक्ष्यते ॥ अपिशब्दादर्धंभक्षयित्वार्द्धंरक्ष्यतेच ॥ २८ ॥ अनारतंसंततम् ॥ यूकाःशिरोरुहजाः ॥ लिक्षायूकापिपीलिकाइतिक्षुद्रजंतवइत्येकवद्भावाकरणंछांदसम् ॥ नचसर्वोद्वंद्वोविभाषैकवद्भवतीतितिष्यपुनर्वस्वोर्नक्षत्रद्वंद्वेबहुवचनस्यद्विवचनंनित्यमित्यत्रबहुवचनग्रहणेनज्ञापनात्सिद्धमितियुक्तम् ॥ ज्ञापकस्यसजातीयापेक्षत्वेनतस्याप्राप्तविभाषात्वादन्यथाप्राणितूर्यांगद्वंद्वेपिविभाषापत्तेरिति ॥ २९ ॥

बाधकपरंपरांसमाप्यप्रकृतमनुवर्त्तते ॥ जलकोशेष्विति ॥ जलकोशेषुजलाशयेषु ॥ इभाइभाकाराजलजंतुविशेषाः ॥ ३० ॥ आकाशविहगाःक्षुद्रपक्षिविशेषास्तेहिसदा भ्रमंतोंतरिक्षएवप्रसूयंतेप्रसूतंचांडमधःपातात्प्रागेवभित्त्वानिर्गताःशावकाःसद्यःसंजातपक्षाअंतरिक्षमेवोत्पत्त्यभ्रमंतीतिलोकप्रवादप्रसिद्धम् ॥ आदिपदात्पिशाचभूतवेतालाद योग्राह्याः ॥३१॥ प्राण्यंगेषुकृमियूकादयः ॥ ककुभंप्रतिप्रतिदिशं ॥ घुणाःकाष्ठकृमयः ॥ जघनकाभ्रमरिकाकाराःकाष्ठकीटाः ॥ आदिपदात्पत्रफलपुष्पाद्युद्भवाःकृमिमशक भेदागृह्यंते ॥ ३२ ॥ ३३ ॥ उपसंहृत्यप्रस्तुतेयोजयति ॥ एवमिति ॥ नंदंतुप्ररुदंतुवेतिद्वेषाभावात्परपीडाभिनंदनमिवस्नेहाभावाद्रोदनमप्यनुचितमित्युपेक्षैवयुक्तेतिभावः ॥ ३४ ॥ उक्तमेवस्पष्टमाह ॥ अनारतेति ॥ ३५ ॥ भूतानांपंक्तयःसमूहाः ॥ एवमेवतथैवेत्यर्थः ॥ ३६ ॥ यःदयावान्सन्कुबुद्धीनांदुःखमार्जनेप्रवृत्तःसःनभःकृत्स्नमाकाशं

जलकोशेषुजायंतेमत्स्येभमकरादयः॥ भूमावंतःप्रजायंतेकीटौघावृश्चिकादयः॥ ३० ॥ अंतरिक्षेपिजायंतेआकाशविहगादयः॥ वनवीथिषुजायंतेसिंहव्याघ्रमृगादयः॥३१॥ प्राण्यंगेष्वपिजायंतेविचित्राःककुभंप्रति॥ स्थावरेष्वपिजायंतेघुणाजघनकादयः॥३२॥ अजशिलांतरेषुजायंतेकीटभेकघुणादयः ॥ विष्ठायामपिजायंतेनानाकीटगणास्तथा॥ ३३ ॥ एवमेतेष्वसंख्येषुजन्मस्वपचयेषुच॥ अजस्रंकरुणावंतोनंदंतुप्ररुदंतुवा॥ ३४॥ अनारतमृतावस्मिन्ननारतसमुद्भवे॥ संसारसंभ्रमेयुक्तानतुष्टिर्नचदुःखिता॥ ३५॥ पंक्तयस्त्वेवमेवेमावृक्षपर्णगणैस्समाः॥ उत्पत्त्योत्पत्त्यलीयंतेभूतानांभूरिसंभवाः॥ ३६ ॥ यःप्रवृत्तःकुबुद्धीनांदयावान्दुःखमार्जने ॥ स्वगतच्छत्रनिर्मृष्टसूर्यांशुखिद्यतेनभः॥ ३७॥ नतिर्यक्समधर्माणउपदेश्यानराभुवि॥ कथार्थकथनेनार्थःकःस्थाणुनिकटेवने॥३८॥ किंकिलस्फारमनसांपशूनांचविशेषणम्॥ रुध्यंतेपशवोरज्ज्वामनसामूढचेतसः॥३९॥ स्वचित्तपंकमग्नानांस्वनाशारब्धकर्मणाम्॥ मूर्खाणामापदंदृष्ट्वाप्ररुदंत्युपलाअपि ॥ ४० ॥ अनिर्जितात्मचित्तानांसमंताद्दुःखदादशाः ॥ तन्मार्जनंकृतप्रज्ञोनातःसंप्रतिपद्यते॥ ४१ ॥ विनिर्जितात्मचित्तानांदुःखानिरघुनंदन॥ सुविचार्याणितेनात्रज्ञातज्ञेयःप्रवर्त्ततााम्॥४२॥मनोनास्तिमहाबाहोमामुधोपप्रकल्पय॥ अनेनकल्पितेनत्वंवेतालेनेवहन्यसे॥४३॥ यावद्विस्मृतवानात्मतत्त्वंमूढोभवद्भवान्॥ तावत्तवमनोव्यालोवभूवाभ्युदितस्ततः॥४४॥

स्वगतेनच्छत्रेणनिर्मृष्टसूर्यांशुनिवारितातपंकर्त्तुंखिद्यतेश्राम्यतीत्यर्थः ॥ खिद्यतेनसइतिपाठेतुकिंनखिद्यतेइतिकाक्वायोज्यम् ॥ ३७ ॥ ३८ ॥ स्फारमनसांविषयविस्तारितमनसाम् ॥ विशेषणंविशेषः ॥ ३९ ॥ उपलाःपाषाणाअपिप्ररुदंतिकिंपुनःसचेतनाइत्यतिशयोक्तिः ॥ ४० ॥ समंतात्सर्वदेशेषुसर्वदाचदुःखदादशाःपूर्णाःसंतीतिशेषः ॥ अतःकृत्स्नभूमिपांसुसंमार्जनवदशक्यत्वान्नसंप्रतिपद्यतइत्यर्थः ॥ ४१ ॥ सुविचार्याणिरत्नयोरभेदात्सुविचाल्यानिसुखनिरस्यानीत्यर्थः ॥ तेनहेतुना ॥ अत्रतन्मार्जने ॥ ज्ञातज्ञेयस्त्ववित् ॥ ४२ ॥ प्रासंगिकीमधिकारिचिंतांसमाप्यप्रस्तुतमेवानुवर्त्तमानआह ॥ मनइति ॥ ४३ ॥ यदिनास्तितर्हिप्रतियोग्यप्रसिद्धौनिषेधानवकाशमाशंक्याह ॥ यावदिति ॥ तथाचप्राक्तनीमज्ञदशामादायप्रसिद्धिरुपपन्नेत्यर्थः ॥ ४४ ॥

यथाभूतंपरमार्थात्मरूपम ॥ ४५ ॥ बंधमोक्षरहस्यमाह ॥ दृश्यमिति ॥ ४६ ॥ किंतर्हिदृश्यतत्त्वंतदाह ॥ अयमिति ॥ त्रिगुणात्मकमायामयइत्यर्थः ॥ ४७ ॥ अहमित्यांत
रंदृश्यंइदमितिबाह्यंचनास्त्येवेतिध्यायन् ॥ अचलःपर्वतइवाचलःस्थिरः ॥ हृदयेश्वरआत्मा ॥ ४८ ॥ अहमिदमितिद्वित्वमयींकलनांअलंसर्वात्मनात्यक्त्वेत्यर्थः ॥ ४९ ॥ न
नुतदुभयकलनात्यागेकिमवशिष्यतेयत्रस्थितिरुपदिश्यतेतदाह ॥ आत्मनइति ॥ द्रष्टृदृश्यदशयोरंतरेअंतरालेइत्येतावत्युक्तेवृत्तिज्ञानस्याप्यांतरालिकत्वाद्ग्रहणंस्यात्तन्माभू
दित्यात्मनोजगतश्चांतरिति ॥ तथाचत्रिपुट्यनुस्यूतसन्मात्ररूपेदर्शनाख्येत्रिपुटीसाक्षिस्वभावेस्थितंस्वमात्मानंभावयन्भवआस्व ॥ ५० ॥ चाक्षुषत्रिपुटीवद्रासनादित्रिपुटी
ष्वपिसएवतत्साक्षीपरिचेयइत्याशयेनाह ॥ स्वाद्येति ॥ पूर्ववद्योजना ॥ ५१ ॥ अनुमित्याद्यनुभवांतरेष्वप्येवंबोध्यमित्याशयेनाह ॥ रामेति ॥ निरालंबंआलंबोविषयभूत
त्रिपुट्यंशस्तद्व्यतिरिक्तंमध्यंतदांतरंहृदयमध्येअवलंब्यस्थिरोभवेत्यर्थः ॥ ५२ ॥ भवस्यभावनासंस्कारवशाद्दर्शनंस्वमदशेतियावत् ॥भावदशाजाग्रत ॥ अभावदशासुषुप्तिः ॥

इदानींभवताज्ञातंयथाभूतमरिंदम॥ संकल्पाद्दृढतेचित्तंतदवाशुपरित्यज॥४५॥ दृश्यमाश्रयसीदंचेत्तत्सचित्तोसिबंधवान्॥ दृश्यंसं
त्यजसीदंचेत्तदचित्तोसिमोक्षवान्॥४६॥ अयंगुणसमाहारोबंधायैवसमाश्रितः॥ संत्यक्तोभवमोक्षाययथेच्छसितथाकुरु॥४७॥
नाहंनेदमितिध्यायंस्तिष्ठत्वमचलाचलः॥ अनंताकाशसंकाशहृदयोहृदयेश्वरः॥४८॥ आत्मनोजगतश्चास्यत्वमंगकलनामलम्॥
रामद्वित्वमयींत्यक्त्वाशेपस्थःसुस्थिरोभव॥४९॥ आत्मनोजगतश्चांतर्द्रष्टृदृश्यदशांतरे॥ दर्शनाख्येस्वमात्मानंसर्वदाभावयन्भव
॥५०॥ स्वाद्यस्वादकसंत्यक्तंस्वाद्यस्वादकमध्यगम्॥ स्वादनंकेवलंध्यायन्नित्यमात्ममयोभव॥५१॥ रामानुभवनीयस्यतथानुभ
वितुःस्वयम्॥ अवलंब्यनिरालंबंमध्यंमध्येस्थिरोभव॥५२॥ भवभावनयाहीनंभावाभावदशोज्झितम्॥ भावयन्नेवमात्मानमात्म
संस्थःस्वयंभव॥५३॥ आत्मसत्तांत्यजन्नेतांचेत्यंभावयसिस्वयम्॥ यदारामतदायासिचित्ततामतिदुःखदाम्॥५४॥ चित्ततांशृंख
लामेतांस्वरूपज्ञानयुक्तितः॥ विलाच्चित्तान्महाबाहोस्वात्मसिंहंविमोचय॥५५॥ परमात्मदशांत्यक्त्वाचेत्यंपरिपतन्नलम्॥ यदागच्छ
सिसंकल्पंचेत्यंसंपश्यसेतदा॥५६॥ आत्मनोव्यतिरिक्तंसच्चित्तमित्यंगसंविदा॥ मनःसंपद्यतेदुःखिक्षीयतेत्यक्तयातया॥५७॥ आ
त्मैवेदंजगत्सर्वमित्यंतःसंविदोदये॥ क्वचेत्ताक्वचवाचित्तंकिंचेत्यंचेतनंचकिम्॥५८॥

भावाभावदशोज्झितमितिपाठेतदुभयदर्शनोज्झितमित्य
र्थः ॥ ५३ ॥ एतांशुद्धचिन्मात्रस्वभावामात्मसत्तांप्रमादात्त्यजन्यदाचेत्यंतद्व्यतिरिक्तंभावयसितदाचित्ततांयासीत्यन्वयः ॥५४॥ स्वरूपज्ञानयुक्तितोभंक्त्वेतिशेषः ॥ चित्ताच्चि
त्तलक्षणाद्बिलात्पंजरात् ॥ बलादितिपाठेतुमननादिकृतज्ञानदार्ढ्यबलात् ॥ ५५ ॥ संपश्यसेपश्यसि ॥ पदव्यत्ययश्छांदसः ॥ ५६ ॥ कथंचेत्यपरिपतनंतेनचकथंसंकल्पगमनं
कथंचातत्क्षयस्तदाह ॥ आत्मनइति ॥ हेअंगयदाचित्तंपूर्वानुभवजनितदृश्यसंस्कारोद्बोधेसतिचिदेवाकिंचित्स्थौल्यमिवापन्नंचित्तमितिसंविदाआत्मनोव्यतिरिक्तंसत्सिद्धंभव
तितदैवपुनःपुनर्मननाद्दृढीभूतंसंकल्पसमर्थंसन्मनःसंपद्यतेतदेवदुःखि ॥ तयास्वव्यतिरिक्तसत्तासंविदात्यक्तयातुक्षीयते ॥५७॥ एतदेवस्पष्टमाह ॥ आत्मैवेदमिति ॥ संविदेवसंवि
दा ॥ भागुरिमतेनहलंतात्टाप् ॥ तस्याउदयेसतिचेत्ताचेतिताउपहितः चित्तमुपाधिः चेत्यंतद्वृत्तिव्याप्यम् चेतनंवृत्तिरितिचतुष्कमपिकिंचिदवशिष्यतइत्यर्थः ॥ ५८ ॥

इतिएवमनुभूयमानदेहेंद्रियादिशालीजींवोस्मि ॥ ५९ ॥ आत्माब्रह्मैव नजींवाख्याब्रह्मेतराःसत्ताःपरमार्थसत्याःसंति ॥ ६० ॥ सर्वस्यजगतोब्रह्मभावेतदंतर्गतचित्तस्याप्यसत्ताअर्थात्संपन्नाभवत्येवेत्याह ॥ आत्मैवेदमिति ॥ ६१ ॥ मनोनाशोपायमुक्तमुपसंहरति ॥ एवमिति ॥ ६२ ॥ अथतत्फलान्याह ॥ मनःसर्पइत्यादिना ॥ योगात्समाधेःप्रतीचोब्रह्मैक्यलक्षणमिलनाद्वा ॥ यदाह्येवैषएतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेनिलयनेऽभयंप्रतिष्ठांविदते अथसोऽभयंगतोभवति ॥ आनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चनेत्यादिश्रुतेरितिभावः ॥ ६३ ॥ ६४ ॥ आधिग्रहणंसर्वदुःखोपलक्षणम् ॥ उद्वेगोदुःखासहिष्णुतयाव्याकुलता ॥ ६५ ॥ आत्मलाभेनावाप्तसर्वकामत्वान्नीरागोऽतएवनिरुपार्जनोबाह्यसुखसाधनोपार्जनशून्यः ॥ एवंचमुमुक्षापिनपरिशिष्टेतिनतदर्थमपिप्रवृत्तिप्रसक्तिरित्याशयेनाह ॥ उपशांतपरमैषणइति ॥६६॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउप०

अहमात्मेतिजीवोस्मीत्येतावच्चित्तकंविदुः ॥ अनेनेत्थमनाद्यंतंदुःखंराघवतन्यते ॥ ५९ ॥ अहमात्मानजीवाख्याःसत्ताःसंतीतराःक्वचित् ॥ इत्येवचित्तोपशमःपरमंसुखमुच्यते ॥ ६० ॥ आत्मैवेदंजगदितिजातेराघवनिश्चये ॥ असत्ताचेतसोजाताभवत्येवनसंशयः ॥ ६१ ॥ एवंसत्यावबोधेनस्वात्मैवेदमितिस्थितिः ॥ मनःसुगलितंविद्धिसूर्यभासातमोयथा ॥ ६२ ॥ मनःसर्पःशरीरस्थोयावत्तावन्महद्भयम् ॥ तस्मिन्नुत्सारितेयोगाद्भयस्यावसरःकुतः ॥ ६३ ॥ भ्रांतिमात्रोत्थितश्चित्तवेतालोतिवलोनघ ॥ सम्यग्ज्ञानेनमंत्रेणप्रसभंविनिपात्यताम् ॥ ६४ ॥ देहगेहाद्गतेचित्तयक्षेवलवतांवरे ॥ निराधिर्विगतोद्वेगस्तिष्ठनास्तिभयंतव ॥ ६५ ॥ नीरागएवनिरुपार्जनएवचास्मीत्येतावतैवगलितातवचित्तसत्ता ॥ निर्दुःखमुत्तमपदंपरमंगतोसितिष्ठोपशांतपरमैषणएवमंतः ॥ ६६ ॥ ॥ इ०वा०वा०दे०मो० उपशमप्रकरणेस्वचित्तनिरूपणंनामचतुर्दशःसर्गः ॥ १४ ॥ ॥ ७॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एतामनुसरन्रामचित्तसत्तामपावनीम् ॥ संसारवीजकणिकांजीववंधनवागुराम् ॥ १ ॥ आत्मात्यक्तात्मरूपाभोमलिनामापतद्दशम् ॥ चित्तंसमनुसंधत्तेधत्तेचकलनामलम् ॥ २ ॥ वर्द्धमानमहामोहदायिनीभयकारिणी ॥ तृष्णाविषलतारूपामूर्छामेवप्रयच्छति ॥ ३ ॥ यदायदोदेतितदामहामोहप्रदायिनी ॥ तृष्णाकृष्णानिशेवेयमनंतात्मविकारिणी ॥ ४ ॥

चतुर्दशःसर्गः ॥ १४ ॥ ॥ आत्मामनस्त्वमापन्नोवद्ध्यतेसंसृतौयया ॥ सातृष्णानर्थवीजानांसुविचित्रोपवर्ण्यते ॥ १॥ चित्तनाशनेपरमपुरुषार्थप्राप्तिरुक्ताइदानींचित्तानुसरणेतृष्णाभिवृद्ध्याअनर्थपरंपराप्राप्तिरितिदर्शयितुंभूमिकांरचयति ॥ एतामित्यादिना ॥ आत्माएतांचित्तसत्तामनुसरन्संस्त्यक्तस्वीयब्रह्मात्मरूपाभोभूत्वामलिनामविद्यापिहिताभिंद्रियवृत्त्यधीनाभिव्यक्तिकांदृशंज्ञानमापतच्चित्तमेवानुरुध्यचित्तकल्पितदेहादिसंघातमात्रोहमितिसंधत्तेचित्तोपनीतनानाविषयकलनाप्रयुक्तंरागद्वेषवासनामलंचधत्तेइतिद्वयोरन्वयः ॥ १ ॥ २ ॥ धत्तांनामांकिततस्तत्राह ॥ वर्द्धमानेति ॥ मरणमूर्छाभ्रांतिसहस्रहेतुत्वाद्विषलतारूपातृष्णाअस्मैकलनामलधारिणेआत्मनेमूर्छामेवप्रयच्छतिनसुखलेशमपीत्यर्थः ॥ ३ ॥ वर्द्धमानमहामोहदायिनीत्येतद्विवृणोति ॥ यदेति ॥ कृष्णानिशात्रापिकीतमिस्रासापिहिअनंतात्मन्याकाशेमेघविस्फूर्जितवृष्ट्याद्यनेकविकारिणी ॥ ४ ॥

भयकारिणीत्येतदपिविवृणोति॥ कल्पानलेति ॥ नकेचनधीराइतिशेषः ॥ ५ ॥ कृपाणिकाअसिः ॥ तीक्ष्णेत्याद्यसित्वोपपादनम् ॥ निजमंगंसदावहतिकृंततीतियावत् ॥ असुखःउदर्कःफलकालोयस्याः ॥ ६ ॥ विषलतेत्येतद्विशदयति ॥ यानीति ॥ दुर्जराणिजरयितुमशक्यानिदुर्निवाराणीतियावत ॥ ७ ॥ वनशुनीवृकी ॥ ८ ॥ क्षणमुल्लासंवृद्धिम् ॥ विशेषणान्युभयत्रयोज्यानि ॥ जडाशीतलामलिनाच ॥ विदलयतिशिलाकंटकारण्यादिप्रदेशंनीत्वाखंडयति ॥ प्रावृट्तरंगिणीवर्षाभिवृद्धनदी ॥ ९ ॥ मूर्छामेवप्रयच्छतीत्येतद्विवृणोति ॥ दृष्टदैन्यइति ॥ १० ॥ तृष्णाक्षयेसर्वदुःखहानिःसर्वपुण्योदयश्चसिद्ध्यतीत्याह ॥ नस्थितेत्यादिना ॥ ११ ॥ १२ ॥ १३ ॥ अंधानांविवेकदृष्टिहीनानांनृणामा

कल्पानलशिखादाहंसोढुंशक्ताहरादयः॥ तृष्णानलशिखादाहंसोढुंशक्तानकेचन ॥५॥ तीक्ष्णाकृष्णासुदीर्घाचवहत्यंगंसदानिजम्॥ शीतलैवासुखोदर्काघोरातृष्णाकृपाणिका॥६॥ यान्येतानिदुरंतानिदुर्जराण्युन्नतानिच॥ तृष्णावल्ल्याःफलानीहतानिदुःखानिराघव॥७॥ अदृश्यैवात्तिमांसास्थिरुधिरादिशरीरकात्॥ मनोबिलविलीनैषातृष्णावनशुनीनृणाम्॥८॥ क्षणमुल्लासमायातिक्षणमायातिशून्यताम्॥ जडाविदलयत्याशुतृष्णाप्रावृट्तरंगिणी॥९॥ दृष्टदैन्योहतस्वांतोहतौजायातिनीचताम्॥ मुह्यतेरौतिपतततितृष्णयाभिहतोजनः॥१०॥ नास्थिताकोटरेयस्यतृष्णाकृष्णभुजंगमी॥ तस्यप्राणानिलाःस्वस्थाःपुंसोहृदयरंध्रगाः॥११॥ नूनमस्तंगतोयत्रतृष्णाकृष्णनिशाक्रमः॥ पुण्यानितत्रवर्द्धंतेशुक्लपक्षइवेंदवः॥१२॥ योनतृष्णाघुणावल्ल्याक्षतःपुरुषपादपः॥ पुण्यप्रसूनैःससदादशांयातिविकासिनीम्॥१३॥ अनंताकुलकल्लोलाविवर्त्तावर्त्तसंकुला॥ प्रवहत्याशयारण्येतृष्णांधानांनदीनृणाम्॥१४॥ तृष्णयेमेजनाःसर्वेसूत्रयंत्रपतत्रिवत्॥ भ्राम्यंतेप्रविशीर्यंतेसंक्लिश्यंतेचभूरिशः॥१५॥ मूलान्यपिसुसूक्ष्माणिकठिनाशयकर्कशा॥ तृष्णापरशुधारेववल्गंतीविनिकृंतति॥१६॥ निपतत्यवटेमूढस्तृष्णामनुसरञ्जनः॥ नीलामनुपतञ्छुभ्रतृणशाखांयथैणकः॥१७॥ नोन्मत्तापिजराचक्षुस्तथाजरयतिक्षणात्॥ यथाजरयतिक्ष्मामातृष्णाहृदयरूपिका॥१८॥ तृष्णयाशयकौशिक्याह्यमंगलभूतया॥ रुद्धयाभगवानेषविष्णुर्वामनतांगतः॥१९॥

शयश्चित्तंतल्लक्षणेऽरण्येअनंतव्याकुलतालक्षणकल्लोलवतीभ्रांतिलक्षणैरावर्तैश्चसंकुलातृष्णानदीनूनंवहतिप्रवहति ॥१४॥ सूत्रेणयंत्र्यतेबध्यतेइतिसूत्रयंत्रःपतत्रीपक्षीतद्वत् ॥ प्रथमंवित्तस्यार्जनायभ्राम्यंतेततोरक्षणव्ययक्षयचिंताशोकैःपक्षलुंचनैरिवप्रविशीर्यंतेअंतेचसंक्लिश्यंतमार्यंते ॥ १५ ॥ धर्मज्ञानमूलानिदयाविवेकादीनिसुसूक्ष्माणिईषदंकुरितान्यपिकठिनेननिर्दयेनाशयेनकर्कशा ॥ वल्गंतीतत्कालंनिपतंती ॥ १६ ॥ अवटेनरकांधकूपे ॥ नीलांहरिताम ॥ श्वभ्रस्यकूपस्यमुखेरूढस्यतृणस्यशाखामनुपतन्एणकोहरिणइव ॥ १७ ॥ उन्मत्ताप्ररूढतमापिजराचक्षुर्जरयत्यंधयति ॥ हृदयस्थारूपिकापिशाची ॥ १८ ॥ अमंगलभूतयाहृदिरुद्धयाकृतनीडया ॥ १९ ॥

दैविक्यादेवेनेश्वरेणप्रयुक्तयादेवभोग्यसुखलवविषययावातृणयारज्ज्वेवबद्धइतिशेषः ॥ २० ॥ जगतीपदेनजगतीस्थाःसर्वप्राणिनोलक्ष्यंते ॥ २१ ॥ सर्वसंसारस्थितिस्तृणाव शादेवेत्याशयेनाह ॥ तृणयेति ॥ २२ ॥ वरत्राचर्ममयीरज्जुः ॥ २३ ॥ संकल्पवर्जनमात्रेणकथंतृष्णात्यागसिद्धिस्तत्राह ॥ मनइति ॥ अकल्पनंसंकल्परहितंमनोनास्ति ॥ मनसोऽभावेकुतस्तृष्णाप्रसक्तिरितिभावः ॥ २४ ॥ त्वंअयंदेहोहमितिदुराशांसर्वदुराशानिमित्तमभिमानंमासंकल्पय ॥ २५ ॥ २६ ॥ अनहंभावलक्षणयाशलाकयाकर्त्तर्याअहं

कयाचिद्देवदैविक्याद्धदिग्रथितयानया ॥ तृष्णयाभ्राम्यतेव्योम्निरज्ज्वेवार्कोन्वहंकिल ॥ २० ॥ सर्वदुःखमयाकारांजगतीजीवनच्छिदम् ॥ तृष्णांपरिहरेत्क्रूरामुरगीमिवदूरगः ॥ २१ ॥ तृष्णयावायवोवांतिशैलास्तिष्ठंतितृष्णया ॥ तृष्णयैवधराधात्रीत्रैलोक्यंतृष्णयाधृतम् ॥ २२ ॥ सर्वैवलोकयात्रेयंप्रोतातृष्णावरत्रया ॥ रज्जुबंधाद्विमुच्यंतेतृष्णाबंधान्नकेचन ॥ २३ ॥ तस्माद्राघवतृष्णांत्वंत्यजसंकल्पवर्जनात् ॥ मनस्त्वकल्पनंनास्तिनिर्णीतमितियुक्तितः ॥ २४ ॥ अयंत्वमहमित्येवप्रथमंतावदाशये ॥ मादुराशांमहाबाहोसंकल्पयतमोमयीम् ॥ २५ ॥ एतांदुःखप्रसविनीमनात्मन्यात्मभावनाम् ॥ नभावयसिचेद्रामतदातज्ज्ञेषुगण्यसे ॥ २६ ॥ एतामहंभावमयीमपुण्यांछित्त्वानहंभावशलाकयैव ॥ स्वभावनांभव्यभवांतभूमौभवाभिभूताखिलभूतभीतिः ॥ २७ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेतृष्णावर्णनंनामपंचदशःसर्गः ॥ १५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ स्वभावगंभीरमेतद्भगवन्वचनंतव ॥ यदहंकारतृष्णांत्वंमागृहाणेतिवक्षिमाम् ॥ १ ॥ यद्यहंकारसंत्यागंकरोमितदिदंप्रभो ॥ त्यजामिदेहनामानंसन्निवेशमशेषतः ॥ २ ॥

भावमयीमेतांतृष्णांछित्त्वाहेभव्यभवस्यांतोबाधस्तद्भूमौब्रह्मणिसप्तमभूमिकाभेदेवाभवआस्वेत्यर्थः ॥ २७ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेपंचदशःसर्गः ॥ १५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ वर्ण्यंतेवासनात्यागोध्येयज्ञेयविभागतः ॥ तेनात्रजीवन्मुक्तानांविदेहानांचलक्षणम् ॥ १ ॥ जीवतादेहेऽहंभावस्यत्यक्तुमशक्यत्वाच्छिष्यमरणेगुरोस्तात्पर्यायोगादेतामहंभावमयींतृष्णांछित्त्वेत्याद्युक्तेस्तात्पर्यमनवधारयन्रामःपृच्छति ॥ स्वभावेत्यादिना ॥ १ ॥ अशेषतइति ॥ प्राणाहंकारयोरैक्यापत्तेस्त्वयैवोक्तत्वात्प्राणान्परिशेष्याहंकारत्यागासंभवात्प्राणानामप्यनवशेषणेनेत्यर्थः ॥ २ ॥

जानुस्तंभेनजानुवत्स्यस्तनमूलबंधविष्टंभेन ॥ ३ ॥ तदेवव्यतिरेकेणद्रढयति ॥ अहंकारेति ॥ ४ ॥ ५ ॥ ज्ञेयोविदुषांसमाधिकालेविदेहकैवल्येचज्ञानबाधितः ॥ अधिष्ठानमात्रपरिशेषात्साध्येयः ॥ व्युत्थानकालेवाक्यजन्याखंडाकारवृत्त्यासवासनस्याज्ञानस्यबाधेऽपिजीवन्मुक्तिशास्त्रानुरोधात्प्रारब्धफलभोगशेषाच्चतन्निर्वाहायबाधितानुवृत्तेरविद्यालेशपरिशेषस्यविक्षेपांशाबाधस्यवाभ्युपगमादनभ्यस्ताहंभावेनदेहेनभोगहेतुव्यवहारासिद्धेस्तात्कालिकाहंकाराभासानुवृत्तेर्विद्वदनुभवसिद्धत्वात्तद्दशायांतद्बाधानुसंधानस्ययत्नसाध्यत्वेनध्यानप्रायत्वाद्ध्येयइवध्येयइतिद्विविधइत्यर्थः ॥ ६ ॥ तत्रद्वितीयमुपपादयति ॥ अहमिति ॥ विवेकिदृशाप्यहंभावहंप्रत्ययगोचरौप्रतीयेते ॥ एकोदेहेंद्रियबुद्धिमनःसापेक्षःसंघातात्मापुत्रमित्रकलत्रधनादिममतानिरूपकः ॥ अपरोऽखंडैकस्वभावोऽवस्थात्रयमरणमूर्छाजन्मांतरसाधारणश्चिन्मात्रस्वभावोविवेकपरिशिष्टः ॥ तत्राद्यस्यस्वरूपंप्रथमंविचार्यनिर्द्धार्यमित्याह ॥ अहमिति ॥ एषांदेहेंद्रियादीनांबाह्यान्नपानादीनांचोपभुक्तानांपदार्थानांसंघातात्मेत्यर्थः ॥ एतेदेहादयोन्नादयश्चममजीवितंस्व

जानुस्तंभेनमहताधार्यतेसुतरुर्यथा ॥ अहंकारेणदेहोयंतथैवकिलधार्यते ॥ ३ ॥ अहंकारक्षयेदेहःकिलावश्यंविनश्यति ॥ मूलेक्रकचसंलूनेसुमहानिवपादपः ॥ ४ ॥ तत्कथंसंत्यजाम्येनंजीवामिचकथंमुने ॥ एनमर्थंविनिश्चित्यवदमेवदतांवर ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ सर्वत्रवासनात्यागोरामराजीवलोचन ॥ द्विविधःकथ्यतेतज्ज्ञैर्ज्ञेयोध्येयश्चमानद ॥ ६ ॥ अहमेषांपदार्थानामेतेचममजीवितम् ॥ नाहमेभिर्विनाकश्चिन्नमयैतेविनाकिल ॥ ७ ॥ इत्यंतर्निश्चयंकृत्वाविचार्यमनसासह ॥ नाहंपदार्थस्यनमेपदार्थइतिभाविते ॥ ८ ॥ अंतःशीतलयाबुद्ध्याकुर्वत्यालीलयाक्रियाम् ॥ योनूनंवासनात्यागोध्येयोरामसकीर्त्तितः ॥ ९ ॥ सर्वंसमतयाबुद्ध्वायंकृत्वावासनाक्षयम् ॥ जहातिनिर्ममोदेहंज्ञेयोसौवासनाक्षयः ॥ १० ॥ अहंकारमयींत्यक्त्वावासनांलीलयैवयः ॥ तिष्ठतिध्येयसंत्यागीजीवन्मुक्तस्सउच्यते ॥ ११ ॥ निर्मूलकलनांत्यक्त्वावासनांयःशमंगतः ॥ ज्ञेयत्यागमयंविद्धिमुक्तंतंरघुनंदन ॥ १२ ॥ ध्येयंतंवासनात्यागंकृत्वातिष्ठंतिलीलया ॥ जीवन्मुक्तामहात्मानःसुजनाजनकादयः ॥ १३ ॥

रूपसिद्धिनिमित्तम् ॥ अतएवैभिर्विनाऽहंनकश्चिद्व्यवहारपदप्रसिद्धोस्मीत्यंतःप्रथमस्याहंपदार्थस्यनिश्चयंकृत्वामनसासहपृथक्करणेसंघातात्मानमत्यंतासद्रूपमेवविचार्यद्वितीयेपरिशिष्टचिद्रूपेणाहंपदार्थस्यनमेएतेपदार्थाइतिनिष्कृष्टबोधेनतथैवभाविते सतियोभावनात्मावासनात्यागःसध्येयइतिमयाकीर्त्तितइतित्रयाणामर्थः ॥ ७ ॥ ८ ॥ ९ ॥ प्रथमंवासनाक्षयमुपपादयति ॥ सर्वमिति ॥ सर्वंजगत्समतयासमंब्रह्मतद्भावेनबुद्ध्वासाक्षात्कृत्यभूमिकाभ्यासक्रमेणयंवासनाक्षयंकृत्वानिर्ममोनिरहंकारश्चनिर्विकल्पकसमाधिस्थःप्रारब्धक्षयेणवायत्सर्वथादेहंजहातिअसौज्ञेयोवासनाक्षयइत्यर्थः ॥ १० ॥ तत्रद्वितीयमुदाहरति ॥ अहंकारेति ॥ लीलयालोकसंग्रहोचितव्यवहारेणयस्तिष्ठतिसध्येयसंत्यागीध्येयवासनात्यागवान् ॥ ११ ॥ आद्यमुदाहरति ॥ निर्मूलेति ॥ मूलाज्ञानेनसहकलनांत्यक्त्वेत्यर्थः ॥ ज्ञेयत्यागमयंज्ञानबाधितसवासनाज्ञानपरिशिष्टचिन्मात्रप्रधानम् ॥ १२ ॥ उक्तमेवप्रपंचयति ॥ ध्येयमित्यादिना ॥ लीलयाव्यवहारेण ॥ १३ ॥

॥ १४ ॥ अप्यर्थेएवकारः ॥ १५ ॥ युक्तमतिःसमाध्यारूढः ॥ अयुक्तमतिर्व्युत्थानव्यवहारवान् ॥ एतौयुक्तायुक्तमतीद्वावपिसुखेनआस्यतेविश्रम्यतेअस्मिन्निितिस्वासेविम लेअविद्यामलनिर्मुक्तेब्रह्मण्येवकेवलंस्थितौ ॥ कस्तर्हिविशेषस्तमाह ॥ एकइति ॥ एकोव्युत्थितः ॥ अपरःसमाहितः ॥ १६ ॥ अज्ञेयवासनइतिच्छेदः ॥ १७ ॥ व्यवहरतो मुक्तस्यलक्षणान्याह ॥ आपतत्स्वित्यादिना ॥ १८ ॥ ईप्सितानीप्सितेइच्छाद्वेषौ ॥ अज्ञदृशाइष्टानिष्टत्वेनसंमतेषुवस्तुषुसुषुप्तवदनासक्तइतियावत् ॥ १९ ॥ इहदेहेतत्संबंधि निचअहमितिममेतिचकलनेइतियोजना ॥ २० ॥ २१ ॥ येनपुंसासुषुप्तवत्प्रशमिताभाववृत्तयःपदार्थेष्वास्थायस्यतथाविधेनचेतसोपलक्षितेनजाग्रति ॥ जागरेपिसदास्थित म् ॥ भावेक्तः ॥ यश्चसदामुदास्वाभाविकहर्षेणकलान्वितःपूर्णकलोविधुश्चंद्रइवप्रसादेननिषेव्यतेसइहजगतिमुक्तोजीवन्मुक्तइतिस्मृतइत्यर्थः ॥ २२ ॥ २३ ॥ ॥ इतिश्रीवा

ज्ञेयंतुवासनात्यागंकृत्वोपशममागताः॥ विदेहमुक्तास्तिष्ठंतिब्रह्मण्येवपरावरे॥ १४॥ द्वावेवराघवत्यागौसमौमुक्तपदेस्थितौ॥ द्वावे तौब्रह्मतांयातौद्वावेवविगतज्वरौ॥ १५॥ युक्तायुक्तमतीस्वासेकेवलंविमलेनघ॥ एकःस्थितःस्फुरद्देहःशांतदेहःस्थितोपरः॥ १६॥ एकः सदेहोनिर्मुक्तस्तिष्ठत्यपगतज्वरः॥ त्यक्तदेहोविमुक्तोन्योवर्त्ततेज्ञेयवासनः॥ १७॥ आपतत्सुयथाकालंसुखदुःखेष्वनारतम्॥ नहृष्य तिग्लायतियःसमुक्तइतिहोच्यते॥१८॥ ईप्सितानीप्सितेनस्तोयस्येष्टानिष्टवस्तुषु॥ सुषुप्तवच्चरतियःसमुक्तइतिकथ्यते ॥ १९॥ हेयोपा देयकलनेममेत्यहमिहेतिच ॥ यस्यांतःसंपरिक्षीणेसजीवन्मुक्तउच्यते ॥ २० ॥ हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः॥ नपरामृश्यते योंतःसजीवन्मुक्तउच्यते ॥ २१ ॥ सुषुप्तवत्प्रशमितभाववृत्तिनास्थितंसदाजाग्रतियेनचेतसा॥ कलान्वितोविधुरिवयस्सदामुदानिषे व्यतेमुक्तइतीहसस्मृतः॥ २२॥ ॥श्रीवाल्मीकिरुवाच॥ ॥ इत्युक्तवत्यथमुनौदिवसोजगामसायंतनायविधयेस्तमिनोजगाम॥स्ना तुंसभाकृतनमस्करणाजगामश्यामाक्षयेरविकरैश्चसहाजगाम॥२३॥ दिवसः॥११॥ ॥इ०वा०वा०दे०मो०उप०तृष्णाचिकित्सा नामषोडशःसर्गः॥ १६॥ ॥ ७॥ ॥श्रीवसिष्ठउवाच॥ ॥ विदेहमुक्तायेरामतेगिरामिहगोचरे॥ नैवतिष्ठंतितस्मात्त्वंजीव न्मुक्तिमिमांशृणु॥ १ ॥ प्राकृतान्येवकर्माणियथावर्जितवांछया॥ क्रियंतेतृष्णयेमानितांजीवन्मुक्ततांविदुः॥ २॥

सिष्ठम०तात्पर्यप्रकाशेउप०षोडशःसर्गः ॥ १६ ॥ ॥ ७ ॥ ॥ यादृशैर्निश्चयैर्युक्तोजीवन्मुक्तोनबध्यते ॥ अज्ञश्चबध्यतेभूयस्तद्विभागोत्रवर्ण्यते ॥ १ ॥ रामस्येंगी तैर्विदेहमुक्तलक्षणजिज्ञासांप्रतिलक्ष्यतस्यैकरूप्येणलक्षणाद्यभावाद्वाचांकुंठीभावोक्त्यैवनिरतिशयस्वप्रकाशभूमानंदमात्रपरिशेषस्तत्स्वरूपलक्षणमितिसूचयन्जीवन्मुक्तिल क्षणेष्वेवावश्योपादेयान्विशेषान्वक्तुंप्रतिजानीते ॥ विदेहमुक्ताइति ॥ १ ॥ ननुतर्हिजीवन्मुक्तानांतत्तद्वर्णाश्रमोचितकर्मफलतृष्णायद्यस्तितर्हिअज्ञवदेवतद्भोगायपुनर्देहबंधो पिस्यात् यदिनास्तितर्हिप्रवृत्तिरेवनस्यात्प्रयोजनमनुद्दिश्यनमंदोपिप्रवर्त्ततइतिन्यायादितिदोषंपरिहर्त्तुंज्ञाज्ञयोःप्रवर्त्तकशुद्धाशुद्धतृष्णावैलक्षण्यमुपपादयितुमुपक्रमते ॥ प्राकृ तान्येवेत्यादिना ॥ प्राकृतानितत्तद्वर्णाश्रमस्वभावप्रापितानि ॥ वांछाविषयास्वादनोत्साहः ॥ २ ॥

१ कार्याणीत्यपिपाठः

वद्धउत्साहदृढीकृतोभावःसंसारसत्यताबुद्ध्याभोगोत्साहोययाः ॥ ३ ॥ भोग्यवर्गाणामनृतत्वनिश्चयेनहृदिउज्झितभोगसंकल्पावाह्येलोकसंग्रहमात्रप्रयोजनेनविहारिणीवास
नातृष्णाजीवन्मुक्तानांशरीरमात्राश्रितेत्यर्थः ॥ ४ ॥ उक्तलक्षणेएवतृष्णेप्रपंचयिष्यन्पिंडीकृत्याह ॥ बाह्येति ॥ व्यसनंलांपट्यम् ॥ ५ ॥ पूर्वंविषयप्राप्तेःप्राक्काले ॥ विषयना
शोत्तरकालस्याप्युपलक्षणमेतत् ॥ निर्दुःखतारागविरहादिप्रयुक्तदुःखशून्यता ॥ विषयप्राप्तिकालेपिनिष्कलतानिरुच्छूनता ॥ ६ ॥ ७ ॥ परंजीवन्मुक्तिपदम् ॥ ८ ॥ बध्नंतीति
बंधादेहादयस्तदाशाम् ॥ मोक्षस्तन्निवृत्तिस्तदाशाम् ॥ बंधमिथ्यात्वनिश्चयेतन्निवृत्तेरनाशास्यत्वान्नहिजागरूकःस्वामनिगडबंधमोक्षमाशास्तइतिभावः ॥ सुखदुःखदशाना

यास्थितिस्तृष्णयाजंतोर्बाह्यार्थैबद्धभावया ॥ तंबंधमाहुराचार्याःसंसारनिगडंदृढम् ॥ ३ ॥ नूनमुज्झितसंकल्पाहृदिबाह्येविहारिणी ॥ वासनायोदितासेहजीवन्मुक्तशरीरिणी ॥ ४ ॥ बाह्यार्थव्यसनोच्छूनातृष्णाबद्धेतिराघव ॥ सर्वार्थव्यसनोन्मुक्तातृष्णामुक्तेतिकथ्यते ॥ ५ ॥ पूर्वंयस्यास्तुतृष्णायावर्तमानेपिशाश्वती ॥ निर्दुःखतानिष्कलतासामुक्तेतिबुधैःस्मृता ॥ ६ ॥ इदमस्तुममेत्यंतर्यैपाराघवभावना ॥ तांतृष्णांशृंखलांविद्धिकलनांचमहामते ॥ ७ ॥ तामेतांसर्वभावेषुसत्स्वसत्सुचसर्वदा ॥ संत्यज्यपरमोदारःपरमेतिमहामनाः ॥ ८ ॥ बंधाशामथमोक्षाशांसुखदुःखदशामपि ॥ त्यक्त्वासदसदाशांचतिष्ठाक्षुब्धमहाब्धिवत् ॥ ९ ॥ अजरामरमात्मानंबुध्वाबुद्धिमतांवर ॥ जरामरणशंकाभिर्मामनःकलुषंकृथाः ॥ १० ॥ पदार्थतत्त्वंनेदंतेनायंत्वमसिराघव ॥ किंचित्तदन्यदेवेदमन्यएवासिराघव ॥ ११ ॥ असदभ्युदितेविश्वेसतीवासतिसंस्थिते ॥ त्वयितत्तामतिगतेतृष्णायाःसंभवःकुतः ॥ १२ ॥ अन्यच्चराममनसिपुरुषस्यविचारिणः ॥ जायतेनिश्चयःसाधोस्फाराकारश्चतुर्विधः ॥ १३ ॥ आपादमस्तकमहंमातापितृविनिर्मितः ॥ इत्येकोनिश्चयोरामबंधायासद्विलोकनात् ॥ १४ ॥ अतीतःसर्वभावेभ्योवालाग्रादप्यहंतनुः ॥ इतिद्वितीयोमोक्षायनिश्चयोजायतेसताम् ॥ १५ ॥ जगज्जालपदार्थात्मासर्वमेवाहमक्षयः ॥ तृतीयोनिश्चयश्चेत्थंमोक्षायैवरघूद्वह ॥ १६ ॥ अहंजगद्वासकलंशून्यंव्योमसमंसदा ॥ एवमेषचतुर्थोन्योनिश्चयोमोक्षसिद्धये ॥ १७ ॥ निश्चयेषुचतुर्ष्वेषुबंधायप्रथमःस्मृतः ॥ त्रयोमोक्षायकथिताःशुद्धभावनयोत्थिताः ॥ १८ ॥

मपिमिथ्यात्वनिश्चयएवाग्रत्यागः ॥ ९ ॥ १० ॥ आशात्यागेउपायमाह ॥ पदार्थेति ॥ इदंदृश्यंपदार्थतत्त्वंपदार्थरूपंतेतवन त्वमपिन तत्तस्मात्परमार्थसत्यादन्यदेवांकिंचित्तुच्छमि
त्यर्थः ॥ ११ ॥ १२ ॥ हेरामअन्यच्चवक्ष्यमाणंचतुर्विधनिश्चयभेदंश्रण्वितिशेषः ॥ तमेवाह ॥ मनसीति ॥ १३ ॥ १४ ॥ सर्वेभ्योदेहेंद्रियादिभेदेभ्योऽतीतोऽतिरिक्तः ॥ तनुःसू
क्ष्मःस्थौल्यरहितइतियावत् ॥ त्वंपदार्थशोधनविधयास्यमोक्षहेतुत्वम् ॥ १५ ॥ तृतीयइति ॥ अस्याप्याध्यात्मिकपरिच्छिन्नात्मताभ्रमनिवृत्त्यातत्पदार्थेनसहैवशोधनसंभवा
न्मोक्षोपयोगः ॥ १६ ॥ अहमित्याध्यात्मिकपरिच्छेदोपाधिः ॥ जगदितिआधिदैविकाद्युपाधिः ॥ सदाकालत्रयेपि ॥ एषःसर्वदृश्यबाधात्मनिश्चयः ॥ १७ ॥ १८ ॥

तृष्णाभेदनिरूपणेस्यविभागस्यकाप्रसक्तिस्तत्राह ॥ एतेषामिति ॥ अस्मिन्सत्येवतृष्णायाबंधकत्वादयमेववंधहेतुरित्यर्थः ॥ शुद्धानिर्दोषातृष्णायेषुतेशुद्धतृष्णाःउत्तरेत्रयोनि
श्चयाः ॥ १९ ॥ तत्रतृतीयस्यप्रयोजनमाह ॥ सर्वमिति ॥ २० ॥ २१ ॥ चतुर्थस्यशून्यत्वादिमतप्रविष्टतांवारयन्नाह ॥ शून्यमिति ॥ परिशिष्टात्मैववादिभिःशून्यादिशब्दैःक
थ्यतेनावस्त्वित्यर्थः ॥ २२ ॥ विद्यायापरमार्थस्वरूपदृष्ट्याजगद्व्याप्तंपश्यतम् ॥ इतरयापूर्ववद्भ्रांतिधियान ॥ २३ ॥ यथाअनंतात्माअपरिच्छेद्यपरिणाहोंभोधिरापातालमंबुभिः
पूरितस्तथेत्यर्थः ॥ २४ ॥ अस्त्वापूर्णंकिंततस्तत्राह ॥ अतइति ॥ अतःऋतंप्रमाणबोधितंब्रह्मैक्यमेवनित्यंसत्यम् तद्व्यतिरेकेणानृतंजगद्रूपंनविद्यतइतिसिद्धमित्यर्थः ॥ २५ ॥
कांचनान्नपृथक् ॥ आत्मनःपृथिव्यात्मनःसकाशान्नभिन्नाः ॥ २६ ॥ कथंतर्हिजलसमुद्रादौजगतिभेदाभेदप्रत्ययस्तत्राह ॥ द्वैताद्वैतेति ॥ अद्वैतापरमात्ममयीशक्तिर्ब्रह्मसत्ते

एतेषांप्रथमःप्रोक्तस्तृष्णायाबंधयोग्यता ॥ शुद्धतृष्णास्त्रयःस्वच्छाजीवन्मुक्तविलासिनः॥ १९ ॥ सर्वमात्माहमेवेतिनिश्चयोयोमहाम
ते॥ तमादायविषादायनभूयोयातिमेमतिः॥ २० ॥ तिर्यगूर्ध्वमधस्ताच्चव्यापकोमहिमात्मनः ॥ सर्वमात्मेतितेनांतर्निश्चयेनेनवध्यते
॥ २१ ॥ शून्यंतत्प्रकृतिर्मायाब्रह्मविज्ञानमित्यपि॥ शिवःपुरुषईशानोनित्यआत्मैवकथ्यते॥ २२ ॥ सदासर्वंसदेवेदंनेहद्वित्वान्यतेक्कचि
त्॥ विद्येतेविद्ययाव्याप्तंजगन्नेतरयाधिया ॥ २३ ॥ आपातालमनंतात्मापूरितोंभोधिरंबुभिः ॥ आब्रह्मस्तंबपर्यंतंजगदापूर्णमात्मना
॥ २४ ॥ अतःसत्यमृतंनित्यंनानृतंविद्यतेक्कचित्॥ वार्यैवसकलांभोधिर्नतरंगादयःक्कचित्॥ २५ ॥ पृथक्कटककेयूरनूपुरादिनकांचनात्॥
भिन्नास्तरुतृणाकारकोटयश्चैवनात्मनः॥ २६ ॥ द्वैताद्वैतसमुद्भेदैर्जगन्निर्माणलीलया ॥ परमात्ममयीशक्तिरद्वैतैवविजृंभते॥ २७ ॥
आत्मीयेपरकीयेचसर्वस्मिन्नेवसर्वदा ॥ नष्टेवोपचितेकार्यंसुखदुःखेग्रहाणमा ॥ २८ ॥ भावाद्वैतमुपाश्रित्यसत्ताद्वैतमयात्मकः ॥
कर्माद्वैतमनादृत्यद्वैताद्वैतमयोभव ॥ २९ ॥ भवभूमिषुभीमासुभावभावनवात्यया॥ मापतोत्पातपूर्णासुदरीष्वंतःकरीयथा॥ ३० ॥

वाज्ञान्मतिद्वैताद्वैतसमुद्भेदैर्विजृंभतइत्यर्थः ॥ २७ ॥ अस्त्वेवंकिंततस्तत्राह ॥ आत्मीयेइति ॥ स्वीयेपरकीयेवापुत्रमित्रादौसर्वस्मिन्जगतिचउपचितेनष्टेवासुखदुःखेअभिज्ञस्त्वं
माग्रहाणेत्यर्थः ॥ २८ ॥ कथंतर्हिमयाव्यवहर्त्तव्यमितिचेद्ब्रह्मवद्द्वैताद्वैतालंबनेनैवेतितद्विभज्याह ॥ भावाद्वैतमिति ॥ ब्रह्मवदेवत्वंपरमार्थतःसत्ताद्वैतमयात्मकएवसन्व्यवहार
कालेपिभावनयाअद्वैतमेवोपाश्रित्यतत्तत्प्राणिकर्मफलदानेब्रह्मेववर्णाश्रमधर्मव्यवस्थापनकर्मविषयेअद्वैतंसर्वथैवानादृत्यव्यवहरन्यथोचितंद्वैताद्वैतोभयपरोभवेत्यर्थः ॥ अद्वै
तेकर्मणामेवासिद्धेरैकरूप्येणसर्वत्रकथंचिदद्वैताचरणेजगद्व्यवस्थाधर्मशास्त्रादिबाधप्रसंगाच्चतत्रद्वैताश्रयणमेवोचितमितिभावः ॥ २९ ॥ भावेपिद्वैताश्रयणेकाक्षतिस्तत्राह ॥
भवेति ॥ उत्पातैरशुभनिमित्तैःपूर्णासु ॥ दरीपदृणेनगर्त्तोलक्ष्यते ॥ तथाचसंसारगर्त्तपातएवतत्रक्षतिरितिभावः ॥ ३० ॥

सत्ताद्वैतमुक्तमुपपादयति ॥ द्वैतमिति ॥ द्वैतंपरमार्थसन्नसंभवति ॥ यतस्तच्चित्तमयंचित्तकल्पितमेवनवस्तुस्पर्शि परैरप्यपेक्षाबुद्धिजन्यत्वाभ्युपगमात्तन्नाशेनाशाभ्युपगमाच्च ॥ एवमात्मन्यैक्यमेकत्वाख्यसंख्यागुणोपिनसंभवतियतस्तदपिद्वित्वादिव्यावर्त्तकत्वेनैवकल्पितत्वाद्वितयादेवोदितआत्मास्वरूपंयस्यतथाभूतम् ॥ अतःअद्वैतमैक्येनचरहितंस्वसिद्धावप्यन्यनिरपेक्षत्वात्सततोदितंसत्सन्मात्रंब्रह्मऐक्यनिरासात्सर्वद्वैतनिरासान्नकिंचिदपीतिच ॥ तस्मात्तत्सर्वमभवत् नेहनानास्तिकिंचनेत्यादिश्रुतयस्तदनुभविनश्चलक्षणयाआहुरित्यर्थः ॥ ३१ ॥ अहमितियुष्मदात्मप्रविभक्तरूपंनैवास्ति अस्मदर्थप्रविभक्तरूपाणियुष्मदादिजगंतिचनसंति किंतुसर्वमिदंनिर्विकारंविज्ञानमात्रमेवविद्यते ॥ तदवभासतस्तत्साक्षात्कारमात्रतःशांतमिदंतुजगत्सदानासतनसच्चेतिविद्धीत्यर्थः ॥ ३२ ॥ पुनस्तन्निश्चयमेवदृढमाशिषापिसंपादयति ॥ परमितिद्वाभ्याम् ॥ जीवशक्तेःप्राणस्य

द्वैतंनसंभवतिचित्तमयंमहात्मन्नात्मन्यथैक्यमपिनद्वितयोदितात्म ॥ अद्वैतमैक्यरहितंसततोदितंसत्सर्वंनकिंचिदपिचाहुरतःस्वरूपम् ॥ ३१ ॥ नैवाहमस्तिनचनामजगंतिसंतिसर्वंचविद्यतइदंननुनिर्विकारम् ॥ विज्ञानमात्रमवभासतएवशांतंनासन्नसज्जगदिदंचसदेतिविद्धि ॥ ३२ ॥ परमम्रुतमनाद्यंभासनंसर्वभासामजरमजमचिंत्यंनिष्कलंनिर्विकारम् ॥ विगतकरणजालंजीवनंजीवशक्तेःसकलकलनहीनंकारणंकारणानाम् ॥ ३३ ॥ सततमुदितमीशंव्याततेचित्प्रकाशेस्थितमनुभवबीजंस्वात्मभावोपदेश्यम् ॥ स्वदनमनुचितोंतर्ब्रह्मसर्वंसदेवत्वमहमपिजगच्चेत्यस्तुतेनिश्चयोंतः ॥ ३४ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपूपशमप्रकरणेतृष्णाविच्छेदोपदेशोनामसप्तदशःसर्गः ॥ १७ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ युक्ताशयानांमहतामहतानांकुदृष्टिभिः ॥ स्वभावोयंमहाबाहोलीलयाचरतामिह ॥ १ ॥ विहरन्नपिसंसारेजीवन्मुक्तमनामुनिः ॥ आदिमध्यांतविरसाविहसेज्जागतीर्गतीः ॥ २ ॥ सर्वप्रकृतकार्यस्थोमध्यस्थःसर्वदृष्टिषु ॥ ध्येयंतंवासनात्यागमवलंब्यव्यवस्थितः ॥ ३ ॥

जीवनंप्राणनव्यवहारनिमित्तम् ॥ प्राणस्यप्राणमित्यादिश्रुतेः ॥ ३३ ॥ अनुभवानांचाक्षुषादीनांबीजंमूलभूतम् ॥ स्वात्मभावःस्वस्वरूपावस्थितिस्तेनदशमस्त्वमसीतिवच्छब्दापरोक्षापादनेनोपदेश्यंअंतःस्वदनमांतरानंदकरसंब्रह्मैवत्वमहंजगच्चनततोन्यदस्तीत्यनुसृत्यचितउपचितोनिश्चयस्तेंतरस्त्वित्याशीरुपदेशश्च ॥ ३४ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेसप्तदशःसर्गः ॥ १७ ॥ ॥ ५ ॥ ॥ ययास्थित्यास्थितोविद्वान्संसारेनावसीदति ॥ सास्थितिर्विस्तरेणात्रराघवायोपदिश्यते ॥ १ ॥ युक्ताशयानांसमाहितमनसां कामलोभादिकुदृष्टिभिरहतानामदूषितानामयंवक्ष्यमाणप्रकारःस्वभावःस्थितिःश्रूयतामितिशेषः ॥ १ ॥ आदौजन्मादिदुःखैर्मध्येआध्यात्मिकादिदुःखैरंतेम्रुत्युनरकादिदुःखैर्विरसाः ॥ विहसेत्हासयोग्यतयातुच्छीकृत्यपश्येत् ॥ सर्वेषुप्रकृतेषुतत्तत्कालप्रसक्तेषुकार्येषूचिताचरणेषुनिष्ठनीतिस्थः सर्वासुशत्रुमित्रादिदृष्टिषुमध्यस्थःसमः तंज्ञेयोध्येयश्चेतिद्विधावर्णितवासनात्यागयोर्मध्येध्येयंवासनात्यागमवलंब्येत्यर्थः ॥ ३ ॥

सर्वेषामर्थस्याभिमतस्यपरिपोषकोनकस्यचिद्विप्रियकारी ॥ प्रबोधलक्षणेउपवनेस्थितिर्यस्य ॥ ४ ॥ ५ ॥ समःशत्रौचमित्रेचेतिपाठःस्पष्टः ॥ अभ्यागतानांगुरुप्रभृतीनांसमयोचितप्राप्तसेवापरिपालनादिकर्मकरः ॥ ६ ॥ मौनस्थोमितभाषी ॥ प्रकृतारंभीआवश्यककार्येष्वनलसः ॥ ७ ॥ तदेवाह ॥ पृष्टइति ॥ ८ ॥ अभिमतंप्रियंवक्ता ॥ चोदितआक्षिप्तःपेशलोक्तिमान्चतुरंसमाधाता ॥ ९ ॥ इदंयुक्तमिदमयुक्तमितिवैषम्यदृशा ॥ जानातिअपक्षपातितयापश्यति ॥ अतएवकरकोटरःकरतलगर्त्तस्तत्रस्थितविल्वफलवत्स्पष्टमित्युक्तम् ॥ एकतरपक्षपातेनुतत्पक्षदोषाअपरपक्षगतगुणाश्चरागद्वेषपिहितत्वान्नस्पष्टंभासंतइति ॥ १० ॥ अतएववैषम्यदर्शनादेःफलमपिजनानांहसन्निवतटस्थ्येनैवपश्यतीत्याह ॥ परमिति ॥ ११ ॥ उपसंहरति ॥ जितेति ॥ १२ ॥ मुक्तस्थितिरिवबद्धस्थितिरर्पितदाशयोद्घाटनेनवर्ण्यतामितिचेन्मूर्खमनोरथभ्रांतीनांतत्प्रयुक्तदुश्चेष्टानांतत्फलदुःखवैचित्र्याणांचानंत्यान्नसावर्णयितुंशक्येत्याशयेनाह ॥ वयमितिचतुर्भिः ॥ १३ ॥ तेषांमूर्खाणांनार्यःस्त्रियोऽभिमताअभिलषितायाःभावानांविवेकबुद्धीनामत्यंताभा

सर्वत्रविगतोद्वेगःसर्वार्थपरिपोषकः ॥ विवेकोद्योतदृष्टात्माप्रबोधोपवनस्थितिः ॥४॥ सर्वातीतपदालंबीपूर्णेंदुशिशिराशयः॥ नोद्वेगीनचतुष्टात्मासंसारेनावसीदति॥५॥ सर्वशत्रुषुमध्यस्थोदयादाक्षिण्यसंयुतः॥ प्राप्तकर्मकरोभ्यागतानांसंसारेनावसीदति॥६॥ नाभिनंदतिनद्वेष्टिनशोचतिनकांक्षति॥ मौनस्थःप्रकृतारंभीसंसारेनावसीदति॥७॥ पृष्टःसन्प्रकृतंवक्तिनपृष्टःस्थाणुवत्स्थितः॥ ईहितानीहितैर्मुक्तःसंसारेनावसीदति॥८॥ सर्वस्याभिमतंवक्ताचोदितःपेशलोक्तिमान्॥ आशयज्ञश्चभूतानांसंसारेनावसीदति॥९॥ युक्तायुक्तदृशाग्रस्तमाशोपहतचेष्टितम्॥ जानातिलोकदृष्टंतंकरकोटरविल्ववत् ॥ १० ॥ परंपदमुपारूढोभंगुरांजागतींस्थितिम्॥ अंतःशीतलयाबुद्ध्याहसन्निवनिरीक्षते॥ ११ ॥ जितचित्तामहात्मानोयेहिदृष्टपरावराः॥ स्वभावईदृशस्तेषांकथितस्तवराघव॥ १२ ॥ वयंतुवक्तुंमूर्खाणामजितात्मीयचेतसाम्॥ भोगकर्दममग्नानांनविद्मोऽभिमतंमतम् ॥ १३ ॥ तेषामभिमतानार्योभावाभावविभूषिताः॥ ज्वालानरकवह्नीनांयास्ताःकनकरोचिषः॥ १४॥ अनर्थगहनाश्चार्थाव्यर्थानर्थकदर्थनाः॥ दिशंतोदुःखसंरंभमभितःप्रहितापदः॥ १५॥ फलसंधीनिकर्माणिनानाचारमयानिच॥ सुखदुःखावपूर्णानितानिवक्तुंनशक्नुमः॥ १६॥

वैःपूर्वसंचितसुकृतानांप्रध्वंसाभावैःसंभावितसुकृततपःसंयमादीनांप्रागभावपरिपालनैश्चविभूषिताआपादमस्तकमलंकृताः अतएवनरकवह्नीनांकनकसमानरोचिषोज्वालाएवताइत्यर्थः ॥ १४ ॥ तथामूर्खाणामभिलषिताअर्थाधनानितेचअनर्थगहनाअर्जनेपालनेव्ययेनाशेचबह्वायासाधर्मराशिनिमित्तभूताः ॥ व्यर्थाअनर्थप्रयोजककलहवैरादिकदर्थनाश्चयेभ्यस्तथाविधाश्चेत्यर्थः ॥ १५ ॥ ननुतेषांतादृशैरप्यर्थैर्यज्ञादिसत्कर्माचरणसिद्धेर्निस्तारःस्यान्नेत्याह ॥ फलसंधीनीति ॥ यानिमूर्खाणांयज्ञादिकर्माणितान्यपिफलाभिसंधियुक्तान्येवननिरभिसंधीनि ॥ नानाविधैर्दंभमानमदमात्सर्याद्याचारैर्दुराचारैश्चप्रचुराणि अतएवपुनर्जन्मादिप्रयुक्तसुखदुःखैरवपूर्णानीतिमूर्खाणांकिंचिदपिनिस्तारनिमित्तंवक्तुंनशक्नुमइत्यर्थः ॥ १६ ॥



१ मूलस्थितपाठेसर्वशत्रुषुमध्यस्थपदमहिम्नामित्रेषुचमध्यस्थः ॥ उभयत्ररागद्वेषशून्यत्वात्समइत्यर्थः ॥

अतस्त्वमपिविद्वच्चरित्रेणैवविहरनान्येनेत्याह ॥ पूर्णामित्यादिना ॥ १७॥ १८ ॥ सर्वेषामज्ञानामपिकर्माद्याचारेषुअनुवृत्तिमान् ॥ नबुद्धिभेदंजनयेदज्ञानांकर्मसंगिनामितिभ
गवद्वचनादितिभावः ॥ १९ ॥ सर्वाःसंसारदशाःपरमार्थस्वरूपावस्थितिभूमिकाभेददशाश्च ॥ २० ॥ आशोन्मुखानामिवईहितानिचेष्टायस्य ॥ सर्वात्मनानैराश्यप्रकटनेधन
मित्रादिसंपहायोगाद्राज्यपरिपालनानिर्वाहादितिभावः ॥ अतएवधनादिनाशेवहिस्तप्तइवतप्तः अंतस्तुआशीतःसर्वतःशीतलः ॥ २१ ॥ २२ ॥ अंतरंव्यवहारतःपरमार्थतश्च
सारासारतारतम्यम् ॥ अतःसद्व्यवहारेअतिसर्गस्तवेत्याह ॥ यथेच्छसीति ॥ २३ ॥ २४ ॥ चंद्रस्तुरात्रावहमेवप्रकाशकइतिगृहीताहंकृतिःक्षयरोगित्वादनाश्वस्तमतिर्गृहीत

पूर्णांदृष्टिमवष्टभ्यध्येयत्यागविलासिनीम् ॥ जीवन्मुक्ततयास्वस्थोलोकेविहरराघव ॥ १७॥ अंतःसंत्यक्तसर्वाशोवीतरागोविवासनः॥
बहिःसर्वसमाचारोलोकेविहरराघव ॥ १८ ॥ उदारःपेशलाचारःसर्वाचारानुवृत्तिमान् ॥ अंतःसर्वपरित्यागीलोकेविहरराघव ॥ १९॥
प्रविचार्यदशाःसर्वायदतुच्छंपरंपदम् ॥ तदेवभावेनालंब्यलोकेविहरराघव ॥ २० ॥ अंतर्नैराश्यमादायबहिराशोन्मुखेहितः ॥ बहिस्त
प्तोंतराशीतोलोकेविहरराघव ॥ २१ ॥ बहिःकृत्रिमसंरंभोहृदिसंरंभवर्जितः ॥ कर्त्ताबहिरकर्त्तांतर्लोकेविहरराघव ॥ २२॥ ज्ञातवानसि
सर्वेषांभावानांसम्यगंतरम् ॥ यथेच्छसितथादृष्ट्यालोकेविहरराघव ॥ २३ ॥ कृत्रिमोल्लासहर्षस्थःकृत्रिमोद्वेगगर्हणः ॥ कृत्रिमारंभसं
रंभोलोकेविहरराघव ॥ २४॥ त्यक्ताहंकृतिराश्वस्तमतिराकाशशोभनः ॥ अगृहीतकलंकांकोलोकेविहरराघव ॥ २५॥ आशापाशशतो
न्मुक्तःसमःसर्वासुवृत्तिषु ॥ बहिःप्रकृतिकार्यस्थोलोकेविहरराघव ॥ २६ ॥ नवंधोस्तिनमोक्षोस्तिदेहिनःपरमार्थतः ॥ मिथ्येयमिंद्रजा
लश्रीःसंसारपरिवर्त्तिनी ॥ २७॥ भ्रांतिमात्रमिदंमोहाज्जगद्राघवदृश्यते ॥ जनितप्रत्ययंस्फारंजलंतीव्रातपेयथा ॥ २८ ॥ अबद्धस्यैक
रूपस्यसर्वगस्यात्मनःकथम् ॥ बंधःस्यात्तदभावेतुमोक्षःकस्यविधीयते ॥ २९॥ अतत्त्वज्ञानजातेयंसंसारभ्रांतिराततता ॥ तत्त्वज्ञानात्क्ष
यंयातिरज्ज्वामिवभुजंगधीः ॥ ३० ॥ ज्ञातवानसितत्त्वंस्वमेकयासूक्ष्मयाधिया ॥ जातोसिनिरहंकारोव्योमवत्तिष्ठनिर्मलः ॥ ३१ ॥ ज्ञो
सित्विस्त्यंतदखिलाःसुहृद्बांधववासनाः ॥ संत्यजासत्स्वभावस्यकानामकिलभावना ॥ ३२ ॥

कलंकलांछनश्चत्वंतुनतथेतिव्यतिरेकः ॥ २५॥ प्रकृतिस्तत्तद्वर्णाश्रमस्वभावस्तदुचितकार्यस्थःप्रजाहितकार्यस्थोवा ॥ २६॥ समःसर्वासुवृत्तिष्वितियदुक्तंतद्बंधमोक्षादिवैषम्यप्र
तिषेधेनोपपादयति ॥ नवंधइत्यादिना ॥ २७ ॥ जलंमृगतृष्णोदकम् ॥ २८ ॥ कुतोनवंधोस्तितत्रयुक्तिमाह ॥ अबद्धस्येति ॥ असंगस्येत्यर्थः ॥ विधीयतेयत्नेनसंपाद्यते
॥ २९ ॥ तर्हिकितत्त्वज्ञानंव्यर्थंनेत्याह ॥ अतत्त्वेति ॥ ३० ॥ ३१ ॥ ज्ञःसाक्ष्यसितत्तस्मात्सुहृद्बांधवविषयाममतावासनाः ॥ असत्स्वभावस्यअविद्यमानस्वरूपस्यसुहृदादे
र्भावनाचिंतनाकानामनयुक्तेत्यर्थः ॥ ३२ ॥

अपिचइत्थंमदुक्तप्रकारेणवासनात्यागेताभ्योऽन्यःपरिशिष्टःसाक्षीत्वंपरमार्थसत्त्ववान्परिशेषादनुमीयसे ॥ प्रथमतःवासनात्यागात्पूर्वंतेपरमात्कारणाद्ब्रह्मणःप्रलयसुषुप्त्योर्नित्यप्राप्तादपिइदंपरिच्छिन्नासत्यरूपमेवप्राप्तंनपरमार्थसत्यरूपमितिवासनात्यागएवतत्प्राप्तिहेतुर्नान्यइत्यर्थः ॥ अथवाअपिचेतिसमुच्चये ॥ तदन्यस्तस्मादसत्स्वभावादन्यःपरमार्थसत्स्वभावस्त्वंस्वभावेनैवासत्स्वभावेभ्योऽविद्यातत्कार्येभ्यःसत्त्ववान्बलवाननुमीयसे ॥ अतःपरमादाद्यादविद्यालक्षणात्कारणादपिइदंप्रथमतःअनादिकालात्प्राप्तंबंधमपिइत्थंवासनावदेवसंत्यजेत्यनुपज्जते ॥ ३३ ॥ भोगैस्तत्साधकैर्बंधुभिर्जगद्भावैःस्रक्चंदनादिभिस्तत्प्राप्तिनिमित्तैःशुभाशुभैःकर्मभिश्च ॥ ३४ ॥ आत्मतत्त्वमेवैकःसारःसत्यःपरमानंदोयस्यतथाविधोहमितिजाताधीर्यस्य ॥ भयैर्भयहेतुभिः ॥ ३५ ॥ ममतत्त्वविदःस्वतोदुःखंमाभूत्बंधूनामज्ञत्वेनदुःखित्वात्तद्दुःखसमागमैर्दुःखंतुदुर्वारमितिचेत्तत्राह ॥ अजातस्येति ॥ मिथ्यात्वाद्बंधौअजातेसतीत्यर्थः ॥ षष्ठीचानादरेइतिषष्ठी ॥ अथवाबंधोःसंबंधितयाऽजातस्यतवेतियोज्यम् ॥ ३६ ॥ एवमात्मनोऽसंगत्वाद्द्वितीयत्वदर्शनेशो

अपिचेत्थंतदन्यस्त्वंसत्त्ववाननुमीयसे ॥ इदंप्रथमतःप्राप्तंपरमादपिकारणात् ॥ ३३ ॥ भोगबंधुजगद्भावैःकर्मभिश्चशुभाशुभैः ॥ आत्मनोनास्तिसंबंधःकिमेताननुशोचसि ॥ ३४ ॥ आत्मतत्त्वैकसारोहमितिजातधियोभयैः ॥ नतेरामास्तिसंबंधःकिंविभेपिजगद्भ्रमात् ॥ ३५ ॥ अजातस्यसतोबंधोर्बंधुदुःखसुखभ्रमैः ॥ कस्तेराघवसंबंधोयदेताननुशोचसि ॥ ३६ ॥ त्वंचेद्बभूविथपुरातथेदानींभविष्यसि ॥ अद्यचेहास्थितोसीतिज्ञातवानसिनिश्चयम् ॥ ३७ ॥ तदानंतरगानन्यान्प्राणादीन्निकटस्थितान् ॥ बंधूनतीतान्सुबहून्कस्मात्त्वंनानुशोचसि ॥ ३८ ॥ पूर्वमन्यस्तथेदानींवभूविथभविष्यसि ॥ यदिरामतथापित्वंसद्रूपंकिंविमुह्यसि ॥ ३९ ॥ पुराभूत्वाद्यभूत्वाचभूयश्चेन्नभविष्यसि ॥ तथापिक्षीणसंसारःकिमर्थमनुशोचसि ॥ ४० ॥ तस्मान्नदुःखितायुक्ताप्राकृतेजागतेक्रमे ॥ तथैवमुदितायुक्तायुक्तंकार्यानुवर्त्तनम् ॥ ४१ ॥ मागच्छदुःखितांरामसुखितामपिमाव्रज ॥ समतामेहिसर्वत्रपरमात्माहिसर्वगः ॥ ४२ ॥

कासंभवउक्तइदानीमस्त्वात्मासंगीतथापिसर्किनित्यउतक्षणिकउतप्रागभाववद्घटादिवद्वाकालांतरेनश्वरःसर्वेष्वपिपक्षेषुबंधुशोकोनयुक्तइतिप्रौढ्यासमाधित्सुराद्येकल्पेतावदाह ॥ त्वंचेदिति ॥ पुरापूर्वजन्मसुवभूविथतथाभाविजन्मसुभविष्यसि अद्येदानीमिहजन्मनिचस्थितोसीत्येवंस्वभावमात्मानंयदिनिश्चयंदृढंज्ञातवानसितदाअनंतरगान्वर्त्तमानान्निकटस्थितान्सन्निहितान्बंधून्प्राणादीनिवेत्यध्याहारः ॥ अनंतजन्मस्वतीतान्सुबहून्कस्मान्नानुशोचसि ॥ विनिगमनाविरहात्सर्वशोकाशक्तेश्चनक्वापिशोकोयुक्तइतिभावः ॥ ३७ ॥ ३८ ॥ द्वितीयेप्याह ॥ पूर्वमिति ॥ इदानीमन्यःअपेप्यन्योभविष्यसिइतिक्षणिकमात्मानंयदिजानासितथापित्वंकिंसद्रूपमालंब्यविमुह्यसिशोचसि ॥ द्वितीयक्षणेशोच्यस्यशोचितुश्चासत्वेनशोकावसराभावादित्यर्थः ॥ ३९ ॥ तृतीयेप्याह ॥ पुरेति ॥ तथाप्यात्मनाशादेवक्षीणसंसारः ॥ ४० ॥ यदाआत्मनोजन्मादिसंगित्वेपिशोकोनयुक्तस्तदाकिंवाच्यमसंगोदासीननित्यकूटस्थस्वप्रकाशपूर्णानंदैकरसत्वेसनयुक्तइतीत्याशयेनोपसंहरति ॥ तस्मादिति ॥ मुदितासहजसंतोषवृत्तिः ॥ ४१ ॥ ४२ ॥

यथाज्वालानांकोटरेसर्वतःप्रभाव्याप्तेतमसोनावकाशस्तद्वत्त्वय्यपितमोदुःखादेरितिभावः ॥ ४३ ॥ त्वमेवसर्वांतरइत्याह ॥ जागतानामिति ॥ नदृष्टाआत्मनस्तनुःस्वरूपंय स्य ॥ तनुःसूक्ष्मःहारभूतमुक्ताफलानांतंतुरिवाततोऽनुस्यूतः ॥ ४४ ॥ पुनर्जन्मशंकांवारयति ॥ संसारेति ॥ भूत्वाउत्पद्यपुनर्भूयते ॥ ४५ ॥ स्वरूपंस्वभावः ॥ सततमाधिमत् दुःखबहुलम् ॥ ४६ ॥ स्वरूपंतत्त्वमितिनमंतव्यमित्याह ॥ रूपमिति ॥ भ्रांत्यंतरेपुतत्त्वाप्रसिद्धेरत्रापिनतत्त्वमस्तीत्यर्थः ॥ ४७ ॥ ननुनिस्तत्त्वंकथंसदितिदृश्यतेतत्राह ॥ सर्वे ति ॥ आभानंजगदाकारभानम् ॥ अतिभास्वरंव्यक्तम् ॥ ४८ ॥ जगतोभ्रांतिमात्रताप्रदर्शनायानियतस्वभावतांदर्शयति ॥ सुबंधुरित्यादिना ॥ सर्वस्यसर्वेपिसर्वेअरयोमित्रा

अनंतःसत्स्वरूपस्त्वंखमिवातिततांतरम्॥ प्रकाशोनित्यशुद्धस्त्वंज्वालानामिवकोटरम् ॥ ४३ ॥ जागतानांपदार्थानामदृष्टात्मतनुस्त नुः॥ त्वत्स्थोसिहारमुक्तानामेकस्तंतुरिवाततः ॥ ४४ ॥ संसारस्थितिरेवेयंयद्भूत्वाभूयतेपुनः ॥ अज्ञेनैवनतज्ज्ञेनज्ञोसिरामसुखीभव ॥४५॥ स्वरूपमिदमस्यास्तुसंसृतेःसतताधिमत्॥ अज्ञानात्स्फारतामेतिज्ञातवानसिसन्मते॥४६॥ रूपंकिमन्यद्भवतुभ्रममात्राहृतेभ्र मे॥स्वप्नमात्राहृतेस्वप्नेभवत्यन्योहिकःक्रमः॥४७॥सर्वशक्तेरियंशक्तिर्भ्रममात्रमयंतथा॥रामदृश्यतएवेदमाभानमतिभास्वरम्॥४८॥ सुबंधुःकस्यचित्कःस्यादिहनोकश्चिदप्यरिः॥ सदासर्वेचसर्वस्यसर्वसर्वेश्वरेच्छया ॥ ४९ ॥ आलूनशीर्णमखिलमिदमन्योन्यसंश्रित म्॥ अनारतंयातिजगत्तरंगौघइवांभसः॥५०॥ अधऊर्ध्वत्वमायातियात्यूर्ध्वत्वमधस्तथा॥ संसारस्यचलस्यास्यचक्रनेमिरिवाभि तः॥५१॥ स्वर्गस्थानरकंयांतिनारकाश्चत्रिविष्टपम्॥ योनेर्योन्यंतरंयांतिद्वीपाद्द्वीपांतरंजनाः॥५२॥ धीराःकार्पण्यमायांतिकृपणायां तिधीरताम्॥ परिस्फुरंतिभूतानिपातोत्पातशतभ्रमैः॥५३॥ एकरूपस्थिरंचक्रंस्वच्छंसंतापवर्जितम्॥ नेहसंप्राप्यतेकिंचिदग्नौहिमक णोयथा॥५४॥ येयेनाममहाभागावहवोबांधवास्तथा॥ विनष्टाएवदृश्यंतेतेतेकतिपयैर्दिनैः॥ ५५ ॥ परतात्मीयतान्यत्वत्वत्त्वमत्त्वा दिभावना॥ नेहसत्यामहाबाहोद्विचंद्रादिदृशोयथा॥५६॥ अयंबंधुःपरश्चायमयंचाहमयंभवान् ॥ इतिमिथ्यादृशोरामविगलंतुतवा धुना॥५७॥ क्रीडार्थंव्यवहारस्यएताभिर्हतदृष्टिभिः॥ आमूलमंतश्छिन्नाभिर्वहिर्विहरहेलया॥ ५८ ॥ संसारसरणावस्यांतथाविहर सुव्रत॥ नयथैवश्रमश्रांतोवासनाभारवानिव ॥५९॥

णिउदासीनाश्चेत्यर्थः ॥ ४९ ॥ अन्योन्यसंश्रितंपरस्परनिमित्तम् ॥ ५० ॥ अधइति ॥ प्रत्यक्षंचेदंज्योतिश्चक्रभागानांभूमेश्चेतिभावः ॥ ५१ ॥ एवमुत्कर्षापकर्षावप्यनियता वेवेत्याह ॥ स्वर्गस्थाइति ॥ ५२ ॥ धीराअप्रार्थनशीलाः ॥ ५३ ॥ उपसंहरति ॥ एकरूपेति ॥ चक्रंपदार्थमंडलम् ॥ ५४ ॥ विनाशस्तुसर्वत्रनियतइत्याह ॥ येयेइति॥५५॥ अस्वनियततांकिततस्तत्राह ॥ परेति ॥ ५६ ॥ विगलंतुविशीर्यंताम् ॥ ५७ ॥ हतदृष्टिभिर्बाधितानुवृत्तिदृष्टिभिः ॥ आमूलमज्ञानवासनाभ्यांसहअंतश्छिन्नाभिः ॥ ५८ ॥ वासनाभारवानज्ञइवश्रमश्रांतोयथानभवस्येवतथाअस्यांसंसारसरणौविहर ॥ ५९ ॥

कदातर्हिममव्यवहारोपरमोभविष्यतितत्राह ॥ यथायथेति ॥ वासनाक्षयकारिणी विचारणायथायथोदेतितथातथाकार्याणिव्यवहाराःप्रशाम्यंतिउपरंस्यंतइत्यर्थः ॥ ६० ॥ विगतंअयमेवबंधुरितिपरिच्छेदलक्षणंआवरणंयस्यास्तादृश्येवसर्वत्रसमतादर्शिनीत्यर्थः ॥ ६१ ॥ उक्तमेवार्थंकारणोपन्यासेनविवृणोति ॥ नतदिति ॥ ६२ ॥ स्वस्थःस्वरूप प्रतिष्ठितोविक्षेपदुःखोपशमस्वास्थ्यवान्वा ॥ ६३ ॥ सर्वाइति ॥ अनादौसंसारेसर्वयोनिपुस्वस्यबहुशोजन्मानुभवादित्यर्थः ॥ बंधुत्वेनात्यंतमसंयुताःकाश्चनकाश्चिदपिन प र्यायेणसर्वैःसहसंबंधादित्यर्थः ॥ अथवादेहद्वारकपरंपरासंबंधापेक्षयासर्वजीवैःसहसाक्षादैकात्म्यसंबंधस्यांतरंगत्वात्तेनसंबंधेनात्यंतासंयुतानकाश्चनेत्यर्थः ॥ ६४ ॥ उक्तमे

यथायथैषाकार्याणिवासनाक्षयकारिणी ॥ विचारणातवोदेतिसंशाम्यंतितथातथा ॥ ६० ॥ अयंबंधुरयंनेतिगणनालघुचेतसाम् ॥ उ दारचरितानांतुविगतावरणैवधीः ॥ ६१ ॥ नतदस्तिनयत्राहंनतदस्तिनयन्मम ॥ इतिनिर्णीयधीराणांविगतावरणैवधीः ॥ ६२ ॥ नास्त मेतिनचोदेतियश्चिदाकाशवन्महान् ॥ सर्वंसंपश्यतिस्वस्थःस्वस्थोभूमितलंयथा ॥ ६३ ॥ सर्वाएवहितेभूतजातयोरामबंधवः ॥ अत्यं तासंयुताएतास्तवरामनकाश्चन ॥ ६४ ॥ विविधजन्मशताहितसंभ्रमेजगतिबंधुरबंधुरितीक्षणम् ॥ भ्रमदशैवविवल्गतिवस्तुतस्त्रिभु वनंचिरबंधुरबंध्वपि ॥ ६५ ॥ ॥इ० वा० वा० दे० मो० उप० जीवन्मुक्तवर्णनंनामाष्टादशःसर्गः ॥ १८ ॥ ॥ ५ ॥ ॥श्रीवसिष्ठ उवाच ॥ ॥अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ भ्रात्रोस्त्रिपथगातीरेसंवादंमुनिपुत्रयोः ॥ १ ॥ अयंबंधुरयंनेतिकथाप्रस्तावतः स्मृतम् ॥ इतिहासमिमंपुण्यमाश्चर्यंशृणुराघव ॥ २ ॥ अस्त्यस्यजंबूद्वीपस्यकस्मिंश्चिद्गिरिकुंजके ॥ वनव्यूहमहोत्तंसोमहेंद्रोनामपर्व तः ॥ ३ ॥ कल्पद्रुमवनच्छायाविश्रांतमुनिकिन्नरः ॥ शृंगैराततमाकाशंजितवान्यःसमुन्नतैः ॥ ४ ॥ ब्रह्मलोकांतरप्राप्तशृंगकंदरचारिभिः ॥ सामवेदप्रतिध्वानघुंघुमैर्गायतीवयः ॥ ५ ॥ यःपयोमेदुरैर्मेघैलसितैःशृंगकोटिपु ॥ लताकुसुमसंप्रोतैःकुंतलैरिवराजते ॥ ६ ॥ यस्तदो ड्डयनोत्कानांशरभाणांविजृंभितैः ॥ विस्फूर्जतिगुहावक्त्रैःकल्पाभ्राणिहसन्निव ॥ ७ ॥

वार्थंसंक्षिप्यविवृण्वन्नुपसंहरति ॥ विविधेति ॥ विविधैर्नानायोनिविचित्रैर्जन्मशतैराहिताःसंभ्रमायस्मिंस्तथाविधेजगतिअयंबंधुरयमबंधुरितिईक्षणंभेददर्शनंभ्रमदशैवविवल्ग तिविजृंभते ॥ वस्तुतस्तुजीवभावदृष्टौत्रिभुवनंत्रिभुवनस्थंजीवजातंनिजबंधुर्ब्रह्मभावदृष्टौतुस्वयमेवसर्वमित्यबंध्वपितद्देवेत्यर्थः ॥ ६५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रका शेउपशमप्रकरणेऽष्टादशःसर्गः ॥ १८ ॥ ॥ ५ ॥ ॥ इहोक्तसिद्धयेपुण्यपावनाख्यानमुच्यते ॥ पुण्योयस्पितृशोकार्त्तंपावनंसमबोधयत् ॥ १ ॥ अत्रउक्तार्थविषये ॥ १ ॥ २ ॥ गिरिकुंजकेगिरिजालमध्ये ॥ निर्द्धारणेसप्तमी ॥ पुंजकेइतिपाठःस्पष्टः ॥ ३ ॥ आततंविस्तीर्णमप्याकाशंशृंगैर्जितवान्व्याप्तवान् ॥ ४ ॥ ब्रह्मलोकेत्यतिशयोक्तिः ॥ ५ ॥ पयोमेदुरैर्नीलैरितियावत् ॥ लसितैर्विद्युद्भिर्विराजमानैः ॥ कुंतलैःकेशैः ॥ ६ ॥ तटेषुउड्डयनेउत्कानांसोत्कंठानांशरभाणामष्टापदानांविजृंभितैर्विस्फूर्जतिगर्जति ॥ ७ ॥

कंदरांतरेषुचारिभिःप्रतिध्वनितैरितियावत् ॥ कल्लोलानांविलासःसगर्जितनृत्यम् ॥ ८ ॥ रत्नमयेसानौप्रस्थदेशे ॥ व्योमगंगामंदाकिनी ॥ ९ ॥ रत्नाद्रेर्मेरोस्तटमिवविद्योतमाने ॥ १० ॥ अभ्युदितंज्ञानंपरमात्मबोधोयस्य ॥ मूर्त्तंधृतशरीरम् ॥ ११ ॥ द्वौकचाविवेत्यभूतोपमा ॥ वाक्पतेर्बृहस्पतेः ॥ १२ ॥ १३ ॥ ज्ञानवान्तत्त्ववित् ॥ १४ ॥ अर्द्धप्रबुद्धइत्यस्यविवरणंमौर्ख्याधिगतोनिर्गतः ॥ पदेपरमात्मवस्तुनिचानाप्तः ॥ अंतरालेदोलायितःस्थितः ॥ १५ ॥ अकलितेप्राणिभिरायुःक्षयत्वेनालक्षिते संवत्सरशतात्मके देहलताचआयुश्चदेहलतायुषीजीर्णेदेहलतायुषीयेनतथाविधेकालेवहत्यतिकामतिसतिमुनिर्देहंजहावितिव्यवहितेनसंबंधः ॥ १६ ॥ जन्मजरामरणस्वर्गपातनरकादिवृत्तांतशते

येननिर्झरनिर्ह्रादैःकंदरांतरचारिभिः॥ समुद्रजलकल्लोलविलासोविजितोभितः॥ ८ ॥ तस्यैकदेशेविततेरत्नसानौमनोरमे ॥ मुनिभिः स्नानपानार्थंव्योमगंगावतारिता॥ ९ ॥ तस्यास्त्रिपथगायास्तुतीरेविकसितद्रुमे॥ रत्नाद्रितटविद्योतेकचत्कनकपिंजरे॥ १० ॥ आसीदभ्युदितज्ञानस्तपोराशिरुदारधीः॥ मुनिर्दीर्घतपानामतपोमूर्त्तमिवापरम्॥ ११ ॥ मुनेर्बभूवतुस्तस्यपुत्रौद्वाविंदुसुंदरौ॥ पुण्यपावननामानौद्वौकचाविववाक्पतेः॥ १२ ॥ सताभ्यांसहपुत्राभ्यांभार्ययाचसहैकया॥ उवाससरितस्तीरेतस्मिन्सफलपादपे॥ १३ ॥ अथकालेतयोस्तस्यपुत्रयोर्ज्ञानवानभूत्॥ पूर्णोनामचयोज्येष्ठोगुणज्येष्ठश्चराघव॥ १४ ॥ पावनोर्द्धप्रबुद्धोभूत्पूर्वसंध्यांबुजंयथा॥ मौर्ख्यादधिगतोनाप्तःपदेदोलायितःस्थितः॥ १५ ॥ ततोवहत्यकलितेकालेकलितकारणे॥ संवत्सरशतेजीर्णदीर्घदेहलतायुषि॥ १६ ॥ अस्माद्भंगुरभूताद्व्याद्वृत्तांतशतभीषणात्॥ रतिमुत्सृज्यसंसाराज्जराजर्जरजीवितः॥ १७ ॥ कलनापक्षिणीनीडंदेहंदीर्घतपामुनिः॥ जहौगिरिगुहागेहेभारंवैवधिकोयथा॥ १८ ॥ प्रशांतकलनारंभंचेत्यरिक्तचिदास्पदम्॥ पदंजगामनीरागंपुष्पगंधइवांबरम्॥ १९ ॥ अथभार्यामुनेर्देहंप्राणापानविवर्जितम्॥ दृष्ट्वाविलुलितंभूमौविनालमिवपंकजम् ॥ २० ॥ चिरमभ्यस्तयायोगयुक्त्यापतिवितीर्णया॥ तत्याजतनुमम्लानांषट्पदीपद्मिनीमिव॥ २१ ॥ भर्त्तारमेवानुययौजनस्यादृष्टतांगता ॥ प्रभागगनकोशस्थमस्तंयातमिवोडुपम्॥ २२॥ मातापित्रोस्तुगतयोरौर्ध्वदेहिककर्मणि॥ पुण्यएवस्थितोऽव्यग्रःपावनोदुःखमाययौ॥ २३॥

भीषणात्संसाराद्रतिमुत्सृज्यकलनालक्षणायाःपक्षिण्यानीडंदेहंजहावितिपरेणान्वयः ॥ १७ ॥ यथावैवधिकोवीवधवाहकोगेहेवीवधभारंजहातितथेत्यर्थः ॥ विवधवीवधशब्दावुभयतोबद्धशिक्यस्कंधवाह्यकाष्ठविशेषेवर्त्तेते ॥ १८ ॥ प्रशांताःकलनारंभायत्र ॥ चेत्यैरिक्तारहितायाश्चितस्तत्त्वज्जीवचैतन्यानितेषामास्पदंप्रतिष्ठाभूतंपरमपदम् ॥ यथापुष्पगंधोऽम्बरमाकाशंगच्छतितद्वत् ॥ १९ ॥ २० ॥ पत्याविर्तीर्णयाउपदिष्टयायोगयुक्त्या अम्लानांरोगजरादिम्लानिरहितामपितनुंतत्याज ॥ २१ ॥ अद्लीभूतंभर्त्तारमेवअनुययौस्वयमपिअद्लीभावंप्रापेतियावत् ॥ नहिब्रह्मविदांदेशांतरेगतिरस्ति ॥ नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतइतिश्रुतेः ॥ २२ ॥ अव्यग्रोविशोकः ॥ २३ ॥

ज्यायांसंज्येष्ठभ्रातरंअनवेक्ष्यतद्वद्धैर्यमनालंब्येतियावत् ॥ २४ ॥ २५ ॥ पितृसमोज्येष्ठइतिशास्त्रात्पुत्रेतिसंबोधनम् ॥ शोकंदुःखमूष्माणंच ॥ घनतांनिबिडतांमेघतांच ॥ अतएवबाप्पधाराधरमांध्यैककारणमितिचश्लेषात्साधारणेविशेषणे ॥ आंबुजंअंबुजसंबंधिनमंबुजसदृशनेत्रसंबंधिनंच ॥ २६ ॥ २७ ॥ स्थानंउत्पत्त्यादिकालत्रयेप्याधारभूतम् ॥ जंतूनांजननधर्मिणांप्राणिनाम् ॥ विजितात्मनांब्रह्मविदाम् ॥ रूपंस्वरूपम् ॥ अतएवनपितुःशोच्यतेत्याह ॥ स्वभावमिति ॥ २८ ॥ ईदृशीइयमेवममममाताअयमेवममपितेत्येवंरूपा ॥ यत्त्वयाभावनया ॥ २९ ॥ निःसंख्याःसंख्यातुमशक्याःपुत्राययोः ॥ ३० ॥ निम्नानिगंभीरस्थानानीव ॥ ३१ ॥ हेपुत्रनृणामन्येषामपि ॥ ३२ ॥ विट

शोकोपहतचित्तोसौभ्रमन्काननवीथिषु ॥ ज्यायांसमनवेक्ष्यैवपावनोविललापह ॥ २४ ॥ अथौर्ध्वदेहिकंकृत्वामातापित्रोरुदारधीः ॥ आययौविपिनेपुण्यःपावनंशोकलालसम् ॥ २५ ॥ ॥पुण्यउवाच॥ ॥ किंपुत्रघनतांशोकंनयस्यांध्यैककारणम् ॥ बाप्पधाराधरंघोरंप्रावट्कालइवांबुजम् ॥ २६ ॥ पितातवमहाप्राज्ञगतःसार्द्धंत्वदंबया ॥ स्वामेवपरमात्मात्मपदवींमोक्षनामिकाम् ॥ २७ ॥ तत्स्थानंसर्वजंतूनांतद्रूपंविजितात्मनाम् ॥ स्वभावमभिसंपन्नेकिंपितर्यनुशोचसि ॥ २८ ॥ ईदृशीतुत्वयाबद्धाभावनेहविमोहजा ॥ संसारेयदशोच्योपित्वयाताततोनुशोच्यते ॥ २९ ॥ नसैवभवतोमातानासावेवपितातव ॥ नभवानेपतनयस्तयोर्निःसंख्यपुत्रयोः ॥ ३० ॥ मातापितृसहस्राणिसमतीतानितेसुत ॥ बहून्यंबुप्रवाहस्यनिम्नानीववनेवने ॥ ३१ ॥ असंख्यपुत्रयोर्नैवभवानेवसुतस्तयोः ॥ सरित्तरंगवत्पुत्रगताःपुत्रगणानृणाम् ॥ ३२ ॥ अस्मत्पित्रोरतीतानिपुत्रलक्षाण्यनेकशः ॥ पत्रकोरकवृंतानिलताविटपयोरिव ॥ ३३ ॥ मित्रबांधववृंदानिजंतोर्जन्मनिजन्मनि ॥ ऋतावृतावतीतानिफलानीवमहातरोः ॥ ३४ ॥ शोचनीयायदिस्नेहान्मातापितृसुताःसुत ॥ तदतीतानशोच्यंतेकिमजस्रंसहस्रशः ॥ ३५ ॥ प्रपंचोयंमहाभागदृश्यतेजागतेभ्रमे ॥ परमार्थेनतेप्राज्ञनास्तिमित्रंनबांधवाः ॥ ३६ ॥ ननाशइवहिभ्रातःपरमार्थेनविद्यते ॥ महत्यपिचिरात्तेमराविवपयोलवाः ॥ ३७ ॥ एतायाःप्रेक्षसेलक्ष्मीश्छत्रचामरचंचलाः ॥ स्वप्नएवमहाबुद्धेदिनानित्रीणिपंचवा ॥ ३८ ॥ दृष्ट्यातुपारमार्थिक्यापुत्रसत्यंविचारय ॥ नैवत्वंनवयंचैवभ्रांतिमंतःपरित्यज ॥ ३९ ॥

पपग्रहणेनविटपीलक्ष्यते ॥ विटपीनोरिवेतिवापाठः ॥ ३३ ॥ ३४ ॥ नशोच्यंतेत्वयेतिशेषः ॥ ३५ ॥ जागतेजगत्कल्पनानिमित्तेभ्रमेमोहेसत्येवदृश्यते ॥ परमार्थेनपरमार्थतस्तुतेतवन ॥ तथाचोक्तंवार्त्तिके ॥ अविद्यास्तीत्यविद्यायामेवासित्वाप्रकल्प्यते ॥ ब्रह्मदृष्ट्यात्वविद्येयंनकथंचनयुज्यतइति ॥ ३६ ॥ परमार्थेनपरमार्थदृष्ट्या ॥ मरोमरुत्वादेवपयोलवानसंतितत्रचिरात्तेसुतराम् ॥ तथाब्रह्मस्वाभाव्यादेवनाशोनास्तितत्रतत्त्वबोधेसुतरामितिद्योतनायापिशब्दः ॥ ३७ ॥ लक्ष्मीःराज्यादिसंपदः ॥ स्वप्नएवतादृतिशेषः ॥ ३८ ॥ ३९ ॥

स्वसंकल्पलक्षणोयउपतापःसंनिपातभ्रमस्तदुत्थाःपुरोदृश्यंते ॥ ४० ॥ अज्ञानलक्षणेनातपेनविस्तीर्णेआच्छन्नेमरौमरुभूमिसदृशेआत्मनि ॥ स्वसंकल्पवासनानामकंमरीचिवा
रिमृगतृष्णोदकम् ॥ ४१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेएकोनविंशःसर्गः ॥ १९ ॥ ॥ ७ ॥ ॥ नानायोनिषुजन्मानिपावनस्यात्मनस्त
था ॥ इहपुण्येनकीर्त्यंतेशोकमोहापनुत्तये ॥ १ ॥ शोकस्यमोहमूलकत्वान्मोहापनयनेनैवास्यशोकोपनेयइतिमन्यमानःपुण्यस्तद्विषयाणांपित्रादीनामनिर्वचनीयत्वान्मि
थ्यात्वंप्रतिज्ञायज्ञानापनोद्यतामाह ॥ कःपितेति ॥ कःकिंस्वरूपः ॥ तत्त्वतोनिर्वक्तुमशक्याःसर्वेपीत्यर्थः ॥ स्वबुद्ध्यास्वभ्रांत्यैवावधूयंतेउत्थाप्यंते ॥ अथवास्वविवेकबुद्धिल
क्षणयावात्ययास्वजनपांसवोवधूयंतेनिरस्यंते ॥ १ ॥ स्नेहद्वेषमोहदशालक्षणआमयोरोगः ॥ स्वसंज्ञास्वकृतःसंकेतस्तन्मात्रकेणैव ॥ २ ॥ उक्तमुपपादयति ॥ बंधुत्वइति ॥

अयंगतोमृतश्चायमितिदुर्दृष्टयःपुरः ॥ स्वसंकल्पोपपातोत्थादृश्यंतेनतुसत्यतः ॥ ४० ॥ अज्ञानविस्तीर्णमरौविलोलंशुभाशुभस्यंदमयै
स्तरंगैः ॥ स्ववासनानाममरीचिवारिपरिस्फुरत्येतदनंतरूपम् ॥ ४१ ॥ ॥इ०वा०वा०दे०मोक्षोपायेपूपशमप्रकरणेपावनबोधनंना
मैकोनविंशःसर्गः ॥ १९ ॥ ॥ ७ ॥ ॥पुण्यउवाच ॥ ॥ कःपिताकिंचवामित्रंकामाताकेचबांधवाः ॥ स्वबुद्ध्यैवावधूयंते
वात्ययाजनपांसवः ॥ १ ॥ बंधुमित्रसुतस्नेहद्वेषमोहदशामयः ॥ स्वसंज्ञामात्रकेणैवप्रपंचोयंवितन्यते ॥ २ ॥ बंधुत्वेभावितोबंधुःपरत्वे
भावितःपरः ॥ विषामृतदशेवेहस्थितिर्भावनिबंधनी ॥ ३ ॥ एकत्वेविद्यमानस्यसर्वगस्यकिलात्मनः ॥ अयंबंधुःपरश्चायमित्यसौकल
नाकुतः ॥ ४ ॥ रक्तमांसास्थिसंघाताद्देहादेवास्थिपंजरात् ॥ कोहंस्यामितिचित्तेनस्वयंपुत्रविचारय ॥ ५ ॥ दृष्ट्यातुपारमार्थिक्यानकश्चि
त्त्वंनवास्म्यहम् ॥ मिथ्याज्ञानमिदंपुण्यःपावनश्चेतिवल्गति ॥ ६ ॥ कस्तेपिताकश्चसुहृत्कामाताकश्चवापरः ॥ खस्यानंतविलासस्यकि
मस्वंकिंस्वमुच्यताम् ॥ ७ ॥ असिचेत्त्वंतदन्येपुयातेपुबहुजन्मसु ॥ येबंधवोयेविभवाःकितानपिनशोचसि ॥ ८ ॥

भावितोदृढभावनयासंकेतितः ॥ परत्वेशत्रुत्वे ॥ यथाविषकृमिभिर्विषस्यजीवनहेतुत्वेनदृढभावनात्तान्प्रतिअमृतदशा अन्यैस्तद्विपरीतभावनाद्विषदशाचेतिभावनिबंधनीस्थि
तिस्तद्वदित्यर्थः ॥ ३ ॥ आस्तांबंधुतत्त्वचिंतनातदनुशोचिनस्तवस्वतत्त्वविमर्शमात्रेणतेनिरसितुंशक्याइत्याशयेनाह ॥ एकत्वेइति ॥ सर्वदेहेष्वेकत्वेअभिन्नत्वे ॥ ४ ॥ नन्वहंक
थंसर्वदेहेष्वेकइतिचेदहंप्रत्ययवेद्यमेवकोसावितिविमृशेत्याह ॥ रक्तेति ॥ रक्तादिजडसंघाताद्देहादन्यश्चेतनस्वभावःकोहंस्यामितिविचारयेत्यर्थः ॥ ५ ॥ त्वंपावनशब्दवाच्यो
देहादिर्नकश्चित् ॥ अहंपुण्यशब्दवाच्यः ॥ मिथ्याज्ञानंदेहात्मताभ्रमएववल्गतिप्रथते ॥ ६ ॥ एवंपित्रादिशरीरमपिविमर्शेभ्रांतिरेवेत्याह ॥ कइति ॥ यदितुदेहाद्युपाधिनिष्कृ
ष्टंचिदाकाशमेवाहंत्वंपित्राद्यश्चेतिमन्यसेतदाममपिताममभ्रातेत्यादिभेदघटितःस्वत्वादिसंबंधोनघटतएवेत्याह ॥ खस्येति ॥ खस्यचिदाकाशस्य ॥ ७ ॥ लिंगशरीराण्येवा
हंमद्बांधवाश्चेतिचेत्तत्राह ॥ असिचेदिति ॥ त्वंमद्भ्रातृत्वलिंगात्माअसिचेत्तत्तदायातेष्वतीतेपुर्किकिमर्थंनशोचसि ॥ ८ ॥

जन्मांतरबंधून्प्रपंचयति ॥ बभूवुरित्यादिना ॥ मार्गाःमृगयोनिजाजीवाः ॥ ९ ॥ अंभोजिनीषुपद्मवनीषुनद्यादितटीषुहंसस्यतेतेतत्कालप्रसिद्धाहंसाबंधवोबभूवुः ॥ तटीष्वंभोधियोषितामितिपाठेनदीनांतटीष्वित्यर्थः ॥ १० ॥ अन्यत्रान्येषुजन्मसु ॥ अलमत्यंतंबंधवोबभूवुः ॥ ११ ॥ १२ ॥ स्रवंतीषुनदीषु ॥ १३ ॥ इदानींभ्रातुर्जन्मभेदान्योगबलेनदृष्टान्विशिष्यस्मारयन्नाह ॥ बभूविथेति ॥ दशार्णतुषारपुंड्रादयोदेशविशेषाः ॥ १४ ॥ सरमाशुनीतस्याःपुत्रः ॥ पतत्रीपक्षीअर्थाच्छाल्वेष्वेव ॥ १५ ॥ घुणःकाष्ठकीटकःअर्था

बभूवुस्तेसुपुष्पासुस्थलीषुमृगयोनिषु ॥ बहवोबंधवोमार्गास्तान्कथंनानुशोचसि ॥ ९ ॥ बभूवुस्तेसपद्मासुतटीष्वंभोजिनीषुते ॥ हंसस्यबंधवोहंसास्तान्कथंनानुशोचसि ॥ १० ॥ बभूवुस्तेलमन्यत्रचित्रासुवनराजिषु ॥ बहवोबंधवोवृक्षास्तान्कथंनानुशोचसि ॥ ११ ॥ बभूवुस्तेमहोग्रेषुशिखरेषुमहीभृताम् ॥ बहवोबांधवाःसिंहास्तान्कथंनानुशोचसि ॥ १२ ॥ बभूवुस्तेस्रवंतीषुसरःस्वंभोजिनीषुच ॥ बहवोबंधवोमत्स्यास्तान्कथंनानुशोचसि ॥ १३ ॥ बभूविथदशार्णेषुकपिलोवनवानरः ॥ राजपुत्रस्तुषारेषुपुंड्रेषुवनवायसः ॥ १४ ॥ हैहयेषुचमातंगस्त्रिगर्त्तेषुचगर्दभः ॥ शाल्वेषुसरमापुत्रःपतत्रीसरलद्रुमे ॥ १५ ॥ विंध्याद्रौपिप्पलोभूत्वाघुणोभूत्वामहावटे ॥ मंदरेकुक्कुटोभूत्वाविप्रोजातोसिकंदरे ॥ १६ ॥ कोसलेषुद्विजोभूत्वाभूत्वावंगेषुतित्तिरिः ॥ अश्वोभूत्वातुषारेषुजातस्त्वंब्रह्मणोध्वरे ॥ १७ ॥ यःकीटस्तालकंदांतर्मशकोयउदुंबरे ॥ यःप्राग्बकोविंध्यवनेसत्वंपुत्रममानुजः ॥ १८ ॥ हिमवत्कंदरेभूर्जतनुत्वग्ग्रंथिकोटरे ॥ पिपीलिकोयःषण्मासान्सोयंत्वमनुजोमम ॥ १९ ॥ स्थितःसीमांतकुग्रामगोमयेयश्चवृश्चिकः ॥ सार्द्धसंवत्सरंसाधोसोयंत्वमनुजोमम ॥ २० ॥ पुलिंदीस्तनपीठेषुनिलीनंयेनकानने ॥ षट्वदेनेवपद्मेषुसोयंत्वमनुजोमम ॥ २१ ॥ एतास्वन्यासुबह्वीषुजनयोनिषुपुत्रक ॥ जातोसिजंबूद्वीपेस्मिन्पुराशतसहस्रशः ॥ २२ ॥ इत्थंतवात्मनश्चैवप्राक्तनंवासनाक्रमम् ॥ पश्यामिसूक्ष्मयाबुद्ध्यासम्यग्दर्शनशुद्धया ॥ २३ ॥ ममापिबह्वीोवह्वधायोनयोमोहमंथराः ॥ समतीताःस्मराम्यद्यताज्ज्ञानोदितयादृशा ॥ २४ ॥ त्रिगर्त्तेषुशुकोभूत्वाभेकोभूत्वासरित्तटे ॥ वनेषुलावकोभूत्वाजातोहमिहकानने ॥ २५ ॥

न्मंदरस्यैवकंदरेदरीप्रदेशे ॥ १६ ॥ पुष्करेषुप्रसिद्धेब्रह्मणःप्रजापतेरध्वरेजातःपशुरितिशेषः ॥ यातइतिवापाठः ॥ १७ ॥ तालतरोःकंदोमूलंतदंतः ॥ त्रीण्यपिजन्मानिविंध्यवने ॥ १८ ॥ भूर्जवृक्षस्यतन्वीमृदुलायात्वक्तद्ग्रंथिप्रभवेकोटरेविले ॥ १९ ॥ अर्थात्स्वदेशसीमायाअंतेयःकुग्रामस्तत्रत्येशुष्कगोमयोत्करे ॥ २० ॥ लीनंअर्थात्पुलिंदीशिशुजन्मप्राप्येतिगम्यते ॥ २१ ॥ २२ ॥ २३ ॥ भ्रातृजन्मोक्तीरुपसंहृत्यस्वजन्मभेदान्वक्तुमारभते ॥ ममापीति ॥ मोहमंथराअज्ञानजडाः ॥ २४ ॥ लावकःक्षुद्रपक्षिविशेषः ॥ २५ ॥

वक्षतांकृत्वावक्षजन्मभुक्त्वेत्यर्थः ॥ उष्ट्रत्वमुष्ट्रजन्म ॥ न्युब्जत्वमितिपाठेपिन्युब्जपृष्ठमुष्ट्रत्वमेवभुक्त्वेहजातइत्यर्थः ॥ २६ ॥ २७ ॥ इहास्मिञ्जन्मनि ॥ २८ ॥ तुषारेषुहिमवत्प्रदेशेपुनृपवद्विराजनशीलेनमांडलिकेनेत्यर्थः ॥ अपुण्यस्यस्वस्यलोकवंचनायपुण्यनाम्नाप्रख्यापनंदंभस्तद्वत्स्थितेनमयेत्युत्प्रेक्षा ॥ मयेदंकथ्यतेतवेतिपाठेतुस्पष्टम् ॥ २९ ॥ जन्मनःजन्मभेदरूपायाभ्रांतेर्विलासाः ॥ ३० ॥ उपसंहृत्यप्रकृतेयोजयति ॥ एवंस्थितेइति ॥ ३१ ॥ तान्प्राक्तनान्बंधून्कान्शोचावः ॥ तान्बंधूनतिक्रम्यइहकान्शोचा

भुक्त्वापुलिंदतांविंध्येकृत्वावंगेपुवक्षताम् ॥ उष्ट्रत्वमपिविंध्याद्रौजातोहमिहकानने ॥ २६ ॥ यश्चातकोहिमगिरौयोराजापौंड्रमंडले ॥ व्याघ्रोयःसत्यकुंजेपुसएवाहंतवाग्रजः ॥ २७ ॥ योगृध्रोदशवर्षाणियोग्राहोमासपंचकम् ॥ यःसमानांशतंसिंहःसएवेहतवाग्रजः ॥ २८ ॥ आंध्रग्रामचकोरणतुपारनृपराजिना ॥ श्रीशैलाचार्यपुत्रेणदंभवत्कथ्यतेमया ॥ २९ ॥ सर्वेविविधसंसाराविविधाचारचेष्टिताः ॥ विलासाजन्मनोभ्रांतेःस्मर्यंतेप्राक्तनामया ॥ ३० ॥ एवंस्थितेजगज्जाताबांधवाःशतशोगताः ॥ पितरोमातरश्चैवभ्रातरःसुहृदस्तथा ॥ ३१ ॥ कांस्तान्समनुशोचावोनशोचावश्चकानपि ॥ बंधूनिहातिशोचावइदृश्येवजगद्गतिः ॥ ३२ ॥ अनंताःपितरोयांतियांत्यनंताश्च मातरः ॥ इहसंसारिणांपुंसांवनपादपपर्णवत् ॥ ३३ ॥ किंप्रमाणमतःपुत्रदुःखस्यात्रसुखस्यच ॥ तस्मात्सर्वंपरित्यज्यतिष्ठावःस्वच्छतांगतौ ॥ ३४ ॥ प्रपंचभावनांत्यक्त्वामनस्यहमितिस्थिताम् ॥ तांगतिंगच्छभद्रंतेयांयांतिगतिकोविदाः ॥ ३५ ॥ इहाजवंजवीभावंपतनोत्पातनात्मकम् ॥ नंचशोचंतिसुधियश्चिरंवल्गंतिकेवलम् ॥ ३६ ॥ भावाभावविनिर्मुक्तंजरामरणवर्जितम् ॥ संस्मरात्मानमव्यग्रोमाविमूढमनाभव ॥ ३७ ॥ नतेदुःखंनतेजन्मनतेमातानतेपिता ॥ आत्मैवासिनसद्भूद्धेत्वमन्यःकश्चिदेवहि ॥ ३८ ॥ अस्यांसंसारयात्रायांनानाभिनयदायिनः ॥ अज्ञाएवनराःसाधुरसभावसमन्विताः ॥ ३९ ॥ मध्यस्थदृष्टयःस्वस्थायथाप्राप्तार्थदर्शिनः ॥ तज्ज्ञास्तुप्रेक्षकाएव साक्षिधर्मेव्यवस्थिताः ॥ ४० ॥

वः ॥ नकांश्चिदपिशोचावः ॥ यतईदृश्येवजगद्गतिरित्यर्थः ॥ ३२ ॥ ३३ ॥ किंप्रमाणमवधिः ॥ सर्वशोकंदृश्यमात्रंवा ॥ ३४ ॥ गतिकोविदाआत्मावगतिकुशलाः ॥ ३५ ॥ पतनमधोगतिरुत्पतनमूर्ध्वगतिस्तदात्मकंआजवंजवीभावमविश्रांतभ्रमणम् ॥ केवलंनिरभिमानतयावल्गंतिव्यवहरंति ॥ ३६ ॥ ३७ ॥ त्वमात्मैवासिनान्यःअनात्मभूतदेहादिःकश्चित्त्वमसीत्यर्थः ॥ ३८ ॥ नर्त्तकवन्नानाभिनयाअभिनिवेशचेष्टास्तद्दायिनस्तत्कारिणोऽज्ञामूढाएवनराःसाधुरसभावःपुरुषार्थसारताबुद्धिस्तत्समन्विताइत्यर्थः ॥ ३९ ॥ तज्ज्ञास्तत्त्वज्ञास्तुतटस्थदृष्टयउदासीनाःप्रेक्षकाएव ॥ अतएवसाक्षिधर्मेव्यवस्थिताः ॥ ४० ॥

१ सएवेहेत्यपिपाठः २ नानुइत्यपिपाठः

निशायाआगमेआगमनेसतिआलोककर्मणांप्रकाशनक्रियाणांयथादीपाःसन्निधिमात्रेणकर्त्तारोपिअव्याप्रियमाणत्वादकर्त्तारएवंतज्ज्ञालोकव्यवहारस्थितावित्यर्थः॥४१॥ दृष्टांतांतरमाह ॥ प्रतिबिंबेइति ॥ यथाकराङ्गितदर्पणारत्नाद्याःप्रतिबिंबोपाधयःस्वात्मनोबिंबभूतसर्वदेहगतैःसर्वैर्धर्मैःसहापिस्वात्मनिकृतेप्रतिबिंबेबिंबधर्मांतरवत्स्वयंनिविष्टा नदृश्यंतेतद्वत्स्वात्मन्यध्यस्तेकार्येकर्त्तारोपिमहाधियःस्वयमत्तिनिविष्टानभवंतीत्यर्थः ॥ ४२ ॥ हेपुत्रसर्वैरेपणामयकलंकैर्विवर्जितेनअतएवमुनिनामननशीलेनआत्मनास्वेनैव हृदब्जमध्येस्वस्थात्मस्वभावेनकलितेनसाक्षात्कृतेनसंसारसंभ्रमंअलंनिःशेषंपरित्यज्यअमुनापरिशिष्टेनात्मनैवपरितोपमेहीत्यर्थः॥४३॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपश

कर्त्तारोपिनकर्त्तारोयथादीपानिशागमे॥ आलोककर्मणामेवंतज्ज्ञालोकस्थिताविह॥४१॥ प्रतिबिंबेनदृश्यंतेस्वात्मबिंबगतैरपि॥ यथादर्पणरत्नाद्यास्तथाकार्येमहाधियः॥४२॥ सर्वैःपणामयकलंकविवर्ज्जितेनस्वस्थात्मभावकलितेनहृदब्जमध्ये॥ पुत्रात्मनात्मनिमहामुनिनामुनैवसंत्यज्यसंभ्रममलंपरितोषमेहि॥४३॥ ॥इ०वा०वा०दे०मोक्षोपायेपूपशमप्रकरणेपावनबोधोनामविंशःसर्गः॥२०॥

श्रीवसिष्ठउवाच॥ ॥एवंप्रबोधितस्तेनतदापुण्येनपावनः॥ प्रबोधमापप्राकाश्यंप्रभातइवभूतलम्॥१॥ उभावपिततःसिद्धौज्ञानविज्ञानपारगौ॥ विचेरतुर्वनेतस्मिन्यावदिच्छमनिंदितौ॥२॥ ततःकदाचित्कालेननिर्वाणपदमागतौ॥ तौविदेहौगतस्नेहौदीपाविवशमंगतौ॥३॥ एवंप्राग्भुक्तदेहानामनंताजनबंधुता॥ आःकैःकिंगृह्यतेताभ्यःकिंवासंत्यज्यतेनघ॥४॥ तस्मादासामनंतानांतृष्णानांरघुनंदन॥ उपायस्त्यागएवैकोननामपरिपालनम्॥५॥ चिंतनेनैधतेचिंताविंधनेनेवपावकः॥नश्यत्यचिंतनेनैवविनेंधनमिवानलः॥६॥ ध्येयत्यागरथारूढःकरुणोदारयादृशा॥ लोकमालोकयन्दीनमातिष्ठोत्तिष्ठराघव॥ ७॥ एषाब्राह्मीस्थितिःस्वच्छानिष्कामाविगतामया॥ एनांप्राप्यमहाबाहोविमूढोपिनमुह्यति॥८॥

मप्रकरणेविंशःसर्गः ॥ २० ॥ ॥ ७ ॥ ॥ तृष्णापाशक्षयोमोक्षोह्याशयाचित्तवृत्तयः ॥ निराशस्यात्मपूर्णस्यस्वतोमुक्तिरितीर्यते ॥ १ ॥ प्रबोधंपरिनिष्ठितमात्मनिश्चयम् ॥१॥ यावदिच्छंप्रारब्धक्षयपर्यंतमितियावत् ॥ २ ॥ गतस्नेहौक्षीणतैलौ ॥ ३ ॥ उक्तमाख्यानमुपसंहृत्यप्रकृतेयोजयति ॥ एवमिति ॥ जनबंधुतासुहृज्जनबंधुसमूहः ॥ आःइतिविस्मयेनिपातः ॥ गृह्यतेशोच्यत्वेनोपादीयते ॥ ४ ॥ आसांसर्वशोकादिमूलभूतानांप्रतिविषयमनंतानाम् ॥ परिपालनंविषयसंपादनैरभिवर्द्धनम ॥ ५ ॥ विषयाचिंतनमेवतत्परित्यागइत्याशयेनाह ॥ चिंतनेनेति ॥ एधतेवर्धते ॥ ६ ॥ ध्येयत्यागःप्राग्वर्णितध्येयवासनात्यागः ॥ करुणासर्वभूतानुकंपा ॥ आतिष्ठअनुतिष्ठ ॥ प्रकृतव्यवहारमितिशेषः ॥ ७ ॥ विमूढोव्यवहारेष्वचतुरोपिनमुह्यति ॥ ८ ॥

१ अयमेवमुख्यःपाठःप्राचीनपुस्तकेदृष्टत्वाट्टीकालिखितपर्यायानुगुणत्वाच्च ॥ पुस्तकांतरेपुधनबंधुतेतिमूलटीकयोःपाठोयद्यपिदृश्यतेतथापिस्लिखितपर्यायाननुगुणत्वादुपेक्ष्यइतिभाति

विवेकलक्षणंसुहृदंमित्रम् ॥ धियंपरमार्थबोधलक्षणांप्रियसखीम् ॥ ९ ॥ विनिवारिताःपरित्यक्ताःसर्वेअर्थाधनानियेन ॥ अपहस्तिताअंतःस्नेहविच्छेदादपहस्तिताहस्तेनकृकु
दिप्रणोद्यनिरस्ताइवबांधवायेन ॥ अभ्युद्धरतिसंकटादुन्नयतिस्वमितिशेषः ॥ १० ॥ उन्नयेत्उत्कर्षंनयेत्विषयगर्त्तादुद्धरेद्वा ॥ ११ ॥ ननुसर्वदुःखप्रशमनोपलक्षितनिरतिश
यानंदलाभलक्षणंफलम् ॥ महत्त्वंतुच्छविषयानभिलाषस्तेनोपबृंहितादुपचितात् ॥ १२ ॥ पाताअधोगतयःउत्पतनान्यूर्ध्वगतयःदोलनानिमर्त्यलोकेष्वेवजन्मपरंपरयाभ्रम
णानिचतैस्तन्निमित्तभूतैर्विषयाभिलाषैर्येपतंतितेषांमनःसंदेहगतज्वरंप्राप्तसंतापमेवनकदाचिद्विश्राम्यतीत्यर्थः ॥ अथवापूर्वश्लोकान्नेत्यनुवर्त्ययेनपतंतितेषांमनोगतज्वरंनिःसं
तापमितिव्याख्येयम् ॥ पुनंतियतंतेइतिवापाठेपातयंत्युत्पातयंतिचयेविषयरागास्तेपातोत्पातनास्तेभ्योदोलनैरुत्क्षेपणैःप्रत्याहारोपायैरात्मनिस्थैर्यापादनेनयेमनःपुनंतियतंते
वातेषांमनोगतज्वरंशांतत्रिविधतापंभवतीतिव्याख्येयम् ॥ १३ ॥ ननुसंतापहेतुष्वाध्यात्मिकाधिदैविकाधिभौतिकेपुरोगवर्षातपचोरसर्पादिषुसत्सुकथंमनःप्रशांतिमात्रेणसर्व

एकंविवेकंसुहृदमेकांप्रौढसखींधियम्॥ आदायविहरन्नेवंसंकटेपुनमुह्यति॥ ९॥ विनिवारितसर्वार्थादपहस्तितबांधवात्॥ नस्वधैर्या
हृतेकश्चिदभ्युद्धरतिसंकटात्॥ १०॥ वैराग्येणाथशास्त्रेणमहत्त्वादिगुणैरपि॥ यत्नेनापद्विघातार्थंस्वयमेवोन्नयेन्मनः॥ ११॥ नतत्रिभु
वनैश्वर्यान्नकोशाद्रत्नधारिणः॥ फलमासाद्यतेचित्ताद्यन्महत्त्वोपबृंहितात्॥ १२॥ तदेतस्मिञ्जगत्कुक्षौपातोत्पातनदोलनैः॥ पतंतिपु
रुषायेवैमनस्तेषांगतज्वरम्॥ १३॥ पूर्णेमनसिसंपूर्णंजगत्सर्वंसुधाद्रवैः॥ उपानद्गूढपादस्यननुचर्मास्तृतैवभूः॥ १४॥ वैराग्यात्पूर्णता
मेतिमनोनाशावशानुगम्॥ आशयारिक्ततामेतिशरदेवसरोमलम्॥ १५॥ हृदयंशून्यतामेतिप्रकटीकृतकोटरम्॥ अगस्तिपीतार्णव
वदाशाविवशचेतसाम्॥ १६॥ यस्यचित्ततरौस्फारेतृष्णाचपलमर्कटी॥ नवल्गतिमहत्तस्यराजतेहृद्वनंततम्॥ १७॥ पद्माक्षकोशंत्रि
जगद्गोष्पदंयोजनव्रजम्॥ निमेषार्द्धंमहाकल्पःस्पृहारहितचेतसाम्॥ १८॥

तापनिवृत्तिस्तत्राह ॥ पूर्णेइति ॥ त्रिविधाअपिसंतापामनोदोषमूलाएव ॥ मनसिविशुद्धब्रह्मात्मरसपूर्णेसतिसर्वंजगदानंदपूर्णमेवभाति ॥ यथामृदुलोपानद्भ्यांसंवृतचरणस्य
कुशकंटकादिसंकुलापिसर्वाभूर्मृदुलतरचर्मास्तृतैवभातितद्वदित्यर्थः ॥ १४ ॥ नआशावशानुगमितिच्छेदः ॥ रिक्ततांशुष्कार्णवोदरकल्पताम् ॥ सरोमलंभिन्नतडागपंकः ॥
सरोजलमितिवापाठः ॥ १५ ॥ रिक्ततामेतीत्येतद्दृष्टांतेनविवृणोति ॥ हृदयमिति ॥ कोटरस्यप्रकटीकरणमत्रांतर्गतलोभदैन्यादिदोषाणांग्राहभुजंगादीनांचस्फुटंप्रकाशनम्
॥ १६ ॥ स्फारेधर्मज्ञानवैराग्यशांतिदांत्यादिपुष्पफलपल्लवादिसमृद्धेचित्ततरौमनोवृक्षे ॥ हृद्वनंमनोबुद्धिरहंकारश्चित्तमितिचतुर्विधवृक्षघटितमंतःकरणवनम् ॥ १७ ॥ निः
स्पृहंप्रशंसति ॥ पद्माक्षेत्यादिना ॥ त्रिजगत्त्रैलोक्यमपिपद्मबीजकोशवदल्पमितियावत् ॥ अपरिच्छिन्नब्रह्मसुखदशाब्रह्मांडांतर्गतसुखलवानामल्पतरत्वात् ॥ एवंनित्यसर्वग
तब्रह्मदशादेशकालपरिच्छिन्नाधिपत्यादिविभवोप्यल्पएवेत्याशयेनाह ॥ गोष्पदमिति ॥ १८ ॥

शीततानिस्तापाह्लादः ॥ रंभाःकदल्यश्चंदनतरवश्चतदावल्यांतद्वनेयथायोग्यंतत्संश्लेषेवा ॥ १९ ॥ २० ॥ अब्दलेखामेघराजिः ॥ मषीकज्जलद्रवः ॥ दूषयतिमलिनयति ॥ २१ ॥ स्थगितदिक्तटाआच्छादितदिगंताः ॥ अरूपत्वंब्रह्मतांस्थाणुतांच ॥ २२ ॥ निरोधककुल्यक्षेच्छिन्नेतदधःप्ररूढःसद्वृक्षइवपश्चाद्धैर्यंशतशाखतांप्रयातिवर्द्धतइतियाव त् ॥ २३ ॥ अस्तुधैर्याभिवृद्धिःकिंततस्तत्राह ॥ अनस्तमितेति ॥ अनस्तमितधैर्येणअभिवृद्धवैराग्यजितेंद्रियत्वद्वंद्वसहिष्णुत्वादिधैर्यवतापुरुषेण ॥ २४ ॥ प्ररोहंपुनःप्ररोहाव काशंनददासिचेत्तर्हिजन्मादिभयंनास्तीत्यर्थः ॥ २५ ॥ ततांपूर्णाम् ॥ २६ ॥ चित्तेप्रविष्टयाकौशिकपक्षिण्याउलूक्या ॥ यदाकदाचिद्गृहेपिउलूकीप्रविष्टाचेन्मृत्युदारिद्र्यो



शीततासानशीतांशोर्नहिमाचलकंदरे ॥ नरंभाचंदनावल्यांनिःस्पृहेपुमनस्सुया ॥ १९ ॥ नतथाभातिपूर्णेंदुर्नपूर्णःक्षीरसागरः ॥ नलक्ष्मीवदनंकांतंस्पृहाहीनंयथामनः ॥ २० ॥ यथाब्दलेखाशशिनंसुधालेपंमषीयथा ॥ दूषयत्येवमेवांतर्नरमाशापिशाचिका ॥ २१ ॥ आशाख्याश्चित्तवृक्षस्यशाखाःस्थगितदिक्तटाः ॥ तासुच्छिन्नास्वरूपत्वंयातिचित्तमहाद्रुमः ॥ २२ ॥ छिन्नतृष्णामहाशाखेचित्तस्थाणौस्थितिंगते ॥ एकरूपतयाधैर्यंप्रयातिशतशाखताम् ॥ २३ ॥ अनस्तमितधैर्येणतेनचित्तेक्षयंगते ॥ तत्पदंप्राप्यतेरामयत्रनाशोनविद्यते ॥ २४ ॥ एतासांचित्तवृत्तीनामाशानामुत्तमाशयः ॥ नददासिप्ररोहंचेत्तद्भयंनास्तिराघव ॥ २५ ॥ चित्तंवृत्तिविहीनंतेयदायातमचित्तताम् ॥ तदामोक्षमयीमंतःसत्तामाप्नोपितांतताम् ॥ २६ ॥ चित्तकौशिकपक्षिण्यातृष्णयाक्षुब्धयांतरे ॥ अमंगलानिविस्तारमलमायांतिराघव ॥ २७ ॥ चिंतनंवृत्तिरित्युक्तंवर्त्ततेचित्तमाशया ॥ चित्तवृत्तिमतोत्याशांत्यक्त्वानिश्चित्ततांव्रज ॥ २८ ॥ योययावर्त्ततेवृत्त्यासतयैवविनाक्षयी ॥ अतश्चित्तोपशांत्यर्थंतद्वृत्तिंप्रक्षयंनय ॥ २९ ॥

पद्रवाद्यमंगलानिभवंतीतिज्योतिःशास्त्रादौप्रसिद्धम् ॥ साचेद्देहांतश्चित्तेनिरंतरंप्रविश्यसर्वव्यवहारेपुक्षुब्धातिष्ठतितदातयाअमंगलानिसर्वाण्येवअलंविस्तारमायांतीतिकिंवाच्यमितिभावः ॥ २७ ॥ ननुआशात्यागमात्रेणकथंचित्तोपशमःसंकल्पविचिकित्साधृत्यधृत्यादिवृत्त्यंतरैरपितत्प्ररोहस्यदुर्वारत्वादित्याशंकांसर्ववृत्तीनामाशामूलताप्रदर्शनेन परिहरति ॥ चिंतनमिति ॥ समाध्यारंभकालेबाह्यकरणानांनिरुद्धत्वान्नचाक्षुपादिवृत्तिप्रसक्तिरस्तीतिचिंतनमेवतदाचित्तस्यवृत्तिःपरिशिष्यतइतिप्रागुक्तम् ॥ चिंतनेचचित्तमाशयैवप्रवर्त्तते ॥ आशास्यानामेवविषयाणांचिंतनदर्शनात् ॥ संकल्पादिवृत्तीनांचचिंतितार्थविषयतयाचिंतापूर्वकत्वाच्चिंतामूलभूतामाशाख्यांचित्तवृत्तिंत्यक्त्वानिश्चित्ततांव्रजेत्यर्थः ॥ २८ ॥ ज्वालौघ्ण्यक्षयेवह्नेरिववृत्तिक्षयेमनसउपशमःसिद्ध्यतीत्याह ॥ योययेति ॥ तयैवविनातद्वृत्तेरात्यंतिकनिरोधेनक्षयीअपक्षयक्रमेणनश्यति ॥ २९ ॥

उक्तमर्थंसंगृह्योपसंहरति ॥ प्रशमितेति ॥ हेमहात्मन्त्वंप्रशमितपुत्रवित्तलोकादिसकलैषणःसन्भववंधमाशाख्यमपास्यमुक्तचित्तोजीवन्मुक्तोभव ॥ यतःकुत्सिताआशाम नसिविद्यमानाआत्मनोनिगडरज्जवोनिगडवद्रज्जुवच्चबंधनहेतवः ॥ तासुपरिगलितासुसतीपुकोनमुक्तःसर्वोपिजंतुर्मुच्यतएवेत्यर्थः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रका शेउप०एकविंशःसर्गः ॥ २१ ॥ ॥ ५ ॥ ॥ बल्याख्यानमुपक्रम्यपातालमिहवर्ण्यते ॥ बलेश्वराज्यंनिर्वेदान्मेरुशृंगेविचारणा ॥ १ ॥ इदानींपद्माक्षकोशंत्रिजग दितिविवेकोदयेत्रैलोक्यैश्वर्यस्याप्यल्पत्वंयदुक्तंतदुपपादनायबल्याख्यानंवक्तुकामोवसिष्ठोभूमिकांरचयति ॥ अथवेति ॥ बुद्धिभेदेनअकस्माद्विचारोदयेन ॥ १ ॥ प्राप्तव्यम खिलंसर्वात्मकंब्रह्मत्वद्दिप्राप्तंतस्मिन्नेवामलेपदेविश्रांतंच ॥ २ ॥ अदभ्रमनल्पंतृष्णाख्यंतत्प्रसिद्धंमहातमोममचेतसःसकाशादपगतम् ॥ ३ ॥ अमृतापूरितइत्यादिविशेषणानि

प्रशमितसकलैषणोमहात्मन्भवभववंधमपास्यमुक्तचित्तः ॥ मनसिनिगडरज्जवःकदाशाःपरिगलितासुचतासुकोनमुक्तः ॥ ३० ॥ इ०वा०वा०दे०मोक्षोपायेपूपशमप्रकरणेतृष्णाविचिकित्सायोगोत्पत्तिर्नामैकविंशःसर्गः ॥ २१ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ अथवारघुवंशाख्यनभःपूर्णनिशाकर ॥ वलिवद्बुद्धिभेदेनज्ञानमासादयामलम् ॥ १ ॥ ॥ श्रीरामउवाच ॥ ॥ भगवन्सर्वधर्मज्ञत्वत्प्रसा दान्मयात्वदि ॥ प्राप्तंप्राप्तव्यमखिलंविश्रांतंचामलेपदे ॥ २ ॥ शरदीवांबरादभ्रमदभ्रंममचेतसः ॥ विभोव्यपगतंसर्वंतृष्णाख्यंतन्महात मः ॥ ३ ॥ अमृतापूरितःस्वस्थःशीतलात्मामहाद्युतिः ॥ तिष्ठाम्यानंदवानंतःसायंपूर्णइवोडुराट् ॥ ४ ॥ अशेषसंशयांभोदशरत्समयकिंत्वह म् ॥ तृप्तिमेषांनगच्छामिवचसांवदतस्तव ॥ ५ ॥ बलेर्विज्ञानसंप्राप्तिंपुनर्मद्बोधवृद्धये ॥ विभोकथयखिद्यंतेसंतोनावनतंप्रति ॥ ६ ॥ श्रीवसिष्ठउवाच ॥ ॥ शृणुराघवतेवक्ष्येवलेर्वृत्तांतमुत्तमम् ॥ श्रुतेनयेनतंतत्त्वबोधंप्राप्स्यसिशाश्वतम् ॥ ७ ॥ अस्यास्मिञ्जगतःकोशे कस्मिंश्चिद्दिङ्निकुंजके ॥ पातालमितिविख्यातोलोकोभूमेरधःस्थितः ॥ ८ ॥ क्षीरोदार्णवजाताभिर्दिग्धाभिरमृतांशुभिः ॥ क्वचिद्दानवक न्याभिर्भातिनिर्विवरांतरः ॥ ९ ॥ जिह्वागणोद्दामरवैर्विलोलरसनायुगैः ॥ क्वचिद्भोगिभिरापूर्णःसहस्रशतमस्तकैः ॥ १० ॥ देहाद्रिवलि ताशेषविश्वोद्धरणघस्मरैः ॥ क्वचिद्दनुसुतैर्व्याप्तश्चलद्भिरिवमेरुभिः ॥ ११ ॥

स्वस्यउडुराजश्चसाधारणानि ॥ ४ ॥ अशेषाणांसंशयलक्षणानामंभोदानांशरत्समयइवनिवारकइतिगुरुसंबोधनम ॥ वदतस्तवएषांवचसांश्रवणविषयेतृप्तिमलंबुद्धिंनगच्छा मि ॥ ५ ॥ विज्ञानस्यसंप्राप्तिंप्राप्तिप्रकारम् ॥ अवनतंप्रणामोपनतंशिष्यंप्रतिउपदेशनेइतिशेषः ॥ ६ ॥ तंतादृशंतत्त्वबोधंविचारपूर्वकतत्त्वावधारणम् ॥ शाश्वतंनित्यात्मलाभ फलम् ॥ शाश्वतंनित्यंतत्त्वभूतमात्मस्वरूपबोधमितिवा ॥ ७ ॥ जगतःकोशेब्रह्मांडे ॥ दिग्लक्षणेनिकुंजकेअल्पेकुंजे ॥ ८ ॥ क्षीरोदार्णवेक्षीरसमुद्रेजाताभिः ॥ दानवानामर्ण वोदरेपिनिवासप्रसिद्धेः ॥ अतएवतत्रोत्पन्नस्यामृतस्यांशुभिरवयवैर्दिग्धाभिरुपचिताभिरिवरम्याभिः ॥ निर्विवरांतरःपूर्णइतियावत् ॥ ९ ॥ द्व्यादिद्विसहस्रांतसंख्याकैर्जिह्वा गणैरितरापेक्षयाद्विगुणंव्याकरणच्छंदःशास्त्रादिव्याख्यानादुद्दामरवैः ॥ अतएवविलोलरसनायुगैः ॥ भोगिभिःशेषादिभिः ॥ १० ॥ देहाद्रिभिर्वलितंव्याप्तमशेषंजगद्येषांत थाविधैर्विश्वोद्धरणस्यधर्मस्ययज्ञहविषोवाघस्मरैर्वलाद्भक्षकैः ॥ कर्मधारयः ॥ ११ ॥

कुंभलक्षणानांकूटानांशिखराणामग्रेषुविश्रांतंवसुधामंडलस्योदरंमध्यंयेषाम् ॥ उदरपदग्रहणादधोजंबूद्वीपप्रांतेष्वेवदिक्षुमध्यतनमंडपस्तंभवद्दिग्गजानांभूमिधारणेनिवेशइतिग
म्यते ॥ अतएवजंबूद्वीपभुवंखनद्भिःसगरपुत्रैःप्रतिदिशंदिग्गजादृष्टाइतिपूर्वरामायणेप्युक्तम् ॥ दंतलक्षणानांद्रुमाणामद्रिभिःपर्वतवदाश्रयभूतैः ॥ १२ ॥ दुर्गंधइतिभूतानांनार
किप्राणिनांआभाःस्वकर्मकृताःप्रतिभासायत्र ॥ अधःसर्वाधः ॥ तत्रहिपुराणेषुनरकाःप्रसिद्धाः ॥ १३ ॥ क्वचित्अधस्तननारकप्रदेशमारभ्यआभूतलंउपरितनास्मदीयभूत
लपर्यंतंसमापूपप्रोतलोहशलाकावत्प्रोतसप्तपातालमंडलैः रत्नानामाकरभूतैर्मेर्वादिगिरिपादैर्व्याप्तः ॥ क्वचिच्चविवरैरिवसंकुचितप्रायैःपातालैःपातालावयवैर्व्याप्तः ॥ १४ ॥
सुराणामसुराणांचशिरःसुप्तप्राइवविश्रांताःपादांभोरुहपांसवोयस्यतथाविधेनत्रैलोक्यवंदितेनेतियावत् ॥ १५ ॥ आसुरीभिरसुरस्त्रीभिःसेनाभिर्वासंभृतैरनंतैर्बहुविधोपकरणैः
पूजनानिक्रीडनानिचएष्टुमभिलषितुंशीलंयस्यतथाविधेनहाटकेशेनस्वर्णलिंगात्मनापुराणेषुप्रसिद्धेनशिवेन ॥ १६ ॥ तस्मिन्पातालल्लोके ॥ असुराणांदोस्तंभैर्ध्रार्यमाणोम

कुंभकूटाग्रविश्रांतवसुधामंडलोदरैः॥ क्वचिद्दिग्दंतिभिर्दंतद्रुमाद्रिभिरुपाश्रितः॥ १२॥ महाकटकटाशब्दत्रस्तभूतपरंपरैः॥ क्वचिद्दुर्गंध
भूताभैरधोनारकमंडलैः॥ १३॥ आभूतलमभिप्रोतसप्तपातालमंडलैः॥ क्वचिद्रत्नाकरैर्व्याप्तःपातालैर्विवरैरिव॥ १४॥ सुरासुरशिरः
सुप्तपादांभोरुहपांसुना॥ क्वचिद्भगवतातेनकपिलेनपवित्रितः ॥ १५॥ आसुरीसंभृतानंतपूजनक्रीडनैषिणा॥ क्वचिद्भगवतातेनहाट
केशेनपालितः॥ १६॥ तस्मिन्नसुरदोस्तंभधार्यमाणमहाभरे॥ बभूवदानवोराजाविरोचनसुतोबलिः॥ १७॥ साक्रंदेनसमंसर्वैःसुर
विद्याधरोरगैः॥ पादसंवाहनंयस्यसुरराजेनवांछितम्॥ १८॥ कोशस्त्रैलोक्यरत्नानांपातासर्वशरीरिणाम्॥ धर्त्ताभुवनधर्तॄणांयस्य
पालयिताहरिः॥ १९॥ ऐरावणस्यसंशोपंयन्नाम्नाकटभित्तयः॥ केकयेवाहिहृन्नाड्योजग्मुराजग्मुरार्त्तताम्॥ २०॥ प्रतापोग्रोष्मभि
र्यस्यकल्पकालइवाब्धयः॥ ययुःशोषोन्मुखाःसप्तसप्ततांकुपिताकृतेः॥ २१॥ यदध्वराग्र्यधूमाभ्रराजयोवलिताब्धयः॥ ब्रह्मांडकोटर
स्यास्यसदाकवचतांययुः॥ २२॥ यस्यदृष्टिदृढाघातनुन्नाधारकुलाचलाः॥ विनमंतिदिशःसर्वालताःफलनताइव॥ २३॥

हान्भरोराज्यभारोयत्र ॥ १७ ॥ तस्यपराक्रममाह ॥ साक्रंदेनेति ॥ आक्रंदोरोदनंतत्सहितेन ॥ वांछितंबलादितिशेषः ॥ १८ ॥ कुतस्तस्येदृशंसामर्थ्यंतत्राह ॥ कोशइति ॥
त्रैलोक्यलक्षणानांरत्नानांकोशइवस्वोदरेरक्षिता ॥ भुवनधर्तॄणांत्रैलोक्यपालकानांइंद्रमनुशेषादीनांधर्त्ताआधारभूतः ॥ यस्यबलेः ॥ १९ ॥ ऐरावणस्यैरावतस्य ॥ कटभि
त्तयःगंडस्थलानि ॥ बहुवचनंसप्तानांमदस्थानानामुपलक्षणार्थम् ॥ यन्नाम्नाश्रुतेनेतिशेषः॥ केकयामयूरवाण्याअहीनांहृन्नाड्योहृदयशिराइवशोषंजग्मुरार्त्ततांभयखिन्नतां
चाजग्मुः ॥ २० ॥ कुपिताकृतेर्यस्यप्रतापस्यउग्रैर्दुःसहैरूष्मभिरुष्णस्पर्शैःसप्तमहाब्धयःशोषोन्मुखाःसंतःकल्पकालइवगर्त्तसंख्यामात्रेणसप्ततांययुर्नजलादिपूरसंख्ययेत्यर्थः
॥ २१ ॥ अध्वराग्र्याःअश्वमेधास्तदीयधूमप्रभवाअभ्रपंक्तयः ॥ जलपानायवलिताअब्धयोयाभिः ॥ कोटरपदेनतत्स्थाःप्राणिनोगृह्यंते ॥ दृष्ट्याजगत्पालनहेतुत्वादावरक
त्वाच्चकवचतांवर्मताम् ॥ २२ ॥ दृष्ट्यादृढाघातस्तिर्यक्प्रेक्षणंतेननुन्नाभूम्याधारकुलाचलायासांतथाविधादिशः ॥ भूमेर्नमनेदिशामधःप्रदेशेदर्शनान्नमनोत्प्रेक्षा ॥ २३ ॥

लीलयाविजिताअशेषाणांभुवनाभोगानांलोकसंस्थानानांभूषणभूताइंद्रादयोयेन ॥ २४ ॥ आवर्त्तवृत्तिषुजलावर्त्तसदृशस्वभावेषु ॥ २५ ॥ त्रैलोक्येष्युदारवृत्तिषूत्कृष्ट स्थितिषुभोगेषुभुक्तेषुसत्सुविषयभूतेषुचउद्वेगंवैरस्यमभजत् ॥ २६ ॥ मेरुशृंगस्यशिखायामग्रभागेरत्नकृतहर्म्यवातायनेस्थितउपविष्टस्सन् ॥ २७ ॥ नक्षुण्णापरैरकुंठिताश क्तिर्यस्यतथाविधेनमया ॥ २८ ॥ राष्ट्रेणभुक्तेनकिंवाभवति ॥ भूरिभिर्भोगैरतिशयेनहारिणामनोहारिणा ॥ २९ ॥ भोगोपभोगमात्रंकृत्स्नोपभोगः ॥ पुरुषार्थांतरव्यावृत्तये वामात्रशब्दः ॥ ३० ॥ तान्येवस्नानभोजनशयनादीनि ॥ नाभिनवंकिंचित्कर्मसुखंवास्तीत्यर्थः ॥ अतोमहतांपुरोलांपट्यंलज्जायैनतुतुष्टये ॥ ३१ ॥ उक्तमेवस्फुटयति ॥ पुन

लीलाविजितनिःशेषभुवनाभोगभूषणः ॥ दशकोटीःसवर्षाणिदैत्योराज्यंचकारह ॥ २४ ॥ अथगच्छत्स्वनल्पेषुयुगेष्वावर्त्तवृत्तिषु ॥ सुरासुरमहौघेषुप्रोत्पतत्सुपतत्सुच ॥ २५ ॥ अजस्रमतिभुक्तेषुत्रैलोक्योदारवृत्तिषु ॥ भोगेष्वभजदुद्वेगंवलिर्दानवनायकः ॥ २६ ॥ मेरुशृंगशिखारत्नकृतवातायनस्थितः ॥ एकदाचिंतयामासस्वयंसंसारसंस्थितिम् ॥ २७ ॥ कियंतमिदमक्षुण्णशक्तिनैवमयाधुना ॥ साम्राज्यमिहकर्त्तव्यंविहर्तव्यंजगत्त्रये ॥ २८ ॥ महताममराष्ट्रेणत्रैलोक्याद्भुतकारिणा ॥ किंवाभवतिभुक्तेनभूरिभोगातिहारिणा ॥ २९ ॥ आपातमात्रमधुरमावश्यकपरिक्षयम् ॥ भोगोपभोगमात्रंमेकिंनामेदंसुखावहम् ॥ ३० ॥ पुनर्दिनैककलनाशर्वरीसंस्थितिःपुनः ॥ पुनस्तान्येवकर्माणिलज्जायैनचतुष्टये ॥ ३१ ॥ पुनरालिंग्यतेकांतापुनरेवचभुज्यते ॥ सेयंशिशुजनक्रीडालज्जायैमहतामिह ॥ ३२ ॥ तमेवभुक्तविरसंव्यापारौघंपुनःपुनः ॥ दिवसेदिवसेकुर्वन्प्राज्ञःकस्मान्नलज्जते ॥ ३३ ॥ पुनर्दिनंपुनारात्रिःपुनःकार्यपरंपराः ॥ पुनःपुन रहंमन्येप्राज्ञस्येयंविडंबना ॥ ३४ ॥ ऊर्मितांपुनरासाद्यपुनरेतिनिरूर्मिताम् ॥ यथाजलंतथैवायंतांतामेतिक्रियांजनः ॥ ३५ ॥ उन्म त्तचेष्टिताकारापुनःपुनरियंक्रिया ॥ जनंहासयतेप्राज्ञंबाललीलोपमामुहुः ॥ ३६ ॥ कृतयाप्यनयानित्यंक्रिययाकृतकार्यया ॥ कोर्थः स्यात्तादृशोयेनपुनःकर्मनविद्यते ॥ ३७ ॥ कियंतमथवाकालमिदमाडंबरंमहत् ॥ इहास्माभिरनुष्ठेयंकिंतावत्समवाप्यते ॥ ३८ ॥ अनं तेयंशिशुक्रीडावस्तुशून्यैववस्तुतः ॥ आवृत्त्याक्रियतेव्यर्थमनर्थप्रसरार्थिभिः ॥ ३९ ॥ फलमेकंमहोदारंनेहपश्यामिकिंचन ॥ कार्यम स्तीतरत्प्राप्तेयस्मिन्नामनकिंचन ॥ ४० ॥

रित्यादिना ॥ ३२ ॥ ३३ ॥ प्राज्ञस्यदृश्याइयंविडंबनापुनःपुनःकृतानुकरणमिवोपहासहेतुरित्यर्थः ॥ ३४ ॥ व्यर्थकृतानुकरणेदृष्टांतमाह ॥ ऊर्मितामिति ॥ ३५ ॥ ३६ ॥ येनलब्धेनपुनःकर्मनविद्यतेकृतकृत्यतास्यात्तादृशोर्थःकःस्यात् ॥ ३७ ॥ महदाडंबरंदृष्टादृष्टार्थकर्मजातम् ॥ ३८ ॥ अनंताप्रवाहानंता ॥ उत्पन्नप्रध्वंसस्वभावत्वात् ॥ वस्तु तःपरमार्थतोवस्तुशून्यैवइयंशिशुक्रीडाअनर्थप्रसरोदुःखपरंपराप्राप्तिस्तदर्थिभिःक्रियते ॥ ३९ ॥ यस्मिन्प्राप्तेसतिइतरन्नकिंचनकार्यंकर्त्तव्यमस्तितादृशंफलंपुरुषार्थमिहन किंचनपश्यामि ॥ ४० ॥

1053

भोगात्क्षणिकतुच्छविषयसुखादृतेऽन्ययदविनाशिनित्यंतद्भव्यंसुखंकिंस्यादेवंसंचिंतयामीतिमत्वाअसौबलिराशुदध्यावित्यन्वयः ॥ ४१ ॥ ध्यानेनसंस्कारोद्बोधात्स्वविमर्शांप्राक्स्वपृष्टपित्रुपदेशक्रमस्मृतिंदर्शयति ॥ अथेति॥ अथक्षणादात्मनिस्वस्मिन्नेवउवाच ॥ आइतिस्मरणद्योतकोनिपातः ॥ किमुवाचतदाह॥ संस्मृतंसम्यक्ज्ञयास्मृतमितिस्मृतार्थंमनस्येवविमर्शयन्विमृशन् ॥ प्रेषणाध्यारोपाण्णिच् ॥ ४२ ॥ स्मृतमर्थंक्रमेणाह ॥ पुराकिलेत्यादिना ॥४३ ॥ किंपृष्टस्तदाह ॥ यथेत्यादिना ॥ यथेतितत्प्रकारोपक्रमार्थः ॥ सकलदुःखानांसांसारिकसुखानांचपरिहारप्राप्त्युपायगोचराःसर्वेव्यवहारभ्रमायत्रशांताअसौसंसारसीमांतोऽवधिःकउच्यतेप्राज्ञैरित्यर्थः ॥ ४४ ॥ विरामःपुनरावृत्तिस्तद्रहितंविश्रमणंविश्रांतिः ॥ ४५ ॥ पुमान्किंसुखंप्राप्ताप्राप्तवान्सन्नस्मिन्नेवदेहेसमस्तेभ्योब्रह्मलोकांतविषयेभ्यःप्राप्येसुखेयातृप्तिराशापरिपूर्त्तिस्तद्वान्स्यादितिशेषः ॥ नोपकरोतिफलांतरेण ॥ एकविज्ञानेनसर्वविज्ञानंसिद्ध्यतीत्यर्थः ॥ ४६ ॥ कुतस्तेतज्जिज्ञासातत्राह ॥ अत्यंतेति ॥ कुतोनसुखावहास्तत्राह ॥ क्षोभयंतीति ॥ ४७ ॥ ४८ ॥ पुरापूर्वकालेनिशाकरस्यचंद्रस्यकरैःकिरणैस्सहसौंदर्यामृतरसपूर्णत्वादिगुणाधिक्यात्स्पर्द्धालुभ्योगुच्छेभ्यःपुष्पफलस्तवकेभ्यःस्खलतांपुष्पाणांफलानांचापूरेणसमूहेनकृतमवगुंठनंवेष्टनंयस्यतथाविधंपदंमूलस्थानंयस्यतथाविधस्यस्वर्गात्तद्वनस्यवलादानीतस्यअजिरेस्वांगणेसंरोपितस्यसागरतरोःक्षीरसमुद्रोत्पन्नस्यकल्पवृक्षस्यतलेउपविष्टेनमेममपित्राविरोचनेनइतिप्रागुक्तप्रकारंप्रश्नमाकर्ण्यतस्यकल्पतरोःस्फाराकारैररसायनलक्षणैरासवैर्मकरंदैःसमंतुल्यंसुरभिमधुरंजरामरणदुःखनिवारणंचेतियावत्वचःसंमोहशांत्यैमदीयाज्ञानभ्रमनिवारणाययदुक्तंतन्मयास्मृतमित्यर्थः ॥ ४९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउप०द्वाविंशःसर्गः ॥ २२ ॥ ॥ ७ ॥ ॥ ७ ॥

भोगादृतेकिमन्यत्स्यात्तद्भव्यमविनाशियत् ॥ एवंसंचिंतयाम्याशुदध्यौमत्वेत्यसौबलिः॥ ४१ ॥ अथाभ्युवाचासुरराडाःसंस्मृतमितिक्षणात् ॥ स्वात्मन्येवमनस्यर्थसभ्रूभंगंविमर्शयन् ॥ ४२ ॥ पुराकिलेहभगवान्पृष्टोभूत्सविरोचनः॥ पितामयात्मतत्त्वज्ञोदृष्टलोकपरावरः॥ ४३॥ यथासकलदुःखानांसुखानांचमहामते॥ यत्रसर्वेभ्रमाःशांताःकोसौसीमांतउच्यते॥ ४४॥ क्वोपशांतोमनोमोहःक्वातीताःसकलैषणाः॥ विरामरहितंकुत्रतातविश्रमणंचिरम्॥ ४५॥ किंप्राप्येहसमस्तेभ्यःप्राप्येस्मिंस्तृप्तिमान्पुमान्॥ किंदृष्ट्वादर्शनंभूयोनतातोपकरोत्यलम्॥४६ ॥ अत्यंतवहवोप्येतेभोगाहिनसुखावहाः॥ क्षोभयंतिमनोमोहेपातयंतिसतामपि॥ ४७॥ तत्तातावितानंदसुंदरंकिंचिदेवमे ॥ तादृक्कथययत्रस्थश्चिरंविश्रांतिमेम्यहम् ॥ ४८॥ इत्याकर्ण्यपुरानिशाकरकरस्पर्द्धालुगुच्छस्खलत्पुष्पापूरकृतावगुंठनपदस्योक्तंतलेतेनमे॥ पित्रास्वर्गहृतस्यसागरतरोःसंरोपितस्याजिरेस्फाराकाररसायनासवसमंसंमोहशांत्यैवचः॥ ४९॥ ॥इ० वा०वा०दे०मो०उपशमप्रकरणेविरोचनस्मरणंनामद्वाविंशःसर्गः॥ २२॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥

वक्तुंचित्तजयंराजमंत्र्युपाख्यानमुच्यते ॥ तत्रात्रमंत्रिणोवीर्यमप्रतिद्वंद्वमूर्जितम् ॥ १ ॥ चित्तंवृत्तिविहीनंतेयदायातमचित्तताम् ॥ तदामोक्षमयीमंतःसत्तामाप्नोपितांततामिति मोक्षस्यचित्तजयाधीनत्वमुक्तंचित्तजयेचआत्यंतिकआशात्यागउपायउक्तःसचात्मदर्शनमंतरेणनसिद्ध्यति विषयाविनिवर्त्तंतेनिराहारस्यदेहिनः॥रसवर्जंरसोप्यस्यपरंदृष्ट्वानिवर्त्ततइतिभगवद्वचनात् ॥ आत्मदर्शनंचमनोजयमंतरेणनसिद्ध्यतीत्यन्योन्याश्रयतापन्नमिदमशक्यमेवेत्याशंकांपरिहर्त्तुंसाधनद्वययौगपद्याभ्यासाद्युपायभेदंवक्तुंवल्युपाख्यानांतरालेराजमंत्र्युपाख्यानंविरोचनमुखेनप्रस्तौति ॥ अस्तिपुत्रेत्यादिना ॥ देशोमोक्षाख्यः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ राजाआत्मा ॥ तूर्णींव्यवस्थितःकूटस्थइतियावत्

विरोचनउवाच ॥ ॥ अस्तिपुत्रातिविततोदेशोविपुलकोटरः ॥ त्रैलोक्यानांसहस्राणियत्रमांतिबहून्यपि ॥ १ ॥ यत्रनांभोधयोनापि सागरावानचाद्रयः॥ नवनानिनतीर्थानिननद्योनसरांसिच ॥ २ ॥ नमहीनापिचाकाशंनद्यौर्नपवनादयः॥ नचंद्रार्कौनलोकेशानदेवा नचदानवाः॥ ३ ॥ नभूतयक्षरक्षांसिनगुल्मानवनश्रियः॥ नकाष्ठतृणभूतानिस्थावराणिचराणिच ॥ ४ ॥ नापोनज्वलनोनाशानोर्ध्वं नाधोनविष्टपम्॥ नलोकोनातपोनाहंनहरींद्रहरादयः॥ ५ ॥ एकएवास्तिसुमहांस्तत्रराजामहाद्युतिः॥ सर्वकृत्सर्वगःसर्वःसचतूर्णींव्य वस्थितः॥ ६ ॥ तेनसंकल्पितोमंत्रीसर्वसन्मंत्रणोन्मुखः ॥ अघटंघटयत्याशुघटंविघटयत्यलम् ॥ ७॥ भोक्तुंनकिंचिच्छक्नोतिनचजा नातिकिंचन॥ राजार्थंकेवलंसर्वंकरोत्यज्ञोपिसन्सदा॥ ८ ॥ सएवसर्वकार्यैककर्त्तातस्यमहीपतेः॥ राजाकेवलमेकांतेस्वस्थएवावति ष्ठते॥ ९ ॥ ॥ बलिरुवाच॥ ॥ आधिव्याधिविनिर्मुक्तःकःसदेशोमहामते॥ कथमासाद्यतेचापिकेनवाधिगतःप्रभो ॥ १० ॥ कःसतादृ ग्विधोमंत्रीराजाचापिमहाबलः ॥ हेलालूनजगज्जालैर्योस्माभिरपिनोजितः॥ ११ ॥ अपूर्वमेतदाख्यानंममामरभयप्रद॥ कथयाप नयास्माकंत्वद्बोधःसंशयांबुदम्॥ १२॥ ॥ विरोचनउवाच॥ ॥ सतत्रमंत्रीबलवान्देवासुरगणैःस्तुत॥ समेतैर्लक्षगुणितैरपिनाक्रम्य तेमनाक्॥ १३ ॥ नासौसहस्रनयनोनयमोनधनेश्वरः ॥ नामरोनासुरोवापियदिपुत्रकजीयते॥ १४॥

॥ ६ ॥ मंत्रीमनः ॥ अघटमत्यंतानुपपन्नमप्यात्मनःसंसारित्वंघटयति ॥ घटंघटमानमपिपूर्णानंदैकरसत्वंविघटयतिनास्तिनभातीत्यपलापयति ॥७॥ अज्ञोपिजडोपिसन्॥८॥ एकांतेअद्वितीयस्वभावे ॥ ९ ॥ बलिप्रश्नानिगदव्याख्याताः ॥ १० ॥ ११ ॥ कथयाअस्माभिस्तद्जयेनिमित्तकथनेन ॥ १२ ॥ तत्रादावेतेपृष्टंतद्जयेनिमित्तमेवविस्तरेणाह ॥ सतत्रेत्यादिना ॥ मनाक्ईषदपि ॥ १३ ॥ समंत्रीकिंद्वितीयइंद्रउतयमउतकुबेरउतकश्चिदमरोऽसुरोवामहानुभावोयतोजेतुमशक्योनेत्याह ॥ नासाविति ॥ यदिसहस्राक्षादिःकश्चिरस्यात्तर्हित्वयाजीयतएवेत्यर्थः ॥ १४ ॥

किममआयुधानिभटावानसंतिसंतुनामनासौतद्विषयइत्याह ॥ तत्रेति ॥ १५ ॥ प्रत्युतत्वदादयस्तेनैवजिताइत्याह ॥ तेनेति ॥ १६ ॥ अस्मत्पूर्वजादयोपितेनैववशीकृत्यविष्णुनाघातिताइत्याशयेनाह ॥ अविष्णुनापीति ॥ कल्पवातेनप्रलयवायुना ॥ १७ ॥ सर्वेषामवबोधिनोविवेकोपदेष्टारोपितेनैवभृगुशापादिनिमित्तापादनेनाक्रम्यवशीकृत्य ॥ अवटेपुगर्भश्वभ्रेषु ॥ १८ ॥ स्मरःकामःपंचमात्रशरोपितत्प्रसादेनेदंत्रैलोक्यमाक्रम्यजित्वाविवल्गतिविजृंभते ॥ १९ ॥ सुरासुरौघाग्रृघ्नाअस्वैरिणोयेन ॥ पदार्स्वैरिवाह्मापक्ष्येपुचेतिक्यप् ॥ २० ॥ २१ ॥ प्रभुणाआलना ॥ यदिजीयतेतत्तदासुजेयोजय्यः ॥ २२ ॥ कालेवहुतरसुकृतपरिपाकाद्विवेकोदयकाले ॥ अयत्नतोज्ञानमात्रतः ॥ २३ ॥ त्रै

गम्योसौनास्त्रशस्त्राणांनभटोद्भवकर्मणाम् ॥ तेन तत्रासिमुसलप्रासवज्रचक्रगदादयः ॥ हेतयःकुंठतांयांतिदृषदीवोत्पलाहतिः ॥ १५ ॥ देवासुराःसर्वेसर्वदैववशीकृताः ॥ १६ ॥ अविष्णुनापितेनेहहिरण्याक्षादयोसुराः ॥ पातिताःकल्पवातेनमेरुकल्पद्रुमाइव ॥ १७ ॥ नारायणादयोदेवाअपिसर्वावबोधिनः ॥ तेनाक्रम्ययथाकाममवटेपुनिवेशिताः ॥ १८ ॥ तत्प्रसादेनसाटोपंपंचमात्रशरःस्मरः ॥ त्रैलोक्यमिदमाक्रम्यसघाडिवविवल्गति ॥ १९ ॥ सुरासुरौघगृत्योपिगुणहीनोपिदुर्मतिः ॥ दुराकृतिरपिक्रोधस्तत्प्रसादेनजृंभते ॥ २० ॥ देवासुरसहस्राणांसंगरोयःपुनःपुनः ॥ तदेतत्क्रीडनंतस्यमंत्रिणोमंत्रशालिनः ॥ २१ ॥ समंत्रीकेवलंपुत्रतेनैवप्रभुणायदि ॥ जीयतेतत्सुजेयोसावन्यथात्वचलोपमः ॥ २२ ॥ तस्यैवतत्प्रभोःकालेजेतुंतंमंत्रिणंनिजम् ॥ इच्छासंजायतेतेनजीयतेसावयत्नतः ॥ २३ ॥ त्रैलोक्यवलिनांमल्लमुच्छ्वासितजगत्त्रयम् ॥ जेतुंचेदस्तितेशक्तिस्तत्पराक्रमवानसि ॥ २४ ॥ तस्मिन्नभ्युदितेसूर्येत्रैलोक्यकमलाकराः ॥ इमेविकासमायांतिविलीयंतेस्तमागते ॥ २५ ॥ तमेकमेकयाबुद्ध्याव्यामोहपरिहीनया ॥ यदिजेतुंसमर्थोसिधीरस्तदसिसुव्रत ॥ २६ ॥ तस्मिञ्जितेजितालोकाभविष्यंत्यजिताअपि ॥ अजितेत्वजिताएतेचिरकालजिताअपि ॥ २७ ॥ तस्मादनंतसिद्ध्यर्थंशाश्वतायसुखाय च ॥ तज्जयेयत्नमातिष्ठकष्टयापिहिचेष्टया ॥ २८ ॥ ससुरदनुजनागयक्षसंघंसनरमहोरगकिन्नरंसमेतम् ॥ त्रिजगदपिवशीकृतंसमंतादतिवलिनाननुहेलयैवतेन ॥ २९ ॥ ॥ इ० वा० वा० दे० मो० उपशमप्रकरणेविरोचनवचनंनामत्रयोविंशःसर्गः ॥ २३ ॥ ॥ ५ ॥

लोक्येयावंतोवलिनस्तेषांमल्लंवलेनजेतारम् ॥ उच्छ्वासितंम्रियमाणजंतुवदूर्ध्वश्वसनशीलंकृतंजगत्त्रयंयेन ॥ तत्तर्हि ॥ २४ ॥ तस्यनसर्वजयशक्तिमात्रंकिंतुत्रैलोक्यजननादिशक्तिरप्यस्तीत्याह ॥ तस्मिन्निति ॥ तस्मिन्सूर्येइतिव्यस्तरूपकम् ॥ २५ ॥ एकयानिश्चितयाएकाग्रयाच ॥ तत्तर्हिधीरोसि ॥ २६ ॥ २७ ॥ अनंतायाःसिद्धयस्तदर्थम् ॥ अंतोमृत्युस्तदभावोनंतंमृत्युजयस्तत्सिद्ध्यर्थंच ॥ कष्टयाश्रमसाध्ययापिसर्वत्यागादिचेष्टया ॥ २८ ॥ पुनस्तत्प्रभावमेवोक्तमनूद्योपसंहरति ॥ ससुरेति ॥ नागादिग्गजाः ॥ महोरगाःशेषादयः ॥ २९ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेत्रयोविंशःसर्गः ॥ २३ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

१ पविशक्त्यादयःसुतेतिप्राचीनपुस्तकेपुपाठः

इहदुर्मंत्रिणस्तस्यजयोपायःप्रकीर्त्यते ॥ राजसंदर्शनोपायवैराग्यादिसमन्वितः ॥ १ ॥ प्रश्नःस्पष्टः ॥ १ ॥ सुसाधत्वंसुखजयोपायमितियावत् ॥ २ ॥ ३ ॥ लालयित्वाः
ल्पविषयप्रदानेनमुहुर्विषयदोषख्यापनेनचवंचयित्वा ॥ युक्त्याराजयोगाख्यया ॥ पदंराजपदम् ॥ ४ ॥ पुनःशब्दोवाक्यालंकारार्थः ॥ ५ ॥ ६ ॥ अतिदुःखायरागद्वेषादीन्
ल्पति ॥ ७ ॥ संदर्शनपराजयशब्दौतत्तदुपायपरौ ॥ ८ ॥ द्वयंराजसंदर्शनंमंत्रिपराजयंच ॥ ९ ॥ फलीभूतेसफलीभूतेज्ञानफलात्मनापरिणतेवा ॥ १० ॥ तत्रकेतिष्ठंतिना

बलिरुवाच॥ ॥केनोपायेनबलवान्सतातपरिजीयते ॥ कोसावतिमहावीर्यःसर्वंप्रकथयाशुमे ॥ १ ॥ ॥ विरोचनउवाच॥ ॥मंत्रिणस्तस्यतनयनित्याजेयस्थितेरपि॥ शृणुवच्मिसुसाधत्वंयेनासौपरिजीयते ॥२॥ पुत्रयुक्त्यागृहीतोसौक्षणादायातिवश्यताम्॥ युक्तिविनादहत्येपआशीविषइवोद्धतः॥ ३ ॥ बालवल्लालयित्वैनंयुक्त्यानियमयंतिये ॥ राजानंतंसमालोक्यपदमासादयंतिते ॥ ४ ॥ दृष्टेतस्मिन्महीपालेसमंत्रीवशमेतिच ॥ तस्मिंश्चमंत्रिण्याक्रांतेसराजादृश्यतेपुनः ॥ ५ ॥ यावन्नदृष्टोराजासौतावन्मंत्रीनजीयते॥ मंत्रीचयावन्नजितस्तावद्राजानदृश्यते॥ ६ ॥ राजन्यदृष्टेदुर्मंत्रीसदुःखायफलत्यति ॥ मंत्रिण्यनिर्जितेराजासोत्यंतंयात्यदृश्यताम्॥ ७ ॥ अभ्यासेनोभयंतस्मात्सममेवसमारभेत्॥ राजसंदर्शनंतस्यमंत्रिणश्चपराजयम् ॥ ८ ॥ पौरुषेणप्रयत्नेनस्वभ्यासेनशनैःशनैः ॥ द्वयंसंपाद्ययत्नेनदेशमाप्नोषितंशुभम्॥ ९ ॥ त्वमभ्यासफलीभूतेतंदेशमभिगच्छसि॥ यदितैत्यंद्रतद्भूयोमनागपिनशोचसि ॥ १० ॥ संशांतसकलायासानित्यप्रमुदिताशयाः॥ साधवस्तत्रतिष्ठंतिप्रशांताशेषसंशयाः॥ ११ ॥ शृणुकःपुत्रदेशोसौसर्वंप्रकटयामिते॥ देशनाम्नामयोक्तस्तेमोक्षःसकलदुःखहा॥ १२ ॥ राजातुतत्रभगवानात्मासर्वपदातिगः ॥ तेनमंत्रीकृतःप्राज्ञामनोनाममहामते॥ १३ ॥ मननिष्ठतयाविश्वमिदंपरिणतिंगतम्॥ घटत्वेनेवमृत्पिंडोधूमोंबुदतयैवच॥ १४ ॥ तस्मिञ्जितेजितंसर्वंसर्वमासादितंभवेत्॥ दुर्ज्जयंतंहिजानीयाद्युक्त्यैवपरिजीयते॥ १५॥ ॥बलिरुवाच॥ ॥यायुक्तिर्भगवंस्तस्यचित्तस्याक्रमणेस्फुटम् ॥ तांमेकथयतत्तावद्यथाजेष्यमिदारुणम्॥ १६॥ ॥विरोचनउवाच॥ ॥विषयान्प्रतिभोःपुत्रसर्वानेवहिसर्वथा॥ अनास्थापरमात्स्येपासायुक्तिर्मनसोजये॥ १७॥

ह ॥ संशांतेति ॥ निवृत्तसर्वानर्थानिरतिशयनित्यानंदपूर्णाश्चयेसाधवस्तेतत्रतिष्ठंतीत्यर्थः ॥ ११ ॥ इदानींगूढोक्तिविवरीतुमाह ॥ शृण्विति ॥ १२ ॥ सर्वाणिमानुषानंदादि
ण्यगर्भानंदांतपदान्यतीत्यगच्छतीतिसर्वपदातिगःसर्ववाङ्मनसागोचरश्च ॥ प्राज्ञःसर्वप्रज्ञासमष्टिरूपः ॥ १३ ॥ मनोनिष्ठतयामनसिवासनात्मकसूक्ष्मभावेनस्थिततयेत्यर्थः
रिणतिःस्थौल्यम ॥ घटत्वेनघटभावेन ॥ मृत्पिंडःपिंडांतर्गतमृद्भागः ॥ १४ ॥ जेतव्यंसर्वंजितमासादयितव्यंसर्वमासादितंभवेदित्यर्थः ॥ १५ ॥ आक्रमणंआस्कंदनंजयं
यावत् ॥ १६ ॥ अनास्थाअस्पृहा ॥ युक्तिरुपायः ॥ १७ ॥

द्रागित्येवझटित्येव ॥ अवदम्यतेअवमत्यदम्यते ॥ मुक्तिमिच्छसिचेत्तातविषयान्विषवत्त्यजेत्यभियुक्तोक्तेः ॥ १८ ॥ एषायुक्तिः ॥ १९ ॥ विषयेष्वरतिर्विरक्तिः ॥ स्फुटशांत्यादिविटपविस्तारव्यक्तताम् ॥ २० ॥ शठात्मनाभोगलुब्धमनसा ॥ अव्युत्पासुक्षेत्रेष्वनुप्ता ॥ समाहरअभ्यासेनस्थिरीकुरु ॥ २१ ॥ विरतिर्वैराग्यम् ॥ २२ ॥ अगतिर्गशून्यः ॥ २३ ॥ ध्येयत्यागंप्रागुक्तजीवन्मुक्तिहेतुध्येयवासनात्यागम् ॥ ध्यायतावांछता ॥ २४ ॥ नाकस्मात्सर्वेविषयास्त्यक्तुंशक्याःकिंतुक्रमेणैकैकंविषयंचिरंत्यक्त्वासकृत्कदाचित्सेवमानःक्रमात्सर्ववैराग्यपरिपाकेत्यजेत् ॥ तत्रचपुरुषप्रयत्नदार्ढ्येपुनर्हर्षामर्षलौल्यप्रसंगवारकमावश्यकमित्याशयेनाह॥ पुरुषार्थादिति ॥ पुरुषार्थःपुरुषप्रयत्नस्मादृतेहर्षामर्षविवर्जितंक्रियाफलंपरिप्राप्तुमनुकूलंशुभंसाधनंनसंप्राप्यते ॥ २५ ॥ ननुदैवादेवतत्प्राप्तिःकिंनस्यात्तत्राह ॥ दैवमिति ॥ स्वात्स्वीयायानियतिप्रयुक्ताशुभाशु

**एषैवपरमायुक्तिरनयैवमहामदः॥ स्वमनोमत्तमातंगोद्रागित्येवावदम्यते॥१८॥एषात्यत्यंतदुष्प्रापासुप्रापाचमहामते॥ अनभ्यस्तातिदुष्प्रापास्वभ्यस्ताप्राप्यतेसुखम्॥ १९ ॥ क्रमादभ्यस्यमानैषाविषयारतिरात्मज ॥ सर्वतःस्फुटतामेतिसेकसिक्तालतायथा॥ २० ॥ नासाद्यतेह्यनभ्यस्ताकांक्षतापिशठात्मना॥ पुत्रशालिरिवाव्युप्तातस्मादेनांसमाहर॥२१॥ तावद्भ्रमंतिदुःखेषुसंसारावटवासिनः॥ विरतिंविषयेष्वेतेयावन्नायांतिदेहिनः॥२२॥ अभ्यासेनविनाकश्चिन्नाप्नोतिविषयारतिम्॥ अप्यत्यंतबलोदेहीदेशांतरमिवागतिः॥२३॥ ध्येयत्यागमतोजस्रंध्यायतादेहधारिणा ॥ भोगेष्वरतिरभ्यासाद्वृद्धिंनेयालतायथा॥ २४॥ पुरुषार्थादृतेपुत्रनेहसंप्राप्यतेशुभम्॥ क्रियाफलंपरिप्राप्तुंहर्षामर्षविवर्जितम्॥२५॥ दैवमित्युच्यतेलोकेनदैवंदेहवत्क्वचित्॥ अवश्यंभावितव्यास्यास्वेहयानियतिश्चया॥ २६॥ उच्यतेदैवशब्देनसानरैरेवनेतरैः॥यद्यस्येहयदायत्रसंपन्नंसमतांगतम्॥२७॥ हर्षामर्षविनाशायतद्दैवमितिकथ्यते॥ दैवंनियतिरूपंचपौरुषेणोपजीयते॥ २८॥ सम्यग्ज्ञानविलासेनमृगतृष्णाभ्रमोयथा॥ यथासंकल्प्यतेयद्यत्पौरुषेणतथैवतत्॥२९॥**

क्रियासैवनरैर्मानुषदृष्टिभिर्दैवशब्देनोच्यतेनइतरैर्दिव्यशास्त्रीयदृष्टिमद्भिरितिपरेणान्वयः ॥ २६ ॥ ननुविनापिप्रयत्नंदैवादेवकेषांचिद्धर्षामर्षोपशमोदृश्यतेतत्कथंतत्राह ॥ यदिति ॥ हर्षामर्षहेतुकर्मक्षयेसतियदेवहर्षामर्षविनाशायसंपन्नंतदेवजनैर्दैवमितिकथ्यतेइत्यर्थः ॥ २७ ॥ अस्तुत्वदुक्तमेवदैवंकिंततस्तत्राह ॥ दैवमिति ॥ मदुक्तंनियतिरूपंदैवंतुवैराग्यदार्ढ्याभ्यासादिपौरुषेणउपसमीपेअल्पकालेनैवजीयतेमरुभूमितत्त्वज्ञानविलासेनमृगतृष्णाभ्रमइवेत्यर्थः ॥ २८ ॥ ननुयदिदैवाख्यानियतिःपौरुषाख्ययातयाजीयतेतर्हितस्याःफलनियमाभावादनियतत्वप्रसंगइतिचेदिष्टापत्तिः ॥ सर्वेषुमनःसंकल्पजेष्वसतिबाधकेप्रमाणैःफलवत्तयागृहीतत्वेफलवत्तासुखप्रदमित्येवनियमाभ्युपगमादित्याह यथेति ॥ २९ ॥

नचैवमनियतित्वप्रसंगः मनसाकर्त्रेदृशनियमस्यैवकल्पनान्नियतित्वव्यवहारसिद्धेरित्याशयेनाह ॥ कर्त्तेति ॥ कर्त्ताजीवोनःअस्माकंमतेमनएव ॥ ३० ॥ नियतिंय
दृशीमेतत्संकल्पयतीत्येतदुपपादयति ॥ नियतानियतानिति ॥ उत्सर्गतःफलनियतानपवादविषयेष्वनियतान्व्यावहारिकानर्थाननियतान्अत्यंतंफलानियतान्प्रातिभासिक
नपिकरोतीतिपरेणान्वयः ॥३१॥ तेनहेतुनाएतच्चित्तंस्वसंकल्पितार्थानुसारेणफलनियतेरपियोजकमुपपादकमित्यर्थः ॥ अतएवार्थस्यपारमार्थिकत्वेनद्विषयबोधस्यनियत
लत्वमेवननंदेववत्कर्मवद्वाअनियतफलत्वमित्याशयेनाह ॥ नियत्यामिति ॥ अयंचित्तात्माजीवःकदाचिन्मोक्षाधिकृतजन्मनिनियत्यांनित्यनियंतृस्वभावेपरमात्मनिस्वा
नामिकांप्रत्यक्परमार्थमात्रगोचरसाक्षात्कारनामिकांनियतिंसमानाकारवृत्तिधारांनिर्विकल्पकसमाधिमितियावत् ॥ कुर्वन्नस्मिन्जगत्कोशेव्योम्निमारुतइवअसंगःस्फुरं
स्वस्वभावेप्रकाशतइत्यर्थः ॥ ३२ ॥ कदाचिद्व्युत्थानकालेनियत्याशास्त्रलक्षणयाविहितंस्वस्वाश्रमोचितंकर्मकुर्वन्संज्ञार्थमज्ञजनबोधनार्थमेतयाज्ञिकाःशिष्टाःसदाचारप्र

फलवत्ताग्रहीतत्वेफलवत्तासुखप्रदम् ॥ कर्त्तानोमनएवेहयत्कल्पयतितत्तथा ॥ ३० ॥ नियतिंयादृशीमेतत्संकल्पयतिसातथा ॥ नियता
नियतान्कांश्चिदर्थाननियतानपि ॥ ३१ ॥ करोतिचित्तंतेनैतच्चित्तंनियतियोजकम् ॥ नियत्यांनियतिंकुर्वन्कदाचित्स्वार्थनामिकाम् ॥ ३२
स्फुरत्यस्मिञ्जगत्कोशेजीवोव्योम्नीवमारुतः ॥ नियत्याविहितंकुर्वन्कदाचिन्नियतिंचरः ॥ ३३ ॥ संज्ञार्थरूढनियतिशब्दःस्फुरतिसानु
वत् ॥ तस्माद्यावन्मनस्तावन्नदैवंनियतिर्नच ॥ ३४ ॥ मनस्यस्तंगतेसाधोयद्भवत्यस्तुतत्तथा ॥ जीवोहिपुरुषोजातःपौरुषेणसयद्यथा
॥ ३५ ॥ संकल्पयतिलोकेस्मिंस्तत्तथातस्यनान्यथा ॥ पुरुषार्थादृतेपुत्रनकिंचिदिहविद्यते ॥ ३६ ॥ परंपौरुषमाश्रित्यभोगेष्वरतिमाहर
न् ॥ नभोगेष्वरतिर्यावज्जायतेभवनाशनी ॥ ३७ ॥ नपरानिर्वृतिस्तावत्प्राप्यतेजयदायिनी ॥ विषयेषुरतिर्यावत्स्थितासंमोहकारिणी
॥ ३८ ॥ तावद्भवदशादोलाविलोलांदोलनस्थितिः ॥ अभ्यासेनविनापुत्रनकदाचनदुःखदा ॥ ३९ ॥ भोगभोगिभरप्रोताकदाशावि
निवर्त्तते ॥ ४० ॥ ॥ बलिरुवाच ॥ ॥ भोगेष्वरतिरेवांतःकथंसर्वासुरेश्वर ॥ स्थितिमायातिजीवस्यदीर्घजीवितदायिनी ॥ ४१ ॥

र्त्तकाइत्यादिनालोकरूढःप्रख्यातोनियतिशब्दोयस्यतथाविधःसन्स्फुरति ॥ यथासानुर्गिरिप्रस्थःस्वयमचलस्वभावोपिपवनवेगाच्चलत्सुवृक्षेषुचलइवस्थिरेषुचस्थिरइव
तितद्वदित्यर्थः ॥ ३३ ॥ अतस्त्वयापियावज्जीवंचरमोक्तचरितद्वयमवलंब्यतामित्याह ॥ तस्मादिति ॥ ३४ ॥ तदुत्तरंकिंभविष्यतितत्राह ॥ मनसीति ॥ पुरुषोजातःकर्मइ
धिकारिशरीरंप्राप्तःसन्यद्यथासंकल्पयतितत्तथाभवतीतिस्वायत्तेसंकल्पेपौरुषेणवैराग्यादिसाधनानिसंपाद्यपरमपुरुषार्थात्मकब्रह्मात्मभावएवसंकल्पनीयोनसंसार्यात्मभ
त्याशयेनाह ॥ पुरुषार्थादृतेइत्यादिना ॥ ३५ ॥ ३६ ॥ ३७ ॥ यावद्विषयेषुरतिरस्तितावद्विलोलांदोलनस्थितिर्भोगलक्षणैर्भोगिभिःसर्पभारैःप्रोताग्रथिताअतएवदुःखदा
शालक्षणाभवदशादोलाप्रेंखोलिकावैराग्यश्रवणसमाध्याद्यभ्यासेनविनाकदाचनकदापिननिवर्त्ततेनावरितुंशक्येतिपरेणसहान्वयः ॥ ३८ ॥ ३९ ॥ ४० ॥ दीर्घजीवि
त्वात्मभावेनस्थितिः ॥ ४१ ॥

फलिनीमोक्षफलवतीभोगेष्वरतिर्वैराग्यमवांतरफलंफलति ॥ यथाद्राक्षादिमहालताशरदिशलाटुंफलतितद्वत् ॥ ४२ ॥ श्रीर्लक्ष्मीः ॥ अंभोजकोटरेपद्मगर्भे ॥ ४३ ॥ प्रणेनिकाषेणशाणस्थानीयेनविचारेण ॥ समंतुल्यकालम् ॥४४॥ तत्रचित्तपरिपाकभेदानुसारेणभूमिकाभेदान्विवक्षुःप्रथमभूमिकामाह ॥ चित्तस्येति॥भोगैर्देहमात्रोपायैःनस्यकालभागौशास्त्रेणश्रवणेन ॥ अव्युत्पन्नस्यचित्तस्यसक्रमेसन्मार्गारंभेशास्त्रोक्तक्रमेइतिवा ॥ ४५॥ तज्जयेतदुत्तरभूमिकामाह ॥ किंचिदिति ॥ आत्मज्ञानेलब्धचमरस्येतियावत् ॥ अतएवभोगेष्वनास्थोदयाद्भागन्यूनतापत्तिः ॥ गुरुशुश्रूषायांचभागांतरवृद्धिः ॥ चिरंगुरुसन्निधानेसत्यवसरेगुरुपुस्वसंदेहप्रश्नसंभवादितिभावः ॥ ४६ ॥ ज्जयेतदुत्तरभूमिकामाह ॥ व्युत्पत्तिमिति ॥ रत्नतत्त्ववच्चिरपरीक्षणेनतत्त्वतोवधारणंव्युत्पत्तिस्तामनुयातस्यचेतसोद्वौभागौशास्त्रवैराग्यैःसमुच्चितैःपूरयेत् ॥ द्वौतुध्यानैर्गुर

विरोचनउवाच॥ ॥आत्मावलोकनलताफलिनीफलतिस्फुटम्॥जीवस्यभोगेष्वरतिंशरदीवमहालता॥४२॥आत्मावलोकनेनैषविषयारतिरुत्तमा॥हृदयेस्थितिमायातिश्रीरिवांभोजकोटरे॥४३॥तस्मात्प्रज्ञानिकाषेणविचारेणातिचारुणा॥देवमालोकयेद्गाढ्रतिंचावहरेत्समम्॥४४॥चित्तस्यभोगैर्द्वौभागौशास्त्रेणैकंप्रपूरयेत्॥गुरुशुश्रूषयाचैकमव्युत्पन्नस्यसत्क्रमे॥४५॥किंचिद्व्युत्पत्तियुक्तस्यभागंभोगैःप्रपूरयेत्॥गुरुशुश्रूषयाभागौभागंशास्त्रार्थचिंतया॥४६॥व्युत्पत्तिमनुयातस्यपूरयेच्चेतसोन्वहम्॥द्वौभागौशास्त्रवैराग्यैर्द्वौध्यानगुरुपूजया॥४७॥साधुतामागतोजीवोयोग्योज्ञानकथाक्रमे॥निर्मलाकृतिरादत्तेपटउत्तमरंजनाम्॥४८॥शनैःशनैर्लालनीयंयुक्तिभिःपावनोक्तिभिः॥शास्त्रार्थपरिणामेनपालयेच्चित्तबालकम्॥४९॥परेपरिणतंज्ञानेशिथिलीभूतदुर्ग्रहम्॥ज्योत्स्नाऽहीनस्फटिकवच्चेतःशीतंविराजते॥५०॥प्रज्ञयापरयाऋज्व्याभोगानामीश्वरस्यच॥सममेवाथदेहस्यरूपमाश्ववलोकयेत्॥५१॥प्रज्ञाविचारवशतःसममेवसदासुत॥आत्मावलोकनंतृष्णासंत्यागंचसमाहरेत्॥५२॥

नेनचक्रमात्पूरयेत् ॥ ४७ ॥ चतुर्विधेपिक्रमेशुद्धचित्तएवाधिकारीनान्यइत्याह ॥ साधुतामिति ॥ पटोनिर्मलाकृतिःसम्यक्परिशुद्धसंस्थानएवोत्तमांकुसुंभकिंशुकादिरंनामादत्तेनमलिनइत्यर्थः ॥ ४८ ॥ ईदृग्मलिनस्यतर्हिकथंतत्राह ॥ शनैरिति ॥ युक्तिभिर्दुःखान्वयव्यतिरेकप्रदर्शनैःपावनोक्तिभिःश्रुतिस्मृतिगुरूक्तिभिःशास्त्रार्थेचित्तस्यपणामश्चिरपरिशीलनेनशर्करामलकवन्मधुरैकरस्यपरिणतिस्तेन ॥ ४९ ॥ शिथिलीभूतोदुर्ग्रहोबाह्यमलिनजडाकारग्रहणंयस्यज्योत्स्नयाअहीनेनअपृथग्भूतेनस्फटिकेनतुल्यंचित्प्रकाशसमरसमितियावत् ॥ लीनेतिपाठेस्पष्टम् ॥ शीतंनिस्तापम् ॥ ५० ॥ कीदृशीपरेपरिणतिस्तांदर्शयति ॥ प्रज्ञयेति ॥ ऋज्व्यागलितभेदवैषम्यकौटिल्ययापरयाब्रह्मकारयाप्रज्ञयाभोगानांकरणकर्मभावव्युत्पत्तिभिरिंद्रियविषयतद्वृत्तीनामीश्वरस्यतत्स्वामिनोजीवस्यअथदेहस्यभोगायतनस्यचसमंतुल्यंसच्चिदानंदाद्वयैकरसमधिष्ठानब्रह्मरूपमेवावलोकयेत् समंतुल्यकालमेवाधिष्ठानरूपमवलोकयेदितिवा ॥ ५१ ॥ विचारफलतृष्णासंत्यागोप्यात्यंतिकस्तदैवभवतीत्याशयेनाह ॥ प्रज्ञेति ॥ ५२ ॥

विचारफलंपुरुषापराधनिवृत्तिर्ज्ञानफलंमूलाविद्यानिवृत्तिश्चनपृथक्सिद्ध्यतइत्याह ॥ परदृष्टाविति ॥ यथावह्नेस्तेजोदशाप्रभावस्थादीपदशादीपाकारावस्थाचतिमिरतैलोभ
यनिवर्त्तिकेमिथःअन्योन्ययौगपद्येनस्थितेतद्वदित्यर्थः ॥ ५३ ॥ आस्वाद्यतइत्यास्वादोरसः ॥ गतरसइत्यर्थः ॥ ५४ ॥ भोगास्वादलंपटानांतुनात्मानंदप्राप्तिरस्तीत्याह ॥ वि
षयेति ॥ विषयेष्वेवआकलितःसारतयागृहीतआनंदोयस्मिन्कर्मणितथाआस्वादयतांजीवानांकदाचनकदापिननिर्वृतिर्निरतिशयानंदोनास्ति ॥ ५५ ॥ आत्मावलोकनेनैपा
विषयारतिरुत्तमा हृदयेस्थितिमायातीतियदुक्तंतत्केचिन्नमृष्यंतियज्ञादिभिरेवचित्तशुद्ध्याविषयारतिसंभवादितितान्प्रत्याह ॥ यज्ञेति ॥ यज्ञादिभिरदृष्टद्वाराविषयसुखमेव
जायतेनभोगेषुविरतिर्जायतइतिपरेणान्वयः ॥ ५६ ॥ एवंभोगवैराग्याभ्यासपुरुषप्रयत्नंविनाकेनाप्युपायांतरेणआत्मावलोकनेपिबुद्धिर्नप्रवर्त्ततइत्याह ॥ कयाचिदिति

परदृष्टौवितृष्णत्वंतृष्णाभावेचदृक्परा ॥ एतेमिथःस्थितेदृष्टांतेजोदीपदशेयथा ॥ ५३ ॥ भोगपूगेगतास्वादेदृष्टेदेवेपरावरे ॥ परेब्रह्मणिवि
श्रांतिरनंतादेतिशाश्वती ॥ ५४ ॥ विषयाकलितानंदमनंतादेतिनिर्वृतिः ॥ नकदाचनजीवानामात्मविश्रवणादृते ॥ ५५ ॥ यज्ञदानतप
स्तीर्थसेवाभिर्जायतेसुखम् ॥ नतपोभिर्नदानेननतीर्थैरपिजायते ॥ ५६ ॥ भोगेषुविरतिर्जंतोःस्वभावालोकनादृते ॥ कयाचिदपिनोयु
क्त्याबुद्धिरात्मावलोकने ॥ ५७ ॥ स्वप्रयत्नादृतेपुंसःश्रेयसेसंप्रवर्त्तते ॥ भोगसंत्यागसंप्राप्तपरमार्थादृतेसुत ॥ ५८ ॥ नब्रह्मपदविश्रां
तिसुखमासाद्यतेपरम् ॥ आब्रह्मस्तंबपर्यंतेजगत्यस्मिन्नकुत्रचित् ॥ ५९ ॥ तदाश्वस्यतेभातेपरमेकारणेयथा ॥ पौरुषंयत्नमाश्रित्यदै
वंकृत्वासुदूरतः ॥ ६० ॥ भोगान्विगर्हयेत्प्राज्ञःश्रेयोद्वारदृढार्गलान् ॥ प्रौढायांभोगगर्हायांविचारउपजायते ॥ ६१ ॥ वृद्धायांप्रावृषिश्री
मान्शरत्कालइवामलः ॥ विचारोभोगगर्हातोविचाराद्भोगगर्हणम् ॥ ६२ ॥ अन्योन्यमेतेपूर्यंतेसमुद्रजलदाविव ॥ भोगगर्हाविचार
श्चस्वात्मालोकश्चशाश्वतः ॥ ६३ ॥ अन्योन्यंसाधयंत्यर्थंसुस्निग्धाःसुहृदोयथा ॥ पूर्वंदैवमनादृत्यपौरुषेणप्रयत्नतः ॥ ६४ ॥ दंतैर्दंतान्प्र
संपीड्यभोगेष्वरतिमाहरेत् ॥ देशाचाराविरुद्धेनबांधवैकमतेनच ॥ ६५ ॥ पौरुषेणक्रमेणादौधनानिसमुपार्ज्जयेत् ॥ धनैरभ्याहरेद्भ
व्यान्सुजनान्गुणशालिनः ॥ ६६ ॥

॥ ५७ ॥ ५८ ॥ ५९ ॥ आश्वस्यतेविश्रम्यते ॥ भातेस्वात्मतयाअभिव्यक्तेपरमेकारणेपरमात्मनि ॥ ६० ॥ विचारःसदसद्विवेकः ॥ ६१ ॥ वृद्धायांसस्याद्यभिवृद्धियुक्ता
याम् ॥ शाल्यादिफलसंपदाश्रीमान् ॥ तयोरप्यन्योन्याधीनाअभिवृद्धिरितियुगपद्वर्द्धनीयतेत्याह ॥ विचारइति ॥ ६१ ॥ ६२ ॥ यथासमुद्रेणरश्मिद्वाराजलदाःपूर्यंतेजलदै
श्चवृष्टिद्वारासमुद्रस्तद्वत् ॥ इदानींत्रयाणांयुगपद्वर्द्धनीयतामाह ॥ भोगगर्हेति ॥ आत्मालोकआत्मदर्शनम् ॥ ६३ ॥ ६४ ॥ प्रथमंभोगारतिरेवमहताप्रयत्नेनावश्यंसाध्येत्या
ह ॥ दंतैरिति ॥ तदर्थमुपायमाह ॥ देशेति ॥ तत्तद्वर्णविहितप्रतिग्रहाद्युपायेषुदेशबंधुजनसंमतएवपरिग्राह्योनान्यइत्याशयः ॥ ६५ ॥ पौरुषेणतत्तद्वर्णोत्पन्नपुरुषोचितेनप्रति
ग्रहादिक्रमेण ॥ अभ्याहरेतआराध्यवशीकुर्यादितियावत् ॥ ६६ ॥

तदनुविचारानंतरंज्ञानंविचारितवाक्यार्थज्ञानंतदनुगतिसामान्यन्यायालोचनाच्छास्त्रार्थसंग्रहःसर्वश्रुतीनामद्वितीयेब्रह्मणितात्पर्यनिर्णयोभवतीत्यर्थः ॥ ६७ ॥ ततोमनननिदिध्यासनक्रमेण भूमिकारोहणक्रमेणवाइत्थंसांप्रतंविषयविरामेणपरमपदप्राप्युपायउक्तः ॥ विषयांस्त्यक्तुमसमर्थश्चेद्यौवनकालेउपरतेसतियदात्रिषयेभ्योविरम्यसेतदैवविचारवशतःपरमंपदमेष्यसिनाधुनेत्यर्थः ॥ ६८ ॥ एवंविषयोपरमावश्यकत्वेसतीदानीमेवोपरमस्तेयुक्तइत्याशयेनाह ॥ सम्यगिति ॥ ६९ ॥ हेशुद्धतेतव ॥ भोगस्थानस्थितापियाकालांतरप्रतीक्षास्यादतस्त्वंसदाशिवएवअतस्तेसांप्रतमेवब्रह्मभूतायनमोस्त्वित्यनुचितोपिपुत्रदृशानमस्कारोब्रह्मदृष्ट्याकृतः ॥ ७० ॥ उक्तमर्थंसंक्षिप्योपसंहरति ॥ देशेति ॥ देशाचाराविरुद्धक्रमेणधनंअर्जयेतिशेषः ॥ तेनधनेनअल्पस्यतुच्छतरस्यभोगस्यविगर्हणेनभोगार्थंधनव्ययमकृत्वेतियावत् ॥ साधुजनंब्रह्मविज्ञनंमानपूर्वंप्रणिपातसेवान्ना

प्रवर्त्ततेसमासंगात्तेषांभोगविगर्हणा ॥ ततोविचारस्तदनुज्ञानंशास्त्रार्थसंग्रहः ॥ ६७ ॥ ततःक्रमेणपरमपदप्राप्तिःप्रजायते ॥ यदातूपरतेकालेविषयेभ्योविरम्यसे ॥ ६८ ॥ तदाविचारवशतःपरमंपदमेष्यसि ॥ सम्यक्प्राप्स्यसिविश्रांतिमात्मन्यत्यंतपावने ॥ ६९ ॥ नपुनःकल्पनापंकेदुःखायनिपतिष्यसि ॥ स्थितापिनास्यातेशुद्धनमस्तेस्तुसदाशिव ॥ ७० ॥ देशक्रमेणधनमल्पविगर्हणेनतेनांगसाधुजनमर्जयमानपूर्वं ॥ तत्संगमोत्थविषयाद्यवहेलनेनसम्यग्विचारविभवेनतवात्मलाभः ॥ ७१ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपूपशमप्रकरणेचित्तविचिकित्सायोगोपदेशोनामचतुर्विंशःसर्गः ॥ २४ ॥ ॥ ५ ॥ ॥ बलिरुवाच ॥ ॥ एतन्मेकथितंपूर्वंपित्राचारुविचारिणा ॥ इदानींसंस्मृतंदिष्ट्यासंप्रबोधमहंगतः ॥ १ ॥ अद्येयंममसंजाताभोगान्प्रत्यरतिःस्फुटं ॥ दिष्ट्याशमसुखंस्वच्छंविशाम्यमृतशीतलम् ॥ २ ॥ पुनरापूरयन्नाशांपुनरप्याहरन्धनम् ॥ पुनरावर्जयन्कांतांखिन्नोस्मिविभवस्थितौ ॥ ३ ॥ अहोनुखलुरम्येयंशमभूःशीतलांतरा ॥ सर्वाएवशमंयांतिसुखदुःखदशाःशमे ॥ ४ ॥ शाम्यामिपरिनिर्वामिसुखमासेसमेस्थितः ॥ अयमंतःप्रहृष्यामिचंद्रबिंबइवार्पितः ॥ ५ ॥

च्छादनादिसन्मानपूर्वकंअर्जय ॥ शास्त्रपूर्वमितिपाठेनुतद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठमितिशास्त्रोक्तरीत्येत्यर्थः ॥ ततःसत्संगमोत्थेनविषयतद्रागद्वेषाद्यवहेलनेनसाधनचतुष्टयसंपच्याप्रवृत्तेनसम्यगध्यात्मशास्त्रविचारस्यविभवेनतेतवआत्मलाभोविस्मृतकंठचामीकरलाभवद्भविष्यतीत्यर्थः ॥ ७१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेचतुर्विंशःसर्गः ॥ २४ ॥ ॥ ५ ॥ ॥ इहभूयोबलेरंतर्विवेकेंदुशुभोदयः ॥ संदेहशांतयेशुक्रांचिंतेच्छातोनुवर्ण्यते ॥ १ ॥ अवांतराख्यानमुपसंहृत्यप्रकृतेयोजयति ॥ एतदिति ॥ १ ॥ २ ॥ पुनरितिवीप्सितंपुनःपुनरित्यर्थः ॥ आवर्जयन्प्रार्थनादिनाअनुकूलयन् ॥ विभवस्थितौसंपत्परिपालनविषयेखिन्नःसंतप्तोस्मि ॥ ३ ॥ शमेशांतिगुणे ॥ सर्वाएवसुखदुःखदशाःशमंनाशंयांति ॥ ४ ॥ शमेस्थितःप्रतिष्ठितोहंशाम्यामीतिसर्वतापोपशमोक्तिः ॥ चंद्रबिंबेर्पितइवपरिनिर्वामीतिचित्तस्यनिरतिशयसुखपारवश्योक्तिः ॥ सुखमासइतितद्धेतुसुखात्मनास्थित्युक्तिः ॥ अंतरितिसर्वत्रसंबध्यते ॥ अयंप्रहृष्यामीतिहर्षलिंगपुलकाद्यतिशयोक्तिः ॥ ५ ॥

उत्तांडवशब्दात्सर्वप्रातिपदिकेभ्य आचारे क्विब्वक्तव्य इति क्विपि लटः शत्रादेशः ॥ भोगोत्कंठया उत्तांडवतो मनसो रंहोभिः प्रोषितं दग्धदेशभ्रमणशीलं वा उरुप्रधानं शरीरं उरुशरीरं वा यस्मिन् अतएवानारतपरिक्षोभं विभवार्जनं दुःखमेव ॥ हादिति खेदे ॥ ६ ॥ इदानीं तत्फलरूपादिभोगस्वरूपमप्यसारतया विविच्य परिशोचति ॥ अंगमित्यादिना ॥ ७ ॥ सर्वेषां विभवानां दृष्टांनभूत महाविभवदृष्टयः स्वेन दृष्टाः ॥ अक्षतं परैरव्याहतं भोक्तव्यं राज्य भोगादि भुक्तम् ॥ अखिलं भूतं प्राणिजातमाक्रांतं स्वसामर्थ्येन नामितमितियावत् ॥ तथापि किमिव शोभनं शाश्वतसुखं जातम् ॥ अनादौ संसारे सर्वेषामपि कदाचिद्देववैभवसंभवात्स्वस्यापि पूर्ववच्छतशो दुर्दशासहस्रस्यापेपि संभावितत्वाच्च न किंचिच्छोभनमित्यर्थः ॥ ८ ॥ अभिनवचमत्कारांतरादर्शनाच्चर्वितचर्वणप्रायत्वाच्च नैहिकामुष्मिकभोगानां सारतास्तीत्याह ॥ पुनरिति ॥ तत्र स्वर्गादौ ॥ इह भुवि ॥ अन्यत्र नागलोकादौ ॥ ९ ॥ पूर्णात्स्वरूपाद्बोधतः प्रमात्पूर्णइवेत्यपूर्णताभ्रांतिनिरास एव नापूर्वपूर्णताप्राप्तिरस्तीति द्योतनाय ॥ अथवा पूर्णाच्चंद्रान्निमित्तात्पूर्णः क्षीराब्धिरिवेत्यर्थः ॥ १० ॥ यदपि भोग्यमजड दृष्ट्यासारत्वेन गृहीतं तदपि नश्वरत्वाद्दुःखाय पर्यवसितं तत्त्वदृशाप्यसारमेवेत्याशयेनाह ॥ पातालइति ॥ ११ ॥ तुच्छया जगदाधिपत्येच्छया अमरैः सह द्वेषं कुर्वन्नहं भृशं बालो मूर्ख एवाभवमित्यर्थः ॥ १२ ॥ जगन्नाम्ना जगदाधिपत्यनाम्ना महता आधिना मानसदुःखेन ॥ अत्यक्तेनेतिच्छेदः ॥ अर्थः पुरुपार्थः स्यात् ॥ अनुरागे हि सति तत्र पुरुपार्थताबुद्धिः स एव नास्तीत्याह ॥ कइति ॥ १३ ॥ कालेन स्वमृत्युभूतेन स्वेनैव मया अनर्थः अर्थधिया सेवित इत्यर्थः ॥ १४ ॥ १५ ॥ अथवा किं मम गतशोकेन सांप्रतिकमोहचिकित्सया पुरुपजन्मसाफल्योपायं चिंतयामीत्याह ॥ एतयेति ॥ १६ ॥ अपरिमिताकारं अपरिच्छिन्नस्वरूपं यत्कारणं ब्रह्म तदेकतया तदभेदस्थित्या आत्मनि सर्वतः पूर्णसुखमर्णवे क्षीरसमुद्रे रसायनममृतमथनेनेव यथा सर्वतः अभ्येत्याविर्भवति तथा अथ औशनसं शुक्रं पृच्छामीति परेणान्वयः ॥ १७ ॥

उत्तांडवन्मनोरंहःप्रोषितोरुशरीरकम् ॥ अनारतपरिक्षोभंहादुःखंविभवार्ज्जनम् ॥ ६ ॥ अंगमंगेनसंपीड्यमांसंमांसेनचस्त्रियः ॥ पुरा हमभवंप्रीतोयत्तन्मोहविजृंभितम् ॥ ७ ॥ दृष्टांतदृष्टयोदृष्टाभुक्तंभोक्तव्यमक्षतम् ॥ आक्रांतमखिलंभूतंजातंकिमिवशोभनम् ॥ ८ ॥ पुनस्तान्येवतान्येवतत्रेहान्यत्रवापिच ॥ इतश्चेतश्चवस्तूनिनापूर्वनामकिंचन ॥ ९ ॥ सर्वमेवपरित्यज्यपरिह्रत्यधियास्वयम् ॥ स्वस्थएवावतिष्ठेहंपूर्णात्पूर्णइवात्मनि ॥ १० ॥ पातालेभूतलेस्वर्गेस्त्रियोरत्नोपलादयः ॥ सारंतदपितुच्छेनकालेनाशुनिगीर्यते ॥ ११ ॥ एतावंतमहंकालंभृशंबालोभवंपुरा ॥ यःकुर्वन्द्वेषममरैस्तुच्छयाजगदिच्छया ॥ १२ ॥ मनोनिर्माणमात्रेणजगन्नाम्नामहाधिना ॥ त्यक्तेनानेनकोर्थःस्यात्कोनुरागोमहात्मनः ॥ १३ ॥ कष्टंचिरतरंकालमनर्थोर्थधियामया ॥ अज्ञानमदमत्तेनकालेनस्वेनसेवितः ॥ १४ ॥ तरत्तरलतृष्णेनकिमिवास्मिञ्जगत्त्रयम् ॥ मयानकृतमज्ञेनपश्चात्तापाभिवृद्धये ॥ १५ ॥ एतयातदलंमेस्तुतुच्छयापूर्वचिंतया ॥ पौरुषंयातिसाफल्यंवर्त्तमानचिकित्सया ॥ १६ ॥ अद्यापरिमिताकारकारणैकतयात्मनि ॥ सर्वतस्सुखमभ्येतिरसायनमिवार्णवे ॥ १७ ॥

१ पूर्वार्धेनमिलितोच्चारणात.

अयंप्रपंचःकः अहंअहंप्रत्ययवेद्यंजीवतत्त्वंकिम् इत्यात्माअवलोक्यतेयेनतदात्मावलोकनमुपायंनाथंकुलगुरुत्वात्कुलस्येश्वरमुशनसमेवौशनसंपृच्छामिप्रक्ष्यामि ॥ १८ ॥
अहंपरमेश्वरंयोगसिद्धत्वात्सर्वकामेश्वरम् स्वाश्रितेष्वाशुउद्यत्प्रसादंशुक्रंसंचितयामितेनशुक्रेणगिराउपदिष्टेअनंतविभवेआत्मनिस्वयमात्मनैवतिष्ठामिस्थास्यामि ॥ वर्त्तमान
सामीप्येलट् ॥ तत्रावस्थानेकेनहेतुनातवाश्वासस्तत्राह ॥ अक्षीणमिति ॥ यतोमहतामुपदेशगिरोऽक्षीणमक्षयमर्थंफलंतिनकदाचिद्विफलीभवंतीत्यर्थः ॥ १९ ॥ ॥ इति
श्रीवासिष्ठम॰तात्पर्यप्रकाशेउपशमप्रकरणेपंचविंशःसर्गः ॥ २५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ स्मृत्यायातस्यशुक्रस्यसंक्षेपेणबलिंप्रति ॥ तत्त्वसारोपदे
शोथनभोगतिरिहेर्यते ॥ १॥ आकाशोब्रह्माकाशएवमंदिरंविश्रांतिस्थानंयस्यतम् ॥ १ ॥ अथनित्यध्यानोभीक्ष्णंध्यानपरोभार्गवःसर्वांतरब्रह्मरूपत्वात्सर्वस्थंस्वंचितयानंस्वचे

कोयंतावदहंकिंस्यादात्मेत्यात्मावलोकनम्॥पृच्छाम्यौशनसंनाथंनूनमज्ञानशांतये॥१८॥संचिंतयामिपरमेश्वरमाशुशुक्रमुद्यत्प्रसादमथतेनगिरोपदिष्टे॥तिष्ठाम्यनंतविभवेस्वयमात्मनात्मन्यक्षीणमर्थमुपदेशगिरःफलंति॥१९॥ ॥इ॰वा॰वा॰दे॰ मोक्षोपायेषूपशमप्रकरणेबलिचिंतासिद्धांतयोगोपदेशोनामपंचविंशःसर्गः॥२५॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिसंचिंत्यबलवान्बलिरामीलितेक्षणः॥ दध्यौकमलपत्राक्षंशुक्रमाकाशमंदिरम्॥ १॥ सर्वस्थंचिंतयानंतुनित्यध्यानोथभार्गवः॥ चेतःस्थंज्ञातवान्शिष्यंबलिंगुर्वर्थिनंपुरे॥२॥अथसर्वगतानंतचिदात्माभार्गवःप्रभुः॥आनिनायसदेहंस्वंरत्नवातायनंबलेः॥३॥ गुरुदेहप्रभाजालपरिमृष्टतनुर्बलिः॥बुबुधेप्रातरर्कांशुसंबोधितमिवांबुजम् ॥ ४ ॥ तत्ररत्नार्घ्यदानेनमंदारकुसुमोत्करैः॥ पादाभिवंदनेरेनंपूजयामासभार्गवम् ॥ ५ ॥ रत्नार्घ्यपरिपूर्णांगंकृतमंदारशेखरम्॥ महार्हासनविश्रांतमथोवाचगुरुंबलिः ॥६ ॥ ॥बलिरुवाच॥ ॥भगवंस्त्वत्प्रसादोत्थाप्रतिभेयंपुरस्तव॥ नियोजयतिमांवक्तुंकार्यंकर्तुमिवार्कभाः॥ ७॥ भोगान्प्रतिविरक्तोस्मिमहासंमोहदायिनः॥तत्तत्त्वंज्ञातुमिच्छामिमहासंमोहहारियत्॥८॥ कियन्मात्रमिदंभोगजालंकिंमयमेववा॥ कोहंकस्त्वंकिमेतेवालोकाइतिवदाशुमे॥९॥ ॥श्रीशुक्रउवाच
बहुनात्रकिमुक्तेनखंगंतुंयत्नवानहम्॥सर्वदानवराजेंद्रसारंसंक्षेपतःशृणु॥१०॥

तस्थंबलिंशिष्यंगुर्वर्थिनंतत्त्वजिज्ञासयास्वदर्शनेच्छुंज्ञातवानित्यन्वयः ॥ २ ॥ अथसभार्गवःस्वंदेहंबलेःरत्नवातायनंरत्नगवाक्षस्थानंप्रतिआनिनायस्वयमाजगामेतियावत्
॥ ३ ॥ परिमृष्टतनुःसंस्पृष्टशरीरः ॥ संबोधितंविकासितम् ॥ ४ ॥ ५ ॥ ६ ॥ प्रतिभानवनवोन्मेषशालिनीबुद्धिः ॥ यथाप्रातरुदिताअर्कभाब्राह्मणादीन्संध्यावंदनादिकार्यंक
र्तुंसन्निधानमात्रेणनियोजयतितद्वत् ॥ ७ ॥ यत्स्वज्ञानमात्रेणमहासंमोहहारितत्तादृशंतत्त्वम् ॥ ८ ॥ कियतीमात्राउत्कर्षावधिर्यस्यतत् ॥ भोगजालंविषयसुखम् ॥ किमयं
किंप्रकृतिकमितिभोगतत्त्वप्रश्नः ॥ कोहंकस्त्वमितिभोक्तृतत्त्वप्रश्नः ॥ किमेतेलोकाइतिभोग्यतत्त्वप्रश्नः ॥ लोक्यंतेइतिलोकाइतिव्युत्पत्तेः ॥ ९ ॥ भोक्त्रादित्रिपुटीभेदस्यैक
स्यांचितिकल्पितत्वात्संक्षेपतस्तदुपदेशेनैवप्रश्नत्रयस्याप्युत्तरंसुवचमित्याशयंद्योतयन्नाह ॥ बहुनेति ॥ खंआकाशमार्गम् ॥ सारंप्रश्नत्रयसारम् ॥ १० ॥

दहजगतिचिदस्ति ॥ हिशब्दस्तस्सिद्धेरन्यनिरपेक्षत्वप्रसिद्धिद्योतनाय ॥ अतइदंचिद्दृश्यंचिदधीनसिद्धिकंभोगजातंचिदेवमात्राउत्कर्षावधिर्यस्यतथाविधम् ॥ यतोवाचोनिव र्त्तंतेइतिश्रुत्यापूर्णचितएवसर्वानंदोत्कर्षावधित्वोक्तेः ॥ चित्येवभेदंवैचिझ्याध्यासाच्चिन्मयमेवच ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः ॥ एवंतत्त्वमस्यहंब्र ह्मास्मिएपब्रह्मैपइंद्रः नान्योतोस्तिद्रष्टानान्योतोस्तिश्रोतेत्यादिश्रुतिशतेभ्यस्त्वमहमादिभोक्तृतत्त्वमपिचिन्मात्रमेवेत्याह ॥ चित्त्वमिति ॥ एवंभोग्यजातमपिपरमार्थतश्चिदेवत त्सत्तास्फूर्त्योश्चिदधीनत्वाद्ब्रह्मैवेदंविश्वमिदंवरिष्ठमित्यादिश्रुतेश्चेत्याशयेनाह ॥ एतेचेति ॥ ११ ॥ भवतीतिभव्यःश्रद्धधानोविवेकी ॥ १२ ॥ चितश्चेत्याकारकलनैवबंधः ॥ अचे त्याचेत्याकारनिर्मुक्ता ॥ अखिलात्मापूर्णात्मा ॥ १३ ॥ विलोकयसिचेदितिशेषः ॥ आत्मनाअखंडाकारवृत्त्यारूढप्रतीचा ॥ १४ ॥ खंदेवलोकः ॥ वस्तव्यंअवश्यंसन्निधात

चिदिहास्तिहिचिन्मात्रमिदंचिन्मयमेवच ॥ चित्त्वंचिदहमेतेचलोकाश्चिदितिसंग्रहः ॥ ११ ॥ भव्योसिचेत्तदेतस्मात्सर्वमाप्नोपिनिश्चयात् ॥ नोचेत्तद्वद्भपिप्रोक्तंत्वयिभस्मनिहूयते ॥ १२ ॥ चिच्चेत्यकलनाबंधस्तन्मुक्तिर्मुक्तिरुच्यते ॥ चिदचेत्याखिलात्मेतिसर्वसिद्धांतसंग्रहः ॥ १३ ॥ एनंनिश्चयमादायविलोकयसिहेलया ॥ स्वयमेवात्मनात्मानमनंतंपदमाप्स्यसि ॥ १४ ॥ खंव्रजाम्यहमत्रैवमुनयःसप्तसंगताः ॥ केनापिसुरकार्येणवस्तव्यंतत्रवैमया ॥ १५ ॥ राजन्यावदयंदेहस्तावन्मुक्तधियामपि ॥ यथाप्राप्तक्रियात्यागोरोचतेनस्वभावतः ॥ १६ ॥ इतिकथितवताथभार्गवेणस्फुटजलराशिपथामहाजवेन ॥ प्लुतमलिशबलेनभोंतरालेतरलतरंगवदाकुलेग्रहौघैः ॥ १७ ॥ ॥ इ॰ वा॰ वा॰ दे॰ मो॰ उपशमप्रकरणेवल्युपदेशयोगोनामपड्विंशःसर्गः ॥ २६ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ सुरासुरसभाज्येष्ठेतस्मिन्भृगुसुतेगते ॥ मनसाचिंतयामासबलिर्बुद्धिमतांवरः ॥ १ ॥ युक्तमुक्तंभगवताचिदेवेदंजगत्त्रयम् ॥ चिदहंचिदिमेलोकाश्चिदाशाश्चिदियंक्रिया ॥ २ ॥ सबाह्याभ्यंतरंसर्वंचिदेवपरमार्थतः ॥ अस्तिचिद्व्यतिरेकेणनेहकिंचनकुत्रचित् ॥ ३ ॥ अयमादित्यइत्यर्कोनचिता यदिचेत्यते ॥ तदर्कतमसोर्भेदःकइहेवोपलभ्यते ॥ ४ ॥

व्यम ॥ भावितव्यः ॥ १५ ॥ ननुमुक्तधियःकृतकृत्यस्यतवतत्रअगमनेकाक्षतिस्तत्राह ॥ राजन्निति ॥ १६ ॥ अथइतिकथितवताभार्गवेणग्रहौघैराकुलेअतएवपुष्परेणुव्या मोऽलिरिवशबलेकिर्मीरेनभोंतरालेस्फुटेनजलराशेर्मेघस्यसमुद्रस्यचपथाउपरिमार्गेणतरलतरंगवन्महाजवेनप्लुतंउड्डीनम् ॥ भावेक्तः ॥ १७ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्य प्रकाशेउप॰ पड्विंशःसर्गः ॥ २६ ॥ ॥ ७ ॥ ॥ शुक्रोपदिष्टमार्गेणसर्वविन्नृशतोबलेः ॥ चित्पूर्णानंदविश्रांत्याचिरंस्थितिरिहोच्यते ॥ १ ॥ सुरासुरसभासुज्येष्ठेप्रशस्यतमे ॥ ज्य चेतिप्रशस्यशब्दस्येष्ठनिज्यादेशः ॥ १ ॥ यच्चिंतयामासतदाह ॥ युक्तमित्यादिना ॥ २ ॥ ३ ॥ युक्ततामुपपादयति ॥ अयमादित्यइत्यादिना ॥ चेत्यतेसंज्ञायते ॥ तमोघटदी पादिव्यावृत्ततयायदिनप्रकाश्यतइत्यर्थः ॥ भेदोव्यावृत्तिर्विच्छित्तिर्वैधर्म्यंच ॥ इवशब्दोवाक्यालंकारार्थः ॥ ४ ॥

भूमित्वंजलादिव्यावृत्तरूपंकिम् ॥ एवमग्रेपिसर्वत्र ॥ भव्यतांनिरूढतांगतंप्राप्तम् ॥ ५ ॥ शैलेष्वपिइमेशैलाइतियदिनचेत्यंतेइत्यर्थाद्गम्यते ॥ ६ ॥ जगत्क्रियावन्मूर्तद्रव्यंनभस्त्वमूर्त्तम् ॥७॥ भूतेपृक्काभौतिकेष्वाह ॥ कायइति ॥ पर्वताकारःस्थूलइतियावत् ॥८॥ खंशून्यमसत् ॥ भावास्तद्विलक्षणाःसंतः ॥ भवस्थितिस्तदुभयसंवलनात्कादाचित्की सत्ता ॥९॥ स्पर्शनैषणंभोगेच्छातत्पूर्वकंमात्राणांशब्दादिविषयाणांसंस्पर्शंभोगम् ॥शरीरेणेति॥ अचेतनस्यभोक्तृत्वायोगादितिभावः ॥१०॥ यदिशरीरेणनकिंचनतर्हिशरीराभिमानोवृथैवेतित्याज्यएवेत्याह ॥ किमनेनेति॥तत्त्यागेनिरुपाधिचितांभेदकाभावात्सर्वचिदैकात्म्यसिद्धिरपरोलाभइत्याशयेनाह॥अशेषेति ॥ चेतनात्मकइति चेतनाचिन्तदात्मकत्वस्यसर्वत्राविशेषादितिहेतुप्रदर्शनार्थम् ॥ ११ ॥ अंबरेआकाशे भानौसूर्यादितेजसि भूतपंजरेअवशिष्टभूतत्रये सुरासुरादिस्थावरजंगमदेहेषुच याचित्साअहमेवसैवाहमितिवार्थः ॥१२॥ एवंसर्वचिदैक्येभेदप्रत्ययानांपृथगनवशेषाद्बाधाताच्चद्वित्वस्यासंभवाच्छत्रुमित्रादिकल्पनापिदूरनिरस्तेत्याह ॥ चिदस्तीति ॥१३॥ अस्तुवादेहादिद्वैतंतथाप्यसंगपूर्णचिन्मात्ररूपस्यममनतत्क्षत्याकापिक्षतिरस्तीत्याह ॥ बलिनाम्नइति ॥ १४ ॥ अस्तुवातच्चितएवच्छिन्नंतथापिच्छेद्यच्छेदनादिभावाभावानांतद्गोचररागद्वेषादीनांच चिदधीनकल्पनत्वेनचिद्व्यतिरेकान्नचिप्रतिकूलंकिंचिदापन्नमित्याशयेनाह ॥ चितेति ॥ १५ ॥ १६ ॥ १७ ॥ प्रतिकूलाप्रसिद्धौचितोनित्यानुकूलप्रथमानतालक्षणाआनंदात्मतास्वतएवपरिशिष्यतइत्याशयेननित्यानंदमयात्मकइत्युक्तिः ॥ १८ ॥

इयंभूरितिभूरेषाचितायदिनचेत्यते॥ भूमेःकिंनामभूमित्वंतद्भव्येभव्यतांगतम् ॥ ५ ॥ इमादिशोदिशइतिचेत्यंतेनचितायदि ॥ तत्किंनामदिशांदिक्त्वंशैलानांचापिकाद्रिता ॥ ६ ॥ इदंजगज्जगदितिचितायदिनचेत्यते ॥ तत्किंजगत्त्वंजगतोनभस्त्वंनभसोथकिम् ॥ ७ ॥ कायोयंपर्वताकारश्चितायदिनचेत्यते ॥ तत्किंनामशरीरत्वंशरीरस्यशरीरिणाम् ॥ ८ ॥ चिदिंद्रियाणिचित्कायश्चिन्मनश्चित्तदेषणा ॥ चिदंतश्चिद्बहिश्चित्खंचिद्भावाश्चिद्भवस्थितिः ॥ ९ ॥ चितैवैनमहंसर्वंस्पर्शनैषणपूर्वकम् ॥ करोमिमात्रासंस्पर्शंशरीरेणनकिंचन ॥ १० ॥ किमनेनशरीरेणकाष्ठलोष्टसमेनमे ॥ अशेषजगदेकात्माचिदहंचेतनात्मकः ॥ ११ ॥ अहंचिदंबरेभानावहंचिद्भूतपंजरे ॥ सुरासुरेषुचिदहंस्थावरेषुचरेषुच ॥ १२ ॥ चिदस्तीहद्वितीयाहिकल्पनैवनविद्यते ॥ द्वित्वस्यासंभवाल्लोकेकःशत्रुःकश्चवासुहृत् ॥ १३ ॥ बलिनाम्नःशरीरस्यच्छिन्नेशिरसिभासुरे ॥ चितःकिंतद्भवेच्छिन्नंसर्वलोकावपूरणात् ॥ १४ ॥ चितासंचेतितोद्वेषोद्वेषोभवतिनान्यथा ॥ तस्माद्द्वेषादयस्सर्वेभावाभावाश्चिदात्मकाः ॥ १५ ॥ नचितोव्यतिरेकेणप्रविचार्यापिकिंचन ॥ आसाद्यतेकिलस्फारादस्मात्त्रिभुवनोदरात् ॥ १६ ॥ नद्वेषोस्तिनरागोस्तिनमनोनास्यवृत्तयः ॥ चिन्मात्रस्यातिशुद्धस्यविकल्पकलनाकुतः ॥ १७ ॥ चिदहंसर्वगोव्यापीनित्यानंदमयात्मकः ॥ विकल्पकलनातीतोद्वितीयांशविवर्जितः ॥ १८ ॥

जगद्रूपनामकल्पनावच्चितःस्वनामकल्पनापिस्वविवर्त्तएवेत्याह ॥ चितइति ॥ सर्वगासर्वनामरूपकल्पनाधिष्ठानचिच्छक्तिरेवस्वनामशब्दात्मिकेवपरिस्फुरतीत्यर्थः ॥१९॥ एवं चकोहमितिप्रश्नोत्तरमपिस्वयमेवमयावगतमित्याह ॥ दृश्येति ॥ २० ॥ ईदृशेभारूपैकस्वरूपेअस्मिन्मयिनित्यस्वात्मावभासविवर्जितःकेजलेअलकांतिकेशापेवाप्रतिबिंबित चंद्रकलाप्रायःशुक्लपक्षकालेउपचयात्कांताःकलायस्यचंद्रस्यतत्प्रायोवास्वकल्पनारूपोविकलाकारःपरिच्छिन्नजीवभावोयउदितस्सआभासमात्रंभ्रांतिरेवनवास्तवइत्यर्थः ॥ २१ ॥ अतएवतंजीवभावंचरमसाक्षात्कारवृत्तीद्धेनस्वरूपेणैवाहंजयाम्यभिभवामि ॥ जितजीवभावःस्वात्मैवपरमेश्वरइतितंनमस्यति ॥ चेत्येत्यादिना ॥ २२ ॥ योग्यया युक्त्याप्रत्यक्त्वरागभेदान्वययोग्येनाखंडाभेदेनयुक्ताय साक्षात्कारयोग्ययामनननिदिध्यासनयुक्त्यायुक्तायेतिवामर्थंप्रत्यगूपायतेब्रह्मणेनमोस्तु ॥ २३ ॥ २४ ॥ २५ ॥ वर्त्तमानविषयेसंवेदनमसंवेद्यंअतीतानागतविषयेअचेत्यंचेतनम् ॥ उभयत्रचाक्षुषादिवृत्तीनांस्मृत्यादिवृत्तीनांचव्यावृत्तयेअसंवेद्यमचेत्यमितिचविशेषणे ॥ २६ ॥ परिच्छेत्तुंदेश

चितश्चिदितियन्नामनिर्नामायाननामतत् ॥ शब्दात्मिकैषाचिच्छक्तिःपरिस्फुरतिसर्वगा ॥१९॥ दृश्यदर्शननिर्मुक्तकेवलामलरूपवान् ॥ नित्योदितोनिराभासोद्रष्टास्मिपरमेश्वरः ॥ २० ॥ कल्पनाविकलाकारःकालकांतकलामयः ॥ आभासमात्रमुदितोनित्याभासविवर्जितः ॥ २१ ॥ भारूपैकस्वरूपेस्मिन्स्वरूपेणजयाम्यहम् ॥ चेत्यरंजनरिक्तायविमुक्तायमहात्मने ॥ २२ ॥ प्रत्यक्चेतनरूपायस्वरूपायनमोस्तुते ॥ चितयेचेत्यमुक्ताययुक्त्यायुक्ताययोग्यया ॥ २३ ॥ सर्वावभासदीपायमह्यमेवनमोस्तुते ॥ चेत्यनिर्मुक्तचिद्रूपंविष्वग्विश्वावपूरकम् ॥ २४ ॥ संशांतसर्वसंवेद्यंसच्चिन्मात्रमहंमहत् ॥ आकाशवदनंतोहमप्यणोरणुराततः ॥ २५ ॥ नासादयंतिमामेताःसुखदुःखदशादृशः ॥ संवेदनमसंवेद्यमचेत्यंचेतनंततम् ॥ २६ ॥ नशक्तामांपरिच्छेत्तुंभावाभावाजगद्गताः ॥ अथचैतेजगद्भावाःपरिच्छिंदंतुमामिमम् ॥ २७ ॥ यथाभिमतमेवैतेमत्तोनव्यतिरेकिणः ॥ यदिस्वभावभूतेनवस्तुनावस्तुनीयते ॥ २८ ॥ क्रियतेदीयतेवापितत्किंकस्यकिलक्षतम् ॥ सर्वदासर्वमेवाहंसर्वकृत्सर्वसंगतः ॥ २९ ॥ चेत्यमस्म्यहमेवैतन्नकिंचिदपिचोदितम् ॥ किंसंकल्पविकल्पाभ्यांचितंचिदियमेकिका ॥ ३० ॥

तःकालतोवस्तुतोवाइयत्त्वेव्यवस्थापयितुंनशक्ताः ॥ भावाभावयोःप्रत्युतसाक्षिपरिच्छेद्यत्वादितिभावः ॥ यदिब्रूयानवयमियत्त्वेव्यवस्थापनंपरिच्छेदंब्रूमःकिंतुतत्त्वावधारणं तदनुकूलाश्चप्रमाणादयोजगद्भावास्तत्त्वतःपरिच्छिंदंत्वेवात्मानमितितत्राह ॥ अथचेति ॥ प्रकारांतरद्योतनार्थोथशब्दः ॥ २७ ॥ एवंपरिच्छेदनंममयथाभिमतंसंमतमेव ॥ यतस्तेमत्स्वरूपपरिच्छेदमात्रेणमत्तोनव्यतिरेकिणोमदेकपरिशेषाः ॥ अहमेवसंपद्यंतइत्यर्थः ॥ एवंभूतेश्चपरिच्छेदेवामहस्तगतस्यधनस्यदक्षिणहस्तेननयनेहरणेपरावृत्यदानेवा हस्तद्वयाभिन्नस्यदेहात्मकस्यदेवदत्तस्ययथानधनक्षतिस्तद्वन्नकाचित्क्षतिरित्याह ॥ यदीति ॥ २८ ॥ वस्तुतस्तुतत्त्वबोधात्पूर्वमपिजगत्स्वयमेवेतिप्रागपिनकिंचिदुदितंक्षतंवेत्याशयेनाह ॥ सर्वदेति ॥ २९ ॥ अहमेकिकाचित् चिद्रूतस्यचममसंकल्पविकल्पाभ्यांकिंचितमुपचितमपचितंवा ॥ ३० ॥

१ रूपायेत्यपिपाठः

अज्ञानात्संक्षोभयामितत्त्वबोधाच्चशाम्यामिइतिसंचिंतयन्बलिःओंकारात्स्थूलसूक्ष्मसंक्षोभाभ्यांतद्बीजाज्ञानेनचसंवलितंचैतन्यंबोधयदकारादिमात्रात्रयंविहायपरमर्द्धमात्रार्थंतुरीयंभावयन्त्वात्मतयानुभवंस्तत्रसमाहितःस्थितः ॥३१॥३२॥ दूरेअस्तानिचेत्यचिंतकचिंतनानियेन ॥ त्रिपुटीमात्रत्यागोपलक्षणमेतत् ॥ तत्रहेतुर्ध्यात्रिति ॥ ३३ ॥ उपलेसमुत्कीर्णःटंकच्छेदनिष्पादितःपुरुषइव ॥ ३४ ॥ बलिःप्रशमितैषणयाअतएवपरिपूर्णयाअतएवविषयमननदोषदशाभिरुज्झितयाएतयानिर्मलब्रह्मभावप्राप्तिलक्षणयासत्तयाविघनंगतमेघंशरन्नभइवअराजत ॥ ३५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेसप्तविंशतितमस्सर्गः ॥ २७ ॥ ॥ ७ ॥ ॥ ७ ॥

संक्षोभयाम्यहंतावच्छाम्याम्यात्मनिपावने॥ इतिसंचिंतयन्नेवबलिःपरमकोविदः॥ ३१ ॥ ओंकारादर्द्धमात्रार्थंभावयन्मौनमास्थितः॥ संशांतसर्वसंकल्पःप्रशांतकलनागणः॥ ३२ ॥ निःशंकमपिदूरास्तचेत्यचिंतकचिंतनः॥ ध्यातृध्येयध्यानहीनोनिर्मलःशांतवासनः॥३३॥ बभूवावातदीपाभोबलिःप्राप्तमहापदः॥ उपशांतमनास्तत्ररत्नवातायनेबलिः॥ अवसद्दृढकालंससमुत्कीर्णइवोपले॥३४॥ प्रशमितैषणयापरिपूर्णयामननदोषदशोज्झितयैतया॥ बलिरराजतनिर्मलसत्तयाविघनमच्छतयैवशरन्नभः॥३५॥ ॥इ०वा०वा०दे०मोक्षोपायेषूपशमप्रकरणेबलिविश्रांतिर्नामसप्तविंशतितमःसर्गः॥ २७॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥अथतेदानवास्तत्रबलेरनुचरास्तदा॥ तद्गृहंस्फाटिकंसौधमुच्चैरारुरुहुःक्षणात्॥ १ ॥ डिंभाद्यामंत्रिणोधीराःसामंताःकुमुदादयः॥ सुराद्याश्चैवराजानोवृत्ताद्यावलहारिणः॥२॥ हयग्रीवादयःसैन्याश्चोक्राजाद्याश्चबांधवाः॥ लड्डुकाद्याश्चसुहृदोवह्लूकाद्याश्चलालकाः॥ ३॥ कुबेरयमशक्राद्याउपायनकराःसुराः॥ यक्षविद्याधरानागाःसेवावसरकांक्षिणः॥ ४ ॥ रंभातिलोत्तमाद्याश्चचामरिण्योवरांगनाः॥ सागराःसरितःशैलादिशश्चविदिशस्तथा॥५॥ सेवार्थमाययुस्तस्यतंप्रदेशंतदाबलेः॥ अन्येचबहवःसिद्धास्त्रैलोक्योदरवासिनः॥ ६॥ ध्यानमौनसमाधिस्थंचित्रार्पितमिवाचलम्॥ नमत्किरीटावलयोददृशुर्बलिमादृताः॥ ७ ॥ तंदृष्ट्वाकृतकर्त्तव्यप्रणामास्तेमहासुराः॥ विषादविस्मयानंदभयमंथरतांययुः॥८॥ मंत्रिणःप्रविचार्यात्रकिंप्राप्तमितिदानवाः॥ भार्गवंचिंतयामासुर्गुरुंसर्वविदांवरम्॥९॥

निश्चेष्टंबलिमालोक्यविषण्णैर्दानवैःस्मृतः॥ शुक्रस्तत्स्थितिमाख्यायतेषांशोकमिहाहरत ॥ १ ॥ तस्यबलेर्गृहंआश्रयभूतंसौधम् ॥ १ ॥ अनुचरानेवनामभिरुद्दिशति ॥ डिंभाद्याइत्यादिना ॥ २ ॥ ३ ॥ ४ ॥ दिशोविदिशश्चदिगधिदेवतास्तास्वधिकृताजनाश्च ॥ ५ ॥ सिद्धाःदेवयोनिविशेषाः ॥ ६ ॥ शिरोनमनान्नमंत्यःकिरीटावलयोयेषाम् ॥ आदृताःसादराः ॥ ७ ॥ कृतःअवश्यकर्त्तव्यःप्रणामोयैः ॥ सुहृदोविषादमंथरतां उदासीनाविस्मयमंथरतां तत्त्वविदस्त्वानंदमंथरतां अनभिज्ञोपजीविनस्तूभयमंथरतांययुः अथवाप्राणसंशयाद्विषादमंथरतां सुखप्रसाददर्शनाद्विस्मयमंथरतां रोमांचाद्यानंदलिंगदर्शनादानंदमंथरतां चिरमनुत्थानेत्राणादर्शनाद्भयमंथरतांययुरित्यर्थः ॥ ८ ॥ ९ ॥

१ चक्रेत्यपिपाठः

कल्पितंसमर्पितसभागतैनैवभार्गवेणयोगबलाद्बलिसौधदेशेप्रासत्वेनकल्पितम् ॥ १० ॥ ११ ॥ इवशब्दोविश्रांतेरपिकल्पितत्वद्योतनार्थः ॥ १२ ॥ क्षिपन्प्रसारयन्निंदन्वा ॥ सभांतस्थान्दैत्यान्हसन्नवभिज्ञताख्यापनायोपहसन् ॥ १३॥ हेदैत्याःअयंवलिःस्वविचारणयैवसंप्राप्तोविमलआवासःसर्वाधिष्ठानंब्रह्मयेनतथाविधइतियत्तदतिमात्रम् ॥ अतिशयोस्यसुखविश्रांतेरित्यर्थः ॥ १४ ॥ तत्तस्मादयमेवसमाहितस्तिष्ठन्निरतिशयानंदेस्वात्मनिस्थितिचिरावस्थानमाप्नोतु ॥ १५ ॥ नवाचनीयोनसंभाषणीयस्तूष्णीमाध्वमितियावत् ॥ १६ ॥ अत्रभुविराव्यंधकारनिद्रादिसंभ्रमेशांतेसतिदिनेनदिवसेनसौरःकरोत्करःकिरणसमूहइवएतेनबलिनाअज्ञानसंकटेशांतेसतिस्वएवालोकस्संप्राप्तः ॥ १७ ॥

चिंतनानंतरंदैत्याभार्गवंभास्वरंवपुः॥ददृशुःकल्पितंप्राप्तंगंधर्वनगरंयथा॥१०॥पूज्यमानोसुरगणैर्निविष्टोगुरुविष्टरे॥ददर्शध्यानमौनस्थंभार्गवोदानवेश्वरम्॥ ११ ॥ विश्रम्यसक्षणमिवप्रेमवानवलोक्यच॥ वलिंविचारयन्दृष्ट्वापरिक्षीणभवभ्रमम्॥१२॥देहरश्मिशतैर्दत्तदीप्तिभिःक्षीरसागरम्॥क्षिपन्निवसभामाहहसन्वाक्यमिदंगुरुः॥ १३ ॥ अतिमात्रमिदंदैत्याःस्वविचारणयैवयत्॥संप्राप्तविमलावासःसिद्धोयंभगवान्बलिः॥ १४॥ अयंतदेवमेवेहतिष्ठन्दानवसत्तमाः॥स्वात्मनिस्थितिमाप्नोतुपदंपश्यत्वनामयम्॥ १५॥ श्रांतोविश्राममायातःक्षीणचित्तभवभ्रमः॥शांतसंसारनीहारोवाचनीयोनदानवाः॥१६॥ स्वएवालोकएतेनसंप्राप्तोज्ज्ञानसंकटे॥शांतेत्रसंभ्रमेसौरोदिनेनेवकरोत्करः॥ १७॥स्वयमेवहिकालेनप्रबोधमयमेष्यति॥ बीजकोशात्स्वसंवित्त्यासुप्तमूर्त्तिरिवांकुरः॥१८॥कुरुध्वंस्वामिकार्याणिसर्वेदानवनायकाः ॥ वलिर्वर्षसहस्रेणसमाधेर्बोधमेष्यति॥ १९ ॥इत्युक्तागुरुणातत्रहर्षामर्षविषादजाम् ॥ दैत्याश्चिंतांजहुःशुष्कांमंजरीमिवपादपाः ॥ २० ॥ वैरोचनिसभासंस्थांविधायप्राग्व्यवस्थया ॥ स्वव्यापारपरास्तस्थुःसर्वएवासुरास्ततः॥ २१ ॥नरामहीमहिपतयोरसातलंग्रहानभस्त्रिदशगणास्त्रिविष्टपम्॥ दिशोद्रयोदिक्पतयश्चकंदरान्वनेचरागगनचराश्चखंययुः॥ ॥२२॥ ॥इ०वा०वा०दे०मो०उपशमप्रकरणेवलिसमाधानवर्णनंनामाष्टाविंशःसर्गः॥ २८॥ ॥ ७॥

बीजकोशाद्बीजपुटात्स्वसंवित्त्यामूर्छितावस्थाप्रच्युत्याअंकुराहंभावप्रबोधेनेतियावत् ॥ १८ ॥ स्वामिकार्याणिराज्यतंत्राणि ॥ १९ ॥ दैत्यग्रहणंदेवानामप्युपलक्षणम् ॥ अतएवदुर्द्वंदोहर्षजां द्वियोमर्षजां सुहृदुपजीविनश्चविषादजांचिंतांजहुः ॥ २० ॥ प्राग्व्यवस्थयापूर्वकृप्तराज्यतंत्रव्यवहारक्रमेण ॥ २१ ॥ आगंतुकानरनागादयस्तद्यांकिचकुस्तदाह ॥ नराइति ॥ ययुरितिसर्वत्रसंवध्यते ॥ अद्रयःकुलाचलाधिदेवतादिक्पतयोदिक्पालाश्चस्वास्वादिशोययुः ॥ वनेचराऋक्षवानरादियूथपतयःकिष्किंधादिकंदरान्ययुः ॥ गगनचरागरुडसंपातिजटायुःप्रभृतयः ॥ २२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउप०ऽष्टाविंशःसर्गः ॥ २८ ॥ ॥ ७ ॥ ॥ ७ ॥

१ अत्रच्छंदोवैषम्यंविचारणीयम्

जीवन्मुक्तस्यराज्यश्रीःपातालेरोधनंबलेः ॥ रामायबलिवत्पूर्णस्थितिश्चात्रोपदिश्यते ॥ १ ॥ वर्षसहस्रेणेतिसमाधेर्वर्षसहस्रेणात्यंतसंयोगादपवर्गेतृतीया ॥ १ ॥ बलेरिदं बालंनगरंवैरिंचेविरिंचेरायतनभूतगगनेसूर्यौघेसूर्यकिरणप्रवाहेउदितेसतिकमलाकरःपद्माकरइवविकासश्रीमानित्यर्थः ॥ सर्वौघेसर्गौघेइतिपाठयोस्तुसर्वपदार्थजातंसर्गवाओ घयतिसमर्थयतीतिव्युत्पत्त्यासूर्यएवग्राह्यस्तस्मिन्नुदितेसतीत्यर्थः ॥ ओघृसामर्थ्यइतिधातोर्ण्यंतात्कर्मण्यण् ॥ २ ॥ समाधिसदनेप्रागुक्तसमाधिस्थाने ॥ ३ ॥ समाधिसुखमग्न स्यदिव्यवर्षसहस्रमपिक्षणवद्गतमितिक्षणंस्थित्वेत्युक्तिः ॥ ४ ॥ करोमिविश्रांतिमितिशेषः ॥ बाह्यविभूतिभिरुपभुक्ताभिर्मेकिंभवतिनकिंचिदीदृशंविश्रांतिसुखमित्यर्थः ॥ तदे

श्रीवसिष्ठउवाच ॥ ॥ अथवर्षसहस्रेणदिव्येनासुरपुंगवः ॥ देवदुंदुभिनिर्घोषैर्बुबुधेभगवान्बलिः ॥ १ ॥ बलौप्रबुद्धेतद्बालंविरेजेनगरं तदा ॥ वैरिंचइवसूर्यौघउदितेकमलाकरः ॥ २ ॥ बलिःप्रबुद्धएवासौयावन्नायांतिदानवाः ॥ तावत्संचिंतयामाससमाधिसदनेक्षणम् ॥ ३ ॥ अहोनुरम्यापदवीशीतलापारमार्थिकी ॥ अहमस्यांक्षणंस्थित्वापरांविश्रांतिमागतः ॥ ४ ॥ तदेतामेवपदवीमवलंब्यकरोम्यहम् ॥ भवतीहोपभुक्ताभिःकिंमेवाह्यविभूतिभिः ॥ ५ ॥ ऐंदवेष्वपिबिंबेषुनतथानंदवीचयः ॥ तोषयंतियथांतर्मेसंसिद्धिभवभूतयः ॥ ६ ॥ इति भूयोपिविश्रांत्यैकुर्वाणंगलितंमनः ॥ बलिमावारयामासुर्दैत्याश्चंद्रमिवांबुदाः ॥ ७ ॥ तानालोक्यपुनर्दध्यौतत्प्रणामाकुलेक्षणः ॥ तैः कुलाचलसंकाशैःपरिवीतवपुस्त्विदम् ॥ ८ ॥ चितःक्षीणविकल्पस्यकिमुपादेयमस्तिमे ॥ मनस्तदभिपातित्वाद्यातितद्रसतामलम् ॥ ९ ॥ मोक्षमिच्छाम्यहंकस्माद्बद्धःकेनास्मिवैपुरा ॥ अबद्धोमोक्षमिच्छामिकेयंबालविडंबना ॥ १० ॥ नबंधोस्तिनमोक्षोस्तिमौर्ख्यमेक्षयमा गतम् ॥ किंमेध्यानविलासेनकिंवाध्यानेनमेभवेत् ॥ ११ ॥ ध्यानाध्यानभ्रमौत्यक्त्वापुंस्त्वंस्वमवलोकयत् ॥ यदायातितदायातुनमेवृ द्धिर्नवाक्षयः ॥ १२ ॥ नध्यानंनापिवाध्यानंनभोगान्नाप्यभोगिताम् ॥ अभिवांछामितिष्ठामिसममेवगतज्वरः ॥ १३ ॥

वाह ॥ ऐंदवेष्विति ॥ संसिद्धिःसमाधिपरिपाकस्तद्भवाभूतयआनंदाः ॥ एकस्मिन्नेवइयत्तयाअपरिच्छेद्यत्वाद्बहुत्वकल्पनयाबहुवचनम् ॥ ६ ॥ आवारयामासुरागत्यपरिवव्रुः ॥ ७ ॥ पुनःशब्दःपूर्वसमाधिसंकल्पपरावृत्तिद्योतनार्थः ॥ ८ ॥ उपादेयबुद्ध्याहिबाह्यार्थदर्शनेमनस्तदभिपातित्वात्तद्रागितालक्षणंमलंयातिनदर्शनमात्रेणेत्यर्थः ॥ ९ ॥ ननुमोक्षे च्छयासमाध्यवलंबनियमोस्तुतत्राह ॥ मोक्षमिति ॥ ज्ञानेनत्रैकालिकेअविद्यातत्कार्यबाधेसतिबंधस्यैवादर्शनादितिभावः ॥ बालानांमूर्खाणांविडंबनाचेष्टानुकृतिः ॥ १० ॥ ॥ ११ ॥ स्वंप्रत्यग्रूपंपुंस्त्वमात्मतत्त्वंदृक्त्वभावादेवबहिरप्यौदासीन्येनावलोकयत्सयद्यद्वस्तुप्रतिआयातितदायातुस्फुरतुनामनैतावतामेऽज्ञानामिवदेहादितादात्म्याध्यासात्तद्वृद्धि क्षयप्रयुक्तौवृद्धिक्षयौस्तोयेनानर्थःस्यादित्यर्थः ॥ अयंश्लोकःक्वचिदेवास्तिनसर्वत्र ॥ १२ ॥ १३ ॥

१ सत्तमइत्यपिपाठः

२ नाथभोगितामित्यपिपाठः

॥ १४ ॥ देहसंबंधाभावान्नमृतः ॥ प्राणसंबंधाभावान्नजीवामि ॥ सन्मूर्तः ॥ सन्मयस्तद्विकारः ॥ इदंदेहभुवनादि ॥ अन्यद्देहांतरभुवनांतरादि ॥ १५॥१६॥ १७ ॥ कर्त्तव्यं कर्त्तृत्वास्थयानिर्वर्त्तनीयम् ॥ तर्त्तर्हिकिंचित्अनास्थितचेष्टासाध्यंप्रकृतंकर्मराज्यपरिपालनंकिंकुतोनकरोमि ॥ १८ ॥ १९ ॥ दृष्टिपातानांविभागेनतत्तदुचितवैचित्र्येण ॥ २० ॥ ध्येयोवासनात्यागःप्राग्वर्णितस्तन्मयालनात्तद्विलासप्रचुरेण ॥ २१ ॥ पूजापाद्यार्घ्यादि उचितदानसंभावनादिसत्कारःसंमाननमितिभेदः ॥ २२ ॥ २३ ॥ असौ

नमेवांछापरेतत्त्वेनमेवांछाजगत्स्थितौ ॥ नमेध्यानदशाकार्यंनकार्यंविभवेनमे॥ १४॥ नाहंमृतोनजीवामिनसन्नासन्नसन्मयः॥ नेदंमेनैवचान्यन्मेनमोमह्यमहंबृहत्॥ १५॥ इदमस्तुजगद्राज्यंतिष्ठाम्यत्रतुसंस्थितः॥ नेहवास्तुजगद्राज्यंतिष्ठाम्यात्मनिशीतलः॥१६॥ किंमेध्यानदशाकार्यंकिंराज्यविभवश्रिया॥ यदायातितदायातुनाहंकिंचनमेक्कचित्॥१७॥ नकिंचिदपिकर्त्तव्यंयदिनाममयाधुना॥ तत्कस्मान्नकरोमीदंकिंचित्प्रकृतकर्मवै॥१८॥इतिनिर्णीयपूर्णात्मावलिर्ज्ञानवतांवरः॥दैत्यानालोकयामासपद्मानीवदिवाकरः॥१९॥ दृष्टिपातविभागेनसर्वेपांदनुजन्मनाम्॥ शिरःप्रणामाश्वग्राहपुष्पामोदानिवानिलाः॥२०॥ अथवैरोचनिस्तत्रध्येयत्यागमयात्मना॥ मनसासकलान्येवराजकार्याणिसंव्यधात्॥ २१॥ द्विजान्देवान्गुरूंश्चैवपूजयामासपूजया॥ संमानयामाससुहृद्बंधुसामंतसज्जनान्॥२२॥ अर्थैनापूरयामासभृत्यानर्थिगणांस्तथा॥ ललनालालयामासविचित्रविभवार्पणैः ॥२३॥ इत्यसौवव्रधेतस्मिन्राज्येसकलशासने॥ यज्ञंप्रतिवभूवाथमतिरस्यकदाचन॥ २४॥ तर्पिताशेपभुवनंदेवर्षिगणपूजितम्॥ सहशुक्रादिभिर्मुख्यैःसचकारमहामखम्॥ २५॥ वलिर्भोगभरस्यार्थीनेतिनिर्णीयमाधवः॥ वलेरीहितसिद्ध्यर्थंसिद्धिदस्तन्मखंययौ ॥ २६ ॥ भोगैकक्षपणायेदंजगज्जंगलखंडकम् ॥ दातुंशोच्यायशक्रायवयोज्येष्ठायकार्यवित्॥ २७॥ क्रममाणोवलेनात्रवंचयित्वावलिंहरिः॥ ववंधपातालतलेभूगेहइववानरम् ॥ २८ ॥ अद्यासौसंस्थितोरामपुनरिंद्रत्वहेतुना॥ जीवन्मुक्तवपुःस्वस्थोनित्यंध्यानविपण्णधीः॥ २९॥ पातालकुहरेतिष्ठञ्जीवन्मुक्तगतिर्वलिः॥ आपदंसंपदंदृष्ट्यासमयैवसपश्यति॥३०॥

वलिःसकलानांदेवासुरादीनांशासनेआज्ञापनविषयेराज्येववृधेराज्यांगाद्यभिर्वृद्धिंप्रापेत्यर्थः ॥ अथकदाचनयज्ञंप्रतिअस्यमतिरिच्छाबभूव ॥ २४ ॥ महामखंअश्वमेधम् ॥ २५ ॥ २६ ॥ भोगेएकस्मिन्नेवआसक्तत्वात्क्षपणायअतएवशोच्याय ॥ कार्यमवश्यकर्त्तव्यंशक्रसुकृतफलप्रदानंवेत्तीतिकार्यवित्भिक्षणचातुर्यविद्वा ॥ २७ ॥ बलेन मायावलेनक्रममाणस्त्रीन्लोकानितिशेषः ॥ २८ ॥ अद्यअद्यापि ॥ असौवलिःपातालेपुनरिंद्रत्वहेतुनाप्रारब्धेनोपलक्षितइतिशेषः ॥ स्थितः ॥ ध्यानेनिर्विकल्पसमाधौविपण्णागलितार्धीर्यस्य ॥ २९ ॥ ३० ॥

समाउदयास्तमयरहिता ॥ स्थिराःकरामरीचयोयस्याः ॥ चित्रस्यलेखनंचित्रलेख्यातत्संबंधिनीसूर्यावलिःसूर्यमंडलंयथातथेत्यर्थः ॥ ३१ ॥ जीवतांजीवनास्थावतांभोगलंपटानांविभवानांजन्मादीनांचाविर्भावतिरोभावसहस्राणिचिरमालोक्यतस्यवलेर्मनोविरतिंवैराग्यंगतम् ॥ ३२ ॥ ३३ ॥ सुखदुःखयोरूहापोहयोरागमापाययोःसहस्राणि ॥ भावाभावयोःसंपद्विपदोःशतानिच ॥ सहस्रशतशब्दावसंख्येयपरौ ॥ ३४ ॥ सप्तपातालानांमध्यभूतेरसातलाख्येपातालकोटरेयावद्विपरक्षयंस्थितः ॥ ३५ ॥ अनुशास्यंस्वामिभावेनआज्ञाप्यंभविष्यतीत्यर्थः ॥ ३६ ॥ ३७ ॥ उदिताशयःसंतुष्टचित्तः ॥ संप्राप्तंप्रारब्धोपनीतमाहरन्नुपभुंजानः ॥ ३८ ॥ बलिचरित्रमुपसंहृत्यरामायोपदिश

नास्तमेतिनचोदेतितत्प्रज्ञासुखदुःखयोः ॥ समास्थिरकराचित्रलेख्यासूर्यावलिर्यथा ॥ ३१ ॥ आविर्भावतिरोभावसहस्राणीहजीवताम् ॥ तन्मनश्चिरमालोक्यभोगेषुविरतिंगतम् ॥ ३२ ॥ दशकोटीश्चवर्षाणामनुशास्यजगत्त्रयम् ॥ अंतेविरक्ततांप्राप्तमुपशांतंवलेर्मनः ॥ ३३ ॥ ऊहापोहसहस्राणिभावाभावशतानिच ॥ वलिनापरिदृष्टानिक्रसमाश्वासमेत्यसौ ॥ ३४ ॥ भोगाभिलाषंसंत्यज्यवलिस्संपूर्णमानसः ॥ आत्मारामस्थितोनित्यंमध्येपातालकोटरे ॥ ३५ ॥ पुनरेतेनवलिनाजगदिंद्रतयाखिलम् ॥ अनुशास्यमिदंरामबहून्वर्षगणानिह ॥ ३६ ॥ नतस्येंद्रपदप्राप्त्यातुष्टिःसमुपजायते ॥ नतस्यस्वपदभ्रंशादुद्वेगउपजायते ॥ ३७ ॥ समःसर्वेषुभावेषुसर्वदैवोदिताशयः ॥ संप्राप्तमाहरन्स्वस्थआकाशइवतिष्ठति ॥ ३८ ॥ वलेर्विज्ञानसंप्राप्तिरेषातेकथितामया ॥ एतांदृष्टिमवष्टभ्यत्वमप्यभ्युदितोभव ॥ ३९ ॥ बलिवत्स्वविवेकेननित्योहमितिनिश्चयात् ॥ पदमासादयाद्वैतंपौरुषेणैवराघव ॥ ४० ॥ द्वेचाष्टौचैववर्षाणांकोटीर्भुक्त्वाजगत्त्रयम् ॥ अंतेवैरस्यमापन्नोबलिरप्यसुरोत्तमः ॥ ४१ ॥ तस्मादवश्यवैरस्यंभोगभारमरिंदम ॥ संत्यज्यसत्यमानंदमवैरस्यंपदंव्रज ॥ ४२ ॥ इमादृश्यदृशोरामनानाकारविकारदाः ॥ नेहकांततयाज्ञेयादूराच्छैलशिलाइव ॥ ४३ ॥ धावमानमिहामुत्रलुठितंलोकवृत्तिषु ॥ संस्थापयनिबध्यैतच्चेतोहृदयकोटरे ॥ ४४ ॥ चिदादित्योभवानेवसर्वत्रजगतिस्थितः ॥ कःपरस्तेकआत्मीयःपरिस्खलसिकिंमुधा ॥ ४५ ॥

ति ॥ बलेरित्यादिना ॥ अभ्युदितोजीवन्मुक्त्यभ्युदयवान् ॥ ३९ ॥ स्वविवेकेनस्वविचारेण ॥ ४० ॥ द्वेचाष्टौचदशकोटीरितियावत् ॥ ४१ ॥ अवश्यंवैरस्यंदुःखपर्यवसानंयस्य ॥ अवैरस्यंनिर्दुःखम् ॥ ४२ ॥ कांततयारम्यतया ॥ तत्रदूरस्थाःपर्वतारम्याइतिप्रसिद्धंदृष्टांतमाह ॥ दूरादिति ॥ ४३ ॥ इहऐहिकभोगेषुअमुत्रपारलौकिकभोगेषु धावमानम् ॥ लोकवृत्तिषुपामरचेष्टासुलुठितंप्रवृत्तम् ॥ ४४ ॥ ननुशत्रुमित्रयोःकथंसमदृष्टिःस्यात्तत्राह ॥ चिदादित्यइति ॥ आदित्यइवसर्वावभासिकाचित्चिदादित्यः ॥ तथाचत्वमेवशत्रुदेहादावपिप्रकाशकआत्मेतिनवैषम्येहेतुरस्तीतिभावः ॥ ४५ ॥

ननुजीवस्यममकथमीश्वरात्मसमदर्शनंतत्राह ॥ त्वमिति ॥ जडवैषम्यमप्यानंत्येनैवनाशंक्यमित्याशयेनाह ॥ त्वंपदार्थशताकारैरिति ॥ ४६ ॥ तत्संभावनार्थमाह ॥ त्वयीति ॥ ४७ ॥ कालकृतवैषम्याण्यपिपरिहर्तुमाह ॥ नजायसइति ॥ ४८ ॥ तृष्णावृद्धौजन्मादिरोगाणांप्राबल्यंतृष्णापक्षयेचतेषांदौर्बल्यमित्यन्वयव्यतिरेकाभ्यांपरीक्ष्येत्यर्थः ॥ भोगानांतृष्णामुत्सृज्यभोक्ताभोगमाक्षिचिन्मात्रमेवभव ॥ ४९ ॥ त्वदीयचिद्बलादेवजगत्सिद्धमित्याह ॥ त्वयीति ॥ ५० ॥ शुद्धचित्तःप्रबुद्धचित्तः ॥ ५१ ॥ यद्यशुद्धचित्तोसितथापितच्छुद्धयेक्रमादुपायंशृण्वित्याह ॥ पूर्वमिति ॥ यद्यदिष्टंमनःप्रियंतदनिष्टमनर्थसाधनंयच्चानिष्टमप्रियंमनसस्तपःक्लेशेंद्रियसंयमप्राणायामादितत्सर्वमिष्टमावश्यकंममेतिप्रथमंपरिकल्प्यसप्तमभूमिकापरिपाकपर्यंतंतदभ्यासात्तज्जयेसतितत्तांकल्पनामपिततःपरित्यजेत्यर्थः ॥ ५२ ॥ तत्त्यागफलमाह ॥ इष्टेति ॥ हृदयवर्त्तिन्याअभ्या

त्वमनंतोमहाबाहोत्वमाद्यःपुरुषोत्तमः ॥ त्वंपदार्थशताकारैःपरिस्फूर्जसिचिद्वपुः ॥ ४६ ॥ त्वयिसर्वमिदंप्रोतंजगत्स्थावरजंगमम् ॥ बोधेनित्योदितेशुद्धेसूत्रेमणिगणायथा ॥ ४७ ॥ नजायसेनम्रियसेत्वमजःपुरुषोविराट् ॥ चिच्छुद्धाजन्ममरणभ्रांतयोमाभवंतुते ॥ ४८ ॥ समस्तजन्मरोगाणांप्रविचार्यबलाबलम् ॥ तृष्णामुत्सृज्यभोगानांभोक्तैवभवकेवलम् ॥ ४९ ॥ त्वयिस्थितेजगन्नाथेचिदादित्येसदोदिते ॥ इदमाभासतेसर्वंसंसारस्वप्नमंडनम् ॥ ५० ॥ माविषादंकृथाव्यर्थंसुखदुःखेषणानते ॥ शुद्धचित्तोसिसर्वात्मासर्ववस्त्ववभासकः ॥ ५१ ॥ पूर्वमिष्टमनिष्टंत्वमनिष्टंचेष्टमित्यपि ॥ परिकल्प्यतदभ्यासात्तत्तोपिपरित्यज ॥ ५२ ॥ इष्टानिष्टदृशोस्त्यागेसमतोदेतिशाश्वती ॥ तयाहृदयवर्त्तिन्यापुनर्जंतुर्नजायते ॥ ५३ ॥ येषुयेषुप्रदेशेषुमनोमज्जतिबालवत् ॥ तेभ्यस्तेभ्यस्समाहृत्यतद्धितत्त्वेनियोजयेत् ॥ ५४ ॥ एवमभ्यागताभ्यासंमनोमत्तमतंगजम् ॥ निबध्यसर्वभावेनपरंश्रेयोधिगम्यते ॥ ५५ ॥ माशरीरयथार्थज्ञैर्मिथ्यादृष्टिहताशयैः ॥ धूर्तैःसंकल्पविक्रांतैर्विमूढैःसमतांव्रज ॥ ५६ ॥ अकिंचनात्स्वनिर्णीतौलंबमानात्परोक्तिषु ॥ नमौर्ख्यादधिकोलोकेकश्चिदस्तीहदुःखदः ॥ ५७ ॥ त्वमेतदविवेकाभ्रमुदितंहृदयांबरे ॥ विवेकपवनेनाशुदूरंनयमहामते ॥ ५८ ॥ आत्मनैवप्रयत्नेनयावदात्मावलोकनं ॥ नकृतोनुग्रहस्तावन्नविचारोदयोभवेत् ॥ ५९ ॥

ततस्ततोनियम्यैतदात्मन्येववशंनयेदिति ॥ ५४ ॥ साहृदयेस्थिरीकृतया ॥ ५३ ॥ तत्त्वेतत्तदधिष्ठानचिन्मात्रे ॥ तथाचभगवताप्युक्तम् ॥ यतोयतोनिश्चरतिमनश्चंचलमस्थिरम् ॥ सर्वभावेनसर्वप्रयत्नेनसर्वात्मभावेनच ॥ निबध्यनिरुध्य ॥ ५५ ॥ शरीरमेवयथार्थंपरमार्थइतियेजानंतितैः ॥ भोगसंकल्पेभ्योविक्रांतैरिवतत्परवशैः ॥ ५६ ॥ पराधीनप्रज्ञानांस्वयंविचारासमर्थानांमौर्ख्यमेवमहाननर्थइत्याह ॥ अकिंचनादिति ॥ स्वस्यात्मतत्त्वस्यनिर्णीतौनिर्णयविषयेअकिंचनात्विवेकवैराग्याद्युपायदरिद्रात् ॥ परेषांप्रतारकाणांमूर्खाणांचोक्तिषुअंधगोलांगूलन्यायेनावलंबमानात् ॥ ५७ ॥ एतन्मौर्ख्यलक्षणमविवेकावरणादविवेकाभ्रम् ॥ ५८ ॥ मौर्ख्यनिरासहेतुर्विचारःसचबहुजन्मसंचितसुकृतपरिपाकजादात्मानुग्रहादेवभवतीत्याह ॥ आत्मनैवेति ॥ प्रयत्नेनश्रवणवैराग्यादिपुरुषप्रयत्नेन ॥ ५९ ॥

सत्यपि वैराग्यविचारश्रवणादौ बहिर्मुखदृष्टेर्ज्ञानानुदयात्प्रत्यग्दृष्टिरप्यावश्यकीत्याशयेनाह ॥ वेदेति ॥ तथाचोक्तं वार्त्तिके ॥ अपामार्गलतेवायं विरुद्धफलदो भवः ॥ प्रत्यग्दृशां विमोक्षाय विबंधाय पराग्दृशामिति ॥ ६० ॥ तर्हि प्रत्यग्दृष्टिरेवैकाज्ञाननाशायास्तु किं गुरूपदेशेनेत्याशंक्याह ॥ मद्वचस्येवेति ॥ मदुपदेशे सत्येवेत्यर्थः ॥ बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतइतिन्यायाद्गुरुशास्त्रोक्तिसंवादे सत्येव स्वप्रत्यये विश्वासादसंदिग्धबोधसिद्धिरिति द्योतनायैवकारः ॥ ६१ ॥ अमुमेवार्थं स्पष्टमाह ॥ विकल्पेति ॥ संदेहादिचित्तविकल्पैरविपर्यीकृतस्येत्यर्थः ॥ विततताव्याप्तिस्तेऽधाप्यपरिच्छिन्नता ॥ ६२ ॥ कौतुकं बाह्यार्थचमत्कारकुतूहलमात्मतत्त्वजिज्ञासाकुतूहलं च स एव नीहारोऽवश्यायः ॥ ६३ ॥ हे मुने मननशील राम त्वं यदा विगतो बोधस्य बोधैकरसस्यात्मतत्त्वस्य कलंक आवरणं विशंकितं विक्षेपश्च यस्य तथाविधो भविष्यसि तदा ते यदग्राम्यं ज्ञानं तत्साधनं च विचारगुरुशास्त्रोपदेशाद्युपगच्छसि मोक्षार्थं स्वीकरोषि यच्च विवेकवैराग्यादि पासि यत्नेन रक्षसि यच्चालस्यप्रमादादिदोषजातं निहंसि यत्नेन जयसि यच्च समाधिसुखामृतं पिबसि यच्चोत्तरोत्तरभूमिका

वेदवेदांतशास्त्रार्थतर्कदृष्टिभिरप्ययम् ॥ नात्माप्रकटतामेति यावन्नस्वमवेक्षितम् ॥ ६० ॥ त्वमात्मन्यात्मना राम प्रसादे समवस्थितः ॥ प्राप्तोसि विततं बोधं मद्वचस्येव बुध्यसे ॥ ६१ ॥ विकल्पांशविहीनस्य त्वयैषा चिद्विवस्वतः ॥ गृहीता विततव्याप्तिर्मदुक्त्या परमात्मनः ॥ ६२ ॥ विलीनसर्वसंकल्पः शांतसंदेहविभ्रमः ॥ क्षीणकौतुकनीहारो जातोसि विगतज्वरः ॥ ६३ ॥ यदुपगच्छसि पासि निहंसि वा पिबसि विस्मयसे च विवर्द्धसे ॥ तदपि तेन तदास्तु यदा मुने विगतबोधकलंकविशंकितः ॥ ६४ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणे बलेर्विज्ञानप्राप्तिर्नामैकोनत्रिंशः सर्गः ॥ २९ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठ उवाच ॥ ॥ अथेमं परमं राम विज्ञानाभिगमेक्रमम् ॥ शृणु दैत्येश्वरः सिद्धः प्रह्लादः स्वात्मना यथा ॥ १ ॥ आसीत्पातालकुहरे विद्रावितसुरासुरः ॥ हिरण्यकशिपुर्नाम नारायणपराक्रमः ॥ २ ॥ आक्रांतभुवनाभोगः स जहार हरेर्ज्जगत् ॥ षट्पदस्य बृहत्पत्रं राजहंस इवांबुजम् ॥ ३ ॥

धिरोहणेन विस्मयसे यच्च स्वमभूमिकाविश्रांत्या पूर्वपूर्वावस्थाधिकसुखोत्कर्षाद्विवर्धसे तदपि तदानास्तु किंतु ब्रह्मैव यथास्थितं तिष्ठेत्यर्थः ॥ ६३ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशे उपशमप्रकरणे एकोनत्रिंशः सर्गः ॥ २९ ॥ ॥ ७ ॥ ॥ हिरण्यकशिपोर्वीर्यं प्रह्लादादिसुतोद्भवः ॥ नृसिंहेन वधः शोकादौर्ध्वदेहिकमुच्यते ॥ १ ॥ इत्थं केवलं काकतालीयन्यायप्रवृत्तात्स्वविचाराच्छास्त्राचार्योपदेशानुगृहीताच्च ज्ञानोदयक्रमो निरूपितः इदानीमुपासितेश्वरानुग्रहजन्याद्विचाराज्ज्ञानोदयप्रकारं वर्णयितुं प्रह्लादोपाख्यानमाचिख्यासुर्वसिष्ठस्तच्छ्रवणे राममवधापयति ॥ अथेति ॥ विज्ञानस्याभिगमे आभिमुख्येन प्राप्तौ निष्प्रत्यूहप्राप्ताविति यावत् ॥ तथा च भगवतैवोक्तम् ॥ जरामरणमोक्षाय मामाश्रित्य यतंति ये ॥ ते ब्रह्म तद्विदुः कृत्स्नमिति ॥ १ ॥ नारायणस्य पराक्रम इवेत्यर्थे पूर्वपदे लक्षणया वर्त्तते उष्ट्रमुखः खरमुख इत्यत्रोष्ट्रशब्दस्तन्मुखसदृशार्थ इवेति बोध्यम् ॥ इवार्थवृत्तिमध्यमपदलोपी वा बहुव्रीहिः ॥ २ ॥ नारायणपराक्रमत्वोपपादकं विशेषणमाक्रांतभुवनाभोग इति ॥ भुवनपदेन त्रीण्यपि भुवनानि गृह्यंते ॥ स हिरण्यकशिपुर्हरेरिंद्रादाच्छिद्य जगत् त्रिभुवनैश्वर्यं जहार ॥ षट्पदस्य रात्रौ गृहभूतं प्रातर्विकासेन बृहत्पत्रमंबुजं राजहंस इव ॥ ३ ॥

सुरासुरशब्दस्तत्तदधिपतिपरः ॥ नलिन्यांअलिनांभ्रमराणांराज्यंनिरस्तहंसौघोदंतीवेत्युपमानुरोधाज्जगदुद्वेजकतागम्यते ॥ ४ ॥ माधवोवसंतकालः ॥ ५ ॥ तेजस्यूर्जितावय सावालकाः ॥ दशदशसंख्याकानिअर्कस्यांशुशतानीव ॥ व्योमाक्रांतिराकाशव्याप्तिःसुरलोकाक्रमणंचतयाविलासिनः ॥ ६ ॥ तेषांमध्येप्रह्लादनामाप्रधानात्मायुवराजोब भूव ॥ हेत्यैतिह्ये ॥ ७ ॥ ८ ॥ त्रीणिगंडोपलक्षितमुखाश्रितानिगलितानिमदधारायस्यतथाविधोयइभस्तद्वत् ॥ यद्यपिसप्तमदस्थानानिप्रसिद्धानितथापिप्राधान्यात्त्रीण्युपा त्तानि ॥ उक्तस्त्रिगंडगलितोयोगजःषष्टिहायनइत्यभियुक्तवचनात्षष्टिहायनेभवदितिवा ॥ ९ ॥ विकासिनाविजृंभमाणेन ॥ आक्रांतिरास्कंदनंतत्प्रयुक्तेनतापेनपीडनेन ॥

चकारजगतांराज्यंसमाक्रांतसुरासुरः ॥ दंतीनिरस्तहंसौघोनलिन्यामलिनामिव ॥४॥ अथासावसुराधीशःकुर्वंस्त्रिभुवनेशताम् ॥ का लेनसुषुवेपुत्रानंकुरानिवमाधवः ॥ ५ ॥ तेवर्द्धंताचिरेणैवतेजस्यूर्जितबालकाः ॥ दशार्कांशुशतानीवव्योमाक्रांतिविलासिनः ॥ ६ ॥ प्रह्लादनामाबलवान्प्रधानात्माबभूवह ॥ तेषांमध्येमहार्हाणांमणीनामिवकौस्तुभः ॥७॥ तेनाराजतपुत्रेणहिरण्यकशिपुर्भृशम् ॥ सर्व सौंदर्ययुक्तेनवसंतेनेववत्सरः ॥ ८ ॥ अथपुत्रसहायोसौबलकोशसमन्वितः ॥ आजगाममदंदैत्यस्त्रिगंडगलितेभवत् ॥ ९ ॥ तत्तापाक्रां तितापेनत्रिजगंतिविकासिना ॥ कल्पांतसूर्यगणवन्नवयैवकरश्रिया ॥ १० ॥ अखिद्यंतास्यतेनाथसूर्येंदुप्रमुखाःसुराः ॥ दुर्विलासवि लोलस्यबालस्येवस्ववंधवः ॥ ११ ॥ प्रार्थयांचक्रिरेथाजंदैत्येंद्रभ्रपतेर्वधे ॥ नक्षमंतेमहांतोपिपौनःपुन्येनदुष्क्रियाम् ॥ १२ ॥ ततःप्रलय पर्यस्तजगद्घर्घरजृंभितम् ॥ दिग्दंतिदशनप्रख्यनखवज्रादिजृंभितम् ॥ १३ ॥ स्थिरविद्युल्लताजालभासुरद्विजमंडलम् ॥ दशदिक्कोटरो द्भ्रांतज्वलज्ज्वलनकुंडलम् ॥ १४ ॥ समस्तकुलशैलेंद्रपिंडपीठोद्भटोदरम् ॥ दोर्द्रुमाधूतनिर्द्धूतस्फुरद्ब्रह्मांडखर्परम् ॥ १५ ॥ वदनोदरनि ष्क्रांतवातोत्सारितपर्वतम् ॥ त्रिजगद्दहनोद्युक्तकोपकल्पाग्निगर्वितम् ॥ १६ ॥ सटाविकटपीनांसस्पंदप्रेरितभास्करम् ॥ रोमकूपलस द्वह्निपुंजापिंजरपर्वतम् ॥ १७ ॥

नवयातरुणयानित्याभिनवयाचकरश्रियाकिरणकांत्याकरग्रहणप्रयुक्तसंपदाच ॥ १० ॥ तेनआक्रांतितापेन ॥ ११ ॥ पौनःपुन्येनपुनःपुनर्भावेनकृतांदुष्क्रियामपराधम् ॥ १२ ॥ ततस्तदनंतरंमाधवःप्रलयपर्यस्तेत्यादिविशेषणविशिष्टंनारसिंहंवपुःकृत्वामहासुरंहिरण्यकशिपुंअहन्इतिसप्तमेनसंबंधः ॥ प्रलयेपर्यस्तंजगद्विघर्घरंध्वनत्जृंभितंगा त्रविनमनंयस्यतत् ॥ दिग्दंतिदशनप्रख्यैर्नखैर्वज्रादिभिरिवजृंभितंयत्र ॥ १३ ॥ स्थिराण्यचंचलानिविद्युल्लताजालानीवभासुराणिद्विजानांदंतानांमंडलानियस्य ॥ दिकूत्रो त्रकत्वाद्दशसुदिक्कोटरेषूद्भ्रांतज्वलज्ज्वलनाःकुंडलानीवयस्य ॥ १४ ॥ समस्तानांकुलशैलेंद्राणांपिंडपीठंपिंडाकारसंस्थानमिवोद्भटंभीषणमुदरंयस्य ॥ दोर्द्रुमाणामाधूतैःपरिव र्त्तनैर्निर्धूतमतएवस्फुरत्संचलद्विदीर्यमाणंब्रह्मांडखर्परंयस्य ॥ १५ ॥ वदनेनउदराच्चनिष्क्रांतैःश्वासवातैरुत्सारिताःपर्वतायस्य ॥ १६ ॥ १७ ॥

1061

कुलाचलैरुत्खातैर्महाकुड्यस्यघटनायांरचनायामिवउद्भटानिउद्युक्तानिदिक्तटानियत्र ॥ सर्वावयवेभ्योनिष्क्रांतानिपट्टिशप्रासतोमराण्यायुधविशेषायस्य ॥ १८ ॥ तथावि धंनारसिंहंवपुःकृत्वेत्यर्थः ॥ अहन्हतवान् ॥ हंतेर्लङितिपइतोलोपेहल्ङ्यादिलोपः ॥ लसत्कटकटारावमितिक्रियाविशेषणम् ॥ तेनविदार्याहन्निितिगम्यते ॥ तुरंगमस्यापि द्विपेनविदारणंयुद्धेषुप्रसिद्धम् ॥ १९ ॥ आसुरंपौरंपुरवास्तव्यसर्वजंतुंपुरोपकरणंच ॥ ईक्षणवह्निभिर्नेत्रानलैः ॥ २० ॥ विस्फूर्जितसदृशैर्घनैरास्फोटैर्बाहुध्वनिभिः ॥ प्रलय पक्षेघनानांसंवर्त्तमेघानामास्फोटैर्गर्जितैः ॥ एकार्णवेजलप्रलये ॥ २१ ॥ दिक्षुज्वलंतोमशकाइव ॥ २२ ॥ कल्पेनप्रलयकालेनक्षुण्णंचूर्णितंयज्जगत्तत्समम् ॥२३॥ अकाले

कुलाचलमहाकुड्यघटनोद्भटदिक्तटम् ॥ सर्वावयवनिष्क्रांतपट्टिशप्रासतोमरम् ॥१८॥ नारसिंहंवपुःकृत्वामाधवोहन्महासुरम् ॥ लसत्कटकटारावंतुरंगममिवद्विपः॥१९॥ पौरमासुरमुद्यांतैर्ददाहेक्षणवह्निभिः॥ ससर्वभूतकल्पांतजगज्जालमिवानलः॥२०॥ नृसिंहमारुतेतस्मिन्भृशंक्षोभमुपागते॥ विस्फूर्जितघनास्फोटैरेकार्णवइवाकुले ॥ २१ ॥ द्रुद्रुवुर्दानवौघास्तेदिग्ज्वलन्मशकाइव॥ उपाययुरदृश्यत्वंदीपाइवगतत्विषः ॥ २२॥ अथविद्रुतदैत्येंद्रंदग्धांतःपुरमंडलम्॥ वभूवपातालतलंकल्पक्षुण्णजगत्समम्॥ २३॥ अकालकल्पांतविधौहत्वादैत्यंशनैर्विभौ॥ क्वापियातेसमाश्वस्तसुरसंरंभपूजिते॥२४॥ मृतशिष्टादनुसुताःप्रह्लादपरिपालिताः॥ दग्धंतंदेशमाजग्मुःसरःशुष्कमिवांडजाः॥ २५॥ तत्रकालोचितांकृत्वास्वनाशपरिदेवनाम्॥ और्ध्वदेहिकसत्कारंचक्रुःप्रेतेषुवंधुषु॥ २६॥ हतवंधुजनंप्लुष्टवंधुवांधवमंडलम्॥ शनैराश्वासयामासुर्मृतशिष्टंस्वकंजनम् ॥ २७॥ चित्रार्पितोपमदुराकृतयोनिरीहादीनाशयाहिमहतांवुरुहोपमानाः ॥ शोकोपतप्तमनसोऽसुरनायकास्तेदग्धद्रुमाइवनिरस्तविकारमासन् ॥ २८ ॥ ॥इ०वा०वा०दे०मोक्षोपायेपूपश०प्रह्लादविश्रांतौहिरण्यकशिपुवधोनामत्रिंशत्तमःसर्गः ॥ ३० ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥अथदुःखपरीतात्माहरिणाहतदानवे॥ प्रह्लादश्चिंतयामासमौनीपातालकोटरे॥ १ ॥

कल्पांतविधानसदृशेयुद्धेदैत्यंहिरण्यकशिपुंहत्वासमाश्वस्तैःसुरैःसंरंभेणआदरनिर्भरेणपूजितेविभौनृसिंहेक्वापिवाचामगोचरेस्वपदेयातेसति ॥ २४ ॥ अंडजाःपक्षिणः ॥ २५॥ स्वानांवांधवानांनाशप्रयुक्तांपरिदेवनांविलापम् ॥ २६ ॥ प्लुष्टंदग्धंसप्राणंवंधूनांतद्वांधवानांचमंडलंसमूहम् ॥ २७ ॥ निरीहाश्चितयानिश्चेष्टाः अतएवचित्रार्पितोपमाःदुःखिताआकृतयोयेषांतेप्रह्लादादयोसुरनायकादग्धादग्धपत्रशाखाद्रुमाइवनिरस्तविकारंनिश्चेष्टंआसन् ॥ स्थाणूनांवायुनाचलनाभावःप्रसिद्धः ॥ २८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपश०त्रिंशत्तमःसर्गः ॥ ३० ॥ ॥ ७ ॥ ॥ हरिविक्रमचिंतात्रस्वजनक्षेमचिंतनम् ॥ प्रह्लादस्यहरेर्भक्त्यातद्भावश्चोपवर्ण्यते ॥ १ ॥ हतादानवाय स्मिंस्तथाविधेपातालकोटरे ॥ १ ॥

उपैतीत्युपायःसहायः ॥ तीक्ष्णापःसंपत्पल्लवोद्गमक्षमोयएवासुरवृक्षाणामंकुरप्रायस्तेजस्वीजायतेततंभुंक्ते ॥ हरिपदस्यशाखामृगपदेनव्याख्यानमंकुरविनाशकत्वोपपादनार्थं मधिक्षेपार्थंच ॥ २ ॥ उद्भिन्नाअंकुरितावीर्यविकासितावा ॥ ३ ॥ नश्यंत्यसुराइत्यनुषज्जते ॥ ४ ॥ कष्टमितिखेदे ॥ आलोक्यंतइत्यालोकाबाह्यराज्यादिसंपदः ॥ आभ्यंतरा उत्साहहर्षप्रसादसुखविश्रांत्यादिसंपदश्चतएवआलोकाःप्रकाशास्तेषांहारिणोपहरणशीलाः ॥ अतएवअपूर्वस्तिमिरभ्रमोयेषुतथाविधारिपवोदेवाःप्रौढिमुत्कर्षम् ॥ ५ ॥ तम साकश्मलांधकारेणप्रपूर्णहृदयाःसंकुचंत्यःपत्रस्थानीयाःसंपदोयेषांतथाविधाःसुहृल्लक्षणानिशीथकमलाकराःखेदमायांति ॥ ६ ॥ मलिनैर्द्वेषकलुषैस्तातस्यप्रणामकाले

कोन्वस्माकमुपायःस्याद्यएवेहासुरांकुरः ॥ तीक्ष्णाग्रोजायतेतंतंभुंक्तेशाखामृगोहरिः ॥ २ ॥ नकदाचनपातालेदैत्यादोर्दंडशालिनः ॥ स्थिरावभूवुरुद्भिन्नाःपद्माइवहिमाचले ॥ ३ ॥ उत्पत्त्योत्पत्त्यनश्यंतिभासुराकारघर्घराः ॥ क्षीणप्रस्फुरितारंभास्तरंगाइववारिधेः ॥ ४ ॥ सबाह्याभ्यंतरंकष्टंसमग्रालोकहारिणः ॥ रिपवःप्रौढिमायाताअपूर्वतिमिरभ्रमाः ॥ ५ ॥ तमःप्रपूर्णहृदयाःसंकुचत्पत्रसंपदः ॥ सुहृदः खेदमायांतिनिशीथकमलाकराः ॥ ६ ॥ तातस्यमलिनैर्नूनंपादपीठोपमर्दकैः ॥ सुरैर्विषयआक्रांतोमृगैरिवमहावनम् ॥ ७ ॥ निरुद्यमाग तश्रीकादीनाःप्रकटिताशयाः ॥ बांधवानविराजंतेपद्माःप्लुष्टदलाइव ॥ ८ ॥ स्फुरंत्यसुरवीराणांगृहेष्वविरतानिलैः ॥ धूसराभस्मनीहाराधू पधूमभराइव ॥ ९ ॥ हृतद्वारकपाटासुदैत्यांतःपुरभित्तिषु ॥ प्रभामरकतस्येवजातानवयवांकुराः ॥ १० ॥ त्रिलोकीनाभिनलिनीमत्तेभा दानवाअपि ॥ दैववद्दैन्यमायाताःकिमसाध्यमहोविधेः ॥ ११ ॥ मनाक्चलतिपर्णेपिदृष्टारिभयभीतयः ॥ बध्वत्रस्यंतिविध्वस्तामृग्यो ग्रामगताइव ॥ १२ ॥ आसुरीकर्णपूरार्थंफुल्लारत्नगुलुच्छकाः ॥ नरसिंहकरालूनाःस्थाणुतामागताद्रुमाः ॥ १३ ॥ दिव्यांबरलतापत्रार त्नस्तबकदंतुराः ॥ पुनरारोपितास्तत्रनंदनेकल्पपादपाः ॥ १४ ॥ पुरात्वमरवंदीनामसुरैःसंस्तुतंमुखम् ॥ अद्यत्वसुरवंदीनांसुरैरालोकि तंमुखम् ॥ १५ ॥

पादपीठोपमर्दकैःसुरैर्विषयोदेशआक्रांतोनूनमितिवितर्के ॥ महावनंसिंहवनम् ॥ ७ ॥ प्रकटिताशयाःख्यापितहार्ददुःखाः ॥ प्लुष्टदलाग्रीष्मदग्धपत्राः ॥ ८ ॥ अविरतैरनिलै रुत्पातवातैःकीर्यमाणाभस्मलक्षणानीहाराःप्राक्तनधूपधूमभराइवस्फुरंति ॥ ९ ॥ प्राङ्मरकतस्यप्रभाइवसांप्रतंयवानांनवांकुराजाताः ॥ १० ॥ त्रिलोक्यानाभिनलिनीमेरुस्त दुपमर्दमत्तेभभूताअपिदानवाःप्राग्देवाइवदैन्यमायाताः ॥ किमित्याक्षेपे ॥ असाध्यंनास्तीत्यर्थः ॥ ११ ॥ बध्वोदैत्यस्त्रीमंतिन्यस्त्रस्यंतिउद्विजंति ॥ १२ ॥ रत्नमयागुलुच्छ कास्तबकायेषांतथाविधाद्रुमादिव्यवृक्षाः ॥ १३ ॥ दिव्यान्यंबराणियेषुतथाविधालताःशाखाःपत्राणिचयेषाम् ॥ रत्नस्तबकैर्दंतुराः ॥ दंतउन्नतउरच् ॥ पुनरित्यनेनपूर्वंनत आनीताइतिगम्यते ॥ १४ ॥ बंदीनांवंदीकृतस्त्रीणाम् ॥ संस्तुतंसप्रशंसंदृष्टम् ॥ १५ ॥

दानानिमदधारास्तल्लक्षणामहानद्यः ॥ मन्येइतिवितर्के ॥ १६ ॥ दानस्यमदस्यदाहस्तत्प्रयुक्ताविभूतयोभस्मानि ॥ १७ ॥ विकासिनांसितमंदाराणांसपरागैर्मकरंदैररुणारंजि
ताअंगस्पर्शिनोऽनिलायेषाम् ॥ अतएवमेरुशिखरैस्तुल्याः ॥ १८ ॥ १९ ॥ लास्यलीलयानृत्येषुविडंबनलीलया ॥ २० ॥ २१ ॥ अस्माकंमहाप्रभावाणामपिदुःखापौरुष
गतिःपराक्रमस्मरणमपियस्य ॥ २२ ॥ तप्यंतेवयमिवसंतप्यंते ॥ २३ ॥ शौरेर्हरेःशौर्यंपराक्रमस्तदेवगिरेस्तरोर्वाशिखरस्याग्रमग्रशिखरंतत्संश्रयेणआश्रितश्रियःप्राप्तसंपदोदे
वागिरितरुशिखरसंश्रयाःशाखामृगामर्कटाःशुनःकुक्कुरानिवास्मान्बलवतोऽपिसमुपरुंधंतिपातालेनियच्छंति ॥ २४ ॥ मंडनानामलंकाराणामपिमंडनभूतेमुखपद्मेबाष्पमस्तीते

मन्येदानमहानद्यःसुरेभकटभित्तिषु ॥ प्रवृत्तास्ताभविष्यंतिशैलसानुष्विवापगाः ॥ १६ ॥ अस्माकमिभगंडेषुदानदाहविभूतयः ॥ लसंति मरुखंडेषुसंशुष्केष्विवधूलयः ॥ १७ ॥ विकासिसितमंदारमकरंदारुणानिलाः ॥ तेमेरुशिखरैस्तुल्यादैत्याद्दुर्लभतांगताः ॥ १८ ॥ सुरगंधर्वसुंदर्योदानवांतःपुरोचिताः ॥ अद्यमेरौस्थितिंयातामंजर्यइवपादपे ॥ १९ ॥ कष्टंतातपुरंध्रीणांशुष्कांबुरुहनीरसाः ॥ विलासाःसुरनारीभिर्भर्त्स्यंतेलास्यलीलया ॥ २० ॥ पूर्वंयैरेवमत्तातश्चामरैरुपवीजितः ॥ सहस्रनयनःस्वर्गेकष्टंतैरेववीज्यते ॥ २१ ॥ इयमस्माकमप्यापदागतादैन्यदायिनी ॥ तस्यैकस्यप्रसादेनदुष्पौरुषगतेर्हरेः ॥ २२ ॥ तद्दोर्वनघनच्छायालब्धविश्रांतयःसुराः ॥ नकदाचनतप्यंतेहिमाद्रेरिवसानवः ॥ २३ ॥ शौरिशौर्याग्रशिखरसंश्रयेणाश्रितश्रियः ॥ अस्मान्समुपरुंधंतिशुनःशाखामृगाइव ॥ २४ ॥ तेनासुरपुरंध्रीणांनित्यंमंडनमंडने ॥ मुखपद्मेस्थितंबाष्पमब्जिनीनांहिमंयथा ॥ २५ ॥ शीर्णभिन्नलुठद्भित्तिर्जगज्जरठमंडपः ॥ अयंनीलमणिस्तंभैस्तद्भुजैरेवधार्यते ॥ २६ ॥ सधर्त्तासुरसैन्यस्यमज्जतांविपदर्णवे ॥ क्षीरोदादरमग्नस्यमंदरस्येवकच्छपः ॥ २७ ॥ एतेतातादयःसर्वेतेनैवासुरसत्तमाः ॥ पातिताःक्षुब्धकल्पांतवातेनेवकुलाचलाः ॥ २८ ॥ सएकएवसंहारकर्मक्षमभुजानलः ॥ सुरसार्थगुरुःश्रीमान्विषमोमधुसूदनः ॥ २९ ॥ दैत्यदोर्दंडपरशोस्तस्यवीर्येणवीर्यवान् ॥ दानवान्बाधतेशक्रोबालकानिवमर्कटः ॥ ३० ॥ दुर्जयःपुंडरीकाक्षःप्रविमुक्तायुधोपिसन् ॥ नासौशस्त्रास्त्रविच्छेदैर्वज्रसारोविदीर्यते ॥ ३१ ॥ अभ्यस्ताबहवस्तेनमिथःप्रेरितपर्वताः ॥ भीमाःसमरसंरंभाःसममस्मत्पितामहैः ॥ ३२ ॥

नशौरिशौर्येणहेतुनानित्यंस्थितम ॥ अब्जिनीनांमुखभूतेपद्मेहिममवश्यायबिंदुर्यथायद्वदित्यर्थः ॥ २५ ॥ अर्थादसुरविक्रमैःशीर्णोविदारितोऽतएवलुठद्भित्तिर्जगल्लक्षणोजरठ
मंडपोजीर्णालयोनीलमणिस्तंभप्रायैस्तस्यशौरेर्भुजैरेवधार्यतेअवष्टभ्यते ॥ २६ ॥ कच्छपःकच्छपावतारःसइवसशौरिर्धर्त्ताधारयिता ॥ २७ ॥ २८ ॥ विषमआक्रमितुमश
क्यइतियावत् ॥ २९ ॥ दैत्यदोर्दंडखंडनेपरशुभूतस्य ॥ यथामहामर्कटवीर्येणवीर्यवान्मर्कटोबालकान्बाधतेतद्वत् ॥ ३० ॥ शस्त्रास्त्रकृतैर्विच्छेदैःखंडनैः ॥ वज्रादपिसारोदृढत
रः ॥ ३१ ॥ प्रेरिताःक्षिप्ताःपर्वतायत्रतथाविधाःसमरसंरंभायुद्धकौशलविशेषाअस्मत्पितामहैःसहयुत्वाअभ्यस्ताशिक्षिताइत्युत्प्रेक्षा ॥ ३२ ॥

भयमेप्यतिइतिकाकथाकःप्रसंगइत्यर्थः ॥३३॥ आक्रमणेवशीकरणे ॥ प्रतिक्रियातत्कृतपीडाप्रतीकारः ॥३४॥ कुतोनविद्यतेतत्राह ॥ सर्वात्मनेति ॥ इहजगतिसर्वात्मनासर्व वस्तुस्वभावेन सर्वधियासर्वबुद्धिभेदेन सर्वसंरंभरंहसासर्वक्रियोद्योगेनचशरणार्थिनांसएवशरणंनान्यथागतिरस्तीत्यर्थः ॥३५॥ नन्वन्येशरणंकिनस्युस्तत्राह ॥ नेति ॥३६॥ इतिनिश्चित्यसर्वभावेनतत्प्रतिपत्तिसंकल्पयति ॥ अस्मादिति ॥ किंदेशकालवस्तुभेदेनप्रपद्यसेनेत्याह ॥ सर्वत्रेति ॥ सर्वदेशकालवस्तुष्वहंनारायणमयः॥३७॥ निरंतरतत्प्रतिपत्ति धारणानुस्मरणजपसाधनंश्रौतंतन्मंत्रमनुस्मृत्यनिरंतरंतज्जपंसंकल्पयति ॥ नमोनारायणायेति॥ सप्रणवोयंशुचेःशुद्धेदेशादावेवजपार्होननिरंतरमितिनिष्प्रणवोपादानम्॥ हृत्को शादित्युक्तिर्मानसजपमुख्यताद्योतनार्था ॥३८॥ सर्वत्रनारायणमयोह्महमित्युक्तंविशदयति ॥ हरिरिति ॥ आशादिशः ॥ विष्णुमयोभावनेनविष्णुप्रायः ॥ स्त्रीमयोजाल्मइति

तासुतास्वतिघोरासुवितेतास्वतिराजिपु॥ योनभीतइदानींसभयमेप्यतिकाकथा ॥३३॥ उपायमेकमेवेमंहरेराक्रमणेस्फुटम्॥ मन्ये तद्व्यतिरेकेणविद्यतेनप्रतिक्रिया॥३४॥ सर्वात्मनासर्वधियासर्वसंरंभरंहसा॥ सएवशरणंदेवोगतिरस्तीहनान्यथा॥३५॥ नतस्माद धिकःकश्चिदस्तिलोकत्रयांतरे॥ प्रलयस्थितिसर्गाणांहरिःकारणतांगतः॥३६॥ अस्मान्निमेपादारभ्यनारायणमजंसदा॥ संप्रपन्नो स्मिसर्वत्रनारायणमयोस्म्यहम्॥३७॥ नमोनारायणायेतिमंत्रःसर्वार्थसाधकः॥ नापैतिममहृत्कोशादाकाशादिवमारुतः॥३८॥ हरिराशाहरिर्व्योमहरिरुर्वीहरिर्जगत्॥ अहंहरिरमेयात्माजातोविष्णुमयोस्म्यहम्॥३९॥ अविष्णुःपूजयन्विष्णुंनपूजाफलभाग्भवेत्॥ विष्णुर्भूत्वायजेद्विष्णुमयंविष्णुरहंस्थितः ॥४०॥ हरिःप्रह्लादनामायोमत्तोनान्योहरिःपृथक् ॥ इतिनिश्चयवानंतर्व्यापकोहंचसर्वतः ॥४१॥ अनंतमिदमाकाशमापूर्यविनतासुतः ॥ कनकांगोममांगानामयमासनतांगतः ॥ ४२ ॥ करशाखैकविश्रांतसर्वहेतिविहंग माः॥ नखांशुमंजरीकीर्णामहामरकतद्रुमाः॥४३॥ इमेतन्दृढमंदारदामदिग्धांसमंडलाः॥मंदराघृष्टकेयूराश्चत्वारोममबाहवः॥४४॥

वद्भावनाकृततद्भावलक्षणेप्राचुर्येमयट् ॥३९॥ किमर्थमेवंकल्पयसितत्राह ॥ अविष्णुरिति ॥ नाविष्णुःपूजयेद्विष्णुंनाशिवःपूजयेच्छिवमितिविध्यनुरोधादित्यर्थः ॥४०॥ योह रिःसएवप्रह्लादनामा ॥ नान्योतोस्तिद्रष्टेत्यादिश्रुतेः ॥ मत्तःप्रतीचश्चान्योहरिः ॥ पृथक्आत्मांतरभूतोनास्ति ॥ ४१ ॥ इदानींहरेर्वाहनायुधाभरणशरीरादीनिस्वात्मनःकल्पय ति ॥ अनंतमित्यादिना ॥ आपूर्यस्थितइतिशेषः ॥ कनकमिवांगंयस्यस्वर्णवर्णइत्यर्थः ॥ ४२ ॥ कराणांशाखास्वंगेपुएकविश्रांतानित्यविश्रांताःसर्वेहेतयश्चक्रगदानंदकाद्याय धलक्षणाविहंगमाःपक्षिणोयेपाम् ॥ नखकांतिलक्षणमंजरीभिःकीर्णाअतएवमहामरकतद्रुमभूताः ॥ दृढमंदारदामदिग्धेअंसमंडलेमूलप्रदेशौयेपाम ॥ समुद्रमथनकालेमंद रेणाघृष्टकेयूराममहरेश्चत्वारएतेबाहवइतिद्वयोरन्वयः ॥ ४३ ॥ ४४ ॥

---

१ विततास्वरिराजिष्वितिपाठोपेक्षितइतिभाति

॥४५॥ हेलयाअयत्नेनैवविलुब्धानिविलोभितानिश्रवणसस्पृहीकृतानिभुवनानितत्स्थाजनायया ॥ अतएवत्रैलोक्यलक्षणनरोमंजरीवविराजमानाहरेःकीर्त्तिर्मूर्त्तिमतीमेपार्श्वगावर्त्तते ॥ ४६ ॥ पार्श्वगापार्श्वांतरेस्थिता ॥ ४७ ॥ जयानाम्नीलक्ष्मीसखी ॥ ४८ ॥ ४९ ॥ देहदीप्तिःशरीरकांतिः ॥५०॥ क्षीरोदइवशुभ्रइतिशेषः ॥५१॥ स्वस्यनाडीकुहरंनाभिस्तदुद्भवः ॥ तथाचनाभिपद्ममेवकदाचित्करेणधार्यतेकदाचिन्नाभाविवितिगम्यते ॥ ५२ ॥ हेमांगदाहेमपिनद्धागदा ॥ ५३ ॥ परितःपाटलवर्णानिदिक्तटानियस्मात् ॥ अ

चलच्छशिकलापूरचारुचामरधारिणी ॥ इयंमेपार्श्वगालक्ष्मीःक्षीरोदकुहरोत्थिता ॥ ४५ ॥ हेलाविलुब्धभुवनात्रैलोक्यतरुमंजरी ॥ इयंमेपार्श्वगाकीर्त्तिरचलामलभासिनी ॥ ४६ ॥ अनारतजगज्जालनवनिर्माणकारिणी ॥ इयंमेपार्श्वगामायास्वेंद्रजालविलासिनी ॥४७॥ इयंसाहेलयाक्रांतत्रैलोक्यतरुखंडिका ॥ जयास्फुरतिमेपार्श्वेलताकल्पतरोरिव ॥ ४८ ॥ इमौमेनित्यशीतोष्णौदेवौशीतांशुभास्करौ ॥ प्रकटीकृतसंसारौमुखमध्येविलोचने ॥४९॥ ममेयमुत्पलश्यामापीनांभोधरसुंदरी ॥ श्यामीकृतककुप्चक्रादेहदीप्तिर्विसर्पिणी ॥ ५० ॥ अयंममकरेशंखःपांचजन्यःस्फुरद्ध्वनिः ॥ मूर्त्तखमिवशब्दात्माक्षीरोदइवसंस्थितः ॥५१॥ अयंमेकर्णिकाकोशनिलीनब्रह्मषट्पदः ॥ पद्मःकरतलेश्रीमान्स्वनाडीकुहरोद्भवः ॥ ५२ ॥ इयंमेरत्नचित्रांगीसुमेरुशिखरोपमा ॥ हेमांगदागदागुर्वीदैत्यदानवमर्दिनी ॥ ५३ ॥ अयंमेभास्कराकारउद्यदंशुःसुदर्शनः ॥ ज्वालाजटिलपर्यंतपरिपाटलदिक्तटः ॥ ५४ ॥ अयंमेकेतुमद्वह्निसुंदरोज्वलितोसितः ॥ कुठारोदैत्यवृक्षाणांनंदयन्नंदकःस्थितः ॥ ५५ ॥ इदंमेशरधाराणांपुष्करावर्त्तकोपमम् ॥ शार्ङ्गंधनुरहींद्राभमिंद्रकार्मुकसुंदरम् ॥ ५६ ॥ इमान्यहमनंतानिजगंतिजठरेचिरम् ॥ बिभर्मिजातनष्टानिवर्त्तमानान्यनेकशः ॥ ५७ ॥ इमौमहीमेचरणाविदंमेगगनंशिरः ॥ इदंवपुर्मेत्रिजगदिमेमेकुक्षयोदिशः ॥ ५८ ॥ साक्षादयमहंविष्णुर्नीलमेघोदरद्युतिः ॥ सुपर्णपर्वतारूढःशंखचक्रगदाधरः ॥ ५९ ॥ एतेमत्तःपलायंतेसमग्राद्दुष्टचेतसः ॥ तार्णास्तरलसंचाराःपवनादिवराशयः ॥ ६० ॥ अयंनीलोत्पलश्यामःपीतवासागदाधरः ॥ लक्ष्मीवान्गरुडारूढःस्वयमेवाहमच्युतः ॥ ६१ ॥

नेनासुररुधिराक्ततागम्यते ॥ ५४ ॥ केतुमान्धूमरेखावान्वह्निरिवसुंदरः अतएवासितः दैत्यवृक्षाणांकुठारइवच्छेत्ता देवान्नंदयन्नंदकोभगवत्खड्गः ॥ ५५ ॥ इंद्रकार्मुकमिवसुंदरंनानामणिचित्रम् ॥ ५६ ॥ सांप्रतंजातानिचिरनष्टानिचिरजातवर्त्तमानानिच ॥ भविष्यतामप्युपलक्षणमेतत् ॥ ५७ ॥ इदानींहरेर्विराड्रूपमपिस्वस्यैवेत्याह ॥ इमाविति ॥ महीमेइमौचरणावित्यन्वयः ॥ कुक्षयइतिवक्तृत्वंदिग्वक्तृत्वाददितिःपाशानितिवत् ॥ ५८ ॥ ५९ ॥ तार्णाराशयःशुष्कतृणराशयः ॥ ६० ॥ ६१ ॥

१ भास्वराकारइतिक्वचित्पाठः

विरुद्धात्माद्विषनृएतियुद्धायागच्छति ॥ यआगच्छतिसयतःस्वनाशायैवागच्छतिनान्यत्तदागमनफलमित्यर्थः ॥ ६२ ॥ तैजसींस्वष्टिंतेजोज्वालाप्रसरंसंरोद्धुंप्रशमयितुंसोढुंवा
॥ ६३ ॥ ६४ ॥ अजितोविष्णुस्तदाकृतिः ॥ परमेणमहिम्नाप्रभावेणपरमार्थस्वभावेनच ॥ एषनित्योमहिमेतिश्रुतेः ॥ ६५ ॥ त्रिभुवनभवनमुदरेयस्यतथाविधैकामूर्त्तिर्यस्य
तत् ॥ घनामेघाःगिरयस्तृणानिकाननानिचेत्येतदादिसर्ववस्तूनामांतरेअधिष्ठानभावेस्थितंअतएवतत्त्वतःसाक्षात्कारमात्रेणसकलभयापहरंवैष्णवंवपुर्विराड्रूपंदेवतारूपंपरब्रह्म
लकंचाहमेवेतिमांप्रणौमीत्यर्थः ॥ ६६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेएकत्रिंशःसर्गः ॥ ३१ ॥ ॥ ५ ॥ ॥ विष्णोर्मानसपूजाचवाह्यपू

कोमामेतिविरुद्धात्मात्रैलोक्यदहनक्षमम्॥स्वनाशायततःक्षुब्धंकालाग्निंशलभोयथा॥६२॥इमेमेतैजसींस्वष्टिंममाग्रस्थाःसुरासुराः॥
नशक्नुवंतिसंरोद्धुंचक्षुर्मंदाःप्रभाइव ॥ ६३ ॥ इमंमामीश्वरंविष्णुंब्रह्मेंद्राग्निहरादयः ॥ स्तुवंत्यनंतयावाचावहुवक्त्रसमुत्थया ॥ ६४ ॥
अयंविजृंभितैश्वर्योजातोहमजिताकृतिः ॥ सर्वद्वंद्वपदातीतोमहिम्नापरमेणहि ॥ ६५ ॥ त्रिभुवनभवनोदरैकमूर्त्तिप्रसभविभिन्नसमस्त
दुष्टसत्वम् ॥ घनगिरितृणकाननांतरस्थंसकलभयापहरंवपुःप्रणौमि ॥ ६६ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेउपशमप्रकरणेप्रह्लादनि
र्वाणेनारायणीकरणंनामैकत्रिंशःसर्गः ॥ ३१ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ प्रह्लादइतिसंचिंत्यकृत्वानारायणींतनुम् ॥ पुनःसंचिंतयामास
पूजार्थमसुरद्विषः ॥ १ ॥ वपुषोवैष्णवादस्मान्माभून्मूर्त्तिःपरावरा ॥ अयंप्राणप्रवाहेणवहिर्विष्णुःस्थितापरः ॥ २ ॥ वैनतेयसमारूढः
स्फुरच्छक्तिचतुष्टयः ॥ शंखचक्रगदापाणिःश्यामलांगश्चतुर्भुजः ॥ ३ ॥ चंद्रार्कनयनःश्रीमान्कांतनंदकनंदनः ॥ पद्मपाणिर्विशालाक्षः
शार्ङ्गधन्वामहाद्युतिः ॥ ४ ॥ तदेनंपूजयाम्याशुपरिवारसमन्वितम् ॥ सपर्ययामनोमय्यासर्वसंभाररम्यया ॥ ५ ॥ ततएनंमहादेवंपूजयि
ष्याम्यहंपुनः ॥ पूजयावाह्यसंभोगमहत्त्यावहुरत्नया ॥ ६ ॥ प्रह्लादइतिसंचिंत्यसंभारभरभारिणा ॥ मनसापूजयामासमाधवंकमला
धवम् ॥ ७ ॥ रत्नौघपात्रपटलैश्चंदनादिविलेपनैः ॥ धूपैर्दीपैर्विचित्रैश्चनानाविभवभूषणैः ॥ ८ ॥ मंदारमालावलनैर्हेमाब्जपटलोत्करैः ॥
कल्पवृक्षलतागुच्छैरत्नस्तबकमंडलैः ॥ ९ ॥ पल्लवैर्दिव्यवृक्षाणांनानाकुसुमदामभिः ॥ किंकिरातैर्वकैःकुंदैश्चंपकैरसितोत्पलैः ॥ १० ॥

अस्मान्मयापरिकल्पिताद्विविधाद्वैष्णवाद्वपुषोऽन्याप
जाःसुरैःसह ॥ श्रुत्वाविस्मितदेवानांहरेःपृच्छाचवर्ण्यते ॥ १ ॥ स्वतनुंभावनयानारायणींनारायणात्मिकांकृत्वा ॥ १ ॥ रासमष्टिरूपाअवराव्यष्टिदेवतारूपावामाभूत्किंत्वयमेवमद्रूपोविष्णुर्देहयात्प्राणप्रवाहेणपुष्पांजलिभावनयावहिरावाहितःसन्पूजावसरपूजाकालमपरइवस्थितःकल्प्यतइत्यर्थः
॥ २ ॥ सकौदशस्तमाह ॥ वैनतेयेतिद्वाभ्याम् ॥ स्फुरन्तीक्रियाज्ञानेच्छानुग्रहाख्यंशक्तिचतुष्टयंयस्य ॥ ३ ॥ कांतिनंदकेनखड्गेननंदनःस्वजनानंदनः ॥ ४ ॥ परिवारैःसंकर्षण
प्रद्युम्नादिव्यूहैःपार्षदैश्चसमन्वितम ॥ ५ ॥ महादेवंपूज्यदेवंस्वकुलदेवंशिवाभिन्नंवावाह्यैःसंभोगैःसंभारैर्महत्त्याविस्तृतया ॥ ६ ॥ कमलालक्ष्मीस्तस्याधवंपतिम ॥ ७ ॥ रत्नौघ
खचितानांपात्राणांपटलैःपात्रैरभिषेचनैरितिशेषः ॥ नानाविभवैर्भूषणैरलंकारैः ॥ ८ ॥ ९ ॥ किंकिरातादयोयथायोगंपुष्पजातिभेदावोध्याः ॥ १० ॥

॥ ११ ॥ १२ ॥ १३ ॥ सकुंकुमैः काश्मीरद्रवाक्तैः ॥ १४ ॥ सर्वैर्धूपदीपनैवेद्यतांबूलदर्पणच्छत्रचामरनीराजनपुष्पांजलिप्रदक्षिणानमस्कारादिभिः सौंदर्ययुक्तैः संमानैरुपचारैः ॥ १५ ॥ जगतियेयेविभवाः प्रसिद्धास्तैस्तैरुपकरणीकृतैर्भव्ययाभक्त्यापतिंजगत्पतिंस्वस्वामिनंवा ॥ १६ ॥ अथमानसपूजानंतरम् ॥ तस्मिन्नंतःपुरस्थितेदेवगृहे ॥ १७॥ अनेनमानसपूजोक्तेनैवक्रमेण ॥ १८॥१९॥ राजार्हेति ॥ राज्ञिधर्मिणिधर्मिष्ठाः पापेपापाः समेसमाः ॥ तद्धर्ममनुवर्त्ततेयथाराजातथाप्रजाइतिन्यायादित्यर्थः ॥२०॥ वार्त्ता

कह्लारैः कुमुदैः काशैः खर्जूरैश्चूतकिंशुकैः ॥ अशोकैर्मदनैर्बिल्वैः कर्णिकारैः किरातकैः ॥ ११ ॥ कदंबैर्बकुलैर्निंबैः सिंदुवारैः सयूथकैः ॥ पारिभद्रैर्गुग्गुलीभिर्बिंदुकैः पुष्पकोत्करैः ॥ १२ ॥ प्रियंगुपटलैः पाटैः पाटलैर्द्धातुपाटलैः ॥ आम्रैराम्रातकैर्गव्यैर्हरीतकविभीतकैः ॥ १३ ॥ शालतालतमालानांलताकुसुमपल्लवैः ॥ कोमलैः कलिकाजालैः सहकारैः सकुंकुमैः ॥ १४ ॥ केतकैः शतपत्रैश्चतथैलामंजरीगणैः ॥ सर्वसौंदर्यसंमानैः स्वयमात्मार्पणैरपि ॥ १५ ॥ हरिंपरमयाभक्त्याजगद्विभवभव्यया॥ मनसापूजयामासप्रह्लादोंतःपुरेपतिम् ॥ १६॥ अथदेवगृहेतस्मिन्बाह्यार्थैः परिपूर्णया ॥ पूजयापूजयामासदानवेशोजनार्दनम् ॥ १७॥ बहिर्द्रव्यैरनेनैवक्रमेणपरमेश्वरम् ॥ पुनःपुनःपूजयित्वातुष्टिमान्दानवोभवत् ॥ १८ ॥ ततस्ततःप्रभृत्येवप्रह्लादः परमेश्वरम् ॥ तथैवप्रत्यहंभक्त्यापूजयामासपूर्णया ॥ १९॥ अथतस्मिन्पुरेदैत्यास्ततःप्रभृतिवैष्णवाः ॥ सर्वएवाभवन्भव्याराजात्स्याचारकारणम् ॥ २० ॥ जगामवार्त्तागगनंदेवलोकमथारिहन् ॥ विष्णोर्द्वेषंपरित्यज्यभक्तादैत्याःस्थिताइति ॥ २१ ॥ देवाविस्मयमाजग्मुःशक्राद्याः समरुद्गणाः ॥ गृहीतावैष्णवीभक्तिर्दैत्यैःकिमितिराघव ॥ २२ ॥ क्षीरोदेभोगिभोगस्थंविबुधाविस्मयाकुलाः ॥ जग्मुरंबरमुत्सृज्यहरिमाहवशालिनम् ॥ २३ ॥ तत्रैनंदैत्यवृत्तांतंकथयामासुरस्यते ॥ पप्रच्छुश्चैनमासीनमपूर्वाश्चर्यविस्मयम् ॥ २४ ॥ ॥ विबुधाऊचुः ॥ ॥ किमेतद्भगवन्दैत्याविरुद्धायेसदैवते ॥ तेहितन्मयतांयातामायेयमितिभाव्यते ॥ २५ ॥ क्वकिलात्यंतदुर्वृत्तादानवादलिताद्रयः ॥ क्वपाश्चात्यमहाजन्मलभ्याभक्तिर्जनार्दने ॥ २६ ॥ प्राकृतोगुणवान्जातइत्येषाभगवन्कथा ॥ अकालपुष्पमालेवसुखायोद्वेजनायच ॥ २७ ॥ नोपपन्नंहियद्यत्रतत्रतन्नविराजते ॥ मध्येकाचकलापस्यमहामूल्योमणिर्यथा ॥ २८ ॥ योयोयादृग्गुणोजंतुःसतामेवैतिसंस्थितिम् ॥ सदृशेष्वप्यजेपुश्वानमध्येरमतेक्वचित् ॥ २९ ॥

जगामचारमुखादित्यर्थाद्गम्यते ॥ २१ ॥ किंकस्माद्धर्हीतेति ॥ २२॥ अंबरंअमरावतीम् ॥२३॥ अस्यअस्मैहरये ॥ एनंहरिम् ॥२४॥ तेविरुद्धास्त्वांद्विषंतइतियावत्तन्मयतांत्वन्मयताम् ॥ २५ ॥ द्वेषाद्दलिताःअद्रयस्त्वद्भक्तदेवमुन्यावासार्थैः ॥ २६ ॥ प्राकृतःपामरः ॥ एषाकथा ॥ औत्पातिकीअकालपुष्पमालेव ॥ २७ ॥ नउपपन्नंयुक्तम्॥२८॥ ननुकश्यपवंश्यत्वाद्युष्मत्सदृशाएवतेइतिचेद्गुणवैषम्यान्नेत्याशयेनाह ॥ योयइति ॥ तामसस्तामसींराजसोराजसींसात्विकस्तुसात्विकींसंस्थितिमेतीतियुक्तमित्यर्थः ॥ २९॥

वैसादृश्येनअनौचित्येन ॥ तथाचहरिणोक्तम ॥ शशीदिवसधूसरोगलितयौवनाकामिनीसरोविगतवारिजंमुखमनक्षरंस्वाकृतेः ॥ प्रभुर्द्धनपरायणःसततदुर्गतिःसज्जनोनृपांगणग तःखलोमनसिसप्तशल्यानिमेइति ॥ ३० ॥ क्रमोयोग्यतातयासंप्राप्तम् ॥ हीनजातिस्तामसयोनिः ॥ ३२ ॥ कमलिनीपरुपायांतप्तायामूपरभुविगताइतिकथायथाश्नोनृन्त्सु खयतितथाहेईशदितेःसुतःसंततिरपिमाधवेभक्तिमानितिदुराश्रयाअधमाश्रयविपयकथापिनःतथैवनसुखायेत्यर्थः ॥ ३३ ॥ ॥ इतिश्रीवासिष्ठम०ता०प्र०उप०द्वात्रिंशःसर्गः ॥ ३२ ॥ ॥ ७ ॥ ॥ हरिभक्त्यात्रदैत्यस्यविवेकादिगुणोदयः ॥ हरिप्रसन्नंदृष्ट्वायेस्तवश्चैवोपवर्ण्यते ॥ १ ॥ अनुचितदर्शनादतिसंरब्धंकुपितमतएवगर्ज्जंतंप्रागुक्तप्रकारेणउच्चै राकुश्यपृच्छंतंसुरलोकमथमाधवउवाचेत्यन्वयः ॥ १ ॥ स्वतएवबलिनोदैत्यास्त्वद्भक्त्याप्युपस्कृताबलवत्तराभविष्यंतिकुतोनविषादस्तत्राह ॥ मोक्षार्हइति ॥ यतोमोक्षार्हस्त

नतथादुःखयंत्यंगेमज्जंत्योवज्रसूचयः ॥ वैसादृश्येनसंबद्धायथैतावस्तुदृष्टयः ॥ ३० ॥ यद्यत्रक्रमसंप्राप्तमुपपन्नमनिंदितम् ॥ तदेव राजतेतत्रजलेंभोजंनतुस्थले ॥ ३१ ॥ क्वाधमःप्राकृतारंभोहीनकर्मरतिःसदा ॥ वराकोदानवोहीनजातिर्भक्तिःक्ववैष्णवी ॥ ३२ ॥ कम लिनीपरुषोपरभूगतासुखयतीहयथानदुराश्रया ॥ दितिसुतोपिहिमाधवभक्तिमानितिकथानतथेशसुखायनः ॥ ३३ ॥ ॥इ०वा० वा०दे०मो०उपशमप्रकरणेविबुधवाक्यंनामद्वात्रिंशःसर्गः ॥ ३२ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥ गर्ज्जंतमतिसंरब्धंसुरलोकमथा रिहा ॥ उवाचमाधवोवाक्यंशिखिवृंदमिवांबुदः ॥ १ ॥ ॥श्रीभगवानुवाच ॥ ॥ विबुधामाविपण्णाःस्थप्रह्लादोभक्तिमानिति ॥ पाश्चा त्यंजन्मतस्येदंमोक्षार्होसावरिंदमः ॥ २ ॥ अतउत्तरमेतेनगर्भतादनुजन्मना ॥ नकर्त्तव्याप्रदग्धेनबीजेनेवांकुरक्रिया ॥ ३ ॥ गुणवान्नि र्गुणोजातइत्यनर्थक्रमंविदुः ॥ निर्गुणोगुणवान्जातइत्याहुःसिद्धिदंक्रमम् ॥ ४ ॥ आत्मीयानिविचित्राणिभुवनान्यमरोत्तमाः ॥ प्रया तनासुखायैपाप्रह्लादीगुणितेहवः ॥ ५ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥इत्युक्त्वाविबुधांस्तत्रक्षीरोदार्णववीचिषु ॥ अंतर्द्धानंययौदेवस्तटता पिच्छगुच्छवत् ॥ ६ ॥ सोपिसंपूजितहरिःसुरौघोव्रजदंबरम् ॥ पुनर्मंदरनिर्द्धूतात्कणजालमिवार्णवात् ॥ ७ ॥ प्रह्लादंप्रतिगीर्वाणास्ततःस्नि ग्धत्वमाययुः ॥ महांतोयत्रनोद्विग्नास्तत्रविश्वासवन्मनः ॥ ८ ॥ प्रत्यहंपूजयामासदेवदेवंजनार्दनम् ॥ मनसाकर्मणावाचाप्रह्लादोभ क्तिमानिति ॥ ९ ॥

तोनवस्तुच्छंराज्यसुखंसवांछतीत्यर्थः ॥ २ ॥ एतेनदनुजन्मनाअतोऽस्माज्जन्मनउत्तरकालंगर्भनामातृगर्भेवसतिर्नकर्त्तव्या ॥ ३ ॥ देवैरुक्तंत स्यभगवद्भक्त्यनौचित्यदोषंपरिहरति ॥गुणवानिति ॥ जातश्चेदितिशेषः ॥ अनर्थक्रमंअनर्थपर्यवसितंपुरुषार्थविघातकंचक्रमंविदुःआहुश्चविद्वांसः ॥४॥ प्राह्लादीप्रह्लादसंबंधिनी मद्भक्त्यादिगुणितावःअसुखायन ॥ ५ ॥ तटोत्पन्नतापिच्छस्यनीलंगुच्छंयथाउन्नतासुवीचिषुव्यवधानादंतर्द्धानंयातितद्वत ॥६॥ पूर्वंमंदरादर्णवेपतितंकणजालंमंदरनिर्द्धूतादर्ण वात्पुनरंबरमिव ॥७॥ स्निग्धत्वंसौहृदम् ॥ यत्रयस्मिन्पुरुषेविषयेवामहांतःस्वपूज्याःपित्राचार्यादयोनोद्विग्नास्तत्रतस्मिन्बालानामपिमनोविश्वासवत्प्रसिद्धमित्यर्थः ॥ ८ ॥९॥

१ दानवस्तुच्छेतिक्वचित्पाठः

आनंदोयथाप्राप्तेनसंतोषः ॥ १० ॥ लोकमहीपुजनाकीर्णभूमिष्विव ॥ ११ ॥ लोकचर्यासुअशास्त्रीयलोकवृत्तेषु ॥ दृश्येदर्शनार्हेसमाजोत्सवादिकौतुके ॥ १२ ॥ भोगरूपाणांरोगाणांविषयापथ्यसेवनेनानुकूलाचरणे ॥ असंश्लिष्टमप्रथितमच्छिद्रितंवा ॥ १३ ॥ कथंतर्हिचेतआसीत्तदाह ॥ त्यक्तेति ॥ दोलायांयोजितमिवनैकतरभागविश्रांतमंतरालालंबीत्यर्थः ॥ १४ ॥ परमकांतयाशुद्धसत्वात्मिकयाधियाज्ञानशक्त्याविवेदविदितवान् ॥ १५ ॥ आह्लादिताभक्ताह्लादकर्त्ता ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेःसर्वानंदकर्त्तावा ॥ पूजादेवगृहंगत्वाप्रह्लादस्यअपतःसमाययौ ॥ १६ ॥ द्विगुणेनोपकरणोपचारेणइद्धयादीप्तया ॥ १७ ॥ पुष्टयाहर्षोपचितया ॥१८॥

अथपूजापरस्यास्यसमवर्द्धतकालतः॥ विवेकानंदवैराग्यविभवप्रमुखागुणाः ॥ १० ॥ नाभ्यनंदद्सौभोगपूगंशुष्कमिवद्रुमम् ॥ नचारमतकांतासुमृगोलोकमहीष्विव ॥ ११ ॥ नरेमेलोकचर्यासुशास्त्रार्थकथनादृते ॥ नजायतेरतिस्तस्यदृश्येस्थलइवाब्जिनी ॥ १२ ॥ नविशश्रामचेतोस्यभोगरोगानुरंजने ॥ मुक्ताफलमसंश्लिष्टंमुक्ताफलइवामले ॥ १३ ॥ त्यक्तभोगादिकलनंविश्रांतिमनुपागतम् ॥ चेतःकेवलमस्यासीद्दोलायामिवयोजितम् ॥ १४ ॥ प्रह्लादींतांस्थितिंविष्णुर्देवःक्षीरोदमंदिरात् ॥ विवेदसर्वगतयाधियापरमकांतया ॥ १५ ॥ अथपातालमार्गेणविष्णुराह्लादिताग्रतः ॥ पूजादेवगृहंतस्यप्रह्लादस्यसमाययौ ॥ १६ ॥ विज्ञायाभ्यागतंदेवंपूजयाद्विगुणेद्धया ॥ दैत्येंद्रःपुंडरीकाक्षमादरात्पर्यपूजयत् ॥ १७ ॥ पूजागृहगतंदेवंप्रत्यक्षावस्थितंहरिम् ॥ प्रह्लादःपरमप्रीतोगिरातुष्टावपुष्टया ॥ १८ ॥ प्रह्लादउवाच ॥ ॥ त्रिभुवनभवनाभिरामकोशंसकलकलंकहरंपरंप्रकाशम् ॥ अशरणशरणंशरण्यमीशंहरिमजमच्युतमीश्वरंप्रपद्ये ॥ १९ ॥ कुवलयदलनीलसन्निकाशंशरदमलांबरकोटरोपमानम् ॥ भ्रमरतिमिरकज्जलांजनाभंसरसिजचक्रगदाधरंप्रपद्ये ॥ २० ॥ विमलमलिकलापकोमलांगंसितदलपंकजकुड्मलाभशंखम् ॥ श्रुतिरणितविरंचिचंचरीकंस्वहृदयपद्मदलाश्रयंप्रपद्ये ॥ २१ ॥

त्रिभुवनस्ययद्भवनंसुरक्षितस्थितिस्तदनुकूलमभिरामंकोशगृहम् ॥ स्वांतःस्थितत्रिभुवनस्यस्वेनैवपालनात् ॥ सकलस्यबाह्याभ्यंतरस्यकलंकस्यतमसःहरंअपहर्त्तारम् ॥ परंसूर्यचंद्राग्निवांकिरणप्रकाशेभ्योप्युत्कृष्टंस्वयंज्योतिःप्रकाशम् ॥ नविद्यतेऽन्यच्छरणंयेषांतेअशरणास्तेषांशरणंरक्षकम् ॥ अविनाशित्वाच्छरण्यंशरणार्हम् ॥ ईशंसर्वशक्तिसंपन्नम् ॥ अतएवरजसाअजंसत्वेनाच्युतंतमसाचेश्वरंसर्वदुःखहरत्वाद्धरिंत्वांप्रपद्येइत्यर्थः ॥ १९ ॥ कुवलयदलेनोत्पलेननीलमणिनाचसन्निकाशंसमानकांतिम् ॥ २० ॥ अलिकलापमिवकोमलानिसुंदराण्यंगानियस्य ॥ सितदलपंकजस्यपुंडरीकस्यकुड्मलमिवआभातीतिसितदलपंकजकुड्मलाभःशंखोयस्य ॥ श्रुतयएवरणितानिगुंजारवायस्यतथाविधोविरिंचिनामाचंचरीकोनाभिपद्मेभृंगोयस्य ॥ स्वानांस्वभक्तानांहृदयपद्मदलान्याश्रयआधारोयस्यतम् ॥ २१ ॥

हरिलक्षणंशरदंबरंशरत्कालाकाशंप्रपद्ये ॥ शरदंबरत्वोपपादनायविशिनष्टि ॥ सितनखेत्यादि ॥ स्मितेनधवलमाननलक्षणंपीवरंपूर्णमिंदुबिंबंयस्य ॥ हृदयमणिःकौस्तुभस्तन्मरी
चिजालान्येवगंगामंदाकिनीयत्र ॥२२॥ अविरलानिबिडाकृतासृष्टिःसर्वाप्यसंबाधंलीनानिविष्टायस्मिन् ॥ स्वयंतुसततमजातमनुत्पन्नमतएवावर्द्धनंवृद्ध्यादिविकारशून्यम् ॥
तर्हिकथंतस्यदेहित्वंतत्राह ॥ गुणेति ॥ सत्वादिमायागुणप्रयुक्तैर्गुणशतैरनंतकल्याणगुणैर्जरठोऽतिचिरंतनोऽभिजातःसुंदरोदेहोयस्यतथाविधम् ॥ प्रलयकालेवटतरुदलेशायि
नमर्भकंप्रपद्येइत्यर्थः ॥२३॥ नवविकसितस्यनाभिपद्मस्यरेणुभिर्गौरंपीतमर्थादुदरदेशे ॥ स्फुटेनप्रकाशमानेनकमलायालक्ष्म्यावपुषाविभूषितमंगंवक्षोवामोरुर्वायस्य ॥ दिनश
मसमयःसायंकालइवारुणोरक्तचंदनकाश्मीराद्यंगरागोयस्य ॥ २४ ॥ कमलजोब्रह्मातन्नलिन्याजलेनावपूर्यतइतिजलावपूरस्तडागस्तद्रूपम् ॥ हृदिप्रसिद्धानलिनीहृत्पद्म

सितनखगणतारकावकीर्णस्मितधवलाननपीवरेंदुबिंबम् ॥ हृदयमणिमरीचिजालगंगंहरिशरदंबरमाततंप्रपद्ये ॥ २२ ॥ अविरल
कृतसृष्टिसर्वलीनंसततमजातमवर्द्धनंविशालम् ॥ गुणशतजरठाभिजातदेहंतरुदलशायिनमर्भकंप्रपद्ये ॥ २३ ॥ नवविकसितपद्मरे
णुगौरंस्फुटकमलावपुषाविभूषितांगम् ॥ दिनशमसमयारुणांगरागंकनकनिभांबरसुंदरंप्रपद्ये ॥ २४ ॥ दितिसुतनलिनीतुषारपातंसु
रनलिनीसततोदितार्कबिंबम् ॥ कमलजनलिनीजलावपूरंहृदिनलिनीनिलयंविभुंप्रपद्ये ॥ २५ ॥ त्रिभुवननलिनीसितारविंदंतिमिरस
मानविमोहदीपमग्र्यम् ॥ स्फुटतरमजडंचिदात्मतत्त्वंजगदखिलार्त्तिहरंहरिंप्रपद्ये ॥ २६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिगुणबहुलाभि
र्वाग्भिरभ्यर्चितोसौहरिरसुरविनाशःश्रीनिपण्णांसदेशः ॥ ॥ जलदइवमयूरंप्रीतिमान्प्रीयमाणंकुवलयदलनीलःप्रत्युवाचासुरेंद्रम् ॥
॥ २७ ॥ ॥ इ० वा० वा० दे० मो० उपशमप्रकरणेनारायणागमनंनामत्रयस्त्रिंशःसर्गः ॥ ३३ ॥ ॥ ७ ॥ ॥ श्रीभगवानुवाच ॥
वरंगुणनिधेदैत्यकुलचूडामहामणे ॥ गृहाणाभिमतंभूयोजन्मदुःखोपशांतये ॥ १ ॥ ॥ प्रह्लादउवाच ॥ ॥ सर्वसंकल्पफलदसर्वलोकां
तरस्थित ॥ यदुदारतमंवेत्सितद्देवादिशमेविभो ॥ २ ॥

मितियावत् ॥ २५ ॥ त्रिभुवननलिन्याःसितेअरविंदकेरयस्यसूर्यस्यतथाभूतम् ॥ अतएवतिमिरसमानस्यविमोहस्यदीपम् ॥ अग्र्यंश्रेष्ठम् ॥ किंभौतिकप्रकाशोसौनेत्याह ॥
स्फुटतरमिति ॥ स्फुटतरंनित्यस्वप्रकाशमतएवाजडंचिद्रूपमात्मतत्त्वमतएवसाक्षात्कारमात्रेणजगतांजगद्वर्तिजीवानामखिलार्त्तिहरम् ॥ २६ ॥ इतिउक्तप्रकाराभिर्गुणबहुला
भिःस्तुतिवाग्भिरभ्यर्चितः ॥ श्रियानिपण्णआलिंगितोंऽसदेशोयस्यतथाविधोहरिर्जलदोमयूरमिवअसुरेंद्रंप्रह्लादंप्रत्युवाच ॥ २७ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउ
पशमप्रकरणेत्रयस्त्रिंशःसर्गः ॥ ३३ ॥ ॥ ७ ॥ ॥ हरेर्वरादिहप्राप्यप्रह्लादःसुविचारणाम् ॥ निरस्यानात्मवर्गंस्वमपश्यच्चित्सदद्वयम् ॥ १ ॥ हेदैत्यकुलचूडामहामणे
त्वंवरंगृहाण ॥ १ ॥ सर्वेषांलोकानांप्राणिनामंतरेहृदयेस्थित ॥ उदारतमंसर्वकार्पण्यनिवारकमितियावत् ॥ आदिशआज्ञापयेतिविनयोक्त्यायाचनम् ॥ २ ॥

श्रीभगवानुवाच॥ ॥सर्वसंभ्रमसंशांत्यैपरमायफलायच॥ब्रह्मविश्रांतिपर्यंतोविचारोस्तुतवानघ ॥ ३॥ ॥श्रीवसिष्ठउवाच॥ ॥ इत्युक्त्वादितिपुत्रेंद्रंविष्णुरंतरधीयत॥ कृतघर्घरनिर्ह्रादस्तरंगस्तोयधेरिव॥४॥ विष्णावंतर्हितेतैदेवेपूजायांकुसुमांजलिम्॥ पाश्चात्यंदानवस्यक्ष्मामणिरत्नपरिष्कृतम्॥५॥ पद्मासनस्थोतिमुदात्युपविश्यवरासने॥ स्तोत्रपाठविधावंतश्चिंतयामासचेतसा॥ ६ ॥ विचारवानेवभवान्भवत्वितिभवारिणा॥ देवेनोक्तोस्मितेनांतःकरोम्यात्मविचारणम्॥७॥ किमहंनामतावत्स्यांयोस्मिन्भुवनडंबरे॥ वच्मिगच्छामितिष्ठामिप्रयत्नेनाहरामिच॥८॥ जगत्तावदिदंनाहंसवृक्षतृणपर्वतम्॥ यद्बाह्यमलमत्यंतंतत्स्यांकथमहंकिल ॥ ९॥ असन्नभ्युदितोमूकःपवनैःस्फुरितःक्षणम्॥ कालेनाल्पेनविलयीदेहोनाहमचेतनः ॥ १० ॥ जडयाकर्णशष्कुल्याकल्प्यमानःक्षणक्षयी॥ शून्याकृतिःशून्यभवःशब्दोनाहमचेतनः॥११॥ त्वचाक्षणविनाशिन्याप्राप्यमप्राप्यमप्यथ॥ चित्प्रसादोपलब्धात्मस्पर्शनंनास्म्यचेतनम्॥१२॥ वद्धात्माजिह्वयातुच्छोलोलयालोलसत्तया॥ स्वल्पस्पंदोद्रव्यनिष्ठोरसोनाहमचेतनः॥१३॥ दृश्यदर्शनयोर्लीनंक्षयिक्षणविनाशिनोः॥ केवलेद्रष्टरिक्षीणंरूपंनाहमचेतनम्॥१४॥ नासयाप्यंधजडयाक्षयिण्यापरिकल्पितः॥ पेलवोऽनियताकारोगंधोनाहमचेतनः॥ १५॥ निर्ममोऽमननःशांतोगतपंचेंद्रियभ्रमः ॥ शुद्धचेतनएवाहंकलाकलनवर्जितः ॥ १६॥

एवंप्रार्थितोविष्णुःस्वविचारोत्पन्नब्रह्मात्मतत्त्वसाक्षात्कारविश्रांतिमंतरेणनात्यंतिककार्पण्यनिवृत्तिरितिमन्यमानस्तदनुरूपंवरंदिशति ॥ सर्वेति ॥ सर्वसंभ्रमसंशांतिरात्यंतिकानर्थनिवृत्तिः ॥ परमंफलंनिरतिशयानंदावाप्तिः ॥ ३ ॥ ४ ॥ ५ ॥ वरासनेउपविश्यपद्मासनस्थःसंस्तोत्रपाठविधानकालेअंतर्वक्ष्यमाणप्रकारेणचिंतयामास ॥ ६ ॥ भवःसंसारस्तदरिणानन्निवारकेण ॥ तेनहेतुना ॥७॥ तत्रसर्वस्यदृश्यस्यात्मार्थत्वादात्मनएवप्राधान्यंनिश्चित्यसएवास्मिन्कःस्यादितिविचारयति ॥ किमहमित्यादिना ॥ प्रयत्नेनसर्वोद्योगेन ॥ आहरामिविषयानुपभुंजे ॥ ८ ॥ तत्रदेहाद्बाह्यंतावन्नात्मेत्याह ॥ जगदिति ॥ ९ ॥ देहोपिनाहमित्याह ॥ असन्निति ॥ मूकोऽनभिज्ञत्वादेववक्तुमसमर्थः ॥ पवनैःप्राणवायुभिःक्षणंस्वसंचारक्षणेस्फुरितःसंचलितः ॥ १० ॥ एवंशब्दादिविषयाअपिनात्मेत्याह ॥ जडयेत्यादिना ॥ जडयाअचिद्रूपयाकल्प्यमानस्तारोमंद्रःपदंवाक्यमित्यादिभेदैःसमर्थ्यमानः ॥ क्षयित्वादेवशून्याकृतिः शून्यादाकाशाद्भवतीतिभवः ॥ यद्यप्याकाशोनशून्यस्वभावस्तथाप्यात्मसत्तातःपृथक्करणेनिःस्वरूपइतिशून्यत्वोक्तिः ॥ ११ ॥ प्राप्यमप्राप्यमपिकदाचित्प्राप्यम् ॥ स्पर्शनंउष्णत्वादि ॥ ननित्यप्राप्तस्वभावआत्माभवितुमर्हतीतिभावः ॥ १२ ॥ लोलसत्तयाअनित्यया लोलयाचलयाजिह्वयाबद्धात्मासंबद्धस्वभावोरसनेंद्रियाधीनसिद्धिकइतियावत् ॥ स्वल्पोजिह्वाग्रात्कंठपर्यंतःस्पंदआस्वादप्रसरोयस्य ॥ १३ ॥ दृश्येद्रव्येदर्शनेचक्षुषिचलीनंतदुभयाधीनसिद्धिकमितियावत् ॥ क्षणविनाशिनोरनित्ययोः ॥ केवलेद्रष्टरिउपभोगजननेनक्षीणमुपक्षीणम् ॥ १४ ॥ अंधवज्जडयाअप्रकाशया ॥ नासयाघ्राणेंद्रियेण ॥ कालेनान्यथापरिणामादनियताकारः ॥ १५ ॥ शब्दादिविषयाणामनात्मत्ववचनंवचनादानादीनामपिसमानंसत्सर्वत्रत्रिपुटीनांन्यायसाम्यादनात्मत्वोपलक्षणम् ॥ तेनाहंकारमनोबुद्धिचित्तत्रिपुट्याअप्यनात्मत्वेननिरासेशुद्धचिन्मात्रमेवात्मापरिशिष्टइत्याशयेनाह ॥ निर्ममइति ॥ १६ ॥

चेतनपदेनचेतनावतोजडांशस्यापिग्रहणंमाभूदितितत्परिशोधायाह ॥ चेत्येति ॥ सन्मयःसन्मात्रः ॥ १७ ॥ इत्थंत्वंपदार्थंपरिशुद्धंविचार्यतन्मुखेनैवतत्पदार्थमपिपरिशोध्याव धारयितुमुपक्रमते ॥ अनेनेत्यादिना ॥ अन्यनिरपेक्षत्वादुत्तमतेजसाचेतनेनदीपेन ॥ १८ ॥ निर्विकल्पोवियदादिविकल्पशून्यश्चिल्लक्षणआभासःप्रकाशएषआत्मास्मीति अनात्मेश्वरनिरासः ॥ १९ ॥ अग्निभूताअंगारकणपंक्तयोयथेत्यर्थः ॥ २० ॥ २१ ॥ सर्वपदार्थानांस्फूर्त्तिरिवसत्ताप्येतदधीनैवेत्याह ॥ अनेनेति ॥ सत्तोपपादनेप्रदीपदृष्टां तःस्फूर्त्तिसत्तयोरभेदद्योतनार्थः ॥ २२ ॥ जाग्रतांसचेतसामितियावत् ॥ सर्वासामनुभवएषामस्तीत्यनुभविनोदेहेंद्रियमनोबुद्ध्यादयस्तद्भावानांअनुभवितानामनुभवानांभूमिः परंविश्रांतिस्थानम् ॥ यथामुकुरःसर्ववस्तुप्रतिबिंबविश्रांतिभूस्तद्वत् ॥ २३ ॥ पदार्थानांस्वभाववैचित्र्याण्यप्येतदधीनसिद्धिकानीत्याह ॥ तस्येति ॥ घनःकठिनः ॥ विद्रुतंद्र

चेत्यवर्जितचिन्मात्रमहमेषोऽवभासकः ॥ सबाह्याभ्यंतरव्यापीनिष्कलामलसन्मयः॥ १७॥ अनेनचेतनेनेमेसर्वेघटपटादयः॥ सूर्यांताअवभास्यंतेदीपेनोत्तमतेजसा ॥ १८ ॥ आइदानींस्मृतंसत्यमेतत्तदखिलंमया ॥ निर्विकल्पचिदाभासएपआत्मास्मिसर्वगः ॥१९॥ अनेनैताःस्फुरंतीहविचित्रेंद्रियवृत्तयः॥ तेजसांतःप्रकाशेनयथाग्निकणपंक्तयः॥२०॥ अनेनैताःस्फुरंतीहविचित्रेंद्रियपंक्तयः॥ सर्वगेननिदाघेनयथामरुमरीचिकाः॥ २१ ॥ अनेनैतत्पदार्थानांवस्तुत्वंप्रतिपाद्यते॥ शुक्लादिगुणवत्त्वंस्वंप्रदीपेनेववाससाम्॥ २२॥ असावेवहिभूतानांसर्वेषामेवजाग्रताम्॥ सर्वानुभविताभूमिरात्मामुकुरवत्स्थितः॥२३॥तस्यैकस्याविकल्पस्यचिद्दीपस्यप्रसादतः॥ उष्णोर्कःशिशिरश्चंद्रोघनोद्रिर्विद्रुतंपयः॥ २४ ॥ सातत्येनानुभूतानांसर्वेषांचजगत्स्थितौ ॥ एतत्कारणमाद्यंतत्कारणंनास्यविद्यते ॥ २५॥ सातत्येनानुभूतानांपदार्थानामनेनतत् ॥ पदार्थत्वमुदेत्युच्चैःप्रतापेनेवतप्तता ॥ २६ ॥ अनाकारात्कारणाच्चसर्वकारणकारणात्॥ एतस्मादिदमुत्पन्नंजगच्छैत्यंहिमादिव॥ २७॥ ब्रह्मविष्ण्वींद्ररुद्राणांकारणानांजगत्स्थितौ॥ एतत्कारणमाद्यंतत्कारणंनास्य विद्यते॥ २८॥ चिच्चेत्यद्रष्टृदृश्यादिनामभिर्वर्जितात्मने॥ स्वयंसकृद्विभातायमह्यमस्मैनमोनमः ॥ २९॥

वम् ॥ २४ ॥ सातत्येनआकाशाद्वायुर्वायोरग्निरग्नेरापइत्यादिक्रमेणश्रुतिप्रत्यक्षादिनाअनुभूतानांसर्वेषांपदार्थानांजगतिउत्पत्त्यादिव्यवस्थितौएतदाद्यंकारणम्॥ तनोर्नातितत्वम् ... सद्रूपेणसर्वकार्यव्यापकम् ॥ २५ ॥ तत्प्रसिद्धंवियदादिपदार्थत्वम् ॥ प्रतापेनग्रीष्मार्कतापेनभूम्यादेस्तप्ततेव ॥ २६ ॥ परमार्थतोऽनाकारात्कारणत्वाद्याकारशून्यात्अविद्याकारणभूताच्चसर्वेषांब्रह्मादिकारणानांकारणादेतस्माद्व्यत्ययूपाद्ब्रह्मणइदंजगदुत्पन्नम् ॥ २७ ॥ सर्वकारणकारणादित्येतद्विवृणोति ॥ ब्रह्मविष्ण्विति ॥ २८ ॥ सकृद्विभाताय नित्यस्वप्रकाशाय ॥ २९ ॥

---

१ पंक्तयइत्यपिपाठः

कारणत्वात्सर्गहेतुत्ववत्स्थितिप्रलयहेतुत्वमप्यस्यैवेत्याह ॥ एतस्मिन्निति ॥ गुणभूतान्यप्रधानभूतानिगुणवदपृथक्सत्ताकानित्राविविशंतिप्रविशंति ॥ तथाच यतोवाइमानिभूतानिजायंतेइत्यादिश्रुत्युक्तब्रह्मलक्षणस्यास्मिन्नेवसमन्वयइत्यर्थः ॥ ३० ॥ कारणेसूक्ष्मरूपेणस्थितमिदानींसद्वर्त्तमानमपियदनेनेश्वरेणचेतनेनांतरात्मनोत्तरक्षणेऽस्त्वितिकलितंसंकल्पितंतत्तद्भवत्युत्तरक्षणेनेतरदित्यर्थः ॥३१॥ कलितंस्वीयसत्तास्फूर्त्तिप्रदानेनोज्जीवितम् ॥ निजंघटोस्तीत्यादिव्यवहारपदम् ॥ अंतमसत्त्वलक्षणंनाशमागतंप्राप्तम्॥३२॥ ॥ ३३ ॥ एवंवृद्ध्यादिभावविकाराअप्येतस्मिन्नेवाध्यस्ताइत्याह ॥ एतदिति ॥ यथाप्रतिबिंबार्कैक्षयवृद्धीतद्रूपेणस्थितेबिंबेएवाध्यस्तेअन्यद्वृत्तितयेवविभाव्येतेतद्वदित्यर्थः ॥ ॥ ३४ ॥ सर्वेषांभूतानामज्ञानाम् ॥ गलितचेतसांदृश्यमितिवक्तव्येप्राप्यमित्युक्तिर्दर्शनप्राप्त्योर्भेदाभावद्योतनायेत्याशयेनव्याचष्टे ॥ एतत्तदिति ॥ ३५ ॥ येतुकारणस्यैकदेशे

एतस्मिन्सर्वभूतानिनिर्विकल्पचिदात्मनि॥ गुणभूतानिभूतेशेतिष्ठंतिविविशंतिच॥३०॥यत्किलानेनकलितंचेतनेनांतरात्मना॥ तत्तद्भवतिसर्वत्रनेतरत्सदपिस्थितम्॥ ३१ ॥ यच्चिताकलितंकिंचित्तदाप्नोतिनिजंपदम्॥ यच्चिताकलितंनेहतत्सदप्यंतमागतम्॥ ३२ ॥ इमेघटपटाकाराःपदार्थशतपंक्तयः॥ जागत्योविपुलादर्शेय्यस्मिन्व्योमनिर्बिंबिताः॥३३॥ एतद्वृद्धंवृद्धतरेक्षयिक्षयिणिजायते॥ पदार्थेसदसच्चापिप्रतिबिंबार्कवस्थितम्॥ ३४॥ अदृश्यंसर्वभूतानांप्राप्यंगलितचेतसाम्॥ एतत्तद्दृश्यतेसद्भिःपरंव्योमातिनिर्मलम्॥ ३५॥इयमभ्युदयंयातिनानादृश्यसुमंजरी॥ आचारचंचरीकाढ्याएतस्मात्कारणद्रुमात्॥ ३६॥ अस्मादियमुदेत्युच्चैःसंसाररचनाचला॥ विचित्रतरुगुल्माढ्याशैलादिववनावली ॥ ३७॥सर्वेषामविभिन्नोसौत्रैलोक्योदरवर्त्तिनाम्॥ ब्रह्मादीनांतृणांतानांचिदात्मासंप्रकाशकः॥ ३८॥एकोसावहमाद्यंतरहितःसर्वगाकृतिः॥चराचराणांभूतानामंतःस्वानुभवःस्थितः ॥ ३९ ॥ अस्यतस्यममेमानिस्थावराणिचराणिच॥ परिसंख्यादिहीनानिशरीराणिबहूनिच॥ ४० ॥ एकोसावनुभूत्यात्मास्वानुभूतिवशात्स्वयम्॥ सर्वदृग्द्रष्टृदृश्यत्वात्सहस्रकरलोचनः॥ ४१ ॥ एषोसावहमाकाशेसूर्यदेहेनचारुणा॥ विहरामीतरेणापिवायुदेहेनवायुना ॥ ४२ ॥ ममैतद्वपुरानीलंशंखचक्रगदाधरम्॥ सर्वसौभाग्यसीमांतंय्यस्मिञ्जगतिवल्गति ॥४३ ॥ अहमस्मिन्समुद्भूतःपद्मासनगतःसदा॥ निर्विकल्पसमाधिस्थःपरांनिर्वृतिमागतः॥४४॥

परिणामोजगदितिकल्पयंतितेषांकल्पनाप्यस्मिन्नेवनान्यत्रेत्याशयेनाह ॥ इयमितिद्वाभ्याम् ॥ ३६ ॥ ३७ ॥ अस्मिन्नेवकल्पनेतिकुतोज्ञातमितिचेदेतदभिन्नस्फूर्त्तिकत्वाज्जगतइत्याह ॥ सर्वेषामिति ॥ ३८ ॥ ३९ ॥ परिच्छिन्नसंख्यागणनाव्यक्तीयत्ता ॥ आदिपदाद्देशेयत्ताकालेयत्तेगृह्येते ॥ ४० ॥ स्वानुभूतिवशात्स्वात्मनिक्रियाविरोधेनानुभूत्यंतराघटनात्स्वप्रकाशानुभूत्यात्मायमित्यर्थः ॥ परप्रकाशनेप्यस्यसंकोचाभावेनसर्वदृग्द्रष्टृदृश्यासाक्षितयाभास्यायस्यतथाविधत्वात्प्रतिशरीरमात्मभेदासिद्धावयमेवसर्वेषांकरलोचनैःसहस्रकरलोचनइत्यर्थः ॥ ४१ ॥ सर्वात्मभावंस्वस्यप्रत्येकमाह ॥ एषोसाविति ॥ एषप्रत्यक्षोसावीश्वरभूतोहंसूर्यभूतःसन्सूर्यदेहेनविहरामि ॥ एवंवायुनावायुदेहेन ॥ ४२ ॥ वल्गतिव्यवहरति ॥ ४३ ॥ ४४ ॥

आकृत्यामूर्त्या ॥ ४५ ॥ क्रमप्राप्तांमन्वंतरक्रमप्राप्ताम् ॥ ४६ ॥ त्वंस्त्रीत्वंपुमानसित्वंकुमारउतवाकुमारी ॥ त्वंजीर्णोदंडेनवंचसित्वंजातोभवसिविश्वतोमुखइतिश्रुतिस्वात्मनि
स्वानुभवेनसंवादयति ॥ स्त्रीति ॥ ४७ ॥ रसतयाजीवसारतयाजलतयाच ॥ कूपोजीर्णकूपः ॥ ४८ ॥ अभिजातेनक्रीडनकनिर्माणकुशलेनबालेन ॥ ४९ ॥ आप्यतेकारण
भावेनव्याप्यते ॥ कार्यस्यचसत्ताप्रविलयेनमांप्राप्यगच्छतितिरोभवति ॥ मयास्वतत्त्वदर्शनेनपरित्यक्तमेतज्जगज्जीवन्मुक्तव्यवहारेसदपिनकिंचन ॥ ५० ॥ ५१ ॥ इदानीमी
श्वरभूतस्यस्वस्यविभूतिविस्तरमुपभोगेनुभवांतमाह ॥ कुसुमेष्विति ॥ ५२ ॥ दृश्यंदर्शनार्हंस्थावरंजंगमंवाविभूतिमच्छ्रीमदूर्जितंवातस्यसर्वस्योत्कर्षनिमित्तंचिदात्मतत्त्वंअह
मेव किंसंकल्पादिदूषितजीवरूपेण नेत्याह ॥ सर्वसंकल्परहितमिति ॥ अतएवपरम् ॥ ५३ ॥ रसमयीआद्याशक्तिःरसतन्मात्रायथासागरनदीसरःकूपादिरसौघोजलौघःसन्

अहंत्रिनेत्रयाऽऽकृत्यागौरीवक्कान्तपट्पदः॥ सर्गांतेसंहरामीदंकूर्मोंगपटलंयथा ॥४५॥ अहमिंद्रेणरूपेणत्रिलोकीमखिलामिमाम्॥ पा
लयामिक्रमप्राप्तांमठिकामिवतापसः॥ ४६॥ स्त्रीपुमानहमेवैतत्कुमारोस्यहमित्यपि॥ जीर्णोहंदेहधारित्वाज्जातोहंविश्वतोमुखः॥४७॥
अहंतृणलतागुल्मजालंरसतयास्थितः॥ उत्थापयामिन्निद्भूमेःकूपांतरलतामिव ॥ ४८ ॥ स्वलीलार्थमिदंचारुजगदाडंबरंततम् ॥ मया
भिजातबालेनपंकक्रीडनकंयथा॥ ४९ ॥ मयेदमाप्यतेसर्वंसत्तामांप्राप्यगच्छति ॥ मत्परित्यक्तमेतच्चसदप्येवनकिंचन ॥ ५० ॥ मयि
स्फारेचिदादर्शेप्रतिबिंबंयदागतम्॥ तदस्तिनेतरद्यस्मान्मत्तोन्यन्नेहविद्यते ॥ ५१ ॥ कुसुमेष्वहमामोदःपुष्पपत्रेष्वहंछविः॥ छविष्वहं
रूपकलारूपेष्वनुभवोप्यहम्॥५२॥ यद्यत्किंचिदिदंदृश्यंजगत्स्थावरजंगमम्॥ सर्वसंकल्परहितंतच्चित्तत्त्वमहंपरम् ॥५३॥ आद्यारस
मयीशक्तीरसौघोविस्तृतोयया॥ सायथादारुकुड्येषुतथाहंसर्ववस्तुषु॥५४॥ परमांतामहंसर्वपदार्थांतरवर्त्तिताम्॥ उपेत्यसंविद्वैचि
त्र्यंप्रतनोमिस्वयेच्छया॥५५॥ घृतंयथांतःपयसोरसशक्तिर्यथाजले॥ चिच्छक्तिःसर्वभावेषुतथांतरहमास्थितः॥५६॥ इदंजगत्त्रिका
लस्थंचितिमध्येचसंस्थितम्॥ चेत्योपचाररहितंवस्तुजातमिवावनौ॥५७॥ भरिताशेषदिक्कुक्षिस्त्यक्तसंकोचविभ्रमः ॥ सर्वस्यःसर्व
कर्त्ताचविराट्सम्राडहंस्थितः॥ ५८ ॥

विस्तृतःसैवजलभूताशक्तिर्दारुषुवृक्षेषुशाखापल्लवाद्युद्भवनिमित्ततयाकुड्येषुचतृणयवांकुराद्युद्भवनिमित्ततयाप्रसृतातथाहंसर्ववस्तुषुतत्तत्कार्योद्भवनिमित्ततयाप्रसृतइत्यर्थः
॥ ५४ ॥ स्वसृष्टकार्यांतरानुप्रवेशेनजीवसंविद्वैचित्र्येपिस्वयमेवहेतुरित्याह ॥ परमामिति ॥ ५५ ॥ ५६ ॥ चेत्योपचारश्चेत्यप्रथातद्रहितंजडमितियावत् ॥ त्रिकालस्थमतीतंव
र्त्तमानंभविष्यच्चेदंजगत्चितिचिद्रूपेमयिमध्येएकांशेव्यवस्थितम् ॥ यथातृणकाष्ठलोष्टादिवस्तुजातमवनौतद्वत् ॥ ५७ ॥ विविधोल्यष्टिभेदेनराजतइतिविराट् ॥ सम्यक्समष्टि
भावेनराजतइतिसम्राट् ॥ अथवाविशेषेणराजांतरेभ्योराजतइतिविराट् ॥ सम्राट्सर्वेषांराज्ञामाज्ञापयिता ॥ ५८ ॥

इंद्राधिकराज्याप्राप्तेः कथंसम्राट्त्वंतत्राह ॥ अपूर्वमिति ॥५९॥ नमामिकुसूलेधान्यमिवसमावेशंनप्राप्नोमि ॥ अर्णवेप्राक्तनार्णवपरिमाणे ॥६०॥ अंतःस्वयंस्वदितेस्वेनैर्वानिरतिशयानंदात्मनास्वदमाने ॥ पंगुःकुंठितगतिः ॥ सरीसृपःसर्पःस्फुरन्संचरन् ॥६१॥ ब्राह्मीमठिकाब्रह्मांडः ॥ सुसंकटासंकुचितगर्भा ॥ विपुलंविस्तृतंवपुर्मत्स्वरूपंनमातिनसमाविशति ॥६२॥ उत्तरोत्तरदशगुणपार्थिवाद्यावरणावृताद्ब्रह्मांडलक्षणाद्विरिंचिभवनात्पारेपरतश्चतुर्विंशतिसंख्यानांसांख्यवैष्णवादितंत्रप्रसिद्धानांपट्त्रिंशत्संख्यानांशैवपाशुपताभिमतानांवातत्त्वानामंतेपिपदमाहरत्क्रममाणमितियावत् ॥ मेरूपंप्रसरत्येवेतिवास्तवस्यैवविस्तारस्यप्रसारत्वेनकल्पना ॥६३॥ अयंदेहादिरहमितिकल्पनाकुतआसीदियंतंकालमित्यर्थः ॥६४॥ देहस्यैवाप्रसिद्धावदेहोपिकः ॥ वंध्यापुत्रस्येवतद्धंतुरप्यप्रसिद्धेः ॥ एवंकोमृतःप्राणस्यैवाप्रसिद्धौकस्तेनवियुक्तः ॥ कश्चजीवतिप्राणान्धारयति ॥६५॥ मि

अपूर्वमनिवद्धेंद्रमशस्त्रदलितामरम् ॥ अप्रार्थितंमेसंप्राप्तंजगद्राज्यमिदंततम् ॥ ५९ ॥ अहोनुविततात्मास्मिनमाम्यप्यात्मनात्मनि ॥ कल्पांतपवनाधूतएकार्णवइवार्णवे ॥६०॥ नात्मन्यंतमवाप्नोमिस्वस्थेंतःस्वदितेस्वयम् ॥ क्षीरवारिनिधौपंगुःसरीसृपइवस्फुरन् ॥६१॥ स्वल्पेयंमठिकाब्राह्मीजगन्नाम्नीसुसंकटा ॥ गजोविल्वइवस्वांगेनमातिविपुलंवपुः ॥ ६२ ॥ विरिंचिभवनात्पारेतत्त्वांतेप्याहरत्पदम् ॥ प्रसरत्येवमेरूपमद्यापिननिवर्त्तते ॥ ६३ ॥ अयंनामाहमित्यंतःकुतोनिरवलंवना ॥ अपर्यंताकृतेरेषाकिलासीत्स्वल्पतामम ॥ ६४ ॥ भवानयमयंचाहमितिमिथ्यैवविभ्रमः ॥ कोदेहःकोप्यदेहोवाकोमृतःकश्चजीवति ॥ ६५ ॥ वराकाःपेलवधियोवभूवुर्मेपितामहाः ॥ येसाम्राज्यमिदंत्यक्त्वारेमिरेभवभूमिषु ॥६६॥ क्वेयंकिलमहादृष्टिर्भरिताब्रह्मबृंहिता ॥ क्वसरीसृपभीमाशाभीमाराज्यविभूतिभिः ॥६७॥ अनंतानंदसंभोगापरोपशमशालिनी ॥ शुद्धेयंचिन्मयीदृष्टिर्जयत्यखिलदृष्टिषु ॥ ६८ ॥ सर्वभावांतरस्थायचेत्यमुक्तचिदात्मने ॥ प्रत्यक्तेतनरूपायमह्यमेवनमोनमः ॥६९ ॥ जयाम्यहमजोजातोजीर्णसंसारसंस्तृतिः ॥ प्राप्तप्राप्योमहात्मायंजीवामिचजयामिच ॥७०॥ इदमुत्तमसाम्राज्यंवोधंसंत्यज्यशाश्वतम् ॥ नरमेहमरम्यासुराज्यदुःखविभूतिषु ॥७१ ॥ दारुवारिदृपन्मात्रेलुलितोयोधरातले ॥ धिग्वराकमनात्मज्ञंतंकुदानवकीटकम् ॥ ७२ ॥

थ्यासाम्राज्यासक्तान्स्वपितामहादीनिदानीमनुशोचति ॥ वराकाइति ॥ पेलवधियःक्षुद्रधियइतियावत् ॥६६॥ सरीसृपाःसर्पाइवभीमाभिराशाभिर्भीमाः ॥६७॥६८॥ ६९ ॥ यतोहंचिरभुक्तमन्नमिवजीर्णासंसारसंस्तृतिर्येनतथाविधःसन्अजोजातःअतोजयामिसर्वतोजेतव्यजयफलंसर्वानर्थनिवृत्तिप्राप्तोस्मि ॥ किंचप्राप्तानिप्राप्तव्यानिसर्वाणिसुखानियेनतथाविधःसन्जीवामिजीवितसाफल्यंप्राप्तोस्मि ॥ अतएवजयामिसर्वोत्कर्षेणवर्त्तेचेत्यर्थः ॥७०॥ ॥७१॥ वनदुर्गेदारुणि जलदुर्गेवारिगिरिदुर्गेचदृपदःमिन्वंतीतिमात्राःविपत्सुशरणंयत्रतथाविधेधरातलेभूतलेस्वामित्वाभिमानेनयोलुलितोलोलतांगतस्तंकुदानवलक्षणंकीटकम् ॥ कीटकेष्वपिदारुकीटकानांदारुभिर्दुर्गभूतैर्वारिकीटकानांवारिणादृपत्संधिगतवृश्चिकादिकीटकानांदृपद्भिश्चत्राणदर्शनात्स्वतःस्वत्राणशक्तेस्तुल्यत्वादित्यर्थः ॥ ७२ ॥

१ अत्रविभूतयइत्यपेक्षितंमतिभाति

कार्यकारणयोरभेदादविद्यैकात्मकैः ॥ द्रव्यैरन्नपानादिविषयैः ॥ गुरुणापित्रा ॥ ७३ ॥ जगत्त्रैलोक्यंतल्लक्षणांश्रीयुक्तांमठिकाम् ॥ उचितंकाश्यपेकुलेजन्मनोनुरूपंपरमपुरुपार्थम् ॥ ७४ ॥ अयमात्मैवानंदइदमानंदस्तम् इदंजडदुःखरूपमपिदेहेंद्रियविषयाद्यानंदयतिआनंदरूपतयानुभावयतीतिवाइदमानंदस्तम् ॥७५॥ एकसंप्राप्त्यैवविनैवविषयंसर्वविषयमुखप्राप्तिमाह ॥ नकिंचिदिति ॥ अखंडितंनिरंतरम ॥ ७६ ॥ त्यक्तासुलताफलभरानतद्राक्षादिवल्लीयेनतथाविधःसन् ॥ ७७ ॥ निंबपयःपिचुमंदपत्ररसम् ॥ ७८ ॥ रेमिरेयेइतिशेषः ॥ ७९ ॥ भोगेपुभोगायतनदेहादिपु ॥ ८० ॥ नकिंचिदपिसुखमितिशेषः ॥ राज्यमपिप्राप्येतिशेषः ॥ ८१ ॥ सर्वंसुखंतत्साधनंच ॥ ८२ ॥ तत्कुतस्तत्राह ॥

अविद्यैकात्मभिर्द्रव्यैरविद्यामयमंगकम् ॥ अन्नेनसंतर्पयताकिंनामगुरुणाकृतम् ॥ ७३ ॥ वर्षाणिकतिचित्प्राप्यजगच्छ्रीमठिकामिमाम् ॥ किंनामप्रापदुचितंहिरण्यकशिपुःकिल ॥७४॥ अनास्वाद्येदमानंदंजगद्राज्यशतान्यपि ॥ समास्वादयतानेहकिंचिदास्वादितंभवेत् ॥ ७५॥ नकिंचिद्येनसंप्राप्तंतेनेदंपरमामृतम् ॥ संप्राप्यांतःप्रपूर्णेनसर्वंप्राप्तमखंडितम् ॥७६॥ त्यक्त्वापदमिदंमूर्खोमितमेतिनपंडितः ॥ उष्ट्रोहित्यक्तसुलतःकंटकंयातिनेतरः ॥ ७७॥ परांदृष्टिमिमांत्यक्त्वादग्धराज्येरमेतकः ॥ कस्त्यक्त्वेक्षुरसंप्राज्ञःकटुनिंबपयःपिबेत् ॥ ७८ ॥ मूर्खाएवहितेसर्वेबभूवुर्मेपितामहाः ॥ इमांदृष्टिंपरित्यज्यरेमिरेराज्यसंकटे ॥७९॥ क्वफुल्लानंदनस्थल्यःक्वदग्धमरुभूमयः ॥ क्वेमाबोधदृशःशांताःक्वभोगेष्वात्मबुद्धयः ॥ ८० ॥ नकिंचिदपित्रैलोक्येयद्राज्यमपिवांछते ॥ सर्वमस्त्येवचित्तत्त्वेतत्कस्मान्नानुभूयते ॥ ८१ ॥ चितासर्वस्ययास्वस्थसमयानिर्विकारया ॥ सर्वंयासर्वदासर्वंसर्वतःसाधुलभ्यते ॥ ८२ ॥ भासिनीतैजसीशक्तिरमृतप्राप्तिरैंदवी ॥ ब्राह्मीमहत्तामहतीशाक्रीत्रैलोक्यराजता ॥८३॥ परमापूर्णताशार्वीजयलक्ष्मीश्चवैष्णवी ॥ मानसीशीघ्रगतितावलवत्ताचवायवी ॥८४॥ आग्नेयीदाहकलनापायसीरसनिर्वृतिः ॥ मौनीमहातपःसिद्धिर्विद्यावार्हस्पतीतथा ॥८५॥ वैमानिकीव्योमगतिःस्थिरताचापिपार्वती ॥ गंभीरताथसामुद्रीमैरवीचमहोन्नतिः ॥८६॥ शमश्रीःसौगतीसौम्यामाविरीमदलोलता ॥ माधवीपुष्पमयतावापिकीघनशब्दिता ॥८७॥

भासिनीत्यादिना ॥ यतःभासिन्यादयस्तत्तत्सुखनिमित्ताविचित्राःशक्तयःपरयाचिताक्रियंतेइत्यष्टमेनान्वयः ॥ ब्राह्मीहिरण्यगर्भी ॥ महत्तामान्यता ॥ महतीसर्वोत्कृष्टा ॥८३॥ शर्वःशिवस्तत्संबंधिनीपरमापूर्णतानिरतिशयज्ञानैश्वर्यानंदशक्तिसंपूर्णता ॥ ८४ ॥ पायसीजलसंबंधिनीरसनिर्वृत्तिराप्यायकता ॥ मौनीभृग्वादिमुनिसंबंधिनी ॥ विद्यावाक्पतिता ॥ ८५ ॥ ८६ ॥ सौगतीसुगतराद्धांतसिद्धाशमश्रीःशून्यतालक्षणासर्वोपप्लवशांतिः ॥ अथवाशोभनागतिःसुगतिर्ब्रह्मसाक्षात्कारस्तत्संबंधिनीशमश्रीःसर्वानर्थनिर्वापणशक्तिः ॥ ८७ ॥

१ शारदाघनसस्येतिक्वचित्पाठः

मायामयतामायाप्रचुरता ॥ निष्कलंकतानिर्लेपता ॥ ८८ ॥ त्रिकालोदरसंस्थिताअतीताअनागतावर्त्तमानाश्चेत्यर्थः ॥ ८९ ॥ स्वस्थयास्वभावादप्रच्युतयाअतएवसमाय एकरूपया निर्विकारयावास्तवविकारशून्ययाचिता कलाकलनंतत्तच्छक्तिकार्यानुसंधानंतद्युक्तया ॥ ९० ॥ ननुविचित्राणामर्थानांविचित्रप्रथादर्शनात्कथंचितःसमतात त्राह ॥ विकल्पेति ॥ सर्वासर्ववृत्तिप्रविष्टापिचित्तवृत्तिगतैर्विकल्पवैचित्र्यैर्लिप्यते यथाप्राभाकरीप्रभानवृत्तिकृतैःस्थाणुपुरुषादिविकल्पैस्तद्वदित्यर्थः ॥ ९१ ॥ दिक्कालभेदप्र युक्तमपिवैषम्यमस्यानास्तीत्याह ॥ सर्वाशेति ॥ महींवह्नीम् ॥ अनुभवतिप्रकाशयतिसौरीप्रभायथातथाचिदपिचेततिप्रथयतीतिपरेणान्वयः ॥ ९२ ॥ ९३ ॥ देशकालभेदा

याश्चीचमायामयतानाभसीनिष्कलंकता ॥ शीततापिचतौषारीनैदाघीतापतप्तता ॥ ८८ ॥ एताश्चान्यास्तथाबह्व्योदेशकालक्रियात्मि काः ॥ नानाकारविकारोत्थास्त्रिकालोदरसंस्थिताः ॥ ८९ ॥ विचित्राःशक्तयःस्वस्थसमयानिर्विकारया ॥ चिताक्रियंतेपरयाकलाकल नयुक्तया ॥ ९० ॥ विकल्पहीनाचित्सर्वापदार्थशतवृष्टिषु ॥ सममेवाभिपततिप्रभाप्राभाकरीयथा ॥ ९१ ॥ सर्वाशाकोशविश्रांतांपदा र्थपटलींमहीम् ॥ कालत्रयेहाकलितांयथानुभवतिक्षणात् ॥ ९२ ॥ तथासमस्तसंसारबृहद्दृश्यदशाश्रियम् ॥ कालत्रयस्थाममलाचि च्चेततितदात्मिका ॥ ९३ ॥ तुल्यकालपरामृष्टात्रिकालकलनाशता ॥ अनंतभुवनाभोगापरिपूर्णैवशुद्धचित् ॥ ९४ ॥ परामृष्टत्रिकाला याहृष्टानंतदृशश्रितः ॥ समतापरपर्यायापूर्णतैवावशिष्यते ॥ ९५ ॥ तुल्यकालावबुद्धेनस्वादुनाकटुनापिचित् ॥ समेनसमतामेतिम धुर्निंवानुभूतिवत् ॥ ९६ ॥ त्यक्तसंकल्पकलयासूक्ष्मयाचिद्व्यवस्थया ॥ सर्वभावानुगतयासत्ताद्वैतैकरूपया ॥ ९७ ॥ विचित्रापिपदार्थ श्रीरन्योन्यवलितांतरा ॥ तुल्यकालानुभवनासाम्येनैवानुभूयते ॥ ९८ ॥

श्चस्वामदेशकालैर्दैर्घ्यैइवाभिन्नकालयैवचिताभास्यंतइत्याह ॥ तुल्यकालेति ॥ तुल्यशब्दोऽभिन्नपरः ॥ तथाचपरिपूर्णाअखंडैवशुद्धचिदभिन्नकालपरामृष्टैवसतीअतीतादि त्रिकालकलनाशतभिन्नेवप्रत्यक्षानुमित्युपमित्याद्यनंतमानमेयपुरुषभेदभिन्नाभोगेवचभातीत्यर्थः ॥ ९४ ॥ अतएवकालभेदेवृत्तिभेदेपिचंतत्साक्षिण्याश्रितोनभेदइतिपूर्ण तैवेत्याह ॥ परामृष्टेति ॥ ९५ ॥ अतएवमधुरद्वयस्यतिक्तद्वयस्यवायुगपदास्वादेविषयभेदेपिनानुभूतिभेदइतिविषयादिभेदोनचिद्भेदप्रयोजकइत्याह ॥ तुल्यकालेति ॥ समे नतुल्यरसेनस्वादुनामधुरद्वयेन ॥ तत्रमधुर्निंबाद्यैकैकानुभूतिवदितिचिदभेदेदृष्टांतः ॥ ९६ ॥ घटपटादिविचित्रापदार्थश्रीरपित्यक्तपरस्परव्यावर्त्तकभेदसंकल्पकलयासूक्ष्म यासत्ताद्वैतैकरूपया चिद्व्यवस्थयातुल्यकालमनुभूयमानासाम्येनैवानुभूयतेनभेदवैषम्येणेतिनविषयादिभेदश्चिद्भेदकइतिद्वयोरर्थः ॥ ९७ ॥ ९८ ॥

भेदसंकल्पकलात्यागेऽुपायमाह ॥ भावेनेति ॥ भावेनचित्तेनवाचारंभणश्रुत्यानेतिनेत्यादिश्रुत्याआचार्योपदेशस्वविचारादिनाचदृश्यजातस्याभावमाश्रित्यसचित्तरूपोभा वोदुःखनांशोकमोहादिपरिणामंसद्यस्त्यजति ॥ तथापिरागादिसंस्कारदुष्टतयाकालांतरेपुनःशोकाद्युद्भवःस्यादतःसर्वदृश्यप्रतिषेधलक्षणेनाभावेनभावंपरमार्थसदद्वैतानंदस्व भावमात्मानंप्रेक्ष्यसचित्तलक्षणोभावोरागादिदुष्टतामपिजहाति ॥ रसोप्यस्यपरंदृष्ट्वानिवर्त्ततइतिभगवद्वचनात् ॥ अतोबीजाभावाद्भेदसंकल्पकलात्यागःसिद्धइत्यर्थः ॥ ९९॥ उक्तमर्थंभंग्यंतरेणोपपादयति ॥ कालत्रयमिति॥ वर्त्तमानंचेत्यंदृश्यंउपेक्षिण्याअतीतचेत्यवासनाबंधनैर्हीनायाश्चेत्याधारंकालत्रयमप्यपश्यंत्याश्चितोनभाव्यपिचेत्ययोगःसं भाव्यतइतिसमंतैवपरिशिष्यतइत्यर्थः ॥ १०० ॥ उपयातेवेति ॥ वस्तुतस्तुनोपयातायतस्तिष्ठतिसनोऽसत्वायोगादितिभावः ॥१०१॥ यस्तिष्ठतिसशास्त्रीयव्यवहारेप्रत्यक्त्वादा

भावेनाभावमाश्रित्यभावस्त्यजतिदुःखताम्॥ प्रेक्ष्यभावमभावेनभावस्त्यजतिदुष्टताम्॥ ९९ ॥ कालत्रयमपश्यंत्याहीनायाश्चेत्यवं धनैः॥ चितश्चेत्यमुपेक्षिण्याःसमंतैवावशिष्यते॥ १०० ॥ यातिवाचामगम्यत्वादसत्तामिवशाश्वतीम्॥ नैरात्म्यसिद्धांतदशामुपया तेवतिष्ठति॥ १०१ ॥ भवत्यात्मातथाब्रह्मनकिंचिच्चाखिलंचवा॥ परमोपशमेऽलीनामोक्षनाम्नापरोच्यते॥ १०२॥ संकल्पकलितात्वे पामंदाभासतयाजगत्॥ नसम्यक्पश्यतीदंचिद्दृष्टिःपटलिनीयथा ॥ १०३॥ ईहानीहामयैरंतर्याचिदावलितामलैः॥ साहिनोड्डयितुंश क्तापाशबद्धेवपक्षिणी॥ १०४॥ संकल्पकलनेनैवयेकेचनजनाइमे॥ पतितामोहजालेपुविनेत्राइवपक्षिणः॥ १०५॥ संकल्पजालव लितैर्विषयावटपातिभिः॥ पदवीगतवाधेयंनदृष्टामत्पितामहैः ॥ १०६॥ दिनैःकतिपयैरेवस्फुरिताधरणीतले॥ वराकास्तेनतेनष्टामश काःकुहरेष्विव॥ १०७॥ यद्यज्ञास्यन्निमेतत्त्वंभोगदुःखार्थिनस्तदा॥भावाभावांधकूपेपुनापतिष्यन्हताशयाः॥१०८॥ इच्छाद्वेपसमुत्थे नद्वंद्वमोहेनजंतवः॥ धराविवरमग्नानांकीटानांसमतांगताः॥ १०९ ॥

त्वाभवतितथाबृहत्त्वाद्ब्रह्मभवति ॥ परमार्थदशातुवाचांप्रवृत्त्यभावान्नकिंचित् ॥ यदिचप्रवृत्तिनिमित्तकल्पनयाशब्दप्रवृत्तिरुच्येततदासंकोचकारणाभावात्सर्वप्रवृत्तिनिमित्त कल्पनादखिलंच॥यतोवाचोनिवर्त्ततेअप्राप्यमनसासह तस्मात्तत्सर्वमभवदितिचश्रुतौद्वेधापिनिरूपणादितिभावः ॥सर्वदृश्यानांपरमोपशमेसतितदवधित्वादलीनापरासमतामो क्षनाम्नोच्यतइत्यर्थः ॥ १०२ ॥ इत्थंभेदसंकल्पकलनात्यागःसोपायोवर्णितः इदानींसंकल्पकलनेचितोमोक्षप्रसरक्रममाह ॥ संकल्पेइत्यादिना ॥ जगत्सम्यक्पारमार्थिक रूपेणनपश्यति ॥ पटलिनीपटलावरणवती ॥ १०३ ॥ ईहानीहामयैरिष्टानिष्टसंकल्पनरूपैर्मलैः ॥ उड्डयितुंसर्वनभोव्याप्तुंनभसागंतुंच ॥ १०४ ॥ १०५ ॥ इयंगतबाधानि दुःखाअपरिच्छिन्नात्मपदवीनदृष्टा ॥ १०६ ॥ तेनआत्मपदव्यदर्शनेन ॥ तेमत्पितामहाः ॥ १०७ ॥ हताशयादुर्बुद्धयः ॥ इमेमत्पितामहायदिआत्मतत्त्वमज्ञास्यंस्तदानापति ष्यन् ॥ हेतुहेतुमत्त्वेलिङ्निमित्तेक्रियातिपत्तौलृङ् ॥ १०८ ॥ द्वंद्वमोहेनसुखदुःखशीतोष्णाद्यर्जनप्रतीकाराभिनिवेशेन ॥ १०९ ॥

सत्यावबोधमेघेनद्वंद्वतापोपशांत्याशांताः॥ सजीवतिसार्थकजीवनइतियावत् ॥११०॥ सत्यावबोधमात्रेणकथंतच्छांतिरितिचेदसत्त्वादेवेत्याह ॥ कुतइति ॥ कोष्णामंदोष्णाः॥ कलंकाःश्यामिकाः ॥ १११ ॥ इदानीमखंडवाक्यार्थंसाक्षात्कृत्यतद्भावेवस्थितमात्मानमतिदुर्लभमधिगतंप्रणयान्नमस्यति ॥ आत्मनेइति ॥ लोकस्यालोकोज्ञानप्रकाशस्तन्निमित्तभूतमणे ॥ चिरेणेति ॥ तथाचोक्तंस्वाराज्यसिद्धौ ॥ अपिभूपरमाणुभूरिसंख्येष्वपयातेपुचतुर्मुखेष्वलब्धात् ॥ अपदुःखनिरंतसौख्यसिंधोर्नचलाभोस्तिपरोनिजात्मलाभादिति ॥११२॥ प्रोदितःस्वीयपरमार्थरूपेणाभिव्यक्तः ॥११३॥ प्रथमेमह्यंतुभ्यमितिपदेपरस्परविशेषणेनशोधनार्थे ॥ अतएवानंताय ॥ द्वितीयेतुअखंडैकरसतालक्षणःवाक्यार्थलाभार्थे ॥ अतएवशिवात्मनेदेवानांब्रह्मादीनांसर्वेंद्रियप्राणमनसांचाधिदेवायअधिष्ठायप्रकाशकाय ॥११४॥ गतघनंनिरस्तमेघावरणंपरिपूर्णमिंदुबिंबमिवेतिशेषः॥

ईहितानीहिताकाराःकलनामृगतृष्णिकाः॥ सत्यावबोधमेघेनयस्यशांताःसजीवति ॥ ११० ॥ कुतःकिलास्याःशुद्धायाअविच्छिन्नामलाकृतेः॥ चंद्रिकायारुचःकोष्णाःकलंकाःकलनाश्रिताः॥ १११ ॥ आत्मनेस्तुनमोमह्यमविच्छिन्नचिदात्मने ॥ लोकालोकमणेदेवचिरेणाधिगतोस्यहो॥ ११२ ॥ परामृष्टोसिलब्धोसिप्रोदितोसिचिरायच॥ उद्धृतोसिविकल्पेभ्योयोसिसोसिनमोस्तुते ॥ ११३ ॥ मह्यंतुभ्यमनंतायमह्यंतुभ्यंशिवात्मने॥ नमोदेवाधिदेवायपरायपरमात्मने॥ ११४॥ गतघनपरिपूर्णमिंदुबिंबंगतकलनावरणंस्वमेवरूपम्॥ स्ववपुषिमुदितेस्वयंस्वसंस्थंस्वयमुदितंस्ववशंस्वयंनमामि ॥ ११५ ॥ ॥इ०वा०वा०दे०मोक्षोपायेपूपशमप्रकरणेप्रह्लादात्मोपदेशयोगोनामचतुस्त्रिंशःसर्गः॥ ३४ ॥ ॥ ७ ॥ ॥प्रह्लादउवाच॥ ॥ ओमित्येकोचिताकारोविकारपरिवर्जितः॥ आत्मैवायमिदंसर्वंयत्किंचिज्जगतीगतम्॥ १ ॥ मेदोस्थिमांसमज्जासृग्गर्तातोप्येषचेतनः॥ अंतरस्थोहिसूर्यादीन्प्रकाशयतिदीपकः॥ २ ॥

स्ववपुषिस्वात्मनिमुदितेआनंदैकरसेस्वयमनन्याधारतयास्वेनपारमार्थिकरूपेणसंस्थंविश्रांतंनिराधारमितियावत् ॥ स्वयमुदितंस्वप्रकाशंस्ववशंस्वाधीनस्वानंदंस्वयमनन्योहंनमामिसर्वोत्कर्षेणानुसंदधेइत्यर्थः ॥ ११५॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेचतुस्त्रिंशःसर्गः ॥ ३४ ॥ ॥ ७ ॥ ॥ साक्षात्कृतमिहात्मानंनिर्वर्ण्यातःप्रणम्यच ॥ तद्बलेनजितान्बंधाननुसंधायनंदति ॥१ ॥ ओमिति ॥ ओमितिब्रह्म ओमितीदंसर्वं एतद्वैसत्यकामपरंचापरंचब्रह्मयदोंकारइत्यादिश्रुतेःसर्वाध्यारोपवद्ब्रह्मबोधकःसर्वापवादपरिशिष्टतद्बोधकश्चओमित्येकएवउचितःस्वानुरूपःअभिधानाकारोयस्य ॥ जगतीजगततद्गतंयत्किंचित्तत्सर्वमयमनुभूयमानआत्मैव ॥१ ॥ देहमात्रांतर्गतोयंकथंबाह्यंसूर्यादिसर्वमिदंस्यादितिचेत्तत्प्रकाशकत्वादित्याह ॥ मेदइति ॥ नायंमेदोस्थ्याद्यात्मकदेहपरिमितःकिंतुतद्गतोपि ॥ यतस्सूर्याद्यंतरस्थः ॥ २ ॥

कथंतत्प्रकाश्यत्वमात्रेणसर्वंतदात्मकंतत्राह॥उष्णीकरोतीति ॥ यतोदहनादेरुष्णादिस्वभावंताचिदधीनोष्णताभानाधीनाअतश्चिदात्मैवस्वसत्तयादहनमुष्णीकरोति ॥ एवंरसंज लंस्वसत्तयैवामृतंलब्धसत्ताकंरसयतिरसतयाविभावयति ॥ एवमन्यानपिइंद्रियानुभवान्स्पर्शादिस्वभावानर्थान्स्वसत्तयैवसंपाद्यभुंक्ते ॥ ३ ॥ तिष्ठन्सदानिष्क्रियोपिनआसी नउपविष्टइवधावनादिव्यवहारादुपरतः ॥ वाय्वादित्याद्यात्मनासदागतित्वात् ॥ तथाकालात्मनासदागच्छन्नपिकुलालचक्रमिवनतिलमात्रमन्यतोगच्छति ॥ शांतोनिर्व्यवहा रोपिसर्वव्यवहारस्थः ॥ ४ ॥ ननुपूर्वकृतेनाद्यसुखदुःखाभ्यांलिप्यते इदानीमिहकृतेनाग्रेऽमुत्रलप्स्यतेतत्कथंकुर्वन्नपिनलिप्यतइत्युच्यतेतत्राह ॥ पूर्वमिति ॥ इहास्मिन्लोके अमुत्रपरलोके उभयत्रइहलोकसंधिभूतेस्वप्नस्थानेचविहितःशास्त्रानिषिद्धशुभकर्मफलभुक् अविहितःशास्त्रनिषिद्धाशुभकर्मफलभुगपिसन्सर्वासुभोगवृत्तिषुसमएव ॥ दृश्यै र्भोगैर्दृशोविकारासिद्धेरित्यर्थः ॥ ५॥ भोक्तस्पर्शिभिर्भोगैःकथंकर्मणांसाफल्यंतत्राह ॥ उद्भवतीति ॥ वस्तुतोऽभयएवात्मातत्तत्कर्मानुरूपंस्वयमुद्भवतिउद्भूतंचब्रह्मादितृणपर्यंतं

उष्णीकरोतिदहनंरसयत्यमृतंरसम्॥ इंद्रियानुभवान्भुंक्तेभोगानिवमहीपतिः॥३॥ तिष्ठन्नपिहिनासीनोगच्छन्नपिनगच्छति॥शांतोपि व्यवहारस्थःकुर्वन्नपिनलिप्यते॥ ४॥ पूर्वमद्यतथेदानीमिहामुत्रोभयत्रच॥ विहितोऽविहितोप्येपसमःसर्वासुवृत्तिषु॥५॥ उद्भवत्यभ योभावंभुवनानिततस्ततः॥ ब्रह्मादितृणपर्यंतंजगदावर्त्तयन्स्थितः ॥ ६॥ नित्यस्पंदमयोनित्यमपिदेवात्सदागतेः॥ स्याणोरप्यक्रियो नित्यमाकाशादप्यलेपकः॥ ७॥ मनांसिक्षोभयत्येषपल्लवानीवमारुतः॥ वाहयत्यक्षपंक्तिस्वामश्वालीमिवसारथिः॥ ८॥ अतिदुर्वि धवद्देहगेहेकर्मरतःसदा॥ सद्याडिवात्मनिस्वस्थःसंस्थितोभोगभुग्विभुः ॥ ९॥ एषएवसदाऽन्विष्यःस्तुत्योध्यातव्यएवतु॥ जरामरणसं मोहादनेनोत्तीर्यगम्यते॥ १०॥ सुलभश्चायमत्यंतंसुजेयश्चाप्तबंधुवत्॥ शरीरपद्मकुहरेसर्वेपामेवपट्पदः॥११॥ अनाकृष्टोप्यनाहूतः स्वदेहादेवलभ्यते॥ मनागेवोपहूतोपिक्षणाद्भवतिसन्मुखः॥ १२ ॥ नास्यसंसेव्यमानस्यसर्वसंपत्तिशालिनः॥ धनानामीश्वरस्येवस्म योगर्वोयथाभवेत्॥ १३॥ आमोदइवपुष्पेषुतैलंतिलकणेष्विव॥ रसजातिष्विवास्वादोदेवोदेहपुसंस्थितः ॥१४॥

भोक्तृभोग्यभावंतदधिकरणानिचतुर्दशभुवनानिचेतिजगत्स्वसन्निधिमात्रेणावर्त्तयन्स्थितस्तदेवास्यकर्मफलमित्यर्थः ॥ ६ ॥ नन्वस्पंदःकथमावर्त्तयेत्तत्राह ॥ नित्येति ॥ नि त्यालसत्तायाएवस्पंदसत्तात्वान्नित्यंस्पंदमयोनित्यमक्रियोनित्यमलेपकश्च ॥ ७ ॥ ननुमनइंद्रियाणिवादेहादिप्रवर्त्तयंतिनात्मातत्राह ॥ मनांसीति ॥ अक्षपंक्तिमिंद्रियपंक्ति म् ॥ ८ ॥ अत्यंतादुर्विधादुर्दशायस्यतद्वत ॥ इवशब्दोदुर्विधायामिथ्यात्वद्योतनार्थःपूर्वविरुद्धदशास्वपियोज्यः ॥ ९ ॥ अनेनअन्विष्टेनेतिशेपः ॥ १० ॥ सुलभोज्ञानमात्रेण लब्धुंशक्यः ॥ सुजेयःस्मृतिमात्रेणवशीकर्त्तुंयोग्यः ॥ ११ ॥ दूरस्थस्यमित्रादेराकृश्याह्वानाद्वाभः ईपद्दूरस्थस्यत्वाह्वानमात्रादस्यतुलाभेनतदुभयापेक्षेतिभावः ॥ उपहूतःप्रण वोच्चारणेनानुस्मृतः ॥ १२ ॥ धनानामीश्वरस्यधनिकस्ययथास्मयोमानोगर्वःपरावहेलनासंभाव्यतेतथास्यनेत्यर्थः ॥ १३ ॥ कथमयंदेहेस्तितदाह ॥ आमोदइति ॥ आस्वा दोमाधुर्यम् ॥ १४ ॥

चिरंप्रागदृष्टःसंप्रत्ययत्नतोदृष्टोबंधुःपित्रादिरिव ॥ १५ ॥ १६ ॥ भंगोमरणादिर्विच्छेदः ॥ १७ ॥ पाशाःस्नेहादयः ॥ शत्रवःकामादयः ॥ आशास्तृष्णाः ॥ १८ ॥ तदेकविज्ञानेनसर्वविज्ञानमाह ॥ अस्मिन्निति ॥ स्थितेस्मिन्नितितत्सत्ताधीनसत्ताकंजगदित्यर्थः ॥ १९ ॥ एषसुप्तेषुजागर्तिकामंकामंपुरुषोनिर्मिमाणइतिश्रुतिमालंब्याह॥एषइति ॥ अमहात्मनांपरिच्छिन्नात्मकेश्वरोपासकानाम् ॥ आर्त्तानामापदंहरतिवितरतिवांछितमितिशेषः ॥ २० ॥ जगत्स्थितौएषआत्माजीवएवभूत्वाविचरति भोगेषुविलसति वस्त्रालंकारसमाजोत्सवादिवस्तुषुस्फुरतिशोभते ॥ २१ ॥ असाधारणजीवभेदभ्रमदशायामप्यस्यनसाधारणैकात्म्यस्फूर्त्तिक्षतिरित्याह ॥ आत्मनेति ॥ २२ ॥ पूर्वोत्तरानुसंधानंचेतना वर्त्तमानदर्शनंकलना तद्रूपीसवाह्येष्वाभ्यंतरेषुचेतनोपाधिषुआश्रितः जगत्पदार्थानांसंभारेतुअधिष्ठानसत्तासामान्यमात्रस्वभावंसर्वानुगतमास्थितः ॥ २३ ॥ २४ ॥ २५ ॥ तथादेहपतिरात्मादेहंप्रकाशतइत्यर्थः ॥ २६ ॥ प्रकाशतामेवमनइंद्रियादिव्यावृत्तांसर्वक्षेत्रसाधारणींदृष्टांतैर्दर्शयति ॥ यथेतिद्वाभ्याम् ॥ २७ ॥ यथैतेदृष्टांतास्तथारूपालोकश्चक्षुरादिव्यापारैर्मनस्कारैर्मानसव्यापारैश्चयुक्तंयद्बाह्याभ्यंतरप्रकाशनंतदात्मनःकृत्यमितिप्रकाशैकस्वभावःसइत्यर्थः ॥ एवमधिदैवंसर्वदेवानांसूर्यैंद्रचंद्रादीनामपिबोधकोऽयंप्रसिद्धोमहादेवःअहमेवास्मीतिपरेणान्वयः ॥ २८ ॥ अणुनासूक्ष्मतमेनरेणुना ॥ २९ ॥ संभ्रमेणभयकंपादिना ॥ ३० ॥

अविचारवशादेषहृदयस्थोपिचेतनः ॥ नज्ञायतेचिरादृष्टोहृष्टवंधुरिवाग्रतः ॥ १५ ॥ विचारणापरिज्ञातएतस्मिन्परमेश्वरे ॥ अभ्युदेतिपरानंदोलब्ध्येप्रियजनेयथा ॥ १६ ॥ अस्मिन्दृष्टेपरेवंधावुद्दामानंददायिनि ॥ आयांतिदृष्टयस्तास्तायाभिर्भंगोविलीयते ॥ १७ ॥ त्रुट्यंतेसर्वतःपाशाःक्षीयंतेसर्वशत्रवः ॥ नकृंतंतिमनांस्याशागृहाणीवद्रुराखवः ॥ १८ ॥ अस्मिन्दृष्टेजगद्दृष्टंश्रुतेस्मिन्सकलंश्रुतम् ॥ स्पृष्टेचास्मिञ्जगत्स्पृष्टंस्थितेस्मिन्संस्थितंजगत् ॥ १९ ॥ एषजागर्त्तिसुप्तानांप्रहरत्यविवेकिनाम् ॥ हरत्यापदमार्त्तानांवितरत्यमहात्मनाम् ॥ २० ॥ विचरत्येषलोकेषुजीवएवजगत्स्थितौ ॥ विलसत्येवभोगेषुप्रस्फुरत्येववस्तुषु ॥ २१ ॥ आत्मनात्मानमेवातःशांतेनानुभवन्भवी ॥ स्थितःसर्वेषुदेहेषुतीक्ष्णत्वंमरिचेष्विव ॥ २२ ॥ चेतनाकलनारूपीसवाह्याभ्यंतराश्रितः ॥ जगत्पदार्थसंभारेसत्तासामान्यमास्थितः ॥ २३ ॥ एषशून्यत्वमाकाशेस्पंदएषसदागतौ ॥ प्रकाशश्चैवतेजस्तुपयस्स्वेषरसःपरः ॥ २४ ॥ काठिन्यमवनावेवमौष्ण्यमेवहुताशने ॥ शैत्यमेषनिशानाथेसत्ताचैषजगद्गणे ॥ २५ ॥ मषीपिंडेयथाकार्ष्ण्यंशैत्यंहिमकणेयथा ॥ यथापुष्पेषुसौगंध्यंदेहेदेहपतिस्तथा ॥ २६ ॥ यथासर्वगतासत्ताकालःसर्वगतोयथा ॥ प्रभुशक्तिर्महीयस्यसर्वदेशगतायथा ॥ २७ ॥ रूपालोकमनस्कारयुक्तंसत्वंतथात्मनः ॥ नित्यःसोयंमहादेवोदेवानामेवबोधकः ॥ २८ ॥ अहमेवास्मिमेनास्तिकलनापिकिलेतरा ॥ रेणुनेवाणुनाव्योम्निपद्मपत्रमिवांभसा ॥ २९ ॥ संभ्रमेणेवपाषाणेसंबंधोमयिनेतरैः ॥ सुखदुःखश्रियोदेहमापतंतुपतंतुवा ॥ ३० ॥

तुंबकः अलाबूः ॥ इवार्थेचकारः ॥ जलधाराइवेत्यर्थः ॥ नःअस्माकंतुंबकाकाशकल्पानामितिभावः ॥ दीपांगानितैलवर्त्तिपात्राण्यतिक्रम्यनिर्गतोदीपालोकोयथारज्ज्वानब
ध्यते ॥ ३१ ॥ ३२ ॥ संबाध्यतेअभिहन्यते ॥ अमूर्त्तत्वादितिभावः ॥ ३३ ॥ कपालशोभग्ने छिद्रीभावेनक्षते मृदपचयेनक्षीणे ॥ ३४ ॥ बोधान्मनोव्यतिरिक्तात्मदर्शनात्
यस्यसुखदुःखमयीवासनातत्तादृशंमनःपूर्वमभूत्तादृशायामभवन्नेदानीमस्तीत्यर्थः ॥ ३५ ॥ अतनुरपरिच्छिन्नानिर्वृतिःसुखविश्रांतिः ॥ ३६ ॥ एषांभोक्त्रादीनामैक्याध्यास
लक्षणंमौर्ख्यंकस्यैंद्रजालिकस्यचक्रिकाचक्रवत्परिवर्त्तनचातुरीत्यर्थः ॥ भोक्त्रादिभेदंदर्शयति ॥ भुंक्तइति ॥ ३७ ॥ प्रकृत्यादिदुष्टःदोषारोपितआत्मा ॥ विमर्शेनकिंचिन्मौ

तुंबकोपरिधाराश्चकानःक्षतिरुपस्थिता॥ दीपांगातिगतोरज्ज्वानालोकोबध्यतेयथा॥ ३१ ॥ तथानायमहंबद्धःसर्वभावगणातिगः॥
संबंधःकोस्तुनःकामैर्भावाभावैरथेंद्रियैः॥ ३२ ॥ केनसंबध्यतेव्योमकेनसंबाध्यतेमनः॥ शरीरेशतधायातेखंडनाकाशरीरिणः॥ ३३॥
कुंभेभग्नेक्षतेक्षीणेकुंभाकाशस्यकाक्षतिः ॥ पिशाचकइवादृश्योमनोनामोदितंमुधा॥ ३४॥ जडेतस्मिन्क्षतेबोधात्कानःक्षतिरुपस्थि
ता॥ सुखदुःखमयीयस्यवासनातन्मनोमम॥ ३५॥ अभवत्पूर्वमद्यैकासंपन्नाऽतनुनिर्वृतिः॥ अन्योभुंक्तेन्यआदत्तेप्यन्यस्यानर्थसं
कटः॥ ३६॥ अन्यःपश्यत्यहोमौर्ख्यंकस्येयंखलुचक्रिका॥ भुंक्तेप्रकृतिरादत्तेमनोदेहस्यसंकटः॥ ३७॥ दुष्टात्मामौर्ख्यमस्तीहनकिंचि
त्केवलंक्षतिः॥ नमेभोगस्थितौवांछानचभोगविवर्जने॥ ३८॥ यदायातितदायातुयत्प्रयातिप्रयातुतत्॥ सुखेषुममनापेक्षानोपेक्षा
दुःखवृत्तिषु॥ ३९ ॥ सुखदुःखान्युपायांतुयांतुवाप्यहमेषुकः॥ वासनाविविधादेहेत्वस्तंचोदयमेववा॥ ४०॥ प्रयांतुनाहमेतासुन
चैताममकाश्चन॥ एतावंतमहंकालमज्ञानरिपुणाहतः॥ ४१॥ हृत्वाविवेकसर्वस्वमेकांतमवपोथितम्॥ वैष्णवेनप्रसादेनस्वसमुत्थे
नचारुणा॥ ४२॥ इदानींसंपरिज्ञायमयैषपरिमोषितः॥ अहंकारपिशाचोयंशरीरतरुकोटरात्॥ ४३॥ परावबोधमंत्रेणमयेदानीमपाकृ
तः॥ निरहंकारयक्षोयंमच्छरीरमहाद्रुमः॥ ४४॥ पुण्यतामलमायातःप्रफुल्लइवराजते॥ प्रशांतमोहदारिद्र्योदुराशादोषसंक्षये॥ ४५॥
विवेकधनसंभारान्स्थितोस्मिपरमेश्वरः॥ ज्ञातंज्ञातव्यमखिलंदृष्टाद्रष्टव्यदृष्टयः॥ ४६॥ तत्प्राप्तमधुनायेननाप्राप्तमवशिष्यते॥ दिष्ट्यादू
रोज्झितानर्थामपेतविषयोरगाम्॥ ४७॥ संशांतमोहनीहारांशांताशामृगतृष्णिकाम्॥ रजोरहितसर्वाशांशीतलोपशमद्रुमाम्॥ ४८॥

र्ख्यमस्तितेनाक्षतिरित्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ एतावासनाः ॥ ४१ ॥ अज्ञानरिपुणावपोथितंहिंसितम् ॥ अवबोधितमितिपाठेअविवेकसर्वस्वमितिच्छेदः ॥ वैष्णवेनप्रसा
देनानुग्रहेणमेअविवेकसर्वस्वंहृत्वाएकांतंनियतैकस्वभावंब्रह्मअवबोधितम ॥ ४२ ॥ परिमोषितोपहारितः ॥ ४३ ॥ इदानींमच्छरीरमहाद्रुमोनिर्गतोहंकारयक्षोयस्मात्तथावि
धःसन्पुण्यतामायातः ॥ ४४ ॥ ४५ ॥ विवेकधनसंभारान्प्राप्येतिशेषः ॥ ४६ ॥ ४७ ॥ ४८ ॥

१ कंटकइत्यपिपाठःएवमुत्तरश्लोकेपि॥संकटइतिपाठेसंकटःक्लेशः

विष्णोःस्तुत्याप्रणत्याविज्ञस्याप्रार्थनयाचवरमुखेनलब्धः ॥ ४९ ॥ ५० ॥ विष्णोःप्रसादाद्ब्रह्मआत्मासंस्मृतिमागतइतिपूर्वेणान्वयः ॥ इंद्रियेत्यादेरहंसमवमोपितइतिचतुर्थेनान्वयः ॥ इंद्रियाण्येवोरगगर्त्ताःसर्पविलानियेषु ॥ एवमुत्तरत्रापिवहुव्रीहयः ॥ ५१ ॥ वासनावनजालेष्वितिसर्वसप्तम्यंतानांविशेष्यम् ॥ ५२ ॥ दुःखान्येवदावाग्निदाहोयत्र ॥ दुःखाःदावाग्नयइवहारिणःपरधनप्राणापहारिणश्चोरायत्र ॥ पातोत्पातसदृशैर्विपत्संपद्दशालक्षैः ॥ मज्जनप्रायैरधोगतिभिरुन्मज्जनप्रायैःसद्गतिभिः ॥ ५३ ॥ अहंचिरमहंकारलक्षणेनद्विपासम्यगवमोषितःआत्मप्रमोपेणपीडितः ॥ ५४ ॥ शौरिणाव्यपदेशेनप्रसन्नविष्णुव्याजेनस्वयंस्त्वैनैवविवेकश्रीःप्रवोधिताउद्दीपिता ॥ तयाविवेकश्रियाई

प्राप्तोस्मिविततांभूमिमुन्नतांपारमार्थिकीम् ॥ स्तुत्याप्रणत्याविज्ञस्याशमेननियमेनच ॥ ४९ ॥ लब्धोयंभगवानात्मादृष्टश्चाधिगतःस्फुटम् ॥ अहंकारपदातीतश्चिरात्संस्मृतिमागतः ॥५०॥ स्वभावाद्भगवानात्माविष्णोर्ब्रह्मसनातनम् ॥ इंद्रियोरगगर्त्तेषुमरणश्वभ्रभूमिषु ॥ ५१ ॥ तृष्णाकरंजकुंजेषुकामकोलाहलेषुच ॥ वासनावनजालेषुजन्मकूपांतरेषुच ॥ ५२ ॥ दुःखदावाग्निदाहेषुदुःखदावाग्निहारिषु ॥ पातोत्पातदशालक्षैर्मज्जनोन्मज्जनभ्रमैः ॥ ५३ ॥ आविर्भावतिरोभावैराशापाशविचेष्टनैः ॥ अहंचिरमहंकारद्विपासम्नवमोषितः ॥ ५४ ॥ निशायामल्पवीर्यात्मापिशाचेनेवजंगले ॥ स्वयमेवत्वयेदानींक्रियाशक्त्यास्वयैवहि ॥ ५५॥ शौरिणाव्यपदेशेनविवेकश्रीर्विवोधिता ॥ प्रवुद्धेभवतीशानेतमहंकारराक्षसम् ॥ ५६ ॥ नपश्यामिनभोदीपेज्वलितेतिमिरंयथा ॥ तस्याहंकारयक्षस्यमनोविवरवासिनः ॥ ५७ ॥ दीपस्येवप्रशांतस्यनवेद्मिगतिमीश्वरः ॥ दृष्टएवत्वयीशानेपलायनपरायणः ॥५८॥ संपन्नोमदहंकारश्चोरःसूर्योदयेयथा ॥ असदभ्युत्थितेतस्मिन्नहंकारेपिशाचवत् ॥ ५९ ॥ गतेतिष्ठाम्यहंस्वस्थोनिर्गोनसइवद्रुमः ॥ शाम्यामिपरिनिर्वामिजगत्यस्मिन्प्रवोधवान् ॥ ६० ॥ तस्करेणोज्झितोस्मीतिनिर्वृतोस्मिचिरोदयम् ॥ शैत्यमभ्यागतोस्म्यंतःशांताशाम्नगत्वष्णिकः ॥६१॥ प्रावृडंवुभरस्नातःशांतदावइवाचलः ॥ प्रमार्ज्जितेहमित्यस्मिन्पदेस्वार्थविचारतः ॥ ६२ ॥ कोमोहःकानिदुःखानिकाःकदाशाःकआधयः ॥ नरकस्वर्गमोक्षादिभ्रमाःसत्यामहंकृतौ ॥ ६३ ॥ भित्तावेवप्रवर्त्ततेचित्रेहाननभस्तले ॥ अहंकारकलापित्तेचित्तेज्ञानचमत्कृतिः ॥ नराजतेंशुकेम्लानेयथाकुंकुमरंजना ॥ ६४ ॥

शानेईश्वरेस्वात्मनिप्रवुद्धेभवतिप्रवुद्धेसति ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ असतोऽज्ञानात्प्रागभ्युत्थितेसंप्रतिगतेसतिनिर्गतोगोनसोऽजगरोयस्मात्तथाविधोद्रुमोवृक्षवान्आरामइव ॥ द्रुशब्दाद्वृक्षवाचकान्मत्वर्थेद्युद्रुभ्यांमइतिमप्रत्ययः ॥ ५९ ॥ ६० ॥ तस्करेणआत्मप्रमोपकेणाहंकारेण ॥ ६१ ॥ शांतदावोनिर्वाणदवाग्निरचलःपर्वतइव ॥ ६२ ॥ केआधयोमानसव्यथाः ॥ परलोकदुःखादिचिंतयाकुतोनाधयःस्युस्तत्राह ॥ नरकेति ॥६३॥ ननुसत्येवाहंकारेमोहादिप्रशमचमत्कृतिःकिंनस्यात्तत्राह ॥ अहंकारेति ॥ अहंकारकलालक्षणेपित्तेपित्तजोन्मादेसति ॥ ६४ ॥

इदानींसरःसमुद्रादिनानाभावैरात्मानंरूपयन्नमस्यति ॥ निरहंकारेत्यादिना ॥ कांतिशालिनीआत्मचंद्रप्रकाशशालिनीस्वच्छतानैर्मल्यम् ॥ ६५ ॥ मह्यंप्रत्यगात्मभूतायतुभ्यं ब्रह्मणे ॥ एवमग्रेपि ॥ ६६ ॥ ६७ ॥ विश्रांतायअचलाय ॥ ६८॥ सद्ब्रह्मतल्लक्षणायमानसायदेवसरसे ॥६९ ॥ संविदाभासौबुद्धिस्थवृत्तिप्रतिबिंबचैतन्येएवपक्षौयस्य ॥७०॥ कलाभिःएतस्माज्जायतेप्राणोमनःसर्वेंद्रियाणिचेतिश्रुत्युक्ताभिःसप्तदशभिःषोडशकलःसोम्यपुरुषइतिश्रुतिदर्शिताभिर्वा ॥ चंद्रपक्षेतुप्रसिद्धाभिः ॥ निष्कलायनिरवयवाय ॥ चंद्रपक्षेकलाव्यतिरिक्तदेवतात्मने ॥ ७१ ॥ चित्सूर्येप्रसिद्धसूर्यात्सदोदितायेत्यादिविशेषणैर्विशेषोदर्शितः ॥ शांतायअतापकाय ॥ अदृश्यायदृश्यविलक्षणाय ॥ ७२ ॥ अस्नेहोनिस्तैलःस्नेहंपरमप्रेमाणंदीपयतीतिस्नेहदीपः ॥ अथवापुत्रमित्रधनादिष्वस्नेहाःयतयस्तेषांस्नेहेनदीप्यते ॥ सर्ववस्तुस्वभावानामाधारायधीरायधीप्रकाशकाय ॥ ७३ ॥

निरहंकारजलदेतृष्णासारविवर्जिते ॥ भातिचित्तशरद्व्योम्निस्वच्छताकांतिशालिनी ॥ ६५ ॥ निरहंकारपंकायसंप्रसन्नांतरायच ॥ मह्यमानंदसरसेतुभ्यमात्मन्नमोनमः ॥६६॥ शांतेंद्रियोग्रग्राहायक्षीणचित्तोर्ववह्नये ॥ आनंदांबुधयेतुभ्यंमह्यमात्मन्नमोनमः ॥६७॥ गताहंकारमेघायशांताशादाववह्नये ॥ मह्यमानंदशैलायविश्रांतायनमोनमः ॥ ६८ ॥ प्रफुल्लानंदपद्मायशांतचिंतामयोर्मये ॥ मह्यंसन्मानसायात्मंस्तुभ्यमंतर्नमोनमः ॥ ६९ ॥ संविदाभासपक्षायपद्मकोटरवासिने ॥ सर्वमानसहंसायस्वात्मनेंतर्नमोनमः ॥ ७० ॥ कलाकलितरूपायनिष्कलायामृतात्मने ॥ सदोदितायपूर्णात्मन्शशिनेतेनमोनमः ॥७१॥ सदोदितायशांतायमहाहृद्ध्वांतहारिणे ॥ सर्वगायाप्यदृश्यायचित्सूर्यायनमोनमः ॥ ७२ ॥ अस्नेहस्नेहदीपायवृत्तिनिष्क्रांतवर्त्तिने ॥ स्वभावाधारधीरायचिद्दीपायनमोनमः ॥ ७३ ॥ मदनानलसंतप्तंशीतेनमनसामनः ॥ भग्नमंतर्मयातप्तमयसेववलादयः ॥ ७४ ॥ इंद्रियेणेंद्रियंछित्त्वाछित्त्वाचमनसामनः ॥ अहंकृतिमहंकृत्याछित्त्वाशेषोजयाम्यहम् ॥ ७५ ॥ भावनाभावमाच्छिद्यहित्वातृष्णामतृष्णया ॥ निष्पिष्यप्रज्ञयाऽप्रज्ञांज्ञोज्ञःसत्योसितेनमः ॥ ७६ ॥ मनसामनसिच्छिन्नेनिरहंकारतांगते ॥ भावेनगलितेभावेस्वच्छस्तिष्ठामिकेवलः ॥ ७७ ॥ निर्भावंनिरहंकारंनिर्मनस्कमनीहितम् ॥ केवलंस्पंदशुद्धात्मन्येतत्तिष्ठतिमेवपुः ॥ ७८ ॥

इदानींस्वपौरुषंसफलमित्यभिनंदति ॥ मदनेत्यादिना ॥ यथाअयसाकार्ष्णायसटंकेनतप्तमयोभज्यतेतथाशीतिनशमादियुक्तेनमनसामदनानलसंतप्तंमनोमयाभग्नमित्यर्थः ॥७४॥ प्रत्यक्प्रवणेनेंद्रियेणचक्षुरादिनापराक्प्रवणंतदेवच्छित्त्वा ॥ एवंमनोहंकारयोरपिबोध्यम् ॥ शेषोऽवशिष्टचिन्मात्रोहम् ॥७५॥ भावेनश्रद्धयाअभावमश्रद्धाम् ॥ ऊहापोहवतीबुद्धिःप्रज्ञातयाअविचारसंदेहादिलक्षणामप्रज्ञाम् ॥ अज्ञोज्ञातृत्वाभिमानशून्योज्ञोज्ञप्तिमात्रस्वभावएवसत्योसितादृशायतेमह्यंनमः ॥ ७६ ॥ भावेनब्रह्माहंभावेनदेहाद्यहंभावेगलिते ॥ ७७ ॥ निर्भावंभावनाहेतुबुद्धिशून्यम् ॥ अनीहितंइच्छाहेतुचित्तशून्यम् ॥ स्पंदःप्राणनक्रियातन्मात्रेणशुद्धआत्मायस्यतथाविधेजीवन्मुक्तात्मनितिष्ठतिजीवति ॥ तथाचश्रुतिस्तस्मादेकमेवव्रतंचरेत्प्राण्याच्चैवापान्याच्चेति ॥ ७८ ॥

हेलयैवअनुकंपिता भोगैश्वर्यदानेनानुगृहीता अनंताःस्वभक्तायेनतथाविधाद्विश्वेशाद्ब्रह्मविष्ण्वादेरप्यतिशायिनीउत्कृष्टानिर्वृतिर्निरतिशयानंदविश्रांतिः॥ ७९ ॥ रूपिकापिशाचीतयोन्मुक्तःअतएवविगतज्वरः॥ ८० ॥ ८१ ॥ उद्धूलितेज्ञानाभ्यासपेषणेनधूलीकृत्योड्डायिते ॥ ८२ ॥ दुराशाभिर्दीर्घैर्दौरात्म्यैर्दुष्टदेहाद्यात्मत्वाभिमानैश्च धूसरामलिनाभयलक्षणानांभोगिनांसर्पाणांहिताभूयस्योदुर्वासनाःभोगान्भस्मयतीतिभोगभस्मसमाधिस्तेनक्षताउच्छिन्नाः ॥ ८३ ॥ इदानींनिद्राक्षयेस्वाप्नदुर्दशामिवप्राक्तनीमहंकारदशांस्मृत्वाविस्मयते ॥ एतावंतमिति ॥ चित्रमाश्चर्यम् ॥ ८४ ॥ अद्याहमयमनुभूयमाननिरतिशयानंदस्वभावोजातःप्रादुर्भूतःयद्यतोहंमहतीअपरिच्छिन्नब्रह्माकारामतिःसाक्षात्कारवृत्तिर्यस्यतथाविधःसन्नहंकारमहाभ्रेणालंनिशेषमुज्झितोनिर्मुक्तइत्यर्थः ॥ ८५ ॥ महामतिरित्येतद्विशदयति ॥ दृष्टइति ॥ वाक्यप्रमाणेनदृष्टोमननेनाधिगतःसमा

हेलानुकंपितानंतविश्वेशादतिशायिनी ॥ परमोपशमोपेताजातेयंममनिर्वृतिः ॥ ७९ ॥ प्रशांतमोहवेतालोगताहंकारराक्षसः ॥ कदाशारूपिकोन्मुक्तोजातोस्मिविगतज्वरः ॥ ८० ॥ तृष्णारज्जुगुणंछित्त्वामच्छरीरकपंजरात् ॥ नजानेक्कगतोड्डीयदुरहंकृतिपक्षिणी ॥ ८१ ॥ उद्धूलितेघनाज्ञानकुलायेकायपादपात् ॥ नजानेगतउड्डीयकाहंभावविहंगमः ॥ ८२ ॥ दुराशादीर्घदौरात्म्यधूसराभोगभस्मना ॥ भयभोगिहितादिष्ट्याभूयस्योवासनाःक्षताः ॥ ८३ ॥ एतावंतमहंकालंकोभूवंचित्रमीदृशम् ॥ येनाहमेषमिथ्यैवदृढाहंकारतांगतः ॥ ८४ ॥ अद्याहमस्मिजातोयमहमद्यमहामतिः ॥ अहंकारमहाभ्रेणयत्कृष्णेनालमुज्झितः ॥ ८५ ॥ दृष्टोयमात्माभगवांस्तथैवाधिगतोमया ॥ आलब्धश्चानुभूतोंगस्वानुभूतौनियोजितः ॥ ८६ ॥ गतास्पदंगतमननंगतैषणंतिरस्कृतंनिपुणमहंकृतिभ्रमैः ॥ निरीहितंव्यपगतरागरंजनंविकौतुकंप्रशममिदंगतंमनः ॥ ८७ ॥ दुरुत्तराःसमविषमामहापदःसुदुःसहाःप्रभवनदीर्घदोषदाः ॥ गताःक्षयंसमधिगतोमहेश्वरश्चिदद्वयोपगतमचित्त्वमंतरे ॥ ८८ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेब्रह्मतात्मलाभचिंतानामपंचत्रिंशःसर्गः ॥ ३५ ॥

धौमनसाचिराश्लेषमालब्ध्यसमाध्यनुभूतश्चांगस्वदेहमिवसदास्वानुभूतौनियोजितः ॥ तथाचाहुः ॥ देहात्मज्ञानवज्ज्ञानंदेहात्मज्ञानबाधकम् ॥ आत्मन्येवभवेद्यस्यसनेच्छन्नपिमुच्यइति ॥ ८६ ॥ सांप्रतंनिर्दोषविक्षेपंस्वमनःप्रशमंगतमित्याह ॥ गतास्पदमिति ॥ गतास्पदंनिर्विषयम् ॥ विषयाणांमननाद्धितेष्वेषणाप्रसिद्धेतिमूलोच्छित्त्यागतमननंगतैषणंच ॥ निपुणंनितरांतिरस्कृतंनिराकृतमुज्झितमितियावत् ॥ अतएवनिरीहितंनिश्चेष्टम् ॥ कौतुकंभोगोत्कंठातद्रहितम् ॥ अतएवनिरिंधनाग्निवत्प्रशमंगतमित्यर्थः ॥ ८७ ॥ मनःप्रशमादेवसर्वापन्निवृत्तिनिरतिशयानंदात्मावाप्तिचवदन्नुपसंहरति ॥ दुरुत्तराइति ॥ प्रभवनानिनानायोनिजन्मपरंपराःदीर्घादोषाःकामलोभमोहादयस्तप्रदाः समाश्चिरकालेकरूपदुःखाविषमाःप्रतिक्षणविचित्रदुःखामहापदःक्षयंगताः ॥ चिदद्वयोमहेश्वरःपूर्णानंदात्मासमधिगतःप्राप्तः ॥ तत्कुतः ॥ यतःअंतरेप्रत्यगात्मन्यचित्त्वमज्ञानजाड्यंज्ञानेनापगतंबाधितमित्यर्थः ॥ ८८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेपंचत्रिंशःसर्गः ॥ ३५ ॥ ॥ ७ ॥ ॥ ५ ॥

आत्मानंदुर्लभंप्राप्यप्रह्लादःप्रणमन्मुहुः ॥ स्तौतिनंदतिकांतिवकांतिनरमतेरहः ॥ १ ॥ सर्वेभ्योमानुषानंदादिहैरण्यगर्भांतेभ्यःपदेभ्यःसुखोत्कर्षस्थानेभ्योप्यतीतोनिरतिशयानंद
रूपःआत्माप्रत्यक् ॥ महात्मनेअपरिच्छिन्नस्वभावाय ॥ १ ॥ चिरमालिंग्यसेक्षीरोदकवत्समरसवृत्त्यासमाधावनुभूयसे ॥ बंधुःपरमप्रियः ॥ २ ॥ यावन्नप्राप्तोनदृष्टश्चताव
न्मृत्युर्भूत्वाअभक्तान्हंसि ॥ भक्तान्पासि ॥ उपासनाकर्मभिराराधितोददासि ॥ स्तावकादिरूपेणस्तौषि ॥ गंतृरूपेणयासि ॥ सर्वरूपेणचविवल्गसिव्यवहरसि ॥ मयातुअ
यंनित्यापरोक्षस्वभावःप्राप्तोदृष्टश्चअतःपरंमांप्रतिकिंकरोषिक्वागच्छसि ॥ नत्वयेदानीमन्यतोगंतुंकिंचित्कर्तुंवापूर्ववच्छक्यमित्यर्थः ॥ ३ ॥ विश्वेभ्योजनेभ्योहितविश्वज
नीन ॥ ४ ॥ अंतरमंतर्द्धायकमज्ञानंअभूदितिशेषः ॥ अद्यतन्नाशाददूरमत्यंताभेदलक्षणमतिसामीप्यंसंपन्नम् ॥ ५ ॥ संसारलक्षणस्यपर्णस्यवृंताय ॥ ६ ॥ विबुधनाथायें

प्रह्लादउवाच ॥ ॥ आत्मासर्वपदातीतश्चिरात्संस्मृतिमागतः ॥ दिष्ट्यालब्धोसिभगवन्नमस्तेस्तुमहात्मने ॥ १ ॥ अभिवंद्याथचालोक्य
चिरमालिंग्यसेमया ॥ कोन्यःस्यात्त्वदृतेबंधुर्भगवन्भुवनत्रये ॥ २ ॥ हंसिपासिददासित्वंस्तौषियासिविवल्गसि ॥ अयंप्राप्तोसिदृष्टोसि
किंकरोषिक्वगच्छसि ॥ ३ ॥ स्वसत्तापूरिताशेषविश्वविश्वजनीनभोः ॥ सर्वत्रलक्ष्यसेनित्यमधुनाक्वपलायसे ॥ ४ ॥ आवयोरंतरंभूरिज
न्मव्यवहितांतरम् ॥ अदूरमद्यसंपन्नंदिष्ट्यादृष्टोसिबांधव ॥ ५ ॥ नमस्तेकृतकृत्यायकर्त्रेभर्त्रेनमोस्तुते ॥ नमःसंसारवृंतायनित्यायविमला
त्मने ॥ ६ ॥ नमश्चक्राब्जहस्तायनमश्चंद्रार्द्धधारिणे ॥ नमोविबुधनाथायनमस्तेपद्मजन्मने ॥ ७ ॥ वाच्यवाचकदृष्ट्यैवभेदोयोयमिहाव
योः ॥ असत्याकल्पनैवैषावीचिवीच्यंभसोरिव ॥ ८ ॥ त्वमेवानंतयानंतवस्तुवैचित्र्यरूपया ॥ भावाभावविलासिन्यानित्ययैवविजृंभसे
॥ ९ ॥ नमोद्रष्ट्रेनमःस्रष्ट्रेनमोनंतविकासिने ॥ नमःसर्वस्वभावायनमस्तेसर्वगात्मने ॥ १० ॥ प्रतिजन्मचिरंबद्धयोदीर्घदुःखवतामया ॥
त्वयामयोपदिष्टेनदग्धेनापहृतौजसा ॥ ११ ॥ आलोकितालोकदृशोदृष्टादृष्टांतदृष्टयः ॥ नप्राप्तस्तत्त्वयानेनकिंचिदासादितंभवेत् ॥ १२ ॥

द्मरूपाय ॥ ७ ॥ वाच्यवाचकदृष्ट्याव्यवहारदृष्ट्या ॥ एषाव्यवहारदृष्टिर्भिदाच ॥ ८ ॥ अनंतयाकल्पनयेतिशेषः ॥ नित्ययाप्रवाहानाद्या ॥ ९ ॥ आदौस्रज्यपदार्थानांद्रष्टे ॥
ततःस्रष्ट्रेस्रष्ट्वाचानंतरूपैर्विकासिने ॥ अतएवसर्वस्वभावाय ॥ अधिष्ठानतयासर्वगात्मने ॥ १० ॥ एतावंतंकालंमद्रूपेणत्वमेवमच्छंदानुवर्त्तनाच्छ्रांतइदानींत्वंयद्वत्वंविश्रांतये
लब्धइत्याह ॥ प्रतिजन्मेति ॥ मयामद्भावापन्नेनजीवभूतेनत्वयामयास्वकामादिदोषानुसारेणोपदिष्टेनासन्मार्गेणप्रवृत्तत्वाद्दग्धेनअतएवापहृतौजसातिरोहितेश्वरभावेनत्वया
लोकदृशऊर्ध्वाधोमध्यलोकसंचारभ्रमास्तेषुविवेकानुकूलदृष्टांतदृष्टयश्चआलोकिताः ॥ तत्तस्माद्बहिर्लोकदर्शनात्त्वंत्वयानप्राप्तः अनेनलोकत्रयदर्शनेनचकिंचित्स्वल्पमपि
पुरुषार्थरूपमासादितंनभवेन्नाभूदितिद्वयोरर्थः ॥ १२ ॥

कुतोनाभूत्तत्राह ॥ सर्वमिति ॥ नाभिवांछतिपुरुषार्थेच्छापूर्णाभवति ॥ तत्तादृशंवस्तुत्वदृतेत्वांविनाइहजगतिअन्यन्नास्तीत्यर्थः ॥ १३ ॥ नमुह्यसिमोहनिस्तीर्णोसीतियावत् ॥ १४ ॥ कथमहंदृष्टइतिचेच्चाक्षुषादिसर्ववृत्तिप्रथारूपेणप्रतिबोधविदितंमतमितिश्रुतिदर्शितोपायेनेत्याह ॥ यइति ॥ चक्षुर्द्वारांतःकरणस्यघटादिदेशनिर्गमनेतदवच्छिन्नचैतन्यात्माऽक्षिकनीनिकारश्मिजालप्रोतवपुःस्थितइत्यर्थः॥एवमग्रेप्यूह्यम् ॥ १५ ॥ त्वचंस्पर्शमौष्ण्यादिकंचस्पृशन्स्पार्शनवृत्त्याव्याप्नुवन्यथातिलेंनर्गतंतैलंतिलसंयुक्तपुष्पगंधमंतःकरोतिगृह्णातितद्वत्स्पर्शशीतादिअंतःकरोतिव्याप्यप्रकाशयति ॥ १६ ॥ शब्दशक्तिगानकाव्यादिगुणचमत्कारम् ॥ परामृशन्प्रकाशयन् ॥ १७ ॥ वस्तूनिमधुराम्लादीनि ॥ अपतःपुरस्तादेवस्वदितस्यस्वारसिकप्रेमविषयस्यस्वदंते ॥ स्वदतेसुखात्मनास्फुरति ॥ १८ ॥ घ्राणहस्तेनहस्तवदुपादानकरणेनघ्राणेनकंठधृतस्रजःपुष्पाणांगंधानुपादायमाला

सर्वंमृत्काष्ठपाषाणवारिमात्रमिदंजगत् ॥ नेहास्तित्वदृतेदेवयत्प्राप्तौनाभिवांछति ॥ १३ ॥ देवायमद्यलब्धोसिदृष्टोस्यधिगतोसिच ॥ संप्राप्तोसिगृहीतोसिनमस्तेस्तुनमुह्यसि ॥ १४ ॥ योक्ष्णोःकनीनिकारश्मिजालप्रोतवपुःस्थितः ॥ देवदर्शनरूपेणकथंसोत्रनदृश्यते ॥ १५ ॥ यस्त्वक्स्पर्शौस्पृशन्सर्वंगंधंतैलंतिलेयथा ॥ स्पर्शमंतःकरोत्येषसकथंनानुभूयते ॥ १६ ॥ यःशब्दश्रवणादंतःशब्दशक्तिपरामृशन् ॥ रोमांचंजनयत्यंगेसदूरस्थःकथंभवेत् ॥ १७ ॥ जिह्वापल्लवलग्नानिस्वदितस्याग्रतोपिच ॥ स्वदंतेयस्यवस्तूनिस्वदतेसनकस्यच ॥ १८ ॥ पुष्पगंधानुपादायघ्राणहस्तेनदेहकम् ॥ यआलोकयतिप्रीत्याकस्यासौनकरेस्थितः ॥ १९ ॥ वेदवेदांतसिद्धांततर्कपौराणगीतिभिः ॥ योगीतःसकथंत्वात्माविज्ञातोयातिविस्मृतिम् ॥ २० ॥ सैवेहदेहभोगालीसुभगापीयमद्यमे ॥ अंतर्नस्वदतेस्वच्छेत्वयिदृष्टेपरावरे ॥ २१ ॥ त्वयाविमलदीपेनभानुःप्रकटतांगतः ॥ त्वयाशीततुषारेणचंद्रःशिशिरतांगतः ॥ २२ ॥ त्वयैतेगुरवःशैलास्त्वयैतेद्युचराधृताः ॥ त्वयैवेयंधराधीरात्वयैवांबरमंबरम् ॥ २३ ॥ दिष्ट्यामत्तामसिप्राप्तोदिष्ट्यात्वत्तामहंगतः ॥ अहंत्वंत्वमहंदेवदिष्ट्याभेदोस्तिनावयोः ॥ २४ ॥ अहंत्वमितिशब्दाभ्यांपर्यायाभ्यांमहात्मनः ॥ तववाममवाशाखासंयुक्ताभ्यांनमोनमः ॥ २५ ॥

लंकृतंस्वंदेहकमालोकयतिपश्यति ॥ करेस्थितइवस्फुटंप्रत्यक्षइत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ येनसूर्यस्तपतितेजसेद्धइत्यादिश्रुतिदृशाप्याह ॥ त्वयेति ॥ २२ ॥ द्युचरानभश्चरावाप्वादयः ॥ धीरानिश्चला ॥ अंबरमवकाशदम् ॥ २३ ॥ दिष्ट्याभाग्येन ॥ अहंत्वंत्वमहमितिव्यतिहारेणाभेदोदृढीकृतः ॥ २४ ॥ इदानीमखंडार्थेप्रमाणतयासंपन्नावहंत्वंशब्दौनमस्यति ॥ अहमिति ॥ लक्ष्यस्यमहात्मनोबोधनेपर्यायाभ्यां तवकारणोपाधिविशिष्टस्यवाच्यार्थस्यममकार्योपाधिविशिष्टस्यवाच्यार्थस्यवाशाखावदेकदेशभूताभ्यामुपाधिभ्यांभेदकल्पनात्संयुक्ताभ्यांसामानाधिकरण्येनान्विताभ्यामहंत्वमितिशब्दाभ्यांनमोनमइत्यादरादभ्यासः ॥ द्वौवाशब्दौशाखाद्वयसंबंधयोर्मिथ्यात्वद्योतनार्थौ ॥ २५ ॥

इदानीमखंडार्थंप्रत्यक्प्राधान्येनप्रणम्यतस्यैवब्रह्मतांदर्शयति ॥ नमइत्यादिना ॥ २६ ॥ हेब्रह्मन्त्वंमय्यात्मनिप्रत्यक्त्वभावएवतिष्ठसिनकदाचित्पराग्भावेइत्यर्थः ॥ २७ ॥ तत्कुतोज्ञातंतत्राह ॥ मनइति ॥ केनेषितंपततिप्रेषितंमनइत्यादिश्रुतिदर्शितेनमनःप्रभृतीनामयस्कांतवत्प्रवर्त्तकत्वेनज्ञातमित्यर्थः ॥ २८ ॥ २९ ॥ तर्हित्वंकिंप्राणनादिशक्तिरुत देहकृतास्पदोहंकारादिर्वेत्याह ॥ अयमिति ॥ अयमहंसंविद्वपुरेवनतुकाचिच्छक्तिर्नापिदेहकृतास्पदः ॥ तर्हितेकिंदेहेनेतिचेन्नकिंचिदित्याह ॥ देहइति ॥ ३० ॥ उपशमं याति भ्रमइतिशेषः ॥ ३१ ॥ संसारगामित्वात्संसारेभ्रमणशीलत्वात् ॥ एतावत्कालंसंसारवर्त्मनिश्रांतोहंसंप्रतिविश्रांतः ॥ ३२ ॥ येगुरवोवेदांताश्चत्वांमामद्रूपमेवप्रवदंति

नमोमह्यमनंतायनिरहंकाररूपिणे॥ नमोमह्यमरूपायनमःसमसमात्मने॥ २६॥ मय्यात्मनिसमेस्वच्छेसाक्षिभूतेनिराकृतौ॥ दिक्कालाद्यनवच्छिन्नेस्वात्मन्येवेहतिष्ठसि॥२७॥ मनःप्रक्षोभमायातिस्फुरंतींद्रियवृत्तयः॥ शक्तिरुल्लसतिस्फाराप्राणापानप्रवाहिनी॥२८॥ वहंतिदेहयंत्राणिरूढान्याशावरत्रया॥ चर्ममांसास्थिदिग्धानिमनःसारथिमंतिच॥ २९॥ अयंसंविद्वपुरहंनकाचिन्नकृतास्पदः॥ देहःपततुवोदेतुयथाभिमतयेच्छया ॥ ३० ॥ चिरादहमहंजातःस्वात्मलाभश्चिरादयम्॥ चिराद्रुपशमंयातिकल्पस्यांतेजगद्यथा ॥ ३१ ॥ चिरात्संसारगामित्वाद्दीर्घसंसारवर्त्मनि॥ विश्रांतोस्मिचिरंश्रांतःकल्पस्यांतइवानलः॥३२॥ सर्वातीतायसर्वायतुभ्यंमह्यंनमोनमः॥ तेभ्योपिचनमस्तेस्तुयेमांत्वांप्रवदंतिच॥३३॥अखिलानंतसंभोगानस्पृष्टादोषवृत्तिभिः॥जयत्यकृतसंरंभासाक्षितापरमात्मनः॥३४॥ आत्मन्पुष्पइवामोदोभस्त्रापिंडइवानिलः ॥ तिलेतैलमिवास्मिंस्त्वंसर्वत्रवपुषिस्थितः ॥ ३५ ॥ हंसिपासिददासित्वमवस्फूर्जसिवल्गसि॥ अनहंकृतिरूपोपिचित्रेयंतवमायिता॥ ३६॥ जयामीशज्वलद्दीप्तिःसर्वमुन्मीलयञ्जगत्॥ जयाम्युपरतारंभोजगद्भूयोनिमीलयन्॥३७॥ परमाणोस्तवैवांतरिदंसंसारमंडलम्॥ वटत्वंवटधानायांवभूवास्तिभविष्यति ॥ ३८॥ हयद्विपरथाकारैर्यद्वत्खेदृश्यतेंबुदः॥ तद्वदालोक्यसेदेवपदार्थशतविभ्रमैः॥ ३९ ॥

॥ ३३ ॥ अखिलाअनंताःसंभोगाःप्रकाश्यायस्यास्तथाविधापिप्राकाश्यदोषवृत्तिभिरस्पृष्टा ॥ नकृतःसंरंभअभिनिवेशोययाउदासीनेत्यर्थः ॥ अतएवजयति ॥ ३४ ॥ त्वमेवसर्वप्रसारइत्याह ॥ आत्मन्निति ॥ ३५ ॥ सर्वकर्त्तापित्वमेवेत्याह ॥ हंसीति ॥ ३६ ॥ सर्गकालेईशेनत्वयाचिदात्मनाज्वलद्दीप्तिर्बहिरंतश्चार्थप्रकाशनेनोज्वलितोहंजीवभावेनानुप्रविश्यनामरूपात्मकंसर्वंजगदुन्मीलयन्व्याकुर्वंस्त्वदात्मनैवजयामिवशीकृत्यपालयामि ॥ प्रलयकालेचाहमुपरतारंभोजगद्भूयःपुनर्निमीलयन्नुपसंहरन्नपित्वदात्मनैवजयाम्यभिभवामीत्यर्थः ॥ ३७ ॥ परमाणोरत्यंतसूक्ष्मस्यदुर्लक्ष्यस्येत्यर्थः ॥ वटत्वंवटव्यक्तिसंवलिताजातिः ॥ ३८ ॥ ३९ ॥

इदानींस्वयंमुक्तात्मास्वाभिप्रायवद्धात्मनेमोक्षोपायमुपदिशति ॥ भावानामित्यादिना ॥ भूरिभंगानांबहुविधविकाराणांभावानांअभवायबाधायभवायनिरतिशयानंदस्वरूपा विर्भावायचअसंगात्मदर्शनेनभावाभावाभ्यांबहिष्कृतोविविक्तःसंस्तद्भावेनैवसदाविमुक्तात्माभवमापुनर्बंधंप्रतिपद्यस्वेत्यर्थः ॥ ४० ॥ तदुपायभूतांपूर्वपीठिकामुपदिशति ॥ जहीत्यादिना ॥ ४१ ॥ इतिविचार्येतिशेषः ॥ मुक्तानांछटाःकणाइवसितंशुभ्रंयथास्यात्तथाहसन्प्राक्तनींदीर्घदौरात्म्यदशांजहीतिपूर्वेणान्वयः ॥४२॥४३॥ करैर्मुष्टिभिर्व्योमेव ॥ ४४ ॥ ४५ ॥ बहिःअविद्यादृशिअंतःस्वरूपदृशिचयथाक्रममजस्रमस्तमयउदयश्चयस्य ॥ अथवाअजस्रमभीक्ष्णंजगतःअस्तमयोदयौप्रलयसर्गौयस्मादित्यर्थः ॥ भास्करपक्षेस्पष्टम् ॥ ४६ ॥ यद्येवंतर्हिसर्वत्रतथाकुतोनावगच्छामितत्राह ॥ सर्वदैवेति ॥ सर्वदाअनादिकालात्सुप्तोसि ॥ शक्त्याभोजकादृष्टशक्त्याभोगालोकनलीलार्थंतावन्मात्रं

भावानांभूरिभंगानामभवायभवायच ॥ भवभावविमुक्तात्माभावाभावबहिष्कृतः ॥ ४० ॥ जहिमानंमहाकोपंकालुष्यंक्रूरतांतथा ॥ नमहांतोनिमज्जंतिप्राकृतेगुणसंकटे ॥ ४१ ॥ प्राक्तनींदीर्घदौरात्म्यदशांस्मृत्वापुनःपुनः ॥ कोहंकिंतद्बभूवेतिहसन्मुक्ताच्छटासितम् ॥ ४२ ॥ तेप्रयाताःसमारंभागतास्तेदग्धवासराः ॥ येषुचिंतानलज्वालाजालाकीर्णोभवानभूत् ॥ ४३ ॥ अद्यत्वंदेहनगरेराजास्फारमनोरथः ॥ नदुःखैर्गृह्यसेनापिसुखैर्व्योमकरैरिव ॥ ४४ ॥ अद्येंद्रियदुरश्वांश्चजित्वाजितमनोगजः ॥ भोगारिमभितोभंक्त्वासाम्राज्यमधितिष्ठसि ॥ ४५ ॥ अपारांबरपांथस्त्वमजस्रास्तमयोदयः ॥ अवभासकरोनित्यंबहिरंतश्चभास्करः ॥ ४६ ॥ सर्वदैवासिसंसुप्तःशक्त्यासंबोध्यसे विभो ॥ भोगालोकनलीलार्थंकामिन्याकामुकोयथा ॥ ४७ ॥ दृक्क्षुद्राभिरुपानीतंदूराद्रूपमधुत्वया ॥ पीयतेस्वीकृतंशक्त्यानेत्रवातायनस्थया ॥ ४८ ॥ ब्रह्मांडकोटराध्वांताःप्राणापानपरैस्त्वया ॥ गतागतैर्ब्रह्मपुरेसंप्रेक्ष्यंतेप्रतिक्षणम् ॥ ४९ ॥

संबोध्यसेनपूर्णात्मरूपेणेत्यर्थः ॥ ४७ ॥ भोगालोकनलीलामेवविशदयति ॥ दृक्क्षुद्राभिरिति ॥ दृशइंद्रियवृत्तयस्तल्लक्षणाभिःक्षुद्राभिर्मधुमक्षिकाभेदैः ॥ रूपादिलक्षणंमधु क्षौद्रम् ॥ नेत्रादिवातायनस्थयाचिच्छक्त्या ॥ ४८ ॥ योगिनामुत्क्रमणकालेसुषुम्नादिमार्गप्रकाशोपित्वदधीनएवेत्याह ॥ ब्रह्मांडेति ॥ प्राणापानशब्दाभ्यांतन्निरोधाभ्यासोलक्ष्यते ॥ तत्परैर्योगिभिर्ब्रह्मोपलब्धिस्थानत्वाद्ब्रह्मपुरेदेहेप्रतिक्षणमभ्यस्तैर्हृदिसंपिहितानांप्राणानामुत्क्रम्यपरकायप्रवेशलोकांतरसंचाराद्यनुकूलैर्नानानाडीमार्गेपुगतागतैःसंचारैर्ब्रह्मांडांतरंगंतुमर्चिरादिमार्गेणसूर्यमंडलंगंतुंवाब्रह्मांडकोटरस्यब्रह्मरंध्रस्यचसंबंधिनःअध्वांताःसुषुम्नादिमार्गपर्वाणित्वयैवस्वयंज्योतिषाकरणेनसंप्रेक्ष्यंतेस्फुटंदृश्यंते ॥ हृदयस्याग्रंप्रद्योततेतेनप्रद्योतेनैपआत्मानिष्क्रामतीतिश्रुतेर्यद्यपिसर्वेषांमरणेनाडीद्वारप्रकाशआत्मज्योतिरधीनएवतथाप्ययोगिनांपीडापारवश्यादिनातदवधानाशक्तेर्योगिनांचाभ्यासकालेमरणकालेचसावधानत्वात्तएवोदाहृताः ॥ ४९ ॥

कृतंपरमार्थसत्यभूतममृतम् ॥ देहलक्षणेविटपेशाखायांरागादिपल्लवोद्गमनिमित्तभूतोरसः ॥ ५० ॥ सर्वप्राणिनांशरीरेस्मयस्यगर्वस्यनिमित्तभूतःस्नेहोयोस्तिसशरीरलक्षणस्य क्षीरस्यसर्पिषिघृतवत्सारभूतेत्वय्येवसोस्ति ॥ त्वयातदभिमानत्यागेस्नेहादर्शनादित्यर्थः ॥ ५१ ॥ अनुत्तमास्वादोऽतिमधुरोऽमृतस्वरूपइतियावत् ॥ तेजसांसूर्यादीनाम् ॥ अधिदैवंप्राकाश्यंप्रकाशनिमित्तम् ॥ अध्यात्मंचभासांचक्षुरादिकरणानामवभासकः ॥ ५२ ॥ वायूनांप्राणानांस्पंदयतीतिस्पंदः ॥ मनोलक्षणस्यहस्तिनोमदइवभातिनिमित्तम् ॥ तैक्ष्ण्यमौष्ण्यनिमित्तम ॥ ५३ ॥ वाचावाणी ॥ आपंचैवहलंतानामितिभागुरिमतेनटाप् ॥ त्वद्वशात्त्वय्योपसंहारात्संप्रविलीयतेउपशाम्यतिमरणमूर्छास्वप्नेषु ॥ अन्यत्रदेहांतरेषु ॥ ५४ ॥ पदार्थावलयःसमुद्यंतातिविपरिणामेनानुपजायते ॥ ५५ ॥ त्वय्येवस्वात्मनिमदादिशब्दैर्व्यवहारःक्रियतेनत्वत्तोन्योस्तीत्याह ॥ भवानिति ॥ स्तौपिगुणैः ॥ वक्षिअ

देहपुष्पेत्वमामोदोदेहंदौत्वमृतामृतम् ॥ रसस्त्वंदेहविटपेशैत्यंदेहहिमेभवान ॥ ५० ॥ त्वय्यस्तिविस्मयस्नेहःशरीरक्षीरसर्पिषि ॥ त्वमंतरस्यदेहस्यदारुण्यग्निरिवस्थितः ॥ ५१ ॥ त्वमेवानुत्तमास्वादःप्राकाश्यंतेजसामपि ॥ अवगंतात्वमर्थानांत्वंभासामवभासकः ॥ ५२ ॥ स्पंदस्त्वंसर्ववायूनांत्वंमनोहस्तिनोमदः ॥ प्रज्ञानलशिखायास्त्वंप्राकाश्यंतैक्ष्ण्यमेवच ॥ ५३ ॥ त्वद्वशादियमात्मीयावाचासंप्रविलीयते ॥ दीपवत्पुनरन्यत्रसमुदेतिकुतोपिसा ॥ ५४ ॥ त्वयिसंसारवर्त्तिन्यःपदार्थावलयस्तथा ॥ कटकांगदकेयूरयुक्तयःकनकेयथा ॥ ५५ ॥ भवानयमयंचाहंत्वंशब्दैरेवमादिभिः ॥ स्वयमेवात्मनात्मानंलीलार्थंस्तौपिवक्षिच ॥ ५६ ॥ मंदानिलविनुन्नाब्दोगजाश्वनरदृष्टिभिः ॥ यथासंलक्ष्यतेव्योम्नितथात्वंभूतदृष्टिभिः ॥ ५७ ॥ यथाहयगजाकारैर्ज्वालालसतिवह्निषु ॥ तथैवाव्यतिरिक्तैस्त्वंदृश्यसेभुविसृष्टिषु ॥ ५८ ॥ त्वंब्रह्मांडकमुक्तानामच्छिन्नस्तंतुराततः ॥ क्षेत्रंत्वंभूतसस्यानांचिद्रसायनसेवितम ॥ ५९ ॥ असत्तदनभिव्यक्तंपदार्थानांप्रकाश्यते ॥ त्वयातत्त्वंयथापक्त्यामांसानांस्वादवेदनम् ॥ ६० ॥ विद्यमानापिवस्तुश्रीर्नस्थितात्वयिनस्थिते ॥ वनितारूपलावण्यसत्तेवगतचक्षुषः ॥ ६१

न्यत् ॥ ५६ ॥ अब्दोमेघः ॥ ५७ ॥ प्रत्येकंज्वलत्सुकाष्ठपुकासांचिज्ज्वालानांहयाद्याकारतापिकदाचिद्दृश्यते ॥ ५८ ॥ ब्रह्मांडलक्षणानांमुक्तानांमुक्ताफलानाम् ॥ जलतेजआवरणाभ्यांचाकचक्येनवर्त्तुलत्वेनचसाम्यात् ॥ ५९ ॥ क्षेत्रत्वमुपपादयति ॥ त्वयेति ॥ त्वयाअनभिव्यक्तमतएवासत्प्रायमविद्याबीजांतस्थानांसृज्यपदार्थानांतत्त्वसिद्धंतत्त्वंस्वरूपंसर्गेणप्रकाश्यते ॥ यथापक्त्यापाकेनमांसानांस्वादवेदनमास्वादनार्हास्वादुताप्रकाश्यतेतद्वत् ॥ ६० ॥ एवंचित्प्रकाशानाकलितंसदप्यसत्प्रायमेवेत्याह ॥ विद्यमानेति ॥ वनितासंबंधिनीरूपलावण्यसत्तेव ॥ ६१ ॥

अनावर्जितंअर्थक्रियाशक्त्याअननुगृहीतंसत्प्रतीतमपिनसत्तायैअर्थक्रियायैसमर्थमित्यर्थः॥मुकुराद्दर्पणान्निमित्तात्प्रतिबिंबितंस्वलावण्यंस्वमुखसौंदर्यंकांतानांचुंबनाधरास्वादनाद्यर्थक्रियाप्रयुक्तनृमयेकामोपशमायनालमित्यर्थः ॥६२॥ नगस्यगिरेर्वृक्षस्यचोच्छ्रायऔन्नत्यंसन्विद्यमानोप्यभानादसन्नसत्पायः ॥ श्यामामुतमिस्रामु ॥ ६३ ॥ प्राप्य साक्षादनुभूय ॥ प्राकाश्यंसूर्यप्रकाशम् ॥ तेजोदीपनक्षत्रादिप्रभा ॥ ६४ ॥ यतस्त्वदालोकनयैवलब्धात्मानस्तेसुखादयःअनश्वरमसाक्षात्कारेद्धस्यतेतत्संबंधक्षणएवविनश्यंतिपरंतुत्वयादृष्टाएवव्रजंत्यपगच्छंतिनोपायांतरेणेत्यर्थः ॥ ६५ ॥ ६६ ॥ दीपस्यासत्तायामविद्यमानतायांस्फुटनांगतातमसस्तमस्तादीपालोकसंबंधसमयेसैवोत्पद्यस्वधर्मिणो वियुज्यविनश्यतितद्धर्मीतुसन्मात्रस्वभावोननश्यतीत्यर्थः ॥ एवार्थेचकारः ॥ ६७॥ दृष्टांतोक्तंदार्ष्टांतिकेयोजयति ॥ तदेवमिति ॥ सर्वनाशेनेति ॥ बीजभावेनसहेत्यर्थः॥६८॥

सदपीहनसत्तायैवस्तुनावर्ज्जितंत्वया॥ त्वत्तयेनस्वलावण्यंमुकुरात्प्रतिबिंबितम्॥ ६२॥ लुठतित्वांविनादेहःकाष्ठलोष्टसमःक्षितौ॥ सन्नप्यसन्नगोच्छायःश्यामास्विवरविंविना ॥ ६३ ॥ सुखदुःखक्रमःप्राप्यभवंतंपरिनश्यति॥ प्राकाश्यमासाद्ययथातमस्तेजोथवाहिमम्॥६४॥ त्वदालोकनयैवैतेस्थितिंयांतिसुखादयः॥ सूर्यालोकनयाप्रातर्वर्णाःशुक्लादयोयथा ॥ ६५॥ लब्धात्मानोविनश्यंतिसंबंधक्षणएवते॥ तेतमांसीवदीपस्यदृष्टाएवव्रजंत्यलम्॥६६॥ तमस्तातमसोदीपासत्तायांस्फुटतांगता॥ दीपसंबंधसमयेसाचोत्पद्यविनश्यति॥६७॥ तदेवंसुखदुःखश्रीर्देवैवत्वामनामयम्॥ जायतेजातमात्रैवंसर्वनाशेननश्यति ॥६८॥ भंगुरत्वादिहस्थातुंकालंनाणुमपिक्षमा॥ निमेपलक्षभागाख्यातन्वीकालकलायथा॥ ६९॥ गांधर्वीनगरीतन्वीसुखदुःखादिभावना॥ स्फुरतित्वत्प्रसादेनत्वयिदृष्टेविलीयते॥ ७०॥ त्वदालोकेक्षणोद्भूतात्वदालोकेक्षणक्षया॥ मृतेवजाताजातेवमृताकेनोपलक्ष्यते॥ ७१ ॥ क्षणमप्यस्थिरंवस्तुकथंकार्यकरंभवेत्॥ तरंगैरुत्पलाकारैर्मालाकथमवेक्ष्यते ॥७२॥ यदावाजातनिर्नष्टंक्रियांवस्तुकरिष्यते॥ तदारमेतलोकोयंमालांकृत्वातडिद्गुणैः॥७३॥

सुखदुःखश्रीर्विषयापगमेस्वरसभंगुरत्वादिहनित्यनिरतिशयानंदप्रकाशात्मनिअणुमपिकालंक्षणमपिस्थातुंनक्षमा ॥ यथानिमेषकालस्यलक्षतमभागत्वेनप्रसिद्धातन्वीअतिसूक्ष्माकालकलास्वतएवनश्यतितद्वदित्यर्थः ॥ ६९ ॥ एवमतिसूक्ष्मकालत्वाल्लक्षयितुमशक्यागांधर्वनगरीवमिथ्याभूतापिसुखदुःखादिभावनाअज्ञातत्वत्प्रसादेनस्थिरेवसत्येवस्फुरति ॥ त्वयिदृष्टेसतिविलीयतेनश्यतीत्यर्थः ॥७०॥ अज्ञातत्वदालोकलक्षणेनेक्षणेनदुष्टचक्षुषोद्भूता ॥ सुज्ञातत्वदालोकेक्षणक्षया ॥ एवंभूतेयंमृतास्वमेपुनर्जातेवस्वमजाताजागरेपुनर्मृतेवेत्यर्थः ॥ ७१ ॥ मिथ्यावस्तूनांक्षणस्थायित्वस्यापिदुर्घटत्वादर्थक्रियाकारित्वमत्याश्चर्यमित्याह ॥ क्षणमपीति ॥ उत्पलाकारैरुत्पलत्वबुद्ध्याकल्पिताकारैः ॥ ७२ ॥ ननुसौगतदर्शनवदत्रापिक्षणिकैरर्थक्रियाकिंनस्यात्तत्राह ॥ यदावेति ॥ नप्रामाणिकीसौगतैरप्यर्थक्रियासाधयितुंशक्येतिभावः ॥ ७३ ॥

इमामुकरीत्यादुर्घटामपिसुखदुःखादिकांलक्ष्मींतद्दुर्घटताभिज्ञानांविवेकिजनानांचेतसिस्थितःसन्गृद्धास्येव ॥ अविवेकिभ्योविवेकिपुंयोविशेषस्तमाह ॥ नजहासीति ॥७४॥ अविवेकिपुनर्हिकीदृशोहमितिप्रश्नेगुनोत्तरमस्तिअविवेकिकल्पनानामानंत्यादनियतत्वाच्चेत्याह ॥ अविवेकिष्विति ॥ यदृच्छयाआकस्मिकनानावासनोद्बोधेननिमित्तेनममवा णीतिशेषः ॥ नालंनसमर्थाहिअनल्पानामनंतानांपदानांरूपभेदानांनाम्नांचआस्पदइत्यसामर्थ्योपपादकंसंबोधनम् ॥ ७५ ॥ अनल्पपदास्पदत्वेचकर्तृत्वाध्यासोमूलमित्याश येनाह ॥ निरीहेणेति ॥ सतामूर्तस्थूलदेहोपाधिनाअसताअमूर्तसूक्ष्मदेहोपाधिना ॥ वाशब्दःस्वमेसूक्ष्मस्यस्वातंत्र्यद्योतनार्थः ॥ अपिशब्दोजागरेदेहद्वयसमुच्चयेनकर्तृत्वद्यो तनार्थः ॥ ७६ ॥ इदानींविवेक्यविवेकिप्रसिद्धरूपद्वयेनापिस्तौति ॥ जयेतिद्वाभ्याम ॥ प्रोड्डामरोब्रह्मांडाद्यतिविस्तृतआकारोयस्य ॥ आगमग्रहणंसर्वप्रमाणोपलक्षणम् ॥ स

इमांसुखादिकांलक्ष्मींविवेकिजनचेतसि ॥ स्थितःसन्नेवगृद्धासिनजहासिसमस्थितिम् ॥ ७४ ॥ अविवेकिषुयोसित्वंसहजात्मन्यदृच्छ या ॥ तद्रूपकथनेनालंममानल्पपदास्पद ॥ ७५ ॥ निरीहेणनिरंशेननिरहंकृतिनात्वया ॥ सतावाप्यसतावापिकर्तृत्वमुररीकृतम् ॥ ७६ ॥ जय प्रोड्डामराकारजयशांतिपरायण ॥ जयसर्वागमातीतजयसर्वागमास्पद ॥ ७७ ॥ जयजातजयाजातजयक्षतजयाक्षत ॥ जयभावज याभावजयजेयजयाजय ॥ ७८ ॥ उल्लसाम्युपशाम्यामितिष्ठाम्यधिगतोस्मिच ॥ जयीजयायजीवामिनमोमह्यंनमोस्तुते ॥ ७९ ॥ त्व यिस्थितेमयिविगतामयात्मनिस्वसंस्थितौव्यपगतरागरंजने ॥ क्वबंधनंक्वचविपदःक्वसंपदोभवाभवौक्वशममुपैमिशाश्वतम् ॥ ८० ॥ इ० वा० वा० दे० मो० उप० प्र० आत्मस्तवनंनामपट्त्रिंशःसर्गः ॥ ३६ ॥ ॥ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिसंचिंतयन्नेवप्रह्लादः परवीरहा ॥ निर्विकल्पपरानंदसमाधिंसमुपाययौ ॥ १ ॥ निर्विकल्पसमाधिस्थश्चित्रार्पितइवाचलः ॥ शैलादिवसमुत्कीर्णोबभौस्वपद मास्थितः ॥ २ ॥ तथानुतिष्ठतस्तस्यकालोबहुतरोययौ ॥ स्वगृहेभुवनस्यस्यमेरोरिवसुरद्विपः ॥ ३ ॥ बोधितोप्यसुराधीशैर्नाबुध्यतमहाम तिः ॥ अकालेबहुसेकापिबीजकोशादिवांकुरः ॥ ४ ॥ एवंवर्षसहस्राणिपीनात्मातिष्ठदेकदृक् ॥ शांतएवासुरपुरेमार्त्तंडइवचोपले ॥ ५ ॥

र्वागमास्पदसर्वप्रमाणवेद्य ॥ ७७ ॥ जयआविद्यकरूपेणजेतुंयोग्य ॥ स्वाभाविकेनत्वजयअजय्य ॥ ७८ ॥ अतएवाहमाविद्यकरूपजयवत्त्वाज्जयी ॥ प्रारब्धशेषस्यापिज यायजीवामि ॥ ७९ ॥ त्वस्त्वरूपेणावस्थितौममसर्वानर्थनिरासासिद्धिःसंपन्नेत्युपसंहरति ॥ त्वयीति ॥ मयिविगतामयात्मनिअतएवस्वयंस्थितेत्वयित्वत्स्वभावेस्थितेसतिभ वाभवौजन्ममरणेक्व ॥ अतःशाश्वतंशमंसुखविश्रांतिमुपैमिप्राप्नोमीत्यर्थः ॥ ८० ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेपट्त्रिंशःसर्गः ॥ ३६ ॥ ॥ ॥ ॥ इ हभूयःसमाधिस्थेप्रह्लादेदानवंपुरम् ॥ अनायकंदस्युहतंदुर्दशापन्नमीयते ॥ १ ॥ इतिवर्णितप्रकारमात्मानंसंचिंतयन् ॥ १ ॥ स्वपदंस्वरूपसाम्राज्यम् ॥ २ ॥ स्वगृहेतथासमा धौतिष्ठतस्तस्यसुरद्विपःप्रह्लादस्यभुवनमध्यस्थरूपमेरोरिवबहुतरःकालोययौ ॥ ३ ॥ बीजकोशाद्बीजपुटात् ॥ ४ ॥ पीनंप्रवृद्धतमंब्रह्मतद्वात्मा ॥ पीनांसइतिपाठेस्पष्टम् ॥ ए कदृक्वासदृक्शून्यइतियावत् ॥ उपलेउत्कीर्णोमार्त्तंडःसूर्यइवनिश्चलइतियावत् ॥ ५ ॥

तयापरानंदोभूमाख्यस्तद्दशायामेकांतमेकरसंपरिणामीपरिणतस्तत्तया निरानंदमत्यंतासत्यायआनंदोयस्मिंस्तथाविधंपरःपरमात्मानभासतेयस्मिंस्तथाविधंमरणमिवप्राप्तोदेह मात्रावशेषमाभासपदंद्रष्टृजनप्रतीतियोग्यत्वंगतः ॥ ६ ॥ मात्स्यन्यायोवलवद्भिःस्वजातीयैरन्यैश्चदुर्वलानांनिष्कारणंवधादिस्तेनकदर्थितंपीडितम् ॥ ७ ॥ तत्कुतस्तत्राह ॥ हिरण्यकशिपाविति ॥ दनुसुतालयेदैत्यपुरे ॥ ८ ॥ दानवानांपरेणापिप्रयत्नेनप्रह्लादःसमाधितोनाववुध्यत ॥ ९ ॥ विकसद्रूपंप्रवोधवंतमितियावत् ॥ नप्रापुर्नापश्यन् ॥ १० ॥ संविद्वादःप्रबोधवार्त्तापि ॥ विचेतसोगलितचित्तस्य ॥ गतोभास्वान्सूर्योयस्याःसकाशात्तथाविधायाभुवोभूमेरंतःपौरुषःसुषुप्तपुरुषसंबंधीस्नानदानप्रस्थानधावनादिचेष्टाक्रम इव ॥ ११ ॥ उद्विग्नेषुदुर्वलेषुदैत्येषुगतेषुवलवत्सुचदैत्येषुयथाकामंदस्युवद्यथेच्छंविचरत्सुव्यवहरत्सुसत्सुपातालंचिरायमात्स्यन्यायविपर्यस्तमभूदितिपरेणान्वयः ॥ १२ ॥

परानंददशैकांतपरिणामितयातया ॥ निरानंदंपराभासमिवाभासपदंगतः ॥ ६ ॥ एतावताथकालेनतद्रसातलमंडलम् ॥ बभूवारा जकंतीक्ष्णंमात्स्यन्यायकदर्थितम् ॥ ७ ॥ हिरण्यकशिपौक्षीणेसमाधौतत्सुतेस्थिते ॥ नवभूवापरःकश्चिद्राजादनुसुतालये ॥ ८ ॥ असु रेशार्थिनांतेषांदानवानांसमाधितः ॥ परेणापिप्रयत्नेनप्रह्लादोनव्यवुध्यत ॥ ९ ॥ नप्रापुर्विकसद्रूपंपतितममरारयः ॥ लसत्पत्रलताजा लंनिशिपद्ममिवालयः ॥ १० ॥ संविद्वादोनतस्यांतरवोध्यतविचेतसः ॥ भुवश्चेष्टाक्रमइवपौरुषोगतभास्वतः ॥ ११ ॥ अथोद्विग्नेषुदै त्येषुगतेष्वभिमतांदिशम् ॥ विचरत्सुयथाकाममराजनिपुरेपुरा ॥ १२ ॥ चिरायपातालमभूदभूपालतयातया ॥ मात्स्यन्यायविपर्य स्तमस्तंगतगुणक्रमम् ॥ १३ ॥ वलिर्मुक्तावलपुरंमर्यादाक्रमवर्जितम् ॥ सर्वार्त्ताशेषवनितंपरस्परहृतांवरम् ॥ १४ ॥ प्रलापाक्रंदपुरु पंविसंस्थानपुरांतरम् ॥ लुठद्युद्यानगरंव्यर्थानर्थकदर्थितम् ॥ १५ ॥ चिंतापरासुरगणंनिरन्नफलवांधवम् ॥ अकांडोत्पातविवशंध्व स्ताशामुखमंडलम् ॥ १६ ॥ सुरार्भकपराभूतंभूतैराक्रांतमंत्यजैः ॥ भूतरिक्तमलक्ष्मीकमुच्छिन्नप्रायकोटरम् ॥ १७ ॥ अनियतवनि तार्थमंत्रयुद्धंहृतधनदारविराविंतसमंतात् ॥ कलियुगसमयोद्भटोत्कटाभंतदसुरमंडलमाकुलंवभूव ॥ १८ ॥ ॥इ०वा०वा०दे०मो० उपशमप्रकरणेअसुरमंडलव्याकुलीभवनंनामसप्तत्रिंशःसर्गः ॥ ३७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ १३ ॥ मात्स्यन्यायमेवतत्रोपपादयति ॥ वलीत्यादिना ॥ वलिभिर्वलवद्भिर्मुक्तान्यपहृतान्यवलानांपुराणियत्र ॥ सर्वेभ्यआर्त्ताःपीडिताअशेषावनिताःस्त्रियोयत्र ॥ १४ ॥ विसंस्थानंभग्नसन्निवेशम् ॥ उद्याननगरपदाभ्यांतत्स्थावृक्षाजनाश्चलक्ष्यंते ॥ १५ ॥ ध्वस्तानिरेणुव्याप्तान्याशानांदिशांमुखमंडलानियत्र ॥ १६ ॥ सुराणामर्भकैरपिपराभूतं तिरस्कृतम् ॥ अंत्यजैस्तामसैर्भूतैश्चंडालश्वशृगालरक्षःपिशाचादिभिः ॥ १७ ॥ ननियतानिनियमवंतिवनिताअर्थाधनानिमंत्राःसौहार्दसंकेतायुद्धानितन्निमित्तवैराणिचयस्य ॥ कलियुगसमयेउद्भटाःपरस्वहरणशूरायेउत्कटाःक्रूरादस्यवस्तदाभम् अतएवाकुलंसर्वतोभयोद्विग्नंवभूव ॥ १८ ॥ ॥ इतिश्रीवा०ता०उपशमप्र०सप्तत्रिंशःसर्गः ॥ ३७ ॥

१ अत्रवलिमुक्तेतिपाठोपेक्षितइतिभाति

जगद्व्यवस्थासिद्ध्यर्थंहरेश्चितोपवर्ण्यते ॥ इहदैत्यकुलंत्रातुंप्रह्लादस्यप्रबोधने ॥ १ ॥ अखिलानांजगज्जालसंबंधिनांक्रमाणांनियतीनांपालनमेवदेवनंक्रीडनंयस्य ॥ १ ॥ प्रा
वृणिनिद्राव्यपगमेकार्त्तिकांतेइतियावत् ॥ देवानामर्थंप्रयोजनंसाधयितुमितिशेषः ॥ अनेनदेवैःकालेस्तुत्याप्रबोधितइतिगम्यते ॥ जागर्तीत्रैलोक्यसंबंधिनीगतिंतात्कालिक
स्थितिम् ॥ २ ॥ विलोकनक्रममेवविविच्याह ॥ त्रिविष्टपमित्यादिना ॥ पार्थिवंभूलोकसंबंधिनमाचारंजनानांशुभाशुभाचरणम् ॥ मनसापातालमाजगामपातालस्थितिप
र्यालोचितवानितियावत् ॥ ३ ॥ तत्रपातालेप्रह्लादद्दानवेस्थिरेसमाधानेसमाधौस्थितेसतिइंद्रस्यपुरेस्वर्गेप्रौढिमभिवृद्धिमुपागतांसंपदंदृष्ट्वापूर्वंक्षीरोदार्णवशायिनःपश्चात्प्रबुद्ध्य
व्यालतल्पतलस्थस्यतत्रापिपद्मासनबंधेनस्थितस्यशंखचक्रगदापाणेर्विष्णोर्मनःस्वकल्पितेनातिभास्वतात्रैलोक्याब्जस्यमहताअलिनाभ्रमरभूतेनशरीरेणइदंवक्ष्यमाणप्रकारं

॥ श्रीवसिष्ठउवाच ॥ ॥ अथाखिलजगज्जालक्रमपालनदेवनः ॥ क्षीरोदनगरेशेषशय्यासनगतोहरिः ॥ १ ॥ प्रावृण्निद्राव्युपरमेदेवा
र्थमरिसूदनः ॥ धियाविलोकयामासकदाचिज्जागतींगतिम् ॥ २ ॥ त्रिविष्टपंस्वमनसापार्थिवंचावलोक्यसः ॥ आचारमाजगामाशु
पातालमरिपालितम् ॥ ३ ॥ तत्रस्थिरसमाधानेस्थितेप्रह्लाददानवे ॥ दृष्ट्वासंपदमिंद्रस्यपुरेप्रौढिमुपागताम् ॥ ४ ॥ व्यालतल्पतलस्थ
स्यक्षीरोदार्णवशायिनः ॥ शंखचक्रगदापाणेर्देहस्यांतरचारिणः ॥ ५ ॥ पद्मासनस्थस्यमनःशरीरेणातिभास्वता ॥ इदंसंचिंतयामास
त्रैलोक्याब्जमहालिना ॥ ६ ॥ प्रह्लादेपदविश्रांतेपातालेगतनायके ॥ कष्टंसृष्टिरियंप्रायोनिर्दैत्यत्वमुपागता ॥ ७ ॥ दैत्याभावेसुरश्रेणी
निर्जिगीषुपदंगता ॥ शममेष्यत्यदृष्टाब्दपटलेपुसरिद्यथा ॥ ८ ॥ मोक्षाख्यंनिर्गतद्वंद्वंततोयास्यतितत्पदम् ॥ क्षीणाभिमानविरसालतेव
प्रविशुष्कताम् ॥ ९ ॥ देवौघेशांतिमायातेभुवियज्ञतपःक्रियाः ॥ अदेवत्वफलाःसर्वाःशममेष्यंत्यसंशयम् ॥ १० ॥ क्रियास्वथोपशांता
सुभूर्लोकोस्तमुपैष्यति ॥ असंसारप्रसंगोथतस्यनाशेभविष्यति ॥ ११ ॥ आकल्पांतंत्रिभुवनंयदिदंकल्पितंमया ॥ नाशमेष्यत्यकालेन
तापेहिमकणोयथा ॥ १२ ॥

कर्त्तव्यंसंचिंतयामासेतित्रयाणामन्वयः ॥ ४ ॥ ५ ॥ ६ ॥ पदंसमाधिसाम्राज्यपदंतत्रविश्रांते ॥ ७ ॥ शममरागद्वेषताम् ॥ नदृष्टान्यब्दपटलानियेपुतथाविधेपुअनावृष्टिकाले
पु ॥ ८ ॥ ततःशमान्निर्गतद्वंद्वंगतशीतोष्णादिद्वंद्वोपप्लवमद्वितीयमितिवा ॥ विरसास्वर्गसुखाद्विरक्ताजलसेकशून्याच ॥ ९ ॥ द्वेष्याभावात्स्वर्गसुखेदुर्लभत्वादर्शनादुपेक्षापत्तेः
स्वतःसात्विकत्वाच्चदेवौघेशांतिमायातेसति ॥ मुक्तेश्चबिभ्यतोदेवामोहेनापिदधुर्नरान् ॥ तस्मादेषांतन्नप्रियंयदेतन्मनुष्याविद्युः ॥ तस्मादेतेसुराविघ्नमाचरंतिशपंतिच ॥ प्रमा
दिनोबहिश्चित्ताःपिशुनाःकलहोत्सुकाः ॥ सन्यासिनोपिदृश्यंतेदेवसंदूपिताशयाइत्यादिश्रुतिस्मृतिवार्त्तिकादिप्रसिद्धदेवसंदूपिताशयत्वासिद्धेर्मनुष्याणामपिशमादिप्रसंगेभुवि
यज्ञतपःक्रियाअदेवत्वफलाःसत्यःशममुत्सादमेष्यंतीत्यर्थः ॥ १० ॥ अस्तुक्रियोत्सादःकाक्षतिस्तत्राह ॥ क्रियास्विति ॥ भूर्लोकपदग्रहणंकर्मभूमिपरम् ॥ असंसैवयर्थ्यैतस्यनाशे
वैयर्थ्यंकर्माधीनसंसारस्योच्छेदप्रसंगइत्यर्थः ॥ ११ ॥ अस्त्वेवंकिततस्तेक्षतंतत्राह ॥ आकल्पांतमिति ॥ १२ ॥

अस्मिन्आभोगेजगत्संस्थानेविलीयक्षयमागतेसतिस्वलीलायाःक्षयकारिणामयाकिमुचितंकृतंभवतिनकिंचिदित्यर्थः ॥ १३ ॥ ततःस्वलीलाक्षयादहमपिलीलार्थस्यवपुषः प्रशममुपसंहारमाधायसंपाद्यअपुनःसंसारोद्भवायतस्मिन्पूर्णात्मपदेस्थितिमेष्यामिप्राप्स्यामि ॥ संभावनाधिकेपिभविष्यतिलृङेव ॥ १४ ॥ एवमेवमुक्तनानाप्रकारभेदेन अकांडेअनवसरेजगत्युपशमंगतेसतिइहदेवमनुष्यादिजीववर्गेश्रेयोनपश्यामीतिनअपितुपश्याम्येव ॥ वैराग्यात्प्रकृतौलयइतिस्मृतेःप्रकृतिलयेसुषुप्ताविवसर्वदुःखोपशमलक्षण श्रेयःसिद्धेःकिंतुतमेवैतंवेदानुवचनेनब्राह्मणाविविदिषंति अनेकजन्मसंसिद्धस्ततोयातिपरांगतिमित्यादिश्रुतिस्मृतिसिद्धानेकजन्मानुष्ठितनिष्कामकर्मसाध्यविविदिषातत्त्वसा क्षात्काराभावान्मूलाज्ञानावरणानिवृत्तेर्बीजेसतिपुनरावृत्तिशंकाप्रसक्तेश्चननिरतिशयानंदावाप्तिलक्षणंश्रेयःकस्यचित्सिद्ध्यतीतिमन्ये ॥ अतःक्रमेणसर्वेषांतल्लाभार्थंदानवा

किमेवमस्मिन्नाभोगेविलीयक्षयमागते॥ कृतंमयेहभवतिस्वलीलाक्षयकारिणा॥१३॥ ततोहमपिशून्येस्मिन्नष्टचंद्रार्कतारके॥ वपुः प्रशांतिमाधायस्थितिमेष्यामितत्पदे ॥ १४ ॥ अकांडएवमेवंहिजगत्युपशमंगते ॥ नेहश्रेयोनपश्यामिमन्येजीवंतुदानवाः ॥ १५ ॥ दैत्योद्योगेनविबुधास्ततोयज्ञतपःक्रियाः॥ तेनसंसारसंस्थानंनसंसारक्रमोन्यथा॥१६॥ तस्माद्रसातलंगत्वायथावत्स्थापयाम्यहम्॥ स्वेक्रमेदानवाधीशमृतुःपुनरिवद्रुमम्॥ १७॥ विनाप्रह्लादमथचेदितरंदानवेश्वरम् ॥ करोमितदसौमन्येदेवानासादयिष्यति ॥ १८ ॥ प्रह्लादस्यत्वयंदेहःपश्चिमःपावनोमहान्॥ आकल्पमिहवस्तव्यंदेहेनानेनतेनच॥ १९ ॥ एवंहिनियतिर्देवीनिश्चितापारमेश्वरी॥ प्रह्लादे नयथाकल्पंस्थातव्यमिहदेहिना॥२०॥ तस्मात्तमेवगत्वातुदैत्येंद्रंबोधयाम्यहम्॥ गर्जन्गिरिनदीसुमंमयूरमिववारिदः॥ २१ ॥ जीव न्मुक्तसमाधिस्थःकरोत्वसुरनाथताम् ॥ मणिर्मुक्तमनस्कारःप्रतिबिंबक्रियामिव॥ २२ ॥ नहिनश्यतिसर्गोयमेवंसहसुरासुरैः॥ भवि ष्यतिचतद्वंद्वंतन्मेक्रीडाभविष्यति॥ २३॥ सर्गक्षयोदयावेतौसुसमौममयद्यपि॥ तथापीदंयथासंस्थंभवत्वन्येनकिंमम॥ २४॥ भावा भावेपुयत्तुल्यंतन्नाशेतस्स्थितौचवा ॥ यःप्रयत्नस्त्वबुद्धित्वात्तद्योगगमनंभवेत् ॥ २५ ॥ तस्माद्यामिपातालंबोधयाम्यसुरेश्वरम् ॥ स्थैर्यंयामिनसंसारलीलांसंपादयाम्यहम् ॥ २६॥

जीवंत्वित्यर्थः ॥ १५ ॥ तमेवक्रमंपुनःसंक्षिप्याह ॥ दैत्येति ॥ विबुधादेवाः ॥ ततस्तेभ्योविबुधेभ्यः ॥ १६ ॥ यथावत्यथापूर्वं ॥ ऋतुर्वसंतादिः ॥१७॥ १८ ॥ १९ ॥ २०॥ गर्जन्वारिदः ॥ २१ ॥ जीवन्मुक्तानांयःसदातनःअसं सक्तिलक्षणःसमाधिस्तत्स्थः ॥ मुक्तमनस्कारःमनस्तच्चेष्टारहितः ॥ प्रतिबिंबक्रियांस्वस्मिन्सन्निहितवस्तुप्रतिबिंबधारणम् ॥ २२ ॥ तत्प्रसिद्धम् ॥ द्वंद्वपदेनतत्क्रियायुद्धंलक्ष्यते ॥ २३ ॥ सर्गस्यसृज्यस्यजगतःक्षयोदयौ ॥ प्राक्तनसर्गसंस्थामनतिक्रम्येतियथासंस्थम्॥ पदार्थानतिवृत्तावव्ययीभावः ॥ २४ ॥ ननुयोगनिद्रयास्वरूपसुखगमनंमुक्तादे त्यपुरगमनंतवानुचितमित्याशंक्याह ॥ भावेति ॥ अबुद्धित्वादभिनिवेशविरहाद्योगमनादिप्रयत्नस्तद्योगगमनमेवभवेन्नान्यतोगमनम् यतोयद्योगनिद्राप्राप्यंसुखंगमनयत्नादे र्भावाभावेपूत्पत्त्यनुत्पत्तिषुतन्नाशेतत्स्थितौचसममित्यर्थः ॥ २५ ॥ गच्छन्नप्यहंस्थैर्यमचलत्वमेवयामियतोनाज्ञवत्संसारलीलांसंपादयामीत्यर्थः ॥ २६ ॥

प्रोद्धतानांनिर्मर्यादानांदस्यूनामाचारेणघोरंभयानकमसुरपुरमवाप्यगत्वाविवस्वान्सूर्यःकमलमिवदैत्यंप्रह्लादंसमाधेरुद्बोधयामः॥ तेनचेदमखिलंजगद्यागुक्तरीत्यास्थैर्यमभ्या
नयामः॥ यथाघनान्विधत्तेइतिघनविधिर्वर्षर्त्तुश्चंचलंमेघजालंशैलेहिमवदादौस्थैर्यमभ्यानयतितद्वदित्यर्थः॥२७॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेऽष्टत्रिं
शःसर्गः॥ ३८॥ ॥ ॥५॥ ॥हरिर्दैत्यपुरंगत्वाशंखनादप्रबोधितम्॥ प्रह्लादमवदद्राज्यमाकल्पंपाल्यतामिति॥ १॥ क्षीरोदांतर्गतश्वेतद्वीपांतर्गतादात्मकादात्मीयात्पुरा
त्॥ परिवारेणसहेतिशेषः॥ सानुःप्रस्थस्तेनसहितःअचलोमंदरइव॥ अचलःपरमार्थतश्चलनशून्यइतिवा॥१॥ धातृसंकल्पादेवस्तंभितंपातालकुहराप्रवेशिअंभोयस्मिंस्तथा

असुरपुरमवाप्यप्रोद्धताचारघोरंकमलमिवविवस्वान्दैत्यमुद्बोधयामः॥ जगदिदमखिलंस्वस्थैर्यमभ्यानयामोघनविधिरिवशैलेचंच
लंमेघजालम्॥ २७॥ ॥इ०वा०वा०दे०मोक्षोपायेपूपशमप्रकरणेपरमेश्वरवितर्कोनामाष्टत्रिंशःसर्गः॥ ३८॥ ॥५॥ ॥
॥श्रीवसिष्ठउवाच॥ ॥इतिसंचिंत्यसर्वात्माक्षीरोदादात्मकात्पुरात्॥ चचालपरिवारेणसहसानुरिवाचलः॥ १॥ क्षीरोदतलरंध्रेणते
नैवस्तंभितांभसा॥ प्रह्लादनगरंप्रापशक्रलोकमिवापरम्॥ २॥ हेममंदिरकोशस्थंददर्शात्रासुरंहरिः॥ अथशैलगुहालीनंसमाधिस्थ
मिवाब्जजम्॥ ३॥ तत्रतेतेजसादैत्यावैष्णवेनावधूलिताः॥ दूरंययुर्दिनेशांशुवित्रस्ताइवकौशिकाः॥ ४॥ द्वित्रैःसहासुरैर्मुख्यैःपरिवा
रयुतोहरिः॥ प्रविवेशासुरगृहंतारावानिवखंशशी॥ ५॥ वैनतेयासनस्थोसौलक्ष्मीविधुतचामरः॥ स्वायुधादिपरीवारोदेवर्षिमुनिवं
दितः॥ ६॥ महात्मन्संप्रबुध्यस्वेत्येवंविष्णुरुदाहरन्॥ पांचजन्यंप्रदध्मौचध्वनयन्ककुभांगणम्॥ ७॥ महतातेनशब्देनवैष्णवप्राणज
न्मना॥ तुल्यकालपरिक्षुब्धकल्पाभ्रार्णवरंहसा॥ ८॥ आसुरीजनताभूमौपपातागतसंभ्रमा॥ मत्तलीलाभ्रनादेनराजहंसावलीयथा
॥ ९॥ जहर्षजनितानंदावैष्णवीगतसंभ्रमा॥ जनताजलदध्वानफुल्लवकुटजावली॥ १०॥ बभूवसंप्रबुद्धात्मादानवेशःशनैःशनैः॥
मेघावसरउत्फुल्लकदंबइवकानने॥ ११॥ ब्रह्मरंध्रकृतोत्थानाप्राणशक्तिरथासुरम्॥ शनैराक्रमयामासगंगासर्वमिवार्णवम्॥ १२॥
क्षणादाक्रमयामासप्राणश्रीस्सर्वतोसुरम्॥ उदयानंतरंसौरीप्रभेवभुवनांतरम्॥ १३॥ प्राणेपुरंध्रनवकेप्रवृत्तेष्वथतस्यचित्॥ चेत्यो
न्मुखीबभूवांतःप्राणदर्पणबिंबिता॥ १४॥

विधेनक्षीरोदस्यतलरंध्रेणाधश्छिद्रेण॥ शक्रलोकमिवरम्यमित्यर्थः॥ २॥ अथअघप्रह्लादनगरे॥ असुरंप्रह्लादम्॥ शैलस्यमेरोर्गुहायांलीनमब्जजंब्रह्माणमिव॥ ३॥ अव
धूलिताःधूलिवदवधूताः॥ कौशिकाउलूकाः॥ ४॥ ५॥ ६॥ ककुभांदिशाम्॥ ७॥ प्राणोबलंतज्जन्मना॥ तुल्यकालपरिक्षुब्धानिप्रलयाभ्राणिप्रलयार्णवाश्चतद्रंहसा॥
रंहःशब्देनतत्प्रभवोध्वनिर्लक्ष्यते॥ ८॥ आगतसंभ्रमाप्रोद्भूतभयमूर्छा॥ ९॥ १०॥ दानवेशःप्रह्लादः॥ ११॥ संप्रबोधक्रमंप्रपंचयति॥ ब्रह्मरंध्रेत्यादिना॥ आक्रमयामा
सआपूरयामास॥ १२॥ १३॥ प्राणेपुइंद्रियेषु॥ प्राणोलिंगदेहस्तल्लक्षणेदर्पणेबिंबिताप्रतिफलिता॥ १४॥

चेतनीयविषयोन्मुखी चित् चेत्याकारसंस्कारोद्बोधाच्चेत्यमिवभूत्वाचिज्जडोभयरूपतालक्षणांमनस्तामुपाययौप्राप ॥ १५॥ तस्यनेत्रेशनैर्विकसनोन्मुखेबभूवतुः॥ १६॥ प्राणापानाभ्यामंतःप्रविष्टाभ्यांपरामृष्टायाउद्बोधितायाआसमंतान्नाडीविवरेषुसंविदःसंवेदनान्निमित्तात् ॥ वातेनार्त्तस्यनुन्नस्यपद्मस्येवअस्यतद्देहस्यस्पंदईषच्चलनंसमजायत ॥ १७॥ ॥ १८ ॥ १९ ॥ बर्हीमयूरः ॥ घनरवान्मेघशब्दात् ॥ २० ॥ जातमननंसंजातप्रज्ञादाहंभावप्रत्यभिज्ञम् ॥ पीवरीसम्यगुपचितापूर्वावस्थादिस्मृतिर्यस्यतम् ॥ २१ ॥ महतींलक्ष्मींदैत्यराज्यश्रियमात्मीयांस्वीयामाकृतिंदेहाकारंचस्मर ॥ त्वयादेहविस्मरणेनाऽकांडेऽनवसरएवदेहस्यविरामोऽवसानंकिंकिमर्थंक्रियते ॥ २२ ॥ ननुनहवैसशरीरस्यप्रिया

चेतनीयोन्मुखीचेत्यंचिन्मनस्तामुपाययौ॥ द्वित्वंमुकुरसंक्रांतामुखश्रीरिवराघव ॥ १५॥ किंचिदंकुरितेचित्तेनेत्रेविकसनोन्मुखे ॥ शनैर्बभूवतुस्तस्यप्रातर्नीलेयथोत्पले॥ १६॥ प्राणापानपरामृष्टानाडीविवरसंविदः॥ वातार्त्तस्येवपद्मस्यस्पंदोस्यसमजायत ॥ १७॥ निमेषांतरमात्रेणमनःपीवरतांययौ॥ तस्मिन्प्राणवशात्पूर्णेतरंगइववारिणि ॥ १८॥ अथासौविकसन्नेत्रमनःप्राणवपुर्बभौ॥ अब्दोदितइवादित्येसरःस्फुरितपंकजम्॥ १९॥ अस्मिन्नवसरेयावद्बुध्यस्वेत्यवदद्विभुः॥ प्रबुद्धस्तावदेषोभूद्बर्हीघनरवादिव ॥ २०॥ प्रफुल्लनयनंजातमननंपीवरस्मृतिम्॥ उवाचैनंत्रिलोकेशःपुरानाभ्यब्जजंयथा॥ २१॥ साधोस्मरमहालक्ष्मीमात्मीयांस्मरचाकृतिम् ॥ अकांडएवकिंदेहविरामःक्रियतेत्वया॥ २२॥ हेयोपादेयसंकल्पविहीनस्यशरीरगैः॥ भावाभावैस्तवार्थःकिमुत्तिष्ठोत्तिष्ठसंप्रति॥ २३॥ स्थातव्यमिहदेहेनकल्पंयावदनेनते॥ वयंहिनियतिंविद्मोयथाभूतमनिंदिताम्॥ २४॥ जीवन्मुक्तेनभवताराज्यएवेहतिष्ठता॥ क्षेपणीयागतोद्वेगमाकल्पांतमियंतनुः॥ २५॥ तन्वांकल्पांतशीर्णायांस्वेमहिम्नित्वयानघ॥ वस्तव्यंस्फुटितेकुंभेकुंभाकाशेनखेयथा॥ २६॥ कल्पांतस्थायिनीशुद्धादृष्टलोकपरावरा॥ इयंतवतनुर्ज्ञाताजीवन्मुक्तविलासिनी॥ २७॥ नोदिताद्वादशादित्यानप्रलीनाःशिलोच्चयाः॥ नजगज्ज्वलितंसाधोतनुंत्यजसिकिंमुधा॥ २८॥ वायुर्वहतिनोन्मत्तस्त्रिलोकीभस्मधूसरः॥ लोलामरकपालांकस्तनुंत्यजसिकिंमुधा॥ २९॥

प्रिययोरपहतिरस्तीतिश्रुतेःसर्वजनानांतथानुभवाच्चानर्थहेतुर्देहस्मरणमितिचेत्तत्राह ॥ हेयेति ॥ हेयोपादेयसंकल्पत्यागेसत्यपिदेहेप्रियाप्रियैर्भावाभावैस्तवार्थोनास्तीतिनानर्थप्रसक्तिरित्यर्थः ॥ २३ ॥ कियत्कालंतर्हिदेहधारणंतत्राह ॥ स्थातव्यमिति ॥ नियतिंत्वदायुर्नियमम् ॥ २४ ॥ क्षेपणीयाव्यवहारेप्रेरणीया ॥ २५ ॥ कल्पांतेतर्हिमयाकथंस्थेयंतदाह ॥ तन्वामिति ॥ स्वेमहिम्निस्वात्मभूतेनिरतिशयमहत्त्वे ॥ खेमहाकाशे ॥ २६ ॥ २७ ॥ तर्हिकिंकल्पांतःसन्निहितोनेत्याह ॥ नोदिताइत्यादिना ॥ २८ ॥ लोलान्यमराणांशिरःकपालान्यंकश्चिह्नंयस्यतथाविधः ॥ २९ ॥

पुष्करावर्त्ताख्येषुसंवर्त्तमेघेषुविद्युतस्तडितोनस्फुरंति ॥ इदानीमितिसर्वत्रानुषंगः ॥ ३० ॥ धरायाभूमेर्दह्यमानायाआसमंतात्सरणंसारःप्रकंपस्तेनविदीर्यमाणत्वाद्रणंतःशैला
यासु ॥ ककुभोदिशः ॥ अमूर्त्तानांविशरणायोगाद्दिगंतस्थाब्रह्मांडभित्तयोगृह्यते ॥ ३१ ॥ इदंजगत् जरठाःप्रवृद्धाजीमूताःप्रलयमेघायस्मिंस्तथाविधंसतब्रह्मविष्णुरुद्राख्यदे
वत्रयीमात्रशेषंभूत्वानस्थितम् ॥ ३२ ॥ अद्रेर्लोकालोकाचलस्यभूपद्मदलप्रायैःशृंगैरनुमितमंतरंभेदोयासांनसूर्योदयादिनातथाविधादिशोब्रह्मांडभित्तयः ॥ ३३ ॥ स्फुटतोदी
र्यमाणस्याद्रींद्रस्यमेरोरिवटंकाराध्वनयोयेषांसौराद्वादशादित्यसंबंधिनःकराःकिरणानभ्रमंतीतिनञनुपज्जते ॥ ३४ ॥ भूतावकीर्णास्वंडजादिचतुर्विधप्राणिव्याप्तासु ॥ अहं

अशोकइवमंजर्यःपुष्करावर्त्तविद्युतः॥ नस्फुरंतिजगत्कोशेतनुंत्यजसिकिंमुधा॥ ३०॥ धरासाररणच्छैलाःप्रज्वलज्ज्वलनोज्ज्वलाः॥
ककुभोनविशीर्यंतेतनुंत्यजसिकिंमुधा॥ ३१॥ नब्रह्मविष्णुरुद्राख्यत्रयीशेषमिदंस्थितम्॥ जगज्जरठजीमूतंतनुंत्यजसिकिंमुधा॥ ३२॥
नचेहाद्रिदलश्रेणिमात्रैकानुमितांतराः॥ दिशोजर्ज्जरतांयातास्तनुंत्यजसिकिंमुधा॥ ३३ ॥ स्फुटदद्रींद्रटंकाराःकराःसौराभ्रमंतिखे॥
कल्पाभ्राणिनगर्ज्जंतितनुंत्यजसिकिंमुधा ॥ ३४ ॥ अहंभूतावकीर्णासुसालोकासुखगध्वजः॥ विहरामिदशाशासुमादेहमवधीरय
॥ ३५॥ इमेवयमिमेशैलाभूतानीमान्ययंभवान्॥ इदंजगदिदंव्योममादेहमवधीरय॥ ३६॥ पीवराज्ञानयोगेनयस्यपर्याकुलंमनः॥
दुःखानिविनिकृंतंतिमरणंतस्यराजते॥ ३७॥ कृशोतिदुःखीमूढोहमेताश्चान्याश्चभावनाः॥ मतिंयस्यावलुंपंतिमरणंतस्यराजते॥ ३८॥
आशापाशनिबद्धोंतरितश्चेतश्चनीयते॥ योविलोलमनोवृत्त्यामरणंतस्यराजते ॥ ३९ ॥ यस्यतृष्णाःप्रभंजंतिहृदयंदृढभावनाः॥ प्र
रोहमिवगर्धभ्योमरणंतस्यराजते॥ ४०॥ चित्तवृत्तिलतायस्यतालोत्तालमनोवने ॥ फलितासुखदुःखाभ्यांमरणंतस्यराजते॥ ४१॥
रोमराजीलताजालंयस्येमंदेहदुर्द्रुमम् ॥ अनर्थौघोहरत्युच्चैर्मरणंतस्यराजते॥ ४२॥ यस्यस्वदेहविपिनमाधिव्याधिदवाग्नयः॥ दहंति
लोलांगलतंमरणंतस्यराजते॥ ४३॥ कामकोपात्मकायस्यस्फूर्जंत्यजगरास्तनौ॥ अंतःशुष्कद्रुमस्येवमरणंतस्यराजते॥ ४४॥

विष्णुर्विहरामि ॥ माअवधीरयत्यज ॥ तथाचेदानींतवमरणंनशोभतइत्यर्थः ॥ ३५ ॥ ३६ ॥ कस्यतर्हिमरणमुचितंतमाह ॥ पीवरेत्यादिना ॥ यस्यमनःअज्ञानयोगेनदुःखा
निविनिकृंतंतितस्यमरणंराजते ॥ अत्यंतपीडितोजीवःस्थूलदेहंविमुंचतीतिस्वतःसिद्धमरणहेतूपपत्तेरित्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥ दृढभावनाअपदृत्नविवेकांकुरास्तृष्णा
यस्यहृदयंप्रभंजंतिआमर्द्दंति यथामहाफलंशाल्यादंकुरप्ररोहंगर्द्धेभ्यस्तद्भिलाषिपश्वादिभ्योमूढाःप्रभंजंतितद्वत् ॥ ४० ॥ तालवृक्षवदुत्तालेरागाद्युच्छ्रायवतिमनोलक्षणेवने
॥ ४१ ॥ रोमराज्येवलताजालंशाखासमूहोयस्मिंस्तथाविधंदेहलक्षणंदुर्द्रुमंविपवृक्षंकामाद्यनर्थलक्षणओघश्चंडमारुतप्रवाहोहरति ॥ ४२ ॥ ४३ ॥ अंतःकोटरांतः ॥ ४४ ॥

मरणस्वरूपपर्यालोचनेपितत्त्वज्ञस्यतन्नसंभवतीत्याह ॥ योयमिति ॥ स्मृतंप्रसिद्धम् ॥ तच्चतत्त्वविदोनसताआत्मनासंपादयितुंशक्यंनाप्यसतातेनदेहेनसंपादयितुंशक्यंसदात्मनोनिष्क्रियतयात्यागक्रियायोगात् असंगस्यदेहसंगाप्रसिद्धेश्च असतास्वपरित्यागस्यदूरनिरस्तत्वाच्च ॥ ननुदेहस्यासत्त्वेकिंकारणंतदाह ॥ कारणमिति ॥ वेद्यस्यप्रमाणैरवश्यवेदनार्हस्यस्वात्मनोवेदनंज्ञानमेवदेहाद्यसत्त्वेकारणम् ॥ देहादिसद्भावप्रत्ययस्याज्ञानविबंधनत्वादित्यर्थः ॥ ४५ ॥ कस्यतर्हिजीवितंशोभतेतमाह ॥ यस्येत्यादिना ॥ तथाचनदेहात्प्राणोत्क्रमणंमरणंकिंत्वात्मतत्त्वान्मतेरुत्क्रमणमेवतच्चज्ञस्यनास्त्येवेतिसदैवतस्यजीवितंशोभते ॥ अज्ञस्यतुमतिःसदैवस्वात्मतत्त्वादुत्क्रामतीत्यसौनित्यमृतस्वरूपइतिभावः ॥ ४६ ॥ किंचैकदेहाभिमानेतत्त्यागोमरणंस्याद्यस्यतुसनास्तियस्यबुद्धिस्तदीयप्रियाप्रियैर्नलिप्यतेससर्वेषुभावेषुदेहेषुविषयेषुचसमःसाधारणात्मातस्यमरणासंभवाज्जीवितमे

योयंदेहपरित्यागस्तल्लोकेमरणंस्मृतम् ॥ नसतानासतातेनकारणंवेद्यवेदनम् ॥ ४५ ॥ यस्यनोत्क्रामतिमतिःस्वात्मतत्त्वावलोकनात् ॥ यथार्थदर्शिनोज्ञस्यजीवितंतस्यशोभते ॥ ४६ ॥ यस्यनाहंकृतोभावोबुद्धिर्यस्यनलिप्यते ॥ यःसमःसर्वभावेषुजीवितंतस्यराजते ॥ ४७ ॥ योंतःशीतलयाबुद्ध्यारागद्वेषविमुक्तया ॥ साक्षिवत्पश्यतीदंहिजीवितंतस्यराजते ॥ ४८ ॥ येनसम्यक्परिज्ञायहेयोपादेयमुज्झता ॥ चित्तस्यांतेर्पितंचित्तंजीवितंतस्यशोभते ॥ ४९ ॥ अवस्तुसदृशेवस्तुन्यसक्तंकलनामले ॥ येनलीनंकृतंचेतोजीवितंतस्यशोभते ॥ ५० ॥ सत्यांदृष्टिमवष्टभ्यलीलयेयंजगत्क्रिया ॥ क्रियतेऽवासनंयेनजीवितंतस्यराजते ॥ ५१ ॥ नांतस्तुष्यतिनोद्वेगमेतियोविहरन्नपि ॥ हेयोपादेयसंप्राप्तौजीवितंतस्यशोभते ॥ ५२ ॥ शुद्धपक्षस्यशुद्धस्यहंसौघःसरसोयथा ॥ यस्माद्गुणौघोनिर्यातिजीवितंतस्यशोभते ॥ ५३ ॥ यस्मिन्श्रुतिपथंप्राप्तेदृष्टेस्मृतिमुपागते ॥ आनंदंयांतिभूतानिजीवितंतस्यशोभते ॥ ५४ ॥ यस्योदयेषु[1]हृदयेनजनांबुजानिजीवालिमंतिसकलानिविलासवंति ॥ तस्यैवभातिपरिजीवितमक्षयेंदोरापूर्णतेवदनुजेश्वरनेतरस्य ॥ ५५ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेनारायणवचनोपन्यासोनामैकोनचत्वारिंशःसर्गः ॥ ३९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

वराजतइत्यर्थः ॥ एवमग्रेप्यूह्यम् ॥ ४७ ॥ ४८ ॥ सम्यगसारतयापरिज्ञाय ॥ चित्तस्यांतेअवसानभूतेसाक्षिणि ॥ ४९ ॥ अवस्तुशुक्तिरजतादितत्सदृशेवस्तुनिवस्तुवद्भासमानेबाह्यार्थकलनात्मकमलेअसक्तंचेतोब्रह्मण्येवलीनंघृतकाठिन्यमिवविलीनंकृतमित्यर्थः ॥ ५० ॥ जगत्क्रियाजगतोव्यवहारः ॥ ५१ ॥ हेयस्यदुःखहेतोःसंप्राप्तौनोद्वेगमेति ॥ उपादेयस्यसुखसाधनस्यसंप्राप्तौनांतस्तुष्यति ॥ ५२ ॥ शुद्धास्तत्त्वविदएवपक्षाःस्वीयायस्यस्वयंचशुद्धस्य ॥ सरःपक्षेशुद्धाःशुभ्राहंसाबकादयःपक्षायस्य ॥ स्वतःशुद्धस्यनिर्मलस्यपवित्रस्यच ॥ गुणाःशांतिक्षमामाधुर्यादयःशैत्यसौरभ्यादयश्च ॥ ५३ ॥ श्रुतौकर्णौतत्पथम् ॥ ५४ ॥ यस्यउदयेषुसंपत्सुउद्गमनेषुचजीवलक्षणभ्रमरवंतिजनलक्षणान्यंबुजानिकुमुदानिविलासवंतिआनंदितानिभवंति ॥ अक्षयेंदोःक्षयरोगनिर्मुक्तचंद्रस्यआपूर्णतेवतस्यैवतत्त्वविदोजीवितंराजतेनेतरस्याज्ञस्येत्यर्थः ॥ ५५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउप० एकोनचत्वारिंशःसर्गः ॥ ३९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

१ हृदयेषुइत्यपिक्वचित्पाठः

सदेहोपिविदेहोचकूटस्थोपिक्रियापरः ॥ यथाव्यवहरेज्ज्ञानीसक्रमोहरिणोच्यते ॥ १ ॥ जीवन्मुक्तस्यापिप्रह्लादस्यसन्निधिमात्रेणराज्यपरिपालननिर्वाहोपायमुपदिदिक्षुर्भ गवान्वासुदेवःसत्यपिदेहेतस्यतत्संबंधाभावात्प्रागुक्तेजीवितमरणेगौणेएवनमुख्येइतिवक्तुंजीवनमरणयोर्लौकप्रसिद्धंस्वरूपमाह॥ स्थैर्यमिति ॥ देहांतरार्थंपुनर्देहांतरग्रहणाय पू र्वदेहस्यसंत्यागउत्क्रम्यगमनंप्राणानांमरणंस्मृतम् ॥ मृङ्प्राणत्यागेइतिधात्वर्थप्रसिद्धेरित्यर्थः ॥ १ ॥ द्वाभ्यांदेहस्थैर्यप्राणोत्क्रमणपक्षाभ्याम् ॥ अशरीरंशरीरेपुनतस्यप्राणाउ त्क्रामंत्यत्रैवसमवनीयंतइतिश्रुतेरितिभावः ॥ २ ॥ कथंतर्हिजीवितंतवशोभतेमरणंनशोभतेइतित्वयोक्तंतत्राह ॥ निदर्शनार्थमिति ॥ ज्ञानाज्ञानगुणदोषप्रपंचनार्थमित्यर्थः॥३॥ अदेहत्वेविदेहदृक्विगतदेहदृष्टिरितिहेतुः ॥ असक्तत्वादासंगविरहात् ॥ ४ ॥ देहसंस्थत्वंकथंज्ञायतेतत्राह ॥ स्पर्शेति ॥ देहेशीतोष्णादिस्पर्शसंवेदननिमित्तत्वादन्यत्रतद्दर्शना

श्रीभगवानुवाच॥ ॥स्थैर्यंदेहस्यहृष्टस्यजीवितंप्रोच्यतेजनैः॥ देहांतरार्थंदेहस्यसंत्यागोमरणंस्मृतम्॥१॥ द्वाभ्यांचैवासिपक्षाभ्यामा भ्यांमुक्तोमहामते॥ किंतेमरणमस्तीहकिंवाजीवितमस्तिते॥ २॥ निदर्शनार्थमेतत्तुमयोक्तमरिमर्दन॥ नत्वंजीवसिसर्वज्ञप्रियसेनक दाचन॥ ३॥ देहसंस्थोप्यदेहत्वाददेहोसिविदेहदृक्॥ व्योमसंस्थोप्यसक्तत्वाद्व्योमेवहिमारुतः॥४॥ स्पर्शसंवोधकारित्वाद्देहएवास्ति सुव्रत॥ उत्सेधारोधकत्वेनखमुत्सेधस्यकारणम्॥ ५॥ प्रबुद्धोज्ञाततत्त्वत्वाद्देहःक्वशमिनामिह॥ इदंत्वेकंपरिच्छिन्नंरूपमज्ञेपुढःस्थि तम्॥ ६॥ सर्वदासर्वमेवासिचित्प्रकाशःपरैकधीः॥ कोदेहःकोप्यदेहस्तेयंगृह्णासिजहासिच॥ ७॥ समुदेतुवसंतोवावातुवाप्रलयानि लः॥ भावाभावविहीनस्यकिमभ्यागतमात्मनः॥८॥ प्रलुठत्स्वपिशैलेषुकल्पाग्निपुदहत्स्वपि॥ वहत्सूत्पातवातेपुस्वात्मन्येवहितिष्ठति ॥ ९॥ सर्वभूतानितिष्ठंतुसर्वमेवप्रयातुवा॥ नश्यंतुवाथवर्द्धंतामात्मन्येवाभितिष्ठति॥ १०॥ क्षीयतेनक्षयंप्राप्तेवर्द्धमानेनवर्द्धते॥ न स्पंदतेस्पंदमानेदेहेस्मिन्परमेश्वरः॥ ११॥

देहएवास्तिभवानितिशेषः ॥ त्वाचेस्पर्शसंवेदनेकथमसंगात्माकारणमितितत्रदृष्टांतमाह ॥ उत्सेधेति ॥ यथातरूत्सेधेअरोधकत्वात्खमुत्सेधकारणमित्युच्यतेतद्वदित्यर्थः॥ ५॥ अदेहत्वंतर्हिकथंतत्राह ॥ प्रबुद्धइति ॥ त्वंज्ञाततत्त्वत्वात्प्रबुद्धःप्रबोधेचसतिशमिनांसर्वद्वंद्वोपशमवतांदेहःक्ववर्त्तते ॥ नहिस्वप्नोपशमेस्वाप्नदेहोस्ति ॥ इदंत्वेकंपरिच्छिन्नंदेहरूप मज्ञेष्वप्रबोधवत्सुदुःस्थितमसंभाव्यमपिस्थितमित्यर्थः ॥ ६ ॥ यद्यज्ञोपिदेहेस्थित्वादेहीतर्ह्यहमपिदेहेस्पर्शवेदनास्तिस्थितस्तद्वत्किंनस्यांतत्राह ॥ सर्वदेति ॥ प्रकाशकत्वेनस्थितिः सर्वदासर्ववस्तुष्वपितुल्येतिसर्वमेवत्वमसिनाज्ञवद्देहमात्रमित्यर्थः ॥ एवंचतवकःपदार्थोदेहःस्याद्यमहंबुद्ध्यागृह्णासिगृह्णीयाः ॥ अदेहोपिकःस्याद्यमनहंबुद्ध्याजहासित्यजेरित्य र्थः ॥ ७ ॥ ननुयदुपचयात्स्वस्यहर्षोपचयोयन्नाशनिमित्तदर्शनाच्चविषादःसदेहइतरस्त्वदेहइतिभेदःकिंनस्यादितिचेन्न तत्त्वविदोहर्षविषादहेत्वसंभवादित्याह ॥ समुदेत्वित्या दिना ॥ भाव्यतेप्रीत्यास्मर्यतइतिभावःप्रियं नभाव्यतेइत्यभावोऽप्रियंतदुभयविहीनस्येत्यर्थः ॥ ८ ॥ तिष्ठतितत्त्वज्ञइतिशेषः ॥ ९ ॥ १० ॥ ११ ॥

1084

देहस्यसंबंधिन्यहमितितादात्म्याध्यासलक्षणेदेहीतितद्धर्मसंसर्गाध्यासलक्षणेचचित्तविभ्रमेक्षीणेसतिमुधानिर्हेतुकानिष्फलाचत्यजामिनत्यजामीतिकलनाकिमुदितास्यात् ॥ नैवोदेतीत्यर्थः ॥ १२ ॥ त्यक्केदंत्यक्ष्यामीतिशेषः ॥ १३ ॥ सर्वकर्त्तारोपिकिंचनकिंचिदपिनकरिष्यंतीतिपूर्वार्द्धेनञोन्वयः ॥ तस्यकदाप्यकरणेनित्यमेवतेअकर्तृत्वपदंगतास्तिष्ठंतीत्यर्थः ॥ १४ ॥ तत्फलमाह ॥ अकर्तृत्वादिति ॥ अनुमंवापादिनाअनिष्पादितंव्रीह्यादि ॥ १५ ॥ शांतिर्निर्विक्षेपता ॥ प्रौढिकर्तृत्वमूलोच्छेदेनप्ररूढताम् ॥ १६ ॥ उक्तंव्यक्तमुपपादयति ॥ प्रबुद्धाइत्यादिना ॥ आक्रम्यपरमार्थस्वरूपाविर्भावेणपरिभूयत्यक्तंअप्राप्तंकिफलमैहिकंपरिगृह्णंतु ॥ १७ ॥ ग्राह्यग्राहकतत्संबंधलक्षणैरज्ञदशाप्रमितक्रियाकारकसंबंधघटितावांतरवाक्यार्थलक्षणावयविक्रमैर्महावाक्यप्रमेयावयवैरंगप्रधानक्रियाकलापलक्षणविकारैर्हीनःकूटस्थात्मातद्घटितसांगप्रधानक्रियानिष्पादनसाध्यंपारलौकिकंस्वर्गादिफलंवाकिंगृह्णातुकिंजहात्वित्यर्थः ॥ १८ ॥ ऐहिकामुष्मिकेष्टानिष्टसाधनहानोपादाननिमित्तग्राह्यग्राहकसंबंधोपशमेरागादिविक्षेपशांतिरुदेतिसैवरागादिमूलोच्छेदेनस्थितिमभ्यागतामोक्षनाम्नोच्यतइत्युक्तोपपादनोपसंहारः ॥ १९ ॥ एवंस्थितानामपियावत्प्रारब्धक्षयंव्यवहारसिद्धौदृष्टांतमाह ॥ सुषुप्तेति ॥ यथासुषुप्ताःस्वाप्ययेनब्रह्मप्राप्ताअपिप्राणोदराग्निरसादिस्पंदंजीवनादृष्टात्मसन्निधिमात्रेणाचरंतीत्युच्यतेतद्वज्जीवन्मुक्ताअपिचरंतिव्यवहरंतीत्यर्थः ॥ २० ॥ तद्वत्त्वमपिराज्यपालनमाचरेत्याशयेनाह ॥ परावबोधेति ॥ अर्द्धसुप्तःसुषुप्तजाग्रत्संधिस्थः ॥ २१ ॥ रम्येषुअनात्मस्वितिशेषः ॥ आत्मान्येषुआत्मास्पर्शिषुदुःखेषु ॥ स्वात्मन्येवएकंरसायनमिवमधुरंसुखंयेषाम् ॥ तथाचोक्तंवार्त्तिके ॥ दुःखीयदिभवेत्साक्षीकःसाक्षीदुःखितोभवेत् ॥ दुःखिनःसाक्षितानास्तिसाक्षिणोदुःखिताकुतइति ॥ २२ ॥ सुखदुःखाभावेतत्प्राप्तिपरिहारार्थानिकार्याणिकथंगृह्णंतितत्राह ॥ नित्येति ॥ अवांछयाअनास्थया ॥ २३ ॥

देहस्याहमहंदेहीतिक्षीणेचित्तविभ्रमे ॥ त्यजामिनत्यजामीतिकिंमुधाकलनोदिता ॥ १२ ॥ इदंकृत्वाकरोमीदमिदंत्यक्केदमित्यलम् ॥ इतितत्त्वविदांतातसंकल्पाःसंक्षयंगताः ॥ १३ ॥ प्रबुद्धाःसर्वकर्त्तारःकरिष्यंतीहकिंचन ॥ नतस्याकरणेनित्यमकर्तृत्वपदंगताः ॥ १४ ॥ अकर्तृत्वादभोक्तृत्वमर्थादेवसमागतम् ॥ संगृहीतंकिलानुप्तंकेनेहभुवनत्रये ॥ १५ ॥ शांतंकर्तृत्वभोक्तृत्वेशांतिरेवेहशिष्यते ॥ प्रौढिमभ्यागतासैवमुक्तिरित्युच्यतेबुधैः ॥ १६ ॥ प्रबुद्धाश्चिन्मयाःशुद्धाःसर्वमाक्रम्यसंस्थिताः ॥ किंत्यक्तंपरिगृह्णंतुकिंगृहीतंत्यजंतुवा ॥ १७ ॥ ग्राह्यग्राहकसंबंधप्रमितावयविक्रमैः ॥ हीनःप्रमेयावयवैःकिंगृह्णातुजहातुकिम् ॥ १८ ॥ ग्राह्यग्राहकसंबंधेक्षीणेशांतिरुदेत्यलम् ॥ स्थितिमभ्यागताशांतिर्मोक्षनाम्नाभिधीयते ॥ १९ ॥ तत्रस्थिताःसदाशांतास्त्वादृशाःपुरुषोत्तमाः ॥ सुषुप्तावयवस्पंदसाधर्म्येणचरंतिहि ॥ २० ॥ परावबोधविश्रांतवासनोजगतिस्थितिम् ॥ अर्द्धसुप्तइवेहेमांत्वंपश्यात्मस्थयाधिया ॥ २१ ॥ नरमंतेहिरम्येषुस्वात्मन्येवगताशयाः ॥ नोद्विजंतेन्यदुःखेषुस्वात्मन्येकरसायनाः ॥ २२ ॥ नित्यप्रबुद्धागृह्णंतिकार्याणीमान्यसंगिनः ॥ मुकुराइवबिंबानियथाप्राप्तान्यवांछया ॥ २३ ॥

तर्हितेकिंस्वात्मन्यप्यास्थाशून्यानेत्याह ॥ जाग्रतीति ॥ तथाचयानिशासर्वभूतानांतस्यांजागर्तिसंयमीतिभगवतापितेषामात्मास्थादर्शिता ॥ प्रविवेपंतेप्रकंपंतेव्यवहरंतीति
यावत् ॥ २४ ॥ विवक्षितार्थंसंक्षिप्योपसंहरति ॥ त्वमिति ॥ हेमहात्मंस्त्वमंतःअजितस्यविष्णोःपदवींपरमात्मपदंसमागतःप्राप्तवान्सन्नेकंकमलजवासरंकल्पपर्यंतमिहैवपाता
लेगुणगणैःकलितांराज्यलक्ष्मींभुक्त्वाअच्युतंविदेहकैवल्याख्यंच्युतिरहितंपरमास्पदंपरमपदंव्रजेत्यर्थः ॥ २५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेचत्वारिंशः
सर्गः ॥ ४० ॥ ॥ ५ ॥ ॥ गृहीतशासनांद्दत्वात्पूजांसंप्राप्यसानुगः ॥ दैत्यराज्येभिषिच्यैनंवैरंच्छंदयद्धरिः ॥ १ ॥ प्रलयेजगल्लक्षणानांरत्नानांस्वांतःप्रवेशनात्स
मुद्गेनसंपुटकेन स्रष्टिकालेत्रैलोक्यलक्षणाद्भुतप्रदर्शनशीलेन पद्मनाभेनविष्णुदेहेन इतिप्रागुक्तप्रकारेणोक्तेसति ॥१॥ प्रह्लादनामाअसौप्रागुक्तोदेहोगृहीतमननक्रमःसन्मुदाउ

जाग्रतिस्वात्मनिस्वस्थाःसुप्ताःसंसारसंस्थितौ ॥ बालवत्प्रविवेपंतेसुपुप्तसदृशाशयाः ॥ २४ ॥ त्वमजितपदवीमुपागतोंतःकमलजवास
रमेकमेवभुक्त्वा ॥ गुणगणकलितामिहैवलक्ष्मींव्रजपरमास्पदमच्युतंमहात्मन् ॥ २५ ॥ ॥ इ० वा० वा० दे० मो० उपशमप्रकरणेप्रह्ला
दबोधनंनामचत्वारिंशःसर्गः ॥ ४० ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ जगद्रत्नसमुद्गेनत्रैलोक्याद्भुतदर्शिना ॥ इत्युक्तेप
द्मनाभेनज्योत्स्नाशीतलयागिरा ॥ १ ॥ प्रह्लादनामादेहोसौविकाशिनयनांबुजः ॥ मुदोवाचवचोधीरोगृहीतमननक्रमः ॥ २ ॥ ॥ प्रह्ला
दउवाच ॥ ॥ हिताहितविचारेणराजकार्यशतेनच ॥ अत्यहंश्रमितोदेवक्षणंविश्रामतांगतः ॥ ३ ॥ भगवंस्त्वत्प्रसादेनस्थितिःसम्यग
थागता ॥ समाधावसमाधौचरूपेणाहंसमःसदा ॥ ४ ॥ चिरमंतर्महादेवदृष्टोस्यमलयाधिया ॥ पुनर्बहिरयंदृष्ट्यादिष्ट्यादेवप्रदृश्यसे ॥ ५ ॥
अहमासमनंतायामस्यांदृष्टौमहेश्वर ॥ सर्वसंकल्पमुक्तायांव्योमव्योमीवनिर्मले ॥ ६ ॥ नशोकेननमोहेननचवैराग्यचिंतया ॥ नदेहत्या
गकार्येणनसंसारभयेनच ॥ ७ ॥ एकस्मिन्विद्यमानेहिकुतःशोकःकुतःक्षतिः ॥ कुतोदेहःक्वसंसारःक्वस्थितिःक्वभयाभये ॥ ८ ॥

वाच ॥ देहपहणमात्मनिव्यवहर्तृतावारणार्थम् ॥ २ ॥ असुराणांकिंहितंदेवानांकिमहितमितिविचारेणश्रमितःश्रमंप्रापितः ॥ क्षणमितिसमाधौकालदैर्घ्यांप्रत्ययादुक्तम् ॥ ३ ॥
स्थितिरात्मस्वबोधेनस्वरूपावस्थितिः ॥ रूपेणपारमार्थिकस्वरूपेण ॥ सदासमाध्यसमाध्योःसदेहविदेहमुक्त्योश्च ॥ ४ ॥ इमौश्लोकौक्वचिदेवपुस्तकेदृश्येते ॥ अंतर्धियाअखं
डमानससाक्षात्कारवृत्त्यादृष्टोसि ॥ बहिर्दृष्ट्याचक्षुरादिष्ट्याभाग्यवशेनदृश्यसे ॥ ५ ॥ अस्यामांतर्यांदृष्टौ ॥ ६ ॥ तत्रशोकमोहादिनिमित्तवशादहंसमाधिनाश्रितोयेनममदे
हत्यागप्रसक्तिःस्यादित्याह ॥ नशोकेनेति ॥ ७ ॥ दृष्टएवतेपितृराज्यादिनाशादिःशोकहेतुस्तंकथमपलपसितत्राह ॥ एकस्मिन्निति ॥ सत्यमद्वयदृष्टोनत्वद्वैतात्मनिसदतिनतद्धे
तुकोमेसमाधिरित्यर्थः ॥ ८ ॥

तर्हिसमाधेस्तेकोहेतुरितिचेद्विचारजाविश्रांतीच्छैवेत्याह ॥ यथेच्छयेति ॥ एवमेवदेहत्यागाद्यभिसंधिविनैव ॥ ९ ॥ नचवैराग्यंचितयेतिवैराग्यापक्कवोनयुक्तस्तस्यविचारपूर्वं केसमाधावनुकूलत्वादितिचेत्तत्राह ॥ हाविरक्तइति ॥ १० ॥ वैराग्यस्यसमाधिहेतुत्वेरागवद्देहस्यापिदुःखहेतुत्वानुभवात्तत्त्यागस्यापिसमाधिनिमित्ततास्यात्सोप्यतत्त्वविद एववांछितोनममेत्याह ॥ देहाभावइति ॥ ११ ॥ अतएवसुखलिप्सयादुःखनिवृत्तिलिप्सयापिवानसमाधिरित्याह ॥ इदमिति ॥ मूढमेवअवलुंपतीत्यनुकृष्यते ॥ १२ ॥ तर्ह्यस्तुभेदवासनाक्षयेच्छयासमाधिस्तत्राह ॥ अहमन्यइति ॥ दूरोदस्ताआत्मबुद्धिस्तत्त्वज्ञानंयैस्तेषामज्ञानामेवजयतिनतत्त्वविदामित्यर्थः ॥ असुमतांप्राणिनाम् ॥ १३ ॥ तर्हि संसारत्यागायमोक्षग्रहणायवासमाधिरस्त्वितिचेत्तत्राप्याह ॥ इदमिति ॥ इतिप्रसिद्धोदुर्द्धियःसंबंधीभ्रमःअज्ञमिवज्ञंनोन्मत्ततांनयतीत्यन्वयः ॥१४॥ तत्कुतस्तत्राह ॥ सर्वस्मि

यथेच्छयैवामलयाकेवलंस्वयमुत्थया ॥ एवमेवाहमवसंविततेपावनेपदे ॥ ९ ॥ हाविरक्तोस्मिसंसारंत्यजामीतीयमीश्वर ॥ अप्रबुद्धदृशांचिताहर्षशोकविकारदा ॥ १० ॥ देहाभावेनदुःखानिदेहेदुःखानिमेमतिः ॥ इतिचिंताविषव्यालीमूर्खमेवावलुंपति ॥ ११ ॥ इदंसुखमिदंदुःखमिदंनास्तीदमस्तिमे ॥ इतिदोलायितंचेतोमूढमेवनपंडितम् ॥ १२ ॥ अहमन्योन्यएवायमित्यज्ञानांतुवासना ॥ दूरोदस्तात्मबुद्धीनांजयत्यसुमतामिह ॥ १३ ॥ इदंत्याज्यमिदंग्राह्यमितिमिथ्यामनोभ्रमः ॥ नोन्मत्ततांनयत्यंतर्ज्ञमज्ञमिवदुर्द्धियः ॥ १४ ॥ सर्वस्मिन्नात्मनिततेत्वयितामरसेक्षण ॥ हेयोपादेयपक्षस्याद्द्वितीयाकलनाकुतः ॥ १५ ॥ विज्ञानाभासमखिलंजगत्सदसदुत्थितम् ॥ किंहेयंकिमुपादेयमिहयत्त्यज्यतेनवा ॥ १६ ॥ केवलंस्वस्वभावेनद्रष्टृदृश्येविचारयन् ॥ क्षणंविश्रांतवानंतःपरमात्मात्मनात्मनि ॥ १७ ॥ भावाभावविनिर्मुक्तोहेयोपादेयवर्जितः ॥ एवमासमहंपूर्वमधुनेत्थंव्यवस्थितः ॥ १८ ॥ समयात्मीयमापन्नंसर्वमात्मात्मतांगतः ॥ करोम्यहंमहादेवतुभ्यंयत्परिरोचते ॥ १९ ॥ त्वमयंपुंडरीकाक्षःपूज्यस्तावज्जगत्त्रये ॥ तन्मत्तःप्रकृतिप्राप्तांपूजामादातुमर्हसि ॥ २० ॥ इत्युक्त्वादानवाधीशःपुरःक्षीरोदशायिनः ॥ शैलेंद्रइवपूर्णेंदुमर्घपात्रमुपाददे ॥ २१ ॥

न्नित्यादिना ॥ १५ ॥ भ्रांतिविज्ञानेशुक्तिरजतादिवदाभासतेनपरमार्थतइतिविज्ञानाभासम् ॥ सतआत्मनोऽसतोमायायाश्चान्योन्यतादात्म्याध्यासलक्षणान्मिथुनीकरणादुत्थितम् ॥ १६ ॥ अतएवममतत्त्वविचारविश्रांतिरेवसमाधिःसंपन्नइत्याह ॥ केवलमिति ॥ १७ ॥ पूर्वंसमाधिकाले ॥ अधुनाव्युत्थानकाले ॥ इत्थंत्वदाज्ञप्तार्थोपादानयोग्यतयाव्यवस्थितोस्मीत्यर्थः ॥ १८ ॥ सआत्मतांस्वस्वभावंगतआत्माअहंमयाआत्मीयंस्वकर्त्तव्यतांप्राप्तंसर्वंत्वदाज्ञप्तंकार्यंकरोमि ॥ किंस्वरागेणकरिष्यसिनेत्याह ॥ तुभ्यमिति ॥ त्वदिच्छानुवर्त्तितयेत्यर्थः ॥ १९ ॥ यथात्वदाज्ञप्तंराज्यंनियतिप्राप्तमहमंगीकरोमितथात्वमपिमद्दत्तांपूजांसर्वेश्वरत्वात्तत्रनियतिप्राप्तांगृहाणेत्याह ॥ त्वमिति ॥ प्रकृतिःशास्त्रलोकप्रसिद्धानियतिः ॥ २० ॥ शैलेंद्रउदयाद्रिः ॥ २१ ॥

सत्रैलोक्यमुदरांतःस्थितत्रैलोक्यसहितम् ॥ अग्रगंपुरस्थितम् ॥ २२॥ बाह्येपुरोमकूपादिषु आभ्यंतरेषुवस्तिजठरहृदयादिषुचभ्रांतानिपरिवर्त्तमानानिभुवनानियस्यतम् ॥२३॥ ॥ २४ ॥ २५ ॥ सिंहविष्टरेसिंहासने ॥ २६ ॥ २७ ॥ पुनःशब्दस्वारस्यात्पूर्वंस्वयमेकएवाभ्यपिचद्विद्याधरादिभिःसहपुनरुत्साहातिशयादभ्यपिचदितिगम्यते ॥ २८ ॥ हरिमिंद्रम् ॥ २९ ॥ ३० ॥ धरापृथ्वी धराःअन्येपर्वताश्चेतिवा ॥ ३१ ॥ ३२ ॥ दृष्टाअनुत्तमानिरतिशयानंदभूमिर्येनतथाविधेनत्वयाराज्येउद्वेगःअरतिलक्षणोनगंतव्यस्तथापित्रादिवरस्वर्गेदेवलोकेमानवेभूलोकेचउद्वेगोनगंतव्योनगमयितव्यः ॥ ३३ ॥ यथाप्राप्तासुप्रजाशास्त्रवादिनिग्रहानुग्रहादिदृष्टिषुतत्तत्पुरुषानुरूपैर्देशकालक्रियाकारैःप्रकृतं

सायुधंसाप्सरोवृंदंससुरंसखगाधिपम् ॥ पूजयामासगोविंदंसत्रैलोक्यमथाग्रगम् ॥२२॥ सबाह्याभ्यंतरभ्रांतभुवनंभुवनेश्वरम् ॥पूजयित्वाथतिष्ठंतमुवाचकमलापतिः ॥२३॥ ॥श्रीभगवानुवाच॥ ॥उत्तिष्ठदानवाधीशसिंहासनमुपाश्रय ॥ यावदाभिषेकंतेस्वयमेवददाम्यहम्॥ २४ ॥ पांचजन्यरवंश्रुत्वायइमेसमुपागताः॥ सिद्धाःसाध्याःसुरौघास्तेकुर्वंतुतवमंगलम्॥२५॥इत्युक्त्वापुंडरीकाक्षोदानवंसिंहविष्टरे ॥ योजयामासयोग्यंतंमेरुशृंगइवांबुदम् ॥ २६ ॥ अथैनंहरिराहूतैःक्षीरोदाद्यैर्महाब्धिभिः॥ गंगादिभिःसरित्पूरैःसर्वतीर्थजलैस्तथा ॥ २७॥सर्वविप्रर्षिसंघैश्चसर्वसिद्धगणैःसह ॥ पुनर्विद्याधरयुतोलोकपालसमन्वितः॥ २८॥ अभ्यषिंचदमेयात्मादैत्यराज्येमहासुरम् ॥ मरुद्गणैःस्तूयमानंपूर्वंस्वर्गेहरिंयथा॥ २९॥सुरासुरैःस्तूयमानंस्तूयमानःसुरासुरैः॥ अभिषिक्तमुवाचेदंप्रह्लादंमधुसूदनः॥ ३०॥ ॥श्रीभगवानुवाच॥ ॥यावन्मेरु[illegible]यावच्चंद्रार्कमंडले॥ अखंडितगुणश्लाघीतावद्राजाभवानघ ॥ ३१ ॥इष्टानिष्टफलंत्यक्त्वासमदर्शनयाधिया ॥ वीतराग[illegible]क्रोधोराज्यंसमनुपालय ॥ ३२ ॥ राज्येस्मिन्भोगसंपूर्णेदृष्टानुत्तमभूमिना ॥ नगंतव्यस्त्वयोद्वेगःस्वर्गेमानवकेथवा ॥ ३३ ॥ देशकालक्रियाकारैर्यथाप्राप्तासुदृष्टिषु ॥ प्रकृतंकार्यमातिष्ठत्यक्त्वामानसमास्वनां ॥ ३४॥ अतिदेहतयेदंताममतापरिवर्जितम् ॥ भावाभावेसमंकार्यंकुर्वन्निहनबाध्यसे ॥ ३५॥ दृष्टसंसारपर्यायस्तुलितातुलतत्पदः ॥ सर्वंसर्वत्रजानासिकिमन्यदुपदिश्यते ॥ ३६ ॥ वीतरागभयक्रोधेत्वयिराजनिराजति ॥ नेदानींदुःखदुर्ग्रथिर्नासुरान्दलयिष्यति ॥ ३७॥ वाष्पश्रीर्नासुरीकर्णमंजरीःप्लावयिष्यति ॥ वनराजिमिवोन्मत्तासरित्तारतरंगिणी ॥ ३८ ॥

प्रसंजितंवधबंधदंडादिकार्यमातिष्ठअनुतिष्ठ ॥ मानसंरागादिवैषम्यंत्यक्त्वाआस्व ॥ ३४ ॥ अतिदेहतयादेहातिरिक्तात्मभावेन ॥ भावाभावेलाभालाभे ॥ ३५ ॥ व्यवहारेपरमार्थेचत्वमेवनिपुणोसीतिनोपदेश्यंतवास्तीत्याह ॥ दृष्टेति ॥ ३६ ॥ अनेनतवपूर्वमनोरथोपिसेत्स्यतीत्याह ॥ वीतेति ॥ दुःखदुर्ग्रंथिरसुरेष्विदानींनस्थास्यतिदैवस्थश्चसमद्वाराअसुरान्दलयिष्यतीत्यर्थः ॥ ३७ ॥ उन्मत्तावर्षाभिवर्द्धितासरिन्नदी ॥ तारतरंगिणीबृहत्तरंगा ॥ ३८ ॥

जगत्स्वास्थ्यमपिसेत्स्यतीत्याह ॥ अद्येति ॥ निर्मंदरोनिर्गतमंथाचलोयोंभोनिधिस्तद्वत् ॥ ३९ ॥ अपरस्परमाहृताःपरस्परभर्तृभिरबंदीकृताः ॥ ४० ॥ हेदनुसुतत्वंबहुलनिशा कृष्णपक्षरात्रिस्तद्वत्यनितांतनिद्रातिमिरप्रायमज्ञानांधकारमपास्यसदाउदिताआशयश्रीःस्वप्रकाशब्रह्मात्मस्फूर्त्तिर्यस्यतथाविधःसन्वनितानामसुरस्त्रीणांसंभजनीयशांत्यादीनांचविलासैःरम्यां अजितांशत्रुभिःकामादिषट्कैश्चापराभूतांराज्यलक्ष्मींस्वाराज्यलक्ष्मींचचिरमुपभुंक्ष्वेत्याशीः ॥ ४१ ॥ ॥ इतिश्रीवासि०तात्पर्यप्रकाशेउप०एकचत्वारिंशःसर्गः ॥ ४१ ॥ ॥७॥ ॥ विष्णोःक्षीरोदगमनमाख्यानफलमुत्तमम् ॥ समाधिमुक्तव्युत्थानेहेतुश्चात्रोपवर्ण्यते ॥ १ ॥ सनरामरकिन्नरत्वादेवद्वितीयःसंसारइवविस्तृतः ॥

अद्यप्रभृत्यसंप्राप्तदानवामरसंगरम् ॥ निर्मंदरांभोनिधिवज्जगत्स्वस्थमिवस्थितम् ॥ ३९ ॥ देवासुरकुटुंबिन्योभर्तृष्वंतःपुरेषुच ॥ स्वेष्वेवयांतुविश्वासमपरस्परमाहृताः ॥ ४० ॥ भवबहुलनिशानितांतनिद्रातिमिरमपास्यसदोदिताशयश्रीः ॥ दनुसुतवनिताविलासरम्यांचिरमजितामुपभुंक्ष्वराज्यलक्ष्मीम् ॥ ४१ ॥ ॥इ०वा०वा०दे०मोक्षोपायेषूपशमप्रकरणेप्रह्लादाभिषेकोनामैकचत्वारिंशःसर्गः ॥ ४१ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्त्वापुंडरीकाक्षःसनरामरकिन्नरः॥ द्वितीयइवसंसारश्चचालासुरमंदिरात् ॥ १ ॥ प्रह्लादादिविनिर्मुक्तैःपश्चात्पुष्पांजलिव्रजैः॥पूर्यमाणोविहंगेशपाश्चात्यांगरुहोत्करैः॥२॥ क्रमात्क्षीरोदमासाद्यविसृज्यसुरवाहिनीम्॥ भोगिभोगासनेतस्थौश्वेताब्जइवषट्पदः॥३॥ भोगिभोगासनेविष्णुःशक्रःस्वर्गेसहामरैः॥पातालेदानवाधीशइतितस्थुर्गतज्वराः॥४॥ एषातेकथितारामनिःशेषमलनाशिनी॥ प्रह्लादीबोधसंप्राप्तिरैंदवद्रवशीतला॥ ५॥ तांतुयेमानवालोकेबहुदुष्कृतिनोपिहि॥धियाविचारयिष्यंतितेप्राप्स्यंत्यचिरात्पदम्॥६॥सामान्येनविचारेणक्षयमायातिदुष्कृतम्॥ योगवाक्यविचारेणकोनयातिपरंपदम्॥७॥अज्ञानमुच्यतेपापंतद्विचारेणनश्यति॥ पापमूलच्छिदंतस्माद्विचारंनपरित्यजेत्॥८॥इमांप्रह्लादसंसिद्धिंप्रविचारयतांनृणाम्॥सप्तजन्मकृतंपापंक्षयमायात्यसंशयम्॥९॥ ॥श्रीरामउवाच॥ ॥परेपदेपरिणतंपांचजन्यस्वनैर्मनः॥कथंप्रबुद्धंभगवन्प्रह्लादस्यमहात्मनः ॥१०॥ ॥श्रीवसिष्ठउवाच॥ ॥द्विविधामुक्ततालोकेसंभवत्यनघाकृते॥सदेहैका विदेहान्याविभागोयंतयोःशृणु॥ ११ ॥

चचालजगाम ॥ १ ॥ विहंगेशस्यगरुडस्यपाश्चात्येष्वंगरुहेषुउत्करवद्राशीभूतैःपुष्पांजलिव्रजैः ॥ २ ॥ ३ ॥ ४ ॥ ऐंदवोद्रवोऽमृतमिवशीतला ॥ ५ ॥ ६ ॥ दुष्कृतपदेनपापं तन्मूलमज्ञानंच ॥ ७ ॥ मयोक्तंनपापमेवेत्याह ॥ अज्ञानमिति ॥ ८ ॥ सप्तजन्मकृतमित्यापातविचारफलमेतत् ॥ ज्ञानफलपर्यंतेनतुविचारेणप्रारब्धफलातिरिक्तसर्वपापक्षय प्रसिद्धएवेति ॥ ९ ॥ समाधिमुक्तस्यविदेहमुक्तेनसहविश्रांतिसुखादिसाम्येपुनर्व्युत्थानहेतुंजिज्ञासमानोरामःपृच्छति ॥ परेइति ॥ मनसोविलयेपांचजन्यस्वनश्रवणमपिदुर्लंभमितिकथंतेनप्रबोधइतिभावः ॥ १० ॥ प्रारब्धशेषोद्बोधितशुद्धवासनासहितभगवदिच्छैवतत्प्रबोधेहेतुरितिविशेषंवक्तुंसदेहविदेहमुक्तीविभज्यदर्शयति ॥ द्विविधेत्यादिना ॥ विभागोविभाजकलक्षणभेदः ॥ अयंवक्ष्यमाणप्रकारः ॥ ११ ॥

कर्मणामिष्टानिष्टानांत्यागादानेषुविषयेषुएषणारागोनास्ति ॥ तस्यतांस्थितिंजीवन्मुक्ततांविद्धि ॥ १२ ॥ देहपदेनतद्धारणहेतुःप्रारब्धशेषोलक्ष्यते तस्यभोगेनक्षयेसतीत्यर्थः ॥ १३ ॥ भृष्टानिभर्जितानिनिर्बीजान्युपमायेषामितिपुनर्दृश्यतानवाप्तौहेतुगर्भविशेषणम् ॥ जीवन्मुक्तेषुतुसमाधिव्युत्थानेनपुनर्देहदृश्यतायांहेतुरस्तीत्याह ॥ हृदीति ॥ शुद्धा आसंगमालिन्यनिर्मुक्ता ॥ १४ ॥ पावनीशुद्धब्रह्मात्मभावनापवित्रा ॥ परमोदारातृष्णाकार्पण्यरहिता ॥ अंतःकरणस्यब्रह्मणिलयेपिवासनास्थितौदृष्टांतमाह ॥ सुषुप्तस्ये वेति ॥ १५ ॥ देहपदेनाचापितद्धारणहेतुःप्रारब्धशेषोलक्ष्यते ॥ १६ ॥ सैवप्रज्ञाद्वबोधेपिहेतुरित्याह ॥ प्रज्ञादइति ॥ १७ ॥ लीनेश्रोत्रेशंखशब्दस्याप्यग्रहात्तावन्मात्रेणकथं

असंसक्तमतेर्यस्यत्यागादानेषुकर्मणाम् ॥ नैषणातस्स्थितिंविद्धित्वंजीवन्मुक्ततामिह ॥ १२ ॥ सैवदेहक्षयेरामपुनर्जननवर्जिता ॥ विदेहमुक्ताप्रोक्तातत्स्थानायांतिदृश्यताम् ॥ १३ ॥ भृष्टबीजोपमाभूयोजन्मांकुरविवर्जिताः ॥ हृदिजीवद्विमुक्तानांशुद्धाभवतिवासना ॥ १४ ॥ पावनीपरमोदाराशुद्धसत्वानुपातिनी ॥ आत्मध्यानमयीनित्यंसुषुप्तस्येवतिष्ठति ॥ १५ ॥ अपिवर्षसहस्रांततथैवांतरवस्थया ॥ सतिदेहेप्रबुद्ध्यंतेजीवन्मुक्तारघूद्वह ॥ १६ ॥ प्रज्ञादोंतस्थयाशुद्धसत्ववासनयास्वया ॥ बोधमाप्महाबाहोशंखशब्दावबुद्धया ॥ १७ ॥ हरिरात्माहिभूतानांतस्ययस्प्रतिभासते ॥ तत्तथैवभवत्याशुसर्वमात्मैवकारणम् ॥ १८ ॥ प्रबोधमेतुप्रज्ञादोयद्देवेतिविचिंतितम् ॥ निमेषाद्वासुदेवेनतद्दैवैतदुपस्थितम् ॥ १९ ॥ आत्मन्यकारणेनैवभूतानांकारणेनच ॥ स्रष्ट्यर्थंवपुरात्तंहिवासुदेवमयात्मना ॥ २० ॥ आत्मावलोकनेनाशुमाधवःपरिदृश्यते ॥ माधवाराधनेनाशुस्वयमात्मावलोक्यते ॥ २१ ॥ एतांदृष्टिमवष्टभ्यराघवात्मावलोकने ॥ विहराशुविचारात्मापदंप्राप्स्यसिशाश्वतम् ॥ २२ ॥ दुःखासारवतीरामसंसारप्रावृडातता ॥ जाड्यंददातिपरमंविचारार्कमपश्यताम् ॥ २३ ॥ प्रसादादात्मनोविष्णोर्मायेयमतिभासुरा ॥ प्रबाधतेनधीरांस्तुयक्षीमंत्रवतोयथा ॥ २४ ॥

बोधइत्याशंकांपरिहरन्नाह ॥ हरिरिति ॥ आत्माकारणात्मासत्यसंकल्पइतियावत् ॥ १८ ॥ १९ ॥ अकारणेनैवशुद्धात्मनाभूतानांकारणेनाव्याकृतेनचकारात्कामकर्मादिनाचनिमित्तेनआत्मन्येवजगत्स्रष्ट्यर्थंवासुदेवमयात्मनावपुःशरीरमात्रंगृहीतम ॥ हिशब्दस्तथाश्रुतिस्मृतिपुराणप्रसिद्धिद्योतनार्थः ॥ २० ॥ अतएवतद्वपुर्दर्शनेआत्मदर्शनंसिद्धत्यात्मदर्शनेचतद्दर्शनंसुलभमित्याह ॥ आत्मेति ॥ २१ ॥ विहरयतस्व ॥ २२ ॥ दुःखान्येवआसाराधारासंपातास्तद्वती ॥ जाड्यंमौर्ख्यंरोगंच ॥ २३ ॥ यक्षीग्रहणंसर्वपिशाचाद्युपलक्षणम ॥ मंत्रवतोमंत्रसिद्धान् ॥ २४ ॥

---

१ जन्मांतरेतिक्वचित्पाठः

संसारजालरचनालक्षणाअनंतस्यविष्णोरियंमायातस्यैवात्मनइच्छयैवघनतांदेहादिघनानर्थभावंसमुपागतासाचनिर्व्याजभक्तिप्रणिधानाद्याराधितस्यतस्यात्मनइच्छयैवविवेकविचारादिजन्मकालेतनुतांक्रासमुपयाति ॥ यथापावकस्यज्वालावातवलयादेवघनतामुपयातिअंतेचतद्वशादेवतनुतामुपयातितद्वत् ॥ अतईश्वरप्रसादजनितविचारादिनैवावश्यंज्ञानलाभइत्याख्यानतात्पर्यमितिभावः ॥ तथाचभगवतोबादरायणस्यसूत्रम् पराभिध्यानात्तुतिरोहितंततोह्यस्यबंधविपर्ययाविति मत्तःस्मृतिर्ज्ञानमपोहनंचेतिभगवद्वचनंचेतिभावः ॥ २५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेद्विचत्वारिंशःसर्गः ॥ ४२ ॥ ॥ ७ ॥ ॥ ईशप्रसादलभ्येपिनेश्वरेदीयतांभरः ॥ पौरुषेणेंद्रियाक्रांत्यासाध्यंज्ञानमितीर्यते ॥ १ ॥ निर्वृताआह्लादिताःस्म ॥ १ ॥ कर्णाभ्यांश्रवणायावतंसनायचाभिवांछ्यमानानि ॥ पुष्पपक्षेगुरुदेवतादिप्रसादरूपतयापापापहारित्वात्पवित्राणि ॥ पुष्पाण्युत्पलादीनीव ॥२॥ तत्तर्हिप्रह्लादोमाधवस्यवरंविनापिस्वपौरुषेणैवकथंनप्रबुद्धवान् ॥ अतःस्वपौरुषादेवसर्वत्रज्ञानलाभइतिप्रागुक्तनियमभंगइत्यर्थः ॥ ३ ॥ स्वपौरुषसाध्यायांपुरुषार्थसिद्धौमाधववरोपिद्वारविशेषएवनस्वतंत्रइतिनोक्तनियमभंगइत्याशयेनसंक्षिप्योत्तरमाह ॥ यद्यदिति ॥ ४ ॥ अथवाविष्णोःप्रह्लादात्मभेदाभावात्तत्प्रयत्नप्राप्तोवरःप्रह्लादप्रयत्नादेवेतिवाच्यपरिहारःसुलभइत्याशयेनाह ॥ आत्मेत्यादिना ॥ यथातिलांतर्गतंततोनिःसारितंचैतैलंनभिन्नंतद्वत् ॥ नन्वेवंसतिविकारितास्यादितिदृष्टांतांतरमाह ॥ शौक्ल्यपटवदिति ॥ यथाकुसुमानांसारआमोदस्तद्वज्जीवानांपरमार्थसारोविष्णुरितिवाअभेदोज्ञेयइत्याह ॥ कुसुमेति ॥ ५ ॥ अथवाकार्यकारणोपाधित्यागेपरिशिष्टचिन्मात्रस्यात्यंताभेदएवेतिलक्ष्यपरयोर्विष्ण्वात्मशब्दयोःपर्यायतैवेत्याह ॥ यइति ॥ विटपवत्त्वपादकरणकपानकर्तृत्वोपाधिभेदेप्यखंडवृक्षस्वरूपेयथाविटपिपादपशब्दयोःपर्यायतातद्वदित्यर्थः ॥ ६ ॥ ७ ॥ आत्मनास्वात्मभूतेनैवविष्णुनास्वमनःस्वयमेवविचारगंकृत्वास्वात्मानंस्वयमेवविदितवानित्यर्थः ॥ ८ ॥

आत्मेच्छयैवघनतांसमुपागतांतरात्मेच्छयैवतनुतामुपयातिकाले॥संसारजालरचनेयमनंतमायाज्वालेहवातवलयादिवपावकस्य ॥ २५ ॥ ॥इ०वा०वा०दे०मोक्षोपायेपूपशमप्रकरणेप्रह्लादव्यवस्थानामद्विचत्वारिंशःसर्गः॥ ४२ ॥ ॥ ७ ॥ ॥श्रीराम उवाच॥ ॥भगवन्सर्वधर्मज्ञशुद्धैस्त्वद्वचनांशुभिः॥ निर्वृताःस्मशशांकस्यकरैरोषधयोयथा॥१॥ कर्णाभिवांछ्यमानानिपवित्राणि मृदूनिच॥ सुखयंतिगृहीतानिपुष्पाणीववचांसिते॥२॥ पौरुषेणप्रयत्नेनसर्वमासाद्यतेयदि॥ प्रह्लादस्तत्कथंबुद्धोनमाधववरंविना॥३॥ श्रीवसिष्ठउवाच॥ ॥यद्यद्राघवसंप्राप्तंप्रह्लादेनमहात्मना॥ तत्तदासादितंतेनपौरुषादेवनान्यतः॥४॥ आत्मानारायणश्चैवनभिन्नस्तिलतैलवत्॥ तथैवशौक्ल्यपटवत्कुसुमामोदवत्तथा॥ ५ ॥ योहिविष्णुःसएवात्मायोह्यात्मासौजनार्दनः॥ विष्ण्वात्मशब्दौपर्यायौ यथाविटपिपादपौ॥६॥ प्रह्लादनामाप्रथममात्मैवस्वयमात्मना॥ स्वयैवपरयाशक्त्याविष्णुभक्तौनियोजितः॥७॥ प्रह्लादोह्यात्मनैवैनंवरमर्जितवान्स्वयम्॥ स्वयंविचारगंकृत्वास्वयंविदितवान्मनः॥८॥

शक्त्यास्वप्रयत्नकृतविचारबलेन ॥ भक्तिलक्षणप्रयत्नलभ्येनविष्णुदेहद्वारेणेत्यर्थः ॥ ९ ॥ अन्वयेनदर्शितमर्थंव्यतिरेकस्यापिप्रदर्शनेनद्रढयति ॥ चिरमिति ॥ १० ॥ आत्मावबोधपर्यंतोविचारोस्त्वितिवरंददतोहरेःपुरुषप्रयत्नोत्थोविचारएवमुख्योभिमतोनवरः अन्यथाज्ञानमस्त्वित्येववरदानप्रसंगादित्याशयेनाह ॥ मुख्यइति ॥ ११ ॥ यद्विषयप्रयत्नाद्विचारोदयस्तंदर्शयति ॥ पूर्वमिति ॥ पंचकग्रहणंदशकोपलक्षणम् ॥ १२ ॥ स्वस्यशक्तिर्यत्नस्तत्प्रयुक्तयासंप्रवृत्त्याशुभाचरणेन ॥ १३ ॥ १४ ॥ दृश्यतेतत्त्वतःसाक्षात्क्रियते ॥ नोद्धरतिनात्मतत्त्वंदर्शयति ॥ आत्मदर्शनमेवोद्धारइत्याशयः ॥ १५ ॥ विनैवशिष्यप्रयत्नंशक्तिपातादिनागुरुस्तमुद्धरतीतियोगशास्त्रादौसिद्धमितितत्रानैकांत्यमाशंक्याह ॥ गुरुश्चेदिति ॥ गुरुभक्त्यादियत्नएवतत्रापिज्ञानजननेगुर्वनुग्रहंद्वारीकरोतीतिभावः ॥ १६ ॥ अर्थाद्धनात् ॥ अमृतत्वस्यतुनाशास्तिवित्तेनेतिश्रुतेरितिभावः ॥ आक्रांतमनसोज्ञानदार्ढ्येनबाधितमनसोयदात्मनःस्वस्मान्महत्परमपुरुषार्थरूपमासादितंतत् ॥ १७ ॥ यत्परमपुरुषार्थरूपम् ॥ १८ ॥ आराधयउत्कृष्टबुद्ध्याश्रवणादिनासाधयसिद्धंचनिरंतरानुसंधानेनार्चय ॥ आलोक्यतत्त्वतःसाक्षात्कृत्यसंतिष्ठस्वतत्रैवसम्यगवतिष्ठस्वतद्भावान्नच्यवस्वेत्यर्थः ॥ १९ ॥ यदिस्वप्रयत्नजविचारादेवज्ञानोदयस्तर्हिकिमर्थंशास्त्रेपुविष्ण्वादिभक्तिविधानंतत्राह ॥ शास्त्रेति ॥ विषयासक्तिप्राबल्यादध्यात्मशास्त्रेभ्यइंद्रियजयादियत्नेभ्योविचारेभ्यश्चप्रपलायिनांदूरीभूतानांमूर्खाणांकथंचिच्छुभस्थितौसन्मार्गेप्रवृत्त्यर्थमित्यर्थः ॥ २० ॥ उक्तमेवार्थमुपपत्तिभिर्द्रढयति ॥ अभ्यासेत्यादिना ॥ २१ ॥ २२ ॥

कदाचिदात्मनैवात्मास्वयंशक्त्याप्रबुध्यते ॥ कदाचिद्विष्णुदेहेनभक्तिलभ्येनबोध्यते ॥ ९ ॥ चिरमाराधितोप्येषपरमप्रीतिमानपि ॥ नाविचारवतोज्ञानंदातुंशक्नोतिमाधवः ॥ १० ॥ मुख्यःपुरुषयत्नोत्थोविचारःस्वात्मदर्शने ॥ गौणोवरादिकोहेतुर्मुख्यहेतुपरोभव ॥ ११ ॥ पूर्वमेवबलात्तस्मादाक्रम्येंद्रियपंचकम् ॥ अभ्यसन्सर्वयत्नेनचित्तंकुरुविचारवत् ॥ १२ ॥ यद्यदासाद्यतेकिंचित्केनचित्क्वचिदेवहि ॥ स्वशक्तिसंप्रवृत्त्यातल्लभ्यतेनान्यतःक्वचित् ॥ १३ ॥ पौरुषंयत्नमाश्रित्यप्रोल्लंघ्येंद्रियपर्वतम् ॥ संसारजलधेस्तीर्त्वापारंगच्छपरंपदम् ॥ १४ ॥ विनापुरुषयत्नेनदृश्यतेचेज्जनार्दनः ॥ मृगपक्षिगणंकस्मात्तदासौनोद्धरत्यजः ॥ १५ ॥ गुरुश्चेदुद्धरत्यज्ञमात्मीयात्पौरुषाद्दृते ॥ उष्ट्रंदांतंबलीवर्दंतत्कस्मान्नोद्धरत्यसौ ॥ १६ ॥ नहरेर्नगुरोर्नार्थात्किंचिदासाद्यतेमहत् ॥ आक्रांतमनसःस्वस्माद्यदासादितमात्मनः ॥ १७ ॥ अभ्यासवैराग्ययुतादाक्रांतेंद्रियपन्नगात् ॥ नात्मनःप्राप्यतेयत्तत्प्राप्यतेनजगत्त्रयात् ॥ १८ ॥ आराधयात्मनात्मानमात्मनात्मानमर्चय ॥ आत्मनात्मानमालोक्यसंतिष्ठस्वात्मनात्मनि ॥ १९ ॥ शास्त्रयत्नविचारेभ्योमूर्खाणांप्रपलायिनाम् ॥ कल्पितावैष्णवीभक्तिःप्रवृत्त्यर्थंशुभस्थितौ ॥ २० ॥ अभ्यासयत्नौप्रथमंमुख्योविधिरुदाहृतः ॥ तदभावेतुगौणःस्यात्पूज्यपूजामयक्रमः ॥ २१ ॥ अस्तिचेदिंद्रियाक्रांतिःकिंप्राप्यंपूजनैःफलम् ॥ नास्तिचेदिंद्रियाक्रांतिःकिंप्राप्यंपूजनैःफलम् ॥ २२ ॥

आसाद्यतेस्वात्मभावेनतत्त्वतोलभ्यते ॥ हरिःपूर्णानंदात्मा ॥ विचारोपशमाभ्यामेवमुक्तस्यपरमपुरुषार्थंप्राप्तस्याब्जकरेणहरिदेहेनकिमधिकंप्राप्यमस्तीत्यर्थः ॥ अथवाविचारोपशमाभ्यांमुक्तस्यरहितस्यविषयासक्तस्यअब्जकरेणेश्वरेणापिकिंहितंकर्त्तुंशक्यमित्यर्थः ॥ २३ ॥ आराधयप्रसादय ॥ सिद्धेप्रसन्नेसतिभवानपिसिद्धःपरमपुरुषार्थलक्षणां सिद्धिंप्राप्तः ॥ २४ ॥ क्रियतेयथेतिशेषः ॥ मनोभक्तिरेवमुख्याविष्णुभक्तिर्नतुबाह्येत्याह ॥ सर्वस्येत्यादिना ॥ २६ ॥ चिल्लक्षणंतत्त्वमबाधितंवस्तुसनातनमेवसानातनंशाश्वतं वपुःस्वरूपे ॥ गौणोमायागुणकल्पितआगंतुकइतियावत् ॥ २७ ॥ रसायनममृतम् ॥ साध्यमोदनादिसंसाधयतिकृष्यादिनोत्पादयति ॥ २८ ॥ कस्तर्हिंबाह्यविष्णुभक्तावधि

विचारोपशमाभ्यांहिनविनासाद्यतेहरिः ॥ विचारोपशमाभ्यांचमुक्तस्याब्जकरेणकिम् ॥ २३ ॥ विचारोपशमोपेतंचित्तमाराधयात्मनः ॥ तस्मिन्सिद्धेभवान्सिद्धोनोचेत्त्वंवनगर्दभः ॥ २४ ॥ क्रियतेमाधवादीनांप्रणयप्रार्थनास्वयम् ॥ तथैवक्रियतेकस्मान्नस्वकस्यैवचेतसः ॥ २५ ॥ सर्वस्यैवजनस्यास्यविष्णुरभ्यंतरेस्थितः ॥ तंपरित्यज्ययेयांतिबहिर्विष्णुंनराधमाः ॥ २६ ॥ हृद्गुहावासिचित्तत्त्वंमुख्यंसानातनंवपुः ॥ शंखचक्रगदाहस्तोगौणआकारआत्मनः ॥ २७ ॥ योहिमुख्यंपरित्यज्यगौणंसमनुधावति ॥ त्यक्त्वारसायनंसिद्धंसाध्यंसंसाधयत्यसौ ॥ २८ ॥ यस्तुभोःस्थितिमेवास्यामात्मज्ञानचमत्कृतौ ॥ नासादयतिसंमत्तमनाःसरघुनंदन ॥ २९ ॥ अप्राप्तात्मविवेकोंतरज्ञचित्तवशीकृतः ॥ शंखचक्रगदापाणिमर्चयेत्परमेश्वरम् ॥ ३० ॥ तत्पूजनेनकष्टेनतपसातस्यराघव ॥ कालेनिर्मलतामेतिचित्तंवैराग्यकारिणा ॥ ३१ ॥ नित्याभ्यासविवेकाभ्यांचित्तमाशुप्रसीदति ॥ आम्रएवदशामेतिसाहकारींशनैःशनैः ॥ ३२ ॥ एतदप्यात्मनैवात्माफलमाप्नोतिभाषितम् ॥ हरिपूजाक्रमाख्येननिमित्तेनारिसूदन ॥ ३३ ॥ वरमाप्नोतियोवापिविष्णोरमिततेजसः ॥ तेनस्वस्यैवतत्प्राप्तंफलमभ्यासशाखिनः ॥ ३४ ॥ सर्वेषामुत्तमस्थानांसर्वासांचिरसंपदाम् ॥ स्वमनोनिग्रहोभूमिर्भूमिःसस्यश्रियामिव ॥ ३५ ॥ अप्युर्वीखननोत्कस्यकर्षतोपिशिलोच्चयम् ॥ स्वमनोनिग्रहादन्योनोपायोस्तीहकश्चन ॥ ३६ ॥

कारीतमाह ॥ यस्त्वितिद्वाभ्याम् ॥ यआत्मतत्त्वचमत्कृतौस्थितिंनासादयत्येवसशंखचक्रगदापाणिंपरमेश्वरमर्चयेदित्यन्वयः ॥ २९ ॥ ३० ॥ वैराग्यकारिणातपसा ॥ ३१ ॥ आशुग्रहणंप्रसादावश्यंभावद्योतनार्थम् ॥ सहकारःपुष्पफलाद्यतिसौरभस्तद्भावलक्षणांदशाम् ॥ ३२ ॥ शास्त्रेहरिपूजाक्रमाख्येननिमित्तेनयत्फलंभाषितमेतदप्यात्मनात्स्वेनैव संकल्पितंप्राप्नोतीत्यर्थः ॥ ३३ ॥ योपिविष्णोःसकाशाद्वरंप्राप्नोतितेनापिस्वस्यस्वीयस्यैवाभ्यासशाखिनःफलंप्राप्तंनाकस्मिकमित्यर्थः ॥ ३४ ॥ उत्तमस्थानांप्रशस्तपुरुषार्थाभिनिवेशानांचिरसंपदांचिरभोग्यमन्वादिसंपदांचस्वमनोनिग्रहएवभूमिरुद्भवस्थानमित्यर्थः ॥ ३५ ॥ उर्वीखननोत्कस्यसगरसुतादेःशिलोच्चयंमंथाचलंकर्षतोदेवासुरादेरपि ॥ निधिरत्नादिलाभायोर्वीखननाद्युत्कस्यवा ॥ मनसऐकाग्र्यंविनामहाकार्यासिद्धेरित्याशयः ॥ ३६ ॥

॥ ३७ ॥ वत्सलादयावंतोपिब्रह्माद्यामनोव्याधेरुपप्लवान्नत्रायंते ॥ ३८ ॥ बाह्यंबहिरिंद्रियगम्यमांतरमंतःकरणगम्यंचाकारभासुरंविषयरूपंत्यक्त्वाअजंजन्मादिविक्रियाशू
न्यम् ॥ संविन्मात्रस्यैकमखंडाकारंचिंतनंकुर्वित्यर्थः ॥ ३९ ॥ उक्तमेवव्यक्तोक्त्योपसंहरति ॥ संवेद्येति ॥ हेरामत्वंसंवेद्यैर्बाह्यांतरविषयैर्निर्मुक्तंयन्निरामयैकसंविन्मयंस्वयमे
वास्वदतेनिरतिशयानंदात्मनास्फुरतितथाविधंसन्मात्रंनिरंतरंतदाकारवृत्त्याआस्वादय एवमास्वादयन्जन्मनद्याःपरंपारंप्राप्स्यसीत्यर्थः ॥ ४० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्य
प्रकाशेउपश०त्रिचत्वारिंशःसर्गः ॥ ४३ ॥ ॥ ६ ॥ ॥ मनोनैराश्यसिद्ध्यर्थंमृषादुःखस्वरूपता ॥ दृश्यस्यविस्तरेणास्मिन्गाध्याख्यानेप्रदर्श्यते ॥ १ ॥ तत्रविष्णुवराद्गाधेर्ज

तावज्जन्मसहस्राणिभ्रमंतिभुविमानवाः ॥ यावन्नोपशमंयातिमनोमत्तमहार्णवः ॥ ३७ ॥ ब्रह्मविष्ण्विंद्ररुद्राद्याश्चिरसंपूजिताअपि ॥
उपप्लवान्मनोव्याधेर्नत्रायंतेपिवत्सलाः ॥ ३८ ॥ आकारभासुरंत्यक्त्वाबाह्यमांतरमप्यजम् ॥ कुरुजन्मक्षयायाशुसंविन्मात्रैकचिं
तनम् ॥ ३९ ॥ संवेद्यनिर्मुक्तनिरामयैकसंविन्मयास्वादमनंतरूपम् ॥ सन्मात्रमास्वादयसर्वसारंपारंपरंप्राप्स्यसिजन्मनद्याः ॥ ४० ॥
॥ इ०वा०वा०दे०मो०उपशमप्रकरणेप्रह्लादविश्रांतिर्नामत्रिचत्वारिंशःसर्गः ॥ ४३ ॥ ॥ ६ ॥ ॥ श्रीवसिष्ठउवाच ॥
रामापर्यवसानेयंमायासंसृतिनामिका ॥ आत्मचित्तजयेनैवक्षयमायातिनान्यथा ॥ १ ॥ जगन्मायाप्रपंचस्यवैचित्र्यप्रतिपत्तये ॥
इतिहासमिमंवक्ष्येशृणुत्वावहितोनघ ॥ २ ॥ अस्त्यस्मिन्वसुधापीठेकोशलोनाममंडलः ॥ कल्पवृक्षवनंमेराविवरत्नगणाकरः ॥ ३ ॥
तत्राभूद्ब्राह्मणःकश्चिद्गुणीगाधिरितिश्रुतः ॥ परमश्रोत्रियोधीमान्धर्ममूर्त्तिरिवस्थितः ॥ ४ ॥ आबाल्यात्प्रविरक्तेनचेतसासव्यराजत ॥
निष्कलंकावदातेनभुवनंनभसायथा ॥ ५ ॥ किमप्यभिमतंकार्यंविनिधायस्वचेतसि ॥ बंधुवृंदाद्विनिष्क्रम्यतपस्तप्तुंवनंययौ ॥ ६ ॥ उत्फु
ल्लकमलंप्रापसरस्तत्रसविप्रराट् ॥ चंद्रःप्रसन्नविमलंतारासारमिवांबरम् ॥ ७ ॥ आशौरिदर्शनंतस्मिंस्तपोर्थंसरसिद्विजः ॥ आकंठमं
बुनिर्मग्नःप्रावृट्पद्मइवाविशत् ॥ ८ ॥ ययौमासाष्टकंतस्यमग्नस्यसरसोंभसि ॥ वासपंकजसंकोचमनाग्भग्नमुखच्छवेः ॥ ९ ॥ अथैनं
तपसातप्तमाजगामैकदाहरिः ॥ निदाघार्त्तंघनःश्यामःप्रावृषीवधरातलम् ॥ १० ॥

लेमायानिरीक्षणे ॥ गृहेमृतस्यनीतस्यश्मशानेदाहदर्शने ॥ २ ॥ अपर्यवसानाअपरिमितभ्रांतिहेतुरितियावत् ॥ १ ॥ अवहितःसावधानचित्तः ॥ २ ॥ मंडलोदेशविशेषः ॥
मेरौकल्पवृक्षवनंनंदनादीव ॥ ३ ॥ तत्रतस्मिन्मंडले ॥ ४ ॥ निष्कलंकावदातेनेतिनभसोपिविशेषणम् ॥ ५ ॥ कार्यंतपःप्रयोजनम् ॥ ६ ॥ तत्रवने ॥ ताराअश्विन्याद्याःसाराद
र्शनीयतमायस्मिन् ॥ ७ ॥ आशौरिदर्शनंविष्णुदर्शनपर्यंतंतपोर्थंसरसिप्रावृट्पद्मइवआकंठमंबुनिर्मग्नःसन्आविशत्प्रविश्यस्थितइत्यर्थः ॥ ८ ॥ वासोनिवासस्थानंतत्र्यानांपं
कजानांसूर्यवियोगेनसंकोचेतत्संवासस्नेहान्मनाग्भग्नामुखच्छविर्यस्य ॥ ९ ॥ श्यामइतिहरेरपिविशेषणम् ॥ १० ॥

नियमद्रुमस्तपोवृक्षः ॥ अभीप्सितेनफलेनउपेतःफलितोजातइत्यर्थः॥११॥ असंख्येयानांजगतिविद्यमानानांभूतानांप्राणिनांहृत्पद्मकुहरस्थायश्यामत्वादलिनेभृंगाय.॥१२॥ पारमात्मिकींपरमात्मन्यध्यस्ताम् ॥ १३ ॥ मायादर्शनमात्रेणपरमपुरुषार्थफलकस्यस्वाराधनतपसःसार्थक्यालाभात्ततस्त्वंद्रक्ष्यसिचेत्यप्रार्थितोपिभगवताद्वितीयोवरोदत्तः ॥ अदृश्यत्वमंतर्द्धानम् ॥ १४ ॥ १५ ॥ दर्शनस्पर्शनैरित्युक्तेःस्थावराणामपिचाक्षुषादिज्ञानमस्तीतिगम्यते ॥ १६ ॥ ब्राह्मणकर्मणातपःस्वाध्यायातिथिपूजनादिना ॥ १७ ॥ उदितपंकजेफुल्लपद्मे ॥ यथामहर्षिर्योगबलेनातीतानागतंद्रष्टुंमानसेचिंतयतितद्वत् ॥ १८ ॥ सकलाघविघातार्थमघमर्षणार्थमंतर्ज्जलंपरिवर्त्तमावर्त्तमिवसकुशेनकरेणचकारे

श्रीभगवानुवाच॥ ॥विप्रोत्तिष्ठपयोमध्याद्गृहाणाभिमतंवरम्॥ अभीप्सितफलोपेतोजातस्तेनियमद्रुमः॥११॥ ॥ब्राह्मणउवाच॥ असंख्येयजगद्भूतहृत्पद्मकुहरालिने॥ जगत्त्रयैकनलिनीसरसेविष्णवेनमः॥ १२॥ मायामिमांत्वद्रचितांभगवन्पारमात्मिकीम्॥ द्रष्टुमिच्छामिसंसारनाम्नीमांध्यैककारिणीम्॥ १३॥ ॥श्रीवसिष्ठउवाच॥ ॥इमांद्रक्ष्यसिमायांत्वंततस्त्वंद्रक्ष्यसिचेत्यजः॥ उक्त्वाययावदृश्यत्वंगांधर्वमिवपत्तनम्॥ १४॥ गतेविष्णौसमुत्तस्थौजलात्सब्राह्मणेश्वरः॥ शीतलामलमूर्त्तिर्त्वादिंदुःक्षीरोदकादिव॥ १५॥ बभूवपरितुष्टात्मादर्शनेनजगत्पतेः॥ दर्शनस्पर्शनैरिंदोरुत्फुल्लमिवकैरवम्॥ १६ ॥ अथास्यकतिचित्तस्मिन्दिवसानिर्ययुर्वने॥ हरिसंदर्शनानंदवतोब्राह्मणकर्मणा॥ १७॥ एकदारब्धवान्स्नानंसरस्युदितपंकजे॥ चिंतयन्वैष्णवंवाक्यंमहर्षिरिवमानसे॥ १८॥ अथस्नानविधावंतर्ज्जलमेपचकारहं॥ सकलाघविघातार्थंपरिवर्त्तमिवात्मना॥ १९॥ अंतर्ज्जलविधौतस्मिन्विस्मृतध्यानमंत्रधीः॥ पर्यस्तसंविल्लसरःसोपश्यज्जलमध्यतः॥ २०॥ मृतमात्मानमात्मीयेसदनेशोच्यतांगतम्॥ पतितंवातवेगेनकंदरांतरिवद्रुमम्॥ २१॥प्राणापानप्रवाहेणमुक्तमंतमुपागतम्॥ संशांतावयवस्पंदंनिर्वातइवखंडकम्॥ २२॥ पांडुराननमाम्लानंवृक्षपर्णमिवारसम्॥ शवीभूतमिवाग्लानंछिन्ननालमिवांबुजम्॥ २३॥ विपर्यस्तेक्षणंप्रातर्मग्नतारमिवांबरम्॥ सावग्रहमिवग्रामंसर्वतःपांसुधूसरम्॥ २४ ॥ वाष्पक्लिन्नमुखैर्दीनैःकरुणाक्रंदकारिभिः॥ आवृतंबंधुभिःखिन्नैःकुररैरिवपादपम् ॥ २५॥ सेतुभंगगलद्वारिक्रियमाणमुखाब्जया॥ नलिन्यासमधर्मिण्याभार्ययापादयोःश्रितम्॥ २६॥

त्यर्थः ॥ १९ ॥ अंतर्ज्जलंनिमज्ज्यप्रणवादिमंत्रस्मरणलक्षणेअघमर्पणविधौपर्यस्तोविपरीतग्रहणोन्मुखःसंविल्लसरोयस्यतथाविधःसन् ॥ २० ॥ कंदरांतर्दरीगर्भेपतितंद्रुममिव ॥ २१ ॥ मृतमित्यस्यविवरणंप्राणापानेति ॥ निर्वातपतितंकदल्यादिखंडकमिव ॥ २२ ॥ शवीभूतंइवकारोमिथ्यात्वपरोनोपमार्थः ॥ २३ ॥ अवग्रहोवर्षप्रतिरोधस्तेनोद्वस्तंग्राममिव ॥ २४ ॥ करुणयाआक्रंदोरोदनंतत्कारिभिः ॥ कुररैःपक्षिविशेषैः ॥ २५ ॥ सेतुभंगाद्गलद्भिःप्रवहद्भिर्वारिभिःक्रियमाणंमुखमिवअब्जंयस्यास्तथाविधयानलिन्याकमलिन्या ॥ २६ ॥

तारेणोच्चनरेणाक्रंदेनरणंतोरेफाद्विरेफाइवप्रलापेअनर्थकव्यक्तवाक्येदीर्घस्वरालापेचलुब्धयाआसक्तया ॥ नवैर्व्यंजनैःश्मश्रुभिर्लांछितेचिह्निते ॥ २७ ॥ श्रितंपरिवेष्टितम् ॥ २८ ॥ संयोगाविप्रयोगांताइतिन्यायप्रापितवियोगभीत्यासंयोगपरिहारपरैरिवेत्युत्प्रेक्षा ॥ अंगैर्हस्तपादादिभिः ॥ अनात्मीयैरस्वीयैरस्वजनैरिवेत्युपमा ॥ २९ ॥ आम्लानैरीपन्म्लिनैर्दशनैःस्वात्मजीवितमेतावत्कालंचथेतिहसंतंसविरागंविरक्तपुरुषमिव ॥ ३० ॥ मौनध्यानमित्याद्याश्वतस्रउत्प्रेक्षाः ॥ ३१ ॥ बांधवेषुकस्याधिकःस्नेहःकस्या

ताराक्रंदरणद्रेफप्रलापालापलुब्धया ॥ मात्रागृहीतंचिबुकेनवव्यंजनलांछिते ॥ २७ ॥ अन्यैःपार्श्वगतैर्दीनैःस्रवदश्रुमुखैर्जनैः ॥ श्रितंगलद्बाष्पायैःशुष्कपर्णैरिवद्रुमम् ॥ २८ ॥ वियोगभीत्यासंयोगपरिहारपरैरिव ॥ दूरंविप्रसृतैरंगैरनात्मीयैरिवावृतम् ॥ २९ ॥ परस्परमलग्नाभ्यामोष्ठाभ्यांदशनैःसितैः ॥ सविरागमिवाम्लानैर्हसंतंस्वात्मजीवितम् ॥ ३० ॥ मौनध्यानमिवापन्नंपंकादिवविनिर्मितम् ॥ अप्रबोधायसंसुप्तंविश्राम्यंतमिवोच्चकैः ॥ ३१ ॥ बांधवाक्रंदसंरंभकोलाहलगतागिरः ॥ स्नेहभावविचारार्थंशृण्वंतमिवयत्नतः ॥ ३२ ॥ अथतत्कालकल्लोलप्रलापाकुलचेष्टितैः ॥ सोरस्ताडनमूर्च्छोत्थनेत्रवारिवहाप्लुतैः ॥ ३३ ॥ क्रमेणस्वजनैःक्षुब्धैस्ताराक्रंदादिघर्घरैः ॥ निष्कालितममंगल्यमपुनर्दर्शनायवै ॥ ३४ ॥ नीतंश्मशानंमांसांत्रवसापंककलंकितम् ॥ शुष्काशुष्करसक्लिन्नकंकालशतसंकुलम् ॥ ३५ ॥ गृध्राभ्रच्छन्नसूर्यांशुचिताज्वलननिस्तमः ॥ शिवाशिवमुखज्वालाजालपल्लवितावनि ॥ ३६ ॥ वहद्रक्तसरित्स्नातमग्नकंकोग्रवायसम् ॥ रक्तार्द्रतंत्रीप्रसरजालाबद्धजरत्खगम् ॥ ३७ ॥ तत्रतंज्वलनेदीप्तेचक्रुस्तंभस्मसाच्छवम् ॥ बांधवाःसलिलापूरंसमुद्राइववाडवे ॥ ३८ ॥ चितिश्चटच्चटास्फोटैःशवमाशुददाहसा ॥ शुष्केंधनबहूच्छूनज्वालाजालजटावली ॥ ३९ ॥

त्स्यइतितत्त्वाशयविमर्शार्थंयत्नतोऽवहितमनस्कतयातूर्णींतदाक्रंदान्शृण्वंतमिव ॥ ३२ ॥ अथक्रमेणस्वजनैर्निष्कालितंगृहाद्बहिर्निष्कासितमितिपरेणान्वयः ॥ ३३ ॥ ३४ ॥ मांसांत्रेत्यादिजरत्खगमित्यंतानिश्मशानविशेषणानि ॥ ३५ ॥ शिवानामशिवैर्मुखनिर्गतज्वालाजालैःपल्लवितेवावनिर्यस्य ॥ ३६ ॥ वहद्रक्तसरित्सुकेचित्स्नाताःकेचिन्मग्नाश्चकंकाउग्रवायसाश्चयत्र ॥ रक्तैरार्द्राणांतंत्रीणांप्रसरलक्षणैर्जालैरानायैराबद्धाजरत्खगावृद्धपक्षिणोयत्र ॥ ३७ ॥ वाडवेवडवाग्नौसमुद्राःस्वसलिलापूरंयथाभस्मसाच्चक्रुस्तद्वत् ॥ ३८ ॥ शुष्कैरिंधनैर्बहुउच्छूनाअभिवृद्धाज्वालाजाललक्षणाजटावलिर्यस्याःसाचितिश्चिताचटचटाशब्दैस्तंशवमाशुददाह ॥ ३९ ॥

अभ्युल्लसद्भिःकटकटारवैर्मुक्तैर्गंधैश्चव्याप्तान्यंबुवाहपटलानियेनतथाविधोहुताशोग्निःसमंताद्वुद्वांताउद्गीर्णामेदुराउपचितारसायस्मात्तथाविधमस्थिचयंदंतीसरंध्रंवेणुवनमिव दलयांचकारविदलयामासेत्यर्थः ॥ ४० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेचतुश्चत्वारिंशःसर्गः ॥ ४४ ॥ ॥ ७॥ ॥ इहास्यपुल्कसीकुक्षौजन्म कैरातकीस्थितिः ॥ मृतबंधोःकीरपुरेराज्यप्राप्तिश्चवर्ण्यते ॥ १ ॥ स्वस्याधिभिर्मानसदुःखैःपीवरयाउपचितया ॥ इतआरभ्यसर्वेषांकारकाणांविंशतितमश्लोकस्थेअपश्यदि त्यत्रक्रमेणान्वयः ॥ १ ॥ भूतमंडलाख्योदेशभेदस्तस्यपर्यंतःसीमातत्रत्यग्रामस्यउपांतेसन्निहितभूमौनिवासिनाम ॥ २ ॥ गर्भवासपदेनतत्रत्यदुःखानिलक्ष्यंतेतद्भरेणाक्रांतम्॥

अभ्युल्लसत्कटकटारवमुक्तगंधव्याप्तांबुवाहपटलोस्थिचयंहुताशः॥ दंतीसरंध्रमिववेणुवनंसमंताद्वुद्वांतमेदुररसंदलयांचकार॥ ४०॥ इ०वा०वा०दे०मो०उपशमप्रकरणेगाधिवृत्तांतेगाधिविनाशोनामचतुश्चत्वारिंशःसर्गः॥ ४४ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठ उवाच॥ ॥अथापश्यदसौगाधिःस्वाधिपीवरयाधिया॥ अंतर्जलस्थएवांतरात्मनात्मनिनिर्मले ॥ १ ॥भूतमंडलपर्यंतग्रामोपांतनिवासिनाम्॥श्वपचानांस्त्रियागर्भेस्थितमात्मानमाकुलम्॥ २॥ गर्भवासभराक्रांतंपीडितंपेलवांगकम्॥ श्वपचीहृदयेसुमंस्वविष्ठायामिवाकुलम्॥ ३॥ शनैःपक्वतयाकालेप्रसूतंमेचकच्छविम्॥ श्वपच्याप्रावृषेवाब्दंश्याममावलितंमलैः॥ ४॥ संपन्नंश्वपचागारेशिशुंश्वपचवल्लभम्॥ इतश्चेतश्चगच्छंतमुत्पीडमिवयामुनम् ॥ ५ ॥ द्वादशाब्ददशांयातंसंस्थितंषोडशाब्दिकम्॥ पीवरांसमुदारांगंपयोदमिवमेदुरम्॥६॥ सारमेयपरीवारंविहरंतंवनाद्वनम्॥ निघ्नंतंमृगलक्षाणिपौलिंदींस्थितिमागतम् ॥ ७॥ तमाललतयेवाथश्रितंश्वपचकांतया॥ स्तनस्तबकशालिन्यानवपल्लवहस्तया॥८॥ श्यामयामलिनाकारदशनामलमालया॥ वनपल्लवयाभूरिविलासवलितांगया॥ ९॥ विलसंतंवनांतेषुतयासहनवेष्टया॥ श्यामलंश्यामयाभृंगंभृंग्येवकुसुमर्द्धिषु॥ १०॥ वनपर्णलतापत्रेवसंतंव्यसनातुरम्॥ विंध्यकांतारमाकारमभ्यागतमिवोद्भटम्॥ ११॥ विश्रांतंवनकुंजेपुसुमंगिरिदरीषुच॥ निलीनंपत्रपुंजेषुगुल्मकेषुकृतालयम्॥ १२॥ किंकिरातावतंसाढ्यंयूथिकास्रग्विभूपितम्॥ केतकोत्तंससुभगंसहकारस्रगाकुलम्॥ १३॥

पीडितमित्यादिस्तस्यैवप्रपंचः॥ ३ ॥ श्वपच्याकालेप्रसूतम् ॥ अब्दंमेघम् ॥ ४ ॥ यामुनंयमुनाप्रवाहपतितमुत्पीडमुत्तंसोत्पलमिव ॥ ५॥ ६ ॥ सारमेयाःश्वानएवमृगयाद्यर्थं परीवारोयस्य ॥ पौलिंदींकैरातींस्थितिंवृत्तिम् ॥ ७ ॥ अथश्वपचकन्ययाश्रितंकृतोद्वाहमितियावत् ॥ ८ ॥ दंतधावनाभावान्मलिनाकारास्वाभाविकशौक्ल्यादमलादशनमालायस्यास्तया ॥ वनपल्लवान्यांत्यनुगच्छंतितथाविधैर्भूरिविलासैर्वलितांगया ॥ वनपल्लवशब्देउपपदेयातेःक्विप् ॥ ९ ॥ नवत्वादेवेष्टयानवंनित्याभिनवंयथास्यात्तथाइष्टयावा ॥ कुसुमर्द्धिषुपुष्पसमृद्धिमत्सुवनांतेषु ॥ १० ॥ आकारमभ्यागतंगृहीतपुरुषाकारंविंध्यकांतारमिवेत्युत्प्रेक्षा ॥ ११ ॥ १२ ॥ किंकिरातादिपदैस्तत्तन्मंजर्योगृह्यंते ॥ १३॥

१ अत्रटीकानुरोधेनपाठांतरमपेक्ष्यतइतिभातितत्तुनोपलभ्यते

काननकोशेषुविषयेषुतज्ज्ञमसाधारणज्ञानवंतमित्यर्थः ॥ बहुज्ञंपंडितम् ॥ १४ ॥ अत्यंतंविषमाःश्रोतुमप्यशक्याउद्दंताश्चरित्राणियेषाम् ॥ १५ ॥ १६ ॥ भूतग्रहोभूतमंडला
ख्योदेशस्तदीयग्रामसंबंधिनींजन्मभूमिमुपेत्यदूरेतालादिपर्णैर्मठिकांकुटींकृत्वास्थितम् ॥ १७ ॥ स्वदेहसमप्रमाणाःपुत्रायस्य ॥ जीर्णप्रायारसायस्यतथाविधेनश्वभ्रोत्पन्नत
मालतरुणासन्निभंसदृशम् ॥ १८ ॥ क्रूराणिनामान्याख्याअर्थाःक्रियावचनानिचयस्य ॥ परांकुटुंबवृद्धिमुपागतंस्वंअपश्यदिति ॥ एतदंतानांसर्वविशेषणानांपरेणान्वयः ॥ १९ ॥
अन्येभ्यःश्वपचेभ्योजरठोऽसौगाधिः अथानंतरंभ्रमहारिणःभ्रांतिमेवानुवर्त्तमानस्यकलत्रिणःकुटुंबिनःस्वात्मनःस्वस्ययावत्कलत्रंकुटुंबमभूत्तन्मृत्युनाआवृत्त्यअशेषेणनिःशेष

लुलितंपुष्पशय्यासुभ्रांतमद्रितटीषुच ॥ तज्ज्ञंकाननकोशेषुबहुज्ञंमृगमारणे ॥ १४ ॥ प्रसूतमथशैलेषुपुत्रान्निजकुलांकुरान् ॥ अत्यंत
विषमोदंतान्खदिरःकंटकानिव ॥ १५ ॥ कलत्रवंतंसंपन्नंस्थितंप्रक्षीणयौवनम् ॥ शनैर्जर्जरतांयातंवृष्टिहीनमिवस्थलम् ॥ १६ ॥ त
तोभूतग्रहग्रामजन्मदेशमुपेत्यतम् ॥ संस्थितंमठिकांपर्णैःकृत्वादूरेमुनींद्रवत् ॥ १७ ॥ जराजरठतांयातंस्वदेहसमपुत्रकम् ॥ जीर्णप्रा
यरसश्वभ्रतमालतरुसन्निभम् ॥ १८ ॥ प्रौढंश्वपचगार्हस्थ्यंकुर्वाणंबहुबांधवम् ॥ क्रूरनामार्थवचनंपरांवृद्धिमुपागतम् ॥ १९ ॥ अ
थापश्यदसौगाधिर्यावत्तस्यकलत्रिणः ॥ जरठःश्वपचेभ्यश्चस्वात्मनोभ्रमहारिणः ॥ २० ॥ तत्कलत्रमशेषेणनीतमावृत्त्यमृत्युना ॥ आ
सारसलिलेनाशुवनपर्णगणोयथा ॥ २१ ॥ प्रलपत्येकएवासावटव्यांदुःखकर्शितः ॥ वियूथइवसारंगोविगतास्योश्रुलोचनः ॥ २२ ॥
दिनानिकतिचित्तत्रनीत्वाशोकपरीतधीः ॥ जहौस्वदेशंसंशुष्कपद्मंसरइवांडजः ॥ २३ ॥ विजहारबहून्देशाननास्थश्चिंतयान्वितः ॥ प्रेर्य
माणइवान्येनवातनुन्नइवांबुदः ॥ २४ ॥ एकदाप्रापकीराणांमंडलेश्रीमतींपुरीम् ॥ खेचरोविहरन्शून्येसद्विमानमिवांबरे ॥ २५ ॥ नृत्य
द्रत्नांशुकच्छन्नमार्गवृक्षलतांगनम् ॥ आगुल्फाकीर्णकुसुमंचंदनागुरुसुंदरम् ॥ २६ ॥ सामंतैर्ललनाभिश्चनागरैश्चनिरंतरम् ॥ स्वर्ग
मार्गोपमंराजमार्गमध्यमवापसः ॥ २७ ॥ मणिरत्नकृतागारंतत्रमंगलहस्तिनम् ॥ ददर्शामरशैलेंद्रमिवसंचारचंचलम् ॥ २८ ॥ मृते
राजनिराजार्थंविहरंतमितस्ततः ॥ रत्नज्ञमिवरत्नार्थंचिंतामणिदिदृक्षया ॥ २९ ॥

तयानीतमपश्यदितिद्वयोरन्वयः ॥ यथाआसारसलिलेनवृष्टिजलप्रवाहेणवनपतितशुष्कपर्णगणोनीयतेतद्वदित्यर्थः ॥ २० ॥ २१ ॥ अथासौजरठएकएवअटव्यांप्रलपतिरो
दिति ॥ २२ ॥ अंडजोहंसादिः ॥ २३ ॥ अन्येनप्रेर्यमाणःपराधीनइव ॥ २४ ॥ कीराणांजानपदानामावासभूतेमंडले ॥ शून्येअंबरेविहरन्संचरन् ॥ २५ ॥ नृत्यंतोरत्नांशु
कैश्छन्नामार्गस्थावृक्षालताअंगनाश्चयस्मिंस्तथाविधंराजमार्गमध्यमवापेतिपरेणान्वयः ॥ २६ ॥ निरंतरंनिर्विहितम् ॥ २७ ॥ मणिरत्नैर्मणिश्रेष्ठैःकृतागारंकृताश्रयंकृत
जालकम् ॥ शैलेंद्रपक्षेकृतदेवसदनम् ॥ अमरशैलेंद्रंमेरुम् ॥ २८ ॥ इतस्ततोविहरंतंसंचरंतम् ॥ रत्नज्ञंरत्नपरीक्षाकुशलंपुरुषम् ॥ २९ ॥

अंसौश्वपचः ॥ ३० ॥ स्वस्यकटेगंडस्थलेअयोजयत्आरोहयामास ॥ ३१ ॥ महांतोऽर्णवाःसमुद्राइव ॥ ३२ ॥ आशादिशोमनोरथाश्च ॥ ३३ ॥ ३४ ॥ आवरयामासुः परिवव्रुः ॥ क्षीरोदस्यगतेनमथनकृतक्षोभेणविभ्रांताः ॥ ३५ ॥ गुणेषुसूत्रेषुप्रोतैर्ग्रथितैर्मालाभूतैरितियावत् ॥ नानावर्णमणिषुप्रतिबिंबनात्तत्तत्प्रभाभिःप्रभातोऽर्कोयासुतथाविधाःवेलाःस्वतटस्थमचलंगिरिमिव ॥ ३६ ॥ श्यामाःयुवत्यः ॥ वर्षाःवृष्टयोवननदीनांपूरैस्तन्मध्यपतितंगिरिशृंगमिव ॥३७॥३८॥ नगोगिरिर्द्धातुभिर्लक्षणयाधातुसंबंधिभिः

तमसौश्वपचोनागंकौतुकोद्धुरयादृशा ॥ चिरमालोकयामासस्पंदयुक्ताचलोपमम् ॥ ३० ॥ आलोकयंतमादायतंकरेणसवारणः ॥ स्वकटेऽयोजयन्मेरुस्तटेर्कमिवसादरम् ॥ ३१ ॥ तस्मिन्कटगतेनेदुर्जयदुंदुभयोभितः ॥ कल्पांबुदइवाकाशमधिरूढेमहार्णवाः ॥ ३२ ॥ पूरिताशोवभौराजाजयतीतिजनस्वनः ॥ उदभूत्संप्रवुद्धानांविहगानामिवारवः ॥ ३३ ॥ उदभूद्वंदिवृंदानांघनकोलाहलस्ततः ॥ वेलाविलुलितांबूनामंबुधीनामिवध्वनिः ॥ ३४ ॥ तंतत्रावरयामासुर्मंडनार्थंवरांगनाः ॥ क्षीरोदगतविभ्रांतालहर्यइवमंदरम् ॥ ३५ ॥ मानिन्यस्तंगुणप्रोतैर्नानारत्नैरपूरयन् ॥ नानाप्रभाप्रभातार्कावेलाइवतटाचलम् ॥ ३६ ॥ तुषारशिशिरस्पर्शैस्तास्तंहारैरभूषयन् ॥ श्यामावननदीपूरैर्वर्षाःशृंगमिवोत्तमम् ॥ ३७ ॥ विचित्रवर्णसौगंध्यैःपुष्पैरावलयन्स्त्रियः ॥ वनंमधुश्रियइवतंलोलकरपल्लवाः ॥ ३८ ॥ नानावर्णरसामोदैस्तास्तमाशुविलेपनैः ॥ अलेपयन्प्रभाजालैर्नगोभ्रमिवधातुभिः ॥ ३९ ॥ रत्नकांचनकांतोसावाददेचित्तमाततम् ॥ संध्याभ्रतारेंदुनदीव्याप्तंमेरुरिवांबरम् ॥ ४० ॥ भूपितःसविलासाभिर्बालवल्लीभिरावृतः ॥ रत्नपुष्पांशुकाकीर्णःकल्पवृक्षइवावभौ ॥ ४१ ॥ तादृशंतमुपाजग्मुःपरिवारसमन्विताः ॥ सर्वाःप्रकृतयःफुल्लंमार्गद्रुममिवाध्वगाः ॥ ४२ ॥ ताएनमासनेसैंहेतत्राभिषिपिचुःक्रमात् ॥ तस्मिन्नेवगजेशक्रमैरावतइवामराः ॥ ४३ ॥ एवंसश्वपचोराज्यंप्रापकीरपुरांतरे ॥ आरण्यंहरिणंपुष्टमप्राणमिववायसः ॥ ४४ ॥ कीरीकरतलांभोजप्रमृष्टचरणांबुजः ॥ सर्वांगेकुंकुमालेपैःसंध्यांबुधरशोभनः ॥ ४५ ॥ जज्वालकीरनगरेनागरीगणवानसौ ॥ सिंहीगणयुतःसिंहोयथाकुसुमितेवने ॥ ४६ ॥

प्रभाजालैरभ्रमाकाशंमेघमिववा ॥ ३९ ॥ रत्नकांचनभूषणैःकांतोभूपितोऽसौराजाचित्तमाददेतासामितिशेषः ॥ ४० ॥ ४१ ॥ ४२ ॥ ताःप्रकृतयःसैंहेआसनेउपवेश्यक्रमाद्ब्राह्मणादिवर्णक्रमादभिषिपिचुः ॥ अभिषिच्यचतस्मिन्प्रागुक्तेगजेउपवेश्यानुजग्मुरितिशेषः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥



१ एतदनुपयुक्तमिवभाति ॥ एतदनुरोधेनमूलेपाठांतरंचेत्तत्क्वापिनोपलभ्यते ॥

शांता:प्राक्तनचिंताविपादाश्च यस्य तथाविधः संस्तत्रनगरे सद्भिर्मंत्रिपौरादि

हरिणा सिंहेन हताद्विदारितात्करिकुंभादुन्मुक्तानां मुक्ताफलानां कलापैःप्रविरचितं भूपितं शरीरं यस्य

भि:सह भोगैररमत रेमे ॥ यथा रविकरैर्मंदेन चतमद्भः सरस्यां वारिपूरैरमतेनद्वत् ॥ ४७ ॥ परितो विस्तृतं प्रसृतं नृपौजो राजशक्तिर्यस्य ॥ अतएव सर्वदिक्षु संस्थिता आज्ञा यस्य ॥

कतिपयदिवसैरीहया स्वेच्छयैव सिद्धा राज्यव्यवस्था यस्य सश्वपचो गवलइत्यभिनवेन नाम्ना प्रसिद्धस्तत्र कीरदेशे राजा बभूवेत्यर्थः ॥ ४८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्र

काशे उपश० पंचचत्वारिंशः सर्गः ॥ ४५ ॥ ॥ ७ ॥ ॥ इहतं श्वपचाच्छुत्वाश्वपचं ज्वलनं जने ॥ प्रविष्टेसोपि निर्दग्धःप्रबुद्धो गाधिरीयते ॥ १ ॥ विलासिनीभिर्वं

हरिहतकरिकुंभोन्मुक्तमुक्ताकलापप्रविरचितशरीरःशांतचिंताविपादः॥ अरमतसहसद्भिस्तत्रभोगैःसरस्यांरविकरमदतभोवारिपूरैरि वेभः॥ ४७॥ परिविस्तृतनृपौजाःसर्वदिक्संस्थिताज्ञःकतिपयदिवसैहासिद्धदेशव्यवस्थः॥ प्रकृतिभिरलमूढाशेपराजन्यभारःसगवल इतिनाम्नातत्रराजाबभूव ॥ ४८ ॥ ॥इ॰वा॰वा॰दे॰ मोक्षोपायेपूपशमप्रकरणेगाधिवृत्तांतेश्वपचराज्यलाभोनामपंचचत्वारिंशः सर्गः॥ ४५॥ ॥ ७॥ ॥श्रीवसिष्ठउवाच॥ ॥ विलासिनीभिर्वलितोमंत्रिमंडलपूजितः ॥ वंदितःसर्वसामंतैश्छत्रचाम रलालितः॥ १॥ सिद्धानुशासनःक्रांतोज्ञातराज्यगुणक्रमः॥ वीतशोकभयायासप्रज्ञःप्राप्तमहादशः॥२॥ विस्मृतात्मस्वभावोभूदनिशं स्तवमंगलैः॥ आनंदपूर्णयावृत्त्याभृशंक्षीबइवासवैः॥ ३॥ कीरेपुश्वपचोराज्यंवर्षाण्यष्टौचकारह॥ आर्यवृत्तमशेषेणतावत्कालंबभा रह॥४॥ यदृच्छयैकदाथासावतिष्ठत्त्यक्तभूपणः॥ अतमस्तारकेंद्वर्कतेजोभोदमिवांबरम् ॥५॥ बद्धमन्यतनोहारकेयूरवलयान्यसौ॥ प्रभुतावृंहितंचेतोनाहार्यमभिनंदति॥६॥ एकएवाजिरंवाह्यंताहृग्वेपःसनिर्ययौ॥ मुख्यांगणान्नभोभागादस्तंगच्छन्निवांशुमान्॥७॥ तत्रापश्यद्धनंश्यामंपीनंश्वपचपेटकम्॥ गायन्मृदुवसंतोत्थंकोकिलानामिवव्रजम्॥८॥ धुनानंवल्लकीतंत्रींकरपल्लवलीलया॥ मृदुरेफं रणद्रेफामलिश्रेणिमिवद्रुमम्॥९॥ एकस्तस्मात्समुत्तस्थौजरावान्रक्तलोचनः॥ काचशृंगंहिमापूर्णमिवश्वपचनायकः॥१०॥

लितइत्यादिविशेषणःसविस्मृतात्मस्वभावोभूदितितृतीयेनान्वयः ॥ १ ॥ सिद्धमप्रतिहतमनुशासनमाज्ञापनंयस्य ॥ वीतशोकभयायासाःप्रजायस्य ॥ २ ॥ क्षीबोमत्तइव ॥ ३॥

आर्यवृत्तंदयादाक्षिण्यशौचादि ॥ ४ ॥ नविद्यंतेतमस्तारकेंद्वर्कतेजांस्यंभोदाश्च यस्मिंस्तथाविधमंबरमिवसर्वतोनीलः ॥ ५ ॥ किमर्थंत्यक्तभूपणस्तत्राह ॥ बद्धेति ॥ प्रभुत

यावृंहितमुपचितम् ॥ आहार्यंकृत्रिमंभूपणादिनाभिनंदति ॥ ६ ॥ आंतरान्मुख्यजनाश्रितादंगणाद्वाह्यंनीचजनसाधारणमजिरमंगणंनिर्ययौ ॥ यथाअस्तंगच्छन्नभिप्यन्नं

शुमान्मुख्याद्गगनांगणात्प्रांतनभोभागंनिर्यातितद्वत् ॥ ७ ॥ श्वपचानांपेटकंसंघम् ॥ मृदुमधुरंगायत् ॥ ८ ॥ वल्लक्यावीणायास्तंत्रींगुणम् ॥ मृदुरेफंमृदुस्वरम् ॥ द्रुमंधुनानांकं

पयंतीं रणंतोरेफाःपक्षायस्यास्तथाविधामलिश्रेणिंभ्रमरपंक्तिमिव ॥ ९ ॥ हिमैरापूर्णंकाचमयंगिरेःशृंगमिवस्थितःश्यामोधूलिधूसरइतियावत् ॥ १० ॥

कटंजेतिपूर्वनाम्नावदन्संबोधयन् ॥११॥ रक्तकंठंमधुरकंठध्वनिम् ॥ मानयतिबहुमन्यतेकिम ॥ रागवान्स्वरवित्कांताद्यनुरागवान्वा ॥ गृहस्यवस्त्रासनानांचार्पणैर्दानैः॥१२॥ मधुर्वसंतः ॥ रलोपेदीर्घः ॥ निर्वृतिंसुखम् ॥ १३ ॥१४॥ सीमांतःपरमावधिः ॥ सीमंतःकेशवेशेइत्युक्तेःपररूपाभावः ॥ अवधीरणंतिरस्कारंतद्व्याजेनगूहनमितियावत् ॥१५॥ अलमत्यंतम् ॥ म्लानतांक्षीणहर्षताम् ॥ १६ ॥ तुषारैःप्रातिपूरयतीतितयातुषारप्रावृष्या ॥ इवेत्यत्रापिसंवध्यते ॥ प्रापूरणेइत्यस्मात्क्विपितृतीयैकवचनेआतोधातोरित्या लोपः ॥ सावग्रहाअनावृष्टिपीडिताः ॥ दवेभवोदावोग्निस्तद्वंतइव ॥ १७ ॥ अवधीरयामासनिर्भर्त्सयामास ॥ संकथांसंभाषाम् ॥ १८ ॥ सीदत्सरसिजंशुष्यत्पंकजम्

भोकटंजेतिसहसावदन्कीरमहीपतिम् ॥ इहराजाभवंतंवाकच्चिद्देयक्रियाविदम् ॥ ११ ॥ रक्तकंठंमानयतिरागवानिवकोकिलम् ॥ आपूरयतिवाकच्चिद्गृहवस्त्रासनार्पणैः॥ १२॥ मधूरसालविटपंफलपुष्पभरैरिव ॥ दर्शनेनतवाद्याहंपरांनिर्वृतिमागतः॥ १३॥ पद्मंसूर्योदयेनेवचंद्रोदयइवौषधी ॥ आनंदानामशेषाणांलाभानांमहतामपि॥ १४॥ विश्रामाणामनंतानांसीमांतोवंधुदर्शनम् ॥ श्वपचेप्रवदत्येवंराजायावत्तयातया ॥ चकारतत्कालजयाचेष्टयैवावधीरणम्॥ १५॥ तावद्वातायनगताःकांताःप्रकृतयस्तथा॥ श्वपचोयमितिज्ञात्वाम्लानतामलमाययुः ॥ १६॥ पद्मास्तुषारप्रावृष्याग्रामाःसावग्रहाइव॥ दाववंतइवाद्रींद्रानागरानविरेजिरे॥ १७॥ नृपोवधीरयामासतांतांश्वपचसंकथाम्॥ वृक्षाग्रगतमार्जारफेत्कारंमृगराडिव॥ १८॥ सत्वरंप्रविवेशांतःपुरमाम्लानमानवम्॥ राजहंसइवावर्षेसीदत्सरसिजंसरः॥ १९॥ सर्वावयवविश्रांतांम्लानतामयमाययौ॥ जानुस्तंभांतरमहारंध्राग्निरिवद्रुद्रुमः॥२०॥ तत्रापश्यदसौसर्वंविपण्णवदनंजनम् ॥ जालंकुंकुमपुष्पाणांभुक्तमूलमिवाखुना ॥ २१ ॥ मंत्रिणोनागरानार्यस्ततस्तेतंमहीपतिम् ॥ नस्प्राक्षुरपितिष्ठंतंगृहएवशवंयथा ॥ २२॥ भृत्याश्चाकृतसत्कारंदूरएनमथात्यजन्॥ दुःखयुक्ताघनस्नेहाअपिवालाःशवंयथा॥ २३॥ अनानंदमुखंश्यामंशरीरश्रीविवर्जितम्॥ दग्धंस्थलमिवैनंतेवक्रमन्यंतनाकुलाः ॥ २४ ॥ धूमायमानदेहस्यपरितापदशावती॥ नाढौकतास्यजनतापार्श्वमग्निर्गिरेरिव ॥ २५ ॥ मंदोत्साहाःसमुद्भूताःसभ्यसंघातवर्जिताः ॥ नतदाज्ञाःपदंप्रापुर्भस्मनीवांवुविप्रुषः ॥ २६॥

॥ १९ ॥ सर्वेष्ववयवेषुविश्रांतांव्याप्ताम् ॥ जान्विवस्तभ्नातिविष्टभ्नोतीतिजानुस्तंभोमूलभागस्तदंतरालस्थेमहारंध्रेकोटरेअग्निर्यस्य ॥ द्रुद्रुमःशाल्मल्यादिः ॥ २० ॥ जालपदेनपुष्पजालास्पदंगुल्मंगृह्यते ॥ आखुनामूषकेणभुक्तमूलंखंडितमूलम् ॥ २१ ॥ गृहेएवतिष्ठंतमपिनास्प्राक्षुर्नस्पृष्टवंतः ॥ २२ ॥ २३ ॥ दग्धंस्थलंश्मशानदेशमिव॥२४॥ जनताजनसमूहोऽस्यपार्श्वंनाढौकतनासर्पत ॥ गिरेःपार्श्वंवप्रशिलाभागमग्निरिव ॥ २५॥ सआज्ञाशक्त्यातांकुनोनवशीचकारतत्राह ॥ मंदोत्साहाइति ॥ सभ्यैर्भटादिसंघातैश्चवर्जिताउपेक्षितास्तदाज्ञाःपदंविषयमाज्ञापनयोग्यंपुरुषंनप्रापुः ॥ २६ ॥

संगतेनअशुभस्यपापस्यवधादेश्चदायिनः ॥ राक्षसादिवभीतादतिशेषः ॥ २७ ॥ अर्थाधनानि ॥ आदिपदात्स्वजनसुहृदादयोगृह्यंते ॥ २८ ॥ वेणूनामपिमुक्ताकरत्वान्मु
क्ताजालयुतायवायुनाकूजतेकीचकायवेणुजातिभेदाय ॥ २९ ॥ ३० ॥ शुष्कैरिंधनैरेधितावर्द्धिता ॥ ३१ ॥ तारकास्विवज्वलितासुदीप्यमानासुसतीषु ॥ अकर्मकत्वात्क
र्त्तरिक्तः ॥ नगरपदेनतत्स्थाजनालक्ष्यंते ॥३२॥ तदेवनगरंवर्णयति ॥ करुणेत्याद्यष्टभिः ॥ अवष्टब्धंकराद्यवलंबेनविष्टब्धम् ॥ ज्वलतांकुंडानामुपांतेमंदाव्यामूढारुदंतश्चप्रजाय
त्र ॥३३॥ रुदत्अश्रून्विमुंचत् ॥ क्रंदत्आक्रुशदितिभेदः ॥ मारुतैःसावश्यायझंझानिलैः ॥३४॥ चितास्वादीपितानांविप्रेंद्राणांमांसैर्मांसलउपचितोगंधोयस्यास्तयावात्ययाअव

क्रूरकर्मकराकारात्संगताशुभदायिनः ॥ तस्माद्विशेषेणजनाराक्षसादिवदुद्रुवुः ॥ २७॥ एकएवबभूवासौजनमध्यगतोपिसन् ॥ अ
र्थादिगुणनिर्मुक्तःपरदेशइवाध्वगः ॥ २८ ॥भृशमालपतेप्यस्मैनालापंनागरादद्दुः ॥ मुक्ताजालयुतायापिकीचकायाध्वगाइव ॥२९॥
अथसर्वेवयंदीर्घकालंश्वपचदूषिताः ॥ प्रायश्चित्तैर्नशुद्ध्यामःप्रविशामोहुताशनम् ॥ ३० ॥ इतिनिर्णीयनगरेनागरामंत्रिणस्तथा ॥
अभितोज्वालयामासुश्चिताःशुष्कैंधनैधिताः ॥ ३१ ॥ ज्वलितास्वभितस्तासुतारकास्विवखेतदा ॥ बभूवनगरंसर्वमाक्रंदपरमानवम्
॥ ३२ ॥करुणारावमुखरैःकलत्रैर्बाष्पवर्षिभिः ॥ अवष्टब्धंज्वलत्कुंडोपांतमंदरुदत्प्रजम् ॥ ३३ ॥ अग्निकुंडप्रविष्टानांमंत्रिणांभृत्यरोद
नैः ॥ रुदत्क्रंदद्दृढतरमरण्यमिवमारुतैः ॥ ३४॥ चितादीपितविप्रेंद्रमांसमांसलगंधया ॥ जातनीहारमुत्पातवात्ययावकरोद्धतैः ॥३५॥
वातदीर्घवसागंधदूरानीतखगोर्जितैः ॥ चक्रैर्व्योमाभवच्छन्नभास्करंजलदैरिव ॥३६॥ वातोद्धूतचितावह्निप्रज्वलद्व्योममंडलम् ॥उड्डी
नाग्निकणव्राततारासारदिगंतरम् ॥ ३७ ॥ प्रमत्ततस्करक्रंदद्देहुद्बालकुमारकम् ॥ संत्रस्तनागरापास्तजीविताख्यमसंस्थिति ॥३८ ॥
अलक्षितगृहंचौरलुंठिताखिलसंचयम् ॥ त्यक्तपुत्रकलत्रंतन्मरणव्यग्रनागरम् ॥ ३९ ॥ तस्मिंस्तथावर्त्तमानेकष्टेविधिविपर्यये ॥ अशे
षजनताशेषकल्पांतसदृशस्थितौ ॥ ४० ॥ राज्यसज्जनसंपर्कपवित्रीकृतधीरधीः ॥ गवलश्चितयामासशोकेनाकुलचेतनः ॥ ४१ ॥ मद
र्थैहिकदर्थोयंदेशोस्मिन्स्थितिमागतः ॥ अकालकल्पांतमयःसर्वनायकनाशनः ॥ ४२ ॥

करेभ्यउत्करेभ्यउत्थितैरजोभिर्जातनीहारमुद्भूतमिहिकमिवस्थितम् ॥ ३५ ॥ वातेनदीर्घैर्दूरप्रसृतैर्वसागंधैर्दूरादानीतैःखगैःपक्षिभिःपिशाचादिभिश्चोर्जितैस्तैःपांचक्रैर्मंडलैर्जल
दैश्छन्नभास्करंव्योमेवनगरमभवत् ॥ ३६ ॥ ३७ ॥ पुनःकीदृशंतदभवत्तदाह ॥ प्रमत्तेति ॥ प्रमत्तैरुद्धतैस्तस्करैर्भूषणाद्यपहारकालेक्रंदंतोवेह्लंतःकंपंतोबालाःकुमाराईपत्प्रौ
ढाश्चयत्र ॥ संत्रस्तैर्नागरैरपास्तंत्यक्तंजीवितंआख्यास्वनामचयत्र ॥ असंस्थितिनिर्मर्यादम् ॥ ३८ ॥ मरणायव्यग्रास्त्वरमाणानागरायत्रतथाविधमभवदित्यनुषज्जनं ॥ ३९ ॥
॥ ४० ॥ ४१ ॥ अयंकदर्थोऽनर्थः ॥ ४२ ॥

॥ ४३ ॥ वपुःस्वशरीरंज्वलितेऽनलेआहुतिमकरोत् ॥ ४४ ॥ तस्मिन्गवलनाम्निदेहेनिर्वेदबलाद्धुताशराशौपततिसतिस्वांगानांहस्तपादादीनामवदाहेदहनेयानिस्फुरणानिसंचलनानितदनुरोधादघमर्षणंकुर्वन्गाधिरंतर्जलेझटितिबोधमवापेत्यर्थः ॥ ४५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउप०षट्चत्वारिंशःसर्गः ॥ ४६ ॥ ॥ ७ ॥ गाधिःस्वंमतिथेःश्रुत्वातत्कीरनृपचेष्टितम् ॥ गत्वादृष्ट्वामुहुःपृष्ट्वाविस्मितोभूदितीर्यते ॥ १ ॥ आधिरूपात्प्रागुक्तभवभ्रमात्प्रशशाम ॥ आकुलीभवत्यस्मिन्नित्याकुलीभावः ॥ अधिकरणेघञ् ॥ वेलासन्निहितआवर्त्तइव ॥१॥ २ ॥ स्वंप्राक्तनगाध्यहंभावलक्षणंबोधमाप ॥ उन्निद्राव्यपेतनिद्राधीर्यस्यसइव ॥ क्षीबतायांमदिरादिमदे ॥ परिणताशयः

किंमेजीवितदुःखेनमरणंमेमहोत्सवः॥ लोकनिंद्यस्यदुर्ज्जंतोर्ज्जीवितान्मरणंवरम्॥४३॥ इतिनिश्चित्यगवलोज्वलितेज्वलनेपुनः॥ पतंगवदनुद्वेगमकरोदाहुतिंवपुः॥४४॥ तस्मिन्वलाद्गवलनाम्निहुताशराशौदेहेपतत्यवयवाकुलतांप्रयाते॥ स्वांगावदाहदहनस्फुरणानुरोधादंतर्ज्जलेझटितिबोधमवापगाधिः॥४५॥ ॥श्रीवाल्मीकिरुवाच॥ ॥इत्युक्तवत्यथमुनौदिवसोजगामसायंतनायविधयेस्तमिनोजगाम॥ स्नातुंसभाकृतनमस्करणाजगामश्यामाक्षयेरविकरैश्चसहाजगाम॥४६॥ दिनम्॥१२॥ ॥इ०वा०वा०दे०मो०उपशमप्रकरणेगाधिवृत्तांतेराज्यभ्रंशोनामषट्चत्वारिंशःसर्गः॥४६॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥मुहूर्त्तद्वितयेनाथगाधिराधिभवभ्रमात्॥ प्रशशामाकुलीभावोवेलावर्त्तइवांबुधेः॥ १ ॥ मनोनिर्माणसंमोहात्तस्मात्सविरराम ह ॥ कल्पांतसमयेब्रह्माजगद्विरचनादिव॥ २ ॥ बोधमापशनैःशांतःस्वमेवोन्निद्रधीरिव॥ क्षीवतायांप्रशांतायांयथापरिणताशयः॥ ३ ॥ अयंसोहमिदंकार्यमिदंनेतिददर्श ह॥ निशाव्यपगमेलोकोयथाक्षीणेतमःपटे॥४॥ स्मृतस्वरूपोथपदमुद्दध्रेसजलांतरात्॥ शिशिरांतेप्रवृत्तास्यंसरोजमिवमाधवः॥५॥ एतद्वारिककुब्व्योमवतींवसुमतीमिमाम्॥ अन्यामिवपुनःपश्यन्विस्मयंपरमंययौ॥६॥ कोहंकिमिवपश्यामिकिमकार्षंमहंकिल॥ एवंविचारयंश्चिंत्रंसभ्रूभंगमभूत्क्षणम्॥ ७॥ श्रांतस्तत्क्षणमात्रेणसंभ्रमंदृष्टवानहम् ॥ इतिविज्ञायसलिलादुदस्थादुदयार्कवत्॥८॥ चिंतयामासचतटेक्वसामाताक्वसाप्रिया॥ यदाहंस्मृतिमायातोमध्येमातृमहेलयोः॥ ९ ॥

स्वच्छचित्तः ॥ ३ ॥ योजलेस्नानायावतीर्णःसोयंगाधिरहम् स्नानशेषतर्पणादिकृत्यंमेकार्यम् इदंप्राग्दृष्टचंडालराज्यादिनकार्यम् ॥ लोकोजनोयथापश्यतितद्वत् ॥ ४ ॥ पदंपादमुद्दध्रेउद्धृतवान् ॥ शिशिरांतेशीतापगमेप्रवृत्तास्यंसंजातमुकुलमुखम् ॥ माधवोवसंतः ॥ ५ ॥ एषाचासौवारिककुब्व्योमवतीचेतिवाएनैःपरिदृश्यमानैर्वार्यादिभिस्तद्वतीमितिवाविग्रहः ॥ ६ ॥ सभ्रूभंगंएवमंतर्विचारयन्नभूत् ॥ ७ ॥ तत्तस्माच्छ्रांतिवशात्क्षणमात्रेण ॥ संभ्रमंमहाभ्रमम् ॥ उदस्थात् ॥ लुङ्गिगातिस्थेतिसिचोलुक् ॥ उदयोगिरिःकालोवातनत्यार्कवत् ॥ ८ ॥ चिंताप्रकारमेवदर्शयति ॥ क्वेत्यादिना ॥ महिलाशब्दस्यैवमहेलेतिच्छांदसोगुणः ॥ ९ ॥

१ स्वमभिवस्मृत्वेतिक्वचित्पाठः

अमतेःअप्रौढचित्तावस्थस्य ॥ वातनीतस्यपत्रस्यपर्णस्यमातापितृस्थानीयंवल्लीवृक्षंअसिनेवमृत्युनानष्टौ ॥ १० ॥ द्विजोविप्रोमदिरायाःस्वरूपंरसमिव ॥ ११ ॥ स्वदेशस्य
जन्मभूमेः ॥ स्वाबांधवाःज्ञातयः ॥ येषांमध्येअहंजीवंत्यजामिमरणंदृष्टवानस्मितेकेनामेतिसंबंधः ॥ १२ ॥ विविधंआरभ्यतइत्यारंभंपदार्थजातंसंरंभंजन्माद्यभिनिवेशंचांक
नामदृष्टवान् ॥ १३ ॥ स्वप्नस्येवबाधान्मिथ्यात्वंनिश्चित्योपेक्षते ॥ तदास्तामिति ॥ तत्तस्माद्दृष्टाभ्रांतिरास्तांनामेत्यर्थः ॥ १४ ॥ १५ ॥ स्वकएवाश्रमेकतिचिद्दिनानिनिनाय

वालस्यमातापितरौनष्टौकिलममामतेः॥ वातनीतस्यपत्रस्यवल्लीवृक्षमिवासिना ॥१०॥ अविवाहोस्मिजानामिनस्वरूपमपिस्त्रियः॥
दुष्टायाःक्षोभकारिण्यामदिरायाइवद्विजः॥ ११ ॥ अतिदूरतरीभूताःस्वदेशस्यस्वबांधवाः ॥ केनाममममयेषांतंमध्येजीवंत्यजाम्यहम्
॥१२॥ तस्माद्देतत्समुद्भूतमहंकिंनामदृष्टवान्॥ विविधारंभसंरंभंगंधर्वनगरंयथा ॥१३॥ तदास्तामेतदेषाहिवंधुमध्येमृतस्थितिः॥ मा
यामोहेमनागस्मिन्नसत्यमुपलभ्यते॥१४॥ नित्यमेवमनंतासुभ्रांतिदृष्टिषुदेहिनाम्॥ चेतोभ्रमतिशार्दूलोवनराजिष्विवोन्मदः॥१५॥
अवधार्येतितंचित्तेमोहंगाधिर्निनायसः॥ दिनानिकतिचित्तस्मिन्स्वकएवाश्रमेतदा॥१६॥एकदागाधिमगमत्कश्चित्तत्रप्रियोतिथिः॥
ब्राह्मणमिवद्धुर्वासाःसविशश्रामसश्रमः॥ १७॥ परमांतुष्टिमानीतःफलपुष्परसाशनैः॥ सोतिथिर्गाधिनातेनवसंतेनेवपादपः॥ १८॥
मिथोवंदितसंध्यौतौकृतजाप्यावुभावपि॥ क्रमाच्छयनमासाद्यतस्थतुर्मृदुपल्लवम्॥ १९॥ ततःप्रावर्त्ततेशांतातयोस्तापसयोःकथा॥
स्वव्यापारोचितापुष्पश्रीरिवर्त्तुत्वमाशयोः॥ २०॥ तंपप्रच्छातिथिंगाधिःप्रसंगपतितंवचः॥ किंब्रह्मन्सुकृशांगस्त्वंकिमितिश्रमवानसि
॥ २१ ॥ ॥अतिथिरुवाच॥ ॥ममातिकार्श्यंश्रमयोर्भगवन्शृणुकारणम्॥ कथयामितथाभूतंवयंनासत्यवादिनः ॥ २२ ॥ अस्य
स्मिन्वसुधापीठेउत्तराशानिकुंजके॥ कीरोनामातिविख्यातःश्रीमाञ्जनपदोमहान्॥ २३ ॥ तत्राहमवसंमासंपूज्यमानःपुरेजनैः॥ ना
नात्मस्वादलोलात्माचित्तवेतालमोहितः॥२४॥एकदैकेनतत्रोक्तंकथाप्रस्तावतःक्वचित्॥इहाभूच्छ्वपचोराजावर्षाण्यष्टौद्विजेतिमे॥२५॥
ततोग्रामेपुतत्पृष्टैःप्रोक्तंसकलजंतुभिः॥ राजावभूवश्वपचोवर्षाण्यष्टाविहेतितैः॥२६॥ सोयमंतेपरिज्ञातःप्रविष्टोज्वलनंजवात्॥ ततो
द्विजशतानीहप्रविष्टानिहुताशनम्॥ २७॥

॥ १६ ॥ कृशत्वात्सश्रमःसोतिथिस्तदाश्रमेविशश्रामविश्रांतिमकरोत्सायमुवासेतियावत् ॥ १७ ॥ तुष्टिंतृप्तिम् ॥ १८ ॥ १९ ॥ स्वस्वतपोध्यानादिव्यापाराणामुचिताअनुरू
पाकथाप्रावर्त्तत ॥ ईंइतिखल्वर्थेनिपातः ॥ शांताशांतिरसप्रधाना ॥ स्वक्रिययाक्तूनामृतुत्वंमिनोतिपरिच्छिनत्तीतिक्रतुत्वमःसूर्यस्तस्यआशायाउत्तरदिशश्चयोगेवसंतेतद्बुचि
तापुष्पश्रीरिव ॥ २० ॥ तयोर्वार्त्ताप्रसंगपतितम् ॥ २१ ॥ वयंअस्मदोद्वयोश्चेतिबहुवचनम् ॥ २२ ॥ २३ ॥ नानाविधाआत्मनःस्वदंतेरोचंतइतिनानात्मस्वादाभोज्यभेदास्ते
पुलोभोगार्ध्यंतदात्मातत्प्रधानःसन् ॥ कुतस्त्वमेवमभूस्तत्राह ॥ चित्तेति ॥ २४ ॥ २५ ॥ २६ ॥ सश्वपचः ॥ अंतेअष्टमवर्षांते ॥ २७ ॥

शुद्धचैतद्देशवासदोषशांत्यै ॥२८॥२९॥३०॥ अथगाधिःरवौउदयमागतेस्वातिथौआपृच्छ्यगतेसतिविस्मयेनोद्धुरयागरीयस्याधियाइदंवक्ष्यमाणंसंचितयामासेतिपरेणसंबंधः ॥३१॥३२॥ मयायत्संभ्रमेभ्रांतिदशायांदृष्टंतद्विजेनातिथिनासत्यभूतमुक्तंममइतिएवंरूपमिदंकिमायालक्षणःशंबरस्यासुरस्यरचनाक्रमःस्यात ॥ संभावनायांलिङ् ॥३३॥ सा मायामिथ्यैवतत्रनसंवादोद्रष्टुंशक्यः ॥ शेषमवशिष्टंतस्यातिथेश्चांद्रायणनिमित्तंतमात्मश्वपचोदंतंपश्यामिद्रक्ष्यामीत्यर्थः॥३४॥तदेवाह ॥ तदिति ॥तस्यतदवस्थस्यात्मनःश्वपचस्यउदंतंवृत्तांतम् ॥३५॥ इतिसंचितयन्गाधिर्मंडलांतरंद्रष्टुमुत्तस्थौ ॥ उद्यतउद्युक्तः॥३६॥ तत्कथंद्रष्टुंशक्यमितिचेत्पुरुषप्रयत्नस्यालभ्यंनास्तीत्याह ॥ मनोराज्यमिति ॥३७॥

इतितेषांमुखाच्छ्रुत्वातस्मान्निर्गत्यमंडलात्॥प्रयागेऽकरवंशुद्ध्यैप्रायश्चित्तमहंद्विज॥२८॥कृत्वाचांद्रायणस्यांतेतृतीयस्याद्यपारणम्॥ इहाहमागतस्तेनश्रांतोस्म्यतिकृशोस्मिच ॥ २९॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिश्रुतवतातेनगाधिनासतदाद्विजः॥भूयःपृष्टोप्येतदेव कथयामासनान्यथा ॥ ३०॥ अथविस्मयवान्गाधिस्तांनीत्वातत्रशर्वरीम्॥ जगद्गेहमहादीपेरवावुदयमागते ॥ ३१ ॥ कृतप्रातःस्नानविधावापृच्छ्यस्वातिथौगते॥ इदंसंचिंतयामासविस्मयोद्धुरयाधिया ॥ ३२॥ यन्मयासंभ्रमेदृष्टंसत्यभूतंद्विजेनतत् ॥ उक्तंममेतिकिंनामस्यान्मायाशंबरक्रमः॥ ३३॥ यद्बंधुमध्येमरणंमयातद्दृष्टमात्मनः॥ सामायैवनसंदेहःशेषंपश्यामितस्यतम्॥३४॥ तदात्मश्वपचोदंतंद्रष्टुंतावदखिन्नधीः॥ भूतमंडलपर्यंतग्रामंगच्छामिसत्वरम् ॥ ३५॥ इतिसंचिंतयन्गंतुंमंडलांतरमादरात्॥ उत्तस्थौभास्करःपार्श्वमेरोर्द्रष्टुमिवोद्यतः॥ ३६॥ मनोराज्यमपिप्राज्ञालभंतेव्यवसायिनः ॥ गाधिनास्वप्नसंदृष्टंगत्वालब्धमखंडितम्॥ ३७॥ सर्वमध्यवसायेनदुष्प्रापमपिलभ्यते॥ पश्यन्गाधिर्जगन्मायांप्रमेयीकर्तुमुद्यतः॥३८॥ विनिर्गत्याभवन्मार्गेप्रावृडोघजवेनसः॥ देशानुल्लंघयामासबहून्वाततुरंगवत्॥ ३९॥ तच्चेदृशनिजाचारंभूतमंडलमागतः॥ करभःकंटकार्थ्येकःकारंजमिवकाननम्॥ ४० ॥ तत्रसंवित्स्थितेनैवसन्निवेशेनवैपुनः॥ अपश्यद्ग्रामकंकंचिद्गंधर्वइवपत्तनम्॥४१॥ ददर्शतस्यपर्यंतेतमेवश्वपचालयम्॥ अधस्ताद्भुवनस्येवपातालेनरकव्रजम्॥ ४२॥ चित्तचिंतितविस्तारंतन्निवेशमयंपरम्॥ गंधर्ववदसावात्मश्वपचत्वंचदृष्टवान्॥ ४३॥ तेनैवसन्निवेशेनप्राग्दृष्टंश्वपचास्पदम्॥ तस्यकामपिवैराग्यपदवीमनयन्मनः॥ ४४॥

प्रमेयीकर्तुंचक्षुःप्रमाणगोचरीकर्तुम् ॥ ३८ ॥ समार्गेप्रावृषियओघोजलप्रवाहस्तज्जवेनत्वरमाणोभवत् ॥ वातएवतुरंगोवाहनंयस्यमेघस्यतद्वत् ॥ ३९ ॥ ईदृशःप्राग्दृष्टप्रकारोनिजाचारोयस्मिंस्तद्भूतमंडलंचप्रथममागतः ॥४०॥ संविदिबुद्धौस्थितेनैवस्मर्यमाणेनैवसन्निवेशेनसंस्थानविशेषेणस्थितंकंचिद्ग्रामकमपश्यत् ॥ ४१ ॥ ४२ ॥ चित्तेचिंतितोजन्मादिविस्तारोयत्रतथाविधंसप्राग्दृष्टोयोगृहादिनिवेशस्तत्प्रचुरंआत्मनःश्वपचत्वंचलिंगैःपुनर्दृष्टवानित्यर्थः ॥ ४३ ॥ तच्छ्वपचास्पदंकर्तृतस्यमनःकामपिवैराग्यपदवीमनयत्प्रापयामास ॥ ४४ ॥

तदेववर्णयति ॥ प्रावृडित्यादिना ॥ किंचिदादृष्टंप्रत्यभिज्ञातंतल्पकंशयनकटखंडादियस्मिन् ॥४५॥ कुड्यमत्भित्त्यवशेषगृहाकारमितियावत् ॥ यवादित्वाद्वत्वम् ॥ भ्रष्टांगं स्खलितावयवंचौर्यादिदौरात्म्यमिव दौस्थित्यंदुर्दशाम् ॥ खंडितंछिन्नैकदेशम ॥४६॥ गाधिश्चिरमालोकयामासेतितृतीयेनसंबंधः ॥४७॥ अस्पंदान्यभ्रसलिलानिदैवागतवृष्टि जलानियेषुतैः ॥४८॥ लतावृतैर्लतावरस्तंभादिपरिवेष्टनैःपरितःपरिवेष्टितम ॥ आत्ततंत्रीभिरितिपाठेलतानामावृतैरावरणैरात्ताभिस्तंत्रीभिः ॥ प्रतानैःपरिवेष्टितमित्यर्थः ॥४९॥

प्रावृडासारलुठितंभित्तिजातयवांकुरम् ॥ पर्यस्तच्छादनार्द्रांकंकिंचिदादृष्टतल्पकम् ॥ ४५ ॥ दारिद्र्यंतद्दृढमिवदौर्भाग्यमिवकुड्यमत् ॥ भ्रष्टांगमिवदौरात्म्यंदौस्थित्यमिवखंडितम् ॥ ४६ ॥ गाधिर्दंतावदलितैर्गवाश्वमहिपास्थिभिः ॥ धवलैर्व्याप्तपर्यंतंसाक्ष्यंकर्तुमिवस्थितैः ॥४७॥ भुक्तंपीतंपुरातेनयेषुखर्परकेषुवै ॥ तैरस्पंदाभ्रसलिलैःपानपूर्णैरिवावृतम् ॥४८॥ ताभिरेवांत्रतंत्रीभिःसंशुष्काभिर्लतावृतैः ॥ तृष्णाभिरिवदीर्घाभिःपरितःपरिवेष्टितम् ॥ ४९ ॥ चिरमालोकयामाससतदात्मगृहंजवात् ॥ प्राक्तनंशुष्कशवतांयातंदेहमिवात्मवान् ॥५०॥ अतिविस्मयमातस्थौग्रामकंसमुपाययौ ॥ उल्लंघ्यम्लेच्छनगरमार्यदेशमिवाध्वगः ॥५१॥ तत्रापृच्छज्जनंसाधोकच्चित्स्मरतिभो भवान् ॥ प्राग्वृत्तमस्यग्रामस्यपर्यंतेश्वपचक्रमम् ॥ ५२ ॥ सर्वएवहिधीमंतश्चिरवृत्तमपिस्फुटम् ॥ करस्थमिवपश्यंतिमयेतिसुजनाच्छ्रुतम् ॥५३॥ अत्रश्वपचमेकांतेवासिनंवृद्धमुत्तमम् ॥ स्मरस्येनंकिमुतभोदुःखानामिवदेहकम् ॥५४॥ यदिजानासिभोःसाधोतन्मेकथयतत्त्वतः ॥ पांथसंशयविच्छेदेमहत्पुण्यफलंस्मृतम् ॥ ५५ ॥ भूयोभूयइतिग्राम्याःपृष्टागाधिद्विजन्मना ॥ अनल्पस्मयसंरंभमार्तेनेवचिकित्सकाः ॥ ५६ ॥ ॥ ग्राम्याऊचुः ॥ ॥ यथाकथयसिब्रह्मंस्तत्तथाननदन्यथा ॥ कटंजनामाश्वपचइहाभूद्दारुणाकृतिः ॥ ५७ ॥ पुत्रपौत्रसुहृद्भृत्यबंधुस्वजनपेटकम् ॥ यस्यातिविस्तीर्णमभूत्पत्रवृंदंतरोरिव ॥५८॥ यस्यवृद्धस्यतत्सर्वंकलत्रंमृत्युराच्छिनत् ॥ अद्रेः पुष्पफलोपेतंदावोवनमिवानलः ॥ ५९ ॥ यस्ततोदेशमुत्सृज्ययौकीरपुरांतरम् ॥ वर्षाण्यष्टावनुद्विग्नंतत्रराजावभूवसः ॥६०॥ यस्त त्वार्यंपरिज्ञायजनैर्दूरेनिराकृतः ॥ यथाराशिरनर्थस्ययथाग्रामेविपद्द्रुमः ॥ ६१ ॥ ततोजनेग्निंप्रविशत्यात्मनायोहुताशनम् ॥ आर्यंतामार्यसंसर्गादागतःप्रविवेशह ॥ ६२ ॥ किंत्वमेवप्रयत्नेनश्वपचंपृच्छसिप्रभो ॥ किंतेबंधुरसौकच्चिदभवस्त्वंस्वतोथवा ॥ ६३ ॥

शुष्कशवप्रायतांयातंस्वदेहमिव ॥ आत्मवान्तत्त्ववित् ॥ ५० ॥ तत्स्वगृहमुल्लंघ्य ॥ तत्समीपस्थंग्रामकंकुग्रामम् ॥ ५१ ॥ श्वपचक्रमंश्वपचवृत्तांतम ॥ ५२ ॥ पश्यंतिस्फुटंस्मरंतीतियावत् ॥ ५३ ॥ ५४ ॥ ५५ ॥ अनल्पःस्मयोविस्मयःसंरंभःप्रश्नोद्योगश्चयस्मिन्कर्मणीतिक्रियाविशेषणम ॥ आर्त्तेनरोगार्त्तेन ॥ ५६ ॥ ५७ ॥ ५८ ॥ दवेभवोदावः ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ सतेबंधुःकिमभवत् अथवात्वंस्वतःस्वयमेवतद्बंधुरभवः ॥ ६३ ॥

तत्रग्रामे ॥ सर्वेषुप्रांतेषुतत्तद्वासयोग्यगृहेष्वितियावत् ॥ ६४ ॥ ६५ ॥ ससकलभूतमुखादव्याहतममृषार्थकंवाक्यमाकर्ण्यस्वयंचाबाधितप्रत्यभिज्ञयायथानुभूतमवलोक्य लज्जयागूढाकृतिर्गाधिःशशांकस्येंदोर्मलवत्कलंकमिवस्वहृदयेअधिरूढंपरमंविस्मयमाजगामप्रापेत्यर्थः ॥ ६६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेसप्तच त्वारिंशःसर्गः ॥ ४७ ॥ ॥ ७ ॥ ॥ गाधिनाकीरनगरंगत्वादृष्टाचविस्मयात् ॥ तपसातोषितोविष्णुःसर्वंमायेत्युवाचतम् ॥ १ ॥ लुठितंपरिवृत्तंचिरमासक्तमितियावत् ॥१॥ कल्पःसंवर्त्तस्तदीयेक्षोभेउपप्लवेविवृत्तानिभग्नानि ॥ अंबुजोद्भवोब्रह्मा ॥ २ ॥ लुठितालयेभग्नगृहे ॥ स्वमनस्येवउवाच ॥ द्रुमेश्मशानवृक्षे ॥ ३ ॥ यदुवाचतदाह ॥ इमास्ता इत्यादिना ॥ वृतौप्राकारेकृताःशूलवन्निखाताम्मृतमातंगदंतमालास्ताइमाः ॥ प्रत्यक्षंप्रत्यभिज्ञायंनइत्यर्थः॥कल्पंप्रलयकालंप्रतिलक्षीकृत्यमेरोःशिखाःशिखराणीव ॥ ४ ॥

एवंकथयतोग्राम्यान्गाधिःपृच्छन्पुनःपुनः ॥ सर्वेषुतत्रप्रांतेषुमासमेकमुवाससः॥६४॥ यथातेनानुभूतंतच्छ्वापचंतत्तथैवतैः॥ ग्रामीणैस्तस्यकथितंसर्वैरेवावखंडितम्॥६५॥ अव्याहतंसकलभूतमुखादथैतदाकर्ण्यसम्यगवलोक्ययथानुभूतम्॥ गाधिःशशांकमलवद्धृदयेधिरूढंगूढाकृतिःपरमविस्मयमाजगाम॥६६॥ ॥इ०वा०वा०दे०मोक्षोपायेपूपशमप्रकरणेगाधिवृत्तांतेप्रत्यक्षावलोकनंनामसप्तचत्वारिंशःसर्गः॥४७॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥लुठितंश्वपचागारेपुनर्विस्मयमाययौ॥ गाधेर्मनोहिनायातिवृत्तिमाश्चर्यदर्शने॥१॥तत्रावलोकयामासस्थानानिसदनानिच॥ कल्पक्षोभविवृत्तानिजगंतीवांबुजोद्भवः॥२॥उवाचस्वात्मनैवेदमरण्येलुठितालये॥शुष्कास्थिमालावलितेपिशाचकइवद्रुमे॥३॥ इमास्ताम्मृतमातंगदंतमालावृतौकृताः॥ अद्यापिसंस्थिताःकल्पंप्रतिमेरुशिखाइव॥४॥ इहतद्वानरीमांसंपक्ववंशांकुरैःसह॥ भुक्तंपुरासवोन्मत्तैःसहश्वपचबंधुभिः॥५॥ आलिंग्यश्वपचश्यामामिहकेसरिचर्मणि॥ सुप्तमापीयमैरेयंतिक्तंगजमदेनच॥६॥ कौलेयककुटुंबिन्यःपिण्याकपलवर्द्धिताः॥इहवद्धावरत्राभिर्मृतेभरदकाष्ठके॥७॥ इहवारणमुक्तानांददासीत्पिठरत्रयम्॥ पिनद्धंमाहिषेणोग्रचर्मणांबुदशोभिना॥८॥ स्थलीष्वेतासुतास्वत्रसहश्वपचवालकैः॥चिरंविलुठितंचूतपत्रपुंजेपिकैरिव॥९॥अत्रतद्बालनिःश्वासरणद्वंशप्रवृत्तवत्॥गीतंपीतंशुनीरक्तंसाधिताशवभूषितः॥१०॥

पक्ववंशांकुरैःकरीरव्यंजनैःसह ॥ ५ ॥ केसरिणोऽश्वस्यचर्मणि ॥ गजमदेनतिक्तमित्युक्त्याहस्तिपकार्क्रीतंमैरेयमितिगम्यते ॥ मैरेयेमदशक्त्युत्कर्षायहस्तिपकागजमदमपिमेलयंतीतिप्रसिद्धम् ॥ ६ ॥ कौलेयककुटुंबिन्यःशुन्यः ॥ पिण्याकैःपलैर्मांसैश्ववर्द्धिताः ॥ वरत्राभिश्चर्मरज्जुभिः ॥ ७ ॥ वारणमुक्तानांगजमौक्तिकानांपिठरत्रयमुखात्रयप्रमाणं दत्गजदंतरचितंपात्रमिहास्मिन्स्थलेआसीत् ॥ ८ ॥ एतासुदृश्यमानासु ॥ तासुपूर्वदृष्टासु ॥ अत्रास्मिन्ग्रामांते ॥ विलुठितंपांसुक्रीडास्वित्यर्थः ॥ ९ ॥ बालानांनिःश्वासैर्मुखवातैःरणतांवंशानांप्रवृत्तंस्वरतालप्रवृत्तिस्तद्वत्तदनुरूपतयागीतम् ॥ शवान्भूषयितुंशीलंयस्येतिशवभूषिश्मशानमाल्यचंदनादितस्मादितितत: ॥ साधितासर्वेषामलंक्रियेतिशेषः ॥ १० ॥

जन्यत्रेषुविवाहेषु ॥ ११ ॥ अन्यदाअशनंआशःदिनांतरेभक्षणंतदर्थम ॥ दासार्थमितिपाठेनुदसुहिंसायामित्यस्माद्धञ् ॥ दिनांतरेहिंसनार्थमित्यर्थः ॥ १२ ॥ परामृशत्तर्कित वान् ॥ १३ ॥ १४ ॥ तुषाराद्रिकुक्षौरत्नमिवश्रेष्ठंजनास्पदंजनपदंप्राग्दृष्टकीरदेशमित्यर्थः ॥ १५ ॥ नगसन्निभंपर्वतवदुन्नतप्रासादंरत्नाद्याढ्यंच ॥ १६ ॥ अनुभूतानिस्वगृह प्रासादादीनि ॥ दृष्टानिपरगृहप्रासादादीनि ॥ आसेवितान्यारामस्थानशालादीनिस्थानानि ॥ १७ ॥ यथाविधिविधिविधानंमनतिक्रम्येत्यर्थः ॥ १८ ॥ नामेतिप्रसिद्धौ ॥ १९ ॥ २० ॥ अंतःस्वप्रत्यभिज्ञासंवादादास्वादयतिचमत्कारमनुभवत्यपीत्यर्थः ॥ २१ ॥ तस्यभगवदनुग्रहात्तस्मिन्पुरेराजरूपेणभगवद्दर्शनमभूदित्याह ॥ अथेति ॥ सबल

अत्रसार्द्धंकुटुंबेनजन्यत्रेषुकुटुंबिना ॥ नृत्तंतत्कृतमुन्मादंकल्लोलैर्जलधाविव ॥ ११ ॥ अत्रोड्डयनलोलानांकाकभासपतत्रिणाम् ॥ धृतानामन्यदाशार्थंग्रथितंवंशपंजरम् ॥ १२ ॥ ॥श्रीवसिष्ठउवाच॥ ॥ एवंप्रायाःस्मरन्गाधिःप्राक्तनीःश्वपचक्रियाः ॥ विस्मयोत्कं पितशिराधातुश्चेष्टांपरामृशत् ॥ १३ ॥ चचालतस्माद्दीर्घेणदेशात्कालेनकार्यवित् ॥ भूतमंडलमुत्सृज्यप्रापदेशांतरंक्रमात् ॥ १४ ॥ समु ल्लंघ्यनदीशैलमंडलारण्यसंततिम् ॥ आससादतुषाराद्रिरत्नंकिलजनास्पदम् ॥ १५ ॥ तत्रप्रापमहीपालनगरंनगसन्निभम् ॥ जगद्भ्रम णखिन्नात्मास्वर्लोकमिवनारदः ॥ १६ ॥ अथात्मनानुभूतानिदृष्टान्यासेवितानिच ॥ स्थानानिनगरेपश्यन्पप्रच्छजनमादृतः ॥ १७ ॥ साधोस्मरसिकिंचित्त्वमिहश्वपचमीश्वरम् ॥ यदिजानासितत्त्वंमेवर्णयाशुयथाविधि ॥ १८ ॥ ॥नागराऊचुः॥ ॥अभूदिहाष्टौवर्षा णिश्वपचोभूमिपोद्विज ॥ राजत्वमर्पितंयस्यनाममंगलहस्तिना ॥ १९ ॥ अंतेचसंपरिज्ञातःसप्रविष्टोहुताशनम् ॥ अद्यद्वादशवर्षाणि समतीतानितापस ॥ २० ॥ यंयंपृच्छत्यसौगाधिर्जनंजातकुतूहलः ॥ तस्यतस्यमुखादेवशृणोत्यास्वादयत्यपि ॥ २१ ॥ अथापश्यत्पुरेत स्मिन्नृपंसबलवाहनम् ॥ देवंचक्रधरंविष्णुंमंदिरान्निर्गतंबहिः ॥ २२ ॥ सद्धस्वास्थगिताकाशंचलरेणुपयोधरैः ॥ प्राक्तनींराजतांस्मृत्वा समुवाचातिविस्मयः ॥ २३ ॥ इमास्ताःकीरकामिन्यःपद्मगर्भोपमत्वचः ॥ कनकद्रववर्णिन्योलोलनीलोत्पलेक्षणाः ॥ २४ ॥ चामरौ घाइमेचंद्रकरसंपिंडपांडुराः ॥ स्थिरनिर्झरसंकाशाःकाशपुष्पचयाइव ॥ २५ ॥

वाहनंपूर्वस्वदृष्टबलवाहनसहितम् ॥ मंदिराद्राजसदनाद्बहिर्निर्गतम् ॥ २२ ॥ बाह्यवस्तुदर्शनव्यामोहचित्तस्यतस्यदृष्टायामपिभगवन्मूर्त्तौतत्रभावोविचारोपिवानाभूत्किन्तुप्राक् तनेषुस्वानुभूतश्रीच्छत्रचामरादिषुप्रत्यभिज्ञाकौतुकेष्वेवचित्तंबभ्रामेत्याशयेनाह ॥ सद्धेति ॥ चलैरुद्धतैरेणुलक्षणैःपयोधरैर्मेघैःस्थगितमाच्छादितमाकाशंयेनतथाविधंतत्सैन्यंद ष्ट्वेत्यर्थः ॥ २३ ॥ ॥ ताइमाःप्रत्यभिज्ञाताःकीरनृपतेःकामिन्योवेश्याः ॥ २४ ॥ चंद्रकराणांसंपिंडनंसंपिंडःपिंडीभावइवपांडुराः ॥ स्थिरामूर्त्तीभावात्स्थैर्यमापन्नायेनिर्झरागि रिवारिप्रपातास्तत्संकाशाः ॥ २५ ॥

1096

ऋद्धयःपुष्पमंजरीसमृद्धयइव ॥ २६ ॥ मत्तमातंगानांघटाःसंघाः ॥ घटितांदंताग्रनिर्भिन्नादिक्तटायाभिस्ताः ॥ संभावनयातिशयोक्तिः ॥ संकल्पानुसारिफलदाःपादपायेषु ॥२७॥ वासवस्ययमादयोलोकपालाइवमहीभृतएतेसामंताअवांतरदेशाधीशाः ॥ २८ ॥ सर्वेधनधान्यादिवस्त्वोघायासु ॥२९॥ प्राग्भुक्तमद्यजन्मांतराचारोजन्मांतरचरित्रमिवप्रत्यक्षतांगतम् ॥ ३०॥ सत्यंनिश्चितंप्राक्स्वप्नइवदृष्टःपुनर्जाग्रद्भूतःस्थितः ॥ किंकेनकिमर्थंवाकृतमुत्थानमाविर्भावोयया ॥३१॥ वैवश्यमस्वाधीनताम् ॥३२॥ अबुद्धमप्रबुद्धम् ॥ ३३ ॥ तेनप्राक्प्रसादितेनचक्रधारिणाविष्णुना ॥ ३४ ॥ जन्मस्थितिपदाभ्यांतन्निमित्तंलक्ष्यते ॥ ३५ ॥ ३६ ॥ पयश्चुलुकस्यभोजनंपानंकुर्वन्नितिशेषः ॥ शार्ङ्ग

कांताभिरवधूयंतेबालव्यजनराजयः॥इमास्तावनवल्लीभिर्दीप्यमानाइवर्द्धयः॥ २६॥ इमास्तामत्तमातंगघटाघटितदिक्तटाः॥ संकल्पपादपामेरोरिवश्रृंगपरंपराः॥ २७॥ एतेतेयमवारीशकुवेरप्रतिमौजसः॥ सामंतावासवस्येवलोकपालामहीभृतः॥२८॥ इमास्ताः सर्ववस्त्वोघाःसर्वाभिमतदास्तताः ॥ कल्पवृक्षलताकुंजसुंदर्योगृहपंक्तयः॥ २९॥ इदंतत्कीरजनताराज्यंप्राग्भुक्तमद्यमे ॥ आत्मजन्मांतराचारइवप्रत्यक्षतांगतम्॥ ३०॥ सत्यंस्वप्नइवायंमेजाग्रद्भूतःपुनःस्थितः॥ नजानेकिंकृतोत्थानामायेयंप्रविजृंभते॥ ३१॥ अहोनुखलुदीर्घेणमनोमोहेनवल्गता॥ वैवश्यमुपनीतोहंजालेनेवशकुंतकः॥ ३२॥ हाधिकष्टमबुद्धंमेमनोवासनयाहतम्॥ पश्यतिभ्रमजालानिविततानिशिशोरिव॥ ३३॥ एषाहिमायामहतीतेनमेचक्रधारिणा॥ दर्शितेत्यधुनासाधुमयास्मृतमखंडितम्॥ ३४॥ तदिदानींतथायत्नंकरिष्येगिरिकंदरे॥ यथाकुसंभ्रमस्यास्यजानेजन्मतथास्थितिम्॥ ३५॥ इतिसंचिंत्यनगराद्गाधिस्तस्माज्जगामह॥ कंदरंप्राप्यशैलस्यतस्थौविश्रांतसिंहवत्॥ ३६॥ तत्रसंवत्सरंसार्द्धंपयश्चुलुकभोजनम्॥ तपश्चक्रेमहातेजास्तुष्ट्येशार्ङ्गधन्वनः॥ ३७॥ अथास्यपुंडरीकाक्षःपयोमूर्त्तिरुपाययौ॥ प्रसादमुत्पलश्यामःशरदीवमहाह्रदः॥३८॥ तमाजगामशैलेंद्रकंदरंद्विजमंदिरम्॥पयोधरवदच्छाच्छछविर्व्योमन्यथावसत्॥ ३९॥ ॥श्रीभगवानुवाच॥ ॥गाधेकच्चित्त्वयादृष्टामायाममगरीयसी ॥ दृष्टंत्वयाजगज्जालचेष्टितंदैष्टिकात्मकम्॥ ४०॥ चित्ताभिगतएतस्मिन्प्राप्तेसम्यगनिंदितः॥ तपोगिरितटेकुर्वन्किमन्यदभिवांछसि॥ ४१॥ ॥श्रीवसिष्ठउवाच॥ ॥एवंवदंतमालोक्यहरिंगाधिर्द्विजोत्तमः॥ अर्चाकुसुमपूरेणपादयाःपर्यपूरयत्॥ ४२॥

धन्वनोविष्णोः ॥ धनुषश्चेत्यनङ् ॥ ३७ ॥ पयइवप्रसादस्वभावामूर्त्तिर्यस्य ॥ ह्रदपक्षेपयएवमूर्त्तिःस्वरूपंयस्य ॥ ३८ ॥ द्विजस्यगाधेर्मंदिरंनिवासभूतंकंदरम् ॥ पयोधरवदच्छादप्यच्छानिर्मलतराछविःकांतिर्यस्य ॥ पयोधरवद्व्योमन्यावसदतिष्ठदितिवा ॥ ३९ ॥ दिष्टंदैवमेवमतिःप्रतीतिनिमित्तंयस्यनवस्तुतदात्मकम् ॥ ४० ॥ चित्तेनाभिगतेवांछितेएतस्मिन्मन्मायादर्शनेप्राप्तेसतिपुनर्गिरितटेतपःकुर्वन्ननिंदितःशुद्धस्त्वमन्यत्किमभिवांछसीत्यन्वयः ॥ ४१ ॥ अर्चांनित्यंपूज्यमानांभगवत्प्रतिमांपादयोरर्चांपूजांकुसुमपूरेणकरोन्मुक्तपुष्पप्रवाहेणपयःपूरवत्पूर्णांचकारेतिवा ॥ अनेनपूजाकालेभगवदागमनंगम्यते ॥ ४२ ॥

अर्थंउत्तरार्घ्यम् ॥ प्रदक्षिणैःसहप्रणम्यप्रणामांतांपूजांसमाप्य ॥ ४३ ॥ ४४ ॥ यस्त्वज्ञातव्यांशस्तमाह ॥ भ्रममिति ॥ भ्रमंमिथ्याविषयजातम् ॥ ४५ ॥ प्रत्यक्षतांचिरंच क्षुरादिगोचरताम् ॥ अमलमविद्यामलरहितंपदमास्पदंप्रतिष्ठायस्य ॥ ४६ ॥ मदीयैःश्वपचभ्रमैःकृतेअस्यकालस्यदैर्घ्यादैर्घ्येतथाश्वपचशरीरस्यभवाभवाउत्पत्तिनाशाश्चअं तर्मनस्येवस्थिताःकथंनस्युः ॥ बहिस्तेकथंतिष्ठंतीत्यर्थः ॥ ४७ ॥ हेगाधेभवान्यत्उरुमहज्जगद्विभ्रमंपश्यतितत्अदृष्टतत्त्वस्यअतएवस्वनिष्ठराधिभिर्वासनारोगैर्गृहीतस्यचेत सश्चित्तभावापन्नस्यात्मस्वरूपस्यएतदात्मकंरूपंभासतेतद्वस्तुतोनांतर्नवावहिर्नाल्पंनवादीर्घमित्यर्थः ॥ ४८ ॥ यदिचास्तीतिमन्यसेतर्हिस्वचित्तएवास्तीत्याह ॥ वहिरिति ॥ ख

दत्वार्घ्यकीर्णकुसुमःप्रणम्याशुप्रदक्षिणैः॥ विष्णुमाहद्विजोवाक्यमंभोदमिवचातकः॥ ४३॥ ॥गाधिरुवाच॥ ॥देवयैषात्वयामा यादर्शितातितमोमयी॥ महींप्रातरिवादित्यस्तांमेप्रकटतांनय॥ ४४॥ भ्रमंयंपश्यतिमनोवासनामलमालितम्॥ स्वप्नवत्सकथंदेवजा ग्रत्यपिहिदृश्यते॥ ४५॥ मुहूर्त्तमुपलब्धश्चजलांतःस्वप्नविभ्रमः॥ कथंप्रत्यक्षतांप्राप्तोममामलपदास्पद॥ ४६॥ दैर्घ्यादैर्घ्यस्यकालस्य शरीरस्यभवाभवाः॥ कथमंतस्थितानस्युर्मदीयैःश्वपचभ्रमैः॥ ४७॥ ॥श्रीभगवानुवाच॥ ॥गाधेस्वाधिविधूतस्यस्वरूपस्यैतदा त्मकम्॥ चेतसोऽदृष्टतत्त्वस्ययत्पश्यत्युरुविभ्रमम्॥ ४८॥ वहिर्नकिंचिदप्यस्तिखाद्यभ्युर्वीदिगादिकम्॥ एतत्स्वचित्तएवास्तिपत्रपुंज मिवांकुरे॥ ४९॥ फलादिस्फारतामेतियथैववहिरंकुरात्॥ वहिःप्रकटतांयातितथापृथ्व्यादिचेतसः॥ ५०॥ सत्यंपृथ्व्यादिचित्तस्थंनवहि ष्ठंकदाचन॥ अंकुरस्थःपल्लवस्तुतस्माद्यस्मात्फलश्रियः॥ ५१॥ रूपालोकमनस्कारतत्ताकालक्रियात्मकम्॥ कुंभकारोघटमिवचेतोहं तिकरोतिच॥ ५२॥ आवालमेतत्पुरुषैःसर्वैरेवानुभूयते॥ स्वप्नभ्रममदावेगरागरोगादिदृष्टिषु॥ ५३॥ चित्तेवृत्तांतलक्षाणिसंस्थिता न्यात्तवासने॥ पादपेफलपुष्पाणिमूलाक्रांतावनाविव॥ ५४॥ त्यक्तावनेर्विटपिनोभूयःपत्राणिनोयथा॥ निर्वासनस्यजीवस्यपुनर्ज न्मादिनोतथा॥ ५५॥ यत्रानंतजगज्जालंसंस्थितंतेनतेजसा॥ श्वपचत्वंप्रकटितंयदितद्विस्मयोत्रकिम्॥ ५६॥ अवबुद्धाश्वपचताप्र तिभासवशात्त्वया॥ यथैवानल्पसंरंभाविचित्राधिविकारदा॥ ५७॥ तथैवातिथिरायातोभुक्तवान्सुप्तवान्द्विजः॥ कथाकथितवांश्चेति दृष्टवानसिसंभ्रमम्॥ ५८॥

माकाशमद्रयःपर्वताउर्वीपृथ्वीदिशश्चेत्यादिकंजगदित्यर्थः ॥ ४९ ॥ ५० ॥ यस्माद्धेतोःफलश्रियस्तस्माद्दृश्यंतेइतिशेषः ॥ ५१ ॥ वर्त्तमानविषयेचक्षुरादिनारूपालोकः ॥ भा विनिचमनसासमर्थनान्मनस्कारः ॥ अतीतेचस्मर्यमाणेतत्तातन्निरूपकास्त्रिविधाः ॥ कालास्तद्व्यंजिकाचसूर्यादिक्रियेत्येवमात्मकम् ॥ हंतिस्यात्मन्युपसंहरतिकरोतिसृजति च ॥ ५२ ॥ सर्वानुभवसिद्धंचेदमित्याह ॥ आवालमिति ॥ ५३ ॥ मूलैराक्रांताअवनिःपृथ्वीयेनतथाविधेपादपेइवंतिमनसोप्यधिष्ठानसदवष्टंभवलाज्जगद्धारकत्वमितिद्योत नार्थम् ॥ ५४ ॥ त्यक्तावनेरुन्मूलितस्येतियावत् ॥ तथाचेदंश्वपचत्वंमनःस्थितानंतवासनाजालेएकदेशप्रकटनमित्याह ॥ यत्रेति ॥ ५६ ॥ तत्रसत्यत्वेनाभिमतमतिथ्यागम नादिप्रपंचजातमपिश्वपचत्ववन्मनःस्थमेवेत्याह ॥ अवबुद्धेत्यादिना ॥ ५७ ॥ ५८ ॥

इमेग्रामाइतिसंभ्रमंदृष्टवानसीतिसर्वत्रइतिशब्दोऽध्याहार्यः ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ साधितंक्षणेनैवसिद्धम् ॥ ६३ ॥ ६४ ॥ किंचत्वयेदानीमपिनभूतमंडलेकीरनगरेवा गतंकिंत्वतिथिवाक्यंश्रुत्वाभूतदेशंप्रतिगच्छताप्रस्थितेनपांथेनत्वयापथिकस्मिंश्चिद्गिरिकंदरेविश्रांतंतत्रैवश्रमेणमूढत्वात्परवशचित्तत्वात्स्वमवदिदंतद्भूतमंडलमिदंतच्छ्वपचागा रमित्यादिदृष्टंनपरमार्थतइतिद्वयोरर्थः ॥ ६५ ॥ ६६ ॥ तत्तस्मिन्कंदरेतदैवश्रमकालेकीरनगरंदृष्टवानसि अन्यदाअघमर्षणकालेवापितथैवमायामयमर्थंभवान्दृष्टवानित्य र्थः ॥ ६७ ॥ जलेकंदरेतदेतिचदेशकालनियमोभ्रमस्यनास्तियावत्तत्त्वबोधंसर्वदासर्वत्रभ्रांत्यैवविहरणादिव्यवहारदर्शनादित्याशयेनाह ॥ सर्वदेवेति ॥ ६८ ॥ निजंब्रह्मचर्या

तथैवोत्थायगच्छामिप्राप्तोहंभूतमंडलम् ॥ इमेभूताइमेग्रामादृष्टवानसिसंभ्रमम् ॥ ५९ ॥ तथैवेदंकटंजस्यप्राक्तनंलुठितंगृहम् ॥ जनैरुक्तंकटंजस्यदृष्टवानसिसंभ्रमम् ॥ ६० ॥ तथैवकीरनगरंप्राप्तोस्मिकथितंचमे ॥ कीरैःश्वपचराजत्वंदृष्टवानसिसंभ्रमम् ॥ ६१ ॥ एवं सर्वंत्वयादृष्टंमोहजालंद्विजोत्तम ॥ यत्सत्यमितिजानासियच्चासत्यमवैपिच ॥ ६२ ॥ वासनावलितंचेतःकिंनामांतर्नपश्यति ॥ साधितंदृश्यतेस्वप्नेवर्षसाध्यंप्रयोजनम् ॥ ६३ ॥ नातिथिर्नचभूतास्तेनकीरास्तेनतत्पुरम् ॥ सर्वमेतन्महाबुद्धेव्यामोहाद्दृष्टवानसि ॥ ६४ ॥ गच्छताभवताभूतदेशंपांथेनकंदरे ॥ कस्मिंश्चिद्विप्रविश्रांतंकुरंगेणेवकानने ॥ ६५ ॥ तत्रैवश्रममूढत्वादिदंतद्भूतमंडलम् ॥ इदंतच्छ्वपचागारमितिदृष्टंनसत्यतः ॥ ६६ ॥ तथैवकीरनगरंदृष्टवानसितत्तथा ॥ तदेवचान्यदावापिमायार्थंहिभवान्द्विज ॥ ६७ ॥ सर्वदैवसमग्रासुविहरन्नसिदृष्टवान् ॥ दिक्षुप्रोन्मत्तकइवविभ्रमंमनसामुने ॥ ६८ ॥ तद्बुत्तिष्ठनिजंकर्मकुर्वंस्तिष्ठोपशांतधीः ॥ नस्वकर्मविनाश्रेयःप्राप्नुवंतीहमानवाः ॥ ६९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिनिगदितवान्सपद्मनाभोभुवनगतापसवृंदपूज्यमानः ॥ विबुधमुनिगणैःपवित्रहस्तैर्वृतउदधिनिजमास्पदंजगाम ॥ ७० ॥ ॥ इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेगाधिवृत्तांतेमायामहत्वकथनंनामाष्टचत्वारिंशःसर्गः ॥ ४८ ॥ ॥ ७ ॥ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अथगाधिर्गतेविष्णौपुनर्भूतादिकंक्रमात् ॥ स्वयंमोहविचारार्थंबभ्रामाभ्रमिवांबरे ॥ १ ॥

श्रमोचितमग्निकार्यस्वाध्यायादिकर्म ॥ ६९ ॥ भुवनगैस्त्रिभुवनगैस्तापसवृंदैःपूज्यमानःसपद्मनाभइतिउक्तप्रकारेणनिगदितवान्सन्भगवच्चरणस्पर्शसेवादिनापवित्रहस्तैर्विबुधमुनिगणैर्वृतस्सन्निजमास्पदंगृहभूतंक्षीरोदधिंजगामेत्यर्थः ॥ ७० ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेऽष्टचत्वारिंशःसर्गः ॥ ४८ ॥ ॥ ७ ॥ ॥ गाधिर्देशौपुनर्गत्वाहरिंपृष्ट्वापुनःपुनः ॥ सर्वंमायेतिनिश्चित्यजीवन्मुक्तोभवत्क्रमात् ॥ १ ॥ तथैवोत्थायगच्छामिप्राप्तोहंभूतमंडलम् ॥ इमेभूताइमेग्रामादृष्टवानसिसंभ्रमम् ॥ नातिथिर्नचभूतानिनकीरास्तेनतत्पुरमित्यादिभगवद्वचनार्थेत्वसंभावनविपरीतभावनादार्ढ्याद्प्रतिपद्यमानोगाधिर्जगदधिष्ठानात्मतत्त्वसाक्षात्कारंविनैवपूर्वदृष्टदेशादीनांबाधोस्तिनवेतिपरीक्ष्यानुभवितुकामःपुनर्भूतमंडलादिदेशान्बभ्रामेत्याह ॥ अथेति ॥ भूतादिकंभूतमंडलादिदेशम् ॥ १ ॥

आत्मनःस्वस्यश्वपचत्वादिवृत्तांतंतथापूर्वानुभूतवदेवोपलभ्यश्रुत्वालिंगैर्दृष्ट्वाचभगवद्वाक्यतात्पर्यबोधायपुनर्हरिमाराधयामासेत्यर्थः ॥ २ ॥ ३ ॥ प्रसादवान्प्रसन्नःसन् ॥४॥ कथासुजनप्रवादेषु ॥ अपिपदाल्लिंगप्रत्यभिज्ञादिसंवादेष्वपिनव्यभिचरतीत्यर्थः ॥ ५ ॥ अस्तुतथाकिंततस्तत्राह ॥ माययेति ॥ मायादृष्टार्थाअवश्यंकालांतरेव्यभिचरंति अव्यभिचारिणश्चैतेर्थाःकथंमायेत्यवधारयितुंशक्यादतिमोहवृद्धयेत्वद्वचनंसंपन्नमितिभावः ॥ ६ ॥ मायिकस्यापिकथास्वव्यभिचारेउपपत्तिमाह ॥ काकतालीयेति ॥ प्रसिद्धभूतदेशजानांकीरदेशजानांचजनानांचेतसितवचेतसीवकटंजकश्वपचस्यस्थितिरपरोक्षतयाभ्रांत्याप्रतिबिंबतीत्यर्थः ॥ ७ ॥ तथाचतेपिस्वभ्रांत्यैवतथावदंतीत्यार्थसमा जयस्तत्त्वद्वचनसंवादोनसत्यतापादकइत्याह ॥ तेनेति ॥ प्रतिभासइति ॥ विनाबाधमितिशेषः ॥ ८ ॥ प्रत्यभिज्ञासंवादस्यतर्हिकागतिस्तामाह ॥ केनचिदिति ॥ आविष्टंमयेदं प्रायचितमितिभ्रांत्यभिनिवेशविपर्यीकृतम् ॥ ९ ॥ प्रतिभाभ्रांतिरूपःप्रतिभासएकाएकरूपैव ॥ काकोलोद्रोणकाकाख्यःकाकजातिभेदस्तस्यतालेपक्वतालफलेनालमूलेवा

उपलभ्यतथैवात्मवृत्तांतंजनतस्ततः॥ हरिमाराधयामासपुनरद्रिगुहांगतः॥२॥ आजगामैनमल्पेनकालेनाथजनार्दनः॥ सकृदाराधने नैवमाधवोयातिबंधुताम्॥३॥ उवाचगाधिंभगवान्मयूरमिववारिदः॥ किंत्वंप्रार्थयसेभूयस्तपसेतिप्रसादवान्॥४॥ ॥गाधिरुवाच॥ भ्रांतोस्मिदेवषण्मासान्भूतकीरजनास्पदम्॥ तत्रव्यभिचरत्यस्मद्वृत्तांतोनकथास्वपि॥५॥ माययाभूतभूर्दृष्टात्वयेत्युक्तोस्मिकिंप्रभो॥ मोहनाशायमहतांवचोनोमोहवृद्धये॥६॥ ॥श्रीभगवानुवाच॥ ॥काकतालीययोगेनचेतसिश्वपचस्थितिः॥ सर्वेषांभूतकीराणां तवेवप्रतिबिंबति॥७॥ तेनांगतववृत्तांतंयथावत्कथयंतिते॥ प्रतिभासोहिनायातिपुनरप्रतिभासताम्॥८॥ केनचिच्छ्वपचेनातिग्राम स्यरचितंगृहम्॥ तत्त्वयादृष्टमाविष्टमिष्टकाखंडतांगतम्॥९॥ कदाचित्प्रतिभैकैवबहूनामपिजायते॥ काकोलतालस्थितिवद्विचित्राहि मनोगतिः॥१०॥ तथाहिबहवःस्वप्नमेकंपश्यंतिमानवाः॥ स्वापभ्रमदमैरेयमदमंथरचित्तवत्॥११॥ एकस्यामेवलीलायांरमंतेबहु बालकाः॥ एकस्यामेवनीलायांवनस्थल्यामिवैणकाः॥१२॥ बहवस्तुल्यकालंचप्रतिभासेनकर्मणाम्॥ जनायतंतेस्वफलपाकेतिव्र द्रुलाकृतौ॥१३॥ प्रतिबंधाभ्यनुज्ञानांकालोदातेतियाश्रुतिः॥ विप्रसंकल्पमात्रोसौकालोत्यात्मनितिष्ठति॥१४॥

स्थितिरुपवेशनंतद्वत् ॥ १० ॥ स्वापोनिद्रातद्रूपमदेनमैरेयमदेनमंथरचित्तायथाबहवस्तुल्यरूपाघूर्णमानाइवदिशःपश्यंतितद्वत ॥ ११ ॥ एकस्यामेवसिकतादिसन्निवेशसं केतकल्पितगृहप्रासाददुर्गादिभ्रमलीलायांबहवोबालकारमंते ॥ नीलायांशाद्वलश्यामलायांवनस्थल्याम् ॥ एणकामृगपोताः ॥ १२ ॥ अतिबद्रुलाकृतौबधबंधपराजयप लायनादिनानाकारेस्वप्रारब्धफलपाकेलभ्येऽपिबहवःसैनिकादिजनास्तुल्यकालंजयलाभभोगादीनांतुल्यरूपाणांकर्मणांप्रयोजनानांभ्रांत्याप्रतिभासेनतल्लोभायुद्धादिनायतं तेइतिप्रसिद्धमित्यर्थः ॥ १३ ॥ यदिमानसकल्पनैवजगत्तर्हिहेमंतादिःकालोव्रीह्याद्यंकुरोदयस्यप्रतिबंधकोयवादीनांचाभ्यनुज्ञातेतिलोकप्रसिद्धेर्बाधःस्यान्मानसकल्पनायां वास्तकालस्यव्यवस्थापकत्वायोगादित्याशंकांगाधेःपरिहरन्नाह ॥ प्रतिबंधेति ॥ श्रुतिर्लौकिकप्रवादश्रवणम् ॥ सानविरुध्यतइतिशेषः ॥ यतोसौप्रतिबंधाभ्यनुज्ञानहेतुरपि कालःसंकल्पमात्र ॥ दिग्विशेषावच्छिन्नांसूर्यक्रियांद्रष्टामनसैवयथाशास्त्रंमासर्त्वादिभेदकल्पनादितिभावः ॥ कस्तर्ह्यकल्पितःकालस्तमाह ॥ कालइति ॥ यस्त्वकल्पितोऽखं डःकालःपरमात्मासस्वात्मन्येवतिष्ठतिनकस्यचित्प्रतिबंधमभ्यनुज्ञांवाददातीत्यर्थः ॥ १४ ॥

अमुमेवार्थंस्पष्टयति ॥ अमूर्त्तइत्यादिना ॥ १५ ॥ आद्यस्यसंकल्पात्मतामुपपादयति ॥ लौकिकइति ॥ जन्यमात्रस्यकालोपाधित्वात्सूर्यक्रियाचंद्रपिंडादिपदार्थौघैःसंकल्प्यते ॥ तेनचप्रतिबंधानुज्ञाभ्यांसर्वपदार्थौघस्तक्रियाफलादिव्यवस्थाचसंकल्प्यतइत्यर्थः ॥ तुशब्दश्चार्थे ॥ १६ ॥ प्रासंगिकींशंकांपरिहृत्यप्रकृतमालंब्याह ॥ समानेति ॥ भूतदेशजाःकीरदेशजाश्चजनोच्चयाजनसमूहाः ॥ १७ ॥ तर्हिमयाकिंकार्यंतत्राह ॥ स्वव्यापारेति ॥ स्ववर्णाश्रमोचिताचरणपरइत्यर्थः ॥ १८ ॥ आधिपीवरयाचितोपचितया ॥ १९ ॥ २० ॥ मनसाचकाराद्वचसाकर्मणाचपूजयामास ॥ उक्तेनप्रश्नानुज्ञावाक्येनउवाचपप्रच्छच ॥ २१ ॥ इमांजननमरणाद्यनर्थबहुलांसंसारमायांचसंस्मरन् ॥

अमूर्त्तोभगवान्कालोब्रह्मैवतमजंविदुः॥ नजहातिनचादत्तेकिंचित्कस्यकदेतिच॥१५॥ लौकिकोयस्त्वयंकालोवर्षकल्पयुगात्मकः॥ संकल्प्यतेपदार्थौघैःपदार्थौघश्चतेनतु॥ १६॥ समानप्रतिभासोत्थसंभ्रमभ्रांतचेतसः॥ तथातंदृष्टवंतस्तेभूतकीरजनोच्चयाः॥१७॥स्वव्यापारपरोभूत्वाधियात्मानंविचारय॥ साधोगतमनोमोहमिहैवास्वव्रजाम्यहम्॥ १८॥ इत्युक्त्वाभगवान्विष्णुर्जगामांतर्द्धिमीश्वरः॥ अतिष्ठत्कंदरेगाधिराधिपीवरयाधिया ॥ १९ ॥ ततःकतिपयेष्वद्रौमासेष्वतिगतेपुसः॥ पुनराराधयामासपुंडरीककरंद्विजः॥ २०॥ ददर्शैकदानाथमागतंप्रणनामतम्॥पूजयामासमनसाचोक्तेनोवाचचेश्वरम्॥२१॥ ॥गाधिरुवाच॥ ॥ भगवन्संस्मरंश्चैतामात्मनःश्वपचस्थितिम्॥ इमांसंसारमायांचपरिमुह्यामिचेतसा॥२२॥ तदुक्त्वास्वयथावस्तुमहामोहनिवृत्तये॥ एकस्मिन्नेवविमलेमांनियोजयकर्मणि॥२३॥ ॥श्रीभगवानुवाच॥ ॥ब्रह्मन्जगदिदंमायामहाशंवरडंबरम्॥ सर्वाआश्चर्यकलनाःसंभवंतीहविस्मृतेः॥२४॥ भूतकीरपुरेमोहाद्दृष्टवांस्त्वंतथाभवान्॥ इत्येतत्संभवत्येवदृश्यतेद्विजनैर्भ्रमः॥ २५॥ भूतास्त्वमिवकीराश्चदृष्टवंतस्तथाभ्रमम्॥ मुधैवेत्यपिसत्याभंसमकालादिसंभवात्॥ २६॥ इदंतुशृणुवक्ष्यामियथाभूतमनिंदितम्॥ यथैतितनुतांचिंतामार्गशीर्षलतेववत्॥ २७॥ योसौकटंजकोनामश्वपचोभूतमंडले॥ तेनैवसन्निवेशेनसतथैवाभवत्पुरा॥ २८॥

॥ २२ ॥ तत्तस्माद्धेतोर्महामोहस्यनिवृत्तयेउपायमुक्त्वाझटितिनगच्छकिंतुयावत्संशयमोहोच्छेदमास्वतिष्ठेत्यर्थः ॥२३॥ विस्मृतेःस्वात्मतत्त्वविस्मरणादावरणनिमित्तादज्ञानादितियावत् ॥ २४ ॥ मायायांचासंभावितसहस्रमपिसंभवत्येवेत्याह ॥ भूतेति ॥ तच्छ्वपचत्वादितथातत्तत्प्रकारेणदृष्टवानित्येतन्मोहादज्ञानात्संभवत्येव ॥ तथाहिजनैर्निद्रादावसंभावितगोचरोपिभ्रमोदृश्यतइत्यर्थः ॥ २५ ॥ मुधामिथ्यैव ॥ इतिएवंमिथ्यास्वभावमपिसत्याभंदृष्टवंतइत्यर्थः ॥ समेनसंकल्पेनसमकालादेःसंभवादित्यर्थः ॥२६॥ यथाभूतंयथास्थितम् ॥ अनिंदितंतवश्वपचनिंदासंबंधनिवारकमित्यर्थः ॥ तनुतामपक्षयम् ॥ २७ ॥ तेनत्वद्दृष्टसदृशेनैवसन्निवेशेनशरीरग्रामगृहदाराद्याकारेणतथैवयुक्तोऽभवदित्यर्थः ॥ २८ ॥

तथैवेतिसर्वत्रानुषंजनीयम् ॥ २९ ॥ यदितथाभूतोऽन्योभूत्तर्हिममकथंतदनुभवपथंप्राप्तंतत्राह ॥ भवतइति ॥ जलांतर्वर्त्तिनोभवतश्चित्तेसाकटंजाचारसंस्थितिर्भ्रांत्याकेवलं प्रतिभातामत्संकल्पवशादित्यर्थः ॥ ३० ॥ कदाप्यदृष्टस्यदेशांतरस्थस्यातीतस्यचकथंपुरोवर्त्तमानतयादर्शनंतत्राह ॥ द्रष्टेति ॥ यथाअनुभूतमपिविस्मरतितथाअदृष्टमपिपश्य तीत्यर्थः ॥ ३१ ॥ धातुसंस्थितिःसन्निपातः ॥ ३२ ॥ यथात्रैकाल्यदर्शिनोयोगिनोदृष्ट्याभविष्यदपिवस्तुतदुत्तरकालिकेषुदृश्यमानेषुभूतकालस्थंभवतितथाहेगाधेअतीतम पिकटंजाचरितंवर्त्तमानप्रतिभामेतीत्यर्थः ॥ ३३ ॥ नन्वनात्मन्यनात्मीयेचकटंजकेतदीयगृहकलत्रादौचममसएवाहंतदीयमेवतन्मेमदीयमितिकथंमज्जनमितिचेदत्यल्पमिदमु

तथैवविकलत्वंप्राप्यदेशांतरंगतः॥ बभूवकीरनृपतिःप्रविवेशानलंततः ॥ २९ ॥ भवतःकेवलंचित्तेजलांतर्वर्त्तिनस्तदा॥ प्रतिभाता तथाभूताकटंजाचारसंस्थितिः॥ ३० ॥ द्रष्टानुभूतमप्यर्थंकदाचिद्विस्मरत्यलम्॥ कदाचिदप्यदृष्टंतुचेतःपश्यतिदृष्टवत्॥ ३१॥ यथास्वप्न मनोराज्यधातुसंस्थितिविभ्रमाः॥जाग्रत्यपितथैवांगदृश्यंतेमनसास्वयम्॥३२॥भविष्यद्भूतकालस्थंयथात्रैकाल्यदर्शिनः॥ प्रतिभामे तिगाधेयत्कटंजाचरितंतथा॥ ३३॥ अयंसोहमिदंतन्मइतिमज्जतिनात्मवान्॥ अयंसोहमिदंतन्मइतिमज्जत्यनात्मवान्॥ ३४॥ सर्व मेवाहमेवेतितत्त्वज्ञोनावसीदति॥ नगृह्णातिपदार्थेषुविभागानर्थभावनाम्॥ ३५॥ तेनासौभ्रमयोगेषुसुखदुःखविलासिषु ॥ ननिम ज्जतिमग्नोपितुंबीपात्रमिवांभसि॥३६॥ त्वंतावद्वासनाजालग्रस्तचित्तोविचेतनः॥ किंचिद्भ्रेपमहाव्याधिरिवनस्वस्थमागतः॥३७॥ ज्ञानस्यापरिपूर्णत्वान्नशक्नोपिमनोभ्रमम्॥ विनिवारयितुंमेघमसम्यग्यत्नवानिव॥ ३८॥ यदेवतेमनोमात्रेसहसाप्रतिभासते॥ तरु रुच्चजनेनेवतेनैवाक्रम्यसेक्षणात्॥ ३९॥ चित्तंनाभिःकिलास्येहमायाचक्रस्यसर्वतः॥ स्थीयतेचेत्तदाक्रम्यतन्नकिंचित्प्रबाधते॥४०॥ त्वमुत्तिष्ठगिरेःकुंजेदशवर्षाण्यखिन्नधीः॥ तपःकुरुततोज्ञानमनंतंसमवाप्स्यसि॥ ४१॥इत्युक्त्वापुंडरीकाक्षस्तत्रैवांतरधीयत॥ वाता भ्रवद्दीपकवद्घमुनोत्पीडवत्क्षणात्॥ ४२॥

च्यते अनात्मविदांसर्वेषामप्यनात्मनिदेहेअनात्मीयेचगृहकलत्रादावहंममेत्यभिमानदर्शनादात्मविदएवकेवलंतन्मज्जनाभावादित्याशयेनाह ॥ अयमिति ॥ ३४ ॥ सर्वाहंभा वनयापितत्त्वविदस्तत्रनमज्जनंपरिच्छिन्नाहंभावस्यैवमज्जनहेतुत्वादित्याह ॥ सर्वमेवेति ॥ ३५ ॥ सर्वाहंभावेप्यहंकारसत्त्वान्मग्नप्रायोपि ॥ ३६ ॥ अहंतर्हिकीदृशइतिचेदांत रालिकइत्याह ॥ त्वमिति ॥ स्वस्थंस्वरूपावस्थितमात्मानमागतःप्राप्तः॥ ३७ ॥ मेघपदेनतत्कार्यंदृष्टिर्लक्ष्यते ॥ गृहरचनपरगृहप्रवेशादिसम्यग्यत्नशून्यःपुरुषइव ॥ ३८ ॥ आक्रम्यसेतदभिमानेनपरिभूयसे ॥३९॥ नाभिर्मध्यम ॥ सर्वतोभ्रमतइतिशेषः ॥ तच्चित्तमाक्रम्यआत्मनिप्रविलापनेनतिरस्कृत्य ॥ तन्मायाचक्रंकिंचिदपिनप्रबाधते ॥ ४०॥ तपश्चित्तनिरोधाभ्यासम् ॥ ४१ ॥ वातलीनाभ्रवन्निर्वाणदीपकवद्यमुनातरंगवच्चेतिमालोपमा ॥ ४२ ॥

वैरस्यमस्निग्धताम् ॥ ४३ ॥ भ्रमताभ्रमभरेणोन्मुक्तामतिर्यस्यतथाविधःसन्धातुःप्राक्तनकर्मलक्षणस्यदैवस्यासमंजसमयुक्तश्वपचभावादिप्रदर्शनरूपंविचित्रंचेष्टितमगर्हयत् ॥ ४४ ॥ नियमायचित्तनियमनाभ्यासाय ॥ ऋष्यमूकंमतंगाश्रमस्थमचलम् ॥४५॥ तपःमनसश्चेंद्रियाणांचऐकाग्र्यंपरमंतपइतिप्रसिद्धम् ॥४६॥ तदनुआत्मज्ञानप्राप्त्यनंतरंमहात्मागाधिःस्वांपारमार्थिकींसत्तांप्राप्यअपगतभयशोकःसन्सततमुदितंजीवतएवमुक्तरूपंयस्यतथाविधःअतएवापरिच्छिन्नस्वानंदमदेनघूर्णितमापूर्णंचचेतोयस्यतथाविधः सन्सकलःकलापूर्णःशशांकइवापरिच्छिन्नेब्रह्माकाशेअरमतविजहारविश्रांतिप्रापेत्यर्थः॥४७॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेएकोनपंचाशःसर्गः॥४९॥

गाधिर्विवेकवशजंवैराग्यपदमागतः ॥ शरत्समयपर्यंतेवैरस्यमिवपादपः ॥४३॥ विचित्रंचेष्टितंधातुरसमंजसमागतम् ॥भ्रमद्भ्रमभरोन्मुक्तमतिर्मंदमगर्हयत् ॥ ४४ ॥ जगामकरुणार्द्रात्मानियमायोत्तमश्रिये ॥ विश्रांत्यैऋष्यमूकंतुपयोधरइवाचलम् ॥ ४५॥ निरस्ताशेषसंकल्पस्तपस्तत्रचकारह॥दशवर्षाणितेनासावात्मज्ञानमवापह ॥ ४६ ॥ अरमततदनुस्वांप्राप्यसत्तांमहात्माव्यपगतभयशोकोभोगभूमावनीषु॥सततमुदितजीवन्मुक्तरूपःप्रशांतःसकलइवशशांकोघूर्णितापूर्णचेताः ॥४७॥ ॥इ०वा०वा०दे० मोक्षोपायेपूपशमप्रकरणेगाधिवृत्तांतेगाधेर्ज्ञानप्राप्तिर्नामैकोनपंचाशत्तमःसर्गः॥४९॥ ॥गाध्युपाख्यानंसंपूर्णम् ॥ ५ ॥ ॥श्रीवसिष्ठउवाच॥ ॥एवमेषातिविततादुर्ज्ञानारघुनंदन॥महामोहमयीमायाविषमापारमात्मिकी ॥ १ ॥ क्वमुहूर्त्तद्वयस्वप्नसंभ्रमालोकदृष्टता॥ क्वानेकवर्षसंभुक्तश्वपचावनिपभ्रमः॥ २॥ क्वसंभ्रमोपलब्धत्वंक्वप्रत्यक्षनिदर्शनम् ॥ क्वासत्यत्वमसंदिग्धंक्वसत्यपरिणामिता ॥ ३॥ अतोवच्मिमहाबाहोमायेयंविषमान्वहम्॥असावधानमनसंसंयोजयतिसंकटे ॥ ४ ॥ ॥श्रीरामउवाच॥ ॥एवमस्यकथंब्रह्मन्मायाचक्रस्यरोधनम्॥कुर्युःप्रवहतोवेगात्सर्वांगच्छेदकारिणः॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥अस्यसंसाररूपस्यमायाचक्रस्यराघव॥ चित्तंविद्धिमहानाभिंभ्रमतोभ्रमदायिनः ॥ ६ ॥ तस्मिन्द्रुतमवष्टभ्येधियापुरुषयत्नतः॥गृहीतनाभिवहनान्मायाचक्रंनिरुध्यते॥७॥

चित्तस्याक्रमणोपायाज्ञानमाहात्म्यमुत्तमम् ॥ चेतोहिपीनतादोषहेतवश्चात्रकीर्त्तिताः ॥१॥ वर्णितंगाध्युपाख्यानंप्रकृतेयोजयति ॥एवमित्यादिना ॥ दुर्ज्ञानाअचिंत्या ॥ पारमात्मिकीपरमात्ममात्राश्रयविषया ॥ १ ॥ दुर्ज्ञानतामेवत्रेधादर्शयति ॥ क्वेतिद्वाभ्याम् ॥ २॥ ३ ॥४ ॥ चित्तंनाभिःकिलास्येहमायाचक्रस्यसर्वतः ॥ स्थियतेचेत्तदाक्रम्यतन्नकिंचित्प्रबाधतेइतियद्भगवतातेउपदिष्टंतदुपायंजिज्ञासूरामःपृच्छति ॥ एवमिति ॥ कुर्युरधिकारिणइतिशेषः ॥ पूर्णानंदात्मनःपरिच्छेददुःखापादनमेवांगच्छेदस्साम्यादंगच्छेदस्तत्कारिणः॥ ५॥ भगवदुपदिष्टमायाचक्रावष्टंभप्रकारंप्रथमंप्रपंचयितुमुक्तमनुवदति ॥ अस्येत्यादिना ॥ ६ ॥ मायाचक्रंगृहीतानाभिर्यस्यतत्तथाविधंसद्वहनाद्भ्रमणान्निरुद्ध्यतेनिवर्त्ततइतियावत ॥ ७ ॥

यथाबालानांकांस्यादिमयंक्रीडाचक्रंतंतुवेष्टितनाभिकीलकंतर्जन्यग्रनिबद्धायांरज्ज्वांततौ निरुद्धायांनगच्छतिनभ्रमतितद्वत् ॥ ८ ॥ किंचहेराघवत्वंचक्रयुद्धेष्वेकोमुख्यस्तज्ज्ञश्चविष्टंभभ्रमणाद्यभिज्ञोसिअतःकस्मादुक्तदृष्टांतंनजानासि ॥ ९ ॥ आत्मनोवहनाज्जन्मपरंपराप्रापणात्सम्यङ्निरोधयनिरुंधि ॥ १० ॥ एतांचित्तरोधनलक्षणांयुक्तियोगमुपायंविनाआत्मनोऽनंतंदुःखमितंप्राप्तम् ॥ तच्चदुःखमस्यांदृष्टौप्राप्तायांसत्यामंतंनाशंगतमेवअवलोकयमदुक्तार्थेसंशयेत्वंतथाकृत्वापश्येत्यर्थः ॥ ११ ॥ उपायांतरंचनास्तीत्याह ॥ चित्तेति ॥ १२ ॥ १३ ॥ तत्रोपपत्तिमाह ॥ चित्तांतरिति ॥ १४ ॥ यथाकुंभखेनिरुद्धोमशकादिःस्वदुःखसंसरणाकाशकोटरंदैवात्कुंभनाशेनविनाश्यातुलितमनुपमंमहाकाशस्वरूपमाविश्यमुक्तबंधःसुखीभवतितथात्वमपिचित्तनाशेनचित्तकुंभखंविनाश्यअतुलितंब्रह्माकाशमाविशेत्यर्थः ॥ १५ ॥ चित्तनाशेतर्हिकउपायस्तमाह ॥ वर्त्त

अवष्टब्ध्यमनोनाभिमोहचक्रंनगच्छति॥ यथारज्ज्वांनिरुद्धायांकीलकंरज्जुवेष्टितम्॥८॥ चक्रयुद्धैकतज्ज्ञोसिकस्माज्जानासिनानघ॥ चक्रंनाभाववष्टब्धंवशमायातिनान्यथा ॥ ९ ॥ चित्तंनाभिमवष्टभ्यतस्माद्यत्नेनराघव ॥ संसारचक्रंवहनादात्मनःपरिरोधय॥ १०॥ एतांयुक्तिंविनादुःखमनंतमितमात्मनः॥ अस्यांदृष्टौक्षणादंतंगतमेवावलोकय॥ ११॥ चित्ताक्रमणमात्रात्तुपरमादौपधादृते॥ प्रयत्नेनापिसंसारमहारोगोनशाम्यति॥१२॥ तस्माद्राघवसंत्यज्यतीर्थदानतपःक्रियाः॥ श्रेयसेपरमायांतश्चित्तमेववशंकुरु॥१३॥ चित्तांतरेवसंसारःकुंभांतःकुंभखंयथा॥ चित्तनाशेनसंसारःकुंभनाशेनकुंभखम्॥१४॥चिरंसंसरणाकाशकोटरंचित्तकुंभखम्॥ विनाश्यातुलिताकाशस्वरूपंरूपमाविश॥ १५॥ वर्त्तमानमनायासंभजद्वाल्यधियाक्षणम्॥ भूतंभविष्यदभ्रजयातिचित्तमचित्तताम् ॥ १६॥ संकल्पांशानुसंधानवर्ज्जनंचेत्प्रतिक्षणम्॥करोषितद्चित्तत्वंप्राप्तएवासिपावनम्॥१७॥ यावत्संकल्पकलनातावच्चित्तविभूतयः॥यावज्जलदविस्तारस्तावत्स्वजलबिंदवः॥ १८॥ सचित्तंचेतनंयावत्तावत्संकल्पकल्पनम्॥ सचंद्रांशुजगद्यावत्तावत्प्रालेयलेशकाः॥ १९॥ चेतनंचित्तरिक्तंचेद्भावितंतत्स्वसंस्थितेः॥ आमूलमेवदग्धानिविद्धिमूलानिसिद्धवत्॥२०॥चेतनंचित्तरिक्तंहिप्रत्यक्चेतनमुच्यते॥ निर्मनस्कस्वभावंतन्नतत्रकलनामलः॥ २१ ॥ सासत्यतासाशिवतासावस्थापारमात्मिकी॥ सर्वज्ञतासासादृष्टिर्नतुयत्रमनःक्षतम्॥ २२॥

मानमिति ॥ भूतभविष्यद्विषयानुसंधानत्यागादेवक्रमाच्चित्तंक्षीयतइत्यर्थः ॥ १६ ॥ भाविविषयसंकल्पस्यतदंशभूतार्थानुसंधानस्यचवर्ज्जनंप्रतिक्षणंसावधानतयाकरोषिचेत्तर्हि ॥ १७ ॥ स्वजलस्यवर्षस्यबिंदवः ॥ १८ ॥ एवंसंकल्पाअपिसतिचित्तेदुर्वाराइत्याह ॥ सचित्तमिति ॥ चेतनंचिदात्मरूपम् ॥ १९ ॥ चित्तरिक्तंचित्तात्पृथक्कृतंकूटस्थमितियावत् ॥ तत्तदास्वसंस्थितेर्मूलानिकामकर्मवासनादीनिआमूलंमूलाज्ञानेनसहदग्धानीतिसिद्धवत्कारणेमहासिद्धसाम्येनवाविद्धीत्यर्थः ॥ २० ॥ नन्वस्तुदाहस्तथापिचेतनंपुनःकलनामलवशाच्चित्तादिसमुद्भवःकिंनस्यादित्याशंक्याह ॥ चेतनमिति ॥ २१ ॥ चित्तरहितचेतनस्वरूपंयत्सैवपरमार्थसत्यता ॥ शिवतानिरतिशयानंदरूपता ॥ सैवपरमात्मस्वभावभूताअवस्था ॥ सर्वज्ञतासर्वावभासकचिद्रूपता ॥ दृष्टिःपरमार्थदृक् ॥ यत्रयस्यामवस्थायाम् ॥ क्षतमितिनिंदार्थेविशेषणम् ॥ २२ ॥

नियताबीजान्येवदर्शयति ॥ मनइति ॥ २३ ॥ ननुविदुषामपिमनोस्तितत्राप्याशादीनिकुतोनोपजायंतेतत्राह ॥ संस्रतीति ॥ सत्यमस्तितथापितेषांमानसेसंकल्पेआशादिसर्वभावव्यवस्थापिकायाःसंसारवल्ल्यावासनात्मकंबीजमेवनजायतेवस्तुतत्त्वाववोधेनवाधितत्वादित्यर्थः ॥ २४ ॥ वस्तुत्वेनावगतानांकेनोपायेनावस्तुत्वावगमलक्षणोवाधस्तमाह ॥ शास्त्रेति ॥ २५ ॥ उपात्दृत्यनिवर्त्य ॥ उद्यमःपुरुषयत्नस्तत्सहितैरवश्यमस्मिन्जन्मनिज्ञानंसाधयामीतिदृढनिश्चयैः ॥ २६ ॥ किमुख्यंकारणमवलंब्यशास्त्रादिनाप्यात्मान्वेष्यइतिचेत्स्वयंज्योतीरूपंप्रत्यगात्मानमेव ॥ तद्वद्वैलक्षण्येनतस्यैवस्वतःप्रथमानत्वादित्याशयेनाह ॥ मुख्यमिति ॥ रत्नेनप्रकाशमानेनस्वेनैवेत्यर्थः ॥ २७ ॥ उक्तांमुख्यकारणतांस्फुटयति ॥ स्वेति ॥ स्वेनानुभूतानिदृश्यजातानिदुःखान्येवेतिविवेकेनयेनहेतुनात्यक्तुमिच्छतितेनैवहेतुनास्वात्मावलोकनेतत्प्रतिकूलस्वभावःस्वयंमुख्योहेतुः ॥ न

मनोयत्रतुतत्राशास्तत्रदुःखसुखानिच ॥ सदासन्निधिमायांतिश्मशानइववायसाः ॥ २३ ॥ वस्तुतत्त्वाववोधेनसर्वभावव्यवस्थितेः ॥
संस्रतिव्रततेर्वीजंसंकल्पेनोपजायते ॥ २४ ॥ शास्त्रसज्जनसंपर्कसंतताभ्यासयोगतः ॥ जागतानामवस्तुत्वंभावानामवगम्यते ॥ २५ ॥
अविवेकादुपात्दृत्यचेतस्सोद्यमनिश्चयैः ॥ वलात्कारेणसंयोज्यंशास्त्रसत्पुरुषक्रमैः ॥ २६ ॥ मुख्यंकारणमात्मैवपरमात्मावलोकने ॥
अगाधेपतितंरत्नंरत्नेनैवावलोक्यते ॥ २७ ॥ स्वानुभूतानिदुःखानिस्वात्मैवत्यक्तुमिच्छति ॥ तेनात्मैवात्मविज्ञानेहेतुरेकःपरःस्मृतः ॥ २८ ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ॥ निरस्तमननानंतसंविन्मात्रपरोभव ॥ २९ ॥ जायमानस्तथाजीवन्म्रियमाणःक्रियारतः ॥
स्वात्मन्यमलतांप्राप्तेसंविदंशेस्थिरोभव ॥ ३० ॥ ममेदंतदयंसोहमितिसंत्यज्यवासनाः ॥ एकनिष्ठतयांतस्थसंविन्मात्रपरोभव ॥ ३१ ॥
वर्त्तमानभविष्यंत्योःस्थित्योरादेहमेकधीः ॥ स्वसंवित्त्यानुसंधानसमाधानपरोभव ॥ ३२ ॥ वाल्ययौवनवृद्धेषुदुःखेषुचसुखेषुच ॥
जाग्रत्स्वप्नसुषुप्तेषुस्वसंवित्तिपरोभव ॥ ३३ ॥ मलंसंवेद्यमुत्सृज्यमनोनिर्गलयन्परम् ॥ आशापाशमलंछित्त्वास्वसंवित्तिपरोभव ॥ ३४ ॥
शुभाशुभस्वसंकेतसंशांताशाविषूचिकः ॥ नष्टेष्टानिष्टदृष्टिस्त्वंसंवित्सारपरोभव ॥ ३५ ॥ सकर्तृकर्मकरणान्स्वास्पर्शांनंतरास्पृशन् ॥
निर्विकल्पनिरालंवःस्वचिन्मात्रपरोभव ॥ ३६ ॥

हिस्वयमप्यसुखजडस्वभावत्वेतत्प्रतिकूलःस्यादितिभावः ॥ २८ ॥ तस्मात्त्वंसदातदेकप्रवणोभवतल्लाभायेत्याह ॥ प्रलपन्नित्यादिना ॥ २९ ॥ जन्ममरणग्रहणंतत्समसुखदुःखदुर्दशांतरेष्वप्यात्मप्रवणतायाअविस्मरणविधानार्थम् ॥ शोधनेनामलतांप्राप्तेसंविन्मात्रांशे ॥ ३० ॥ इदंपुरोवर्त्तितद्दूरस्थंचमम ॥ अयंसप्रत्यभिज्ञायमानोदेहोहमितिवासनाःसम्यक्त्यक्त्वा ॥ ३१ ॥ वर्त्तमानावाल्यादिस्थितिर्भविष्यंतीयौवनराज्यादिस्थितिस्तयोरनुसंधानंध्यानंसमाधानंसमाधिः ॥ ३२ ॥ उक्तमेवस्पष्टमाह ॥ वाल्येति ॥ ३३ ॥ संवेद्यंवाह्यविषयलक्षणम् ॥ ३४ ॥ शुभाशुभलक्षणौयौस्वसंकल्पकृतसंकेतौतयोःसंशांताआशाविषूचिकायस्य ॥ अतएवनष्टेष्टानिष्टादृष्टिर्यस्य ॥ ३५ ॥ कर्त्ताविज्ञानमयः कर्मवाह्यविषयाः करणानींद्रियाणि तत्सहितान् स्वंनस्पृशंतीतिस्वास्पर्शानेवंविधसंसारान्स्वस्यांतरामध्येमणिःस्वांतर्गतप्रतिविंबानिवस्पृशन्प्रथयन् ॥ ३६ ॥

संसुप्तांसुषुप्तवन्निर्विकल्पाम् ॥ ३७ ॥ नानादशाजाग्रत्स्वप्नौ अनानादशासुषुप्तिस्ताभ्यांसृष्टिप्रलयदशाभ्यांवामुक्तः ॥ समग्रस्यदृश्यस्यकलनायांप्रथायांदीपः ॥ समस्तानांस
कलनानाबुद्धिवृत्तीनांदीपवत्प्रकाशकइतिवा ॥ ३८ ॥ आत्मतास्वता परतातदन्यता तेत्यक्त्वा ॥ ३९ ॥ निर्द्वंद्वधर्मांधर्मतांधर्मांधर्मरहितताम् ॥ ४० ॥ सर्वस्यामृतत्वेसंपन्नेविष
स्याप्यमृततायाअर्थसिद्धत्वादितिभावः ॥ ४१ ॥ अमतिर्विस्मृतिरज्ञानमितियावत् ॥ ४२ ॥ ४३ ॥ तीर्णस्येति ॥ स्वरूपप्राप्त्यैवाशामहार्णवतरणाद्रसोप्यस्यपरंदृक्षानिवर्त्त
तद्गतिभगवद्वचनादितिभावः ॥ ४४ ॥ मुक्तस्यान्यत्राशासंभावनादूरप्रत्युतामृतादिरसायनास्वादेप्यात्मानंदास्वादविघ्नत्वसंभावनयाविषवद्धेयताबुद्ध्युदयादित्याशयेनाह ॥
स्वभावमिति ॥ प्रतिकूलंविषमिवाचरतिप्रतिविषायते ॥ ४५ ॥ येपुरुषानोऽस्माकंस्वभावंप्रत्यगात्मभावमुपागताजीवन्मुक्ताःपुंजन्मसार्थकीकरणात्पुरुषार्थसाधनात्सफलपौ

जाग्रत्येवहिसंसुप्तांभावयन्सुस्थिरांस्थितिम् ॥ सर्वमस्मीतिसंचिंत्यसत्तैकात्मवपुर्भव ॥३७॥ नानानानादशामुक्तोयुक्तोमुक्ततया
समे॥ समग्रकलनादीपःस्वचिन्मात्रपरोभव ॥३८॥ आत्मतापरतेत्यक्त्वानिर्विभागोजगत्स्थितौ॥ वज्रस्तंभवदात्मानमवलंब्यस्थिरो
भव ॥३९॥ स्थित्वांतर्मानसान्याशानाशरूपानुदारया॥ धियाधैर्यैकधर्मिण्यानिर्द्वंद्वर्माधर्मतांव्रज ॥४०॥ समास्वादयतस्तत्त्वंस्वसं
वेदनधर्मिणः॥ विषंहालाहलमपियास्यत्यमृततामथ॥४१॥ तदोदेतिमहामोहःसंसृतिभ्रमकारणम्॥ निर्मलायानिरंशायाःसंवित्ते
श्रामतिर्यदा॥४२॥ तदासंक्षीयतेमोहःसंसारभ्रमकारणम्॥ निर्मलायांनिरंशायांस्वसंवित्तौस्थितिर्यदा ॥४३॥ स्वरूपमनुयातस्य
तीर्णस्याशामहार्णवम्॥ प्रसरिष्यतितेसंवित्सूर्यांशुरिवसर्वतः॥४४॥ स्वभावमालोकयतआनंदाद्वयसंस्थितेः॥ रसायनमपिस्वादु
रामप्रतिविषायते॥४५॥ तैर्नोभजामहेपुंभिर्यैःस्वभावमुपागताः॥शेषाःपुरुषनामानोगर्दभादीर्घबाहवः॥ ४६ ॥पर्वतात्पर्वतंयांति
पुरोद्रेरिवदंतिनः॥ परांकोटिंप्रयातस्यस्वसंविच्युन्नतस्थितेः॥ ४७॥ अदृष्टादृश्यसीमानःसूर्यादीन्यखिलान्यपि॥ नतेजांस्युपकुर्वंतिस्व
संविद्दिव्यचक्षुषः ॥ ४८ ॥

रुषत्वात्तैःपुंभिस्तैःपुरुषधौरेयैःसहभजामहेसदामैत्रीमितिशेषः ॥ अन्येतुपुरुषार्थोपयोगिपौरुषहीनत्वान्नाममात्रेणपुरुषानार्थलेशेनापीतिगर्दभवदुपेक्ष्याएवनदर्शनादियोग्या
अपीत्याशयेनाह ॥ शेषाइति ॥ ४६ ॥ नन्वन्येपियोगिनउपासकाश्चजगतिमहांतःसंत्येवतेभ्योऽपितत्त्वविदएवकउत्कर्षस्तत्राह ॥ पर्वतादिति ॥ स्वसंवित्त्यासर्वोन्नतस्थितं
रतएवपरांकोटिमुत्कर्षकाष्ठांप्रयातस्यतत्त्वविदःपुरोयोगिप्रभृतयोज्ञानार्थतांस्तान्महतउपसर्पंतोऽद्रेर्मेर्वादेःपुरोदंतिनःप्रत्यंतपर्वतात्पर्वतानरंयांतीवभासंते ॥ नमेरुरिवसर्वोन्नताद
द्रविश्रांताश्चेत्यर्थः ॥ ४७ ॥ स्वसंवित्त्याउन्नतस्थितिमुपपादयति ॥ अदृष्टेति ॥ प्राक्केनाप्यदृष्टाःसांप्रतमपेचअदृश्याद्रष्टुमशक्याःसीमानोऽवधयोयस्यतथाविधस्यस्वसंवि
ल्लक्षणंदिव्यंचक्षुर्यस्यतस्यतत्त्वविदःअंतःकल्पितानिसूर्यादीन्यखिलान्यपितेजांसिनोपकुर्वंतीतिस्वसंविदस्यैवतस्योन्नतस्थितिरित्यर्थः ॥ ४८ ॥

नकेवलंनोपकर्तुंशक्नुवंतिकिंतुतत्पुरतोऽवस्तुतामेवगच्छंतीत्याह ॥ अवस्तुतामिति ॥४९॥ अतउक्तंसिद्धमित्याह ॥ तेजोंशुष्विति ॥ तेजसःअंशुषुकार्येषुप्रकाशनेषुयोगसिद्धि वशित्वादिप्रभावेषुबलिषुशरीरादिबलवत्सुऐश्वर्यायुरादिनामहत्सुअन्येष्वपिवाग्मित्वाद्युन्नतियुक्तेषुसर्वेषुमध्येपरमोन्नतः ॥सर्वोन्नत्यानामेतस्मिन्नध्यस्तत्वादितिभावः॥५०॥ यस्यजगदीश्वरस्यभासाभांतितथातत्तुल्यतयेत्यर्थः ॥५१॥ तुच्छतरामूढतराः ॥ तत्त्वज्ञानाभावेततोप्यधमतमयोनिकोटिप्रामेर्दुर्वारत्वादितिभावः ॥ ५२ ॥ सतोप्यात्मनोऽज्ञा नेनासत्वापादनादनात्मवान्अतएवासावचेतनइतिआत्मज्ञएवचेतनेनसंयुक्तइतितद्विदआहुरितिशेषः ॥ ५३ ॥ दुःखदाहार्थाईहाचेष्टायस्य ॥ एवार्थेतुशब्दः ॥ ५४ ॥ चित्ते

अवस्तुतांव्रजंत्येतेमाध्याह्नाइवदीपकाः ॥ अर्कादयोमहालोकाविग्रयाधिगतात्मनः ॥ ४९ ॥ तेजोंशुपुप्रभावेषुबलिष्वपिमहत्स्वपि ॥
सर्वेपून्नतियुक्तेषुतत्त्वज्ञःपरमोन्नतः॥५०॥ भांतीहभासायस्यार्कवह्नींदुमणितारकाः॥ तथाजगतिराजंतेज्ञातज्ञेयानरोत्तमाः॥५१॥
धराविवरकीटेभ्योगर्दभेभ्योपिमानवाः॥तिर्यग्भ्यश्चाप्यतत्त्वज्ञारामतुच्छतराःस्मृताः॥५२॥तावत्संमोहवेतालोदेहीयावदनात्मवान्॥
आत्मज्ञएवसंयुक्तश्चेतनेनेतितद्विदः॥५३॥ अनात्मज्ञोहिदुःखेहःप्रस्फुरन्नपिभूतले॥शवएवभ्रमत्युच्चैरात्मज्ञस्तुसचेतनः॥५४॥ दूरा
दात्मज्ञतायातिचित्तेपीवरतांगते॥ आलोकलक्ष्मीरभितोमहामेघइवास्थिते॥५५॥ भोगाभोगतिरस्कारैःकार्श्यनेयंशनैर्मनः॥ रसाप
हारैस्तज्ज्ञेनकालेनाजीर्णपर्णवत्॥५६॥ अन्यात्मन्यात्मभावेनदेहमात्रास्थयानया॥ पुत्रदारकुटुंबैश्चचेतोगच्छतिपीनताम्॥५७॥
अहंकारविकारेणममतामलहेलया॥ इदंममेतिभावेनचेतोगच्छतिपीनताम् ॥ ५८ ॥ जरामरणदुःखेनव्यर्थमुन्नतिमीयुषा॥ दोषा
शीविषकोशेनचेतोगच्छतिपीनताम्॥५९॥आधिव्याधिविलासेनसमाश्वासेनसंस्तेः॥हेयादेयप्रयत्नेनचेतोगच्छतिपीनताम्॥६०॥
स्नेहेनधनलोभेनलाभेनमणियोपिताम् ॥ आपातरमणीयेनचेतोगच्छतिपीनताम् ॥ ६१ ॥ दुराशाक्षीरपानेनभोगानिलबलेनच॥
आस्थादानेनचारेणचित्ताहिर्यातिपीनताम् ॥ ६२॥ आगमापायवपुषाविषवैषम्यशंसिना ॥ भोगाभोगेनभीमेनचेतोगच्छतिपीन
ताम्॥॥६३॥

पीवरतांस्थौल्यंगतेसतिआत्मज्ञताईषत्संपादितापिदूरायाति ॥ ५५॥ अतःकारणान्मनःप्राप्तानांभोगानांविषयाणामाभोगःसेवनंतत्तिरस्कारैरप्राप्तानांरसस्याभिलाषस्याप हारैश्चचिराभ्यस्तैःकालेनआजीर्णपर्णवत्कार्श्यमपचयंनेयमित्यर्थः ॥ ५६ ॥ केतेमनःपीनताहेतवोयद्वर्जनेनतत्कार्श्यंस्यात्तानाह ॥ अनात्मनीत्यादिना ॥ ५७ ॥ विकारेण विकासेन ॥ ममतालक्षणेमलेहेलयालीलयाआसक्त्येतियावत् ॥ सर्वममतामूलमाह ॥ इदमिति ॥ इदंशरीरंममआत्माभोगायतनंवेतिभावेनेत्यर्थः ॥ ५८ ॥ तमेवभावंवि शिनष्टि ॥ जरेति ॥ ५९ ॥ संस्तेःसमाश्वासेनरम्यताचिरस्थायितादिविश्वासेन ॥ ६० ॥ ६१ ॥ चारेणनानाविषयसंचारेण ॥ ६२ ॥ आगमापायौवपुःस्वभावौयस्य ॥ विषेणेववैषम्यंदाहमूर्छादिव्याकुलतातच्छंसिनातत्पर्यवसितेनेतियावत् ॥ भोगानामाभोगेनप्राग्व्याख्यातेन ॥ ६३ ॥

शरीरलक्षणेदुष्टश्वभ्रेचिरायप्ररूढमेनंचित्तविपद्द्रुमंत्वमशंकंविचारसारक्रकचेनच्छिंधीतिपरेणान्वयः ॥ चिंताचयाएवउच्चाकृतयोमंजर्योयस्मिन् ॥ नघूनश्चेतिकप् ॥६४॥ विकल्पाएवपत्राणियस्मिन् ॥ ६५॥ इदानींतदेवचेतोगजत्वेनवर्णयति ॥ मत्तेक्षणमितिद्वाभ्याम् ॥ हेराघवराजसिंहत्वमुक्तदशविशेषणविशिष्टंचेतोगजंसुतीक्ष्णयाधीकरजाग्रपंक्त्याविदारयेतिद्वितीयेनान्वयः ॥ मत्तेस्वविवेकप्रमादवतीमदघूर्णेचआगमानुमानलक्षणेईक्षणेयस्यतम् ॥ एकस्मिन्बहिर्मुखलक्षणेसंसाराद्रितटेउपवेशनमुपवेशोयस्यतम् ॥ अतएवांतर्मुखविश्रांतिसौख्येप्वसमर्थम् ॥ द्वेषासूयादिभीषणत्वादुग्रम ॥ सुजनैःकम्यंतइतिसुजनकमाःशमदमतितिक्षादयस्तल्लक्षणस्याजखंडस्यपद्मवनस्यालोकनेउत्कंसोत्कंठंपरंतुचंडमतिकोपनंतद्भक्षणायोग्यमितियावत् ॥ सुखदुःखेएवशीतोष्णबाष्पमदस्राविणौगंडौयस्य ॥ ६६ ॥ आदीर्घाःकामादिविकाराएवदंतौयस्यअतएवधैर्यादिवप्रविदा

शरीरदुःश्वभ्रचिरप्ररूढंचिंताचयोच्चाकृतिमंजरीकम् ॥ जरामृतिव्याधिफलौघनम्रंकामोपभोगौघविकासिपुष्पम् ॥ ६४ ॥ विचारसारक्रकचेनचित्तविपद्द्रुमंत्वद्भुतमद्रिकल्पम् ॥ आशामहाशाखमशंकमेनंछिंधिप्रसह्यात्रविकल्पपत्रम् ॥ ६५ ॥ मत्तेक्षणंचैकतटोपवेशंविश्रांतिसौख्येप्वसमर्थमुग्रम् ॥ आलोकनोत्कंसुजनक्रमाब्जखंडस्यचंडंसुखदुःखगंडम् ॥ ६६ ॥ चेतोगजंकायकुकाननस्थंसुतीक्ष्णयाधीकरजाग्रपंक्त्या ॥ विदारयादीर्घविकारदंतंक्रियाकरंराघवराजसिंह ॥ ६७ ॥ रतिंगतंनित्यमसत्प्रदेशेशरीरमांसग्रसनेनपुष्टम् ॥ दुष्टक्रियाकर्कशचंचुदंडमेकेक्षणंपुष्टतमोंशुकृष्णम् ॥ ६८ ॥ दूरेसमुत्सारयभारभूतंदुश्चेष्टितंकर्कशमारटंतम् ॥ गंधोद्धतंकायकुलायकोशाद्दोषोपशांत्यैनिजचित्तकाकम् ॥ ६९ ॥ तृष्णापिशाच्यापरिचर्यमाणंविश्रांतमज्ञानमहावटेषु ॥ भ्रांतंचिरंदेहशतेष्वटव्यांस्वसंस्तौचेतनवर्ज्जितेषु ॥ ७० ॥ विवेकवैराग्यगुरुप्रयत्नमंत्रैःस्वतंत्रैःस्वचिदात्मगेहात् ॥ नोत्सादयेच्चित्तपिशाचमेनंयावत्कुतस्तावदिहात्मसिद्धिः ॥ ७१ ॥

रणक्रियाकरम् ॥ ६७ ॥ असतिकुत्सितेस्त्रीव्यंजनश्मशानादिप्रदेशेरतिमासक्तिंगतम् ॥ शरीरलक्षणस्यमांसस्यग्रसनेनेवांतर्भावापादनेनपुष्टमुपचितम् ॥ दुष्टक्रियापरमर्मंतोदनंतत्रकर्कशश्चंचुदंडस्तेोत्र्यपंतत्सदृशौघव्यापारोयस्य ॥ एकस्मिन्स्वार्थएवदृक्षणंदर्शनंयस्य ॥ पुष्टैस्तमोंशुभिस्तामसवृत्तिभिःकृष्णंमलिनम् ॥ काकपक्षेचत्वारिविशेषणानिस्पष्टानि ॥ पुष्टास्तमोंशवोंधकारभागाइवकृष्णंनिजचित्तकाकंकायकुलायकोशाद्दूरेसमुत्सारयेत्युत्तरेणान्वयः ॥ ६८ ॥ वोढुरात्मनोवक्षादेश्चवृथाश्रमहेतुत्वाद्भारभूतम् ॥ गंधेभ्योदुर्वासनाभ्यउद्धतमाविर्भूतंप्रस्थितंच ॥ ६९ ॥ तदेवचित्तंपिशाचत्वेनरूपयंस्तदनुत्सादनेमोक्षासिद्धिमाह ॥ तृष्णेतिद्वाभ्याम् ॥ अज्ञानलक्षणेषुमहत्सुवटेष्ववटेषुवा ॥ देहशतेषुअनंतकोटिदेहलक्षणायामटव्यामितिव्यस्तरूपकम् ॥ स्वस्यचित्तस्यसंस्तनावपसरणेचेतनवर्ज्जितेषुप्रत्यक्षमचेतनेष्वितियावत् ॥ ईदृशमेनंचित्तपिशाचंस्वचिदात्मनोंगेहभूताद्धृदयाद्यावन्नोत्सारयेत्तावदात्मस्वभावभूतासिद्धिर्मुक्तिःकुतइत्युभयोरन्वयः ॥ ७१ ॥

इदानींमनोऽहित्वेनरूपयंस्ताजयति ॥ शुभेतिद्वाभ्याम् ॥ शुभाशुभलक्षणमास्यंभवमास्यम् ॥ शरीरावयवायन् ॥ दंष्ट्राद्वयंयस्य ॥ अच्छःश्रमादिदोषापरामृष्टःश्वसनःप्राण वायुरशनंयस्यपवनाशनत्वात् ॥ नानाविधंभयंनाशंमरणंचददातीतिनानाभयनाशदम् ॥ ७२ ॥ ईदृशंमनोलक्षणंमहाहिममोघयाचित्खगस्यचिदेकरसगरुडस्यबोधकायेसत्यं ज्ञानमनंतंब्रह्मेत्यादिमंत्रास्तेषांशक्त्याशमंमूलाज्ञानेनसहोच्छेदंनीत्वाभयंभृशंनिःशेषंप्रोज्झ्यविहायअभेवोभयोवाआत्माभवेत्यर्थः ॥ ७३ ॥ तदेवचित्तंगृध्रत्वेनरूपयति ॥ अ मंगलेतिद्वाभ्याम् ॥ शरीरलक्षणानांशवावलीनांसंततंसेवनेनानुसंधानेनभक्षणेनच काककंकचंचुप्रहारैरपमानव्ययशोकभयादिभिश्चक्षतेनवपुषासुपुमाँश्मशानवृक्षंतत्सदृश सुमदेहंचसेवतेतच्छीलः ॥ ७४ ॥ अधीरोविवृद्धश्चगर्द्धोऽभिलाषोयस्यईदृशश्चित्तगृध्रोयदितेदेहद्रुमादुड्डीयगच्छतितत्तर्हितेनिपुणंनितरांजयइत्यर्थः ॥ ७५ ॥ तदेवमनइदानीं मर्कटत्वेनरूपयति ॥ भ्रांतमितिद्वाभ्याम् ॥ एकस्याजन्मभूमेर्जन्मभूम्यंतरंप्रयातम् ॥ जनतांजनसमूहंतदीयसंसारबंधंचहसंतंस्वचेष्टितैर्विडंबयंतम् ॥ ७६ ॥ अक्षिनासयोःस

शुभाशुभास्यंहतमानवौघंचिंताविषंकायकुकंचुकंच ॥ अजस्रमच्छश्वसनाशनंचसर्वस्यनानाभयनाशदंच ॥ ७२ ॥ त्वदन्नदुःशाल्मलिकोटरस्थममोघयाचित्खगमंत्रशक्त्या ॥ नीत्वाशमंराममनोमहाहिंभयंभृशंप्रोज्झ्यभवाभयात्मा ॥ ७३ ॥ अमंगलाकारधरःशरीरशवावलीसंततसेवनेन ॥ दिगावलीसंभ्रमणश्रमार्त्तःश्मशानसेवीवपुषाक्षतेन ॥ ७४ ॥ भोगामिषोदिक्ष्वभिधावमानउत्कंधरोधीरविवृद्धगर्द्धः ॥ उड्डीयवेगच्छतिचित्तगृध्रोदेहद्रुमात्तन्निपुणंजयस्ते ॥ ७५ ॥ भ्रांतंवनांतेषुदिगंतरेषुफलार्थिनंचंचलमाकुलांगम् ॥ जन्मावनेर्जन्ममहींप्रयातंसंसारबंधंजनतांहसंतम् ॥ ७६ ॥ द्रुमेक्षिनासाकुसुमेभुजादिशाखेविलोलांगुलिजालपत्रे ॥ समुल्लसंतंपरिमारयांतर्मनोमहामर्कटमंगसिद्ध्यै ॥ ७७ ॥ अभ्युत्थितंसत्फलसंक्षयायलसन्मुखासंगितडित्प्रकाशम् ॥ वर्षंतमासारमनर्थसार्थंमांदोलितंवासनवात्ययांतः ॥ ७८ ॥ संकल्पसंकल्पनवर्जनोग्रमंत्रप्रभावाद्धृदयांबरस्थम् ॥ सोत्साहमुत्सादयचित्तमेघंबृहत्फलंप्राप्यभवालमाद्यः ॥ ७९ ॥

माहारोऽक्षिनासंतदेवआसमंतात्कुसुमानियस्मिन् ॥ भुजकरादयःशाखायस्मिन् ॥ विलोलांगुलिजालंपत्राणियस्मिन् ॥ ईदृशेदेहवृक्षेसमुल्लसंतंमनोमहामर्कटंपरितोनिरोधेन मारयेत्यर्थः ॥ ७७ ॥ इदानींतदेवचित्तंमेघत्वेनरूपयति ॥ अभ्युत्थितमितिद्वाभ्याम् ॥ सत्फलस्यपरमार्थसुखस्यपक्वस्यफलस्यचक्षयायअकालेसमुपस्थितम् ॥ मुखेमुखस दृशबहिर्मुखवृत्त्येआसंगीप्रतिबिंबनेनविपक्कस्तडित्सदृशश्चिदाभासप्रकाशोयस्य ॥ अनर्थसार्थरूपमासारंवर्षंतम् ॥ वासनानिवासनास्तल्लक्षणयावात्ययाअंतःआंदोलितंपरि वर्तितम् ॥ ७८ ॥ हृदयांबरस्थमीदृशंचित्तमेघंसंकल्पानांयानिसम्यक्कल्पनानिपुनःपुनःसमर्थनानितेषांवर्जनरूपादुग्रमंत्रप्रभावात्सोत्साहउत्सारयनेनचबृहज्जीवन्मुक्तिफलंप्रा प्यआद्यःपूर्वसिद्धस्वभावोनित्यमुक्तात्मैवअलंसम्यग्भवेत्यर्थः ॥ ७९ ॥

---

१ अनेनाभवात्मेत्यभयात्मेतिचपाठद्वयंमूलेबोधितम् ॥ पुस्तकेपूभयविधपाठोपलंभात् ॥

इदानींतदेवचित्तंपाशत्वेनरूपयति ॥ ग्रंथीकृतमितिद्वाभ्याम् ॥ आआत्मसृष्टेरात्मोपादानकंकल्पादिसर्गमर्यादीकृत्यअद्यतनकालपर्यंतंकृतैःसुकृतदुष्कृतकर्मभिर्निरंतरंग्रंथीकृ
तंग्रंथिदानेनदृढीकृतम् ॥ अतएवसमस्तानांजात्यंतराणांनानायोनिजन्मभेदानांक्रमाद्बंधनायदीर्घदामैवस्थितम् ॥ ८० ॥ अतएवसंप्रोतानिःसंख्याःशरीरमालायस्मिन् ॥ अ
स्तशंकःपुनर्जन्मशंकाशून्यः ॥ ८१ ॥ इदानींतत्संकल्पमजगरत्वेनरूपयंस्तद्वधोपायमाह ॥ फूत्कारेतिद्वाभ्याम् ॥ फूत्कारेणक्रोधादिरूपसविषश्वासेनदग्धाअखिलाःपांथलो
कादक्षिणोत्तरमार्गगाजीवायेन ॥ आशीविषंविषधरम् ॥ अतएवशोषिताःसंतापितालोकखंडाभुवनभेदायेन ॥ व्यात्ततृष्णालक्षणमुखव्यादानेनविषयाभिपार्थउद्धृतःकंपि
तश्चतुर्विधशरीरदंडोयेन ॥ ८२ ॥ मोक्षोद्योगालसत्वादामंथरंमंदगतिमीदृशंसंकल्पघोराजगरंअकामनापरवैराग्यंतन्नाम्नामहताअनलेनवह्निनादग्ध्वाभस्मीकृत्यनिजेपूर्णानंद

ग्रंथीकृतंकर्मभिरात्मसृष्टेर्मंत्रैरभेद्यंज्वलनैरदग्धम् ॥ पीडांपरामात्मनिकल्पयंतंसमस्तजात्यंतरदीर्घदाम ॥ ८० ॥ संप्रोतनिःसंख्यश
रीरमालंबलादसंकल्पनमात्रशस्त्रैः ॥ छित्त्वास्वयंराघवचित्तपाशंयथासुखंत्वंविहरास्तशंकः ॥ ८१ ॥ फूत्कारदग्धाखिलपांथलोक
मत्यंतदुष्प्रापपरप्रबोधम् ॥ आशीविषंशोषितलोकखंडंव्यात्तास्यामिपोद्धृतशरीरदंडम् ॥ ८२ ॥ आमंथरंदेहगुहासुगुप्तंसंकल्पघोराजग
रंजवेन ॥ अकामनानाममहानलेनबलेनदग्ध्वाविभवोभवत्वम् ॥ ८३ ॥ चित्तेनचेतःशममाशुनीत्वाशुद्धेनघोरास्त्रमिवास्त्रयुक्त्या ॥
चिरायसाधोत्यजचंचलत्वंविमर्कटोवृक्षइवाक्षतश्रीः ॥ ८४ ॥ अमलमितिचकृत्वाचेतसावीतशंकमुपशमितमनोंतःसर्वमादेहमेव ॥
तृणलवलघुपश्यँल्लीलयाहेयदृष्ट्यापिवविहररमस्वग्रामसंसारपारः ॥ ८५ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेउपशमप्रकरणेराघवा
शयविनियोगोनामपंचाशत्तमःसर्गः ॥ ५० ॥ ॥ ९ ॥ ॥ ९ ॥ ॥ ९ ॥ ॥ ९ ॥ ॥ ९ ॥ ॥ ९ ॥

तश्चतुर्विधशरीरदंडोयेन... (continued) सहसाकृतार्थताबुद्ध्याप्रयत्नोपरमोमाभू
द्विभवेत्वंभवेत्यर्थः ॥ ८३ ॥ वैराग्येणसंकल्पजयेचित्तशुद्धौसत्यांतथैवबोधसमाधिक्रमेणचित्तजयोपिसिद्ध्यतीत्याह ॥ चित्तेनेति ॥
दिति॥चिरायेति ॥ तत्फलमाह ॥ त्यजेति ॥ ८४ ॥ आत्यंतिकचित्तोपशमोनिःशेषदेहादावहंममताभिमानत्यागसिद्ध्याजीवन्मुक्तिविहारसुखंसिद्ध्यतीत्याशयेनोपसंहरति ॥
अमलमिति ॥ इतिउक्तप्रकारेणचकारात्गुरूपदिष्टतत्त्वावबोधेनचअंतःप्रत्यगात्मन्युपशमितमनोऽमलंनिरस्तरागादिमलंकृत्वातादृशेनचेतसाआदेहंस्थूलसूक्ष्मकारणदेहपर्यंतं
सर्वमेवदृश्यंहेयदृष्ट्यातृणलवादपिलघुतुच्छतरंस्वामशरीरादिवदत्यंतोपेक्षार्हमसदेवेतिपश्यन्ग्रामसंसारपारस्त्वंप्रारब्धशेषभोगार्थयाआत्मक्रीडआत्मरतिःक्रियावानेषब्रह्मविदां
वरिष्ठइतिश्रुतिदर्शितयालीलयालोकसंपद्दायसोमादिपिवक्त्विगादिभिर्यज्ञेषुविहरशास्त्राविरुद्धेलौकिकेपिरमस्वचननेनतवपुनर्बंधप्रसक्तिरित्यर्थः ॥ ८५ ॥ ॥ इतिश्रीवा
सिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेपंचाशत्तमस्सर्गः ॥ ५० ॥ ॥ ९ ॥ ॥ ९ ॥ ॥ ९ ॥

उद्दालकमुनेःशांतिपदेविश्रांतिमिच्छतः ॥ युंजानस्यमनोदोषैर्विक्षेपोवहुधेयंते ॥ १॥ श्रवणमननाभ्यामवधारितेप्यात्मतत्त्वेचित्तविश्रांतिमंतरेणनिर्विक्षेपजीवन्मुक्तिसुखाप्राप्ति रितितदर्थंसमाध्यभ्यासेप्वप्रमादेनवोधवर्धनमावश्यकमित्युद्दालकचरित्रवर्णनमुखेनोपदिदिक्षुस्तदवतारायप्रथमंचित्तचरित्रेप्वविश्वसनीयतामाह ॥ परिदीर्घास्विति ॥ ऐहि कामुष्मिकदूरस्थविपयासंगात्परिदीर्घासुवासनाप्रचुरत्वात्तन्वीपुप्रमाद्यतोझटित्येवसमाधिसुखविच्छेदक्षतहेतुत्वात्सुतीक्ष्णासुआत्मप्रतिबिंबग्रहणयोग्यतालक्षणनैर्मल्यात्सिता सुअतएवक्षुरधारोपमानासुचित्तस्यवृत्तिपुचारिव्येपुप्रमादाद्विश्वस्तोमातिष्ठेत्यर्थः ॥ १ ॥ सत्कुलक्षेत्रेजातायांकायलतायांचित्तशुद्धिश्रवणादिदोहदोपायैरियंपरमात्मपरिच यलक्षणाबुद्धिवल्लरीतवजातातांबाह्यदृश्यव्यावृत्तिलक्षणविवेकाम्बुसेकेनवर्द्धयेत्यर्थः ॥ २ ॥ साचवाल्यात्प्रभृतिसिच्यमानावर्धतेयावद्वंकादिनाकायलताम्लानीपतनसंभा

श्रीवसिष्ठउवाच ॥ ॥ परिदीर्घासुतन्वीपुसुतीक्ष्णासुसितासुच ॥ क्षुरधारोपमानासुचित्तवृत्तिपुतिष्ठमा ॥ १ ॥ कालेनमहताक्षेत्रेजा तेयंबुद्धिवल्लरी ॥ वृद्धिंविवेकसेकेननयतांनयकोविद ॥ २ ॥ यावन्म्लायतिनोकायलतिकाकालभास्वता ॥ भूतलेऽपतितांतावदेनामुद्धृ त्यधारय ॥ ३ ॥ मद्वाक्यार्थैकतत्त्वज्ञमद्वाक्यार्थैकभावनात् ॥ सुखमाप्नोपिसर्पारिर्यथाभ्ररवभावनात् ॥ ४ ॥ उद्दालकवदालूनंविशीर्णं भूतपंचकम् ॥ कृत्वाकृत्वाधियाधीरधीरयांतर्विचारय ॥ ५ ॥ ॥ श्रीरामउवाच ॥ ॥ केनक्रमेणभगवन्मुनिनोद्दालकेनतत् ॥ भूतपंच कमालूनंकृत्वांतःप्रविचारितम् ॥ ६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शृणुरामयथापूर्वंभूतवृंदविचारणात् ॥ उद्दालकेनसंप्राप्तापरमादृष्टिर क्षता ॥ ७ ॥ जगज्जीर्णगृहस्यास्यकोणेकस्मिंश्चिदातते ॥ भूमेरनिलदिग्व्याप्तिभूभृद्भांडसमाकुले ॥ ८ ॥ गंधमादनशैलेंद्रनाम्निकाचित्कि लस्थली ॥ विद्यतेकीर्णकुसुमाद्रुमकर्पूरकेसरा ॥ ९ ॥ विचित्रवर्णविहगानानावल्लीविलासिनी ॥ वनेचरव्याप्ततटीपुष्पकेसरभासिनी ॥ १० ॥ क्वचित्स्फीतमहारत्नाक्वचिल्लोलांबुजोत्पला ॥ क्वचिन्नीहारकबरीसरसीदर्पणाक्वचित् ॥ ११ ॥

वनात्तदुद्धारोप्यशक्योदूरेतन्मंजरीवर्द्धनमित्याशयेनाह ॥ यावदिति ॥ भूतलेअपतितांएनांकायलतांगुरुशुश्रूपाश्रवणादिनाउद्धृत्यबुद्धिवल्लरींपालयेत्यर्थः ॥ ३ ॥ विवेकसे कश्चवक्ष्यमाणाख्यानरूपमद्वाक्यार्थस्थैवश्रुत्वावधार्यपुनःपुनर्भावनंतत्रैवसर्वमननयुक्तीनांसत्त्वादित्याशयेनाह ॥ मद्वाक्येति ॥ सर्पारिर्मयूरोयथाअभ्ररवस्यमेघगर्जितस्य भावनात्सुखमाप्नोतितद्वदित्यर्थः ॥ ४ ॥ तामेवाख्यायिकामवतार्यतदर्थंविचारकर्त्तव्यतामाह ॥ उद्दालकवदिति ॥ देहाद्यारंभकंबाह्यप्रपंचारंभकंचभूतपंचकंतत्त्वंपदार्थशो धपरयाधियाअन्नेनसोम्यशुंगेनापोमूलमन्विच्छेतिश्रुतिदर्शितयुक्त्याकारणव्यतिरिक्तकार्यांकुरापलापादालूनंमूलाविद्याविशरणाद्विशीर्णंचकृत्वातदधिष्ठानसन्मात्रान्वेपणे धीरेभ्योपिधीरयाधियाअंतर्विचारयेत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ भूभृतएवन्युब्जीकृतभांडानितैःसमाकुलेइतिगृहकोणसाम्योपपादकंविशेषणम् ॥ ८ ॥ पुष्पितद्रुमाएवकर्पूरस दृशपरागैःकेसरैश्चसर्वतोव्याप्तत्वात्कर्पूरकेसरायस्याम् ॥ ९ ॥ १० ॥ सरस्योमहासरांस्येवदर्पणानियस्याम् ॥ ११ ॥

सानौप्रस्थप्रदेशे ॥ १२ ॥ मानीअवश्यंयत्नैःपुरुपार्थंसाधयिप्यामीत्यभिमानवान्आगमानुमानादिमानकुशलश्च ॥ महामतिरक्षुद्रमनाः ॥ १३ ॥ शुभाशयःप्रवोधानुकूलसु
कृतसंभृतांतःकरणः ॥१४॥ क्रमैरभ्यासपरिपाकक्रमैः ॥ नवत्तुरावत्तुर्वसंतः ॥१५॥ इमंवक्ष्यमाणप्रकारंचिंतयामास ॥ कांतमानसःशुभचित्तः ॥ क्षांतमानसइतिपाठस्पष्टम्
॥ १६ ॥ प्राप्यानांपुरुपार्थानांमध्येप्रधानंप्राप्यंमोक्षाख्यंकिंतत्स्यात् ॥ १७ ॥ त्यक्तानिमननानिमनोव्यापारायत्र ॥ १८ ॥ भोगसंविदोभोगतृष्णाः ॥ १९ ॥ २० ॥ आ
भासमात्रेणस्थितमप्युपेक्ष्यमाणत्वादुज्झितासंगम् ॥ २१ ॥ मत्तांअविवेकप्रवृद्धाम् ॥ २२ ॥ क्रियांवाह्यप्रवृत्तिम् ॥ आकुलांव्यग्रचित्ताम् ॥ २३ ॥ विकल्पैःपर्यस्तंविक्षि

तत्रकस्मिंश्चिदुदितेसानौसरलपादपे ॥ आगुल्फाकीर्णकुसुमेस्निग्धच्छायमहाद्रुमे ॥१२॥ उद्दालकोनाममुनिर्मौनीमानीमहामतिः ॥
अप्राप्तयौवनःपूर्वमुवासोद्दामतापसः ॥ १३ ॥ प्रथमंतुवभूवासावल्पप्रज्ञोविचारवान् ॥अप्राप्तपदविश्रांतिरप्रवुद्धःशुभाशयः॥१४॥
ततःक्रमेणतपसाशास्त्रार्थनियमैःक्रमैः ॥ विवेकआजगामैनंनवत्तुरिवभूतलम् ॥ १५ ॥ अथेमंचिंतयामाससंसारामयभीरुधीः ॥
एकांतएवनिवसन्कदाचित्कांतमानसः ॥ १६॥ किंतत्प्राप्यंप्रधानंस्याद्यद्विश्रांतौनशोच्यते ॥ यत्प्राप्यजन्मनाभूयःसंवंधोनोपजायते
॥ १७॥ कदाहंत्यक्तमननेपदेपरमपावने ॥ चिरंविश्रांतिमेष्यामिमेरुशृंगइवांवुदः ॥ १८ ॥ कदाशममुपैष्यंतिममांतर्भोगसंविदः ॥आ
लोलकल्लोलरवाऊर्मयोंवुनिधाविव ॥१९॥इदंकृत्वेदमप्यन्यत्कर्त्तव्यमितिकल्पनाम्॥कदांतर्विहसिष्यामिपदविश्रांतयाधिया॥२०॥
कदाविकल्पजालंमेनलगिष्यतिचेतसि ॥ स्थितमप्युज्झितासंगपयःपद्मदलेयथा ॥ २१ ॥ कदावहुलकल्लोलांनावापरमयाधिया॥
परितीर्णोभविष्यामिमत्तांतृष्णातरंगिणीम् ॥ २२ ॥ कदेमांजागतैर्भूतैःक्रियमाणामसन्मयीम् ॥ क्रियामपहसिष्यामिवाललीलामि
वाकुलाम् ॥ २३ ॥ कदाविकल्पपर्यस्तंमनोदोलावदोलनम् ॥ शममेष्यतिमेशांतवातौजसइवभ्रमः ॥ २४॥ कदोदितवपुर्भासाविह
सञ्जागतीर्गतीः ॥ अंतःसंतोपमेष्यामिविराडात्मेवपूर्णधीः ॥ २५॥ अंतःसमसमाकारःसौम्यःसर्वार्थनिस्पृहः॥ कदोपशममेष्यामिमं
थमुक्तामृताब्धिवत् ॥ २६ ॥ कदेमामचलाद्दृश्यश्रियमाशाशतात्मिकाम् ॥ सर्वांसुपुप्तवत्पश्यन्भविष्याम्यंतरातंतः ॥२७॥ सवाह्याभ्यं
तरंसर्वंशांतकल्पनयाधिया ॥ पश्यंश्चिन्मात्रमखिलंभावयिष्याम्यहंकदा ॥ २८ ॥

तम् ॥ दोलेवअवदोलनंयस्यतदविश्रांतम् ॥ शांतवातौजसःप्रशांतोन्मादवातरोगस्यभ्रमोविक्षिप्ततेव ॥ २४ ॥ उदितवपुपआविर्भूतस्वरूपस्यभासास्वप्रकाशस्फुरणेन ॥ विरा
ट्ब्रह्मांडशरीरआत्मेवस्वांतःपूर्णधीः ॥ २५ ॥ समेनपरमात्मनासमएकरसः समेनसमाहितेनविष्णुनासमःसश्रीकश्चआकारोयस्य ॥ सर्वेष्वर्थेपुधर्मार्थकामेपुअमृतकौस्तुभादि
पुचनिस्पृहः ॥ मंथेनमथनविक्षेपेणमुक्तोऽमृताब्धिःक्षीरार्णवस्तद्वत् ॥ २६ ॥ सुपुप्तवत्सन्मात्रात्मनापश्यन् ॥ २७ ॥ भावयिष्यामितद्भावनयास्थिरोभविष्यामि ॥ २८ ॥

१ नतद्दत्यपिपाठः

परांचित्तांचिदेकरसताम् ॥ परंपरमात्मानंपुरःस्थितपुरुषांतरंच ॥ जात्यंधइतिभावप्रधानोनिर्देशः ॥ जात्यंधतासदृशानादिमूलाज्ञानापगमादितिभावः ॥ २९ ॥ तन्वींबाधिता नुवृत्तिरूपत्वात्तुच्छामल्पावशिष्टांचायुःशेषलक्षणांकालकलामालास्पर्शित्वाद्दूरादेवालोकयिष्यामीत्यर्थः ॥ ३०॥३१॥ जाड्येनमौर्ख्येणहिमेनचजीर्णजरितंहृदंबुजंयया ॥ दोषोऽविद्यातमस्तल्लक्षणायामिनीरात्रिः ॥३२॥ निर्विकल्पसमाधिनाशांतमननश्चिदेकरस्यविगलितमनोवृत्तिः ॥ ३३ ॥ मानोहंकारस्तल्लक्षणोमातंगःस्वेस्वांशभूताअभिमा नवृत्तयएवमहांतोमदप्रवाहायस्य ॥ सत्त्वंपरमार्थसन्मात्रंतदवबोधलक्षणेनहरिणासिंहेन ॥३४॥ निरंशेनिर्विकल्पेध्यानेविश्रांतिर्यस्य ॥ मूकस्यमौनव्रतिनोममूर्द्धनि ॥ तार्णं

कदोपशांतचित्तात्माचित्तामुपगतःपराम् ॥ परमालोकमेष्यामिजात्यंधविगमादिव ॥ २९ ॥ कदाभ्यासोपलभ्येनचित्प्रकाशेनचारुणा ॥ दूरादालोकयिष्यामितन्वींकालकलामिमाम् ॥ ३० ॥ ईहितानीहितैर्मुक्तोहेयोपादेयवर्जितः ॥ कदांतस्तोषमेष्यामिस्वप्रकाशपदेस्थितः ॥ ३१ ॥ कदाशाकौशिकीकीर्णाजाड्यजीर्णहृदंबुजा ॥ क्षयमेष्यतिकृष्णेयंकदामेदोषयामिनी ॥ ३२ ॥ कदोपशांतमननोधरणीधरकंदरे ॥ समेष्यामिशिलासाम्यंनिर्विकल्पसमाधिना ॥ ३३ ॥ कदामेमानमातंगःस्वाभिमानमहामदः ॥ सत्त्वावबोधहरिणाहतोनाशमुपैष्यति ॥ ३४ ॥ निरंशध्यानविश्रांतेर्मूकस्यममूर्द्धनि ॥ कदातार्णंकरिष्यंतिकुलायंवनघूर्णिकाः ॥ ३५ ॥ कदानिःशंकमुरसिध्यानधीरधियःखगाः ॥ ममविश्रांतिमेष्यंतिशैलस्याण्वचलस्थितेः ॥ ३६ ॥ तृष्णाकरंजजटिलांजन्मजर्जरगुल्मिकाम् ॥ संसारारण्यसरसींत्यक्त्वायास्याम्यहंकदा ॥ ३७ ॥ इतिचिंतापरवशोवनउद्दालकोद्विजः ॥ पुनःपुनस्तूपविशन्ध्यानाभ्यासंचकारह ॥ ३८ ॥ विषयैर्नीयमानेतुचित्तेमर्कटचंचले ॥ नसलेभेसमाधानप्रतिष्ठांप्रीतिदायिनीम् ॥ ३९ ॥ कदाचिद्बाह्यसंस्पर्शपरित्यागादनंतरम् ॥ तस्यागच्छच्चित्तकपिःप्रोद्वेगंसत्त्वसंस्थितौ ॥ ४० ॥ कदाचिदांतरान्स्पर्शान्परित्यज्यमनःकपिः ॥ लोलत्वात्तस्यसंयातोविषयंविषदग्धवत् ॥ ४१ ॥ कदाचिदुदितार्काभंतेजोदृष्ट्वांतरेमनः ॥ विषयोन्मुखतांयाततस्यतामरसेक्षण ॥ ४२ ॥

तृणमयंकुलायंनीडम् ॥ घूर्णिकाःपक्षिभेदाः ॥ ३५ ॥ ध्यानेधीरास्थिराधीर्यस्य ॥ उरसिउरोलंबिजटापरचितनीडइतियावत् ॥ ३६ ॥ तृष्णालक्षणैस्तीररुहैःकरंजैर्जटिलाम् ॥ जन्मान्येवकामादिमृगसंचारजर्जराणिगुल्मांतराणियस्याम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ प्रत्याहारेणवाह्यानांविषयसंस्पर्शानांत्यागादनंतरंसत्त्वगुणप्रधानसमाधिसंस्थितौप्रसक्तायांरजसाक्षोभ्यमाणंभयारत्यालस्यादिरूपंप्रोद्वेगमगमत् ॥ अथवासत्वसंस्थितौसात्विकदेवादिभोग्येविषयेसात्विकवृत्तिसुखास्वादेवाप्रोद्वेगंमनोरथैश्चलनमगमत् ॥ ४० ॥ आंतरान्समाधिसुखस्पर्शान् ॥ विषेणदग्धोमृतोयथालोकांतरंप्रयातितद्वत् ॥ तत्पक्षेआंतरान्जाठराग्निसंबंधिनःस्पर्शान्देहोष्मणः ॥ ४१ ॥ आंतरेहार्दब्रह्मणिउदितार्काभंतेजोदृष्ट्वा ॥ तथाचश्रुतिः ॥ नीहारधूमार्कानलानिलानांखद्योतविद्युत्स्फटिकशशीनाम् ॥ एतानिरूपाणिपुरःसराणिब्रह्मण्यभिव्यक्तिकराणियोगेइति ॥ ४२ ॥

आंतरस्यांध्यतमसोऽज्ञानांधकारस्यईषद्ब्रह्माभिव्यक्त्यात्यागंईषत्प्रशमंकृत्वानदानीमेवविषयवासनोद्बोधात्तल्लंपटंभूत्वेत्यर्थः ॥४३॥ बाह्याभ्यंतरस्पर्शौव्याख्यातौ ॥ तमसोऽज्ञानस्यतेजसआत्मज्योतिषश्चांतरालेसंधौलीनंसन्निद्रामेवशाश्वतींचिरानुवृत्तांस्थितिंलेभे ॥४४॥ दरीषुध्यानसंरूढमननःसपर्याकुलस्यमनसोमध्येमध्येवातेनसन्निहितजलेमग्नोमज्जितोद्रुमोयथातथातृष्णालक्षणैस्तीरतरंगकैर्दोलायितवपुस्सन्संकटेअनिष्ठदितिपरेणसहान्वयः॥४५॥४६॥विजहारसंचचार ॥ महामेरौसदैवार्कपादसंबंधदर्शनात्तत्रार्कविहरणकल्पनयोपमोक्तिः ॥ ४७ ॥ समस्तभूतदुष्प्रापामतएवसंशांतसर्वसंचाराम् ॥ कंदरामोक्षदशासाधारणेविशेषणे ॥ आसर्गसमाप्तेःकंदरैवविशेष्यते ॥ ४८ ॥ परमाकाशोब्रह्मेवशोभमानाम् ॥ ४९ ॥ ज्योतीरूपोरसश्चंद्रस्तदश्मभिश्चंद्रकांतैःसहसंप्रोतैर्घटितैर्मरकतमणिभिःकृतामिव ॥ ५० ॥ द्वारिसुस्निग्धशीतलच्छायाम ॥ ५१ ॥ कौद्वार

आंतरांध्यतमस्यागंकृत्वाविषयलंपटम् ॥ तस्योड्डीयमनोयातिकदाचित्त्रस्तपक्षिवत् ॥ ४३ ॥ बाह्यानाभ्यंतरान्स्पर्शांस्त्यक्त्वानिद्रां चतन्मनः ॥ तमस्तेजोंतिकेलेभेकदाचिच्छाश्वतींस्थितिम् ॥ ४४ ॥ इतिपर्याकुलस्यांतःसखलुध्यानवृत्तिषु ॥ दरीष्वन्वहमुग्रासुवातमग्नइवद्रुमः ॥ ४५ ॥ अतिष्ठद्ध्यानसंरूढमननःसंकटेयथा ॥ दोलायितवपुस्तुच्छतृष्णातीरतरंगकैः ॥४६॥ अथपर्याकुलमनाविजहारमुनिर्गिरौ ॥ प्रत्यहंदिवसाधीशोमहामेराविवैककः ॥ ४७ ॥ समस्तभूतदुष्प्रापामेकदाप्रापकंदराम् ॥ संशांतसर्वसंचारांमुनिर्मोक्षदशामिव ॥४८॥ अपर्याकुलितांवातैरप्राप्तमृगपक्षिणीम् ॥ अदृष्टांदेवगंधर्वैःपरमाकाशशोभनाम् ॥ ४९ ॥ पुष्पप्रकरसंछन्नांमृदुशाद्वलकोमलाम् ॥ ज्योतीरसाश्मसंप्रोतैःकृतांमरकतैरिव ॥ ५० ॥ सुस्निग्धशीतलछायांप्रकटांरत्नदीपकैः ॥ सुगुप्तांवनदेवीनामंतःपुरकुटीमिव ॥ ५१ ॥ कुलंबनाहिमालोकांनात्युष्णांनातिशीतलाम् ॥ शारदस्योदितार्कस्यहेमगौरींप्रभामिव ॥ ५२ ॥ बालालोकपरिम्लानांकोमलाशब्दमारुताम् ॥ मंजरीजटिलोपेतांबालांमालावतीमिव ॥ ५३ ॥ उपशमपदवीमिवानुरूपांकमलजविश्रमणाययोग्यरूपाम् ॥ कुसुमनिकरकोमलाभिरामांसरसिजकोटरकोमलांसमंतात् ॥ ५४ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपूपशमप्रकरणेउद्दालकमनोरथानामैकपंचाशःसर्गः ॥ ५१ ॥ ॥ ॥ ७ ॥ ॥

भूमौलंबंतेप्रसरंतीतिकुलंबनाः अहिमाःशीतनिवारणमात्रक्षमाआलोकायस्याम ॥ अतएवनात्युष्णांनातिशीतलाम् ॥ उदितार्कस्यबालसूर्यस्य ॥ हेमेवगौरींपीताम ॥ ५२ ॥ बालेनआलोकेनपरिम्लानांशुष्काम् ॥ अनेनगुहाप्राङ्मुखीतिगम्यते ॥ कोमलोमंदःअशब्दश्चमारुतोयस्याम् ॥ तेनप्रत्यग्भागेपिगवाक्षवत्तागम्यते ॥ मंजरीजटिलैस्तरुभिरुपेताम् ॥ अनेनसुरभितागम्यते ॥ स्वयंवरोद्युक्तांमालावतींबालांराजकन्यामिवस्थितामित्यर्थः ॥ ५३ ॥ सरसिजकोटरमिवकोमलाम् ॥ अतएवकमलजस्यधातुर्विश्रमणाययोग्यरूपां समंतात्कुसुमनिकरैश्चकोमलांरम्यां उपशमपदवीमिवसदैवाश्रयितुमनुरूपांकंदरांप्रापेतिपूर्वत्रसंबंधः ॥ ५४ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेएकपंचाशःसर्गः ॥ ५१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

गुहायामासनस्थेनसमाधिप्रविविक्षता ॥ चित्तप्रबोधनोपायाश्चिंतिताइहवर्णिताः ॥ १ ॥ चित्रेणबहुविधेनभ्रमणेनान्वेषणेन ॥ पद्मकुटीमिवेत्यनेनप्रविष्टस्यतत्रनिरतिशया नंदरसपानविश्रांतिर्भविष्यनीतिगम्यते ॥ १ ॥ आत्मनःपुर्यीसत्यलोकस्थायामपराजिताख्यायांभगवन्नाभिपद्मलक्षणायांवा ॥ २ ॥ अंतमध्येस्वंशरीरंगुच्छमिवयस्मिन्भा सतेतथाविधं अंतेपुस्थानितत्तत्पत्रसंबद्धानिपुष्पगुच्छानिवायस्मिंन्तथाविधमासनम् ॥ मेघान्विदधातीतिमेघविधिर्विरद्रोंऽभोदंमेघंदंकदंबितमिव ॥ तत्पक्षेअंतेपुप्रस्रुतानिस्वगु च्छानीवविद्युतोयस्मिन्निितियोज्यम् ॥ ३ ॥ तत्तस्यासनस्यपृष्ठेउपरितत्त्वकक्षास्थंमृगाजिनमितिवा ॥ ताराएवसाराबहुमूल्यरत्नानियस्मिन् ॥ अनेनतत्पृषताजिनमितिगम्य ते ॥ ४ ॥ चेतसोवृत्तीर्जडविषयत्यागेनतनुतांलघुताम् ॥ यथाअंबुदोवृष्यवृष्ट्यास्वजाड्यंविहायशुद्धवपुःशुभ्ररूपोमूकोनिर्गर्जनःसन्गिरिशृंगेउपविशतितद्वत् ॥ वृष्येत्यसमासे

श्रीवसिष्ठउवाच ॥ ॥सतांविवेशधर्मात्मागंधमादनकंदराम् ॥ चित्रभ्रमणसंप्राप्तामलिःपद्मकुटीमिव ॥ १ ॥ समाधानोन्मुखतयाप्र विशन्सव्यराजत ॥ सर्गव्यापारविरतावात्मपुर्यामिवाब्जजः ॥ २ ॥ चकारासनमम्लानैःपत्रैरंतस्वगुच्छकम् ॥ मृदुमेघविधिर्वृंदमंभोद मिवतत्रसः ॥ ३ ॥ सतत्रस्तारयामासपृष्ठेचारुमृगाजिनम् ॥ नीलरत्नतटेमेरुस्तारासारमिवांबरम् ॥ ४ ॥ सतत्रोपाविशद्वृत्तीश्चेतसस्त नुतांनयन् ॥ अंतःशुद्धवपुःशृंगेवृष्यमूकइवांबुदः ॥ ५ ॥ बुद्धवत्सुदृढंबद्धपद्मासनउदङ्मुखः ॥ पार्ष्णिभ्यांवृषणौधृत्वाचकारब्राह्मंज लिम् ॥ ६ ॥ वासनाभ्यःसमाहृत्यमनोमृगमुपप्लुतम् ॥ निर्विकल्पसमाध्यर्थंचकारेमांविचारणाम् ॥ ७ ॥ अयिमूर्खमनःकोर्थस्तवसंसा रवृत्तिभिः ॥ धीमंतोननिषेवंतेपर्यंतेदुःखदांक्रियाम् ॥ ८ ॥ अनुधावतियोभोगांस्यक्त्वाशमरसायनम् ॥ संत्यज्यमंदारवनंसयातिवि षजंगलम् ॥ ९ ॥ यदियासिमहीरंध्रंब्रह्मलोकमथापिवा ॥ तन्ननिर्वाणमायासिविनोपशमनामृतम् ॥ १० ॥ आशाशतावपूर्णत्वेत्वमे वंसर्वदुःखदम् ॥ त्यज्ययाहिपरंश्रेयःपरमेकांतसुंदरम् ॥ ११ ॥ इमाविचित्राःकलनाभावाभावमयात्मिकाः ॥ दुःखायैवतवोग्रायन सुखायकदाचन ॥ १२ ॥ शब्दादिकाभिरेताभिःकिंमूर्खहतवृत्तिभिः ॥ भ्रमस्यविरतंव्यर्थंमेघेमंडूकिकायथा ॥ १३ ॥ मनोमंडूकिकेव्य र्थमियंतंकालमंधया ॥ भ्रमंत्याभुवनंक्षिप्रंकिंसमासादितंत्वया ॥ १४ ॥

ल्यपूछांदसः ॥ ऋष्यमूकइतिपाठेऋष्यमूकाख्येसह्यशृंगे ॥ ५ ॥ बुद्धवत्प्रबुद्धकपिलादिवत् ॥ पद्मासनग्रहणंसिद्धासनोपलक्षणम् ॥ पार्ष्णिभ्यांवृषणौधृत्वेत्युक्तेस्तत्रैवोपप त्तेः ॥ ब्राह्मंजलिंब्रह्मादिगुरुपरंपराप्रणामांजलिम् ॥ ६ ॥ उपसमीपेविषयेपुप्लुतंधावितम् ॥ ७ ॥ अयीतिकोमलामंत्रणे ॥ ८ ॥ मंदारादेवतरुभेदास्तेषांवनम् ॥ ९ ॥ महीरं ध्रंपातालम् ॥ निर्वाणंनिरतिशयसुखविश्रांतिम् ॥ १० ॥ त्वंभोगाशाशतेनावपूर्णत्वेसतिएवंप्रागुक्तरीत्यासर्वदुःखदंभवसि ॥ अतःपरंभोगाशास्त्यज्यत्यक्त्वा ॥ ल्यपूछांदसः ॥ निर्दुःखनिरतिशयानंदरूपत्वादेकांतसुंदरंपरंश्रेयोनिर्वाणंयाहि ॥ ११ ॥ इष्टसंपादनंभावः अनिष्टनिवारणमभावस्तत्प्रचुराविचित्राःकलनाविषयाः ॥ १२ ॥ हतशब्दोनिंदा र्थः ॥ मंडूकिकायथामेघेशब्दादिकाभिर्व्यर्थवृत्तिभिर्भ्रमतितथेत्यर्थः ॥ १३ ॥ तदेवस्पष्टमाह ॥ मनइति ॥ भुवनंजगज्जलंच ॥ १४ ॥

किंचिदवाङ्मनसगम्यंविदेहकैवल्यसुखम् निर्वृतिंजीवन्मुक्तिविश्रांतिसुखंवहसिप्राप्नोषितस्मिन्शमेसर्ववृत्त्युपरमलक्षणेसमाधौहेचेतःपदंव्यवसायंकिंनानुवध्नासि ॥ १५ ॥
कलनादुःखायैवेतियदुक्तंतत्प्रत्येकंदृष्टांतोदाहरणैःप्रपंचयति ॥ आगत्येत्यादिना ॥ व्यर्थेनवहिर्मुखतालक्षणेनोत्थानेनउपबृंहितामुपचितांश्रोत्रेंद्रियतादात्म्यापत्तिरूपांश्रोत्र
नामागत्यप्राप्य ॥ प्राणन्नेवप्राणोनामभवतिवदन्वाक्पश्यंश्चक्षुःशृण्वन्श्रोत्रमितिलिंगादात्मनःश्रवणादिकालेश्रोत्रादिभावश्रुतेरितिभावः ॥ लुब्धकगीतघंटास्वनमोहितमृगव
त् ॥ १६ ॥ त्वक्तांत्वगिंद्रियताम् ॥ गजीकरेणुस्तस्यांतत्स्पर्शलुब्धगजेंद्रवत् ॥ सुशिक्षितयाकरिण्यावनगजेंद्रंप्रलोभ्याकृष्यगर्तपातादिनाहस्तिपकावध्नंतीतिप्रसिद्धम् ॥ १७॥
हेअंधदुरंधसांदुरन्नानांगर्द्धेनाभिलाषेण ॥ १८ ॥ चाक्षुषींवृत्तिंचक्षुष्टाम् ॥ प्रभाकांतिस्तत्संबंधीयोरूपचयोनानारूपभेदस्तदुन्मुखींतत्परणाम् ॥ १९ ॥ गजोन्मृदितपद्मगर्भ
हेअंधदुरंधसांदुरन्नानांगर्द्धेनाभिलाषेण
स्थभृंगवत् ॥ २० ॥ एकैकसक्तस्याप्येवमनर्थेसर्वसक्तस्यतवदुर्वारमेवनिरतिशयदुःखमित्याह ॥ कुरंगेति ॥ अनर्थैरनर्थसाधनैःशब्दादिभिर्युक्तैर्मिलितैः ॥ हेअज्ञेतिचित्तसंबो

यस्मात्किंचिदवाप्नोषियस्मिन्वहसिनिर्वृतिम् ॥ तस्मिंश्चेतःशमेमूर्खनानुवध्नासिकिंपदम् ॥ १५ ॥ आगत्यश्रोत्रतांमूर्खव्यर्थोत्थानोप
बृंहिताम् ॥ धियाशब्दानुसारिण्यामृगवन्माक्षयंव्रज ॥ १६ ॥ त्वक्तामागत्यदुःखायस्पर्शोन्मुखतयाधिया ॥ मूर्खमावद्धतामेहिगजी
लुब्धगजेंद्रवत् ॥ १७ ॥ रसनाभावमागत्यगर्द्धेनांधदुरंधसाम् ॥ मानाशमेहिवडिशपिंडीलंपटमत्स्यवत् ॥ १८ ॥ चाक्षुषींवृत्तिमाश्रि
त्यप्रभारूपचयोन्मुखीम् ॥ मागच्छदग्धतांमुग्धकांतिलुब्धपतंगवत् ॥ १९ ॥ घ्राणमार्गमुपाश्रित्यशरीरांभोजकोटरे ॥ गंधोन्मुखत
यावंधमात्वंसंश्रयभृंगवत् ॥ २० ॥ कुरंगालिपतंगेभमीनास्त्वेकैकशोहताः ॥ सर्वैर्युक्तैरनर्थैस्तुव्याप्तस्याज्ञकुतःसुखम् ॥ २१ ॥ हेचित्त
वासनाजालंबंधायभवतोहितम् ॥ स्वात्मनःसहजःफेनस्ततःकुकृमिणायथा ॥ २२ ॥ शरदभ्रवदागत्यशुद्धित्यक्तभवामयाम् ॥ यदि
शाम्यसिनिर्मूलंतदनंतोजयस्तव ॥ २३ ॥ क्षयोदयदशाधात्रींपर्यंतपरितापिनीम् ॥ जानन्नपिजगत्स्पृष्टिंनत्यक्ष्यसिविनंक्ष्यसि ॥ २४ ॥
करोम्यथकिमर्थंवातवैतदनुशासनम् ॥ विचारणवतःपुंसश्चित्तमस्तिहिनानघ ॥ २५ ॥ यावदज्ञानघनतातावत्प्रघनचित्तता ॥ याव
त्प्रावृड्जलदतातावन्नीहारभूरिता ॥ २६ ॥ यावदज्ञानतनुतातावच्चित्तस्यतानवम् ॥ प्रावृट्परिक्षयोयावत्तावन्नीहारसंक्षयः ॥ २७ ॥

धनम् ॥ २१ ॥ कुत्सितेनकृमिणाकोशकारकीटेनसहजःस्वाभाविकःस्वलालाफेनःस्वात्मनोबंधाययथाकोशात्मनाततोविस्तारितस्तथावासनाजालंस्वात्मनोबंधायऊहितं
कुवितर्कनिर्मितमित्यर्थः ॥ भवतःअहितमितिवाच्छित्त्वाततमितिलिंगविपरिणामेनयोज्यम् ॥ २२ ॥ कथंतर्हिप्रमादकृतस्यास्यबंधस्यजयस्तत्राह ॥ शरदभ्रमिति ॥ प्रथमंक
र्मोपासनादिभिःशरदभ्रवच्छुद्धिमागत्यततःश्रवणादिपरिपाकाज्ज्ञानोदयेननिर्मूलंयदिशाम्यसितत्तदाअनंतोजयइत्यर्थः ॥ २३ ॥ वक्तव्यंसर्वंपिंडीकृत्यैकोक्त्याह ॥ क्षयेति ॥
क्षयोदयौजन्ममरणेदशाबाल्याद्यादरिन्द्याद्याश्वतासांधात्रीम् ॥ पर्यंतेमरणोत्तरमपिनरकस्थावरादिगतिपरितापनशीलाम् ॥ जगत्स्पृष्टिंजागर्तांप्रवृत्तिम् ॥ २४ ॥ अथवा
अहितस्यचित्तस्यनानुशासनंकार्यंकिंतुबलान्निगृह्यविचारेणोच्छेदएवकार्यइत्याशयेनाह ॥ करोमीति ॥ अनुशासनंहितोपदेशम् ॥ २५ ॥ अथवानचित्तोच्छेदेपिपृथग्यत्नःका
र्यस्तस्यमूलाज्ञानान्वयव्यतिरेकानुविधायितयातदुच्छेदेनैवोच्छेदःसाध्यइत्याशयेनाह ॥ यावदितित्रिभिः ॥ २६ ॥ उत्तरौयावत्तावदितिनिपातौयावांस्तावानित्यर्थकौ ॥ २७ ॥

1106

तानवंवासनाक्षयेणसौक्ष्म्यम ॥ २८ ॥ अविवेकिनश्चित्तमनुशासनायोग्यमेव विवेकिनस्तुनश्यदवस्थंनष्टंवातसुतरांतथेत्याशयेनाह ॥ अनुशासनमिति ॥ नभसोवारिणःपवन स्यचआहननैस्ताडनैःसमंव्यर्थमितियावत् ॥ २९ ॥ उक्तमेवानुवादेनोपसंहरति ॥ तस्मादिति ॥ ३० ॥ आत्मनस्तदसंबंधदर्शनमेवतत्त्यागइत्याशयेनाह ॥ निर्विकल्पइति ॥ ॥ ३१ ॥ ममकोपराधोयेनमांविनाशायपरित्यजसीतिचेद्देहादावहंताद्दुर्दृष्ट्यवलंबनमेवेत्याह ॥ अयमिति ॥ साचदुर्दृष्टिःशंकाविषप्रयुक्ताविषूचिकेवमिथ्याहेतुकापिमूढानां विनाशायैवसंपद्यतइत्यपराधइत्यर्थः ॥ ३२ ॥ कुतोमिथ्यात्वमितिचेदनुपपन्नत्वादेवेत्याह ॥ अनंतस्येति ॥ इतिएवंरूपेपरिच्छिन्नेमनसितन्वीपरिच्छिन्नास्थितिर्देहाद्यहंभावे नस्थितिर्नसंभवतिनोपपद्यतइत्यर्थः ॥ वासिताकरिणीदंतीचतयोर्बिल्वांतस्थितिर्यथानसंभवतितथेत्यर्थः ॥ ३३ ॥ चित्तस्यत्याज्यत्वेहेत्वंतरमप्याह ॥ महाश्वभ्रीति ॥ हेचित्त

यावत्तानवमायातंशुद्धंचित्तंविचारतः ॥ तावत्तत्क्षीणमेवाहंमन्येशारदमेघवत् ॥ २८ ॥ अनुशासनमेतद्यदसतोनश्यतोथवा ॥ क्रियतेतन्नभोवारिपवनाहननैःसमम् ॥ २९ ॥ तस्मात्संक्षीयमाणत्वात्त्यजामित्वामसन्मयम् ॥ मौर्ख्यंपरममेवाद्धःपरित्याज्यानुशासनम् ॥ ३० ॥ निर्विकल्पोस्मिचिद्दीपोनिरहंकारवासनः ॥ त्वयाहंकारवीजेननसंबद्धोस्म्यसन्मय ॥ ३१ ॥ अयंसोहमितिव्यर्थदुर्दृष्टिरवलंबिता ॥ त्वयामूढविनाशायशंकाविषविषूचिका ॥ ३२ ॥ अनंतस्यात्मतत्त्वस्यतन्वीतिमनसिस्थितिः ॥ नसंभवतिबिल्वांतर्वासितादंतिनोयथा ॥ ३३ ॥ महाश्वभ्रीवगंभीरादुःखदावासताश्रिता ॥ त्वयैषावतचित्तेतिनैनामनुसराम्यहम् ॥ ३४ ॥ कःकिलायंमुधामोहोबालस्येवाविचारिणः ॥ अयंसोहमितिभ्रांतिस्त्वहंतापरिकल्पिता ॥ ३५ ॥ पादांगुष्ठाच्छिरोयावत्कणशःप्रविचारितम् ॥ नलब्धोसावहंनामकःस्यादहमितिस्थितः ॥ ३६ ॥ भरिताशेषदिक्कुंजंयत्स्यामेकंजगत्त्रये ॥ संवेदनमसंवेद्यंसर्वत्रविगतात्मकम् ॥ ३७ ॥ दृश्यतेयस्यनेयत्तानामपरिकल्पना ॥ नैकतानान्यतैवेहनमहत्तानचाणुता ॥ ३८ ॥ वेदतत्त्वांस्वसंवेद्यमाततंदुःखकारणम् ॥ विवेकजेनबोधेनतदिदंहन्यसेमया ॥ ३९ ॥

त्वयामहतीश्वभ्रीजीर्णकूपादिरिवगंभीराअदृश्यतलाकामक्रोधलोभादिसर्पवृश्चिकपिशाचालयत्वाद्दुःखदादुर्वासनैवस्वालयत्वेनाश्रितावतेतिखेदे ॥ अहंतुएनांनानुसरामीति तदनुसारिणंत्वांत्यजामीत्यर्थः ॥ ३४ ॥ किंचायंदेहःसआत्माहमितिभ्रांतिस्तुयात्वयाअहंतापरिकल्पिताअयंबालस्येवाविचारिणोमोहोविचारिणोममकःकिलनकश्चिदपीतिना स्त्येवेत्यर्थः ॥ ३५ ॥ तन्नास्तित्वमेवविमृश्यविशदयति ॥ पादांगुष्ठादित्यादिना ॥ कणशोविविच्येतिशेषः ॥ ३६ ॥ यद्यहंपदार्थोनास्त्येवतर्हिकस्त्वंतत्राह ॥ भरितेतिद्वाभ्याम ॥ भरिताशेषदिक्कुंजंदिक्कृतपरिच्छेदरहितम ॥ एकंवस्तुकृततद्रहितम ॥ असंवेद्यंक्रमसंवेद्यावस्थात्रयलक्षणकालकृतपरिच्छेदशून्यम् ॥ अतएवसर्वत्रसर्वेषुप्रकारेषुविगतोवस्त्वंतरात्मायस्य ईदृशंसंवेदनमेवाहंस्यामित्यर्थः ॥ ३७ ॥ इयत्तापरिच्छिन्नंरूपम ॥ एकताएकत्वसंख्या ॥ अन्यतातदन्यसंख्या ॥ महत्ताणुतेपरिमाणे ॥ ३८ ॥ यतोहंसंवेदनात्मातत्तस्मात्साक्षिभूतेनस्वेनसंवेद्यंत्वांचित्तंवेदपश्यामि ॥ ततोदुःखकारणत्वादेवइदंवक्ष्यमाणंविवेकमादायहन्यसे ॥ ३९ ॥

विवेचनप्रकारमेवदर्शयति ॥ इदमित्यादिना ॥ ४० ॥ स्पंदांशःसर्वोपिवातशक्तीनोप्राणानाम् ॥ अवबोधांशस्तुमहाचितःपरमात्मनः ॥ जरामृतिश्चेत्येतेकायकोटौ ॥ ४१ ॥ अन्यदहंपदार्थाद्व्यतिरिक्तम् ॥ ४२ ॥ ४३ ॥ यथाभूततयापरमार्थतयाविचारेमनःअहंन नत्त्वंचित्तमहं वासनापिनाहम् ॥ आत्मातुसर्वथाअहंतयानस्पृष्टइत्याह ॥ आत्मेति ॥ ४४ ॥ तस्मिन्नात्मनियद्यध्यारोपदृष्टिस्तर्ह्यहमेवसर्वत्राधिष्ठानमितिसर्वमेवाहम् ॥ यद्यपवाददृष्टिस्तर्हिनाहंकिंचिदपीतिनैकदेहमात्रपरिच्छिन्नाहंभावलक्षणइतरोहंकारक्रमोविद्यतइत्यर्थः ॥ ४५ ॥ अज्ञानलक्षणेनधूर्त्तेनकितवेनाहंतयावंचनयाचिरंपोथितःसंक्लेशितोस्मि ॥ लब्ध्येनेतिभावेक्तः ॥ विप्रलंभेनेत्यर्थः ॥ मृगपोतकइवेतिशेषः ॥ ल

इदंमांसमिदंरक्तमिमान्यस्थीनिदेहके ॥ इमेतेश्वासमरुतःकोसावहमितिस्थितः ॥ ४० ॥ स्पंदोह्विवातशक्तीनामवबोधोमहाचितः ॥ जरामृतिश्चकायेस्मिन्कोसावहमितिस्थितः ॥ ४१ ॥ मांसमन्यदसृक्चान्यदस्थीन्यन्यानिचित्तहे ॥ बोधोन्यःस्पंदनंचान्यत्कोसावहमितिस्थितः ॥ ४२ ॥ इदंघ्राणमियंजिह्वात्वगियंश्रवणेइमे ॥ इदंचक्षुरमौस्पर्शःकोसावहमितिस्थितः ॥ ४३ ॥ यथाभूततयानाहंमनोनत्वंनवासना ॥ आत्माशुद्धचिदाभासःकेवलोयंविजृंभते ॥ ४४ ॥ अहमेवेहसर्वत्रनाहंकिंचिदपीहवा ॥ इत्येवसन्मयीदृष्टिर्नेतरोविद्यतेक्रमः ॥ ४५ ॥ चिरमज्ञानधूर्त्तेनपोथितोस्मित्वहंतया ॥ वृकेणदृप्तेनाटव्यांलब्ध्येनपशुपोतकः ॥ ४६ ॥ दिष्ट्येदानींपरिज्ञातोमयैवाज्ञानतस्करः ॥ पुनर्नसंश्रयाम्येनंस्वरूपार्थापहारिणम् ॥ ४७ ॥ निर्दुःखोदुःखयोग्यस्यनाहंतस्यनचैषमे ॥ कश्चिद्भवतिशैलस्यतत्स्थएवयथांबुदः ॥ ४८ ॥ भूत्वात्वहमिदंवच्मिवेद्मितिष्ठामियामिच ॥ आत्मावलोकनेनाहमनहंकारतांगतः ॥ ४९ ॥ नूनमेवाहमेवैतेमन्येज्ञाश्चक्षुरादयः ॥ यांतुतिष्ठंतुवादेहेममैतेतुनकिंचन ॥ ५० ॥ कष्टंकोयमहंनामकथंकेनोपकल्पितः ॥ जगद्बालकवेतालस्तालोत्तालातुलाकृतिः ॥ ५१ ॥ एतावंतंचिरंकालंव्यर्थमालुठितोऽवटे ॥ अहमत्रव्रणोन्मुक्तदुरद्रौहरिणोयथा ॥ ५२ ॥ स्वार्थमालोकनेचक्षुर्यदितून्मुखतांगतम् ॥ तदहंनामकोसौस्याद्योस्मिन्दुःखेनमोहितः ॥ ५३ ॥ स्पर्शनायनिजेतत्त्वेयदिजातात्वगुन्मुखी ॥ तत्कोयंस्यादहंनामकुपिशाचइवोदितः ॥ ५४ ॥ रसेष्वभिनिपण्णेस्मिन्स्वक्रमेरसनेंद्रिये ॥ अहंमृष्टभुगित्येषकुतस्त्यःकुत्सितोभ्रमः ॥ ५५ ॥

ब्ध्येवेतिपाठःसाधुः ॥ पोतकोवत्सः ॥ ४६ ॥ स्वंपारमार्थिकंयद्रूपंतल्लक्षणस्यार्थस्यधनस्यापहारिणम ॥ ४७ ॥ परस्परविरुद्धस्वभावयोःसंबंधोपिनास्तिदूरेऐक्यमित्याशयेनाह ॥ निर्दुःखइति ॥ शैलस्यांबुदोयथाकश्चिदपिनभवतितद्वत् ॥ ४८ ॥ यदितेसर्वथाहंकारादिर्नास्तितर्हिकथंवचनादिनाव्यवहरसितत्राह ॥ भूत्वेति ॥ नटइवतात्कालिकेनतद्भावकल्पनेनाहंकारोभूत्वाइदंत्वदुपदेशवचनादिवच्मिचक्षुरादिनावेद्मि ॥ ४९ ॥ नूनंनिश्चितमेवमन्येइमेचक्षुरादयस्तत्त्वतोऽहमेव ॥ यदिमद्व्यतिरिक्तास्तर्ह्यज्ञा जडादेहेतिष्ठंतुयांतुवानैतेममकिंचनेत्यर्थः ॥ ५० ॥ तालादप्युत्तालादीर्घाअतुलाआकृतिर्यस्य ॥ ५१ ॥ इदानींप्राक्तनीमविचारदशामनुशोचति ॥ एतावंतमिति ॥ ५२ ॥ इदानींप्रतींद्रियविषयसंबंधमहंप्रत्ययास्पदंमृगयति ॥ स्वार्थमित्यादिना ॥ ५३ ॥ निजेतत्त्वेविपये ॥ ५४ ॥ स्वक्रमेस्वविषये ॥ सामान्येएकवचनंपदसंस्कारपक्षाश्रयात् ॥ ५५ ॥

शब्दशक्तिशब्दलक्षणविषयम् ॥ स्वार्थःश्रवणतृष्णातेनपीडितेवशीकृते ॥ आगमःप्रसंगः ॥ ५६ ॥ आत्मंभरितयास्वोदरपूरकतयागंधेनेतियावत् ॥ मातात्राभिमंता ॥ ५७ ॥ एषाउक्तस्थलेषुप्रसिद्धाभावनाअहंताकल्पना ॥ तस्यांभावनायामसत्यायांनिर्विषयायांसत्यामयंदेहःसःअहमितिभावःसंभ्रमोभ्रांतिरेवेतिसर्वथादेहाहंभाववासनात्याज्येत्यर्थः ॥ ५८ ॥ ननुवासनाभावेबाह्यप्रवृत्तीनांसर्वथोपरमःस्यादितिजीवनमेवपुरुषस्यनस्यात्तत्राह ॥ वासनाहीनमपीति ॥ एतत्शरीरंस्वार्थेजीवनहेतौकर्मणिवासनाहीनमपिप्रवर्त्तते ॥ दामव्यालकटानांप्राग्युद्धादिप्रवृत्तिवर्णनादितिभावः ॥ ५९ ॥ यदिप्रवर्त्ततेतर्हितत्प्रयुक्तंदुःखमपिभविष्यत्येवेतिवासनात्यागात्कोगुणस्तत्राह ॥ वासनेति ॥ तात्कालिकभोगाभासेअहंदुःखीतिनाभिमानःअपगाःभाविन्यस्तुसुखदुःखदृशोनानुभूयंतइतितत्प्रयुक्ताशोकमोहभयविषादचितोद्वेगादिसर्वसंतापशांतिरेवास्यगुणइति

शब्दशक्तिगतेश्रोत्रेवराकेस्वार्थपीडिते॥ तदहंकारदुःखस्यनिर्बीजस्यकआगमः ॥ ५६॥ आत्मंभरित्वेननिजेघ्राणेस्वंगंधमागते॥ अहंघ्रातेतियोमातातंचौरंनैववेद्म्यहम् ॥ ५७॥ मृगतृष्णाक्रमेणैषाभावनाव्यर्थभाविनी॥ भावस्तस्यामसत्यायांयःसोयमितिसंभ्रमः ॥५८॥ वासनाहीनमप्येतच्चक्षुरादींद्रियैःस्वतः॥ प्रवर्त्ततेवहिःस्वार्थेवासनानात्रकारणम्॥५९॥ वासनारहितंकर्मक्रियतेननुचित्तहे॥ केवलंनानुभूयंतेसुखदुःखदृशोग्रगाः॥ ६०॥ तस्मान्मूर्खाणींद्रियाणित्यक्त्वांतर्वासनांनिजाम्॥ कुरुध्वंकर्महेसर्वेनदुःखंसमवाप्स्यथ ॥ ६१॥ भवद्भिरेवदुःखायवासनावासितामुधा॥ बालैःपंकक्रीडनकंविनाशेनेवखिन्नता ॥ ६२॥ वासनाद्यादृशःसर्वाव्यतिरिक्तास्तुनात्मनः॥ जलादिवतरंगाद्याज्ञस्यैवान्यस्यनानघ॥ ६३॥ तृष्णयैवविनष्टाःस्थव्यर्थमिंद्रियबालकाः॥ कोशकारकुरूमयस्तंतुनेवस्वयंभुवा ॥ ६४ ॥ तृष्णयैवेहलुठथजरामरणसंकटे॥ भ्रमदृष्ट्येवशिखरिपथिकाःश्वभ्रभूमिषु॥ ६५॥ वासनैवेहभवतांहेतुरेकत्रबंधने॥ रज्जुःशून्याशयप्रोतामुक्तानामाततायथा ॥ ६६ ॥ कल्पनामात्रकलितासत्यैषाहिनवस्तुतः॥ असंकल्पनमात्रेणदात्रेणेवविलूयते ॥ ६७॥ एषाहिभवतामेवविमोहायक्षयायच॥ वातलेखेवदीपानांस्फुरतामपितेजसाम्॥ ६८॥

भावः ॥ ६० ॥ इदानीमिंद्रियाणिसंबोध्यामुमर्थंविविच्योपदिशति ॥ तस्मादित्यादिना ॥ ६१ ॥ बालैःप्रथमंपंकक्रीडनकमिवपश्चात्तद्विनाशेनखिन्नतेवचभवद्भिर्विषयार्जनेतद्विनाशेचदुःखायैवभोगवासनाऽज्ञात्मनिवासितेत्यर्थः ॥ ६२ ॥ अतएवविदुषामज्ञानबाधिताःसहस्वकार्यैःशुद्धात्मैवसंपन्नाइतिनपृथक्संतीत्याह ॥ वासनाद्याइति ॥ आद्यपदेनतत्कार्यरागप्रवृत्त्यादिर्गृह्यते ॥ ज्ञस्यैवतानसंतिनान्यस्याज्ञस्येत्यर्थः ॥ ६३ ॥ अतएवाज्ञैस्तृष्णयैवेंद्रियाणिनाशितानीत्याह ॥ तृष्णयैवेति ॥ स्वयंभुवास्वतएवोद्भूतया ॥ ६४ ॥ इहअधःसंसारशिलाकंटकभुविलुठथ ॥ यथाशिखरिपथिकाःपर्वतशिखरेगच्छंतःपित्तवशाद्भ्रमंत्यादृष्ट्याशिखरात्पतिताअधोविषमेपुलुठंतितद्वत ॥ ६५ ॥ यथामुक्तानांशून्येछिद्रितेआशयेगर्भेप्रोताआततादीर्घारज्जुस्तंतुर्बंधनेहेतुस्तद्वत् ॥ ६६ ॥ कल्पनाभ्रांतिस्तन्मात्रेणकलितासंपादिता ॥ एषावासना ॥ ६७ ॥ भवतांचित्तेंद्रियाणाम् ॥ वर्द्धमानाविमोहाय ॥ क्षयायमरणादिदुःखाय ॥ स्फुरतांतेजसामुल्काविद्युदादीनामपि ॥ ६८ ॥

तस्मादुक्तहेतोःसर्वेंद्रियाणांकोशवदाधारहेचित्तत्वंसर्वेंद्रियैःसहऐक्यमैकमत्यमुपेत्यनूनंनिश्चयेनात्मानंस्वमसत्स्वरूपंमिथ्याभूतमित्यालोक्यस्वसाक्षिनिर्वाणामलबोधमात्रंत स्वतोभूत्वाआत्स्वनभूयश्चित्तरूपमादत्स्वेत्यर्थः ॥ ६९॥ सर्वशास्त्रतत्त्वज्ञाभिमतायेद्वैतवासनापरिहारास्तल्लक्षणयाअभिलपितविपयत्यागलक्षणयामंत्रयुक्त्याअनंतामसंख्यदुः खामहंस्थितिरहंकारस्तद्वासनालक्षणांविपमविपसदृशाज्ञानप्रयुक्तांविपूचिकांनिपुणमपास्यविभवोविसंसारःसन्भियांमरणादिसर्वभयानामभूमिरनास्पदंभगवान्पूर्णानंदात्मै वभवेत्यर्थः ॥ ७० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेद्विपंचाशःसर्गः ॥ ५२ ॥ ॥ ७ ॥ ॥ वासनाभिरलेपित्वमहंकारेणचात्मनः ॥ शरीरमनसो वैरमित्याद्यत्रोपपाद्यते ॥ १ ॥ परिच्छिन्नस्तिलादिःकुसुमादिभिर्वास्यतेआत्मचित्तुनविद्यतेपारंपरावधिःपर्यंताःपूर्वपश्चिमपार्श्वावधयश्चयस्यास्तथाविधस्वरूपा ॥ तथास्थू लाःपृथिव्यप्तेजोवायवःकस्तूर्यादिनावास्यंतेचित्तुपरमाणोरपंचीकृताकाशादव्याकृताकाशाच्चाणुःसूक्ष्मतमाअतस्तस्याआक्रांतौईपदपिस्पर्शेवासनाद्योनशक्ताइत्यर्थः॥ सा क्षात्तत्स्पर्शाशक्तावपितच्चेत्यस्पर्शद्वारातत्संबंधप्रसक्तिशंकावारणायविशिनष्टि ॥ अचेत्येति ॥ १ ॥ ननुत्वदप्रकाशितविपयेवासनोदयादर्शनात्त्वय्यैववितताास्ताःकथंत्वदस्पर्शि

हेचित्तसर्वेंद्रियकोशतस्मात्सर्वेंद्रियैरैक्यमुपेत्यनूनम् ॥ आलोक्यचात्मानमसत्स्वरूपंनिर्वाणमेवामलबोधमास्व॥ ६९॥ विपयविप विपूचिकामनंतांनिपुणमहंस्थितिवासनामपास्य॥ अभिमतपरिहारमंत्रयुक्त्याभवविभवोभगवान्भियामभूमिः॥७०॥ ॥इ०वा० वा०दे०मोक्षोपायेपूपशमप्रकरणेउद्दालकविचारोनामद्विपंचाशःसर्गः ॥ ५२ ॥ ॥७॥ ॥उद्दालकउवाच॥ ॥अपारप र्यंतवपुःपरमाण्वणुरेवच॥ चिदचेत्यातदाक्रांतौनशक्तावासनादयः ॥ १ ॥ मनःशेमुप्यहंकारप्रतिबिंबैर्जडेंद्रियैः॥ वासनाविततांःशू न्यावेतालत्रासनोद्यताः॥ २॥ तत्कृतेभ्योविचारेभ्यःअनुभूतेभ्योपिभूरिशः॥ भूयोप्यनुभवत्यंतरहंहिचिदलेपिका ॥ ३ ॥ स्वदुर्भावोपर चितांदेहस्संसारसंस्थितिम्॥ गृह्णात्वथत्यजतुवाप्यहंहिचिदलेपिका॥ ४॥ चितोनजन्ममरणेसर्वगायाश्रितःकिल॥ किंनाममियतेजं तुर्मार्यतेकेनवापिकिम्॥ ५॥ चितोनजीवितनार्थःसर्वात्मासर्वजीवितम्॥ किंप्राप्स्यतिकदात्मैपाप्रायतायदिजीवितम्॥ ६॥

न्यस्तत्राह ॥ मनइति ॥ नमयाताःवितताःकिंतुजडेंद्रियैरुपात्तानांविपयाणांशेमुप्यांबुद्धौअहंकारेचचित्प्रतिबिंबैर्हेतुभिस्तत्सूक्ष्मावस्थारूपाअतएवशून्याअसद्रूपाअपिवेता लादिवत्त्रासनोद्यतावासनाविततविस्तारितामनःअनुभवतीतिपरेणान्वयः ॥ २ ॥ जागरेभूरिशःकृतेभ्योविपयविचारेभ्योऽनुभूतेभ्यश्चविपयेभ्योभूयोपिस्वप्नेंऽतर्नाडीच्छिद्रांत र्वासनामयानेवविपयांस्तन्मनःअनुभवति ॥ नचबुद्ध्यहंकारकृतेनमनोनुभूतेनवाममलेपः ॥ हियस्मादलेपिकाचिदेवाहंनमनआदिसंघातात्मेत्यर्थः ॥ तथाचश्रुतिः ॥ सयत्तत्र किंचित्पश्यत्यनन्वागतस्तेनभवत्यसंगोह्ययंपुरुपइति ॥ ३ ॥ एवंस्थूलदेहकृतेनापिनलेपइत्याह ॥ स्वदुर्भावेति ॥ दुर्भावादुश्चेष्टास्तैरुपरचिताम् ॥ ४ ॥ अतएवजन्ममरणेअ पिस्वस्यनस्तइत्याह ॥ चितइति ॥ सर्वगत्वाच्चित्त्वाच्चेतिहेतुगर्भेविशेषणेइतिद्योतनायकिलेतिनिपातः ॥ अविनाश्यद्वितीयात्मदर्शनेवध्यघातकबुद्धिर्निर्विपयैवसंपद्यतइत्यात्यं तिकाभयसिद्धिरित्याशयेनाह ॥ किंनामेति ॥ ५ ॥ यस्यहिजीवितेनार्थास्तस्यमरणाद्भयंस्यान्नत्वसौचितइत्याह ॥ चितइति ॥ यतःसर्वात्माचिदेवसर्ववस्तूनांजीवितम् ॥ एव मस्याःसर्वदेशकालवस्तुपुप्रायताविस्तृतास्वरूपंचिदेवयदिजीवितंतदातेनजीवितेनकदाकिमन्यदप्राप्तंप्राप्स्यतियदर्थंतदिच्छेत्यर्थः ॥ ६ ॥

मरणजीवनयोर्मनःकल्पनामात्रत्वादपिनतद्द्वेषवांछाप्रसक्तिरित्याह ॥ जीव्यतइति ॥७॥ योहिदेहाहंभावतांप्राप्तःसदेहभावाभावरूपैर्जन्ममरणैर्गृह्यते ॥८॥ देहाहंभावनाकिमहंकारस्यउतमनसउतपदार्थवर्गस्य तत्राद्यौनप्रमाणवेद्यावित्यसद्रूपौ पदार्थास्त्वत्यंतजडानाभिमानयोग्याइतिनिर्विषयानिराश्रयाचसेत्याह ॥अहंभावइति॥ अहंभावोहंकारः ॥९॥ उक्तमेवार्थंभंग्यंतरेणविस्तरेणाह ॥ रक्तेत्यादिना ॥१०॥ आत्मंभरितयास्वस्वविषयमात्रव्यापृततालक्षणस्वोदरमात्रपूरकतयानाहंकारपुष्टिलक्षणपरोपकारितयेत्यर्थः ॥ पदार्थत्वेपदार्थस्वरूपे ॥ ११ ॥ गुणाःसत्वादयोगुणानामर्थैप्रकाशप्रवृत्तिमोहलक्षणेस्वव्यापारे ॥ प्रकृतौगुणसाम्यावस्थालक्षणेस्वभावेप्रकृतिःप्रधानाख्यामाया ॥ सद्ब्रह्मसतिस्वात्मभूतेसत्स्वभावेएवविश्रांतम् ॥ १२ ॥ इहास्मिन्देहेयश्चिदात्मासोपिसर्वगत्वादिविशेषणंपरमात्मानमेवाहमितिसंधायस्थितः ॥ सोपिनाहंकारास्पदमित्यर्थः ॥ १३ ॥

जीव्यतेम्रियतेचेतिकुविकल्पकमालिनी ॥ कलनामनसामेवनात्मनोविमलात्मनः ॥ ७ ॥ योत्यहंभावतांप्राप्तोभावाभावैःसगृह्यते ॥ आत्मनोनास्त्यहंभावोभावाभावाःकुतोस्यते ॥ ८ ॥ अहंभावोमुधामोहोमनश्चमृगतृष्णिका ॥ जडःपदार्थसंभारःकस्याहंकारभावना ॥ ९ ॥ रक्तमांसमयोदेहोमनोनर्थंविचारणात् ॥ जडाश्चित्तादयःसर्वेकुतोहंभावभावना ॥ १० ॥ आत्मंभरितयानित्यमिंद्रियाणिस्थितान्यलम् ॥ पदार्थाश्चपदार्थत्वेकुतोहंभावभावना ॥ ११ ॥ गुणागुणार्थेवर्त्तंतेप्रकृतौप्रकृतिःस्थिता ॥ सदेवसतिविश्रांतंकुतोहंभावभावना ॥ १२ ॥ सर्वगंसर्वदेहस्थंसर्वकालमयंमहत् ॥ केवलंपरमात्मानंचिदात्मैवेहसंस्थितः ॥ १३ ॥ एवंकिमाकृतिःकोवाकिमादेशश्चकिंकृतः ॥ किंरूपःकिंमयःकोहंकिंगृह्णामित्यजामिकिम् ॥ १४ ॥ तेनाहंनामनेहास्तिभावाभावोपपत्तिमान् ॥ अनहंकाररूपस्यसंबंधःकेनमेकथम् ॥ १५ ॥ असत्यलमहंकारेसंबंधःकस्यकेनकः ॥ संबंधाभावसंसिद्धौविलीनाद्वित्वकल्पना ॥ १६ ॥ एवंब्रह्मात्मकमिदंयत्किंचिज्जगतिस्थितम् ॥ सदेवास्मितदेवास्मिपरिशोचामिकिंमुधा ॥ १७ ॥ एकस्मिन्नेवविमलेपदेसर्वगतेस्थिते ॥ अहंकारकलंकस्यकथंनामोदयःकुतः ॥ १८ ॥ नास्त्येवहिपदार्थश्रीरात्मैवास्तीहसर्वगः ॥ पदार्थलक्ष्म्यांसत्यांचसंबंधोस्तिनकस्यचित् ॥ १९ ॥

एवंसतिअहमित्येतद्देहमात्राभिमानीकिमाकृतिःकिंजातीयःकीदृशसंस्थानोवातत्त्वतःकोवाकिमादेशःकइतिनिर्देशार्हःकेनहेतुनावाकृतःकिंवर्णःकस्यविकारः ॥ तद्भावेनकिंवागृह्णामिअतद्भावेनकिंवात्यजामि ॥ १४ ॥ अतोनिर्वक्तुमयोग्यत्वान्मिथ्यैवाहंकारइतिनात्मनस्तत्संबंधइत्याह ॥ तेनेति ॥ भावत्वेअभावत्वेवाउपपत्तिमान् ॥ १५ ॥ द्वित्वकल्पनात्वमहमितिद्विविध्यकल्पना ॥ १६ ॥ एवंसद्वस्तुव्यतिरिक्तेदंपदार्थपरिमार्गणेपितस्यमिथ्यात्वमेवपर्यवस्यतीतिसद्ब्रह्माद्वैतसाम्राज्यंप्रतिष्ठितमितिनशोकस्यावकाशइत्याह ॥ एवमिति ॥ १७ ॥ सदद्वैतसिद्धिबलादप्यहंकारोनिरसितुंशक्यइत्याशयेनाह ॥ एकस्मिन्निति ॥ १८ ॥ अस्तुवापदार्थलक्ष्मीस्तथापिसंबंधोदुर्वचइतिनतत्साधकप्रमाणादिप्रसरात्तत्सिद्धिरितिप्रौढिनिदर्शयन्नाह ॥ पदार्थलक्ष्म्यामिति ॥ १९ ॥

असंबंधमेवोपपादयति ॥ इंद्रियैरिति ॥ अंगैःस्वावयवत्वेनकल्पितैरिंद्रियैरिंद्रियैःसर्वेंद्रियैर्मनोमनस्येवस्वमवद्वल्गतिनवाह्यार्थान्स्पृशंक्षमते ॥ चित्तुइंद्रियैर्वाह्यार्थैश्चअलिप्ततनुरसंगस्वभावा ॥ एवंचकस्यकेनसहसंबंधःकथंवाकेनवासिद्ध्यतीत्यर्थः ॥ २० ॥ असंबंधेदृष्टांतमाह ॥ उपलेति ॥ २१ ॥ कुतस्तर्हिलौकिकानांममेदंधनमित्यादिव्यवहारस्तत्राह ॥ असदिति ॥ विपर्यस्तंभ्रांतम् ॥ २२ ॥ २३ ॥ इतिमेममप्रतीचस्तत्त्वंयदनुभवसिद्धंवातत्त्वम् ॥ २४ ॥ इदानीमहंकारमार्जनोपायमाह ॥ अहंकारेति ॥ प्राग्व्याख्यातम् ॥ २५ ॥ शरत्खंशरदिखेनिर्मलेस्वस्वभावइव ॥ २६ ॥ सतितस्मिन्काक्षतिस्तामाह ॥ ददातीत्यादिना ॥ २७ ॥ सलिलात्मनिदुर्वासनासलिलगर्भे ॥ २८॥ मरणंमरणादिपारलौकिकदुःखम् जीवितंपुनर्जन्मतदुपांतंतदवधिकम् ॥ एवंजीवितमैहिकदुःखंमरणांतगंमरणावधिकम् ॥ भावोभोग्यवर्गःअभावान्नाशाद्यवच्छिन्नःखंडितः ॥ २९ ॥ अ

इंद्रियैरिंद्रियैरंगैर्मनोमनसिवल्गति ॥ चिदलिप्तवपुःकेनसंबंधःकस्यकिंकथम् ॥ २० ॥ उपलायःशलाकानांसंबंधोनयथामिथः ॥ तथैकत्रापिदृष्टानांदेहेंद्रियमनश्चिताम् ॥ २१ ॥ असदभ्युत्थितेव्यर्थमहंकारमहाभ्रमे ॥ ममेदमिदमस्येतिविपर्यस्तमिदंजगत् ॥ २२ ॥ अतत्त्वालोकजातेयमहंकारचमत्कृतिः ॥ तापेनहिमलेखेवतत्त्वालोकेविलीयते ॥ २३ ॥ आत्मनोव्यतिरेकेणनकिंचिदपिविद्यते ॥ सर्वंब्रह्मेतिमेतत्त्वमेतत्तद्भावयाम्यहम् ॥ २४ ॥ अहंकारभ्रमस्यास्यजातस्याकाशवर्णवत् ॥ अपुनःस्मरणंमन्येनूनंविस्मरणंवरम् ॥ २५ ॥ समूलंसंपरित्यज्यचिरायाहंकृतिभ्रमम् ॥ तिष्ठाम्यात्मनिशांतात्माशरत्खंशरदीवखे ॥ २६ ॥ ददात्यनर्थनिचयंविस्तारयतिदुष्कृतम् ॥ विस्तारयतिसंतापमहंभावानुसंहितः ॥ २७ ॥ स्फुरत्यहंकारघनेत्स्रद्धोषिसलिलात्मनि ॥ विकसत्यभितःकायकदंबेदोपमंजरी ॥ २८ ॥ मरणंजीवितोपांतंजीवितंमरणांतगम् ॥ भावोभावाद्यवच्छिन्नःकष्टेयंदुःखवेदना ॥ २९ ॥ इदंलब्धमिदंप्राप्स्यामीत्यार्तिर्दाहकारिणी ॥ नशाम्यत्यर्करत्नानांग्रीष्मेग्निरिवदुर्धियाम् ॥ ३० ॥ नास्तीदमिदमस्तीतिचिंताधावत्यहंकृतम् ॥ जडाशयाजडाभ्रमालाशैलावलीमिव ॥ ३१ ॥ अहंभावेपरिक्षीणेशुष्कःसंसारपादपः ॥ भूयःप्रयच्छत्यरसोनपाषाणवदंकुरम् ॥ ३२ ॥ स्वतृष्णाकृष्णभोगिन्योदेहद्रुमकृतालयाः ॥ क्वापियांतिविचारात्मन्यागतेविनतासुते ॥ ३३ ॥ असदभ्युत्थितेविश्वेतज्जातभ्रमसन्मये ॥ असन्मयपरिस्पंदेत्वहंत्वंचेतिकःक्रमः ॥ ३४ ॥ इदंजगदुदेत्यादावकारणमकारणात् ॥ यदकारणमुद्भूतंतत्सदित्युच्यतेकथम् ॥ ३५ ॥

र्करत्नानांसूर्यकांतमणीनांग्रीष्मकालेअग्निरिवनशाम्यतिनित्यमुद्भवत्येवेत्यर्थः ॥ ३० ॥ जडाशयाजडाश्रयाजलाश्रयाच ॥ धावत्यनुसरति ॥ शैलावलीपक्षेजडांगुरुतराम् ॥ ३१ ॥ नप्रयच्छतिनजनयति ॥ यतःअरसःरागलक्षणांकुरजननशक्तिशून्यःअतएवपाषाणतुल्यः ॥ ३२ ॥ विचारात्मनिविचाररूपे ॥ विनतासुतेगरुडे ॥ ३३ ॥ असतोमिथ्याभूतादज्ञानादभ्युत्थितेअतएवभ्रमादध्यासादेवसन्मये ॥ विश्वस्यासत्वेपितत्प्रयुक्तोव्यवहारःसत्यःस्यादित्यतआह ॥ असन्मयपरिस्पंदेइति ॥ भेदव्यवहारमात्रस्यासन्मयत्वेत्वमहमितिक्रमोभेदव्यवहारोपिकः ॥ ३४ ॥ अतएवाकारणंसत्यप्रयोजनशून्यमेवअकारणात्कारणत्वानर्हादेवाज्ञानादुदेति ॥ ननुःकिंनस्याह ॥ यदिति ॥ ३५ ॥

१ कारणमुच्छूनमित्यपिपाठः

एवंचोत्पत्तेःपुरोदेहादेर्यादृशीस्थितिस्तादृश्येवसर्वदेतिसिद्धमित्याह ॥ अपर्यंतेति ॥ मृदिकुंभरूपाआकृतिःसंस्थानमिव ॥ तुशब्दोऽप्यर्थे ॥३६॥ उक्तेर्थेदृष्टांतमाह ॥ मध्येति॥ यथावारिमध्येतरयोःपूर्वोत्तरकालयोरविकृतपयोमात्रंमध्येतुकंचित्कालंचलाचलंचंचलंसदाद्यंतयोःपूर्वोत्तरकालयोःप्रसिद्धेसौम्यतेत्यक्त्वावीचितयास्थितंवार्येवनवस्त्वंतरंत द्वद्देहाद्यपिकालत्रयेपिब्रह्मैवनवस्त्वंतरमस्तीत्यर्थः ॥ ३७ ॥ क्षणपरिस्पंदेअस्मिन्देहेविसरणोन्मुखेतरंगेचयेअहंत्वेननिबद्धास्थास्तेकुबुद्धयस्तन्नाशेनैवहताइत्यर्थः ॥ ३८ ॥ देशतःपरिच्छिन्नत्वादपिदेहादिवस्तुपुनास्थायुक्तेत्याह ॥ प्रागिति ॥ मध्येस्वाधिकरणवितस्त्यादिमितदेशमात्रेस्फुटत्वंविद्यमानतयाप्रतीयमानत्वंतदपिकालत्रयैकदेशाभ्यांवि कल्प्यविमर्शैर्दुर्वचमेवेतितत्रापिनिर्विषयत्वाद्धतरूपिणीआस्थाकैवअनुचितैवेतिभावः ॥ ३९ ॥ उक्तंन्यायंलिंगेपिदर्शयंस्तस्यापितथात्वमाह ॥ चित्तमिति ॥ चित्तंचित्तो पलक्षितंलिंगंस्वोत्पत्तेःपूर्वंपूर्वकालेपुरस्तात्पुरोदेशेचचिद्देहंस्वसाक्षिचिन्मात्रस्वभावम् ॥ एवंउत्तरकालेदेशांतरेचशांतंनष्टंइतिअनयैवदेशतःपरिच्छिन्नमपिखेसंलीनमिवात्यंत

अपर्यंतपुराकालेमृदिकुंभइवाकृतिः॥ देहोभवदिदानींतुतथैवास्तिभविष्यति॥३६॥ मध्येतरपयोमात्रंकंचित्कालंचलाचलम्॥ आद्यं तसौम्यतेत्यक्त्वावारिवीचितयायथा॥ ३७॥ अस्मिन्क्षणपरिस्पंदेदेहेविसरणोन्मुखे॥ तरंगेचनिबद्धास्थायेहतास्तेकुबुद्धयः॥ ३८॥ प्राक्पुरस्ताच्चसर्वाणिसंतिवस्तूनिनाभितः॥ मध्येस्फुटत्वमेतेषांकैवास्थाहतरूपिणी॥ ३९॥ चित्तंपूर्वंपुरस्ताच्चचिद्देहंशांतमित्यपि॥ सदसद्भावसंलीनंमध्येस्मिन्किंतवोदितम्॥४०॥ यथास्वप्नविकारेषुयथासंभ्रमदृष्टिषु॥ यथावामदलीलासुयथानौयानसंभ्रमे॥४१॥ यथाधातुविकारेषुयथाचेंद्रियविक्लवे॥ यथातिसंभ्रमानंदेदोषावेशदशासुच॥४२॥ दृश्यतेक्षीयतेचैवरूपंसदसतोश्चलम्॥ तथैवेय मिहत्वेषाकालेन्यूनातिरिक्तता॥४३॥ साचत्वयाकृतानित्यंचित्तदुःखसुखोदयं॥ यथावियोगयामिन्योमतयोहंतिरागिणम्॥४४॥

तिरोहितंसदसद्वेतिदुर्वचम् ॥ एवंविधंचित्तंमध्येसांप्रतमेतद्देशेसद्यतिरिक्तंकिमुदितंनकिंचिदित्यर्थः ॥ ४० ॥ यदिस्थूलसूक्ष्मदेहाद्यसदेवकीदृशस्तर्हितत्प्रतिभासस्तत्राह ॥ यथे त्यादिना ॥ संभ्रमाव्याघ्रचोरादिभयानितदृष्टिषुअसत्स्वपिव्याघ्रादिषुसर्वत्रव्याघ्रादिशंकाभवतितद्वत् ॥ ४१ ॥ धातुविकारेषुवातपित्तादिसन्निपातेषु चक्षुरादींद्रियस्यतिमिरा दौविक्लवेदोषेद्विचंद्रादिभ्रमे अतिसंभ्रमहेतौअतिप्रियतमलाभादिप्रयुक्तेआनंदे विधुरादीनांकामादिदोषावेशदशासुचयथासदसतोर्भावाभावयोरूपंचलंप्रतीतिकालमात्रस्था यिकिंचित्कामिन्यादिरूपंदृश्यतेझटित्येवबाधात्क्षीयतेचतथैवएषाभ्रांतिरितिपरेणान्वयः ॥ ४२ ॥ योविशेषस्तमाह ॥ इहत्विति ॥ स्वप्नादयोल्पकालाःजगद्भ्रमस्तुयावन्मो क्षमितिकालेन्यूनातिरिक्तैतवविशेषइत्यर्थः ॥ ४३ ॥ हेचित्तसाकालेन्यूनातिरिक्ततात्वयाव्यावहारिकवस्तुषुसत्यताभ्रांत्यावियोगसंयोगाभ्यांनित्यंदुःखसुखयोरुदयेनिमित्त तयाकृतासतीत्वांहंतिपीडयति ॥ यथाअसत्यपिभार्यापुत्रादिमरणेप्रतारकवाक्यादुत्पन्नास्तन्मरणमतयस्तत्कल्पितवियोगयामिन्यश्चरागिणंघ्नंतितद्वदित्यर्थः ॥ ४४ ॥

१ इदंविचारणीयम्

अथवानायंनवापराधःकिंतुत्वय्यहंभावाभ्यासिनोममैवापराधोयेनमिथ्याभूतमपित्वंसदिवलक्ष्यसे ॥ त्वत्कृतंचसर्वंमत्कृतंसंपन्नमित्यर्थः ॥ ४५ ॥ अतएवत्वदीयविवेकज्ञाना देवमदपराधरूपस्यतवशांतिरित्याह ॥ यदिदमिति ॥४६॥ त्वद्धेतुभोगवासनानामपिनतएवक्षयइत्याह ॥ अवस्त्विति ॥४७॥ अथवाचित्प्रतिबिंबग्रहणेनचित्त्वाद्वीतरागेणअत एवसंत्यक्तमननव्यसनेनचरमसाक्षात्कारवृत्त्यादृष्टात्मनामनसास्वयमेवस्वस्थेनमोक्षविश्रांतिमताभूयतेनमयासदैकरूपत्वादित्याशयेनाह ॥ चित्त्वादित्यादिना ॥ ४८ ॥ चित्तं स्वयमेवबहिःप्रवृत्तंस्वावयवमिंद्रियादिसंवृत्त्यतत्त्वबोधेनपरमात्मानलक्षिमंसदात्मानंचित्तस्वरूपंदग्ध्वाअलमत्यंतंशाश्वतींनित्यांशुद्धतामेतीत्यर्थः ॥ ४९ ॥ यथावीरःपुरुषोयु द्धेस्वदेहंस्वर्गगामिस्वान्यतयादृष्ट्वातद्देहसंबंधिगृहक्षेत्रधनादिविषयवासनांचत्यक्त्वामरणमप्यंगीकृत्यब्रह्मलोकंजयतितद्वन्मनोपीत्यर्थः ॥ ५० ॥ इदानींदेहमनसोःपरस्परतप्य तापकतयाविरोधंपरस्परतादात्म्याभिमानात्परस्पराभिवृद्ध्यापरस्परोपजीव्यतामेकतराभिमानोच्छेदेनोभयोच्छेदंचविस्तरेणदर्शयितुमुपक्रमते ॥ मनइति ॥ शत्रुरिपुशब्दौता

मय्येवेहासदभ्यासान्मिथ्यासदिवलक्ष्यसे ॥ मृगतृष्णेवतेनैतत्त्वत्कृतंमत्कृतंभवेत् ॥ ४५ ॥ यदिदंकिंचिदाभोगिनत्सर्वंदृश्यमंडलम् ॥ अ वस्त्वितिविनिर्णीयमनोयात्यमनःपदम् ॥४६॥ अवस्त्विदमितिस्फारेरूढेमनसिनिश्चये ॥ हेमंतइवमंजर्यःक्षीयंतेभोगवासनाः ॥४७॥ चित्त्वाद्दृष्टात्मनानूनंसंत्यक्तमननौजसा ॥ मनसावीतरागेणस्वयंस्वस्थेनभूयते ॥ ४८ ॥ परमात्मानलेक्षिप्तंसंवृत्त्यावयवंस्वयम् ॥ द ग्ध्वात्मानमलंचित्तंशुद्धतामेतिशाश्वतीम् ॥ ४९ ॥ देहमन्यतयादृष्ट्वात्यक्त्वाविषयवासनाम् ॥ विनाशमुररीकृत्यमनोजयतिवीरवत् ॥ ५० ॥ मनःशत्रुःशरीरस्यशरीरंमनसोरिपुः ॥ एकाभावेननश्येतेआधाराधेयकार्यवत् ॥ ५१ ॥ रागद्वेषवतोर्नित्यमन्योन्यातिविरुद्ध योः ॥ एतयोर्मूलकाषेणविनाशःपरमंसुखम् ॥ ५२ ॥ एतयोरेकसंस्थानेमृतिरित्येवयाकथा ॥ साव्योम्न्ययास्त्रियाभुक्ताधरेतिकथया समा ॥ ५३ ॥ अकृत्रिमविरोधस्यौयत्रसंघटितावुभौ ॥ धाराइवपतंत्येवतत्रानर्थपरंपराः ॥ ५४ ॥ मिथोविरुद्धसंसर्गेरतिमेत्यधमो ह्रियः ॥ त्यक्तव्यःसपतद्धारावह्निराशावलेपने ॥ ५५ ॥

पकपरौ ॥ एकाभावेनएकतरवासनोच्छेदेन ॥ यथाआधाराधेययोर्जलघटयोःकार्यभूतःसंयोगएकतरनाशेननश्यतितद्वत् ॥५१॥ तथाचपरस्परोपजीवित्वाद्रागवतोःपरस्परो पतापकत्वाद्द्वेषवतोर्व्याघ्रयोःसतोर्वनहरिणस्येवएतयोःसतोर्नजीवस्यसुखंकिंत्वेतयोर्मूलकाषेणमूलाज्ञाननाशेनविनाशएवपरमंसुखमित्यर्थः ॥५२॥ ननुमरणेनभोगायतनदेह नाशादेवसर्वदुःखपरिहारःकिंनस्यात्तत्राह ॥ एतयोरिति ॥ देहनाशेप्येकस्यमनसःसंस्थानेदेहकल्पनायाअनिवारणान्मृतिरितिकथाव्योम्निअयागच्छंत्यास्त्रियाधराभूमिर्भु क्तापरस्ताइतिकथयासमा असंभावितार्थेत्यर्थः ॥ अयतेःक्विपियलोपेटापिसवर्णदीर्घेआतयाअया ॥ अयःस्त्रियेतिपाठेतुअयोविकारभूतयास्त्रीप्रतिमयाव्योम्निधराभुक्तेतिक थयासमेत्यर्थः ॥ अयःप्रतिमायाव्योम्निगमनंतत्रधराभक्षणंचयथाअत्यंतासंभावितंतथामनसिसतिमरणमपीतिभावः ॥ ५३ ॥ तयोःसतोःकाक्षतिस्तत्राह ॥ अकृत्रिमेति ॥ युध्यतोरंतरालेस्थितस्यदेहेखड्गशरादिधाराइव ॥ ५४ ॥ मिथोविरुद्धेदेहमनसीसंसृज्येतेअस्मिन्निर्तिविरुद्धसंसर्गोवैषयिकसुखभोगस्तस्मिन्योऽधमोरतिमास्थामेतिसपुरुषः अलेपनेनिरावरणेपतद्धारौपतंतिवारीणिसमुद्रोदकानियस्मिंस्तथाविधेअग्निराशौवडवानलेत्यक्तव्यः ॥ सतत्रापिरतिमेष्यतीत्यर्थः ॥ ५५ ॥

रागद्वेषवतोरितियदुक्तंतत्रमनसोदेहेरागद्वेषांशौदर्शयति ॥ संकल्पेनेति ॥ मनःस्वसंकल्पेनबालोयक्षमिवशरीरंपरिकल्प्यअस्मैआआयुःयावदायुःकालंअशनंपरिकल्प्यपुष्ट्वा स्वाभिनिवेशनिमित्तानिसर्वदुःखानिप्रयच्छतीत्यर्थः ॥ ५६ ॥ देहस्यापिमनसिद्वेषांशंसहनिमित्तेनदर्शयति ॥ तैरिति ॥ दुर्विषयसेवनेनमनसिरागद्वेषशोकमोहपापादिजननेन तत्पीडयितुमिच्छतीत्यर्थः ॥ ननुमनोजनितत्वात्पुत्रप्रायोदेहःपितृस्थानीयंमनःकथंहंतुमिच्छतितत्राह ॥ पुत्रइति ॥ उद्यतासिविषाग्निचशापोद्यतकरंतथा ॥ आथर्वणेनहंतारं पिशुनंचैवराजसु ॥ भार्यातिक्रमिणंचैवविद्यात्सप्ताततायिनइतिविष्णुकात्यायनोक्तानामाततायिनांपदंस्वपीडाव्यवसायंगतंप्राप्तमित्यर्थः ॥ ५७ ॥ तस्यशत्रुतांलोकप्रसिद्ध न्यायेनोपपादयति ॥ नास्तीति ॥ ५८ ॥ संकेतंनिकेतंभोगायतनमितियावत् ॥ ५९ ॥ विरोधमुपपादितमनूद्यतत्रसुखदौर्लभ्यमुक्तमुपसंहरति ॥ एवमिति ॥ ६० ॥ मनसिक्षी णेतुनदेहस्यदुःखप्रसक्तिरस्तीत्याह ॥ मनसीति ॥ अतस्तत्क्षयेउत्कतयासोत्कंठतयाज्ञानतत्साधनोपायेषुपरिधावतियततेइतियावत् ॥ ६१ ॥ तर्हिमनोपिदेहनाशायैवकुतोनयत तेतत्राह ॥ नष्टेति ॥ अलब्धात्मविवेकेनमनसानष्टंनाशितमनाशितंवाशरीरमापदांपदंसदनर्थायैवसुप्रजायतेइतितन्नाशान्मनसोनेष्टसिद्धिरित्यर्थः ॥ ६२ ॥ मिथःअनुग्रहादि

संकल्पेनमनःपुष्ट्वाशरीरंबालयक्षवत् ॥ आयुरेवाशनान्यस्मैस्वदुःखानिप्रयच्छति ॥ ५६ ॥ तैर्दुःखैस्तापितोदेहोमनोहंतुमथेच्छति ॥ पुत्रोपिहंतिपितरमाततायिपदंगतम् ॥ ५७ ॥ नास्तिशत्रुःप्रकृत्यैवनचमित्रंकदाचन ॥ सुखदंमित्रमित्युक्तंदुःखदाःशत्रवःस्मृताः ॥ ५८ ॥ देहोदुःखान्यनुभवन्स्वमनोहंतुमिच्छति ॥ देहंमनःस्वदुःखानांसंकेतंकुरुतेक्षणात् ॥ ५९ ॥ एवंमिथोदुःखदयोःश्लिष्टयोःकःसुखागमः ॥ एतयोर्देहमनसोर्जात्यैवातिविरुद्धयोः ॥ ६० ॥ मनस्येवपरिक्षीणेनदेहोदुःखभाजनम् ॥ तत्क्षयोत्कतयानित्यंदेहोपिपरिधावति ॥ ६१ ॥ नष्टानष्टमनर्थायशरीरंपदमापदाम् ॥ अलब्धात्मविवेकेनमनसासुप्रजायते ॥ ६२ ॥ एतेमनःशरीरेहिमिथःपीवरतांगते ॥ जडरूपेहि वपुषापयोदसरसीयथा ॥ ६३ ॥ मिथोदुःखायसंपन्नेएकरूपेद्विधास्थिते ॥ व्यवहारपरेसार्द्धंलोकेवार्यनलाविव ॥ ६४ ॥ चित्तेक्षयिणिसंक्षीणेदेहोत्यामूलितोभवेत् ॥ वर्द्धमानेतरुरिवशतशाखःप्रवर्त्तते ॥ ६५ ॥ क्षीयतेमनसिक्षीणेदेहःप्रक्षीणवासनः ॥ मनोनक्षीयते क्षीणेदेहेतत्क्षपयेन्मनः ॥ ६६ ॥ संकल्पपादपंतृष्णालतंछित्त्वामनोवनम् ॥ विततांभुवमासाद्यविहरामियथासुखम् ॥ ६७ ॥ प्रक्षीयमाणमेवेदंमनोमनसिसंस्थितम् ॥ प्रशाम्यद्वासनाजालंप्रावृडंतइवांबुदः ॥ ६८ ॥

तिशेषः ॥ सरस्यपिहविर्यज्ञादिनिष्पत्तिद्वारापयोदानुग्राहिकाकचित्संभवेदित्युपमोपपत्तिः ॥ ६३ ॥ मिथोविरुद्धयोरनयोःकिमर्थंसहभावइतिचेद्दारिवह्न्योःपाकार्थमिवपुरुष स्यभोगमोक्षोपायव्यवहारार्थमित्याशयेनाह ॥ मिथइति ॥ विरुद्धतयाद्विधास्थितेअप्येतेअन्योन्यतादात्म्याध्यासादेकरूपेसतीदुःखायदुःखानिभोक्तुंपरिहर्तुंचसाकंभोममो क्षव्यवहारसाधनपरेसंपन्नेइत्यर्थः ॥ ६४ ॥ देहस्यचित्ताधीनतोक्तेःफलमाह ॥ चित्तेइति ॥ ६५ ॥ ६६ ॥ अतोमनएवनाशयामीत्याह ॥ संकल्पेति ॥ ६७ ॥ संकल्पनाशेच मनोमनसिमनःस्वभावेनस्थितमितिप्रशाम्यद्वासनाजालंसत्प्रावृडंतेंबुदइवनंक्ष्यतीत्यर्थः ॥ ६८ ॥

त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राख्यानांधातूनांसन्निवेशात्मकोयंदेहोमनसिप्रक्षीयमाणेगलतुतिष्ठतुवानकाचित्क्षतिरित्यर्थः ॥ ६९ ॥ तिष्ठतिदेहेदुःखमपिकिंनस्यादितिचेत्त त्संबंधहेतोर्मनसोनाशात्संबंधएवनास्तिदूरेदुःखप्रसक्तिरित्याशयेनाह ॥ यदर्थमिति ॥ ७० ॥ नाहंदेहइत्यस्मिन्क्रम्यतेबुध्यतइतिक्रमोवश्यज्ञातव्यार्थस्तस्मिन्युक्तिमुपपत्ति म् ॥ वल्गतिदर्शनश्रवणादिनाव्यवहरति ॥ ७१ ॥ तस्माच्छवस्यबोधाद्यदर्शनात् ॥ योविभुत्वेनसूर्यमंडलेपिसत्वाद्भास्वतासंगंप्राप्यव्योमनिभास्करंवेद्मिसएवचिद्रूपोहमित्य र्थः ॥ ७२ ॥ ७३ ॥ भूम्नितुमनआदेःप्रसक्तिरेवनास्तीत्याह ॥ यत्रेति ॥ श्रेष्ठसन्निधौक्षुद्राणामनवस्थानेलोकप्रसिद्धिमुदाहरति ॥ पामराइति ॥ महीभृतोराज्ञः ॥ ७४ ॥

धातूनांसन्निवेशोयंदेहनामारिपुर्मम ॥ प्रक्षीयमाणेमनसिगलत्वेपोवतिष्ठतु ॥ ६९ ॥ यदर्थंकिलभोगश्रीर्वांछतेस्वकलेवरम् ॥ तन्मे नापिनतस्याहंकोर्थःसुखलवेनमे ॥ ७० ॥ नाहंदेहइतित्वस्मिन्युक्तिमाकर्णयक्रमे ॥ सर्वांगेष्वपिसत्स्वेवशवःकस्मान्नवल्गति ॥ ७१ ॥ तस्माद्देहादतीतोहंनित्योऽनस्तमितद्युतिः ॥ यःसंगंभास्वताप्राप्यवेद्मिव्योमनिभास्करम् ॥ ७२ ॥ नाङ्गोहंनचमेदुःखंनानर्थोनचदुःखि ता ॥ शरीरमस्तुमावास्तुस्थितोस्मिविगतज्वरः ॥ ७३ ॥ यत्रात्मातत्रनमनोनेंद्रियाणिनवासनाः ॥ पामराःपरितिष्ठंतिनिकटेनमहीभृतः ॥ ७४ ॥ पदंतदनुयातोस्मिकेवलोस्मिजयाम्यहम् ॥ निर्वाणोस्मिनिरंशोस्मिनिरीहोस्मिनिरीप्सितः ॥ ७५ ॥ इदानीमस्त्यसंबद्धोमनो देहेंद्रियादिभिः ॥ पृथक्कृतस्यतैलस्यतिलैर्विगलनैरिव ॥ ७६ ॥ स्वस्मात्पदवरादस्माल्लीलयाचलितस्यमे ॥ पृथक्कृतमतेःकिंचपरिवारो स्त्ययंशुभः ॥ ७७ ॥ स्वच्छतोर्जिततासत्ताहृद्यतासत्यताज्ञता ॥ आनंदितोपशमितासदाचमृदुभाषिता ॥ ७८ ॥ पूर्णतोदारतासत्याकां तिमत्तैकतानता ॥ सर्वैकतानिर्भयताक्षीणद्वित्वविकल्पता ॥ ७९ ॥ नित्योदिताःसमाःस्वस्थाःसुंदर्यःसुभगोदयाः ॥ ममैकात्ममतेर्नित्यं कांताहृदयवल्लभाः ॥ ८० ॥ सर्वथासर्वदासर्वसर्वस्मिन्संभवत्यतः ॥ सर्वंप्रतिममक्षीणेवांछावांछेसुखासुखे ॥ ८१ ॥ विगतमोहतया विमनस्तयागतविकल्पनचित्ततयास्फुटम् ॥ उपरमाम्यहमात्मनिशीतलेघनलवःशरदीवनभस्तले ॥ ८२ ॥ ॥ इ० वा० वा० दे० मोक्षो पायेषूपशमप्रकरणेउद्दालकविचारविलासोनामत्रिपंचाशःसर्गः ॥ ५३ ॥ ॥ ५ ॥ ॥

तत्पदमनुयातःप्राप्तोस्मि ॥ ७५ ॥ ७६ ॥ किंचप्रारब्धशेषभोगलीलयास्वात्मरूपात्पदवराद्व्यवहाराभासेचलितस्यपूर्ववासनयापृथक्कृतमनेरयंदेहेंद्रियादिर्मेपरिवारःपरिजनइव विनोदहेतुरित्यर्थः ॥ ७७ ॥ तस्यांलीलायांस्वच्छतादिगुणसंपदःस्वस्यहृदयवल्लभाःकांताइतिनिरूपयति ॥ स्वच्छतेत्यादित्रिभिः ॥ ऊर्जिततापूर्णकामता ॥ ज्ञताविदितात्मता ॥ ७८ ॥ उदारतानिर्लोभता ॥ सत्याअबाधितस्वभावता ॥ ७९ ॥ एताममनित्यमुदिताअभ्युदयशालिन्यःकांताः ॥ ८० ॥ संभवतिकल्पनयेतिशेषः ॥ अतःसर्वविषयजातं प्रतिवांछावांछेरागद्वेषौ ॥ सुखासुखेतत्फलेसुखदुःखे ॥ ८१ ॥ अतोहंशरदिनभस्तलेघनलवोमेघखंडइवशीतलेनिस्तापेआत्मनिदृश्यभावंपरित्यज्यविश्राम्यामीत्यर्थः ॥ ८२ ॥

॥ ५ ॥ ॥ ५ ॥

॥ इतिवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेत्रिपंचाशःसर्गः ॥ ५३ ॥

दहनाप्लावनाद्यैःस्वांभावयन्वैष्णवींतनुम् ॥ धृत्वाविकल्पान्विश्रांतःसमाधौसइतीर्यते ॥ १॥ धवलयाविशुद्धयाततयाअक्षुद्रयाधियाइतिउक्तरीत्यानिर्णीय ॥१ ॥ समुनिरुद्दालकः ॥ येन ॐकारउच्चारितस्तेनपरमंपदमाप्तंप्राप्तमेव ॥ यलोपासिद्धेःसंधिरार्षः ॥ यतओमित्येतदक्षरंपरस्यब्रह्मणोऽभिधानत्वात्प्रतीकत्वाच्चपरमेवब्रह्मइतिनिर्णीयतारउच्चैःस्वरोयस्यतथाविधं ऊर्ध्वगतोध्वनिर्यस्यतथाविधंओंकारंअकरोत्उच्चारितवानितिपरेणान्वयः ॥ २ ॥ सम्यगाहतंलांगूलंलंबमानजिह्वाकारंलोहंयस्मिंस्तथाविधंघंटायाःकुंडंमुखाकाशमारवंनादमिव ॥ ३ ॥ कियत्कालमोंकारमकरोत्तत्राह ॥ ॐमिति ॥ ॐकारंपुनःपुनरुच्चारयतस्तस्योद्दालकस्यमूलाधारमारभ्यब्रह्मरंध्रपर्यंतंप्रसिद्धायामस्योंकारस्यमूर्द्धस्थेअर्धमात्रोपरमोर्ध्वमभिव्यक्तेविततेअमलात्मनिब्रह्मणिसंविदोंकाराकारवृत्त्युपहितंचैतन्यंतत्त्वंकूटस्थजीवचैतन्यंचयावत्तदुन्मुखेअखंडब्रह्मचैतन्योन्मुखेभवतस्तावत्कालमोंकारमकरोदितिपूर्वेणसंबंधः ॥ ४ ॥ तत्रनिर्विकल्पसमाधिप्रतिष्ठायोग्यतासिद्ध्यर्थंप्रथमंतेनैवप्रणवेनस्थूलदेहस्यशोषणदहनदुष्टभस्मांशनिरसनाप्लावनदिव्य

श्रीवसिष्ठउवाच॥ ॥इतिनिर्णीयततयाधियाधवलयामुनिः॥ बद्धपद्मासनस्तस्थावर्धोन्मीलितलोचनः॥१॥ ओमित्येतत्परंब्रह्मनिर्णीयसमुनिस्तदा॥ ॐकारोच्चारितोयेनतेनाप्तंपरमंपदम्॥२॥ॐकारमकरोत्तारस्वरमूर्ध्वगतध्वनिम्॥सम्यगाहतलांगूलंघंटाकुंडमिवारवम्॥३॥ओमुच्चारयतस्तस्यसंवित्तत्त्वेतदुन्मुखे॥ यावदोंकारमूर्द्धस्थेविततेविमलात्मनि॥४॥सार्द्धत्र्यंशात्ममात्रस्यप्रथमेंशेस्फुटारवे॥ प्रणवस्यसमाक्षुब्ध्यप्राणारणितदेहके॥ ५ ॥ रेचकाख्योखिलंकायंप्राणनिष्क्रमणक्रमः॥ रिक्तीचकारपीतांबुरगस्त्यइवसागरम्॥ ६ ॥ अतिष्ठत्प्राणपवनश्चिद्रसापूरितांबरे॥ त्यक्तदेहःपरित्यक्तनीडःखगइवांबरे॥ ७॥ हृदयाग्निर्ज्वलज्ज्वालोददाहनिखिलंवपुः॥ उत्पातपवनोद्भूतोदावःशुष्कमिवद्रुमम्॥८॥ यावदित्थमवस्थैषाप्रणवप्रथमक्रमे॥ बभूवनहठादेवहठयोगोहिदुःखदः॥ ९॥ अथेतरांशावसरेप्रणवस्यसमस्थितौ॥निष्कंपकुंभकोनामप्राणानामभवत्क्रमः॥१०॥नवहिर्नांतरेनाधोनोर्ध्वेनाशासुतत्रते॥संक्षोभमगमन्प्राणाआपः संस्तंभिताइव॥ ११ ॥दग्धदेहपुरोवह्निःशशामाशनिवत्क्षणात्॥ अदृश्यतसितंभस्मशारीरंहिमपांडुरम्॥ १२ ॥

देहांतरनिर्माणाद्यपिप्रथमंतद्भावनयावृत्तमित्याह ॥ सार्द्धत्र्यंशेत्यादिना ॥ सार्द्धत्र्यंशाअर्द्धमात्रासहिताअकारोकारमकाराख्याआत्ममात्राःस्वावयवायस्यतथाविधस्यप्रणवस्यप्रथमेंशेउदात्तेअकारभागेस्फुटारवेउच्चैःस्वरेणाभिव्यक्ततारभावेअतएवसम्यगाक्षुब्धैर्बहिर्निर्गमनोद्युक्तैःप्राणैर्मूलाधारमारभ्यओष्ठपुटावधिरणितदेहकेजातेसतिरेचकाख्यःप्राणनिष्क्रमणक्रमोऽखिलंकायंरिक्तीचकाररेचनेनशोषयामासेतिद्वयोरर्थः ॥ ५ ॥ ६ ॥ तस्यरेचितःप्राणपवनःक्वातिष्ठत्तत्राह ॥ अतिष्ठदिति ॥ चिद्रसेनब्रह्मभावनाभिव्यक्ताहार्दरसेनआपूरितेअंबरेबाह्याकाशे ॥ ७॥ तदानींभावनयायद्वृत्तंतदाह ॥ हृदयाग्निरिति ॥ प्राणानांनिष्क्रमणसंघर्षणाद्धृदयेभावनयोद्भूतोवह्निः ॥ दवेअरण्येभवोदावोऽग्निः ॥ ८ ॥ प्रणवस्यपूर्वोक्तेप्रथमक्रमेप्रथमेंशे ॥ इदंचसर्वंभावनयावृत्तंनहठादेव ॥ तत्कुतस्तत्राह ॥ हठयोगइति ॥ हठात्प्राणानांनिर्गमनेमूर्छामरणादिप्रसंगादितिभावः ॥९॥ इतरोंशउकारभागस्तस्यअनुदात्तमंद्रोच्चारणावसरेकुंभस्थजलवन्निश्चलपूर्णत्वात्कुंभकोनामक्रमः ॥ १० ॥ उक्तंकुंभकनामविशदयति ॥ नवहिरिति ॥ ११ ॥ अशनिवत्वैद्युताग्निवत् ॥ १२ ॥

यत्रयस्यामवस्थायांशरीरास्थीनिकर्पूरधूलिरचितायांशय्यायांसुप्तानीवभावनादृशालक्ष्यंते ॥ १३ ॥ वात्यापवनैरूर्ध्वमानीतंसास्थिअस्थिसहितंतद्भस्मवायुरूर्ध्वप्रवाहीचंड पवनस्त्रिनेत्रस्यरुद्रस्यव्रतमस्थिभस्मधारणंतद्वानिवभृशमुत्सन्नेतपःकृशइवअलक्ष्येस्वदेहेअयोजयत्उद्धूलयामासेतियावत् ॥ १४ ॥ तत्अस्थिमद्भस्मकापिययौ ॥ १५ ॥ प्र णवस्यमध्यमभागसाध्येकुंभकाख्येक्रमेइत्थमेपाप्यवस्थाभावनयैवबभूवनतुहठात् ॥ १६ ॥ तृतीयावसरेतृतीयभागोच्चारणावसरे ॥ यद्यपिरेचकपूरककुंभकेपुसमस्यैवप्र णवस्यसाधनत्वंप्रसिद्धंतथापिरेचकेआदिभागएवतायतेकुंभकेमध्यमभागएवपूरकेचरमभागएव कंठान्निर्गच्छताप्राणेनकंठ्यभागस्यैवाभिव्यक्तेःसंकुचद्भ्यामोष्ठाभ्यामुकार भागस्यैवाभिव्यक्तेरोष्ठसंपुटितेमकारभागाभिव्यक्तौपुनःप्रविशत्यपिप्राणेतत्संस्कारस्यैवानुवर्त्तनादितित्तद्भागावसरविभागोक्तिरितिबोध्यम् ॥ १७ ॥ चेतनाजीवचितृतस्यां

यत्रकर्पूरशय्यायांसुप्तानीवसुखोचितम् ॥ शरीरास्थीनिलक्ष्यंतेनिष्पंदानिसितानिच ॥ १३ ॥ तद्भस्मपवनानीतंसास्थिवायुरयोजय त् ॥ स्वदेहेभृशमुत्सन्नेत्रिनेत्रव्रतवानिव ॥ १४ ॥ तच्चंडपवनोद्धूतमावर्त्त्यगगनंक्षणात् ॥ शरदीवाभ्रमिहिकाक्वापिभस्मास्थिमद्ययौ ॥ १५ ॥ यावदित्यमवस्थैषाप्रणवस्यापरेक्रमे ॥ बभूवनहठाद्देवहठयोगोहिदुःखदः ॥ १६ ॥ ततस्तृतीयावसरेप्रणवस्योपशांतिदे ॥ पूर णात्पूरकोनामप्राणानामभवत्क्रमः ॥ १७ ॥ अस्मिन्नवसरेप्राणाश्चेतनाम्रतमध्यगाः ॥ व्योम्निशीतलतामीयुर्हिमसंस्पर्शसुंदरीम् ॥ १८ ॥ क्रमाद्गगनमध्यस्थाश्चंद्रमंडलतांययुः ॥ धूमागगनकोशस्थाःशीतलांबुदतामिव ॥ १९ ॥ कलाकलापसंपूर्णेतस्मिंश्चंद्रमंडले ॥ पुण्यराशाविवापूर्णेरसायनमहार्णवे ॥ २० ॥ रसायनमयाधाराःसंपन्नाःप्राणवायवः ॥ मणियष्टिसमाकाराजालेष्विंदोरिवांशवः ॥ २१ ॥ सापपातांबराद्धाराशेषेशारीरभस्मनि ॥ रसायनीहरशिरःपतितेवसुरापगा ॥ २२ ॥ उदभूदिंदुबिंबाभंचतुर्बाहुवपुस्तया ॥ प्र स्फुरन्मंदरादब्धेःपारिजातइवद्रुमः ॥ २३ ॥ उद्दालकशरीरंतन्नारायणतयोदितम् ॥ प्रफुल्लनेत्रवक्त्राब्जमाधवोदीप्तिसुंदरम् ॥ २४ ॥ रसा यनमयाःप्राणास्तच्छरीरमपूरयन् ॥ सलिलौघाइवसरोवृक्षंमधुरसाइव ॥ २५ ॥ अंतःकुंडलिनींप्राणाःपूरयामासुराहताः ॥ चक्रानुव र्त्तप्रस्तृतांपयांसीवसरिद्वराम् ॥ २६ ॥

भावितंयदमृतंतन्मध्यगाः ॥ व्योम्निबहिराकाशे ॥ १८ ॥ गगनकोशस्थाधूमानीहारभागाःशीतलांबुदभावमिव ॥ १९ ॥ अमृतमयानांकलानांकलापैःसंघातैःसंपूर्णेअतएव रसायनमहार्णवेतस्मिंश्चंद्रमंडलेपुण्यराशौधर्ममेघाख्यसमाधाविवाह्लादनापूर्णेतेप्राणवायवोरसायनमयाअमृतमयाःकिरणधाराःसंपन्नाइतिपरेणान्वयः ॥ २० ॥ मणियष्टि स्फटिकदंडस्तत्समाकाराः ॥ २१ ॥ शेषेपवनावधूतावशिष्टे ॥ रसानामयनीप्रवहणी ॥ २२ ॥ तयाधारया ॥ मथनेनप्रस्फुरन्मंदरोयस्मिंस्तथाविधादब्धेःपारिजातोद्रुमइव ॥ २३ ॥ नारायणतयानारायणशरीरतया ॥ २४ ॥ मधौवसंतेपल्लवोद्गमहेतवोभौमारसावृक्षमिवचेतिपरमोपमा ॥ २५ ॥ चक्राकारैरनुवृत्तैरावर्त्तैःप्रसृतांप्रवहंतींसरिद्वरांगं गाम् ॥ सरित्पतिमितिपाठेप्रसृतमितिपाठ्यम् ॥ २६ ॥

1/12

दहनप्लावनादिना विष्णुशरीरात्मनोत्पत्तिकथनस्य प्रयोजनमाह ॥ प्रकृतस्थमिति ॥ यथा अवनेस्तलं शरदि चरमवृष्ट्या धौतं सद्यःशोषितं च सत् प्रावृट्कालप्रसिद्धस्य पंकशैवला दिदूषितस्य शरीरस्य स्वाकारस्य विगमे प्रसन्नं निर्मलं च सद्व्यवहारिणां प्रकृतयात्रादिकार्ययोग्यं भवति तथा अस्य तत् शरीरमपि दहनप्लावनादिभावना धौतं विकल्पसंस्पर्शरहितं समाधि कार्यस्थं बभूवेत्यर्थः ॥ २७ ॥ पद्मासनबंधेन स्थितिं कृत्वा देहे इंद्रियपंचकं दृढं बद्ध्वा ॥ २८ ॥ स्वभावं स्वात्मानं स्वमनो वा ॥ २९ ॥ स्वभावमेव विशिनष्टि ॥ प्रशांतेति ॥ प्राणा यामाभ्यासात्प्रशांताः प्राणादिवातहरिणा यस्मिन् ॥ आशातृष्णालोभउत्कलिकाप्रतीक्षेत्यादिभेदप्रसिद्धेन गणेन बहिर्गमनशीलं स्वभावं प्रशांतवातहरिणं कृत्वा स्वच्छतां नेतुं व्यव सायमुपाददे इति पूर्वेणान्वयः ॥ एवं कुर्वतो यद्वृत्तं तदाह ॥ चिंतयेति ॥ तस्य हृदयं मनः पूर्वानुभूतगृहक्षेत्रपुत्रमित्रादिचिंतया निन्ये यथा अदृढनिखातमश्वादिबंधनकीलकं तदाकृ ष्टया रज्ज्वा उत्खायापनीयते तद्वत् ॥ ३० ॥ तदा स यच्चकार तदाह ॥ धावमानमिति ॥ धावमानं चित्तं विवेकबलाद्विमलं कृत्वा संरोधयामासेत्यर्थः ॥ द्रुतं द्रवणोन्मुखं जलं सेतुरा

प्रकृतस्थं बभूवास्य तच्छरीरं द्विजन्मनः ॥ प्रावृट्शरीरविगमे धौतं तलमिवावनेः ॥ २७ ॥ अथ पद्मासनगतः कृत्वा देहस्थितिं दृढम् ॥ आलानइव मातंगं निबद्ध्वेंद्रियपंचकम् ॥ २८ ॥ निर्विकल्पसमाध्यर्थं व्यवसायमुपाददे ॥ स्वभावं स्वच्छतां नेतुं शरत्कालइवामलम् ॥ २९ ॥ प्रशांतवातहरिणमाशादिगणगामिनम् ॥ चिंतयात्महृदयं निन्ये दूराद्रज्ज्वेव कीलकम् ॥ ३० ॥ धावमानमधोमत्तं चित्तं विमलमाकुलम् ॥ बलात्संरोधयामास सेतुर्जलमिव द्रुतम् ॥ ३१ ॥ निमिमील दृशावर्द्धं परिपक्ष्मलपक्ष्मके ॥ निस्पंदतारामधुरे संध्याकालइवांबुजे ॥ ३२ ॥ सौम्यतामनयन्मौनी प्राणापानजवं मुखे ॥ श्वसनं श्रेयसे देशे प्रशस्तः समयो यथा ॥ ३३ ॥ तिलेभ्यइव तैलानि पृथक् चक्रे प्रयत्नतः ॥ इंद्रियाणींद्रियार्थेभ्यः कूर्मोंगानीव गोपयन् ॥ ३४ ॥ बाह्यस्पर्शानशेषेण जहौ दूरे स धीरधीः ॥ सहसा कुंडकच्छन्नो मणिर्दूरं त्विषो यथा ॥ ३५ ॥ विलीनानांतरांश्चक्रे स्पर्शाननुज्झितदर्शनात् ॥ रसान्विटपकोशस्थान्मार्गशीर्षइव द्रुमः ॥ ३६ ॥

लिरिव द्रुतं शीघ्रमिति वा ॥ ३१ ॥ ततः स किं चकार तदाह ॥ निमिमीलेति ॥ परस्पराग्रग्रथनात्परित उभयतः पक्ष्मलानि पक्ष्मवंतीव पक्ष्माणि ययोस्तथाविधे निस्पंदाभ्यां ताराभ्यां क नीनिकाभ्यां मधुरे सुंदरे दृशौ अर्द्धं निमिमील निमीलितवान् ॥ अंबुजपक्षे निस्पंदौ तारे कनीनिके इव मधुरातः पिबत इति मधुरौ भ्रमरौ ययोस्ते ॥ ३२ ॥ तस्य प्रथमं राजयोगानुकूलं वाक्प्राणापाननिरोधमाह ॥ सौम्यतामिति ॥ यथा चक्रवर्त्तिनां जन्मादिनिमित्तभूतः प्रशस्तः समयो जगच्छ्रेयसे शुभसूचनाय शैत्यमांद्यादिगुणं श्वसनं वायुं तज्जन्मदेशे समंस्तिमि तं नयति तद्वत् ॥ तथा चोक्तं भगवता ॥ प्राणापानौ समौ कृत्वा नासाभ्यंतरचारिणाविति ॥ ३३ ॥ तस्य प्रत्याहारक्रममाह ॥ तिलेभ्य इत्यादिना ॥ इंद्रियाणीत्येतद्गोपयन्नित्यत्रा पि संबध्यते ॥ ३४ ॥ बाह्येति ॥ कुंडकेन अल्पपिठरेणाच्छन्नः पिहितो मणिर्दूरप्रसृतास्त्विषो रश्मीन् ॥ ३५ ॥ आंतरान्मनोवासनारूपान्स्पर्शान्विषयानधिष्ठानतत्त्वे आकर्षणे नबाधाद्विलीनांश्चक्रे ॥ ३६ ॥

१ क्षोभवैषम्यादिरहिततां समतामितियावत्

पार्ष्णिनामूलाधारावष्टंभेनगुदसंकोचान्नवद्वारानिलान्हृदयेरुरोध ॥ यथाअधोमुखपूर्णकुंभोमुखेदृढंसंस्थगितःपिहितोंतर्वायुप्रवेशमंतरेणच्छिद्रांतरेभ्योजलक्षरणायोगादित
रान्रंध्रकोशान्रुणद्धितद्वत् ॥ ३७ ॥ स्वात्मैवरत्नंतत्प्रकाशेनस्वात्मनोरत्नानांप्रकाशैश्चआढ्याम् ॥ रजस्तमोभ्यामनावरणात्स्पष्टाम् ॥ प्रसन्नमुखपद्मकुसुमेनकल्पद्रुमकुसुमै
श्चलांछिताम् ॥ यथामेरुस्तथाविधांस्वशृंगलक्षणांशिखांधारयतितद्वत् ॥ ३८ ॥ धारणामाह ॥ बभारेति ॥ एकविषयेधारणाध्यानसमाधयःसंयमस्तंप्रतिआगतमुन्मुखम् ॥
युक्तिभिःप्रत्याहारोपायैर्वशीकृतम् ॥ ३९ ॥ धारणयाचित्तप्रसादात्परिपूर्णात्मध्यानविश्रांतिमाह ॥ शरन्नभोवदिति ॥ ४० ॥ ब्रह्माकारकतिपयचित्तवृत्तिधाराविच्छेदिनो
मध्येमध्येप्रतिभासमुपेयुपोविपरीतभावनाविकल्पौघान्द्विधावनिरस्तवान् ॥ ४१ ॥ ४२ ॥ तमस्तमोगुणोद्रेकप्रयुक्तमंधकारम् ॥ ४३ ॥ सत्वगुणोद्भावनप्रदीप्तसम्यग्ज्ञानोदि

रुरोधगुदसंकोचान्नवद्वारानिलानथ॥मुखसंस्थगितःकुंभोरंध्रकोशानिवेतरान् ॥३७॥ स्वात्मरत्नप्रकाशाढ्यांस्पष्टांकुसुमलांछिताम्॥
दधारकंधरांधीरोमेरुःशृंगशिखामिव॥३८॥बभारहृदयाकाशेमनःसंयममागतम्॥विंध्यखातइवोन्मत्तंगजंयुक्तिवशीकृतम्॥३९॥
शरन्नभोवदासाद्यनिर्मलामतिसौम्यताम्॥जहारपरिपूर्णाब्धेर्निर्वातस्याचलांश्रियम्॥४०॥ द्विधावातिविकल्पौघान्प्रतिभासमुपे
युषः॥पुरःपरिस्फुरद्रूपान्मशकानिवमारुतः॥४१॥ आगच्छतोयथाकामंप्रतिभासान्पुनःपुनः॥अच्छिनन्मनसाशूरःखड्गेनेवरणेरिपून्
॥४२॥विकल्पौघेपरालूनेसोपश्यद्धृदयांबरे॥तमच्छन्नविवेकार्कंलोलकज्जलमेचकम्॥४३॥तमप्युन्मार्जयामाससम्यक्स्वांतविव
स्वता॥सम्यग्ज्ञानोदितेनाशुपवनेनेवकज्जलम्॥४४॥तमस्युपरतेकांतंतेजःपुंजंददर्शसः॥शार्वरेतिमिरेशांतिप्रातःसंध्यामिवांबुजम्
॥४५॥तल्लुलावस्यलाज्ञानांवनंबालइवद्विपः॥अपिबच्चाप्यसृक्पूरंवेतालइववेगतः॥४६॥ तेजस्युपरतेतस्यघूर्णमानंमनोमुनेः॥
निशान्तवदगान्निद्रांलोलंक्षीबवदेववा॥४७॥मेघमालामिवमरुद्व्यालोनीलाब्जिनीमिव॥ यामिनीमिवतीक्ष्णांशुस्तामप्याशुलुला
वसः॥४८॥निद्राव्यपगमेतस्यभावयामासतन्मनः॥व्योमश्यामलदृग्जंतुर्नभसीवशिखंडकान्॥४९॥

तेनस्वांतंमनस्तद्रूपेणविवस्वतासूर्येण ॥ ४४ ॥ सत्वगुणोद्भावनव्यपस्यतदनुरूपस्तेजःपुंजभमस्तस्याभूदित्याह ॥ तमसीति ॥ अंबुजंकर्तृ उद्यदर्कोपलक्षितांप्रातःसंध्यामिव
॥ ४५ ॥ तत्किंतद्विरोधिरजोगुणायुद्धेनलुलावनेत्याह ॥ अपिबदिति ॥ अधिष्ठानतत्त्वदर्शनेनबाधादपसदित्यर्थः ॥ असृक्पूरंरक्तप्रवाहम् ॥ तेजसोलोहितवर्णत्वादसृगुप
मा ॥ ४६ ॥ रजसासमाधानाच्चालितस्यचित्तस्यविषयालाभेनविलयान्निद्रामज्जनमाह ॥ तेजसीति ॥ लोलंतरंगैर्निद्रानुकूलतयाआंदोलितम् ॥ क्षीबोमदिरामत्तस्तद्वदे
ववा ॥ ४७ ॥ व्यालशब्देनभुजंगनागपर्यायेणापिगोगजोवालक्ष्यते ॥ लुलावविवेकप्रबोधेनेतिभावः ॥ ४८ ॥ व्योमश्यामलंपश्यतीतिव्योमश्यामलदृक् ॥ यदामूर्यातपसंमु
खेव्योम्निप्रसारितदृष्टिर्जंतुःकेशोंडुकवटरकाभासमयूरशिखंडकाकारान्विभावयतितद्वन्मनोनानावासनापरिकल्पितरूपवद्व्योमभावयामासेत्यर्थः ॥ ४९ ॥

तापिच्छंतमालपुष्पंतद्विदृष्ट्याशीर्यतेश्यामतांचजहातीति॥ अच्छात्मस्वच्छस्वभावंतद्योमापिममार्ज॥ ५० ॥ मूढंकश्मलोपहतम्॥ ५१ ॥ ममार्जविशोध्यापनिन्ये ॥ ५२ ॥ काममपिवाचामगोचरांनिर्विकल्पसमाध्यवस्थाम् ॥ विशश्रामविश्रांतिंप्राप ॥ क्षणमल्पकालम् ॥ ५३॥ विक्षेपसंस्कारप्राबल्यात्तत्रस्थैर्यंनप्रापेत्याह ॥ विश्रम्येति ॥ अंगेतिसंबोधनम् ॥ विश्वरूपिणींबाह्यप्रपंचसमाकारांवृत्तिसंविदंपपातप्रापेतियावत् ॥ प्राग्बाह्याकारादाकृष्यपूर्णात्मनिनिरुद्धस्यपरावृत्त्यपुनर्बाह्याकारापत्तावनुरूपंदृष्टांतमाह॥ सेत्विति ॥ यथासरोवारिकुल्याद्वाराकेदारेप्रवेशितंकेदारमापूर्यतत्सेतुरुद्धंसत्कुल्याद्वारापरावृत्त्यप्रतीपंप्रतिकूलप्रवाहंसत्पुनःस्वास्पदंसरएवप्रविशतितद्वदित्यर्थः ॥५४ ॥ बाह्यसंविदःपरावृत्त्यपुनःस्वसंविदंप्रतिनीयमानस्यअंतरालेसविकल्पकसमाधिप्राप्तिमाह ॥ चिरेति ॥ प्राग्ध्यानादिनाचिरानुसंधानवशात्समाधावानंदानुभवेनस्वदनाच्चहेतोस्तत्संस्कारेणपुनस्तत्राकृष्यमाणंमनस्ततोऽतरालेचिन्मयतांचित्प्रचुरसविकल्पसमाधिरूपतामागात् ॥ यथाहेमचरणवलयतानुरूपांनूपुरतांयातितद्वदित्यर्थः ॥ ५५ ॥ एवंसविकल्पकसमा

पयोदइवतापिच्छंनीहारमिवमारुतः॥ दीपस्तमइवाच्छात्मतदप्याशुममार्जसः॥ ५० ॥ व्योमसंविदिनष्टायांमूढंतस्याभवन्मनः॥ निद्रायांतुविलीनायांमैरेयमदवानिव॥ ५१ ॥ मोहमप्येषमनसस्तंममार्जमहाशयः॥ यामिनीजनितंजाड्यंभुवनादिवभास्करः॥ ५२॥ ततस्तेजस्तमोनिद्रामोहादिपरिवर्जितम्॥ कामप्यवस्थामासाद्यविशश्राममनःक्षणम्॥ ५३॥ विश्रम्याशुपपातांगसंविदंविश्वरूपिणीम्॥ सेतुरुद्धंसरोवारिप्रतीपंस्वमिवास्पदम्॥ ५४॥ चिरानुसंधानवशात्स्वदनाच्चस्वसंविदः॥ ततश्चिन्मयतामागाद्धेमनूपुरतामिव ॥५५॥ चित्तत्वमथसंत्यज्यचित्तंचित्तत्त्वतांगतम्॥ अन्यदेववभूवाशुपंकःकुंभस्थितोयथा ॥ ५६ ॥ चेत्यंसंत्यज्यचिच्छुद्धाचित्सामान्यमथाययौ॥ त्यक्तवीच्यादिभेदोब्धिर्वाःसामान्यमिवैकधीः॥५७॥ त्यक्तभूतौघमननंततोविश्वंभरंमहत्॥ चिदाकाशंततःशुद्धंसोभवद्बोधमागतः॥ ५८॥ तत्रप्रापदथानंदंदृश्यदर्शनवर्जितम्॥ अनंतमुत्तमास्वादंरसायनमिवार्णवम्॥ ५९॥

धिनाक्रमेणनिरिंधनाग्निवत्प्रक्षीयमाणंक्षीरोदकवच्चैदेकरस्यंजगामेत्याह ॥ चित्तत्वमिति ॥ चित्तंस्वीयंचित्तत्वंसंत्यज्यचिदेवयत्तत्त्वंतद्भावंगतंसत्पूर्वावस्थातोन्यदेववभूव ॥ यथाकुंभस्थितपंकिलजलपंकोजलशोषेकुंभमालिप्यकुंभभावमेवगच्छतितद्वदित्यर्थः ॥ ५६ ॥ चित्तस्यचित्तभावापगमेतत्प्रतिबिंबचैतन्यस्यबिंबचित्सामान्यैक्यंवृत्तमित्याह ॥ चेत्यमिति ॥ चेत्यंस्वावभास्यंवृत्त्याकारंसंत्यज्यप्रतिबिंबचिच्छुद्धासतीसर्ववृत्तिसाधारणसाक्षिचित्सामान्यभावमुपाययौ यतःसाएकधीःएकरसीभूतास्वोपाधिबुद्धिर्यस्यास्तथाविधेत्यर्थः ॥ ५७ ॥ एवंनिर्विकल्पसमाधिप्रतिष्ठितस्योद्दालकस्यतत्परिपाकात्तत्त्वसाक्षात्कारंतत्फलंब्रह्मवेदब्रह्मैवभवतीतिश्रुतिदर्शितंब्रह्मभावंचदर्शयति ॥ त्यक्तेति॥ ततस्तदनंतरंसउद्दालकस्ततस्तादृशस्यसमाधेर्बोधंतत्त्वसाक्षात्कारमागतःसन्विश्वंभरंसर्वजगदधिष्ठानंत्यक्तभूतौघमननंद्वैतप्रतिभासरहितंशुद्धंमहच्चिदाकाशमभवत्॥५८॥ तद्भावएवनिरतिशयानंदावाप्तिरितिदर्शयति ॥तत्रेति॥ उत्तमैर्ब्रह्मादिभिरास्वाद्यतइत्युत्तमास्वादम् ॥ रसानांसर्वविषयसुखकणानामयनमाधारभूतमर्णवमिवस्थितम् ॥ ५९ ॥

नामेवदशांवर्णयति ॥ शरीरादित्यादिना ॥ शरीरात्सम्यगवमत्यइतोनिर्गतइवशोधितइतियावत् ॥ ६० ॥ उडुपश्चंद्रः ॥ ६१ ॥ पूर्वंदृष्टःपश्चाच्छरदिमूकोनिर्गतजलश्चयोंबुदस्तत्सदृशस्थितिः ॥ ६२ ॥ तत्पदारूढोत्रब्रह्मलोकांतसिद्धिगणानूपादपातेनप्रार्थयतोपिकटाक्षेणापिनपश्यतीत्येतद्दर्शयति ॥ अथेत्यादिना ॥ ६३ ॥ ६४ ॥ ६५ ॥ आनंदस्यमंदिरे ॥ तस्मिंस्तादृशसमाधौ ॥ उत्तरेउत्तरायणाधारेदिक्तटेकेंद्रवपण्मासम् ॥ ६६ ॥ तत्तदुत्तरोत्कृष्टंसप्तमभूमिकाप्रतिष्ठम् ॥ सुरादेवाः ॥ सिद्धादेवयोनिभेदाः ॥ साध्यागणदेवताः ॥ सुरेभ्यस्तेषांपृथग्ग्रहणंगोबलीवर्दन्यायेन ॥ ६७ ॥ तस्मिंश्चानंदरसास्वादलक्षणचित्तपरिणामशून्यत्वान्नविद्यतेआनंदोऽस्येतिव्युत्पन्नमनानंदपदंगतःप्राप्तः ॥ ततस्त

शरीरात्समवेतोसौकामप्यवनिमागतः ॥ सत्तासामान्यरूपात्मावभूवानंदसागरः ॥६०॥ द्विजचेतनहंसोसावानंदसरसिस्थितः ॥ अतिष्ठच्छरदच्छेखेकलापूर्णइवोडुपः ॥६१॥ बभूवावातदीपाभोलिपिकर्मार्पितोपमः ॥ वीतवीच्यंबुधिप्रख्योदृष्टमूकांबुदस्थितिः ॥६२॥ अथैतस्मिन्महालोकेतिष्ठन्नुद्दालकश्चिरम् ॥ अपश्यद्व्योमगान्सिद्धानमरानपिभूरिशः ॥ ६३ ॥ आगता नेविचित्राणिसिद्धिजालानिचाभितः ॥ शक्रार्कपददातॄणिनीरंध्राण्यप्सरोगणैः ॥ ६४ ॥ तानिनादरयांचक्रेसिद्धिवृंदानिसद्विजः ॥ गंभीरमतिरक्षुब्धोविलासानिवशैशवान् ॥ ६५ ॥ सिद्धिसार्थमनादृत्यतस्मिन्नानंदमंदिरे ॥ अतिष्ठदथपण्मासान्दिक्तटेर्कइवोत्तरे ॥ ६६ ॥ जीवन्मुक्तपदंतत्तद्याव त्संप्राप्तवान्द्विजः ॥ तत्रसिद्धाःसुराःसाध्याःस्थिताब्रह्महरादयः ॥६७॥ आनंदेपरिणामित्वादनानंदपदंगतः ॥ नानंदननिरानंदंततस्तत्संविदावभौ ॥६८॥ क्षणंवर्षसहस्रंवातत्रलब्ध्वास्थितिंमनः ॥ रतिमेतिनभोगौघेदृष्टस्वर्गइवावनौ ॥६९॥ तत्पदंसागतिःशांतातच्छ्रेयःशाश्वतंशिवम् ॥ तत्रविश्रांतिमानस्यभूयोनोबाधतेभ्रमः ॥ ७० ॥ तत्पदंसाधवःप्राप्यदृश्यदृष्टिमिमांपुनः ॥ नायांतिखदिरोद्यानंलब्ध्वेवचैत्ररथाइव ॥ ७१ ॥ तांमहानंदपदवींचित्तादासाद्यदेहिनः ॥ दृश्यंनबहुमन्यंतेराजानोदीनतामिव ॥ ७२ ॥ चेतस्तत्पदविश्रांतंबुद्धंदृश्यदशांप्रति ॥ कदर्थाद्बोधमायातिनायात्येवाथवानघ ॥ ७३ ॥ उद्दालकोत्रपण्मासान्दूरोत्सारितसिद्धिभूः ॥ उपित्वोन्मिपितोंभोदकोशादर्कमधाविव ॥ ७४ ॥ ददर्शसंप्रबुद्धात्मापुनःपरमतेजसः ॥ प्रणामलालसाःस्निग्धाश्चंद्रविंबवपुर्द्धराः ॥ ७५ ॥

स्माद्धेतोस्तस्यसंविदालचैतन्यंनविषयिणामिवक्षुद्रानंदेवभौनापिनिरानंददुःखेकिंतुस्वप्रकाशैकरसपूर्णमवतस्थेइत्यर्थः ॥ ६८ ॥ तस्मात्रैनपुनःक्षुद्रानंदस्पृहोद्भवइत्याह ॥ क्षणमिति ॥ दृष्टस्वर्गोऽनुभूतस्वर्गविभवःपुरुषः ॥ अवनौभूलोकसुखे ॥ ६९ ॥ तदेवसर्वोत्कृष्टमितिवर्णयति ॥ तदित्यादिना ॥ ७० ॥ ७१ ॥ श्रवणमननसमाधिपरिष्कृताच्चित्तादासाद्यअपरोक्षतयाप्राप्य ॥ चित्तादितिपाठेविचारितशास्त्रात ॥ ७२ ॥ बुद्धंचित्तंदृश्यदशांसमाधिव्युत्थानदशांप्रतिकदर्थात्परेषांमहतःप्रयत्नाद्बोधमायातिषष्ठभूमिकायाम् ॥ नायात्येवसप्तमभूमिकायाम् ॥ ७३ ॥ अंभोदकोशान्नीहारपटलात् ॥ मधौचैत्रे ॥ ७४ ॥ प्राग्दृष्टाएवरमणीयंविमानपरंपराश्चपुनर्ददर्शेतिपरेणान्वयः ॥ ७५ ॥

गौरमंदाररेणुच्छन्नाभ्रमराश्चामराणिचयासाम् ॥ स्फुरंतिपताकापटलानियास्विंतिचसाधारणेविशेषणे ॥७६॥ विद्याधरपतीनपिददर्शेत्यनुकृष्यते ॥ ७७ ॥ तेवैमानिकामुनय श्चतमुद्दालकमूचुर्हेभगवन्नःअस्मान्प्रणामात्प्रसादेनानुग्रहदृशाअवलोकय॥७८॥एहिआगच्छ ॥ स्वर्गस्यानुपेक्षायांहेतुमाहुः ॥ स्वर्गएवेति ॥ ७९ ॥ आकल्पंद्विपरार्द्धांवसा नांतकालम् ॥ अनेनैवसर्वेषांतपःक्लेशादिसार्थक्यमित्याहुः ॥ स्वर्गादीति ॥ ८० ॥ ८१ ॥ धर्मार्थयोःफलत्वात्सारः ॥ ८२ ॥ गतसंभ्रमंमिथ्यात्वादिनिश्चयाद्विगतकुतूहलंय थास्यात्तथाअतिष्ठत् ॥ ८३ ॥ स्वव्यापारःसमाधिस्तत्परोभवत् ॥ ८४ ॥ उपास्यचिरप्रतीक्षाप्रणामप्रशंसादिनोपचर्य ॥८५॥८६॥ ८७ ॥ संप्राप्तपदंयथास्यात्तथाअवसत् ध्यानलीलयेत्यनेनध्यानमपितस्यलीलैवनतेनापितस्यसाध्यमस्तीतिसूचितम् ॥ ८८ ॥ ध्यानासक्तःसमाधिमारूढः ॥ ८९ ॥ व्यवहारकालेपिसुसमाहितएवनाज्ञवद्विक्षेपवा

रमणीगौरमंदाररेणुभ्रमरचामराः ॥ स्फुरत्पताकापटलाघ्युविमानपरंपराः ॥ ७६ ॥ अस्मदादीन्मुनीन्दर्भपवित्रांककरांबुजान् ॥ विद्याधरीभिर्वलितान्विद्याधरपतीनपि ॥ ७७॥ तेतमूचुर्महात्मानमुद्दालकमुनिंतथा ॥ प्रसादेनप्रणामान्नोभगवन्नवलोकय ॥ ७८ ॥ आरुह्येदंविमानंत्वमेहित्रैविष्टपंपुरम् ॥ स्वर्गएवहिसीमांतोजगत्संभोगसंपदाम् ॥ ७९ ॥ आकल्पमुचितान्भुंक्ष्वभोगानभिमतान्विभो ॥ स्वर्गादिफलभोगार्थमेवाशेषतपःक्रियाः ॥ ८० ॥ हारचामरधारिण्योविद्याधरवरांगनाः ॥ पश्येमास्त्वामुपासीनाःकरिण्यःकरिणंयथा ॥ ८१ ॥ कामोधर्मार्थयोःसारःकामसाराःसुयोषितः ॥ वसंतइवमंजर्यःस्वर्गएवभवंतिताः ॥ ८२ ॥ एवंकथयतःसर्वानतिथीनित्यसौमुनिः ॥ परिपूज्ययथान्यायमतिष्ठद्गतसंभ्रमम् ॥ ८३ ॥ नाभ्यनंदन्नतत्याजतांविभूतिंसधीरधीः ॥ भासिद्धाव्रजतेत्युक्त्वास्वव्यापारपरोभवत् ॥ ८४ ॥ अथस्वधर्मनिरतंभोगेष्वरतिमागतम् ॥ तमुपास्यययुःसिद्धादिनैःकतिपयैःस्वयम् ॥ ८५ ॥ जीवन्मुक्तःसचमुनिर्विजहारयथासुखम् ॥ यावदिच्छंवनांतेषुमुनीनामाश्रमेषुच ॥ ८६ ॥ मेरुमंदरकैलासहिमवद्विंध्यसानुषु ॥ द्वीपोपवनदिक्कुंजजंगलारण्यभूमिषु ॥ ८७ ॥ ततःप्रभृतिसंप्राप्तपदमुद्दालकोद्विजः ॥ गुहासुगिरिकुक्षीणामवसद्ध्यानलीलया ॥ ८८ ॥ कदाचिदह्नामासेनकदाचिद्वत्सरेणच ॥ कदाचिद्वत्सरौघेणध्यानासक्तोव्यबुध्यत ॥ ८९ ॥ उद्दालकस्तदारभ्यव्यवहारपरोपिसन् ॥ सुसमाहितएवासौचित्त्वैकत्वमागतः ॥ ९० ॥ चित्तत्त्वैकघनाभ्यासान्महाचित्त्वमुपेत्यसः ॥ बभूवसर्वत्रसमस्तेजस्सौरमिवावनौ ॥ ९१ ॥ चित्सामान्यचिराभ्यासात्सत्तासामान्यमेत्यसः ॥ दृश्येस्मिंश्चिरविवन्नास्तमायान्नचोदयम् ॥ ९२ ॥

नित्यर्थः ॥ ९० ॥ चित्तत्वमंतःकरणतद्वृत्त्यनुगततत्साक्षिचिन्मात्रंतस्यैवविविच्यदर्शनधारालक्षणात्समाधिरूढाभ्यासान्महाचित्त्वमपरिच्छिन्नचिद्भावम् ॥ सर्वत्रसर्वभूतेषुस्नेहद्वेषवर्जनात्कारुण्यादविषमब्रह्मभावदर्शनाच्चसमः ॥ अनेनतस्यक्रमात्पंचमभूमेःषष्ठभूमिकाप्राप्तिरुक्ता ॥ ९१ ॥ अथास्यसप्तमभूमिकाविश्रांतिंदर्शयति ॥ चित्सामान्येति ॥ सर्वथादृश्यस्यतत्संस्कारस्यचोच्छेदेतत्पथारूपत्वलक्षणचित्त्वव्यवहारस्याप्युपरमात्स्वप्रकाशनिरतिशयानंदसन्मात्रपरिशेषात्सत्तासामान्यमेत्यप्राप्यचिरविवदस्मिन्दृश्येएतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतिनप्रेत्यसंज्ञास्तीत्यादिश्रुतिदर्शितमाविर्भावतिरोभावलक्षणमस्तमयमुदयंचनायात् ॥ तद्बीजाविद्याकामकर्मवासनानामत्यंतोच्छेदादितिभावः ॥ ९२ ॥

एतामेवस्थितिंप्रपंचयन्नुपसंहरति ॥ शमेति ॥ सर्वविक्षेपोपशमनान्निरतिशयानंदरूपपरपदलाभप्राप्तेश्वसम्यक्शांतंगलितंमनोयस्य ॥ अतएवसर्वकर्मबीजक्षयाद्गलितजनन पाशः क्षीणाःसंदेहदोलावस्थाश्वयस्यतथाविधःसन्शरदिखमिवशांतंप्रशांताविद्यामेघडंबरं व्याततमपरिच्छिन्नमतएवनिरंकुशबृहत्वान्निरतिशयसत्तास्फूर्तिसुखोत्कर्षादूर्जि तंनिरावरणत्वात्स्फुटंप्राक्तनदशायाअत्यंतविस्मरणादचेतस्तद्ब्रह्मस्वभावापन्नंवपुःस्वरूपंसंबभारनप्रागिवोद्दालकवपुरित्यर्थः ॥ ९३ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशे उप० प्रकरणेचतुष्पंचाशःसर्गः ॥ ५४ ॥ ॥ ७ ॥ ॥ सत्तासामान्यलक्ष्मास्ययुक्त्यादेहोज्झनक्रमः ॥ त्यक्तदेहेनखिखिन्याभूपाकूम्निश्चवर्ण्यते ॥ १ ॥ गुरुस्तुतिभिःप्रसा दरामश्चरमपर्यायोक्तसत्तासामान्यंलक्षणैर्जिज्ञासमानःपृच्छति ॥ आत्मज्ञानेति ॥ अज्ञानप्रयुक्ततापत्रयलक्षणस्यदाहस्यसंतापस्यशीतांशोः ॥ अज्ञानांधकाराच्छेदनत्वंयु क्तसंशयविपर्ययाद्युच्छेदेनत्वयुक्तसर्वदुःखोच्छेदेचत्वमेवसमर्थइतिविशेषणत्रयतात्पर्यार्थः ॥ ईशेत्युक्तिर्गुरावीश्वरदृष्टिरेवसदाकार्यानसाधारणबुद्धिरितिद्योतनाय ॥ १ ॥ प

शमपरपदलाभप्राप्तिसंशांतचेतागलितजननपाशःक्षीणसंदेहदोलः ॥ शरदिखमिवशांतंव्याततंचोर्जितंचस्फुटममलमचेतस्तद्वपुःसंबभार ॥ ९३ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपूपशमप्रकरणेउद्दालकविश्रांतिर्नामचतुष्पंचाशःसर्गः ॥ ५४ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ आत्मज्ञानदिनैकार्कमत्संशयतृणानल ॥ अज्ञानदाहशीतांशोसत्तासामान्यमीशकिम् ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यदासंक्षीयतेचित्तमभावात्यंतभावनात् ॥ चित्सामान्यस्वरूपस्यसत्तासामान्यतातदा ॥ २ ॥ नूनंचेत्यांशरहिताचिद्यदात्मनिलीयते ॥ असद्रूपवदत्यच्छासत्तासामान्यतातदा ॥ ३ ॥ यदासर्वमिदंकिंचित्सबाह्याभ्यंतरात्मकम् ॥ अपलप्यवसेच्चेतःसत्तासामान्यतातदा ॥ ४ ॥ यदासर्वाणिदृश्यानिसत्तासामान्यवेदनम् ॥ स्वरूपेणस्वरूपाभंसत्तासामान्यतातदा ॥ ५ ॥ कूर्मोंगानीवदृश्यानिलीयंतेस्वात्मनात्मनि ॥ अभाविताऽन्येवयदासत्तासामान्यतातदा ॥ ६ ॥ दृष्टिरेषाहिपरमासदेहादेहयोःसदा ॥ मुक्तयोःसंभवत्येवतुर्यातीतपदोपमा ॥ ७ ॥ व्युत्थितस्यभवत्येषासमाधिस्थस्यचानघ ॥ ज्ञस्यकेवलमज्ञस्यनभवत्येवबाधजा ॥ ८ ॥

ष्ठभूमिकायांचिदचांतरभेदान्परिमृज्यचित्सामान्यस्वरूपभूतस्यचेत्याभावस्यात्यंतभावनाच्चेत्यसंस्काराणामात्यंतिकोच्छेदमतियदाचित्तंसंक्षीयतेतदास्वमात्रसत्तयास्वतःसि द्धांनीपरिशिष्टाचिद्यच्चिद्रूपानुगतसत्तैवसत्तासामान्यमित्यर्थः ॥ २ ॥ सर्ववृत्तिप्रतिविंबिताचित्सर्वदृश्यबाधेचेत्यांशवृत्तितद्विपर्ययरहितासतीयदास्वात्मनिबिंवचैतन्येलीयतेत दानस्याबिंबस्यअसद्रूपंयस्मिंस्तदसद्रूपमाकाशस्तद्वदत्यच्छासत्तासामान्यताबोध्येत्यर्थः ॥ ३ ॥ चेतश्चित्तवृत्त्यभिव्यक्तांखंडचैतन्यम ॥ ४ ॥ यदासर्वाणिभूतानिस्वपारमार्थि करूपेणस्वरूपमेवआभास्वप्रथायस्यनान्यातथाविधंसत्तासामान्यात्मकंवेदनंचिन्मात्रंभवतीतिशेषः ॥ ५ ॥ अभावितानिभावनयत्नंविनैवसहजदृशेत्यर्थः ॥ ६ ॥ एषासप्त मभूमिकारूढदृष्टियंतस्तुर्यातीतपदोपमाअतःसदेहादेहमुक्तयोःसमानस्वरूपस्थितौविशेषोऽस्तीत्यर्थः ॥ ७ ॥ सेयंदृष्टिःपंचमादिभूमिकास्वपिसमाधिस्थस्यभवतिसप्तमभूमिका रूढस्यतुव्युत्थितस्यापि ॥ केवलमज्ञस्यनभवत्येवेत्यर्थः ॥ ८ ॥

---

१ नाशइन्यपिपाठ

सर्वेपिजीवन्मुक्ताअस्यांदृशिस्थिताःसंतोभुविसिद्धारसाःपारदादयइवव्योमवीथ्यामनिलाइवचऐहिकामुष्मिकभोगतृष्णारजोभिरस्पृष्टास्तिष्ठंतीत्यर्थः ॥ ९॥ तानेवोदाहरति ॥ अस्मत्प्रभृतयइति ॥ अस्मत्प्रभृतयोभुविनारदाद्याव्योमवीथ्यांब्रह्माद्यास्तदूर्ध्वंलोकेष्वित्यर्थः ॥ १० ॥ यावदिच्छमाप्रारब्धक्षयम् ॥ ११ ॥ निश्चलादृढा ॥ १२ ॥ चिंतितवान्चिंतितार्थदृढनिश्चयवान्सन् ॥१३॥ मात्रास्पर्शान्शब्दस्पर्शादिगोचरवृत्तीर्विचिन्वानोवदराणीवैकैकशउपसंहृत्यहृदिनिवेशयन् ॥ हृदिनिविष्टानांचतेषांपरमार्थरूपोभावितःस्वांगमिवस्वात्मनैकीकृतश्चिद्रूपोघनःसैंधवघनवदेकरसोयेन ॥ १४ ॥ समसंस्थानाकंधराकंठोयस्य ॥ तालुमूलतलेआलग्नेनकंठच्छिद्रेकवाटवन्निवेशितेनजिह्वामूलेनोन्नतमिवलसन्मुखंयस्य ॥ १५ ॥ अर्थेरूपादिविषये ॥ नसंयोजितेमनोदृष्टीयेन ॥ १६ ॥ प्राणादिप्रवाहाणांसंरोधेनसमस्तक्रियाकृतदेहमनःकरणचांचल्यशून्यः ॥ स्वच्छाननच्छविःप्रसन्नवदनः ॥ अंगेतिसंबोधने ॥ चित्संविदाचिद्रूपब्रह्मानंदानुभवेनउत्तानैरूर्ध्वंजृंभीरोमभिःकंटकितासंजातकंटकाअंगभूर्यस्य ॥१७॥ तस्यानंदाविर्भावेपूर्वोक्तमेवक्रममाह ॥ अंगेति ॥ अंगेप्वंतःकरणैकदेशभूतवृत्तिभेदेषुप्रतिबिंबिताचित्अवच्छिन्नासंविदाचस्वोपाधिभूतवृत्तिभेदानांविलयाभ्यासाद्विवभूतचित्सामान्यमुपादेप्रविवेश ॥ विवभूतचिन्मात्रानुसंधानाभ्यासाच्चअंतर्हृदिउत्तमंसर्वोत्कृष्टमानंदस्पंदंअवापअन्वभूदित्यर्थः ॥१८॥ तस्यपूर्ववत्सत्तासामान्यानुप्रवेशमाह ॥ तदास्वादनतइति ॥ यावन्ननिरतिशयानंदास्वादनंतावदेवचित्तंनिरोधक्लेशासहिष्णुतयावहिःप्रवर्त्तते आस्वादितेत्वानंदेतत्रैवगुडपिपीलिकान्यायेनासक्तंस्वरूपमपिविस्मृत्यस्वानुगतंचित्सामान्यंनिरतिशयस्वप्रकाशसत्तासामान्यभावंनयतिसएवचित्सामान्यदशाक्रमस्यलयस्तस्यसत्तासामान्यप्राप्तिश्चेतिभावः ॥ १९ ॥ तत्रैवतस्यापुनरावर्त्तिनींस्थितिमाह ॥ तस्थाविति ॥ समेभ्योपिसमआत्यंतिकविक्षेपवैषम्यशून्यआभोगःस्वरूपंयस्य नविद्यंतेआनंदाःसमायस्यतथाविधानंदेनप्रसन्नतमत्वान्मुग्धेभ्यःसुंदरेभ्योपिमुग्धामुखद्युतिर्यस्यतथाविधःसन् ॥ २० ॥

अस्यांदृशिस्थिताःसर्वेजीवन्मुक्तामहाशयाः ॥ सिद्धारसाइवभुविव्योमवीथ्यामिवानिलाः ॥ ९ ॥ अस्मत्प्रभृतयःसर्वेनारदाद्याश्चराघव ॥ ब्रह्मविष्णवीश्वराद्याश्चदृष्टावस्यांव्यवस्थिताः ॥ १० ॥ एतामालंब्यपदवींसमस्तभयनाशिनीम् ॥ उद्दालकोसाववसद्यावदिच्छंजगद्गृहे ॥ ११ ॥ अथकालेनबहुनाबुद्धिस्तस्यबभूवह ॥ विदेहमुक्तस्तिष्ठामिदेहंत्यक्त्वेतिनिश्चला ॥ १२ ॥ एवंचिंतितवानद्रेर्गुहायांपल्लवासने ॥ बद्धपद्मासनस्तस्थावर्द्धोन्मीलितलोचनः ॥ १३ ॥ संयम्यगुदसंरोधाद्द्वाराणिनवचेतसः ॥ मात्रास्पर्शान्विचिन्वानोभावितस्वांगचिद्घनः ॥ १४ ॥ संरुद्धप्राणपवनःसमसंस्थानकंधरः ॥ तालुमूलतलालग्नजिह्वामूलोलसन्मुखः ॥ १५ ॥ नबहिर्नांतरेनाधोनोर्ध्वेनार्थेनशून्यके ॥ संयोजितमनोदृष्टिर्दंतैर्दंतानसंस्पृशन् ॥ १६ ॥ प्राणप्रवाहसंरोधसमःस्वच्छाननच्छविः ॥ अंगचित्संविदुत्तानरोमकंटकितांगभूः ॥ १७ ॥ अंगचित्संविदाभ्यासाच्चित्सामान्यमुपाददे ॥ तदभ्यासादवापांतरानंदस्पंदमुत्तमम् ॥ १८ ॥ तदास्वादनतोलीनचित्सामान्यदशाक्रमम् ॥ विश्वंभरमनंतात्मसत्तासामान्यमाययौ ॥ १९ ॥ तस्थौसमसमाभोगःपरांविश्रांतिमागतः ॥ अनानंदसमानंदमुग्धमुग्धमुखद्युतिः ॥ २० ॥

आनंदाविर्भावलिंगरोमांचादीनामपिक्रमादुपरममाह ॥ संशांतेति ॥ जीवन्नेवपदंप्राप्यप्रारब्धभोगहेतुमलशेपक्षयादमलंगतःसन् ॥ २१ ॥ कलाभिरवपूर्णेन ॥ २२ ॥ नतस्य प्राणाउत्क्रामंत्यत्रैवसमवनीयंतेइतिश्रुत्युक्तरीत्यातत्रैवतत्प्राणानांतभेदक्रौण्यवत्क्रमादुपशममभिप्रेत्याह ॥ उपशशामेति ॥ शरदंतेहेमंतेतरूणांरसोरविकरौजसीवविमलेस्वपदे उपशशाम ॥२३॥ प्राणाद्युपशमेपरिशिष्टंतत्स्वरूपंवर्णयति॥गतेत्यादिना ॥ अग्निविस्फुलिंगवत्मायागुपाधिभिर्विगलितानिनिःसृतानिहैरण्यगर्भांतविषयसुखानियस्मात्तथाविधं आद्यंतद्वाचामगोचरंसुखंसप्राप यस्मिन्सुखेशक्रलक्ष्मीरप्यब्धौतृणमिवऊह्यतेप्रवाह्यतेतर्क्यतेवातद्दर्शिभिरित्यर्थः ॥२४॥ असौब्राह्मणउद्दालकःप्रतिब्रह्मांडभेदादपरिमितान्यनं तानिनभांसिअंतःस्वोदरेव्याप्नुवंतियादिशस्ताअपिव्याप्नुंशीलमस्य ॥ अनेनदेशकृतपरिच्छेदनिरासः ॥ सर्वदासर्ववस्तुपुपूर्णम्॥ सर्ववस्त्वाधारभुवनानांभरणंधारणंपोपणंचशी

संशांतानंदपुलकःपदंप्राप्यामलंगतः॥ चिरकालपरिक्षीणमननादिभवभ्रमः॥ २१ ॥ बभूवसमहासत्वोलिपिकर्मार्पितोपमः ॥ समः कलावपूर्णेनशरदच्छांबरेंदुना ॥ २२ ॥ उपशशामशनैर्दिवसैरसौकतिपयैःस्वपदेविमलात्मनि ॥ तरुरसःशरदंतइवामलेरविकरौज सिजन्मदशातिगः॥ २३ ॥ गतसकलविकल्पोनिर्विकारोभिरामःसकलमलविलासोपाधिनिर्मुक्तमूर्त्तिः॥ विगलितसुखमाद्यंतत्सुखं प्रापयस्मिंस्तृणमिवजलराशावृह्यतेशक्रलक्ष्मीः॥ २४॥ अपरिमितनभोंतर्व्यापिदिग्व्यापिपूर्णंभुवनभरणशीलंभूरिभव्योपसेव्यम्॥ कथनगुणमतीतंसत्यमानंदमाद्यंपरमसुखमनंतंब्राह्मणोसौबभूव ॥ २५ ॥ गतवतिपदमाद्यंचेतसिस्वच्छभावंद्विजतनुरथमासैःसो पविष्टैवपङ्क्तिः ॥ रविकरपरितप्तावातभांकाररम्यातनुतरुभुजतंत्रीशैलवीणाबभूव ॥ २६॥ अथबहुतरकालेनैतदद्रेर्भुवंतामुपययुरुग कन्यासंयुतामातरःखात्॥ अभिमतफलसिद्ध्यैसंयुताएवसर्वाअनलमिवशिखानांपंक्तयःपिंगकेश्यः॥ २७॥

लंयस्य ॥ अनेनसर्वाधिष्ठानतोक्त्यावस्तुकृतभेदनिरासः ॥ भूरिभिर्भव्यैर्भाग्यैरुत्तमजनैश्चोपसेव्यम् ॥ कथनगुणंवाक्प्रवृत्तिनिमित्तधर्मान्अतीतं अनंतमाद्यंकालकृतपरिच्छे दहीनमतएवसत्यादिलक्षणम् ॥ आनंदयतिसुखैकरसीकरोत्यखिलमित्यानंदंभूमाख्यंपरमसुखंबभूवेत्यर्थः ॥ २५ ॥ अथतच्चेतसिजीवेस्वच्छभावंनिर्मलस्वरूपमाद्यंपदंगतव तिसतितस्यद्विजस्यतनुःशरीरंतत्रोपविष्टैवसतीपङ्क्तिर्मासैरविकरैःपरितप्ताशुष्कासतीप्रवहद्वातघट्टनजैर्भांकारैःक्वणितैरम्यातनुतरूणांबालवृक्षलक्षणानांभुजानांवादनयोग्याभिः शिरातंत्रीभिःशैलस्यपर्वतस्यवीणेवविलासहेतुर्बभूवेत्युत्प्रेक्षा ॥ २६ ॥ अथबहुतरकालेनपण्मासेनेतियावत् ॥ एतद्वृत्तम् ॥ किम् ॥ खान्नभस्तलादुगकन्यासंयुताःपरस्परसह चारितानियमात्सर्वाःसंयुताःसदामिलिताएवस्थिताब्राह्म्याद्यामातरःकस्यचिद्भक्तस्याभिमतफलसिद्ध्यैशिखानांज्वालानांपंक्तयःअनलमिवतामद्रेर्भुवमुपययुः ॥ २७ ॥

१ आद्येउउम्रतइतिच्छेदः

तासांमातॄणांमध्येनिशिरात्रौनवनवभूषावैचित्र्यान्नवतराणिलास्यादिवृत्तानियस्यास्तथाविधा सकलैर्ब्रह्मादिभिर्विबुधैर्वंद्या देवानामपिदेवीपूज्या खिखिनीचामुंडा दिनकर
स्यकरैःशुष्कंतद्विप्रस्योद्दालकस्यकंकालकंशवंझटितिउद्यतयोःखड्गखट्वांगयोर्मध्येअंतरालस्थायांस्वमुकुटस्यकिरीटस्यकोटौकांतकांतिभूषणंचकारेत्यर्थः॥२८॥ यस्यमूढद्द
ष्टिकल्पितोमलमांसादिमयःस्थूलदेहोपित्रिजगद्वंद्यायादेव्याःशिरोभूषणतयासर्वोत्कर्षंप्राप्तस्तेनसर्वोत्कृष्टंपदंप्राप्तमितिकिंवाच्यमितिज्ञानमाहात्म्योत्कर्षंदर्शयन्नाह ॥ इतीति॥
इतिउक्तरीत्याउद्दालकस्यकुत्सितोदेहोदेहकंसुष्ठुविलसतिविराजमानेमायूरबर्हाणांव्रजःसमूहस्तल्लक्षणाव्यालोलाःकंपमानाअब्दलवामेघखंडायस्मिन्॥नवैःप्रत्यग्रैर्मंदारमाला
गणैर्विवलितेवेष्टितेखिखिनिकाख्यायामहत्याभगवत्यालीलार्थेललामेशिरोभूषणमाल्येअंतेषुअपरभागेषुपुष्पपटलानियस्यतथाविधेवेणीच्छलात्पश्चात्पृष्ठतउपागच्छतिल
ताजालेभृंगइवशेतेसुखविश्रांतिभजतेइत्युत्प्रेक्षा॥२९॥ उक्तमुद्दालकाख्यानमुपसंहरंस्तत्परिशीलनपराणांसंसारतापोपशमंपरमपुरुषार्थफललाभंचदर्शयति॥ एषेति॥ सर्वद्द

दिनकरकरशुष्कंविप्रकंकालकंतज्झटितिमुकुटकोटौखड्गखट्वांगमध्ये ॥ सकलविबुधवंद्याखिंखिनीदेवदेवीनिशिनवतरवृत्ताकांतकांतिचकार॥ २८ ॥ इत्युद्दालकदेहकंसुविलसन्मायूरबर्हव्रजव्यालोलाब्दलवेनवैर्विवलितेमंदारमालागणैः ॥ शेतेखिंखिनिकामहाभगवतीलीलाललामेलताजालेभृंगइवांतपुष्पपटलेपश्चादुपागच्छति ॥ २९ ॥ एषोद्दालकचित्तवृत्तिकलनावल्लीविवेकस्फुरत्स्वानंदप्रविकासभासिकुसुमाह्लत्काननेविस्तृता ॥ रूढायस्यकदाचिदेवविहरन्नप्येवसच्छाययानासावेतिवियोगमेतिसफलेनोच्चैस्तरांसंगमम्॥ ३० ॥ ॥ इ०वा०वा०दे०मोक्षोपायेषूपशमप्रकरणेउद्दालकनिर्वाणंनामपंचपंचाशःसर्गः॥५५॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥ क्रमेणानेनविहरन्विचार्यात्मानमात्मना ॥ विश्रांतिमेहिविततेपदेपद्मदलेक्षण॥ १ ॥ शास्त्रार्थगुरुचेतोभिस्तावत्तावद्विचार्यते॥ सर्वदृश्यक्षयाभ्यासाद्यावदासाद्यतेपदम्॥ २॥

श्यविवेकेस्फुरन्यःस्वानंदःसएवप्रविकासैर्भासीनिकुसुमानियस्यास्तथाविधाएषादर्शितप्रकाराउद्दालकचित्तवृत्तेर्विदेहकैवल्यप्राप्त्यंतसकलचरित्रस्यकलनाआदरनैरंतर्याभ्यां
शिक्षातल्लक्षणाकल्पवल्लीयस्यहृत्काननेरूढाप्रादुर्भूतासतीउत्तरोत्तरभूमिकाधिरोहणक्रमेणविस्तृताअसौपुरुषस्तापत्रयार्कसंकुलेव्यवहारकांतारेविहरन्संचरन्नपिसत्यशांति
दांत्यादिगुणसुरभिशीतलयासहजसंतोषलक्षणयाछायया॥ अप्यर्थेएवकारः॥ कदाचिदपिवियोगंनैतिनप्राप्नोत्येव ॥ किंचसउच्चैस्तरांसर्वोत्कृष्टतमेनमोक्षफलेनसंगमंपुनरा
वृत्तिरहितंस्वालभावेनसंबंधमेतिप्राप्नोतीत्यवश्यंसावल्लीहृदिसंरोप्यविस्तारणीयेत्यर्थः॥ ३० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेपंचपंचाशःसर्गः ॥ ५५ ॥
निर्मृष्टमायातिमिरःप्रबुद्धोध्वस्तवासनः॥ व्यवहारप्रसक्तोपिसमाधिस्थइतीर्यते ॥ १ ॥ अनेनउक्तप्रकारेणविचारवैराग्यसमाध्यभ्यासक्रमेणविहरन् ॥१॥ शास्त्रश्रवणेनअर्थ
तत्त्वपरीक्षणेनगुरुवचनविश्वासेनस्वचित्तशोधनेनचसर्वदृश्यबाधेनपरमपदविश्रांतिपर्यंतमवश्यंविचारःकर्त्तव्यइतितात्पर्यार्थः ॥ २ ॥

॥३॥ प्रज्ञास्वरूपमाह ॥ संप्रबोधवतीति ॥ प्राप्नोतिप्रापयति ॥४॥ कश्चित्प्रबुद्धोव्यवहारपरोपिसन्जातसमाधिकइवविश्रांतइत्यन्वयः ॥५॥६ ॥ अंतःशीतलतापूर्णकामताज्ञा
नप्रतिष्ठाफलंतल्लाभेविक्षेपप्रसक्त्यभावात्सैवसमाधिरभिधीयतइत्यर्थः ॥ ७ ॥ मनसिसतिदृश्यैर्विक्षेपहेतुःसंबंधःस्यान्नतुममतदस्तीतिनिश्चित्येत्यर्थः ॥ दृश्यैर्मननसंबंधइतिपा
ठस्तुस्पष्टएव ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ असंदेहंसर्वसंदेहोच्छेदिपरमपदंगतौतत्रप्रतिष्ठितौचेदित्यर्थः ॥ १२॥ व्यवहारिणःकर्तृत्वप्रयुक्तोबंधःकिनस्यात्तत्राह ॥ अकर्वन्निति ॥
प्रतनुवासनंनिर्वासनम ॥ यथाकांतादिकथासंश्रवणेअन्यत्रप्रसक्तमनाःकुर्वन्नपिरागादिविकारानुदयात्तत्प्रयुक्तर्दोषैर्नबध्यतेतद्वदित्यर्थः ॥ १३ ॥ निस्पंदान्यंगानिदेहावयवा

वैराग्याभ्यासशास्त्रार्थप्रज्ञागुरुमयक्रमैः॥ पदमासाद्यतेपुण्यंप्रज्ञयैवैकयाथवा॥ ३ ॥ संप्रबोधवतीतीक्ष्णाकलंकरहितामतिः॥ सर्व सामग्र्यहीनापिपदंप्राप्नोतिशाश्वतम्॥ ४॥ ॥ श्रीरामउवाच॥ ॥ भगवन्भूतभव्येशकश्चिज्ज्ञातसमाधिकः॥ प्रबुद्धइवविश्रांतोव्य वहारपरोपिसन्॥ ५॥ कश्चिदेकांतमाश्रित्यसमाधिनियतःस्थितः॥ तयोस्तुकतरःश्रेयानितिमेभगवन्वद॥ ६॥ ॥ श्रीवसिष्ठउवाच॥ इमंगुणसमाहारमनात्मत्वेनपश्यतः॥ अंतःशीतलतायासौसमाधिरितिकथ्यते॥ ७ ॥ दृश्यैर्मनसिसंबंधइतिनिश्चित्यशीतलः॥ कश्चि त्संव्यवहारस्थःकश्चिद्ध्यानेव्यवस्थितः॥ ८ ॥ द्वावेतौरामसुखितावंतश्चेत्परिशीतलौ ॥ अंतःशीतलतायास्यात्तदनंततपःफलम्॥ ९॥ समाधिस्थानकस्यस्यचेतश्चेद्वृत्तिचंचलम् ॥ तत्तस्यतत्समाधानंसममुन्मत्ततांडवैः ॥ १० ॥ उन्मत्ततांडवस्यस्यचेतश्चेत्क्षीणवास नम्॥ तदस्योन्मत्तवृत्तंतत्संमबुद्धसमाधिना॥ ११॥ व्यवहारीप्रबुद्धोयःप्रबुद्धोयोवनेस्थितः॥ द्वावेतौसुसमौनूनमसंदेहंपदंगतौ॥ १२॥ अकर्तृकुर्वदप्येतच्चेतःप्रतनुवासनम्॥ दूरंगतमनाजंतुःकथासंश्रवणेयथा॥ १३ ॥ अकुर्वदपिकर्त्तैवचेतःप्रघनवासनम्॥ निस्पंदांग मपिस्वप्नेश्वभ्रपातस्थिताविव॥ १४॥ चेतसोयदकर्तृत्वंतत्समाधानमुत्तमम् ॥ तंविद्धिकेवलीभावंसाशुभानिर्वृतिःपरा ॥ १५ ॥ चे तश्चलाचलत्वेनपरमंकारणंस्मृतम्॥ ध्यानाध्यानदृशोस्तेनतदेवानंकुरंकुरु॥ १६ ॥ अवासनंस्थिरंप्रोक्तंमनोध्यानंतदेवतु॥ सएवके वलीभावःशांतंतैवचसासदा॥ १७॥ तनुवासनमत्युच्चैःपदायोद्यतमुच्यते ॥ अवासनंमनोकर्तृपदंतस्मादवाप्यते॥ १८॥ घनवासन मेतत्तुचेतःकर्तृत्वभाजनम्॥ सर्वदुःखप्रदंतस्माद्वासनांतनुतांनयेत्॥ १९ ॥ प्रशांतजगदास्थोंतर्वीतशोकभयैषणः॥ स्वस्थोभवतिये नात्मासससमाधिरितिस्मृतः॥ २० ॥ चेतसासंपरित्यज्यसर्वभावात्मभावनाम् ॥ यथातिष्ठसितिष्ठत्वंतथाशैलेगृहेथवा॥ २१ ॥

यस्यनथाविधमपिसुप्तस्यमनःश्वभ्रपातेतत्रस्थितौचयथाकर्तृनद्वत् ॥ १४ ॥ निर्वृतिःसुखविश्रांतिः ॥ १५ ॥ ध्यानाध्यानेसमाध्यसमाधीतद्दृश्योः ॥ अनंकुरंअंकुरबीजवास
नाशून्यमितियावत् ॥ १६ ॥ १७ ॥ तनुवासनंचतुर्थादिभूमिकासुक्षीयमाणवासनम ॥ अवासनंक्षीणवासनंपदंसप्तमभूमिकाप्रतिष्ठा ॥ १८ ॥ १९ ॥ प्रशांताजगतिदृढादिट
श्येआस्थाअहंममताभिनिवेशोयस्य ॥ स्वस्थःस्वरूपप्रतिष्ठोयेनोपायेनभवति ॥ २० ॥ सर्वेषुभावेपुआत्मभावनांअहंममताध्यासम ॥ शैलेसमाहितोगृहेव्यवहरन्वा ॥२१ ॥

१ गुरुयमकर्मैरित्यपिक्वचित्पाठः ॥ अत्रयमशब्देनमनोनिग्रहः     २ संपन्नावितिक्वचित्पाठः     ३ तत्तर्हीत्यर्थः

॥ २२ ॥ इहनित्यापरोक्षेप्रत्यगात्मनिभूतानांस्थितानाम् ॥ महतांभूतानामाकाशादीनामिव ॥ २३ ॥ शांतचित्तमहाभ्रस्यशरदाकाशकल्पस्येत्यर्थः ॥ २४ ॥ रागादिवृत्तिम ताचित्तेनमत्तस्य ॥ २५ ॥ व्युत्थितंरागादिविक्षिप्तंचित्तंनानाविधविषयभ्रमस्यांतर्लयेनपुनर्व्युत्थानसहस्रबीजभूतांसुषुप्ततामेति ॥ निर्वाणंशांतरागादिवासनंतुचित्तंनिर्वाणं मोक्षमेति ॥ २६ ॥ तर्हिप्राक्कथंव्यवहार्यंव्यवहारिणोस्तत्त्वविदोस्तुल्यःसमाधिरुक्तस्तत्राह ॥ सर्वेति ॥ तत्त्ववित्समाधौसर्वभावपदातीतंपश्यतिव्यवहारेतुसर्वभावात्मकंपश्य तीत्येकपिंडमात्राहंमानाभावान्नतस्यरागादिरितिनविक्षेपप्रसक्तिरितिभावः ॥ २७ ॥ उक्तमेवार्थंफलतआह ॥ ईहितेति ॥ ईहितानीहितेरागद्वेषौ ॥ २८ ॥ कथंसर्वेभावाःस

गृहमेवगृहस्थानांसुसमाहितचेतसाम् ॥ शांताहंकृतिदोषाणांविजनावनभूमयः ॥ २२ ॥ अरण्यसदनेतुल्येसमाहितमनोदृशाम् ॥ भवतामिहभूतानांभूतानांमहतामिव ॥ २३ ॥ शांतचित्तमहाभ्रस्यजनज्वालोज्वलान्यपि ॥ नगराण्यपिशून्यानिवनान्यवनिपात्मज ॥ २४ ॥ वृत्तिमच्चित्तमत्तस्यविजनानिवनान्यपि ॥ नगराणिमहालोकपूर्णानिपरवीरहन् ॥ २५ ॥ व्युत्थितंचित्तमभ्येतिभ्रमस्यांतःसुषुप्तताम् ॥ निर्वाणमेतिनिर्वाणंयथेच्छसितथाकुरु ॥ २६ ॥ सर्वभावपदातीतंसर्वभावात्मकंचवा ॥ यःपश्यतिसदात्मानंससमाहितउच्यते ॥ २७ ॥ ईहितानीहितेक्षीणेयस्यांतर्विततात्कृतेः ॥ सर्वेभावाःसमायस्यससमाहितउच्यते ॥ २८ ॥ सदात्मनासदेवेदंजगत्पश्यतिनोमनः ॥ यथास्वप्नेतथैवास्मिन्जाग्रत्यपिजनेश्वर ॥ २९ ॥ यथाविपणिकालोकावहिरंतोप्यसत्समाः ॥ असंबंधात्तथाज्ञस्यग्रामोपिविपिनोपमः ॥ ३० ॥ अंतर्मुखमनानित्यंसुप्तोबुद्धोव्रजन्नपि ॥ पुरंजनपदंग्राममरण्यमिवपश्यति ॥ ३१ ॥ सर्वमाकाशतामेतिनित्यमंतर्मुखस्थितेः ॥ सर्वथानुपयोग्यत्वाद्भूताकुलमिदंजगत् ॥ ३२ ॥ अंतःशीतलतायांतुलब्धायांशीतलंजगत् ॥ विज्वराणामिवनृणांभवत्याजीवितस्थितेः ॥ ३३ ॥ अंतस्तृष्णोपतप्तानांदावदाहमयंजगत् ॥ भवत्यखिलजंतूनांयदंतस्तद्बहिःस्थितम् ॥ ३४ ॥ द्यौःक्ष्मावायुराकाशंपर्वताःसरितोदिशः ॥ अंतःकरणतत्त्वस्यभागावहिरिवस्थिताः ॥ ३५ ॥ वटधानावटइवयदंतस्थंसदात्मनः ॥ तद्बहिर्भासतेभास्वद्विकासेपुष्पगंधवत् ॥ ३६ ॥ नबहिष्ठंनवांतस्थंक्वचित्किंचनविद्यते ॥ यद्यथाकचितंचित्त्वात्तत्तथातत्त्वमुत्थितम् ॥ ३७ ॥

मास्तद्दर्शयति ॥ सदात्मनेति ॥ तस्यमनोयथास्वप्नेतथाजाग्रत्यपिइदंदृश्यंसदात्मनासदेवपश्यति ॥ जगत्सद्व्यतिरिक्तरूपंनोपश्यतीत्यर्थः ॥ २९ ॥ नगराण्यपिशून्यानीतियदुक्तंतदुपपादयति ॥ यथेति ॥ विपणिकापण्यवीथिकातत्रसमवेताअपिबहवोजनाःस्वस्वकार्यैर्व्यवहरंतोप्युदासीनस्यानुपकारित्वादसत्प्रायास्तद्वत् ॥ ३० ॥ ३१ ॥ भूतैःप्राणिभिःपृथिव्यादिभिश्चाकुलमपिबाधितत्वादाकाशतांशून्यताम ॥ ३२ ॥ आजीवितस्थितेःयावज्जीवम् ॥ ३३ ॥ यस्मादंतर्यद्यादृशंतप्तंशीतलंवाचित्तंतदेवबहिर्जगदाकारेण स्थितमित्यर्थः ॥ ३४ ॥ तदेवाह ॥ द्यौरिति ॥ ३५ ॥ ३६ ॥ अध्यारोपदृष्ट्योक्त्वाअपवाददृष्ट्याआह ॥ नबहिष्ठमिति ॥ कथंतर्हितत्रजगदाकारभानंतत्राह ॥ यदिति ॥ यद्वस्तु प्राग्वासनाबलाद्यथाकचितंतथातद्रूपेणपरमार्थतत्त्वमेवोत्थितमित्यर्थः ॥ ३७ ॥

॥ २४ ॥ यदिविश्रांतवानृगतश्रमोसितत्तर्हि ॥ अथवापरमपदेचिरंविश्रांतवानसितत्तस्माद्धेतोः ॥ २५ ॥ २६ ॥ भृत्यग्रहणंशत्रुमित्रादिसर्वोपलक्षणम् ॥ वपुषिविषयेस्थिता
निरूढाः ॥ कर्षंतिपीडयंति ॥ २७ ॥ समतासमदृष्टिः अन्याविषमदृष्टिर्यथानोदेतितथा ॥ २८ ॥ वैराग्यत्यागादिरूपेणस्वयत्नेनश्रवणमननादिनास्वव्यंजकोपायेन ॥ स्वसं
स्थेनस्वात्मबोधपर्यवसितेन ॥ पेलवतामृदुताहर्षविषादस्थानकंटकसहस्रवेधार्हतेतियावत् ॥ २९ ॥ ३० ॥ स्वानिस्वीयानिपुत्रमित्रादीनिस्वशरीरगतानींद्रियाणिचादन्यानि
चतत्त्वतःकानियुक्तितःकीदृशानिचेतिविचारयेत्यर्थः ॥ ३१ ॥ अविचाराध्यस्तपरिच्छिन्नतापगमान्महत्ताम् ॥३२ ॥ सतःपरमार्थवस्तुभूतस्यतवअचलंचेतोनतोलयिष्यंतितु

अद्यतिष्ठाम्यहंनाथधन्यानांधुरिधर्मतः॥ विकासिरविणेवाब्जंयत्त्वयास्म्यवलोकितः॥ २४॥ भगवन्सर्वधर्मज्ञचिरंविश्रांतवानसि॥ त
दमुंसंशयंछिंधिममार्कस्तिमिरंयथा॥ २५॥ महतांसंगमेनार्त्तिःकस्यनामननश्यति॥ संदेहंतुपरामार्त्तिमाहुरार्त्तिविदोजनाः॥२६॥
मन्निग्रहानुग्रहजामद्भृत्यवपुषिस्थिताः॥ कर्षंतिमामलंचिंतागजंहरिनखाइव॥ २७॥ तद्यथासमतोदेतिसूर्यांशुरिवसर्वदा॥ मतौम
ममुनेनान्यातथाकरुणयाकुरु॥२८॥ ॥मांडव्यउवाच॥ ॥स्वयत्नेनस्वसंस्थेनस्वेनोपायेनभूपते॥ एषामनःपेलवताहिमवत्प्रविली
यते॥ २९॥ स्वविचारणयैवाशुशाम्यत्यंतर्मनोज्वरः॥ शरदागममात्रेणमिहिकामहतीयथा॥३०॥ स्वेनैवमनसास्वानिस्वशरीरगता
निच॥ विचारयेंद्रियाण्यंतःकीदृशान्यथकानिच ॥३१॥ कोहंकथमिदंकिंवाकथंमरणजन्मनी॥ विचारयांतरेवंत्वंमहत्तामलमेष्य
सि॥ ३२॥ विचारणापरिज्ञातस्वभावस्यसतस्तव॥ हर्षामर्षदशाश्चेतस्तोलयिष्यंतिनाचलम्॥ ३३ ॥ मनःस्वरूपमुत्सृज्यशममेष्यति
विज्वरम्॥ भूतपूर्ववपुर्भूत्वातरंगःपयसीवते॥ ३४॥ तिष्ठदेवमनोरूपंपरित्यक्ष्यतितेनघ॥ कलंकविकलंकालंमन्वंतरगताविव॥३५॥
अनुकंप्याभविष्यंतिश्रीमंतःसर्वएवते॥ दृष्टतत्त्वस्यतुष्टस्यजनाःपितुरिवावनौ ॥ ३६॥ विवेकदीपदृष्टात्मामेर्वब्धिनभसामपि॥ अथो
करिष्यसिनृपमहत्तामुत्तमार्थदाम् ॥ ३७ ॥ महत्तामागतेचेतस्त्वसंसारवृत्तिषु ॥ ननिमज्जतिहेसाधोगोष्पदेष्विववारणः ॥ ३८ ॥
कृपणंतुमनोराजन्पेलवेपिनिमज्जति॥ कार्येगोष्पदतोयेपिजीर्णागोमशकोयथा॥ ३९॥

लायामिववनोन्नमनानमनाभ्यामनियतस्थितिंकरिष्यंतीत्यर्थः ॥ ३३ ॥ विज्वरंतेमनःस्वंमनोरूपमुत्सृज्यभूतपूर्ववपुःपूर्वसिद्धब्रह्मस्वभावंभूत्वाशमंनिर्विक्षेपतामेष्यति ॥ ३४ ॥
नर्हिकिमनसःसत्त्वनंक्ष्यतिनेत्याह ॥ तिष्ठदेवेति ॥ यथापूर्वमनोरंतेकलिकालंप्राप्यकलंकःपापैर्विकलंभुवनंपुनर्मन्वंतरगतौसत्यांतिष्ठदेवकलंकंत्यजनितद्वन्मनोपिजीवन्मुक्त
व्यवहारक्षमतयातिष्ठदेवपूर्वतनंमनोरूपंत्यजतीत्यर्थः ॥ ३५ ॥ नकेवलंदुःखनिवृत्तिरेवज्ञानफलंकिंतुनिरतिशयानंदसाम्राज्यमपियद्ब्रह्मादयोप्यनुकंप्यादित्याह॥ अनुकंप्या
इति ॥ ३६ ॥ यदाआकाशादीनामपिमहत्तातत्सत्ताधीनातदातस्यनिरतिशयंमहत्त्वंकिंवाच्यमित्याशयेनाह ॥ विवेकेति ॥ विवेकजन्येनज्ञानदीपनदृष्टआत्मायेन ॥ ३७ ॥
॥ ३८ ॥ कृपणंकामकार्पण्यदूषितम् ॥ पेलवेक्षुद्रेपिकार्येनिमज्जतिमुह्यति ॥ ३९ ॥

तस्यलक्षणान्याह ॥ व्योमेतिद्वाभ्याम् ॥ सम्यक्शास्त्रशिष्टाचाराविरोधेन ॥ शमःशांतिस्वभावः ॥ ४८ ॥ ४९ ॥ तत्त्वज्ञस्यैवसमदर्शित्वेउपपत्तिमाह ॥ अर्थइति ॥ अज्ञेन मूढेनअतनुर्महान्हिरण्यगर्भैश्वर्यांतस्तनुरल्पःकाकिणीमात्रोपिवाकनककामिन्यादिरर्थोविषयःअसद्रूपेणमिथ्यात्वेननचेत्यतेनदृश्यतेतदधिष्ठानसद्रूपश्चनानुभूतइतिनतत्तयास न्मात्रस्वभावेनापिचेत्यते ज्ञेनतत्त्वविदैवतथादृश्यतइतितस्यैवोभयथापिसमदर्शित्वमुपपद्यतइत्यर्थः ॥ ५० ॥ यस्याशयेसमदर्शनंनिरूढंससर्वत्रसर्वास्वप्यवस्थासुनहर्षविषादा दिनालिप्यतइत्याह॥ईदृशेत्यादिना॥तिष्ठत्वकिंचनः॥उदेतुऐश्वर्याद्यभ्युदयंप्राप्नोतुवा ॥ मृतिपुत्रबांधवादिमरणम्॥तत्स्थितिअभ्युदयस्थितिर्नैतु ॥ ५१॥५२ ॥ उद्दाममन्मथमि तिक्रियाविशेषणम् ॥ समंनिर्विकारम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ असौसमदर्शी ॥ किंचिन्मरणदुःखादिविकारिदेहमनआदिरहंताश्रयः ॥ अतएवतेननकिंचित्कृतम् ॥ ५६ ॥

व्योमस्वच्छोवहिर्ष्ठेहांसम्यगाचरतीहयः॥ हर्षामर्षविकारेषुकाष्ठलोष्टसमःशमः॥ ४८॥ आत्मवत्सर्वभूतानिपरद्रव्याणिलोष्टवत् ॥ स्वभावादेवनभयाद्यःपश्यतिसपश्यति॥ ४९ ॥ अर्थोतनुस्तनुर्वापिनासद्रूपेणचेत्यते॥ सद्रूपोनानुभूतोज्ञेनज्ञेनैवनतत्तया॥ ५० ॥ईदृशाशयसंपन्नोमहासत्त्वपदंगतः॥ तिष्ठतूदेतुवायातुम्रतिमेतुनतत्स्थितिम्॥ ५१॥ वसतूत्तमभोगाढ्येस्वगृहेवाजनाकुले॥ सर्वभोगोज्झिताभोगेसुमहत्यथवावने॥५२॥ उद्दाममन्मथंपानतत्परोवापिनृत्यतु॥ सर्वसंगपरित्यागीसममायातुवागिरौ॥५३॥ चंदनागुरुकर्पूरैर्वपुर्वापरिलिंपतु॥ ज्वालाजटिलविस्तारेनिपतत्वथवानले॥ ५४॥ पापंकरोतुसुमहद्बहुलंपुण्यमेवच॥ अद्यवाम्रतिमायातुकल्पांतनिचयेनवा॥ ५५॥ नासौकिंचिन्नतत्किंचित्कृतंतेनमहात्मना॥ नासौकलंकमाप्नोतिहेमपंकगतंयथा॥ ५६॥ संवित्पुरुषशब्दार्थैःसकलंकैःकलंक्यते॥ अहंत्वंवासनारूपैःशुक्तिकारजतोपमैः॥ ५७॥ समस्तवस्तुप्रशमात्सम्यग्ज्ञानाद्यथास्थितेः॥ स्वभावस्योपशांतोंतःकलंकोसत्तयास्वतः॥ ५८॥ अहंत्ववासनानर्थप्रसूतेःसंविदात्मनः॥ पुरुषस्यविचित्राणिसुखदुःखानिजन्मनि॥५९॥ रज्ज्वांसर्पभ्रमेशांतेऽहिर्नेतिनिर्वृतिर्यथा॥ अहंत्वभावसंशांतौतथांतःसमतामता ॥ ६० ॥ यत्करोतियदश्नातियद्ददातिजुहोतिवा॥ नतज्ज्ञस्यनतत्रज्ञोमाकरोतुकरोतुवा॥ ६१ ॥

अज्ञेपुतर्हिकस्यकलंकस्तंदर्शयति ॥संविदिति॥सकलंकैःशास्त्रानभ्यनुज्ञातसेवनदूषितैर्वासनारूपैरैंद्रियकसंविद्भिस्तदायतनेनपुरुषेणदेहेनतद्भोग्यैःशब्दार्थरूपैर्विषयैश्चअहंत्वम हंकारप्रधानलिंगात्मा ॥ ५७ ॥ कस्मादुपायादंतःकलंकोपशमस्तमाह ॥ समस्तेति ॥ स्वभावस्यचित्तस्यकलंकोबाधादसत्तयास्वतःप्रशांतोभवतीतिशेषः ॥ ५८ ॥ संसारदुःखप्राप्तेस्तर्हिकिंकारणंतदाह ॥ अहंत्वेति ॥ अहंत्वाध्यासाद्वासनालक्षणानामनर्थानांप्रसूतेरुद्बोधात्पुरुषस्यजन्मनिसंतीत्यर्थः ॥ ५९ ॥ अतएवाहंत्वशांत्यासंसारदुःखनिवृत्ति रित्याह ॥ रज्ज्वामिति ॥ समतासर्वदुःखवैषम्यशून्यता ॥ ६० ॥ दुष्कृतफलमिवसुकृतफलमपिज्ञस्यनास्तीतितस्यसर्वकर्तव्यहानिरित्याह ॥ यदित्यादिना ॥ ६१ ॥

अकर्मणाकर्मत्यागेन ॥ ६२ ॥ फलेच्छयाहितदुपायेकर्मणिप्रवृत्तिःस्यात्सैवतस्यपूर्णत्वान्नोदेतीत्याह ॥ इच्छाइति ॥ कदाचिद्वासनाभ्यासादुदिताअपीच्छाःपरमार्थदृशातस्य स्वात्मभूताएवेत्याह ॥ याश्चेति ॥ ६३ ॥ तस्यसर्वात्मतांसर्वस्यतदात्मतांचद्रढयन्नुभयोर्निष्प्रपंचचिन्मात्रतैवपरमार्थतःफलितेतिदर्शयति ॥ सकलमिति ॥ अखिलमखंडम् ॥ यतोऽत्रजगतिविभागिताविविधपरिच्छेदशालिताकाचिन्नास्ति ॥ एवंभेदकानांकार्यकारणोपाधीनांतत्तत्साक्षिचिन्मात्रत्वेसतस्त्ववित्सर्वजगदधिष्ठानसन्मात्रमेव यतोसौपरमःपूर्णत्वात्पुरुषःसर्वदोषास्पर्शाच्चपावनोयःपरमात्मानदेकरूपोतिअनयारीत्याअकिंचित्सर्वद्वैतबंधनिर्मुक्तसत्स्वरूपमात्रपरिशिष्टोसौनित्यमुक्तःसंपन्नइत्यर्थः ॥ ६४ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेषट्पंचाशःसर्गः ॥ ५६ ॥ ॥ ५ ॥ ॥ अज्ञातस्वस्वभावाचिद्दृक्ताद्दृश्यस्वभावताम् ॥ यांधत्तेसाचिदेवेतिचिदन्यन्नेति

कर्मणास्तिनतस्यार्थोनार्थस्तस्यास्त्यकर्मणा ॥ यथास्वभावावगमात्सआत्मन्येवसंस्थितः ॥ ६२ ॥ इच्छास्ततःसमुद्यंतिनमंजर्यइवोपलात् ॥ याश्चोद्यंतिचताःसर्वाःसएवाप्स्विववीचयः ॥ ६३ ॥ सकलमिदमसावसौचसर्वंजगदखिलंनविभागिताऽत्रकाचित् ॥ परमपुरुषपावनैकरूपीससदितितत्सदकिंचिदेवनासौ ॥ ६४ ॥ ॥ इ०वा०वा०दे०मो०उपशमप्रकरणेध्यानविचारोनामषट्पंचाशःसर्गः ॥ ५६ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यदात्ममरिचस्यांतश्चित्त्वात्तीक्ष्णत्ववेदनम् ॥ तदहंतादिभेदादिदेशकालादिचेत्यतः ॥ १ ॥ यदात्मलवणस्यांतश्चित्त्वाल्लवणवेदनम् ॥ तदहंतादिभेदादिदेशकालादिमत्स्थितम् ॥ २ ॥ स्वतोयदंतरात्मेक्षोश्चित्त्वान्माधुर्यवेदनम् ॥ तदहंतादिभेदादिजगत्तत्त्वादिजृंभितम् ॥ ३ ॥ स्वतोयदात्मदृषदश्चित्त्वात्काठिन्यवेदनम् ॥ तदहंतादिभेदादिदेशकालादितांगतम् ॥ ४ ॥ स्वतोयदात्मशैलस्यज्ञतयाजाड्यवेदनम् ॥ तदहंतादिभेदादिभुवनादीतिसंस्थितम् ॥ ५ ॥ स्वतोयदात्मतोयस्यचिद्द्रवत्वादिवर्त्तनम् ॥ तदावर्त्ताद्यहंतादिभेदाद्याकारिताइव ॥ ६ ॥ स्वतोयदात्मवृक्षस्यशाखादिस्तस्यवेदनम् ॥ तदहंतादिभेदादिभुवनादीवसत्स्फुरत् ॥ ७ ॥ यदात्मगगनस्यांतश्चित्त्वाच्छून्यत्ववेदनम् ॥ तदहंतादिभेदादिभुवनादीतिभावनम् ॥ ८ ॥ यदात्मगगनस्यांतश्चित्त्वात्सौपिर्यवेदनम् ॥ तदहंतादिभेदादिशरीरादिचदीपितम् ॥ ९ ॥ स्वतोयदात्मकुड्यस्यनैरंतर्यनिरंतरम् ॥ तदहंतादिभेदनचित्ताद्बहिरिवस्थितम् ॥ १० ॥

वर्ण्यते ॥ १ ॥ एवंसर्वजगतश्चिदभेदेपरमार्थतःसिद्धेव्यवहारेपिजगद्वैचित्र्यंतत्तद्रूपचित्स्वभावएवेतिफलितमित्याह ॥ यदित्यादिना ॥ आत्मैवस्वप्रकाशंतैक्ष्ण्यंमरिचंतस्यचित्त्वातैक्ष्ण्यप्रथारूपंयद्वेदनंतत्स्थानीयंअज्ञातब्रह्मस्वभावएवअहंतात्वंतादिरूपंघटकुड्यभेदादिरूपंतदाधारदेशकालादिरूपंचजगदितिअतश्चिदभेदसाधनात्फलितमित्यर्थः ॥ १ ॥ ॥ २ ॥ तत्त्वादिनानत्तद्वाकारभेदेनजृंभितमभिव्यक्तम् ॥ ३ ॥ ४ ॥ जाड्यंगौरवम् ॥ ५ ॥ आकारितास्तत्तदाकारवत्ताइवस्थितमित्यनुषज्यते ॥ ६ ॥ सत्वर्त्तमानंतथास्फुरद्भासमानम् ॥ ७ ॥ भावनंकल्पनम् ॥ ८ ॥ द्रव्याद्बहिःशून्यत्वं मूर्त्तद्रव्यांतश्छिद्रतातुसौपिर्यमितिभेदः ॥ ९ ॥ नैरंतर्यंनिबिडता ॥ बहिर्दृश्यत्वाच्चिद्व्यतिरिक्तमिवेत्यर्थः ॥ १० ॥

चेतनानिचिदाभासाः ॥ ११ ॥ चित्त्वंवृत्तिभेदभिन्नचिदाभासेष्वनुगतंसामान्यंवेदकल्पयतिसजीवः ॥ १२ ॥ रसायनममृतम् ॥ स्वतआस्वादितंस्वप्रकाशतयाअनुभूतम् ॥ उदितमाविर्भूतम् ॥ १३ ॥ आंतरेस्वात्मन्येव ॥ १४ ॥ चेतनारूपेआत्मपदेस्वरूपे ॥ १५ ॥ मायिकजगदाकारानुभवस्यस्वप्रकाशस्वात्मानुभवमात्रत्वव्युत्पादनायपश्यतिवेत्त्यास्वादयत्यास्वाद्यतेइतिकर्मकर्तृभावव्यपदेशोनतत्त्वदृशांसाधनाशयेनेत्याह ॥ नचेति ॥ १६ ॥ चिनोतिचैतन्यांतरात्मनाविकरोति ॥ वेद्यस्यलभ्यस्य ॥ १७ ॥ असन्आभासतइत्याभासोजगदाकारोयस्मिंस्तथाविधएव ॥ १८ ॥ तर्हियदात्ममरिचस्येत्याद्युक्तेःकोभिप्रायस्तमाह ॥ अनयेति ॥ १९ ॥ पूर्वंदृष्टोदृष्टवान्पश्चाच्छरदिमूकस्तूष्णींभूतोंबुदइवसितंशुद्धमधिष्ठानसन्मात्रतयापरिशिष्टंबाधितंजगत्शांतमेवशाम्यतीत्यर्थः ॥ २० ॥ ज्ञमामायावीज्ञःसर्वज्ञःस्वमायावृतेज्ञप्तिरूपेआत्मनिअहंतादिरूपतांजीवजगद्भाव

स्वतोयदात्मसत्तायाश्चित्त्वात्सत्त्वैकवेदनम् ॥ तदहंतादिभेदादिचेतनानीतिवत्स्थितम् ॥ ११ ॥ अंतरात्मप्रकाशस्यस्वतोयदवभासनम् ॥ तदहंतादिचित्त्वादिजीवइत्येववेदसः ॥ १२ ॥ अंतरस्तियदात्मैंदोश्चिद्रूपंचिद्रसायनम् ॥ स्वतआस्वादितंतेनतदहंतादिनोदितम् ॥ १३ ॥ परमात्मगुडस्यांतर्यच्चित्स्वादूदयात्मकम् ॥ तदेवास्वाद्यतेतेनस्वतोहंतादिनांतरे ॥ १४ ॥ परमात्ममणेश्चित्त्वाद्यदंतःकचनंस्वयम् ॥ चेतनात्मपदेचांतरहमित्यादिवेत्त्यसौ ॥ १५ ॥ नचकिंचनवेत्त्यंतर्वेद्यस्यासंभवादिह ॥ नचास्वादयतिस्वाद्वस्वाद्यस्यासंभवादयम् ॥ १६ ॥ नचकिंचिच्चिनोत्यंतश्चेत्यस्यासंभवेसति ॥ विंदतेनचवाकिंचिद्वेद्यस्यासंभवादसौ ॥ १७ ॥ असदाभासएवात्माअनंतोभरिताकृतिः ॥ स्थितःसदैवैकघनोमहाशैलइवात्मनि ॥ १८ ॥ अनयातुवचोभंग्यामयातेरघुनंदन ॥ नाहंतादिजगत्तादिभेदोस्तीतिनिदर्शितम् ॥ १९ ॥ नचित्तमस्तिनोचेतानजगत्तादिविभ्रमः ॥ वृष्टमूकांबुदसितंशांतंशाम्यतिकेवलम् ॥ २० ॥ यथावर्त्तादितामेतिद्रवत्वाद्वारिवारिणि ॥ तथाहंतादितामेतिज्ञप्ताज्ञप्तौज्ञआत्मनि ॥ २१ ॥ यथाद्रवत्वंपयसियथास्पंदःसदागतौ ॥ अहंतादेशकालादितथाज्ञेज्ञप्तिमात्रके ॥ २२ ॥ ज्ञोज्ञतायांशिवंज्ञानंजानातिज्ञानबृंहया ॥ ज्ञायतेऽहंतदिज्ञेनजीवादीत्यभिजीवनैः ॥ २३ ॥ यथोदेतियथाज्ञस्यतृप्तिर्ज्ञानेनयादृशी ॥ अनन्येवान्यताबुद्धासतथाजृंभतेतया ॥ २४ ॥

मितियावत् ॥ २१ ॥ सदागतौवायौ ॥ परमार्थतोज्ञप्तिमात्ररूपेज्ञेसर्वज्ञेश्वरे ॥ २२ ॥ यदिजीवजगद्रूपेज्ञमेरनन्येतर्हिज्ञप्तेजीवेश्वरभावयोःकोविशेषस्तमाह ॥ ज्ञइति ॥ ज्ञईश्वरोज्ञतायामीश्वरभावेशिवंनिरतिशयानंदरूपंस्वरूपज्ञानंज्ञानबृंहयाअनावरणापरिच्छेदलक्षणयाज्ञानाभिवृद्ध्यासदैवजानाति ॥ अहंतदिअहंकारस्थूलदेहरूपजीवभावेतुज्ञेनचेतनभूतेनापिअभिजीवनैर्जीवनहेतुभिःप्राणकरणविषयसंबंधाध्यासैर्जीवादिरूपएवात्मेतिज्ञायतेनतत्त्वतइतिविशेषइत्यर्थः ॥ २३ ॥ अतएवजीवस्ययथायथाभ्रांतिस्तथातथेश्वरोविवर्त्ततइत्याह ॥ यथेति ॥ ययाययाकामकर्मवासनयायादृशविषयज्ञानेनअज्ञस्ययथायेनयेनदर्शनलाभोपभोगवैचित्र्यप्रकारेणयादृशीप्रियमोदप्रमोदादिनानाप्रकारातृप्तिरुपभोगउदेतिअनन्येस्वरूपेभोक्तृभोग्यभोगवैचित्र्यरूपाअन्यतावाज्ञेनबुद्धासपरमेश्वरस्तयातयातदीयकामादिवासनयातथातथाजृंभतेस्वगात्राणिविनामयतिविवर्त्ततेवैचित्र्यंधत्तेइतियावत् ॥ २४ ॥

यदात्वनेनसच्छास्त्रसद्गुरूपदेशाद्भोग्यस्यजगतोज्ञातताअधिष्ठानसन्मात्ररूपास्फूर्त्तिरेवजीवनंसारःपरमार्थस्थितिर्ज्ञाता जीवानांसर्वेषांयदधीनंजीवनंतादृशानंदरूपमेवजीवनं भोक्तुःसारोज्ञातस्तदाभोग्यभोक्त्रधिष्ठानयोर्द्वयोरपिचिद्रूपत्वेपरिशिष्टेज्ञजीवयोर्जीवेश्वरयोर्भेदःअत्यंतंनास्ति ॥ सर्वथैवनिवर्त्ततइत्यर्थः ॥२५॥ जीवेश्वरभेदकाज्ञानेनष्टेप्राज्ञ तुरीयभेदोपिनिवृत्तइत्यखंडपूर्णानंदैकरसचिन्मात्रसाम्राज्यंसिद्धमित्याह ॥ यथेति ॥२६॥ निष्कृष्टार्थमनूद्योपसंहरति ॥सर्वमिति॥ सर्वंजगत्आसमंतात्भास्वरंपूर्णस्वप्रकाश रूपंस्वदनमात्रमानंदैकरसंचेत्यैर्विपर्यैश्चिह्नैनस्वव्यावर्त्तकधर्मेणचरहितंप्रशांतंब्रह्मतदेव ॥ सर्वंप्रशांतमितितात्कालिकशब्दमयीपदवाच्यार्थाभेदसंसर्गगोचराआहार्याभेददृष्टिः साक्षात्प्रयोजनशून्यत्वान्मुधैव ॥ हियस्मात्कारणाद्विरोधप्रतिसंधानेभागत्यागलक्षणाश्रयद्वारालक्ष्यार्थाखंडबोधार्थमेव ॥ तद्वाक्यबोध्यमखंडार्थरूपंतुओमितिओंकारंजग द्ब्रह्मचैकीकृत्यविराट्हिरण्यगर्भाव्याकृततुरीयात्मकानकारोकारमकारार्द्धमात्रापादांश्चतुर्द्धाविभज्यपूर्वपूर्वपादानुत्तरोत्तरेषुप्रविलाप्यार्द्धमात्रयायदद्वयंपूर्णानंदैकरसंनित्या परोक्षप्रत्यक्चिन्मात्ररूपंलक्ष्यतेइदमेवनसंस्पष्टरूपमित्यर्थः ॥ २७॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेसप्तपंचाशःसर्गः ॥५७॥ ॥ ५ ॥ ॥ किरातेशस्यसुर

जीवनंज्ञातताज्ञाताजीवनंजीवजीवनम् ॥ अत्यंतमस्तिनोभेदश्चिद्रूपत्वेज्ञजीवयोः ॥२५॥ यथाज्ञजीवयोर्नास्तिभेदोनामतथैतयोः ॥ भेदोस्तिनज्ञशिवयोर्विद्धिशांतमखंडितम् ॥२६॥ सर्वंप्रशांतमजमेकमनादिमध्यमाभास्वरंस्वदनमात्रमचेत्यचिह्नम् ॥ सर्वंप्रशांतमि तिशब्दमयीतुदृष्टिर्बोधार्थमेवहिमुधैवतदोमितीदम् ॥२७॥ ॥ इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेभेदनिरासोनामसप्तपंचा शःसर्गः ॥५७॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ किरातेशस्यसुरघोर्वृत्तांतंविस्मयास्प दम् ॥ १ ॥ उत्तरस्यादिशोमेदःकर्पूरपटलंभुवः ॥ संभूतंहसनंशार्वंशुक्लोवाचांद्रआतपः ॥ २ ॥ हिमाद्रेःशृंगमस्तीहकैलासोनामपर्वतः ॥ शैलकुंजरनिर्मुक्तकलापस्येवनायकः ॥ ३ ॥ विष्णोःक्षीरोदकइवस्वर्गःसुरपतेरिव ॥ अब्जजस्येवनाभ्यब्जंगृहंयःशशिमौलिनः ॥ ४ ॥ रुद्राक्षवृक्षदोलाभिःसाप्सरोभिर्विभातियः ॥ लोलरत्नशलाकाभिर्लहरीभिरिवार्णवः ॥ ५ ॥ गणांगनानामनिशंमत्तानांचरणैर्हताः ॥ अशोकाइवराजंतेयत्राशोकाविलासिनः ॥ ६ ॥ संचरन्शंकरोदिक्षुभृगुप्विद्रुमणिद्रवैः ॥ निवर्त्ततेप्रवर्त्ततेयत्राजस्रंचनिर्झराः ॥ ७ ॥

घोर्निर्वेदोत्रोपवर्ण्यते ॥ मांडव्येनोपदेशश्चसर्वत्यागाद्युपायतः ॥ १ ॥ अत्रास्मिन्शब्दमयीदृष्टिर्बोधार्थमेवेत्युक्तेर्थे ॥ १ ॥ सुरघोर्निवासदेशंवर्णयन्तत्सन्निहितंहिमवच्छृंगंवर्ण यति ॥ उत्तरस्याइत्यादिना ॥ मेदःसारइतियावत् ॥ भुवःसंभूतंनिर्गतंकर्पूराणांपटलंराशिः ॥ शार्वंहसनंचांद्रआतपोवेतिप्रत्येकमुत्प्रेक्षा ॥ अथवादिशोमेदःशार्वंहसनंचांद्रआ तपोवाभुवःभूमिप्राप्यकर्पूरपटलंसंभूतमित्यौत्प्रेक्षिकैर्वकल्पिकनानाहेतूपपाद्याएकैवविशिष्टोत्प्रेक्षा ॥ २ ॥ हिमाद्रेःशृंगमितिविशेषणान्मेरुसन्निहितप्रसिद्धरजताद्रेरयमन्यइ तिगम्यते ॥ शैलकुंजरेणपर्वतश्रेष्ठेनहिमवतानिर्मुक्तस्यधृतस्यशृंगपरंपरालक्षणस्यमुक्ताकलापस्यनायकोमणिरिवस्थितइत्यर्थः ॥ शैलस्थकुंजरेभ्योनिर्गलितस्यमुक्ताकलाप स्यनायकःसंपाहकोराशिरिवेतिवा ॥ ३ ॥ नाभ्यब्जंविष्णुनाभिकमलम् ॥ गृहंश्वशुरकल्पितमित्यर्थाद्गम्यते ॥ ४ ॥ रुद्राक्षवृक्षेषुलंबमानाभिर्दोलाभिःप्रेंखोलिकाभिः ॥ लो लरत्नशलाकाभिरनिललहरीणामपिविशेषणम् ॥ ५ ॥ गणांगनानांप्रमथस्त्रीणाम् ॥ ६ ॥ यद्यस्यासुदिक्षुसंचरन्भवतितत्रभृगुपुप्रपातस्थलेषुप्रवर्त्ततेअन्यासुनिवर्त्तते ॥ ७ ॥

ब्रह्मांडवदिवेति ॥ उक्तार्थानामपिप्रयोगोदृश्यते ॥ यथाद्वावपूपावानयेतिमहाभाष्योक्तिदर्शनात् ॥ द्योतकानांबहूनामप्युद्यंतंवाआदित्यमग्निरनुसमारोहतीतिवत्सहप्रयोगसं भवाद्भतिनोक्तेपिसादृश्येइवशब्दप्रयोगः ॥ अंडवद्विराडाकारविशिष्टंब्रह्मेवेतिमतुवंतंवायोज्यम् ॥ ८ ॥ तस्यहिमवच्छृंगस्यस्थलेमूलदेशे ॥ ९ ॥ तेषांजीवनोपायमाह ॥ कैला सेति ॥ कैलासाख्यशृंगस्यपादाःप्रत्यंतपर्वतास्तदीयानामरण्यानांसंबंधिभीरुद्राक्षैरन्यैश्चतरुगुल्मकैःफलपुष्पकाष्ठमूलाद्युपजीवनेननिकटजीविनः ॥ १० ॥ जयलक्ष्म्याभु जइवपरपुरंजयःप्रजायाःपालनेचदक्षिणोराजावक्ष्यमाणविशेषणैर्ब्रह्मविद्याधिकारदर्शनाच्चासौक्षत्रियइतिगम्यते ॥ ११ ॥ पराक्रमेअर्कइवेतियोजना ॥ १२ ॥ राज्यविभ

योलतावृक्षगुल्मौघवापीह्रदनदीनदैः ॥ मृगैर्मृगगणैर्भूतैर्ब्रह्मांडवदिवावृतः ॥ ८ ॥ तस्यहेमजटानामकिराताःसंस्थिताःस्थले ॥ पिपी लिकावटतरोर्मूलकोशगताइव ॥ ९ ॥ कैलासपादारण्यानांरुद्राक्षैस्तरुगुल्मकैः ॥ वसंतिघूकवत्क्षुद्रास्तेवैनिकटजीविनः ॥ १० ॥ आ सीत्तेषामुदारात्माराजापरपुरंजयः ॥ जयलक्ष्म्याभुजइवयःप्रजायाश्चदक्षिणः ॥ ११ ॥ सुरघुर्नामवलवान्सुरघोरारिदर्पहा ॥ अर्कः पराक्रमइवमूर्त्तिमानिवमारुतः ॥ १२ ॥ जितोवैराज्यविभवैर्धनैर्गुह्यकनायकः ॥ शतक्रतुगुरुर्बोधैःकाव्यैरसुरदेशिकः ॥ १३ ॥ सच क्रेराजकार्याणिनिग्रहानुग्रहक्रमैः ॥ यथाप्राप्तान्यखिन्नांगोदिनानीवदिवाकरः ॥ १४ ॥ तज्जाभ्यांसुखदुःखाभ्यामथतस्याभ्यभूयत ॥ स्वगतिर्वागुरावंधैःश्लिष्टांगस्येवपक्षिणः ॥ १५ ॥ किमार्त्तंपीडयाम्येनंतिलान्यंत्रमिवौजसा ॥ सर्वेषामेवभूतानांममेवार्त्तिःप्रजायते ॥ १६ ॥ धनमस्मैप्रयच्छामिधनेनानंदवान्जनः ॥ भवत्यहमिवाशेपस्तदलंमेतिनिग्रहैः ॥ १७ ॥ अथवानिग्रहंप्राप्तंकरोम्येतेनवैवि ना ॥ वर्त्ततनप्रजैवेयंविनावारिसरिद्यथा ॥ १८ ॥ हाकष्टमेषनिग्राह्योनित्यानुग्राह्यएषमे ॥ दिष्ट्याद्यसुखवानस्मिकष्टमद्यास्मिदुःख वान् ॥ १९ ॥ इतिदोलायितंचेतोनविशश्रामभूपतेः ॥ एकत्रांबुमहावर्त्तेचिरतृण्णमिवभ्रमत् ॥ २० ॥ अथैकदागृहंतस्यमांडव्योमुनिरा ययौ ॥ भ्रांताशेषककुपूकुंजोवासवस्येवनारदः ॥ २१ ॥ तमसौपूजयामासपप्रच्छचमहामुनिम् ॥ संदेहद्रुमस्तंभपरशुंसर्वकोविदम् ॥ २२ ॥ ॥सुरघुरुवाच॥ ॥भवदागमनेनास्मिमुनेनिर्वृतिमागतः ॥ परमांवसुधापीठंसंप्राप्तइवमाधवे ॥ २३ ॥

भवैर्द्धनैश्चगुह्यकनायकोराजराजोधनेश्वरोपिजितस्तेनेतिशेषः ॥ काव्यैरसालंकारादिशालिप्रबंधरचनैरसुरदेशिकःशुक्रः ॥ १३ ॥ १४ ॥ १५ ॥ दुःखवशाच्चिताशोकाद्यु द्धवंदर्शयति ॥ किमार्त्तमिति ॥ एनंप्रजाजनम् ॥ १६ ॥ कर्त्तव्यसंशयेप्रथमांकोटिंदर्शयति ॥ धनमिति ॥ तत्तस्माद्धेतोः ॥ आर्त्तायास्मैजनायधनंप्रयच्छामिअतिनिग्रहैश्च अलंप्रयोजनंनास्तीत्यर्थः ॥ १७ ॥ द्वितीयांदर्शयति ॥ अथवेति ॥ एतेननिग्रहेणविनाप्रजानवर्त्ततएवस्वस्वमर्यादायामितिशेषः ॥ १८ ॥ निग्राह्योवधबंधादिनादंड्यः ॥ १९ ॥ एकत्रनविशश्राम ॥ यथातृषितनिद्राणस्यचिरतृण्णंमनःअंबुमहावर्त्तेभ्रमतितद्वत् ॥ २० ॥ भ्रांतान्यशेषाणिककुप्कुंजानिदिङ्मडलानियेन ॥ २१ ॥ २२ ॥ परमांनिर्वृतिसु खम् ॥ माधवेवसंतेविष्णौवा ॥ २३ ॥

॥ २४ ॥ यदिविश्रांतवान्गतश्रमोसितर्त्ताहि ॥ अथवापरमपदेचिरंविश्रांतवानसितत्तस्माद्धेतोः ॥ २५ ॥ २६ ॥ भृत्यग्रहणंशत्रुमित्रादिसर्वोपलक्षणम् ॥ वपुषिविषयेस्थिता निरूढाः ॥ कर्षंतिपीडयंति ॥ २७ ॥ समतासमदृष्टिः अन्याविषमदृष्टिर्यथानोदेतितथा ॥ २८ ॥ वैराग्यत्यागादिरूपेणस्वयत्नेनश्रवणमननादिनास्वव्यंजकोपायेन ॥ स्वसं स्थेनस्वात्मबोधपर्यवसितेन ॥ पेलवतामृदुताहर्षविषादस्थानकंटकसहस्रवेधार्हतेतियावत् ॥ २९ ॥ ३० ॥ स्वानिस्वीयानिपुत्रमित्रादीनिस्वशरीरगतानींद्रियाणिचान्यानि चतत्त्वतःकानियुक्तितःकीदृशानिचेतिविचारयेत्यर्थः ॥ ३१ ॥ अविचाराध्यस्तपरिच्छिन्नतापगमान्महत्ताम् ॥ ३२ ॥ सतःपरमार्थवस्तुभूतस्यतवअचलंचेतोननोलयिष्यंतितु

अद्यतिष्ठाम्यहंनाथधन्यानांधुरिधर्मतः॥ विकासिरविणेवाज्ञंयत्त्वयास्म्यवलोकितः॥ २४॥ भगवन्सर्वधर्मज्ञचिरंविश्रांतवानसि॥ त दमुंसंशयंछिंधिममार्कस्तिमिरंयथा॥ २५॥ महतांसंगमेनार्त्तिःकस्यनामननश्यति॥ संदेहंतुपरामार्त्तिमाहुःशास्त्रविदोजनाः॥ २६॥ मन्निग्रहानुग्रहजामद्भृत्यवपुषिस्थिताः॥ कर्षंतिमामलंचिंतागजंहरिनखाइव॥ २७॥ तद्यथासमतोदेतिसूर्यांशुरिवसर्वदा॥ मतौम ममुनेनान्यातथाकरुणयाकुरु॥ २८॥ ॥ मांडव्यउवाच॥ ॥ स्वयत्नेनस्वसंस्थेनस्वेनोपायेनभूपते॥ एषामनःपेलवताहिमवस्त्रविली यते॥ २९॥ स्वविचारणयैवाशुशाम्यत्यंतर्मनोज्वरः॥ शरदागममात्रेणमिहिकामहतीयथा॥ ३०॥ स्वैनैवमनसास्वानिस्वशरीरगता निच॥ विचारयेंद्रियाण्यंतःकीदृशान्यथकानिच॥ ३१॥ कोहंकथमिदंकिंवाकथंमरणजन्मनी॥ विचारयांतरेवंत्वंमहत्तामलमेष्य सि॥ ३२॥ विचारणापरिज्ञातस्वभावस्यसतस्तव॥ हर्षामर्षदशाश्चेतस्तोलयिष्यंतिनाचलम्॥ ३३॥ मनःस्वरूपमुत्सृज्यशममेष्यति विज्वरम्॥ भूतपूर्ववपुर्भूत्वातरंगःपयसीवते॥ ३४॥ तिष्ठदेवमनोरूपंपरित्यक्ष्यतितेनघ॥ कलंकविकलंकालंमन्वंतरगताविव॥ ३५॥ अनुकंप्याभविष्यंतिश्रीमंतःसर्वएवते॥ दृष्टतत्त्वस्यतुष्टस्यजनाःपितुरिवावनौ॥ ३६॥ विवेकदीपदृष्टात्मार्मवब्धिनभसामपि॥ अथो करिष्यसिनृपमहत्तामुत्तमार्थदाम्॥ ३७॥ महत्तामागतेचेतस्तवसंसारवृत्तिषु॥ ननिमज्जतिहेसाधोगोष्पदेष्विववारणः॥ ३८॥ कृपणंतुमनोराजन्पेलवेपिनिमज्जति॥ कार्येगोष्पदतोयेपिजीर्णागोमशकोयथा॥ ३९॥

लायामिवनोन्मनानमनाभ्यामनियतस्थितिंकरिष्यंतीत्यर्थः ॥ ३३ ॥ विज्वरंतेमनःस्वंमनोरूपमुत्सृज्यभूतपूर्ववपुःपूर्वसिद्धब्रह्मस्वभावंभूत्वाशमंनिर्विक्षेपतामेष्यति ॥ ३४ ॥ नहिंकिमनसःसत्त्वंनंक्ष्यतिनेत्याह ॥ तिष्ठदेवेति ॥ यथापूर्वमनोनेकलिकालंप्राप्यकलंकैःपापैर्विकलंभुवनंपुनर्मन्वंतरगतंसत्यांतिष्ठदेवकलंकंत्यजनितद्वन्मनोपिजीवन्मुक्त व्यवहारक्षमतयातिष्ठदेवपूर्वतनंमनोरूपंत्यजतीत्यर्थः ॥ ३५ ॥ नकेवलंदुःखनिवृत्तिरेवज्ञानफलंकिंतुनिरतिशयानंदसाम्राज्यमपियद्ब्रह्मादयोप्यनुकंप्याइत्याह॥ अनुकंप्या इति ॥ ३६ ॥ यदाआकाशादीनामपिमहत्तातत्सत्ताधीनातदातस्यनिरतिशयंमहत्त्वंकिंवाच्यमित्याशयेनाह ॥ विवेकेति ॥ विवेकजन्येनज्ञानदीपनदृष्टआत्मायेन ॥ ३७ ॥ ॥ ३८ ॥ कृपणंकामकार्पण्यदूषितम ॥ पेलवेक्षुद्रेपिकार्येनिमज्जतिमुह्यति ॥ ३९ ॥

तयाप्रसिद्धया ॥ ४० ॥ तर्हिकियत्सुविषयेषुकियत्कालंवावैराग्यंकर्तव्यमितिचेत्तत्राह ॥ तावदिति ॥ स्वयंज्योतिरात्ममात्रपरिशेषानुभवपर्यंतमित्यर्थः ॥ ४१ ॥ नानाश्रुति शास्त्रपर्यालोचनमप्यात्मदर्शनपर्यंतमेवेत्याह ॥ तावदिति ॥ धातुःस्वर्णाकरधातुः ॥ सर्वमध्यात्मशास्त्रम् ॥ ४२ ॥ सार्विकयासर्ववस्तुभूतयाबुद्ध्यासर्वदासर्वत्रदेशेसर्वंदृश्यंसर्व थापरित्यज्यसर्वःपूर्णात्मास्वात्मनैवोपलभ्यतेनकदाचित्कुत्रचित्कथंचित्कतिपयविषयत्यागमात्रेणेत्यर्थः ॥ ४३ ॥ उक्तमेवार्थंव्यतिरेकमुखेनापिद्रढयति ॥ यावदिति ॥ तत्कु तस्तत्राह ॥ सर्वेति ॥ ४४ ॥ सामान्यंलोकव्यवहारसाधारणंगोधनादि ॥ अप्यर्थेएवकारः ॥ यावदन्यत्तद्विरोधिवस्तुनसंत्यक्तंतावन्नासाद्यते ॥ ४५ ॥ यत्रयस्मिन्विषये ॥

चेतोवासनयापंकेकीटवत्परिमज्जति ॥ दृश्यमात्रावलंबिन्यास्वयादीनतयातया ॥ ४० ॥ तावत्तावन्महाबाहोस्वयंसंत्यज्यतेखिलम् ॥ यावद्यावत्परालोकःपरमात्मैवशिष्यते ॥ ४१ ॥ तावत्प्रक्षाल्यतेधातुर्यावद्धेमैवशिष्यते ॥ तावदालोक्यतेसर्वंयावदात्मैवलभ्यते ॥ ४२ ॥ सर्वःसार्विकयाबुद्ध्यासर्वंसर्वत्रसर्वदा ॥ सर्वथासंपरित्यज्यस्वात्मनात्मोपलभ्यते ॥ ४३ ॥ यावत्सर्वंनसंत्यक्तंतावदात्मानलभ्यते ॥ स र्वावस्थापरित्यागेशेषआत्मेतिकथ्यते ॥ ४४ ॥ यावदन्यन्नसंत्यक्तंतावत्सामान्यमेवहि ॥ वस्तुनासाद्यतेसाधोस्वात्मलाभेतुकाकथा ॥ ४५ ॥ यत्रसर्वात्मनैवात्मालाभाययततिस्वयम् ॥ त्यक्तान्यकार्यंप्राप्नोतितन्नामनृपनेतरत् ॥ ४६ ॥ स्वात्मावलोकनार्थंतुतस्मात्सर्वं परित्यजेत् ॥ सर्वंकिंचित्परित्यज्ययद्दृष्टंतत्परंपदम् ॥ ४७ ॥ सकलकारणकार्यपरंपरामयजगद्गतवस्तुविजृंभितम् ॥ अलमपास्यमनः स्ववपुस्ततःपरिविलाप्ययदेतितदेवतत् ॥ ४८ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेसुरघुवृत्तांतेमांडव्योपदेशोनामाष्टपं चाशःसर्गः ॥ ५८ ॥ ॥ ६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्युक्त्वाभगवानेनंसुरघुंरघुनंदन ॥ ययौस्वमेवरुचिरंमांडव्योमौन मंडलम् ॥ १ ॥ गतेवरमुनौराजागत्वैकांतमनिंदितम् ॥ धियासंचिंतयामासकोनामाहमितिस्वयम् ॥ २ ॥ नाहंमेरुर्नमेमेरुर्जगन्नाहं नमेजगत् ॥ नाहंशैलानमेशैलाधरानाहंनमेधरा ॥ ३ ॥ किरातमंडलंनेदंममनाहंचमंडलम् ॥ निजसंकेतमात्रेणकेवलंदेशएवमे ॥ ४ ॥

तत्तंविषयम् ॥ ४६ ॥ सर्वंदृश्यंपरित्यज्ययत्किंचित्सर्वथापरित्यक्तुमशक्यंदृष्टंतदेवपरंपदमित्यर्थः ॥ ४७ ॥ मनःसकलकारणकार्यपरंपरामयेजगतिमणिषुसूत्रमिवानुगतेसन्मा त्रेस्वकल्पनयाविजृंभितंसद्यनिरिक्तंसर्वंरूपंअलंनिःशेषमपास्यततस्तदनंतरंस्ववपुर्मनोरूपमपिमूलाज्ञाननाशाद्बाधेनपरिविलाप्ययत्स्वच्छिन्मात्रैकरसंवस्त्वेतिप्राप्नोतितदेवतद्ब्रह्मरू पमित्यर्थः ॥ ४८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेअष्टपंचाशःसर्गः ॥ ५८ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥ बाह्यमाभ्यंतरंचैवदृश्यंसंत्यजतोरहः ॥ इहरा ज्ञोविचारेणस्वात्मलाभउदीर्यते ॥ १ ॥ उक्त्वाउपदिश्य ॥ स्वस्वीयंमौनमंडलंमुन्यावासदेशम् ॥ १ ॥ २ ॥ तत्रादौबाह्यदृश्येआत्मतामात्मीयतांचविचार्यनिरस्यति ॥ नाहमि त्यादिपद्भिः ॥ जगत्पदेनऊर्ध्वाधोलोकाग्रह्यंते ॥ ३ ॥ निजःसंकेतःसर्वजनसंमत्यापट्टाभिषेकादिनाअहंराजेतिकल्पनातावन्मात्रेण ॥ ४ ॥

अत्रएतस्मिन्नगरेपिसंकेतत्यागादेषएवनिश्चयः ॥ ५ ॥ तमेवनिश्चयंस्फुटमाह ॥ पताकेति ॥ ६ ॥ व्यर्थंनसंकेतेनसंबद्धमतइतिसंबंधम् ॥ ७ ॥ आकुलःकाकिणीकार्षापणसं
बंधवद्बंधपरंपराव्यवहारसिद्धइतियावत् ॥ ८ ॥ संकेतमात्रत्यागोपायेनबाह्यैःसंबंधंनिरस्यअचेतनत्वहेतुनादेहेंद्रियादिभिरपितंनिरसितुमारभते ॥ देहमात्रमित्यादिना ॥ ९ ॥
संश्लेषंसंबंधमपिनेतिअसंगत्वादित्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ बुद्धींद्रियाणिज्ञानेंद्रियाणि ॥ १३ ॥ अथबुद्धिरहंकारइतियादृश्यतइतिदृष्टिःसापिनाहंनममेत्यनुषज्यते ॥
यतःसामनोमयीअंतःकरणावस्थाभेदरूपेतियावत् ॥ १४ ॥ शरीरादिमनोबुद्धींद्रियाद्यंतोभूतकोशःस्थूलसूक्ष्मभूतसंघातएवमुक्तरीत्यानाहम् ॥ शिष्टमवशिष्टमालोकयामिद

त्यक्तोमयैषसंकेतोनाहंदेशोनवैषमे ॥ इदानींनगरंशिष्टमेषएवात्रनिश्चयः ॥५॥ पताकावनपंक्त्याढ्याभृत्योपवनसंकुला ॥ गजाश्वसा
मंतयुतापुरीनाहंनमेपुरी ॥ ६ ॥ व्यर्थसंकेतसंबंधंसंकेतविगमक्षतम् ॥ भोगवृंदंकलत्रंचनाहंनैतन्ममाखिलम् ॥ ७ ॥ एवंसभृत्यंसबलं
सवाहनपुरांतरम् ॥ नाहंराज्यंनमेराज्यंसंकेतोत्थयमाकुलः ॥८॥ देहमात्रमहंमन्येहस्तपादादिसंयुतम् ॥ तदिदंतावदाश्वंतरलमालोक
याम्यहम् ॥ ९ ॥ तदत्रतावन्मांसास्थिनाहमेतदचेतनम् ॥ नचैतन्ममसंश्लेषमेत्यब्जस्ययथाजलम् ॥ १० ॥ मांसंजडंनतदहंनैवाहंरक्तम
प्यलम् ॥ जडान्यस्थीनिनैवाहंनचैतानिममक्वचित् ॥ ११ ॥ कर्मेंद्रियाणिनैवाहंनचकर्मेंद्रियाणिमे ॥ जडंयत्किलदेहेस्मिंस्तदहंनैवचेत
नः ॥ १२ ॥ नाहंभोगानमेभोगानमेबुद्धींद्रियाणिच ॥ जडान्यसत्स्वरूपाणिनचबुद्धींद्रियाण्यहम् ॥ १३ ॥ मूलंसंसृतिदोषस्यमनोनाहंज
डंहितत् ॥ अथबुद्धिरहंकारइतिदृष्टिर्मनोमयी ॥ १४ ॥ मनोबुद्धींद्रियाद्यंतोभूतकोशश्चलद्वपुः ॥ नाहमेवंशरीरादिशिष्टमालोकयाम्यह
म् ॥ १५ ॥ शेषस्तुचेतनोजीवःसचेच्चेत्येनचेतति ॥ अन्येनबोध्यमानोसौनात्मतत्त्ववपुर्भवेत् ॥ १६ ॥ एवंत्यजामिसंवेद्यंचेत्यंनाहंहित
त्किल ॥ शेषोविकल्परहितोविशुद्धचिदहंस्थितः ॥ १७ ॥ चित्रमेषोस्मिलब्धात्माजातःकालेनकार्यवान् ॥ एषसोहमनंतात्मानांतोस्यप
रमात्मनः ॥ १८ ॥ ब्रह्मणींद्रयमेवायौसर्वभूतगणेतथा ॥ सएषभगवानात्मातंतुर्मुक्तास्विवस्थितः ॥ १९ ॥ चिच्छक्तिरमलासैषाचेत्या
मयविवर्जिता ॥ भरिताशेषदिक्कुंजाभास्वराकारधारिणी ॥ २० ॥ सर्वभावगतासूक्ष्माभावाभावविवर्जिता ॥ आब्रह्मभुवनांतःस्थासर्व
शक्तिसमुद्गिका ॥ २१ ॥ सर्वसौंदर्यसुभगासर्वप्राकाश्यदीपिका ॥ सर्वसंसारमुक्तानांतंतुराततरूपिणी ॥ २२ ॥

त्वाविचारयामीतियावत् ॥ १५ ॥ चेतनःप्रमाताचेत्येनप्रमेयेणसहचेतति ॥ तथाचअहमिदंचेतयामीतित्रिपुटीसाक्षिणाबोध्यमानोऽसौप्रमातानात्मनस्तत्त्ववपुस्तात्त्विकंरूपमि
तिसंभाव्यतइत्यर्थः ॥ १६ ॥ एवमनयैवयुक्त्यासाक्षिसंवेद्यंप्रमितिप्रमेयंचत्यजामि ॥ हियस्माच्चेत्यंनाहंकिलेतिप्रसिद्धम् ॥ विशुद्धचित्शुद्धसाक्षीअहमात्मेतिस्थितोनिश्चयेप्रतिष्ठि
तइत्यर्थः ॥ १७ ॥ तद्दर्शनमात्रेणकंठचामीकरवत्तल्लाभमाश्चर्यभूतंदर्शयति ॥ चित्रमिति ॥ कालेनानादिकालादारभ्ययतमानोप्यद्यकार्यवान्परमपुरुषार्थफलवान्जातो
स्मीत्यर्थः ॥ १८ ॥ एषब्रह्मैषइंद्रइत्यादिश्रुतिगणाननुभवेनसंवादयति ॥ ब्रह्मणीति ॥ १९ ॥ अज्ञानांभयहेतुत्वाद्भैरवाकारधारिणी ॥ २० ॥ सर्वेषुभावेषुमनोवृत्तिषुगता ॥
प्रतिबोधविदितंमतमितिश्रुतेः ॥ २१ ॥ सर्वसौंदर्यैर्निरतिशयानंदलेनसुभगापूर्णा ॥ संसारलक्षणानांमुक्तानांमुक्ताफलानाम् ॥ २२ ॥

॥ २३ ॥ भुवनसंख्यया चतुर्दशविधानि भूतानि धत्त इति शेषः ॥ २४ ॥ २५ ॥ व्यापी जगदनुगतः ॥ अवबोधनं मद्बुद्धिसाक्षी ॥ सेयं चिद्द्रष्टृदृश्यभेदेनाकलितशरीरा सती नृपो ऽहमिति विभ्रमं करोति प्राक्कृतवतीत्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ एतया उक्तया साक्षिरूपया ॥ २९ ॥ ३० ॥ ३१ ॥ चितो यो निष्पंदो मायया जीवभाव भ्रमस्तदंशः सप्तदशकालिगभ्रमस्तस्य मात्रा बाह्यांतःकरणभेदभ्रमास्तदंशो जाग्रत्स्वप्नदृश्यभ्रमस्तस्मादन्यत्किंचिच्छाश्वतं कालत्रयाबाध्यं दृश्यं न विद्यत इत्यर्थः ॥ ३२ ॥ एवं जगतो मृषात्वेन निग्रहानुग्रहकर्तृत्वं मौ तत्प्रयोजक हर्षामर्षं क्रमौ च निराश्रयौ निष्प्रकारौ निर्विषयौ निःस्वरूपौ च संपन्नावित्याह ॥ क्वेति ॥ ३३ ॥ स्वमोहे ऽपगते सुखदुःखादिप्रसक्तिरेव नास्तीत्याह ॥ किमिति ॥ सांप्रतमसूढः स्वरूपे स्थितो ऽस्मीत्यर्थः ॥ ३४ ॥ एवमानंदैकरसपूर्णस्वभावेनालोक्यते अनुभूयत इत्येवमालोकस्तस्मिन् ॥ किंशब्दा आक्षेपे ॥ शोकादिसंभावनैव नास्तीत्यर्थः ॥ ३५ ॥

सर्वाकारविकाराढ्या सर्वाकारविवर्जिता ॥ सर्वभूतौघतां याता सर्वदा सर्वतां गता ॥ २३ ॥ चतुर्दशविधान्येषा भूतानि भुवनोदरे ॥ एतन्मयीयं कलना जागती वेदनात्मिका ॥ २४ ॥ मिथ्यावभासमात्रं तु सुखदुःखदशागतिः ॥ नानाकारमयाभासः सर्वमात्मैव चित्परा ॥ २५ ॥ सोयमात्मा मम व्यापी सेयं यदवबोधनम् ॥ सेयमाकलितांगाभा करोति नृपविभ्रमम् ॥ २६ ॥ अस्या एव प्रसादेन मनो देहरथे स्थितम् ॥ संसारजाललीलासु याति वल्गति नृत्यति ॥ २७ ॥ इदं मनः शरीरादि न किंचिदपि वस्तुतः ॥ नष्टे न किंचिदप्यस्मिन्परिनश्यति पेलवे ॥ २८ ॥ जगज्जालमयं नृत्तमिदं चित्तनटैस्ततम् ॥ एतयैवैकया बुद्ध्या दृश्यते दीपलेखया ॥ २९ ॥ कष्टं मुधैव मे चिंता निग्रहानुग्रहस्थितौ ॥ बभूव देहनिष्ठे हन किंचिदपि देहकम् ॥ ३० ॥ अहो त्वहं प्रबुद्धो ऽस्मि गतं दुर्दर्शनं मम ॥ दृष्टं द्रष्टव्यमखिलं प्राप्तं प्राप्यमिदं मया ॥ ३१ ॥ सर्वं किंचिदिदं दृश्यं दृश्यते यज्जगद्गतम् ॥ चिन्निष्पंदांशमात्रांशान्नान्यत्किंचन शाश्वतम् ॥ ३२ ॥ क्वतौ कीदृग्विधौ वापि किंनिष्ठौ वा किमात्मकौ ॥ निग्रहानुग्रहौ लोके हर्षामर्षं क्रमौ तथा ॥ ३३ ॥ किं सुखं किं नु वा दुःखं सर्वं ब्रह्मेदमाततम् ॥ अहमासं मुधा मूढो दिष्ट्यामूढो ऽस्म्यहं स्थितः ॥ ३४ ॥ किमस्मिन्नेवमालोके शोच्यते किं विमुह्यते ॥ किं प्रेक्ष्यते किं क्रियते स्थीयते वाथ गम्यते ॥ ३५ ॥ किंचिदेवमिदं नाम चिदाकाशं विराजते ॥ नमो नमस्ते निस्तत्त्व दिष्ट्या दृष्टो ऽसि सुंदर ॥ ३६ ॥ अहो नु संप्रबुद्धो ऽस्मि सम्यग्ज्ञातमलं मया ॥ नमो मह्यमनंताय सम्यग्ज्ञानोदयाय च ॥ ३७ ॥ विगतरंजननिर्विषयस्थितिर्गतभवभ्रमरंजितवर्जिते ॥ स्थिरसुषुप्तकलाभिगतस्ततः समसमं निवसाम्यहमात्मनि ॥ ३८ ॥ ॥ इ० वा० वा० दे० मो० उपशमप्रकरणे सुरघुविश्रांतिर्नामैकोनषष्टितमः सर्गः ॥ ५९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

किंचिदलौकिकचमत्कारम् ॥ इदं चिदाकाशम ॥ ३६ ॥ सम्यग्ज्ञाने उदय आविर्भावो यस्य तथाविधाय ॥ चकारः पूर्वश्लोकनमस्कार्यसमुच्चयार्थः ॥ सम्यग्ज्ञानलक्षणायाभ्युदयाय चेति वा ॥ ३७ ॥ विगतरंजनत्वादेव निर्मृष्टावस्थात्रयविषयस्थितिरिति शोधितत्वंपदार्थनिर्देशः ॥ गतभवभ्रमत्वादेव वियदाद्यध्यारोपरंजितवर्जित इति शोधिततत्पदार्थनिर्देशः ॥ भावेक्तः ॥ स्थिरया सुषुप्तिकलया स्वाप्ययुक्त्यैव उपाधिविगमादभिगत एकीभूत इत्यखंडैक्यनिर्देशः ॥ ततस्तस्मादहमात्मनि प्रत्यग्ब्रह्मणि समसममात्यंतिकाभेदलक्षणपरमसाम्येन निवसामि न कदाचिदपि मे पुनर्वैषम्यप्रसक्तिरिति फलावस्थानिर्देशः ॥ ३८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशे उपश० एकोनषष्टितमः सर्गः ॥ ५९ ॥ ॥ ७ ॥

आदेहपातंसुरघोरसंगाचारउच्यते ॥ जीवन्मुक्तस्यतस्याथदेहशांतौखवत्स्थितिः ॥ १ ॥ गाधिजोविश्वामित्रः ॥१॥ भूयोभूयःपुनःपुनःप्रयुक्तासुअनुष्ठितासुधर्मार्थप्राप्युपाय चेष्टासुपरिचेष्टितैर्दैवादनर्थाकाराणिविफलानिदुःखपर्यवसितानिवाकार्याणिफलानियासांतथाविधासुसनीषुखेदवान्नासीत् ॥ ईश्वरोदिनेश्वरःसूर्यः ॥२ ॥ समासमेअनुपहनि पहरूपेनिजेराजोचितेकार्येयथानदीमध्यगतःपर्वतोनिष्कंपस्तिष्ठतितद्वत् ॥ ३ ॥ कार्यमायव्ययादि ॥ आहरन्कुर्वन् ॥४ ॥ सुपुप्ताविवनिश्चलयेतियावत् ॥ ५ ॥ अमत्सरीति पाठअत्यंतनिर्मत्सरवत्परदोषोपेक्षकः ॥ ६ ॥ अचापलधीरयेतिच्छेदः ॥ परिपूर्णोयोअर्णवेंदूतद्वत् ॥७ ॥ सइत्यस्यसमसमाधिस्थोभूदितिपरेणान्वयः ॥ तत्रहेतुर्यतस्तस्यपरिपू

॥श्रीवसिष्ठउवाच॥ ॥ इतिहेमजटाधीशोलेभेपदमनुत्तमम् ॥ विवेकाध्यवसायेनब्राह्मण्यमिवगाधिजः ॥ १ ॥ अनर्थाकारकार्यासु नासीच्चेष्टासुखेदवान् ॥ भूयोभूयःप्रयुक्तासुदिनमालास्विवेश्वरः ॥ २ ॥ ततःप्रभृतिसोतिष्ठत्सर्वदाविगतज्वरः ॥ समासमेस्वकेकार्येजलौघाग्रइवाचलः ॥ ३ ॥ हर्षामर्षविनिर्मुक्तःप्रत्यहंकार्यमाहरन् ॥ उदारगंभीरवपुर्जहारांबुनिधेःश्रियम् ॥ ४ ॥ सुषुप्तपदधर्मिण्याचित्तवृत्त्याव्यराजत ॥ निष्कंपयाप्रकाशिन्यादीपःस्वशिखयेवसः ॥ ५ ॥ ननिर्घृणोदयावान्नोनद्वंद्वीनायमत्सरी ॥ नसुधीर्नासुधीर्नार्थीनानर्थी सवभूवह ॥ ६ ॥ समदर्शनयानित्यंवृत्त्याचापलधीरया ॥ अंतःशीतलयारेजेपरिपूर्णार्णवेंदुवत् ॥ ७ ॥ सर्वंचित्तत्त्वकलनंजगदित्यवलोक्यसः ॥ प्रशांतसुखदुःखश्रीस्तस्यपूर्णामतिर्बभौ ॥ ८ ॥ उल्लसन्विकसन्पूर्णस्तिष्ठन्गच्छन्विशन्स्वपन् ॥ अभूत्समसमाधिस्थःप्रवुद्धश्चिद्व्युयंगतः ॥ ९ ॥ सकुर्वन्विगतासंगंराज्यंराजीवलोचनः ॥ अतिष्ठदक्षताकारोभूरिवर्षशतान्यथ ॥ १० ॥ सन्निवेशमिमंदेहनामकंतदनु स्वयम् ॥ सजहौतेजसाक्रांतोरूपंहिमकणोयथा ॥ ११ ॥ विवेशपरमाद्यंतकारणंकारणेश्वरम् ॥ प्रज्ञयासरितांवारिपरिपूर्णमिवांबुधिम् ॥ १२ ॥ अधिगतविमलैकरूपतेजाविजनदशांसमुपेत्यशांतशोकः ॥ अलमभवदसौपरस्वरूपंघटखमिवांबरसंयुतंमहात्मा ॥ १३ ॥ ॥इ० वा० वा० दे० मोक्षोपायेपूपशमप्रकरणेसुरघुवृत्तांतेसुरघुनिर्वाणंनामषष्टितमःसर्गः ॥ ६० ॥ ॥ ७ ॥ ॥

र्णामतिर्बभाविति ॥ ८ ॥ उल्लसन्वपुषा ॥ विकसंश्चेतसा ॥ ९ ॥ १० ॥ आक्रांतःशोषितः ॥ रूपंमूर्त्ताकारम् ॥ ११ ॥ सर्वेषामेवांतःकारणानांहिरण्यगर्भादीनामीश्वरंनियंतारम् सर्वजगतामाद्यंतयोःसृष्टिप्रलययोःकारणंपरंब्रह्मप्रज्ञयासाक्षात्कारवृत्त्या जन्मादिहेतुबीजशक्त्यविद्यावरणबाधेनसरितांवारिकूलद्वयपरिच्छेदत्यागेनपूर्णमर्णवमिवविवेशेत्यर्थः ॥ १२ ॥ तत्प्रविश्यासौकीदृगभूत्तदाह ॥ अधिगतेति ॥ असौसुरघुःप्रज्ञयाअधिगतंस्वात्मतयाप्राप्तंविमलमेकरूपमानंदैकरसंतेजःस्वप्रकाशात्मरूपंयेनतथाविधःसन् विजनांजन्मादिविक्रियाहीनांदशांसमुपेत्यशांतसर्वशोकःसन्घटभंगेघटखमंबरेणमहाकाशेनसंयुतमेकीभूतमिवपरस्वरूपमेवअभवत् ॥ तदेवास्यनिर्वाणमित्यर्थः ॥ १३ ॥
इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेषष्टितमःसर्गः ॥ ६० ॥ ॥ ७ ॥ ॥ ७ ॥

1129

सहजैकसमाधानलक्षणप्रतिपत्तये ॥ परिघेणात्रसंवादःसुरघोरुपवर्ण्यते ॥ १ ॥ हेराघवएवंसुरघुवत्त्वमपिअघस्यहर्षशोकादिनिमित्तस्यपापस्यविपर्ययेतत्त्वबोधेनसमूलमुच्छेदेसति ॥ १ ॥ शिशुर्बालइवघोरेअज्ञानतमसिनिर्मग्नंमनएतांदृष्टिमवष्टभ्यलब्धदीपंप्राप्तप्रकाशंसन्नपरितप्यते ॥ २ ॥ श्वभ्रेमोहांधकूपेपतन्मनस्तथातादृश्यासुरघूपवर्णितप्रकारयैवविवेकावस्थयादृढस्यतृणप्रचयस्यकक्षस्यआलंबनादिवनिर्वृतिविश्रांतिसुखम् ॥ ३ ॥ भावयित्वापुनःपुनःपरिशीलनेनस्वयंदृढीकृत्यान्येभ्योप्युदाहरन्नुपदिशन् ॥ ४ ॥ वातेराहृतंमयूरांगरुहंबर्हमिवलोलंचपलंमनएकसमाधानंकथंकेनप्रकारेणभवेत् ॥ ५ ॥ ६ ॥ हेराघवएकसमाधानेबोधितआयोजितआत्मायथोः ॥ ७ ॥ पारसीकादेशविशेषाः ॥ पार्थिवोराजा ॥ स्यंदनेरथेपरिघोक्षदंडइवाधारभूतः ॥ ८ ॥ माधवोवसंतः ॥ ९ ॥ अवर्षमनावृष्टिः ॥ किंराजदोषान्नेत्याह ॥ प्रजेति ॥ १० ॥ ११ ॥ १२ ॥ अजिनप्रधानामुनींद्राअजिनमुनींद्रास्तद्वत् ॥ १३ ॥ अपरेद्वितीयेलोकांतरेपरलोकइवेत्युत्प्रेक्षा ॥ १४ ॥ अतिविरक्तत्वात्पर्णकुट्यादिपरिग्रहोप्यस्यनाभूदितिसूचनायकंदरमंदिरइत्युक्तम् ॥ १५ ॥ असौपरिघः ॥ १६ ॥ १७ ॥

श्रीवसिष्ठउवाच ॥ ॥एवमुत्पलपत्राक्षराघवाघविपर्यये॥ पदमासाद्याद्वंद्वंविशोकोभवभूतये ॥ १ ॥ एतांदृष्टिमवष्टभ्यनमनःपरितप्यते॥ घोरेतमसिनिर्मग्नंलब्धदीपंशिशुर्यथा ॥ २ ॥ विवेकावस्थयाचैतस्तथैवायातिनिर्वृतिम्॥ पतच्छ्वभ्रेदृढतृणप्रचयालंबनादिव ॥ ३ ॥ अथैतांपावनींदृष्टिंभावयित्वाप्युदाहरन्॥ नित्यमेकसमाधानोभवभूषितभूतलः ॥ ४ ॥ ॥श्रीरामउवाच॥ ॥कथमेकसमाधानंकीदृशंवामुनीश्वर॥ वाताहतमयूरांगरुहलोलंमनोभवेत्॥ ५ ॥ ॥श्रीवसिष्ठउवाच॥ ॥शृणुतस्यैवसुरघोःप्रबुद्धस्यसतस्तदा॥ पर्णादस्यचराजर्षेःसंवादमिममद्भुतम्॥ ६ ॥ राघवैकसमाधानबोधितायोजितात्मनोः॥ परस्परंसमालापमिमंप्रकथयामिते॥ ७ ॥ बभूवपारसीकानांपार्थिवःपरवीरहा॥ परिघोनामविख्यातःपरिघःस्यंदनेयथा॥ ८ ॥ सबभूवपरंमित्रंसुरघोरघुनंदन॥ नंदनोद्यानसंस्थस्यमदनस्येवमाधवः॥ ९ ॥ कदाचित्परिघस्याभूदवर्षंमंडलेमहत्॥ कल्पांतइवसंसारेप्रजादुष्कृतदोषजम्॥ १० ॥ विनेशुर्जनतास्तत्रवह्न्यःक्षुत्क्षामजीविताः॥ ज्वलितेविपिनेवह्नौयथाभूतपरंपराः॥ ११ ॥ तद्दुःखंपरिघोदृष्ट्वाविषादमतुलंययौ॥ तत्याजाश्वखिलंराज्यंदग्धंग्राममिवाध्वगः॥ १२ ॥ प्रजानाशप्रतीकारेष्वसमर्थोविरागवान्॥ जगामविपिनेकर्त्तुंतपोऽजिनमुनींद्रवत्॥ १३ ॥ पौराणामपरिज्ञातेकस्मिंश्चिद्दूरकानने॥ समुवासविरक्तात्मालोकांतरइवापरे॥ १४ ॥ तपश्चरञ्छांतमतिर्द्दांतःकंदरमंदिरे॥ स्वयंशीर्णानिशुष्काणितत्रपर्णान्यभक्षयत्॥ १५ ॥ चिरंहुताशवच्छुष्कपर्णान्येवाथभक्षयन्॥ पर्णादइतिनामासौप्रापमध्येतपस्विनाम्॥ १६ ॥ ततःप्रभृतिपर्णादनामाराजर्षिसत्तमः॥ जंबूद्वीपेवभूवासौविख्यातोमुनिसद्मसु॥ १७ ॥

॥१०६॥

१ परिघस्यनामांतरमेतत्

आत्मप्रसादश्चित्तशुद्धिरीश्वरानुग्रहश्च तस्माज्जातं तत्त्वज्ञानं प्रापत् प्राप्तवान् ॥ १८ ॥ १९ ॥ सिद्धैराध्यैः साध्यैरारुरुक्षुभिश्च कदाचित्परिवृतः ॥ हंसैः सहितः सहंसोऽलिर्भ्रमरो ऽब्जिनीं कमलिनीमिव ॥ २० ॥ हेमचूडः स्वर्णजटाख्यो देशस्तन्महीपतेः सुरघोः ॥ २१ ॥ मौर्ख्यं गर्भः संसारस्तस्माद्विनिर्गतौ जीवन्मुक्तावित्यर्थः ॥ २२ ॥ कल्याणैः सुकृतैः ॥ फलितमिति भावेक्तः ॥ २३ ॥ २४ ॥ चितिशक्तिप्रधाने आनंदाविर्भावो मननशक्तिप्रधाने तापोपशम इति विशेषद्योतनाय चेतो मन इति भेदोक्तिः ॥ २५ ॥ अच्छिन्नमूलश्छिन्नशाखो द्रुम इवेति योज्यम् ॥ २६ ॥ विश्रब्ध्यान्विश्वासगर्भान् ॥ तान्प्राक्तनान्सुखदुःखकथालापान् ॥ २७ ॥ त्वया यथा मांडव्यस्य प्रसादेन ज्ञातं तथैव मया परमात्मन ईश्वर

ततो वर्षसहस्रेण तपसा दारुणात्मना ॥ प्रापदभ्यासवशतो ज्ञानमात्मप्रसादजम् ॥ १८ ॥ बभूव विगतद्वंद्वो निराशः शांतमानसः ॥ नीरागो निरनुक्रोशो जीवन्मुक्तः प्रबुद्धधीः ॥ १९ ॥ विजहार यथाकामं त्रिलोकीमठिकामिमाम् ॥ सिद्धसाध्यैः समं साधो सहंसालिरिवाब्जिनीम् ॥ २० ॥ एकदा तस्य सदनं हेमचूडमहीपतेः ॥ प्राप रत्नविनिर्माणं मेरोः शृंगमिवापरम् ॥ २१ ॥ तं तत्र प्राक्तनं मित्रं पूजामकुरुतां मिथः ॥ पूर्णौ विज्ञातविज्ञेयौ मौर्ख्यगर्भाद्विनिर्गतौ ॥ २२ ॥ अहो नु बत कल्याणैः फलितं मम पावनैः ॥ संप्राप्तवानहं यत्त्वामित्यन्योन्यमथोचतुः ॥ २३ ॥ आलिंगितशरीरौ तावन्योन्यानंदिताकृती ॥ एकासनं विविशतुश्चंद्रार्काविव भूधरे ॥ २४ ॥ ॥ परिघ उवाच ॥ ॥ परमानंदमायातं चेतस्त्वद्दर्शनेन मे ॥ इंदुबिंब इवोन्मग्नं मनः शीतलतां गतम् ॥ २५ ॥ अकृत्रिमसुखं प्रेम वियोगे शतशाखताम् ॥ प्रयाति पल्वलतटेऽच्छिन्नमूल इव द्रुमः ॥ २६ ॥ विश्रब्ध्यांस्तान्कथालापांस्ता लीलास्तच्च चेष्टितम् ॥ संस्मृत्य प्राक्तनं साधो लब्ध्यामि च पुनः पुनः ॥ २७ ॥ ज्ञानमेतन्मया प्राप्तं त्वया ज्ञातं यथाऽनघ ॥ मांडव्यस्य प्रसादेन परमात्मप्रसादजम् ॥ २८ ॥ अद्य कच्चिदहुःखस्त्वं कच्चिद्विश्रांतवानसि ॥ परमे कारणे मेराविव भूमंडलाधिपः ॥ २९ ॥ कच्चित्परमकल्याण आत्मारामतया तव ॥ प्रसादो जायते चित्ते शरदीव सरोंभसि ॥ ३० ॥ कच्चित्करोषि समया सुप्रसन्नगरया ॥ दृष्ट्या सुभगकार्याणि कार्याण्येव नराधिप ॥ ३१ ॥ निराधिव्याधयो धीराः कच्चित्संपन्नशालयः ॥ जनतास्तव देशेषु तिष्ठंति विगतज्वरम् ॥ ३२ ॥ कच्चिदुद्दामफलिनी फलिनीव फलानता ॥ धरा तव फलापूरैर्भृशं धारयति प्रजाः ॥ ३३ ॥ कच्चित्तव दिगंतेषु चंद्रस्येवांशुपंजरम् ॥ तुषारनिकराकारं प्रसृतं पावनं यशः ॥ ३४ ॥ कच्चिद्गुणगणैरेता दिशो निर्विवरीकृताः ॥ त्वया सरोंभसा वाप्या बिसानामिव भूमयः ॥ ३५ ॥

स्य तपसाऽऽराधितस्य प्रसादजमेतज्ज्ञानं प्राप्तम् ॥ २८ ॥ परमे कारणे विवर्तोपादानत्वोपलक्षिते ब्रह्मणि कच्चिदुत्तरोत्तरभूमिकापरिपाकेन विश्रांतवानसि ॥ २९ ॥ प्रसादो रजस्तमोभ्यामनावरणम् ॥ ३० ॥ कार्याणि सर्वजनहितत्वादवश्यकर्त्तव्यान्येव कार्याणि कर्माणि करोषि ॥ ३१ ॥ जनताः प्रजासमूहाः ॥ ३२ ॥ धरा पृथ्वी उद्दामफलिनी उत्कृष्टसस्यादिफलवती फलैरानता फलिनी कल्पलतेव तव प्रजाः फलापूरैः काले काले तत्तदभिलषितफलपूरणैर्भृशमतिशयेन धारयति बिभर्त्ति पोषयति कच्चित् ॥ ३३ ॥ चंद्रस्य अंशुपंजरं किरणजालमिव ॥ ३४ ॥ सरोंभसा तडागोदकेन अब्राह्माः स्वांतर्गता बिसानां मृणालानां भूमय इव त्वया दिशो गुणगणैर्यशोभिर्निर्विवरीकृताः पूरिताः कच्चित् ॥ ३५ ॥

कलमकेदाराणांकोणाश्चतुष्कसंधयस्तत्रत्येप्वासंदीस्थानेषुद्रक्ष्यतीर्द्रक्ष्यंत्यः ॥ छांदसोविभक्तिव्यत्ययः ॥ ३६ ॥ ३७ ॥ इहऐहिकफलत्वेनचोदितंकारीर्यादि ॥ अमुत्रपारलौकिकफलत्वेनचोदितंज्योतिष्टोमादि ॥ ३८ ॥ तवमनोविषयसर्पेषुकच्चित्सविरागंवर्त्ततेवर्त्तते ॥ ३९ ॥ ४० ॥ इष्टानिष्टजनसंयोगजास्तद्वियोगजाश्चसुखदुःखदशाः ॥४१॥ अन्यत्वंवियोगमागताःप्राप्ताः ॥ नियतेःप्राणिकर्मानुसारिण्याईश्वरेच्छायाविधिर्विलासश्चित्रःअद्भुतः ॥ ४२ ॥ परिघोक्तमर्थमनुमोदमानःसुरघुरपितमेवाह ॥ भगवन्नित्यादिना ॥ दैविक्याःदेवईश्वरस्तदिच्छारूपायाः ॥ ४३ ॥ देशतोदूरेकालतश्चदूरदशासुइतिएवंव्यपोह्यवियोज्य ॥ ४४ ॥ ४५ ॥ तथातादृशचित्तसमाधानात्मनाफलितंयथावयं

कच्चित्कलमकेदारकोणस्थानेषुद्रक्ष्यती: ॥ प्रतिग्रामंकुमार्यस्तेगायंत्यानंदनंयशः॥ ३६ ॥ कुशलंतवधान्येषुधनेषुविभवेषुच॥ भृत्येषुचकलत्रेषुपुत्रेषुनगरेषुच ॥ ३७॥ आधिव्याधिविहीनेयंकच्चित्कायलतातव ॥ फलंफलतिपुण्याख्यंयदिहामुत्रचोदितम्॥ ३८ ॥ आपातरमणीयेषुवर्त्ततात्यंतवैरिषु ॥ कच्चिद्विषयसर्पेषुसविरागंमनस्तव ॥ ३९ ॥ अहोबतचिरंकालमावांविश्लेषमागतौ ॥ कालेनश्लेषितौभूयोवसंताद्रितटाविव ॥ ४० ॥ नताजगतिविद्यंतेसुखदुःखदशाःसखे ॥ जीवद्भिर्यानदृश्यंतेसंयोगजवियोगजाः ॥ ४१ ॥ तथैतास्वतिदीर्घासुदशास्वन्यत्वमागताः॥ भूयोवयमपिश्लिष्टाश्चित्रोहिनियतेर्विधिः ॥ ४२॥ ॥ सुरघुरुवाच ॥ ॥ भगवन्नियतेरस्यागतिंसर्पगतेरिव ॥ दैविक्याःकोहिजानातिगंभीरांविस्मयप्रदाम्॥ ४३ ॥ त्वमहंचव्यपोह्येतिदूरेदूरदशासुच॥ अद्यसंघटितौभूयःकिमसाध्यमहोविधेः॥४४॥ वयंत्वद्यमहासत्वभृशंकुशलिनःस्थिताः॥त्वदागमनपुण्येनपरांपावनतांगताः॥४५॥पश्यत्वदागमक्षीणपापानांपुण्यपादपैः॥ तथाफलितमस्माकंनयथावयमाकुलाः॥४६॥ सर्वाःसंपत्तयोस्माकंराजर्षेसंस्थिताःपुरे॥ भवदागमनेनाद्यप्रयाताःशतशाखताम्॥ ४७॥ विकिरतिपरितोरसायनानामिवनिकरंमधुरंमहानुभाव ॥ तववचनमवेक्षणंचपुण्यंपरमपदप्रतिमोहिसाधुसंगः॥४८॥ ॥इ०वा०वा०दे०मोक्षोपायेषूपशमप्रकरणेसुरघुपरिघसमागमोनामैकषष्टितमःसर्गः॥६१॥ ॥ ७ ॥

॥श्रीवसिष्ठउवाच॥ ॥अथैवंप्राययातत्रविश्रंभकथयाचिरम्॥प्राक्तनस्नेहगर्भिण्यास्थित्वोवाचायुधाभिधः॥१॥ ॥परिघउवाच॥ ॥यद्यत्संसारजालेस्मिन्क्रियतेकर्मभूमिप॥ तत्समाहितचित्तस्यसुखायान्यस्यनानघ॥ २॥

नव्याकुलाःसर्वव्याकुलतानिर्मुक्ताःकृतकृत्याःसंपन्नाः ॥ ४६ ॥ शतशाखतांसर्वतःफलोन्मुखतामितियावत् ॥ ४७ ॥ हेमहानुभावपुण्यंतववचनमवेक्षणंदर्शनंचपरितोरसायनानाममृतानांनिकरंविकिरतिवर्षतीव ॥ हियस्मात्साधूनांसंगःसमागमःपरमपदप्रतिमोमोक्षसुखप्राप्तितुल्यइत्यर्थः ॥४८॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेएकषष्टितमःसर्गः ॥ ६१ ॥ ॥ ७ ॥ ॥ अज्ञानावरणेध्वस्तेनित्यचित्स्फुरणस्थितेः ॥ सदैवैकसमाधानंविदुषामत्रवर्ण्यते ॥ १ ॥ आयुधस्याभिधैवअभिधानामयस्यसआयुधाभिधःपरिघः ॥ १ ॥ किमयंतत्त्वविदोव्यवहारसमाध्योःसुखतारतम्यंवक्ष्यत्युतनेतिपरीक्षणायप्रथमंस्वानुभवमुद्घाटयति ॥ यद्यदिति ॥ अन्यस्यअज्ञस्य ॥२॥

एवंस्वानुभवमुद्घाट्यनत्संवाद्यसंवादीवेतिपरानुभवंजिज्ञासमानःसमाधौविश्रांत्याधिक्यमिवदर्शयन्पृच्छति ॥ कच्चिदिति ॥ विक्षेपदुःखानांपरममुपशमंसांसारिकसुखेभ्यश्चश्रे
यःप्रशस्यतरम् ॥ सामान्येव्यत्ययेनवाङ्क्षीवता ॥ ३ ॥ समाहितचित्तस्यसर्वंकर्मसुखायेतिपश्यतस्तेसमाधौविश्रांत्याधिक्यदर्शनंव्यवहारसमाधिभेदाभ्युपगमेनप्रश्नश्चानुपपन्न
एवेतित्वदनुभवसंवाद्येवममाप्यनुभवइत्याशयेनसुरघुःसंकल्परहितंपरमोपशमंश्रेयइतितदुक्तांशस्यात्मस्वरूपेपिसंभवात्तावदभ्युपगच्छन्विश्रमणास्पदंसमाधिमनुतिष्ठसीत्यंश
स्यसमाधेयस्याविश्रमहेतोर्मनसोबाधितत्वादेवासंभवंमन्यमानआक्षिपति ॥ एतदिति ॥ सर्वसंकल्पवर्जितंपरमोपशमंश्रेयइत्येतन्मेमसंयुक्तत्वाद्ब्रूहिसमाधिरनुष्ठेयइतिकिमर्थं
त्वयोच्यतइत्यर्थः ॥ ४ ॥ योज्ञस्तत्त्ववित्सव्यवहरन्नपिकःकिंस्वरूपःकिलयतःसदैवानाद्यनाद्वयचित्स्वभावोसौकदाअसमाहितचित्तोभवतिनकदाचिदपीत्यर्थः ॥ ५ ॥ यदि
तुनिश्चलात्मस्वरूपावस्थितिरेवसमाधिस्तेभिमतःस्यात्तर्हिससदैवास्तीतिनानुष्ठेयःकिंचिदस्तीत्याह॥नित्यमिति ॥ ६ ॥ यदित्वंमामज्ञंमन्यसेतदापिसमाध्युपदेशोनुपपन्नइत्याश

1125

कच्चित्संकल्परहितंपरंविश्रमणास्पदम् ॥ परमोपशमंश्रेयःसमाधिमनुतिष्ठसि ॥ ३ ॥ ॥ सुरघुरुवाच ॥ ॥ एतन्मेब्रूहिभगवन्सर्वसंक
ल्पवर्जितम् ॥ परमोपशमंश्रेयःसमाधिर्हिकिमुच्यते ॥ ४ ॥ योज्ञोमहात्मन्सततंतिष्ठन्व्यवहरंश्चवा ॥ असमाहितचित्तोसौकदाभवति
कःकिल ॥ ५ ॥ नित्यंप्रबुद्धचित्तास्तुकुर्वंतोपिजगत्क्रियाः ॥ आत्मैकतत्त्वसन्निष्ठाःसदैवसुसमाधयः ॥ ६ ॥ बद्धपद्मासनस्यापिकृतब्रह्मां
जलेरपि ॥ अविश्रांतस्वभावस्यकःसमाधिःकथंचवा ॥ ७ ॥ तत्त्वाववोधोभगवन्सर्वाशातृणपावकः ॥ प्रोक्तःसमाधिशब्देननतुतूष्णी
मवस्थितिः ॥ ८ ॥ समाहितानित्यतृप्तायथाभूतार्थदर्शिनी ॥ साधोसमाधिशब्देनपराप्रज्ञोच्यतेबुधैः ॥ ९ ॥ अक्षुब्धानिरहंकाराद्वंद्वेष्वन
नुपातिनी ॥ प्रोक्तासमाधिशब्देनमेरोःस्थिरतराकृतिः ॥ १० ॥ निश्चिताधिगताभीष्टाहेयोपादेयवर्जिता ॥ प्रोक्तासमाधिशब्देनपरिपूर्णा
मनोगतिः ॥ ११ ॥ यतःप्रभृतिबोधेनयुक्तमात्यंतिकंमनः ॥ तदारभ्यसमाधानमव्युच्छिन्नंमहात्मनः ॥ १२ ॥ नहिप्रबुद्धमनसोभूत्वा
विच्छिद्यतेपुनः ॥ समाधिर्दूरमाकृष्टोबिसतंतुःशिशोरिव ॥ १३ ॥ समग्रंदिनमालोकाद्विरमत्यक्षयोयथा ॥ आजीवितांतंनोप्रज्ञातथा
तत्त्वावलोकनात् ॥ १४ ॥ अजस्रमंबुवहनाद्यथानद्यानरुध्यते ॥ तथाविज्ञानदृग्बोधात्क्षणमात्रंनरुध्यते ॥ १५ ॥

येनाह ॥ बद्धेति ॥ कथंकेनोपायेनवा ॥ यत्रचित्तंसमाधेयंतस्यैवापरिचयादित्यर्थः ॥ ७ ॥ तत्वावबोधइति ॥ सम्यक्समूलसर्वाशाविषयबाधेनआत्मनःपरमार्थस्वरूपेआ
धानंसमाधिरितिव्युत्पत्तेरितिभावः ॥ ८ ॥ अबाधितात्मदर्शनरूपापराप्रज्ञा ॥ ९ ॥ तामेवफलतोवर्णयति ॥ अक्षुब्धेतिद्वाभ्याम् ॥ १० ॥ ११ ॥ सानुममपूर्वमेवसिद्धेतिना
नुष्ठेयेत्याशयेनाह ॥ यतइत्यादिना ॥ १२ ॥ यथादूरमाकृष्टोबिसतंतुःक्रीडतःशिशोर्हस्ताद्विच्छिद्यतेतद्वदितिव्यतिरेकदृष्टांतः ॥ १३ ॥ ननुब्रह्माकारवृत्तिविच्छेदेव्युत्थानात्स
माधिविच्छेदस्तस्यस्यात्तत्राह ॥ समग्रमिति ॥ अक्षयःसूर्यःउत्तरार्द्धस्थंनोदतिपदंपूर्वार्द्धेपिनोविरमतीतिसंबध्यते ॥ तथाप्रज्ञाब्रह्माकारवृत्तिरपिआजीवितांतंविदेहकैवल्यप
र्यंतंतत्त्वावलोकनान्नोविरमति ॥ दृढसंस्कारबलादनुवर्त्ततएवेत्यर्थः ॥ १४ ॥ स्वरूपाच्छादकस्याज्ञानस्यसकृदुदितयावृत्त्यानिःशेषनाशेपुनरावरकाभावाद्वातस्यनस्वरूपानिरो
धलक्षणसमाधिभंगप्रसक्तिरित्याशयेनाह ॥ अजस्रमिति ॥ नरुध्यतेआवरणेननप्रतिबध्यते ॥ १५ ॥

परमप्रेमास्पदत्वाद्वासकल्लब्धस्यतस्यनविस्मरणप्रसक्तिरित्याशयेनाह ॥ नविस्मरतीतिद्वाभ्याम् ॥ १६ ॥ १७ ॥ भग्नावरणआत्मैवयावज्जीवंस्वाकारवृत्तिपरंपरांजनयन्नेवास्ते इत्याशयेनाह ॥ गतिमिति ॥ कालस्यकलामूर्त्तिःसूर्यादिः ॥ चिच्चितिश्चैतन्यस्फूर्त्तिः ॥ राहोःशिरइतिवदुपचारः ॥ गतयःस्वाकारवृत्तीः ॥ छांदसोविभक्तिव्यत्ययः ॥ १८ ॥ बोधस्यतज्जीवनकालधर्मत्वाद्वानविच्छेदप्रसक्तिरित्याशयेनाह ॥ यथेति ॥ १९ ॥ अग्न्यौष्ण्यवत्तत्स्वभावत्वाद्वानविच्छेदप्रसक्तिरित्याशयेनाह ॥ नसंभवतीति ॥ २० ॥ ॥ २१ ॥ भेदोविच्छेदः ॥ मत्समाधेरात्मस्वरूपादव्यतिरेकेणहेतुनेत्यर्थः ॥ सदात्मतासत्तासिद्धेत्यर्थः ॥ २२ ॥ यदिमनोस्तीतिमन्यसेतर्हिसदासमाहितमेवयदितुनास्तीतितदास

नविस्मरत्यविरतंयथाकालःकलागतिम् ॥ नविस्मरत्यविरतंस्वात्मानंप्राज्ञधीस्तथा ॥ १६ ॥ नविस्मरतिसर्वत्रयथासततगोगतिम् ॥ नविस्मरतिनिश्चेयंचिन्मात्रंप्राज्ञधीस्तथा ॥ १७ ॥ गतिंकालकलायद्वच्चिन्वानासमवस्थिता ॥ चिच्चितिश्चेत्यरहिताचिन्वानागतयस्तथा ॥ १८ ॥ यथासत्ताविहीनात्मापदार्थोनोपलभ्यते ॥ तथात्मज्ञानहीनात्माकालोज्ञस्यनलभ्यते ॥ १९ ॥ नसंभवतिसंसारेगुणहीनोगुणीयथा ॥ नसंभवत्यात्मसंविद्वर्जितोध्यात्मवांस्तथा ॥ २० ॥ सर्वदैवास्मिसंबुद्धःसर्वदैवास्मिनिर्मलः ॥ सर्वदैवास्मिशांतात्मासर्वदास्मिसमाहितः ॥ २१ ॥ भेदःकेनसमाधेर्मेजन्यतेकथमेववा ॥ आत्मनोऽव्यतिरेकेणनित्यमेवसदात्मता ॥ २२ ॥ तस्मात्कदाचिदपिभेनासमाधिमयंमनः ॥ नवासमाहितंनित्यमात्मतत्त्वैकसंभवात् ॥ २३ ॥ सर्वगःसर्वदैवात्मासर्वमेवचसर्वथा ॥ असमाधिर्हिकोसौस्यात्समाधिरपिकःस्मृतः ॥ २४ ॥ नित्यंसमाहितधियःसुसमामहांतस्तिष्ठंतिकार्यपरिणामविभागमुक्ताः ॥ तेनासमाहितसमाहितभेदभंग्यानित्योदितःक्वनुसउत्तमवाक्प्रपंचः ॥ २५ ॥ ॥ इ०वा०वा०दे०मो० उपशमप्रकरणेसमाधिनिश्चयोनामद्विषष्टितमःसर्गः ॥ ६२ ॥ ॥ ७३ ॥ ॥ परिघउवाच ॥ ॥ राजन्नूनंप्रबुद्धोसिप्राप्तवानसितत्पदम् ॥ संशीतलांतःकरणःपूर्णेंदुरिवराजसे ॥ १ ॥ आनंदमधुसंपूर्णलक्ष्म्याचपरयाश्रितः ॥ शीतलःस्निग्धमधुरोराजीवमिवराजसे ॥ २ ॥ निर्मलोविततःपूर्णोगंभीरःप्रकटाशयः ॥ वेलानिलविलासेनमुक्तोब्धिरिवराजसे ॥ ३ ॥ स्वच्छआनंदसंपूर्णोनष्टाहंकारवारिदः ॥ स्फुटोविस्तीर्णगंभीरःशरत्खमिवराजसे ॥ ४ ॥ सर्वत्रलक्ष्यसेस्वस्थःसर्वत्रपरितुप्यसि ॥ सर्वत्रवीतरागोसिराजन्सर्वत्रराजसे ॥ ५ ॥

माधिरपिमास्तुविक्षेपहेतोरेवाप्रसक्तेरित्याशयेनोपसंहरति ॥ तस्मादिति ॥ २३ ॥ २४ ॥ सम्यक्पृथक्त्ववाधेनाहितार्थायैः ॥ तेनहेतुनाअसमाहितसमाहितभेदभंग्याप्रवृत्तस्त्वद्वाक्यप्रपंचःक्वनुकस्मिन्नर्थेव्यवतिष्ठेनअतोमिथ्यैवोदितइत्यर्थः ॥ २५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेद्विषष्टितमःसर्गः ॥ ६२ ॥ ॥ ७३ ॥ ॥ परिघेणपरीक्ष्यात्रस्तुतःसगुरघुर्निजाम् ॥ सहजस्थितिमेवात्रवर्णयामासविस्तरात् ॥ १ ॥ नूनंनिश्चयेनप्रबुद्धस्तत्त्वविदसि परीक्षणेनमयाप्रबुद्धस्त्वमसीतिवा ॥ १ ॥ आनंदलक्षणेनमधुनामकरंदेनसंपूर्णः ॥ राजीवंपद्ममिवराजसे ॥ २ ॥ निर्मलत्वादेवप्रकटःस्पष्टदृश्यआशयोऽतःप्रदेशोमनश्चयस्य ॥ ३ ॥ ४ ॥ सर्वत्रइष्टानिष्टविषये ॥ ५ ॥

परिच्छेदोविचार्यनिर्णयस्तत्पारगः ॥ अखंडितमपरिच्छिन्नब्रह्मरूपम् ॥६॥ तत्त्वज्ञेत्यंतंसंबोधनम् ॥ उदिताशयमितिवाछेदः ॥ गमागमौआरोहावरोहौतत्प्रयोजिकाभोगरागि तादशातयातत्प्रयुक्तलोल्येनचमुक्तम् ॥ ७॥ नविद्यतेवस्तुपरमार्थवस्तुयस्मात्तथाविधेनवस्तुनात्वात्मनात्वांतस्थेनअमृतेनसागरइवपरेस्वेमहिम्नित्वमोसि ॥८॥ तदुक्तंसर्वैयुक्ति भिःसमर्थयन्ननुमोदमानःसुरघुरुवाच ॥ नतदित्यादिना ॥ नकिंचनअनृतमित्यर्थः ॥ ९ ॥ उपात्तस्यत्यागोहिहानंतत्रप्रतियोगिहानप्रतिकूलंहानेनव्यवच्छेद्यंविनाश्यंउपादानं विनाहेयमितिकिमुच्यतेवक्तुंशक्यतेनकिंचिदित्यर्थः ॥ १० ॥ ननुतुच्छंहेयमतुच्छमुपादेयंकिनस्यात्तत्राह ॥ तुच्छत्वादिति ॥ यथाहुः ॥ बद्धमुक्तोमहीपालोग्राममात्रेणतुष्य ति ॥ सएवपूर्वसंपूर्णोनराज्यंबहुमन्यतइति ॥ ११ ॥ इहमन्यंतेइतिशेषः ॥ अतोनकिंचित्तुच्छातुच्छबुद्ध्यानिंद्यंस्तुत्यंवेत्याह ॥ वर्ज्येइति ॥ १२ ॥ १३ ॥ वस्तुशब्दोभावप्र

सारासारपरिच्छेदपारगस्त्वंमहाधिया॥ जानासिसर्वमेवेदंयथास्थितमखंडितम्॥६॥ भावाभावपरिच्छेदतत्त्वज्ञमुदिताशयम्॥ग मागमदशालौल्यमुक्तंतववपुःस्थितम्॥ ७॥ वस्तुनावस्तुनेवांतरमृतेनेवसागरः॥ अपुनःप्रक्षयायैवपरेत्वमोसिसुंदर॥८॥ ॥सुरघुरु वाच॥ ॥नतदस्तिमुनेवस्तुयत्रोपादेयतास्तिनः॥ यावत्किंचिदिदंदृश्यंतावदेतन्नकिंचन ॥ ९ ॥ उपादेयस्यचाभावाद्धेयमप्यस्तिकिं किल॥ प्रतियोगिव्यवच्छेद्यंविनाहेयंकिमुच्यते ॥ १० ॥ तुच्छत्वात्सर्वभावानामतुच्छत्वाच्चकालतः॥ चिरंममपरिक्षीणेतुच्छातुच्छे मनःस्थिती॥ ११ ॥ देशकालवशादेवतुच्छस्यातुच्छतामिह॥ अतुच्छस्यतुतुच्छत्वंवर्ज्येनिंदास्तुतीबुधैः ॥ १२ ॥ रागान्निंदास्तुतीलो केरागश्चपरिवांछितम्॥ वांछतेचमहोदारंवस्तुशोभनबुद्धिना ॥ १३॥ त्रैलोक्येचस्त्रियःशैलाःसमुद्रवनराजयः॥ भूतानिवस्तुशून्या निसारोनास्त्यत्रवस्तुतः॥ १४ ॥ मांसास्थिदारुमृद्रत्नमयेजगतिजर्जरे॥ वांछनीयविहीनेस्मिन्शून्येकिमिववांछ्यते ॥ १५ ॥ वांछा यांविनिवृत्तायांसंक्षयोद्वेषरागयोः॥ दिनलक्ष्म्यांव्यपेतायामालोकातपयोरिव॥ १६॥ अलमतिविततैर्वचःप्रपंचैरियमुचितेहसुखा यदृष्टिरेका॥ उपशमितरसंसमंमनोंतर्यदिमुदितंतदनुत्तमाप्रतिष्ठा॥ १७॥ ॥ इ० वा० वा० दे० मोक्षोपायेपूपशमप्रकरणेसुरघुपरि घनिश्चयोनामत्रिषष्टितमःसर्गः॥ ६३॥ ॥श्रीवसिष्ठउवाच॥ ॥सुरघुःपरिघश्चैवविचार्येतिजगद्भ्रमम्॥ मिथःप्रपूजितौतुष्टौस्वव्या पारपरौगतौ॥ १ ॥ तदेवराघवश्रुत्वापरमंबोधकारणम्॥ अनेनैवविबोधेनभवलब्धास्पदःस्फुटम् ॥ २ ॥

धानः ॥ सत्यत्वशून्यानीत्यर्थः ॥ १४ ॥ अध्यात्मंमांसास्थिमयेअधिभूतंचदारुमृद्रत्नादिमये ॥ रत्नशब्दःशिलापरः ॥ १५॥ १६ ॥ यदिसर्वमेवासारंकितर्हिसारभूतंसेवितुमु चितंतदाह ॥ अलमिति ॥ यदिमनउपशमितरसंसर्वतोनीरागंसमंविक्षेपवैषम्यरहितंसदंतःस्वात्मन्येवमुदितंतत्तर्हिसैवोत्तमाप्रतिष्ठाविश्रांतिरियमेवैकदृष्टिःसुखायसदासेवितुमु चितेत्यर्थः ॥ १७॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपश० त्रिषष्टितमःसर्गः ॥६३॥ ॥ ७ ॥ ॥ यैरुपायैरुपायज्ञोमनोदोषैर्नबाध्यते ॥ आत्माचोरिधिय तेदुःखात्तउपायाइहोदिताः ॥ १ ॥ इतिवर्णितप्रकारेणविचार्य ॥ १ ॥ तत्वर्णितसंवादरूपंबोधकारणंश्रुत्वा ॥ एतावदेवश्रुत्वावधारितंबोधायपर्याप्तमितिसूचनायप्रथमएव कारः ॥ एतावद्बोधएवसुप्रतिष्ठितःपरमपदप्राप्तयेपर्याप्तइतिद्योतनायद्वितीयः ॥ २ ॥

1126

धीरैर्विद्वद्भिःसहविचारेणधीरेणनिश्चलेनस्वविचारेणचगततीक्ष्णयाप्राप्तनिशितभावयाहृदंबरेअहंकारलक्षणेकालमेघेगलतिसति ॥ ३ ॥ समस्तेत्यादिविशेषणानिशरत्कालेपि योज्यानि ॥ ४ ॥ सर्वानर्थनिवर्त्तकत्वाच्छरण्ये ॥ ५॥ अध्यात्ममयआत्मिकविचारप्रचुरः ॥ अंतर्मुखोबाह्यासक्तिशून्यः ॥ चित्येवानुसंधानंपुनःपुनरादरादास्वादनंयस्य॥६॥ रागद्वेषमयोरागद्वेषप्रचुरइवमूढैःकल्प्यमानोपि ॥ ७ ॥८॥ दुर्द्रुमोविषकंटकवृक्षः ॥ हियस्माज्ज्ञस्यचित्तंमहावपुःक्षुद्रसुखलवनिस्पृहमितियावत् ॥ ९ ॥ यथाविरक्तोमानवो जायामरणेसतिकामुकइवनदुःखीतथापरितोविचार्यज्ञाताअखिलाविषयेंद्रियशरीरादिसर्वदृश्यरूपाअविद्यामिथ्याभ्रांतिर्येनतथाविधंज्ञचित्तंनदुःखितंभवतीत्यर्थः ॥१०॥ त

परयाप्रज्ञयाधीरविचारगततीक्ष्णया॥ गलत्यलमहंकारकालमेघेहृदंबरे॥ ३॥ समस्तलोकानुमतेसफलेह्लादकारिणि॥ निर्मलेवितते चेतःशरत्कालउपस्थिते॥ ४॥ ध्येयेशरण्येसुगमेसकलानंदसंपदि॥ सुप्रसन्नेचिदाकाशेस्थीयतेपरमात्मनि॥ ५॥ योनित्यमध्यात्ममयोनित्यमंतर्मुखःसुखी॥ नित्यंचिदनुसंधानोमनःशोकैर्नबाध्यते॥ ६ ॥ व्यवहारपरोत्युच्चैरागद्वेषमयोपिसन्॥ नांतःकलंकमायातिपद्मोजलगतोयथा॥ ७॥ सम्यग्विज्ञानवान्शुद्धोयोंतःशांतमनामुनिः॥ नबाध्यतेसमनसाकरिणेवमृगाधिपः॥ ८॥ भोगैकशरणं दीनंनचित्तंज्ञस्यविद्यते॥ नंदनेदुर्द्रुमइवज्ञचित्तंहिमहावपुः॥ ९ ॥ विरक्तोजन्ममरणेयथादुःखीनमानवः॥ परिज्ञाताखिलाविद्यंतथा चित्तंनदुःखितम्॥ १०॥ परिज्ञातमनोमोहोजगद्भावोद्भवात्मना॥ स्पृश्यतेनैनसासाधोरजसेवनभस्तलम्॥ ११॥ अविद्यासंपरिज्ञातमिदमेवमहौषधम्॥ अविद्याविततव्याधेस्तिमिरस्येवदीपकम्॥ १२॥ अविद्यासंपरिज्ञातायदैवहितदैवहि॥ सापरिक्षीयतेभूयःस्वप्नेनेवहिभोगभूः॥ १३॥ व्यवहारपरोप्यंतरसक्तमतिरेकधीः॥ स्पृश्यतेनैनसासाधुर्मत्स्येक्षणमिवांभसा॥ १४॥ प्राप्तेचिद्भासुरालोकेप्रक्षीणाज्ञानयामिनी॥ शेमुषीपरमानंदमागताज्ञस्यराजते॥ १५॥ अज्ञाननिद्रोपशमेजनोज्ञानार्कबोधितः॥ तत्प्रबोधमवाप्नोतिपुनर्येननमुह्यति॥ १६॥ दिनानिजीव्यतेतानिसानंदास्तेक्रियाक्रमाः॥ आत्मचंद्रोदितायेषुचिज्ज्योत्स्नाहृदयांबरे॥ १७॥ नरोमोहसमुत्तीर्णःसततंस्वात्मचिंतया॥ अंतःशीतलतामेतिस्वामृतेनेवचंद्रमाः॥ १८॥ तानिमित्राणिशास्त्राणितानितानिदिनानिच॥ विरागोल्लासवान्येभ्यआत्मचित्तोदयःस्फुटम्॥ १९॥

स्यभ्राविदुःखहेतुपापसंबंधोपिनास्तीत्याह॥परिज्ञातेति॥जगतिव्यवहारपदेभावःकर्तृत्वाभिमानस्तस्मादुद्भवतीतिजगद्भावोद्भवंतदात्मनाएनसापापेन ॥ ११॥ अविद्यालक्षणजगदाकारविस्तीर्णव्याधेरविद्यामात्रंजगदितिसम्यक्परिज्ञातंविचारजन्यंज्ञानमेवमहौषधमित्यर्थः ॥ १२ ॥ यथास्वप्नोयमितिपरिज्ञातेनस्वप्नेनतद्भोगभूःपरिक्षीयतेतद्वत् ॥ १३ ॥ मत्स्यानामीक्षणंचक्षुरंभसानस्पृश्यतेतद्वत् ॥ तत्स्पर्शेपिहिताक्षाणांतेषांजलेदर्शनादिव्यवहारोनस्यादिति भावः॥ १४ ॥ शेमुषीप्रज्ञा ॥ १५ ॥ ज्ञायतेऽनेनेतिज्ञानंशास्त्रंतद्रूपेणार्केणबोधितः ॥ तत्तादृशंप्रबोधम् ॥ १६ ॥ इदानींविद्वांस्तौति ॥ दिनानीत्यादिना ॥ जीव्यतेइतिभावे लः ॥ दिनानीतिकालाध्वनोरत्यंतसंयोगेद्वितीयानतुकर्मणि ॥ येषुदिनेषुचिज्ज्योत्स्नाहृदयांबरेआह्लादयतिविराजतेवेतिशेषः ॥ १७ ॥ १८ ॥ येभ्योमित्रादिभ्योनिमित्तेभ्यो विरागोल्लासवान्आत्माकारवृत्तिलक्षणश्चित्ताभ्युदयःस्फुटंसिद्ध्यतीतिशेषः ॥ १९ ॥

हेलाअवहेलनमुपेक्षेतियावत् ॥ अविगतैनसामक्षीणपापानाम् ॥२०॥ इतआरभ्यसर्वेषांद्वितीयांतपदानांनवमश्लोकस्थेजीवबलीवर्दंउत्तारयेदित्यत्रसंबंधः ॥उलपास्तृणविशेषाः ॥२१॥ विशेषेणऊढादुःखमहाभारोयेन ॥२२॥ वरत्रयाचर्ममय्यानासारज्ज्वा ॥ मनोलक्षणस्यवणिजोनिकेतेआज्ञालक्षणेसंकेतेनिवासेचस्थितम् ॥ बंधुजनलक्षणैर्बंधनैर्निश्चलंचलितुमशक्तम् ॥२३॥ कुकर्दमेगोमयपंके ॥२४॥२५॥ वहिराकारमात्रेणभासुरमंतस्तुदीनम् ॥ बाह्यैरिंद्रियैश्चक्षुरादिभिराक्रांतमारूढम् ॥ कर्मपदेनकाम्यकर्मभरोचकार्थवादालक्ष्यंते ॥ तल्लक्षणेनघंटारवेणाक्रांतंभ्रमितम् ॥२६॥ चक्रावर्त्तधुराशकटभारः ॥ साहिशकटचक्रैरावर्त्तनेतदुद्वहम् ॥ २७॥ करुणंयथास्यात्तथाआक्रंदकारिणम्

चिरंशोचंतितेदीनाजन्मजंगलवीरुधः॥ आत्मावलोकनेहेलायेपामविगतैनसाम्॥२०॥ आशापाशशतैर्बद्धंभोगोलपसुलालसम्॥ जराजर्जरिताकारंशोकोद्धासकदर्थितम्॥ २१॥ व्यूढदुःखमहाभारंजन्मजंगलजीवितम्॥ कुकर्मकर्दमालिप्तंमोहपल्वलशायिनम् ॥ २२॥ रागदंशावलीदष्टंकृष्टंतृष्णावरत्रया ॥ मनोवणिङ्निकेतस्थंबंधुबंधननिश्चलम्॥ २३॥ पुत्रदारजराजीर्णमग्नोन्मग्नंकुकर्दमे॥ श्रांतंविगतविश्रामंभग्नमादीर्घवर्त्मनि॥ २४॥ गमागमपरिक्षीणंसंसारारण्यचारिणम्॥ अलब्धशीतलच्छायंतीव्रतापोपतापितम् ॥ २५॥ आकारभासुरंदीनंवाह्यैराक्रांतमिंद्रियैः॥ कर्मघंटारवाक्रांतंक्रांतंदुष्कृतताडनैः॥ २६॥ आविर्भावतिरोभावचक्रावर्त्तधुरोद्वहम्॥ अज्ञानविकटाटव्यांलुठितंसन्नगात्रकम्॥ २७॥ निजानर्थसदामग्नंसीदमानमकिंचनम्॥ सन्नांगंकर्मभारेणकरुणाक्रंदकारिणम्॥ २८॥ रामजीववलीवर्दमिमंसंसारपल्वलात्॥ परमंयत्नमास्थायचिरमुत्तारयेद्बलात्॥ २९॥ तत्त्वावलोकनात्क्षीणेचित्तेनोजायतेपुनः॥ जीवःकदाचनतदाभवेत्तीर्णभवार्णवः॥ ३०॥ महानुभावसंपर्कात्संसारार्णवलंघने॥ युक्तिःसंप्राप्यतेरामस्फुटानौरिवनाविकात्॥ ३१॥ यस्मिन्देशमरौतज्ज्ञोनास्तिसज्जनपादपः॥ सफलःशीतलच्छायोनतत्रनिवसेद्बुधः॥ ३२॥ स्निग्धशीतवचःपत्रेसच्छायेस्मितपुष्पके॥ क्षणाद्विश्रम्यतेरामभृशंसुजनचंपके॥ ३३॥ तदभावेमहामोहतापसंपत्तिदायिनि॥ किंचिज्ज्ञातविवेकेनस्वमव्यंनेहधीमता॥ ३४॥ आत्मैवस्वात्मनोबंधुरात्मनात्मैवमुद्धरेत् ॥ नात्मानमवलेपेनजन्मपंकार्णवेक्षिपेत्॥ ३५॥ किमिदंकथमायातंकिंमूलमितिकिंक्षयम्॥ देहदुःखमितिप्राज्ञैःप्रेक्षणीयंप्रयत्नतः॥ ३६॥ नधनानिनमित्राणिनशास्त्राणिनबांधवाः॥ नराणामुपकुर्वंतिमग्नस्वात्मसमुद्धृतौ॥ ३७॥

॥२८॥ चिरंपरमंयत्नमास्थायज्ञानबलादुत्तारयेदित्यर्थः ॥२९॥ उत्तारितस्यपुनःपंकमज्जनशंकांवारयति॥तत्त्वेति॥३०॥ उत्तारणोपायज्ञानलाभस्तुसद्गुरोरभिगमनात्सिद्ध्यतीत्याशयेनाह ॥ महानुभावेति॥३१॥देशोमरुरिवदेशमरुस्तस्मिन् ॥३२॥ सुजनलक्षणेचंपकवृक्षे॥ विशेषणान्युभयसाधारण्येनयोज्यानि॥३३॥तदभावेस्वात्मलाभविश्रांत्यभावेदहसंसारेनस्वमव्यम् ॥३४॥ एवमनेनोपायेनउद्धरेदात्मानमित्यर्थः॥ अवलेपेनदेहाभिमानगर्वेण॥३५॥कस्मात्क्षयोयस्यांकिंक्षयम् ॥ देहाधीनंदुःखंप्रेक्षणीयंस्वबुद्ध्याशास्त्रसज्जनसहायेनचविचारणीयम् ॥ द्वावितिशब्दौविचार्यविचारप्रकारबाहुल्यद्योतनार्थौ ॥३६॥ शास्त्राण्यनात्मशास्त्राणि ॥३७॥

किंतर्ह्युपकरोतितदाह ॥ मनोमात्रेणेति ॥ सुहृदापरिशुद्धेनेतियावत् ॥ ३८ ॥ ३९ ॥ नावमन्येतनोपेक्षेत ॥ ४० ॥ आलानंगजबंधनस्तंभः ॥ जंबालेपंकेनिर्मग्नम् ॥ ४१ ॥ विमूढत्वंस्वात्माज्ञानम् ॥ ४२ ॥ सतःपरमात्मनोमार्गणंमार्गोबोधपर्यंतोविचारस्तस्मिन्प्रकटतांस्फुटावलोकनताम् ॥ मनोरचितंवाह्याध्यात्मिकासक्तिजालम् ॥ ४३ ॥ तत्रापिदुस्त्यजदेहाभिमानत्यागएवमुख्यइत्याशयेनाह ॥ एतावतैवेति ॥ ४४ ॥ तस्यदर्शनस्यपरिणामेनभूमिकापरिपाकेनचिद्दिवाकरभावापत्त्यावा ॥ ४५ ॥ अवलोकनंसिद्ध्यतीतिशेषः ॥ ४६ ॥ सुखमोदोनिरतिशयानंदविश्रांतिस्तज्जाताद्रूप्येणाविर्भूतानिर्विकल्पावस्था ॥ ४७ ॥ तामेववर्णयति ॥ परिपूर्णेत्यादिना ॥ रंजनंदृश्योपरागम् ॥ ४८ ॥

मनोमात्रेणसुहृदासदैवसहवासिना ॥ सहकिंचित्परामृश्यभवत्यात्मासमुद्धृतः ॥ ३८ ॥ वैराग्याभ्यासयत्नाभ्यांस्वपरामर्शजन्मना ॥ तत्त्वालोकनपोतेनतीर्यतेभवसागरः ॥ ३९ ॥ शोच्यमानंजनैर्नित्यंदह्यमानंदुराशया ॥ नात्मानमवमन्येतप्रोद्धरेदेनमादरात् ॥ ४० ॥ अहंकारमहालानंतृष्णारज्जुंमनोमदम् ॥ जन्मजंबालनिर्मग्नंजीवदंतिनमुद्धरेत् ॥ ४१ ॥ अयमेतावतैवात्मात्रातोभवतिराघव ॥ यदपास्यविमूढत्वमहंकारःप्रमार्ज्यते ॥ ४२ ॥ एतावतैवसन्मार्गेयातिप्रकटतामलम् ॥ यदपास्यमनोजालमहंभावोविलूयते ॥ ४३ ॥ एतावतैवदेवेशःपरमात्मावगम्यते ॥ काष्ठलोष्टसमत्वेनदेहोयदवलोक्यते ॥ ४४ ॥ अहंकारांबुदेक्षीणेदृश्यतेचिद्दिवाकरः ॥ ततस्तत्परिणामेनतत्पदंसमवाप्यते ॥ ४५ ॥ यथाध्वांतसमुच्छेदेस्वयमालोकवेदनम् ॥ तथाहंकारविच्छेदेस्वयमात्मावलोकनम् ॥ ४६ ॥ अहंकारेपरिक्षीणेयावस्थासुखमोदजा ॥ सावस्थाभरिताकारासासेव्यासंप्रयत्नतः ॥ ४७ ॥ परिपूर्णार्णवप्रख्यानवागोचरमेतिनः ॥ नोपमानमुपादत्तेनानुधावतिरंजनम् ॥ ४८ ॥ केवलंचित्प्रकाशांशकलिकास्थिरतांगता ॥ तुर्याचेत्प्राप्यतेदृष्टिस्तत्तयासोपमीयते ॥ ४९ ॥ अदूरगतसादृश्यात्सुषुप्तस्योपलक्ष्यते ॥ सावस्थाभरिताकारागगनश्रीरिवातता ॥ ५० ॥ मनोहंकारविलयेसर्वभावांतरस्थिता ॥ समुदेतिपरानंदायातनुःपारमेश्वरी ॥ ५१ ॥ सास्वयंयोगसंसिद्धासुषुप्तादूरभाविनी ॥ नगम्यावचसांरामहृद्येवेहानुभूयते ॥ ५२ ॥ अनुभूतिंविनातत्त्वंखंडादेर्नानुभूयते ॥ अनुभूतिंविनारूपंनात्मनश्चानुभूयते ॥ ५३ ॥

तयैवसोपमीयतेनान्यत्तदुपमानमस्तीत्यर्थः ॥ ४९ ॥ केनतर्हिनिदर्शनेनतत्संभावनास्यात्तदाह ॥ अदूरेति ॥ निर्विक्षेपत्वांशेसन्निहितात्सादृश्यादित्यर्थः ॥ उपसमीपेलक्ष्यते ॥ अज्ञानावरणंचेत्तदानस्यात्तर्हितुर्यावस्थैवस्यादित्यनयारीत्येत्यर्थः ॥ ५० ॥ घटविलयेतदाकाशस्यमहाकाशत्वमिवमनोहंकारोपाधिविलयेत्वंपदलक्ष्यस्यतत्पदलक्ष्यात्मस्वभावतासिद्ध्यतीत्याह ॥ मनइति ॥ ५१ ॥ सुषुप्तस्यअदूरभाविनीसंनिहितात्हृद्येवानुभूयतेस्वानुभवातिरिक्तंतत्परिचायकंनास्तीत्यर्थः ॥ ५२ ॥ यथाखंडाद्यसाधारणगवादिस्वरूपपरिचयेनानुभवादन्यन्मानंतथाआत्मन्यपीत्याह ॥ अनुभूतिमिति ॥ आत्मनोरूपंपरमार्थस्वरूपम् ॥ चोप्यर्थः ॥ ५३ ॥

इदमखिलमात्मतत्त्वमेव तर्हितत्कथमनुभूयतेतत्राह ॥ दृढेति ॥ चेतसिवहिर्विषयेपूपशमितेअंतःप्रत्यगात्मनिक्षीरोदकवदैकरस्येनदृढंपरिणामिनिस्थितेनिश्चलेसतिचराचरा णामात्माप्रत्यग्भूतोदेवानांचक्षुरादीनांदेवःसाक्षितयाप्रकाशयितास्वयंसाक्षादनुभूयतएवनात्रसंशयःकार्यइत्यर्थः ॥ ५४ ॥ एवंचतुर्थभूमिकायामात्मानुभवेतदनुपंचमभूमिका यामात्यंतिकविषयवासनाविनाशस्तदनुषष्ठभूमिकायांविनैवयत्नंशुभःपरमपुरुषार्थरूपःस्वात्मनःस्फुटःप्रकाशःसदैवपूर्णभावानुभवःसिद्ध्यति ॥ तदनुसप्तमभूमिकायांसमाध्यस माध्योःसमतावशादात्यंतिकवैषम्यनिवृत्तेःसमुद्रांतर्विलीनसैंधवघनवत्सुखैकरसतयापरिणमनंसिद्ध्यतितत्तुमहतांब्रह्मादीनामपिदयत्तयाऽचिंत्यरूपम् ॥ यतोवाचोनिवर्त्ततेअ प्राप्यमनसासहेतिश्रुतेरित्यर्थः ॥ ५५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेचतुःषष्टितमःसर्गः ॥ ६४ ॥ ॥ ७ ॥ ॥ सह्याख्यशैलस्तत्रात्रेराश्रमस्तत्रव

अखिलमिदमनंतमात्मतत्त्वंदृढपरिणामिनिचेतसिस्थितेंतः॥ वहिरुपशमितेचराचरात्मास्वयमनुभूयतएवदेवदेवः॥५४॥ तदनुविषय वासनाविनाशस्तदनुशुभःपरमःस्फुटप्रकाशः॥ तदनुचसमतावशात्स्वरूपेपरिणमनंमहतामचिंत्यरूपम्॥५५॥ ॥इ०वा०वा०दे० मोक्षोपायेपूपशमप्रकरणेउपदेशोनामचतुःषष्टितमःसर्गः॥ ६४॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥मनसैवमनश्छित्त्वायद्यात्मा नावलोक्यते॥ ममेत्यहमितित्यक्तातत्तामरसलोचन॥१॥ नास्तमेतिजगद्दुःखंयथाचित्रगतोरविः॥ आयात्यापदनंतत्वंमहार्णववदा तता॥२॥ पुनःपुनरुपायातिजलकल्लोलकारणम्॥ मेघनीलतमःश्यामासंसृतिप्रावृडाकुला॥३॥ अत्रैवोदाहरंतीममितिहासंपुरातन म्॥ संवादंसुहृदोःसह्यसानौभासविलासयोः॥४॥ अस्त्युत्सेधजिताकाशःपीठेनजितभूतलः॥ तलेनजितपातालस्त्रिलोकविजयोगि रिः॥५॥ असंख्यकुसुमापूरोऽसंख्यनिर्मलनिर्झरः॥ गुह्यकारक्षितनिधिःसह्यनामाऽविपत्प्रभः॥६॥ मुक्तापटलसंपूर्णैर्भानुभासुरभि त्तिभिः॥ भासुरःकांचनतटैःकटैरिवसुरद्विपः॥७॥ क्वचित्पुष्पभरासारोधातुसाराततःक्वचित्॥ क्वचित्फुल्लसरःसारोरत्नशालिशिलःक्व चित्॥८॥इतोरटन्निर्झरवानितःक्वणितकीचकः॥इतोरटद्धुहावातइतःषट्पदघुंघुमः॥ ९॥ सानौगीताप्सरोवृंदैर्वनेमृगखगारवः॥ अ धित्यकायांमत्ताभ्रोगगनेपुखगारवः॥ १०॥ विद्याधराश्रितगुहोभृंगगीतांबुजाकरः॥ किरातगीतपर्यंतःखगगीतवनद्रुमः॥ ११॥

र्यते ॥ विलासभासयोर्जन्मकर्मशोकोदयक्रमः ॥ १॥ आत्मदर्शनोपायोपेक्षणेशोकमोहादिदुःखपरंपरादुर्वारेत्यर्थेभासविलासाख्यायिकामवतारयिष्यन्नाह ॥ मनसैवेति॥ यदिनावलोक्यतेतत्तर्हिजगद्दुःखंयथाचित्रगतोरविर्नास्तमेतितथानास्तमेतीतिपरेणान्वयः ॥ १ ॥ आपदनंतत्वमपरिच्छेद्यत्वमायाति ॥ २ ॥ मेघैर्नीलतमोभिश्चश्यामासंसृति लक्षणाप्रावृड्वर्षर्तुः ॥ ३ ॥ सुहृदोर्मित्रयोःशुद्धचित्तयोश्च ॥ ४ ॥ पीठेनउपत्यकाभागेन ॥ तलेनभूम्यंतःप्रविष्टमूलभागेन ॥ जितशब्दआक्रांतपरः ॥ ५ ॥ अविपत्प्रादकम्प सत्प्रतिघातिनीभारत्नादिदीप्तिर्यस्मिन् ॥ ६ ॥ भानुभिःसूर्यरत्नादिकिरणैर्भासुरभित्तिभिर्दीप्तवप्रैः ॥ पाटलभित्तिभिरितिपाठेप्येवम् ॥ कांचनैस्तटैर्नितंबैःकटैर्गंडैः ॥ जात्या ख्यायांबहुवचनम् ॥ ७ ॥ धातुसारैर्हरितालमनःशिलागैरिकादिभिराततः ॥ ८ ॥ इतइतइतिप्रदेशभेदोक्तिः ॥ ९ ॥ सानौप्रस्थे ॥ मत्तानीवगर्जंत्यभ्राणियस्मिन् ॥१०॥११॥

128

जगत्पदेनलोकत्रयवासिनोलक्ष्यंतेतेषांगृहमिवत्रैलोक्यलक्षणंब्रह्मांडगृहमिवेतिवास्थितइतिशेषः ॥ १२ ॥ निधानैर्निखातधनैः ॥ १३ ॥ अधःपतितपुष्पाणिसद्यःपतितपुष्पाणामंतरिक्षस्थारेणवःपतमानपुष्पाणिवृक्षस्थपुष्पाणिचाभ्रत्वेनक्रमाद्वर्ण्यंते ॥ १४ ॥ मंदारःकल्पवृक्षभेदस्तद्वैस्तदारूढैरिव ॥ १५ ॥ शिलाएवाभिसारिकात्वेनोत्प्रेक्षते ॥ अभ्रेति ॥ क्वणन्मंजीरादिखचितरत्नानामभिसारविरोधित्वान्मूकरत्नविभूषिताः ॥ शृंगैरभिसारिकाइवाश्लिष्टत्वात्शृंगाभिसारिकाः ॥ १६ ॥ तत्रउत्तरतटेअत्रेराश्रमोस्तीतिच

स्कंधेषुदेवैर्वलितःपादेषुवलितोनरैः ॥ पातालेवलितोनागैर्जगद्गृहमिवापरम् ॥ १२ ॥ कंदरेषुश्रितःसिद्धैर्निधानैरंतराश्रितः ॥ चंदनेषुश्रितोनागैःसिंहैःशृंगशिखासुच ॥ १३ ॥ पुष्पाभ्रसंवीतवपुःपुष्परेणवभ्रपांसुलः ॥ पुष्पवात्याभ्रमद्ध्वांतःपुष्पपादपपांडुरः ॥ १४ ॥ धातुधूल्यभ्रकपिलोरत्नोपलतलस्थितैः ॥ मंदारगैरिवपुरस्त्रीगणैरलमाश्रितः ॥ १५ ॥ अभ्रनीलांशुकच्छन्नामूकरत्नविभूषणाः ॥ शिलाःकनकसुंदर्योयत्रशृंगाभिसारिकाः ॥ १६ ॥ तत्रोत्तरतटेसानौविनघफलपादपे ॥ रत्नपुष्करिणीजालवहन्निर्झरवारिणि ॥ १७ ॥ चूतद्रुमलतोन्मुक्तपुष्पस्तवकदंतुरे ॥ विफुल्लांकोलपुन्नागनीलनीरजदिक्तटे ॥ १८ ॥ लतावितानच्छन्नार्करत्नांशुभरभास्वरे ॥ स्रवज्जंबूरसस्यूतेस्वर्लोकाह्लादकारिणि ॥ १९ ॥ ब्रह्मलोकसमःस्वर्गरम्यःशिवपुरोपमः ॥ अत्रेरस्त्याश्रमःश्रीमान्सिद्धश्रमहरोमहान् ॥ २० ॥ महत्यत्राश्रमेतस्मिंस्तापसौद्वौबभूवतुः ॥ कोविदौतुनभोमार्गइवशुक्रबृहस्पती ॥ २१ ॥ तयोरथैकास्पदयोस्तत्राभूतांसुतावुभौ ॥ फुल्लांकुरौशुद्धतनूसरस्यंबुजयोरिव ॥ २२ ॥ विलासभासनामानौवृद्धिमाययतुःक्रमात् ॥ तौपित्रोःपल्लवेदीर्घेलतापादपयोरिव ॥ २३ ॥ आस्तामन्योन्यसुस्निग्धौसुहृदौवल्लभौमिथः ॥ तिलतैलवदाश्लिष्टौतौपुष्पामोदवत्स्थितौ ॥ २४ ॥ नायुक्तौपुत्रयुक्तौतुसुरक्ताविवदंपती ॥ एकंद्वित्वमिवापन्नंसममासीत्तयोर्मनः ॥ २५ ॥ तौतथान्योन्यमुदितौमनोहरतराकृती ॥ तस्थतुःस्वाश्रमेमौनेसरोजइवषट्पदौ ॥ २६ ॥ प्रापतुर्यौवनंबाल्यमुत्सृज्यनववल्लभौ ॥ कालेनाल्पतरेणैवचंद्रसूर्याविवोदितौ ॥ २७ ॥ जग्मतुर्देहमुत्सृज्यततस्तौपितरौतयोः ॥ स्वर्गंजरार्तावुड्डीयनीडादिवविहंगमौ ॥ २८ ॥ पंचत्वंगतयोःपित्रोर्दीनवक्त्रौबभूवतुः ॥ तन्मांगौविगतोत्साहौपद्माविवजलोद्धृतौ ॥ २९ ॥

तुर्थेनसंबंधः ॥ १७ ॥ चूतद्रुमाणांलताभिःशाखाभिरुन्मुक्तैरूर्ध्वभागेप्रसारितैःपुष्पस्तबकैर्दंतुरेउन्नतदंतवत्स्थिते ॥ नीलनीरजानिनीलोत्पलानि ॥ १८ ॥ स्वर्लोकःस्वर्गस्थानमिवाह्लादकारिणि ॥ १९ ॥ २० ॥ महतिविस्तीर्णे ॥ कोविदौविद्वांसौ ॥ शुक्रबृहस्पतीइतितयोर्नामनिर्देशोपि ॥ २१ ॥ अंबुजयोःपद्मगुल्मयोःफुल्लांकुरौपुष्पप्रकृतिभूतेकलिकेइव ॥ २२ ॥ लतापादपयोःपल्लवेइववृद्धिमाययतुः ॥ २३ ॥ २४ ॥ नायुक्तौनवियुक्तौ ॥ पुत्रार्थंयुक्तौपरस्परंचसुरक्तौदंपतीइव ॥ २५ ॥ मौनेमुद्रितेमुनियुक्तेच ॥ २६ ॥ २७ ॥ २८ ॥ पंचत्वंमरणंगतयोःसतोः ॥ २९ ॥

और्ध्वदैहिकमित्यनुशतिकादित्वादुभयपदवृद्धिः ॥ परिदेवनंविलापम् ॥ ३० ॥ निरस्तसमस्तचेष्टौचेत्किंमृतौनेत्याह ॥ अशून्यहृदावितिं ॥ तथाचमूर्छितौविवृत्तौसंपन्नावित्यर्थः ॥ ३१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपश०पंचषष्टितमःसर्गः ॥ ६५ ॥ ॥ ६ ॥ ॥ अप्रबुद्धमतेरत्रदुःखाब्धौपरिवर्त्तनम् ॥ भासस्यवचनेनात्र विस्तरेणप्रकाश्यते ॥ १ ॥ अरण्यद्रुमपक्षेतापेनतपसंबंधिनाग्रीष्मातपेनदावाग्निनाचसंशुष्कसर्वांगौ ॥ १ ॥ अनास्थांगृहक्षेत्रधनादावनासक्तिम् ॥ २ ॥ ३ ॥ संघटितौकंचि

तत्रौर्ध्वदैहिकंकृत्वाचक्रातेपरिदेवनम्॥लोकस्थितिरलंघ्याहिमहतामपिमानद॥३०॥कृत्वौर्ध्वदैहिकमथोव्यथयाभिभूतौशोकोत्थया करुणयार्त्तगिराविलप्य॥चित्रार्पिताविवनिरस्तसमस्तचेष्टौतौसंस्थितौसुखमशून्यहृदौविवृत्तौ ॥ ३१ ॥ ॥इ०वा०वा०दे०मोक्षोपायेपूपशमप्रकरणेभासविलासवृत्तांतेसह्यगिरिवर्णनंनामपंचषष्टितमःसर्गः ॥ ६५ ॥ ॥ ६ ॥ ॥श्रीवसिष्ठउवाच॥ अतिशोकपराभूतौतस्यतुर्दृढतापसौ॥तापसंशुष्कसर्वांगौतावरण्यद्रुमाविव ॥ १ ॥ विरक्तौविपिनेकालंक्षेपयामासतुर्द्विजौ॥ वियूथाविवसारंगावनास्थामागतौपराम्॥ २॥ जग्मुर्दिनानिमासाश्चवर्षाण्यथतयोस्तदा॥क्रमाद्द्वावपिसंयातौजरांश्वभ्रद्रुमाविव॥३॥ अप्राप्तविमलज्ञानौचिराज्जर्जरतापसौ ॥ तावेकदासंघटिताविदमन्योन्यमूचतुः ॥ ४ ॥ ॥विलासउवाच॥ ॥जीवितागयद्रुमफल हृदावासामृतांबुधे॥जगत्यस्मिन्महाबंधोभासस्वागतमस्तुते॥ ५॥एतावत्योदिनावह्व्योमद्वियोगवतात्वया॥ वदकक्षपिताःसाधो कच्चित्तेसफलंतपः॥६॥ कच्चित्तेविज्वराबुद्धिःकच्चिजातस्त्वमात्मवान्॥ कच्चित्फलितविद्यस्त्वंकच्चित्कुशलवानसि॥ ७॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्तवंतंसंसारसमुद्विग्नमलंतथा ॥ प्राहाप्राप्तमहाज्ञानंसुहृत्सुहृदमादरात् ॥ ८॥ ॥भासउवाच॥ ॥साधोस्वागततायैवदिष्ट्याहृष्टोसिमानद॥कुशलंतुकुतोस्माकंसंसारेतिष्ठतामिह ॥ ९ ॥ यावन्नाधिगतंज्ञेयंयावत्क्षीणानचित्तभूः॥ यावत्तीर्णोनसंसारस्तावन्मेकुशलंकुतः॥ १०॥ आशायावदशेषेणनलूनाश्चित्तसंभवाः॥वीरुधोदात्रकेणेवतावन्नःकुशलंकुतः ॥ ११ ॥ यावन्नाधिगतंज्ञानंयावन्नसमतोदिता॥यावन्नाभ्युदितोबोधस्तावन्नःकुशलंकुतः॥ १२॥ आत्मलाभंविनासाधोविनाज्ञानमहौषधम्॥ उदेतिपुनरेवेयंदुःसंसृतिविषूचिका॥ १३॥

त्कालंदैवाद्वियुज्यपुनर्मिलितौ ॥ ४ ॥ जीविताग्र्यंश्रेष्ठंजीवनंतल्लक्षणद्रुमफलभूत ॥ हृदिआवासोयस्यनथाविधामृतांबुधेइतिमैत्र्यतिशयोद्दीपनेविशेषणे ॥ ५ ॥ ६ ॥ आलवान्प्रबोधलब्धात्माअतएवफलितविद्यः ॥ ७ ॥ अलंस्पष्टंप्राह ॥ ८ ॥ ९ ॥ चित्तेभवतीतिचित्तभूःकामसंकल्पादिः ॥ १० ॥ वीरुधोलतापाशाः ॥ दात्रकेणशंकुलादिना ॥ ११ ॥ ज्ञानंशोधिततत्त्वंपदार्थज्ञानंबोधोखंडवाक्यार्थइतिभेदः ॥ १२ ॥ १३ ॥

शैशवलक्षणमंकुरितस्योज्जृंभणमुज्जृंभस्तमतीत्येतिल्यब्लोपेहेतौवापंचमी ॥ १४ ॥ बांधवानामाक्रंदाएवषट्पदालक्षणयातद्दुंजारवायस्याम् ॥ जरयाकुसुमितासंजातकुसुमा ॥ १५॥ मरणोत्तरंदैवान्नरकस्थावरतिर्यग्जन्मप्राप्तौभुक्तानिदुष्कृतकर्माणियेपुतथाविधैःशीतोष्णवातवर्षादंशमशकादिसंकुलैर्वसंतादिऋतुभिर्विरसा ॥ दैवात्स्वर्गादिप्राप्तावपि तत्रपुण्यसंचयानधिकारात्पूर्वसंचितपुण्यव्ययाद्धर्षामर्षासूयाकामादिदोषबहुलत्वाच्चशमदमाद्यसंभवेनज्ञानस्यापिदौर्लभ्यात्केवलभोगैकलंपटतयापुराणैःप्राग्बहुशोनुभूतत्वादभिनवविषयाभावात्पुरातनप्रायैरेवदिवसैःउंभितापूरिताअतएवनीरसप्रायासंवत्सरावलीपुनर्दथैवनीयतेइत्यर्थः ॥ १६ ॥ दैवात्पुनर्मानुष्येतत्रापिदुर्लभतमेब्राह्मणादिशरीरेप्राप्तेपिसांप्रतिकेदेहइवभोगलंपटतयैवभ्रमणंदुर्वारमित्याशयेनाह ॥ महादरीष्विति ॥ विषयभोगलक्षणानिफलान्येवव्यालायासु तत्तृष्णासहस्रैःसंजातकंटकासु देहलक्षणस्याद्रेर्महाभीषणदरीप्रायच्छिद्रस्थेंद्रियासक्तिपुऐहिकामुष्मिकभोगोपायलौकिकवैदिकक्रियासुचपरिलुठ्यतेनतत्राप्यात्मविवेकसंभावनास्तीत्यर्थः ॥ १७ ॥ चिराल्पकालभोग्यत्वाभ्यांदीर्घादीर्घैर्दुःखैःअपर्याप्ताअसमाप्ताआगमापायायासु ॥ रात्रिग्रहणंकालमात्रोपलक्षणम् ॥ प्रयांतिसर्वजन्मस्विति शेषः ॥१८॥ उक्तमेवतत्कारणमुखेनाह ॥ अयथार्थेति ॥ अयथार्थामिथ्याभूताःक्रियाभिरारभ्यंतइतिक्रियारंभाःफलानियेषांतथाविधैःकर्मभिः ॥ आहतानिम्नपाभूतानिकर्माणियेषांतथाविधैर्जंतुभिरायुःक्षीयतेविनाश्यते ॥ १९ ॥ जन्मनिजन्मनिविवेकविरोधिप्राबल्यंतत्सहायदौर्बल्यंचप्रपंचयति ॥ उन्मूलितेत्यादिना ॥ आश्रयःपरमात्मातत्रबंधनहेतुर्विवेकआलानंतदुन्मूलितंयेन ॥ तृष्णापदेनतद्विषयोलक्ष्यते ॥ तल्लक्षणायांकरेणुकायांसकामत्वादुन्निद्रोनिर्निद्रः ॥ २० ॥ व्यर्थंपतन्परमपुरुषार्थोपयोगीआयुर्लक्षणोविवेकलक्षणश्चचिंतामणिर्यस्मात्तथाविधेकायलक्षणद्रुमस्थेमहतिहृदयलक्षणेआलयेनीडेगर्द्धःस्वाद्वन्नाद्यभिलाषःसएवगृध्रः ॥२१॥ श्रमदौर्बल्यामयादिनापतंतिपेलवानिकार्याक्षमाणिभवंतिगात्राणियस्याम् ॥ दिवसावलीपदेनतत्परिच्छिन्नाकायलतागृह्यते ॥२२॥ वार्द्धक्येपुत्रभृत्यावमानैःरजोभिश्चध्वस्तम् ॥ अस्तंगतावपुःश्रीर्यस्यतथाविधम् ॥ क्लीबेअमोऽलुक्छांदसः ॥२३॥

शैशवांकुरितोज्जृंभान्नवयौवनपल्लवः ॥ जराकुसुमितोभ्येतिपुनःसंसारदुर्द्रुमः ॥ १४ ॥ कायजीर्णतरोरस्माद्बांधवाक्रंदषट्पदा ॥ जराकुसुमितादेतिपुनर्मरणमंजरी ॥ १५ ॥ भुक्तकर्मर्त्तुविरसापुराणदिवसोंभिता ॥ नीयतेनीरसप्रायापुनःसंवत्सरावली ॥ १६ ॥ महादरीपुदेहाद्रेस्तृष्णाकंटकितास्वपि ॥ फलव्यालासुचपुनःक्रियासुपरिलुठ्यते ॥ १७ ॥ दुःखैःसुखलवाकारैर्दीर्घादीर्घैःशुभाशुभैः ॥ अपर्याप्तागमापायाःप्रयांत्यायांतिरात्रयः ॥ १८ ॥ अयथार्थक्रियारंभैःकदाशावेशपल्लवैः ॥ क्षीयतेकर्मभिस्तुच्छैरायुराहतकर्मभिः ॥ १९ ॥ उन्मूलिताश्रयालानोमनोमत्तमतंगजः ॥ तृष्णाकरेणुकोन्निद्रोदूरंविपरिधावति ॥ २० ॥ जिह्वाचपलतालग्नःकायद्रुममहालये ॥ पतच्चिंतामणौवृद्धोगर्द्धगृध्रोविवर्द्धते ॥ २१ ॥ नीरसानिस्सुखालब्धीपतत्पेलवगात्रिका ॥ जीर्णपर्णसवर्णेयंक्षीयतेदिवसावली ॥ २२ ॥ अवमानरजोध्वस्तमस्तंगतवपुःश्रियम् ॥ मुखंधूसरतामेतिहिमैःपद्ममिवाहतम् ॥ २३ ॥



१ पुष्पसितेतिक्वचित्पाठः

राजहंसइवेतिशेषः ॥ २४ ॥ भोगलक्षणानिपुष्पाणिदिवसरूपाणिपर्णानिचअधोनिपतंतिअपयांतीतियावत् ॥ २५॥ भोगेषुनिवृत्तेष्वपिभोगाशातदशक्तिदुःखंतत्प्रयुक्तचिंता शोकमोहाधिश्चवर्द्धतएवेत्याशयेनाह ॥ भोगेत्यादिना ॥ २६ ॥ चैत्यंदेवाद्यायतनम् ॥ अपेवद्धापताकेवदूरमुच्छ्रितंयथास्यात्तथा ॥ २७॥ संसारलक्षणस्यतंत्रस्यप्रवाण्याः जीविताशाप्रचुरमायुस्तंतुम् ॥ २८ ॥ वहल्लोलासिसदृशकोधद्वेषभयादिनाफेनिला ॥ परावर्त्तालोभतृष्णादिनाभ्रमणान्येवमहांतआवर्त्तायस्याः ॥ २९ ॥ शिल्पतर्कनीति शास्त्रादिभिःकलाकुलैःकौशलवृंदैर्जगद्व्यवहारकार्यलक्षणैश्चकल्लोलैराकुलासंकुलाचक्रियाप्रवृत्तिस्तल्लक्षणासरित्प्रतिजन्मएवमेववहतीत्यर्थः ॥ ३० ॥ ३१ ॥ देहएवपरम

शुष्यतःकायसरसःप्रगलद्यौवनांभसः॥ राजहंसःक्षणादायुरनिर्वर्त्तिपलायते॥ २४ ॥ कालानिलबलोद्भूताज्जर्जराज्जीवितद्रुमात्॥ भोगपुष्पाणिदिवसपर्णानिनिपतंत्यधः॥ २५ ॥ भोगभोगिश्रितेष्वंतर्दुःखदर्दुरधारिषु॥ मनोमोहांधकूपेषुपूरेषुविनिमज्जति॥ २६ ॥ नानानुरंजनास्पष्टतृष्णातरलपेलवा॥ चैत्यमग्रपताकेवदूरंसमधिरोहति॥ २७॥ अस्यसंसारतंत्रस्यबृहत्कालविलास्पदः॥ जीविता शामयंतंतुमंतकाखुर्निकृंतति॥ २८॥ यौवनोत्कटकल्लोलावहल्लोलासिफेनिला॥ परावर्त्तमहावर्त्तायातिजीवितदुर्नदी॥ २९ ॥ कला कुलजगत्कार्यकल्लोलाकुलसंकुला॥ क्रियासरिदपर्यंतावहत्याकुलकोटरा॥ ३० ॥ अनंताबंधुजनतानद्योगंभीरकोटरे॥ अजस्रंनिप तंत्येताविततेकालसागरे॥ ३१ ॥ देहरत्नशलाकेयंनाशपंकार्णवोदरे॥ नज्ञायतेक्कमग्नेतितातजन्मनिजन्मनि॥ ३२ ॥ चिंताचक्रेचिरं बद्धंकुक्रियाचारचंचुरम्॥ चेतोभ्रमतिसामुद्रेगर्त्तावर्त्तेतृणंयथा ॥ ३३ ॥ उह्यमानमनंतेषुचेतःकार्यमहोर्मिषु॥ क्षणमेतिनविश्रांतिं चिंतातांडविताशयम्॥ ३४॥ इदंकृतंकरोमीदंकरिष्यामीदमित्यलम्॥ कलनाजालवलितामूर्छितामतिपक्षिणी॥ ३५ ॥ अयंसुहृद यंशत्रुरितिद्वंद्वमहाद्विपः॥ विनिकृंततिमर्माणियथानीलोत्पलानिमे॥ ३६ ॥ चिंतानद्यामहावर्त्तेवीचिकानिचयेचिरम्॥ क्षणादुच्छून तामेतिमनोमीनःक्षणाद्दृतिः ॥ ३७ ॥ अनात्मीयानिदुःखानिबहून्येवंविधान्ययम् ॥ आत्मबुद्ध्याविचिन्वानोजनोगच्छतिदीनताम् ॥ ३८ ॥ बहुविधसुखदुःखमध्यपातीविततजरामरणप्रवातभग्नः ॥ जगदुदरगिरौलुठज्जनोयंगतरसपर्णवदेतिजर्जरत्वम् ॥ ३९ ॥

इ॰वा॰वा॰दे॰मो॰उपशमप्रकरणेभासविलासवृत्तांतअनित्यताप्रतिपादनंनामषट्षष्टितमःसर्गः॥ ६६॥

पुरुषार्थसाधनत्वाद्रत्नशलाका ॥ ३२ ॥ गर्त्तावर्त्तेसच्छिद्रावर्त्ते ॥ ३३ ॥ ३४ ॥ कलनाजालेवलिताबद्धासतीमूर्छितामोहिता ॥ ३५ ॥ नीलोत्पलानियथाविनिकृंततित थामेममर्माण्यपि ॥ ३६ ॥ उच्छूनतांविवृद्धिम् ॥ क्षणान्अतंतिगतयोयस्यसक्षणाद्दृतिश्चपलइत्यर्थः ॥ ३७ ॥ अनात्मीयान्यात्मासंस्पर्शीनिअनात्मदेहादिनिमित्तानिच ॥ देहाद्यात्मबुद्ध्या ॥ ३८ ॥ सर्वजन्मसुदुःखस्थानानामानंत्यंदर्शयन्नुपसंहरति ॥ बहुविधेति ॥ जरामरणलक्षणेनप्रवातेनचंडवायुनाभग्नःपुनःपुनरामर्दितोजगल्लक्षणेउदयगि रौलुठन्नयंजनोगतरसपर्णवच्छुष्कपर्णवत् ॥ ३९ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेउपशमप्रकरणेषट्षष्टितमःसर्गः ॥ ६६ ॥ ॥ ७ ॥ ॥ ७ ॥

1130

देहात्मनोरसंबंधंसमर्थयितुमीर्यते ॥ अंतःसक्तिकृतोबंधस्तत्त्यागाच्चनिवार्यते ॥ १ ॥ एवमुक्तप्रकारसंसारासारताविचारबहुलंकुशलप्रश्नम् ॥ १ ॥ पाशाइवबंधाबंधनहेत वोयस्मिंस्तथाविधस्यचेतसःसंसरणंसंसारस्तस्यतरणेगतिरुपायः ॥ २ ॥ इदंवर्णितप्रकारंदुःखंभव्यमतेर्विवेकिनःपेलवंकोमलंसुखोच्छेद्यमितियावत् ॥ अतरोदुस्तरः ॥ सर्पारेर्ग रुडस्य ॥ ३ ॥ देहद्वयाभिमानत्यागएवतदुच्छेदोपायइत्याशयेनाह ॥ देहातीताइत्यादिना ॥ ४ ॥ दुःस्थितिरितिपाठेदुःस्थितिःक्षतिरित्यर्थः ॥ ५॥ चित्त्वस्यचित्स्वभावस्यात्म नः ॥ वैपरीत्यंपूर्णतास्वरूपप्रच्युतिः ॥ ६ ॥ अहंतात्यागेकस्यापिकापिममताप्रसक्तिरेवनास्तीत्याशयेनाह ॥ केभवन्नित्यादिना ॥ नह्यचेतनानामसंगचितोवाममताप्रसक्तिर

श्रीवसिष्ठउवाच॥ ॥एवंतौकुशलप्रश्नंकृतवंतौपरस्परम् ॥ कालेनासाद्यविमलंज्ञानंमोक्षंततोगतौ ॥ १ ॥ ततोवच्मिमहाबाहोयथा ज्ञानेतरागतिः॥ नास्तिसंसारतरणेपाशबंधस्यचेतसः॥ २ ॥ इदंभव्यमतेर्दुःखमनंतमपिपेलवम् ॥ कुखगस्यातरोंभोधिःसर्पारेर्गोष्प दायते ॥ ३ ॥ देहातीतामहात्मानश्चिन्मात्रस्वात्मनिस्थिताः ॥ दूराद्देहंसमीक्षंतेप्रेक्षकोजनतामिव ॥ ४ ॥ देहेदुःखातिसंक्षुब्धेकानःक्षति रुपस्थिता ॥ रथेविधुरितेभग्नेसारथेःकेवखंडना ॥ ५ ॥ मनसिक्षुब्धतांयातेचित्त्वस्यांगकिमागतम् ॥ तरंगजलसंतानेवैपरीत्यंकिमंबु धेः॥ ६ ॥ केभवन्पयसांहंसाःपयसामुपलाश्चके॥ काःशिलाःकिलदारूणांकेभोगाःपरमात्मनः॥ ७॥ संबंधःकइवश्रीमन्शैलापरसमुद्र योः॥ अंतरेगिरिसंबाधेकश्चचित्तत्त्वबंधयोः॥ ८॥ अप्युत्संगोह्यमानानिपद्मानिसरिदंभसाम् ॥ कानिनामभवंतीहशरीराणितथात्मनः ॥ ९ ॥ संघट्टात्काष्ठपयसोर्यथोत्तुंगाःकणादयः॥ देहात्मनोःसमायोगात्तथैताश्चित्तवृत्तयः॥ १० ॥ संबंधाद्दारुपयसांप्रतिबिंबानिदारु णः॥ यथापयसिलक्ष्यंतेशरीराणितथात्मनि॥ ११ ॥ यथादर्पणवीच्यादौप्रतिबिंबानिवस्तुतः॥ नासत्यानिचसत्यानिशरीराणितथा त्मनः॥ १२ ॥ दारुवार्युपलास्फोटैर्दुःखितानयथाक्वचित् ॥ संयुक्तेषुवियुक्तेषुनतथापंचसुक्षतिः ॥ १३ ॥ दारुसंश्लेषिताच्चोयात्कंपश ब्दादयोयथा॥ प्रजायंतेतथैवास्माद्देहाच्चित्परिबोधितात्॥ १४॥ नशुद्धजडयोरेताःसंविदश्चिच्छरीरयोः॥ एतास्त्वज्ञानमात्रस्यतस्मि न्नष्टेचिद्वनः ॥ १५ ॥

स्तीतिभावः ॥ ७ ॥ अंतरेमध्ये ॥ गिरिभिःसंबाधेसंकुलत्वेपि ॥ चित्तत्त्वंपरमात्माबंधःसंसारस्तयोःकःसंबंधः ॥ नह्याकाशःपाशैर्बध्यतइतिभावः ॥ ८ ॥ उत्संगेअंकेइवउह्य मानानिधार्यमाणान्यपिपद्मानि ॥ ९ ॥ संघट्टादभिघातात् ॥ समायोगादन्योन्यतादात्म्याध्यासात्सुखदुःखादिचित्तवृत्तयः ॥ १० ॥ देहसंबंधस्याध्यासिकत्वेदृष्टांतमाह ॥ संबंधादिति ॥ संबंधात्सन्निधिमात्रान्निमित्तात् ॥ ११ ॥ १२ ॥ पंचसुदेहाद्याकारपरिणतेषुभूतेषुकशाचंदनादिसंयुक्तेषुस्त्रीपुत्रादिवियुक्तेषुचक्षतिर्दुःखादिप्रसक्तिः ॥ १३ ॥ चि तासन्निधिमात्रेणाधिष्ठायपरितोबोधितात् ॥ १४ ॥ भासमानाःसुखदुःखादिसंविदःकस्यतर्हीतिचेन्नकस्यापीत्याह ॥ नेति ॥ १५ ॥

अनुभूतयःसुखदुःखानुभवाः॥ देहदेहिनोर्देहतदभिमानिनोःसंगे ॥ १६ ॥ तर्हिज्ञाज्ञयोरविशेषःकिंनस्यात्तत्राह॥ अज्ञस्येति ॥ १७॥ कीदृश्यस्तर्हिज्ञस्यप्रारब्धभोगानुभूतयस्तत्राह ॥ अंतरिति ॥ अंतःसंगोभिमानोंऽतरनुप्रवेशश्च ॥ स्नेहाःसंबंधाः ॥ दृषदांजलानांचसमाहारे ॥ १८ ॥ असंगःपरमार्थसंगशून्यः ॥ १९ ॥ जलकाष्ठयोर्यद्वदितिशेषः ॥ ससंबंधः॥ चकारोऽप्यर्थः ॥ पूर्वंसलिलकाष्ठोपन्यासःसंसर्गाभावेदृष्टांतार्थंइहतादात्म्याभावेइत्यपौनरुक्त्यम् ॥ २० ॥ ननुसुखदुःखादिसंवित्तिनिषेधेसंवित्त्यंतरा

यथानकस्यचिद्दारिदारुश्लेषेनुभूतयः॥ तथानकस्यचिद्देहदेहिसंगेनुभूतयः॥ १६॥ अज्ञस्यायंयथादृष्टःसंसारःसत्यतांगतः॥ नज्ञस्यायंयथाभूतःसंसारःसत्यतांगतः॥ १७॥ अंतःसंगविहीनास्तुयथास्नेहाद्दृषज्जलं॥ तथासक्तमनोवृत्तौवाह्यभोगानुभूतयः॥ १८॥ अंतःसंगनरहितोयद्वत्सलिलकाष्ठयोः॥ संबंधस्तद्वदेवांतरसंगोदेहदेहिनोः॥ १९॥ अंतःसंगेनरहितःसंबंधोजलकाष्ठयोः॥ सदेहदेहिनोश्चैवंप्रतिबिंबाभसोस्तथा॥ २०॥ स्थितासर्वत्रसंवित्तिःशुद्धासंवेद्यवर्जिता॥ द्वित्वोपलांछिताव्वन्याद्दुःसंवित्तिर्नविद्यते॥ २१॥ अदुःखमेतिदुःखित्वमंतःसंवेदनास्फुटम्॥ स्फाराभवतिवेतालोवेतालत्वेनभावितः॥ २२॥ असंबंधोपिसंबंधोभवत्यंतर्विनिश्चयात्॥ स्वप्नांगनासुरतवत्स्थाणुवेतालसंगवत्॥ २३॥ असम्बायोहिसंबंधोयथासलिलकाष्ठयोः॥ तथैवमिथ्यासंबंधःशरीरपरमात्मनोः॥ २४॥ अंतःसंगंविनानांबुकाष्ठपातैःप्रगृह्यते॥ आत्मांगसंगरहितोदेहदुःखैर्नदह्यते॥ २५॥ देहभावनयैवात्मादेहदुःखवशेस्थितः॥ तत्त्यागेनततोमुक्तोभवतीतिविदुर्बुधाः॥ २६॥ अंतःसंगविहीनत्वाद्दुःखवंत्यंगनायथा॥ पत्राम्बुमलदारूणिश्लिष्टान्यपिपरस्परम्॥ २७॥ अंतःसंगेनरहितायांतिनिर्दुःखतांपराम्॥ श्लिष्टान्यपितथैवात्मदेहेंद्रियमनांस्यलम्॥ २८॥ अंतःसंगोहिसंसारसर्वेषांमदेहिनाम्॥ जरामरणमोहानांतरूणांबीजकारणम्॥ २९॥ अंतःसंसंगवाञ्जंतुर्मग्नःसंसारसागरे॥ अंतःसंसक्तिमुक्तस्तुतीर्णःसंसारसागरात्॥ ३०॥ अंतःसंसंगवच्चित्तंशतशाखमिवोच्यते॥ अंतःसंसंगरहितंविलीनंचित्तमुच्यते॥ ३१॥ भग्नस्फटिकवद्विद्धिमनःसक्तमपावनम्॥ अभग्नस्फटिकाभासमसक्तंविद्धिमेमनः॥ ३२॥ असक्तंनिर्मलंचित्तंमुक्तंसंसार्यपिस्फुटम्॥ सक्तंतुदीर्घतपसायुक्तमप्यतिबंधवत्॥ ३३॥

प्रसिद्धेःशून्यतास्यादित्याशंक्याह ॥ स्थितेति ॥ नत्रिद्येनतद्विषयानिरूपणादित्यर्थः ॥ २१ ॥ असतोप्यज्ञानाद्भ्रांत्याअसतीतिभानंप्रसिद्धमित्याह ॥ अदुःखमिति ॥ २२ ॥ संबंधआध्यासिकयोगः ॥ आद्यःसंसर्गाध्यासेद्वितीयस्तादात्म्याध्यासेदृष्टांतः ॥ २३ ॥ २४ ॥अंतःसंगंविनाअहंताध्यासाभावात् ॥ नप्रगृह्यतेनपीड्यतेयथेत्यर्थः ॥ अंगसंगरहितोदेहाध्यासशून्यः ॥ २५ ॥ २६ ॥ दार्वेतान्यर्थात्पल्वलपतितानि ॥ २७ ॥ रहितारहितानि ॥ शसश्छांदसोडादेशस्तानापिडानांप्रजुहोमीतिवत् ॥ २८ ॥ २९ ॥ ३० ॥ शतशाखमनंतशाखम् ॥ कामवृत्तीनामानंत्यात् ॥ ३१ ॥ यथाभग्नमंतर्विदीर्णंस्फटिकलिंगादिअपावनंपूजाद्ययोग्यंतद्वत् ॥ ३२ ॥ ३३ ॥

१ संसारइत्यपिपाठः

॥३४॥ दारूणिकाष्ठभारावाह्यंतेउत्तार्यंतेययातथाविधानौर्यथास्वयंदारुभूतापिदारुगतैश्छेदभेददाहादिगुणदोषैर्जलगतैश्चलनपरिवर्त्तननैर्मल्यपंकिलत्वादिगुणदोषैश्चनतद्वती तथेत्यर्थः ॥ ३५ ॥ संभ्रमोन्मुखताव्याघ्रादिभयपलायनादिव्याकुलता ॥ ३६ ॥ अदेहस्यदेहचेष्टाशून्यस्यापिस्वपुत्रभृत्ययुद्धादिपश्यतोजाग्रतोपिस्वप्नादाविवकर्त्तृत्वंविद्यते ॥ यतोविक्षुब्धसुखदुःखदर्शनेनमुख्यकर्त्तृपममेवतदपीत्यर्थः ॥ ३७॥ नचेततिनाभिमन्यते ॥ नैवकिंचित्करोमीतियुक्तोमन्येततत्त्वविदितिभगवद्वचनात् ॥ ३८ ॥ नचेति॥ हेतौचकारः ॥ नहिचित्तेकर्त्तृताशक्तिर्नास्तियेनदेहःकर्त्ताकल्प्येतेत्यर्थः ॥ ३९ ॥ अप्यर्थेद्वितीयएवकारः ॥ ४० ॥ अग्रगैःपुरोगतैःशीतोष्णानुभवादिकार्यैः ॥ तत्त्वोर्वश्यासक्तस्यपुरूरवसःप्रसिद्धमिंद्राहल्याख्यानेचप्राक्प्रपंचितमितिभावः ॥ ४१ ॥ मधुरवृत्तिर्निर्विक्षेपसौख्यंतद्वान् ॥ ४२ ॥ संसक्तित्यागमात्रेणसर्वेजीवन्मुक्तगुणामनसिसिद्धांतीत्या

अंतःसक्तंमनोबद्धंमुक्तंसक्तिविवर्जितम्॥ अंतःसंसक्तिरेवैकंकारणंबंधमोक्षयोः॥३४॥ अंतःसंसक्तिमुक्तस्यकुर्वतोपिनकर्त्तृता॥ गुणदोषवतीतोयेदारुवाहननौर्यथा॥३५॥ अंतःसंसक्तितोजंतोरकर्त्तुरपिकर्त्तृता॥ सुखदुःखवतिस्वप्नेसंभ्रमोन्मुखतायथा॥३६॥ चित्तेकर्त्तरिकर्त्तृत्वंदेहस्यापिविद्यते॥ स्वप्नादाविवविक्षुब्धसुखदुःखदशापमम्॥ ३७ ॥ अकर्त्तरिमनस्यंतरकर्त्तृत्वंस्फुटंभवेत्॥ शून्यचित्तोहिपुरुषःकुर्वन्नपिनचेतति॥३८॥ चेतसाकृतमाप्नोपिचेतसानकृतंतुन॥ नकिंचित्कारणंदेहोनचचित्तेनकर्त्तृता॥३९॥ असंसक्तमकर्त्तैवकुर्वदेवमनोविदुः॥ नकर्मफलभोक्तृत्वमसक्तंप्रतिपद्यते॥ ४० ॥ब्रह्महत्याश्वमेधाभ्यामसंसक्तोनलिप्यते॥ दूरस्थकांतासंलीनमनाःकार्यैरिवाग्रगैः॥४१॥ अंतःसंसक्तिनिर्मुक्तोजीवोमधुरवृत्तिमान्॥ बहिःकुर्वन्नकुर्वन्वाकर्त्ताभोक्तानहिकिंचित्॥४२॥ अंतःसंसक्तिमुक्तंयन्मनःस्यात्तदकर्त्तृकम्॥ तद्विमुक्तंप्रशांतंतत्तद्युक्तंतदलेपकम्॥४३॥ तस्मात्सर्वपदार्थानांश्लिष्टानांनिश्चितंबहिः॥ सर्वदुःखकरींक्रूरामंतःसक्तिंविवर्जयेत्॥४४॥ विरहितमलमंतःसंगदोषेणचेतःशममुपगतमाद्यंव्योमवन्निर्मलाभम्॥ सकलमलविमुक्तेनात्मनैकत्वमेतिस्थिरमणिनिभमंभोवारिणीवारिनीले॥४५॥ ॥इ०वा०वा०दे०मो०उपशमप्रकरणेअंतःसंसंगविचारोनामसप्तषष्टितमःसर्गः॥६७॥ ॥७॥ ॥श्रीरामउवाच॥ ॥कीदृशोभगवन्संगःकथंबंधायवानृणाम्॥ कश्चमोक्षायकथितःकथंवैपचिकित्स्यते॥ १ ॥

शयेनाह ॥ अंतरिति ॥ ४३ ॥ उपसंहरति ॥ तस्मादिति ॥ सर्वांतरस्यात्मनोबहिर्बहिःश्लिष्टानांपंचकोशलक्षणानांभोग्यवर्गलक्षणानांचबंधभूतानांसर्वपदार्थानांनिरासेइदमेवैकंमुख्योपायतयानिश्चितंयत्सर्वदुःखकरीमंतःसक्तिविवर्जयेत्विवर्जनमित्यर्थः ॥ ४४ ॥ अंतःसंगःसंसक्तिस्तद्दोषेणालमत्यंतंविरहितमतएवाद्यसंसारदशातःप्राक्तनंशमंप्रपंचोपशमरूपंप्रत्यक्तत्त्वमुपगतंचेत्परात्मनाएकत्वमेकरस्यमेति॥ यथास्थिरमणिःस्फटिकस्तन्निभमंभःअरानिशितधारायेषांसंतितेअरिणःखड्गादयइवनीलेयमुनादिवारिणिमिलितमेकत्वमेतितद्वदित्यर्थः ॥४५॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपश०सप्तषष्टितमःसर्गः ॥ ६७॥ ॥७॥ ॥लक्ष्मसंसक्त्यसंसक्त्योश्चिकित्सोपायसंयुतैः ॥ बंधाबंध्याविभागश्चफलंचात्रोपवर्ण्यते ॥१॥ कथंकेनप्रकारेणकिंप्रकारश्चबंधायकश्चकीदृशश्चमोक्षायकथंकेनोपायेनचिकित्स्यते ॥ १॥

देहस्यक्षेत्रस्यदेहिनःक्षेत्रज्ञस्यचयोजाड्यचित्स्वभावतालक्षणोविभागोविरुद्धस्वभावतातस्यएकपरित्यागेनात्यंतापर्यालोचनेनान्योन्यतादात्म्यधर्मविनिमयभावनाद्देहमात्रे
आत्मताविश्वासोयःसएवबंधार्होबंधहेतुःसंगइत्यर्थः ॥ २ ॥ लक्षणांतराण्याह ॥ अनंतस्येत्यादिना ॥ सपर्यंतत्वंत्रिविधपरिच्छेदसहितत्वंतन्निश्चयेसतिस्वापरिच्छिन्नसुखस्य
भावविस्मरणाद्यद्विषयेभ्यःसुखार्थित्वमित्यर्थः ॥ ३ ॥ तद्विरोधिनीमसंगस्थितिंलक्षयति ॥ सर्वमिति ॥ ४ ॥ अहंअहंकारपरिच्छिन्नोनास्मि मदन्यश्चनास्ति अतोमिथ्याभूते
देहादौविषयसुखानिमाभवंतुभवंतुवाअहंतुदेहाद्यसंगस्वभावइत्येवंदृढनिश्चयादसक्तः ॥ ५ ॥ नैष्कर्म्यंसर्वकर्मत्यागम् ॥ फलमनुलक्ष्यसज्जतेअभिनिविशते ॥ सुसमःसिद्ध्यसि

॥ श्रीवसिष्ठउवाच ॥ ॥ देहदेहिविभागैकपरित्यागेनभावनात् ॥ देहमात्रेतुविश्वासःसंगोवंधार्हउच्यते ॥ २ ॥ अनंतस्यात्मतत्त्वस्यसपर्यंतत्वनिश्चये ॥ यत्सुखार्थित्वमंतःससंगोवंधार्हउच्यते ॥ ३ ॥ सर्वमात्मेदमखिलंकिंवांछामित्यजामिकिम् ॥ इत्यसंगस्थितिंविद्धिजीवन्मुक्ततनुस्थितिम् ॥ ४ ॥ नाहमस्मिनचान्योस्तिमाभवंतुभवंतुवा ॥ सुखान्यसक्तइत्यंतःकथ्यतेमुक्तिभाङ्नरः ॥ ५ ॥ नाभिनंदतिनैष्कर्म्यंनकर्मस्वनुपज्जते ॥ सुसमोयःफलत्यागीसोसंसक्तइतिस्मृतः ॥ ६ ॥ आत्मतत्त्वैकनिष्ठस्यहर्षामर्षवशंमनः ॥ यस्यनायात्यसक्तोसौजीवन्मुक्तःसकथ्यते ॥ ७ ॥ सर्वकर्मफलादीनांमनसैवनकर्मणा ॥ निपुणंयःपरित्यागीसोसंसक्तइतिस्मृतः ॥ ८ ॥ असंसंगेनसकलाश्चेष्टानानाविजृंभिताः ॥ चिकित्सिताभवंतीहश्रेयःसंपादयंतिच ॥ ९ ॥ संसक्तिवशतःसर्वेवितताःदुःखराशयः ॥ प्रयांतिशतशाखत्वंश्वभ्रकंटकवृक्षवत् ॥ १० ॥ रज्जुकृष्टघनघ्राणोयद्गत्यापथिगर्दभः ॥ भारंवहतिभीतात्मातत्संसक्तिविजृंभितम् ॥ ११ ॥ शीतवातातपक्लेशमेकदेशनिषण्णया ॥ तरुर्वहतियत्तन्वातत्संसक्तिविजृंभितम् ॥ १२ ॥ धराविवरनिर्मग्नोयत्कीटःपीडितांगकः ॥ क्षिणोतिविकलःकालंतत्संसक्तिविजृंभितम् ॥ १३ ॥ क्षुत्क्षामकुक्षिःक्षपयत्यायुर्व्याघातभीरुधीः ॥ पक्षीवृक्षशिखाशायीतत्संसक्तिविजृंभितम् ॥ १४ ॥ दूर्वांकुरतृणाहारःकिरातशरपीडया ॥ जहातियन्मृगोदेहंतत्संसक्तिविजृंभितम् ॥ १५ ॥ कृमिकीटत्वमायांतिजायमानाःपुनःपुनः ॥ यदिमाजनताजीर्णास्तत्संसक्तिविजृंभितम् ॥ १६ ॥

द्धोरितिशेषः ॥ ६ ॥ ७ ॥ लोकसंग्रहस्यावश्यकत्वद्योतनायनकर्मणेति ॥ ८ ॥ त्रीन्प्रश्नान्समाधायचतुर्थंप्रश्नंसमाधत्ते ॥ असंसंगेनेति ॥ चेष्टाश्चेष्टाःनानाविधैःफलरागैर्विजृंभिताः ॥ श्रवणादिचेष्टाश्चनिर्विघ्नतयाश्रेयःसंपादयंति ॥ ९ ॥ इदानींसंसक्तिफलानिप्रपंचयति ॥ संसक्तिवशतइत्यादिना ॥ १० ॥ गर्दभानामपिनासारज्जुर्दंशभेदप्रसिद्धा ॥ ग्राम्यपशुजन्ममात्रोपलक्षणमेतदेवमग्रेपि ॥ संसक्तेर्विजृंभितंफलविस्तारः ॥ ११ ॥ एकदेशेनिषण्णयातन्वास्थावरदेहेनवहत्यनुभवतीतियावत् ॥ १२ ॥ १३ ॥ व्याघातःशरपाषाणमुद्गरिकाद्यभिघातस्तस्मात्प्रतिक्षणंभीरुर्भययवतीधीर्यस्य ॥ १४ ॥ १५ ॥ जनताःपुण्यपापाधिकारिजनसमूहाः ॥ १६ ॥

तरंगिणितरंगवतिजलाशयेतरंगवत् ॥ १७॥ वीरुत्लता ॥१८॥ रसायाभूमेस्तलेनिपतितस्यरसस्यजलस्यआयोगाद्उपयोगान्मूलैःपानात् ॥ जनयंतीतियत्तदितिसंबंधः ॥१९॥ स्वस्याःअनर्थांतराण्यनर्थादनर्थांतराण्यनर्थपरंपरास्तत्संकाशैर्विच्छेदभ्रांतिनिपातादिविक्षेपसहस्रहेतुभिर्बाह्याभ्यंतरपदार्थशतैःसंकुला॥ मत्ताप्रवृद्धा ॥ २०॥ वंद्याप्रशस्या ॥ वंध्यापुरुषार्थफलशून्या ॥ २१ ॥ यादृढासंसारेसक्तिःसावंध्या ॥ २२ ॥ २३ ॥ वंद्यसंसक्तेर्जीवन्मुक्तव्यवहारादिसर्वोत्कर्षनिर्वाहकत्वंप्रपंचयति ॥ शंखेत्यादिना ॥ २४ ॥

उत्पत्योत्पत्यलीयंतेतरंगिणितरंगवत् ॥ भूतानियदनंतानितत्संसक्तिविजृंभितम् ॥ १७ ॥ वीरुत्तृणदशांयाताम्रियंतेयत्पुनःपुनः ॥ नराविगतसंचारास्तत्संसक्तिविजृंभितम् ॥ १८ ॥ रसातलरसायोगात्तृणगुल्मलतादयः ॥ जनयंतियदाकारंतत्संसक्तिविजृंभितम् ॥ १९ ॥ स्वानर्थांतरसंकाशपदार्थशतसंकुला ॥ यत्संसारनदीमत्तातत्संसक्तिविजृंभितम् ॥ २० ॥ संसक्तिर्द्विविधाप्रोक्तावंद्यावंध्याचराघव ॥ वंध्यासर्वत्रमूढानांवंद्यातत्त्वविदांनिजा ॥ २१ ॥ आत्मतत्त्वाववोधेनहीनादेहादिवस्तुजा ॥ भूयःसंसारसक्तिर्यादृढावंध्येतिकथ्यते ॥ २२ ॥ आत्मतत्त्वाववोधेनसत्यभूतविवेकजा ॥ वंद्याहिकथ्यतेसक्तिर्भूयःसंसारवर्जिता ॥ २३ ॥ शंखचक्रगदाहस्तोदेवोविविधयेहया ॥ वंद्यसंसक्तिवशतःपरिपातिजगत्त्रयम् ॥ २४ ॥ अनारतनिरालंबव्योमवर्त्मनिपांथताम् ॥ वंद्यसंसक्तिवशतःकरोतिरविरन्वहम् ॥ २५ ॥ महाकल्पसमाधानचिरकल्पितकल्पनम् ॥ वंद्यसंसक्तिवशतोब्राह्मंस्फुरतिवैवपुः ॥ २६ ॥ लीलयाललनालानलीनंभूतिविभूपितम् ॥ वंद्यसंसक्तिवशतःशरीरंशांकरंस्थितम् ॥ २७ ॥ विज्ञानगतयःसिद्धालोकपालास्तथेतरे ॥ वंद्यसंसक्तिवशतस्तिष्ठंतिजगतांगणे ॥ २८ ॥ धत्तेशारीरयंत्रौघमन्याभुवनसंततिः ॥ वंद्यसंसक्तिवशतोजरामृतिविवर्जितम् ॥ २९ ॥ मनःपततिभोगेषुगृध्रोमांसलवेष्विव ॥ वंध्यसंसक्तिवशतोव्यर्थयारम्यशंकया ॥ ३० ॥ संसक्तिवशतोवातिवायुर्भुवनकोटरे ॥ पंचभूतानितिष्ठंतिवहतीयंजगत्स्थितिः ॥ ३१ ॥ दिविदेवाभुविनराःपातालेभोगिनोसुराः ॥ ब्रह्मांडोदुंबरफलेस्फुरन्मशकवत्स्थिताः ॥ ३२ ॥ जायंतेचम्रियंतेचनिपतंत्युत्पतंतिच ॥ भूतानियदनंतानितरंगिणितरंगवत् ॥ ३३ ॥

अनारतंसंततं ॥ रविःपांथतांकरोतिसंचरतीतियावत् ॥२५॥ महाकल्पःप्राकृतप्रलयस्तत्रसमाधानंविदेहकैवल्यविश्रांतिस्तदर्थंचिरंद्विपरार्द्धकालंकल्पिताःसर्गादिकल्पनायेन ॥ ब्राह्मंहैरण्यगर्भंवपुःस्फुरतिव्यवहरति ॥ २६ ॥ ललनागौरीतल्लक्षणेआलानेबंधनस्तंभेलीलयैवलीनंसक्तम् ॥२७॥ विज्ञानेब्रह्मतत्त्वबोधेगतिर्दृढप्रतिष्ठायेषाम् ॥ २८ ॥ लोकत्रयादन्या ॥ भुवनसंततिपदेनमहर्जनस्तपःसत्यादिलोकस्थास्तत्त्वविदोलक्षणयोच्यंते ॥ २९ ॥ वंध्यसंसक्तेर्वंध्यात्वमुपपादयति ॥ मनइति ॥ ३० ॥ मुक्तामुक्तसाधारणंव्यवहारमात्रंसंसक्तिनिर्वाह्यमितिप्रपंचयन्दर्शयति ॥ संसक्तिवशतइत्यादिना ॥ ३१ ॥ ३२ ॥ ३३ ॥

विरसंयथास्यात्तथाउत्पत्योत्पत्य ॥ ३४ ॥ मात्स्यन्यायेनपरस्परनिगीर्णांगा ॥ ३५ ॥ मशकसंततिरिवेतिशेषः ॥ अंगेत्यामंत्रणे ॥ ३६ ॥ पातोत्पातौउदयास्तमयौवृद्धिक्षयौ पतनोत्पतनेचसदैवतद्दशयाजीर्णंशिथिलंअतएवकालरूपबालकस्यकंदुकभूतंजलंजलमयंलडयोरभेदाज्जडंचआमलिनंकलंकम्लानंचेतिबहुदोषत्वाद्धातुंयोग्यमपिवपुःसंसक्तिवशादेवाद्यापिनजहाति ॥ ३७ ॥ नानाविधानामपाराणांयुगावर्त्तदुःखानामालोकनेनपुनःपुनरनुभवेनकर्कशंकठोरंमनोलक्षणंखंडकंछेदनचिकित्स्यंव्रणविशेषंतद्दुःखेन सदादुःख्यपिगीर्वाणमंडलमिंद्रादिदेवसमूहःसंसक्तिवशादेवनलुनातिच्छेदनेननचिकित्सते ॥ ३८ ॥ संसक्तिश्चविवेकमात्रजन्यबोधेनोच्छेत्तुंशक्येतिदर्शयितुंतद्विषयस्यजगतोवा

उत्पत्योत्पत्यलीयंतेतत्संसक्तिविजृंभितम् ॥ भूतानिविरसंभूयोनिर्झरांबुकणाइव ॥ ३४ ॥ परस्परनिगीर्णांगाजनताजाड्यजर्ज्जरा ॥ संभ्रांताभ्रमत्यंगशीर्णपर्णमिवांबरे ॥ ३५ ॥ नक्षत्रचक्रंगगनेद्रुमेमशकसंततिः ॥ स्फुरत्यावर्त्तवच्चैवपातालेंगजलौघवत् ॥ ३६ ॥ पातोत्पातदशाजीर्णंकालबालककंदुकम् ॥ अद्यापिनजहातींदुर्जलमामलिनंवपुः ॥ ३७ ॥ नानापारयुगावर्त्तदुःखालोकनकर्कशम् ॥ नलुनातिमनःखंडंदुःखिगीर्वाणमंडलम् ॥ ३८ ॥ वासनामात्रवशतःपरेव्योमनिकेनचित् ॥ इदमारचितंचित्रंविचित्रंपश्यराघव ॥ ३९ ॥ मनःसंगैकरंगेणशून्येव्योम्निजगन्मयम ॥ यदिदंरचितंचित्रंतत्सत्यंनकदाचन ॥ ४० ॥ संसक्तमनसामस्मिन्संसारेव्यवहारिणाम् ॥ अत्तितृष्णाशरीराणितृणान्यग्निशिखायथा ॥ ४१ ॥ परिसक्तमतेर्देहान्सिकताःपत्युरंभसाम् ॥ कःशक्तःपरिसंख्यातुंत्रसरेणुगणंयथा ॥ ४२ ॥ मुक्तालतायागंगायामेरोरापादमस्तकम् ॥ तरंगमुक्तागण्यंतेनदेहाःसक्तचेतसाम् ॥ ४३ ॥ संसक्तमनसामेतारम्यांतःपुरपंक्तयः ॥ रचितारौरवावीचिकालसूत्रादिनामिकाः ॥ ४४ ॥ सक्तचित्तंजनंदुःखशुष्कमिंधनसंचयम् ॥ ज्वलतांनरकाग्नीनांविद्धितेनज्वलंतिते ॥ ४५ ॥ दुःखजालमिदंनामयत्किंचिज्जगतीगतम् ॥ संसक्तमनसामर्थेतत्सर्वंपरिकल्पितम् ॥ ४६ ॥ संसक्तचित्तमायांतिसर्वादुःखपरंपराः ॥ जलकल्लोलवलितामहानद्यइवांबुधिम् ॥ ४७ ॥ मनःसंसर्गरूपिण्याभारभूतशरीरया ॥ क्षयोदयदशार्थिन्यासर्वंततमविद्यया ॥ ४८ ॥

सनामात्रकल्पितत्वमाह ॥ वासनेति ॥ ३९ ॥ मनसःसंगःसंसक्तिस्तल्लक्षणेनैकेनैवरंगेणरंजकद्रव्येण ॥ ४० ॥ तृष्णाशरीराण्यत्तिभक्षयति ॥ ४१ ॥ संसक्तिदोषाव्याप्तानांतृ ष्णयाभक्षितानदेहानामानंत्यमाह ॥ परिसक्तेति ॥ परितोविषयेषुसक्तमतेर्जीवस्य ॥ अंभसांपत्युःसमुद्रस्यसिकताःपरिसंख्यातुंगणयितुम् ॥ ४२ ॥ मेरोरापादमस्तकंलंबिन्या अतएवमुक्तालतात्वेनोत्प्रेक्ष्यायागंगायास्तरंगलक्षणामुक्तागण्यंतेकदाचिद्गणयितुंशक्यंतेसक्तचेतसांदेहास्तुनेत्यर्थः ॥ ४३ ॥ अग्निशस्त्रादिप्रदीप्तत्वाद्रम्याःयातनाख्यनायिकाः संभोगस्थानत्वादंतःपुरपंक्तयोरचिताःकर्मशिल्पिनेत्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ संसक्तचित्तंप्रतिआयांति ॥ ४७ ॥ संसर्गःसंसक्तिस्तद्विषयःअतएवस्वयंशिरसिगृहीतःशिला दिभारइवअवश्यवोढव्यत्वेनभारभूतंशरीरंयया ॥ क्षयोमरणंउदयोजन्मतद्रूपयदुर्दशांजीवस्यप्रार्थयंत्येवस्थितयाअविद्ययासर्वंदुःखजालंततमित्यर्थः ॥ ४८ ॥

संसक्तित्यागस्तुसर्वसुखावहइत्याह ॥ असंसंगेनेत्यादिना ॥ ४९ ॥ अनंतःसंगमंतःसंगपरित्यागम् ॥ ५० ॥ एराएरकास्तृणविशेषास्तानवलंबनायकांक्षनेइतिएरकांक्षी ॥ कर्मण्यण् ॥ ओषधिर्लतायथास्वंकलयंतिमिश्रयंतियानितृणानितदुत्थेनपावकेनदह्यतेतथाप्रकृतिकार्यदेहादिसंसंगात्प्रकृतिभूतःस्वयंजीवोपिदह्यतइत्यर्थः ॥ ५१॥ असक्तंमनःसर्वत्रसुखायैव ॥ अनंतमाकाशमिवसंस्थितम् ॥ ५२ ॥ असत्कल्पतांसदाभासतांचविषयविभागेनविदृण्वन्नुपसंहरति ॥ विद्यादृशीति ॥ प्रकटमुदयंसूर्यादिवदाविर्भावम् ॥५३॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेऽष्टषष्टितमःसर्गः ॥६८ ॥ ॥ ७ ॥ ॥ मनःसर्वार्थसंसक्तित्यागाच्चिन्मात्रसुस्थिरम् ॥ चिन्मात्रशेषंयेनस्यात्सक मोत्रनिगद्यते ॥ १ ॥ विजानताविवेकिनासर्वदातत्तत्कालोचितसर्वव्यवहारसंस्थेनतत्तद्व्यवहारोचितेष्टमित्रभृत्यपुत्रदारादिनासर्वेणसहतिष्ठताअनिषिद्धलौकिकशास्त्रीयसर्व

असंसंगेनभोगानांसर्वारामविभूतयः॥ परंविस्तारमायांतिप्रावृषीवमहापगाः॥ ४९॥ अंतःसंसंगमंगानामंगारंविद्धिराघव॥ अनंतःसंगमंगानांविद्धिरामरसायनम्॥ ५०॥ संसंगेनांतरस्थेनदह्यतेप्रकृतिःस्वयम्॥ स्वकलोत्थेनैरकांक्षीपावकेनयथौषधिः॥ ५१॥ सर्वत्रासक्तमाशांतमनंतमिवसंस्थितम्॥ असत्कल्पंसदाभासंसुखायैवमनोभवेत्॥ ५२॥ विद्यादृशिप्रोदयमागतेनक्षयंत्वविद्याविषयेंगतेन॥ सर्वत्रसंसक्तिविवर्जितेनस्वचेतसातिष्ठतियःसमुक्तः॥ ५३॥ ॥इ०वा०वा०दे० मोक्षोपायेपूपश०संगविचारयोगोपदेशोनामाष्टषष्टितमःसर्गः॥ ६८॥ ॥ ७॥ ॥श्रीवसिष्ठउवाच॥ ॥सर्वदासर्वसंस्थेनसर्वेणसहतिष्ठता॥ सर्वकर्मरतेनापिमनःकार्यंविजानता॥ १॥ नसक्तमिहचेष्टासुनचिंतासुनवस्तुषु॥ नाकाशेनाप्यधोनाग्रेनदिक्षुनलतासुच॥ २॥ नवहिर्विपुलाभोगेनचैवेंद्रियवृत्तिषु॥ नाभ्यंतरेनचप्राणेनमूर्द्धनिनतालुनि॥ ३॥ नभ्रूमध्येननासांतेनमुखेनचतारके॥ नांधकारेनचाभासेनचास्मिन्हृद्यांबरे॥ ४॥ नजाग्रतिनचस्वप्नेनसुषुप्तेननिर्मले॥ नासितेनचवापीतरक्तादौशवलेनच॥ ५॥

कर्मरतेनापिमनोवक्ष्यमाणलक्षणंकार्यमित्यर्थः॥ अथवाएकैककालदेशमित्रभृत्यादिसाह्येनकतिपयकर्मरतत्वापादकपरिच्छिन्नसंसक्तिनिवारणायप्रथमंसर्वदेशकालादिसर्वोपकरणसंपत्त्यासर्वजगद्व्यवहारकर्मरतेनापिस्वेनभूत्वापश्चाद्वक्ष्यमाणप्रकारंमनःकार्यमित्यर्थः ॥ १ ॥ चेष्टादिकालकलनांतिपुमनःसक्तंनकार्यमितिसंबंधः॥ साध्यविषयासुचेष्टासु ॥ अतीतविषयासुचिंतासु ॥ वर्त्तमानेषुवस्तुषु ॥ अधेमध्ये ॥ लतासुदिक्शाखाप्रायासुविदिक्षु ॥ २ ॥ वहिराधिभौतिके ॥ विपुलेआभुज्यतइत्याभोगेकलत्रभृत्यादिविषये ॥ तद्भोगलक्षणास्विंद्रियवृत्तिषु ॥ आभ्यंतरेआध्यात्मिके ॥ प्राणमूर्द्धादीनियोगशास्त्रोक्तानितत्तत्काम्यसिद्ध्यनुकूलानिधारणास्थानानितेष्वपि ॥ ३ ॥ तारकेदक्षिणाक्षिकनीनिकायाम् ॥ ४ ॥ निर्मलेशुद्धसत्वगुणे ॥ असितेतमसि ॥ पीतरक्तादौरजसि ॥ शवलेगुणसमाहारे ॥ ५ ॥

चलेकार्यवर्गेस्थिरेकारणेअव्यक्ते ॥ आदिमध्येतराःसर्गादिकालास्तेषु ॥ दूरादिषुदिक्परिच्छेदेषु ॥ पदार्थैर्नामरूपसमाहारे ॥ आत्मनिर्जीवे ॥ ६ ॥ रूपांतग्रहणंरसगंधयोरप्युप
लक्षणम् ॥ मोहोविषयाभिलापपारवश्यम् ॥ आनंदवृत्तयोविषयोपभोगफलानितेष्वपि ॥ गमागमचेष्टासुखेचरत्वादिसिद्धिषु ॥ कालकलनासुअतीतानागतज्ञताचिरजीवना
दिसिद्धिषु ॥ ७ ॥ किंचिच्चेत्यंनिश्चलाबुद्धिस्तदवलंबिनितत्साक्षिणि ॥ आत्मरसंभूमानंदप्रवणमतएवसर्वत्रनीरसम् ॥ रसोप्यस्यपरंदृष्ट्वानिवर्त्तनइतिभगवद्वचनात् ॥ इवकार
स्तादृशमनःस्थितेरपिमिथ्यात्वद्योतनार्थः ॥ ८ ॥ अजीवत्वंब्रह्मताम् ॥ ९ ॥ स्वात्मरतिःस्वात्मैकप्रियः ॥ १० ॥ चेत्यांशंप्रागुक्तंबुद्धिसाक्षित्वम् ॥ ११ ॥ अरुचिर्व्यवहारफले
च्छाशून्योजीवोगतसंगतयासंगनिमित्ताविद्याकामकर्मवासनाशून्यतयाहेतुनाकर्मोद्भवेनफलेनसंगंनोएतिकिंतुयावत्प्रारब्धक्षयंदेहभारमात्रंसहतीव ॥ तस्यतावदेवचिरंयावन्न

नचलेनस्थिरेनादौनमध्येनेतरत्रच ॥ नदूरेनांतिकेनाग्रेनपदार्थेनचात्मनि ॥ ६ ॥ नशब्दस्पर्शरूपेषुनमोहानंदवृत्तिषु ॥ नगमागमचेष्टा
सुनकालकलनासुच ॥ ७ ॥ केवलंचितिविश्रम्यकिंचिच्चेत्यावलंबिनि ॥ सर्वत्रनीरसमिवतिष्ठत्यात्मरसंमनः ॥ ८ ॥ तत्रस्थोविगतासं
गोजीवोऽजीवत्वमागतः ॥ व्यवहारमिमंसर्वमाकरोतुकरोतुवा ॥ ९ ॥ अकुर्वन्नपिकुर्वाणोजीवःस्वात्मरतिःक्रियाः ॥ क्रियाफलैर्नसंबं
धमायातिखमिवांबुदैः ॥ १० ॥ अथवातमपित्यक्त्वाचेत्यांशंशांतचिह्नः ॥ जीवत्तिष्ठतुसंशांतोज्वलन्मणिरिवात्मनि ॥ ११ ॥ निर्वाण
मात्मनिगतःसततोदितात्माजीवोऽरुचिर्व्यवहरन्नपिरामभद्र ॥ नोसंगमेतिगतसंगतयाफलेनकर्मोद्भवेनसहतीवचदेहभारम् ॥ १२ ॥
॥ इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेशांतिसमायातयोगोपदेशोनामैकोनसप्ततितमःसर्गः ॥ ६९ ॥ ॥ ७ ॥ ॥
॥ श्रीवसिष्ठउवाच ॥ ॥ असंसंगसुखाभ्याससंस्थितैर्विततात्मभिः ॥ व्यवहारिभिरप्यंतर्वीतशोकभयैःस्थितम् ॥ १ ॥ प्रक्षुब्धाक्षु
ब्धदेहस्याविसंवादेनसंविदः ॥ अंतःपूर्णस्यवदनेश्रीरिंदोरिवलक्ष्यते ॥ २ ॥ चेत्यहीनंचिदालंबंमनोयस्यगतज्वरम् ॥ तेनानुकृतकेनेव
जनतासंप्रसीदति ॥ ३ ॥ नित्यमात्मदृशालीनोज्ञःस्वस्थश्चचलोपिसन् ॥ क्षुब्धोदृश्यतएवासौप्रतिबिंबार्कवन्मुधा ॥ ४ ॥ आत्मारामा
महात्मानःप्रबुद्धाःपरमोदयाः ॥ बहिःपिच्छाग्रतरलाअंतर्मेरुरिवाचलाः ॥ ५ ॥

त्विमोक्ष्येइत्यादिश्रुतेरितिभावः ॥ १२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेएकोनसप्ततितमःसर्गः ॥ ६९ ॥ ॥ ७ ॥ ॥ असंगसुखविश्रांतोव्यवहारसमु
द्वैः ॥ यथानदृश्यतेदोषैस्तथायुक्त्योपपाद्यते ॥ १ ॥ असंसंगसुखस्याभ्यासोनिरंतरमास्वादनंतत्रस्थितैर्विश्रांतैः ॥ १ ॥ तेषांतथास्थितिःकेनलिंगेनज्ञातातदाह ॥ प्रक्षुब्धेति ॥
यतःप्रक्षोभनिमित्तैःपुत्रधननाशबंधनापमाननादिभिःप्रक्षुब्धदेहवल्लक्ष्यमाणस्यापिवस्तुतस्तद्रहितस्यसंविदश्चित्तवृत्तेः ॥ परमार्थसुखेअविसंवादेनअविप्रलंभेनहेतुनाअंतःपूर्ण
स्य ॥ इंदुपक्षेज्योतिश्चक्रस्यादिगत्याप्रक्षुब्धदेहस्यापित्वासनेस्थिरत्वादक्षुब्धदेहस्य संवेदयतीतिसंवित्सूर्यस्तस्यअविसंवादेनपौर्णमास्यामत्यंतसांमुख्याद्वैषम्येणांतरस्थैःपू
र्णस्यवदनसदृशेबिंबे ॥ २ ॥ यदनुपहादन्येपिक्षोभमालिन्यान्मुच्यंतेतस्यनिर्विक्षोभत्वंकिंवाच्यमित्याशयेनाह ॥ चेत्येति ॥ ३ ॥ ४ ॥ ५ ॥

विक्षोभदर्शनेपितदभावेदृष्टांतमाह ॥ चित्तमिति ॥ रंगोरंजकोपाधिर्जपाकुसुमादिः ॥ मसृणःस्निग्धः ॥ ६ ॥ उदितंनिरतिशयानंदाभ्युदयंप्राप्तवंतम् ॥ ज्ञातंलोकानांपरंईश्वर तत्त्वमवरंजीवतत्त्वंचयेन ॥ ७ ॥ यावदयमंतःस्वसक्तोनभवतितावद्बाह्येषुअसंसक्तिर्दुर्लभेत्याशयेनस्वसंसक्तलक्षणमाह ॥ आत्मेति ॥ यदाअयंपरमात्मनःप्रबोधंप्राप्यकलना हेतुभिर्मलैर्निर्मुक्तःसन्अध्यानेपिनिरतिशयानंदात्मनःस्वतःस्फुरणान्निर्विकल्पसमाधाविवसदैवआत्मध्यानमयइवसुखमग्नोभवतितदास्वसक्तइतिकथ्यतइत्यर्थः ॥ ८ ॥ ज्ञा नपरिपाकोत्कर्षादात्मसत्त्युत्कर्षक्रमेणसंसंगःक्षीयतइत्याह ॥ आत्मारामतयेति ॥ ९ ॥ अस्यांउक्तलक्षणायांस्वसंसक्तिदशिगतःपरिणतः ॥ अद्वंद्वःप्रियाप्रियरहितः ॥१०॥

चित्तमात्मत्वमायातंसुखदुःखानुरंजनम् ॥ नोपैतिरंगसंयुक्तोमसृणःस्फटिकोयथा ॥ ६ ॥ संसारदृष्टिरुदितंज्ञातलोकपरावरम् ॥ नरं जयतिसच्चित्तंजललेखायथांबुजम् ॥ ७ ॥ आत्मध्यानमयोऽध्यानेप्रबोधंपरमात्मनः ॥ कलनामलनिर्मुक्तःस्वसक्तइतिकथ्यते ॥ ८ ॥ आत्मारामतयाजीवोयात्यसंसंगतामिह ॥ आत्मज्ञानेनसंसंगस्तनुतामेतिनान्यथा ॥ ९ ॥ जाग्रत्येवसुषुप्तस्थोजीवोभवतिराघव ॥ अस्यांदशिगतोऽद्वंद्वोनित्यानस्तमयोदयः ॥ १० ॥ अत्रप्रौढिमुपायातःसूर्यतामेतिपावनीम् ॥ परिणामवशादिंदुरमावास्यार्कतामि व ॥ ११ ॥ चित्तेचित्तदशाहीनेयास्थितिःक्षीणचेतसाम् ॥ सोच्यतेशांतकलनाजाग्रत्येवसुषुप्तता ॥ १२ ॥ तांसुषुप्तदशामेत्यजीवन्व्यव हरन्नरः ॥ सुखदुःखवरत्राभिर्नकदाचनकृष्यते ॥ १३ ॥ जाग्रत्येवसुषुप्तस्थोयःकरोतिजगत्क्रियाम् ॥ तंयंत्रपुत्रकमिवनायातिसुखदुः खदृक् ॥ १४ ॥ चित्तस्यबाधिकाशक्तिर्भावाभावोपतापदा ॥ आत्मतामागतेचित्तेतस्यांकिंबाधतेकथम् ॥ १५ ॥ सुषुप्तबुद्धिःकर्माणिपूर्व मेवावहेलया ॥ कुर्वन्नबध्यतेजीवोजीवन्मुक्ततयास्थितः ॥ १६ ॥ सौषुप्तींवृत्तिमाश्रित्यकुरुमाकुरुवानघ ॥ कर्मप्रकृतिजंपाकवशादु पगतंस्थितम् ॥ १७ ॥ नादानंनपरित्यागःकर्मणोज्ञायरोचते ॥ तिष्ठंत्यवगतात्मानोयथाप्राप्तानुवर्तिनः ॥ १८ ॥ कुर्वन्नपिनकर्त्तासिसु षुप्त्यैकस्थयाधिया ॥ अकर्त्तापिचकर्त्तासियथेच्छसितथाकुरु ॥ १९ ॥ यथानकिंचित्कलयन्मंचकेस्पंदतेशिशुः ॥ तथाफलान्यकलय न्कुरुकर्माणिराघव ॥ २० ॥

प्रौढिअभ्यासक्रमात्परूढताम् ॥ परिणामःक्रमात्कलापचयस्तद्वशाज्जलमयेमंडलेसूर्यप्रतिबिंबात्माइंदुर्यथाअमावास्यायांस्वबिंबभूतार्कतामेतितद्वदित्यर्थः ॥ ११ ॥ जाग्र त्येवसुषुप्तस्थइतियदुक्तंनद्विशदयति ॥ चित्तेइति ॥१२ ॥ १३॥ निरहंभावसाम्याद्यंत्रपुत्रकोनर्त्तकप्रतिमातत्तुल्यदेहम् ॥ १४ ॥ चित्तस्यबाधिकापीडाकरीअहंभावलक्षणैव शक्तिःसाहिअनिष्टानामिष्टानांचभावाभावाभ्यामागमापायाभ्यामुपतापदा ॥ १५ ॥ पूर्वसाधनदशामारभ्यैवावहेलयाअभिनिवेशत्यागेन ॥ १६ ॥ प्रकृतिर्वर्णाश्रमस्वभा वस्तज्जंतदुचितंप्रारब्धपाकवशादुपगतंप्राप्तंलोकशास्त्रस्थितम् ॥ १७ ॥ येत्वाश्रमोचितमपिकर्मत्याज्यमेवेतिमन्यंतेतान्प्रत्याह ॥ नादानमिति ॥ १८ ॥ यदितत्त्वज्ञोयदिवा अतत्त्वज्ञइतिपूर्वोत्तरवाक्ययोःशेषः ॥ १९ ॥ नकिंचित्प्रयोजनंकलयन्संकल्पयन् ॥ सहजानंदलीलयैवस्पंदते ॥ २० ॥

तच्छब्दोवीप्सितोबोध्यः ॥ २१ ॥ २२ ॥ यथाअद्रिःपद्मत्यपिक्षतुपुअविकृतत्वात्समस्तद्वत्सर्वासुआपत्संपदवस्थासुसमोभवतीत्यर्थः ॥ २३ ॥ धीरात्मालौकिकवैदिकक्रिया सुबहिरेवमेवलोलतामिवायातिनोंऽतर्भवन्कंपोयस्यतथाविधोभवति ॥ तथावायुनाबहिर्वृक्षतृणादौप्रस्पंदितोऽचलःपर्वतस्तद्वदित्यर्थः ॥ २४ ॥ क्रियास्विवतस्यमरणजीव नयोरप्यविकारितातुल्येत्याशयेनाह ॥ सुषुप्तेति ॥ २५ ॥ ननुविद्वांसंदेवतुर्यस्थितिर्युक्तानसौषुप्तेसेतिशंकामालक्ष्याह ॥ एवंमेवेति ॥ २६ ॥ तर्हिसौषुप्तीस्थितिरित्युक्तेःकोभि प्रायस्तमाह ॥ आनंदमयइति ॥ निर्दुःखत्वेसतिनिरतिशयसुखसमृद्धतासौषुप्तेआनंदमयेसत्वात्तद्विवक्षयानथोक्तिरित्यर्थः ॥ २७ ॥ तत्स्थस्यकीदृशंजगद्दर्शनंतदाह ॥ तत्रेति

अचेत्यचित्पदस्वंस्थोजाग्रत्यपिसुषुप्तधीः ॥ यद्यत्करोतिलब्धात्मातस्मिंस्तस्यनकर्तृता ॥ २१ ॥ दशामासाद्यसौषुप्तींस्वचित्तेचविवास नः ॥ अंतःशीतलतामेतिज्ञोरसेनयथाशशी ॥ २२ ॥ सुषुप्तस्थोमहातेजाःपूर्णःपूर्णेंदुबिंबवत् ॥ समःसर्वास्ववस्थासुभवत्यद्रिर्यथर्तुषु ॥ २३ ॥ सुषुप्तसंस्थोधीरात्माबहिरायातिलोलताम् ॥ क्रियासुनोभवत्कंपःप्रस्पंदितइवाचलः ॥ २४ ॥ सुषुप्तावस्थितोभूत्वादेहंविगत कल्मषः ॥ पातयाश्वथवादीर्घकालंधारयशैलवत् ॥ २५ ॥ एवंवरामसौषुप्तीस्थितिरभ्यासयोगतः ॥ प्रौढासतीतुर्यमितिकथितातत्त्व कोविदैः ॥ २६ ॥ आनंदमयएवांतःप्रक्षीणसकलामयः ॥ अत्यंतास्तंगतमनाभवतिज्ञोमहोदयः ॥ २७ ॥ तत्रस्थोज्ञःप्रमुदितःपरमानं दघूर्णितः ॥ लीलामिवेमांरचनांसदासमनुपश्यति ॥ २८ ॥ वीतशोकभयायासोगतसंसारसंभ्रमः ॥ तुर्यावस्थामुपारूढोभूयःपतति नात्मवान् ॥ २९ ॥ प्राप्यस्वांपदवींपुण्यांयथेदंभ्रमितंजगत् ॥ शैलसंस्थइवाधःस्थंहसन्पश्यतिधीरधीः ॥ ३० ॥ अस्यांतुतुर्यावस्थायां स्थितिंप्राप्याविनाशिनीम् ॥ आनंदैकांतलीनत्वादनानंदपदंगतः ॥ ३१ ॥ अनानंदमहानंदकलातीतस्ततोपिहि ॥ मुक्तइत्युच्यतेयोगी तुर्यातीतंपदंगतः ॥ ३२ ॥ परिगलितसमस्तजन्मपाशःसकलविलीनतमोमयाभिमानः ॥ परमरसमयींप्रयातिसत्तांजलगतसैंधवखं डवन्महात्मा ॥ ३३ ॥ ॥ इ० वा० वा० दे० मो० उपशमप्रकरणे असंसंगविकल्पोपदेशोनामसप्ततितमःसर्गः ॥ ७० ॥ ॥ ५ ॥

॥ २८ ॥ ननुतांलीलांपश्यंस्तत्रसपुनःपतेदपिनेत्याह ॥ वीतेति ॥ २९ ॥ कुतोनपततितत्राह ॥ प्राप्येति ॥ यतोदोपदस्थ्याहसन्पश्यतिनपुरुपार्थबुद्ध्येत्यर्थः ॥ ३० ॥ ३१ ॥ इ त्थंयावज्जीवंतस्यतुरीयस्थितिमुक्त्वाविदेहस्यतुर्यातीतस्थितिमाह ॥ अनानंदेति ॥ अनानंदमवस्थात्रयपदंतदपेक्ष्यतुर्यपदंमहानंदमितितज्जीवन्मुक्तस्यसदाभवति ॥ विदेहमु क्तौतुअनानंदस्मरणायोगात्तदपेक्षयामहत्त्वकलनायोगात्तदतीतस्ततोपिमुक्तस्तुर्यातीतपदंगतइत्युच्यतइत्यर्थः ॥ ३२ ॥ तामेवस्थितिंवर्णयन्नुपसंहरति ॥ परिगलितेति ॥ य तस्सकलाविलीनास्तमोमयाअभिमानायस्यअतएवपरिगलितसमस्तजन्महेतुकामकर्मवासनापाशोमहात्माजलगतसैंधवखंडवत्स्विल्यभावविलयात्परमोरस्यतइतिरसआनं दोरसनैकवेद्यांशश्वतन्मयींसत्तांपरमार्थस्थितिंप्रयातीत्यर्थः ॥ ३३ ॥ ॥ इतिश्रीवासिष्ठत० तात्पर्यप्रकाशेउपशमप्रकरणेसप्ततितमःसर्गः ॥ ७० ॥ ॥ ५ ॥

१ स्वच्छइत्यपिपाठः

परस्याव्यवहार्यत्वात्तुर्यमत्रोपवर्ण्यते ॥ शरीरादिनिरासेनयथामोहाज्जनिक्रमः ॥ १ ॥ तुर्यातीतपदस्यवागादिव्यवहाराविषयत्वंदर्शयिनुंभूमिकांरचयति ॥ यावदिति ॥ अवस्थात्रयपादान्परामृश्यतत्साक्षिचिन्मात्रेतद्विलापनक्रमेणचिन्मात्रपरिशेषावस्थितिलक्षणतुर्यस्ययावत्परामर्शःसाक्षादनुभवस्तावन्मात्रंकेवलतापदंजीवन्मुक्तस्यश्रुत्यादिवचसांचविषयः ॥ वाक्यजन्याखंडाकारवृत्तेस्तावत्येवपर्यवसानादितिभावः ॥ १ ॥ ततऊर्ध्वंअदेहानांमुक्तानांप्राप्यमपितुर्यातीतपदंनेषांवेदवचसांचविषयोनतद्विषयतापादनहेतोर्मनसःक्षयात् ॥ यथावायुगम्यमंवरमाकाशंपुरुषाणांमनुष्याणांविषयोनतद्वदित्यर्थः ॥२॥ गम्याप्राप्या ॥ खलेखाव्योमवीथी ॥ नभस्वतांवायूनामिव ॥ ३ ॥ अतःसंदेहमुक्तानांपंचमभूमिकाक्रमेणसप्तमांतभूमिकास्वेवस्थितिरित्याह ॥ सुपुमेति ॥ ४ ॥ ज्ञानदार्ढ्यंतुतुर्यातीतपदविश्रांतिपर्यंतंत्वयाकार्यंनांतरालिकभूमिकामात्रपर्यवसितमित्याह ॥

श्रीवसिष्ठउवाच॥ ॥यावत्तुर्यपरामर्शस्तावत्केवलतापदम् ॥ जीवन्मुक्तस्यविषयोवचसांरघूद्वह ॥ १ ॥ अतऊर्ध्वमदेहानांमुक्तानांवचसांतथा॥ विषयोनमहाबाहोपुरुषाणामिवांबरम्॥ २ ॥ साहिविश्रांतिपदवीदूरेभ्योपिदवीयसी॥ गम्याविदेहमुक्तानांखलेखेवनभस्वताम्॥ ३ ॥ सुपुप्तावस्थयाकंचित्कालंभुक्त्वाजगत्स्थितिम् ॥ तुर्यतामेतितदनुपरमानंदघूर्णितः ॥ ४ ॥ तुर्यातीतदशांतज्ज्ञाथायांत्यात्मकोविदाः॥ तथाधिगच्छनिर्द्वंद्वंपदंरघुकुलोद्वह ॥ ५॥ सुपुप्तावस्थयारामभवसंव्यवहारवान् ॥ चित्रेंदोरिवतेनस्तःक्षयोद्वेगावरिंदम॥ ६ ॥ शरीरसन्निवेशस्यक्षयेस्थैर्येचसंविदः॥ मागृहाणभ्रमोह्येषशरीरमितिजृंभते॥ ७॥ देहनाशेनकोर्थस्तेकोर्थस्तेदेहसंस्थया॥ भवत्वंप्रकृतारंभस्तिष्ठत्वेपयथास्थितम्॥ ८ ॥ ज्ञातवानसितत्सत्यंबुद्धवानसितत्पदम्॥ प्राप्तवानसिरूपंस्वंविशोकोभवभूतये॥ ९ ॥ ईप्सितानीप्सितंत्यक्त्वाशीतलालोकशोभया ॥ अंधकारात्तथांभोदान्मुक्तंखमिवशोभते ॥ १० ॥ मनस्त्वात्मसंपन्नंनाधःसमनुधावति॥ योगमंत्रतपःसिद्धःपुरुषःखादिवावनिम्॥११॥इहशुद्धाचिदेवास्तिपारावारविवर्जिता॥ अयंसोहमिदंतन्मइतितिमास्तुविभ्रमः॥ १२॥ आत्मेतिव्यवहारार्थमभिधाकल्पिताविभोः॥ नामरूपादिभेदस्तुदूरमस्मादलंगतः॥१३॥ जलमेवयथांभोधिर्नतरंगादिकंपृथक्॥ आत्मैवेदंतथासर्वंनभूतोयादिकंपृथक्॥ १४॥

तुर्यातीतेति ॥ ५ ॥ तत्रप्रथमंपंचमभूमिकैवशास्त्रीयव्यवहारनिर्वाहार्थमभ्यसनीयेत्याशयेनाह ॥ सुपुप्तावस्थयेति ॥ क्षयोमृत्युःकलापचयश्चउद्वेगोभयंराहूपरोधश्च ॥ ६ ॥ ननुदेहनाशेसंविन्नाशस्याप्यवर्जनात्कथंसंविदात्मनोमेनक्षयस्तत्राह ॥ शरीरेति ॥ संविदःक्षयंस्थैर्यंचेतिशेषः ॥ ७ ॥ यदिदंदेहइतिभ्रमस्तर्हिसएवनश्यतांतत्राह ॥ देहेति ॥ प्रकृतेस्वात्मबोधस्थैर्येआरंभःप्रयत्नोयस्यतथाविधोभव ॥ एषदेहः ॥ ८ ॥ स्वात्मबोधेसंदेहंवारयति ॥ ज्ञातवानसीति ॥ सत्यंजगदधिष्ठानतत्त्वम् ॥ पदंअवस्थात्रयाधिष्ठानम् ॥ स्वंरूपंअखंडवाक्यार्थस्वरूपम् ॥ ९ ॥ खंअर्थाच्छरद्राकाकाशम् ॥ १० ॥ अधःअर्वाक्तनविषयसुखे ॥ सिद्धःखेचरसिद्धिप्राप्तःखात्खंविहाययथाअवनिंनसमनुधावतितद्वत् ॥ ११ ॥ पारावारेपरार्वाचीनतीरेपरिच्छेदइतियावत् ॥ १२ ॥ यदिशुद्धाचिदेवैकैवास्तितर्ह्यात्मेतितद्यतिरिक्ताअभिधाकथंतत्राह ॥ आत्मेति ॥ १३ ॥ १४ ॥

१ अत्रशोभसेइतिपाठोपेक्षितइतिभाति

समस्तात्पूर्णाज्जलात्॥जगतःस्फाराज्जगदात्मना विस्तृतात् ॥१५॥ देहादिभावेषु यस्त्वंयश्चेतेतत्किम्॥यत्रत्वंयश्चवानतेतत्किम् ॥अध्यासदृशाकस्यापित्वदात्मतायास्त्वत्संस्पृष्टताया [illegible]दधिष्ठानदृशासर्वत्रैवतत्संभवाच्चेतिभावः॥१६॥परमार्थतस्तुद्वित्वमेवनास्तीतितदधीनादेहतत्संबंधतदुपादानकलंकादिसंभावनादूरनिरस्तेत्याह ॥ नेति॥१७॥अभ्युपग तेपिद्वैते[illegible]हादिसत्यत्वेचचिदात्मनस्तत्संस्पर्शोनसंभवत्येवेतिप्रौढिमादर्शयन्नाह ॥ द्वित्वमित्यादिना ॥१८ ॥ आद्यएकप्रदेशप्रसरणलक्षणेसंसर्गेद्वितीयस्तादात्म्येदृष्टांतः ॥ १९ ॥ ॥ २० ॥ मास्तुसंयोगस्तादात्म्यंवासमवायस्तुकिंनस्यात्तत्राह ॥ अविनाभाविनोरिति ॥ अयुतसिद्धयोरित्यर्थः ॥ २१ ॥ याकथाउक्तिः ॥ देहस्यचिदाश्रयत्वेविषयत्वायोगा दस्फुरणापत्तेर्विषयत्वेचाश्रयत्वायोगात्समवायाद्यसिद्धेर्विषयतासंबंधस्यचमिथ्यार्थसाधारणस्यसत्यत्वायोगाद्दुरवबोधार्थेत्यर्थः ॥ अग्नौजलधिरितिकथेतिशेषः ॥२२॥ तर्हि स्त्वध्यस्तएवसंबंधस्तत्राप्याह ॥ सत्येति ॥ देहात्मसंबंधाध्यासस्यआत्माधिष्ठानकत्वेआत्मदर्शनादेवबाधःस्यादित्यर्थः ॥ साम्यंअध्यस्तवैषम्यंबाधंयथायातीतिशेषः ॥ २३॥

यथासमस्ताज्जलधौजलादन्यन्नलभ्यते॥ तथैवजगतःस्फारादात्मनोन्यन्नलभ्यते॥ १५ ॥ अयंसोहमितिप्राज्ञकक्करोपिव्यवस्थितिम्॥ किंतत्त्वंकिंचवातेस्यात्किंतत्त्वंकिंचवानते॥ १६॥ नद्वित्वमस्तिनोदेहाःसंबंधोनचतैःस्थितः॥ संभाव्यतेकलंकोवाभानोरिवतमःपटैः॥ १७॥ द्वित्वमभ्युपगम्यापिकथयामितवारिहन्॥ देहादिभिःसद्भिरपिनसंबंधोविभोर्भवेत् ॥ १८॥ छायातपप्रसरयोःप्रकाशतमसोर्यथा॥ नसंभवतिसंबंधस्तथावैदेहदेहिनोः॥ १९॥ यथाशीतोष्णयोर्नित्यंपरस्परविरुद्धयोः॥ नसंभवतिसंबंधोरामदेहात्मनोस्तथा ॥ २० ॥ अविनाभाविनोर्यस्तुसंबंधःकथमेतयोः॥ जडचेतनयोर्देहदेहिनोरनुभूयते॥ २१ ॥ चिन्मात्रस्यात्मनोदेहसंबंधइतियाकथा॥ सैषादुरवबोधार्थादावाग्नौजलधिर्यथा ॥ २२ ॥ सत्यावलोकनेनैषामिथ्यादृष्टिर्विनश्यति ॥ अवलोकनयासाम्यमातपेजलधिर्यथा ॥ २३ ॥ चिदात्मानिर्मलोनित्यःस्वावभासोनिरामयः॥ देहस्त्वनित्योमलवांस्तेनसंबद्ध्यतेकथम् ॥ २४॥ स्पंदमायातिवातेनभूतैर्वापीवरीकृतः॥ देहस्तेननसंबंधोमनागेवसहात्मना ॥ २५ ॥ सिद्धेद्वित्वेपिदेहस्यनसंबंधस्यसंभवः॥ द्वित्वासिद्धौतुसुमतेकलनैवेदृशीकुतः ॥ २६ ॥ इत्येतदेवतत्सत्वेतत्रैवांतःस्थितिंकुरु॥ नबंधोस्तिनमोक्षोस्तिकदाचित्कस्यचित्क्वचित्॥ २७॥

शुद्धमपापविद्धमित्यादिश्रुतिसिद्धस्वाभाविकशुद्ध्याविरोधादप्यात्मानाशुद्धंदेहादिस्पृशतीत्याह ॥ चिदात्मेति ॥ २४ ॥ नन्वात्मसंबंधाभावेदेहस्यस्पंदादिःकथंमृतदेहेतददर्शनादितिचेत्तत्राह ॥ स्पंदमिति ॥ वातेनप्राणवायुना ॥ भूतैरन्नादिभिःप्राणावष्टंभहेतुभिःपीवरीकृतउपचितआहितबलइतियावत् ॥ तथाचस्पंदेप्राणोबलेवाहेतुर्नात्मेत्यर्थः ॥ अप्यर्थेएवकारः ॥ नसंबंधोदेहस्य ॥२५॥ एवंद्वैतसत्यत्वाभ्युपगमेयदात्मसंबंधस्तदाकिंवक्तव्यंतदनभ्युपगमेइतिप्रौढिवादमुपसंहरन्नाह ॥ सिद्धेइति ॥ सिद्धेसत्ये ॥ २६ ॥नन्वद्वित्वासिद्धिरेवकुतइत्याशंक्यसंबंधदूषणार्थंदर्शितायुक्तीस्तत्राप्यतिदिशति ॥ इतीति ॥ तस्यद्वित्वस्यसत्त्वेसत्यत्वेकेनचिदाशंक्यमानेसतिइतिप्रागुक्तमेतदेवयुक्तिजातमुपन्यसनीयम् ॥ द्वितीयसिद्धौहिद्वित्वंस्यात् ॥ द्वितीयंचिच्चेत्तत्रभेदकाभावः ॥ जडंचेच्छायातपादिवद्विरोधात्पूर्वसिद्धचिद्विरुद्धंनसिद्ध्यति ॥ चिच्चस्यासंबद्धंजडंसाधयतीतिकथादुरवबोधार्था ॥ अध्यस्तंचेत्सत्यचिदवलोकनमात्राद्विनश्येत् ॥निर्मलासंगत्वाद्यात्मस्वभावविरुद्धंचमलिनंजडंअसंगेनकथंसाध्येतेत्यादियुक्तीनामत्रापिसाम्यादितिभावः ॥ अतोद्वैतभ्रमंविहायतत्रअद्वितीयचिन्मात्रएवस्थितिंकुरु ॥ तत्रचबंधमोक्षादिशंकैवनास्तीत्यर्थः ॥ २७ ॥

कीदृशीसास्थितिर्यामयाकार्यातामाह ॥ सर्वमिति ॥ २८ ॥ सर्वात्मदृष्टिश्चविरुद्धदुर्दृष्टिनिरासेदृढीभवतिनान्यथेत्याशयेनाह ॥ सुखीति ॥ तन्तर्हि ॥ २९ ॥ ननुदेहदुःखा दयोपिप्रत्यक्षादिभिःपुरस्कृताःआत्मापिश्रुतियुक्तिभिःपुरस्कृतस्तदनयोस्तुल्यत्वेकोविशेषोयेनात्मदृष्टिमवलंब्यदेहादिदृष्टिर्निरसनीयेत्युच्यतेतत्राह ॥ यइति ॥ क्रमोविशेषः॥ यथाचक्षुषादूराच्छैलतृणयोर्मध्येमहत्वात्स्थिरत्वाच्चशैलदृष्टिःसुकराचलत्वात्पेलवत्वाच्चतृणदृष्टिर्दुष्करा यथावात्वचामृदुत्वात्सुखस्पर्शत्वाच्चकौशेयस्पर्शउपादेयःकठोरत्वा द्दुःखदत्वाच्चउपलस्पर्शोहेयस्तथाअपरिच्छिन्नत्वात्सदास्वप्रकाशत्वादानंदरूपत्वाच्चपरमात्मदृष्टिःसुकराउपादेयाच देहाद्यनात्मदृष्टिस्तुपेलवत्वादस्थिरत्वान्मनआदिसापेक्ष त्वाच्चदुष्कराहेयाचेतिमहदंतरमस्तीतिनसाम्यमित्यर्थः ॥३०॥ विरुद्धत्वादपिसंबंधवत्सादृश्यमपिनिरसितुंशक्यमित्याशयेनाह ॥ यथेति ॥३१॥ विरोधादेवतादात्म्यशंकायाः

सर्वमात्ममयंशांतमित्येवंप्रत्ययंस्फुटम् ॥ सबाह्याभ्यंतरंरामसर्वत्रदृढतांनय ॥ २८ ॥ सुखीदुःखीविमूढोस्मीत्येतादुर्दृष्टयःस्मृताः ॥ आसुचेद्दृस्तुबुद्धिस्तेतच्चिरंदुःखमिच्छसि ॥ २९ ॥ यःक्रमःशैलतृणयोःकौशेयोपलयोस्तथा ॥ साम्यंप्रतिसएवोक्तःपरमात्मशरीरयोः ॥ ३० ॥ यथातजस्तिमिरयोर्नसंबंधोनतुल्यता ॥ अत्यंतभिन्नयोरामतथैवात्मशरीरयोः ॥ ३१ ॥ यथाशीतोष्णयोरैक्यंकथास्वपिनदृश्यते ॥ जडप्रकाशयोःश्लेषोनतथात्मशरीरयोः ॥ ३२ ॥ देहश्चलतिवातेनतेनैवायातिगच्छति ॥ शब्दंकरोतिवातेनदेहनाडीविलासिना ॥ ३३ ॥ शब्दःकचटतप्रायःस्फुरत्यंतःसमीरणैः ॥ यथाप्रजायतेवंशाद्देहरंध्रात्तथैवहि ॥ ३४ ॥ कनीनिकापरिस्पंदश्चक्षुःस्पंदस्यमारुतात् ॥ इंद्रियस्फुरणात्सैवसंवित्केवलमात्मनः ॥ ३५ ॥ आकाशोपलकुड्यादौसर्वत्रात्मदशास्थिता ॥ प्रतिबिंबमिवादर्शेचित्तएवात्रदृश्यते ॥ ३६ ॥ शरीरालयमुत्सृज्ययत्रचित्तविहंगमः ॥ स्ववासनावशाद्यातितत्रैवात्मानुभूयते ॥ ३७ ॥ यत्रपुष्पंतत्रगंधसंविदःसंस्थितायथा ॥ यत्रचित्तंहितत्रात्मसंविदःसंस्थितास्तथा ॥ ३८ ॥ सर्वत्रस्थितमाकाशमादर्शेप्रतिबिंबति ॥ यथातथात्मासर्वत्रस्थितश्चेतसिदृश्यते ॥ ३९ ॥ अपामवनतंस्थानमास्पदंभूतलेयथा ॥ अंतःकरणमेवात्मसंविदामास्पदंतथा ॥ ४० ॥ सत्यासत्यंजगद्रूपमंतःकरणबिंबिता ॥ आत्मसंवित्तनोतीदमालोकमिवसूर्यभा ॥ ४१ ॥

प्रसक्तिरेवनास्तीत्याशयेनाह ॥ यथेति ॥ श्लेषःसंयोगस्तस्याप्यसंभवेऐक्यंदूरनिरस्तमित्याशयः ॥ ३२ ॥ पूर्वमात्मसंबंधाभावेपिदेहचेष्टादेर्वातेनगतार्थतोक्ताअत्रतुआत्मैक्याभावेर्पातिनपौनरुक्त्यम् ॥ ३३ ॥ देहरंध्रंकंठस्तदुद्गतैःप्राणसमीरणैःकंठताल्वादिस्थानेषुजिह्वादिनाभिहत्यनिःसार्यमाणैःकवर्गचवर्गटवर्गादिःशब्दःस्फुरतीतिप्रत्यक्षसिद्धमित्यर्थः ॥ वंशात्सच्छिद्रकीचकात् ॥ ३४ ॥ एवंचक्षुरादिसर्वेंद्रियस्पंदोपिवायुतएव आत्मनस्तुकेवलंसंविदेवकृत्यंनान्यदित्याह ॥ कनीनिकेति ॥ विषयप्रदेशेचक्षुःस्पंदस्य निमित्तभूतःकनीनिकापरिस्पंदोपिमारुतादेव ॥ एवंसर्वेंद्रियस्फुरणाज्जायमानासास्फूर्त्तिलक्षणासंविदेवकेवलमात्मनोनान्यदित्यर्थः ॥ ३५ ॥ यद्यपिसासंवित्सर्वगतासदातनी चतथापिचित्ततद्वृत्तिष्वेवाभिव्यक्तानान्यत्रेत्याह ॥ आकाशेति ॥ ३६ ॥ अतएवनद्गमनादेवात्मनःपरलोकगमनादिव्यवहारोपीत्याह ॥ शरीरेति ॥ ३७ ॥ ३८ ॥ ३९ ॥ अवनतंनिम्नम् ॥ आत्मसंविदांचित्प्रतिबिंबानाम् ॥ ४० ॥ सत्यंव्यावहारिकम् ॥ असत्यंप्रातिभासिकम् ॥ अनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीतिश्रुतेरितिभावः ॥ ४१ ॥

अंतःकरणंतत्समष्ट्यात्माहिरण्यगर्भः ॥ प्रतिबिंबद्वाराकारणंसदपिस्वतःअकारणम् ॥ ४२ ॥ अंतःकरणस्यतर्हिकिंकारणंतदाह ॥ अविचारणमिति ॥ पर्यायत्रयोपादानंप्रसि
... नार्थम् ॥ ४३ ॥ असम्यक्प्रेक्षणादन्यथाग्रहणसंस्कारबलात्मोहात् ॥ संमोहानांभ्रमाणांबीजधानाभूताम् ॥ चेतःसत्तांचित्ताकारपरिणामम् ॥ यतःसंमोहादर्कांत
मद्वात्यंतासंभाविताषिजन्मजरामरणाद्यनर्थपरंपरादृश्यतइत्यर्थः ॥ अथवाअज्ञानंसर्वैःस्वात्मनिअहमज्ञइतिप्रत्यक्षंदृश्यते ॥ यथाअर्कांत्तद्भासितमोराहुर्दृश्यतेतद्वदित्यर्थः
॥ ४४ ॥ केनतर्हिचित्तनाशस्तदाह ॥ यथेति ॥ ४५ ॥ केनोपायेनात्मतत्त्वपरिज्ञानंतदाह ॥ संसारेति ॥ इतएतस्माद्धेतोःसंसारकारणमज्ञानंइतःप्रामोधिकारीस्वयमितिवाय
विचारयेत्तमाह ॥ जीवइति ॥ जीवादीनिनामानियस्यतम् ॥ आदिपदादुत्पत्तिप्रकरणोक्तनामांतराणामपिसंग्रहः ॥ ४६ ॥ रूढियोगरूढिम ॥ कथंकेनयोगेन ॥ सिद्धयेतदुक्त

अंतःकरणमेवातःकारणंभूतसंस्तृतौ ॥ आत्मासर्वातिगत्वात्तुकारणंसदकारणम् ॥ ४२ ॥ अविचारणमज्ञानंमौर्ख्यमाहुर्महाधियः ॥ संसारसंस्तृतौसारमंतःकरणकारणम् ॥ ४३ ॥ असम्यक्प्रेक्षणान्मोहाच्चेतस्सत्तांगृहीतवत् ॥ सम्मोहबीजकणिकांतमोर्कादिवद्दृश्यते ॥ ४४ ॥ यथाभूतात्मतत्त्वैकपरिज्ञानेनराघव ॥ असत्तामेत्यलंचेतोदीपेनेवतमःक्षणात् ॥ ४५ ॥ संसारकारणमितःस्वयंचेतोविचारये त् ॥ जीवोंतःकरणंचित्तंमनश्चेत्यादिनामकम् ॥ ४६ ॥ ॥ श्रीरामउवाच ॥ ॥ एताःसंज्ञाःप्रभोब्रह्मंश्चेतसोरूढिमागताः ॥ कथमित्येव कथयमयिमानदसिद्धये ॥ ४७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ सर्वेभावाइमेनित्यमात्मतत्त्वैकरूपिणः ॥ चित्तात्तरंगकगणाजलैककलि तायथा ॥ ४८ ॥ आत्मास्पंदैकरूपात्मास्थितस्तेषुक्वचित्क्वचित् ॥ तरंगेषुविलोलेषुपयोधेःसलिलंयथा ॥ ४९ ॥ क्वचिदस्पंदरूपात्मा स्थितस्तेषुमहेश्वरः ॥ तरंगत्वमयातेषुजलभावोजलेष्विव ॥ ५० ॥ तत्रोपलादयोभावाअलोलाःस्वात्मनिस्थिताः ॥ सुराफेनवद्रूस्पं दालोलास्तुपुरुषादयः ॥ ५१ ॥ तत्रतेषुशरीरेषुसर्वशक्तिस्तदात्मनः ॥ कलिताज्ञानकलनातेनाज्ञानमसौस्थितः ॥ ५२ ॥ तदज्ञानमनंता त्मभूषितंजीवउच्यते ॥ ससंसारेमहामोहमायापंजरकुंजरः ॥ ५३ ॥ जीवनाज्जीवइत्युक्तोहंभावःस्यात्त्वहंतया ॥ बुद्धिर्निश्चायकत्वेन संकल्पकलनान्मनः ॥ ५४ ॥

विचारसिद्धये ॥ ४७ ॥ तत्रादौरूढियोगांशाभ्यांजीवनामनिर्वक्तुंवसिष्ठःपीठिकांरचयति ॥ सर्वेभावाइत्यादिना ॥ भावाःपदार्थाआत्मतत्त्वेनसहऐक्याध्यासादेकरूपिणःसमष्टि
चित्तादेवोत्पन्नाइतिप्रागुक्तस्मारणम् ॥ ४८ ॥ उत्पन्नानांचस्थावरविभागेनिमित्तमाह ॥ आत्मेत्यादिना ॥ ४९ ॥ ५० ॥ ५१ ॥ कलितस्यकल्पितस्याज्ञानस्यकलनाप्रसिद्धातेनहेतु
नातत्स्वकल्पितमज्ञानंस्वयमेवभूत्वाप्रलयसुषुप्त्योःस्थितः ॥ ५२ ॥ अनंतेनात्मनाप्रतिबिंबभावापन्नेनभूषितमिवस्फुरत् ॥ सएवरूढ्यंशेनजीवउच्यते ॥ ५३ ॥ तत्रयोगांशमाह ॥ जी
वनादिति ॥ प्राणधारणादित्यर्थः ॥ अहंनामनिर्वक्ति ॥ अहंभावादिति ॥ सोहमित्यग्रेव्याहरत्तस्मादहंनामाभवदितिश्रुतेः ॥ नामांतराण्यपिनिराह ॥ बुद्धिरित्यादिना ॥ ५४ ॥

१ सर्वपुस्तकेषुटीकायामहंभावादितिप्रतीकस्यमूलेतद्विरुद्धपाठस्याचदर्शनाट्टीकानुरोधेनमूलपाठस्यमूलानुरोधेनटीकापाठस्ययाकल्पनंकर्तव्यमितिविचारणीयम्

दिग्धतयाउपचिततया ॥ प्रकृतिभावेनअज्ञानांशप्राधान्येन ॥ स्वात्मसत्तयाचित्प्राधान्येन ॥ ५५ ॥ जडाजडदृशोरज्ञानतत्साक्षिणोर्मध्यमांतरालिकंसाभासंमनस्तदेतदेवना नात्वंप्राप्यजीवबुद्धिमनश्चित्ताहंकारादिनानासंज्ञाभिराततमित्यर्थः ॥ ५६ ॥ परमात्मनएवोपाधिप्रवेशेनऔपाधिकनानासंज्ञालाभेश्रुतीःप्रमाणयति ॥ एवमिति ॥ सएषइह प्रविष्टआनखाग्रेभ्यइत्युपक्रम्योक्तम् प्राणन्नेवप्राणोनामभवतिवदन्वाक्पश्यंश्चक्षुःशृण्वन्श्रोत्रंमन्वानोमनस्तान्यस्यैतानिकर्मनामान्येवेति ॥ तथासमानःसन्नुभौलोकावनु संचरतिध्यायतीवलेलायतीवसधीःस्वप्नोभूत्वेमंलोकमतिक्रामतिमृत्योरूपाणीति ॥ तथाश्रुत्यंतरे बुद्धेर्गुणेनात्मगुणेनचैवआराग्रमात्रोह्यवरोपिदृष्टः ॥ वालाग्रशतभागस्यशत धाकल्पितस्यच ॥ भागोजीवःसविज्ञेयःसचानंत्यायकल्पतइति ॥ तत्सृष्ट्वातदेवानुप्राविशत् ॥ तदनुप्रविश्य सच्चत्यच्चाभवदितितैत्तिरीयके ॥ सएतंसीमानंविदार्यैतयाद्वाराप्रापद्य ततस्मादिदंद्रोनाम ॥ यदेतद्धृदयंमनश्चैतत्संज्ञानमाज्ञानंविज्ञानंप्रज्ञानमित्याद्यैतरेयके ॥ त्वमेकोसिबहूननुप्रविष्टः ॥ एकोदेवोबहुधाविचारःएकस्सन्बहुधाविचारइत्यादिश्रुति

प्रकृतिःप्रकृतित्वेनदेहोदिग्धतयास्थितः ॥ जडःप्रकृतिभावेनचेतनःस्वात्मसत्तया ॥ ५५ ॥ जडाजडदृशोर्मध्यंयत्तत्त्वंपारमात्मिकम् ॥ तदेतदेवनानात्वंनानासंज्ञाभिराततम् ॥ ५६ ॥ एवंस्वरूपंजीवस्यबृहदारण्यकादिषु ॥ बहुधाबहुषुप्रोक्तंवेदांतेषुकिलानघ ॥ ५७ ॥ अज्ञैस्त्वेतासुसंज्ञासुकुविकल्पकुतार्किकैः ॥ मोहायकेवलंमूढैर्व्यर्थमास्थाःप्रकल्पिताः ॥ ५८ ॥ एवमेषमहाबाहोजीवस्संसारकारणम् ॥ मूकेनातिवराकेणदेहकेनेहकिंकृतम् ॥ ५९ ॥ आधाराधेययोरेकनाशेनान्यस्यनष्टता ॥ यथातथाशरीरादिनाशेनात्मनिनष्टता ॥ ६० ॥ एकपर्णरसेक्षीणेरसोनैतियथाक्षयम् ॥ यातिपर्णरसश्चार्करश्मिजालांतरेयथा ॥ ६१ ॥ शरीरसंक्षयेदेहीनक्षयंयातिकस्यचित् ॥ निर्वासनश्चेत्तद्व्योम्नितिष्ठत्यात्मपदेतथा ॥ ६२ ॥ देहनाशेविनष्टोस्मीत्येवंयस्यामतेर्भ्रमः ॥ मातुःस्तनतटात्तस्यमन्येवेतालउत्थितः ॥ ६३ ॥ यस्यत्वात्यंतिकोनाशःस्यादसावुदितःस्मृतः ॥ चित्तनाशोहिनाशःस्यात्समोक्षइतिकथ्यते ॥ ६४ ॥ मृतोनष्टइतिप्रोक्तोमन्येतच्चमृषा त्यसत् ॥ सदेशकालांतरितोभूत्वाभूत्वानुभूयते ॥ ६५ ॥

शतेषुचबहुधाप्रोक्तमित्यर्थः ॥ ५७ ॥ अतएवावैदिककुतार्किकाणामन्यथान्यथाजीवस्वरूपकल्पनानादर्तव्याइत्याशयेनाह ॥ अज्ञैरिति ॥ आस्थाःअभिनिवेशाः ॥ ५८ ॥ एवंचनशुद्धात्मनःसंसारितानापिदेहस्यकिंत्वांतरालिकस्यजीवस्यैवेतिसिद्धमित्याशयेनाह ॥ एवमिति ॥ मूकेनवागादिशून्येन ॥ जडेनेतियावत् ॥ ५९ ॥ अतएवदेहनाशेपि नजीवनाशइत्याह ॥ आधारेति ॥ नाशे नइतिच्छेदः ॥ ६० ॥ ६१ ॥ सवासनश्चेत्शरीरसंक्षयेवासनायांतिष्ठति निर्वासनश्चेद्व्योम्निब्रह्माकाशस्वभावेतिष्ठतीत्यर्थः ॥ ६२ ॥ अमनेर्मूर्खस्ययस्य ॥ अशरीरंवावसंतंनप्रियाप्रियेस्पृशतइतिश्रुतेरभयहेतौदेहनाशेभयहेतुत्वलक्षणविपरीतदर्शिनोमूढस्यमातुःस्तनादपिवेतालोत्थानसंभावनयास्तन्यपानेन जीवनमपिदुर्लभंस्यादित्याशयः ॥ ६३ ॥ देहस्यजीवव्यतिरिक्तत्वान्मास्तुतन्नाशाद्भयंचित्तस्यजीवस्वरूपत्वात्तन्नाशात्तुजीवस्यभयंयुक्तमेवेतिचेत्तत्राह ॥ यस्येति ॥ यस्यउ पाधेर्वज्रनिगडवद्बंधनभूतस्यात्यंतिकोनाशःस्याच्चेदसौजीवःस्मृतःप्रत्यभिज्ञातब्रह्मभावःसन्नुदितोनिरतिशयानंदलक्षणमभ्युदयंप्राप्तोभवतितादृशचित्तनाशोहिजीवस्यविना शःस्यात्संभाव्यतेसचतस्यमोक्षःपरमपुरुषार्थइतिशास्त्रेकथ्यते ॥ अतस्तस्मादपिभयसंभावनाअत्यंतमनुचितैवेत्यर्थः ॥ ६४ ॥ सजीवः ॥ अनुभूयतेपुनर्देहांतरग्रहणेदृश्यते ॥ ६५ ॥

इहसंसारेमरणव्यपदेशासुनदीपुतरंगांतस्तृणायमानैर्जनैर्जीवैरिहसंसारेदेशकालतिरोहितैःस्वरूपैःएवंवर्णितप्रकारान्मृतोनष्टोजातोभिवृद्धःसुखीदुःखीत्यादिभावाऊह्यंतेभ्रांत्या वितर्क्यंतइत्यर्थः ॥ ६६ ॥ तथाऊहनवैचित्र्येवासनावैचित्र्यंहेतुरित्याशयेनाह ॥ वासनेति ॥ ६७ ॥ ६८ ॥ तान्जीवानपिधायतिरस्कृत्यजीवितुंशीलंयस्याःसातदपिजी विनीतथाविधयावासनयाधूर्त्या ॥ पुंयोगान्ङीप् ॥ धूर्त्तासक्तयाधाव्याउपमात्रा ॥ ६९ ॥ वासनारज्जुभिर्वलितावेष्टिताःजीवाएवपरस्परोपयोगार्ज्जीविकाजीवनोपायोये पां[illegible]विधार्जीवाःपूर्वैर्जीर्णास्सांप्रतंजरयंति ॥ ७० ॥ जनताजीवास्हृदयनिहितवासनानुवृत्त्यानिमित्तेनजरठेभ्योपिजरंतोजीर्णाःसंतउपोढादारिन्द्र्यरोगवियोगादिदुःखभा राये[illegible]विधाःपरिणत्यानानायोनिदुर्दशापरिणामैर्जर्जरंदुःखैःखंडनेनशिथिलीकृतमिवजीवितंयासांतथाविधाश्चसत्योनरकभरेषुचिरंपतंतिवसंतीत्यहोवासनादोषप्रयुक्ताअ

इहो[illegible]जनैरेवंतरंगांतस्तृणैरिव ॥ मरणव्यपदेशासुदेशकालतिरोहितैः॥ ६६ ॥ वासनावस्थितोजीवोयात्युत्सृज्यशरीरकम् ॥ कपि र्वनतरुंत्यक्त्वातर्वंतरमिवास्थितः॥ ६७॥ पुनस्तदपिसंत्यज्यगच्छत्यन्यदपिक्षणात् ॥ अन्यस्मिन्वितते देशे कालेन्यस्मिंश्चराघव॥ ६८॥ इतश्चेतश्चनीयंतेजीवावासनयास्वया॥ चिरंतदपिजीविन्याधूर्त्याधाव्येवबालकाः॥ ६९॥ वासनारज्जुवलिताजीर्णाःपर्वतकुक्षिपु॥ जरयंत्यतिदुःखेनजीवितंजीवजीविकाः॥ ७०॥ जरठजरदुपोढदुःखभाराःपरिणतिजर्जरजीविताश्चसत्यः॥ हृदयजनितवासनानु वृत्त्यानरकभरेजनताश्चिरंपतंति॥ ७१॥ ॥श्रीवाल्मीकिरुवाच॥ ॥इत्युक्तवत्यथमुनौदिवसोजगामसायंतनायविधयेस्तमिनोज गाम॥ स्नातुंसभाकृतनमस्करणाजगामश्यामाक्षयेरविकरैश्चसहाजगाम॥ ७२॥ ॥इ०वा०वा०दे०मो०उपशमप्रकरणेसंसारो पदेशोनामैकसप्ततितमःसर्गः॥७१॥ ॥दि०१३॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥देहेजातेनजातोसिदेहेनष्टेननश्यसि॥ त्वमात्मन्य कलंकात्मादेहस्त्वनकश्चन॥ १ ॥यःकुंडबदरन्यायोयाघटाकाशसंस्थितिः॥ तत्रैकस्मिन्क्षतेक्षीणेद्वइतिव्यर्थकल्पना ॥ २ ॥ विना शिनिविनष्टेस्मिन्देहेस्वांस्थितिमागते ॥ विनश्यामीतियःखेदीतंधिगस्त्वंधचेतसम्॥ ३॥ यादृशोरश्मिरथयोःस्नेहोद्वेगविवर्जितः॥ संबंधस्तादृशोदेहचित्तेंद्रियमुखैश्चितैः॥ ४॥ गतेतरेतरापेक्षःसरःपंकामलांभसाम्॥ यथाराघवसंबंधस्तथादेहेंद्रियात्मनाम्॥५॥ यादृशोध्वागताध्वानांनिरास्थापरिदेवनः॥ संयोगोविप्रयोगश्चतादृशोदेहदेहिनोः॥ ६ ॥ यथाकल्पितवेतालविकारभयभीतयः॥ मिथ्यैवकल्पिताएतेतथास्नेहसुखादयः॥ ७॥

नंतादुर्दशेत्यर्थः॥ ७१ ॥७२॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेएकसप्ततितमःसर्गः॥७१॥ भौतिकत्वाच्छरीरस्यशोकमोहाद्ययोग्यता ॥ दृश्यदर्शनसंबंधःसाक्षीशुद्धश्चवर्ण्यते ॥ १ ॥ पूर्वार्द्धार्थेउत्तरार्द्धार्थोहेतुः ॥ १ ॥ ननुगौरोहंस्थूलोहमितिआत्मनिदेहतादा त्म्यानुभवाद्देहनाशेकथमात्मस्थितिस्तत्राह ॥ यइति ॥ संस्थितिर्मर्यादासैवात्रपाश्चानतादात्म्यम् ॥ तत्रैवंसतिएकस्मिन्कुंडेघटेवाक्षतेनष्टेसतिद्वेअपिक्षीणेइतिमूढानांव्यर्थक ल्पनेत्यर्थः ॥ २ ॥ विनाशिनिनश्वरस्वभावे ॥ ३॥ यथात्मनोदेहादितादात्म्यंनास्तितर्हिकथंशाखाकंपेनवृक्षइवतत्प्रवृत्त्यायंसंसरतितत्राह ॥ यादृशइति ॥ स्नेहःप्रीतियोग्यता उद्वेगोद्वेषयोग्यतातान्यांविवर्जितः ॥ ४ ॥ इतरेतरापेक्षापरस्परानुरागः ॥ ५ ॥ गताध्वानामध्वगानांआस्थाअहंममताभिमानःपरिदेवनंतद्वियोगजोविलापःतदुभयायोग्यइ त्यर्थः ॥ ६ ॥ तत्कुतस्तत्राह ॥ यथेति ॥ कल्पितवेतालस्यविकाराःकरालवदनदशनव्यादानादयस्तज्जन्यात्प्रथमभयात्पुनःपुनस्तत्स्मरणेनबालस्यभीतयः ॥ ७ ॥

॥ ८ ॥ ९ ॥ १० ॥ स्वदेहेस्नेहाद्ययोग्यत्वमुपपाद्यस्त्यादिपिंडेपितद्दर्शयति ॥ कइति ॥ पतंगवद्यामोहरागाभ्यांप्रोद्भूतानांजनानांविषयाग्नौपातवद्दृश्यमानाचेष्टायेनातिशयेनोपपद्येतसोतिशयःकोनामेत्यर्थः ॥ ११ ॥ सुकुमारसुंदरावयवसन्निवेशविशेषएवसोतिशयोदृश्यतेतत्राह ॥ सन्निवेशइति ॥ १२ ॥ भ्रात्रादिपुरागंवारयति ॥ मिथइति ॥ एकोपलपुत्रयोरेकोपलजन्ययोः ॥ श्लिष्टयोराश्लिष्टयोः ॥ १३ ॥ मृन्निर्मितानांपुंसांप्रतिमानांसंगमेसत्यपियादृशोममतादिशून्यआशयोभावोभवेदित्याशयकल्पनयोक्तिः ॥ १४ ॥ १५ ॥ इतश्चइतश्चभिन्नप्रदेशयोर्जातानितृणजालानि ॥ १६ ॥ मुक्तांतःकलनंनिर्मुक्तरागाभिमानंयथास्यात्तथाभूतानिपुत्रपश्वादिप्राणिनःपृथिव्यादीनिवास्वार

भूतपंचकसंपिंडाद्रचिताजनताःपृथक् ॥ एकस्मादेवविटपाद्विचित्राइवपुत्रिकाः ॥ ८ ॥ काष्ठेतरत्काष्ठभारेकिंचिदन्यन्नदृश्यते ॥ भूतपिंडेतरद्देहेकिंचिदन्यन्नदृश्यते ॥ ९ ॥ भूतपंचकविक्षोभनाशोत्पादेपुहेजनाः ॥ हर्षामर्षविषादानांकिंभवंतोवशंगताः ॥ १० ॥ कोनामातिशयःपुंसांस्त्रीनाम्न्यपरनाम्निच ॥ पेलवेभूतसंघातेप्रोद्भूतजनपातवत् ॥ ११ ॥ सन्निवेशांशवैचित्र्यमज्ञानामेवतुष्टये ॥ तज्ज्ञानांतुयथाभूतभूतपंचकदर्शनम् ॥ १२ ॥ मिथःशिलापुत्रकयोर्यथैकोपलपुत्रयोः ॥ श्लिष्टयोरपिनोरागस्तथाचित्तशरीरयोः ॥ १३ ॥ मृत्पुंसांयादृशोन्योन्यमाशयःसंगमेभवेत् ॥ बुद्धींद्रियात्ममनसांसंगमेतादृशोस्तुते ॥ १४ ॥ नान्योन्यस्नेहसंबंधभाजनंशैलपुत्रकाः ॥ देहेंद्रियात्मप्राणाश्चकस्यात्रपरिदेवना ॥ १५ ॥ इतश्चेतश्चजातानियथासंश्लेषयंत्यलम् ॥ तरंगास्तृणजालानितथाभूतानिदेहदृक् ॥ १६ ॥ संयुज्यंतेवियुज्यंतेतृणान्यब्धिजलेयथा ॥ मुक्तांतःकलनंदेहभूतान्यात्मनिवैतथा ॥ १७ ॥ आत्माचित्ततयादेहभूतान्याश्लेषयन्स्थितः ॥ तृणान्यावर्त्तवृत्तांतकलनोत्सिक्तमब्धिवत् ॥ १८ ॥ प्रबोधाच्चेत्यतांत्यक्त्वाव्रजत्यात्मात्मतांस्वयम् ॥ स्वस्पंदवशतोवारित्यक्त्वाच्छत्वमिवाच्छताम् ॥ १९ ॥ ततोविश्लिष्टभूतौघोदेहंसंप्रतिपश्यति ॥ वायुस्कंधगतोजंतुर्वसुधामंडलंयथा ॥ २० ॥ पृथग्भूतगणंदृष्ट्वादेहातीतोभवत्यजः ॥ परंप्रकाशमायातिसूर्यकांतिरिवाहनि ॥ २१ ॥ जानात्यथात्मनात्मानंमानमेयामयोज्झितम् ॥ मुक्तक्षीवतयेवांतःस्वांसंविदमनुस्मरन् ॥ २२ ॥

ब्धेदेहेस्वाधिष्ठानेआत्मनिचतथासंयुज्यंतेवियुज्यंतेचेत्यर्थः ॥ १७ ॥ यथाअब्धिरावर्त्तवृत्तांतआवर्त्ताकारस्तत्कल्पनेनउत्सिक्तमुपचितंवैषंप्राप्यतृणकाष्ठादीन्याश्लेषयन्स्थितस्तथाआत्मापिचित्ततयाचित्तवैषंप्राप्येत्यर्थः ॥ १८ ॥ केनोपायेनतर्हिआत्माभूताश्लेषनिमित्ताच्चित्तभावान्मुच्यतेतमाह ॥ प्रबोधादित्यादिना ॥ त्यक्त्वाआच्छत्वमनच्छत्वम् ॥ नञ्तत्पुरुषेनकारलोपेसवर्णदीर्घोनुडभावश्छांदसः ॥ १९ ॥ विश्लिष्टभूतौघोमनःकृतभूताश्लेषनिर्मुक्तः ॥ संप्रतिप्रबोधकाले ॥ वायुस्कंधेगतःखेचरोदेवादिः ॥ २० ॥ तत्फलमाह ॥ पृथगिति ॥ २१ ॥ मुक्तक्षीवतयानिर्मुक्तमदिरामदतया ॥ २२ ॥

॥२३॥२४॥ विविधैर्मणिश्रेष्ठैःसंबध्यमानाअपितदनासक्त्यातेपुशिलाशकलादिसाम्येनयथाचरंतिव्यवहरंति ॥ २५ ॥ यथातद्वदितिपदेअत्राध्याहार्ये ॥२६॥ स्वच्छैर्नरागोम लिनैर्नद्वेषः॥विशेषणान्युभयत्रयोज्यानि ॥ अधिगतात्मनस्तत्त्वविदः ॥२७॥ कुतोनरागस्तत्राह ॥ यदिति ॥ मनोमननंसर्वंचिद्विलासएवेतितेयतोविदुरित्यर्थः ॥२८॥ यदहमा दिसर्वंदृश्यदर्शनसंबंधविस्तारैर्भातितत्केवलंमनएवविजृंभतेनान्यदित्यर्थः ॥ २९ ॥ इहदृक्दृश्यंचेतिद्वयमध्येएकांदृष्टिमुपाश्रितंतदधीनसिद्धिकंयद्दृश्यंतदसत्सद्वेत्यनिर्णीतत्वाद्ध र्षशोकायोग्यम् ॥ अन्यत्स्वतःसिद्धंदृग्रूपंत्वलेपकमसंगमुत्पन्नाभ्यामपिहर्षशोकाभ्यांनयुज्यतइतितयोरुभयथापिसंभावनैवनास्तीत्यर्थः ॥३०॥ किंचासत्येविषयेहर्षशोकौस

जीव आत्मैवस्पंदतेविश्वंवस्तुजातैरिवोदितम् ॥ तरंगकणकल्लोलैरनंताब्धिंबुधाविव ॥ २३ ॥ एवंप्रायमहाबोधावीतरागागतैनसः ॥ नकूल न्मुक्ताश्चरंतीहमहासत्त्वपदंगताः ॥ २४ ॥ यथाचरंतिविविधैर्मणिरत्नैर्महार्मयः ॥ निरस्तवासनाश्चित्तव्यवहारैस्तथोत्तमाः ॥२५॥ नरागो काप्तैर्जलधिर्नरजोभिर्नभस्तलम् ॥ नम्लायतिनिजैर्लोकव्यवहारैरिहात्मवान् ॥ २६ ॥ गतैरभ्यागतैःस्वच्छैश्चपलैर्मलिनैर्जडैः ॥ नरागो नांबुधेर्द्वेषोभोगैश्चाधिगतात्मनः ॥ २७ ॥ यन्मनोमननंकिंचित्समग्रंजगतिस्थितम् ॥ तच्चेत्योन्मुखचित्तत्त्वविलासोल्लसनंविदुः ॥२८॥ यदहंयच्चभूतादिकालत्रितयभावियत् ॥ दृश्यदर्शनसंबंधविस्तारैस्तद्विजृंभते ॥ २९ ॥ यद्दृश्यंतदसत्सद्वादृष्टिमेकामुपाश्रितम् ॥ अन्यत्त्व लेपकंतस्माद्धर्षशोकदृशौकुतः ॥ ३० ॥ असत्यमेवासत्यंहिसत्यंसत्यंसदेवहि ॥ सत्यासत्यमसद्विद्धितदर्थंकिंनुमुह्यसि ॥ ३१ ॥ असम्य ग्दर्शनंत्यक्त्वासम्यक्पश्यसुलोचन ॥ नक्वचिन्मुह्यतिप्रौढःसम्यग्दर्शनवानिह ॥ ३२ ॥ दृश्यदर्शनसंबंधविस्तारैस्तद्विजृंभते ॥ दृश्यदर्शन संबंधेयत्सुखंपारमात्मिकम् ॥ ३३ ॥ अनुभूतिमयंतस्मात्सारंब्रह्मेतिकथ्यते ॥ दृश्यदर्शनसंबंधेसुखसंविदनुत्तमा ॥ ३४ ॥ ददात्यज्ञाय संसारंज्ञायमोक्षंसदोदयम् ॥ दृश्यदर्शनसंबंधसुखमात्मवपुर्विदुः ॥ ३५ ॥ तद्दृश्यवलितंबंधस्तन्मुक्तंमुक्तिरुच्यते ॥ दृश्यदर्शनसंबंधसु खसंविदनामया ॥ ३६ ॥ क्षयातिशयमुक्ताचेत्तन्मुक्तिःसोच्यतेबुधैः ॥ दृश्यदर्शनसंबंधेयानुभूतिःस्वगोचरा ॥ ३७ ॥

सत्यंनुनित्यसत्त्वाल्लाभप्रयुक्तहर्षस्यापगमप्रयुक्तशो कस्यचायोग्यंस्पष्टमेव ॥ यत्तुतृतीयंसत्यासत्यंतच्चविरुद्धैक्यायोगादसदेवेत्याद्यकल्पमेवप्रविशति ॥ तथाचनकिंचित्तद्योग्यंजगत्यस्तीतितद्विषयेमोहोऽयुक्तएवेत्यर्थः ॥३१॥ त्येवासत्यासत्येवानत्रिष्वपिकल्पेषुतद्योग्यतेत्याह ॥ असत्यमेवेति ॥ असत्यमसत्यमेव तत्रहर्षशोकयोर्निर्विषयतास्पष्टैव ॥ ॥ ३२ ॥ किंचभोगसुखार्थंसर्वैर्दृश्यदर्शनयोर्विषयेंद्रिययोःसंबंधइष्यतेतत्राभिव्यज्यमानंपारमात्मिकमेवस्वप्रकाशत्वादनुभूत्यभिन्नंवृत्त्युपाधिकृतभेदतारतम्यादिनिरासेनाखं डैक्येब्रह्मैवतदित्याह ॥ दृश्यदर्शनेत्यादिना ॥ ३३ ॥ ३४ ॥ विषयाकारवृत्त्याआस्वाद्यमानंविषयेरागादिदोषजननेनसंसारंददाति ॥ तद्विवेकेनाखंडैकात्मभावेनगृह्यमाणंनुमो क्षमित्यर्थः ॥ ३५ ॥ ३६ ॥ क्षयातिशयौपुण्यतारतम्यप्रयुक्तवृत्तिनाशवैशद्योत्कर्षप्रयुक्तौतन्मुक्ताचेत् स्वगोचराअखंडपूर्णानंदस्फुरणात्मिका ॥ ३७ ॥

एवमुक्तस्वरूपालुवनेसौपुमीस्वरूपावरणदृष्टिर्यातिअपगच्छति ॥ एषास्वरूपदृष्टिःसंप्रकाशते ॥३८ ॥ ३९ ॥ दृश्यदर्शनसंबंधसंवितएवंतुर्यत्वमेर्नातिपूर्वत्राान्वयः ॥ तुर्यतालक्षणायांमुक्तौयादृशआत्मापरिशिष्यतेतंदर्शयति ॥ अस्यांत्वित्यादिना ॥ ४० ॥ चेतनश्चैतन्यवान् ॥ सन्मयःअस्तित्वाख्यद्वितीयभावविकारप्रचुरः ॥ एकःएकत्वसंख्यागुणाश्रयः ॥ ४१ ॥ अभ्याशेसमीपेतिष्ठतीत्यभ्याशस्थः ॥ अस्तिसत्ताश्रयः ॥ ४२ ॥ नपदार्थोवाच्यत्वायोगात् ॥ नापदार्थस्तुर्यादिपदलक्ष्यत्वात् ॥ पंचानांभूतानामात्मानेतिन ॥ पंचभूतस्वभावश्चनेत्यर्थः ॥ उक्तार्थेउपपत्तिमाह ॥ यदिदमिति ॥ ४३ ॥ यथाभूतंयथास्थितंसम्यक्तत्त्वतःसंपश्यतः ॥ ४४ ॥ कथंतर्हिभूम्यादिभूततादृश्यतेतत्राह ॥ काठिन्येति ॥ आत्मैवस्वस्मिन्काठिन्यद्रवणस्यस्पंदस्यखाख्यबृहच्छिद्रस्यअवकाशस्यप्रकाशस्यचअवलोकनैःक्रमाद्भूवार्यादिषुजगद्भावेषुनटवत्स्थितइत्यर्थः ॥४५॥ कथमात्मैवैवं

दृश्यदर्शननिर्मुक्तातामालंव्यभवाभवः॥ सौषुप्तीदृष्टिरिपाहियात्येवंसंप्रकाशते ॥ ३८ ॥ एवंचयातितुर्यत्वमेवंमुक्तिरितिस्मृता ॥ दृश्यदर्शनमुक्तायांयुक्तायांपरयाधिया ॥ ३९ ॥ दृश्यदर्शनसंबंधसंविदस्यांतुराघव ॥ नात्मास्थूलोनचैवाणुर्नप्रत्यक्षोनचेतरः ॥ ४० ॥ नचेतनोनचजडोनचैवासन्नसन्मयः ॥ नाहंनान्योनचैवैकोनानेकोनाप्यनेकवान् ॥ ४१ ॥ नाभ्याशस्थोनदूरस्थोनैवास्तिनचनास्तिच ॥ नप्राप्योनातिचाप्राप्योनवासर्वोनसर्वगः ॥ ४२ ॥ नपदार्थोनापदार्थोनपंचात्मानपंचच ॥ यदिदंदृश्यतांप्राप्तंमनःषष्ठेंद्रियास्पदम् ॥ ॥ ४३ ॥ तदतीतंपदंयत्स्यात्तन्नकिंचिदिवेहतत् ॥ यथाभूतमिदंसम्यग्ज्ञस्यसंपश्यतेजगत् ॥ ४४ ॥ सर्वमात्ममयंविश्वंनास्त्यनात्ममयंक्वचित् ॥ काठिन्यद्रवणस्पंदखावकाशावलोकनैः ॥ ४५ ॥ आत्मैवसर्वसर्वेषुभूवार्यनिलखाग्निषु ॥ सत्तैवास्तिनवस्तूनांयायारामचिताविना ॥ व्यतिरिक्तंततोस्मीतिविद्धिप्रोन्मत्तजल्पितम् ॥ ४६ ॥ एकोजगंतिसकलानिसमस्तकालकल्पक्रमांतरगतानिगतागतानि ॥ आत्मैवनेतरकलाकलनास्तिकाचिदित्थंमतिर्भवतयातिगतोमहात्मन् ॥ ४७ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेमोक्षस्वरूपोपदेशोनामद्विसप्ततितमःसर्गः ॥ ७२ ॥ ॥ ७३ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवंविचारयादृष्ट्याद्वैतत्यागेनराघव ॥ स्वभावःप्राप्यतेतज्ज्ञैस्तज्ज्ञैश्चितामणिर्यथा ॥ १ ॥ अथेमामपरांदृष्टिंशृणुरामानयायथा ॥ दृश्यस्यात्मानमचलंभविप्यसिचदिव्यदृक् ॥ २ ॥

स्थितइतिनिश्चितंतत्राह ॥ सत्तैवेति ॥ वस्तूनांयायासत्तासाचितातत्रथात्मनाविनायतोनास्तिततइत्यर्थः ॥ ४६ ॥ उक्तंसर्वपिंडीकृत्योपसंहरति ॥ एकइति ॥ समस्तेकालेअनंतेषुकल्पक्रमेषुचअंतरेमध्येगतानिनिविष्टानिजगंतितेषुसकलानिगतागतानिजीवसंसरणानिचएकआत्मैवइतरकलाकलनाकाचिन्नास्त्येव ॥ हेमहात्मन्त्वंइत्थंमतिःसंस्त्यामत्यासंसारमतिगतोभवेत्यर्थः ॥ ४७ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउप० प्र० द्विसप्ततितमःसर्गः ॥ ७२ ॥ ॥ ७३ ॥ ॥ द्वेअहंभावनेयाह्येत्याज्याहंभावनापरा ॥ अहंभावत्रयापायेमुक्त्यनिच्छाचकीर्त्यते ॥ १ ॥ स्वभावःस्वस्वरूपावस्थितिलक्षणामुक्तिः ॥ तज्ज्ञैरात्मज्ञैः ॥ तज्ज्ञैश्चितामणितत्त्वज्ञैर्दैवैः ॥ १ ॥ सर्वाहंभावदृष्टिंदर्शयितुंप्रक्रमते ॥ अथेति ॥ २ ॥

महश्चंद्रादिप्रभाः ॥ ३ ॥ रजोरेणुः ॥ ४ ॥ सर्वातिरिक्तःपरिच्छिन्नःकोहम् ॥ मदन्यद्देहादिकिम ॥ सर्वभूतस्यैकस्यममद्वित्वंस्वगतभेदरूपंकीदृशम ॥ ५ ॥ इतिविचार्यनिश्चय वान्संस्तदनंतरंस्वांतर्भूतंजगदात्मतयापश्य ॥ ६ ॥ तन्मयेआत्ममये ॥ स्वार्थेमयट् ॥ ७ ॥ यदुपागतंचेदितिशेषः ॥ विषादेनुदृश्यमानेअज्ञएवासौयतोजगन्मयोनचिन्मयइत्य र्थः ॥ ८ ॥ एतेवक्ष्यमाणे ॥ संधिरार्षः ॥ ९ ॥ अणुःआकाशवदस्थूलस्वभावः ॥ सकलादवस्थात्रयदृश्यादतीतः ॥ १० ॥ विद्यतेस्वभावतोनशाम्यतः ॥ ११ ॥ यत्शेषंशिष्य माणंनिरहंभावंपूर्णंचिन्मात्रम् ॥ १२ ॥ शोधनेनसर्वातीतस्वरूपोबाधनेनतुसर्वासत्तांगतः ॥ सर्वबाधेआत्मापरिशेषशंकांवारयति ॥ असत्तेति ॥ असत्तयाजगद्बाधोपायेनैव स्वेनआपूरितंजगद्येन ॥ १३ ॥ युक्तयःशास्त्राणिगुरुवचनानिचदिक्प्रदर्शनमात्रंतत्परिचयस्तुस्वानुभवेनैवेत्याशयेनाह ॥ स्वानुभूत्येति ॥ आशयादेहादिवासनास्तत्सहितंहृदय

अहंखमहमादित्योदिशोहमहमप्यधः ॥ अहंदैत्याअहंदेवालोकाश्चाहमहंमहः ॥ ३ ॥ अहंतमोहमभ्राणिभूःसमुद्रादिकंत्वहम् ॥ रजो वायुरथाग्निश्चजगत्सर्वमिदंत्वहम् ॥ ४ ॥ जगत्त्रयेहंसर्वत्रयआत्मैवकिलास्थितः ॥ कोहंकिमन्यद्देहादिद्वित्वमेकस्यकीदृशम् ॥ ५ ॥ इ तिनिश्चयवानंतर्भूतमात्मतयाजगत् ॥ पश्यहर्षविषादाभ्यांनावशःपरिभूयसे ॥ ६ ॥ तन्मयेस्मिन्किलजगत्यखिलेसंस्थितेनघ ॥ किमा त्मीयंपरंकिंस्यात्कमलेक्षणकथ्यताम् ॥ ७ ॥ किंतज्ज्ञव्यतिरेकेणविद्यतेयदुपागतम् ॥ हर्षमेतुविषादंवाविषादेज्ञोजगन्मयः ॥ ८ ॥ अहंकारदृशावेतेसात्विकेद्वेतिनिर्मले ॥ तत्त्वज्ञानात्प्रवर्त्तेतेमोक्षदेपारमार्थिके ॥ ९ ॥ परोणुस्सकलातीतरूपोहंचेत्यहंकृतिः ॥ प्रथमास र्वमेवाहमित्यन्योक्तारघूद्वह ॥ १० ॥ अहंकारदृगन्यातुतृतीयाविद्यतेनघ ॥ देहोहमितितांविद्धिदुःखायैवनशांतये ॥ ११ ॥ अथचैतत्त्र यमपित्यक्त्वासकलसिद्धये ॥ यच्छेषंतदुपालंब्यतिष्ठावष्टब्धतत्परः ॥ १२ ॥ सर्वातीतस्वरूपोपिसर्वसत्तातिगोपिच ॥ असत्तापूरितजगद स्येवात्माप्रकाशकः ॥ १३ ॥ स्वानुभूत्यैवपश्याशुसएवासिसदोदितः ॥ साशयंहृदयग्रंथिंत्यजतत्त्वविदांवर ॥ १४ ॥ नात्मास्त्यनुमया रामनचाप्तवचनादिना ॥ सर्वदासर्वथासर्वसप्रत्यक्षोनुभूतितः ॥ १५ ॥ यदिदंस्पर्शनंस्पंदंकिंचिद्यत्संविदाद्यपि ॥ तत्सर्वमात्माभगवा न्दृश्यदर्शनवर्जितः ॥ १६ ॥

ग्रंथिमहंकारतादात्म्याध्यासम् ॥ १४ ॥ ननुनंत्वौपनिषदंपुरुषंपृच्छामीतिश्रुतेर्धर्माधर्मादिवच्छ्रुतिनिदर्शितयुक्तिमात्रविश्वासादलौकिकआत्मास्तीतिज्ञायतेसकथंस्वानुभववे द्यःस्यात्तत्राह ॥ नेति ॥ नधर्मादिवदत्यंतपरोक्षात्मसद्भावंप्रतिपादयितुंश्रुत्यादयःप्रवृत्ताःकिंतुसर्वानुभवसिद्धसत्ताकमात्मानंविवेचयितुमितिभावः ॥ १५ ॥ सर्वेषांसप्रत्यक्षइ त्ययदुक्तंतदुपपादयति ॥ यदिदमिति ॥ बाह्याभ्यंतरविषयेषुअंतःकरणवृत्तिस्पंदनात्स्पंदियद्दर्शनंसाक्षादर्थप्रथारूपमपरोक्षंप्रसिद्धंयच्चाकिंचिदनुमित्युपमितिशाब्दसंविदाद्यपि प्रसिद्धंतत्सर्वंदृश्यस्यविषयस्यदर्शनस्यांतःकरणवृत्त्युपाधेश्चवर्जनेभगवान्स्वप्रकाशआत्मैवनित्यापरोक्षःसर्वानुभवसिद्धःपरिशिष्यतइत्यर्थः ॥ तथाचश्रुतिः ॥ प्रतिबोधविदि तंमतममृतत्वंहिविंदतइति ॥ १६ ॥

तस्यप्रत्यक्षपरोक्षवेद्यव्यक्ताव्यक्तोभयवैलक्षण्योक्त्यादृश्यदर्शननिर्मुक्ततामुपपादयति ॥ नसन्नासन्निति ॥ तस्मिन्जगद्बाधप्रदर्शनेनापितदुपपादयति ॥ सएवेति ॥ १७ ॥ एवंवागादिकर्मेंद्रियप्रवृत्तिनिमित्ततयाचतद्व्यवहार्यंतंपरिचीयवागादेस्तद्विषयस्यचतत्रबाधेनसएवपरिशेष्यइत्याशयेनाह ॥ सएवेति ॥ इदंवागादितद्व्यवहार्यंच ॥ १८ ॥ आत्मानात्मनामरूपविभागस्तेनैवस्वाज्ञानशक्त्याकल्पितइतिबाध्यत्वोपपत्तिरित्याशयेनाह ॥ नेति ॥ १९॥ नित्यापरोक्षस्वप्रकाशपूर्णस्वभावोपिसूक्ष्मत्वात्स्थूलासक्तबुद्धिभिःसनविभावयितुंशक्यइत्यर्थः ॥ २० ॥ स्थूलासक्तौतुतस्यमोहात्पुर्यष्टकोपाधौप्रतिबिंबनेनजीवभावापत्तिर्निमित्तमित्याशयेनाह ॥ सत्त्विति ॥ सत्सुसर्गक्रमेणोत्पन्नेषुभोग्य

नसन्नासन्नसौदेवोनाणुर्नापिमहानसौ॥ नाप्येतयोर्दृशोर्मध्यंसएवेदंचसर्वतः ॥ १७॥ सएवचैवंवदतिसचवक्तुंनयुज्यते॥ नतदन्यदिदंतातपश्यात्मानमनामयम्॥ १८॥ नात्मायमयमप्यात्मासंज्ञाभेदइतिस्वयम् ॥ तेनैवसर्वगतयाशक्त्यास्वात्मनिकल्पितः॥ १९॥ सत्स्वनंतपदार्थेषुजीवत्वेनाभिविंवति॥ आसंस्थितःसहिसर्वत्रत्रिषुकालेषुभास्वरः॥ सूक्ष्मत्वात्सुमहत्वाच्चकेवलंनविभाव्यते॥ २०॥ सत्स्वनंतपदार्थेषुजीवत्वेनाभिविंवति॥ आत्मापुर्यष्टकादर्शेस्वभाववशतःस्वतः॥ २१॥ पुर्यष्टकोदयादेवस्वयमात्मानुभूयते॥ सर्वदासर्वसंस्थःखेघनास्पंदादिवानिलः॥ २२॥ चिदात्मासर्वगोव्यापीनक्वचिन्नामसंस्थितः॥ यद्वत्सर्वपदार्थानांसत्तातद्वन्महेश्वरः ॥ २३॥ सतिपुर्यष्टकेतस्मिञ्जीवःस्फुरतिनोपले॥ सतिवातायविवरजःसतिदीपइवेक्षणम्॥ २४॥ इयंपुर्यष्टकस्वेच्छास्वात्मन्येवात्मनिस्थिते॥ सतिस्फुरत्यभ्युदितेभानाविवजनैषणा॥ २५॥ यदिसूर्येस्थितेव्योम्नितादृशोचितसंस्थितिः॥ नश्यतिव्यवहारोयंभास्करेतत्किमागतम्॥ २६॥ यद्यात्मनिस्थितेदेवेतत्सत्तालब्धसंस्थितिः॥ देहोनाशमुपायातितत्किंनष्टमिहात्मनि॥ २७॥ नजायतेनम्रियतेनादत्तेनाभिवांछति ॥ नमुक्तोनचवद्धोयमात्मासर्वस्यसर्वदा ॥ २८॥ आत्माप्रबोधाभ्युदितानिरात्मन्यात्मतांगता॥ सर्परज्जुभ्रमाकाराभ्रांतिर्दुःखायकेवलम्॥ २९॥ अनादित्वान्नजातोयमजातत्वान्ननश्यति॥ आत्मात्मव्यतिरिक्तंतुनाभिवांछत्यसंभवात्॥ ३०॥ दिक्कालाद्यनवच्छेदान्नवद्धोयंकदाचन ॥ वंधाभावेक्वमुक्तिःस्याद्मोक्षस्तेनसंस्थितः॥ ३१॥

भोगायतनाद्यनेकपदार्थेषु ॥ २१ ॥ अनुभूयतेअहमित्यभिव्यक्तस्वरूपःक्रियते ॥ घनेनमूर्त्तेनव्यजनादिनाआस्पंदान्नोदनात् ॥ २२॥ नामेत्यवधारणे ॥ क्वचिद्देहेएवसंस्थितइतिनेत्यर्थः ॥ २३॥ परिच्छिन्नाहंतयास्फुरणेतुपुर्यष्टकंहेतुरित्याह ॥ सतीति ॥ २४॥ पुर्यष्टकेइयंप्रसिद्धास्वेच्छाप्रीतिर्विचित्रभोगेच्छाचपरमप्रेमास्पदेनिरतिशयानंदेस्वात्मनिस्थितेस्फुरति॥ यथाभानौसूर्येनभसिस्थितेसतिसर्वजनानांतत्तत्क्रियाफलैषणास्फुरतितद्वत् ॥ आत्मनस्तुकामायसर्वंप्रियंभवतीतिश्रुतेरात्मैवसर्वव्यवहारदूरोपिप्रियाप्रियादिसर्वव्यवहारनिर्वाहकइत्यर्थः ॥ २५॥ अस्त्वेवंकिंततस्तत्राह ॥ यदीति ॥ तादृशेतत्तदेषणाफलेउचिताअनुरूपास्थितिर्यस्य ॥ २६॥ ॥ २७॥ आत्मातर्हिस्वतःकीदृशस्तमाह ॥ नेति ॥ २८॥ अतएवतस्याज्ञानादेवानर्थभ्रांतिरित्याह ॥ आत्मेति ॥ २९॥ प्रबोधेतर्हिकीदृशस्तमाह ॥ अजातत्वादिति ॥ ३०॥ ३१॥

१ नष्टमिहात्मनइत्यपिपाठः

एवंगुणविशि इत्थंस्वभावइतियावत् ॥ ३२ ॥ मौर्ख्येणोपगतायेलोकाजनास्तद्वत् ॥ ३३ ॥ यथापर्वतदेशेजलयंत्रेणपेपणेप्रवृत्तेनतत्संनिधिमात्रेणतत्कुर्वाणेनेवस्थितेनआत्म नास्यतस्तुमं. निनाकामादिव्यापारशून्येनपुरुषेणस्थीयतेतथाविदुपादेहादिनाव्यवहर्त्तव्यमित्यर्थः ॥ ३४ ॥ सम्यग्ज्ञानेनविबोधितंबोधात्ममात्रतांनीतम् ॥ ३५ ॥ आशास्वा शास्यमानेपुविपयेष्वसंसक्त्या ॥ स्वयंस्वपरिणामबोधवृत्त्याक्षयः ॥ ३६ ॥ दीनतयाकार्पण्येन ॥ भक्त्यानित्यप्राप्तेप्यप्राप्तिकल्पनया ॥ ३७ ॥ चित्तत्त्वतांपारमार्थिकचि न्मात्रताम् ॥ स्वात्मव्यतिरिक्तादशमोक्षाश्चेत्स्युस्तेपिनवांछ्यंतेकिमुतएकोल्पोमोक्षोमोक्षकोवांछ्यतेइत्यर्थः ॥ ३८ ॥ हेअभवसमोक्षस्त्वमेवभव ॥ ३९ ॥ परिगलिताविकल्प नायत्रतथाविधांदशांप्रयातस्त्वंसगरसुतैर्निखातामेखलासमुद्रस्तदंकंतच्चिह्नितमवनिवलयंचिरमनुपालय ॥ यतस्त्वमंतःअस्तसंगस्ततस्तेराज्यादिपालनंनदोपायेत्यर्थः ॥ ४० ॥

एवंगुणविशिष्टोयमात्मासर्वस्यराघव ॥ अविचारवशान्मूढोलोकोयंपरिरोदिति ॥ ३२ ॥ सम्यगालोकिताशेषपूर्वापरजगत्क्रमः ॥ माशोकंगच्छसुमतेमौर्ख्योपगतलोकवत् ॥ ३३ ॥ द्वेएवकलनेत्यक्त्वामोक्षबंधात्मिकेयथा ॥ विदुषाव्यवहर्त्तव्यंयंत्रेणवात्ममौनिना ॥ ३४ ॥ नमोक्षोनभसःपृष्ठेनपातालेनभूतले ॥ मोक्षोहिचेतोविमलंसम्यग्ज्ञानविबोधितम् ॥ ३५ ॥ सकलाशास्वसंसक्त्यायत्स्वयंचेतसःक्षयः ॥ समोक्षनाम्नाकथितस्तत्त्वज्ञैरात्मदर्शिभिः ॥ ३६ ॥ यावत्प्रबोधोविमलोनोदितस्तावदेवसः ॥ मौर्ख्याद्दीनतयारामभक्त्यामोक्षोभिवांछ्यते ॥ ३७ ॥ परंप्रबोधमासाद्यचित्तेचित्तत्त्वतांगते ॥ दशमोक्षानवांछ्यंतेकिमुतैकोहिमोक्षकः ॥ ३८ ॥ अयंमोक्षस्त्वयंबंधःपेलवांकलनामिति ॥ परित्यज्यमहात्यागीसत्वमेवभवाभव ॥ ३९ ॥ परिगलितविकल्पनांप्रयातःसगरसुतौघनिखातमेखलांकम् ॥ अवनिवलयमंतरस्तसंगश्चिरमनुपालयसर्वदोदितश्रीः ॥ ४० ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपूपशमप्रकरणेस्वात्मविचारोनामत्रिसप्ततितमःसर्गः ॥ ७३ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ लीलयापश्यतिवपुःकालेनात्मनिजायते ॥ रम्यस्यापश्यतोवक्त्रंतद्विदौरूप्यधीरिव ॥ १ ॥ तद्वशादियमायातामहतीमेदुरोदरा ॥ मायामदमहाशक्तिःसुरास्वादलवादिव ॥ २ ॥

इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेत्रिसप्ततितमःसर्गः ॥ ७३ ॥ ॥ ७ ॥ ॥ प्रमादात्संसृतिभ्रांतिःप्रबोधात्पूर्णतासदा ॥ जीवन्मुक्तिगुणाल्लिश्च विस्तरेणात्रवर्ण्यंते ॥ १ ॥ अविचारवशान्मूढोलोकोयंपरिरोदितीतियदुक्तंतदादौ प्रपंचयति ॥ लीलयेत्यादिना ॥ प्रलयसुषुप्त्योरज्ञानावृतत्वान्निरतिशयानंदरूपत्वात्परमप्रेमास्पदंस्वस्वरूपमपश्यतिआत्मनिकामकर्मवासनापरिपाकक्रमप्राप्तेनसर्गजागरादिकालेनलीलयाचिद्विलासेनैववपुःसूक्ष्मस्थूलसमष्टिव्यष्टिशरीरंजायते ॥ यथारम्यस्यकांतापुत्रादेर्वक्त्रमपश्यतोविरहिपुरुषस्यतद्विम्लानिकार्श्यादिदौरूप्यापादिकादौर्मनस्यधीर्निरंतरंजायतेतद्वदित्यर्थः ॥ १ ॥ तस्यदेहद्वयस्यवशात्तदहंभावाध्यासेनतद्वशतांप्राप्तेरियंनिरतिशयानर्थरूपामायामिथ्याभूतेवरागलोभमोहादिर्मदस्यमहाशक्तिरायाता ॥ २ ॥

तयानयारागादिशक्त्या ॥ प्रवृत्तिभोगपुण्यपापवासनाद्यनर्थपरंपराविकारवत्या ॥ तस्यपरमात्मनःअतद्भावोन्यथाभावस्तेनभूतयालब्धसत्तया ॥ ३॥ एवंकलितानिनामान्यं कानिरूपाणिचयैस्तथाविधैःस्वस्वरूपांबुभिः ॥ ४ ॥ अनर्थप्राप्तिप्रकारमुक्तातदुच्छेदोपायंवक्तुंप्रथममर्थचेतनाच्चित्तंतन्मननान्मनस्तदध्यवसायाद्बुद्धिस्तदभिमानादहंकार इतिएकमेवांतःकरणमंकुरकांडमूलप्ररोहशाखादिप्ररोहक्रमेणवृक्षइवसर्वतःप्रसृतमवतिष्ठतइत्याह ॥ चित्तेतिद्वाभ्याम् ॥ ५ ॥ ६ ॥ ऐक्योक्तिफलमाह ॥ मनइति ॥ ७ ॥ इदानींतदुच्छेदोपायमाह ॥ तुच्छामिति ॥ ८ ॥ मोक्षेच्छांकुतस्त्याज्यातत्राह ॥ मोक्षइति ॥ मनसिमननोत्केसतितदेववपुःशरीराकारंभवतितच्चपुनर्बहिर्मुखतापादनाद्दोषायेत्यर्थः ॥ ९ ॥ परिच्छिन्नवपुर्भावएवास्यदोषोनशुद्धात्मभावोजगदात्मभावोवेत्याशयेनाह ॥ आत्मनीति ॥ तस्मात्परिच्छेदमननमेवनिर्मूलंकुर्वित्यर्थः ॥ १० ॥ प्राणादिवाय्वधीन

तयानयाविकारिण्यातदतद्भावभूतया ॥ इदंसंपन्नमखिलंतापादिवमरीचयः ॥ ३ ॥ मनोबुद्धिरहंकारोवासनाश्चेंद्रियाण्यपि ॥ एवंकलितनामांकैःस्फुरत्यात्माब्धिरंबुभिः ॥ ४ ॥ चित्ताहंकारयोर्हित्वंवचस्यस्तिनवस्तुतः ॥ यच्चित्तंसत्त्वहंकारोयोहंकारोमनोहितत् ॥ ५ ॥ व्यतिरिक्तंहिमाच्छौक्ल्यमितिसंकल्प्यतेयथा ॥ मुधैवकल्प्यतेभेदश्चित्ताहंकारयोस्तथा ॥ ६ ॥ मनोहंकारयोरंतर्द्वयोरेकतरक्षये ॥ क्षीणेद्वेएवहि यथापटशौक्ल्येपटक्षये ॥ ७ ॥ तुच्छांमोक्षधियंत्यक्त्वाबंधबुद्धिंतथैषणाम् ॥ स्ववैराग्यविवेकाभ्यांकेवलंक्षपयेन्मनः ॥ ८ ॥ मोक्षोमेस्त्विति चिंतांतर्जाताचेदुत्थितंमनः ॥ मननोत्केमनस्युच्चैर्वपुर्दोषायकेवलम् ॥ ९ ॥ आत्मन्यतीतेसर्वस्मात्सर्वभूतेथवातते ॥ कोबंधःकश्चवा मोक्षोनिर्मूलंमननंकुरु ॥ १० ॥ वायुःस्पंदनधर्मत्वाद्यदाचलतिदेहके ॥ तदास्फुरतिहस्तांगरसनापल्लवावली ॥ ११ ॥ पादपेपल्लवश्रेणीं चालयत्यनिलोयथा ॥ तथैवांगावलींवायुर्देहेसंचालयत्यलम् ॥ १२ ॥ चित्सर्वव्यापिनीसूक्ष्मानचलानैवचाल्यते ॥ नस्वतःस्पंदमाया तिदेवाचलइवानिलैः ॥ १३ ॥ प्रतिबिंबितसर्वार्थाकेवलंस्वात्मनिस्थिता ॥ प्रकाशयतिबोधेनजगंतीमानिदीपवत् ॥ १४ ॥ तत्रकोयं मुधामोहोभवतामतिदुःखदः ॥ अयंसोहंममांगानिममेदंचेतिदुर्द्धियाम् ॥ १५ ॥ इतिकल्लोलहतयादृशानित्यमनित्यया ॥ ज्ञत्वकर्तृत्व भोक्तृत्वक्रियासमुपलभ्यते ॥ १६ ॥ तत्रायमहमागंताभोक्ताकर्त्तेतिजायते ॥ मुधैवाज्ञाततापोत्थामृगतृष्णेववासना ॥ १७ ॥

चलनादिधर्मकदेहादिवैलक्षण्यमात्मनोदर्शयति ॥ वायुरित्यादिना ॥ स्फुरतिसंचलति ॥ ११ ॥ १२ ॥ देवाचलोमेरुः ॥ १३ ॥ नन्वस्तुशुद्धात्मभावेएवंसर्वात्मभावेतुशाखाचलनावृक्षस्येवात्मनश्चलनंदुर्वारमितिचेत्तत्राह ॥ प्रतिबिंबितेति ॥ तथाचचलदनेकप्रतिबिंबात्मभावापन्नापिस्फटिकशिलायथाकूटस्थातथाआत्मापीतिभावः ॥ १४ ॥ तत्रैवमत्यंतवैधर्म्येसतिअयंदेहःसप्रसिद्धोहम् ॥ इदंवाह्यस्त्रीपुत्रादिचममइतिमोहः ॥ भवतामितिरामेतरजनान्प्रत्युक्तिः ॥ दुस्थिताधीर्येषाम् ॥ यत्क्रियायुक्ताःप्रादयस्तंप्रत्येवगत्युपसर्गसंज्ञाइतिध्यायत्यर्थप्रतिदुरःअगतित्वाद्गतिकारकेतरपूर्वपदस्ययणूनेष्यतइत्युक्तेर्नयण् ॥ १५ ॥ एवमत्यंतवैधर्म्येपिदेहेज्ञत्वादयआत्मनिकर्तृत्वादयश्चविरुद्धधर्माअविद्याकल्लोलरागाद्युपहतयादेहादितादात्म्यसंसर्गाध्यासप्रयुक्तत्वादनित्ययाभ्रांतिदृशैवोपलभ्यंतइत्यर्थः ॥ १६ ॥ उपलब्ध्यनुसारेणैवोत्तरोत्तरभ्रांतिबीजभूतावासनापिजायतइत्याह ॥ तत्रेति ॥ अज्ञातःनूलाज्ञानाद्यतस्तापोमरुदातपस्तदुत्था ॥ १७ ॥

॥ १८ ॥ १९ ॥ २० ॥ आलोकःअपरिच्छिन्नात्मप्रकाशः ॥ एतिआविर्भवति ॥ २१ ॥ २२ ॥ इतिनिश्चयइतिबहुव्रीहिः ॥ ज्ञाततत्त्वज्ञः ॥ आशाप्रयोजकंमलमज्ञानं भिनत्ति ॥ २३ ॥ आशायाःपरिकरेपरिवारभूतेदेहाभिमानादौ ॥ २४ ॥ अधमोदरिद्रः ॥ २५ ॥ नमातिनसम्मितोभवतिनपरिच्छिद्यतइतियावत् ॥ २६ ॥ अपेतसंरंभस्स क्तदुरभिनिवेशः ॥ वर्षासुदृष्ट्याशरदिमूकोगर्जनादिशून्यः ॥ २७ ॥ धैर्यविपर्ययैरप्रधृष्यताम् ॥ स्थैर्यंभयस्थानैरप्रकंप्यताम् ॥ २८ ॥ २९ ॥ ३० ॥ व्यवहारेसर्वाकारंपरमा

अज्ञतैपामनोमत्तमृगंविपयतर्पुलम्[1] ॥ असत्यैवहिसत्येवमृगतृष्णेवकर्षति ॥ १८ ॥ विज्ञातासत्यरूपांगनाशंयातिपलायते ॥ विभ्रम ध्यात्परिज्ञातायथाचांडालकन्यका ॥ १९ ॥ अविद्यासंपरिज्ञातानचैनंपरिकर्षति ॥ मृगतृष्णापरिज्ञातातर्पुलंनावकर्षति ॥ २० ॥ पर मार्थावबोधेनसमूलंरामवासना ॥ दीपेनेवांधकारश्रीर्गलत्यालोकएतिच ॥ २१ ॥ नास्त्यविद्येतिसंजातेनिश्चयेशास्त्रयुक्तितः ॥ गलत्यविद्यातापेनतुपारकणिकायथा ॥ २२ ॥ देहस्यास्यजडस्यार्थेकिंभोगैरितिनिश्चयः ॥ भिनत्त्याशामलंज्ञातापंजरंकेसरीयथा ॥ २३ ॥ आशापरिकरेरामनूनंपरिस्थतेदृढा ॥ पुमानागतसौंदर्याह्लादमायातिचंद्रवत् ॥ २४ ॥ परांशीतलतामेतिवृष्टिधौतइवाचलः ॥ निर्वृतिपरमांधत्तेप्राप्तराज्यइवाधमः ॥ २५ ॥ शोभतेपरयालक्ष्म्याशरदीवनभस्तलम् ॥ आत्मन्येवनमात्युच्चैःकल्पस्यांतइवार्णवः ॥ २६ ॥ भवत्यपेतसंरंभोवृष्टिमूकइवांबुदः ॥ तिष्ठत्यात्मनिसंवृत्ताप्रशांतइववारिधिः ॥ २७ ॥ परंधैर्यमुपादत्तेस्थैर्यमेरुरिवाचलः ॥ रा जतेस्वच्छयालक्ष्म्याशांतेंधनइवानलः ॥ २८ ॥ भवत्यात्मनिनिर्वाणःप्रशांतइवदीपकः ॥ तृप्तिमायातिपरमांनरःपीतामृतोयथा ॥ २९ ॥ अंतर्दीपोघटइवमध्यज्वालइवानलः ॥ स्फुरद्दीप्तिर्मणिरिवप्रयात्यंतःप्रकाशताम् ॥ ३० ॥ सर्वात्मकंसर्वगतंसर्वेशंसर्वनायकम् ॥ सर्वा कारंनिराकारंस्वमात्मानंप्रपश्यति ॥ ३१ ॥ हसत्यलमतीतास्ताःपेलवादिवसावलीः ॥ यासुस्मरशरश्रेणीचपलंचित्तमास्थितम् ॥ ३२ ॥ संगरंगविनिष्क्रांतःशांतमानमनोज्वरः ॥ अध्यात्मरतिरासीनःपूर्णःपावनमानसः ॥ ३३ ॥ निर्मष्टकामपंकांकश्छिन्नबंधनिजभ्रमः ॥ द्वंद्वदोषभयोन्मुक्तस्तीर्णसंसारसागरः ॥ ३४ ॥ प्राप्तानुत्तमविश्रांतिर्लब्धालभ्यपरास्पदः ॥ अनिवृत्तिपदंप्राप्तोमनसाकर्मणागिरा ॥ ३५ ॥ सर्वाभिवांछितारंभोनकिंचिदपिवांछति ॥ सर्वानुमोदितानंदोनकिंचिदनुमोदते ॥ ३६ ॥ नददातिनचादत्तेनस्तौतिनचनिंद ति ॥ नास्तमेतिनचोदेतिनतुष्यतिनशोचति ॥ ३७ ॥

र्थतोनिराकारम् ॥ ३१ ॥ ३२ ॥ विषयिजनसंगा द्विषयानुरंजनाच्चविनिष्क्रांतः ॥ ३३ ॥ शीतोष्णसुखदुःखादयोद्वंद्वदोषाः ॥ ३४ ॥ अनिवृत्तिपुनरावृत्तिशून्यंपदंसाम्राज्यम् ॥ मनसेत्यादेरुत्तरत्रान्वयः ॥ ३५ ॥ सर्वैर्जनैरुपादे यतयाअभिवांछितआरंभश्चारित्र्यंयस्य ॥ आनंदश्चारित्र्यफलम् ॥ ३६ ॥ अस्तंस्वरूपतिरोधानंनैतिनोदेति ॥ उदयंपुनःस्वरूपाविर्भावंचनैतिसकृद्विभातत्वादित्यर्थः ॥ ३७ ॥

[1] मनोमृगम्

॥ ३८ ॥ रामंप्रतितल्लक्षणानिशिक्षयति ॥ सर्वैषणाइत्यादिना ॥ निरवशेषेणनिःशेषतयाधाराःजलानित्यक्त्वापयोधरोयथाभवतितथेत्यर्थः ॥ ३९ ॥ एषणात्यागमेवप्रशंसति ॥ नतथेत्यादिना ॥ ४० ॥ सकलंजगच्छीतलंयस्मात्तत्सकलशीतलम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ स्थाणुश्छिन्नावशिष्टतरुः ॥ आशादिशः ॥ समुद्गिकाःक्षुद्रसंपुटिकाः ॥४७॥ दानंलौकिकंशास्त्रीयंच ॥ आदानंधनादेःस्वीकारः ॥ समाहारःसंग्रहेणकोशाद्युपचयः ॥ विहारोधनव्ययेनपुत्रक्रीडनम् ॥ विभवावस्त्रालंकारान्नपानादिसंभारसंपत्तयस्तदादिकाः ॥ हस्यंतेबद्धायासतुच्छफलानर्थबीजस्यमूढैरन्यथाभिमतत्वेनहासयोग्यत्वादितिभावः ॥ ४८ ॥ कलनाआशा ॥ ४९ ॥ आत्मनोमनसईशंस्वाधीनचित्तम् ॥ आत्मास्वयमेवेशःसर्वेश्वरस्तंवा ॥ ५० ॥ पर्यंतंपारम् ॥ बुद्धेःपरमंसौभाग्यंसार्थक्यम् ॥ ५१ ॥ हेरामतेतवआशानसंति त्वंचआशानांसंबंधीनासि अतोवैराग्यादिसाधनसंपत्त्यामुख्याधिकारित्वात्तत्त्वज्ञानसंपत्त्याजगत्वहतिधावतिरथेस्थितस्यपुंसउभयपार्श्वदिशोभ्रांत्यातरुगुल्मादेश्चक्राकारपरावर्त्तवन्मिथ्याभ्रमम

सर्वारंभपरित्यागीसर्वोपाधिविवर्जितः॥ सर्वाशासंपरित्यागीजीवन्मुक्तइतिस्मृतः॥३८॥ सर्वैषणाःपरित्यज्यचेतसाभवमौनवान्॥ धारानिरवशेषेणयथात्यक्त्वापयोधरः॥३९॥ नतथासुखयत्यंगसंलग्नावरवर्णिनी॥ यथासुखयतिस्वांतर्मिंदुशीतानिराशता॥ ४०॥ नतथेंदुःसुखयतिकंठलग्नोपिराघव॥ नैराश्यंसुखयत्यंतर्यथासकलशीतलम्॥४१॥ पुष्पपूर्णनवलतोनतथाराजतेमधुः॥ यथोदारमतिर्मौनीनैराश्यसममानसः॥ ४२॥ नहिमाद्रेर्नमुक्ताभ्योनरंभाभ्योनचंदनात्॥ नचचंद्रमसःशैत्यंनैराश्याद्यदवाप्यते॥ ४३॥ अपिराज्यादपिस्वर्गादपींदोरपिमाधवात्॥ अपिकांतासमासंगान्नैराश्यंपरमंसुखम्॥ ४४॥ तृणवन्नोपकुर्वंतियत्रत्रिभुवनश्रियः॥ सापरानिर्वृतिःसाधोनैराश्यादुपलभ्यते॥४५॥आपत्करंजपरशुंपरायानिर्वृतेःपदम्॥ पुष्पगुच्छंशमतरोरालंबस्वनिराशताम्॥४६॥गोष्पदंपृथिवीमेरुःस्थाणुराशाःसमुद्गिकाः॥ तृणंत्रिभुवनंरामनैराश्यालंकृताकृतेः॥४७॥ दानादानसमाहारविहारविभवादिकाः॥क्रियाजगतिहस्यंतेनिराशैःपुरुषोत्तमैः॥ ४८॥ पदंयस्यनबध्नातिकदाचित्कलनाहृदि॥ तृणीकृतत्रिभुवनःकेनासावुपमीयते॥४९॥इदमेवास्त्विदंमास्तुममेतिहृदिरंजना॥ नयस्यास्तितमात्मेशंतोलयंतिकथंजनाः॥५०॥सर्वसंकटपर्यंतमसंकटमलंसुखम्॥ सौभाग्यंपरमंबुद्धेर्नैराश्यमवलंब्यताम्॥५१॥ नाशास्तेनत्वमाशानांविद्धिमिथ्याभ्रमंजगत्॥ वहद्रथस्यदिक्चक्रपरावर्त्तवदुत्थितम् ॥ ५२॥

त्वंविद्धीत्यर्थः ॥ अथवानआशाऽवलंब्यताम् ॥ आशानांस्तेनत्वंविवेकविज्ञानापहारेणात्मसुखविभ्रंशकत्वमेव ॥ जागर्तंहिसुखंमूढैराशासहस्रैराशास्यते जगत्तुमिथ्याभ्रमं वहतिरथेस्थितयोश्चक्रयोरूर्ध्वाधोदिक्षुपरावर्त्तौयद्वन्नेम्यवलंबिपिपीलिकादेःपतनपेषणाद्यनर्थहेतुस्तद्वत्स्वावलंबिनांजननमरणाद्यनर्थार्थमेवोत्थितंविद्धीत्यर्थः ॥ अथवा नुउत्कृष्टसुखाशयानिकृष्टसुखाशाप्रमोपदर्शनात्पूर्वपूर्वाशाप्रमोषार्थमाशांतरोपादानेआशाभिर्वृद्धिरेवस्यान्ननैराश्यमितिरामशंकामालक्ष्याह ॥ नेति ॥ उत्कृष्टाशानांनिकृष्टाशास्तेनत्वंअभिप्रेत्यनैराश्यंमयोक्तमितिनविद्धियतोजगन्मिथ्यावस्तुष्वेवआशापरंपराजननेनभ्रमयतितथाविधम् ॥ उत्कर्षनिरूपकापकर्षस्यैवाप्रसिद्धेः ॥ यतोवहद्रथस्थस्यदिक्चक्रेषुपर्यायेणपरावर्त्तोभ्रमणंवहद्रथवेगेनदिङ्मोहोवातद्वदुत्थितंतदित्यर्थः ॥ अथवानआशास्तेनत्वमाशानाम् ॥ वित् हि इतिच्छेदः ॥ वित्आत्मवेत्ताकिंचिदपिनाशास्तेनवांछति ॥ हियस्माज्जगन्मिथ्याभ्रमम् ॥ नाशास्यंपुरुषार्थरूपंजगत्यस्तिअतस्त्वंआशानांसंबंधीनभवेत्यर्थः ॥ शेषंप्राग्वत ॥ ५२ ॥

आत्यंतिकनैराश्योपायमन्विष्यतद्दर्शनान्मुह्यमानमिवराममुपलक्ष्यदेहादावहंममतात्यागएवप्रागुक्तस्तदुपायइत्यापहेणस्मारयन्नाह ॥ किमुह्यसीति ॥ इदंदेहसंबंधिमम त
देहम् सपूर्वोत्तरकालप्रसिद्धःअयंवर्त्तमानकालेप्रत्यक्षअहमेवेतिकिमुह्यसीत्यर्थः ॥ ५३ ॥ अस्त्वेवंतथापिकथमाशाखेदनिवृत्तिस्तत्राह ॥ आत्मैवेति ॥ ५४ ॥ यथाभूतानां
यथार्थात्मभूतानांपदार्थौघानांदर्शनात् ॥ ५५ ॥ कीदृशंतर्हिसर्वपदार्थानांयथार्थंरूपंतदाह ॥ भावेति ॥ विसंवादोविकल्पः ॥ ५६ ॥ सर्वविकल्पपरित्यागलक्षणमहावैराग्ये
णवीरंमनोयस्यतस्मात् ॥ ५७ ॥ एवंकामादिदोषाअपिपलायंतइत्याशयेनाह ॥ कांतामिति ॥ जर्जरायाउपलपांचालीपाषाणप्रतिमातत्समाम् ॥ ५८ ॥ हरंतिधैर्यांच्च्याव

किंमुह्यसिमहाबाहोमूर्खवद्बोधितोपिसन् ॥ ममेदंतदयंसोहमित्युद्भ्रांतेनचेतसा ॥ ५३ ॥ आत्मैवेदंजगत्सर्वंनानातेहनविद्यते ॥ एकरू
पंजगज्ज्ञात्वाधीरैर्नामनखिद्यते ॥ ५४ ॥ यथाभूतपदार्थौघदर्शनादेवराघव ॥ परमाश्वासनंबुद्धेर्नैराश्यमधिगच्छति ॥ ५५ ॥ भावा
भावविसंवादमुक्तमाद्यंतयोःस्थितम् ॥ यद्रूपंतत्समालंब्यपदार्थानांस्थितिंकुरु ॥ ५६ ॥ वैराग्यवीरमनसोमायेयमतिमोहिनी ॥ पला
य्ययातिसांसारीमृगीकेसरिणोयथा ॥ ५७ ॥ कांतामुद्दाममदनांलोलांवनलतामिव ॥ जर्जरोपलपांचालीसमांपश्यतिधीरधीः ॥ ५८ ॥
भोगानानंदयंत्यंतःखेदयंतिनचापदः ॥ दृश्यश्रियोहरंत्यंगनतमद्रिमिवानिलाः ॥ ५९ ॥ रक्तबालांगनस्यापिज्ञस्योदारधियामुनेः ॥ क
णशःपांसुतांयांतिमनसःस्मरसायकाः ॥ ६० ॥ रागद्वेषैःस्वरूपज्ञोनावशःपरिकृष्यते ॥ स्पंदएवास्यनैताभ्यांकिमुताक्रमणंभवेत् ॥ ६१ ॥
समदृष्टलतालोलवनितोद्रिशिलाकृतिः ॥ रमतेनैपभोगेपुपांथोमरुमहीष्विव ॥ ६२ ॥ अयत्नोपनतंसर्वंलीलयासक्तमानसः ॥ भुंक्तेभो
गभरंप्राज्ञस्त्वालोकमिवलोचनम् ॥ ६३ ॥ काकतालीयवत्प्राप्ताभोगालीललनादिका ॥ स्वादिताप्यंगधीरस्यनदुःखायनतुष्टये ॥ ६४ ॥
सम्यग्दृष्टपथंतज्ज्ञंसुखदुःखमतीमनाक् ॥ द्वंद्वीच्याविवशैलेंद्रंक्षोभंनेतुंनशक्नुतः ॥ ६५ ॥ हेलयालोकयन्भोगान्दृढदूरींतागतज्वरः ॥
स्वमेवपदमालंब्यसर्वभूतांतरस्थितम् ॥ ६६ ॥ ज्ञप्तिप्रतिगतव्यग्रोव्यग्रेणापिसमन्वितः ॥ जगंतिजनयन्नेवब्रह्मेवात्मपरायणः ॥ ६७ ॥

यंति ॥ अंगेतिसंबोधने ॥ ५९ ॥ रक्ताअनुरक्ताबालांगनायस्मिंस्तथाविधस्यापि ॥ ६० ॥ स्वरूपमात्मतत्त्वंतज्ज्ञः ॥ ६१ ॥ समंतुल्यरूपंयथास्यात्तथादृष्टेलनाचलोलवनि
तायेन अतएवाविकारत्वादद्रिशिलाकृतिः ॥ ६२ ॥ तर्हिकिमाहाराद्यपित्यजतितत्राह ॥ अयत्नेति ॥ सर्वमनिषिद्धान्नपानादि ॥ लीलयादेहधारणमात्रानुकूलचेष्टया ॥ अ
सक्तमानसत्वेलोचनदृष्टांतः ॥ ६३ ॥ गृहस्थस्यतत्त्वविदःस्वललनादिभोगास्वादेपिनकश्चिद्रागिवदतिशयभ्रमोस्तीत्याह ॥ काकेति ॥ ६४ ॥ सम्यक्दृष्टःपरिचितःपंथाःप्रत्य
ग्दृष्टिमार्गोयेनतम् ॥ ऋक्पूरब्धूःपथामितिअप्रत्ययेभस्यटेर्लोपः ॥ शैलेंद्रंमंदरम ॥ ६५ ॥ हेलयाअवहेलनयाअसत्यतावुद्ध्येत्यर्थः ॥ आलोकयन्स्वमात्मपदमेवावलंब्यति
ष्ठतीतिशेषः ॥ ६६ ॥ व्यग्रेणतत्तत्कालोचितक्रियाव्यापृतेनापिदेहेंद्रियादिनासमन्वितोज्ञस्तत्त्ववित्गतव्यग्रोनिर्विक्षेपएवतिष्ठति ॥ ब्रह्माहिरण्यगर्भइव ॥ ६७ ॥

भूभृत्पर्वतः ॥ ऋतुषुवसंतादिषु ॥ ६८ ॥ कर्मेंद्रियाणांवागादीनांभ्रमैर्व्यापारैर्विषयेषुमज्जतोपि ॥ ६९ ॥ अंतर्दोषसंगस्यैवदूषकत्वंनबहिःसंगस्येत्यत्रदृष्टांतमाह ॥ कलंकीति ॥ हेमअंतःकलंकेनैवकलंकिउच्यतेअन्यथाबहिःपंकादिलेपेनतथानोच्यतेतद्वदित्यर्थः ॥ ७० ॥ अंतःसंगत्यागेदेहदुःखादेरपिनप्रसक्तिरित्याह ॥ शरीरादिति ॥ ७१ ॥ देहातिरिक्तात्मविस्मरणेतर्हिपुनर्दुःखंस्यात्तत्राह ॥ सकृदिति ॥ नविस्मरणप्रसक्तिरित्यर्थः ॥ ७२ ॥ विस्मरणाप्रसक्तौसदृष्टांतोपपत्तिकंकारणमाह ॥ सर्पेत्यादिना ॥ ७३ ॥ अलमत्यंतंस्वभावंहेममाद्यतामागतंप्राप्तम् ॥ ७४ ॥ वृक्षस्थवृंताच्च्युतंफलंपुनर्वृंतेकेनसमर्थेनापिमहतापिप्रयत्नेनपूर्ववद्बद्धुंनकेनचिदित्यर्थः ॥ ७५ ॥ यथापाषाणांतर्गतंमणिंपाषाणच्छेदनेनमणितत्त्वविचारेणचअभितःअमण्यंशखंडनतोगतंप्राप्तंपुनःपूर्ववत्तंपाषाणंमणिंचसंधातुंकस्याभाग्यस्यशक्तताऽस्तीत्यर्थः ॥ ७६ ॥ यात्रांउत्सवसमाजगमनम् ॥ ७७॥

आपतत्सुयथाकालंयथादेशंयथाक्रमम् ॥ सुखदुःखेषुनक्षोभमेतिभूभृदृतुष्विव ॥ ६८ ॥ मज्जतोपिव्रदुज्ञस्यरामकर्मेंद्रियभ्रमैः ॥ असक्तमनसोनित्यंनकिंचिदपिमज्जति ॥ ६९ ॥ कलंक्यंतःकलंकेनप्रोच्यतेहेमनान्यथा ॥ भावासक्त्यासमासक्तउक्तोजंतुर्हिनान्यथा ॥ ७० ॥ शरीराद्व्यतिरिक्तंज्ञंपश्यतःप्रविवेकिनः ॥ विकर्त्तितांगकस्यापिनकिंचित्प्रविकर्त्तितम् ॥ ७१ ॥ सकृत्प्रभातंविमलंयज्ज्ञातंज्ञातमेवतत् ॥ नहिबंधुःपरिज्ञातःपुनरज्ञाततांव्रजेत् ॥ ७२ ॥ सर्पभ्रांतौनिवृत्तायांनरज्ज्वांसर्पभावना ॥ पुनरेतियथाप्रावृण्णदीगिरितटाच्च्युता ॥ ७३ ॥ नहेमतापशुद्धांगंस्वभावमलमागतम् ॥ कर्दमेमग्नमपिसत्समादत्तेमलंपुनः ॥ ७४ ॥ क्षीणेस्वहृदयग्रंथौनबंधोस्तिपुनर्गुणैः ॥ यत्नेनापिपुनर्बद्धुंकेनवृंतेच्युतंफलम् ॥ ७५ ॥ अवच्छेदविचाराभ्यामभितःखंडशोगतम् ॥ पाषाणंचमणिंचैवसंधातुंकस्यशक्तता ॥ ७६ ॥ विज्ञातायामविद्यायांकःपुनःपरिमज्जति ॥ परिज्ञायश्वपाकानांयात्रांकःप्रेक्षतेद्विजः ॥ ७७ ॥ शुद्धांभसियथाक्षीरधीर्विचारान्निवर्त्तते ॥ संसारवासनातद्वद्धीविचारान्निवर्त्तते ॥ ७८ ॥ मध्वंबुशंकयातावद्विप्रवर्यैःप्रपीयते ॥ यावन्नात्रपरिज्ञातंपरिज्ञातंप्रहीयते ॥ ७९ ॥ रूपलावण्ययुक्तापिचित्रकांतेवकामिनी ॥ द्रव्यमात्रसमारंभात्तत्त्वविद्भिर्विलोक्यते ॥ ८० ॥ यथामषीकुसुंभादिस्त्रियाश्चित्रेतथैवहि ॥ जीवत्याअपिकेशोष्ठंकस्तांपरिकिलग्रहः ॥ ८१ ॥ अनुभूतोगुडस्वादुरपिदाहविकर्त्तनैः ॥ नशक्यतेन्यथाकर्त्तुंतत्त्वालोकस्तथात्मनः ॥ ८२ ॥

क्षीरधीर्दुग्धभ्रांतिः ॥ धीविचाराद्धीस्थात्मदर्शनात् ॥ ७८ ॥ मधुमद्यम् ॥ अंबुशंकयाजलभ्रांत्या ॥ ७९ ॥ चित्रलिखिताकांतास्त्रीप्रतिमेव ॥ ८० ॥ यथाचित्तेस्त्रियामषीकुसुंभादिरंगभेदाःपंचभूतमात्रंतथाजीवत्याःकेशोष्ठाद्यपीनितत्त्वतःसाम्यमित्यर्थः ॥ ग्रहउपादेयतेतियावत् ॥ ८१ ॥ ननुस्त्र्यादिविषयोयथाअनुभूयमानाद्रूपात्तत्त्वतोन्यथैववर्त्ततेतथास्वात्मानुभवोपिपरमप्रेमास्पदत्वेनप्रसिद्धादानंदरूपादन्यथैवकिंनस्यादितिचेत्तत्राह ॥ अनुभूतइति ॥ यथागुडस्यस्वादुर्मधुररसोऽनुभूतस्यगुडस्यअनुभवकारणस्यजिह्वादेरनुभवितुर्देवदत्तादेर्वादाहविकर्त्तनादियत्नशतैरपिनासौमाधुर्यानुभवःकिंतुतिक्ताद्यनुभवइत्यन्यथाकर्त्तुंनशक्यतेआत्मनस्तात्त्विकानंदानुभवोपितथैवेत्यर्थः ॥ ८२ ॥

यदासकृदप्यनुभूतोनान्यथाकर्तुंशक्यस्तदातदेकव्यसनितयासदैवानुभूयमानस्तुसुतरामित्याशयेनाह ॥ परव्यसनिनीत्यादिना ॥ ८३ ॥ ८४ ॥ ८५ ॥ जगत्पदेनजागतास्स र्वेविषयानंदभेदालक्ष्यंते ॥ तेसर्वेनानापुष्परसामधुभाववत्तत्रसमरसाभवंतितादृशस्यात्मानंदचिदालोकस्यअवलंबनंनिरंतरास्वादधारांप्राप्तातत्त्वज्ञस्यबुद्धिःकेनविस्मारयि तुंशक्यनइत्यर्थः ॥ तथाचोक्तंशिवधर्मोत्तरे ॥ ज्ञानामृतरसोयेनसकृदास्वादितोभवेत् ॥ विहायसर्वकार्याणिमनस्तत्रैवधावतीति ॥ ८६ ॥ व्यवहारंगृहकर्मअखंडितंसदाकुर्व न्भर्त्राश्वशुराभ्यांचखेदितःपीडितोपिपरव्यसनवान्वधूलोकइतिपरेणान्वयः ॥ ८७ ॥ ८८ ॥ ८९ ॥ तत्रापिसप्तमभूमिकामारूढस्यस्थैर्यातिशयमाह ॥ छिद्यतइति ॥ नष्टः

परव्यसनिनीनारीव्यग्रापिगृहकर्मणि ॥ तदेवास्वादयत्यंतःपरसंगरसायनम् ॥८३॥ एवंतत्त्वेपरेशुद्धेधीरोविश्रांतिमागतः ॥ नशक्यते चालयितुंदेवैरपिसवासवैः ॥८४॥ परव्यसनिनीनारीकेनभर्त्रावलीयसा ॥ विस्मारितास्वसंकल्पकांतसंगमहोत्सवम् ॥८५॥ जगत्स मरसानंदचिदालोकावलंबनम् ॥ केनविस्मार्यतेबुद्धिस्तत्त्वज्ञस्यमहात्मनः ॥८६॥ समग्रसुखदुःखाढ्यंव्यवहारमखंडितम् ॥ कुर्वन्कुल जनायत्तोभर्तृश्वशुरखेदितः ॥८७॥ यथासंकल्पकांतेनभवत्यानंदमंथरः ॥ वधूलोकोव्यसनवान्दुःखवृंदैर्नबाध्यते ॥ ८८ ॥ तथाविग लिताविघ्नोव्यवहारपरोप्यलम् ॥ सम्यग्दृष्टिःसदाचारोमुदमेत्यंतरात्मना ॥८९ ॥ छिद्यतेननिकृत्तांगोगलदश्रुर्नरोदिति ॥ दह्यतेनप्रद ग्धोपिनष्टोपिनविनश्यति ॥ ९० ॥ व्यपगतसुखदुःखसन्निपातोविधिविधुरेष्वपिसंकटेष्वचित्तः ॥ विलसतुसदनेपुरोत्तमेवावितत गि रौविपिनेतपोवनेवा ॥ ९१ ॥ ॥इ० वा० वा० दे० मोक्षोपायेपूपश० वैराग्योपदेशोनामचतुःसप्ततितमःसर्गः ॥ ७४ ॥ ॥ ७ ॥

श्रीवसिष्ठउवाच ॥ ॥ जनकःसंस्थितोराज्येव्यवहारपरोपिसन् ॥ विगतज्वरएवांतरनाकुलमतिःसदा ॥ १ ॥ पितामहोदिलीपस्तेसर्वा रंभपरोप्यलम् ॥ वीतरागतयैवांतर्बुभुजेमेदिनींचिरम् ॥२॥ निरंजनतयाबुद्धोजनतांपालयंश्चिरम् ॥ जीवन्मुक्ताकृतिर्नित्यंमनूराज्यम पालयत् ॥३॥ विचित्रबलयुद्धेषुव्यवहारेषुभूरिषु ॥ मांधातासुचिरंतिष्ठन्प्राप्तवान्वैपरंपदम् ॥४॥ बलिःपातालपीठस्थःकुर्वन्सदिवसंस्थि तिम् ॥ सदात्यागीसदाऽसक्तोजीवन्मुक्तइतिस्थितः ॥ ५ ॥

विनष्टदेहोपि ॥ ९० ॥ अचित्तोमनोनाशपर्यंतभूमिकाप्रतिष्ठितःपुरुषधौरेयोविधिनाप्राक्तनप्रारब्धफलेनकर्मणाविधुरेषुभोगशून्येषुदारिद्र्यादिषुमोहव्यवच्छूलाधिरोहणादिसं कटेषुवापुरोत्तमेसदनेवावितनगिरौविपिनेतपोवनेवानिवसतुतथापिसदाव्यपगतसुखदुःखसन्निपातएवास्तेनमनागपिसांसारिकैर्हर्षशोकैःस्पृश्यतइत्यर्थः ॥ ९१ ॥ इतिश्री वासिष्ठम० तात्पर्यप्रकाशेउपश० चतुःसप्ततितमःसर्गः ॥ ७४ ॥ महत्स्वप्यधिकारेषुहर्षशोकाद्यसंगिनः ॥ इहोक्ताबहवोमुक्तादेवासुरनरादयः ॥ १ ॥ जनकोवैदेहः ॥ १ ॥ २ ॥ निरंजनतयारागादिकालुष्यरहिततया ॥ बुद्धःप्रबुद्धोमनुः ॥ ३ ॥ विचित्राणिबलानिसैन्यानिबाहुबलानिचयेषुतथाविधेषुयुद्धेषु ॥ ४ ॥ सत्यथार्थमिवसंस्थितिंव्यवहारम् ॥ दिवसस्थितिमितिपाठेसःदिवसानांपातालनिवासायहरिणानियमितानांस्थितिपालनम् ॥ ५ ॥

देवैःसहद्वंद्वेयुद्धेमर्यादाव्युक्रमेवापरस्तत्परः ॥ नानाविधानांदेवासुराचाराणांविचारेषुविमर्शेषु ॥ ६ ॥ संगरंयुद्धम् ॥ ७ ॥ निराक्रोशंवाचामगोचरंह्लादंसुखम् ॥ ८ ॥ शंबरं मायातदेकपरोप्यंतःशंबरंहार्दंचिदाकाशस्तदेकतयाउदितआविर्भूतः ॥ ९ ॥ कुशलःसएवअन्योवाकुशलनामादानवः ॥ १० ॥ ११ ॥ समंब्रह्मैवरसोरसायनंपुनरुज्जीवनाम्र तमंतर्यस्य ॥ संसंगंसुखदुःखादिसंसर्गम् ॥ आक्रांतौपद्माक्रमणे ॥ अंबरमाकाशम् ॥ १२ ॥ दारार्थंचिचांईहांदेवपौरोहित्याधिकारचेष्टाम् ॥ १३ ॥ बुधोविद्वान् ॥ नीति शास्त्रप्रणयनेनसर्वेषामर्थानामभिमतानांपालकः ॥ १४ ॥ जगंतिऊर्ध्वभुवनानिभूतगणानांप्राणिनिकायानामंगानिच ॥ १५ ॥ लोकानांप्राणिनांआजवंजवीभावाऊर्ध्वाधो

नमुचिर्दानवाधीशोदेवद्वंद्वपरःसदा॥ नानाचारविचारेषुक्वचिन्नांतरंतप्यत॥ ६॥ वासवाजौतनुत्यागीवृत्रोविततमानसः॥ अंतःशां तमनामानीचकारसुरसंगरम्॥ ७॥ कुर्वन्दानवकार्याणिपातालतलपालकः॥ अनपायंनिराक्रोशंप्रह्लादोह्लादमागतः॥ ८॥ शंबरैक परोप्यंतःशंबरैकतयोदितः॥ संसारशंबरंरामशंबरस्त्यक्तवानिदम्॥ ९॥ असक्तबुद्धिर्हरिणाकुर्वन्दानवसंगरम्॥ परांसंविदमासाद्य कुशलस्त्यक्तवानिदम्॥ १०॥ सर्वामरमुखोवह्निःक्रियाजालपरोप्यपि॥ यज्ञलक्ष्मीश्चिरंभुंक्तेमुक्तएवेहतिष्ठति॥ ११॥ पीयमानःसुरैः सर्वैःसोमःसमरसाशयः॥ क्वचिदेतिनसंसंगमाक्रांतावंबरंयथा॥ १२॥ बृहस्पतिर्देवगुरुर्दारार्थंचंद्रयोध्यपि॥ आचरन्दिविचित्रेहांमु क्तएवव्यवस्थितः॥ १३॥ शुक्रोंबरतलद्योतीबुधःसर्वार्थपालकः॥ निर्विकारमतिःकालंनयत्यसुरदेशिकः॥ १४॥ जगद्भूतगणांगानि चिरंसंचारयन्नपि॥ सर्वदासर्वसंचारीमुक्तएवसमीरणः॥ १५॥ लोकाजवंजवीभावप्रोद्वेगज्ञोप्यखिन्नधीः॥ ब्रह्मासममनारामक्षि पयत्यायुराततम्॥ १६॥ जरामरणयुद्धादिद्वंद्वसंगरलीलया॥ चरतीहचिरंकालंमुक्तोपिभगवान्हरिः॥ १७॥ मुक्तेनापित्रिनेत्रेणसौंदर्यत रुमंजरी॥ देहार्धेधार्यतेगौरीकामुकेनेवकामिनी॥ १८॥ मुक्तयापिगलेबद्धोगौर्यागौरस्त्रिलोचनः॥ संशुद्धइवमुक्तानांहारःशशिकलाम लः॥ १९॥ गुहोगहनधीर्वीरस्तारकादिरणक्रियाम्॥ मुक्तोपिकृतवान्सर्वज्ञानरत्नैकसागरः॥ २०॥ भृंगीशोरक्तमांसंस्वंस्वमात्रेप्रवि तीर्णवान्॥ मुक्तयैवधियारामधीरयाध्यानधौतया॥ २१॥ मुनिर्मुक्तस्वभावोपिजगज्जंगलखंडकम्॥ नारदोविजहारेमंशीतंयाका र्यशीलया॥ २२॥

मध्यगतिभिःपऽरिवर्त्तास्तत्प्रयुक्ताःप्रोद्वेगाश्वतज्ज्ञोपि ॥ आततंद्विपरार्द्धकालविस्तीर्णम ॥ १६॥ मुक्तोनित्यमुक्तोपि ॥ १७ ॥ इवकारेणनसकामुकोनापिसाकामिनींकिंतुब्रह्म ब्रह्मविद्येएवतेइतिध्वनितम ॥ १८॥ १९॥ गहनधीर्विचित्रदुरवगाहबुद्धिः ॥ २०॥ भृंगीशोत्रभृंगिरिटिःशिवगणविशेषः ॥ सहिदेवीमनादृत्यशिवस्यैवाराधनपरःकुपितयादेव्यामा तृपितृभागात्ममांसास्थिमयदेहस्यस्वीयंमातृभागंपरावृत्त्ययाचितःस्वमात्रेदेव्यैस्वंरक्तमांसमुत्कृत्यददावितिपुराणेषुप्रसिद्धम॥ २१॥ कार्यकलहकौतुकप्रवर्त्तनंतच्छीलया ॥ २२॥

१ नांतरलिप्यतेत्यपिपाठः

२ अत्रलीलयेतिपाठोपेक्षितइतिभाति

॥ २३ ॥ यमत्वंदंडनम् ॥ २४ ॥ २५ ॥ विचित्रशोकमोहाद्यनर्थप्रसंजकेपुपुत्रदारधनभूत्यादिसंग्रहपूर्वकयुद्धवधबंधाद्याचारधारिष्वपिराज्यादिव्यवहारेषुसंस्थिताअंतःआ शीतलाःकेचिन्मुक्ताः ॥ २६ ॥ केचित्तुचित्तविक्षेपनिवृत्त्यर्थंकाननमाश्रिताः ॥ तानुदाहरति ॥ यथेत्यादिना ॥ २७ ॥ २८ ॥ ग्रहनक्षत्रादीनांधिष्ण्यमाधारभूतंज्योतिश्चक्रं तदंतरेस्थिताः ॥ मुनीश्वराःसमर्षयः ॥ २९ ॥ ३० ॥ ३१ ॥ तिर्यग्योनिषुगरुडहनुमज्जांबवदादयः ॥ ३२ ॥ ननुसात्विकतमत्वात्स्वभावतोऽभिव्यक्तज्ञानैश्वर्येषुदेवयोनिषुक थंमूर्खाःसंभवंतीतिचेत्सर्वशक्तेरीश्वरस्यसर्वभावेनसर्वत्रसर्वप्रकारेणसर्वदास्थितत्वात्सर्वात्मन्यात्मनिस्वमादावसंभावितसहस्रस्यापिदर्शनान्नासंभावनाकापिकस्यचिदपिकार्ये

जीवन्मुक्तमनामान्योविश्वामित्रोप्ययंप्रभुः ॥ वेदोक्तांमखनिर्माणक्रियांसमधितिष्ठति ॥ २३ ॥ धारयत्यवनींशेषःकरोत्यर्कोदिनाव लीम् ॥ यमोयमत्वंकुरुतेजीवन्मुक्ततयैवहि ॥ २४ ॥ अन्येप्यस्मिंस्त्रिभुवनेयक्षासुरनराःसुराः ॥ शतशोमुक्ततांयाताःसंतस्तिष्ठंतिसंस्मृतौ ॥ २५ ॥ संस्थिताव्यवहारेषुविचित्राचारधारिषु ॥ अंतराशीतलाःकेचित्केचिन्मूढाःशिलासमाः ॥ २६ ॥ परमंबोधमासाद्यकेचित्कान नमागताः ॥ यथाभृगुभरद्वाजविश्वामित्रशुकादयः ॥ २७ ॥ केचिद्राज्येषुतिष्ठंतिछत्रचामरपालिताः ॥ यथाजनकशर्यातिमांधातृसग रादयः ॥ २८ ॥ केचिद्व्योमनितिष्ठंतिधिष्ण्यचक्रांतरस्थिताः ॥ यथाबृहस्पत्युशनश्चंद्रसूर्यमुनीश्वराः ॥ २९ ॥ केचित्सुरपदेयाताविमा नावलिमास्थिताः ॥ यथाग्निवायुवरुणयमतुंबुरुनारदाः ॥ ३० ॥ केचित्पातालकुहरेजीवन्मुक्ताव्यवस्थिताः ॥ यथाबलिसुहोत्रांधप्र ह्लादाह्लादपूर्वकाः ॥ ३१ ॥ तिर्यग्योनिष्वपिसदाविद्यंतेकृतबुद्धयः ॥ देवयोनिष्वपिप्राज्ञाविद्यंतेमूर्खबुद्धयः ॥ ३२ ॥ सर्वंसर्वेणसर्वत्र सर्वथासर्वदैवहि ॥ संभवत्येवसर्वात्मन्यात्मन्याततरूपिणि ॥ ३३ ॥ विधेर्विचित्रानियतिरनंतारंभमंथरा ॥ सन्निवेशांशवैचित्र्यात्स र्वसर्वत्रदृश्यते ॥ ३४ ॥ विधिर्देवंविधिर्धातासर्वेशःशिवईश्वरः ॥ इतिनामभिरात्मानःप्रत्यक्चेतनउच्यते ॥ ३५ ॥ अस्त्यवस्तुनिवस्त्वंतः कांचनंसिकतास्विव ॥ अस्तिवस्तुन्यवस्त्वंतर्मलंहेमकणेष्विव ॥ ३६ ॥ अयुक्तेयुक्ततायुक्त्याप्रेक्ष्यमाणाप्रदृश्यते ॥ पापस्यहिभयाल्लो कोरामधर्मेप्रवर्त्तते ॥ ३७ ॥ असत्येसत्यतासाधोशाश्वतीपरिलक्ष्यते ॥ शून्यनध्यानयोगेनशाश्वतंपदमाप्यते ॥ ३८ ॥ यन्नास्तितद्वृ देत्याशुदेशकालविलासतः ॥ शशकाःशृंगवंतोहिदृश्यंतेशंबरस्थितौ ॥ ३९ ॥

त्याह ॥ सर्वमिति ॥ ३३ ॥ उक्तार्थंस्फुटमाह ॥ विधेरिति ॥ ३४ ॥ कोसौविधिस्तमाह ॥ विधिरिति ॥ आद्यंविधिपदंविरिंचिद्वाराद्वितीयंविष्णुद्वारापरमात्मनोनामेतिनपौन रुक्त्यम् ॥ नःअस्माकंसर्वेषामात्मा ॥ अंतरितिपाठेनुकोशपंचकांतस्थः ॥ चिच्छक्तिशबलत्वाच्चेतनः ॥ ३५ ॥ यत्रात्यंतमसंभाविते अपिवस्त्ववस्तुनीपरस्परांतःसंभावितेतत्रकिं मन्यदसंभावितंस्यादित्याशयेनाह ॥ अस्तीत्यादिना ॥ ३६ ॥ अत्यंतायुक्तेपापेपिफलतांभीषणतयाधर्मेपुरुषप्रवर्त्तकतालक्षणोमहान्गुणोयुक्त्याविमर्शेदृश्यतइत्यर्थः ॥ ३७ ॥ फलतःसत्यता ॥ सर्वशून्यताध्यानेध्यानसाक्षिणःस्वप्रकाशात्मनोदुरपह्नवत्वादर्थादेवयथार्थतन्मात्रपरिशेषसिद्धेरितिभावः ॥ ३८ ॥ शंबरस्थितौऐंद्रजालिकसर्गे ॥ ३९ ॥

वज्रसारायेषांकदाप्यसंभावितःक्षयस्तेपीत्यर्थः ॥४०॥प्रासंगिकस्यअसंभावितसंभवोपपादनस्यापिप्रकृतमेवफलंदर्शयन्नुपसंहरति ॥इतीति ॥४१॥ ४२॥ नन्वेवंसतिविदेहमुक्तावपिपुनःसंसारप्राप्तिःसंभावितास्यात्तत्राह ॥मुक्ताविति ॥ हियस्माज्जनकोटयोविवेकस्यअसंसार्यात्मविवेकस्यतत्त्वज्ञानस्याप्रवृत्तौअज्ञानदशायामेवात्यंतासंभावितानर्थकोटिसंभावनलक्षणेभ्रमेमग्नाःनमुक्तौ ॥ तन्मज्जननिमित्ताज्ञानस्यनष्टत्वादितिभावः ॥४३॥नित्यप्राप्तात्मरूपत्वादपिमुक्तेर्नापायशंकास्ति विस्मृतकंठचामीकरवद्विवेकमात्रेण तल्लाभादित्याह॥मुक्ताविति॥४४॥प्रविवेकात्सुलभापिअविवेकादलभ्यतांगतामुक्तिः॥४५॥भूतिमुक्तिमिच्छता ॥४६॥पूर्वकालिकानांजीवन्मुक्तिसंभवेपिनेदानींतनानांसासंभा

येवज्रसाराःसुदृढादृश्यंतेतेक्षयंगताः॥ कल्पस्यांतेयथेंद्रर्कधराब्धिविबुधादयः ॥ ४० ॥ इतिपश्यन्महाबाहोभावाभावभवक्रमम्॥ हर्षामर्षविषादेहाःसंत्यज्यसमतांव्रज॥४१॥ असत्सदेवभातीहसदसच्चापिदृश्यते ॥ आस्थानास्थेपरित्यज्यतेनाशुसमतांव्रज॥४२॥ मुक्तौराघवलोकेस्मिन्नप्राप्तिःसंभवत्यलम्॥ अप्रवृत्तौविवेकस्यमग्नाहिजनकोटयः॥४३॥मुक्तौराघवलोकेस्मिन्प्राप्तिरस्तिसदैवहि॥ प्रवृत्त्याहिविवेकस्यविमुक्ताभूतकोटयः ॥४४॥ प्रविवेकाविवेकाभ्यांसुलभालभ्यतांगता ॥ मुक्तिर्मनःक्षयप्राप्त्याविवेकंतेनदीपय ॥४५॥ आत्मावलोकनेयत्नःकर्त्तव्योभूतिमिच्छता ॥ सर्वदुःखशिरश्छेदआत्मालोकेनजायते ॥४६॥ नीरागानिरुपासंगाजीवन्मुक्तामहाधियः॥ संभवंतीहबहुशःसुहोत्रजनकाइव ॥ ४७॥ तस्मात्त्वमपिवैराग्यविवेकोदितधीरधीः॥ जीवन्मुक्तोविहरभोसमलोष्टाश्मकांचनः॥४८॥ द्विविधामुक्ततालोकेविद्यतेदेहधारिणाम्॥ सदेहैकाविदेहान्याविभागोयंतयोःशृणु॥४९॥ असंसंगात्पदार्थानांमनःशांतिर्विमुक्तता॥ सत्यसत्यपिदेहेसासंभवत्यनघाकृते ॥५०॥ स्नेहसंक्षयमेवांगविदुःकैवल्यमुत्तमम्॥ तत्संभवतिदेहस्यभावेचाभावएवच॥५१॥ योजीवतिगतस्नेहःसजीवन्मुक्तउच्यते॥ सस्नेहजीवितोबद्धोमुक्तएवतृतीयकः॥५२॥ यत्नोयत्नेनकर्त्तव्योमोक्षार्थयुक्तिपूर्वकम्॥ यत्नयुक्तिविहीनस्यगोष्पदंदुस्तरंभवेत्॥५३॥॥ नत्वनध्यवसायस्यदुःखायविपुलात्मने॥ आत्मापरवशःकार्योमोहमाश्रित्यकेवलम्॥५४॥

वितेत्याशंकांवारयति ॥ नीरागादिति ॥ निरुपासंगानिरभिनिवेशाः ॥ इहास्मिन्नपिकाले ॥ ४७ ॥ ४८ ॥ इदानींजीवन्मुक्तिविदेहमुक्त्योर्भेदनिमित्तंवक्तुमुपक्रमते ॥ द्विविधेत्यादिना ॥ ४९ ॥ तत्रादौउभयसाधारणमुक्तिशब्दार्थंदर्शयति ॥ असंसंगादिति ॥ ५० ॥ तत्रोपपत्तिमाह ॥ स्नेहेति ॥ स्नेहआत्मताभिमानप्रीतिस्तत्संक्षयम् ॥ ५१ ॥ ५२ ॥ साधनचतुष्टयमध्येयत्नेनपूर्वपूर्वसिद्धौउत्तरोत्तरजयेपियत्नःकर्तव्यः ॥ युक्तयःप्रमाणतात्पर्यप्रमेयतत्त्वावधारणानुकूलास्तर्कास्तत्पूर्वकम् ॥ ५३ ॥ युक्त्यन्वितोयत्नआत्मन्स्वाध्यवसायपर्यंतंकार्योनसहसाअनध्यवसायेनिर्वेदादंतरालेयत्नोपरमेणपुनरात्माअनर्थवशेकार्यइत्याह ॥ नत्विति ॥ अनध्यवसायस्यअनध्यवसायेसतियत्नानादरादित्यर्थः ॥ षष्ठीचानादरेइतिभावलक्षणेषष्ठी ॥ ५४ ॥

उक्तमेवार्थंस्फुटमाह ॥ सुमहदिति ॥ व्यवसायिनाफलपर्यंतंप्रयत्नानुपरमदृढनिश्चयवता ॥ चिरसिद्धयइति ॥ सतिप्रतिबंधेबहुभिर्जन्मभिर्वासिद्धिमुद्दिश्येत्यर्थः ॥ ५५ ॥ यत्स्वयंज्योतिरात्ममात्रपरिशेषाख्यंपदम ॥ सुगतोबुद्धः शोभनंविवेकंगतःकपिलश्चबहुविचार्याप्यध्यवसातुमसामर्थ्याद्यस्मादपगतस्सन्नात्मनोऽध्रुवतांक्षणिकविज्ञानसंतानात्मतांगुणत्रयसाम्यावस्थालक्षणंप्रधानंपदंवस्तुउपगतः ॥ एवंकश्चिद्देहदर्शनदक्षत्वादपाहृनामाअर्हद्राख्योनृपःक्षत्रियोपियदपगतःसन्नात्मानंचित्स्वभावमभ्युपगम्यापिदेहपरिमाणत्वाभ्युपगमाद्धस्तिमशकशरीरानुप्रवेशेअवयवोपचयापचयापत्त्याअध्रुवतामुपगतइत्यनुक्तमेएवमिथ्यापदेतेनिमग्नाः ॥ महांतोवेदरहस्यनिष्णातास्तुउत्तमंसत्यादिलक्षणंयत्पदमुपगतायथार्थतःप्राप्तवंतस्तन्महद्भिर्यत्नात्मंपदंवेदोक्तमार्गेणप्रयतनलक्षणस्यकल्पतरोर्महाफलमितितथैवान्योपिप्रयत्नेतेत्यर्थः ॥ ५६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपश०पंचसप्ततितमःसर्गः ॥ ७५ ॥ ॥ ७ ॥ ॥ इहसंसारजलधिःस्त्रीवीचिरुपवर्ण्यते ॥ ततस्तत्तरणोपायस्तीर्णेक्रीडायथासुखम् ॥ १ ॥ अविज्ञाताद्ब्रह्मणःसमुपायां

सुमहद्धैर्यमालंब्यमनसाव्यवसायिना ॥ विचारयात्मनात्मानमात्मनश्चिरसिद्धये ॥ विततध्यवसायस्यजगद्भवतिगोष्पदम् ॥ ५५ ॥ यदुपगतःसुगतःपदंप्रधानंयदपगतोऽध्रुवतांनृपश्चकश्चित् ॥ यदुपगताःपदमुत्तमंमहांतःप्रयतनकल्पतरोर्महाफलंतत् ॥ ५६ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपूपशमप्रकरणेमुक्तामुक्तविचारोनामपंचसप्ततितमःसर्गः ॥ ७५ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ ब्रह्मणस्समुपायांतिजगंतीमानिराघव ॥ स्थैर्यंयांत्यविवेकेनशाम्यंत्येवविवेकतः ॥ १ ॥ जगज्जालजलावर्त्तवत्तयोब्रह्मवारिधौ ॥ संख्यातुंकेनशक्यंतेभासांचत्रसरेणवः ॥ २ ॥ असम्यक्प्रेक्षणंविद्धिकारणंजगतःस्थितौ ॥ संसारशांतयेकांतकारणंसम्यगीक्षणम् ॥ ३ ॥ अयंहिपरदुष्पारोघोरःसंसारसागरः ॥ विनायुक्तिप्रयत्नाभ्यामस्माद्रामनतीर्यते ॥ ४ ॥ यस्यायंसागरःपूर्णोमोहांबुभरपूरितः ॥ अगाधमरणावर्त्तकल्लोलाकुलकोटरः ॥ ५ ॥ प्रभ्रमत्पुण्यडिंडीरोज्वलन्नरकवाडवः ॥ तृष्णाविलोललहरिर्मनोजलमतंगजः ॥ ६ ॥ आलीनजीवितसरिद्रोगरत्नसमुद्गकः ॥ क्षुब्धरोगोरगाकीर्णइंद्रियग्राहघर्घरः ॥ ७ ॥ पश्यास्मिन्प्रसृतारामवीचयश्चारुचंचलाः ॥ इमामुग्धांगनानाढ्यःशिखराकर्षणक्षमाः ॥ ८ ॥ छदश्रीपद्मरागाढ्यानेत्रनीलोत्पलाकुलाः ॥ दंतपुष्पफलाकीर्णाःस्मितफेनोपशोभिताः ॥ ९ ॥

त्याविर्भवंति ॥ अविवेकेनस्थैर्यंयांति ॥ अनेनानर्थजन्मस्थित्योर्निमित्तंदर्शितम् ॥ तन्निवृत्त्युपायमाह ॥ शाम्यंतीति ॥ १ ॥ भासांजालसूर्यमरीचीनांसंबंधिनस्त्रसरेणवश्चसंख्यातुंनशक्यंते ॥ २ ॥ हेकांतेतिरामसंबोधनम् ॥ ३ ॥ परंअत्यंतंदुर्गमंपारंयस्य ॥ ४ ॥ तमेवसंसारसागरंवर्णयति ॥ यस्येत्यादिना ॥ अयंवक्ष्यमाणविविधविशेषणविशिष्टःसंसारलक्षणःसागरोयस्यमोहांबुभरेणपूरितःसन्पूर्णस्तेनैवतन्निमग्नेनउत्तीर्यतेचेदितिसप्तमेनान्वयः ॥ अगाधैर्मरणलक्षणैरावर्त्तैःकल्लोलैर्बृहत्तरंगैश्चआकुलकोटरः ॥ ५ ॥ पुण्यान्येवडिंडीराःफेनायस्य ॥ वाडवोवडवानलः ॥ जलोद्भवोमतंगजसदृशोयादोभेदः ॥ ६ ॥ आसमंताल्लीनाउपक्षीणाजीवितसरितोयत्र ॥ इंद्रियग्राहैर्घर्घरःकृतविक्षोभध्वनिः ॥ ७ ॥ तत्रस्त्रियोवीचित्वेनवर्णयति ॥ पश्येत्यादिना ॥ शिखरवद्धीराणामप्याकर्षणेक्षमाः ॥ ८ ॥ छदारदनच्छदास्तच्छ्रीभिःपद्मरागाढ्याः ॥ पुष्पफलैर्मुकुलैराकीर्णाः ॥ ९ ॥

कंठलक्षणैःकंबुभिःशंखैर्विभूषिताः ॥ १० ॥ ललाटलक्षणैर्मणिपट्टैःरत्नफलकैराढ्याः ॥ कटाक्षैर्लोलत्वाद्गहनादुरवगाहाः ॥ वर्णादेहकांतयएवकांचनवालुकायासाम्॥ ११॥ ॥ १२ ॥ १३॥ आक्रम्यतत्त्वदर्शनेनबाधित्वा ॥ अतएवतंप्रमेयब्रह्ममात्रंकृत्वागाहतेप्रविशतिप्रत्यक्त्वमपितद्भावंनयतीतियावत् ॥ १४ ॥ तदनुतत्त्वबोधानंतरम् ॥ एतस्मिन्ब्रह्मत्वमापन्नेजगति ॥ १५ ॥ भवान्भव्योधन्यः ॥ यतस्त्वयातेनभव्यत्वेनअधुनाअस्मिन्वयस्येव ॥ १६ ॥ गाहतेप्रविशतिब्रह्मेतिशेषः ॥ लोकोधिकारिजनः ॥ १७ ॥ पूर्वंभोगाउपेक्ष्याइतिशेषः ॥ यथागरुडेनामृताहरणात्पूर्वंपन्नगाउपेक्षिताःपश्चान्मातृशापमोचनानंतरंनिःशंकंभुज्यंतेतद्वत् ॥ १८ ॥ लोकेप्ययंराजकीयविभूत्युपभोगेन्यायःप्र

केशेंद्रनीलवलयाभ्रूविलासतरंगिताः ॥ नितंबपुलिनस्फीताःकंठकंबुविभूषिताः ॥ १० ॥ ललाटमणिपट्टाढ्याविलासग्राहसंकुलाः ॥ कटाक्षलोलगहनावर्णकांचनवालुकाः ॥ ११ ॥ एवंविलोललहरीभीमात्संसारसागरात् ॥ उत्तीर्यतेचेन्मग्नेनतत्परंपौरुषंभवेत् ॥ १२ ॥ सत्यांप्रज्ञामहानाविविवेकेसतिनाविके ॥ संसारसागरादस्माद्योनतीर्णोधिगस्तुतम् ॥ १३ ॥ अपारावारमाक्रम्यप्रमेयीकृत्यसर्वतः ॥ संसाराब्धिंगाहतेयःसएवपुरुषःस्मृतः ॥ १४ ॥ विचार्यार्यैःसहालोक्यधियासंसारसागरम् ॥ एतस्मिंस्तदनुक्रीडाशोभतेरामनान्यथा ॥ १५ ॥ इहभव्योभवान्साधोविचारपरयाधिया ॥ त्वयाधुनैवतेनायंसंसारःप्रविचार्यते ॥ १६ ॥ भवानिवविचार्यादौसंसारमतिकांतया ॥ मत्यायोगाहतेलोकोनेहासौपरिमज्जति ॥ १७ ॥ पूर्वंधियाविचार्यैतेभोगाभोगिभयप्रदाः ॥ भोक्तव्याश्चरमंरामगरुडेनेवपन्नगाः ॥ १८ ॥ विचार्यतत्त्वमालोक्यसेव्यंतेयाविभूतयः ॥ ताउदर्कोदयाजंतोःशेषादुःखायकेवलम् ॥ १९ ॥ बलंबुद्धिश्चतेजश्चदृष्टतत्त्वस्यवर्द्धते ॥ सवसंतस्यवृक्षस्यसौंदर्याद्यागुणाइव ॥ २० ॥ घनरसायनपूर्णसुशीतयाविमलयासमयासततंश्रिया ॥ शिशिररश्मिरिवातिविराजसेविदितवेद्यसुखंरघुनंदन ॥ २१ ॥ ॥ इ० वा० वा० दे० मो० उपशमप्रकरणेसंसारसागरसाम्यप्रतिपादनंनामषट्सप्ततितमःसर्गः ॥ ७६ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ समासेनमुनेभूयोदृष्टतत्त्वचमत्कृतेः ॥ कथयोदारवृत्तांतंकस्तेवचसितृप्यति ॥ १ ॥

सिद्धइत्याह ॥ विचार्यैति ॥ तच्चंराजप्रसादानुग्रहादिरहस्यम् ॥ १९ ॥ तत्त्वबोधोत्तरमेवभोगजरणोपपादकविशेषणसंपत्तिर्नपूर्वमितिदर्शयति ॥ बलमिति ॥ २० ॥ रामस्यभोगजरणासामर्थ्यशंकावारणायतत्त्वबोधसंपत्तिंदर्शयति ॥ घनेति ॥ हेरघुनंदनत्वंविदितवेद्यतयाहेतुनाइदानींघनेनरसायनेनआनंदामृतेनपूर्णयासुशीतयानिरस्तत्रिविधतापयाश्रियाशिशिररश्मिःपूर्णचंद्रइवअतिविराजसे ॥ चंद्रपक्षेसमयाअभितःपूर्णमंडलत्वादवक्रया ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेषट्सप्ततितमःसर्गः ॥ ७६ ॥ ॥ ७ ॥ ॥ धार्यामंदारमालेवविबुधैःशिरसोरसा ॥ जीवन्मुक्तगुणैर्मालावसिष्ठेनात्रगुंफ्यते ॥ १ ॥ समासेनतत्रतत्रोक्तानामेकत्रसंग्रहेण ॥ उदारंवृत्तांतंचरित्रंलक्षणभूतान्गुणानित्येवंयावत् ॥ १ ॥

इदंसंग्रहरूपम् ॥ २ ॥ व्यवहारदृशासुप्तवत्तमोमात्रम् ॥ परमार्थदृशातुबाधितानुवृत्तिमात्रत्वादसद्रूपमिव ॥ ३ ॥ ४ ॥ आदत्तंप्रथमंचक्षुरादिनाउपात्तंपश्चात्पाणिनागृहीतमपिधनवस्त्रालंकारादिधियानोपादत्ते ॥ आदिकर्मणिनिष्ठा ॥ अतएवतादेशानिष्टिः ॥ ५ ॥ जनतायाःक्रमंव्यवहारंअसंगोदासीनात्मसन्निधिमात्रप्रवृत्तत्वात्काष्ठादिप्रतिमासंचारसदृशइतिपश्यन् ॥ ६ ॥ नतिष्ठतिनआस्थांकरोति ॥ ७ ॥ व्यवहारविषयेसुप्तप्रायोपिस्वात्मनिप्रबुद्धोभवति ॥ यानिशासर्वभूतानांतस्यांजागर्त्तिसंयमीतिभगवद्वचनम् ॥ व्यवहारेप्रबुद्धःकुशलतमोपिसुप्तवानेवास्तेनतत्कौशलफलेनरज्यतइत्यर्थः ॥ ८ ॥ अतएवतस्यसदैवसमास्थितिरित्याह ॥ अंतरिति ॥ ९ ॥ स्वकर्मततद्देहवर्णाश्रमोचितं

श्रीवसिष्ठउवाच॥ ॥जीवन्मुक्तस्यबहुधाकथितंलक्षणंमया॥ भूयोपित्वंमहाबाहोकथ्यमानमिदंशृणु॥२॥सुषुप्तवदिदंनित्यंपश्यत्यपगतैषणः॥ असद्रूपमिवासक्तंसर्वत्राखिलमात्मवान् ॥ ३ ॥ कैवल्यमिवसंप्राप्तःपरिसुप्तमनाइव॥ घूर्णमानइवानंदीतिष्ठत्यधिगतात्मदृक् ॥ ४ ॥ नादत्तमप्युपादत्तेगृहीतमपिपाणिना॥ अंतर्मुखतयोदात्तरूपयासमयाधिया॥ ५॥ यंत्रपुत्रकसंचारइतीमंजनताक्रमम्॥ अंतःसंलीनयादृष्ट्यापश्यन्हसतिशांतधीः॥ ६ ॥ नापेक्षतेभविष्यंचवर्त्तमानेनतिष्ठति॥ नसंस्मरत्यतीतंचसर्वमेवकरोतिच ॥ ७ ॥ सुप्तःप्रबुद्धोभवतिप्रबुद्धोपिचसुप्तवान्॥ सर्वंकर्मकरोत्यंतर्नकरोतिचकिंचन ॥ ८ ॥ अंतःसर्वंपरित्यागीनित्यमंतरनेषणः॥ कुर्वन्नपिबहिःकार्यंसममेवावतिष्ठते॥ ९ ॥ बहिःप्रकृतसर्वेहोयथाप्राप्तक्रियोन्मुखः॥ स्वकर्मक्रमसंप्राप्तबंधुकार्यानुवृत्तिमान्॥ १०॥ समग्रसुखभोगात्मासर्वाशास्विवसंस्थितः॥ करोत्यखिलकर्माणित्यक्तकर्तृत्वविभ्रमः ॥ ११ ॥ उदासीनवदासीनःप्रकृतःक्रमकर्मसु॥ नाभिवांछतिनद्वेष्टिनशोचतिनहृष्यति॥ १२॥ अनुबंधपरेजंतावसंसक्तेनचेतसा॥ भक्तेभक्तसमाचारःशठेशठइवस्थितः॥ १३ ॥ बालोबालेपुवृद्धेपुवृद्धोधीरेपुधैर्यवान्॥ युवायौवनवृत्तेपुदुःखितेष्वनुदुःखितः॥१४॥प्रवृत्तवाक्पुण्यकथोदैन्याद्व्यपगताशयः॥ धीरधीरुदितानंदःपेशलःपुण्यकीर्त्तनः॥ १५॥ प्राज्ञःप्रसन्नमधुरःपूर्णःस्वप्रतिभोदये॥ निरस्तखेददौर्गत्यःसर्वस्मिन्स्निग्धबांधवः॥ १६ ॥उदारचरिताकारःसमःसौम्यसुखोदधिः॥ सुस्निग्धःशीतलस्पर्शःपूर्णचंद्रइवोदितः॥ १७॥

कर्मपितृपितामहादिक्रमसंप्राप्तंराज्यादिबंधुकार्याणिदानमानादीनिचतन्मात्रानुवृत्तिमान् ॥ १० ॥ समस्ताःसुखभोगाआत्मैवयस्यसमस्तानांसुखभोगानांस्वयमात्मेतिवा ॥ अतएवाज्ञदृशाभोगकालेसर्वविषयाशासुसंस्थितआस्थावानिवभातिनाज्ञवद्भोक्तृत्वाभिमानेनेत्यर्थः ॥११॥ कर्मसुप्राप्तमिष्टानिष्टफलमितिशेषः ॥ १२ ॥ अनुबंधआनुकूल्यप्रातिकूल्याचरणंतत्परे ॥ १३ ॥ १४ ॥ पूर्वोक्तबालादिसमवृत्तेयोविशेषस्तमाह ॥ प्रवृत्तेति ॥ प्रवृत्तावाग्यस्यतथाविधःसन्पुण्याःकथाःकथयतिनबालादिवदृथाप्रलापीत्यर्थः ॥ एवमन्यदप्यूह्यम् ॥ पुण्यानिकीर्त्तनानिचरित्रवर्णनानिलोकेयस्य ॥ १५ ॥ सर्वस्मिन्जने ॥ १६ ॥ शीतलःसर्वतापहारीस्पर्शःसंगोयस्य ॥ १७ ॥

1192

नदुष्कृतेरितिनिषिद्धाचरणपरिहारार्थम् ॥ अतएवभोगानामनिषिद्धानाम् ॥१८॥ अवश्यकार्याणांऐहिकामुष्मिकफलकारणानांकर्मणामारंभैः ॥ निष्कृततयाभावेक्तः ॥ निःक्रियतयेतिवापाठः॥दिवास्वर्गेण ॥१९॥ बंधानांसांसारिकसुखानांविमोक्षाणांसर्वदुःखतत्कारणनिवृत्तीनांचमध्येनकचित्कृपणंकार्पण्ययुक्तंमनोभवतीत्यर्थः ॥२०॥ संदेहलक्षणाजालिकापंजराणि तथाचसतिमनसिकार्पण्यसंभावनास्यात्तदेवतस्यनास्तीत्यर्थः ॥ २१ ॥ समरसंब्रह्मीभूतम् ॥ २२ ॥ मनसोभावेकथंकायचेष्टाद्युपपत्तिस्तत्राह ॥ मंजूषायामिति ॥ दोलासुखशय्यायामित्यर्थः ॥ तस्यहिस्वानंदाविर्भावोल्लासादेवांगचलनंतद्यथामहाराजोवामहाब्राह्मणोवामहाकुमारोवाअतिघ्नीमानंदस्यगत्वाशयीतेतिश्रु

नतस्यसुकृतेनार्थोनभोगैर्नचकर्मभिः॥ नदुष्कृतैर्नभोगानांसंत्यागेननबंधुभिः॥ १८ ॥ नकार्यकारणारंभैर्ननिष्कृततयातथा॥ नबंधेननमोक्षेणनपातालेननोदिवा॥ १९ ॥ यथावस्तुयथादृष्टंजगदेकमयात्मकम्॥ तदाबंधविमोक्षाणांनकचित्कृपणंमनः॥ २० ॥ सम्यग्ज्ञानाग्निनायस्यदग्धाःसंदेहजालिकाः॥ निःशंकमलमुड्डीनस्तस्यचित्तविहंगमः॥ २१ ॥ यस्यभ्रांतिविनिर्मुक्तंमनःसमरसंस्थितम्॥ नास्तमेतिनचोदेतिव्योमवत्सर्वदृष्टिषु॥ २२॥ मंजूषायांनिषण्णस्ययथाबालस्यचेष्टते॥ अंगावल्यनुसंधानवर्जितंयस्यवैतथा॥ २३॥ घूर्णन्क्षीवइवानंदीमंदीभूतपुनर्भवः॥ अनुपादेयबुद्ध्यातुनस्मरत्यकृतंकृतम्॥ २४ ॥ सर्वंसर्वप्रकारेणगृह्णातिचजहातिच॥ अनुपादेयसर्वार्थोबालवच्चविचेष्टते॥ २५॥ सतिष्ठन्नपिकार्येपुदेशकालक्रियाक्रमैः॥ नकार्यसुखदुःखाभ्यांमनागपिहिगृह्यते॥ २६॥ बहिःप्रकृतसर्वार्थोप्यंतःपुनरनीहया॥ नसत्तांयोजयत्यर्थेनफलान्यनुधावति॥ २७॥ नोपेक्षतेदुःखदशांनसुखाशामपेक्षते॥ कार्योदयेनैतिमुदंकार्यनाशेनखिद्यते॥ २८॥ अपिशीतरुचावर्केसुतप्तेपींदुमंडले॥ अप्यधःप्रसरत्यग्नौविस्मयोस्यनजायते ॥ २९॥ चिदात्मनइमाइत्थंप्रस्फुरंतीहशक्तयः॥ इत्यस्याश्चर्यजालेषुनाभ्युदेतिकुतूहलम्॥ ३०॥ नदयादैन्यमादत्तेनक्रौर्यमनुधावति ॥ नलज्जामनुसंधत्तेनालज्जत्वंचगच्छति॥ ३१ ॥ नकदाचनदीनात्मानोद्धतात्माकदाचन॥ नप्रमत्तोनखिन्नात्मानोद्विग्नोनचहर्षवान् ॥ ३२ ॥ नास्यचेतसिसुस्फारेशरदंबरनिर्मले॥ कोपादयःप्रजायंतेनभसीवनवांकुराः॥ ३३ ॥

त्यादिप्रसिद्धमीश्वरनृत्यवत् ॥ २३ ॥ अनुपादेयबुद्ध्यानियमेनकृताकृतस्मारिकायाःक्रियाफलोपादेयताबुद्धेरभावादित्यर्थः ॥ २४ ॥ सर्वमित्यादिबालपक्षेपियोज्यम् ॥२५॥ कार्यप्रयुक्ताभ्यांसुखदुःखाभ्याम् ॥ २६ ॥ अर्थेबाह्यार्थेसत्तांसत्यताबुद्ध्याआस्थाम् ॥ अतएवनफलान्यनुधावति ॥ २७ ॥ उपसमीपेसन्निहितामपिदुःखदशांनेक्षते ॥२८॥ अर्केशीतरुचौजातेपि इंदुमंडलेसुतप्तेसंपन्नेपि अग्नौअधःअधोमुखेप्रसरतिज्वलत्यपि अस्यविस्मयआश्चर्यबुद्धिर्नजायते ॥ २९ ॥ कुतोनजायतेतत्राह ॥ चिदात्मनइति ॥ शक्तयोमायाः ॥ ३० ॥ लज्जाअपमानभैक्षचर्यादौ ॥ अकार्येष्वलज्जत्वंनगच्छति ॥ ३१ ॥ ३२ ॥ ३३ ॥

---

१ प्रतपतीत्यपिपाठः

अनारतमविरतंपतंतिम्रियंतेजातान्युत्पन्नानिचभूतानिप्राणिनोयस्याम् ॥ अथचैनंनित्यजातंनित्यंवामन्यसेमृतमितिभगवद्दर्शितन्यायादितिभावः ॥ किंचत्तत्रयंदेशकालतःप्रकारतःस्वरूपतश्चअसंभावितत्वलाभाय ॥३४॥ उक्तंदृष्टांतेनसमर्थयति॥फेनेति ॥ फेनानांतरंगप्रयुक्तेआजवंजवीभावेभ्रमणे॥इदंस्थैर्यंक्वकुतोवा ॥ अतःसुखदुःखयोःकःप्रसंगः ॥३५॥ नविशीर्यंतिननश्यंतिनखिद्यंतिचनोद्यंतिनजायंतेनदृष्यंतिच॥प्रातिभासिकस्यजगतोदृष्टिरेवसृष्टिस्तत्रक्षमाःअहमेवात्मनिजगन्मायांसृजामीतिपश्यंतोजीवन्मुक्ताः ॥ ३६ ॥ किंचप्रतिक्षणपरिणामिनोहिसर्वेभावाइतिन्यायात्प्रतिक्षणंभिद्यमानेपुजगद्धर्मेष्वनुवर्त्तमानःस्थायीसदात्माात्वमदृवस्त्वात्मन्येवदृश्यामृषड्भावविकारान्प्रतिक्षणंकल्पयन्पश्यतीत्येवंतेपांनिश्चयेकुतोहर्षादिप्रसक्तिरित्याशयेनाह ॥ निमेषमित्यादिना ॥ वीप्साद्योतीप्रतिशब्दःकर्मप्रवचनीयः ॥ द्विर्वचनाव्ययीभावयोरन्यतरस्यावश्यंप्राप्तेस्तदकरणंछांदसम् ॥ ३७ ॥ क्रमणंक्रमःप्रसंगः ॥ ३८ ॥ किंचशुभकर्मफलेपुप्रसिद्धेपुसत्सुतद्विरोधिनःपुत्रवियोगदुःखादयःपदंलभेरन्जीवन्मुक्तानांशुभस्यैवाभावादुभयाप्रसक्तिरि

अनारतपतज्जातभूतायांजगतःस्थितौ॥ क्वकथंकिलकासौस्यात्सुखिताऽसुखिताथवा ॥३४॥ फेनाजवंजवीभावेजलेभूतक्रमेतथा॥ क्वकिलेदंकुतःकोतःप्रसंगःसुखदुःखयोः॥३५॥ भावाभावैरपर्यंतैरजस्रंजंतुसंभवैः॥ नविशीर्यंतिनोद्यंतिदृष्टिसृष्टिक्षमानराः॥३६॥ निमेषंप्रतियामिन्यांयथान्याःस्वप्नदृष्टयः॥ क्षणोत्पत्तिविनाशिन्यस्तथैतालोकदृष्टयः॥ ३७ ॥ अनारतसमुत्पत्तावनारतविनाशिनि॥ कः क्रमोदग्धसंसारेकारुण्यानंदयोरिह॥ ३८॥ शुभाभावात्सुखाभावेस्थितिंयातेविलक्षणाः ॥ कीदृश्यःकथमायाताःक्वाताःदुःखसंविदः॥ ३९ ॥ सुखसंवेदनांतोत्थास्ववीजंवितनोतिया॥ शांताःदुःखदशासेयंकथमंतर्हितेसुखे॥ ४० ॥ क्षीणाभ्यांसुखदुःखाभ्यांहेयोपादयोःक्षये॥ ईप्सितानीप्सितेक्वस्तोगलितेथशुभाशुभे॥ ४१ ॥ रम्यारम्यदृशोर्नाशाद्यातेभोगाभिवांछने॥ नैराश्यसंततंप्रौढंहिमवद्विगलेन्मनः॥ ४२ ॥ आमूलान्मनसिक्षीणेसंकल्पस्यकथाचका॥ तिलेष्विवातिदग्धेपुतैलस्यकलनाकुतः॥ ४३॥ भावेष्वभावघनभावनयामहात्मानिर्मुक्तसंकलनमंवरवत्स्थितेपु॥ चित्तंप्रतिस्वमुदितोविततैकरूपीज्ञस्तिष्ठतिस्वपितिजीवतिनित्यतृप्तः॥ ४४ ॥ ॥इ०वा० वा०दे० मो०उपशमप्रकरणेजीवन्मुक्तस्वरूपवर्णनंनामसप्तसप्ततितमःसर्गः॥ ७७॥ ॥ ७॥ ॥ ७॥

त्याह ॥ शुभाभावादिति ॥ विलक्षणाःशुभफलेभ्योविलक्षणाः ॥ किंचत्तानिपूर्ववत् ॥ ३९ ॥ यादुःखदशासुखसंवेदनस्यसुखानुभवस्यअंतेउत्थालब्धसत्ताकासतीस्ववीजंत्यकार्यशोकमोहादिवितनोतिविस्तारयतिसेयंदुःखदशाशुभकर्माभावाच्छांतेसुखेस्वयमपिशांतैवेतिर्निर्हेतुकाकथंसंभवेदितिपूर्वोक्तार्थस्यैवस्फुटीकरणम् ॥ ४० ॥ ४१ ॥ किंतस्तत्राह ॥ रम्येति ॥ यातेअपगतेसति ॥ नैराश्येप्रौढेनिरूढेसति ॥ ४२ ॥ अस्तुमनोनाशस्ततोपिकिंतत्राह ॥ आमूलादिति ॥ ४३ ॥ अभावघनभावनयास्वव्यतिरिक्तंनास्तेवेतिदृढनिश्चयेनसर्वेपुभावेपुदृश्यपदार्थेपुनिर्मुक्तसंकलनंनिःसंकल्पविकल्पंयथास्यात्तथाअंवरवत्सन्मात्रत्वभावेनस्थितेपुसत्सुपरिच्छेदहेत्वभावाद्विततैकरूपीमहात्माज्ञोनित्यतृप्तःसन्स्वेनैवनिरतिशयानंदात्मनामुदितआनंदीसन्जाग्रत्स्वप्नयोर्यथाप्राप्तार्थालोचनमात्ररूपंचित्तंप्रतितिष्ठतितल्लयेसुषुप्तौस्वपितियावत्प्रारब्धक्षयंचजीवतीत्यर्थः ॥ ४४ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेसप्तसप्ततितमस्सर्गः ॥ ७७ ॥

चित्तस्पंदाज्जगद्भ्रांतिश्चित्तस्पंदश्चयादृशः ॥ योगश्चतन्निरोधार्थःसम्यगत्रनिगद्यते ॥ १ ॥ अलातस्यज्वलदुल्मुकस्यपरिस्पंदाद्भ्रमणाद्यथाग्निमयंचक्रंभ्रांत्यायथादृश्यतेत थेत्यर्थः ॥ १ ॥ वर्त्तुलनाभ्याकारआवर्त्तः ॥ २ ॥ ईक्षणयोर्नेत्रयोरातपसाम्मुख्येनस्पंदात्पिच्छाकारमन्यतःस्पंदान्मौक्तिकमंडलमिवदृश्यते ॥ ३ ॥ येनस्वभावेनप्रस्पंदनेये नोपायेननस्पंदते ॥ ४ ॥ स्पंदस्वभावश्चित्तात्पृथक्कृत्यवक्तुमशक्यइतिदृष्टांतैरेवतंदर्शयति ॥ यथेत्यादिना ॥ तिलश्चतैललवश्चतौ ॥ तथाशब्दःसमुच्चये ॥ ५ ॥ अत्राप्याद्य स्तथाशब्दःसमुच्चयेद्वितीयोदार्ष्टांतिकोपबंधार्थः ॥ सर्वत्रगुणगुण्यादावविचाराद्भेदसहिष्णुरभेदएवसंश्लेषः॥तत्रविचारेभेदांशोमिथ्याअभेदांशोवास्तवइतिदर्शयति ॥ अभिन्ना विति ॥ ६ ॥ अभेदांशएवकल्पितःकिंनस्यादित्याशंकांपरिहरन्येननस्पंदतेतथेतिप्रश्नांशस्योत्तरमाह ॥ चित्तेति ॥ यःस्वयंकारणात्मागुणोगुणीचेतिविकल्पितस्तदात्मनास्थि

श्रीवसिष्ठउवाच ॥ ॥ यथालातपरिस्पंदादग्निचक्रंप्रदृश्यते ॥ असदेवसदाभासंचित्तस्पंदात्तथाजगत् ॥ १ ॥ यथाजलपरिस्पंदाद्भ्राति रिक्तइवांभसः ॥ दृश्यतेवर्त्तुलावर्त्तश्चित्तस्पंदात्तथाजगत् ॥ २ ॥ यथाव्योम्नीक्षणस्पंदात्पिच्छमौक्तिकमंडलम् ॥ दृश्यतेसदिवासत्यंचित्त स्पंदात्तथाजगत् ॥ ३ ॥ ॥ श्रीरामउवाच ॥ ॥ येनप्रस्पंदतेचित्तंयेननस्पंदतेतथा ॥ तद्ब्रह्मन्ब्रूहिमेयेनचिकित्सेयंतदेवहि ॥ ४ ॥ ॥ श्रीव सिष्ठउवाच ॥ ॥ यथाशौक्ल्यहिमेरामतिलतैललवौयथा ॥ यथाकुसुमसौगंध्येतथौष्ण्यदहनौयथा ॥ ५ ॥ तथाराघवसंश्लिष्टौचित्तस्पं दौतथैवहि ॥ अभिन्नौकेवलंमिथ्याभेदःकल्पितएतयोः ॥ ६ ॥ चित्तचित्तपरिस्पंदपक्षयोरेकसंक्षये ॥ स्वयंगुणगुणीस्थित्वानश्यतोद्वौन संशयः ॥ ७ ॥ द्वौक्रमौचित्तनाशस्ययोगोज्ञानंचराघव ॥ योगस्तद्वृत्तिरोधोहिज्ञानंसम्यगवेक्षणम् ॥ ८ ॥ ॥ श्रीरामउवाच ॥ ॥ कदाकी दृक्कयायुक्त्याप्राणापाननिबंधया ॥ योगनाम्न्यामनःशांतिमेत्यनंतसुखप्रदाम् ॥ ९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ देहेस्मिन्देहनाडीपु वातःस्फुरतियोभितः ॥ स्पंदेष्विवभुवोवारिसप्राणइतिकीर्त्तितः ॥ १० ॥ तस्यस्पंदवशादंतःक्रियावैचित्र्यमीयुषः ॥ अपानादीनिनामा निकल्पितानिकृतात्मभिः ॥ ११ ॥

त्यैवद्वावपिगुणगुणिविकल्पौनश्यतोननिरन्वयेनेत्यर्थः ॥ तथाचैककारणात्मनास्थित्यैवगुणगुणिभेद नाशदर्शनाद्भेदांशएवकल्पितोनाभेदांशइत्येतन्मनःस्पंदयोरेकतरनाशाधीनात्यंतिकोभयनिवृत्त्यैवचित्तंनस्पंदतेनतुजीवतिमनसितत्स्पंदोवारयितुंशक्यइत्येतच्चसिद्धमितिभावः ॥ ७ ॥ अतएवस्पंदनिरोधेनोभयनाशार्थंज्ञानक्रमश्चशास्त्रेदर्शितइत्याह॥द्वौक्रमाविति ॥ ८ ॥ तत्राद्यंक्रमंप्रथमंजिज्ञासमानोरामःपृच्छति ॥ कदेति ॥ प्राणापानयोर्निबंधनंप्रा णापाननिबंधा ॥ भावेगुरोश्चहलइत्यप्रत्ययः ॥ प्राणापाननिरोधलक्षणयेत्यर्थः ॥ ९ ॥ आसर्गसमाप्तेरस्यैवप्रश्नस्योत्तरंवर्णयिष्यंश्चित्तस्पंदस्यप्राणस्पंदाधीनतांवक्तुंप्रथमं प्राणस्वरूपमाह ॥ देहेस्मिन्नित्यादिना ॥ देहनाडीपुद्वासप्ततिर्द्वासप्ततिःप्रतिशाखंनाडीसहस्राणिभवंत्यासुव्यानश्चरतीतिश्रुतेरित्यर्थः ॥ यथाभुवःस्पंदेपुस्पंदनमार्गभूतेपुविवरेपु वारिजलंसर्वतोव्याप्यस्फुरतितद्वत ॥ १० ॥ ननुप्राणोवहिरेवयातिदेहेत्वपानादयोन्येवायवःसंचरंतितत्राह ॥ तस्येति ॥ तेप्राणस्यैववृत्तिभेदानान्येइत्यर्थः ॥ ११ ॥

१ गुणोगुणीइत्यपेक्षितमितिभाति

वारिदृष्टांतोपपत्तयेरसइति विशेषणम् ॥ आपोमयःप्राणइति एतमेवांगिरसंमन्यंतेप्राणोवाअंगानांरसइतिचश्रुतेरितिभावः ॥ चित्तस्यकोशवत्सर्वतःसंश्लेषेणाभिन्नतामिवगत आधारः ॥ प्राणबंधनंहिसोम्यमनः तस्यपुरुषविधतामन्वयंपुरुषविधइत्यादिश्रुतेरितिभावः ॥ १२ ॥ अतएवतत्स्पंदस्यचित्तस्पंदहेतुतेत्याह ॥ अंतरिति ॥ संकल्पग्रहणंवृत्ति मात्रोपलक्षणम् ॥ १३ ॥ चितःस्पंदश्चिदाभासव्याप्तवृत्तिभेदः ॥ संविदस्तत्तद्विषयाकारप्रथाः ॥ १४ ॥ प्राणपरिस्पंदंप्राणाधीनपरिस्पंदम् ॥ आगमभूषणाः प्राणबंधनंहि सोम्यमनः प्राणाद्वाएषउदेतिप्राणेस्तमेतिप्राणंतर्हिवागप्येतिप्राणंचक्षुःप्राणंश्रोत्रमित्यादिश्रुतिरहस्यज्ञाः ॥ १५ ॥ अस्त्वेवंततःकिंतत्राह ॥ मनइति ॥ १६ ॥ देहलक्षणेस्वगेहे हृदयादिस्थानेषुद्वासप्ततिसहस्रनाडीभेदेषुचअनिशंचरतांगगनेषुमुखनासिकादिच्छिद्रेषुबाह्याकाशेचगमनशीलानाम् ॥ १७ ॥ प्राणस्पंदनिरोधेनिरालंबनसालंबनादिराजयो

आमोदस्ययथापुष्पंशौक्ल्यस्यतुहिनंयथा ॥ तथैपरसआधारश्चित्तस्याभिन्नतांगतः ॥ १२ ॥ अंतःप्राणपरिस्पंदात्संकल्पकलनोन्मुखी ॥ संवित्संजायतेयैषातच्चित्तंविद्धिराघव ॥ १३ ॥ प्राणस्पंदाच्चितःस्पंदस्तत्स्पंदादेवसंविदः ॥ चक्रावर्त्तविधायिन्योजलस्पंदादिवोर्मयः ॥ १४ ॥ चित्तंप्राणपरिस्पंदमाहुरागमभूषणाः ॥ तस्मिन्संरोधितेनूनमुपशांतंभवेन्मनः ॥ १५ ॥ मनःस्पंदोपशांत्यायंसंसारःप्रविलीयते ॥ सूर्यालोकपरिस्पंदशांतौव्यवहृतिर्यथा ॥ १६ ॥ ॥श्रीरामउवाच॥ ॥ अनिशंचरतांदेहगेहेगगनगामिनाम् ॥ प्राणादीनांपरिस्पंदोवायूनांरोध्यतेकथम् ॥ १७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥ शास्त्रसज्जनसंपर्कवैराग्याभ्यासयोगतः ॥ अनास्थायांकृतास्थायांपूर्वंसंसारवृत्तिषु ॥ १८ ॥ यथाभिवांछितध्यानाच्चिरमेकतयोदितात् ॥ एकतत्त्वघनाभ्यासात्प्राणस्पंदोनिरुध्यते ॥ १९ ॥ पूरकादिनिजायामादृढाभ्यासादखेदजात् ॥ एकांतध्यानसंयोगात्प्राणस्पंदोनिरुध्यते ॥ २० ॥ ओंकारोच्चारणप्रांतशब्दतत्त्वानुभावनात् ॥ सुषुप्तेसंविदोजाते प्राणस्पंदोनिरुध्यते ॥ २१ ॥ रेचकेनूनमभ्यस्तेप्राणेस्फारेखमागते ॥ नस्पृशत्यंगरंध्राणिप्राणस्पंदोनिरुध्यते ॥ २२ ॥ पूरकेनूनमभ्यस्ते पूराद्रिरिघनस्थिते ॥ प्राणेप्रशांतसंचारेप्राणस्पंदोनिरुध्यते ॥ २३ ॥

गोपायान्वक्तुमुपक्रमते ॥ शास्त्रेति ॥ पूर्वाभ्यस्तासुसंसारवृत्तिषुसांसारिकव्यवहारेषुआत्यंतिकपरित्यागाययमनियमशमदमादिविरोध्यभ्यासाच्चात्यंतमनास्थायांत्वदिकृतप्रति ष्ठायांसत्याम् ॥ १८ ॥ प्रथमंस्थूलेशिखरेचंद्रबिंबेमणिदेवतामूर्त्यादौवायत्रैवमनोस्यरमनेतत्रैवनिरोधोभ्यसनीयइत्याह ॥ यथाभिवांछितेति ॥ एकतयाएकाग्रतयाउदितात् एकाग्रतालक्षणंपरिणामंप्राप्येत्यर्थः ॥ तदनंतरंयत्कार्यंतदाह ॥ एकतत्त्वेति ॥ १९ ॥ पूरककुंभकरेचकक्रमेणप्राणनिरोधसहिताद्वादुर्दांतचित्तस्पंदनिरोधःकार्यइत्याह ॥ पूरके ति ॥ पूरकादिनानिजस्यस्वस्यप्राणस्यायामात् ॥ २० ॥ दीर्घोच्चारितप्रणवतुर्यमात्रालंबनयोगाद्वासंविदोबाह्यार्थसंवेदनस्यसुषुप्तेआत्यंतिकोपरमेजातेसति ॥ २१ ॥ इदानींरेच कपूरकयोरेकैकस्यापिश्वासप्रश्वासशिथिलीकरणेकालदैर्घ्याभिवर्द्धनसहितध्यानाभ्यासादपितन्निरोधइत्याह ॥ रेचकेइतिद्वाभ्याम् ॥ स्फारेविपुलीभूतेप्राणेछिन्नाभवत्क्रमा त्स्वंशून्यभावंबाह्याकाशंवाआगतेअंगरंध्राणिनासाविवराणिनस्पृशतिसति ॥ २२ ॥ अंतःपूरात्पूरणाद्गिरीघनामेघाइवयावत्पूर्त्तिमंदमुपचीयमानेस्थितेनिश्चलेसति ॥ २३ ॥

पूर्त्यनंतरंकुंभकेपूर्णकुंभवदनंतंकालंस्तंभितेप्राणेपरितिष्ठतिसति ॥ उक्तत्रिविधप्राणायामक्रमश्चपातंजलेशास्त्रेप्रपंचितः ॥ तस्मिन्सतिश्वासप्रश्वासयोर्गतिविच्छेदःप्राणायामः ॥ तस्मिन्प्रागुक्तेआसनजयेसतिबाह्यस्यवायोराचमनंश्वासःकौष्ठ्यस्यवायोर्निश्वारणंप्रश्वासःतयोर्गतिविच्छेदउभयाभावलक्षणःप्राणायामःकार्यइत्यर्थः ॥ सतुबाह्याभ्यंतरस्तंभवृत्तिर्देशकालसंख्याभिःपरिदृष्टोदीर्घसूक्ष्मः ॥ यत्रप्रश्वासपूर्वकोगतिनिरोधःसबाह्यः ॥ यत्रश्वासपूर्वकोगत्यभावःसआभ्यंतरः ॥ तृतीयःस्तंभवृत्तिर्यत्रोभयाभावःसकृत्प्रयत्नाद्भवति ॥ यथातप्तेन्यस्तमुपलेजलंसर्वतःसंकोचमापद्यतेतथाद्वयोर्युगपद्गत्यभावइति ॥ त्रयोप्येतेदेशपरिदृष्टाःबहिस्तूललवस्पंदादिनाअंतर्नाभ्यादिस्पंदादिनाच ॥ इयानस्यविषयोदेशइति ॥ कालेनपरिदृष्टाःक्षणानामियत्तावधारणेन॥ संख्याभिःपरिदृष्टाएतावत्संख्यश्वासप्रश्वासकालैःप्रथमोद्वितीयस्तृतीयउद्घोधितइति॥एवंमृदुरेवंमध्यएवंतीव्रइतिच ॥ सखल्वेवमभ्यस्तःप्राणायामःप्रविकस्वरतूलपिंडवन्मंदाकृष्टबिसतंतुवद्वादैर्घ्यसौक्ष्म्यापन्नैःप्राणैर्दीर्घःसूक्ष्मश्चभवतीत्यर्थः ॥ अभ्यासात्स्तंभितेप्राणेइन्यनेनचतस्परिपाकलभ्यश्चतुर्थोपिप्रकारःसूचितः ॥ सोपिपतंजलिनादर्शितः ॥ बाह्याभ्यंतरविषयाक्षेपीचतुर्थइति ॥ पूर्वोक्तोभयजयात्तदाक्षेपपूर्वकःप्राणगत्यभावःस्थिरश्चतुर्थःप्राणायाम

कुंभकेकुंभवत्कालमनंतंपरितिष्ठति ॥ अभ्यासात्स्तंभितेप्राणेप्राणस्पंदोनिरुद्ध्यते ॥२४॥ तालुमूलगतांयत्नाज्जिह्वयाक्रम्यघंटिकाम् ॥ ऊर्ध्वरंध्रगतेप्राणेप्राणस्पंदोनिरुद्ध्यते ॥ २५ ॥ समस्तकलनोन्मुक्तेनकिंचिन्नामसूक्ष्मखे ॥ ध्यानात्संविदिलीनायांप्राणस्पंदोनिरुद्ध्यते ॥ २६ ॥ द्वादशांगुलपर्यंतेनासाग्रेविमलांबरे ॥ संविद्दृशिप्रशाम्यंत्यांप्राणस्पंदोनिरुद्ध्यते ॥ २७ ॥

इत्यर्थः ॥ प्राणायामप्रतिष्ठाफलमपिपतंजलिनोक्तम् ॥ ततःक्षीयतेप्रकाशावरणम् ॥ धारणासुचयोग्यतामनसइति ॥ तपोनपरंप्राणायामात्ततोविशुद्धिर्मलानांदीप्तिश्चज्ञानस्येतिभाष्यम् ॥ २४ ॥ घंटिकांव्यात्तास्यस्यजिह्वामूलेस्तनवल्लंबमानतयादृश्यमानामिंद्रयोनिम् ॥ अंतरेणतालुके यएषस्तनइवावलंबतेसेंद्रयोनिरितिश्रुतेः ॥ तांपरिवृत्तयावर्द्धनाभ्यासादिप्रयत्नादंतःप्राणसंचारमार्गेमूर्द्धरंध्रेप्रवेश्यमानयाजिह्वयाआक्रम्यनिष्पीड्याधःकृत्यप्राणेऊर्ध्वरंध्रेब्रह्मरंध्रेगतेप्रवेश्यधारितेसतीत्यर्थः ॥ अनेनलंबिकायोगसमुच्चितानभोधारणादर्शिता ॥ तत्प्रकारश्चभगवतास्कंदेनोक्तः ॥ रसनांतालुविवरेनिधायोर्ध्वमुखोमृतम् ॥ धयन्निर्जरतांगच्छेदाषण्मासान्नसंशयः ॥ ऊर्ध्वजिह्वःस्थिरोभूत्वासोमपानंकरोतियः ॥ मासार्द्धेननसंदेहोमृत्युंजयतियोगवित् ॥ आकाशंचमरीचिवारिसदृशंयद्ब्रह्मरंध्रस्थितंयन्नाथेनसदाशिवेनसहितंशांतंहकाराक्षरम् ॥ प्राणंतत्रविलीयपंचघटिकंचित्तान्वितंधारयेदेषामोक्षकवाटपाटनपटुःप्रोक्तानभोधारणेति ॥ २५ ॥ समस्ताःकलनाविकारास्तदुन्मुक्तेऽतएवनकिंचिन्नामनिसूक्ष्मेहार्दाकाशेसंविदिअंतर्बाह्यसंवेदनवृत्तिमात्रेनिर्विकल्पसमाधिनालीनायांसत्याम ॥ २६ ॥ नासाग्रोपलक्षितद्वादशांगुलपरिमितबाह्याकाशेचक्षुर्मनसोर्निरोधाद्वातन्निरोधइत्याह ॥ द्वादशेति ॥ २७ ॥

लंबिकायोगाऽसमुच्चिताद्वाउपायांतराभ्यस्ताद्वागुक्तनभोधारणात्तन्निरोधसिद्धिरित्याह ॥ अभ्यासादिति ॥ द्वादशांतंब्रह्मरंध्रस्थानंतद्देप्राणेगलितप्रायेसंवृत्तेसति ॥ २८ ॥ एवंखेचरीमुद्रापिप्राणस्पंदनिरोधहेतुरित्याह ॥ भ्रूमध्येइति ॥ तारकयोश्चक्षुःकनीनिकयोरालोकस्यतेजसश्चक्षुरिंद्रियस्येतियावत् ॥ चिरनिरोधाच्छांतौउपरमेसतितथाजिह्वामेप्राणेचप्रागुक्तरीत्याकपालकुहरप्रवेशादंतंद्वादशांतमुपागतेसतिकेतनेभ्रूमध्येअविमुक्तस्थानेयएषोक्षरोनंतइतिजाबालश्रुत्यादिप्रसिद्धेचेतनेचिन्मात्रस्वभावेपरमेश्वरेआत्मतयाबुद्धेसतीत्यर्थः ॥ खेचरीमुद्रापिस्कंदेनोक्ता ॥ कपालकुहरेजिह्वाप्रविष्टाविपरीतगा ॥ भ्रुवोरंतर्गतादृष्टिर्मुद्राभवतिखेचरी ॥ नपीड्यतेसरोगेणनचलिप्यतेतकर्मणा ॥ बाध्यतेनसकालेनयोमुद्रांवेत्तिखेचरीमिति ॥ २९ ॥ गुरोरीश्वरस्यवाअनुग्रहात्काकतालीयन्यायेनझटित्येवोद्भूतेज्ञानेझटित्येवचित्तविकल्पोपशमाद्वातन्निरोधइत्याह ॥ झटित्येवेति

अभ्यासादूर्ध्वरंध्रेणतालूर्ध्वद्वादशांतगे ॥ प्राणेगलितसंवृत्तेप्राणस्पंदोनिरुध्यते॥ २८॥ भ्रूमध्येतारकालोकशांतावंतमुपागते॥ चेतनेकेतनेबुद्धेप्राणस्पंदोनिरुध्यते॥ २९॥ झटित्येवयदुद्भूतंज्ञानंतस्मिन्दृढाश्रिते॥ असंश्लिष्टविकल्पांशेप्राणस्पंदोनिरुध्यते॥ ३०॥ चिरंकालंहृतकांतव्योमसंवेदनान्मुने॥ अवासनान्मनोध्यानात्प्राणस्पंदोनिरुध्यते॥ ३१॥ ॥श्रीरामउवाच॥ ॥ब्रह्मन्जगतिभूतानां हृदयंतत्किमुच्यते॥ इदंसर्वंमहादर्शेयस्मिंस्तत्प्रतिबिंबति॥ ३२॥ ॥श्रीवसिष्ठउवाच॥ ॥साधोजगतिभूतानांहृदयंद्विविधंस्मृतम्॥ उपादेयंचहेयंचविभागोयंतयोःशृणु॥ ३३॥ इयत्तयापरिच्छिन्नेदेहेयद्वक्षसोंतरम्॥ हेयंतद्धृदयंविद्धितनावेकतटेस्थितम्॥ ३४॥ संविन्मात्रंतुहृदयमुपादेयंस्थितंस्मृतम्॥ तदंतरेचबाह्येचनचबाह्येनचांतरे॥ ३५॥ तत्तुप्रधानंहृदयंतत्रेदंसमवस्थितम्॥ तदादर्शःपदार्थानांतत्कोशःसर्वसंपदाम्॥ ३६॥ सर्वेषामेवजंतूनांसंविद्धृदयमुच्यते॥ नदेहावयवैकांशोजडजीर्णोपलोपमः॥ ३७॥ तस्मात्संविन्मयेशुद्धेहृदयेहृतवासनः॥ बलान्नियोजितेचित्तेप्राणस्पंदोनिरुध्यते॥ ३८॥ एभिःक्रमैस्तथान्यैश्चनानासंकल्पकल्पितैः॥ नानादेशिकवक्त्रस्थैःप्राणस्पंदोनिरुध्यते॥ ३९॥ अभ्यासेननिराबाधमेतास्तायोगयुक्तयः॥ उपायतामुपायांतिभव्यस्यभवभेदने॥ ४०॥ आभ्यासाद्दृढतांयातोवैराग्यपरिलांछितः॥ यथावासनमायामःप्राणानांसफलःस्मृतः॥ ४१॥

॥ ३० ॥ अथयदिदमस्मिन्ब्रह्मपुरेदहरंपुंडरीकंवेश्मदहरोस्मिन्नंतराकाशइत्यादिश्रुतिप्रसिद्धेदहराकाशेवाचिरंचित्तनिवेशात्तत्साक्षात्कारेतत्सिद्धिरित्याह ॥ चिरमिति ॥ तथाचोक्तंपातंजले ॥ हृदयेचित्तसंवित्स्वार्थसंयमात्पुरुषज्ञानमितिच ॥ ३१ ॥ हृदयशब्दस्यपुंडरीकाकारमांसविशेषेमनसिपरमात्मनिचप्रयोगदर्शनात्संदिहानस्यप्रश्नः ॥ प्रतिबिंबतिआदर्शेप्रतिबिंबइवस्फुरति ॥ ३२ ॥ तत्रमांसमनसोःपरिच्छिन्नत्वादैक्यमेवप्रकल्प्यद्वैधाविभागोबोध्यः ॥ ३३ ॥ ३४ ॥ ननुआत्मनिहृदयशब्दोहृदयमात्रस्थितिकत्वाद्गौणःकिंनस्यादित्याशंक्याह ॥ तदंतरेचेति ॥ ३५ ॥ अस्मिन्द्यावापृथिवीअंतरेवसमाहितेइतिश्रुतेरितिभावः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ सहसाहठयोगेप्रवृत्तिवारयितुमाह ॥ अभ्यासेनेति ॥ हठान्निरोधेतुरोगाद्याबाधास्यादेवेतिभावः ॥ ४० ॥ यथावासनंयदायायावासनाउद्भवंतितदातत्तन्निरोधायेत्यर्थः ॥ अथवामुमुक्षावासनायांमोक्षफलेनसफलोभोगवासनायांतुतत्तद्योगसिद्धिवैचित्र्यफलेनसफलइत्यर्थः ॥ ४१ ॥

अतएवतत्तत्सिद्धिफलभेदार्थंपातंजलशास्त्रेभ्रूमध्यादिस्थानभेदेनधारणाभेदादर्शितादृत्याशयेनाह ॥ भ्रूनासेति ॥ तालुसंस्थातालुसंस्थानंकंठाग्रादारभ्यद्वादशांगुलिमितप्रदेश कोटिःसीमाद्वादशांतः ॥ पुरुषभेदाद्बहुवचनम् ॥ यथाहपतंजलिः ॥ नाभिचक्रेकायव्यूहज्ञानम् कंठकूपेक्षुत्पिपासानिवृत्तिः कूर्मनाड्यांस्थैर्यम् कंठकूपादधःकूर्मपृष्ठवदुन्नतप्र देशेकूर्मनाडीप्रसिद्धा मूर्द्धज्योतिषिसिद्धदर्शनमित्यादि ॥ शिरःकपालच्छिद्रेभास्वरज्योतिर्मूर्द्धज्योतिः ॥ गिरिनदीनिर्झरः ॥ सायथादूरेगत्वातत्रैवलीयतेतद्वत् ॥ ४२ ॥ जिह्व याक्रम्यघंटिकामितियत्प्रागुक्तंतत्रोपायमाह ॥ भूयइति ॥ स्पृश्यतेआक्रम्यते ॥ ४३ ॥ एतेषांसमाधिभेदानांतत्तत्सिद्धिफलेषुविकल्पबहुलत्वेपिनिष्कामस्यपरमोपशमफले अविकल्पनैवसर्वेषामित्याह ॥ विकल्पेति ॥ ४४ ॥ ४५ ॥ ४६ ॥ वासनावलितंमनोजन्मशरीरंतच्चप्राणंचाभिमानेनगृह्णाति ॥ निर्वासनंतुमोक्षम् ॥ ४७ ॥ एवंउक्ताभ्यासप्र

भ्रूनासातालुसंस्थासुद्वादशांगुलिकोटिषु ॥ अभ्यासाच्छाम्यतिप्राणोदूरेगिरिनदीयथा ॥ ४२ ॥ भूयोभूयश्चिराभ्यासाज्जिह्वाप्रांतेन तालुनि ॥ घंटिकास्पृश्यतेप्राणोयेनोच्चैर्निवहत्यलम् ॥ ४३ ॥ विकल्पबहुलास्त्वेतेस्वाभ्यासेनसमाधयः ॥ परमोपशमायाशुसंप्रयांत्यवि कल्पताम् ॥ ४४ ॥ आत्मारामोवीतशोकोभवत्यंतःसुखःपुमान् ॥ अभ्यासादेवनान्यस्मात्तस्मादभ्यासवान्भव ॥ ४५ ॥ अभ्यासेनप रिस्पंदेप्राणानांक्षयमागते ॥ मनःप्रशममायातिनिर्वाणमवशिष्यते ॥ ४६ ॥ वासनावलितंजन्ममोक्षंनिर्वासनंमनः ॥ प्राणंचरामगृ ह्णातियथेच्छसितथाकुरु ॥ ४७ ॥ प्राणस्पंदोमनोरूपंतस्मात्संसृतिविभ्रमः ॥ तस्मिन्नेवशमंयातेदीयतेसंसृतिज्वरः ॥ ४८ ॥ विकल्पां शक्षयाज्जंतोःपदंतदवशिष्यते ॥ यतोवाचोनिवर्त्ततेसमस्तकलनान्विताः ॥ ४९ ॥ यत्रसर्वंयतःसर्वंयत्सर्वंसर्वतश्चयत् ॥ यत्रनेदंयतो नेदंयन्नेदंनेदृशंजगत् ॥ ५० ॥ विनाशित्वाद्विकल्पत्वाद्गुणित्वान्निर्गुणात्मनः ॥ यस्यनोसदृशोदृष्टोदृष्टांतःकश्चिदेवहि ॥ ५१ ॥ स्वादनीस र्वशालीनांदीपिकासर्वतेजसाम् ॥ कलनासर्वकामानामंतश्चिच्चंद्रिकोदिता ॥ ५२ ॥ यस्मात्कल्पतरोर्वंह्वयःसंसारफलपंक्तयः ॥ अनार तंबहुरसाजायंतेचपतंतिच ॥ ५३ ॥ तत्पदंसर्वसीमांतमवलंब्यमहामतिः ॥ यःस्थितःस्थिरधीस्तज्ज्ञःसजीवन्मुक्तउच्यते ॥ ५४ ॥ विग तसर्वसमीहितकौतुकःसमुपशांतहिताहितकल्पनः ॥ सकलसंव्यवहारसमाशयोभवतिमुक्तमनाःपुरुषोत्तमः ॥ ५५ ॥ ॥ इ० वा० वा० दे० मो० उपश० योगवर्णनंनामअष्टसप्ततितमःसर्गः ॥ ७८ ॥ ॥ ६१ ॥

कारेण ॥ दीयतेखंड्यतेचिकित्स्यतइतियावत् ॥ ४८ ॥ ४९ ॥ इदंदृश्यंयत्रनेत्याधे यतयायतोनेत्युपादेयतयायन्नेतितादात्म्येनचसच्चिदात्मसंबंधनिषेधान्नकेनाप्यंशेनजगद्ब्रह्मसदृशमित्यर्थः ॥ ५० ॥ अतएवविनाशित्वादिधर्मकेजगतिनकश्चिदपिब्रह्मणोदृष्टांतो स्तीत्याह ॥ विनाशित्वादिति ॥ ५१ ॥ यदिनकश्चिद्दृष्टांतस्तर्हिकथंतत्परिचयस्तत्राह ॥ स्वादनीति ॥ रसरूपादिगोचरवाह्यवृत्तित्रिपुटीनांकामाद्यांतरवृत्तित्रिपुटीनांचभासकत यातत्परिचेयमित्यर्थः ॥ ५२ ॥ फलमतउपपत्तेरितिन्यायाद्विचित्रकर्मफलोदयक्षयनिमित्ततयावातत्परिचेयमित्याह ॥ यस्मादिति ॥ ५३ ॥ तत्परिचयावलंबनेपुरुषार्थसिद्धि दर्शयन्नुपसंहरति ॥ तदितिद्वाभ्याम् ॥ ५४ ॥ विगतानिसर्वाणिसमीहितकौतुकानिकामभोगोत्कंठायस्य ॥ अतएवतदनुकूलप्रतिकूलेषुसमुपशांताहिताहितवासनायस्य ॥ अत एवसकलेषुसंव्यवहारेषुसमोहर्षविषादशून्यआशयोयस्य ॥ ईदृशोमुक्तमनाःपुरुषश्रेष्ठोभवतिभगवान्विष्णुरपिभवतीत्यर्थः ॥ ५५ ॥ ॥ इ० वा० ता० उ० ऽष्टसप्ततितमःसर्गः ७८

उद्दिष्टौचित्तनाशाययोगज्ञानंक्रमौद्विधौ ॥ तयोराद्येपरिज्ञातेद्वितीयोत्रनिरूप्यते ॥ १ ॥ द्वौक्रमौचित्तनाशस्ययोगोज्ञानंचराघवेत्युद्दिष्टक्रमयोर्मध्येआद्यश्चित्तस्यशमोना
शप्रकारोनिरूपितस्त्वयेत्यर्थः ॥ १ ॥ लक्षणस्वरूपसाधनादिभिःसम्यग्ज्ञानंप्रपंचयिष्यन्प्रथममात्मपरिचयेनजगद्बाधात्मतालक्षणंतल्लक्षणमाह ॥ अनाद्यंतेति ॥ एकःअसा
धारणः ॥ स्फारःअपरिच्छिन्नाकारः ॥ २ ॥ एवंजगद्बाधेनात्मपरिचयात्मतावातल्लक्षणमित्याह ॥ इमाइति ॥ ३ ॥ सम्यग्ज्ञानस्यमोक्षसमर्थतांदर्शयति ॥ असम्यगिति ॥
सम्यगीक्षणान्नोसर्पःसर्पभावान्मोक्षइतियावत् ॥ ४ ॥ मुक्तौतर्हिकिंपरिशिष्यतेतदाह ॥ संकल्पेति ॥ संविच्यास्वप्रकाशस्वभावेनैवअभितःसम्यक्आख्याताप्रथमाना ॥ इ

श्रीरामउवाच ॥ ॥ योगयुक्तस्यचित्तस्यशमएवनिरूपितः ॥ सम्यग्ज्ञानमिदानींमेकथयानुग्रहात्प्रभो ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥
अनाद्यंतावभासात्मापरमात्मेहविद्यते ॥ इत्येकोनिश्चयःस्फारःसम्यग्ज्ञानंविदुर्बुधाः ॥ २ ॥ इमाघटपटाकाराःपदार्थशतपंक्तयः ॥ आ
त्मैवनान्यदस्तीतिनिश्चयःसम्यगीक्षणम् ॥ ३ ॥ असम्यग्वेदनाज्जन्ममोक्षस्सम्यगवेक्षणात् ॥ असम्यग्वेदनाद्रज्जुःसर्पोनोसम्यगीक्ष
णात् ॥ ४ ॥ संकल्पांशविनिर्मुक्तासंवित्संवेद्यवर्जिता ॥ संविन्याभिसमाख्यातामुक्तावस्तीहनेतरत् ॥ ५ ॥ साशुद्धरूपाविज्ञातापरमात्मे
तिकथ्यते ॥ शुद्धात्वशुद्धरूपांतरविद्येत्युच्यतेबुधैः ॥ ६ ॥ संवित्तिरेवसंवेद्यंनानयोर्द्वित्वकल्पना ॥ चिनोत्यात्मानमात्मैवरामैवंनान्यद
स्तिहि ॥ ७ ॥ यथाभूतात्मदर्शित्वमेतावद्भुवनत्रये ॥ यदात्मैवजगत्सर्वमितिनिश्चित्यपूर्णता ॥ ८ ॥ सर्वमात्मैवकौदिष्टौभावाभावौक्वच
स्थितौ ॥ क्वबंधमोक्षकलनेकिमन्यद्रामशोच्यते ॥ ९ ॥ नचेत्यमन्यन्नोचित्तंब्रह्मैवेदंविजृंभते ॥ सर्वमेकंपरंव्योमकोमोक्षःकस्यबंधता
॥ १० ॥ ब्रह्मेदंबृंहिताकारंबृहद्बृहदवस्थितम् ॥ ज्ञानादस्तमितद्वित्वंभवात्मैवत्वमात्मना ॥ ११ ॥ सम्यगालोकितेरूपेकाष्ठपाषाणवास
साम् ॥ मनागपिनभेदोस्तिक्वासिसंकल्पनोन्मुखः ॥ १२ ॥ आदावंतेचसंशांतंस्वरूपमविनाशियत् ॥ वस्तुनामात्मनश्चैवतन्मयोभवरा
घव ॥ १३ ॥ परंव्योमेदमखिलंजगत्स्थावरजंगमम् ॥ सुखदुःखक्रमःकुत्रविज्वरोभवराघव ॥ १४ ॥ द्वैताद्वैतसमुद्भूतैर्जरामरणविभ्र
मैः ॥ स्फुरत्यात्मभिरात्मैवचित्रैरब्धिववीचिभिः ॥ १५ ॥

हमुक्तौ ॥ ५ ॥ अप्यर्थेतुशब्दः ॥ ६ ॥ तथाचाविज्ञानकृतएवसंवित्तिसंवेद्ययोर्भेदोनवास्तवइत्याह ॥ संवित्तिरेवेति ॥ चिनोतिअज्ञानात्संचिनोतिज्ञानात्तुपरिचिनोतीत्यर्थः
॥ ७ ॥ निष्कृष्टंसम्यग्ज्ञानस्वरूपमाह ॥ यथाभूतेति ॥ ८ ॥ दिष्टौनिर्दिष्टौनिष्कृष्यनिरूपितावित्यर्थः ॥ किमन्यदस्तियदर्थंशोच्यतेमूढैरितिशेषः ॥ ९ ॥ १० ॥ बृहतोपि
बृहद्ब्रह्मस्वात्मन्येवमाययानटवद्बृंहिताकारमिदंदृश्यंव्यवस्थितम् ॥ ११ ॥ सम्यक्अधिष्ठानसन्मात्ररूपेणालोकितेसतिक्वासि ॥ नह्येकरूपेहेयोपादेयेसंकल्पनंविकल्पनं
वासंभवतीत्यर्थः ॥ १२ ॥ अविनाशियत्स्वरूपंतदेववस्तु ॥ नामेतिप्रसिद्धौ ॥ आत्मनश्चस्वरूपमेवंविधमतस्तन्मयोभवेत्यर्थः ॥ १३ ॥ परंनिरतिशयानंदरूपंब्रह्म ॥ १४ ॥
स्फुरतिअज्ञस्येतिशेषः ॥ १५ ॥

तंतत्त्वज्ञम् ॥ केभोगाः ॥ १६ ॥ मनोभोगःकामस्तदादयःषडरयः ॥ १७ ॥ अजलंजलान्निर्गतमल्पजलस्थंवा ॥ १८ ॥ १९ ॥ जलादिआदिपदात्तरंगफेनबुद्बुदादिजलान्नान्यत् ॥ यथेतिशेषः ॥ इतिविविच्यसमवलोकितसम्यगर्थस्तदेकनिश्चयप्रधानःपुरुषआत्यंतिकचित्तनाशाद्विमुक्तइत्युच्यतइत्यर्थः ॥ २० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेएकोनाशीतितमःसर्गः ॥ ७९ ॥ ॥ ५ ॥ ॥ यस्मिन्विमर्शेसुदृढेदिव्यभोगेष्वपिस्पृहा ॥ नोदेत्यपिपुरःस्थेषुसविमर्शोत्रवर्ण्यते ॥ १ ॥ इदंवक्ष्यमाणंविमर्शोपदर्शनम् ॥ पुरःस्थितानपिभोगान्प्रतिस्पृहानजायतएवेत्यन्वयः ॥ १ ॥ तत्रादौचक्षुषाइष्टानिष्टरूपेआलोचितेचक्षुरहंताभिनिवेशाज्जीवस्यसुखदुःखेदृश्येतेतत्रचक्षुःप्रतिस्वामितैवास्यनत्वहंनेतिविमर्शेनदुःखादिप्रसक्तिरितिदर्शयति ॥ चक्षुरिति ॥ बलीवर्दएवभारवहनदुःखायनतस्यभारद्रव्यस्यचनायकः ॥ नम्रसौबलीवर्दइत्यर्थः ॥ २ ॥ स्वामित्वमपितस्यनचक्षुर्मात्रेकिंतुमात्रेकिंतुकार्यकरणसंघातकामकर्मवासनातत्फलभेदेष्वनंतेषु ॥ तत्रअहंकारबुद्धिमनःप्राणपरंपरयाकथंचित्स्वत्वकोटिनिवि

शुद्धमात्मानमालिंग्यनित्यमंतस्थयाधिया ॥ यःस्थितस्तंकआत्मेहंभोगाबंधयितुंक्षमाः ॥ १६ ॥ कृतस्फारविचारस्यमनोभोगादयोरयः ॥ मनागपिनभिंदंतिशैलंमंदानिलाइव ॥ १७ ॥ अविचारिणमज्ञानंमूढमाशापरायणम् ॥ निगिरंतीहदुःखानिबकामत्स्यमिवाजलम् ॥ १८ ॥ जगदात्मैवसकलमविद्यानास्तिकुत्रचित् ॥ इतिदृष्टिमवष्टभ्यसम्यग्रूपःस्थिरोभव ॥ १९ ॥ नानात्वमस्तिकलनासुनवस्तुतोंतर्नानाविधासुसरसीषुजलादिनान्यत् ॥ इत्येकनिश्चयमयःपुरुषोविमुक्तइत्युच्यतेसमवलोकितसम्यगर्थः ॥ २० ॥ ॥ इ०वा०वा०दे०मोक्षोपायेषूपशमप्रकरणेसम्यग्ज्ञानलक्षणनिरूपणंनामैकोनाशीतितमःसर्गः ॥ ७९ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ इदमंतःकलयतोभोगान्प्रतिविवेकिनः ॥ पुरःस्थितानपिसदास्पृहैवांगनजायते ॥ १ ॥ चक्षुरालोकनायैवजीवस्तुसुखदुःखयोः ॥ भारायैवबलीवर्दोभोक्ताद्रव्यस्यनायकः ॥ २ ॥ नयनेरूपनिर्मग्नेक्षोभःकइवदेहिनः ॥ गर्दभेपल्वलेमग्नेकैवसेनापतेःक्षतिः ॥ ३ ॥ रूपकर्दममेतन्मानयनास्वादयाधम ॥ नश्यत्येतन्निमेषेणभवंतमपिहिंसति ॥ ४ ॥ येनैवंसंख्याक्रियतेयेनैवास्वानुगम्यते ॥ तदीयैःकर्मभिःक्षिप्रंप्राज्ञःक्रूरोनिबध्यते ॥ ५ ॥

ष्टस्यैकस्यचक्षुषःकदाचिदनिष्टरूपसंप्रयोगेकावागणनाकुतोवास्यदुःखप्रसक्तिरित्याशयेनाह ॥ नयनेइति ॥ गर्दभेसेनांतर्गतरजककर्दभे ॥ ३ ॥ स्वामित्वादेवतन्निवारयितुमपिशक्यमित्याशयेनाह ॥ रूपेति ॥ एतत्स्त्रीपुत्रादिसौंदर्यलक्षणंरूपम् ॥ हिंसतिनाशयति ॥ छांदसोविकरणव्यत्ययः ॥ हेअधममूढतम ॥ ४ ॥ प्राज्ञस्तर्हिकीदृशःकचिन्निबध्यतेतत्राह ॥ येनेति ॥ क्रूरोनिशितमतिःप्राज्ञस्तुयेनांतर्गतेनचिदात्मनैवसम्यक्रूख्यानंसंख्याप्रकाशोबाह्याभ्यंतरार्थप्राप्त्याक्रियतेयेनैवअस्वाअनात्मभूताकोशपरंपराआत्मतादात्म्यारोपेणानुगम्यतेतदीयैःऔदासीन्येनयथाप्राप्तार्थप्रकाशनलक्षणैःकर्मभिश्चरित्रैर्निबध्यतेअभ्यासेनसंबध्यतेनमूढवद्रूपकर्दमास्वादनकर्मभिः ॥ तथाचत्वमप्युदासीनंसद्रूपंप्रकाशयनतुतदास्वादयेत्यर्थः ॥ ५ ॥

उत्पन्नध्वंसिआपातमात्रहृद्यंचेतिविशेषणेअसन्मयमित्यस्योपपत्तये ॥ अविनाशिनेअनिवार्यायविनाशायमृत्युमुखप्रवेशाय ॥ ६ ॥ किंचरूपविषयेसदासर्वार्थप्रकाशने निरपेक्षसमर्थेपिपरमात्मनिउदासीनेस्थितेसतिहेनेत्रकालवशतःकदाचिदेवदीपाद्यालोकंप्राप्यप्रकाशयत्त्वमेवैकंकिंकिमर्थंप्रतप्यसेअतस्त्वमपिसाक्षिवत्स्थितंसद्रूपंपश्येत्यर्थः ॥ ७ ॥ इदानींचक्षुषाभ्रांत्यारूपेआलोकिनेपिचित्तस्यतदभिनिवेशोहेतुर्नास्तीत्याह ॥ सलिलेति ॥ हेचित्तद्वयंविचित्ररूपदृष्टिर्नद्यादिसलिलेनानाविधानियतस्पंदैवचित्र्यवद नियता अंबरेसूर्यालोकाभिमुखसाश्रुनेत्रनिरीक्षितामयूरपिच्छिकेवमिथ्याभूताचगौरयमश्वोयंस्त्रीपिंडोयमित्येवंनानाविधसुजातिदुर्जातिविकल्पानुबंधाचक्षुषःस्फुरतितत्रतव किमागतंयेनत्वंरज्यसेतप्यसेचेत्यर्थः ॥ ८ ॥ अस्तुवाचित्तेचक्षुर्दृष्टार्थाकारावृत्तिस्तथाप्यभिनिवेशहेतोरहंकारस्यनिमित्तंनास्तीत्याह ॥ कल्पेति ॥ चित्तेस्वयंरूपाद्याकारः स्फुरतिचेत्स्फुरतुनामअयमहंकारस्त्वंकुतःप्रोत्थितः ॥ ९ ॥ किंचस्त्रीपिंडादिलक्षणंरूपंसूर्याद्यालोकमाश्रित्यस्फुरतिसूर्यालोकश्चपिंडाश्रितइत्यन्योन्यसंयोगेसौंदर्यभ्रांत्याका

उत्पन्नध्वंसिचापातमात्रहृद्यमसन्मयम् ॥ रूपमाश्रयमानेत्रविनाशायाविनाशिने ॥ ६ ॥ साक्षिवत्त्वंस्थितंनेत्ररूपमात्मनितिष्ठति ॥ आलोकंकालवशतस्त्वमेकंकिंप्रतप्यसे ॥ ७ ॥ सलिलस्पंदवद्दृष्टिःपिच्छिकेवांबरोत्थिता ॥ सुजातिबंधास्फुरतितवचित्तकिमागतम् ॥ ८ ॥ कल्पांभसीवशफरीचित्तेस्फुरणधर्मिणि ॥ स्वयंस्फुरत्यहंकारस्त्वमयंप्रोत्थितःकुतः ॥ ९ ॥ आलोकरूपयोर्नित्यंजडयोःस्फुरतोर्मिथः ॥ आधाराधेययोश्चित्तव्यर्थमाकुलतातव ॥ १० ॥ रूपालोकमनस्काराःपरस्परमसंगिनः ॥ संपन्नाइवलक्ष्यंतेवदनादर्शबिंबवत् ॥ ११ ॥ अज्ञानजंतुनात्यंतेश्लिष्टाजातानिरंतराः ॥ अज्ञानेज्ञानगिलितेपृथक्तिष्ठंत्यसन्मयाः ॥ १२ ॥ मनःकल्पनयात्यंतेसुसंबद्धाःपरस्परम् ॥ रूपालोकमनस्कारादारुणीजतुनायथा ॥ १३ ॥ स्वमनोमननंतंतुर्मनोभ्यासेनयत्नतः ॥ विचाराच्छेदमायातिच्छिन्नैवाज्ञानभावना ॥ १४ ॥ अज्ञानसंक्षयात्क्षीणेमनसीमेपुनर्मिथः ॥ रूपालोकमनस्काराःसंघट्टंतेनकेचन ॥ १५ ॥ सर्वेषांचित्तमेवांतरिंद्रियाणांप्रबोधकम् ॥ तदेवतस्मादुच्छेद्यंपिशाचइवमंदिरात् ॥ १६ ॥ चित्तवल्गसिमिथ्यैवदृष्टेंतोभवतामया ॥ आद्यंतयोःसुतुच्छंत्वंवर्त्तमानेविनश्यसि ॥ १७ ॥

मादिनाचित्तस्यव्याकुलताप्रसिद्धासाचतयोश्चित्तेनासंबंधाद्व्यर्थेत्यर्थः ॥ १० ॥ असंबंधमेवदृष्टांतेनस्फुटयति ॥ रूपेति ॥ चक्षुषाबहिःरूपालोकनंमनसाचांतःसंकल्पादयोम नस्काराइतिभिन्नदेशत्वादेवेतिभावः ॥ संपन्नाःसंलग्नाइव ॥ ११ ॥ तत्संलग्नताभ्रांतौचाज्ञानमेवनिमित्तमित्याह ॥ अज्ञानेति ॥ पृथग्विश्लिष्टास्तुअसन्मयाबाधिताःसंतःअ धिष्ठानमात्रपरिशेषेणतिष्ठंति ॥ १२ ॥ दारुणीकाष्ठे ॥ जतुनालाक्षया ॥ १३ ॥ स्वमनोमननमेवतंतुःकोशकारतंतुवत्स्वबंधनंसचमंदमध्यमाधिकारिणोवैराग्यशमदमनिरोधा दिमनोभ्यासेनयत्नतोविचाराच्छेदमायाति ॥ मुख्याधिकारिणस्तुसहसोत्पन्नज्ञानेनतस्मिंश्छिन्नेसतिस्वभावतएवाज्ञानभावनाश्छिन्नैवनैवप्रवर्त्ततइत्यर्थः ॥ १४ ॥ तत्रद्वितीय स्यानायासइत्याह ॥ अज्ञानेति ॥ १५ ॥ प्रथमेनतुयत्नेनचित्तमुच्छेद्यमित्याह ॥ सर्वेषामिति ॥ १६ ॥ इदानींचित्तमेवसंबोध्यबोधयति ॥ चित्तेत्यादिना ॥ अंतोबाधोपा यः ॥ यतआद्यंतयोःसुतुच्छंअतोवर्त्तमानकालेपिविनश्यसिअसदसि ॥ नहिपूर्वोत्तरकालयोस्तुच्छोवंध्यापुत्रोवर्त्तमानकालेसंभवतीत्यर्थः ॥ १७ ॥

पंचभिरींद्रियोपनीतैःशब्दाद्याकारैः ॥ यस्त्वदभिमानीप्रमातात्वांस्वंमदीयमितिजानातितस्यैवत्वमुपकरणतयापरिवल्गसिनत्वसंगोदासीनचिदेकरसस्यममेत्यर्थः ॥१८॥ तुष्टिग्रहणंविषादस्याप्युपलक्षणम् ॥ ऐंद्रजालिकमायाप्रयुक्तेमनसोनानाविषयदर्शनाकारस्पंदेइव ॥ १९ ॥ प्रकृत्यास्वीयमिथ्यास्वभावेनैवमृतंनिरालकमसिविचाराच्चुतथास्मृतंसत्सुमृतंअत्यंतासदसीत्यर्थः ॥ २० ॥ २१ ॥ एतावत्कालंवयंत्वांमृतंभवत्नैरात्म्येनवर्त्तमानंअज्ञातवंतोनज्ञातवंतः ॥ अद्यआत्मतत्त्वदर्शनकाले ॥ २२ ॥ साधवःशमदमविचारबोधादयस्तत्संसर्गवर्जितम ॥ २३ ॥ शमादयएवसज्जनाः ॥ २४ ॥ हेजगद्रूपचित्तवेतालशठंत्वंपूर्वमेवनासीःसंप्रतिचनास्येवअग्रेचनभविष्यसि ॥ एवंमयाकालत्रयेनिषेध्य

मुधापंचभिराकारैःकिमंतःपरिवल्गसि ॥ यस्त्वांस्वमितिजानातितस्यैवपरिवल्गसि ॥ १८ ॥ त्वद्वल्गनंमेकुमनोनमनागपितुष्टये ॥ मायामनःस्पंदइवव्यर्थंवृत्तिपुदस्यसे ॥ १९ ॥ तिष्ठवागच्छवाचित्तनासिमेनचजीवसि ॥ प्रकृत्यासिमृतंनित्यंविचारात्सुमृतंस्मृतं ॥ २० ॥ निस्तत्त्वंत्वंजडंभ्रांतंशठंनित्यमृताकृते ॥ मूढएवत्वयाज्ञेनबाध्योनप्रविचारवान् ॥ २१ ॥ वयमज्ञातवंतस्त्वांमौर्ख्येणाशुमृतंभवत् ॥ मृतमस्माकमद्यासिदीपानांतिमिरंयथा ॥ २२ ॥ शठेनभवतादीर्घकालंदेहगृहंमम ॥ उपरुद्धमभूत्सर्वसाधुसंसर्गवर्जितम् ॥ २३ ॥ जडप्रेतसमाकारेगतेत्वयिमनःशठे ॥ सर्वसज्जनसंसेव्यमिदंदेहगृहंमम ॥ २४ ॥ पूर्वमेवासिनासीस्त्वंसंप्रत्येवशठंजगत् ॥ नभविष्यसिचेदानींवेतालकिंनलज्जसे ॥ २५ ॥ सहतृष्णापिशाचीभिःसहकोपादिगुल्यकैः ॥ निर्गच्छचित्तवेतालशरीरसदनान्मम ॥ २६ ॥ दिष्ट्याविवेकमात्रेणनिर्गतोदेहमंदिरात् ॥ प्रमत्तश्चित्तवेतालःकुवृकःकंदरादिव ॥ २७ ॥ अहोनुचित्रंसुमहज्जडेनक्षणभंगिना ॥ मनःशठेनसर्वोयंनीतोविवशतांजनः ॥ २८ ॥ कस्तेपराक्रमःकिंतेबलंकस्तेसमाश्रयः ॥ यदिवल्गसिमामेकंजनानांबाधसेमृतम् ॥ २९ ॥ सर्वथैवासिनमयादीनचित्तकमार्यसे ॥ मृतमित्यवबुद्धंत्वमद्यकेवलमज्ञहे ॥ ३० ॥ एतावंतमहंकालंत्वांज्ञात्वाजीवदास्थिति ॥ श्लिष्टःप्रभूतसंगासुचिरंसंसृतिरात्रिषु ॥ ३१ ॥ चित्तंमृतंहिनास्तीदमित्यद्याधिगतंमया ॥ तेनत्वदाशांसंत्यज्यतिष्ठाम्यात्मनिकेवलम् ॥ ३२ ॥ दिष्ट्याचित्तंमृतमितिज्ञातमद्यमयास्वयं ॥ नशठेनसमंनेयंसमग्रंजीवितंनिजम् ॥ ३३ ॥

मानोपिइदानीमत्रस्थातुंकिनलज्जसे ॥ अहोतवनिर्लज्जतेत्यर्थः ॥ २५ ॥ यदिसलज्जोसितर्हिनिर्गच्छेत्याह ॥ सहेति ॥ २६ ॥ २७ ॥ चित्तवंचितजनाननुशोचति ॥ अहो इति ॥ २८ ॥ जनानांमध्येमृतंमरणधर्मकदेहात्मदर्शनात्स्वतोमृतंबाधसेअयंकस्तेपराक्रमः ॥ एकमद्वितीयात्मभूतंमांप्रतियदिवल्गसिआगंतुंशक्नोषितदातेपराक्रमइतिशेषः ॥ २९ ॥ हेअज्ञदीनचित्तकमयाअद्यनमार्यसेयतःपूर्वमेवसर्वथैवत्वंमृतमितिअवबुद्धम् ॥ अयमेववधइत्यर्थः ॥ ३० ॥ जीवदास्थितिजीवतइवआ स्थितिःस्वरूपसत्तायस्यतथाविधंज्ञात्वाश्लिष्टस्त्वयासहतादात्म्येनसंगतः ॥ ३१ ॥ ३२ ॥ बोधोत्तरंजीवन्मुक्तानांनिश्चित्तमेवायुःशेषनयनमुचितमित्याह ॥ नशठेनेति ॥ ३३ ॥

शठानांकामक्रोधलोभादीनांमहंउत्सवभूतंमनोदेहसदनादुत्सार्य ॥३४॥चित्तवेतालेनलब्धेनविप्रलब्धेनआत्मनातद्वात्मभूतेनमया॥इदानींस्वयंपरमार्थात्मभूतोहंतान्विकारान्स्मृत्वाहसामीत्यर्थः ॥३५॥ निपातितोनिपात्यैवमारितः ॥३६॥ कामादिमलाभावात्पवित्रांपदवीमिंद्रियद्वारमार्गंगतेप्राप्ते ॥३७॥ समोनिरस्तवैषम्यःसन् ॥३८॥ कलत्रंपोष्यवर्गः ॥३९॥ इदानींपरिशिष्टंनिरतिशयानंदैकरसमात्मानमतिशयेननमस्यति ॥ एकस्मैइत्यादिना ॥४०॥ अहमहंअहमभिमानप्रधानजडांशोनैव नचनाहंअहंकारप्रत्यक्चिदात्मानेतिचन ॥४१॥४२॥ आत्माआत्मशब्दप्रत्ययविषयोन ॥ तथाचबृहदारण्यकभाष्येतद्वार्तिकेच ॥ आत्मेत्येवोपासीतेत्यत्रइतिशब्दआत्मशब्दप्रत्ययविषयत्वनिवारणार्थइत्युक्त

उत्सार्यदेहसदनान्मनःशठमहंक्षणात्॥ अहंस्वस्थःस्थितोस्म्यंतर्वेतालपरिवर्जितः ॥ ३४ ॥ चित्तवेताललब्धेनचिरंकालंमयात्मना॥ कृताविकाराविविधाःस्वयंस्मृत्वाहसाम्यहम्॥ ३५॥ चिरान्निपातितोदिष्ट्याविचारासिपरार्दितः ॥ स्वदेहाच्चित्तवेतालस्तालोत्तालसमुन्नतिः॥ ३६॥ प्रशांतेचित्तवेतालेपवित्रांपदवींगते ॥ दिष्ट्याशरीरनगरेसुखंतिष्ठामिकेवलम्॥ ३७॥ मृतंमनोमृताचिंतामृतोहंकारराक्षसः ॥ विचारमंत्रेणसमःस्वस्थस्तिष्ठामिकेवलम्॥३८॥ किंमनोमेममाशाकाकोमेहंकारकोभवेत्॥ दिष्ट्याव्यर्थकलत्रंमेनष्टमेतदशेषतः॥ ३९॥ एकस्मैकृतकृत्यायनित्यायविमलात्मने ॥ निर्विकल्पचिदाख्यायमह्यमेवनमोनमः॥ ४०॥ नशोकोस्तिनमोहोस्तिनचैवाहमहंस्वयम्॥ नचनाहंनचान्योहंमह्यमेवनमोनमः॥ ४१॥ नममाशानकर्माणिनसंसारोनकर्तृता ॥ नभोक्तृतानदेहोमेमह्यमेवनमोनमः॥ ४२॥ नाहमात्मानवाकोन्योनाहमस्मिनचेतरः॥ सर्वमेवाहमेतस्मैमह्यमेवनमोनमः॥ ४३॥ अहमादिरहंधाताचिदहंभुवनान्यहम्॥ ममनास्तिव्यवच्छेदोमह्यमेवनमोनमः॥ ४४॥ निर्विकारायनित्यायनिरंशायमहात्मने॥ सर्वस्मैसर्वकालायमह्यमेवनमोनमः॥ ४५॥ नीरूपायनिराख्यायप्रकाशायमहात्मने॥ स्वयमात्मैकसंस्थायमह्यमेवनमोनमः॥ ४६॥ समांसर्वगतांसूक्ष्मांजगदेकप्रकाशिनीम् ॥ सत्तामुपगतोस्म्यंतर्मह्यमेवनमोनमः॥ ४७॥ साद्र्यब्ध्युर्वीनदीसेयंनाहमेवाहमेववा॥ जगत्सर्वपदार्थाढ्यंमह्यमेवनमोनमः॥४८॥ व्यपगतमननंसमाभिरामंप्रकटितविश्वमविश्वमप्यनंतम्॥स्वयमजमजरंगुणादतीतंवपुरहमच्युतमीश्वरंनमामि॥४९॥ ॥इ०वा०वा०दे०मो०उपश०दृश्यदर्शनसंबंधोनामाशीतितमःसर्गः॥८०॥ ॥७॥

म ॥ नवाअन्यःअनात्माहम् ॥ कोन्यस्त्वत्दशासंभाव्यतेयदहंस्याम् ॥ एवमहंशब्दप्रत्ययविषयस्तदितरश्चनाहम् ॥ एवंचस्वेतराप्रसिद्धेःस्वयमेवसर्वमितिसर्वमेवाहमित्यर्थः ॥४३॥ आदिर्भुवनानांकारणम् ॥ धाताधारयिता ॥ व्यवच्छेदस्त्रिविधपरिच्छेदः ॥ ४४॥ सर्वकालायसनातनाय ॥४५॥४६॥४७॥ अद्रयश्चअब्धयश्चउर्वीचनद्यश्चएतैःसहितासाप्रसिद्धाइयंवर्तमानादृश्यश्रीर्नाहम् ॥ एवमतीतानागतपदार्थाढ्यंजगत्सर्वमपिनाहमहमेववेतियोज्यम् ॥ ४८ ॥ व्यपगतानिमननानिमनोविकल्पायस्मादतएवसमाभिरामंप्रकटितविश्वमनंतंअच्युतंकुतः उत्थितस्वरूपादप्रच्युतंदृष्टअविद्यातत्कार्यनिरासेसमर्थाभवनीतीश्वरंवपुःस्वरूपंनमामिसर्वोत्कर्षेणप्रपन्नोस्मीत्यर्थः ॥४९॥ ॥इ०वा०ता०उपश०अशीतितमःसर्गः॥ ८०॥

१ अरूपमित्यपिपाठःक्वचित्

1/53

यत्नैःश्चाक्चित्तवेतालोदेहगेहाद्विवासितः ॥ इहानुभवयुक्तिभ्यांचित्तासत्तोपपाद्यते ॥ १ ॥ आत्माज्ञेयःअवश्यंज्ञातव्यइतिविचारतत्त्वविद्भिःपुनरित्थंवक्ष्यमाणप्रकारेणविचार्यते चित्तमितिशेषः ॥ १ ॥ येनचित्तेनआत्मैवेदमितिवोधेनजगन्मार्जितंतच्चित्तंकुतउत्थितंस्यात्यज्जगदंतःपातेनस्वयमप्यवस्तु ॥ अहोइत्याश्चर्ये ॥ २ ॥ अवस्तुत्वमेवसाधयति ॥ अविद्यत्वादिति ॥ जडत्वाच्चित्तांतरशून्यत्वान्मायाकार्यत्वाच्चध्रुवंनिश्चयेनचित्तंनास्त्येवेत्यसदेव ॥ अथवाखवृक्षवद्भ्रमादेवान्यद्वस्तुतस्तुशुद्धंखमिवात्मैवतदित्यर्थः ॥ ३ ॥ यथानौकागतस्यशिशोर्बालस्यस्थाणुपरिस्पंदोभ्रांतिमात्रसिद्धस्तद्वदबुद्धस्यचित्तंसिद्धमपिबुद्धस्यात्मविदोनसिद्धंकित्वसन्मयमेवेत्यर्थः ॥ ४ ॥ तैलेक्ष्वादियंत्रचक्रारोहणप्रयुक्तभ्रमस्यांतेतदवरोहणोत्तरमित्यर्थः ॥ ५ ॥ यतोबाह्याभ्यंतरपदार्थभावनाअसतश्चित्तात्प्रसृतास्तेनहेतुनाअसत्याइतिमयाउज्झितास्त्यक्ताः ॥ यथायेनपारमार्थिकस्वभावेनति

॥श्रीवसिष्ठउवाच॥ ॥एवंविचार्यबुध्वांतःपुनरित्थंविचार्यते॥ तत्त्वविद्भिर्महाबाहोज्ञेयआत्मामहात्मभिः॥ १ ॥ आत्मैवेदंजगदिति सत्यंचित्तेनमार्जितम्॥ उत्थितंस्यात्कुतश्चित्तमहोचित्तमवस्तुयत्॥ २॥ अविद्यत्वादचित्तत्वान्मायात्वाच्चासदेवहि॥ ध्रुवंनास्त्येववा चित्तंभ्रमादन्यत्खवृक्षवत्॥ ३ ॥ सिद्धःस्थाणुपरिस्पंदोनौगतस्ययथाशिशोः॥ अबुद्धस्यनबुद्धस्यतथाचित्तमसन्मयम्॥ ४ ॥ मौर्ख्यमोहभ्रमेशांतेचित्तंनोपलभामहे ॥ चक्रारोहभ्रमस्यांतेपर्वतस्पंदनंयथा॥ ५॥ एवंहिचित्तंनास्त्येवब्रह्मैवास्तितथात्मकम्॥ पदार्थभावनाश्चित्तात्तेनासत्यामयोज्झिताः॥ ६॥ जातोस्मिशांतसंदेहःस्थितोस्मिविगतज्वरः॥ तथातिष्ठामितिष्ठामितथैवविगतैपणम्॥७॥ चित्ताभावेपरिक्षीणाबाल्यतृष्णादयोगुणाः॥ आलोकोपरमेचित्रावर्णाख्याइवसंविदः॥८॥ मृतंचित्तंगतातृष्णाप्रक्षीणोमोहपंजरः॥ निरहंकारताजाताजाग्रत्यस्मिन्प्रबुद्धवान्॥९॥एकमेवजगच्छांतंनानात्वंनसदित्यपि॥किमन्यद्विमृशाम्यंतःकथयैवालमेतया॥१०॥ निराभासमनाद्यंतंपदंपावनमागतः॥ सौम्यस्सर्वगतस्सूक्ष्मःस्थितआत्मास्मिशाश्वतः॥११॥ यदस्तियच्चनास्तीहचित्ताद्यात्माद्यवस्तु च॥ तत्खादच्छतरंशांतमनंताग्राह्यमाततम्॥ १२ ॥ चित्तंभवतुमावांतर्म्रियतांस्थितिमेतुवा॥कोविचारणयार्थोमेचिरंसाम्योदितात्मनः॥ १३॥ विचाराकारकोमौर्ख्यादहमासंमितस्थितिः॥ विचारेणामिताकारःक्वनामाहंविचारकः॥ १४॥

ष्ठामितथैवेदानींस्वानुभवेनापितिष्ठामिनान्यथाभूतइत्यर्थः ॥ ७ ॥ बाल्यंबालस्यकर्मचापलम् ॥ वर्णान्रूपभेदानाख्यांतिप्रथयंतितथाविधाश्चाक्षुपसंविदइव ॥ ८ ॥ अस्मिन्नहमात्मनिजाग्रतिअपगताज्ञाननिद्रेसतिअहंप्रबुद्धवान्स्वाभाविकंस्वरूपमित्यर्थः ॥ ९ ॥ जगत्शांतंसदेकंब्रह्मैव ॥ एतयाअसद्विषयिण्याकथयैवालंप्रयोजनंनास्तीत्यर्थः ॥१०॥ निर्गतआभासश्चिदाभासलक्षणाजीवतायत्र ॥११॥ यल्लोकेव्यवहारदृशाचित्तादिश्रुतिदृशाचआत्मब्रह्मचैतन्यादिचअस्तीतिचप्रसिद्धम् ॥ यच्चरज्जुसर्पादिवंध्यापुत्रादिचनास्तीतिप्रसिद्धंवस्त्ववस्तुचतत्सर्वंखादाकाशादप्यच्छतरंनिर्मलतरंअग्राह्यंस्वप्रकाशंब्रह्मैवाततंतस्मिन्नेवसदसद्रूपविकल्पारोपादित्यर्थः ॥ १२ ॥१३ ॥ अहमेतावत्कालंमौर्ख्याद्विचारस्यअकारकःअकर्तासन्मितस्थितिःपरिच्छिन्नदेहादिस्वभावआसम्॥संप्रतिविचारेणअमिताकारःसन्विचारकःअहंक्वनामगतइतिननिरूपयितुंशक्यइत्यर्थः॥१४॥

मनसिमृतेसतिविचारकोस्तिनवेतिविकल्पश्रीरपिनिरर्थिकामनोवेतालस्यवृत्त्यर्थंपुनर्जीवनार्थंकिमर्थमुपजायते ॥ अतस्तामिमांप्रजहामीतिपरेणसंबंधः ॥ १५ ॥ ओमिति
ओंकारलक्ष्येतुरीयेआत्मनि ॥ मौनवदितिस्थितिक्रियादृष्टांतः ॥ १६ ॥ कृतंविचारमुपसंहरंस्तस्यसदैवकर्त्तव्यतामाह ॥ अश्नन्निति ॥ यथाहुः ॥ गच्छतस्तिष्ठतोवापि
जाग्रतःस्वपतोपिवा ॥ नविचारपरंचेतोयस्यासौमृतउच्यतइति ॥ १७ ॥ प्रकृतकर्मसुस्वस्ववर्णाश्रमोचिताचारेषु ॥ १८ ॥ शरदाउपोढेनशशांकेनसमाल्विट्प्रसन्नमुखकांति
र्येषाम् ॥ १९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउप०एकाशीतितमःसर्गः ॥ ८१ ॥ ॥ ७ ॥ ॥ इहेंद्रियाणिचमनोव्यर्थचेष्टादिहेतुभिः ॥ वीतहव्येनबोध्यं

मृतेपिमनसीयंमेविकल्पश्रीर्निरर्थिका ॥ मनोवेतालवृत्त्यर्थंकिमर्थमुपजायते ॥ १५ ॥ तामिमांप्रजहाम्यंतःसंकल्पकलनामिति ॥ नि
र्णीयोमितिशांतात्मातिष्ठाम्यात्मनिमौनवत् ॥ १६ ॥ अश्नन्गच्छन्स्वपंस्तिष्ठन्निति राघव चेतसा ॥ सर्वत्रप्रज्ञयातज्ज्ञःप्रत्यहंप्रविचारये
त् ॥ १७ ॥ प्रविचार्यस्वसंस्थेनस्वस्थेनस्वेनचेतसा ॥ तिष्ठंतिविगतोद्वेगंसंतःप्रकृतकर्मसु ॥ १८ ॥ विगतमानमदामुदिताशयाःशरदुपो
ढशशांकसमत्विषः ॥ प्रकृतमंव्यवहारविहारिणस्त्विहसुखंविहरंतिमहाधियः ॥ १९ ॥ ॥ इ०वा०वा०दे०मोक्षोपायेषूपशमप्रकरणे
चित्तासत्ताप्रतिपादनंनामैकाशीतितमःसर्गः ॥ ८१ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ विचारएवंविदुषासंवर्त्तेनकृतः
पुरा ॥ कथितोममविंध्याद्रौतेनैवविदितात्मना ॥ १ ॥ एतांदृष्टिमवष्टभ्यविचारपरयाधिया ॥ संसारसागरादस्मात्तारतम्येनसंतर ॥ २ ॥
अथेमामपरांरामशृणुदृष्टिंपदप्रदाम् ॥ मुनिनावीतहव्येनययास्थितमशंकितम् ॥ ३ ॥ वीतहव्योमहातेजाविबभ्रामवनेपुरा ॥ विंध्य
शैलदरीर्दीर्घारविर्मेरुदरीरिव ॥ ४ ॥ अस्माक्रियाक्रमाद्घोरात्संसारभ्रमदायिनः ॥ आधिव्याधिमयाकारात्कालेनोद्वेगमाययौ ॥ ५ ॥
निर्विकल्पसमाध्यंशलभ्योदारपरेच्छया ॥ सजहारजगज्जीर्णास्वव्यापारपरंपराम् ॥ ६ ॥ विवेशरंभारचितंनिजंपर्णोटजांतरम् ॥ कृत
गौरंसुसौगंध्यमलिनीलमिवोत्पलम् ॥ ७ ॥ तत्रासनेसमेशुद्धेस्वास्तीर्णहरिणाजिने ॥ विशश्रामाचलेशांतेवीतवर्षइवांबुदः ॥ ८ ॥ बद्ध्प
द्मासनस्तस्थौपाष्ण्र्योरधिकरांगुलिः ॥ शृंगवच्छांतचलनमतिष्ठत्स्पष्टकंधरम् ॥ ९ ॥

तेआत्मैकाग्र्यप्रसिद्धये ॥ १ ॥ कृतस्यविचारस्यसांप्रदायिकत्वंदर्शयति ॥ विचारइति ॥ संवर्त्तेनबृहस्पतिभ्रात्रा ॥ तारतम्येनउत्तरोत्तरचित्तविश्रांतिप्रकर्षपरिपाकप्रयुक्तभू
मिकारोहणक्रमेण ॥ २ ॥ अपरांइंद्रियमनःप्रबोधनरूपांययादृष्ट्यावीतहव्येनमुनिनाअशंकितंनिःशंकंपदमास्थितमधिरूढमित्यर्थः ॥ यथेतिपाठेयेनप्रकारेण ॥ ३ ॥ विंध्यशैलद
रीःसमाध्यनुकूलाअन्वेषयाणोविबभ्राम ॥ ४ ॥ कुतस्तस्यसमाधीच्छाभूत्तत्राह ॥ अस्मादिति ॥ ५ ॥ जहारउपसंजहारसंन्यस्तवानितियावत् ॥ ६ ॥ रंभारचितंकदलीद
लनिर्मितम ॥ कृतागौराःश्वेताःपीताश्चकर्पूराःपरागाश्चयेनअतएवसुसौगंध्यम् ॥ ७ ॥ शांतेनिस्तापे ॥ अचलेशस्यहिमवतोंतेप्रतिवा ॥ ८ ॥ पाष्ण्र्योःपादतलमूलयोरधिउपरि
करांगुलयोयस्यतथाविधःसन् ॥ असमर्थसमासश्छांदसः ॥ स्पष्टकंधरंऊर्ध्वीकृतग्रीवंयथास्यात्तथा ॥ ९ ॥

दिक्षुइंद्रियालोकान्निमित्ताद्विकीर्णमनस्तन्निग्रहोपायेनजहारव्युपसंजहार ॥ शनैर्वक्ष्यमाणप्रबोधनक्रमादित्यर्थः ॥ १० ॥ बाह्यानैंद्रियकानाभ्यंतरान्मानसांश्चविषयस्प
र्शान्परिजहत्त्यजन्सन् ॥ नाभ्यस्ताच्छतुरितिनुम्निषेधः ॥ इदंवक्ष्यमाणमाकलयामासविचारयामास ॥ ११ ॥ तरंगैःप्रौढेनप्रवाहितेनपर्णेनतुल्यंतरंगप्रौढपर्णवत् ॥ १२ ॥ च
क्षुरादिभिराहितसंभ्रमैर्नानाविषयरूपैर्निमित्तैः ॥ उत्पततिनृत्यति ॥ वीटाकंदुकइव ॥ १३ ॥ पूर्वपूर्ववृत्तीस्त्यजदेवतत्तदनुसारिणीरुत्तरोत्तरवृत्तीर्गृह्णाति ॥ १४ ॥ १५ ॥
एवंचित्तदोषानालोच्यतन्निर्गमद्वाराण्यालोचितवानित्याह ॥ पंचेति ॥ दग्धशब्दोनिंदार्थः ॥ छांदसत्वात्कुत्सितानिकुत्सनैरितिसमासोनाश्रितः ॥ १६ ॥ इदानीमिंद्रियाण्येव
निर्भर्त्स्यबोधयति ॥ हेहेइति ॥ हेचंचलाःहतेंद्रियगणाःमेममबोधायसमाधिनाचिरमात्मदर्शनायवःवेलाअवसरोनास्तिकिम् ॥ १७ ॥ १८ ॥ यूयंमनसएवद्वारभेदेनकल्पिता

सजहारालमालोकाद्दिग्विकीर्णमनःशनैः ॥विशन्मेरुदरींसायंभानुर्भासइवोत्करम्॥१०॥बाह्यानाभ्यंतरांश्चैवस्पर्शान्परिजहत्क्रमा
त्॥ इदमाकलयामासमनसाविगतैनसा॥११॥अहोनुचंचलमिदंप्रत्याहृतमपिक्षणात्॥नमनःस्थैर्यमायातितरंगप्रौढपर्णवत्॥१२॥
चक्षुरादिभिरुद्दामैरूपैराहितसंभ्रमैः॥ अजस्रमुत्पतत्येववीटेवतलताडिता॥ १३॥ त्यजदेवानुगृह्णातिवृत्तीरिंद्रियवर्द्धिताः॥ यस्मान्नि
वार्यतेतस्मिन्प्रोन्मत्तइवधावति॥ १४ ॥ घटात्पटमुपायातिपटाच्छकटमुत्कटम्॥ चित्तमर्थेषुचरतिपादपेष्विवमर्कटः॥ १५॥ पंचद्वा
राणिमनसश्चक्षुरादीन्यमून्यलम् ॥दग्धेंद्रियाभिधानानितावदालोकयाम्यहम्॥ १६ ॥ हेहेहतेंद्रियगणाःकिंमेबोधायनेहवः॥ वेला
विलुलितांबूनामब्धीनामिवचंचलाः॥१७॥ माकुरुध्वमनर्थायचापलंचपलाशयाः॥स्मरतातीतवृत्तीनिदुःखजालानिभूरिशः॥१८॥
रूपाणिमनसोयूयंजडाएवकिलाधमाः॥ जडेतूत्सिक्तताव्यर्थंमृगतृष्णेववल्गति ॥ १९ ॥ असारात्मस्वरूपाणामनालोकवतीसदा॥
अंधानामुद्धतिर्येयंसादृश्यायैवजायते ॥ २० ॥ चिदात्माभगवान्सर्वसाक्षित्वेनकरोम्यहम्॥ हतेंद्रियगणायूयंकिंनिरर्थकमाकुलाः
॥२१॥ मिथ्यैवमेविवल्गंतिनीरूपानयनादयः॥अलातचक्रप्रतिमाःसर्परज्जुभ्रमोपमाः॥२२॥तेनात्मनाबद्धज्ञेननिर्ज्ञाताश्चक्षुरादयः॥
मनागपिनसंबंधोद्युपातालतलाद्रिवत्॥ २३॥

निस्वरूपाणि ॥ जडेरलयोरभेदाज्जलेचउत्सिक्ततातरंगोत्संकवत्तेवव्यर्थंवल्गति ॥ १९ ॥ असारात्मअनृतंस्वरूपंयेषांतथाविधानांभवतामेनालोकवतीआत्मज्ञानशून्यायास
मुद्धतिर्दुर्विनयादमार्गेप्रवृत्तिःसेयमंधानांसादृश्यायउपमार्थमेवजायते ॥ अमार्गेधावतामंधानांकूपेपातस्योपमाजायतइत्यर्थः ॥ २० ॥ यदिवयंजडाःकस्तर्हिदर्शनादिनासर्व
व्यवहारंकरोतितत्राह ॥ चिदात्मेति ॥ २१ ॥ नीरूपाःसत्यस्वरूपशून्याः ॥ २२ ॥ येनसाक्षिणाबद्धज्ञेनसर्वावभासकेननयनादयःपरिज्ञातास्तेनसहएषांमनागपिसंबंधोनास्ति
यथाद्युपातालतलयोःपातालाद्रिभ्यांदिवोवापातालतलाद्रिभिस्तद्वदित्यर्थः ॥ २३ ॥

१ अनालोकवतामित्यपिपाठः   २ अनालोकवतामात्मज्ञानशून्यानामित्यपिपाठः

॥१३७॥

चिन्मात्रंचिदेकरसःप्रत्यगात्मापराग्भ्यइंद्रियेभ्योदूरंतिष्ठति ॥ परांचिखानिव्यतृणत्स्वयंभूरितिश्रुतेरितिभावः ॥ २४ ॥ तर्हिकथमिंद्रियव्यापारेआत्मनोनिमित्ततामसिद्धिस्तत्राह ॥ चित्सत्तेति ॥ दिनकार्याणिश्राद्धकृष्यादीनितद्वताम् ॥ २५ ॥ इदानींचित्तंसंबोध्यबोधयति ॥ चित्तेत्यादिना ॥ इंद्रियाणांबहिर्मुखताप्रचारहेतुत्वाच्चारण ॥ देहात्माभिमानित्वाच्चार्वाक ॥ चतसृषुदिक्षुकुक्षिभरणायभिक्षुक ॥ २६ ॥ चिद्वत्चेतनमितिवासनाभ्रांतिः ॥ २७ ॥ नसत्येति ॥ नह्यहंकाराधीनजीवनंसत्यम् असत्यपितस्मिन्सुषुप्तौजीवनदर्शनात् ॥ इतोपिमिथ्यैवसायतःसत्येनपरमात्मनावर्जिता ॥ नप्राणेननापानेनमर्त्योजीवतिकश्चन ॥ इतरेणतुजीवंतियस्मिन्नेतावुपाश्रिताविति श्रुतेरित्यर्थः ॥ २८ ॥ अहंकारस्यअभिमानाख्यपरिणामस्यउदयेजातेसकार्यकारणसंघातात्मास्मीत्येतांसंरब्धतांअभिमानम् ॥ २९ ॥ तवैवस्वरूपंदुर्लभंत्वयाअभिमानेनान्यरक्षणंतुदूरनिरस्तमि

भीतःपांथइवाहिभ्यःपुक्कसेभ्यइवद्विजः॥ दूरेतिष्ठतिचिन्मात्रमिंद्रियेभ्यस्त्वनामयम्॥ २४॥ चित्सत्तामात्रकेणालंसंक्षोभोभवतामिथः॥ तिष्ठतिस्वैरमादित्येदिनकार्यवतामिव ॥ २५ ॥ चित्तचारणचार्वाकचतुर्दिक्कुक्षिभिक्षुक ॥ श्वेवव्यर्थमनर्थायमेवंविहरहेजगत् ॥ २६॥ अहंचिद्वदितिव्यर्थमसत्यातववासना॥ अत्यंतभिन्नयोरैक्यंनास्तिचिन्मनसोःशठ॥ २७॥ जीवाम्येवाहमित्येषातवाहंकारदुर्मतिः॥ मिथ्यैवजाताद्दुःखायनसत्यासत्यवर्जिता ॥ २८ ॥ अहंकारोदयेसोस्मीत्येतांसंरब्धतांत्यज॥ नकिंचिदपिमूर्खत्वंकिंव्यर्थंतरलायसे॥ २९ ॥ संविच्चित्त्वमनाद्यंतंसंविदोन्यन्नविद्यते ॥ देहेस्मिंस्तन्महामूर्खकिंत्वंस्याश्चित्तनामकम्॥ ३० ॥ विषपर्यवसानेयंरसायनवदुत्थिता॥ भोक्तृताकर्तृताशंकावतचित्तमुधैवहि॥ ३१ ॥ मोपहासपदंगच्छमूर्खेंद्रियगणाश्रयम्॥ नकर्त्तात्वंनभोक्तात्वंजडोस्यन्येनबाध्यसे॥ ३२ ॥ कस्त्वंभवसिभोगानांकिंवाभोगाभवंतिते॥ जडस्यात्मैवतेनास्तिबंधुमित्रादितत्कृतः॥ ३३॥ यज्जडंतद्विनास्त्येवसदेवासत्तयान्वितम्॥ ज्ञत्वकर्तृत्वभोक्तृत्वमन्यत्वानामसंभवात् ॥ ३४ ॥ प्रत्यक्तनरूपश्चेत्त्वंतदात्मैवतेवपुः ॥ भावाभावमयीचित्तसत्तातेकेवदुःखदा॥ ३५॥ यथाकर्तृत्वभोक्तृत्वंमिथ्यैवाधिगतंत्वया॥ मयातेहिप्रमार्ज्यंतेशृणुयुक्त्याकथंशनैः॥ ३६॥ स्वयंतावद्भवान्नपजडोनास्त्यत्रसंशयः॥ जडस्यकीदृक्कर्तृत्वंनृत्यंतीहकथंशिलाः॥ ३७॥

त्याशयेनाह ॥ संविदिति ॥ ३० ॥ परिणामेविषपर्यवसानाभोगकालेरसायनवदुत्थिता ॥ ३१ ॥ इंद्रियगणानामाश्रयणमाश्रयंकृत्वेतिशेषः ॥ अन्येनसाक्षिणा ॥ ३२ ॥ भोगानुभवशक्तिशून्यस्यजडस्यमिथ्याभूतस्यचतवभोगाशाव्यर्थेत्याह ॥ कस्त्वमिति ॥ ३३ ॥ आत्मैवतेनास्तीत्येतदुपपादयति ॥ यदिति ॥ सत्परसत्तावशाद्विद्यमानतयाभासमानमेवस्फटिकेलौहित्यमिवस्वतःअसत्तयान्वितम् ॥ ज्ञत्वंचकर्तृत्वंचभोक्तृत्वंचमन्यतेपूर्वापरमनुसंधत्तेइतिमन्यस्तत्त्वंचतेषांचैतन्यमंतरेणासंभवात् ॥ ३४ ॥ तर्ह्यहंप्रत्यक्चैतन्यरूपमेवकिंनस्यामितिचेत्तर्हितवसदानिर्विकल्पैवस्थितिर्युक्तानतुदुःखदाकर्तृत्वभोक्तृत्वभावाभावविकल्पमयीत्याह ॥ प्रत्यगिति ॥ नचसर्वविकल्पत्यागेचित्ततानवास्तीतिभावः ॥ ३५ ॥ अचेतनत्वेतुअयत्नेनैवकर्तृत्वादिकंप्रमार्जितुंशक्यमित्याह ॥ यथेति ॥ ३६ ॥ शिलाःशिलापुत्रिकाः ॥ ३७ ॥

यदिद्रूपेकाष्ठप्रतिमाचेतनव्यापारमुपर्जीव्यनृत्यंतीदृष्टेतितर्हित्वमपितदैश्वरंचिदाभासभागमुपजीव ॥ तथाचप्रतिमानृत्यफलभोक्तायथाचेतनएवनप्रतिमातथात्वत्कृतजीवनादिफलभोक्ताचिदात्मैवेतित्वंवृथाजीवनाद्यर्थंधावसीत्यर्थः ॥३८॥ दात्रंशंकुला ॥३९॥ पुमानेवहंताप्रोच्यतइत्यन्वयः ॥४०॥ यस्तुनरःसएवपाताउच्यतेनपात्रम् ॥४१॥चिनोतिभोक्तृभोग्यकरणोपकरणादिभावेनस्वमङ्गवसंचिनोति ॥ भवच्छब्दस्यसर्वनाम्नोनपुंसकेभवदितिरूपम ॥ ४२ ॥ बोधयतिचिदाभासव्याप्त्यास्फोरयति ॥ युक्तंचैतदित्याह ॥ बोधनीयाइति ॥ ४३ ॥ अतएवबोधसत्ताधीनस्तवनामरूपाभ्यामात्मलाभइत्याह ॥ आत्मेति ॥ ४४ ॥ तथाचात्मैवस्वाज्ञानात्स्वमिवसंपन्नःस्वज्ञानात्त्वद्भावान्मुच्यतइत्या

उपजीवचिरंतस्माच्छुद्धंतद्भागमैश्वरम् ॥ जीवसीच्छसिहंसित्वंवृथायासिविवल्गसि ॥ ३८ ॥ क्रियतेयत्तुयच्छक्त्यातत्तेनैवकृतंभवेत् ॥ लुनातिदात्रंपुंशक्त्यालावकःप्रोच्यतेपुमान् ॥ ३९ ॥ हन्यतेयस्तुयच्छक्त्यासतेनैवहतोभवेत् ॥ निहंतिखड्गःपुंशक्त्याहंतैवप्रोच्यतेपुमान् ॥ ४० ॥ पीयतेयस्तुयच्छक्त्यापीतंतेनैवतद्भवेत् ॥ पात्रेणपीयतेपानंपातायस्तूच्यतेनरः ॥ ४१ ॥ प्रकृत्यैवासिसुजडःसमस्तञ्जेनवर्ध्यसे ॥ तेनात्मैवात्मनात्मानंचिनोतीदंहिनोभवत् ॥ ४२ ॥ अनारतंबोधयतित्वामात्मापरमेश्वरः ॥ बोधनीयाबुधैर्मूढाःकिलावृत्तिशतैरपि ॥ ४३ ॥ आत्मसत्तैवबोधैकरूपिणीस्फुरतीहहि ॥ तयैवचित्तशब्दार्थावंगीकृत्यत्वयास्थितम् ॥ ४४ ॥ एवंचित्तत्वमज्ञानादात्मशक्तेरुपागतम् ॥ ज्ञानेत्वयाविगलितंतीव्रेहिममिवातपे ॥ ४५ ॥ तस्मान्मृतंत्वंमूढत्वंनासित्वंपरमार्थतः ॥ तदेवाहमितिव्यर्थमतोमास्त्वसुखायते ॥ ४६ ॥ असत्याचित्तकलनाइंद्रजाललताइव ॥ विज्ञानमात्रमेवेहब्राह्ममंगंविजृंभितम् ॥४७॥ नरामरजगद्रूपैर्ब्राह्मीशक्तिरुदेत्यलम् ॥ सामुद्रकणकल्लोलजालैर्वेलेववल्गति ॥ ४८ ॥ चिन्मयश्चेद्भवेर्मूढतत्तस्मात्परमात्पदात् ॥ नित्यमव्यतिरिक्तंत्वं[1]किमन्यत्परिशोचसि ॥ ४९ ॥ सर्वगंसर्वभावस्थंसर्वरूपंहितत्पदम् ॥ तत्प्राप्तौसर्वमेवाङ्गप्राप्तंभवतिसर्वदा ॥ ५० ॥ नत्वमस्तिनदेहोस्तिब्रह्मास्तीहमहत्स्फुरत् ॥ अहंत्वमितिनिस्पंदेस्फुरत्यार्त्तिर्हिकस्यका ॥ ५१ ॥ आत्माचेत्त्वंतदात्मैवसर्वगोस्तीहनेतरः ॥ आत्मनोन्यज्जडत्वंचेत्त्वंनास्यस्तितद्वपुः ॥ ५२ ॥

ह ॥ एवमिति ॥ विगलितंभावेक्तः ॥ ४५ ॥ तदात्मैवाहमितितादात्म्यध्यासोमास्तु ॥ असुखायजन्मादिदुःखाय ॥ ४६ ॥ ब्राह्मंअंगंस्वरूपम् ॥४७॥ शक्तिश्चिच्छक्तिसंवलितामायाअतएववेलेव ॥ ४८ ॥ हेमूढत्वंआत्मत्वबोधाच्चिन्मयश्चेद्भवेस्तत्तर्हिचितोभेदकारणाभावात्परमात्पदान्नित्यमव्यतिरिक्तएव ॥ ४९ ॥ तदाअप्राप्तविषयाभावादनुशोकोनिर्विषयोनसंभाव्यइत्याशयेनाह ॥ सर्वगमिति ॥ सर्वेष्वतीतानागतभावेष्वपिस्थितंकालकृतपरिच्छेदशून्यमितियावत् ॥ ५० ॥ तदात्वंपृथङ्नास्ति ॥ छांदसःपुरुषव्यत्ययः ॥ अहंत्वमित्याभासोनिस्पंदेआत्मनिस्फुरतिअतःकस्यकावाआर्त्तिः ॥ ५१ ॥ उक्तकल्पद्वयंपुनःस्पष्टमाह ॥ आत्मेति ॥ ५२ ॥



[1] व्यतिरिक्तस्त्वमित्येवपाठइतिभातिटीकानुरोधात्

तत्तस्मायदित्वंकिंचिदात्मान्यद्यदिभवसितदाकिंचनतत्त्वंपरमार्थरूपंनेत्यर्थः ॥ ५३ ॥ अहंनुइदंवालशरीरम् ॥ अहंतद्वृद्धशरीरम् ॥ तद्बालशरीरसंबंधिक्रीडोपकरणादिवद्ध
शरीरसंबंधिपुत्रगोत्रादिचमेममइतिव्यर्थंकिमीहसे ॥ नह्यात्मभूतस्यशरीरतावास्तवीत्यसद्वपुःकिंस्फुरतीत्यर्थः ॥ ५४ ॥ तर्हिचिदचिद्व्यतिरिक्तंतृतीयंस्वरूपमहंकिंनस्यांतत्राह॥
तृतीयेति ॥ यथाजगतिच्छायातपान्यतरानुरंजनासर्ववस्तुष्वस्तेनतृतीयाविधानास्तितद्वदित्यर्थः ॥ ५५॥ तर्ह्यहंतत्त्वतःकिंस्वरूपमितिचेच्चरमसाक्षात्कारवृत्त्याअविषयासह
त्वदीयजाड्यस्यत्वदंतर्गतचिदाभासस्यचक्षयेचरमसाक्षात्कारवृत्त्याविर्भूतंयत्स्वप्रकाशपूर्णात्मरूपंतदेवत्वमित्याह ॥ सत्येति ॥ तज्जंतस्मात्त्वयावलोकनादाविर्भूतम् ॥ ५६ ॥
॥ ५७ ॥ यद्यहमात्मैवनर्हिमनसैवानुद्रष्टव्यंमनसैवेदमाप्तव्यंनेहनानास्तिकिंचनेत्यादिश्रुतिषुममआत्मोपकरणत्वंकथमुक्तंतत्राह ॥ केवलमिति ॥ अज्ञदशायामेवात्मशास्त्रा
चार्यकृतानांतत्त्वमसीत्याद्युपदेशानांप्रयोजनसिद्ध्येकरणत्वेनकल्पितेनत्वयाकेवलंशुद्धंस्वतस्त्वंज्ञत्वंचरमसाक्षात्कारस्तद्विषयंकरोति ॥ यथास्वमुखतत्त्वंदिदृक्षुर्दर्पणोपाध्य

अहंत्विदमहंतन्मइतिव्यर्थंकिमीहसे॥ अस आत्मैवसर्वंत्रिजगत्तदन्यत्तुनकिंचन॥ तत्त्वंकिंचित्त्वमात्मान्यद्यदितत्त्वंनकिंचन॥ ५३॥ अहंत्विदमहंतन्मइतिव्यर्थंकिमीहसे॥ अस द्वपुःकिंस्फुरतिशशशृंगेणकोहतः॥ ५४ ॥ तृतीयाकलनानास्तिचिज्जडांशेतराशठ॥ छायातपनयोर्मध्येतृतीयेवानुरंजना॥ ५५॥ स त्यावलोकनाज्जातेचित्तजाड्यदृशोःक्षये॥ संपद्यतेयत्तुतज्जंस्वसंवेदनमात्रकम्॥५६॥ तेनमूढनकर्तृत्वंनभोक्तृत्वंतवापिहि॥ तदेवासि परंब्रह्मत्यजमौर्ख्यंभवात्मवान्॥५७॥ केवलंज्ञत्वविषयमुपदेशार्थसिद्धये॥ त्वयाकरणभूतेनकरोत्यात्मेतिकथ्यते॥५८॥ असत्स्व रूपंकरणंजडंनिरवलंबनम्॥ निःस्पंदनंनस्पंदतकर्तृसंबोधनंविना॥ ५९॥ अकर्तुःकरणस्यास्यशक्तिःकाचिन्नविद्यते॥ दात्रस्यलाव काभावेकर्तुंकिमिवशक्तता ॥ ६० ॥ खड्गप्रहारविच्छेदक्रियायांपुंसिशक्तता॥ नखड्गेसुजडेचित्तसर्वांगेष्वपिशक्तता ॥ ६१ ॥ तस्मा न्नासिसखेकर्तृमाव्यर्थंदुःखभाग्भव॥ परार्थंक्लेशितामूर्खप्राकृतेपुनशोभते ॥ ६२॥ ईश्वरोनेदृशःशोच्योयस्त्वयासदृशोभवेत्॥ नच तस्यकृतेनार्थोनाकृतेनेहकश्चन॥ ६३॥ गर्वात्तूपकरोम्येनमितिकेवलमल्पधीः॥ क्लिश्यतेवसतांत्वर्थोनकिंचिदुपयुज्यते॥६४॥ कर्तुं भोगेश्वरस्यैवमर्थंचेदनुवर्त्तसे॥ तदस्यकाचिन्नच्छेहत्वमत्वात्सर्वदैवहि॥६५॥

धिरूढेनस्वमुखेनैवकरणेनमुखंपश्यतितद्वदितिभावः ॥ ५८ ॥ यदित्वंकरणस्वभावमेवस्वंमन्यसेतर्हितवचलनेपिस्वतःसामर्थ्यंनास्तीतिकर्तृत्वाभिमानस्तवव्यर्थंएवेत्येतदुपपादय
ति ॥ असत्स्वरूपमित्यादिना ॥ निःस्पंदनंस्वतःस्पंदनशक्तिरहितम् ॥ कर्तृसंबोधनंचैतन्यकृतंकर्तव्यार्थप्रकाशम् ॥ ५९ ॥ अकर्तुःकर्त्रनधिष्ठितस्य ॥ ६० ॥ सर्वांगेषुआमू
लायंसर्वावयवेषुसर्वेष्वंगेषुउपकरणेषुसत्स्वपीतिवा ॥ ६१ ॥ प्राकृतेषुपामरतुल्येषुप्रकृतिकार्येषु ॥ आत्मनस्तुशोभतएव ॥ ६२ ॥ नन्वीश्वरएवमोहाज्जीवतांप्राप्तःअशना
यादिनापीड्यमानःकथंमयोपेक्षणीयइतितदर्थंसर्वप्रयत्नैर्घटमानमहंतमनुशोचामीतिचेत्तत्राह ॥ ईश्वरइति ॥ यस्त्वयासदृशःसएवत्वयाशोच्यः ईश्वरस्तुनेदृशइत्यर्थः ॥६३ ॥
संघातंवसतांपंचप्राणमनोबुद्धिदशेंद्रियाणांसर्वेषामचेतन
गर्वात्कार्यकारणसंघाताभिमानादेनमात्मानमुपकरोमीतिभ्रांत्यात्वयाअस्यापरिच्छिन्नार्थाबुद्धिःक्लिश्यतेपीड्यते ॥
त्वाज्ज्ञेयैर्नार्थइतिर्नाकिंचित्कस्यचिदुपयुज्यतइत्यर्थः ॥ ६४ ॥ अतःपरिशेषादीश्वरस्यार्थेत्वद्वृत्तिर्वाच्यातत्रनुक्तमेवोत्तरमित्याह ॥ कर्त्तुरिति ॥ ६५ ॥

कुतस्तस्यनेच्छेतिचेत्पूर्णत्वाददूयत्वाच्चेत्याह ॥ अकृत्रिमेति ॥ ६६ ॥ सर्वस्यजगतःस्वात्मनितेनैवकल्पितत्वेनाप्राप्तत्वाभावादपितत्रतस्यनेच्छेत्याह ॥ एकेति ॥ आत्मनाआत्म न्येवाविद्यकेनएकानेकावभासेनतज्जगद्रूपंक्रियतेतत्रांकिकिमलभ्यंयदिष्यते ॥ ६७ ॥ यदिसर्वमीश्वरस्त्वंतर्हितत्रकथंममेच्छातत्राह ॥ त्वादृशस्येति ॥ मूर्खस्येत्यर्थः ॥६८॥ त र्हितेनेश्वरेणैवसंबध्यतदनुमहाद्भोगानूलप्स्यामितत्राह ॥ आत्मनेति ॥ आत्मसंबंधेच्छायारमणीयत्वात्सुंदरेति ॥ अस्यात्मनःसंबंधिसंबंधयोग्यंनासि ॥ यथाकुसुमादुत्पन्नम पिफलंकुसुमबहिर्मुखत्वात्तत्सौगंध्याद्युपभोगसंबंधयोग्यंनभवतितदभिवृद्धौकुसुमस्यैवतिरोभावात्तद्वत्त्वमपीत्यर्थः ॥ ६९ ॥ संबंधयोग्यतामुपपादयितुंमुख्यसंबंधलक्षणमाह॥ द्वितीयेनेति ॥ एकस्यद्वितीयेनसमंएकतरक्रियायाउभयक्रिययाचमिलनात्तस्यपूर्वस्यतावद्भवनमपरांतर्भावस्तेनएकतावासासंबंधगतिःसंबंधस्यफलतोलक्षणमित्यर्थः ॥ तदेव संक्षिप्याह ॥ प्रागिति ॥ ७० ॥ तादृश्येचमुख्येसंबंधेभवान्अहेतुः ॥ यतस्तवस्वतोनैकविधाकार्यंतश्चनानाप्रकाररचनानानारूपविहितनिषिद्धक्रियोन्मुखीसुखदुःखदशाअ समंतान्स्वतःप्रसिद्धेत्यर्थः ॥ ७१ ॥ समयोःक्षीरयोः ॥ अर्द्धसमयोःक्षीरनीरयोः ॥ विलक्षणयोर्वारिवह्न्योरिवात्यंतविरुद्धयोः ॥ यतस्तस्मिन्विरुद्धसन्निपातेसतिअन्यएकतर

अकृत्रिमावभासेनसर्वगेनचिदात्मना॥ एकेनैवेदमापूर्णंकल्पनैवास्तिनेतरा॥ ६६ ॥ एकानेकावभासेनसमस्तेनतदात्मना॥ आत्म न्येवांतरात्मांतःक्रियतेकिंकिमिष्यते॥ ६७॥ त्वादृशस्यतुदृष्ट्यैवक्षुब्धताजायतेमुधा॥ आलोक्यराजमहिषींयूनोमदमयींतथा॥ ६८॥ आत्मनासहसंबद्धंचेतःकर्त्रसिसुंदर॥ किंतुनास्यासिसंबंधिकुसुमस्ययथाफलम्॥ ६९ ॥ द्वितीयेनसमंयैषातत्तावद्भवनैकता॥ सासं बंधगतिःप्रोक्ताप्राग्द्वित्वादधुनैकता॥ ७० ॥ नानाप्रकाररचनानानारूपक्रियोन्मुखी॥ सुखदुःखदशाहेतुर्भवान्नैकविधास्मृता॥ ७१ ॥ संबंधःसमयोर्दृष्टस्तथार्द्धसमयोरपि॥ नविलक्षणयोश्चान्यस्तस्मिन्सतिजगत्त्रये॥ ७२ ॥ द्रव्यांतरगुणाद्रव्याण्याश्रयंतिबहून्यलम् ॥ संविदश्च्यवनंदुःखंसंविदोमाच्युतोभव ॥ ७३ ॥ एतावतैकध्यानेननित्यध्यानोथवात्मदृक् ॥ अभावेदुःखदस्यांतर्दृशादृश्यस्यवस्तुनः ॥ ७४ ॥ संकल्पोन्मुखतांविद्धिदुःखदांसंविदश्च्युतिम् ॥ जडपूपलभूतेपुमनोदेहेंद्रियादिषु ॥ ७५ ॥

स्यनाशएवदृष्टोनसंबंधावस्थानमित्यर्थः ॥ ७२ ॥ ननुशब्दस्पर्शरूपादिविरुद्धगुणवतामपिसूक्ष्मभूतानांपंचीकरणेनसंबंधवन्ममआत्मसंबंधःकिनस्यात्तत्राह ॥ द्रव्यांतरेति ॥ तत्रनपरस्परविरुद्धतायतोद्रव्यांतरगुणाअपिपरस्परमेलनेपंचीकृतद्रव्याण्याश्रयंति ॥ तथाचाहुः ॥ शब्दैकगुणमाकाशंशब्दस्पर्शगुणोमरुत् ॥ शब्दस्पर्शरूपगुणैस्त्रिगुणंतेजउ च्यते ॥ शब्दस्पर्शरूपरसगुणैरापश्चतुर्गुणाः ॥ शब्दस्पर्शरूपरसगंधैःपंचगुणामहीति ॥ इहतुसंविज्जाड्ययोर्विरोधाज्जडात्स्वत्तःसंविदश्च्यवनंचेत्साधकाभावाज्जडांशोनसिद्ध्यत्येवे तित्वदसिद्धिप्रसंगदुःखम् संविदःसकाशात्तवच्यवनंचेत्त्वयास्वनाशार्थमेवात्मसंबंधोऽपेक्षितःस्यात् अतआत्मसंबंधमपेक्षमाणउभयथापित्वंसंविदःसकाशान्माच्युतोभवेत्यर्थः ॥ ७३ ॥ अथवाअंतर्दृशासंविदादुःखदस्यदृश्यस्यत्वदादेर्वस्तुनःअभावेनाशेसतिनिर्दुःखनिरतिशयानंदात्ममात्रपरिशेषः ॥ एतावताचेत्संतुष्यसितदाएकाग्र्येणध्यानेननित्यध्या नश्चिरमविच्छिन्नसमाधिःसन्आत्मदृगात्मदर्शीभवेत्यर्थः ॥ ७४ ॥ समाधावेवतवसुखंनतुसंकल्पोन्मुखत्वेयतःसंकल्पैर्निर्झरोदकंशिलासुच्युतमिवदेहादिषुच्युतासंविदिंद्रिय द्वारैर्बहुधाविभज्यमानाविशीर्यंतइवेतितदेवदुःखमित्याह ॥ संकल्पेति ॥ ७५ ॥

ननुनाहंसंकल्पयामिकिंत्वात्मैवकर्त्तृत्वात्स्वभावात्संकल्पयतीतिचेन्नैतदित्याह ॥ कीदृशीत्यादिना ॥ ७६॥ त्वत्कल्पितयानानानानातयाआत्माकेवलंस्फुरत्येवनकल्पयतीत्यर्थः ॥ ७७ ॥ ७८ ॥ यथाअंबुधौतप्तांगारोनास्तितद्वत् ॥ एवमात्मदेवेकलनारहितेसतिदेहेमनसिचजडेसतिविवेकदृशाइदमन्यदिदमशुभमिदंनान्यदिदंशुभमित्याद्यसत्कल्पनाकल्पकाभावादेवनास्तीतिसंवेद्यरहितासंविदेवसानेतरदितिसिद्धमितिपरेणान्वयः ॥ ७९॥८०॥ तदेवस्पष्टमाह ॥ संवेद्येति ॥८१॥ ऋग्वेदपदग्रहणंलेख्यमात्रोपलक्षणम॥ ८२ ॥ हे चित्तत्वयाअमलत्वात्स्वनैर्मल्यात्सकलेषुवस्तुत्वेनप्रसिद्धेषुपदेष्वर्थेषुचसारभूतेसंविन्मात्रस्वभावस्थितेआत्मनिभरितनिर्भरभूरिदिक्कंयथास्यात्तथासाधुअसंदिग्धापरोक्षतयागतेअवगतेसतिममसुखासुखलवौअसत्यमिवमृगतृष्णोदकरज्जुसर्पशुक्तिरजतादिकमिवक्षीणौ यतःवैइतिनिश्चयेनसप्राक्तनसुखदुःखप्रत्ययोमोहोभ्रांतिरेवनयथार्थइत्यर्थः ॥८३

कीदृशीकर्त्तृताचित्तपुष्पंव्योम्निकथंभवेत्॥ निरस्तकलनापंकेमननध्वंसरूपिणि॥ ७६॥ नचैवात्मनिकर्त्तृत्वंसंभवत्यंबरांगवत्॥ अयं केवलमात्मैवनानानानानातयात्मनि ॥ ७७॥ स्फुरत्यब्धिरिवांभोभिःफेनबुद्बुदवीचिभिः॥ आभासमात्रेसर्वस्मिन्स्फुरत्यस्मिंश्चिदात्मनि॥ ७८॥ द्वितीयानास्तिकलनातप्तांगारइवांबुधौ॥ कलनारहितेदेवेदेहेमनसिवाजडे॥ ७९॥ संवित्संवेद्यनिर्मुक्तासारंसुंदरनेतरत्॥ इदमन्यदिदंनान्यच्छुभंवाशुभमेवच॥८०॥इत्यसत्कल्पनानास्तियथानभसिकाननम्॥ संवेद्यरहितंसंविन्मात्रमेवेदमाततम्॥८१॥ तत्रायमहमन्योयमित्यसत्कलनाकथम्॥ अनादिमतिनीरूपेसर्वगेविततात्मनि॥ आरोपयेत्कःकलनामृग्वेदंव्योम्निकोलिखेत्॥८२॥ नित्योदितेसकलवस्तुपदार्थसारेसंवित्स्थितेभरितनिर्भरभूरिदिक्कम्॥ आत्मन्यसत्यमिवसाधुगतेमलत्वात्क्षीणौसुखासुखलवौममवैसमोहः॥८३॥ ॥इ॰वा॰वा॰दे॰मो॰उपश॰इंद्रियानुशासनयोगोपदेशोनामद्व्यशीतितमःसर्गः॥ ८२॥ ॥श्रीवसिष्ठउवाच॥ भूयोमुनिवरोधीरोधियाधवलमेधया॥ स्वमिंद्रियगणंगुप्तोबोधयामाससाध्विदम्॥ १ ॥ तच्चेंद्रियगणस्यार्थेशृणुवक्ष्यामितत्स्फुटम्॥ श्रुत्वातद्भावनामेत्यपरांनिर्दुःखतांव्रज॥२॥ भवतामात्मसत्तैषादुःखायैवांतदायिनी॥ असत्यामात्मनस्सत्तांतद्भवंतस्त्यजंत्विति॥३॥ मदीयेनोपदेशेनसत्तैषाभवतांक्षयम्॥ गतैवेतिस्फुटंमन्येयूयंत्वज्ञानसंभवाः॥४॥ स्वसत्तास्फुटतांयातिदुःखायतवचित्तक॥ तप्तकांचनरुल्लासोदाहायैवस्वपार्श्वयोः॥५॥ ॥ इतिश्रीवासिष्ठम॰ता॰उपश॰द्व्यशीतितमःसर्गः॥ ८२ ॥ ॥ ६ ॥ ॥ समस्तदोषानर्थानिश्चित्तेंद्रियगणेसति ॥ समस्तगुणसौख्यानिस्तदसत्त्वेत्रकीर्त्यंते ॥१॥ धवलाशुद्धामेधाधारणायस्यास्तथाविधयाधिया ॥ गुप्तोरहःस्थः ॥ १ ॥ इंद्रियगणस्यार्थेतत्त्वनस्तंरहस्यप्रबोधनंतत्स्फुटंवक्ष्यामि ॥२ ॥ हेइंद्रियादिगणाःभवतामेषाअविचारदृशाप्रसिद्धाआत्मसत्तास्वीयाविद्यमानताजीवनकालेबहुतरानर्थदुःखायैवतदूर्ध्वंचांतदायिनीपुनःपुनर्मृत्युनरकादिदायिनीतत्तस्मादितिप्राग्दर्शितविचारेणतामात्मनःअसत्यांसत्तांत्यजंतु ॥३॥ मदीयेनप्राक्तनेनात्मतत्त्वोपदेशेन ॥ हियतोयूयमज्ञानसंभवाः ॥ उपदेशेनाज्ञानेनष्टेनसत्तांलप्स्यथेत्यर्थः ॥ ४ ॥ इदानींचित्तंप्रत्यपितथैवाह ॥ स्वसत्तेति ॥ तप्तकांचनमिवज्वलनरीतिध्वनतीतितप्तकांचनस्तुअग्निस्तस्मिन्नुल्लासःक्रीडावालानांपक्षिणांवापार्श्वयोर्दाहायैव ॥ ५॥

चित्तेंद्रियगणसत्ताप्रयुक्तामनर्थपरंपरांदर्शयति ॥ पश्येत्यादिना ॥ लडयोरभेदाज्जडानांमूर्खाणांरागद्वेषादिकल्लोलैःसंकुलाः ॥ ६ ॥ अहमहमिकाःपरस्पराहंकारास्ताभिर्वि हितान्यन्योन्यवधपराजयपीडनादिचिंतनानियासुताः ॥ ७ ॥ भावाभावौसंपद्विपदौ ॥ ८ ॥ ९ ॥ कल्लोलैर्मनोरथतरंगैर्व्यालैर्वलितेशरीरश्वभ्रकोटरेहृदये ॥ घननीहाराणि निबिडजाड्यानिखानींद्रियच्छिद्रद्वाराणियस्य ॥ चिंतालक्षणाचपलाजालरचनव्ययामर्कटीऊर्णनाभिकीटिकाभ्रमतीतिशेषः ॥ १० ॥ लोभलक्षणैर्नाद्यैःस्वविलासैरारटन् कूजन्पक्षीतीक्ष्णयासुखदुःखादिद्वंद्वलक्षणयातुंडयाचंच्वागुणखंडंशांतिदांतिधर्मादिफलपुष्पलक्षणंगुणसमूहंनिकृंतति ॥ ११ ॥ कामलक्षणःकुक्कुटोरागादिवासनाकीर्णंहृदयं

पश्यत्वयिसतिभ्रांतजलकल्लोलसंकुलाः ॥ विशंतिकालजलधिंसंसारसरितांगणाः ॥ ६ ॥ पतंत्यहमहमिकाविहितान्योन्यचिंतिताः ॥ कुतोपिदुःखावलयोधाराआसारगाइव ॥७॥ परिस्फुरत्यपर्यंताहृदयोन्मूलनोद्यता ॥ आक्रंदकारिणीक्रूराभावाभावविपूचिका ॥८॥ कासश्वासरणद्भृंगाकलेवरजरद्द्रुमे ॥ विकसत्यमलोद्योताजरामरणमंजरी ॥ ९ ॥ कल्लोलव्यालवलितेशरीरश्वभ्रकोटरे ॥ घननीहार खेस्वांतश्चिंताचपलमर्कटी ॥ १० ॥ लोभनाद्यारटत्पक्षीतीक्ष्णयाद्वंद्वतुंडया ॥ कायजीर्णद्रुमादस्माद्गुणखंडंनिकृंतति ॥ ११ ॥ हृदयाव करंकीर्णमितश्चेतश्चकर्कशः ॥ अपवित्रोदुराचारःकुरुतेकामकुक्कुटः ॥ १२ ॥ महत्यांमोहयामिन्यामुल्वणोज्ञानकौशिकः ॥ श्मशान इववेतालःपरिवल्गतिहृद्द्रुमे ॥ १३ ॥ एताश्चान्याश्चवक्र्योपित्वयींद्रियगणेसति ॥ पिशाच्यइवशर्वर्याप्रवल्गंत्यशुभश्रियः ॥ १४ ॥ त्व यित्वसतिहेसाधोसर्वाएवशुभश्रियः ॥ प्रभातइवपद्मिन्यःसालोकंविलसंत्यलम् ॥१५॥ प्रशांतमोहमिहिकंराजतेहृदयांवरम् ॥ निर्म लालोकवलितंनीरजस्कतरांतरम् ॥ १६ ॥ अशंकितनभःकोशपतिताकुलपूरवत् ॥ नापतंतिविकल्पौघाश्चिरंवैकल्यकारिणः ॥ १७ ॥ सर्वस्याह्लादनीशांतामैत्रीपरमपावनी ॥ अभ्युदेतिहृदोद्यासुतरोरिवमंजरी ॥१८॥ अंतश्छिद्रवतीजाड्ययुक्तायुक्तगुणास्वयम् ॥ चिं ताशोषमुपायातिहिमदग्धेवपद्मिनी ॥१९॥ आलोकःस्फुटतामंतरायात्यज्ञानसंक्षये ॥ प्रशाम्यत्यंबुदव्योम्निशरदीवार्कमंडलम् ॥२०॥

मनस्तल्लक्षणंअवकरंउत्करंकुरुतेपुनःपुनःपादाभ्यांविकिरतीत्यर्थः ॥ १२ ॥ अज्ञानंभ्रांतिज्ञानंतल्लक्षणःकौशिकउलूकः ॥ १३ ॥ १४ ॥ इदानींचित्तेंद्रियगण सत्वेसर्वगुणसं पत्तिंदर्शयति ॥ त्वयीत्यादिना ॥ असत्वेसाधुरेवेतितथासंबोधनम् ॥ शुभश्रियोवक्ष्यमाणगुणश्रियः ॥ सालोकंविवेकालोकसहितंयथास्यात्तथा ॥ प्रभातपक्षेपियथायोगं योज्यम् ॥ एवमग्रेऽपि ॥ १५ ॥ हृदयांबरंहार्दंब्रह्मनीरजस्कतरमत्यंतापगतरजोगुणमांतरंमनोयस्मिन् ॥ १६ ॥ अशंकितंनिःशंकमेवनभःकोशेपतिता निर्गतावाय्वादिनाआ कुलाश्चयेआसारपूरास्तद्वत्वैकल्यकारिणोविक्षेपहेतवोविकल्पौघानापतंति ॥ १७ ॥ १८ ॥ अंतश्छिद्रमपूर्णता ॥ जाड्ययुक्तेषुमूर्खेष्वेवआयुक्ताउपयोजिताविद्याकौश लादिगुणाययाः ॥ पद्मिनीपक्षेस्पष्टम् ॥ १९ ॥ अंतःआलोकःस्वीयज्ञानप्रकाशः ॥ स्फुटतांप्रकटताम् ॥ २० ॥

अपराहृतंवैषम्यहेतुभिरपरिभूतंहृदयंमनः ॥ २१ ॥ २२ ॥ संविदआत्माकारवृत्तयःस्फुटतापूर्णत्वापादकंविकासंयांति ॥ तेनचसचराचरंसमग्रंजगद्बाधितंसत्संविदंशैकवि श्रांतंभवतीतिशेषः ॥ २३ ॥ वपुःआत्मस्वरूपंभरिताकारंपूर्णंभाव्यतेऽनुभूयतेननुआशापाशविधायिनांअसुसंगानांप्राणसंबद्धानांदेहादीनांपक्षेभवतीत्यर्थः ॥ अथवावपुःश रीरमानंदाविर्भावमंथरंसदमृतप्राशनेनेवभरिताकारंभाव्यतेनत्वन्नपानाद्याशापाशविधायिनःमसुसंगानांप्राणाद्यासंगपाप्मनांपक्षेभवतीत्यर्थः ॥ २४ ॥ यथातरोर्दावदग्धानांप र्णानांपुनर्वर्षासुपल्लवोदयेनआगमोभवनितद्वत्ज्ञानाग्निक्षपितसंसारजराजन्मोपलक्षितमहाध्वनामपिपुंसांरसानामारोग्यतुष्टिपुष्टिकांत्यादिगुणानांपुनरागमोभवतीत्यर्थः॥२५॥ निरतिशयानंदात्मनिपुनरावृत्तिरहिताविश्रांतिरेवसर्वगुणसीमातदानुषंगिकाअन्येगुणास्त्वनंतानवर्णयितुंशक्याइत्याशयेनोपसंहरति ॥ अपुनरिति ॥ २६ ॥ एतयोरत्यंतात्मभा

प्रसन्नंस्फारगांभीर्यमक्षुब्धमपराहतम् ॥ हृदयंसमतामेतिशांतवातइवार्णवः ॥ २१ ॥ अमृतापूरपूर्णेननित्यानंदमयेनच ॥ स्थीयते पुरुषेणांतःशीतेनशशिनायथा ॥ २२ ॥ संविदःस्फुटतामंतरायांत्यज्ञानसंक्षये ॥ संविदंशैकविश्रांतंसमग्रंसचराचरम् ॥ २३ ॥ भाव्य तेभरिताकारंवपुरानंदमंथरम् ॥ नभवत्यसुसंगानामाशापाशविधायिनाम् ॥ २४ ॥ दग्धानामिवपर्णानांरसानांपुनरागतिः ॥ पुंसां क्षपितसंसारजराजन्ममहाध्वनाम् ॥ २५ ॥ अपुनर्भ्रमणायात्मद्रुमेविश्रम्यतेचिरम् ॥ एवंप्रायास्तथान्याश्चभवंतिगुणसंपदः ॥ २६ ॥ असतित्वयिसर्वांशिन्सर्वांशाक्षयसंक्षये ॥ पक्षयोरेतयोश्चित्तसत्तासत्तास्वरूपयोः ॥ २७ ॥ येनैवपक्षसिश्रेयस्तमेवांगीकुरुक्षणम् ॥ स्वात्मभावस्तवसुखंमन्येमानवतांवर ॥ २८ ॥ तमेवभावयाभावंसुखत्यागोहिमूढता ॥ यदित्वस्तिभवेत्सत्यमंतर्भावितचेतनम् ॥ २९ ॥ जीवतस्तत्तवात्यंतमभावंकइवेच्छति ॥ किंतुनास्त्यसिसत्येनवदामितवसुंदर ॥ ३० ॥ तेनमिथ्यैवजीवामीत्याशयामासुखीभव ॥ पूर्वमेवासिनास्त्येवयावद्भ्रांत्यात्वदस्तिता ॥ ३१ ॥ सैवेदानींविचारेणभृशंक्षयमुपागता ॥ एतावदेवतेरूपंसाधोयदविचारणम् ॥ ३२ ॥ विचारेविहितेसम्यक्समरूपंसमंस्थितम् ॥ अविचारात्प्रजातंत्वमनालोकात्तमोयथा ॥ ३३ ॥ विचारेणोपशांतंत्वमालोकेनतमोय था ॥ एतावंतंसखेकालंवभूवाल्पविवेकिता ॥ ३४ ॥

वेनस्थितिरात्यंतिकनैरात्म्यस्वीकारोवेत्येतयोःपक्षयोर्मध्ये ॥ २७ ॥ तत्रप्रथमपक्षोवरीयानित्याह ॥ स्वात्मेति ॥ २८ ॥ अभावंभावांतरशून्यम् ॥ ननुकिमर्थमंतर्भावितचेत ननपूर्वसिद्धमनोरूपेणैवजीवनंममनेच्छसिकिमर्थंवाममात्यंतमभावमिवेच्छसितत्राह ॥ यदीत्यादिना ॥ हेचित्ततवअंतर्भावितचेतनंयत्प्रसिद्धंरूपमस्तितद्यदिसत्यंभवेत्तर्हि तेनरूपेणजीवतस्तवाभावंकइच्छतिकिंतुत्वंतेनरूपेणनास्त्यसिअसदसि ॥ अहंसत्येनश्रुतिशास्त्रानुभवादिनाविचार्यवदामिनापातदर्शनेनेत्यर्थः ॥ २९ ॥ ३० ॥ एतदत्यंतात्म भावेनावस्थानंतवापिहितमित्याह ॥ तेनेति ॥ पूर्वंप्राथमकल्पिकमेवासि ॥ यावत्यतः ॥ ३१ ॥ सैवभ्रांतिः ॥ ३२ ॥ समरूपंसन्मात्ररूपंसमंविक्षेपवैषम्यशून्यंस्थितम् ॥ अ नालोकात्प्रकाशाभावात् ॥ ३३ ॥ ३४ ॥

अनेनअल्पविवेकत्वेनहेतुना ॥ नन्वसतःपीनत्वंकथंभवेत्तत्राह ॥ मोहेति ॥ ३५ ॥ पीनत्वंतत्प्रयुक्तंसुखदुःखादिद्वंद्वंचअभूदितिपूर्वेणान्वयः ॥ यतःस्फुराद्यंतसंकल्पेनसंकल्प कालएवक्षीणमतःक्षयीतिद्वंद्वविशेषणम् ॥ यस्यविवेकस्यप्रसादेनइदानींज्ञानोदयकालेआविद्यकेस्वप्राग्रूपेक्षयंगतेसतिनित्यमनाद्यंतमात्मरूपमुदितंतस्मैविवेकायनमोनमइ तिपरेणान्वयः ॥ ३६ ॥ हेचित्तकत्वंस्वतोपिवहुधाप्रवुद्धःशास्त्रेणाप्यनुवोधितः ॥ ३७ ॥ प्रागपित्वंपरमेश्वरःस्थितःसंप्रत्यपिप्रवोधतस्तेस्वरूपविलासःस्थितिमागतइतिमहेश्व रएवेतिपरेणान्वयः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ चित्त्वेतिपाठेहेइंद्रियेश्वरसिद्धांतयुक्तिभिइतिचित्त्वास्वरूपंलब्ध्वाअंतंसंसारपारमागतोभवतेतुभ्यंस्वस्तिअस्तु ॥ मनसःका लत्रयेप्यसत्वमाह ॥ नित्यमिति ॥ ४२ ॥ चित्तासत्तयैवपरमपुरुषार्थसिद्धिदर्शयति ॥ परिनिर्वामीत्यादिना ॥ ४३ ॥ ४४ ॥ ४५ ॥ शुद्धचिदेकरसेअयमात्मेतिकलनापियत्र

तवानेनाभिपीनत्वमभूद्दुःखैककारणम् ॥ मोहसंकल्पमात्रेणवालवेतालवद्भवेत् ॥ ३५ ॥ द्वंद्वंचाद्यंतसंकल्पक्षीणंक्षयिभवस्थितम् ॥ इदानीमुदितंनित्यंस्वप्राग्रूपेक्षयंगते ॥ ३६ ॥ विवेकस्यप्रसादेनविवेकायनमोनमः ॥ बहुधापिप्रबुद्धस्त्वंचित्तकाप्यनुबोधितः ॥ ३७ ॥ चित्ततायांप्रनष्टायांस्थितस्त्वंपरमेश्वरः ॥ प्राक्स्वरूपविलासस्तेश्रेयसेस्थितिमागतः ॥ ३८ ॥ समस्तवासनोन्मुक्तःसंप्रत्यसिमहेश्वरः ॥ यस्याविवेकादुत्पत्तिःसविवेकाद्विनश्यति ॥ ३९ ॥ प्रकाशेनप्रयात्यंतमनालोकोभवत्तमः ॥ अनिच्छतोपितेसाधोविचारेस्थितिमागते ॥ ४० ॥ सर्वतोयमुपायातोविनाशःसुखसिद्धये ॥ तस्मान्नास्त्यसिनिर्णीतमितिसिद्धांतयुक्तिभिः ॥ ४१ ॥ चित्तेंद्रियेश्वरस्वस्तिभवते त्वंतमागतः ॥ नित्यंपूर्वमभूतायनास्तिरूपायसंप्रति ॥ ४२ ॥ भविष्यतेचनोदर्कस्वमनःस्वस्तितेस्त्विति ॥ परिनिर्वामिशांतोस्मिदिष्ट्या स्मिविगतज्वरः ॥ ४३ ॥ स्वात्मन्येवावतिष्ठेहंतुर्यरूपपदेस्थितः ॥ अतोनास्त्येवनास्त्येवसंसारेचित्तमस्थिति ॥ ४४ ॥ आत्मात्वस्त्वेव चास्त्वेवयस्मादन्यत्रविद्यते ॥ अयमात्माहमेवासौनास्त्यन्यन्मद्दतेक्वचित् ॥ ४५ ॥ स्फुरच्चिदेवबोधात्मासर्वत्राहंस्थितःसदा ॥ अयमा त्मेतिकलनामन्येनोनिर्मलांतरे ॥ ४६ ॥ प्रतियोगिव्यवच्छेदकलनैकस्यवैकुतः ॥ अहंतेनायमात्मेतिकलनामनुदाहरन् ॥ मौनिस्वात्मनि तिष्ठामितरंगइववारिणि ॥ ४७ ॥ संशांतवासनमनाश्रितचेतनांशमप्राणसंचरणमस्तमितांशदोषम् ॥ संवेद्यवर्जितमुपेत्यसुसंविदंशं शाम्यामिमौनमहमेवनिरीहमंतः ॥ ४८ ॥ ॥इ० वा० वा० दे० मो० उपश० चित्तसत्ताविचारयोगोपदेशोनामत्र्यशीतितमःसर्गः ॥ ८३ ॥

दुर्लभातत्रदूरेऽन्यकलनेत्याशयेनाह ॥ अयमिति ॥ ४६ ॥ अतएवतद्वाचामविषयइत्याह ॥ अहमिति ॥ अनुदाहरन्अनभिलपन् ॥ ४७ ॥ अहंअंतःस्वच्छदिसंवेद्येनजडांशेन वर्जितम् तत्कारणाविद्यायाअपिबाधात्संशांतवासनम् चिदाभासस्यापिपृथगनवस्थानादनाश्रितचेतनांशम् तदधीनक्रियाशक्तेरप्युपरमादप्राणसंचरणम् भेदकाभावादेवअस्त मितांशभेदम् सममेकरसम चिदंशम चिन्मात्रलक्षणम् जगद्बाधपरिशिष्टांशम् उपेत्यनिरीहंनिर्मनश्चेष्टंमौनंनिर्वाग्व्यापारंचशाम्यामिविश्रांतोस्मीत्यर्थः ॥ ४८ ॥ ॥ इति श्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेत्र्यशीतितमःसर्गः ॥ ८३ ॥ ॥ ५ ॥ ॥ ५ ॥

समाधिर्वीतहव्यस्यधराविवरसंस्थितिः ॥ हृदिविद्याधरेंद्रत्वगणत्वायुपवर्ण्यते ॥१॥ इतिउक्तप्रकारेणनिर्णीयनिश्चित्य ॥ १ ॥ अपरिस्पंदितोयःअशेषःपूर्णःस्वप्रकाशसंविद्रूपआनंदस्तद्रूपःसन्सुंदरः ॥२॥३॥ तस्याद्धोंन्मीलितेअक्षिणीवर्णयति ॥ अनंतरितिद्वाभ्याम् ॥ नात्यंतमंतर्निष्ठतांनिमीलनंयाते ॥ शेषेउन्मीलितांशातिरिक्तांशे ॥४॥ घ्राणप्रांतोनासाग्रंतत्रगतःप्रसृतःअल्पादल्पःसमउभयतस्तुल्यआलोकःप्रकाशोययोस्तेइवलक्ष्यमाणेईक्षणेचक्षुषी ॥५॥६॥ कच्छस्यनिर्झरसन्निहितदेशस्य ॥७॥ ८॥ आसारभराणांवपंनिर्झरधारासंपातानांघर्घरैःस्वनैरपि ॥९॥ पर्यंतवासिनांमंडलाधीशानांसामंतानांमृगयासुआनतानामागतानांगजानांबृंहितैर्गर्जितैः ॥ सर्वत्रअपिशब्दोयोज्यः ॥१०॥ सिंहा

॥ श्रीवसिष्ठउवाच ॥ ॥ इतिनिर्णीयसमुनिर्वीतहव्योविवासनः ॥ आसीत्समाधावचलोविंध्यकंदरकोटरे ॥ १ ॥ अपरिस्पंदिताशेषसंविदानंदसुंदरः ॥ वप्रावस्तंगतमनाःस्तिमितांभोधिशोभनः ॥ २ ॥ अंतरेवशशामास्यक्रमेणप्राणसंततिः ॥ ज्वालाजालपरिस्पंदोदग्धेंधनइवानले ॥ ३ ॥ अनंतर्निष्ठतांयातेवाह्यार्थेचाप्यसंस्थिते ॥ शेषेंतर्लब्धसंस्थानेतस्यास्फुरितपक्ष्मणी ॥ ४ ॥ घ्राणप्रांतगताल्पाल्पसमालोकेइवेक्षणे ॥ अर्द्धकुड्मलितैःपद्मैःश्रियमाययतुःसमाम् ॥ ५ ॥ समकायशिरोग्रीवस्थानकःसमहामतिः ॥ आसीच्छैलादिवोत्कीर्णश्चित्रार्पितइवाथवा ॥ ६ ॥ तथास्थितिष्ठतस्तस्यसंवत्सरशतत्रयम् ॥ कोटरेविंध्यकच्छस्ययथावद्धमुहूर्त्तवत् ॥ ७ ॥ एतावंतमसौकालंनाबुध्यतकिलात्मवान् ॥ जीवन्मुक्ततयाध्यानीनचतत्याजतांतनुम् ॥ ८ ॥ तावत्कालंससुभगोनप्राबुध्यतयोगवित् ॥ उदारैरंबुदारावैरासारभरघर्घरैः ॥ ९ ॥ पर्यंतमंडलाधीशमृगयानतबृंहितैः ॥ पक्षिवानरनिर्ह्रादैर्मातंगास्फोटनिःस्वनैः ॥ १० ॥ सिंहसंरंभरटितैर्निर्झरारावसीत्कृतैः ॥ विषमाशनिसंपातैर्जनकोलाहलैर्घनैः ॥ ११ ॥ प्रमत्तशरभारफोटैर्भूकंपतटघट्टनैः ॥ वनदाहधमध्वानैर्जलौघाहतिवल्गनैः ॥ १२ ॥ महोपलतटाघातैर्धरणीतलमृज्जलैः ॥ जलौघांदोलनायातैस्तापैरनलकर्कशैः[1] ॥ १३ ॥ केवलंवहतिस्वैरंकालेगलितकारणम् ॥ परियांतीपुवर्षासुलहरीष्विववारिणि ॥ १४ ॥ स्वल्पेनैवहिकालेनतस्मिन्पर्वतकंदरे ॥ प्रावृडोघविनुन्नेनपंकेनोर्वीतलेकृतः ॥ १५ ॥ तत्रासाववसद्भूमौकोटरेसंकटोदरे ॥ पंकसंपीडितस्कंधःपर्वतेपुशिलायथा ॥ १६ ॥ शतत्रयेसवर्षाणामथयातेस्वयंप्रभुः ॥ व्यबुध्यतात्मरूपात्माधराकोटरपीडितः ॥ १७ ॥

नांसंरंभरटितैःसक्रोधगर्जनैः ॥ ११ ॥ भूकंपेनविशीर्णानांतटानांगिरिवप्राणांघट्टनैरास्फालनैः ॥ वनदाहेपुधूमैरग्निसंयोगैस्तत्प्रयुक्तध्वानैश्च ॥ जलस्यओघैराहतयआस्फालनानिवल्गनानिवहनानिचतैरपि ॥ १२ ॥ धरणीतलात्प्रसृतैर्मृत्संकिलजलैः ॥ अनलवत्कर्कशैस्तापैर्ग्रीष्मादितापैरपिनप्राबुध्यतेतिसर्वत्रयोज्यम् ॥ १३ ॥ गलितकारणंनिष्प्रयोजनंकालेवहतिसतिअसौप्रावृडोघविनुन्नेनपंकेनउपर्युपरिप्रचीयमानेनअल्पेनैवकालेनउर्वीतलेधरणीविवरेभूगर्भीकृतःप्रवेशितइतिद्वयोरन्वयः ॥ १४ ॥ १५ ॥ संपीडितःसंश्लिष्टःस्कंधोयस्येत्यर्थः ॥ नहितस्यसमाधिसुखनिमग्नस्यपीडास्ति ॥ १६ ॥ १७ ॥

१ अनलइत्यपिपाठः

एवंसंकटस्थस्यकथंजीवनमभूत्तत्राह ॥ संविदेवेति ॥ जीवनादृष्टलिंगदेहप्रतिबिंबितासंविदेवास्यतंदेहंजग्राहउपादायपालितवती ॥ प्राणमयःप्राणवृत्तिरूपःस्पंदस्तुनजग्राह यतस्तनुःसूक्ष्मः ॥ प्राणसंसरणाभावादित्यर्थः ॥१८॥ वर्षशतत्रयानंतरंतस्ययद्वृत्तंतदाह ॥ उत्पत्तीति ॥ अथतस्यकलनाजीवसंवित्प्रारब्धशेषभोगायहृदयांतरउत्पत्त्याउन्मेषक्रमेणप्रौढिस्थौल्यमासाद्यस्वमनोरूपिणीभूत्वावक्ष्यमाणंसर्वंकल्पनयाहृद्येवअनुबभूवअनुभूतवतीत्यर्थः ॥ १९ ॥ यदनुबभूवतदेवाह ॥ कैलासेत्यादिना ॥ २० ॥ इंद्रत्वंदेवराजत्वम् ॥ २१ ॥ कैलासकाननेइत्यादिर्दिङ्नियमोयुगपंचकमित्यादिःकालनियमःअल्पकालएवहृदयप्रदेशएवतदनुभवादनियमश्चकथमुपपद्यते दिक्कालनियतेरन्यथाकर्त्तुमशक्यत्वादितिप्रश्नार्थः ॥ २२ ॥ असार्वात्म्येनज्ञातायांचितिअल्पयोरपिदेशकालयोर्विस्तृतदेशकालांतरकल्पनाऽसामर्थ्यंभवत्येवनियतिविरोधान्नतुसर्वात्मिकायांसर्वशक्ति

संविदेवास्यतंदेहंजग्राहोर्वीनिपीडितम् ॥ तनुःप्राणमयस्पंदःप्राणसंसरणंविना ॥ १८ ॥ उत्पत्तिप्रौढिमासाद्यकलनाहृदयांतरे ॥ स्वमनोरूपिणीतस्यहृद्येवानुबभूवसा ॥ १९ ॥ कैलासकाननेकांतेकदंबस्यतरोस्तले ॥ मुनिस्त्वंशतमब्दानांजीवन्मुक्तात्मनिर्मलम् ॥ २० ॥ विद्याधरस्त्वंवर्षाणांशतमाधिविवर्जितम् ॥ युगपंचकमिंद्रत्वंप्रणतंसुरचारणैः ॥ २१ ॥ ॥श्रीरामउवाच ॥ ॥शक्रत्वादिषुतेष्वस्यप्रतिभासेषुभोमुने ॥ नियमोऽनियमश्चैवदिक्कालनियतेःकथम् ॥ २२ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥सर्वात्मिकैषाचिच्छक्तिर्यत्रोदेतियथायथा ॥ तथातत्राशुभवतितथात्मैकस्वभावतः ॥ २३ ॥ यथायत्रयदाबुद्धौनियमःसतदास्थितः ॥ देशकालादिनियमक्रमाणांतन्मयात्मता ॥ २४ ॥ तेननानाविधान्येषजगंतिपरिदृष्टवान् ॥ हृदिसंवेदनाकाशेवीतहव्योविवासनः ॥ २५ ॥ सम्यग्बोधवतामेषावासनैवनवासना ॥ ज्ञानाग्निदग्धादग्धस्यकैववीजस्यवीजता ॥ २६ ॥ कल्पमेकंगणस्त्वंसचंद्रमौलेश्चकारह ॥ समस्तविद्यानिपुणंत्रिकालामलदर्शनम् ॥ २७ ॥ योयादृग्दृढसंस्कारःसतंपश्यतितादृशम् ॥ जीवन्मुक्ततयैवैतद्वीतहव्योनुभूतवान् ॥ २८ ॥ ॥श्रीरामउवाच ॥ ॥एवंस्थितेमुनिश्रेष्ठजीवन्मुक्तमतेरपि ॥ बंधमोक्षदृशःसंतिवीतहव्यात्मनोयथा ॥ २९ ॥

संपन्नायांपरिज्ञातायामित्याशयेनपरिहरति ॥ सर्वात्मिकेति ॥ तादृशात्मैकस्वभावत्वादनुभवितृचितइत्यर्थः ॥ २३ ॥ स्वबुद्ध्याअनुभूयमानयोरेवदेशकालयोःसंकोचवैपुल्यनियमानियमौविरुद्धौनाननुभूयमानेनसहअनुभूयमानस्यतौ ॥ अल्पतरनाडीकुहरेष्वल्पकालेविस्तृतदेशकालस्वमानुभवदर्शनादित्याशयेनाह ॥ यथेति ॥ यत्रयदाबुद्धौयथाअनुभवस्तदातथानियमःस्थितइत्यर्थः ॥ तन्मयात्मताबुद्धिमयात्मन्यध्यस्ततायतइत्यर्थः ॥ तन्मयात्मनामितिपाठेहेतुगर्भविशेषणम् ॥ २४ ॥ तेनोक्तहेतुद्वयेन ॥ २५ ॥ वीजशक्तिनाशाद्दग्धस्यउपलभ्यमानत्वाददग्धस्यभर्जितस्येतियावत् ॥ २६ ॥ शंकांसमाधायप्रस्तुतमेववर्णयति ॥ कल्पमित्यादिना ॥ गणस्त्वंगाणपत्यम् ॥ २७ ॥ जीवन्मुक्तस्यापितस्यभोजकप्रारब्धकर्मोद्बोधितदृढसंस्कारएवदेहभोगादिवैचित्र्यप्रतिभासेहेतुरित्याह ॥ यइति ॥ २८ ॥ रामशंकास्पष्टा ॥ २९ ॥

दग्धपटन्यायेनासतःप्रारब्धशेषेणप्रतिभासोबाधितानुवृत्तिमात्रंनबंधइत्याशयेनपरिहरति ॥ यथास्थितमित्यादिना ॥ ३० ॥ विदेतेलभतइव ॥ ३१ ॥ ईश्वरस्यास्मदीयजगत्प्रतिभासवद्वातस्यविनैवबंधंतत्प्रतिभासइत्याशयेनाह ॥ तेनेति ॥ ३२ ॥ वीतहव्यस्तदुपलक्षितचैतन्यस्यैवास्मदादिसर्वात्मत्वात्सर्वजंतूनांजगदनुभवोपितस्यैवेत्यपिसुवचमित्याशयेनाह ॥ धरेत्यादिना ॥ नीरूपेषुनिःस्वरूपेषुप्रतिभासतोमहात्मसुविशालतमेषुजगत्सुभुवनेषुयःशक्रोऽभूत्सोऽयदीनेषुदेशविशेषेषु ॥ दीनानांनिवासोजनपदइत्यर्थेजातस्यतद्धितस्यजनपदेलुबितिलुपियुक्तवद्भावाद्बहुवचनम् ॥ ३३ ॥ ३४ ॥ पैतामहेपाद्येकल्पेवीतहव्यस्यगाणपत्यकालेकैलासवनकुंजकेतत्क्रीडाहंसोयोऽभवत्सएवइदानीं

श्रीवसिष्ठउवाच ॥ ॥ यथास्थितमिदंविश्वंशांतमाकाशनिर्मलम् ॥ ब्रह्मैवजीवन्मुक्तानांबंधमोक्षदृशःकुतः ॥ ३० ॥ एतत्संविन्नभोभातियत्रयत्रयथायथा ॥ तत्रतत्रतथातावत्तावत्तद्विंदतेततम् ॥ ३१ ॥ तेनानुभूतानिबहून्यनुभूयंतएवच ॥ जगंतिसर्वात्मतयाब्रह्मरूपेणराघव ॥ ३२ ॥ धराकोटरनिर्मग्नवीतहव्यचिदात्मसु ॥ जगत्सुतेष्वसंख्येषुनीरूपेषुमहात्मसु ॥ ३३ ॥ यःशक्रोनवबुद्धात्मासोद्यदीनेषुपार्थिवः ॥ कर्त्तुंप्रवृत्तोमृगयांक्षणेस्मिन्नपिकानने ॥ ३४ ॥ योहंसोनवबुद्धात्मापाद्मेपैतामहेभवत् ॥ स्थितःसएवदाशेंद्रःकैलासवनकुंजके ॥ ३५ ॥ योराजानवबुद्धात्माभूमेःसौराष्ट्रमंडले ॥ सएषोद्यस्थितोंधाणांग्रामेबहुलपादपे ॥ ३६ ॥ ॥ श्रीरामउवाच ॥ ॥ मानसःकिलसर्गोसौवीतहव्यस्यतत्रये ॥ देहिनोभ्रांतिमात्रंचेत्तद्देहाकारिणःकथम् ॥ ३७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यदिभ्रांत्येकमात्रात्मवीतहव्यस्यतज्जगत् ॥ तदिदंनामतेरामकिंभूयःपरिभासते ॥ ३८ ॥ इदमप्यंगचिन्मात्रंमनोमात्रभ्रमोपमम् ॥ तदपिव्योमचिन्मात्रंमनोमात्रंभ्रमोपमम् ॥ ३९ ॥ वस्तुतस्तुनतद्रामजगन्नैवंनचेतरत् ॥ तवापिनजगत्सत्ताब्रह्मेदंभातिकेवलम् ॥ ४० ॥ भाविभूतंभविष्यच्चतथेदंचतथेतरत् ॥ जगत्सर्वमिदंदृश्यंसंविन्मात्रमनोमयम् ॥ ४१ ॥ एवंरूपमिदंयावन्नपरिज्ञातमीदृशम् ॥ वज्रसारदृढंतावज्ज्ञातंसत्परमांबरम् ॥ ४२ ॥ अज्ञानान्मनएवेदमित्थंसंप्रविजृंभते ॥ प्रत्युल्लासविलासाभ्यांजलमंबुनिधाविव ॥ ४३ ॥

दाशेंद्रोनिषादराजोभूत्वास्थितोस्तीत्यन्वयः ॥ एवमग्रेपि ॥ ३५ ॥ ३६ ॥ गुरूक्तेःसर्वात्मताभिप्रायमप्रतिपद्यमानान्जनांस्तच्छंकोद्घाटनेनगुरुमुखेनबोधयिष्यन्रामःपृच्छति ॥ मानसइति ॥ तद्देहाकारिणःशक्रहंसादिदेहाकारिणःसचेतनाः कथमित्यर्थः ॥ ३७ ॥ सर्वस्यापिजगतोमनःकार्यत्वस्यभ्रांतिमात्रत्वस्यचबहुशउक्तत्वात्तुल्यत्वेयदिदंनामतेप्रसिद्धंजगत्किंकथंसचेतनैर्युक्तंप्रतिभासतइत्यर्थः ॥ ३८ ॥ द्वयोःसाम्यमेवदर्शयति ॥ इदमिति ॥ ३९ ॥ एवमेतज्जगत्सदृशंन ॥ इतरदेतद्विलक्षणंचन ॥ सालक्षण्यवैलक्षण्ययोःप्रतियोगिसिद्धिमंतरेणायोगादितिभावः ॥ ४० ॥ संविन्मात्रत्वेनावशिष्टंयन्मनस्तदेवतन्मयम् ॥ ४१ ॥ ४२ ॥ प्रत्युल्लासउत्पत्तिर्विलासोवृद्ध्यादिपरिणामस्ताभ्याम् ॥ ४३ ॥

उक्तमर्थंसंक्षिप्याह ॥ यथास्थितेनेति ॥ अविकृतेनैवचिदाकाशस्वभावेनमायया किंचिच्चेतयदिवात्मानंकल्पयच्चित्तंसत्तस्यैवपुनःपुनर्मननान्मनोभिधानमेतितेनचस्फारंजगत्संपन्नमितिएवंदृश्यंजगत्ततम् ॥ परमार्थतस्तुकिंचिदर्पिनैवततमित्यर्थः ॥४४॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेचतुरशीतितमःसर्गः ॥८४॥ ॥ ५ ॥ ॥ मुनेःपिंगलमाविश्यसमुद्धारस्तनोरिह ॥ जीवन्मुक्तस्थितिश्चांत्यःसमाधिश्चोपवर्ण्यते ॥१॥ समुद्धारस्यतत्प्रकारस्यतदुत्तरचर्यायाविदेहमुक्तपरिशिष्टतद्रूपस्यचचतुर्भिःकिंवत्तैःक्रमात्प्रश्नः ॥१॥ अनंतालअपरिच्छिन्नब्रह्माकारंसमवबुद्धवान्समाधावित्यर्थः ॥२॥ प्राक्तनंज्योतिश्चिदात्मातस्यस्मरणेध्यानकाले ॥३॥ नष्टानष्टान्कांश्चिन्नष्टान्कांश्चिदनष्टा

यथास्थितेनैवचिदंबरेणस्वचित्तमेवैतिमनोभिधानम् ॥ स्फारंकृतंतेनजगच्चदृश्यमेवंततंनैवततंचकिंचित् ॥४४॥ ॥इ०वा०वा०दे० मोक्षोपायेषूपशमप्रकरणेवीतहव्यमनोजगद्वर्णनंनामचतुरशीतितमःसर्गः ॥८४॥ ॥५॥ ॥श्रीरामउवाच॥ ॥अथकिंवीतहव्यःस्वंस्थितंतस्मिन्धरोदरे॥ कथमुद्धृतवान्देहंससंपन्नश्चकिंकथम् ॥१॥ ॥श्रीवसिष्ठउवाच॥ ॥अनंतरमनंतात्मवीतहव्याभिधंमनः॥ स्वमेवात्मचमत्कारमात्रंसमवबुद्धवान् ॥२॥ शार्वस्यास्यगणस्याभूत्प्राग्ज्योतिःस्मरणेस्वयम् ॥ इच्छाकदाचित्सकलप्राग्जन्मालोकनोन्मुखी॥३॥ अशेषान्सददर्शाथनष्टानष्टान्स्वदेहकान् ॥ अनष्टानांततोमध्यात्तत्तत्कोटरसंस्थितम् ॥४॥ यदृच्छयैवप्रोद्धर्तुंदेहंतस्याभवन्मतिः॥ अपश्यत्तत्तथातत्रपंकेकीटमिवस्थितम् ॥५॥ शरीरंवीतहव्याख्यंधराकोटरपीडितम् ॥ प्रावृडोघोपनीतंतत्पृष्ठस्थपंकमंडलम् ॥६॥ तृणजालावकीर्णत्वग्देहपृष्ठमृदंतथा॥ एतद्दृष्ट्वामहातेजाधराविवरयंत्रितम् ॥७॥ भूयोपिचिंतयामासधियापरमबोधया॥ सर्वसंपीडितांगत्वात्कायोमेप्राणवायुभिः॥८॥ मुक्तश्चलितुमाकर्तुंशक्नोतिनमनागपि॥ तज्ज्ञात्वाप्रविशाम्याशुदेहमेवंविवस्वतः॥९॥ तदीयःपिंगलोदेहमुद्धरिष्यतिमेततः॥ अथवाकिंममैतेनशाम्याम्यहमविघ्नतः॥१०॥ निर्वामिस्वंपदंयामिकोर्थोमेदेहलीलया॥ इतिसंचिंत्यमनसावीतहव्योमहामते॥११॥ तूष्णींस्थित्वाक्षणंभूयश्चिंतयामासभूतले॥ उपादेयोहिदेहस्यनमेत्यागोनसंश्रयः॥१२॥

न् ॥ तत्तदनष्टदेहस्हृदयकोटरेजीवटोपाख्यानवक्ष्यमाणन्यायेनस्वकल्पनयैवसंस्थितंवीतहव्यदेहमित्यर्थः ॥४॥५॥ प्रावृषओघेनपूरेणउपनीतंकिंचिद्दूरंप्रवाहितम् ॥ पृष्ठस्थेत्युक्त्याअधोमुखतयापातितमित्यपिगम्यते ॥ ६ ॥ तृणानांकाशादीनांजालैरवकीर्णानिबद्धास्त्वग्देहपृष्ठमृदायस्य ॥ देहपदेनतदवयवालक्ष्यंते ॥ ७ ॥ प्राणवायुभिस्तत्संचारैरितियावत् ॥ ८ ॥ आकर्तुमीषदपिकर्तुम् ॥ क्रियामनाक्क्वान्तच्छक्तिमनाक्कमितिनपौनरुक्त्यम् ॥ तत्तस्मात्तदुद्धारार्थमुपायंज्ञात्वा ॥ एवंपरकायप्रवेशयोगप्रकारेण ॥ ९ ॥ तदीयस्तत्सेवकःपिंगलाख्योगणस्तदाज्ञयाउद्धरिष्यति ॥ तस्यांचिंतांतरमाह ॥ अथवेति ॥ एतेनदेहेनशाम्यामिविदेहमुक्त्येत्यर्थः ॥ १० ॥ ११ ॥ त्यागःसंश्रयोवानोपादेयोनापेक्षणीयोविशेषाभावात् ॥ १२ ॥

१ अत्रहलंतान्मृच्छब्दाद्वापिकृतेमृदादंतिरूपंटीकाभिमतमितिभाति॥ द्वंद्वाच्चुदषहांतादितिटचिअवकीर्णत्वग्देहपृष्ठमृदंयस्येतिसमासस्त्वक्लिष्टः॥शरीरविशेषणत्वादेतावान्यत्नः

तदेवाह ॥ यादृशइति ॥ अणुतांधूलीभावम् ॥१३॥ पिंगलेनपिंगलद्वाराउद्धर्तुम् ॥ तापनंसौरंवपुःप्रविशामि ॥१४॥ अनिलरूपधृक्सूक्ष्मीभूतइतियावत् ॥ १५॥ पुर्यष्टकंभाव्याख्यातंलिंगशरीरंतद्वपुः ॥ भस्त्राखंचर्मपेश्याकाशम् ॥ मुनिर्मननशीलोभगवान्सूर्योऽद्धतंतद्दिप्रविष्टंतंमुनिनायकंदृष्ट्वातस्यकार्यंतत्पौर्वापर्यंचदृष्ट्वाविंध्यभूधरकोशगतंगतसंविदंमृतप्रायंमुनिकलेवरंददर्शेतिव्यवहितेनान्वयः ॥१६॥ १७॥ ततोरविःकिंचकारतदाह ॥ रूपैरिति ॥ १८ ॥ मुनिंमुनिशरीरम् ॥ गणांपिंगलाख्यम् ॥ सूर्यंस्त्वविष्टामुनेःसंवित्किंचकारतदाह ॥ वीतहव्येति ॥ १९ ॥ समुनिर्भानुनात्स्थेयेवबहुमानपूर्वकमभ्यनुज्ञातःसन्स्वकार्यार्थंप्रस्थितंपिंगलस्यआकारंशरीरंविवेश ॥ २० ॥ कुंजैर्लतागृहैःकुंज

यादृशोदेहसंत्यागस्तादृशोदेहसंश्रयः॥ तद्यावदस्तिदेहोयंनयावदणुतांगतः ॥ १३ ॥ तावदेनमुपारुह्यकिंचित्प्रविहराम्यहम्॥ पिंगलेनशरीरंस्वमुद्धर्तुंतापनंवपुः॥ १४॥ प्रविशामिनभःसंस्थंमुकुरंप्रतिबिंबवत्॥ इत्यसौमुनिरादित्यंविवेशानिलरूपधृक्॥ १५॥ पुर्यष्टकवपुर्भूत्वाभस्त्राखमिवचानलः॥ भगवान्मुनिरप्येनंद्धतंमुनिनायकम्॥१६॥ दृष्ट्वासौचिंतयन्कार्यंपौर्वापर्यमुदारधीः॥ विंध्यभूधरभूकोशमंतर्मुनिकलेवरम्॥१७॥ तृणोपलपरिच्छन्नंददर्शगतसंविदम्॥ रूपैश्चिकीर्षितंज्ञात्वाभानुर्गगनमध्यगः॥१८॥ धरातोमुनिमुद्धर्तुमादिदेशाग्रगंगणम्॥ वीतहव्यमुनेःसंवित्सापुर्यष्टकरूपिणी॥१९॥ रविंवातमयीपूज्यंप्रणनामाशुचेतसा॥ भानुनाप्यभ्यनुज्ञातामानपूर्वकमग्रगम्॥२०॥ विवेशपिंगलाकारंविंध्यकंदरगामिनम्॥ पिंगलोसौनभस्यक्त्वाकुंजकुंजरसुंदरम्॥२१॥ प्रापविंध्यवनंप्रावृण्मत्ताभ्रांबरभासुरम्॥ उद्दधारधराकोशान्नखनिष्कृष्टभूतलः॥ २२॥ कलेवरंमुनेःपंकान्मृणालमिवसारसः॥ मौनंपुर्यष्टकमथस्वंविवेशकलेवरम्॥ २३॥ नभस्तलपरिभ्रांतोविहंगमइवालयम्॥ प्रणेमतुर्मिथोमूर्तंवीतहव्यनभश्चरौ ॥ २४॥ बभूवतुःस्वकार्यैकतत्परौतेजसांनिधी॥ जगामपिंगलोव्योममुनिश्चविमलंसरः॥ २५॥ तारकाकारकुमुदंसूर्यांशुकवदाकृति॥ वीतहव्योममज्जाशुसरस्युद्भिन्नपंकजे॥ २६॥ पंकपल्वललीलांतेवनेकलभकोयथा ॥ तत्रस्नात्वाजपंकृत्वापूजयित्वादिवाकरम्॥ मनोभूपितयातन्वापूर्ववत्पुनराबभौ॥ २७॥ मैत्र्यातयासमतयापरयाचशांत्यासप्रज्ञयामुदितयाकृपयाश्रियाच॥ युक्तोमुनिःसकलसंगविमुक्तचेताविंध्येसरित्तटगतोदिनमेवरेमे॥२८॥ ॥इ० वा० वा० दे० मो० उपशमप्रकरणेवीतहव्यसमाधियोगोपदेशोनामपंचाशीतितमःसर्गः॥८५॥

रैश्चसुंदरम् ॥२१॥ प्राव्टपिमत्तान्यभ्राणियस्मिंस्तथाविधमंबरमिव ॥ तत्पक्षेकुंजैःकुंजरैरिवचसुंदरमितियोज्यम् ॥ नखैर्निष्कृष्टंखातंभूतलंयेनतथाविधःपिंगलः ॥ २२ ॥ मुनेःसंबंधिमौनंपुर्यष्टकंपिंगलदेहात्स्वंकलेवरंविवेश ॥२३॥ आलयंस्वनीडम् ॥ मूर्त्तःप्राप्तमूर्त्तिर्वीतहव्यश्चनभश्चरःपिंगलश्चमिथःअन्योन्यंप्रणेमतुः ॥२४॥ सरःस्नानार्थम् ॥२५॥ सूर्येणअंशुकवतीपीतरक्तांबरालंकृतेवआकृतिर्यस्य बालार्करागरंजितोदकमितियावत् ॥ २६ ॥ पंकयुक्तेषुपल्वलेषु ॥ लीलायाअंतेअवसाने ॥ मनोभूपितयामननादिव्यवहारवत्या ॥ २७ ॥ दिनंदिनमात्रमेवरेमेनचिरम् ॥ समाधिप्रच्युतस्तस्थावित्यर्थः ॥ २८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेपंचाशीतितमःसर्गः ॥ ८५ ॥

पुनःसमाधिःषड्रात्रंजीवन्मुक्तस्थितिश्चिरम् ॥ रागादिभ्योंजलिर्मुक्तौसमाधिश्चास्यवर्ण्यते ॥ १ ॥ विज्ञातांप्राक्परिचिताम् ॥ १॥ दृष्टोलोकेपरःसारःअवरःअसारश्चयेन॥२॥ यत्कलयामासतदाह ॥ पूर्वमित्यादिना ॥ ३ ॥ अस्तिनास्तीतिद्विविधांदृश्यंकलनाम् ॥ शेषमवशिष्टंतदुभयसाक्षिचिन्मात्रमवलंब्येतिशेषः ॥ बद्धसंस्थानःसमकायशिरोग्रीवोदृढासनश्च ॥ ४ ॥ उदितोजीवन्नप्यस्तंगतोमृतइवाज्ञदृशा तत्त्वदृशातुतद्विपरीतः ॥ समरसाभासएकरसचिन्मात्ररूपः ॥ ५ ॥ प्रबुद्धोजाग्रदपिसुषुप्तस्थोद्वैतजालमपश्यन् ॥ एवंसुषुप्तोपिस्वस्वरूपस्फुटानुभवात्प्रबुद्धवत् ॥ तुर्यंस्थूलसूक्ष्मकारणनिर्मुक्तंपदम् ॥ ६ ॥ स्वांतस्यांतिपारभूतेनिर्मननेसर्वतःस्थितेपूर्णेसत्तासामान्यलक्षणेपरमसाम्ये ॥ ७ ॥ ८ ॥

श्रीवसिष्ठउवाच॥ ॥दिनांतेससमाधातुंपुनरेवमनोमुनिः॥ विवेशकांचिद्विततांविज्ञातांविंध्यकंदराम्॥ १॥ तदेवात्मानुसंधानमत्यजन्सममिंद्रियैः॥ चेतसाकलयामासदृष्टलोकपरावरः॥२॥ पूर्वमेवेंद्रियगणोमयापरिहृतःस्फुटम्॥इदानींचिंतयानार्थःपुनर्विततयाममा॥ ३॥ अस्तिनास्तीतिकलनांभंक्त्वाद्वींलतामिव॥ शेषंतुबद्धसंस्थानस्तिष्ठाम्यचलशृंगवत्॥ ४ ॥ उदितोस्तंगतइवस्वस्तंगतइवोदितः॥ समःसमरसाभासस्तिष्ठामिस्वच्छतांगतः ॥ ५ ॥ प्रबुद्धोपिसुषुप्तस्थःसुषुप्तस्थःप्रबुद्धवत्॥ तुर्यमालंब्यकायांतस्तिष्ठामिस्तंभितस्थितिः॥ ६॥ स्थितःस्थाणुरिवैकांतेस्वांतांतेसर्वतःस्थिते ॥ सत्वसामान्यसाम्यंहितिष्ठाम्यपगतामयः॥ ७॥ इतिसंचिंत्यसध्यानेपुनस्तस्थौदिनानिषट्॥ ततःप्रबोधमापन्नःक्षणसुप्तइवाध्वगः॥ ८॥ ततःसिद्धःसभगवान्वीतहव्योमहातपाः॥ विजहारचिरंकालंजीवन्मुक्ततयातदा॥ ९॥ वस्तुनाभिननंदासौनिनिंदनकदाचन॥ नजगामतथोद्वेगंनचहर्षमवापसः॥ १० ॥ गच्छतस्तिष्ठतश्चैवतस्यैवमभवद्धृदि॥ विनोदायविचित्तस्यकथास्वमनसासह॥ ११ ॥ अव्ययेंद्रियवर्गेशमनःशमवतात्वया ॥ पश्यानंदसुखंकीदृग्विधमासादितंतंतम्॥ १२॥ एषैवाविरतंतस्मान्नीरागैवदशात्वया॥ अवलंब्यापरित्याज्यंचापलंचलतांवर ॥ १३॥ भोभोइंद्रियचौराहेहताशाहतनामकाः॥ युष्माकंनायमात्मास्तिनभवंतस्तथात्मनः॥१४॥ व्रजतांवोविनाशांशमाशावोविफलीकृताः॥ नसमर्थाःसमाक्रांतौभवंतोभंगुराश्रयाः॥ १५॥ वयमात्मेतियैषावोबभूवकिलवासना॥ तत्त्वविस्मृतिजाताहिदृष्टरज्जुभुजंगवत्॥१६॥ अनात्मन्यात्मतासैषासैषावस्तुन्यवस्तुता॥ अविचारेणवैजाताविचारेणक्षयंगता॥ १७॥

सिद्धोव्युत्थानेपिसमाहितस्थितिः ॥ ९ ॥ नाभिननंदगुणदृशा ॥ ननिनिंददोषदृशा ॥ १० ॥ कथावक्ष्यमाणविचारलक्षणा ॥ बाधितानुवृत्तस्वमनसासह ॥ ११ ॥ अव्ययस्यविषयोपभोगप्रयुक्तसामर्थ्यव्ययरहितस्येंद्रियवर्गस्यईशस्वामिन्हेमनःआनंदयत्याह्लादयतिसर्वंजगदित्यानंदंतथाविधंसुखं निरतिशयानंदरूपंसुशोभनंखंआकाशमितिवा ॥ १२ ॥ त्वयाअग्रेपिएषैवनीरागैवदशाअवलंब्या ॥ द्वावेवकाराववधारणदार्ढ्याय ॥ १३ ॥ हेहताशाइतिआशानांपृथक्संबोधनम् ॥ अयंमयानुभूयमानआत्मायुष्माकंनास्ति ॥ १४ ॥ एवंसदात्मसंबंधाभावाद्वःस्वरूपमवशिष्टंविनाशांशंअसत्वपक्षंव्रजताम् ॥ समाक्रांतौममेतिशेषः ॥ १५ ॥ प्राक्तर्ह्यस्माकंत्वत्समाक्रांतौकुतःसामर्थ्यमभूदितिचेदात्मतादात्म्याध्यासबलादित्याह ॥ वयमिति ॥ १६ ॥ १७ ॥

एवंविवेकदर्शनेकस्यापिभवव्द्युक्तदोपसंबंधोपिनास्त्येवेत्याह ॥ भवंतइति ॥ भवंतःकरणभूताः ॥ वयमभिमंतारः ॥ ब्रह्मअद्वयम् ॥ कर्तृताभ्रणप्रयुक्तक्रियानिमित्तता ॥ भो
क्ताचिदाभासः ॥ आदत्तेमनः ॥ १८ ॥ एवंचेत्कथंव्यवहारकार्यनिष्पत्तिरितिचेत्काकतालीयन्यायादितिगृहदृष्टांतेनाह ॥ वनेभ्यइत्यादिना ॥ वेणुत्वचाकाष्ठभारबंधनम् ॥
वासीप्रसिद्धा ॥ चकारात्कुठारटंकिकादयः अयसःफलानिप्रयोजनानि लोहकुद्दुरभरणप्रयुक्तानीतियावत् ॥ एवंतक्षास्वग्रासार्थमुद्यतोनगृहसिद्धये ॥ १९ ॥ एवंचभि
न्नप्रयोजनैःक्रियाकारकैरर्थान्निष्पद्यमानागृहाकृतिःकाकतालीयन्यायादेवेत्यर्थः ॥२० ॥ तथादेहापिकार्यकरणसंघातेदर्शनश्रवणवचनादानादिफलकस्वस्वशक्तिभिर्नियं
तानिज्ञानकर्मेंद्रियाणियासांतथाविधाव्यवहारकार्यकलिकाःकाकतालीयादेवलोलंचलंयथास्यात्तथासंपन्नाः ॥ तत्रकस्यकेवखंडनाक्षतिरस्तिनकाचित्कस्यचिदित्यर्थः

भवंतोन्येवयंचान्येब्रह्मान्यत्कर्तृतापरा ॥ अन्योभोक्तान्यआदत्तेकोदोषःकस्यकीदृशः ॥ १८ ॥ वनेभ्योदारुसंजातंरज्जवोवेणुचर्मणः ॥
वासीचायःफलान्येवतक्षाग्रासार्थमुद्यतः ॥ १९ ॥ इत्थंयथेहसामग्र्यास्वशक्तिस्थपदार्थया ॥ संपन्नाकाकतालीयाद्दृढावरगृहाकृतिः
॥ २० ॥ संपन्नाःकाकतालीयात्स्वशक्तिनियतेंद्रियाः ॥ तथैवकलिकालोलंकेवकस्यात्रखंडना ॥ २१ ॥ विस्मृतिर्विस्मृतादूरंस्मृतिःस्फुट
मनुस्मृता ॥ सत्सज्ज्ञातमसच्चासत्क्षतंक्षीणंस्थितंस्थितम् ॥ २२ ॥ एवंविधेनभगवान्विचारेणमहातपाः ॥ सोतिष्ठन्मुनिशार्दूलोबहून्वर्ष
गणानिह ॥ २३ ॥ अपुनर्भवनायैवयत्रचिंतांतमागता ॥ मूढताचसुदूरस्थातत्रासाववसत्सदा ॥ २४ ॥ यथाभूतपदार्थौघदर्शनोत्थम
नर्थकम् ॥ ध्यानाश्वासनमालंब्यसोवसत्सुखगःसदा ॥ २५ ॥ हेयादेयसमासंगत्यागादानदृशोःक्षये ॥ वीतहव्यमुनेरासीदिच्छानिच्छा
तिगंमनः ॥ २६ ॥ विदेहकेवलीभावेसीमांतेजन्मकर्मणाम् ॥ संसारसंगसंत्यागरसासवनवेच्छया ॥ २७ ॥ विवेशसततयैवांतसत्याद्रौहे
मकंदरम् ॥ अपुनःसंगमायाशुजगज्जालमवेक्ष्यसः ॥ २८ ॥ बद्धपद्मासनःस्थित्वातत्रोवाचात्मनात्मनि ॥ रागनीरागतांगच्छद्वेपनिर्द्वे
पतांव्रज ॥ २९ ॥ भवद्भ्यांसुचिरंकालमिहप्रक्रीडितंमया ॥ भोगानमोस्तुयुष्मभ्यंजन्मकोटिशतान्यहम् ॥ ३० ॥

॥ २१ ॥ विस्मृतिरविद्या ॥ स्मृतिरात्मविद्या ॥ तत्फलमाह ॥ सदिति ॥ २२ ॥ २३ ॥ अंतंनाशमागता ॥ तत्रतस्मिन्पूर्णानंदस्वप्रकाशपदे ॥ २४ ॥ यथास्थितेवस्तुनिकदा
चिद्भ्रांत्याविचित्रपदार्थौघदर्शनादुत्थंप्रसक्तमनर्थकंव्यर्थमेवानाश्वासंवारयितुंपुनःपुनर्ध्यानाश्वासनमालंब्येत्यर्थः ॥ २५ ॥ तस्यप्रारब्धशेपक्षयेकीदृशंमनआसीत्तदाह ॥ हे
येति ॥ हानयोग्यानामादानयोग्यानांचविषयाणांसमासंगेप्राप्तावपिहानादानदृशोःक्षये ॥ २६ ॥ प्रतिभासमात्रेणापिस्थितस्यदेहादिसंसारसंगस्यसंत्यागेपरिशिष्यमाणेब्रह्मर
समकरंदेनवेच्छयाउत्कंठयाविवेशेतिपरेणान्वयः ॥ संत्यागेवांछामापातिशायिनीमितिपाठेनुस्पष्टम् ॥ २७ ॥ तयावांछया ॥ २८ ॥ सहजशत्रुपुरागद्वेपाविष्वग्विनिर्द्वेपतांमै
त्रींचप्रापयन्गंतुकामइवहितमुपदिशन्प्रणम्यतानामंत्रयते ॥ रागेत्यादिना ॥ २९ ॥ ३० ॥

॥ ३१ ॥ सुखायविषयसुखलवाय ॥ त्वयाउत्तप्तेनसंतापितेनमया ॥ ३२ ॥ तस्माद्गुरुणेवत्वयाउपदिष्टोयंविवेकमार्गः ॥ ३३ ॥ हेदुःखस्यतत्त्वभूतसुखदआत्मन् ॥ इदानींज्ञानजननोपकारिणंदेहंप्रार्थ्यामंत्रयति ॥ कल्याणमित्यादिना॥३४॥ हेदेहइयमावयोर्वियुक्तिस्थितिरनादिनियतिस्वभावः ॥ संयोगाविप्रयोगांताइतिन्यायादितिभावः॥ जंतूनांप्राणिनांसंबंधिनांप्रयोजनानांस्वार्थानामियंगतिःरीतिर्विषमा ॥ यल्लिप्सयाअत्यंतमित्रस्वजनानपिविहायपुरुषाधावंतीतिभावः ॥ ३५॥ तदेवस्वस्याप्युपस्थितमित्याह॥ देहेनापीति ॥ ३६ ॥ नायंममापराधस्त्वयास्वनाशार्थमेवमदुपकारःकृतइत्यनुशोचन्निवाह ॥ त्वयैवेति ॥ ३७ ॥ एतत्त्वयैवोपासितमनुष्ठितम् ॥ इदानींतृष्णांप्रार्थयते ॥ एका

भवद्भिर्लालितोलोकेलालकैरिवबालकः॥इमामपिपरांपुण्यांनिर्वाणपदवीमहम्॥३१॥येनविस्मारितस्तस्मैसुखायास्तुनमोनमः॥त्वदुत्तप्तेनहेदुःखमयात्मान्विष्टआदरात्॥३२॥तस्मात्त्वदुपदिष्टोयंमार्गोममनमोस्तुते॥त्वत्प्रसादेनलब्धेयंशीतलापदवीमया॥३३॥दुःखनाम्नेदुःखतत्त्वसुखदात्मन्नमोस्तुते॥कल्याणमस्तुतेमित्रसंसारासारजीवित॥३४॥देहस्थितिरियंयामोवयमात्मीयमास्पदम्॥प्रयोजनानांजंतूनामहोनुविषमागतिः ॥ ३५ ॥ देहेनापिवियुज्येहंभूत्वाजन्मशतान्यपि ॥ मित्रकायमयायत्त्वंत्यज्यसेचिरबांधवः ॥ ३६ ॥ त्वयैवात्मन्युपानीतासात्मज्ञानवशान्क्षतिः॥ अधिगम्यात्मविज्ञानमात्मनाशःकृतस्त्वया॥ ३७॥ देहनान्येनभग्नोसित्वयैवैतदुपासितम्॥ एकाकिन्यापिशुष्यंत्याप्रशांतेमयिदीनया॥३८॥त्वयादुःखंनकर्तव्यंमातस्तृष्णेव्रजाम्यहम्॥क्षंतव्याःकामभगवन्विपरीतापराधजाः॥ ३९ ॥दोषाउपशमैकांतंव्रजाम्यादिशमंगलम्॥ चिराच्चिरायचेदानीमंवत्तृष्णेकिलावयोः ॥ ४० ॥ वियोगोयोगदोषेणप्रणामोयंसपश्चिमः॥ नमःसुकृतदेवायभवतेस्तुत्वयापुरा ॥ ४१ ॥ नरकेभ्यःसमुत्तार्यस्वर्गेहमभियोजितः॥ कुकार्यक्षेत्ररूढायनरकस्कंधवाहिने॥ ४२ ॥शासनापुष्पभारायनमोदुष्कृतशाखिने ॥ येनसार्द्धंचिरंवल्ल्योभुक्ताःप्राकृतयोनयः॥ ४३ ॥ अद्यप्रभृत्यदृश्यायतस्मैमोहात्मनेनमः॥ प्रध्वनद्वंशमधुरवचसेपत्रवाससे ॥ ४४ ॥ नमोगुहातपस्विन्यैवयस्यायैसमाधिषु॥ संसाराध्वनिखिन्नस्यत्वंममाश्वासकारणम्॥ ४५॥ आसीर्वयस्यासुस्निग्धासर्वलोभापहारिणी॥ सर्वसंकटखिन्नेनदोषेभ्योद्रवतामया ॥ ४६ ॥

किन्येति ॥ ३८ ॥ त्वज्जयार्थंत्वद्विपरीतवैराग्यसेवनाद्यपराधजामद्दोषाः ॥३९ ॥ उपशमैकांतंआत्यंतिकोपशमम् ॥ आदिशआशास्व ॥ पुनरावृत्त्यातृष्णामुखदर्शनप्रसक्तिंवारयन्नाह ॥ चिरादिति ॥ चिरादपिचिरायशाश्वतइतियावत् ॥ इदानींआरभ्येतिशेषः ॥ ४० ॥ सुकृतंपुण्यंतल्लक्षणायदेवाय ॥ ४१ ॥ कुकार्यंनिषिद्धाचरणंतल्लक्षणेक्षेत्रेभूमौरूढाय ॥ नरकलक्षणानांस्कंधानांबृहच्छाखानांवहनशीलाय ॥ ४२ ॥ शासनाःयातनाएवपुष्पभारोयस्य ॥ ४३ ॥ प्रध्वनद्भिर्वंशैःकीचकैर्मधुरवचसे शीर्णपत्राण्येववासांसियस्यास्तथाविधायैगुहालक्षणायैतपस्विन्यै ॥ ४४ ॥ आश्वासकारणमित्यजहल्लिंगंगुहाविशेषणम् ॥ ४५॥ सुस्निग्धाअत्यंतस्नेहवतीवयस्याआसीःअभूः ॥ पूर्णात्मविश्रांतिदानेनसर्वलोभापहारिणी ॥ दोषेभ्यःसमाधिविघ्नेभ्यः ॥ ४६ ॥

इदानींदंडकाष्ठगुणान्वर्णयंस्तन्नमस्यति ॥ संकटेति ॥ संकटेश्वसर्पादिभयेषुविषमप्रदेशेषुच ॥ तथाअवटेषुगर्त्तेषुकुंजेषुचहस्तस्यआलंबनदायिने ॥४७॥ इदानींदेहभागंसर्वंदेहायनिवेदयति ॥ अस्थीति ॥४८॥ एतावन्मात्रमेवसारंतत्त्वंयस्यतथाविधमेकंस्वमसाधारणभागंगृहीत्वागच्छत्वाःप्रकृतीः ॥ हेदेहकपयसोजलस्यत्वदीयमलदौर्गंध्यस्वेदादिनादूषणायेक्षोभाअपराधास्तदीयप्रकारभेदरूपेभ्यस्तेस्नानेभ्यःशुचित्वसंपादनोपायेभ्योपिनमोस्तु ॥ ४९ ॥ तथाभोजनशयनाभ्यंजनालंकरणादिव्यवहारेभ्यस्तत्सामग्रीसंपादनायेतस्ततोधावनलक्षणाभ्यस्तेसंसृतिभ्यश्चनमोस्तु ॥हेप्राणाःसहजाःसुहृदोमयाअथसुहृदांनमस्कारक्रमेणएतेभवंतोपिउत्कृताउत्कृष्टाःकृताःनमस्कृताइतियावत्॥५०॥ प्राक्तनसुहृत्त्वमेववर्णयति ॥ भवद्भिरिति ॥ ५१ ॥ पुराणांपीठानांसिद्धक्षेत्राणांचांनः ॥ ५२ ॥ ५३ ॥ नकृतंनहृतंनदत्तंचहस्ताभ्याम् ॥ नयातंपद्भ्याम् ॥ नावलंबितंमनसा

त्वमेकाशोकनाशार्थमाश्रितापरमासखी॥ संकटावटकुंजेषुहस्तालंबनदायिने॥ ४७॥ वार्द्धकैकांतसुहृदेदंडकाष्ठायतेनमः ॥ अस्थिपंजरमात्मीयंतथारक्तांत्रतंतुकम् ॥ ४८॥ एतावन्मात्रसारैकंगृहीत्वागच्छदेहक ॥ पयःक्षोभप्रकारेभ्यःस्नानेभ्योपिनमोस्तुते॥ ४९॥ नमोस्तुव्यवहारेभ्यःसंसृतिभ्योनमोस्तुते॥ एतेभवंतःसहजाःप्राक्तनाःसुहृदोमया॥ ५०॥ क्रमेणाद्योत्कृताःप्राणाःस्वस्तिवोस्तुव्रजाम्यहम्॥ भवद्भिःसहचित्रासुमयावल्लीषुयोनिषु॥ ५१॥ विश्रांतंगिरिकुंजेषुभ्रांतंलोकांतरेषुच॥ क्रीडितंपुरपीठांतरुषितंपर्वतेषुच॥ ५२॥ स्थितंकार्यविलासेषुप्रस्थितंविविधाध्वसु॥ नतदस्तिजगत्कोशेभवद्भिःसहयन्मया॥ ५३॥ नकृतंनहृतंयातंनदत्तंनावलंबितम्॥ इदानींस्वांदिशंयांतुभवंतोयाम्यहंप्रिया॥५४॥सर्वेक्षयांतानिचयाःपतनांताःसमुच्छ्रयाः॥संयोगाविप्रयोगांताःसर्वेसंसारवर्त्मनि॥५५॥ अयंचाक्षुषआलोकोविशत्वादित्यमंडलम्॥ विशंतुवनपुष्पाणिसौगंध्यानंदसंविदः॥ ५६॥ प्राणानिलस्तथास्पंदंविशत्वघप्रभंजनम्॥ विशंत्वाकाशकुहरंशब्दश्रवणशक्तयः॥ ५७॥ इंदुमंडलमायातुरसनारसशक्तयः॥ निर्मंदरइवांभोधिर्गतार्कइववासरः ॥ ५८ ॥ शरदीवघनःस्वैरंप्राप्तःकल्पांतसर्गवत्॥ ओंकारांतेस्तमननंप्रशाम्याम्यात्मनात्मनि॥ दग्धेंधनइवार्चिष्मान्निःस्नेहइवदीपकः॥ ५९॥

च ॥ भवंतःस्वांदिशंप्रकृतियांतु ॥ अहंब्रह्मयामि ॥ हेप्रियाः ॥ ५४ ॥ किमर्थमस्मान्प्रकृतिषुविलापयसिकार्यकरणसंघातात्मनैवस्थित्वाभोग्यनिचयानेवपूर्ववत्कुतोनप्राप्स्यामस्तत्राह ॥ सर्वेइति ॥ हेसर्वेप्राणादयः ॥ ५५ ॥ इदानींप्रत्येकमिंद्रियादीनांप्राप्तव्याःप्रकृतीर्विभज्यदर्शयति ॥ अयमित्यादिना ॥ सौगंध्यानंदसंवित्पदेनतत्करणंघ्राणेंद्रियंलक्ष्यते ॥ वनपुष्पपदेनचगंधमात्रसारापृथिवी ॥ ५६ ॥ ५७ ॥ एवमिंदुमंडलपदेनापोमाप्साइतिक्रमेणगताःकलाःपंचदशप्रतिष्ठामितिश्रुतिप्रदर्शितदिशासर्वेस्वांस्वांप्रकृतियांत्वित्यर्थः ॥ एवंयुष्मासुउपाधिभूतेषुगतेषुभवत्प्रतिबिंबितचिदाभासात्माजीवभूतोहमपिस्वबिंबभूतेप्रणवार्द्धमात्रालक्ष्येब्रह्मात्मनिप्रशाम्यामीत्याह ॥ निर्मंदरइत्यादिना ॥ ५८ ॥ स्वैरंस्वयतिजनयतीतिस्वैरंस्वोपादानंविलयेनप्राप्तोघनइवकल्पांतिप्रलयकालेसर्गवत्प्रपंचइवच ॥ स्वमननंसुष्ठुअमननमात्यंतिकमनःशांतिर्यथास्यात्तथा ॥५९॥

दीर्घोच्चारितस्यप्रणवस्यब्रह्मरंध्रेशांतिमनुसृत्यशांताब्रह्माकारतामात्रप्राप्याउपरताधीर्यस्य ॥ ततएवविगतप्रारब्धप्रतिबद्धशिष्टाविद्यालेशमला ॥ ६० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेषडशीतितमःसर्गः ॥ ८६ ॥ ॥ ५ ॥ ॥ येनक्रमेणसंप्राप्तोवीतहव्योविदेहताम् ॥ प्रणवांतंसमालंब्यसक्रमोत्रनिरूप्यते ॥ १ ॥ एवंवक्ष्यमाणक्रमेणतारमत्युच्चैःस्वरंप्रणवंशनैर्दैर्घ्यापादनेनोच्चारयन्सन्मननैषणाप्रशांतिक्रमेणप्राप्तषष्ठसप्तमभूमिकोभूत्वाअंतःस्वत्वदिग्ब्रह्मकलितवान्प्राप्तवान् ॥ १ ॥ यतिःसंन्यासीवीतहव्यः ॥ ओमित्येतदक्षरमिदंसर्वंतस्योपव्याख्यानंभूतंभवद्भविष्यदितिसर्वमोंकारएवयच्चान्यत्त्रिकालातीतंतदप्योंकारएवेतिमांडूक्यश्रुतिदर्शितक्रमेणअकारोकारमकाराख्यमात्राभिरर्द्धमात्रयाचकल्पितेनस्थूलसूक्ष्माव्याकृततुरीयलक्षणपादभेदेनप्रणवंसंस्मरन्सन्पंचीकरणोक्तेनविराड्हिरण्यगर्भाव्याकृतलक्षणानांपादानांतुर्येप्रथमंजा

व्यपगताखिलकार्यपरंपरःसकलदृश्यदशातिगतस्थितिः ॥ प्रणवशांत्यनुसंस्मृतिशांतधीर्विगतमोहमलोयमहांस्थितः ॥ ६० ॥ ॥ इ० वा०वा०दे० मोक्षोपायेषूपशमप्रकरणेइंद्रियवर्गनिराकरणोपदेशोनामषडशीतितमःसर्गः ॥ ८६ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ एवंकलितवानंतःप्रशांतमननैषणः ॥ शनैरुच्चारयंस्तारंप्रणवंप्राप्तभूमिकः ॥ १ ॥ मात्रादिपादभेदेनप्रणवंसंस्मरन्यतिः ॥ अध्यारोपापवादेनस्वरूपंशुद्धमव्ययम् ॥ २ ॥ सबाह्याभ्यंतरान्भागान्स्थूलान्सूक्ष्मतरानपि ॥ त्रैलोक्यसंभवांस्त्यक्त्वासंकल्पाकल्पकल्पितान् ॥ ३ ॥ तिष्ठन्नक्षुभिताकारश्चिंतामणिरिवात्मनि ॥ संपूर्णइवशीतांशुर्विश्रांतइवमंदरः ॥ ४ ॥ कुंभकारगृहेचक्रंसंरोधितइवभ्रमात् ॥ अंभोधिरिवसंपूर्णस्तिमितस्फारनिर्मलः ॥ ५ ॥ शांततेजस्तमःपुंजंविगतार्केंदुतारकम् ॥ अधूमाभ्ररजःस्वच्छमनंतंशरदीवखम् ॥ ६ ॥ सहप्रणवपर्यंतदीर्घनिःस्वनतंतुना ॥ जहाविंद्रियतन्मात्रजालंगंधमिवानिलः ॥ ७ ॥ ततोजहौतमोमात्रंप्रतिभातमिवांबरे ॥ उत्तिष्ठत्स्फुरद्रूपंप्राज्ञःकोपलवंयथा ॥ ८ ॥ प्रतिभातंततस्तेजोनिमेषार्धविचार्यसः ॥ जहौबभूवचतदानतमोनप्रकाशकम् ॥ ९ ॥ तामवस्थामथासाद्यमनसातन्मनस्तृणम् ॥ मनागपिप्रस्फुरितंनिमिषार्द्धादशातयत् ॥ १० ॥ ततोंगसंविदंस्वस्थांप्रतिभासमुपागताम् ॥ सद्योजातशिशुज्ञानसमानकलनामलम् ॥ ११ ॥

गरितस्थानोवहिःप्रज्ञइत्यादिश्रुत्युक्तदिशाअध्यारोपेणनांतःप्रज्ञंनवहिःप्रज्ञंनोभयतःप्रज्ञंनप्रज्ञंनाप्रज्ञंनप्रज्ञानघनमित्याद्यपवादेनचस्थूलसूक्ष्मकारणरूपानपिसबाह्याभ्यंतरान्भागांस्त्यक्त्वाशुद्धमव्ययंस्वरूपंदृष्ट्वाप्रपंचोपशमंशिवंशांतमद्वैतंचतुर्थंमन्यंतेसआत्मासविज्ञेयइतिश्रुत्युक्ततुर्येतत्रात्मनितिष्ठन्सन्प्रणवपर्यंतदीर्घनिःस्वनतंतुनासहइंद्रियतन्मात्रजालंजहावितिपष्ठेनसंबंधः ॥ २ ॥ ३ ॥ ४ ॥ भ्रमाद्भ्रमणात्संरोधितेसतिकुंभकारगृहेचक्रमिवाक्षुभिताकारः ॥ ५ ॥ तेजस्तमसोर्युगपच्छांत्यप्रसिद्धेरभूतोपमेयम् ॥ ६ ॥ प्रणवस्यपर्यंतोपभागस्तल्लक्षणेनदीर्घनिःस्वनतंतुनासहजहावित्यादिसर्वःस्थूलसूक्ष्मेतरानपित्यक्त्वेत्यस्यैवप्रपंचः ॥ ७ ॥ ततउत्तिष्ठत्साक्षिणाप्रस्फुरद्रूपंतमोमात्रम् ॥ ८ ॥ ९ ॥ तांतमःप्रकाशशून्यामवस्थामासाद्यतत्कल्पनाहेतुंमनस्तृणंअशातयत्छिन्नवान् ॥ १० ॥ अंगेतिसंबोधने ॥ प्रतिभासंनिवातदीपवत्स्फुटप्रकाशतामालंब्यतामपिकलनांतत्प्ररोहात्प्रागेवनिमेषार्द्धार्द्धभागेनकालेनजहौ ॥ सएवचितश्चेत्यदशात्यागइत्यर्थः ॥ ११ ॥

॥ १२ ॥ अनयारीत्यासाक्षिमात्रपरिशेषलक्षणंपश्यंतीपदमासाद्यतदेववियदादिबाधपरिशिष्टसत्तामात्रात्मकंकारणतत्त्वमितितद्भावस्थितिलक्षणंसुषुप्तपदमालंब्येत्यर्थः॥ १३॥ एतेएवषष्ठसप्तमभूमिकेसदेहावस्थे ततःसाक्षिसंदेकरस्येनिरतिशयाखंडानंदाविर्भावात्प्रारब्धशेषेणसहात्यंतिकप्रतिभासनाशेविदेहकैवल्यावाप्तिंदर्शयति तुर्यरूपमिति ॥ १४ ॥ ततःकिमासीदितिचतुर्थप्रश्नस्योत्तरमाह ॥ निरानंदइत्यादिना ॥ विषयानंदशून्योपिस्वरूपेणैवसानंदः ॥ स्वातिरिक्तसत्ताशून्योपिसद्रूपइत्येवंसर्वंयोज्यम् ॥ यथानक्तंदृशांतिमिरमेवप्रकाशस्तद्वत् ॥ १५॥ चेत्याभावादचिन्मयंस्वतश्चिदेवचिन्मयम् ॥ १६ ॥ १७॥ सर्ववादिभिर्नानाविकल्पैःस्वस्वसिद्धांततयाविकल्पितमपितदेवेत्याह ॥ यदित्यादिना

निमेषार्द्धार्द्धभागेनकालेनकलनांप्रभुः॥ जहौचितश्चेत्यदशांस्पंदशक्तिमिवानिलः॥ १२ ॥ पश्यंतीपदमासाद्यसत्तामात्रात्मकंततः॥ प्रसुप्तपदमालंब्यतस्थौगिरिरिवाचलः ॥ १३ ॥ ततःसुषुप्तसंस्थानंस्थित्वास्थित्वाविभुर्मनाक्॥ सुषुप्तेस्थैर्यमासाद्यतुर्यरूपमुपाययौ ॥ १४॥ निरानंदोपिसानंदःसच्चासच्चापितत्रसः॥ आसीन्नकिंचित्किंचित्तत्प्रकाशस्तिमिरंयथा॥ १५॥ अचिन्मयंचिन्मयंचनेतिनेति यदुच्यते॥ ततस्तत्संबभूवासौयद्गिरामप्यगोचरः॥१६॥ तदसौसुसमंस्फारंपदंपरमपावनम् ॥ सर्वभावांतरगतमभूत्सर्वविवर्जितम् ॥ १७॥ यच्छून्यवादिनांशून्यंब्रह्मब्रह्मविदांवरम् ॥ विज्ञानमात्रंविज्ञानविदांयदमलंपदम्॥ १८॥ पुरुषःसांख्यदृष्टीनामीश्वरोयोगवादिनाम्॥ शिवःशशिकलांकानांकालःकालैकवादिनाम्॥ १९॥ आत्मात्मनस्तद्विदुषांनैरात्म्यंतादृशात्मनाम्॥ मध्यंमाध्यमिकानांचसर्वंसुसमचेतसाम्॥ २०॥ यत्सर्वशास्त्रसिद्धांतोयत्सर्वहृदयानुगम्॥ यत्सर्वंसर्वगंसार्वंयत्तत्तत्सदसौस्थितः॥ २१ ॥ यदनुत्तमनिःस्पंदंदीप्यतेतेजसामपि ॥ स्वानुभूत्यैकमात्रंयद्यत्तत्तत्सदसौस्थितः॥ २२॥ यदेकंचाप्यनेकंचसांजनंचनिरंजनम्॥ यत्सर्वंचाप्यसर्वंचयत्तत्तत्सदसौस्थितः॥ २३ ॥

॥ १८ ॥ शशिकलांकानांशैवानाम् ॥ शिवमतस्थानामितिपाठेपिसएवार्थः ॥ १९ ॥ तत्आत्मनोविदुषामात्मा ॥ नलोकेतिनिषेधविषयेषष्ठीछांदसी ॥ नैरात्म्यंक्षणिकविज्ञानसंतानः ॥ सहिस्थायित्वेनभासमानोनास्त्येवेतिनैरात्म्यम् ॥ तादृशात्मनांसौत्रांतिकवैभाषिकाणाम् ॥ माध्यमिकानांचिदचिन्मध्यमशून्यमाद्यंतस्त्वमितिवादिनाम् ॥ सुसमचेतसांजीवन्मुक्तानांसर्वंनिरवशेषपूर्णम् ॥ शून्यवादिभिरुपक्रम्यसर्ववादिभिरुपसंहारस्तयोःपरिच्छेदापरिच्छेदवादेपरमावधिताइतरेषांतुआंतरालिकमतानामुभयमिश्रणंतारतम्येनवैचित्र्येणोत्थानमितिद्योतनायेतिबोध्यम् ॥ २० ॥ सर्वस्यतत्त्वंसार्वंईदृशंयत्सत्असौतत्सन्तद्भूत्वास्थितइत्यर्थः ॥ २१ ॥ यत्अनुत्तमनिःस्पंदमत्यंतनिष्क्रियम् ॥ व्योमवद्यपिजन्मादिक्रियासत्वात्ततोपिकूटस्थमित्यर्थः ॥ तेजसामपिभासकतयेतिशेषः ॥ यत्स्वानुभूत्यैकमात्रंयच्चयत्सिद्धंसत्तदसावितिप्राग्वत् ॥ २२ ॥ २३ ॥

 

सवीतहव्यइतिउक्तक्रमेणमुक्तदृशानभःस्वरूपादपिनिर्मलस्थितिःसन्नजमजरमनाद्येकममलंनिष्कलंपदंभूत्वास्थितः ॥ बद्धदृशातुक्षणेनईश्वरःसन्स्वकार्यभेदैरनेकंसकलंच भूत्वास्थितइत्यर्थः ॥.२४ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेसप्ताशीतितमःसर्गः ॥८७॥ ॥ ७ ॥ ॥ वीतहव्येविमुक्तेतत्प्राणानांतद्दिसल्लयः ॥ वर्ण्यतेदेहसंशोषःकलानांकारणेलयः ॥ १ ॥ एवमुक्तरीत्याअपुनर्मननेआत्यंतिकमनोनाशेसति ॥ १ ॥ परिणामिनिपरिनिष्ठितेसति ॥ अपरिणामिनीतिवाछेदः ॥ २ ॥ मार्गशीर्षस्यांतेहेमंतेपद्मवत् ॥ ३ ॥ सर्वदेहव्यापिनांप्राणानांव्युपसंहारमाह ॥ तस्येति ॥ तस्यअसवःप्राणादेहद्रुमस्यांतस्थंतत्तन्नाडीस्थानंत्यक्त्वात्लक्षणंनीडंप्रतिआययुः ॥ देहद्रुमांतःस्थंत्वन्नीडंत्यक्त्वावहिरायर्युरितितुनव्याख्येयम् ॥ नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतेब्रह्मैवसन्ब्रह्माप्येतीत्यादिश्रुतिविरोधापत्तेःसर्वकर्मवासनानाशेनोत्क्रमणेबीजप्रयोजनयोरभावाच्चेति ॥ विहगायंतोविहगवदाचरंतः ॥ लोहितादित्वात्क्यष् ॥ यंत्रेभ्यउन्मुक्ताःशिलाइव ॥४॥इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतितद्यथापेशस्कारीपेश

अजमजरमनाद्यनेकमेकंपदममलंसकलंचनिष्कलंच ॥ स्थितइतिसतदानभःस्वरूपादपिविमलस्थितिरीश्वरःक्षणेन ॥ २४ ॥ ॥इ० वा०वा०दे० मोक्षोपायेषूपशमप्रकरणेवीतहव्यनिर्वाणोपदेशोनामसप्ताशीतितमःसर्गः ॥ ८७ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच ॥ प्राप्यसंसृतिसीमांतंदुःखाब्धेःपारमागतः ॥ वीतहव्यःशशामैवमपुनर्मननेमुनिः ॥ १ ॥ तस्मिंस्तथोपशांतेहिपरांनिर्वृतिमागते ॥ पयःकणइवांभोधौस्वेपदेपरिणामिनि ॥ २ ॥ तथैवतिष्ठन्निःस्पंदस्सकायोम्लानिमाययौ ॥ अंतर्विरसतांप्राप्यमार्गशीर्षांतपद्मवत् ॥ ३ ॥ तस्यदेहद्रुमांतःस्थंत्यक्त्वान्नीडमाययुः ॥ प्रोड्डीयविहगायंतोयंत्रोन्मुक्ताइवासवः ॥ ४ ॥ भूतेष्वेवप्रतिष्ठानिभूतानिसकलान्यलम् ॥ मांसास्थियंत्रदेहस्तुवनावनितलेवसत् ॥ ५ ॥ चिदर्णवप्रतिष्ठाचिद्धातवोधातुषुस्थिताः ॥ स्वेस्वरूपेस्थितंसर्वंमुनावुपशमंगते ॥ ६ ॥ एषातेकथितारामविचारशतशालिनी ॥ विश्रांतिर्वीतहव्यस्यप्रज्ञयैनांविवेचय ॥ ७ ॥ एवंप्रकारयाचार्व्यास्वविचारणयेद्धया ॥ तत्त्वमालोक्यतत्सारमातिष्ठोत्तिष्ठराघव ॥ ८ ॥ यदेतदखिलंरामभवतेवर्णितंमया ॥ यदिदंवर्णयाम्यद्यवर्णयिष्यामियच्चवा ॥ ९ ॥

सोमात्रामुपादायेत्यादिश्रुत्यातदनंतरप्रतिपत्तौरंहतिपरिष्वक्तःप्रश्ननिरूपणाभ्यामितिवादरायणोक्तन्यायाच्चपूर्वजन्मानुष्ठिताग्निहोत्रादिकर्मसमवाय्यप्शब्दवाच्यसोमाज्यपयःप्रभृतिभूतमात्रासहितस्यैवलिंगस्यचंद्रमंडलारूढस्यभोगांतेआकाशादिक्रमेणपृथिव्यांव्रीहियवपुरुषयोषिदनुप्रवेशेनपुरुषाकारताप्राप्त्यवगमात्तासांभूतमात्राणांकारणानुप्रवेशमाह ॥ भूतेष्वेवेति ॥ सकलानिप्राणादिनामांतषोडशकलासहितानि ॥ यस्तुपितृमातृमलजःस्थूलतरांशःसतत्रैवस्थितइत्याह ॥ मांसेति ॥५॥ चित्प्रतिलिंगेषुबिंबिताजीवचिरस्वबिंबभूतेचिदर्णवेप्रविष्टेव ॥ धातवस्त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि ॥ धातुषुस्वोपादानेषु ॥६॥ उपसंहरति ॥ एषेति ॥७॥ चार्व्यारमणीयया ॥ वोतोगुणवचनादितिङीष् ॥८॥ इदानींभगवान्वसिष्ठःकृपातिशयेनोक्तोच्यमानवक्ष्यमाणग्रंथस्यचिरायुर्भिःसर्वदर्शिभिरस्मदादिभिःसर्वप्रकारैरसकृत्कृतानांविचाराणांलोकशास्त्रश्रुतिभिरन्वयव्यतिरेकाभ्यांचपरीक्ष्यभूयोभूयोदर्शनस्यचऐकात्म्यदृष्टिमवलंब्यज्ञानप्रतिष्ठाप्राप्तिरेवफलंनातःपरंपुरुषैःसंपाद्यमस्तीतिनिर्णीतमितिविश्वासदार्ढ्यायाह ॥ यदेतदित्यादिना ॥ ९ ॥

॥१०॥११॥१२॥ शातितःखंडितःअशेषःसंस्कारशेषेणाप्यनवेशेषितश्चित्ताद्रिर्येनतथाविधोभूरितिशेषः ॥ १३ ॥ ननुवीतहव्येनस्वद्वदिसंकल्पमयंजगत्तत्रगणत्वंचानुभूतमि
त्युक्तंतज्जगदंतर्गतंसूर्यंप्रविश्यतत्रत्यपिंगलद्वाराएतज्जगद्भूप्रतिष्ठस्वदेहोद्धारःकथंकृतः ॥ नहिस्वामकुद्दालैर्जापन्निधिखननंदृष्टमितिरामाशंकांलिंगैरालक्ष्याह ॥ वीतहव्येति ॥
सावीतहव्यात्मिकासंवित्स्वद्वदयोपलक्षितेब्रह्मणिइदमस्मदादिसाधारणमेवदृश्यंस्वसंकल्पजगतीइत्यनुभूतवतीनापूर्वमित्यर्थः ॥ १४ ॥ इतश्चइदमेवतज्जगदित्याह ॥ वीतहव्य
इति ॥ ऐंद्रियःअस्मदादिचक्षुरादिदृश्योवीतहव्योऽस्मदीयमनोमात्रम् ॥ यतोस्मन्मनएवाहमिवत्वमिवभासते ॥ मनएवेदंकृत्स्नंजगत्तत्रान्यतानन्यतेके ॥ नहिवंध्याभेदेनतत्तु

त्रिकालदर्शिनानित्यंचिरंचकिलजीवता ॥ विचारितंचदृष्टंचमयातदखिलंस्वयम् ॥ १० ॥ तदेताममलांदृष्टिमवलंव्यमहामते ॥ ज्ञान
मासादयपरंज्ञानान्मुक्तिर्हिलभ्यते ॥ ११ ॥ ज्ञानान्निर्दुःखतामेतिज्ञानादज्ञानसंक्षयः ॥ ज्ञानादेवपरासिद्धिर्नान्यस्माद्रामवस्तुतः ॥ १२ ॥
ज्ञानेनसकलामाशांविनिकृत्यसमंततः ॥ शातिताशेषचित्ताद्रिर्वीतहव्योमुनीश्वरः ॥ १३ ॥ वीतहव्यात्मिकासंवित्संकल्पजगतीतिसा ॥
अनुभूतवतीदृश्यमिदमेवचतज्जगत् ॥ १४ ॥ वीतहव्योमनोमात्रंमनोहंत्वमिवेंद्रियः ॥ मनोजगदिदंकृत्स्नमन्यतानन्यतेतुके ॥ १५ ॥ अ
धिगतपरमार्थःक्षीणरागादिदोषःसकलमलविकारोपाधिसंगाद्यपेतः ॥ चिरमनुसृतमंतःस्वंस्वभावंविवेकीपदममलमनंतंप्राप्तवान्शां
तशोकः ॥ १६ ॥ ॥इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेवीतहव्यविश्रांतिर्नामाष्टाशीतितमःसर्गः ॥ ८८ ॥ ॥ ५ ॥ ॥ श्री
वसिष्ठउवाच ॥ ॥ वीतहव्यवदात्मानंनीत्वाविदितवेद्यताम् ॥ वीतरागभयोद्वेगस्तिष्ठराघवसर्वदा ॥ १ ॥ त्रिंशद्वर्षसहस्राणिविजहार
यथासुखम् ॥ वीतहव्योवीतशोकस्तथाविहरराघव ॥ २ ॥ अन्येचराजन्मुनयोज्ञातज्ञेयामहाधियः ॥ यथावसन्स्वराष्ट्रेत्वंतथैवास्वमहा
मते ॥ ३ ॥ सुखदुःखकर्मैरात्मानकदाचनगृह्यते ॥ सर्वगोपिमहाबाहोकिंमुधापरिशोचसि ॥ ४ ॥ बहवोविदितात्मानोविहरंतीहभूतले ॥
नकंचनवशंयांतिदुःखस्यांगभवानिव ॥ ५ ॥ स्वस्थोभवभवोदारःसमोभवसुखीभव ॥ सर्वगस्त्वंत्वमात्मैवतवनास्तिपुनर्भवः ॥ ६ ॥

त्राभिर्यतेनभिद्यतेवेत्यर्थः ॥ १५ ॥ एवंरामंसमाधायप्रकृतमेवार्थमाह ॥ अधिगतेति ॥ सकलेभ्योऽविद्याकामकर्मादिमलेभ्यस्तत्प्रयुक्तेंद्रियविकारेभ्योदेहत्रयोपाधिभ्यस्तत्प्र
युक्तप्रियसंगादिभ्यश्चापेतोविवेकीसवीतहव्यश्चिरंचित्तशुद्ध्युपायानुष्ठानैःश्रवणमनननिदिध्यासनसाक्षात्कारसमाधिभूमिकाभ्यासैरंतःस्वस्त्वनुभूतमनुसरणेनाभिमुखीकृतंस्व
स्वभावभूतममलमनंतंमोक्षपदंप्राप्तवानित्यर्थः ॥ १६ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेअष्टाशीतितमःसर्गः ॥ ८८ ॥ ॥ ५ ॥ ॥ अनिच्छा
शांतमोहानांनभोगत्यादिसिद्धिषु ॥ श्वापदाद्यैरधृष्यत्वंतत्तनोश्चात्रकीर्त्यते ॥ १ ॥ आत्मानंस्वम् ॥ नीवसोर्हरतेश्चेतिकात्यायनवचनाद्धिकर्मता ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अंगे
तिसंबोधनम् ॥ ५ ॥ उदारःअंतःसर्वत्यागशीलः ॥ ६ ॥

१ संतानसंविदितिक्वचित्पाठः

शिखिनांमयूराणाम् ॥७।८॥ शरीराणामित्युक्तेःसतिप्रारब्धेत्रीतहव्यस्यविद्याधरादिभोगइवमानस्यःसिद्धयःसंभवंत्येवेत्याशयः ॥९॥ प्रमाणिताःप्रमाणैरुपलब्धाः ॥ ताअग्रे रूर्ध्वज्वलनमिवदेवयोनीनांस्वभावसिद्धाः ॥१०॥ नभोगमनादिक्रियाजालंवस्तुस्वभावस्तत्तद्योनिदेहस्वभावः ॥ मशकादीनामपिनभोगतिशक्तिदर्शनादितिभावः ॥ मतंवांछितम् ॥११॥ तर्हिमनुष्याणांयोगसिद्धानभोगमनादिप्राप्तिःकथंतत्राह ॥ अनात्मविदिति ॥ मण्यौषधादिद्रव्यशक्त्यामंत्रशक्त्यायोगाभ्यासादिक्रियाशक्त्यातत्परिपाककालशक्त्याचकदाचिदेवप्राप्नोति ॥ दृष्टांतार्थंवाकालग्रहणम् ॥ यथापिपीलिकापीष्मांतकालशक्त्यापक्षोद्गमान्नभोगतिंप्राप्नोतितद्वत् ॥ १२ ॥ एपनभोगत्यादिर्नविषयोऽभिलाषयो

हर्षामर्षविकाराणांजीवन्मुक्ताभवादृशाः॥नकेचनवशंयांतिमृगेंद्राःशिखिनामिव॥७॥ ॥श्रीरामउवाच॥ ॥अनेनैवप्रसंगेनसंशयोयंममोदितः॥शरत्कालइवांभोदंतमेत्वंतनुतांनय॥८॥जीवन्मुक्तशरीराणांकथमात्मविदांवर॥ शक्तयोनेहदृश्यंतेआकाशगमनादिकाः॥९॥ ॥श्रीवसिष्ठउवाच॥ ॥आकाशगमनादीनियान्येतानिरघूद्वह॥ प्रमाणिताःपदार्थानांसहजाःखलुशक्तयः॥१०॥यद्विचित्रंक्रियाजालंदृश्यतेगम्यतेपुनः॥रामवस्तुस्वभावोसौनतदात्मविदांमतम्॥११॥ अनात्मविदमुक्तोपिनभोविहरणादिकम्॥द्रव्यंकर्मक्रियाकालशक्त्याप्राप्नोतिराघव॥१२॥नात्मज्ञस्यैषविषयआत्मज्ञोह्यात्मवान्स्वयम्॥आत्मनात्मनिसंतृप्तोनाविद्यामनुधावति॥१३॥ येकेचनजगद्भावास्तानविद्यामयान्विदुः॥ कथंतेषुकिलात्मज्ञस्त्यक्ताविद्योनिमज्जति॥ १४॥ अविद्यामपियेयुक्त्यासाधयंतिसुखाल्पिकाम्॥ तेह्यविद्यामयाएवनत्वात्मज्ञास्तथाक्रमाः॥१५॥ तत्त्वज्ञोवाप्यतत्त्वज्ञोयःकालद्रव्यकर्मभिः॥ यथाक्रमंप्रयततेतस्योर्ध्वत्वादिसिद्ध्यति॥१६॥आत्मवानिहसर्वस्माद्‌तीतोविगतैषणः॥आत्मन्येवहिसंतुष्टोनकरोतिनचेहते॥१७॥नतस्यार्थोनभोगत्यानसिद्ध्यानचभोगकैः॥नप्रभावेणनोमानैर्नाशामरणजीवितैः॥१८॥नित्यतृप्तःप्रशांतात्मावीतरागोविवासनः॥आकाशसदृशाकारस्तज्ज्ञआत्मनितिष्ठति॥१९॥ अशंकितोपयातेनदुःखेनचसुखेनच॥ तृप्यत्यपगतासंगोजीवेनमरणेनच॥२०॥समुद्रःसरितेवांतःक्रमसंप्राप्तवस्तुना॥ समेनविषमेणापितिष्ठत्यात्मानमर्चयन्॥ २१॥ नैवतस्यकृतेनार्थोनाकृतेनेहकश्चन॥ नचास्यसर्वभूतेषुकश्चिदर्थव्यपाश्रयः॥२२॥

ग्यस्तुच्छत्वात् ॥ आत्मवान्लब्धात्मा ॥ अविद्यामाविद्यकंतुच्छफलम् ॥१३॥१४॥ युक्त्यायोगाभ्यासादिश्रमसहस्रेण ॥ तथाक्रमास्तथाविधाः ॥ १५॥ तर्हिकितत्त्वज्ञानांतत्संपादनशक्तिर्नास्त्येवनेत्याह ॥ तत्त्वज्ञइति ॥ कालेनचिरकालप्रयत्नेनद्रव्यकर्मभिर्यथाशास्त्रोक्तक्रमंयएवप्रयततेतस्यऊर्ध्वत्वंनभोगतिस्तदादिसिध्यति ॥१६॥१७॥ प्रभावेणसर्वाधिपत्यनिग्रहानुग्रहसामर्थ्येन ॥ मानैःस्वोत्कर्षख्यापनगर्वैः ॥१८॥१९॥ तृप्यतिस्वाभाविकींतृप्तिंनजहाति ॥ जीवेनजीवनेन ॥२०॥ समेनस्वानुकूलेनविषमेणप्रतिकूलेनापिप्रारब्धाक्रमसंप्राप्तभोग्यवस्तुना ॥ समुद्रपक्षेओघतृणकाष्ठादिवस्तुना ॥ अर्चयन्अखंडाकारवृत्तिपुष्पैःपूजयन् ॥ २१॥ अर्थव्यपाश्रयःप्रयोजनोपजीवनम् ॥ २२ ॥

१ मंत्रक्रियेतिपाठष्टीकातोवगम्यते

अभावितात्माआत्मज्ञानलेशशून्योपि ॥ २३ ॥ मणिमंत्रादियुक्त्यैवआकाशगमनादिइत्थंसिद्ध्यतीतितत्तच्छास्त्रप्रसिद्धोनियतेःक्रमःतत्तन्नियतिकर्तृभिस्त्र्यक्षादिभिरपिव्यर्थी कर्तुंनशक्यते ॥ २४ ॥ यातुदेवादीनांस्वतःखेचरत्वादिसिद्धिरेषवस्तुस्वभावः ॥ अतएवसाउत्पत्तिमारभ्ययावज्जीवंस्थायिनीत्याह ॥ नजहात्येवेति ॥ २५ ॥ २६ ॥ २७ ॥ विषघ्नौषधादिद्रव्यशक्तिवदेवमणिमंत्रादिशक्तिरपिस्वस्वकार्यसमर्थेत्याह ॥ यथेति ॥ विषघ्नद्रव्यमणिमंत्रादिशक्तयोयथाविषाणिनिघ्नंति ॥ मधूनियथामदयंति ॥ यथाशु क्तानिमाक्षिकमधूनिमदनफलानिवास्वादितानिवमयंतिउद्गिरणंकारयंति ॥ २८ ॥ प्रयुज्यतइतिप्रयोगंसिद्धिजातंनियतमवश्यंसाधयंति ॥ युक्तैर्योगादिकुशलैःपुरुषैर्योजिताः

यस्तुवाभावितात्मापिसिद्धिजालानिवांछति॥ ससिद्धिसाधकैर्द्रव्यैस्तानिसाधयतिक्रमात् ॥ २३ ॥ सिद्ध्यतीत्थमिदंयुक्त्यैवेत्ययंनिय तेःक्रमः॥ त्र्यक्षादिभिःसुरवरैर्व्यर्थीकर्तुंनशक्यते॥ २४ ॥ स्वभावएषवस्तूनांस्वतःसिद्धिर्हिनान्यतः॥ नियतिंनजहात्येवशशांकइववशी तताम् ॥ २५ ॥ सर्वज्ञोपिविदुज्ञोपिमाधवोपिहरोपिच ॥ अन्यथानियतिंकर्तुंनशक्तःकश्चिदेवहि॥ २६॥ द्रव्यकालक्रियामंत्रप्रयोगाणां स्वभावजाः॥ एतास्ताःशक्तयोरामयद्व्योमगमनादिकम् ॥ २७ ॥ यथाविषाणिनिघ्नंतिमदयंतिमधूनिच ॥ वमयंतिचशुक्तानिमदना निफलानिच ॥ २८ ॥ तथास्वभाववशतोद्रव्यकालक्रियाक्रमाः॥ नियतंसाधयंत्याशुप्रयोगंयुक्तियोजिताः ॥ २९ ॥ एतस्मात्समतीत स्यत्यक्ताविद्यस्यराघव ॥ आत्मज्ञानस्यनास्त्यत्रकर्तृताकर्तृतानघ ॥ ३० ॥ द्रव्यदेशक्रियाकालयुक्तयःसाधुसंविदः॥ परमात्मपदप्रा प्तौनोपकुर्वंतिकाश्चन ॥ ३१ ॥ यस्येच्छाविद्यतेकाचित्ससिद्धिंसाधयत्यलम् ॥ आत्मज्ञस्यतुपूर्णस्यनेच्छासंभवतिक्वचित् ॥ ३२ ॥ सर्वे च्छाजालसंशांतावात्मलाभोदयोहियः॥ तद्विरुद्धाकथंकस्मादिच्छासंजायतेनघ॥ ३३॥ यथोदितिचयस्येच्छासनयायततेतथा॥ यथा कालंतदाप्नोतिज्ञोवाप्यज्ञतरोपिवा ॥ ३४ ॥ वीतहव्येनयतितंनोज्ञानेच्छेनकिंचन ॥ ज्ञानेच्छेनाशुयतितंप्रोत्थितोसौयथावने ॥ ३५ ॥ एवंकालक्रियाकर्मद्रव्ययुक्तिस्वभावजाः॥ यथेच्छमेवसिद्ध्यंतिसिद्धयःस्वाःक्रमार्जिताः ॥ ३६ ॥

प्रयुक्ताः ॥ २९ ॥ एतस्माद्द्रव्यकालक्रियाक्रमलक्षणादविद्याविषयात्समतीतस्यत्यक्ताविद्यस्यबधिताज्ञानस्यआत्मज्ञानस्यअत्रनभोगमनादिसिद्धिजालेकर्तृताकारणताअ कर्तृताविरोधितावानास्तीत्यर्थः ॥ ३० ॥ यथाआत्मज्ञानस्यक्रियाफलेअनुपयोगस्तथाज्ञानफलेद्रव्यदेशक्रियादेरप्यनुपयोगइत्याह ॥ द्रव्येति ॥ साधुसंविदस्तत्त्वज्ञान स्य ॥ ३१ ॥ ३२ ॥ कुतोनसंभवतितत्राह ॥ सर्वेति ॥ ३३ ॥ निरिच्छोपितत्त्ववित्कौतुकाद्यनतेचेत्तस्यभवंत्येवसिद्धयइत्याशयेनाह ॥ यथेति ॥ ३४ ॥ वीतहव्यस्यतर्हिसि द्धयःकुतोनजातास्तत्राह ॥ वीतहव्येनेति ॥ सिद्धीच्छयानोयतितम् ॥ तत्कुतस्तत्राह ॥ ज्ञानेच्छेनेति ॥ ज्ञानेच्छयाइतरेच्छाप्रतिबंधादित्यर्थः ॥ ज्ञानेच्छयातुतेनयतितमेवय थाअसौवनेज्ञानाभ्यासायप्रोत्थितउद्युक्तइतिप्राग्वर्णितमेवेत्यर्थः ॥ ३५ ॥ ३६ ॥

सिद्धिविषयेज्ञानविषयेवाअनुपरतस्यप्रयत्नस्यावश्यफलवत्तामुमुक्षुव्यवहारप्रकरणेविस्तरेणप्रपंचितेत्याह ॥ याःफलेति ॥ यच्छब्दोवीप्सितोद्रष्टव्यः ॥ संप्राप्ताःदृश्यंतइतिशेषः ॥ ३७ ॥ ईहितंसर्वाभिलषितंपरमप्रेमास्पदमात्मसुखमितियावत् ॥ ३८ ॥ छिन्नापंकादिक्लेदान्नविशीर्णेत्यर्थः ॥ ३९ ॥ तदाभूप्रवेशकालेएव ॥ इतिएतत्प्रश्नद्वयोत्तरंयथावद्वद ॥ ४० ॥ तत्रप्रथमप्रश्नस्योत्तरंवक्तुंभूमिकांरचयति ॥ येति ॥ याअज्ञसंविद्देहाहंभाववासनारूपेणरागादिमलदूषितेनतंतुनावलिताहृढंवेष्टिताभवतिसैवदेहच्छेदभेदादिप्रयुक्तसुखदुःखदशालक्षणदाहभागिनीत्यर्थः ॥ ४१ ॥ साजीवन्मुक्ततनुर्बाधितत्वादधिष्ठानशुद्धसंविन्मात्रमयीतिष्ठति ॥ तस्यसंविन्मात्रस्यच्छेदेकेपिक्रव्यादादयोनशक्ताःअच्छेद्योयमदाह्योयमक्लेद्योशोष्यएवचेतिभगवद्वचनादितिभावः ॥ ४२ ॥ उपपत्त्यंतरंवक्तुंप्रतिजानीते ॥ शृण्विति ॥ ४३ ॥ ४४ ॥ तथाहीतिसंबंधः ॥

याःफलावलयोयेनसंप्राप्ताःसिद्धिनामिकाः॥ तास्तेनाधिगताराम निजात्प्रयतनद्रुमात् ॥ ३७ ॥ महतांनित्यतृप्तानांतज्ज्ञानांभावितात्मनाम्॥ ईहितंसंप्रयातानांनोपकुर्वंतिसिद्धयः॥ ३८॥ ॥श्रीरामउवाच॥ ॥अयंमेसंशयोब्रह्मन्वीतहव्यस्यसातनुः॥ क्रव्यादैर्नकथंभुक्ताकथंक्छिन्नानभूतले॥ ३९॥ तदैववीतहव्योसौकथंवनगतःप्रभो॥ विदेहमुक्ततांशीघ्रंयथावदितिमेवद ॥ ४० ॥ ॥श्रीवसिष्ठउवाच॥ ॥यासंविद्दलितासाधोवासनामलतंतुना॥ सुखदुःखदशादाहभागिनीभवतीहसा॥ ४१ ॥ निर्मुक्तवासनाशुद्धसंविन्मात्रमयीतुसा॥ तनुस्तिष्ठतितच्छेदेशक्तानेहहिकेचन॥ ४२॥ शृणुयुक्त्याकयायोगीतनुच्छेदादिविभ्रमैः॥ नाक्रम्यतेमहाबाहोबहुवर्षशतैरपि॥ ४३॥ चेतःपदार्थेपततियस्मिन्यस्मिन्यदायदा॥ तन्मयंतद्भवत्याशुतस्मिंस्तस्मिंस्तदातदा॥ ४४ ॥ तथाहृष्टारिहिमनोविकारमुपगच्छति॥ दृष्टमित्रंसुहृद्यत्वंस्वयमित्यनुभूयते॥४५॥ रागद्वेषविहीनेतुपथिकेपादपेगिरौ॥ भवत्यरागद्वेषंचस्वयमित्यनुभूयते॥४६॥ मृष्टेलौल्यमुपादत्तेदुर्भोज्येयातिनिस्पृहम्॥ वैरस्यंयातिकटुनिस्वयमित्यनुभूयते ॥४७॥ समसंविद्विलासाढ्येयद्यदायतिदेहके॥ हिंस्रचेतःपतत्याशुसमतामेतितत्तदा॥ ४८॥

दृष्टःअरिर्द्वेष्टायेनतथाविधंमनःअरिद्वेषप्रतिबिंबमिवद्वेषादिविकारमुपगच्छति ॥ दृष्टमित्रंतुमनस्तदीयहृदयप्रीतिप्रतिबिंबमिवसुहृद्धृद्यत्वमुपगच्छति ॥ इत्ययमर्थःसर्वैःस्वयंप्रत्यक्षमनुभूयतइत्यर्थः ॥ ४५ ॥ अतएवएकस्यरागद्वेषशून्यत्वेअन्यस्यापिनदृश्यतइत्याह ॥ रागेति ॥ पथिकेउदासीनपुरुषेपादपेगिरौचविषयेमनःअरागद्वेषंभवतीत्यर्थः ॥ ४६ ॥ एवमचेतनेषुभोज्यादिष्वपिप्रीत्यप्रीत्यौदासीन्यानितद्गतगुणदोषतदुभयाभावप्रतिबिंबनादेवमनसिप्रसिद्धावित्याशयेनाह ॥ मृष्टेइति ॥ दुर्भोज्येनीरसेनिस्पृहंस्पृहाभावम् ॥ अर्थाभावेव्ययीभावेहस्वः ॥ वैरस्याभावस्याप्युपलक्षणमेतत् ॥ ४७॥ अस्त्वेवंप्रकृतेकिंततस्तत्राह ॥ समेति ॥ समोरागद्वेषवैषम्यशून्योयःसंविद्विलासस्तेनआढ्येसंपन्नतमेयतिदेहकेयोगिशरीरेयत्हिंस्राणांक्रव्यादानांचेतोयदापततितत्तदाआशुतत्कालमेवयोगिसंवित्समताप्रतिबिंबनादिवसमतामेति ॥ अतोनतत्कृतहिंसाप्रसक्तिरित्यर्थः॥ तथाचाहिंसाप्रतिष्ठांप्रत्युत्यपतंजलिनोक्तंतत्सन्निधौवैरत्यागइति ॥ ४८ ॥

हिंस्रोपिसमस्यसमदर्शिनोयतेःसंगेनद्वेषादिभ्योविमुक्तत्वात्कस्यापिच्छेदनादौनप्रवर्त्तते ॥ यथाग्रामीणकर्मणिग्रामसन्निहितवनलताच्छेदादौपांथोनप्रवर्त्ततेतद्वत् ॥ ४९ ॥ योगिदेहसमीपादन्यत्रगत्वातत्रदोषादियुक्तंयद्यज्जंतुजातंभवतितत्तदनुरूपांहिंस्रतांप्राप्नोति ॥ ५० ॥ इतिएतस्मात्कारणद्वयात् ॥ ५१ ॥ कथंछिन्नानभूतलेइतिप्रश्नस्योत्तरमाह ॥ सर्वत्रेत्यादिना ॥५२॥ तर्हिपुर्यष्टकेष्वेवकथंतदुपलंभस्तत्राह ॥ पोप्लूयमानेति ॥ प्लवमानेवतरलापरिणामसहस्रविषमातन्वीपरिच्छिन्नाचसापरिदृश्यते ॥ असमाहितचित्तैरितिशेषः ॥ ५३ ॥ तेनवीतहव्यस्यपुर्यष्टकेनतत्त्वबोधसमाधिभ्यांसमरूपयाअविषमस्वभावंनीतयाभूजलादिसंविस्यातनुर्निर्विकारंसर्वविकारशून्यब्रह्मभावंनीताअतो

समसंगविमुक्तत्वाच्छेदादौनप्रवर्त्तते ॥ पांथोव्यर्थंपथिग्रामेयथाग्रामीणकर्मणि ॥४९॥ योगिदेहसमीपात्तुगत्वाप्राप्नोतिहिंस्रताम् ॥ यद्यद्भवतितत्राशुतथारूपंनसंशयः ॥५०॥ इतिहिंस्रैर्मृगव्याघ्रसिंहकीटसरीसृपैः ॥ नच्छिन्नावीतहव्यस्यतनुर्भूतलशालिनी ॥५१॥ सर्वत्रविद्यतेसंवित्काष्ठलोष्टोपलादिके ॥ सत्तासामान्यरूपेणसंस्थितामूकबालवत् ॥५२॥ पोप्लूयमानातरलाकेवलंपरिदृश्यते ॥ तन्वीपुर्यष्टकेष्वेवप्रतिबिंबजलेष्विव ॥५३॥ तेनभूजलवाय्वग्निसंविस्यासमरूपया ॥ निर्विकारंतनुर्नीतावीतहव्यस्यराघव ॥५४॥ अन्यच्छृणुमेरामस्पंदोनाशस्यकारणम् ॥ विकारःसचचित्तोत्थोवातजोवाजगत्स्थितौ ॥ ५५ ॥ प्राणानांप्राणनंस्पंदस्तच्छांतौतेदृषत्समाः ॥ यतःस्थिताधारणयातेनानष्टास्यसातनुः ॥५६॥ सबाह्याभ्यंतरंस्पंदश्चित्तजोवातजोथवा ॥ नयस्यविद्यतेतस्यदूरस्थौप्रकृतिक्षयौ ॥५७॥ सबाह्याभ्यंतरेशांतेस्पंदेतत्त्वविदांवर ॥ धातवःसंस्थितिंदेहेनत्यजंतिकदाचन ॥५८॥ संशांतेदेहप्रस्पंदेचित्तवातमयेतथा ॥ धातवोमेरवत्स्थैर्यंयांतिसंस्तंभितात्मकाः ॥५९॥ तथाचदृश्यतेलोकेस्पंदशांतौदृढास्थितिः ॥ दारूणामिवधीराणांशवांगानामचोपता ॥६०॥ इतिवर्षसहस्राणिदेहाजगतियोगिनाम् ॥ नक्षियंतेनभिद्यंतेमग्नवज्जलदाइव ॥६१॥ तदेववीतहव्योसौशृणुकिंनोपशांतवान् ॥ देहमुत्सृज्यतत्त्वज्ञोज्ञातज्ञेयवतांवरः ॥६२॥ येहिविज्ञातविज्ञेयावीतरागामहाधियः ॥ विच्छिन्नग्रंथयःसर्वेतेस्वतंत्रास्तनौस्थिताः ॥६३

नविकारंगतेत्यर्थः ॥ ५४ ॥ अन्यद्युक्त्यंतरमपिशृणु ॥ तदेवाह ॥ स्पंदइत्यादिना ॥ जगत्स्थितौलोकव्यवहारेप्रसिद्धइत्यर्थः ॥ ५५ ॥ तेप्राणादेहेदृषत्समादृढीभूतायतोहेतोःस्थितास्तेनहेतुना ॥ ५६ ॥ बाह्योहस्तपादादिराभ्यंतरःप्राणादिस्तत्सहितेदेहे ॥ प्रकृतिर्वृद्ध्यादिःक्षयःअपक्षयादिश्च ॥ ५७ ॥ धातवस्त्वगादयः ॥ संस्थितिंपूर्वावस्थाम् ॥५८॥ मेरवंमेरुसंबंधिमेरुतुल्यमितियावत् ॥ ५९ ॥ स्पंदयतीतिस्पंदःप्राणस्तच्छांतौ ॥ शवांगानांचअचोपताअकंपता ॥ चुपमंदायांगतौभावेघञ् ॥ ६० ॥ इतिअनयायुक्त्या ॥ जलदाइवनक्षियंतेभूमग्नशिलावन्नभिद्यंतेइतिव्युत्क्रमेणान्वयः ॥ ६१ ॥ चरमप्रश्नमनूद्योत्तरमाह ॥ तदेवेत्यादिना ॥ ज्ञातंज्ञेयंब्रह्मयैरुपायैस्तद्वतांपरिज्ञानात्मवतांवा ॥ ६२ ॥ स्वतंत्राअपराधीनाः ॥ तस्यहनदेवाश्चनाभूत्याईशतेआत्माह्येषांसभवतीतिश्रुतेः ॥ ६३ ॥

स्वातंत्र्यमेवोपपादयति ॥ दैवमिति ॥ प्राक्तनकर्मफलप्रदानोन्मुखईश्वरोदैवंकर्मप्राधान्यवादेकर्मणिचतेषांप्रारब्धशेषभोगायप्रवृत्तंचेतोननियमयंतिनान्यथाप्रवर्त्तयितुमीशते ॥ ६४ ॥ काकतालीयवदाकस्मिकंप्रारब्धोपनीतंयद्यज्जीवनंमरणंवा ॥ ६५ ॥ ६६ ॥ यदातुप्रारब्धसमाप्तौप्रतिभासंविद्भताभावितवती ॥ ६७ ॥ उक्तमेवसंक्षिप्योपसंहरति ॥ विगतेति ॥ विपाशतामुपगतमतएववास्तवात्मस्वभावेनोदितंमनस्तदुपाधिर्जीवएवहियस्मात्सकलशक्तिमयोमहेश्वरःशिवएवस्वयंजातइत्यर्थः ॥ तथाचाहुः॥ तुषेणबद्धो व्रीहिःस्यात्तुषाभावेतुतंडुलः ॥ पाशबद्धःसदाजीवःपाशमुक्तःसदाशिवइति ॥ ६८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेएकोननवतितमःसर्गः ॥ ८९ ॥

दैवंवापिचकर्माणिप्राक्तनान्यैहिकानिच॥ वासनावानतेषांतच्चेतोनियमयंत्यलम् ॥ ६४ ॥ तेनतत्त्वविदांतातकाकतालीयवन्मनः॥ यद्यद्भावयतिक्षिप्रंतत्तदाशुकरोत्यलम् ॥ ६५ ॥ काकतालीययोगेनवीतहव्यस्यसंविदा ॥ सांप्रतंजीवितंबुद्धंतदेवाशुस्थिरीकृतम् ॥ ६६ ॥ यदातुतस्यप्रतिभाविदेहोन्मुक्ततांगता॥ तदाविदेहमुक्तोभूदसौस्वातंत्र्यसंस्थितिः॥ ६७॥ विगतवासनमाशुविपाशतामुपगतंमनआत्मतयोदितम्॥ यदभिवांछतितद्भवतिक्षणात्सकलशक्तिमयोहिमहेश्वरः ॥ ६८॥ ॥इ०वा०वा०दे०मो०उपशमप्रकरणे सद्विलासविचारयोगोपदेशोनामोननवतितमःसर्गः॥ ८९॥ ॥श्रीवसिष्ठउवाच॥ ॥यदात्यस्तंगतप्रायंजातंचित्तंविचारतः॥ तदाहिवीतहव्यस्यजातामैत्र्यादयोगुणाः॥ १॥ ॥श्रीरामउवाच॥ ॥विचाराभ्युदयाच्चित्तस्वरूपेंतर्हितेमुने: ॥ मैत्र्यादयोगुणाजाताइत्युक्तंकिंत्वयाप्रभो ॥ २ ॥ ब्रह्मण्यस्तंगतेचित्तेकस्यमैत्र्यादयोगुणाः॥ क्ववापरिस्फुरंतीतिवदमेवदतांवर॥ ३॥ ॥श्रीवसिष्ठउवाच॥ द्विविधश्चित्तनाशोस्तिसरूपोऽरूपएवच॥ जीवन्मुक्तःसरूपःस्यादरूपोदेहमुक्तिजः॥ ४॥ चित्तसत्तेहदुःखायचित्तनाशःसुखायतु॥ चित्तसत्तांक्षयंनीत्वाचित्तंनाशमुपानयेत् ॥ ५ ॥ तामसैर्वासनाजालैर्व्याप्तंयज्जन्मकारणम् ॥ विद्यमानंमनोविद्धितद्दुःखायैवकेवलम् ॥ ६॥ प्राक्तनंगुणसंभारंममेतिबहुमन्यते॥ यत्तुचित्तमतत्त्वज्ञंदुःखितंजीवउच्यते ॥ ७॥ विद्यमानंमनोयावत्तावद्दुःखक्षयःकुतः॥ मनस्यस्तंगतेजंतोःसंसारोस्तमुपागतः॥ ८॥

मैत्र्यादिगुणसंपन्नस्तथानिष्कलतांगतः ॥ द्विविधश्चित्तनाशोत्रविस्तरेणोपवर्ण्यते ॥ १ ॥ अस्तंगतप्रायंभर्जितबीजवदंकुरशक्त्याअस्तंगतंप्रतिभासतस्तुनास्तंगतमित्यर्थः ॥१॥ इतित्वयाकिंकिमभिप्रायमुक्तम् ॥ २ ॥ अस्तंगतेबाधितेसति ॥ कस्यकिंबाधितस्यउतअधिष्ठानस्यक्ववाकिंचिदाभासेउतबिंबचितिस्फुरंति ॥ नहिबाधितायांमृगतृष्णानद्यामरुभूमेर्वाशैत्यमाधुर्यपावनत्वादयोगुणाःसंभवंतिनवातद्भासकंकिंचिदस्तीतिभावः ॥३ ॥ सरूपःस्फटिकभित्तिगतस्वप्रतिबिंबेपुरुषांतरभ्रमाभासवत्प्रतिभासमानतद्रूपसहितस्तद्रहितश्च ॥ ४ ॥ ५ ॥ चित्तस्यसत्तातर्हिकीदृशीनामाह ॥ तामसैरिति ॥ तामसैःअबाधिताज्ञानप्रभवैः ॥ ६ ॥ प्राक्तनमनाद्यध्याससिद्धंदेहेंद्रियविषयादेर्गुणसंभारंधर्मजातमात्मसंसर्गाध्यासान्ममेत्यभिमन्यते ॥ ७॥ ८ ॥

अस्मिन्नज्ञजंतावेववासनाप्ररोहजालैरवष्टब्धंदृढप्रतिष्ठितंविद्यमानंमनोदुःखतरोर्मूलंविद्धि ॥ दुःखवृक्षवनस्यअंकुराःप्ररोहायस्मात्तथाविधम् ॥ ९ ॥ नाशस्यअभावतांग
तस्यसत्ताविद्यमानताव्यवहारक्षमताकीदृशीकिंलक्षणा ॥ १० ॥ कथितातामसैर्वासनाजालैरित्यादिग्रंथेन ॥ ११ ॥ यंधीरंबाह्याआभ्यंतरावासुखदशाःसाम्यात्समत्वभा
वपूर्णानंदैकरसत्वात्मप्रतिष्ठायाःसकाशान्नप्रोद्धरंतिनचालयंतितस्यचित्तंमृतंनष्टंविदुः ॥ १२ ॥ अयंसम्प्रवितस्तिमितोदेहःसप्रसिद्धोहम् ॥ अयंतदतिरिक्तःसर्वोनाहम् ॥ इति
चिताभावनायंनखर्वीकरोतिनपरिच्छिनत्तीतियावत् ॥ १३ ॥ वैरूप्यंमुखवैवर्ण्यम् ॥ १४ ॥ लक्षणोक्तिमुपसंहरति ॥ एषइति ॥ १५ ॥ मनस्तांपरमार्थताभ्रांत्यादृश्यमनन

दुःखमूलमवष्टब्धमस्मिन्नेवविनिश्चलम् ॥ विद्यमानंमनोविद्धिदुःखवृक्षवनांकुरम् ॥ ९ ॥ ॥श्रीरामउवाच॥ ॥ नष्टंकस्यमनोब्रह्मन्न
ष्टंवाकीदृशंभवेत् ॥ कीदृशश्चास्यनाशःस्यात्सत्तानाशस्यकीदृशी ॥ १० ॥ ॥श्रीवसिष्ठउवाच॥ ॥ चेतसःकथितासत्तामयारघुकुलो
द्वह ॥ अस्यनाशमिदानींत्वंशृणुप्रश्नविदांवर ॥ ११ ॥ सुखदुःखदशाधीरंसाम्यान्नप्रोद्धरंतियम् ॥ निःश्वासाइवशैलेंद्रंचित्तंतस्यमृतंवि
दुः ॥ १२ ॥ अयंसोहमयंनाहमितिचिंतानरोत्तमम् ॥ खर्वीकरोतियंनांतर्नष्टंतस्यमनोविदुः ॥ १३ ॥ आपत्कार्पण्यमुत्साहोमदोमांद्यं
महोत्सवः ॥ यंनयंतिनवैरूप्यंतस्यनष्टंविदुर्मनः ॥ १४ ॥ एषसाधोमनोनाशोनष्टंचेहमनोभवेत् ॥ चित्तनाशदशाचैषाजीवन्मुक्तस्यवि
द्यते ॥ १५ ॥ मनस्तांमूढतांविद्धियदानश्यतिसानघ ॥ चित्तनाशाभिधानंहितदासत्वमुदेत्यलम् ॥ १६ ॥ तस्यसत्वविलासस्यचित्तना
शस्यराघव ॥ जीवन्मुक्तस्वभावस्यकैश्चिच्चित्ताभिधाकृता ॥ १७ ॥ मैत्र्यादिभिर्गुणैर्युक्तंभवत्युत्तमवासनम् ॥ भूयोजन्मविनिर्मुक्तंजी
वन्मुक्तमनोनघ ॥ १८ ॥ व्याप्तंवासनयायत्स्याद्भूयोजननमुक्तया ॥ जीवन्मुक्तमनःसत्तारामतत्सत्त्वमुच्यते ॥ १९ ॥ संप्रत्यवानुभूत
त्वात्सत्त्वास्यातन्वसंयुतः ॥ सरूपोसौमनोनाशोजीवन्मुक्तस्यविद्यते ॥ २० ॥ मैत्र्यादयोथमुदिताःशशांकइवदीप्तयः ॥ जीवन्मुक्तमनो
नाशेसर्वदासर्वथास्थिताः ॥ २१ ॥ जीवन्मुक्तमनोनाशेसत्त्वनाम्निहिमालये ॥ वसंतइवमंजर्यःस्फुरंतिगुणसंपदः ॥ २२ ॥ अरूपस्तुम
नोनाशोयोमयोक्तोरघूद्वह ॥ विदेहमुक्तएवासौविद्यतेनिष्कलात्मकः ॥ २३ ॥

योग्यताम् ॥ सत्त्वंशुद्धसत्वभावत्वम् ॥ १६ ॥ कैश्चित्सद्व्यवहाराभासदर्शिभिः ॥ १७ ॥ तदेवसत्त्वंजीवन्मुक्तमनोमैत्र्यादिभिर्गुणैर्युक्तंभवति ॥ १८ ॥ वासनयाब्रह्माकारवा
सनया ॥ सत्वनाम्नाव्यवह्रियते ॥ १९ ॥ संप्रतिव्युत्थानकाले ॥ प्रतिभासतोऽनुभूतत्वात्सरूपःसाकारइवसत्त्वस्यसन्मात्रस्वभावस्याप्याभास्याचतन्वसंयुतोदेहादिपरिच्छेदम
स्पृशन्मननीयाभावान्मनोनाशश्चासावित्यर्थः ॥ अनेनसत्तानाशस्यकीदृशीतिप्रश्नांशस्समाहितः ॥ २० ॥ अतएवमैत्र्यादिगुणाअपिप्रतिभासतस्तत्रोपपन्नाइत्याह ॥ मै
त्र्यादयइति ॥ मुदिताःप्रसन्नाः ॥ २१ ॥ हिमस्यसंतोपशैत्यस्यआलये ॥ २२ ॥ द्वितीयंमनोनाशंदर्शयति ॥ अरूपस्त्विति ॥ २३ ॥

1169

सत्त्वंप्रातिभासिकंमनः ॥ २४ ॥ नकिंचिदपिदृश्यम् ॥ यत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमेतिश्रुतेरित्यर्थः ॥ २५॥ उक्तमेवप्रपंचयति ॥ नगुणाइत्यादिना ॥ ॥ २६ ॥ २७ ॥ सत्ताभावः ॥ असत्ताअभावः ॥ २८ ॥ रजोभिस्त्विषासूर्यज्योतिषाचरहितेन ॥ २९ ॥ आस्पदंप्रतिष्ठा ॥ ३० ॥ अजडात्मकमेवसत्सुप्तमिवोन्मेषादि क्रियारहितम् ॥ अतनवोविदेहमुक्ताः ॥ तस्मिन्पदेगलितःप्रातिभासिकचित्तलवोपियेषांतथाविधाःसंतस्तस्मिन्पदेवसंति ॥ अपुनरावृत्त्यास्थिरीभवंतीत्यर्थः ॥ ३१ ॥ ॥इ तिश्रीवासिष्ठम०तात्पर्यप्रकाशेउपशमप्रकरणेनवतितमःसर्गः ॥ ९० ॥ ॥ ७ ॥ ॥ संसृतिव्रततेर्बीजंशरीरंतस्यमानसम् ॥ प्राणस्पंदोवासनाचतद्वीजेइतिवर्ण्यते ॥ १ ॥ ब्र

समग्राग्र्यगुणाधारमपिसत्त्वंप्रलीयते॥ विदेहमुक्तेविमलेपदेपरमपावने॥ २४॥ विदेहमुक्तविषयेतस्मिन्सत्त्वक्षयात्मके॥ चित्तनाशे विरूपाख्येनकिंचिदपिविद्यते॥ २५॥ नगुणानागुणास्तत्रनश्रीर्नाश्रीर्नलोलता॥ नचोदयोनास्तमयोनहर्षामर्षसंविदः॥ २६॥ नते जोनतमःकिंचिन्नसंध्यादिनरात्रयः॥ नदिशोनचवाकाशोनाधोनानर्थरूपता॥ २७॥ नवासनानरचनानेहानीहेनरंजना॥ नसत्ता नापिवासत्तानचसाध्यंहितत्पदम्॥ २८॥ अतमस्तेजसाव्योम्नावितारेंद्वर्कवायुना॥ तत्समंशरदच्छेननिःसंध्येनारजस्त्विषा॥ २९॥ येहिपारंगताबुद्धेःसंसाराचरणस्यच[1]॥ तेषांतदास्पदंस्फारंपवनानामिवांबरम्॥ ३०॥ संशांतदुःखमजडात्मकमेवसुप्तमानंदमंथरम पेतरजस्तमोयत्॥ आकाशकोशतनवोतनवोमहांतस्तस्मिन्पदेगलितचित्तलवावसंति॥३१॥ ॥इ०वा०वा०दे०मो०उपशमप्रकर णेचित्तोपदेशविचारयोगोपदेशोनामनवतितमःसर्गः॥ ९०॥ ॥७॥ ॥श्रीरामउवाच॥ ॥परमाकाशकोशाद्रिरूढलोकांतर द्रुमम्॥ तारकापुष्पशबलंदेवासुरविहंगमम्॥ १॥ विद्युन्मंजरितोपांतनीलनीरदपल्लवम्॥ सर्वर्त्तुरम्यचंद्रार्कगणरम्यकदंतुरम्॥ २॥ सप्ताब्धिवापीवलितंसरिच्छतमनोहरम्॥ चतुर्दशविधानंतभूतजातोपजीवितम्॥३॥ जगत्काननमाक्रम्यस्थितायाःकृतजालकम्॥ ब्रह्मन्संसृतिमृद्वीकालतायाविततारुतेः॥ ४॥

ह्मण्यध्यस्तेचतुर्दशभुवनाकारेजगतिप्रसृतायाजीवसंसरणलतायावीजपरंपरावधिमूलोच्छेदोपायजिज्ञासयाप्रष्टुकामोरामःप्रथमंजगद्वनत्वेनवर्णयति ॥ परमेत्यादिना ॥ पर माकाशकोशस्यनिर्विशेषब्रह्मणोऽद्रिवदवरोधकत्वादद्रौअव्याकृतेरूढानिलोकांतराणिविचित्रभुवनब्रह्मांडभेदाएवद्रुमावृक्षायस्मिन् ॥ एवंतारकापुष्पशबलमित्यादिविशेषणा न्यपिवनरूपकोपपादकानि ॥ १ ॥ विद्युद्भिर्मंजरितेषुसंजातमंजरीकेषुदिक्शाखाग्रेषुनीलादिवर्णानीरदामेघाएवपल्लवास्ताम्रहरितादिवर्णपर्णानियस्मिन् ॥ चंद्रार्कग्रहगणलक्ष णैरम्यकैर्विकासरमणीयैःपुष्पैर्दंतुरमुन्नतदंतंप्रहसदिवस्थितम् ॥ २ ॥ लोकभेदाच्चतुर्दशविधैःप्रत्येकमनंतैर्भूतजातैरुपजीवितम् ॥ ईदृशंजगत्काननमाक्रम्यवासनाप्रतानैःसर्वतः संवेष्ट्यकृतजालकंयथास्यात्तथास्थितायाःसंसृतिर्जीवसंसरणंतल्लक्षणायामृद्वीकाद्राक्षातल्लतायाः ॥ ४ ॥

[1] संसाराडंबरस्यचेत्यपिपाठः

जरामरणान्येवपर्वाणिकांडपंथयोयस्याः ॥ पर्वशब्दःअकारांतोऽपिक्वचिदस्ति ॥ मोहाएवसेकजलांजलयोयस्याः ॥ ५ ॥ बीजपरंपराचतुष्टयप्रश्नः ॥ ६ ॥ ७ ॥ अंतर्लिंगदे हेलीनानिप्रच्छन्नानिघनारंभाणिविचित्रानंतकार्यारंभकाणिशुभाशुभकर्माण्येवमहांतःअंकुरायस्मिन् ॥ ८ ॥ इयंसंसृतिव्रततिस्तेनतादृशशरीरेणस्फीताअभिवृद्धाभवति ॥ वसुंधरासस्यसंपदेतिशेषः ॥ ९ ॥ तस्यकिंबीजमुच्यतेइतिद्वितीयप्रश्नस्योत्तरमाह ॥ भावेति ॥ भावोविभवोपचयः ॥ अभावस्तदपक्षयः ॥ आशायाःवशंसदनुगंभृत्यभूतम् ॥ १० ॥ सद्वर्तमानमसदतीतानागतंचअंगजालकंशरीरजातम् ॥ चित्ताच्छरीरोद्भवेस्वाभानुभवंप्रमाणयति॥तथाचैतदिति ॥ ११ ॥ यथागंधर्वाणांमुमूर्षोरुत्पातप्रदर्शनसंकल्पाच्चेतसःसकाशादेवपुरंजायतेतद्वद्वपुःशरीरमित्यर्थः ॥ १२ ॥ किंचनात्रासंभावनायुक्तासर्वस्यजगतोहैरण्यगर्भमनोविकारमात्रत्वस्यसर्वश्रुतिपुराणप्रसिद्धत्वादित्याह ॥

जरामरणपर्वायाःसुखदुःखफलावलेः ॥ आरूढमूलमालायामोहसेकजलांजलेः ॥५॥ किंबीजमथबीजस्यतस्यकिंबीजमुच्यते ॥ अथतस्यापिकिंबीजंबीजंतस्यापिकिंभवेत् ॥६॥ सर्वमेतत्समासेनपुनर्बोधविवृद्धये ॥ सिद्धयेज्ञानसारस्यवदमेवदतांवर ॥७॥ ॥श्रीवसिष्ठउवाच ॥ ॥ अंतर्लीनघनारंभशुभाशुभमहांकुरम् ॥ संसृतिव्रततेर्बीजंशरीरंविद्धिराघव ॥८॥ शाखाप्रतानगहनाफलपल्लवशालिनी ॥ तेनेयंभवतिस्फीताशरदीववसुंधरा ॥९॥ भावाभावदशाकोशंदुःखरत्नसमुद्गकम् ॥ बीजमस्यशरीरस्यचित्तमाशावशानुगम् ॥१०॥ चित्तादिदमुदेत्युच्चैस्सदसच्चांगजालकम् ॥ तथाचैतत्स्वयंस्वप्नसंभ्रमेष्वनुभूयते ॥११॥ यथागंधर्वसंकल्पात्पुरमेवंहिचेतसः ॥ सवातायनमाकारभासुरंजायतेवपुः ॥१२॥ यदिदंकिंचिदाभोगिजागतंदृश्यतांगतम् ॥ रूपंतच्चेतसःस्फारंघटादित्वंमृदोयथा ॥१३॥ द्वेबीजेचित्तवृक्षस्यवृत्तिव्रततिधारिणः ॥ एकंप्राणपरिस्पंदोद्वितीयंदृढभावना ॥१४॥ यदाप्रस्पंदतेप्राणोनाडीसंस्पर्शनोद्यतः ॥ तदासंवेदनमयंचित्तमाशुप्रजायते ॥१५॥ यदानस्पंदतेप्राणःशिरासरणिकोटरे ॥ असंवित्तिवशात्तेनचित्तमंतर्नजायते ॥१६॥ प्राणस्पंदनमेवेदंचित्तद्वारेणदृश्यते ॥ जगन्नामागतंव्योम्निनीलत्वादिवदीदृशम् ॥१७॥ प्राणस्पंदनसुमाचतच्छांतिःशांतिरुच्यते ॥ प्राणसंस्पंदनात्संविद्यातिवीटेवचोदिता ॥१८॥ संवित्स्फुरतिदेहेपुप्राणस्पंदप्रबोधिता ॥ चक्रावर्त्तैरंगणेपुवीटेवकरताडिता ॥१९॥

संवेदनमयंचिद्विकारप्रायम् ॥ यदिदमिति ॥ १३ ॥ अथतस्यापिकिंबीजमितितृतीयप्रश्नस्योत्तरमाह ॥ द्वेइति॥दृढाभावनावासना ॥ १४ ॥ आद्यमुपपादयति ॥ यदेति ॥ ॥ १५ ॥ शिरासरणयोद्वासमतिसहस्रनाडीमार्गास्तेषांकोटरेछिद्रे ॥ असंवित्तिर्बाह्यसंवेदनसंस्कारानुद्बोधस्तद्वशात् ॥ १६ ॥ हैरण्यगर्भचितोजगदाकारभावोपिसमष्टिप्राणस्पंदनप्रयुक्तएवेतिस्वचित्तस्पंददृष्टांतेनलक्ष्यतइत्याह ॥ प्राणेति॥ दृश्यतेलक्ष्यते ॥१७॥ एवंसमष्टिप्राणस्पंदनविषयेसुमाउपरतातस्याश्चितःशांतिर्निष्क्रियत्वंतेवशांतिर्जगत्प्रलयोमोक्षोवाउच्यतइत्यर्थः ॥ वीटाकंदुकः ॥ चोदिताकराभिहता ॥ १८ ॥ १९ ॥

१ प्ररूढेतिक्वचित्पाठः

॥ २० ॥ संविदःसंरोधनमविक्षिप्तता॥श्रेयोमोक्षःक्षोभकारणस्यप्राणस्पंदस्यआक्रमणंप्राणायामाभ्यासेननाशः॥ २१ ॥ किमर्थंसंरोधःसंविदश्चित्ताकारेणसमुद्भवेकोदोषस्तत्रा ह ॥ संविदिति ॥ संवेद्यंबाह्यविषयंप्रतिआदराद्रागाद्याति ततश्चतदुपभोगसंवेदनादनंतानिदुःखानीत्यर्थः ॥ २२ ॥ यदातुबाह्यविषयेसंसुप्तप्रायासतीआंतरस्यात्मनोबोधायसंति ष्ठतेउद्युक्ताभवतितदेत्यर्थः ॥ २३॥ प्राणपरिस्पंदैर्वासनानांचोदनैरागातिशयेनोद्भावनैश्चसंविदमुच्छूनांमूढायथाकुर्वंतितथानकरोषिचेत् ॥ अथवापरिरत्रवर्जने ॥ प्राणानांपरि स्पंदैःस्पंदवर्जनैर्वासनानांचोदनैरपनोदनैश्चसंविदंनोच्छूनामुच्छूनताप्रयुक्तमनस्त्वापत्तिशून्यांकरोषिचेत्तर्हिभवानजोजन्मादिसर्वविक्रियाशून्योमुक्तएवासीत्यर्थः ॥ २४ ॥ आलूनाःखंडिताविशीर्णाझर्झरिताश्चजनजीवकायेन॥२५॥योगशास्त्रोक्तैःसद्गुरुसंप्रदायादिसिद्धयुक्तिकल्पितैस्तदुपायाभ्यासप्रयोगैः ॥२६॥ प्राणसंरोधनमेवफलाभेदरूपेणप्र

सतीसर्वगतासंविस्राणस्पंदेनबोध्यते॥ सूक्ष्मात्सूक्ष्मतराकारागंधलेखेववायुना ॥ २० ॥ संवित्संरोधनेश्रेयःपरमंविद्धिराघव ॥ कारणाक्रमणंयत्रक्षोभस्तत्रनविद्यते॥२१॥ संवित्समुदितैवाशुयातिसंवेद्यमादरात्॥ संवेदनादनंतानिततोदुःखानिचेतसः॥२२॥संसुप्तांतरबोधायसंवित्संतिष्ठतेयदा॥ लब्धंभवतिलब्धव्यंतदातदमलंपदम् ॥ २३ ॥ तस्मात्प्राणपरिस्पंदैर्वासनाचोदनैस्तथा ॥ नोचेत्संविदमुच्छूनांकरोषितदजोभवान्॥२४॥ संविदुच्छूनताचित्तंविद्धितेनेदमाततम्॥अनर्थजालमालूनविशीर्णजनजीवकम्॥ २५॥ योगिनश्चित्तशांत्यर्थंकुर्वंतिप्राणरोधनम्॥प्राणायामैस्तथाध्यानैःप्रयोगैर्युक्तिकल्पितैः॥२६॥ चित्तोपशांतिफलदंपरमंसाम्यकारणम्॥ सुभगंसंविदःस्वास्थ्यंप्राणसंरोधनंविदुः॥२७॥ज्ञानवह्निःप्रकटितामनुभूतांचराघव॥चित्तस्योत्पत्तिमपरांवासनाजीवितांशृणु॥ २८॥ दृढभावनयात्यक्तपूर्वापरविचारणम्॥ यदादानंपदार्थस्यवासनासाप्रकीर्त्तिता॥ २९॥ भावितस्तीव्रसंवेगादात्मनायत्तदेवसः॥ भवत्याशुमहाबाहोविगतेतरसंस्मृतिः॥ ३० ॥ तादृग्रूपोहिपुरुषोवासनाविवशीकृतः॥ यत्पश्यतितदेतत्तत्सद्वस्त्विति विमुह्यति॥ ३१ ॥ वासनावेगवैवश्यात्स्वरूपंप्रजहातितत्॥ भ्रांतंपश्यतिदुर्दृष्टिःसर्वंमदवशादिव॥ ३२ ॥ असम्यग्ज्ञानवानेवभवत्याधिपरिप्लुतः॥ अंतस्थयावासनयाविषेणेववशीकृतः॥ ३३ ॥

शंसति ॥ चित्तेति ॥ २७॥ चित्तस्यबीजांतरंवर्णयितुंप्रतिजानीते ॥ ज्ञानवह्निरिति॥ प्रकटितांसम्यगुपदिष्टांस्वयंचानुभूताम् ॥ वासनाभिराजीवितामुज्जीविताम् ॥२८॥ तत्रादौवासनास्वरूपमाह ॥ दृढेति ॥ प्राक्तन्यादृढभावनयादेहादिपदार्थानामहंममेत्यादिरूपसंस्कारात्मनायदादानंतच्चेत्त्यक्तपूर्वापरविचारणंभवतितदासावासयतिदेहादिभावेनात्मानंभावयतीतिव्युत्पत्त्यावासनाप्रकीर्तितेत्यर्थः ॥ तथाचपूर्वापरविचारवतांजीवन्मुक्तानांदेहादिसंस्कारोन वासनाविरोधिविचारास्कंदितत्वेनतेषांदेहादिभावेनवासयितुमशक्यत्वादितिभावः ॥२९॥ अज्ञात्मनस्तुविरोधाभावात्तीव्रसंवेगभावनादार्ढ्येनदेहादिभावेवासयितुंशक्योत्य्येवेत्याशयेनाह ॥ भावितइति ॥ ३० ॥ सादेहादावात्मतामिववाह्यार्थेसत्तामपिदर्शयतीत्याह ॥ तादृगिति ॥ वसतीतिवस्तु॥ तदात्मसत्तयावासयतीतिवासनेतिव्युत्पत्तेस्तत्रापिसंभवादितिभावः ॥ ३१ ॥ तत्वासनोपस्थापितंजगद्रूपंसर्वम् ॥ ३२ ॥ त्यक्तपूर्वापरविचारणमित्यस्यव्यावर्त्त्यमाह ॥ असम्यगित्यादिना ॥ ३३ ॥

सैवचितश्चित्तभावेनवासनाप्रयुक्ताउत्पत्तिरित्याशंयेनाह ॥ असम्यगिति ॥ ३४ ॥ ३५ ॥ अतएववासनानाशाच्चितःस्वास्थ्यलक्षणामुक्तिरित्याह ॥ यदेति ॥ नवास्यतेनस त्तांप्राप्यतें ॥ ३६ ॥ ३७ ॥ आकाशेपद्ममिवअंतःचितिचित्तंनजायते ॥ ३८ ॥ ३९ ॥ रसेनरागेण ॥ ४० ॥ कल्पनायायुक्तिभिःसमर्थनायाअयोग्यम् ॥ ४१ ॥ इदानीम चित्ततांलक्षयति ॥ यदिति ॥ अभावनंबाह्यार्थास्मरणंनिरोधयोगमास्थायसर्वदृश्यमार्जनलक्षणस्यअभावस्ययत्संपादकंपरमार्थात्मदर्शनाविर्भूतस्वरूपंतदित्यर्थः ॥ ४२ ॥ तर्हिजीवन्मुक्तानांसद्वृत्तिकेचित्तेसतिकथमचित्तत्वंतत्राह ॥ सर्वमिति ॥ नहिदग्धपटाभासेनसपटत्वंवक्तुंशक्यमितिभावः ॥ ४३ ॥ विषयरसानामाध्यानप्रयुक्तोरागोरंज

असम्यग्दर्शनंयस्मादनात्मन्यात्मभावनम् ॥ यदवस्तुनिवस्तुत्वंतच्चित्तंविद्धिराघव ॥ ३४ ॥ दृढाभ्यासपदार्थैकवासनादतिचंचलम् ॥ चित्तंसंजायतेजन्मजरामरणकारणम् ॥ ३५ ॥ यदानवास्यतेकिंचिद्धेयोपादेयरूपियत् ॥ स्थीयतेसकलंत्यक्त्वातदाचित्तंनजायते ॥ ३६ ॥ अवासनत्वात्सततंयदानमनुतेमनः ॥ अमनस्तातदोदेतिपरमोपशमप्रदा ॥ ३७ ॥ यदाकिंचिन्नसंवित्तौस्फुरत्यभ्रमिवांबरे ॥ तदापद्मइवाकाशेचित्तमंतर्नजायते ॥ ३८ ॥ यदानभाव्यतेभावःक्वचिज्जगतिवस्तुनि ॥ तदाहृदंबरेशून्येकथंचित्तंप्रजायते ॥ ३९ ॥ एतावन्मात्रकंमन्येरूपंचित्तस्यराघव ॥ यद्भावनंवस्तुनोंतर्वस्तुत्वेनरसेनच ॥ ४० ॥ नकिंचित्कल्पनायोग्यंदृश्यंभावयतस्ततः ॥ आकाशकोशस्वच्छस्यकुतश्चित्तोदयोभवेत् ॥ ४१ ॥ यदभावनमास्थाययदभावस्यभावनम् ॥ यद्यथावस्तुदर्शित्वंतदचित्तत्वमुच्यते ॥ ४२ ॥ सर्वमंतःपरित्यज्यशीतलाशयवर्त्तियत् ॥ वृत्तिस्थमपितच्चित्तमसद्रूपमुदाहृतम् ॥ ४३ ॥ वासनायारसाध्यानाद्रागोयस्यनविद्यते ॥ तस्यचित्तमचित्तत्वंगतंसत्त्वंतदुच्यते ॥ ४४ ॥ घनानवासनायस्यपुनर्जननकारिणी ॥ जीवन्मुक्तःससत्त्वस्थश्चक्रभ्रमवदास्थितः ॥ ४५ ॥ भृष्टबीजोपमायेषांपुनर्जननवर्जिता ॥ वासनारसनिर्हीनाजीवन्मुक्ताहितेस्थिताः ॥ ४६ ॥ सत्वरूपपरिप्राप्तचित्तास्तेज्ञानपारगाः ॥ अचित्ताइतिकथ्यंतेदेहांतेव्योमरूपिणः ॥ ४७ ॥ द्वेबीजेरामचित्तस्यप्राणस्पंदनवासने ॥ एकस्मिंश्चतयोःक्षीणेक्षिप्रंद्वेअपिनश्यतः ॥ ४८ ॥ मिथःकारणमेतेहिबीजेजन्मनिचेतसः ॥ जलांगीकरणेरामजलाशयघटाविव ॥ ४९ ॥ घनानवासनायस्यपुनर्जननकारिणी ॥ बीजांकुरवदेतेहिसंस्थितेतिलतैलवत् ॥ ५० ॥

ना ॥ पटभस्मेवपरिशिष्टमधिष्ठानंसत्त्वंतदुच्यतइत्यर्थः ॥ ४४ ॥ तर्हिजीवन्मुक्तः कथंव्यवहारमास्थितइतिचेत्कृतकार्यकुलालचक्रभ्रमवदित्याह ॥ घनेति ॥ ४५ ॥ ४६ ॥ देहांतेप्रारब्धक्षये ॥ तस्यतावदेवचिरंयावन्नविमोक्ष्येअथसंपत्स्येइतिश्रुतेरितिभावः ॥ ४७ ॥ ननुवासनाबीजनाशेपिबीजांतराच्चित्तोदयःकिंनस्यात्तत्राह ॥ द्वेइति ॥ ४८ ॥ चेतसोजन्मनिएतेमिथोमिलितेकारणंनैकैकमित्यर्थः ॥ यथाघटाकाशेनजलांगीकरणेजलाशयोघटश्चमिलितौकारणंनैकैकंतद्वत् ॥ ४९ ॥ घनावासनाएकैवआयस्यबलात्कृत्यपुनर्जननकारिणीनेत्यर्थः ॥ बीजंतस्यापिकिंनवेदितिचतुर्थप्रश्नस्याप्युत्तरमनवस्थांपरिहरन्नाह ॥ बीजांकुरवदिति ॥ एतेप्राणस्पंदनवासनेतिलेपुंतैलवत्परस्परांतःस्थेतथाबीजांकुरन्यायेनकालाकांक्षिक्रमेपरस्परस्यकारणेइतिपरेणान्वयः ॥ ५० ॥

एवंचित्तस्यापितदुभयंप्रतिइंद्रियसुखदुःखादिकंचप्रतिकारणतास्तीत्याह ॥ सर्वमिति ॥ ५१ ॥ यथाक्रमंप्रथमंप्राणंततइंद्रियाणिततस्तत्प्रयुक्तमानंदमितिसर्वमित्यर्थः ॥ एवंपूर्वोपभुक्तस्यविषयानंदस्यतात्कालिकजीवनलक्षणस्यपवनस्पंदस्यचवासनात्मनापिचित्तोत्पादकत्वमस्तीत्याह ॥ आनंदपवनाविति ॥ यदाआनंदपवनावुभौवासनेसंपन्नेतदासार्द्धंमिलित्वाचित्तस्योत्पादिकेइत्यन्वयः ॥५२॥ अतःपरस्पराश्रयत्वंपरस्परहेतुत्वंचानयोरुपपन्नमितिनानवस्थादोषप्रसक्तिरित्याशयेनोक्तमेवपुनराह ॥ आमोदेत्यादि ॥५३॥ वीजांकुरक्रमोजायतेउपपन्नइतियावत् ॥ उभयोश्चित्तोत्पादकत्वप्रकारंदर्शयति ॥ वासनेति ॥ ५४ ॥ स्पृष्टानुन्नात्स्द्दुणारागादिवासनायेन ॥ ५५ ॥ ५६ ॥ अतएवएकस्मिंश्चतयोःक्षीणेद्वतिप्रागुक्तमुपपन्नमित्याह ॥ तयोरिति ॥ द्वयोस्तत्कार्यंचित्तस्यचनाशइत्यर्थः ॥ चित्तमेववृक्षत्वेनवर्णयंस्तस्यवासनाक्षयादुन्मूलनमाह ॥ सुखेत्यादिना ॥

अविनाभाविनीनित्यंकालाकांक्षिक्रमेतथा ॥ सर्वमुत्पादयत्येतच्चित्तकःसंविदात्मकः ॥ ५१ ॥ यथाप्राणेंद्रियानंदमानंदपवनावुभौ ॥ चित्तस्योत्पादिकेसार्द्धंयदैतेवासनेतदा ॥५२॥ आमोदपुष्पवत्तैलतिलवच्चव्यवस्थिते ॥ वासनावशतःप्राणस्पंदस्तेनचवासना ॥५३॥ जायतेचित्तवीजस्यतेनवीजांकुरक्रमः ॥ वासनोत्प्लवमानत्वात्संविन्नक्षोभकर्मणा ॥५४॥ प्राणस्पंदंवोधयतितेनचित्तंप्रजायते ॥ प्राणःस्पंदनधर्मित्वात्स्पंदतेस्पृष्टस्द्दुणः ॥ ५५ ॥ संविदंबोधयंस्तेनचित्तवालःप्रजायते ॥ एवंहिवासनाप्राणस्पंदौद्वौतस्यकारणम् ॥५६॥ तयोरेकक्षयेनाशोद्वयोश्चित्तस्यराघव ॥ सुखदुःखमनःस्पंदंशारीरकबृहत्फलम् ॥५७॥ कार्यंपल्लविताकारंकृतिव्रततिवेष्टितम् ॥ तृष्णाकृष्णाहिवलितंरागरोगबकालयम् ॥ ५८ ॥ अज्ञानमूलंसुदृढंलीनेंद्रियविहंगमम् ॥ वासनाक्षयमानीताचित्तवृक्षंक्षणेनहि ॥ ५९ ॥ प्रपातयतिवातौघःकालपक्कफलंयथा ॥ पांडुरीकृतसर्वांशंस्थगिताखिलदर्शनम् ॥६०॥ विलोलजलदाकारमज्ञानावकरोत्थितम् ॥ तृष्णातृणलवव्याप्तंस्तंभाकृतिशरीरकम् ॥ ६१ ॥ स्फुरत्तनुतनुक्षुब्धंसुखमुत्प्लवनंप्रति ॥ अंतःस्थितमहालोकमपश्यत्सविलीयते ॥ ६२ ॥ पवनस्पंदरोधाच्चरामचित्तरजःक्षणात् ॥ वासनाप्राणपवनस्पंदयोरनयोर्द्वयोः ॥ ६३ ॥ संवेद्यंवीजमित्युक्तंस्फुरतस्तौयतस्ततः ॥ हृदि संवेद्यमाप्यैवप्राणस्पंदोथवासना ॥ ६४ ॥

सुखदुःखाकुलंमननंमनस्तदेवस्पंदोयस्य ॥ शरीरमेवशारीरकम् ॥ ५७ ॥ ५८ ॥ क्षयमानीतावासनाईदृशंचित्तवृक्षंक्षणेनप्रपातयतीतिपरेणान्वयः ॥ ५९ ॥ तदेवचित्तंवात्यारजःपुंजत्वेनरूपयंस्तस्यपवननिरोधादिवप्राणस्पंदनिरोधात्प्रविलयंदर्शयति ॥ पांडुरीकृतेत्यादिना ॥ पांडुरीकृतेत्यादिविशेषणानिश्लेषादिनाउभयत्रयोज्यानि ॥ आशादिशउपचारात्तृष्णावंतश्च ॥ स्थगितमाच्छादितमखिलदर्शनंपूर्णचिद्रूपंसर्वजननेत्रंचयेन ॥ ६० ॥ अवकरउत्करः ॥ स्तंभप्रायंशरीरकंप्रसिद्धंवात्यासंस्थानंचयस्य ॥ ६१ ॥ स्फुरद्भिस्तनुतनुभिरल्पाल्पैर्वृत्तिभेदैर्वात्यापोतैश्चक्षुब्धं सर्वदिक्षुउत्प्लवनंप्रतिसुखंअनायासदक्षं अंतःस्थितंमहालोकंब्रह्मसौरालोकंचअपश्यत्द्रष्टुमक्षमं ईदृशंचित्तवात्यारजःपवनस्पंदरोधात्क्षणात्प्रविलीयतइत्यन्वयः ॥ ६२ ॥ वीजांतरमप्याह ॥ वासनेति ॥ ६३ ॥ संवेद्यंप्रियाप्रियंशब्दादिआप्यस्पृष्ट्वा ॥ ६४ ॥

॥ ६५ ॥ संविदभेदभावनमेवसंवेद्यपरित्यागइत्याह ॥ संविदमिति ॥ तदेवोपपादयति ॥ बीजमित्यादिना ॥ संविदेवस्वीयांधीरतांपरित्यज्यसंवेद्यमिवसंपन्नंसत्चित्तबीजम
॥ ६६ ॥ नहिसंविदंविनासंवेद्यंसंभवतिप्रसिद्धातीत्यर्थः ॥ ६७ ॥ चार्थेतथाशब्दः ॥ यथास्वप्नेआत्मनोमरणदेशांतरस्थितिश्चस्वचमत्कारयोगेनैव जायत्संवेद्यमपिसंविदस्त
थेत्युत्तरत्रान्वयः ॥ ६८ ॥ यत्रयस्यांविवेकदशायांस्वतस्स्ववेदनंवर्त्ततेतत्स्वसंवेदनमपिस्वसंकल्पादिजन्यंनथास्वप्नवदेव नष्टद्वयेस्वसंवेदनंविवेकविचारादयोवापरमार्थतःसं
भवंतीति ॥ ६९ ॥ स्वसंकल्पोद्भवाद्भ्रमात् ॥ ७० ॥ चंद्रार्करश्मीनांवातायनप्रविष्टानांदंडाकारतातदंतरेभ्रमत्त्रसरेण्वाकारताचभवेत्तथा ॥ ७१ ॥ दुर्ज्ञानंभ्रांतिज्ञानम् ॥ वि

उदेतितस्मात्संवेद्यंकथितंबीजमेतयोः ॥ संवेद्यसंपरित्यागात्प्राणस्पंदनवासने ॥ ६५ ॥ समूलंनश्यतःक्षिप्रंमूलच्छेदादिवद्रुमः ॥ संवि
दंविद्धिसंवेद्यबीजंधीरतयाविना ॥ ६६ ॥ नसंभवतिसंवेद्यंतैलहीनस्तिलोयथा ॥ नवहिर्नांतरेकिंचित्संवेद्यंविद्यतेपृथक् ॥ ६७ ॥ संवित्स्फु
रंतीसंकल्पात्संवेद्यंपश्यतिस्वतः ॥ स्वप्नेयथात्ममरणंतथादेशांतरस्थितिः ॥ ६८ ॥ स्वचमत्कारयोगेनसंवेद्यंसंविदस्तथा ॥ स्ववेदनंस्वसंक
ल्पात्संविदोयत्रवर्त्तते ॥ ६९ ॥ जगज्जालमतोभातितदिदंरघुनंदन ॥ यथाबालस्यवेतालःससंकल्पोद्भवाद्भवेत् ॥ ७० ॥ पुरुषत्वंयथा
स्थाणोःसंवेद्यंसंविदस्तथा ॥ यथाचंद्रार्करश्मीनांदंडतारेणुतातथा ॥ ७१ ॥ यथानौस्थाचलस्पंदःसंवेद्यंसंविदस्तथा ॥ एतन्मिथ्याहिदु
र्ज्ञानंसम्यग्ज्ञानाद्विलीयते ॥ ७२ ॥ रज्ज्वामिवभुजंगत्वंद्वींदुत्वंस्वीक्षितादिव ॥ शुद्धैवसंवित्त्रिजगत्संवेद्यंनान्यदस्त्यलम् ॥ ७३ ॥ इत्यंत
र्निश्चयोरूढःसम्यग्ज्ञानंविदुर्बुधाः ॥ पूर्वंदृष्टमदृष्टंवायदस्याःप्रतिभासते ॥ ७४ ॥ संविदस्तत्प्रयत्नेनमार्जनीयंविजानता ॥ तदमार्जनमा
त्रंहिमहासंसारसंगतम् ॥ ७५ ॥ तत्प्रमार्जनमात्रंतुमोक्षइत्यनुभूयते ॥ संवेदनमनंतायदुःखायजननात्मने ॥ ७६ ॥ असंवित्तिरजाड्य
स्यासुखायाजननात्मने ॥ अजडोगलितानंदस्त्यक्तसंवेदनोभव ॥ असंवेद्यप्रबुद्धात्मायस्तुसत्वंरघूद्वह ॥ ७७ ॥ ॥ श्रीरामउवाच ॥ ॥
अजडश्चाप्यसंवित्तिःकीदृशोभवतिप्रभो ॥ असंवित्तौचजाड्यंतत्कथंवाविनिवर्त्तते ॥ ७८ ॥

लीयतेबाध्यते ॥ ७२ ॥ स्वीक्षितान्निर्दोषदर्शनादिव ॥ सम्यग्ज्ञानंतर्हिकीदृशंतदाह ॥ शुद्धैवेति ॥ ७३ ॥ तेनसंमार्जनीयंयत्तद्दर्शयति ॥ पूर्वमिति ॥ ७४ ॥ महतासंसारेणसं
गतंसंबंधआत्मनः ॥ ७५ ॥ संवेदनंवेद्यदर्शनम् ॥ जननात्मनेजन्मादिरूपायदुःखाय ॥ ७६ ॥ असंवित्तिर्वेद्यादर्शनंअजाड्येचिदेकरसस्वभावेप्रतिष्ठिताअजननात्मनेनित्यात्मस्व
रूपाययतोभवतिअतस्त्वमपित्यक्तसंवेदनःसन्अजडःगलितएकरसीभूतः ॥ पूर्णानंदोभवेत्यर्थः ॥ यःअसंवेद्योपिस्वतःप्रबुद्धआत्मासएवत्वंभवसिनान्यः ॥ ७७ ॥ जाड्यत्यागे
संवेदनपरिशेषःसंवेदनत्यागेजाड्यपरिशेषोवाअवश्यंभावीत्यजडःअसंवित्तिश्चेतिविरुद्धस्वभावएकःकथंभवतीतिप्रश्नः ॥ विरोधमेवस्फुटीकृत्यदर्शयति ॥ असंवित्ताविति ॥ ७८ ॥

॥३७

संसत्यतयाबाह्यार्थवेदनंसंविदितिव्युत्पत्तेर्बाधितार्थाभासैर्व्यवहाराभासंदर्शयन्नपिजीवन्मुक्तजीवःसर्वत्रवर्त्तमानविषयेअनवस्थितास्थःकुत्रचित्अतीतानागतविषयेचवासनाक्षयान्नविश्रांतास्थइतिर्नकिंचिद्वेद्यंविदतइतितदंशेकाष्ठलोष्टवदसंविदित्युच्यते ॥ स्वतस्तुस्वप्रकाशचिदेकरसपूर्णत्वादजडश्चेत्यर्थः ॥ ७९ ॥ संविच्छब्दस्यउक्तांव्युत्पत्तिं दर्शयन्नुक्तमेवसमर्थयति ॥ संविदिति ॥ वस्तुदृशासत्यत्वबुद्ध्याचितोबाह्यार्थालंवनमेवसंविदित्युच्यतइत्यर्थः ॥ एतेनसर्वत्रानवस्थास्थइतिपदस्यतात्पर्यमुद्घाटितम् ॥ ८० ॥ विश्रांतास्थोनकुत्रचिदित्यस्यापिअतीतविषयेतात्पर्यमुद्घाटयंस्तदेवाह ॥ संवेद्येनेति ॥ हृदाकाशोबुद्धिः ॥ ८१ ॥ अनागतविषयेपितस्यतमुद्घाटयति ॥ यदेतिद्वाभ्याम्॥ ८२॥ ॥ ८३ ॥ शंकांसमाधायप्रकृतंसमर्थयन्नाह ॥ समस्तेति ॥ ८४ ॥ नन्वन्याकारसंवेदनाभावेपिब्रह्माकारवृत्तिरूपंसंवेदनंसमाधावपिदुर्वारमितिकथमसंवित्त्वंतत्राह ॥ तन्मय

॥श्रीवसिष्ठउवाच॥ ॥यःसर्वत्रानवस्थास्थोविश्रांतास्थोनकुत्रचित्॥ जीवोनविंदतेकिंचिदसंविदजडोहिसः॥ ७९ ॥संविद्वस्तुदृशालंवःसयस्येहनविद्यते॥ सोसंविदजडःप्रोक्तःकुर्वन्कार्यशतान्यपि॥ ८० ॥संवेद्येनहृदाकाशोमनागपिनलिप्यते ॥ यस्यासावजडासंविज्जीवन्मुक्तश्चकथ्यते॥ ८१ ॥ यदानभाव्यतेकिंचिन्निर्वासनतयात्मनि॥ बालमूकादिविज्ञानमिवचस्थीयतेस्थिरम्॥ ८२॥ तदाजाड्यविनिर्मुक्तमच्छवेदनमाततम्॥ आश्रितंभवतिप्राज्ञोयस्माद्भूयोनलिप्यते॥ ८३॥ समस्तवासनात्यागीनिर्विकल्पसमाधितः॥ नीलत्वमिवखात्स्फारआनंदस्संप्रवर्त्तते ॥ ८४ ॥ योगिनस्तत्रतिष्ठंतिसंवेदनमसंविदः ॥ तन्मयत्वादनाद्यंतंतदप्यंतर्विलीयते॥ ८५॥ गच्छंस्तिष्ठन्स्पृशञ्जिघ्रन्नपितेनसउच्यते॥ अजडोगलितानंदस्त्यक्तसंवेदनस्सुखी॥ ८६॥ एतांदृष्टिमवष्टभ्यकष्टयायत्नचेष्टया॥ तरङ्गःखांवुधेःपारमपारगुणसागर॥ ८७॥ यथाबीजाद्बृहद्वृक्षोव्योमव्याप्नोतिकालतः॥ तथैवेदंस्वसंकल्पात्संवेद्यमसदुत्थितम्॥ ८८॥ यदासंकल्प्यसंकल्प्यसंवित्स्वंविदतेवपुः॥ तदास्यजन्मजालस्यसैवगच्छतिबीजताम्॥ ८९॥ जनयित्वात्मनात्मानंमोहयित्वापुनःपुनः॥ स्वयंमोक्षंनयत्यंतःसंवित्स्वंविद्धिराघव॥ ९० ॥ यदेवभावयत्येपातदेवभवतिक्षणात्॥ नभवद्भूमिकामुक्तासमायातिचिराद्वपुः॥ ९१॥

त्वादिति ॥ अनाद्यंतमपरिच्छिन्नब्रह्माकारंतत्संवेदनमपिस्वेद्धेनब्रह्मज्योतिषावाध्यमानंतदंतरेवविलीयतइत्यर्थः ॥ ८५ ॥ ८६ ॥ कष्टयाप्राणायामादिश्रमसाध्यया ॥ ८७ ॥ चिदात्मास्वात्मनःस्वयमेवमिथ्याभूतंवंधंमोक्षंकल्पयतीत्याह ॥ यथेत्यादिना॥ ८८॥कदाकथमुत्थितंतदाह ॥यदेति ॥ संकल्प्यसंकल्प्यपुनःपुनःसंकल्पंकृत्वास्वंसांकल्पिकंवपुःस्वरूपंयदाविदतेतदा ॥ ८९ ॥ अंतःहृदिस्थंआत्मतत्त्वंवेत्तीतिवित्पश्यसतत्त्वयंस्वंमोक्षंनयति ॥ हीतिविद्वदनुभवप्रसिद्धौ ॥ ९० ॥ तर्हिइदानीमेवसर्वेषांसंवित्स्वात्मभावनयास्वस्वरूपंस्वैरंकुतोनायातितत्राह ॥ नेति ॥ भवंतीतिभवंतोरागादयस्तद्भूमिकाभ्यःअमुक्तासतीचिरादपिस्वंवपुर्नायाति ॥ ९१ ॥

अतएवास्यदेवगंधर्वादयःकल्पितवेषानवास्तवाइत्याह ॥ देवइति ॥ आद्ययाआदिसिद्धयाविलासिन्यास्वमायया ॥९२॥ यथामायावीनटःआत्मानंबध्नन्विमोचयन्नेवदर्श यतितद्वदित्याह ॥ बध्वेति ॥ ९३ ॥ अलंपर्याप्तिंगतासंविदेवजगज्जलधिजालानांजलम् ॥ अपूर्वंदिक्कक्रंदिङ्मंडलमप्येषैव ॥ अद्र्यादितांपर्वतादिभावमेषैवगता ॥ ९४ ॥ ॥ ९५ ॥ नान्यतामनन्यतामद्वयतामित्यर्थः ॥ ९६ ॥ कदास्याःसम्यग्ज्ञानंभवतितत्राह ॥ यदेति ॥ किंचिच्चलनंस्पंदः सम्यक्कंपनंवेपनमितिभेदः ॥ ९७ ॥ एवंपरिशोध्यपरि शेषितासंविदंतःकरणप्रतिबिंबसंविदेवेतिश्रोतॄणांभ्रांतिवारयन्नग्निविस्फुलिंगन्यायेनतद्बीजभूतांसन्मात्ररूपांब्रह्मसंविदंदर्शयति ॥ अथेति ॥ एषाप्रतिबिंबसंवित्बिंबभूतात्संवि

देवोनासौसुरोरक्षोयक्षःकिंकिन्नरोजनः॥ आत्मैवाद्यविलासिन्याजगन्नाट्यंप्रनृत्यति ॥९२॥ बध्वात्मानंरुदित्वाचकोशकारकृमिर्य था॥ चिरात्केवलतामेतिस्वयंसंवित्स्वभावतः॥ ९३ ॥ जगज्जलधिजालानांसंविज्जलमलंगता ॥ एषैवापूर्वदिक्चक्रंस्फुरत्यद्र्यादितांग ता॥ ९४ ॥ द्यौःक्ष्मावायुराकाशंपर्वताःसरितोदिशः॥ इत्यस्यावीचयःप्रोक्ताःसंवित्सलिलसंततेः॥ ९५ ॥ संविन्मात्रंजगत्सर्वंद्वितीया नास्तिकल्पना॥ इत्येवसम्यग्ज्ञानेनसंविद्गच्छतिनान्यताम्॥ ९६ ॥ यदानविंदतेकिंचित्स्पंदतेननवेपते॥ स्वात्मन्येवस्थितिंयातिसंवि न्नोलिप्यतेतदा॥ ९७॥ अथास्याःसंविदोरामसन्मात्रंबीजमुच्यते॥ संविन्मात्राद्वुदेत्येषाप्राकाश्यमिवतेजसः॥ ९८॥ द्वेरूपेतत्रसत्ता याएकंनानाकृतिस्थितम्॥ द्वितीयमेकरूपंतुविभागोयंतयोःशृणु॥ ९९ ॥ घटतापटताचैवत्वत्तामत्तेतिकथ्यते॥ सत्तारूपविभागेनय त्तन्नानाकृतिस्थितम्॥ १०० ॥ विभागंतुपरित्यज्यसत्तैकात्मतयाततम्॥ सामान्येनैवसत्तायारूपमेकमुदाहृतम्॥ १०१ ॥ विशेषं संपरित्यज्यसन्मात्रंयदलेपकम्॥ एकरूपंमहारूपंसत्तायास्तत्पदंविदुः॥ २ ॥ रूपंनानाकृतित्वेनसत्तायानकदाचन॥ असंवेद्यंसंभव तितस्मादेतदवस्तुकम्॥ ३ ॥ एकरूपंतुयद्रूपंसत्तायाविमलात्मकम्॥ नकदाचनतद्यातिनाशंनापिचविस्मृतिम्॥ १०४॥

न्मात्ररूपाद्ब्रह्मणःसकाशादुदेति ॥ यथासूर्यादितेजसःसकाशात्प्रकाशएवप्राकाश्यंप्रभाउदेतितद्वत् ॥ ९८ ॥ सन्मात्रमित्युक्तेअर्थक्रियासामर्थ्यलक्षणंघटपटादिनिष्ठंव्यावहा रिकसत्त्वमेवतद्बीजंदर्शितमितिभ्रांतिर्माभूदितितद्विलक्षणंदर्शयितुंसत्ताद्वैविध्यमाह ॥ द्वेरूपेइत्यादिना ॥ ९९ ॥ घटत्वपटत्वादयस्त्वत्तामत्ताद्युपाधयश्चार्थक्रियाभेदपुरस्कृ पयोग्यतालक्षणाव्यावहारिकसत्ताविशेषाएवेत्याशयः ॥ १०० ॥ सामान्येनसर्वजगदधिष्ठानतालक्षणेनसाधारणस्वभावेनैव ॥ १ ॥ पदंवस्तुतत्त्वम् ॥ २ ॥ व्यावहारिक सत्त्वंतुनवास्तवमित्याह ॥ रूपमिति ॥ यतस्तद्घटत्वादिरूपंकपालचूर्णधूल्याद्यवस्थास्वसंवेद्यंनानुवर्त्तमानतयादृश्यतेअतस्सत्यंनसंभवतीत्यर्थः ॥ ३ ॥ सर्वावस्थानुगतंतुसद्रूपं नतथेत्याह ॥ एकरूपमिति ॥ नापिचविस्मृतिमित्यनेनतस्यसदास्फुरद्रूपतयानित्यचिदेकरसतादर्शिता ॥ १०४ ॥

अतीतानागतेष्वस्तीतिव्यवहारादर्शनाद्वर्त्तमानकालएवसर्ववस्तूनांसत्तेतिकेचित् ॥ अवयवानामेवपुंजीभूयावयव्याकारेणस्फुरणात्कलाअवयवाएवपरमाणुरूपाजगत्सत्तेत्य परे ॥ अवयविष्वप्यनुगतासत्ताजातिरन्यास्तीत्यपरे॥एवमन्येप्यन्यथान्यथास्वस्वबुद्ध्यनुसारेणकल्पयंतितत्कल्पितांविभागकलनामित्यर्थः ॥५॥ यद्यपिसर्वंजगदिवकालादिस त्ताप्यध्यस्तभेदकलनात्यागेसन्मात्रपरिशेषादुत्तमसत्तैवतथापिविभक्तरूपेणबाधार्हत्वान्नवास्तवीत्यर्थः ॥ ६ ॥ ७ ॥ आसमंताद्भरिताःपूरितादिग्भरादिशस्तदाधेयसर्वपदार्था श्चयेनसत्तासामान्यरूपेणतथाविधःसन् ॥ ८ ॥ सामान्यमात्रस्यकोटिःपरमावधिभूतायासत्तासैवअस्यजगतःप्रतिबिंबचितश्चबीजतांयाता ॥ ९ ॥ सत्तासामान्यस्यसर्वसत्ता नांपर्यंतेपरावधौ ॥ १० ॥ सत्तासद्धर्मतापियत्रधर्मधर्मिविभागविलयाल्लयंयातितत्रलब्धपदोयोभवतिसएवपुरुषार्थसाधनसमर्थत्वात्पुमान् ॥ अन्यस्तुस्त्रीप्रायइतिभावः

कालसत्ताकलासत्तावस्तुसत्तेयमित्यपि॥ विभागकलनांत्यक्त्वासन्मात्रैकपरोभव ॥५॥ कालसत्तास्वसत्ताचप्रोन्मुक्तकलनासती॥ यद्यप्युत्तमसद्रूपातथाप्येषानवास्तवी ॥ ६ ॥ विभागकलनायत्रविभिन्नपददायिनी ॥ नानाताकारणंदृष्टातत्क्वथंपावनंभवेत्॥ ७॥ सत्तासामान्यमेवैकंभावयत्सकलंवपुः॥ परिपूर्णपरानंदीतिष्ठाभरितदिग्भरः ॥ ८ ॥ सत्तासामान्यमात्रस्ययाकोटिःकोविदेश्वर॥ सै वास्यबीजतांयातातातएवप्रवर्त्तते॥ ९ ॥ सत्तासामान्यपर्यंतेयत्तत्कलनयोज्झितम्॥ पदमाद्यमनाद्यंतंतस्यबीजंनविद्यते॥११०॥ स त्तालयंयातियत्रनिर्विकारंचतिष्ठति॥ भूयोनावर्त्ततेदुःखेतत्रलब्धपदःपुमान्॥ ११ ॥ तद्धेतुस्सर्वहेतूनांतस्यहेतुर्नविद्यते॥ संसारःसर्व साराणांतस्मात्सारंनविद्यते॥ १२ ॥ तस्मिंश्चिद्दर्पणेस्फारेसमस्तावस्तुदृष्टयः॥ इमास्ताःप्रतिबिंबंतिसरसीवतटद्रुमाः॥१३॥ सर्वेभावा इमेतत्रस्वदंतेसाधुवारिधेः॥ षड्रसाइवजिह्वायाःप्रकटत्वंप्रयांतिच ॥ १४॥ तस्मादच्छतरस्यापिचिदाकाशस्यवैपदम्॥ सर्वेषांस्वादु जातीनामलमास्वादनंचतत्॥ १५॥ जायतेवर्त्ततेचैववर्द्धतेस्पृश्यतेथवा ॥ तिष्ठंतिचगलंतीहतत्रांगजगतांगणाः॥ १६ ॥ तत्तद्गुरुगरि ष्ठानांतत्तल्लघुलघीयसाम्॥ तत्तत्स्थूलंस्थविष्ठानामणीयस्तदणीयसाम्॥ ११७॥

॥ ११ ॥ तदेवपरमपुरुषार्थतांदर्शयितुंप्रशंसति ॥ तदित्यादिना ॥ १२ ॥ १३ ॥ तत्रतस्मिन्प्रत्यग्रूपेअध्यस्तत्वात्स्वदंतेइंद्रियप्रीतिंजनयंति ॥ स्वादुवारिधेरानंदसमुद्रात्तस्मादे व ॥ प्रकटत्वंसत्तांस्फूर्त्तिंच ॥ १४ ॥ यस्मात्स्वादुभूताअपिविषयास्तद्योगात्स्वदंतेतस्मात्कारणात्तच्चिदाकाशस्यपदंस्वरूपंसर्वेषांस्वादुजातीनामानंदानांप्रियाणांचमध्येअल मत्यंतमास्वादनमानंदरूपंप्रियतमंचेत्यर्थः ॥१५॥ तस्मिन्नेव आनंदाद्ध्येवखल्विमानिभूतानिजायंते आनंदेनजातानिजीवंति आनंदंप्रयंत्यभिसंविशंतीति इतिश्रुत्युक्तजगज्ज न्मादिकारणत्वलक्षणसमन्वयंदर्शयति ॥ जायतेइति ॥ वर्त्ततेअस्ति ॥ स्पृश्यतेविपरिणामेन ॥ तिष्ठंत्यपक्षयोन्मुखाः ॥ श्रुतौजन्मादित्रयग्रहणंषड्भावविकारोपलक्षणमित्याश यः ॥ १६ ॥ गुरुलघ्वादिवैचित्र्यस्यापितदेवनिर्वाहकमित्याशयेनाह ॥ तत्तदिति ॥ द्वितीयास्तच्छब्दाःप्रसिद्धपराः ॥ ११७ ॥

द्वीयसांदूरतराणांदविष्ठंदूरतमम् ॥ दूरशब्दादिष्ठेयसुनोःस्थूलदूरेत्यादिनायणादिपरलोपःपूर्वस्यगुणश्च ॥ एवंयुवाल्पयोःकनृप्रशस्यवृद्धयोर्ज्यादेशः ॥ १८ ॥ १९ ॥ नांकिंचि
द्वीयसांदूरतराणांदविष्ठंदूरतमम् ॥ किंचिदल्पतरमपिप्रसिद्धंतदेव ॥ अस्तीवभावात्मकम् ॥ नास्त्यभावात्मकम् ॥ अस्मिप्रत्यक्तया ॥ नचास्मिअहंतया ॥ द्वितीयश्चकारोममनममेतिचानुक्तस
ह्णोकप्रसिद्धम् ॥ किंचिदल्पतरमपिप्रसिद्धंतदेव ॥ अस्तीवभावात्मकम् ॥ नास्त्यभावात्मकम् ॥
मुच्चयार्थः ॥ २० ॥ यथाउपायासि ॥ वर्त्तमानसामीप्येभविष्यतिलट् ॥ तथाकुरु ॥ २१ ॥ आत्मनस्तत्त्वंपारमार्थिकरूपंतदेव ॥ तस्यअवगतौसाक्षादनुभवेसतिचततउपशां
तिवाधमेति अतस्त्वंयदाअवगतवितततैकतत्स्वरूपोभवसितत्तदेवचिरायअपुनरावृत्तयेभवत्रयमुक्तपरमपदस्वरूपएवासीत्यर्थः ॥ २२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशे
उपशमप्रकरणेएकनवतितमःसर्गः ॥ ९१ ॥ ॥ ७ ॥ ॥ इहोक्तस्थितिभेदेपुयत्नगौरवलाघवम् ॥ वासनादिक्षयज्ञानसहाभ्यासउदीर्यते ॥ १ ॥ एतानितानिपूर्वो

दवीयसांदविष्ठंतदंतिकानांतदंतिकम् ॥ कनीयसांकनीयस्तत्तज्ज्येष्ठंज्यायसामपि ॥ १८ ॥ तेजसामपितत्तेजस्तमसामपितत्तमः ॥ वस्तू
नामपितद्वस्तुदिशामप्यंगदिक्परा ॥ १९ ॥ तन्नकिंचिच्चकिंचिच्चतत्तदस्तीवनास्ति च ॥ तत्तदृश्यमदृश्यंचतत्तदस्मिनचास्मिच ॥ १२० ॥
रामसर्वप्रयत्नेनतस्मिन्परमपावने ॥ पदेस्थितिमुपायासियथाकुरुतथानघ ॥ २१ ॥ तदमलमजरंतदात्मतत्त्वंतदवगतावुपशांतिमेति
चेतः ॥ अवगतवितततैकतत्स्वरूपोभवभयमुक्तपदोसितच्चिराय ॥ १२२ ॥ ॥ इ०वा०वा०दे०मो०उपशमप्रकरणेसंसृतिवीजविचा
रयोगोपदेशोनामैकनवतितमःसर्गः ॥ ९१ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ एतानितानिप्रोक्तानित्वयावीजानिमानद ॥
कतमस्यप्रयोगेणशीघ्रंतस्प्राप्यतेपदम् ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एतेषांदुःखवीजानांप्रोक्तंयद्यन्मयोत्तरम् ॥ तस्यतस्यप्रयोगे
णशीघ्रमासाद्यतेपदम् ॥ २ ॥ सत्तासामान्यकोटिस्थेद्रागित्येवपदेयदि ॥ पौरुषेणप्रयत्नेनवलात्संत्यज्यवासनाम् ॥ ३ ॥ स्थितिंवध्ना
सितत्त्वज्ञक्षणमप्यक्षयात्मिकाम् ॥ क्षणेस्मिन्नेवतत्साधुपदमासादयस्यलम् ॥ ४ ॥ सत्तासामान्यरूपेवाकरोषिस्थितिमंगचेत् ॥ न
त्किंचिदधिकेनेहयत्नेनाप्नोपितत्पदम् ॥ ५ ॥ संवित्तत्वेकृतध्यानोयदितिष्ठसिचानघ ॥ तद्यत्नेनाधिकेनाचिरासादयसितत्पदम् ॥ ६ ॥

कानिसंसृतिवनतेर्देहादीनिवीजानित्वयोक्तानितेषांकतमस्यउपायस्यप्रयोगेणनिरुत्स्यापरमंपदंप्राप्यतइत्यर्थः ॥ अथवाएतानिसन्निहितानि अथास्यास्संविदोरामसन्मात्रंवी
जमुच्यतंइत्यादिनायानिभूमिकाभेदरूपाणिमोक्षवीजानित्वयोक्तानितेपुकतमस्यप्रयोगेणआश्रयणेन ॥ १ ॥ तत्रप्रथमव्याख्यानुसारेणोत्तरमाह ॥ एतेषामिति ॥ २ ॥ द्वितीयानु
सारेणाप्याह ॥ सत्तेत्यादिना ॥ सत्तासामान्यंशोधिततत्पदार्थस्तस्यकोटिःपराकाष्ठातत्स्थेचिद्रूपशोधितत्वंपदार्थैक्येनाखंडैकरसेपदेस्थितिनिश्चलतांचित्तस्यवध्नासिचेदितिपूर्व
णान्वयः ॥ ३ ॥ किंभावनयैवनेत्याह ॥ तत्त्वज्ञेति ॥ तत्त्वतःसाक्षात्कृत्येतियावत् ॥ ४ ॥ तत्राशक्तावप्याह ॥ सत्तेति ॥ शोधितेजगत्कारणतत्त्वेइत्यर्थः ॥ किंचिदिति ॥ अ
खंडैक्यवोधेयत्नापेक्षणादितिभावः ॥ ५ ॥ संवित्तत्त्वेशोधितत्वंपदार्थे ॥ समानंपूर्वेण ॥ ६ ॥

ननुशोधनेनसंविदंशस्यहानेसंवेद्यांशस्यैवध्यानमप्युपायःकिंनस्यादितिचेदशक्यत्वादित्याह॥ संवेद्येइति ॥ संवेद्येभ्यःपुरःस्फुरंत्याःसंविदःपिधातुमशक्यत्वात्तत्पिधानेसंवेद्यस्फूर्तेरेवाभावेनतद्ध्यानायोगाच्चेतिभावः ॥७॥ चिंतनचिंतनीयादीनांसंविदधीनसिद्धिकत्वंदर्शयति॥यदिति॥यच्चिंतयसितत्संविदेव॥याचिंतासापिसंविदेव॥ संवित्तत्त्वकत्वात्सर्वस्येत्यर्थः ॥ ८ ॥ उपायांतरमाह ॥ वासनेति ॥ चकारान्मनोनाशेच ॥ तत्तर्हि ॥ ९ ॥ किमसौपूर्वोक्तेभ्यःसुगमोनेत्याह ॥ पूर्वोक्तेभ्यइति ॥ १० ॥ असुकरत्वमुपपादयितुंपरस्पराधीनतामाह॥ यावदिति ॥ ११ ॥ एवंतत्त्वज्ञानेनापिसहपरस्पराश्रयताअनयोरस्तीत्याह ॥ यावदिति ॥ १२ ॥ १३ ॥ १४ ॥ कस्तर्हितत्सिद्धावुपायइतिचेद्वैराग्यपूर्वकं

संवेद्येकेवलेध्यानंनसंभवतिराघव ॥ सर्वत्रसंभवादस्याःसंवित्तेरेवसर्वदा ॥ ७॥ यच्चिंतयसियद्यासियत्तिभ्रसिकरोषिच ॥ तत्रतत्रस्थितासंवित्संविदेवतदेवसा ॥ ८ ॥ वासनासंपरित्यागेयदियत्नंकरोषिच ॥ तत्तेशिथिलतांयांतिसर्वाधिव्याधयःक्षणात् ॥ ९॥ पूर्वेभ्यस्तुप्रयत्नेभ्योविषमोयंहिसंस्मृतः॥ दुःसाध्योवासनात्यागःसुमेरून्मूलनादपि॥१०॥ यावद्विलीनंनमनोनतावद्वासनाक्षयः॥ नक्षीणावासनायावच्चित्तंतावन्नशाम्यति॥ ११ ॥ यावन्नतत्त्वविज्ञानंतावच्चित्तशमःकुतः॥ यावन्नचित्तोपशमोनतावत्तत्त्ववेदनम्॥१२॥ यावन्नवासनानाशस्तावत्तत्त्वागमःकुतः ॥ यावन्नतत्त्वसंप्राप्तिर्नतावद्वासनाक्षयः ॥ १३ ॥ तत्त्वज्ञानंमनोनाशोवासनाक्षयएवच ॥ मिथःकारणतांगत्वादुःसाध्यानिस्थितान्यतः॥१४॥ तस्माद्राघवयत्नेनपौरुषेणविवेकिना॥भोगेच्छांदूरतस्त्यक्त्वात्रयमेतत्समाश्रयेत् ॥१५॥ सर्वथातेसमंयावन्नस्वभ्यस्तामुहुर्मुहुः॥तावन्नपदसंप्राप्तिर्भवत्यपिसमाशतैः॥१६॥ वासनाक्षयविज्ञानमनोनाशामहामते॥ समकालंचिराभ्यस्ताभवंतिफलदामुने॥१७॥एकैकशोनिषेव्यंतेयद्येतेचिरमप्यलम्॥तन्नसिद्धिंप्रयच्छंतिमंत्राःसंकीलिताइव॥१८॥ चिरकालोपरचिताअप्येतेसुधियापिच॥ एकशःपरमभ्येतुंनशक्ताःसैनिकाइव ॥ १९ ॥ सममुद्योगमानीताःसंतएतेहिधीमता ॥ संसारांध्निकृंततिजलान्यद्रितटानिव॥ २०॥ वासनाक्षयविज्ञानमनोनाशाःप्रयत्नतः ॥ समंसेव्यास्त्वचिरंतेनतातनलिप्यसे ॥ २१ ॥ त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रंथयोदृढाः ॥ निःशेषमेवत्रुट्यंतिबिसच्छेदाद्गुणाइव ॥ २२॥ जन्मांतरशताभ्यस्तारामसंसारसंस्थितिः॥ साचिराभ्यासयोगेनविनानक्षीयतेक्वचित्॥ २३ ॥

सहैवत्रयाणामभ्यासइत्याह ॥ तस्मादिति ॥१५॥ समंयुगपत् ॥ समाशतैर्वर्षशतैः ॥१६ ॥ ॥ १७ ॥ संकीलितामूर्छामरणादिमंत्रशास्त्रोक्तदोषैःप्रतिबद्धाः ॥ १८ ॥ उपरचिताःसेवादिनावशीकृत्यस्वकार्येउद्योजिताः ॥ परंशत्रुपरमात्मानंचअभिमुखतयाएतुंगंतुम् ॥ सैनिकाःसेनाभटाइव ॥ १९ ॥ जलानिपूरात्मनामिलितानि ॥ २० ॥ नलिप्यसेअलेपकेस्वभावेस्थास्यसि ॥ २१ ॥ हृदयग्रंथयःअंतःकरणतद्धर्मतादात्म्यसंसर्गाध्यासाः ॥ त्रुट्यंतिच्छिद्यंते ॥ गुणास्तंतवइव ॥ २२ ॥ ननुत्रयाणामपिचिराभ्यासःकिमर्थंतत्राह ॥ जन्मांतरेति ॥ शतशब्दआनंत्ये ॥ संसारसंततिर्दृढतवासना ॥ २३ ॥

१ सर्वएतेइत्यपिपाठः

॥ २४ ॥ त्रिभिस्सहचतुर्थःप्राणायामोप्यभ्यसनीयइत्याह ॥ वासनेति ॥ समाहरेदभ्यसेत् ॥ २५ ॥ २६ ॥ योगाभ्यासकुशलगुरूपदिष्टयुक्त्यास्वस्तिकाद्यासनजयेनहितमि
तमेध्याशनैर्यमनियमादियोगेनचेत्यर्थः ॥ २७ ॥ सर्ववस्तूनामाद्यावंतेचकारान्मध्येचअविसंवादिअविप्रलंभियत्सन्मात्ररूपंस्थितंसएवयथाभूतार्थस्तद्दर्शित्वादित्यर्थः ॥ २८ ॥
निःसंगंवहिर्मुखजनसंगरहितंनिस्संकल्पंचयथाप्राप्तव्यवहारशीलत्वात् ॥ भवभावनानिसांसारिकमनोरथास्तेषांवर्जनात् ॥ २९ ॥ वासनालक्षणेविभवेधनसंचयेनष्टेसति
लज्जयेवनप्रवर्त्तते ॥ ३० ॥ पांसोरिवचित्तस्यापिपवनाधीनस्पंदत्वादितिभावः ॥ ३१ ॥ अवकरात्पांसुराशेरिव ॥ ३२ ॥ हठयोगाभ्यासाशक्तौराजयोगोभ्यसनीयइत्याह

गच्छन्शृण्वन्स्पृशन्जिघ्रंस्तिष्ठन्जाग्रत्स्वपंस्तथा ॥ श्रेयसेपरमायास्यत्रयस्याभ्यासवान्भव ॥ २४ ॥ वासनासंपरित्यागसमंप्राण
निरोधनम् ॥ विदुस्तत्त्वविदस्तस्मात्तदप्येवंसमाहरेत् ॥ २५ ॥ वासनासंपरित्यागाच्चित्तंगच्छत्यचित्तताम् ॥ प्राणस्पंदनिरोधाच्चयथे
च्छसितथाकुरु ॥ २६ ॥ प्राणायामचिराभ्यासैर्युक्त्याचगुरुदत्तया ॥ आसनाशनयोगेनप्राणस्पंदोनिरुध्यते ॥ २७ ॥ यथाभूतार्थदर्शि
त्वाद्वासनानप्रवर्तते ॥ आद्यावंतेचवस्तूनामविसंवादियत्स्थितम् ॥ २८ ॥ रूपंतद्दर्शनंज्ञानंक्षीयतेतेनवासना ॥ निःसंगव्यवहारित्वाद्भव
भावनवर्जनात् ॥ २९ ॥ शरीरनाशदर्शित्वाद्वासनानप्रवर्त्तते ॥ वासनाविभवेनष्टेनचित्तंसंप्रवर्तते ॥ ३० ॥ संशांतेपवनस्पंदेयथापां
सुर्नभस्तले ॥ यःप्राणपवनस्पंदश्चित्तस्पंदःसएवहि ॥ ३१ ॥ तस्माज्जगतिजायंतेपांसवोवकरादिव ॥ प्राणस्पंदजयेयत्नःकर्त्तव्योधीम
ताच्चकैः ॥ ३२ ॥ उपविश्योपविश्यैकचित्तकेनमुहुर्मुहुः ॥ अथवैनंक्रमंत्यक्त्वाचित्ताक्रमणमेवचेत् ॥ ३३ ॥ रोचतेतत्तदाप्नोपिकालेनव
ह्नुनापदम् ॥ नशक्यतेमनोजेतुंविनायुक्तिमनिंदिताम् ॥ ३४ ॥ अंकुशेनविनामत्तंयथादुष्टमतंगजम् ॥ अध्यात्मविद्याधिगमःसाधुसं
गमएवच ॥ ३५ ॥ वासनासंपरित्यागःप्राणस्पंदनिरोधनम् ॥ एतास्तायुक्तयःपुष्टाःसंतिचित्तजयेकिल ॥ ३६ ॥ याभिस्तज्जीयतेक्षिप्रं
धाराभिरिवभूरजः ॥ सतीषुयुक्तिष्वेतासुहठान्नियमयंतिये ॥ ३७ ॥ चेतस्तेदीपमुत्सृज्यविनिघ्नंतितमोंजनैः ॥ विमूढाःकर्त्तुमुद्युक्तायेहठा
च्चेतसोजयम् ॥ ३८ ॥ तेनिवध्नंतिनागेंद्रमुन्मत्तंविसतंतुभिः ॥ चित्तंचित्तस्यवाऽदूरंसंस्थितंस्वशरीरकम् ॥ ३९ ॥ साधयंतिसमुत्सृज्य
युक्तिंयेतान्हठान्विदुः ॥ भयाद्भयमुपायांतिक्लेशात्क्लेशंव्रजंतिते ॥ ४० ॥

अथवेति ॥ ३३ ॥ बह्नुनेति ॥ दुर्दांतस्यचित्तस्याल्पकालाभ्यासेनवशीकर्त्तुमशक्यत्वादितिभावः ॥ युक्तिअध्यात्मविद्यासाधुसंगसहितंदर्शितंद्विविधंयोगंविना ॥ ३४ ॥ तदेवा
ह ॥ अध्यात्मेति ॥ ३५ ॥ ३६ ॥ यद्यपिप्राणसंरोधनंदुर्दांतदमनोपायत्वाद्धठएवतथापिसच्छास्त्रगुरूपदिष्टमार्गरहितोऽन्येचोपवेशनशयनकायशोषणमंत्रयंत्रश्मशानसाध
नादिसाहसरूपाहठाअत्रनिवार्यंतइतिबोध्यम् ॥ ३७ ॥ ३८ ॥ उक्तलक्षणांचतुर्विधांयुक्तिसमुत्सृज्यउपायांतरेणचित्तंचित्तसन्निहितंशरीरंयेसाधयंतिस्थिरीकर्त्तुंयतंतेतान्पुरु
षान्हठान्हठयाश्रमान्विदुःसांप्रदायिकाइत्यर्थः ॥ ३९ ॥ किंचतेषांसच्छास्त्रमार्गविभ्रंशादनर्थपरंपरैवफलतिनचित्तादिजयइत्याह ॥ भयादिति ॥ ४० ॥

निर्वृतिसम्यग्धैर्यविश्रांतिम् ॥ दुर्भगाःपापिनोजंतवइव ॥ ४१ ॥ ४२ ॥ आऽहितेभयस्थाने ॥ अहितेइतिवाच्छेदः ॥ ४३ ॥ प्रोह्यतेरागादिनाबलान्नीयतेदूरम् ॥ प्रपतद्विषयानुपातिस्वभावम् ॥ निश्चितमोक्षफलकधर्ममेघाख्यसमाध्यभ्यासंविहायबहुक्लेशाल्पफलकसंदिग्धमोक्षफलकयज्ञदानाद्यनुष्ठानमपिक्लेशमात्रमितिप्रकृतप्रशंसार्थमाह ॥ कालमित्यादिना ॥ कालंचिरंक्षपयंतीतिसंबंधः ॥ ४४ ॥ ४५ ॥ यतःदुःखानांरागादिदोषाणांचशतैरादग्धाःअतोनविंदंतिविदंतिवा ॥ अनित्याएकत्रास्थिराः ॥ नरकस्वर्गमानुषैर्भोगभेदैर्निमित्तैःपातोत्पातकराआकारादेहभेदायेषांतथाविधाभूत्वाक्षीयंतेमरणादिनापीड्यंते ॥ ४६ ॥ इहैवदंशमशकादिजन्मावृत्तिभिर्निवर्तंतेपरिवर्तंते ॥ ४७ ॥ एतांवर्णि

निर्वृतिंनाधिगच्छंतिदुर्भगाइवजंतवः ॥ भ्रमंतिगिरिकूटेषुफलपल्लवभोजनाः ॥ ४१ ॥ मुग्धमुग्धधियोभीतावराकाहरिणाइव ॥ मतिरालूनशीर्णांगीतदीयापेलवांगिका ॥ ४२ ॥ नक्वचिद्यातिविश्रासंमृगीग्रामगतायथा ॥ कल्लोलकलितंचेतस्तेषांजलइवाहिते ॥ ४३ ॥ प्रोह्यतेप्रपतद्दूरंतृणंगिरिनदीष्विव ॥ कालंयज्ञतपोदानतीर्थदेवार्चनभ्रमैः ॥ ४४ ॥ चिरमाधिशतोपेताःक्षपयंतिमृगाइव ॥ आत्मतत्त्वंविधिवशात्कदाचित्क्वेचिद्देवते ॥ ४५ ॥ दुःखदोषशतादग्धाविंदंतिनविंदंतिवा ॥ आगमापायिनोऽनित्यानरकस्वर्गमानुषैः ॥ ४६ ॥ पातोत्पातकराकाराःक्षीयंतेकंदुकाइवा ॥ इतोगच्छंतिनरकंततस्स्वर्गमिहैवच ॥ ४७ ॥ आवृत्तिभिर्निवर्त्तंतेसरसीवतरंगकाः ॥ तस्मात्त्वंतांपरित्यज्यदुर्दृष्टिंरघुनंदन ॥ ४८ ॥ शुद्धांसंविदमाश्रित्यवीतरागःस्थिरोभव ॥ ज्ञानवानेवसुखवान्ज्ञानवानेवजीवति ॥ ज्ञानवानेवबलवांस्तस्माज्ज्ञानमयोभव ॥ ४९ ॥ संवेद्यवर्जितमनुत्तममाद्यमेकंसंवित्पदंविकलनंकलयन्महात्मन् ॥ तिष्ठेवतिष्ठकलनारहितःक्रियांतुकुर्वन्नकर्तृपदमेत्यशमोदितश्रीः ॥ ५० ॥ ॥इ० वा० वा० दे० मोक्षोपायेषूपशमप्रकरणेसंसृतिनिराकरणक्रमयोगोपदेशोनामद्विनवतितमःसर्गः ॥ ९२ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥मनागपिविचारेणचेतसःस्वस्यनिग्रहः॥ मनागपिकृतोयेनतेनात्तंजन्मनःफलम् ॥ १ ॥ विचारकणिकायैषाहृदिस्फुरतिपेलवा ॥ एषैवाभ्यासयोगेनप्रयातिशतशाखताम् ॥ २ ॥ किंचित्प्रौढविचारंतुनरंवैराग्यपूर्वकम् ॥ संश्रयंतिगुणाःशुद्धाःसरःपूर्णमिवांडजाः ॥ ३ ॥

तहृठादिलक्षणाम् ॥ ४८ ॥ आश्रित्यज्ञात्वा ॥ ४९ ॥ विकलनंनिर्विकल्पंनिर्वासनंनिर्विकारंचकलनाचेतसोबाह्योन्मुखतातद्रहितस्तन्निरोधशीलस्सन्नूर्ध्वदिहार्दब्रह्मण्येवतिष्ठ ॥ व्युत्थानकालेतुयथोचितांक्रियांकुर्वन्नपिआसंगशमेनउदिताश्रीःप्रागुक्तजीवन्मुक्तगुणसंपद्यस्यतथाविधस्सन्अकर्तृपदमेत्यतिष्ठेत्यर्थः ॥५०॥ ॥इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेउपशमप्रकरणेद्विनवतितमःसर्गः ॥ ९२ ॥ ॥ ७ ॥ ॥ विचारप्रौढिवैराग्यसद्गुणैर्बोधसंस्थितौ ॥ विषयैरप्रधृष्यत्वाद्वर्ण्यतेत्रसमास्थितिः ॥ १ ॥ तत्राद्यावस्थतरस्यापिविचारस्यचित्तनिग्रहस्यचरुच्युत्पादनप्रवर्त्तनद्वाराक्रमान्मोक्षेपर्यवसानंभवतीत्याह ॥ मनागिति ॥ जन्मनःफलमित्यनेनविचारशून्यस्यजन्मैवनिष्फलमितिध्वनितम् ॥१॥ तस्यजन्मसाफल्योपयोगितामुपपादयति ॥ विचारेत्यादिना ॥ विचारकल्पवृक्षस्यकणिकाअंकुरः ॥ २ ॥ गुणाःप्रागुक्तशमदमादयः ॥ अंडजाःपक्षिणोमत्स्याश्च ॥ ३ ॥

यथाभूतंयथार्थमात्मतत्त्वमवलोकयितुंशीलमस्य ॥ स्फाराःप्रचयप्रकर्षाभ्यांख्याताअपिहैरण्यगर्भपदांताअविद्याकार्यभूताविभवानासादयंतिनप्रलोभयंति ॥ ४ ॥ किंकुर्वंतिकंविकारंजनयंति ॥ निर्विकारात्मभूतत्वात्तस्येतिभावः ॥ ५ ॥ तत्प्रलोभनासामर्थ्यमेवान्योक्तिभिर्द्रढयति ॥ केत्यादिना ॥ पुष्करावर्त्ताख्याःप्रलयजलदाबालमुष्टिभिःकगृहीताः ॥ ६ ॥ मुग्धैर्विकाशरम्यैरिंदीवरैःस्वनेत्रशोभापराभवशंकयातद्विकाशहेतुर्नभोमध्यसंस्थेंदुर्मणिमयैस्समुद्गकैस्संपुटकैःकबद्धः ॥ ७ ॥ कटेभ्योगंडस्थलेभ्यःप्रोच्चलंतिभृंगमंडलान्येवोत्पलसादृश्यादुत्पलानिशेखरेषुयेषांतथाविधागजामुग्धस्त्रीश्वासैरपिपराणुद्यमानत्वात्तेष्वपिमधुरैःसौम्यैर्निर्वीर्यैरितियावत ॥ मशकैःकमथितानिहताः ॥ मुग्धस्त्रीभिःश्वासेनगजवधायप्रेरणाद्वामधुरैरुत्साहरम्यैः ॥ ८ ॥ इभानांस्वविदारितगजानांमुक्ताफलसंबंधिभिरुल्लासैःकांतिभिर्लसंतोनखरपंजरायेषाम् ॥ ९॥ विषस्योल्लास

सम्यग्विचारिणंप्राज्ञंयथाभूतावलोकिनम् ॥ आसादयंत्यपिस्फारानाविद्याविभवाश्शम् ॥ ४ ॥ किंकुर्वंतीहविषयामानस्योद्वत्तयस्तथा ॥ आधयोव्याधयोवापिसम्यग्दर्शनसन्मतेः ॥५॥ कप्रमत्तपवनापूरास्तडित्पटलपाटलाः ॥ पुष्करावर्त्तजलदागृहीताबालमुष्टिभिः ॥ ६ ॥ कनभोमध्यसंस्थेंदुर्मुग्धैर्मणिसमुद्गकैः ॥ मुग्धयांगनयाबद्धोमुग्धेंदीवरशंकया ॥ ७॥ ककटप्रोच्चलद्भृंगमंडलोत्पलशेखराः ॥ मुग्धस्त्रीश्वासमधुरैर्मशकैर्मथितागजाः ॥ ८ ॥ केभमुक्ताफलोल्लासलसत्सन्नखपंजराः ॥ सिंहास्समरसंरब्धाहरिणैःप्रविमर्दिताः ॥ ९ ॥ कविषोल्लासनिर्यासदग्धोन्नतवनद्रुमाः ॥ क्षुधिताजगराःक्षुब्धैर्निगीर्णाबालदर्दुरैः ॥ १० ॥ कप्राप्तभूमिकोधीरोज्ञातज्ञेयोविवेकवान् ॥ आक्रांतःकिलविक्रांतोविषयेंद्रियदस्युभिः ॥ ११ ॥ विचारधियमप्रौढांहरंतिविषयारयः ॥ प्रचंडपवनाच्छिन्नांकृत्तवृंतांलतामिव ॥ १२ ॥ नविवेकलवंप्रौढंभंक्तुंशक्तादुराशयाः ॥ कल्पक्षोभमहाधीरंशैलंमंदानिलाइव ॥ १३ ॥ अगृहीतमहीपीठंविचारकुसुमद्रुमम् ॥ चिंतावात्याविधुन्वंतिनास्थिरस्थितिसुस्थितम् १४ ॥

उपचयस्तत्प्रयुक्तैर्निर्यासप्रायैर्विषबिंदुभिर्दग्धाउन्नतावनद्रुमायैः ॥ अथवास्त्वक्तिदेशात्स्वदेहेमुहुःप्रस्तनाद्धंशुष्कविषोल्लासाएवनिर्यासायेषांतथाविधाःश्यामत्वादुत्थितत्वाच्चदग्धशाखखर्जूरद्रुमप्रायाः ॥ देशविशेषेद्रुमवदुत्थितामनुष्यवत्कूजंतःश्यामाअजगरविशेषावृक्षभ्रांत्यासमीपगतान्मनुष्यादीन्परिवृत्तेनव्यात्तेनमुखेनझटितिप्रसंतीतिप्रसिद्धम् ॥ बालदर्दुरैःक्षुद्रभेकैः ॥ १० ॥ प्राप्तचतुर्थपंचमादिभूमिकः ॥ विक्रांतःउत्तरभूमिकाजयेउद्युक्तः ॥ ११ ॥ तत्पूर्वभूमिकास्वेवापक्वचित्तानांविघ्नप्रसक्तिर्नोत्तरत्रेत्याह ॥ विचारंति ॥ कृत्तवृंतांछिन्नप्रतानवतीम ॥ १२ ॥ दुष्टाआशयाःरागादिवृत्तयोभंक्तुंविनाशयितुंनशक्ताः ॥ यथाअवांतरकल्पक्षोभेषुमहाधीरंमेर्वादिशैलंभंक्तुंमंदानिलानशक्तास्तद्वत ॥ १३ ॥ नगृहीतंमहत्पीठंमूलबंधनंयेनतम ॥ विचाराःकादाचित्काआर्त्तवकुसुमप्रायाएवनतुफलितास्तथाविधद्रुमप्रायम् ॥ १४ ॥

---

१ कोन्नमदितिवापाठः २ सुंदरैः ३ प्रतानबंधनामित्यपिक्वचित्पाठः

अतएवविचारविच्छित्तिकालेप्रमादाद्रागादिमृत्युनाऽसौग्रस्यतइत्याशयेनाह ॥ गच्छतइति॥यस्ययदातदाअसौमृतइतियोज्यम् ॥ तथाचोक्तंलैंगे ॥ साहानिस्तन्महच्छिद्रंसांध तासाचमूकता ॥ यत्क्षणंवामुहूर्तंवाशिवमेकंनचिंतयेदिति ॥ १५ ॥ स्वयमेकएकांतेवासज्जनैर्गुरुसतीर्थ्यादिभिःसहवा ॥ १६ ॥ विचारस्यफलावश्यंभावमाह ॥ अंधकारेति॥ प्रमादांधकारहरेण ॥१७॥ ज्ञानफलेद्वेआह ॥ ज्ञानेनेतिद्वाभ्याम् ॥१८॥१९॥ ज्ञानलक्षणमाह ॥ येनेति॥ ज्ञेयब्रह्माकारत्वाद्बोधरूपत्वाच्चाभिन्नमिवसंस्थितंदृढप्रतिष्ठितम् ॥ २० ॥ २१ ॥ सदाज्ञेयमयःअनुभूयमानब्रह्मानंदप्रचुरः ॥ २२ ॥ संप्रसीदतिनिरस्ताविद्यातत्कार्यपंकंभवति ॥ २३ ॥ सम्राडूराजाधिराजस्तद्वात्मेवपूर्णमनोरथः ॥ २४ ॥

गच्छतस्तिष्ठतोवापिजाग्रतस्स्वपतोपिवा॥ नविचारमयंचेतोयस्यासौमृतउच्यते॥१५॥ किमिदंस्याज्जगत्किंस्याद्देहमित्यनिशंशनैः॥ विचारयाध्यात्मदृशास्वयंवासज्जनैस्सह॥ १६ ॥ अंधकारहरेणाशुविचारेणपरंपदम् ॥ दृश्यतेविमलंवस्तुप्रदीपेनेवभास्वता॥ १७॥ ज्ञानेनसर्वदुःखानांविनाशउपजायते॥ कृतालोकविलासेनतमसामिवभानुना॥ १८ ॥ ज्ञानेप्रकटतांयातेज्ञेयंस्वयमुदेत्यलम्॥ रवावभ्युदितेभूमावालोकइवनिर्मलः॥ १९ ॥ येनशास्त्रविचारेणब्रह्मतत्त्वंप्रबुध्यते॥ तद्ज्ञानमुच्यतेज्ञेयादभिन्नमिवसंस्थितम्॥ २० ॥ विचारात्त्यात्मविज्ञानंज्ञानमंगविदुर्बुधाः॥ ज्ञेयंतस्यांतरेवास्तिमाधुर्यंपयसोयथा ॥ २१ ॥ सम्यग्ज्ञानसमालोकःपुमान्ज्ञेयमयःस्वयम्॥ भवत्यापीतमैरेयःसदामदमयोयथा॥ २२॥ समंस्वरूपममलंज्ञेयंब्रह्मपरंविदुः॥ ज्ञानाभिगममात्रेणतत्स्वयंसंप्रसीदति॥ २३ ॥ ज्ञानवानुदितानंदोनक्वचित्परिमज्जति॥ जीवन्मुक्तोगतासंगःसम्राडात्मेवतिष्ठति ॥ २४॥ ज्ञानवान्स्वस्ग्रशब्देषुवीणावंशरवादिषु॥ कामिन्याःकांतगीतेषुसंभोगमलिनेषुच॥ २५॥ वसंतमदमत्तानांषट्पदानांस्वनेषुच॥ प्रावृट्प्रसरपुष्पेषुजलदस्तनितेषुच॥ २६॥ उत्तांडवशिखंडेषुकेकाकलरवेषुच॥ रणितांभोदखंडेषुसारसक्कणितेषुच॥२७॥ कर्त्तर्यादिकरांतेषुगंभीरमुरजेषुच॥ ततावनद्धसुषिरचित्रवाद्यस्वनेषुच॥२८॥ केषुचिन्ननिबध्नातिरूक्षेषुमधुरेषुच॥ रणितेपुरतिरामपद्मेष्विवनिशाकरः॥ २९॥ ज्ञानवान्बालकदलीस्तंभपल्लवेपालिषु॥ सुरगंधर्वकन्यांगलतानंदनकेलिषु॥ ३०॥ केषुक्वचिन्नबध्नातिस्वायत्तेष्वप्यसक्तधीः॥ रामस्पर्शरतिंधीरोहंसोमरुमहीष्विव॥ ३१॥ ज्ञानवान्पिंडखर्जूरकदंबपनसादिषु॥ मृद्वीकौर्वारुकाक्षोटबिंबजंबीरजातिषु॥ ३२॥

तस्यरागिजनस्पृहणीयेषुभावेष्वनासंगंप्रपंचयति ॥ ज्ञानवानित्यादिना ॥ सर्वेषांसप्तम्यंतानांरतिंननिबध्नातीतिव्यवहितेनान्वयः ॥ २५ ॥ प्रावृट्प्रसरप्रयुक्तपुष्पेषु ॥ २६ ॥ २७ ॥ कर्त्तरीसूचीशलाकासूत्रकंटककरांतोपायवादनीयेषुवाद्यभेदेषु ॥ तंत्रीभिस्ततंवीणादि चर्मणाअवनद्धंमुरजादि सुषिरमंतश्छिद्रंवंशादि चित्रंपरिशेषाद्घनंकांस्यतालादिचयद्वाद्यंतत्स्वनेषुच ॥ २८ ॥ २९ ॥ बालकदलीस्तंभानांपल्लवपंक्तयोयत्र ॥ सुरगंधर्वकन्यानामिवांगानिअवयवायासांतथाविधलताशालिनंदनेकेलिपुक्रीडासु ॥ तासामंगलताभिर्नंदनेकेलिषुवा ॥ ३० ॥ स्पर्शरतिंभोगेच्छाम् ॥ ३१ ॥ पिंडखर्जूरादयःफलजातिभेदाः ॥ ३२ ॥



१ रांजष्वित्यपिपाठः

मदिरादयोमद्यजातिभेदाः ॥ तप्तेपयसिदधिसेकात्पिंडीभूतंद्रव्यमामिक्षा ॥ ३३ ॥ आमिषेषुमांसेषु ॥ ३४ ॥ स्वशरीरलवेषुस्वमांसखंडेष्विव ॥ ३५ ॥ दिक्पालपंक्तिपाठा
द्रुद्रईशानः ॥ ३६ ॥ कौशेयानीवमृदुस्निग्धानिदलजालानिपल्लवसमूहायेष्वितिप्राक्तनसानुविशेषणम् ॥ देहशोभयादिव्यशरीरसंपत्त्याविलसनशीलेषु ॥ ३७ ॥ कुड्यपदेन
तदवयविनोगृहालक्ष्यंते ॥ ३८ ॥ अचलःद्वेषाद्यप्रकंप्यः ॥ ३९ ॥ कुंदादिषुपुष्पजातिषु ॥ ४० ॥ कदंबादिवृक्षजातिषु ॥ जपादिगुल्मवल्लीजातिषु ॥ ४१ ॥ चंदनादिष्वंग
रागभेदेषु ॥ लाक्षाअलक्तकरसः ॥ ४२ ॥ द्विजोमद्यामोदेष्विवरतिननिबध्नाति ॥ प्रियाप्रिययोःसमबुद्धिः ॥ अप्रियेष्वविक्षोभश्च ॥ एवंभयहेतुध्वनिभ्यस्तस्यभयंनजायत

मदिरामधुमैरेयमाध्वीकासवभूमिषु॥ दधिक्षीरघृतामिक्षानवनीतौदनादिषु॥ ३३ ॥ पड्रसेषुविचित्रेषुलेह्यपेयविलासिषु॥ फलेष्व
न्येषुमूलेषुशाकेष्वप्यामिषेषुच॥ ३४॥ केषुचिन्नानुबध्नातितत्समूर्त्तिरसक्तधीः॥ आस्वादनरतिर्विप्रःस्वशरीरलवेष्विव॥ ३५॥ ज्ञान
वान्यमचंद्रेंद्ररुद्रार्कानिलसद्मसु॥ मेरुमंदरकैलाससत्यदर्दुरसानुषु॥ ३६॥ कौशेयदलजालेषुचंद्रबिंबकलादिषु॥ कल्पपादपकुंजेषु
देहशोभाविलासिषु॥ ३७॥ रत्नकांचनकुड्येषुमुक्तामणिमयेषुच॥ तिलोत्तमोर्वशीरंभामेनकांगलतासुच॥ ३८॥ केषुचिद्दर्शनंश्रीमा
न्नाभिवांछत्यसक्तधीः॥ परिपूर्णमनामानीमौनीशत्रुषुचाचलः॥ ३९॥ ज्ञानवान्कुंदमंदारकह्लारकमलादिषु॥ कुमुदोत्पलपुन्नागके
तक्यगुरुजातिषु॥ ४०॥ कदंबचूतजंब्वाम्रकिंशुकाशोकशाखिषु॥ जपातिमुक्तसौवीरबिंबपाटलजातिषु॥ ४१॥ चंदनागुरुकर्पूरला
क्षामृगमदेषुच॥ काश्मीरजलवंगैलाकंकोलतगरादिषु॥ ४२॥ केषुचिन्ननिबध्नातिसौगंध्यरतिमेकधीः॥ समबुद्धिरविक्षोभोमधा
मोदेष्विवद्विजः॥ ४३॥ अब्धौगुडगुडारावेप्रतिश्रुत्स्वननेगिरौ॥ निनादेचमृगेंद्राणांनक्षुभ्यतिमनागपि॥ ४४॥ द्विपद्वैरीनिनादेनप
टहारणितेनच॥ कटकोदंडघोषेणनबिभेतिमनागपि॥ ४५॥ मत्तवारणबृंहासुवेतालकलनासुच॥ पिशाचरक्षःक्ष्वेडासुमनागपिन
कंपते॥ ४६॥ अशनिस्वनघोषेणनगस्फोटरवेणच॥ ऐरावणनिनादेनसम्यग्ध्यानीनकंपते॥ ४७॥ बृहत्क्रकचकाषेणसितासिदलनेन
च॥ शराशनिनिपातेनकंपतेनस्वरूपतः॥ ४८॥ नानंदमेत्युपवनेनखेदमुपगच्छति॥ नखेदमेतिमरुषुनानंदमुपगच्छति॥ ४९॥ पूतां
गारसमाकल्पसैकतेष्वपिधन्वसु॥ पुष्पप्रकरसंछन्नमृदुशाद्वलभूमिषु॥ ५०॥

इत्याह ॥ अब्धावित्यादिना ॥ प्रतिश्रुत्प्रतिध्वनिस्तद्रूपेस्वस्वनेआकाशजशब्दे ॥ ४४ ॥ पटहआडंबराख्योवाद्यविशेषः ॥ ४५ ॥ मत्तवारणानांबृंहासुगर्जितेषु ॥ बृंहेर्गुरोश्च
हलइत्यप्रत्ययः ॥ वेतालानांकलनासुकलहादिध्वनिषु ॥ पिशाचरक्षसांक्ष्वेडासुसिंहनादेषु ॥ ४६ ॥ ऐरावणऐरावतस्तस्यनिनादेन ॥ ४७ ॥ बृहतश्चलतःक्रकचस्यकाषेण
घर्षणेन ॥ स्वरूपतःस्वरूपस्थितिलक्षणात्समाधेर्नकंपतेनचलतीत्यर्थः ॥ ४८ ॥ ४९ ॥ पूतंतंस्मापसरणेनोज्ज्वलितैरंगारैःसमानिअकल्प्यान्यसह्यानिसैकतानियेषुतथाविधेषु
धन्वसुमरुदेशेषु ॥ ५० ॥

कूपकोशस्यकूपोदरस्यतलेष्वधोभूमिषु ॥ ५१ ॥ अर्कांशुरूक्षासुप्रतप्तासुकठिनासुच ॥ रमणेषुक्रीडनेषु ॥ ५२ ॥ भारवहनादिकर्मकर्त्ताश्रांतःपुरुषोभारोत्तारणद्वारं तर्मुखमनाविश्रांतिसुखमनुभवन्नुदासीनस्तिष्ठतीत्यर्थः ॥ ५३ ॥ अयोयंत्रैःसंकुचितांगासुमांडव्यस्येवप्रारब्धशेषोपनीतासुनरकारण्यभूमिषु ॥ ५४ ॥ वैवश्यंव्याकुलताम् ॥ ५५ ॥ मलादिगोमयाद्यपि ॥ क्लिन्नंसार्द्रीभूतम् ॥ नष्टंगतरसमपि ॥ मृष्टंपरिष्कृतमन्नंतद्वत् ॥ ५६ ॥ सद्योबुद्धिहरत्वेनप्रसिद्धस्यबिंबफलस्यप्रतिविषाणांविषप्रायाणामाकल्कानांसर्वतःकषायाणांक्षीरस्येक्षोःसलिलस्यअंधसओदनस्यचआस्वादनेविषयसमस्तुल्यचित्तोभवतीत्यर्थः ॥ ५७ ॥ रक्षःपिशाचादिष्वपिजीवन्मुक्तानांसंभवात्तत्साधार

क्षुरधारासुतीक्ष्णासुशय्यासुचनवोत्पलैः ॥ उन्नताचलदेशेषुकूपकोशतलेषुच ॥५१॥ शिलास्वर्कांशुरूक्षासुमृद्वीषुललनासुच ॥ संपत्स्वापत्सुचोग्रासुरमणेषूत्सवेषुच ॥५२॥ विहरन्नपिनोद्वेगीनानंदमुपगच्छति ॥ अंतर्मुक्तमनानित्यंकर्मकर्त्तेवतिष्ठति ॥५३॥ अयस्संकुचितांगासुनरकारण्यभूमिषु ॥ परस्परेरितानंतकुंततोमरवृष्टिषु ॥ ५४ ॥ नविभेतिनवादत्तेवैवश्यंनचदीनताम् ॥ समःस्वस्थमनामौनीधीरस्तिष्ठतिशैलवत् ॥ ५५ ॥ अपवित्रमपथ्यंचविषसिक्तंमलाद्यपि ॥ भुक्त्वाजरयतिक्षिप्रंक्लिन्नंनष्टंचमृष्टवत् ॥ ५६ ॥ बिंबप्रतिविषाकल्कक्षीरेक्षुसलिलांधसाम् ॥ असक्तबुद्धिस्तत्त्वज्ञोभवत्यास्वादनेसमः ॥ ५७ ॥ मैरेयमदिराक्षीररक्तमेदोरसासवैः ॥ रूक्षास्थितृणकेशांतैर्नतुष्यतिनकुप्यति ॥ ५८ ॥ जीवितस्यापिहर्त्तारंदातारंचैकरूपया ॥ दृशाप्रसादमाधुर्यशालिन्यापरिपश्यति ॥ ५९ ॥ स्थिरास्थिरशरीरेषुरम्यारम्येषुवस्तुषु ॥ नतुष्यतिग्लायतिवासदासमतयेद्धया ॥ ६० ॥ मुक्तास्थत्वादनास्थेयरूपत्वाज्जगतःस्थितौ ॥ नूनंविदितवेद्यत्वान्नीरागत्वात्स्वचेतसः ॥ ६१ ॥ नकस्यचिन्नोकदाचिदक्षस्यविषयस्थितौ ॥ ददातिप्रसरंसाधुराधिप्रोज्झितयाधिया ॥ ६२ ॥ अतत्त्वज्ञमविश्रांतमलब्ध्वात्मानमस्थितिम् ॥ निगिरंतींद्रियाण्याशुहरिणाइवपल्लवम् ॥ ६३ ॥ उह्यमानंभवांभोधौवासनावीचिवेल्लितम् ॥ निगिरंतींद्रियग्राहामहाक्रंदपरायणम् ॥ ६४ ॥ विचारिणंभव्यपदंविश्रांतधियमात्मनि ॥ नहरंतिविकल्पौघाजलौघाइवपर्वतम् ॥ ६५ ॥ सर्वसंकल्पसीमांतेविश्रांतायेपरेपदे ॥ तेषांलब्धस्वरूपाणांमेरुरेवतृणायते ॥ ६६ ॥ जगज्जरत्तृणलवोविषंचामृतमेवच ॥ क्षणःकल्पसहस्रंचसममाततचेतसाम् ॥ ६७ ॥

ण्येनाह ॥ मैरेयेति ॥ ५८ ॥ तस्यशत्रुमित्रयोरपिसमदृष्टिमाह ॥ जीवितस्येति ॥ जीवितस्यदातारमित्यपिसंबंधः ॥ ५९ ॥ स्थिरेषुचिरस्थायिषुदेवादिशरीरेष्वस्थिरेषुमर्त्यादिशरीरेषुच ॥ रम्यारम्येषुतद्भोग्यवस्तुषुच ॥ समतयाइद्धयादीप्तया ॥ ६० ॥ चेतसोनीरागत्वाद्विदितवेद्यत्वाच्चहेतोर्जगतःस्थितौमुक्तास्थत्वाद्विषयाणांचमिथ्यात्वेनआस्थायामयोग्यरूपत्वाच्चअक्षस्यविषयस्थितौप्रसरंसदाविचाररससेवनात्कदाचिदपिनददाति॥ कस्यचिदपिनददातीतिद्वयोरन्वयः॥६१॥ ६२ ॥ किंतर्हिइंद्रियाणिनिगिरंतितमाह ॥ अतत्त्वज्ञमितिद्वाभ्याम् ॥६३॥ ६४ ॥ लोभादिविकल्पाअप्यात्मज्ञंनचालयंतीत्याह ॥विचारिणमित्यादिना॥६५॥ ६६॥ आततचेतसांपूर्णात्माकारविस्तृतचित्तानाम् ॥६७॥

ईहतेइच्छतिउपादत्तेइतियावत् ॥ ७० ॥ अतीतेस्पृहायाअदर्शनाद्गहरिणस्पृहणीयंवर्त्तमानंभूमेःस
सर्वस्यज...आंतरप्रत्यक्षमात्रत्वदर्शनादंतस्थजगत्काः ॥ ६८ ॥ ६९ ॥ ईहतेइच्छतिउपादत्तेइतियावत् ॥ ७० ॥ अतीतेस्पृहायाअदर्शनाद्गहरिणस्पृहणीयंवर्त्तमानंभूमेःस
काशाद्यत्पल्लवांकुरप्रायंविषयजातंजायतेयच्चभविष्यत्तत्सर्वंतत्त्वज्ञदृशायथासंविदेवप्रथतेतथावियदादितत्त्वांकुरमिवस्थितंशब्दस्पर्शादिविषयांतरमर्पात्यर्थः ॥ ७१ ॥ उक्ता
र्थसिद्धौयुक्तिमाह ॥ आदाविति ॥ चकारस्त्वर्थे ॥ तस्यवर्त्तमानेमध्येकंचित्काललवंदृष्टासत्तासंविदोभ्रमएवेत्यर्थः ॥ ७२ ॥ इतिउक्तमर्थंमत्वामननेनदृढीकृत्यभावाभाववि
कल्पानुपातिनींधियंत्यक्त्वा ॥ ७३ ॥ केवलैरासंगदोषशून्यैः ॥ कुर्वन्व्युत्थानकाले ॥ अकुर्वन्समाधिकाले ॥ ७४ ॥ मनोरथदशासुमनोराज्यविभवेपुनष्टेष्वनष्टेषुवायथासु

संविन्मात्रपरिस्पंदेजागतेवस्तुपंजरे ॥ किंहेयं संविन्मात्रंजगदितिमत्वामुदितबुद्धयः ॥ संविन्मयत्वादंतस्थजगत्काविहरंत्यमी ॥ ६८ ॥ यदे किमुपादेयमिहतत्त्वविदांमतम् ॥ ६९ ॥ संविन्मयवपुःस्फारंकिंजहातिकिमीहते ॥ ७० ॥ संविदेवेदमखिलंभ्रांतिमन्यांत्यजानघ ॥ कंचित्का तज्जीयतेभूमेर्भविष्यत्पल्लवांकुरम् ॥ तत्संविदेवप्रथतेतथातत्त्वांकुरस्थितम् ॥ ७१ ॥ आदावंतेचयन्नास्तिवर्त्तमानेपितस्यच ॥ ललवंदृष्टासत्तासौसंविदोभ्रमः ॥ ७२ ॥ इतिमत्वाधियंत्यक्त्वाभावाभावानुपातिनीम् ॥ निस्संगसंविद्रूपोभवभावांतमागतः ॥ ७३ ॥ कायेनमनसाबुद्ध्याकेवलैरिंद्रियैरपि ॥ कर्मकुर्वन्नकुर्वन्वानिस्संगःसन्नलिप्यते ॥ ७४ ॥ गतसंगेनमनसाकुर्वन्नपिनलिप्यते ॥ सुखदुःखै र्महाबाहोमनोरथदशास्विव ॥ ७५ ॥ गतसंगांमतिंकुर्वन्कुर्वन्नप्यंगयष्टिभिः ॥ नलिप्यतेसुखैर्दुःखैर्मनोरथदशास्विव ॥ ७६ ॥ गतसंग मनादृष्ट्यापश्यन्नपिनपश्यति ॥ एतदन्यस्थचित्तत्वाद्बालेनाप्यनुभूयते ॥ ७७ ॥ गतसंगमनाजंतुःपश्यन्नेवनपश्यति ॥ नशृणोत्यपिशृण्वं श्चनस्पृशत्यपिचस्पृशन् ॥ ७८ ॥ नजिघ्रत्यपिसंजिघ्रन्नुन्मिषन्निमिषन्नपि ॥ पदार्थेचपतत्येवबलात्पततिनाप्ययम् ॥ ७९ ॥ देशांतरस्थ चेतोभिरेतदात्मगृहस्थितैः ॥ अप्रौढमतिभिःसाधुमूर्खैरप्यनुभूयते ॥ ८० ॥ संगःकारणमर्थानांसंगःसंसारकारणम् ॥ संगःकारणमा शानांसंगःकारणमापदाम् ॥ ८१ ॥

सुखदुःखैर्नलिप्यतेतद्वत् ॥ ७५ ॥ अकर्त्रभोक्तात्मदर्शनेनमतिंगतसंगांकुर्वन् ॥ अंगयष्टिभिःशरीराद्युपकरणैःकुर्वन्व्यवहरन्नपि ॥ ७६ ॥ अन्यस्थचित्तत्वाद्विति ॥ अन्यव्यास क्तचित्तत्वात्पश्यन्नपिनपश्यतीत्येतद्बालेनापिशब्दादन्यैश्चसर्वैरनुभूयतइत्यर्थः ॥ अन्यत्रमनाअभूवंनादर्शमन्यत्रमनाअभूवंनाश्रौषमितिश्रुतिरप्यत्रसंवादिनीतिभावः ॥ ७७ ॥ ॥ ७८ ॥ उन्मिषन्नेत्रेउन्मीलयन्नपिनिमिषन्ननुन्मीलयन्नेव ॥ एवंकर्मेंद्रियगणेचपदार्थेस्वस्वविषयेसंस्कारबलात्पतत्यपिसतिअयंनपततीति ॥ ७९ ॥ एतत्पश्यतोप्यदर्शनादिदं शांतरस्थचेतोभिरन्यत्रगतमानसैरात्मनःस्वस्यगृहेस्थितैर्मूर्खैःपामरैरप्रौढमतिभिर्बालपश्वादिभिश्चासाधुसम्यगनुभूयतइतिनात्रविवादइत्यर्थः ॥ ८० ॥ तथाचसंसक्तिपूर्वकंप दार्थदर्शनमेवबंधहेतुर्नासंसक्तचित्तस्येत्याशयेनाह ॥ संगइति ॥ ८१ ॥

मोक्षंवर्त्तमानदेहादिसंबंधनिवृत्ति ॥ अजन्मताभाविदेहादिबंधनिवारणमितिभेदः ॥ ८२ ॥ किमितिसामान्येनपुंसकम् ॥ प्रश्नःस्पष्टः ॥ ८३ ॥ इष्टानिष्टपदार्थानांभावाभावे संयोगेवियोगेचहर्षामर्षविकारदारागादिवासनैवसंगइतिकथ्यतेइत्यर्थः ॥ ८४ ॥ ८५ ॥ यावद्देहंप्रारब्धशेषक्षयपर्यंतम् ॥ ८६ ॥ ८७ ॥ ८८ ॥ निर्व्यग्रःस्वस्थः ॥ ८९ ॥ समाहारद्वंद्वगर्भेतरेतरयोगद्वंद्वविवक्षणाद्धर्षामर्षविषादाभ्यामितिद्विवचनम् ॥ अन्यतांवैरूप्यम् ॥ ९० ॥ आशयांवैवश्यंपारवश्यम ॥ ९१ ॥ सत्साम्यंब्रह्मैकरस्यंनविमुंचसिय

संगत्यागंविदुर्मोक्षंसंगत्यागादजन्मता ॥ संगंत्यजत्वंभावानांजीवन्मुक्तोभवानघ ॥ ८२ ॥ ॥ श्रीरामउवाच ॥ ॥ सर्वसंशयनीहारशरन्मारुतहेमुने ॥ संगःकिमुच्यतेब्रूहिसमासेनममप्रभो ॥ ८३ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ भावाभावेपदार्थानांहर्षामर्षविकारदा ॥ मलिनावासनायैषासासंगइतिकथ्यते ॥ ८४ ॥ जीवन्मुक्तशरीराणामपुनर्जन्मकारिणी ॥ मुक्ताहर्षविषादाभ्यांशुद्धाभवतिवासना ॥ ८५ ॥ तामसंगाभिधांविद्धियावद्देहंचभाविनी ॥ तयायत्क्रियतेकर्मनतद्बंधायवैपुनः ॥ ८६ ॥ अजीवन्मुक्तरूपाणांदीनानांमूढचेतसाम् ॥ युक्ताहर्षविषादाभ्यांबंधनीवासनाभवेत् ॥ ८७ ॥ सैवोक्तासंगशब्देनपुनर्जननकारिणी ॥ तयायत्क्रियतेकर्मतद्बंधायैवकेवलम् ॥ ८८ ॥ एवंरूपंपरित्यज्यसंगंस्वात्मविकारदम् ॥ यदितिष्ठसिनिर्व्यग्रःकुर्वन्नपिनलिप्यसे ॥ ८९ ॥ हर्षामर्षविषादाभ्यांयदिगच्छसिनान्यताम् ॥ वीतरागभयक्रोधस्तदसंगोसिराघव ॥ ९० ॥ दुःखैर्नग्लानिमायासियदिहृष्यसिनोसुखैः ॥ आशावैवश्यमुत्सृज्यतदसंगोसिराघव ॥ ९१ ॥ विहरन्व्यवहारेषुसुखदुःखदशासुच ॥ नविमुंचसिसत्साम्यंतदसंगोसिराघव ॥ ९२ ॥ संवेद्योयदिचैवात्मावेदितेलक्ष्यतेसमः ॥ यथाप्राप्तानुवर्त्तीचतदसंगोसिराघव ॥ ९३ ॥ असंगतामनायासाज्जीवन्मुक्तस्थितिंस्थिराम् ॥ अवलंब्यसमःस्वस्थोवीतरागोभवानघ ॥ ९४ ॥ जीवन्मुक्तमतिर्मौनीनिगृहीतेंद्रियग्रहः ॥ अमानमदमात्सर्यमार्यस्तिष्ठतिविज्वरम् ॥ ९५ ॥ सदासमग्रेपिहिवस्तुजालेसमाशयोप्यंतरदीनसत्वः ॥ व्यापारमात्रात्सहजात्क्रमस्थान्नकिंचिदप्यन्यदसौकरोति ॥ ९६ ॥ यदेवकिंचित्प्रकृतंक्रमस्थंकर्त्तव्यमात्मीयमसौतदेव ॥ संसर्गसंबंधविहीनयैवकुर्वन्नखेदंरमतेधियांतः ॥ ९७ ॥ अथापदंप्राप्यसुसंपदंवामहामतिःस्वप्रकृतंस्वभावम् ॥ जहातिनोमंदरवेल्लितोपिशौक्ल्यंयथाक्षीरमयांबुराशिः ॥ ९८ ॥

दीत्यनुषंगः ॥ ९२ ॥ आत्माचित्तस्वभावः ॥ ९३ ॥ ९४ ॥ निगृहीताःइंद्रियलक्षणाग्रहानीतिमहाःपाशायेन ॥ ९५ ॥ भोगविक्षेपादिहेतौवस्तुजालेसदासमयेप्रचुरतरेसत्यपिसमाशयः ॥ अंतर्बहिरप्यदीनंस्पृहायाञ्चादिदैन्यवर्जितंसत्वंयस्य ॥ स्ववर्णाश्रमोचितसहजक्रमस्थाद्व्यापारमात्रादन्यत्किंचिदप्यसौनकरोति ॥ ९६ ॥ संसर्गःक्रियाभिनिवेशःसंबंधःफलाभिलाषस्तद्विहीनयैवधियाअंतःस्वात्मनिरमते ॥ ९७ ॥ स्वंस्वीयंप्रकृतंपूर्वसिद्धंशांतिदांतिप्रसादसमदर्शनादिस्वभावंनोजहाति ॥ यथामंदरेणवेल्लितोमथितोपिक्षीरमयांबुराशिःसहजंशौक्ल्यंनजहातितद्वत् ॥ ९८ ॥

आपदंदारिद्र्यादि ॥ सरीसृपत्वंडुंडुभादियोनिम् ॥ अखेदोदयंअस्तहर्षंचेतिस्थितिक्रियाविशेषणे ॥ क्षयोदयेषुकलानामुपचयापचयकालेषुउदयास्तमयकालेषुवा ॥ ९९ ॥ दर्शितलक्षणजीवन्मुक्तिसुखप्राप्तौरागद्वेषभेदवासनाक्षयाभ्याससहितआत्मविचारएवोपायइतितमेवरामायोपदिशन्नुपसंहरति ॥ निरस्तेति ॥ संरंभःक्रोधः ॥ त्रीण्यपिक्रिया विशेषणानि ॥ यथायेनविचारेणउत्तमकार्यमवश्यसंपाद्यंचरमपुरुषार्थस्तन्निष्ठोभवसितथाविचारयेत्यर्थः ॥ १००॥ तयाविचारणयाउदितप्रसरस्यसमाधेर्विलासेनसर्ववास नाक्षयाच्छुद्धयासमधिगतमात्मरूपंदृश्यमवश्यद्रष्टव्यंवस्तुययातथाविधयाअतएवअविद्यातत्कार्यदाहक्षमतयाइद्धयादीप्तयाधियागतज्वरंनिर्दुःखनिरतिशयानंदरूपंपरमपद

संप्राप्यसाम्राज्यमथापदंवासरीसृपत्वंसुरनाथतांवा ॥ तिष्ठत्यखेदोदयमस्तहर्षंक्षयोदयेष्विंदुरिवैकरूपः ॥ ९९ ॥ निरस्तसंरंभमपा स्तभेदंप्रशांतनानाफलवल्गुवेषम् ॥ विचारयात्मानमदीनसत्वोयथाभवस्युत्तमकार्यनिष्ठः॥१००॥ तयोदितप्रसरविलासशुद्धयाग तज्वरंपदमवलंबयामलम्॥ धियेद्धयापुनरिहजन्मबंधनैर्नबध्यसेसमधिगतात्मदृश्यया॥ १०१॥ ॥इत्यार्षेवासिष्ठमहारामायणे वाल्मीकीयेदेवदूतोक्तेद्वात्रिंशत्साहस्र्यांसंहितायांबालकांडेमोक्षोपायेषूपशमप्रकरणेसमदर्शनंनामत्रिनवतितमःसर्गः॥ ९३॥ ॥ ॥ उपशमप्रकरणंसंपूर्णम् ॥ ॥ ७॥ ॥ ७॥ ॥ ७॥ ॥ ७॥ ॥ ७॥ ॥ ७॥ ॥ ७॥

मवलंबयअध्यास्व ॥ तदवलंबनेपुनरावृत्तिशंकावारणायाह ॥ पुनरिहेति ॥ तस्मात्तत्त्वसाक्षात्कारेणैवाविद्यातत्कार्यसर्वानर्थोपशमनान्नित्यनिरतिशयानंदस्वरूपेप्रतिष्ठेतिसि द्धम् ॥ १०१ ॥ ॥ इतिश्रीवासिष्ठमहारामायणतात्पर्यप्रकाशेउपशमप्रकरणेत्रिनवतितमःसर्गः ॥ ९३ ॥ ॥ ७ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्री मत्सर्वज्ञसरस्वतीपूज्यपादशिष्यश्रीरामचंद्रसरस्वतीपूज्यपादशिष्यश्रीगंगाधरेंद्रसरस्वत्याख्यभिक्षोःशिष्येणश्रीमदानंदबोधेंद्रसरस्वत्याख्यभिक्षुणाविरचितेश्रीवासिष्ठमहारामा यणतात्पर्यप्रकाशेउपशमप्रकरणंसंपूर्णम् ॥

आपदंदारिद्र्यादि ॥ सरीसृपत्वंडुंडुभादियोनिम् ॥ अखेदोदयंअस्तहर्षंचेतिस्थितिक्रियाविशेषणे ॥ क्षयोदयेषुकलानामुपचयापचयकालेषुउदयास्तमयकालेषुवा ॥ ९९ ॥ दर्शितलक्षणजीवन्मुक्तिसुखप्राप्तौरागद्वेषभेदवासनाक्षयाभ्याससहितआत्मविचारएवोपायइतितमेवरामायोपदिशन्नुपसंहरति ॥ निरस्तेति ॥ संरंभःक्रोधः ॥ त्रीण्यपिक्रियाविशेषणानि ॥ यथायेनविचारेणउत्तमकार्यमवश्यसंपाद्यंचरमपुरुषार्थस्तन्निष्ठोभवसितथाविचारयेत्यर्थः ॥ १००॥ तयाविचारणयाउदितप्रसरस्यसमाधेर्विलासेनसर्ववासनाक्षयाच्छुद्धयासमधिगतमात्मरूपंदृश्यमवश्यद्रष्टव्यंवस्तुययातथाविधयाअतएवअविद्यातत्कार्यदाहक्षमतयाइद्धयादीप्तयाधियागतज्वरंनिर्दुःखनिरतिशयानंदरूपंपरमपद

संप्राप्यसाम्राज्यमथापदंवासरीसृपत्वंसुरनाथतांवा ॥ तिष्ठत्यखेदोदयमस्तहर्षंक्षयोदयेष्विंदुरिवैकरूपः ॥ ९९ ॥ निरस्तसंरंभमपास्तभेदंप्रशांतनानाफलवल्गुवेषम् ॥ विचारयात्मानमदीनसत्वोयथाभवस्युत्तमकार्यनिष्ठः॥१००॥ तयोदितप्रसरविलासशुद्धयागतज्वरंपदमवलंवयामलम्॥ धियेद्धयापुनरिहजन्मवंधनैर्नवध्यसेसमधिगतात्मदृश्यया॥१०१॥ ॥इत्यार्षेवासिष्ठमहारामायणेवाल्मीकीयेदेवदूतोक्तेद्वात्रिंशत्साहस्र्यांसंहितायांवालकांडेमोक्षोपायेषूपशमप्रकरणेसमदर्शनंनामत्रिनवतितमःसर्गः॥९३॥ ॥
॥ उपशमप्रकरणंसंपूर्णम् ॥ ॥५॥ ॥५॥ ॥५॥ ॥५॥ ॥५॥ ॥५॥ ॥५॥

मवलंवयअध्यास्व ॥ तदवलंवनेपुनरावृत्तिशंकावारणायाह ॥ पुनरिहेति ॥ तस्मात्तत्त्वसाक्षात्कारेणैवाविद्यातत्कार्यसर्वानर्थोपशमनान्नित्यनिरतिशयानंदस्वरूपेप्रतिष्ठेतिसिद्धम् ॥ १०१ ॥ ॥ इतिश्रीवासिष्ठमहारामायणतात्पर्यप्रकाशेउपशमप्रकरणेत्रिनवतितमःसर्गः ॥ ९३ ॥ ॥५॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमत्सर्वज्ञसरस्वतीपूज्यपादशिष्यश्रीरामचंद्रसरस्वतीपूज्यपादशिष्यश्रीगंगाधरेंद्रसरस्वत्याख्यभिक्षोःशिष्येणश्रीमदानंदबोधेंद्रसरस्वत्याख्यभिक्षुणाविरचितेश्रीवासिष्ठमहारामायणतात्पर्यप्रकाशेउपशमप्रकरणंसंपूर्णम् ॥

